# DAS'OPANISHADS

WITH THE COMMENTARY OF

# SRI UPANISHAD-BRAHMA-YOGIN

## VOLUME I

EDITED BY

THE PANDITS OF THE ADYAR LIBRARY

UNDER THE SUPERVISION OF

PROF. C. KUNHAN RAJA, M.A., D.PHIL. (OXON.)

PUBLISHED FOR THE ADYAR LIBRARY

(THEOSOPHICAL SOCIETY)

1935

# दश-उपनिषदः

श्री उपनिषद्ब्रह्मयोगिविरचितव्याख्यायुताः

प्रथमो भागः



अडयार्पुस्तकालयस्थपण्डितैः संपादिताः

चि-कुञ्जन्राजमहाशयैः प्रत्यवेक्षिताः

अडयार्पुस्तकालयार्थे

प्रकटीकृताश्च

१९३५

ॐ नमो
ब्रह्मादिभ्यो
ब्रह्मविद्यासंप्रदायकर्तृभ्यो
वंशऋषिभ्यो
नमो गुरुभ्यः

DEDICATED TO
Brahma and the Rishis,
The Great Teachers
Who handed down Brahmavidya
through Generations

# PREFACE

The present volume contains the first eight of the ten Major Upaniṣads, namely, Īśa, Kena, Kaṭha, Praśna, Muṇḍaka, Māṇḍūkya, Taittirīya and Aitareya, along with the commentary of Upaniṣadbrahmayogin. In this series have already appeared the ninety-eight Minor Upaniṣads with the same commentary; there has also appeared another volume containing seventy-one more Upaniṣads, most of which have not till now been published. The commentary of the Upaniṣadbrahmayogin is the only commentary available for all the Minor Upaniṣads. For the ten Major Upaniṣads there are other commentaries. The present commentary follows more or less the Bhāṣya of Śaṅkarācārya. Yet this is not a mere repetition of Śaṅkara's Bhāṣya. In many places this commentary is more elaborate and as such it is sure to be useful for those who want to understand the Advaita interpretation of the Upaniṣads. The text ollowed in this edition is the usual text found in other ditions. But in the case of the Aitareyopaniṣad, Śaṅkarācārya comments on the text beginning with 'ātmā vā idam eka evāgra āsīt". This is the fourth hapter in the second Āraṇyaka of the Aitareyāraṇyaka

and S'aṅkarācārya comments on the fourth, fifth, sixth and seventh chapters of the second Āraṇyaka. Upaniṣad-brahmayogin comments from the first chapter of the second Āraṇyaka beginning with "eṣa panthā etat karmaitat satyam". Since the present commentary follows S'aṅkara, it lends itself to a conjecture that S'aṅkara too had commented the text from the first chapter.

The remaining two Upaniṣads, Chāndogya and Bṛhadāraṇyaka will appear as the next volume in the series.

ADYAR LIBRARY
*8th January,* 1935

C. KUNHAN RAJA

# अस्मिन् सम्पुटे अन्तर्गतानामुपनिषदां सूची

# विषयसूचिका

## १. ईशावास्योपनिषत्

## २. केनोपनिषत्

प्रथमः खण्डः



द्वितीयः खण्डः



तृतीयः खण्डः



चतुर्थः खण्डः



## ३. कठवल्ल्युपनिषत्

प्रथमा वल्ली

## द्वितीया वल्ली



## तृतीया वल्ली

**चतुर्थी वल्ली**



**पञ्चमी वल्ली**

षष्ठी वल्ली



## ४. प्रश्नोपनिषत्

प्रथमः प्रश्नः

द्वितीयः प्रश्नः



तृतीयः प्रश्नः

चतुर्थः प्रश्नः



पञ्चमः प्रश्नः



षष्ठः प्रश्नः

## ५. मुण्डकोपनिषत्

**द्वितीयमुण्डके द्वितीयः खण्डः**



**तृतीयमुण्डके प्रथमः खण्डः**

तृतीयमुण्डके द्वितीयः खण्डः



## ६. माण्डूक्योपनिषत्

ागमप्रकरणम्

**वैतथ्यप्रकरणम्**

अद्वैतप्रकरणम्

अलातशान्तिप्रकरणम्

## ७. तैत्तिरीयोपनिषत्

### शीक्षावल्ली

## ब्रह्मानन्दवल्ली

## भृगुवल्ली

## ८. ऐतरेयोपनिषत्

**तृतीयोऽध्यायः**



**चतुर्थोऽध्यायः**



**पञ्चमोऽध्यायः**



**षष्ठोऽध्यायः**



**सप्तमोऽध्यायः**



---



---

ॐ

# ईशावास्योपनिषत्

पूर्णमदः—इति शान्तिः

परिव्राजकस्य ज्ञाननिष्ठा

ॐ ईशावास्यमिदꣳ सर्वं यत्किंच जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् ॥ १ ॥

उपनिषद्ब्रह्मयोगिविरचितं विवरणम् ।

ॐ श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुरामचन्द्राय नमः ।

ईशाद्यष्टोत्तरशतवेदान्तपटलाशयम् ।
त्रैपदानन्दसाम्राज्यं कलये स्वावशेषतः ॥ १ ॥
नत्वा त्रिपाद्गुरुं सद्यः कैवल्यानन्दमिच्छताम् ।
ईशाद्यष्टोत्तरशतवेदान्तार्थो निगद्यते ॥ २ ॥
लीलाविभूतिनिःश्वासनिगमान्तार्थसञ्चयम् ।
लीलया लीलाविभूतिरेव जानाति तत्त्वतः ॥ ३ ॥
कृत्वा मां लेखकं लीलाभूते मय्यनुकम्पया ।
ईशाद्यष्टोत्तरशतवेदान्तार्थं स्फुटीकुरु ॥ ४ ॥

इह खलु निर्हेतुजातकरुणया स्वाविद्यापदगाण्डाल्यलङ्कारप्राणिपटल-स्वपदप्रापकहेतुपरमदयाकळेबरेयं भगवती लीलाविभूतिः मोहभूतिपटलनवांशान्

बौद्धमीमांसकद्वैत्यादिमतनैरपेक्ष्येण तत्तन्मतगतहेयांशापह्नवसिद्धनिष्प्रतियोगिक-ब्रह्ममात्रावस्थानलक्षणविकळेबरकैवल्यसत्वभाजनं करवाणीति प्रतिज्ञापूर्वकं "स यथार्द्रैधाग्नेरभ्याहितस्य पृथक् धूमा विनिश्चरन्ति एवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेवैतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राणि अनुव्याख्यानानि व्याख्यानानि इष्टं हुतमाशितं पायितं अयं च लोकः परश्च लोकः सर्वाणि च भूतानि अस्यैवैतानि सर्वाणि निःश्वसितानि" इति श्रुत्यनुरोधेन स्वनिःश्वासवदप्रयत्नाविर्भूतऋग्यजुस्सामाथर्वणविभक्ताशीत्यधिक-शतोत्तरसहस्रशाखामस्तकपटलसारभूतेशाद्यष्टोत्तरशतसारसंग्रहायमाणमहावाक्य-रत्नावलीप्रभालोचनादिपरमाद्वैतशास्त्रं प्रकटयामास। तत्पुरस्तादेव ब्रह्मप्रणव-त्रिपात्तत्त्वविवेकादिप्रकरणजातं च तत्र प्रतिप्रकरणं निष्प्रतियोगिकब्रह्ममात्र-सिद्धान्तस्य प्रकटितत्वात् तेनैव कैवल्यसिद्धेः न पुनर्वक्तव्यमवशिष्यते। तथापि ईशाद्यष्टोत्तरशतवेदान्तजातस्य क्रमशो न व्याख्यातत्वादिति मनीषया असल्लौ-किकाद्यष्टदृष्टिष्वन्यदृष्ट्यारूढानां असल्लौकिकाद्यष्टदृष्टिगतहेयांशापह्नवसिद्धनिष्प्रति-योगिकब्रह्ममात्रावस्थानलक्षणविकळेबरकैवल्यप्रापकं अनुबन्धचतुष्टयगर्भितं ईशा-द्यष्टोत्तरशतवेदान्तविवरणमुखेन परमाद्वैतशास्त्रं प्रतिजानीते। ईशादिप्रत्युपनिषदं एकप्रयोजनरतत्वेन तत्साधनीभूताशेषार्थावभासकत्वेन च सर्वतोमुखतात्पर्य-मण्डितत्वात् सर्वासामपि शास्त्रत्वं युज्यते।

एकप्रयोजनरतमशेषार्थावभासकम्।
सर्वतोमुखतात्पर्यमण्डितं शास्त्रमुच्यते॥

इति स्मृतेः।

यद्वा—ईशादिमुक्तिकान्तविशिष्टं शास्त्रम्। प्रातिस्विकेन ईशादयः प्रकरणानि। तासां पृथक् प्रकरणलक्षणस्यापि संपन्नत्वात्।

शास्त्रैकदेशविषयं शास्त्रकार्यान्तरे स्थितम्।
सारांशस्पष्टकथनं यत्तत्प्रकरणं विदुः॥

इति स्मृतेः।

कृत्स्नवेदान्ता विषयः । सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रं तत्स्वरूपावस्थानलक्षणविकळेबरकैवल्यं हि प्रयोजनम् । चिन्मात्रशास्त्रयोः प्रतिपाद्य-प्रतिपादकभावः सम्बन्धः । सद्योमुक्तिकामो हि अधिकारी । तथा च नामार्थविवेके अभिहितम्—

विषयः स्वेतरग्राससत्तासामान्यमीरितः ।
प्रयोजनं ब्रह्ममात्रावशेषणतया स्थितिः ॥
सम्बन्धः प्रतिपाद्यादिः शास्त्रचिन्मात्रयोर्मिथः ।
विकळेबरकैवल्यानन्दकामोऽधिकार्यसौ ॥ इति ।

ईशाद्यष्टोत्तरशतवेदान्ताः न हि ब्रह्ममात्रपर्यवसन्नाः । किन्तु असल्लौकिकाद्यष्टदृष्टिपरा एव इति चेत् न । स्वाज्ञानजडीकृतमोहभूतिपटलस्य सर्वापह्नवसिद्धब्रह्ममात्रज्ञानगन्धविकलत्वेन तत्पदारोहाय असल्लौकिकाद्यष्टदृष्टीनां उपायत्वेन च तद्गतहेयांशापह्नवतः सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रप्रबोधकत्वात् ईशादि सर्ववेदान्ताः साक्षात् परम्परया वा ब्रह्ममात्रपर्यवसन्ना एव । "सर्वे वेद यत्पदमामनन्ति" इति, "वेदैश्च सर्वैरहमेव वेद्यः" इति च श्रुतेः स्मृतेश्च

तथा च—ऋगादिचतुर्वेदप्रविभक्तेशाद्यष्टोत्तरशतवेदान्तवाक्यानि—

ईशावास्यमिदं सर्वम्
अनेजदेकम्
अन्यदेव तद्विदितादथो अविदितादधि
अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत्
स एषोऽकलोऽमृतः
अप्राणो ह्यमनाः शुभ्रः
अक्षरात्परतः परः
अमात्रश्चतुर्थोऽव्यवहार्यः
प्रपञ्चोपशमः शिवोऽद्वैतः
सत्यं ज्ञानमनन्तं ब्रह्म

प्रज्ञानं ब्रह्म
यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा
तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्
अयमात्मा ब्रह्म सर्वानुभूः
पश्यतेहापि सन्मात्रमसदन्यत्
ब्रह्मव्यतिरिक्तं न किञ्चिदस्ति
द्वितीयकारणाभावादनुत्पन्नमिदं जगत् ।
सर्वथा भेदकलनं द्वैताद्वैतं न विद्यते ॥
इदं प्रपञ्चं यत्किञ्चिद्यद्यज्जगति वीक्ष्यते ।
दृश्यरूपं च दृग्रूपं सर्वं शशविषाणवत् ॥
सच्चिदानन्दमात्रोऽहमनुत्पन्नमिदं जगत् ।
चिन्मात्रमेव चिन्मात्रमखण्डैकरसं रसम् ॥
ब्रह्ममात्रमिदं सर्वं ब्रह्ममात्रमसन्न हि ।
सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥

इत्यादिमहावाक्यपटलपर्यालोचनया ब्रह्ममात्रं भावरूपं, न हि तस्य निष्प्रतियोगिकत्वेन तदतिरिक्तप्रसक्तिरस्ति । यद्यसत् लौकिकादिदृष्टिमाश्रित्य स्वातिरिक्तं आत्मत्वेन स्वोपाधित्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन शून्यत्वेन वास्तीति येषां भ्रान्तिः तद्भ्रान्तिमात्रापह्नवे तदपि निष्प्रतियोगिकाभावरूपमेव । स्वातिरिक्तस्य वस्तुतोऽवस्तुतो वाप्यलब्धात्मकत्वात् ।

नात्मभावेन नानेदं न स्वेनापि कथञ्चन ।
न पृथङ्नापृथक् किञ्चिदिति शास्त्रविदो विदुः ॥

इति सर्वज्ञगौडपादाचार्योक्तेः । निष्प्रतियोगिकभावाभावयोरपि आधाराधेयता स्यादिति चेत् न । दुर्लभत्वात् । सप्तद्वीपाधिपसार्वभौमस्य नित्यनपुंसकवन्ध्योत्पन्नकन्यारत्नपरिणयवत् दुर्लभत्वात् न तयोः ब्रह्मातिरिक्तयोः आधाराधेयता

अस्ति नास्तीति विभ्रमावकाशोऽस्ति। तस्मात् सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रतया सदा विजयते इति परमसिद्धान्तार्थेऽपि निष्प्रतियोगिकब्रह्ममात्राज्ञानमहिम्ना केचिदेवं प्रत्यवतिष्ठन्ते ।

अनादिकालप्रभवमोहभूतेः त्रिपाद्भूत्यवस्थानलक्षणकैवल्यान्तं असल्लौकिकाद्यष्टदृष्टिदृष्टस्वातिरिक्तात्मत्वसत्यत्वव्यावहारिकत्वप्रातिभासिकत्वादिकलनाकलित - स्वाविद्यापदतत्कार्यविजृम्भितबन्धमोक्षव्यवहारापह्नवे बन्धादिप्रतिपादकश्रुतिस्मृतिवैयर्थ्ये जाते तन्निबन्धनवर्णाश्रमाचारव्यवस्था कथं सिद्धिपदं भजति। तदसिद्धौ निर्मर्यादं जगत् भवेत्। ततो ब्रह्ममात्रसिध्यपेक्षया यत्किञ्चित् स्वातिरिक्तमङ्गीकार्यम्। एवमङ्गीकृतं चेत् असल्लौकिकाद्यष्टदृष्टिषु तत्तन्मतव्यवस्थापि सेद्धुं पारयतीति। तत्रोच्यते—ब्रह्मणः स्वमात्रप्रकृतित्वेन तदन्यथानुपपत्तेः ।

प्रकृतिप्राकृतास्पृष्टं स्वप्रकृत्यावशेषितम् ।

इत्यन्तःप्रणवोक्तेः ।

न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ।
प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति ॥

इति गौडपादाचार्योक्तेश्च ।

भवत्वेवम्। व्यवहारसिद्धिः कुत इति चेत् न। स्वमात्रस्याव्यवहार्यत्वात्। स्वमात्रावगतेः सर्वव्यवहारापह्नवपूर्वकत्वात्। "अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमम्" इति श्रुतेः।

वस्तुतोऽवस्तुतो वापि व्यवहारो न युज्यते ।
प्रतियोगिविनिर्मुक्ताव्यवहार्यं पराक्षरम् ॥

इति स्मृतेश्च। तथापि निष्प्रतियोगिकाव्यवहार्यब्रह्ममात्रेऽपि स्वोक्तानुबन्धचतुष्टयालङ्कारपरमाद्वैतशास्त्रप्रवृत्तिहेतुतया अपह्नवमुखेन वा व्यवहारः स्यादिति चेत् न। परमाद्वैतप्रबोधसिद्धौ अपह्नोतव्यविषयवैरळ्यात्। तत्प्रबोधसमकालमेव असल्लौकिकाद्यष्टदृष्टिविकल्पितव्यष्टिसमष्ट्यात्मकस्वाविद्यापदतत्कार्यायमाण-

जाग्रज्जाग्रदादितुर्यस्वापान्त[1]तद्व्यष्ट्यभिमानिविश्वविश्वादितुर्यप्राज्ञान्ततत्समष्ट्यभिमानिविराड्विराडादितुर्यबीजान्ततदुभयैक्याभिमान्योतृनोत्राद्यविकल्पानुज्ञैकरसात्मकचतुष्पञ्चदशकलनाविजृम्भितबन्धमोक्षतत्प्रमाणश्रुतिस्मृतितज्जवर्णाश्रमाचारव्यवस्थासिद्ध्यसिद्ध्योः प्रळयं गतत्वात् परमाद्वैतशास्त्रव्यवहृतिरपि न सम्भवति। शास्त्रादिव्यवहाराभावे ब्रह्ममात्रसिद्धिः कुत इति चेत् न। स्वमात्रत्वात् तस्य निष्प्रतियोगिकत्वेन स्वत एव सिद्धत्वात्। न च स्वतःसिद्धे वस्तुनि तत्सिद्धिमानाकाङ्क्षास्ति। तथा चेत् परमाद्वैतशास्त्रं व्यर्थमिति चेत् न। तस्य निष्प्रतियोगिकब्रह्ममात्रावरणायमानासल्लौकिकाद्यष्टदृष्टिनिष्ठवैषम्यांशमात्रापह्नवीकरणपटुशक्तित्वात्। न हि शास्त्रवैय्यर्थ्यं शास्त्रसद्वितीयं ब्रह्मेति चेत् न। शास्त्रस्य प्रबोधसमकालमुपक्षीणत्वात् निष्प्रतियोगिकनिरावृतं स्वमात्रमवशिष्यत इति ईशावास्यमारभ्य मुक्तिकोपनिषदन्तवेदान्तसिद्धान्तः। एवं सिद्धान्ताविरोधमीशाद्यष्टोत्तरशतोपनिषदः क्रमशो व्याक्रियन्ते॥

यत्रापह्नवतां याति स्वातिरिक्तभिदाततिः।
कलये तं स्वावशेषधियावस्थातुमीश्वरम्॥ १॥
नत्वा गुरुपदं सद्यः कैवल्यसुखमिच्छताम्।
ईशावास्योपनिषदः परमाशय उच्यते॥ २॥

ातोनद्विसहस्रमन्त्रसंख्यापरिमितवाजसनेयान्तर्गतकाण्वशाखासंहितायां "इषे वा" इत्यादि "द्यावापृथिवीभ्यां साहा" इत्यन्तैकाशीत्यधिकाष्टोत्तरशतहस्रसंख्याकाः मन्त्राः दर्शपूर्णमासादिकर्मकाण्डप्रकाशकाः। शिष्टास्तु ाष्कामधियानुष्ठितकर्मफलार्पणसन्तुष्टेश्वरप्रसादजनितचित्तशुद्धिप्राप्यपारमहंस्याश्रमं पन्नानामधिकारिणां साक्षात् परम्परया वा ब्रह्ममात्रप्रबोधका हि ईशाास्याद्येकोनविंशतिमन्त्राः। "अनेजदेकम्" इति, "ब्रह्ममात्रं तत्प्रबोधमकालम्", "तत्र को मोहः कः शोकः" इति स्वातिरिक्तबन्धमोक्षभ्रमाम्भवनिरूपणात्। यत एते मुमुक्षुपटलस्वाराज्यप्रापकाः अतः तान् संक्षेपतो ाख्यास्ये— **ईशा** इत्यादिना॥

[1] तत्समष्ट्य—उ १.

स्वाज्ञस्वज्ञदृष्टिभ्यां यस्याः जन्मस्थितिनाशकलनैव परा गतिः सेयमविद्या जगतीत्युच्यते । तस्यां **यत्किञ्च** यत्किंचित् । इदं परिदृश्यमाननानानामरूपजुष्टपशुपक्षिपन्नगादिविचित्रकलनाशोभितं कर्तृभोक्तृत्वादिविभ्रमारूढाधिष्ठितं अनन्तकोटिब्रह्माण्डात्मकं सर्वं आविद्यकं **यत् जगत्** दृश्यते तन्मूलबीजांशयोगतः ईशभावमापन्नेन जगदारोपाधिकरणेन **ईशा आवास्यं** व्याप्तं कबलितमित्यर्थः । "सच्चिदानन्दरूपमिदं सर्वम्", "सत्तामात्रं हीदं सर्वम्" इत्यादिश्रुतेः । यः स्वाज्ञदृष्टिविकल्पितस्वातिरिक्तभेदजातं ईष्टे इति ईड्भावमापन्नः सोऽयं निरङ्कुशभावरूपस्वदृष्ट्या आवृतित्रयापह्नवसिद्धब्रह्ममात्रत्वात् । यत् उक्तविशेषणविशिष्टजगत्त्वेनाभिमतं तन्निरङ्कुशाभावरूपं तस्य कालत्रयेऽपि परमार्थदृष्ट्या शशविषाणवदलब्धात्मकत्वात् । तयोः व्याप्यव्यापकायमानजगदीशयोराधेयाधारता अस्ति नास्तीति विभ्रमापह्नवबोधेन **तेन त्यक्तेन** इति भावे क्तः स्वातिरिक्तसर्वत्यागेन । हे स्वाज्ञस्वज्ञलोक स्वातिरिक्तसर्वापह्नवसिद्धं ब्रह्म स्वमात्रमिति प्रबोधसमकालं तन्मात्रावस्थानलक्षणविकळेबरकैवल्यानन्दं **भुञ्जीथाः** प्राप्नुहि । पुनः जगदीशयोर्मध्ये **कस्यस्वित्** कस्यचित् **धनं** आधेयत्वं आधारत्वं वा कदापि स्यात् इति **मा गृधः** गर्धिं इच्छां मा कार्षीः इति । अत्र—

यथा पुमान् स्वदेहस्थमलमुत्सृज्य तत्पुनः ।
नादातुमीहते जातु नोच्चरेन्न स्मरेत् क्वचित् ॥
तथा विद्वान् स्वातिरिक्तभ्रममुत्सृज्य तत्पुनः ।
नेहते जात्वपि ब्रह्ममात्रज्ञानसमं मुनिः ।
स्वावशेषतया ब्रह्ममात्रानन्दो बभूव सः ॥

इति स्मृतिर्मानम् ।

स यो ह वैतत् परमं ब्रह्म वेद ब्रह्मैव भवति ।

इति श्रुत्यनुरोधेन ईशावास्यमिति पूर्वमन्त्रार्थज्ञानिन एवामृतत्वं सिद्धमित्यर्थः ॥१॥

तदितरस्य कर्मनिष्ठा

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥ २ ॥

अद्वितीयब्रह्मतत्त्वं न जानन्ति यदा तदा ।
भ्रान्ता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ॥

इति श्रुत्यनुरोधेन पूर्वमन्त्रोक्तार्थानधिकारिणां असल्लौकिकतुल्यत्वेन प्राप्तदेहात्मभावापेक्षया देहातिरिक्तजीवभावः श्रेयानित्यादौ कामनाधिया वा यावदायुषं कर्मैव कर्तव्यं इत्याहायं मन्त्रः— कुर्वन् इति ।

"शतायुः पुरुषः शतेन्द्रियः" इति श्रुत्यनुरोधेन शतं समाः संवत्सराः ताः श्रौत[1]स्मार्तनित्यनैमित्तिककर्माणि कुर्वन्नेव जिजीविषेत् । स्वाज्ञस्य तूष्णीमवस्थानापेक्षया काम्यधिया वा कर्मकरणमेव श्रेयः इत्यर्थः ।

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।

इति स्मृतेः ॥

एवंप्रकारेण नरोऽहमिति नरमात्राभिमानिनि त्वयि जिजीविषति सति कदाचित् निष्कामधीः भवेत् । इदानीं तादृशाधिकाराभावात् इत एतस्मात् काम्यकर्मकरणात् प्रकारान्तरं नास्ति । येन प्रकारान्तरेण अशुभं कर्म न लिप्यते कर्मणा न लिप्यते । अतः शास्त्रविहितं कर्म कुर्वन्नेव जीवितुमिच्छेदित्यर्थः ॥ २ ॥

काम्यकर्मनिष्ठानिन्दा

असुर्या नाम ते लोका अन्धेन तमसा वृताः ।
ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥ ३ ॥

[1] स्मार्तोद्भव—उ १






लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ ।
ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥
द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः ।
प्रवृत्तिलक्षणो धर्मो निवृत्तिश्च प्रभाषितः ॥

इत्यादिस्मृत्यनुरोधेन विद्वदविद्वद्विषयत्वेन पूर्वोत्तराभ्यां मन्त्राभ्यां ज्ञाननिष्ठा कर्मनिष्ठा च अभिहिता । तत्र कर्मनिष्ठारूढाविद्वन्निन्दार्थो मन्त्रः आम्नायते **असुर्या** इति । काम्यधिया कर्मानुष्ठातारोऽविद्वांसः **प्रेत्य** इमं देहं त्यक्त्वा । अथ "पश्यतेहापि सन्मात्रमसदन्यत्" इति, "प्रजापतिर्देवाननुशशास" इति च श्रुत्यनुरोधेन असदपह्नवसिद्धसन्मात्रभावारूढाः सुराः तद्भावविरळाः असुराः तेषामावासभूताः **असुर्या नाम लोकाः** काम्यकर्मफलानि यत्र लोक्यन्ते भुज्यन्ते इति लोकाः स्वर्गादयो जन्मानि वा चिन्मात्रभाववारकान्धेन स्वाज्ञान**तमसा वृताः तान्** लोकानेव मुहुर्मुहुः **गच्छन्ति** । घटीयन्त्रवदविश्रान्तं जन्ममरणानि प्राप्नुवन्तीत्यर्थः । केन दोषेणैव त एवं संसरन्तीत्यत्र—

इह चेदवेदीदथ सत्यमस्ति नोचेदिहावेदीन्महती विनष्टिः ।
योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥

इति श्रुतेः ।

लब्ध्वा कथंचिन्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् ।
यस्त्वात्ममुक्त्यै न यतेत मूढधीः स आत्महा स्वं विनिहत्य हन्यते ॥

इति सर्वज्ञभगवत्पादोक्तेश्च । ते **आत्महनः** जन्मनाशवन्तः **जनाः** भवन्ति । विद्यमानाविद्यमानवस्तुवस्त्वाभासतिरस्करणपुरस्करणदोषेणेत्यर्थः ॥ ३ ॥

आत्मतत्त्वस्वरूपम्

**अनेजदेकं मनसो** जवीयो **नैनद्देवा** आप्नुवन् [1]पूर्वमर्षत् ।
तद्धावतोऽन्यानत्येति तिष्ठत्तस्मिन्नपो मातरिश्वा दधाति ॥ ४ ॥

1 पूर्वमर्शत्—उ, मु, मर्षत्—उ १, क.

यदज्ञानात् अविद्वांसो हीयन्ते यद्ज्ञानात् विद्वांसो मुच्यन्ते तदिदं आत्मतत्त्वं कीदृशमित्याकांक्षायां तत्स्वरूपं अयं मन्त्र आह—**अनेजत्** इति ॥ परमार्थदृष्ट्या स्वभावतया अवस्थानं स्वावस्थानम् । तस्मात् च्युतिः चलनं कम्पनं एजत् "एजृ कम्पने" इति धातोः । चलनाचलनकलनापह्नवसिद्धं **अनेजत्** । तदिदं वस्तु असल्लौकिकाद्यष्टदृष्टिमोहे सत्यसति सर्वदैकरूपमित्यर्थः । "परं ध्रुवं" इति श्रुतेः । तदेतद्वस्तु स्वाज्ञदृष्टिप्रसक्तसमस्तभूतान्तःकरणावच्छेदेन प्रत्यगादिभावं भजतीव भजतीत्याह--**मनस** इति ॥ समस्तप्राणिहृदयावच्छिन्नसंकल्पादिलक्षणमनसो **जवीयः** जववत्तरम् तस्य । दूरदेशंगतमनोवृत्तिसहस्त्रग्राहकत्वात् ।

यन्मनसा न मनुते येनाहुर्मनो मतम् ।

इति श्रुतेः । लोकप्रसिद्धजविष्ठमानसाग्राह्यत्वे किं वक्तव्यं इन्द्रियाग्राह्यत्वं इत्याह—**नैनत्** इति ॥ स्वस्वविषयद्योतनात् **देवाः** चक्षुरादीन्द्रियाणि स्वाधिष्ठानदेवतानुग्रहीतान्यपि **एनत्** आत्मतत्त्वं **न आप्नुवन्** न गृह्णन्तीत्यर्थः । कथमेनं न गृह्णन्तीत्यत आह—**अर्षत्** इति ॥ मनआदिकरणग्रामचलनाभासात् **पूर्वमेवाति**-वर्षति गच्छतीत्यर्षत् । आभासमात्रतोऽपि करणग्रामगोचरं **एतत्** न भवतीत्यर्थः । वस्तुतो निष्प्रतियोगिकचिन्मात्रमप्यात्मतत्त्वं स्वाज्ञदृष्ट्या मायाकृतविकारानुवर्तनात् विश्वविश्व—विराड्विराट्—ओत्रोत्रादि—त्रिपञ्चदशकलनां [1]आप्तवदिव भाति इत्याह—**तत्** इति ॥ तदेतदात्मतत्त्वं स्वविषयेषु स्वावस्थासु च नित्यं द्रुतं **धावतः** सर्वप्राणिमानसश्रोत्रवागादीन् विश्वविश्वादींश्च **अत्येति** अतिक्रामति । स्वाज्ञस्वज्ञदृष्टिभ्यां विकल्पितकरणग्रामतदध्यक्षविश्वविश्वादिमोहे सत्यसति [2]सर्वग्रासतुर्यतुर्यस्वरूपेण स्वयं **तिष्ठत्** सर्वदैकरूपेण स्थितमित्यर्थः । वस्तुतो निरधिष्ठानमपि दृष्टिवैषम्यादधिष्ठानतां [3]प्राप्तवदिव भाति इत्याह—**तस्मिन्** इति । यत् सर्वास्पदत्वेनाभिमतं तस्मिन् सन्मात्रे मातरि अन्तरिक्षे श्वयति चलतीति

[1] आप्तवद्भाति—उ १.
[2] सर्वं ग्रास—उ.
[3] प्राप्तवद्भाति—उ १.

सर्वक्रियाश्रयत्वेन सर्वप्राणभृत्सूत्रात्मको **मातरिश्वा** वायुः **आपः** वियदादिपञ्चभूतावकाशप्रदानादिशक्तीः भौतिकचराचरचलनादिशक्तीश्च **दधाति** विधारयतीत्यर्थः । "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्यचन्द्रद्यावापृथिवीनिमेषमुहूर्ताहोरात्रमासर्त्वयनसंवत्सरादयो विधृतास्तिष्ठन्ति", "भीषास्माद्वातः पवते" इति च श्रुतेः ॥ ४ ॥

क्रियाशक्त्यास्पदम्

तदेजति [1]तन्नैजति तद्दूरे तद्वन्तिके ।
तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः ॥ ५ ॥

सर्वा हि क्रियाशक्तयः स्वाधिष्ठाने सत्येव भवन्ति तदास्पदं किमित्यपेक्षायां आह—**तत्** इति ॥ उपाधियोगायोगाभ्यां तदेतत् आत्मतत्त्वं **एजति** इव **न एजति** इव चाविद्वद्विदुषां दृष्ट्यनुरोधेन **दूरे अन्तिके** च । तस्मिन्नारोपितनामरूपक्रियात्मकस्य **अस्य सर्वस्य** जगतः **अन्तः** अन्तरे । **बाह्यतो** बाह्ये च **तदु** तदेव । सर्वत्र भातीव भाति सर्वव्यापित्वात् । "य आत्मा सर्वान्तरः" इति श्रुतेः । वस्तुतो निरधिष्ठानत्वेन सर्वकलनापह्नवसिद्धमित्यर्थः ।

केवलं ब्रह्ममात्रत्वान्नास्त्यनात्मेति निश्चिनु ।

इति श्रुतेः ॥ ५ ॥

सर्वात्मभावनाप्रकारः

यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति ।
सर्वभूतेषु चात्मानं ततो न विजुगुप्सते ॥ ६ ॥

[1] तन्नेजति—क, उ १.

"तदन्तरस्य सर्वस्य" इत्यादिमन्त्रप्रकटितसर्वात्मभावनाप्रकारं तत्फलं च द्वौ मन्त्रावाहतुः—**यस्तु** इत्यादिना ॥ यस्तु मुमुक्षुः स्वाज्ञदृष्टिप्रसक्तस्वातिरिक्तं सर्वं विश्वविश्वादित्रिपञ्चदशारूपेण अततीति स्वात्मा। तस्मिन्नेव अव्यक्तादिस्थावरान्तगतसर्वाणि भूतानि। "अहमेवाधस्तात् अहमुपरिष्टात् अहं पश्चात् अहं पुरस्तात् अहं दक्षिणतः अहमुत्तरतः अहमेवेदं सर्वम्" इति श्रुत्यनुरोधेन **पश्यति** स्वात्मव्यतिरिक्तानि न पश्यति। पुनः वियदादिभूतभौतिकेषु चान्तर्यामिप्रत्यग्रूपेण तिष्ठन्तमात्मानं पश्यति। सोऽयं परिव्राट् विद्वान् सर्वात्मभावारूढो मुनिः। गुपेः निन्दायां सनः स्मरणात् जुगुप्सा निन्दा। तदभावो विजुगुप्सा तया। तन्निषेधो नञा क्रियते। स्वातिरिक्तदयनीयादयनीयवस्त्वन्तराभावात् इत्यर्थः ॥ ६ ॥

सर्वात्मभावनाफलम्

**यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः।**
**तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ ७ ॥**

सर्वात्मभावनाफलमाह—**यस्मिन्** इति। **यस्मिन्** काले **विजानतो** विदुषः सर्वात्मभावनामहिम्ना निष्प्रतियोगिकब्रह्ममात्रावरणायमानसर्वभावे निवृत्ते स्वाज्ञदृष्टिप्रसक्त**सर्वाणि** भूतभौतिकानि **आत्मैव** आत्ममात्रमेव **अभूत्** इत्यत्र—

यस्मिन् काले निर्विशेषब्रह्म जानाति योगिराट्।
तदानीमविशेषेण ब्रह्म संपद्यते मुनिः ॥

इति स्मृतेः। **तत्र** तस्मिन् काले स्वातिरिक्तसर्वभूतभौतिकपटलमस्ति नास्तीति **को मोहः**। स्वातिरिक्तसर्वभूतभौतिकापह्नवेऽपि **कः शोकः** इत्याक्षेपतः शोकमोहोपलक्षितस्वाविद्यापदतत्कार्यजातमस्ति नास्तीति विभ्रमापह्नवोक्तिरपि अपह्नवपदं भजेदिति द्योत्यते। ततः कालत्रयेऽपि ब्रह्ममात्रनिष्प्रतियोगिकतया अवशिष्यत इत्यर्थः।

ततः स्तिमितगंभीरं न तेजो न तमस्ततम् ।
अनाख्यमनभिव्यक्तं सत् किंचिद्वशिष्यते ॥

इति श्रुतेः ॥ ७ ॥

निष्प्रतियोगिकस्वात्ममात्रसिद्ध्युपायः

**स पर्यगाच्छुक्रमकायमव्रणं**
**अस्नाविरꣳ शुद्धमपापविद्धम् ।**
**कविर्मनीषी परिभूः स्वयंभूर्याथातथ्यतोऽर्थान्**
**व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥ ८ ॥**

यदि ब्रह्म निष्प्रतियोगिकत्वेन स्वमात्रं अवशिष्यते अनादिकालमारभ्य स्वाज्ञपरम्परापि वर्तते तस्याः तदधिगमोपायैरलभ्यमाशंक्य स्वाज्ञदृष्ट्यारोपितपरिच्छिन्नकायत्रयाद्यतन्निरसनमुखेन प्रत्यगभिन्नब्रह्मप्रबोधद्वारकनिष्प्रतियोगिकस्वात्ममात्रसिद्धिः भवेत् इत्ययं मन्त्र आह—**स पर्यगात्** इति ॥ शुक्रमित्यादिषट्पदान्यपि पुल्लिङ्गत्वेन विपरिणेयानि । स पर्यगादित्युपक्रम्य कविर्मनीषीत्यादिपुल्लिंगत्वेनोपसंहारात् । परमार्थदृष्ट्या योऽयं परमात्मा स्वमात्रमवशिष्यते **सः** अयं स्वाज्ञदृष्टिप्रसक्तस्वाविद्यापदतत्कार्यजाते स्वज्ञदृष्ट्या सच्चिदानन्दरूपेण **परि** परितः समन्तात् **अगात्** व्योमवत् व्यापित्वात् । "सर्वव्यापी सर्वभूतान्तरात्मा" इति श्रुतेः । जडव्यापित्वेऽपि **शुक्रं** शुक्रः ज्योतिष्मान् साधनान्तरनैरपेक्ष्येण स्वयंप्रकाशरूपत्वात् । कायत्रये सति स्वयंप्रकाशता कुतः इत्यत आह—**अकायं** इत्यादि । व्यष्टिसमष्ट्यात्मककारणलिङ्गशरीरापवादाधिकरणत्वेन अयमकायः । व्रण क्षतं स्नावा सिरा यस्य विद्यते तत् स्नाविरं स्थूलशरीरं तदपवादाधारः अव्रण अस्नाविरश्च भवति "अशरीरो निरिन्द्रियोऽप्राणोऽतमाः । सच्चिदानन्दमात्रः स्वस्वराट् भवति" इति श्रुतेः । अशुद्धकायत्रयहानात् शुद्धः । व्यष्ट्यादिकायत्रयहनन दोषतः शुद्धत्वं कुत इत्यत आह—**अपापविद्धं** इति । स्वातिरिक्तहन्तव्यकायत्रय

वैरळ्यात् अपापविद्धत्वेन शुद्धत्वं निरङ्कुशमित्यर्थः । योऽयमपापविद्धः प्रत्यगभिन्नपरमात्मा सोऽयं मूलाबीजांशयोगतः सर्वज्ञेशो भवतीत्याह—**कविः** इति । क्रान्तदर्शी सर्वदृगित्यर्थः । "अदृष्टं [1]द्रष्टृ" इति श्रुतेः । तस्य मनआदिकरणग्रामचालकत्वमाह—**मनीषी** इति । सर्वान्तरत्वेन मनआदिकरणग्रामं ईष्टे इति मनीषी सर्वज्ञेश्वर इत्यर्थः । "यो मनसि तिष्ठन्" इत्यादिकरणग्रामनियामकश्रुतेः । तस्य सर्वाधिकरणत्वेन सर्वोन्नतत्वमाह—**परिभूः** इति । परि सर्वोन्नतत्वेन उपर्युपरि भवतीति परिभूः । केन परिभूत्वमेतीत्यत आह—स्वयं इति । स्वेतरनैरपेक्ष्येण स्वयमेव सर्वाधारो भवति वेति **स्वयम्भूः** सोऽयं सर्वज्ञेश्वरः **शाश्वतीभ्यः समाभ्यः** ब्रह्मकल्पपर्यन्तम् । "धाता यथापूर्वमकल्पयत्" इति श्रुत्यनुरोधेन पूर्वपूर्वकल्पे यथाभूत् तथा उत्तरोत्तरकल्पगणेऽपीति । यथा तथा तद्भावो याथातथ्यं तस्मात् **याथातथ्यतः अर्थान्** अनन्तकोटिब्रह्माण्डतदन्तर्गतचतुर्दशलोकान् यथानुरूपं **व्यदधात्** व्यभजत् । जीवाज्ञानानुरोधेन सर्वं कल्पयामासेत्यर्थः । न स्वतः तस्य कल्पनाहेतुस्वाज्ञानवैरळ्यात् जीवदृष्ट्येयं कल्पना । जीवस्यापि स्वाज्ञानापाये—"यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् तत् केन कं शृणुयात् तत् केन कं विजानीयात्" इति । स्वातिरिक्तवस्तुपटलतद्दर्शनश्रवणप्रबोधासंभवश्रुत्यनुरोधेन संजातप्रबोध समकालं स्वाज्ञानदशायां दृष्टश्रुतज्ञाताविद्यापदतत्कार्यतदारोपापवादाधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तकलनादिः शेषमपह्नवमेत्य स्वात्ममात्रमवशिष्यते । यत एवं अतो बन्धमोक्षव्यवहारकर्ता नेश्वरः साक्षी वा जीव एवेत्यत्र—

नित्यभूतेर्जाग्रदादिभावाभावैकसाक्षितः ।
लीलाभूतेर्जाग्रदादावभिमानप्रहाणतः ॥
जडभूतेस्सुषुप्तत्वात् भोज्यत्वात् पारिशेष्यतः ।
त्र्यवस्थायुङ्मोहभूतिः कल्पकत्वं भजेत्तराम् ॥ इति,

[1] द्रष्ट्र—उ १.

जीवतः कल्पकाकारमीश्वरन्वादकल्पकम् ।

इति च त्रिपात्तत्वविवेकान्तःप्रणवोक्तेः ॥ ८ ॥

ब्रह्मलोकगमनं तदुपदिष्टज्ञानफललाभश्च

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।

ततो भूय इव ते तमो य उ विद्यायाꣳ रताः ॥ ९ ॥

ईशावास्यमित्याद्यमन्त्रेण परिव्राजकस्य ज्ञाननिष्ठोक्ता । कुर्वन्नेव इति द्वितीयमन्त्रेण तु परिव्राजकेतरस्य तदशक्तत्वेन स्वाज्ञानानुरोधं कर्मनिष्ठा अभिहिता । एतन्मन्त्रद्वयप्रदर्शितनिष्ठाद्वयविवेको बृहदारण्येऽपि दर्शितः । " किं प्रजया करिष्यामो येषां नोयमात्मायं लोकः " इति, " एतं वैतमात्मानं विदित्वा ब्राह्मणाः " इत्यादि । " जाया मे स्यादथ प्रजायेय वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान्वै कामो नेच्छंश्च नातो भूयः " इति च । असुर्या इति तृतीयमन्त्रेण काम्यकर्मनिष्ठानिन्दा कृता । अनेजदेक इत्यादिमन्त्रपञ्चकेना काम्यात्मयाथात्म्यं स्वातिरिक्तसर्वापह्नवसिद्धं ब्रह्ममात्रमित्यभिहितम् । अत्राकाम्ये वा अधिक्रियत इत्यत्र—

अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसंघजुष्टम् ।

इति मन्त्रवर्णात् । एतावता ग्रन्थेन विद्वदविदुषोः निष्ठाद्वयमभिहितम् । नात परं वक्तव्यमवशिष्यते । इत ऊर्ध्वं कुर्वन्नेवेतिमन्त्रोक्तकाम्यकर्माधिकारिणः इ जन्मनि जन्मान्तरे वा निष्कामबुद्ध्या अनुष्ठितविद्याविद्यासंभूत्यसंभूत्युपासनामहिम्न अर्चिरादिमार्गमवलम्ब्य ब्रह्मलोकं गत्वा ब्रह्मणा उपदिष्टविज्ञानफलं ब्रह्मण सह लभेयुः इत्युत्तरे मन्त्रा आरभ्यन्ते -- अन्धं इत्यादिना । विद्याविद्याशब्दे ईशावास्यं कुर्वन् इति मन्त्रद्वयप्रदर्शितज्ञानकर्मणी उच्येते । तयोरेव समुच्च इति चेन्न । सुतरामसंभवात् । स्वातिरिक्तकर्तृकारकक्रियाजुष्टस्वाविद्यापदतत्का जातापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रगोचरं हि ज्ञानम् । कर्म तु कर्तृकारका नानाविकारपटलात्मकम् । तयोस्तेजस्तिमिरवत् युगपदेकत्रावस्थानासंभवात

विद्याविद्याशब्देन शबलब्रह्मज्ञानकाम्यकर्मणी गृह्येते । अत एवेश्वरार्पणधिया सन्तः कर्म कुर्वन्ति इत्यत्र—"तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इति,

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसंगस्समाचर ॥

इत्यादिश्रुतिस्मृत्यनुरोधेन परमेश्वराराधनधिया सत्कर्मानुष्ठानं ज्ञानकर्मसमुच्चयार्थः । समुच्चयं विना प्रातिस्विकेनेश्वरोपासनं कर्म वा कृतं चेत् का हानिरिति चेत् कर्मसामान्यं हित्वा केवलोपासनां ईशभावं विना कर्म च कुर्वतां फलोद्देशेन स्वर्गादिसंभवेऽपि चित्तशुद्ध्यादिवैरळ्यतः प्रत्यवायः श्रूयते ।

श्रुतिः स्मृतिर्ममैवाज्ञा यस्तामुल्लंघ्य वर्तते ।
आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥

इत्यादिश्रुतिस्मृती तु "तमेवं वेदानुवचनेन" इति "यज्ञार्थात्" इत्यादि पुरस्तादेवोक्ते । प्रातिस्विकेन काम्यकर्मोपासनानिन्दा तु समुच्चिचीर्षया उपपद्यते । अन्यथा मुख्यफलाभावेऽपि गौणफलसंभवात् । "कर्मणा पितृलोको विद्यया देवलोकः" इति च पृथक्फलश्रवणात् एकैकपुरुषेणानुष्ठातुं शक्यत्वादिति प्रातिस्विकानुष्ठाननिन्दा क्रियते । ये चाविद्वांसः कामनाधिया विद्यां नित्यनैमित्तिकादिकर्मात्मिकां उपासते ते स्वर्गादिलोकाख्यान्धंतमः प्रविशन्ति ये कर्मसामान्यं हित्वा केवलदेवताज्ञानात्मकविद्यायामेवाभिरता भवन्ति । उशब्दोऽवधारणायाम् । विद्यायामेवेत्युक्तम् । तेऽप्यविद्वांसः ततः अन्धात्मकात्तमसः भूयो बहुतरमिव तमः प्रविशन्ति सकामनयोपासकस्य विद्याबलात् ब्रह्मलोकगमनेऽपि पुनर्वासनातो निर्गमनसंभवात् । निर्गमनस्य अन्धतमोरूपत्वादित्यर्थः ॥ ९ ॥

विद्याकर्मणोरवान्तरफलभेदः

**अन्यदेवाहुर्विद्ययान्यदाहुरविद्यया ।**
**इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १० ॥**

विद्याकर्मणोरवान्तरफलभेदं दर्शयति—**अन्यत्** इति । **विद्यया** जन्यं फलं **अन्यत्** । "विद्यया देवलोकः" इति श्रुतेः । **अविद्यया** कर्मणा जन्यं फलमपि **अन्यत् एव आहुः** । "कर्मणा पितृलोकः" इति श्रुतेः । **ये नः** अस्मभ्यं एवं विद्याकर्मफलभेदं **विचचक्षिरे** व्याख्यातवन्तः तेषां **धीराणां** वचनं **शुश्रुम** अतोऽयमागमः पारंपर्यागत इत्यर्थः ॥ १० ॥

समुच्चयानुष्ठाने फलाधिक्यम्

**विद्यां चाविद्यां च यस्तद्वेदोभयꣳ स ह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ॥ ११ ॥**

विद्याविद्यासमुच्चयानुष्ठाने फलाधिक्यमाह—**विद्यां** इति । **यः** पुमान् ईश्वरात्मभावरूपां **विद्यां** नित्यनैमित्तिकादिकर्मलक्षणां **अविद्यां च** एतत् **उभयं** एकपुरुषानुष्ठेयं **वेद स** समुच्चयानुष्ठाता निष्कामकर्मरूपया **अविद्यया** साध्यसाधनेषणाद्वयविजृम्भितकर्तृत्वभोक्तृत्वादिस्वाभाविकं **मृत्युं तीर्त्वा** सर्वज्ञेश्वराभेदज्ञानरूपया **विद्यया** तत्सारूप्यभावापत्तिरूपं **अमृतं** अश्नुते तत्तद्दृष्ट्यनुरोधं सालोक्यादिकं अश्नुते इत्यर्थः । न हि मुख्यममृतत्वं तस्य सर्वापह्नवसिद्धब्रह्ममात्रज्ञाननिष्पन्नत्वात् ॥ ११ ॥

विद्याविद्यानिन्दा

**अन्धं तमः प्रविशन्ति येऽसंभूतिमुपासते ।**
**ततो भूय इव ते तमो य उ संभूत्याꣳ रताः ॥ १२ ॥**

विद्याविद्यासमुच्चयानन्तरं संभूत्यसंभूतिसमुच्चयहेत्वोः पृथक् तयोर्निन्दोच्यते—**अन्धं** इति । **ये** सम्यक् भवतीति संभूतिः यस्या न विद्यते सेयमसंभूतिः नानाकामकर्मसंकल्पाविद्याद्वयबीजभूता प्रकृतिः तां **उपासते** तदनु

रूपमेव **अन्धं** अदर्शनात्मकं **तमः प्रविशन्ति** । पुनः **य उ** अविद्वांसः विराड्ढिरण्यगर्भायमाण**संभूत्यां** अभिरतास्सन्तः **ततः** प्रकृत्युपासनाफलरूपतमसोऽपि **भूयो** बहुतरमिव **तमः प्रविशन्ति** । उभावपि पुरुषार्थाद्धीयेते इत्यर्थः ॥ १२ ॥

तयोः फलभेदः

अन्यदेवाहुः संभवादन्यदाहुरसंभवात् ।
इति शुश्रुम धीराणां ये नस्तद्विचचक्षिरे ॥ १३ ॥

तदुभयफलभेदं विवृणोति—**अन्यत्** इति । **संभवात्** विराडादेरुपासनात् अणिमादिलक्षणं फलं **अन्यत्** । **असंभवात्** अव्याकृतप्रकृतेरुपासनात् प्रकृतिलयात्मकं फलं **अन्यत्** इति आहुः । **ये नस्तद्विचचक्षिरे** तेषां वचनमित्येवं शुश्रुम ॥ १३ ॥

सायुज्यहेतुः

संभूतिं च विनाशं च यस्तद्वेदोभयꣳ सह ।
विनाशेन मृत्युं तीर्त्वा संभूत्यामृतमश्नुते ॥ १४ ॥

संभूत्यसंभूतिपृथगुपासनायाः सकामस्याणिमादिसंसारहेतुत्वेऽपि निष्कामस्य मुमुक्षोः तयोः समुच्चयतः प्रकृतिप्राकृतारोपाधारेश्वरसायुज्यहेतुः स्यादिति तयोः समुच्चय उच्यते—**संभूतिं** इति । **यः** संभूत्यविनाशौ **सह** युगपत् एकेन पुरुषेणानुष्ठेयाविति **वेद** सोऽयं निष्कामोपासनाधिकारी **विनाशेन** विनाशवद्विराड्ढिरण्यगर्भोपासनेन धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणिमादिरूप**मृत्युं तीर्त्वा** साधिष्ठान**संभूत्या** अव्यक्तोपाधिकेश्वरोपासनेन प्रकृतिप्राकृतसम्बन्धास्पृष्टेश्वरसायुज्यात्मकं **अमृतं अश्नुते** संभूतिं च विनाशं च इत्यत्र प्रकृति-

लयफलश्रुत्यनुरोधादवर्णलोपेन निर्देशो द्रष्टव्यः। असंभूत्यादिसमुच्चयोपासना-फलं अर्चिरादिमार्गेण ब्रह्मलोकं गत्वा तन्मुखात् श्रुतनिर्विशेषप्रबोधतो जीवन्-मुक्ता भूत्वा ब्रह्मकल्पपर्यन्तं तत्रैवोषित्वा चतुष्पदैक्यसमये ब्रह्मणा सहैते विमुक्ता भवन्तीत्यर्थः ॥ १४ ॥

आत्मनः प्राप्तिद्वारयाचनम्

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥ १५ ॥
पूषन्नेकर्षे यम सूर्य प्राजापत्य व्यूह रश्मीन् समूह ।
तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि
योऽसावसौ पुरुषः सोऽहमस्मि ॥ १६ ॥
वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् ॥ १७ ॥
ॐ क्रतो स्मर कृतꣳ स्मर क्रतो स्मर कृतꣳ स्मर ॥ १८ ॥

प्रवृत्तिनिवृत्तिलक्षणो वेदार्थः। तत्र प्रवृत्तिलक्षणवेदार्थस्य प्रवर्ग्यान्तं ब्राह्मण-मुपयुक्तम्। अत ऊर्ध्वं निवृत्तिलक्षणस्य प्रकाशने बृहदारण्यकमिति। तत्र प्रवृत्ति-धर्माधिकारी अविद्यासंभूतिभ्यां मृत्युं तीर्त्वा विद्यया असंभूत्या चामृतं अश्नुते इत्युक्तस्सोऽयं आत्मनः प्राप्तिद्वारं याचते—**हिरण्मयेन** इति ॥

"तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन् मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषः" इति श्रुत्यनुरोधेन दक्षिणाक्षिसूर्यमण्डलस्थस्सन् "याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति" इति श्रुत्यनुरोधेन सर्वं पुष्णातीति हे **पूषन्** आदित्यमण्डलस्थस्य **सत्यस्य** ब्रह्मणो **मुख** मद्धन्तव्यद्वारं निकषाभिव्यक्तसहस्रवर्णाढ्यहिरण्यमिव हिरण्मयं तीक्ष्णगभस्तितं

ज्योतिर्मयं तेन **हिरण्मयेन पात्रेण** पिधानभूतेन **पिहितं** आच्छादितं **तत्त्वमपावृणु** उद्घाटय। कस्मै प्रयोजनाय पिधानपात्रोद्घाटनं इत्याकांक्षायामाह— सत्य इति। सत्यस्य तव उपासनात् सत्यं धर्मो यस्य मम **सत्यधर्माय** मह्यं समुच्चयानुष्ठात्रे केवलानुकम्पया तव सत्यात्मनो **दृष्टये** साक्षात्काराय च पिधानपात्रं अपाकुर्वित्यर्थः ॥ १५ ॥ किंच—**पूषणं** इति। हे **पूषन्**। एक एव ऋषति गच्छति इति **हे एकर्षे**। सर्वसंयमनात् हे **यम**। रश्मिप्राणरसादिस्वीकरणात् हे **सूर्य**। प्रजापतेरपत्यं हे **प्राजापत्य**। तावकरश्मीन् **व्यूह** विगमय। समूह उपसंहर। ततो **यत्ते** कल्याणरूपं त्वत्प्रसादात् **तत् पश्यामि**। किंच— **योऽसौ** इति। समुच्चयानुष्ठानात्तविवेकोऽहं न हि त्वां भृत्यवत् याचे। किन्तु पुरुषाकारत्वात् **योऽसौ** व्याहृत्यवयवो रविमण्डलस्थः विश्वविश्वादिरूपेण पुरिशयनाद्वा विराड्विराडादिरूपेण स्वाविद्यापदतत्कार्यापह्नवसिद्धनिष्प्रतियोगिकपूर्णतुर्यतुर्यस्वरूपेण वा पूरणात् **पुरुषः सोऽहमस्मि** इति प्रार्थये इत्यर्थः ॥ १६ ॥ ज्ञानकर्मसंस्कारतो मरिष्यतो मम प्राणवायुरध्यात्मपरिच्छेदं हित्वा अधिदेवतात्मानं **अनिलं** विराजमथामृतं सूत्रात्मानं ईश्वरं वा प्रतिपद्यतामिति वाक्यशेषः। **अथेदं शरीरं भस्मान्तं** भस्मावसानं भूयादित्यर्थः ॥ १७ ॥ किंच—**ओं क्रतो** इति। **ओं** इति सत्यात्मकं अग्न्याख्यं ब्रह्म तदभेदेन तत्प्रतीकत्वादुच्यते। हे **क्रतो** संकल्पात्मक यत् मम स्मर्तव्यं तत् **स्मर** तत्कालस्योपस्थितत्वात्। अतः स्मर। मया बाल्यप्रभृति यदनुष्ठितं त्वदुद्देशतो यद्यत् शोभनकर्म **कृतं** तदपि **स्मर** मदृणमोचनं यथा भवेत् तथा स्मर। स्मर स्मरेति पुनर्वचनं आदरार्थम् ॥ १८ ॥

मार्गान्तरयाचनम्

**अग्ने नय सुपथा राये अस्मान्विश्वानि देव वयुनानि विद्वान्।**
**युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥ १९ ॥**

पुनर्मन्त्रान्तरेण मार्गं याचते—**अग्ने** इति। हे **अग्ने अस्मान्** विद्याविद्यासंभूत्यसंभूतिसमुच्चयानुष्ठानशुद्धान्तरान् पुरा [1]यतो वयं दक्षिणमार्गे निर्विण्णा अत इदानीं **सुपथा** शोभनेन मार्गेण गमनागमनविरळेन **नय**। किमर्थमित्यत आह—**राय** इति। **राये** धनाय। निष्कामबुद्ध्या अस्मदनुष्ठितविद्याविद्यासंभूत्यसंभूतिसमुच्चयानुष्ठानजनितसालोक्यादिमुक्तिफलायेत्यर्थः। साधनान्तरनैरपेक्ष्येण सर्वत्र द्योतनात् हे **देव**। त्वं **विश्वानि** सर्वाणि **वयुनानि** निष्कामधिया अनुष्ठितविद्याविद्यासंभूत्यसंभूतिसमुच्चयप्रभवफलान्येतादृशानीति जानन्नपि किमस्मानुपेक्षसे। तव परमदयालुत्वेन सर्वज्ञत्वात्। इदानीं मया किं कर्तव्यमित्यत आह—**युयोधि** इति। अस्मत्प्रापणीयसालोक्यादिचतुर्विधमुक्तिपरिपन्थित्वेन विद्यमानं **जुहुराणं** वञ्चकं **एनः** पापं निर्दयं यथा भवति तथा युयोधि त्वदीयज्ञानखड्गेन द्विधा वियोजय निर्मूलय। अतो वयं शुद्धास्सन्तः त्वत्पदं प्राप्य त्वदुपदिष्टब्रह्मविज्ञानतः त्वया सार्कं चतुष्पदैक्यसमये कृतकृत्यपदं लभेम इत्यभिप्रायः भवदिष्टकरणे भवद्भिः पूर्ववत् सपर्या कर्तव्येत्यत आह—**भूयिष्ठां** इति वयमतीव जरठाः सपर्यां कर्तुमशक्ताः। अत इदानीं **भूयिष्ठां** बहुतरां ते तुभ्य **नमउक्तिं** नमस्कारवचनं विधेम। यद्वा—"नमस्त्वैक्यं प्रवदेत्" इति श्रुत्यनुरोधेन परमेश्वरोऽस्मीत्यनुसन्धानं **विधेम** इत्यर्थः। समुच्चयानुष्ठातॄणां इ जन्मनि मुख्यामृतत्वं किं न स्यादितिचेत् न। ब्रह्ममात्रप्रबोध[2]वैरळ्यादिति तेष समुच्चयानुष्ठानविद्याफलार्पणसन्तुष्टेश्वरप्रसादतः "पश्यतेहापि सन्मात्रमस दन्यत्", "ब्रह्ममात्रमसन्नहि" इति ;

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्रमम्॥

इति च श्रुत्यनुरोधेन स्वाज्ञस्वज्ञदृष्टिविलसितस्वातिरिक्तात्मत्वसत्यत्वव्यावहारिकत्वप्रातिभासिकत्वादिकलनास्ति नास्तीति विभ्रमापह्नवसिद्धं ब्रह्म स्वमात्रमि

[1] यतो वयं—नास्ति उ १.

[2] वैरळ्याद्यदि—उ १.

प्रबोधसमकालं विद्याविद्यासंभूत्यसंभूतिप्रातिस्विकसमुच्चयोपासनतत्फलकलनाग्रास-ब्रह्ममात्रावस्थानलक्षणविकलेबरकैवल्यमेव मुख्यामृतत्वं भवेत् । अन्यथा समुच्च-यानुष्ठानफलं सालोक्यादिकमेव सिद्ध्येदिति सिद्धम् ॥ १९ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
ईशावास्यविवरणं लिखितं कृपया हरेः ।
ईशविवरणग्रन्थः षष्ट्यधित्रिशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे प्राथमिकेशावास्योपनिषद्विवरणं सम्पूर्णम्

ॐ श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुरामचन्द्रार्पणमस्तु

---

# केनोपनिषत्

आप्यायन्तु—इति शान्तिः

## प्रथमः खण्डः

शिष्यप्रश्नः

ॐ केनेषितं पतति प्रेषितं मनः केन प्राणः प्रथमः प्रैति युक्तः ।
केनेषितां वाचमिमां वदन्ति चक्षुः श्रोत्रं क उ देवो युनक्ति ॥

श्रोत्रादेः श्रोत्रादिरूपं विदिताविदितात्परम् ।
तत्सर्वापह्नवात् सिद्धं कलये परमाक्षरम् ॥

तलवकारशाखायां दर्शपूर्णमासादिसमस्तकर्मकर्माङ्गसामानि गायत्रसामवंशब्राह्मणानि समस्तकर्माश्रयभूतमुख्य[1]प्राणोपासनानि चाभिहितानि । प्रातिस्विकेन तत्रत्यकर्मज्ञानं वा प्राणविज्ञानसमुच्चितकर्म वा सम्यगनुष्ठितं सत् सकामस्य धूमादिमार्गप्रतिपत्तये पुनरावृत्तये च भवति । "तस्मिन् यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते" इति,

तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ।

1 प्राणस्योपासनानि—उ १.

इति च श्रुतेः स्मृतेश्च। निष्कामस्य मुमुक्षोः ईश्वरार्पणधिया यथोक्तकर्मज्ञानसमुच्चयानुष्ठानतारतम्यात् अर्चिरादिमार्गतः सालोक्यादिक्रममुक्तिर्वा स्वकृतकर्मफलार्पणसन्तुष्टेश्वरप्रसादजनितचित्तशुद्धिप्राप्यपारमहंस्याश्रमाप्तिद्वारा प्रत्यगभिन्नब्रह्मजिज्ञासा वा जायते। तथाविधजिज्ञासोः आत्मतत्त्वप्रकाशनाय केनेषितं इत्यादिनवमाध्याय आरभ्यते। "आचार्यवान् पुरुषो वेद," "आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्" इति, "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इति,

तद्विद्धि प्रणिपातेन [1]तत्प्रश्नेन च सेवया।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः॥

इति च श्रुतिस्मृत्यनुरोधेन यथोक्तसाधनसंपन्नाधिकारी कश्चन शिष्यः सत्सम्प्रदायस्थं निष्प्रतियोगिकनिर्विशेषब्रह्ममात्रनिष्ठं विधिवदुपेत्य तन्निकटे तदुचितशुश्रूषापूर्वकं चिरमुषित्वा यदा तत्कटाक्षः प्रसरेत् तदा भोः स्वामिन् सर्वानर्थकरं हि मनआदिकरणजालं येनाहं भवाब्धौ निपातितोऽस्मि।

चित्तमेव हि संसारः तत् प्रयत्नेन शोधयेत्।

इति श्रुत्यनुरोधेन न हि तदियत्तापरिज्ञानं विना तत्करणग्रामशान्तिः उपपद्यते। तत् मया वार्यमाणमपि सर्वासु दिक्षु परिधावति। विचार्यमाणे रथादिवत्तदचेतनं प्रतिभाति। चेतनाधिष्ठितरथादिप्रवृत्तिवत् मनआदिकरणग्रामस्य प्रवर्तकं विना न हि प्रवृत्तिरुपपद्यते। तन्मनआदिकरणग्रामस्तु नियमेन प्रवर्तते। न ह्यधिष्ठातर्यसति प्रवृत्तिः भवेत्। तत्प्रवृत्तिनिमित्तं किंचिदस्ति इति सामान्यतोऽधिगतेऽपि तद्विशेषार्थो नावभासते। तत्प्रवृत्तिनिमित्तं कीदृशमिति विजिज्ञापयिषया पप्रच्छेति कल्प्यते। "केनेषितं," "श्रोत्रस्य श्रोत्रं" इत्यादिप्रश्नप्रतिवचनदर्शनात्। न च स्वतन्त्रं मनः स्वेष्टानिष्टविषयेषु प्रवर्तते निवर्तते च किं निमित्तपरिज्ञानेन इति वाच्यम्। जडस्य मनआदेः कुलालचक्रवत्

[1] परिप्रश्नेन—उ १.

स्वातन्त्र्यानुपपत्तेः । यदि स्वतन्त्रं मनः स्वानर्थविषये न प्रवर्तेत वार्यमाणमपि तन्मनः प्रवर्तते हि । तन्निमित्तयाथात्म्यज्ञानतः तदुन्मूलनं कर्तुं सुशकमिति तद्विषयप्रश्नोऽर्थवानिति पृच्छति--**केनेषितं** इत्यादिना । **इषितं** इति इट्-प्रयोगस्तु छान्दसः । इषेराभीक्ष्ण्यगत्यर्थासंभवात् इह इच्छार्थे तदुपपत्तेः । इषितमिति **प्रेषितं** इवेत्युपमार्थः राजप्रेरितभृत्यवर्गवत् । **केन** अधिष्ठातृ-विशेषेण । संकल्पादिविषयजातं अनेन मनुते इति **मनः** अन्तःकरणं इषितमिष्टमभिप्रेतं सत् संकल्पादिविषये **पतति** स्वविषयं प्रत्यनुधावति । तत् कस्येच्छामात्रेण स्वव्यावृतौ व्याप्रियत इत्यर्थः । न हीषितप्रेषितयोः पुनरुक्तिः उपमार्थस्योक्तत्वात् । न हि राजा भृत्यानिव चिद्धातुर्मनआदिकरणग्रामं स्वविषयं प्रति प्रेरयेत् । राजभोजननिमित्तघटिकासूचिघण्टारववत् स्वाधिष्ठेयकरणग्रामतद्-वृत्तिभावाभावप्रकाशकतया निमित्तमात्रं लोकप्रवृत्तिनिमित्तरविवदसंगतया मन-आदिप्रवृत्तिनिमित्तमात्रं भवतीत्यत्र हस्तामलकाचार्या आहुः—

निमित्तं मनश्चक्षुरादिप्रवृत्तौ निरस्ताखिलोपाधिराकाशकल्पः ।
रवेर्लोकचेष्टानिमित्तं यथा यः स नित्योपलब्धिस्वरूपोऽहमात्मा ॥

इति । तथाच—

आस्यनासिकयोर्मध्ये प्राणः सञ्चरते सदा ।

इति श्रुतिसिद्धप्राणसंयोगात् घ्राणः प्राण उच्यते । प्रकरणात् प्राणाभेदेन घ्राणस प्राथम्यम् । करणानां विषयावभासकत्वेऽपि तत्करणव्यापृतिस्त्वन्वयव्यतिरेकाभ्य प्राणायत्तेत्यत्र "[1]यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव [2]दृश्यते स वः श्रेष्ठः इति चक्षुरादीन्द्रियापेक्षया प्राणप्राधान्यश्रुतेः । **केन** सर्वेन्द्रियाणां **प्रथमः प्राण युक्तः** नियुक्तस्सन् स्वविषयीभूतसुरभ्याद्युच्छ्वासादिव्यापृतौ **प्रैति** धावति **केनेषितामिमां** शब्दलक्षणां **वाचं** लोका **वदन्ति** । **क उ** स्वयं द्योतनावा **देवः चक्षुः श्रोत्रं च** रूपादिविषये **युनक्ति** नियुङ्क्ते प्रेरयतीत्यर्थः ॥ १ ॥

[1] यस्मिन्नु—उ १.

[2] दृश्येत—उ १.

*4

तत्प्रश्नप्रतिवचनम्

श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य
प्राणश्चक्षुषश्चक्षुरतिमुच्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥२॥

एवं शिष्यप्रश्नानुरूपप्रतिवचनमाहाचार्यः—श्रोत्रस्य श्रोत्रं इत्यादिना। "ब्रह्ममात्रमसन्न हि" इति श्रुतिसिद्धस्वातिरिक्तसर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति अज्ञानतो ब्रह्मातिरिक्तमचेतनं मनआदिकरणजालं अस्तीति निश्चित्य तत्प्रवृत्तिनिमित्तबुभुत्सया पृच्छति शिष्ये तत्प्रश्नानुरूपप्रतिवचनं युक्तम्। तदन्यथा मनआदिकरणग्रामापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमित्युक्ते तदन्यथाभावनया तत्प्रवृत्तिरेव न स्यात्। तत् ब्रह्ममात्रबुद्ध्यारोहाय स्वकल्पितश्रोत्रादिकरणग्रामासंगतया तद्व्यापृतिनिमित्तप्रत्यग्बोधो जायते। स्वान्तःकरणापवादाधारः प्रत्यक् स्वबहिःप्रपञ्चापवादाधिकरणं ब्रह्म। स्वान्तर्बाह्यकलनापवादाधारयोः प्रत्यग्ब्रह्मणोरभेदे "तत्त्वमसि," "अहं ब्रह्मास्मि" इति श्रुतिर्मानम्। ततः प्रत्यगभिन्नब्रह्मबोधो जायते। ततः,

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्लमम्॥

इत्यादिश्रुतिसिद्धस्वान्तर्बाह्यप्रपञ्चकलनापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रबोधः सहसा प्रभवेदिति निश्चित्य आदौ करणग्रामप्रवृत्तिनिमित्तप्रत्यक्तत्त्वमुच्यते। शृणोत्यनेनेति शब्दश्रवणं प्रति करणं श्रोत्रमुच्यते। स्वोपलब्ध्यनुगृहीतश्रोत्रादेः स्वविषयावभासकत्वं न स्वतः। श्रोत्रादेः जडत्वात्। यथायस औष्ण्यमनित्यम्। अग्निनिष्ठत्वात्। अग्नेः औष्ण्यं नित्यम्। स्वभावसिद्धत्वात्। तथा श्रोत्रस्योपलब्धृत्वं अनित्यम्। उपलब्धुरुपलब्धृत्वं नित्यम्। न च चक्षुः श्रोत्रं क उ देवो युनक्तीति प्रश्नस्य प्रतिवचनं "श्रोत्रस्य श्रोत्रं" इत्यादि न युक्तमिति वाच्यम्। प्रतिवचनस्य प्रश्नानुरूपत्वात्। यदि कुठारादिप्रयोक्तृवत् श्रोत्रादिभिन्नतया प्रयोक्ता दृश्येत तदा तदनुरूपं प्रतिवचनं न स्यात्।

स्वयमेव जगद्भूत्वा प्राविशज्जीवरूपतः । इति,
श्रोत्रादिवाक्प्राणमनोऽपि भूत्वा श्रोत्रादिवाक्प्राणमनस्यसङ्गः ।
तत्तत्प्रबोधं जनयन्नुदास्ते स रामचन्द्रोऽस्म्यहमेकरूपः ॥

इति श्रुतेः प्रभोक्तेश्च । स्वाङ्गस्वज्ञदृष्टिभ्यां श्रोत्रादित्वं तदसङ्गत्तया तत्प्रवृत्ति-निमित्तत्वं चोपपद्यत इति प्रश्नानुरूपमेव प्रतिवचनमित्यर्थः । तथा **मनसः** संकल्पादिवृत्त्यवभासकत्वम् । **यद्वाचो ह वाचं** यच्छब्दो यस्मादर्थे श्रोत्रा-दिभिः संबध्यते यस्मात् "श्रोत्रस्य श्रोत्रं" इत्यादि । वाचो ह वाचमित्यत्र द्वितीयायाः प्रथमार्थः । वाचो ह वागिति यस्त्वया पृष्टः **स उ प्राणस्य प्राणः** इति **चक्षुषश्चक्षुः** इति च मनआदिचक्षुरन्तोपलक्षितकरणग्रामस्य संकल्पाभि-धेयप्राणनरूपप्रकाशनादिसामर्थ्यं तदधिष्ठातृतद्भावाभावप्रकाशकचैतन्यमात्र - निमित्तम् । "को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति ।", "ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति" इत्यादिश्रुतेः । यद्वा—"यद्वाचो ह वाचं प्राणस्य प्राणः" इत्यत्र सर्वत्र विभक्तिद्वयमुपयुज्यते । मनआदिकरणग्रामप्रवृत्तिनिमित्तं किमिति प्रश्नप्रतिवचनं तत्प्रवृत्तिनिमित्तं प्रत्यक्तत्त्वमिति प्रथमया निर्देशः । तत्प्रवृत्तिनिमित्तं पृच्छतो ज्ञेयत्वेन कर्मत्वमिति द्वितीयया निर्देशः । वाचो ह वाक् वाचो ह वाचं विद्धीति विभक्तिद्वयं सर्वत्र द्रष्टव्यम् । यत स्वान्तश्रोत्रादेः श्रोत्रादिलक्षणत्वेन तदारोपापवादाधिकरणत्वेन च तद्भावाभावप्रकाशकप्रत्यग्रूपत्वात् तदेव स्वदेहात् बहिः प्रपञ्चारोपापवादाधिकरणत्वेन तद्भावाभावप्रकाशकप्रत्यगभिन्नब्रह्मास्मीति ज्ञात्वा तज्ज्ञानविज्ञानसम्यग्ज्ञानतः तमोरजस्सत्त्वसच्चिदानन्दावरणागामिसञ्चिता-रब्धभ्रान्तिजसहजकर्मजतादात्म्यस्थूलादिभागत्रयोपमर्दकब्रह्मविद्वरीयस्त्वमेत्य स्वा-तिरिक्तप्रपञ्चजातं मिथ्यात्वेन **अतिमुच्य** निरस्य **धीरा** जीवन्मुक्ताः स्वदेह-दारादौ अहंकारममकारविजृम्भितात् **अस्मात् लोकात्** **प्रेत्य** व्यावृत्य मृत्व शरीरान्तरारम्भकवासनाक्षयतः अमरणधर्माणः **अमृताः भवन्ति** । चतुष्पदैक्य-समये स्वातिरिक्तार्धमात्राप्रपञ्चापह्नवसिद्धनिष्प्रतियोगिकामृता भवेयुरित्यर्थः

स्वाज्ञानायत्तौ बन्धमोक्षौ जीवाः स्वाज्ञानव्यवधानतो बद्धा इव मुक्ता इव चोपचर्यन्ते। जीवानां वस्तुतः प्रकृत्या लब्धावरणत्वादित्यत्र,

अलब्धावरणाः सर्वे धर्माः प्रकृतिनिर्मलाः।
आदौ बुद्धास्तथा मुक्ता बुध्यन्त इति नायकाः॥

इति गौडपादाचार्योक्तेः। यद्वा—श्रोत्रस्य श्रोत्रादिरित्यत्र प्राथमिकश्रोत्रादिशब्देन स्वाविद्यापदतत्कार्यजातं उपलक्ष्यते। द्वितीयश्रोत्रादिशब्देन तदारोपापवादाधिकरणप्रत्यगभिन्नब्रह्म लक्ष्यते। तत्र यदधिष्ठेयं अविद्यापदतत्कार्यजातं निष्प्रतियोगिकाभावमात्रं परमार्थदृष्ट्यभातत्वात् तदधिष्ठानं प्रत्यगभिन्नं ब्रह्म प्रत्यक्परविभागसापेक्ष[1]प्रभावैक्यगतहेयांशमात्रापह्नवात् तन्निष्प्रतियोगिकभावरूपं स्वमात्रतया परमार्थदृष्टिभातत्वात् अशेषविशेषापह्नवसिद्धं ब्रह्म स्वाविद्यापदतत्कार्यजातं ब्रह्मातिरिक्तम्। तयोः ब्रह्मातिरिक्तयोः आधाराधेयता अस्ति नास्तीति विभ्रमापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकं स्वमात्रमवशिष्यत इति ज्ञात्वा तज्ज्ञानसमकालं स्वातिरिक्तत्वात्मत्वसत्यत्वव्यावहारिकत्वप्रातिभासिकत्वभ्रमं अतिमुच्य तच्छून्यत्वेन विभाव्य पुरा स्वाज्ञस्वज्ञदशायां स्वातिरिक्तमात्मसत्यव्यवहारप्रतिभासशून्यत्वेनावलोक्यत इति लोकः। स्वातिरिक्तास्तितादिभ्रमः। तस्मात् अस्मात् लोकात् प्रेत्य स्वातिरिक्तसर्वापह्नवं कृत्वा निष्प्रतियोगिकामृता भवन्तीत्यत्र—"स यो ह वैतत् परमं ब्रह्म वेद ब्रह्मैव भवति," "य एवं निर्बीजं वेद निर्बीज एव स भवति" इति ब्रह्ममात्रज्ञानसमकालं निष्प्रतियोगिकब्रह्ममात्रभावापत्तिश्रुतेः। श्रोत्रादिकरणग्रामप्रवृत्तिनिमित्तं ईशचैतन्यं प्रत्यक्चैतन्यं प्रत्यगभिन्नब्रह्मचैतन्यं तद्गतहेयांशापह्नवसिद्धब्रह्ममात्रं वा यद्यस्ति तदा तत् विशेषतः प्रतिपादयेति चेत् न। दर्शनीयब्रह्मणो निर्विशेषत्वात्। न हि निर्विशेषे वस्तुनि मनआदिप्रवृत्तिरस्ति जातिगुणक्रियाविशेषविशिष्टवस्तुनि खलु करणग्रामप्रवृत्तिः। न हि जातिगुणादिविशेषवत् ब्रह्म तत् कथं विशेषतः प्रतिपादयितुं शक्यम्। केनेषितं [2]इति प्रश्नस्य

[1] प्रभवैक्य—उ १.

[2] इत्यादि—उ १.

श्रोत्रस्य श्रोत्रमित्यादिना प्रतिवचनमुक्तमपि तद्वाक्ययाथात्म्याज्ञानादेव पुनः पर्यनुयुयुक्षा ॥ २ ॥

निष्प्रतियोगिकब्रह्मप्रतिपादनम्

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यात् ।
अन्यदेव तद्विदितादथो अविदितादधि ।
इति शुश्रुम पूर्वेषां ये नस्तद्व्याचचक्षिरे ॥ ३ ॥

यद्वाचानभ्युदितं येन वागभ्युद्यते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ४ ॥

यन्मनसा न मनुते येनाहुर्मनो मतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ५ ॥

यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ६ ॥

यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ७ ॥

यत्प्राणेन न प्राणिति येन प्राणः प्राणीयते ।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ॥ ८ ॥

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ॥

इत्यादिकरणग्रामतत्प्रवेशाप्रवेशकलनावैरल्यश्रुत्यनुरोधेन निर्विशेषब्रह्ममात्रे तत्करणग्रामप्रवृत्तिनिवृत्ती न स्तः । येनाहं विशेषतः प्रतिपादये इत्याह—

**न तत्र** इति । स्वातिरिक्तप्रसक्तचक्षुर्वाङ्मनश्च स्वप्रवृत्तिनिमित्तप्रत्यक्चैतन्येऽपि घट इव **न** हि **गच्छति** तत्प्रवृत्तिनिमित्तप्रत्यक्चैतन्यस्याचाक्षुषत्वेन अनभिधेयत्वेन अमनस्करूपत्वेन च तदस्पृष्टत्वात् प्रत्यग्भावास्पृष्टकरणकदम्बं तत्कलनापह्नवसिद्धब्रह्ममात्रं कथं स्प्रष्टुं पारयति । तदपह्नवसिद्धब्रह्ममात्रबुद्ध्यारोहाय यथा येन प्रकारेण श्रोत्रस्य श्रोत्रमित्याद्युपायं विना निष्प्रतियोगिकत्वेनैतत् ब्रह्ममात्रं यः कोऽप्याचार्य ईश्वरो वा स्वशिष्येभ्यः विशेषवत् अनुशिष्यात् उपदिशेत् । तथा वयं **न विद्मः** । चक्षुरादिबाह्यकरणवैरळ्यात् । तथा **न विजानीमः** । मनआद्यन्तःकरणवैरळ्यात् । यत्करणकदम्बगोचरं तदन्यस्मै उपदेष्टुं शक्यम् । सविशेषत्वेन विदितत्वात् । यत् करणग्रामागोचरं **तत्** अन्यस्मै उपदेष्टुमशक्यम् । तस्याविदितत्वात् । इति हेतुद्वयाभ्यां शिष्योपदेशवैय्यर्थ्ये ज्ञाते सर्वापह्नवसिद्धब्रह्ममात्रप्रबोधवैरळ्यमाशंक्य विदिताविदितत्वेन प्रत्यक्षादिप्रमाणैः प्रतिपादयितुमशक्यत्वेऽपि विदिताविदितप्रपञ्चापह्नवमुखेन प्रतिपादयितुं शक्यत एवेत्यागम आह --**अन्यत्** इति । जाग्रज्जाग्रदादिस्वापतुर्यान्ततद्व्यष्ट्यारोपाधारविश्वविश्वादिप्राज्ञतुर्यान्ततत्समष्ट्यारोपाधारविराड्विराडादिबीजतुर्यान्ततद्व्यष्टिसमष्ट्यैक्याभिमान्योत्रोत्राद्यनुज्ञैकरसाविकल्पान्ताष्टाचत्वारिंशत्कलनायाः स्वात्मावरणत्वेन मिथो भेदप्रतीत्यर्हत्वेनावास्तवत्वेन च विदितत्वादविद्यापदस्थूलादिभागत्रयं तदारोपाधिकरणं च विदितमिति यच्चैतन्यं जानाति तद्धि **विदितादन्यत्** । ज्ञात्रन्तराभावात् । विदितादन्यत्वं सिद्धमित्यत्र—"विज्ञातारमरे केन विजानीयात्", "स वेत्ति वेद्यं न च तस्यास्ति वेत्ता" इत्यादिश्रुतितः स्वातिरिक्तविज्ञाता प्रतिषिध्यते । **यद्यथो** ब्रह्मणो विदितादन्यत्वे अविदितत्वं स्यादित्यत आह—**अविदितादधि** इति । तुर्यजाग्रदादितुर्यस्वापान्ततद्व्यष्ट्यभिमानितुर्यविश्वादितुर्यप्राज्ञान्ततत्समष्ट्यभिमानितुर्यविराडादितुर्यबीजान्ताविकल्पोत्राद्यविकल्पानुज्ञैकरसान्तद्वादशकलनाया जाग्रज्जाग्रदाद्यष्टाचत्वारिंशत्कलनेवात्मावरणभेदप्रतीत्यवास्तवत्वसाम्येऽप्यात्मावरणादिरस्तीत्यविदितत्वादविदितत्वम् । तस्य ज्ञानापेक्षत्वात् । अविदिते वस्तुनि हि ज्ञानापेक्षा यद्विज्ञानानपेक्षं तदविदितादधि अधिशब्दोऽन्यदित्यर्थः । तद्यस्याधि तत्ततोऽन्यदित्यर्थः । अविदितादन्यस्य विज्ञानस्वरूपत्वात् "विज्ञानमानन्दं

ब्रह्म '' इति श्रुतेः । जाग्रज्जाग्रदाद्यष्टाचत्वारिंशत्कलनात्मकाद्विदितादन्यत् ब्रह्मेत्युक्ते तद्गतहेयांशापह्नवसिद्धचिन्मात्रत्वं उक्तं स्यात् । तुर्यजाग्रदाद्युपादेयद्वादशकलनात्मकात् अविदितादधि ब्रह्मेत्युक्ते तद्गतोपादेयांशापह्नवसिद्धचिन्मात्रमेव निष्प्रतियोगिकमवशिष्यत इत्युक्तं स्यात् । एवं स्वातिरिक्तविदिताविदितायमानजाग्रज्जाग्रदादिचतुष्पञ्चदशकलनापह्नवसिद्धनिष्प्रतियोगिकतुर्यतुर्यब्रह्म - स्वमात्रमिति प्रबोधसमकालं स्वातिरिक्तात्मत्वसत्यत्वव्यावहारिकत्वप्रातिभासिकत्वादिविभ्रमापह्नवीकरण[1]विषयाभावात् तदीयापह्नवोक्तिरपि अपह्नवतां भजेत् । ततो निष्प्रतियोगिकब्रह्ममात्रं अवशिष्यत इत्यत्र "पश्यतेहापि सन्मात्रमसदन्यत्", "ब्रह्मव्यतिरिक्तं न किंचिदस्ति", "मद्व्यतिरिक्तमणुमात्रं न विद्यते",

अनात्मेति प्रसङ्गो वा अनात्मेति मनोऽपि वा ।
अनात्मेति [2]जगद्व्यापी नास्त्यनात्मेति निश्चिनु ॥
इदं प्रपञ्चं यत्किंचिद्यद्यज्जगति वीक्ष्यते ।
दृश्यरूपं च दृग्रूपं सर्वं शशविषाणवत् ॥
सच्चिदानन्दमात्रोऽहं अनुत्पन्नमिदं जगत् ।
सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ॥
ब्रह्मैवैकमनाद्यन्तं सत्किञ्चिदवशिष्यते ।

इति श्रुतिमानसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति **नः** अस्माकं **ये** ब्रह्मविद्वरीयांसो **व्याचचक्षिरे** विस्पष्टं व्याख्यातवन्तः । तेषां ऋभुनिदाघजडभरतदत्तात्रेयशुकवामदेवोद्दालकवीतहव्यप्रभृतीनां **पूर्वेषां** ईशावास्यादिमुक्तिकोपनिषदन्तनिगमान्तविलसन्महावाक्यपरम्परां तदर्थं च **शुश्रुम** श्रुतवन्तो वयमित्यस्वातन्त्र्यं स्वबुद्ध्यूहापोहप्रतिषेधार्थं "नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ" इति श्रुतेः । "अन्यदेव तद्विदितादथो अवि-

[1] विषयभावात्—उ १.

[2] जगद्व्यापि—उ १.

दितादधि" इति वाक्यतो विदिताविदितप्रपञ्चापह्नवसिद्धं ब्रह्म स्वमात्रमिति विदिते अर्थे वस्तुनि स्वाज्ञस्वदृष्टिदोषादेवं वदति कथं ब्रह्म स्वमात्रं स्वस्य नामरूपविशिष्टजीवत्वेन विविधकर्मोपासमासु अधिकृतत्वात् कर्मोपासना-साधनतः स्वर्गं सालोक्यादिमुक्तिं वा इच्छति। तद्भिन्न उपास्यो मघवान् ईश्वरो वा भवितुं अर्हति। न ब्रह्ममात्रम्। शास्त्रविरोधात्। तत्तन्मतनिर्वाहक-तत्तच्छास्त्रप्रवर्तकाचार्यदृष्टिवैषम्यतः उपासकोपास्यभेदाभेदौ दृश्येते। तत्रा-सल्लौकिकाः देहेन्द्रियमनोबुद्ध्यादिरहं इत्याचक्षते। देहाद्यतिरिक्तजीव आत्मेति मीमांसकाः। वयमुपासकाः सूर्यशक्तिविष्णुगणेशमहेशभैरवादयः उपास्याः। तदुपासनया सालोक्यादिमुक्तिं भजाम इति द्वैत्यादयो मेनिरे। केचन ईश्वराभेदज्ञानतः कृतकृत्या भवन्तीति। शास्त्रप्रत्ययविरोधात्॥ ३॥

ब्रह्मभिन्नोपासकस्य स्वमात्रता कुत इति प्राप्तं तद्दृष्टिगतोपास्यवैचित्र्य-प्रतिषेधाय केनेषितमितिप्रश्नानुरूपं "श्रोत्रस्य श्रोत्रं" इत्यदिनिर्विशेषं ब्रह्म प्रतिपाद्य तत्र विशेषादर्शनशंकायां "न तत्र चक्षुर्गच्छति" इत्यादिना चक्षु-रादिकरणग्रामाप्रवर्तितोपदेशप्रत्याख्याने "अन्यदेव तद्विदितात्" इति ब्राह्मण-वाक्येन चक्षुरादिकरणग्रामतदध्यक्षोपलक्षितविदिताविदितकलनापह्नवसिद्धं ब्रह्म स्वमात्रमिति योयं आगमार्थ आम्नातः तदुपायत्वेन इमे मन्त्रा आरभ्यन्ते—यद्वाचो ह वाचमित्यादिवाक्यवृत्त्यर्थाः **यद्वाचा** इत्यादयः। "अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिः व्यज्यमाना बह्वी नानारूपा भवति तस्य वाकतन्त्रीर्नामानि दामानि तस्येदं वाचा तन्त्र्या नामभिः दामभिः सर्वं सितम्" इति श्रुतिसिद्धजिह्वामूलाद्यष्टस्थानाभिव्यक्ताज्ञेयार्थसंकेतवर्णाभिव्यञ्जक-सुप्तिङन्तपदतत्समूहवाक्यविजृंभितवेदशास्त्रायमाणया स्वप्रवृत्तिनिमित्तसत्ताति-रिक्तसत्ताविरळया **वाचा** यच्चैतन्यमात्रं **अनभ्युदितं** अनभ्युक्तं अप्रकाशितं इत्यर्थः। "यतो वाचो निवर्तन्ते" इत्यादिश्रुतेः। **येन** स्वनिमित्त-भूतचैतन्यज्योतिषा सकरणा **वाक् अभ्युद्यते** प्रकाश्यत इत्यर्थः। "यद्वाचो ह वाचं", "वाचमन्तरो यमयति" इति श्रुतेः "या वाक् पुरुषेषु सा घोषेषु प्रतिष्ठिता। सा वाक् यया स्वप्ने भाषते। सा हि वक्तुर्वक्तिः नित्या वाक् चैतन्य-

ज्योतिःस्वरूपा । न हि वक्तुर्वक्तेर्विपरिलोपो विद्यते । अविनाशित्वात् । न तु तद्द्वितीयमस्ति । ततोऽन्यद्विभक्तं यद्वदेत्" इत्यादिश्रुतिसिद्धवागादिकरणग्रामप्रवृत्तिनिमित्तचिद्धातोः पराग्भावसापेक्षप्रत्यग्भावापह्नवतः स्वमात्रतयोपबृंहणात् तदेव ब्रह्मेति त्वं विद्धि । स्वाज्ञस्वज्ञदृष्टिविजृंभितकरणतत्प्रवृत्तिनिमित्तगतहेयांशापह्नवसिद्धं ब्रह्म स्वमात्रमिति विजानीहीत्यर्थः । तदेव ब्रह्मेत्यवधारणार्थं विशदयति—नेदं इति । विदिताविदितायमानजाग्रज्जाग्रदाद्यवस्थोपाधिविशिष्टविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तभेदजातं इदन्त्वेन अहन्त्वेन वा ये स्वाज्ञस्वज्ञा उपासते ध्यायन्ति यद्यत् इदमहमित्यादिव्यवहारार्हं [1]तत्तत् शशविषाणवत् नास्तीत्यत्र—

इदमित्येव निर्दिष्टमयमित्येव कल्पते ।
त्वमहं तदिदं सोऽहमन्यत्सद्भावमेव च ॥
मदीयं च त्वदीयं च ममेति च तवेति च ।
मह्यं तुभ्यं मयेत्यादि तत्सर्वमसदेव हि ॥
सर्वथा भेदकलनं द्वैताद्वैतं न विद्यते ॥

इत्यादिश्रुतिः मानम् ॥ ४ ॥

किं च—यन्मनसा इति । "कामस्संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिः ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुतिसिद्धकामादिवृत्तिमन्मनोन्तःकरणम् । तेन मनसा यत् स्वप्रवृत्तिनिमित्तचैतन्यज्योतिः न मनुते न हि संकल्पयति अध्यवस्यति स्मरति वा । मनोनिमित्तस्य मनः तद्वृत्तिभावाभावाप्रकाशकत्वात् । मनसो मननादिसामर्थ्यं स्वप्रवृत्तिनिमित्तचैतन्याधीनमित्यर्थः । येन स्वनिमित्तभूतेन स्ववृत्तिकं मनो मतं विषयीकृतं इत्याहुः ब्रह्मविदः । तन्मनःप्रवृत्तिनिमित्तमेव प्रत्यक्चैतन्यं पराक्त्वसापेक्षप्रत्यग्भावाभावे निष्प्रतियोगिकब्रह्ममात्रं विद्धि इत्यादि पूर्ववत् ॥ ५ ॥

[1] तत्ततः—उ १

किं च—**यच्चक्षुषा** इति। चक्षुःप्रवृत्तिनिमित्तं **यत्** चैतन्यं **चक्षुषा न पश्यति** लोकः। **येन** स्वप्रवृत्तिनिमित्तेनान्तःकरणवृत्तिविशिष्टचक्षुर्वृत्तयः **चक्षूंषि पश्यति** लोकः। चैतन्यज्योतिषा विषयीकरोतीत्यर्थः। तदेवेत्यादि पूर्ववत् ॥६॥

किं च—**यच्छ्रोत्रेण** इति। **यत्** चैतन्यं दिग्देवताधिष्ठितत्वेन आकाशकार्यमनोवृत्तिसंयुतेन **श्रोत्रेण न शृणोति** न विषयीकरोति लोकः। **येन श्रोत्रमिदं श्रुतं** चैतन्यज्योतिषा विषयीकृतं तदेवेत्यादि पूर्ववत् ॥ ७ ॥

किं च—**यत्प्राणेन** इति। **यत्** प्राणादिसर्वकरणप्रवृत्तिनिमित्तप्रत्यग्ज्योतिः अन्तःकरणप्राणवृत्तिसहितपार्थिव**प्राणेन** घ्राणेन **न प्राणिति** गन्धवन्न विषयीकरोति **येन** प्रत्यग्ज्योतिषा भास्यत्वेन **प्राणः प्रणीयते** विषयीक्रियते **तदेव** इत्यादि पूर्ववत् सर्वं समानम् ॥ ८ ॥

इति प्रथमः खण्डः

---

## द्वितीयः खण्डः

शिष्यबुद्धिविचालनम्

**यदि मन्यसे सुवेदेति दभ्रमेवापि नूनं त्वं वेत्थ ब्रह्मणो रूपं**
**यदस्य त्वं यदस्य च देवेष्वथ नु मीमांस्यमेव ते मन्ये विदितम् ॥ १ ॥**

एवमाचार्येण विदिताविदितकलनापह्नवसिद्धं ब्रह्म स्वमात्रमित्यर्थे "श्रोत्रस्य श्रोत्रं" इत्यादिना विदिताविदितायमानश्रोत्रादिकरणग्रामप्रवृत्तिनिमित्तगतहेयांशापह्नवमुखेन बहुलोपपत्तिभिः निष्प्रतियोगिकब्रह्ममात्रसिद्धान्तः प्रकटितः। सोऽयं शिष्येणावधारितो न वेति सन्दिहान आचार्यः स्वोक्तब्रह्ममात्रनिष्ठाद्रढिम्ने

शिष्यबुद्धिं विचालयति—**यदि मन्यसे** इत्यादिना । केनेषितमित्यादि त्वत्प्रश्नानुरोधेन श्रोत्रस्य श्रोत्रमित्यादिप्रतिवचनार्थं विदिताविदितविपरीतत्वेन,

तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते ।

इत्युपास्यान्तरप्रतिषेधः कृतः "अन्यदेव तद्विदितात्" इत्यादि ब्रह्मवित्संप्रदायनिश्चयश्चोक्तः । एतद्वाक्यपूगविशिष्टार्थः समस्तविदिताविदितकलनापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रं खलु तत् किं सुवेद सुष्ठु वेदाहं **इति यदि मन्यसे** तदा तदपि **दभ्रं** अल्पं परिच्छिन्नमेव जाग्रज्जाग्रदाद्यष्टाचत्वारिंशात्मकविदितब्रह्मैव त्वम् । वस्तुनो दुर्विज्ञेयत्वात् । एवं दुर्विज्ञेयमपि वस्तु कश्चिच्छुद्धान्तःकरणः स्वमात्रतया प्रतिपद्यते । कश्चित् अशुद्धान्तरः एवं न प्रतिपद्यते । कश्चित् विपरीततयासल्लौकिकादिवत् प्रतिपद्यते । तथाच छान्दोग्याष्टमाध्याय आम्नातम्—"य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म" इति । अक्षिशब्दोपलक्षितकरणग्रामप्रवृत्तिनिमित्तप्रत्यक्चैतन्यं परागक्षसापेक्षनिमित्ततापह्नवत एतदेव निष्प्रतियोगिकामृताभयरूपेण ब्रह्ममात्रमवशिष्यते इत्युक्तमर्थं इन्द्रविरोचनौ द्वात्रिंशद्वर्षगुरुकुलवासतः श्रुत्वापि स्थूलशरीरं आत्मेति प्रतिपन्नौ । तत्र इन्द्रस्य दैवप्रकृत्यारूढत्वेन सकृद्द्वित्रिरुक्तं चाप्रतिपद्यमानोऽपि निश्शेषचित्तमालिन्यक्षयतः चतुर्थपर्याये प्रथमपर्यायोक्तार्थमेव गृहीत्वा इन्द्रः कृतार्थतां गतः । एवं एकस्मात् गुरोः शृण्वतां सब्रह्मचारिणां मध्ये कश्चित् न प्रतिपद्यते । कश्चित् विपरीतम् । कश्चित् यथावत् प्रतिपद्यते । तथाच अत्रैव करणग्रामापह्नवसिद्धब्रह्ममात्रे वस्तुनि असल्लौकिकादिषड्दृष्टयो विप्रतिपन्नाः । एवं सदसद्वादिनः तार्किकाश्च वाक्याभासयुक्त्याभासतः परमार्थात् हीयन्ते । तस्मात् वस्तुनो दुर्विज्ञेयत्वं निरङ्कुशमित्यर्थः । विदिताविदितकलनाविरळब्रह्म उपदिष्टमपि स्वदृष्टिवैषम्यात् **यदि** कदाचित् **सुवेद** ब्रह्माहं इति **मन्यसे तत् दभ्रमेव इति** । **नूनं** निश्चितम् । किमनेकानि नामरूपोपाधिकृतानि जाग्रज्जाग्रदाद्युपाधिकृतानि विश्वविश्वाद्यनुज्ञैकरसाविकल्पान्तानि षट्त्रिंशत्संख्यापरिमितानि **अस्य ब्रह्मणो** रूपाणि **वेत्थ त्वं अस्य** विदितब्रह्मविषयत्वात् । तदपि **दभ्रमेव यदपि** तुर्यजाग्रदाद्युपाध्यसंगतुर्यविश्वाद्यविकल्पानुज्ञैकरसान्तनव-

संख्याकानि सप्रतियोगिकनीरूपब्रह्मणो **रूपाणि वेत्थ त्वं** तस्य अविदितत्वेन विज्ञानापेक्षत्वात् तदपि **दभ्रमेव** । **ब्रह्मणो रूपं** तु वस्तुतो विदिताविदितकलनापह्नवसिद्धब्रह्मणः स्वमात्रतया श्रुतिभिः निरूपणात् **ब्रह्मणो रूपं** निष्प्रतियोगिकब्रह्ममात्रं "सत्यं ज्ञानमनन्तं ब्रह्म" इति स्वातिरिक्तानृतजडदुःखप्रपञ्चापह्नवसिद्धसच्चिदानन्दमात्रावशेषतावादिश्रुतेः । तद्विहाय यदस्य ब्रह्मणः स्वरूपं विशेषवत्त्वं **वेत्थ** तथा देवेष्वपि यः कश्चिन्निर्विशेषब्रह्मणो रूपं विशेषवत् वेद तद्वेदनमपि **दभ्रमेव** । विपरीतग्रहणात् । यद्वा—स्वाधिष्ठानदेवतानुगृहीतत्वेन द्योतनात् देवाः श्रोत्रादीन्द्रियाणि तेषु **देवेषु यदस्य ब्रह्मणो रूपं** तद्धिताहितप्रवर्तकान्तर्यामिरूपं तत्प्रवृत्तिनिमित्तपराक्सापेक्षप्रत्यग्रूपं वा **त्वं वेत्थ** तदपि **दभ्रमेव** । अध्यात्माधिदेवोपाधिपरिच्छिन्नत्वात् दभ्रत्वं युक्तम् । अथ नु इति शब्दो मीमांसाहेतुः । यत्तु स्वातिरिक्त[1]परिच्छिन्नापरिच्छिन्नस्वाविद्यातत्कार्यापह्नवसिद्धं ब्रह्म न हि सुवेदेति सुष्ठु वेदितुं शक्यम् । यत एवं **अथ नु** तस्मात् **ते** तव **ब्रह्म मीमांस्यं** विचार्यमेवेति **मन्ये** । एवमाचार्येण चालितः शिष्यः रहस्यस्थलमासाद्य स्वाचार्योक्त "श्रोत्रस्य श्रोत्रं", "अन्यदेव तद्विदितात्" इत्याद्यागमपरम्परां अर्थानुकूलानुभवबलेन अवधार्य स्वाचार्यसकाशं विनयेनोपविश्य हे स्वामिन् भवद्विचालनात् पुरा भवदुपदिष्टपरिनिष्ठितवस्तु सुष्ठु वेदाहमिति विपरीतभावना ममासीत् । नूनमिदानीं भवत्प्रसादात् सेयं विपरीतभावना गता । इदानीं मद्विज्ञापनं श्रोतव्यं इत्याह—**मन्य** इति । मीमांसानन्तरोक्तिः किमित्यत आह—**विदितं** इति ॥ १ ॥

अविचालितेन शिष्येण स्वानुभवोद्घोषणम्

[2]नाह मन्ये सुवेदिति नो न वेदेति वेद च ।
यो नस्तद्वेद तद्वेद नो न वेदेति वेद च ॥ २ ॥

कथं त्वया विदितमित्यत आह—**नाह** इति । अहेत्यवधारणार्थः । यथोक्तविशेषणविशिष्टं ब्रह्म **सुवेदेति** नैवाहं **मन्ये सुवेदेति** नैव जानामीत्यर्थः । किं

[1] परिच्छिन्नपरिच्छेद—उ १.

[2] नाहं मन्ये—मु.

त्वया नैव विदितं ब्रह्मेत्यत आह—नो इति। नो नैव वेदेति न। किन्तु वेद च। चशब्दात् न वेदेति।

नाह मन्ये सुवेदेति नो न वेदेति वेद च।

इति विप्रतिषिद्धं त्वयोच्यते। एकं वस्तु वेदाहमिति येन ज्ञायते तेनैव तदेव वस्तु न ज्ञायते इति यत् तद्धि विप्रतिषिद्धम्। न हि ब्रह्म संशयविपर्ययासंभावना-विपरीतभावनादिभिः ज्ञातुं शक्यं निष्प्रतियोगिकब्रह्ममात्रावगतेः संशयादिपञ्च-दोषापह्नवपूर्वकत्वात्। तस्मात् व्याविद्धसंशयादिपञ्चदोषेण निष्प्रतियोगिक-निस्संशयब्रह्ममात्रस्वरूपावस्थानलक्षणकैवल्यमाप्तुं शक्यं न विपर्ययः इत्यत्र—

अहं ब्रह्म न वेत्त्येष संशयो वस्त्वनिर्णयात्।
प्रतीचि देहोऽहमिति विपर्यासात्मिका मतिः॥
नास्ति ब्रह्मेति या बुद्धिः सैवासंभावनेरिता।
ब्रह्मास्ति यद्यस्मदादितुल्यं सच्चित्सुखं न तत्॥
इयं धीर्विपरीताख्यभावनेत्यभिधीयते।
ब्रह्मणो विश्वताभानमन्यथा भावनेरितम्॥
दोषपञ्चकशान्त्यन्तं कर्तव्यं श्रवणं बुधैः।
ततः शास्त्रजविज्ञानमप्रमादं भवेत्तराम्॥
श्रुतज्ञानं स्वानुभूत्या युतं विज्ञानतां भजेत्।
तदा ब्रह्मातिरिक्तस्य प्रातिभासिकधीर्भवेत्॥
ब्रह्ममात्रमसन्नेति ब्रह्ममात्रेऽवशेषिते।
प्रतियोगिविनिर्मुक्तस्वमात्रे न हि संशयः॥
क्व विपर्यासधिषणा क्व वा संभावना चिति।
विपरीतमतिर्वा क्व चान्यथा भावनापि च॥
श्रवणं मननं ध्यानं क्व वा सिद्धिं निगच्छति।
वित्त्वं वरत्वं वर्यस्त्वं वरिष्ठत्वमपीह न॥

प्रतियोगिविनिर्मुक्तपरमानन्दवैभवम् ।
विकळेबरकैवल्यं स्वमात्रमवशिष्यते ॥

इत्यादिस्मृतिर्मानम् ।

अद्वितीयब्रह्मतत्त्वं न जानन्ति यदा तदा ।
भ्रान्ता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ॥

इति श्रुतिस्मृत्युक्तार्थविपर्यये मानम् । एवं युक्तियुक्तश्रुतिस्मृतिवाक्योपपत्तिभिराचार्येण शिष्यो विचाल्यमानोऽपि स्वाचार्योक्तान्यदेवेत्याद्यागमसंप्रदायोपपत्तिबलेन न विचचाल । स्वाधीतब्रह्मविद्यायां आत्मनो दृढनिश्चयं दर्शयन् "अन्यदेव तद्विदितात्" इत्यादिवाक्योक्तं वस्तु श्रुत्याचार्योपपत्त्यनुभवतोऽवधार्य सब्रह्मचार्यावृताचार्यनिकटमेत्य सब्रह्मचारिणां विस्मयं जनयन् स्वाचार्यं हर्षयन् वाक्यान्तरेण देवदुन्दुभिवत् स्वानुभवं उद्घोषयति—य इति । नः अस्माकं सब्रह्मचारिणां मध्ये यः कश्चित् आचार्योक्तं,

अन्यदेव तद्विदितादथो अविदितादधि ।

इतितद्वाक्यनिष्पन्नविदिताविदितकलनापह्नवसिद्धं ब्रह्म स्वमात्रमिमि वेद सोऽयं निष्प्रतियोगिकब्रह्म स्वमात्रमिति वेद नान्य इत्यर्थः । किं पुनः तद्वाक्यमित्यत आह—नो इति । विदिताविदितप्रपञ्चतत्कार्यापह्नवसिद्धं ब्रह्म स्वमात्रं इति नो न वेदाहमिति न । स्वमात्रं इति वेद । चशब्दात् स्वातिरिक्ताविद्यापदतत्कार्यज्ञानालङ्कारविदिताविदितप्रपञ्चं आत्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन शून्यत्वेन वा अस्ति नास्तीति विभ्रमं न वेदेति द्योत्यते ॥ २ ॥

शिष्याचार्यसंवादानुवादः

यस्यामतं तस्य मतं मतं यस्य न वेद सः ।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥ ३ ॥

प्रतिबोधविदितं मतममृतत्वं हि विन्दते ।
आत्मना विन्दते वीर्यं विद्यया विन्दतेऽमृतम् ॥ ४ ॥

इत्थं शिष्याचार्यसंवादनिर्वृत्तं **नो न वेदेति वेद च** इति वाक्यार्थं श्रुतिरनुवदति **यस्य** इत्यादिना । **यस्य** निष्प्रतियोगिकब्रह्ममात्रविदो विदितत्वेन अविदितत्वेन वा ब्रह्ममात्रं **अमतं** अविज्ञातमिति निश्चयो भवति । **तस्य** विदिताविदितकलनापह्नवसिद्धं ब्रह्म स्वमात्रमिति **मतं** सम्यगवगतमित्यर्थः । **यस्य** पुनरविदुषो विदितत्वेनाविदितत्वेन वा ज्ञातं मया ब्रह्मेति **मतं** अभिप्रायो भवति सोऽयं अविद्वान् कल्पकोटिशतैरपि **न वेद** स्वावशेषेण कदापि ब्रह्म न जानातीत्यर्थः । यथोक्तविद्वदविद्वन्मतमवधारयति—**अविज्ञातं** इति । ब्रह्म स्वमात्रमिति वस्तुयाथात्म्यं **विजानतां** तत्त्वदर्शिनां विदिताविदितत्वेन **अविज्ञातमेव** वस्तुयाथात्म्यं **अविजानतां** विदितत्वेनाविदितत्वेन वा ब्रह्म **विज्ञातं** तेषां स्वातिरिक्तप्रपञ्चावृतदृष्टित्वात् न हि ते ब्रह्मयाथात्म्यं जानन्तीत्यर्थः । न हि ते विदिताविदितब्रह्मविदोऽत्यन्तमूढा भवन्ति । असल्लौकिकपञ्चकवत् देहेन्द्रियादौ आत्मबुद्ध्यदर्शनात् देहातिरिक्तविश्वविश्वादित्रिपञ्चदशसविशेषब्रह्मदृष्टित्वाच्च "विज्ञातमविजानताम्" इति वाक्यत एते अविद्वांसः ब्रह्ममात्रसिद्धान्तपूर्वपक्षत्वेनोक्ता इत्यर्थः ॥ ३ ॥

यद्वा—उत्तरार्धो हेत्वर्थः "अविज्ञातं विजानतां" इति विद्वदविदुषोर्बोधेयत्ताप्रकटनहेतुत्वात् । यदि ब्रह्म अत्यन्तमेवाविज्ञातं तर्हि विद्वदविदुषोः को विशेषः उभयोरप्यविज्ञातत्वात् ।

अविज्ञातं विजानतां विज्ञातमविजानताम् ।

इति मिथो विरुद्धमुक्तम् । तत् कथं ब्रह्म स्वमात्रतो विदितं भवेत् इत्याकांक्षायां तदुपायत्वेन बुद्धिवृत्तिसहस्रभावाभावप्रकाशकप्रत्यक्चिद्धातोः स्वप्रकाश्यबुद्धितद्वृत्त्यपह्नवे निष्प्रतियोगिकब्रह्ममात्रसिद्धिः तत्स्वरूपावस्थानकैवल्यफलं च स्यादित्याह श्रुतिः—**प्रतिबोधविदितं** इति । "कोऽयमात्मेति

वयमुपास्महे" इत्यारभ्य "सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति" इति श्रुतिनिर्दिष्टसंज्ञानादयः प्रत्ययाः बोधशब्देन निर्दिष्टाः। वीप्सा तु सर्वप्रत्ययाभ्यर्था। संज्ञानादिबुद्धिवृत्तीनां स्वविलक्षणप्रत्यग्धातुव्याप्तत्वात्। बुद्धिवृत्तयो बोधा उच्यन्ते। बोधं प्रति बोधं प्रति तद्भावाभावप्रकाशकप्रत्यग्रूपेण प्रत्यगभिन्नब्रह्मरूपेण स्वभास्यबुद्धिवृत्तिकदम्बपराग्भावसापेक्षप्रत्यग्भावगतभासकतारूपहेयांशापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्ररूपेण वा विदितं **प्रतिबोधविदितं** तदेव सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति **मतम्**। तत्स्वरूपावस्थानविकलेबरकैवल्यं **हि अमृतत्वं विन्दते**। एवं विद्वान् लभते। प्रत्यक्तदभिन्नब्रह्ममात्रपर्यायत्रयेषु परस्परोपायोपेयभूतेषु प्राथमिकपर्याये बोधवृत्तिसहस्रभावाभावप्रकाशकतद्विलक्षणचिद्धातुयाथात्म्याज्ञानतः केचन एवं वदन्ति। बोधक्रियाशक्तिमानात्मा। न बोधः। बोधस्तु जायते नश्यति। यदा बोधो जायते तदा सविशेषः। यदा बोधो नश्यति तदा निर्विशेषः। एवं बोधलक्षणेन विदितं प्रतिबोधविदितमिति। तत्रात्मनो विक्रियादिदोषवत्त्वं केचन आत्ममनस्संयोगजो बोधः आत्मनि समवैति। तत्र आत्मनो विक्रियाशून्यत्वेन बोद्धृत्वमस्मिन् पक्षेऽप्यात्मन अचेतनत्वं भवति। आत्मनो निरवयवत्वेन संयोगप्रदेशाभावात् नित्यसंयुक्तत्वेन स्मृत्युत्पत्त्यनवकाशात्। अचेतनसंसर्गिधर्मित्वं चात्मनः श्रुतिस्मृतिन्यायविरुद्धं भवेत्। "विज्ञानमानन्दं ब्रह्म", "असङ्गो न हि सज्जते," "असक्तं सर्वभृच्चैव निर्गुणं" इति च गुणवत् गुणवता संसृज्यते। नातुल्यजातीयम्। तत्र प्रत्यक्तत्त्वस्य सर्ववृत्तिविलक्षणत्वेन निर्विशेषत्वेन च निर्गुणत्वात् न केनचित् संसर्गित्वं युज्यते। सर्वबोधबोद्धृत्वं अर्थात् सिद्धं भवति। तस्मात् बोधवृत्त्यसंगत्वेन तद्भावाभावप्रकाशकत्वेन च प्रतिबोधविदितं मतं इत्यत्र—

चित्तवृत्तेरतीतो यश्चित्तवृत्त्यवभासकः।

इति श्रुतेः, "स्वयमेवात्मनात्मानं वेत्थ" इति स्मृतितः प्रतिबोधविदितं इत्यत्र स्वसंवेद्यता स्यादिति चेन्न। बोधवृत्त्यवभासकप्रतीचो निरुपाधिकत्वात्।

प्रतीचि स्वसंवेद्यता परसंवेद्यता वा न हि सेद्धुं पारयति। न हि प्रकाशस्य प्रकाशान्तरापेक्षावत् संवेदनस्वरूपस्य संवेदनान्तरापेक्षा अस्ति। नित्यालुप्तसंवेदनमात्रस्वरूपत्वात् स्वसंवेद्यस्मृतेः का गतिरिति। सा स्मृतिः सोपाधिके गतिमर्हति। योगाचारपक्षे तु स्वसंवेद्यतायाः क्षणभङ्गुरत्वं निरात्मकत्वं च भवति। "न हि विज्ञातुः विज्ञातेर्विपरिलोपो विद्यते अविनाशित्वात्" इत्यादिश्रुतिविरुद्धत्वात्। सुप्तस्य निर्निमित्तो बोधः प्रतिबोध इति केचन। तथासकृद्विज्ञानमित्यपरे। सनिमित्तो निर्निमित्तः सकृद्वासकृद्वा भवतु अस्माकं प्रतिबोध एव सः। प्रत्यग्भास्यत्वाविशेषात्। बोधस्य प्रत्यगात्मविषयत्वमेव मतम्। अमृतत्वप्राप्तिहेतुत्वात्। प्रत्ययप्रत्यगात्मतया तत्प्रत्यक्तत्त्वं विशिष्यते। नान्यद्द्वारान्तरं आत्मनो याथात्म्यावगतये भवति इति "अमृतत्वं हि विन्दते" इति हेतुवचनं युक्तं भवति। द्वितीयपर्याये तु विदिताविदितप्रतिषेधबोधाधिकरणत्वेन प्रत्यगभिन्नब्रह्मैव प्रतिबोधविदितं भवति। तृतीयपर्याये तु "अन्यदेव तद्विदितादथो अविदितादधि" इति श्रुत्यनुरोधेन विदिताविदितायमानजाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तचतुष्पञ्चदशकलनागोचरबुद्धिवृत्तयो बोधपूगः। तादृशबोधं प्रति बोधं प्रति तत्तद्बोधवृत्त्यपह्नवमुखेन निष्प्रतियोगिकस्वमात्रतया यद्विदितं तत्प्रतिबोधविदितम्। तदेशाद्यष्टोत्तरशतवेदान्तमतम्। "य एवं निर्बीजं वेद निर्बीज एव स भवति" इति श्रुतिसिद्धनिर्बीजब्रह्मवेदनसमकालं विदिताविदितबीजापह्नवसिद्धनिष्प्रतियोगिकनिर्बीजब्रह्ममात्रावस्थानलक्षणविदेहकैवल्यमेवामृतत्वमिति विद्वान् स्वावशेषतया विन्दते। हिशब्दो निस्संशयार्थः। ज्ञानसमकालमेव मुक्तो भवतीत्यत्र "ज्ञानसमकालमेव मुक्तः कैवल्यं याति" इति श्रुतेः "अमृतत्वं हि विन्दते" इत्युक्तम्। केन हेतुना अमृतत्वं विन्दत इत्यत आह—**आत्मना** इति। धनमन्त्रतन्त्रयन्त्रतपोयोगादिकृतवीर्यस्य कृतकत्वेन क्षणिकत्वात् [1]तद्वीर्यं स्वाज्ञानतत्कार्यमाणमृत्युं निर्मूलयितुं न हि शक्तं भवति। स्वस्यापि स्वाज्ञानप्रभवत्वेन

[1] तद्द्वितीयम्—उ १.

मृत्युरूपत्वात् । स्वात्मविद्याकृतवीर्यस्य तु विदिताविदितायमानजाग्रज्जाग्रदादिचतुष्पञ्चदशकलनावरणोद्घाटनपटुत्वात् तदेव स्वाविद्यापद[1]तत्कार्यात्मकत्वसत्यत्वव्यावहारिकत्वप्रातिभासिकत्वादिरूपमृत्युं अपह्नवं कर्तुं शक्नोति । तथाविधात्मवीर्यं केन विन्दते इत्यत आह—**आत्मना** इति । स्वेन रूपेण **आत्मना** विश्वविश्वादितुर्यबीजान्तं यत्र विलीयते अपह्नवं वा याति तद्वीर्यं आधेयनिरूपिताधारतापह्नवीकरणसामर्थ्यं स्वरूपं स्वमात्रमिति **विन्दते** लभते इत्यर्थः ।

नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात् ।
एतैरुपायैर्यतते यस्तु विद्वान् तस्यैष आत्मा विशते ब्रह्मधाम ॥

इति श्रुत्यनुरोधेन स्वमात्रबलवत्या **अविद्यया** स्वमात्रावरणायमानजाग्रज्जाग्रदादिचतुष्पञ्चदशकलनापह्नवीकरणपटुशक्त्या निष्प्रतियोगिकामृतं विकळेबरकैवल्यं स्वावशेषं विद्वान् **विन्दते** । [2]न चानन्तता चादिमतो मोक्षस्य न भविष्यतीति गौडपादाचार्योक्त्यनुरोधेन **विद्ययामृतं** उत्पाद्यते । तथाविधब्रह्ममात्रविद्याया अपि स्वापह्नोतव्यब्रह्ममात्रावरणजाग्रज्जाग्रदादिचतुष्पञ्चदशकलनापह्नवसमकालमपह्नवं गतत्वात् । स्वतः स्वमात्रावस्थानलक्षणकैवल्यं अवशिष्यते इत्यत्र—

यावद्यावन्मुनिश्रेष्ठ स्वयं सन्त्यज्यतेऽखिलम् ।
तावत्तावत्परो लोकः परमात्मैव शिष्यते ॥ इति श्रुतेः ।
निरवद्यमपि ब्रह्माविद्ययावृतवद्भवेत् ।
स्वाविद्यावरणे नष्टे स्वतो ब्रह्म प्रकाशते ॥

इति स्मृतेश्च ॥ ४ ॥

[1] तत्कार्यात्मत्व—उ १.

[2] न चानन्दता—उ.

ब्रह्मविद्याधिगमः परमपुरुषार्थहेतुः

इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः ।
भूतेषु भूतेषु विचित्य धीराः प्रेत्यास्माल्लोकादमृता भवन्ति ॥

यतो ब्रह्मविद्याया ब्रह्ममात्रावरणापह्नवपटीयस्त्वं अत एव इह जन्मन्येव ाह्मविद्याशितखड्गेन स्वमात्रावरणं तिलशः छित्वा स्वातिरिक्तसर्वापह्नवसिद्धं ाह्म स्वमात्रमिति वेदितव्यम् । अन्यथा क्षणमात्रव्यवधानात् महाननर्थो जायते त्याह इह इति । "यथादर्शे तथात्मनि" इति श्रुत्यनुरोधेन इह मनुष्यजन्मनि थोक्तसाधनसंपन्नो ब्रह्मविद्याधिकारी मुमुक्षुः स्वातिरिक्तविदिताविदितकलना- ह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति अवेदीत् वेद चेत् अथ तद्वेदनोत्तरक्षणं दा "सन्मात्रमसदन्यत्" इति श्रुतिसिद्धासदपह्नवाविर्भूतसन्मात्रं सत्यं ात्तासामान्यस्वरूपावस्थानलक्षणविदेहकैवल्यं विद्यते । स्वतः प्रकाशत इत्यर्थः । थोक्तब्रह्मविद्याधिकार्यपि मुमुक्षुः इहजन्मनि यथोक्तप्रकारेण ब्रह्ममात्रं न चावे- ाचेत् नैव वेद चेत् महती दीर्घा अनन्ता विनष्टिः विनाशनं जनिमरणादि- तिबन्धसान्तत्यं असल्लौकिकपञ्चकप्राप्यस्थावरापत्तिलक्षणं वा भवतीत्यत्र—

लब्ध्वा कथंचिन्नरजन्म दुर्लभं तत्रापि पुंस्त्वं श्रुतिपारदर्शनम् ।
यस्त्वात्ममुक्त्यै न यतेत मूढधीः स आत्महा स्वं विनिहत्य हन्यते ॥

ति सर्वज्ञभगवत्पादोक्तेः । यत एवं अतः इह जन्मन्येव स्वाज्ञदृष्ट्या वातिरिक्तविदिताविदितायमानस्वाविद्यापदतत्कार्यजाते विद्यमानेऽपि तद्गत- यांशापह्नवसिद्धं ब्रह्म विदित्वा तत्फलं भोक्तव्यं इत्याह—भूतेषु इति ॥ ुमुक्षवो धीराः शरीरमिदं मैथुनादेवोद्भूतं संविध्यपेतं निरय एव मूत्रद्वारेण नष्क्रान्तं अस्थिभिः चितं मांसेनानुलिप्तं चर्मणावनद्धं विण्मूत्रवातपित्तकफमज्जा- ादोवसाभिरन्यैश्च मलैर्बहुभिः परिपूर्णम् । एतादृशेऽस्मिन् शरीरे वर्तमानस्य किं ामोपभोगैरित्यादि ।

देहवासनया जन्तोः शास्त्रवासनयापि च ।
लोकवासनया ज्ञानं यथावन्नैव जायते ॥

"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः" । इत्यादि श्रुत्यर्थपर्यालोचनया वासनात्रयपुरस्सरं एषणात्रयं संन्यस्य गुरुकुलवासब्रह्मचर्यशुश्रूषासन्तुष्टगुरुमुखात् गृहीतप्रणवमहावाक्यस्वाश्रमोचितानुष्ठानं कुर्वन् "संन्यस्य श्रवणं कुर्यात्",

विदेहमुक्ताविच्छा चेदष्टोत्तरशतं पठ ।

इति श्रुत्यनुरोधेन संशयादिपञ्चदोषशान्त्यन्तं ईशाद्यष्टोत्तरशतवेदान्तश्रवणमनननिदिध्यासनतो गुणत्रयावृत्तित्रयतादात्म्यत्रयोपमर्दकवित्त्ववरत्ववरीयस्त्वं एत्य अथ स्वाज्ञस्वज्ञदृष्टिभ्यां भूतेषु भूतेषु ब्रह्मादिस्थावरान्तेषु सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन वा सत्स्वसत्स्वपि "पश्यतेहापि सन्मात्रमसदन्यत्", "ब्रह्ममात्रमसन्न हि",

अन्यदेव तद्विदितादथो अविदितादधि ।
सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
सर्वथा भेदकलनं द्वैताद्वैतं न विद्यते ॥

इत्यादिश्रुत्यनुरोधेन विदिताविदितायमानजाग्रज्जाग्रदादिचतुष्पञ्चदशकलना अस्ति नास्तीति विभ्रमापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति विचित्य निश्चित्य ज्ञात्वा तज्ज्ञानसमकालं स्वाज्ञस्वज्ञदृष्टिविजृम्भितविदिताविदितायमानजाग्रज्जाग्रदादिचतुष्पञ्चदशकलनाभ्रमो यत्र लोक्यते स्वात्मसत्यव्यावहारिकप्रातिभासिकत्वादिरूपेण वा यत्र दृश्यते स लोकः । तस्मात् लोकात् प्रेत्य व्यावृत्य स्वातिरिक्तलोकापह्नवं कृत्वा अथ स्वातिरिक्तापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रभावारूढास्सन्तः अमृताः विदेहमुक्ता भवन्ति । ब्रह्मैव भवन्तीत्यर्थः । तमेवं विद्वांस इहैवामृता भवन्ति ।

ब्रह्मैवाहं चिदेवाहमेवं वापि न चिन्त्यते ।
चिन्मात्रेणैव यस्तिष्ठेद्वैदेही मुक्त एव सः ॥ इत्यादिश्रुतेः ॥ ५ ॥

इति द्वितीयः खण्डः

---

# तृतीयः खण्डः

शबलब्रह्मस्वरूपप्रकटनम्

ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्त त ऐक्षन्तास्माकमेवायं विजयोऽस्माकमेवायं महिमेति ॥

यद्विद्याधीनः परमपुरुषार्थः सेयं निष्प्रतियोगिकब्रह्ममात्रविद्या विस्पष्टं खण्डद्वयेन अभिहिता। "श्रोत्रस्य श्रोत्रम्", "न तत्र चक्षुर्गच्छति", "यद्वाचानभ्युदितम्", "तदेव ब्रह्म त्वं विद्धि",

अन्यदेव तद्विदितादथो अविदितादधि।
यो नस्तद्वेद तद्वेद नो न वेदेति वेद च।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥

इत्यादिवाक्यैः "अविज्ञातं विजानताम्" इत्याद्युक्तम्। तत्र प्रत्यक्षादिप्रमाणैः यद्यदस्तित्वेनाभिमतं तस्य विशेषतो ज्ञातुं शक्यत्वात् विज्ञातम्। यत् शशविषाणवत् नास्तीत्यभिमतं तदविज्ञातम्। ब्रह्मणो विज्ञातत्वात्। असदेव ब्रह्मेति मुसलकिसलयमतीनां एवं व्यामोहो मा भूदिति तदर्थेयमाख्यायिका आरभ्यते। देवासुराणां जयाजयहेतुत्वेन तदेव हि ब्रह्म सर्वप्रशास्तृ। तत् कथं नास्तीति प्रत्ययितव्यम्। न हि सर्वज्ञेश्वरादन्यत्राग्निवाय्विन्द्रादिदेवान् [1]परीभूय तृणं वशीकर्तुं सामर्थ्यमस्ति "तन्न शशाक दग्धुम्" इत्यादिलिङ्गदर्शनात्। अन्यथा अग्न्यादयः तृणमात्रं दग्धुमादातुं वा नोत्सहन्ते। यदिच्छामात्रेण तृणमपि वशीभवति। न हि कारणसिद्धिं विना कार्यसिद्धिरुदेति। तस्मात् अस्त्येवेश्वराख्यं ब्रह्म। यद्वा—अर्थवादमुखेन ब्रह्मणो दुर्विज्ञेयताप्रकटनाय इयमाख्यायिका। यत इमे अग्न्यादयोऽतितेजसोऽपि क्लेशादेव ब्रह्म विदितवन्तः। अथवा इयं शमादिविधित्सया आख्यायिका अग्निवाय्वादीनामभिमानशातनात्।

[1] परिभूय—उ १.

यतः शमादिर्हि ब्रह्मविद्यासाधनम् । न हि शमादिवैरळ्यतोऽरिषड्वर्गकबळितस्य ब्रह्मविद्याधिकारोऽस्ति । ब्रह्ममात्रावस्थानलक्षणकैवल्याप्तेः कामाद्यरिषड्वर्गशातनपूर्वकत्वात् । "शान्तो दान्तः",

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥

इत्यादिश्रुतेः । आहोस्वित् "नेदं यदिदमुपासते" इत्युपासनासामान्यप्रतिषेधात् अनुपास्यत्वे प्राप्ते ब्रह्ममात्रज्ञानप्रापकेश्वरस्वरूपतदुपासनार्थं इयमाख्यायिका । "अधिदैवतमथाध्यात्मं तद्वनमित्युपासितव्यम्" इतीशोपासनाविधानात् । न हि यत्प्रसादं विना शमादिः तद्युक्तस्य सर्वापह्नवसिद्धब्रह्ममात्रविद्योदेति । तदधिगमाय शवळब्रह्मस्वरूपं प्रकटयति श्रुतिः—**ब्रह्म ह देवेभ्यः** इति ॥ निरविद्यमपि निर्विशेषं ब्रह्म स्वोपासनया भक्ताः स्वपदं भजेयुः इति अनुकम्पया मूलाविद्यार्वीजांशासंगेशभावमापन्नं सत् । सर्वत्र हकारः किलार्थः । देवासुरसंग्रामे प्राप्ते तत्र स्वनिष्ठाद्वयदूषकान् असुरान् जित्वा स्वनिष्ठाद्वयपरिपालकदेवेभ्योऽर्थाय **विजिग्ये** जयं लब्धवत् तत्फलभूतस्वर्गं च **देवेभ्यः** प्रायच्छदित्यर्थः । अग्निवाय्वादिदेहमात्राहम्भावारूढाः **देवाः** ब्रह्मकृतदेवासुरजयाजयौ स्वकृताविव मेनिरे इत्याह—**तस्य** हेति ॥ **अमहीयन्त** मिथ्याशूरत्वाभिमानं प्राप्तवन्त इत्यर्थः । **ऐक्षन्त** मिथ्या ईक्षणं कृतवन्त इत्यर्थः ॥ १ ॥

देवगणमिथ्याभिमानप्रदर्शनम्

तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न [1]व्यजानत किमिदं यक्षमिति ॥ २ ॥ तेऽग्निमब्रुवन् जातवेद एतद्विजानीहि किमेतद्यक्षमिति ॥ ३ ॥ तथेति तदभ्यद्रवत्तमभ्यवदत्कोऽसीत्यग्निर्वा अहमस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति ॥ ४ ॥ यस्मिंस्त्वयि किं

[1] व्यजानन्त—मु.

वीर्यमित्यपीदꣳ सर्वं दहेयं यदिदं पृथिव्यामिति ॥ ५ ॥ तस्मै तृणं निदधावेतद्दहेति [1]तदुपप्रेयाय सर्वजवेन तन्न शशाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ ६ ॥ अथ वायुमब्रुवन् वायवेतद्विजानीहि किमेतद्यक्षमिति ॥ ७ ॥ तथेति तदभ्यद्रवत्त-मभ्यवदत्कोऽसीति वायुर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अह-मस्मीति ॥ ८ ॥ तस्मिंस्त्वयि किं वीर्यमित्यपीदꣳ [2]सर्वमाददीयं यदिदं पृथिव्यामिति ॥ ९ ॥ तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्वजवेन तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति ॥ १० ॥ अथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमेतद्यक्षमिति । तथेति तदभ्यद्रवत्तस्मात्तिरोदधे ॥ ११ ॥ स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं ताꣳ होवाच किमेतद्यक्षमिति ॥ १२ ॥

तेषां मिथ्याभिमानं ब्रह्म ज्ञातवत् इत्याह श्रुतिः—**तद्धैषां** इति ॥ तत् ब्रह्म देवगणमिथ्याभिमानं वेदेत्यर्थः । सर्वज्ञत्वात् । "यः सर्वज्ञः सर्ववित्" इति श्रुतेः । तत् ब्रह्म देवतागणमिथ्याभिमानं ज्ञात्वा तद्दोषतः एते असुर-गणवत् पराभवेयुः इति तदनुकम्पया तान्मिथ्याभिमानतो मोचयित्वा अनु-गृह्णीयामिति मूलाविद्यास्थूलांशानुकारीव देवगणचक्षुर्विषये प्रादुर्बभूवेत्याह—**तेभ्यो ह प्रादुर्बभूव** इति ॥ देवास्तद्यक्षेयत्तां ज्ञात्वा निर्भयास्तिष्ठन्तीत्यत आह—**तत्** इति । स्वयोगमाहात्म्यसंजातपश्यद्विस्मयास्पदचक्षुर्विषय[3]देशगतयक्षं योगिसाक्षात्करणीयं दृष्ट्वा किमिदमदृष्टपूर्वमद्भुतमिति सान्तर्भयास्सन्तः देवाः

[1] तदुपप्रयाय—क.
[2] सर्वमाददीय—क.
[3] देशंगत—उ. १.

**न व्यजानत** । नैव विज्ञातवन्त इत्यर्थः । देवाः तद्रूपविजिज्ञासया सर्वज्ञकल्प अतितेजस्विनं अग्निं यक्षेयत्तां परिज्ञातुं समर्थमिति मत्वा प्रेषयामासुः । सोऽप्यग्निः जवेन **तद्यक्षं** गत्वा तत्तेजसा जडीभूतस्तूष्णीमास । तं पिपृच्छिषुं तद्यक्षं संभाष्य दग्धृत्वाभिमानं मोचयामास ॥ २ ॥ पुनः व्रीडितो देवान् प्रति गतवान् इत्याह—**तेऽग्निं** इति ॥ अपः प्रविश्य मग्नो भवतीति अग्निः "आपो वा अग्नेर्योनिः", "अपां वा अग्निः कुलायम्" इत्यादिश्रुतेः । यस्य देशिकोपदेशमन्तरा सर्वार्थप्रकाशकवेदपूगः स्वयमेव जातः आविर्भूतः सोऽयं **जातवेदाः** "देवाः स्वयं भातवेदाः" इति स्मृतेः ॥ ३—६ ॥ तथा अमी देवाः अग्नेः ज्ञातुमशक्यं यक्षं परिज्ञातुं अग्नेरपि जविष्ठं अथाग्निपरिभवानन्तरं **वायुमब्रुवन्** इत्यादि समानमित्याह—**अथ वायुं** इति ॥ वानात् गन्धनात् वायुः । मातरि अन्तरिक्षे श्वयतीति मातरिश्वा । देवा अथ अग्निवायुपरिभवहेतुयक्षेयत्तापरिज्ञानचतुरं मत्वा देवराजं इन्द्रं तत्परिज्ञानाय प्रेषयामासुः । सोऽयमिन्द्रो नाहमग्निवत् वायुवत् तदियत्तामपरिज्ञाय तूष्णीमागन्तुं उत्सहेयमिति देहधिया पारमैश्वर्यगर्वपर्वतारूढः सन् तद्यक्षं प्रति दुद्राव । तदिन्द्रत्वाभिमतिः सुतरां निराकर्तव्येति अग्निवायुभ्यामिव संवादमात्रमप्यदत्वा मूलाविद्यार्धमात्रांशासङ्गप्रत्यगभिन्नब्रह्मभावमेत्य तिरोदधे । तदा तिरोहितस्वरूपं ध्यायन् आकाशमवलोकयन् स्थितः । तस्य इन्द्रत्वाभिमानो गत इति ब्रह्मविद्या स्वात्मानं दर्शयामास ॥ ७—१० ॥ यक्षस्वरूपजिज्ञासुः तां पप्रच्छेत्याह—**अथेन्द्रं** इति ॥ तस्मात् ईश्वरभावमापन्नेन्द्रागमनात् पूर्वक्षणं ब्रह्म तिरोदधे । अग्न्यादेरिव संवादमात्रमप्यदत्वा देवराजाभिमानः सुतरां निराकर्तव्य इति स्वाविद्याद्वयतत्कार्यापवादाधिकरणप्रत्यगभिन्नब्रह्मभावं तद्गत-हेयांशापह्नवसिद्धब्रह्ममात्रभावं वा जगामेत्यर्थः । यत्र ब्रह्म **तिरोदधे** तस्मिन्नेवाकाशे **किमेतत् यक्षमिति** ध्यानारूढस्सन् तस्थौ । ध्यानात् न निववृते । तदा ब्रह्मविद्या अग्न्यादिवत् इन्द्रस्य यक्षभक्तिं बुद्ध्वा स्त्रीरूपेण प्रादुरभूत् । ब्रह्ममात्रविद्यायाः शोभनतमत्वेन शोभमानेति विशेषणं उपपन्नमिति । सः इन्द्रो बहुशोभमानां उमां ब्रह्मविद्याम् । यद्वा—हिमवतो

दुहिता हेमकृताभरणा वा हैमवती नित्यमीश्वरेण सह वर्तत इति तां स्त्रियं ब्रह्मविद्यास्वरूपेण मनसा जगाम । पुनः किमेतद्यक्षमिति तामुवाच । ह किल । किं तत् मे स्वात्मानं दर्शयित्वा तिरोभूतम् । तद्यक्षेयत्तां ब्रूहीति मुहुर्मुहुः प्रार्थयामासेत्यर्थः ॥ ११—१२ ॥

इति तृतीयः खण्डः

---

# चतुर्थः खण्डः

इन्द्रोमयोर्यक्षेयत्ताप्रश्नप्रतिवचने

सा ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये महीयध्वमिति
ततो हैव विदांचकार ब्रह्मेति ॥ १ ॥

संशान्ताभिमानेन इन्द्रेण एवं किमिदं यक्षमिति पृष्टा उमा तद्यक्षेयत्तामाह—**ब्रह्मेति होवाच** इति । यद्वो दृष्टिपथं प्राप्य तिरोभूतमिव भातं तद्यथा भूतार्थज्ञैः सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति साक्षात्कृतं तद्यक्षं ब्रह्ममात्रं विद्धि **इत्युवाच** हेत्यर्थः ।

यन्निष्कलं ब्रह्मतत्त्वं साक्षात्कुर्वन्ति योगिनः ।
तदेव हि महद्यक्षं तस्मात् किंचिन्न विद्यते ॥

इति स्मृतेः । पुरा भवत्कृते ईशभावमापन्नेन ब्रह्मणा जिता ह्यसुराः तज्जये यूयं निमित्तमात्रमित्याह—**ब्रह्मण** इति । **महीयध्वं** वयं जिताः इति मिथ्या महिमानं प्राप्नुथेत्यर्थः ।

मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ।

इति स्मृतेः । एतदिति क्रियाविशेषणार्थम् । **अस्माकमेवायं विजयः अस्माकमेवायं महिमेति** मिथ्याभिमानः कदापि मास्त्वित्यर्थः । इन्द्रो यक्षं ब्रह्मेत्युमावाक्यात् जानातीत्याह—**तत** इति । न हि इन्द्रः स्वातन्त्र्येण ब्रह्म वेदेत्यर्थः ॥ १ ॥

अग्न्यादीनां देवोत्तमताप्राप्तिः

तस्माद्वा एते देवा अतितरामिवान्यान् देवान् यदग्निर्वायु-
रिन्द्रस्ते ह्येनन्नेदिष्ठं पस्पर्शुस्ते ह्येनत्प्रथमो विदांचकार ब्रह्मेति ॥२॥
तस्माद्वा इन्द्रोऽतितरामिवान्यान् देवान् स ह्येनन्नेदिष्ठं पस्पर्श
स ह्येनत्प्रथमो विदांचकार ब्रह्मेति ॥ ३ ॥

अग्न्यादयो ब्रह्मसंवाददर्शनात् देवोत्तमतां गता इत्याह—**तस्मात्** इति । यस्मात् अग्न्यादयो ब्रह्मसामीप्यमुपागताः तस्मात् **एते** ब्रह्मोपदेशमहिम्ना स्वान्यान् देवान् **अतितरामिव** । इवशब्द एवकारार्थः । अतिशेरते एव । **यदग्निर्वायुरिन्द्रः ते हि** यस्मात् **एनत्** एतत् ब्रह्म **नेदिष्ठं** अन्तिकतमं **पस्पर्शुः** स्पृष्टवन्तः । हि यस्मात् । **प्रथमः** प्रधानाः सन्तः **ब्रह्म विदांचकार** । विदांचक्रुः इत्यर्थः । यस्मात् इन्द्रवाक्यात् अग्निवायू विदांचक्रतुः । इन्द्रेण तूमावाक्यात् ब्रह्म इत्यवधृतम् ॥ २ ॥ यस्मात् अग्निवाय्वपेक्षया इन्द्र एव पूर्वं ब्रह्म ज्ञातवान्—**तस्माद्वा** इति । **तस्मात् देवेन्द्रो देवान्** अग्न्यादीन् **अतितरामिव** अतिशेते एव । **स ह्येनन्नेदिष्ठं पस्पर्श** । **स ह्येनत् प्रथमो विदांचकार ब्रह्मेति** इत्युक्तार्थमेतत् ॥ ३ ॥

ब्रह्मोपदेशप्रकारः

तस्यैष आदेशो यदेतद्विद्युतो व्यद्युतदा ३ [1]इदिति न्यमी-
मिषदा ३ इत्यधिदैवतम् ॥ ४ ॥

[1] इतीति—मु, इति—क.

ब्रह्मोपदेशप्रकारमाह—**तस्यैष** इति । यत् यक्षयाथात्म्यं **तस्य** निरुप-मत्वात् तत्पदारोहहेतुज्ञानप्रापकत्वेन **यत्** प्रकृतं शबळब्रह्म **तस्य** शबळब्रह्मणो येन उपमानेन निरुपमोपदेशः सेद्धुं पारयति सोऽयमेव **आदेशः** । किं तदुपमा-नमित्यत आह—**यदेतत्** इति । **यदेतत्** प्रसिद्धं लोके **विद्युतो व्यद्युतत्** विद्योतन कृतवत् इत्युक्तेरनुपपन्नत्वात् विद्युतो विद्योतनमिवेत्यर्थः । **आ** इत्यु-पमार्थे । यथा "सकृद्विद्युत्तम्" इति श्रुत्यनुरोधेन देवेभ्यो विद्युति वा आत्मानं दर्शयित्वा तिरोभूतमिवेति । अथवा—विद्युतस्तेज इत्यध्याहार्यम् । विद्युतो विद्युतत् विद्योतितवत् । **आ** इव । विद्युतस्तेजः सकृद्विद्योतितवत् इवेत्याशयः । इत्ययमादेश इति । **इति**शब्द आदेशप्रतिनिर्देशार्थः । **इत्** शब्दः समुच्चयार्थः । अपरादेश उच्यते । तद्यथा चक्षुः **न्यमीमिषत्** । स्वार्थे णिच् । निमेषणं कृतवदिति । चक्षुर्विषयतया प्रकाशतिरोभाव इवेत्यर्थः । तत्रत्याकार उपमार्थ एव । ब्रह्मण उपमानदर्शनस्य विद्युद्विद्योतनस्य शबळब्रह्मदेवताविषयत्वात् । **इत्यधिदैवतं** इति । देवतातत्कार्यापवादाधिकरणपरमात्मविषयोऽयमादेश इत्यर्थः ॥ ४ ॥

प्रत्यगभिन्नब्रह्मादेशः

**अथाध्यात्मं यदेतद्गच्छतीव च मनोऽनेन [1]चैतदुपस्मरत्य-भीक्ष्णं संकल्पः ॥ ५ ॥ तद्ध तद्वनं नाम तद्वनमित्युपासितव्यं स य एतदेवं वेदाभि हैनं सर्वाणि भूतानि संवाञ्छन्ति ॥ ६ ॥ उपनिषदं भो ब्रूहीत्युक्ता य उपनिषद्ब्राह्मीं वाव त [2]उपनिषदं ब्रूमेति ॥ ७ ॥ तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वाङ्गानि सत्यमायतनम् ॥ ८ ॥ यो वा एतामेवं वेदापहत्य पाप्मानमनन्ते स्वर्गे लोके ज्येये प्रतितिष्ठति प्रतितिष्ठति ॥ ९ ॥**

[1] चैनदुप—क.

[2] उपनिषदमब्रूमेति—ङ, मु.

मनः प्रत्यगात्मविषय आदेश उच्यते— **अथाध्यात्मं** इति । स्वात्मनो देहत्रयस्य तद्भावाभावप्रकाशकत्वेन तदपवादाधिकरणत्वेन च यदधि अन्यत् भाति तत् **अध्यात्मं** इत्यर्थः । स्वाज्ञदृष्टिविकल्पितं यत् मन **एतत्** प्रत्यक्तत्त्वं **गच्छति** विषयीकरोति **इव** भाति । साधको यच्च **अनेन मनसा एतत्** ब्रह्म **उप** समीपतः **स्मरति** । भृशं **अभीक्ष्णम्** । मानसवृत्तिः **संकल्पः** । ब्रह्मणो मानसोपाधित्वेन मनोविषयीकृतमिव संकल्पस्मरणादिप्रत्ययैः अभिव्यज्यते । अत एष प्रत्यगात्मादेशः । अधिदैवतं विद्युन्निमेषणवत् प्रकाशधर्मि । अध्यात्मं च मनःप्रत्ययसमकालाभि[1]व्यक्तिधर्मि । एवमधिदैवताध्यात्मतत्त्वं निरूप्य तद्गतविशेषांशत्यागसिद्धप्रत्यगभिन्नं ब्रह्म मन्दबुद्धिगम्यं भवतीति प्रत्यगभिन्नब्रह्मादेशः । न हि सर्वापह्नवसिद्धब्रह्ममात्रं मन्दबुद्धिभिरवगन्तुं शक्यम् ॥ ५ ॥ किं च तदेतत्प्रत्यगभिन्नं ब्रह्म । **ह** किल । सर्वप्राणिजातप्रत्यगभेदेन वननीयं संभजनीयं प्रत्यगभिन्नं ब्रह्मास्मीति चिन्तनीयमिति । **तद्वनं नाम** प्रख्यातम् । यतस्ततः **तद्वनमित्युपासितव्यम्** । एवमुपासकस्य किं फलमित्यत आह— **स य** इति । **स य एतत्** यथोक्तं प्रत्यगभिन्नं ब्रह्म **वेद** जानाति तमेतं ब्रह्मविदं **सर्वाणि भूतानि** सम्यक् **अभि** आभिमुख्येन स्वेष्टसिद्ध्ये यथा ब्रह्म तथा **वाञ्छन्ति** इत्यत्र—

> यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान् ।
> तं तं लोकं जयते तांश्च कामान् तस्मादात्मज्ञं ह्यर्चयेत् भूतिकामः ॥

इति श्रुतिमानम् ॥ ६ ॥ आचार्यसकाशात् एवं ब्रह्मानुशिष्टः शिष्यः आचार्यमुवाच । किमिति । भो भगवन् **उपनिषदं भो ब्रूहीत्युक्तवति** शिष्ये आचार्यः आह—**उक्ता** इति । उपनिषच्छब्दस्य कोऽर्थ इत्युच्यते । क्विप्प्रत्ययान्तत्वेन विशरणगत्यवसादनार्थस्य उपनिपूर्वस्य षद्लृधातोः रूपं उपनिषदिति । सर्वापह्नवसिद्धब्रह्ममात्रगोचरा विद्या उच्यते । केन अर्थयोगेन विद्यात्वमुपनिषद इति । उच्यते । साधनचतुष्टयसंपन्ना ये मुमुक्षवो विद्यामुपसद्य स्वाज्ञानबीजं शिथिलयन्ति तदज्ञानविशरणात् विशसनात् विद्या उपनिषदित्युच्यते । "अतिमुच्य धीराः

[1] व्यक्तधर्मि—उ १.

प्रेत्यास्माल्लोकादमृता भवन्ति" इति श्रुतेः। यद्वा—उक्तविशेषणविशिष्टान् मुमुक्षून् ब्रह्म गमयतीति ब्रह्मविद्या **उपनिषत्**। "ब्रह्म वेद ब्रह्मैव भवति" इति वेदनसमकालं ब्रह्मभावापत्तिश्रुतेः। अथवा—विद्यायाः स्वाप्तिसमकालं मुमुक्षुपटलस्य गर्भजन्मजरामरणादिकलनावसादयितृत्वात् विद्यैव उपनिषत्। एवमुपनिषच्छब्दार्थस्य विद्यायामेव संभवात् "केनेषितम्" इत्यादिग्रन्थस्यापि तादर्थ्येनोपनिषच्छब्दार्थत्वोपपत्तेः। प्रथमद्वितीयखण्डाभ्यां पुरैव ते तुभ्यं स्वातिरिक्तसर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रबोधिनी उपनिषत् विस्पष्टमभिहिता। का पुनरित्यत आह—**ब्राह्मीं** इति। स्वातिरिक्तविदिताविदितायमानजाग्रज्जाग्रदादिचतुष्पञ्चदशकलनापह्नवसिद्धब्रह्ममात्रगोचरां **ब्राह्मीमुपनिषदं** ब्रूमेत्युक्तामेवोपनिषदं **ब्रूम** इत्यवधारयति। ब्रह्ममात्रविषयामुपनिषदं श्रुतवतः उपनिषदं भो ब्रूहीति पृच्छतः शिष्यस्याभिप्रायः कः। यदि श्रुतार्थः प्रश्नः तदा पुनरुक्त्या निरर्थकः स्यात्। यदि सावशेषोक्तोपनिषत् तदा "प्रेत्यास्माल्लोकादमृता भवन्ति" इति फलवचनानुपपत्तेः। यदि उक्तोपनिषच्छेषतया प्रश्नः "अन्यदेव तद्विदितादथो अविदितादधि" इति निरवशेषोक्तेः। यदि उक्तोपनिषच्छेषतया साधनान्तरमात्रापेक्षा निरपेक्षा वा। यदि साधनान्तरापेक्षा तदा अपेक्षितविषयामुपनिषदं ब्रूहि। यदि निरपेक्षा तदा "नातः परमस्तीति," "नातः परं वेदितव्यं हि किंचित्" इति च पिप्पलादादिवदवधारय। उक्तं हि "उक्तात उपनिषत" इत्यवधारणम्। "तस्यै तपो दमः" इत्यादिवक्तव्यस्य विद्यमानत्वात् नेदमवधारणमिति चेत् सत्यम्। वक्तव्यमाचार्येण उक्तोपनिषच्छेषतया तत्सहकारिसाधनान्तरम्। किन्तु ब्रह्मविद्याभ्युपायतया वेदैस्तदङ्गैश्च सहपाठेन समीकरणात् तपःप्रभृतीनां न हि साङ्गवेदानां ब्रह्मविद्याशेषत्वं तत्सहकारिसाधनत्वं वा संभवति। सहपठितानां यथायोगं विनियोगः स्यादिति चेत् यथा सूक्तवाकमन्त्राणां यथादैवतं विभागो दृष्टः। तपो दम इत्यादीनामपि ब्रह्मविद्याशेषत्वं वेति शक्यं कल्पयितुम्। साङ्गवेदार्थप्रकाशकत्वेनात्मज्ञानोपायत्वमिति विभागो युज्यते। एवमर्थसम्बन्धोपपत्तिः स्यादिति चेन्न। तादृशयुक्तिवैरळ्यात्। एवं विभागघटना न हि सेद्धुं पारयति। "यत्र त्वस्य

सर्वमात्मैवाभूत् तत् केन कं पश्येत्" इत्यादिक्रियाकारकफलनिराकरणश्रुत्यनुरोधेन स्वातिरिक्तापह्नवसिद्धब्रह्ममात्रविद्यायाः न हि शेषशेषित्वं सहकारित्वं वा युज्यते। विद्याया निष्प्रतियोगिकब्रह्ममात्रगोचरत्वात्। तत्फलकैवल्यस्य स्वातिरिक्तक्रियाकारककलनापह्नवपूर्वकत्वाच्चेत्यत्र—

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज।
उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज। इति॥
मोक्षमिच्छन् सदा कर्म त्यजेदेव ससाधनम्।
त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक् परं पदम्॥

इति श्रुतेः स्मृतेश्च॥ ततोविद्याया न हि कर्म सहकारित्वेन कर्मशेषत्वं युज्यते। अतो न सूक्तवाकमन्त्रवत् यथायोगं विभाग इति। तस्मादवधारणार्थेनैव प्रश्नप्रतिवचनस्योपपद्यते। अन्यनिरपेक्षतया "उक्तात उपनिषत्" इत्युक्तत्वात् "ब्राह्मीं वाव त उपनिषदं ब्रूम" इति तस्यै तस्या उक्ताया उपनिषदः प्राप्त्युपायभूतानि तपआदीनि कृच्छ्रचान्द्रायणादिकं ब्रह्मातिरिक्तं किंचित् नेत्यालोचनं वा। **तपः** मनआदिकरणग्रामनिग्रहः। **दमः** भगवदर्पणधिया सन्ध्याग्निहोत्रादिकं **कर्म**। एवमेतैः संस्कृतस्य ज्ञानमुत्पद्यत इत्यत्र—

तपसा प्राप्यते सत्त्वं सत्त्वात् संप्राप्यते मनः।
मनसा प्राप्यतेऽप्यात्मा ह्यात्मापत्त्या निवर्तते॥

इति श्रुतेः। इतिशब्दतो ज्ञानोत्पत्त्युपकारकत्वेनामानित्वादयो गृह्यन्ते। "पद्भ्यां पुरुषवत् तपआदिषु सत्सु ब्रह्मविद्या प्रतितिष्ठति" इति। **प्रतिष्ठा वेदाः**। ऋगादयश्चत्वारः। **सर्वाणि चाङ्गानि** चेति। शिक्षादीनि षट्। वेदानां कर्मज्ञानप्रकाशकत्वात् अङ्गानां तद्रक्षणार्थत्वात् प्रतिष्ठात्वम्। यद्वा—पादशब्दार्थः प्रतिष्ठा अङ्गिनि गृहीते अङ्गानां गृहीतत्वात् वेदग्रहणेन अङ्गग्रहणं कृतमिति मन्तव्यम्। यदायत्तत्वादङ्गानां विद्या यत्र तिष्ठति तत् आयतनं सत्यं उपनिषदायतनं ब्रह्मेत्यर्थः। "सत्यं ज्ञानमनन्तं ब्रह्म"

इति श्रुतेः। यद्वा --वाङ्मनःकायानां अकौटिल्यतया परानुद्वेगप्रियहितकरं वाक्यं सत्यम्। यतः सत्यवत्सु ब्रह्मविद्याश्रयति। "नयेषु जिह्ममनृतं न माया चेति" इत्यासुरप्रकृतिविमुखदैवीप्रकृत्यारूढेषु ब्रह्मविद्या प्रतितिष्ठतीति **सत्यमायतनं** तपआदिषु तद्विशिष्टेष्वेव प्रतिष्ठितस्य सत्यस्य पुनरायतनत्वेन ग्रहणं साधनातिशयद्योतनार्थम्।

अश्वमेधसहस्रं च सत्यं च तुलया धृतम्।
अश्वमेधसहस्रात्तु सत्यमेव विशिष्यते॥ इति स्मृतेः॥

अथवा "पश्यतेहापि सन्मात्रमसदन्यत्", "ब्रह्ममात्रमसन्न हि"

सच्चिदानन्दमात्रोऽहमनुत्पन्नमिदं जगत्।

इत्यादिश्रुत्यनुरोधेन स्वातिरिक्तस्वाविद्यापदतत्कार्यजातासदपह्नवसिद्धसन्मात्रमेव सत्यमित्युच्यते। तदेवायतनं यस्याः निष्प्रतियोगिकब्रह्ममात्रविद्यायाः तत्सत्यमायतनम्। **यो वै** यथोक्तसाधनाधिकारी "केनेषितम्" इति प्रश्नानुरोधेन "श्रोत्रस्य श्रोत्रम्" इत्यादिना स्वातिरिक्तश्रोत्रादिकरणग्रामप्रवृत्तिनिमित्तप्रत्यगभिन्नब्रह्मप्रतिपादिकां पराक्प्रपञ्चसापेक्षप्रत्यगभिन्नब्रह्मणि सविशेषशंकायां "न तत्र चक्षुर्गच्छति" इत्यादिना तद्गतविशेषमुन्मूल्य तत् किं विदितमविदितं वेति शंकायां विदिताविदितायमानजाग्रज्जाग्रदादिचतुष्पञ्चदशकलनापह्नवसिद्धं ब्रह्म स्वमात्रमिति परमसिद्धान्तप्रबोधिनीं "यदि मन्यसे" इत्यादिना दृढीकृतां "ब्रह्म ह देवेभ्यः" इत्यादिना ब्रह्मबोधकत्वख्यापिकां **एतां** उपनिषदं अर्थतो **वेद** सोऽयं विद्वान् स्वातिरिक्ताविद्यापदतत्कार्यजातमात्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन शून्यत्वेन वा अस्ति नास्तीति विभ्रमरूपं **पाप्मानं अपहत्य** अपह्नवं कृत्वा वस्तुतः अपह्नोतव्यविषयवैरळ्यात् अपह्नवोक्तेरप्यपह्नवं कृत्वा तत्समकालमेव निष्प्रतियोगिकानन्ते त्रिविधपरिच्छेदापह्नवसिद्धे निष्प्रतियोगिकस्वावशेषतया यो गीयते लोक्यते इति च स्वर्गो लोकः। तस्मिन् **स्वर्गे लोके** सच्चिदानन्दमात्रात्मनि **ज्येये** "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा" इति

श्रुत्यनुसंधेन भूममात्रस्वभावे ब्रह्मणि स्वावशेषतया प्रतितिष्ठति इत्यत्र "य एवं निर्बीजं वेद निर्बीज एव स भवति" इति स्वमात्रज्ञानसमकालं स्वमात्रापत्तिश्रुतेः । आवृत्तिरितिशब्दश्च तलवकारशाखागतनवमाध्यायरूपकेनोपनिषत्परिसमाप्त्यर्थः ॥ ७—९ ॥

इति चतुर्थः खण्डः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं केनोपनिषदः स्फुटम् ।
केनविवरणग्रन्थः षट्च्छतं परिकीर्तितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे द्वितीयसंख्यागोचर-केनोपनिषद्विवरणं संपूर्णम्

# कठवल्ल्युपनिषत्

## सह नाववतु—इति शान्तिः

## प्रथमा वल्ली

वाजश्रवसनचिकेतसोः संवादः

ॐ उशन् ह वै वाजश्रवसः सर्ववेदसं ददौ । तस्य ह नचिकेता नाम पुत्र आस ॥ १ ॥

तꣳ ह कुमारꣳ सन्तं दक्षिणासु नीयमानासु श्रद्धाविवेश सोऽमन्यत ॥ २ ॥

पीतोदका जग्धतृणा दुग्धदोहा निरिन्द्रियाः ।
[1]अनन्दा नाम ते लोकास्तान्स गच्छति ता ददत् ॥ ३ ॥

स होवाच पितरं तत कस्मै मां दास्यसीति द्वितीयं तृतीयम् । तꣳ होवाच मृत्यवे त्वा ददामीति ॥ ४ ॥

बहूनामेमि प्रथमो बहूनामेमि मध्यमः ।
किꣳ स्विद्यमस्य कर्तव्यं यन्मयाद्य करिष्यति ॥ ५ ॥

[1] आनन्दा—उ १.

अनुपश्य यथा पूर्वे प्रतिपश्य तथा परे ।
सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः ॥ ६ ॥

श्रीमद्वैवस्वताचार्यो यदाह नचिकेतसे ।
कलये तत्पदं ब्रह्म स्वावशेषधियान्वहम् ॥

इह खलु कृष्णयजुर्वेदान्तर्गतकठशाखायां दर्शपूर्णमासाद्यग्निचयनान्तं कर्मवर्त्म विस्पष्टमभिहितम् । सर्वकर्माश्रयभूतहिरण्यगर्भोपासनानि चाभिहितानि । तत्र सकामस्य "किंचिद्विकलं कर्म फलोपधायकं न भवति" इति वचनतः प्रातिस्विकेन कर्म ज्ञानं वा कर्मसमुच्चितज्ञानं वा यथावदनुष्ठितं सत् पुनरावृत्त्यर्हचन्द्रलोकप्रापकं भवति । निष्कामस्य तु तद्वैपरीत्येनार्चिरादिना ब्रह्मलोकाप्तिश्चित्तशुद्धिप्राप्यसंन्यासपूर्वकब्रह्मजिज्ञासा वोदेति । तादृशजिज्ञासोरात्मतत्त्वप्रतिपत्तये वल्लीषट्कजुष्टकाठकोपनिषदाम्नायते । नचिकेतोमृत्युप्रश्नप्रतिवचनरूपेयमाख्यायिका तु वक्ष्यमाणविद्यास्तुत्यर्था । वक्ष्यमाणब्रह्मविद्याभिव्यक्तिहेतुकाठकोपनिषदः सुखप्रतिपत्त्यर्थमल्पग्रन्थतो विवरणमुपक्रम्यते । वृत्तमनुकीर्तयति— **उशन्** इत्यादिना । वाजं अन्नम् । तद्दानप्रयुक्तश्रवो यशो यस्य सोऽयं वाजश्रवाः । रूढितो वा । अस्यापत्यं **वाजश्रवसः** । विश्वजिद्यागफलं **उशन्** कामयमानस्सन् विश्वजिद्यागावसाने **सर्ववेदसं** स्वार्जितसर्वस्वं **ददौ** । **ह वा** इति वृत्तार्थस्मरणार्थौ निपातौ । **तस्य ह** किल यजमानस्य **नचिकेता नाम** सत्पुत्र **आस** बभूवेत्यर्थः ॥ १ ॥ ततः किमित्यत आह—**तं** इति । स्वपित्रा ऋत्विक्सदस्येभ्यो विभागशो **दक्षिणार्थासु** गोषु **नीयमानासु** सतीषु [1]स्वानात्तप्रजननशक्तितः **सन्तं** प्रथमवयस्त्वात् **कुमारं तं** नचिकेतसं पितुः श्रेयःप्रदा **श्रद्धाविवेश ह** किल । श्रद्धाविष्टोऽर्भकः किं करोतीत्यत आह—**स** इति । स्वोत्पत्त्यवसानमध्ये यावदुदकं पेयं यावत्तृणमत्तव्यं तावन्निःशेषं याभिः पीतं जग्धं च ताः **पीतोदकाः जग्धतृणाः** । स्वस्वामिकृते यावत् क्षीरं दोग्धव्यं तावत् याभिर्दुग्धं ता **दुग्धदोहाः** । [2]व्याविद्धप्रजननशक्तित्वात् **निरिन्द्रियाः** । इत्थंभूताः

[1] स्वानात्तप्रजानन—उ १.
[2] व्याविद्धप्रजानन—उ १.

**ताः** गावः ऋत्विग्भ्यो दक्षिणाबुद्ध्या यो **ददत्** प्रायच्छत् सः गोप्रदाता **अनन्दा** अनानन्दा **नाम लोका** ये विद्यन्ते **तान्** निरानन्दलोकान् **गच्छतीति स** आविष्टश्रद्धो नचिकेता **अमन्यत** ॥ २—३ ॥ सत्पुत्रेण मया पितुरनिष्टफलं मार्जयितव्यमिति पितरं प्रत्याह—**स** इति। **तत** इत्यत्र प्राथमिकतकारदीर्घलोपश्छान्दसः । **सोऽयं** नचिकेता हे तातेति **पितरं** संबोध्य दक्षिणाधिया **मां कस्मै** ऋत्विजे **दास्यसि** इत्युवाच । उक्तार्थे पित्रोपेक्षितोऽपि कस्मै मां दास्यसीति द्वित्रिवारमप्युवाच ह । नायं कुमारस्वभाव इति क्रुद्धः पितैवमाह—**त**मिति । **तं होवाच मृत्यवे त्वा ददामि** इति । वैवस्वताय त्वां दास्यामीति पुत्रं प्रत्युवाच ॥ ४ ॥ पित्रैवमुक्तो नचिकेता रहसि परिदेवनां चकारेत्याह—**बहूनां** इति । पितुराचार्यस्य वा अनुक्तेष्टार्थकारिणां **बहूनां** पुत्राणां शिष्याणां वा मध्ये **प्रथमः** प्रधान **एमि** भवामि। उक्तार्थकारिणां मध्यमानां **बहूनां** मध्ये **मध्यमो** वा **एमि**। कदाचिदप्येवं पिता न मया कोपितो विशिष्टगुणमपि मां मृत्यवे **ददामि** इत्युक्तवान्। पित्रा प्रदत्तेन **मया यमस्य कर्तव्यं किंस्वित्** किं वा भवति। मद्दानतः पितुर्वा स यमः किमिष्टं **करिष्यति**? प्रकृते यत् कर्तव्यं प्रयोजनं तदनपेक्ष्य केवलं क्रोधवशादेवमुक्तवान् ॥ ५ ॥ तथापि तद्वचः सत्यं कर्तव्यमिति मनीषया किं मयोक्तमिति शोकाविष्टं पितरं परिदेवनापूर्वकमाह—**अनुपश्य** इति। हे तात **पूर्वे** तव पितृ-पितामहादयोऽतिक्रान्ताः । **तथा परे** वर्तमानाः साधवश्च । तेषां वृत्तं **अनुपश्य** अनुपालय । तान्वा **प्रतिपश्य** सम्यगालोकय । न हि तेषु मृषावचनं कालत्रयेऽप्यस्ति। न च मृषावादी कश्चिदपि स्वाराज्यमश्नुते। यतो देहत्रयाहंभावविशिष्टो **मर्त्यः** मरणधर्मा बाल्ययौवनाद्यवस्थाग्निना **पच्यते** जीर्णस्सन् म्रियते। मृत्वा च **पुनः सस्यमिव आ** समन्तात् **जायते**। एवं अनित्ये जीवलोके किं मृषावाक्यतः साधनीयमस्ति। यमभवनं प्रति मां प्रेषयित्वा स्वात्मनः सत्यतां [1]प्रतिपालय । सत्पुत्रेणैवमुक्तः पिता स्वात्मनः

[1] परिपालय—उ १.

सत्यतायै यथा पुत्रः पुनरागमिष्यति तथोपायमनुवदन् प्रेषयति । हे नचिकेत त्वं यदा यमो गृहान्निर्गत्य दूरं गच्छति तदा तद्भवनं गत्वा त्रिरात्रमुपवासं कुरु । यदि त्वन्निकटमागत्य यमः "अर्भक कोऽसि किमर्थं मद्गृहमेत्यानश्नन् तिष्ठसि" इति पृच्छति तदा त्वया अनश्नता त्रिरात्रमुषितमिति वक्तव्यम् एकैकां रात्रिं किमश्नासीत्युक्ते त्वत्प्रजापशु [1]साधुकृत्यामश्नन् वसेयमिति वदन् तूष्णीं तिष्ठ । ततस्ते श्रेयो भविष्यतीत्यत्र—"स होवाच । परेहि मृत्योर्गृहान् मृत्यवे वै त्वादामिति । तं वै प्रवसन्तं गन्तासीति होवाच । तस्य स्म तिस्रो रात्रीरनाश्वान् गृहे वसतात् । स यदि त्वा पृच्छेत् । कुमार कति रात्री-रवात्सीरिति । तिस्र इति प्रतिब्रूतात् । किं प्रथमाꣳ रात्रिमाश्ना इति । प्रजां त इति । किं द्वितीयामिति । पशूꣳस्त इति । किं तृतीयामिति । साधुकृत्यां त इति ।" इति श्रुतेः । इत्थं श्रुत्युक्तोपायपूर्वकं प्रेषयामासेत्यर्थः । सोऽयं पित्रानुशिष्टो नचिकेताः प्रोषितयमसद्मनि तिस्रो रात्रीरुवास ॥ ६ ॥

मृत्यवे तत्सम्बन्धितामनुबोधनम्

वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् ।
तस्यैताꣳ शान्तिं कुर्वन्ति हर वैवस्वतोदकम् ॥ ७ ॥

आशाप्रतीक्षे सङ्गतꣳ सूनृतां चेष्टापूर्ते पुत्रपशूꣳश्च सर्वान् ।
एतद्वृङ्क्ते पुरुषस्याल्पमेधसो यस्यानश्नन् वसति ब्राह्मणो गृहे ॥८॥

एवं त्रिरात्रानशननचिकेतोवृत्तं प्रोष्यागताय यमाय तदामात्या विज्ञाप्य शान्तिं कुर्वित्याहुरित्याह—**वैश्वानर** इति । [2]हे वैवस्वत स्वातिरेकेण किंचिदस्तीति विश्वसनीयं विश्वं तदारोपाधिकरणत्वेन तदसङ्गत्वेन च तत्र यो रमते स विश्वनरः । विश्वनर एव **वैश्वानरः** विराट् । रूढितोऽग्निर्वा । स एष **ब्राह्मणो** भूत्वा त्वद्**गृहान्**

[1] साधुकृत्यानमश्नन्—उ १.

[2] इह वैवस्वतः—उ १.

त्वत्परिग्रहानस्मांश्च प्रदहन्निव साक्षाद्वैश्वानर एव **प्रविशति** । **तस्य** अतिथेः सन्तः पाद्यार्घ्यासनादिलक्षणां **एतां शान्तिं कुर्वन्ति** यथा तथा नचिकेतसे त्वमपि पाद्याद्यर्थं **उदकादिं हर** आहरस्वेत्यर्थः ॥ ७ ॥ एवमकरणे कः प्रत्यवाय इत्यत आहुः—**आशा** इति । **यस्य अल्पमेधसः पुरुषस्य गृहे** ब्रह्म वेदः तं जानातीति **ब्राह्मणः** गायत्रीतन्तुमात्रप्रधानो वा **वसति** तस्य गृहमेधिनः अननुभूतार्थप्रार्थना आशा च अनुभूतार्थप्रार्थना प्रतीक्षा च ते **आशाप्रतीक्षे** कर्मफलं **सङ्गतं सूनृतां** सूनृतवाग्जन्यसुकृतं यागजमिष्टं **च** आरामादिक्रियाफलं पूर्तं **च इष्टापूर्ते पुत्रान् पशूंश्च सर्वान् एतत्** सर्वं ब्राह्मणोपवासाग्निः **वृङ्क्ते** आक्रमते निर्मूलयतीत्येतत् यत एवमतः सर्वावस्थास्वप्यतिथिर्जात्वपि नोपेक्षणीय इत्यर्थः ॥ ८ ॥

नचिकेतसे वरत्रयप्रदानप्रतिज्ञा

तिस्रो रात्रीर्यदवात्सीर्गृहे मेऽनश्नन्ब्रह्मन्नतिथिर्नमस्यः ।
नमस्तेऽस्तु ब्रह्मन् स्वस्ति मेऽस्तु तस्मात्प्रति त्रीन्वरान्वृणीष्व ॥९॥

इत्थं स्वामात्यैर्विज्ञापितो मृत्युः पूजापुरस्सरं नचिकेतसमुपसङ्गम्यै- नमुवाच—**तिस्र** इति । हे **ब्रह्मन्** नचिकेतस्त्वमस्मदादिभिर्नमस्कारार्हो **नमस्योऽतिथिः अनश्नन्** यस्मात् **मे** मम **गृहे तिस्रो रात्रीरवात्सीः** उषित- वानसि । ते तुभ्यं **नमोऽस्तु** । भवन्तमुद्दिश्य मत्कृतप्रणिपातामृतवारिधिर्मद्गृहे भवदनशनसञ्जातदोषाग्निशमनं [1]करोतु ।

प्रणिपातमात्रनीराच्छाम्यति कोपाशुशुक्षणिर्महताम् ।

इति [2]मुद्गलाचार्यवचनतः । यस्मात् [3]एवं भवति **तस्मात्** भवन्नमस्कारात् मे मम **स्वस्ति** शोभनं **अस्तु** । यद्यपि भवदनुग्रहमात्रेण मम स्वस्ति स्यात् तथापि

[1] " करोतु "—नास्ति उ १.

[2] मुद्गलाचार्यवचनेन—उ १.

[3] " एवं "—नास्ति उ १.

त्नोऽधिकस्त्वस्यर्थ निरशनेनोषितैकैकां रात्रिं प्रति भवदभिप्रेतविषयान् त्रीन् वरान् वृणीष्व भक्तः प्रार्थयस्वेत्यर्थः ॥ ९ ॥

नचिकेतसः प्रथमवरः

[1]शान्तसंकल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो माभि मृत्यो ।
त्वत्प्रसृष्टं माभिवदेत्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे ॥ १० ॥
यथा पुरस्ताद्भविता प्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः ।
सुखं रात्रीः शयिता वीतमन्युस्त्वां [2]ददृशिवान्मृत्युमुखात्प्रमुक्तम् ॥

वरत्रयं ददामीति यमेनानुगृहीतो नचिकेतास्तत्र प्रथमवरं वृणोति— शान्तसङ्कल्प इति। हे मृत्यो गौतमो मत्पिता मत्पुत्रो यमं प्राप्याभकः किं करिष्यति स पुनरायाति न वेत्यादिनानाविधसंकल्पो [3]यस्य शान्तः सोऽयं शान्तसंकल्पः। सुमनाः माभि मां प्रति वीतमन्युर्यथा स्यात्। किं च त्वत्प्रसृष्टं त्वया मत्पितृभवनं प्रति प्रेषितं पुरा "तत कस्मै मां दास्यसि" इति येन भाषितं सोऽयं मत्पुत्रः समागत इति प्रतीतो लब्धस्मृतिः सन् यथापूर्वं मा मां अभिवदेत्। तथाकरणं दीयमानवरत्रयाणां इदमेव प्रथमं वरं वृणे। यत् पितुः परितोषणं तत् प्रार्थय इत्यर्थः ॥ १० ॥ एवं नचिकेतःप्रार्थिताद्यवरदित्सुर्मृत्युरुवाच—यथा पुरस्तात् इति। उद्दालक एव औद्दालकिः। अरुणस्यापत्यं आरुणिः द्व्यामुष्यायणो वा। त्वत्पिता यथा पुरस्तात् स्नेहसमन्वितो भविता तथैव मत्पुत्रोऽयं समागत इति लब्धप्रतीतिः सन् मत्प्रसृष्टो मयानुज्ञातः सन्नप्युत्तरा रात्रीः सुखं विगतमन्युः प्रसन्नमनाः शयिता। मृत्युमुखात् प्रमुक्तं त्वा पुत्रं ददृशिवान् दृष्टवान् स्यादित्यर्थः ॥ ११ ॥

[1] शान्तः—उ १.
[2] दर्शिवान्—क, ददर्शिवान्—उ १.
[3] येन—उ १.

द्वितीयवरप्रार्थनं तत्प्रदानं च

स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं न जरया बिभेति ।
उभे तीर्त्वाशनायापिपासे शोकातिगो मोदते स्वर्गलोके ॥ १२ ॥
स त्वमग्निꣳस्वर्ग्यमध्येषि मृत्यो प्रब्रूहि तꣳ श्रद्दधानाय मह्यम् ।
स्वर्गलोका अमृतत्वं भजन्त एतद्द्वितीयेन वृणे वरेण ॥ १३ ॥
प्र ते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजानन्
अनन्तलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेतन्निहितं गुहायाम् ।
लोकादिमग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा ॥ १४ ॥
स चापि तत्प्रत्यवदद्यथोक्तमथास्य मृत्युः पुनरेवाह तुष्टः ।
तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य [1]ददामि भूयः ।
तवैव नाम्ना भवितायमग्निः सृङ्कां [2]चेमामनेकरूपां गृहाण ॥ १५ ॥
त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू ।
ब्रह्मजज्ञं देवमीड्यं विदित्वा निचाय्येमाꣳ शान्तिमत्यन्तमेति ॥ १६ ॥
त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वाꣳश्चिनुते नाचिकेतम् ।
स मृत्युपाशान्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके ॥ १७ ॥
एष तेऽग्निर्नचिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण ।
एतमग्निं तवैव प्रवक्ष्यन्ति जनासस्तृतीयं वरं नचिकेतो वृणीष्व ॥

नचिकेताः प्रथमवरं लब्ध्वा द्वितीयवरलिप्सया प्रष्टव्यवरफलं स्तुवन् मृत्युतस्तद्वरं वृणोति— **स्वर्ग** इति । अग्निविद्याफलभूतस्वर्गे **लोके न**

[1] ददानि—क, उ १.

[2] च मां—उ.

किञ्चनापि रोगादिनिमित्तं **भयमस्ति । न तत्र त्वं** मृत्युः संचरसि । त्वत्प्रसरणाभावादिह लोक इव **जरया** युक्तः कश्चिदपि त्वत्तो **न बिभेति** । किं च सदा शोकप्रदाशनायापिपासे **उभे अपि तीर्त्वा** बाह्यान्तर्भवशोकमतीत्य **गच्छतीति शोकातिगो** विद्वान् दिवि **स्वर्गलोके** ब्रह्मलोके वा **मोदते** हृष्यत इत्यर्थः ॥१२॥ स्वर्गाप्त्युपायाग्निविद्यां यतस्त्वं जानासि अतस्तन्मे प्रयच्छेत्याह—**स त्वं** इति । सर्वविस्त्वेन यः प्रथितः **स त्वम्** । हे **मृत्यो** निष्कामबुद्ध्या स्वाश्रमाचारसंपन्नैः यो गन्तव्यः सोऽयं ब्रह्मलोकः स्वर्गः । [1]तत्प्रापकं ज्ञानं **स्वर्ग्यम्** । **अग्निं** अग्निविद्यापरिज्ञानम् । तद्विद्यां **अध्येषि** यथावज्जानासीत्यर्थः । यतः [2]**स्वर्गो** लोको येषां ते **स्वर्गलोकाः** परमेश्वरार्पणधिया सत्कर्मानुष्ठातारो ब्रह्मलोकसंबन्धि **अमृतत्वं भजन्ते** अतः **श्रद्दधानाय मह्यं** अग्निविद्यां **ब्रूहि** । **तत् एतत्** अग्निविज्ञानं **द्वितीयेन वरेण** त्वां **वृणे** प्रार्थय इत्यर्थः ॥ १३ ॥ नचिकेतःपृष्टद्वितीयवरदित्सुर्मृत्युराह—**प्र ते** इति । हे **नचिकेतः** ब्रह्मलोकायमानस्वर्गसाधनं **स्वर्ग्यं अग्निविज्ञानं** यतः **प्रजानन्** विज्ञातवानहं अतस्त्वया प्रार्थितं **ते** तुभ्यं **प्रब्रवीमि** । **तदु** तज्ज्ञानगर्भितं **मे** मम वचः एकमनाः सन् **निबोध** । शिष्यबुद्ध्यभिमुखीकरणाय निबोधेतिवचनम् । अधुना वक्ष्यमाणमग्निं स्तौति—**अनन्तलोकाप्तिं** इति । आब्रह्मकल्पं यस्यान्तो न विद्यते सोऽयं **अनन्तलोकः** । तदाप्तिं ब्रह्मलोकाप्तिसाधनम् । **अथो** अपि विराडादिस्वरूपेण **जगतः प्रतिष्ठां** जगदारोपाधिकरणं सर्वप्राणिकदम्ब**गुहायां** स्वाविद्यापदतत्कार्यजातगूहनरूपायां बुद्धौ सर्वान्तर्यामिरूपेण सर्वप्रत्यग्रूपेण वा **निहितं** मयोच्यमानमग्निं **विद्धि** । अग्निविद्यां नचिकेतसे मृत्युरुवाचेति श्रुतिराह—**लोकादिं** इति । मृत्युः **तस्मै** नचिकेतसे [3]काम्यकामिस्वर्गब्रह्मलोकचित्तशुद्धिप्रापकचयनकर्मणि स्वरूपतो **या इष्टकाः** चेतव्याः । संख्यया **यावतीर्वा** । **यथा** येन प्रकारेण अग्निश्चीयते तत्प्रपञ्चनपूर्वकं ब्रह्मविवर्तत्वेन

[1] तत्प्रापणीयं—उ १.

[2] स्वर्गलोकः—उ.

[3] काम्यकामिस्पर्शं—उ.

लोक्यन्त इति लोका अनन्तकोटिब्रह्माण्डानि। तत्कल्पनाधिकरणं तेषामादिः। "कारण विना कार्यं नोदेति" इति श्रुतेः। **लोकादिं अग्निं** ईश्वरं हिरण्यगर्भं वा तदीयविज्ञानं च **उवाच** उपदिदेशेत्यर्थः ॥ १४ ॥ स्वोक्ताग्निविद्याग्रहणवदनतो मृत्युस्तुष्टः सन् वरत्रयातिरिक्तवरान्तरमपि ददाविल्याह—**स चापि** इति। **स चापि** नचिकेता मृत्युनोक्तामग्निविद्यामन्यूनाधिकाक्षरार्थतया मृत्युनिकटे यथावत् **प्रत्यवदत्**। तत्प्रत्युच्चारणेन तुष्टिमेत्य वरत्रयातिरिक्तवरान्तरदित्सया **पुनरेव मृत्युराह—तं** इति। ब्रह्मभावापन्न आत्मा अन्तःकरणं यस्य स **महात्मा** मृत्युर्वरत्रयातिरिक्तवरान्तरं **भूयः ते** ददानीति तं नचिकेतसमब्रवीत्। तत् किं? इत्यत आह—**तव** इति। नचिकेतसः **तव नाम्नैव** नाचिकेतोऽग्निरिति मयोच्यमानः **अग्निर्भविता**। "[1]नाचिकेतमग्निं चिन्वानः" इति श्रुतेः। किञ्च **अनेकरूपां** नवरत्नमयीं **सृङ्कां** मालां **गृहाण**। यद्वा कर्मान्तरविज्ञानस्यानेकफलहेतुत्वात् **सृङ्कां** अकुत्सितामनेककर्मगतिं **गृहाण** ॥ १५ ॥ स्वप्रसादलब्धनाचिकेतचयनं तत्फलं च स्तौति—**त्रिणाचिकेतस्त्रिभिः** इति। येन निष्कामधिया त्रिःकृत्वो नाचिकेतोऽग्निश्चितः स **त्रिणाचिकेतः** यजमानः। "यं यं क्रतुमधीते तेन तेनास्येष्टं भवति," "मातृमान् पितृमानाचार्यवान्" इत्यादिश्रुत्यनुरोधेनाग्निविद्याध्ययनतज्ज्ञानतदनुष्ठानैः सन्मार्गनेतृमातृपित्राचार्यैः श्रुतिस्मृतिशिष्टैः प्रत्यक्षानुमानागमैर्वा **त्रिभिः** त्रिभिः **सन्धिं** विधेयतां **एत्य**। इज्याध्ययनदानानां कर्ता **त्रिकर्मकृत्** देहत्रयातिरिक्तज्ञानतो देहप्रसक्तजन्ममृत्यू **तरति**। किञ्च स्वविवृत्तप्रपञ्चापवादाधिकरणत्वेन सर्वत्र बृंहणात् ब्रह्म प्रत्यगभिन्नमित्यर्थः। स्वाज्ञदृष्ट्या तज्ज इव भातीति तज्जः। स चासौ ज्ञश्चेति **ब्रह्मजज्ञः** सर्वज्ञः परमेश्वरस्तम्। स्वारोपितप्रपञ्चद्योतनात् **देवम्**। ब्रह्मादिभिरपि **ईड्यम्**। अयमहमस्मीति **विदित्वा** अपरोक्षतो **निचाय्य** अनुभूय **इमां** ऐहिकप्रपञ्चोपरतिसिद्धां **शान्तिं** सालोक्यादिमुक्तिमतिशयेन निष्कामबुद्ध्या ज्ञानकर्मसमुच्चयानुष्ठानेन **एति**। चतुष्पदैक्यसमये मुक्तोऽपि भवतीत्यर्थः ॥ १६ ॥

[1] नाचिकेतसमग्निं—उ १.

अग्निविज्ञानचयनफलमुपसंहरति—**त्रिणाचिकेतस्त्रयं इति।** **त्रिणाचिकेतः** यजमानः। "या इष्टका यावतीर्वा यथा वा" इत्येतत्त्रयं **विदित्वा य एवं विद्वान् नाचिकेतं अग्निं चिनुते** सोऽधर्माज्ञानरागद्वेषादिलक्षणमृत्यु-**पाशान्** शरीरपातात् **पुरतः प्रणोद्य** स्वान्तर्बाह्यप्रपञ्चवासनासञ्जात[1]**शोकातिगो** भूत्वा विपुलसुखायमानस्वर्गो यत्र लोक्यते सोऽयमुपासकभावानुरोधब्रह्मादि-लोकस्तस्मिन् तद्भावापत्त्या **मोदते** ॥ १७ ॥ हे **नचिकेतः!** त्वं **यं अग्निं द्वितीयेन** [2]अपि **वरेण अवृणीथाः ते तुभ्यमेष** स्वर्ग्योऽग्निवरो मया दत्तः। किञ्च **जनासः** जनाः **तवैव** नाम्ना **एतमग्निं प्रवक्ष्यन्ति** नाचिकेतचयनशब्देन इत्यर्थः। वरत्रयं दास्यामीति प्रतिज्ञाय द्वितीयवरं दत्त्वा ते तृतीयवरादाने यतो ऋणी स्यामतो [3]हि त्वं **तृतीयं वरं वृणीष्व** इत्याह—**तृतीयं वरं नचिकेतो वृणीष्व** इति। एतावता ग्रन्थेन वरद्वयसूचित-वस्तुविषयत्वेन विधिप्रतिषेधार्थौ वर्णितः। न ह्यात्मयाथात्म्यज्ञानं स्वाध्यस्त-विधिप्रतिषेधलक्षणक्रियाकारकफलाध्यारोपापवादभ्रमविरळनिष्प्रतियोगिकब्रह्ममात्र-सिद्धान्तो वक्तव्य इत्युत्तरो ग्रन्थ आरभ्यते। तृतीयवरमन्तरेण द्वितीयवर-प्राप्त्यापि नचिकेताः स्वात्मानमकृतार्थं मत्वा यतः स्वात्मनः कृतार्थतायै तृतीयं वरं वृणीते अतः पूर्वकाण्डगोचरविधिप्रतिषेधसाध्यसाधनकलनारोपापवाद-भ्रमविरक्तस्य निष्प्रतियोगिकब्रह्ममात्रज्ञानाधिकारो नेतरस्येति द्योत्यते—तृतीयं वरं नचिकेतो वृणीष्व इति ॥ १८ ॥

तृतीयवरेणात्मोपदेशप्रार्थना

येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके।
एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः ॥ १९ ॥

[1] शोकादिगो—उ १.
[2] "अपि"—नास्ति उ १.
[3] "हि"—नास्ति उ १.

मृत्युना आज्ञप्तः सन् तृतीयं वरं वृणीते— **येयं** इति । **मनुष्ये प्रेते** मृतिं गते सति देहत्रयातिरेकेण तत्सम्बन्धविरळ आत्मा **अस्तीत्येके** मीमांसकादयः । **नायं** एवंविधः **अस्तीति चैके** असल्लौकिकादयः । **येयं विचिकित्सा** जाता न हि सेयं प्रत्यक्षादिप्रमाणैर्निर्णेतुं शक्या । एतद्विज्ञानाधीनो हि परमपुरुषार्थः । तृतीयं वरं वृणीष्वेति **त्वयाहमनुशिष्टः** आज्ञापितः । वरत्रयं दास्यामीति त्वदुक्तवराणां अध्यात्मविषयो **वरस्तृतीयः** । त्वया दीयमानतृतीयवरगोचरत्वेन विद्यमानं **एतत्** सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रस्वरूपं यथाहं **विद्यां** जानीयां तथा मामनुगृह्णीष्व । इतः परं न किंचित् त्वामहं वृणे इत्यर्थः ॥ १९ ॥

मृत्योस्तद्वरत्यागप्रार्थनम्

**देवैरत्रापि विचिकित्सितं पुरा न हि** [1]**सुविज्ञेयमणुरेष धर्मः ।**

**अन्यं वरं नचिकेतो वृणीष्व मा मोपरोत्सीरति मा सृजैनम् ॥२०॥**

किमयमर्भको निष्प्रतियोगिकब्रह्ममात्रज्ञानाधिकारी न वा ? इत्येतत्परीक्षणार्थं एष वरो मास्तु एतद्विषये देवैरपि विचिकित्सितत्वात् अन्यं वरं वृणीष्वेत्याह— **देवैरत्रापि विचिकित्सितं पुरा** इति । स्वयं भातवेदैः **देवैरपि अत्र** अस्मिन्नर्थे **पुरा** विचिकित्सितमिति श्रुतम् । तैरप्यसाध्यमित्यर्थः । प्राकृतैर्जनैर्गुरुतः श्रुतमपि **न हि सुविज्ञेयम्** । यत आत्माख्यो **धर्मः अणुः** सूक्ष्मतमः । हे **नचिकेतः** ! **अन्यं** असन्दिग्धफलं **वृणीष्व** । अधमर्णमिवोत्तमर्णो **मा मोपरोत्सीः** मां निर्बद्धं मा कार्षीः । मां प्रति **एनं वरमतिसृज** विमुञ्च ॥ २० ॥

तस्यैव वरस्य नचिकेतसो निर्बन्धः

**देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो यन्न** [2]**सुविज्ञेयमात्थ ।**

**वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित् ॥**

[1] सुज्ञेयं—उ १, अ २.

[2] सुज्ञेयं—अ २.

मृत्युनैवमुक्तो नचिकेता आह—**देवैरत्रापि** इति । भवत एव **देवैरत्रापि विचिकित्सितं किल** इति श्रुतं यस्मात् **न सुविज्ञेयं** इत्यात्मतत्त्वं **आत्थ** । "अविज्ञातं विजानतां विज्ञातमविजानतां" इति श्रुतेः । अस्य आत्मधर्मस्य पण्डितैरेव वक्तव्यत्वेन **त्वादृक्** त्वत्तुल्यः पण्डितः **अन्यो वक्ता न लभ्यः** । अन्विष्यमाणोऽपि **एतस्य वरस्य न हि तुल्यः कश्चित् वरो**ऽस्ति । तस्य निःश्रेयसप्राप्तिहेतुत्वात् । एतदतिरिक्तबाह्यविषयकसर्ववरस्य निःश्रेयसप्रतिकूलभव-हेतुत्वादित्याशयः ॥ २१ ॥

नचिकेतसः प्रलोभनम्

**शतायुषः पुत्रपौत्रान् वृणीष्व बहून् पशून् हस्तिहिरण्यमश्वान् ।**
**भूमेर्महदायतनं वृणीष्व स्वयं च जीव शरदो यावदिच्छसि ॥२२॥**
**एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिरजीविकां च ।**
**महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ॥२३॥**
**ये ये कामा दुर्लभा मर्त्यलोके सर्वान् कामांश्छन्दतः प्रार्थयस्व ॥**
**इमा रामाः सरथाः सतूर्या नहीदृशा लम्भनीया मनुष्यैः ।**
**आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं मानुप्राक्षीः ॥२५॥**

नचिकेतसैवमुक्तोऽपि मृत्युः पुनः पुनस्तं प्रलोभयन्नुवाच—**शता-युष** इत्यादिना । शतं वर्षाण्यायूंषि येषां तान् **शतायुषः** । **भूमेर्महदायतनं** सार्वभौमत्वम् । अल्पायुष एतत्सर्वं लब्धमपि व्यर्थमित्यत आह—**स्वयं** इति । नीरोगदृढगात्रतया **यावत्कालं** जीवितुं **इच्छसि** तावत् प्राणान् धारयेत्यर्थः ॥ २२ ॥ मद्दीयमानसदृशान् अन्यानपि **यदि मन्यसे** तानपि दास्यामीत्याह—**एतत्** इति । प्रभूताष्टापदानर्घनवरत्नायमानं **वित्तम्** । सप्तद्वीपवती भूः महाभूमिः । **कामानां** मानुषलोकादिदेवलोकान्तगतानामित्यर्थः । मम सत्यसंकल्पत्वात् । त्वां **कामभाजं करोमि** इत्यत्र विचिकित्सां मा कुरु ॥ २३ ॥ किञ्च—**ये ये**

**कामा** इति ॥ २४ ॥ मत्प्रसादमन्तरा या **रामाः** स्त्रियः **न हि लम्भनीयाः** । **आभिः मत्प्रत्ताभिः** मया दत्ताभिः स्त्रीभिः पादप्रक्षाळनादिनात्मानं **परिचारयस्व** । हे **नचिकेतः** ! **मरणं** "येयं प्रेते" इत्यादिमरणसम्बन्धिप्रश्नं कम्बलरोमकाकदन्तेयत्तापरिज्ञानरूपं कदापि **मानुप्राक्षीः** मैवं मां प्रष्टुमर्हसि ॥ २५ ॥

नचिकेतसा आत्मोपदेशस्यैव वरणम्

श्वोभावा मर्त्यस्य यदन्तकैतत् सर्वेन्द्रियाणां जरयन्ति तेजः ।
अपि सर्वं जीवितमल्पमेव तवैव वाहास्तव नृत्तगीते ॥ २६ ॥
न वित्तेन तर्पणीयो मनुष्यो लप्स्यामहे वित्तमद्राक्ष्म चेत्त्वा ।
जीविष्यामो यावदीशिष्यसि त्वं वरस्तु मे वरणीयः स एव ॥२७॥
अजीर्यताममृतानामुपेत्य जीर्यन् मर्त्यः क्वधःस्थः प्रजानन् ।
अभिध्यायन् वर्णरतिप्रमोदानतिदीर्घे जीविते को रमेत ॥ २८ ॥
यस्मिन्निदं विचिकित्सन्ति मृत्यो [1]यत्साम्पराये महति ब्रूहि नस्तत् ।
योऽयं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते ॥ २९ ॥

एवं मृत्युप्रलोभितार्भकस्य निस्तरङ्गसागरवदक्षुब्धचित्तत्वादयं नचिकेतास्तृतीयवरातिरिक्तवरजातप्रतिषेधं करोति—**श्वोभावा** इति । भवदुपन्यस्तभोगानां श्वो भविष्यति नवेति सन्दिह्यमानत्वात् **श्वोभावाः** नश्वरा इत्यर्थः । किञ्च—अप्सरःप्रभृतिभोगानां सद्धर्मप्रज्ञावीर्यतेजोबलकीर्तिक्षपयितृत्वात् हे अज्ञानजातान्तक ! **मर्त्यस्य** श्वोभावायमानाप्सरोविषयभोगाः **यत्** सर्वदेहेन्द्रियादिगतं **तेजस्सत्त्वं** विद्यते **तदेतत् जरयन्ति** प्रतिदिनमपक्षयं कुर्वन्ति । यां **चिरजीविकां** दित्ससि तत्र "चतुर्युगसहस्राणि ब्रह्मणो दिवा भवति" इत्यारभ्य "वत्सरशतं ब्रह्ममानेन ब्रह्मणः परमायुः

[1] "यत्"—नास्ति क, उ १, अ २.

प्रमाणम्" इति श्रुत्यनुरोधेन ब्रह्मजीवितस्यापि कालपरिच्छिन्नत्वात् । किमुत अस्मदादिदीर्घजीविका । अतः **तवैव** वाहननृत्तगीतादयस्तिष्ठन्तु । किञ्च—**न वित्तेन** इति । **न** हि **वित्तेन मनुष्यः** कदाचिदपि **तर्पणीयः** । यद्यस्माकं वित्ततृष्णा [1]स्यात्तदा वयं **वित्तं लप्स्यामहे** । मत्प्रार्थनीयब्रह्मज्ञानवित्तं **त्वा** त्वां वयं **अद्राक्ष्म** दृष्टवन्तः । **यावत्** याम्ये पदे त्वं **ईशिष्यसि** ईशिष्यसे प्रभुर्भवसि तावदेव हि वयं **जीविष्यामः** तज्जीवितस्याप्यल्पत्वात् । भवत्सङ्गतेरतिदुर्लभत्वात्तत् कथं लब्ध्वा मर्त्योऽल्पधनायुर्भवितुमर्हति ? स्वात्मयाथात्म्यगोचरो **यो वरः स एव** वरो हि **वरणीयः** स्वातिरिक्तसर्वकामग्रासपरमपुरुषार्थप्रापकत्वात् । किञ्च—**अजीर्यतां** इति । यतः अजीर्यमाणशरीरेन्द्रियप्राणानां अत एव **अमृतानां** सकाशं **उपेत्य** तदियत्तां **प्रजानन्** तत्सकाशात् आत्मनः श्रेयो हि प्राप्तव्यं जरामरणवैशिष्ट्यात् । स्वयं तु **जीर्यन् मर्त्यः** । **कुः** पृथिवी । तस्या अन्तरिक्षाद्यपेक्षया अधःप्रतिष्ठितत्वेन तस्यां तिष्ठतीति **क्वधःस्थः** सन् "शतायुषः" इत्यादि "मरणं मानुप्राक्षीः" इत्यन्तकामानां अविवेकिभिः प्रार्थनीयत्वात् तत् कथं त्वत्कटाक्षार्हो वृणीते ? पाठान्तरे क्व तदास्थ इत्यत्र अहंममाभिमानविषयस्वदेहतत्सम्बन्धिदारपुत्रपश्वादिष्वास्था तल्लम्पटतया वर्तनं यस्य स तदास्थः । तदपह्नवसिद्धपुरुषार्थस्य तृतीयवराधीनत्वेन तत्पदं प्रापिपयिषोः मम तदास्था क्व वा सेद्धुं पारयतीति क्व तदास्थो भवेयम् । न ह्यात्मयाथात्म्यज्ञपदसेवी तत्पदं स्प्रष्टुमर्हति । नाहं भवत्प्रसादात् पुत्रवित्तादिगोचरलोभतः प्रलोभनीय इत्याह—**अभिध्यायन्** इति । त्वदुपन्यस्तपुत्राद्यप्सरोभोगान्तगोचरवर्णरतिप्रमोदानामदृष्टदृष्टनष्टस्वभावरूपत्वेन तदीय**वर्णरतिप्रमोदान्** शशविषाणवत् **अभिध्यायन्** जानन् **अतिदीर्घे** कल्पपर्यन्त**जीविते को** वा एवंवित् **रमेत** । अतो मत्कृते असद्विषयकप्रलोभनं मा कुरु । हे **मृत्यो** ! महत्प्रयोजननिमित्ते **यस्मिन् महति सांपराये** अस्ति नास्तीति वादिकोटिविप्रतिपन्नेऽर्थे तद्विकल्पापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रगोचरविज्ञानं **यत्** जानासि **तदेव नः** अस्माकं **ब्रूहि** निरङ्कुशं

[1] स्याच्चेत्—उ १.

मयि दयया कथयस्वेत्यर्थः। उक्तार्थं श्रुतिरनुवदति—**योऽयं** इति। किं बहुनोक्तेन? **योऽयं गूढं** दुर्विवेचनं **अनुप्रविष्टः** प्रकृतसर्वापह्नवसिद्धब्रह्ममात्रस्वरूपप्रापको वरोऽवशिष्यते **तस्मात्** तद्वरात् **अन्यं** अज्ञजनसेव्यं मनसापि **नचिकेताः न वृणीते** न काङ्क्षत इत्यर्थः॥ २६—२९ ॥

---

# द्वितीया वल्ली

श्रेयःप्रेयोविभागः

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषꣳ सिनीतः।
तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते॥
श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः।
श्रेयो हि [1]धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते॥

अथ खलु "वैष्णवीमात्मनिष्ठां नानूचानाय नावीतरागायोपदिशेत्", "अस्मा इमामुपसन्नाय सम्यक् परीक्ष्य दद्याद्वैष्णवीमात्मनिष्ठाम्" इत्यादिश्रुत्यनुरोधेनायं नचिकेताः पुत्राद्यप्सरोऽन्तविषयककामनया प्रलोभितोऽपि परमार्थदृष्टिं विना यतो न विचचाल अतोऽयमेकान्तेन निःश्रेयसाधिकारीत्यवगम्य नचिकेतसः सर्वापह्नवसिद्धब्रह्ममात्रावगतये तदुपायत्वेन श्रेयःप्रेयोयाथात्म्यमाह—**अन्यत्** इत्यादिना। ज्ञानयोगो हि श्रेयान् निःश्रेयसहेतुत्वात्। श्रेयो निःश्रेयसम्। प्रेयसोऽपेक्षया तदन्यत्। कर्मयोगो हि प्रेयान् प्रीतिविषयकर्मफलप्रापकत्वात्। स्वकृतोच्चावचकर्मैव प्रेयः। उतापि श्रेयसोऽपेक्षया **प्रेयोऽन्यदेव**। ते **उभे**

[1] धीरो हि—अ २.

श्रेय:प्रेयसी सालोक्यादिकैवल्यान्तस्वर्गादिचित्तशुद्ध्यन्तप्रापकत्वेन **नानार्थे** अधिकारिचित्तविभ्रमानुरोधेन भिन्नप्रयोजने भवतः। ते ह्यधिकृतत्वेन वर्णाश्रमादिविशिष्टं **पुरुषं सिनीतः** निरुच्छ्वासं बध्नीत इत्यत्र—

> यत्तु चित्तस्य सततमर्थे श्रेयसि बन्धनम्।
> ज्ञानयोगः स विज्ञेयः सर्वसिद्धिकरः शिवः॥
> कर्म कर्तव्यमित्येव विहितेष्वेव कर्मसु।
> बन्धनं मनसो नित्यं कर्मयोगः स उच्यते॥,
>
> लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ।
> ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्॥

इत्यादिश्रुतिस्मृती मानम्। सर्वो हि लोकः श्रेय:प्रेयोभ्यामात्मनः कर्तव्यतया प्रयुज्यते। **तयोः** एकेन पुरुषेण युगपदनुष्ठातुमशक्यत्वेन अन्यतरं **आददानस्य** स्वातिरिक्ताविद्यापदतत्कार्यगोचरं प्रेयोरूपमपह्नवीकृत्य निष्प्रतियोगिकब्रह्ममात्रावस्थानरूपं **श्रेय** एव **साधु** शिवं **भवति**। **य** उ यस्तु अदूरदर्शी मूढः प्रेयसोऽभिलाषात् श्रेयो हित्वा **प्रेय** एव **वृणीते** सोऽयं श्रेयसः **अर्थाद्धीयते**। जात्वपि न हि तत्पदमाप्नोतीत्यर्थः॥ १॥ पुरुषेणोभे अपि कर्तुं स्वायत्ते किमर्थमयं लोकः श्रेयो हित्वा प्रेय एव वृणीते? इत्याशङ्क्य तयोर्मन्दानां साधनतः फलतो दुर्विवेचनीयत्वादुभयस्य उभे अपि पुरुषमेत इत्याह—**श्रेयश्च** इति। यथोक्तलक्षणं **श्रेयश्च प्रेयश्च** ते साधनतः फलतो व्यामिश्रभूते इव वर्णाश्रमादिव्यवस्थारूढं **मनुष्यं** आ इतः **एतः**। विवेकी **धीरः तौ** श्रेय:प्रेय:पदार्थौ हंसोऽम्बुमिश्रक्षीरमिव **संपरीत्य** सम्यगालोच्य ग्राह्याग्राह्यत्वेन **विविनक्ति** पृथक्करोति। पृथक्त्वं तु भावाभावरूपेण। तयोः श्रेय:प्रेयसोर्मध्ये प्रेयस्तत्कार्यापह्नवसिद्धेः **श्रेयो हि** श्रेय एव **अभिवृणीते प्रेयसः** शशविषाणवदवस्तुत्वात्। तद्विपरीतस्य सदसद्विवेकाकुशलत्वेन यस्तु **मन्दमतिः योगक्षेमात्** देहदारपुत्रपश्वादिपुष्टिनिमित्तं **प्रेय** एव **वृणीते** काङ्क्षत इत्यर्थः॥ २॥

नचिकेतसः प्रशंसा

स त्वं प्रियान् प्रियरूपाꣳश्च कामानभिध्यायन्नचिकेतोऽत्यस्राक्षीः ।
नैतां सृङ्कां वित्तमयीमवाप्तो यस्यां मज्जन्ति बहवो मनुष्याः ॥३॥
दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता ।
विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त ॥४॥

सर्वोऽपि लोकोऽत्यल्पप्रेयोगोष्पदे निमज्जति वार्यमाणः स्वेच्छया । अयं तु नचिकेता बहुशो मया प्रलोभितोऽपि तदस्पृशन् यत् सत्यं तदेवाप्तुमिच्छति । अहो कृतकृत्यतेति नचिकेतसं स्तौति—**स त्वं** इति । यः त्वं मया वाह्यार्थे प्रलोभ्यमानोऽपि पुत्रादीन् **प्रियान्** अप्सरःप्रभृतिप्रियरूपांश्च **कामान्** शशविषाणवदसत्कल्पान् **अभिध्यायन्** हे **नचिकेतः! स त्वं** तत् **अत्यस्राक्षीः** परित्यक्तवानसि । किं च **यस्यां** सृङ्कायां **बहवो मनुष्या निमज्जन्ति एतां वित्तमयीं** मूढजनप्राप्यकुत्सितगतिरूपां सृङ्कां च **नाप्त**वानसि । अहो तव बुद्धिमत्तेत्यर्थः ॥ ३ ॥ यतस्त्वं कामानत्यस्राक्षीः अतस्त्वां श्रेयोभाजनं मन्ये इत्याह—**दूरमेते** इति ।

तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ।

इत्युक्तरीत्या श्रेयःप्रेयसोः [1]महान्तरेण तद्वती मिथो **दूरं** दूरे । साधनतः फलतो मिथो व्यावृत्तरूपे । **एते विपरीते** विवेकाविवेकात्मक[2]प्रकाशतमसी इव **विषूची** नानागती । के ते ? इत्यत आह—**अविद्येति । या च** प्रेयोविषया **अविद्या** श्रेयोविषया हि **विद्या इति ज्ञाता** पण्डितैरवगतेत्यर्थः । यतः स्वाज्ञबुद्धिप्रलोभिनः पुत्राद्यप्सरोऽन्तप्रभृतयो **बहवः कामास्त्वां नालोलुपन्त** स्ववश्यतां न कृतवन्तः । अतो विद्याविद्ययोर्मध्ये **विद्याभीप्सिनं** विद्यार्थिनं निःश्रेयसभाजनं **नचिकेतसं त्वां** अहं **मन्ये** निश्चिनोमीत्यर्थः ॥ ४ ॥

[1] महदन्तरेण—उ.

[2] तमःप्रकाशाविव—उ १.

अज्ञानिनां निन्दा

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥५॥
न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥ ६ ॥

अविद्याभागिनः स्वरूपं तत्फलं च प्रकटयति—**अविद्यायां** इति । घनीभूततमोरूपायमानाविद्यायां **अन्तरे** मध्ये **वर्तमानाः** स्वान्तर्बाह्यविलसित-दुष्कामादिदारपुत्रादिपाशैर्निरुच्छ्वासं बध्यमाना अपि **स्वयं** वयं **धीराः** धीमद्वराः स्वात्मानं सकलकलावल्लभत्वेन **पण्डितंमन्यमानाः** सन्तः कुत्सिता-मनेकरूपां गतिं **दन्द्रम्यमाणाः** कौटिल्ये पथि नित्यं रममाणा भूत्वा विषमे पथि **यथा** जात्यन्धेन **नीयमान**जात्यन्धा इव **मूढाः** [1]स्वाज्ञा घटीयन्त्रवत् जन्ममरणादिदुःखैः **परियन्ति** परिभवं गच्छन्ति । इच्छाद्वेषप्रयुक्तद्वन्द्वमोहेन धराविवरनिमग्नकीटवत् हीयन्ते इत्यत्र—

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन जन्तवः ।
धराविवरमग्नानां कीटानां समतां गताः ॥

इति श्रुतेः ॥ ५ ॥ अत एव श्रेयोमार्गप्रवृत्तिर्नोदेतीत्याह—**न साम्पराय** इति । **वित्त**निमित्ताविवेक**मोहेन मूढं** परमार्थचिन्तां विना स्वदेहदारपुत्रधनक्षेत्रादिपोषण-शोषणव्यासक्तचित्तत्वात् **प्रमाद्यन्तं** प्रकर्षेण माद्यन्तमित्यर्थः । एवंविशेषणविशिष्टं **बालं** अविवेकिनं प्रति । सम्यक् परं ब्रह्म स्वातिरिक्तप्रपञ्चापह्नवतः स्वमात्रतामीयते गम्यत इति संपरायः परमात्मा । तत्प्रापकत्वेन शास्त्रीयबोधः **सांपरायः** । **न** हि कदापि **प्रतिभाति** न स्फुरतीत्येतद्दारपुत्रधनादिकलनाकलितो यो दृश्यते सोऽयं **लोक** एव सत्यः अहंममाभिमानविषयत्वेन दृष्टत्वात् । एवमदृष्टः **पर**लोको

[1] स्वज्ञाः—उ १.

**न** ह्यस्तीति **मानी** सोऽयं बालः **पुनः पुनः** घटीयन्त्रवत् जननमरणे प्रतिपद्य **मद्वशं** चिरं मदधीनतां **आपद्यते** जन्मादिदुःखसागरे गाढं निमग्नो भवति । राक्षस्यादियोनिमेव भजत इत्यर्थः ।

आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥

इत्यादिस्मृतेः । प्रायशोऽयं लोक एवंविधः । सहस्रेषु कश्चिदेव त्वादृग्विधः श्रेयोऽर्थी बन्धमोक्षभ्रममुमुक्षुर्भवति ॥ ६ ॥

आत्मविद्याप्रशंसा नचिकेतसः स्तवश्च

श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः ।
आश्चर्यो वक्ता कुशलोऽस्य लब्धाश्चर्यो ज्ञाता कुशलानुशिष्टः ॥७॥
न नरेणावरेण प्रोक्त एष [1]सुविज्ञेयो बहुधा चिन्त्यमानः ।
अनन्यप्रोक्ते गतिरत्र नास्त्यणीयान् ह्यतर्क्यमणुप्रमाणात् ॥ ८ ॥
नैषा तर्केण मतिरापनेया प्रोक्तान्येनैव सुज्ञानाय प्रेष्ठ ।
यां त्वमापः सत्यधृतिर्बतासि त्वादृङ्नो भूयान्नचिकेतः प्रष्टा ॥ ९ ॥
जानाम्यहꣳ [2]शेवधिरित्यनित्यं न ह्यध्रुवैः प्राप्यते हि ध्रुवं तत् ।
ततो मया नचिकेतश्चितोऽग्निरनित्यैर्द्रव्यैः प्राप्तवानस्मि नित्यम् ॥
कामस्याप्तिं जगतः प्रतिष्ठां [3]क्रतोरानन्त्यमभयस्य पारम् ।
स्तोमं महदुरुगायं प्रतिष्ठां दृष्ट्वा धृत्या धीरो नचिकेतोऽत्यस्राक्षीः ॥

[1] सुज्ञेयो—अ २.
[2] शेवधिरित्यनन्त्यं— अ २.
[3] क्रतोरनन्त्यं—अ २.

अज्ञानिनां निन्दा

अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥५॥
न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम् ।
अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे ॥ ६ ॥

अविद्याभागिनः स्वरूपं तत्फलं च प्रकटयति—**अविद्यायां** इति । घनीभूततमोरूपायमानाविद्यायां **अन्तरे** मध्ये **वर्तमानाः** स्वान्तर्बाह्यविलसित-दुष्कामादिदारपुत्रादिपाशैर्निरुच्छ्वासं बध्यमाना अपि **स्वयं** वयं **धीराः** धीमद्वराः स्वात्मानं सकलकलावल्लभत्वेन **पण्डितंमन्यमानाः** सन्तः कुत्सिता-मनेकरूपां गतिं **दन्द्रम्यमाणाः** कौटिल्ये पथि नित्यं रममाणा भूत्वा विषमे पथि **यथा** जात्यन्धेन **नीयमानजात्यन्धा इव मूढाः** [1]स्वाज्ञा घटीयन्त्रवत् जन्ममरणादिदुःखैः **परियन्ति** परिभवं गच्छन्ति । इच्छाद्वेषप्रयुक्तद्वन्द्वमोहेन धराविवरनिमग्नकीटवत् हीयन्ते इत्यत्र—

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन जन्तवः ।
धराविवरमग्नानां कीटानां समतां गताः ॥

इति श्रुतेः ॥ ५ ॥ अत एव श्रेयोमार्गप्रवृत्तिर्नोदेतीत्याह—**न साम्पराय** इति । **वित्तनिमित्ताविवेकमोहेन मूढं** परमार्थचिन्तां विना स्वदेहदारपुत्रधनक्षेत्रादिपोषण-शोषणव्यासक्तचित्तत्वात् **प्रमाद्यन्तं** प्रकर्षेण माद्यन्तमित्यर्थः । एवंविशेषणविशिष्टं **बालं** अविवेकिनं प्रति । सम्यक् परं ब्रह्म स्वातिरिक्तप्रपञ्चापह्नवतः स्वमात्रतामीयते गम्यत इति संपरायः परमात्मा । तत्प्रापकत्वेन शास्त्रीयबोधः **सांपरायः** । **न** हि कदापि **प्रतिभाति** न स्फुरतीत्येतद्दारपुत्रधनादिकलनाकलितो यो दृश्यते **सोऽयं लोक** एव सत्यः अहंममाभिमानविषयत्वेन दृष्टत्वात् । एवमदृष्टः **परलोको**

[1] स्वज्ञाः—उ १.

अनन्येति । "अन्योऽसावन्योऽहमस्मि" इत्यन्यभावोऽनात्मा । तदपह्नवसिद्ध आत्मा स्वमात्रमिति **अनन्य**भावारूढेनाचार्येण **प्रोक्ते** प्रकटितात्मनि **अत्र** असल्लौकिकाद्यष्टदृष्टिदृष्टचिन्तागतिः **न ह्यस्ति** आत्ममात्रावगतेरसल्लौकिकाद्यष्टदृष्टिचिन्तागत्यपह्नवपूर्वकत्वात् । यद्वा **अगतिः नास्ति** स्वान्यज्ञेयस्यालब्धात्मकत्वात् । अथवा **अनन्यप्रोक्ते अत्रागतिः** अपरिज्ञानं **नास्ति** । भवत्याचार्यस्यैवावगतिः । इतरथाऽयमात्मा **अणुप्रमाणादपि अणीयान्** । **अतर्क्यं** केवलस्वबुद्धिकृततर्केणातर्क्यो **हि** । तर्केण तर्क्यमाणे तु यत आत्मा विशेषवन्न दृश्यते अतोऽणुपरिमाण आत्मेति केनचित् [1]स्थापितश्च इतोऽप्यन्योऽणुतरोऽणुतम इति चाभ्यूहति ॥८॥ न हि कदाचिदपि तर्कस्य प्रतिष्ठा काचित् विद्यते । तद्विपरीतश्रुत्याचार्यप्रोक्तागमप्रतिपाद्या मतिः न हि तर्केण हातुं शक्या इत्याह—**नैषा** इति । ब्रह्मानन्याचार्यप्रोक्ता **एषा** सर्वापह्नवसिद्धब्रह्ममात्रगोचरा **मतिः न** हि **तर्केण अपनेया** न प्रापणीया न [2]हातव्येति वा निगमान्तानभिज्ञस्तार्किको नाम स्वबुद्ध्या यत्किंचिदेव परिकल्पयति । तत्कल्पना हि आगमप्रभवा मतिः न हि चलति । हे **प्रेष्ठ** ! मत्प्रीतिवित्तनिक्षेपकोश ! मत्प्रियतम ! तार्किकागम्यनिगमान्तगोचरा मतिर्निरतिशयसुखं स्वमात्रमिति यज्जानाति तत् सुज्ञानं तस्मै भवति । सुज्ञानस्य ब्रह्ममात्रगोचरत्वात् । तर्कागम्या मतिः का ? इति चेदुच्यते । हे **नचिकेतः** ! तृतीयवरप्रदाननिमित्तेन **त्वं यां** ब्रह्ममात्रमतिं **आपः** प्राप्तवान् **असि** । **अत** एव सत्या वितथपुत्राद्यप्सरोऽन्तविषयतिरस्करणपूर्वकमवितथब्रह्ममात्रमतिः । तत्रैव धृतिर्यस्य तव स त्वं **सत्यधृतिः बतासि** इति नचिकेतसमनुकम्पयन्नाह—**न** इति । **नः** अस्माकं [3]**त्वादृक्** त्वत्तुल्यः अन्यः पुत्रः शिष्यो वा **प्रष्टा** पृच्छको **भूयात्** भवतु ॥ ९ ॥ पुनरपि तुष्टो मृत्युर्नचिकेतसस्तुष्ट्यै स्ववृत्तं कीर्तयति—**जानामि** इति ।

एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापियन्ति ।

[1] स्थापितात्मनस्ततो—उ १.

[2] हातव्येत्येतन्नि—उ १.

[3] त्वादृक्तुल्यो धन्यः—उ १.

इति, "गतागतं कामकामा लभन्ते" इति च श्रुतिस्मृत्यनुरोधेन कर्मफलरूप **शेवधिरनित्यं इत्यहं जानामि** यतो निष्प्रतियोगिकध्रुवब्रह्ममात्रगोचरज्ञानं विना **न** ह्यध्रुवायमाणक्रियाकारकेद्ध्रकर्मादिसाधनशतैर्यन्निष्प्रतियोगिक**ध्रुवं** विकळेबर-कैवल्यं **प्राप्यते** । यस्त्वनित्यकर्मफलाख्यस्वर्गादि**शेवधिः** स एव **अध्रुवैः** द्रव्यैः **प्राप्यते हि** । हे **नचिकेतः!** न ह्यनित्यसाधनैः नित्यं प्राप्यत इति जानता **मयापि अनित्यैः** समिदाज्यादि**द्रव्यैः** पश्वादिभिश्च स्वर्गसाधन-भूतो**ऽग्निश्चितो** निर्वर्तित इत्यर्थः । तेनाहमापेक्षिक**नित्यं** स्वर्गतुल्ययाम्यपदं **प्राप्तवानस्मि** ॥ १० ॥ त्वं तु—**कामस्याप्तिं** इति । यस्मिन् पदे सर्वे कामाः परिसमाप्तास्तां **कामस्याप्तिम्** । आध्यात्म्यादितापत्रयाश्रय**जगतः प्रतिष्ठां** तदा-रोपाधिकरणत्वेन सर्वात्मकत्वात् । **क्रतोः** फलभूतहिरण्यगर्भपदस्य स्वावाक्त-नेन्द्रादिलोकगतानन्त्यापेक्षयानन्तत्वात् **आनन्त्यम्** । तथा तत्तल्लोकगता-**भयस्य च पारं** परां निष्ठाम् । **स्तोमं** स्तुत्यम् । अणिमाद्यनेकगुणतो **महत्** तच्चापेक्षिकनिरतिशयत्वेन महद्भिः स्तूयमानत्वात् । **उरुगायं** विपुल-गतिं धियः **प्रतिष्ठां** सर्वलोकदृष्ट्योत्तमामपि **दृष्ट्वा धृत्या** धैर्येण हे **नचिकेतः!** त्वं **धीरः** सन् सर्वमेतत् संसारभोगजातं **अत्यस्राक्षीः** अतिसृष्टवान् असि । अहो नु उत्तमगुणोऽसीत्यर्थः ॥ ११ ॥ यं त्वमात्मानं ज्ञातुमिच्छसि तं तेऽभिधास्यामीत्याह—**तं** इति । सदाद्यावृतित्रयावृतदृष्टीनां यद्दर्शनं दुःखेनापि न जायते सोऽयं **दुर्दर्शः** अतिसूक्ष्मत्वात् । तथाविधानां प्रत्यगाद्यज्ञानपूर्वकं **गूढमनुप्रविष्टः** । यद्रूपगूहनरूपा बुद्धिर्गुहा तस्यां प्रत्यग्रूपेणाहितत्वात् स्थितत्वात् **गुहाहितः** तत्रैवोपलभ्यमानत्वात् । भूततत्कार्यभौतिकानां मिथो वैषम्यतः स्वाविद्यापदतत्कार्यजातं गह्वरं तस्मिन् गह्वरे उच्चावचोपाधिरूपे जीवरूपेण तिष्ठतीति **गह्वरेष्ठः** । यत एवं **गूढमनुप्रविष्टो गह्वरेष्ठश्च** अत एव **दुर्दर्शः** । पुरातनत्वात् **पुराणः** । दुर्दर्शमित्याद्युक्तविशेषणविशिष्टं तमेतं आत्मानम् ।

केवलं ब्रह्ममात्रत्वान्नास्त्यनात्मेति निश्चिनु ।

इति श्रुत्यनुरोधेन स्वाज्ञदृष्ट्यात्मनोऽविद्यापदस्य स्वज्ञदृष्ट्या तदारोपापवादाधिकरणमधि भिन्नम् । तत्राधिष्ठेयमनात्मा । तदधिष्ठानमात्मा खल्वध्यात्मा । तद्योगस्त्वधिष्ठानातिरिक्तमधिष्ठेयम् । आत्मत्वसत्यत्वव्यावहारिकत्वप्रातिभासिकत्वादिरूपेणास्ति नास्तीति विभ्रमापह्नवसिद्धब्रह्ममात्रबोधो हि **अध्यात्मयोगः** । तदधिगमेन निष्प्रतियोगिकस्वमात्रतया दीव्यते दीप्यत इति **देवम्** । **धीरो** ब्रह्मविद्वरिष्ठो **मत्वा** तत्समकालं स्वातिरिक्ताविद्यापदस्यावस्तुत्वेन स्वाज्ञस्वज्ञदृष्ट्या तत्सत्त्वासत्त्वाभ्यां प्रसक्त**हर्षशोकौ** जहातीव **जहाति** । वस्तुतः कर्तुं त्यक्तुं वा किमस्ति ? इत्यत्र—

किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
यन्मया पूरितं विश्वं महाकल्पाम्बुना यथा ॥

इति श्रुतेः ॥ १२ ॥ मयोक्तार्थश्रवणतः कृतकृत्यो भवसीति त्वामहं मन्ये इत्याह—**एतत्** इति । यत् **एतत्** मयोक्तमात्मतत्त्वं यस्त्वं श्रुत्वा सम्यगात्मभावेन **परिगृह्य** उपादाय यः कश्चन वा **मर्त्यो** मरणधर्मा तद्दृष्ट्या आत्मानात्मायमानधर्माधर्मयोर्मध्ये स्वात्ममात्रावशेषणधर्मादनपेतं **धर्म्यं** अधर्मरूपशरीरा**देः** **प्रवृह्य** पृथक्कृत्य अधर्मापह्नवसिद्धं **अणुं** निष्प्रतियोगिकसूक्ष्मं स्वमात्रतया **मोदनीयं** आप्यापरोक्षतया **लब्ध्वा स** त्वमन्यो वा **मोदते** । तदेतदेवंविधं **नचिकेतसं** त्वां प्रति मुक्तप्रापणीय**सद्म** विकळेबरकैवल्यवेश्म **विवृतं** अपावृतकवाटं **मन्ये** ब्रह्ममात्रावस्थानविदेहकैवल्यभाजनं त्वां मन्य इत्यभिप्रायः ॥१३॥

धर्माधर्मरहितस्यात्मनः प्रश्नः

अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात् कृताकृतात् ।
अन्यत्र भूताच्च भव्याच्च यत्तत् पश्यसि तद्वद ॥ १४ ॥

यद्यहं कैवल्यार्हो यदि त्वमपि प्रसन्नश्चासि तदा मे सर्वापह्नवसिद्धं यत् पश्यसि तदेव ब्रूहीति नचिकेता आह—**अन्यत्र** इति । " अहरहः

सन्ध्यामुपासीत " इत्यादिक्रियाकारकजुष्टशास्त्रीयधर्मतदनुष्ठानतत्फलात् अन्तथाविहिताकरणप्रतिषिद्धकरणरूपाधर्मात् अन्यत्र तथाकृताकृतायमानकार्यवणात् अन्यत्र तथा भूतात् अतिक्रान्तकालात् भव्याच्च भविष्यत्कालचकारात् वर्तमानकालाच्च अन्यत्र यत् ईदृशं वस्तु सर्वापह्नवस्वमात्रमिति पश्यसि तदेव मह्यं कृपया वद इति प्रश्नार्थः ॥ १४ ॥

तस्यैवोपदेशः

सर्वे वेदा यत्पदमामनन्ति तपाꣳसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदꣳ सङ्ग्रहेण ब्रवीमि ॥
ओमित्येतत् ॥ १५ ॥

एवंपृष्टवते तत्प्रतिवचनं मृत्युरुवाच सर्वे वेदा इति । ऋगादिचतुर्वेदप्रविभक्ताशीत्यधिकशतोत्तरसहस्रशाखामस्तकायमानसर्ववेदान्ताः यत् ब्रह्ममात्रपदं "अन्यदेव तद्विदितादथो अविदितादधि", "सन्मात्रमसदन्यत्" "ब्रह्ममात्रमसन्न हि",

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्रमम् ॥

इत्यादिवाक्यैः आमनन्ति प्रतिपादयन्ति । यत्प्राप्त्यर्थानि सर्वाणि कृच्छ्रमीमांसादितपांसि यद्वदन्ति । यदर्थानीत्येतत् यत् ब्रह्मापि इच्छन्तो गुरुकुलवासपुरस्सरं ब्रह्मचर्यं अन्यद्वा चरन्ति तत्पदं ज्ञातुमिच्छते तुभ्यं तदेव ब्रह्मयाथात्म्यं सङ्ग्रहेण ब्रवीमि । किं तत् ? इत्यत आह ओमित्येतत् इति । षोडशावयवब्रह्मप्रणवप्रविभक्तव्यष्टिसमष्ट्यात्मकजाग्रज्जाग्रदादितद्व्यष्टीशविश्वविश्वादितत्समष्टीशविराड्विराडादितदुभयैशोत्रोत्रादिचतुष्पाद्दशकल्पनापह्नवसिद्धतुर्यतुर्यचैतन्यं एतदेव ओमिति ईरितम् । तद्धि ब्रह्मयाथात्म्यं मत्तस्त्वया बुभुत्सितमित्यर्थः । "ओङ्काराग्रविद्योतं तुर्यतुर्यम्" इति श्रुतेः ॥ १५ ॥

ओङ्कारप्रशंसा

एतद्ध्येवाक्षरं [1]ब्रह्म एतद्ध्येवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥ १६ ॥
एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥ १७ ॥

एवं तुर्यतुर्यगोचरपराशब्दशब्दितप्रणव एव स्वाज्ञस्वज्ञदृष्टिमाश्रित्य प्रतीकवेनालम्बनत्वेन च विभातीत्याह—**एतत्** इति । अभिधानाभिधेययोरेकत्वाभिायेण **एतद्ध्येवाक्षरं** अपरं विराड्ढिरण्यगर्भेश्वरात्मकं **ब्रह्म** प्रणवस्थूलादिागत्रयारोपाधिकरणत्वात् स्वाज्ञानां प्रतीकत्वेनोपास्यमित्यर्थः । स्वज्ञदृष्टेः **एतद्ध्योक्षरं परं** ब्रह्म भवति । एतस्य प्रणवार्धमात्रासङ्गतया तद्भागत्रयापवादाधिकरणत्वात् स्वज्ञालम्बनं तदेवेत्यर्थः । तयोः परापरप्रणवयोर्मध्ये प्रतीकालम्बनाभ्यां **तद्ध्येवाक्षरं** परमपरं वा **ज्ञात्वा** तदस्मीति विदित्वा **यो यदिच्छति तस्य** त्राज्ञस्य स्वज्ञस्य वा प्रतीकत्वेन अपरं आलम्बनत्वेन परं ब्रह्म च **तदेव** वति । स्वस्वदृष्ट्यनुरोधेन यत्प्राप्तव्यं तदेव संभवतीत्यर्थः ॥ १६ ॥ यत एवतोऽनेकेषां ब्रह्माप्त्यालम्बनानां **एतदेवालम्बनं श्रेष्ठं** ब्रह्माप्तौ निरङ्कुशोपायत्वात् । **एतदालम्बनं परं** अपरं च परापरविषयत्वात् । एतदालम्बनस्येति **त्वा** तज्ज्ञानानुरोधेनापरं परं तद्विभागकलनापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रं । यत्र लोक्यते स **ब्रह्मलोकः** । तस्मिन् अपरस्मिन् परस्मिन् ब्रह्ममात्रे वा **हीयते** । ईश्वरः साक्षी ब्रह्ममात्रं वा भवतीत्यत्र—“तं यथा यथोपासते थैव भवति” इति श्रुतेः । “अन्यत्र धर्मात्” इत्यादिपृष्टस्यार्थस्य ज्ञणः स्वमात्रत्वेन तदाप्त्युपायालम्बनत्वेन तदुपायप्रतीकत्वेन च ओङ्कारो दिष्टः ॥ १७ ॥

[1] ह्येतदेवाक्षरं—उ, ब्रह्मैतद्ध्येवाक्षरं—उ १.

आत्मनो नित्यत्वम्

न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥१८॥
हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥

तत्र स्वाज्ञपरमार्थदृशोः षड्भावविकारः सत्त्वेन असत्त्वेन भवतीत्यत्र न विवादः। स्वज्ञस्यैव षड्भावविकारः प्रतिषिध्यते—**न जायते** इति। विपश्चित् स्वज्ञः स्वाज्ञदृष्टिदृष्टदेहे जाते मृतेऽपि **न जायते म्रियते वा** न म्रियते चेत्यर्थः। स्वदृष्ट्या जनिमृतिमद्देहादेर्व्यावहारिकत्वेन मिथ्यात्वात्। न जायते म्रियते वा इत्याद्यन्तविक्रियाप्रतिषेधेन सर्वा विक्रियाः प्रतिषिध्यन्ते। तथापि मध्यमविक्रियाप्रतिषेधः कर्तव्य इत्याह—**नायं** इति। **विपश्चित्** आत्मायं **कुतश्चित्** कारणान्तरात् **न बभूव**। स्वस्मादप्यर्थान्तरभूतः **कश्चिन्न बभूव**। **अयं** आत्मा यतः **अजो नित्यः** अतः **शाश्वतः** अपक्षयवर्जितत्वात्। **पुराणः** निरवयवत्वात् वृद्धिविरळ इत्यर्थः। अतोऽयमात्मा **शरीरे हन्यमाने** विपरिणम्यमानेऽपि **न हन्यते** न हि विपरिणम्यते। न म्रियते वेत्यत्र नाशविक्रियाया उक्तत्वेन हन्तेः परिणामार्थो युज्यत इत्यर्थः ॥ १८ ॥ एवंविधमात्मतत्त्वमसल्लौकिकदृष्टिमवलम्ब्य स्वयं **हन्ता** संहर्ता **चेत्** यदि तदा हनिष्याम्येनमिति परान् **हन्तुं मन्यते**। यः परेण **हतश्चेत्** सोऽपि **हतं** आत्मानं **मन्यते**। हतोऽहमिति **तावुभावपि** स्वयाथात्म्यं **न विजानीतः** स्वात्मनोऽविक्रियत्वात्। **नायं हन्ति** तथा व्योमवन्निरवयवत्वात्। **न हन्यते** धर्माधर्मादिलक्षणहन्तृहननादिसंसारः स्वाज्ञगोचरः। न हि स्वज्ञस्येत्यत्र—

कर्तृभोक्तृत्वादिधर्मः स्वाज्ञानपरिकल्पितः ।
स्वाज्ञवन्न स्पृशेत् स्वज्ञं तद्दृष्ट्या तदसंभवात् ॥

इति स्मृतिर्मानम् ॥ १९ ॥

तस्यैव सूक्ष्मत्वविभुत्वदुर्ज्ञेयत्वानि

अणोरणीयान् महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् ।
[1]तमक्रतुः पश्यति वीतशोको धातुप्रसादान्महिमानमात्मनः ॥
आसीनो दूरं व्रजति शयानो याति सर्वतः ।
कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति ॥ २१ ॥

कथमात्मानं ज्ञात्वा स्वज्ञो भवति? इत्यत आह—**अणोः** इति। श्यामाकतण्डुलाद्यणो**रणीयान्**। "एष म आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा" इत्यादिश्रुतेः। महापरिमाणपृथिव्यादेः **महतोऽपि महीयान्** "पृथिव्या ज्यायान्" इत्यादिश्रुतेः। लोके तावत् अणु महद्वा यद्वस्त्वस्ति तत् सदात्मना सत् भवति। तदतिरिक्तमसत् संपद्यते। स्वात्मनो नामरूपकर्मोपाधित्वेन तदारोपाधिकरणत्वादणीयस्त्वं महत्त्वं चोपपद्यत इत्यर्थः। सोऽयं **आत्मास्य** ब्रह्मादिस्तम्बान्तप्राणिकदम्बस्य **जन्तोः** हृदयाभिधान**गुहायां** तत्रत्यकामादिवृत्तिसहस्रभावाभावप्रकाशकप्रत्यग्भावेन **निहितः** स्थित इत्यर्थः। दृष्टादृष्टविषयोपरतधीः **अक्रतुः** अकामो मुनिः। मनआदिकरणानि धातवः। तेषां स्वव्यापृतिवैरळ्यं **धातुप्रसादः** तस्मात्। **तं** प्रत्यञ्चमात्मानं "न कर्मणा वर्धते नो कनीयान्" इति श्रुतितः कर्मनिमित्तवृद्धिक्षयविरळं **आत्मनो महिमानं** अयमहमस्मीति **पश्यति**। तत्समकालं स्वज्ञः सन् कृतकृत्यो भवतीत्यर्थः ॥ २० ॥ अन्यथा प्राकृतजनैर्दुर्विज्ञेय इत्याह—**आसीन** इति। व्यष्टिसमष्ट्यात्मकजाग्रत्स्वप्नयोर्विश्वतैजसविराट्सूत्ररूपेण विशेषसामान्यायमानबाह्यान्तर्वृत्तिषु तदारोपाधिकरणत्वेन **आसीनो**ऽवस्थितोऽयमात्मा विशेषसामान्यवृत्त्यारूढतया **दूरं व्रजती**व। भासमानोऽयमात्मा व्यष्ट्यादिस्वापतुर्यावस्थयोः प्राज्ञबीजतुर्यरूपेण "न किञ्चनावेदिषम्", "ब्रह्म सत्यं जगन्मिथ्या" इति च करणैकदेशविज्ञानोपरमः शयनं विशेषसामान्यविज्ञानोपरमणं तत्र तदपवादाधि-

[1] तमक्रतुं—क.

करणत्वेन **शयानोऽयमात्मा सर्वतो यातीव**। वस्तुतः स्वातिरिक्तकरणग्राम-प्रवृत्तिनिवृत्तिप्रसक्तदूरसन्निहितपरिच्छिन्नापरिच्छिन्नदेशादिवैरळ्यान्निष्प्रतियोगिक-ब्रह्ममात्रतयावशिष्यत इत्यर्थः। स्वाज्ञवृत्तिविभातविश्वस्य मदकृन्मायाकार्यत्वात्तदारो-पाधिकरणस्यापि मदत्वम्। मदकृदविद्याप्रपञ्चापवादाधिकरणस्य तदपवाददोषास्पृष्ट-त्वेनामदत्वम्। स्वाज्ञस्वज्ञदृग्विभातं विश्वारोपापवादाधिकरणत्वेन मदामदः तं **मदामदम्**। तद्गतहेयांशाधिष्ठेयाधिष्ठानगतापह्नवसिद्धनिष्प्रतियोगिक[1]ब्रह्ममात्ररूपेण दीव्यते दीप्यत इति देवः तं **देवम्**। स्वावशेषधिया अहं वेद यथा तथा **को वा मदन्यो** ब्रह्ममात्रज्ञानं विना **ज्ञातुमर्हति**? अत एवात्मा प्राकृतबुद्धिभि-र्दुर्विज्ञेयो भवतीत्यर्थः ॥ २१ ॥

आत्मज्ञानप्रशंसा

अशरीरꣳ शरीरेष्वनवस्थेष्ववस्थितम्।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ २२ ॥

प्राकृतधियामपि सर्वभूतात्मैकत्वज्ञानतः शोकात्ययमाह—**अशरीरं** इति। देवपितृमनुष्यादिशरीरेषु नामरूपोपाधिष्वनेकेषु **अनवस्थितेष्वपि** घटोपाध्य-सङ्गव्योमैकत्वनित्यत्ववदयमात्मा **अशरीरः** शरीरत्रयापवादाधिकरणत्वेना-**वस्थितः**। शरीरत्रयस्य व्यावहारिकादिदृष्ट्या मिथ्यात्वेनावस्थितत्वेऽपि तदारो-पापवादाधिकरणस्यात्मनोऽशरीरत्वेनावस्थितत्वात्। अविकृतत्वेन **अशरीरं** नित्यमित्यर्थः। अपरिच्छिन्नस्वरूपत्वात् **महान्तम्** आपेक्षिकमहत्त्वं वारयति—**विभुं** इति। व्यापिनमित्यर्थः। "नित्यं विभुं सर्वगतम्" इति श्रुतेः। **अशरीरं** इत्यादिविशेषणविशिष्टं **आत्मानं** शरीरादिसापेक्षाशरीरत्वादिगतहेयांशापह्नवसिद्धं ब्रह्म स्वमात्रमिति **मत्वा** तन्मननसमकालमेव **धीरो** विद्वान् स्वातिरिक्ताविद्या-

[1] ब्रह्मरूपेण—उ १.

पदतत्कार्यजातं सत्यत्वव्यावहारिकत्वप्रातिभासिकत्वादिरूपेण अस्ति नास्तीति **न शोचति** शोचनीयविषयवैरळ्यात् ।

तत्र को मोहः कः शोक एकत्वमनुपश्यतः ।

इति श्रुतेः ॥ २२ ॥

आत्मज्ञानोपायः

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं[1] स्वाम् ॥**
**नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।**
**नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥ २४ ॥**

यद्वेदनतः शोकात्ययो दर्शितस्तदधिगमोपायः कः ? इत्यत आह— **नायं** इति । ऋगादिचतुर्वेदपठनपाठनायमान**प्रवचनेन** । **अयमात्मा न लभ्यः नापि** ग्रन्थार्थधारणापटुशक्तिरूप**मेधया** । नापि बहुभ्यो बहुधा श्रुतश्रवणेन । तथा चेत् केनोपायेन लभ्यते ? इत्यत आह—**यं** इति । **एष** साधको मुमुक्षुः **यं** परमात्मानं सर्वापह्नवसिद्धनिष्प्रतियोगिकस्वमात्रतया **वृणुते** जानाति **तेनैव** ज्ञात्रा स्वावशेषतया अयमात्मा **लभ्यः** । स्वावशेषधिया जानतः स्वात्मा लभ्यत इत्युक्तम् । कथं लभ्यते ? इत्यत आह—**तस्य** इति । **तस्य** ब्रह्मविद्वरिष्ठस्य **एष परमात्मा स्वां** तनूं निष्प्रतियोगिकस्वमात्रमिति स्वकीययाथात्म्यं [वि] **वृणुते** प्रकाशयतीत्यर्थः ॥ २३ ॥ ज्ञाज्ञात्मरूपेणात्मनः समत्वात् ज्ञवदज्ञोऽपि ब्रह्म आप्नुयादित्यत आह—**नाविरत** इति । स्वाश्रमविपरीताचरणदुश्**चरितात्** यो **नाविरतः** यस्तु करणग्रामलौल्यादपि **अशान्तः** विक्षेपद्वयबाहुळयात् **असमाहित**चित्तः समाहितचित्तोऽपि तत्फला-

[1] वृणुते—उ १.

शान्तमानसः एवं ज्ञानप्रतिबन्धकदुश्चरितादिवृत्तिमानाभासमात्रवेदान्तश्र जनितप्रज्ञानेन एनं प्रकृतमात्मानं नाप्नुयात् सोऽयं आभासज्ञानीत्यवगम्यत तद्विपर्ययपारमार्थिकज्ञानी तु दुश्चरितात् विरतः करणग्रामलौल्यात् समा समाधानफलादप्युपशान्तमानसो यथोक्तसाधनसंपन्नो मुमुक्षुः श्रुत्याचार्यप्रस जनितप्रज्ञानेनैनं प्रकृतमात्मानं निष्प्रतियोगिकस्वमात्रधिया प्राप्नोति विदेहम् भवतीत्यर्थः ॥ २४ ॥

ब्रह्मण आत्माभेदः

यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ २५ ॥

तद्विपर्यये आभासज्ञानी तु यथावदेनं न वेदेत्याह--यस्य इति सर्वधर्मविधारकत्वेन सर्वत्राणनशक्ती ब्रह्मक्षत्रे । तदुपलक्षितव्यष्टिसमष्ट्यात्मव स्वाविद्यापदतत्कार्यजाते उभे अपि यस्य आत्मनः ओदनः अशनं भवतः आत्मनः स्वाविद्यापदतत्कार्यग्रासत्वात् । य एवमनृतजडदुःखात्मकाविद्यापद तत्कार्यजातं ग्रसति सोऽयं मृत्युः व्यष्टिसमष्टिसाक्षिनिष्प्रतियोगिकब्रह्ममात्रस उपसेचनं भवति । एतादृशः सोऽयमात्मा यत्र क आभासज्ञानी क ? कथमे पारमार्थिकज्ञानीव ज्ञात्वा आभासज्ञानी तत्पदं भजति ? तस्मात् पारमार्थिकज्ञान्येव सर्वापह्नवसिद्धं ब्रह्म स्वमात्रमिति विदित्वा तद्वेदनसमकालमेव तथाभात्म्यतय अवशिष्यत इत्यर्थः ॥ २५ ॥

---

# तृतीया वल्ली

जीवब्रह्मयाथात्म्यज्ञानम्

**ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।**
**छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ॥ १ ॥**
**यः सेतुरीजानानामक्षरं ब्रह्म यत्परम् ।**
**अभयं तितीर्षतां पारं नाचिकेतं शकेमहि ॥ २ ॥**

"क इत्था वेद यत्र सः" इति पारमार्थिकज्ञानीव को वा आभासज्ञानी वेदेति द्वितीयवल्ल्यन्ते अभिहितम् । तत्र ज्ञाज्ञाश्रयज्ञानाज्ञाने तत्फलं च मन्दबुद्ध्यारोहाय तेषां सुखप्रतिपत्त्यर्थं रथरूपकल्पनया प्राप्तृप्राप्यगन्तृगन्तव्य-विवेकार्थं द्वावात्मानावुपन्यस्येते—**ऋतं** इति । स्वाज्ञदृष्टिविकल्पितकर्मफलस्य स्वदृष्ट्या ऋतत्वात्तदेव **ऋतं** द्वावात्मानौ **पिबन्तौ** । तत्रैक एव कर्मफल-रसायनं पिबति नेतरः । तथापि छत्रिन्यायेन पात्रजीवसामानाधिकरण्यात् पिबन्तावुच्येते । "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति श्रुतेः । **सुकृतस्य** स्वकृतकर्मणः फलहेतुर्यत्रास्मिन् शरीरे लोक्यते स लोकः तस्मिन् **लोके** । बाह्याकाशापेक्षया हार्दाकाशस्य परमत्वम् । तस्मिन् **परमे** । यत्र ब्रह्म उपलभ्यते तत् परार्धं तस्मिन् **परार्धे** । हार्दाकाशे कल्पिततूलान्तःकरणायमा-नगुहां **प्रविष्टौ** संसारित्वासंसारित्वेन **छायातपौ** इव परस्परविलक्षणाविति **ब्रह्मविदो वदन्ति** । न केवलमकर्मिणः । किं तु गार्हपत्याहवनीयदक्षिणाग्निस-भ्यावसथ्यभेदेन पञ्च अग्नयो येषां ते **पञ्चाग्नयो** गृहस्थाः **ये च त्रिणाचिकेता** अपि वदन्तीत्यर्थः ॥ १ ॥ परापरब्रह्मयाथात्म्यं जानामीति मृत्युराह—**य** इति । **ईजानानां** कर्मिणां **यः** सेतुरिव **सेतुः** "एष सेतुर्विधरण एषां लोकानाम-संभेदाय" इति श्रुतेः । कर्मिणां दुःखसन्तारणहेतुत्वात् । योऽयं नाचिकेतोऽग्नि-स्तं **नाचिकेतं** वयं ज्ञातुं चेतुं च **शकेमहि** शक्तिमन्तः । **तितीर्षतां** संसारवार्धि

तर्तुमिच्छताम् । **यत् पारमभयं परमक्षरं** तच्च ज्ञातुं शकेमहि । यत एवं अतः कर्मिब्रह्मविदाश्रये अपरपरब्रह्मणीत्यर्थः । "ऋतं पिबन्तौ" इत्यादिना अपरं परं च ब्रह्मोपन्यस्तम् । तत्र तूलान्तःकरणोपाधिकः संसारी विद्याविद्याधिकृतः संसारमोक्षगमनाय शक्तो भवति ॥ २ ॥

आत्मनो रथिरूपेण निरूपणम्

**आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।**
**बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥**
**इन्द्रियाणि [1]हयान्याहुर्विषयांस्तेषु गोचरान् ।**
**आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ४ ॥**

तस्यैव तदुभयसाधनत्वेन रथादिः कल्प्यते—**आत्मानं** इति । ऋतपं जीवात्मानं **रथिनं** विद्धि । शरीरस्य रथहयस्थानीयेन्द्रियाकृष्यमाणत्वात् **शरीरमेव रथम्** । अध्यवसायलक्षणां **बुद्धिं तु सारथिं विद्धि** । सारथिनेतृप्रधानरथवच्छरीरस्य बुद्धिनेतृप्रधानत्वात् । यद्यत् कार्यं तत्तद् बुद्धिकर्तव्यमेवेत्यभिप्रायः । सङ्कल्पादिलक्षणं **मन एव प्रग्रहं** रशनां विद्धि । रशनयेवाश्वास्तथा मनसा प्रगृहीतानि **इन्द्रियाणि** स्वस्वविषयेभ्यो निवर्तन्ते । रथकल्पनाकुशलाश्चक्षुरादीन्द्रियाणि हयानाहुः । हयानिति वक्तव्ये **हयानि** इति लिङ्गव्यत्ययश्छान्दसः । इन्द्रियाश्वानां शरीररथाकर्षणकुशलत्वात् । रूपादीन् तद्गोचरविषयान् विद्धि । **आत्मेन्द्रियमनोयुक्तं** शरीरेन्द्रियमनोभिः संयुक्तं जीवात्मानं **मनीषिणः** संसारी कर्ता **भोक्ता** इति एवं **आहुः** । न हि केवलस्यात्मनः कर्तृत्वादिरस्ति । तद्गतकर्तृत्वादेर्बुद्ध्याद्युपाधिकृतत्वात् । "ध्यायतीव लेलायतीव," "अभोक्ता फलभोज्यपि" इति च श्रुतेः ॥ ३—४ ॥

[1] हयानाहुः—क.

विज्ञाज्ञयोरिन्द्रियजयाजयौ

यस्त्वविज्ञानवान् भवत्ययुक्तेन मनसा सदा ।
तस्येन्द्रियाण्यवश्यानि दुष्टाश्वा इव सारथेः ॥ ५ ॥
यस्तु विज्ञानवान् भवति युक्तेन मनसा [1]सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥ ६ ॥

एवं रथकल्पनाया वक्ष्यमाणविष्णुपदप्रापकोपायत्वान्न ह्युपायं विनोपेयाप्तिरिष्यत इति तद्विविच्यते--**यस्तु** इत्यादिना । **यस्तु अविज्ञानवान्** अविवेकी बुद्ध्याख्यसारथिरिन्द्रियप्रवृत्तिनिवृत्तिकर्मस्वनिपुणो **भवति** तथैवानिपुणसारथी रथचर्यायां **अयुक्तेन** प्रग्रहस्थानीयासमाहित**मनसा** सह युक्तो **भवति तस्य** अकुशलबुद्धिसारथेरश्वस्थानीये**न्द्रियाण्यवश्यानि** रथ**सारथेर्दुष्टाश्वा इव** निगृहीतुमशक्यानि भवन्ति ॥ ५ ॥ अनिपुणसारथ्यादिस्वरूपमुक्त्वा निपुणसारथ्यादिस्वरूपमाह—**यस्तु** इति । **यस्तु विज्ञानवान्** प्रगृहीतमना **भवति** समाहितमनस्त्वात् **तस्य** अश्वस्थानीये**न्द्रियाणि** इतर**सारथेः सदश्वा इव** प्रवर्तयितुं निवर्तयितुं च शक्यानि भवन्ति ॥ ६ ॥

तयोर्ब्रह्मणः प्राप्तिरप्राप्तिश्च

यस्त्वविज्ञानवान् भवत्यमनस्कः सदाशुचिः ।
न स तत्पदमाप्नोति संसारं चाधिगच्छति ॥ ७ ॥
यस्तु विज्ञानवान् भवति समनस्कः सदा शुचिः ।
स तु तत्पदमाप्नोति यस्माद्भूयो न जायते ॥ ८ ॥
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥ ९ ॥

[1] सह—उ १.

पूर्वविपरीतसारथ्यादिफलमाह—**यस्तु** इति। **यस्त्वविज्ञानवान्** अकुशलसारथि**र्भवति** अप्रगृहीतमानसत्वात् **अमनस्कः** ततः **सदा अशुचिः** अशुद्धचित्तः **स** सारथिना **न हि तत्** परमाक्षर**पदमाप्नोति**। किं तु जनिमृतिलक्षण**संसारं चाधिगच्छति** ॥ ७ ॥ पूर्वोक्तविपरीतसत्सारथेः परमफलं दर्शयति—**यस्तु** इति। **यस्तु विज्ञानवान्** रथी विद्वान् **युक्तेन मनसा सदा** शुचि**र्भवति** विशुद्धान्तरत्वात् **स तु** विद्वान् **यस्मात्** स्वात्तपदात् **भूयः** प्रच्युतः **सन न जायते तत्** परमाक्षर**पदमेव आप्नोति** ॥ ८ ॥ किं तत् पदं ? इत्यतः आह—**विज्ञानसारथिः** इति। **यस्तु विज्ञानसारथिः** विवेकबुद्धिसारथिः **मनःप्रग्रहवान्** निगृहीतचित्तः शुचिः **नरः** विद्वान् **सोऽयं संसाराध्वनः पारं** विश्रान्तिसीमां **आप्नोति**। तत् किं ? इत्यत आह—**तत्** इति। **तत्** निष्प्रतियोगिकव्यापनशीलस्य **विष्णोः** स्वरूपस्य सर्वापह्नवसिद्धस्वमात्रसिद्धेः परमत्वेन स्वावशेषधिया पद्यत इति **परमं पदं** तदेवेत्यर्थः ॥ ९ ॥

पुरुषस्य सर्वेभ्यः परत्वम्

**इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः।**
**मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ १० ॥**
**महतः परमव्यक्तमव्यक्तात् पुरुषः परः।**
**पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः ॥ ११ ॥**

यत् विद्वद्भिरेव गन्तव्यं तस्य सर्वापह्नवसिद्धत्वेन तदाप्त्युपायैरलब्धमाशङ्क्य वस्तुतस्तथात्वेऽप्यनादिकालसिद्धस्वाज्ञस्वज्ञदृष्टिमाश्रित्य स्वातिरिक्तेन्द्रियाद्युपलक्षिताविद्यापदतत्कार्यजातस्य सत्यव्यावहारिकप्रातिभासिकत्वादिरूपेण विद्यमानत्वात्तदालम्ब्य स्थूलेन्द्रियाद्यारभ्याव्यक्तान्तगतप्रत्यगधिगमपूर्वकं पराकाष्ठायमानब्रह्ममात्रस्वरूपमवगन्तुं शक्यमितीदमारभ्यते—**इन्द्रियेभ्य** इत्यादिना। शृणोमि पश्यामीत्यादिप्रत्यक्प्रकाशद्वारभूतानीन्द्रियाणि तावत् स्थूलानि

तेभ्यः स्वकार्येभ्य **इन्द्रियेभ्यः ते हि परा अर्थाः** शब्दादिसूक्ष्मतन्मात्राः स्थूलेन्द्रियापेक्षया सूक्ष्मा महान्तश्च प्रत्यगात्मभूताश्च। तेभ्यः **अर्थेभ्यः** सूक्ष्मं महत् प्रत्यगात्मभूतं **च मनः** संकल्पाद्यारम्भकम्। तस्मात् **मनसोऽपि परा** सूक्ष्मा महत्तरा प्रत्यगात्मभूता हि **बुद्धिः**। अध्यवसायारम्भकभूतसूक्ष्मबुद्धेरपि बोधाबोधात्मकाव्यक्तप्रथमजत्वेन सर्वप्राणिबुद्धिप्रत्यग्भूतत्वात् स्वकार्यसर्वमहत्वाच्च **आत्मा महान्** बुद्धेरपि **परः** सूक्ष्मः प्रत्यगात्मभूतश्चेत्युच्यते ॥१०॥ **अव्यक्तस्य** सर्वजगद्बीजभूतत्वेन सर्वकारणशक्तित्वेन विद्यमानं **अव्यक्तं महतोऽपि परं** सूक्ष्मं प्रत्यग्भूतं च भवति। यथा वटकणिकायामिव वृक्षबीजं तथा प्रतीचि ओतप्रोतभावेन सर्वानर्थबीजभावेनावस्थितात् **अव्यक्तादपि** तदारोपापवादाधिकरणप्रत्यगभिन्नपरमात्मा स्वविकल्पितेन्द्रियाद्यव्यक्तान्तप्रपञ्चपूरणात् **पुरुष** एव "सर्वस्मादन्यो विलक्षणः" इति, "सूक्ष्मात् सूक्ष्मतरम्", "महतो महत्तरम्" इति च श्रुत्यनुरोधेन सर्वस्मात् **पर** इत्युच्यते। स्वातिरिक्तसापेक्षपरत्वगतहेयांशापह्नवसिद्धनिष्प्रतियोगिकपूर्णभावापन्नपुरुषादपि पूर्वोक्तेन्द्रियादिपरत्ववत् परोऽन्यः स्यादिति शङ्कां शातयति—**पुरुषान्न परं** इति। यस्मात् **पुरुषात्** निष्प्रतियोगिकसन्मात्रात् **न हि किञ्चिदपि** वस्त्वन्तरमस्ति पुरुषावगतेः स्वातिरिक्तसर्वासदपह्नवपूर्वकत्वात्। "यस्मात् परं नापरमस्ति किञ्चित्", "सन्मात्रमसदन्यत्" इत्यादिश्रुतेः। स्वातिरिक्तहेतोरपह्नोतव्येन्द्रियाद्यव्यक्तान्तगतपरत्वसूक्ष्मत्वमहत्त्वप्रत्यक्त्वानां या निष्प्रतियोगिकस्वमात्रतयावस्थितिः **सा काष्ठा** पर्यवसानभूमित्वात्। असत्कर्म्यादिसद्वैत्यन्तगन्तणां **सा** एव **परा** प्रकृष्टा **गतिः**। वस्तुतोऽवस्तुतो वापि तदतिरिक्तजीवेशसाक्ष्यभावात् सालोक्यादिमुक्तिभाजां निर्वासनत्वेन चतुष्पदैक्यसमये निर्विशेषब्रह्मभावापत्तेः। "ब्रह्मलोकं हि संपद्य न च पुनरावर्तते" इति,

यत् गत्वा न निवर्तन्ते तद्धाम परमं मम।

इति च श्रुतेः स्मृतेश्च। "यत् गत्वा न निवर्तन्ते" इति यत् तदनुपपन्नं गतेरागतिपूर्वत्वात् इत्याशङ्क्य सर्वस्य केवलब्रह्ममात्रत्वादवगतिरेव गतिरित्युप-

चर्यते। इन्द्रियाद्यव्यक्तान्तगतेः प्रत्यग्भावपरिसमाप्तत्वात् प्रतीचः परागभिन्नत्वा प्रत्यगभिन्नब्रह्मणः परागभावसापेक्षप्रत्यगैक्यगतसविशेषकलनापह्नवे ब्रह्ममात्र सिद्धमित्यर्थः ॥ ११ ॥

आत्मनः सूक्ष्मधीवेद्यत्वम्

एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ १२ ॥

यदि सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रतयावशिष्यते त सर्वेषामपि साक्षात्कर्तुं शक्यं भवेदित्याशङ्क्य सदाद्यावृतित्रयापह्नवसिद्धसच्चिद नन्दमात्रदृष्टीनां स्वमात्रतया साक्षात्कृतमपि सदाद्यावृतित्रयावृतानामन्तर्गूढत्वे किञ्चिद्विभिन्नावृतीनां प्रत्यारूढप्रत्यगिव भातीत्याह—**एष** इति। परमार्थदृष्ट्य सर्वापह्नवसिद्धनिष्प्रतियोगिकपूर्णभावेन यः पुरुषोऽवशिष्यते स्वाज्ञदृष्ट्या **एष** पुरुषः **सर्वभूतेषु** ब्रह्मादिस्तम्बपर्यन्तेषु तूलाविद्यापटच्छन्न इव **गूढः** अत एव **आत्मा** कस्यचिदपि **न प्रकाशते**। तेषां तूलाविद्यावृतदृष्टित्वात् परमार्थदृष्ट्या यदयं सर्वो जन्तुः सत्तामात्रस्वरूपोऽपि तूलाविद्यावृतदृष्टित्वे श्रुत्याचार्यैः "न त्वं संसारी किं तु प्रत्यक्तदभिन्नं ब्रह्म तद्गतहेयांशविरळब्रह्ममा भवसि" इति बोधितोऽपि तदुपदेशं न बहुमन्यते। "देहेन्द्रियादिरसि" इति परैर्बोधितोऽपि शरीरत्रयमात्मेति गृह्णाति। अहो मायैतादृशी! तय मोमुह्यमानोऽयं लोकः स्वात्मानमविदित्वा सुतरां बंभ्रमीति।

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते।
नाहं प्रकाशः सर्वस्य योगमायासमावृतः॥

इत्यादिस्मृतेः। "मामेव ये प्रपद्यन्ते", "नाहं प्रकाशः सर्वस्य", इति विरुद्धोक्तिरिति चेन्न; आवृतित्रयावृतदृष्टेरेवं न प्रकाशत इत्युक्तम्। किञ्चिद्विशीर्णावृतदृष्टेर्दृश्यते हि। अग्रमेवाग्र्यं तया **अग्र्यया** एकाग्रतया

संस्कृतया **बुद्धया** सूक्ष्मवस्तुगोचरधिया इन्द्रियाद्यव्यक्तान्तगतपरत्वसूक्ष्मत्व-महत्त्वादि**सूक्ष्मदर्शिभिः** पण्डितैः स्वान्तर्बाह्यविजृम्भितकामसङ्कल्पादिनामरूपादि-प्रपञ्चभावाभावप्रकाशकत्वेन तदारोपापवादाधिकरणत्वेन निरधिकरणब्रह्ममात्रत्वेन च स्वावशेषतया **दृश्यते तु** दृश्यत एवेत्यर्थः ॥ १२ ॥

धियः सूक्ष्मतापादनोपायः

**यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि ।**

**ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि ॥ १३ ॥**

स्वाविद्यावृतदृष्टीनां तदावृतिभेदनोपायतस्तदधिगमः स्यादित्यत आह— **यच्छेत्** इति । **प्राज्ञो** विवेकी वागिन्द्रियोपलक्षितेन्द्रियजातं मनसि **नियच्छेत्** उपसंहरेत् मनोमात्रपर्यवसानं कुर्यादित्यर्थः । **वाक्** वाचम् । विभक्तिव्यत्ययश्छा-न्दसः । **मनसी** इति दैर्घ्यं छान्दसम् । **तत्** संकल्पविकल्पात्मकं मनः **ज्ञाने आत्मनि** बुद्धौ **नियच्छेत्** । बुद्धिर्हि मनआदिकरणग्राममाप्नोतीत्यात्मा । प्रत्य-ग्भावेनेत्यर्थः । तज्ज्ञानायमानबुद्धिं **आत्मनि महति** महदुपाधिकहिरण्यगर्भात्मनि **नियच्छेत्** । "हिरण्यगर्भः समवर्तताग्रे" इति श्रुतितः प्रथमजं महान्तमात्मानं विश्वविराडोत्रादिभिः सह स्वातिरिक्तकरणग्रामतदारोपापवादाधिकरणगतहेयांश-**शान्तः** आत्मनि काष्ठापदंगतपुरुषे तन्मात्रावशेषतया **नियच्छेत्** ॥ १३ ॥

निर्गुणब्रह्मणो दुरधिगमत्वम्

उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत ।

क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदन्ति ॥ १४ ॥

अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् ।

अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तन्मृत्युमुखात्प्रमुच्यते ॥

यतः स्वातिरिक्तसर्वापह्नवकृत् स्वमात्रतया कृतकृत्यो भवति ततो मातृवद्धितैषिणी श्रुतिरनाद्यविद्यास्वापमोहितपामरलोकं स्वात्माभिमुखमुद्बोधयति—**उत्तिष्ठत** इति ॥ हे प्राकृतजन्तवः! यूयं स्वात्मोन्मुखतया स्वाविद्याद्वयतत्कार्यस्वापात् **उत्तिष्ठत**। स्वात्माधिगमोपायचिन्तायां **जाग्रत**। ब्रह्ममात्रनिष्ठान् **वरान्** आचार्यान् **प्राप्य** तदुपदेशलब्धं स्वातिरिक्तसर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति **निबोधत**। कालान्तरे एवं भवेदित्युपेक्षा न कार्या।

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते।

इति स्मृतेः। ज्ञेयवस्तुनश्चरमजन्मगम्यत्वेन सुसूक्ष्मत्वात्तद्याथात्म्यज्ञानमार्गस्यापि सुसूक्ष्मतमत्वं स्फोटयति—**क्षुरस्य** इति। यथा तीक्ष्णीकृतक्षुरस्य **धारा दुरत्यया** सा पद्भ्यां **दुर्गं** दुर्गमनीया तथा सर्वापह्नवसिद्धब्रह्ममात्रज्ञानपथः पन्थानं मार्गमिति **कवयो वदन्ति**। ज्ञेयवस्तुनः सूक्ष्मत्वेन तद्विषयकज्ञानमार्गस्यापि दुरत्ययतां वदन्तीत्याशयः ॥ १४ ॥ कथं पुनर्ज्ञेयस्य सूक्ष्मत्वं? इत्यत आह—**अशब्दं** इति। शब्दस्पर्शरूपरसगन्धाढ्यसर्वेन्द्रियविषयत्वेन गन्धवती पृथिवी स्थूला। अबाद्याकाशान्तभूतेषु गतैकैकगुणापकर्षतः सूक्ष्मत्वमहत्त्वविशुद्धत्वनित्यत्वादितारतम्यं दृष्टम्। न हि यत्र **गन्धादिपञ्चगुणाः** प्रसरन्ति तस्यात्मनो निरतिशयसूक्ष्मत्वेन निर्गुणत्वात्। वस्तुतः शब्दस्पर्शरूपरसगन्धापह्नवसिद्धं **यत्** तत् **अशब्दमस्पर्शमरूपमरसमगन्धवत्** इत्येतद्व्याख्यातम्। यत् शब्दादिविरळं तत् व्येतीत्यत आह—**अव्ययं** इति। यत् शब्दादिमत् तद्व्येति यत् तदपह्नवसिद्धं तदव्ययमित्यर्थः। "अव्ययमनाद्यनन्तम्" इति श्रुतेः। यन्न व्येति तन्नित्यम्। किमधुना नित्यं? तत्राह—**अनादि** इति। यस्य स्वोत्पत्तावादिः कारणं न विद्यते तदनादि। अनादित्वे प्रागभाववदन्तवत्त्वं स्यादित्यत आह—**अनन्तं** इति ॥ सप्रतियोगिकप्रागभावस्यान्तवत्त्वेऽपि निष्प्रतियोगिकानादेरनन्तत्वं निरङ्कुशमित्यर्थः। कथं पुनरस्यानन्तत्वं? अनन्तकल्नाविशिष्टमहत्तत्त्वस्य विद्यमानत्वादित्यत आह—**महतः परं** इति। स्वातिरिक्तत्वेनापह्नोतव्यमहत्तत्त्वात् परं तदवगतेर्महत्तत्त्वतत्कार्यापह्नवपूर्वकत्वान्निष्प्रति-

योगिकानन्तत्वं सिद्धमित्यर्थः। "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतेः। सापेक्षमहतः परत्वेनाध्रुवता स्यादित्यत आह—**ध्रुवं** इति। महत्तत्त्वादेः स्वातिरिक्तत्वेन स्वज्ञदृष्ट्या ध्रुवत्वेऽपि परमार्थदृष्ट्या महदादेः शशविषाणवदवस्तुत्वात्तत्सापेक्षाध्रुवताया अपि तथात्वान्निरपेक्षनिष्प्रतियोगिकध्रुवम्। तमात्मानं ब्रह्मस्वमात्रमिति **निचाय्य** सम्यग्ज्ञात्वा तज्ज्ञानसमकालं स्वातिरिक्ताविद्यापदतत्कार्यजातमात्मसत्यव्यवहारप्रतिभासशून्यत्वेनाप्यस्ति नास्तीति विभ्रमो हि मृत्युः। तस्य प्रमादरूपत्वेन स्वमात्रबोधग्रासत्वान्मृत्युत्वं सिद्धमित्यर्थः। "प्रमादं वै मृत्युमहं ब्रवीमि" इति,

प्रमादो ब्रह्मनिष्ठायां न कर्तव्यः कदाचन।
प्रमादो मृत्युरित्याह भगवान् ब्रह्मणः सुतः॥

इति स्मृतेः स्वरूपदर्शनोक्तेश्च। तथाविधस्वातिरिक्तभ्रमायमानमृत्युगोचरात् **प्रमुच्यते** निष्प्रतियोगिकस्वमात्रमवशिष्यत इत्यर्थः॥ १९॥

फलश्रुतिः

**नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनम्।**
**उक्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते॥ १६॥**

नचिकेतोमृत्युप्रश्नप्रतिवचनाविर्भूतग्रन्थपठनपाठनज्ञानफलं श्रुतिराह—**नाचिकेतं** इति। मृत्युमुखान्नचिकेतसा प्राप्तं **नाचिकेतं** नचिकेतसे मृत्युना **प्रोक्तं** इदं **उपाख्यानं** वल्लीत्रयलक्षणं सनातनवस्तुगोचरत्वात् **सनातनम्। मेधावी** ब्रह्मविद्वरीयान् तदुचिताधिकारिभ्यो यथावत् **उक्त्वा** स्वयं वाचार्येभ्यः **श्रुत्वा। च**शब्दाद्यथावज्ज्ञात्वा तज्ज्ञानसमकालं यद्ब्रह्म स्वमात्रतया लोक्यते ज्ञायत इति सोऽयं ब्रह्मलोकस्तस्मिन् **ब्रह्मलोके** स्वावशेषतया **महीयते**। ब्रह्मैव भवति इत्यत्र—"ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः॥ १६॥

तस्यैव श्राद्धकाले श्रावणम्

य [1]इमं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि ।
प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते तदानन्त्याय कल्पत इति ॥

सदसि श्राद्धकाले वा वल्लीत्रयाख्योपनिषत्पठनफलमाह — य इति । **यो** हि विद्वान् वल्लीत्रयात्मकं **इमं** ग्रन्थं प्रकृष्टत्वात् **परमं** गोप्यत्वात् **गुह्यं प्रयतः** शुचिर्भूत्वा ब्राह्मणानां **संसदि** ग्रन्थतोऽर्थतो वा **श्रावयेत्** । भुञ्जानब्राह्मणालङ्कृतश्राद्धकाले **वा** श्रावयेत् । वल्लीत्रयार्थश्रोतारो ब्राह्मणाः श्राद्धभुजश्च तत् श्राद्धं चैतत् सर्वं **आनन्त्याय कल्पते** । द्विर्वचनं वल्लीत्रयसूचिताध्यायपरिसमाप्त्यर्थम् ॥ १७ ॥

---

# चतुर्थी वल्ली

विज्ञाज्ञयोर्विषयप्रवणत्वाप्रवणत्वे

पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात् पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥ १ ॥
पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् ।
[2]अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते ॥ २ ॥

"गूढात्मा न प्रकाशते", "दृश्यते त्वग्र्यया बुद्ध्या" इति तृतीयवल्ल्यामभिहितम् । अग्र्यबुद्ध्यभावात् खल्वात्मा न प्रकाशते । तत्प्रतिबन्धके ज्ञाते

[1] इदं—अ २.  [2] अतो—क, उ १., अथो—अ २.

तदुन्मूलनं कर्तुं शक्यम्। तदुत्सारणपूर्वकं निष्प्रतियोगिकब्रह्ममात्रावगतये चतुर्थ-वल्ली प्रारभ्यते—**पराञ्चि** इति। स्वाज्ञदृष्टिविकल्पितमूलाविद्याबीजांशयोगतः स्वयमेव भवतीति **स्वयंभूः**। स्वयं स्वतन्त्रो भूत्वा परागञ्चन्तीति **पराञ्चि खानि** तदुपलक्षित[1]श्रोत्रादीन्द्रियाणि पराग्रूपशब्दादिविषयगहनगोचरस्वभावानि भवन्त्विति **व्यतृणत्** प्रत्यग्भावपराङ्मुखतया हिंसितवान्। यस्मादेवं **तस्मात्** इन्द्रियैरिन्द्रियार्थोपलब्धा जीवः **पराङ्** प्रत्यग्भावावरणशब्दादीनेव **पश्यति। नान्तरात्मन्** अन्तरात्मानं प्रत्यञ्चं कदापि न पश्यतीत्यर्थः। प्रायश एवं-स्वभावा लोकाः। तत्र **कश्चिद्धीरो** नद्याः प्रतिस्रोतोऽभिमुखप्रवर्तनमिव पराग्रूपे-न्द्रियेन्द्रियार्थप्रातिलोम्येनाञ्चनात् प्रत्यक् चासावात्मा चेति प्रत्यगात्मा। आत्म-शब्दस्य प्रतीच्येव लोकरूढिः। व्युत्पत्तिपक्षेऽपि तत्रैवात्मशब्दो दृश्यते—

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह।
यच्चास्य सन्ततो भावस्तस्मादात्मेति गीयते॥

इति स्मृतावात्मशब्दव्युत्पत्तिस्मरणात्। स्वभावतस्तं **प्रत्यगात्मानं ऐक्षत्** अपश्यत् पश्यतीत्यर्थः। कथं पुनः प्रत्यगात्मानमैक्षत् घटद्रष्टा घटमिव? अचाक्षुषत्वात् प्रतीच इति, तत्रोच्यते—न हि घटं प्रति घटद्रष्टेव प्रत्यगात्मानं पश्यति। रूपादि-विविधविषयव्यावृत्तं प्रत्यग्भावमवलम्ब्य पराग्भावतो निवृत्तं चक्षुरादिकरणपटल-मस्येति **आवृत्तचक्षुः** उपरतकरणग्रामो भूत्वा तद्भावाभावप्रकाशकत्वेन तदप-वादाधारः प्रत्यगस्मीति प्रत्यगात्मदर्शनं युज्यत इत्यर्थः। न च स्वभावसिद्धपराक्-प्रवृत्तिं विना तद्व्यावृत्तिपुरस्सरं प्रत्यक्प्रवर्तनं कथम्? इति वाच्यम्। पराक्प्रवृत्तेः स्वानर्थकरत्वेन स्वात्मभूतप्रत्यगीक्षणस्य परमपुरुषार्थहेतुत्वात्। स्वात्मनः **अमृतत्वं** अमरणधर्मत्वं **इच्छन्** पराग्भावं व्युदस्य प्रत्यग्दृशा प्रत्यगात्मा ज्ञातुं शक्य इत्यर्थः॥ १॥ पराक्प्रत्यग्भावारूढयोः फलभेदं दर्शयति—**पराच** इति।

शब्दस्पर्शादयो येऽर्था अनर्था इव ते स्थिताः।
येषां सक्तस्तु भूतात्मा न स्मरेच्च परं पदम्॥

[1] श्रोत्रादीनीन्द्रियाणि—उ १.

इति श्रुत्यनुरोधेन प्रत्यग्भावावरणपराग्भावायमानशब्दादिविषयपञ्चकग्रहणव्यग्रमानसा बालाः अविवेकिनः **पराचः** पराग्भूतान् स्वान्तर्बाह्यविजृम्भित**कामान्** काम्यविषयान् **अनुयन्ति**। तेन कामभजनेन ते बालाः स्वाविद्यापदतत्कार्यरूपेण **विततस्य मृत्योः** पाश्यते बध्यन इति **पाशं** शरीरसंयोगवियोगलक्षणजनिमृत्याद्यनेकानर्थव्रातं **यन्ति** प्रयान्तीत्यर्थः। यत एवमतस्तस्मात् **धीराः** मुमुक्षवः स्वस्वदृष्ट्यनुरोधेन कबलितपराग्भावप्रत्यग्रूपावस्थानं प्रत्यगभिन्नब्रह्मस्वरूपावस्थानं ब्रह्ममात्रावस्थानं वा **अमृतत्वं**, तदेव निष्प्रतियोगिक**ध्रुव**मिति **विदित्वा** देवलोकादिब्रह्मलोकान्तगतामृतत्वस्यापेक्षिकत्वेनाध्रुवत्वात्, **अध्रुवे**न्द्रियादिस्थानेषु स्वातिरिक्तसर्वपदार्थेष्वपि "इदं मे स्यात्" इति जात्वपि **न प्रार्थयन्ते**। पुत्राद्येषणात्रयेभ्यो व्युत्थाय यत् परमार्थं तदेव भजन्तीत्यर्थः ॥ २ ॥

आत्मनः स्वप्रकाशत्वं ब्रह्माभेदश्च

येन रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान्।
एतेनैव विजानाति किमत्र परिशिष्यते? एतद्वै तत् ॥ ३ ॥
स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ ४ ॥

यद्विज्ञानमात्रतो न किञ्चित् प्रार्थयन्ते तदधिगमः कथं भवति? इत्यत आह—**येन रूपं** इति। **येन** पराग्भावविलक्षणप्रतीचा जीवलोकोऽयं चक्षुरादिकरणग्रामद्वारा **रूपं रसं गन्धं शब्दान् स्पर्शांश्च मैथुनान्** तत्तदिन्द्रियार्थजन्यसुखप्रत्ययान् **एतेनैव** प्रत्यगात्मना **विजानाति**। न च देहादिविलक्षणप्रतीचा। न हीन्द्रियेन्द्रियार्थसुखं विजानातीति लोकप्रसिद्धिरस्ति। देहादिसंघातोऽहमिन्द्रियेन्द्रियार्थजन्यसुखादिप्रत्ययान् विजानामीति तु सर्वलोकप्रसिद्धिरिति वाच्यम्। नयुक्तत्वात् संघातस्य स्वातिरिक्तशब्दादिवैरल्येन

विज्ञेयत्वाविशेषात्। यदि संघातो रूपादिरपि स्वयमेव भूत्वा रूपादीन् विजानीयात् तदा बाह्यरूपादयोऽप्यन्योन्यं विजानीयुरित्युक्तेरयुक्तत्वात्, येनोदकं दहति सोऽग्निरितिवत्। तस्माद्देहत्रयातिरिक्तप्रत्यगात्मना सर्वं विजानाति लोकः। न ह्यात्मनोऽविज्ञेयं किञ्चिदस्ति, प्रतीचः सर्वज्ञत्वात्। पराग्भावसापेक्षप्रत्यग्भावगतहेयांशापह्नवसिद्धं ब्रह्ममात्रमवशिष्यते। "अन्यत्र धर्मात्" इत्यादिना यत् नचिकेतसा पृष्टं "ओमित्येतत्" इत्यादिना विष्णुपदत्वेन शब्दाद्यपह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रतया यदभिहितं **तदेव एतत्** स्वान्तर्बाह्यकलनावभासकप्रत्यक्तत्त्वं स्वगतपराक्सापेक्षप्रभवसविशेषायमानहेयांशापह्नवतः स्वमात्रमवशिष्यत इत्यधिगतमिति वेदितव्यम्॥ ३॥ तदेतद्वस्तुनः सूक्ष्मविषयत्वेन दुर्विज्ञेयत्वात् पूर्वोक्तार्थमेव पुनः पुनराह—**स्वप्नान्तं** इति। स्वाप्निकजगज्जीवादेः स्वप्नमध्यस्थत्वेन ज्ञेयत्वात् स्वप्नज्ञेयं **स्वप्नान्तं** उच्यते। तथा जागरितज्ञेयत्वेन **जागरितान्तं च**। तौ **उभौ** स्वप्नजागरितज्ञेयपदार्थौ **येन** प्रतीचा लोकः **अनुपश्यति** इति पूर्ववत्। सर्वं तमेतं प्रत्यगभेदेन **महान्तं विभुमात्मानं** तद्गतविशेषांशापह्नवसिद्धं स्वमात्रमिति विज्ञाय **मत्वा धीरो** विद्वान् **न शोचति** शोचनीयविषयाभावात्॥ ४॥

जीवब्रह्माभेदज्ञानेन कृतार्थता

**य इमं मध्वदं वेद आत्मानं जीवमन्तिकात्।**
**[1]ईशानं भूतभव्यस्य न ततो विजुगुप्सते—एतद्वै तत्॥ ५॥**

यत् जीवेशयाथात्म्यप्रबोधतो विद्वान् निर्भयं भजति तद्विशदयति—**य** इति। **यः** कश्चिन्मुमुक्षुः **इमं** कर्मफलायमानमध्वदं प्राणधारणशक्तिमत्त्वेन **आत्मानं जीवं** तद्गतपराग्भावविलयास्पदत्वेन प्रत्यगात्मानं वेद ततस्तद**न्तिकात्** अन्तिके **भूतभव्यस्य** भूतादिकालत्रयस्यापि **ईशानं** तदुपलक्षितसर्वस्येशितारं निरङ्कुशसर्वज्ञेश्वरं तद्गतसर्वज्ञत्वाद्यपवादास्पदत्वेन परमात्मानं वेद पराक्सापेक्षप्रत्य-

[1] ईशानो—अ २.

गैक्यगतसविशेषापह्नवसिद्धं प्रत्यक्परविभागैक्यासहब्रह्ममात्रमवशिष्यत इति यदि वेद तदा **ततः** तद्विज्ञानोत्तरक्षणं **न विजुगुप्सते** न ह्यात्मानं गोपायितुमिच्छति, स्वस्यैव निष्प्रतियोगिकब्रह्ममात्रत्वात् । **एतत्** इत्यादि पूर्ववत् ॥ ५ ॥

हिरण्यगर्भस्य ब्रह्माभेदः

य: पूर्वं तपसो जातमद्भ्यः पूर्वमजायत ।

गुहां प्रविश्य तिष्ठन्तं यो [1]भूतेभिर्व्यपश्यत—एतद्वै तत् ॥ ६ ॥

मध्वदजीवस्य भूतादिकालत्रयेशितुरीश्वरस्यापि तद्विशेषांशत्यागतो जीवेशायाथात्म्यं ब्रह्ममात्रमिति प्रतिपाद्य हिरण्यगर्भयाथात्म्यज्ञानसिद्धमप्येतदित्याह—**यः पूर्वं** इति । **यः** कश्चिन्मुमुक्षुः **तपसः** सत्यादिलक्षणाद्ब्रह्मणः सकाशात् **अद्भ्यः** अप्सहितपञ्चभूतेभ्यः **पूर्वं** यो जायते समजनि तमेवं **जातं** ब्रह्मादिस्तम्वान्तप्राणिजातमुत्पाद्य तद्धृदयगुहास्थाकाशं सूत्ररूपेण **प्रविश्य भूतेभिः** कार्यकारणायमानभूतभौतिकैः सहाद्यापि **तिष्ठन्तं** हिरण्यगर्भं स्वस्मिन् स्वकार्यभूतभौतिकजातेऽपि तद्गतनामरूपतूलान्तःकरणवृत्तिमात्रापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति **व्यपश्यत** यः पश्यति **एतद्वै तत्** इत्युक्तार्थम् ॥ ६ ॥

तद्विद्याया ब्रह्मयाथात्म्यम्

या प्राणेन संभवति अदितिर्देवतामयी ।

गुहां प्रविश्य तिष्ठन्ती या [2]भूतेभिर्व्यजायत—एतद्वै तत् ॥ ७ ॥

हिरण्यगर्भयाथात्म्यमुक्त्वा तद्विद्यागतयाथात्म्यं विशिनष्टि—**या प्राणेन** इति । **या** स्वातिरिक्ताविद्यापदतत्कार्यजातादनात् **अदितिः**, देदीप्यमानरूपेयमिति **देवतामयी**, ब्रह्मणः सकाशात् **प्राणेन** हिरण्यगर्भेण सह **संभवति** मूलाविद्यातुरीयांशायमाना समष्टिविद्या प्रादुरभूदित्यर्थः । सेयं व्यष्ट्यात्मना सर्वप्राणिगुहां

[1] भूतेषु—अ २.

[2] भूतेषु—अ २.

**प्रविश्य तिष्ठन्ती** सती तूलाविद्यातुरीयांशरूपेण व्यष्टिभूतेभिः भूतैः साकं **व्यजायत** स्थूलादिभागत्रयग्रासस्वाविद्याद्वयार्धमात्रांशगतहेयांशापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति यो वेद **एतद्वै तत्** इति पूर्ववत् ॥ ७ ॥

विराड्रूपेण ध्येयस्याग्नेर्ब्रह्मरूपत्वम्

**अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भिणीभिः ।**
**दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः—एतद्वै तत् ॥८॥**

अग्निनामकवैराजयाथात्म्यं प्रकटयति—**अरण्योः** इति । यथा लोके **गर्भिणीभिः** अगर्हितान्नभोजनादिना **गर्भः सुभृतः** तथा अधियज्ञगतोत्तराधरा-**रण्योर्जातवेदा अग्निः** सर्वहविर्भोक्ता वैश्वानरः, “अयमग्निर्वैश्वानरः” इति श्रुतेः, ऋत्विग्भिः योगिभिश्च सुभृतः, किञ्च अध्वरे हृदये च **जागृवद्भिर्मनुष्येभिः** जागरणशीलाप्रमत्तचित्तमनुष्यैराज्यादिहविष्मद्भिः ध्यानभावनावद्भिश्च **दिवे दिवे** अहन्यहनि कर्मिभिर्योगिभिश्च **ईड्यः** स्तुत्यः वन्द्यो भूत्वायमग्निर्वैश्वानरो विजयते । तद्गतहेयांशापह्नवसिद्धं ब्रह्ममात्रम् । **एतद्वै तत्** इति पूर्ववत् ॥ ८ ॥

ब्रह्मणः सूर्यादिजगदधिष्ठानत्वम्

**यतश्चोदेति सूर्यः अस्तं यत्र च गच्छति ।**
**तं देवाः सर्वे अर्पितास्तदु नात्येति कश्चन—एतद्वै तत् ॥ ९ ॥**

सूर्याद्युपलक्षितविश्वारोपापवादाधिकरणयाथात्म्यं प्रकाशयति—**यत** इति । “यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभि-संविशन्ति, तद्विजिज्ञासस्व तद्ब्रह्मेति” इति श्रुत्यनुरोधेन **यतश्च** सर्व-कारणात्तटस्थेश्वरात् [1]सूर्योपलक्षितजगत् **उदेति** आविर्भवति, यत्राधिकरणे स्थितिं **अस्तं च गच्छति** ; **तं** तटस्थेश्वरं प्राणं वा अधिदैवभावमापन्ना अग्न्यादयो **देवाः** अध्यात्मभावमापन्ना वागादयश्च **सर्वे** अरा इव रथनाभौ **अर्पिताः**

[1] सूर्योपलक्षितं जगत्—उ १.

स्थितिकाले संप्रवेशिताः। तत्सर्वाधिकरणं तटस्थेश्वराख्यं ब्रह्म **कश्चन** कश्चिदपि तदु तत्तु **नात्येति** नातिक्रामति। कार्यनिरूपितकारणगतहेयांशापाये निष्प्रतियोगिकब्रह्ममात्रम्। **एतद्वै तत्** उक्तार्थमेतत् ॥ ९ ॥

अध्यात्माधिदैवयोश्चेतनस्याभेदः

**यदेवेह तदमुत्र यदमुत्र तदन्विह ।**
**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १० ॥**

स्वाज्ञस्वज्ञदृष्टिभ्यामसल्लौकिकाद्यष्टदृष्टिसत्त्वासत्त्वेऽपि निष्प्रतियोगिकं ब्रह्म स्वमात्रमवशिष्यते। तदन्यथापश्यतः प्रत्यवायफलं प्रकटयति—**यदेवेह** इति। परमार्थदृष्ट्या सर्वापह्नवसिद्धब्रह्ममात्रतया स्थितं तदेव स्वाज्ञदृष्ट्या स्वातिरिक्तविश्ववदवभासते। **यदेव इह** कार्यकारणोपाधिविशिष्टं जगत्त्वेनाभिमतं **तदेवामुत्र** स्वज्ञदृष्ट्या स्वाज्ञदृष्टिविभातविश्वापवादाधिकरणं ब्रह्म विभाति। **यदमुत्र** एवं भातं स्वाज्ञदृष्ट्या **तदेव इह** नामरूपादिविशिष्टविश्ववदनुभाव्यम्। वस्तुतः सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रमेव सदा विजयत इत्यर्थः। एवं परमसिद्धान्ते स्थितेऽपि प्रायशो लोकस्वभाववैषम्यभेदविशिष्टाविद्यया मोहितः सन् **इह** निष्प्रतियोगिकब्रह्ममात्रे नानाकलनापह्नवसिद्धे तस्मादन्योऽहं मत्तोऽन्यत्तदिति नाना **नानेव** भिन्नभिन्नमिव **पश्यति**। **सोऽयमेवंदर्शी मृत्योः** मरणात् **मृत्युं** मरणं पुनःपुनर्जनिमृतिपरम्परां **आप्नोति**। तस्मात् तथा कदापि न पश्येत्। सर्वापह्नवसिद्धं ब्रह्म स्वमात्रमित्येव सदा पश्येदित्यर्थः।

नात्मभावेन नानेदं न स्वेनापि कथञ्चन ।
न पृथङ्नापृथक् किञ्चिदिति तत्त्वविदो विदुः ॥

इति गौडपादाचार्योक्तेः। तद्विपर्यये—

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥

इति श्रुतेरित्यर्थः ॥ १० ॥

निर्गुणब्रह्मणो मनोगम्यत्वम्

**मनसैवेदमाप्तव्यं नेह नानास्ति किञ्चन ।**

**मृत्योः स मृत्युं गच्छति य इह नानेव पश्यति ॥ ११ ॥**

यन्मनस्त्रिजगत्सृष्टिस्थितिव्यसनकर्मकृत् ।
तन्मनो विलयं याति तद्विष्णोः परमं पदम् ॥

इति श्रुत्यनुरोधेन स्वाज्ञस्वज्ञगोचरमनसा जगत् ब्रह्म वा आप्तव्यम् । ब्रह्मातिरेकेण मनो नास्तीति पक्षे ब्रह्ममात्रं निष्प्रतियोगिकतयावशिष्यते । तत्र नानादर्शी मृत्युपदं यातीत्याह—**मनसैवेदं** इति । स्वाज्ञदृष्टिविकल्पित**मनसैव** तद्विकल्पितस्वाविद्यापदतत्कार्यजातं **आप्तव्यम्** । यद्वा—स्वज्ञदृष्ट्या श्रुत्याचार्यसंस्कृतमनसैव विश्वारोपापवादाधिकरणं ब्रह्माहमस्मीत्याप्तव्यम् । मनोमात्रापह्नवे तद्विकल्पितनानानामरूपवद्भिदाकदम्बं **इह** ब्रह्ममात्रे कदाचिदपि शशविषाणवन्नास्त्येव, ब्रह्ममात्रावगतेर्नानाप्रपञ्चापह्नवपूर्वकत्वात् इत्यत्र—

इदं प्रपञ्चं नास्त्येव नोत्पन्नं नो स्थितं जगत् ।
चित्तं प्रपञ्चमित्याहुर्नास्ति नास्त्येव सर्वदा ॥

इत्यादिश्रुतेः । सर्वापह्नवसिद्धे निष्प्रतियोगिकब्रह्ममात्रे **किञ्चन** अणुमात्रमपि **नाना** प्रपञ्चः सत्यत्वेन मिथ्यात्वेन वा अस्ति नास्तीति विभ्रमोऽपि न हि **अस्तीति** सिद्धान्तार्थः । यस्तु स्वाज्ञो **नानेव पश्यति स मृत्योः मृत्युं गच्छ**त्येव । यत्किञ्चित्स्वातिरिक्तास्तितादृष्टिः सर्वत्र जननमरणादिलक्षणभयमेव प्रतिपद्यत इत्यत्र—“यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते, अथ तस्य भयं भवति” इति श्रुतेः ॥ ११ ॥

आत्मनो ब्रह्माभेदः

**अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ।**

**ईशानं भूतभव्यस्य न ततो विजुगुप्सते—एतद्वै तत् ॥ १२ ॥**

अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।

ईशानो भूतभव्यस्य स एवाद्य स उ श्वः—एतद्वै तत् ॥ १३ ॥

पुरोक्तार्थमेव विधान्तरेणाह—**अङ्गुष्ठमात्र** इति । हृत्पुण्डरीकस्याङ्गुष्ठपरिमाणत्वेन तदन्तर्विलसितान्तःकरणावभासकचिद्धातुः कीचकपर्वान्तर्वर्त्यम्बरवत् **अङ्गुष्ठमात्रः**, अनेनेदं जगत् पूर्णमिति **पुरुषः**, **मध्य आत्मनि** शरीरान्तर्हृदयकुहरे प्रत्यग्भावेन यः **तिष्ठति** तं **भूतभव्यस्येशानं** तद्गतहेयांशापाये ब्रह्ममात्रतया विदित्वा **ततः** तद्वेदनात् न **विजुगुप्सते** इत्यादि पूर्ववत् ॥ १२ ॥ किञ्च—**अङ्गुष्ठमात्र** इति । यो हि मुमुक्षुः स्वहृदये **अधूमज्योतिरिव अङ्गुष्ठमात्रः** केवलज्योतिर्मात्रस्वरूपत्वात् , **पुरुषो भूतभव्यस्य ईशानो** ब्रह्मा आत्माहमस्मीति प्रत्यगभिन्नब्रह्मरूपेण पश्यति सोऽयं मुमुक्षुदर्शनीयप्रत्यगभिन्नपरमात्मा । **सोऽद्य** इदानीं ब्रह्मादिस्तम्बान्तप्राणिषु वर्तमानः **स उ स एव श्वः** परश्वोऽपि वर्तिष्यते । नान्यस्तत्तुल्यः समोऽधिको न्यूनो वास्तीत्यर्थः । तद्गतहेयांशापह्नवतो ब्रह्ममात्रं यदवशिष्यते **एतद्वै तत्** इत्युक्तार्थमेतत् । "नायमस्तीति चैके" इत्यसल्लौकिकपक्षः स्वत एव निवृत्तोऽपि "स एवाद्य स उ श्वः" इति श्रुत्या शून्यवादः क्षणिकवादोऽपि प्रत्युक्तः ॥ १३ ॥

भेदाभेददर्शनयोः फलभेदः

यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति ।

एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति ॥ १४ ॥

यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ।

एवं मुनेर्विजानत आत्मा भवति गौतम ॥ १५ ॥

पुनरपि स्वातिरिक्तदर्शनादर्शनफलं तदपह्नवसिद्धब्रह्ममात्रज्ञानफलं चाह—**यथोदकं** इति । यथा **दुर्गे** दुर्गमनप्रदेशे **वृष्टमुदकं पर्वतेषु** पर्वतवन्निम्नप्रदेशेषु **विधावति** विकीर्णं सत् विनश्यतीत्यर्थः, एवं प्रतिशरीरमात्मभिन्नधर्मान्

जीवान् स्वपृथग्भूतान् **पश्यन्** अज्ञः पुनः **तानेव** शरीरभेदान् **विधावति** शरीरपरम्परामविरलमाप्नोतीत्यर्थः ॥ १४ ॥ अभेददर्शनफलमाह—**यथोदकं** इति। **यथा शुद्धे** शुद्धोदके **शुद्धोदकं आसिक्तं** यदि तदा **तादृगेव शुद्धोदकं भवति, हे गौतम! एवं** आत्मैकत्वं **विजानतो मुनेरात्मैव** सर्वं **भवति**। व्यष्टिसमष्टिसाक्ष्यसापेक्षसाक्षिणोरैक्यस्य सविशेषत्वेन शुद्धोदके शुद्धोदकक्षेपणस्थानीयस्वान्तस्वज्ञदृग्गोचरस्वातिरिक्तदर्शनादर्शनायमानविशेषांशापाये स्वातिरिक्तमस्ति नास्तीति कलनापह्नवसिद्धं निष्प्रतियोगिकमात्ममात्रमवशिष्टं भवति। एवं विद्वानपि तन्मात्रतयावशिष्यत इत्यत्र—

दर्शनादर्शने हित्वा स्वयं केवलरूपतः।
य आस्ते कपिशार्दूल ब्रह्म स ब्रह्मवित् स्वयम्॥

इति श्रुतेः। तस्मात् मातृपित्राचार्यसहस्रेभ्योऽपि हितैषिणा वेदान्तेनोपदिष्टमर्थं श्रुत्याचार्यप्रसादतो लब्ध्वाथासल्लौकिकाद्यष्टदृष्टिविभ्रमास्मरणपूर्वकं सर्वापह्नवसिद्धं ब्रह्म स्वमात्रमित्यात्ममात्रसिद्धिरादरणीयेत्यर्थः। ब्रह्ममात्रसिद्धान्तस्य [1]वेदार्थत्वेन परमाद्वैतरूपत्वात्।

केवलं ब्रह्ममात्रत्वान्नास्त्यनात्मेति निश्चिनु। इति,
वेदार्थः परमाद्वैतं नेतरत्सुरपुङ्गव।

इति च श्रुतेः स्मृतेश्च ॥ १५ ॥

---

## पञ्चमी वल्ली

### शरीरस्य पुरत्वं आत्मनस्तत्स्वामित्वं च

**पुरमेकादशद्वारमजस्यावक्रचेतसः।**
**अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते—एतद्वै तत् ॥ १ ॥**

[1] वेदार्थेन—उ १.

* 14

ब्रह्मणो दुर्विज्ञेयत्वात् पुनरपि विधान्तरेण ब्रह्ममात्रनिर्धारणायेयं वल्ली प्रारभ्यते—**पुरं** इति। यस्यावक्रमकुटिलं युगपदुदितानन्तकोट्यादित्यप्रकाशवच्चेत सम्यज्ज्ञानमस्ति सोऽयमवक्रचेतास्तस्य **अवक्रचेतसः**। तस्य जन्मादिषड्भाव विकारास्पृष्टत्वेन **अजस्य** यस्य नानाद्वारपालाधिष्ठात्राद्यनेककरणसंहतं शीर्षण्यानि सप्त, नाभ्या सहावाञ्चि त्रीणि, ब्रह्मरन्ध्रं च आहत्य **एकादशद्वारं** शरीराख्यमाणपुरं यदज्ञानज्ञानाभ्यां विकल्पितमुपसंहृतं च भवति। स्वाज्ञदृष्ट्या व्यष्टिसमष्ट्यात्मक- पुरस्वामिनं स्वज्ञदृष्ट्या तदारोपापवादास्पदं परमार्थदृष्ट्या व्यष्टिसमष्टिपुरतत्कार्य- कलनापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति **अनुष्ठाय** ध्यात्वा ज्ञात्वा वा—तदनुष्ठानं ध्यानं ज्ञानं वा भवितुमर्हति—तज्ज्ञानसमकालं शोचनीयसंदे- षणावैरल्यात् **न हि शोचति**।

जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः।

इति, "ज्ञानसमकालमेव मुक्तः" इति च श्रुत्यनुरोधेन स्वभावतः स्वाविद्या- कृतबन्धनात् **विमुक्तोऽपि** परदृष्ट्या स्वातिरिक्तसर्वापह्नवज्ञानतो **विमुच्यते** इत्युपचर्यते। वस्तुतः स्वेनापह्नोतव्यस्वाविद्याविकल्पितव्यष्टिसमष्टिपुरवैरल्यात् विद्वान् स्वमात्रमवशिष्यते। **एतद्वै तत्** इत्युक्तार्थम्॥ १॥

ब्रह्मणः समष्टिव्यष्ट्यधिष्ठानत्वम्

**हꣳसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।**
**नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत्॥**

कथं पुनरात्मनो व्यष्टिसमष्टिपुराधिष्ठातृत्वं? इत्यत आह—**हंस** इति। स्वाज्ञदृष्टिविकल्पितव्यष्टिसमष्ट्यात्मकं पुरजातमसङ्गतयाधिष्ठाय तत्तत्पुराभिमा- तृजीवगतज्ञात्रादित्रिपुटीकलनां हन्तीति **हंसः** प्रत्यगभिन्नपरमात्मा। तस्य "अह- मेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदं सर्वम्" इत्यादिश्रुत्यनुरोधेन सर्वगतत्वेन सर्वपुराधीशत्वं तदपह्नवसिद्धस्वमात्रतां च

दर्शयति—**शुचिषत्** इत्यादिना। सोऽयं प्रत्यगभिन्नपरमात्मा अदित्यपत्यात्मना शुचौ दिवि सीदति गच्छति व्याप्नोतीति **शुचिषत्**। **वसुः**। वाय्वात्मनान्तरिक्षे सीदतीति **अन्तरिक्षसत्**। "अग्निर्वै होता" इति श्रुत्या होत्रात्मना वेद्युपलक्षितपृथिव्यां सीदतीति **वेदिषत्**। "इयं वेदिः परो अन्तः पृथिव्याः" इति मन्त्रवर्णात्। **अतिथिः** सोमो भूत्वा द्रोणकलशे सीदतीति। यद्वा—ब्राह्मणो अतिथिः। तद्रूपेण दुरोणस्थानीययज्ञगृहेषु सीदतीति **दुरोणसत्**। नृषु मनुष्येषु सीदतीति **नृषत्**। नरापेक्षया वरेषु देवेषु सीदतीति **वरसत्**। ऋतं सत्यं तत्र सदात्मना सीदतीति **ऋतसत्**। व्योम्नि आकाशे सूर्यात्मना सीदतीति **व्योमसत्**। शङ्खशुक्तिझषादिरूपेणाप्सु जायन्त इति **अब्जाः**। व्रीह्यादिरूपेण गवि पृथिव्यां जायन्त इति **गोजाः**। ऋतं यज्ञं तदङ्गरूपेण जायन्त इति **ऋतजाः**। नद्यादिरूपेणाद्रौ जायन्त इति **अद्रिजाः**। स्वाज्ञस्वज्ञदृष्टिभ्यां विकल्पितव्यष्टिसमष्टिपुरसङ्गासङ्गतदारोपाधारजीवेश्वररूपेण तत्सर्वापवादाधिकरणप्रत्यगभिन्नब्रह्मरूपेण च भासमानोऽपि परमार्थदृष्ट्या "ब्रह्ममात्रमसन्न हि" इति श्रुत्यनुरोधेन स्वातिरिक्तासदपह्नवसिद्धसन्मात्रत्वं सिद्धमित्याह—**ऋतं** इति। स्वातिरिक्तानृतापह्नवसिद्धत्वात्तस्य सूक्ष्मत्वेन परिच्छिन्नशङ्कां वारयति—**बृहत्** इति। निष्प्रतियोगिकभूमरूपमित्यर्थः॥ २॥

आत्मन इन्द्रियोपास्यत्वम्

**ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति।**
**मध्ये वामनमासीनं विश्वेदेवा उपासते॥ ३॥**

"यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति" इति स्वातिरिक्तवस्तुतद्दर्शनश्रवणवेदनापह्नवश्रुतेः न चादित्यदेवताकोऽयं मन्त्र इति वाच्यम्; आदित्यस्यापि ब्रह्मत्वात् "असावादित्यो ब्रह्म" इति श्रुतेः। असल्लौकिकाद्यष्टदृष्टिमोहे सत्यसति अविशेषेण निष्प्रतियोगिकब्रह्ममात्रमवशिष्यत इत्येतावता ग्रन्थेनाभिहितम्। तदधिगमोपायवैरल्यमाशङ्क्य—यदि ते ब्रह्मयाथात्म्या-

ज्ञानमस्ति तदा तदधिगमोपाय उच्यते—**ऊर्ध्वं** इति। योऽन्तर्यामी [1]सर्वेश्वरः हृत्कमलात् **ऊर्ध्वं प्राणवृत्तिं उन्नयति** तथा **अपानवृत्तिं प्रत्यक्** अधो **अस्यति** पातयति, हृदयपुण्डरीक**मध्ये समासीनं तं** स्वान्तःकरणाभिव्यक्त-विज्ञानसङ्गासङ्गजीवप्राणेश्वरप्रत्यग्रूपेण वननीयं संभजनीयं **वामनं** विश इव राजानं **सर्वे विश्वेदेवाः** चक्षुरादयश्च तत्तत्करणजनितविज्ञानबलिं हरन्तः सन्त **उपासते** तादर्थ्येनाविरलव्यापारा भवन्तीत्यर्थः। [2]मनआदिकरणग्रामव्यापृतिर्यदर्था सोऽयमात्मा सर्ववैलक्षण्येन सिद्धो भवतीत्यर्थः ॥ ३ ॥

शरीरादिविविक्तस्यात्मनो ब्रह्माभेदः

अस्य विस्रंसमानस्य शरीरस्थस्य देहिनः।
देहाद्विमुच्यमानस्य किमत्र परिशिष्यते—एतद्वै तत् ॥ ४ ॥

स्वविकल्पितोपाधिविलये स्वयमेव परिशिष्यत इत्याह—**अस्य** इति। **अस्य** आत्मनः स्वात्तोपाधितो **विस्रंसमानस्य** पुरा **शरीरस्थस्य देहिनो देहाद्विमुच्यमानस्य** जीवप्राणेशप्रत्यग्रूपस्य स्वगतविशेषांशापह्नवे **किमत्र परिशिष्यते**? स्वयमेवावशिष्यते। **एतद्वै तत्** इत्युक्तार्थः। देहाद्विमुच्यमान इत्यत्र पुरस्वामि[नो] विद्रवतः पुरवासिन इव यदात्मविद्रवणे वागादिकरणजालं हतबलं भवतीति यदुक्तप्रायं तदसाधु। प्राणापगमादेव करणजालं विध्वस्तं भवति। न तदतिरिक्तात्मापगमात् ॥ ४ ॥

आत्मनः प्राणादिजीवनहेतुत्वम्

न प्राणेन नापानेन मर्त्यो जीवति कश्चन।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥ ५ ॥

[1] सर्वज्ञेश्वरः—उ १.
[2] "मनः" नास्ति—उ १.

प्राणादिना हि मर्त्यो जीवतीत्याशङ्क्याह—**न प्राणेन** इति। **प्राणेनापानेन** वागादिना वा **कश्चन मर्त्यो न** हि **जीवति**। न हि प्राणादीनां संहत्यकारित्वाज्जीवनहेतुत्वम्। संहतानामवस्थानं गृहादिवत् परप्रयुक्तं दृष्टम्। **यस्मिन्** प्राणादिविलक्षणे सत्यात्मनि चक्षुरादिभिः प्राणापानौ **सहाश्रितौ** यदर्थं प्राणादिः स्वव्यापारं कुर्वन् वर्तते अतः प्राणादिसंघातविलक्षणेन **इतरेण तु** आत्मनैव संहत्यकारिणः प्राणादयो **जीवन्ति**। तस्मादात्मनैव सर्वे जीवन्तीत्यत्र—"येन जातानि जीवन्ति" इति श्रुतेः ॥ ५ ॥

आत्मज्ञानान्मुक्तिः तदज्ञानाद्बन्धश्च

**हन्त त इदं प्रवक्ष्यामि गुह्यं ब्रह्म सनातनम्।**
**यथा च मरणं प्राप्य आत्मा भवति गौतम ॥ ६ ॥**
**योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः।**
**स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतम् ॥ ७ ॥**

सर्वजीवननिमित्तब्रह्मयाथात्म्यं पुनः सोपायमभिधास्यामीत्याह—**हन्त त** इति। स्वाज्ञदृष्टिगुह्यं **सनातनं ब्रह्म** "अन्यच्छ्रेयः" इत्यादिना सम्यग्विवेचितमपि पुनरपीदानीं तदियत्तामहं ते तुभ्यं **प्रवक्ष्यामि**। हे **गौतम**! यदज्ञानज्ञानाभ्यां भवमोक्षौ भवतः यत्परमार्थाज्ञानतो **मरणं प्राप्य यथा आत्मा** संसारी पुनरसंसारी च **भवति** तथा वक्ष्यमाणं मे वचः शृण्वित्यर्थः ॥ ६ ॥ स्वाज्ञानतो मरणानन्तरं **अन्ये** स्वाज्ञा **देहिनः** पुनः **शरीरत्वाय** शरीरग्रहणार्थं शुक्लरक्तबीजसमन्विताः सन्तो नाना**योनिं** प्रविशन्ति। तथा केचनान्ये स्वाज्ञतमा मरणानन्तरं **स्थाणुं** वृक्षादिभावं **अनुसंयन्ति**। यत् यस्य कर्म **यथाकर्म** यादृशं कर्मेहजन्मनि कृतं **यथाश्रुतं** यादृशमुपार्जितं ज्ञानं तदनुरूपमेव शरीरपरंपरां **प्रपद्यन्ते** प्रतिपद्यन्त इत्यर्थः। "यथाप्रज्ञं हि संभवाः" इति श्रुतेः ॥ ७ ॥

स्वप्नद्रष्टुः सर्वाधिष्ठानब्रह्माभेदः

य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः ।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ।
तस्मिंꣳल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन—एतद्वै तत् ॥८॥

यत् प्रतिज्ञातं गुह्यं वक्ष्यामीति तदाह—य इति । **य एष** जीवभावमेत्य स्वभावतः करणेषु **सुप्तेषु** स्वाभिप्रेतस्त्र्यन्नपानादिविषयकनानाविध**कामं कामं** कामनापरंपरां स्वाविद्यया **निर्मिमाणो** निष्पादयन् य एष **पुरुषो जागर्ति** न हि कदाचित् करणवत् स्वपिति, सोऽयं पुरुषो जीवभावमापन्नश्श्रुत्याचार्यप्रसादात्तज्जीवितापाये यत्सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रतया विराजते **तदेव** ब्रह्ममात्रं **शुक्रं** निरतिशयज्योतिःस्वरूपत्वात् । स्वमात्रतयोपबृंहणात् **तद्धि ब्रह्म** । न ह्यनधिकारिषु गोपनीयं तदतिरिक्तं गुह्यमस्ति । सर्वशास्त्रेषु **तदेव** निष्प्रतियोगिकामृतं विकळेबरकैवल्यं उच्यते । पुनः स्वाज्ञादिदृष्ट्या यत् सर्वकारणभावमात्तवद्भाति तस्मिन्नेव **सर्वे लोकाः** समाश्रिताः । **न** हि **तदु** तत् ब्रह्म कश्चिदपि **अत्येति** । न हि वातादयोऽपि तच्छासनमतिक्रमितुं पारयन्ति "भीषास्माद्वातः पवते" इति श्रुतेः । यत् स्वाज्ञादिदृष्टेर्जगत्कारणत्वेनाभिमतं स्वाज्ञादिदृष्ट्यपह्नवपूर्वकं परमार्थदृष्टिर्जाता चेत्तदेव निष्प्रतियोगिकब्रह्ममात्रं भवति । **एतद्वै तत्** इति पूर्ववत् ॥ ८ ॥

ब्रह्मणो जीवरूपत्वं असङ्गत्वं च

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ ९ ॥
वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ १० ॥

**सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ।**
**एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ॥ ११ ॥**

एवं विस्पष्टमुक्तमपि कुतार्किकपाषण्डोपहतधियां ब्रह्ममात्रसिद्धान्ते मनो नावतरतीति परमदयावती श्रुतिर्ब्रह्ममात्रावतरणाय ब्रह्मणः सार्वात्म्यं सर्वासङ्गप्रकाशकत्वमाह—**अग्निः** इति । **यथा अग्निरेक** एव भवति । अस्मिन् भूतानीति **भुवनं प्रविष्टः** सन् स्वदाह्यदार्वादिभेदमाश्रित्य तत्र तत्र **रूपं रूपं प्रतिरूपः** दाह्यभेदमनुसृत्य बहुरूपो **बभूव. तथा सर्वेषां** भूतानामपि **अन्तरात्मा एक** एव सन् दार्वादिष्वग्निवत् ब्रह्मादिस्तम्बान्तदेहजातं प्रतिपद्य **प्रतिरूपो बभूव** । वस्तुतस्तद्बहिश्च स्वेन रूपेण सर्वभूतविलक्षण इत्यर्थः ॥ ९ ॥ किञ्च—**वायुः** इति । **भुवनं प्रविष्ट** इत्यत्र प्राणात्मना सर्वदेहेष्वनुप्रविष्टः सन् **रूपं रूपं प्रतिरूपो बभूव** इत्याद्युक्तार्थमेतत् ॥ १० ॥ यदि सर्वस्यैक एवात्मा तदा सर्वभूतलेपतः संसारित्वं स्यादित्यत आह—**सूर्य** इति । **यथा** एक एव **सूर्यः सर्वलोकस्य चक्षुः** सर्वलोकचक्षुः अनुग्राहकोऽपि **चाक्षुषैः** अशुद्ध्यादिदर्शननिमित्तैरशुद्ध्यादिसंसर्गदोषैराध्यात्मिकादिबाह्यैश्च **दोषैर्न** हि कदापि **लिप्यते** । **एक** एव **तथा सर्वभूतान्तरात्मा लोकदुःखेन न लिप्यते** । लोक**बाह्यो** ह्ययमात्मा । स्वाज्ञलोकस्तु स्वाध्यस्ताविद्याकामकर्मनिमित्तदुःखपरंपरामनुभवति । न स्वतः स्वस्य, स्वाज्ञानापाये स्वमात्रत्वात् । यथा ऊषररज्जुशुक्तिगगनेषु जलसर्परौप्यनैल्यसंसर्गभ्रमत ऊषररज्जुशुक्तिगगनानि दोषवन्तीव विभाव्यन्ते, न हि विपरीतबुद्ध्यध्यारोपितदोषैस्तेषां काचन क्षतिरस्ति, तथैव आत्मनि संसारित्वमध्यस्य लोको बंभ्रमीति । न त्वात्मयाथात्म्यज्ञः । तस्य सर्वलोकान्तर्बाह्यकलनापह्नवसिद्धब्रह्ममात्रदृक्त्वात् ॥ ११ ॥

आत्मनो ब्रह्माभेदज्ञानान्मुक्तिः

**एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति ।**
**तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषाꣳ सुखꣳ शाश्वतं नेतरेषाम् ॥**

नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम् ॥

इतश्च ब्रह्ममात्रास्त्युपायमाह– एक इति। स्वाज्ञादिदृष्टिमोहे सत्यप्यात्मा **एक** एव निष्प्रतियोगिकमवशिष्यते। स हि स्वाज्ञदृष्ट्या सर्वज्ञः परमेश्वरो भवति। सर्वस्वतन्त्रः सोऽप्येक एव। न तत्समोऽधिको वान्योऽस्ति। यद्वशे स्वारोपिताविद्यापदं वर्तते स **वशी**। तत्र हेतुः **सर्वभूतान्तरात्मेति**, सर्वलोकहिताहितप्रवृत्तिनिमित्तान्तर्यामिस्वरूपत्वात्। सोऽयमीश्वरः स्वात्मानमखण्डैकरस**रूपमपि** तूलान्तःकरणाविद्यापरिकल्पितनानाविधनामरूपोपाधिभेदानुवृत्त्या **बहुधा** बहुप्रकारं **यः करोति**, सर्वस्वतन्त्रेश्वरस्याचिन्त्यशक्तित्वात्। **ये धीराः तमात्मस्थं** सर्वभूतहृदयाकाशाभिव्यक्तं वस्तुतो निरावृतपरमार्थदृष्ट्या स्वातिरिक्तसर्वापह्नवसिद्धं ब्रह्म स्वमात्रमिति **अनुपश्यन्ति** श्रुत्याचार्यप्रसादतो विनिवृत्तबाह्यान्तर्दृष्टीनां **तेषामेव शाश्वतं** निरतिशयसुखं भवति। **नेतरेषाम्**। सदाद्यावृतदृष्टीनां स्वात्मभूतमपि सुखं प्रतिभाति। न च "तमात्मस्थं" इत्यत्र कुण्डबदरवदाधारत्वं वाच्यं, तस्याकाशवदमूर्तत्वात्। न ह्याधेयत्वमाधारत्वं वास्ति। आधेयस्य शशविषाणवदलब्धात्मकत्वेन नाधारत्वसिद्धिः। निरधिष्ठानं ब्रह्ममात्रमवशिष्यत इत्यर्थः ॥ १२ ॥ स्वाज्ञदृष्टिप्रसक्तानित्यत्वाचेतनत्वबहुत्वादिमोहे सत्यसति नित्यचेतन एक एव। स्वज्ञदृष्ट्या तदज्ञानफलमप्याह—**नित्य** इति। स्वाज्ञदृष्ट्या **नित्यानां** पृथिव्यादीनामपि **नित्यः** स्वसत्तातिरिक्तसत्तावैरल्यात्। पृथिव्यादीनां तथा **चेतयितॄणां** ब्रह्मादिस्तम्बान्तप्राणिनामपि **चेतनः**। यथा अनग्नीनामयसां दाहकत्वमग्निनिमित्तं तथा ब्रह्मादिस्तम्बान्तगतचेतयितृत्वं शुद्धचैतन्यनिमित्तम्। नित्यचैतन्यस्वभावात्मा **एक** एव सन् **बहूनां** कामिनामकामिनां च तत्तद्भावानुरोधेनानायासेन **कामान् यो विदधाति** प्रयच्छति **तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां शान्तिः शाश्वती नेतरेषाम्**। स्वातिरिक्तशान्तेः स्वमात्रत्वेन शाश्वतत्वमुपपद्यते यस्याः सेयं शान्तिः ॥ १३ ॥

ब्रह्मणः सुखरूपत्वं चिद्रूपत्वं च

**तदेतदिति मन्यन्तेऽनिर्देश्यं परमं सुखम् ।**
**कथं नु तद्विजानीयां किमु भाति विभाति वा ॥ १४ ॥**
**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।**
**तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १५ ॥**

स्वेतरेषामनेवंविधानां ब्रह्ममात्रसुखस्यानिर्देश्यत्वेऽप्यधिकार्यनधिकारिदृष्टेः निर्देश्यानिर्देश्यवत्तत्सुखं भातीत्याह—**तत्** इति । व्याविद्धैषणात्रयाः केचन यतयो यदनात्मापह्नवसिद्धात्ममात्रसुखमवाङ्मानसगोचरत्वेन **अनिर्देश्यमपि तदेतत् परमं सुखं** [1]प्रत्यक्षं इति **मन्यन्ते** । न हि मन्यन्त इति संशयोक्तिः, सर्वापह्नवसिद्धं ब्रह्म [2]निष्प्रतियोगिकस्वमात्रमिति निर्देशस्य निस्संशयार्थत्वात् । तादृशं ब्रह्म ब्रह्मविद्वरीयांस इव **कथं नु** केन प्रकारेण **तत्** ब्रह्मसुखमहं **विजानीयाम्** ?

समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत् सुखं लभेत् ।
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥

इति श्रुतिसिद्धब्रह्मविद्वरीयसाधिगतसुखमिदमित्थमिति कथं बुद्धिविषयमापादयेयम् ? इत्यर्थः । तद्वेदनहेतुसम्यज्ज्ञानवैरल्यात् । यदि त इव मम "ब्रह्ममात्रमसन्न हि" इति श्रुतिसिद्धसर्वासदपह्नवसिद्धसन्मात्रसम्यज्ज्ञाने जातेऽपि **किमु** तत्सुखं **भाति न वा** ? इत्याशङ्कायां तादृशसम्यज्ज्ञानं जातं चेत् सर्वापह्नवसिद्धं ब्रह्म भाति स्वमात्रमिति **विभाति** चेत्यर्थः, "सुविभातं सकृद्विभातं" इति श्रुतेः ॥ १४ ॥ यदेवं भातं तत् केन भास्यमानं सत् भाति ? इत्याशङ्क्य तस्य स्वाज्ञविकल्पितसूर्याद्यवभासकत्वेन भारूपमात्रतां व्यनक्ति—**न तत्र** इति । **न** हि **तत्र** भामात्रे ब्रह्मणि लोकदृष्ट्या सर्वावभासकः **सूर्योऽपि भाति** ।

[1] "प्रत्यक्षं" नास्ति—उ १.

[2] निष्प्रतियोगिकमिति स्वमात्रनिर्देशस्य—उ १.

तत्र प्रकाशयतीत्यर्थः। तथा **न हि चन्द्रतारकाणि। नेमा** [1]**विद्युतो भान्ति। कुतोऽयं** अस्मद्गोचरः **अग्निः** भाति? इत्यत्र—

न तत्र चन्द्रार्कवपुः प्रकाशते न वान्ति वाताः सकला देवताश्च।
स एष देवः कृतभावभूतः स्वयं विशुद्धो विरजः प्रकाशते॥

इति श्रुतेः। यन्निष्प्रतियोगिक[2]भामात्रमवशिष्यते तन्नैरपेक्ष्येण सूर्यादिः स्वतो भातीत्यत आह—**तमेव भान्तं** इति। यथा अग्निसंयोगाज्जलादि-र्दहन्तमग्निमनुसृत्य दहति तथा निमित्तमन्तरेण **भान्तं तमेव** परमात्मानं **अनु** अनुसृत्य सूर्यादिः **भाति** अवभाति, न स्वतः। **तस्यैव भासा** सूर्यादिघटान्तं जगत् **इदं सर्वं विभाति** इत्यत्र—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम्।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्॥

इति स्मृतिः। स्वकार्यसूर्यादिघटान्तगतस्वभायाः स्वानतिरिक्तत्वेन स्वतोऽवगम्यते ब्रह्मणो भारूपमात्रत्वम्। तत् कथं यस्य कस्यचित् भास्यं भवति? स्वभास्यभासकतानुपपत्तेः। तद्विपर्यये घटादिरपि भासकतां भजेत्। न ह्येतदस्ति। तस्माद्भारूपमात्रं ब्रह्मेति सिद्धम्॥ १९॥

---

# षष्ठी वल्ली

### ब्रह्मणः संसारमूलत्वम्

[3]ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः।
तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते।
तस्मिँल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन—एतद्वै तत्॥ १॥

[1] विद्युतोऽपि—उ १. [2] भावमात्रं—उ १. [3] ऊर्ध्वमूलोऽर्वाक्शाखः—मु.

[1]भारूपमात्रं ब्रह्म अस्ति चेत् तत् किं न सर्वैः दृश्यते ? अतो न हि तत् भारूपमात्रं ब्रह्म अस्तीत्याशंक्य स्वकार्यविचित्रविश्वदर्शनात् तत्कारणतया सन्मात्रं ब्रह्मास्तीति मन्तव्यं, "पश्यतेहापि सन्मात्रमसदन्यत्" इति श्रुतेः। निरावृतानां सन्मात्रत्वेन भासते। तद्विपरीतानामुलूकस्थानीयत्वेन प्रचण्ड-मध्याह्नमार्ताण्डवद्भासमानभामात्रं ब्रह्म न हि दृश्यते, तेषां स्थूलदृष्टित्वात्। तदङ्गीकृतसंसारवृक्षनिरूपणेन तन्मूलं ब्रह्मास्तीति तैरपि निर्णेतुं शक्यमिति तन्निर्णयायेयं वल्ली प्रारभ्यते—**ऊर्ध्वमूल** इत्यादिना। यत्तद्विष्णोः परमं पदं निष्प्रतियोगिकतया स्वमात्रमवशिष्यते तस्य सर्वोन्नतत्वेनोर्ध्वत्वमुक्तम्। न हि तत्रासल्लौकिकाद्यष्टदृष्टिमोहः प्रसरेत्। वस्तुतस्तथाप्यनादिसिद्धस्वाज्ञस्वज्ञदृष्टिमवष्टभ्य स्वाविद्यापदतत्कार्यारोपापवादाधिकरणं वा ऊर्ध्वमुच्यते। सत्येव भित्तिस्थानीये ब्रह्मणि चित्रस्थानीयविश्वरचना उपपद्यते। यत एवमतः स्वातिरिक्तारोपाधि-करणम् ऊर्ध्वं ब्रह्म। तदेव हि मूलं यस्य संसारवृक्षस्य सोऽयं **ऊर्ध्वमूलः**। अविकल्पानुज्ञैकरसादिविश्वविश्रान्तात्मावासयोग्यतुर्यस्वापादिजाग्रज्जाग्रदन्ता ह्यवा-क् शाखा यस्य अविद्यापदवृक्षस्य सोऽयं **अवाक्शाखः**। श्वस्तिष्ठतीति विश्वासार्हः श्वस्थः। स विश्वासो यत्र न लभ्यते सोऽयं **एषोऽश्वत्थः**। [2]सकारलोप-श्छान्दसः। परमार्थदृष्ट्या सत्कल्पोऽपि स्वाज्ञदृष्ट्या **सनातनः**। स्वाज्ञान-कालमारभ्य स्वज्ञानावधिप्रवृत्तत्वात् सनातनत्वम्। इत्थंभूताविद्यापदाश्वत्थो यत्रानुवृत्तेर्व्यावृत्तस्तदनुवृत्तचैतन्यं हि तन्मूलं तत्कल्पनास्पदत्वात्। अश्वत्थ-कल्पनाया अवस्त्वाश्रयत्वेन वस्तुनो वस्त्वास्पदत्वानुपपत्त्या यन्निरधिष्ठानं ब्रह्ममात्रमवशिष्यते **तदेव शुक्रं** भारूपमात्रत्वात्। तन्मात्रतयोपबृंहणात् **तदेव ब्रह्म**। तन्मात्रावस्थानलक्षणकैवल्यामृतमपि **तदेवेत्युच्यते**। **तस्मिन्** परमार्थसत्ये ब्रह्मणि स्वाज्ञादिदृष्ट्या स्वातिरिक्तात्मत्वसत्यत्वव्यावहारिकत्वप्रातिभासिकत्वादि-रूपेण लोक्यन्त इति **लोकाः समाश्रिताः** सन्तस्ते **सर्वे** स्वोत्पत्तिस्थिति-लयेष्वपि **तदु** ब्रह्म नातिवर्तन्ते, मृत्सत्तातिरिक्तसत्ताविरलघटादिवत् ब्रह्म-सत्तातिरिक्तसत्तावैरल्यात्। "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव

[1] भावरूप—उ १.  [2] विसर्गलोपः—उ १.

सन्यम्" इति श्रुत्यनुरोधेन **कश्चनापि** विकारः **तदु** ब्रह्म **नात्येति** नातिवर्तते । वाचारम्भणविकृतेः परमार्थदृष्ट्या लब्धात्मकत्वेन स्वप्रकृत्या ब्रह्ममात्रमवशिष्यते । एतद्वै तत् इत्युक्तार्थं ब्रह्म अस्त्येवेत्यर्थः ॥ १ ॥

ब्रह्मणोऽग्न्यादिप्रवृत्तिः

यदिदं किञ्च जगत्सर्वं प्राण एजति निःसृतम् ।
महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति ॥ २ ॥
भयादस्याग्निस्तपति भयात्तपति सूर्यः ।
भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः ॥ ३ ॥

कथं पुनर्विश्वमूलत्वेन ब्रह्मास्तित्वं ब्रवीषि ? असतः सद्धेतुत्वावगमात्, "असतः सज्जायेत" इति श्रुतेः असदेव ब्रह्मेत्याशंक्यासतः सद्धेत्वाभासानुवादिश्रुतेः "सदेव सोम्येदमग्र आसीत्" इत्यादिश्रुतिबाधितत्वेन विश्वमूलं ब्रह्मास्त्येव । यद्विज्ञानसमकालममृतत्वं श्रूयते तदस्तीत्यवगन्तव्यमित्याह—**यदिदं** इति । सत्येव **प्राणे** परमकारणभूते ब्रह्मणि **यत्किञ्च** किञ्चित् इदंकारार्हं **जगत् सर्वं** अचेतनमपि **एजति** चलति । तत्तत एव **निस्सृतं** सत् नियमेन प्रचलति । तदेतज्जगत्कारणम् । **महद्भयं** महच्च तत् बिभेत्यस्मादिति भयं चेति **वज्रमुद्यतं** वज्रोद्यतकरेन्द्रशासनभृत्यवत् सेश्वरं जगदविश्रान्तं स्वव्यापृतौ प्रवर्तते । तत्प्रवृत्तिनिमित्तं ब्रह्म अस्त्येव । प्रवर्तनीयविषयाभावतस्तन्निमित्तापाये निर्निमित्तं निष्प्रतियोगिकब्रह्ममात्रमवशिष्यत इति **ये** ब्रह्मविद्वरीयांसो **विदुरेतत्** ब्रह्म तद्वेदनसमकालं **तेऽमृताः** विदेहमुक्ता **भवन्ति** इत्यर्थः । "ज्ञानसमकालमेव मुक्तः" इति श्रुतेः ॥ २ ॥ कथं पुनस्तद्भयात् सेश्वरं जगत् प्रवर्तत इत्यत आह—**भयात्** इति । **अस्य** परमेश्वरस्य **भयादग्निस्तपति** । **भयात्तपति सूर्यः** । अस्य **भयादग्निसूर्येन्द्रवायुमृत्यवोऽपि** तच्छासनानुकरणं प्रति नित्यमनुधावन्ति । नासति तच्छासके तत्प्रवृत्तिर्नियमेनोपपद्यते ।

वातादयो महासत्त्वाः स्वतन्त्रा बाहुशालिनः ।
यस्य भीत्या प्रवर्तन्ते स्वे स्वे कर्मणि भृत्यवत् ॥

इति श्रुतेः भयकारणमीश्वराख्यं ब्रह्मास्त्येवेत्यर्थः ॥ ३ ॥

ब्रह्मज्ञानान्मुक्तिः तदज्ञानाद्बन्धश्च

इह चेदशकद्बोद्धुं प्राक् शरीरस्य विस्रसः ।
ततः [1]सर्गेषु लोकेषु शरीरत्वाय कल्पते ॥ ४ ॥

इहैव भयकारणं ब्रह्मयाथात्म्यं ज्ञातव्यम् । अन्यथा भवपतनं स्यादित्याह—**इह चेत्** इति । स्वशरीरस्य **विस्रसः** विस्रंसनात् पतनात् **प्राक् इहैव** भयहेतुब्रह्मयाथात्म्यं श्रुत्याचार्यमुखतो **बोद्धुं** अवगन्तुं **अशकत्** शक्तः **चेत्** सोऽयमिहैव संसारबन्धनान्मुच्यते । न हि चेत् अशकत् बोद्धुं **ततो**ऽनवबोधात् [2]स्वाज्ञानात् येषु सृज्यन्ते स्रष्टव्याः प्राणिनो भूरादयो लोकास्तेषु **सर्गेषु लोकेषु शरीरत्वाय** नानाविधशरीरभावाय **कल्पते** नानायोनिषु शरीरपरम्परामनुभवति । तस्मात् स्वशरीरपतनादर्वागेव भयकारणयाथात्म्यावगतये यत्नः कर्तव्य इत्यर्थः ।

इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः ।

इति श्रुतेः ॥ ४ ॥

लोकान्तरेभ्य इहैवात्मज्ञाने विशेषः

यथादर्शे तथात्मनि यथा स्वप्ने तथा पितृलोके ।
यथाप्सु परीव ददृशे तथा गन्धर्वलोके छायातपयोरिव ब्रह्मलोके ॥

[1] सर्वेषु.—अ २.
[2] स्वज्ञानात्—उ १.

इह लोकान्तरे वा आत्मदर्शनस्यावान्तरफलभेदमाह—**यथादर्शे** इति। **यथा आदर्शे** प्रतिबिम्बं पश्यति लोकः **तथा इह आत्मनि** अन्तःकरणे दर्पणवन्निर्मले वेदान्तश्रवणादिसाधननिष्पन्नब्रह्मयाथात्म्यदर्शनं भवतीत्यर्थः। **यथा** जाग्रद्वासनाजनित**स्वप्ने** सर्वमविविक्ततयास्पष्टतया भाति, **तथा** कर्मफल-भोगासक्तिजनक**पितृलोके** श्रवणप्रसक्तेरभावात्। प्रमादतो यदि स्यात् तत्रास्पष्ट-मेवात्मतत्त्वं जानाति। अविभक्तावयवमात्मरूपं **यथाप्सु परिदृदृशे इव** न हि यथावत् परिदृश्यते **तथा**स्पष्टमेवात्मदर्शनं, **गन्धर्वलोके** गन्धर्वलोकः सर्वलोकोपलक्षणार्थः; सर्वत्रास्पष्टमवगम्यत इत्यर्थः। **ब्रह्मलोके** तावत् **छायातपयोरिव** अत्यन्तविस्पष्टमवगम्यते। सोऽयं ब्रह्मलोको हि दुष्प्रापः, समुच्चितज्ञानकर्मयोगसंन्याससाध्यत्वात्। यत एवमतः सर्वथा इहास्मिन् लोक एव बुद्धिमता स्वात्मदर्शनश्रवणादियत्नः कर्तव्य इत्याशयः॥ ५॥

इन्द्रियेभ्य आत्मनो विवेचनम्

**इन्द्रियाणां पृथग्भावमुदयास्तमयौ च यत्।**
**पृथगुत्पद्यमानानां मत्वा धीरो न शोचति॥ ६॥**

तथा चेत् केन प्रकारेणात्मा ज्ञातव्यः? किं वा तदधिगमे प्रयोजनं? तत्राह—**इन्द्रियाणां** इति। आकाशादिस्वस्वकारणेभ्यः **उत्पद्यमानानां** श्रोत्रादीन्द्रियाणां स्वस्वविषयमात्रग्रहणव्यग्रत्वेन मिथो विरुद्धत्वात् सदैकरस-ब्रह्मण इन्द्रियेभ्यः **पृथग्भावं** इन्द्रियजातवैलक्षण्यं तथा जाग्रत्स्वापावस्थायत्तौ इन्द्रियाणां उत्पत्तिप्रलयौ नात्मन इति विदित्वा **धीरो** ब्रह्मविद्वरीयान् अनात्मापह्नवसिद्धात्मा निष्प्रतियोगिकस्वमात्रमिति **मत्वा** शोचनीयविषया-भावात् **न शोचति** "तरति शोकमात्मवित्" इति श्रुतेः॥ ६॥

इन्द्रियादीनामात्मनः प्रत्यग्रूपता

**इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम्।**
**सत्त्वादथ महानात्मा महतोऽव्यक्तमुत्तमम्॥ ७॥**

**अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च ।**

**यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति ॥ ८ ॥**

स्वपृथग्भूतेन्द्रियाणामयमात्मा न भवतीत्याकाङ्क्षायामाह--- **इन्द्रियेभ्य** इति । पराग्भावमापन्नश्रोत्रादीन्द्रियेभ्यो मनसः प्रत्यग्रूपत्वादिन्द्रियापेक्षया मनसः परत्वम् । एवं सर्वत्र योजनीयम् । **मनसोऽपि** बुद्धिशब्दवाच्यसत्त्व**मुत्तमम्** । **अथ** अनन्तरं तस्मात् **आत्मा** हिरण्यगर्भ उत्तमः । तदपेक्षया **अव्यक्तम्** ॥ ७ ॥ तदपेक्षया **पुरुषः परः व्यापको** हि, व्यापकायमानाकाशादेरपि कारणत्वात् । वस्तुतस्तु **अलिङ्गः** स्वाधेयप्रपञ्चनिरूपिताधारादिलिङ्गविरलत्वात्, "यस्य लिङ्गं प्रपञ्चं वा" इति श्रुतेः । स्वसिद्धिलिङ्गायमानस्वातिरिक्तं जगत् यत्रात्मत्वसत्यत्वव्यावहारिकत्वप्रातिभासिकत्वादिरूपेण लिङ्ग्यते गम्यते तल्लिङ्गम् । तद्यत्रापह्नवपदं भजति सोऽयमलिङ्गः । तस्य **एवच**-शब्दाभ्यां निष्प्रतियोगिकत्वं द्योत्यते । **जन्तुः** पुमान् श्रुत्याचार्यमुखतो यथावत् यत्स्वरूपं **ज्ञात्वा** तज्ज्ञानसमकालं स्वातिरिक्तास्तिताभ्रमाद्विमुच्यते । किञ्च स्वाधिष्ठेयशरीरादौ परदृष्ट्या स्थिते गते सत्यपि **अमृतत्वं च गच्छति** ।

जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः ।
उपाधिनाशाद्ब्रह्मैव सन् ब्रह्माप्येति निर्द्वयम् ॥ इति,
उपाधिसत्त्वेऽप्यभिमानहानाद्ब्रह्मात्मविद्ब्रह्म भवेन्न चान्यः । इति,
अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ।

इति च श्रुतेः, प्रभोक्तेः, स्मृतेश्च । सोऽयमलिङ्गः परमात्मेत्यर्थः ॥ ८ ॥

ब्रह्मणो मनोमात्रगम्यत्वम्

**न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।**

**हृदा [1]मनीषा मनसाभिक्लृप्तो य [2]एनं विदुरमृतास्ते भवन्ति ॥९॥**

[1] मनीषी—मु. [2] एतद्विदुः—उ, मु, अ २.

यद्येवमलिङ्गः तदा तदधिगमोपायः कः? इति तत्राह—**न संदृश** इति। अस्य आत्मनो **रूपं संदृशे** सम्यक् दर्शनं ज्ञानं तद्विषयो घटादिप्रपञ्चः तत्र **न तिष्ठति**। **कश्चन** कश्चिदपि लोकः **एनं** प्रकृतं आत्मानं **चक्षुषा** चक्षुरिन्द्रियोपलक्षितसर्वेन्द्रियेणापि **न पश्यति** शृणोति वा, न शृणोति न स्पृशतीत्यर्थः। तर्हि कथं तमात्मानं पश्येल्लोकः? इति तत्राह—हृदेति। हृच्छब्देन तत्स्थबुद्धिरुच्यते। **हृदा** बुद्ध्या। संकल्पादिवृत्तिमन्मनसो **नियन्तृत्वेन ईष्टे** इति मर्नाट् तया **मनीषा**। धियस्सत्त्वासत्त्वसत्त्वपरिणामरूपाखण्डाकारवृत्त्या तस्या अपि स्वातिरिक्तहेतोस्तदपह्नवसिद्धं ब्रह्ममात्रमिति मननरूपेण **मनसा** सम्यग्ज्ञानेन **अभिकॢप्तः** अभिप्रकाशितः सन् स्वमात्रतया ज्ञातुं शक्यत इति वाक्यशेषः। एवं **एनं** स्वमात्रतया **ये विदुस्ते** तद्वेदनसमकालं **अमृता भवन्ति**, "तमेवं ज्ञात्वा विद्वांस इहैवामृता भवन्ति" इति श्रुतेः ॥ ९ ॥

विषयादिव्यावृत्तमनसो ब्रह्मणि स्थिरता

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥ १० ॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥ ११ ॥

हृदा मनीषा मनसा च कथं पुनरात्मा ज्ञातुं शक्यः? हृन्मनीष्मनसां जाग्रज्जाग्रदादिस्वापतुर्यान्तद्वादशावस्थाव्यापृतत्वात्। तद्व्यापृत्यर्हावस्थाया अपि आत्मावरणभेदप्रतीत्यवास्तवत्वादिदोषदुष्टत्वात्। जाग्रज्जाग्रदादेरेवंदोषदुष्टत्वेऽपि तुर्यावस्थाप्रविभक्तजाग्रदाद्यवस्थात्रयं निर्दुष्टम्। तदवष्टभ्य हृदादिरात्मानं जानातीति चेन्न; तस्यापि समानदोषवत्वात्। तस्य ब्रह्ममात्रवेदनोपायत्वेऽपि द्वादशावस्थावदात्मावरणादेस्तुल्यत्वात् कथं हृदादिरात्मानं जानाति? इति शङ्कायां तुर्यावस्थाप्रविभक्तावस्थात्रयावलम्बनतो हृदादीनात्मा ज्ञातुं शक्य इत्याह—

**यदा** इति। तुर्यजागरणे स्वान्तर्बहिर्विजृंभितविषयाभाससत्त्वेऽपि "ब्रह्मैवेदं सर्वं" इति श्रुत्यनुरोधेन ज्ञानार्थत्वात् **पञ्च ज्ञानानि** श्रोत्रादीनि शब्दादिपञ्चविषयाभासाग्रहणपूर्वकं ब्रह्माकारतया स्वयं **अवतिष्ठन्ते**। हृच्छब्दवाच्येयं तदवस्था तुर्यजाग्रदुच्यते। "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इति श्रुत्यर्थप्रत्यगभिन्नं ब्रह्मास्मीति **यदा** श्रोत्रादिव्यापारोपरतिपूर्वकं संकल्पादिवृत्तिजाताग्रहणपूर्वकं च बाह्यान्तर्व्यापारोपरमणब्रह्मसाक्षात्कारपरिणतमनसैवाभासनिर्विकल्पकतया मनोऽवतिष्ठते सेयमवस्था मनीट्छब्दवाच्यतुर्यस्वप्न उच्यते।

नैतज्जाग्रन्न च स्वप्नः सङ्कल्पानामभावनात्।
सुषुप्तभावो नोऽप्येतदभावाज्जडतास्थितेः ॥

इति श्रुत्यनुरोधेन यदा [1]केवलेन निर्विकल्पायमानगुणसाम्यात्मना ध्यात्रादित्रिपुटीं विस्मृत्य स्वातिरिक्तबाह्यान्तःकलनां शून्यत्वेन यया बुद्ध्यते सैव बुद्धिः। तद्वृत्तिसमुच्चयार्थः चशब्दः। वृत्तिमद्बुद्धिः पुनर्व्युत्थानावधि **न विचेष्टति** न विचेष्टत इति यत् सेयमवस्था ब्रह्ममात्रसिद्धान्तमननविशिष्टमनःशब्दवाच्यतुर्यसुप्तिरुच्यते। इत्थंभूतहृदादिना जाग्रज्जाग्रदादिपञ्चदशावस्थान्तर्व्यष्टिसमष्टितदुभयैक्यावस्थारोपापवादाधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तचतुष्पञ्चदशकलनापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रतया या स्थितिरवशिष्यते ब्रह्मविद्वरीयांसः **तामेव परमां गतिमाहुः** इत्यत्र—

पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः। इति श्रुतिः,
जाग्रज्जाग्रदाद्यवस्थाद्विषट्कं स्वाज्ञगोचरम्।
तथा तुर्यजागरादित्रयं स्वज्ञानिगोचरम् ॥
स्वमात्रबोधतो ज्ञाज्ञकलनापह्नवादथ।
जाग्रज्जाग्रदादिपञ्चदशावस्थाभ्रमः कुतः ॥
तदभावे विश्वविराडोत्रादिकलनापि न।
ततः सदा पराकाष्ठतया शिष्येऽहमच्युतः ॥

[1] केवलनिर्विकल्पायमान—उ १.

इति स्मृतिश्च मानम्। इत्थंभूतहृदाद्यवष्टभ्य ब्रह्मविद्वरीयांसो यथावज्जानन्तीति भावः ॥ १० ॥ योगिन एतादृशीमवस्थामस्पर्शयोगं ब्रह्माहुरित्याह—तां इति। या ब्रह्ममात्रतयावस्थितिरुक्ता तामेव ब्रह्मविद्वरीयांसोऽस्पर्शयोगाख्यं ब्रह्मेति मन्यन्ते। ब्रह्ममात्रस्थितेर्ब्रह्ममात्रत्वेन प्रभवाप्ययविरलत्वात् तदुपायत्वेन स्वबाह्यान्तःकलनारोपापवादाधिकरणत्वेन स्वाज्ञस्वज्ञदृष्टिभ्यां स्थिर ईश्वरे प्रत्यगभिन्नपरमात्मनि वा तद्भावापत्त्या **स्थिरां** स्वस्वविषयविस्मरणपूर्वकं कर्मज्ञानेन्द्रियान्तःकरणधारणां वा **योगमिति मन्यन्ते**। यदैवं साधनसपन्नस्तदा ब्रह्मवित् **अप्रमत्तः** प्रमादवर्जितो **भवति**। न हि विस्मृतविषयकरणग्रामस्थिरधारणावतः प्रमादस्पर्शनमस्ति। तस्मात् स्थिरवस्त्विन्द्रियधारणात् प्रागेवाप्रमादो विधीयते। यद्वा—यदैव स्थिरवस्त्विन्द्रियधारणा तदानीमेवाप्रमत्तत्वम्, "अप्रमत्तस्तदा भवति" इत्युक्तत्वात्। कथमेवं? इत्यत आह—**योगो हि** इति। अस्पर्शयोगेतरयोगपूगोऽनुसन्धानराहित्यादिनवविघ्नानवकाशप्रदानात् प्रभवति। अनुसन्धानादेरवकाशप्रदानादप्ययमेति। एवं **प्रभवाप्ययौ** वा भजतीति संभूतिप्रलयधर्मक इत्यर्थः। यावदुपेययोगाधिगमस्तावदप्रमादः कर्तव्य इत्यत्र—

समाधौ क्रियमाणे तु विघ्नान्यायान्ति वै बलात्।
अनुसन्धानराहित्यमालस्यं भोगलालसम् ॥
लयस्तमश्च विक्षेपस्तेजः स्वेदश्च शून्यता।
एवं हि विघ्नबाहुल्यं त्याज्यं ब्रह्मविशारदैः।
ब्रह्मवृत्त्या हि पूर्णत्वं तया पूर्णत्वमभ्यसेत् ॥

इत्यादिश्रुतिर्मानम् ॥ ११ ॥

ब्रह्मणःसद्रूपत्वम्

**नैव वाचा न मनसा प्राप्तुं शक्यो न चक्षुषा।**
**अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ॥ १२ ॥**

अस्तीत्येवोपलब्धव्यस्तत्त्वभावेन चोभयोः ।
अस्तीत्येवोपलब्धस्य तत्त्वभावः प्रसीदति ॥ १३ ॥

यदि बुद्धिचेष्टाविषयं तदा इदं तदिति विशेषतः शक्यमवधारयितुम् । "बुद्धिश्च न विचेष्टति" इति यदा बुद्ध्यादिचेष्टोपरमो भवति तदा ग्राहकाभावात् ग्राह्यमपि नास्त्येव । करणगोचरस्यैवास्तितप्रसिद्धेस्तद्विपरीतस्यासत्त्वं युक्तम् । अतो न योगाकङ्क्षास्ति । योगफलानिष्पत्तेर्नास्ति ब्रह्मेत्युपलब्धव्यम्—इत्याशङ्क्य यदवगतेः करणग्रामापह्नवपूर्वकत्वात् तथाविधं ब्रह्मासल्लौकिकाद्यष्टदृष्टिगोचरकरणग्रामात्मत्वसत्यत्वव्यावहारिकत्वप्रातिभासिकत्वादिमोहे सत्यसत्यपि तत्सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रतयास्तीत्येवावगन्तव्यमित्याह—**नैव** इति । वाक्चक्षुर्ग्रहणं कर्मज्ञानेन्द्रियोपलक्षणार्थम् । मानसग्रहणं चान्तःकरणोपलक्षणार्थम् । **न** हि व्यष्टिसमष्टिकरणजालेनात्मा ज्ञातुं **शक्यः** निर्विशेषत्वात् । तथापि जगन्मूलत्वेन यदवगम्यते तद्ब्रह्म अस्त्येव, कार्योत्पत्त्यादेः सद्धेतोर्गमकत्वात् । तथा हि—इदं कार्यं जगत् सद्बुद्धिनिष्ठामर्हति । या हि विषयप्रविलापनबुद्धिः सा सत्प्रत्ययगर्भैव प्रविलीयते । सदसद्वस्तुयाथात्म्याधिगमे बुद्धिर्हि नः प्रमाणपदं भजति । यदि न स्याज्जगतो मूलं तदा कार्यमसत्तया गृह्येत । न हि तदस्ति । इदं सदिदं सदिति सत्त्वेन हि गृह्यते । यथा घटादिकार्यं मृदाद्यन्वितं तस्माज्जगन्मूलत्वेनात्मावगन्तव्यः । कथमेतदवगन्तव्यं? इत्यत आह—**अस्ति** इति । कार्यनिरूपितकारणतामापन्नं जगन्मूलं वस्तुतः कार्यकारणकलनापह्नवसिद्धं ब्रह्ममात्रं वा **अस्तीति ब्रुवतोऽन्यत्र**—

निर्हेतुकमिदं कार्यमभावान्तं विलीयते ।

इति नास्तिकेऽसल्लौकिकादौ कथंकारं ब्रह्मयाथात्म्यं **उपलभ्यते**? तस्मादसल्लौकिकतदन्तर्गतासद्वादिपक्षमुन्मूल्य जगन्मूलत्वेनात्मा **अस्तीत्युपलब्धव्यः** । यदा तु वाचारम्भणश्रुत्या कार्यप्रलयात् कारणतासिद्ध्या कार्यकारणकलनापह्नवसिद्धं ब्रह्मावशिष्यते, तदा तत् स्वमात्रत्वेनोपलब्धं स्यात् । तेन रूपेणा-

ध्यात्मास्तीत्युपलब्धव्यः । **उभयोः** इति निर्धारणार्था षष्ठी । पूर्वं कार्योपलब्धितो जगन्मूलत्वेनोपलब्धस्य अथ स्वातिरिक्तजगदपह्नवसिद्धब्रह्ममात्रत्वेन **उपलब्धस्य** च तयोरुभयोः सोपाधिकनिरुपाधिकयोरस्तित्वभावयोः **तत्त्वभावः** विदिताविदित-कलनात्मकजाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तचतुष्पञ्चदशकलनापह्नवसिद्धनिष्प्रति - योगिकब्रह्ममात्रावस्थितिः,

अन्यदेव तद्विदितादथो अविदितादधि ।

"नेति नेति," "न ह्येतस्मादिति," "नेत्यन्यत् परमस्ति," "तदेतद्ब्रह्मा-पूर्वमनपरमनन्तरमबाह्यम्," "अयमात्मा ब्रह्म सर्वानुभूः," "पश्यतेहापि सन्मात्रमसदन्यत," "ब्रह्ममात्रमसन्न हि,"

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्रमम् ॥

इत्यादिश्रुत्यर्थविशारदब्रह्मविद्वरिष्ठस्य **प्रसीदति** । ॥ १२, १३ ॥

ब्रह्मज्ञानात्सर्वकामलयः

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि[1]श्रिताः ।**
**अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ १४ ॥**

निष्प्रतियोगिकब्रह्ममात्रावगतेः सर्वकामापह्नवपूर्वकत्वात् परमार्थदर्शिनो न हि कामलयापेक्षास्ति । सविशेषविश्वमूलब्रह्मविद एव सविशेषहेतुकामजातापह्नव-समकालममृतत्वं स्यादिति निगमयति—**यदा सर्वे** इति । **यदा** यस्मिन् काले **अस्य** सविशेषब्रह्मविदः श्रुत्याचार्यप्रसादतो "ब्रह्ममात्रमसन्न हि" इत्यादिश्रुत्यनु-रोधेन स्वातिरिक्तसर्वासत्प्रपञ्चापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति ज्ञानं **जायते**, तज्ज्ञानसमकालं तत्प्राक् स्वाज्ञादिदशायां स्वातिरिक्ताविद्यापदतत्कार्यजात-

[1] स्थिताः—अ २.

मात्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन शून्यत्वेन वास्तीति काम्यन्त इति कामाः स्वाज्ञानादिवृत्तयो **हृदि** अन्तःकरणगुहायामाश्रिताः। " सर्वेषां कामानां हृदयमेकायनमेव " इति श्रुतेः। ते **सर्वे कामाः** यदा **प्रमुच्यन्ते** विशीर्यन्तेऽपह्नवपदं भजन्ते **अथ** तदुत्तरक्षणं तदा **मर्त्यः** प्रबोधात् प्राङ्निष्ठं मर्त्यत्वं प्रबोधसमकालं स्वातिरिक्तमृत्योरपह्नवादमृतः सन् **अमृतो भवति**। **अत्र** इहैव सर्वकामापह्नवसिद्धं **ब्रह्म** स्वमात्रमिति **समश्नुते**, गन्तव्यदेशवैरल्यात्। निरिन्धनज्योतिरिव स्वमात्रतां भजति। ब्रह्मैव भवतीत्यर्थः ॥ १४ ॥

ज्ञानिनःकाममूलानां विनाशः

**यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।**
**अथ मर्त्योऽमृतो भवत्येतावदनुशासनम् ॥ १५ ॥**

कथं पुनः सर्वे कामाः प्रमुच्यन्ते? विश्वविश्वादितुर्यबीजान्तगतभेदग्रन्थीनां काममूलत्वेन विद्यमानत्वात्—इत्याशङ्क्य तत्काममूला ग्रन्थयोऽपि ब्रह्ममात्रज्ञानसमकालं कामजातेन साकमपह्नवं यान्ति। ततो निष्प्रतियोगिकामृतो भवतीत्याह—**यदा सर्व** इति। **यदा** विश्वविश्वादितुर्यबीजान्तगतभेदग्रन्थिः ओत्रोत्राद्यविकल्पानुज्ञैकरसान्तचैतन्यज्ञानतः सामान्यतो भिद्यते, जाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तचतुष्पञ्चदशकलनाहेयांशापह्नवसिद्धतुर्यतुर्यचैतन्यं निष्प्रतियोगिकस्वमात्रमिति बोधतस्तु स्वकार्यकामजातेन साकं व्यष्टिसमष्ट्यनुगतचैतन्यभेदाभेदग्रन्थयो निश्शेषं प्रकर्षेण **भिद्यन्ते**। यदा **हृदया**श्रया **ग्रन्थयो** भिन्ना अपह्नवतां गताः, **अथ** तदपह्नवोत्तरक्षणं **मर्त्योऽमृतो भवति** इति **एतावदेव** ईशाद्यष्टोत्तरशतवेदान्तपूगोऽनुशास्तीति **अनुशासनम्**। "नातः परं किञ्चिदस्ति," "नातः परं वेदितव्यं हि किञ्चित्" इति श्रुतेः ॥ १५ ॥

ब्रह्मोपासकस्य शरीरादुत्क्रमणमार्गः

**शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका ।**
**तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥**

ब्रह्ममात्रप्रबोधनिरस्तकामतन्मूलग्रन्थेर्विदुषो न गतिरिह विद्यते, "अत्र ब्रह्म समश्नुते" इत्युक्तत्वात्। येषां स्वातिरेकेण लिङ्गशरीराभासोऽस्तीति भ्रान्तिः तान् प्रति "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते, ब्रह्मैव सन् ब्रह्माप्येति" इति श्रुत्यन्तराच्च, ये तु तद्विपरीताः समुच्चयानुष्ठातारो योगिनः स्वाश्रमाचारसंपन्ना यतयो विद्यन्ते ये तु तद्विपरीताः संसारभाजस्तेषामेव गतिद्वयमुच्यते। अगतिमद्विद्यास्तुतये वा। पुरोक्ताग्निविद्याफलप्राप्तिद्वारो वक्तव्य इति मन्त्रारम्भः—**शतं** इति। **शतं च** इडादिशतसङ्ख्याका **नाड्यः** सुषुम्ना **एका च** ब्रह्मनाडी पुरुषस्य **हृदया**श्रयत्वेन ताः सर्वा नाड्यो विद्यन्ते।

> एकोत्तरं नाडिशतं तस्य मध्ये परा स्थिता।
> सुषुम्ना तु परे लीना विरजा ब्रह्मरूपिणी॥

इति श्रुत्यनुरोधेन एकोत्तरशतनाडिमध्ये काचन सुषुम्ना नाम नाडी पुरुषस्य मूलाधारमारभ्य **मूर्धानं** भित्त्वा **अभिनिस्सृता**। विद्वान् देहावसानसमये स्वहृदयेऽन्तःकरणं वशीकृत्य कुण्डलिनीशक्त्यग्निप्राणैस्साकं सुषुम्नां प्रापयित्वा **तया** सुषुम्नानाड्या मूलाधारादिषट्चक्रभेदनपूर्वकं तत **ऊर्ध्वं** सहस्रारचक्रं विद्यते तदपि भित्त्वा स्वान्तःकरणेन साकं सूर्यद्वारेणोर्ध्वं ब्रह्मलोकं **आयन्** गच्छन्,

> आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते।

इति स्मृत्यनुरोधेनापेक्षिकं **अमृतत्वं** ब्रह्मलोकं **एति**। तत्र ब्रह्मलोकगतानुपमभोगान् भुक्त्वा चतुष्पादैक्यसमये ब्रह्मणा सह मुख्यममृतत्वमेति। **विष्वक्** नानानाडीद्वारीभूतगतयः **अन्या** [1]उत्क्रमणे सति संसारप्रतिपत्तये **भवन्ति** इत्यर्थः॥ १६॥

[1] उत्क्रमणे—उ १.

आत्मनः शुद्धब्रह्मरूपता

अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ।
तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण ।
तं विद्याच्छुक्रममृतं तं विद्याच्छुक्रममृतमिति ॥ १७ ॥

इदानीं सर्ववल्ल्यर्थमुपसंहरति—**अङ्गुष्ठमात्र** इति। भ्रान्त्या जन्मनाशवन्तोऽपि वस्तुतो जन्मनाशविरला जनाः। तेषां **जनानां हृदये** तत्रत्याङ्गुष्ठमानाकाशावच्छेदेन **अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा** तत्रत्यवृत्तिकदम्बभावाभावप्रकाशकत्वेन तद्वृत्त्यपवादाधारत्वेन च **सन्निविष्टः**। उक्तार्थमेतत्। **तं** एतं प्रत्यञ्चमात्मानं **स्वात्** आत्मीयशरीरत्रयात् मुञ्जान्तस्स्थेषीकामिव **धैर्येण** अप्रमादेन **प्रवृहेत्** पृथक्कुर्यात् शरीरत्रयापवादाधिकरणत्वेन जानीयादित्यर्थः। पराक्शरीरत्रयापवादसापेक्षाधारप्रत्यक्त्वापाये शरीरत्रयोपलक्षितस्वाविद्यापदतत्कार्यकलनापह्नवसिद्धं परमात्मानं निष्प्रतियोगिकस्वमात्रमिति विद्वान् **विद्यात्** जानीयादित्यर्थः। द्विर्वचनमुपनिषत्समाप्त्यर्थम्। इतिशब्दस्तु ब्रह्मविद्यास्तुत्यर्थः ॥ १७ ॥

विषयसंग्रहेणाख्यायिकासमाप्तिः

मृत्युप्रोक्तां [1]नचिकेतोऽथ लब्ध्वा विद्यामेतां योगविधिं च [2]कृत्स्नम् ।
ब्रह्मप्राप्तो विरजोऽभूद्विमृत्युरन्योऽप्येवं यो विदध्यात्ममेव ॥ १८ ॥

आख्यायिकामुपसंहरति—**मृत्युप्रोक्तां** इति। **नचिकेतो** नाम बालको मृत्योर्वरप्रसादात् **मृत्युप्रोक्तामेतां विद्यां** सोपकरणसफलकृत्स्नयोगविधिं च **लब्ध्वा** ज्ञात्वा तज्ज्ञानसमकालं रजआदिगुणत्रयविरलो **विरजः** स्वातिरिक्तास्तिताभ्रान्तिमृत्युवैरल्यात् **विमृत्युः** भूत्वा सर्वापह्नवसिद्धं ब्रह्म स्वमात्रधिया

[1] नाचिकेतः—अ २.

[2] कृत्स्नाम्—अ २.

प्राप्नोतीति **ब्रह्मप्राप्तः** ब्रह्मैव भवतीत्यर्थः । न केवलं नचिकेता एव ब्रह्मप्राप्तः, किं तु यथोक्तसाधनसंपन्नश्चेत् **अन्योऽपि** मुनिर्नाचिकेतवदात्मनः स्वाविद्यापदस्यापह्नवतां गतस्याधि तत् अध्यात्मं ब्रह्ममात्रं वेद सोऽपि विरजो विमृत्युर्भूत्वा **अध्यात्मं** ब्रह्ममात्रमेव भवतीत्यर्थः ॥ १८ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
कठवल्लीविवरणं लिखितं गुर्वनुग्रहात् ॥
कठवल्लीविवरणसमग्रग्रन्थविस्तरः ।
अष्टसप्तत्यधिशतसहस्रं परिकीर्तितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे तृतीयसङ्ख्यापूरकं
कठवल्ल्युपनिषद्विवरणं सम्पूर्णम् ।

---

# प्रश्नोपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

## प्रथमः प्रश्नः

सुकेशादीनां प्रश्नः

ॐ सुकेशा च भारद्वाजः शैब्यश्च सत्यकामः सौर्यायणी च गार्ग्यः कौसल्यश्चाश्वलायनो भार्गवो वैदर्भिः कबन्धी कात्यायनस्ते हैते ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः ॥ १ ॥

सुकेशादिशिष्यपूगपिप्पलादार्ययोरिह ।
यत्प्रश्नोत्तरसंसिद्धं तन्निष्कलपदं भजे ॥

इह खल्वथर्वणवेदप्रविभक्तपिप्पलादशाखामस्तकसकलनिष्कलपदप्रकाशकमन्त्रब्राह्मणात्मकप्रश्नोपनिषदारभ्यते । मुख्यया वृत्त्या उपनिषच्छब्देन ब्रह्मविद्योच्यते । इयं पिप्पलादवत् सर्वज्ञभावमापन्नैराचार्यैरेव वक्तव्या, चिरकालगुरुकुलवासब्रह्मचर्यादिसाधनसंपन्नैरेव ग्राह्येति गुरुशिष्यप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । सकलनिष्कलपदबुभुत्सया सुकेशादयः शिष्याः पिप्पलादं स्वेप्सि-

तद्विषयप्रश्नान् पृच्छन्तीति श्रुतिराह—सुकेशा चेत्यादिना। नामतः **सुकेशा च**, भरद्वाजस्यापत्यं **भारद्वाजः**। शिबेरपत्यं **शैब्यः च**, नामतः **सत्यकामः**। सूर्यस्यापत्यं सौर्यः। तदपत्यं सौर्यायणिः। **सौर्यायणीति च** प्रयोगः छान्दसः, गर्गगोत्रजो **गार्ग्यः**। नामतः **कौसल्यश्च**, आश्वलायनस्यापत्यं **आश्वलायनः**। भृगोः गोत्रापत्यं **भार्गवः**, विदर्भादुद्भवो **वैदर्भिः**। नामतः **कबन्धी**, कत्यस्यापत्यं **कात्यायनः** इति युवप्रत्ययः। **ते हैते** ब्रह्म-वेदपराः साङ्गाध्यायिनः शबलब्रह्मपरमतात्पर्यवन्तो वा **ब्रह्मपराः** ब्रह्म-वेदोक्तकर्मनिष्ठाः। तत्फलशबल**ब्रह्मनिष्ठा** वा। यन्नित्यं तदेव विज्ञेयमिति **परं ब्रह्म अन्वेषमाणाः** तदधिगमाय **एष ह वै तत्सर्वं वक्ष्यतीति** श्रवणतो दर्शनाद्वा तदियत्तां विज्ञाय **ते ह समित्पाणयः** समिद्भारभरितहस्ताः सन्तः **भगवन्तं** सर्वज्ञकल्पं समाधिविरमे स्वाश्रमस्थपिप्पलमत्तीति **पिप्पलादं** मुनिवर्यं **उपसन्नाः** ॥ १ ॥

पिप्पलादस्य प्रतिवचनम्

तान् ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं वत्स्यथ यथाकामं प्रश्नान् पृच्छत यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इति ॥ २ ॥

तान् वीक्ष्य मुनिराहेत्याह—**तानिति**। **स** हि भगवान् पिप्पलादः सुकेशादीन् दृष्ट्वा यथावत् ब्रह्मविद्यावधारणहेतुब्रह्मचर्यादिसाधनन्यूनतामवगम्य **तान्** एवं उपगतान् सुकेशादीन् **उवाच**। **ह** किल। ब्रह्मविद्याग्रहणधारणयोग्यतापादकसाधनजालं वो नालम्। पूर्ववत् **भूय एव** पुनरपि स्वेन्द्रियसंयमरूप**तपसा** दर्शनाद्यष्टांगमैथुनविरल**ब्रह्मचर्येण** च,

दर्शनं स्पर्शनं केलिः कीर्तनं गुह्यभाषणम्।
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥

एतन्मैथुनमष्टांगं प्रवदन्ति मनीषिणः ।
विपरीतं ब्रह्मचर्यमनुष्ठेयं मुमुक्षुभिः ॥

इति श्रुतेः । मदुक्तवाक्य **श्रद्धया** चास्तिक्यबुद्ध्या,

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥

इति स्मृत्यनुरोधेन **संवत्सरमात्रं वत्स्यथ**। तदनन्तरं यो यस्य कामः तं अनतिक्रम्य **यथाकामं** यथायोग्यं यस्य यद्विषये जिज्ञासा तद्विषयानेव **प्रश्नान् पृच्छत** । भवत्पृष्टार्थं **यदि** वयं **विज्ञास्यामः**—इत्यत्र यदिशब्दोऽनुद्धतत्वप्रदर्शनार्थः—भवत्पृष्टं **सर्वं वक्ष्याम इति** प्रश्नार्थपूरणदृढोक्तेः । न हि संशयार्थ इत्यवसीयते । तथैव सुकेशादयः संवत्सरमात्रं तन्निकटे ब्रह्मचर्यमूषुरित्यर्थः ॥ २ ॥

कबन्धिनः प्रश्नः

**अथ कबन्धी कात्यायन उपेत्य पप्रच्छ । भगवन् ! कुतो ह वा इमाः प्रजाः प्रजायन्ते ? इति ॥ ३ ॥**

ततः किमित्यत आह—**अथेति** । **अथशब्दः** स्वानुष्ठितब्रह्मचर्यानन्तर्यार्थः । षट्सु कश्चित् **कबन्धी कात्यायनो** नाम स्वाचार्यं **उपेत्य पप्रच्छ** । किमिति ? हे **भगवन् इमाः** ब्राह्मणाद्याः **प्रजाः कुतः** कारणात् ह **वै प्रजायन्त इति** । ह वा इति वृत्तार्थस्मरणार्थौ निपातौ ॥ ३ ॥

पिप्पलादस्य प्रतिवचनम्

**तस्मै स होवाच प्रजाकामो वै प्रजापतिः स तपोऽतप्यत स तपस्तप्त्वा स मिथुनमुत्पादयते । रयिं च प्राणं चेत्येतौ मे बहुधा प्रजाः करिष्यत इति ॥ ४ ॥**

शबलविद्याकर्मसमुच्चयफलबुभुत्सया अनेनायं प्रश्नः कृत इति आचार्य आहेत्याह—**तस्मा** इति। एवं पृष्टवते कात्यायनाय **स** पिप्पलाद **उवाच**। किमिति? स्रष्टव्याः बहवः प्रजा इति **प्रजाकामो वै प्रजापतिः** सिसृक्षमाणः स्थावरजङ्गमपतित्वात् तत्तत्प्राणिकर्मानुरोधेन कल्पादौ सर्वात्मा **स** हिरण्यगर्भः श्रुतिप्रकाशितार्थविषयकल्पान्तरप्राणिजातभावानुकूल**तपोऽतप्यत** आलोचनं कृतवान्। **स** एवं **तपः तप्त्वा** सम्यगालोच्य स्वसिसृक्ष्यमाणसृष्टिसाधनत्वेन रयिप्राणात्मकं इदं **मिथुनमुत्पादयते**। उत्पादितवान् इत्यर्थः। किं तन्मिथुनमिति? **रयिं च प्राणं चेति**। रयिः सोमः। अन्नं प्राणोऽग्निरत्ता। तौ **एतौ** अग्नीषोमावत्रन्नभूतौ **मे** मम **बहुधा प्रजाः करिष्यतः** इत्येवं सञ्चिन्त्य सूर्याचन्द्रमसौ अकल्पयत् उत्पादयामासेत्यर्थः ॥ ४ ॥

मायाशबले मिथुनत्वोपपादनम्

**आदित्यो ह वै प्राणो रयिरेव चन्द्रमा रयिर्वा एतत्सर्वं यन्मूर्तं चामूर्तं च तस्मान्मूर्तिरेव रयिः ॥ ५ ॥**

तन्मिथुनस्वरूपं विशदयति—**आदित्य** इति। **आदित्य** एव **प्राणः**। अत्ताग्निः। **रयिरेव चन्द्रमाः** अन्नं चेति गुणप्रधानकृतभेदवैशिष्ट्यात्। अग्निश्चान्नं च प्रजापतिरेकं मिथुनम्। पुनः रय्यादित्यस्वरूपं विशदयति [र]यिरिति। **रयिः** अन्नमेव **एतत्सर्वम्**। किं तत्? **यत् मूर्तं** स्थूलं **अमूर्तं** सूक्ष्मं [च]। मूर्तामूर्ते अपि रयिरेव। तत्प्रविभक्तामूर्तात् अन्यत् मूर्तरूपं तद्रयिः अन्नम्। [प्र]धानाद्यमात्रत्वात् अमूर्तोऽपि प्राणोऽत्ता। तदतिरिक्तं सर्वं अद्यम्। [त]त्कथम्? ॥ ५ ॥

प्राणस्यात्तृत्वं तदतिरिक्तस्याद्यत्वं च

**अथादित्य उदयन् यत्प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान् रश्मिषु संनिधत्ते। यद्दक्षिणां यत्प्रतीचीं यदुदीचीं यदधो**

यदूर्ध्वं यदन्तरा दिशो यत्सर्वं प्रकाशयति तेन सर्वान् प्राणान् रश्मिषु संनिधत्ते ॥ ६ ॥

अथादित्यः प्राणिनां चक्षुर्गोचरत्वेनोदयन् स्वात्मानं आविर्भावयन् प्रतिदिनं स्वप्रकाशेन **यत् प्राचीं दिशं प्रविशति तेन** स्वात्मव्याप्त्या स्वात्मभूतान् **प्राच्यान् प्राणान् रश्मिषु** स्वव्याप्तिमत्किरणेषु **सन्निधत्ते** स्वात्मसत्तया सन्निवेशयतीत्यर्थः। तथैव **यद्दक्षिणां यत्प्रतीचीं यदुदीचीं यदधो यदूर्ध्वं यदन्तरा दिशो** यच्चान्यत्**सर्वं प्रकाशयति तेन** सर्वत्र स्वव्याप्त्या सर्वदिगवस्थितान् **प्राणान् रश्मिषु सन्निधत्ते** ॥ ६ ॥

अग्निप्राणयोर्विश्वरूपत्वं मन्त्रसम्मतिश्च

स एष वैश्वानरो विश्वरूपः प्राणोऽग्निरुदयते। तदेतदृचाभ्युक्तम् ॥ ७ ॥

विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेकं तपन्तम्।
सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्यः ॥८॥

स एष प्राणो अत्ता **वैश्वानरः**, विश्वात्मत्वात् **विश्वरूपः**, **प्राणोऽग्निश्च** अत्ता प्रत्यह**मुदयते** सर्वा दिशः स्वात्मसात्कुर्वन् उद्गच्छतीत्यर्थः। एतत् मन्त्रेणाप्युक्तमित्याह—**तदेतदिति** ॥ ७ ॥ वैराजरूपत्वात् **विश्वरूपं** किरणपुञ्जत्वात् **हरिणं** स्वयंजातवेदतदर्थज्ञानवत्त्वात् **जातवेदसं** सर्वप्राणाश्रयत्वात् **परायणं** सर्वप्राणिचक्षुरनुग्राहकत्वात् **ज्योतिः** अद्वितीयत्वात् **एकं** विश्वतापकृत्वात् **तपन्तं** सूर्यमेव ब्रह्मविदः स्वात्मानं जानन्ति। कोऽसौ सूर्य इत्यत आह—**सहस्ररश्मिः** इति। सहस्रमित्युपलक्षणार्थं अनन्तरश्मिरित्यर्थः। स्वविकल्पितप्राणिभेदानुरोधेन **शतधा** अनेकधा **वर्तमानः प्राणः** सूत्रात्मा **एष सूर्यः प्रजानां** चक्षुर्विषयं प्राप्त इव **उदयति** उदेति ॥ ८ ॥

मिथुनस्य प्रजास्रष्टृत्वं पितृयाणमार्गश्च

**संवत्सरो वै प्रजापतिस्तस्यायने दक्षिणं चोत्तरं च । तद्ये ह वै तदिष्टापूर्ते कृतमित्युपासते ते चान्द्रमसमेव लोकमभिजयन्ते । त एव पुनरावर्तन्ते तस्मादेते ऋषयः प्रजाकामा दक्षिणं प्रतिपद्यन्ते । एष ह वै रयिर्यः पितृयाणः ॥ ९ ॥**

यासौ मूर्तिः अन्नं प्राणः अत्ता आदित्यः तदेतत् सर्वं एकं मिथुनम् । तत् कथं प्रजाः करिष्यते? इत्यत आह—**संवत्सर** इति । तदेतन्मिथुनं **संवत्सरो वै** कालात्मा **प्रजापतिः** संवत्सरस्य कालनिर्वर्त्यत्वात् । सूर्यादिनिर्वर्त्याहोरात्र-समुदायो हि संवत्सरः । कालात्मकप्रजापतेस्तदनन्यत्वात् । रयिप्राणमिथु-नात्मक एवासावित्युच्यते । संवत्सराख्यप्रजापतेः **तस्य** षण्मासलक्षण-**दक्षिणोत्तरायणे** भवतः । केवलकर्मिणां ज्ञानकर्मसमुच्चयानुष्ठातॄणां च दक्षिणोत्तरेण पथा संचरन् सविता लोकान् विदधत् । कथम्? इत्यत आह—**तदिति** । ब्राह्मणादिषु ये इह कर्मिणः इष्टं यागादि पूर्तमारामादि च **इष्टापूर्ते तत्** काम्यधिया **कृतं** अनित्यमेव **उपासते** । नाकृतं नित्यम् । **तद्येह वै तदिष्टे**त्यत्र द्वितीयः तच्छब्दः क्रियाविशेषणार्थः । ते हि केवलकर्मिणः चान्द्रप्रजापतिमिथुनां-शान्नभूत**चान्द्रमसमेव लोकमभिजयन्ते** । यावत्कृतं तत्रोषित्वा कृतक्षयात् **त एव पुनरावर्तन्ते** "तत इमं लोकं हीनतरं वा विशन्ति" इति श्रुतेः । यस्मादेष वै रयिरन्नं यः पितृयाणोपलक्षितश्चन्द्रो भवति **तस्मादेते ऋषयः प्रजाकामाः** प्रजार्थिनो गृहस्थाः स्वकृतं **दक्षिणं** दक्षिणायनोपलक्षितं चन्द्रमेव **प्रतिपद्यन्ते** ॥९॥

सगुणविद्यावतामर्चिरादिप्राप्तिः

**अथोत्तरेण तपसा ब्रह्मचर्येण श्रद्धया विद्ययात्मानमन्विष्या-दित्यमभिजयन्ते । एतद्वै प्राणानामायतनमेतदमृतमभयमेतत्परायणमे-तस्मान्न पुनरावर्तन्त इत्येष निरोधः । तदेष श्लोकः ॥ १० ॥**

**अथ** अनन्तरं केचन ज्ञानकर्मसमुच्चयानुष्ठातारो ब्राह्मणा इन्द्रियजयात्मकेन **तपसा** यथोक्त**ब्रह्मचर्येण श्रद्धया** शबलब्रह्म**विद्यया** च **उत्तरेण** अर्चिरादि-मार्गेण प्रजापत्यंशं प्राणमत्तारं आदित्यं जगच्चक्रप्रवर्तकं **अन्विष्य** अयमहमस्मीति विदित्वा **एतद्वै** एतदेव सर्व**प्राणानामायतनं** आश्रयः अविनाशित्वात्। **एतदमृतम्** चन्द्रवत् पुनरावृत्तिवैरल्यात्। **अभयमेत**देव विद्यावतां कर्मिणां च **परायणं** परा गतिरिति च दृढनिश्चयेन **आदित्यमभिजयन्ते** अभि-प्राप्नुवन्ति। **न पुनरेतस्मान्निवर्तन्ते** "न च पुनरावर्तते" इति श्रुत्यन्तरात्। यथेतरे केवलकर्मिणः। यस्मादयमुत्तरायणमार्गोऽविदुषां **निरोधः** दुष्कर्म-दृढपटेनावृत इत्यर्थः, न ह्येते संवत्सरात्मानं अभिप्राप्नुवन्ति; अतोऽयं कालात्मा प्रजापतिः अविदुषां निरोधः तिरोहित इति यावत्। उक्तार्थ एष श्लोको भवतीत्याह—**तदेष श्लोक** इति। मन्त्रो भवतीत्यर्थः ॥ १० ॥

सगुणब्रह्मणो लोकाधारत्वम्

**पञ्चपादं पितरं द्वादशाकृतिं दिव आहुः परे अर्धे [1]पुरुषिणम्।**
**अथेमे अन्य उ परे विचक्षणं सप्तचक्रे षडर आहुरर्पितमिति ॥ ११ ॥**

हेमन्तशिशिरावेकीकृत्यास्य संवत्सरात्मनः प्रजापतेरादित्यस्य वसन्तादि-पञ्चर्तुपादनिर्वर्त्यत्वात् यस्य पञ्चर्तवः पादा इव पादा भवन्ति तं **पञ्चपादं,** सर्वजनयितृत्वात् **पितरं, द्वादशमासाकृतिं** "द्वादशमासास्संवत्सरः" इति श्रुतेः। **दिवो** द्युलोकात् अत्युन्नतत्वेन **परे अर्धे** स्थाने तृतीयस्यां दिवि "तृतीयस्यामितो दिवि सोम आसीत्" इति श्रुतेः। यद्रश्मिषु पुरुषं उदकं विद्यते तं **पुरुषिणं** उदकवन्तं "याभिरादित्यस्तपति रश्मिभिः ताभिः पर्जन्यो वर्षति" इति श्रुतेः। तं कालविद एवं **आहुः। अथेदमेवान्ये** कालविदः सर्वलोकोपरि सर्वस्मात् परत्वेन विद्यमानत्वात् उ परं, यद्भूरादिसप्तव्याहृतिषु भूरादिजगच्चक्रमनुक्रमते तत् सप्तचक्रं, सप्तचक्रगतिमतः कालात्मनः सर्वलोकाश्रयत्वात्। यत्र रथनाभौ

[1] पुरीषिणं—मु.

अरा इव वसन्तादिषड्तवः समाश्रिताः तत् षडरं, तस्मिन् **उ परे सप्तचक्रे षडरे** संवत्सरादिकालपरिच्छिन्ने ब्रह्मलोके सर्वलोकारोपाधिकरणतया सर्वज्ञत्वादिगुणविशिष्टत्वेन **विचक्षणं** कालात्मानं ईश्वरं विद्यमानं पञ्चपादद्वादशाकृतिसंवत्सरात्मकप्रजापतिरेवाग्नीषोमात्मना जगतः कारणं **आहुः** ॥ ११ ॥

संवत्सरात्मनः प्रजापतेर्मासेषु समाप्तिः

**मासो वै प्रजापतिस्तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणस्तस्मादेते ऋषयः शुक्ल इष्टिं कुर्वन्तीतर इतरस्मिन् ॥ १२ ॥**

यत्र विश्वं परिभ्रममि स हि संवत्सरात्मा प्रजापतिः स्वावयवमासे परिसमाप्यत इत्याह—**मास** इति। संवत्सरावयवमास एव **प्रजापतिः**। मिथुनात्मकमासप्रजापतेः **तस्य** आद्यावयवः **कृष्णपक्ष एव रयिः** अन्नं चन्द्रमाः। अपरस्तु शुक्लपक्षः **प्राणः** सूर्यो अत्ता अग्निः भवति। यतोऽत्रात्मविदः सर्वं शुक्लपक्षाभिधानप्राणमेव पश्यन्ति **तस्मादेते** प्राणदर्शिनो **ऋषयः** कृष्णपक्षेऽपि **इष्टिं** यागं **कुर्वन्तः** शुक्लपक्ष एव **कुर्वन्ति**। न हि तैः प्राणाग्निव्यतिरेकेण कृष्णपक्षो दृश्यते। यस्मात् **इतरे** शुक्ले **कुर्वन्तो**ऽपि प्राणं न पश्यन्ति **इतरस्मिन्** कृष्णपक्ष एव कुर्वन्ति ॥ १२ ॥

मासात्मनोऽहोरात्रे परिसमाप्तिः

**अहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं** वा **एते प्रस्कन्दन्ति। ये दिवा रत्या संयुज्यन्ते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्या संयुज्यन्ते ॥ १३ ॥**

सोऽपि मासात्मा प्रजापतिः स्वावयवाहोरात्रे परिसमाप्यत इत्याह—**अहोरात्र** इति। मासवत् **अहोरात्रो वै प्रजापतिः**। **तस्याहरेव** आदित्यः। **प्राणो**ऽत्ता अग्निः। **रात्रिरेव रयिः** अन्नं चन्द्रमाः। तत्र **ये** मूढाः **दिवा**

अहनि रतिकरणक्रिया **रत्या संयुज्यन्ते** मिथुनीभावमाचरन्ति त **एते प्राणं वा** अहरात्मानं **प्रस्कन्दन्ति** निर्गमयन्ति शोषयन्तीत्येतत्। तस्मात् एतदकर्तव्यमिति प्रासङ्गिकः प्रतिषेधः। **तद्यद्रात्रौ रत्या संयुज्यन्ते** ऋतौ भार्यागमनस्य प्रशस्तत्वात् कामिभिः कर्तव्यमित्ययमपि प्रासङ्गिको विधिः। वस्तुतस्तन्निवृत्तेरिष्टत्वात् "आसु निवृत्तिरिष्टा" इति स्मृतेः। ऋतुमात्रभार्यागमनं **ब्रह्मचर्यमेव** इत्यर्थः ॥ १३ ॥

अहोरात्रात्मनः प्रजापतेरन्नरूपत्वम्

**अन्नं वै प्रजापतिस्ततो ह वै तद्रेतस्तस्मादिमाः प्रजाः प्रजायन्त इति ॥ १४ ॥**

प्रकृतमुच्यते—स ह्यहोरात्रात्मकः प्रजापतिः व्रीहियवाद्यन्नात्मना व्यवस्थितो भूत्वा क्रमेणान्नरूपेण परिणमति—**अन्नं वै प्रजापतिः** इति। तत्कथं? **ततः** अन्नभावमापन्नप्रजापतेरेव शुक्लशोणितात्मकं प्रजोद्भूतिकारणं **रेतो** भवति। **तस्मात्** योषिति सिक्तात् रेतस **इमाः** मनुष्यादिलक्षणाः **प्रजाः प्रजायन्ते**। पुरा कात्यायनेन "कुतो ह वा इमाः प्रजाः प्रजायन्ते" इति पृष्टः तदेवं चन्द्रादित्यमिथुनादिक्रमेण अहोरात्रान्नात्रेतोद्वारेण इमाः प्रजाः प्रजायन्त इति प्रतिवचनमुक्तम् ॥ १४ ॥

प्रजापतिव्रताचरणफलम्

**तद्ये ह वै तत्प्रजापतिव्रतं चरन्ति ते मिथुनमुत्पादयन्ते।
तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितम् ॥१५॥**

प्रजापतिव्रताचरणदृष्टादृष्टफलमाह—**तदिति**। **तद्ये ह वै** गृहस्थाः ऋतुभार्यागमनात्मक**प्रजापतिव्रतं चरन्ति ते** पुत्रदुहित्रात्मकं **मिथुनमुत्पादयन्त** इति यत् तत् दृष्टफलम्। अदृष्टफलं तु इष्टापूर्तदत्तकारिणां **तेषामेव** यश्चान्द्रमसः

पितृयाणलक्षणः पुनरावृत्तिको ब्रह्मलोकः पुनः येषां यथोक्तं तपः स्नातकादिव्रत-ब्रह्मचर्यं ऋतावन्यत्रामैथुनाचरणं वा येषु अनृतविरलसत्यं प्रतिष्ठितं अव्यभिचारं विद्यते ॥ १५ ॥

वनस्थानां यतीनां च ब्रह्मलोकप्राप्तिः

**तेषामसौ विरजो ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति ॥ १६ ॥**

यः पुनरादित्योपलक्षितोत्तरायणः प्राणात्मभावः न हि चान्द्रब्रह्मलोकवत् वृद्धिक्षयादिरजस्वलो भवतीति **विरजः** शुद्धसत्त्वात्मकत्वात्। **तेषाम् असौ** ब्रह्मलोकः **येषु** मायागृहस्थेष्विव **जिह्मं** कौटिल्यं, **अनृतं** अयथार्थवचनं, पश्यतां आत्मानं यथार्थवत् प्रकाश्य अन्यथाकार्यकरणशक्तिर्हि **माया च** व्रतिवनिभिक्षुषु निमित्ताभावात् **न** विद्यते, तत्साधनानुरूपेण **तेषामसौ विरजो ब्रह्मलोकः**। केवलकर्मिणां चन्द्रलक्षणा गतिः। तद्व्यतिरिक्तानां ज्ञानकर्मसमुच्चयानुष्ठातृणां योगिनां केवलस्वाश्रमाचारपरायणयतीनां च पूर्वोक्त-ब्रह्मलोक एव परमा गतिर्भवतीति सिद्धा ॥ १६ ॥

---

## द्वितीयः प्रश्नः

वैदर्भेः प्रश्नः

**अथ हैनं भार्गवो वैदर्भिः पप्रच्छ। भगवन्! कत्येव देवाः प्रजां विधारयन्ते? कतर एतत्प्रकाशयन्ते? कः पुनरेषां वरिष्ठः? इति ॥ १ ॥**

मुख्यप्राणयाथात्म्यबुभुत्सया आचार्यं अपरः पृच्छतीत्याह **अथेति** ।
थ कात्यायनप्रश्नप्रतिवचनानन्तरं **एनं** पिप्पलादं **भार्गवो वैदर्भिः पप्रच्छ** ।
किल । तत् किम्? इत्यत आह—**कतीति** । हे **भगवन्! कत्येव देवाः**
ीरलक्षणां **प्रजां विधारयन्ते**? कर्मज्ञानेन्द्रियाणां मध्ये **कतरे** स्वमाहात्म्य-
ापनपूर्वकं **प्रकाशयन्ते**? कार्यकरणलक्षणानां **एषां को** वा **वरिष्ठः**
ानः? **इति** ॥ १ ॥

पिप्पलादस्य प्रतिवचनम्

**तस्मै स होवाच आकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रं च । ते प्रकाश्याभिवदन्ति वयमेतद्बाण-मवष्टभ्य विधारयामः ॥ २ ॥**

एवं पृष्टवते पिप्पलाद आह—**तस्मै स होवाचेति** । **आकाशो ह वा**
**देवो वायुरग्निरापः पृथिवीत्येतानि** सर्वशरीरारम्भकाणि पञ्चभूतानि
न्ति । **वाङ्मनःचक्षुःश्रोत्रादीनि** कर्मज्ञानेन्द्रियाणि कार्यरूपाणि मनआदीनि
गरूपाणि । **ते** देवाः स्वात्मनो माहात्म्यं **प्रकाश्य अभिवदन्ति** ।
[? इत्यत आह । **वयमिति** । श्रेष्ठा **वयं एतद्बाणं** कार्यकरणसंघातलक्षणशरीर-
**अवष्टभ्य** स्तम्भाः प्रासादमिव **विधारयामः** ॥ २ ॥

वाय्वादीनां वरिष्ठत्वाभिमाने मुख्यप्राणोक्तिः

**तान् वरिष्ठः प्राण उवाच मा मोहमापद्यथ । अहमेवैतत्पञ्च-धात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति ॥ ३ ॥**

अयं संघातो मया एकेन ध्रियत इति स्पर्धमानाः देवास्तिष्ठन्ति ।
स्पर्धमानेषु तेषु मुख्यप्राण एवमाह **तानिति** । एवमभिमानविशिष्टान्
**वरिष्ठो** मुख्यः **प्राण उवाच** । किमिति? स्वसामर्थ्याविवेकतया

एवं मोहं यूयं मापद्यथ। यस्मात् अहमेव एतत् पञ्चधा आत्मानं प्रविभज्य एतत् बाणं अवष्टभ्य विधारयामीति उवाच ॥ ३ ॥

अश्रद्दधानानां वाग्वादीनां श्रद्धोत्पादनम्

तेऽश्रद्दधाना बभूवुः सोऽभिमानादूर्ध्वमुत्क्रामत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रामन्ते तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रातिष्ठन्ते तद्यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते एवमस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रातिष्ठन्त एवं वाङ्मनश्चक्षुः श्रोत्रं च ते प्रीताः प्राणं स्तुन्वन्ति ॥ ४ ॥

वागादयः तद्वाक्यं न बहुमन्यन्त इत्याह—ते इति। एवमुक्तवति प्राणे ते वागादयः तद्वाक्यं अश्रद्दधाना बभूवुः इत्यर्थः। ततः किमित्यत आह—स इति। तेषामश्रद्दधानतामालक्ष्य सरोषं अभिमानात् ऊर्ध्वमुत्क्रामत इव। तस्मिन्नुत्क्रामति प्राणे अथ अनन्तरमेव इतरे सर्व एव प्राणा उत्क्रामन्ते। तस्मिंश्च प्रतिष्ठमाने अनुत्क्रामति सति सर्व एव प्रातिष्ठन्ते। तूष्णीं व्यवस्थिता भवन्तीत्यर्थः। तत्र दृष्टान्तमाह—यथेति। स्पष्टोऽर्थः। एवं स्थिते वागादयः प्राणं स्तुवन्तीत्याह—एवमिति। वागादयः प्राणवाक्याश्रद्दधानतामुत्सृज्य प्राणमाहात्म्यमवगम्य प्रीताः सन्तः एवं वक्ष्यमाणप्रकारेण स्तुन्वन्ति स्तुवन्तीत्यर्थः ॥ ४ ॥

प्राणस्य श्रेष्ठत्वोपपादनस्तुतिः

एषोऽग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायुः।
एष पृथिवी रयिर्देवः सदसच्चामृतं च यत् ॥ ५ ॥
अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितम्।

ऋचो यजूंषि सामानि यज्ञः क्षत्रं ब्रह्म च ॥ ६ ॥

प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे ।

तुभ्यं प्राण! प्रजास्त्विमा बलिं हरन्ति यः प्राणैः प्रतितिष्ठसि ॥७॥

देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा ।

ऋषीणां चरितं सत्यमथर्वाङ्गिरसामसि ॥ ८ ॥

इन्द्रस्त्वं प्राण! तेजसा रुद्रोऽसि परिरक्षिता ।

त्वमन्तरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः ॥ ९ ॥

यदा त्वमभिवर्षसि अथेमाः प्राणते प्रजाः ।

आनन्दरूपास्तिष्ठन्ति कामायान्नं भविष्यतीति ॥ १० ॥

व्रात्यस्त्वं प्राण! एकर्षिरत्ता विश्वस्य सत्पतिः ।

वयमाद्यस्य दातारः पिता त्वं मातरिश्व! नः (श्वनः) ॥ ११ ॥

या ते तनूर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि ।

या च मनसि संतता शिवां तां कुरु मोत्क्रमीः ॥ १२ ॥

प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितम् ।

मातेव पुत्रान् रक्षस्व श्रीश्च प्रज्ञां च विधेहि न इति ॥ १३ ॥

कथम्? इत्यत आह—**एष** इति। एष प्राण एव **अग्निसूर्यपर्जन्यादिरूपेण** ज्वलति **तपति** वर्षति त्रैलोक्यं पालयति। उन्मार्गगाम्यसुररक्षांसि जिघांसति। सर्वलोकांश्चेष्टयति। **एष पृथिवीरूपेण रयिरन्नं** भवति। **एष देवः सदसत्** मूर्तममूर्तं **च यत्** देवानां जीवनकारणं तत् **अमृतमपि एष** एवेत्यर्थः ॥ ५ ॥ सर्वाधिकरणं एष एवेत्याह—**अरा** इति। किं बहुना? **अरा इव रथनाभौ** श्रद्धादिनामान्तपञ्चदशकला तत्कार्यं **सर्वं** स्थितिकाले **प्राण** एव **प्रतिष्ठितम्**।

तथा **ऋचो यजूंषि सामानि** तन्निर्वर्त्यो **यज्ञश्च** सर्वपालयितृ **क्षत्रं च** यज्ञादिकर्माधिकृतं **ब्रह्म च** ब्राह्मणजातं च प्राण एव प्रतिष्ठितमित्यर्थः ॥ ६ ॥ किंच—प्रजापतिरिति । **प्रजापतिर्भूत्वा यः त्वं गर्भे चरसि** पुनः मात्रादिप्रतिरूपस्सन् **प्रतिजायसे** । प्रजापतित्वात् मातृपितृत्वं पुरैव सिद्धम् । सर्वभूतान्तर्यामित्वेन सर्वात्मासीत्यर्थः । **यः त्वं प्राणैः** चक्षुरादिभिः सह **प्रतितिष्ठसि** । तस्मै तुभ्यं हे **प्राण ! इमाः** मनुष्याद्याः **प्रजाः** चक्षुरादीन्द्रियद्वारैः **बलिं हरन्ति** ।

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।

इति स्मृत्यनुरोधेन सर्वशरीरेषु तुभ्यं बलिं हरन्तीति युक्तमित्यर्थः ॥ ७ ॥ किंच—देवानामिति । **देवानां वह्नितमोऽसि** हविःप्रापयितृत्वात् । **पितॄणां** या दीयते सा **स्वधा** अन्नम् । देवापेक्षया पूर्वभावित्वात्तस्याः प्राथम्यम् । पितृभ्योऽपि प्रापयितृत्वात् । देहधारणाद्युपकरणत्वेन **ऋषीणां** चक्षुरादीनां **चरितं** चेष्टितम् । "चक्षुषा यत्पश्यति तत्सत्यं भवति" इति श्रुत्या तदेव **सत्यं** अवितथमित्यर्थः । **अङ्गिरसां** अथर्वणां **अथर्वा** च त्वमेवा**सि** "प्राणो वाथर्वा" इति श्रुतेः ॥ ८ ॥ किंच—**इन्द्र** इति । हे **प्राण ! तेजसा इन्द्रः त्वं** संहारे स्थितौ च विष्णवभेदेन जगतः **परि** समन्तात् **रक्षिता रुद्रोऽसि** । **ज्योतिषां पतिः सूर्यो** भूत्वा त्वमेव **अन्तरिक्षे चरसि** ॥ ९ ॥ किंच—**यदे**ति । **यदा त्वं** पर्जन्यो भूत्वा **अभिवर्षसि** तदा **अन्नं** प्राप्य **इमाः प्रजाः प्राणते** स्वोचितचेष्टां कुर्वन्ति । किंच त्वदभिवर्षण-दर्शनतोऽस्माकं **अन्नं** बहु **भविष्यतीति कामाय** यथेच्छं **आनन्दरूपाः** सत्यः सुखं **तिष्ठन्ति** ॥ १० ॥ किंच—**व्रात्य** इति । "हिरण्यगर्भस्समवर्तताग्रे" इति श्रुतितः तव प्रथमजत्वात् स्वातिरिक्तसंस्कर्तुरभावात् यतः त्वं असंस्कृतोऽसि अतः त्वं **व्रात्य**स्वभावः शुद्ध इत्यर्थः । हे **प्राण ! सर्वं** एकत्रैव ऋषति गच्छति इति **एकर्षिः** त्वं सर्वप्राणिजठराश्रयप्रसिद्धया एकर्षिरग्निः,

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।

इति स्मृतेः। तथा सर्वहविः **अत्ता त्वमेव** परिदृश्यमानविश्वस्य साधुपतिः **सत्पतिः** त्वमेव। **वयं** पुनः तवादनीयहविषोऽद्यस्य **दातारः**। हे **मातरिश्व!** मातरिश्वन् **नः** अस्माकं इन्द्रियाणां **पिता त्वम्**। यद्वा—मातरिश्वनो वायोरपि त्वं पिता। अतस्ते सर्वलोकपितृत्वं सिद्धमित्यर्थः॥ ११॥ किंच—**या ते** इति। किं बहुनोक्तेन? हे **प्राण! या ते तनूः** वक्तृत्वेन **वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि या च मनसि** च सम्यगास्थिता—वदनश्रवण-दर्शनसङ्कल्पादिरूपेणेत्यर्थः—**तां तनूं शिवां** स्थिरां **कुरु**। यतः तव उत्क्रमणेनास्माकं अशोभनं भवेत् अतः कदापि त्वं **मोत्क्रमीः** उत्क्रमणं माकर्षीरित्यर्थः॥ १२॥ किं च—**प्राणस्येति**। तमेता ऋचो अभिवदन्ति—प्राणायतनमितीति। किं बहुना? अस्मिन् लोके यदुपभोगजातमस्ति **तत्सर्वं प्राणस्यैव वशे** वर्तते। **त्रिदिवे** स्वर्गेऽपि **यत्** उपभोग्यं **प्रतिष्ठितं** तस्यापि प्राणाधीनत्वेन स एव तस्येशिता। अतो **मातेव पुत्रान्** अस्मान् **रक्षस्व**। ब्रह्मक्षत्रगत**श्रीश्च** त्वस्थितिनिमित्त**प्रज्ञां च नः** अस्माकं **विधेहीति**। यतः सर्वं प्राणायतनं अतः तमेव प्राणं एता ऋचो मन्त्राः सर्वात्तारं ईश्वरं अभिवदन्ति। तस्मात् प्राणभावमापन्नेश्वर एव सर्वकारणम्। तज्ज्ञानेन तत्पदप्राप्तिः अर्थात् सिद्धा॥ १३॥

---

# तृतीयः प्रश्नः

आश्वलायनस्य प्राणविषयो विशेषप्रश्नः

अथ हैनं कौसल्यश्चाश्वलायनः पप्रच्छ। भगवन्! कुत एष प्राणो जायते? कथमायात्यस्मिञ्छरीरे? आत्मानं वा प्रविभज्य

**कथं प्रातिष्ठते? केनोत्क्रमते? कथं बाह्यमभिधत्ते? कथमध्यात्मं? इति ॥ १ ॥**

अथापर आचार्यं प्राणयाथात्म्यं पृच्छतीत्याह—**अथेति** । **अथ** वैदर्भिप्रश्नप्रतिवचनानन्तरं **एनं** आचार्यं **कौसल्यश्चाश्वलायनः पप्रच्छ** । किमित्यत आह—**कुत इति** । हे **भगवन्**! कात्यायनवैदर्भिप्रश्नप्रतिवचनप्रख्यापितमहिम्नोऽपि प्राणस्य संहतत्वेन कार्यत्वं द्योत्यते । अतस्त्वां परिपृच्छामि । **कुतः** कारणादयं **प्राणो जायते**? **स कथमस्मिन् शरीरे आयाति**? शरीरग्रहणमस्य किन्निमित्तम्? स हि शरीरे प्रविष्टः सन् **आत्मानं प्रविभज्य कथं प्रातिष्ठते** प्रतितिष्ठति? **केन** हेतुना अस्मात् शरीरात् **उत्क्रमते**? **कथं** वा स्वबहिर्भूतं **बाह्यं** अधिभूतं अधिदैवतं च **अभिधत्ते**? **कथमध्यात्मं** स्वयाथात्म्यं वाभिधत्ते? ॥ १ ॥

आश्वलायनप्रशंसापूर्वकमात्मनः प्राणोत्पत्तिकथनम्

**तस्मै स होवाच अतिप्रश्नान् पृच्छसि ब्रह्मिष्ठोऽसीति तस्मात्तेऽहं ब्रवीमि ॥ २ ॥ आत्मन एष प्राणो जायते । यथैषा पुरुषे छायैतस्मिन्नेतदाततम् । मनोकृतेनायात्यस्मिञ्छरीरे ॥ ३ ॥**

इत्येवं पृष्ट आचार्य आह—**तस्मा** इति । एवं पृष्टवते **तस्मै स** आचार्यं **उवाच** । दुर्विज्ञेयत्वेन यदि प्राणः प्रश्नार्हः तादृशस्य जन्मादि त्वं यतः पृच्छसि अतः **अतिप्रश्नान् पृच्छसि** । अतिशयेन त्वं **ब्रह्मिष्ठोऽसि** । अतः तुष्टोऽहम् । **तस्मात्तेऽहं** त्वया यत् पृष्टं तत् **ब्रवीमि** । जागरूकः सन् तत् शृणिवत्यर्थः ॥ २ ॥ अनात्मापह्नवसिद्धात् **आत्मनः** स्वाङ्गदृष्ट्या **एष प्राणो जायते** । तत्र दृष्टान्तमाह । **यथेति** । **यथा** लोके शिरःपाण्यादिमति **पुरुषे** निमित्तभावमापन्ने **एषा** नैमित्तिकी **छाया** जायते तथा **एतस्मिन्** ब्रह्मणि परमार्थसत्ये **एतत्** छायास्थानीयप्राणाख्यानृतं **आततं** कल्पितम् ।

कुत एष प्राणो जायते? इति प्रश्नस्य सदृष्टान्तं उत्तरं उक्तम्। कथमायात्यस्मिन् शरीरे? इति प्रश्नोत्तरमाह—**मन** इति। **मनोकृतेन** कामसंकल्पादिवृत्तिनिष्पन्न-कर्मनिमित्तेन **अस्मिन शरीरे आयाति** आगच्छति।

तदेव सक्तस्सहकर्मणैति लिङ्गं मनो यत्र निषिक्तमस्य।

इति श्रुतेः ॥ ३ ॥

प्राणस्यात्मविभागेन शरीरे सन्निधानम्

**यथा सम्राडेवाधिकृतान् विनियुङ्क्त एतान् ग्रामानेतान् ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान् प्राणान् पृथक्पृथगेव संनिधत्ते ॥ ४ ॥ पायूपस्थेऽपानं चक्षुः श्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रातिष्ठते मध्ये तु समानः। एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवन्ति ॥ ५ ॥**

आत्मानं वा प्रविभज्य कथं प्रातिष्ठते? इति प्रश्नोत्तरमाह—**यथेति**। **यथा** लोके **सम्राट्** राजा **एतान् ग्रामान् एतान् ग्रामान् अधितिष्ठस्वेति** ग्रामाद्यधिकृतान् **विनियुंक्ते** इति दृष्टान्तः। दार्ष्टान्तिकस्तु—**एवं** मुख्यः **प्राणः** स्वात्मभेदानुरूपं **इतरांश्चक्षुरादीनपि** यथास्थानं **पृथक् पृथगेव सन्निधत्ते** ॥ ४ ॥ तत्र विभागमाह—**पाय्विति**। पायुश्चोपस्थश्च पायूपस्थं तस्मिन् **पायूपस्थे** स्वांशं **अपानं** मूत्रपुरीषोत्सर्गं कुर्वन् तिष्ठेति सन्निधत्ते विनियुङ्क्ते। तथा **चक्षुःश्रोत्रे** मुखं च नासिका च ताभ्यां **मुखनासिकाभ्यां** सम्राट्स्थानीयः **प्राणः स्वयं** निर्गच्छन् **प्रातिष्ठते** प्रतितिष्ठति। प्राणापानयोः **मध्ये** नाभ्यां **तु** समानवायुस्थितिमेत्य **एष** एव **एतद्धुतमन्नं** जाठराग्नौ प्रक्षिप्तं **समं** नयतीति **समानः**। **तस्मात्** अशितपीतेन्धनवर्धितजाठराग्नेः हृदयदेशमाक्रान्तात् **एताः** सप्तसंख्याका **अर्चिषो** दीप्तयः शीर्षण्यः प्राणद्वारा श्रोतव्यद्रष्टव्यादिविषयप्रकाशकतया निर्गच्छन्त्यो **भवन्ति** ॥ ५ ॥

प्राणस्य व्यानात्मना सर्वशरीरव्याप्तिः

हृदि ह्येष आत्मा । अत्रैतदेकशतं नाडीनां तासां शतं शतमेकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्राणि भवन्त्यासु व्यानश्चरति ॥ ६ ॥

कमलाकारमांसपिण्डपरिच्छिन्ने **हृदि** हृदयाकाशे **एष आत्मा** लिङ्गशरीरावच्छिन्नः सन् वर्तते । **अत्रैव** हृदये **एकशतं** एकोत्तरशतसंख्यया प्रधाननाडीनां विद्यमानानां **तासां शतं शतं एकैकस्यां** नाड्यां **द्वासप्ततिर्द्वासप्ततिः** द्वे द्वे सहस्रे अधिकसप्ततिः **प्रतिशाखानाडीसहस्राणि भवन्ति** । आभिः नाडीभिः आपादमस्तकं देहं व्याप्य **आस्वेव व्यानश्चरति** । सर्वत्र व्यापनात् व्यानः । सन्धिस्कन्धमर्मदेशेषु विशेषेण प्राणापानवृत्तिमध्ये उद्गनवृत्त्या वीर्यवत्कर्मकर्ता भवतीत्यर्थः ॥ ६ ॥

उदानात्मना प्राणस्योत्क्रमणम्

अथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नयति पापेन पापमुभाभ्यामेव मनुष्यलोकम् ॥ ७ ॥

केनोत्क्रमते ? इति प्रश्नोत्तरमाह—अथेति । **अथ** देहस्थित्यनन्तरं **एक**शतनाडीनां मध्ये ऊर्ध्वगामिनी सुषुम्नानाडीत्येका नाडी विद्यते । तया उदानवायुः आपादमस्तकस्थप्राणवृत्तिभिस्सह करणग्रामं संगृह्य ऊर्ध्वमुत्क्रमन् सन् शास्त्रीयविहितपुण्यकर्मणा लिङ्गशरीराभिमानिनमात्मानं देवादिस्थानलक्षण**पुण्यलोकं नयति** । विहिताकरणप्रतिषिद्धकरणजपापेन **पापं** तिर्यग्योनिलक्षणं नरकं नयति । समपुण्यपापाभ्यां **उभाभ्यामेव मनुष्यलोकं** नयतीत्यनुवर्तते ॥ ७ ॥

प्राणस्याधिदैवमध्यात्मं च

आदित्यो ह वै बाह्यः प्राण उदयत्येष ह्येनं चाक्षुषं प्राणमनुगृह्णानः। पृथिव्यां या देवता सैषा पुरुषस्यापानमवष्टभ्यान्तरा यदाकाशः स समानो वायुर्व्यानः ॥ ८ ॥

कथं बाह्यमभिधत्ते? इति प्रश्नोत्तरमाह। आदित्य इति। **आदित्यो ह वै** सर्वलोकप्रत्यक्षत्वेन प्रसिद्धः स ह्यधिदैवतं **बाह्यः प्राणः**। स एष अहरहः **उदयति** उद्गच्छति "योऽसौ तपन्नुदेति" इति श्रुतेः। कथमध्यात्मम्? इति प्रश्नोत्तरमाह—**एष** इति। **एष** आदित्यो **ह्येनं** अध्यात्मं चक्षुर्विषयं **चाक्षुषं** रूपोपलब्ध्यै **प्राणमनुगृह्णानः** चक्षुष आलोकं कुर्वन् वर्तते। तथा **पृथिव्यां** याभिमानिनी **देवता सैषा पुरुषस्यापान**वृत्ति**मवष्टभ्य** वशीकृत्य अधःकर्षणेनानुग्रहं कुर्वन्ती वर्तत इत्यर्थः। अन्यथा शरीरस्य गुरुत्वात् सावकाशे पतेत्। यदेतत् **अन्तरा** द्यावापृथिव्योर्मध्ये **यत्** य आकाशस्तत्स्थो **वायुराकाश** उच्यते, मञ्चस्थवत्। **स समानः** समानवायुमनुगृह्णानो वर्तते। समानस्याप्याकाशस्थत्वसामान्यात्। सामान्येन यो बाह्यवायुः स व्याप्तिसामान्यात् **व्यानो** व्यानमनुगृह्णानो वर्तते ॥ ८ ॥

उदानस्योत्क्रमणहेतुत्वम्

तेजो ह वाव उदानस्तस्मादुपशान्ततेजाः पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः ॥ ९ ॥ यच्चित्तस्तेनैष प्राणमायाति प्राणस्तेजसा युक्तः। सहात्मना यथासंकल्पितं लोकं नयति ॥ १० ॥

बाह्यं **वाव** प्रसिद्धं सामान्यं यत् **तेजः** तत् शरीरे **उदानः** उदानवायुमनुगृह्णानो वर्तत इत्यर्थः। यस्मादुदानस्य तेजस्स्वभावेन बाह्यतेजोऽनुगृहीतोत्पतनकर्तृत्वात् उत्क्रमणकर्ता ह्युदानः, **तस्मात्** यदा लौकिकः पुरुषः उपशान्तं उदानात्मकं तेजो यस्य सः **उपशान्ततेजा** भवति, तं क्षीणायुषं

विद्यात्। स पुनः **मनसि संपद्यमानैरिन्द्रियैः** सह **पुनर्भवं** शरीरान्तरं प्रतिपद्यते ॥ ९ ॥ मरणकाले यो **यच्चित्तो** भवति,

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥

इति स्मृत्यनुरोधेन चित्तेन स्वसंकल्पानुगृहीतेन्द्रियैः मुख्य**प्राणवृत्तिमायाति** चरमश्वासवेलायां क्षीणेन्द्रियमनोवृत्तिः सन् मुख्यप्राणवृत्त्या अवतिष्ठते। अयमुच्छ्वसिति जीवति वेति तदा ज्ञातयोऽभिवदन्ति। स हि **प्राणः तेजसा** उदानवृत्त्या **संयुक्तः** सन् **सहात्मना** जीवेन साकं पुण्यपापकर्मवशात् **यथासंकल्पितं लोकं नयति** प्रेतलोकं नयतीत्यर्थः ॥ १० ॥

प्राणविद्याफलश्रुतिः

**य एवं विद्वान् प्राणं वेद न हास्य प्रजा हीयतेऽमृतो भवति ॥११॥**

**तदेष श्लोकः—**

**उत्पत्तिमायतिं स्थानं विभुत्वं चैव पञ्चधा।**
**अध्यात्मं चैव प्राणस्य विज्ञायामृतमश्नुते विज्ञायामृतमश्नुत इति ॥**

एवंविदः फलमाह—य इति। **यः** कश्चित् उत्पत्त्यादिविशेषणविशिष्टं **प्राणं वेद, न ह** वास्य तस्य विदुषः पुत्रादिलक्षणाः **प्रजाः हीयन्ते** चिरं जीवन्तीति दृष्टफलम्। अदृष्टफलन्तु—स्वदेहपतनानन्तरं प्राणसायुज्यात्मक**ामृतो भवति** ॥ ११ ॥ उक्तार्थे मन्त्रो भवतीत्याह—**तदेष श्लोक** इति। **प्राणस्य** परमात्मनः **उत्पत्तिं**, अस्मिन् शरीरे मनोकृतेनायातीत्यागमनं, शरीरे **स्थानं** स्थितिं, पायूपस्थादिस्थानेषु **विभुत्वं** स्वाम्यं, सम्राडिव प्राणवृत्तिभेदस्थापनं आदित्यादिरूपेण बाह्यं चक्षुराद्याकारेणावस्थानं **अध्यात्मं च** एवं **विज्ञाय** प्राणं **अमृतमश्नुत इति**। द्विर्वचनमपरविद्याविषयप्रश्नार्थपरिसमाप्त्यर्थम् ॥ १२ ॥

---

# चतुर्थः प्रश्नः

ब्रह्मबुभुत्सया गार्ग्यस्य प्रश्नः

अथ हैनं सौर्यायणी गार्ग्यः पप्रच्छ । भगवन्! एतस्मिन्पुरुषे कानि स्वपन्ति? कान्यस्मिन् जाग्रति? कतर एष देवः स्वप्नान्पश्यति? कस्यैतत्सुखं भवति? कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्ति? इति ॥ १ ॥

साध्यसाधनेषणाविजृंभितसंसारविषयकापरविद्यागोचरसर्वस्वं प्रश्नत्रयेण परिसमाप्यापि कृतपरमार्थसत्यबुभुत्सया कश्चिदेनं पृच्छतीत्याह—अथेति । **अथ** अपरविद्यागोचरप्रश्नत्रयकथनानन्तरं **एनं** पिप्पलादमाचार्यं यत् परविद्यागोचरं वस्तु करणग्रामापह्नवसिद्धं स्वमात्रमवशिष्यते तद्बुभुत्सया **सौर्यायणी** च **गार्ग्यः पप्रच्छ** । अपरब्रह्मविषयकपूर्वप्रश्नत्रयविवेकोपायलभ्योत्तरप्रश्नत्रयस्य परब्रह्मगोचरत्वेन सुसूक्ष्मार्थत्वात् यत् ब्रह्मातिरिक्तमपह्नोतव्यं तदियत्तापरिज्ञानं विना तदसंभवात् । अतः स्वातिरिक्तकरणग्रामजन्मस्थितिभंगाधिकरणाक्षरपरिज्ञानपूर्वकं तद्गतहेयांशापाये परमाक्षरमवगन्तुं शक्यमिति प्रश्नोऽर्थवान् ।

यथा सुदीप्तात् पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः ।
तथाक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति ॥

इति श्रुत्यनुरोधेन सर्वे भावाः महाग्निविस्फुलिङ्गा इव यतः प्रभवन्ति पुनरपि यन्ति च तदधिकरणपरिज्ञानोपायव्यष्टिकरणारोपाधिकरणेयत्ता ज्ञातव्येति । हे **भगवन्! एतस्मिन्** शिरःपाण्यादिमति **पुरुषे कानि** करणानि **स्वपन्ति** स्वव्यापारात् उपरमन्ते? **कानि** चा**स्मिन् जाग्रति** जागरूकाः स्वव्यापारं कुर्वन्ति? **कतर एष देवः** जाग्रत्संस्कारजस्व**प्नान् पश्यति**? तत् किं कार्यलक्षणेन करणलक्षणेन वा देवेन निर्वर्त्यम्? जाग्रत्स्वप्नव्यापारे चोपरते निरायासलक्षणं

एतत् **सुखं कस्य भवति**? तदा करणायमानभावा जाग्रत्स्वप्नव्यापारात् उपरता भूत्वा **कस्मिन्नु सर्वे** भावा समुद्रप्रविष्टनदीवत् मधुवच्च विवेकानर्हतया एकीभावमेत्य **प्रतिष्ठिता भवन्ति**? वेणुनालन्यस्तायश्शलाकापूगवत् पृथक् पृथगेव स्वात्मन्यवतिष्ठन्त इत्यर्थः। कानि स्वपन्तीत्यादिना करणानां स्वातन्त्र्यं अवगम्येत इति चेन्न; तेषां स्वाम्यर्थत्वात् सर्वावस्थास्वपि पारतन्त्र्यं सिद्धमित्यर्थः ॥ १ ॥

ब्रह्मणः सर्वप्रतिष्ठास्पदत्वम्

**तस्मै स होवाच। यथा गार्ग्य! मरीचयोऽर्कस्यास्तं गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति। ताः पुनः पुनरुदयतः प्रचरन्त्येवं ह वै तत्सर्वं परे देवे मनस्येकीभवति। तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥ २ ॥**

इत्थं गार्ग्येण पृष्टप्रश्नपञ्चकोत्तरं आचार्यः क्रमेणाह—**तस्मै स होवाचेति**। हे **गार्ग्य**! एतस्मिन् पुरुषे कानि स्वपन्ति? इति यत्त्वया पृष्टं तदिदानीं शृणु। **यथा अस्तं गच्छतः अर्कस्य** आदित्यस्य **मरीचयो** रश्मयः **सर्वाः एतस्मिन्** आदित्यतेजो**मण्डले** अविशेषं **एकीभवन्ति**। **ता** रश्मयः **पुनः पुनरुदयतः** तस्यैवार्कस्य **प्रचरन्तीति** दृष्टान्तः। **एवं ह वै तत् सर्व**विषयेन्द्रियजातं—देवानां इन्द्रियाणां मनस्तन्त्रत्वात्—**परे देवे मनसि** स्वापकाले **एकीभवति**। तेजोमण्डलप्रविष्टमरीचिवदविशेषतां गच्छति। जिजागरिषोश्च रविमण्डलादिव मनस एव प्रचरन्ति स्वव्यापाराभिमुखं प्रतिष्ठन्त इत्यर्थः। यतः शब्दाद्युपलब्धिहेतुश्रोत्रादिकरणानि मनस्येकीभूतानीव स्वव्यापारादुपरतानि भवन्ति, अतः **तेन** हेतुना **तर्हि**

तस्मिन् स्वापकाले **एष** हि **पुरुषो** जीवो **न शृणोतीत्यादि** स्पष्टोऽर्थः। श्रवणादिकरणग्रामप्रलयात् लौकिकाः **स्वपितीत्याचक्षते। नेयायते न** गच्छतीत्यर्थः ॥ २ ॥

प्राणादीनामाहवनीयत्वादिनिरूपणम्

**प्राणाग्नय एवैतस्मिन्पुरे जाग्रति गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राणः। यदुच्छ्वासनिःश्वासावेतावाहुती समं नयतीति स समानः ॥ ३ ॥**

कान्यस्मिन् जाग्रति? इति प्रश्नोत्तरमाह—**प्राणेति**। श्रोत्रादिकरणग्रामे सुप्तिं गते सति अथ **एतस्मिन्** नवद्वार**पुरे** देहे **प्राण एवाग्नय** इव अग्नयो **जाग्रति** जागरूका भवन्तीत्यर्थः। तत्र विभागशः तत्स्वरूपमुच्यते—**गार्हपत्य** इत्यादिना। **गार्हपत्यो ह वा एषोऽपानः** यस्मादग्निहोत्रकाले **गार्हपत्यात्** इतरोऽग्निः आहवनीयः **प्रणीयते**। तस्मात् **प्रणयनात्** अपानो गार्हपत्योऽग्निः। तथा सुप्तस्य ह्यपानवृत्तेः प्रणीयत इव मुखनासिकाभ्यां प्राणस्संचरतीत्यतः **प्राण** आहवनीयस्थानीयः। **व्यानस्तु** हृदयदक्षिणसुषिरद्वारेण निर्गमनात् दक्षिणसंबन्धात् **अन्वाहार्यपचनो** भवति। तत्राग्निहोत्रहोता **समानवायुः** भवति। यस्मात् **उच्छ्वासनिश्वासौ** अग्निहोत्राहुती इव तद्गतद्वित्वसामान्यस्य नित्यत्वेन **आहुती** तु **समं** साम्येन देहस्थितिभावाय **नयतीति स समानो** होता तस्याहुतिनेतृत्वात्। अतो विदुषः स्वापोऽप्यग्निहोत्रहवनमेव भवति। न ह्येवं विद्वान् कर्मी भवति वेदनेतरकरणवैकल्यात्। "सर्वदा सर्वाणि च भूतानि विचिन्वन्त्यपि स्वपत" इति श्रुतेः ॥ ३ ॥

मनसो यजमानत्वमुदानेन ब्रह्मप्रापणं च

**मनो ह वाव यजमान इष्टफलमेवोदानः स एनं यजमानमहरहर्ब्रह्म गमयति ॥ ४ ॥**

अत्र हि प्राणोऽग्निषु जाग्रत्सु सत्सु सविषयबाह्यकरणानि उपसंहृ अग्निहोत्रफलमिव स्वर्गं ब्रह्म जिगमिषुः **मनो ह वाव यजमानोऽ** कार्यकरणप्राधान्यव्यवहारात् जागर्ति। मनसः स्वर्गमिव ब्रह्म प्रस्थितत्वात यजमानो मन एवेति कल्प्यते। उदाननिर्मितेयमिष्टफलप्राप्तिरिति **इष्टयाग फलमेवोदानः। स** ह्युदानो मनआख्यं **यजमानं** स्वप्नादिवृत्तितः प्रच्याव **अहरहः** स्वापकाले स्वर्गमिवाक्षरं **गमयति**। अतः यागफलस्थानीयोदानेयत्त विदुषः श्रोत्राद्युपरमणकालादारभ्य यावत् स्वापादुत्थितो भवति तावत्सं यागफलानुभवः। एवमविदुषां अनर्थाय तद्भवतीति विद्वत्ता स्तूयते। न हि विदुष एव श्रोत्रादिकरणानि स्वपन्ति। प्राणाग्नयो वा जाग्रति अहरहः सुषुप्तं वा स्थानं प्रतिपद्यते। जाग्रत्स्वप्नयोः मनसः स्वातन्त्र्या भासावगमात् विद्वदविद्वत्पदगामि सर्वप्राणिनां जाग्रदाद्यवस्थात्रयगमनं समान हि। विदुषस्तु यागफलाप्तिर्विशेष इति स्तुतिरियमुपपद्यते ॥ ४ ॥

स्वप्नद्रष्टृनिरूपणम्

**अत्रैष देवः स्वप्ने महिमानमनुभवति। यद्दृष्टं दृष्टमनुपश्यति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूतं पुनःपुनः प्रत्यनुभवति दृष्टं चादृष्टं च श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च सर्वं पश्यति सर्वः पश्यति ॥ ५ ॥**

कतर एष देवः स्वप्नान् पश्यति? इति प्रश्नोत्तरमाह—**अत्रेति**। **अत्र** श्रोत्रादिकरणेषूपरतेषु देहरक्षार्थं प्राणादिवायुषु जाग्रत्सु सत्सु स्वापप्रतिपत्तेः प्राक् एतस्मिन् जाग्रत्स्वापान्तराले सूर्यरश्मिवत् आत्मन्युपसंहृतकरणे यं **एष देवः स्वप्ने** स्वविकल्पितेन्द्रियेन्द्रियार्थतया बहुधा भवनं **महिमानं अनुभवति** मनसो महिमानुभवकरणत्वात्। महिमानुभवे मनः स्वतन्त्रमिति चेन्न; तस्य क्षेत्रज्ञपरतन्त्रत्वात्। स्वतन्त्रो हि क्षेत्रज्ञः कर्तुमकर्तुमन्यथा वा कर्तुं तद्गतस्वातन्त्र्यं वास्तवमिति चेन्न; तस्य मानसोपाधिकृतत्वात्।

न हि वस्तुतः क्षेत्रज्ञोऽवस्थात्रयमन्वेति, तस्य स्वगतक्षेत्रज्ञतापाये निष्प्रतियोगिकस्वमात्रत्वात् । सोऽयं क्षेत्रज्ञः स्वाज्ञदृष्ट्या तूलाविद्यासूक्ष्मांशयोगतः तैजसो भूत्वा स्वतेजसा जाग्रत्प्रपञ्चं परिकल्प्य तत्रासङ्गतया स्वयंज्योतिरपि भवतीत्यत्र स्वयं विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा स्वपितीत्यत्र "अयं पुरुषः स्वयंज्योतिर्भवति ध्यायतीव लेलायतीव" इति श्रुतेः । तस्मात्करणजाले मनसि प्रलीने सति अथ मनोमयस्वप्नान् पश्यतीति युक्तमेवैतत् । पुरा **यत्** मित्रं पुत्रादि वा **दृष्टं** तत्संस्कारवासनाविद्यया **दृष्टवदनुपश्यति** । तथा **श्रुतं अर्थं** तद्वासनया **अनुशृणोतीव** । **देशान्तरैः दिगन्तरैश्च प्रत्यनुभूतं पुनः पुनः** तत् प्रत्यनुभवतीव । तथा **दृष्टं चास्मिन् जन्मनि** जन्मान्तर**दृष्टं अदृष्टं** अत्यन्तादृष्टे वस्तुनि वासनानुत्पत्तेः । तथास्मिन् जन्मनि **श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च** केवलमनसैव जन्मान्तरे तत्सर्वं श्रुतं दृष्टं अनुभूतमित्यर्थः । चाक्षुषं **सच्च** अचाक्षुषं **असच्च** । किं बहुनोक्तेन ? उक्तमनुक्तं **सर्वं पश्यति सर्वः पश्यति** सर्वमनोपाधित्वेन सर्वकरणात्मा देवः स्वप्नान् पश्यति । स्वोपाधिमनसोऽपाये न किञ्चित् पश्यतीत्यर्थः ॥ ५ ॥

### सुषुप्तिसुखनिरूपणम्

**स यदा तेजसाभिभूतो भवत्यत्रैष देवः स्वप्नान्न पश्यत्यथ तदैतस्मिञ्छरीरे एतत्सुखं भवति ॥ ६ ॥**

कस्यैतत् सुखं भवति ? इति प्रश्नोत्तरमाह— **स यदेति** । **यदा** यस्मिन् काले **सोऽयं** मानसोपाधिकः सौर**तेजसा** नाडीविशेषस्पर्शनतः स्वापसंस्कृतवासनाद्वारेण सर्वतः **अभिभूतो भवति**, तदा सकरणमनोरश्मयो हृद्युपसंहृता भवन्ति । दार्वग्निवदविशेषं तदा मनउपाधिः कृत्स्नशरीरं व्याप्यावतिष्ठते । अत्रायं सुषुप्तस्सन् **स्वप्नान्न पश्यति** तेजसा दर्शनद्वारस्य निरुद्धत्वात् । **अथ तदा एतस्मिन् शरीरे एतत् सुखं भवति** । तत्सुखविज्ञानमविशेषं

शरीरं व्याप्य प्रसन्नं भवतीत्यर्थः। तदानीं अविद्याकामकर्मजातस्य शान्तत्वात् आवृतित्रयावृतसच्चिदानन्दतया अयमवतिष्ठत इत्यत्र—

सुषुप्तिकाले सकले विलीने तमोभिभूतस्सुखरूपमेति। इति,
स्वापे समावृतो जन्तुः स्वरूपसुखमश्नुते।

इति श्रुतेः स्मृतेश्च ॥ ६ ॥

सुषुप्तावात्मनः सर्वप्रतिष्ठास्पदत्वम्

**स यथा सोम्य! वयांसि वासोवृक्षं संप्रतिष्ठन्ते एवं ह वै तत्सर्वं पर आत्मनि संप्रतिष्ठते ॥ ७ ॥**

कस्मिन्नु सर्वे संप्रतिष्ठिता भवन्ति? इति प्रश्नोत्तरमाह—**स यथेति**। यः प्राज्ञभावमेत्य सुखी भवति हे **सोम्य!** स यदात्मा **वयांसि** स्ववा**सोवृक्षं** सम्यक् **प्रतिष्ठन्त** इति दृष्टान्तः। **एवं ह वै तत्** वक्ष्यमाणं **सर्वं** सर्वापवादाधिकरणे **परे आत्मनि संप्रतिष्ठते**। तन्मात्रावशेषतया अवतिष्ठत इत्यर्थः ॥ ७ ॥

आत्मनः सर्वप्रतिष्ठात्वविवरणम्

**पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्च तेजोमात्रा च वायुश्च वायुमात्रा चाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्यं च श्रोत्रं च श्रोतव्यं च घ्राणं च घ्रातव्यं च रसश्च रसयितव्यं च त्वक् च स्पर्शयितव्यं च वाक् च वक्तव्यं च हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्यं चाहङ्कारश्चाहङ्कर्तव्यं च चित्तं च चेतयितव्यं च तेजश्च विद्योतयितव्यं च प्राणश्च विधारयितव्यं च ॥ ८ ॥**

तत्कथम् ? इत्यत्र तत्प्रकारमाह—**पृथिवी**त्यादिना । स्थूला **पृथिवी च** पञ्चगुणा तत्कारणीभूतगन्धतन्**मात्रा च** तथापस्तेजोवाय्वाकाशा स्थूलाः तन्मात्राः सूक्ष्माश्च पञ्चीकृतापञ्चीकृतपञ्चमहाभूतानीत्यर्थः । तथा **चक्षुश्च द्रष्टव्य**-**रूपं** **चे**त्यादिज्ञानकर्मेन्द्रियतदर्थाश्चोक्ताः । पूर्वोक्तं **मनश्च** तद्विषयो **मन्तव्यं चे**त्यादि स्पष्टोऽर्थः । त्वगिन्द्रियातिरेकेण प्रकाशविशिष्टा त्वक् **तेजः** तन्निर्वाहको विषयो **विद्योतयितव्यं प्राणश्च** सूत्रात्मा स्वारोपितसर्व-**विधारयितव्यम्** ॥ ८ ॥

विज्ञानात्मनः परमात्मनैकीभावः

**एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः । स परेऽक्षर आत्मनि संप्रतिष्ठते परमेवाक्षरं प्रतिपद्यते ॥ ९ ॥**

तद्विषयः सूत्रात्मनि सर्वस्य संग्रथितत्वात् अतो नामरूपात्मकविश्वस्य कार्यकरणसंहतत्वेन लवित्रादिवत् पारार्थ्यस्वरूपत्वेन च जडत्वात् । अतः तदारोपाधारतया योऽवशिष्यते स **एष** चिद्धातुः जलादौ प्रतिफलितसूर्यादि-विम्बवत् स्वारोपितकर्तृत्वादिविशिष्ट इव **द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा** पुरुष इति । येन स्वाध्यस्तकर्तृभोक्तृ-द्रष्टृत्वादिकं मिथ्येति विज्ञातं स **विज्ञानात्मा** कार्यकरणसंघातः । अनृतजड-दुःखप्रपञ्चस्य सच्चिदानन्दरूपेण पूरणात् **पुरुषः** । " नेति नेति, न ह्येतस्मादिति, नेत्यन्यत् " इति च श्रुत्यनुरोधेन स्वारोपितप्रपञ्चस्थूलसूक्ष्मबीजार्धमात्रांशा-पह्नवतो निष्प्रतियोगिकब्रह्ममात्रमवशिष्यत इत्यर्थः ॥ ९ ॥

सर्वाधारस्य परमात्मनो ज्ञानफलं मन्त्रसम्मतिश्च

**स यो ह वै तदच्छायमशरीरमलोहितं शुभ्रमक्षरं वेदयते यस्तु सोम्य ! स सर्वज्ञः सर्वो भवति ॥ १० ॥**

तदेष श्लोकः

विज्ञानात्मा सह देवैश्च सर्वैः प्राणा भूतानि संप्रतिष्ठन्ति यत्र ।
तदक्षरं वेदयते यस्तु सोम्य ! स सर्वज्ञः सर्वमेवाविवेश—इति ॥११॥

एवंविदः फलमाह—**स य** इति । **स यो ह वै** स्वातिरिक्तसर्वैषणाविनिर्मुक्तो योगी स्वाविद्या छाया तदपह्नवसिद्धं **अच्छायं**, व्यष्टिसमष्ट्यात्मकशरीरत्रयापह्नवात् **अशरीरं**, लोहितशुक्लकृष्णगुणापह्नवसिद्धं **अलोहितं**, अतः **शुभ्रं**, स्वातिरिक्ताशुभ्रक्षरापह्नवसिद्धत्वात् परमा**क्षरं** निष्प्रतियोगिकस्वमात्रमिति **वेदयते** विजानाति तद्वेदनसमकालं सोऽयं विद्वान् पुरा स्वाज्ञदशायां असर्वज्ञोऽपि स्वाज्ञत्वापह्नवतः पुरा यत् स्वातिरेकेण सर्वं भातं तत्सर्वं स्वमात्रतया जानातीति **स सर्वज्ञः सर्वो भवति** स्वाज्ञादिदृष्टेः वस्तुतो ब्रह्ममात्रतयावशिष्यत इत्यर्थः ॥ १० ॥ उक्तार्थे मन्त्रो भवतीत्याह—**तदेष श्लोक** इति । **विज्ञानात्मा सह देवैश्च** अग्न्यादिभिः **प्राणाः** चक्षुरादयः पृथिव्यादीनि **भूतानि** च **यत्र** यस्मिन्नक्षरे **संप्रतिष्ठन्ति** स्थितिं विलयं वा भजन्ति, हे **सोम्य** ! **यस्तु** विद्वान् **तदक्षरं** स्वाज्ञादिभिः तदारोपापवादायमानाधेयनिरूपिताधारतापह्नवसिद्धं परमाक्षरं स्वामात्रमिति **वेदयते** जानाति तद्वेदनसमकालं **सोऽयं** विद्वान् पूर्वोक्तरीत्या **सर्वज्ञः** सन् स्वमात्रतया अवशिष्टोऽपि स्वाज्ञादिदृष्ट्या **सर्वमेवाविवेश** आविशतीत्यत्र—

यत्सर्वशास्त्रसिद्धान्तं यत्सर्वहृदयानुगम् ।
यत्सर्वं सर्वगं वस्तु यत्तत्त्वं तदसौ स्थितः ॥

इत्यादिश्रुतेः ॥ ११ ॥

---

# पञ्चमः प्रश्नः

सत्यकामस्योङ्कारोपासनाप्रश्नः

अथ हैनं शैब्यः सत्यकामः पप्रच्छ। स यो ह वैतद्भगवन्! मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत। कतमं वाव स तेन लोकं जयति? इति ॥ १ ॥

परापरविषयकप्रणवतद्याथात्म्यबुभुत्सया आचार्यमपरः पृच्छतीत्याह— **अथेति**। **अथ** गार्ग्यप्रश्नप्रतिवचनानन्तरं **एनं** पिप्पलादमाचार्यं **शैब्यश्च सत्यकामः पप्रच्छ**। ओंकारस्य तावत् परापरब्रह्मप्राप्तिसाधनत्वेन उपासन-विधित्सया हि प्रश्न आरभ्यते। हे **भगवन्! स यः** कश्चिन्**मनुष्येषु प्रायणान्तं** प्रयाणान्तं यावज्जीवं उपरतबाह्यान्तःकरणतया भक्त्यावेशित-ब्रह्मभावनया च **ओंकारमभिध्यायीत** आभिमुख्येन अनवरतं चिन्तयेत्—ब्रह्मचर्यापरिग्रहसत्यास्तेयाहिंसाशौचसन्तोषत्यागसंन्यासदशयमनियमामानित्वादि - साधनसंपत्त्या विजातीयप्रत्ययतिरस्कारपूर्वकं सजातीयप्रत्ययप्रवाहीकरणं अभिध्यान-शब्दार्थः—**सोऽयमेवं** यावज्जीवव्रतधारणया कर्मयोगज्ञानोपायतो जेतव्येषु लोकेषु **तेन** ओंकाराभिध्यानेन **कतमं वाव लोकं जयति**? इति ॥ १ ॥

परापरब्रह्मदृष्ट्या ओङ्कारोपासनाफलम्

तस्मै स होवाच। एतद्वै सत्यकाम! परं चापरं च ब्रह्म यत् ओङ्कारः तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति ॥ २ ॥

एवं पृष्टवते प्रश्नोत्तरमाह—**तस्मै स होवाचेति**। हे **सत्यकाम! एतत् परं चापरं च**। तत्र परं प्रत्यगभिन्नं **ब्रह्म**। अपरं ईश्वराख्यं **यत्** तदोंकार एव, परापरालम्बनप्रतीकत्वात्। न हि तत् साधनं विना निर्विशेषं

ब्रह्म अवगन्तुं शक्यं, तस्यातीन्द्रियत्वात् । विष्ण्वादिप्रतिमास्थानीयोङ्कारे तत ब्रह्मेति भावारूढानां शास्त्रप्रामाण्यात् तत् प्रसीदतीत्यवगम्यते । तस्मात् पर चापरं च ब्रह्म यदोङ्कार इत्युपचर्यते । **तस्मात् विद्वान् एतेनैव** ओङ्काराभिध्यानेन **एकतरं** परमपरं वा ब्रह्म **अन्वेति** आलम्बनप्रतीकोपायतो नेदिष्ठं ब्रह्म अनुगच्छतीत्यर्थः ॥ २ ॥

एकमात्रोङ्कारोपासनाफलम्

**स यद्येकमात्रमभिध्यायीत स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते । तमृचो मनुष्यलोकमुपनयन्ते स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवति ॥ ३ ॥**

एकमात्राप्रणवध्यायिनः फलमाह—स **यदीति** । स यद्यप्योङ्कारयावन्मात्राभिज्ञो न भवति तथाप्योङ्कारपरिचयात् विशिष्टगतिं गच्छति । तदेकदेशज्ञानवैगुण्येऽप्योङ्कारशरणश्चेत् कर्मज्ञानोभयभ्रष्ट इव न हि दुर्गतिं गच्छति । किं तर्हि ? **स यदि** ओङ्कारैकमात्राभिज्ञो योगी प्रणवं **एकमात्रं** सदा **ध्यायीत** । **तेन** एकमात्रावशिष्टोङ्काराभिध्यानेन **संवेदितः** संबोधितः सन् **तूर्णमेव जगत्यामभिसंपद्यते** । **तं** एवमभिध्यायिनं **ऋचो मनुष्यलोकमुपनयन्ते** उपगमयन्ति । ओङ्कारप्रथममात्राया ऋग्वेदस्वरूपत्वात् । तत्प्रथममात्राभिध्याता तेन **तत्र** मनुष्यजन्मनि ब्राह्मणश्रेष्ठो भूत्वा **तपसा ब्रह्मचर्येण श्रद्धया** च **संपन्नो महिमानं** ऐश्वर्यं **अनुभवति** । न हि श्रुत्याचार्यवाक्याश्रद्दधानवत् यथेष्टचेष्टो भवति ।

न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति ।

इति स्मृतेः ॥ ३ ॥

द्विमात्रोङ्कारध्यानफलम्

अथ यदि द्विमात्रेण मनसि संपद्यते सोऽन्तरिक्षं यजुर्भिरुन्नीयते सोमलोकं स सोमलोके विभूतिमनुभूय पुनरावर्तते ॥ ४ ॥

तथा द्विमात्राभिध्यानफलमाह—**अथेति**। **अथ** प्रणवेतरसाधनत्यागानन्तरं **यदि द्विमात्रेण** स्वप्नाभमनसि द्विमात्रप्रणवमभिध्यायेत् तस्मिन् यजुर्वेदमये सोमदैवत्ये **मनसि संपद्यते** ऐकाग्र्यं आत्मभावं गच्छति। **स** ह्यात्मभावापत्त्या मृतो**ऽन्तरिक्षं** अन्तरिक्षाधारं **सोमलोकं** प्रणवद्वितीयमात्रारूप**यजुर्भिरुन्नीयते**। यजूंषि तं सौम्यं जन्म प्रापयन्तीत्यर्थः। **स** तत्र **सोमलोके विभूतिं अनुभूय** मनुष्यलोकं प्रति **पुनरावर्तते**। तत्र सर्वजनश्लाघनीयजन्म लब्ध्वा धनी योगी वा भूत्वा क्रमेण कृतकृत्यो भवतीत्यर्थः।

> शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते।
> अथ वा योगिनामेव कुले भवति धीमताम् ॥

इति स्मृतेः ॥ ४ ॥

त्रिमात्रोङ्कारध्यानफलं ऋक्सम्मतिश्च

यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेजसि सूर्ये संपन्नः। यथा पादोदरस्त्वचा विनिर्मुच्यत एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते ॥ ५ ॥

तदेतौ श्लोकौ भवतः—

तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अन्योन्यसक्ता अनविप्रयुक्ताः।
क्रियासु बाह्याभ्यन्तरमध्यमासु सम्यक् प्रयुक्तासु न कम्पते ज्ञः ॥

ऋग्भिरेतं यजुर्भिरन्तरिक्षं
सामभिर्यत्तत्कवयो वेदयन्ते ।
तमोंकारेणैवायतनेनान्वेति विद्वान्
यत्तच्छान्तमजरममृतमभयं परं चेति ॥ ७ ॥

त्रिमात्राप्रणवानुध्यानफलमाह—**यः पुनरि**ति। **यः पुनरेतं** ओङ्का **त्रिमात्रेण** तद्विषयकविज्ञानेन **ओमित्येतेनैवाक्षरेण** सूर्यमण्डलान्तर्वर्तिनं **प पुरुषमभिध्यायीत** प्रणवालम्बनतयेत्यर्थः। न ह्यत्र प्रतीकोपासना उपयुज्यते

प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः।

इति प्रणवापरपराभेदखिलश्रुतेः। **सोऽयं** विद्वान् तृतीयमात्रानुरूपे **तेजसि सूर्ये संपन्नो** भवति। न हि सोमलोकादिवत् पुनरावर्तते। किन्तु सूर्यसंपत्त्या, **यथा पादोदरः** सर्पस्तु **त्वचा विनिर्मुच्यते** जीर्णत्वचं त्यक्त्वा पुनर्नवो भवति **एवं ह वै स पाप्मना विनिर्मुक्तः स सामभिः** तृतीयमात्रारूपे ऊर्ध्वं **ब्रह्मलोकं उन्नीयते** यस्मिन् ब्रह्मलोकासने हिरण्यगर्भे सर्वलिङ्गात्मनि जीवास्सर्वे संहता भवन्ति। **सोऽयं** विद्वान् त्रिमात्रोङ्काराभिज्ञः **एतस्मात् जीवघनात्** हिरण्यगर्भात् **परात्परं** परमात्मानं समस्तपु**रिशयं** स्वातिरिक्त-सर्वपूरणात् **पुरुषं** सर्वप्रत्यगभेदेन **ईक्षते** ब्रह्मैवास्मीति पश्यति। यद्वा— एतस्माज्जीवघनात् पुरिशयात् हिरण्यगर्भात् परो व्यष्टिसमष्टिसाक्षी तद्गतहेयांशा-पह्नवसिद्धः तस्मात् परः पुरुषः तन्निष्प्रतियोगिकपरमात्मानं स्वमात्रतया ईक्षते। अपह्नोतव्यस्वातिरिक्तविषयवैरल्यात् स्वमात्रमवशिष्यत इत्यर्थः॥ ५॥

उक्तार्थे एतौ श्लोकौ अनुवदत इत्याह—**तदेतौ श्लोकौ भवतः** इति। अकारोकारमकारभेदेन त्रिसंख्याकाः प्रणवमात्राः मृत्युर्यासां विद्यते ताः **मृत्युमत्यः** मृत्युगोचरा एवेत्यर्थः। ता हि ध्यानक्रियासु **प्रयुक्ताः**। किंच **अन्योन्यसक्ता** इतरेतरबद्धा इत्यर्थः। **अनविप्रयुक्ताः** विशेषतो ब्रह्मण्येन **प्रयुक्ताः** विप्रयुक्ताः। तथा न भवन्तीति अविप्रयुक्ताः पराग्भावमापन्नाः।

तथा न भवन्तीति अनविप्रयुक्ताः बाह्यान्तःकलनाकलितत्वात् । एवं पराग्भावं विहाय प्रत्यगभिन्नब्रह्मध्यानकाले **बाह्याभ्यन्तरमध्यमासु** जाग्रत्स्वप्नसुषुप्तिस्थानगतविराट्सूत्रबीजतुर्यध्यानलक्षणयोगक्रियासु प्रयुक्ताश्चेत् स **न कम्पते** । ओङ्कारयथोक्तविभागज्ञो योगी स्वगृहस्वरूपात् न हि चलति । न ह्येवंविदः चलनमुपपद्यते । यतः ओङ्कारमात्रारूढजाग्रत्स्वप्नसुषुप्त्यादिस्थानाधिपविराडादियाथात्म्यवित् सर्वात्मभूतोङ्कारो यो भवति अतो विद्वान् **न** कदाचिदपि स्वरूपतः चलेदित्यर्थः ॥ ६ ॥ सर्वार्थसंग्रहो हि द्वितीयो मन्त्रः । अकारमात्रारूपैः **ऋग्भिरेतं** मनुष्यलोकं उकारमात्रारूपैः **यजुर्भिः** सोमाधिष्ठितान्त**रिक्ष**लोकं मकारमात्रात्मकसा**मभिः यत्तत्** ब्रह्मलोकमिति तृतीयं त्रिविधं लोकं **ओंकारसाधनेन कवयो वेदयन्ते** नाकवय इत्यर्थः । **विद्वान्** परमार्थदृष्टिस्तु "पश्यतेहापि सन्मात्रमसदन्यत्" इति श्रुत्यनुरोधेन स्वातिरिक्तप्रणवतदध्यक्षतद्गतहेयांशशान्तं **यत्** पदमवशिष्यते **तदेव शान्तं** सर्वावस्थापह्नवसिद्धत्वात्, **अजरं** जराश्रयदेहत्रयापह्नवसिद्धत्वात्, **अमृतं** मरणादिभयवैरल्यात्, **अभयं** निरतिशयब्रह्ममात्रस्वरूपत्वात्, **परं** तदप्यर्धमात्रातुर्यभागात्मकतुरीयोङ्का**रायतनेन** असदपह्नवसिद्धं सत् ब्रह्म स्वमात्रं इत्य**न्वेति** तन्मात्रतया अवशिष्यत इत्यर्थः ॥ ७ ॥

---

## षष्ठः प्रश्नः

निष्कलब्रह्मबुभुत्सया भारद्वाजस्य प्रश्नः

**अथ हैनं सुकेशा भारद्वाजः पप्रच्छ । भगवन् ! हिरण्यनाभः कौसल्यो राजपुत्रो मामुपेत्यैतं प्रश्नमपृच्छत । षोडशकलं भारद्वाज !**

पुरुषं वेत्थ ? तमहं कुमारमब्रवं नाहमिमं वेद यद्यहमिममवेदिषं कथं ते नावक्ष्यमिति । समूलो वा एष परिशुष्यति योऽनृतमभिवदति तस्मान्नार्हाम्यनृतं वक्तुम् । स तूष्णीं रथमारुह्य प्रवव्राज । तं त्वा पृच्छामि क्वासौ पुरुषः ? इति ॥ १ ॥

विज्ञानात्मविकल्पितजाग्रदाद्यवस्था तत्प्रलयेऽपि विज्ञानात्मना सह परस्मिन्नक्षरे संप्रतिष्ठते, तस्य सर्वारोपापवादाधिकरणत्वात् । न हि कार्यस्य कारणेन संप्रतिष्ठास्ति । उक्तं चैतत् "आत्मन एष प्राणो जायते तत्सर्वं परे आत्मनि संप्रतिष्ठते" इति, "विद्वान् यत्तच्छान्तमजरममृतं परं चेति" इति विश्वारोपापवादाधिकरणनिरधिकरणब्रह्मज्ञानतः सविशेषनिर्विशेषब्रह्मभावापत्तिः स्यादिति सर्ववेदान्तसिद्धान्तः । तत्रापरब्रह्मैयत्तां ज्ञात्वा सकलत्वेन निष्कलब्रह्मयाथात्म्यबुभुत्सया आचार्यं अपरः पृच्छति—**अथे**ति । **अथ** पञ्चप्रश्नप्रतिवचनानन्तरं **एनं** आचार्यं निष्कलब्रह्मयाथात्म्यबुभुत्सया **सुकेशा च भारद्वाजः पप्रच्छ** । तत् किम् ? इत्यत आह—**भगवन्नि**ति । हे **भगवन् !** नामतो **हिरण्यनाभः** । कोसलायां भवः **कौसल्यः** । जातितो **राजपुत्रः मामुपेत्य एतं** पुरुषसम्बन्धि**प्रश्नं अपृच्छत** । हे **भारद्वाज !** प्राणादिनामान्तषोडशकला यत्रारोपिताः सोयं षोडशकलः तं **षोडशकलं पुरुषं वेत्थ** त्वं विजानासि ? इति । एवं पृष्टवन्तं **तं अहं** राज**कुमारं अब्रवं** उक्तवानस्मि । यत् त्वं पृच्छसि **न अहमिमं वेद** । एवं उक्तवत्यपि मयि स्वाज्ञानं असंभावयन्तं कुमारं प्रति स्वाज्ञाने कारणं अवादिषम् । कथंचित् **यदि** त्वया पृष्टं पुरुषं **अवेदिषं** विदितवानस्मि, तत् **कथं** अत्यन्तयोग्याधिकारिणे **ते** तुभ्यं **नावक्ष्यं** न ब्रूयाम् ? इत्येवं श्रुत्वापि अप्रत्ययंगतमालक्ष्य तत्प्रत्ययार्थं पुनरिदमब्रवम् ।

योऽन्यथासन्तमात्मानं अन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥

इति श्रुत्यनुरोधेन वस्तुयाथात्म्यमविज्ञाय **योऽनृतमभिवदति स एष मूढः** । स्वबन्धमोक्षमूलान्तःकरणसहितः **समूलः** सपरिवारः **शुष्यति** इहामुत्रफलेभ्यो विच्छिद्यते छिन्नाभ्रमिव नश्यतीत्येतत् यस्मादहं एवं जाने **तस्मात्** मूढवत् **अनृतं वक्तुं नार्हामि** । एवं मया प्रत्यायितः **स** राजपुत्रो व्रीडितः **तूष्णीं रथमारुह्य** यथागतमेव **प्रवव्राज** । अतो यथावज्जानताचार्येण मुख्याधिकारिणे वक्तव्या । सर्वावस्थास्वपि अनृतं न वक्तव्यमिति सिद्धं भवति । पुरोक्तव्याख्यानतः पौरुषविज्ञानस्य सुदुर्लभत्वेन मुमुक्षुपटलाशास्यमानतावश्यकीति द्योत्यते । **क्वासौ** विद्यते विज्ञेयत्वेन षोडशकलः **पुरुषः** ? तदज्ञान मम हृच्छल्यमिव प्रतिभाति । अतः **तं पुरुषं त्वा त्वां पृच्छामीति** ॥१॥

पिप्पलादस्य प्रतिवचनम्

तस्मै स होवाच । इहैवान्तःशरीरे सोम्य ! स पुरुषो यस्मिन्नेताः षोडशकलाः प्रभवन्तीति ॥ २ ॥

भारद्वाजेन एवं पृष्ट आचार्य आह—**तस्मै स होवाचेति** । हे **सोम्य** ! इति पिप्पलादो भारद्वाजं संबोध्य **तस्मै स होवाच** यं त्वं परिपृच्छसि **स पुरुषो** न हि देशान्तरे विज्ञेयो भवति । किन्तु **इहैवान्तः शरीरे** हृदयकमलाकाशमध्ये,

अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः ।
ईशानो भूतभव्यस्य स एवाद्य स उ श्वः—एतद्वै तत् ॥

इति श्रुत्यनुरोधेन स्वाज्ञस्वज्ञदृष्टिभ्यां सकलत्वेन निष्कलत्वेन च पुरुषो लक्ष्यते । **यस्मिन्** वक्ष्यमाणाः **एताः** प्राणाद्याः **षोडशकलाः प्रभवन्ति** । स्वाज्ञदृष्ट्या षोडशकलोपाधिभिः सकल इव स्वज्ञदृष्ट्या निष्कलः पुरुषो लक्ष्यते । षोडशकलाध्यारोपापवादाभ्यां यस्तदाधारत्वेनाभिमतः तद्गताधेयतानिरूपिताधारतावैरल्यात् निष्प्रतियोगिकनिराधारः केवलः पुरुषोऽवशिष्यते, तदवगतेः सुदुर्घटत्वात् । तद्घटनाय कलानां तत्प्रभवत्वमुच्यते । न हि निष्कल-

ब्रह्माध्यारोपापवादमन्तरेण षोडशकला अपि प्रतिपादयितुं शक्या:, निष्कल-ब्रह्मातिरिक्तसत्तावैरल्यात्। •कलानां स्वाज्ञस्वज्ञदृष्टिभ्यां इमा: षोडशकला: पुरुषे विकल्पिता: पुनरभावं गता इव लक्ष्यन्ते ॥ २ ॥

ब्रह्मबोधनाय कलानामध्यारोप:

स ईक्षाञ्चक्रे। कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि? कस्मिन् वा प्रतिष्ठिते प्रतिष्ठास्यामि? इति ॥ ३ ॥ स प्राणमसृजत प्राणाच्छ्रद्धां खं वायुर्ज्योतिराप: पृथिवीन्द्रियं मनोऽन्नमन्नाद्वीर्यं तपो मन्त्रा: कर्मलोका लोकेषु च नाम च ॥ ४ ॥

तत्र स्वाज्ञदृष्टिमनुसृत्य कलानां सृष्टिक्रम उच्यते—स इति। भारद्वाजेन य: पृष्ट: षोडशकल: पुरुष: आचार्येणापि यस्मिन् एता: षोडशकला: प्रभवन्ति स इहैवान्त:शरीरे षोडशकलारोपापवादाधिकरणत्वेन उपलभ्यते। न हि कुण्डे बदरवत् स्वकार्यषोडशकलाभि: तत्कार्यशरीरे निक्षिप्तो भवति। मूर्ते मूर्तद्रव्यं हि निक्षेप्तुं शक्यते। न हि पुरुषरूपं मूर्तममूर्तं वा भवितुमर्हति। निष्प्रतियोगिकनिष्कलपुरुषावगते: मूर्तामूर्तायमानषोडशकलापह्नवपूर्वकत्वात्। स कथं स्वकार्यकार्यशरीरमात्रे परिच्छिद्यते? "देशत: कालतो वस्तुत: परिच्छेद-रहितं ब्रह्म" इति श्रुते:। निष्प्रतियोगिकब्रह्ममात्रस्वरूपाधिगमे स्वान्त:-करणवृत्त्यवभासकप्रत्यक्चिद्धातुप्रबोधं विना नान्यद्द्वारान्तरमस्ति। तस्मादन्त:-शरीरे प्रत्यगादिभावमापन्न: पुरुष: उपलभ्यत इत्युक्तम्। सोऽयं प्रत्यगादि-भावमापन्न: पुरुष: ईक्षां ईक्षणं आलोचनं चक्रे कृतवानित्यर्थ:। कथम्? इत्यत आह—कस्मिन्निति। कस्मिन् कर्तरि देहात् उत्क्रान्ते अहमप्युत्क्रान्तो भविष्यामि? तथा कस्मिन् वा प्रतिष्ठिते शरीरे अहमपि प्रतिष्ठास्यामि? इति, प्रतिष्ठित: स्यामित्यर्थ: ॥ ३ ॥ एवमीक्षित्वा स हि सर्वज्ञेश्वर: प्राणं सर्वप्राणिकरणाधारतया हिरण्यगर्भमात्मानं असृजत उत्पादितवान्। तत:

प्राणात् सर्वप्राणिशुभकर्मप्रवृत्तिहेतुभूत**श्रद्धां** उत्पादयित्वा ततः श्रद्धातः कर्मतत्फलोपभोगसाधनपञ्चमहाभूतानि असृजत। तत्र **खं** शब्दगुणकम्। शब्दस्पर्शगुणको **वायुः**। शब्दस्पर्शरूपगुणको **ज्योतिः** अग्निः। शब्दस्पर्शरूपरसगुणवत्य **आपः**। शब्दस्पर्शरूपरसगन्धगुणात्मिका **पृथिवी**। तथा तैरेव भूतैः कर्मज्ञानभेदेन द्विप्रकारं **इन्द्रियजातम्**। तदनुग्राहकत्वेन कामसंकल्पादिवृत्तिमन्**मनः**। एवं व्यष्टिसमष्टिकार्यं करणं च सृष्ट्वा तत्स्थितिहेतुव्रीहियवादिलक्षणं **अन्नम्**। ततोऽद्यमानात् **अन्नात् वीर्यं** बलं प्रजोत्पादनसामर्थ्यम्। तस्य सर्वकर्मप्रवृत्तिसाधनत्वात्, "स यदा बली भवति अथ उत्थाता भवति" इत्यादिश्रुतेः। एवं वीर्यवत्प्राणिनां **तपः** कृच्छ्रचान्द्रायणादिसम्यगालोचनं वा, तस्य चित्तशुद्धिसाधनत्वात्। तपोविशुद्धान्तर्बहिःकरणवन्मन्तारं त्रायन्त इति **मन्त्राः** ऋग्यजुस्सामाथर्वाङ्गिरसः, तेषां सर्वकर्मतत्त्यागज्ञानसाधनत्वात्। कर्म तावदग्निहोत्रादिलक्षणम्। ततः **कर्मफलभूता लोकाः**। तेषु **लोकेषु च** तत्प्रविभक्तवस्तूनां **नाम च** देवदत्त इत्यादि। एवं एताः षोडशकलाः तैमिरिकदृष्टिदृष्टद्विचन्द्रमशकमक्षिकाद्या इव स्वाज्ञदृष्टिविकल्पितप्राणिकर्मापेक्षया विसृष्टाः स्वप्नदृष्टपदार्थवत् गन्धर्वनगरवच्च मिथ्याभूता इत्यर्थः॥ ४॥

आरोपितकलानां पुरुषात्मता

**स यथेमा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रं प्राप्यास्तं गच्छन्ति भिद्येते तासां नामरूपे समुद्र इत्येवं प्रोच्यते एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति भिद्येते चासां नामरूपे पुरुष इत्येवं प्रोच्यते स एषोऽकलोऽमृतो भवति॥ ५॥**

पुनस्ताः स्वज्ञदृष्ट्या नामरूपादिविभागं विहाय स्वकारणे प्रलीयन्त इत्यत्र दृष्टान्तमाह—**स यथेति**। यथा लोके **इमाः नद्यः स्यन्दमानाः**

स्रवन्त्यः समुद्र एवायनं परा गतिर्यासां ताः **समुद्रायणाः समुद्रं प्राप्य अस्तं** स्वरूपतिरोधानतां **गच्छन्ति । तासां** गङ्गागोदावरीत्यादिनामरूपे **भिद्येते ।** ततः **समुद्र इत्येवं प्रोच्यते ।** दार्ष्टान्तिकमाह—**एवमिति ।** यथा अयं दृष्टान्तः तथा इयं उक्तलक्षणस्य पुरुषस्यास्य **परिद्रष्टुः** दर्शनकर्तृस्वरूपस्य सर्वावभासकस्य भास्यत्वेन **इमाः** प्राणादिनामान्ताः **षोडशकलाः** पुरुष एवायनं पर्यवसानं यासां ताः **पुरुषायणाः पुरुषं** स्वापवादाधिकरणरूपं **प्राप्यास्तं गच्छन्ति । भिद्येते चासां नामरूपे** ब्रह्मविद्भिः प्राणादिनामान्तकलापवादाधारः **पुरुष इत्येवं प्रोच्यते ।** परमार्थदृष्ट्या किम्? इत्यत आह-- **स एष** इति । प्राणादिनामान्तकलारोपापवादकलनापह्नवसिद्धब्रह्ममात्रतया यो विराजते सोऽयं **एष** निष्प्रतियोगिकाकलः निष्कल इत्यर्थः । स्वाज्ञस्वज्ञदृग्विभातषोडशकलाकलनात्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन वा अस्तिनास्तीति विभ्रमो हि मृत्युः यत्सम्यज्ज्ञानतोऽपह्नवपदं भजति सोऽयं **अकलो** निष्प्रतियोगिका**मृतो भवति ।**

ततस्तिमितगम्भीरं न तेजो न तमस्ततम् ।
अनाख्यमनभिव्यक्तं सत् किञ्चिदवशिष्यते ॥

इति श्रुतेः ॥ ५ ॥

निर्गुणज्ञानफलं ऋक्सम्मतिश्च

**तदेष श्लोकः—**

**अरा इव रथनाभौ कला यस्मिन्प्रतिष्ठिताः ।**
**तं वेद्यं पुरुषं वेद यथा मा वो मृत्युः परिव्यथा इति ॥ ६ ॥**

उक्तार्थमेष मन्त्रोऽप्याह—**तदेष श्लोको** भवतीति । यथा **रथनाभौ** रथचक्रपरिवारा **अराः** प्रवेशिताः तदाश्रया भवन्तीत्यर्थः, तथा **यस्मिन्** पुरुषे प्राणादिनामान्तषोडशकलाः **प्रतिष्ठिताः** स्वज्ञदृष्ट्या पुरुषमात्रतां **गताश्च ।** परमार्थदृष्ट्या यत्र प्राणादिनामान्ताः षोडशकलाः सन्तीति विभ्रमापह्नवोक्ति-

रण्यपह्नवतां भजेत्, तं निष्प्रतियोगिकब्रह्ममात्रतया वेदनीयं **वेद्यं**—तस्य निष्प्रतियोगिकपूर्णरूपत्वात्—**पुरुषं यो यथा वेद** तद्वेदनसमकालं **स** तन्मात्रतां भजति। तथा हे शिष्याः! **वः** युष्मान् स्वातिरिक्तकला अस्तिनास्तीति विभ्रमरूपो **मृत्युः मा परिव्यथाः** परितो व्यथां मा करोतु। निष्प्रतियोगिक-निष्कलः पुरुषः स्वमात्रतया भात्वित्यर्थः। एवं यो न वेद स स्वातिरिक्त-मृत्युग्रस्तो भवेत् इत्यभिप्रायः॥ ६॥

वक्तव्यार्थपरिसमाप्तिः

तान् होवाचैतावदेवाहमेतत्परं ब्रह्म वेद नातः परमस्तीति ॥७॥

एवं शिष्यान् प्रति पूर्णानुग्रहं कृत्वा इतो वक्तव्यांशमस्तीति भ्रमं मार्जयन्नाचार्यः तान् होवाचेत्याह—**तान् होवाचेति**। स्वातिरिक्तप्राणादि-नामान्तषोडशकलातत्कार्यजातापह्नवसिद्धं निष्प्रतियोगिकस्वमात्रतया वेदनीयं **एताव-देव। एतत् परं ब्रह्म वेदाहं न** ह्य**तः परं** वेदितव्यं किञ्चित् **अस्तीति** पिप्पलादाचार्यः **तान्** शिष्यान् **उवाच। ह** किल। "नातः परं वेदितव्यं हि किञ्चित्" इति श्रुतेः॥ ७॥

आचार्यपूजनम्

**ते तमर्चयन्तस्त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसीति। नमः परमऋषिभ्यो नमः परमऋषिभ्यः॥ ८॥**

आत्मविद्याविनिष्क्रयस्य,

सप्तद्वीपवती भूमिः दक्षिणा नावकल्पते।

इति श्रुत्यनुरोधेन विद्याविनिष्क्रयमन्यदपश्यन्तः ते शिष्याः तत्पादयोः पुष्पा-ञ्जलिप्रकिरणेन **तमर्चयन्तः** पदे पदे नमस्कारपूर्वकं विस्मयाविष्टाः सन्तः स्तुवन्ति। **त्वं हि नो**ऽस्माकं **पिता** निष्प्रतियोगिकब्रह्ममात्रज्ञानजनयितृत्वात्।

यतः स्वाविद्यासागरपारं **तारयसि** अस्मान्, अतः पितृत्वं तवोपपन्नम्। यः शरीरमात्रं जनयति सोऽपि पूज्यतरो दृश्यते। किमु वक्तव्यं ब्रह्मभावदातुः? इत्यभिप्रायः। त्वादृशेभ्यो **नमः परमऋषिभ्यो नमः परमऋषिभ्यः** इति द्विर्वचनं प्रश्नोपनिषत्परिसमाप्त्यर्थम् ॥ ८ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
प्रश्नोपनिषदो व्याख्या लिखिता ब्रह्मगोचरा।
एतद्विवरणग्रन्थोऽशीतिपञ्चशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे चतुस्संख्यापूरकं प्रश्नोपनिषद्विवरणं सम्पूर्णम्

---

# मुण्डकोपनिषत्

## भद्रं कर्णेभिः—इति शान्तिः

## प्रथममुण्डके प्रथमः खण्डः

विद्यास्तुतये विशिष्टगुरुपरम्परा

ॐ ब्रह्मा देवानां प्रथमः संबभूव विश्वस्य कर्ता भुवनस्य गोप्ता ।
स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ॥ १ ॥
अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् ।
स भारद्वाजाय सत्यवाहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ॥ २ ॥

यद्ब्रह्माश्रित्य वर्तेते विद्याविद्ये महाभ्रमे ।
तदपह्नवसंसिद्धं तदहं परमाक्षरम् ॥

इह खलु अथर्वणवेदप्रविभक्तमुण्डकशाखामस्तकमुण्डकोपनिषदारभ्यते । उपनिपूर्वस्य षद्लृधातोरर्थस्मरणात् ये ब्रह्मविद्यामुपयन्ति तद्गर्भजन्माद्यनर्थव्रातं शातयति, स्वाविद्यामवसादयति, निरविद्यं ब्रह्म वा गमयतीति ब्रह्मविद्या उपनिषदुच्यते । आख्यायिका तु विद्यास्तुत्यर्था । ब्रह्मविद्यासंप्रदायकर्तृपारंपर्यदर्शनात् । "ब्रह्मा देवानां" इत्याद्यथर्वाद्यैः महद्भिः परमपुमर्थसाधनत्वेन

ब्रह्मविद्या लब्धेति विद्यायां स्तुतायां तत्र सर्वे प्रवर्तेरन्निति विद्या महीकृता। विधिप्रतिषेधसाध्यसाधनविषयत्वेन ऋग्वेदादिलक्षणापरविद्यायाः सकामिनां "अविद्यायामन्तरे वर्तमानाः" इत्यादिना संसारहेतुत्वेऽपि निष्कामिनां कर्मफलार्पणतुष्टेशप्रसादतः सत्त्वशुद्धिद्वारा सर्वकर्मत्यागलक्षणब्रह्मविद्याहेतुत्वमवगम्यते। "न कर्मणा न प्रजया धनेन," "वेदान्तविज्ञानसुनिश्चितार्थाः" इत्यादिना अपरविद्यासाधननिष्पन्नपरविद्यायाः स्वोत्पत्तिसमकालं परमाक्षरमवगम्यते। "यथा तदक्षरमधिगम्यते यत्तदद्रेश्यं" इत्यादिना प्रबोधसमकालं तद्भावापत्तिरिह श्रूयते। "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिना शास्त्रादावेवानुबन्धचतुष्टयस्य प्रकटितत्वान्नेह वक्तव्यमस्तीति। एवमुक्तलक्षणलक्षितोपनिषदोऽल्पग्रन्थतो विवरणमारभ्यते—**ब्रह्मा देवानां** इत्यादिना। षड्गुणैश्वरसंपत्त्या **ब्रह्मा** हिरण्यगर्भो द्योतनवतां इन्द्रादिदे**वानां प्रथमः** प्रधानः सन् अग्रे **संबभूव** आविर्बभूवेत्यर्थः "हिरण्यगर्भः समवर्तताग्रे" इति श्रुतेः। यथा कर्मवशात्संसारिणो जायन्ते न तथायमाविर्बभूव, तस्य निरावृतत्वेन स्वांशजप्राण्यदृष्टायत्तस्वतन्त्रत्वात्। स हि **विश्वस्य कर्ता** चतुराननरूपेण विश्वकृत्त्वात्। स्वोत्पन्नविश्वस्य विष्णुरूपेण **गोप्ता**। स्वनिष्ठाद्वयदूषकशासनपूर्वकं तदनुवर्तिसज्जनपालयितृत्वात्। एवं ब्रह्मण उक्तविशेषणं विद्यामाहात्म्यं ख्यापयति। स हि ब्रह्मा स्वातिरिक्तापह्नवतः स्वमात्रतयोपबृंहणात् ब्रह्म। तस्य "येनाक्षरं पुरुषं वेद सत्यं" इति **ब्रह्मविद्या**। यद्वा—ब्रह्मणा उक्तेति वा ब्रह्मविद्या। तां सर्वविद्याभिव्यक्तिहेतुत्वेन "येनाश्रुतं श्रुतं भवति" इति सर्वविद्यावेद्यं वस्तु यत्र प्रतितिष्ठति तां **सर्वविद्याप्रतिष्ठां अथर्वाय ज्येष्ठपुत्राय प्राह** उपदिदेशेत्यर्थः। ब्रह्मणा सृष्टप्राणिषु अस्य प्रथमसृष्टत्वात् ज्येष्ठत्वम्॥ १॥ पुरा हि **ब्रह्मा यां अथर्वणे प्रवदेत** प्रावदत्तामेव **ब्रह्मविद्यामथर्वा पुरा अङ्गिरे** अङ्गिर्नाम्ने **उवाच**। **स चाङ्गिर्भारद्वाजाय** भारद्वाजगोत्राय **सत्यवाहाय प्राह**। स हि **भारद्वाजोऽङ्गिरसे** स्वपुत्राय शिष्याय वा। परस्मादाचार्यादवरेण शिष्येण प्राप्तेति **परावराम्**। परः परमात्मा अवरः प्रत्यगात्मा तद्गतविशेषांशापाये तदुभयैक्यविषयेति वा परावराम्। प्राहेत्यनुषज्यते॥ २॥

ब्रह्मविद्याधिगमाय शौनकप्रश्नः

**शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ ।**
**कस्मिन्नु भगवो! विज्ञाते सर्वमिदं विज्ञातं भवति? इति ॥ ३ ॥**

शुनकस्यापत्यं **शौनकः** गार्हस्थ्यधर्मनैपुण्यात् **महाशालो** मुनिः भारद्वाजशिष्यं **अङ्गिरसं विधिवत्** यथाशास्त्रं **उपसन्नः** सन् **पप्रच्छ** । शौनकाङ्गिरसोः पुरा विधिवद्विशेषणादर्शनादुपसदनविधिरनियत इत्यवगम्यते । उभयमध्यपाती दीपन्यायार्थो वा मर्यादाप्रदर्शनार्थो वायं विधिरवगम्यताम् । "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इति वक्ष्यमाणश्रुत्यनुरोधेनोपसदनविधेरिष्टत्वात् । किमयं पप्रच्छ? इत्यत आह—**कस्मिन्नु**? इति । नु इति वितर्के । **भगवो** हे भगवन्! **कस्मिन्** निष्प्रतियोगिकस्वमात्रतया **विज्ञाते** यत् स्वाज्ञादिदशायां स्वातिरिक्तं आत्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन वा विदितं अवगम्यते, तत् **सर्वमिदं** विश्वं परमार्थदृष्ट्या तद्गतहेयांशापह्नवसिद्धब्रह्ममात्रतया **विज्ञातमवगतं भवतीति** श्रुत्याचार्यमुखतः सामान्यतो विदित्वा तदियत्तां विशेषतोऽवगन्तुं पप्रच्छेत्यर्थः ॥ ३ ॥

अङ्गिरसो विद्योपदेशः

**तस्मै स होवाच । द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो**
**वदन्ति परा चैवापरा च ॥ ४ ॥**

आचार्यः शौनकप्रश्नप्रतिवचनं सोपायमाह—**तस्मै** इति । स्वमात्रस्वातिरिक्तगोचरत्वेन **ब्रह्मविदः** परमार्थदर्शिनो यद्भावाभावगोचरविद्याविद्येयत्तां **वदन्ति** ते **द्वे विद्ये** अपि **वेदितव्ये** । ह किल । के ते? इति । **परा च** परमात्मविद्या । **अपरा च** विधिप्रतिषेधात्मकधर्माधर्मतत्साधनतत्फलस्वर्गचित्तशुद्ध्यादिविषया ॥ ४ ॥

परापरविद्याविभागः

तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा यया तदक्षर-मधिगम्यते ॥ ५ ॥ यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तद-पाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिपश्यन्ति धीराः ॥ ६ ॥

न च, कस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवति ? इति शौनकप्रश्नानुरोधं तत्स्वरूपे वक्तव्ये सति तद्विहाय "द्वे विद्ये वेदितव्ये" इति अपृष्टोत्तरं उक्तमिति वाच्यम् । वक्तव्यप्रतिवचनस्य क्रमाकांक्षत्वात् । न ह्यविद्यानिरसनं विना ब्रह्मविद्या स्थातुं पारयतीत्यविद्येयत्तापरिज्ञानं विना सापह्नोतुं न हि शक्येत्यतदपह्नवपूर्वकं तन्मात्रस्वरूपं वक्तव्यमिति—परा चैवापरेत्यत्र "पाठक्रमादर्थक्रमो बलीयान्" इति न्यायाच्चेति—आदावपरविद्यास्वरूप-मुच्यते—तत्रेति । ऋग्वेदादिविभागेन वेदाश्चत्वारः । शिक्षादीनि वेदाङ्गानि षट् । अङ्गानामङ्गिरक्षणार्थत्वात् । तत्र कर्मोपासनाभागस्य स्वाज्ञदृष्टिगोचरापरब्रह्म-विषयत्वादियमपरविद्योक्ता । परविद्यास्वरूपं विवृणोति—अथेति । अथ अपर-विद्यापरिज्ञानानन्तरं "यत्तदद्रेश्यम्" इत्यादिवक्ष्यमाणलक्षणमक्षरं क्षरसापेक्षप्रभ-वाक्षरगतहेयांशापाये यया निष्प्रतियोगिकब्रह्ममात्रमवगम्यते स्वावशेषतया प्राप्यते सेयं परा विद्योच्यते । अधिगम्यत इत्यत्र अधिपूर्वस्य गमेः प्राप्त्यर्थ-त्वात् ग्रामान्तराप्तिवत्तदाप्तिः स्यादिति चेन्न ; ब्रह्मणः स्वमात्रत्वात् । न हि स्वमात्रे स्वप्रवेश उपपद्यते, कर्मकर्तृविरोधात् ।

केवलं ब्रह्ममात्रत्वान्नास्त्यनात्मेति निश्चिनु । इति,

"आप्तिः स्वमात्रावशेषो न हि ग्रामान्तराप्तिवत्" इति च श्रुतेः परमाद्वैत सप्तकोक्तेश्च । यदि ऋग्वेदादिबाह्या तदा सा परा विद्या स्यात् । यदि

ऋग्वेदाद्यन्तर्गता तदानीमपरविद्येयं स्यात् इति चेन्न; तत्र ज्ञानकाण्डपृथक्करणात्। ऋगादिचतुर्वेदगतकर्मोपासनाकाण्डद्वयस्यापरब्रह्मगोचरत्वेनापरविद्यात्वेऽपि ऋगादिवेदप्रविभक्ततत्तच्छाखामस्तकाभिधोपनिषद्भागस्य ज्ञानकाण्डत्वेन स्वमात्रतया ज्ञेयवस्तुगोचरत्वात् प्राधान्येन तद्विज्ञानं हि पराविद्येति विवक्षितम्। न उपनिषच्छब्दराशिर्विवक्षितः। तस्य स्वातिरिक्तहेतोस्त्याग उपपद्यत इत्यत्र—

ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः॥

इति श्रुतेः। उपनिषदस्तर्हि निरर्थका इति चेन्न; विद्याहेतुत्वात्। तदर्थविचाराद्धि विद्या उत्पद्यते। नातः तासां नैरर्थक्यम्। मुमुक्षुभिः ग्राह्या एव वेदा उपनिषदश्च।

या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः।
मूढव्रातनिषेव्यास्ता नादर्तव्या मुमुक्षुभिः॥

इति स्मृतितो विद्योत्पत्त्यहेतुश्रुतिस्मृतितन्निष्पाद्यकर्मतत्फलानां कुदृष्टिविषयत्वेन परमार्थफलास्पर्शित्वात् त्यक्तव्यता स्यात्। ब्रह्ममात्राधिगमात् पुरा कर्तृकारकाद्यनेकोपकरणविजृंभिताग्निहोत्रादिकं कर्मानुष्ठेयम्। निष्कामस्य चित्तशुद्धिहेतुत्वात्। न हि तथा परविद्याविषये किंचिदप्यनुष्ठेयमस्ति, तदधिगमसमकालं स्वातिरिक्तकलनायाः परिसमाप्तत्वात्।

सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते।

इति स्मृतेः। ज्ञानेतराणां ज्ञानपरिसमाप्तत्वेऽपि ज्ञानस्य विद्यमानत्वात्कथं ब्रह्ममात्रसिद्धिः? इति चेन्न; स्वातिरिक्तापह्नवीकरणपटुज्ञानस्यापि स्वातिरिक्तापह्नवसमकालमपह्नवं गतत्वान्निष्प्रतियोगिकब्रह्ममात्रमवशिष्यत इत्यर्थः॥ ५॥ तादृग्विद्यावेद्यं किम्? इत्यत आह—**यत्तदिति**। **यत्** **अद्रेश्यं** अदृश्यं बुद्धीन्द्रियागोचरत्वेनालुप्तदृक्स्वरूपत्वात्। तथा **अग्राह्यं** कर्मेन्द्रियाविषयत्वात्। **अगोत्रं** अनन्वयत्वात्। न हि येनान्वितं स्यात्तन्मूलमस्ति। तथा **अवर्णं** मूर्तामूर्तद्रव्यधर्मत्वेनावर्णनीयत्वात्। **अचक्षुःश्रोत्रं** रूपनामादिकलनागोचरत्वात्। "यः

सर्वज्ञः सर्ववित् " इति श्रुतितः चेतनवद्विशेषणात् संसारिवत् चक्षुरादिकरणैरर्थ-साधकत्वं स्यादिति चेन्न ; स्थूलशरीरतदवयवकर्मेन्द्रियवैरल्यात् । **तदपाणिपादं** स्वातिरिक्तकरणग्रामाभावेऽपि सर्वार्थग्राहकशक्तिः स्यादित्यत्र—

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स श्रृणोत्यकर्णः ।

इत्यादिश्रुतेः । यत एवमदृश्यत्वादिविशेषणविशिष्टं अत एव **नित्यं** अविनाशित्वात् । ब्रह्मादिस्तम्बान्तविविधजन्तुरूपेण भवतीति **विभुं** सर्वव्यापकत्वात् **सर्वगतं** पञ्चीकृतापञ्चीकृतशब्दस्पर्शादिवैरल्यात् **सुसूक्ष्मम्** । किञ्च अद्रेश्यमित्यादि-विशेषणविशिष्टत्वेन स्वाङ्गापायतः कोशापायतो गुणतो वा कदाचिदपि यन्न व्येति **तदव्ययम्** । अशरीरत्वात् अक्षतिमत्त्वात् निर्गुणत्वाच्च **यदेतत्** सर्वात्मकमक्षरं घटादीनां मृदादिवत् **सर्वभूतानां योनिं** कारणम् । न हि मृदिव कारणान्तरापेक्षं किन्तु अभिन्ननिमित्तोपादानकारणं,

स्वयमेव जगद्भूत्वा प्राविशज्जीवरूपतः ।

इति श्रुतेः । यद्वा—स्वाङ्गदृष्टिप्रसक्तदृश्यग्राह्यान्वयमूर्तामूर्तकरणग्रामानित्यपरि-च्छिन्नस्थूलव्ययकार्यभूतग्रामसापेक्षाद्रेश्यत्वादिद्वादशविशेषणविशिष्टवस्तुनः सवि-शेषत्वमवगम्यते ।

दृश्यं यदि दृगप्यस्ति दृश्याभावे दृगेव न ।
कार्यं चेत्कारणं किंचित्कार्याभावे न कारणम् ॥

इत्यादिदृश्यकार्यसापेक्षदृगादिकारणान्तसविशेषश्रुतेः तद्गतविशेषांशापह्नवसिद्धं स्व-मात्रमिति **धीराः** ब्रह्मविद्वरीयांसः **परिपश्यन्ति** । निष्प्रतियोगिकब्रह्ममात्रसिद्धेः अद्रेश्यमित्यादिविशेषणानां,

उपायत्वात् न ह्युपायं विनोपेयसिद्धिरिष्यते ।
न ह्युपायं विना शक्यं साक्षात्कर्तुं चितः पदम् ॥

इति ब्रह्मप्रणवोक्तेः । एवमुक्तविशेषणहेयांशापह्नवसिद्धं परमाक्षरं निष्प्रतियोगिक-स्वमात्रमिति यया ब्रह्ममात्रगोचरविद्यया अधिगम्यते सैव परा विद्येति सुनिश्चितोऽर्थः ॥ ६ ॥

ब्रह्मणस्तटस्थलक्षणम्

यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवन्ति।
यथा सतः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्वम् ॥ ७ ॥
तपसा चीयते ब्रह्म ततोऽन्नमभिजायते।
अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतम् ॥ ८ ॥
यः सर्वज्ञः सर्वविद् यस्य ज्ञानमयं तपः।
तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते ॥ ९ ॥

स्वाज्ञदृष्टिप्रसक्तभूतयोनित्वेन यदक्षरं ईश्वराख्यमभिहितं तस्य भूतयोनित्वं सदृष्टान्तमाचष्टे—**यथेति**। लोके तावत् **यथा ऊर्णनाभिः** लूताकीटः किंचिदपि कारणान्तरमनपेक्ष्य स्वशरीराव्यतिरेकेण तन्तून् स्वयमेव **सृजते** बहिर्विस्तारयति, पुनरपि तानेव तन्तून् **गृह्णाति** स्वात्मावशेषं करोतीत्यर्थः। यथा च **पृथिव्यां** व्रीह्याद्या**ओषधयः** पृथिव्यनतिरिक्ताः **संभवन्ति**। **यथा च सतो** विद्यमानात् **पुरुषात्** मस्तकतद्भिन्नशरीरापेक्षया **केशाश्च लोमानि** च संभवन्ति कारणविलक्षणानीत्यर्थः। **तथा** निमित्तान्तरानपेक्षात् **अक्षरात् इह** संसारमण्डले विलक्षणसलक्षणभेदेन **विश्वं** समस्तं जगत् **संभवति** आविर्भवतीत्यर्थः ॥ ७ ॥ इत्थमनेकदृष्टान्तोपपादनं सुखप्रतिपत्त्यर्थम्। यदेवं ब्रह्मण उत्पद्यमानं विश्वं किं बदरमुष्टिप्रक्षेपवद्युगपत्संभवति ? इत्याशङ्क्य क्रमात् संभवतीति तत्क्रमं विवृणोति—**तपसेति**। पूर्वोक्तभूतयोन्यक्षरं **ब्रह्म तपसा** भाविसिसृक्षानुकूलज्ञानेन **चीयते** उपचीयते। अनभिव्यक्तनामरूपमिदं जगत् उत्पिपादयिषदंकुरमिवोच्छूनतां गच्छति पुत्रमिव पिता हर्षेण। सृष्ट्यादिशक्तिमत्सर्वज्ञतया उपचितात् **ततो** ब्रह्मणः स्वाज्ञदृष्ट्या अद्यते भुज्यते इत्य**न्नं** अव्याकृतं प्राण्यदृष्टानुरोधेनाभिव्यक्तनामरूपतयान्तरभिव्यज्यते। ततश्च अव्याकृतात् व्याचिकीर्षितावस्थामापन्नात् **अन्नात् प्राणः** जगदङ्कुरो विश्वात्मा हिरण्यगर्भो जायत इत्यनुषज्यते। तस्मादुक्तलक्षणलक्षितप्राणात्संकल्पादिवृत्तिमत्

**मनः** । तस्मात् मनसः **सत्याख्यं** आकाशादिभूतपञ्चक**मभिजायते** । तस्मात् क्रमेण सप्तलोका भूरादयः । तेषु मनुष्यादिप्राणितत्तदुचितवर्णाश्रमाचारक्रमेण कर्माणि तदनुष्ठाननिष्पन्नफलं **ह्यमृतम्** । यावत्कर्मजातं न नश्यति तावत् फलमपि न नश्यतीत्यमृतमित्युक्तम् ॥ ८ ॥ कथं पुनरेकस्मादक्षरात् नामाद्यमृतान्तं विश्वं जातम् ? इत्याशंक्याक्षरस्य सर्वात्मकत्वेन सर्वज्ञत्वात् तस्मादेव सर्वं जायत इत्यन्योऽपि मन्त्र आह—**यः** इति । **यः** सामान्यतः सर्वं जानातीति **सर्वज्ञः** विशेषतः सर्वं वेत्तीति **सर्ववित्** । **यस्य तपः** सृष्ट्यालोचनमपि स्वातिरिक्तं मिथ्या स्वयं सन्मात्रमिति **ज्ञानमयम्** । स्वातिरिक्तसिसृक्षाया विकारत्वेन—विकारार्थे मयट्—तपसः सर्वज्ञलक्षणत्वात् । **तस्मात्** सर्वज्ञात् एकस्मादक्षरादेव **एतत् ब्रह्म** हिरण्यगर्भाख्यं, असौ देवदत्त इत्यादि **नाम**, शुक्लकृष्णादिभेदेन **रूपं**, व्रीहियवादिलक्षणं **अन्नं च** क्रमेण **जायते** ॥ ९ ॥

---

## प्रथममुण्डके द्वितीयः खण्डः

अपरविद्यायाः प्रशंसा

**तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा संततानि । तान्याचरथ नियतं सत्यकामा एष वः पन्थाः सुकृतस्य लोके ॥ १ ॥**

पूर्वस्मिन् खण्डे ऋग्वेद इत्यादिसाङ्गवेदराशिः अपरविद्यात्वेनाभिहितः । "यत्तदद्रेश्यं" इत्यादि "अन्नं च जायते" इत्यन्तेन यया विद्यया अक्षरमधिगम्यते सा परा विद्या इति विशेषतोऽभिहिता । अतः परं बन्धमोक्षौ अनयोर्विषयौ वक्तव्यावित्युत्तरो ग्रन्थ आरभ्यते । तत्र ऋगादिचतुर्वेदप्रतिभक्त-

कर्मोपासनाकाण्डगोचरकर्तृकारकक्रियोपासनातत्फलवैचित्र्यसंसार एव हि बन्धः। यावन्निष्प्रतियोगिकब्रह्ममात्रज्ञानं नोदेति तावदयमनादिरनन्तो नैसर्गिक इव भाति। तत्सर्वानर्थापवादाधाररूपो हि मोक्षः। तत्राधेयनिरूपिताधारगतहेयांशापह्नव-सिद्धपरविद्यावेद्यब्रह्ममात्रप्रतिष्ठालक्षणः परमाक्षरो निष्प्रतियोगिकानाद्यनन्तो नैसर्गिकः स्वमात्रमवशिष्यते। पूर्वं तावदपरविद्यापरिज्ञानं विना न हि तत्र निर्वेदो जायते। तथा च "परीक्ष्य लोकान्" इत्यादिना वक्ष्यति। न हि अत्यन्तापरिज्ञातापर-विद्यायां परीक्षा उपपद्यत इत्यपरविद्येयत्तां विवृणोति—**तदेतत्सत्यमित्यादिना**। **कवयः** क्रान्तदर्शिनो वसिष्ठादयः **ऋग्वेदादिमन्त्रेषु** तैरेव प्रकाशितानि **यानि** अग्निहोत्रादि**कर्माणि अपश्यन्** दृष्टवन्त इति यत् **तदेतत्सत्यम्**। यावत्स्वाज्ञानं तावदवितथं स्वर्गादिफलसाधनत्वात्। तानि च वेदविहितत्वेन ऋषिपूगदृष्टान्यग्नि-होत्रादिकर्माणि होत्राध्वर्यवौद्गात्रप्रकारकत्रेतायां त्रयीसंयोगलक्षणायां **त्रेतायां** वा युगे प्रायशो **बहुधा** कर्मिभिः—कर्मणां क्रियमाणत्वात्—**सन्ततानि** संप्रवृत्तानि। अतो यूयं सत्यं स्वार्जितकर्मफलं तद्विषयककामो येषां ते **सत्यकामाः** सन्तः **नियतं** सर्वदा **तानि** अग्निहोत्रादिकर्माण्येवा**चरथ** निर्वर्तयथेत्यर्थः। स्वयं निर्वर्तित**सुकृतस्य** कर्मणः फलं यत्र लोक्यते दृश्यते भुज्यत इति लोकः। तस्मिन् **लोके** स्वर्गादौ गत्वा कर्म-फलाप्तये **वो** युष्माकं **एष** हि **पन्थाः** मार्गः। यानि त्रयीविहितानि अग्निहोत्रादि-लक्षणानि तानि एष पन्था: नान्यः कर्मफलाप्तयेऽस्तीत्यर्थः ॥ १ ॥

अग्न्यावाहुतेः कर्तव्यताप्रकारः

यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने ।
तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेत् ॥ २ ॥

कर्मणामग्निहोत्रस्य प्राथम्यात् तत्प्रकारं विशिनष्टि—**यदेति**। **यदा** यस्मिन् काले इन्धनैः सम्यगिद्धे **समिद्धे** वर्धिते **हव्यवाहने अर्चिः** ज्वाला **लेलायते** चलजिह्वायते, **तदा** तस्मिन् काले लेलायमाने चलत्यर्चिषि **आज्यभागौ** आग्नेयः सौम्यश्चेति तयो**रन्तरेणा**वापस्थाने देवतोद्देशेनाहुतीः **प्रतिपादयेत्**

प्रक्षिपेदित्यर्थः। आहुतीरिति बहुवचनं अनेकाहःकरणापेक्षया ज्ञेयम्। एवं सम्यगाहुतिप्रक्षेपादिलक्षणः कर्मफलप्राप्तये पन्था एष एवेत्यर्थः ॥ २ ॥

अग्निहोत्राकरणनिन्दा

यस्याग्निहोत्रमदर्शमपौर्णमासमचातुर्मास्यमनाग्रयणमतिथिवर्जितं च।
अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति ॥३॥

तस्य बहुपरिपन्थित्वात्तद्दुष्करतां स्पष्टयति **यस्येति**। **यस्य** अग्निहोत्रिणो गृहस्थस्याग्निहोत्रं दर्शाख्यकर्मणा वर्जितमित्य**दर्शं** आवश्यकत्वात्। अग्निहोत्रसंबन्धि हि दर्शम्। तदकरणतोऽग्निहोत्रं व्यर्थं भवेदित्यर्थः। तथा पौर्णमासमित्याद्यग्निहोत्रविशेषणं द्रष्टव्यम्। **अपौर्णमासं** पौर्णमासकर्मवर्जितम्। शरदादिकर्तव्याग्रयणकर्मवर्जितं **अनाग्रयणम्**। अहरहःकर्तव्यातिथिपूजा यत्र न क्रियते तद**तिथिवर्जितं च**। अग्निहोत्रकालमतिक्रम्य हुतं **अहुतम्**। दर्शादिवत् **अविधिना** हुतं अहुतमिति वा। वैश्वदेववर्जितं **अवैश्वदेवम्**। एवमङ्गविकलाग्निहोत्रादिकं कर्म किं करोति? इत्यत आह—**हिनस्तीति**। तस्यैवं कर्मकर्तुः सप्तजन्मार्जितसुकृततत्फलसहितान् **आसप्तमान्** पुण्य**लोकान् हिनस्ति**। यद्वा—सम्यक् क्रियमाणकर्मफलात्मकभूरादिसप्तसहितानासप्तमान् लोकान् हिनस्तीत्युक्तिः आयासमात्रपर्यवसन्नेत्यर्थः। अथवा आत्मपितृपितामहप्रपितामहपुत्रपौत्रप्रपौत्राः स्वात्मोपकारकाः सप्त लोका अपि इत्थंभूतकर्मणा न भवन्तीत्यायासमात्रता अवशिष्यत इति हिनस्तीत्युक्तम् ॥ ३ ॥

सप्तानामर्चिषां निरूपणम्

काली कराली च मनोजवा च सुलोहिता या च सुधूम्रवर्णा।
स्फुलिङ्गिनी विश्वरुची च देवी लेलायमाना इति सप्त जिह्वाः ॥४॥

यथावदनुष्ठिताग्निहोत्रकर्मणो यथोक्तफलं स्पष्टयति—**कालीति**। **काल्यादिविश्वरुच्यान्ता लेलायमाना** अग्नेर्हविराद्याहुतिग्रसनार्थाः **सप्त जिह्वा** भवन्ति ॥४॥

अग्निहोत्राहुतीनां फलम्

एतेषु यश्चरते भ्राजमानेषु यथाकालं चाहुतयो ह्याददायन् ।
तं नयन्त्येताः सूर्यस्य रश्मयो यत्र देवानां पतिरेकोऽधिवासः ॥५॥
एह्येहीति तमाहुतयः सुवर्चसः सूर्यस्य रश्मिभिर्यजमानं वहन्ति ।
प्रियां वाचमभिवदन्त्योऽर्चयन्त्य एष वः पुण्यः सुकृतो ब्रह्मलोकः ॥

अग्निजिह्वाभेदं ज्ञात्वा तत्र होमफलमाह—**एतेष्विति**। **योऽग्निहोत्री** अग्निजिह्वाभेदेषु **एतेषु** काल्यादिरूपेण **भ्राजमानेषु चरते** अग्निहोत्रादिकर्माचरति यस्य कर्मणो यः कालः तं कालमनतिक्रम्य **यथाकालं** यजमानं **आददायन्** या यजमानेन आददाना **आहुतयो** निर्वर्तिताः **एता** आहुतयः **सूर्यस्य रश्मयो** भूत्वा **यत्र** स्वर्गे **देवानां पतिः** इन्द्रः **एकः** सर्वोपर्यधिवसतीत्यधिवासः भवति तत्र **तं** यजमानं **नयन्ति** प्रापयन्तीत्यर्थः ॥ ५ ॥ कथं रश्मिभिर्वहन्तीत्यत आह—**एह्येहीति**। कर्मभूमौ यजमानेन या हुता **आहुतयः सुवर्चसो** भूत्वा यजमानं **एह्येहीत्या**ह्वयन्त्यः सत्यः स्तुतिलक्षणां **प्रियां वाचं अभिवदन्त्यः अर्चयन्त्यश्च एष वो** युष्माकं **पुण्यः सुकृतो ब्रह्मलोकः** स्वर्गः। प्रकरणात् यथावत् हुताहुतयो यजमानं स्वर्गं प्रापयन्तीत्यर्थः ॥ ६ ॥

कर्मणां श्रेयोमूलत्वाभावः

प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति ॥ ७ ॥

इत्थं स्वर्गफलदं कर्म सर्वैरप्यनुष्ठेयं "कुर्वन्नेवेह कर्माणि" इति यावज्जीवं कर्मकर्तव्यश्रुतेः—इत्याशंक्य यावज्जीवादिश्रुतेः स्वाज्ञगतिकत्वात् न हि स्वज्ञपदमारोढुमिच्छुः तद्वर्त्म स्पृशति तस्य ज्ञानगन्धविकलसेवनीयत्वात्। यत एवैतदविद्याकामकृद्भाव्यं, अतो निस्सारं दुःखात्मकमिदमिति तद्वर्त्म निन्द्यते—**प्लवा** इति।

यस्मादेते यज्ञस्य रूपाणि **यज्ञरूपाः अदृढाः** जर्झरीभूतकाष्ठरज्जुबन्धवदस्थिराः **प्लवा हि** विनाशिन इत्यर्थः । एते यज्ञनिर्वर्तकाः षोडशर्त्विजः पत्नी यजमानश्चेति अष्टादशसंख्याका इति शास्त्रेणोक्तम् । येष्वष्टादशसु **अवरं कर्म** केवलज्ञानविरलत्वादवरत्वम् । अतः तेषामवरकर्माश्रयाणामष्टादशानां कुण्डनाशे क्षीरदध्यादिनाशवत् कर्माणि तत्फलेन साकं प्लवन्त इति । अदृढतया प्लवत्वात् । यत **एतत्कर्म**वर्त्मानुसरणं **श्रेय** इति कर्मफलपटावृतदृष्टयो **मूढा येऽभिनन्दन्ति** हृष्यन्ति क्वचित्कालं स्वर्गे स्थित्वा फलभोगक्षयतः **पुनरेव जराञ्च मृत्युञ्च** तदुपलक्षितं जन्मापि **यन्ति** ॥ ७ ॥

अविद्वन्निन्दा

**अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितंमन्यमानाः ।**
**जङ्घन्यमानाः परियन्ति मूढा अन्धेनैव नीयमाना यथान्धाः ॥ ८ ॥**

इतश्च ते निन्द्यन्ते—**अविद्यायामिति** । अविवेकप्रधानाविद्यायां **अन्तरे** मध्ये **वर्तमाना** अपि **स्वयं धीराः** विदितवेदितव्यमिथ्यास्मयेन आत्मानं **पण्डितं** सकलकलावल्लभं **मन्यमानाः** । किंच जरारोगाद्यनेकानर्थपरंपरया **जंघन्यमाना** हन्यमानास्सन्तः **यथा अन्धेनैव अन्धाः नीयमानास्सन्तः** गर्तकण्टकादौ पतन्ति तथा अमी **मूढाः** कर्मिणः **परियन्ति** बंभ्रमन्तीत्यर्थः ॥ ८ ॥

कर्मिणां यातायातक्लेशः

**अविद्यायां बहुधा वर्तमाना वयं कृतार्था इत्यभिमन्यन्ति बालाः ।**
**यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते ॥ ९ ॥**
**इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ।**
**नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति ॥ १० ॥**

पुनरितोऽपि ते निन्द्यन्ते—**अविद्यायामिति**। **बहुधा** बहुप्रकारं **अविद्यायां वर्तमानाः बालाः** कर्मिणः **वयं कृतार्था इति अभिमन्यन्ति** अभिमानं कुर्वन्तीत्यर्थः। **यत्** यस्मात् एवं **कर्मिणो रागात्** कर्मफलाभिलाषतो यद्वेदितव्यं आत्मानात्मयाथात्म्यं तत् **न प्रवेदयन्ति** नैव जानन्ति। **तेन** आत्मानात्मयाथात्म्याविवेकेन कर्मफलभोगा**तुरास्**सन्तः तद्भोगक्षयात् **क्षीणलोकाः** क्षीणकर्मफलाः स्वर्गात् **च्यवन्ते** ॥ ९ ॥ इतश्च त एव निन्द्यन्ते—**इष्टे**ति। श्रौतं कर्म **इष्टम्**। स्मार्तं कर्म **पूर्तं** च। एतदेव पुरुषार्थसाधनत्वेन **वरिष्ठं मन्यमानाः** चिन्तयन्तः ततो**ऽन्यत्** आत्मज्ञानाख्यं **श्रेय**स्साधनं **न वेदयन्ते**। स्वदेहदारपुत्रादिषु आत्मात्मीयाभिमानप्रमत्ततया **मूढा** न जानन्तीत्यर्थः। ते हि मूढा **नाकस्य पृष्ठे** भूरादिलोकोपरिस्थाने **सुकृते** भोगायतने स्वर्गे कर्मफल**मनुभूय पुनः इमं** मानुषं **लोकं** तस्मात्तिर्यङ्नरकादिलक्षणं **हीनतरं** लोकं **वा** शेषकर्मणा साकं **विशन्ति**। एवमनन्तकल्पकोटिकालं जनिमृतिलक्षणसंसारचक्रे परिभ्रमन्तीत्यर्थः ॥ १० ॥

उपासकानां ब्रह्मलोकप्राप्तिः

**तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः।**
**सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा ॥**

ये हि निष्कामबुद्ध्यानुष्ठितज्ञानकर्मसमुच्चयसिद्धापरविद्यापरायणाः ते ह्यर्चिरादिमार्गेण ब्रह्मलोकं प्रयान्तीति स्फुटयति—**तप** इति। ये तु ज्ञानकर्मसमुच्चयानुष्ठातारो गृहस्था वानप्रस्थाः स्वाश्रमाचारसंपन्ना व्रतिनो यतयश्च स्वाश्रमोचितं कर्म तपश्च हिरण्यगर्भादिविषयविद्या श्रद्धा चेति **तपःश्रद्धे** समुच्चित्य उपरतकरणतः **शान्ताः**। ज्ञानप्राधान्यात् **विद्वांसः** व्रत्यादयः। **भैक्षचर्यां चरन्तः** परिग्रहाभावात्। **अरण्ये** ग्रामे वा **उपवसन्ति**। यत्र कुत्र वा वर्तमानाः सन्तः तपःश्रद्धे सेवन्त इत्यर्थः। ते हि व्रत्यादयः **यत्र** ब्रह्मलोकादौ **अमृतः स पुरुषोऽव्ययात्मा** हिरण्यगर्भो वर्तते। अपरविद्यागम्याः संसारगतयो यदन्ता यावत्संसारस्थायित्वं अव्ययत्वं स्वयाथात्म्यज्ञानावधिकत्वात्।

**सूर्यद्वारेण** सूर्योपलक्षितोत्तरमार्गेण पुण्यपापवैरल्यात् **विरजा** ब्रह्मलोकं **प्रयान्ति** । यत्राव्ययात्मा तत्र विरजाः प्रयान्तीत्यत्र तत्रत्यसालोक्यादिकमेव मुख्यामृतत्वमिति चेन्न ; निष्प्रतियोगिकब्रह्ममात्रज्ञानवैरल्यात् तदवगतेः ज्ञानकर्मसमुच्चयतत्फलसालोक्याद्यपह्नवपूर्वकत्वात् । "तमेवं विद्वांस इहैवामृता भवन्ति" इति श्रुतेः परविद्यानिष्पन्नमुख्यामृतत्वस्य इहाप्रसक्तत्वात् । न ह्यकस्मान्मुख्यामृतप्रसङ्गोऽस्ति । तत्रत्यविरजस्त्वाव्ययत्वे तु आपेक्षिके भवतः । हिरण्यगर्भाप्तेः साध्यसाधनक्रियाकारकफलनिष्पन्नत्वेन कालपरिच्छिन्नत्वेन च तद्भावविरलमुख्यफलाशास्यमानत्वात् ॥ ११ ॥

### कर्मफलेभ्यो निर्विण्णस्य गुरूपसदनम्

**परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन ।**
**तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥**

अथेदानीं सकामनिष्कामकर्मतत्फलस्वर्गनरकब्रह्मलोकादपि विरक्तस्य परविद्याधिकारं दर्शयति—**परीक्ष्येति** । अपरविद्यातत्फलवैमुख्यपूर्वकं परविद्यातत्फलेयत्तां विजिज्ञासुः **ब्राह्मणः** यदेतदृग्वेदादिप्रविभक्तकर्मोपासनाकाण्डगोचरापरविद्याविषयं तत् स्वाविद्यावृतपुरुषानुष्ठेयम् । तस्यैव तत्राधिकृतत्वात् । ये तत्कृतकर्मफलभूता दक्षिणोत्तरमार्गलक्षणाः पुण्यलोकाः सन्ति, ये च प्रतिषिद्धविहितकर्मकरणाकरणदोषनिष्पन्ननरकतिर्यक्प्रेतपिशाचादिलोकाः सन्ति, तेषां स्थावराद्यव्यक्तान्तानां लोकानां बीजाङ्कुरवदितरेतरोत्पत्तिनिमित्तत्वेनानेकानर्थसंकुलत्वेन मायामरीच्युदकगन्धर्वनगरजलबुद्बुदफेनस्वप्नप्रपञ्चवत् प्रतिक्षणविनाशित्वेन कदलीगर्भवत् चित्रभित्तिवन्निस्सारमिथ्यामनोरमत्वेन च मिथ्यास्वरूपत्वात् इत्येतान् स्वाज्ञविकल्पित**कर्मचितान् लोकान्** प्रत्यक्षादिप्रमाणैरागमैश्च सम्यक् **परीक्ष्य** पृष्ठतः कृत्वा मिथ्याबुद्ध्या तत्र **निर्वेदं** वैराग्यं **आयात्** प्राप्नुयात् । निष्पूर्वो विदिरत्र वैराग्यार्थः । ततः किम्? इत्यत आह—**नास्तीति** । इह स्वाज्ञदशायां कश्चिदपि **अकृतः** पदार्थो नास्ति । सर्वपदार्थस्य स्वातिरेकेण कृतत्वान्मिथ्यात्वं

सिद्धमित्यर्थः। यद्वा—**कृतेन** कर्मणा तत्त्यागं विना अकृतो मोक्षो नास्तीति तत्प्रापिपयिषया तत्र निर्वेदमायादित्यर्थः। यस्मात् कर्मकार्यमनित्यं उत्पाद्यं आप्यं विकार्यं संस्कार्यं, अतः सर्वथा कर्म अनित्यसाधनम्। नातः परं कर्मणो विषयोऽस्ति। यदेतद्विपरीतत्वेन निष्प्रतियोगिकनित्यं बन्धमोक्षमुमुक्षुभिराशास्यमानं तदेव हि मयापि लब्धव्यमिति मनीषया, "पश्यतेहापि सन्मात्रमसदन्यत्", "ब्रह्ममात्रमसन्न हि" इति श्रुत्यनुरोधेन यत् स्वातिरिक्तसर्वासदपह्नवसिद्धत्वेन सन्मात्रमवशिष्यते, **तद्विज्ञानार्थं सोऽयं** ब्राह्मणः **समित्पाणिरगृहीतपाणिः** सन् शिष्याज्ञानमोचकत्वात् **गुरुं** अवगतवेदान्तपरमाशयत्वात् **श्रोत्रियं** परविद्यागोचरब्रह्ममात्रनिष्ठं **अभिगच्छेत्**। एवं गुरुमासाद्य प्रणिपातादिशुश्रूषया प्रसाद्य ब्रह्मविषयकप्रश्नान् पृच्छेत ॥ १२ ॥

विधिवदुपसन्नाय विद्योपदेशः

तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्विताय।
येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ॥ १३ ॥

एवमुपसन्नाय गुरुः किं वदेत्? इत्यत आह—**तस्मा** इति। **स विद्वान्** आचार्यः एवं यथावत् **उपसन्नाय** स्वातिरिक्त**प्रशान्तचित्ताय** अत एव **शमान्विताय** बाह्यान्तःकरणवृत्त्युपशमनोन्मुखाय **तस्मै** शिष्याय **येन** परविद्यात्मकब्रह्मविज्ञानेन अदृश्यादिलक्षणं परमा**क्षरं** निष्प्रतियोगिकपूर्णत्वात् **पुरुषं**, असल्लौकिकाद्यष्टदृष्टिगतानृतांशापह्नवसिद्धत्वात् **सत्यं**, निष्प्रतियोगिकस्वमात्रधिया **वेद** विजानाति। **तत्त्वतः तामेव ब्रह्मविद्यां प्रोवाच** प्रब्रूयादित्यर्थः। आचार्यस्याप्ययमेव नियमः। एवंभूतशिष्योद्धरणं कर्तव्यमित्यत्र—

यमेवैष विद्याश्रुतमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम्।
अस्मा इमामुपसन्नाय सम्यक् परीक्ष्य दद्याद्वैष्णवीमात्मनिष्ठाम् ॥

इति श्रुतेः ॥ १३ ॥

# द्वितीयमुण्डके प्रथमः खण्डः

ब्रह्मणस्तटस्थलक्षणविवरणम्

तदेतत्सत्यम् ।

यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः ।

तथाक्षराद्विविधाः सोम्य ! भावाः प्रजायन्ते तत्र चैवापियन्ति ॥१॥

प्रथममुण्डकेऽपरविद्यातत्कार्यत्वेन तत्फलत्वेन च यः संसारो वर्णितः स यत्र स्वाज्ञादिदृष्ट्या जन्मस्थितिभङ्गं भजति तस्य प्रतिक्षणं विकारित्वात् तदनृतम् । तदारोपापवादाधिकरणं यत् तत् सत्यम् । यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवति तदक्षरम् । परविद्यानिष्पन्नं यत् अपरविद्याफललक्षणं सत्यत्वेनोक्तं तदापेक्षिकम् । इदन्तु परविद्याविषयम् । सर्वारोपापवादाधिकरणत्वेन सदा एकरूपत्वात् । तदेव परमार्थसत्यम् । "प्रोवाच तां तत्वतो ब्रह्मविद्यम्" इति यदुक्तं तदेतत्परविद्यागोचरं वस्तु तटस्थस्वरूपलक्षणाभ्यां सोपायमभिधातुमुत्तरो ग्रन्थ आरभ्यते—तदेतत्सत्यमित्यादिना । यदेतत्परविद्याविषयं **तदेतत् सत्यम्** । तस्य स्वातिरिक्तानृतग्रासत्वात् । यत् तदतिरिक्तं तदसत्यं तस्य मृग्यत्वात् । यद्यस्तीति भ्रान्तिः तदा कार्यं कारणपर्यवसानमित्यत्र दृष्टान्तमाह—**यथेति** । **यथा** समिदाज्यादिना **सुदीप्तात् पावकात् सहस्रशः** पावकावयवत्वेन **तत्सरूपाः विस्फुलिङ्गाः प्रभवन्ते** निर्गच्छन्ति, **तथा** उक्तलक्षणात् **अक्षरात्** हे **सोम्य** ! नामरूपात्मकनानोपाधियोगात् **विविधा** बहुविधा **भावा** जीवाः स्वकारणाक्षर-सरूपाः सन्तः **प्रजायन्ते** । पुनः **तत्र चैवाक्षरे अपियन्ति** । यथा घटशरावाद्याका-शव्यवहृतिः घटशरावादिनिष्ठा, वस्तुतो घटशरावादिसत्त्वासत्त्वाभ्यां तदवच्छिन्ना-काशं आकाशमात्रं, तथा देवदत्तोऽयमित्यादिव्यवहृतिः नामरूपावच्छिन्नशरीरनिष्ठा । वस्तुतः शरीरसत्त्वासत्त्वाभ्यां तदुपाधिभेदपरिच्छिन्नभावजातं निष्प्रतियोगिकभाव-रूपचैतन्यमात्रमित्यर्थः । **भावाः प्रजायन्ते तत्र चैवापियन्तीति** भावोत्पत्तिप्रलययोः **स्वाज्ञदृष्टिगोचरत्वेन मिथ्यात्वम् । स्वज्ञदृष्ट्या** तद्वैरल्यात् ॥ १ ॥

ब्रह्मणोऽसङ्गत्वम्

दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः ।
अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ॥ २ ॥

स्वाज्ञादिदृक्प्रसक्तक्षराक्षरगतहेयांशनिरसनपूर्वकं परमाक्षरस्वरूपं स्फुटीकरोति—**दिव्य** इति । स्वमात्रतया द्योतनात् **दिव्यः** । दिवि स्वे महिम्नि भवतीति वा दिव्यः । स्वे महिम्नि भवनान्मूर्तत्वमाशंक्याह—**अमूर्त** इति । सर्वमूर्तिसंबन्धवर्जित इत्यर्थः । तथा चेत्परिच्छिन्नता स्यादित्यत आह—**पुरुष** इति । स्वाज्ञदृष्टिप्रसक्तस्वकार्यपूर्णत्वात् । तदेव व्यक्तीकरोति—**सबाह्येति** । स्वव्याप्यस्वातिरिक्तप्रपञ्चबाह्याभ्यन्तरेण सह वर्तत इति **सबाह्याभ्यन्तरः** । जनिमत्प्रपञ्चयोगतः तथात्वमाशंक्याह—**अज** इति । कदापि न जायत इत्यजः अजरामृतस्वरूपत्वात् । "अजरोऽमृतोऽभयः" इति श्रुतेः । **हि**शब्देन वस्तुतो व्याप्यव्यापकताभावो द्योत्यते । स्वाज्ञदृष्ट्या प्राणादिसम्बन्धमाशंक्याह—**अप्राण** इति । स्वज्ञदृष्ट्या प्राणादिसम्बन्धस्य मृग्यत्वात्क्रियाशक्त्यात्मकः प्राणोऽयं न स्पृशति सोऽयं **अप्राणः** । तथा ज्ञानेच्छाशक्त्यात्मकमनआदिकरणजालमपि न हि यं स्प्रष्टुं पारयति सोऽयं **अमनाः** । अप्राणो ह्यमना इत्यत्र हिशब्दतः सविषयप्राणादिपञ्चककर्मज्ञानाक्षदशकान्तःकरणचतुष्टयापवादो द्योत्यते । तदपि स्वाज्ञदृङ्निष्ठमित्यत्र "ध्यायतीव लेलायतीव" इति श्रुतेः । परमार्थदृष्ट्या अयं **शुभ्रः** शुद्धः । स्वातिरिक्ताशुभ्रकरणग्रामापह्नवसिद्धत्वात् । स्वाज्ञादिदृक्प्रसक्तक्षराक्षरयोः सत्त्वात् शुभ्रत्वं कुत ? इत्यत आह—**अक्षरा**दिति । स्वाज्ञदृष्टिप्रसक्ताविद्यापदतत्कार्यजातं क्षरमुच्यते । तदपेक्षया तदारोपाधिकरणं **अक्षरः** । **परः** शुभ्रः तदपेक्षया स्वज्ञदृष्ट्या अशुभ्रक्षरापवादाधिकरणम् । अक्षरात् परः शुभ्रः क्षरादिसर्वप्रपञ्चारोपापवादकलना यत्र अपह्नवपदमर्हति सोऽयमक्षरात् **परतः परः** । निष्प्रतियोगिकशुभ्र इत्यर्थः । न च प्राणादिकरणग्रामस्य परमाक्षरे ओतप्रोतत्वेन विद्यमानत्वात् कथं पुनरप्राणादिमत्त्वं ? इति वाच्यम् । परमाक्षरावगतेः प्राणाद्यारोपाद्यपह्नवपूर्वकत्वात् । यदि हि स्वाज्ञदृष्ट्या स्वोत्पत्तेः पुरा प्राणादयः स्युः तदा

सप्राणादित्वम् । न त्वेवं परमाक्षरातिरेकेण प्राणादयः सन्ति तेषामदृष्टदृष्टनष्ट-स्वभावरूपत्वात् ।

आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।

इति,

यन्नादौ यच्च नास्त्यन्ते तन्मध्ये भातमप्यसत् ।

इति च गौडपादाचार्योक्तेः स्मृतेश्च अप्राणादिमत्त्वं सिद्धमित्यर्थः । तथापि स्वाज्ञदृष्ट्या प्राणादीनां विद्यमानत्वात् । तथा स्वज्ञदृष्ट्या परमाक्षरमपि विद्यते । तयोः कार्यकरणभावः कतरस्य? इत्याशंक्य वस्तुतः कार्यकारणकलनापह्नवसिद्ध-परमाक्षरेऽपि स्वाज्ञादिदृष्टिमनुसृत्य तयोः कार्यकारणभावः ॥ २ ॥

ब्रह्मनिरूपणाय सप्तभिरध्यारोपः

एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ ३ ॥
अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः ।
वायुः प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥
तस्मादग्निः समिधो यस्य सूर्यः सोमात्पर्जन्य ओषधयः पृथिव्याम् ।
पुमान् रेतः सिञ्चति योषितायां बह्वीः प्रजाः पुरुषात्संप्रसूताः ॥ ५ ॥
तस्मादृचः साम यजूꣳषि दीक्षा यज्ञाश्च सर्वे क्रतवो दक्षिणाश्च ।
संवत्सरश्च यजमानश्च लोकाः सोमो यत्र पवते यत्र सूर्यः ॥ ६ ॥
तस्माच्च देवा बहुधा संप्रसूताः साध्या मनुष्याः पशवो वयाꣳसि ।
प्राणापानौ व्रीहियवौ तपश्च श्रद्धा सत्यं ब्रह्मचर्यं विधिश्च ॥ ७ ॥
सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त होमाः ।
सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त ॥ ८ ॥

अतः समुद्रा गिरयश्च सर्वेऽस्मात् स्यन्दन्ते सिन्धवः सर्वरूपाः ।
अतश्च सर्वा ओषधयो रसश्च येनैष भूतैस्तिष्ठते ह्यन्तरात्मा ॥ ९ ॥

स्फुटयति—**एतस्मादिति** । **एतस्मात्** अक्षरात परतः परात् परमाक्षरादेव अपुत्रस्वामिकपुत्रवत् हिरण्यगर्भात्मक**प्राणो जायते** । ततः तदुपाधिभूतं **मनः** अन्तःकरणम् । तथा कर्मज्ञानाक्षभेदेन सविषय**सर्वेन्द्रियाणि** जायन्ते । तथा च शब्दगुणकं **खं** शब्दसहितस्पर्शगुणको **वायुः** पूर्वोक्तद्विगुणान्वितरूपगुणकं **ज्योतिः** त्रिगुणसहितरसगुणवत्य **आपः** चतुर्गुणसहितगन्धवती **पृथिवी** च **विश्वस्य धारिणी**त्येतानि पञ्चमहाभूतान्यपि जायन्ते । तस्मात् प्राणादि **च** यत्कार्यं तत्कारणं अक्षरमिति ज्ञेयमित्यर्थः । संक्षेपतो दिव्यो ह्यमूर्त इत्यादिना निर्विशेषस्वरूपमुक्तम् । तस्य सम्यज्ज्ञविषयत्वात् ॥ ३ ॥ इदानीं स्वाज्ञानामपि तत्पदारोहाय विस्तरेण सविशेषाक्षरस्वरूपं वक्तव्यमित्युत्तरग्रन्थमवतारयति—**अग्निरिति** । "असौ वाव लोको गौतमाग्निः" इति श्रुतितो द्युलोको**ऽस्य मूर्धा** भवति । अस्य **चक्षुषी चन्द्रसूर्यौ** भवतः । सर्वत्र अस्येति पदस्य यस्येत्यर्थः । **दिशो** यस्य **श्रोत्रे** भवन्ति । यस्य **वेदा वाक् विवृता** उत्पादिताश्च भवन्ति । यस्य **वायुः प्राणः** । यस्य अन्तःकरणोपलक्षित**विश्वं हृदयम्** । विश्वस्य अन्तःकरणविकारत्वात् पुनः स्वापे तत्रैव प्रलयदर्शनाच्च । पुनः जागरे अग्निविस्फुलिंगवत् अव्युच्चरितत्वात् । यस्य **पद्भ्यां** जाता **पृथिवी** स **एष** एवाविद्याण्डोपाधिकः **सर्वभूतान्तरात्मा** विराट् । सर्वभूतेष्वपि स हि द्रष्टा श्रोता मन्ता विज्ञाता सर्वकारणात्मा सन् पञ्चाग्निद्वारेण याः प्रजाः संसरन्ति ता अपि स्वविकल्पितबीजसूत्रविराड्द्वारेण परमाक्षरादेव जायन्ते । संक्षेपविस्तरेणोक्तं वस्तु सुखप्रतिपत्तये भवतीत्यर्थः ॥ ४ ॥ "तस्मात् अग्निः" इत्यारभ्य "ओषधयो रसश्च" इत्यन्तानि तुर्यादिद्वारा परमाक्षारादेव जायन्त इत्युपक्रामति—**तस्मादि**त्यादिना । **तस्मात्** यथोक्ताक्षरात् "असौ वाव लोको गौतमाग्निः" इति प्रजाभावमापन्नो**ऽग्नि**र्जायत इति सर्वत्रानुषज्यते । "सूर्येण द्युलोकः समिध्यते", "यस्य **सूर्यः समिध** इव समिधो भवति आदित्य इव समित्"

इति श्रुतेः। द्युलोकान्निष्पन्नात् **सोमात् पर्जन्यो** द्वितीयोऽग्निः **संभवति**। "पर्जन्यो वाव गौतमाग्निः" इति श्रुतेः। ततः पर्जन्यादोषधयः **पृथिव्यां संभवन्ति**। "पुरुषो वाव गौतमाग्निः" इति श्रुतेः पुरुषाग्नौ हुताभ्य ओषधीभ्य उपादानभूताभ्यः **पुमान्** अग्निः "योषा वाव गौतमाग्निः" इति **योषितायां** योषिति **रेतः सिञ्चति**। इत्थं द्युपर्जन्यपृथिवीपुरुषयोषित्क्रमेण **पुरुषात् बह्वीः** बह्व्यः **प्रजाः संप्रसूताः** ॥ ५ ॥ किञ्च—**तस्मा**दिति। **तस्मात्** पुरुषात् नियताक्षरपादत्वेन गायत्र्यादिछन्दोविशिष्टमन्त्रा एव **ऋचः**। पाञ्चभक्तिकं साप्तभक्तिकं च स्तोभादिविशिष्टं गीतिरूपं **साम** च। अनियताक्षरपादावसानानि वाक्यरूपाणि **यजूंषि**। एवं त्रिविधा मन्त्रा मौण्ड्यादिकर्तृनियमलक्षणा **दीक्षाश्च**। अग्निहोत्रादयः सर्वे **यज्ञाश्च**। स्वयूपाः **क्रतवश्च** एकगवाद्या अपरिमितसर्वस्वान्ता **दक्षिणाश्च**। कर्माङ्गकालः **संवत्सरश्च** कर्ता **यजमानश्च** कर्मफलभूता **लोकाश्च**। दक्षिणोत्तरायणभेदेन **सोमो यत्र** लोकेषु लोकान् **पवते** पुनाति। **यत्र च सूर्यस्तपति**। उत्तरायणादिमार्गद्वयं विद्वदविद्वत्फलभूतम् ॥ ६ ॥ किंच—**तस्मा**दिति। वस्वादिगुणभेदेन कर्माङ्गभूताः **देवाः तस्मादेव** बहुधा **संप्रसूताः**। देवविशेषाः **साध्याश्च** कर्माधिकृता **मनुष्याश्च** ग्राम्यारण्य**पशवश्च वयांसि** पक्षिणश्च। जीवनं मनुष्यादीनां **प्राणापानौ** च हविरर्थौ **व्रीहियवौ** च। कर्माङ्गत्वेन पुरुषसंस्कारलक्षणं **तपश्च**। स्वतन्त्रफलसाधनं आलोचनं वा तपः। पुरुषार्थसाधनोपायः चित्तप्रसादहेतुरास्तिक्यबुद्धिः **श्रद्धा** च। यथाभूतार्थवचनं **सत्यं** च। अष्टांगमैथुनविरल**ब्रह्मचर्यं** च। इतिकर्तव्यता**विधिश्चे**ति ॥ ७ ॥ किंच—**सप्त प्राणा** इति। **तस्मादेव सप्त** शीर्षण्याः **प्राणाः प्रभवन्ति**। स्वविषयावद्योतकाः **सप्त अर्चिषो** दीप्तयः। सप्तविषयैः समिध्यन्ते प्राणा इति **सप्त समिधः**। सप्तविषयकज्ञानानि हि **सप्त होमाः** "यदस्य विज्ञानं तज्जुहोति" इति श्रुतेः। **येषु चरन्ति प्राणाः** त **इमे सप्त लोकाः** इन्द्रियस्थानानीत्यर्थः। प्राणापानादिनिवृत्त्यर्थं सप्तप्राणा इति। स्वप्नकाले गुहायां बुद्धौ शेरत इति **गुहाशया** विधात्रा प्रतिप्राणिभेदं **सप्त सप्त निहिताः** स्थापिताः। आत्मानात्मयाजिनां कर्माणि तत्फलानि च सर्वं चैतत्परस्मादात्मनः समुद्भूतम् ॥ ८ ॥

किं च—**अतस्समुद्रा** इति। **अतः** पुरुषात् क्षीराद्याः सिन्धवश्च हिमवदादयो **गिरयश्च सर्वे सर्वरूपाः सिन्धवो** गङ्गादिनद्यश्च **अस्मादेव स्यन्दन्ते** प्रस्रवन्ति। **अतश्च** व्रीहियवाद्या **ओषधयश्च**। मधुरादिषड्विधरसश्च। **येन** रसेन पञ्चरसैः वेष्टितः सन्नन्तर्गतलिङ्गशरीरं स्वोपाधित्वेनादत्त इत्यन्तरात्मा जीवः **तिष्ठते** तिष्ठति। एवं पुरुषात् सर्वमिदं प्रसूतमिति प्रकरणार्थः ॥ ९ ॥

अपवादेन ब्रह्मबोधनम्

पुरुष एवेदं विश्वं कर्म तपो ब्रह्म परामृतम्।
एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य! ॥१०॥

पुरुषादुत्पन्नकार्यजातं पुरुष एवेति तज्ज्ञानफलं चाह—**पुरुष** इति। पुरुषादुत्पन्नं **इदं विश्वं पुरुष एव**। न हि पुरुषादन्यत् विश्वमस्ति। पुरुषादन्यस्य वाचारम्भणमात्रत्वात्। 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति श्रुतेः। "कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति यत् पृष्टं तदेव तेऽभिहितम्। पुरुषे विज्ञाते तत्कार्यभूतप्राणादिरसान्तविश्वमिदं पुरुष एवेति विज्ञातं भवतीति। किं पुरुषकार्यम्? इत्यत आह—**कर्मे**ति। अग्निहोत्रादिकं **कर्म**। **तपो** ज्ञानम्। इतोऽन्यदपि यत् पुरुषातिरिक्तत्वेन विभाति, तत् सर्वं पुरुषकार्यम्। कार्यस्य कारणमात्रत्वात्। कार्यनिरूपितकारणतायाः कार्यसापेक्षत्वात्। कार्यकारणविरलं **ब्रह्म परामृतम्**। कार्यकारणकलनापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति **यो वेद**, यत्स्वाज्ञविकल्पितसर्वप्राणि**गुहायां** स्वज्ञदृष्ट्या तद्भावाभावप्रकाशकप्रत्यग्रूपेण **निहित**मिव भातं, तद्गतहेयांशापाये तदपि स्वमात्रमेवेति **सोऽ**यं विद्वान् हे **सोम्य!** या न विद्यते सा **अविद्या** स्वातिरिक्ता। तदात्मसत्यव्यवहारप्रतिभासादिरूपेण अस्तिनास्तीति विभ्रमो हि ग्रन्थिः। तं **ग्रन्थिं इह** जीवन्नेव अमृतस्सन् **विकिरति** विनाशयति अपह्नवं करोति। ततः स्वमात्रमवशिष्यत इत्यर्थः ॥ १० ॥

---

# द्वितीयमुण्डके द्वितीयः खण्डः

ब्रह्मणः प्रत्यगभिन्नत्वम्

**आविः संनिहितं गुहाचरन्नाम महत्पदमत्रैतत्समर्पितम् ।**
**एजत्प्राणन्निमिषच्च यदेतज्जानथ सदसद्वरेण्यम् ॥ १ ॥**

पूर्वखण्डान्ते कार्यकारणकलनापह्नवसिद्धपरामृतं ब्रह्म अभिहितम् । तस्य निष्प्रतियोगिकस्वमात्रत्वात् तत् कथं मन्दबुद्धिगम्यं भवेत् ? इत्याशङ्क्य तद्बुद्ध्यवताराय सोपाधिकनिरुपाधिकनिष्प्रतियोगिकनिरुपाधिकब्रह्म तज्ज्ञानफलं च प्रकटयितुमुत्तरो ग्रन्थ आरभ्यते—**आविरित्यादिना** । अक्षरात् परतः परत्वेन यत् परमाक्षरमवशिष्यत इत्युक्तं तदेव हि स्वाज्ञादिदृष्ट्या वागादिकरणग्रामावष्टम्भतो दर्शनश्रवणादिभिराविर्भवतीति **आविः** प्रकाशः प्रत्यक्चैतन्यं स्वज्ञानां हृदि समस्तवृत्त्यवभासकत्वेन **सन्निहितं** प्रत्यग्भावमापन्नं ब्रह्मेत्यर्थः । दर्शनश्रवणादिकरणवत् गुहायां बुद्धौ तद्वृत्त्यवभासकतया चरतीति **गुहाचरमिति नाममात्रम्** । वस्तुतः सर्वमहत्तया पद्यत इति **महत्पदं** स्वारोपितवस्त्वास्पदत्वात् । **तत्** कथम् ? इत्यत आह—**अत्रेति** । **अत्राक्षरे एतत्** अविद्याण्डं रथनाभिगतारजातवत् **समर्पितम्** । तदेतत् सर्वास्पदं ब्रह्म स्वाज्ञदृष्ट्या पक्ष्यादिरूपेण **एजत्** चलत् । प्राणापानादिमन्मनुष्यपश्वादिरूपेण **प्राणत्** प्राणिति । निमेषादिक्रियावत् **निमिषत्** अनिमिषच्च । **यदेतत्** सर्वास्पदं यत्रैव एतत्समस्तं ओतप्रोततया वर्तते, हे शिष्याः ! तत् सर्वास्पदं **जानथ** भवदात्मभूतमवगच्छतेत्यर्थः । तदतिरिक्तसदसदात्मकमूर्तामूर्तवैरल्यात् **सदसदा**रोपाधिकरणं तदात्मत्वेन **वरेण्यं** वरणीयं प्रार्थनीयमित्यर्थः ॥ १ ॥

ब्रह्मणः सूक्ष्मत्वादिकम्

**परं विज्ञानाद्यद्वरिष्ठं प्रजानां यदर्चिमद्यदणुभ्योऽणु च । यस्मिँल्लोका निहिता लोकिनश्च ।**

तदेतदक्षरं ब्रह्म स प्राणस्तदु वाङ्मनः ।
तदेतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य! विद्धि ॥ २ ॥

किंच, **प्रज्ञानां** लौकिकादिविज्ञानात् **परं** स्वांशजसर्वप्राणिष्वंशि ब्रह्मैव **वरिष्ठं** निरतिशयानन्दरूपत्वात् । घटाद्यादित्यान्तदीपकत्वात् **यदर्चिमत्** । **यदणुभ्यः** श्यामाकादिभ्योऽणु **च** । चशब्दात् स्थूलपृथिव्यादेरपि स्थूलम् । **यस्मिन्** सर्वास्पदे ब्रह्मणि भूरादयो **लोकाः** तत्तल्लोकनिवासिनो मनुष्यादयो **लोकिनश्च निहिताः** स्थिता इत्यर्थः । सर्वेषां चैतन्याश्रयत्वात् **तदेतत्** सर्वास्पदं **अक्षरं ब्रह्म स प्राणस्तदु वाङ्मनश्च** । करणग्रामात्मरूपत्वेन तत्प्रवृत्तिनिमित्तत्वात् । "श्रोत्रस्य श्रोत्रं" इत्यादिकरणग्रामप्रवृत्तिनिमित्तानुवादिश्रुतेः । यत् करणग्रामप्रवृत्तिनिमित्तं अक्षरं **तदेतत् सत्यं** अवितथम् । यत एवं अतो**ऽमृतं** अविनाशित्वात् । **तत्** मनसा **वेद्धव्यं** तस्मिन् मनस्साधनं कर्तव्यमिति हे **सोम्य! विद्धि** अक्षरे चेतः समाधत्स्वेत्यर्थः ॥ २ ॥

ब्रह्मजिज्ञासोर्धानुष्कस्येवैकाग्रता

धनुर्गृहीत्वौपनिषदं महास्त्रं शरं ह्युपासानिशितं संदधीत ।
आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य! विद्धि ॥ ३ ॥
प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ४ ॥

कथं वेद्धव्यम्? इत्यत आह—**धनुरिति**। ओमित्येतदक्षरं इदं सर्वमित्युपनिषदुद्भवं **औपनिषदम्**। महच्च तत् अस्त्रं चेति **महास्त्रं धनुर्गृहीत्वा** प्रणवो धनुरित्युत्तरत्र वक्ष्यति । तस्मिन् **उपासानिशितं** स्वरूपध्यानोपलतीक्ष्णीकृतं **शरं** मनः **सन्दधीत** सन्धानं कुर्यात् । ततः किम्? इत्यत आह—**आयम्येति** । शरस्थानीयान्तःकरणसहितं धनुः निर्विशेषलक्ष्याभिमुखं **आयम्य** । किं हस्तेन? इत्यत आह—**तदिति** । न हि हस्तेन धनुरायमनं इह संभवति । किन्तु

**तत्** परमाक्षरं ब्रह्मास्मीति **भावगतेन चेतसा**। तत् लक्ष्यं किम्? इत्यत आह—**तदिति**। हे **सोम्य!** यथोक्तपरमाक्षरमेव तस्य शरस्य **लक्ष्यं विद्धि** विजानीहीत्यर्थः ॥ ३ ॥ ब्राह्मणोक्तार्थं मन्त्रो व्याचष्टे—**प्रणव** इति। **प्रणव** एव **धनुः**। शरस्य लक्ष्यप्रवेशहेतुत्वात्। **आत्मा** अन्तःकरणं **शरः**। **ब्रह्मैव लक्ष्यं** शरस्थानीयमनोग्रासत्वात्। तदेतल्लक्ष्यं बाह्यान्तःकलनाविरलोऽप्रमत्तः **तेन** योगिना **वेद्धव्यम्**। ततः किम्? इत्यत आह—**शरवदिति**। यथा शरो बलवता विसृष्टो लक्ष्ये निमज्जति तथा प्रणवधनुःसन्धीयमानं मनः **तन्मयो भवेत्** ब्रह्मभावं गच्छति। प्लुतप्रणवजनादनिवेशितं मनो नादातीतब्रह्ममात्रतयावशिष्यत इत्यर्थः। "प्लुतप्रणवप्रयोगेण समस्तं ओमिति प्रयुक्तं आत्मज्योतिः सकृदावर्तते" इति श्रुतेः,

यथा शरस्य लक्ष्यैक्यं फलं भवति चेतसः।

इति स्मृतेश्च ॥ ४ ॥

जगदधिष्ठानस्य केवलस्य वेद्यत्वम्

**यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः।**
**तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ॥ ५ ॥**

बहुधा प्रतिपादितमप्यक्षरं मलिनचित्तारूढं न भवेदिति तद्बुद्ध्यारोहाय जामितां त्यक्त्वा पूर्वोक्तार्थमेव पुनःपुनराचष्टे—**यस्मिन्निति**। यस्मिन् परमाक्षरे **द्यौः पृथिवी चान्तरिक्षं सर्वैः प्राणैः सह मनश्च ओतं** समर्पितम्। **तमेवैकं आत्मानं** सर्वप्राणिप्रत्यग्भूतं हे शिष्याः! यूयं ब्रह्माहमस्मीति **जानथ** जानीत। इत्थं ज्ञात्वा एतद**न्या** अपरविद्या **वाचो विमुञ्चथ**। तत्प्रकाश्यससाधनकर्मजातं तत्फलं च परित्यजतेत्यर्थः। सर्वास्पदब्रह्मप्रबोधो ह्य**मृतस्य** तदाप्तिसाधनसेतुरिव **सेतुः**। संसारसागरोत्तारणहेतुत्वात्। "तमेव विद्वानतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेः ॥ ५ ॥

अरनाभिदृष्टान्तेन ब्रह्मणः सर्वाधारत्वम्

अरा इव रथनाभौ संहता यत्र नाड्यः
स एषोऽन्तश्चरते बहुधा जायमानः ।
ओमित्येवं ध्यायथ ह्यात्मानं
स्वस्ति वः पाराय तमसः परस्तात् ॥ ६ ॥

किञ्च—**अरा इवेति**। **रथनाभौ अरा इव यत्र** नृहृदये सर्वदेहव्यापिन्यो **नाड्यः संहताः** समर्पिताः। **सोऽयं** प्रकृत आत्मा सर्वप्राण्यन्तर्बुद्धिसाक्षितया **चरते** चरति। पश्यन् शृण्वन् मन्वानो विजानन् वर्तत इत्यर्थः। तस्यान्तः-करणोपाध्यनुविधायित्वेन कामक्रोधादिवृत्तिभिः **जायमान** इव हृष्टो जातो मुग्धो जात इति यं लौकिका वदन्ति, तमेतं **आत्मानं ओमिति एवमों**कारालम्बनाः सन्तः यथोक्तप्रणवो धनुरिति कल्पनया **ध्यायथ** चिन्तयत। स्वात्मयाथात्म्यं जानताचार्येण शिष्येभ्यो यद्वक्तव्यं तदुक्तम्। शिष्याणां निवृत्तकर्ममार्गत्वेनैते ब्रह्मविद्याविविदिषवः प्रवृत्ताः। तेषां निरन्तरायतया ब्रह्मातिमाशास्तीत्याह-- **स्वस्तीति**। **वः** युष्माकं स्वाविद्यातमसः **पाराय** परकूलाय **तमसो**ऽपह्नवतां गतात् **परस्तात्** यत् सिद्धं ब्रह्ममात्रं तदाप्तये च निर्विघ्नं **स्वस्त्यस्तु** ॥ ६ ॥

ब्रह्मणः साक्षात्कारानुगुणं स्थानम्

यः सर्वज्ञः सर्वविद्यस्यैष महिमा भुवि ।
दिव्ये ब्रह्मपुरे ह्येष व्योम्न्यात्मा प्रतिष्ठितः ॥
मनोमयः प्राणशरीरनेता प्रतिष्ठितोऽन्ने हृदयं संनिधाय ।
तद्विज्ञानेन परिपश्यन्ति धीरा आनन्दरूपममृतं यद्विभाति ॥ ७ ॥

तमोरूपभववारिधिं तीर्त्वा स्वाविद्यातमसः परत्वेन योऽधिगन्तव्यः तन्महिमा कीदृशः? इत्यत आह—**य** इति। **यः सर्वज्ञः सर्ववित्** इति पुरैव

व्याख्यातम्। पुनस्तं विशिनष्टि—**यस्येति**। द्यावापृथिव्यौ सूर्याचन्द्रमसौ सरितः समुद्राः स्थावरजङ्गमाश्च वसन्ताद्यृतवः अयने वत्सराः कर्तारः कर्माणि फलं चैतत्सर्वं **यस्य** आत्मनः शासने अलातचक्रवदजस्रं बंभ्रमीतीत्य**ेष महिमा भुवि** विजयते। एवंमहिमा सर्वज्ञो देवः कुत्रासनमर्हति? इत्यत आह—**दिव्य** इति। सर्वप्राणिबुद्धिप्रत्ययद्योतनत्वेन **दिव्ये** ब्रह्मोपलब्धिहेतुत्वात् **ब्रह्मपुरे** सर्वप्राणि-हृदयावच्छिन्न**व्योम्नि एष आत्मा प्रतिष्ठित** इवोपलभ्यते। वस्तुतः सर्वापह्नव-सिद्धनिष्प्रतियोगिकब्रह्ममात्रतयावशिष्टस्य न हि गमनागमनप्रतिष्ठादिः संभवतीत्यर्थः। स्वाज्ञादिदृष्ट्या तदेतदक्षरं विपरीतवद्यथावच्च भातीत्याह—**मनोमय** इति। स्वाज्ञदृष्टिप्रसक्तमनउपाधिकत्वात् **मनोमयः** अमूर्तमूर्त**प्राणशरीरनेता**। अस्मात् शरीरान्तरं **प्रतिष्ठितोऽन्ने** अद्यमानान्तपरिणामे बाल्याद्यवस्थाभिरुपचयापचयजुष्टे स्थूलशरीरे तत्रत्यहृदयाकाशं **सन्निधाय** तद्गतकामादिपरागभावावच्छेदेन जीवः तद्वृत्तिभावाभावप्रकाशकः प्रत्यक्सर्वप्राणिहृदयावभासकप्रत्यगभिन्नतया विश्वारो-पापवादाधिकरणं ब्रह्म पराक्सापेक्षप्रतीचि विश्वारोपापवादायमानाधिष्ठेयसापेक्षा अधिष्ठाने ब्रह्मणि च सापेक्षप्रभवसविशेषकलनापह्नवसिद्धं ब्रह्म निष्प्रतियोगिक-स्वमात्रमिति यत् विज्ञानं जायते तदेव हि तद्याथात्म्य**विज्ञानम्**। **तेन** विज्ञानचक्षुषा **धीराः** ब्रह्मविद्वरीयांसो यन्मात्र्यदुःखग्रामापह्नवसिद्धं **आनन्द-मात्ररूपं** सदा**मृतं यद्विभाति** तत् स्वमात्रमिति **पश्यन्ति** उपलभन्त इत्यर्थः ॥७॥

ब्रह्मज्ञाने कृतकृत्यता

**भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः।**
**क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ ८ ॥**

इत्थंभूतज्ञानफलं विशदीकरोति—**भिद्यत** इति। समष्टिप्रपञ्चापवादाधारः परः। व्यष्टिप्रपञ्चापवादाधारः प्रत्यगवरः यः स्वाधेयरूपसमष्टिव्यष्टिप्रपञ्चारो-पापवादसापेक्षाधारगतहेयांशापह्नवसिद्धो भवति, तस्मिन् **परावर**विभागैक्यासह-ब्रह्ममात्रे स्वावशेषतया **दृष्टे** सति अथ **अस्य** ब्रह्मविद्वरीयसो **हृदयग्रन्थिः**

**भिद्यते** । हृच्छब्देन स्वाविद्यापदतत्कार्यमुच्यते । अयशब्देन तदारोपापवादाधिकरणं उच्यते । तयोः भास्यभासकाधेयाधारतादात्म्यसंबन्धो हि हृदयग्रन्थिः ब्रह्ममात्रज्ञानखड्गेन भिद्यते विनाशमुपयातीत्यर्थः । संशयवतां हृदयग्रन्थिभेदः कथम् ? इत्यत आह—**छिद्यन्त** इति । पुरानुभूतलौकिकवैदिकविषयक**संशयाः** परापरविषयकसंशयाश्च **छिद्यन्ते** । आगाम्यादिकर्मसु सत्सु कथं संशयनिवृत्तिः ? इत्यत आह—**क्षीयन्त** इति । आगाम्यादिभेदेन कर्माणि त्रिविधानि । वर्तमानदेहानुष्ठितशुभाशुभात्मकं कर्म आगामीत्युच्यते । केवलशास्त्रजन्यज्ञानेन तत्स्थूलांशनिवृत्त्या तत्राश्लेषो जायते । तद्यथा "पुष्करपलाशे आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते" इति श्रुतेः । अनन्तकोटिजन्मोपादानभूतं संचितं कर्म । तद्विज्ञानेन आगामिसंचिताधांशो विनश्यति । स्थूलदेहारंभकत्वेन यावद्देहभाविप्रारब्धकर्म तज्ज्ञानविज्ञानाभ्यां न नश्यति । तस्य प्रवृत्तफलत्वेनानुभवनाश्यत्वात् । यदि सम्यज्ज्ञानं जायते तदा आगाम्यादिकर्मत्रयस्थूलादिभागत्रयं क्षीयते । तत्त्वज्ञानं चेत् तदर्धमात्रांशोऽपि निःशेषं क्षीयते । इत्थं व्याविद्धहृदयग्रन्थिसंशयजालस्य **अस्य** तत्त्वज्ञानिन आगामिसंचितारब्ध**कर्माण्य**पि निःशेषं **क्षीयन्ते** अपह्नवं यान्ति । ततो विद्वान् ब्रह्ममात्रमवशिष्यत इत्यर्थः ॥ ८ ॥

ज्ञेयस्य ब्रह्मणः स्वरूपनिरूपणम्

**हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम् ।**
**तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः ॥ ९ ॥**

यज्ज्ञानसमकालं ग्रन्थिसंशयजालं छित्वा सूरयो ब्रह्ममात्रपदं भजन्ति तत्स्वरूपमपरे मन्त्रा अपि सोपायमाहुः—**हिरण्मय** इति । हृत्कमलविलसद्बुद्धिवृत्तिसहस्रभावाभावप्रकाशकप्रत्यग्भास्यत्वेन सहस्रवर्णोपम**हिरण्मये परे** प्रकृष्टे कोश इव **कोशे** हृत्पुण्डरीकावच्छिन्नाव्याकृताकाशे ब्रह्मोपलब्धिस्थाने तत्रत्यकामादिवृत्त्यवभासकप्रत्यक्चैतन्यं स्वाविद्यातत्कार्यरजआदिगुणत्रयास्पृष्टत्वेन **विरजं ब्रह्म** स्वस्वरूपेण सर्वत्रोपबृंहणात् । प्राणादिनामान्तषोडशकलावैरल्यात् **निष्क-**

**लम्**। अशुभ्रकलापह्नवादेव **तत् परमाक्षरं शुभ्रं** स्वान्तर्गतेन यत्प्रत्यग्ज्योतिषाग्नि-सूर्यादयोऽपि ज्योतिष्मन्तो भवन्ति तत् अग्न्यादि**ज्योतिषामपि ज्योतिः** सर्वावभासकत्वात्। "येन सूर्यस्तपति तेजसेद्धः" इति श्रुतेः। तथा सर्वावभासकं ब्रह्म केऽपि न जानन्तीत्यत आह—**विदुरिति**। **यदेव** ज्योतिषां ज्योतिः **तत्** स्वमात्रमिति ये विदन्ति त **आत्मविदः**। त एव **विदुः** नेतर इत्यर्थः ॥ ९ ॥

ब्रह्मणः स्वप्रकाशत्वम्

**न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः।**
**तमेव भान्तमनु भाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १० ॥**

कथं पुनर्ज्योतिषां ज्योतिष्ट्वम्? इत्यत आह—**न तत्रेति**। **तत्र** तस्मिन् स्वात्मज्योतिषि सर्वावभासकोऽपि **सूर्यो न भाति**। तथा **न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽ**स्मद्गोचरो**ऽग्निः**? सूर्यादीनां ब्रह्मप्रकाशकताभावेऽपि स्वतः प्रपञ्चप्रकाशकता स्यादित्यत आह—**तमिति**। **तमेव** निष्प्रतियोगिकप्रकाशरूपेण **भान्तं** परमाक्षरं **अनु**सृत्य सूर्यादिविशिष्टं विश्वं **सर्वं भाति**। **तस्य भासा** सूर्यादिघटान्तविश्वं **विभाति**। तदेव हि ज्योतिषां ज्योतिः ब्रह्मेत्यर्थः ॥ १० ॥

विश्वमिथ्यात्वम्

**ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्म पश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण।**
**अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम् ॥ ११ ॥**

ब्रह्मैव सर्वं ब्रह्मातिरिक्तविकारजातं सर्वं वाचारम्भणमात्रमिति निगमन-स्थानीयमन्त्रेणोपसंहरति—**ब्रह्मेति**। **ब्रह्मैव** उक्तलक्षणं **इदं** असल्लौकिकाद्यष्ट-दृष्टिमोहे सत्यसति निष्प्रतियोगिका**मृतम्**। स्वाज्ञदृष्टिविकल्पिताः पूर्वादिदिशः स्वज्ञदृष्ट्या तत्सर्वं ब्रह्मैवेत्याह—**पुरस्तादिति**। तथा **पश्चाद्दक्षिणतश्चोत्तरेण**

तथाधस्तात् **ऊर्ध्वं**, **च**शब्दात् आग्नेयादिविदिशोऽपि गृह्यन्ते। तदन्तरालं च स्वाविद्यापदकृत्स्नं विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तभेदेन **प्रसृतं** प्रगतं व्याप्तमित्यर्थः। किं बहुना? **ब्रह्मैवेदं विश्वं वरिष्ठं** ब्रह्मातिरिक्तसत्तावैरल्यत्। वस्तुतः स्वाज्ञदृष्टिप्रसक्तकलनापह्नवसिद्धं निष्प्रतियोगिकब्रह्ममात्रं निःसपत्नमवशिष्यत इति वेदान्तानुशासनम्॥ ११॥

---

## तृतीयमुण्डके प्रथमः खण्डः

जीवेशयोर्वैलक्षण्यम्

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति॥ १॥**

ॐ "यया तदक्षरमधिगम्यते" इति परा विद्या उक्ता सफला। यदधिगमसमकालं स्वातिरिक्तहृदयग्रन्थिसंशयकर्मत्रयापह्नवसिद्धब्रह्ममात्राप्तिरभिहिता। "धनुर्गृहीत्वौपनिषदं" इत्यादिकल्पनया तदाप्त्युपाययोगोऽभिहितः। इदानीं तत्सहकारित्वेन सत्यादिसाधनानि वक्तव्यानि इति भङ्ग्यन्तरेण ब्रह्मयाथात्म्यं तज्ज्ञानफलं च प्रकटयितुमादौ संसार्यसंसारित्वेन जीवेशौ परिकल्प्य तत्र जीवस्येशोपासनाजन्यचित्तशुद्धिप्राप्यज्ञानसमकालं कृतकृत्यतां सूत्रभूतोऽयं मन्त्र आह—द्वा सुपर्णेति। **द्वा** द्वौ **सुपर्णा** सुपर्णौ पक्षिविशेषौ। **सयुजा** सयुजौ सर्वदा एकत्र युक्तौ **सखाया** सखायौ समानाख्यानौ। इत्थंविधौ जीवेशौ **समानं** युगपत् उच्छेदनसामान्यात् **वृक्षं** शरीरं **परिषस्वजाते** वृक्षमेकं सुपर्णाविव संश्रयत इत्यर्थः। क्षेत्रसंज्ञको हि वृक्षः—

ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः। इति,
इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते।

इति श्रुतेः स्मृतेश्च । इत्थंभूतं वृक्षोपमशरीरं कार्यकारणोपाधित्वेन यौ **समाश्रितौ** **तयोरन्यः** कार्योपाधिर्जीवः **पिप्पलं** सुखदुःखलक्षणकर्मफलं स्वदृष्टिवैचित्र्यात् **स्वाद्वत्ति** अविवेकत उपभुङ्क्त इत्यर्थः । **तदन्यः** कारणोपाधिरीश्वरस्तु निरावृतक्रियाज्ञानेच्छाशक्तित्वेन पिप्पलं **अनश्नन्** नाश्नाति तत्प्रवृत्तिनिमित्तसत्तारूपेण **अभिचाकशीति** उदासीनस्वभावोऽपि प्रेरकवत् पश्यति । राजवत् दर्शनमात्रं हि प्रेरयितृत्वम् ॥ १ ॥

जीवस्य ब्रह्मज्ञानाद्ब्रह्मत्वम्

**समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।**
**जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥ २ ॥**

तत्र जीवस्य स्वाज्ञानस्वज्ञानाभ्यां बन्धमोक्षावुपन्यस्यति—**समान इति** । स्वाज्ञानतः **समाने** पुरोक्तशरीराभिधानवृक्षे **पुरुषः** जीवः स्वाविद्याकामकर्मतत्फलशैवालवेष्टितालाबुः समुद्रजल इव देहात्मभावनयामुष्य पुत्रो नप्ता कृशः स्थूलः रजस्तमआदिगुणीत्येवं शरीरे **निमग्नः** नितरां मज्जति । ततः स्वाज्ञानरूपया अनीशया जायते म्रियते दारपुत्रादिबान्धवैः संयुज्यते वियुज्यते दारपुत्रादिप्रभवहर्षविषादतः स्वयमपि हृष्टोऽहृष्टश्च भवति । किं जीवितेनेतःपरं किं कर्तव्यमिति **मुह्यमानः** सन् **अनीशया शोचति** । इत्थं बहुधा सन्तप्यते । ततः प्रेततिर्यङ्मनुष्यादियोनिषु भूत्वा भूत्वा स्वज्ञानावधि संसरन् बध्यत इत्यर्थः । स कदाचिदनन्तकोटिजन्मसुकृतपरिपाकवशात् सत्सङ्गतिलब्धविवेको भूत्वा कर्मिभिर्योगिभिः साधनचतुष्टयसंपत्त्यासादितपारमहंस्यधर्मालंकारमुनिभिश्च **जुष्टं** सेवितं वृक्षोपाधिविलक्षणं ध्यायन् **पश्यति** । स्वाज्ञदृष्टिप्रसक्तमूलाविद्याबीजांशयोगप्रभवसर्वज्ञत्वसर्वेश्वरत्वसर्वकारणत्वादिमहिमानं विभूतिं च मायाकृतं वस्तुतः स्वातिरिक्तमायातत्कार्यापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रस्वरूपोऽसावीश्वर इति **यदा** जीवः **पश्यति** तदाऽयं स्वातिरिक्तमस्तिनास्तीति **वीतहर्षशोको** भवति । शोचनीयादिविषयवैरल्यात् स्वमात्रमवशिष्यत इत्यर्थः ॥ २ ॥

जीवस्य ब्रह्मात्मत्वविवरणम्

**यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम् ।**
**तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ॥ ३ ॥**

पूर्वमन्त्रसूत्रितार्थमन्योऽपि मन्त्रः सविस्तरमुपक्रामति— यदेति । **यदा** यस्मिन् काले स्वातिरिक्तं नश्वरं स्वयमेव सत्यमिति च पश्यतीति **पश्यः** साधकः साधनान्तरनैरपेक्ष्येण स्वयंप्रकाशरूपत्वात् **रुक्मवर्णं** स्वाज्ञदृष्ट्या सर्वकर्तारं ईशितव्यप्राण्यदृष्टतः **ईशम्** । वस्तुतः पूर्णत्वात् **पुरुषं** निरुपाधिसोपाधिकाभ्यां **ब्रह्मयोनिं** वस्तुतो निष्प्रतियोगिकचिद्धातुं स्वमात्रमिति वा **पश्यते** पश्यति । **तदा** तत्समकाले **विद्वान्** पश्यः **पुण्यपापो**पलक्षितव्यष्टिसमष्टिप्रपञ्चकलने **विधूय** मिथ्यात्वेन निरस्य तन्निरसनेऽपि **निरञ्जनः** सन् निरतिशयत्वेन **परमं** स्वातिरिक्तवैषम्यापह्नवसिद्धं **साम्यं** सत्तासामान्यं स्वमात्रमिति **उपैति** प्रतिपद्यत इत्यर्थः ॥ ३ ॥

ब्रह्मात्मज्ञानिनः स्तुतिः

**प्राणो ह्येष यः सर्वभूतैर्विभाति विजानन् विद्वान् भवते नातिवादी ।**
**आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः ॥ ४ ॥**

इत्थं विद्वत्स्वरूपमाचष्टे—**प्राण** इति । "प्राणस्य **प्राणः**" इति श्रुतिनिर्दिष्टद्वितीयप्राणशब्दलक्षितः परमात्मैव । **प्राणो ह्येष** प्रकृतः परमात्मा । ब्रह्मादिस्तम्बान्त**सर्वभूतैः**—"इत्थं भूतलक्षणे" तृतीया—तत्तद्भूतप्रत्यगभिन्नब्रह्मरूपेण **विभाति** । वस्तुतश्चिन्मात्ररूपेण वा विभाति । योऽयं **विद्वान्** यस्तमात्मानं अयमहमस्मीति **विजानन् नातिवादी भवते** भवति । अतीत्य सर्वान् अन्यान् वादिनो वदितुं शीलमस्येति अतिवादी अपरविद्यादृष्टिः । तद्विपरीतः परविद्यादृष्टिस्तु ब्रह्मातिरिक्तवादिवैरल्यात् कान् अतीत्य वदेत् ? अतो नातिवादी तूष्णीं स्वस्थ इत्यर्थः । "यत्र त्वस्य सर्वमात्मैवाभूत्, तत

केन कं पश्येत् ? तत् केन कमभिवदेत् ? " इत्यादिस्वातिरिक्तदर्शनवदनासंभवश्रुतेः। तथा चेत् क्रीडारत्यादिकं कुत? इत्यत आह—आत्मेति। यस्य आत्मन्येव दारादिबाह्यसाधननैरपेक्ष्येण क्रीडा स **आत्मक्रीडः**। तथा आत्मन्येव रतिः प्रीतिः यस्य स **आत्मरतिः**। तथा ज्ञानध्यानवैराग्यादिक्रिया यस्य सोऽयं **क्रियावान्**। यद्वा—आत्मरतिरेव क्रिया अस्य विद्यत इति बहुव्रीहिमतुबर्थयोरन्यतरोऽतिरिच्यते। आत्मरतिक्रियेत्यत्र केचिदेवमाहुः—आत्मरतिशब्देन ज्ञानं, क्रियाशब्देन कर्म, तयोः समुच्चयार्थमिति। तदसाधु। समुच्चयकारिणो ब्रह्मविदां वरिष्ठ इत्युक्तिरपि विरुध्यते। निवृत्तबाह्यक्रियस्यैव हि आत्मक्रीडात्मरतित्वेन ब्रह्मविद्वरिष्ठतोपपद्यते। तमःप्रकाशयोर्युगपदेकत्र स्थितिवत् बाह्यक्रियात्मरत्योर्युगपन्नहि संभवोऽस्ति। तस्मान्न हि समुच्चयपक्षः साधुतामर्हति। अपरविद्याविषयस्य पुरैव न्यक्कृतत्वात्। "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ" इति, "वेदान्तविज्ञानसुनिश्चितार्था" इत्याद्युक्ताः। वक्ष्यति च यस्तु ध्यानादिक्रियावान् संन्यासी स ह्यात्मक्रीडः आत्मरतिक्रियावान् **ब्रह्मविदां वरिष्ठः** प्रधानो भवति ॥ ४ ॥

### ब्रह्मज्ञानसाधनकथनम्

सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यज्ज्ञानेन ब्रह्मचर्येण नित्यम् ।
अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः ॥

ब्रह्मिष्ठताहेतुसत्यादिसाधनान्युपदिशति—**सत्येनेति**। परप्रियहितयथार्थवचसा **सत्येन** नित्यमात्मा **लभ्य** इति सम्यज्ज्ञानेनेति च सर्वत्रानुषज्यते। तथा सर्वेन्द्रियमानसैकाग्र्यलक्षणेन **तपसा** तदुपेयसम्यज्ज्ञानेन नित्यमात्मा लभ्य इत्यर्थः।

कर्मज्ञानाक्षमनसामैकाग्र्यं परमं तपः।

इति स्मृतेः। न ह्येवं चान्द्रायणादितपसा स्वातिरिक्तसर्वापह्नवसिद्धब्रह्ममात्रवेदनं हि सम्यज्ज्ञानम्। तेनाव्यवधानेन लभ्यः। अष्टाङ्गमैथुनविरलब्रह्मचर्येणेत्यादि

सम्यज्ज्ञानाप्तावुपाय इत्यर्थः। न ह्यसत्यवचसोऽतपसोऽब्रह्मचारिणश्च सम्यज्ज्ञानमुदेति, "न येषु जिह्ममनृतं न माया च" इति श्रुतेः। एवंसाधनलभ्य आत्मा कीदृशः? इत्यत आह—**अन्तरि**ति। **अन्तःशरीरे** शरीरान्तर्विद्यमानहृत्पुण्डरीकाकाशे **क्षीण**स्वातिरिक्तदृष्टि**दोषाः यतयः** संन्यासिनः **यं** स्वमात्रधिया **पश्यन्ति** उपलभन्ते, सोऽयं हृदयान्तरवभासकः प्रत्यक्**ज्योतिर्मयः** स्वयंप्रकाशरूपत्वात् अशुभ्रभास्यसापेक्षभासकत्वहेयांशापह्नवसिद्धो निष्प्रतियोगिक**शुभ्रः**। स ह्यात्मा नित्यं सत्यादिसाधनयुक्तसंन्याससम्यज्ज्ञानलभ्य इत्यर्थः ॥५॥

सत्यस्य स्तवः

**सत्यमेव जयते नानृतं सत्येन पन्था विततो देवयानः।**
**येनाक्रमन्त्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानम् ॥ ६ ॥**

यतः सम्यज्ज्ञानाद्यसाधनं सत्यं अतः सत्ये नृणामादरार्थं स्तौति—**सत्य**मिति। **सत्यमेव जयते नानृतं** न हि पुरुषाश्रयं विना सत्यानृतयोर्जयः पराजयो वास्ति। सत्यवादिना अनृतवादी अभिभूयत इति यतो लोकप्रसिद्धिः अतः सत्यस्य बलवत्साधनत्वं युक्तमित्यर्थः। किंच, सत्यस्य साधनातिशयत्वं शास्त्रतोऽप्यवगम्यत इत्याह—**सत्येने**ति। यथाभूतवादव्यवस्थापक**सत्येन विततो** विस्तीर्णो **देवयाना**ख्यः **पन्थाः** प्राथम्येन प्रवृत्तः। **येन** पथा मायातत्कार्यविरलब्रह्मदर्शनवन्त **ऋषयः** सर्वत्र विगततृष्णातो **ह्याप्तकामाः** प्राप्तमनोरथा भूत्वा ब्रह्मलोकमा**क्रमन्ति**। **यत्र** सत्याख्यसाधनस्य **परमं** प्रकृष्टं पुरुषार्थरूपेण निधीयत इति **निधानं तत्** हैरण्यगर्भं धाम तद्गतहेयांशापह्नवसिद्धं परतत्त्वं वा सत्येन विततमित्यर्थः ॥ ६ ॥

ब्रह्मणो विज्ञाङ्गभेदेन नेदिष्ठतादवीयस्ते

**बृहच्च तद्दिव्यमचिन्त्यरूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति।**
**दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम् ॥ ७ ॥**

किंधर्मकं तत्? इत्यत आह—**बृहदिति**। स्वाङ्गस्वज्ञदृष्टिवैपरीत्यात् हिरण्यगर्भरूपेण स्वेन रूपेणापि **बृहत्** महच्च। सूत्रप्रत्यग्रूपेण सर्वतो व्यापित्वात्। तदेतत् प्रकृतं ब्रह्म **दिव्यं** देदीप्यमानरूपत्वात्। **अचिन्त्यरूपं** करणग्रामागोचरत्वात्। **सूक्ष्माच्च तत्सूक्ष्मतरं** केशकोट्यंशैकभागादपि सुसूक्ष्मतरं वस्तु। सर्वकारणं सदा आदित्यसोमाद्याकारेण **विभाति** दीप्यते। स्वाज्ञानामत्यन्तागम्यतया **दूरात्सुदूरे** विप्रकृष्टदेशे वर्तते। विदुषामात्मतया **तत्** ब्रह्मचैतन्यमन्तिके च दहरपुण्डरीकेऽपि वर्तते। "य आकाशे तिष्ठन्" इत्याद्याकाशाद्यन्तरश्रुतेः। अन्तिके च वर्तत इत्यर्थं निदर्शयति—**पश्यत्स्विति**। प्रत्यग्भावेन **पश्यत्सु** बुद्धिलक्षणगुहायां तद्गतकामादिवृत्तिभावाभावप्रकाशकतया विद्वद्भिः निगूढं लक्ष्यते। तत्रस्थमप्यविद्वद्भिः न लक्ष्यते ॥ ७ ॥

ब्रह्मणः शुद्धसत्त्वमात्रगोचरता

**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ।**
**ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ॥**

तदुपलब्धिसाधनं किम्? इत्यत आह—**न चक्षुषेति**। केनचिदपि **चक्षुषा न गृह्यते** अरूपत्वात्। **नापि वाचा** तस्य अनभिधेयत्वात्। तथा**न्यैर्देवैः** इतरेन्द्रियैरपि। सर्वप्राप्तिसाधनलक्षण**तपसा**पि तथा श्रौतस्मार्त**कर्मणा**पि न गृह्यत इति सर्वत्रानुषज्यते। अपरविद्यातत्फलविलक्षणत्वात्। किं पुनस्तत्साधनम्? इत्यत आह—**ज्ञानेति**। सर्वप्राण्यन्तःकरणाविद्यातुर्यभागत्वेन यन्निष्पन्नं तद्धि ज्ञानं ब्रह्मदर्शनहेतुत्वेन प्रसिद्धम्। तूलाविद्यास्थूलादिभागत्रयावृतदृष्टीनां न हि तज्ज्ञानप्रसादो भवति। ततः सन्निहितमप्यात्मतत्त्वं न हि प्रकाशते। नित्यादिकर्मतपोयोगफलार्पणसन्तुष्टेश्वरप्रसादतः स्थूलास्थूलादिभागत्रयावृतौ भिन्नायां तथ ज्ञानप्रसादो भवति। तेन **ज्ञानप्रसादेन विशुद्धसत्त्वः** विशुद्धचित्तो योगी ब्रह्मदर्शनयोग्यो भवति। **ततो** विशुद्धान्तःकरणत्वहेतोः प्राणादिनामान्तषोडश-

कलापह्नवसिद्धं **निष्कलं** स्वावशेषधिया ध्येयमात्मानं स्वमात्रमिति **पश्यते** पश्यति। विशुद्धसत्त्वोऽयमात्मानं पश्यति ससाधनम् ॥ ८ ॥

तस्यैव प्रपञ्चः

**एषोऽणुरात्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश।**
**प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन्विशुद्धे विभवत्येष आत्मा ॥ ९ ॥**

तत्स्वरूपमुपन्यस्यति—**एष** इति। **एष** प्रकृत **आत्मा** निरुपाधिकदृष्ट्यामणुत्वेन निरतिशयसूक्ष्मत्वेन **चेतसा** प्रत्यग्भावापन्नेन मनसा **वेदितव्यः**। स कीदृशः? इत्यत आह—**यस्मिन्निति**। **यस्मिन् प्राण**वायुः प्राणापानादिभेदेन **पञ्चधा संविवेश**। किंच स्वविकल्पित**प्रजानां प्राणै**रिन्द्रियैस्साकं **चित्तं** तदुपलक्षितान्तःकरणवृत्तिकदम्बं **सर्वं** तैलव्याप्ततिलवत् अग्निव्याप्तकाष्ठवच्च **ओतं** व्याप्तम्। सोऽयमात्मा **यस्मिन्** स्वातिरिक्ताशुद्धभ्रमविरलतया **विशुद्धे** चेतसि **विभवति** निर्विशेषमात्मानं प्रकाशयतीत्यर्थः ॥ ९ ॥

ब्रह्मज्ञानिनः सर्वकामाप्त्या स्तवः

**यं यं लोकं मनसा संविभाति विशुद्धसत्त्वः कामयते यांश्च कामान्।**
**तं तं लोकं जयते तांश्च कामांस्तस्मादात्मज्ञं ह्यर्चयेद्भूतिकामः ॥ १० ॥**

इत्थमात्मानं यो वेद तस्य तद्रूपत्वेन तमर्चयतां स्वेप्सितार्थफलमाह—**यमिति**। योऽयं विशुद्धसत्त्वः आत्मवित् प्रायशो ब्रह्मातिरिक्तं न हि किंचित् स्मरति। यदि कदाचित् लीलया देवपित्राद्यावासार्हं **यं यं लोकं** स्वर्गादिकं मह्यं अन्यस्मै वा भवेदिति **मनसा संविभाति** संकल्पयते। किंच तत्तल्लोकगतकामेषु **यांश्च कामान्** भोगान् **कामयते** प्रार्थयते, **तं तं लोकं तांश्च कामान्** भोगान् जयते प्राप्नोति। **तस्मादात्मज्ञं भूतिकामः** ऐहिकामुष्मिकसंपत्

तद्विग्लब्रह्मसंविद्वा भूतिशब्दार्थः। तदिच्छन् पादप्रक्षालननमस्कारादिना अर्चयेत्। तत्प्रसादतः स्वदृष्टिनिमित्तब्रह्मज्ञानं तत्फलमपि ब्रह्मविदर्चको लभेदित्यत्र—

परमाद्वैतनिष्ठाय पराय परयोगिने।
शरीरमर्थं प्राणांश्च प्रदद्याच्छ्रद्धयान्वितः॥
परमाद्वैतविज्ञाननिष्ठस्य परयोगिनः।
शुश्रूषाशुद्धविद्यायाः साधनं हि न संशयः॥

इति स्मृतेः॥ १०॥

---

## तृतीयमुण्डके द्वितीयः खण्डः

परब्रह्मज्ञानिनोऽमृतत्वम्

स वेदैतत्परमं ब्रह्म धाम यत्र विश्वं निहितं भाति शुभ्रम्।
उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः॥ १॥

"आत्मज्ञं ह्यर्चयेद्भूतिकामः" इति यदुक्तं तत्र निष्कामसकामधिया ब्रह्मविदुपासकानां "ते शुक्रमेतदतिवर्तन्ति," "स कामभिः जायते तत्र तत्र" इति च फलभेदप्रकटनपूर्वकं निर्विशेषब्रह्मज्ञानफलं प्रकटयितुमुत्तरो ग्रन्थ आरभ्यते— **स वेदे**ति। एतदुक्तलक्षणं **परं ब्रह्म धाम** सर्वोत्कृष्टब्रह्मयाथात्म्यस्वरूपम्। **यतः** सोऽयं विद्वान् वेद **यत्र** ब्रह्मविदात्मनि परब्रह्मधाम्नि स्वाज्ञदृष्ट्या **विश्वं निहितं** समर्पितं आरोपितं सत् सत्यवत् **भाति**। आरोपस्याधारातिरिक्तसत्तावैरल्यात्। यश्च ब्रह्मवित् सर्वाधारतया भाति,

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम्।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्॥

इति श्रुतेः। तमपि एवंविधं अशुभ्रत्वातिरिक्तवैरल्यात् **शुभ्रं** पूर्णब्रह्मभावारूढत्वात् **पुरुषं** आत्मयाथात्म्यज्ञं ये **ह्यकामा** मुमुक्षवो लौकिकापरविद्याविषयकविभूतिवितृष्णा भूत्वा **उपासते** परंब्रह्मधियेत्यर्थः। **ते** हि **धीराः** ब्रह्मविद्दृष्टिपूताः सन्तः **शुक्रं** शुक्रं नृबीजं शरीरोत्पत्तिकारणं अनेकयोनिप्राप्तिलक्षणं **अतिवर्तन्ति** अतिक्रम्य तत्पदं भजन्त इत्यर्थः। यत एवमतः सर्वथा तमात्मज्ञं पूजयेदित्यभिप्रायः ॥ १ ॥

सकामस्योपासकस्य निष्कामस्य च व्यतिरेकः

**कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र ।**
**पर्याप्तकामस्य कृतात्मनस्तु इहैव सर्वे प्रविलीयन्ति कामाः ॥ २ ॥**

सकामधिया ब्रह्मविदुपासनाफलमनुक्रामति—**कामानिति**। **यस्तु** ब्रह्मात्मविद्वरिष्ठं सामान्यधिया उपास्य तत्सकाशात् प्राकृतविभूतिविषयक**कामान् मन्यमानस्सन् कामयते** प्रार्थयते, **स** कामी तैः **कामभिः** धर्माधर्मविषयककामैः **तत्र तत्र जायते**। यत्र यत्र कामाः स्वेप्सितविषयनिमित्ततया पुरुषमज्ञं नियोजयन्ति तत्र तत्र तैरेव कामैरावेष्टितो जायते। यस्तु परमार्थचिन्तया प्राकृतभूमिषु **पर्याप्तकामो** भवति आत्मकामत्वात्, **तस्य** आत्ममात्रपर्याप्तकामस्य स्वाविद्यातत्कार्यप्राकृतभूतिवैमुख्यपूर्वकं येनात्ममात्रे मतिः **कृता** तस्य **कृतात्मनस्तु इहैव** तिष्ठत्येव कलेबरे **सर्वे** धर्माधर्मप्रवृत्तिहेतवः **कामाः प्रविलीयन्ति** विलयमुपयान्ति। न हि पुनर्जायन्त इत्यर्थः ॥ २ ॥

ब्रह्मभावमीहमानस्यैव ब्रह्मप्राप्तिः

**नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन ।**
**यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥ ३ ॥**

आत्मलाभान्न ह्यपरो लाभो विद्यते तल्लाभाय प्रवचनादय उपायाः स्युः इत्यत आह—**नायमिति**। अनात्मापह्नवसिद्धोऽ**यमात्मा** वेदशास्त्रजाल**प्रवचनेन** कृत्स्नाध्ययनेन **न हि लभ्यः**। तथा ग्रन्थार्थधारणशक्तिमन्**मेधयापि न** लभ्यः। **नापि बहुना श्रुतेन** बहुधा कृतश्रवणेनापि **न** लभ्य इत्यर्थः। तर्हि केन लभ्यः? इत्यत आह—**यमेवेति**। यं परमात्मानम**ेव एष** विद्वान् निष्प्रतियोगिकस्व-मात्रमिति **वृणुते** प्राप्तुमीहते, **तेन** वरणेन एष आत्मा **लभ्यः**। न ह्यन्येन साधनान्तरेण सर्वप्रत्यगभेदेन नित्यलब्धस्वभावोऽपि स्वातिरिक्तास्तितावरणच्छन्नो न हि लभ्यते। सर्वापह्नवसिद्धब्रह्ममात्रबोधरविणा स्वात्मावरणध्वान्ते विनाशिते नित्यलब्धतया स्वात्मलाभो भवतीत्याह—**तस्येति**। **तस्यैष आत्मा** या पुरा स्वातिरिक्तास्तितावरणच्छन्नेव भाता, प्रबोधतः तद्दृष्ट्यावृतौ भिन्नायां अथ तामेव स्वां स्वयाथात्म्यरूपिणीं **तनुं वृणुते** प्रकाशयति। असल्लौकिकाद्यष्टदृष्टिमोहे सत्यसति निरावृतसकृद्भानरूपेण स्वयमाविर्भवति। यत एवमतः स्वातिरिक्तापह्नवपूर्वकं निष्प्रतियोगिकात्ममात्रबोधो ह्यात्मलाभसाधनमित्यर्थः ॥ ३ ॥

विवेकवैराग्यमूलसंन्यासेन ब्रह्मप्राप्तिः

**नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात्।**
**एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ॥ ४ ॥**

तादृशप्रबोधसाधनानि कानि? इत्यत आह—**नायमिति**। यथोक्तलक्षणोऽ**यमात्मा** निष्प्रतियोगिकस्वात्ममात्रप्रबोधसहकारिबलं स्वातिरिक्तप्रपञ्चनिरासक-तीव्रतमवैराग्यं तद्रहितेन **बलहीनेन न लभ्यः**। नापि स्वदेहदारपुत्रादौ अहंममाभिमानपूर्वकं स्वात्मतत्साधनविस्मरणं प्रमादः। तस्मात् **प्रमादात्**, **तपः** ज्ञानं **लिङ्गं** संन्यासः स्वातिरिक्तसंन्यासविरलज्ञानात् न हि लभ्यते। **यस्तु विद्वान् एतैः** बलाप्रमादसंन्याससहकृतज्ञानोपायैः अनवरतं **यतते** प्रयतते **तस्य एष आत्मा** भ्रान्त्यात्तजीवभावमुत्सृज्य प्रत्यग्रूपेण **ब्रह्मधाम** ब्रह्मयाथात्म्य-रूपेण **विशते** प्रविशति। स्वान्यविस्मारकतया स्वयमेव विजृंभत इत्यर्थः ॥ ४ ॥

ब्रह्मज्ञानिनः सर्वात्मता

संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः ।
ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति ॥ ५ ॥

ब्रह्मधामप्रवेशः कथम्? इत्यत आह—**संप्राप्येति**। बाह्यतृप्तिसाधनवैमुख्य-पूर्वकं केवलज्ञानेनैव **तृप्ताः**। परमात्मभावकृत आत्मा अन्तःकरणं येषां ते **कृतात्मानश्च**। रागिणां कृतात्मता कथम्? इत्यत आह—**वीतरागा** इति। विगलितरागादिदोषा इत्यर्थः। इन्द्रियेन्द्रियार्थव्यापृतानां वीतरागता कुतः? इत्यत आह—**प्रशान्ता** इति। उपरतबाह्यान्तःकरणा इत्यर्थः। इत्थं दर्शन-विशिष्टा **ऋषयो** ये **धीराः युक्तात्मानः** सन्तः एनमात्मानं **सर्वगं सर्वतः संप्राप्य सर्वमेव आविशन्ति**। एवं ब्रह्मविद उपाधिनिर्मुक्तघटाकाशवत्स्वाति-रिक्तसर्वप्रपञ्चापह्नवसिद्धं ब्रह्मधाम प्रविशन्तीति भावः ॥ ५ ॥

ब्रह्मज्ञानेन प्रपञ्चबाधे मुक्तिः

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।
ते ब्रह्मलोकेषु परान्तकाले परामृताः परिमुच्यन्ति सर्वे ॥ ६ ॥

पूर्वोक्तार्थमेव विशेषणान्तरेण स्पष्टयति— **वेदान्तेति**। वेदान्ता उपनिषदः तदर्थविचारजं ज्ञानं विज्ञानं तेन तस्यार्थः तद्गोचर आत्मा यः सुनिश्चितः ते **वेदान्तविज्ञानसुनिश्चितार्थाः**। केवलब्रह्मनिष्ठानुकूलसर्वकर्मपरित्यागलक्षण**संन्यास** एव **योगः** तस्मात्। यतनशीला यतयः। संन्यासयोगादेव **शुद्धसत्त्वप्रधानाः** सन्तः ते ब्रह्मैव लोको **ब्रह्मलोकः**। ब्रह्मविदां बहुत्वाद्ब्रह्मलोकेष्विति बहुवचनं ब्रह्मणीत्यर्थः। स्वातिरेकेण यत्परमन्यदिव भाति तस्य अन्तं अवसानं, यत्सम्यज्ज्ञानं कलयति स परान्तकालः तस्मिन् **परान्तकाले**। सम्यज्ज्ञाने सति तत्समकालं परममृतं अमरणधर्मकं ब्रह्मैव येषां ते **परामृताः** जीवन्नेव ब्रह्मभावमापन्नाः सन्तः विभिन्नघटाकाशवत् निःस्नेहदीपवच्च **मुच्यन्ति** निर्वृतिं

उपयान्ति। सर्वे ब्रह्मविद्वरिष्ठाः सर्वापह्नवसिद्धब्रह्ममात्रतया पर्यवसन्ना इत्यर्थः। ननो न हि तद्गतिं केऽपि न जानन्ति। ब्रह्मणि पर्यवसन्नानां ब्रह्ममात्रत्वात्। "अनध्वगा अध्वसु पारयिष्णवः" इति,

> शकुनीनामिवाकाशे जले वारिचरस्य वा।
> पदं यथा न दृश्यन्ते तथा ज्ञानवतां गतिः॥

इति श्रुतेः स्मृतेश्च। स्वाज्ञानां गतेः देहादिपरिच्छिन्नत्वेन तद्गतिर्द्रष्टुं शक्या। साध्यसाधनभिदाकवलितत्वात्। ब्रह्म तु परिच्छेदत्रयापह्नवसिद्धम्। तद्भावमापन्नस्यापि तथात्वात्। सोऽयं विद्वान् स्वमात्रमवशिष्यत इत्यर्थः॥ ६॥

ज्ञानिनो देहादेर्ब्रह्मात्मता

**गताः कलाः पञ्चदश प्रतिष्ठा देवाश्च सर्वे प्रतिदेवतासु।**
**कर्माणि विज्ञानमयश्च आत्मा परेऽव्यये सर्व एकीभवन्ति॥ ७॥**

संघातावच्छिन्नजीवस्य स्वप्रबोधतः स्वभावसिद्धौ देहारंभकप्राणादिकलानां का गतिः? इत्याशंक्य स्वाज्ञानप्रभवाणां स्वाज्ञानावधिकत्वात्स्वाज्ञानापह्नवसमकालं ता अपि स्वकारणेन समं ब्रह्ममात्रपर्यवसन्ना भवेयुरित्याह—**गता** इति। जीवस्य स्वज्ञानतः स्वभावापत्तौ व्यष्टिसमष्ट्यात्मकदेहाद्यारम्भकत्वेन प्रश्नोपनिषत्परिपठिताः प्राणादिपञ्चदशसंख्याकाः **कलाः** स्वस्वकारणायमान**प्रतिष्ठा गताः**। प्रतिष्ठा इति द्वितीयाबहुवचनम्। तथा पञ्चदशसंख्याका **देवाश्च** ज्ञानकर्मेन्द्रियान्तःकरणपञ्चकभेदाः श्रोत्रादयः **सर्वे** दिगादि**प्रतिदेवतासु गताः** विलयं प्रपन्ना इत्यर्थः। तथा आगामिसंचितारब्धक**कर्माणि** निष्प्रतियोगिकनिर्विशेषब्रह्मप्रबोधसमकालं प्रलयं स्वकारणे गतानीत्यर्थः। स्वात्तान्तःकरणोपाधिना **विज्ञानमयो** विज्ञानप्रायः विज्ञानमयात्मा जीवश्च तस्य स्वाज्ञानप्रभवोपाध्यपह्नवप्रबोधसमकालं प्राणादयः **सर्वे परे अव्यये** ब्रह्मणि **एकीभवन्ति** ब्रह्ममात्रपर्यवसन्ना भवन्तीत्यर्थः॥ ७॥

सदृष्टान्तं नामरूपप्रहाणेन ब्रह्मावाप्तिः

**यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय ।**

**तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् ॥ ८ ॥**

इतश्च दृष्टान्तपूर्वकं ब्रह्मणि परिसमाप्तिं दर्शयति—यथेति । **यथा समुद्रे** महता वेगेन **स्यन्दमानाः** गङ्गाद्या **नद्यः** समुद्रं प्राप्य पुरात्तगङ्गादि**नामरूपे विहाय अस्तं** अदर्शनतां **गच्छन्ति; तथैवं विद्वान** स्वाविद्याकृत**नामरूपात् विमुक्तः** सन् स्वाविद्यापदतत्कार्यात्ततदारोपापवादाधिकरणं परं तद्गतहेयांशापह्नवसिद्धं **परात् परं** स्वमात्रतया दीप्यमानत्वात् **दिव्यं** निष्प्रतियोगिकपूर्णरूपत्वात् **पुरुषं** स्वमात्रतया **उपैति** । श्रेयसो विघ्नबाहुल्याद्ब्रह्मविदपि नरभूतदेवैः विघ्नितो ब्रह्माप्राप्य अन्यां गतिं गच्छेदित्याशंक्य ब्रह्मवेदनात् पुरा यद्यपि नरादयो विघ्नं कुर्वन्तु तद्ब्रह्मवेदनसमकालं "तस्य ह न देवाश्च नाभूत्या ईशते" इति श्रुत्यनुरोधेन सर्वेऽप्यनुकूलतां भजन्ति ॥ ८ ॥

ब्रह्मविद्याफलश्रुतिः

**स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले**

**भवति तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो**

**भवति ॥ ९ ॥**

वस्तुतो ब्रह्मातिरिक्तनरभूतदेवादिवैरल्याद्वेदनसमकालं ब्रह्मविद्ब्रह्मैव भवतीति निगमयति—**स य** इति । **यः** कश्चित् विद्वान् सर्वापह्नवसिद्धत्वेन यत् परमं **तत् परमं ब्रह्म** निष्प्रतियोगिकस्वमात्रमिति **वेद** तद्वेदनसमकालं **स ब्रह्मैव भवति** । **अस्य कुले** शिष्यवर्गे वा **अब्रह्मवित् न** हि **भवति** । तत्परंपरा ब्रह्मवित्पदमेव भजतीत्यर्थः । न च,

नरविघ्नं कार्तवीर्याद्भूतविघ्नं तु दौर्गिकात् ।
शारभाद्देवविघ्नं च निराकुर्यात् त्रयं बुधः ॥

इति पुराणवचनानुरोधेन विघ्नत्रयशान्त्यर्थं देवतात्रयमुपास्यमिति वाच्यम् ; ब्रह्ममात्रावगतेः निर्वर्त्यविघ्नत्रयतन्निवर्तकदेवतात्रयतद्गतहेयांशापह्नवपूर्वकत्वात् वेदनसमकालं ब्रह्मविद्ब्रह्मेत्यर्थः। शोकपापग्रन्थिसत्त्वात् ब्रह्मविदो ब्रह्ममात्रता कुतः ? इत्यत आह—**तरतीति**। निमित्ताभावान्न हि शोकादेरवकाशः। यदि स्वाज्ञदृष्ट्या स्यात्तदपि वेदनसमकालमेव कैवल्यनिमित्तं **शोकं तरति**। पुण्यपापलक्षणं **पाप्मानं तरति**। हृदयगुहाश्रयाविद्याग्रन्थिभ्यः पुरैव **विमुक्तः** सन् अधुनाप्य**मृतो** भवतीव **भवति**। "भिद्यते हृदयग्रन्थिः" इत्यादेरुक्तत्वात् ॥९॥

ब्रह्मविद्योपदेशप्रकारे ऋक्सम्मतिः

तदेतदृचाऽभ्युक्तम्—

**क्रियावन्तः श्रोत्रिया ब्रह्मनिष्ठाः**
**स्वयं जुह्वत एकर्षिं श्रद्धयन्तः।**
**तेषामेवैतां ब्रह्मविद्यां वदेत**
**शिरोव्रतं विधिवद्यैस्तु चीर्णम् ॥ १० ॥**

अथ ब्रह्मविद्यासंप्रदायं दर्शयन्नुपसंहरति—**तदिति**। इत्थं विद्यासंप्रदानविधानं **ऋचा** मन्त्रेण **अभ्युक्तम्**। **क्रियावन्तः** विध्युक्तकर्मानुष्ठातृत्वात्। **श्रोत्रियाः** अधीतवेदवेदाङ्गत्वात्। "एकां शाखामधीत्य श्रोत्रियो भवति" इति बोधायनोक्तेः। तथा अपर**ब्रह्मनिष्ठाः** परब्रह्मबुभुत्सवः **स्वयं श्रद्धयन्तः एकर्षिं** अग्निं **जुह्वते** जुह्वति। **तेषां** अधिकारिणा**मेव एतां ब्रह्मविद्यां वदेत** ब्रूयात्। यदथर्वाणां **शिरसि** अग्निधारणलक्षणं **व्रतं** प्रसिद्धं भवति तत् **विधिवत्** यथाविधानं **यैस्तु चीर्णं** तेषामेव यत् सत्यमक्षरं पुरुषाख्यं तद्वदेत ॥ १० ॥

यथोक्ताधिकारिभिन्नस्यानर्हत्वमाचार्यपूजनं च

तदेतत्सत्यमृषिरङ्गिराः पुरोवाच **नैतदचीर्णव्रतोऽधीते।**
**नमः परमऋषिभ्यो नमः** परमऋषिभ्यः ॥ ११ ॥

पुरा एवं ऋषिः अङ्गिरा नाम विधिवत् पृष्टवते शौनकाय उवाच। तदन्योऽपि श्रेयोऽर्थिने ब्रूयादित्याह—**तदेतदिति**। इत्थं "ब्रह्मा देवानां" इत्यादि ब्रह्मवित्संप्रदायप्रवर्तकं **एतत्** ग्रन्थजातं **अचीर्णव्रतो नाप्यधीते** न पठति। विधिवत् चीर्णव्रता अधीतविद्या सफला भवतीति समाप्ता हि ब्रह्मविद्या। सा येभ्यः पारंपर्यक्रमेण प्रवृत्ता तेभ्यो **नमः**। ये सर्वापह्नवसिद्धं परं ब्रह्म स्वमात्रमिति दृष्टवन्तः ते **परमर्षयः**। भूयो भूयोऽपि **तेभ्यो नमः**। द्विर्वचनं मुण्डकोपनिषत्परिसमाप्त्यर्थम् ॥ ११ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
लिखितं स्याद्विवरणं मुण्डकस्य स्फुटं लघु।
एतद्विवरणग्रन्थो द्व्यशीत्यधिकषट्छतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चसङ्ख्यापूरकं
मुण्डकोपनिषद्विवरणं सम्पूर्णम्

---

श्रीगौडपादीयकारिकासहिता

# माण्डूक्योपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

## आगमप्रकरणम्

ओङ्कारस्य सर्वाधारत्वं चतुष्पात्त्वं च

ओमित्येतदक्षरमिदꣳ सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव। यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ॥ १ ॥

सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात् ॥ २ ॥

माण्डूक्योपनिषद्गूढपराभूमिवरासनम्।
प्रतियोगिविनिर्मुक्ततुर्यतुर्यहरिं भजे ॥
नत्वा श्रीगुरुपादाब्जतुर्यतुर्याप्तिमिच्छताम्।
माण्डूक्योपनिषद्गूढपरमाशय उच्यते ॥

अथ खलु अथर्वणवेदप्रविभक्तमण्डूकशाखामस्तकतुर्यतुर्यस्वरूपप्रतिपादकत्वेन सर्ववेदान्तसारिष्ठमाण्डूक्योपनिषत् विजृम्भते।

सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि ॥

ओमित्येतत् ।

एतदालम्बनं श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥

"एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकार:", "ओमिति ब्रह्म, ओमितीदं सर्वम्, ओमित्यात्मानं युञ्जीत, ब्रह्मप्रणव: षोडशमात्रात्मक:, ओङ्काराग्रविद्योतं तुर्यतुरीयम्",

माण्डूक्यमेकमेवालं मुमुक्षूणां विमुक्तये ।

इत्यादिश्रुतिप्रकटितमहिमेयं ब्रह्मप्रणवार्थतुर्यतुर्यप्रकाशिनी माण्डूक्योपनिषत् गुरुशिष्यसंवादरूपाख्यायिकामन्तरावान्तररूपेण प्रवृत्ता हि । समस्तप्राण्यदृष्टतो निर्हेतुकतया श्रुते: प्रवृत्तिर्विद्यास्तुत्यर्था । हिमवत्पृष्ठासनो गौडपादाचार्य: श्रीशुकमुखान्माण्डूक्योपनिषद्गूढाशयं विज्ञाय स्वयं जाग्रज्जाग्रदाद्यविकल्पानुङ्गैकरसान्तचतुष्पञ्चदशकलनापह्नवसिद्धं तुरीयतुरीयं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति प्रबोधसमकालं कृतकृत्यपदं प्रपद्याथ सर्वभूतानुकम्पया तामेतामुपनिषदं व्याचिख्यासोर्गौडपादाचार्यस्य माण्डूक्यगूढाशयानुवादिन्य: श्रुतय: खिलश्रुतयो मन्त्राश्च प्रादुर्बभूवु: सहस्रश: । तत्र कांश्चिन्मन्त्रान् प्रधानतश्चतुष्पादगोचरचातुर्मात्रालंकृतमाण्डूक्योपनिषद: प्रत्यंशं विभागशो योजयामास । तस्य आगमप्रधानत्वेन ओङ्कारयाथात्म्यनिर्णायकत्वात् तदिदमागमप्रकरणमुच्यते । शिष्टश्रुतिमन्त्रजातमर्थत: संगृह्य कारिकारूपेण प्रकरणत्रयं रचयामास वैतथ्याद्वैतालातशान्तिभेदात् । तत्राद्यप्रकरणे अभिधानाभिधेयात्मकजाग्रज्जाग्रदादिचतुष्पञ्चदशकलनापह्नवसिद्धतया निष्प्रतियोगिकतुर्यतुर्यमात्रमवशिष्यत इत्युक्तम् । तत्र केचिद्ब्रह्मातिरिक्तजाग्रज्जाग्रदादेरात्मत्वसत्यत्वादिकं मन्यन्ते । तच्छशविषाणवदसदिति प्रकटयितुं वैतथ्यप्रकरणं प्रवृत्तम् । तथा च वक्ष्यति—

नात्मभावेन नानेदं न स्वेनापि कथंचन ।
न पृथङ्नापृथक्किंचिदिति तत्त्वविदो विदुः ॥

इति । स्वातिरिक्तद्वैतप्रपञ्चापह्नवसिद्धं निष्प्रतियोगिकाद्वैतमिति प्रकटयितुमद्वैत-प्रकरणमाम्नातम् । तथा च वक्ष्यति—

एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते ।

इति । तत्र परमाद्वैतस्वाज्ञादिदृष्टिप्रसक्तविकल्पनिरसनायालातशान्तिप्रकरणं विरचितम् । एवं "ओमित्येतदक्षरम्" इत्यादिप्रकरणचतुष्टयस्य संक्षेपतो विवरणमारभ्यते—**ओमित्येतत्** इति । यदिदं घटपटाद्यर्थत्वेनाभिधीयते तदभिधेयजातमुच्यते । इत्थं स्वाज्ञदृष्टिविकल्पितस्याभिधेयजातस्य स्वज्ञदृष्ट्या-भिधानमात्रत्वात् स्वाज्ञदृष्टिविकल्पिताभिधानभेदस्यापि "तद्यथा शङ्कुना सर्वाणि पर्णानि सन्तृण्णान्येवमेवोङ्कारेण सर्वा वाक् संतृण्णोङ्कार एवेदं सर्वम्" इति श्रुत्यनुरोधेनोङ्कारस्वरूपत्वादोङ्कारविकारोऽयमभिधानप्रपञ्चः । तदभिधेयजातं **इदं सर्वमक्षरम्** । तस्य घटाद्यारोपाधिकरणत्वादधिकरणातिरेकेणारोपवैरल्याच्च ओमितीदं सर्वमक्षरमेवेत्यर्थः । इत्थमभिधानाभिधेयोपायपूर्वकं परं ब्रह्मावगन्तुं शक्यमिति ओङ्कार एव वा सर्वमिति संक्षेपार्थः । विस्तरार्थमाह—**तस्य** इति । **तस्य** ओमित्येतस्याक्षरस्य ब्रह्मात्युपायत्वेन उप समीपतया विस्पष्टमाख्यानं **उप-व्याख्यानं** प्रसक्तमित्यर्थः । तत् किं? इत्यत आह—**भूतं** इति । यद्यत् कालत्रयपरिच्छेद्यं तत्तत् **सर्वमोङ्कार एव** । **यच्चान्यत् त्रिकालातीतं** अव्यक्तादि **तदप्योङ्कार एव** । अव्यक्तस्य कालापरिच्छेद्यत्वात् । "ओमित्ये-तदक्षरम्" इत्यत्राभिधानाभिधेययोरेकत्वेऽपि सर्वमोङ्कार एवेत्यभिधानप्राधान्येन निर्देशः कृतः । **सर्वं ह्येतद्ब्रह्म** इत्यादिना पुनरभिधेयप्राधान्येन निर्देशस्तु अभिधानाभिधेययोरेकत्वप्रतिपत्त्यर्थः । तयोरेकत्वप्रतिपत्तेर्युगपदपह्नोतुमुपायत्वात् । ततस्तदपह्नवसिद्धं ब्रह्म स्वमात्रमवशिष्यते । तथा चैकत्वप्रतिपत्तौ वक्ष्यति— "पादा मात्रा मात्राश्च पादाः" इति । ओङ्कारमात्रं सर्वमिति यदुक्तं तदेतद्धि ब्रह्म । तत् किं परोक्षं? इति शङ्कायां तदपरोक्षतया निर्दिशति—

**अयमात्मा ब्रह्म** इति। योऽयं व्यष्टिप्रपञ्चतत्कार्यभावाभावप्रकाशकत्वेन तदपवादास्पदत्वेन चाभिहितः सोऽयं प्रत्यगात्मैव। समष्टिप्रपञ्चापवादाधिष्ठानतयोपबृंहणाद्ब्रह्मेति प्रत्यग्ब्रह्मणोरेकत्वादपरोक्षत्वं सिद्धमित्यर्थः। "अयमात्मा ब्रह्म" इति निर्दिष्टप्रत्यगभिन्नपरमात्मनः कार्षापणवच्चतुष्पात्त्वं व्यक्तीकरोति—**सोऽयमात्मा** इति। षोडशावयवविशिष्टत्वं कार्षापणत्वम। न हि गौरिवायं **चतुष्पात्** भवति। स्वाङ्गदृष्ट्या व्यष्टिसमष्टितदैक्योपाध्यभिमानतो विश्वविश्वविराड्विराडोत्रोत्रादिभेदेन त्रिपञ्चदशपादयमात्मा भवतीत्यर्थः ॥ १–२ ॥

तस्य प्रथमपादस्वरूपम्

जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः ॥ ३ ॥

कथं प्रधानतश्चतुष्पात्त्वम्? इत्यत आह—**जागरितस्थान** इति। जाग्रत्प्रविभक्तजागरितं स्थानमस्य विश्वविश्वादेर्विराड्विराडादेरोत्रोत्रादेरिति **जागरितस्थानः**। तथा स्वातिरिक्तविषये प्रज्ञा यस्येति स विश्वविश्वादिः **बहिःप्रज्ञः**। कार्याद्युपाधिकृतत्वं बहिःप्रज्ञत्वं न स्वतः, स्वस्य विज्ञानस्वरूपत्वात् "विज्ञानमानन्दं ब्रह्म" इति श्रुतेः। तथा स्थूलोपाधिकृतानि सप्ताङ्गानि यस्येति **सप्ताङ्गः**।

अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ
दिशः श्रोत्रे वाग्विवृताश्च वेदाः।
वायुः प्राणो हृदयं विश्वमस्य
पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा ॥

इति श्रुतेः। कर्मज्ञानेन्द्रियप्राणपञ्चकान्तःकरणचतुष्टयतत्तद्विषयोपलब्धिमद्द्वारत्वेन मुखानि यस्येति **एकोनविंशतिमुखः**। स एवंविशेषणविशिष्टो विश्वविश्वादिविराड्वैश्वानर ओत्रोत्रादिश्चैकोनविंशतिकरणकैः स्थूलशब्दादिविषयान् भुङ्क्त इति **स्थूलभुक्**। विश्वश्चासौ नरश्चेति विश्वनरः। विश्वनर एव **वैश्वानरः**।

स्थूलप्रविभक्तस्थूलाद्युपाधिकत्वात् स हि **प्रथमः पादः**। उत्तरपादाधिगमस्यैतत्पूर्वकत्वात् प्राथम्यं युक्तम्। जागरितस्थानश्चतुरात्मा विश्वो वैश्वानरश्चतूरूप अकार एव। "चतूरूपो ह्ययमकारः स्थूलसूक्ष्मबीजसाक्षिभिरोतानुज्ञात्रनुज्ञाविकल्पैरकाररूपैः ओतो ह्ययमात्मा" इति श्रुतेः। कथं "अयमात्मा ब्रह्म" इति निर्दिष्टप्रत्यगभिन्नपरमात्मनश्चतुष्पात्त्वे प्रकृते सप्ताङ्गवचनमप्रकृतमिति चेन्न; साध्यात्मिकादिप्रपञ्चस्यानेनात्मना चतुष्पात्त्वस्य विवक्षितत्वात्। एवं कृते साध्यात्मिकादिप्रपञ्चारोपापवादस्तदधिकरणत्वेन विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तसिद्धिः।

यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति।

"सर्वभूतानि चात्मनि" इति च श्रुत्यनुरोधेन सार्वात्म्यसिद्धिश्च स्यात्। नो चेदात्मनो देहपरिच्छित्त्या परिच्छिन्नोऽयमात्मा इत्यात्मास्तीति वा वार्तापि न स्यात्। "देशतः कालतो वस्तुतः परिच्छेदरहितं ब्रह्म" इति श्रुत्येष्यते सार्वात्म्यमपरिच्छिन्नत्वं च। अतो युक्तमुक्तमाध्यात्मिकादिप्रपञ्चसम्बन्धतः सप्ताङ्गत्वं स्यादिति। "यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मम्" इत्यादिश्रुत्यनुरोधेनाध्यात्मिकाधिदैवव्यष्टिसमष्ट्युपाध्यवच्छिन्नविश्वविश्वादेरेकत्वं तत्सूक्ष्मांशोपाधिकतैजसतैजसाद्योरुपलक्षणार्थः। तद्बीजांशोपाधिकप्राज्ञप्राज्ञबीजविराडाद्योरविशेषत एकत्वं सिद्धमित्यर्थः। एवं च सत्येतत्सर्वापह्नवे निष्प्रतियोगिकाद्वैतं सिद्धं भवति ॥ ३ ॥

तस्य द्वितीयपादस्वरूपम्

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ ४ ॥

प्रणवस्थूलप्रपञ्चमुक्त्वा सूक्ष्मप्रपञ्चमाचष्टे—**स्वप्नस्थान** इति। व्यष्टिसमष्ट्यात्मकस्थूलादिचतुर्धाभिन्नस्वप्नस्थानमस्य तैजसविश्वादेरिति **स्वप्नस्थानः**।

जाग्रज्जाग्रदादिभवबाह्यप्रविभक्तबाह्यादिप्रज्ञासंस्कारतो बाह्यसाधनमनपेक्ष्याविद्याकामकर्मप्रेर्यमाणवासनाकलितमनसैव सर्वं परिकल्प्य स्वप्नेऽन्तःप्रज्ञा यस्य सोऽयं **अन्तःप्रज्ञः**। "अस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति", "अत्रैष देवः स्वप्ने महिमानमनुभवति" इति श्रुतेः। स्थूलप्रपञ्चसंस्कृतवासनोद्भूतसप्ताङ्ग **एकोनविंशतिमुखः** इति व्याख्यातम्। जाग्रत्प्रविभक्तभोगो यस्य स **प्रविविक्तभुक्**। केवलतेजोरूपप्रज्ञाविषयो भवतीति **तैजसः** इति **द्वितीयः पादः** "स्वप्नस्थानश्चतुरात्मा तैजसो हिरण्यगर्भश्चतूरूप उकार एव। चतूरूपो ह्ययमुकारः स्थूलसूक्ष्मबीजसाक्षिभिरोतानुज्ञात्रनुज्ञाविकल्पैरुकाररूपैरनुज्ञाता ह्ययमात्मा" इति श्रुतेः॥ ४॥

तस्य तृतीयपादस्वरूपम्

**यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तम्। सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञः तृतीयः पादः॥ ५॥**

अकारोकारतदध्यक्षपादनिरूपणानन्तरं मकाराध्यक्षबीजपादं विवृणोति—**यत्र सुप्त** इति। **यत्र** स्थाने काले वा **सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति**। न हि पूर्वयोरिव सुप्तस्य कामस्वप्नदर्शनं वास्ति **तत्** एतत् **सुषुप्तम्**। सुषुप्तं स्थानं अस्य प्राज्ञविश्वादेरिति **सुषुप्तस्थानः**। जाग्रदादिस्थानद्वयप्रविभक्तद्वैतप्रपञ्चस्य कारणाज्ञानग्रस्तत्वेनैकीभूतत्वात् **एकीभूतः**। यद्वत् नैशतमसावृतघटादि तमोघनमिव भाति तद्वत् जाग्रत्स्वप्नमनस्स्पन्दनप्रज्ञानजातं घनीभूतं यस्य स हि **प्रज्ञानघनः**। **एव**शब्दतः प्रज्ञानघनातिरिक्तजात्यन्तरं नास्तीति द्योत्यते। जाग्रदादिमनस्स्पन्दनायासदुःखवैरल्यात् **आनन्दमयः**। मयटो विकारार्थत्वादानन्दविकारो नानन्द एवेत्यर्थः। तथा **आनन्दभुक्** निरायासस्थितिरूपानन्दानुभूतेः आनन्दभुगुच्यते "एषोऽस्य परम आनन्दः" इति श्रुतेः। तत्रत्यचेतसो जाग्रदादेर्द्वारीभूतत्वाद्बोधलक्षणं वा चेतोमुखं द्वारमस्येति वा **चेतोमुखः**।

भूतादिकालत्रयज्ञातृत्वं सकलविषयज्ञातृत्वं प्रज्ञप्तिमात्रं वा इतरापेक्षया विशिष्टप्रज्ञानमस्यास्तीति वा **प्राज्ञः** । सोऽयं **तृतीयः पादः** ॥ ५ ॥

स एव सर्वेश्वरः

**एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ ६ ॥**

अध्यात्माधिदैविकभेदजातस्य **सर्वस्य एष** एव **ईश्वरः** । न ह्येतस्मादीशादन्यः प्राज्ञोऽस्ति । "प्राणबन्धनं हि सोम्य मनः" इति श्रुतेः । सर्वो भूत्वा सर्वं जानातीति **एष सर्वज्ञः** । सर्वभूतान्तरनुप्रविश्य तन्नियन्तृत्वात् **एषो ह्यन्तर्यामी** । यथोक्तलक्षणं जगत् यस्मात् जातं स **ह्येष योनिः सर्वस्य** इत्यर्थः । यतो **भूतानां** भौतिकानां च **प्रभवाप्ययौ** उत्पत्तिप्रलयौ भवतः सोऽयमीश्वरः सर्वकारणमित्यर्थः । "सुषुप्तस्थानश्चतुरात्मा प्राज्ञ ईश्वरश्चतूरूपो मकार एव । चतूरूपो ह्ययं मकारः स्थूलसूक्ष्मबीजसाक्षिभिर्गतानुज्ञात्रनुज्ञाविकल्पैर्मकाररूपैरनुज्ञैकरसो ह्ययमात्मा", "एष त आत्मान्तर्याम्यमृतः", "यः सर्वज्ञः सर्ववित्", "तस्मात् सर्वगतः शिवः" इत्यादिश्रुतेः ॥ ६ ॥

तस्यैव विश्वादिभेदेन त्रेधा स्थितत्वम्

**अत्रैते श्लोका भवन्ति—**

**बहिःप्रज्ञो विभुर्विश्वो ह्यन्तःप्रज्ञस्तु तैजसः ।**
**घनप्रज्ञस्तथा प्राज्ञ एक एव त्रिधा स्थितः ॥ १ ॥**

उक्तेऽर्थे एते श्लोका मन्त्रा भवन्ति—**बहिःप्रज्ञ** इत्यादिना । **एक एव** ईश्वरो व्यष्टिसमष्ट्यात्मकदेहत्रये स्थूलादिप्रविभक्तस्थूलादिरूपमवष्टभ्य विश्व-

तैजसप्राज्ञविश्वादिरूपेण **त्रिधा स्थितः** सन् बाह्यान्तर्घनप्रज्ञतां भजति। अत ईश्वरस्य स्थानत्रयव्यतिरिक्तासङ्गशुद्धत्वादि सिद्धमित्यर्थः ॥ १ ॥

अवस्थात्रयानुभवः

**दक्षिणाक्षिमुखे विश्वो मनस्यन्तस्तु तैजसः।**
**आकाशे च हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः ॥ २ ॥**

पञ्चदशावस्थाद्युपलक्षणार्थं जाग्रज्जाग्रदाद्यवस्थात्रयानुभवं दर्शयति—**दक्षिणाक्षिमुख** इति। "इन्धो ह वै नामैष योऽयं दक्षिणेऽक्षन् पुरुषः" इति श्रुत्यनुरोधेन आदित्याद्यन्तरत्वेनेन्धो दीप्तिगुणविशिष्टविराडाद्यात्मा चक्षुषि च द्रष्टा एकः। "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इति श्रुतेः। स्थूलादिविषयोपभोगाय दक्षिणमक्ष्येव मुखं तस्मिन् **दक्षिणाक्षिमुखे** सर्वेषु करणेषु अविशेषेष्वपि स्थूलादिरूपग्रहणे दक्षिणाक्षिण्युपलब्धिपाटवात् दक्षिणाक्षिमुखे विश्वविश्वादिस्थूलादिरूपग्रहणं कुर्वन् यत्र जागर्ति सेयमवस्था जाग्रज्जाग्रदादीत्युच्यते। इत्थं दक्षिणाक्षिगत**विश्वो** बाह्यरूपं दृष्ट्वा अथ यदा निमीलिताक्षो भवति तदा वासनारूपाभिव्यक्तस्वप्नं पश्यति। सेयं जाग्रद्विभक्तस्वप्नावस्थोच्यते। चक्षुरादिव्यापारोपरमे **अन्तर्मनसि** व्यापृतस्तु विश्वप्रविभक्त**तैजस** इत्यभिधीयते। स हि **हृदि आकाशे च** यदा स्मरणादिव्यापृतेरुपरमो भवति तदा जाग्रत्प्रविभक्तस्वापावस्थोच्यते। तन्निवर्तको विश्वविभक्त**प्राज्ञो** भवति। तत्र मनोव्यापारवैरल्यात् अविशेषेण प्राणात्मनायमवशिष्यत इत्यर्थः। "प्राणो ह्येवैतान् सर्वान् संवृङ्क्ते" इति श्रुतेः। इत्थं **त्रिधा देहे व्यवस्थितिः** जाग्रज्जाग्रदादिपञ्चदशावस्थातद्व्यष्टिसमष्टितदैक्याध्यक्षोपलक्षणार्थेत्यर्थः ॥ २ ॥

विश्वादेः स्थूलादिभुक्त्वं तृप्तिश्च

**विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक्।**
**आनन्दभुक् तथा प्राज्ञस्त्रिधा भोगं निबोधत ॥ ३ ॥**

**स्थूलं तर्पयते विश्वं प्रविविक्तस्तु तैजसम् ।**
**आनन्दश्च तथा प्राज्ञं त्रिधा तृप्तिं निबोधत ॥ ४ ॥**

विश्वविश्वादेः स्थूलादिभुक्त्वं तेनैव तृप्तिं च निगमयति—**विश्वो हि** इत्यादिना । स्पष्टोऽर्थः ॥ ३–४ ॥

एतद्भोगज्ञानफलम्

**त्रिषु धामसु यद्भोज्यं भोक्ता यश्च प्रकीर्तितः ।**
**वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥ ५ ॥**

भोक्तृभोग्यजातं ब्रह्मेति ज्ञानफलमाह—**त्रिषु धामसु** इति । जाग्रदादिषु **त्रिषु धामसु** स्थूलप्रविविक्तानन्दभेदेन त्रिधाभूतमिव **यत् भोज्यं** एकं विद्यते स्थूलप्रविभक्तस्थूलाद्युपाधिभेदेन विश्वविभक्तविश्वादिरूपो **भोक्तापि** एक एव सर्वावस्थाभोक्ताहमित्येकत्वानुसन्धानात्तद्भावाभावप्रकाशकत्वेन प्रत्यक् **प्रकीर्तितः** । **यस्तु** भोक्तृभोज्यतया विभिन्नं **एतदुभयं** ब्रह्मेति **वेद स** हि स्वाज्ञदृष्ट्या **भुञ्जानोऽपि न लिप्यते** सर्वस्य एकभोक्तृभोज्यत्वात् ।

यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः ।
मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥

इति श्रुतेः । न हि स्वान्नेन स्वयमद्यते स्वस्यात्तृत्वात् दाह्यदग्धाग्निवदित्यर्थः ॥ ५ ॥

तस्यैव सर्वकारणत्वम्

**प्रभवः सर्वभावानां सतामिति विनिश्चयः ।**
**सर्वं जनयति प्राणश्चेतोंऽशून् पुरुषः पृथक् ॥ ६ ॥**

स्वाज्ञादिदृष्ट्या सर्वकारणत्वं स्फोरयति—**प्रभव** इति । स्वाज्ञदृष्टि-प्रसक्तविश्वविश्वादिस**र्वभावानां** स्वसत्तया **सतां प्रभवः** उत्पत्तिः, न ह्यसताम्—

असतो मायया जन्म तत्त्वतो न हि युज्यते ।
वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते ॥

इत्यसतोऽनुत्पत्तिं वक्ष्यति । यद्यसतां प्रभवस्तदा ब्रह्मणोऽव्यवहार्यत्वेन ग्रहण-द्वाराभावात्तस्यासत्त्वं प्रसज्यते । यथा रज्ज्वारोपितसर्पादेः रज्ज्वाद्यात्मना सत्त्वं तथा स्वारोपितविश्वस्य स्वरूपतः सत्त्वम् । स्वोत्पत्तेः पुरा भावानां प्राणात्मना सत्त्वमित्यत्र "नैवेह किंचनाग्र आसीन्मृत्युनैवेदमावृतमासीत्" इति श्रुतेः । अतः **प्राणो** बीजात्मा **पुरुषः** ईश्वरः स्वाविद्यातत्कार्यचेतयितृत्वात् चेतः स्वयं भवति । रवेरंशव इव स्वस्यांशवश्चेतोंऽशवो विषयभावविलक्षणाः सलक्षणाश्चाग्नि-विस्फुलिङ्गवत् जलार्कवच्च विश्वविश्वादिभेदेन देवमनुष्यतिर्यगादिदेहेषु **पृथक् पृथक्** विभाव्यमानाः । तान् **चेतोंऽशून्** तद्भोग्यलक्षणं **सर्वमिदं** जगच्च सृजतीत्यत्र "यथोर्णनाभिः", "यथाग्नेः क्षुद्रा विस्फुलिङ्गाः" इति श्रुतेः । वस्तुतो-ऽवस्तुतो वापि स्वातिरिक्तं जगत् सत्त्वेनासत्त्वेनापि न किंचित् जायते ।

केवलं ब्रह्ममात्रत्वान्नास्त्यनात्मेति निश्चिनु । इति,

"यत्र किंचिन्न जायते" इति च जातिसामान्यवैरल्यश्रुतेः ॥ ६ ॥

सृष्टिविकल्पः

**विभूतिं प्रसवं त्वन्ये मन्यन्ते सृष्टिचिन्तकाः ।**
**स्वप्नमायासरूपेति सृष्टिरन्यैर्विकल्पिता ॥ ७ ॥**

स्वाज्ञदृष्टिप्रसक्तसृष्टिस्वरूपमाचष्टे—**विभूतिं** इति । सृष्टिः ईश्वरविभूति-रिति **सृष्टिचिन्तकाः मन्यन्ते** न तत्त्वविदः सृज्यमानविषयवैरल्यात् । "इन्द्रो मायाभिः पुरुरूप ईयते" इति श्रुतितः, "स्वप्नमाये यथा दृष्टे" इति कारिकातश्च **अन्यैः** स्वज्ञैः **स्वप्नसरूपा मायासरूपा** चेति **विकल्पिता** इयं **सृष्टिः** इत्यर्थः ॥ ७ ॥

देवस्वभाव एव सृष्टिः

**इच्छामात्रं प्रभोः सृष्टिरिति सृष्टौ विनिश्चिताः ।**
**कालात्प्रसूतिं भूतानां मन्यन्ते कालचिन्तकाः ॥ ८ ॥**
**भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे ।**
**देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा? ॥ इति ॥ ९ ॥**

ईश्वरेच्छातः कालाद्वा सृष्टिः स्यादिति सृष्टिचिन्तका मन्यन्त इत्याह—**इच्छामात्रं** इति । केचन **प्रभोरिच्छामात्रं** घटादिप्रपञ्चसृष्टि**रिति** । **सृष्टौ विनिश्चिताः** केचन कालादेव सृष्टिरिति । यद्वा—**भोगार्थं क्रीडार्थं इति च सृष्टिरिति अपरे मन्यन्ते** । पक्षद्वयं दूषयति—**देवस्यैष** इति । "विभूतिं प्रसवं त्वन्ये" इत्यादिसर्वपक्षदूषणमाह—**आप्तकामस्य** इति । अधिष्ठानाज्ञानातिरिक्तसृष्टिर्नास्तीत्यर्थः ॥ ८–९ ॥

तस्य तुरीयपादस्वरूपम्

**नान्तःप्रज्ञं नबहिःप्रज्ञं नोभयतःप्रज्ञं नप्रज्ञानघनं नप्रज्ञं नाप्रज्ञम् । अदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ ७ ॥**

पादत्रयमुक्त्वा तुरीयपादं विवृणोति—**नान्तःप्रज्ञं** इति । नान्तःप्रज्ञं नबहिःप्रज्ञमिति पाठक्रमापेक्षया अर्थक्रमस्य बलीयस्त्वात् विश्वप्रविभक्ततैजसप्रपञ्चनस्य विश्वविश्वप्रपञ्चनपूर्वकत्वादिति । **नाहं बहिःप्रज्ञः** व्यष्टिसमष्ट्यात्मकतदैक्यरूपजागरणजागरणाभिमानिविश्वविश्वाभिन्नविराड्विराडैक्योत्रोतृगतहेयांशापह्नवसिद्धत्वात् । तथाहं **नान्तःप्रज्ञः** जागरणस्वप्नाभिमानिव्यावहारिकतैजसविराट्-

सूत्रैक्योत्रनुज्ञातृहेयांशवैरल्यात् । **नाहं** बाह्यान्तर्विजृंभितस्थूलसूक्ष्मप्रपञ्चोभयतः- **प्रज्ञः** जागरणस्वापाभिमानिव्यावहारिकप्राज्ञविराड्बीजैक्योत्रनुज्ञैकरसहेयांशवैरल्यात्। **नाहं प्रज्ञः** जागरणजाग्रदादिभावाभावप्रज्ञाभिमानिव्यावहारिकतुर्यविराट्तुर्यैक्योत्रविकल्पकलनाशून्यत्वात् । इत्थं स्थूलप्रपञ्चापह्नवसिद्धब्रह्मज्ञानाद्ब्रह्मविद्भवेत् । **नाहं अप्रज्ञः** व्यष्टिसमष्टिस्वप्नविभक्तजागरणाभिमानिबहिःप्रज्ञाविरलप्रातिभासिकविश्वसूत्रविराडनुज्ञात्रोतृकलनाया मृग्यत्वात् । अहं **अदृश्यः** स्वप्नस्वप्नाभिमानिचित्तकल्पितदृश्यमोहितप्रातिभासिकतैजससूत्रसूत्रतदैक्यानुज्ञात्रनुज्ञात्रकलनापह्नवात्। **नाहं प्रज्ञानघनः** स्वप्नस्वापाभिमानिसर्वविषयाभावप्रज्ञानघनप्रातिभासिकप्राज्ञसूत्रबीजतदैक्यानुज्ञात्रनुज्ञैकरसकलनाबाह्यत्वात् । अहं **अव्यवहार्यः** स्वप्नतुर्यावस्थाभिमानिस्वप्नजागरणादिभावाभावसाक्षित्वव्यवहार्यप्रातिभासिकसूत्रतुरीयतदैक्यानुज्ञात्रविकल्पविलक्षणत्वात् । एवं सूक्ष्मप्रपञ्चापह्नवसिद्धब्रह्मज्ञानतो ब्रह्मविद्वरो भवति । अहं **अग्राह्यः** सुषुप्तिजागरणाभिमानिस्वाज्ञानवृत्तिग्राह्यपारमार्थिकविश्वबीजविराट्कलनावैरल्यात् । अहं **अलक्षणः** स्वापस्वप्नाभिमानिस्वाज्ञानवृत्तिलक्षणवेद्यपारमार्थिकतैजसबीजसूत्रादिविलक्षणत्वात् । अहं **अचिन्त्यः** न किंचनावेदिषमिति परामर्शचिन्त्यस्वापस्वापाभिमानिपारमार्थिकप्राज्ञबीजबीजतदैक्यानुज्ञैकरसानुज्ञैकरसविलक्षणत्वात्। अहं **अव्यपदेश्यः** स्वापतुर्यावस्थाभिमानिस्वापजागरणादिभावाभावसाक्षित्वव्यपदेश्यपारमार्थिकबीजतुर्यैक्यानुज्ञैकरसाविकल्पगतहेयांशापह्नवसिद्धत्वात् । एवं बीजप्रपञ्चकलनापवादतो ब्रह्मविद्वरीयान् भवेत् । अहं **एकात्मप्रत्ययसारः** तुर्यजागरणाभिमानिध्यात्राद्यनेकप्रत्ययसारतुर्यविश्वविराट्तदैक्याविकल्पोतृविलक्षणत्वात् । अहं **प्रपञ्चोपशमः** तुर्यस्वप्नाभिमानी क्वचित् कदाचित् अशान्तप्रपञ्चतुर्यतैजससूत्रतदैक्याविकल्पानुज्ञातृकलनावैरल्यात् । अहमेव **शान्तः** तुर्यस्वापाभिमानिगुणसाम्यावस्थाशान्ततुर्यप्राज्ञबीजतदैक्याविकल्पानुज्ञैकरसगतहेयांशापह्नवसिद्धत्वात् । एवं तुर्यावस्थाभागत्रयापह्नवबोधतो ब्रह्मविद्वरिष्ठो भवति । अहमेव **शिवः** जाग्रज्जाग्रद्विश्वविश्वविराड्विराडोत्रोत्रादिचतुष्पञ्चदशकलनाशिवापह्नवसिद्धनिष्प्रतियोगिकतुर्यतुर्यब्रह्ममात्रत्वात् । अत एव अहं **अद्वैतः** ।

द्वैतं यदि तदाद्वैतं द्वैताभावेऽद्वयं न च ।

इति श्रुत्यनुरोधेन सापेक्षद्वैताद्वैतकलनाविरलनिष्प्रतियोगिकपरमाद्वैतरूपत्वात् । एवंविशेषणविशिष्टं यं आत्मानं स्वस्वदृष्ट्यनुरोधेन **चतुर्थं** तुरीयं तुर्यतुरीयं वा ब्रह्मविदादयो **मन्यन्ते** । स्वातिरिक्तप्रपञ्चापवादास्पदनिरास्पदब्रह्ममात्रत्वात् । **स एव आत्मा** सर्वापह्नवसिद्धस्वमात्रत्वेन **विज्ञेयः** "नातः परं वेदितव्यं हि किंचित्" इति श्रुतेः । तुर्यतुर्यातिरेकेण जाग्रज्जाग्रदादिचतुष्पञ्चदशकलना न ह्यस्ति । तुर्यतुर्यं निष्प्रतियोगिकस्वमात्रमप्यसल्लौकिकाद्यष्टदृष्टीनां जाग्रज्जाग्रदादि-चतुष्पञ्चदशकलनेव भासते । परमार्थदृशां निष्प्रतियोगिकस्वमात्रतया भासत इत्यर्थः । "तुरीय ईश्वरग्रासः स स्वराट् स्वयमीश्वरः स्वप्रकाशः चतुरात्मा ओङ्कार एव । चतूरूपो ह्ययमोङ्कारः स्थूलसूक्ष्मबीजसाक्षिभिरोत्रनुज्ञात्रनुज्ञा-विकल्पैः ओङ्काररूपैः अविकल्पो ह्ययमात्मा" इति श्रुतौ तावत् अकारोकारमकारचातुर्विध्यवत् ओङ्कार एव चतूरूपः इत्यर्धमात्राप्रणवस्यापि चातुर्विध्योक्तेः कथं त्रैविध्यम्? इति चेन्न; सविशेषनिर्विशेषयोः पृथग्वक्त-व्यत्वात् । श्रुतौ तावत् सविशेषनिर्विशेषावेकीकृत्य विवक्षितं, सविशेष-निर्विशेषयोः सविकल्पाविकल्पत्वेन मिथो वैलक्षण्यात् । स्वेतरभासकचितः स्वेतराभावे भासकतावैरल्यात् भास्यसद्भावे तन्निरूपितभासकत्वेन सविशेषत्वम् । तुर्यतुर्यस्य तु स्वेतरभास्यभासककलनापह्नवसिद्धत्वेन निष्प्रतियोगिकनिर्विशेष-त्वम् । तयोः सविशेषनिर्विशेषयोः पृथग्वक्तव्यत्वेन त्रैविध्योक्तिः युक्ता । "ओङ्काराग्रविद्योतं तुर्यतुरीयम्" इति जाग्रज्जाग्रदादिचतुष्पञ्चदशकलनामो-होङ्काराग्रत्वेन स्वाज्ञादिदृष्टिप्रसक्तचतुष्पञ्चदशमोहे सत्यसति तत्सर्वापह्नवसिद्धतया विद्योतमानं तुर्यतुर्यमवशिष्यत इत्यर्थानुवादिश्रुतेः ॥ ७ ॥

तुर्यतुरीयलक्षणम्

**अत्रैते श्लोका भवन्ति—**

**निवृत्तेः सर्वदुःखानामीशानः प्रभुरव्ययः ।**
**अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः ॥ १० ॥**

याथात्म्यप्रबोधतोऽद्वैतप्रपञ्चापह्नवसिद्धनिष्प्रतियोगिकाद्वैतभावोऽवशिष्यत इत्यस्मिन्नर्थे अत्रैते श्लोका मन्त्रा भवन्तीत्याह— **निवृत्तेः** इत्यादिना। जाग्रज्जाग्रदादिचतुष्पञ्चदशकलना अस्ति नास्तीति कलनापि दुःखरूपा। तत्सर्वापह्नवबोधात् तद्दुःखनिवृत्तेः। ततः "ईश्वरग्रासस्तुर्यतुरीयः" इति श्रुत्यनुरोधेन स्वातिरिक्तसर्वदुःखग्रासोऽयं **ईशानः** तुरीयतुरीय इत्यर्थः। स्वाज्ञादिदृष्टिप्रसक्तदुःखनिवृत्तिं प्रति स्वज्ञदृष्ट्या प्रभवतीति **प्रभुः**। स्वातिरिक्तदुःखनिवृत्तेः तद्याथात्म्यज्ञाननिमित्तत्वात्। स्वाज्ञादिदृष्टिमोहे सत्यसति यः स्वरूपतो न व्येतीति **अव्ययः**। स्वाज्ञदृष्ट्या प्रसक्त**सर्वभावानां** विश्वविश्वादिद्वैतभेदानां सर्पादिस्थानीयानां स्वज्ञदृष्ट्या रज्जुस्थानीयत्वेन द्योतनात् **देवो विभुस्तुरीयो** हि **अद्वैतः**। परमार्थदृष्ट्या निष्प्रतियोगिकाद्वैतो हि तुर्यतुरीय इत्यर्थः॥ १०॥

विश्वादीनां याथात्म्यम्

**कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ।**
**प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यतः॥ ११॥**

तुर्यतुर्ययाथात्म्यावगतये विश्वविश्वादीनां याथात्म्यं निरूप्यते—**कार्यकारणबद्धौ** इति। अन्यथाग्रहलक्षणं फलं क्रियत इति **कार्यम्**। तत्त्वाग्रहणलक्षणं बीजं करोतीति **कारणम्**। ताभ्यां विश्वविश्वाद्योत्रविकल्पान्तभेदः तैजसविश्वाद्यनुज्ञात्रविकल्पान्तभेदश्च **तौ** एतौ **बद्धाविष्येते**। **प्राज्ञ**विश्वाद्यनुज्ञैकरसाविकल्पान्तभेदस्तु तत्त्वाप्रतिबोधमात्रबीजभावेनैव **बद्ध** इवाभिधीयते। **तौ** अन्यथाग्रहणतत्त्वाग्रहणलक्षणफलबीजभावौ **द्वौ** तु **तुर्ये** तुरीययाथात्म्यतुर्यतुर्ये तदधिगमे वा **न सिध्यतः** न संभवत इत्यर्थः॥ ११॥

तुर्यस्य भावाभावप्रकाशकत्वम्

**नात्मानं न परं चैव न सत्यं नापि चानृतम्।**
**प्राज्ञः किञ्च न संवेत्ति तुर्यं तत्सर्वदृक् सदा॥ १२॥**

तुर्यतुर्यस्य निष्प्रतियोगिकस्वमात्रत्वात् तत्र स्वाज्ञदृष्टिप्रसक्तविश्वतैजसादिवत् प्राज्ञादेः द्वैतग्रहो न ह्यस्ति। तुर्यस्य तु तद्भावाभावप्रकाशकत्वमाह— **नात्मानं** इति। विश्वविश्वादिवत् **आत्मानं** अन्यं **परं** व्यावहारिक**सत्यमनृतं च** किंचिदपि प्राज्ञविश्वादिः **न संवेत्ती**व। वस्तुतः स्वातिरिक्तविषयाभावात्। यद्वा—तत्त्वाग्रहणलक्षणतमसा आवृतत्वात् **न किंचिदपि** वेत्तीत्यर्थः। **तुर्यं** तु सर्वं च **तत् दृक्** चेति **सर्वदृक्**। **सदा** तत्र तुरीये तत्त्वाग्रहणलक्षणं अन्यथाग्रहणलक्षणं वा न किंचिदस्ति। न हि मध्यंगतनिरावृतप्रचण्डमार्तण्डप्रकाशे अन्यथाप्रकाशनं अप्रकाशनं वा संभवति। तद्वत् केवलप्रकाशरूपत्वात्तुर्यस्य "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् न तु द्वितीयमस्ति" इति श्रुतेः। यद्वज्जाग्रज्जाग्रदादिपञ्चदशावस्थायां एकरूपेणायं सदा सर्वदृक् स्वातिरिक्तकलनाभावाभावदृष्टत्वात् "नान्यदतोऽस्ति द्रष्टृ" इति श्रुतेः ॥ १२ ॥

तुरीयस्य न कारणबद्धत्वम्

**द्वैतस्याग्रहणं तुल्यमुभयोः प्राज्ञतुर्ययोः।**
**बीजनिद्रायुतः प्राज्ञः सा च तुर्ये न विद्यते ॥ १३ ॥**

प्राज्ञवत् तुरीयोऽपि कारणबद्धः स्यादित्यत आह—**द्वैतस्याग्रहणं** इति। प्राज्ञतुर्यप्रविभक्त**प्राज्ञतुर्ययोः** स्वातिरिक्त**द्वैताग्रहण**स्य तुल्यत्वेन प्राज्ञवत्तुर्यस्यापि कारणबद्धत्वं स्यादिति न वक्तव्यं, तुरीयस्य स्वतत्त्वप्रबोधविदितत्वात्। प्राज्ञस्तु—स्वतत्त्वाप्रबोधो हि निद्रा। सैव अन्यथाप्रबोधबीजं **सा च बीजनिद्रा**। तया युतो हि **प्राज्ञः**। तुरीयस्य स्वयाथात्म्यतुर्यतुर्यरूपत्वात्। **तुर्ये** तत्त्वाप्रबोधलक्षणबीजनिद्रा **न विद्यते**। तस्मान्न हि कारणबद्धस्तुरीय इत्यभिप्रायः ॥ १३ ॥

तस्यैव विवृतिः

**स्वप्ननिद्रायुतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया।**
**न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः ॥ १४ ॥**

उक्तार्थमेव प्रकारान्तरेण विशदयति—**स्वप्ननिद्रायुतौ** इति। रज्जुसर्पवत् अन्यथाग्रहणं **स्वप्नः**। तत्त्वाप्रबोधलक्षणा हि **निद्रा**। ताभ्यां **युतौ** विश्वतैजसौ। अतस्तौ कार्यकारणबद्धौ। **प्राज्ञस्तु अस्वप्ननिद्रया** स्वप्नविरलकेवलनिद्रया युत इति अयं कारणबद्ध उच्यते। **निश्चिताः** ब्रह्मविदः **तुर्ये न** उभयं **पश्यन्ति**। अतो न कार्यकारणबद्धस्तुर्य इत्यर्थः ॥ १४ ॥

तुरीयप्राप्तिः

**अन्यथा गृह्णतः स्वप्नो निद्रा तत्त्वमजानतः।**
**विपर्यासे तयोः क्षीणे तुरीयं पदमश्नुते ॥ १५ ॥**

इत्थंभूततुरीयावगतिः कदा? इत्यत आह—**अन्यथा** इति। स्वान्**यथागृह्णतः तत्त्वं स्वप्नो** भवति। स्वं **अजानतस्तत्त्वं** निद्रा भवति। विश्वतैजसयोः स्वप्ननिद्रावृतितुल्यत्वात्। एकराशित्वं तयोरन्यथाग्रहणप्रधानत्वात्। तद्गुणभूता हि निद्रा। तद्विपर्यासः स्वप्नः। प्राज्ञे तु तत्त्वाग्रहणलक्षण केवलनिद्रैव विपर्यासः। अतः **तयोः** इत्थंभूत**विपर्यासे** श्रुत्याचार्यप्रसादलब्ध बोधतः **क्षीणे तुरीयं पदमश्नुते** ॥ १५ ॥

अद्वैतबोधः

**अनादिमायया सुप्तो यदा जीवः प्रबुध्यते।**
**अजमनिद्रमस्वप्नमद्वैतं बुध्यते तदा ॥ १६ ॥**

कथं पुनः स्वाज्ञस्य तुर्यप्रतिपत्तिः? इत्यत आह—**अनादिमायया** इति। योऽयं **जीवः** तत्त्वाग्रहणान्यथाग्रहणलक्षणया **अनादि**प्रवृत्तया **मायया** पितृपुत्रनप्तृक्षेत्रगृहपशुमान् सुखी दुःखीत्याकारकस्वप्नान् जाग्रदादौ पश्यन् **सुप्तो** भवति, स **यदा** ब्रह्मयाथात्म्याभिज्ञदेशिकेन—हेतुफलात्मको नासि, किन्तु "ब्रह्ममात्रमसन्न हि" इति श्रुत्यनुरोधेन स्वातिरिक्तहेतुफलतत्कार्यापह्नव-

सिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रम्—इति प्रबोध्यमानः तदैव स्वात्मानं "सबाह्याभ्यन्तरो ह्यजः" इति श्रुतितो जन्मादिषड्भावविकारविरलं **अजं** जाग्रदादिसर्वावस्थापह्नवसिद्धं **अनिद्रं अस्वप्नं** असुषुप्तं अतुरीयं निष्प्रतियोगिकाद्वैतं स्वमात्रमिति **बुध्यते** तन्मात्रतयावशिष्यत इत्यर्थः ॥ १६ ॥

तस्यैव परमार्थत्वम्

**प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ १७ ॥**

स्वातिरिक्तप्रपञ्चे सति कथं ब्रह्ममात्रं बुध्यते? इत्यत आह—**प्रपञ्च** इति ।

इदं प्रपञ्चं यत्किंचित् यद्यज्जगति वीक्ष्यते ।
दृश्यरूपं च दृग्रूपं सर्वं शशविषाणवत् ॥

इति श्रुत्यनुरोधेन प्रपञ्चस्य निष्प्रतियोगिकाभावरूपत्वं सिद्धम् । स्वाज्ञादिदृष्ट्या तादृशप्र**पञ्चो यदि** स्वात्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन शून्यत्वेन वा **विद्येत,**

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥

इति श्रुत्यर्थज्ञानसमकालं **निवर्तेत न संशयः** । न हि रज्ज्वादिविकल्पितसर्पादिर्विद्यमानः सन् विवेकतो निवृत्तः । नापि मायाविना प्रयुक्ता माया पश्यतां चक्षुरावृत्त्यपगमे विद्यमाना सती निवृत्ता । तथा **इदं** प्रपञ्चाख्यं **द्वैतं मायामात्रम्** । इत्थं द्वैतप्रपञ्चेऽपह्नवतां गते **परमार्थतोऽद्वैत**सापेक्षाद्वैतप्रपञ्चगतहेयांशापह्नवसिद्धं निष्प्रतियोगिकतया परमाद्वैतमवशिष्यते । तस्मात् ब्रह्मातिरिक्तः प्रपञ्चः प्रवृत्तो निवृत्तो वा न ह्यस्ति । ब्रह्ममात्रमेव सदा विजृंभत इत्यर्थः ।

चिन्मात्रमेव चिन्मात्रमखण्डैकरसं रसम् ।
सर्ववर्जितचिन्मात्रं ब्रह्ममात्रमसन्न हि ॥

इत्यादिश्रुतेः ॥ १७ ॥

अद्वैतज्ञाने सति द्वैतस्याभावः

**विकल्पो विनिवर्तेत कल्पितो यदि केनचित् ।**
**उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ॥ १८ ॥**

शास्त्रगुरुशिष्यादिविकल्पः कथं निवर्तते? इत्यत आह—**विकल्प** इति । स्वातिरेकेण गुरुशिष्यादिप्रपञ्चो विकल्पितः चेत् प्रबोधसमकालं तद्विकल्पोऽपि **निवर्तेत** । यथा मायारज्जुसर्पवत् निवृत्तोऽयं प्रपञ्चः तथा शास्त्रगुरुशिष्यादि-भेदविकल्पोऽपि स्वप्रबोधसमकालं निवर्तते । **उपदेशात्** उपदेशनिमित्त**मयं** शास्त्रगुरुशिष्यादिवादः उपदेशतः सर्वविकल्पापह्नवसिद्धे ब्रह्मणि निष्प्रतियोगिक-स्वमात्रमिति **ज्ञाते** स्वाज्ञदृष्ट्यनुभूत**द्वैतं,**

द्वैतं यदि तथाद्वैतं द्वैताभावेऽद्वयं न च ।

इति श्रुतिसिद्धद्वैतं तत्सापेक्षमद्वैतमपि **न विद्यते** ।

सर्वथा भेदकलनं द्वैताद्वैतं न विद्यते ।

इति श्रुतेः । परमाद्वैतस्य निष्प्रतियोगिकत्वेन विद्यमानत्वात् तत्स्वातिरिक्तगन्धमपि न सहत इत्यर्थः ॥ १८ ॥

ओङ्कारविवरणम्

सोऽयमात्माध्यक्षरमोङ्कारोऽधिमात्रं पादा मात्रा मात्राश्च पादा अकार उकारो मकार इति ॥ ८ ॥

योऽयमभिधेयप्राधान्येन "सोऽयमात्मा चतुष्पात्" इति ओंकारो व्याख्यातः पुनरभिधानाभिधेययोरेकत्वाभिप्रायेण सोऽयमोंकारो व्याक्रियते— **सोऽयं** इति। योऽभिधेयप्राधान्येन वर्णितः **सोऽयमात्मा ओङ्कारः अक्षरमधिकृत्या**भिधान-प्राधान्येन वर्ण्यमानः **अध्यक्षर**पदं भजति। किं पुनस्तदक्षरम्? इत्यत आह— **ओङ्कार** इति। मात्रामधिकृत्य सोऽयं **ओङ्कारः** पादशो विभज्यमानः सन् **अधिमात्र**पदं भजति। तत् कथम्? इत्यत आह—**पादा** इति। ओङ्कारार्थाभि-धेयात्मानो ये विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तास्त्रिपञ्चदश**पादाः** त एव व्यष्टि-समष्टितदैक्योंकारस्य तथा स्थूलसूक्ष्मबीजार्धमात्रांशविशिष्टाकारोकारादिपञ्चदश-**मात्राः**। पुनर्मात्रा अपि **पादा** इत्यर्थः। कास्ताः? इत्यत आह—**अकार** इति। स्थूलादिभेदेन अकारादिमात्राश्चतुश्चतुर्विधाः। स्थूलसूक्ष्मबीजभेदेनार्धमात्रापि त्रिधा भिन्ना। तत्तुर्यमात्रायाः स्वविकल्पितपञ्चदशमात्राग्रासतुर्यतुर्यस्वरूपत्वात्। आहृत्य मात्राः पञ्चदशेत्यर्थः॥ ८॥

अकारमात्रास्वरूपम्

जागरितस्थानो वैश्वानरोऽकारः प्रथमा मात्राप्तेरादिमत्त्वा-द्वाप्नोति ह वै सर्वान् कामान् आदिश्च भवति य एवं वेद॥ ९॥

तत्रादौ अकारमात्रास्वरूपं व्यनक्ति—**जागरितस्थान** इति। पूर्वोक्त-व्यष्टिसमष्ट्यात्मक**जागरितस्थानः वैश्वानरो**पलक्षितविश्वविश्वादिषोडशभेदः यस्य ओंकारावयवस्थूलादिचतुरंशाद्या**कारः** स हि **प्रथमा मात्रा**। केन साम्येन? इत्यत आह—**आप्तेः** इति। अकारेण सर्वा वाक् व्याप्ता इति आप्तिः व्याप्तिः। "अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति श्रुतेः। तथा विश्वानरोपलक्षितविश्वविश्वादिषोडशभेदेन स्वाविद्यापदस्थूलांशो व्याप्तः। "तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा सन्देहो बहुलो वस्तिरेव रयिः पृथिव्येव पादौ आस्यमाह-वनीयः" इति श्रुतेः। आदिरस्य विद्यत इत्यादिमत्। यथा आदिमत् अकाराक्षरं

तथा वैश्वानरोपीत्यर्थः। इत्थं वा साम्याद्वैश्वानरस्याकारत्वम्। तदेकत्वविदः फलमाह—**सर्वान्** इति। सर्वान् **कामान् आप्नोति ह वै** महतां **प्रथमश्च भवति य एवं वेद** यथोक्तमेकत्वं वेदेत्यर्थः ॥ ९ ॥

उकारस्वरूपम्

स्वप्नस्थानस्तैजस उकारो द्वितीया मात्रोत्कर्षादुभयत्वाद्वो-त्कर्षति ह वै ज्ञानसन्ततिं समानश्च भवति नास्याब्रह्मवित् कुले भवति य एवं वेद ॥ १० ॥

उकारप्रपञ्चं विशदयति—**स्वप्नस्थान** इति। यथोक्त**स्वप्नस्थानस्तैजसो** यस्य **उकारो द्वितीया मात्रा**। केन साम्येन? इत्यत आह—**उत्कर्षात्** इति। अकारोपरि उत्कृष्टत्वेन विद्यमानत्वात्। तथा विश्वविश्वादेरपि तैजसविश्वादेः उत्कृष्टत्वात्। अकारमकारोभयमध्यस्थत्वाद्वा। तथा विश्वप्राज्ञयोर्मध्ये तैजस उत्कृष्टः। अत उभयभाक्त्वसामान्यात्। विद्याफलमाह—**उत्कर्षति** इति। **ह वै ज्ञानसन्ततिं** वर्धयतीत्यर्थः। शत्रुमित्रपक्षयोरपि **समानः** तुल्यो **भवति**। **अस्य कुले अब्रह्मविन्न भवति य एवं वेद** ॥ १० ॥

मकारस्वरूपम्

सुषुप्तस्थानः प्राज्ञो मकारस्तृतीया मात्रा मितेरपीतेर्वा मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद ॥ ११ ॥

अथ मकारप्रपञ्चः प्रपञ्च्यते—**सुषुप्तस्थान** इति। योऽयं यथोक्त**सुषुप्त-स्थानः प्राज्ञः** यस्य **मकारः तृतीया मात्रा**। तत्र सामान्यमिदं **मितेः** प्रलयोत्पत्त्योः विश्वतैजसौ मीयेत इवेति मितिः मानं प्रवेशनिर्गमनाभ्यां प्रस्थेनेव यवा इत्यर्थः। तथा ओङ्कारसमाप्तौ पुनः प्रयोगे च अकारोकारौ मकारे प्रविश्य

निर्गच्छत इवेत्यर्थः। हेत्वन्तरमाह—**अपीतेः** इति। अपीतिरप्यय एकीभावः। विशिष्टोङ्कारोच्चारणे तदवयवाकारोकारौ प्रणवान्त्यावयवमकारे यथैकीभूताविव भातः तथा सुषुप्त्यवस्थापन्नप्राज्ञे एकीभूत इवेति सामान्यात् प्राज्ञमकारयोरेकत्वम्। तज्ज्ञानफलमाह—**मिनोति** इति। **इदं** जगत् **सर्वं ह वै मिनोति** तदवस्तुत्वं जानातीत्यर्थः। **अपीतिश्च** जगत्कारणात्मैव **भवति** इत्यर्थः। एवं ओङ्कारावयवज्ञानफलं अवयव्योङ्कारसाधनस्तुत्यर्थम्॥ ११॥

विश्वादीनामोङ्कारावयवत्वम्

**अत्रैते श्लोका भवन्ति—**

**विश्वस्यात्वविवक्षायामादिसामान्यमुत्कटम्।**
**मात्रासंप्रतिपत्तौ स्यादाप्तिसामान्यमेव च॥ १९॥**
**तैजसस्योत्वविज्ञान उत्कर्षो दृश्यते स्फुटम्।**
**मात्रासंप्रतिपत्तौ स्यादुभयत्वं तथाविधम्॥ २०॥**
**मकारभावे प्राज्ञस्य मानसामान्यमुत्कटम्।**
**मात्रासंप्रतिपत्तौ तु लयसामान्यमेव च॥ २१॥**

अत्रैतस्मिन्नुक्तार्थे एते श्लोका मन्त्रा भवन्ति—**विश्वस्य** इत्यादिना। विश्वविश्वादिषोडशभेदस्याकारमात्रैकत्वविवक्षायां आदित्वं हि **सामान्यमुत्कटं** उद्भूतं दृश्यत इत्यर्थः। अत्वविवक्षा कथम्? इत्यत आह—मात्रेति। विश्वविश्वादेरकारमात्रत्वं यत् संपद्यते तत् **मात्रासंपत्ति**। तस्यां तु **आप्तिसामान्यमेव च** उत्कटं द्रष्टव्यम्॥ १९॥ आप्तिसामान्यमेव चेति चशब्दार्थं विवृणोति—**तैजसस्य** इति। **तैजसस्यो**कारत्वविवक्षायां **स्फुटमुत्कर्षो दृश्यते**। शिष्टं स्पष्टमित्यर्थः॥ २०॥ प्राज्ञमकारयोरेकत्वमाह—**मकारभाव** इति। प्राज्ञविश्वादेः **मकारभावे** मितिलयावुत्कटे **सामान्ये** इत्यर्थः॥ २१॥

एतज्ज्ञानफलम्

**त्रिषु धामसु यस्तुल्यं सामान्यं वेत्ति निश्चितः ।**
**स पूज्यः सर्वभूतानां वन्द्यश्चैव महामुनिः ॥ २२ ॥**

विशिष्टावयवज्ञानफलमाह—**त्रिषु** इति । यो जाग्रदादिस्थानत्रये आप्त्यादि**सामान्यं तुल्यं वेत्ति** एवमेवैतदिति **निश्चिनोति स सर्वभूतानां पूज्यो वन्द्यश्च महामुनिः** ब्रह्मविदित्यर्थः ॥ २२ ॥

अकारादीनां विश्वादिनेतृत्वम्

**अकारो नयते विश्वमुकारश्चापि तैजसम् ।**
**मकारश्च पुनः प्राज्ञं नामात्रे विद्यते गतिः ॥ २३ ॥**

एवंविदः सामान्यविशेषफलमाह—**अकार** इति । य एवं ओङ्कारावयवान् उपास्ते तं उपासकं ओङ्काराद्यवयवः **अकारः विश्व**विश्वाद्योत्रविकल्पान्तं **नयति** प्रापयतीत्यर्थः । तथा **उकारः तैजसं** सविश्वाद्यनुज्ञात्रविकल्पं नयति । तथा **मकारः प्राज्ञ**विश्वाद्यनुज्ञैकरसाविकल्पं नयतीत्यनुवर्तते । एवं व्यष्टिसमष्ट्यात्मकस्थूलादिचतुरंशाढ्याकारादिमात्रात्रये अर्धमात्रास्थूलादिभागत्रयेण तद्व्यष्टिसमष्टितदैक्याध्यक्षेण साकमपह्नवतां गते तदपह्नवसिद्धं निष्प्रतियोगिकामात्रम् । तस्मिन् **अमात्रे** तुर्यतुर्ये स्वमात्रमिति साक्षात्कृते तदा स्वातिरिक्तमस्ति नास्तीति **गतिः** व्यापृतिर्वार्तापि **न विद्यते** तुर्यतुर्यस्य निष्प्रतियोगिकब्रह्ममात्रत्वात् ॥ २३ ॥

तुरीय ओङ्कार आत्मैव

**अमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैत एवमोङ्कार**
**आत्मैव संविशत्यात्मनात्मानं य एवं वेद ॥ १२ ॥**

कथं पुनरमात्रत्वं तुर्यतुर्यस्य ? इत्यत आह—**अमात्र** इति । स्थूलाकारादिपञ्चदशमात्रापह्नवसिद्धः **अमात्रः** ब्रह्मप्रणवार्थः । इत्थं तुरीयोङ्काराग्रविद्यो-

तनात् **चतुर्थः**। अभिधानादिव्यवहृतेस्तुरीयोङ्काराग्रविद्योतता कुतः ? इत्यत आह— **अव्यवहार्य** इति। तुर्यतुर्यावगतेरभिधानादिव्यवहृत्यपह्नवपूर्वकत्वात्। अत एव **प्रपञ्चोपशमः**। स्वातिरिक्तप्रपञ्चाशिवग्रासत्वात् **शिवः**। निष्प्रतियोगिकत्वात् **अद्वैतः**। स स्वमात्रमिति प्रबोधसमकालं **एवं** यथोक्तव्यष्टिसमष्टिपञ्चदशमात्राविशिष्ट **ओङ्कारः** विश्वविश्वादित्रिपञ्चदशभेदात्मना साकं **आत्मैव संविशति** स्वात्मभावं गच्छति। **य एवं वेद** स मुनिः जाग्रज्जाग्रदादिचतुष्पञ्चदशकलना अस्ति नास्तीति विभ्रमापह्नवसिद्धं ब्रह्ममात्रमवशिष्यते। न च ब्रह्ममात्रतयावशिष्टानामपि पुनः स्वातिरिक्तास्तितामोहात् जनिपरम्परा स्यादिति वाच्यं; पुनर्भववीजापह्नवात्। न हि रज्जुसर्पयाथात्म्येऽवगते पुरानुभूतसर्प उत्थास्यते। तथैव निष्प्रतियोगिकभावाभावयोर्ब्रह्मातिरिक्तयोर्याथात्म्येऽवगते पुनः स्वातिरिक्तद्धिया न हि जनिपरम्परा सेद्धुं पारयति। यथोक्तमात्रापादसामान्यमात्रविदां मन्दानां तु यथावदुपास्यमान ओङ्कारो ब्रह्मप्रतिपत्त्यालम्बनो भवति ॥ १२ ॥

**इति माण्डूक्योपनिषत् समाप्ता**

प्रणवोपासनाफलम्

**अत्रैते श्लोका भवन्ति—**

**ओङ्कारं पादशो विद्यात् पादा मात्रा न संशयः।**
**ओङ्कारं पादशो ज्ञात्वा न किञ्चिदपि चिन्तयेत् ॥ २४ ॥**
**युञ्जीत प्रणवे चेतः प्रणवो ब्रह्म निर्भयम्।**
**प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित् ॥ २५ ॥**

अत्रैते श्लोका मन्त्रा भवन्ति—**ओङ्कारं** इत्यादिना। "पादा मात्रा मात्राश्च पादाः" इति यथोक्तसामान्यपुरस्सरं **ओङ्कारं पादशो विद्यात्**। एवं **ओङ्कारं पादशः** ब्रह्मातिरिक्तं नेति **ज्ञात्वा** दृष्टार्थमदृष्टार्थं वा **न** हि **किंचित् चिन्तयेत्** स्वस्य कृतार्थत्वेन चिन्तनीयार्थवैरल्यात्। यदि स्वाति-

रिक्तास्तिताधियाकृतार्थः त्वं तदा—**युञ्जीत** इति। यतः **प्रणवो ब्रह्म निर्भयं** अतः प्रणवतदर्थतुर्यतुर्ये **चेतो युञ्जीत**। तत्रैव सदा युक्तस्य क्वचिदपि **भयं न विद्यते** "विद्वान् न बिभेति कुतश्चन" इति श्रुतेः ॥ २४–२५ ॥

प्रणवस्य बहुधा भानम्

**प्रणवो ह्यपरं ब्रह्म प्रणवश्च परं स्मृतः।**
**अपूर्वोऽनन्तरोऽबाह्योऽनपरः प्रणवोऽव्ययः ॥ २६ ॥**

एको हि प्रणवः स्वाज्ञादिदृष्टिमाश्रित्य सप्रतियोगिकसकलनिष्कलवत् भातीत्याह—**प्रणवो हि** इति। विश्वविश्वाद्यनुज्ञैकरसाविकल्पान्तं **अपरं ब्रह्म**। तुर्यविश्वाद्यविकल्पानुज्ञैकरसान्तं **परं** ब्रह्म। **प्रणव** एव परापरब्रह्मरूपतया विभातः। परमार्थतो यथोक्तमात्रातदध्यक्षगतहेयांशापह्नवसिद्धनिष्प्रतियोगिक-परमात्मा अवशिष्यते। इत्थं स्वावशेषस्य कारणं किं? इत्यत आह—**अपूर्व** इति। यस्य पूर्वं कारणं न विद्यते सोऽयं **अपूर्वः**। यस्यान्तरं भिन्नजातीयं न विद्यत इति **अनन्तरः**। तथा स्वबाह्यं अन्यत् न विद्यते इति **अबाह्यः**। अपरं कार्यमस्य न विद्यते इति **अनपरः**। "तदेतद्ब्रह्मा-पूर्वमनपरमनन्तरमबाह्यम्" इत्यादिश्रुतेः। स्वेन स्वातिरिक्तेन वा न व्येतीति **अव्ययः** पारमार्थिकसन्मात्रत्वात् ॥ २६ ॥

उपासकस्य तद्भावापत्तिः

**सर्वस्य प्रणवो ह्यादिर्मध्यमन्तस्तथैव च।**
**एवं हि प्रणवं ज्ञात्वा व्यश्नुते तदनन्तरम् ॥ २७ ॥**

स्वाज्ञादिदृष्टिप्रसक्तकार्यनिरूपितकारणत्वेन प्रणवं पश्यतस्तदभ्यासतस्त-द्भ्रान्तौ नष्टायां तद्भावापत्तिं दर्शयति—**सर्वस्य** इति। स्वातिरिक्तस्वाविद्यापद-तत्कार्यस्य **सर्वस्य आदिः** उत्पत्तिः। **मध्यं** स्थितिः। **तथा अन्तः** अवसानं

च। मायाहस्तिरज्जुसर्पमृगतृष्णिकास्वप्नादिवत् उत्पाद्यमानस्य **प्रणवः** परमात्मा मायाविस्थानीयः। **एवं हि प्रणवं** आत्मानं निष्प्रतियोगिकस्वमात्रं **ज्ञात्वा** तत्समकालं तद्भावं अश्नुते इत्यर्थः ॥ २७ ॥

तद्रूपेश्वरज्ञानाच्छोकनिवृत्तिः

**प्रणवं हीश्वरं विद्यात्सर्वस्य हृदये स्थितम्।**
**सर्वव्यापिनमोङ्कारं मत्वा धीरो न शोचति ॥ २८ ॥**

तद्रुपायेश्वरज्ञानाच्छोकात्ययं दर्शयति—**प्रणवं** इति। स्वाज्ञदृष्टिविकल्पितसर्वप्राणिस्मृतिप्रत्ययास्पदहृदये **स्थितं ईश्वरं प्रणवं विद्यात्**। घटशरावाद्यनुगतव्योमवत् **सर्वव्यापिनमोङ्कारम**संसारिणमीश्वरं **मत्वा धीरो न शोचति** ईश्वरभावमापन्नस्य निरावृतक्रियाज्ञानशक्तित्वेन शोकनिमित्तवैरल्यात्। "तरति शोकमात्मवित्" इति श्रुतेः ॥ २८ ॥

प्रणवयाथात्म्यज्ञानफलम्

**अमात्रोऽनन्तमात्रश्च द्वैतस्योपशमः शिवः।**
**ओङ्कारो विदितो येन स मुनिर्नेतरो जनः ॥**
**नेतरो जनः ॥ २९ ॥**

प्रणवयाथात्म्यज्ञानफलमुपसंहरति—**अमात्र** इति। पञ्चदशमात्रापह्नवसिद्धत्वात् **अमात्रः**। स्वाज्ञदशायां "अकारश्चायुतावयवान्वितः" इत्यादिश्रुत्यनुरोधेन यत्र इयत्ता केनापि ज्ञातुमशक्या सः **अनन्तमात्रः**। यद्वा—अन्तवत् पञ्चदशमात्रावत् पराभिधानतुर्यतुर्यमात्रान्तमवसानं नैतीति **अनन्तमात्रः** तस्य स्वातिरिक्तासद्ग्राससत्तामात्रत्वात्। अत एवायं सर्वद्वैतप्रपञ्चाशिवकलनापह्नवात् **द्वैतस्योपशमः शिव** इति यथा व्याख्यातः तथा **येनोङ्कारः** परमात्मा निष्प्रतियोगिकस्वमात्रमिति **विदितः स** एव परमार्थतत्त्वमननात् **मुनिः**

तत्त्वज्ञानी ब्रह्मीभूतः। नेतरो जन इति आवृत्तिः आगमप्रकरण परिसमाप्त्यर्था ॥ २९ ॥

इत्यागमप्रकरणं सम्पूर्णम्

---

# वैतथ्यप्रकरणम्

स्वप्नप्रपञ्चस्य वैतथ्यम्

**वैतथ्यं सर्वभावानां स्वप्न आहुर्मनीषिणः।**
**अन्तः स्थानात्तु भावानां संवृतत्वेन हेतुना ॥ १ ॥**
**अदीर्घत्वाच्च कालस्य गत्वा देहान्न पश्यति।**
**प्रतिबुद्धश्च वै सर्वः तस्मिन् देशे न विद्यते ॥ २ ॥**
**अभावश्च रथादीनां श्रूयते न्यायपूर्वकम्।**
**वैतथ्यं तेन वै प्राप्तं स्वप्न आहुः प्रकाशितम् ॥ ३ ॥**

"ओं शान्तं शिवमद्वैतम्", मायामात्रमिदं द्वैतम्", "ज्ञाते द्वैतन्न विद्यते" इत्यागममात्रतः स्वातिरिक्तजाग्रज्जाग्रदादिचतुष्पञ्चदशकलना-विजृम्भितबौद्धमीमांसकद्वैत्यादिग्रहगतहेयांशापह्नवसिद्धं निष्प्रतियोगिकपरमाद्वैतं स्व-मात्रमवशिष्यत इत्युक्तम्। तत्र उपपत्त्यापि ब्रह्मातिरिक्तस्य वैतथ्यमवधारयितुं द्वितीयं प्रकरणं आरभ्यते। तत्र कारिकात्रयेण स्वप्नप्रपञ्चस्य वैतथ्यं साधयति—**वैतथ्यं** इत्यादिना। स्वप्नयाथात्म्यविदो **मनीषिणः** स्वप्नविकल्पितबाह्या-ध्यात्मिकादि**भावानां** स्थावरजङ्गमादीनां **वैतथ्यं** असत्त्वं **आहुः**। यथा निष्प्रतियोगिकस्वमात्रं तथैव सदा वर्तत इति तथं ब्रह्ममात्रम्। तन्न भवतीति

स्वातिरिक्तं असत् वितथम्। तद्भावो वैतथ्यं असत्त्वमित्यर्थः। तत्र हेतुमाह— **अन्तःस्थानात्** इति। **भावानां** स्थिरचराणां शरीरान्तरुपलभ्यमानत्वात् न बहिःशरीरात्। तस्मात् ते वितथा भवितुमर्हन्ति। अपवरकावृतघटादिवत् अनैकान्तिको हेतुरित्यत आह—**संवृतत्वेन हेतुना** इति। अन्तःसंवृतस्थानान्न हि देहान्तर्विद्यमानकेशकोट्यंशैकभागसूक्ष्मनाडीप्रदेशे स्थिरचरायमाणपर्वत-हस्त्यादिरस्ति। तस्माच्चित्तं तन्नाड्यवच्छिन्नचैतन्यं सम्यगावृत्य स्वप्नप्रपञ्चं कल्पयतीति तस्य वैतथ्यं युक्तमित्यर्थः॥ १॥ स्वप्नकल्पितभावानामन्तःसंवृतत्वं यदुक्तं तदयुक्तम्। सर्वोत्तरदिशि सुप्तो दक्षिणदिशि स्वप्नान् पश्यन्निव दृश्यत इत्यत आह—**अदीर्घत्वात्** इति। यः कोऽपि **न** हि **देहात्** बाह्यदेशान्तरं **गत्वा** स्वप्नान् **पश्यति**। यतः शयनदेशात् योजनसहस्र-प्राप्यदूरदेशे स्वप्नान् पश्यन्निव लक्ष्यते। न हि तद्देशप्राप्त्यागमनयोः दीर्घकालोऽस्ति। अतः **कालस्यादीर्घत्वात्** स्वप्नदृक् न देशान्तरं गच्छति। किञ्च **प्रतिबुद्धश्च वै सर्वः** स्वप्नदृक् न हि स्वप्नदर्शनदेशे विद्यते। यदि स्वप्ने देशान्तरं गच्छति तदा तद्देश एव प्रतिबुध्येत। न हि तदस्ति। तथा स्वप्नदृक् रात्र्यनुभूतस्वप्नदेशे बहुभिः संगतो अहनि स्वेप्सितभोगानदन् मोदमानमात्मानं पश्यति। पुरा यैः संगतस्तैर्गृह्येत। यदि गृहीतस्तदा ते स्वप्नवृत्तान्तं ब्रूयुः। न चैवमस्ति। तस्मान्न हि स्वप्नदृक् देशान्तरं गच्छति॥ २॥ इतश्च स्वप्नदृष्टभावानां वैतथ्यं स्फोरयति—**अभाव** इति। "न तत्र रथा न रथयोगा न पन्थानो भवन्ति। अथ रथान् रथयोगान् पथः सृजते" इत्यादिन्यायपूर्वकश्रुत्या **रथादीनां** देहान्तर**भावश्च श्रूयते**। **स्वप्ने** विकल्पित-रथादीनां संवृतत्वहेतुना **वैतथ्यं प्राप्तं प्रकाशितं** इति स्वयंज्योतिष्ट्वानुवादिश्रुत्या **ब्रह्मविद आहुः**॥ ३॥

तद्वज्जाग्रत्यपि भावानां वैतथ्यम्

**अन्तःस्थानात्तु भेदानां तस्माज्जागरिते स्मृतम्।**
**यथा तत्र तथा स्वप्ने संवृतत्वेन भिद्यते॥ ४॥**

स्वप्नदृष्टान्तेन जाग्रद्विलसितभावानां वैतथ्यमाचष्टे— **अन्तःस्थानात्** इति। जाग्रद्दृश्यभावा वितथा भवितुमर्हन्ति। कुतः? दृश्यत्वात्। स्वप्नदृश्यभाववत्। **यथा स्वप्नदृश्यभावानां** वैतथ्यं **तथा** जागरितभावानामिति। **तस्माज्जागरित**भावानामपि वैतथ्यं सिद्धम्। एवं **अन्तःस्थानात् संवृतत्वेन** च स्वप्नप्रपञ्चवत् जागरितप्रपञ्चस्यापि दृश्यत्वं असत्त्वं च समानमित्यर्थः ॥ ४ ॥

जाग्रत्स्वप्नयोरेकत्वम्

**स्वप्नजागरिते स्थाने ह्येकमाहुर्मनीषिणः।**
**भेदानां हि समत्वेन प्रसिद्धेनैव हेतुना ॥ ५ ॥**

जाग्रत्स्वप्नयोर्दृश्यत्वासत्त्वसमत्वेनैकत्वं विशदयति— **स्वप्नजागरिते स्थान** इति। **प्रसिद्धेनैव** ग्राह्यग्राहक**हेतुना** भावानां **स्वप्नजागरितस्थानयोः** विवेकिन **एकत्वमाहुः**। पूर्वकारिकाफलमित्येतत् ॥ ५ ॥

स्थानद्वयस्थभावानां वैतथ्यम्

**आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा।**
**वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ ६ ॥**

स्थानद्वयप्रविभक्तभावानां अदृष्टदृष्टनष्टस्वरूपत्वेन वैतथ्यमाचष्टे— **आदा**विति। **यत्** वस्तु शशशृंगवत् **आदौ अन्ते च नास्ति** लोके **तत्** मध्येऽपि नास्तीति निश्चितम्। **तथा** इमे जाग्रदादिविलसितभावाः। तेषां आद्यन्तयोः शशविषाणवत् अभावात्। एते **वितथैः** शशशृंगादिभिः **सदृशाः सन्तः** मूढैः **अवितथा इव लक्षिताः** ॥ ६ ॥

जाग्रद्भावानामपि मिथ्यात्वम्

**सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते।**
**तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥ ७ ॥**

स्वप्नदृष्टान्ततो जाग्रद्दृश्यानां यदुक्तं असत्त्वं तदसाधु। यतो जाग्रद्दृष्टान्नपानादयः क्षुत्पिपासादिनिवृत्तिं कुर्वन्तः सप्रयोजना दृष्टाः। न हि तदस्ति स्वप्नदृश्यानाम्। ततः स्वाप्निकपदार्थवत् जाग्रद्दृश्यानामसत्त्वं दुर्लभमित्यत आह—**सप्रयोजनतेति**। यथा जाग्रद्दृष्टान्नपानादीनां **सप्रयोजनता** दृष्टा तथा सा **विप्रतिपद्यते**। **स्वप्ने**ऽपि जाग्रति भुक्तितः तृप्तोऽपि स्वप्ने त्रिरात्रोपोषितमात्मानं मन्यते। तत्र भुक्त्वा पीत्वा तृप्तं आत्मानं मन्यते। **तस्मात् आद्यन्तवत्त्वं** उभयत्र समानम्। अतः **खलु ते मिथ्येति स्मृताः** इत्यर्थः ॥ ७॥

स्वप्नदृष्टान्तस्य सद्भावः

**अपूर्वं स्थानिधर्मो हि यथा स्वर्गनिवासिनाम्।**
**तानयं प्रेक्षते गत्वा यथैवेह सुशिक्षितः ॥ ८ ॥**

कथं पुनः स्वप्नदृष्टपदार्थासत्त्ववत् जाग्रद्दृष्टानां असत्त्वं? दृष्टान्तासिद्धेः इत्यत आह—**अपूर्वमिति**। न हि ये जाग्रद्दृष्टा भावाः स्वप्ने त एव दृश्यन्ते। किन्तु स्वप्ने चतुर्दन्तगजारूढं सहस्रभुजमात्मानं अन्यमप्येतादृशं अपूर्वं पश्यति। न तत् स्वतः सिद्धं तत्स्थानिधर्मत्वात्। **यथा स्वर्गनिवासिनां** इन्द्रादीनां सहस्राक्षत्वादि तथा **स्वप्नस्थानिधर्मः**। **अयं** स्वप्नदृक् स्वप्नस्थानं **गत्वा यथैवेह** लोके **सुशिक्षितः** तथा तत्स्थानप्रभवान् तानेवापूर्वान् स्थानी **प्रेक्षते**। यथा स्थानिधर्माणां रज्जुसर्पादिवदसत्त्वं तथा स्वप्नदृश्यापूर्वाणां स्थानिधर्मत्वेनासत्त्वम्। अतो न स्वप्नदृष्टान्तासिद्धिः ॥ ८ ॥

जाग्रद्भेदानां स्वप्नतुल्यता

**स्वप्नवृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत्।**
**बहिश्चेतोगृहीतं सद्दृष्टं वैतथ्यमेतयोः ॥ ९ ॥**
**जाग्रद्वृत्तावपि त्वन्तश्चेतसा कल्पितं त्वसत्।**
**बहिश्चेतोगृहीतं सद्युक्तं वैतथ्यमेतयोः ॥ १० ॥**

स्वप्नदृष्टान्तप्रसक्तापूर्वत्वशंकां निराकृत्य जाग्रद्भेदानां स्वप्नतुल्यतां पुनः
ञ्चयति—**स्वप्नेति**। **स्वप्नवृत्तौ** स्वप्नस्थानेऽपि **अन्तः चेतसा कल्पितं**
**सत्** संकल्पोक्तरक्षणादर्शनात्। स्वप्ने तावत् चक्षुरादिद्वारेण **बहिश्चेतसा**
**ीतं** घटादिकं सदिति सदसद्विभागो दृष्टः। उभयोरप्यन्तर्बहिश्चेतःकल्पितयोः
ल्पितत्वाविशेषात् **वैतथ्यं** दृष्टम्॥ ९॥ तथा च—**जाग्रदिति**। जाग्रति
न्तर्बहिश्चेतःकल्पितत्वाविशेषात्। शिष्टं व्याख्यातम्॥ १०॥

तद्भेदज्ञानस्य विकल्पः

**उभयोरपि वैतथ्यं भेदानां स्थानयोर्यदि।**
**क एतान् बुध्यते भेदान्? को वै तेषां विकल्पकः? ॥११॥**

स्थानद्वयस्य वितथत्वे को वा तद्गतभेदान् बुध्यते? इति शङ्कते—
**योरिति**। स्मृतिज्ञानालम्बनत्वेन **को वै तेषां विकल्पकः**। विकल्पकाभावे
त्म्यं स्यादित्यर्थः॥ ११॥

आत्मन एव तद्भेदज्ञानम्

**कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया।**
**स एव बुध्यते भेदानिति वेदान्तनिश्चयः॥ १२॥**

स्वात्मैव स्वमायया स्वस्मिन् सर्वं परिकल्प्य तद्भेदजातं स्वयं बुध्यत
चष्टे—**कल्पयतीति**। यथा रज्ज्वादौ सर्पादिं परिकल्प्य तत्त्वेन स्वयमेवाव-
ते तथैवमिति **वेदान्तनिश्चयः**। "नान्योऽतोऽस्ति विज्ञाता" इति श्रुतेः।
निरास्पदे ज्ञानक्रिये संभवत इत्यर्थः॥ १२॥

आत्मनस्तद्भेदकल्पनम्

**विकरोत्यपरान् भावानन्तश्चित्ते व्यवस्थितान्।**
**नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः॥ १३॥**

केन प्रकारेण कल्पयति? इत्यत आह—**विकरोतीति**। स्वेन रूपेण प्रभवतीति **प्रभुः** आत्मा। **अन्तः**श्चित्ते वासनारूपेण **व्यवस्थितान् अपरान्** नानाशास्त्रीयलौकिकवैदिक**भावान् बहिश्चित्ते** स्थानाव्यक्तादिपृथिव्यन्तरूपेण **नियतां**श्चान्तर्मनोरथादिलक्षणांश्च कल्पयतीत्यर्थः॥ १३॥

स्वान्तर्बाह्यभावानामपि कल्पितत्वम्

**चित्तकाला हि येऽन्तस्तु द्वयकालाश्च ये बहिः।**
**कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः॥ १४॥**

स्वान्तर्बाह्यपरिच्छेद्यभावानां स्वप्नवत् कल्पितत्वं स्पष्टयति—**चित्तेति**। ये ह्यन्तर्विलसितवृत्तिविशेषाः ते तु चित्तकालाः चित्तपरिच्छेद्याः यावच्चित्तस्थायित्वात्। कल्पनाकाल एव उपलभ्यन्त इत्यर्थः। अन्योन्यपरिच्छेद्या हि द्वयकालाः। तद्यथा—आगोदोहनमास्ते। यावदयमास्ते तावत् गां दोग्धि। यावत् गां दोग्धि तावदास्ते। तावान् अयं। एतावान् सः— इति मिथः परिच्छेद्यपरिच्छेदकत्वमिति बाह्यभेदानाम्। ते **हि द्वयकालाः अन्तः चित्तकालाः** बाह्याद्वयकालाश्च। **ते सर्वे कल्पिता एव**। चित्तद्वयकालपरिच्छिन्नभावयोः कल्पितत्वव्यतिरेकेण **न** ह्य**न्यहेतुको**ऽस्ति। अत्रापि स्वप्नदृष्टान्तः उपपद्यत इत्यर्थः॥ १४॥

व्यक्ताव्यक्तभेदेन भावानां कल्पितत्वम्

**अव्यक्ता एव येऽन्तस्तु स्फुटा एव च ये बहिः।**
**कल्पिता एव ते सर्वे विशेषस्त्विन्द्रियान्तरे॥ १५॥**

अव्यक्तव्यक्तभेदेन स्थानद्वये भावाः परिकल्पिता इत्याह—**अव्यक्ता** इति। **ये**ऽन्तर्विलसितमनोरथादिभावाः ते **त्वव्यक्ताः** तद्गतभावानामचाक्षुषत्वेनाव्यक्तत्वात्। ये देहात् **बहि**र्विलसितघटपटादिभावाः ते **स्फुटा एव** तेषां

चाक्षुषत्वेन स्फुटत्वात्। अन्तर्बाह्यविलसिताव्यक्तस्फुटभावा अपि **कल्पिता एव ते सर्वे।** **विशेषस्त्विन्द्रियान्तरे** चक्षुरादौ स्फुटत्वम्। इत्थं जाग्रद्भावा अपि स्वप्नभाववत् कल्पिता एवेत्यर्थः ॥ १५ ॥

कल्पनामूलनिरूपणम्

**जीवं कल्पयते पूर्वं ततो भावान् पृथग्विधान्।**
**बाह्यानाध्यात्मिकांश्चैव यथाविद्यस्तथास्मृतिः ॥ १६ ॥**

सर्वकल्पनामूलं किम्? इत्यत आह—**जीवमिति।** **पूर्वं** आदौ सुखदुःखादिवैशिष्ट्यहेतुफलात्मकं जीवं निर्विकाररज्जुसर्पवत् निर्विकारात्मनि **जीवं कल्पयते। ततः** क्रियाकारकफलभेदेन पृथक् **पृथग्विधान्** प्राणादि-नानाविधभावान् **बाह्यान् आध्यात्मिकांश्च** एवं कल्पयते। अत्र कल्पनाहेतुः स्वयं जीवः। सर्वकल्पनायां अधिकृतत्वात्। कथंभूतः सन्? इत्यत आह—**यथेति।** यादृशी विद्या विज्ञानं अस्येति **यथाविद्यः।** तथाविधैव स्मृतिरस्येति **तथास्मृतिः** सन् हेतुकल्पनाबोधतः फलकल्पना स्मृतिः। ततः तद्विज्ञानम्। ततः तदर्थक्रियाकारकादिकल्पनम्। ततः तत्फलभेदविज्ञानम्। ततः स्मृतिः। पुनः तद्विज्ञानमित्येवं बाह्यानाध्यात्मिकांश्चेतरेतरनित्यनैमित्तिकभावेनानेकधा **कल्प-यत** इत्यर्थः ॥ १६ ॥

आत्मविकल्पनम्

**अनिश्चिता यथा रज्जुरन्धकारे विकल्पिता।**
**सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः ॥ १७ ॥**

जीवकल्पनायाः सर्वमूलत्वमस्तु। तज्जीवकल्पना किन्निमित्ता? इत्यत आह दृष्टान्तपूर्वकम्—**अनिश्चितेति।** **यथा** लोके मन्दान्धकारे रज्जुस्वरूपा-ज्ञानतोऽनिश्चितेयं **रज्जुः** इत्यनवधारिता यदि तदा किं अयं सर्पः

उदकधारा स्रक् भूच्छिद्रं ? इत्यादि बहुधा विकल्पिता भवति। ज्ञाते तु रज्जुयाथात्म्ये विकल्पानवकाशात्। विज्ञानतः स्वहस्ताङ्गुलिवत्। तद्वत् ब्रह्मयाथात्म्याज्ञानतः हेतुफलाभिनिवेशो जायते। ततो विश्वाद्यविकल्पानुङ्गैकरसभेदेन प्राणाद्यनन्तभेदेनात्मा विकल्पित इति सर्ववेदान्तसिद्धान्तः ॥१७॥

विकल्पनिवृत्तिप्रदर्शनम्

**निश्चितायां यथा रज्ज्वां विकल्पो विनिवर्तते ।**
**रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः ॥ १८ ॥**

अधिष्ठानज्ञानात् विकल्पनिवृत्तिं दर्शयति—**निश्चितायामिति**। यथा आप्तोक्तितो **निश्चितायां रज्ज्वां** तद्गतसर्पादि**विकल्पो निवर्तते**, तथा सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकाद्वैतमिति ज्ञानसमकालं स्वाज्ञानविकल्पितविश्वविश्वादिभेदनाकलनापि निवर्तते। न हि स्वाज्ञानकालमारभ्यानादिसिद्धविकल्पजालं स्थितिमेत्य स्वज्ञानतो निवर्तते। वस्तुतोऽवस्तुतो वापि विकल्पसामान्यस्य शशविषाणवत् अवस्तुत्वात्। तदपह्नवसिद्धं ब्रह्ममात्रं निष्प्रतियोगिकमवशिष्यत इत्यात्ममात्र**विनिश्चयो** भवतीत्यर्थः। "पश्यतेहापि सन्मात्रं असदन्यत्", "ब्रह्मव्यतिरिक्तं न किंचिदस्ति",

सर्वथा भेदकलनं द्वैताद्वैतं न विद्यते ।
प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
अनाख्यमनभिव्यक्तं सत् किंचिदवशिष्यते ॥

इति श्रुतेः ॥ १८ ॥

विकल्पानां मायामूलत्वम्

**प्राणादिभिरनन्तैस्तु भावैरेतैर्विकल्पितः ।**
**मायैषा तस्य देवस्य ययायं मोहितः स्वयम् ॥ १९ ॥**

कथं पुनः परमाद्वैतरूपेण आत्मावशिष्यते प्राणाद्यनन्तविकल्पसत्त्वात्? इत्याशंक्य विकल्पस्य मायामात्रत्वात् तया विकल्पित इव भाति। वस्तुतः ब्रह्ममात्रमवशिष्यत इति शिष्टग्रन्थेनाह—**प्राणादिभिरिति**।

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते॥

इति स्मृत्यनुरोधेन **यैषा** स्वाज्ञानरूपिणी **माया देवस्या**त्मनो भिन्ना अभिन्नतयैव स्वाज्ञानुभूतिप्रमाणसिद्धेव च विद्यते। वस्तुतः सा शशशृंगवत् अलब्धसत्त्वा। **यया** मायया **स्वयम**प्यात्मा मोहित इव **मोहितः** सन् **प्राणादिभिः अनन्तभावैः** विकल्पित इव **विकल्पितो** भवति। वस्तुतोऽयमात्मा निष्प्रतियोगिकनिर्विकल्प इत्यर्थः॥ १९॥

प्राणादिविकल्पानां प्रकारः

**प्राण इति प्राणविदो भूतानीति च तद्विदः।**
**गुणा इति गुणविदस्तत्त्वानीति च तद्विदः॥ २०॥**
**पादा इति पादविदो विषया इति तद्विदः।**
**लोका इति लोकविदो देवा इति च तद्विदः॥ २१॥**
**वेदा इति वेदविदो यज्ञा इति च तद्विदः।**
**भोक्तेति च भोक्तृविदो भोज्यमिति च तद्विदः॥ २२॥**
**सूक्ष्म इति सूक्ष्मविदः स्थूल इति च तद्विदः।**
**मूर्त इति मूर्तविदोऽमूर्त इति च तद्विदः॥ २३॥**
**काल इति कालविदो दिश इति च तद्विदः।**
**वादा इति वादविदो भुवनानीति तद्विदः॥ २४॥**

**मन इति मनोविदो बुद्धिरिति च तद्विदः ।**
**चित्तमिति चित्तविदो धर्माधर्मौ च तद्विदः ॥ २५ ॥**
**पञ्चविंशक इत्येके षड्विंश इति चापरे ।**
**षट्त्रिंशक इत्याहुरनन्त इति चापरे ॥ २६ ॥**
**लोकाँल्लोकविदः प्राहुराश्रमा इति तद्विदः ।**
**स्त्रीपुन्नपुंसकं लैङ्गाः परापरमथापरे ॥ २७ ॥**
**सृष्टिरिति सृष्टिविदो लय इति च तद्विदः ।**
**स्थितिरिति स्थितिविदः सर्वे चेह तु सर्वदा ॥ २८ ॥**

प्राणादिविकल्पानुदाहरति—**प्राण** इत्यादिना । **प्राणो** हिरण्यगर्भः ईश्वरो वा जगत्कारण**मिति प्राणविदो**ऽद्वैतिनः वैशेषिकादयश्च विदुः कल्पयन्तीत्यर्थः । पृथिव्यादिचत्वारि **भूतानि** जगत्कारणानीति लोकायतिकाः । गुणसाम्येन सह सत्त्वरजस्तमांसि त्रयो **गुणाः** जगत्कारण**मिति** सांख्याः । आत्मतत्त्वं विद्यातत्त्वं शिवतत्त्वं चेति त्रीणि **तत्त्वानि** जगत्कारण**मिति** शैवाः ॥ २० ॥ कल्पनान्तरमाचष्टे **पादा** इति । विश्वविश्वादयः **पादाः** जगद्व्याप्रृतिहेतवः इति वेदान्त्येकदेशिनः । विविधविषयानुभूतिः पुरुषार्थ **इति** वात्स्यायनादयो मन्यन्ते । **विषया इति** शब्दादय इत्यर्थः ।

विषयस्य विषाणां च दूरमत्यन्तमन्तरम् ।
उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥

इति स्मृतेः । सत्यत्वेन भूरादि**लोका** विद्यन्ते इति **लोकविदः** इति पौराणिकाः । कर्मफलदाता नेश्वरः किन्तु अग्नीन्द्रादयो **देवाः** कर्मफलदातार इति देवयाजिनः ॥ २१ ॥ कल्पनान्तरमाह—**वेदा** इति । ऋगादयः चत्वारो **वेदाः** तत्त्वानीति वेदपाठकाः । ज्योतिष्टोमादि**यज्ञा** वस्तुभूता भवन्तीति **यज्ञविदो** याज्ञिकाः । **भोक्तै**वात्मा न कर्ता इति सांख्याः । **भोज्यं** वस्त्विति

सूपकाराः ॥ २२ ॥ इतश्च कल्पनान्तरमाह—**सूक्ष्म** इति। अणुपरिमाणात्मा **सूक्ष्म इति सूक्ष्मविदः** अणुवादिनः। अहंप्रत्ययविशिष्टः **स्थूलदेहः** आत्मा **इति** चार्वाकाः। **मूर्तः** त्रिशूली च चक्रीत्यागमिकाः। **अमूर्तः** सर्वशून्य **इति** शून्यवादिनः। **काल** एव परमार्थ **इति** ज्योतिर्विदः। **दिशः** परमार्था **इति** स्वरोदयविदः। धातुवादो **मन्त्रवादो** वेति रसवादिनो मन्त्रवादिनश्च। चदुर्दश**भुवनान्येव** वस्तूनि **चेति** भूगोळविदः। **मनः** एवात्मेति स्यमन्तभद्राः। **बुद्धिरेवात्मेति** योगाचाराः। बाह्याकारशून्यं **चित्तमात्मेति** विज्ञानवाद्येकदेशिनः। विधिनिषेधचोदनानिष्पन्न**धर्माधर्मौ** परमार्थौ इति मीमांसकाः ॥ २३–२५ ॥ इतश्च विकल्पान्तरमाह—**पञ्चेति**। प्रधानं **मूलप्रकृतिः** महदहंकारौ तन्मात्राणीति सप्त **प्रकृतिविकृतयः** कर्मज्ञानेन्द्रियाणि तद्विषयाः मनश्चैकं षोडशविकारपुरुषो दृशिस्वभाव इति पञ्चविंशतिसंख्या-विशिष्टप्रपञ्चो वस्त्व**िति** सांख्यैकदेशिनः। ईश्वरेण सार्कं षड्विंशतिपदार्था **इति** पातञ्जलाः। षड्विंशत्या सह पञ्ची**कृ**तपञ्चमहाभूतानि आहत्य एकत्रिं-शत्तत्त्वा**नीति** शैवैकदेशिनः। यद्वा—षड्विंशत्या सह रागाविद्यानियतिकाल-कलामायादिकाः त एव एकत्रिंशत्पदार्था इति पाशुपताः। पदार्थभेदो**ऽनन्तः** **इति** भेदवादिनः। लोकानुरञ्जनं तत्त्वमिति लौकिकाः। **आश्रमाः** परमार्था **इति** दक्षप्रभृतयः। **स्त्रीपुंनपुंसकं** शब्दजातं तत्त्वमिति वैय्याकरणाः। “द्वे ब्रह्मणी वेदितव्ये परं चापरं च” इति साकाराद्वैतिनः। स्थितिर्वा सृष्टिर्वा लयो वा तत्त्व**मिति** पौराणिकाः। प्राणादिस्थित्यन्तत्वेन उदाहृताश्चानुदा-हृताश्च कल्पनाभेदा यावन्तो विद्यन्ते कल्पनावस्थायां स्वात्मन्येव विकल्पिताः सन्तः स्वात्माधिगमहेतवो भवन्तीत्यर्थः। अधिष्ठानमन्तरा प्राणादिस्थित्यन्तकल्पनासंभवात्। कल्पनाया मायामात्रत्वेन तदधिष्ठानस्यापि स्वाधिष्ठेयकल्पनापह्नवतो निरधिष्ठानत्वेन ब्रह्ममात्रमवशिष्यत इति प्राणादि-स्थित्यन्तकल्पनाया उपायत्वम्। तदपेक्षया तदधिकरणस्योपेयत्वम्। इत्थं उपायोपेयभूताधिष्ठेयाधिष्ठानगतहेयांशापह्नवसिद्धनिष्प्रतियोगिकस्य परमोपेयत्वं ब्रह्ममात्रस्येत्यर्थः ॥ २६–२८ ॥

भावानां शिष्यरक्षकत्वम्

**यं भावं दर्शयेद्यस्य तं भावं स तु पश्यति ।**
**तं चावति स भूत्वासौ तद्ग्रहः समुपैति तम् ॥ २९ ॥**

यस्य यस्य गृहे यस्मिन् दृढावेशो भवेत्तराम् ।
तत्तद्भ्रान्त्यनुरोधेन शास्त्रं भवति नान्यथा ॥

इति स्मृत्यनुरोधेन प्राणादिस्थित्यन्तविकल्पा मायामात्रा अपि स्वाज्ञदृष्टिभिः प्राणादित्वेन विकल्पिताः । तत्र प्राणो बीजात्मा ईश्वरः । भूतादिस्थित्यन्ताः तद्भेदाः तत्तन्मताचार्यबुद्धिविकल्पिताः । तत्र येषां यन्मतं रोचते ते तत्तदाचार्यमुखतः पृथक् तत्व स्वाभिमतेयत्तां ज्ञात्वा तत्परतन्त्रा भवन्तीत्याह— यमिति । किं बहुना ? प्राणादिस्थित्यन्तानामन्यतमं उक्तमनुक्तं वा **यस्य** कस्यचित् आचार्यो **यं भावं दर्शयेत्** अन्यो वा इदमेव तत्त्वमिति सोऽयं गुरुप्रदर्शितनिश्चयः शिष्यपूगः सोऽहं दासोऽहमिति वा **तं भावं** आत्मभूतं **पश्यति** । योऽयं तत्तन्मताचार्यदर्शितो भावरूपो **भूत्वा** प्राण **ईश्वरः** तं उपासकं **अवति** । इदमेव तत्त्वमिति **तद्ग्रहः** तदभिनिवेशः **तं** ग्रहीतारं उपैति । स्वात्मभावं प्रकाशयतीत्यर्थः ॥ २९ ॥

आत्मज्ञानफलम्

**एतैरेषोऽपृथग्भावैः पृथगेवेति लक्षितः ।**
**एवं यो वेद तत्त्वेन कल्पयेत् सोऽविशङ्कितः ॥ ३० ॥**

स्वग्रहातिरिक्तात्मज्ञानफलमाह—एतैरिति । रज्ज्वादिविकल्पितसर्पादिवत् स्वापृथग्भूतप्राणादिस्थित्यन्तभावैः **पृथगेव**त्यविवेकिभिः **लक्षितः** न विवेकिभिः । न हि रज्ज्वाद्यतिरेकेण सर्पादयः सन्ति । तथा स्वात्मातिरेकेण प्राणादिविकल्पाः सन्ति "इदं सर्वं यदयमात्मा" इति श्रुतेः । वस्तुतः प्राणादिस्थित्यन्त-

कलनारोपापवादाधिकरणगतहेयांशापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति "सन्मात्रमसदन्यत्" इत्यादिश्रुतियुक्तिभ्यां **तत्त्वेन यो वेद सोऽयं** विद्वान् **अविशंकितोऽशेषवेदार्थं** साक्षात् परंपरया वा ब्रह्ममात्रपर्यवसन्नतया **कल्पयेत्** कल्पयतीत्यर्थः। न हि निष्प्रतियोगिकब्रह्ममात्रभावापन्नमुन्यतिरिक्तो वेदार्थं एवं ज्ञातुं शक्नोति। न चैवंवित् स्वातिरिक्तप्राणादिस्थित्यन्तविकल्पोऽस्ति नास्तीति विभ्रमाभिमुखो भवतीति भावः ॥ ३० ॥

प्रपञ्चस्यासत्त्वं ब्रह्मणः सत्त्वं च

**स्वप्नमाये यथा दृष्टे गन्धर्वनगरं यथा।**
**तथा विश्वमिदं दृष्टं वेदान्तेषु विचक्षणैः ॥ ३१ ॥**

स्वातिरिक्तप्राणादिस्थित्यन्तप्रपञ्चस्यासत्त्वं तदपह्नवसिद्धब्रह्ममात्रस्य निष्प्रतियोगिकसत्त्वं स्पष्टयति—**स्वप्नेति**। "नान्यत् किंचन मिषत्", "ब्रह्मव्यतिरिक्तं न किंचिदस्ति", "ब्रह्ममात्रमसन्न हि",

दृश्यरूपं च दृग्रूपं सर्वं शशविषाणवत्।
सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ॥

"नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्रमम्" इत्यादि**वेदान्तेषु** विलसितविद्वत्पटलसेव्यपरमाशय**विचक्षणैः** ब्रह्मविद्वरीयोभिः **यथा** शशशृंगवत् अवस्त्वात्मके **स्वप्नमाये** विवेकविरलैः सद्वस्त्वात्मिके इव **दृष्टे**। **यथा** च नभःप्रसारितपुरगोपुरस्वपक्षपरपक्षचम्वाद्याकीर्णमिव **गन्धर्वनगरं** दृश्यमानं सत् अकस्मात् असत्पदं गतं दृष्टम्। **तथा** स्वाविद्यापदतत्कार्यजातं आत्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन वा अस्तीति विश्वसनीयविश्वं शशशृंगवत् असत् **दृष्टम्**। ततस्तद्विश्वापह्नवसिद्धं ब्रह्ममात्रं स्वावशेषतया दृष्टमित्यर्थः ॥ ३१ ॥

परमार्थदशाप्रपञ्चनम्

**न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।**
**न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ३२ ॥**

ततः परमार्थदशां प्रपञ्चयति—**न निरोध** इति । स्वातिरिक्तप्राणादिस्थित्यन्तविश्वकलना अस्ति नास्तीति विभ्रमापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति ज्ञानसमकालं स्वातिरिक्तप्रपञ्चापह्नवतो **न निरोधः** कस्यापि न हि प्रलयोऽस्ति । तथा जायमानवस्तुवैरल्यात् **न चोत्पत्तिः** बुद्धितद्वृत्तिवैरल्यात् । **न बद्धः** संसारी जीवोऽस्ति बद्धवैरल्यात् । न हि मोक्ष**साधको** विद्यते बन्धसापेक्षमोक्षवैरल्यात् । **न** हि मोचनार्थी **मुमुक्षुरस्ति** निवर्त्तनीयबन्धवैरल्यात् । **मुक्तोऽपि न** विद्यत **इति** स्थितिः । **सैषा परमार्थता** ।

केवलं ब्रह्ममात्रत्वं नास्त्यनात्मेति निश्चिनु ।

इत्यादिस्वातिरिक्तप्रपञ्चतदुत्पत्तिप्रलयादिकलनापह्नवसिद्धं निष्प्रतियोगिकब्रह्ममात्रावशेषसिद्धान्तानुवादिश्रुतेः ॥ ३२ ॥

सम्यक् परमार्थदर्शनम्

**वीतरागभयक्रोधैर्मुनिभिर्वेदपारगैः ।**
**निर्विकल्पो ह्ययं दृष्टः प्रपञ्चोपशमोऽद्वयः ॥ ३३ ॥**

परमार्थसम्यग्दर्शनं स्तूयते—वीतेति । रम्यवस्तुविषयको रागश्च स्वातिरिक्तास्तित्वजन्यं भयं च कांक्षितविषयालाभजः क्रोधश्च येभ्यो वीताः तैः **वीतरागभयक्रोधैः** ब्रह्ममात्रमननशीलैः **मुनिभिः वेदान्तपारगैः** सर्ववेदान्तसिद्धान्तब्रह्ममात्रसम्यज्ज्ञानिभिः प्राणादिस्थित्यन्तविकल्पापह्नवसिद्धनिष्प्रतियोगिक**निर्विकल्पोऽयमात्मा** स्वमात्रमिति **दृष्टः** । द्वैतादिप्रपञ्चविकल्पे सति निर्वि-

कल्पकता कुतः? इत्यत आह—**प्रपञ्चोपशम** इति। द्वैतादिभेदविस्तारो हि प्रपञ्चः। तस्य उपशमः अपह्नवः।

एकाभावे द्वितीयं न न द्वितीये न चैकता।
द्वैतं यदि तदाद्वैतं द्वैताभावेऽद्वयं न च॥

इति सापेक्षश्रुतिसिद्धद्वयैकद्वैतादिगतहेयांशापह्नवसिद्धो ह्यद्वयः परमात्मा स्वमात्रमित्यवगतो भवतीत्यर्थः॥ ३३॥

स्वाज्ञानात्संसारोपरतेरभावः

**तस्मादेवं विदित्वैनमद्वैते योजयेन्मतिम्।**
**अद्वैतं समनुप्राप्य जडवल्लोकमाचरेत्॥ ३४॥**

स्वाज्ञानात् संसारोपरतिः न स्यादित्याह—**तस्मा**दिति। यस्मात् ब्रह्ममात्रज्ञानं विना स्वातिरिक्तभ्रमो न हि शाम्यति **तस्मात्** ब्रह्मातिरिक्तमसत् ब्रह्ममात्रं निष्प्रतियोगिकसत् इत्ये**वं विदित्वा एनं** आत्मानं निष्प्रतियोगिकाद्वैते वस्तुनि तत् स्वमात्रमिति तन्मात्रां **मतिं योजयेत्**। एवम**द्वैतं** सम्यगनु**प्राप्य** स्वावशेषधियेत्यर्थः। ततः परं अहमेतादृश इति आत्मानं अप्रख्यापयन् स्वातिरिक्तलोकप्रसक्तौ यथा जडोऽयमिति जानीयुः तथा **लोकमाचरेत्**। पामरलोकवत् नित्यादिकर्माचरणं स्वाश्रमोचितं कुर्यादित्यर्थः॥ ३४॥

यतिचर्यानुक्रमः

**निस्स्तुतिर्निर्नमस्कारो निस्स्वधाकार एव च।**
**चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत्॥ ३५॥**

जडवत् लोकवञ्चकयतिचर्यामनुक्रामति—**निःस्तुति**रिति।

स्तूयमानो न तुष्येत निन्दितो न शपेत् परान् ।

इत्यादिश्रुत्यनुरोधेन स्तुतिनमस्कारस्वाहास्वधाकारादिसर्वकर्मविरलो **यतिः** चलो देहः । अचल आत्मतत्त्वम् । तत्र चलदेहस्थितिं विस्मृत्य अचलात्मतत्त्वनिकेतनं यस्य सोऽयं **चलाचलनिकेतश्च** भूत्वा यदृच्छाप्राप्तदेहमात्रधारणानुकूलकौपीनाच्छादनभिक्षादिपरिग्रहेतरपरिग्रहवैरल्येन **यादृच्छिकः** निरंकुशब्रह्ममात्रतयावतिष्ठेदित्यर्थः ॥ ३९ ॥

मुनेर्ब्रह्ममात्रतयावस्थितिः

**तत्त्वमाध्यात्मिकं दृष्ट्वा तत्त्वं दृष्ट्वा तु बाह्यतः ।**
**तत्त्वीभूतस्तदारामस्तत्त्वादप्रच्युतो भवेत् ॥ ३६ ॥**

स्वान्तर्बहिर्विजृंभिताध्यात्मिकादिप्रपञ्चे सति कथं वा मुनिः ब्रह्ममात्रतया तिष्ठेत्? इत्यत आह—**तत्त्वमिति** । स्वातिरिक्तव्यष्टिप्रपञ्चमधिकृत्य भवतीत्याध्यात्मिकम् । तद्बाह्यं समष्टिप्रपञ्चजातम् । तदारोपापवादाधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तजातं च रज्जुसर्पवत् वाचारम्भणमात्रम् । यद्वा—शशविषाणवत् असत्—

इदं प्रपञ्चं नास्त्येव नोत्पन्नं नोऽस्त्विदं जगत् ।
दृश्यरूपं च दृग्रूपं सर्वं शशविषाणवत् ॥

इति श्रुतेः । तत्सर्वापह्नवसिद्धं तत्तत्त्वं स्वमात्रतया **दृष्ट्वा** तद्दर्शनसमकालं **तत्त्वीभूतो** ब्रह्मभूतो भवति । तद्रूपेण यदा राजते महीयते तदानीं **आरामो** निष्प्रतियोगिकनिर्विशेषचिद्धातुः **स्वतत्त्वात्** कदापि **अप्रच्युतो भवेत्** । यथा कश्चित् अतत्त्वदर्शी देहादौ चलेऽचले वा अतत्त्वीभूतस्तत्त्वीभूतो वेति मन्यते तद्योगायोगाभ्यां विकल्पवान् निर्विकल्पवानहमिति च मन्यमानः स्वतत्त्वात् प्रच्युतो भवति, न तथा ब्रह्ममात्रवित् । तस्य निष्प्रतियोगिकब्रह्ममात्रत्वेन न हि तत्त्वप्रच्युतिवार्तावकाश इत्यर्थः ॥ ३६ ॥

ब्रह्मातिरिक्ततत्त्वम्

**भावैरसद्भिरेवायमद्वयेन च कल्पितः ।**
**भावा अप्यद्वयेनैव तस्मादद्वयता शिवा ॥ ३७ ॥**

पूर्वश्लोकोक्तब्रह्मातिरिक्ततत्त्वमाचष्टे—**भावैरिति** । यथा रज्जुतत्त्वज्ञानां एकैव रज्जुः सर्पधारादण्डादिरूपेण दृश्यते न ह्यत्र रज्जौ रज्ज्वादिरूपेण स्वेन रूपेण वा सर्पादिरस्ति रज्जुरेव तत्तद्द्रष्ट्रनुरोधेन एवं विकल्प्यते, तथा प्राणादिस्थित्यन्तै**रसद्भिर्भावैः एवायम**ात्मा तदास्पदा**द्वय**रूपेण **विकल्पितः** । तथा प्राणादि**भावा अपि अद्वयेन** आत्मना जीवभावमापन्नेनैव विकल्पितः । न हि निरास्पदा कल्पनोपलभ्यते । अतः प्राणादिकल्पनाया मायामात्रत्वेन तस्याधिष्ठेयतावैरल्यात् । अधिष्ठेयनिरूपिताधिष्ठानस्यापि तथात्वात् । यस्मान्निरधिष्ठानत्वेन निष्प्रतियोगिकाद्वैतमवशिष्यते **तस्मादद्वयतैव शिवा** । स्वातिरिक्तप्राणादिस्थित्यन्ताशिवापह्नवसिद्धत्वात् शिवत्वं उपपद्यत इत्यर्थः ॥ ३७ ॥

प्रकरणार्थोपसंहारः

**नात्मभावेन नानेदं न स्वेनापि कथंचन ।**
**न पृथङ्नापृथक् किञ्चिदिति तत्त्वविदो विदुः ॥ ३८ ॥**

स्वातिरिक्तप्राणादिविकल्पानामपह्नवमुखेन ब्रह्ममात्रसिद्धिः अर्थात् सिध्यति इति वैतथ्यप्रकरणार्थमुपसंहरति—**नात्मेति** । प्राणादिस्थित्यन्त**मिदं नाना** शशविषाणवत् **नास्त्येव** । स्वात्मसत्तातिरिक्तसत्तावैरल्यात् । **आत्मभावेन** नाना स्यादित्यत आह—**नेति** । स्वात्मभावेनापि नाना न विद्यते । स्वात्मनो निष्प्रतियोगिकत्वेन ब्रह्ममात्रावगतेः प्राणादिनानापह्नवपूर्वकत्वात् । आत्माकारेण नानाभावेऽपि नानात्वाकारेण नाना स्यादित्यत आह—**न स्वेनापि कथंचनेति** । न हि कृच्छ्रात् स्वेन रूपेणापि नाना विद्यते । तस्य शशशृङ्गवत् अवस्तुत्वेन कालत्रयेऽप्यलब्धात्मकत्वात् । स्वात्मनः

पृथक्त्वेन वा किंचित् नानावस्तु अङ्गीकार्यमिति तत्राह—**न पृथगिति**। स्वात्मनो निष्प्रतियोगिकनिर्व्यवहार्यत्वेन प्रसक्तव्यावहारिकस्वपृथक्स्वापृथग्रूपनानागन्धोऽपि **नास्तीत्येवं** प्राणादिस्थित्यन्तकलनापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति **तत्त्वविदो** विदुः "पश्यतेहापि सन्मात्रमसदन्यत्" इत्यादिश्रुतेः ॥ ३८ ॥

---

# अद्वैतप्रकरणम्

ब्रह्मनिरूपणम्

**उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्तते ।**
**प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः स्मृतः ॥ १ ॥**
**अतो वक्ष्याम्यकार्पण्यमजाति समतां गतम् ।**
**यथा न जायते किंचिज्जायमानं समन्ततः ॥ २ ॥**

"प्रपञ्चोपशमं शान्तं शिवमद्वैतम्",

प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।
मायामात्रमिदं द्वैतं ज्ञाते द्वैतं न विद्यते ॥

इति श्रुतितो निरासितस्वातिरिक्तप्रपञ्चस्य पुनः "स्वप्नमाये यथा दृष्टे", "नात्मभावेन नानेदं" इत्यादिकेवलतज्जटिलवैतथ्यप्रकरणेनापि प्राणादिस्थित्यन्तप्रपञ्चस्य अवस्तुत्वेन अपह्नवः प्रतिपादितः। तथा स्वातिरिक्तापह्नवसिद्धं निष्प्रतियोगिकाद्वैतं किं आगममात्रेण प्रतिपत्तव्यं? न तत्तर्काक्षममित्याशंक्य तर्केणापि तत्सेद्धुं पारयतीति बहुलतरोपपत्तिभिः अद्वैतप्रकरणमा-

रभ्यते—**उपासनेत्यादिना**। उपासकोऽहं उपास्यं ब्रह्मेति ज्ञात्वा तदुपासनां आत्मनो मोक्षसाधनत्वेन आश्रित **उपासनाश्रितो धर्मो** जीवोऽस्मि। जीवधर्मविशिष्ट एवं मन्यते—**इदानीं** अहं एवं उपासनां कुर्वन् प्रपञ्चारोपास्पदत्वेन **जाते ब्रह्मणि** ईश्वरे वर्तमानो भवामि। स्वशरीरपतनादूर्ध्वं एवं अजं प्रपञ्चापवादास्पदं ब्रह्म प्रतिपत्स्ये। स्वातिरिक्तप्रपञ्चोत्पत्तेः **प्राक्** अहमिदं **सर्वं** चाजस्वरूपमेव। **येन** हेतुनाऽयं सविशेषब्रह्मवित् **तेन** हेतुनाऽयं निष्प्रतियोगिकनित्याजदर्शिभिः **असौ** सविशेषब्रह्मवित् **कृपण** इति **स्मृतः**—

यद्वाचानभ्युदितं येन वागभ्युद्यते।
तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते॥

इति श्रुतेः॥ १॥ यत एवं—**अतो वक्ष्यामीति**। "यो वा एतदक्षरं गार्ग्य विदित्वा अस्मात् लोकात् प्रैति स कृपणः" इति श्रुत्यनुरोधेन—जातोऽहं जाते ब्रह्मणि वर्ते। तदुपासनतः तत्पदं प्रतिपत्स्ये—इति यस्मात् एवं मन्यमानः कृपणो भवति तद्भावः कार्पण्यम्। आत्मसत्यव्यवहारप्रतिभासत्वेन स्वातिरिक्तप्रपञ्चास्तितप्रतीतेः तद्विपरीतत्वेन तदपह्नवसिद्धं ब्रह्ममात्रं अकार्पण्यम्। "यो वा एतदक्षरं गार्गि विदित्वा अस्मात् लोकात् प्रैति स ब्राह्मणः", "यत्र नान्यत्पश्यति नान्यत् शृणोति नान्यद्विजानाति स भूमा" इत्यादिश्रुतिसिद्धम**कार्पण्यं अतो वक्ष्यामि**। स्वस्य स्वातिरिक्तस्य चाविद्यमानाजातीयस्य **तदजाति** असल्लौकिकाद्यष्टदृष्टिमोहे सत्यसति तद्गतवैषम्यापह्नवसिद्धत्वेन **समतां गतं** निरवयवत्वात्। **यथा** रज्जुसर्पवत् **समन्ततो जायमानं** सर्पादिभ्रान्त्यपनये **किंचिदपि न जायते**, तथा तं प्रकारं शृण्वित्यर्थः॥ २॥

जातिनिदर्शनम्

**आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः।**
**घटादिवच्च सङ्घातैर्जातावेतन्निदर्शनम्॥ ३॥**

**घटादिषु प्रलीनेषु घटाकाशादयो यथा ।**
**आकाशे संप्रलीयन्ते तद्वज्जीवा इहात्मनि ॥ ४ ॥**

यदजात्यकार्पण्यं वक्ष्यामीति प्रतिज्ञातं तत्सिद्धिहेतुं विवृणोति—**आत्मेति**। अनात्मापह्नवसिद्धोऽयमात्मा निरवयवाकाशवत् केशकोट्येकांशवच्च सूक्ष्मो हि यथाकाशैराकाश उदितः तथा स आत्मा घटाकाशस्थानीय**जीवैः** उत्पन्न इव भाति । जीवात्मनां परस्मात् आत्मनः उत्पत्तिः श्रूयते "यतो वा इमानि भूतानि जायन्ते" इत्यादि । आकाशात् पटाकाशोत्पत्तिवत् परस्मात् जीवोत्पत्तिः समाना । न हि गोः वत्स इव महाकाशात् घटाकाशो जायते । घटाकाशात् महाकाशो वा जायते । न हि तथा परस्मात् जीवजातम् । जीवजातात् परोऽपि जायते । वस्तुतोऽवस्तुतो वापि ब्रह्मातिरिक्तयोः निष्प्रतियोगिकभावाभावरूपत्वेन न हि कस्यापि जातिः सेद्धुं पारयति । **घटादिवत् करणसंघातैः** उदित इति आत्मनो जातिः मन्दबुद्धिप्रतिपिपादयिषया जीवानां उच्यते । तत्र **जातौ एतदाकाशं निदर्शनं** न कस्यापि जातिरस्तीत्यर्थः ॥ ३ ॥ जातावेतन्निदर्शनमित्युक्तार्थं विवृणोति—**घटादिष्विति** । यथा घटाद्युत्पत्तिप्रलयाभ्यां घटाद्यवच्छिन्नाकाशं उत्पन्नं प्रलीनमिव भाति तथा देहादिसंघातोत्पत्तिप्रलयाभ्यां तदवच्छिन्नचैतन्यमपि उत्पत्तिप्रलयवत् भाति न स्वतः । स्वस्य जडसंघातापह्नवसिद्धचिन्मात्रत्वादित्यर्थः ॥ ४ ॥

जीवानां सुखादिसंबन्धाभावः

**यथैकस्मिन् घटाकाशे रजोधूमादिभिर्युते ।**
**न सर्वे संप्रयुज्यन्ते तद्वज्जीवाः सुखादिभिः ॥ ५ ॥**

चिन्मात्रं निष्प्रतियोगिकमित्यजानन्तः केचित् चिन्मात्रस्य सर्वदेहव्यापकत्वेन तत्रैकदेहावच्छिन्नचितो जनिमृतिसुखदुःखादिसम्बन्धे सर्वदेहा-

वच्छिन्नचितामेकत्वेन तत्संबन्धतः क्रियाकारकफलसाङ्कर्यं च स्यादित्याहुः । तत्र सदृष्टान्तमिदमुच्यते—यथेति । **यथा एकस्मिन् घटावच्छिन्नाकाशे रजोधूमादिभिः संयुते न** हि तदितरघटाकाशादयो रजोधूमादिभिः **संयुज्यन्ते**, आकाशस्य स्वविकल्पितघटादिसम्बन्धवैरल्यात् । **तद्वत् जीवाः** जनिमृति **सुखदुःखादिभिः** । जीवस्य स्वात्तोपाध्यपह्नवतः सन्मात्रत्वात् वस्तुत इत्यर्थः ॥ ५ ॥

आकाशवज्जीवेषु भेदाभावः

**रूपकार्यसमाख्याश्च भिद्यन्ते तत्र तत्र वै ।**
**आकाशस्य न भेदोऽस्ति तद्वज्जीवेषु निर्णयः ॥ ६ ॥**

जीवस्य उपाध्यपायात् सन्मात्रत्वमस्तु, उपाधिसद्भावे कथं पुनः आत्मभेदव्यवहृतिः ? इत्यत आह—रूपेति । यथा घटशरावापवरकाकाशानां अल्पत्वमहत्त्वादिरूपाणि भिद्यन्ते तथा उदकादिहरणादिकार्यं भिद्यते । घटाकाशशरावाकाशादिसमाख्याश्च भिद्यन्ते । **तत्र तत्र** व्यवहारविषयत्वेनेत्यर्थः । एवं व्यवहृतिः रूपकार्यसमाख्यानिमित्ता । परमार्थतस्तु **आकाशस्य न भेदोऽस्ति** । **तद्वत्** देहोपाधिकृतजीवेषु **रूपकार्यसमाख्या** देहादेरेव मिथो **भिद्यन्ते** । न हि देहातिरिक्तजीवेषु तद्भेदोऽस्तीति **निर्णयः** निश्चयः । उपाध्यपाये जीवस्य ब्रह्ममात्रत्वात् ॥ ६ ॥

आत्मनो जीवस्य चाभेदः

**नाकाशस्य घटाकाशो विकारावयवौ यथा ।**
**नैवात्मनः सदा जीवो विकारावयवौ तथा ॥ ७ ॥**

घटाद्याकाशगतरूपकर्मादिव्यवहृतिः पारमार्थिकी स्यात् इत्याशंक्य न हि महाकाशविकारावयवौ घटाकाशादिः अतो न पारमार्थिकीत्याह—**नाकाशस्येति** । यथा सुवर्णघनस्य कटकमकुटादिरूपं (जलस्य) फेनबुद्बुदहिमादि वृक्षस्य शाखापर्णादिः विकारावयवश्च भवति, न तथा महा**काशस्य घटाद्याकाशो**

विकारो अवयवो वा भवति यथा, तथा नैवात्मनो महाकाशस्थानीयस्य घटाकाशस्थानीयो जीवो न विकारो नाप्यवयवश्च भवति। अतो रूपकार्यादिव्यवहृतिः घटस्थानीयशरीरनिष्ठा, न तदवच्छिन्नाकाशस्थानीयजीवनिष्ठा। अतः सा न पारमार्थिकीत्यर्थः ॥ ७ ॥

आत्मनोऽविलक्षणत्वम्

**यथा भवति बालानां गगनं मलिनं मलैः।**
**तथा भवत्यबुद्धानामात्मापि मलिनो मलैः ॥ ८ ॥**
**मरणे संभवे चैव गत्यागमनयोरपि।**
**स्थितौ सर्वशरीरेषु चाकाशेनाविलक्षणः ॥ ९ ॥**

यथा रूपकार्यादिव्यवहृतिः घटाकाशादिभेदबुद्धिनिबन्धना तथा जननमरणादिव्यवहृतिः देहोपाधिनिबन्धना। न हि निरुपाधिकात्मनः कदाप्यस्तीत्येतमर्थं दृष्टान्तेन स्पष्टयति—यथेति। **यथा बालानां** गगनयाथात्म्याज्ञानां **गगनं** रजोधूमादि**मलैः मलिन**मिव भाति तथा स्वात्मयाथात्म्याज्ञानां **अबुद्धानां** अनात्मापह्नवसिद्धा**त्मापि** विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तगतोपाधि**मलैः मलिन** इव भाति। तद्याथात्म्यविदां तु सर्वापह्नवसिद्धब्रह्ममात्रं भातीत्यर्थः ॥ ८ ॥ उक्तार्थमेव पुनः द्रढयति—**मरण** इति। यथा घटाकाशजन्मनाशगमनादिः घटगतः तथा **सर्वशरीरे**ष्वात्मनः जन्ममरणादिः **आकाशेनाविलक्षणः**। आकाशादेः जडत्वेन स्वस्य निष्प्रतियोगिकाजडत्वेन च विलक्षणत्वेऽपि औपाधिकभेदमादायाविलक्षणत्वं सिद्धमित्यर्थः ॥ ९ ॥

देहादीनां स्वाविद्याकृतत्वम्

**संघाताः स्वप्नवत्सर्वे आत्ममायाविसर्जिताः।**
**आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते ॥ १० ॥**

देहादिसंघाताः स्वाविद्याकृता न परमार्थतः सन्तीत्याह—**संघाता** इति। देहादिकार्यकरणसंघातानां तिर्यग्योन्याद्यपेक्षया **आधिक्ये सर्वसाम्ये च उपपत्तिः न हि विद्यते**। तेषां शशशृंगनिभमायाकार्यत्वेन कारणतुल्यत्वात् आधिक्यं साम्यं वा कुतः संभवति? न हि परमार्थतस्ते संभवन्तीत्यर्थः॥ १०॥

आत्मतत्त्वस्य श्रुतिप्रामाण्यम्

**रसादयो हि ये कोशा व्याख्यातास्तैत्तिरीयके।**
**तेषामात्मा परो जीवः खं यथा संप्रकाशितः॥ ११॥**

स्वात्मनः स्वाज्ञदृष्टिप्रसक्तसर्वविलक्षणत्वद्योतकवाक्यान्युपन्यस्यति—**रसादय** इति। "स वा एष पुरुषोऽन्नरसमयः" इत्यारभ्य "ब्रह्मपुच्छं प्रतिष्ठा" इत्यन्तं **तैत्तिरीयके** "अन्योन्तर आत्मा प्राणमयः" इत्याद्यन्नप्राणमनोविज्ञानानन्दमयकोशा अस्यादेरिव **ये हि रसादयः कोशा व्याख्याताः**, **तेषा**मन्नादिकोशानां **परः** येनात्मनान्तरतमेन प्रतीचात्मवन्तः कोशा भवेयुः। तज्जीवननिमित्तत्वादात्मनः। स **आत्मा** पञ्चकोशानां पर एव। यः पूर्वं "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यभिहितः तस्मिन् स्वप्नमायावदाकाशादिक्रमेण रसादिकोशसंघाता विकल्पिताः। वस्तुतः परदृष्टेस्ते स्वात्ममायाविवर्जिताः। **यथा खं** घटाद्युपाधिसत्त्वासत्त्वाभ्यां वस्तुतः स्वमात्रं तथायमात्मा स्वातिरिक्तदेहादिसत्त्वासत्त्वाभ्यां आत्ममात्रमित्यस्माभिः व्याख्यातः **प्रकाशित** इत्यर्थः॥ ११॥

मधुब्राह्मणविवरणम्

**द्वयोर्द्वयोर्मधुज्ञाने परं ब्रह्म प्रकाशितम्।**
**पृथिव्यामुदरे चैव यथाकाशः प्रकाशितः॥ १२॥**

व्यष्टिसमष्टिप्रपञ्चतदध्यक्षभेदे सति कथं निष्प्रतियोगिकतया आत्मप्रकाशः? इत्याशंक्य मधुब्राह्मणं संक्षिप्योपन्यस्यति—**द्वयो**रिति। "इयं पृथिवी सर्वेषां

भूतानां मधु । अस्यै पृथिव्यै सर्वाणि भूतानि मधु । यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव । स योऽयमात्मेदममृतमिदं ब्रह्मेदं सर्वं " इत्यादि मधुब्राह्मणोक्तरीत्या **यथा पृथिव्यामुदरे चैव** अनुमानेनैक **आकाशः प्रकाशितः** तथा **द्वयोः** व्यष्टिसमष्टिप्रपञ्चयोः **द्वयोः** तदारोपापवादाधिकरणयोः तद्गतहेयांशापह्नवसिद्धमधुज्ञाने ब्रह्ममात्रज्ञाने जाते तज्ज्ञानसमकालं **परं ब्रह्म** निष्प्रतियोगिकस्वमात्रतया **प्रकाशितं** निरावृत सूर्यबिम्बवदित्यर्थः ॥ १२ ॥

व्यष्टिसमष्टीशयोरैक्यम्

**जीवात्मनोरनन्यत्वमभेदेन प्रशस्यते ।**
**नानात्वं निन्द्यते यच्च तदेवं हि समञ्जसम् ॥ १३ ॥**

व्यष्टिसमष्ट्यधीशयोः भेदापेक्षया तयोरैक्यं युक्तमित्याह—**जीवेति** । " न तु तद्द्वितीयमस्ति ", " द्वितीयाद्वै भयं भवति ", " उदरमन्तरं कुरुते ", " अथ तस्य भयं भवति ", " मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति " इत्यादि श्रुतिभिः यतो **नानात्वं निन्द्यते** ततः " तत्त्वमसि ", " अहं ब्रह्मास्मि " इत्यादि श्रुतिभिः **जीवात्मनोः अभेदे**नानन्यत्वं **प्रशस्यते** स्तूयते । व्यष्टिसमष्ट्यनुगतचैतन्यभेदापेक्षया चैतन्यैक्यं युक्तमित्यर्थः । परमार्थदृष्ट्या व्यष्टिसमष्टिविभागः तदनुगतचैतन्यभेदोऽभेदो वा न हि युज्यते । वस्तुनः स्वमात्रत्वादित्यर्थः ॥ १३ ॥

गौणमुख्याभ्यां जीवात्मनोरभेदः

**जीवात्मनोः पृथक्त्वं यत्प्रागुत्पत्तेः प्रकीर्तितम् ।**
**भविष्यद्वृत्त्या गौणं तन्मुख्यत्वं हि न युज्यते ॥ १४ ॥**
**मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या चोदितान्यथा ।**
**उपायः सोऽवताराय नास्ति भेदः कथञ्चन ॥ १५ ॥**

कथं पुनर्जीवात्मनोरनन्यत्वमुच्यते कर्मोपासनाकाण्डविरोधात्? इत्याशंक्य गौणमुख्याभ्यां उभयमपि संभवतीत्याह—**जीवात्मनोरिति**। "स यथाकामो भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत् कर्म कुरुते तदभिसंपद्यते", "स दाधार पृथिवीं द्यां", "मामेवोपासितव्यं" इत्यादि "यतो वा इमानि भूतानि जायन्ते", "आत्मन आकाशः संभूतः" इत्यादिकर्मोपासनाज्ञान-काण्डगोचरश्रुतिवाक्येभ्यः **जीवात्मनोरुत्पत्तेः प्राक् पृथक्त्वं प्रकीर्तितमिति यत्** तत् **गौणम्**। न हि घटाकाशमहाकाशभेदो मुख्यः। न हि भेदवाक्यानां कदाचिदपि मुख्यभेदार्थत्वमुपपद्यते। जीवात्मभेदश्रुतीनां स्वाविद्यावत्प्राणि-भेददृष्ट्यनुवादित्वात्। इहोपनिषत्सु सृष्टिप्रलयवाक्यैः जीवपरयोः एकत्वपरमेव प्रतिपिपादयिषितम्। तथा च "अन्योऽसावन्योहमस्मीति न स वेद", "तत्त्वमसि", "अहं ब्रह्मास्मि" इति वाक्यैः भेदनिन्दापुरस्सरं अभेदस्य प्रकटितत्वात्। उत्पत्तेः प्रागेकत्वेऽपि भाविनीं वृत्तिमाश्रित्य ओदनं पचतीतिवत् यत् जीवात्मनोः उत्पत्तेः प्रागपि स्वाज्ञदृष्ट्या वाक्याभासयुक्त्याभासैः गम्यमान-पृथक्त्वं **गौणं तत्** स्वज्ञदृष्ट्या एकत्वमेव मुख्यमित्यर्थः। परमार्थदृष्ट्या तु स्वातिरिक्तप्रपञ्चस्य शशविषाणवदलब्धात्मकत्वेन तत्सृष्टिप्रलयाद्यसंभवात्। न तन्निरूपितभेदाभेदौ आत्मनः सेद्धुं पारयत इत्यत्र "भेदाभेदौ सपदि गलितौ" इति श्रीशुकोक्तेः ब्रह्मातिरिक्तं न किंचिदप्यस्तीत्यर्थः। मिथः काण्डत्रयविरोधः स्वाज्ञादिदृङ्निष्ठः परमार्थदशायां न किंचिद्विरोधावकाश इति ज्ञेयम्॥ १४॥

"एकमेवाद्वितीयं" इति श्रुत्योत्पत्तेः प्राक् अजं सर्वं उत्पत्त्यनन्तरं तु जगज्जीवेशा भिन्नाः सृष्टिप्रलयतावादिश्रुतेरित्याशंक्य त्वदुक्तशंकाया अन्यार्थत्वेन पूर्वमेव परिहृतत्वात् आकाशदृष्टान्तेन पुनरप्युत्पत्त्यादिश्रुतीनां अभेदपरतां प्रपञ्चयति—**मृदिति**। "एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यात् तथैकेन लोहमणिना", "यथाग्नेः क्षुद्रा विस्फुलिङ्गा" इति **मृल्लोह-विस्फुलिङ्गादिदृष्टान्तैः सृष्टिः या चोदिता** विकल्पिता सा किमर्था? इत्यत आह—**उपाय** इति। मृल्लोहाग्निव्यतिरेकेण न हि घटासिविस्फुलिङ्गादयः सन्ति कार्यकारणयोरेकत्वात्। आत्मैकत्वबुद्ध्य**वताराय** सृष्ट्यादिश्रुतिपूग **उपायः**

स्यात्। अस्माकं उत्पत्त्यादिश्रुतीनां प्रतिसर्गं अन्यथान्यथा श्रूयमाणत्वात्। न ह्यात्मैकत्वोपायत्वसिद्धिरिति चेन्न; उत्पत्त्यादेर्मायिकत्वेन निष्प्रयोजनत्वात्। कार्यकारणैक्यबुध्यवतारप्रयोजनं विना न हि प्रयोजनान्तरं विद्यते। अतो न ह्यस्त्युत्पत्त्यादिकृतो **भेदः कथंचनास्ति** "इदं सर्वं यदयमात्मा" इति श्रुतेः ॥१५॥

उपासनायाः कल्पनाप्रकारः

**आश्रमास्त्रिविधा हीनमध्यमोत्कृष्टदृष्टयः।**
**उपासनोपदिष्टेयं तदर्थमनुकम्पया ॥ १६ ॥**

परमार्थसद्रूप आत्मा एक एव। तदतिरिक्तमन्यत् असत् अनात्मा इति सिद्धेऽर्थे "अहरहस्सन्ध्यामुपासीत", "यावज्जीवमग्निहोत्रं जुहुयात्", "स क्रतुं कुर्वीत", "आत्मेत्येवोपासीत", "आत्मा वा अरे द्रष्टव्यः" इत्याद्युपासना किमर्थेयम्? इत्यत आह—**आश्रमा** इति। **आश्रमाः** आश्रमिणः सन्मार्गगा वर्णिनश्च **त्रिविधाः** दृष्टिभेदात्। कथम्? इत्यत आह—**हीनेति**। स्वातिरिक्तास्तित्वपूर्वकं तदात्मत्वतदुपाधित्वसत्यत्वरूपिणी हीना। स्वातिरिक्तं मिथ्येति ज्ञात्वापि तन्नात्यन्तासत् किन्तु व्यावहारिकी प्रातिभासिकी मध्यमा। स्वातिरिक्तापह्नवरूपिणी उत्कृष्टा दृष्टिः दर्शनं येषां स्वाज्ञस्वज्ञपरमार्थदृष्टीनां ते **हीनमध्यमोत्कृष्टदृष्टयः**। तत्र हीनदृष्ट्यर्धांशं बौद्धपञ्चकमपोह्य शिष्टहीनमध्यमदृष्टिप्रतिपत्त्यर्थम्। न हि "ब्रह्ममात्रमसन्न हि" इति श्रुत्यनुरोधेन निष्प्रतियोगिकब्रह्ममात्रपदमारूढोत्तमदृष्ट्यर्थं दयालुना वेदेन **इयमुपासना उपदिष्टा**। कथमेते हीनमध्यमदृष्टिं विहाय सर्वोत्तमनिष्प्रतियोगिकब्रह्ममात्रदृष्टिमाप्नुयुरित्य**नुकम्पये**त्यर्थः।

इदं प्रपञ्चं नास्त्येव नोत्पन्नं नो स्थितं जगत्।
सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्रमम् ॥

इति श्रुतेः ॥ १६ ॥

परमार्थदर्शिनो विरोधाभावः

**स्वसिद्धान्तव्यवस्थासु द्वैतिनो निश्चिता दृढम् ।**
**परस्परं विरुध्यन्ते तैरयं न विरुध्यते ॥ १७ ॥**

तत्र स्वाज्ञानां मिथो विरोधाभावेऽपि स्वाज्ञस्वज्ञयोः मिथो विरोधः स्यात् इत्यत आह—**स्वेति** । अद्वैत्यतिरिक्ताः सर्वे **द्वैतिनः** । स्वस्वदृष्ट्यनुरोधेन **स्वस्वसिद्धान्तव्यवस्थासु** एवमेवैष परमार्थो नातः परमन्यत् अस्तीति **दृढं** विनिश्चितास्सन्तः रागद्वेषकलुषिता भूत्वा स्वस्वसिद्धान्तसाधनहेतोः **परस्परं विरुध्यन्ते** । **तैर**न्योन्यविरोधिभि**रयं** स्वज्ञदृष्टिरूपाद्वैतपक्षः तस्यात्मैकत्वदर्शनेन सर्वानन्यत्वात् रागद्वेषानास्पदत्वाच्च । यथा स्वहस्तपादादिभिः स्वयं तथा **न विरुध्यते** । मिथो विरोधहेतुस्वाज्ञानाभावात् । परमार्थदृष्टेस्तु विरोधोऽविरोधो वा न संभवतीत्यर्थः ॥ १७ ॥

द्वैताद्वैतविवरणम्

**अद्वैतः परमार्थो हि द्वैतं तद्भेद उच्यते ।**
**तेषामुभयथा द्वैतं तेनायं न विरुध्यते ॥ १८ ॥**

स्वज्ञदृष्टेः स्वाज्ञदृष्ट्यविरोधे को हेतुः ? इत्यत आह—**अद्वैत** इति । "एकमेवाद्वितीयं", "तत्तेजोऽसृजत" इत्यादिश्रुत्यनुरोधेन आत्मैकत्वपक्षोऽयमद्वैतः **परमार्थो हि** द्वैतहेतुत्वात् । तद्विपरीतं नानात्वं **द्वैतम्** । तस्य अद्वैतस्य **भेदः** कार्य**मुच्यते** । यद्वा—सुषुप्तिमूर्छासमाधिषु स्वचित्तस्पन्दनाभावे द्वैतप्रपञ्चास्फूर्तेः । अतस्तस्य द्वैतस्य भेद उच्यते । कार्यकारणाभेदतो द्वैतमप्यद्वैतमेवेति हेतुना **तेनायमद्वैतः** पक्षः **तैर्न विरुध्यते** । **तेषान्तु द्वैतं** परमार्थतयापरमार्थतया वा भातु । अद्वैतात्मातिरेकेण द्वैतितद्ग्रहाभावात् । **केन** हेतुनायमद्वैती द्वैतिभिः विरुध्यते ? न कदापि विरुध्यत इत्यर्थः । "ब्रह्मैवेदं सर्वम्" इति श्रुतेः ॥ १८ ॥

आत्मतत्त्वस्य परमार्थतोऽभेदः

**मायया भिद्यते ह्येतन्नान्यथाजं कथंचन ।**
**तत्त्वतो भिद्यमाने हि मर्त्यताममृतं व्रजेत् ॥ १९ ॥**

अद्वैतकार्यं द्वैतमित्युक्ते अद्वैतवत् द्वैतमपि पारमार्थिकं स्यादित्यत आह— **मायये**ति । यदेतदद्वैतं तैमिरिकदृष्टिदृष्टानेकचन्द्रवत् रज्ज्वादिविकल्पितसर्पादिवत् स्वाज्ञानरूपया **मायया भिद्यते** निरवयवत्वात् । परमार्थतो निरवयवमजं **नान्यथा कथंचन** केनचित्प्रकारेणापि भिद्यते । **तत्त्वतो भिद्यमाने हि अमृतं** स्वभावतोऽजमपि **मर्त्यतां व्रजेत्** । स्वभावच्युतेः सर्वप्रमाणासम्मतत्वात् । अजं आत्मतत्त्वं माययैव भिद्यते न परमार्थत इत्यर्थः ॥ १९ ॥

आत्मनः स्वभाववैपरीत्याभावः

**अजातस्यैव भावस्य जातिमिच्छन्ति वादिनः ।**
**अजातो ह्यमृतो भावो मर्त्यतां कथमेष्यति ? ॥ २० ॥**

केचिदात्मनः स्वभाववैपरीत्यं कर्तुमिच्छन्ति । तत् मनोरथमात्रमित्याह— **अजातस्ये**ति । **वादिनो** वावदूकाः केचित् **अजातस्यैवा**मृतात्म**भावस्य** परमार्थतो **जातिं** उत्पत्ति**मिच्छन्ति** । तद्दृष्ट्या एवं जातं चेत् तदेवावश्यं मर्त्यतामेष्यति । न हि स्वभाववैपरीत्यमेष्यतीत्यर्थः ॥ २० ॥

प्रकृतेर्नान्यथाभावः

**न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ।**
**प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति ॥ २१ ॥**

यस्य या प्रकृतिः सा विकृतिं नैतीत्याह— **न भवती**ति । अग्निजलादेः तैक्ष्ण्यशीतादिप्रकृतिः यथा सान्यथा न भवति तथेत्यर्थः ॥ २१ ॥

आत्मजातिपक्षे मोक्षाभावः

**स्वभावेनामृतो यस्य भावो गच्छति मर्त्यताम् ।**
**कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ? ॥ २२ ॥**

यद्दृष्ट्या वस्त्वमृतं परमार्थतः तज्जायत इति च सिद्धान्तः तदमृतमेव न भवतीत्याह—**स्वभावेनेति** । यस्य पुनरात्मा **स्वभावेनामृतो**ऽपि **मर्त्यतां गच्छति** । परमार्थतो जायते । जायमानवस्तुनोऽमृतमिति वार्तापि दुर्लभेत्याह—**कृतकेनेति** । कृतकत्वेन कल्पितामृतस्सन् निश्चलामृतस्वभावतया **कथं स्थास्यति** ? एवमात्मजातिपक्षे न हि मोक्षोऽस्तीत्यर्थः ॥ २२ ॥

सृष्टिश्रुतेर्निश्चितत्वम्

**भूततोऽभूततो वापि सृज्यमाने समा श्रुतिः ।**
**निश्चितं युक्तियुक्तं च यत्तद्भवति नेतरत् ॥ २३ ॥**

सर्वमजमिति पक्षे सृष्टिप्रतिपादकश्रुतेः संकोचः स्यादित्यत आह—**भूतत इति** । सृष्टिप्रतिपादिका श्रुतिः न संकोचतामर्हति । तस्या जीवपरयोरेकत्वबुद्ध्यवतारहेतुतया “ उपायः सोऽवताराय ” इत्युक्तत्वात् । **भूततः** परमार्थतः **अभूततो** मायया वा मायां विनैव **सृज्यमाने** वस्तुनि सृष्टिश्रुतिः **समा** । सृष्टिस्सतीत्येव दृढभ्रमाणां तद्व्युत्क्रमेण प्रलयो निरुक्तः । सृष्टौ असत्यां प्रलयः क्व ? “ योऽजस्स रामचन्द्रोऽस्मि विदेहमुक्तः ” इति प्रभोक्त्यनुरोधेन न हि सृष्टिः प्रलयो वास्ति । स्वाज्ञदृग्विकल्पितैव सृष्टिः गौणी । मुख्या सृष्टिः नास्त्येव । “ ब्रह्मव्यतिरिक्तं न किंचिदस्ति ”, “ मद्व्यतिरिक्तमणुमात्रं न विद्यते ”, “ सबाह्याभ्यन्तरो ह्यजः ”, “ न जायते म्रियते वा विपश्चित् ” इत्यादिश्रुतिसहस्रनिश्चितं **यत्** सर्वापह्नवसिद्धब्रह्ममात्रं **तत्** निष्प्रतियोगिकनिर्विशेषत्वेन **युक्तियुक्तं च** । **नेतरत्** स्वातिरिक्तं किंचिदप्यस्ति । तस्यापि निष्प्रतियोगिकाभावरूपत्वादित्यर्थः ॥ २३ ॥

ब्रह्मणो माययैव जायमानत्वम्

**नेह नानेति चाम्नायादिन्द्रो मायाभिरित्यपि ।**

**अजायमानो बहुधा जायते मायया तु सः ॥ २४ ॥**

कथं पुनः श्रुत्या निश्चितम्? इत्याशंक्य स्वातिरिक्तनानापह्नवसिद्धतया स्वमात्रं ब्रह्म निश्चितं वस्तुतो निष्प्रतियोगिकाजत्वं मायया जायमानत्वं च स्यादित्यत आह—नेहेति । "एकमेवाद्वयं ब्रह्म", "नेह नानास्ति किंचन" इत्याम्नायात् स्वातिरिक्तनानाप्रपञ्चापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति निश्चितम् । न ह्यत्र निवर्त्यनिवर्तकभावः सेद्धुं पारयति—

या च प्रागात्मनो मे मा तथान्ते च तिरस्कृता ।
ब्रह्मवादिभिरुद्गीता सा मायेति विवेकतः ॥ इति,
मायाविद्याज्ञानविश्वाभावान्तःकरणादयः ।
ब्रह्मातिरिक्तपर्याया ह्यत्यन्ताभावरूपिणः ॥

इति श्रुतेः परमाक्षरविवेकोक्तेश्च । निर्वर्तनीयमायातत्कार्यस्य शशविषाणवदलब्धात्मकत्वेन निवर्तकतापि नास्तीत्यर्थः । "इन्द्रो मायाभिः पुरुरूप ईयते", "अजायमानो बहुधा विजायते" इति श्रुत्यनुरोधेन स्वज्ञदृष्ट्या कदाप्यजायमानोऽपि यः परमात्मा स तु स्वाज्ञदृष्टिप्रसक्तमायया विश्वविश्वाद्यविकल्पानुज्ञैकरसान्ततत्कार्यजातरूपेण जायत इव जायते न परमार्थतः ।

चिन्मात्रमेव चिन्मात्रमखण्डैकरसं रसम् ।
सर्ववर्जितचिन्मात्रं ब्रह्ममात्रमसन्न हि ॥

इत्यादि श्रुतेः ॥ २४ ॥

कार्यकारणकलनाविरलं ब्रह्म

**संभूतेरपवादाच्च संभवः प्रतिषिध्यते ।**

**को न्वेनं जनयेदिति कारणं प्रतिषिध्यते ॥ २५ ॥**

कार्यकारणकलनायां सत्यां कथं ब्रह्ममात्रता? इत्यत आह—**संभूतेरिति**। "न जायते म्रियते वा विपश्चित्", "न निरोधो न चोत्पत्तिः" इत्यादिश्रुतितः **संभूतेः** उत्पत्तेः **अपवादात्** अपह्नवात् **संभवः** संभवनं जन्मकार्यं **प्रतिषिध्यते** अपह्नवपदमेव भजते। तथा "नायं कुतश्चिन्न बभूव कश्चित्", "को न्वेनं जनयेत् पिता" इति श्रुतेराक्षेपार्थत्वेन **कारणं प्रतिषिध्यते। न हि** शशविषाणवदलब्धात्मकस्वातिरिक्तमायातत्कार्यस्य जनयितृकारणाकांक्षास्ति, कार्यसापेक्षकारणतायाः कार्यापह्नवसमकालं अपह्नवंगतत्वात्। कार्यकारणकलनाविरलं ब्रह्ममात्रमवशिष्यत इत्यर्थः।

कार्यं चेत् कारणं किंचित् कार्याभावे न कारणम्।

इति संभूत्यभावश्रुतितः समस्तकार्यादिविश्वस्य न संभवोऽस्ति कार्याद्यभावात्। "परमार्थतस्तन्न कारणं ब्रह्म तथा न कार्यं" इति श्रुतेः भिदामार्ताण्डोक्तेश्च ॥ २५ ॥

ब्रह्ममात्रावगतेः दुर्बोधत्वम्

**स एष नेति नेतीति व्याख्यातं निह्नुते यतः।**
**सर्वमग्राह्यभावेन हेतुनाजं प्रकाशते ॥ २६ ॥**

निष्प्रतियोगिकब्रह्ममात्रावगतेः दुर्बोधत्वेनोक्तार्थमेव भङ्ग्यन्तरेण पुनः पुनराह—**स** इति। स्थूलादिचतुरंशाढ्यस्वाविद्यापदतत्कार्यव्यष्टिसमष्टितदैक्यारोपापवादाधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तभेदेन यद्यत् **व्याख्यातं** स्वाज्ञादिदृष्ट्या प्रपञ्चितं तत्सर्वं "अथात आदेशो नेति नेति", "न ह्येतस्मादिति", "नेत्यन्यत् परमस्ति" इत्यादिश्रुतिस्वातिरिक्ताविद्यापदतत्कार्यतदारोपापवादाधिकरणगतहेयांशजातं **यतो निह्नुते** अपह्नवमाचष्टे, अतः **सर्वं अजं** तद्गतहेयांशाग्राह्यभावेन **हेतुना** निष्प्रतियोगिकाजं ब्रह्म **प्रकाशते**। न हि स्वातिरेकेण ग्राह्यं त्याज्यं वा किंचिदस्तीत्यत्र—

किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।
वस्तुतोऽवस्तुतो वापि ब्रह्मभिन्नमिदाततेः ।
अभावनिगमान्तालिमानात् सर्वमजं स्मृतम् ॥

इति श्रुतेः, चन्द्रिकोक्तेश्च ॥ २६ ॥

सतोऽजायमानत्वादि

**सतो हि मायया जन्म युज्यते न तु तत्त्वतः ।**
**तत्त्वतो जायते यस्य जातं तस्य हि जायते ॥ २७ ॥**
**असतो मायया जन्म तत्त्वतो नैव युज्यते ।**
**वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते ॥ २८ ॥**

"पश्यतेहापि सन्मात्रमसदन्यत्" इत्यादिश्रुतिसहस्रतः स्वातिरिक्तासदपह्नवसिद्धं निष्प्रतियोगिकसन्मात्रमित्यवधृतम् । तत्र सदसद्वादिनो मिथः स्वस्वसिद्धान्तानुरोधेन अस्मत्सिद्धान्तरूपामजातिमेव ख्यापयन्तीत्याह—**सत** इति । **सतः** सन्मात्रस्य निष्प्रतियोगिकभावरूपत्वेन **तत्त्वतो जन्म न हि युज्यते** । जातिश्रुतेः का गतिः? इत्याशंक्य सा स्वाज्ञेषु गतिमर्हतीत्याह—**मायये**ति । स्वाज्ञदृष्टिप्रसक्तसत्कारणात् **मायया** मायाविकल्पितहस्त्यादिवत् **जन्म युज्यते** । नासतः कारणात् कस्यापि जन्म युज्यते । **यस्य** पुनः सदेव **तत्त्वतो जायत** इत्यभिनिवेशः **तस्य** तु **जात**मेव **जायत** इति निश्चितम् । जातस्य जायमानत्वेन अनवस्थाप्रसङ्गः स्यात् । तस्मात् सन्न जायते तस्य निष्प्रतियोगिकसन्मात्ररूपत्वात् । तस्मादपि स्वातिरिक्तं न किंचित् जायते । तस्य शशविषाणवदवस्तुत्वात् ॥ २७ ॥ सन्मात्रस्याजत्वेन जन्मकारणत्वाभावेऽपि असतो जन्म स्वातिरिक्तसत्कारणत्वं च स्यादित्यत आह—**असत** इति । यथा न हि **बन्ध्यापुत्रः** परमार्थतो **मायया वा** कदापि **जायते** तथा कालत्रयेऽपि शशविषाणवत् **असतो**ऽविद्यमानस्य **तत्त्वतो मायया**

वापि जन्म न युज्यते। स्वस्याविद्यमानत्वेनासद्धेतुत्वमेव नास्ति। सद्धेतुत्वं कुतः संभवति? तस्यापि निष्प्रतियोगिकाजत्वं सिद्धमित्यत्र वक्ष्यति च—

स्वतो वा परतो वापि न किंचिद्वस्तु जायते।
नास्त्यसद्धेतुकमसत् सदसद्धेतुकं तथा॥

इत्यादि। सदसत्कार्यवादिनः परस्परं विवदमानास्सन्तः अस्मदीयाजातिमेव ख्यापयन्तीत्यर्थः॥ २८॥

मनस्स्पन्दनमेव जाग्रदादिहेतुः

**यथा स्वप्ने द्वयाभासं स्पन्दते मायया मनः।**
**तथा जाग्रद्द्वयाभासं स्पन्दते मायया मनः॥ २९॥**

निष्प्रतियोगिकभावाभावरूपसदसतोरजत्वेन स्वमात्रत्वे स्फुटास्फुटग्राह्यग्राहकायमाणजाग्रदादिव्यापृतिः कथम्? इत्याशंक्य "अदृश्यमव्यवहार्यमग्राह्यम्" इत्यादिश्रुत्यनुरोधेन व्यष्टिसमष्ट्यात्मकजाग्रज्जाग्रदादितुर्यस्वापान्ततदारोपापवादाधारविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तव्यापृतिर्वा कथं सेद्धुं पारयति? तुर्यतुर्यावगतेः स्वातिरिक्तजाग्रज्जाग्रदादिचतुष्पञ्चदशकलनातद्व्यावृत्त्यपह्नवपूर्वकत्वात्। इत्थं तुर्यतुर्ययाथात्म्याज्ञानतः स्वातिरेकेण मनः परिकल्प्य तत्स्पन्दनमेव जाग्रदादिव्यापृतिहेतुरिति कल्पयन्तीत्याह—**यथेति**। **यथा स्वप्ने** रज्ज्वज्ञानोत्थसर्पवत् स्वाज्ञानप्रभवं **मनो** ग्राह्यग्राहकरूपेणेव **द्वयाभासं मायया स्पन्दते, तथा** जाग्रज्जागरितादौ ग्राह्यग्राहकरूपद्वयाभासतया **मायया स्पन्दते** इत्यर्थः॥२९॥

स्वतो मनसोऽस्पन्दः

**अद्वयं च द्वयाभासं मनः स्वप्ने न संशयः।**
**अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः॥ ३०॥**

सर्पो रज्जुरूपेणेव स्वाधिष्ठानाद्वयरूपं सत् स्वप्नादौ मनः स्पन्दते न स्वत इत्याह—**अद्वयमिति**। स्वाधिकरणा**द्वयं मनः स्वप्ने** स्वविकल्पित-स्थावरजङ्गमात्मकं जगत् ग्राह्यम्। तथा चक्षुरादीन्द्रियं ग्राहकम्। तदुभयं हि **द्वयाभासं** न हि स्वव्यतिरेकेणास्ति। जाग्रत्यपि तथैवेत्यर्थः ॥ ३० ॥

प्रपञ्चस्य भावाभावयोर्मनःकृतत्वम्

**मनोदृश्यमिदं द्वैतं यत् किंचित् सचराचरम्।**
**मनसो ह्यमनीभावे द्वैतं नैवोपलभ्यते ॥ ३१ ॥**

स्वातिरिक्तप्रपञ्चभावाभावावन्वयव्यतिरेकाभ्यां मनःकृताविति निदर्शयति—**मन** इति। **इदं** परिदृश्यमानं व्यष्टिसमष्ट्यात्मकं **यत्किंचिच्चराचरा**त्मकं विश्वं **द्वैतं** मनसा दृश्यते कल्प्यत इति सर्वं **मनोदृश्यमु**च्यते।

परं ब्रह्माहमस्मीति स्मरणस्य मनो न हि।

इत्यादिश्रुत्यनुरोधेन मनस्तत्कार्यवृत्तिसहस्वापह्नवसिद्धं ब्रह्म स्वमात्रमिति प्रबोधसम-कालं स्वाज्ञदृष्टिप्रसक्त**मनसः** सुषुप्तिमूर्छासमाधिषु विलयो **ह्यमनीभावो** भवति। तदा **द्वैतं नैवोपलभ्यते**। पुनः जाग्रत्स्वप्नयोः द्वैतं भवतीति विभ्रममूलं मनो निष्प्रतियोगिकामनीभावं ब्रह्ममात्रपदं भजति। तदा मनस्सत्त्वासत्त्वसिद्ध-द्वैताद्वैते स्तो न स्त इति वार्तापि नोपलभ्यत इत्यर्थः ॥ ३१ ॥

मनसो ह्यमनीभावः

**आत्मसत्यानुबोधेन न संकल्पयते यदा।**
**अमनस्तां तदा याति ग्राह्याभावे तदग्रहम् ॥ ३२ ॥**

मनसो ह्यमनीभावोपायः कः? इत्यत आह—**आत्मेति**। स्वातिरिक्तमनात्मा स्वयं त्वात्मा। तत्र स्वातिरिक्तानात्मापह्नवसिद्धतयात्मैव सत्यमिति **यदा**

श्रुत्याचार्यप्रसादतः बोधो जायते सोऽयमात्मसत्यानुबोधः । तेन कल्पनाविषयवैरल्यात् । **न** हि किंचिदपि **संकल्पयते तदा** स्वग्राह्यविषयाभावे **तदग्रहं** मनस्त्वमनस्तां चिन्मात्रतां स्वावशेषतया **याति** ब्रह्मैव भवतीत्यर्थः ॥ ३२ ॥

ब्रह्मबोधनप्रकारः

**अकल्पकमजं ज्ञानं ज्ञेयाभिन्नं प्रचक्षते ।**
**ब्रह्म ज्ञेयमजं नित्यमजेनाजं विबुध्यते ॥ ३३ ॥**

तादृशं ब्रह्म कथं बुध्यते? इत्यत आह—**अकल्पक**मिति । यत् सर्वकल्पनापह्नवसिद्धं तद**कल्पकम्** । तस्य परमार्थसत्यत्वेन केनाप्यजातत्वात् **अजम्** । ज्ञप्तिमात्रत्वात् **ज्ञानम** । तद्भिन्नं ज्ञेयमित्यत आह—**ज्ञेयाभिन्न**मिति । चिन्मात्रज्ञानातिरिक्तज्ञेयवैरल्यात् ब्रह्मविदश्चिन्मात्रं **ज्ञेयाभिन्नं प्रचक्षते** । चिन्मात्रातिरिक्तज्ञेयाभावात् । ज्ञानमेव ज्ञेयमिति कथयन्तीत्यर्थः । "न हि विज्ञातुः विज्ञातेः विपरिलोपो विद्यतेऽविनाशित्वात्", न तु तद्द्वितीयमस्ति", "विज्ञानमानन्दं ब्रह्म", "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतेः । किंरूपेण तत् ज्ञेयम्? इत्यत आह—**ब्रह्मे**ति । स्वमात्रत्वेनोपबृंहणात् ब्रह्म । तद्रूपेणैव यत् ज्ञायते तत् **ब्रह्म ज्ञेयम्** । अत एव **अजं** निष्प्रतियोगिकनित्यं सत्तामात्रम् । **अजेन** निष्प्रतियोगिकब्रह्ममात्रज्ञानेन **अजं** आत्मतत्त्वं स्वयमेव स्वमात्रतया **बुध्यते** । न हि ज्ञानान्तरापेक्षा स्ववेदने अस्तीत्यर्थः ॥ ३३ ॥

सुषुप्तिसमाध्योर्वैलक्षण्यं प्रचारभेदश्च

**निगृहीतस्य मनसो निर्विकल्पस्य धीमतः ।**
**प्रचारः स तु विज्ञेयः सुषुप्तोऽन्यो न तत्समः ॥ ३४ ॥**
**लीयते हि सुषुप्तौ तन्निगृहीतं न लीयते ।**
**तदेव निर्भयं ब्रह्म ज्ञानालोकं समन्ततः ॥ ३५ ॥**

मनसो निर्विकल्पावस्था ह्यमनीभावः। सोऽयं सुषुप्तिसमाध्योः सम इत्याशंक्य तयोर्वैलक्षण्यं स्फोरयति—**निगृहीतस्ये**त्यादिना। स्वातिरिक्तनैरपेक्ष्येण स्वमात्रे **निगृहीतस्य मनसो निर्विकल्पस्य धीमतो** विवेकवतोऽन्तः-करणस्य प्रचारणं **प्रचारः** ब्रह्ममात्रगोचरत्वेन ब्रह्मविद्भिः **विज्ञेयः**। सुषुप्तिसमाध्योः प्रत्ययाभावस्य तुल्यत्वमित्यत्र **सुषुप्ते** प्रचारस्त्वन्यः कारणा-ज्ञानकवलितत्वात्। समाधिस्थस्य मनसो ब्रह्माकारपरिणतत्वात् न हि सुषुप्तिसमः समाधौ मनःप्रचार इत्यर्थः॥ ३४॥ पुनस्तयोः प्रचारभेदमाचष्टे—**लीयते** इति। सुषुप्त्यवस्थां गतस्य मनः स्वाविद्यावृत्तिभिस्सह कारणाज्ञाने **विलीयते हि** बीजभावमापद्यते। जाग्रत्स्वप्नसुषुप्तिषु तत्त्वाग्रहणलक्षणस्वापस्य तुल्यत्वात्। स्वाज्ञं मनोऽवस्थात्रयेऽपि विलीयते। तदेव पुनर्मनः श्रुत्या-चार्यप्रसादलब्धविवेकतो **निगृहीतं** सत् **न लीयते**। शुद्धसत्त्वरूपेण ब्रह्माकारपरिणतत्वात्। यद्वा—सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रप्रबोधसम-कालं यत् मनोऽस्ति नास्तीति मननमपि नार्हति तत् मनः स्ववृत्तिभिस्साकं विरूपतया विलीयते अपह्नवपदं भजतीत्यत्र—

जाग्रत्स्वप्नसुषुप्तिमोहतमसि स्वान्तर्मुनेर्लीयते
तुर्याकल्पसमाधिनिष्ठमनसः सत्त्वाल्लयं नैति तत्।
तुर्यातीतपदे विरूपविलयाद्यस्मिन् समाप्तं भवेत्

इति मुक्तिशतकोक्तेः। स्वाज्ञादिदृष्ट्या **समन्ततो** विद्यमानं मनस्तत्कार्यजातं विलीयते अपह्नवं भजति। तदपह्नवज्ञानसमकालं यत् स्वमात्रतया अवलोक्यते तत् **ज्ञानालोकं** "द्वितीयाद्वै भयं भवति" इति श्रुतितः भयहेतुद्वैतादि-वृत्त्यपह्नवसिद्धं यद् **तदेव निर्भयं** "तदेतदभयममृतं अशोकमनन्तं निर्बीजं" इति श्रुतेः। तद्रूपेण सर्वत्र बृंहणात् **ब्रह्म** स्वमात्रतयावशिष्यत इत्यर्थः। सर्वविशेषं नेति नेतीति विहाय यदवशिष्यते तत् "अद्वयं ब्रह्म" इति श्रुतेः॥ ३५॥

अजस्वरूपनिरूपणम्

**अजमनिद्रमस्वप्नमनामकमरूपकम् ।**
**सकृद्विभातं सर्वज्ञं नोपचारः कथंचन ॥ ३६ ॥**

यदेवमवशिष्टं तत्स्वरूपं विशदयति—**अजमिति** । जन्मादिषड्भावविकारापह्नवसिद्धत्वात् **अजं** तुर्यस्वापादिपञ्चदशावस्थापह्नवात् **अनिद्रं** **अस्वप्नं** स्थूलादिशरीरापह्नवात् **अनामकमरूपकं**,

यतो वाचो निवर्तन्ते विकल्पकलनान्विताः ।
विकल्पसंक्षयाज्जन्तोः पदं तदवशिष्यते ॥

इति श्रुत्यनुरोधेन विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तविकल्पकदम्बापह्नवसिद्धनिष्प्रतियोगिकनिरावृतब्रह्ममात्ररूपेण सदा यत् विभाति तत् **सकृद्विभातं** "सुविभातं सकृद्विभातम्" इति श्रुतेः । स्वाज्ञादिदृष्टिप्रसक्तसर्वमस्ति नास्तीति विभ्रमापह्नवसिद्धं ब्रह्म स्वमात्रमिति यज्जानाति तत् **सर्वज्ञम्** । अजादिसप्तविशेषणं ब्रह्मण्यौपचारिकमित्यत आह—**नेति** । यत्प्रसादतो मुनिगणः यद्यत् स्मरति तत्तत् पर्यायेण जानातीति सर्वज्ञ उपचर्यते । तथा नेह निष्प्रतियोगिकब्रह्ममात्रे तादृशाजत्वादेरसंभवात् । निरुपचरिताजादिसर्वज्ञान्तशब्दार्थरूपत्वात् **कथंचन** कदापि **नोपचारः** अजत्वादिशब्दस्यापि तदास्त्युपायत्वादेवमुपायत उपाये स्वमात्रमिति ज्ञाते तत्समकालमजत्वादिशब्दवाच्यलक्ष्यकलनापि अपह्नवपदं भजति । ब्रह्ममात्रं सदा विशिष्यत इत्यत्र—

सर्वं प्रशान्तमजमेकमनादिमध्य-
माभास्वरं स्वदनमात्रमचैत्यचिह्नम् ।
सर्वं प्रशान्तमिति शब्दमयी च दृष्टि-
र्बोधार्थमेव हि मुधैव तदोमितीदम् ॥

इति, "सत् किंचिदवशिष्यते" इति च श्रुतेः ॥ ३६ ॥

अनामकत्वे हेतुनिरूपणम्

**सर्वाभिलापविगतः सर्वचिन्तासमुज्झितः ।**
**सुप्रशान्तः सकृज्ज्योतिः समाधिरचलोऽभयः ॥ ३७ ॥**

अनामकमित्यादि यदुक्तं तत्र हेतुमाह—**सर्वेति** । अनेन अभिलप्यत इत्यभिलापो वाक्करणं बाह्यकरणोपलक्षणार्थम् । "यतो वाचो निवर्तन्ते" इति श्रुत्यनुरोधेन सर्वाभिधानप्रपञ्चो यत्र विगतः अपह्नवं गतः सोऽयं **सर्वाभिलापविगतः** । चिन्त्यतेऽनयेति चिन्ता बुद्धिरन्तःकरणं यद्ज्ञानतः समुज्झितं सोऽयं **सर्वचिन्तासमुज्झितः** अन्तःकरणापह्नवसिद्धत्वात् "अप्राणो ह्यमनाः शुभ्रः" इति श्रुतेः । युगपद्यत्र व्यष्टिसमष्टिकरणजालं सुतरां प्रशान्तं सोऽयं **सुप्रशान्तः** "प्रपञ्चोपशमं शान्तं" इति श्रुतेः । निरावृतब्रह्ममात्रतया यः सकृद्दीप्यते सदा प्रकाशते सोऽयं **सकृज्ज्योतिः** "आत्मज्योतिरहं शुक्रः" इति श्रुतेः । विषमा धीरनात्मगोचरा आत्मगोचरा समाधिरपि यस्मिन् स्वमात्रमाधीयते सोऽयं **समाधिः** । निर्विकल्पकचिद्धातुः विक्रियावैरल्यादचलः स्वातिरिक्तापह्नववान् निष्प्रतियोगिकाभयः परमात्मा अवशिष्यत इत्यर्थः ॥ ३७॥

समाधिशब्दार्थविवरणम्

**ग्रहो न तत्र नोत्सर्गः चिन्ता यत्र न विद्यते ।**
**आत्मसंस्थं तदा ज्ञानमजाति समतां गतम् ॥ ३८ ॥**

मनसः संकल्पादितानवं हि समाधिशब्दार्थो न ब्रह्मवाचक इत्याह—**ग्रह** इति । न हि यत्रात्ममात्रे चिन्तासामान्यं विद्यते आत्ममात्रावगतेः सर्वचिन्तापह्नवपूर्वकत्वात् । न हि तत्र स्वातिरिक्तमस्तीति **ग्रहः** ग्रहणं नेति स्वातिरिक्तमित्युत्**सर्गो**ऽपवादो वा विद्यते । स्वमात्रसिद्धे स्वातिरिक्तमस्तित्वेन ग्राह्यं त्याज्यमिति वा । विभ्रमापह्नवपूर्वकत्वात् हानोपादानविरलं ब्रह्मेत्यर्थः ।

अखण्डानन्दपीयूषपूर्णब्रह्ममहार्णवे ।
किं हेयं किमुपादेयं किमन्यत् किं विलक्षणम् ? ॥

इति श्रुतेः । यदैवमनात्मापह्नवसिद्धात्मबोधो जायते तदानीमग्न्युष्णवदात्मन्येव मनोभावं विहाय मनोऽमनस्कभावमेत्य तिष्ठतीत्यात्म**संस्थं** तदवस्थं मनो **ज्ञानं** ज्ञप्तिमात्रत्वात् ।

अतो वक्ष्याम्यकार्पण्यमजाति समतां गतम् ।

इति । प्रतिज्ञातं यदादौ तदिदानीमुपपत्तितः शास्त्रतश्च सम्यगुपपादितम् । तदुपसंहरति—**अजातीति** । स्वातिरिक्तयोरात्मानात्मनोः जातिरस्ति नास्तीति विभ्रमापह्नवसिद्धं यत् तत् **अजाति** । स्वातिरिक्तवैषम्यापह्नवसिद्धमपि **समतां गतम्** । एवं ज्ञानसमकालं विद्वत्पटलं ब्रह्ममात्रावस्थितिमापन्नमित्यर्थः । "य एवं निर्बीजं वेद निर्बीज एव स भवति" इति श्रुतेः ॥ ३८ ॥

अस्पर्शयोगस्वरूपम्

**अस्पर्शयोगो वै नाम दुर्दर्शः सर्वयोगिनाम् ।**
**योगिनो बिभ्यति ह्यस्माद्भये भयदर्शिनः ॥ ३९ ॥**

प्रशान्तवृत्तिकं चित्तं परमानन्ददीपकम् ।
असंप्रज्ञातनामायं समाधिर्योगिनां प्रियः ॥

इति श्रुत्यनुरोधेन स्वतिरिक्तप्रपञ्चजातं आत्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन अस्ति नास्तीति विभ्रमास्पर्शासंप्रज्ञातसमाधिः परमात्मैवाभासपारमार्थिकयोगिनां स्वातिरिक्तास्तित्वधीदोषेण दुर्दर्शवत् स्वातिरिक्तापह्नवधिया स्वमात्रत्वेन च भातीत्याह—**अस्पर्शयोग** इति । जाग्रज्जाग्रदादिचतुष्पञ्चदशकलनास्ति नास्तीति विभ्रमस्पर्शो यत्रापह्नवतां गतः सोऽयं निष्प्रतियोगिकास्पर्शः परमात्मा । योगो नामायं तन्मात्रबोधः । सोऽयम**स्पर्शयोगः** जाग्रज्जाग्रदादिचतुष्पञ्चदशकलनापह्नवसिद्धनिष्प्रतियोगिकतुर्यतुर्यः । सोऽयं तुर्यतुर्यमात्र-

प्रबोधरहितानां विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तचैतन्यविषयकबोधवत् **सर्वयोगिनां दुर्दर्शः** दुष्प्राप इत्यर्थः । भयहेतुबौद्धमीमांसकादिग्रहापह्नवसिद्धनिष्प्रतियोगिकनिर्भयतुर्येऽपि तस्य निष्प्रतियोगिकैकत्वे सकुटुम्बशिष्यवर्गाणां अस्माकं का वा गतिः ? इत्यस्मान्निर्विशेषतुर्यतुर्यात् **भयदर्शिनो योगिनो बिभ्यति ।** इमं योगमात्मनाशकमिति भिया स्वातिरिक्तस्पर्शयोगमेव भजन्तीत्यत्र—

ब्रह्मातिरिक्तं नेत्यर्थे स्वनाशाशंकया ह्यमी ।
वदन्तु विश्वसत्यत्वं व्यावहारिकतादिकम् ॥

इति परमाद्वैतदर्शनोक्तेः । परमार्थदर्शिनः परमाद्वैतिनस्तु निर्भयास्सन्तः निष्प्रतियोगिकाद्वैततुर्यतुर्यं स्वमात्रमिति निश्शंकं ज्ञात्वा तन्मात्रतया अवतिष्ठन्त इत्यत्र—

स्वेतरासहनं ब्रह्म स्वमात्रमिति यैर्यतः ।
परमाद्वैतिनः प्राहुः निश्शंकं ब्रह्ममात्रकम् ॥

इति ॥ ३९ ॥

मोक्षस्य मनोनिग्रहायत्तता

**मनसो निग्रहायत्तमभयं सर्वयोगिनाम् ।**
**दुःखक्षयः प्रबोधश्चाप्यक्षया शान्तिरेव च ॥ ४० ॥**

यद्दृष्ट्या ब्रह्मातिरेकेण मनस्तत्कार्यमस्तीति ब्रह्मणि रज्जुसर्पवत् कल्पितमपि इदानीं मनस्तत्कार्यस्य व्यावहारिकत्वं प्रातिभासिकत्वं वा अङ्गीकार्यमिति निश्चयोऽस्ति । तद्दृष्ट्या मनोनिग्रहायत्तो मोक्षः स्यादित्याह—**मनस** इति । यतो बाह्यान्तर्मनसो व्यापृत्या विश्रान्तं बन्धः सांसारिको भवति अतः कामसंकल्पादिवृत्तिमन्मनसो **निग्रहायत्तं अभयं** ब्रह्मेत्यस्पर्शयोग्यतिरिक्त**सर्वयोगिनां** मनसि निरुद्धे बाह्यान्तःसंकल्पज**दुःखक्षयः** ब्रह्मविषयक**प्रबोधः अक्षया शान्तिः**-र्मुक्तिरेव **चे**ति एतत्सर्वं मनोनिग्राहयत्तं भाति । परमार्थदृशां तु स्वातिरिक्तमनस्तत्कार्यसुखदुःखापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रमेव सदा विजृंभत इत्यर्थः ।

तत्र स्वातिरेकेण मनस्सत्त्वे तद्व्यतिरेकान्वयतो बन्धमोक्षौ स्यातामिति निश्चयो भवेत् मनस्तत्कार्यवैरल्यात् । अतो मनोनिग्रहायत्तोक्तिः मन्दमध्यमविषयेत्यर्थः ॥ ४० ॥

सामान्यानां मनोनिग्रहस्यासाध्यत्वम्

**उत्सेक उदधेर्यद्वत् कुशाग्रेणैकबिन्दुना ।**
**मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥ ४१ ॥**

परमार्थदृष्टीतराणां मनोनिग्रहोक्तिरपि वाचारम्भणमात्रेत्याह—**उत्सेक** इति । यथा कश्चिदुदधिशोषणकामो बालकः तच्छोषणसाधनत्वेन कुशमेकं करे गृहीत्वा तदग्रं सागरेऽभ्यक्त्वा तत्कुशाग्रसंलग्नैकैकबिन्दुना सागरं शोषयितुमिच्छति **कुशाग्रेणैकक**बिन्दुना उदधेरपरिखेदत **उत्सेक** इव तथा मन्दानां **मनसो** निग्रहोऽपरिखेदतो **भवेत्** । तन्निग्रहवार्तापि दुर्लभेत्यर्थः । यद्वा—कश्चित् पक्षिविशेषः स्वसन्तानग्रासमुदधिं मत्वा तुण्डेन कुशाग्रं गृहीत्वा तदग्रेण एकैकबिन्दुं पुनः पुनः वेलायां प्रक्षिपन् चिरव्यवसायी भवति । गरुत्मान् तद्व्यवसायं दृढनिश्चयं च नारदात् श्रुत्वा अस्मदीयोऽयं पक्षी तत्कार्यं साधनीयमिति मनीषया स्वपक्षवातेन सागरं शोषयितुं उद्युक्तं तं वीक्ष्य तत्समाधानार्थं तत्सम्बन्धिपक्षिसन्तानं दत्तवान् समुद्रः । एवं मनसो निग्रहव्यवसायिनो मुमुक्षोः ईश्वरसहायेनापरिखेदतो मनसो निग्रहो भवेत् । तस्मात् मनोनिग्रहोद्योगः कर्तव्यः ॥ ४१ ॥

मनोनिग्रहोपायः

**उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः ।**
**सुप्रसन्नं लये चैव यथा कामो लयस्तथा ॥ ४२ ॥**
**दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत् ।**
**अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ॥ ४३ ॥**

**लये संबोधयेच्चित्तं विक्षिप्तं शमयेत् पुनः ।**
**सकषायं विजानीयात् समप्राप्तं न चालयेत् ॥ ४४ ॥**

मनोनिग्रहोपायः कः? इत्यत आह—उपायेनेति । **कामभोगयोः सदा विक्षिप्तं** क्षुभितं मनः ब्रह्मातिरिक्तं नेतीति ब्रह्मज्ञानोपायेन **निगृह्णीयात्** स्वात्मन्येव निरुन्ध्यादित्यर्थः । स्वातिरिक्तविषयध्यानजकामो यथा स्वानर्थहेतुः तथा जाग्रदाद्यवस्थात्रयतमसि लयोऽपीति ज्ञात्वा कामादिवृत्तितो निग्रहवत् लयवृत्तितोऽपि निग्रहोपायपूर्वकं आयासवर्जितं यथा भवति तथा ब्रह्माकारपरिणत्या मनः **सुप्रसन्नं भवेत्** तथा निरुन्ध्यादित्यर्थः ॥ ४२ ॥ तत्रोपायमाह—दुःखमिति । ब्रह्मातिरिक्तस्वाविद्याविजृंभितमनस्तत्कल्पितप्रपञ्चजातमस्तीति चिन्तनं **दुखमेवेत्यनुस्मृत्य** स्वेप्सित**कामभोगात् मनो निवर्तयेत** । स्वातिरिक्तं नेति नैराश्यभावनयेत्यर्थः । श्रुत्याचार्यप्रसादलब्धविवेकेन स्वाज्ञदशायां यत् स्वातिरेकेण भातं तत्**सर्वं अजं** ब्रह्मेत्य**नुस्मृत्य** तद्विपरीत**जातं नैव तु पश्यति** । तुशब्दतः स्वातिरिक्ताभावो द्योत्यत इत्यर्थः ॥ ४३ ॥ "यथा कामो लयस्तथा" इत्यंशं विवृणोति—**लय** इति । ब्रह्मातिरिक्तं **चित्तं** अन्तःकरणतत्कार्यं नेति विवेकतः तत्त्वाग्रहणलक्षणावस्थात्रयस्वापे विलीनं **संबोधयेत्** । न पुनरवस्थात्रये योजयेदित्यर्थः । यदि कदाचित् कामभोगेषु **विक्षिप्तं** पुनः पुनः **शमयेत्** । एवं लयात् संबोधितं कामभोगतो व्यावर्तितमपि संस्पृष्टसाम्यभावं अन्तरालावस्थं **सकषायं** बीजयुक्तं अन्तःकरणं विद्यात् **विजानीयात्** । शनैस्ततः साम्यपदमापादयेत् । यदा तत्**समं** ब्रह्म **प्राप्तं** भवति तदभिमुखं भवति । तत्कदाचिदपि विषयाभिमुखं **न चालयेत्** । ब्रह्मणि स्थिरीकुर्यादित्यर्थः ॥ ४४ ॥

निगृहीतमनसः सुखास्वादनाभावः

**नास्वादयेत्सुखं तत्र निस्सङ्गः प्रज्ञया भवेत् ।**
**निश्चलं निश्चरच्चित्तमेकीकुर्यात्प्रयत्नतः ॥ ४५ ॥**

समाहितचेतसो भवसुखास्वादनमपि न कार्यमित्याह— **नास्वादयेदिति**। चित्तैकाग्र्यतः समाधौ यत् **सुखं** जायते **प्रज्ञया** तत्र **निस्संगं तन्नास्वादयेत्**। **तत्र** यत् सुखमनुभूयते तत् शशविषाणतुल्याविद्याकार्यं तत्कारणतुल्यं मत्वा तत्सुखलोलुपं चित्तमकुर्वन् ततः ब्रह्मविषयकप्रज्ञयैव **भवेत्**। तत्रत्यसुखास्वादने का हानिः? इत्यत आह—**निश्चलमिति**। ब्रह्मणि **निश्चलस्वभावं चित्तं** यदा तु पुनः सुखास्वादननिमित्तं स्वरूपतो निर्गच्छति, तदा ततस्ततो बहिर्निश्चरत्सत् बहिर्बहिरेव निर्गच्छद्भवति। ततः **प्रयत्नतः** सुखास्वादनेच्छां विहाय सत्तामात्रब्रह्मणि **एकीकुर्यात्** ॥ ४५ ॥

लयविक्षेपविरलस्य चित्तस्यैव ब्रह्मत्वम्

**यदा न लीयते चित्तं न च विक्षिप्यते पुनः।**
**अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा ॥ ४६ ॥**

निश्शेषतो लयविक्षेपविरलं चित्तं ब्रह्मैवेत्याह—**यदेति**। यथोक्तोपायतो निगृहीतं **चित्तं यदा** अवस्थात्रयतमसि **न लीयते** कामभोगनिमित्तं **न च विक्षिप्यते**, तदानीं चित्तं निवातप्रदेशस्थितदीपवत् **अनिंगनम**चलं विषयाकारेण नावभासत इत्य**नाभासं** च सत् **ब्रह्म**स्वरूपेण **निष्पन्नं** भवतीत्यर्थः ॥ ४६ ॥

ब्रह्म सुखस्वरूपम्

**स्वस्थं शान्तं सनिर्वाणमकथ्यं सुखमुत्तमम्।**
**अजमजेन ज्ञेयेन सर्वज्ञं परिचक्षते ॥ ४७ ॥**

ब्रह्मसुखस्वरूपं विशदयति—**स्वस्थमिति**। स्वे महिम्नि स्वयं तिष्ठतीति **स्वस्थं** "स्वे महिम्नि समासत" इति श्रुतेः। सर्वानर्थोपशान्तिसिद्धत्वात् **शान्तम्**। निर्वृतिः मुक्तिः तद्रूपेण सह वर्तनात् **सनिर्वाणम्**। इदमित्थमित्या-ख्यातुमशक्यत्वात् **अकथ्यं** वैषयिकसुखदुःखापह्नवसिद्धं पारमार्थिक**सुखम्**।

नस्य निरतिशयत्वादुत्तमम्। तत् स्वतः परतो वा न जायत **इत्यजम्**। अजेन **ज्ञेयेन** स्वरूपेण स्वातिरिक्तसर्वस्वापह्नवसिद्धं स्वं जानातीति **सर्वज्ञं** ब्रह्म स्वमात्रमिति ब्रह्मविद्वरीयांसः **परिचक्षते** कथयन्तीत्यर्थः ॥ ४७ ॥

ब्रह्मसंपत्तिः

**न कश्चिज्जायते जीवः संभवोऽस्य न विद्यते।**
**एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते ॥ ४८ ॥**

प्रकरणार्थमुपसंहरति—**न कश्चिदिति**। मृल्लोहादिवत् सृष्टिरुपासना मनोनिग्रहोपायश्चापि ब्रह्ममात्रात्युपायत्वेन अभिहिताः। न तु परमार्थतस्ते विद्यन्ते। परमार्थन्तु स्वाज्ञादिदृष्टिप्रसक्तस्वातिरिक्तमस्ति नास्तीति विभ्रमापह्नव-सिद्धं ब्रह्ममात्रमेव सदा विजृंभते। **न** हि तत्र **कश्चिदपि जीवः** प्रपञ्चो वा **जायते**। **अस्य** जीवादेरनुत्पन्नत्वेन तन्निरूपित**संभवो** हेतुः कारणमपि **न विद्यते**। **यत्र** अणुमात्रमपि **किंचित् न जायते तत् एतत्** पूर्वमुपायत्वे-नोक्तानां सत्यानां **उत्तमं सत्यम्**। तदेवासल्लौकिकादिमोहे सत्यसति सर्वदैकरूपेण विजृंभते। निष्प्रतियोगिकमित्यर्थः।

ब्रह्मैवैकमनाद्यन्तं अब्धिवत् प्रविजृंभते।

इति श्रुतेः ॥ ४८ ॥

---

# अलातशान्तिप्रकरणम्

आचार्यवन्दनम्

**ज्ञानेनाकाशकल्पेन धर्मान् यो गगनोपमान्।**
**ज्ञेयाभिन्नेन संबुद्धस्तं वन्दे द्विपदां वरम् ॥ १ ॥**

**अस्पर्शयोगो वै नाम सर्वसत्त्वसुखो हितः ।**
**अविवादोऽविरुद्धश्च दर्शितस्तं नमाम्यहम् ॥ २ ॥**

आगमप्रकरणप्रतिपादितनिष्प्रतियोगिकब्रह्ममात्रसिद्धान्ताद्वैतस्य स्वाज्ञादिदृष्टिप्रसक्तस्वातिरिक्तं अस्ति नास्तीति विभ्रममार्जनाय वेदान्तशास्त्रानुगृहीतबहुप्रकारोपपत्तिभिः स्वातिरिक्तप्रपञ्चस्य अपह्नवप्रदर्शनाय वैतथ्यप्रकरणमाम्नातम् । तथा श्रुत्यनुगृहीतयुक्तिभिः स्वातिरिक्तापह्नवसिद्धस्य स्वस्य निष्प्रतियोगिकाद्वैतत्वप्रदर्शनायाद्वैतप्रकरणमभिहितं,

एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते ।

इत्युपसंहृतं च । इत्थंभूताद्वैतं पक्षप्रतिपक्षकलनापह्नवसिद्धमपि तत्रासल्लौकिकादीनां रागादिकलुषितत्वेन स्वस्वग्रहसिद्धान्तवैषम्यतः मिथश्चर्या कुर्वन्तः सन्तोऽस्मत्सिद्धान्तरूपामजातिमेव ख्यापयन्ति । तत्र तत्र हेयांशनिरसनमुखतः तदपह्नवसिद्धं निष्प्रतियोगिकाद्वैतमिति प्रकटयितुमलातशान्तिप्रकरणमारभ्यते । तत्र ब्रह्मविद्यासंप्रदायप्रवर्तकस्वाचार्यवन्दनार्थोऽयमाद्यः श्लोक इत्याह— **ज्ञानेनेति** । यो ह्यस्मद्देशिकः श्रीशुकः घटाद्यवच्छिन्नगगनमुपमा येषां तान् **गगनोपमान् धर्मान्** जीवान् सर्वान् **आकाशकल्पेन** ज्ञानेनाग्न्युष्णवत् सवितृप्रकाशवच्च **ज्ञेयात्मस्वरूपाभिन्नेन ज्ञानेन** परमात्मना **धर्मान् संबुद्धः** यथा घटाद्युपाधिसत्त्वासत्त्वाभ्यां तद्गताकाशं महाकाशमात्रं तथा व्यष्टिसमष्ट्यात्मकशरीरत्रयसत्त्वासत्त्वाभ्यां तदवच्छिन्नवत् भातजीवचैतन्यं शुद्धचैतन्यमात्रमिति संबुद्धवान् **तं द्विपदां वरं** नारायणावतारं अस्मद्देशिकं **वन्दे** मुहुर्मुहुरभिवादये । स्वदेशिकनमस्कारमुखेनासल्लौकिकाद्यष्टदृष्टिग्रहज्ञानज्ञेयज्ञात्रादित्रिपुटीकरणापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति प्रतिज्ञातं भवतीत्यर्थः ॥ १ ॥ अधुना ब्रह्ममात्रज्ञानयोगस्तुत्यै तं नमस्करोति— **अस्पर्शयोग** इति । केनचित् कदाचिदपि स्वातिरिक्तसंस्पर्शो यत्रापह्नवतां गतः सोऽयं **अस्पर्शयोगो वै नाम** ब्रह्मस्वभावः । वैनामेतिशब्दाभ्यां सर्ववेदान्तार्थप्रसिद्धपरमात्मैवास्पर्शयोग इति द्योत्यते । आदिमध्यावसानेषु स्वातिरिक्तमस्ति नास्तीति

त्रिभ्रमो दु:खरूप:। अयं अस्पर्शयोगो न तथा। किन्तु स्वाज्ञादिदृष्टि-प्रसक्तसर्वसत्त्वानां जीवानामन्तरात्मत्वेन परमहितसुखरूपत्वात् विषयजन्याहित-सुखदु:खापवादाधिष्ठानत्वाच्च **सर्वसत्त्वसुखो हितश्च** भवति। असल्लौकिकाद्यष्ट-दृष्टिनिष्टपरस्परविरुद्धवादो यत्रापह्नवतां गत: सोयम**विवाद:** स्वमात्रदृष्टेरव्यभि-चारित्वेन निर्विवादत्वात्। स्वातिरिक्तासल्लौकिकादेरपह्नवं गतत्वात् **अविरुद्धश्च** निष्प्रतियोगिकपरमात्मा येन प्रबोधेन **प्रदर्शित:** तं तत्त्वप्रबोधं **अहं नमामि** प्रणौमीत्यर्थ: ॥ २ ॥

भूताभूतजातिवाद:

**भूतस्य जातिमिच्छन्ति वादिन: केचिदेव हि।**
**अभूतस्यापरे धीरा विवदन्त: परस्परम् ॥ ३ ॥**

स्वसिद्धान्तसाधननिमित्तं असल्लौकिकादय: परस्परं कथं विरुध्यन्ते? इत्युच्यते—भूतस्येति। सांख्यादिवादिन: **केचिदेव भूतस्य** सिद्धवस्तुनो **जाति**मुत्पत्ति**मिच्छन्ति हि**। न सर्व इत्यर्थ:। **अपरे धीरा:** पण्डितंमन्यमाना: वैशेषिका नैय्यायिकाश्चा**भूतस्या**विद्यमानवस्तुनो जातिमिच्छन्ति। एवं **परस्परं विवदन्तो**ऽन्योन्यं जेतुमिच्छन्तीत्यर्थ: ॥ ३ ॥

अजातिख्यापनम्

**भूतं न जायते किञ्चिदभूतं नैव जायते।**
**विवदन्तोऽद्वया ह्येवमजातिं ख्यापयन्ति ते ॥ ४ ॥**

तै: किं ख्यापितम्? इत्यत आह—भूतमिति। असत्कार्यवादी सांख्यपक्षं प्रतिषेधति—**भूतं** विद्यमानं वस्तु कदाचिदपि **न जायते**, तस्य सदैव विद्यमान-त्वात् आत्मवत्—इति। सांख्योऽप्यसद्वादिपक्षं असज्जातिपक्षं च प्रतिषेधति—**अभूतं** वस्तु **नैव जायते**, कालत्रयेऽप्यविद्यमानत्वात् शशविषाणवत्—इति।

एवं अद्वया द्वैतिनः परस्परं विवदन्तस्सन्तोऽस्मद्ग्रहाजातिसिद्धान्तमेव ख्यापयन्ति ते सांख्यादयः ॥ ४ ॥

अजात्यनुमोदनम्

**ख्याप्यमानामजातिं तैरनुमोदामहे वयम् ।**
**विवदामो न तैः सार्धमविवादं निबोधत ॥ ५ ॥**

तैस्साधिताजातिमङ्गीकृत्य शिष्येभ्य उपदिशति—**ख्याप्यमानामिति** । तैरेवं **ख्याप्यमानामजातिमेव** त्वया सम्यगुक्तं त्वया सम्यगुक्तमिति **अनुमोदामहे वयम्** । यथा ते पक्षप्रतिपक्षाभिनिवेशेन अन्योन्यं विवदन्ति न हि तथा तैस्सार्धं विवदामः । अतस्तमजातिबोधमविवादं अस्मदङ्गीकृतं हे शिष्याः! यूयमपि निबोधत ॥ ५ ॥

मर्त्यामृतनिरूपणम्

**अजातस्यैव धर्मस्य जातिमिच्छन्ति वादिनः ।**
**अजातो ह्यमृतो धर्मो मर्त्यतां कथमेष्यति ? ॥ ६ ॥**
**न भवत्यमृतं मर्त्यं न मर्त्यममृतं तथा ।**
**प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति ॥ ७ ॥**
**स्वभावेनामृतो यस्य धर्मो गच्छति मर्त्यताम् ।**
**कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः ? ॥ ८ ॥**

पक्षप्रतिपक्षभूतवादिकोटिपरस्परविरोधं ख्यापयताचार्येणानुत्पत्त्यनुमोदनप्रदर्शनार्थमद्वैतप्रकरणपठितश्लोकानामिह पुनरुपन्यासः—अजातस्येत्यादिना ॥ ६–८ ॥

प्रकृतिलक्षणम्

**सांसिद्धिकी स्वाभाविकी सहजा अकृता च या ।**
**प्रकृतिः सेति विज्ञेया स्वभावं न जहाति या ॥ ९ ॥**

या कालत्रयेऽपि स्वभावं न जहाति सा प्रकृतिरित्याह—**सांसिद्धिकीति** । योगिनां सिद्धानां सम्यक् सिद्धिः संसिद्धिः । तद्भवा **सांसिद्धिकी** अणिमाद्यष्टैश्वर्यरूपा प्रकृतिः । सा कालत्रयेऽपि योगिनां न विपर्येति । अग्न्यादीनां स्वभावसिद्धोष्णप्रकाशादिलक्षणा **स्वाभाविकी** प्रकृतिः । सा न हि कालान्तरे देशान्तरे वा व्यभिचरति । पक्ष्यादीनां यथा जन्मना सहाकाशगमनादिलक्षणा **या सा सहजा** प्रकृतिः, तथा अपां निम्नप्रदेशगमनलक्षणा केनचित् कदाचिदप्यकृतेत्यकृता प्रकृतिः । तथान्यापि या काचित् **स्वभावं न जहाति सा** सर्वा **प्रकृतिर्विज्ञेया** । मिथ्यावस्तुनिष्ठप्रकृतिरपि कालत्रयेऽपि न हि स्वप्रकृतिमुत्सृज्य विकृतिं भजति । किमुत स्वातिरिक्तयोः ? स्वभावसिद्धा जातिप्रकृतिः नान्यथा भवेदित्यर्थः ॥ ९ ॥

देहादावात्मबुद्धिनिरसनम्

**जरामरणनिर्मुक्ताः सर्वे धर्माः स्वभावतः ।**
**जरामरणमिच्छन्तश्च्यवन्ते तन्मनीषया ॥ १० ॥**

यस्याः प्रकृतेः वादिभिरन्यथाभावः परिकल्प्यते तत्कल्पनायां को दोषः ? इत्यत आह—**जरेति** । **सर्वे धर्मा** आत्मानः **स्वभाव**प्रकृतित एव जरामरणादिसर्वविक्रियाविनिर्मुक्तास्सन्तो रज्ज्वाद्यज्ञानजसर्पादिवदात्मनि तद्देहात्ममनीषया तद्गतजरामरणादिविक्रियामिच्छन्त इवेच्छन्तः पारमार्थिकाजस्वभावतः **च्यवन्ते** । तद्भावभावितत्वदोषेण स्वस्वरूपतः च्युता भवन्ति । इत एवमतो देहादावात्मबुद्धिः न कार्येत्यर्थः ॥ १० ॥

सज्जातिवादिपक्षे ब्रह्मणो नाजत्वम्

**कारणं यस्य वै कार्यं कारणं तस्य जायते ।**
**जायमानं कथमजं ? भिन्नं नित्यं कथं च तत् ? ॥ ११ ॥**
**कारणाद्यद्यनन्यत्वमतः कार्यमजं तव ।**
**जायमानाद्धि वै कार्यात्कारणं ते कथं ध्रुवम् ? ॥ १२ ॥**

कारणमेव कार्याकारेण जायत इति सज्जातिवादिभिः उक्तं, तत्पक्षे अजं ब्रह्म न सिद्ध्यतीत्याह—**कारणमिति** । **यस्य** वादिनः **कारणं वै** **कारण**मेव कार्याकारेण परिणमते **तस्य** सांख्यस्य प्रधानादिकारणं अजमेव सत् महदादिकार्यरूपेण **जायते** । एवं **जायमानं कथमजं** भवति ? जायते अजं चेति तैः विप्रतिषिद्धमुच्यते । कार्यरूपेण **भिन्नं** स्फुटितं प्रधानं **तत्** **कथं** एकदेशेन धर्मि सन्नित्यमजं भवितुमर्हति ? न ह्येकदेशभिन्नघटो नित्यो दृष्टः । यदेवं विशीर्णं तदेवैकदेशेनाजं नित्यं चेति । न हि तत् विप्रतिषिद्धमित्यर्थः ॥ ११ ॥ उक्तार्थं स्फुटयति—**कारणादिति** । **कारणात्** कार्यस्या**नन्यत्वं यदि** त्वयोच्यते तदा **कार्यमप्यज**मिति इदं चान्यद्विप्रतिषिद्धम् । कार्यकारणयोरनन्यत्वे **जायमानादेव हि कार्यात् कारण**मनन्यं नित्यं **ते** **कथं** भवेत् ? "न ह्यश्वैकदेशः स्वस्थाने परः प्रवासाय कल्पते" इति वैशेषिकः ॥ १२ ॥

तत्र दृष्टान्तदुर्लभत्वम्

**अजाद्वै जायते यस्य दृष्टान्तस्तस्य नास्ति वै ।**
**जाताच्च जायमानस्य न व्यवस्था प्रसज्यते ॥ १३ ॥**

त्वन्मतसिद्धदृष्टान्तोऽपि दुर्लभ इत्याह—**अजादिति** । **यस्य** वादिनो नित्यादजात् **कार्यं जायत** इत्यत्र **तस्य न** हि **दृष्टान्तोऽस्ति** । यत् कदापि

स्वत: परतो वा न जायते, यस्मात् किंचिदपि न जायते च तद्ध्रुवजम् । तत्र जातिदृष्टान्तवैकल्यात् अजं किंचिदपि न जायत इत्यर्थात् सिद्धं भवति । यदि पुनः जातात् कार्यरूपघटादेः जायमानघटादेरभ्युपगमे तदप्यन्यस्मात्, तदप्यन्यस्मादित्यनवस्था प्रसज्यत इत्यर्थः ॥ १३ ॥

कार्यकारणकलनाक्षेपः

**हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ।**
**हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते ? ॥ १४ ॥**

"पश्यतेहापि सन्मात्रमसदन्यत्", "ब्रह्मव्यतिरिक्तं न किंचिदस्ति" इति,

कार्यं चेत् कारणं किंचित् कार्याभावे न कारणम् ।

इति च स्वातिरिक्तकार्यकारणकलनासदपह्नवसिद्धनिष्प्रतियोगिकसन्मात्रानुवादि-श्रुत्यनुरोधेन कार्यकारणकलनापह्नवसिद्धं अजं स्वमात्रं अवशिष्यत इति वक्तुं कार्यकारणकलनामाक्षिपति—हेतोरित्यादिना । येषां पुनः वादिनां **हेतोः** धर्माधर्मादेः **आदिः** कारणं देहादिसंघातः **फलम्** । तथा **फलस्य** देहादिसंघातस्यादिः कारणं धर्मादिः । एवं हेतुफलयोरितरेतरकार्यकारणतावादिभिः एवं **हेतोः फलस्य चानादित्वं तैः** विप्रतिषिद्धमुपवर्ण्यते । न हि निष्प्रति-योगिकसन्मात्रस्य हेतुफलात्मकता संभवतीत्यर्थः ॥ १४ ॥

कार्यात्कारणोत्पत्तिविडम्बना

**हेतोरादिः फलं येषामादिर्हेतुः फलस्य च ।**
**तथा जन्म भवेत्तेषां पुत्राज्जन्म पितुर्यथा ॥ १५ ॥**

कार्यात् कारणोत्पत्तिं विडंबयन्नाह—हेतोरिति । हेतुजन्यात् फलादेव हेतोः जातिमभ्युपगच्छतां तेषां **यथा पुत्राज्जन्म पितुः** तथेदृशो विरोध एव भवति ॥ १५ ॥

हेतुफलयोः कार्यकारणभावे क्रमापेक्षा

**संभवे हेतुफलयोरेषितव्यः क्रमस्त्वया ।**
**युगपत्संभवे यस्मादसंबन्धो विषाणवत् ॥ १६ ॥**

यदि हेतुफलयोः कार्यकारणभावं ब्रवीषि तदा तत्क्रमस्त्वया वक्तव्य इत्याह—**संभव** इति । हेतुफलयोः **संभवे** उत्पत्तौ पूर्वं हेतुः पश्चात् फलं चेति तत्क्रमोऽन्वयः **त्वया एषितव्यः** । **युगपत् संभवत** इत्यत्र सव्यतदितरगोविषाणयोरिव हेतुफलयोः कार्यकारणत्वेन युगपत् संभवतो **असंबन्धो** युक्तो न भवति ॥ १६ ॥

हेतुफलयोः कस्य पूर्वनिष्पन्नत्वम्

**फलादुत्पद्यमानः सन्न ते हेतुः प्रसिध्यति ।**
**अप्रसिद्धः कथं हेतुः फलमुत्पादयिष्यति? ॥ १७ ॥**
**यदि हेतोः फलात् सिद्धिः फलसिद्धिश्च हेतुतः ।**
**कतरत् पूर्वनिष्पन्नं? यस्य सिद्धिरपेक्षया ॥ १८ ॥**

कथमसंबन्धः? इत्यत आह—फलादिति । यतः स्वतो लब्धात्मकशशविषाणकल्प**फलादुत्पद्यमानस्सन् न ते हेतुः प्रसिध्यति** जन्म न लभते, तस्माच्छशविषाणवदलब्धात्मको **हेतुस्तव कथं फलं उत्पादयिष्यति?** न हि शशविषाणतुल्यहेतुफलयोः कार्यकारणसंबन्धः सेद्धुं पारयति ॥ १७ ॥ किंच हेतुफलयोः कार्यकारणभावे असंबन्धत्वदोषेणापाकृतेऽपि यदि त्वया हेतुफलयोः परस्परमभ्युपगम्यते तदा हेतुफलयोः पूर्वसिद्ध्यपेक्षया पश्चाद्भाविनः सिद्धिः स्यादिति **कतरत् पूर्वनिष्पन्नं?** तद्वदेत्यर्थः ॥ १८ ॥

अजातिप्रकाशनम्

**अशक्तिरपरिज्ञानं क्रमकोपोऽथवा पुनः ।**
**एवं हि सर्वथा बुद्धैरजातिः परिदीपिता ॥ १९ ॥**

यद्येवं त्वया वक्तुं न शक्यं तदा अस्मदजातिरेव सिद्ध्यतीत्याह—**अशक्तिरि**ति। यद्येवं त्वमिदमित्थमिति पक्षं न शक्यमिति मन्यसे तदा तवेयमशक्तिर्यदि वा**परिज्ञानं** तव मूढता वा स्यात्। **अथवा** हेतुफलयोः कर्मद्वयोरितरेतरानन्तर्यलक्षणक्रमस्य **कोपो** विपर्यासो विनाशो वा स्यात्। **एवं** हेतुफलयोः इतरेतरकार्यकारणानुपपत्त्या सर्वस्य **अजाति**रनुत्पत्तिः अन्योन्यपक्षविरोधवादिभिः **बुद्धैः** पण्डितैः **परिदीपिता** प्रकाशिता भवेदित्यर्थः॥ १९॥

साध्यसमस्य हेतोरसाधुत्वम्

**बीजाङ्कुराख्यो दृष्टान्तः सदा साध्यसमो हि सः।**
**न हि साध्यसमो हेतुः सिद्धौ साध्यस्य युज्यते॥ २०॥**

हेतुफलयोः कार्यकारणभावो मयोक्त इति शब्दमात्रमाश्रित्य "असंबन्धो विषाणवत्", "पुत्राज्जन्म पितुः यथा" इति च किं मां चालयितुं इच्छसि? न ह्यस्माभिः असिद्धाद्धेतोः फलसिद्धिः असिद्धाद्वा फलात् हेतुसिद्धिरभिहिता। किं तर्हि बीजांकुरवत् कार्यकारणभावोऽभ्युपगम्यते? तत्र को विवादः? इत्यत्र त्वदुक्तदृष्टान्तस्य साध्यतुल्यत्वेनासाधुत्वं सिद्धमित्याह—**बीजे**ति। अंकुरो बीजादिमान् बीजं अंकुरादिमदिति **बीजांकुराख्यो दृष्टान्तः** हेतुफलयोः कार्यकारणाभ्युपगमे यस्त्वयोक्तस्स दृष्टान्तस्तु **साध्यसम**स्तुल्य इत्यर्थः। बीजांकुरसन्ततेरनादित्वोक्तौ बीजांकुरव्यतिरेकेण न हि बीजांकुरसन्ततिरस्ति एकत्वानुपपत्तेः। हेतुफलसन्ततेरपि तथात्वात्। तस्मात् सुष्ठूक्तं,

हेतोः फलस्य चानादिः कथं तैरुपवर्ण्यते?

इति। **न हि** प्रमाणकुशलैः **साध्यसमो हेतुः** साध्यसिद्धिनिमित्ततया **युज्यते**। त्वदुक्तसिद्धान्तोऽपि न हि स्वसिद्धान्तहेतुतामर्हतीत्यर्थः॥ २०॥

अजातिसाधनप्रकारः

**पूर्वापरापरिज्ञानमजातेः परिदीपकम् ।**
**जायमानो हि वै धर्मः कथं पूर्वं न गृह्यते ? ॥ २१ ॥**

एवं हेतुफलयोः पूर्वापरापरिज्ञानमस्मदीयाजातिसिद्धिसाधकमित्याह—पूर्वेति । **परिदीपकं** अवबोधकमित्यर्थः । **कथं जायमानो हि वै धर्मः** स्वपूर्वकारणं **न गृह्यते** ? कार्यनिष्पत्तेः कारणनिष्पत्तिपूर्वकत्वात् । तदपरिज्ञानं अजातिपरिदीपकमित्यर्थः ॥ २१ ॥

कस्याप्यजातत्वेनाजातिसिद्धिः

**स्वतो वा परतो वापि न किंचिद्वस्तु जायते ।**
**सदसत्सदसद्वापि न किंचिद्वस्तु जायते ॥ २२ ॥**

इतश्च किंचिदपि न जायत इत्याह—**स्वत** इति । यत् जायमानं वस्तु तत् केनचिदपि प्रकारेण **स्वतः परतः** उभयतो **वा** सद्रूपेण असद्रूपेण सदसद्रूपेण वा **न** हि **किंचिदपि जायते** । न हि घटात् घटो जायते । घटात् पटो वा । घटपटाभ्यां घटः पटो वा जायते । मृत्पित्रादिसकाशात् घटपुत्रादयो जायन्त इति चेन्न; अविचारभातत्वात् मूढानां शब्दप्रत्ययविवेक-वैरल्यात् । तेषां यदेवं सत्यत्वेन भातं तदेव विवेकिभिः—किं तत् सत्यं ? मृषैव—इति विचारतः शब्दप्रत्ययविषयत्वेन भातघटपुत्रादिलक्षणं वस्तु शब्दमात्रपर्यवसानं भवेत् "वाचारम्भणं विकारो नामधेयम्" इति श्रुतेः । सच्चेत् प्रकृतं वस्तु न जायते मृत्पित्रादिवत् सत्यत्वात् । तदा यदि वस्त्वसत् तदा तदपि न जायते शशविषाणवदसत्त्वात् । तथा सदसदपि न जायते तयोस्तेजस्तिमिरवत् एकत्रावस्थितेरसंभवेऽपि तत्रैकस्यालब्धात्मकत्वात् । अतो न किंचिदपि जायत इति सिद्धम् । येषां पुनः क्रियाकारकफलैकत्वेन जातिरेव जायत इत्यभिमतं तेषामवगतेः क्षणिकत्वेन इदमित्थमित्यवधारणान्त-

गनवस्थानात् स्वाननुभूतस्य स्मृतेरपि असंभवाच्च। ततो वस्तुसामान्यस्याजातत्वेनाजातिरेव सिद्धेत्यर्थः ॥ २२ ॥

हेतुफलानादित्वे जातिप्रकाशनम्

**हेतुर्न जायतेऽनादेः फलं चापि स्वभावतः ।**
**आदिर्न विद्यते यस्य तस्य ह्यादिर्न विद्यते ॥ २३ ॥**

हेतुफलानादित्वमभ्युपगच्छता जातिरेव प्रकाशितेत्याह—**हेतुरिति**। **अनादेः** फलात् **हेतुर्न जायते**। अजाद्धेतोः **फलमपि स्वभावतो** निर्निमित्तात् न जायते। तस्माद्धेतुफलयोरनादित्वमभ्युपगच्छता त्वया जातिरेवाभ्युपगम्यते। लोके तावत् **यस्यादिः** कारणं **न विद्यते तस्य ह्यादिः** जातिरपि **न विद्यते**। कारणेन शशशृंगवत् असत्पदं यातेन हि कार्यं सत्पदमर्हति। तस्मात् कार्यकारणभावः कस्याप्यसंगत इत्यर्थः ॥ २३ ॥

परतन्त्रास्तित्वप्रकारः

**प्रज्ञप्तेः सन्निमित्तत्वमन्यथा द्वयनाशतः ।**
**संक्लेशस्योपलब्धेश्च परतन्त्रास्तिता मता ॥ २४ ॥**

पूर्वोक्तार्थदृढिम्ने पुनरप्याक्षिपति—**प्रज्ञप्तेरिति**। प्रकर्षेण बाह्यं जानातीति ज्ञानं **प्रज्ञप्तिः** शब्दादिप्रमितिः। तस्याः **प्रज्ञप्तेः** सबाह्यविषयत्वेन **सन्निमित्तत्वम्**। न हि निर्विषया प्रज्ञप्तिरस्ति सन्निमित्तत्वात्। **अन्यथा** निर्निमित्तत्वे शब्दस्पर्शनीलपीतरक्तशुक्लादिविचित्रप्रत्ययजुष्टद्वयस्य **नाशतो** ह्यभावः प्रसज्यते। न हि विचित्रप्रत्ययमभावमर्हति विचित्रप्रत्यययुगद्वयस्य प्रत्यक्षतो दृष्टत्वात्। न हि प्रज्ञप्तेर्बाह्यालम्बनवैचित्र्यमन्तरेण नीलरक्ताद्यसन्निहितस्फटिकवत् एतद्वैचित्र्यं संभवति। परेषां तन्त्रं परतन्त्रं शास्त्रान्तरम्। तदाश्रयबाह्यार्थस्य ज्ञानव्यतिरिक्तत्वेनास्तितासंक्लेशः। संक्लेशनं दुःखमित्यर्थः। अग्निदाह्यादिनिमित्तं

दुःखमुपलभ्यते हि। यदि दाहादिनिमित्तं दुःखं विज्ञानव्यतिरिक्तं न स्यात् ततो दाहादिदुःखं नोपलभ्येत। यतस्तदुपलभ्यते अत एवास्ति बाह्यार्थः। न हि विज्ञानमात्रे संक्लेशो युक्तः अदर्शनादित्यर्थः॥ २४॥

सन्निमित्तोक्तिनिराकरणम्

**विज्ञप्तेः सन्निमित्तत्वमिष्यते युक्तिदर्शनात्।**
**निमित्तस्यानिमित्तत्वमिष्यते भूतदर्शनात्॥ २५॥**

परमार्थतः त्वदुक्तं न घटनां प्राञ्चतीत्याह—**विज्ञप्ते**रिति। द्वयनाशसंक्लेशादि**युक्तिदर्शनात्** त्वदुक्तप्रज्ञप्तेस्स**न्निमित्तत्वमिष्यते**। त्वया यदुक्तं तत्रैव त्वं स्थिरीभव। "ब्रह्ममात्रमसन्न हि" इति स्वातिरिक्तसर्वासदपह्नवसिद्धनिष्प्रतियोगिक**भूत**ब्रह्ममात्र**दर्शनात्**, त्वदुक्तप्रज्ञप्त्यादिलम्भनाभिमत**निमित्तस्य** घटादेर**निमित्तत्वम**नालम्बनत्वमवैचित्र्यहेतुत्वमस्माभि**रिष्यते**। स्वातिरिक्तसामान्यसन्निमित्तप्रज्ञप्त्यादेः शशविषाणवदलब्धात्मकत्वात् त्वदुक्तसन्निमित्तोक्तिः निराकृतेत्यर्थः॥ २५॥

चित्तातिरिक्तस्याभावः

**चित्तं न संस्पृशत्यर्थं नार्थाभासं तथैव च।**
**अभूतो हि यतश्चार्थो नार्थाभासस्ततः पृथक्॥ २६॥**

स्वाज्ञविकल्पितचित्तातिरिक्तं न किंचिदस्तीत्याह—**चित्तमिति**। **चित्तं** तावत् बाह्यार्थ**मर्थाभासं च न** हि **स्पृशति** सर्वस्य चित्तत्वात् स्वप्नचित्तवत्। **यतो** जागरितेऽपि बाह्यशब्दाद्य**र्थः** स्वप्नार्थवद**भूतः** असिद्धो **हि**, **ततः** चित्तात् **नाप्यर्थाभासः पृथ**गस्ति। यथा स्वप्ने चित्तमेव चराचरात्मकविश्ववत् अवभासते तथा जागरेऽपीत्यर्थः॥ २६॥

चित्तस्वभावकथनम्

**निमित्तं न सदा चित्तं संस्पृशत्यध्वसु त्रिषु ।**
**अनिमित्तो विपर्यासः कथं तस्य भविष्यति ? ॥ २७ ॥**

असति बाह्यार्थे तदाकारपरिणामः चित्तस्य विपर्यासश्चेत् क्वचिदविपर्यासोऽपि वक्तव्य इत्यत आह—**निमित्तमिति** । भूतभविष्यद्वर्तमानाध्वसु त्रिष्वपि **सदा चित्तं निमित्तं** विषयजातं **न** हि **संस्पृशति** । यदि कदाचित् संस्पृशेत् तदा विपर्यासः परमार्थ एव स्यात् । अतः तदपेक्षया बाह्यान्तःप्रपञ्चे असति तद्वदवभासता हि विपर्यासः स्यात् । तस्मात् **अनिमित्तो** निर्विषयो **विपर्यासः** चित्तस्य **कथं भविष्यति** ? न कथंचिदित्यर्थः । निमित्ताभावेऽपि तद्वदवभासनं चित्तस्वभाव इति भावः ॥ २७ ॥

विज्ञानवादिपक्षप्रतिषेधनम्

**तस्मान्न जायते चित्तं चित्तदृश्यं न जायते ।**
**तस्य पश्यन्ति ये जातिं ते वै पश्यन्ति खे पदम् ॥ २८ ॥**

विज्ञानवादिवचनं "प्रज्ञप्तेस्सन्निमित्तत्वं" इत्याद्येतदन्तं बाह्यार्थास्तिता-ादिमतनिराकरणमाचार्येणाप्यनुमोदितम् । तदेव हेतुं कृत्वा तत्पक्षमपि तिषेधयति—**तस्मादित्यादिना** । यस्मादसत्येव बाह्येऽर्थे चित्तस्य तद्रूपाव-ासता विज्ञानवादिना अभ्युपगता अस्माभिरपि सा अनुमोदिता हि, **स्मात्** भूतवस्तुदर्शनात् **न** हि कदाचिदपि **जायते चित्तम्** । यत एवं **ित्तदृश्यं न जायते** । **तस्य** चित्तस्य **ये** क्षणिकविज्ञानवादिनो **जातिं** **श्यन्ति ते वै खे** पक्षिणां **पदं पश्यन्ति** । स्वेतरेभ्यो द्वैतिभ्यः त एव ाहसिका भवन्तीत्यर्थः । ये तु शून्यवादिनः स्वस्यापि शून्यतां मेनिरे मुष्टिना ताडयितुं इच्छन्ति केचन । ततोऽप्येते साहसिकतमा इत्यर्थः ॥ २८ ॥

प्रकृतेरन्यथाभावाभावकथनम्

**अजातं जायते यस्माद्जातिः प्रकृतिस्ततः ।**

**प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति ॥ २९ ॥**

पूर्वोक्तहेतुभिः निष्प्रतियोगिकाजैकं ब्रह्मेत्यवधृतम् । "अतो वक्ष्याम्यकार्पण्यं" इति यत् प्रतिज्ञातं तत्फलं उपसंहरति—**अजातमिति** । **यस्मात्** स्वातिरिक्ताविद्यापदतत्कार्यजातं भूतदर्शनात **अजातं** ब्रह्मैव **जायते** तदवगतेः जातिमद्विभ्रमापह्नवपूर्वकत्वात् । तथाविधनिष्प्रतियोगिकब्रह्ममात्रस्याजातिर्हि **प्रकृतिः** । **ततः** तस्मात् अजातिप्रकृतेः **अन्यथाभावो** जन्म **न** हि **कथंचित् भविष्यति** ॥ २९ ॥

बन्धमोक्षयोः परमार्थत्वाभावः

**अनादेरन्तवत्त्वं च संसारस्य न सेत्स्यति ।**

**अनन्तता चादिमतो मोक्षस्य न भविष्यति ॥ ३० ॥**

बन्धमोक्षौ परमार्थाविति ये मन्यन्ते तत्पक्षं शिथिलयति—**अनादेरिति** । यदि परमार्थतोऽनादिस्संसारः तस्या**नादेरन्तवत्त्वं** कदापि **न सेत्स्यति** श्रुतितो युक्तितोऽपीत्यर्थः । अनादिस्सन्नन्तवान्न हि कश्चित्पदार्थो दृष्टः । बीजांकुरसन्ततिविच्छेदो दृष्ट इति चेन्न ; बीजांकुरादेरेकत्वाभावेन अपोदितत्वात । निर्विशेषज्ञानसमकालं मोक्षो जायत इति **आदिमतो मोक्षस्यानन्तता**पि **न** हि भवति **भविष्यती**वेत्यर्थः । आदावन्ते च घटादिष्वदर्शनात् । घटादिविनाशवदवस्तुत्वात् अदोष इति चेन्न ; मोक्षस्य परमार्थसन्मात्रत्वात् । तादृशस्य आदिमत्त्वे अन्तवत्त्वं किं न सेद्धुं पारयतीत्यर्थः ॥ ३० ॥

संसारमोक्षयोरभावः

**आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ।**

**वितथैः सदृशाः सन्तोऽवितथा इव लक्षिताः ॥ ३१ ॥**

सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते ।
तस्मादाद्यन्तवत्त्वेन मिथ्यैव खलु ते स्मृताः ॥ ३२ ॥

अनाद्यादिमद्बन्धमोक्षौ न विद्येते इत्यत्र वैतथ्यप्रकरणोक्तश्लोकाविहोदाहरति—आदाविति ॥ ३१–३२ ॥

जाग्रज्जाग्रदादिकलनाया अवस्तुत्वम्

सर्वे धर्मा मृषा स्वप्ने कायस्यान्तर्निदर्शनात् ।
संवृतेऽस्मिन् प्रदेशे वै भूतानां दर्शनं कुतः? ॥ ३३ ॥
न युक्तं दर्शनं गत्वा कालस्यानियमाद्गतौ ।
प्रतिबुद्धश्च वै सर्वस्तस्मिन् देशे न विद्यते ॥ ३४ ॥

स्वप्नदृष्टान्तेन जाग्रज्जाग्रदादिचतुष्पञ्चदशकलनायाः शशविषाणवदस्तुत्वं स्फोरयितुं वैतथ्यप्रकरणार्थानुसारिण एते श्लोका उच्यन्ते—**सर्व** इत्यादिना ॥ ३३–३४ ॥

ब्रह्मणः स्वमात्रत्वेनावशेषः

मित्राद्यैः सह संमन्त्र्य संबुद्धो न प्रपद्यते ।
गृहीतं चापि यत्किंचित्प्रतिबुद्धो न पश्यति ॥ ३५ ॥
स्वप्ने चावस्तुकः कायः पृथगन्यस्य दर्शनात् ।
यथा कायस्तथा सर्वं चित्तदृश्यमवस्तुकम् ॥ ३६ ॥

भूतदर्शनतो बाह्यान्तस्तत्प्रभवनिमित्तजातापह्नवसिद्धं निष्प्रतियोगिकानिमित्तं ब्रह्म स्वमात्रमवशिष्यत इति वक्ष्यमाणश्लोकसमुदायार्थः । स्वप्नदृक् स्वप्ने न देशान्तरं गच्छति । कुतः? जागरितवत् गत्वा गमनादिदेशकालयोः

अनियतत्वात् । स्वप्ने मित्रादिभिस्सहालोचितं **यत्किंचित् ग्रहीतं चापि न प्रतिबुध्यते न पश्यति** ॥ ३५ ॥ स्वप्नदृष्टकायो **यथा** सन् **तथा** तत्र यद्यच्चित्त-दृश्यं तत्तत्सर्वमवस्तु । परमार्थदृष्ट्या शशविषाणवत् चित्ततद्दृष्टपदार्थजातस्यापि अलब्धात्मकत्वात् ॥ ३६ ॥

जाग्रद्दृश्यवस्तूनामसत्त्वम्

**ग्रहणाज्जागरितवत्तद्धेतुः स्वप्न उच्यते ।**
**तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते ॥ ३७ ॥**

स्वप्नचित्तदृश्यवस्तुवत् जाग्रच्चित्तदृश्यवस्तूनां असत्त्वं विशदयति— ग्रहणादिति । स्वप्ने तावत् **जागरितवत्** ग्राह्यग्राहकरूपेण **ग्रहणात्** तज्जागरितं हेतुर्यस्य **तद्धेतुः स्वप्न उच्यते** स्वप्नस्य **तद्धेतुत्वात्** । जागरित-कार्यत्वात्तस्य स्वप्नदृश एव जागरितं सत्त्वेन प्रतीयते नेतरेषाम् । यथा स्वप्नः स्वप्नदृशस्सत्तयावभासते तथा जागरितमपि तद्दृश एव सत्त्वेन प्रतीयते । वस्तुतस्तु स्वप्नप्रपञ्चवत् जाग्रत्प्रपञ्चोऽपि निष्प्रतियोगिकाभावरूप इत्यर्थः ॥ ३७ ॥

जागरितस्याप्यसत्त्वम्

**उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम् ।**
**न च भूतादभूतस्य संभवोऽस्ति कथंचन ॥ ३८ ॥**

स्वप्नस्य जागरितकार्यत्वेऽपि स्वप्नः तावच्चलः । जागरितं तु स्थिरम् । तस्य स्वप्नवत् असत्त्वं कुतः ? इत्याशंक्याह—**उत्पादस्येति** । स्वप्नजागरितयोः चलत्वस्थिरत्वे तु तत्रत्यवस्तुयाथात्म्याज्ञदृङ्निष्ठे । परमार्थदृष्ट्या तु "यत्र किंचिन्न जायते", "न कश्चिज्जायते जीवः" इत्यादिप्रमाणतः स्वातिरिक्त

पदार्थोत्पादस्य शशविषाणवन्ध्यासूनुगगनकुसुमवत् **अप्रसिद्धत्वात्**। "आत्मैवेदं सर्वं", "ब्रह्मैवेदं सर्वं", "सबाह्याभ्यन्तरो ह्यजः" इति,

वस्तुतोऽवस्तुतो वापि ब्रह्मभिन्नभिदातते:।
अभावनिगमान्तालिमानात्सर्वमजं स्मृतम् ॥

इति श्रुतेः चन्द्रिकोक्तेश्च। किंच **न च भूताद्विद्यमानात् सन्मात्रात् अभूतस्यासतः कथंचन संभवोऽस्ति** तस्मात् सर्वमजमित्यर्थः ॥ ३८ ॥

जागरितस्य स्वप्नहेतुत्वम्

**असज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मयः।**
**असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्यति ॥ ३९ ॥**

स्वप्नो जागरितकार्यमिति यदुक्तं कार्यकारणभावोऽस्मदभिप्रेत इति तद्वस्तुयाथात्म्यदृष्टिस्तु न पश्यतीत्याह—**असदिति**। कालत्रयेऽप्यविद्यमानं शशशृंगवत् **असद्वस्तु** रज्जुसर्पवत् प्रातिभासिकं वा **जागरिते दृष्ट्वा** तत्संस्कारजनितस्वप्नेऽपि **तद्वस्तु** पश्यतीव **पश्यति**। एवं **असत्स्वप्नेऽपि दृष्ट्वा** यदि स्वप्नात् प्रबुद्धस्तदा **न** किमपि **पश्यति**। परमार्थतः स्वातिरिक्तवस्तुवैरल्यात् ॥ ३९ ॥

सदसतोर्मिथो हेतुत्वाभावः

**नास्त्यसद्धेतुकमसत्सदसद्धेतुकं तथा।**
**सच्च सद्धेतुकं नास्ति सद्धेतुकमसत् कुतः? ॥ ४० ॥**

**परमार्थदृष्टेः** कस्यचित् कदाचिदपि कार्यकारणकलना न ह्यस्तीति विशदयति—**नास्तीति**। असत् शशविषाणादिः हेतुः यस्य गगनारविन्दस्य **तत् असद्धेतुकम्**। **असत्** न विद्यते। तथा **असद्धेतुकं** सत् घटाद्यपि **न** भवति।

घटादिश्शशविषाणकार्यं **न** भवतीत्यर्थः। तथा च **सत्** घटादिकं घटेतरपटादि-कार्यमपि **नास्ति**। तथा च **सद्धेतुकं** सत्कार्यं **असत् कुतः**? इत्यर्थः। वस्तुयाथात्म्याज्ञदृष्ट्या कार्यकारणभावः परमार्थदृष्टेः कस्यापि कार्यकारण-भावगन्धोऽपि नास्तीति भावः ॥ ४० ॥

असज्जाग्रत्स्वप्नयोः कार्यकारणताभावः

**विपर्यासाद्यथा जाग्रदचिन्त्यान् भूतवत्स्पृशेत्।**
**तथा स्वप्ने विपर्यासाद्धर्मांस्तत्रैव पश्यति ॥ ४१ ॥**

पुनरप्यसज्जाग्रत्स्वप्नयोः कार्यकारणता नास्तीत्याह—**विपर्यासादिति**। **यथा** अविवेकतः स्वाज्ञदृष्टिप्रसक्तजागरिते वस्तु**विपर्यासात्** रज्जुसर्पवत् शशविषाणवद्वा **अचिन्त्यान्** भावान् **भूतवत्** परमार्थवस्तुवत् **स्पृशेत्**। **तथा स्वप्ने विपर्यासात्** रथगजतुरगादि**धर्मान्** पश्यन्निव विकल्पयति। न हि ते जागरितात् उत्पन्ना इत्यर्थः ॥ ४१ ॥

अजातिभीरूणां जातिदर्शनम्

**उपलम्भात्समाचारादस्तिवस्तुत्ववादिनाम्।**
**जातिस्तु दर्शिता बुद्धैरजातेस्त्रसतां सदा ॥ ४२ ॥**

स्वात्मनाशशंकया अजातिभीरूणां जातिर्दर्शितेत्याह—**उपलम्भादिति**। **उपलम्भनमुपलम्भः**। तस्मादुपलब्धेः वर्णाश्रमधर्म**समाचारात्** द्वाभ्यामुपलम्भ-समाचाराभ्यां व्यावहारिकत्वेन प्रातिभासिकत्वेन वा स्वातिरिक्तं **वस्तु अस्ती**ति **वादिनां** उपलम्भसमाचारविषयकदृढाग्रहवतां,

उत्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतम्।

"यत्र किंचिन्न जायते" इत्यादिप्रमाणतोऽजातौ सिद्धायां सकुटुम्बानामस्माकं का वा गतिः? इति **सदा** निष्प्रतियोगिकब्रह्ममात्राद**जातेस्त्रसतां** भीरूणां स्वात्म-

नाशं मन्यमानानां मन्दविवेकिनां ब्रह्ममात्रपदारोहाय बुद्धैर्निष्प्रतियोगिकाद्वैनवादिभिः व्यावहारिकत्वेन प्रातिभासिकत्वेन वा जातिर्भवत्विति **जातिः दर्शिता**। न हि परमार्थतो व्यावहारिकं प्रातिभासिकं वा किंचिद्वस्तु अस्तीत्यभिप्रायः। "उपायः सोऽवताराय" इत्युक्तत्वात्॥ ४२॥

अजातिभीरूणां परमार्थतः च्युतिः

**अजातेस्त्रसतां तेषां उपलम्भाद्वियन्ति ये।**
**जातिदोषा न सेत्स्यन्ति दोषोऽप्यल्पो भविष्यति॥ ४३॥**

अजातिभीरूणां परमार्थतः च्युतिं प्रकटयति—**अजातेरिति**। **उपलम्भात्** समाचारात् तत्सिद्धिप्रमाणाच्च सर्वस्य जातिरस्त्येव। यद्यजातिः तदा न वयं स्थास्याम इत्य**जातेस्त्रसतां तेषां** का गतिः? इत्यत आह—**वियन्तीति**। अजातित्रासात् स्वातिरिक्तमात्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन वा जायत इति ये मन्यन्ते ते त्वजातितो निष्प्रतियोगिकब्रह्ममात्रात् **वियन्ति** च्यवन्ते स्वातिरिक्तमेव प्रतिपद्यन्त इत्यर्थः। जातिदोषाक्रान्तविवेकानां अजातिज्ञाने जातेऽपि न हि तज्जातिदोषं ग्रसतीत्यत आह—**जातीति**। निष्प्रतियोगिकाजातिब्रह्ममात्रप्रबोधप्राक्कालीनजातिदोषाः तत्प्रबोधसमकालमेव स्वातिरिक्तोपलम्भनसमाचारप्रभव**जातिदोषा न सेत्स्यन्ति** न हि स्थातुं पारयन्ति। अजातिब्रह्ममात्रावगतेरुपलंभादिनिष्पन्नजात्यपह्नवावगतिपूर्वकत्वात्। "अजाति ब्रह्म" इत्युक्तिरपि दोषः स्यादित्यत आह—**अल्प** इति। तादृशोक्तिरपि दोष एव। अजातिचितो निरुक्तत्वात्। तथाविधाल्प**दोषोऽपि** सन्मार्गावलंबिनां अजातिब्रह्मप्रापकं **भविष्यति**। परमार्थतः तदभावादित्यर्थः॥ ४३॥

उपलम्भादिना स्वातिरिक्तस्यास्तित्वम्

**उपलम्भात्समाचारान्मायाहस्ती यथोच्यते।**
**उपलम्भात्समाचारादस्ति वस्तु तथोच्यते॥ ४४॥**

उपलम्भादिप्रमाणतोऽस्त्येव स्वातिरिक्तजातिरित्यत आह—**उपलम्भा-दिति**। उपलभ्यते हि मायाहस्तीत्युपलम्भात् तद्बन्धनारोहणादिस्**समाचार:** तस्मात्। ताभ्यां **मायाहस्ती यथोच्यते** तन्मायामात्रमित्यर्थः। **तथोपलम्भ-समाचाराभ्यां जातं वस्तु अस्तीत्युच्यते**। यत उपलंभसमाचारयोर्व्यभिचारित्वं अतो वस्त्वाभासजातिरपि शशविषाणवत् असद्रूपेत्यर्थः॥ ४४॥

परमार्थसद्वस्तुस्वरूपम्

**जात्याभासं चलाभासं वस्त्वाभासं तथैव च।**
**अजाचलमवस्तुत्वं विज्ञानं शान्तमद्वयम्॥ ४५॥**

असद्बुद्धयो यदाश्रित्य वर्तन्ते तदास्पदं सद्वस्तु कीदृशम्? इत्यत आह—**जात्येति**। यत् परतत्त्वं अजाति सत् स्वाज्ञदृष्ट्या देवदत्तादिर्जायत इति जातिवदवभासत इति **जात्याभासम्**। तथा यदचलमपि सत् देवदत्तादिः चलतीति चलवदवभासनात् **चलाभासम्**। वस्तु द्रव्यं तद्वदवभासत इति **वस्त्वाभासम्**। परमार्थतः तद्वस्त्व**जमचलं अवस्तुत्वं** तद्याथात्म्यमिति यत्प्रबोधतो ज्ञायते त**द्विज्ञानम्**। जात्याद्यपह्नववृत्तिरपि यत्रोपशाम्यति **तच्छा-न्तम्**। अत एव निष्प्रतियोगिकाद्वैतत्वेन निरास्पदं तदित्यर्थः॥ ४५॥

चित्तं न जायत इति ज्ञानफलम्

**एवं न जायते चित्तमेवं धर्मा अजाः स्मृताः।**
**एवमेव विजानन्तो न पतन्ति विपर्यये॥ ४६॥**

न किंचिज्जायत इति ज्ञानफलमाह—**एवमिति**। एवं "यत्र किंचिन्न जायते" इत्युक्तरीत्या स्वातिरिक्तकल्पकचित्तं **न जायते**। तथैवं ब्रह्मविद्भिः **धर्मा** आत्मानो **अजाः स्मृताः**। धर्मा इति बहुवचनं विश्वविश्वादित्रिपञ्चदश चैतन्यव्यवहारनिमित्तम्। वस्तुतस्तुर्यतुर्यस्य निष्प्रतियोगिकाद्वयत्वात्। **एवमेव**

जात्याद्यपह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति **विजानन्तो** व्याविद्ध-स्वातिरिक्तभ्रमा ब्रह्मविद्वरीयांसो **न** पुनर्विपर्यये स्वातिरिक्तभ्रमे **पतन्ति**। "तमेवं विद्वांस इहैव अमृता भवन्ति" इति श्रुतेः ॥ ४६ ॥

अचलविज्ञानस्य स्पन्दनाभावः

**ऋजुवक्रादिकाभासमलातस्पन्दितं यथा ।**
**ग्रहणग्राहकाभासं विज्ञानस्पन्दितं तथा ॥ ४७ ॥**

कथं पुनरमृता भवन्तीत्युक्तं ग्राह्यग्राहकभेददर्शनात्? इत्यत आह—**ऋज्विति**। अलातस्पन्दनसमुद्भूतऋजुवक्राद्याभासवत् तथा ग्रहणग्राहकाभास-स्यापि विज्ञानस्पन्दितत्वम्। न ह्यचलविज्ञानस्य स्पन्दनमुपपद्यते अजाचल-मित्युक्तत्वात् ॥ ४७ ॥

स्पन्दनाभासे निराभासत्वम्

**अस्पन्दमानमलातमनाभासमजं यथा ।**
**अस्पन्दमानं विज्ञानमनाभासमजं तथा ॥ ४८ ॥**

स्पन्दनाभासे निराभासत्वं स्वतः सिद्धमित्याह—**अस्पन्दमानमिति**। **यथा** स्पन्दनवर्जितालातं ऋज्वाद्याभासरहितमनाभासं सदजं भवति **तथा** मायास्पन्दनविरल**विज्ञानमनाभासं** सदजं भवतीत्यर्थः ॥ ४८ ॥

अलातवद्विज्ञानमात्रे जात्यादिबुद्धिर्मृषैव

**अलाते स्पन्दमाने वै नाभासा अन्यतोभुवः ।**
**न ततोऽन्यत्र निस्स्पन्दान्नालातं प्रविशन्ति ते ॥ ४९ ॥**
**न निर्गता अलातात्ते द्रव्यत्वाभावयोगतः ।**
**विज्ञानेऽपि तथैव स्युराभासस्याविशेषतः ॥ ५० ॥**

विज्ञाने स्पन्दमाने वै नाभासा अन्यतोभुवः ।
न ततोऽन्यत्र निःस्पन्दान्न विज्ञानं विशन्ति ते ॥ ५१ ॥
न निर्गतास्ते विज्ञानाद्द्रव्यत्वाभावयोगतः ।
कार्यकारणताभावाद्यतोऽचिन्त्याः सदैव ते ॥ ५२ ॥

अन्यालातभवा ऋज्वाद्याभासा अस्मिन्नलाते स्पन्दनास्पन्दनाभ्यां प्रविश्य निर्गच्छन्तीत्यत आह—**अलात** इति । अन्यालातभुवो ऋज्वाद्याभासा **न** ह्यलातस्पन्दनास्पन्दनाभ्यां प्रवेशनिर्गमकलनां भजन्ति ॥ ४९ ॥ एवं विज्ञानेऽपीत्याह—**नेति** । यथा ऋज्वाद्याभासाः पिशाचवत् **न** ह्यलातं प्रविश्य **निर्गता** भवन्ति आभासानां अद्रव्यत्वात् । द्रव्यस्य भावो द्रव्यत्वं तदभावो **द्रव्यत्वाभावः** । **तद्योगतः** तद्युक्तेरवस्तुत्वादित्यर्थः । वस्तुनो हि प्रवेशनिर्गमौ स्यातां न ह्यवस्तुनः । **तथैव विज्ञानेऽपि** जात्याद्याभासाः **स्युः** । **आभासस्याविशेषतः** तुल्यत्वात् ॥ ५० ॥ कथं तुल्यत्वम्? इत्यत आह—**विज्ञान** इति । अलातविषये यदुक्तं तत्सर्वं विज्ञानेऽपि समम् । विज्ञानस्याचलत्वं तु विशेषः ॥ ५१ ॥ अचलविज्ञाने जात्याद्याभासाः किं कुर्वन्ति? इत्यत आह—कार्येति । जातिविज्ञानयोः **कार्यकारणताया अभावात्** । **यत** एवमतोऽ**चिन्त्याः सदैव ते** यथैवालातमात्रे कालत्रयेऽपि ऋज्वाद्याभासाभावेऽपि तत्र ऋज्वादिबुद्धिः दृष्टा तथैव विज्ञानमात्रे जात्याद्याभासाभावेऽपि जात्यादिबुद्धिः शशविषाणवत् निष्प्रतियोगिकाभावरूपेत्यर्थः ॥ ५२ ॥

आत्मनः कार्यकारणवैकल्यम्

द्रव्यं द्रव्यस्य हेतुः स्यादन्यदन्यस्य चैव हि ।
द्रव्यत्वमन्यभावो वा धर्माणां नोपपद्यते ॥ ५३ ॥
एवं न चित्तजा धर्माश्चित्तं वापि न धर्मजम् ।
एवं हेतुफलाजातिं प्रशंसन्ति मनीषिणः ॥ ५४ ॥

आत्मनो द्रव्यत्वान्यत्वापह्नवसिद्धत्वात् न कस्यचित् कार्यं कारणं वा आत्मा भवतीत्याह—**द्रव्यमिति**। निष्प्रतियोगिकाजेऽपि आत्मतत्त्वे कार्यकारणभावो यैः परिकल्प्यते तद्दृष्ट्या **द्रव्यं द्रव्यस्य अन्यदन्यस्य हेतुः** कारणं **स्यान्**। न हि कस्यचित् द्रव्यं कारणं दृष्टं केनचिदपीत्यर्थः। **न हि धर्माणामात्मनां द्रव्यत्वमन्यभावो वा** कदाप्युपपद्यते। यत एवमतो न कस्यचित् कार्यं कारणं वा आत्मा भवितुमर्हतीत्यर्थः॥ ५३॥ इतश्चात्मनः कार्यकारणवैरल्यमाचष्टे—**एवमिति**। "विज्ञानमानन्दं ब्रह्म", "सत्यं ज्ञानमनन्तं ब्रह्म", इत्येवमादिश्रुतिसहस्रनिष्पन्नविज्ञानस्वरूपमेव चित्तमिति स्थितम्। सदा चिन्मात्ररूपेणोतत्वात् बाह्यान्तर्**धर्माः न हि चित्तजाः**। **नापि** तथाविधधर्म**जं चित्तं** बाह्यादिधर्माणां तावत् प्रज्ञानस्वरूपावभासमात्रत्वात्। **एवं न** हेतोः फलं जायते न कदापि फलाद्धेतुरिति **हेतुफलयोरजातिं ब्रह्मविदः प्रशंसन्ति** निश्चयेन प्रतिपद्यन्त इत्यर्थः॥ ५४॥

हेतुफलावेशयोः बन्धमोक्षत्वम्

**यावद्धेतुफलावेशस्तावद्धेतुफलोद्भवः।**
**क्षीणे हेतुफलावेशे नास्ति हेतुफलोद्भवः॥ ५५॥**

हेतुफलाभिनिवेशानभिनिवेशाभ्यां बन्धमोक्षौ स्यातामित्याह—**यावदि**त्यादि। हेतुरूपधर्माधर्मयोः अहं कर्ता कालान्तरे देशान्तरे लोकान्तरे वा जातिमेत्य पुराकृतधर्माधर्मफलं भोक्ष्य इति **यावद्धेतुफलयोरावेशः** अभिनिवेशः स्यात् **ताव**द्धर्माधर्मतत्फलात्मक**हेतुफलयोरुद्भवः** अविच्छेदप्रवृत्तिः स्यात्। यथा ग्रहावेशो मन्त्रौषधादिना निवृत्तः तथा निष्प्रतियोगिकाजातिब्रह्ममात्रदर्शनसमकालं हेतुफलावेशक्षयोऽपह्नवो भवति। तस्मिन् **क्षीणे हेतुफलयोरुद्भवो नास्ति**॥५५॥

हेतुफलयोः संसारायत्तता

**यावद्धेतुफलावेशः संसारस्तावदायतः।**
**क्षीणे हेतुफलावेशे संसारं न प्रपद्यते॥ ५६॥**

हेतुफलोद्भवे को दोषः ? इत्यत आह—**यावदिति**। **यावद**जातिसम्यग्दर्शनेन **हेतुफलावेशो न** निवृत्तः **तावत् संसार आयतो** दीर्घो भवति। हेतुफलावेशे सम्यज्ज्ञानेन **क्षीणे** कारणवैरल्यात् **संसारं न प्रपद्यते** ॥ ५६ ॥

सर्वस्याप्यविद्यया जायमानत्वम्

**संवृत्या जायते सर्वं शाश्वतं नास्ति तेन वै।**
**सद्भावेन ह्यजं सर्वमुच्छेदस्तेन नास्ति वै ॥ ५७ ॥**

इदानीं उत्पन्नो नष्ट इति व्यवहृतिः सर्वस्याजत्वे कथम् ? इत्यत आह—**संवृत्येति**। संवरणं **संवृतिः** अविद्या। तया तद्दृशां **सर्वं जायते**। कालत्रयेऽप्यविद्यमानाविद्याकार्यत्वात्तत्कार्यं **शाश्वतं नास्त्येव**। एवं उत्पत्तिविनाशलक्षणः संसारोऽयमविद्यावृतदृष्टीनां सत्यं भवति। "ब्रह्ममात्रमसन्न हि", "सन्मात्रमसदन्यत्" इति श्रुत्यनुरोधेन परमार्थसद्भावेन तु **सर्वमजमेव**। "सर्ववर्जितचिन्मात्रं" इति श्रुत्यनुरोधेन जातिसामान्यापह्नवज्ञानेन **तेन** कस्यचिदपि जातिवदु**च्छेदो**ऽपि **नास्ति वै** नास्त्येव। न हि शशविषाणतुल्यजातेरुच्छेदः संभवतीत्यर्थः ॥ ५७ ॥

मायाया अविद्यमानत्वम्

**धर्मा य इति जायन्ते जायन्ते ते न तत्त्वतः।**
**जन्म मायोपमं तेषां सा च माया न विद्यते ॥ ५८ ॥**

आत्मनः सकाशाद्धर्मा जायन्त इति केचित्। तत्राह—**धर्मा** इति। मायया **ये धर्मा जायन्ते** मायाकार्यत्वान्न हि **ते तत्त्वतो जायन्ते**। तेषां जन्म कीदृशम् ? इत्यत आह—**तेषामिति**। तज्जन्म **मायोपमं** प्रत्येतव्यमित्यर्थः। किं तन्माया अस्ति ? इत्यत आह—**सा चेति**। या मा **सा च माया** कालत्रयेऽपि शशविषाणवत् **न विद्यते** ॥ ५८ ॥

परमार्थतो धर्माणां जन्मनाशाभावः

**यथा मायामयाद्बीजाज्जायते तन्मयोऽङ्कुरः ।**
**नासौ नित्यो न चोच्छेदी तद्वद्धर्मेषु योजना ॥ ५९ ॥**

कथं तेषां जन्म मायोपमम्? इत्यत्र दृष्टान्तमाह—यथेति । **यथा मायामयात्** नानाविधबीजात् **तन्मयोऽङ्कुरो जायते । नासौ नित्यो न चोच्छेदी** विनाशी वा भवितुमर्हति । तस्य कालत्रयेऽप्यलब्धात्मकमायाकार्यत्वेन कारणतुल्यत्वात् । तथा जन्मनाशादिधर्मेष्वात्मसु **योजना** युक्तिः युज्यते । न हि धर्माणां परमार्थतो जन्म नाशो वा संभवतीत्यर्थः ॥ ५९ ॥

आत्ममात्रे नित्यानित्यविवेकाभावः

**नाजेषु सर्वधर्मेषु शाश्वताशाश्वताभिधा ।**
**यत्र वर्णा न वर्तन्ते विवेकस्तत्र नोच्यते ॥ ६० ॥**

आत्मा तावत् शाश्वतोऽशाश्वतो वापि वार्तापि न सहत इत्याह—नेति । **न** हि निष्प्रतियोगिकचिन्मात्रधर्मेषु स्वरूपेष्वजेष्वात्मसु सर्वोपाध्यपह्नव-सिद्धात्ममात्रे अयं शाश्वतोऽशाश्वतो वेत्यभिधानं प्रवर्तते । अर्थसंकेतपरा **वर्णा** अकारादिक्षकारान्ता अपि **यत्र न प्रवर्तन्ते तत्र** आत्ममात्रे इदं नित्यम-नित्यमित्यादि**विवेको न** ह्यु**च्यते** "यतो वाचो निवर्तन्ते" इति श्रुतेः ॥ ६० ॥

आत्मनो वागाद्यपह्नवसिद्धत्वम्

**यथा स्वप्ने द्वयाभासं चित्तं चलति मायया ।**
**तथा जाग्रद्द्वयाभासं चित्तं चलति मायया ॥ ६१ ॥**
**अद्वयं च द्वयाभासं चित्तं स्वप्ने न संशयः ।**
**अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः ॥ ६२ ॥**

कथं पुनरात्मनोऽवाङ्मनसगोचरत्वम्? इत्यत्र स्वाङ्गदृष्टिविकल्पितमनस्तत्स्पन्दनास्पन्दननिमित्तेयं वागादिगोचरागोचरता। परमार्थतो वागाद्यपह्नवसिद्धोऽयमात्मेति उक्तार्थाविव श्लोकावनुवदति—यथेति ॥ ६१–६२ ॥

स्वप्नजाग्रद्भावानां कल्पितत्वम्

**स्वप्नदृक् प्रचरन् स्वप्ने दिक्षु वै दशसु स्थितान्।**
**अण्डजान् स्वेदजान् वापि जीवान् पश्यति यान् सदा ॥**
**स्वप्नदृक्चित्तदृश्यास्ते न विद्यन्ते ततः पृथक्।**
**तथा तद्दृश्यमेवेदं स्वप्नदृक्चित्तमिष्यते ॥ ६४ ॥**
**चरञ्जागरिते तद्वद्दिक्षु वै दशसु स्थितान्।**
**अण्डजान् स्वेदजान् वापि जीवान् पश्यति यान् सदा ॥६५॥**
**जाग्रच्चित्तेक्षणीयास्ते न विद्यन्ते ततः पृथक्।**
**तथा तद्दृश्यमेवेदं जाग्रतश्चित्तमिष्यते ॥ ६६ ॥**

स्वप्नजाग्रद्विलसितभावजातं स्वप्नादिदृक्चित्तकल्पितं, न तच्चित्तातिरिक्तम्। चित्तस्य मायामात्रत्वेन तत्कल्पितमपि तथेत्याह—**स्वप्नदृक्चेति**। यथा स्वप्नदृक्चित्तकल्पितजगज्जीवजातं तच्चित्तमात्रं तथा जाग्रच्चित्तेक्षणीयजीवजातमपि तच्चित्ताव्यतिरिक्तम्। उक्तार्थमन्यत् ॥ ६३–६६ ॥

जीवचित्तयोः परस्परसापेक्षत्वाभावः

**उभे ह्यन्योन्यदृश्ये ते किं तदस्तीति चोच्यते।**
**लक्षणाशून्यमुभयं तन्मतेनैव गृह्यते ॥ ६७ ॥**

जीवचित्ते परस्परसापेक्षरूपे अन्योन्यदृश्यत्वात्। वस्तुतस्तदुभयं नास्तीत्याह—उभे इति। जीवापेक्षं चित्तं चित्तापेक्षं जीवजातमिति **ते उभे**

जीवचित्ते **अन्योन्यदृश्ये**। प्रमाणदृष्टीनां तावत् तत्र चित्तं चित्तेक्षणीय-जगज्जीवजातं वा **किं तदस्तीत्युच्यते**। न हि जाग्रदादौ परमार्थदृष्ट्या स्थिरचरात्मकं जगद्विद्यते तत्सिद्धिप्रमाणवैरल्यात्।

इदं प्रपञ्चं नास्त्येव नोत्पन्नं नो स्थितं जगत्।
चित्तं प्रपञ्चमित्याहुः नास्ति नास्त्येव सर्वदा ॥

इति श्रुतेः। तस्माच्चित्तं तदीक्षणीयं जगच्चैतदुभयमपि अनया लक्ष्यते इति **लक्षणा प्रमाणम्**। तच्छून्यं स्वसिद्धिप्रमाणगन्धविरलमिति **तन्मतेन** तच्चित्तेनैव **गृह्यते**। न हि स्वातिरिक्तं प्रत्याख्याय स्वातिरिक्तमतिरुदेति। किन्तु स्वमात्रमिति मतिः युक्तेत्यर्थः ॥ ६७ ॥

जीवानां चित्तविकल्पनामात्रत्वम्

**यथा स्वप्नमयो जीवो जायते म्रियतेऽपि च।**
**तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥ ६८ ॥**
**यथा मायामयो जीवो जायते म्रियतेऽपि च।**
**तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥ ६९ ॥**
**यथा निर्मितको जीवो जायते म्रियतेऽपि च।**
**तथा जीवा अमी सर्वे भवन्ति न भवन्ति च ॥ ७० ॥**

कथं पुनः चित्तजीवयोः लक्षणाशून्यत्वं जायते म्रियते इति प्रतीतेः? इत्यत्र स्वप्नमायानिमित्तवत् तन्मृषेत्याह—**यथे**त्यादिना। स्वप्नविकल्पितजीवः **स्वप्नमयः**। मायाविना कृतो **मायामयः**। मन्त्रौषधादिभवो **निर्मितकः**। स्वप्नमायानिर्मितकाण्डजादयो जीवा यथा जायन्ते म्रियन्ते तथैवाविद्यमाना एव मनुष्यादिलक्षणा जीवाः चित्तविकल्पनामात्रा इत्यर्थः ॥ ६८–७० ॥

जीवस्याजत्वप्रकटनम्

**न कश्चिज्जायते जीवः संभवोऽस्य न विद्यते ।**
**एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते ॥ ७१ ॥**

कथं जीवानां कल्पनामात्रत्वम्? इत्यत्र जीवस्याजत्वं प्रकटयितुं अद्वैतप्रकरणान्तभूषणश्लोकमुदाहरति—**ने**ति । जातिसत्त्वासत्त्वे तु स्वाज्ञस्वज्ञ-दृष्टिनिष्ठे । परमार्थदृष्टेः तत्प्रसक्तिरेव नास्तीत्यर्थः ॥ ७१ ॥

चित्तस्यासङ्गत्वम्

**चित्तस्पन्दितमेवेदं ग्राह्यग्राहकवद्द्वयम् ।**
**चित्तं निर्विषयं नित्यमसङ्गं तेन कीर्तितम् ॥ ७२ ॥**
**योऽस्ति कल्पितसंवृत्या परमार्थेन नास्त्यसौ ।**
**परतन्त्राभिसंवृत्या स्यान्नास्ति परमार्थतः ॥ ७३ ॥**

कथं "यत्र किंचिन्न जायते" इत्युक्तं ग्राह्यग्राहककलनासत्त्वात्? इत्यत्राह—**चित्ते**ति । **ग्राह्यग्राहकवत् इदं द्वयं चित्तस्पन्दितमेव** परमार्थतः तत्सर्वमात्मैव "इदं सर्वं यदयमात्मा" इति श्रुतेः । प्रबोधतः **चित्तं निर्विषयं** चेत् **तेने**दं चित्तम**सङ्गं** परि**कीर्तितं** "असङ्गो न हि सज्जते" इति श्रुतेः ॥ ७२ ॥

कथं पुनश्चित्तस्य निर्विषयत्वेनासङ्गत्वं शास्त्रादिसङ्गदर्शनात्? इत्यत आह—**योऽस्ती**ति । परमार्थास्त्युपायत्वेन कल्पिता च सा संवृतिश्चेति तया **कल्पित-संवृत्या** संवरणेन **योऽस्ति** शास्त्रादिव्यवहारः **परमार्थतः असौ नास्त्येव** ।

उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ।

इति खिलश्रुतेरुक्तत्वात् । यः पुनः पदार्थः **परतन्त्राभिसंवृत्या** परशास्त्रव्यवहृत्या **स्यात्, परमार्थतो** निरूप्यमाणे सोऽपि **नास्त्येव** । यद्यस्तीति भ्रान्तिः तदा तत्रासङ्गं चित्तं भवतीति सम्यगुक्तम् ॥ ७३ ॥

अज इति कल्पनाया असत्यत्वम्

**अजः कल्पितसंवृत्या परमार्थेन नाप्यजः ।**
**परतन्त्राभिनिष्पत्त्या संवृत्या जायते तु सः ॥ ७४ ॥**

शास्त्रादीनां कल्पितसंवृत्या असत्त्वेऽपि सत्यत्वेनाज इति कल्पना स्यादित्यत आह—**अज** इति। निष्प्रतियोगिकाजब्रह्ममात्रपदारोहाय "अजो नित्यः शाश्वतः", "सबाह्याभ्यन्तरो ह्यजः", "सन्मात्रमसदन्यत्", "ब्रह्ममात्रमसन्नहि" इत्यादिश्रुतिपटलकल्पितसंवृत्या केवलचिन्मात्रे **अज** इत्यभिधारोपिता। तया वस्तुनि स्वमात्रमिति ज्ञाते **परमार्थतो नाप्यज** इत्यभिधा प्रसरेत्। "बोधार्थमेव हि मुधैव तदोमितीदम्" इति श्रुतेः। निष्प्रतियोगिकाद्वैततन्त्रापेक्षया असल्लौकिकाद्यष्टदृष्ट्यालम्बन**परतन्त्राभिनिष्पत्या** परशास्त्राभिनिवेशरूप**संवृत्या** पुरा योऽजत्वेन प्रसिद्धः **स** एव **जायते**। तस्मात् अज इत्यभिधाकल्पनापि वस्तुमात्रं न स्पृशतीत्यर्थः ॥ ७४ ॥

असल्लौकिकादेरभिनिवेशस्थानाभावः

**अभूताभिनिवेशोऽस्ति द्वयं तत्र न विद्यते ।**
**द्वयाभासं स बुद्ध्वैव निर्निमित्तो न जायते ॥ ७५ ॥**

असल्लौकिकादिर्यत्राभिनिविष्टः तदेव नास्तीत्याह—**अभूते**ति। वस्तुमात्रदृष्ट्या कालत्रयेऽपि यत् स्वाविद्यापदतत्कार्यजातमभूतमसिद्धं तत्रासल्लौकिकादीनां आत्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन वा सुतरामभिनिवेशमात्रं विद्यते। अस्ति तद्दृष्ट्या तत्र वस्तुमात्रे अभूतं अविद्यापदतत्कार्यम्। तत्राभिनिवेशनमित्येतद्**द्वयम**पि शशविषाणवत् वन्ध्यापुत्रवत् गगनारविन्दवच्च कालत्रयेऽपि **न विद्यते**। यस्मात् अभूताभिनिवेशो जातिहेतुः तस्मादेतद्द्वयमाभासमात्रमिति **बुध्वा** तज्ज्ञानसमकालं जातिनिमित्तद्वयापह्नवात् **निर्निमित्तो न जायते**। स्वयमजमात्रतयावशिष्यत इत्यर्थः ॥ ७५ ॥

हेत्वभावे फलाभावः

**यदा न लभते हेतूनुत्तमाधममध्यमान् ।**
**तदा न जायते चित्तं हेत्वभावे फलं कुतः ? ॥ ७६ ॥**

अधममध्यमोत्तमहेत्वभावात्तत्कार्यत्वेन चित्तं न जायत इत्याह—**यदेति** । निष्कामबुद्ध्यानुष्ठीयमाना धर्मा उत्तमाः चित्तशुद्धिसालोक्यादिमुक्तिहेतुत्वात् । केवलधर्माधर्मव्यामिश्ररूपा मध्यमा मानुषत्वाप्तिहेतुत्वात् । अशास्त्रीयानुष्ठानलक्षणा अधमाः तिर्यगादिप्राप्तिहेतुत्वात् । स्वातिरिक्तप्रवृत्तिनिवृत्तिलक्षणा हि धर्माः । तान् **उत्तमाधममध्यमान्** अविद्यापरिकल्पितान् जन्मादिहेतून् ब्रह्मव्यतिरिक्तं न किंचिदस्तीति ब्रह्मव्यतिरिक्तहेतुत्रयापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रानुवादिश्रुत्यर्थज्ञानसमकालं **यदा न लभते** न हि पश्यति **तदा** उत्तममध्यमाधमात्मकदेवमनुष्यतिर्यगादिफलरूपेण **चित्तं न जायते** । न कदाप्युत्पद्यते, बीजाभावेऽङ्कुरसस्यादिवत् । न ह्यसति हेतौ फलमुत्पद्यते ॥ ७६ ॥

चित्तस्याजातिकथनम्

**अनिमित्तस्य चित्तस्य यानुत्पत्तिः समाद्वया ।**
**अजातस्यैव सर्वस्य चित्तदृश्यं हि तद्यतः ॥ ७७ ॥**

"हेत्वभावे फलं कुतः" इत्यत्र चित्तस्याजातिरुक्ता । सा कीदृशी ? इत्यत्रोच्यते—**अनिमित्तस्येति** । ब्रह्ममात्रप्रबोधसमकालं अपह्नवंगतधर्माधर्मनिमित्तत्वेनानिमित्तस्य चिन्मात्रतामितस्य **चित्तस्य यानुत्पत्ति**रजातिः सा सर्वावस्थास्वपि **समा** निष्प्रतियोगिकाद्वया च । एवम**जातस्यैव सर्वस्य** ब्रह्ममात्रज्ञानात् प्रागपि **यतस्तत्सर्वं चित्तदृश्यमतः** चित्ततद्दृश्यस्य मायामात्रत्वात् । स्वातिरिक्तयोः ब्रह्ममायातत्कार्ययोः निष्प्रतियोगिकभावाभावरूपत्वेनाजातिः समेत्यर्थः ॥ ७७ ॥

समभावानां जातिज्ञानफलम्

**बुद्ध्वानिमित्ततां सत्यां हेतुं पृथगनाप्नुवन् ।**
**वीतशोकं तदाकाममभयं पदमश्नुते ॥ ७८ ॥**

एवं समभावानां जातिज्ञानफलं प्रकटयति— बुद्ध्वेति । जातिनिमित्तस्वातिरिक्तवैरल्यात् **अनिमित्ततां सत्यां** सद्रूपामजातिं निष्प्रतियोगिकस्वमात्रतया **बुद्ध्वा** देवमनुष्यतिर्यगादियोनिप्रापकधर्माधर्मात्मकहेतुं **पृथक्** पृथगनाप्नुवन् सन् संत्यक्तस्वातिरिक्तेषणो विद्वान् शोचनीयकांक्षणीयधीवृत्त्यपह्नवसिद्धं **वीतशोकं अकामं अभयं पदं** स्वावशेषधिया तदानीं **अश्नुते** । ब्रह्ममात्रतयावतिष्ठत इत्यर्थः ॥ ७८ ॥

वस्त्वभावज्ञानेन निस्सङ्गनिवृत्तिः

**अभूताभिनिवेशाद्धि सदृशे तत्प्रवर्तते ।**
**वस्त्वभावं स बुध्वैव निस्सङ्गं विनिवर्तते ॥ ७९ ॥**

कथमसौ ब्रह्ममात्रतयावशिष्यते जायत इति प्रतीतेः ? . इत्यत्राह— **अभूतेति** । अविद्यमानत्वेनाविद्यापदं **अभूतम्** । तदात्मसत्यव्यवहारप्रतिभासरूपेण वा अस्तीत्यभिनिवेशाद्धि तत्सदृशव्यष्ट्यविद्यापदशरीरादौ स्वात्मधिया चित्तं **प्रवर्तते** । यदा श्रुत्याचार्यप्रसादतो भूतवस्त्वविद्यापदात्मक**वस्त्वभावं बुध्वा** तदा भूताभिनिवेशात् **निस्सङ्गं** निरपेक्षं सत् चित्तं **निवर्तते** ॥ ७९ ॥

निवृत्तस्वातिरिक्तानां स्थितिः

**निवृत्तस्याप्रवृत्तस्य निश्चला हि तदा स्थितिः ।**
**विषयः स हि बुद्धानां तत्साम्यमजमद्वयम् ॥ ८० ॥**

एवं निवृत्तस्वातिरिक्तानां स्थितिः कीदृशी ? इति तत्राह—**निवृत्तस्येति**। स्वातिरिक्तान्निवृत्तस्य पुनर्विषयान्तरं परिकल्प्य तत्राप्यप्रवृत्तस्य चित्तस्य चलनविरलात् **निश्चला स्थितिः** ब्रह्ममात्रावस्थानरूपा या **हि** चिन्मात्ररूपा, सैव **बुद्धानां** परमाद्वैतिनां **विषयो** भवतीति यत् **तत्** निष्प्रतियोगिक**साम्यं अजमद्वयं** च ॥ ८० ॥

बुद्धानां विषयः

**अजमनिद्रमस्वप्नं प्रभातं भवति स्वयम् ।**
**सकृद्विभातो ह्येवैष धर्मो धातुस्वभावतः ॥ ८१ ॥**

कीदृशो हि बुद्धानां विषयः ? तत्राह—**अजमिति**। **अजं** स्वरूपतः **अनिद्रमस्वप्नं** तुर्यस्वापादिपञ्चदशावस्थापह्नवसिद्धत्वात्। प्रज्ञानमात्रतया भातत्वात् **प्रभातं** ज्योतिर्मात्रस्वरूपत्वात्। तत्स्वरूपो हि परमात्मा सदाद्यावृतित्रयापह्नवसिद्धत्वात् **सकृद्विभातः**। **धातुस्वभावतो** वस्तुस्वभावतः **एष** ब्रह्ममात्रात्मको **धर्मः** सदावशिष्यते ॥ ८१ ॥

सर्वैर्ब्रह्मणोऽगृह्यमाणत्वम्

**सुखमाव्रियते नित्यं दुःखं विव्रियते सदा ।**
**यस्य कस्य च धर्मस्य ग्रहेण भगवानसौ ॥ ८२ ॥**

सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति सर्ववेदान्तैः प्रतिपादितमपि सर्वैः किं न गृह्यते ? इत्यत आह—**सुखमिति**। अभूताभिनिवेशात्मकद्वयोपलब्धिनिमित्तेन यस्य कस्यचिद्धर्मस्य ग्रहेण मिथ्याभिनिवेशेन स्वात्म**सुखमाव्रियते** लीलयाच्छाद्यते। अनायासेन सदानात्मरूपं **विव्रियते** विजृंभते वस्तुयाथात्म्यज्ञानवैरल्यात्। यो हि वस्तुयाथात्म्यज्ञानगोचरो**ऽसौ भगवा**नात्मा समस्तवेदान्तैराचार्यैश्च बहुधा प्रतिपादितोऽपि श्रुत्यर्थयाथात्म्यानभिज्ञैः न हि ज्ञातुं शक्यः "आश्चर्यो वक्ता कुशलोऽस्य लब्धा" इति श्रुतेः ॥ ८२ ॥

विविधग्रहाणामात्मावरणत्वम्

**अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः ।**
**चलस्थिरोभयाभावैरावृणोत्येव बालिशः ॥ ८३ ॥**

"अस्तीत्येके नायमस्तीति चैके" इति श्रुत्यनुरोधेनास्ति नास्तीति सूक्ष्मसूक्ष्मतरसूक्ष्मतमविषयाः पण्डितानां ग्रहा अप्यात्मावरणा एव । किं वक्तव्यं मूढजनश्लाघनीयदिगंबरग्रहस्य ? इत्याह—**अस्तीति** । कश्चिद्वादी आत्मास्तीति प्रतिपद्यते । अपरो वैनाशिको **नास्तीति** । अर्धवैनाशिकस्तु **अस्ति नास्तीति** सदसद्वादीत्यर्थः । अत्यन्तशून्यवादी दिग्वासा **नास्ति नास्तीति** । तत्रास्तिभावश्चलो घटादिः तस्य नित्यविलक्षणत्वात् । नास्तिभावः स्थिरः सदा निर्विशेषत्वात् । सदसद्भावोभयात्मकः तयोरेकत्रावस्थानासंभवात् । नास्ति नास्तीत्यत्यन्ताभावः । प्रकारचतुष्टयैः **चलस्थिरोभयाभावैः** अयं वादिपूगो **बालिशः** विवेकगन्धविरलो भूत्वा भगवन्तमात्मानं **आवृणोत्येव** । यदि वा पण्डितः सोऽपि परमार्थाजातिं न जानाति चेत्तदा बालिश एवेत्यर्थः ॥ ८३ ॥

परमार्थपण्डितलक्षणम्

**कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदावृतः ।**
**भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक् ॥ ८४ ॥**

बालिशपण्डितौ कीदृशौ ? इत्यत्र आवृतानावृतात्मदर्शिनौ बालिशपण्डिताविस्याह—**कोट्य** इति । उक्ता ह्येता शास्त्रनिर्णयान्ताः प्रावादुकाः अस्ति नास्तीत्याद्याः **कोट्यश्चतस्रः** । **यासां** कोटीनां **ग्रहैः** उपलब्धिनिश्चयैः तद्दृष्ट्या भगवानावृतः । आवृतात्मदर्शिनो हि बालिशाः । प्रावादुकानां अस्ति नास्तीत्यादिकोटिभिः **भगवानस्पृष्टो** वेदान्तेष्वौपनिषदः पुरुषः स्वमात्रतया **दृष्टः स** मुनिः **सर्वदृक्** पण्डितः । स्वातिरिक्तसर्वमस्ति नास्तीति विभ्रमापह्नवद्रष्टृत्वात् ।

पण्डा परशिवज्ञानमस्ति यस्य स पण्डितः ।

इति स्मृतेः ॥ ८४ ॥

पण्डितेन कांक्षणीयकथनम्

**प्राप्य सर्वज्ञतां कृत्स्नां ब्राह्मण्यं पदमद्वयम् ।**
**अनापन्नादिमध्यान्तं किमतः परमीहते ? ॥ ८५ ॥**

पण्डितस्य कांक्षणीयं किम् ? इत्यत आह—**प्राप्येति** । एवं **सर्वज्ञताञ्चितं** स्वावशेषतया **प्राप्य** "एष नित्यो महिमा ब्राह्मणस्य । न कर्मणा वर्धते नो कनीयान् ।",

किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ।

इत्यादिश्रुतिसिद्धं यत् पदं **अनापन्नादिमध्यान्तं** उत्पत्तिस्थितिलयकलनापह्नवसिद्धं नित्यतृप्तिरूपं तद्ब्राह्मण्यं पदमपि स्वावशेषतया प्राप्य **अतः परं किं** वास्तीत्ययमीहते ईहाविषयापह्नवबोधतः कृतकृत्यत्वात् ।

नैव तस्य कृतेनार्थो न श्रुतिस्मृतिविभ्रमैः ।
निर्मन्दर इवांभोधिः स तिष्ठति यथास्थितः ॥

इति श्रुतेः ॥ ८५ ॥

विदुषा शमप्राप्तिः

**विप्राणां विनयो ह्येष शमः प्राकृत उच्यते ।**
**दमः प्रकृतिदान्तत्वादेवं विद्वान् शमं व्रजेत् ॥ ८६ ॥**

स्वातिरिक्तनिरीहस्वमात्रं भजतीत्याह—**विप्राणामिति** । विरूपविलयं प्रपन्नबाह्यान्तःकलनानां **विप्राणां** ब्रह्मविद्वर्याणामेष **विनयो** विनीतत्वम् । ब्रह्ममात्रतयावस्थानं **हि विनयः** । स्वातिरिक्तकलनाश**मोप्येष** एव **प्राकृतः** स्वभावसिद्धत्वात् । प्रकृत्या स्वभावतो **दान्तत्वात् दमोप्येष** एव । य **एवं** यथोक्तस्वभावं स्वातिरिक्तकलनाशान्तं ब्रह्म **विद्वान्** सोऽयं **शमं** उपशान्तिलक्षणां ब्रह्ममात्रावस्थितिं **व्रजेत्** ब्रह्ममात्रतयावतिष्ठत इत्यर्थः ॥ ८६ ॥

स्वाज्ञस्वज्ञदृष्टिस्थितिः

**सवस्तु सोपलम्भं च द्वयं लौकिकमिष्यते ।**
**अवस्तु सोपलम्भं च शुद्धं लौकिकमिष्यते ॥ ८७ ॥**

स्वाज्ञस्वज्ञदृष्टिस्थिति प्रपञ्चयति—**सवस्त्विति** । यथा जागरणपरिदृश्यमानकलनाजातं वस्तुत्वेनोपलब्धिविषयवत् भाति तथा असल्लौकिकादिषड्दृष्टेः संप्रति वस्तुना सह वर्तत इति स्वातिरिक्ताविद्यापदतत्कार्यजातं **सवस्तु** । सत्यत्वेन भातत्वात् तथोपलंभनं तेन सह वर्तत इति **सोपलम्भं च** । यत्र स्वातिरिक्तं वस्तुत्वेनोपलब्धिविषयतां अर्हति तदेतदुभयं तत्तन्मताचार्यमतिविकल्पितं **द्वयं** स्वातिरिक्तं सत्यत्वेन यत्र लोक्यते तल्लौकिकं लोकादनपेतत्वात् **इष्यते** । यथा स्वाप्निकप्रपञ्चोऽवस्त्वपि उपलब्धिविषयो भवति तथाऽसल्लौकिकादिषड्दृष्ट्यतिरिक्तदृष्टिद्वयस्य स्वातिरिक्तमवस्त्वपि व्यवहारमात्रोपयोगिव्यावहारिकत्वेन प्रतीतिकालमात्रस्थायिप्रातिभासिकत्वेन चोपलब्धिविषयो भवति । **अवस्तु सोपलम्भं च** सत्यत्वेन बाह्यान्तर्विषयविरलत्वं शुद्धत्वम् । तदपि व्यावहारिकप्रातिभासिकदृष्टिभ्यां लोक्यत इति **लौकिकमिष्यते** ॥ ८७ ॥

परमार्थदृष्टिस्वरूपम्

**अवस्त्वनुपलम्भं च लोकोत्तरमिति स्मृतम् ।**
**ज्ञानं ज्ञेयं च विज्ञेयं सदा बुद्धैः प्रकीर्तितम् ॥ ८८ ॥**

पारमार्थिकदृष्टिः कीदृशी? इत्यत आह—**अवस्त्विति** । परमार्थदृष्टेः यथा स्वापे ग्राह्यग्राहककलनावैरल्यात् तत्प्रपञ्चजातस्यावस्तुत्वेनानुपलब्धिविषयत्वं तथा स्वातिरिक्तं शशविषाणवदवस्तुत्वेन प्रतीत्यभावात् **अनुपलंभं च** यत्र दृष्टं तत्पारमार्थिकदर्शनम् । "ब्रह्ममात्रमसन्न हि" इति श्रुत्यनुरोधेन स्वातिरिक्तासल्लौकिकापह्नवसिद्धत्वात् **लोकोत्तरमिति**,

इदं प्रपञ्चं यत्किंचित् यद्यज्जगति वीक्ष्यते ।
दृश्यरूपं च दृग्रूपं सर्वं शशविषाणवत् ॥

इत्यादिश्रुतिषु **स्मृतं** प्रकटितमित्यर्थः । किं च,

अधमं विश्वसत्त्वं हि मध्यमं व्यावहारिकम् ।
प्रातिभासिकमुत्कृष्टं विश्वासत्त्वं ततोऽधिकम् ॥

इति परमाक्षरोक्तेः । एवं लौकिकशुद्धलौकिकलोकोत्तरभेदेन यत् ज्ञायते तत् **ज्ञानं** शास्त्रजन्यमित्यर्थः । स्वातिरिक्तमस्ति तत्र तदारोपाधिकरणं **ज्ञेयं** स्वातिरिक्तं नेतीति तदपवादाधिकरणं च ज्ञेयम् । तद्व्यतिरेकेण ज्ञेयानुपपत्तेः । स्वातिरिक्तमस्ति नास्तीति विभ्रमापह्नवसिद्धब्रह्ममात्रं **विज्ञेयम्** । तत्र जाग्रज्जाग्रदादिचतुष्पञ्चदशकलनापह्नवसिद्धनिष्प्रतियोगिकतुर्यतुर्यरूपेण ज्ञेयत्वात् । इदमित्थमित्येतत्सर्वं **सदा बुद्धतत्त्वैः** ब्रह्मविद्वरीयोभिः **प्रकीर्तितं** प्रकाशितमित्यर्थः ॥ ८८ ॥

एतज्ज्ञानफलम्

**ज्ञाने च त्रिविधे ज्ञेये क्रमेण विदिते स्वयम् ।**
**सर्वज्ञता हि सर्वत्र भवत्येव महाधियः ॥ ८९ ॥**

एवं ज्ञानफलमाह—**ज्ञान** इति । महत् ब्रह्म तन्मात्रधीर्यस्य तस्य **महाधियः** ब्रह्मविद्वरीयसः लौकिकादिविषये **ज्ञाने** चादौ सवस्तुसोपलम्भात्मकद्वयात्मकाशुद्धलौकिकं तावत् अत्यन्तहेयत्वेन ज्ञेयम् । तदशुद्धलौकिकाभावेन ततो वस्तुसोपलम्भात्मकशुद्धलौकिकं ज्ञेयम् । पश्चादशुद्धशुद्धलौकिकतत्कार्यापह्नवसिद्धं लोकोत्तरमित्येवं **त्रिविधे च ज्ञेये क्रमेण** ज्ञाते तज्ज्ञानसमकालं स्वातिरिक्तमस्ति नास्तीति विभ्रमापह्नवज्ञः परमात्मा सर्वज्ञः तद्भावः **सर्वज्ञता** । स्वयमेव **सर्वत्र भवत्येवे**त्यत्र संशयो न कार्य इत्यर्थः ॥ ८९ ॥

सत्त्वस्यैव ज्ञेयत्वम्

**हेयज्ञेयाप्यवाक्यानि विज्ञेयान्यग्रयाणतः ।**
**तेषामन्यत्र विज्ञेयमुपलम्भस्त्रिषु स्मृतः ॥ ९० ॥**

अशुद्धशुद्धलौकिकयोरपि ज्ञेयत्वेन सत्त्वं स्यादित्यत आह—हेयेति । अशुद्धशुद्धलौकिकतत्कार्याणि हेयानि । शशविषाणवदवस्तुतया स्मर्तुमप्यक्षमाणीत्यर्थः । तदपह्नवसिद्धं यद्वस्तु तत् स्वमात्रतया ज्ञेयं सत्तामात्रत्वात् । तद्वाप्त्युपायत्वेन पाण्डित्यबाल्यमौनानि व्याविद्धसर्वैषणावन्मुनिनाप्यानि । "ब्रह्ममात्रमसन्न हि" इत्यादिश्रुत्यर्थश्रवणमनननिदिध्यासनं विना ब्रह्ममात्रस्य ज्ञातुमशक्यत्वात् । तदात्युपायत्वेन साधनत्रयमाप्तव्यमित्यर्थः ।

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।

"शान्तो दान्त उपरतस्तितिक्षुः", "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः", "तत्त्वमसि", "अहं ब्रह्मास्मि", "पश्यतेहापि सन्मात्रमसदन्यत्" इत्यादीनि वाक्यानि तानि **हेयज्ञेयाप्यवाक्यानि** त्यक्तस्वातिरिक्तैषणेन भिक्षुणा **अग्रयाणतः** प्रथमतः यथोक्तज्ञेयात्प्युपायत्वेन **ज्ञेयानी**त्यर्थः । **तेषां** हेयाप्यवाक्यानां उपायभूतानाम**न्यत्र** यदेतत्कलनापह्नवसिद्धं निष्प्रतियोगिकचिन्मात्रमेव स्वावशेषतया **विज्ञेयम्** । यथोक्तज्ञेयप्रबोधसमकालमपह्नोतव्यहेयाप्यवाक्येषु त्रिष्वपि उपलंभनं **उपलम्भो** वाचारंभणतया हेयादित्रयमस्ति नास्तीति कल्पनामात्रपर्यवसानतया च ब्रह्मविद्भिः **स्मृतः** । त्रयाणां शशविषाणवदवस्तुत्वात् ॥ ९० ॥

सर्वधर्माणां नानात्वाभावः

**प्रकृत्याकाशवज्ज्ञेयाः सर्वधर्मा अनादयः ।**
**विद्यते न हि नानात्वं तेषां क्वचन किञ्चन ॥ ९१ ॥**

विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तात्मनां विद्यमानत्वात् भवदभिमतज्ञेयस्य निष्प्रतियोगिकब्रह्ममात्रता कुतः? इत्यत आह—**प्रकृत्येति**। यथा मृद्विकल्पितघटशरावादिसत्त्वासत्त्वाभ्यां तदाकाशेयत्ता ज्ञदृष्ट्या तत्तदुपाध्यवच्छिन्नाकाशं तद्याथात्म्यज्ञदृष्ट्या आकाशमात्रप्रकृति तथा **प्रकृत्या** स्वाज्ञादिदृष्टिविकल्पितविश्वविश्वादयः **सर्वधर्माः**। एवंरूपेण व्यष्टिसमष्ट्यात्मकस्वाविद्यापदतत्कार्यसत्त्वासत्त्वाभ्यां अजातत्वात् **अनादयः** अजा इत्यर्थः। तेषां ब्रह्ममात्रप्रकृतित्वात्। सर्वधर्मा इति बहुवचनतो नानात्वं विनैकत्वं कुतः? इत्यत आह—**न हीति**। **तेषां** विश्वविश्वादीनां **क्वचन** क्वचिदपि **किंचनाल्पमपि नानात्वं न हि विद्यते**। स्वाज्ञदृष्ट्या व्यक्तीनां विद्यमानत्वात्। तद्भ्रान्त्यनुरोधेन बहुवचनमुक्तम्। तद्भ्रान्तिमात्रापगमे तेषां ब्रह्ममात्रत्वं सिद्धमित्यर्थः॥ ९१॥

सर्वधर्मपरिज्ञानफलम्

**आदिबुद्धाः प्रकृत्यैव सर्वधर्माः सुनिश्चिताः।**
**यस्यैवं भवति क्षान्तिः सोऽमृतत्वाय कल्पते॥ ९२॥**

एवं सर्वधर्मपरिज्ञानफलमाह—आदीति। यथा प्रकाशप्रकृतिकः सविता तथा विश्वविश्वादयः **सर्वधर्मा** आत्मानः **स्वप्रकृत्या आदावेव बुद्धाः** पूर्णबोधस्वरूपा इति **सुनिश्चिताः** पण्डितैः नित्यनिश्चितस्वरूपा इत्यर्थः। यथा सविता प्रदीपादिप्रकाशान्तरमनपेक्ष्य स्वार्थं परार्थं वा प्रकाशयति तथा एवं नैवमिति **यस्य** मुमुक्षोरेवं यथोक्तप्रकारेण सर्वदा आत्मार्थं परार्थं वा बोधनिश्चयनिरपेक्षतया **क्षान्तिः** स्वातिरिक्तनिरपेक्षता **भवति सोऽयमेवं** धर्मजातं विद्वान् निष्प्रतियोगिका**मृतत्वाय** ब्रह्ममात्रभावाय **कल्पते** समर्थो भवतीत्यर्थः॥ ९२॥

शान्तेः कर्तव्यताभावः

**आदिशान्ता ह्यनुत्पन्नाः प्रकृत्यैव सुनिर्वृताः।**
**सर्वे धर्माः समाभिन्ना अजं साम्यं विशारदम्॥ ९३॥**

त्रोधकर्तव्यताभावेऽपि शान्तिकर्तव्यता स्यादित्यत आह—**आदीति** । **सर्वे** विश्वविश्वादयो **धर्माः प्रकृत्यैव** साधनान्तरनैरपेक्ष्येण **आदावेव शान्ताः** स्वोद्विजनीयस्वातिरिक्तवैरल्यात् । वस्तुतो विश्वविश्वादिरूपेण **अनुत्पन्ना** अजाश्च । **प्रकृत्यैव सुनिर्वृताः** नित्यमुक्तस्वभावा इत्यर्थः । वैषम्यभेददृष्टिवैरल्यात् स्वाज्ञदृष्ट्या स्वातिरिक्तसर्वप्रसक्तौ **सर्वसमाः** सर्वाभि**न्ना** इव भान्ति । वस्तुनोऽवस्तुतो वाप्येते निष्प्रतियोगिका**जं साम्यं** स्वातिरिक्तजातिवैषम्या-पह्नवसिद्धनित्यशुद्धबुद्धमुक्तसत्यस्वभावेन **विशारदं** ब्रह्मैव यतो भवन्ति अतः शान्तिः मोक्षो वा नास्ति कर्तव्यः । न हि निष्प्रतियोगिकचिन्मात्रस्य कृतं किंचिदपि अर्थवत्तामर्हति वस्तुस्वभावस्याकृतत्वात् ॥ ९३ ॥

कृपणलक्षणम्

**वैशारद्यं तु वै नास्ति भेदे विचरतां सदा ।**
**भेदनिम्नाः पृथग्वादास्तस्मात्ते कृपणाः स्मृताः ॥ ९४ ॥**

उक्तार्थवैपरीत्येनात्मानं ये पश्यन्ति ते कृपणा इत्याह—**वैशारद्यन्त्विवति** । अजं साम्यं ब्रह्म स्वमात्रमिति ये जानन्ति ते ह्यकृपणाः । तद्विपरीता असल्लौकिकादिषड्दृष्टयः । तेषां **भेदे विचरतां** असल्लौकिकादीनां यत् ब्रह्ममात्रतयावस्थानलक्षणं **वैशारद्यं** तत्तु **नास्ति वै** कदापि **नास्त्येवेत्यर्थः** । यस्मात् एते स्वातिरिक्तास्तित्वप्रसक्तभेदेन **निम्नाः** सांसारिका अधोगतिं नविष्टाः । स्वातिरिक्तैकदेश आत्मेति केचन । तद्विलक्षणो जीव इत्यपरे । स्वातिरिक्तजगज्जीवेश्वरादिकं सत्यमित्यन्ये । तत्सर्वं व्यावहारिकं प्रातिभासिकं इति केचन विचक्षणाः । इत्येव वदनं येषां ते **पृथग्वादा** असल्लौकिकादयः । तस्मात् ते **कृपणाः** क्षुद्राः **स्मृताः** । अतः तेषां कार्पण्यं युक्तमित्यर्थः ॥ ९४ ॥

कृपणैः परमार्थतत्त्वस्यागम्यमानत्वम्

**अजे साम्ये तु ये केचिद्भविष्यन्ति सुनिश्चिताः ।**
**ते हि लोके महाज्ञानास्तच्च लोको न गाहते ॥ ९५ ॥**

य एवं कृपणाः तैः परमार्थतत्त्वं अनधिगम्यमेव । तद्विपरीताकृपणैस्तु गम्यमित्याह—**अज** इति । निष्प्रतियोगिकाजे साम्ये ब्रह्ममात्रे ये केचिदिह स्त्र्यादयोऽपि सर्वापह्नवसिद्धं ब्रह्म स्वमात्रमिति निश्चिता भविष्यन्ति चेत् त एव हि लोके निरतिशयब्रह्ममात्रज्ञानिनो महाज्ञानाः कृतकृत्या भवन्तीत्यर्थः ।

प्राप्य ज्ञानदशामेतां पशुम्लेच्छादयोऽपि ये ।
सदेहा वाप्यदेहा वा ते मुक्ता नात्र संशयः ॥

इति श्रुतेः । तादृशैर्विदितं परमार्थतत्त्वं पामरलोकोऽयं न गाहते न हि साक्षात्करोतीत्यर्थः ।

सर्वभूतात्मभूतस्य सम्यगात्म्यं प्रपश्यतः ।
देवाप्यमार्गे मुह्यन्ति ह्यपदस्य पदैषिणः ॥

इति स्मरणात् ॥ ९५ ॥

ज्ञानस्यासङ्गत्वम्

**अजेष्वजमसंक्रान्तं धर्मेषु ज्ञानमिष्यते ।**
**यतो न क्रमते ज्ञानमसङ्गं तेन कीर्तितम् ॥ ९६ ॥**

तेषां महाज्ञानत्वं कुतः? इत्यत आह—**अजेष्विति** । यथा मार्तण्ड औष्ण्यप्रकाशकत्वं स्वभावसिद्धं तथा अनुत्पन्नधर्मात्मस्व**जेषु अजमचलं** च **ज्ञानमिष्यते यतः** तस्मात् ज्ञानं न हि स्वातिरिक्तकलनासंक्रान्तम् । अत एव स्वातिरिक्तार्थान्तरे तादृशाजज्ञानं **न क्रमते** । **तेन** कारणेनाकाशवद**संगं** तत् प्र**कीर्तितम्** ॥ ९६ ॥

आवरणच्युतेरभावः

**अणुमात्रेऽपि वैधर्म्ये जायमाने विपश्चितः ।**
**असङ्गतापि नास्त्येव किमुतावरणच्युतिः? ॥ ९७ ॥**

स्वातिरिक्तसंगतः स्वमात्रावरणच्युतिः नास्तीत्याह—**अण्विति**। निष्प्रतियोगिकब्रह्ममात्रं हि प्रकृतिः धर्मः। तद्विपरीतो विधर्मः। तद्भावो वैधर्म्यं स्वातिरिक्ताविद्यापदतत्कार्यजातम्। तस्मिन् **वैधर्म्ये** तदेकदेशात्मत्वसत्यत्वव्यावहारिकत्वप्रातिभासिकत्वादिरूपेण वा तदस्तीत्य**णुमात्रेऽपि जायमाने** सति अथ तत्र **विपश्चितो** मेधाविनोऽप्य**संगता**पि **नास्त्येव**। तस्य स्वमात्रा**वरण**रूपस्वातिरिक्तच्युतिः स्यान्नवेति किं वक्तव्यम्? कदाप्यावरणच्युतिः नास्तीत्यर्थः ॥९७॥

धर्मस्वरूपम्

**अलब्धावरणाः सर्वे धर्माः प्रकृतिनिर्मलाः।**
**आदौ बुद्धास्तथा मुक्ता बुध्यन्त इति नायकाः ॥ ९८ ॥**

यतो धर्माः स्वातिरिक्तसंगमात्रेणावृता अतः स्वातिरिक्तमस्तीत्यभ्युपगन्तव्यमित्यत्र स्वातिरिक्तापह्नवसिद्धं ब्रह्म स्वमात्रमिति ज्ञानसमकालं धर्माणामावरणमस्ति नास्तीति विभ्रमो वा कथं सेद्धुं पारयति? इत्याह—**अलब्धेति**। स्वातिरिक्तावरणप्राप्तब्रह्ममात्रज्ञानसमकालं अलब्धं आवरणं कालत्रयेऽपि येषां ते **अलब्धावरणाः सर्वे धर्माः प्रकृतिनिर्मलाः** स्वभावतः परिशुद्धा इत्यर्थः। तेषां नित्यशुद्धबुद्धमुक्तस्वभावत्वात् **आदावेव बुद्धाः तथा मुक्ताः**। तथा चेत् ते कथं बुध्यन्ते? इति तत्राह—**नायका** इति। यत एते बोधशक्तिमत्स्वभावा अतस्ते निष्प्रतियोगिकं ब्रह्म स्वमात्रमिति बोद्धुं ज्ञातुं **नायकाः** ईश्वराः समर्था इत्यर्थः। यथा नित्यनिवृत्तगतयः पर्वतास्तिष्ठन्तीति तथा नित्यप्रकाशरूप आदित्यः प्रकाशयतीत्युच्यते। तथा नित्यबोधस्वरूपा अपि धर्मा **बुध्यन्त** इत्युच्यन्ते ॥ ९८ ॥

अद्वैतप्रशंसा

**क्रमते न हि बुद्धस्य ज्ञानं धर्मेषु तायिनः।**
**सर्वे धर्मास्तथा ज्ञानं नैतद्बुद्धेन भाषितम् ॥ ९९ ॥**

कालविशेषेण तज्ज्ञानं धर्मान्तरे क्रमत इत्यत आह—**क्रमत** इति। यथा सूर्यस्वाभाविकप्रकाशः सूर्यातिरिक्तघटादौ **न क्रमते** तथा स्वमात्रप्रबोधस्तायोऽस्य सहजतयास्तीति तायी बुद्धः तस्य **बुद्धस्य तायिनो** यत् पारमार्थिक**ज्ञानं** स्वातिरिक्त**धर्मेषु** स्वाज्ञविकल्पितस्वाविद्यापदतत्कार्येषु आत्मसत्यव्यवहारप्रतिभासरूपेण कदाचिदपि न हि **क्रमते**। तथा **सर्वे धर्मा** आत्मानः क्वचिदपि स्वातिरिक्तार्थान्तरे नक्रमन्तो ब्रह्ममात्रप्रकृतिका भवन्ति। "ज्ञानेनाकाशकल्पेन" इत्यादि यदादावुपन्यस्तं तदिदानीमुपसंहृतं आकाशकल्पज्ञानं कुत्रापि न क्रमत इति। किं तत् ज्ञानं त्रिपुटयात्मकं? नेत्याह—**नैतदिति**। **बुद्धेन** परमार्थदर्शिना भाषितज्ञानं **नैतत्** त्रिपुटयात्मकम्। किन्तु त्रिपुटयपह्नवसिद्धज्ञप्तिमात्रं ज्ञानमिति **भाषितं** प्रकाशितं आख्यातमित्यर्थः ॥९९॥

परमार्थतत्त्वबोधो नमस्कारश्च

**दुर्दर्शमतिगम्भीरं अजं साम्यं विशारदम्।**
**बुद्ध्वा पदमनानात्वं नमस्कुर्मो यथाबलम् ॥ १०० ॥**

शास्त्रप्रतिपाद्यं वस्तु स्वमात्रमित्युपसंहरति—**दुर्दर्शमिति**। अस्ति नास्तीत्यादिचतुष्कोटिकलनापह्नवसिद्धत्वात् स्वातिरिक्तास्तित्वदृष्टिभिः **दुर्दर्शम्**। तेषां स्वमात्रावृतदृष्टित्वेन तत् दुर्विज्ञेयमित्यर्थः। अत एव निस्तरंगसमुद्रवत् **अतिगम्भीरं,**

ततस्तिमितगम्भीरं न तेजो न तमस्ततम्।
अनाख्यमनभिव्यक्तं सत् किंचिदवशिष्यते॥

इति श्रुतेः। कारणान्तरेण स्वयं न जायते स्वस्मादपि किंचित् कार्यान्तरं न जायत इत्य**जम्**। स्वातिरिक्तजाग्रज्जाग्रदादिपञ्चदशावस्थातद्व्यष्ट्यभिमानिविश्वविश्वादितत्समष्ट्यभिमानिविराड्विराडादितदुभयैक्याभिमान्योत्रोत्रादिचतुष्पञ्चदशकलनावैषम्यापह्नवसिद्धं **साम्यम्**। निष्प्रतियोगिकस्वमात्रतया अवस्थातुं **विशारदं** समर्थम्।

इन्थंरूपेण पद्यत इति पदम्। तत् किं दुर्दर्शमित्यादिनानाविशेषणवैशिष्ट्यात् नानात्मकं? तत्राह—**अनानात्वमिति**। यद्बोधसमकालं जाग्रज्जाग्रदादिनानात्वस्य अपह्नवं गतत्वात् **अनानारूपं पदं** श्रुत्याचार्यप्रसादतो **बुद्ध्वा** तद्भावभावितधिया सम्यगवगम्य तादृक्पदं स्वमात्रमिति **यथाबलं** यावत्कालं वयं **नमस्कुर्मः** निष्प्रतियोगिकैक्यानुसन्धानं कुर्मः "नमस्त्वैक्यं प्रवदेत्" इति श्रुतेः। दुर्दर्शमित्यादिनानाविशेषणस्य ब्रह्मातिरिक्तनानापह्नवोपायत्वेन अनानात्वं सिद्धमिति प्रकरणार्थः॥ १०० ॥

सर्वापह्नवसंसिद्धपरमाद्वैतवैभवम्।
येनादौ ख्यापितं तस्मै देशिकाय नमस्सताम्॥
माण्डूक्योपनिषद्गूढतात्पर्यं कारिकाशतैः।
येन प्रकाशितं गौडपादाचार्याय ते नमः॥

इत्यलातशान्तिप्रकरणं संपूर्णम्

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
लिखितं स्याद्विवरणं माण्डूक्यस्य स्फुटं लघु॥
सर्ववेदान्तसारिष्ठमाण्डूक्यविवृतेरिह।
ग्रन्थस्त्रिचत्वारिंशाधिषट्शताधिसहस्रकम्॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे षट्संख्यापूरकं
माण्डूक्योपनिषद्विवरणं संपूर्णम्

---

# तैत्तिरीयोपनिषत्

## शं नो मित्रः—इति शान्तिः

## शीक्षावल्ली

### प्रथमोऽनुवाकः

मङ्गलाचारः शान्तिपाठः

ॐ शं नो मित्रः शं वरुणः। शं नो भवत्वर्यमा। शं न इन्द्रो बृहस्पतिः। शं नो विष्णुरुरुक्रमः। नमो ब्रह्मणे। नमस्ते वायो। त्वमेव प्रत्यक्षं ब्रह्मासि। त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि। ऋतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु। अवतु माम्। अवतु वक्तारम्। ॐ शान्तिः शान्तिः शान्तिः।

कोशानां पञ्चकं यत्र यात्यपह्नवमञ्जसा।
सत्यज्ञानानन्तसुखं तदहं कलयेऽक्षरम्॥

इह खलु कृष्णयजुर्वेदान्तर्गततैत्तिरीयशाखायां अग्निहोत्रदर्शपूर्णमासादिवाजिमेधान्तं कर्मजातं सम्यक् प्रकाशितम्। समस्तकर्माश्रयभूतेश्वरोपासनानि चाभिहितानि। तत्र सकामस्य प्रातिस्विकेन कर्म ज्ञानं वा कर्मसमुच्चितज्ञानं वा

किंचित् विकलं कर्म फलोपधायकं न भवतीति भिया यथावदनुष्ठितं सत् पुनरावृत्त्यर्हधूमादिमार्गप्रापकं भवति। निष्कामस्य मुमुक्षोस्तु धूमादिमार्गविपरीतार्चिरादिना ब्रह्मलोकाप्तिः सालोक्यादिचतुर्विधमुक्तिर्वा चित्तशुद्धिप्राप्यसंन्यासपूर्वकब्रह्मजिज्ञासा वा उदेति। तथाविधजिज्ञासोः जिज्ञास्यब्रह्मप्रतिपत्तये तैत्तिरीयोपनिषदारभ्यते। यदि निरतिशयसुखप्रतिपत्त्यर्थोऽयं उपनिषदारंभः तस्य कर्मणैव संपादयितुं सुशकत्वात्। तथाहि—काम्यप्रतिषिद्धकर्माननुष्ठाय प्रत्यवायप्रासनित्यादिकर्मानुष्ठातुः मोक्षसंभवात्। यद्वा— स्वर्गादिसुखसामान्यस्य कर्मनिमित्तत्वात् मोक्षस्यापि सुखरूपत्वाविशेषात् कर्मैव मोक्षहेतुरिति चेन्न; मोक्षस्यानारभ्यत्वेन नित्यत्वात्। न हि नित्यं किंचिदारभ्यते। स्वातिरिक्तकलनापह्नवसिद्धब्रह्ममात्रावस्थानं हि मोक्षः। तदवगतेः कर्मजाततद्धेतुकामतद्धेतुस्वाविद्यापह्नवपूर्वकत्वात्। उपनिषदो ब्रह्मविद्यास्वरूपत्वेन ब्रह्ममात्रावृतिभेदनपटुत्वात् तदर्थं उपनिषदारंभो युज्यते। किं च स्वाज्ञानप्रभवस्वातिरिक्तस्य स्वज्ञानमन्तरा क्षयासंभवात्। "ब्रह्मविदाप्नोति परं", "अभयं प्रतिष्ठां विन्दते", "एतमानन्दमयमात्मानमुपसंक्रामति", "तमेवं विद्वानमृत इह भवति" इत्यादिश्रुतेः। क्वचिदवान्तररूपेण क्वचिदाख्यायिकारूपेण च प्रवृत्तिर्विद्यास्तुत्यर्था। वक्ष्यमाणसच्चिदानन्दमात्रब्रह्मप्रतिपत्तिहेतुतैत्तिरीयोपनिषदः सुखप्रतिपत्त्यर्थं अल्पग्रन्थतो विवरणमारभ्यते। उपनिषच्छब्देन ब्रह्मविद्या उच्यते। तच्छरणानां जन्मादिविशरणात् तद्धेतुस्वाविद्यावसादनात् निष्प्रतियोगिकब्रह्ममात्रगमकत्वाच्च तादर्थ्येन ग्रन्थस्याप्युपनिषत्त्वं युज्यते। ब्रह्मविद्यार्थिनां तद्विद्याप्रतिबन्धकतापत्रयापनोदनाय आदौ शान्तिः उच्यते—शमिति। अहःप्राणयोरभिमानिदेवतात्मको **मित्रः**। **नः** अस्माकं **शं** सुखं भवतु तनोतु। तथा रात्र्यपानाभिमानिदेवतात्मको **वरुणो** नः अस्माकं **शं** भवतु। चक्षुष्य**र्यमा** बले **इन्द्रः** वाचि बुद्धौ च **बृहस्पतिः** पादाभिमान्यु**रुक्रमो विष्णुश्च** एवमाध्यात्मिकदेवताः शं नो भवत्विति सर्वत्रानुषज्यते। मित्रादिदेवतासु सुखकृत्सु सतीषु विद्याश्रवणधारणादिप्रतिबन्धो न भवेदिति तत्सुखकृत्त्वं शं नो भवत्विति प्रार्थ्यते। किं च—विद्योपसर्गशान्त्यर्थं विविदिषुणा ब्रह्मवायुनमस्कारः कार्य इत्याह— **नम** इति। **ब्रह्मणे**

चतुराननाय **नमोऽस्तु** । हे **वायो** ! **ते** तुभ्यं **नमोऽस्तु** प्रह्वीभावं करोमीत्यर्थः । यद्वा—सूत्रविराड्भेदेन ब्रह्मणे वायो ! इति वायुरेव अभिधीयते । यतः स्वान्तर्बाह्ये सूत्रवैराजभावतः **त्वमेव प्रत्यक्षं ब्रह्मासि**, अतः **त्वामेव प्रत्यक्षं ब्रह्म वदिष्यामि** । यथा शास्त्रकर्तव्यार्थं **ऋतं त्वां वदिष्यामि** वागादिकरणग्राह्यार्थं **सत्य**मपि त्वां **वदिष्यामि**, तथा वाय्वाख्यं ब्रह्म सर्वात्मकत्वेन मया स्तुतं सत् विद्यासंयोजनेन विद्यार्थिनं **मां अवतु** । **तदेव** वक्तृत्वसंयोजनेन **वक्तारं** आचार्यं **अवतु** । "अवतु मां अवतु वक्तारं" इति पुनर्वचनमादरार्थम् । विद्याप्राप्त्यन्तरायकाध्यात्मिकादितापत्रयनिरसनार्थं शान्तिः शान्तिः शान्तिरिति त्रिर्वचनम् ।

इति प्रथमोऽनुवाकः

---

## द्वितीयोऽनुवाकः

वर्णस्वरादिशिक्षणम्

**ॐ शीक्षां व्याख्यास्यामः । वर्णः स्वरः । मात्रा बलम् । साम संतानः । इत्युक्तः शीक्षाध्यायः ।**

उपनिषदोऽर्थज्ञानप्रधानत्वेन पाठप्रयत्नोपरमः स्यादित्याशंक्य तन्मा भूदिति शिक्षाध्याय आरभ्यते—**शीक्षा**मिति । यया वर्णाद्युच्चारणं शिक्ष्यते सेयं शिक्षा । सैव शीक्षा । यद्वा—दैर्घ्यं छान्दसम् । तां **शीक्षां** विस्पष्टं आ समन्तात् **व्याख्यास्यामः** । ख्याङित्यादिष्टस्य चक्षिङः व्याङ्पूर्वस्य व्यक्तवाक्कायकर्मणः एतद्रूपमिति । तत्र अकारादिः **वर्णः** । उदात्तादिः **स्वरः** । ह्रस्वाद्या **मात्राः** । प्रयत्नविशेषो **बलम्** । मध्यमवृत्त्या वर्णोच्चारणं **साम** सन्ततिः **सन्तानः** संहितेत्यर्थः ।

यस्मिन्नध्याये अर्थाः शिक्षितव्याः सोऽयं **शीक्षाध्यायः** उक्तः उदितः । इतिशब्द उपसंहारार्थः ॥

इति द्वितीयोऽनुवाकः

---

## तृतीयोऽनुवाकः

अधिलोकादिस्वरूपं तज्ज्ञानफलं च

सह नौ यशः । सह नौ ब्रह्मवर्चसम् । अथातः सꣳहिताया उपनिषदं व्याख्यास्यामः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमधिविद्यमधिप्रजमध्यात्मम् । ता महासꣳहिता इत्याचक्षते । अथाधिलोकम् । पृथिवी पूर्वरूपम् । द्यौरुत्तररूपम् । आकाशः संधिः ॥ १ ॥ वायुः संधानम् । इत्यधिलोकम् । अथाधिज्यौतिषम् । अग्निः पूर्वरूपम् । आदित्य उत्तररूपम् । आपः संधिः । वैद्युतः संधानम् । इत्यधिज्यौतिषम् । अथाधिविद्यम् । आचार्यः पूर्वरूपम् ॥ २ ॥ अन्तेवास्युत्तररूपम् । विद्या संधिः । प्रवचनꣳ संधानम् । इत्यधिविद्यम् । अथाधिप्रजम् । माता पूर्वरूपम् । पितोत्तररूपम् । प्रजा संधिः । प्रजननꣳ संधानम् । इत्यधिप्रजम् ॥ ३ ॥ अथाध्यात्मम् । अधरा हनुः पूर्वरूपम् । उत्तरा हनुरुत्तररूपम् । वाक् संधिः । जिह्वा संधानम् । इत्यध्यात्मम् । इतीमा महासꣳहिताः । य एवमेता महासꣳहिता व्याख्याता वेद । संधीयते प्रजया पशुभिः । ब्रह्मवर्चसेनान्नाद्येन सुवर्ग्येण लोकेन ॥४॥

अधुना संहितोपनिषदाम्नायते—**सह नाविति**। तत्र संहितोपनिषत्परिज्ञाननिमित्तं **यद्यशः** प्राप्यते तत् **नौ** आचार्यशिष्ययोः **सहैवास्तु**। तन्निमित्तत्वेन यत् **ब्रह्मवर्चसं** तेजः **सहैवास्तु** इति शिष्यवचनमाशीः। नाचार्यस्य, कृतार्थत्वात्। यतोऽर्थज्ञानं विना ग्रन्थभाविता बुद्धिः न शक्यत इति तदर्थं ग्रन्थसन्निकृष्टामेव **संहितोपनिषदं** तद्विषयदर्शनं **व्याख्यास्यामः**। तेष्विति पञ्चस्विति **पञ्चसु** ज्ञानविषयाधिकरणेषु आश्रयेष्वित्यर्थः। तानि कानि? इत्यत आह—**अधिलोकमिति**। यद्दर्शनं लोकेष्वधि तदधि**लोकम्**। तथा अधिज्योतिर**धिज्यौतिषम्**। **अधिविद्यमधिप्रजमध्यात्ममिति** लोकादिमहावस्तुविषयत्वात्। **ता** एताः पञ्चविषया उपनिषदो महत्यश्च तास्संहिताश्चेति वेदविदो **महासंहिता इत्याचक्षते** कथयन्तीत्यर्थः। तत्राद्यमधिलोकस्वरूपमाह—**अथेति**। यथोक्तोपन्यस्तानां उपनिषदां अथशब्दा दर्शनक्रमविषयाः। संहितायाः **पूर्ववर्णरूपं पृथिवी**। पूर्ववर्णे पृथिवीदृष्टिः कर्तव्येत्यर्थः। तथा उत्तरवर्णे द्युदृष्टिः कार्या। पूर्वोत्तरवर्णयोः **आकाशो**ऽन्तरिक्षलोकः **सन्धिः** सन्धीयतेऽस्मिन् वर्णद्वयमिति सन्धिः मध्यमित्यर्थः। अनेन सन्धीयत इति। **वायुस्सन्धानमिति** अधिलोकदर्शनमुक्तम्। अथाधिज्योतिरादिदर्शनमुच्यते—**अथे**त्यादि। अधिलोकमित्यादौ योऽर्थोऽभिहितः तथाधिज्यौतिषमित्यादिषु सोऽर्थः समान इति ज्ञेयः। संहितापूगज्ञानफलमाह—**इतीति**। इतिशब्दः उक्तोपपदप्रदर्शनार्थः। **यः कश्चिदेताः महासंहिताः** "पृथिवी पूर्वरूपं" इत्यादिना **व्याख्याता वेद** "यथावदुपास्ते", "इति प्राचीनयोग्योपास्स्व" इति वक्ष्यमाणानुरोधेन वेदनस्य ज्ञानार्थत्वेऽपि अत्र वेदेत्युपासनं स्यात्। शास्त्रोक्तविषयालम्बनासंकीर्णतुल्यप्रत्ययसंततिरुपासनमित्युच्यते। यस्तु देशिकमुपचरति स उपास्त इत्युच्यते स तु तत्फलमाप्नोति। अतोऽत्रापि य एवं वेद **सन्धीयते प्रजया पशुभिः** स्वर्गान्तफलं प्राप्नोतीत्यर्थः॥ १-४॥

इति तृतीयोऽनुवाकः

## चतुर्थोऽनुवाकः

### मेधाश्रीकामजपहोमौ

यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात्संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधया पिहितः । श्रुतं मे गोपाय । आवहन्ती वितन्वाना ॥ १ ॥ कुर्वाणाचीरमात्मनः । वासाꣳसि मम गावश्च । अन्नपाने च सर्वदा । ततो मे श्रियमावह । लोमशां पशुभिः सह स्वाहा । आमायन्तु ब्रह्मचारिणः स्वाहा । विमायन्तु ब्रह्मचारिणः स्वाहा । प्रमायन्तु ब्रह्मचारिणः स्वाहा । दमायन्तु ब्रह्मचारिणः स्वाहा । शमायन्तु ब्रह्मचारिणः स्वाहा ॥ २ ॥ यशो जनेऽसानि स्वाहा । श्रेयान् वस्यसोऽसानि स्वाहा । तं त्वा भग प्रविशानि स्वाहा । स मा भग प्रविश स्वाहा । तस्मिन् सहस्रशाखे । निभगाहं त्वयि मृजे स्वाहा । यथापः प्रवता यन्ति । यथा मासा अहर्जरम् । एवं मां ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा । प्रतिवेशोऽसि प्रमा भाहि प्रमा पद्यस्व ॥ ३ ॥

"स मेन्द्रो मेधया स्पृणोतु", "ततो मे श्रियमावह" इति मेधाश्रीकामयोः तत्प्राप्तिसाधनजपहोमावुच्येते—यश्छन्दसामिति । यः छन्दसां वेदानां प्राधान्यात् ऋषभ इव ऋषभः । तद्यथा "शंकुना सर्वाणि पर्णानि संतृण्णान्येवमेवोङ्कारेण सर्वा वाक् संतृण्णा", "ओंकार एवेदं सर्वं"

इति श्रुत्यनुरोधेन सर्ववाग्व्याप्तेः अयमोंकारो **विश्वरूपः**। अत एवोंकारस्य ऋषभत्वं उपपद्यते। ओंकारस्य ऋषभादिशब्दैः स्तुतिः न्याय्येत्यर्थः। छन्दांस्यमृतम्। तस्मात् **छन्दोभ्यः ह्यमृतात् अधि संबभूव** "प्रजापतिर्लोकानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत् तामभ्यतपत् तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवःस्वरिति। तान्यभ्यतपत् तेभ्योऽभितप्तेभ्यः ओंकारः संप्रास्रवत्" इतिश्रुत्यनुरोधेन विश्वसिसृक्षोः प्रजापतेः तपस्तप्यतः सर्वलोकसर्ववेदसर्वव्याहृतिभ्यः सारिष्ठत्वेन ओंकारः प्रादुर्बभूव [किन्तु] नोत्पन्नः। तस्य नित्यत्वात्। न हि नित्यं किंचित् उत्पद्यते।

ओंकारस्य तु नित्यत्वात् नाञ्जसोत्पत्तिरिष्यते।

इति वार्तिकोक्तेः। **सोऽयं** ओंकार **इन्द्रः** परमेश्वरः **मा** मां आत्मविषयक**मेधया** प्रज्ञया **स्पृणोतु** बलयत्विति ब्रह्मविषयकप्रज्ञाबलं हि प्रार्थ्यते। हे **देव!** **अमृत**त्वहेतुभूतब्रह्मज्ञानस्य **धारणो** धारयिता **भूयासम्**। किं च **शरीरं मे विचर्षणं** वेदान्तश्रवणमनननिदिध्यासनविचक्षणं योग्यं भूयात्। **जिह्वा मे मधुमत्तमा** मधुरभाषिणीत्यर्थः। **कर्णाभ्यां भूरि** वेदान्तजातं **विश्रुवं** श्रोता भूयासम्। असेरिव **ब्रह्मणः** परमात्मनः **कोशोऽसि**। तव ब्रह्मोपलब्धिहेतुत्वात्। स त्वं सामान्यलौकिक**मेधया पिहितः** सम्यगाच्छादितः वैदिकमेधां दत्वा स्वावृतिं उद्घाटयेत्यर्थः। **श्रुतं** शास्त्रजन्यज्ञानं **मे गोपाय** रक्ष। यावज्जीवं सकृत् श्रुतमपि तदविस्मरणपूर्वकं धारणायोग्यं मां कुर्विति भावः। मेधाकामस्य जपार्थोऽयं मन्त्र उक्तः। अधुना श्रीकामस्य होमार्थो मन्त्र उच्यते— **आवहन्तीति**। हे देव! त्वद्दत्तया मेधया विशिष्टस्य मम श्रियमावहेत्यन्वयः। किंविशिष्टम्? इत्यत आह—**आवहन्तीति**। **आवहन्ती** आनयन्ती **वितन्वाना** विस्तारयन्ती। तनोतेः कर्मार्थत्वात्। **अचीरं** अचिरं क्षिप्रं **कुर्वाणा**। किम्? इत्यत आह—**वासांसीति**। वस्त्राणि **गावश्च** सर्वदा निरवधि**कान्नपाने च कुर्वाणा** श्रीः। तां **लोमशां** अजाविकादियुक्तां अन्यैश्च पशुभिरपि युक्तां **श्रियं आवह**। अमेधसः श्रीरनर्थकारिण्यपि मेधावतो मम चित्तशुद्धिहेतुकर्मनिर्वर्तनानुकूला स्यात्। "वित्तं मे स्यात् अथ कर्म कुर्वीय"

इति श्रुतेः। मन्त्रान्तश्रूयमाणस्वाहाकारो होमार्थः। अयं संपत्सारस्वतज्ञानसार्वभौम इति मम सर्वत्र यशःप्रसारणार्थं दिगन्तरेभ्यो विद्यार्थिनो मामायान्त्विति प्रार्थयति—**आमायन्त्विति**। मामिति व्यवहितेन सम्बन्धः। **आ** समन्तात् **ब्रह्मचारिणो मामायन्तु। यशस्विजने** बहु यशस्वि **असानि** भवानि। **वस्यसो** महद्भिः श्लाघनीयसाधुवर्त्मनि वसीयसः वसुमत्तमाद्वा तदतिशयेन **श्रेयान्** प्रशस्यतमोऽहमसानि। किं च हे **भगवन्**! ओंकारब्रह्मणः कोशभूतं **तं त्वा** त्वामनन्यभावेन **प्रविशानि** त्वदात्मैव भवामीत्यर्थः। हे **भगवन्**! **स** त्वमपि **मा मां प्रविश** आवयोरैक्यमेवास्त्वित्यर्थः। **तस्मिन् सहस्रशाखे** बहुसहस्रशाखास्थानीयाकाराद्यवयवविशिष्टे "अकार अयुतावयवान्वितः उकारः सहस्रावयवान्वितो मकारश्शतावयवोपेत अर्धमात्रोऽनन्तावयवाकारः" इति श्रुतेः, एतादृशे त्वयि मत्कृतपुण्यपापजातं **निमृजे** शोधयामीत्यर्थः। **आपो यथा** निम्नवता **प्रवता** देशे **नयन्ति। यथा मासा** अहानि यस्मिन् जीर्यन्ते सोऽहर्जरः संवत्सरः। तं यन्ति। हे **धातः**! ओङ्कार **एवं सर्व**दिग्भ्यो **मां ब्रह्मचारिण आयन्तु** आगच्छन्तु। **प्रतिवेशः** श्रमापनयनासन्नगृहरूपोऽसि। त्वदुपासकानां यतः सर्वदुःखापनयनस्थानं **असि** अतो मां प्रति स्वात्मानं **प्रभाहि** प्रकाशय। मां **प्रपद्यस्व** यथा स्पर्शवेधिरसविद्धलोहजातमिव दुर्वर्णतां विसृज्य सुवर्णघनवत् त्वदात्मानं कुर्वित्यर्थः। मेधाविशिष्टश्रीकामोऽस्मिन् प्रकरणेऽधिक्रियते धनार्थम्। धनं हि कर्मार्थम्। कर्म च श्रेयःपरिपन्थिदुरितक्षयार्थम्। तत्क्षयाद्धि ज्ञानं प्रकाशत इत्यत्र—

ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः।
यथादर्शतलप्रख्ये पश्यत्यात्मानमात्मनि॥

इति स्मृतेः॥ १–३॥

इति चतुर्थोऽनुवाकः

———

## पञ्चमोऽनुवाकः

स्वाराज्यफलकोपासनम्

भूर्भुवः सुवरिति वा एतास्तिस्रो व्याहृतयः। तासामु ह स्मैतां चतुर्थीम्। माहाचमस्यः प्रवेदयते। मह इति। तद्ब्रह्म। स आत्मा। अङ्गान्यन्या देवताः। भूरिति वा अयं लोकः। भुव इत्यन्तरिक्षम्। सुवरित्यसौ लोकः॥ १॥ मह इत्यादित्यः। आदित्येन वाव सर्वे लोका महीयन्ते। भूरिति वा अग्निः। भुव इति वायुः। सुवरित्यादित्यः। मह इति चन्द्रमाः। चन्द्रमसा वाव सर्वाणि ज्योतीꣳषि महीयन्ते। भूरिति वा ऋचः। भुव इति सामानि। सुवरिति यजूंषि॥ २॥ मह इति ब्रह्म। ब्रह्मणा वाव सर्वे वेदा महीयन्ते। भूरिति वै प्राणः। भुव इत्यपानः। सुवरिति व्यानः। मह इत्यन्नम्। अन्नेन वाव सर्वे प्राणा महीयन्ते। ता वा एताश्चतस्रश्चतुर्धा। चतस्रश्चतस्रो व्याहृतयः। ता यो वेद। स वेद ब्रह्म। सर्वेऽस्मै देवा बलिमावहन्ति॥ ३॥

संहिताविषयमुपासनमुक्तम्। मेधाश्रीकामयोः जपहोमार्थौ मन्त्रावप्यभिहितौ। अधुना स्वाराज्यफलकं व्याहृत्यात्मन उपासनमुच्यते—भूर्भुवस्सुवरिति। भूर्भुवस्सुवरिति इत्युक्तोपप्रदर्शनार्थः। वा इति तिस्र इति प्रदर्शितानां परामर्शार्थः। इतिवैशब्दाभ्यां एता व्याहृतयः स्मर्यन्ते। तासां मह इति व्याहृतिः चतुर्थी। तामेतां महाचमसस्यापत्यं माहाचमस्यो नाम प्रवेदयते मुनिः। उ ह स्म इति निपातौ वृत्तानुस्मारणार्थौ। माहाचमस्यस्य ऋषित्वेन ऋषिस्मरणमपि उपासनाङ्गं इत्यवगम्यते। तेन दृष्टा व्याहृतिः का?

इत्यत आह—मह इति। यत् महत्वेनाभिमतं **तदेव ब्रह्म**। किं तत्? यत्सर्वत्राप्नोति **स आत्मा**। अर्धमात्रायमानमह इत्यनेन व्याहृत्यात्मना आदित्यचन्द्रब्रह्मान्नभूतेन यतो व्याप्यन्तेऽतोऽङ्गान्यवयवानि। **अन्या देवता** इति देवताग्रहणं सर्वभूतभौतिकोपलक्षणार्थम्। लोकदेववेदप्राणादीनां व्याहृत्यवयवत्वं कुतः? इत्यत आह—**भूरिति। अयं लोकः अग्निः ऋग्वेदः। प्राण इति प्रथमा व्याहृतिः। एवमुत्तरा अपि एकैकाः चतुर्धा भवन्ति। मह इति ब्रह्म।** शब्दाधिकारेऽन्यस्यासंभवात्। ब्रह्मशब्देन ह्योंकारो विज्ञेयः। उक्तार्थमन्यत्। **ता वा एता** भूर्भुवः सुवः मह इति चतस्र एकैकाश्चतुर्धा **चतस्रश्चतस्रः** सत्यः चतुर्धा भवन्तीत्यर्थः। **ता** यथोक्ता व्याहृतीः **यो वेद स ब्रह्म** ओंकाराख्यं **ब्रह्म वेद** विजानाति। **अस्मै** विजानते **सर्वे देवा** यथा ब्रह्मणे तथा **बलिं** हरन्ति कुर्वन्ति इत्यर्थः। "तद्ब्रह्म", "स आत्मेति" ब्रह्मण्यात्मत्वेन ज्ञाते कथं पुनरविज्ञातवत् यो वेद स वेद ब्रह्म इत्युक्तिरिति चेन्न; तद्विशेषस्याज्ञातत्वात्। व्याहृत्यात्मा ब्रह्मेति ज्ञातेऽपि हृदयान्तर्मनोमयत्वादि शान्तिसमृद्धमित्यन्तविशेषधर्मपूगस्याज्ञातत्वात्तद्विवक्षया शास्त्रं पारिप्लवतो ज्ञानमर्थं विशेषेण दर्शयति—**स वेद ब्रह्मेति** ॥ १–३ ॥

**इति पञ्चमोऽनुवाकः**

---

## षष्ठोऽनुवाकः

सर्वात्मभावप्रतिपत्तिमार्गकथनम्

**स य एषोऽन्तर्हृदय आकाशः। तस्मिन्नयं पुरुषो मनोमयः। अमृतो हिरण्मयः। अन्तरेण तालुके। य एष स्तन इवावलम्बते। सेन्द्रयोनिः। यत्रासौ केशान्तो विवर्तते। व्यपोह्य शीर्षकपाले। भूरित्यग्नौ प्रतितिष्ठति। भुव इति वायौ ॥ १ ॥**

सुवरित्यादित्ये । मह इति ब्रह्मणि । आप्नोति स्वाराज्यम् । आप्नोति मनसस्पतिम् । वाक्पतिश्चक्षुष्पतिः । श्रोत्रपतिर्विज्ञानपतिः । एतत्ततो भवति । आकाशशरीरं ब्रह्म । सत्यात्म प्राणारामं मन आनन्दम् । शान्तिसमृद्धममृतम् । इति प्राचीनयोग्योपास्स्व ॥२॥

वक्ष्यमाणधर्मपूगविशिष्टं ब्रह्म यो वेद स वेद ब्रह्मेत्यभिप्रायः । उक्तवक्ष्यमाणानुवाकयोः एकमुपासनं विज्ञेयम् । अत एव स्वाराज्यप्राप्तौ "सर्वेऽस्मै देवा बलिमावहन्ति" इत्युक्तम् । पूर्वानुवाकोक्तव्याहृत्यात्मन एव मनोमयत्वादिधर्मवैशिष्ट्येन करतलविन्यस्तामलकवत् सर्वात्मभावप्रतिपत्तिमार्गो वक्तव्य इति उत्तरानुवाक आरभ्यते—**स य** इति । हृदयस्य मध्ये लोहितं मांसपिण्डं तस्मिन् यद्दहरं पुण्डरीकम् । "कुमुदमिवानेकधा विकसितं" इति श्रुत्यनुरोधेन पुण्डरीकाकारोऽयं मांसपिण्डः अनेकनाडीजटिल ऊर्ध्वनालोऽधोमुखो हृदयमित्युच्यते । **य एषोऽन्तर्हृदये** तदवच्छेदेन करकाकाशवद**ाकाशो** वर्तते । **तस्मिन्** हृदयावच्छिन्नाकाशे पुरिशयनात् भूरादिलोकपूरणाद्वा सोऽयं **पुरुषः** । मनुतेऽनेनेति **मनः** अन्तःकरणं **तन्मयः** । तत्रोपलभ्यत्वात् तदभिमानाद्वा तन्मयः । तल्लिंगो वा "लिंगं मनो यस्य" इति श्रुतेः । **अमृतः** अमरणधर्मा । **हिरण्मयः** ज्योतिर्मयः "हिरण्मयः पुरुषो दृश्यते" इति श्रुतेः । तस्यैवंविधस्य पुरुषस्य प्रतिपत्तिमार्ग उच्यते । मूलाधारत्रिकोणाग्रमारभ्य ब्रह्मरन्ध्रान्तगामिनी सुषुम्नेति काचन नाडी योगशास्त्रप्रसिद्धास्ति । सा च **तालुकयोर्मध्ये** गता । **यश्चैष** तालुकयोरन्तरे मांसखण्डः **स्तन इवावलम्बते**, तदन्तरेण मध्यपथा **यत्र च केशानामन्तोऽवसानं विवर्तते** । या **शीर्षकपाले व्यपोह्य** निर्गता **सेन्द्रयोनिः** इन्द्रस्य ब्रह्मणः प्राप्तियोनिः मार्गः स्वरूपप्रतिपत्तिद्वारभूतेत्यर्थः । विद्वानेव तन्नाडीवदनं केवलकुम्भकेन निष्पन्नप्राणापानाग्न्यैक्यसन्तप्तकुण्डलिन्या विभिद्य ततो ब्रह्मविष्णुरुद्रग्रन्थ्यन्वितषडाधारचक्रं विभिद्य मोक्षद्वारात् सहस्रारचक्रं प्रविश्य तत्रापि व्याहृत्यवयवात्मानं ध्यात्वा तत्प्रसादतः तदपि विभिद्य तदधिष्ठाता महद्ब्रह्मणोऽङ्गत्वेन **भूरिति** व्याहृतिरूपो योऽग्निः **तस्मिन्नग्नौ**

**प्रतितिष्ठति** अग्न्यात्मना इमं लोकं व्याप्नोतीत्यर्थः । तथा द्वितीयतृतीयादि व्याहृत्यात्मसु वाय्वादित्यब्रह्मसु क्रमात् प्रतितिष्ठति । तेषु आत्मभावं गत्वा मविशेषब्रह्मभावापत्तिलक्षणं **स्वाराज्यं** स्वराड्भावं **आप्नोति** । अङ्गभूत देवा यथा अङ्गिब्रह्मणे बलिमावहन्ति तथा अङ्गिभावमापन्नाय विदुषे बलिं आवहन्तीत्यर्थः । तथा **मनसस्पतिं** ईशितारं ईश्वरं चा**प्नोति** । किं च समस्तप्राणिवाक्चक्षुःश्रोत्रज्ञानविज्ञानादीनामपि **पतिर्भवति** । सर्वात्मकत्वेन तत्तत्प्राणिकरणग्रामस्वव्यापारप्रवृत्तिनिमित्तत्वात् । ततोऽप्यधिकव्यापकतामाह— **आकाशशरीरं ब्रह्मेति** । निरवयवाकाशवत् सूक्ष्मं शरीरं स्वरूपमस्येश्वरस्ये-त्याकाशशरीरं च तत् सर्वत्रोपबृंहणात् **ब्रह्म** चेति । तथोक्तं स्वाज्ञदृष्ट्या सत्य-वत् भातमूर्तामूर्तविशिष्टविश्वं आत्मा उपाधिः यस्य तदिदं **सत्यात्म** । **प्राणारामं** सूत्रात्मनः प्राणेषु क्रीडमानत्वात् । यन्मन आनन्दभूतं तन्**मन आनन्दम्** । वस्तुतः स्वातिरिक्तशान्त्या **समृद्धं** संपन्नम् । अत एव **अमृतं** अमरणधर्मि । एवं मनोमयत्वादिधर्मैर्विशिष्टं ब्रह्म हे **प्राचीनयोग्य** ! उपास्स्वेति आचार्योक्तिः ॥

**इति षष्ठोऽनुवाकः**

---

## सप्तमोऽनुवाकः

ब्रह्मणः पाङ्क्तस्वरूपेणोपासनविधिः

पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः । अग्निर्वायुरादित्य-श्चन्द्रमा नक्षत्राणि । आप ओषधयो वनस्पतय आकाश आत्मा । इत्यधिभूतम् । अथाध्यात्मम् । प्राणो व्यानोऽपान उदानः समानः । चक्षुः श्रोत्रं मनो वाक् त्वक् । चर्म माꣳसꣳ स्नावास्थिमज्जा । एतदधिविधाय ऋषिरवोचत् । पाङ्क्तं वा इदꣳ सर्वम् । पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोतीति ॥

यदेतद्व्याहृत्यात्मकं ब्रह्म उपास्यत्वेनाभिहितं तस्यैव पृथिव्यादिपाङ्क्तस्वरूपेण उपासनविधित्सया अनुवाकान्तरमारभ्यते—**पृथिवी**ति। तत्र लोकपाङ्क्तमाह—**पृथिव्यन्तरिक्षं द्यौर्दिशोऽवान्तरदिशाः** इति। देवतापाङ्क्तमाह—**अग्निर्वायुरादित्यश्चन्द्रमा नक्षत्राणी**ति। भूतपाङ्क्तमाह—**आप ओषधयो वनस्पतय आकाश आत्मे**ति। आत्मेति विराट् भूताधिकारात्। **अधिभूत**मिति ग्रहणमधिलोकाधिदेवतापाङ्क्तयोरुपलक्षणार्थम्। **अथ** अनन्तरं **अध्यात्म**पाङ्क्तत्रयमुच्यते। तत्र प्राणादिवायुपाङ्क्तं **प्राणो व्यानोऽपान उदानस्समान** इति। अथ चक्षुरादीन्द्रियपाङ्क्तं **चक्षुः श्रोत्रं मनो वाक् त्वक्** इति। अथ चर्मादिधातुपाङ्क्तं **चर्म मांसं स्नावास्थिमज्जे**ति। एतावद्धि खलु सर्वमध्यात्मं बाह्यं च। **एतदेवमधिविधाय** परिकल्प्य स्वच्छन्दं ऋषति चरतीति **ऋषिः** वेदः। तद्दर्शनसंपन्नो वा कश्चिद**षिरवोचत्**। किं तत्? इत्याह—**पाङ्क्तं वा इदं सर्व**मिति। पञ्चसंख्यायोगात् पङ्क्तिश्छन्दः। पाङ्क्तश्च यज्ञः। "पञ्चाक्षरा पङ्क्तिः पाङ्क्तो यज्ञः" इति श्रुतेः। एवं पञ्चसंख्यासामान्यात् **पाङ्क्तेनैवा**ध्यात्मिकेन **पाङ्क्तं** बाह्यं **स्पृणोति** तदात्मतया उपलभत इत्यर्थः। इदं परिदृश्यमानं सर्वं पाङ्क्तमिति यो वेद स हि प्राजापत्यं पदं अश्नुत इत्यर्थः॥

**इति सप्तमोऽनुवाकः**

---

## अष्टमोऽनुवाकः

ओङ्कारोपासनम्

**ओमिति ब्रह्म। ओमितीदꣳ सर्वम्। ओमित्येतदनुकृतिर्ह स्म वा अप्यो श्रावयेत्याश्रावयन्ति। ओमिति सामानि गायन्ति। ओꣳ शोमिति शस्त्राणि शꣳसन्ति। ओमित्यध्वर्युः प्रतिगरं**

प्रतिगृणाति । ओमिति ब्रह्मा प्रसौति । ओमित्यग्निहोत्रमनुजानाति । ओमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नवानीति । ब्रह्मैवोपाप्नोति ॥

यत् पुरा व्याहृत्यात्मन उपासनमुक्तं तस्यैव पाङ्क्तस्वरूपेण उपासनमभिहितं च । अथेदानीं सर्वोपासनाङ्गभूतोङ्कारोपासनमुच्यते—**ओमिति**। **ओमिति** इति शब्दः तदर्थपरिच्छेदार्थः । ओमित्येतच्छब्दात्मकं **ब्रह्मेति** मनसा धारयेत् । यतः **ओमितीदं सर्वं** शब्दप्रपञ्चस्य ओंकारेणैव व्याप्तत्वात् । "ओंकारेण सर्वा वाक् संतृण्णा" इति श्रुतेः । अभिधेयस्याभिधानतन्त्रत्वेनाभिधानात्मक ओंकारशब्दमात्रोऽपि परापरब्रह्मदृष्ट्योपास्यमानस्सन् परापरब्रह्माप्तिसाधनं भवति । परापरब्रह्मणोः स ह्योंकार एवालम्बनं प्रतीकमपि भवति विष्णुप्रतीकसालग्रामवत् । "एतेनैवायतनेनैकतरमन्वेति" इति श्रुतेः । उत्तरग्रन्थस्तु ओंकारस्तुत्यर्थः । तस्योंकारस्यैवात्रोपास्यत्वात् । **ओमित्येतदेव अनुकृतिः** अनुकरणम् । एतदेवमनुकरोत्यन्यः । अत ओंकारोऽनुकृतिः "अनुज्ञानुकृतिस्तारः" इति व्यावहारिकप्रणवोक्तेः । **ह स्म वा** इति प्रसिद्धार्थद्योतकाः । ओंकारस्यानुकृतित्वं प्रसिद्धं हि । **ओ श्रावयेति** प्रैषपूर्वकमा**श्रावयन्ति** प्रतिश्रावयन्ति । तथा सामगायकाः **ओमिति सामानि गायन्ति** । तथा शास्त्रशंसितारः **ओं शोमिति शास्त्राणि शंसन्ति** । तथा **ओमित्यध्वर्युः प्रतिगरं प्रतिगृणाति** । **ओमिति ब्रह्म प्रसौति** अनुजानाति । जुहोमीत्योमिति **अग्निहोत्रमनुजानाति** ओमित्येवानुज्ञां प्रयच्छतीत्यर्थः । **ओमिति ब्राह्मणः प्रवक्ष्यन्** प्रतिवचनं करिष्यन् अध्येष्यमाण ओमित्येवा**ह** । अध्यापितुमोमिति प्रपद्यते । **ब्रह्म** वेदमा**प्नवानि** ग्रहीष्यामीति ब्रह्मोपाप्नोति । यस्मादोंकारपूर्वं प्रवृत्तकर्मणां फलवत्त्वं तस्मात् ओंकारं ब्रह्मेत्युपासीतेत्यर्थः ॥

**इत्यष्टमोऽनुवाकः**

---

## नवमोऽनुवाकः

अपरविद्योपासनम्

ऋतं च स्वाध्यायप्रवचने च। सत्यं च स्वाध्यायप्रवचने च। तपश्च स्वाध्यायप्रवचने च। दमश्च स्वाध्यायप्रवचने च। शमश्च स्वाध्यायप्रवचने च। अग्नयश्च स्वाध्यायप्रवचने च। अग्निहोत्रं च स्वाध्यायप्रवचने च। अतिथयश्च स्वाध्यायप्रवचने च। मानुषं च स्वाध्यायप्रवचने च। प्रजा च स्वाध्यायप्रवचने च। प्रजनश्च स्वाध्यायप्रवचने च। प्रजातिश्च स्वाध्यायप्रवचने च। सत्यमिति सत्यवचा राथीतरः। तप इति तपोनित्यः पौरुशिष्टिः। स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तपः ॥

विज्ञानादेव स्वाराज्यसिद्धेः किं कर्मणा? इत्याशंक्य चित्तशुद्ध्यभावे ज्ञानानुदयात् तदर्थं कर्मोपन्यास इत्याह—**ऋतमित्यादिना**। **ऋतं सत्यं च** व्याख्यातम्। **स्वाध्यायोऽ**ध्ययनम्। **प्रवचनम**ध्यापनं ब्रह्मयज्ञो वा। **तपः** कृच्छ्रचान्द्रायणादिकम्। बाह्यकरणोपशमो **दमः**। अन्तःकरणोपशमः **शमः**। **अग्नयः** आधातव्याः। **अग्निहोत्रं** च यावज्जीवं होतव्यम्। **अतिथयः** पूजनीयाः। लौकिकं वैदिकं च **मानुषं** यथाशास्त्रमनुष्ठेयम्। **प्रजा** चोत्पाद्या। **प्रजनश्च** प्रजननं ऋतौ भार्यागमनम्। पौत्रोत्पत्तिः **प्रजातिः**। एवं सर्वकर्मभिः युक्तस्यापि यत्नतोऽनुष्ठेये स्वाध्यायप्रवचने इत्येवमर्थं सर्वकर्मभिः स्वाध्याय-प्रवचनग्रहणं समानं, तन्निर्वर्त्यकर्मणां स्वाध्यायाधीनत्वात्। स्वाध्यायतदर्थानुष्ठान-जनितचित्तशुद्धिप्राप्यज्ञानायत्तं परं श्रेय इति। एतत्सर्वाविस्मरणार्थं प्रवचनं धर्मवृद्ध्यर्थं च। अतः स्वाध्यायप्रवचनयोरादरः कर्तव्यः। **सत्यमे**वानुष्ठातव्य**मिति** सत्यमेव वचो यस्य सोऽयं **सत्यवचाः** योगतो रथीतरगोत्रो **राथीतरः**

आचार्यो मन्यते । तप एव सदा कर्तव्यमिति **तपोनित्यः** नामतः पुरुशिष्टस्यापत्यं **पौरुशिष्टिः** आचार्यो मन्यते । **स्वाध्यायप्रवचने एवानुष्ठेये** इति **नाको** नामतो मुद्गलस्यापत्यं **मौद्गल्यः** आचार्यो मन्यते । उक्ते अपि स्वाध्यायप्रवचने पुनर्ग्रहणमादरार्थमवगम्यते । यतः स्वाध्यायप्रवचने सर्वमूल-भूते अतः **तद्धि तपस्तद्धि तपः** । तस्मात् स्वाध्यायोऽध्येतव्यः । "यं यं क्रतुमधीते तेन तेनास्येष्टं भवति" इति श्रुतेः ।

**इति नवमोऽनुवाकः**

---

## दशमोऽनुवाकः

### परविद्योपासनम्

**अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि । द्रविणꣳ सवर्चसम् । सुमेधा अमृतोऽक्षितः । इति त्रिशङ्कोर्वेदानुवचनम् ॥**

अपरविद्याविषयं ऋतं चेत्याद्युक्त्वा परविद्याविषय उच्यते—**अहमिति** । स्वाध्यायतदर्थानुष्ठानविशुद्धसत्त्वस्य परविद्योत्पद्यते । एतत्प्रकरणस्य विद्यार्थ-त्वात् । तथा च वक्ष्यति "यो वेद निहितं गुहायां परमे व्योमन्" "ब्रह्मपुच्छं प्रतिष्ठा", "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि । स्वाज्ञानविजृंभित-स्वाविद्यापदतत्कार्यवृक्षस्य स्वज्ञानमात्रोच्छेद्यस्य तदारोपापवादाधिकरणतया **अहमहं** अस्मत्प्रत्ययभावाभावप्रकाशकपरचिद्धातुर्मूलासूक्ष्मांशासंगान्तर्याम्यात्मना **रेरिवा** प्रेरयिता स्यां "यस्सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यमयत्येष

त आत्मा" इति श्रुतेः । **कीर्तिः** ख्यातिः संवित् मम **गिरेः पृष्ठमिवोच्छ्रिता** । निर्विशेषब्रह्मविज्ञानस्य सर्वोच्छ्रितनिर्विशेषब्रह्मगमकत्वात् सर्वोच्छ्रितत्वमुपपद्यते । सर्वाधिकरणत्वेनोर्ध्वपवित्राधिष्ठेयसम्बन्धवैरल्यात् पवित्रं यन्मम स्वरूपं स्यात् सोऽहमूर्ध्वपवित्रः । वाजमन्नं तद्वति **वाजिनि** सवितरि यथामृतमात्मतत्त्वं विशुद्धं, तथा **स्वमृतं** शोभनामृतं विशुद्धतत्त्व**मस्मि** भवामि "स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः" इति श्रुतेः । तथा प्रत्यगभिन्नं **द्रविणं सवर्चसं** दीप्तिमत् आत्मतत्त्वं अस्मीत्यनुवर्तते । सर्वज्ञत्वसर्वेश्वरत्वसर्वकारणत्वसर्वप्रकाशकत्वसर्वग्रासत्वादिसुमेधा सम्यज्ज्ञानलक्षणा यस्य सोऽहं **सुमेधाः** । अत एवाह**ममृतः** अमरणधर्मा **अक्षितः** अक्षीणः । अमृतेन स्वभावेनोक्षितः अन्वित इति वा **अमृतोक्षितः** । एवं "अहं वृक्षस्य रेरिवा" इत्यादि **त्रिशंकुर्नाम** ब्रह्मभावमापन्नो मुनिः तस्य वेदनं ब्रह्मज्ञानं तदनुभववचनं **वेदानुवचनम्** । आत्मनः कृतकृत्यताख्यापनार्थं वामदेवादिवत् त्रिशंकुना दृष्ट आम्नायः स्वात्मविद्याप्रकाशकः । "अहं वृक्षस्य" इत्यादिषड्वाक्यजपो विद्योत्पत्त्यर्थः । "ऋतं च" इत्यादिकर्मोपन्यासानन्तरं त्रिशंकुवेदानुवचनपाठात् निष्कामबुद्ध्यानुष्ठितश्रौतस्मार्तसत्कर्मतो विशुद्धचित्तस्य मुमुक्षोः ब्रह्मविद्या प्रादुर्भवेदित्यवगम्यते । ब्रह्मविद्योत्पत्तेः प्राक् श्रौतस्मार्तानि कर्माणि कर्तव्यान्येव । निष्कामकर्मणां चित्तशुद्धिहेतुत्वात् । विशुद्धचित्तस्य हि विज्ञानमुत्पद्यते । तथा च श्रुतिस्मृती भवतः—

तपसा प्राप्यते सत्त्वं सत्त्वात् संप्राप्यते मनः ।
मनसा प्राप्यते त्वात्मा ह्यात्मापत्त्या निवर्तते ॥ इति,
तपसा कल्मषं हन्ति विद्ययामृतमश्नुते ।

इति दशमोऽनुवाकः

---

## एकादशोऽनुवाकः

ज्ञानोत्पत्त्यर्थनियमानुशासनम्

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायान्मा प्रमदः । आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् ॥ १ ॥ देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यान्यनवद्यानि कर्माणि । तानि सेवितव्यानि । नो इतराणि । यान्यस्माकꣳ सुचरितानि । तानि त्वयोपास्यानि ॥ २ ॥ नो इतराणि । ये के चास्मच्छ्रेयाꣳसो ब्राह्मणाः । तेषां त्वयासने न प्रश्वसितव्यम् । श्रद्धया देयम् । अश्रद्धयादेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् । अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात् ॥ ३ ॥ ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तत्र वर्तेरन् । तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु । ये तत्र ब्राह्मणाः संमर्शिनः । युक्ता आयुक्ताः । अलूक्षा धर्मकामाः स्युः । यथा ते तेषु वर्तेरन् । तथा तेषु वर्तेथाः । एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ॥ ४ ॥

उदिते ब्रह्मविज्ञाने न हि किंचित् कर्तव्यमस्ति। विद्योत्पत्त्यन्तराय-परिहाराय "ऋतं च" इत्यादीनि पूर्वमुपदिष्टानि। इह तु ज्ञानोत्पत्ति-हेतुत्वेन कर्तव्यनियमजातं आचार्योऽनुशास्तीत्याह—**वेदमित्यादिना**। **आचार्यो-ऽन्तेवासिनं वेदमनूच्य** अध्याप्य तद्ग्रहणादनु पश्चात् **अनुशास्ति** तदर्थं ग्राहयामासेत्यर्थः। कथमनुशास्ति? इत्याह—**सत्यमित्यादि**। यथाप्रमाणावगतं **सत्यं** वक्तव्यम्। तथा **धर्मं चरस्व** धर्मानुष्ठानं यथावदाचरेत्यर्थः। **स्वाध्यायात्** अध्ययनात् **मा ते प्रमादो** भवतु। तद्विस्मृतिः ते मास्त्वित्यर्थः। **आचार्याय प्रियं धनमाहृत्य** दत्वा आचार्येणानुज्ञातः स्वकुलानुरूपां अभिमतकन्यां उद्वाह्य **प्रजातन्तुं मा व्यवच्छेत्सीः**। यदि प्रतिबन्धवशात् पुत्रो न जायते तदा पुत्रकाम्यादिकर्मणा तदुत्पत्तौ यत्नः कर्तव्यः। प्रजाप्रजनन-प्रजातित्रयनिर्देशात्। किं च—**सत्यादिति**। **सत्यात् न** कदापि **प्रमदितव्यम्**। अनृतं प्रमादशब्दार्थः। विस्मृत्याप्यनृतं न वक्तव्यमित्यर्थः। तथा **धर्मान्न प्रमदितव्यम्**। तत्र धर्माननुष्ठानं प्रमादः। यावत् प्रबोधो जायते तावत् धर्मोऽनुष्ठातव्य एवेत्यर्थः। **कुशलात्** आत्मरक्षणकर्मणः **न प्रमदितव्यम्**। भूतिः विभूतिः तस्यै भूत्यर्थात् कर्मणो **न प्रमदितव्यम्**। **स्वाध्याय-प्रवचनाभ्यां न प्रमदितव्यं** नियमेन स्वाध्यायप्रवचने कर्तव्ये इत्यर्थः। तथा दैवे पित्र्ये कर्मणि **न प्रमदितव्यम्**। किं च—मात्रादयो देवा यस्य स त्वं **मात्रादिदेवो भव**। एते देवतावदुपास्या इत्यर्थः। किं च—शिष्टाचारानुगृहीतत्वेन **अनवद्यानि** उदाराणि **कर्माणि यानि** विद्यन्ते **तान्येव** त्वया **सेवितव्यानि**। **तदितराणि** कर्माणि त्वया **नो** कर्तव्यानि। शिष्टकृतान्यपि सावद्यानि न कार्याणीत्याह—**यानीति**। श्रुतिस्मृत्यविरोधेन **यान्यस्माकमाचार्याणां सुचरितानि तान्येव त्वयोपास्यानि**। **नो इतराणि**। आचार्याणां कृतार्थत्वेन सावद्य-कर्माचरणे प्रत्यवायाभावात्। तवाकृतार्थत्वात् तथा त्वया न कर्तव्यानीत्यर्थः। किं च—आचार्यत्वादिधर्मैः **ये के चाविशेषिता अस्मत्तः श्रेयांसः** प्रशस्यतमाः। ते च **ब्राह्मणाः** न क्षत्रियादयः। तेषामासनादिना प्रश्वसितव्यम्। **तेषां** श्रमाः **त्वया** अपनेतव्या इत्यर्थः। यद्वा—तेषां **आसने** संगतिनिमित्ते समुदिते

न हि त्वया **प्रश्वसितव्यं** तन्निकटे प्रश्वासोऽपि न कर्तव्यः। तदुक्तसार ग्राहिणा त्वया तूष्णीं भवितव्यम्। किं च यस्मै कस्मैचित् यत्किंचित् यत् दातुमिच्छसि तत् **श्रद्धयैव देयम्**। **अश्रद्धया** कदाप्य**देयम्**। **श्रिया** संपदर्थय **देयम्**। मत्तुल्या मद्वरा अपि दास्यन्तीति **ह्रिया** लज्जया वा **देयम्** पारलौकिक**भिया** वा **देयम्**। **संवित्** मित्रादिकार्यम्। तया वा **देयम्** एवमादिकर्मानुष्ठाने संशीतिश्चेत् किं कर्तव्यम्? इत्यत आह—**अथेति**। **अथै**व वर्तमानस्य श्रौते स्मार्ते वा **कर्मणि** वृत्ते आचरणे **यदि** कदाचित् **विचिकित्सा** संशयः स्यात् तदा **ये तत्र** तद्देशे तत्काले वा **ब्राह्मणाः**—कर्मादौ युक्ता इति व्यवहितेन संबन्धः—**सम्मर्शिनो** विचारक्षमाः कर्मणि वृत्ते वाचारलक्षणे **युक्ताः** अभियुक्ताः। **आयुक्ताः** अपरप्रयुक्ताः। **अलूक्षाः** अक्रूरमतयः। **धर्मकामाः** अदृष्टार्थिनः। अकामहता इत्येतत्ते **यथा** तस्मिन् कर्मणि वृत्ते वा **वर्तेरन् तथा** त्वमपि **तत्र वर्तेथाः**। **अथाभ्याख्यातेषु** येन केनचिद्दोषेणाभ्याख्याता अभ्युक्ताः तेषु यथोक्तं समुपनयेत्। **ये तत्रे**त्यादिः उक्तार्थः। "सत्यं वद"इत्यादि "तथा तेषु वर्तेथाः" इत्यन्तं मुमुक्षुभिरप्रमादेनोपासितव्यमित्युपसंहरति—**एष** इति। **एष आदेशो** विधिः। पित्रादीनां पुत्रादिभ्यः **एष** एवोपदेशः। एतस्य वेदरहस्यार्थत्वात्। **एषा वेदोपनिषत्**। **एतदेवानुशासनं** ईश्वरवचनं आदेशवाच्यस्य विधेरुक्तत्वात्। सर्वप्रमाणानां अनुशासनं एतत्। यत एवं अतः **सर्वमुपासितव्यम्**। **एवमु चैतदुपास्यं** उपास्यमेव चैतत्। पुनर्वचनमादरार्थं साधनप्रश्नसमात्यर्थं वा॥ १—४॥

**इत्येकादशोऽनुवाकः**

---

## द्वादशोऽनुवाकः

विघ्ननिरासाय शान्तिपाठः

शं नो मित्रः शं वरुणः । शं नो भवत्वर्यमा । शं न इन्द्रो बृहस्पतिः । शं नो विष्णुरुरुक्रमः । नमो ब्रह्मणे । नमस्ते वायो । त्वमेव प्रत्यक्षं ब्रह्मासि । त्वामेव प्रत्यक्षं ब्रह्मावादिषम् । ऋतमवादिषम् । सत्यमवादिषम् । तन्मामावीत् । तद्वक्तारमावीत् । आवीन्माम् । आवीद्वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

अतीतविद्याप्राप्तिविघ्नोपशमनार्था शान्तिरुक्ता । इदानीं वक्ष्यमाणपरविद्यास्यन्तरायोपशमनार्थं शान्तिरुच्यते—**शं नो मित्र** इति । अवादिषं उक्तवान् । उक्तार्थमन्यत् ।

**इति शीक्षावल्ल्यां द्वादशोऽनुवाकः**

इति शीक्षावल्ली

---

# ब्रह्मानन्दवल्ली

## प्रथमोऽनुवाकः

शिष्यप्रार्थनम्

ॐ सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ।

वक्ष्यमाणविद्याप्रतिपाद्यं ब्रह्म यावत् विद्याधिगमः तावदावयोः क्षेम अस्त्वति शिष्यः प्रार्थयति—**सह नाविति**। वक्ष्यमाणविद्याप्रतिपाद्यं **नौ** शिष्याचार्यौ **सहैवावतु**। **सह नौ** विद्याफलं **भुनक्तु** भोजयतु। विद्यानिमित्तं **वीर्यं** सामर्थ्यं **करवावहै** निर्वर्तयावहै इत्यर्थः। **तेजस्वि** आवयोः **अधीतं** स्वधीतमस्तु। ब्रह्मयाथात्म्यज्ञानयोग्यमस्तु आवयोर तेजस्वि वास्तु। आवयोः स्वाध्यायप्रवचननिमित्तं यदि प्रमादकृतापराध विद्वेषो भवेत् तदा तन्मास्त्विवति तच्छमनायेयमाशीः प्रार्थना। **मा विद्विष** मैवेतरेतरविद्वेषं आपद्यावहै। एवमविघ्नेन ब्रह्मविद्याप्राप्तिराशास्यते। वक्ष्यम विद्यावृतिशान्तिः स्यादिति। त्रिर्वचनमादरार्थम्।

ब्रह्मणः सृष्टिक्रमः

ॐ ब्रह्मविदाप्नोति परम्। तदेषाऽभ्युक्ता। सत्यं ज्ञान-मनन्तं ब्रह्म। यो वेद निहितं गुहायां परमे व्योमन्। सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चितेति। तस्माद्वा एतस्मा-दात्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्या ओषधयः। ओषधीभ्योऽन्नम्। अन्नात्पुरुषः। स वा एष पुरुषोऽन्नरसमयः। तस्येदमेव शिरः। अयं दक्षिणः पक्षः। अयमुत्तरः पक्षः। अयमात्मा। इदं पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥

नित्यादिकर्माविरुद्धसंहिताविषयोपासनान्युक्तानि। ततो व्याहृतिद्वारेण सोप धिकात्मदर्शनतत्फलस्वाराज्यमभिहितम्। न ह्येतावता स्वातिरिक्तास्तित्वभ्रम निरासः संभवति। इदानीं निश्शेषतः तन्निरसनार्थं "अहं वृक्षस्य रेरिवा" इत्य यद्ध्याविद्धसर्वोपाधिविशेषतया प्रत्यक्तत्त्वं प्रदर्शितं तदेव स्वातिरिक्ताविद्यापद

तत्कार्योपह्नवतो निष्प्रतियोगिकतया ब्रह्ममात्रमवशिष्यते । तज्ज्ञानसमकालं विद्वान् तन्मात्रमवशिष्यत इति च प्रकटयितुं इयं आनन्दवल्ली आरभ्यते—**ब्रह्मविदाप्नोति परं** इति। स्वातिरिक्तकलनापह्नवतः स्वमात्रतयोपबृंहणात् ब्रह्म। तत् स्वावशेषतया वेत्तीति **ब्रह्मवित्** विद्वान्। तद्वेदनसमकालं **परं** निष्प्रतियोगिकनिर्विशेषं ब्रह्म स्वमात्रमित्याप्नोति। "स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति" इति वेदनसमकालमेव ब्रह्मभावापत्तिश्रुतेः। सर्वस्य वल्ल्यर्थस्य "ब्रह्मविदाप्नोति परम्" इति वाक्यं सूत्रभूतम्। कथं पुनः सूत्रवाक्यसूचितं ब्रह्म स्वमात्रमवशिष्यते स्वातिरिक्तानृतजडदुःखदेशकालवस्तुपरिच्छेदात्? इत्याशंक्य अनृतादिकलनापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमवशिष्यत इत्यर्थे ऋगेषा मानमित्याह—**तदिति**। तस्मिन् सूत्रभूतब्राह्मणवाक्योक्तेऽर्थे **एषा ऋक् अभ्युक्ता** तादृशं ब्रह्मास्तीत्याम्नातेत्यर्थः। तत् ब्रह्म कीदृशम्? इत्यत आह—**सत्यमिति**। नीलं महत् सुगन्धि उत्पलमित्यत्र यथा नीलादिपदत्रयं विशेषणं उत्पलपदं विशेष्यं तथा सत्यादिपदत्रयं विशेषणं ब्रह्मपदं विशेष्यमिति चेन्न; ब्रह्मणो निर्विशेषसामान्यत्वेन सजातीयविजातीयस्वगतभेदवैरल्यात् न हि विशेषणविशेष्यभावः संभवति। निस्सामान्यविशेषकं "एकमेवाद्वितीयं" इति श्रुतेः।

स्वविशेष्यं सजातीयमात्रात् यद्विनिवर्तकम्।
स्वविशेष्यव्यापकं तद्विशेषणमिति श्रुतम्॥
स्वविशेषणतो यत्तु सजातीयान्निवर्तितम्।
विशेषसामान्ययुक्तं विशेष्यं तन्निगद्यते॥

इति चन्द्रिकानिर्दिष्टविशेषणविशेष्याभावेऽपि,

सजातीयाद्विजातीयाद्व्यावृत्त्यैव स्वलक्ष्यकम्।
तत्र यत् पर्यवसितं तल्लक्षणमितीर्यते॥
स्वलक्षणेन सर्वस्मात् विकाराद्विनिवर्तितम्।
सर्वदैकस्वरूपं यत् तल्लक्ष्यमिति कीर्तितम्॥

इति चन्द्रिकोक्त्यनुरोधेन लक्ष्यलक्षणभावः स्यादिति चेन्न; निष्प्रतियोगिक ब्रह्ममात्रत्वात्। न हि ब्रह्ममात्रे निवर्तनीयप्रवर्तनीयविकारपूगोऽस्ति नास्तीति विभ्रमोऽस्ति। येन लक्ष्यलक्षणभावः सेद्धुं पारयति। तस्मात् विशेषणविशेष्य लक्ष्यलक्षणादिकलनापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रतयावशिष्यत इत्यर्थः "अग्राह्यमलक्षणं अचिन्त्यमव्यपदेश्यं", "पश्यतेहापि सन्मात्रमसदन्यत्" "ब्रह्ममात्रमसन्न हि",

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्रमम्॥
अनाख्यमनभिव्यक्तं सत् किंचिदवशिष्यते।

इत्यादिश्रुतेः। वाक्यार्थस्तु स्वाज्ञादिदृष्टिप्रसक्तानृतप्रपञ्चे सत्यसति यत् सत्तामात्रेणावशिष्यते तत् सत्यं तस्य स्वातिरिक्तानृतप्रपञ्चापह्नवसिद्धत्वात्। सत्तामात्ररूपेण येनकेनाप्यदृष्टत्वात्। एवमभानतो जडं ब्रह्मेत्यत आह—**ज्ञानमिति**। यत् अनृतापह्नवसिद्धसत्तामात्रेण परमार्थदृशां प्रतिभाति तत् जडापह्नवसिद्धं ज्ञानं उच्यते "विज्ञानमानन्दं ब्रह्म" इति श्रुतेः। न हि यथा दिवाभीतादिदृष्टाहः-प्रपञ्चो ध्वान्तपदं भजति तथा असल्लौकिकादिदृष्ट्यभातसन्मात्रं जडभावं भजति। तस्य निष्प्रतियोगिकाजडमात्रस्वरूपत्वात्।

चिन्मात्रमेव चिन्मात्रमखण्डैकरसं रसम्।

इति श्रुतेः। यदि ज्ञानं ब्रह्म तदा लौकिकज्ञानवत् अन्तवत् स्यादित्यत आह—**अनन्तमिति**। लौकिकज्ञानस्य देशकालवस्तुजातपरिच्छिन्नत्वात् ब्रह्मणः परिच्छेदत्रयतद्विषयकज्ञानापह्नवसिद्धत्वात् निष्प्रतियोगिकानन्तत्वं सिद्धमित्यर्थः। अनृतजडदुःखानां देशकालवस्तूनां भिन्नभिन्नत्वात् तदपह्नवसिद्धब्रह्मापि भिद्यत इति चेन्न; ब्रह्मणो निष्प्रतियोगिकैकरूपत्वात्। अनृतजडदुःखानां देशकालवस्तूनां च स्वातिरिक्तत्वेन निष्प्रतियोगिकाभावरूपत्वात्। तदपह्नवसिद्धब्रह्मणो निष्प्रतियोगिकभावरूपत्वेन पारमार्थिकसत्यरूपत्वात्। यत् पारमार्थिकसत्यत्वेन ज्ञायते तद्धि ज्ञानम्। यत् स्वमात्रतया ज्ञातं तत् परिच्छेदत्रयापह्नवसिद्धं अनन्तम्।

एवमनृतजडदुःखापह्नवसिद्धसत्यज्ञानानन्तब्रह्ममात्रतयोपबृंहणात् **ब्रह्मेति** वाक्यार्थः । "ब्रह्मविदाप्नोति परम्" इति सूत्रवाक्यगतब्रह्मशब्दार्थो वर्णितः । अथ सूत्र-वाक्यस्थविच्छब्दार्थ उच्यते—**यो वेद निहितं गुहायां परमे व्योमन्निति** । "ब्रह्मविदाप्नोति परम्" इति सूत्रस्थं ब्रह्म "सत्यं ज्ञानमनन्तं ब्रह्म" इति यथा व्याख्यातं तदेव सच्चिदानन्दमात्रं स्वमात्रमिति **यो वेद** विजानाति तस्य निष्प्रतियोगिकनिर्विशेषत्वेन तदुपलब्धिः कथम्? इत्यत आह—**गुहायामिति** । गूहतेः संवरणार्थत्वेन स्वातिरिक्ताविद्यापदतत्कार्यजातगूहनात् गुहा बुद्धिः । तस्यां **गुहायां** तूलाविद्यारूपायां संवृतत्वेन विकल्पिते **परमे** प्रकृष्टे **व्योमन्** व्योम्नि अव्याकृताकाशे तत्र विकल्पितव्यष्टिसमष्ट्यात्मकप्रपञ्चवृत्तिकदम्बभावाभावप्रकाश-कतया तदारोपापवादाधिकारतया वस्तुतो निराधारब्रह्ममात्रतया च **निहितं** उप-लब्धं यो वेद इति विच्छब्दार्थो व्याख्यातः । कथं पुनः हृदयावच्छिन्नव्योम्नः परमत्वम्? व्याकृतव्योमापेक्षया अव्याकृतव्योम्नः सूक्ष्मत्वेन व्यापकत्वेन च परमत्वं सिद्धमित्यत्र "एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इत्यक्षर-सन्निकर्षात् । "यो वै स बहिर्धा पुरुषादाकाशो यो वै सोऽन्तः पुरुष आकाशो यो वै सोऽन्तर्हृदय आकाशः" इति श्रुतिप्रकटितहार्दस्य व्योम्नः परमत्वं सिद्धमित्यर्थः ।

यत् स्वाज्ञविकल्पितगुहायां स्वज्ञादिदृष्ट्या प्रत्यक्तदभिन्नतद्वैदैक्यकलनाग्रास-ब्रह्ममात्रावगतिरुपलभ्यते । न ह्यन्यत्र तादृशप्रदेशान्तरवैरल्यात्तत्र सत्यज्ञानानन्त-ब्रह्म स्वमात्रमिति विज्ञानतः किं फलम्? इत्यत्र सूत्रवाक्यस्थाप्नोतीति धात्वर्थं व्याचष्टे—**स** इति । यस्तु गुहायां निहितं अनृतजडदुःखापह्नवसिद्धं स्वमात्रमिति वेद तद्वदनसमकालं **सोऽयं** विद्वान् **ब्रह्मणा विपश्चिता** ब्रह्मभूतस्वरूपेण **सह युगपत्** ग्रसति । न हि प्राकृतवत् । प्राकृतपशुपुत्रस्वर्गान्त**कामान्** पर्यायेण ग्रसति । युगपत् सर्वापह्नवं करोति । निष्प्रतियोगिकब्रह्ममात्रावगतेः स्वातिरिक्त-जाग्रज्जाग्रदादिचतुष्पञ्चदशकलनागोचरकामनापह्नवपूर्वकत्वात् विद्वान् वेदन-समकालं ब्रह्ममात्रमवशिष्यत इति । "ब्रह्मविदाप्नोति परं" इति सूत्रवाक्यं पदचतुष्टयात्मकं "सत्यं ज्ञानम्" इत्यादिवाक्यचतुष्टयेन व्याख्यातम् । एवं विद्वान् कृतकृत्यो भवति ।

यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते ॥

"तमेवं विद्वांस इहैवामृता भवन्ति" इत्यादिश्रुतेः । इतिशब्दो मन्त्रपरि समाप्त्यर्थः ।

आदौ तावत् "ब्रह्मविदाप्नोति परं" इति ब्राह्मणवाक्येन योऽर्थः सूत्रितः सोऽयं मन्त्रेण संक्षेपतो व्याख्यातः । एतावता ग्रन्थेन शास्त्रार्थस्य चरितत्वात् नातःपरं वक्तव्यमवशिष्यते ब्रह्मणो निरुत्तरत्वात् ।

यतो वाचो निवर्तन्ते विकल्पकलनान्विताः ।
विकल्पसंक्षयाज्जन्तोः पदं तदवशिष्यते ॥ इति श्रुतेः ।

अत्र केचन असल्लौकिकादयः प्रत्यवतिष्ठन्ते—कथं पुनः सत्यज्ञानानन्तात्मकं ब्रह्म स्वमात्रतया निष्प्रतियोगिकमवशिष्यते अदर्शनात् ? यत् प्रत्यक्षमवगम्यते तदेव सत्यं "चक्षुषा यत्पश्यति तदेव सत्यम्" इति श्रुतेः यदेवं न दृश्यते तदसत्यमिति सिद्धम् । तस्मात् तथाविधं ब्रह्म नास्तीत्याशंकाया यत् प्रत्यक्षादिप्रमाणं पुरस्कृत्यैतेषां ब्रह्म नास्तीति विपरीतमतिर्जाता तदवष्टम्भः तद्भ्रान्तिः परिह्रीयते । तथा हि—यथा दिवान्धदृष्टाहःप्रपञ्चश्चक्षुष्मतां यथावद्दृश्यते तथा दिवान्धस्थानीयासल्लौकिकाद्यदृष्टं ब्रह्म परमार्थदृशां असल्लौकिकादितद्ग्रहकलनापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रतया दृश्यते । तस्मात् भवदभिप्रेतप्रत्यक्षप्रमाणेनापि ब्रह्मास्ति । किं च यत् व्यष्टिशरीरत्रयमात्रमात्मत्वेन निश्चित्य ब्रह्म नास्तीति मन्यध्वे त्वदात्मभूतशरीरत्रयं यत्कार्यमित्युक्ते वियदादि-पञ्चभूतकार्यमित्येव वक्तव्यम् । त्वदुपास्यात्मकारणाकाशादिप्रपञ्चोऽदृष्टदृष्टनष्टात्मकतया विद्यते । तदुपलब्ध्यपेक्षया तत्कारणं ब्रह्मास्तीत्यभ्युपगन्तव्यम् । न हि मृदादिकारणं विना घटादिकार्यमुत्पन्नं दृष्टं लोके । तस्मात् विचित्ररचना-शोभिप्रपञ्चोपलब्धेः तत्कारणं ब्रह्मास्त्येवेत्यनुमानेनापि सिद्धम् । "को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति", "कारणेन विना कार्यं नोदेति" इत्यादिश्रुतेः ब्रह्मणो निष्प्रतियोगिकत्वेन

निरुपमत्वात् । ब्रह्मणो निष्प्रतियोगिकत्वेन सन्मात्रत्वे "अनेजदेकं", "अन्यदेव तद्विदितादथो अविदितादधि",

अस्तीति ब्रुवतोऽन्यत्र कथं तदुपलभ्यते ?

"पश्यतेहापि सन्मात्रमसदन्यत्", "ब्रह्ममात्रमसन्न हि", "सर्वविशेषं नेति नेतीति विहाय यदवशिष्यते तदद्वयं ब्रह्म" इत्यादीशाद्यष्टोत्तरशतवेदान्ता अपि प्रमाणपदं भजन्ते । अतः ब्रह्ममात्रसिद्धिर्निरंकुशेत्ययमर्थः पुरोक्तब्राह्मण-मन्त्रयोरर्थः सम्यक्प्रपञ्चितः । पुनस्तन्मन्त्रस्य विस्तरेणार्थो वर्णनीय इति उत्तरो ग्रन्थ आरभ्यते—**तस्माद्वा** इत्यादिना । "सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रादौ अनन्तत्वमभिहितम् । तत्राकाशोऽपि देशतोऽनन्तः । तस्य सर्वदेशपरिच्छेद-वैरल्यात् तदेव ब्रह्मेति चेन्न ; तस्य देशतः परिच्छेदाभावेऽपि तस्य कार्यत्वेन कालतो वस्तुतश्च परिच्छिन्नत्वात् । न तथा ब्रह्मणः कालतो वस्तुतश्च अन्त-वत्त्वम् । स्वाज्ञदृष्टिप्रसक्तकार्यरूपकालादिकारणत्वात् स्वातिरिक्तवस्त्वन्तराभावाच्च सर्वकारणं ब्रह्म । कार्यापेक्षया कारणस्य वस्तुतोऽन्तवत्त्वमिति चेन्न ; कार्यमात्र-स्यानृतत्वेनावस्तुत्वात् । न हि कारणव्यतिरेकेण कार्यं नाम वस्त्वस्ति, "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं", "सदेव सत्यं" इत्यादिश्रुतेः । तस्मान्निरतिशयानन्त्यं ब्रह्मण एव "देशतः कालतो वस्तुतः परिच्छेदरहितं ब्रह्म" इति श्रुतेः । न ह्यसर्वगतात् सर्वगतं किंचिदुत्पद्यते । अत एव निरतिशयसत्यत्वमानन्त्यं ब्रह्मणः सिद्धम । ब्राह्मणवाक्यसूत्रितं ब्रह्म तस्मादिति परामृश्यते । **एतस्मा**दिति सत्यं ज्ञानमनन्तं ब्रह्मेति विवक्षितम् । **तस्मादेतस्मात्** आत्मशब्दवाच्यात् स्वाज्ञदृष्टिप्रसक्तसर्वात्मकात् । वाशब्दोऽव-धारणार्थः "ब्रह्मैवात्मेति सत्यमात्मा ब्रह्मैव ब्रह्मात्मैव" इति श्रुतेः । तस्मा-देतस्मात् ब्रह्मणः अजात् स्वाज्ञदृष्ट्या कारणात्मभावमापन्नात् सर्वमूर्तद्रव्याण अवकाशप्रदः शब्दगुणक **आकाशो** रज्जुसर्पवत् **संभूतः** । तस्मात् चैतन्यानु-स्यूतात् **आकाशात्** कारणशब्दगुणसहितस्पर्शगुणो **वायुः** संभूत इत्यनुवर्तते चैतन्याधिष्ठित**वायोः** सकाशात् स्वकारणगुणाभ्यां सह रूपगुणो**ऽग्निः** संभूतः तथा**ऽग्नेः** स्वकारणत्रिगुणसहितरसगुणवत्य **आपः** संभूताः । चैतन्याधिष्ठिता**द्भ्य**

स्वकारणचतुर्गुणसहितगन्धगुणवती **पृथिवी** संभूता। ततः किं जातम्? इत्यत आह—**पृथिव्या** इति। **पृथिव्याः** नानाविधा **ओषधयः** संभूताः। **ओषधीभ्यः** तत्तत्प्राणिभोज्य**मन्नम्**। तस्मात् रेतोरूपेण परिणतात् **अन्नात्** शिरःपाण्यादिमान् **पुरुषः** संभूतः। स कीदृशः? इत्यत आह—**स** वेति। **स वा एष पुरुषोऽन्नरसमयः** अन्नरसायमानरेतोविकारः। रेतसः तत्तत्पुरुषाकृतिभावितत्वात् "सर्वेभ्योऽङ्गेभ्यः तेजः संभूतं तद्यदा स्त्रियां सिञ्चति अथैनं जनयति तदस्य तृतीयं जन्म" इति श्रुतेः। सर्वजातिषु जायमानानां जनकाकृतित्वे अन्नरसविकारवत्त्वे ब्रह्मवंश्यत्वे च अविशिष्टेऽपि कस्मात् प्राधान्यतः पुरुष एव गृह्यते? इति चेत्तत्र कर्मज्ञानाधिकारित्वात् पुरुषस्यैव प्राधान्यमित्यत्र "पुरुषे त्वेवाविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सति एवं संपन्नोऽथेतरेषां पशूनामशनायापिपासे एवाभिविज्ञानं" इति पुरुषस्यैव प्रधानतावादिश्रुतेः। तादृशपुरुषस्य व्यष्ट्यात्मकतूलाविद्यातत्कार्येषु आत्मभाविता बुद्धिः प्रत्यगात्मविषया कर्तुमशक्येति असल्लौकिकग्रहशरीरत्रयात्मकल्पनया शाखारुन्धतीन्यायेन अन्तरतमप्रत्यगवगतिद्वारा परमार्थतत्त्वेऽन्तः प्रवेशयन्नाह—**तस्येति**। **तस्य** अन्नरसमयपुरुषस्य **इदं** परिदृश्यमानं मस्तकमेव **शिरः**। पूर्वाभिमुखस्य **अयं दक्षिणो** बाहुः दक्षिणः **पक्षः**। **अयं सव्यो** बाहुः **उत्तरः पक्षः**। **अयं** अङ्गानां मध्यमो भागः **आत्मा** "मध्यं ह्येषामङ्गानां आत्मा" इति श्रुतेः। इदमिति नाभेरधस्तात् यदंगं **पुच्छं** प्रतिष्ठत्यनयैवेति **प्रतिष्ठा**। गोः पुच्छमिव अधोलम्बनसामान्यात्। एवमुत्तरेषां प्राणमयादीनां अशिरःपक्षपुच्छानामपि मूषानिषिक्तद्रुतताम्रादिप्रतिमावत् रूपप्रसिद्धिः स्यादित्यस्मिन्नर्थे ब्राह्मणोक्ते अन्नमयप्रकाशक एष श्लोको मन्त्रो भवतीत्याह—**तदप्येष श्लोको भवतीति**।

**इति प्रथमोऽनुवाकः**

---

## द्वितीयोऽनुवाकः

अन्नब्रह्मोपासनम्

अन्नाद्वै प्रजाः प्रजायन्ते । याः काश्च पृथिवीꣳ श्रिताः । अथो अन्नेनैव जीवन्ति । अथैनदपि यन्त्यन्ततः । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । सर्वं वै तेऽन्नमाप्नुवन्ति । येऽन्नं ब्रह्मोपासते । अन्नꣳ हि भूतानां ज्येष्ठम् । तस्मात्सर्वौषधमुच्यते । अन्नाद्भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते । अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति । तस्माद्वा एतस्मादन्नरसमयात् । अन्योऽन्तर आत्मा प्राणमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः । तस्य प्राण एव शिरः । व्यानो दक्षिणः पक्षः । अपान उत्तरः पक्षः । आकाश आत्मा । पृथिवी पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥

कथम्? इत्यत आह—**अन्नादिति**। रसादिभावमापन्नात् **अन्नात्** स्थावरजङ्गमरूपाः **प्रजाः प्रजायन्ते**। **वै**शब्दः तत्स्मरणार्थः। **याः काश्च** विशिष्टाः प्रजाः **पृथिवीं श्रिता** आश्रिताः ताः सर्वा अन्नादेव जायन्ते। **अथो** अपि एवं जाताः प्रजाः **अन्नेनैव जीवन्ति** प्राणान् धारयन्तीत्यर्थः। भोगक्षयादथाप्येनदन्नं **अपि यन्ति** अन्नं प्रति लीयन्त इत्यर्थः। **अन्ततो** जीवनपरिसमाप्तितः अन्नमयादीनामितरेषां **भूतानां अन्नमेव हि ज्येष्ठं** तस्य प्रथमजत्वात्। यत एवमतः सर्वाः प्रजाः अन्नजा अन्नजीवनाः अन्नमात्र-पर्यवसन्नाः। यस्मादेवं **तस्मात् सर्व**प्राणिदाहप्रशमनमन्नं **औषधमुच्यते**। अन्नब्रह्मविदः फलमाचष्टे—**सर्वमिति**। **येऽन्नं ब्रह्मे**त्युपासते ते सर्वान्न-भावमाप्नुवन्ति। यस्मात् जन्मस्थितिभङ्गहेतुरन्नं तस्मादन्नं ब्रह्मैवास्मि। कथं पुनः सर्वान्नप्राप्तिः? अन्नात्मोपासनात्। अन्नस्य भूतेभ्यः पूर्वनिष्पन्नत्वात्

**अन्नमेव भूतानां ज्येष्ठं** हि यस्मात् **तस्मात् सर्वौषधमुच्यते** । तस्मात् अन्नात्मोपासकस्य सर्वान्नप्राप्त्युपपत्तिः । **अन्नात् भूतानि जायन्ते । जातान्यन्नेन वर्धन्ते** इति पुनर्वचनं उपसंहारार्थम् । इदानीं अन्नपदं व्युत्पादयति—**अद्यते** इति । यस्मात् **भूतैरद्यते भूतान्यत्ति चेति तस्मात् अन्नं तदुच्यत** इति । इतिशब्दः प्रथमकोशपरिसमाप्त्यर्थः ।

अन्नमयाद्यानन्दमयान्तकोशान्तेभ्य आतमभ्यः तद्भावाभावप्रकाशकप्रत्यग्रूपेणान्तरतमं ब्रह्म अनेककञ्चुकविशिष्टकोद्रववितुषीकरणतः तण्डुलनिष्पत्तिवत् निदर्शयति—**तस्मादिति । तस्मात् एतस्मात** यथोक्तात् पिण्डभूता**न्नरसमयात् अन्योऽन्तर आत्मा** अन्नकोशविलक्षणत्वात् पिण्डवत् मिथ्यात्वेन परिकल्पितः । **प्राणमयः** प्राणवायुविकारः अन्नमयात् अन्तर इत्यर्थः । **तेन प्राणमयेन** एषोऽन्नरसमय आत्मा वायुना पूरितभस्त्रिकेव **पूर्णः । स वा एष प्राणमय** आत्मा शिरःपक्षपुच्छादिभिः **पुरुषविध एव** । किं स्वतः ? तत्राह—**अन्विति** । प्रसिद्धं तावदन्नमयस्य पुरुषविधत्वम् । तदनुसृत्यायं प्राणमयो मूषानिषिक्तप्रतिमावत् पुरुषविधतामर्हति न स्वत इत्यर्थः । एवं पूर्वपूर्वस्य **पुरुषविधतामनुसृत्य** उत्तरोत्तरकोशात्मनां पुरुषविधत्वम् । तथा पूर्वपूर्वस्तूत्तरोत्तरेण पूर्णः । प्रकृते प्राणमयस्य पुरुषविधतामाह—**तस्येति** । **तस्य** प्राणमयस्य **प्राण एव शिरः** । मुखनासिकानिस्सरणो वृत्तिविशेषः शिर इति परिकल्प्यते । श्रुतिवचनादेव पक्षादिकल्पनापि युज्यते । सर्वशरीरालयव्यानवृत्तिः **दक्षिणः पक्षः** । गुदालयापानवृत्तिः **उत्तरः पक्षः** । **आकाश**शब्देन नाभ्याकाशस्थसमानवायुरुच्यते । स **एवात्मा** समानस्य मध्यस्थत्वात् आत्मत्वम् । "मध्यं ह्येषामंगानामात्मा" इति श्रुतिप्रसिद्धेः । **पृथिवी पुच्छं प्रतिष्ठा** आध्यात्मिकप्राणस्थितिहेतुत्वात् "सैषा पुरुषस्यापानमवष्टभ्य" इति श्रुतेः । अन्यथा शरीरस्य गुरुत्वात् उदानवृत्त्या ऊर्ध्वाकर्षणतः पतनं स्यात् । तस्मात् प्राणमयस्य पृथिवी देवता पुच्छं प्रतिष्ठेति युज्यते । तस्मिन्नुक्तार्थे एष श्लोको मन्त्रो भवतीत्याह—**तदप्येष श्लोको भवति** इति ।

**इति द्वितीयोऽनुवाकः**

---

## तृतीयोऽनुवाकः

प्राणमयमनोमयकोशविवरणम्

प्राणं देवा अनु प्राणन्ति। मनुष्याः पशवश्च ये। प्राणो हि भूतानामायुः। तस्मात्सर्वायुषमुच्यते। सर्वमेव त आयुर्यन्ति। ये प्राणं ब्रह्मोपासते। प्राणो हि भूतानामायुः। तस्मात्सर्वायुषमुच्यत इति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा एतस्मात्प्राणमयात्। अन्योऽन्तर आत्मा मनोमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य यजुरेव शिरः। ऋग् दक्षिणः पक्षः। सामोत्तरः पक्षः। आदेश आत्मा। अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥

अग्न्यादयो **देवा** अध्यात्माधिकारात् देवा इन्द्रियाणि। तथा **ये मनुष्याः पशवश्च** ते **प्राणं** प्राणनशक्तिमन्तं मुख्यप्राणं वा अन्तर्यामिणं **अनु** अनुसृत्य तदात्मभूतास्सन्तः **प्राणन्ति** प्राणनक्रियया क्रियावन्तो भवन्ति। न हि परिच्छिन्नान्नमयेनात्मवन्तः प्राणिनो भवन्ति। किन्तु तदन्तर्गतप्राणमयेनान्नमयव्यापिनात्मवन्तो मनुष्यादयः। एवं मनोमयादिभिः पूर्वपूर्वं व्यापिभिः उत्तरोत्तरतः सूक्ष्मैः स्वाविद्याकार्याकाशादिभूतारब्धैः अन्नमयान्तैः सर्वे प्राणिन आत्मवन्तो भवन्ति। यथा अनेककञ्चुकान्वितः कोद्रवः सम्यगवघाततः तण्डुलावशिष्टो भवति तथा कञ्चुकस्थानीयपञ्चकोशापवादतदधिकरणहेयांशापह्नवतो ब्रह्ममात्रमवशिष्यत इत्यर्थादुक्तं भवति। "प्राणं देवा अनु प्राणन्ति" इत्युक्तं, तत् कथम्? इत्यत आह—**प्राणो** **हीति**। **हि** यस्मात् **भूतानां**

प्राणिनां **प्राण** एवायुः जीवनं "यावद्ध्यस्मिन् शरीरे प्राणो वसति तावदायुः" इत्यादिश्रुतेः। **तस्मात्** सर्वेषां आयुरेव **सर्वायुषमुच्यते**। प्रसिद्धं हि लोके प्राणस्य सर्वायुषत्वम्। प्राणापगमतो मरणप्रसिद्धेः। अतोऽन्नमयात्मानमपोह्य तदन्तरं प्राणमयात्मानं अहमस्मीति **य उपासते** प्राणस्य सर्वप्राण्यायुःस्वरूपत्वेन तदुपासनया अस्मिन् लोके **ते सर्वमेव आयुर्यन्ति**। न हि प्राक् प्राप्तादायुषः अपमृत्युना म्रियन्ते "शतायुः पुरुषः शतेन्द्रियः" इति श्रुतेः। तत् कथं **प्राणो हि भूतानामायुः। तस्मात् सर्वायुषमुच्यते** इति पुनर्वचनम्? **यो** यद्गुणकं ब्रह्मोपास्ते स तद्गुणभाक् भवतीति हेत्वर्थम्। **पूर्वस्यान्नमयस्य** शरीरे भवः **शारीरः आत्मा** इत्येवं प्राणमयकोशो व्याख्यातः। अथ मनोमयकोशं विवृणोति—**तस्मादिति**। **तस्माद्वा एतस्मात्प्राणमयात्। अन्योऽन्तर आत्मा** इत्यर्थो व्याख्यातः। सङ्कल्पादिवृत्तिमत् अन्तःकरणं मनः। तन्मयो **मनोमयः**। यथा अन्नमयान्तरात्मा प्राणमयः तथा प्राणमयान्तरात्मा मनोमयः। सङ्कल्पादिवृत्तिप्राचुर्यात् **तस्य** मनोमयस्य **यजुरेव शिरः**। यजुश्शब्देनानियताक्षरपदावसानो मन्त्रविशेषः। मनसो हि स्थानप्रयत्ननादस्वरवर्णपदवाक्यविषयसङ्कल्पात्मिका वृत्तिः श्रोत्रादिकरणद्वारा यजुस्संकेतविशिष्टा सती यजुरित्यभिधीयते। यजुषस्तावत् यागादौ सन्निपत्योपकारकत्वात्। स्वाहाकारवषट्कारादिना यजुषा हीह हविर्दीयते। अतः प्राधान्यात् शिरस्त्वं युक्तम्। एवं **ऋग्दक्षिणः पक्षः। सामोत्तरः पक्षः**। एवमृक्सामयोरपि मानसवृत्तित्वेनावर्तनीयत्वात् मानसो जप उपपद्यते। नो चेदविषयत्वात् घटादिवत् मन्त्रो नावर्तयितुं शक्यते। एवं चेत् मानसो जपो नोपपद्यते। कर्मसु तावत् बहुलं मन्त्रावृत्तिश्चोद्यते। अक्षरविषयस्मृत्या मन्त्रावृत्तिः भवेत् इत्यत्र गौण्या वृत्त्या। एवमपि मुख्यार्थस्यासंभवात् "त्रिः प्रथमामन्वाह। त्रिरुत्तमाम्" इति ऋगावृत्तिः श्रूयते। तस्मात् मनोवृत्त्युपाधिपरिच्छिन्नात्मविज्ञानं मन्त्र इत्युच्यते। एवं चेत् वेदानां नित्यत्वमुपपद्यते। "सर्वे वेदा यत्रैकं भवन्ति स मानसीन आत्मा" इति श्रुतेः। कृत्स्नवेदस्य नित्यात्मना एकत्वमुपपद्यते "ऋचो अक्षरे परमे व्योमन्। यस्मिन् देवा अधि विश्वे

निषेदुः" इति मन्त्रवर्णात्। कृत्स्नवेदप्रकाशितोऽर्थ एवात्रादेशः। स ह्यात्मा आत्मनो वेदार्थत्वात्।

वेदार्थः परमाद्वैतं नेतरत् सुरपुङ्गवाः।

इति स्मृतेः। अथर्वणा अङ्गिरसा दृष्टा मन्त्राः शान्तिकपौष्टिकवश्याकर्षणादयः षट्कर्मप्रधाना **अथर्वाङ्गिरसः पुच्छं प्रतिष्ठा** ॥

**इति तृतीयोऽनुवाकः**

---

## चतुर्थोऽनुवाकः

विज्ञानमयकोशविवरणम्

यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह। आनन्दं ब्रह्मणो विद्वान्। न बिभेति कदाचनेति। तस्यैष एव शारीर आत्मा। यः पूर्वस्य। तस्माद्वा एतस्मान्मनोमयात्। अन्योऽन्तर आत्मा विज्ञानमयः। तेनैष पूर्णः। स वा एष पुरुषविध एव। तस्य पुरुषविधताम्। अन्वयं पुरुषविधः। तस्य श्रद्धैव शिरः। ऋतं दक्षिणः पक्षः। सत्यमुत्तरः पक्षः। योग आत्मा। महः पुच्छं प्रतिष्ठा। तदप्येष श्लोको भवति॥

पूर्ववत् मनोमयात्मप्रकाशक एष श्लोको मन्त्रो भवतीत्याह—यत इति। **यतो** ब्रह्मणः सकाशात् **मनसा सह वाचो निवर्तन्ते** तदप्राप्येत्यर्थः। यत् **ब्रह्मण आनन्दं** ब्रह्मानन्दं स्वमात्रमिति **विद्वान् न बिभेति कदाचन** भयहेतुः स्वातिरिक्तवैरल्यादित्येवमज्ञानविकल्पितं यन्मनः तन्मयो मनोमयः।

**एष एव** पूर्वस्य प्राणमयस्य शरीरे भवः **शारीरः आत्मा** । **तस्माद्वा एतस्मात्** इत्यादि पूर्ववत् । मनोमयकोशो व्याख्यातः । अथ विज्ञानमयकोशं विवृणोति—वेदात्मा मनोमयः । वेदार्थविषया निश्चयात्मिका अध्यवसायलक्षणा बुद्धिर्ज्ञानम् । प्रमाणभूतनिश्चयविज्ञाननिर्वर्तित **आत्मा विज्ञानमयः** । मनोमयाद-न्योऽन्तरात्मा विज्ञानमयः । **तेनैष** इत्यादिरुक्तार्थः । प्रमाणविज्ञानपूर्वकं हि यज्ञादिस्स्तूयते । वक्ष्यति हि श्लोकेन यज्ञादिहेतुत्वं "विज्ञानं यज्ञं तनुते" इति । कर्तव्यविषयनिश्चयविज्ञानवतो हि श्रद्धोत्पद्यते । तस्याः प्राथम्यात् शिरस्त्वम् । पुरा व्याख्याते **ऋतसत्ये दक्षिणोत्तरपक्षौ** भवतः । **योगो** युक्तिः समाधानं **आत्मैवात्मा** आत्मवतो हि युक्तियुक्तस्य श्रद्धादीनि प्रतिपत्तिक्षमाणि भवन्ति । तस्मात् विज्ञानमयस्य योग एवात्मा । "महद्यक्षं प्रथमजं वेद" इति श्रुत्यनुरोधेन महत् महत्तत्वं **पुच्छं प्रतिष्ठा** । महतो बुद्ध्यादिकारणत्वात् । **तदप्येष श्लोको भवति** इति पूर्ववत् ।

इति चतुर्थोऽनुवाकः

---

## पञ्चमोऽनुवाकः

### आनन्दमयकोशविवरणम्

विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि च । विज्ञानं देवाः सर्वे । ब्रह्म ज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेद । तस्माच्चेन्न प्रमाद्यति । शरीरे पाप्मनो हित्वा । सर्वान्कामान्समश्नुत इति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । तस्माद्वा एतस्माद्वि-ज्ञानमयात् । अन्योऽन्तर आत्मानन्दमयः । तेनैष पूर्णः । स वा एष पुरुषविध एव । तस्य पुरुषविधताम् । अन्वयं पुरुषविधः ।

**तस्य प्रियमेव शिरः । मोदो दक्षिणः पक्षः । प्रमोद उत्तरः पक्षः । आनन्द आत्मा । ब्रह्म पुच्छं प्रतिष्ठा । तदप्येष श्लोको भवति ॥**

कोऽयं श्लोकः ? इत्यत आह—**विज्ञानमिति** । **विज्ञानं** विज्ञानवान् **यज्ञं** श्रद्धादिपूर्वकं **तनुते** तनोति । अतो विज्ञानकर्तृत्वं तनोतेः कर्त्रर्थकप्रत्ययान्तत्वात् । यज्ञाङ्ग**कर्माणि तनुतेऽपि** चेति । यस्मात् विज्ञानकर्तृत्वं सर्वं तस्मात् विज्ञानमय आत्मा स्वगतोपाधिवैरल्यात् ब्रह्मेति युक्तम् । किं च **विज्ञानं** प्रथमजं **सर्वे** इन्द्रादयो **देवाः** सर्वप्रवृत्तीनां विज्ञानपूर्वकत्वेन तदेव **ब्रह्म ज्येष्ठं** हिरण्यगर्भमित्यु**पासते** । विज्ञानमयस्य वस्तुतो ब्रह्मत्वात् तदुपासनमुचितमित्यर्थः । तस्मात् विज्ञानोपासनात् ज्ञानवैराग्यैश्वर्यवन्तो भवन्ति । **विज्ञानं ब्रह्मे**ति **वेद चेत्** यदि **तस्मात्** विज्ञानमयात् अन्नमयादिकोशत्रये त्वात्मभावतो **न प्रमाद्यति** । अन्नमयादिष्वात्मभावं हित्वा विज्ञानमये ब्रह्मणि आत्मभावनया युक्तश्चेत् तदा शरीराभिमाननिमित्ता हि सर्वे पाप्मानः । **शरीर** एव **हित्वा** विज्ञानमयप्रभवान् **सर्वान् कामान्** विज्ञानमयेनैव आत्मना **समश्नुते** । स्वपूर्वस्य **तस्य** मनोमयस्य शरीरे भवः **एष एव** विज्ञानमयः **शारीर आत्मे**ति विज्ञानमयकोशो व्याख्यातः । अथ आनन्दमयकोशं विवृणोति—**तस्मा**दित्यादिना । **तस्माद्वा एतस्माद्विज्ञानमयात् । अन्योऽन्तर आत्मानन्दमयः** इत्यत्र मयड्विकारार्थे । तस्य कार्यात्मप्रतीतेः कोशानां भौतिकत्वाविशेषात् । तस्मादानन्दमयोऽपि कार्यात्मत्वेन प्रत्येतव्यः । "एतमन्नमयमात्मानमुपसंक्रामति एतमानन्दमयमात्मानमुपसंक्रामति" इति वक्ष्यमाणानुरोधेन संक्रमणस्य तुल्यत्वात् । कार्यादिसामान्यस्यानादित्वेन संक्रमणकर्मत्वेन च आनन्दमयः श्रूयते । न हि मुख्यात्मनः संक्रमणं सेद्धुं पारयति असंभवात् । न हि स्वेनैव स्वसंक्रमणमुपपद्यते, कर्मकर्तृभेदवैरल्यात् शिरआदिकल्पनानुपपत्तेश्च । न ह्याकाशादिसर्वकारणे वस्तुतः कार्यकारणकलनापह्नवसिद्धब्रह्ममात्रे शिरआद्यवयवकल्पना न्याय्या "अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने", "अशब्दमस्पर्शमरूपमव्ययं", "अस्थूलमनण्वह्रस्वमदीर्घं",

"निरवयवं निराकारं", "नेति नेति" इत्यादिविशेषापह्नवश्रुतेः। "तदप्येष श्लोको भवति" इति मन्त्रोदाहरणानुपपत्तेश्च। प्रियशिरस्त्वाद्यवयवविशिष्ट आनन्दमयात्मनि नास्ति ब्रह्मेत्याशंका नोपपद्यते। "असन्नेव स भवति" इत्यादि तस्य प्रत्यक्षतोऽनुभूयमानत्वात्। आनन्दमयस्यैव ब्रह्मत्वे "ब्रह्मपुच्छं प्रतिष्ठा" इति प्रतिष्ठात्वेन पृथग्ग्रहणं अनुपपन्नम्। तस्मात् कार्यमध्यपतित एवानन्दमयः परं ब्रह्म न हि भवितुमर्हति। विद्याकर्मणोः फलं ह्यानन्दः। तद्विकार आनन्दमयः। तस्य यज्ञादिहेतोः स च विज्ञानमयादन्तरः विद्याकर्मफलभूतः। प्रियादिप्रयुक्ते हि विद्याकर्मणी। तस्मात् प्रियादिफलभूतात्मसन्निकर्षात् विज्ञानमयात् अस्याभ्यन्तरत्वमुपपद्यते। प्रियादिवासनानिवृत्तं ह्यानन्दमय एव विज्ञानमयत्वमवलम्ब्य इष्टपुत्रादिदर्शनं स्वप्ने उपलभ्यत इति यत् तद्धि **प्रियम्**। प्राधान्यात् तदेव शिर इव **शिरः**। प्रियलाभनिमित्तहर्ष एव **मोदः**। अस्य **दक्षिणः पक्षः**। स एव प्रकृष्टश्चेत् **प्रमोदः उत्तरः पक्षः** **आनन्द**शब्देन सुखसामान्यात्मा उच्यते। प्रियादिसुखावयवानामात्मन्यनुस्यूतत्वात् आनन्दात्मा ब्रह्मैव। तद्धि स्वदेहदारपुत्रधनक्षेत्राहंममाभिमतितमसा वृतं सद्वैषयिकसुखं भवति तदुपाधेरनवस्थितत्वात्। तदवच्छिन्नसुखस्य क्षणिकत्वात्। तद्यदावरणं निष्कामकर्मानुष्ठानजनितचित्तशुद्धिसहकृतसाधनचतुष्टयसंपत्त्यासादितपारमहंस्यधर्मपूगवदनुष्ठितवेदान्तश्रवणादिजनितसम्यज्ज्ञानासिना विशीर्णं भवति तदा ब्रह्मसुखरसो निरावृततया उपलभ्यते। विद्वान् तदुपलब्धिसमकालं तन्मयो भवतीत्यत्र वक्ष्यति। "रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति" इति, "एष ह्येवानन्दयाति, एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुत्यन्तरात्। एवं च तत्तद्विषयगतकामक्षयापेक्षया शतगुणोत्कर्षतः परमानन्दोऽवशिष्यते। सोऽयमानन्दः परं ब्रह्मैव। यत्तु प्रकृतं "सत्यं ज्ञानमनन्तं ब्रह्म" इति मन्त्रादौ यत्प्रतिपत्त्यर्थं सोपानक्रमेणान्नमयादिपञ्चकोशा उपन्यस्ताः यत्तेभ्योऽन्तरतमं येनान्नमयादय आत्मवन्तो भवन्ति यत् वस्तुतः एतत्सर्वकलनापह्नवसिद्धं तदेव **ब्रह्म** पुच्छं प्रतिष्ठा यदज्ञानतो व्यष्टिसमष्ट्यात्मकान्नमयाद्यानन्दमयकोशान्ताविद्यापदतत्कार्यजातं विजृं-

भितं यज्ज्ञानसमकालं एतदपह्नवतामर्हति ततो निष्प्रतियोगिकब्रह्ममात्रोपबृंहणात् ब्रह्म ।

ब्रह्मरूपतया ब्रह्म केवलं प्रतिभासते ।

इति श्रुतेः । निष्प्रतियोगिकविपुलाच्छप्रकाशमात्रं पुच्छमुच्यते । एवंरूपा या चित् स्वातिरिक्तपञ्चकोशतत्कार्यभ्रमे सत्यसति स्वमात्रतया प्रतितिष्ठति मा चित् प्रतिष्ठा । "अभयं प्रतिष्ठां विन्दते",

प्रतिष्ठा सर्वभूतानां प्रज्ञानघनलक्षणः ।

इति श्रुतेः,

तदिदं ब्रह्मपुच्छाख्यं सत्यज्ञानाद्वयात्मकम् ।

इति स्मृतेश्च ।

इति पञ्चमोऽनुवाकः

---

## षष्ठोऽनुवाकः

### ब्रह्मणो जगत्सृष्टिस्तदनुप्रवेशश्च

असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुरिति । तस्यैष एव शारीर आत्मा । यः पूर्वस्य । अथातोऽनुप्रश्नाः । उताविद्वानमुं लोकं प्रेत्य । कश्चन गच्छती ३ । आहो विद्वानमुं लोकं प्रेत्य । कश्चित्समश्नुता ३ उ । सोऽकामयत । बहु स्यां प्रजायेयेति । स तपोऽतप्यत । स तपस्तप्त्वा । इद॰ं सर्वमसृजत । यदिदं किंच । तत्सृष्ट्वा ।

तदेवानुप्राविशत् । तदनुप्रविश्य । सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च । सत्यमभवत् । यदिदं किंच । तत्सत्यमित्याचक्षते । तदप्येष श्लोको भवति ॥

एतादृशं पुच्छप्रतिष्ठारूपं ब्रह्म अस्तीत्यस्मिन्नर्थेऽप्येष श्लोको मन्त्रो भवति— **असन्नेवे**ति । "सन्मात्रमसदन्यत्" इति श्रुत्यनुरोधेन स्वातिरिक्तसर्वापह्नवसि सन्मात्रं **ब्रह्म असत्** अविद्यमानमि**ति वेद चेत्** यद्यदविद्यमानं ब्रह्म यो वे विजानाति तदा **सोऽ**यमविद्वान् **असन्नेव** अविद्यमानात्मैव **भवति** स्वयम अभावपदं भजतीत्यर्थः । तद्विपर्ययेणासदपह्नवसिद्धं सन्मात्रं **ब्रह्म** स्वावशेषधि **अस्तीति वेद चेत्** तदा ब्रह्मविद्वरीयांस एवंविदमे**नं** सर्वापह्नवसिद्धब्रह्ममात्रत **सन्तं** वर्तमानं **विदुः** । ततः तस्मात् एवं अस्तित्ववेदनात् सोऽयं ब्रह्मविद्वरि ब्रह्मविद्विज्ञेयो भवतीत्यर्थः । यद्वा—यो ब्रह्म नास्तीति मन्यते स हि ब्रह्मप्र त्युपायभूतनित्यादिकर्मतज्जसत्त्वशुद्धितन्निष्पन्नसाधनचतुष्टयतद्भूषणपारमहंस्यधर्मादि सत्सेवनीयमार्गस्यापि नास्तित्वं प्रतिपद्यते । तत्प्राप्त्युपायानां तत्प्रतिपत्त्यर्थत्वात् अतः सोऽयं लोके नास्तिकोऽसाधुरुच्यते । तद्वैपरीत्येन योऽस्ति ब्रह्मेति चेद्वे तदा तत्प्रतिपत्तिहेतुवर्णाश्रमधर्मादिकमप्यस्तित्वेन प्रतिपद्यते । ततः तस्मात् साधव सन्तमेनं विदुः । तस्मादस्तीत्येव ब्रह्म प्रतिपत्तव्यमिति वाक्यार्थः । **यः पूर्वस** विज्ञानमयस्य शरीरे भवः **शारीरः** । **य एष** आनन्दमयः **तस्य** स्वाज्ञदृष्ट्यनुभूरि प्रमाणात्तद्दृष्ट्या स नास्तीति शंका न युज्यते । ब्रह्मणः तत्सर्वापह्नवसिद्धत्वात् स्वाज्ञानां तन्नास्तित्वं प्रत्याशंका युक्ता । यस्मात् एवं तस्मात् । **अथाऽनन्त** श्रोतुः शिष्यस्य **अनुप्रश्नाः** आचार्योक्तिमनूद्य प्रश्नाः अनुप्रश्नाः सामान्याः सामान्यं हि सर्वकोशापह्नवसिद्धं ब्रह्म विदुषोऽविदुषश्चापि समानम् । तस्मात विदुष इवाविदुषोऽपि ब्रह्मप्राप्तिः शंक्यते—उतेति । **उत** कश्चनाप्य**विद्वान्** विद्वानिव परमात्मानं इतः पञ्चकोशास्तित्वाभिमानात् प्रेत्य प्रावृत्य गच्छति प्राप्नोति । किं वा **न गच्छति**? इति द्वितीयः प्रश्नो ज्ञातव्यः, अनुप्रश्ना इ

बहुवचनात्। विद्वांसं प्रत्यन्यौ प्रश्नौ स्यातामिति द्योत्यत इत्याह—**आहो** इति। सर्वसामान्यमपि ब्रह्म यथाविद्वान् न गच्छति तथा विद्वानपि कश्चित् स्वातिरिक्तास्तिताभ्रान्त्यपह्नवसिद्धं **अमुं लोकं** ब्रह्ममात्रं इतः **प्रेत्य समश्नुते,** इत्येवं स्थिते अयादेशे यलोपे च कृते अकारस्य प्लुतिः **समश्नुता ३ उ** इति। विद्वानप्यमुं लोकं न समश्नुते इत्यपरः प्रश्नः। यद्वा—द्वावेव प्रश्नौ विद्वदविद्वद्विषयौ। बहुवचनन्तु प्रश्नान्तरापेक्षया। "असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद" इति श्रवणादस्ति नास्तीति प्रथमोऽनुप्रश्नः ब्रह्मणस्त्व-पक्षपातित्वात्। अविद्वान् गच्छति नवेति द्वितीयोऽनुप्रश्नः। आहोस्वित् ब्रह्मणः समत्वेन अविद्वानिव विद्वानपि न गच्छति। किं वा विद्वान् समश्नुते? इति तृतीयोऽनुप्रश्नः। एतेषां प्रश्नानां प्रतिवचनार्थं उत्तरो ग्रन्थ आरभ्यते—**सोऽकामयत**ेति। ननु "सत्यं ज्ञानमनन्तं ब्रह्म"इत्यत्र सत्यत्वं कथम्? इत्याशंक्य ब्रह्मणः सर्वकारणत्वेन विद्यमानत्वात् सत्यत्वं निरंकुशम्। वक्ष्यति च "तत्सत्यमित्याचक्षते" इति। एतदर्थानुरोधेनोत्तरत्र वाक्यानि दृश्यन्ते "यदेष आकाश आनन्दो न स्यात्" इत्यादीनि। तिष्ठन्त्वेतादृशवाक्यानि। लोके तावद्यदस्ति तत् घटादिवद्विशेषतो गृह्यते। यन्नास्ति शशविषाणवत् तन्नोपलभ्यते। तस्मात् ब्रह्मणोऽपि विशेषतोऽग्रहणात् ब्रह्म नास्तीति चेन्न; ब्रह्मणस्तावदाकाशादिकारणत्वात् नास्ति ब्रह्मेति न हि शक्यं वक्तुम्। ब्रह्मकार्यत्वेन वियदादिप्रपञ्चो दृश्यते यथा घटाङ्कुरादिकं मृद्बीजादिकार्यम्। यस्मात् यज्जायते तत्कारणमस्तीत्यंगीकार्यम्। तस्मात् परिदृश्यमानाकाशादिकारणं ब्रह्मास्त्येव। न ह्यसज्जातं किंचिदपि सत्त्वेनोपलभ्यते। तस्मादस्ति ब्रह्म। यदि हि मृद्बीजादिवत् कारणं स्यात् तदाचेतनं ब्रह्मेति चेन्न; कामयितृत्वश्रवणात्। न ह्यचेतनं कामयितृ भवति। स्वाज्ञविकल्पितमूलाविद्याबीजांशासंगब्रह्मणः सर्वज्ञत्वेन कामयि-तृत्वोपपत्तेः। ब्रह्मणः कामयितृत्वे अस्मदादितुल्यता स्यात् इति चेन्न; तस्य निरंकुशस्वतन्त्रत्वात्। न हि कामास्तं वशीकृत्य प्रवर्तयितुं पारयन्ति तत्कामानां स्वात्मभूतत्वेन सत्यज्ञानानन्दस्वरूपत्वात्। न हि तैः ब्रह्म प्रवर्त्यते। किन्तु स्वाज्ञविकल्पितकामजातप्रवृत्तिनिमित्तत्वमपि प्राणिकर्मापेक्षम्। तस्मात् नानात्म-

कामं ब्रह्म। यथान्येषां अनात्मावृतदृष्टित्वेन स्वातिरिक्तकार्यकारणधर्माधर्मनिमित्तसाधनान्तरापेक्षा भवेयुः, न तथा ब्रह्मणो निमित्ताद्यपेक्षत्वं प्राण्यदृष्टानुरोधेन कामयितृत्वं स्यादित्याह—**स** इति। "सबाह्याभ्यन्तरो ह्यजः" इति श्रुत्यनुरोधेन निष्प्रतियोगिकाजरूपेणात्मा विजृंभते। स्वाज्ञदृष्ट्या यस्मात् अजात् आत्मनः गगनारविन्दवत् अव्यक्तादिस्थावरान्तं जगदाविर्भूतं सोऽयमात्मा **बहु स्यां** बहुप्रकारेण **प्रजायेय** उत्पद्येय इत्य**कामयत**। "एको देवो बहुधा निविष्टः" इति श्रुतेः। पुत्राद्युत्पत्तिवत् बहुभवनं अर्थान्तरमिति चेन्न; उत्पत्स्यमानस्वातिरिक्तपदार्थस्य स्वाभिन्नत्वात् नार्थान्तरं—

स्वयमेव जगद्भूत्वा प्राविशज्जीवरूपतः।

इति श्रुतेः। कथं पुनः ब्रह्मणो बहुभवनम्? अनभिव्यक्तनामरूपप्रपञ्चस्य नामरूपाभिव्यक्ततया व्याकरणं बहुभवनमुच्यते। न ह्यन्यथा निरंशस्य बहुत्वापत्तिः परिच्छिन्नत्वं वा उपपद्यते। यथा व्योम्नः परिच्छिन्नत्वं बहुत्वं वोपाधिकृतं तथा ब्रह्मण इत्यर्थः। न ह्यात्मातिरेकेण नात्मभूतं वस्तु क्षणमपि स्थातुं पारयति वस्तुतः आत्ममात्रत्वात्।

आत्ममात्रमिदं सर्वं आत्मनोऽन्यन्न किञ्चन।

इति श्रुतेः। नामरूपप्रपञ्चे ब्रह्मात्मके। न तद्ब्रह्म तदात्मकम्। वस्तुतो नामरूपे न स्तः। स्वाज्ञविकल्पितनामरूपाभ्यां ज्ञात्रादित्रिपुटीरूपेण एतत्सर्वं व्यवहारार्हं भवति। तथा व्यावहारिकदृष्ट्या **सोऽयमात्मा** विज्ञानरूपं **तपोऽतप्यत** "यस्य ज्ञानमयं तपः" इति श्रुतेः। सृज्यमानविश्वविषयकालोचनं कृतवानित्यर्थः। **सोऽय**मीश्वरः एवं **तपस्तप्त्वा** प्राणिकर्मानुरोधेन स्रष्टव्यविश्वालोचनं कृत्वा अथ **यदिदं किंच** यत्किञ्चेदमवशिष्टं जगत् **सृष्ट्वा** पुनः स्वसृष्टं जगद**नुप्राविशत्**। कथमेतद्ब्रह्म स्वसृष्टजगति वदने हस्तवत् बिले पिपीलिकावच्च प्राविशत्? यदि तदा मूर्तत्वं स्यादिति चेन्न; अनुप्रवेशवाक्यस्यान्यार्थत्वात्। "ब्रह्मविदाप्नोति परं" इति सूत्रस्थविच्छब्दार्थो "यो वेद निहितं गुहायां" इति मन्त्रेण वर्णितः। तद्वृत्त्यर्थत्वादनुप्रवेशवाक्यस्य तद्विज्ञानमेवात्र प्रकृतं तदधिगमार्थम्। अन्न-

शब्देन स्वाविद्यापदस्थूलांश उक्तः। मयशब्देन तदवच्छिन्नात्मा विराडभिहितः। एतद्विशिष्टं अन्नमयकोश इत्युच्यते। कर्मेन्द्रियपञ्चकेन प्राणादिपञ्चकं मनोमयकोशः। बुद्धिश्च ज्ञानेन्द्रियपञ्चकं च विज्ञानमयकोशः। एतत् कोशत्रयं स्वाविद्यापदसूक्ष्मांश उच्यते। तदवच्छिन्नात्मा सूत्रात्मेत्यभिहितः। स्वाविद्यापदबीजांशायमानकारणशरीरमानन्दमयकोशः। तदवच्छिन्नात्मा बीजात्मोच्यते। स्वाविद्यापदतुर्यांशो अर्धमात्रात्मकः। तत्राप्यसंगात्मा व्यष्टिसमष्टिसाक्षीत्युच्यते। "स आनन्द आत्मा" इति श्रुत्या प्रदर्शित इत्यर्थः। "ब्रह्म पुच्छं प्रतिष्ठा" इति वाक्येन स्वाविद्यापदस्थूलादिचतुरंशाढ्यपञ्चमकोशतदवच्छिन्नचैतन्यानुगतहेयांशापह्नवसिद्धं ब्रह्ममात्रं निष्प्रतियोगिकमवशिष्यत इति यत् तदेव विज्ञानमयगुहायां अधिगन्तव्यं नान्यत्रेति प्रवेशः कल्प्यते निर्विशेषत्वात्। विशेषसंबन्धेऽपि गुहायां निर्विशेषतया उपलभ्यते। यथा चन्द्रार्कविशेषसंबन्धाद्राह्वाद्यधिगमः तथा अन्तःकरणसंबन्धवैरल्येन तद्वृत्तिसहस्रभावाभावप्रकाशकतया प्रत्यक्तद्वृत्तिसहस्रापवादतस्तदधिकरणं प्रत्यगभिन्नं ब्रह्म तद्वृत्तितत्कार्यापह्नवसिद्धं ब्रह्ममात्रं च तदुपलब्धिहेतौ गुहायां निहितमिति मन्त्रे यत् प्रकृतं तद्वृत्तिस्थानीये त्विह पुनः "तत्सृष्ट्वा। तदेवानुप्राविशत्" इत्युक्तम्। तत्र यदुपलब्धं तदेव ब्रह्म स्वाज्ञदृष्ट्याकाशादिकार्यं सृष्ट्वा तद्गुहायां अन्तःप्रविष्टमिव द्रष्टृश्रोतृमन्तृविज्ञातृत्वादिनैवमुपलभ्यते। तदेव हि तत्प्रवेशः। तस्मादस्ति तत्कारणं ब्रह्मेत्यर्थः। एवं कार्यं सृष्ट्वा **तदनुप्रविश्य** किं वा तदभवत्? इत्यत्राह—**सच्चेति**। **सच्च मूर्तं त्यच्च** अमूर्तं **अभवत्**। पञ्चीकृतापञ्चीकृतभूततत्कार्यमभवदित्यर्थः। इदं तदिति यत् निरूपणक्षमं **तन्निरुक्तम्**। तद्विपरीत**मनिरुक्तम्**। निरुक्तानिरुक्ते मूर्तामूर्तधर्मौ। तथा **निलयनं** नीडं आश्रयः। तद्विपरीत**मनिलयनम्**। ते अपि मूर्तामूर्तधर्मौ भवतः। **विज्ञानं** चेतनं जंगमम्। **अविज्ञानं** अचेतनं स्थावरम्। **सत्यं** व्यवहारार्हं आपेक्षिकमृगतृष्णिकाद्यपेक्षया उदकादेः सत्यत्वात्। मृगतृष्णिकादितुल्यं **अनृतम्**। पुनरेतत्सर्वं तद्गतहेयांशापह्नवतः परमार्थ**सत्यमभवत्**। पारमार्थिकसत्यस्यात्र "सत्यं ज्ञानमनन्तं ब्रह्म" इति प्रकृतत्वात्। स्वाज्ञदृष्टिप्रसक्तं **यदिदं किञ्च** सच्च त्यच्चेत्यादि स्वातिरिक्तविकारजातं ब्रह्मैवाभवत्। यत

एवं अतः तद्ब्रह्म ब्रह्मविदः सत्यमित्याचक्षते। पुरा ब्रह्मास्ति नास्तीत्यनुप्रश्नः कृतः। तत्प्रतिवचनमुक्तं सोऽकामयतेत्यादिना। सत्यादिलक्षणं जगत् सृष्ट्वा तदनुप्रविश्य दर्शनश्रवणादिलिङ्गैः अविद्योपाधितो बह्वभवत्। तदेतदकारण-मप्याकाशादिकारणतया कार्यरूपपरमे व्योम्नि हृदयाकाशे तत्रत्यान्तःकरणवृत्त्यव-भासकतया प्रत्यगादिरूपेणास्त्येवेति विजानीयात् इत्युक्तम्।

**इति षष्ठोऽनुवाकः**

---

## सप्तमोऽनुवाकः

ब्रह्मयाथात्म्यज्ञानम्

असद्वा इदमग्र आसीत्। ततो वै सदजायत। तदात्मानꣳ स्वयमकुरुत। तस्मात्तत्सुकृतमुच्यत इति। यद्वै तत्सुकृतम्। रसो वै सः। रसꣳ ह्येवायं लब्ध्वानन्दी भवति। को ह्येवान्यात्कः प्राण्यात्। यदेष आकाश आनन्दो न स्यात्। एष ह्येवानन्दयाति। यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति। यदा ह्येवैष एतस्मिन्नुदर-मन्तरं कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयं विदुषो मन्वानस्य। तदप्येष श्लोको भवति॥

तदेतस्मिन् ब्राह्मणोक्तेऽर्थे अन्नमयादिष्विव एष श्लोको मन्त्रो भवति— असदिति। अव्याकृतनामरूपोपाध्यसङ्गं ब्रह्मोच्यते। उपाधेरव्याकृतत्वेन अदृश्यत्वात् असत्त्वम्। न हि तदवच्छिन्नं ब्रह्म असद्भवितुमर्हति। न ह्यसतः

सज्जन्मास्ति। इदमिति नामरूपविशेषवत् जगदग्रे **असच्छब्दवाच्यं ब्रह्मै-वासीत्।** **ततो** असतो ब्रह्मणः सकाशात् प्रविभक्तनामरूपविशेषजातं **सदजायत।** किं तत् पितुरिव पुत्रः? तत्राह—**तदिति। तत्** असच्छब्दवाच्यं ब्रह्म सर्वरूपेण **स्वयमात्मानमेवाकुरुत** कृतवदित्यर्थः। यस्मादेवं **तस्मात् तद्ब्रह्म सुकृतमुच्यते।** इति शब्दस्त्वारोपितकर्तृत्वद्योतकः। यस्माद्वै सर्व-कारणपुण्यरूपेण कार्यजातं **सुकृतं** तस्मादस्ति **तत्सुकृतकृत्** ब्रह्म। इतश्च अस्ति तद्ब्रह्म रसत्वप्रसिद्धेः। यद्वै तत् ब्रह्मैव सुकृतं भवति। **रसो वै सः** लोकप्रसिद्धमधुराम्लादिरसवत् नित्यतृप्तिरूपसच्चिदानन्दरसमात्रो हि सः अस्ति भाति प्रियात्मकसच्चिदानन्दरसातिरेकेण नामरूपप्रपञ्चवैरल्यात्। लोके विद्वान् सच्चिदानन्द**रसं** ब्रह्म स्वमात्रमिति **लब्ध्वा आनन्दीव** सुखी **भवति।** तस्मादस्ति विद्वत्पटलानुभूतानन्दरसात्मकं ब्रह्म। इतश्च लोकव्यापृतिहेतु ब्रह्मास्तीत्याह—**को हीति।** वैषयिकानन्दबहिष्कृतानिरीहानिरेषणब्राह्मणाः स्वस्वहृदयगुहावच्छिन्नपरमे व्योम्नि निहितं उपलब्धं यं आनन्दात्मानं स्वाव-शेषधिया पश्यन्तः सन्तः आनन्दिनो भवन्ति। **यद्येवं स एष आनन्दो न स्यात्** न भवेत् तदा लोके **को ह्येवान्यात्** अपानचेष्टां कुर्यात्। **कः प्राण्यात्** प्राणचेष्टां कुर्यात्। यदर्थाः कार्यकारणप्राणनादिचेष्टाः तत्प्राणेन्द्रियादि-चेष्टानिमित्तत्वेन परमानन्दरूपं ब्रह्म आत्मत्वेन विद्यते लोकं स्वस्वदृष्ट्यनुरोधेन **एष ह्येवानन्दयाति** आनन्दयति सुखयतीत्येतत्। एवमात्मानन्दरूपोऽपि स्वाज्ञानावृतचेतसां परिच्छिन्नत्वेन विभाव्यते। परमार्थदृशां स्वेन रूपेणेत्यर्थः। विदुषामभयहेतुत्वेनाविदुषां भयहेतुत्वेन च ब्रह्मास्ति। कथं पुनः ब्रह्मणो भयाभयहेतुत्वम्? इत्यत आह—**यदेति। यदा हि** यस्मिन् काले **एष** साधको ब्रह्मविद्वरीयान् एतस्मिन् स्थूलादिचतुरंशाढ्यस्वाविद्यापदतत्कार्यजाता-पह्नवसिद्धब्रह्ममात्रे स्वाविद्यापदस्थूलांशप्रविभक्तजाग्रज्जाग्रदादिजाग्रत्तुरीयान्ततद्व्य-ष्ट्यभिमानिविश्वविश्वादिविश्वतुर्यान्ततत्समष्ट्यभिमानिविराड्विराडादिविराट्तुरीयान्त-तदुभयैक्याभिमान्योत्रोत्राद्योत्रविकल्पान्तभेदानां व्यक्तत्वेन दृश्यत्वात्। तदपह्नव-सिद्धं **अदृश्यं** स्वाविद्यापदसूक्ष्मांशप्रविभक्तस्वप्नजाग्रदादिषोडशभेदानां प्रविभक्त-

दृष्टया आत्मरूपत्वात्। "स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति" इत्यत्र अयं पुरुषः स्वयं ज्योतिर्भवतीति—

स्वप्नदृक्चित्तदृश्यास्ते न विद्यन्ते ततः पृथक्।

इति श्रुतेः गौडपादाचार्योक्तेश्च। आत्मनो भावः आत्म्यम्। तद्गतहेयांशापह्नवसिद्धम**नात्म्यम्**। स्वाविद्यापदबीजांशप्रविभक्तस्वापजाग्रदादिषोडशभेदानां सविशेषत्वेन निर्वक्तुं शक्यत्वात् निरुक्तमित्युक्तम्। तद्गतहेयांशापह्नवसिद्धम**निरुक्तं** "यतो वाचो निवर्तन्ते", "तद्वक्तुं केन शक्यते" इति श्रुतेः। स्वाविद्यापदतुर्यांशप्रविभक्ततुर्यजाग्रदादिद्वादशभेदानां जाग्रज्जाग्रदाद्यष्टाचत्वारिंशन्निलयनत्वेनाश्रयत्वेन विद्यमानत्वात् निलयनमुच्यते। तत्रत्यहेयांशापह्नवसिद्धम**निलयनम्**। तस्मिन् **अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने** एतस्मिन् स्वाविद्यापदस्थूलसूक्ष्मबीजार्धमात्रांशापह्नवसिद्धे ब्रह्ममात्रे **अभयं** यथा भवति तथा स्वावशेषधिया प्रतितिष्ठतीति प्रतिष्ठा। तां **प्रतिष्ठां** स्वमात्रतया स्थितिं **विन्दते** लभते। **अथ** तदा तद्वेदनसमकालं भयहेतुस्वातिरिक्ताविद्यापदतत्कार्यापह्नवसिद्धं निष्प्रतियोगिका**भयं** स्वमात्रमिति **गतो भवति** विद्वान् ब्रह्ममात्रमवशिष्यत इत्यत्र "स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति" इति वेदनसमकालब्रह्मभावापत्तिश्रुतेः। **यदा** हि यस्मिन् काले **एष** साधकः **एतस्मिन्** ब्रह्ममात्रे तदतिरिक्तस्वाविद्यापदतत्कार्यजातं आत्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन वास्तीत्यु**दरमल्पमपि** स्वातिरिक्तास्तित्वं **अन्तरं कुरुते** करोति जानातीत्येतत्। **अथ** एवं वेदनोत्तरक्षणं **तस्याविदुषः** असल्लौकिकादिदृष्टित्रयसिद्धान्तलक्षणं **भयं भवति**। इदं जगत् अन्यत्, अहमन्यः, ईश्वरोप्यन्य इत्येवं विदुषो **मन्वानस्य** मननं कुर्वतः यत् स्वातिरिक्तापह्नवसिद्धं ब्रह्म परमाभयत्वेन ब्रह्मविद्वरीयांसो मन्यन्ते तत्तु ब्रह्ममात्रमेव **भयं** भवति। एवं ब्रह्मयाथात्म्यं यो न पश्यति सोऽयं विद्वानप्यविद्वानेवेत्यर्थः।

**इति सप्तमोऽनुवाकः**

---

## अष्टमोऽनुवाकः

### आनन्दस्य मीमांसा तत्फलञ्च

भीषास्माद्वातः पवते । भीषोदेति सूर्यः । भीषास्मादग्निश्चेन्द्रश्च । मृत्युर्धावति पञ्चम इति । सैषानन्दस्य मीमाꣳसा भवति । युवा स्यात्साधुयुवाध्यायकः । आशिष्ठो दृढिष्ठो बलिष्ठः । तस्येयं पृथिवी सर्वा वित्तस्य पूर्णा स्यात् । स एको मानुष आनन्दः । ते ये शतं मानुषा आनन्दाः । स एको मनुष्यगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं मनुष्यगन्धर्वाणामानन्दाः । स एको देवगन्धर्वाणामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवगन्धर्वाणामानन्दाः । स एकः पितृणां चिरलोकलोकानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं पितृणां चिरलोकलोकानामानन्दाः । स एक आजानजानां देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमाजानजानां देवानामानन्दाः । स एकः कर्मदेवानां देवानामानन्दः । ये कर्मणा देवानपि यन्ति । श्रोत्रियस्य चाकामहतस्य । ते ये शतं कर्मदेवानां देवानामानन्दाः । स एको देवानामानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं देवानामानन्दाः । स एक इन्द्रस्यानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतमिन्द्रस्यानन्दाः । स एको बृहस्पतेरानन्दः । श्रोत्रियस्य चाकामहतस्य । ते ये शतं बृहस्पतेरानन्दाः । स एकः प्रजापतेरानन्दः । श्रोत्रियस्य चाका-

महतस्य । ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः । श्रोत्रियस्य चाकामहतस्य । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रामति । एतं प्राणमयमात्मानमुपसंक्रामति । एतं मनोमयमात्मानमुपसंक्रामति । एतं विज्ञानमयमात्मानमुपसंक्रामति । एतमानन्दमयमात्मानमुपसंक्रामति । तदप्येष श्लोको भवति ॥

तस्य स्वातिरिक्तास्तिताभ्रमारूढत्वेन स्वातिरिक्तप्रपञ्चजातं भयवत् दृश्यते । तस्मात् तद्दृष्ट्या सर्वत्र भयदर्शनात् नूनं भयकारणं ब्रह्मास्तीत्यवगम्यत इत्येतस्मिन्नर्थे एष श्लोको मन्त्रो भवतीत्याह— **भीषेति** । **वात सूर्याग्नीन्द्रमृत्युप्रभृतयः** स्वावरलोकदृष्ट्या स्वतन्त्रा ईश्वरा अपि भयहेतोः **अस्मादीश्वरात्** सर्वप्रशास्तुः **भीषा** भयेन बह्वायाससाध्यपवनादिकार्येष्वप्रमत्ता नियमेन प्रवर्तन्ते । न हि प्रशास्तर्यसति तेषां नियमेन प्रवृत्तिरुपपद्यते । तस्मात्तेषामस्ति भयकारणं प्रशास्तृ ब्रह्म । यतस्ते दण्डोद्यतकरराजभृत्या इव यद्भयादनवरतं प्रवर्तन्ते तदेतत् भयकारणं परमानन्दरूपं ब्रह्म अस्तीत्युक्तम् । तत्स्वरूपं किम्? इत्याशंक्य अकामहतश्रोत्रियप्रत्यक्षतया तदियत्तां विशदयति— **सैषेति** । किमयमानन्दो लौकिकानन्दवत् विषयविषयिसम्बन्धजनितः आहोस्वित् स्वाभाविक इति? **सैषानन्दस्य मीमांसा भवति** । तत्र लौकिकानन्दस्य बाह्यसाधनसंपत्तिनिमित्तत्वेन निष्प्रतियोगिकनिरतिशयस्वभावब्रह्मानन्दावगत्युपायार्थं स एष बाह्यानन्दो निर्दिश्यते । न हि लौकिकानन्दोऽपि ब्रह्मानन्दातिरिक्तोऽस्ति । ब्रह्मानन्दे क्षुद्रानन्दानामन्तर्भावात् । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः । सोऽयमानन्दः आवृतित्रयापह्नवसिद्धोऽपि स्वाज्ञदृष्ट्या समावृत इव भाव्यमानः तत्तत्प्राणिकर्मवशात् यथाविज्ञानं विषयादिसाधनसंबन्धवशाच्च विभाव्यमानः चलोऽव्यवस्थित इव च लक्ष्यते । नित्यादिसत्कर्मानुष्ठानजनितचित्तशुद्धिप्राप्यसाधनचतुष्टयसंपन्नकृतश्रवणादिसाधननिष्पन्न-

ज्ञानासिना स्वानन्दावृतिर्यावद्यावत् विशीर्णा भवेत् तावत्तावदेव सार्वभौमादि-चतुर्मुखान्तोत्तरोत्तरभूमिषु शतगुणोत्तरोत्तरेण अकामहतविद्वच्छ्रोत्रियपटलप्रत्यक्षतया विभाव्यते। यदा "ब्रह्ममात्रमसन्न हि" इति श्रुत्यर्थानुभवसंजातसर्वासदपह्नवसिद्धब्रह्ममात्रज्ञानं जायते तदा तज्ज्ञानसमकालं विषयविषयिसम्बन्धप्रभवेयं परमानन्दावृतिरपह्नवपदं भजति। ततः स्वाभाविकानन्दः परमात्मा निष्प्रतियोगिकस्वमात्रतया अवशिष्यत इत्येतमर्थं प्रकाशयिष्यन्नाह—युवेति। **युवा** प्रथमवयाः। युवाप्यसाधुः साधुरप्ययुवा चेत् प्रमादचिन्तनाय भवतीति साधुश्चासौ युवा चेति **साधुयुवा**। **अध्यायको** अधीतसाङ्गोपाङ्गवेदार्थत्वात्। **आशिष्ठो** युक्तायुक्तकार्यकरणाकरणे आशुकृत्तमत्वात्। **दृढिष्ठो** दृढगात्रत्वात्। **बलिष्ठो** बलोत्साहशक्तिमत्त्वात्। इत्यादिसाधनसंपत् यस्यास्ति **तस्येयं** ससद्वीपवती पञ्चाशत्कोटियोजनविस्तीर्णा **सर्वा पृथिवी वित्तस्य** दृष्टादृष्टेहामुत्रार्थसाधनवित्तेन **पूर्णा** स्ववशे **स्याद्यदि** तदायं राजा सार्वभौम इत्युच्यते। **तस्य य आनन्दः। स एको मानुष आनन्दः**। स्वेतरमनुष्यदुर्लभत्वात्। **ते ये शतं मानुषा आनन्दाः। स एको मनुष्यगन्धर्वाणामानन्दः**। सार्वभौमानन्दापेक्षया शतगुणोत्कृष्टो मनुष्यगन्धर्वाणामानन्दो भवतीत्यर्थः। ये हि मनुष्याः सन्तः कर्मविद्याविशिष्ट्यात् गन्धर्वत्वं प्राप्ताः ते ह्यन्तर्धानादिविचित्रशक्तिसंपन्ना मनुष्यगन्धर्वा इत्यर्थः। तेषां सार्वभौमापेक्षया मनुष्यगन्धर्वाणां चित्तप्रसादः सुखाभिव्यक्तिश्च शतगुणोत्तराधिकं भवेदित्यर्थः। एवं पूर्वपूर्वभूमिकापेक्षया उत्तरोत्तरभूमिकायां शतगुणोत्तरचित्तप्रसाद आनन्दोत्कर्षश्चोपपद्यते। प्रथमपर्यायाकामहतग्रहणं मानुषविषयकामभोगानभिभूतश्रोत्रियस्य मानुषानन्दात् शतगुणाधिकमनुष्यगन्धर्वतुल्यचित्तप्रसादानन्दाभिव्यक्तिः स्यादित्येवमर्थम्। साधुयुवाध्यायक इति श्रोत्रियत्वावृजिनत्वे गृह्येते। सर्वत्र विषयोत्कर्षापकर्षतः अकामहतत्वं विशेष्यते। अत एवाकामहतग्रहणं परमानन्दातिसाधनद्योतनार्थम्। व्याख्यातमन्यत्। जातित एव देवगन्धर्वाः। पितॄणां विशेषणं चिरलोकलोका इति। यावत् कर्मफलक्षयावधि स्थायित्वात् आजान इति देवोपभोगलोकः। तस्मिन् जाता आजानजा देवाः स्मार्तकर्मविशेषतो देवस्थानेषु जातत्वात्।

**ये केवलाग्निहोत्रादिकर्मणा** वैदिकेन **देवानपियन्ति** त्रयस्त्रिंशत्कोटिसंख्याका देवाः श्रौतस्मार्तकर्मजहविर्भागत्वात् । **इन्द्रस्तु** तेषां स्वामी । तदाचार्यो हि **बृहस्पतिः** । **प्रजापतिर्विराट्** । स्वाविद्याण्डकायत्वात् । यत्र आनन्दभेदाः सर्वधर्माः तन्निमित्तज्ञानं अकामहतत्वं च पर्यवस्यन्ति । स हि हिरण्यगर्भो ब्रह्मा । तन्निष्ठानन्दविशेषः श्रोत्रियेणाव्रजिनेनाकामहतेन प्रत्यक्षमुपलभ्यते । अधीतवेदवेदान्तार्थः श्रोत्रियः । निर्लेपधिया पापपुण्यविरलोऽव्रजिनः स्वातिरिक्तकामनारहितो **ह्यकामहतः** । एतानि त्रीणि साधनानि यत्र श्रोत्रियत्वाव्रजिनत्वे नियते तत्राकामहतत्वं तूत्कृष्यते । अत एवाकामहतत्वं उत्कृष्टसाधनमित्यवगम्यते । तदुत्कर्षोपलभ्यमानश्रोत्रियप्रत्यक्षो योऽयं **ब्रह्मण आनन्दः** सोऽयं परमानन्दस्य मात्रा एकदेश इत्यर्थः । तथा च श्रुतिः "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति । सार्वभौमादिचतुर्मुखान्तगतानन्दानां परमानन्दसागरकणमात्रत्वात् । सोऽयं परमानन्दो हि स्वाभाविकः निष्प्रतियोगिकाद्वैतरूपत्वात् । सार्वभौमाद्यानन्दतारतम्यपर्यवसानचतुर्मुखानन्दोऽपि परमानन्दलवांशोक्तिः भूमानन्दावतरणोपायार्थेत्यर्थः । मीमांसाफलमुपसंहरति—**स य** इति । **स यश्चायं पुरुष** इत्यत्र यो हृदयगुहायां अव्याकृताकाशे तत्रत्यलिङ्गशरीरवृत्तिकदम्बभावाभावप्रकाशकत्वेन तत्प्रवृत्तिनिमित्तत्वेन च कोशपञ्चकं सृष्ट्वा तदनुप्रविष्ट इव भातः पुरुषे स य इति निर्दिश्यते । कोऽसावयं पुरुषे प्रत्यक्त्वेन स्थितः ? **यश्चासावादित्ये** ब्रह्मादीनि सुखार्हाणि भूतानि यस्य आनन्दलवैकदेशत आनन्दिनो भवन्ति । यस्तु पारमार्थिकाकामहतब्रह्मविद्वरिष्ठैः स्वमात्रमित्यवगतः स "यश्चासावादित्ये" इति निर्दिश्यते । पुरुषादित्यगतनीचोत्कृष्टकलनापह्नवसिद्धो यः **स एकः** निष्प्रतियोगिकाद्वितीयत्वात् सत्यमात्मा ब्रह्मैव ब्रह्मात्मैव । अत्र ह्येव न विचिकित्स्यं "यदा ह्येवैष एतस्मिन्नभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति" इति श्रुतेः । आकाशादिकार्यरसलाभप्राणनाभयप्रतिष्ठातिदर्शनोपपत्तिभिः अस्तिनास्तीत्यनुप्रश्नो व्याख्यातः । विद्वदविदुषोः ब्रह्मप्राप्त्यप्राप्तिविषयानुप्रश्नोऽपि विद्वान् समश्नुते नाविद्वानिति अपाकृतो भवति । तृतीयप्रश्ननिराकरणाय इदमुच्यते—**स य इति । स यः** कश्चिदेवं "ब्रह्मविदाप्नोति परं" इति सूत्रस्थं "सत्यं

ज्ञानमनन्तं ब्रह्म" इत्यादिमन्त्रप्रकटितं पुनस्तद्वृत्तिस्थानीयपञ्चकोशविवेकान्ते "ब्रह्म पुच्छं प्रतिष्ठा" इति वाक्यप्रकटितं च ब्रह्म निष्प्रतियोगिकस्वमात्रमिति वेत्तीत्येवंवित्। एवंशब्दस्य प्रकृतपरामर्शार्थत्वात्। वेदनसमकालं अयं ब्रह्ममात्रतया अवशिष्यत इत्यत्र न हि संशयोऽस्ति। तथापि स्वाज्ञदृष्ट्या प्रसक्ता इमे अन्नमयादयः पञ्च कोशाः। स्वज्ञदृष्टिमनुसृत्य तत्प्रविलापनं करोति—एतमिति। कोशपञ्चकत्वेन लोक्यत इति लोकः पञ्चकोशः। यस्मादयं अदृष्टदृष्टनष्टात्मकः तस्मात् **अस्मात् लोकात् प्रेत्य** व्यावृत्य तत्र पुरानुभूतस्वात्माभिमानं त्यक्त्वा यथाव्याख्यातमेतं **अन्नमयमात्मानमुपसंक्रामति**। स्थूलप्रपञ्चजातं सर्वं वैराजरूपेण पश्यतीत्यर्थः। तथा **प्राणमयं मनोमयं विज्ञानमयं आनन्दमयं च उपसंक्रामति** सर्वं सूत्रात्माविशेषं पश्यति। तथा अन्नाद्यानन्दमयान्तकोशपञ्चकमुपसंक्रामति बीजेश्वरावशेषं पश्यति। तद्गत-हेयांशप्रविलापनाधिकरणं प्रत्यगभिन्नं ब्रह्मैव पश्यति। स्वातिरिक्तान्नमयादिकोशा-पह्नवतः परमाभयप्रतिष्ठो भवतीत्यत्र "यदा ह्येवैष एतस्मिन्नभयं प्रतिष्ठां विन्दते" इत्युक्तम्। संक्रमणकर्ता परस्मात् भिद्यते इति चेन्न; पर एव स्यात् न हि परस्मात् संक्रमणकर्ता भिद्यते। तद्विज्ञानेन परमात्मभावस्य विवक्षितत्वात्। "ब्रह्मविदाप्नोति परम्" इत्यादि। न ह्यन्यस्यान्यज्ञानादन्यभावापत्तिरिष्यते। यदि पर एव संक्रमणकर्ता तदा कर्मकर्तृत्वानुपपत्तिरिति चेन्न, संक्रमणस्य विज्ञानमात्रत्वात् संक्रमणश्रुतेर्विज्ञानार्थत्वात्। स्वाज्ञदृष्ट्यनुरोधेनाकाशाद्यन्नम-यान्तं कार्यं सृष्ट्वा हृदयगुहासंबन्धतः अन्नमयाद्यनात्मस्वात्मधीभ्रान्तिनिरसन-पूर्वकं ब्रह्ममात्रपर्यवसायिज्ञानं संक्रमणमित्युपचर्यते। न ह्यन्यथा जलूकावदात्मनः संक्रमणं उपपद्यते। तस्मात् सच्चिदानन्दमात्रब्रह्मप्रतिपत्त्युपायत्वेनाकाशाद्यन्नम-यान्तसृष्टिप्रवेशबहुभवनरसाभयानन्दतारतम्यसंक्रमणादिः विकल्प्यते। परमार्थतो न हि निष्प्रतियोगिकब्रह्ममात्रे यथोक्तविकल्पजालमस्ति नास्तीति विभ्रमोऽपि सेद्धुं पारयति।

इत्यष्टमोऽनुवाकः

## नवमोऽनुवाकः

उक्तार्थसंक्षेपः

यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् । न बिभेति कुतश्चनेति । एतꣳ ह वाव न तपति किमहꣳ साधु नाकरवम् । किमहं पापमकरवमिति । स य एवं विद्वानेते आत्मानꣳ स्पृणुते । उभे ह्येवैष एते आत्मानꣳ स्पृणुते । य एवं वेद । इत्युपनिषत् ॥

अतः एवंक्रमेण सर्वविकल्पापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमित्युपसंक्रम्य विदित्वा तद्वेदनसमकालं विद्वान् तन्मात्रतया अवशिष्यत इत्यत्रास्मिन्नर्थे सर्वस्यानन्दवल्ल्यर्थस्य संक्षेपतः प्रकाशकोऽयमेव श्लोको मन्त्रो भवतीत्याह— यत इति । वाचोऽभिधानानि सविशेषवस्त्वाश्रयाण्यपि प्रयोक्तृभिः निर्विशेषब्रह्ममात्रेऽपि तद्याथात्म्यप्रकाशनाय प्रयुक्तानि । मनश्शब्देनान्तःकरणं विज्ञानमुच्यते । तदतीन्द्रियेऽपि प्रवर्तत इति तदियत्ताप्रकाशनाय तदपि प्रयुक्तम् । तेन **मनसा सह** प्रयोक्तृभिः प्रयुज्यमाना **वाचो** निष्प्रतियोगिकब्रह्ममात्रम**प्राप्य** अप्रकाश्य **यतो** यस्मात् ब्रह्ममात्रात् **निवर्तन्ते** वाङ्मनसयोः सर्वप्रकाशनसमर्थत्वेऽपि तत्स्वेतरापह्नवसिद्धमिति भिया तदस्पृश्य यथायथं स्वाज्ञजातं प्रति पलायन्त इत्यर्थः । तमेतं व्याविद्धेषणात्रयश्रोत्रिया व्रजिनाकामहतमुन्यात्मभूतं विषयविषयित्वकलनापह्नवसिद्धं स्वाभाविकं **ब्रह्मण आनन्दं** ब्रह्ममात्रानन्दं स्वावशेषधिया **विद्वान्** भयनिमित्तस्वातिरिक्तापह्नवात् **कुतश्चना**पि **न बिभेति** । कथं पुनः विद्वान् कुतश्चन न बिभेति भयहेतुसाध्वसाध्वकरणकरणयोः प्रसक्तत्वात्? इत्यत आह—एतमिति । यथोक्तमेवंविदं **एतं** साध्वसाध्वकरणकरणप्रत्युक्तपारलौकिकभीतिनिमित्तः सन्तापः **न तपति** नोद्वेजयति । **ह वा**वेतिशब्दतः तथा स्वाज्ञवत् सन्तापप्रसक्तिरेव नास्तीति द्योत्यते । स्वाज्ञस्तु

**किमहं साधु कर्म नाकरवं न कृतवानस्मि? किमहं पापमकरवं** कृतवानस्मि ? इति नानाविधनरकपतनसमये सन्तप्यते। न तथा ब्रह्ममात्रवित्। तस्मात् साध्वकरणपापकरणे एतं न तपतः "नैनं कृताकृते तपतः" इति श्रुतेः। ब्रह्ममात्रावगतेः कृत्याकृत्यतत्फलापह्नवपूर्वकत्वात्। **यतो विद्वान्** साध्वसाधुनी **एते** तापहेतू **इत्यात्मानं स्पृणुते** प्रीणयति। ब्रह्मातिरिक्तसाध्वसाधुवैरल्यात् ब्रह्मभावेनोभे पश्यतीत्यर्थः। यस्मादेष विद्वान् **उभे ह्येवैष एते** पुण्यपापे स्वात्मरूपेणैव**आत्मानं स्पृणुते। य एवं** निष्प्रतियोगिकाद्वैतानन्दब्रह्म स्वमात्रमिति **वेद** तद्वेदनसमकालं साध्वसाधुतत्फलापह्नवसिद्धब्रह्ममात्रतया अवशिष्यते। अस्यां वल्ल्यां ब्रह्मविद्यासर्वस्वस्य निषण्णत्वेन बन्धमोक्षमुमुक्षूणां ब्रह्ममात्रपदगमकत्वात् **आनन्दवल्ल्युपनिषदित्युच्यते**। इतिशब्द आनन्दवल्लीपरिसमाप्त्यर्थः। आनन्दवल्ल्यर्थो "ब्रह्मविदाप्नोति परम्" इत्यादौ ब्राह्मणवाक्येन सूत्रितः। ततस्तदर्थस्तु "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिमन्त्रेण संक्षेपतः प्रपञ्चितः। सोऽपि "तस्माद्वा एतस्मात्" इत्यादितद्वृत्तिस्थानीयेन ब्रह्ममात्रास्त्युपायत्वेन आकाशाद्यन्नमयान्तसृष्टितदनुप्रवेशादिरुक्तः। एवमुपायत उपेयज्ञानं जायते। तज्ज्ञानसमकालं विद्वान् तन्मात्रमवशिष्यत इत्यानन्दवल्ली उपरराम। समाप्ता च ब्रह्मविद्या। नातःपरं वेदितव्यं विद्यते। "एतावदेवाहं एतत् परं ब्रह्म वेद नातःपरमस्ति" इति, "नातः परं वेदितव्यं हि किञ्चित्" इति च श्रुतेः।

**इति नवमोऽनुवाकः**

इति ब्रह्मानन्दवल्ली

---

# भृगुवल्ली

## प्रथमोऽनुवाकः

ब्रह्मणस्तटस्थलक्षणम्

भृगुर्वै वारुणिः। वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तस्मा एतत्प्रोवाच। अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति। तꣳ होवाच। यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति। तद्विजिज्ञासस्व। तद्ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥

आनन्दवल्ल्यां तु तपआदिसाधनपुरस्सरं अन्नादिविषयोपासनानि नोक्तानीति तदर्थमियं भृगुवल्ली प्रारभ्यते। प्रियपुत्राय पित्रोक्तेत्याख्यायिका तु विद्यास्तुत्यर्था। पुत्रः ससाधनब्रह्मविद्यां मे ब्रूहीति पितरमुपससादेत्याह—**भृगुरिति**। **भृगुर्वै** वरुणस्यापत्यं **वारुणिः** प्रसिद्ध्यनुस्मारको वैशब्दः। ब्रह्मजिज्ञासया **वरुणं पितरमुपससार**। **अधीहि भगवो** हे भगवन्! **ब्रह्म** इत्युपगतवान्। एवं विधिवदुपसन्नाय पिता उवाचेत्याह—**तस्मा** इति। उपसन्नाय पुत्राय **एतत्** वचनं **अन्नं प्राणं चक्षुः श्रोत्रं मनो वाचमिति प्रोवाच**। व्यष्टिसमष्ट्यात्मकस्थूलशरीरं **अन्नं** तदभ्यन्तरत्वेन अत्तारं **प्राणं** ब्रह्मोपलब्धौ चक्षुरादीन्युपलब्धिसाधनानि उक्त्वा **तं** भृगुं प्रति ब्रह्मणः तटस्थलक्षणमप्युवाच। तत् किम्? इत्यत आह—**यत** इति। **यतश्चिद्धातोः** स्वाज्ञदृष्ट्या रज्जुसर्पवत् सर्वाणि ब्रह्मादिस्तम्बान्तभूतानि **जायन्ते**। **येन जातानि जीवन्ति** यावदायुषं वर्धन्त इत्यर्थः। प्रारब्धभोगक्षयतो **यत्** ब्रह्म **प्रयन्ति** गच्छन्ति **अभिसंविशन्ति** तादात्म्यं प्रतिपद्यन्त इत्यर्थः। एवं उत्पत्तिस्थितिप्रलयेषु भूतानि यदात्मतां न जहति **तदेतद्ब्रह्मेत्यन्नादिद्वारेण विजिज्ञासस्व**

यथावत् प्रतिपद्यस्वेत्यर्थः। "प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः ते निचिक्युर्ब्रह्म पुराणमग्रियं" इति ब्रह्मोपलब्धिप्रदर्शनश्रुतेः। ब्रह्मणस्तटस्थलक्षणं ब्रह्मोपलब्धिद्वारं च श्रुत्वा किं कृतवान्? इत्यत आह—**स** इति। **स** भृगुः ब्रह्मोपलब्धिसाधनत्वेन **तपोऽतप्यत** ब्रह्मलक्षणविचारं कृतवान्। उपदिष्टे वस्तुनि साधनाकांक्षा कुतः? इति चेन्न; सावशेषोक्तेः। जिज्ञासवे निरवशेषतया उपदेष्टव्यमिति चेन्न; तस्य तादृशाधिकारवैरल्येन साधनाकांक्षत्वात्। लोके तपसस्साधकतमत्वप्रसिद्धेः। पित्रानुपदिष्टमपि भृगुः ब्रह्मावगतिसाधनत्वेन तपः प्रतिपन्नवान्। किं तत्तपः बाह्यान्तःकरणग्रामसमाधानं? ब्रह्मावगतेः तद्द्वारकत्वात् "तपसा प्राप्यते सत्त्वं" इत्यादि,

मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः।
स ज्यायः सर्वधर्मेभ्यः स धर्मः पर उच्यते॥

इति श्रुतेः स्मृतेश्च।

**इति प्रथमोऽनुवाकः**

---

## द्वितीयोऽनुवाकः

अन्नब्रह्मविज्ञानम्

अन्नं ब्रह्मेति व्यजानात्। अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते। अन्नेन जातानि जीवन्ति। अन्नं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳ होवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽतप्यत। स तपस्तप्त्वा॥

स च तपः तप्त्वा "यतो वा" इति पित्रा उक्तलक्षणं **अन्नं ब्रह्म इति** विज्ञातवान्। तद्धि यथोक्तलक्षणोपेतं अन्नम्। तस्मादेव भूतोत्पत्तिस्थितिलय-दर्शनात् अन्नस्य ब्रह्मत्वं युक्तमित्यर्थः। तेनैवायं कृतार्थतां गतः किम्? इत्यत आह—**तदिति**। उक्तलक्षणोपपत्तिभ्यां अन्नं **तत्** ब्रह्मेति **विज्ञाय** अन्नस्योत्पत्तिदर्शनात् नेदं ब्रह्म भवितुमर्हतीति सन्दिहानस्सन् **पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति** यावत् ब्रह्मलक्षणं निरतिशयं न भवति यावत् ते तद्विषयकजिज्ञासा निवर्तते तावत् तप एव ते परा गतिरिति **तं होवाच** पिता। **तपसैव ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति** ब्रह्मावगतिसाधन-त्वात् तपस इत्यर्थः। **स तपोऽतप्यत** इत्याद्युक्तार्थमन्यत्॥

**इति द्वितीयोऽनुवाकः**

---

## तृतीयचतुर्थपञ्चमानुवाकाः

### प्राणादिब्रह्मविज्ञानम्

प्राणो ब्रह्मेति व्यजानात्। प्राणाद्ध्येव खल्विमानि भूतानि जायन्ते। प्राणेन जातानि जीवन्ति। प्राणं प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति। तꣳहोवाच। तपसा ब्रह्म विजिज्ञासस्व। तपो ब्रह्मेति। स तपोऽत-प्यत। स तपस्तप्त्वा॥

मनो ब्रह्मेति व्यजानात्। मनसो ह्येव खल्विमानि भूतानि जायन्ते। मनसा जातानि जीवन्ति। मनः प्रयन्त्यभिसंविशन्तीति। तद्विज्ञाय। पुनरेव वरुणं पितरमुपससार। अधीहि भगवो ब्रह्मेति।

तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

विज्ञानं ब्रह्मेति व्यजानात् । विज्ञानाद्ध्येव खल्विमानि भूतानि जायन्ते । विज्ञानेन जातानि जीवन्ति । विज्ञानं प्रयन्त्यभिसंविशन्तीति । तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति । तꣳ होवाच । तपसा ब्रह्म विजिज्ञासस्व । तपो ब्रह्मेति । स तपोऽतप्यत । स तपस्तप्त्वा ॥

ततः किम्? इत्यत आह—स इत्यादि । एवं पित्रा आदिष्टो भृगुः अन्नरूपवैराजादप्यन्तरं प्राणं मनो विज्ञानं च सूत्रात्मभूतं ब्रह्मेति प्रतिपद्य तत्रापि सन्दिहानस्सन् सर्वोत्तमसाधनेन तपसा यत्सकाशादाकाशाद्यन्नमयान्तं उत्पत्तिस्थितिभङ्गं अगमत् यत् सर्वान्तरतमं करणोपाध्यसङ्गं ईश्वरचैतन्यं यत् वस्तुतः कार्यजातनिरूपितकारणतापह्नवसिद्धं परमानन्दमात्रं ब्रह्म स्वावशेषतया **व्यजानात्** विज्ञातवान् तद्वेदनसमकालं तन्मात्रतामियादित्यर्थः । "तमेवं विद्वानमृत इह भवति" इति श्रुतेः । तस्मात् ब्रह्ममात्रावगतये तप एव परमं साधनमिति प्रकरणार्थः ॥

**इति तृतीयचतुर्थपञ्चमानुवाकाः**

:———

## षष्ठोऽनुवाकः

भार्गवीवारुणीविद्यातद्गतिफलम्

आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । आनन्देन जातानि जीवन्ति । आनन्दं प्रयन्त्य-

मिसंविशन्तीति । सैषा भार्गवी वारुणी विद्या । परमे व्योमन् प्रतिष्ठिता । य एवं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥

अधुना श्रुतिराख्यायिकामुपसंहृत्य स्वेन वचसा आख्यायिकानिर्वृत्तमर्थं व्याचष्टे—**सैषेति**। यैषा भृगुणा विदिता **सैषा भार्गवी**। वरुणेन प्रोक्ता **वारुणी विद्या**। **परमे व्योमन्** व्योम्नि परमाकाशे निष्प्रतियोगिकाद्वैते **प्रतिष्ठिता** परिसमाप्ता पर्यवसन्ना तन्मात्रतयेत्यर्थः। **य एवं** भृगुवत् तपसैव साधनेन स्वाभाविकानन्दं ब्रह्म **वेद** सोऽयं विद्वान् तद्वेदनसमकालं परमानन्दे स्वमात्रतया **प्रतितिष्ठति** ब्रह्मैव भवतीत्यत्र "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः। यस्त्वानन्दं ब्रह्म कारणत्वेन जानाति तस्य मुख्यफलं सालोक्यादिकम्। आन्तरालिकफलं इदमेव स्यात्। अन्नशब्देन मानुषैश्वर्यमुच्यते। तद्वान् **अन्नवान्** महदैश्वर्यसंपन्न इत्यर्थः। तथाविधमन्नमत्तीत्यन्नादः सर्वभोगभुग्**भव**तीत्यर्थः। पुत्रादि**प्रजया** गवादि**पशुभिः** शमदमज्ञानादिनिमित्त**ब्रह्मवर्चसेन** दिगन्तविश्रान्त**कीर्त्या** च **महान् भवति**।

**इति षष्ठोऽनुवाकः**

---

## सप्तमोऽनुवाकः

ब्रह्मविज्ञानद्वारकान्नप्रशंसा

अन्नं न निन्द्यात्। तद्व्रतम्। प्राणो वा अन्नम्। शरीरमन्नादम्। प्राणे शरीरं प्रतिष्ठितम्। शरीरे प्राणः प्रतिष्ठितः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रति-

तिष्ठति । अन्नवानन्नादो भवति । महान् भवति प्रजया पशुभिर्ब्रह्म-वर्चसेन । महान् कीर्त्या ॥

यद्द्वारतो ब्रह्म विज्ञातं तत् कदापि न निन्द्यादित्याह—**अन्नमिति**। यस्मात् द्वारभूतेन अन्नेन ब्रह्म ज्ञातं तस्मात् गुरुमिव **अन्नं न निन्द्यात्**। **तद्धि** ब्रह्मविदो **व्रतमित्युपदिश्यते**। अन्नस्तुत्यर्थो हि व्रतोपदेशः। अन्नस्य ब्रह्मोपलब्ध्युपायत्वेन स्तुतिभाक्त्वं युज्यते। प्राणस्य शरीरान्तःपातित्वात्। **प्राणो वा अन्नं** यत् यस्यान्तः प्रतिष्ठितं तत् तस्य अन्नं भवतीति। **शरीरे च प्राणः प्रतिष्ठितः**। अतः प्राणोऽन्नं **शरीरमन्नादम्**। तथा शरीरमप्यन्नं प्राणोऽन्नादः। तत् कथं **प्राणे शरीरं प्रतिष्ठितम्**? शरीरप्रतिष्ठितेः प्राण-निमित्तत्वात्। ततोऽन्नान्नादलक्षणमुभयमपि अन्नमेव। येनान्योन्यस्मिन् प्रतिष्ठिता-वन्नान्नादौ तस्मात् प्राणः शरीरं चोभयमन्नमन्नादं च। **स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति** इत्युक्तार्थमन्यत्।

इति सप्तमोऽनुवाकः

---

## अष्टमनवमानुवाकौ

अन्नस्य कदापि परिहरणाभावः

अन्नं न परिचक्षीत। तद्व्रतम्। आपो वा अन्नम्। ज्योतिरन्नादम्। अप्सु ज्योतिः प्रतिष्ठितम्। ज्योतिष्यापः प्रति-ष्ठिताः। तदेतदन्नमन्ने प्रतिष्ठितम्। स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति। अन्नवानन्नादो भवति। महान्भवति प्रजया पशुभिर्ब्रह्म-वर्चसेन। महान्कीर्त्या ॥

अन्नं बहु कुर्वीत । तद्व्रतम् । पृथिवी वा अन्नम् । आकाशोऽन्नादः । पृथिव्यामाकाशः प्रतिष्ठितः । आकाशे पृथिवी प्रतिष्ठिता । तदेतदन्नमन्ने प्रतिष्ठितम् । स य एतदन्नमन्ने प्रतिष्ठितं वेद प्रतितिष्ठति । अन्नवानन्नादो भवति । महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन । महान् कीर्त्या ॥

एवंप्रभाववदन्नं कदापि न परिहरेदित्याह—**अन्नमिति**। **अन्नं न** परिचक्षीत न परिहरेत् । तद्व्रतमित्युक्तार्थम् । "प्राणो वा अन्नम्" इत्यादिवत् आपो वा अन्नं ज्योतिरन्नादमित्यादि योजनीयम् । गुणित्वेनोपासकस्य अन्नबहुकरणं व्रतम् ।

इति अष्टमनवमानुवाकौ

---

## दशमोऽनुवाकः

ब्रह्मोपासनाप्रकारभेदः

न कञ्चन वसतौ प्रत्याचक्षीत । तद्व्रतम् । तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयात् । अराध्यस्मा अन्नमित्याचक्षते । एतद्वै मुखतोऽन्नꣳ राद्धम् । मुखतोऽस्मा अन्नꣳ राध्यते । एतद्वै मध्यतोऽन्नꣳ राद्धम् । मध्यतोऽस्मा अन्नꣳ राध्यते । एतद्वा अन्ततोऽन्नꣳ राद्धम् । अन्ततोऽस्मा अन्नꣳ राध्यते । य एवं वेद । क्षेम इति वाचि । योगक्षेम इति प्राणापानयोः । कर्मेति हस्तयोः । गतिरिति पादयोः । विमुक्तिरिति पायौ । इति मानुषीः

समाज्ञाः । अथ दैवीः । तृप्तिरिति वृष्टौ । बलमिति विद्युति । यश इति पशुषु । ज्योतिरिति नक्षत्रेषु । प्रजातिरमृतमानन्द इत्युपस्थे । सर्वमित्याकाशे । तत्प्रतिष्ठेत्युपासीत । प्रतिष्ठावान् भवति । तन्मह इत्युपासीत । महान् भवति । तन्मन इत्युपासीत । मानवान् भवति । तन्नम इत्युपासीत । नम्यन्तेऽस्मै कामाः । तद्ब्रह्मेत्युपासीत । ब्रह्मवान् भवति । तद्ब्रह्मणः परिमर इत्युपासीत । पर्येणं म्रियन्ते द्विषन्तः सपत्नाः । परि येऽप्रिया भ्रातृव्याः । स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् । अस्माल्लोकात्प्रेत्य । एतमन्नमयमात्मानमुपसंक्रम्य । एतं प्राणमयमात्मानमुपसंक्रम्य । एतं मनोमयमात्मानमुपसंक्रम्य । एतं विज्ञानमयमात्मानमुपसंक्रम्य । एतमानन्दमयमात्मानमुपसंक्रम्य । इमाँल्लोकान्कामान्नी कामरूप्यनुसंचरन् । एतत्साम गायन्नास्ते । हा ३ वु हा ३ वु हा ३ वु । अहमन्नमहमन्नमहमन्नम् । अहमन्नादो ३ ऽहमन्नादो ३ ऽहमन्नादः । अह९ श्लोककृदह९ श्लोककृदह९ श्लोककृत् । अहमस्मि प्रथमजा ऋता ३ स्य । पूर्वं देवेभ्योऽमृतस्य ना ३ भायि । यो मा ददाति स इदेव मा ३ वाः । अहमन्नमन्नमदन्तमा ३ द्मि । अहं विश्वं भुवनमभ्यभवा ३ म् । सुवर्णज्योतीः । य एवं वेद । इत्युपनिषत् ॥

पृथिव्याकाशोपासकस्य वसतिनिमित्तमिदमुच्यते—**न कञ्चनेति** । वसतौ वसतिनिमित्तं समागतं ब्राह्मणं तद्वसने च तस्याशनं दातव्यमिति भिया न हि कञ्चन प्रत्याचक्षीत प्रत्याख्यानं न कुर्यात् । तदनिराकरणपूर्वकं अशनं दातव्यमिति यत्तद्व्रतम् । यस्मादागतेभ्योऽतिथिभ्योऽन्नं दातव्यं **तस्मात्**

**यया कया च विधया** येन केनोपायेन **बह्वन्नं प्राप्नुयात्** । यो यत्कालेऽर्थिने अन्नं ददाति तत्कालमनतिक्रम्य तं प्रति तं भजतीत्याह—**अराधीति** । **अस्मा** अर्थिने **कदाराधि** प्रयच्छत्यन्नं तदा तं भजतीत्य**न्नमित्याचक्षते** अन्नदान-माहात्म्यविदः । तत् किम्? इत्यत आह—**एतदिति** । **एतद्वै अन्नं मुखतो** मुख्यया वृत्त्या प्रथमवयसि पूजापुरस्सरं अभ्यागताय **राद्धं** सिद्धं प्रयच्छतीति वाक्यशेषः । तत्फलं किम्? इत्यत आह—**मुखत** इति । **मुखतः** मुख्यया वृत्त्या पूर्ववयसि **अस्मा** अन्नदाय **अन्नं राध्यते** यथा दत्तं तथोपतिष्ठत इत्यर्थः । एवं **मध्यतो** मध्यमोपचारेण मध्यमे वयसि तथान्ते वयसि जघन्योपचारेण **अस्मै राध्यते** । **य एवमन्नस्य** माहात्म्यं **वेद** तस्य यथादत्तं फलं भवतीत्यर्थः । इदानीं ब्रह्मोपासनाप्रकारभेदमाह—**क्षेम** इत्यादिना । उपात्तकार्यसंरक्षणं **क्षेमः** । तद्रूपेण **वाचि** प्रतिष्ठितमित्युपास्यम् । अनुपात्तागमनं **योगः** । उपात्तरक्षणं **क्षेमः** । **प्राणापानयोः** सतोः योगक्षेमौ भवतः । तथापि न प्राणापाननिमित्तौ । किं तर्हि ब्रह्मनिमित्तौ? तस्मात् योगक्षेमात्मना ब्रह्म प्राणापानयोः प्रतिष्ठित-मित्युपास्यम् । एवमुत्तरत्र योजनीयम् । **हस्तयोः कर्मा**त्मना ब्रह्म प्रतिष्ठितं इत्युपास्यम् । गत्यात्मना **पादयो**रुपास्यम् । **विमुक्तिरिति पायावु**पास्यम् । एता मनुष्येषु भवाः **मानुषीः समाज्ञाः** । समाज्ञाया आध्यात्मिकत्वात् ज्ञानपूर्वकं उपासनानि कर्तव्यानीत्यर्थः ।

ज्ञानपूर्वमुपास्तिर्या सा समाज्ञेति गीयते ।

इति स्मृतेः । आध्यात्मिकसमाज्ञानन्तरं दैवी समाज्ञा उच्यते—**अथेति** । **अथ** देवेषु भवा दैव्यः समाज्ञा **दैवीः** । **वृष्टेः** अन्नद्वारेण तृप्तिहेतुत्वात् । ब्रह्मैव **तृप्त्या**त्मना **वृष्टौ** व्यवस्थितमित्युपास्यम् । तथान्येषु तेन तेनात्मना ब्रह्मैवो-पास्यमिति ज्ञेयमित्यर्थः । **विद्युति बल**रूपेण **पशुषु यशो**रूपेण **नक्षत्रेषु ज्योती**रूपेण **उपस्थे प्रजातिः** पुत्रः पुत्रादेः पितृऋणमोचकत्वेनामृतत्व-प्राप्तिहेतुत्वात् । **अमृतं** सुखाभासो ह्या**नन्दः** । विषयविषयिसम्बन्धनिष्पन्न-त्वादाभासत्वम् । एतत्सर्वस्योपस्थनिमित्तत्वात् । ब्रह्मैव प्रजापत्यात्मनोपस्थे प्रतिष्ठितमित्युपास्यम् । सर्वस्याप्याकाशाधारकत्वात् । **सर्वमाकाशे** प्रतिष्ठित-

ख्यातम्। मन्त्रे तावत् ब्राह्मणोक्तमाप्नोतीत्यर्थः। "सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चितेति" इति व्याख्यातः। तत्पुनः "अभयं प्रतिष्ठां विन्दते। अथ सोऽभयं गतो भवति" इत्यादिविस्तरेणोक्तः। तत्र के ते सर्वकामाः? कथं वा विद्वान् सह ब्रह्मणा अश्नुते? इत्यत्र इदमारभ्यते। भृगुवल्ल्या आनन्दवल्लीशेषभूतत्वात् ब्रह्मविद्यासाधनत्वेन तपो दर्शयित्वा प्राणाद्याकाशान्तकार्यस्य अन्नान्नादत्वेन विनियोगश्च प्रकटितः। निष्कामसकामभेदेन सालोक्याद्यैहिकान्तफलकब्रह्मोपासनान्यभिहितानि। सर्वकामानामनेकसाधनसाध्यत्वेन ब्रह्ममात्रविदेकः सन् युगपत् सर्वकामान् कथं समश्नुते? इत्यत्र सर्वकामानां स्वातिरिक्तत्वेन युगपत् अपह्नोतुं शक्यत्वात् स्वमात्रावगतेः स्वातिरिक्तापह्नवपूर्वकत्वाच्च। यद्वा—यद्ययं सर्वारोपापवादाधिकरणब्रह्मवित् तदा तस्य सर्वात्मभावोपपत्तेः सर्वस्योत्कर्षापकर्षात्मकत्वेन विदुषः सर्वभावापत्तौ तथात्वं स्यादिति चेन्न; सर्वभूतानुस्यूतात्मनः एकत्वेन सर्वोपाधिगतोत्कर्षापकर्षात्मकान्नमयाद्यानन्दमयान्तान् क्रमेण संक्रम्य मिथ्यात्वेनापह्नवत्वेन वा ज्ञात्वा तज्ज्ञानसमकालं सत्यज्ञानानन्दं ब्रह्म स्वमात्रमित्यापन्नस्सन् स्वाज्ञदृष्ट्या प्रसक्तान् **इमान् लोकान्** संचरन् कामजातं स्वातिरिक्तधिया अत्तीति **कामान्नी** तत्तद्दृष्ट्यनुरोधेन **कामरूपी** वा **अनुसञ्चरन्** ब्रह्ममात्रस्य विषयग्रामापह्नवसिद्धत्वेन निष्प्रतियोगिकसमत्वात् इत्येतत् **साम गायन्** स्वाज्ञदृष्टिप्रसक्तलोकानुग्रहार्थं ब्रह्ममात्रसिद्धान्तं स्वकृतार्थतां च गायन्नास्ते तिष्ठतीत्यर्थः। कथम्? इत्यत आह—**हेति**। **हा ३ उ** अहो इत्यस्मिन्नर्थे। अत्यन्तविस्मयख्यापनार्थम्। किमसौ विस्मयः? इत्यत आह—**अहमिति**। पुरा स्वाज्ञदशायां **कस्यचिदहमन्नम्**। कस्यचिदहमन्नादः। किञ्च—ईशभावेन **अहमेव** चेतनावान् सन् अन्नान्नादसंघातस्य **श्लोककृत्** कर्ता। त्रिरुक्तिः विस्मयत्वख्यापनार्था। **किञ्च**—हिरण्यगर्भात्मना स्वाज्ञदृष्टिप्रसक्तस्यर्तस्य जगतः **प्रथमजा** हिरण्यगर्भोऽस्मि। किञ्च—सर्वापवादाधिकरणब्रह्मरूपेण **देवादिभ्योऽमृतस्य** अमृतत्वस्य **नाभिः** मध्यम्। सर्वप्राणिनां अमृतत्वमहमित्यर्थः। सर्वास्पदत्वात्। किञ्च विराडात्मनान्नभावमापद्येदमाह—**यं** इति। **यः** कश्चित् **मां** अन्नं अर्थिभ्यो

**ददाति सोऽन्नवान् भवति । आ ३ वाः ।** अथवा पुनरन्योऽर्थिभ्यो मां अदत्वा स्वयमेवात्ति तं **अहं अन्नमेव सन्नद्मि ।** एवं तर्हि सर्वात्मभावात् बिभेमि । अतस्संसार एवास्तु । यतो मुक्तोऽप्यहं अन्नस्याद्यः स्यामित्यत्र सर्वकामाशनस्य संव्यवहारविषयत्वात् । व्यावहारिकधिया अन्नान्नादलक्षणविराड्-ब्रह्मभावमापन्नस्य न हि स्वातिरिक्तवस्त्वन्तरमस्ति । यत एवमतः सर्वात्म-भावान्मा भैषीः । तथा चेत् किमहमन्नमन्नाद इति अन्नान्नादलक्षणसंव्यवहारस्य व्यवहारमात्रत्वात् न हि तत्परमार्थवस्तुतां भजति । तस्य ब्रह्मसत्तातिरिक्त-पृथक्सत्तावैरल्यात् । अहमन्नमन्नाद इत्युक्तेः ब्रह्मविद्यास्तुत्यर्थत्वात् । न हि तत्र भयादिदोषगन्धोऽप्यस्ति, भयादेः स्वाविद्यानिमित्तत्वेन कारणतुल्यत्वात् । स्वाज्ञदृष्टिप्रसक्तस्वातिरेकेण किञ्चिदस्तीति विश्वसनीयविश्वं तथाभूतेरात्मसत्य-व्यवहारप्रतिभासरूपेण संभजनीयं **भुवनं अभ्यभवामहं** अभिभवामि ब्रह्म-मात्रधियापह्नवं करोमीत्यर्थः । यतो दुर्वर्णतया अनुभूतस्वातिरिक्तमपह्नवतां गतं अतोऽहं **सुवरादित्यः** स्वाज्ञदृष्ट्या प्रकाशस्वरूप इव भातः । तथा परमार्थदृष्ट्या निष्प्रतियोगिकपूर्ण**ज्योतीः** ज्योतिः, स्वावृतित्रयापह्नवसिद्धत्वेन सकृद्भानस्वरूप-त्वात् । **योऽयं** भृगुवत् शान्त्यादिगुणसंपन्नो भूत्वा वल्लीद्वयविहितपरमात्मविद्यां उपनिषदं यथावत् वेद सोऽपि तद्वेदनसमकालं ब्रह्ममात्रतया अवशिष्यत इति सिद्धम् ॥

इति भृगुवल्ल्यां दशमोऽनुवाकः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
तैत्तिरीयविवरणं लिखितं स्यात् स्फुटं लघु ॥
तैत्तिरीयविवरणग्रन्थसंख्या निगद्यते ।
चतुष्पञ्चाशदधिकसहस्रं पर्यकीर्त्यत ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे सप्तसंख्यापूरकं
तैत्तिरीयोपनिषद्विवरणं संपूर्णम्

---

# ऐतरेयोपनिषत्

## वाङ्मे मनसि—इति शान्तिः

## प्रथमोऽध्यायः[1]

ब्रह्मप्रापकमार्गकथनम्

एष पन्था एतत्कर्मैतद्ब्रह्मैतत्सत्यम्। तस्मान्न प्रमाद्येत्तन्नातीयात्। न ह्यत्यायन् पूर्वे येऽत्यायंस्ते परा बभूवुः। तदुक्तमृषिणा प्रजा ह तिस्रो अत्यायमीयुर्न्यन्या अर्कमभितो विविश्रे। बृहद्ध तस्थौ भुवनेष्वन्तः पवमानो हरित आविवेश। प्रजा ह तिस्रो अत्यायमीयुरिति या वै ता इमाः प्रजास्तिस्रो अत्यायमायंस्तानीमानि वयांसि वङ्गावगधाश्चेरपादाः। न्यन्या अर्कमभितो विविश्र इति ता इमाः प्रजा अर्कमभितो निविष्टा इममेवाग्निम्। बृहद्ध तस्थौ भुवनेष्वन्तरित्यद उ एव बृहद्भुवनेष्वन्तरसावादित्यः। पवमानो हरित आविवेशेति वायुरेव पवमानो दिशो हरित आविष्टः॥ १॥

[1] आदितोऽध्यायत्रयमनाधिकतया व्याख्यातमिति विशेषः।

कर्मज्ञानमयी दृष्टिः यत्प्रज्ञाने समाप्यते ।
तत् प्रज्ञानं परं ब्रह्म स्वमात्रं न स्वतः पृथक् ॥

इह खलु ऋग्वेदप्रविभक्तबह्वृचशाखायां दर्शपूर्णमासाद्यश्वमेधान्तं कर्म तदाश्रयभूतमुख्यप्राणोपासनं चाभिहितम् । तत्र सकामस्य यथावदनुष्ठितं कर्म ज्ञानं वा कर्मसमुच्चितज्ञानं वा चन्द्रलोकप्रापकं भवति । निष्कामस्य अर्चिरादिना ब्रह्मलोकाप्तिः चित्तशुद्धिप्राप्यब्रह्मजिज्ञासा वोदेति । तादृशजिज्ञासोः जिज्ञास्यवस्तुप्रतिपत्तये ऐतरेयोपनिषदारभ्यते । उपनिपूर्वस्य सदेः क्विबन्तस्य विशरणगत्यवसादनार्थस्य रूपं उपनिषदिति, ब्रह्मविद्योच्यते । स्वनिष्ठानां संसारबीजं अवसादयति परमात्मानं निगमयति अवबोधयति गर्भजन्माद्यांश्च शातयतीत्यात्मविद्या उपनिषत् । प्राणादिविद्यानामपि तदुपकारकत्वेनोपनिषत्त्वं युज्यते । वक्ष्यमाणात्मविद्योपयोगित्वेनैष पन्था इति ब्राह्मणोपनिषदः सुखप्रतिबोधार्थं अल्पग्रन्थतो विवरणमारभ्यते—एष पन्था इति । तस्मात् "स एतेन प्रज्ञेनात्मना अस्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वामृतस्समभवत्" इत्युपसंहरिष्यति । तस्मादमृतत्वप्रापक आत्मज्ञानलक्षणोऽयमेष पन्था नान्यः "नान्यः पन्था अयनाय विद्यते" इति श्रुतेः । यज्ज्ञानाधिकारजनकसत्त्वशुद्धिप्रदं एतदेव कर्म ईश्वरार्पणधिया अनुष्ठिताग्निहोत्रादिकर्म । यमनियमादीनां सत्त्वशुद्धिद्वारा ज्ञानहेतुत्वात् । एतदपि ज्ञानसाधकः पन्थाः क्रमेणामृतत्वहेतुत्वात् । एतज्ज्ञानं कर्म वा ब्रह्म साक्षात् परंपरया वा ब्रह्मप्रापकत्वात् ।

तद्ध्यग्र्यं सर्वधर्माणां प्राप्यते ह्यमृतं यतः ।

इति स्मृतेः । एतदेव सत्यं परंपरया सदात्मप्रापकत्वात् । यस्मात् एतदतिरिक्तसाधनानां बन्धहेतुत्वं तस्मात् आत्मज्ञानतत्साधनान्न प्रमाद्येत् । तदकरणं हि प्रमादः । तन्न कुर्यादित्यर्थः । कर्मपथः प्रमादतः किं स्यात् ? इत्यत आह—तदिति । तं पन्थानं नातीयात् नातिक्रामेत् । यतः पूर्वे

ह्यतिक्रान्ता ब्राह्मणा **न** जातु तं मार्गं **अत्यायन्** नातिक्रमन्त इत्यर्थः । अस्मात् पथो **ये अत्यायन् ते पराबभूवुः** कर्मज्ञानमार्गात् भ्रष्टा भवेयुः इत्यर्थः यत एवं अतो ज्ञानकर्मानुष्ठानं अप्रमादेन कार्यमित्यर्थः । ब्राह्मणोक्तमर्थजात **ऋषिणा** मन्त्रेणाप्युक्तमित्याह—**प्रजा** इति । वयआदितिस्रः **प्रजा** कर्मज्ञानमार्गात् **अत्यायं** अतिगमनमीयुः कर्मज्ञानायोग्यतां गता इत्यर्थः वयआदिभ्यो **याः** पुनरन्या मनुष्यादिप्रजाः ता एवा**भितः** कर्मणा ज्ञानेन च **अर्कमग्निं विविश्रे** आश्रिता इत्यर्थः । येषु भवन्ति भूतानीति भुवनानि लोकाः तेष्वन्तर्मध्ये **बृहत्** महान् सर्वलोकप्रकाशकृत् सविता **तस्थौ** स्थितवान् इत्यर्थः । तं च काश्चित् प्रजा अभिनिविविश्रे इत्यनुषज्यते । **पवमानो** वायुः **हरितो** दिश **आविवेश** । तं च काश्चिदभिविविश्रे । काः पुनरत्यायमीयुः ? इति । मन्त्रोक्तार्थं ब्राह्मणमनुवदति—**प्रजा हेति** । **प्रजा ह तिस्रो अत्यायमीयुः** इति । या वै ता इमास्तिस्रो अत्यायमायन् ता वक्ष्याम इत्याह—**तानीति** । विधातोर्गत्यर्थत्वात् **तानीमानि वयांसि** पक्षिविशेषाः । पुनर्यान्यपि गतिमन्ति भूतानि वयश्शब्देन कर्मज्ञानायोग्यानीत्युच्यन्ते । खेचरभूचर-खभूचरत्रयाणामेको राशिः । वङ्गा इत्यत्र वनगा वनस्पतयो महास्थावराणि । **अवगधा** अवगाधाः क्षुद्रस्थावराः । व्रीह्यादय ओषधयः । अवतेः पालनार्थ-त्वात् । अन्यस्य जङ्गमावनहेतुत्वाच्च । **च**शब्दः समुच्चयार्थः । एवं स्थावराश्चैको राशिः । **इरपादा** इत्युरःपादाः । इकारस्योकारमापाद्य विसर्जनीयोप-सर्जनं कृत्वोरःपादा इति सर्पादयो गृह्यन्ते । **एवमेतास्तिस्रः प्रजाः अत्यायमीयुः** कर्मज्ञानमार्गात् भ्रष्टा भवन्तीत्यर्थः । यतः पापकर्मणः एतादृशं जन्म अतः पापकर्माप्रवृत्तिपूर्वकं श्रेयोमार्गात् न प्रमाद्येदिति वैराग्यहेतोरिदं वचनं **न्यन्या अर्कमभितो विविश्र** इति । ता **इमाः प्रजाः अर्कमभितो निविष्टाः** कर्मज्ञानपरा इति व्याख्यातं कर्मणः सर्वसाधारणत्वेनार्कगत्वात् । सन्निहितत्वात् अर्कशब्देन कर्म ज्ञेयम् । सवितुर्महत्त्वं प्रसिद्धम् । अभिव्या-ख्यातं अन्यत् । **पवमानो हरित आविवेश** इति **वायुरेव पवमानो दिशो हरित आविष्टः** व्याख्यातार्थः ॥ १ ॥

महदुक्थस्य ज्ञानसमुच्चितकर्मत्वम्

उक्थमुक्थमिति वै प्रजा वदन्ति तदिदमेवोक्थमियमेव पृथिवीतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च । तस्याग्निरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । अन्तरिक्षमेवोक्थमन्तरिक्षं वा अनु पतन्त्यन्तरिक्षमनु धावयन्ति तस्य वायुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । असावेव द्यौरुक्थममुतः प्रदानाद्धीदं सर्वमुत्तिष्ठति यदिदं किञ्च तस्यासावादित्योऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । इत्यधिदैवतमथाध्यात्मम् । पुरुष एवोक्थमयमेव महान् प्रजापतिरहमुक्थमस्मीति विद्यात् । तस्य मुखमेवोक्थं यथा पृथिवी तथा । तस्य वागर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । नासिके एवोक्थं यथान्तरिक्षं तथा । तस्य प्राणोऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । तदेतद्ब्रध्नस्य विष्टपं यदेतन्नासिकायै विनतमिव । ललाटमेवोक्थं यथा द्यौस्तथा तस्य चक्षुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते । समानमशीतयोऽध्यात्मं चाधिदैवतं चान्नमेवान्नेन हीमानि सर्वाणि भूतानि समनन्ती ३ अन्नेनेमं लोकं जनयत्यन्नेनामुं तस्मात्समानमशीतयोऽध्यात्मं चाधिदैवतं चान्नमेव । तदिदमन्नमन्नादमियमेव पृथिवीतो हीदं सर्वमुत्तिष्ठति यदिदं किञ्च । यद्ध किञ्चेदं [1]प्रेत्ता ३ इ तदसौ सर्वमत्ति यदु किञ्चातः प्रैती ३ तदियं सर्वमत्ति सेयमित्याद्यात्त्री । अत्ता हाद्यो भवति । न तस्येशे यन्नाद्याद्यद्धैनं नाद्युः ॥ २ ॥

[1] "प्रेर्ता" इति पाठः आनन्दाश्रममुद्रितपुस्तके दृश्यते ।

कर्मज्ञानानधिकृताधिकृतत्वेन स्थावरजङ्गमस्थितिरुक्ता। तदधिगन्तव्य कर्मज्ञानं कीदृशम्? इत्याशंक्यातीतग्रन्थे महाव्रताख्यं यत् कर्माधिगतं यत्र बृहती सहस्रलक्षणं महदुक्थं शस्यते तदेतत् ज्ञानसमुच्चितं कर्मेत्याह—**उक्थमिति** अनिर्धारितार्थयाथात्म्यं **उक्थमुक्थमितीदं** पदं ऋग्वेदपारगाः **प्रज्ञा वदन्ति** उक्थशब्दस्यार्थवैरल्येन शब्दमात्रत्वेऽपि उक्थमिति केवलयाजकैरवगम्यते वैशब्दो याजकप्रसिद्धिद्योतकः। किं पुनस्तदुक्थम्? इत्यत आह—**इदमिति** **इदमेव** तावत् **इयमेव पृथिवी**। उक्थशब्दः शस्त्रे प्रसिद्धः सन् पृथिव्यां युज्यते तत्र किं सामान्यम्? इत्यत आह—**इत** इति। यतो ऋच ऋक्स्थे॰ पृथिव्यास्सामान्यमितोऽस्या हि परममेवेदं स्थावरजङ्गमं **चोत्तिष्ठति** उत्पद्यते **यदिदं किञ्च** यत्किञ्चेदमुकारथकारयोगतः पृथिव्या उक्थस्य च सामान्यमस्ति किञ्च **तस्य** पृथिव्युक्थस्यास्याग्निरर्कस्तथोक्थसम्बन्धिन्यपि महाप्रलये अग्निरेवार्क भवति भस्मीकरणसामर्थ्यात्। किञ्च **अन्नमशीतयस्तिस्रः** त्रिचाशीतयः स्तुत उक्थे तथाप्यत्राप्यन्नमेवाशीतयः। तत् कथं? यस्मात् प्राणिजातं **हीदमन्ने** **नाश्नुते** व्याप्नोति। अन्नवानिह लोके हि प्रभविष्णुः भवति। अशीतयोऽन्नमिन्द्र स्याशीतीनामन्नत्वं वक्ष्यति "सहान्नमित्यभिव्याहृत्य बृहतीसहस्रं शशंस" इति तथान्तरिक्षमेवोक्थम्। तत्र को हेतुः? इत्यत आह—**अन्तरिक्षमिति** **अन्तरिक्षमेवानुपतन्ति**। अन्तरिक्षोद्देशेन गच्छन्ति। तथा **अन्तरिक्षमेव** **अनुधावयन्ति**। तदुभयं उत्थानपूर्वकमिति उक्थशब्दलाभहेतुरन्तरिक्षमित्यर्थः। **तस्य वायुरर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते** इत्युक्तार्थमेतत्। **असावेव** **द्यौरुक्थममुतः** अमुष्या दिवः **प्रदानात्** वृष्ट्यादिलक्षणात्। यस्मादिदं स्थावरं जङ्गमं च **सर्वमुत्तिष्ठति यदिदं किञ्च** तस्मात् द्यौरुक्थशब्दवाच्या। **तस्यासावादित्योऽर्कोऽन्नमशीतयोऽन्नेन हीदं सर्वमश्नुते** इति पूर्ववत्। एवमधिदैवतं देवताविषयदर्शनमुक्तम्। अथानन्तरं अध्यात्मदर्शनमुच्यते—**अथेति**। यः शिरःपाण्यादिमत्त्वेन प्रसिद्धः सोऽयं **पुरुषः एवोक्थम्**। कथं पुरुषस्योक्थत्वं? तत्राह— **अयमेव महानिति**। तस्य प्रजापतित्वात् महत्त्वम्। तथा च वक्ष्यति "अथातो विभूतयोऽस्य पुरुषस्य" इत्यादि। यस्मादयं

महान् प्रजापतिः कर्मज्ञानसाधनत्वेन जगदुत्पादको भवति तस्मादात्मानमेव पुरुषोऽहमुक्थमस्मीति **विद्यात्**। पुरुषावयवेष्वपि उक्थदृष्टिमनुक्रामति। **तस्य मुखमेवोक्थमिति**। **यथा** उक्थशब्दः पृथिव्यादौ स्थूले प्रयुक्तः **तथा** तदभ्यन्तरतमे पुरुषे तदवयवे च प्रयुज्यते। "इयमेव पृथिवी" इत्युपक्रम्य "तदेतदुक्थं प्राण एव" इति निर्धारणश्रुतेः पुरुषादेरुक्थत्वे अर्काशीतिसम्बन्धः कथम्? इत्यत आह—तस्येति। **तस्य** पुरुषस्य **वागर्कोऽन्नमशीतय** इत्याद्यवयवानां उक्थत्वविशेषणाभिधानं बाह्यार्थसामान्यसंपादनार्थम्। तथा चाध्यात्मिकपुरुषोक्थस्य त्रैलोक्यात्मनः प्रजापतेः मुखमुक्थमित्युक्तं तस्याग्निरर्कौ मुखेनोक्थसंबन्धात्। अन्नमशीतय इत्यादि व्याख्यातम्। यदेतदन्तरिक्षावसाने स्वर्गलोको वै ब्रध्नः तस्य **ब्रध्नस्य विष्टपं** स्थानं **यदिहाध्यात्ममेतत् नासिकायै** नासिकाया अवसाने भ्रुवोरधस्ताच्च **विनतं** विशेषेण नतमिव। इवशब्दोऽनर्थकः। **ललाटमेवोक्थमिति** सामान्यात् उक्थभेदानुरोधेन अर्कभेददर्शनात्। अशीतिष्वपि तथा इत्यत आह—**समानमशीतय** इत्यादि वक्ष्यति। किं पुनः तत्समानम्? **अन्नमेवाध्यात्मं चाधिदैवतं च** समानतया प्राणाविष्टानि भूतानि समं चेष्टन्ते प्राणनं कुर्वन्तीत्यर्थः। यथा द्यौः प्रकाशात्मिका तथा तस्य चक्षुरर्कोऽन्नमशीतयो अन्नेन हीदं सर्वमश्नुते व्याप्नोति। **अन्नेन हीमानि सर्वाणि भूतानि** पार्थिवत्वेन **समनन्ति** समानतां यन्ति। **अन्नेनेमं लोकं जयति**। **अन्नेनामुं** पश्वादिभिः धनवान् यागदानादिभिश्च सुकृती सन् जयति व्याप्नोति। लोके तावदन्नवत उभयलोकव्याप्तिः प्रसिद्धेत्यर्थः। **तस्मात् समानमशीतयोऽध्यात्मं चाधिदैवतं चान्नमेव** बाह्याध्यात्मलक्षणं जगत्। तत्र स्थावरमन्नम्। जङ्गमं तदत्तीत्यन्नादम्। अस्य जगतोऽन्नान्नादत्वम्। तत् कथम्? इत्यत आह—**इयमिति**। **इयमेव** तावत् **पृथिवी** अन्नम्। **इतोऽस्याः** पृथिव्याः **इदं** स्थावरं जङ्गमं च **सर्वमुत्तिष्ठत्युत्पद्यते** सर्वस्य पार्थिवत्वाविशेषात्। **यदिदं किञ्च** कर्तृसाधनविशेषरूपं यत्किंचेदम्। तत् किं स्यात्? इत्यत आह—**यदिति**। **यद्ध किञ्चेदं** सकर्तृकं चरुपुरोडाशादेः कर्तृनिष्पन्नत्वात्। पञ्चमो लकारः **प्रेत्ते**त्यस्य अघादेशो यलोपे च इदं रूपं

प्रेतीत्यर्थे प्रेत्तेति। यत्किञ्चिदितोऽमुतः तं **प्रैति** गच्छतीत्यर्थः। **तत् सर्वमसौ** द्यौरित्यात्मसात्करोति। **यदु किञ्चातोऽ**मुष्मात् द्युलोकात् प्रेत्यागच्छति क्षीणलोको यजमानः **तदियं तत्सर्वं** पृथिव्यत्ति। तथान्तरिक्षं यथा पृथिव्यन्तरिक्षयोरुपकार्योपकारकत्वं तथा प्राणिनामन्योन्योपकार्योपकारकत्वं तदिदं जगदन्नमन्नादं चेति। यत् प्रस्तुतं तदिदानीं उपसंहरति—सेयमिति। **इयं** पृथिवी **अद्या** च **अत्त्री** चेति। तथासावपि द्यौरद्या अत्त्री च। एवमद्यात्त्रीत्वेन द्यावापृथिवीग्रहणं सर्वेषामुपलक्षणार्थम्। य एवमद्यात्तृरूपप्रजापतिरुक्थमहमस्मीति वेद तस्येदं फलमाह—**अत्ते**ति। सर्वस्यान्नजातस्य **अत्ताद्यश्च** भवति। प्रजापतेरुभयात्मकत्वेन प्रजापतिरेव भवतीत्यर्थः। यथा सर्वो हि लोकः परस्परं अत्ता चाद्यश्च भवति तथायं विद्वानपीत्यत आह—**ने**ति। **न** हि **तस्य** विदुषः स्वामी कश्चित् भवति विदुषः सर्वात्तृत्वात्। **वा**शब्दः चार्थे। एवंविदमेनं परे **नाद्युः**। तस्मात् विद्वान् स्वात्मभूतस्याद्यस्य अत्ता सर्वात्मको भवति। यस्तु अविद्वान् परेषां अद्यो भवति। न च सर्वस्यात्तेत्येवं विदुषोऽविदुषश्च विशेष उक्त इत्यर्थः॥ २॥

हिरण्मयपुरुषलक्षणम्

अथातो रेतसः सृष्टिः प्रजापते रेतो देवा देवानां रेतो वर्षं वर्षस्य रेत ओषधय ओषधीनां रेतोऽन्नमन्नस्य रेतो रेतो रेतसो रेतः प्रजाः प्रजानां रेतो हृदयं हृदयस्य रेतो मनो मनसो रेतो वाग्वाचो रेतः कर्म तदिदं कर्म कृतमयं पुरुषो ब्रह्मणो लोकः। स इरामयो यद्धीरामयस्तस्माद्धिरण्मयः। हिरण्मयो यो ह वा अमुष्मिन् लोके संभवति हिरण्मयः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद॥ ३॥

अन्नान्नादलक्षणं जगत् प्रजापतिरित्युक्तम्। तस्य न हि वृष्ट्यात्मकत्वं अवधारितम्। तदर्थमिदमुच्यते—**अथे**ति। **अथ** अन्नान्नादस्वरूपकथनानन्तरं

यतो रेतःकार्यात्मसृष्टिं विना न हि संव्यवहारः सिध्यति अतः कर्मज्ञानाधिकृतस्य प्रजापते **रेतसः सृष्टिरुच्यते**। इत्थंभूत**प्रजापतेः रेतः**कार्यं वागाद्यभिमानिनोऽग्न्यादयो **देवाः** संभूताः। **देवानां रेतो** वृष्टिः **वर्षम्**। वृष्टेः कार्यं व्रीह्याद्यो**षधयः**। **ओषधीनां रेतः** प्रसिद्धं **अन्नम्**। पुरुषभुक्ता**न्नस्य रेतः** नृबीजं **रेतः** कार्यम्। स्त्रीयोनिनिषिक्त**रेतसो रेतः** प्रजाः इत्यनेन क्रमेण प्रजानां सृष्टत्वात् प्रजापतित्वं पुरुषस्येत्यर्थः। केन साधनेन अन्नमयीं प्रजां सृजति? इत्यत्र प्रजापतित्वमापन्न**प्रजानां रेतः**कार्यं **हृदयम्**। सर्वज्ञानाधारेयं बुद्धिः। तद्धृ**दयस्य रेतो मनो** ज्ञानम्। **मनसो रेतः** चोदनालक्षणा **वाक्**। **वाचो रेतः कर्म**। "वाचा चोदितं कर्म क्रियते" इति "मनोवाक्प्रसूतं पाङ्क्तं कर्म" इति च श्रुतेः, "विज्ञानं यज्ञं तनुते" इति मन्त्रवर्णाच्च। **तदिदं** हृदयाधारं शरीरं मनोवाक्प्रसूत**कर्मणा कृतम्**। तेनेदं विनाशि चलम्। तथापि **ह्ययं पुरुषः** शिरःपाण्यादिमान् प्रज्ञानलक्षणप्राणाख्य**ब्रह्मणः** लोक्यते लोकयतीति वा **लोकः**। स चाय**मिरामयो**ऽन्नमयो यस्माद्धी**रामयो**ऽन्नमय**स्तस्माद्धिरणमयः**। हिरण्यज्योतिरमृतं सोमस्य देवानामन्नामृतभूतत्वात्। यतस्तन्मयमन्नं अतो बाह्यपिण्डोऽयं हिरणमयः कर्मकृतो ब्रह्मणो लोकः "यत्किञ्चिद्रेतसोऽसृजत तदु सोमः", "एतावद्वा इदमन्नं" इति च श्रुतेः। एवंविदः फलमाह—**हिरणमय** इति। **हिरणमयो ह वै** सोमात्मा एवा**मुष्मिन्** स्वर्गे **लोके संभवति** सोमवदुपास्यो भवतीत्यर्थः। **एवं यो वेद** उपास्ते स हि **सर्वेभ्यो भूतेभ्यो** हिरणमयत्वेन **ददृशे** सोमवत् प्रियदर्शनो भवतीत्यर्थः॥ ३॥

हिरणमयपुरुषस्य ब्रह्मेन्द्रप्राणादिवाच्यत्वम्

तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं यत्प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं तस्मात्प्रपदे तस्मात्प्रपदे इत्याचक्षते शफाः खुरा इत्यन्येषां पशूनाम्। तदूर्ध्वमुदसर्पत्ता ऊरू अभवताम्। उरु गृणीहीत्यब्रवीत्तदुदरमभवत्। उर्वेव मे कुर्वित्यब्रवीत्तदुरोऽभवत्।

उदरं ब्रह्मेति शार्कराक्ष्या उपासते हृदयं ब्रह्मेत्यारुणयो ब्रह्माहैव ता ३ इ । ऊर्ध्वं त्वेवोदसर्पंत्तच्छिरोऽश्रयत यच्छिरोऽश्रयत तच्छिरोऽभवत्तच्छिरसः शिरस्त्वम् । ता वा एताः शीर्षञ्छ्रियः श्रिताश्चक्षुः श्रोत्रं मनो वाक्प्राणः । श्रयन्तेऽस्मिञ्छ्रियो य एवमेतच्छिरसः शिरस्त्वं वेद । ता अहिंसन्ताहमुक्थमस्म्युक्थमस्मीति ता अब्रुवन् हन्तास्माच्छरीरादुत्क्रामाम तद्यस्मिन्न उत्क्रान्त इदं शरीरं पत्स्यति तदुक्थं भविष्यतीति । वागुदक्रामदवदन्नश्नन् पिबन्नास्तैव चक्षुरुदक्रामदपश्यन्नश्नन् पिबन्नास्तैव श्रोत्रमुदक्रामदशृण्वन्नश्नन् पिबन्नास्तैव मन उत्क्रामन्मीलित इवाश्नन् पिबन्नास्तैव प्राण उदक्रामत्तत्प्राण उत्क्रान्तेऽपद्यत ।

तदशीर्यताशारीती ३ तच्छरीरमभवत्तच्छरीरस्य शरीरत्वम् । शीर्यते ह वा अस्य द्विषन् पाप्मा भ्रातृव्यः परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद । ता अहिंसन्तैवाहमुक्थमस्म्यहमुक्थमस्मीति ता अब्रुवन् हन्तेदं पुनः शरीरं प्रविशाम तद्यस्मिन्नः प्रपन्न इदं शरीरमुत्थास्यति तदुक्थं भविष्यतीति । वाक् प्राविशदशयदेव चक्षुः प्राविशदशयदेव श्रोत्रं प्राविशदशयदेव मनः प्राविशदशयदेव प्राणः प्राविशत्तत्प्राणे प्रपन्न उदतिष्ठदुक्थमभवत् । तदेतदुक्थां ३ प्राण एव । प्राण उक्थमित्येव विद्यात् । तं देवा अब्रुवन् त्वमुक्थमसि त्वमिदं सर्वमसि तव वयं स्मस्त्वमस्माकमसीति । तदप्येतदृषिणोक्तं त्वमस्माकं तव स्मसीति ॥ ४ ॥

प्राजापत्यरेतःसृष्टितो हिरण्मयः पुरुष उक्तः। तस्य ब्रह्मेन्द्रप्राणादिशब्दवाच्यतां स्फोरयितुमिदमारभ्यते—**तमिति**। यो हि ब्रह्मणो लोक इति प्रकृतोऽन्नमयः **तं प्रपदाभ्यां** चारभूताभ्यां **प्रापद्यत**। किं? तत्राह—**ब्रह्मेति**। प्राणाख्यब्रह्मणो बृहत्त्वात् इदं शिरःपाण्यादिमन्तं **पुरुषं** यस्मात् **प्रपदाभ्यां** पादाग्राभ्यां मस्तकपर्यन्तं **प्रापद्यत, तस्मात्** पदाग्रे **प्रपद** इति संवृत्ते। **तस्मादेव** च लौकिकाः **प्रपदे इत्याचक्षते**। मनुष्यातिरिक्तपशूनां चतुष्पदामश्वप्रभृतीनां **शफाः खुरा इत्याचक्षते** इत्यनुषज्यते। **तत्** ब्रह्म प्राणाख्यं प्रपदाभ्यां प्रपन्नं सत् **ऊर्ध्वमुदसर्पत** विषमिवोद्गतवत्। यस्मात् ऊर्ध्वमुदसर्पत् **ता** ऊरुशब्दवाच्यावभवताम्। तत् ब्रह्मोरुदेशं प्राप्य **उरु** विस्तीर्णं **गृणीहि** ग्रसनं विपुलच्छिद्रं कुर्वित्य**ब्रवीत्**। इति ब्रह्मवचनात् **तत्** शरीरमध्य**मुदरं अभवत्**। पुनस्तदुदरादूर्ध्वं **उर्वेव** विस्तीर्णतरमेव **कुरु म इत्यब्रवीत्**। तत एवो**रो** हृदयप्रदेशो**ऽभवत्**। तस्य वैश्वानरब्रह्मणाधिष्ठितत्वात् **तद्ब्रह्मेति** ब्रह्मदृष्ट्या शर्कराक्षस्यापत्यानि **शार्कराक्ष्या** ऋषय **उपासते**। उदरादूर्ध्वप्रदेशं **हृदयम्**। तस्य ब्रह्मोपलब्धिस्थानत्वेन तदेव **ब्रह्मेति** अरुणस्यापत्यानि **आरुणयः** उपासत इत्यनुषज्यते। **ब्रह्मा हैवे**त्यत्र **ब्रह्मण्येवेति** इडादेशे एतद्रूपं द्रष्टव्यम्। **ब्रह्मा हैव** ब्रह्मण्येव **ता** इतः हृदयप्रदेशात् पुनरप्यूर्ध्वं **त्वेवोदसर्पत**। तदेतद्ब्रह्मोर्ध्वमुद्गम्य **तच्छिरोऽश्रयत**। तच्छिरसि हि चक्षुरादिकरणानि तत्तद्गोळके निक्षिप्य दर्शनादिव्यापारं कुर्वत् सत्तत्रास्ते। यस्मात् ब्रह्म **तच्छिरोऽश्रयत** ब्रह्माश्रयणात्त**च्छिरोऽभवत्**। एवं लोके तावत् **शिरसः शिरस्त्वं** प्रसिद्धम्। तत्रत्यवृत्तयः काः? इत्यत आह—**ता** इति। **ता वा एता** वृत्तयः **शीर्षन्** शिरसि **श्रिताः**। **श्रियः चक्षुः श्रोत्रं मनो वाक् प्राणः श्रयन्ते**। प्राणानां श्रीहेतुत्वेन श्रयणात् श्रीत्वम्। **यश्शिरसः शिरस्त्वं वेदास्मिन्** विदुषि **श्रियः श्रयन्ते**। श्रिय एकत्वेऽपि पश्वादिसाधनभेदेन बहुवचनं युक्तम्। यद्वा—चक्षुरादिवृत्तयो वा श्रीशब्देनोच्यन्ते। अस्मिन् पक्षे विषयग्रहणदक्षादक्षेन्द्रियत्वं विद्वदविदुषोर्विशेषः। शरीराश्रयप्राणानां संकीर्णत्वेन तत्प्रविष्टब्रह्मनिर्धारणार्थमिदमुच्यते—**ता** इति। **ताः**

प्रकृताः चक्षुराद्याः **अहिंसन्त** स्पर्धां कृतवत्य इत्यर्थः । किं निमित्तम्? इत्यत आह—**अहमुक्थमस्म्यहमुक्थमस्मीति** । अहमहं श्रेयानित्यर्थः । उक्थशब्दार्थो ब्रह्म । अत इदं विचार्यम् । तत्र चक्षुरादिश्रियः श्रेष्ठताया निष्पत्तिमपश्यंत्यः वाङ्मात्रेणाहमुक्थमस्मीति प्राणमन्तरेणान्योन्यममन्यन्त । तत्कथं? **हन्त** वय-**मस्मात् शरीरात्** क्रमेणोत्क्रामाम । **नोऽ**स्माकं मध्ये **यस्मिन्नन्यतम उत्क्रान्ते इदं शरीरं पत्स्यति** पतिष्यति **तदिह** श्रेष्ठत्वेनो**क्थं भविष्यतीत्येव-**मुक्त्वा तत्र **वाक्** प्रथम**मुदक्रामत्** । ततो वाच्युत्क्रान्तायां **अवदन्** वचन-व्यापारमकुर्वन्**नश्नन् पिबन्नास्तैव** । देहो यदि हि वागपेतं पतेत् तदा वाक् उक्थतां भजेत् । न हि तदस्ति । वचनव्यापारमन्तरेण यथावत् देहस्य स्थितेः । समानमन्यत् । क्रमेण **चक्षुरादिरुदक्रामत** । निमीलित इवात्र यथा अन्धश्चक्षुर्निमीलनोन्मीलनमात्रं कुर्वन् विषयविषयिविवेकमकुर्वन् **आस्ते** तथे-त्यर्थः । स्वातिरिक्तकरणग्रामोत्क्रमणानन्तरं **प्राण उदक्रामत्** । **तदिदं** शरीरं **अपद्यत** पतति । न हि केवलं पतितमेव । किन्तु **तच्छरीरं अशीर्यत** । विमुक्तसन्धिबन्धभावमगमत् । यस्मात् चेतनाशाली प्राणापगमतः अचेतनं भवतीत्यर्थः तस्मात् **तच्छरीरमभवत्** । यत् प्राणापगमे विशरणभावमापद्यते तस्मात् **शरीरस्य शरीरत्वम्** । प्राणयोगतः पुनः चेतनवत् भवतीति प्राणमाहात्म्यं **यो वेद अस्य** तस्य विदुषः प्राणशरीराविवेकत्वेन केवलं शरीराभिमानलक्षणः **पाप्मा** पारलौकिकसंपदसहमानतो **द्विषन् भ्रातृव्यः** अत्यन्तानर्थयोजनात् न केवलं **शीर्यत** एव किन्त्वस्याभिमुखतः **पराभवति** । **पुनस्ता** वागादयः **अहमुक्थमस्म्यहमुक्थमस्मीति अहिंसन्तः** स्पर्धामकुर्वत्यः सत्यः **ता अब्रुवन्** । **पुनः शरीरं प्रविशामेति** । **नः** अस्माकं मध्ये **यस्मिन् प्रपन्ने** प्रविष्टे **तदिदं शरीरं** चेतनवदुत्थास्यति **तदुक्थं भविष्यतीति** । एवं वदतां करणानां मध्ये **वाक् प्राविशत्** । तत्प्रवेशेऽपीदं शरीरं नोत्थितम् । सुषुप्तवत् **अशयदेव** पतितमेवास्ते । तथा **चक्षुःश्रोत्रमनांसि** प्रविष्टानि । तथापि पूर्ववत् **अशयदेव** शरीरम् । ततः **प्राणः प्राविशत्** । **तच्छरीरं** प्रति **प्राणे प्रपन्ने** प्रविष्टे सुप्तोत्थितवत् तच्छरीर**मुदतिष्ठत्** । यतः प्राणः

शरीरोत्थानहेतुः अतः **तत्प्राणाख्यं ब्रह्म उक्थमभवत्**। "उक्थमुक्थं वै प्रजा वदन्ति" इत्यत्र उक्थशब्दार्थः कः? इति विचार्यमाणे **प्राण एवोक्थशब्दार्थ** इति निर्धारित इत्यर्थः। यस्मादेवं तस्मात् **प्राणोऽहमुक्थमस्मीत्येवं विद्यात्** इति पूर्ववत्। वागादयो देवाः तं उक्थत्वेन प्रस्तुतं प्राणं "प्राणो वा अहमस्म्यृषे प्राणस्त्वं प्राणस्सर्वाणि भूतानि" इत्यादिश्रुत्यनुरोधेन स्तुवन्तीत्याह—**तमिति**। उक्थत्वेन निर्धारितयाथात्म्यं **तं प्राणं** पराजिताः सन्तो वागादिदेवाः सार्वभौमं प्रति तद्विषयवर्तिराजानः करं प्रयच्छन्त इव **अब्रुवन्**। **त्वमुक्थमसि त्वमिदं सर्वमसि**। किञ्च—यथा स्वामिनो भृत्याः तथा **वयं स्मः** भृत्या भवामः। **तव** रूपादिबल्युपहारकत्वात्। **त्वं अस्माकं** भृत्यानां प्रभुरूपस्वाम्यसि। यत् ब्राह्मणेनोक्तं **तदृषिणा** मन्त्रेणाप्युक्तं प्रकाशितम्। त्वमेव ह्यस्माकं स्थितिव्यापारकृत्। **तव** वयं प्रेष्याः **स्मः**। इतिशब्दो मन्त्रपरिसमाप्त्यर्थः ॥ ४ ॥

तस्य वागादिस्तुतिः

**तं देवाः प्राणयन्त स प्रणीतः प्रातायत प्रातायीतीं ३ तत्प्रातरभवत्समागादितीं ३ तत्सायमभवदहरेव प्राणो रात्रिरपानः। वागग्निश्चक्षुरसावादित्यश्चन्द्रमा मनो दिशः श्रोत्रं स एष प्रहितां संयोगोऽध्यात्ममिमा देवता अद उ आविरधिदैवतमित्येतत्तदुक्तं भवति। एतद्धस्म वै तद्विद्वानाह हिरण्यदन्वैदो न तस्येशे यं मह्यं न दद्युरिति प्रहितां वा अहमध्यात्मं संयोगं निविष्टं वेदैतद्ध तत्। अनीशानानि ह वा अस्मै भूतानि बलिं हरन्ति य एवं वेद। तत्सत्यं सत् इति प्राणः ति इत्यन्नं यं इत्यसावादित्यस्तदेतत्त्रिवृत्त्रिवृदिव वै चक्षुः शुक्लं कृष्णं कनीनिकेति। स यदि ह वा**

अपि मृषा वदति सत्यं हैवास्योदितं भवति य एवमेतत्सत्यस्य सत्यत्वं वेद ॥ ९ ॥

पुनस्तं वागादयः स्तुन्वन्तीत्याह—**तमिति** । तं प्राणमेवानुसृत्य वागादयो **देवाः प्राणयन्त** माहात्म्यं गतवन्तो वयमित्यर्थः । स हि प्राणो वागादिभिः प्रभुत्वे **प्रणीतः** प्रार्थितः सन् स हि स्वामीव भृत्यान् देवान् पालयन् **प्रातायत प्रातःकालः अभवत्** । वागादिलोकचेष्टामुपसंहृत्य स्वापस्थानं प्रति **समागादिति** यत् **तत् सायंकालः अभवत्** । अहोरात्रयोः प्राणापानवृत्तिनिमित्तत्वेन **अहरेव प्राणो रात्रिरपानः** । प्राणापानवृत्तिभ्यां अहोरात्रादिकालात्मकः देवतात्मा च भवतीत्याह—**वागिति** । प्राणस्य या **वाक् सोऽग्निश्चक्षुरसावादित्यश्चन्द्रमा मनो दिशः श्रोत्रं** यदेतद्वागादीनामभिमानसंस्थानं **प्रहितां** प्रगतानां वागादीनां **संयोगः** । स एष संयोग आत्मनो भोगार्थमधिकृत्य भवतीत्यध्यात्मम**िमा** वागाद्यभिमानिन्यो **देवता अद उ आविः** प्रकाशरूपं यदग्न्यादि **तदधिदैवतमित्येतत् तदुक्तं भवतीति** वक्ष्यमाणऋषिवाक्येन संबन्धः । कोऽसावृषिः ? इत्यत्र श्रुतिरेव देवतासंयोगलक्षणमहमुक्थमस्मीति । **वै**शब्दो वृत्तानुस्मारकः । हिरण्यं ददातीति **हिरण्यदन्** नाम्ना वा बिदस्यापत्यं **बैद** ऋषिस्सन् **विद्वानाह** । किमिति ? **न तस्येति** । कश्चिदपि **तस्य** पदार्थजातस्य प्राणमृते भोक्तुं **नेशे** न समर्थो भवति । प्राणात्मभूताय **मह्यं** पदार्थजातं केचि**न्न दद्युस्ते** स्थावरभावमीयुः । यद्वा—सर्वावस्थाय मह्यं पदार्थजातं के वा न दद्युः ? सर्वेऽपि दद्युरित्यर्थः । सर्वतः सर्वैरुपनीयमानभोगजातस्य अहमेव भोक्ता स्वामी । सर्वे मम बलिहारकाः । अत्र हेतुः **प्रहितां** वागादीनां मयि **निविष्टं संयोगम**ध्यात्ममित्यहं **वेद** जानामि । यत एतद्ध यथोक्तप्राणदर्शनं योऽन्योऽपि वेद तस्यै**तत्**फलम् । **अस्मा** एवंविदे प्राणात्मभूताय **अनीशानान्य**स्वतन्त्राणि **भूतानि** सर्वाणि **बलि**मुपहारं **हरन्ति** दिशन्तीत्यर्थः । यत् पुरोक्तं अध्यात्ममधिदैवतं च **तदेतत्सर्वमेकेन** सत्यशब्देनोच्यते—**सत्यमिति** । यदेकया वाचा अभिव्याह्रियते तद्धि खलु

सत्यमिति विज्ञातुं युक्तं अनेकधा व्याहरणस्यासत्यत्वात्। किं पुनस्तदेकशब्द-वाच्यं? तत्राह—**सदिति**। यत् पारमार्थिकं तदेव **सत्** "सन्मात्रमसदन्यत्" इति श्रुतेः। प्राणगतहेयांशापाये प्राणस्य सन्मात्रत्वात्। स्वाङ्गजातमत्तीत्यन्नं—

अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यते।

इति श्रुतेः। **यं इत्यसावादित्यः** सर्वात्मा। तत्र सच्छब्दयंशब्दवाच्य-प्राणादित्यौ सत्पदवाच्यौ। मध्यस्थतकार इकारस्तु अनृतशब्दवाच्यः। तस्य उभयतः सत्येन छन्नत्वात् तदपि सत्यमेवेत्यत्र "तदेतत् त्र्यक्षरं सत्यं" इति, "सत् इत्येकमक्षरं ति इत्येकमक्षरं यं इत्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभयतस्सत्येन परिगृहीतं सत्यभूयमेव भवति" इति श्रुतेः। यस्मात् तदेवं सर्वं जगत् सत्यं त्रिवृदेव। नातोऽतिरिक्तं **तदेतत्** त्रिवृत्त्वं चक्षुषीह प्रत्यक्षं दृश्यते। बाह्यान्तरन्तरालं सर्वमादित्यात्मकं सर्वं **त्रिवृत् त्रिवृदिव**। इववैशब्दौ अवधारणस्मरणार्थौ। तत् कथं चक्षुषि त्रिवृत्त्वं? तत्राह—**शुक्लं कृष्णं कनीनिकेति**। चक्षुर्मध्ये यत्तेजः तच्छुक्लं प्राणस्वरूपम्। तत्परितो यत् **कृष्णं** तदनृताभिधानान्नरूपम्। तत्परितो या **कनीनिका** रोहितशुक्ल-मिश्रद्युतिः सैवाग्न्यभिन्नादित्यरूपेति त्रिवृत्त्वम्। **तदेतत् सत्यस्य सत्यत्वं यो वेद सोऽयं** विद्वान् प्रमादेन **यदि** कदाचित् अनृतं **वदत्यपि** तस्य **ह वै** विदुषः तदनृतं **सत्यमेवोदितं भवति**। अनृतदोषो नैनं हिनस्तीत्यर्थः। "नैनं विद्वांसमनृतं हिनस्ति" इति श्रुतेः। वागादिसमर्पितबलिभुक् प्राण एव सत्यैकशब्दवाच्यो भवतीत्युपसंहृतं भवतीत्यर्थः ॥ ९ ॥

प्राणस्य विभूत्यन्तराभिधानम्

तस्य वाक्तन्तिर्नामानि दामानि तदस्येदं वाचा तन्त्या नामभिर्दामभिः सर्वं सितं सर्वं हीदं नामनी ३ सर्वं वाचाभिवदति। वहन्ति ह वा एनं तन्तिसंबद्धा य एवं वेद। तस्योष्णिग्लोमानि त्वग्गायत्री त्रिष्टुम्मांसमनुष्टुप्स्नावान्यस्थि जगती पङ्क्तिर्मज्जा प्राणो

बृहती स छन्दोभिश्छन्नो यच्छन्दोभिश्छन्नस्तस्माच्छन्दांसीत्याचक्षते। छादयन्ति ह वा एनं छन्दांसि पापात्कर्मणो यस्यां कस्यांचिद्दिशि कामयते य एवमेतच्छन्दसां छन्दस्त्वं वेद। तदुक्तमृषिणा। अपश्यं गोपामित्येष वै गोपा एष हीदं सर्वं गोपायति। अनिपद्यमानमिति न ह्येष कदाचन संविशति। आ च परा च पथिभिश्चरन्तमित्या च ह्येष परा च पथिभिश्चरति। स सध्रीचीः स विषूचीर्वसान इति सध्रीचीश्च ह्येष विषूचीश्च वस्त इमा एव दिशः। आवरीवर्ति भुवनेष्वन्तरित्येष ह्यन्तर्भुवनेष्वावरीवर्ति। अप्रक्षितं वसु बिभर्षि हस्तयोरषाल्हं सहस्तन्वि श्रुतो दधे। आवृतासोऽवतासो न कर्तृभिस्तनूषु ते क्रतव इन्द्र भूरयः। अथो आवृतासोऽवतासो न कर्तृभिरिति। सर्वं हीदं प्राणेनावृतम्। सोऽयमाकाशः प्राणेन बृहत्या विष्टब्धस्तद्यथायमाकाशः प्राणेन बृहत्या विष्टब्ध एवं सर्वाणि भूतान्या पिपीलिकाभ्यः प्राणेन बृहत्या विष्टब्धानीत्येवं विद्यात्॥ ६ ॥

पुनः प्राणस्य विभूत्यन्तराभिधित्सया इदमारभ्यते—**तस्येति**। **तस्य** प्राणस्य **वाक्करणं** तन्तिरिव **तन्तिर्यथा** वत्सान् बध्नाति तन्तुभिः तथा वाक्तन्तिः। तत्संभूतानि हि **नामानि** अभिधानानि। दामानीव **दामानि तैः** नामभिः सर्वं जगदभिधेयभूतं अभिधानप्रकाश्यं दामभिः बद्धवत्समिव **तदिदं** जगदस्य प्राणस्य **वाचा तन्त्या** दामस्थानीय**नामभिः सर्व**मशेषं **सितं** बद्धम्। यस्माद्दामस्थानीयनाम्नि सर्वं बद्धं अभिधेयस्य अभिधानप्रकाश्यमानत्वात्, तस्मात् नामभिः दामभिः **सर्वं सित**मिति युक्तमुक्तम्। लोके **सर्वं वाचाभिवदतीति** प्रसिद्धम्। ते अभिधानाभिधेयलक्षणनामरूपे प्राणस्य

ममात्मभूतेन हि मत्तोऽतिरिच्यते। **एवं यो वेद** तमेनं एवंविदं वाक्तन्ति-**सम्बन्धा वहन्ति**। राजानं प्रति बलिकरप्राणिन इव स्वार्थं प्रापयन्तीत्यर्थः। यथा बाह्यनामरूपाभ्यामावृतस्सन् प्राणश्छन्न एवं प्राणस्थानीयबृहत्यपि इतरैः छन्दोभिः छन्ना। तस्याः प्राणवत् व्यापकत्वात् सैव बृहती। अस्मिन् क्रतौ तस्यां शस्यमानायां सर्वाणि छन्दांसि बृहत्यङ्गत्वेनोपात्तानि भवन्ति। यथा मुख्य-प्राणेन नामरूपात्मकं जगद्व्याप्तं तथा बृहत्येत्याह—**तस्येति**। **तस्य** बृहत्यात्मनः प्राणस्य पुरुषस्य लोमानीवोष्णिग्**लोमानि** उष्णिक् सप्ताक्षरा। अष्टाक्षरा **गायत्री त्वक्** त्वचो लोम्नामन्तरत्वात्। एकादशाक्षरा **त्रिष्टुप् मांसं** तस्य त्वचोऽभ्यन्तरत्वात्। **अनुष्टुप्** द्वात्रिंशदक्षरा **स्नावानि** तस्य मांसाभ्यन्तर-त्वात्। द्वादशाक्षरा **जगती अस्थि** तस्य स्नावाभ्यन्तरत्वात्। दशाक्षरा **पङ्क्तिर्मज्जा** तस्या अस्थ्यन्तरत्वात्। सर्वाभ्यन्तरत्वात् **बृहती प्राणः** तस्याः प्राणत्वेन स्तुतत्वात्। सा हि षट्त्रिंशदक्षरा हि बृहती। षट्छन्दांस्या-प्नोति। शरीरगतधातूनां छन्दस्त्वेन संस्तावे प्राणसंस्तवस्य विवक्षितत्वात्। **सोऽयं** प्राणो ब्रह्मसूत्रात्मनो ब्रह्मत्वप्रसिद्धेः। तस्येतरधा तु भूतछन्दोभिः छन्नत्वात्। यद्येवमयं प्राणः **छन्दोभिः छन्नः तस्मात्** शिष्टाः छन्दां-**सीत्याचक्षते**। यतो धात्वायमानोष्णिगादिछन्दांसि छादयन्ति गोपायन्त्य-तश्छादनाच्छन्दसां **छन्दस्त्वं यो वेद तमेनमेवंविदं छन्दांसि छादयन्ति पापात् कर्मणो** रक्षन्ति। **यस्यां कस्यांचिद्दिशि** पापं कर्म कर्तुं **कामयते** वर्म-स्थानानि योद्धेव छन्दांस्येनं रक्षन्तीति विद्याफलमेतदुक्तम्। प्राणाख्यं वस्तु **ऋषिणा** मन्त्रेणा**प्युक्तं** प्रकाशितम्। प्राणात्मदर्शनेऽवस्थितो दीर्घतपा नाम ऋषिरेव मन्त्रं ददर्श। स कीदृशः? इत्यत आह—**अपश्यमिति**। **गोपां** गोपायितारं प्राणम**पश्यं** अदर्शम्। कथं भूतम्? इत्यत्र वागादिकरणग्रामोपरमो हि स्वापः। तत्र नीचैर्वागादिभिः **अनिपद्यमानं** अनस्तमितस्वभावं "य एष सुप्तेषु जागर्ति" इति श्रुतेः। सर्वप्राण्युपकाराय स्वसदनहृद्देशादर्वाक् भूतनाडीसुषिरपथिभिः **आ च आचरन्तं** स्वालयोर्ध्वगैः तिर्यग्भूतैश्च नाडी-**सुषिरपथिभिः** मार्गैश्च **परा च** परा **चरन्तं** अनेकधा गच्छन्तम्। एवंभूतो

यः प्राणः सर्वा दिशोऽन्तर्यामिरूपेण ध्रियमाणस्सन्नञ्चतीति **स सध्रीचः** सध्रीचीः तथा ध्रियमाणः सन् सर्वा दिशो विष्वङ्ङञ्चतीति **स विषूचः** भुवनेष्वन्तर्मध्ये मणिषु सूत्रमिव **वसानस्सन्** आसमन्तात् वरीवर्ति सूत्रात्मना सदा वर्तत इत्येवंमहिमा यस्तमहं अपश्यं इति दीर्घतपसा दृष्टोऽयं मन्त्रः यद्वा—पूर्वादिदिशः सध्रीच्यः आग्नेयादिदिशो विषूच्यश्च ताः **सध्रीचीर्विषूचीः दिशः** प्रत्यधिदेवतात्मना वसानो **वस्ते** शिष्टं समानम्। अन्येनापि मन्त्रे तमेतं प्राणं स्तौति—**अप्रक्षितमिति**। गोपामित्यादिपदं ब्राह्मणं व्याचष्टे—**एष वै** प्राणो **गोपा** इति। प्राणस्य गोप्तृत्वं प्रसिद्धमित्यर्थः। अनिपद्यमानमि स्वापादौ वागादिकरणग्रामेण विलयमनिपद्यमानं अवस्थात्रयेप्येकरूपेण तिष्ठन्त मित्यर्थः। पादादिमस्तकान्तगतनाडीसुषिरपथिभिः आ च परा च मार्गैश्चरन् ससध्रीचीस्सविषूचीः दिश अधिदेवतात्मना वसानः **भुवनेष्वन्तरावरीवर्ति** अन्तर्यामिरूपेण सदा वर्तत इत्यर्थः। हे **इन्द्र** प्राण! प्राणापानाद्यमान दक्षिणोत्तरहस्तयोः **अप्रक्षितं** अप्रक्षीणं सर्वप्राणिजीवनलक्षणकर्मफलात्मकं **वसु** धनं **बिभर्षि** धारयसि। किञ्च **स्वेतरैरषाल्हमप्रसह्यं सहो** बलं तवैवास्ति तेनेदं जगद्धारयितुं उत्सहस इत्यर्थः। किञ्च स्वात्मनस्तन्वि तनौ **श्रुतो** श्रवणज्ञान **दधे** धारयसि ज्ञानस्य त्वदाश्रयत्वात्। "प्राणबन्धनं हि सोम्य मनः" इति श्रुतेः। किञ्च **अवतासः** अवता अवटा नृत्तरंगनटा इवावृ**तास** आवृताः। **न कर्तृभिरि**त्यत्र नकारो न निषेधार्थः। किन्तु नकारस्योपरि उपचारादुपमार्थः। यथा अवटे बिले निधिं निक्षिप्य कर्तृभिः पाषाणादिना तत् विलमाच्छाद्यते तथा **ते तनूषु** निधिस्थानीयाः **क्रतवः** सङ्कल्पाज्ञानानि च स्वाज्ञानवृत्तिभिरावृताः तिष्ठन्ति। क्रतवो यज्ञविशेषा वा "अयं वै यज्ञो योऽयं पवते" इति श्रुतेः। किञ्च **भूरयो**ऽनेके बहवो ज्ञानभेदाः त्वय्येव वर्तन्ते। अतस्त्वं सर्वज्ञोऽसीत्यर्थः। ब्राह्मणमावृतास इत्येकपदमेव व्याचष्टे। यथा **सोऽयमाकाशः बृहत्या** बृहतीछन्दोरूपेण **प्राणेन विष्टब्धो** व्याप्तः तथा ज्ञानकर्मफलात्मकमिदं जगत् प्राणेनावृतं व्याप्तम्। एव जीवाविष्ट**सर्वाणि भूतान्यापिपीलिकाभ्यः** पिपीलिकादिभिः सह **बृहत्या प्राणेन** मया **विष्टब्धा-**

नीत्येवं विद्यात्। प्रकृतो विधिस्सर्वत्रानूद्यते। "अहमुक्थमस्मि" इत्येव विद्यादिति ॥ ६ ॥

ज्ञानकर्मभ्यां पुरुषस्य सर्वसृष्टिः

अथातो विभूतयोऽस्य पुरुषस्य। वाचा सृष्टौ पृथिवी चाग्निश्चास्यामोषधयो जायन्तेऽग्निरेनाः स्वदयतीदमाहरतेदमाहरतेत्येवमेतौ वाचं पितरं परिचरतः पृथिवी चाग्निश्च। यावदनु पृथिवी यावदन्वग्निस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते पृथिव्याश्चाग्नेश्च य एवमेतां वाचो विभूतिं वेद। प्राणेन सृष्टावन्तरिक्षं च वायुश्चान्तरिक्षं वा अनु चरन्त्यन्तरिक्षमनु शृण्वन्ति वायुरस्मै पुण्यं गन्धमावहत्येवमेतौ प्राणं पितरं परिचरतोऽन्तरिक्षं च वायुश्च यावदन्वन्तरिक्षं यावदनु वायुस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यन्तेऽन्तरिक्षस्य च वायोश्च य एवमेतां प्राणस्य विभूतिं वेद ॥

चक्षुषा सृष्टौ द्यौश्चादित्यश्च द्यौर्हास्मै वृष्टिमन्नाद्यं संप्रयच्छत्यादित्योऽस्य ज्योतिः प्रकाशं करोत्येवमेतौ चक्षुः पितरं परिचरतो द्यौश्चादित्यश्च यावदनु द्यौर्यावदन्वादित्यस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतयोर्न जीर्यते दिवश्चादित्यस्य च य एवमेतां चक्षुषो विभूतिं वेद ॥

श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्च दिग्भ्यो हैनमायतीं २ दिग्भ्यो विश्रृणोति चन्द्रमा अस्मै पूर्वपक्षापरपक्षान् विचिनोति पुण्याय

**कर्मण एवमेते श्रोत्रं पितरं परिचरन्ति दिशश्च चन्द्रमाश्च यावदनु दिशो यावदनु चन्द्रमास्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यते दिशां च चन्द्रमसश्च य एवमेतां श्रोत्रस्य विभूतिं वेद। मनसा सृष्टा आपश्च वरुणश्चापो हास्मै श्रद्धां संनमन्ते पुण्याय कर्मणे वरुणोऽस्य प्रजां धर्मेण दाधारैवमेते मनः पितरं परिचरन्त्यापश्च वरुणश्च यावदन्वापो यावदनु वरुणस्तावानस्य लोको भवति नास्य तावल्लोको जीर्यते यावदेतेषां न जीर्यतेऽपां च वरुणस्य च य एवमेतां मनसो विभूतिं वेद ॥ ७ ॥**

"आत्मा वा इदमेक एवाग्र आसीत्" इत्यतः प्राक् प्राणविषयमेव हि दर्शनम्। तत्रानेकगुणफलसम्बन्धो मन्दानामनेकदर्शनभ्रान्तिकारणम्। यत्र वागग्न्यादीनां संयोगोऽध्यात्मसम्बन्धो निविष्ट उक्तः। तत्कारणभ्रान्तिनिराकरणाय सर्वं प्राणविभूतिरेवेति आम्नायते इत्याह—अथेति। **अथ** प्राणस्य बृहतीछन्दःस्वरूपकथनानन्तरं यतस्सर्वं मुख्यप्राणायत्तं **अतोऽस्य** ज्ञानकर्माधिकृतस्य **पुरुषस्य** प्रजापतेः **विभूतयो** विस्तराः अग्न्यादयो देवताः तेषां ज्ञानकर्मभ्यां सृष्टत्वात्। कारणे हि कार्यं भवति। **तस्य** पुरुषस्य ज्ञानकर्मसंस्कारतः कारणभूतया **वाचा पृथिवी चाग्निश्च सृष्टौ**। स्वपित्रर्थं ताभ्यां किं कृतम्? इत्यत्र **अस्यां** पृथिव्या**मोषधयो जायन्ते**। ता **एना** ओषधयः भक्ष्यभोज्यादिरूपेणा**ग्निः** पक्वं कुर्वन् **स्वदयति** स्वादुयुक्ताः करोतीत्यर्थः। तत्पितृभावमापन्नवाक् तु स्वादुतरमिद**माहरतेद**माहर**ते**त्याह्वयं संभक्ष्य तृप्तिमेति। एवं ओषधिपक्तृक्रियय**ैतौ पृथिव्यग्नी वाचं स्वपितरं परिचरतः** सेवां कुर्वाते इत्यर्थः। मदीयवाग्विभूतिविस्तररूपौ पृथिव्यग्नी इत्येवं एतां वाचो विभूतिं यो वेद तद्विद्याफलमुच्यते। **यावदनु पृथिवी यावदन्वग्निश्च** सद्रूपेण वर्तते **तावानस्य** विदुषो **लोको भवति**। तावदस्यात्मा तद्भोगतृप्तिमेत्य

वर्तते। **नास्य तावल्लोको जीर्यते**। न हि क्षीयते। कियन्तं कालम्? **यावदेतयोः पृथिव्यग्न्योः** स्वरूपं **जीर्यते** तावदित्यर्थः। **अन्तरिक्षं च वायुश्च प्राणेन सृष्टौ** तौ पितुर्हितं किं कुर्वाते? इत्यत्र **अन्तरिक्षं** लक्षयित्वा खलु पितर**श्चरन्ति**। तथान्त**रिक्ष**मालक्ष्य **शृण्वन्ति**। न हि मूर्तद्रव्येण निरुद्धास्सन्तः सर्वतश्चरन्ति शृण्वन्ति वा। **अस्मै** स्वपित्रे **वायुः पुण्यं गन्धमावहति**। अपुण्यमपि गन्धमावहतीति चेन्न; गन्धसामान्यस्य पुण्यरूपत्वात्। प्राणस्यामूर्तत्वेन पुण्यं पुण्यसम्बन्धवैरल्याच्च। **एवं अन्तरिक्षवायू प्राणं पितरं** प्रत्युपकुर्वाते। उक्तार्थमन्यत्। **द्यौश्चादित्यश्च चक्षुषा सृष्टौ** तौ स्वपित्रे **द्यौर्ह वृष्टिमन्नाद्यं संप्रयच्छति**। **आदित्योऽस्य** चक्षुषो रूपोपलब्धये **ज्योतिरेव प्रकाशः** तमुपकारं **करोति**। अन्यदुक्तार्थम्। **दिशश्च चन्द्रमाश्च श्रोत्रेण सृष्टाः दिग्भ्यः** समुत्थितभोगाः स्वपितरं **आयान्ति**। तदुक्तशब्दान् **शृणोति**। **चन्द्रमा अस्मै पुण्याय कर्मणे** पूर्वपक्षापरपक्षान् **विचिनोति** स्वकलावृद्धिक्षयतो विभागं करोतीत्यर्थः। **दिशश्च चन्द्रमाश्चैवं श्रोत्रं पितरं परिचरन्तीत्या**द्युक्तार्थम्। **आपश्च वरुणश्च मनसा सृष्टाः**। **आपो** **हास्मै** पित्रे पुण्यकर्मश्रद्धां **सन्नमन्ते**। **वरुणोऽस्य प्रजां धर्मेण दाधार** अस्य प्रजां नीरोगां धर्मयुक्तां करोति। एवमापश्च वरुणश्च पुण्यश्रद्धोत्पादनप्रजारक्षणाभ्यां पितरमुपकुर्वन्तीत्यादि समानमन्यत्॥ ७॥

सर्वसृष्टेर्मूलनिर्धारणम्

**आपा ३ इत्याप इति तदिदमाप एवेदं वै मूलमदस्तूलमयं पितैते पुत्रा यत्र ह क्व च पुत्रस्य तत्पितुर्यत्र वा पितुस्तद्वा पुत्रस्येत्येतत्तदुक्तं भवति। एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेय अहं मां देवेभ्यो वेद ओ मद्देवान्वेदेतः प्रदाना ह्येत इतः संभूता इति। स एष गिरिश्चक्षुः श्रोत्रं मनो वाक्प्राणस्तं ब्रह्मगिरिरित्याचक्षते। गिरति ह वै द्विषन्तं पाप्मानं भ्रातृव्यं परास्य द्विषन्**

पाप्मा भ्रातृव्यो भवति य एवं वेद । स एषोऽप्सु स एष प्राणः स एष भूतिश्चाभूतिश्च । तं भूतिरिति देवा उपासाञ्चक्रिरे ते बभूवुस्तस्माद्धाप्येतर्हि सुप्तो भूर्भूरित्येव प्रश्वसिति । अभूतिरित्यसुरास्ते ह पराबभूवुः । भवत्यात्मना परास्य द्विषन् पाप्मा भ्रातृव्यो भवति य एवं वेद । स एष मृत्युश्चैवामृतं च । तदुक्तमृषिणा । अपाङ् प्राङेति स्वधया गृहीत इत्यपानेन ह्ययं यतः प्राणो न पराङ्भवति । अमर्त्यो मर्त्येना सयोनिरित्येतेन हीदं सर्वं सयोनि मर्त्यानि हीमानि शरीराणी ३ अमृतैषा देवता । ता शश्वन्ता विषूचीना वियन्ता न्यन्यं चिक्युर्न निचिक्युरन्यमिति निचिन्वन्ति हैवेमानि शरीराणी ३ अमृतैषा देवता । अमृतो ह वा अमुष्मिन् लोके संभवत्यमृतः सर्वेभ्यो भूतेभ्यो ददृशे य एवं वेद य एवं वेद ॥ ८ ॥

एवं ज्ञानकर्मभ्यां पुरुषस्य सर्वसृष्टित्वमभिहितम् । किमुपादाय सर्वं सृजति ? इत्यत्र तन्मूलनिर्दिधारयिषया इदमाम्नायत इत्याह—**आपा** इति । "आपो वा इदमासन् सलिलमेव । स प्रजापतिरेकः पुष्करपर्णे समभवत् । तस्यान्तर्मनसि कामस्समपद्यत इदं सृजेयमिति" इतिश्रुत्यनुरोधेनादावन्तेचाब्बाहुल्याज्जगत अपामेव कारणत्वम् । स्रष्टुकामोऽयं प्रजापतिः सृष्ट्युपादानत्वेन या अवापत् ता **एवाप आप** इति प्रस्तूयन्ते तदोपादानान्तरासंभवात् । **तदिदं** जगत् **आप एव** । अबतिरिक्ततराणि भूतानि यद्यपि विद्यन्ते तथापि अब्भूयस्त्वेनाप एवेह जगदादित्वेन निश्चीयन्ते । इतरभूतानि कनीयांसि । आप एव भूयस्यः । लोके तावत् कनीयसामपेक्ष्य आरम्भकत्वं भूयसः प्रसिद्धम् । तस्मादाप एव जगतो **मूलं** उपादानकारणं इत्यर्थः । अदस्तत्पृथिव्यग्निवाय्वादिलक्षणं **तूलमयं**

कर्मज्ञानाधिकृतोऽन्नमयः पुरुषः **पिता**। **एते** पृथिव्यादयः **पुत्राः**। विभूतिखण्डे तथा व्याख्यातत्वात्। **यत्र ह क च पुत्रस्य** यद्वस्तु स्वात्मभूतं तथा **पितुरपि** भवति। पुत्रस्य पितुरात्मभूतत्वात् "आत्मा वै पुत्र नामासि" इति श्रुतेः। लोके यत् पितुः स्वं तत् पुत्रस्येति प्रसिद्धम्। तथेहापि यत् पुरुषस्य स्वं तत् पृथिव्यग्न्यादीनामध्यात्माधिदैवात्मकपितापुत्रयोरेकत्वं यावदनु-पृथिवीत्यादिना व्याख्यातम्। **एतदुक्तं भवति—देवेभ्यो** देवैस्सहैकत्वे-नात्मानं **मामहं वेदेति**। नामतो **महिदास ऐतरस्यापत्यं ऐतरेयः एतद्ध स्म वै** पितृपुत्रयोरेकत्वं **यत्तद्विद्वानाह**। किं वेद? इत्यत आह—**ओ मदिति**। आ उ मत् **ओ मत्** मत्तो मया सहैकत्वेन **देवान्वेद**। **इतोऽ**स्मादध्यात्मं कर्तृप्रयुक्तचरुपुरोडाशादिकमेषां देवानां ते **प्रदानास्तस्मादेते** हि देवाः पित्रा जातकर्मादितः पुत्रा इव **सम्भूताः**। तस्मात् "मूलमदस्तूलम्"इति मम च देवानां चैकत्वं यदुक्तं तद्युक्तमेवेत्यर्थः। एवमितो यद्देवानां सोमाज्यापः-पश्वादि संप्रदीयते तस्मादब्बाहुल्यादप्त्वमग्निहोत्रादिकर्म तत्साधनत्वेन जगतो मूलमित्यवधृतम्। अतो जगत्कारणमाप एवेत्युक्तम्। यत्पुरुषस्य प्रजापतित्व-निरूपणप्रसङ्गतः अप्साधनं कर्म पुरुषनिर्वर्त्यमित्युक्तमेतत्सर्वं प्राणस्यैव गुणविस्तारः। लोके यद्यत्कार्यं कारणं वास्ति तत्तत्सर्वं प्राण एव। प्राणातिरिक्तवस्त्वन्तराभावात्। यस्मादेवं तस्मात् सोऽयं प्राणो ब्रह्मोक्थ-मेव। तस्य बृहत्यात्मकत्वात्। तदुपलब्धिकारणं किम्? इत्यत आह—**स इति। चक्षुः श्रोत्रं मनो वाक् प्राण** इतीन्द्रियसमुदाय **एष** गिरिरिव **गिरिः**। यथा गिरिरुदकरत्नादीनुद्गिरति तथा चक्षुरादीन्द्रियगिरिरपि परापर-ब्रह्मोद्गिरणात् **गिरिरित्याचक्षते** शिष्टाः। चक्षुरादिव्यापारप्रसक्तबाह्यदृष्टिर्लोको ब्रह्म न लभते। यस्त्विन्द्रियव्यापारमुत्सृज्य तज्ज**पाप्मानमा**त्मनो **द्विषन्तं भ्रातृव्यं गिरति** विनाशयति सोऽयं ब्रह्म वेद। **अनुरूपमेवास्य** विद्याफलम्। अस्मिन् प्रकरणे प्राणस्योपास्यत्वात् तत्स्तुतिरियमारभ्यते—**स एष** इति। स **एषोऽप्सु** तिष्ठन्प्राणिनां जीवनरूपो भवति **स एष प्राणः** प्रस्तुतः। यस्तु स्वानामस्वानां भूत्यभूतिहेतुर्भवति **स** एष प्राणो **भूतिश्चाभूतिश्च** भवति।

प्राणवतो हि भूतिरुपपद्यते नाप्राणवतः। **तं भूतिरिति देवा उपासांचक्रिरे**। भूतिगुणोपासनात् ते देवा भूतिवद्भान्ति। यस्माद्भूतिगुणवानसौ प्राणस्तस्माद्धाप्येतर्हि एतस्मिन्नपि काले **सुप्तः** पुरुषो **भूर्भूरित्येव** शब्दानुकरणं कुर्वन् भूतिगुणत्वमात्मनो दर्शयन्निव **प्रश्वसिति**। प्राणोत्क्रमणे अभूरभूतिहेतुत्वादभूतिर्लोके प्रसिद्धा। **अतोऽभूतिरित्यसुरा** उपासाञ्चक्रिरे। तेन हि **ते पराबभूवुः**। तस्माद्भूतिगुणवान् प्राणः। उपास्यो हि भूतिगुण एवाहं प्राणोऽस्मीति यो वेद उपास्ते तस्यैतद्विद्याफलम्। एतद्भूतिगुणवत्प्राणो **भवति**। तस्य **द्विषन् पाप्मा भ्रातृव्योऽसुरवत् परा भवति**। किञ्च स्वोत्क्रमणानुक्रमणाभ्यां **स एष** प्राणो **मृत्युश्चैवामृतं** च। **तदुक्तमृषिणा** - अपानवृत्त्या मूत्रपुरीषाद्यपनयनं कुर्वन् **अपाङेत्यधो** गच्छति। तथा **प्राङ्** प्राणवृत्त्या प्राणित्यवति। एवं प्राणापानवृत्तिभ्यां लोकस्य जीवनं कुर्वन्नास्ते शरीरेष्वित्यर्थः। तस्य स्थितिः किन्निबन्धना? इत्यत आह—**स्वधयेति**। अस्मच्छरीरे **स्वधया** अन्नेन **गृहीतो** बन्धः। कोऽसौ? दाम्ना वत्सवत्प्राणः। तस्यान्नपानग्राहकमपानशब्दवाच्यं स्थितिकारणं भवतीत्येतदर्थं ब्राह्मणमाह—**अपानेनेति**। **अपानेन** तद्गृहीतान्नादिना **प्राणो न पराङ् भवति**। शरीरं त्यक्त्वा न हि गच्छतीत्यर्थः। अमरणधर्मत्वादयम**मर्त्यः** प्राणो **मर्त्येन** शरीरेणावृतः। प्राणशरीरयोः स्थाननिबन्धनो योनिरन्नम्। **तेन** सह यस्मादिदं शरीरजातं **सर्वं सयोनिरिति**। तत्र **मर्त्यानि हीमानि शरीराणि**। **अमृतैषा प्राणदेवतेति**। **तास्तौ** शरीरप्राणौ **शश्वन्ताशश्वन्तौ** नित्यसहभूतप्राणेन शरीरस्य शश्वदिव भातत्वात्। **विषूचीनाविषूचीनौ** परिणामे **विरुद्धं** भजन्तौ। **वियन्तावियन्तौ** विश्लेषवन्तौ। तत्र शरीरमधो याति। तस्य मर्त्यत्वात्। प्राणस्यामृतत्वात् स ह्यूर्ध्वं याति। नन्वन्यं देहं **चिक्युरुप**चितवन्तः वर्धितवन्तः **न निचिक्युः** न वर्धितवन्तः देवाः। अन्नयोगायोगाभ्यामित्यर्थः। प्राणन्तु शरीरेभ्योऽ**न्यं निचिन्वन्तीत्युक्तार्थम्**। ब्राह्मणमाह—**हैवेति**। **हैवेमानि शरीराणि** मर्त्यानि। तद्विपरीतप्राणस्य नित्यचैतन्यत्वाद**मृतैवैषा प्राणदेवता**। इत्थंभूता **प्राणदेवतास्मीति** यो वेद तद्विद्याफलं

विद्वानितो मर्त्यलोकात्प्रेत्यामुष्मिन् हिरण्यगर्भलोकेऽमृतो भवति। मुख्यप्राण एवासौ भवति। तथायं सर्वेभ्यो भूतेभ्यो ददृशे सर्वभूतात्मत्वेन दृश्यत इत्यर्थः। द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥ ८ ॥

इति प्रथमोऽध्यायः

---

# द्वितीयोऽध्यायः

प्राणसम्पत्त्या सर्वसम्पन्नत्वम्

एष इमं लोकमभ्यार्चत् पुरुषरूपेण य एष तपति प्राणो वाव तदभ्यार्चत् प्राणो ह्येष य एष तपति शतं वर्षाण्यभ्यार्चत् तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति तं यच्छतं वर्षाण्यभ्यार्चत्तस्माच्छतर्चिनः तस्माच्छतर्चिन इत्याचक्षते एतमेव सन्तम्। स इदं सर्वं मध्यतो दधे यदिदं किंच स यदिदं सर्वं मध्यतो दधे यदिदं किंच तस्मान्माध्यमास्तस्मान्माध्यमा इत्याचक्षते एतमेव सन्तम्। प्राणो वै गृत्सोऽपानो मदस्स यत्प्राणो गृत्सोऽपानो मदस्तस्माद्गृत्समदस्तस्माद्गृत्समद इत्याचक्षते एतमेव सन्तम्। तस्येदं विश्वं मित्रमासीद्यदिदं किंच तद्यदस्येदं विश्वं मित्रमासीद्यदिदं किंच तस्माद्विश्वामित्रः तस्माद्विश्वामित्र इत्याचक्षते एतमेव सन्तम्। तं देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तं यद्देवा अब्रुवन्नयं वै नः

सर्वेषां वाम इति तस्माद्वामदेवस्तस्माद्वामदेव इत्याचक्षते एतमेव सन्तम् । य इदं सर्वं पाप्मनोऽत्रायत यदिदं किंच स यदिदं सर्वं पाप्मनोऽत्रायत यदिदं किंच तस्मादत्रयस्तस्मादत्रय इत्याचक्षते एतमेव सन्तम् ॥ १ ॥

यः सर्वात्मकः प्राणः सोऽहमुक्थमस्मीति विद्यादिति कर्मज्ञानाधिकृतः पुरुषः प्रजापतिरवधृतः । अत्र च महाव्रताख्यक्रतौ तु बृहतीसहस्रं प्रतिपिपादयिषितम । तस्मिंश्च क्रतौ संपद्यमाने वत्सरसहस्रान्तं कर्म संपादितं भवति। न हि सहस्रायुषोऽभावे तत्कर्म कर्तुं शक्यम् । न चाल्पायुषस्तस्मिन्क्रतावधिकारोऽस्ति । कथं पुनर्बृहतीसहस्रनिष्पत्त्या सहस्रसंवत्सरनिर्वर्त्यं कर्म संपन्नं भवति ? इति चेन्न ; बृहतीसहस्रस्य पुरुषायुस्सम्मितत्वात् । तथा च वक्ष्यति—"षट्त्रिंशतमक्षराणां शतानि भवन्ति । तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति" इति । प्राणस्य बृहतीस्वरूपत्वात् बृहतीसहस्रे संपन्ने प्राणसम्पत्तिर्भवति । कर्माङ्गभूतोऽयमहोरात्रादिः कालः "अहरेव प्राणो रात्रिरपानः" इत्युक्तत्वात् । कर्तृमन्त्रक्रियाफलानां प्राणव्यतिरेकेणाभावात् । प्राणसम्पत्त्या सर्वं सम्पन्नं भवतीत्यादिप्रकटनाय द्वितीयाध्याय आरभ्यते—**एष** इत्यादिना । यः प्रकृतस्स **एष** प्राण **इमं** शिरःपाण्यादिलक्षणं **पुरुषमभ्यार्चदभितः** प्रविष्ट इत्यर्थः । उक्तं चैतत् "तं प्रपदाभ्यां प्रापद्यत" इति । केन रूपेण ? इत्यत आह—**पुरुषरूपेणेति** । कोऽसौ ? तत्र **य एषोऽसावादित्यस्तपति** । प्राणादित्ययोरेकत्वात् । **प्राणो वाव** प्राण एव **तदभ्यार्चत्** । यस्मात्प्राणो हि सविता **य एष तपति** तस्मात्प्राणकर्तृक एव प्रवेशः । एवं चेत् "प्राणो वा अहमस्म्यृषे तद्योऽहम्" इत्यादिवक्ष्यमाणमुपपन्नं भवेत् । **तमिमं** पिण्डं **शतं वर्षाण्यभ्यार्चत्** । **तस्माच्छतं वर्षाणि पुरुषायुषो भवन्ति** । आयुष इत्यत्र आयूंषीत्यर्थः । यस्माच्छतं **वर्षाण्यभ्यार्चत्तस्माच्छतर्चिनः** ऋष्यनुक्रमणे प्रथममण्डलदृश ऋषयः शतर्चिन इति प्रसिद्धाः । तान् मण्डलदृश ऋषीन् **शतर्चिन इत्याचक्षते** । **एवमेव** प्राणं **सन्तं** न ह्यप्राणस्य मन्त्रदर्शनमुपपद्यते ।

स एष प्राण ऋषिशरीरः सन् **शतं वर्षाण्यभ्यार्चत्**। शतर्चिशब्दवाच्यो हि मुनिपूगः प्रथममण्डलसंस्थमन्त्रानेवं ददर्श। उत्तरत्राप्येवमेव योज्यम्। तस्माद्ब्रह्मैव सर्वमन्त्राणामृषिः। **स हि प्राण इदं सर्वं मध्यतो दधे** स्वात्ममध्ये धृतवान्। **यदिदं किञ्च** यस्मादेवं धृतवान् **तस्मान्माध्यमा** ऋषयः। द्वितीयमण्डलदृगृषिभूतप्राणस्य माध्यमा इति नित्यबहुवचनम्। त एव शब्दो दाधारेतिवत्। केचित्तु मध्यममण्डलद्रष्टारो माध्यमा इत्युच्यन्ते। तेषां बहुत्वात्। विशेषपक्षस्तु प्रथमोक्त एव। इतरपक्षे तु क्षुद्रसूक्तमहासूक्तानां पावमान्यत्वं सामान्यम्। समानमन्यत्। **प्राणो वै गृत्सः** स्वापकाले वागादीनां गिरणात्। रेतोविसर्गादिः मदहेतुत्वादपानो **मदः स यत्प्राण** इत्यादि पूर्ववत्। **तस्य प्राणस्येदं** भोज्यजातं सर्वं **मित्रं** स्वस्थितिहेतुत्वात्। स्वभोज्यविश्वमित्रः सन् **विश्वामित्र उच्यते** प्राणः। **तमेतमेव सन्तं देवा** वागादयः तेन पराजिताः पूजयन्तः सन्तोऽब्रुवन्। **अयं नः सर्वेषामस्माकं वामो देवानामिति**। यस्माद्वननीयस्तस्माद्वामदेवः प्राण उच्यते। **स हि प्राणो यदिदं किञ्च** यत्किञ्चेदं प्राणिजातं सर्वं स्वात्मप्रतीपञ्च **पाप्मनोऽ**नर्थरूपा**दत्रायत** पालितवान्। **तस्मादत्रयः** प्राण उच्यते ॥ १ ॥

प्राणस्य सर्वात्मकत्वम्

एष उ एव बिभ्रद्वाजः प्रजा वै वाजः ता एष बिभर्ति यत् बिभर्ति तस्माद्भरद्वाजः तस्माद्भरद्वाज इत्याचक्षते एतमेव सन्तम्। तं देवा अब्रुवन् अयं वै नः सर्वेषां वसिष्ठ इति तं यद्देवा अब्रुवन् अयं वै नः सर्वेषां वसिष्ठ इति तस्माद्वसिष्ठः तस्माद्वसिष्ठ इत्याचक्षत एतमेव सन्तम्। स इदं सर्वं अभिप्रागाद्यदिदं किञ्च स यदिदं सर्वमभिप्रागाद्यदिदं किञ्च तस्मात्प्रगाथास्त-

स्मात्प्रगाथा इत्याचक्षत एतमेव सन्तम् । स इदं सर्वं अभ्यपवयत यदिदं किञ्च स यदिदं सर्वमभ्यपवयत यदिदं किञ्च तस्मात्पावमान्यस्तस्मात्पावमान्य इत्याचक्षत एतमेव सन्तम् । सोऽब्रवीदहमिदं सर्वमसानि यच्च क्षुद्रं यच्च महदिति ते क्षुद्रसूक्ताश्चाभवन् महासूक्ताश्च तस्मात्क्षुद्रसूक्तास्तस्मात् क्षुद्रसूक्ता इत्याचक्षत एतमेव सन्तम् । सूक्तं बतावोचतेति तत्सूक्तमभवत् तस्मात्सूक्तं सूक्तमित्याचक्षत एतमेव सन्तम् । एष वा ऋगेष ह्येभ्यः सर्वेभ्यो भूतेभ्योऽर्चत स यदेभ्यः सर्वेभ्यो भूतेभ्योऽर्चत तस्मादृक् तस्मादृगित्याचक्षते एतमेव सन्तम् । एष वा अर्धर्च एष ह्येभ्यः सर्वेभ्योऽर्धेभ्योऽर्चत स यदेतत् सर्वेभ्योऽर्धेभ्योऽर्चत तस्मादर्धर्चस्तस्मादर्धर्च इत्याचक्षत एतमेव सन्तम् । एष वै पदमेष हीमानि सर्वाणि भूतानि पादि स यदिमानि सर्वाणि भूतानि पादि तस्मात्पदं तस्मात्पदमित्याचक्षते एतमेव सन्तम् । एष वा अक्षरमेष ह्येभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति स यदेभ्यः सर्वेभ्यो भूतेभ्यः क्षरति न चैनमतिक्षरन्ति तस्मादक्षरं तस्मादक्षरमित्याचक्षत एतमेव सन्तम् । ता वा एताः सर्वा ऋचः सर्वे देवाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात् ॥ २ ॥

किंच **एष उ एव प्राणो बिभ्रद्वाजः प्रजा वै वाजः** अन्नभूतत्वात् । स्वात्मप्रवेशनेन **ता एष बिभर्ति** । प्रजाभूतवाजस्य भरणात्प्राणो **भरद्वाजः** । पूर्ववत्तं **देवा अब्रुवन्** । **अयं प्राणो नः सर्वेषां वसिष्ठो** वसुतमो वसुमत्तमो

वा । यस्माद्वसिष्ठ इत्ययं देवैरुक्तः **तस्माद्वसिष्ठः** प्राणः । **सोऽयं** प्राणः स्वाभिप्रवेशेनेदं **सर्वमभिप्रागात्**प्रकर्षेण गतवान् यस्मात्तस्मात्**प्रगाथाः प्राणः** । **सोऽयं** प्राण **इदं सर्वं अभ्याभिमुख्येन पवयत** सर्वस्य पावनात्**पावमान्यः** प्राणः । तदभेदेन ऋषिनिर्देशप्रकरणात् **स** हि प्राणः सर्वप्राणिशरीरेषु आत्मानं पश्यन् इदमब्रवीत् । किम्? इत्यत्र **प्राणोऽहमिदं सर्वमसानि** भवानीति । किञ्च तदिदं **यच्च क्षुद्रं** क्रिमिकीटादि **यच्च महन्**मनुष्यादि तस्मात्स प्राणः **क्षुद्रसूक्ताश्चाभवन्महासूक्ताश्च** । तत्र तत्र तन्नाम्ना ऋषिरप्याचक्षते । यस्मादेवं तस्मात्सर्वमन्त्राणां प्राण एव द्रष्टा । न केवलमृषय एव प्राणः किन्तु मन्त्राश्च सूक्तादिरूपाः । कथं तत्? इत्यत्र शोभनमुक्तं **सूक्तम्** । बतेत्यनुकम्पां कुर्वन् वागादिस्तुति**मवोचत** उक्तवन्तो यूयमित्युक्तवान् । तस्मात्तत्**सूक्तमभवत्** । प्राणः मन्त्राद्याकारेण परिणत इत्यर्थः । तस्मान्मन्त्रपटलं **सूक्तमित्याचक्षते एतमेव** प्राणं **सन्तम्** । सूक्तावयवभूता **ऋगप्येष** प्राणः । **एष हि सर्वेभ्यो भूतेभ्योऽर्था**यार्च**त** गतवान् । तस्मादर्चनादृगेष प्राणो मन्त्रोप्येष एवार्धर्चः । यस्मात्**सर्वेभ्योऽर्धेभ्यः** स्थानेभ्योऽर्चतेत्युक्तार्थमेतत् । अर्धेभ्योऽर्चनादर्धर्चः । प्राणमेव सन्तमर्धर्च इत्याचक्षते । पदपादयोस्तुल्यत्वात्समानं निर्वचनम् । **एष वै पदं** पादः । पदं च प्राण एव । यस्मादेव **हीमानि** आत्मभावेन **पादि** अगच्छत् **तस्मात्पदं** प्राणः । प्राणमेव **सन्तं पदमाचक्षते । एष वै** प्राणो**ऽक्षरं** वर्णो वा । यस्मादेव **सर्वेभ्यो भूतेभ्योऽर्थाय** फलसाधनरूपेण **क्षरति** भूतानि **न चैनं** प्राणमतीत्य **क्षरन्ति** भूतानि । तावत्प्राणमतीत्य न प्रयच्छन्तीत्यर्थः । "प्राणः प्राणाय ददाति" इति श्रुतेः । तस्मादक्षरवर्णस्वरूपेण **सन्तमक्षर**मित्याचक्षते । **ता वा एताः** सूक्तादिरूपाः **सर्वा ऋच** उक्ताः **सर्वे वेदाः** । **सर्वे** ध्वन्यात्मका **घोषाः** । न हि घोषवन्तो वर्णाः सर्वशब्दराशेः प्राणत्वेन विवक्षितत्वात् । **एकैव व्याहृतिः** व्याहरणस्यैकत्वात् । एकेन प्राणपदेन सर्वमभिहितं भवतीत्यभिप्रायः । यस्मादेवं तस्मात् **प्राण ऋच एव** विद्याद्विजानीयात । उक्तानुक्तोपलक्षणार्थमृग्ग्रहणम् । यत एवमतस्सर्वं प्राण **इत्येव विद्या**दित्यर्थः ॥ २ ॥

बृहतीसहस्रसम्पत्त्या पुरुषनिर्वर्त्यकर्मसम्पत्तिः

विश्वामित्रं ह्येतदहः शंसिष्यन्तमिन्द्र उपनिषसाद स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स वा ऋषे तृतीयं शंसेति सहान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागाः स वा ऋषे तृतीयं शंसेति स हान्नमित्येवाभिव्याहृत्य बृहतीसहस्रं शशंस तेनेन्द्रस्य प्रियं धामोपेयाय । तमिन्द्र उवाच ऋषे प्रियं वै मे धामोपागा वरं ते ददामीति स होवाच त्वामेव विजानीयामिति तमिन्द्र उवाच प्राणो वा अहमस्म्यृषे प्राणस्त्वं प्राणः सर्वाणि भूतानि प्राणो ह्येष य एष तपति स एतेन रूपेण सर्वा दिशो विष्टोऽस्मि तस्य मेऽन्नं मित्रं दक्षिणं तद्वैश्वामित्रमेष तपन्नेवास्मीति होवाच ॥ ३ ॥

यद्यपि प्राणत्वेन सर्वा ऋचो वेदितव्याः तथापि प्राणस्य बृहत्यात्मकत्वात्तद्बृहतीसहस्रे संपन्ने यत्पुरुषायुस्सम्मितत्वेन पुरुषनिर्वर्त्यं कर्मजातं संपन्नं भवतीत्येतत्प्रदर्शनार्थमिदमारभ्यते— **विश्वामित्रं** हीति । कस्यचिद्यजमानस्य महाव्रताख्ये क्रतौ बृहतीसहस्रं शंसिष्यामीत्युपक्रामन्तं **विश्वामित्रमृषिमिन्द्रः** समीपमुप**निषसाद** प्रभुत्सितो भोजयितुः समीपमिवोपनिविष्टवान् । **स** च विश्वामित्रो होता इयं त्रिचाशीतिरिन्द्रस्या**न्नमिति** मनसा**भिव्याहृत्य** सङ्कल्प्य **बृहतीसहस्रै**कदेशप्रथमत्रिचाशीतिं **शशंस** शंसितवान् । **तेना**न्नाभिध्यानयुक्तत्रिचाशीतिशंसने**नेन्द्रस्य** प्रियं **धाम** प्रियं स्थानं **उपेयाय** विश्वामित्र उपगतवान् । अन्नदस्य भोक्तुः प्रीतिभाजनत्वात् । स हेन्द्रो विश्वामित्रं

प्रति प्रीतः सन् **उवाच**। किमिति? हे **ऋषे! ममेष्टं धामोपागा** उपगतवानसि। **स** त्वं हे **ऋषे! द्वितीयं** त्रिचाशितिलक्षणं ममान्नं **शंसेति स ह्यान्न**मित्याद्युक्तार्थमेतत्। इन्द्रनियोगमन्तरेणापि बृहतीसहस्रसंपादनाय त्रिचाशीतयः शंस्यन्त इति चेत्तथापि द्वितीयं तृतीयं शंसेति नियोगरूपं वचनमन्नाभिधानकर्तव्यतास्तुतिपरम्। यथा लोके भुञ्जाने इष्टव्यञ्जनप्राप्तौ द्वितीयं तृतीयं प्रयच्छेत्युक्तिस्तथा इन्द्रतुष्टिकरास्त्रिचाशीतय इति स्तूयन्ते। एवं त्रिवारदर्शनेन तुष्टेन्द्रस्तं विश्वामित्रं **प्रत्युवाच**। किमिति? **ते** तुभ्यं **वरं ददामीति। स होवाच—यथावत्त्वामेवेन्द्रं विजानीयाम्**। त्वद्विज्ञानमेव **मे** वरं देहीत्यर्थः। **तं प्रतीन्द्रः प्रत्युवाच। प्राणो वा अहमस्म्यृषे प्राणस्त्वं** न केवलं त्वमेव **प्राणः**। किन्तु **सर्वाणि भूतानि प्राण** एव। एतदुक्तं भवति। तद्यथा—"अयमाकाशः प्राणेन बृहत्या विष्टब्धः" इत्यादि। किञ्च **य एष तपति** सविता सोऽयं प्राण एव। **सो**ऽहमिन्द्रः प्राणादित्य**रूपेण** प्राच्यादि**सर्वा दिशो विष्टो**ऽस्मि। "पवमानो हरित आविवेश" इति पुरस्तादेवोक्तम्। तथा चाथर्वणे—"अथादित्य उदयन् यत्प्राचीं दिशं प्रविशति" इत्यादि। **तस्य मे** सर्वात्मनः प्राणस्येन्द्रस्यान्नं **मित्रं** सोमात्मकं स्थितिकारणत्वात्। "जगदन्नमथातो रेतसः" इत्यादिना तद्व्याख्यातम्। वर्धयितृत्वेन **दक्षिणं** विश्वामित्रेणर्षिणा त्रिचाशीतिरूपं दृष्टमिति **वैश्वामित्र**मिति। तथा चोक्तं—"तस्येदं विश्वं मित्रमासीत्" इत्यादि। **य एष तपन्नुदेति** सोऽहमग्न्यादीत्यात्मा प्राण **एवास्मीति** तद्याथात्म्यं विजानीहि **इत्युवाच** उक्तवानित्यर्थः ॥ ३ ॥

प्राणव्यञ्जनसम्पत्प्रदर्शनम्

तद्वा इदं बृहतीसहस्रं संपन्नं तस्य यानि व्यञ्जनानि तच्छरीरं **यो घोषः स आत्मा य ऊष्माणः स प्राणः। एतद्ध स्म वै तद्विद्वान् वसिष्ठो वसिष्ठो बभूव तत एतन्नामधेयं लेभे। एतदु हैवेन्द्रो विश्वामित्राय प्रोवाचैतदिहैवेन्द्रो भरद्वाजाय प्रोवाच तस्मात्स तेन**

बन्धुना यज्ञेषु हूयते । तद्वा इदं बृहतीसहस्रं संपन्नं तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति शतसंवत्सरस्याह्नां सहस्राणि भवन्ति व्यञ्जनैरेव रात्रीराप्नुवन्ति स्वरैरहानि । तद्वा इदं बृहतीसहस्रं सम्पन्नं तस्य वा एतस्य बृहतीसहस्रस्य सम्पन्नस्य परस्तात्प्रज्ञामयो देवतामयो ब्रह्ममयो अमृतमयः सम्भूय देवता अप्येति य एवं वेद । तद्योऽहं सोऽसौ योऽसौ सोऽहम् । तदुक्तमृषिणा—सूर्य आत्मा जगतस्तस्थुषश्चेति । एतदु हैवोपेक्षेतोपेक्षेत ॥ ४ ॥

"एष इमं लोकमभ्यार्चत्" इत्यादिनेन्द्रस्यादित्याद्यात्मकत्वमुक्तम् । "प्राणो वा अहम्" इत्यादिना किमर्थं पुनरुच्यते ? सकामनिष्कामयोः फलभेदस्य वक्तव्यत्वात् । अत्र तु निष्कामेन कृतं यथावत् श्रौतं कर्म ज्ञानोत्पत्तिकारणमिति इन्द्रसकाशाद्विश्वामित्रेण ज्ञानवरो लब्धः । न हि पुनर्वचनदोषः सेद्धुं पारयति । यथा त्रिचाशीतिष्वन्नदर्शनमुक्तं तथा प्राणस्य बृहतीसहस्रविषये प्राणव्यञ्जनसम्पत्प्रदर्शनार्थमिदमारभ्यते--तद्वा इति । महाव्रतब्राह्मणे तद्बृहतीसहस्रम् । यथासंपादितमर्थं वैशब्दः स्मारयति । **तदिदं बृहतीसहस्रं** वक्ष्यमाणकल्पनाभिः संपादयितव्यमिति बुद्धौ सन्निहितमाह—**तस्येति** । **तस्य** बृहतीसहस्रस्य शस्त्रविहिताक्षराणां स्वव्यञ्जकत्वाद्यानि **व्यञ्जनानि** तानि बृहतीसहस्रात्मनः इन्द्रस्य । यथा शरीरे रूपजात्यादयो व्यज्यन्ते तथैवं कादिषु स्वरा व्यज्यन्ते । तस्मात्तानि शरीरावयवत्वेन प्रविभज्यन्ते । तस्मात्तान्यवयवत्वेन विभज्यन्ते । अङ्गादिषु व्यज्यमानो **यो घोषः स** ह्यात्मा मध्यमत्वसामान्यात् । शषसादिषु व्यज्यमाना **य ऊष्माणः** इन्द्रस्य प्राणरूपत्वात् **स प्राणः** । तदेतद्बृहतीसहस्रदर्शनमित्येवं **विद्वान् स वसिष्ठऋषिर्बभूव** । **ह स्म वै** इति दर्शनस्य स्तुत्यर्थः । वसिष्ठत्वगुणयोगात् **तत एतन्नामधेयं लेभे** लब्धवान् । लोके वसिष्ठो वसिष्ठ

इति प्रथितत्वात्। **एतदेव च दर्शनं उ हैवेन्द्रो विश्वामित्राय भरद्वाजाय च प्रोवाचेति** यत्तद्विद्यास्तुत्यर्थम्। यस्मादिन्द्रविश्वामित्रयोः विद्यासंप्रदानग्रहणनिमित्तः संबन्ध आसीत्**तस्मात्स इन्द्रस्तेन बन्धुना यज्ञेषु** सुब्रह्मण्यायां **हूयते** कौशिकब्राह्मण इति। **तद्वा इदं बृहतीसहस्रं संपन्नम्। तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्य** यथोक्तविशेषणविशिष्टस्य **षट्त्रिंशत्सहस्राक्षराणि** गण्यमानानि **भवन्ति**। षट्त्रिंशदक्षरा हि बृहती। सा हि तावत् सहस्रगुणिताक्षरशः षट्त्रिंशत्सहस्रैवेति प्रसिद्धा। **तावन्त्यक्षर**तुल्यान्येव पुरुषस्य **शतसंवत्सरस्याह्नां सहस्राणि भवन्ति** "शतायुः पुरुषः" इति श्रुतेः। तत्राक्षराणि स्वरव्यञ्जनभेदेन द्विधा विभज्यन्ते। पुरुषायुषोऽहोरात्रसंख्यासामान्यात्। तस्य **व्यञ्जनैरेव रात्रीराप्नुवन्ति**। व्यञ्जनानां रात्रीणां च संख्यासामान्यात्। **स्वरैरहानि** व्यक्तत्वसामान्यात्। तत्रैवं सति बृहतीसहस्रसंपत्त्या षट्त्रिंशत्सहस्राण्यग्न्यश्विता भवन्ति। सहस्रसंख्यायां सर्वसंख्यान्तर्भावात्। सर्वजगतः प्राण इव बृहत्यां सर्वं संपन्नं भवति। साक्षात्सर्वं प्राण इत्युक्तं वक्ष्यमाणं च। **तद्वा इद**मित्यादि पूर्ववत्। **तस्यैतस्य बृहतीसहस्रस्यैवं संपन्नस्य** नित्यात्मभूतया प्रज्ञया युक्त इति **प्रज्ञामयः** प्राण इत्यर्थः। तथा कौषीतकीनामुपनिषद्याम्नातम्—"प्राणोऽस्मि प्रज्ञात्मा यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः" इति। तथा अग्न्यादि**देवतामयः** सर्वात्मकत्वात्। वेदमयो **ब्रह्ममयः**। **अमृतमयः** पारमार्थिकरूपेणामृतत्वात्। अमृतैवैषा **देव**तेत्येते **चत्वार आत्मानः** प्रज्ञानमय इत्याद्युक्ताः। **यस्त्वेवमुक्तं** वक्ष्यमाणं बृहतीसहस्रं **वेद** सोऽयं विद्वानेतांश्चतुरः प्रज्ञादिमयानिहैवात्मत्वेनोपगम्य शरीरपातानन्तरं स्वात्मत्वेन **सर्वदेवता अप्येति**। "देवो भूत्वा देवानप्येति" इति श्रुतेः। तद्दर्शनमुपसंहरति—य इति। **योऽहं** देहे प्रज्ञा प्राणोऽध्यात्मं **सोऽसा**वादित्यमण्डलाभिमानी नान्यः। **यश्चासावादित्ये स एवाहं** नान्यः। पुरुषादीत्यागतहेयांशापायसिद्धचैतन्यस्यैकत्वात्। "स यश्चायं पुरुषे यश्चासावादित्ये स एकः" इत्यादिश्रुतेः। विशेषांशात्यागेऽपि "एष इमं लोकमभ्यार्चत्" इत्याद्युक्तानुरोधेनैतत्सर्वं प्राणादित्यात्मकमेव। **तद्दर्शनमृषिणा मन्त्रेणाप्युक्तम्**। सर्वासां हि देवतानां

सारभूतः सविता सूर्यः। सर्वात्मकत्वात् जगतः सूर्य एवात्मा। तस्मिन्दृष्टे सर्वा देवता दृष्टा भवन्ति। तेन हि सर्वं पश्यति लोकः सर्वलोकचक्षुरनुग्राहकत्वात्। यदि नोदीयात्सूर्यः तदा जगदान्ध्यं भजेत्। तस्माल्लोकचक्षुः। रसरश्मिप्रज्ञाप्राणानां स्वीकरणात्सूर्यः। स ह्यात्मा सर्वप्राणिनां तस्थुषो जङ्गमस्य स्थावरस्य चेति। मन्त्रप्रकाशितप्राणादित्यात्मैकत्वं बृहतीसहस्रात्मरूपं यथामति आदित्यमात्मभावेनोपेत्योपेक्षेतोपेक्षेत। स्वातिरिक्तवस्त्वदर्शनपूर्वकं निवातस्थितदीपवत्तैलधारावच्चाविच्छिन्नमाप्राणमोचनं दर्शनं कुर्यादित्यर्थः। द्विर्वचनमुक्तवक्ष्यमाणबृहतीसहस्रसंपदुपसंहारदर्शनार्थम् ॥ ४ ॥

इति द्वितीयोऽध्यायः

---

# तृतीयोऽध्यायः

उक्थस्य पञ्चविधगुणविशेषसंबन्धः

यो ह वा आत्मानं पंचविधमुक्थं वेद यस्मादिदं सर्वमुत्तिष्ठति स संप्रतिवित् पृथिवी वायुराकाश आपो ज्योतींषीत्येष वा आत्मोक्थं पञ्चविधमेतस्माद्धीदं सर्वमुत्तिष्ठत्येतमेवाप्येत्ययनं ह वै समानानां भवति य एवं वेद। तस्मिन् योऽन्नं चान्नादं च वेदाहास्मिन्नन्नादो जायते भवत्यस्यान्नमापश्च पृथिवी चान्नमेतन्मयानि ह्यन्नानि भवन्ति ज्योतिश्च वायुश्चान्नादमेताभ्यां हीदं सर्वमन्नमत्त्याव-

पनमाकाशः । आकाशे हीदं सर्वं समोप्यत आवपनं ह वै समानानां भवति य एवं वेद । तस्मिन् योऽन्नं चान्नादं च वेदाहास्मिन्नन्नादो जायते भवत्यस्यान्नमोषधिवनस्पतयोऽन्नं प्राणभृतोऽन्नादमोषधिवनस्पतीन् हि प्राणभृतोऽदन्ति । तेषां य उभयतोदन्ताः पुरुषस्यानुविधां विहितास्तेऽन्नादा अन्नमितरे पशवस्तस्मात्त इतरान् पशून् अधीव हि चरन्त्यधीव ह्यन्नेनान्नादो भवति । अधीव हि समानानां जायते य एवं वेद ॥ १ ॥

उक्थस्य पाञ्चविध्यगुणविशेषसंबन्धार्थमिदमारभ्यते— **यो ह वा** इति । **यो ह वै** कश्चिदात्मानं **पञ्चप्रकारमहमुक्थमस्मीति वेद** विद्यादिति सर्वत्र विधिरनुवर्तते । पाञ्चविध्यगुणविशेषसंबन्धमात्रमिह वेदेत्युच्यते । यो वेद **स संप्रतिवित्** सम्यग्दर्शीत्यर्थः । सम्यग्दर्शनस्य पुरुषार्थसाधनहेतुत्वादित्यागोपाङ्गनं प्रसिद्धम् । प्रलोभनार्थमेतत् । संप्रतिविदित्युक्तं **यस्मात्पञ्चविधादुक्थात्सर्वमिदं** स्थावरजङ्गमं **चोत्तिष्ठति** तदुक्थं यो वेद स संप्रतिविदिति प्रलोभ्याभिमुखीकृत्याह— **पृथिवीति । पृथिवी वायुराकाश आपो ज्योतींषीत्येष** भूतानां संघातो **वै** प्राणिनामात्मा प्रत्यगात्मभूतत्वात् । **आत्मा चोक्थं** च तदित्यात्मोक्थं **पञ्चविधमुक्थत्वहेतुप्रदर्शनार्थमेतस्माद्धीदं सर्वमुत्तिष्ठति** । न केवलमुत्पत्तिः किन्तु विलयकाले भूतसंघातमेवाप्येत्यपि गच्छति । **एवं** सर्वप्राणिभूतजातस्यैवं पञ्चविधो भूतसंघात उत्पत्तिप्रलयवद्भायनमिति **यो वेद सोऽयनं ह वै समानानां** तुल्यजातीयानां **भवती**ति पूर्ववत्पञ्चविधेऽप्युक्थे **तस्मिन् योऽन्नं चान्नादं च वेद** तस्यैतत्फलम् । **अस्मिन्नुक्थेऽन्नादो जायते** दीप्ताग्निर्जायते । आमयावी न भवतीत्यर्थः । फलेन प्रलोभयन्नाह— **भवतीति । अस्यान्नमिच्छातो भवति । आपश्च पृथिवी चान्नं** अप्पृथिवीसंयोगतो व्रीहियवादीन्यन्नानि **भवन्ती**ति प्रसिद्धेः । **ज्योतिश्च वायुश्चान्नादं** वायुसंयोगस्य

ज्योतिषो दीपकत्वात् । हिशब्दोऽवधारणार्थः । **एताभ्यां** वायुज्योतिर्भ्यामेव **सर्वं**प्राणिजात**मन्नमत्ति** । तत्राप्पृथिव्योरन्नत्वेन वायुज्योतिषोरत्तृत्वेन च विनियोग उक्तः । अस्मिन्नाधीयते सर्वमित्यावपनमाकाशः । आकाशस्य सर्वाधारत्वे "आकाशे वै सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिश्रुतेः । अवकाशप्रदात्त्वाकाशस्यावपनगुणविज्ञानफलं **य एवं वेद स** ह्यावपनं समाश्रयो **वै समानानां भवति** । भूतविषयेऽन्नान्नादत्वमुक्तं, भौतिकेऽपि तदुच्यते । अस्मिन् प्राणिजाते **योऽन्नं चान्नादं च वेदे**त्युक्तार्थम् । ओषध्यादिस्थावरमन्नं चक्षुरादिप्राणव्यक्तिं बिभर्तीति प्राणभृज्जङ्गममन्नादं **एतदोषधिवनस्पतीन् हि प्राणभृतोऽदन्ति** । कृष्यादिनोत्पाद्य **तेषामन्नादानां** मध्ये येऽश्वादय **उभयतोदन्ताः पुरुषस्यानुविधा**मनुप्रकारतां **विहिताः** पुरुषानुवर्तित्वेनेत्यर्थः । तेऽन्नादा **अन्नमितरे** आरण्यादयः **पशवः** । यस्मात्पुरुषानुवर्तित्वेनान्नादत्वं **तस्मात्त इतरान् पशूनधीव चरन्ति । अधी**वोपर्येव । इवशब्दो अवधारणार्थः । हि यस्मादन्नेनान्नादो **भवति । अधीव हि समानानां जायते** य एवं वेदेति पूर्ववत् ॥ १ ॥

पुरुषस्य ज्ञानादेव कर्तव्यत्वम्

**तस्य य आत्मानमाविस्तरां वेदाश्नुते । हाविर्भूय य ओषधिवनस्पतयो यच्च किञ्च प्राणभृत् स आत्मानमाविस्तरां वेदौषधिवनस्पतिषु हि रसो दृश्यते चित्तं प्राणभृत्सु । प्राणभृत्सु त्वेवाविस्तरामात्मा तेषु हि रसोऽपि दृश्यते न चित्तमितरेषु । पुरुषेष्वेवाविस्तरामात्मा स हि प्रज्ञानेन संपन्नतमो विज्ञातं वदति विज्ञातं पश्यति वेद श्वस्तनं वेद लोकालोकौ मर्त्येनामृतमीप्सत्येवं संपन्नः । अथेतरेषां पशूनामशनापिपासे एवाभिविज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोकौ त एतावन्तो भवन्ति यथाप्रज्ञं हि संभवाः ॥ २ ॥**

स्थावरजङ्गमयोः पुरुषावसानमात्रत्वमुक्तम् । पुरुषस्य कर्मज्ञानाधिकारित्वात् तदितरेषां तत्रानधिकारात् पुरुषस्य ज्ञानादेव तत्कर्तव्यताप्राप्तावपि फलेन प्रलोभयन्नाह—**तस्येत्यादिना** । अयमेव महान् प्रजापतिः अहमुक्थमस्मीति ज्ञानकर्मकर्तव्यताविधिर्नेतरपशून्प्रति । नापि देवर्षीन्प्रति । किन्तु **तस्यान्नात्तृ**समुदायस्य मध्ये **य आत्मानमाविः** प्रकाशादपि प्रकाशतरं **आविस्तरामा**विस्तरमात्मानं **वेद** सोऽयं महान् बहुतरमावृत्या**श्नुते** व्याप्नोति । **यस्तु** जगत्स्रष्टा सोऽव्याकृते नामरूपे व्याकुर्वन् पञ्चभूतान्युत्पाद्यान्नात्तृत्वविभागार्थं स्थावरजङ्गमलक्षणं भौतिकं चोत्पाद्य स्वात्मप्रकाशनाय तत्रा**विर्भूय** "**रूपं रूपं** प्रति**रूपो** बभूव" इति श्रुतेः । तत्रौ**षधिवनस्पतयो यच्च किञ्च प्राणभृत्** तत्रात्माविर्भूत इति यो वेद **स आत्मानं आविस्तरां वेद** । ओषध्यादिषु दर्शनाद्यभावादात्मनः आविस्तरता नेतीति चेन्न; ओषध्यादिषु रसदर्शनात् । **दृश्यते ह्योषधिवनस्पतिषु रसः** । यत्र रसस्तत्र चित्तमनुमीयते । यत्र यावन्मात्रं चित्तं तत्र तावदा**विस्तरामात्मा** । तस्मादोषधिवनस्पतिषु आत्मन आविस्तरत्वं सिद्धम् । **प्राणभृत्स्व**धिकाविस्तरत्वे रसत्वं हेतुः । **न चित्तमितरेषु** स्थावरेषु । तस्मात्**प्राणभृत्स्वेवाविस्तरामात्मा** । **स हि** पुरुषो यस्मात् **प्रज्ञानेन संपन्नतमो** भवति । प्रकृष्टज्ञानसंपन्नत्वात् यत्पूर्वमिदमहमज्ञासिषमिति तदेव **वदति** । तथैव **विज्ञातं पश्यति** न केवलमतीतस्मरणमेव । श्वो म इदं भविष्यतीति भविष्यदपि **वेद श्वस्तनम्** । किञ्च दर्शनादर्शनविषयौ **लोकालोकौ च वेद** जानाति । किञ्च **मर्त्येन** विनाशिना कर्मज्ञानसाधनेना**मृतं** नित्यं प्राप्तुमिच्छति । इत्थंभूतप्रज्ञानातिशयेन **संपन्नः** । पुरुषस्य पशुत्वेऽपि ज्ञानसम्पत्तिः विशेषः । **अथेतरेषां** पुरुषादन्य**पशूनामशनापिपासे एव** हि **विज्ञानं** भवति । तेषामुत्पत्तितो विशेषज्ञानवैरल्यात् । यस्मादेवं तस्मात्ते पुरुषवद्वि**ज्ञातं न वदन्ति** । तथा **न** हि **विज्ञातं पश्यन्ति** । श्व एवं भविष्यतीति **श्वस्तनं न** विदन्ति । नापि **लोकालोक**ज्ञानवन्तो **भवन्ति** । **यथाप्रज्ञं** तदनुरूपमेव हीतरपशूनां **सम्भवाः** । पुरुषस्य प्रज्ञानातिशयवत्त्वेन सर्वफलार्थित्वात् स हि कर्मज्ञानाधिकारीति युक्तम् ॥ २ ॥

पुरुषस्य सर्वकर्मफलप्राप्त्युपायः

स एष पुरुषः समुद्रः सर्वं लोकमति यद्ध किञ्चाश्नुतेत्येनं मन्यते यद्यन्तरिक्षलोकमश्नुतेत्येनं मन्यते यद्यमुं लोकमश्नुवीतेत्येवैनं मन्यते। स एष पुरुषः पञ्चविधस्तस्य यदुष्णं तज्ज्योतिर्यानि खानि स आकाशोऽथ यल्लोहितं श्लेष्मा रेतः ता आपो यच्छरीरं सा पृथिवी यः प्राणः स वायुः। स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानस्समानः ता एता देवताः प्राणापानयोरेव निविष्टाश्चक्षुः श्रोत्रं मनो वागिति प्राणस्य ह्यन्वपायमेता अपियन्ति। स एष वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञः स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमस्स एष यज्ञानां संपन्नतमो यत् सोम एतस्मिन् ह्येताः पञ्चविधा अधिगम्यन्ते। यत्प्राक्सवनेभ्यः सैका विधा त्रीणि सवनानि यदूर्ध्वं सा पञ्चमी ॥ ३ ॥

"सुकृतं बत" इति, "पुरुषो वाव सुकृतम्" इति वक्ष्यमाणश्रुत्यनुरोधेन तस्य ज्ञानकर्मानुष्ठानसमर्थत्वात्। स ह्युपायेन सर्वकर्मफलमाप्नोतीत्येतत्प्रदर्शनार्थमिदमुच्यते—**स एष** इति। सोऽयमेष **पुरुषः समुद्र** इवापारानन्तकामत्वात्समुद्रः समुद्र इव हि कामः। नैव हि कामस्यान्तोऽस्ति न समुद्रस्येति। "कामं समुद्रमाविश" इति मन्त्रलिङ्गात्। तमेतमर्थं दर्शयति—**सर्वमिति**। कामयितव्यस**र्वं लोकमति**क्रम्य वर्तते। **यत्किञ्च** ह क्षेत्रं धनं राज्याद्य**श्नुते** व्याप्नोति ततोऽप्ययमतिशेते। यद्यन्यमपि प्रार्थयते तस्मात्स्वीकृतकामादप्यधिकतर**मेवैनं** लोको **मन्यते**। **यदि** पृथिवीलोकं व्याप्या**न्तरिक्षलोकमश्नुते** केनचिदुपायेन व्याप्नोति ततोऽप्ये**वैनं मन्यते**। अपरिसमाप्तत्वादिच्छायाः।

तथा तृतीयमपि **यद्यमुं लोकमश्नुवीत** तदुचितसाधनेन प्राप्नुयात्ततोऽप्यधिकतरं प्राप्तुं योग्य इत्ये**वैनं मन्यते**। लोके एवमेव यावत्कामा अपरिसमाप्ता भूतभौतिकविषयास्तावदिच्छा अपरिसमाप्तैव। तेनासौ समुद्रः पुरुषः। कानि पुनस्तानि भूतानि येषु सर्वे कामाः परिसमाप्तिं गताः? यानि कामयन् तदुचितोपायतस्तान्यात्मभावमापादयति तानीमानि पञ्चभूतानि उक्थशब्देन प्रस्तुतानि। एवमन्नान्नादपरिणतभूतविकारोऽयं **पुरुषः पञ्चविधो** भवति। कथम्? इत्यत आह—**तस्येति**। **तस्य** पुरुषस्य देहे **यदुष्णं तज्ज्योतिरग्निः**। **यानि** तद्देहे **खानि** सुषिराणि **तान्याकाशः**। **अथ** तद्देहे **यल्लोहितं श्लेष्मा रेतस्ता आप** एतेषां द्रवात्मकत्वेनाब्विकारत्वात्। तस्य **यच्छरीरं सा पृथिवी**। तस्य **यः प्राणः स वायुः**। प्राणापानव्यानोदानसमानभेदेन **स एष वायुः पञ्चविधः** पुरुषः सर्वज्ञानकर्मणामाश्रयभूतत्वात्। "तं प्रपदाभ्यां प्रापद्यत", "पुरुष एवोक्थम्" इत्युक्तत्वात्। **चक्षुः श्रोत्रं मनो वागिति** याः सर्वज्ञानहेतुभूताः स्वस्वविषयद्योतना**द्देवताः प्राणापानयोरेव निविष्टाः**। चक्षुरादिग्रहणं सर्वकरणोपलक्षणार्थम्। प्राणापानवृत्तिर्हि जीवनं चक्षुरादीनां तदनुवृत्तित्वात्। **प्राणस्य ह्यन्वपायं** अपगमन**मेता**श्चक्षुरादिदेवता **अपियन्ति** प्राणमेवापि गच्छन्तीत्यर्थः। चक्षुरादिवृत्तीनामन्वयव्यतिरेकाभ्यां प्राणायत्तत्वात्। यतः प्राणो ज्ञानकर्महेतुरतः **स एष** यज्ञो मन्त्रोच्चारणादिव्यापृताया **वाचश्चित्तस्या**न्तःकरणस्य चोदनाद्यर्थालोचनव्यापृतत्वेन **तस्योत्तरोत्तरक्रमः** उत्तरोत्तरव्यापारो **यद्यज्ञो** यो यज्ञ इत्यर्थः। वाक्चित्तव्यापृतेः प्राणनिमित्तत्वात्। **स एष यज्ञः पञ्चविधः** प्राणकार्यत्वात्। तत्कथम्? इत्यत्रा**ग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोमः** प्रकृतीनां पञ्चत्वात्पञ्चविध एव यज्ञः। शिष्टयज्ञानां तद्विकृतित्वेन तत्रान्तर्भूतत्वात्। **स एष** सोमोऽग्निहोत्रादि**यज्ञानां संपन्नतमः**। यत् **यस्मात्पञ्चविधा** अपि **एतस्मिन् सोम** एव **अधिगम्यन्ते**। **यत्प्राक्** पूर्वं **प्रातस्सवनादिभ्यो** दीक्षणीयादिकर्मजातं **सैकाविधा**। **त्रीणि सवनानि** तिस्रो विधाः। **यदूर्ध्वं** सवनेभ्य उदवसानीयान्तं **सा पञ्चमी** पञ्चविधा इत्यर्थः॥ ३॥

पुरुषबुद्धिप्ररोचनाय यज्ञस्तवः

योह वै यज्ञे यज्ञं वेदाहन्यहर्देवेषु देवमध्यूल्हं स संप्रतिवित् एष वै यज्ञे यज्ञोऽहन्यहर्देवेषु देवोऽध्यूल्हो यदेतन्महदुक्थम् । तदेतत्पञ्चविधं त्रिवृत्पञ्चदशं सप्तदशमेकविंशं पञ्चविंशमिति स्तोमतो गायत्रं रथन्तरं बृहद्भद्रं राजनमिति सामतो गायत्र्युष्णिक् बृहती त्रिष्टुप् द्विपदेति छन्दस्तः तच्छिरो दक्षिणः पक्षः उत्तरः पक्षः पुच्छमात्मेत्याख्यानम् । पञ्चकृत्वः प्रस्तौति पञ्चकृत्व उद्गायति पञ्चकृत्वः प्रतिहरति पञ्चकृत्व उपद्रवति पञ्चकृत्वो निधनमुपयन्ति तत्स्तोभसहस्रं भवति । एवं होताः पञ्चविधा अनुशंस्यन्ते यत्प्राक् त्रिचाशीतिभ्यः सैका विधा तिस्रस्त्रिचाशीतयो यदूर्ध्वं सा पञ्चमी । तदेतत्सहस्रं तत्सर्वं तानि दश दशेति वै सर्वमेतावती हि सङ्ख्या दश दशतस्तच्छतं दशशतानि तत्सहस्रं तत्सर्वं तानि त्रीणि छन्दांसि भवन्ति त्रेधा विहितं वा इदमन्नमशनं पानं खादः तदेतैराप्नोति ॥४॥

पुरुषबुद्धिप्ररोचनाय वक्ष्यमाणयज्ञं स्तौति—**यो ह वा** इति । य कश्चिद्ध **वै** हस्तिपृष्ठारूढराजानमिव **यज्ञे यज्ञमध्यूल्हं** अधिरूढं **वेद** प्रकृतेर्व्यापकत्वेन विकृत्यारूढत्वात् । यद्वा—**एष वै यज्ञे** सहस्रसत्रान्तकर्मा श्रेष्ठतया हस्तिपृष्ठगतराजवदध्यूल्हसत्रमेव सर्वाहःसंपन्ने महाव्रतीयेऽहनि श्रेष्ठतः **अहरध्यूल्हम्** । तथा वागाद्यग्न्यादिदेवेषु श्रेष्ठतया प्राणाख्यो **देवोऽध्यूल्हः** "प्राण उक्थमित्येव विद्यात्" इत्युक्तम् । तदेतदुक्थं पञ्चविधं कार्यपञ्चविधस्य कारणानुविधायित्वात् । एवं यो वेद स **संप्रतिविदि**त्युक्तार्थम् । यो ह **यज्ञेऽहनि देवेषु** च **यज्ञोऽहर्देवोऽध्यूल्हः यदेतन्मह**त्प्राणाख्यं ब्रह्मो**क्थं** सर्वस्य प्राणतन्त्रत्वात् । चित्तोत्तरव्यापारनिष्पन्नयज्ञाधिरूढं **तदेतत्पञ्चविधम्** । पाञ्च

विध्यं कथम्? इत्यत्र स्तोमतस्सामतश्छन्दस्तश्च पाञ्चविध्यसिद्धिरित्याह—**त्रिवृदि-त्यादि । त्रिवृत्पञ्चदशं सप्तदशमेकविंशं पञ्चविंशमिति स्तोमतः** । कतिपय-मन्त्रसमुदायस्य स्तोमाख्येत्यत्र छन्दोगदर्शने "त्रिवृच्छिरः पञ्चदशं दक्षिणः पक्षः सप्तदशमुत्तरः पक्षः एकविंशं पुच्छं पञ्चविंशमात्मा" इति स्तोमतः पाञ्चविध्य-मुक्तम् । सामतः पाञ्चविध्यमुच्यते । **गायत्रं रथन्तरं बृहद्भद्रं राजनमिति सामतः पाञ्चविध्यम्** । पूर्ववद्गायत्रादेः शिरस्त्वादिः कल्पनीयः । छन्दस्तः पाञ्चविध्य-मुच्यते । **गायत्र्युष्णिग्बृहती त्रिष्टुप् द्विपदेति छन्दस्तो**ऽपि पाञ्चविध्यम् । अत्रापि पूर्ववच्छिरआदिकल्पना युज्यते । त्रिवृदादीनां क्रमदर्शनार्थं **तच्छिरो दक्षिणः पक्षः उत्तरः पक्षः पुच्छमात्मेति** ब्राह्मणवचनात्कृत्याख्यानमाकृतिवचनम् । किञ्च राजने साम्नि स्तोभसहस्रकल्पनापि पञ्चविधेत्याह—**पञ्चे**ति । **पञ्चकृत्वः प्रस्तौति पञ्चकृत्व उद्गायति पञ्चकृत्वः प्रतिहरति पञ्चकृत्व उपद्रवति** । उद्गात्रादित्रयाणां व्यापारभेदतः सर्वे **पञ्चकृत्वो निधनमुपयन्तीति** बहुवचन-सामर्थ्यात् । तथैतत्पाञ्चविध्यं यथोक्तं **स्तोभसहस्रं भवति** । **एवं होताः पञ्च विधाः** बृहतीसहस्रे होत्राप्य**नुशस्यन्ते** । ऋत्विग्भिर्यत् प्राक् **त्रिचाशी-तिभ्यः** शस्यन्ते **सैकाविधा** । गायत्री बृहदुष्णिगिति **तिस्रस्त्रि**विधाः **त्रिचाशीतयः** । **यदूर्ध्वं** शंसनं **सा पञ्चमी** विधा । एवं बृहतीसहस्रशंसता पञ्चविधा एव शस्यन्ते । स्तोभतो **यदेतत्सहस्रं** बृहत्युक्थं **तत्सर्वं** "क्रिया-कारकफलं नामरूपकर्मात्मकं द्वैतं संख्येयत्वेन च द्विधा विभक्तं परामृष्टैः त्रिभिः संख्यापर्वरूपैः सर्वं व्याप्यते" इति श्रुत्यनुरोधेनैकादिसंख्यायामावर्तमानायां प्रथम-पर्वरूपं दश पर्यवस्यति । दशदशसंख्यायाः पुनरावर्तमानाया दशदशतो यद्द्वितीयं पर्वरूपं तच्छतमवशिष्यते । शतसंख्यायाः पुनरावर्तमानायास्तृतीयं पर्वरूपं दश शतानि यत्प्रतिज्ञातं तत्सहस्रं भवतीत्याह—**तानी**ति । **तानि दश दशेति वै सर्वमेतावती हि संख्या दश दशतः तच्छतं दश शतानि तत्सहस्र**मिति **तत्सहस्रं तानि** गायत्र्यादीनि **त्रीणि छन्दांसि भवन्ति** । त्रिधा विभक्तसामान्यात् । किञ्च बृहतीसहस्रात्मनेन्द्रेण त्रेधा **विहितं** प्राणेनाद्यमान**मन्नं अशन**मोदनादि पानीयादि **पानं** लड्डुकादि

खादः तत्सर्वमन्नं गायत्रादित्रिचाशीतिप्रकारैरेतैराप्नोति । एवं संख्याव्याप्त्या विराट्संपत्तेः ॥ ४ ॥

सर्वात्मना बृहतीसहस्रस्तुतिः

तद्वा इदं बृहतीसहस्रं संपन्नम् । तद्धैतदेके नानाछन्दसां सहस्रं प्रतिजानते किमन्यत्सदन्यत् ब्रूयामेति । त्रिष्टुप्सहस्रमेके जगतीसहस्रमेके अनुष्टुप्सहस्रमेके । तदुक्तमृषिणा । अनुष्टुभमनु चर्चूर्यमाणमिन्द्रं निचिक्युः कवयो मनीषेति वाचि वै तदैन्द्रं प्राणं न्यचाय्यन्नित्येतत्तदुक्तं भवति । स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोः । ईश्वरो ह तु पुरायुषः प्रैतोरिति ह स्माहाकृत्स्नो ह्येष आत्मा यद्वागभिहिता प्राणेन मनसेऽस्यमानो वाचा नानुभवति । बृहतीमभि संपादयेदेष वै कृत्स्न आत्मा यद्बृहती । सोऽयमात्मा सर्वतः शरीरैः परिवृतः तद्यथायमात्मा सर्वतः शरीरैः परिवृत एवमेव बृहती सर्वतश्छन्दोभिः परिवृता । मध्यं ह्येषामङ्गानामात्मा मध्यं छन्दसां बृहती । स हेश्वरो यशस्वी कल्याणकीर्तिर्भवितोरीश्वरो ह तु पुरायुषः प्रैतोरिति ह स्माह कृत्स्नो ह्येष आत्मा यत् बृहती तस्माद्बृहतीमेवाभिसंपादयेत् ॥ ५ ॥

पक्षान्तरनिरसनपूर्वकं बृहतीसहस्रं स्तौति—**तद्वा** इति । **तद्वा इदं बृहतीसहस्रं संपन्नमिति** पूर्ववद्बृहतीमेवाभिसंपादयेदित्युत्तरत्र संबन्धार्थम् । एवं स्थिते पक्षान्तरमुपन्यस्योपन्यस्य निन्दनं बृहतीसहस्रस्तुत्यर्थम् । तद्धेतिशब्दः पक्षान्तरद्योतनार्थः । **तद्धैतदेके** शाखिनः **नानाछन्दसा**मृचां **सहस्रं संपादयितव्यमिति प्रतिजानते** । तत्सहस्रसंपादनार्थे छन्दोनियमेन हि मन्यन्त

इत्यर्थः। बृहतीसहस्रसंपादनेन सर्वं संपन्नमिति स्थितम्। किं तत्पक्षान्तरं? **सच्छोभनं प्रकृतादन्यत्**। द्वितीयोऽन्यच्छन्दः सच्छब्देन संबध्यते। इतरच्छोभनतरमन्यत्किं **ब्रूयाम**? इत्यत्र **त्रिष्टुप्सहस्रमेके** शाखिनः प्रतिजानते। तथा केवलं **जगतीसहस्रमेके। अनुष्टुप्सहस्रमेके**। एते हि चत्वारः पक्षा बृहतीसहस्रस्तुल्यर्थमुपन्यस्यापविविदिषिताः। तत्रानुष्टुप्सहस्रसंपादनं **ऋषिणा मन्त्रेणाप्युक्तम्**। अनुष्टुप्पक्षस्य मन्त्रब्राह्मणबद्धत्वात्तदेव दृढतरं मन्यमाना आहुः। **अनुष्टुभं** स्तनयित्नुलक्षणां वाचं **अनु चचूर्यमाणं** चञ्चूर्यमाण**मिन्द्रं** प्राणं **निचिक्युर्दृष्टवन्तः। कवयो मनीषा** ज्ञानेनात्रानुष्टुभमनुचचूर्यमाणमिन्द्रं निचिक्युरित्येतावदुदाहरणम्। तेषां मन्त्रार्थस्य तिरोहितत्वेन यथाभूतार्थमाह—**अनुष्टुभ**मिति। "वाग्वा अनुष्टुप्" इति श्रुत्यनुरोधेन स्तनयित्नुलक्षणायां **वाचि तदैन्द्रं प्राणं** निचिक्युः **न्यचाय्यन्नित्येतत्तदुक्तं भवति**। अध्यात्ममपि वाचमीरयन्तं निचिक्युरिति व्याख्येयमित्यर्थः। एवंविदः फलं किम्? इत्यत्र **स हि** विद्वा**नीश्वरः यशस्वी कल्याणकीर्ति**र्यस्य सोऽयं कल्याणकीर्ति**र्भवितो**र्भवितुं स हेश्वरः समर्थ इत्यर्थः। किञ्च **पुरा** पूर्वनियता**दायुषः प्रैतोः** पुनरधिकायुः गन्तुमीश्व**रो** जितमृत्युर्भवतीत्यर्थः। इत्येवम**नुष्टु**प्संपद्वाद्याह। तस्मादनुष्टुप्सहस्रं प्रशस्तं मन्यन्त इति यत्तन्न, अनुष्टुप्पक्षनिराकरणात्। कुतः? इत्यत्र यस्माद्वाचमनुष्टुभं प्रति लक्ष्यमाण ऐन्द्रः प्राण **आत्मा अकृत्स्नो**ऽसंपूर्णो भवति। वाचि प्राणस्या**कृत्स्न**त्वे हेतुमाह— **यद्वा**गिति। **यदकृत्स्न**केवलवाक्संयुक्त**प्राणेन मनसा चेस्यमानो**ऽस्यमानः प्रेर्यमाणो वदनालयः पुरुषो **वाचा** वक्तुं **नानुभवति**, तस्मा**द्बृहतीमेवाभिसंपादयेत्। एष वै कृत्स्न आत्मा यदे**तद्येयं **बृहती** तदा पुनः स्वात्मस्थस्वतन्त्रप्राणेन प्रेर्यमाणया वाचा मनसा चेस्यमानो वदनक्रियामनुभवति। सेयं प्राणत्वेन संस्कृता बृहती। स हि प्राणः कृत्स्नः। तस्य कुतः कृत्स्नत्वं? आत्मवत्त्वात्। बृहत्याः कुत आत्मत्वम्? इत्यत्र **सोऽयं** बृहतीरूपप्राणात्मा शिरःपाण्यादिमत्पिण्डे **सर्वतः** आपादमस्तकं **परिवृतः। तद्यथायमात्मा सर्वतः शरीरैः परिवृत**मध्यशरीरं दृष्टान्तत्वेनोपमीयते। त**थैवमेव बृहती सर्वतः** स्वावयवभूतगायत्र्यादि-

छन्दोभिः परिवृता भवति। **मध्यं ह्येषा** बृहती यथाङ्गानामात्मा **मध्यं** तथा **छन्दसां बृहती** मध्यम्। कथं बृहत्या मध्यत्वम्? इत्यत्र गायत्र्यादिछन्दसां चतुर्थत्वात्पूर्वाणि त्रीणि गायत्र्यादीनि तथा पङ्क्त्यादित्रीण्युत्तराणि भवन्ति। मध्ये स्वयं तिष्ठतीति मध्यत्वमुपपद्यते। तस्माद्गायत्र्यादिछन्दसामात्मा प्राणो हि बृहतीत्युक्तम्। तस्मादाकाशमिव सर्वाणि भूतानि बृहत्या विष्टब्धानीति बृहत्याः कृत्स्नत्वं यो वेद तस्यैतत्फलमुच्यते। **स हेश्वरो यशस्वी**त्युक्तार्थम्। महिदास ऐतरेयो ह स्माह। किम्? इत्यत्र **कृत्स्नो ह्येष आत्मा यद्बृहती तस्माद्बृहतीमेवाभिसंपादयेत्** इत्युपसंहारवचनमेतत् ॥ ९ ॥

बृहतीसहस्रसंपत्त्या सर्वसंपत्तिः

तद्वा इदं बृहतीसहस्रं संपन्नं तस्य वा एतस्य बृहतीसहस्रस्य संपन्नस्यैकादशानुष्टुभां शतानि भवन्ति पञ्चविंशतिश्चानुष्टुभ आत्तं वै भूयसा कनीयः। तदुक्तमृषिणा। वाचमष्टापदीमहमित्यष्टौ हि चतुरक्षराणि भवन्ति। नवस्रक्तिमिति बृहती संपद्यमाना नवस्रक्ति। ऋतस्पृशमिति सत्यं वै वागृचा स्पृष्टा। इन्द्रात् परि तन्वं ममेति तद्यदेवैतद्बृहतीसहस्रमनुष्टुप् संपन्नं भवति तस्मात्तदैन्द्रात्प्राणाद्बृहत्यै वाचमनुष्टुभं तन्वं सन्निर्मिमीते। स वा एष वाचः परमो विकारो यदेतन्महदुक्थं तदेतत्पंचविधं मितममितं स्वरः सत्यानृते। इत्यृग्गाथा कुंब्या तन्मितं यजुर्निगदो वृथा वाक् तदमितं सामाथो यः कश्च गेष्णः स स्वर ओमिति सत्यं नेत्यनृतम्। तदेतत्पुष्पं फलं वाचो यत्सत्यं स हेश्वरो यशस्वी कल्याणकीर्तिः भवितोः पुष्पं हि फलं वाचस्सत्यं वदति। अथैतन्मूलं वाचो यदनृतं तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तत

एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स उद्वर्तते तस्मादनृतं न वदेत् दयेत त्वेनेन । पराग्वा एतद्रिक्तमक्षरं यदेतदो३मिति तद्यत्किंचोमित्याहात्रैवास्मै तद्रिच्यते स यत्सर्वमोङ्कुर्याद्रिच्यादात्मानं स कामेभ्यो नालं स्यात् । अथैतत्पूर्णमभ्यात्तं यन्नेति स यत्सर्वं नेति ब्रूयात् । पापिकास्य कीर्तिः जायेत । सैनं तत्रैव हन्यात् । तस्मात्काल एव दद्यात् काले न दद्यात् तत्सत्यानृते मिथुनीकरोति तयोर्मिथुनात्प्रजायते भूयान्भवति । यो वै तां वाचं वेद यस्या एव विकारः स संप्रतिविदकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति । तस्यै यदुपांशु स प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मात्तिर इव तिर इव ह्यशरीरमशरीरो हि प्राणोऽथ यदुच्चैस्तच्छरीरं तस्मात्तदाविराविर्हि शरीरम् ॥ ६ ॥

बृहतीसहस्रसंपादनेन सर्वं संपादितं भवतीति वक्तुमिदमारभ्यते—**तद्वा** इति। **तद्वा इद**मित्यादि पूर्ववत्। उत्तरसंबन्धार्थं कथमनुष्टुप् संपन्ना भवति? इत्यत्र **बृहतीसहस्रस्य संपन्नस्या**नुष्टुप्त्वमापद्यमानस्य **एकादश**शतान्य**नुष्टुभां भवन्ति । पञ्चविंशतिश्चानुष्टुभो**ऽभ्यधिका भवति। यत्सहस्रादूर्ध्वं पञ्चविंशोत्तरं शतमनुष्टुभां तद्बृहतीसहस्रे संपद्यमाने बृहतीसहस्र एवान्तर्भवति । एतदुच्यते—**आत्तं** परिगृहीतं **भूयसा** महता **कनीयो**ऽल्पतरं भवतीति **वै** प्रसिद्धम् । सहस्रे शतं शते दशादि नवतिपर्यन्तं दशस्वेकादिनवान्तमानं भवतीति। **तदेतद्वा**चः संपादनं बृहतीसहस्र**मुक्तमृषिणा** मन्त्रेणापि। **वाचमनुष्टुभमष्टापदीं** स ह्यनुष्टुप् चतुरक्षरत्वेन विभज्यमानाष्टापदी भवति। **तामष्टापदीमहं** ममेति व्यवहितेन संबन्धो भवति।

पुनश्चतुरक्षरप्रक्षेपेण सा वाक् **बृहती संपद्यमाना नवस्रक्तिर्भवति**। स्रक्तयस्तु कोणा नव चतुरक्षराणि स्रक्तय इव वाचोऽनुष्टुभो भवन्ति। येन यदा बृहती संपद्यमाना तदा बृहत्या **ऋचा स्पृष्टा वाक् सत्यं** संपद्यते। यथा रसेन स्पृष्टो लोहः सुवर्णत्वमापद्यते। ऋतं सत्यं मूर्तामूर्ताख्यं प्राणस्तदा स्पृशति तां वाचमष्टापदीं नवस्रक्त्यृतस्पृशं **इन्द्रात्** बृहत्यात्मनः प्राणादेवोपादाय तस्यैवेन्द्रस्य **तन्वं** तनुं शरीरं अहं **परिममे** निर्मितवान्। वाचमष्टापदीमित्यष्टौ हि चतुरक्षराणि भवन्तीति व्याख्यातमेतत्। नवस्रक्तिमिति बृहती संपद्यमानेति च व्याख्यातमेव। नवस्रक्त्यृतस्पृशमित्यस्मिन्पदे व्याख्येये कथ व्याख्यातस्य पुनर्व्याख्यानम्? इत्यत्र बृहती संपद्यमाना नवस्रक्तिर्भवतीत्यर्थसंबन्धविवक्षया व्याख्येयमित्यर्थः। सत्यं वै वागृचा स्पृष्टा ऋतस्पृशमिति तथा व्याख्यातम्। "इन्द्रात्परि तन्वं ममेति तद्यदेवैतत् बृहतीसहस्रं", "आत्तं वै भूयसा कनीयः" इत्यनेनानुष्टुप् **संपन्ना** भवतीत्युक्तम्। तत्र यद्बृहतीसहस्रेऽन्तर्भूतं प्राणमिन्द्रे पञ्चदशोत्तरं शतमनुष्टुभां **तस्मात्तदैन्द्रात्प्राणाद्**बृहत्यापादाय **वाचमष्टापदीं** नवस्रक्त्यृतस्पृश**मनुष्टुभं** तस्यैवेन्द्रस्य **तन्वं** विद्वान्शरीरं **निर्मिमीते** निर्मितवानित्यर्थः। योऽहंकारेणाहं निर्मम इत्यब्रवीत्। तथा च व्याख्यातम्। येन्द्रस्य शरीरत्वेन कल्पितानुष्टुभि वाक् तस्या **वाच एष परमो विकारः प्रकृष्टः** सारभूत इत्यर्थः। कोऽयं विकारः? इत्यत्र **यदेतन्महदुक्थं** व्याख्यातं **तदेतत्पञ्चविधम्**। यः सारिष्ठो वाग्विकारस्तस्योक्थस्य पंचविधत्वं त्रिवृत् पञ्चदशमित्यादि व्याख्यातम्। कथं? **मितममितं स्वरस्सत्यानृते इति**। मितादीनां स्वरूपं श्रुतिः स्वयमेव व्याचष्टे—**इतीति**। तत्र मितशब्दार्थमाह—इत्यृ**ग्गाथा कुम्ब्या तन्मित**मिति। पदबद्धा ऋक्। "अग्निमीळे" इत्याद्या **गाथा**। "प्रातः" इत्याद्या **कुम्ब्या**। तदेतन्मितमित्यर्थः। अमितशब्दार्थमाह—**यजुर्निगदो वृथावाक् तदमितमिति**। "इषे त्वा" इत्याद्यनियताक्षरावसानं यजुः। "इन्द्राय सोमम्" इत्यादि **निगदः**। अध्वर्योरुक्तिः ब्राह्मणजातं यदसंबद्धप्रलपितं तदनियतपादाक्षरावसानममितम्। स्वरशब्दार्थमाह—**सामाथो यः कश्च गेष्णः स स्वर** इति पाञ्चभक्तिकं साप्तभक्तिकं वा साम। अथो अपि यः कश्चित्सामसन्धिपर्वाख्यो गेष्णः स स्वरः

ङ्जादेरप्यत्रान्तर्भूतत्वात् । सत्यस्वरूपमाह—**ओमिति सत्य**मिति । ओङ्कारस्य र्वात्मकत्वेन सर्ववाग्व्याप्ते**रोमिति यत्तदेव सत्यम्** । अनृतस्वरूपमाह— **नृत**मिति । **यन्नेती**ति निषिध्यते **तदनृतम्** । एवं मितादिपञ्चके वर्णलक्षणा ागन्तर्भवति । "सर्वा वाचो वदन्ति" इति श्रुतेः । एवं महाव्रते पञ्चविध- हदुक्थमेषा विकारलक्षणा वागपि सदसदात्मकार्थवशाद्द्विधा विभज्यते । त्प्राणात्मकं सत्यम् । प्राणातिरिक्तविकारजातं असदनृतम् । यदुक्तं **वाचो** ाकाररूपं **तत्पुष्पं फलम्** । तत्र यज्ञकर्म पुष्पं देवताप्तिः फलम् । वाङ्मय- क्षस्य पुष्पफले परिकल्प्येते । पुष्पफलयोः प्राणात्मकत्वमिति **यत्तत्सत्यम्** । द्रा—याज्ञं कर्म ज्ञानं च समुच्चितं पुष्पं, देवताप्ययलक्षणं फलमिति यो वेद द्वेदनफलं **स हेश्वरो यशस्वी कल्याणकीर्तिर्भविता**रित्याद्युक्तार्थम् । **वाचो-** क्षस्य **यन्नेत्यनृतं** तन्मूलं किम् ? इत्यत्र तत्तत्र लोके यथा **वृक्ष आविर्मूलः** ाविद्यकप्रकाशमूलः सन् **शुष्यति** । न केवलं शुष्यति किन्तूद्वर्तते विनश्यति । **एवं** वाग्विकाररूपं **वृक्षमात्मानमाविर्मूलं करोति** यः अनृतं वदति । स्मादनृतवक्ता हीयते **तस्माज्जात्वप्यनृतं न वदेत्** । अनृतवदनदोषत ात्मानं **दयेत** रक्षेत । तुशब्दोऽवधारणार्थः । **एनेन** अनेनानृतविरलसत्यवदनेन रात्परं ब्रह्म गच्छतीति । **पराग्वा एतदनृतरिक्तं** शुद्धमक्षरं किं तत् ? **यदेत- ोमिति** । ओमित्यभिधानेन परमपरं वा ब्रह्माभिधीयते । अत एव विद्वांस्तुरीयोङ्का- र्थब्रह्म प्रतिपद्यते । "तुरीयोङ्काराग्रविद्योतं तुर्यतुर्यम्" इति श्रुतेः । तथैवोमिति त्यमेवानुजानते । **अत्रैवास्मिन्नेव काले** गृहक्षेत्रादिलक्षणगर्तपूरणं सद्रिच्यते । दकादिना गर्तपूरणमिव स्वात्मनः पूर्णत्वेन पूरणाभावाद्यावद्वस्त्वोमित्यनुजानाति, हि तावता **रिच्यते** । तत्रैवं सति **स** यः कश्चिद्य**दा**त्मनः आपूरणार्थं वस्तु **सर्व- ोङ्कुर्यात्** ओमित्यनुजानीयात् । किम् ? अतिरिक्त**मात्मानं** निस्स्वं कुर्यादित्यर्थः । स्मादोमिति प्रतिपत्ता **कामेभ्यो नालं** न पर्याप्तः **स्यात्** । यतो लोके निस्स्वोऽज्ञो ालंमतिर्भवत्यत आत्मानं सर्वस्वेन **रिच्यात्** । **अथैतत्पूर्णमभ्यात्तं** कामगर्तासदा- त्मकमध्यात्ममात्तम् । किं तत् ? **यन्नेत्यनृतं** तद्धि कामगर्तात्मपूर्णतापरिपालनरूपम् । ह्यसंपत्पूर्णो यः कश्चित्केनचिद्याच्यमानोऽपि स्वपूर्णतापालनाय स्वनिकटे किं-

चिन्नेति **ब्रूयात्**। अनृतमात्मनः **प्रकटयेत्**। लुब्धः खल्वसौ। अनृतं ब्रुवतोऽ**स्य कीर्तिः पापिका जायेत**। अस्यात्मंभरित्वेन पापिष्ठत्वात्। सत्यां संपदि नेत्यनृतवादिनं पापिका कीर्तिः **सैनं तत्रैव** तदानीमेव **हन्यात्**। आविर्मूलमात्मानं करोति स शुष्यति स उद्वर्तते इत्युक्तं हि। न केवलं सत्येनानृतेन वा संसारस्थितिः, किन्तु सत्यानृताभ्यां संसारस्थितिमनुवर्तयन् यथोचितकाले दद्यादितरकाले न दद्यात्।

देशकालपात्रलाभे देयं वित्तं यथाविधि।

इति स्मृतेः। तस्मात्सत्यं नेति **सत्यानृते मिथुनीकरोति**। सत्यानृतमिथुनात्संसारवृक्षः **प्रजायते**। पुत्रपौत्रपश्वादिभिः **भूयान्भवति**। दिने दिने वर्धत इत्यर्थः। प्रसङ्गादेष सत्यानृतगतो वाग्विकार उक्तः। इदानीं प्रकृतमालम्ब्योच्यते—**यस्या** इति। स वा एष वाचः परमो विकार इति यदेतन्महदुक्थं **यो वै** कश्चैतां **वाचं वेद यस्या** वाच **एष विकार** उक्तः। संसारमूलपरिज्ञानात्सोऽयं **संप्रतिवित्**। वाग्विकारो हि कर्म। कर्ममूलश्च संसारः। का सा वाक्? इत्युच्यते—**अकार** इति। यमाहुः स्फोटमिति सर्ववर्णसामान्यमाकाशकल्पमिति च स हि बुद्धिस्थो **ह्यकारः सर्वा वाक्**। या काचिच्छ्रोत्रविषयापन्ना सा पुनरेकैकरूपाकाशकल्पा सती **सैव स्पर्शोष्मभिः** स्थानवर्णधर्मैः **व्यज्यमाना बह्वी नानारूपा** विलक्षणोपाधिभिः आकाशवदेव **भवति**।

द्वे ब्रह्मणी हि मन्तव्ये शब्दब्रह्म परं च यत्।<br>
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति॥

इति परंब्रह्माप्त्युपायभूतायास्तस्या एतस्या वाचो **यत्स्थानकरणवशादुपांशु** भवति स हि **प्राणः**। **अथ** वाचो **यदुच्चैरूपं तच्छरीरम्**। यस्माद्वाचो यदुपांशुरूपं **तत्तिर इव** तिरोभूतमिवान्यदपि लोके **तिर इव ह्यशरीरमशरीरो** हि **प्राणः प्रज्ञात्मा**। तस्मादुच्चैर्घोषस्य शरीरत्वहेतोस्**तदाविः** प्रकाशरूपं वाचोरूपं **आविर्हि शरीरम्**॥ ६॥

प्राणात्मवेदनफलम्

तद्वा इदं बृहतीसहस्रं संपन्नं तद्यशस्स इन्द्रस्स भूतानामधिपतिस्स य एवमेतमिन्द्रं भूतानामधिपतिं वेद विस्रसा हैवास्माल्लोकात्प्रैतीति ह स्माह महिदास ऐतरेयः प्रेत्येन्द्रो भूत्वैषु लोकेषु राजति। तदाहुर्यदनेन रूपेणामुं लोकमभिसंभवतीं३ अथ केन रूपेणेमं लोकमाभवतीं३ ? तद्यदेतत् स्त्रियां लोहितं भवति अग्नेस्तद्रूपं तस्मात्तस्मान्न बीभत्सेताथ यदेतत्पुरुषे रेतो भवत्यादित्यस्य तद्रूपं तस्मात्तस्मान्न बीभत्सेत सोऽयमात्मेममात्मानममुष्मा आत्मने संप्रयच्छत्यसावात्मामुमात्मानमिमसा आत्मने संप्रयच्छति तावन्योन्यमभिसंभवतोऽनेनाह रूपेणामुं लोकमभिसंभवत्यमुना रूपेणेमं लोकमाभवति ॥ ७ ॥

उक्थमुक्थमित्यारभ्य प्राणस्योक्थत्वं वागग्निनामरूपाद्यात्मकानेकगुणवत्त्वं ऽपफलायमानकर्मज्ञानसमुच्चयदेवताप्ययं चोपपद्यत इत्युक्तम्। पुनस्तस्यैवोपहारार्थमिदमुच्यते— **तद्वा** इति। **तद्वा इदं बृहतीसहस्रं संपन्नमिति** त्फलरूपं तत्संपन्नम्। यमात्मानमापन्नो विद्वान् **तद्यश** इत्यात्मनो नाम। तस्य नाम महद्यशः" इति श्रुतेः। किञ्च स **इन्द्रः** परमेश्वरः समस्त**भूता**ामधिपतिस्तस्य सर्वाधारत्वेन पालयितृत्वात्। **यः** कश्चिदिन्द्रं **भूताना**धिपतिमहमस्मीति **वेद** सोऽयं विद्वान् "वाक्पतिः चक्षुष्पतिः। श्रोत्रपतिः ज्ञानपतिः। एतत्ततो भवति" इति श्रुत्यनुरोधेन **विस्रसा** निश्शङ्केन**हैवास्माल्लो**ात्प्रैति प्राणातिरिक्तलोकाभिमानमुत्सृज्य प्राणात्मनावतिष्ठत **इत्याह स्म महिदास** **तरेय** आहेत्यर्थः। विदुषः सर्वात्मभावफले संशयो न कार्य इत्याह— त्येति। तथा **प्रेत्येन्द्रो** हिरण्यगर्भो **भूत्वा** कर्मफलभूतेष्वेषु **लोके**ष्वात्म-

* 55

भावेनैव **राजति** दीप्यते। **तत्त्राहुर्ब्रह्मवादिनः**। योऽयमेवंवित् स **एवेन्द्रः अनेन** स्वेन **रूपेण** प्रज्ञात्मनाधिदैवलक्षणम**मुं लोकमभिसंभवति**। अधिकेन रूपेणात्यन्तनिकृष्टमि**मं लोकमाभवति** प्रतिपद्यते। तत्केन खलु? इति विचारयन्नविद्याकामकर्मबीजं **तद्यदेतत्स्त्रियां लोहितमुद्भूतं भवति अग्नेस्तद्रूपं** लोहितो ह्यग्निः। यस्मात्तस्माल्लोहितादमेध्यबुद्धया **न बीभत्सेत** विजुगुप्सेत। तथा **यदेतत्पुरुषे रेतो भवत्यादित्यस्य तद्रूपं** शुक्लत्वसामान्यात्। यस्मादेतद्रेत आदित्यरूपं **तस्माद्रेतोस्तस्मात्तत्रामेध्यधिया न बीभत्सेत**। **सोऽयं** पृथिव्यग्न्यात्मा**मुं** त्वङ्मांसरुधिरात्मकम**मुष्मै** पितृभूतादित्यात्म**ने संप्रयच्छति**। यदा भार्या भर्तारमृतुकाले संप्रयच्छति तदासावप्यादित्यात्मा स्वमात्मरूपं स्नाय्वस्थिमज्जात्मक**ममुमात्मानं** पितृजं शुक्लरूपेण**ममस्मै** मातृभूताय पृथिव्यग्न्यात्म**ने संप्रयच्छति**। **तौ** द्यावापृथिव्यात्मानावधिष्ठातृभ्यामग्न्यादित्याभ्यां सहभूताव**न्योन्यमितरेतरमभिसंभवतो** मिथुनीभवतः। यत्तत्पृष्टं केन रूपेण इमं लोकमाभवति? इत्यत्रानेन पृथिव्यग्निरूपेण मातृजेन पितृजं रूपमादित्यात्मानम**मुं लोकमभिसंभवति** अभिसंयुज्यते। **अमुना** ह्यादित्यात्मरूपेण पितृजेन त्रयेणे**मं लोकं** पार्थिवमाग्नेयं पिण्ड**माभवति**। कोऽसाविन्द्रः? सर्वभूतात्मा स्वाविद्याकामकर्मोद्भूतशुक्लशोणितमयं शरीरमुपचयापचयधर्ममशनापिपासाद्यनेकोपद्रवालयं प्रतिपद्यते। स यदा शास्त्राचार्योपदिष्टमैन्द्रमशरीरं प्राणात्मानमहमस्मीति वेत्ति तदायं विद्वान् स्वेन रूपेणेन्द्रो भूत्वैषु लोकेषु राजत इत्युक्तम्॥ ७॥

एवं विदुषः सर्वत्र संचारः

तत्रैते श्लोकाः—

यदक्षरं पञ्चविधं समेति युजो युक्ता अभि यत्संवहन्ति।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवास्सर्व एकं भवन्ति॥१॥
यदक्षरादक्षरमेति युक्तं युजो युक्ता अभि यत्संवहन्ति।
सत्यस्य सत्यमनु यत्र युज्यते तत्र देवाः सर्व एकं भवन्ति॥२॥

यद्वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणिष्णु ।
तद्विधूय कवयो अन्वविन्दन्नामायत्ता समतृप्यञ्छ्रुतेऽधि ॥३॥
यस्मिन्नामा समतृप्यञ्छ्रुतेऽधि तत्र देवाः सर्वयुजो भवन्ति ।
तेन पाप्मानमपहत्य ब्रह्मणा स्वर्गलोकमप्येति विद्वान् ॥ ४ ॥
नैनं वाचा स्त्रियं ब्रुवन्नैनमस्त्रीपुमान् ब्रुवन् ।
पुमांसमब्रुवन्नेनं वदन् वदति कश्चन ॥ ५ ॥

अः इति ब्रह्म तत्रागतमहमिति । तद्वा इदं बृहतीसहस्रं संपन्नं तस्यैवैतस्य बृहतीसहस्रस्य संपन्नस्य षट्त्रिंशतमक्षराणां सहस्राणि भवन्ति तावन्ति पुरुषायुषोऽह्नां सहस्राणि भवन्ति जीवाक्षरेणैव जीवा अहराप्नोति जीवाह्ना जीवाक्षरमिति । अनकाममारोऽथ देवरथस्तस्य वागुद्धिः श्रोत्रे पक्षसी चक्षुषी युक्ते मनः संग्रहीता तदयं प्राणोऽधितिष्ठति । तदुक्तमृषिणा—तेन यातं मनसो जवीयसा निमिषश्चिज्जवीयसेति जवीयसेतीति ॥ ८ ॥

विद्वानिन्द्ररूपेण सर्वत्र राजत इत्यत्रास्मिन्नर्थे एते श्लोका मन्त्रा भवन्तीत्याह—**तत्रेति**। **यत्** न क्षरतीति प्राणाख्यमक्षरं ब्रह्म पृथिव्यादिपञ्चविधं भौतिकशरीरजातं च **समेति**। विषयैर्युज्यन्त इति युज इन्द्रियाणि रथे युक्ताश्वा इव यच्छरीरं **संवहन्ति**। सत्यस्य मूर्तामूर्तात्मनः प्राणस्य **सत्यं** तद्विकारास्पृष्टमपि क्षेत्रज्ञरूपेण प्राणप्रवेशमनु **यत्र युज्यते**। प्राणप्रवेशादात्मापि प्रविष्ट इव पश्यञ्छृण्वन्मन्वानो विजानन्विज्ञानक्रियाव्यापारारूढो यस्मिञ्छरीरे लक्ष्यते **तत्र** शरीरावच्छिन्नप्राणे वागादयः तदभिमानिनोऽग्न्यादयश्च **सर्वे देवाः सहैकं भवन्ति**। स्वापमूर्च्छामरणध्यानादिकालेष्वभिन्नरूपतां भजन्ति। पुनः प्रबोधकाले त एव विस्फुलिङ्गा इव प्रविभज्यन्ते। **यदक्षरं**

प्राणाख्यमक्षरात्परमात्मनोऽभिन्नं सदिन्द्रिययुक्तशरीरमेति। व्याख्यातमन्यत्। पुष्पफलरूपवाङ्मयवृक्षस्य **यद्वाच ओमिति यच्च नेती**त्युक्तं **यच्चास्या** अकारात्मिकाया वाचः छिन्धि भिन्धीत्यादिलक्षणं **क्रूरं यदु चोल्बणिष्णु** अत्युल्बणमाक्रन्दितं **तत्सर्वं विधूय** परित्यज्य **कवयः प्राणमन्वविन्दन्** लब्धवन्तः। अकारलक्षणायां वाचि **नामायत्ता** नामात्मभावं गता इत्यर्थः। उपलब्धारं प्रज्ञात्मानमैन्द्रमाकाशशरीरं **समतृप्यन् श्रृते** पक्वविज्ञान ईश्वरभावेन **यस्मिन्नामायत्तास्समतृप्यन् श्रृतेऽधि तत्र** तस्मिन्निन्द्रे प्रज्ञात्मनि वागादयोऽग्न्यादयश्च **देवाः सर्वे युजो** युक्ता **भवन्ति** तदात्मतां गच्छन्तीत्यर्थः। "एतमग्निरित्यध्वर्यव उपासते" इत्यादिश्रुतेः। अधुनापि विद्वांस्ते**नैव** मार्गेण नामायत्तस्सन् **पाप्मान**भाविद्यकमपहत्य **ब्रह्मणा**त्मभूतेन **स्वर्गं लोक**मप्यैन्द्रं हैरण्यगर्भमात्मानं प्रतिपद्यत इत्यर्थः। **एनमात्मानं स्त्री**शरीरसंबन्धिनं **स्त्री**शब्देन वदन्नपि न वदति। तथा नपुंसकदेहसंबन्धिनं **न स्त्री नापि पुमान्** नपुंसकोऽयमिति **ब्रुवन्नप्येनं** नपुंसकशब्देन न वदत्येव। तथा पुंशरीरसंबन्धित्वात्पुमानयमिति **वदन्न वदत्येव**। न हि देहधर्मैः कदापि संबध्यते। केन शब्देनासौ बुध्यते? इत्यत्र यथा अकारात्मिका वागुक्ता तथैव वाचा **अः** इत्युच्यते **ब्रह्म**। तदतिरिक्तस्य विसर्जनीयत्वेन निर्देशात्। अत्रास्मिन्नाम्न्यकारात्मिकायां वाचि स्वगृहप्राप्तातिथिरि**वागतमहं**प्रत्ययवेद्यमहमहंशब्दस्याकारपूर्वकत्वे "अहमुक्थमस्मि" इत्युक्तत्वात्। तथा चोक्तं "अकारो वै सर्वा वाक्" इति। सर्वं च ब्रह्म। तस्मादोङ्कार एव ब्रह्मोच्यते। तत्केनचिच्छब्दान्तरेण प्रस्तुतं भवतीत्यत्र **तद्वा इदं बृहतीसहस्रं** इत्याद्युक्तार्थमेतत्। तद्विज्ञानफलं किम्? इत्यत्र जीवाक्षरेणैव सर्वप्राणिजीवनहेतुत्वात् "अशरीरः प्राणः प्रज्ञात्मा", "यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुः" इत्यादिश्रुतेः। तस्य नामाक्षरमकाराक्षरमुक्तं हि ब्रह्मेति। तेन **जीवाक्षरेणैव** यस्मिन्महाव्रतीयाहनि सर्ववाग्रूपेण जीवः स्तूयते। तेन कारणेन **जीवाह**र्महाव्रताख्यं कृत्वात्मान**माप्नोति**। **तेन जीवाह्ना** कृत्वात्मना स्वात्मन्येव सर्वान् विधूयाकाराक्षरं जीवनभूतं सर्वप्राणिनामिन्द्रमाप्नोति। कामतः सर्वो लोको म्रियत इति **काममारः**।

न कामममारोऽकामममारः। अयन्तु न तथाऽनकामममारः। अर्थादयं काममार एव। वागग्न्यादियुक्तो **देवरथः**। कथं **तस्य** रथस्य **वागुद्धिः**? ऊर्ध्वं नीयते तस्मिन्भरद्वाजमित्युद्धिः। चिबुकसंबन्धेन वागुद्धिः संकोचसामान्यात्। **श्रोत्रे पक्षसी** रथचक्रेऽवस्थानसामान्याच्छन्दःसंबन्धाद्वा। अश्वाविव रथयुक्ते **चक्षुषी** ताभ्यां रथो नीयते। मार्गदर्शनहेतुत्वात्। **मनः संग्रहीता** सारथिः। तत्रायं **प्राणो** जीवोऽधितिष्ठति। तदेतद्देवरथकल्पनारूपमृषिणा मन्त्रेणाप्युक्तम्। अनेन यातं मनसो जवीयसा वेगवत्तरेण यं रथं वां युवाभ्यामर्थाय ऋभवो देववर्धकिनश्चक्रुः हे अश्विनौ! तेन यातमित्यर्थः। किञ्चान्योऽपि मन्त्रः **निमिषश्चिज्जवीयसा** रथेन यातमश्विनेति। द्विर्वचनमध्यायपरिसमाप्त्यर्थम्॥ ८॥

इति तृतीयोऽध्यायः

---

# चतुर्थोऽध्यायः

अकर्मिण आत्मयाथात्म्यावगतिः

आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किञ्चन मिषत् स ईक्षत लोकान्नु सृजा इति। स इमांल्लोकानसृजत अम्भो मरीचीर्मरमापोऽदोऽम्भः परेण दिवं द्यौः प्रतिष्ठान्तरिक्षं मरीचयः। पृथिवी मरो या अधस्तात्ता आपः। स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति। सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्। तमभ्यपतत्तस्याभितप्तस्य मुखं निरभिद्यत यथाण्डं मुखाद्वाग्वाचोऽग्निर्नासिके निरभिद्येतां नासिकाभ्यां प्राणः। प्राणाद्वायुरक्षिणी

निरभिद्येतामक्षिभ्यां चक्षुश्चक्षुष आदित्यः कर्णौ निरभिद्येतां कर्णाभ्यां श्रोत्रं श्रोत्राद्दिशस्त्वङ्निरभिद्यत त्वचो लोमानि लोमभ्य ओषधिवनस्पतयो हृदयं निरभिद्यत हृदयान्मनो मनसश्चन्द्रमा नाभिर्निरभिद्यत नाभ्या अपानोऽपानान्मृत्युः शिश्नं निरभिद्यत शिश्नाद्रेतो रेतस आपः ॥ १ ॥

"एष पन्थाः" इत्याद्येतावता ग्रन्थेन ज्ञानकर्मसमुच्चयानुष्ठातॄणामपरब्रह्म विद्या सम्यगभिहिता । नातःपरमस्तीति मेनिरे केचित् । तन्निराकरणाय परब्रह्म विद्येयमारभ्यते—आत्मा वा इति । यतोऽपरविद्यायां बृहतीसहस्रं प्रस्तुत्यानन्त "आत्मा वा" इत्यात्मज्ञानविधानादत आत्मविद्यायां कर्म्येवाधिक्रियत इति चेन्न ब्रह्मविद्यावगतेरपरब्रह्मतज्ज्ञानतत्फलनिराकरणपूर्वकत्वात्परविद्यायामकर्म्येवाधिक्रियते । "दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता" इ प्रवृत्तिलक्षणं कर्म ज्ञानं संन्यासलक्षणं,

ब्रह्मविज्ञानलाभाय परहंससमाह्वयः ।

इति च श्रुतेः । अकर्मिणस्तावदात्मयाथात्म्यावगतय इदमाम्नायते—**आत्म वा इदमिति** । अनात्मतत्कार्यापह्नवसिद्धोऽयम**आत्मा** "अज आत्मा महान् ध्रुवः इति श्रुतेः । वैशब्दः कालत्रयेऽपि निष्प्रतियोगिकत्वद्योतकः "आत्म नोऽन्यन्न किञ्चन" इति श्रुतेः । आत्मातिरेकेण जगतस्सत्वान्निष्प्रतियोगिकत कुतः? इत्याशंक्य परमार्थदृष्ट्यात्मा निष्प्रतियोगिक एव । तथापि स्वाज्ञ दृष्टिविकल्पितनामरूपकर्मात्मक**मिदं** जगदग्रे सृष्टेः प्राक् तत् स्थितिप्रलययोर्रा स्वज्ञदृष्ट्या आत्मैक आसीत् । **एक एवाग्र आसीत्** इत्युक्त्या ततो नास्तीर्ा द्योत्यत इत्यत्रोत्पत्तेः प्रागव्याकृतनामरूपभेदात्मभूतात्मैकत्वशब्दप्रत्ययगोचरमि जगत् । इदानीं तु व्याकृतनामरूपभेदवदनेकप्रत्ययगोचरमात्मैकशब्दप्रत्ययगोच चेति विशेषः । यथा फेनादिव्याकरणात्प्राक् फेनादिकं सलिलैकशब्दप्रत्यय गोचरं यदा सलिलात्पृथक्त्वेन फेनं व्याकृतं तदा फेनं सलिलं चो

व्यवह्रीयते। वस्तुतः फेनादिकं जलमात्रम्। तद्वत्फेनस्थानीयजगत् सत्त्वासत्त्वाभ्यामात्ममात्रम्। तदतिरेकेण **नान्यत्किञ्चन** किञ्चिदपि **मिषद्व्या**पारवन्नास्त्येव। "मद्व्यतिरिक्तमणुमात्रं न विद्यते" इति श्रुतेः। तथापि स्वाज्ञविकल्पितमूलाविद्याबीजांशावष्टम्भतः सर्वज्ञेशो भूत्वा **स ईक्षत** प्राणिकर्मफलोपभोगस्थानभूतान् **लोकान्नु सृजे**यमित्येवमालोचनं कृतवान्। एवमीक्षित्वा **सोऽयमात्मा इमान् लोकानसृजत** सलिलविकल्पितफेनादिवत् स्वविकल्पितनामरूपोपादानभूतस्सन् जगन्निर्मिमीत इत्यर्थः। यद्वा—मायाविवदात्मानमेव जगद्रूपेण निर्मिमीते।

स्वयमेव जगद्भूत्वा प्राविशज्जीवरूपतः।

इति श्रुतेः। कान् लोकानसृजत? इत्यत आह—**अम्भो मरीचीर्मरमाप** इति। "आत्मन आकाशः संभूतः" इत्यादिक्रमेणाण्डमुत्पाद्याम्भःप्रभृतीन् लोकानसृजत। श्रुतिरम्भःप्रभृतीनि चत्वारि पदानि स्वयमेव व्याचष्टे—**अद** इति। तदन्तःशब्दवाच्यो लोकः। **परेण दिवं** द्युलोकात्परस्तात् **सोऽम्भः**शब्दवाच्यः। तस्याम्भसो लोकस्य **द्यौः प्रतिष्ठा** आश्रयत्वात्। द्युलोकादधस्ताद्यद**न्तरिक्षं** तन्**मरीचयः** स्थानभेदाद्बहुवचनमन्तरिक्षस्य मरीचिसंबन्धाद्वा। म्रियन्तेऽस्मिन् भूतानीति **पृथिवी मरः**। **याः** पृथिव्या **अधस्ताद्वि**द्यन्ते **ता आप** उच्यन्ते। यद्यपि लोकानां पञ्चभूतात्मकत्वं तथाप्यब्बाहुल्यादम्भो मरीचीर्मरमाप इत्यबादिनामभिः निर्देशः कृतः। अथ **स ईक्षतेमे नु लोका लोकपालान्नु सृजा इति**। मत्सृष्टाम्भःप्रभृतिलोकानां पालयित्रभावे तानि नश्येयुरिति तत्पालनार्थं लोकानां पालयितॄनिन्द्रादीन्नु सृजै सृजेयमितीक्षित्वा योऽद्भ्यः पञ्चभूतेभ्योऽम्भःप्रभृतिलोकान् सृष्टवान्। **सोऽद्भ्य** एवाप्प्रधानपञ्चभूतेभ्यः शिरःपाण्यादिमन्तं **पुरुषं समुद्धृत्य** कुलालो मृत्पिण्डमिवा**मूर्च्छयत्** स्वावयवसंयोजनेन पिण्डितवानित्यर्थः। **तं** पिण्डमुद्दिश्या**भ्यतपत्** अभिधानं सङ्कल्पं कृतवान्। "यस्य ज्ञानमयं तपः" इति श्रुतेः। **तस्येश्वरसङ्कल्परूपतपसाभितप्तस्य मुखं निरभिद्यत**। मुखाकारं सुषिरमजायत। **यथा** पक्षिणोऽण्डं तथा तस्मान्निर्भिण्णमुखाद्वागिन्द्रियं निरवर्तत। **वाचोऽग्नि**र्वागधिष्ठाता लोकपालः। तथा

**नासिके निरभिद्येताम्**। **नासिकाभ्यां प्राणः प्राणाद्वायुरिति**। सर्वत्राधिष्ठानं करणं देवता चेति त्रयं क्रमेण निर्भिण्णमिति ज्ञातव्यम्। तथा**क्षिणी कर्णौ** तथा त्वक् तथा हृदयं अन्तःकरणमित्यर्थः। तथा **नाभिस्तस्यास्सर्वप्राण**-बन्धनस्थानत्वात्। अपानशब्देन पाय्विन्द्रियमुच्यते। तदधिष्ठाता **मृत्युः**। तथा **शिश्नं** निरभिद्यत। तस्माद्रेतस्तस्मादाप इति ॥ १ ॥

अन्नान्नादशक्तिसृष्टिः

ता एता देवताः सृष्टा अस्मिन्महत्यर्णवे प्रापतंस्तमशनापिपासाभ्यामन्ववार्जत्। ता एनमब्रुवन्नायतनं नः प्रजानीहि यस्मिन् प्रतिष्ठिता अन्नमदामेति। ताभ्यो गामानयत्ता अब्रुवन्न वै नोऽयमलमिति। ताभ्योऽश्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति। ताभ्यः पुरुषमानयत्ता अब्रुवन् सुकृतं बतेति पुरुषो वाव सुकृतम्। ता अब्रवीद्यथायतनं प्रविशतेति। अग्निर्वाग्भूत्वा मुखं प्राविशद्वायुः प्राणो भूत्वा नासिके प्राविशदादित्यश्चक्षुर्भूत्वा अक्षिणी प्राविशद्दिशः श्रोत्रं भूत्वा कर्णौ प्राविशन्नोषधिवनस्पतयो लोमानि भूत्वा त्वचं प्राविशंश्चन्द्रमा मनो भूत्वा हृदयं प्राविशन्मृत्युरपानो भूत्वा नाभिं प्राविशदापो रेतो भूत्वा शिश्नं प्राविशन्। तमशनापिपासे अब्रूतामावाभ्यामभि प्रजानीहि इति। ते अब्रवीदेतास्वेव वां देवतास्वाभजाम्येतासु भागिन्यौ करोमीति। तस्माद्यस्यै कस्यै च देवतायै हविर्दीयते भागिन्यावेवास्यामशनापिपासे भवतः ॥ २ ॥

स्वसृष्टलोकपालादीनामन्नमन्नादशक्तिं च सृष्टवानित्याह—**ता** इति। **ता एता** अग्न्यादयो **देवता** ईश्वरेण लोकपालत्वेन सङ्कल्प्य **सृष्टाः सत्यः**

**अस्मिन्महति** संसारार्णवे बन्धमोक्षहेतुकामादिशमादिसंकुले **प्रापतन्** पतितवत्य इत्यर्थः । यतः अग्न्यादिदेवा अपि संसारार्णवे पतिता अतः कर्मज्ञानसमुच्चयानुष्ठानफलभूतदेवताप्ययलक्षणा या अपरविद्या व्याख्याता सापि स्वातिरिक्तसंसारोपशमनाय न पर्याप्ता । तस्मात् "आत्मा वा इदम्" इत्यारभ्य "प्रज्ञानं ब्रह्म" इत्यन्तश्रुत्यर्थाविष्करणसिद्धपरमात्मविद्यातत्त्वज्ञानं स्वमात्रावस्थानलक्षणकैवल्याप्तये पर्याप्तम् । "नान्यः पन्था विद्यतेऽयनाय" इति मन्त्रवर्णात् । स्थानकरणदेवतोत्पत्तिबीजभूतं **तं** पिण्डात्मानं पुरुष**मशनापिपासाभ्यामन्ववार्जत्** संयोजितवानित्यर्थः । स्वकारणभूतस्याशनायादिदोषवत्त्वेन तत्कार्यभूतदेवतानामप्यशनायादिमत्त्वात्ततस्**ता** अशनायापिपासाभ्यां पीड्यमानाः सत्यः एवं स्वस्थितिकारणपिण्डस्रष्टारमीश्वर**मब्रुवन्नु**क्तवत्यः । किम्? इत्यत आह—**आयतन**मिति । वयं **यस्मिन्नायतने प्रतिष्ठिताः** सत्यः **अन्नमदाम नोऽस्म**भ्यं तदा**यतनम**धिष्ठानं **प्रजानीहि** विधत्स्व । ताभिरेवमुक्त ईश्वरस्**ताभ्यो** देवताभ्यो **गां** पूर्ववदद्भ्य एव गवाकृतिपिण्डमुद्धृत्या**नय**द्दर्शितवान् । ताः पुनर्गवाकृतिपिण्डं दृष्ट्वा **न वै नो**ऽस्मदर्थमधिष्ठायान्नमत्तु**मयं** गवाकृतिपिण्डः अलमेतदधिष्ठायात्तुं न पर्याप्तो न योग्य इत्यर्थः । ताभिः प्रत्याख्याते गवि ततस्तथैवा**श्वमानयत्ता अब्रुवन्न वै नोऽयमलमिति** । पूर्ववत्ताभिरश्वेऽपि प्रत्याख्याते पुन**स्ताभ्यः पुरुषमानयत्ताः** स्वयोनिभूतं पुरुषं दृष्ट्वा हृष्टाः सत्यः **सुकृतं** शोभनकृतं इदमधिष्ठानं **बतेत्यब्रुवन्** । तस्मात्पु**रुषो वाव** स एव **सुकृतं** पुण्यकर्महेतुत्वात् । स्वकृतत्वात्सुकृतमिति वा । **ता** देवताः प्रतीश्वर एवम**ब्रवीत्** । किमिति? **यथायतनं प्रविशतेति** । यद्यस्य यथायोग्यमायतनं प्रविशतेतीश्वरेणाज्ञप्ताः सत्यः नगर्यां प्रभुभृत्या इव यथायोग्यं प्रविष्टा इत्याह—**अग्निरिति** । वागभिमान्य**ग्निर्वा**गेव **भूत्वा मुखं प्राविश**दित्युक्तार्थमन्यत् । **वायुर्नासिके आदित्योऽक्षिणी दिशः कर्णौ ओषधिवनस्पतयस्त्वचं चन्द्रमा हृदयं मनो मृत्युर्नाभिं आपः शिश्नं प्राविशन्** । एवं लब्धायतनासु देवतासु निरधिष्ठाने **अशनापिपासे तमीश्वरमब्रूतामावाभ्या**मधिष्ठानं **अभिप्रजानीहि** विधत्स्वेत्यर्थः । सोऽयमीश्वरस्ताभ्यामेवमुक्तस्सन् **ते** अशनापिपासे **अब्रवीत्** । न हि युवयोरमूर्तत्वेन

मूर्तवच्चेतनावद्वस्त्वनाश्रित्य अन्नात्तृत्वं संभवति। तस्मादग्न्यादिदेवतास्वेव **वां** युवामध्यात्माधिदेवतासु **आभजामि** तद्विभागेनानुगृह्णामि। हविरादिलक्षणो यद्दैवत्यो यो भागस्तद्भागेन **भागिन्यौ** युवां **करोमीतीश्वरः** सृष्ट्यादावेवं व्यदधात्। यस्मात्तस्मादिदानीमपि **यस्यै कस्यै च देवतायै** चरुपुरोडाशादिलक्षणं **हविर्दीयते गृह्यते तत्र भागिन्यावेवास्यां** देवतायाम**शनापिपासे भवत** इति ॥ २ ॥

अन्नसृष्ट्या लोकार्तिमोचनम्

स ईक्षतेमे नु लोकाश्च लोकपालाः चान्नमेभ्यः सृजा इति। सोऽपोऽभ्यतपत् ताभ्योऽभितप्ताभ्यो मूर्तिरजायत। या वै सा मूर्तिः अजायतान्नं वै तत्। तदेनत्सृष्टं पराङत्यजिघांसत् तद्वाचाजिघृक्षत् तन्नाशक्नोद्वाचा ग्रहीतुम्। स यद्धैनद्वाचाग्रहैष्यदभिव्याहृत्य हैवान्नमत्रप्स्यत्। तत्प्राणेनाजिघृक्षत् तन्नाशक्नोत् प्राणेन ग्रहीतुम्। स यद्धैनत्प्राणेनाग्रहैष्यदभिप्राण्य हैवान्नमत्रप्स्यत्। तच्चक्षुषाजिघृक्षत् तन्नाशक्नोच्चक्षुषा ग्रहीतुम्। स यद्धैनच्चक्षुषाग्रहैष्यद्दृष्ट्वा हैवान्नमत्रप्स्यत्। तच्छ्रोत्रेणाजिघृक्षत् तन्नाशक्नोच्छ्रोत्रेण ग्रहीतुम्। स यद्धैनच्छ्रोत्रेणाग्रहैष्यच्छ्रुत्वा हैवान्नमत्रप्स्यत्। तत्त्वचाजिघृक्षत् तन्नाशक्नोत्त्वचा ग्रहीतुम्। स यद्धैनत्त्वचाग्रहैष्यत्स्पृष्ट्वा हैवान्नमत्रप्स्यत। तन्मनसाजिघृक्षत् तन्नाशक्नोन्मनसा ग्रहीतुम्। स यद्धैनन्मनसाग्रहैष्यत् ध्यात्वा हैवान्नमत्रप्स्यत। तच्छिश्नेनाजिघृक्षत् तन्नाशक्नोच्छिश्नेन ग्रहीतुम्। स यद्धैनच्छिश्नेनाग्रहैष्यद्विसृज्य हैवान्नमत्रप्स्यत। तदपानेनाजिघृक्षत् तदावयत्। सैषोऽन्नस्य ग्रहो

यद्वायुरन्नमायुर्वा एष यद्वायुः । स ईक्षत कथं न्विदं मदृते स्यादिति स ईक्षत कतरेण प्रपद्या इति स ईक्षत यदि वाचाभिव्याहृतं यदि प्राणेनाभिप्राणितं यदि चक्षुषा दृष्टं यदि श्रोत्रेण श्रुतं यदि त्वचा स्पृष्टं यदि मनसा ध्यातं यद्यपानेनाभ्यपानितं यदि शिश्नेन विसृष्टमथ कोऽहमिति । स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत । सैषा विदृतिर्नाम द्वास्तदेतन्नान्दनम् । तस्य त्रय आवसथाः त्रयः स्वप्नाः अयमावसथोऽयमावसथोऽयमावसथ इति । स जातो भूतान्यभिव्यैख्यत् किमिहान्यं वावदिष्यदिति । स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिती ३ । तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण । परोक्षप्रिया इव हि देवाः परोक्षप्रिया इव हि देवाः ॥ ३ ॥

मत्सृष्टलोकलोकपालानामशनायाद्यर्दितत्वेन तत्स्थितिनिमित्तमन्नं सृष्ट्वा स्वसृष्टलोकानुप्रवेशपूर्वकं तदार्तिं मोचयतीत्याह—स ईक्षत इति । सोऽयमीश्वर ईक्षत । किमिति ? मया इमे लोका लोकपालाश्च सृष्टाः अशनायापिपासाभ्यां संयोजिताश्च । तेषां स्थितिरन्नमन्तरेण यतो न भवेदतः एभ्यो लोकपालेभ्योऽन्नं सृजा इत्येवमीक्षितवानित्यर्थः । सोऽयं स्वतन्त्रेश्वर एभ्योऽन्नं सिसृक्षुः सन् पूर्वोक्ता अपः उद्दिश्याभ्यतपत् । ताभ्योऽभितप्ताभ्यः उपादानभूताभ्यः चराचरलक्षणेयं मूर्तिरजायत । या वै सा मूर्तिरजायत । तदेनदन्नमन्नाद्यभिमुखे सृष्टं सन्मार्जारदृष्टिगोचरमूषिकवदयमन्नादो मम मृत्युरिति मत्वात्तारमतीत्य परागच्छतीति पराङ् । तद्गोचरमतीत्य अजिघांसत् पालयितुमैच्छत् । तदन्नाभिप्रायं मत्वा लोकलोकपालाश्रयः सोऽयं पिण्डस्तस्य प्रथमजत्वेन स्वातिरिक्तान्नादवैरल्येन च तदन्नं वाचा वचनक्रिययाजिघृक्षत् ग्रहीतुमैच्छत् ।

तदन्नं वाचा ग्रहीतुं नाशक्नोत् न समर्थः अभवत्। स यद्धैनदन्नं वाचाग्रहैष्यत् यदि गृहीतवान् स्यात्तदा तत्कार्यलोकोऽप्यन्नमन्नमित्यभिव्याहृत्यात्रप्स्यत्तृप्तोऽभविष्यत्। न चैतदस्ति। अतो वाचा ग्रहीतुं नाशक्नोदित्यन्यत्रैवं योजनीयम्। तत्प्राणेन तच्चक्षुषा तच्छ्रोत्रेण तत्त्वचा तन्मनसा तच्छिश्नेनेति तत्तत्करणव्यापारेणान्नं ग्रहीतुमशक्नुवन् सन् पश्चान्मुखच्छिद्रगतापानवायुना तदन्नमभिजिघृक्षत्। तदावयत्तदेवान्नं जग्राहाशितवान्। तेनासावपानोऽन्नग्राहको भवति। यद्वायुः यो वायुर्लोकोऽयमन्नायुर्वा एष यद्वायुः लोकजीवनस्यान्ननिमित्तत्वादिति। लोकप्रसिद्धिद्योतको वैशब्दः। पुनः सोऽयमीश्वरो लोकलोकपालस्थितिमन्ननिमित्तां विधाय पुरपौरतत्पालयितृस्थितिवत्तत्स्वामी ईक्षत। नु इति वितर्कयन् कथं नु केन प्रकारेणेदं मदृते सङ्घातपुरस्वामिनं मां विना स्पन्दितुमिदं समर्थं भवेत्? मदतिरिक्तस्य पदार्थत्वेनाचेतनत्वान्मां स्वामिनं चेतनमन्तरेणतत्सङ्घातं यदि वाचाभिव्याहृतमित्यादि व्यापृतिसमर्थं भवेत्तदा कोऽहं कस्य वा स्वामी? यद्यहं सङ्घातमनुप्रविश्य वागाद्यभिव्याहृतादिफलं नोपलभेयं तदा न कोऽपि मां जानीयात्। यद्यहं संघाते प्रविश्य तत्तत्करणप्रवृत्तिनिमित्तं स्यां तदा खलु मुमुक्षुभिर्ज्ञातुं शक्यो भवेयमितीक्षित्वाथ कार्यकरणसंघातान्तःप्रवेशमार्गौ प्रपदं मूर्धा चेति द्वावेव खलु। अनयोः कतरेण मार्गेण संघातलक्षणं पुरं प्रपद्य इतीक्षित्वा तत्र प्रपदयोः मद्भृत्यप्रवेशद्वारत्वात्तद्द्वारप्रवेशनं न हि रमणीयम्। किन्तत्? पारिशेष्यादस्य पिण्डस्य मूर्धन्यसीमानं केशविभागावसानं विदार्य छिद्रं कृत्वा एतया द्वारेमं पिण्डं प्रापद्यत प्रविवेश। सेयं द्वार्हि प्रसिद्धा। अत एव मूर्ध्नि तैलधारणतः तत्सारमन्तः प्रविशतीत्यनुभवात्। सैषा विदारितत्वाद्विद्दतिः। विद्दतिर्नाम प्रसिद्धा द्वाः पुरस्वामिप्रवेशहेतुत्वात्। भृत्यादिस्थानानि हि श्रोत्रादिद्वाराणि नानन्दहेतूनि। इदं परमेश्वरस्येति यत्तदेतन्नान्दनम्। नन्दनमेव नान्दनमित्यत्र दीर्घं छान्दसम्। एतद्द्वारतो निर्गच्छतोऽमृतत्वश्रवणात्। "तयोर्ध्वमायन्नमृतत्वमेति" इति श्रुतेः। पुरं निर्माय राजप्रवेशवदेवं समस्तलोकलोकपालान् सृष्ट्वा जीवात्मना प्रविष्टस्य तस्यात्मनो जाग्रत्स्वप्नसुषुप्तिभेदेन त्रय आवसथाः पुरुषनेत्रकण्ठहृदयाश्रया ह्यवस्थाः—

नेत्रस्थं जागरितं विद्यात्कण्ठे स्वप्नं समाविशेत् ।
सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितम् ॥

इति श्रुतेः । यद्वा—पितृशरीरं मातृगर्भाशयं स्वशरीरं च त्रय आवसथाः । स्थूलसूक्ष्मबीजप्रपञ्चाः **त्रयः स्वप्नाः** । स्थूलप्रपञ्चादेः प्रबोधरूपत्वात्स्वप्नत्वं कथं? इति चेन्न; तदावृतदृष्टेः परमार्थप्रबोधाभावात्स्वप्नत्वं सिद्धमित्यर्थः । दक्षिणं चक्षुर्मुखञ्च **प्रथमावसथः** । मनोऽन्तरं द्वितीयः । हृदयमाकाशश्चायं **तृतीयावसथः** । इत्युक्तावसथत्रयेऽपि पर्यायेणात्मानुवर्तते । दीर्घकालं स्वाविद्यां गाढमालिंग्य प्रसुप्तस्सन्नात्मा स्वात्मानं यथावन्न प्रतिबुध्यते । **सोऽयमात्मा**नेकशो **जातो भूतान्यभिव्यैख्यत्** बहुधा व्याकरोत् । स कदाचिदनेकजन्मार्जित-सुकृतपरिपाकलब्धचरमजन्मनि देशिकमुखोदितवेदान्तजातश्रवणमननिदिध्या-सनप्रभवसम्यज्ज्ञानसमकालं निष्प्रतियोगिकब्रह्ममात्रातिरिक्तं **किमिहान्यमन्यद्वाव-दिष्यत्** वक्तव्यमासीदिति निश्चित्य यः "आत्मा वा इदमेक एवाग्र आ-सीत्" इत्युक्तः **सोऽयं** स्वातिरिक्तानात्मापह्नवसिद्धपरमात्मा हि स्वाज्ञदृष्टिप्रसक्त-सृष्ट्यादिकर्तृत्वेन यः प्रकृतः **तमेव** पुरिशयनात्सर्वत्र पूर्णत्वाद्वा **पुरुषं ब्रह्म** बृहत्तमत्वात्ततमं तततमं व्यापकतमं तकारलोपः छान्दसः तमेतमेव पुरुषं स्वमात्रमिति **प्रत्यबुद्ध्यतापश्यत्** । कथमपश्यत्? इत्यत्र **इदं** सर्वापह्नवसिद्धं **ब्रह्म** निष्प्रतियोगिकस्वमात्रमिति **अदर्शं** दृष्टवानस्मि । **इति**शब्दतो अहो! मद्धन्यतेति द्योत्यते । यस्मादात्मानमपरोक्षतयापश्यत् **तस्मादिदं** पश्यतीति **इदन्द्रो नाम** परमात्मा । लोके **इदन्द्रो ह वै नामेति** प्रसिद्धः परमात्मा । **तमेवमिदन्द्रं सन्तं** ब्रह्मविद **इन्द्र इत्याचक्षते** । व्यावहारिकदृष्ट्येत्यर्थः । **परोक्षनामग्रहणप्रिया हि** यस्माद्देवाः । किमु सर्वदेवानामपि देवो महेश्वरः? "तमीश्वराणां परमं महेश्वरम्" इति श्रुतेः । द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥ ३ ॥

**इति चतुर्थोऽध्यायः**

# पञ्चमोऽध्यायः

आत्मोत्पत्तिः कैवल्यस्वरूपं च

अपक्रामत गर्भिण्यः । पुरुषे ह वा अयमादितो गर्भो भवति । यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यः तेजः संभूतमात्मन्येवात्मानं बिभर्ति तद्यदा स्त्रियां सिञ्चत्यथैनं जनयति तदस्य प्रथमं जन्म । तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गं तथा तस्मादेनां न हिनस्ति सास्यैतमात्मानमत्र गतं भावयति । सा भावयित्री भावयितव्या भवति तं स्त्री गर्भं बिभर्ति सोऽग्र एव कुमारं जन्मनोऽग्रेऽधिभावयति स यत्कुमारं जन्मनोऽग्रेऽधिभावयत्यात्मानमेव तद्भावयत्येषां लोकानां सन्तत्या एवं सन्तता हीमे लोकास्तदस्य द्वितीयं जन्म । सोऽस्यायमात्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते । अथास्यायमितर आत्मा कृतकृत्यो वयोगतः प्रैति स इतः प्रयन्नेव पुनर्जायते तदस्य तृतीयं जन्म । तदुक्तमृषिणा—गर्भे नु सन्नन्वेषामवेदमहं देवानां जनिमानि विश्वा । शतं मा पुर आयसीररक्षन्नधः श्येनो जवसा निरदीयमिति गर्भ एवैतच्छयानो वामदेव एवमुवाच । स एवं विद्वानस्माच्छरीरभेदादूर्ध्व उत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वामृतः समभवदमृतः समभवत् ॥

"आत्मा वा इदम्" इति चतुर्थाध्यायप्रकृत आत्मा स्वातिरिक्तानात्मापह्नवसिद्धोऽपि स्वाज्ञादिदृक्षया जगदुत्पत्तिस्थितिभङ्गकृदीश्वरः सर्वज्ञो भूत्वा किञ्चिदप्यनुपादायाकाशादिक्रमेणेमं लोकं सृष्ट्वा स्वात्मप्रबोधार्थं स्वाप्रविष्टप्रदेशाभावेऽपि

सर्वप्राणादिमच्छरीरजातं प्रविश्य स्वात्मानं ब्रह्माहमस्मीति यथाभूतं प्रत्यबुध्यत। तस्मात्सर्वशरीरेष्वेक एवात्मा न ह्यात्मान्तरमस्ति। एवं यो मन्योऽप्यात्मानं ब्रह्माहमस्मीति वेद चेत्सोऽपि ब्रह्मैव भवतीत्यत्र "आत्मा वा इदम्" इत्युपक्रम्य "स एतमेव पुरुषं ब्रह्म ततममपश्यत्" इत्युक्तम्। स्वात्मनः स्वाप्रविष्टदेशवत्त्वे कथमात्मा पिपीलिकेव सुषिरं सीमानं विदार्य प्रापद्यत? इति चेन्न; प्रवेशस्यात्मैकत्वप्रबोधार्थत्वात्। न हि तस्यानन्तशक्तेरिदं चोद्यं भवितुमर्हति। बह्वत्र चोदयितव्यस्य विद्यमानत्वात्। तत्किं न जानीषे? पश्यैतदीश्वरे चोद्यजातम्। अकरणः सन्नीक्षत। किञ्चनानुपादाय लोकानसृजत। सोऽद्भ्य एव पुरुषं समुद्धृत्यामूर्च्छयत्। तस्याभिध्यानान्मुखादि निर्भिण्णम्। मुखादिभ्यश्चाग्न्यादयो लोकपालास्तेषामशनायादिसंयोजनं तदायतनप्रार्थनं तदर्थे वागादिप्रदर्शनं तेषां तदायतनप्रवेशनं सृष्टस्यान्नस्य पलायनं वागादिभिः तज्जिघृक्षेत्यादिचोद्यजातम्। ईश्वरे न हि चोद्यम्। एतत्सर्वं सीमाविदारणप्रवेशवदनुपपन्नमिति चेन्न; तस्य महामायावित्वेन तत्कृतैतादृशचोद्यानां तत्पदाप्तिहेतुबोधार्थत्वादेतत्सर्वं युक्ततममेव। एतच्चोद्यपरिज्ञाने किं फलमिति चेन्न; सर्वभूतेष्वात्मैकत्ववेदनपूर्वकं सर्वभूतगतहेयांशापह्नवसिद्धात्ममात्रावबोधसमकालं कैवल्यफलसिद्धेः। तथा च श्रुतिः— "ब्रह्म वेद ब्रह्मैव भवति", "नेति नेति", "न ह्येतस्मादिति", "नेत्यन्यत्परमस्ति", "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्", "अयमात्मा ब्रह्म सर्वानुभूः", "यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत्" इत्यादिवेदान्तशास्त्रमात्ममात्रावगत्यर्थं प्रवृत्तम्। यावदेवं स्वात्मयाथात्म्यं न वेत्त्ययं लोकस्तावत्स्वाविद्याविजृम्भितोपाधिषु ब्रह्मादिस्तम्बान्तेषु घटीयन्त्रवत् पुनः पुनरावर्तमानः सन्नविश्रान्तं संसरति। मुहुर्मुहुः स्वात्तोपाधिं परित्यज्य पुनः पुनः प्राप्यान्नभूतः सन् पुरुषाग्नौ हुत इत्याद्यर्थप्रदर्शनार्थं पञ्चमाध्याय आरभ्यते—अपक्रामतेति। यथास्थानं **गर्भिण्यः**। अयमध्यायोऽसंपूर्णगर्भिणीभिः न जात्वपि श्रोतव्यः। श्रुतश्चेद्गर्भपातो भवेत्। इति वेदपाठकानां संप्रदायवचनमेतत्। पुरा योऽन्नभूतः पुरुषाग्नौ हुतः सोऽयं तस्मिन्पुरुषे ह वै अन्नरसादिक्रमेणादितः प्रथमं रेतोरूपेण गर्भो भवति। यदेतत्पुरुषे रेतः तदेतदन्नमयपिण्डस्य सर्वेभ्योऽङ्गेभ्यः

**तेजः** सारभूतं **संभूतं** परिनिष्पन्नमित्यर्थः। तस्य पुरुषात्मभूतत्वात्तं रेतोरूपात्मानं **आत्मन्येव** स्वशरीरे **बिभर्ति**। **तद्रेतो यदा** यस्मिन्काले योषाग्नौ **स्त्रियां** भार्यायां **सिञ्चति, अथ** तदेतद्रेत आत्मनो गर्भं **जनयति**। पितृजठरे**ऽस्य** संसारिणः **प्रथमं जन्म** प्रथमाभिव्यक्तत्वात्। तदेतदसावात्मासुमात्मानमित्यादिना पुरस्तादेवोक्तम्। **तद्रेतो** यस्यां सिक्तं सत्तस्याः **स्त्रियाः** रेतोरूपेण पितुः शरीरे इवा**त्मभूयमा**त्मव्यतिरिक्ततां **गच्छति**। **यथा** स्तनादिकं **स्वमङ्गं तथा** गर्भं **एनां** मातरं **न हिनस्ति** पिटकादिवत्। यथा मध्यनिष्पन्नस्तनमात्मभूयं गत्वा न हिनस्ति तथैनामयं गर्भ इत्यर्थः। सान्तर्वर्ती **अस्य** भर्तुः रेतोरूपमात्मानमत्र स्वजठरे **गतं** बुद्ध्वा **भावयति**। गर्भविरोध्यशनवर्जनपूर्वकं तदनुकूलान्नाद्युपायतः पालयतीत्यर्थः। **सा भावयित्री** वर्धयित्री स्वभर्त्रा स्वरेतःसंबन्धतया **भावयितव्या भवति**। न ह्युपकारः प्रत्युपकारमन्तरा भवति। यथोक्तेन विधिना **तं स्त्री गर्भं बिभर्ति**। **सोऽयं** पिता यत्**कुमार**जन्म तस्या**ग्रे** पूर्वं जातकर्मादिना **भावयति**। **यद्भावयत्येवं** तदात्मानमेव **तद्भावयति**। पितुरात्मैव हि पुत्ररूपेण जायते। पत्युर्जायायां रेतोरूपेण प्रविश्य पुत्ररूपेण निर्गतत्वात् "आत्मा वै पुत्र नामासि" इति श्रुतेः। किमर्थमात्मानं पुत्ररूपेण जनयित्वा भावयति? इत्यत्र **एषां लोकानां सन्तत्यै** सन्तत्यभावे **लोका** विच्छिद्यन्त इति। तदर्थ**मेवं** पुत्राद्युत्पादनपूर्वकं **हीमे लोकाः सन्तताः** तस्मात्सन्तत्यविच्छेदः कर्तव्यः। तस्य संसारिणः कुमाररूपेण मातुरुदराद्यन्निर्गमनं तद्रेतोरूपापेक्षया **द्वितीयं जन्म** द्वितीयावस्थाभिव्यक्तिः। **अस्य** पितुः सकाशात् यो जातः **सोऽयं पुत्रात्मा** शास्त्रीयपुण्येभ्यः **कर्मभ्यस्त**न्निष्पादनार्थं **प्रतिधीयते**। पितुः स्थाने पित्रा यत्कर्तव्यं तत्करणाय तत्स्वाय च प्रतिधीयते। **अथानन्तरमात्मनो** भारं पुत्रे निवेश्य **अस्य** पुत्र**स्येतरो** यः **पित्रात्मा कृतकृत्यः** सन् व**योगतः** **जीर्णः** सन् **प्रैति म्रियते**। **स इतोऽस्मात्प्रयन्नेव** शरीरं परित्यजन्नेव तृणजलूकावद्देहान्तरमुपाददानस्सन् **पुनर्जायते**। मृत्वा प्रतिपत्तव्यं यत्तदस्य **तृतीयं जन्म**। **पितुः सकाशाद्रेतोरूपेण** प्रथमं जन्म। तस्यैव मातृगर्भाशयात्

द्वितीयं जन्मोक्तम्। तस्यैव तृतीये जन्मनि वक्तव्ये मृतस्य पितुर्यज्जन्म तदेव तृतीयं जन्मेति कथमुच्यते? इति चेन्न; पितापुत्रयोरेकात्मत्वस्य विवक्षितत्वात्। सोऽपि पुत्रः स्वपुत्रे भारं निवेश्येतः प्रयन्नेव पुनर्जायते यथा पिता। अन्यतरत्रोक्त इतरत्राप्युक्तमेव भवतीति मन्यते श्रुतिः। पितापुत्रयो-रेकात्मत्वविवक्षा हि श्रुतेरभिप्रायः। एवं घटीयन्त्रवज्जननमरणादिसंसारे लोकोऽयं परिभ्रमति। एवमनेकेषु सत्सु कश्चिदनन्तकोटिजन्मसुकृतपरिपाकलब्धचरम-जन्मा श्रुत्याचार्यप्रसादतः स्वात्मयाथात्म्यं विदित्वा तद्वेदनसमकालं कृतकृत्यो भवतीत्येतमर्थमृषिणा मन्त्रेणाप्युक्तमित्याह—**तदुक्तमृषिणेति**। वामदेवो मुनि-र्महानुभावोऽनेकजन्मार्जितपुण्यपुञ्जप्रभावतः श्रुत्याचार्यप्रसादलब्धविज्ञानं गर्भ एव लब्धवानित्याह—**गर्भ** इति। अनेकजन्मभावनापरिपाकवशात् **नु** इति वितर्के। मातु**र्गर्भे** एव **वसन्** वामदेवः एवं प्रत्यबुध्यत। **एषां** वागग्न्यादि-**देवानां जनिमानि** जन्मानि **विश्वा** विश्वानि सर्वाणि **अवेदमहमनु**प्रबुद्धवानस्मि। **शत**मनेका **आयसी**रायस्यो लोहमय्य इव शरीरावृतयः **पुरः** पुरा **मां मा अरक्षन्** रक्षितवत्यः। इतः परमथ संसारनिर्गमनाय **श्येन** इवावारकजालं भित्त्वा **जवसा** आत्मज्ञानकृतसामर्थ्येन **निरदीयं** निर्गतोऽस्मि। अहो! गर्भ **एव शयानो वामदेव ऋषिरेवमुवाच**। **सोऽयं** वामदेव ऋषिरात्मयाथात्म्यं स्वातिरिक्तानात्मापह्नवसिद्धमात्ममात्रं स्वावशेषतया **विद्वान्** सन् तद्वेदनसमकाल-**मस्मात्**स्वाज्ञदृष्टिविजृम्भित**शरीर**बीज**भेदाद**पह्नवतां गतादू**र्ध्व उत्क्रम्य** सर्वोर्ध्व-रूपब्रह्ममात्रनिश्चयमासाद्या**मुष्मिन्** सच्चिदानन्दलक्षणाखण्डैकरसे **स्वर्गे लोके** स्वा-त्मनि ब्रह्ममात्रे स्वाज्ञदृष्टिविकल्पितजीवन्मुक्तिदशायामेव स्वातिरिक्त**सर्वान्कामान्** ब्रह्ममात्रपर्यवसन्नतया**प्त्वा** निष्प्रतियोगिका**मृतः** परमात्मा **समभवत्**। विदेह-मुक्तोऽभवदित्यर्थः। द्विर्वचनमध्यायपरिसमाप्त्यर्थम्॥

**इति पञ्चमोऽध्यायः**

---

# षष्ठोऽध्यायः

## ब्रह्मयाथात्म्यविचारः

कोऽयमात्मा ? इति वयमुपास्महे कतरः स आत्मा ? येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वा वाचं व्याकरोति येन वा स्वादु चास्वादु च विजानाति । यदेतद्धृदयं मनश्चैतत् । संज्ञानमाज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिः धृतिः मतिर्मनीषा जूतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति । एष ब्रह्मैष इन्द्र एष प्रजापतिः एते सर्वे देवा इमानि च पञ्च महाभूतानि पृथिवी वायुराकाश आपो ज्योतींषीत्येतानि इमानि च क्षुद्रमिश्राणीव । बीजानि इतराणि चेतराणि चाण्डजानि च जारुजानि च स्वेदजानि चोद्भिज्जानि चाश्वा गावः पुरुषा हस्तिनो यत्किञ्चेदं प्राणि जङ्गमं च पतत्रि च यच्च स्थावरं सर्वं तत्प्रज्ञानेत्रं प्रज्ञाने प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म । स एतेन प्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वामृतः समभवदमृतः समभवत् ॥

ब्रह्मविद्यासाधननिष्पन्नब्रह्ममात्रावस्थानलक्षणकैवल्यस्वरूपं वामदेवाद्याचार्यपरम्परया श्रुत्वाधुना ब्रह्मजिज्ञासवो मुमुक्षवो ब्रह्मयाथात्म्यं विचारयन्तः सन्तोऽन्योन्यं बुभुत्सवः पृच्छन्ति—**कोऽयम्** ? इति । व्यष्टिसमष्ट्यात्मकदेहेन्द्रियादिसंघातेष्वनात्मसु **वयं कोऽयमात्मा** ? इति साक्षादुपास्महे । **कतरः**

। आत्मा कीदृशः ? यमात्मानं वामदेवः स्वमात्रमिति ज्ञात्वामृतः समभवत्तमेव
[मु]मुक्षवो वयमुपास्महे । को नु खलु स आत्मा ? इत्येवं जिज्ञासापूर्वकमन्योन्यं
[पृ]च्छतामतिक्रान्तदर्शिनां श्रुतिरियं प्रादुर्बभूव ।

येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ।
स्वाद्वस्वादु विजानाति तत्प्रज्ञानमुदीरितम् ॥
चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु ।
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥

[इ]ति श्रुतिसंस्कारजनितस्मृतिरजायत । "तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषम्"
[इ]ति, "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" इति, इतरेतरप्रातिकूल्येन द्वे
[ब्र]ह्मणी हि कार्यकरणसंघातलक्षणपिण्डस्यात्मभूते भवतः । तयोरन्यतर आत्मा-
[स्मा]भिरुपास्यो भवितुमर्हतीति विशेषनिर्धारणार्थमन्योन्यं पप्रच्छुः । एवं विचारयतां
[प]रमात्मगोचरेयं मतिरभूत् । अस्मिन्पिण्डे द्वे ब्रह्मणी उपलभ्येते । तत्र यश्च
[स]र्वकरणप्रवृत्तिकर्तृतयोपलभ्यते यश्च सर्वकरणप्रवृत्तिनिवृत्तिभावाभावप्रकाशकतयो-
[प]लभ्यते तावुभौ, चक्षुषा रूपं पश्यतीति प्रतिसन्धानात् । तत्र न हि तावदाद्यः
[क]र्तोपलब्धा भवितुमर्हति । द्वितीयस्य प्रत्यगात्मनः उपलब्धृत्वं युक्तमित्याह—
[ये]नेति । "श्रोत्रस्य श्रोत्रं मनसो मनो यद्वाचो ह वाचं स उ प्राणस्य प्राणः चक्षुषः
[च]क्षुरतिमुच्य धीराः" इति श्रुत्यनुरोधेन येन वा चक्षुषा चक्षुर्भूतेन रूपजातं
[प]श्यति । येन वा श्रोत्रभूतेन शृणोति शब्दजातमित्यर्थः । येन वा घ्राणभूतेन
[ग]न्धानाजिघ्रति । येन वा वाक्करणभूतेन साध्वसाधुरूपां वाचं व्याकरोति ।
[ये]न वा जिह्वाभूतेन स्वादु चास्वादु च विजानाति । किं पुनः करणमेक-
[मे]नेकधा भिन्नम् ? इत्यत्र "प्रजानां रेतो हृदयं हृदयस्य रेतो मनः" इति
"मनसा सृष्टा आपश्च वरुणश्च" इति "हृदयान्मनो मनसश्चन्द्रमाः" इति च श्रुतेः
[य]देतद्धृदयं मनश्चैकमेव तदनेकधा विकल्प्यते । तथा चैकेनान्तःकरणेन
[च]क्षुर्भूतेन रूपं पश्यति । तथा श्रोत्रभूतेन शृणोति । घ्राणभूतेन जिघ्रति । वाग्भूतेन
[व]दति । जिह्वाभूतेन रसयति । स्वेनैव विकल्परूपेण मनसा संकल्पयति ।

हृदयरूपेणाध्यवस्यति । तस्मात्सर्वविषयव्यापकमेकं करणम् । तस्योपलब्धुरात्मनः उपलब्ध्यर्थत्वात् । तथा च "प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति" इत्यादिश्रुतेः । तस्माद्धृदयमनोवाच्यस्य सर्वोपलब्धिकरणत्वं प्रसिद्धम् । तदात्मको हि प्राणः । "यो वै प्राणः सा प्रज्ञा या वै प्रज्ञा स प्राणः" इति हि श्रुतितः प्राणस्य करणसन्ततिरूपत्वं सिद्धमित्यर्थः । नैतद्वस्तु ब्रह्म भवितुमर्हति । पारिशेष्याद्यस्योपलब्धुः उपलब्ध्यर्थं हृदयमनोरूपकरणस्य वृत्तयो वक्ष्यमाणा योऽयं करणग्रामत्वेन तत्तद्विषयत्वेन तत्तत्प्रवृत्त्यसंगतया तन्निमित्तत्वेन तद्भावाभावप्रकाशकत्वेन परमार्थतो निष्प्रतियोगिकस्वमात्रत्वेन च सर्वदा व्यवस्थितः सोऽयमात्मा स्वावशेषधियोपास्यो भवितुमर्हतीति निश्चित्य तदन्तःकरणोपाधिकस्यैवोपलब्धुः प्रज्ञानरूपब्रह्मण उपलब्ध्यर्था या या अन्तःकरणवृत्तयो ब्राह्मान्तर्वृत्तिविषयास्सत्यो वर्तन्ते तास्ता वृत्तय इहोपन्यस्यन्ते—**संज्ञानमि**ति । संज्ञप्तिश्चेतनभावः **संज्ञानम्** । आज्ञप्तिरीश्वरभावः **आज्ञानम्** । विशेषकल्पनापरिज्ञानं **विज्ञानम्** । **प्रज्ञप्तिः प्रज्ञानम्** । ग्रन्थधारणसामर्थ्यं **मेधा** । इन्द्रियद्वारा सर्वविषयोपलब्धिः **दृष्टिः** । धारणं धृतिः तथा शरीरधारणात् । मननं **मतिः** । तत्र स्वातन्त्र्यं **मनीषा** । जूतिश्चेतसो रुजादिदुःखित्वभावः । स्मरणं **स्मृतिः** । रूपादीनां शुक्लकृष्णादिभेदेन सम्यक्कल्पनं **सङ्कल्पः** । अध्यवसायः **क्रतुः** । प्राणनादिजीवनक्रियानिमित्तवृत्तिरसुः । असन्निहितविषयाकांक्षा **कामः** । स्त्रीव्यतिकराद्यभिलाषो **वशः** । इत्येवमाद्यन्तःकरणवृत्तयो ह्युपलब्धुः प्रज्ञानरूपस्य ब्रह्मण उपाधिभूताः । तदुपाधिजनितगुणा नामधेयानि संज्ञानादीनि **सर्वाण्येवैतानि प्रज्ञप्तिमात्रस्य प्रज्ञानस्य नामधेयानि भवन्ति** । न स्वतः । तथाचोक्तं— "प्राणन्नेव प्राणो नाम भवति" इति । स एष प्रज्ञानरूप आत्मा परब्रह्मत्वेन सर्वशरीरेषु प्रसिद्धः प्राणः प्रज्ञात्मा जलभेदगतसूर्यप्रतिबिम्बवदन्तःकरणोपाधिष्वनुप्रविष्टोऽयं हिरण्यगर्भः प्राणः प्रज्ञात्मा **ब्रह्मैष** एव । महदैश्वर्यसंपन्नत्वा**देष एवेन्द्रः** । यन्मुखादिनिर्भेदनद्वारेणाग्न्यादयो लोकपाला जाताः सोऽयमेष **प्रजापतिः** । तस्य प्रथमशरीरत्वात् । येऽप्यग्न्यादयः **सर्वे देवा** एष एव **इमानि च** सर्वशरीरोपादानभूतानि । एष एव अन्नान्नादलक्षणत्वेन **पृथिवी**

**वायुराकाश आपो ज्योतींषीत्येवैतानि पञ्च महाभूतान्यप्येष** एव। **किञ्चेमानि** क्षुद्रैरल्पकैर्मिश्राणि **क्षुद्रमिश्राणीव** सर्पादीनि **बीजानि**। **इव**-शब्दोऽनर्थकः। द्वैराश्येन निर्दिश्यमानानि यानि **तानीतराण्युच्यन्ते**। पक्ष्या-दीन्य**ण्डजानि**। जरायुजादीनि मनुष्यादीनि **जारुजानि**। यूकमशकादीनि **स्वेदजानि**। वृक्षादीन्यु**द्भिज्जानि**। **अश्वा गावः पुरुषा हस्तिनः अन्यच्च यत्किञ्चिदिदं** प्राणिजातम्। किन्तत्? **जङ्गमं** यच्च पद्भ्यां गच्छति, यच्चा-काशपतनशीलं **पतत्रि** च, **यच्च स्थावर**मचलं, **तत्सर्व**मशेषतः **प्रज्ञानेत्रम्**। अनेनोपायेन ब्रह्म नीयते बोध्यत इति प्रज्ञानेत्रत्वं युज्यते। स्वाज्ञदृष्टिप्रसक्त-प्रपञ्चजातमुत्पत्तिस्थितिप्रलयेषु यस्मिन्नधिकरणे प्रज्ञानरूपे ब्रह्मणि प्रतितिष्ठती-त्येतत्सर्वं स्वज्ञदृष्ट्या **प्रज्ञाने प्रतिष्ठितम्**। विकल्पितस्य प्रज्ञानाश्रयत्वात्। प्रज्ञैव नेत्रं यस्य लोकस्य सोऽयं **प्रज्ञानेत्रो लोकः**। यस्मात् स्वातिरिक्तसर्वजगतः **प्रज्ञा** प्रज्ञप्तिरेव **प्रतिष्ठा**। तस्मात्**प्रज्ञानं** प्रज्ञप्तिरेव **ब्रह्म**। प्रज्ञानं ब्रह्मेत्यत्र प्रज्ञानशब्देन प्रत्यग्ब्रह्मशब्देन परस्तयोरपि प्रत्यस्तमितविशेषत्वात्। एवं विभागस्तयोरैक्यं वा परमार्थतो न युज्यते। तस्य निष्प्रतियोगिकब्रह्ममात्रज्ञप्तिरूपत्वात्। तदेव स्वमात्रमवशिष्यत इत्यत्र—"एकमेवाद्वयं ब्रह्म", "नेह नानास्ति किञ्चन", "ब्रह्मव्यतिरिक्तं न किञ्चिदस्ति", "पश्यतेहापि सन्मात्रमसदन्यत्",

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्लमम्॥
सर्ववर्जितचिन्मात्रं ब्रह्ममात्रमसन्न हि।
ततः स्तिमितगम्भीरं न तेजो न तमस्ततम्।
अनाख्यमनभिव्यक्तं सत् किञ्चिदवशिष्यते॥

इत्यादिश्रुतेः। एतादृशं ब्रह्ममात्रं स्वाज्ञादिदृष्टिमोहे सत्यसत्यपि निष्प्रतियोगिक-मित्यत्र न विवादः। तथापि स्वाज्ञादिदृष्टिविकल्पितव्यष्टिसमष्ट्यात्मकजाग्रज्जाग्र-दादितुर्यस्वापावस्थान्तभेदारोपापवादाधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्त - भेदवद्भाति। स्वाज्ञादिदृष्टिवैषम्येऽपह्नवतां गते सत्यथ कालत्रयेऽप्येकरूपेण

ब्रह्म स्वमात्रमवशिष्यते। योऽयं वामदेवोऽन्यो वा संज्ञानादिवृत्तिकदम्बब्रह्मेन्द्राद्युपाधिगतहेयांशापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति वेद तद्वेदनसमकालं सोऽयं विद्वानेतेनैव प्रज्ञात्मना ये पूर्वे विद्वांसोऽमृता अभूवंस्तथैतेन **प्रज्ञेनात्मनास्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वामृतः समभवदमृतः समभवदि**त्युक्तार्थमेतत्। द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥

**इति षष्ठोऽध्यायः**

---

# सप्तमोऽध्यायः

परापरविद्याप्राप्त्यन्तरायनिवर्तकशान्तिपाठः

वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि। वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीः। अनेनाधीतेनाहोरात्रान् संदधाम्यृतं वदिष्यामि। सत्यं वदिष्यामि। तन्मामवतु। तद्वक्तारमवतु अवतु मामवतु वक्तारमवतु वक्तारम् ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

"एष पन्थाः" इत्याद्यपरविद्यायाः "आत्मा वा" इति परविद्यायाश्च प्राप्त्युपसर्गशमनाय शान्त्यध्याय आरभ्यते—**वागिति**। समाहितदशायां **मे** मम वागादीन्द्रियततिः **मनसि प्रतिष्ठिता** "यच्छेद्वाङ्मनसी प्राज्ञः" इति श्रुतेः। व्यावहारिकदशायान्तु **मे मनो**ऽन्तःकरणं **वाचि** वागादिकरणसमूहे **प्रतिष्ठितम्**। वागादिव्यापृतेरन्तःकरणाधीनत्वात्। "अन्यत्रमना अभूवं नादर्शम्" इत्यादिश्रुतेः। **मे** मम वाचि मनसि च हे बृहत्यात्मकप्राण! त्वं **आविः** प्रज्ञाप्रकाशरूपेण**एधि** सदा सन्निधिं कुरु। हे परमात्मन्! मे मनस्य-

खण्डाकारवृत्तिरूपे **आविरावि:** स्वातिरिक्तानात्मतिमिरग्रासात्ममात्रज्योतीरूपे- **णैधि** स्वातिरिक्तकलनाविस्मरणपूर्वकं सन्निधिं कुरु। **मे** मम वाङ्मनोभ्याम- धीतवेदस्य वेदशास्त्रजातस्य परापरब्रह्मगोचरतया अञ्चतीत्याणी तत्र परापर- ब्रह्मरूपेण तिष्ठतीत्या**णीस्थ:** सन् मे मया देशिकमुखत: श्रुतमधीतं कदापि **मा प्रहासी:** विस्मृतिं मा कार्षीरित्यर्थ:। **अनेन** मयाधीतेन परापर- विद्याजातेना**होरात्रान**होरात्रं सदा त्वां **सन्दधामि** अपररूपेण पररूपेण वा त्वामहमस्मीत्यनुसन्धानं करोमीत्यर्थ:। हे प्रज्ञात्मन्! यथाशास्त्रकर्तव्यार्थं **ऋतं** व्यावहारिकसत्यं वा **वदिष्यामि**। वागादिकरणग्रामतो यथावद्ग्राह्यं **सत्यं** त्वद्गतहेयांशापाये पारमार्थिकसत्यस्वरूपं वा त्वां **वदिष्यामि**। तत्परमपरं वा ब्रह्म परापरविद्यासंयोजनेन विद्यार्थिनं **मामवतु**। **तदेव** पुन: परमपरं वा ब्रह्म मद्विद्या**वक्तार**माचार्यम**वतु**। **अवतु मामवतु वक्तारमिति** पुनर्वचनमादरार्थम्। परापरविद्याप्राप्त्यन्तरायकाध्यात्मिकादितापत्रयनिरसनाय **शान्ति: शान्ति: शा- न्तिरिति** त्रिर्वचनम्। इत्थं शान्ति: विद्याप्रारम्भावसानयो: कार्या। कृतायामस्यां विद्या प्रसीदतीति सिद्धम। विद्याप्रादुर्भावसमकालमयं विद्वान् कृतकृत्यो भवति॥

**इति सप्तमोऽध्याय:**

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
ऐतरेयविवरणं लिखितं स्यात् स्फुटं लघु॥
ऐतरेयविवरणग्रन्थसंख्या निगद्यते।
सप्तत्यधिद्विशतेद्वसहस्रं परिकीर्तिता॥

**इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे अष्टसंख्यापूरकं ऐतरेयोपनिषद्विवरणं संपूर्णम्॥**

# नामधेयपदसूची

यत्र पुटसंख्यानन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या।

# विशेषपदसूची

यत्र पुटसंख्यानन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या


KENDRIYA SANSKRIT VIDYA PEETHA
TIRUPATI.

# DAS'OPANISHADS

WITH THE COMMENTARY OF

# SRI UPANISHAD-BRAHMA-YOGIN

## VOLUME II

EDITED BY

THE PANDITS OF THE ĀDYAR LIBRARY

UNDER THE SUPERVISION OF

PROF. C. KUNHAN RAJA, M.A., D.PHIL. (OXON.)

PUBLISHED FOR THE ADYAR LIBRARY

(THE THEOSOPHICAL SOCIETY)

1936

# दश–उपनिषदः

श्री उपनिषद्ब्रह्मयोगिविरचितव्याख्यायुताः

द्वितीयो भागः

अडयार् पुस्तकालयस्थपण्डितैः संपादिताः

चि–कुञ्जन्राजमहाशयैः प्रत्यवेक्षिताः

अडयार्पुस्तकालयार्थे

प्रकटीकृताश्च

१९३६

ॐ नमो
ब्रह्मादिभ्यो
ब्रह्मविद्यासंप्रदायकर्तृभ्यो
वंशऋषिभ्यो
नमो गुरुभ्यः

DEDICATED TO
Brahma and the Rishis,
The Great Teachers
Who handed down Brahmavidya
through Generations

## FOREWORD

It was in 1920 that the late Pandit A. Mahadeva Sastri of revered memory, the then Director of The Adyar Library, published The Yoga Upanishads as the first Volume of the Upanishads series according to the plan which he had outlined in his preface to that volume. He carried on the work till the beginning of 1926 when he passed over. The subsequent progress of these publications till its completion with this volume is traced out in the Introduction to this Volume written by my learned colleague Dr. C. Kunhan Raja, the Honorary Curator of the Oriental Section of The Adyar Library. It is under his scholarly supervision that this volume has been brought out. In the main, it is the work of Pandit N. Ramanatha Sastri of The Adyar Library ably assisted by Pandit T. R. Seshadri Sarma, also a member on the staff of the Library. To all these I beg to tender my grateful thanks.

G. Srinivasa Murti,

*Honorary Director.*

# INTRODUCTION

WITH this volume containing the Chāndogya and the Bṛhadāraṇyaka Upaniṣads, the one hundred and eight Upaniṣads with the commentary of Upaniṣad Brahma Yogin have been finished. The series of Upaniṣad publications now brought to a close with this volume was begun in the year 1920, in which year the late Pandit Mahadeva Sastri, then Director of the Adyar Library published the Yoga Upaniṣads with the commentary. In the following year he published the Sāmānya Vedānta Upaniṣads. The Vaiṣṇava Upaniṣads were published in 1923. The S'aiva and the S'ākta Upaniṣads were published in 1925. At this stage, the learned Director of the Library passed away. Of the 98 Minor Upaniṣads, there were the Saṃnyāsa Upaniṣads remaining. I came to the Adyar Library at this time, in April 1926.

In the Preface to the first volume of the Upaniṣads published by the late Pandit Mahadeva Sastri, he had written as follows: "Except for any unforeseen cause, there will be no occasion for delay in the publication of the succeeding volumes of the text and the commentary according to the present plan. One volume at least of the size of the present one may be issued

every year." Unfortunately, some unforeseen cause arose in the death of the learned Director, who could publish only four volumes (The S'aiva and the S'ākta being taken as a single volume). The remaining one volume containing the Saṃnyāsa Upaniṣads had to lie over for some time. I had to publish the two volumes of the catalogue of the manuscripts in the Library, as soon as I came to the Library (Pandit Mahadeva Sastri had begun the printing of this catalogue, but could finish only a small portion). In 1929, when Mr. T. R. Chintamani, M.A. was my colleague in the Library, this volume was taken up and published.

Upaniṣad Brahma Yogin has written a commentary on all the one hundred and eight Upaniṣads, and with these five volumes, only the ninety-eight Minor Upaniṣads were finished. The remaining ten Major Upaniṣads had to be taken up. We have already many editions of the commentary of S'ri S'aṅkarācārya for these ten Upaniṣads, and Upaniṣad Brahma Yogi was closely following this commentary. Yet the publication of this commentary for the ten Major Upaniṣads, it was found, will not be a duplication of material. For one thing, Upaniṣad Brahma Yogin is extremely lucid in his presentation of S'aṅkarācārya's position. With these ten Major Upaniṣads added, the whole set will be a fine edition of all the Upaniṣads with the commentary of a single author, very handy, uniform and well printed. So the Library decided to print the ten Major Upaniṣads also in the series.

The plan of a publication of the Upaniṣads from the Adyar Library was seriously taken up by Dr. Schrader, who became the Director of the Library in 1905. In 1908, he published a descriptive catalogue of the Upaniṣad Manuscripts in the Library. In this catalogue Dr. Schrader showed his ability as a critical scholar. This is the first volume of the complete descriptive catalogue of manuscripts in the Library. (It is regrettable that for various reasons his plan could not be proceeded with and no further volumes of this descriptive catalogue appeared. The matter will now be taken up soon.) In the year 1912, Dr. Schrader published the first volume of the text of the Minor Upaniṣads. This volume contained the Upaniṣads designated the Saṃnyāsa Upaniṣads. The volume contained a very scholarly Preface and also critical notes. All the variant readings collected from the manuscripts were incorporated in the form of foot-notes. This edition was meant for scholars who want to examine the Upaniṣad Texts for critical study. In the later volumes, this plan has not been very carefully followed. The size of the later Upaniṣad volumes published from the Library is different from that of Dr. Schrader's edition, and all the Saṃnyāsa Upaniṣads were later re-published with the commentary, uniform to the publications started by Pandit Mahadeva Sastri.

Apart from the 98 Minor Upaniṣads and the ten Major Upaniṣads, there are in the Adyar Library (also in Libraries like the Government Oriental Manuscripts

Library, Madras) manuscripts of various works that have come down to us under the name of Upaniṣads. I thought it worthwhile to publish all those works, and in 1932 I brought out a volume of Upaniṣads containing all those Un-published Upaniṣads. It is true that some of them had been published before. But this is the first time when all such works that are known as Upaniṣads, but that are not included among the well-known 108 Upaniṣads, have been published in a single volume. The size of the volume and the plan of publication are uniform with the volumes that had been started by Pandit Mahadeva Sastri. The matter had not been critically examined for publication. It is more or less a presentation in print of the material available in manuscripts. Since manuscripts are rare many scholars have no access to these works. The object of the Library in publishing the volume was only to make available to scholars the material that was confined to a few manuscripts till then.

After this volume was published the ten Major Upaniṣads with the commentary of Upaniṣad Brahma Yogin were taken up. They are published in two volumes. The first volume containing eight Upaniṣads (Īśa to Aitareyi) was published in 1935. The second volume containing the remaining two, namely the Chāndogya and the Bṛhadāraṇyaka Upaniṣads is now published in this volume.

Thus in eight handy volumes we have now all the 108 Upaniṣads with the commentary of a single author,

the Upaniṣad Brahma Yogin, and 71 other Upaniṣads, which bear this name but which are not included in the list of Upaniṣads according to traditional reckoning. These 108 Upaniṣads are enumerated in the Muktikopaniṣad, which is in this series published in the volume containing the Sāmānya Vedānta Upaniṣads, as No. 14 on pages 345 to 377, the enumeration itself appearing in stanzas 30 to 39 on pages 349 and 350. From the fact that the other 71 Upaniṣads are not enumerated here, one should not discard them as spurious. Many of the Upaniṣads enumerated in the list are very late ones, and many of the Upaniṣads outside of this list are comparatively early. For a critical scholar and for students of religion, all the Upaniṣads, whether included in the traditional list or not, are of great importance, and of equal importance. All of them deserve serious study.

The Upaniṣads do not belong to any specific time in the history of the development of Indian religion and Philosophy. Many of them grew up in later times and they belong to sectarian religions of later times. The Texts of these Upaniṣads are not uniform; they show considerable variations. It is necessary to edit these Upaniṣads giving all the variants in readings, so that scholars can know how the Upaniṣad Texts have fared in different parts of India and at different periods in the history of Indian religion and Philosophy. The publication of the eight volumes of Upaniṣads does not supersede the work started by Dr. Schrader, nor does it

mean the abandonment of his plan. His work has to be taken up and continued to its finish. But, in order to fulfil this object the Library must have the services of a scholar who can devote his entire time for the work, and the Library does not have that facility at present.

Side by side with this edition of the text of the Upaniṣads, it will be well if an English translation too could be given. Pandit Mahadeva Sastri says in his Preface to the Yoga Upaniṣads (the first volume published by him) as follows: "I can, however, make no promise at present as to when the first volume of the English Translation of these Upaniṣads will appear." This is a matter that must be taken up, and it will be taken up soon.

The Pandits of the Adyar Library have spared no pains to make the edition useful and reliable. The late Pandit Venkatrama Sastri was a good scholar and he was intimately connected with the publications of the Library as long as he was alive. He prepared the original copy for the first eight of the ten Major Upaniṣads. The press copy of the Chāndogya and the Bṛhadāraṇyaka Upaniṣads were prepared by Pandit N. Ramanatha Sastri. The press copy of all the ten Upaniṣads were corrected and made ready in the final form for the Press by Pandit T. R. Seshadri Sarma and Pandit N. Ramanatha Sastri. The proof reading of the two volumes too was done by these two Pandits. I have seen the press copy in its final form and I have also gone through the proofs after they were corrected by

the Pandits. All the credit for bringing out the Upaniṣad volumes (especially the later volumes after I came to the Library) goes to the Pandits of the Library.

In each of the volumes, the names of the Upaniṣads that appear in that particular volume are given, with the page number where it begins. At the end of the Saṃnyāsopaniṣad, there is given an alphabetical index of the ninety-eight Minor Upaniṣads with the volume and page where it occurs and also the serial number of the Upaniṣad in the list as given in the Muktikopaniṣad. In this volume I am giving the index of the one hundred and eight Upaniṣads in the order in which they are enumerated in the Muktikopaniṣad, and I have added also the particular Veda and S'ākhā to which the Upaniṣad belongs. In another list is also given the one hundred and eight Upaniṣads classified under the various Vedas and S'ākhās to which they belong. In each of the volumes are given indices of proper names and of important words that occur in the Upaniṣads published in that volume.

*Adyar Library,* C. KUNHAN RAJA
July, 1936.

# अष्टोत्तरशतोपनिषदां ईशादिक्रमसूची

| संख्या | उपनिषन्नाम | वेदनाम | संपुटनाम | पुटसंख्या |
|---|---|---|---|---|
| १९. | परमहंसोपनिषत् | शुक्लयजुर्वेदः | संन्यास० | १७१ |
| २०. | अमृतबिन्दूपनिषत् | कृष्णयजुर्वेदः | योग० | २६ |
| २१. | अमृतनादोपनिषत् | कृष्णयजुर्वेदः | योग० | ११ |
| २२. | अथर्वशिरउपनिषत् | अथर्वणवेदः | शैव० | २० |
| २३. | अथर्वशिखोपनिषत् | अथर्वणवेदः | शैव० | १० |
| २४. | मैत्रायण्युपनिषत् | सामवेदः | सामान्यवे० | ३८८ |
| २५. | कौषीतकिब्राह्मणोपनिषत् | ऋग्वेदः | सामान्यवे० | १११ |
| २६. | बृहज्जाबालोपनिषत् | अथर्वणवेदः | शैव० | ८७ |
| २७. | नृसिंहपूर्वतापिन्युपनिषत् | अथर्वणवेदः | वैष्णव० | १७४ |
| | नृसिंहोत्तरतापिन्युपनिषत् | अथर्वणवेदः | वैष्णव० | २२३ |
| २८. | कालाग्निरुद्रोपनिषत् | कृष्णयजुर्वेदः | शैव० | ३९ |
| २९. | मैत्रेय्युपनिषत् | सामवेदः | संन्यास० | १९३ |
| ३०. | सुबालोपनिषत् | शुक्लयजुर्वेदः | सामान्यवे० | ४६० |
| ३१. | क्षुरिकोपनिषत् | कृष्णयजुर्वेदः | योग० | ३६ |
| ३२. | मन्त्रिकोपनिषत् | शुक्लयजुर्वेदः | सामान्यवे० | २२५ |
| ३३. | सर्वसारोपनिषत् | कृष्णयजुर्वेदः | सामान्यवे० | ४४४ |
| ३४. | निरालम्बोपनिषत् | शुक्लयजुर्वेदः | सामान्यवे० | १८१ |
| ३५. | शुकरहस्योपनिषत् | कृष्णयजुर्वेदः | सामान्यवे० | ४२९ |
| ३६. | वज्रसूचिकोपनिषत् | सामवेदः | सामान्यवे० | ४१६ |
| ३७. | तेजोबिन्दूपनिषत् | कृष्णयजुर्वेदः | योग० | ४५ |
| ३८. | नादबिन्दूपनिषत् | ऋग्वेदः | योग० | २१४ |
| ३९. | ध्यानबिन्दूपनिषत् | कृष्णयजुर्वेदः | योग० | १८६ |
| ४०. | ब्रह्मविद्योपनिषत् | कृष्णयजुर्वेदः | योग० | २४९ |
| ४१. | योगतत्त्वोपनिषत् | कृष्णयजुर्वेदः | योग० | ३६३ |
| ४२. | आत्मबोधोपनिषत् | ऋग्वेदः | सामान्यवे० | ९८ |
| ४३. | नारदपरिव्राजकोपनिषत् | अथर्वणवेदः | संन्यास० | ५५ |

| संख्या | उपनिषन्नाम | वेदनाम | संपुटनाम | पुटसंख्या |
|---|---|---|---|---|
| ४४. | त्रिशिखिब्राह्मणोपनिषत् | शुक्लयजुर्वेदः | योग० | ११६ |
| ४५. | सीतोपनिषत् | अथर्वणवेदः | शाक्त० | ८९ |
| ४६. | योगचूडामण्युपनिषत् | सामवेदः | योग० | ३३७ |
| ४७. | निर्वाणोपनिषत् | ऋग्वेदः | संन्यास० | १३४ |
| ४८. | मण्डलब्राह्मणोपनिषत् | शुक्लयजुर्वेदः | योग० | २७३ |
| ४९. | दक्षिणामूर्त्युपनिषत् | कृष्णयजुर्वेदः | शैव० | ७० |
| ५०. | शरभोपनिषत् | अथर्वणवेदः | शैव० | १६६ |
| ५१. | स्कन्दोपनिषत् | कृष्णयजुर्वेदः | सामान्यवे० | ५०८ |
| ५२. | त्रिपाद्विभूतिमहानारायणोपनिषत् | अथर्वणवेदः | वैष्णव० | ८६ |
| ५३. | अद्वयतारकोपनिषत् | शुक्लयजुर्वेदः | योग० | १ |
| ५४. | रामरहस्योपनिषत् | अथर्वणवेदः | वैष्णव० | ३४४ |
| ५५. | रामपूर्वतापिन्युपनिषत् | अथर्वणवेदः | वैष्णव० | ३०५ |
| | रामोत्तरतापिन्युपनिषत् | अथर्वणवेदः | वैष्णव० | ३२६ |
| ५६. | वासुदेवोपनिषत् | सामवेदः | वैष्णव० | ३७५ |
| ५७. | मुद्गलोपनिषत् | ऋग्वेदः | सामान्यवे० | ३७८ |
| ५८. | शाण्डिल्योपनिषत् | अथर्वणवेदः | योग० | ५१८ |
| ५९. | पैङ्गलोपनिषत् | शुक्लयजुर्वेदः | सामान्यवे० | १९२ |
| ६०. | भिक्षुकोपनिषत् | शुक्लयजुर्वेदः | संन्यास० | १९० |
| ६१. | महोपनिषत् | सामवेदः | सामान्यवे० | २३४ |
| ६२. | शारीरकोपनिषत् | कृष्णयजुर्वेदः | सामान्यवे० | ४२३ |
| ६३. | योगशिखोपनिषत् | कृष्णयजुर्वेदः | योग० | ३९० |
| ६४. | तुरीयातीतावधूतोपनिषत् | शुक्लयजुर्वेदः | संन्यास० | ५१ |
| ६५. | संन्यासोपनिषत् | सामवेदः | संन्यास० | २३६ |
| ६६. | परमहंसपरिव्राजकोपनिषत् | अथर्वणवेदः | संन्यास० | १६१ |
| ६७. | अक्षमालिकोपनिषत् | ऋग्वेदः | शैव० | १ |
| ६८. | अव्यक्तोपनिषत् | सामवेदः | वैष्णव० | १ |

| संख्या | उपनिषन्नाम | वेदनाम | संपुटनाम | पुटसंख्या |
|---|---|---|---|---|
| ६९. | एकाक्षरोपनिषत् | कृष्णयजुर्वेदः | सामान्यवे० | १०६ |
| ७०. | अन्नपूर्णोपनिषत् | अथर्वणवेदः | सामान्यवे० | २६ |
| ७१. | सूर्योपनिषत् | अथर्वणवेदः | सामान्यवे० | ५०२ |
| ७२. | अक्ष्युपनिषत् | कृष्णयजुर्वेदः | सामान्यवे० | १ |
| ७३. | अध्यात्मोपनिषत् | शुक्लयजुर्वेदः | सामान्यवे० | १२ |
| ७४. | कुण्डिकोपनिषत् | सामवेदः | संन्यास० | २७ |
| ७५. | सावित्र्युपनिषत् | सामवेदः | सामान्यवे० | ४५५ |
| ७६. | आत्मोपनिषत् | अथर्वणवेदः | सामान्यवे० | ९० |
| ७७. | पाशुपतब्रह्मोपनिषत् | अथर्वणवेदः | योग० | २२७ |
| ७८. | परब्रह्मोपनिषत् | अथर्वणवेदः | संन्यास० | १४९ |
| ७९. | अवधूतोपनिषत् | कृष्णयजुर्वेदः | संन्यास० | १ |
| ८०. | त्रिपुरातापिन्युपनिषत् | अथर्वणवेदः | शाक्त० | ११ |
| ८१. | देव्युपनिषत् | अथर्वणवेदः | शाक्त० | ५३ |
| ८२. | त्रिपुरोपनिषत् | ऋग्वेदः | शाक्त० | १ |
| ८३. | कठरुद्रोपनिषत् | कृष्णयजुर्वेदः | संन्यास० | १७ |
| ८४. | भावनोपनिषत् | अथर्वणवेदः | शाक्त० | ६८ |
| ८५. | रुद्रहृदयोपनिषत् | कृष्णयजुर्वेदः | शैव० | १४८ |
| ८६. | योगकुण्डल्युपनिषत् | कृष्णयजुर्वेदः | योग० | ३०७ |
| ८७. | भस्मजाबालोपनिषत् | अथर्वणवेदः | शैव० | १२९ |
| ८८. | रुद्राक्षजाबालोपनिषत् | सामवेदः | शैव० | १५६ |
| ८९. | गणपत्युपनिषत् | अथर्वणवेदः | शैव० | ५८ |
| ९०. | दर्शनोपनिषत् | सामवेदः | योग० | १५२ |
| ९१. | तारसारोपनिषत् | शुक्लयजुर्वेदः | वैष्णव० | ७८ |
| ९२. | महावाक्योपनिषत् | अथर्वणवेदः | योग० | ३०१ |
| ९३. | पञ्चब्रह्मोपनिषत् | कृष्णयजुर्वेदः | शैव० | ७९ |
| ९४. | प्राणाग्निहोत्रोपनिषत् | कृष्णयजुर्वेदः | सामान्यवे० | २१७ |

| संख्या | उपनिषन्नाम | वेदनाम | संपुटनाम | पुटसंख्या |
|---|---|---|---|---|
| ९५. | गोपालपूर्वतापिन्युपनिषत् | अथर्वणवेदः | वैष्णव० | ४१ |
| | गोपालोत्तरतापिन्युपनिषत् | अथर्वणवेदः | वैष्णव० | ५८ |
| ९६. | कृष्णोपनिषत् | अथर्वणवेदः | वैष्णव० | २१ |
| ९७. | याज्ञवल्क्योपनिषत् | शुक्लयजुर्वेदः | संन्यास० | २१३ |
| ९८. | वराहोपनिषत् | कृष्णयजुर्वेदः | योग० | ४६४ |
| ९९. | शाट्यायनीयोपनिषत् | शुक्लयजुर्वेदः | संन्यास० | २२२ |
| १००. | हयग्रीवोपनिषत् | अथर्वणवेदः | वैष्णव० | ३८३ |
| १०१. | दत्तात्रेयोपनिषत् | अथर्वणवेदः | वैष्णव० | १५९ |
| १०२. | गरुडोपनिषत् | अथर्वणवेदः | वैष्णव० | ३२ |
| १०३. | कलिसन्तरणोपनिषत् | कृष्णयजुर्वेदः | वैष्णव० | १६ |
| १०४. | जाबाल्युपनिषत् | सामवेदः | शैव० | ६५ |
| १०५. | सौभाग्यलक्ष्म्युपनिषत् | ऋग्वेदः | शाक्त० | १०५ |
| १०६. | सरस्वतीरहस्योपनिषत् | कृष्णयजुर्वेदः | शाक्त० | ७४ |
| १०७. | बह्वृचोपनिषत् | ऋग्वेदः | शाक्त० | ६१ |
| १०८. | मुक्तिकोपनिषत् | शुक्लयजुर्वेदः | सामान्यवे० | ३४५ |

# वेदक्रमेण उपनिषदां ईशादिसंख्या

ऋग्वेदे—८, २९, ३८, ४२, ४७, ५७, ६७, ८२, १०९, १०७
(आहत्य—१० उपनिषदः)

शुक्लयजुर्वेदे—१, १०, १३, १५, १९, ३०, ३२, ३४, ४४, ४८, ५३, ५९, ६०, ६४, ७३, ९१, ९७, ९९, १०८
(आहत्य—१९ उपनिषदः)

कृष्णयजुर्वेदे—३, ७, ११, १२, १४, १७, १८, २०, २१, २८, ३१, ३३, ३५, ३७, ३९, ४०, ४१, ४९, ५१, ६२, ६३, ६९, ७२, ७९, ८३, ८५, ८६, ९३, ९४, ९८, १०३, १०६ (आहत्य—३२ उपनिषदः)

सामवेदे—२, ९, १६, २४, २९, ३६, ४६, ५६, ६१, ६५, ६८, ७४, ७५, ८८, ९०, १०४ (आहत्य—१६ उपनिषदः)

अथर्वणवेदे—४, ५, ६, २२, २३, २६, २७, ४३, ४५, ५०, ५२, ५४, ५५, ५८, ६६, ७०, ७१, ७६, ७७, ७८, ८०, ८१, ८४, ८७, ८९, ९२, ९५, ९६, १००, १०१, १०२ (आहत्य ३१ उपनिषदः)

(आहत्य—१०८ उपनिषदः)

# शान्तिपाठविवरणम्

ऋग्वेदगतानां दशसंख्याकानां ऐतरेयकौषीतकिनादबिन्द्वात्मप्रबोधनिर्वाणमुद्गलाक्षमालिकात्रिपुरासौभाग्यबह्वृचाख्यानामुपनिषदां वाङ्मे मनसि—इति शान्तिः।

## शान्तिविवरणम्

वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरावीर्म एधि। वेदस्य म आणीस्थः श्रुतं मे मा प्रहासीरनेनाधीतेनाहोरात्रान् संदधामि· ऋतं वदिष्यामि सत्यं वदिष्यामि। तन्मामवतु तद्वक्तारमवतु अवतु मामवतु वक्तारमवतु वक्तारम्॥ ॐ शान्तिः शान्तिः शान्तिः॥ १॥

शुक्लयजुर्वेदगतानां एकोनविंशतिसंख्याकानां ईशावास्यबृहदारण्यजाबालहंसपरमहंससुबालमन्त्रिकानिरालम्बत्रिशिखिब्राह्मणमण्डलब्राह्मणाद्वयतारकपैङ्गलभिक्षुतुरीयातीताध्यात्मतारसारयाज्ञवल्क्यशाट्यायनीमुक्तिकाख्यानामुपनिषदां पूर्णमदः—इति शान्तिः।

## शान्तिविवरणम्

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते। ॐ शान्तिः शान्तिः शान्तिः॥ २॥

D

कृष्णयजुर्वेदगतानां द्वात्रिंशत्संख्याकानां कठवल्लीतैत्तिरीयकब्रह्म-कैवल्यश्वेताश्वतरगर्भनारायणामृतबिन्द्वमृतनादकालाग्निरुद्रक्षुरिकासर्वसारशुक-रहस्यतेजोबिन्दुध्यानबिन्दुब्रह्मविद्यायोगतत्त्वदक्षिणामूर्तिस्कन्दशारीरकयोग-शिखैकाक्षराक्ष्यवधूतकठरुद्रहृदययोगकुण्डलिनीपञ्चब्रह्मप्राणाग्निहोत्रवराहकलि-सन्तारणसरस्वतीरहस्याख्यानामुपनिषदां सह नाववतु—इति शान्तिः ।

## शान्तिविवरणम्

सह नाववतु । सह नौ भुनक्तु । सह वीर्यं करवावहै । तेजस्वि नावधीतमस्तु मा विद्विषावहै । ॐ शान्तिः शान्तिः शान्तिः ॥ ३ ॥

सामवेदगतानां षोडशसंख्याकानां केनच्छान्दोग्यारुणिमैत्रायणि-मैत्रेयीवज्रसूचिकायोगचूडामणिवासुदेवमहत्संन्यासाव्यक्तकुण्डिकासावित्री-रुद्राक्षजाबालदर्शनजाबाल्याख्यानामुपनिषदां आप्यायन्तु—इति शान्तिः ।

## शान्तिविवरणम्

आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च । सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोत् अनिराकरणमस्तु अनिराकरणमस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु । ॐ शान्तिः शान्तिः शान्तिः ॥ ४ ॥

अथर्ववेदगतानां एकत्रिंशत्संख्याकानां प्रश्नमुण्डकमाण्डूक्याथर्वशि-रोऽथर्वशिखाबृहज्जाबालनृसिंहतापनीनारदपरिव्राजकसीताशरभमहानारायण-रामरहस्यरामतापनीशाण्डिल्यपरमहंसपरिव्राजकान्नपूर्णासूर्यात्मपाशुपतपरब्र-

ह्यत्रिपुरातपनदेवीभावनाभस्मजाबालगणपतिमहावाक्यगोपालतपनकृष्णहय-ग्रीवदत्तात्रेयगारुडाख्यानामुपनिषदां भद्रं कर्णेभिः—इति शान्तिः ।

## शान्तिविवरणम्

भद्रं कर्णेभिः शृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरै-रङ्गैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु । ॐ शान्तिः शान्तिः शान्तिः ॥ ९ ॥

---

# अस्मिन् संपुटे अन्तर्गतोपनिषत्सूची

# विषयसूचिका

## १. छान्दोग्योपनिषत्

### प्रथमोऽध्यायः



### द्वितीयोऽध्यायः

तृतीयोऽध्यायः

## चतुर्थोऽध्यायः



## पञ्चमोऽध्यायः

**षष्ठोऽध्यायः**

## सप्तमोऽध्यायः

अष्टमोऽध्यायः

# २. बृहदारण्यकोपनिषत्

## प्रथमोऽध्यायः

### प्रथमं ब्राह्मणम्



### द्वितीयं ब्राह्मणम्



### तृतीयं ब्राह्मणम्

## चतुर्थ ब्राह्मणम्

पञ्चमं ब्राह्मणम्



षष्ठं ब्राह्मणम्

## द्वितीयोऽध्यायः

### प्रथमं ब्राह्मणम्



### द्वितीयं ब्राह्मणम्



### तृतीयं ब्राह्मणम्

चतुर्थं ब्राह्मणम्



पञ्चमं ब्राह्मणम्



षष्ठं ब्राह्मणम्

## तृतीयोऽध्यायः

### प्रथमं ब्राह्मणम्



### द्वितीयं ब्राह्मणम्



### तृतीयं ब्राह्मणम्

चतुर्थं ब्राह्मणम्



पञ्चमं ब्राह्मणम्



षष्ठं ब्राह्मणम्



सप्तमं ब्राह्मणम्



अष्टमं ब्राह्मणम्

**नवमं ब्राह्मणम्**

## चतुर्थोऽध्यायः

### प्रथमं ब्राह्मणम्



### द्वितीयं ब्राह्मणम्



### तृतीयं ब्राह्मणम्

चतुर्थं ब्राह्मणम्

पञ्चमं ब्राह्मणम्



षष्ठं ब्राह्मणम्

## पञ्चमोऽध्यायः

पञ्चदशं ब्राह्मणम्



## षष्ठोऽध्यायः

प्रथमं ब्राह्मणम्



द्वितीयं ब्राह्मणम्

## तृतीयं ब्राह्मणम्



## चतुर्थं ब्राह्मणम्

---

ॐ

# छान्दोग्योपनिषत्

आप्यायन्तु—इति शान्तिः

## प्रथमोऽध्यायः

ज्ञानोत्पत्त्यर्थमुपासनानि कर्माणि च

ओमित्येतदक्षरमुद्गीथमुपासीत ओमिति ह्युद्गायति तस्योपव्याख्यानम्। एषां भूतानां पृथिवी रसः पृथिव्या आपो रसः अपामोषधयो रसः ओषधीनां पुरुषो रसः पुरुषस्य वाक् रसः वाच ऋक् रसः ऋचः साम रसः साम्न उद्गीथो रसः। स एष रसानाꣳ रसतमः परमः पराध्योऽष्टमो य उद्गीथः। कतमा कतमा ऋक्? कतमत् कतमत् साम? कतमः कतम उद्गीथः? इति विमृष्टं भवति। वागेव ऋक् प्राणः साम ओमित्येतदक्षरमुद्गीथः तद्वा एतन्मिथुनं यद्वा ऋक् च प्राणश्च ऋक् च साम च। तदेतन्मिथुनमोमित्येतस्मिन्नक्षरे सꣳसृज्यते यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम्। आपयिता ह वै कामानां भवति य एतदेवं विद्वानक्षर-

मुद्गीथमुपास्ते । तद्वा एतदनुज्ञाक्षरं यद्धि किंचानुजानात्योमित्येव तदा हैषा उ एव समृद्धिर्यदनुज्ञा समर्धयिता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते । तेनेयं त्रयी विद्या वर्तते ओमित्याश्रावयति ओमिति शंसति ओमित्युद्गायति एतस्यैवाक्षरस्यापचित्यै महिम्ना रसेन । तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद । नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति ॥ १ ॥

**श्री उपनिषद्ब्रह्मयोगिविरचितं विवरणम्**

**ॐ श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुरामचन्द्राय नमः**

छान्दोग्योपनिषद्गूढपरमाशयविग्रहम् ।
तत्त्वमस्यादिवाग्वेद्यं भूमानं राममाश्रये ॥

इह खलु सामवेदप्रविभक्तशाखायां दर्शपूर्णमासादिवाजिमेधान्तकर्माङ्गसामानि गायत्रादिसामसहितानि वंशब्राह्मणानि च समस्तकर्माश्रयभूतमुख्यप्राणोपासनानि चाभिहितानि । प्रातिस्विकेन तत्रत्यज्ञानं कर्म वा मुख्यप्राणविज्ञानसमुच्चितकर्म वा, किञ्चिद्विकलं कर्म फलोपधायकं न भवतीति भिया सम्यगनुष्ठितं सकामस्य चन्द्रलोकप्रतिपत्तये पुनरावृत्तये च भवति । तथा च वक्ष्यते— "तस्मिन् यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते" इति । तथा च स्मृतिः—

ते तं भुक्त्वा स्वर्गलोकं विशालं
क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।

इति । निष्कामस्य मुमुक्षोरीश्वरार्पणधिया यथोक्तवर्त्मना कर्मज्ञानसमुच्चयानुष्ठानतारतम्यतोऽर्चिरादिमार्गेणापुनरावृत्तिलक्षणसालोक्यादिचतुर्विधमुक्तिरभिहिता । तथा

च वक्ष्यति—"स एनान् ब्रह्म गमयति स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते" इति,

तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ।

इति स्मृतेश्च । उक्तमार्गद्वयं विहाय स्वभावप्रवृत्तानां मार्गद्वयविपरीतफलं वक्ष्यति—"अथैतयोः पथोर्न कतरेण च न तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते । तस्माज्जुगुप्सेत" इति । स्मृतिश्च—

यः शास्त्रविधिमुत्सृज्य वर्तते कामचारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥

इति । न हि सांसारिकगतित्रयेऽपि परमपुरुषार्थसिद्धिरिष्यते । स्वातिरिक्तप्रपञ्चापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रज्ञानसमकालं तन्मात्रावस्थानलक्षणकैवल्यमवगम्यते । तज्ज्ञानस्य च क्रियाकारकतत्फलेषणोपमर्दनपूर्वकत्वात् ।

न कर्मणा न प्रजया न चान्यैरपि साधनैः ।
ब्रह्मवेदनमात्रेण ब्रह्माप्नोत्येव मानवः ।
ज्ञानादेवास्य शास्त्रस्य सर्वावस्थोऽपि मुच्यते ॥,
तमेवं विद्वानतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ।

इत्यादिश्रुतेः । कस्यचित्पुरुषधौरेयस्य स्वकृतसत्कर्मफलार्पणसन्तुष्टेश्वरप्रसादजनितचित्तशुद्धिव्याप्यपारमहंस्याश्रमधर्ममुपेयुषो मुमुक्षोः साधनचतुष्टयसंपत्त्यलङ्कृतस्य स्वातिरिक्तकलनानिरसनपूर्वकं ब्रह्ममात्रजिज्ञासोदेति । तादृशजिज्ञासोः प्रत्यगभिन्नभूमब्रह्ममात्रावगतये तद्यावत्साधनपौष्कल्यगर्भिणी "ओं इत्येतदक्षरं" इत्याद्यष्टाध्यायभूषितेयं छान्दोग्योपनिषदारभ्यते । न हि ब्रह्मज्ञानादन्यत्रार्चिरादिमार्गद्वयेऽपि निःश्रेयसप्राप्तिरस्ति । न हि कर्मसहभावि ब्रह्मदर्शनम् । क्रियाकारकफलभेदोपमर्दनपूर्वकं "एकमेवाद्वितीयम्", "यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति"इत्यादिवाक्यजनितावगतेः बाधकानुपपत्तेः कर्म-

विधिप्रत्यय एव बाधक इति चेन्न; कर्तृभोक्तृज्ञानपूर्वकं कर्मफलरागिण एव कर्मविधानात्। अद्वैतज्ञानवतोऽपि तथेति चेन्न; कर्तृभोक्तृत्वादिज्ञानस्य "आत्मैवेदं सर्वं" इत्यादिनोपमर्दितत्वात्। तस्मात् स्वाज्ञं प्रत्येव कर्म विधीयते न हि स्वज्ञस्य। तथा च वक्ष्यति—"सर्वे एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति" इति। तत्रैव ब्रह्मविद्याप्रकरणे कैवल्यसन्निकृष्टफलान्युपासनान्युपदिश्यन्ते "मनोमयः प्राणशरीर"इत्यादीनि। तथा कर्माङ्गत्वेन रहस्यसामानि वृत्तिसामान्यात्। यथा मनोवृत्तिमात्रं ब्रह्मज्ञानं तथोपासनानां मनोवृत्तिमात्रत्वात्। ब्रह्मज्ञानोपासनयोः मनोवृत्तिसाम्यादनयोः को विशेषः? इति चेन्न; ब्रह्मज्ञानस्य स्वाध्यस्तकर्तृकारकादिनिवर्तकत्वात्। तथा चेत् "ओमित्येतदक्षरमुद्गीथमुपासीत" इत्याद्युपासनानि निष्प्रयोजनतां भजेयुरिति चेन्न; सत्त्वशुद्धिहेतुत्वेन ब्रह्मज्ञानोपकारकत्वात्। विशुद्धचित्तस्य हि ज्ञानमुत्पद्यते। तद्धेतूभूतान्युपासनानि कर्माणि च इत्येतत्सर्वं यत्र सम्यग्दृश्यते तस्याश्छान्दोग्योपनिषदो जिज्ञासुप्रतिपत्त्यर्थमल्पग्रन्थतो विवरणमारभ्यते यथाक्रमं—**ओमित्येतदक्षरं** इत्यादिना। यदक्षरं ओमिति प्रसिद्धं तद्ब्रह्माभिधानं ब्रह्मणो नेदिष्ठत्वात्। "यथा नामी वाचकेन नाम्नो योऽभिमुखो भवेत्" इति श्रुत्यनुरोधेन प्रणवेनाभिधीयमानं ब्रह्म प्रसीदति। एवमभिधानत्वेन प्रतीकत्वेन च सर्ववेदान्तेषु ब्रह्मोपासनं श्रेष्ठमिति प्रसिद्धम्। जपकर्मस्वाध्यायोपक्रमोपसंहारयोरपि प्रणवोच्चारणपूर्वकत्वात् श्रेष्ठत्वमस्य निरङ्कुशम्। तथाविधोङ्कारस्योद्गीथभक्त्यवयवत्वात् **ओमित्येतदक्षरमुद्गीथमित्युपासीत** उद्गीथावयवब्रह्मप्रतीकाक्षरे दृढाभिमतिं सन्तनुयादित्यर्थः। तत्र हेतुमाह—**ओमिति ह्युद्गायति** इति। ओमित्यारभ्य ह्युद्गाता उद्गायति। **तस्याक्षरस्येयत्ताप्रकाशनमुपव्याख्यानं** वर्तत इत्यध्याहार्यम्। तत् कथम्? इत्यत्र **एषां** चराचर**भूतानां पृथिवी रसः**। तस्याः सर्वभूताधिकरणत्वात् रसत्वं युज्यते। **पृथिव्या आपो रसः**। अप्सु हि पृथिवी ओता प्रोता च भवति। **अपामोषधयो रसः** तासामबायत्तत्वात्। **ओषधीनां पुरुषो रसः**। तस्यौषधिनिष्पन्नान्नपरिणामत्वात्। **पुरुषस्य वाक् रसः**। तदवयवानां वाचस्सारिष्ठत्वात्। **वाच ऋक् रसः**

सारतरत्वात् । **ऋचः साम रसः** सुश्राव्यत्वात् । **साम्न उद्गीथो रसः** सर्व-सारिष्ठत्वेन प्रकृतत्वात् । **स एष** उद्गीथाख्य ओङ्कारः भूतादिगतोत्तरोत्तर**रसानां रसतमः** । परब्रह्मप्रतीकत्वादयं **परमः** । परमर्धमालम्बनं योऽर्हति स **परार्ध्यः** । पृथिव्यादिरसाद्यपेक्षयोद्गीथस्याष्टसंख्यापूरकत्वमभिहितम् । सोऽयं **य उद्गीथोऽष्टमः । कतमा कतमे**ति वीप्सा आदरार्था । बहूनां जातिपरिप्रश्ने डतमच्प्रयोगः स्यादिति चेन्न; ऋग्व्यक्तीनां बहुत्वात् जातौ परिप्रश्नो जातिपरिप्रश्न इति विग्रहे जातौ ऋग्व्यक्तीनां बहुत्वोपपत्तेः । एवं **चेत् विमृष्टं भवति** विमर्शः कृतो भवति । **वागेव ऋक् प्राणः साम** वाक्प्राणयोः ऋक्सामयोनित्वात् । ऋक्सामयोनिवाक्प्राणग्रहणतस्सर्वासामृचां सर्वेषां साम्नां च ग्रहणं कृतं स्यात् । सर्वर्क्सामग्रहणे ऋक्सामसाध्यानां कर्मणां ग्रहणं कृतं स्यात् । तद्ग्रहणे सर्वे कामा गृहीताः स्युरित्यर्थः । **ओमित्येतदक्षरमुद्गीथः** इति भक्त्या शंका निवर्तते । मिथुनं निर्दिशति— **तद्वा** इति । यद्वाक् च प्राणश्च ऋक्सामकारणभूतौ **तद्वा एतन्मिथुनं यद्वाक् च प्राणश्च ऋक् च साम चेति** तत्कारणभूतावुच्येते । वाक्प्राणयोर्मिथुनत्व**मोमित्येतस्मिन्नक्षरे संसृज्यते** । अस्य मिथुनस्योङ्कारसंसृष्टत्वेन सर्वकामावाप्तिगुणवत्त्वं सिद्धम् । तत्र दृष्टान्त उच्यते । यथा लोके मिथुनावयवत्वेन **मिथुनौ** स्त्रीपुंसौ ग्राम्यधर्मतया यदा **समागच्छतः** संसृज्येयातां तदा **तौ** स्त्रीपुंसावन्**योन्यस्य काममापयतो वै** प्रापयत एव । तथा स्वात्मानुप्रविष्टमिथुनेनोङ्कारस्य सर्वकामावाप्तिगुणत्वं सिद्धमित्यर्थः । तदुपासकोऽप्युद्गाता तद्धर्मा भवतीति **आपयिता ह वै कामानां** यजमानस्य **भवति । य एतदक्षरमुद्गीथ**माप्तिगुणविशिष्टत्वेनो**पास्ते** तस्य तद्यथोक्तं फलं भवतीत्यर्थः । “तं यथा यथोपासते तथैव भवति” इति श्रुतेः । ओङ्कारस्य समृद्धिगुणत्वं कथम्? इत्यत आह—**तद्वा** इति । **तद्वा एतत्प्रकृतमनुज्ञा च सा अक्षरं चे**त्य**नुज्ञाक्षरम्** । अनुज्ञा अनुमतिरोङ्कार इत्यर्थः । अनुमतित्वं श्रुतिरेव व्याचष्टे—**यद्धी**ति । लोके विद्वान् धनी वा ज्ञानं धनं वा **यद्धि किञ्च** यत्किञ्चेद**मनुजानाति** तत्रानुमतिं कुर्वन्नो**मित्येव तदाह** । तथा च श्रुतिः “त्रयस्त्रिंशदित्योमिति होवाच” इति । तथा च एष कश्चिदेवं करोमीत्युक्तोऽन्य

ओमित्येवाह। अत **एषा उ एव** एषैव **समृद्धिः। यदनुज्ञा** या अनुज्ञा सा हि समृद्धिः अनुज्ञायाः समृद्धिमूलत्वात्। समृद्धो ह्योमित्यनुज्ञां ददाति। तस्मादोङ्कारः समृद्धिगुणवानित्यर्थः। एवं समृद्धिगुणोपासनेन तद्धर्मा सन् यजमानस्य **कामानां समर्धयिता ह वै भवति। य एतदेवं विद्वानक्षरमुपास्ते** इत्यादि पूर्ववत्। अथेदानीमक्षरं स्तौति—**तेनेति। तेन** प्रकृतेनाक्षरेण ऋग्वेदादिलक्षणा **त्रयी विद्या** तन्निर्वर्त्यकर्मजातं **वर्तत** इति प्रसिद्धम्। तत्कथम्? **ओमित्याश्रावयत्योमिति शंसत्योमित्युद्गायतीति** सोमादाववगम्यते तल्लिङ्गदर्शनात्। तस्य कर्मै**वैतस्याक्षरस्यापचित्यै** पूजार्थम्। तस्य परब्रह्मप्रतीकत्वेन तत्कृतापचितिर्ब्रह्मण एव स्यात् "स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति" इति स्मृतेः। किञ्च एतस्यैवाक्षरस्य **महिम्ना** महत्त्वेन ऋत्विग्यजमानादिप्राणैः तथा व्रीहियवादिनिर्वृत्त**रसेन** ततो वृष्ट्यादिक्रमेण प्राणोऽन्नं च जायते। प्राणैरन्नेन च यज्ञस्त्रायते। अक्षरस्य महिम्ना रसेनेति तदुच्यते। तथाक्षरविज्ञानवतः कर्मकर्तव्यतामाक्षिपति—**तेनेति। तेनाक्षरेणोभौ कुरुतः यश्चैतदे**तदक्षरयाथात्म्यं **वेद यश्चा**क्षराज्ञानपूर्वकं कर्ममात्रं वेद, कर्म तावुभावपि कुरुतः। तयोश्च कर्मसामर्थ्यादेव फलं स्यात् किमक्षरज्ञानेन? इति। तत्र यस्मा**न्नाना तु विद्या चाविद्या च** विद्याविद्ये तत्फलयोः भिन्नभिन्नत्वात्। तुशब्दः पक्षव्यावृत्त्यर्थः। ओङ्कारस्य कर्माङ्गमात्रविज्ञानमेकम्। रसतमाप्तिसमृद्धिगुणवद्विज्ञानमपरम्। तत्र ज्ञानाधिक्यात्फलाधिक्यं युक्तम्। तथा च लोके ज्ञाज्ञयोर्वणिगितरयोर्नवरत्नक्रयविक्रययोस्तत्र वणिजस्तदियत्तापरिज्ञानतः फलाधिक्यं तद्विपर्ययमितरस्य। तस्मात् **यदेव** कर्म श्रद्धानः सन् **विद्यया करोति** तदेव विद्यासमुच्चितं कर्म अविद्वत्कृतकर्मापेक्षया **वीर्यवत्तरं** ज्ञानहेतुसत्त्वशुद्धिफलदं **भवति खलु। एतस्य** प्रकृतोद्गीथा**क्षरस्योपव्याख्यानं भवति** ॥ १ ॥

अध्यात्मावच्छिन्नोद्गीथविवरणम्

देवासुरा ह वै यत्र संयेतिरे उभये प्राजापत्यास्तद्ध देवा उद्गीथमाजह्रुः अनेनैनान् अभिभविष्याम इति। ते ह नासिक्यं

प्राणमुद्गीथमुपासांचक्रिरे तꣳ हासुराः पाप्मना विविधुस्तस्मात्तेनो-भयं जिघ्रति सुरभि च दुर्गन्धि च पाप्मना ह्येष विद्धः । अथ ह वाचमुद्गीथमुपासांचक्रिरे ताꣳ हासुराः पाप्मना विविधुस्तस्मात्तयो-भयं वदति सत्यं चानृतं च पाप्मना ह्येषा विद्धा । अथ ह चक्षु-रुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुः तस्मात्तेनोभयं पश्यति दर्शनीयं चादर्शनीयं च पाप्मना ह्येतद्विद्धम् । अथ ह श्रोत्रमुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुः तस्मात्तेनो-भयꣳ शृणोति श्रवणीयं चाश्रवणीयं च पाप्मना ह्येतद्विद्धम् । अथ ह मन उद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुः तस्मात्ते-नोभयꣳ संकल्पयते संकल्पनीयं चासंकल्पनीयं च पाप्मना ह्येतद्वि-द्धम् । अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे तꣳ हासुरा ऋत्वा विदध्वंसुर्यथाश्मानमाखणमृत्वा विध्वꣳसेत् । एवं यथाश्मानमाखणमृत्वा विध्वꣳसत एवꣳ हैव स विध्वꣳसते य एवं-विदि पापं कामयते यश्चैनमभिदासति स एषोऽश्माखणः । नैवैतेन सुरभि न दुर्गन्धि विजानाति अपहतपाप्मा ह्येष तेन यदश्नाति यत्पिबति तेनेतरान् प्राणानवति एतमु एवान्ततोऽवित्त्वा उत्क्रामति व्याददात्येवान्तत इति । तꣳ हाङ्गिरा उद्गीथमुपासांचक्रे एवाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः । तेन तꣳ ह बृहस्पतिरुद्गीथमुपासांचक्रे एतमु एव बृहस्पतिं मन्यन्ते वाक् हि बृहती तस्या एष पतिः । तेन तꣳ हायास्य उद्गीथमुपासांचक्रे एतमु एवायास्यं मन्यन्ते आस्या-

**द्यद्यते । तेन तꣳह बको दाल्भ्यो विदांचकार । स ह नैमिशीयाना-मुद्गाता बभूव स ह स्म एभ्यः कामानागायति । आगाता ह वै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्त इत्यध्यात्मम् ॥२॥**

अध्यात्मावच्छिन्नोद्गीथविवरणमाह—**देवासुरा** इति । स्वस्वविषयद्योतनादिन्द्रियवृत्तयो देवाश्च तद्वैपरीत्येन केवलासुभरणतया तमोगुणप्रधानेन्द्रियवृत्तयः असुराश्च **देवासुराः** । **हवै** इति शब्दौ पूर्ववृत्तस्मारकौ । यस्मिन् **यत्र** इतरेतरस्वापहरणनिमित्तसंग्रामे **संयेतिरे** सङ्ग्रामं कृतवन्त इत्यर्थः । संपूर्वस्य यतेः संग्रामार्थत्वात् । शास्त्रीयसत्त्वप्रकाशवृत्तयो देवास्तद्विपरीतरजस्तमोवृत्तयोऽसुराश्च परस्परजयैषिण **उभयेऽपि** । कर्मज्ञानाधिकृतो यः स पुरुष एव प्रजापतिः । प्रजापतेरपत्यानि ते **प्राजापत्याः** । "पुरुष एवोक्थमहमेव महान् प्रजापतिः" इति श्रुतेः । **तद्ध** तदुत्कर्षापकर्षनिमित्ते ह किल तत्र सत्त्वेन्द्रियवृत्तयो **देवा उद्गीथं** तद्भक्त्युपलक्षितमौद्गात्रं कर्माजह्रुराहृतवन्तः । किमर्थं ते ज्योतिष्टोमादि कर्माजह्रुः ? इत्यत आह—अनेनेति । **अनेन** कर्मणा **एनानभिभविष्याम** इत्यभिप्रायेण **ते ह** देवा **नासिक्यं** नासिकाभवघ्राणाख्य**प्राणमुद्गीथं** उद्गीथभक्त्यो**पासाञ्चक्रिरे** उद्गातृत्वेन वृतवन्त इत्यर्थः । **तमेवं** देवैर्वृतमुद्गातारं नासिक्यं प्राणं स्वाभाविकतमोवृत्तय **असुरा** धर्मासहरूपेण **पाप्मना विविधुः** संसर्गं कृतवन्त इत्यर्थः । स हि नासिक्यः प्राणः पाप्मना संसर्गी बभूव । यस्मादेवं **तस्मात्तेन** पाप्मना प्रेरितो घ्राणप्राणः । तेन **सुरभि च दुर्गन्धि चेत्युभयं जिघ्रति** लोकः । उभयग्रहणादे**ष** घ्राणः **पाप्मना विद्धः** । यदेवेदमप्रतिरूपं जिघ्रतीति च समानप्रकरणश्रुतितः मुख्यप्राणोपास्यत्वायायं विचारः श्रुत्या प्रवर्तितः । अतश्चक्षुरादिक्रमेणैवं विचार्यते । चक्षुरादय आसुरेण पाप्मना विद्धा इत्यपोह्यन्ते । प्रथमपर्यायसमानार्थतयोक्तार्थमेतत् । **अथ ह वाचं चक्षुः श्रोत्रं मन** इत्यादि घ्राणादीनामासुरेण पाप्मना विद्धत्वात् । **अथानन्तरं य एवायं** मुखालयत्वेन प्रसिद्धो **मुख्यः प्राणः तमुद्गीथमुपासाञ्चक्रिरे । तं हासुराः** पूर्ववत् **ऋत्वा** प्राप्य **विदध्वंसुः** । कथं ते प्राणं स्पृष्ट्वा विनष्टाः स्युः ? इत्यत्र **दृष्टान्तमाह**—

**यथेति**। लोके टङ्कैरपि खनितुं न शक्यत इत्यखणः। स एव आखणः। तं **आखणं अश्मानं** पांसुपिण्डो लोष्टोऽय**मृत्वा** गत्वा तद्भेदाभिप्रायेण निक्षिप्तोऽपि किञ्चिदप्यश्मनो भेदमकृत्वा स्वयमेव **विध्वंसेत्** विदीर्येत। एवं विशुद्धो हि प्राणः असुरैरधर्षितत्वात्। एवंविदः फलमाह—**एवमिति**। **एवं हैव स विध्वंसते**। कोऽसौ? इत्यत आह—**य इति**। **एवं** यथोक्तप्राण**विदि पापं कर्तुं यः कामयते यश्चैनं** प्राणविद**मभिदासति** प्रत्याक्रोशताडनादिभिः हिनस्ति सोऽप्येवमेव विध्वंसत इत्यर्थः। यस्मा**देष** प्राणवित् **अश्माखण** इवाधर्षणीयः यस्माच्च मुख्यप्राणोऽसुरैः न विद्धः तस्मात् **नैवैतेन** प्राणेन लोकः **सुरभि न दुर्गन्धि विजानाति**। किन्तु प्राणस्य पापविद्धत्वेन तेनोभयं विजानातीत्यर्थः। अतश्चायं यस्मात् पाप्मापहतो विनाशितः सोऽ**यमपहत-पाप्मा ह्येषः** एतस्यासुरास्पृष्टत्वेन विशुद्धत्वात्। **तेन** मुख्येन प्राणेन लोको **यदश्नाति यत्पिबति तेनाशितेन** पीतेन **चेतरान्** घ्राणादीन**वति** तत्स्थिति-रन्नपाननिमित्तेत्यर्थः। प्राणस्य शुद्धत्वेन सर्वभृत्त्वात्। कथं प्राणाशितपीताभ्या-मितरेषां स्थितिः? इत्यत्र—**एतमु एव** मुख्यप्राणं निमित्तीकृत्यान्नपाने इत्यर्थः। अशनायापिपासयोः प्राणधर्मत्वात्। **अन्ततो** मरणकाले **अवित्त्वा** अलब्ध्वा प्राणस्थितिं घ्राणादिप्राणसमुदाय **उत्क्रामति**। अप्राणो ह्यशितुं पातुं न शक्नुयात्। तदानीं घ्राणादिकरणग्रामस्योत्क्रान्तिर्दृश्यते। अनुत्क्रान्तप्राणो हि **व्याददाति** आस्यविदारणं करोति **अन्ततः** अन्तकाले। **तं** मुख्यप्राणमहं गिर इत्येवंगुणमुद्गीथम**ङ्गिरा उपासांचक्रे**। **एतमु एवाङ्गिरसं** प्राणं **मन्यन्ते** केचित् अङ्गिगुणविशिष्टत्वात्। तत्कथम्? **अङ्गानां** मध्ये **यत्**प्राणाख्यं ब्रह्म **रस**त्वेनाभिमतं तेनासावाङ्गिरसः। यथाङ्गिरसं मन्यन्ते तथा बृहस्पति-मायास्यं प्राणं मन्यन्त इत्यर्थः। तथा वाचो बृहत्याः पतिः **तेनासौ बृहस्पतिः**। तथा **आस्यात् अयते** निर्गच्छति **तेनायास्य** ऋषिः प्राण एव सन्नु**पासांचक्र** इत्यर्थः। तथान्योपासकोऽप्यात्मानमेवाङ्गिरसादिगुणविशिष्टं प्राणमुद्गीथमुपासीत। न केवलमङ्गिरःप्रभृतय एवोपासांचक्रिरे किन्तु **तं ह** नामतो **बकः** दल्भस्यापत्यं **दाल्भ्यो विदाञ्चकार** तत्प्राणयाथात्म्यं विज्ञातवान्। विदित्वा **स ह**

**नैमिशीयानां** सत्रिणामुद्गाता **बभूव । स** ह प्राणविज्ञानमहिम्ना **एभ्यो** नैमिशीयेभ्यः **कामानागायति स्म** ह गानं कृतवानित्यर्थः । तथान्योऽप्युद्गाता **कामानां वा आगाता भवति । य एतदेवं विद्वान्** यथोक्तगुणं प्राणमक्षरमुद्गीथ-**मुपास्ते** तस्यैतत्फलम् । प्राणात्मभावो हि दृष्टं फलम् । अदृष्टफलं[तु]हिरण्यगर्भाप्तिः "देवो भूत्वा देवानप्येति" इति श्रुतेः । एतदात्मविषयमुद्गीथोपासनमित्युप-संहरति—**इत्यध्यात्ममिति** ॥ २ ॥

अधिदेवतावच्छिन्नोद्गीथस्वरूपम्

अथाधिदैवतं य एवासौ तपति तमुद्गीथमुपासीत उद्यन्वा एष प्रजाभ्य उद्गायति उद्यꣳस्तमो भयमपहन्ति अपहन्ता ह वै भयस्य तमसो भवति य एवं वेद । समान उ एवायं चासौ चोष्णो-ऽयमुष्णोऽसौ स्वर इतीममाचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिमममुं चोद्गीथमुपासीत । अथ खलु व्यानमेवोद्गीथ-मुपासीत यद्वै प्राणिति स प्राणो यदपानिति सोऽपानोऽथ यः प्राणा-पानयोः सन्धिः स व्यानो यो व्यानः सा वाक् तस्मादप्राणन्न-नपानन् वाचमभिव्याहरति । या वाक् सा ऋक् तस्मादप्राणन्न-नपानन् ऋचमभिव्याहरति या ऋक् तत्साम तस्मादप्राणन्ननपानन् साम गायति यत्साम स उद्गीथस्तस्मादप्राणन्ननपानन्नुद्गायति । अतो यान्यन्यानि वीर्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनमप्राणन्ननपानꣳस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गी-थमुपासीत । अथ खलूद्गीथाक्षराण्युपासीत उद्गीथ इति प्राण एव उत् प्राणेन ह्युत्तिष्ठति वाक् गीः वाचो ह गिर इत्याचक्षते अन्नं थं अन्ने

हीदꣳ सर्वꣳ स्थितम् । द्यौरेव उत् अन्तरिक्षं गीः पृथिवी थं आदित्य एव उत् वायुर्गीः अग्निः थꣳ सामवेद एव उत् यजुर्वेदो गीः ऋग्वेदः थं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतान्येवं विद्वान् उद्गीथाक्षराण्युपास्त उद्गीथ इति । अथ खल्वाशीः समृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन् स्यात् तत्सामोपधावेत् । यस्यामृचि तामृचं यदार्षेयं तमृषिं यां देवतामभिष्टोष्यन् स्यात् तां देवतामुपधावेत् । येन छन्दसा स्तोष्यन् स्यात् तच्छन्द उपधावेत् येन स्तोमेन स्तोष्यमाणः स्यात् तꣳ स्तोममुपधावेत् । यां दिशमभिष्टोष्यन् स्यात् तां दिशमुपधावेत् । आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स कामः समृद्ध्येत यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति ॥ ३ ॥

अधिदेवतावच्छिन्नोद्गीथस्वरूपमाह—**अथेति** । अथाध्यात्मविषयोद्गीथकथनानन्तरं **अधिदेवताविषयमुद्गीथं** प्रस्तुतम् । तस्यानेकधा उपास्यत्वाय **य एवासावादित्यस्तपति तमादित्यदृष्ट्योद्गीथमुपासीत** । उद्गीथशब्दोऽक्षरवाची । स कथमादित्ये वर्तते ? इत्यत आह—**उद्यन्निति** । **उद्यन्नुद्गच्छन् वै एष आदित्यः प्रजाभ्यः** प्रजानामन्नोत्पत्त्यर्थं उद्गायतीवोद्गायति । न ह्यादित्यानुदये व्रीह्याद्युत्पत्तिर्भवति । यथोद्गातान्नार्थमुद्गायति तथा सवितेत्यर्थः । किं **चोद्यन्नेव** सविता प्राणिनां नैशं **तमः** तज्ज**भयमपहन्ति** । **यः** सवितारमेवंगुणविशिष्टं **वेद** सोऽयं विद्वान् स्वजनिमृतिनिमित्त**भयस्य** तद्धेतुस्वाज्ञानलक्षण**तमसश्चापहन्ता ह वै** नाशयिता **भवति** । स्थानभेदात् प्राणादित्ययोर्भेदेऽपि वस्तुतस्तयोरभेद एवेत्याह—**समान** इति । गुणतः सवित्रा प्राणः प्राणेन सविता **चायं समान**

उ **एव** तुल्यो भवति। केन गुणेन तयोः साम्यं? इत्यत्र **उष्णोऽयं** प्राण **उष्णश्चासौ** सविता। किञ्च स्वरविदः **इमं** प्राणं **स्वर इत्याचक्षते**। तथा **स्वर इति प्रत्यास्वर इति चामुं** सवितारं आचक्षत इत्यनुवर्तते। प्रत्यास्वर इत्यत्र यस्मात्प्राणः स्वरत्येव न हि प्रत्यास्वरो न मृतः। तथा सविताहन्यहनि प्रत्यागच्छतीति प्रत्यास्वरः। यस्माद्गुणतो नामतश्च प्राणादित्यौ समानौ अतस्तयोरभेदा**देतं प्राणमिममसुं** चा**दित्यमुद्गीथमुपासीत**। उद्गीथस्य प्रकारान्तरेणोपासनमाह—**अथ खल्विति**। प्राणवृत्तिविशेषं **व्यानमेवोद्गीथमुपासीत**। तत्सत्त्वं निरूपयति—**यद्वा** इति। **यद्वै** पुरुषो मुखनासिकाभ्यां **प्राणिति** वायुं बहिश्चारयति **स** हि **प्राणवायुः**। **यदपानिति** अपश्वसिति अन्तराकर्षति वायुं **सोऽपानः**। **अथा**पानस्वरूपकथनानन्तरं **प्राणापानयोर्यः सन्धिः स व्यानः** वीर्यवत्कर्मकर्ता। कथं तस्य वीर्यवत्कर्मकर्तृत्वम्? इत्यत आह—**य** इति। **यो व्यानः सा वाक्** वाचो व्यानकार्यत्वात्। **तस्मादप्राणन् अनपानन्** तद्व्यापारमकुर्वन् **वाचमभिव्याहरति** लोकः। तथा **या वाक् सा** हि **ऋक्** सूक्तं साम सामावयवं चोद्गीथं **चाप्राणन् अनपानन्** व्यानेनैव निर्वर्तयतीत्यर्थः। न केवलं वागाद्यभिव्याहरणं **अतोऽस्मादन्यान्यपि वीर्यवन्ति कर्माणि** व्याननिर्वर्त्यानीत्याह—**यथेति**। **यथाग्नेर्मन्थनं** मथनमाजेर्मर्यादायाः **सरणं** धावनं **दृढस्य धनुषः आयमनं चाप्राणन् अनपानन् तानि करोति** अतः प्राणादिवृत्तिभ्यो व्यानस्योपासनं ज्यायः राजोपासनवत् फलवत्त्वात्। **एतस्य** हेतोरेतस्मात् कारणात् **व्यानमेवोद्गीथमुपासीत**। न हि तदतिरिक्तवीर्यवत्फलदोपासनमस्ति। **अथ खलूद्गीथाक्षराणि उपासीत उद्गीथ** इत्युद्गीथनामाक्षराणि न हि भक्त्यक्षराणीत्यर्थः। नामाक्षरोपासनतो नाम्न्युपासनं कृतं स्यादित्यर्थः। यद्वत् उत् इत्यक्षरे **प्राण एव** प्राणदृष्टिः। कथं उत्वं प्राणस्य? इत्यत्र सर्वोऽपि **प्राणेन ह्युत्तिष्ठति** सप्राणस्योत्थानदर्शनात्। अत उदः प्राणस्य च सामान्यं युक्तम्। शिष्टास्तु **वाक् गीः वाचो ह गिर इत्याचक्षते**। तथान्नं **थम्**। **अन्ने हीदं सर्वं स्थितं** अतोऽस्त्यन्नस्य थकारस्य च सामान्यम्। श्रुत्युक्तानि हि त्रयाणां सामान्यानि। तदनुरोधेन शेषेष्वपि सामान्यानि द्रष्टव्यानि। उच्चैः स्थानात्

**द्यौरेव उत्**। लोकानां गिरणादन्तरिक्षं **गीः**। सर्वप्राणिस्थानत्वात् **पृथिवी थम्**। ऊर्ध्वत्वात् **आदित्य एव उत्**। अग्न्यादीनां गिरणात् **वायुर्गीः**। यज्ञकर्मावस्थानादग्निः **थम्**। स्वर्गसंस्कृतत्वात् **सामवेद एव उत्**। यजुषा देवानां हविर्गिरणात् **यजुर्वेदो गीः**। साम्न ऋच्यध्यूढत्वात्सर्वं **ऋग्वेदः थम्**। अधुनोद्गीथाक्षरोपासनाफलमाह—**दुग्ध** इति। **अस्मै** साधकाय गोवत् **वाक्** क्षीरवत्फलं दुग्धे दोग्धि। **यो वाचो दोहः** वागादिशब्दसाध्यं फलं स्वयमेव वागात्मानमेव दोग्धि। किंचान्नवान् समृद्धान्नः **अन्नादो** दीप्ताग्निः **भवति**। **यो विद्वान्** यथोक्तगुणान्युद्गीथाक्षराण्युद्गीथ **इत्युपास्ते** स यथोक्तफलमश्नुत इत्यर्थः। **अथ खल्वाशीः समृद्धिः** आशिषः कामस्य समृद्धिरुच्यत इति वाक्यशेषः। ध्येयत्वेनोपसरणान्युपसर्तव्यानि **इत्युपासीत**। तद्यथेत्यत्र उद्गाता **येन साम्ना स्तोष्यन् स्यात् तत्सामोपधावेत्**। येन गायत्र्यादिछन्दसा **स्तोष्यन् स्यात् तच्छन्दः उपधावेत्**। **येन स्तोमेन स्तोष्यमाणः स्यात्**—स्तोष्यमाण इत्यात्मनेपदं स्तोभाङ्गफलस्य कर्तृगामित्वात्—**तं स्तोममुपधावेत्**। **यां दिशमभिष्टोष्यन् स्यात् तां दिशमुपधावेत्**। उद्गाता अधिष्ठातृभिः नामगोत्रादिभिः सहात्मानमन्तत **उपसृत्य** यजमानस्य यः कामस्तं **काममभिध्यायन्ननुसंधानं** कुर्वन् स्वरोष्मव्यञ्जनादिभ्योऽप्रमत्तः प्रमादमकुर्वन् **स्तुवीत**। ततोऽभ्याशो **ह** क्षिप्रमेवास्मा **एवंविदे स कामः समृद्धयेत** समृद्धिं गच्छेत्। यस्य यद्विषयकः कामः **यत्कामः सन् स्तुवीत** इत्यत्र द्विर्वचनं प्रकृतोपासनासमाप्त्यर्थम् ॥ ३ ॥

अक्षरस्य गुणवैशिष्ट्योपासनम्

**ओमित्येतदक्षरमुद्गीथमुपासीत ओमिति ह्युद्गायति तस्योपव्याख्यानम्। देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशꣳस्ते छन्दोभिरच्छादयन् यदेभिरच्छादयꣳस्तच्छन्दसां छन्दस्त्वम्। तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि। ते नु विदित्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन्। यदा वा**

ऋचमाप्नोति ओमित्येवातिस्वरति एव᳙ साम एवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभया अभवन् । स य एतदेवं विद्वानक्षरं प्रणौति एतदेवाक्षर᳙ स्वरममृतमभयं प्रविशति तत्प्रविश्य यदमृता देवास्तदमृतो भवति ॥ ४ ॥

प्रकृताक्षरस्यामृताभयगुणवैशिष्ट्योपासनविधित्सया इदमारभ्यते—**ओ-मिति** । **ओमित्यादि** व्याख्यातम् । **देवा वै मृत्योः** सकाशात् **बिभ्यतो** भीताः सन्तः **त्रयीं विद्यां** तन्निर्वर्त्यकर्म **प्राविशन्** तस्य मृत्युत्राणनहेतुत्वात् । किञ्च **ते** देवाः कर्मण्यविनियुक्त**छन्दोभिर्म**न्त्रजपहोमादि कुर्वन्तः सन्तः स्वात्मानं कर्मान्त-रेणा**च्छादयन्** । **यद्य**स्माद**ेभि**राच्छादयन्तः तस्माच्छ**न्दसां** मन्त्राणां **छन्दस्त्वं** सिद्धमित्यर्थः । **यथोदके** मत्स्यघातको बडिशादिसाधनतो **मत्स्यं परिपश्येत्** तथा **तानु तत्र** देवान् कर्मक्षयोपायसाध्यानित्येवं **पर्यपश्यत्** । असौ मृत्युः क्व देवान् ददर्श ? इत्यत आह—**ऋचि साम्नि यजुषीति** । ऋग्यजुःसामसंबद्धे कर्मणी-त्यर्थः । देवास्तेन वैदिकेन कर्मणा शुद्धात्मानः सन्तो मृत्योश्चिकीर्षितं विदित्वा **ऋचः साम्नो यजुषः** तन्निर्वर्त्यकर्मण **ऊर्ध्वा** ऊर्ध्वदृष्टयो भूत्वा कर्मणा मृत्युभयानिवृत्तेस्तदपास्य अमृताभयगुणमक्षर**मेव स्वर**शब्दितं **प्राविशन्** ओङ्कारोपासनापरा भवेयुरित्यर्थः । एवकारः समुच्चयप्रतिषेधार्थः अवधारणार्थो वा । स्वरशब्दवाच्यत्वं कुतः ? इत्यत आह—**यदेति** । **यदा वै ऋचमाप्नोति ओमित्येवातिस्वरति एवं साम एवं यजुः एष उ स्वरः** । कोऽसौ ? **यदे-तदक्षरमेतदमृतमभयं** प्रविशति । अमृताभयब्रह्मप्रतीकत्वात्तदक्षरं **प्रविश्य ते देवा अमृता अभया अभवन्** । **स यो**ऽन्योऽपि **विद्वान्** देववदेव एतदक्षर-ममृताभयगुणं **प्रणौति** उपासनरूपां स्तुतिं करोति स तथैव **तदेवाक्षरं स्वरममृतमभयं प्रविशति** । राज्ञोऽन्तरङ्गत्वेन राजकुलप्रविष्टवत् **तदे**तदक्षरं **प्रविश्य** येनामृतत्वसाधनेन **यदमृता देवा** अमृता अभूवन् तत्साधनेन तादृशा**मृतो भवति** । तेनामृतेन न न्यूनता नाप्यधिकतेत्यर्थः ॥ ४ ॥

आदित्याक्षरोपासनम्

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणव ओमिति ह्येष स्वरन्नेति । एतमु एवाहमभ्यगासिषं तस्मात् मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच रश्मीꣳस्त्वं पर्यावर्तयात् बहवो वै ते भविष्यन्तीत्यधिदैवतम् । अथाध्यात्मं य एवायं मुख्यः प्राणस्तमुद्गीथमुपासीत ओमिति ह्येष स्वरन्नेति । एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति ह कौषीतकिः पुत्रमुवाच प्राणाꣳस्त्वं भूमानमभिगायतात् बहवो वै मे भविष्यन्तीति । अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति होतृषदनात् हैवापि दुरुद्गीथमनुसमाहरतीत्यनुसमाहरतीति ॥ ९ ॥

प्रणवोद्गीथयोरेकत्वाभिप्रायेण प्राणरश्मिगुणविशिष्टादित्याक्षरोपासनमनेकपुत्रफलदमिदानीं वक्तव्यमितीदमारभ्यते—**अथेति**। **अथ खलु य उद्गीथः** बह्वृचानां **स प्रणवः** । यस्तेषां **प्रणवः स** एव छन्दोगानामुद्गीथशब्दवाच्यः । **असौ वा आदित्य उद्गीथः** । **एष प्रणव**शब्दवाच्योऽपि बह्वृचानां नान्योऽयमुद्गीथ आदित्यः । कथम्? उद्गीथाक्षरं **ओमित्येतदेव** । **हि** यस्मात् **स्वरन्नु**च्चरन् अथवा स्वरन्नुद्गच्छन् सवितोद्गीथेनेति । तमेतमु **एवाहमभ्यगासिषं** आदित्यरश्मिभेदमकृत्वाभिमुख्येन गीतवानस्मि । तेन **तस्मान्मम त्वमेकोऽसि** पुत्र! इति **कौषीतकिः पुत्रमुवाच** । अतो रश्मीनादित्यं च भेदेन त्वं **पर्यावर्तयात्** पर्यावर्तयेत्यर्थः । एवं रश्मीनां बहुत्वयोगात् **बहवो वै ते** तव पुत्रा **भविष्यन्तीत्यधिदैवतम्** । अथानन्तरमध्यात्ममुच्यते । **य एवायं मुख्यः प्राणः तमुद्गीथमुपासीते**ति पूर्ववत् । तथोमिति **ह्येष** प्राणोऽपि **स्वरन्नेति** । वागादिप्रवृत्त्यर्थं ओमिति ह्यनुज्ञां कुर्वन्निवैति । न हि मुमूर्षुमृतिकाले तत्समीपस्थाः

प्राणस्योङ्करणं शृण्वन्तीत्येतत्सामान्यात् । तथादित्येऽप्यनुज्ञामात्रमोङ्करणं द्रष्टव्यम् । **एतमु एवाहमभ्यगासिषमि**त्यादि पूर्ववत् । अतो वागादित्यमुख्यप्राणभेदगुणविशिष्टोद्गीथोपासनं कुर्वन् मनसा **भूमानमभिगायता**दिति पूर्ववत् । **बह्वो वै मे पुत्रा भविष्यन्ती**त्यभिसन्धिपूर्वकं उद्गानं कुर्यादित्यर्थः । प्राणादित्यैकत्वोद्गीथदृष्टेरेकपुत्रदोषदुष्टत्वात् तदपोह्य रश्मिप्राणभेददृष्टिरस्मिन् खण्डे बहुपुत्रलाभाय कर्तव्येति चोद्यते । **अथ खलु य उद्गीथ** इत्यादिप्रणवोद्गीथैकत्वदर्शनमुक्तम् । तत्फलमाह—**होतृषदना**दिति । यत्र स्थित्वा होता शंसति तत्स्थलं होतृषदनम् । तत्रत्यहोत्रा कर्मणः सम्यक् प्रयुक्तत्वात् । न हि देशमात्रादाहर्तुं शक्यते फलम् । किं तत् ? **हैवापि दुरुद्गीथं** दुष्टमुद्गीथं उद्गानं कृतं तद**नुसमाहरति** समीकरणं करोतीत्यर्थः ॥ ९ ॥

उद्गीथस्य साधनान्तरप्रकाशनम्

इयमेव ऋक् अग्निः साम तदेतदेतस्यामृचि अध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते इयमेव सा अग्निः अमः तत्साम । अन्तरिक्षमेव ऋक् वायुः साम तदेतदेतस्यामृचि अध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयतेऽन्तरिक्षमेव सा वायुः अमः तत्साम । द्यौरेव ऋक् आदित्यः साम तदेतदेतस्यामृचि अध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते द्यौरेव सा आदित्योऽमः तत्साम । नक्षत्राण्येव ऋक् चन्द्रमाः साम तदेतदेतस्यामृचि अध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते नक्षत्राण्येव सा चन्द्रमा अमः तत्साम । अथ यदेतदादित्यस्य शुक्लं भाः सैव ऋक् अथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यां ऋच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते । अथ यदेवैतदादित्यस्य शुक्लं भाः सैव साथ

यन्नीलं परः कृष्णं तदमः तत्साम अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश आप्रणखात् सर्व एव सुवर्णः। तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी तस्य उदिति नाम स एष सर्वेभ्यः पाप्मभ्य उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद। तस्य ऋक् च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गाता एतस्य हि गाता स एष ये चामुष्मात् पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ॥ ६ ॥

अथेदानीमुद्गीथस्य सर्वसंपत्फलहेतुतया साधनान्तरप्रकाशनार्थमिदमारभ्यते—इयमिति। **इयमेव** पृथिवी **ऋक्**। ऋचि पृथिवीदृष्टिः कार्येत्यर्थः। तथा**ग्निः साम**। साम्नि अग्निदृष्टिः। पृथिव्यग्न्योः ऋक्सामत्वं कुतः? इत्यत आह— **तदिति**। **तदेतद**ग्न्याख्यं साम **एतस्यां** पृथिव्यां **ऋच्यध्यूढं** उपरिभावेन स्थितं **साम**। **तस्मादृच्यध्यूढ**मिदानीमपि **साम** सामगै**र्गीयते**। यथा ऋक्सामे अत्यन्ताभिन्ने तथा पृथिव्यग्नी इत्यर्थः। **इयमेव** पृथिवी **सा** सामनामार्धशब्दवाच्या। इतरार्धशब्दवाच्योऽ**ग्निः अमः**। **तदे**तत्पृथिव्यग्निद्वयं **सामै**कशब्दाभिधेयत्वमापन्नम्। तस्मात् पृथिव्यग्न्योः ऋक्सामत्वं सिद्धम्। सामाक्षरयोः पृथिव्यग्निदृष्टिविधानार्थमियमेव साग्निरम इति केचित्। **अन्तरिक्षमेव ऋक् वायुः साम**त्यादि पूर्ववत्। नक्षत्राणामधिपति**श्चन्द्रमाः** अमः **अतस्साम**। **अथ यदेतदादित्यस्य शुक्लं भाः** शुक्ला दीप्तिः **सैव ऋक्**। **अथ यदेतदादित्ये नीलं परो**ऽतिशयेन **कृष्णं** कार्ष्ण्यं तद्ध्येकान्तदृष्टेः **तत्साम** दृश्यते। त एव भाः शुक्लकृष्णे सा च अमश्च साम। **अथ य एषोऽन्तरादित्य** आदित्यमण्डलान्तः **हिरण्मयो** ज्योतिर्मयः। उत्तरेष्वपि हिरण्मयशब्दस्य ज्योतिर्मयत्वमर्थः। नास्य हिरण्यविकारत्वं संभवति। न ह्यचेतनं हिरण्याद्यपहतपाप्मत्वादिविशेषणभाग्भवति। तस्मादयं ज्योतिर्मयः। पुरिशयनादन्तर्याम्यात्मना पूरणाद्वा **पुरुषः** निवृत्तावरणै**र्दृश्यते**। ज्योतिर्मयस्यापि श्मश्रुकेशादयः **कृष्णाः** स्युरित्यत आह—

**हिरण्यश्मश्रुर्हिरण्यकेश** इति। **आप्रणखात् सर्वाङ्गसुवर्ण** इव भारूप इत्यर्थः। तस्य भारूपत्वेऽप्यक्ष्णोर्विशेषमाह—**कप्यासमिति**। आसेरुपवेशनार्थस्य करणे घञि कपेरासः कप्यास इव पुण्डरीकमत्यन्ततेजोमयं **तदेवास्याक्षिणी**। उपमितोपमानत्वान्न हीनोपमा। यद्वा—कं पिबतीति कपिः सूर्यः। तदुदयत आस्यते विकसतीति **कप्यासं पुण्डरीकम्**। तत्तुल्ये तदक्षिणी इत्यर्थः। तस्य किं नाम? इत्यत आह—**तस्य उदिति नामेति**। **स एष देवः सर्वेभ्यः पाप्मभ्यः** तत्कार्येभ्य **उदितः** उद्गतः। एवं उन्नामानमात्मानं यथावत् **यो वेद** सोऽपि विद्वान् **सर्वेभ्यः पाप्मभ्य** उदेति उद्गच्छति। **ह वा** इति शब्दाववधारणार्थौ। विदुषोऽप्यपहतपाप्मत्वात्। तथा च वक्ष्यति "य आत्मा अपहतपाप्मा" इति। तस्यादित्यादीनामिवोद्गीथत्वं विवृणोति—**तस्येति**। **तस्य ऋक् च साम च गेष्णौ** पृथिव्यग्न्याद्युक्तलक्षणे पर्वणी सर्वेशितृत्वाद्युपपद्यते। पृथिव्यग्नि-ऋक्सामादिगेष्णत्वं सर्वकारणत्वात् संभवतीत्यर्थः। यस्मादुद्गेष्णत्वे प्राप्ते तस्मादयमुद्गीथ इत्युद्गीथत्वं देवस्य परोक्षप्रियत्वात्। **तस्मात्त्वेव** हेतोः उत् गायतीत्युद्गाता। **एतस्योद्गातुः** उद्गातेति नामप्रसिद्धिः। **स एष** देवो उन्नामा **ये चामुष्मादादित्यात्** परागच्छन्तीति **पराञ्चो लोकाः** तेषां लोकानां **चेष्टे**। चशब्दात् धारयतीत्यर्थः। "स दाधार" इति श्रुतेः। किञ्च **देवकामानामपीष्टे** इत्येतदुद्गीथस्याधिदेवतास्वरूपमुक्तमित्यर्थः॥ ६॥

अध्यात्मस्वरूपम्

अथाध्यात्मं वागेव ऋक् प्राणः साम तदेतदेतस्यामृचि अध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते वागेव सा प्राणोऽमः तत्साम। चक्षुरेव ऋक् आत्मा साम तदेतदेतस्यामृचि अध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते चक्षुरेव सात्मा अमस्तत्साम। श्रोत्रमेव ऋक् मनः साम तदेतदेतस्यां ऋच्यध्यूढꣳ साम तस्मादृच्यध्यूढꣳ साम गीयते श्रोत्रमेव सा मनो अमस्तत्साम। अथ

यदेतदक्ष्णः शुक्लं भाः सैव ऋक् अथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढꣳसाम तस्मादृच्यध्यूढꣳ साम गीयते। अथ यदेवैतदक्ष्णः शुक्लं भाः सैव साथ यन्नीलं परः कृष्णं तदमः तत्साम। अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैव ऋक् तत्साम तदुक्थं तत् यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम। स एष ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां चेति तद्य इमे वीणायां गायन्ति एतं ते गायन्ति तस्मात्ते धनसनयः। अथ य एतदेवं विद्वान् साम गायत्युभौ स गायति सोऽमुनैव स एष ये चामुष्मात् पराञ्चो लोकाः ताꣳश्चाप्नोति देवकामास्ताꣳश्च। अथानेनैव ये चैतस्मादर्वाञ्चो लोकास्ताꣳश्चाप्नोति मनुष्यकामाꣳश्च तस्मादु हैवंविदुद्गाता ब्रूयात्—कं ते काममागायानि? इति एष ह्येव कामगानस्येष्टे य एवं विद्वान् साम गायति साम गायति ॥ ७ ॥

अधुनाध्यात्मस्वरूपमुच्यते—अथेति। वागेव ऋक् घ्राणाख्योऽयं प्राणः साम अथोर्ध्वस्थानसामान्यात्। वागेव सा प्राणोऽम इत्यादि पूर्ववत्। चक्षुरेव ऋक् आत्मा सामेत्यत्र तत्रत्यछायात्मा। श्रोत्रमेव ऋक् मनः साम इत्यत्र मनसः श्रोत्राधिष्ठानत्वात् सामत्वम्। अथ यदेतदक्ष्णः शुक्लं भा इत्यादित्य इव दृक्शक्त्यधिष्ठानं तत् साम। अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते विश्वादिः "दक्षिणाक्षिमुखे विश्वः" इति खिलश्रुतेः। सैव ऋक् अध्यात्ममधिदैवतं च वागाद्याः पृथिव्याद्याश्च प्रसिद्धाः। पादबद्धात्मिका ऋक्। तथा सोक्थसाहचर्यात् स्तोत्रं भवति। उक्थादन्यत् साम ऋक् शस्त्रादि। तथा स्वाहा स्वधा वषडित्यादि सर्वमेव यजुः तद्ब्रह्म तस्य सर्वात्मकत्वेन सर्वकारणत्वात्।

ब्रह्मशब्देनात्र त्रयो वेदा उच्यन्ते। **तदेव रूपं तस्यैतस्य** चाक्षुषस्येति निर्दिश्यते। किं तत्? इत्यत आह—**यदिति**। **यदमुष्य** हिरण्मय इत्याद्यधिदैवतमुक्तं **यावमुष्य गेष्णौ** पर्वणी **तावेवास्य** चाक्षुषस्य रूपं **गेष्णौ** च। **यच्चो**क्तमुदिति अमुष्य **नाम तदेवास्य नाम**। तयोः स्थानभेदेऽपि वस्तुत एकत्वात्। स एव चाक्षुष आत्मा। **अर्वाञ्चो ये लोकास्तेषां** मानुषाणां **कामानामीष्टे**। तत् तस्मात् **य इमे** गायका **वीणायां गायन्ति एतमेव ते गायन्ति** एतस्य ईशभावारूढत्वात्। **तस्मात्ते धनसनयो** धनवन्तो **भवन्ति**। **अथ य एतदेवमुद्गीथं विद्वान् साम गायति** चाक्षुषमादित्यं **चोभौ** साम **गायति**। एवंविदः फलमाचष्टे—**सोऽमुनैवेति**। सोऽयं विद्वानमुनादित्येनैव **स एष ये चामुष्मात् पराञ्चो लोकास्तांश्चाप्नोति**। देवो भूत्वा **देवकामांश्च**। **अथानेनैव** चाक्षुषेण **ये चैतस्मादर्वाञ्चो लोकास्तांश्चाप्नोति**। चाक्षुषो भूत्वा **मनुष्यकामांश्चा**प्नोतीत्यर्थः। **तस्मादु हैवंवित् उद्गाता कं ते काममागायानि**? इति यजमानं **ब्रूयात्** यस्मादेष ह्युद्गाता **कामगानस्यास्य** कामान् संपादयितु**मीष्टे** समर्थो भवति। कोऽसौ? इत्यत आह—**य एतदेवं विद्वान् साम गायतीति** द्विरुक्तिरुपासनापरिसमाप्त्यर्था ॥ ७ ॥

अक्षरस्य परोवरीयस्त्वोपासनम्

**त्रयो होद्गीथे कुशला बभूवुः शिलकः शालावत्यश्चैकितायनो दाल्भ्यः प्रवाहणो जैवलिरिति ते होचुः उद्गीथे वै कुशलाः स्मः हन्त उद्गीथे कथां वदाम इति। तथेति ह समुपविविशुः स ह प्रवाहणो जैवलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचꣳ श्रोष्यामीति। स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति होवाच। का साम्नो गतिरिति स्वर इति होवाच स्वरस्य का गतिरिति प्राण इति होवाच प्राणस्य का**

गतिरिति अन्नमिति होवाच अन्नस्य का गतिरिति आप इति होवाच। अपां का गतिरित्यसौ लोक इति होवाच अमुष्य लोकस्य का गतिरिति न स्वर्गं लोकमतिनयेदिति होवाच स्वर्गं वयं लोकꣳ सामाभिसंस्थापयामः स्वर्गसꣳस्तावꣳ हि सामेति। तꣳ ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच अप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति। हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाच अमुष्य लोकस्य का गतिरित्ययं लोक इति होवाच अस्य लोकस्य का गतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकꣳ सामाभिसꣳस्थापयामः प्रतिष्ठासꣳस्तावꣳ हि सामेति। तꣳ ह प्रवाहणो जैवलिरुवाच अन्तवद्वै किल ते शालावत्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति मूर्धा ते विपतेदिति हन्ताहमेतद्भगवत्तो वेदानीति विद्धीति होवाच ॥ ८ ॥

अक्षरस्यानेकधोपास्यत्वेन परोवरीयस्त्वगुणफलवदुपासनविधित्सया इदमारभ्यते—त्रय इति। कस्मिंश्चिद्देशकालादौ समेतास्त्रयो मुनयः उद्गीथे तद्याथात्म्यवेदने कुशलाः समर्था बभूवुः। न हि त्रयाणामेव तत्कुशलत्वं उषस्तिजानश्रुतिप्रभृतीनां विद्यमानत्वात्। के ते त्रयः? इत्यत आह—**शिलक** इत्यादि। नामतः शिलकः। शालावतोऽपत्यं शालावत्यः। चिकितायनस्यापत्यं **चैकितायनः**। दल्भगोत्रो **दाल्भ्यः** द्व्यामुष्यायणो वा। नामतः **प्रवाहणः**। जीवलस्यापत्यं जैवलिः। एवं विख्यातास्त्रयस्ते होचुः। हकार ऐतिह्यार्थः। **उद्गीथे वै कुशला** निपुणाः स्मो वयमिति। हन्त! उद्गीथविषये पक्षप्रतिपक्षोपन्यासेन **कथां वदामो** वादं कुर्म इत्यर्थः। विद्याकुशलानां विवादो

व्यर्थ इति चेन्न; संशयविपर्यासनिरासपूर्वकं तद्विषये दृढज्ञानसंभवात् । **तथेत्युक्त्वा ते ह समुपविविशुः** । तत्र राज्ञः प्रागल्भ्यात् ब्राह्मणावितरौ । **स राजा प्रवाहणो जैवलिरुवाच** । 'ब्राह्मणयोः' इति लिङ्गादयं राजेति द्योत्यते । **भगवन्तावग्रे वदताम्** । वदतोर्ब्राह्मणयोरर्थगुम्भितां **वाचं श्रोष्यामीति** । **स ह शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच** । किमिति? **हन्त! त्वा त्वां पृच्छानीति** । अनेनैवमुक्त इतरः **पृच्छेति होवाच** लब्धानुमतिराह—**का साम्नो गतिः?** इति । परोवरीयस्त्वगुणविशिष्टोद्गीथस्यात्रोपास्यत्वेन प्रकृतत्वात् । वक्ष्यति च "परोवरीयांसमुद्गीथम्" इति । उद्गीथाख्यसाम्नः का गतिः परायणं? इति पृष्टो दाल्भ्य उवाच—**स्वर इति** । मृदाश्रयघटवत् साम्नः स्वराश्रयत्वात् । **स्वरस्य का गतिः?** इति । **प्राण इति होवाच** स्वरस्य प्राणगतिकत्वात् । **प्राणस्य का गतिः?** इति । **अन्नमिति होवाच** प्राणस्थितेरन्नायत्तत्वात् । "शुष्यति वै प्राण ऋतेऽन्नात्" इति श्रुतेः । **अन्नस्य का गतिः? इति । आप इति होवाच** अन्नस्याप्संभवत्वात् । **अपां का गतिः?** इति । **असौ लोक इति** होवाच । अमुष्य लोकस्य वृष्टिहेतुत्वात् । **अमुष्य लोकस्य का** गतिः? इति पृष्टो दाल्भ्य आह—**नेति । स्वर्गं लोकमतीत्या**श्रयान्तरं साम **न हि नयेत्** कश्चिदि**ति होवाच** । **अतो वयमपि स्वर्गं लोकं सामाभिसंस्थापयामः** एतत्साम स्वर्गलोकप्रतिष्ठं जानीम इत्यर्थः । स्वर्गत्वेन संस्तवनं यस्य तत् **साम स्वर्गसंस्तावं हि । तं हेतरः शिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच** । परोवरीयस्त्वेन**प्रतिष्ठितं** साम । **वै** इत्यागमस्मारकः किलेति च । **दाल्भ्य! ते** तव **साम यस्त्वसहिष्णुः** एतर्ह्येतस्मिन् काले प्रतिष्ठितं सामाप्रतिष्ठितमित्येवं **ब्रूयात्** तदपराधेन **मूर्धा** शिरस्ते **विपतिष्यति** । एवमपराधिनस्ते **मूर्धा विपतेदि**त्यत्र **न हि** संशय इत्यर्थः । अमुष्य लोकस्य का गतिः? इति दाल्भ्येन पृष्टः शालावत्यो**ऽयं लोक इति होवाच** एतल्लोककृतयागदानादेः परलोकगतिहेतुत्वात् । "अतः प्रदानं देवा उपजीवन्ति" इति श्रुतेः । अस्य लोकस्य सर्वभूतप्रतिष्ठत्वेन साम्नोऽप्ययं लोकः प्रतिष्ठेति युक्तम् । शालावत्येनास्य **लोकस्य का गतिः?**

इत्युक्तः आह कश्चित्— **न प्रतिष्ठामिमं लोकं सामातिनयेत्।** अतो **वयं** प्रतिष्ठां **लोकं सामाभिसंस्थापयामः।** यतः, **प्रतिष्ठात्वेन संस्तावं** संस्तुतं **हि सामेत्यर्थः।** "इयं वै रथन्तरम्" इति श्रुतेः। एवमुक्तवन्तं **प्रवाहणो जैवलिरुवाच। अन्तवद्वै किल ते शालावत्य सामेत्यादि** पूर्ववत्। तं ह शालावत्य आह—**हन्त! अहमेतद्भगवत्तो वेदानीति। विद्धीति होवाचेतरः** ॥ ८ ॥

शालावत्यस्य प्रश्नः

अस्य लोकस्य का गतिरिति आकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्त आकाशं प्रत्यस्तं यन्ति आकाशो ह्येवैभ्यो ज्यायानाकाशः परायणम्। स एष परोवरीयानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतदेवं विद्वान् परोवरीयाꣳसमुद्गीथमुपास्ते। तꣳ हैतमतिधन्वा शौनक उदरशाण्डिल्याय उक्त्वोवाच यावत्त एनं प्रजायामुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिँल्लोके जीवनं भविष्यति। तथामुष्मिँल्लोके लोक इति स य एतमेवं विद्वानुपास्ते परोवरीय एव हास्यामुष्मिँल्लोके जीवनं भवति तथामुष्मिँल्लोके लोक इति लोके लोक इति ॥ ९ ॥

एवमनुज्ञातः पृच्छति—अस्येति। **अस्य लोकस्य का गतिः?** इत्यनेन पृष्टः प्रवाहण **आकाश इति होवाच।** आकाशशब्देन परमात्मा उच्यते। "आकाशो ह वै नाम" इति श्रुतेः। तस्यैव सर्वहेतुत्वमाह। तेजोऽबन्नादिक्रमेण **सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते।** प्रलयकाले तावदा**काशं प्रत्यस्तं यन्ति।** तथा च वक्ष्यति "तत्तेजोऽसृजत", "तेजः परस्यां देवतायां" इति। हि यस्मादाकाश एव **एभ्यः** सर्वेभ्यो वियदादिभूतेभ्यो

**ज्यायान्** अतः सर्वभूतपरायणमाकाश एव। सर्वेषां भूतानां कालत्रयेऽपि आकाशप्रतिष्ठत्वात्। यस्मात् परश्च वरीयांश्च **स एष परोवरीयानुद्गीथः** परमात्मप्रतीकत्वात्। अत एव **स एषोऽनन्त** उद्गीथार्थपरमात्मनः त्रिविध-परिच्छेदशून्यत्वात्। यस्तु विद्वान् तमेतं परोवरीयांसमुद्गीथमुपास्ते तस्यै-तत्फलमाचष्टे—**परोवरीयो हास्य भवतीति**। अस्य विदुषः परं वरीयः विशिष्टतरजीवनं भविष्यतीत्येतत् दृष्टफलम्। **परोवरीयसो ह लोकानिन्द्रादि-**ब्रह्मलोकान्तान् **जयतीत्युत्कृष्टफलम्। य एतदेवं विद्वान् परोवरीयांस-मुद्गीथमुपास्ते। तमेतमुद्गीथं** विद्वान्नामतोऽयम**तिधन्वा** शुनकस्यापत्यं **शौनकः** स्वशिष्याय **उदरशाण्डिल्याय** एतदुद्गीथदर्शन**मुक्त्वोवाच। यावत्ते** तव **प्रजायां** सन्ततौ भवा **उद्गीथं वेदिष्यन्ते** ज्ञास्यन्ति तावन्तं कालं **परोवरीयो हैभ्यो** लौकिकजीवनेभ्यः उत्तरोत्तरविशिष्टतरजीवनं **भविष्यतीति** दृष्टफलम्। अदृष्टफलन्तु **अमुष्मिन् परलोकेऽपि** परोवरीयान् लोको भविष्यतीत्यतिधन्वा शौनकः शाण्डिल्यायोक्तवान्। स्यादेतत्फलं पूर्वेषां, नेदानींतनानामित्यत आह—**स य इति। स यः** कश्चिदे**तमेवं** विद्वानुद्गीथमुपास्ते तस्याप्येवमेव **परोवरीय एव** हास्मिन् **लोके** जीवनं भविष्यति। **तथामुष्मिन् लोके। लोक इति** द्विरुक्तिरादरार्थेत्यर्थः॥ ९॥

प्रतिहारोपासनम्

मटचीहतेषु कुरुष्वाटिक्या सह जायया उषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास। स ह इभ्यं कुल्माषान् खादन्तं बिभिक्षे तꣳहोवाच। नेतोऽन्ये विद्यन्ते यच्च ये म इम उपनिहिता इति। एतेषां मे देहीति होवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतꣳस्यादिति होवाच। न स्विदेतेऽप्युच्छिष्टा इति न वा अजीविष्यमिमानखादन्निति होवाच कामो म उदपानमिति। स ह खादित्वातिशेषान् जायाया आजहार साग्र एव सुभिक्षा बभूव

तान् प्रतिगृह्य निदधौ । स ह प्रातः संजिहान उवाच यत् बतान्नस्य लभेमहि लभेमहि धनमात्राꣳ राजासौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति । तं जायोवाच हन्त पते ! इम एव कुल्माषा इति तान् खादित्वामुं यज्ञं विततमेयाय । तत्रोद्गातॄनास्तावे स्तोष्यमाणान् उपोपविवेश स ह प्रस्तोतारमुवाच । प्रस्तोतः ! या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति । एवमेवोद्गातारमुवाच उद्गातः ! या देवता उद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति । एवमेव प्रतिहर्तारमुवाच प्रतिहर्तः ! या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासांचक्रिरे ॥ १० ॥

उद्गीथोपासनाङ्गत्वेन प्रस्तावप्रतिहारविषयं उपासनं वक्तव्यमितीदमारभ्यते—**मटचीति** । इयमाख्यायिका सुखावबोधार्था । **मटच्योऽशनयस्ताभिर्हतेषु कुरुषु** तद्देशगतसस्येषु तेन दुर्भिक्षे जाते ततो मुनिरनुत्पन्नस्त्रीचिह्नेयमाटिकी । तयाटिक्या **जायया सह** नामत **उषस्तिः** । चक्रायणस्यापत्यं **चाक्रायणः** । इभो हस्ती तमर्हतीति इभ्यः हस्त्यारोहः । तस्य ग्रामे **इभ्यग्रामे** । द्रा कुत्सायामिति **प्रद्राणकः** कुत्सितां गतिं गतः **सन्नुवास** । **सोऽन्नार्थी** कस्यचिद्गृहमेत्य यदृच्छया कुत्सित**माषान् खादन्तमिभ्यं बिभिक्षे** याचितवानित्यर्थः । **सोऽयमिभ्यस्तमुषस्तिमुवाच** । मया भक्ष्यमाणकुल्माषादुच्छिष्टा**दन्ये न विद्यन्ते** । **यच्च ये मे इम उपनिहिताः** मद्भोजनपात्रे ये निक्षिप्ताः नेतः परं किंचिदप्यस्ति इत्युक्तोऽप्युषस्तिस्तं प्रत्युवाच । **एतेषां तानि मे मह्यं देहीति होवाच** । स इभ्यः **अस्मै** उषस्तये **तानेव प्रददौ** । स्वपीतावशिष्टमुदकं गृहीत्वोवाच । **हन्त ! अनुपानमपि** गृहाणेत्युक्त उषस्तिः **प्रत्युवाच** । तत्स्वीकरण **उच्छिष्टं मे** मम **पीतं स्यात्** यद्यहं पास्यामीत्युक्तः प्रत्यु-

वाच इभ्यः—किं न स्विदेते कुल्माषा उच्छिष्टाः? इत्युक्त आह उषस्तिः—इमान् कुल्माषान् यद्यहमखादंस्तदाहं नाजीविष्यं नैव जीविष्यामीति होवाच। कामतो मे मम उदपानं लभ्यत इत्यर्थः। अतः प्राणात्ययकाले गर्हितान्नभक्षणेऽपि न हि प्रत्यवायोऽस्तीत्यर्थः। प्राणधारणनिमित्तमुपायान्तरे सति एतादृशं कर्म ज्ञान्यभिमानेन कुर्वतो नरकपातः स्यादेवेत्यत्र ज्ञानवैराग्यसंपन्नस्य स्वस्मिन्नेव मुक्तिरिति न; "सर्वत्राचारप्रसक्तिः" इत्यादिश्रुतेः। प्रद्राणकगतिं गतो मुनिः तान् कुल्माषान् खादित्वातिशेषान् शिष्टान् जायायै कारुण्यादाजहार। सा तु कुल्माषलाभादग्रे एव सुभिक्षा लब्धान्ना बभूव। तथापि तान् कुल्माषान् पत्युर्हस्तात् प्रतिगृह्य निदधौ। तस्याः कर्म जानन् प्रातःकाले पत्न्यां शृण्वन्त्यां सञ्जिहानो निद्रां परित्यजन्नुवाच। किमुवाच? इत्यत्र यत् बतेति। खिद्यमानोऽन्नस्य स्तोकं लभेमहि। तदा तद्भुक्त्वा येनास्माकं जीवनं भविष्यति तद्धनमात्रां स्तोकं वा लभेमहि। तल्लाभे हेतुमाह—नातिदूरे राजासौ यक्ष्यते। तदात्मनेपदं यजमानत्वात्तस्य। सोऽयं राजा मा मां पात्रं मत्वा सर्वैरार्त्विज्यैः ऋत्विक्कर्मप्रयोजनाय वृणीते। एवमुक्तवन्तं जायोवाच। किमिति? हे पते! त्वया मद्धस्ते ये कुल्माषा निक्षिप्ताः ते इम एव। तान् खादित्वा राज्ञोऽमुं यज्ञं ऋत्विग्भिः विततमेयाय। तत्र गत्वा उद्गातृपुरुषानेत्य, अस्मिंस्तुवन्तीत्यास्तावः तस्मिन्नास्तावे स्तोष्यमाणानुपोपविवेश। स होपविश्य प्रस्तोतारमुवाच। स्वाभिमुखीकरणाय हे प्रस्तोतः! इत्यामन्त्र्य प्रस्तावभक्तिं या देवतानुगतान्वायत्ता विदुषो मम पुरतः तां चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति। एवमुद्गातारं प्रतिहर्तारमुवाचेत्यादि समानमन्यत्। ते ह प्रस्तोत्रादयः मूर्धपातभिया कर्मभ्यः समारतास्सन्तः तूष्णीमासाञ्चक्रिरे निर्व्यापारा बभूवुरित्यर्थः॥ १०॥

प्रस्तावादीनां प्राणादित्यान्नदृष्ट्या उपासनम्

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीति उषस्तिरस्मि चाक्रायण इति होवाच। स होवाच भगवन्तं वा

अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषं भगवतो वा अहमवित्त्वा अन्यानवृषि । भगवाꣳस्त्वेव मे सर्वैरार्त्विज्यैरिति तथेति अथ तर्ह्येत एव समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्याः तावन्मम दद्या इति तथेति ह यजमान उवाच । अथ हैनं प्रस्तोता उपससाद प्रस्तोतः ! या देवता प्रस्तावमन्वायत्ता तां चेदविदान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति । प्राण इति होवाच सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता तां चेदविद्वान् प्रास्तोष्यो मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति । अथ हैनमुद्गाता उपससाद उद्गातः ! या देवता उद्गीथमन्वायत्ता तां चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति । आदित्य इति होवाच सर्वाणि ह वा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवता उद्गीथमन्वायत्ता तां चेदविद्वानुदगास्यः मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति । अथ हैनं प्रतिहर्ता उपससाद प्रतिहर्तः ! या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति । अन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रत्यहरिष्यः मूर्धा ते व्यपतिष्यत् तथोक्तस्य मयेति तथोक्तस्य मयेति ॥ ११ ॥

ततः किम्? इत्यत आह—**अथेति**। **अथ** स्वऋत्विक्कर्मोपरमणानन्तर**मेनमुषस्तिं यजमानो राजोवाच ह**। किमिति? **भगवन्तं वाहं विविदिषाणि** वेत्तुमिच्छामीत्युक्तो मुनिः यदि तेऽहं श्रोत्रपथमागत **उषस्तिरस्मि चाक्रायण इति होवाच**। सत्यमेव **भगवन्तं** बहुगुणमश्रौषमिति **स ह यजमान उवाच**। **सर्वैरार्त्विज्यैर्भगवन्तं पर्यैषिषं** पर्येषणं कृतवानस्मि। **भगवतः** स्थिति**महमवित्त्वा** अविदित्वान्विष्यमाणोऽपि भवदलाभेनान्यानिमानवृषि वृतवानस्मि। अद्यापि **भगवांस्त्वेव मे** मम **सर्वैरार्त्विज्यैरि**त्युक्तस्तथेत्याह उषस्तिः। **अथा**नन्तरं तर्हि पूर्वं त्वया वृताः **एत एव** मया **समतिसृष्टा** अनुज्ञातास्सन्तः स्तुवतां त्वयैतत्कार्यं **यावत्त्वेभ्य** ऋत्विग्भ्यो **धनं दद्याः** ह प्रयच्छसि **तावन्मम दद्याः** इत्युक्तस्त**थेति ह यजमान उवाच**। **अथौ**षस्त्यां वाचं श्रुत्वा **हैनमुषस्तिं** विनयेन **प्रस्तोता उपससाद** उपजगाम। **प्रस्तोतः! या देवते**त्यादि पूर्वं भगवानवोचत्। **या प्रस्तावभक्तिमन्वायत्ता सा कतमा देवता**? इति पृष्ट उषस्तिः **प्राण इति होवाच**। कथम्? **सर्वाणि ह वा इमानि** स्थावरजङ्गमानि **भूतानि** प्रलयकाले **प्राणमेवाभिसंविशन्ति** प्राणात्मनैवाभ्युज्जिहते। उत्पत्तिकाले प्राणादेवोद्गच्छन्ति। अतः प्रस्तावस्य प्राणो देवतेति युक्तम्। अतः **सैषा देवता प्रस्तावमन्वायत्ता। तां चेदविद्वान्** त्वं **प्रास्तोष्यः** प्रस्तावभक्तिं कृतवानसि यदि तदा **ते मूर्धा व्यपतिष्यत्** विपतितं अभविष्यत्। **तथोक्तस्य मया** निषिद्धस्सन् कर्मणो यदुपरममकार्षीः अतः साधु कृतं त्वयेत्यभिप्रायः। अथ **उद्गाताप्यपृच्छत्—कतमा उद्गीथभक्तिमन्वायत्ता देवता**? इति पृष्ट **आदित्य इति होवाच। सर्वाणि ह वा इमानि भूतानि आदित्यमुच्चैः सन्तं गायन्ति** स्तुवन्ति उच्छब्दसामान्यात्। **अथ हैनं प्रतिहर्ता उपससाद। कतमा सा प्रतिहार**भक्तिमन्वायत्ता? इति पृष्टो**ऽन्नमिति होवाच। सर्वाणि ह वा इमानि भूतानि अन्नमेवात्मानं प्रतिहरमाणानि जीवन्ति**। प्रतिशब्दसामान्यात्। **सैषा देवता प्रतिहारभक्तिमन्वायत्ते**ति। समानमन्यत्। **तथोक्तस्य मयेति** प्रस्तावोद्गीथप्रतिहारभक्तीः प्राणादित्यान्नदृष्ट्योपासीतेति प्राणाद्यापत्तिः कर्मसमृद्धिर्वा तत्फलमिति समुदायार्थः। तत्त-

त्कर्मदेवताज्ञानतः कृतं कर्म निष्फलमिति चेन्न ; केवलकर्मिणो दक्षिणमार्गतः चन्द्रलोकाप्तिफलसत्त्वात् । देवताज्ञानपूर्वककर्मानुष्ठानत उत्तरेण पथा ब्रह्मलोकं गत्वापुनरावृत्तिरिति शेषः ॥ ११ ॥

अन्नसमृद्धयर्थमुपासनम्

अथातः शौव उद्गीथः तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज । तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुरन्नं नो भगवानागायतु अशनायाम वा इति । तान् होवाच इहैव मा प्रातरुपसमीयातेति तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेयः प्रतिपालयांचकार । ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः सꣳरब्धाः सर्पन्तीत्येवमाससृपुस्ते ह समुपविश्य हिंचक्रुः । ओ३मदा३मों३पिबा३मों३देवो वरुणः प्रजापतिः सविता३न्नमिहा२हरदन्नपते२ऽन्नमिहाहरा२हरो३मिति ॥ १२ ॥

अतीते खण्डेऽन्नालाभत उच्छिष्टभक्षणादिकष्टावस्थोक्ता । इदानीं तन्मा भूदित्यन्नसमृद्धय इदमारभ्यते—अथेति । अथोषस्तिविजयानन्तरं श्वभिर्दृष्ट **उद्गीथः शौव** इह प्रस्तूयते । तत्तत्र ह किल नामतो **बको** दल्भस्यापत्यं **दाल्भ्यः ग्लावो** नामतः । मित्राया अपत्यं **मैत्रेयः** । वाशब्दश्चार्थः । असौ द्व्यामुष्यायण इत्यर्थः । " द्विनामा तु द्विगोत्रजः " इति स्मृतेः । **स्वाध्यायं** कर्तुं ग्रामाद्बहि**रुद्वव्राज** विविक्तदेशं जगामेत्यर्थः । प्रतिपालयाञ्चकारेत्येकवचनलिंगात् तद्ध बक इत्यादिविशेषणविशिष्ट एकोऽसावृषिरित्यवगम्यते । ऋषेरन्नकामनया चोद्गीथकालप्रतिपालनात् तत्स्वाध्यायतोषितेयं देवता **तस्मा** ऋषये तदनुग्रहार्थं श्वरूपं गृहीत्वा **श्वा श्वेतः प्रादुर्बभूव** । **तमन्ये** क्षुल्लकाः **श्वान उपसमेत्योचुः**— **अन्नं नो**ऽस्मभ्यं **भगवानागायतु** एवमागानतो निष्पादयत्वित्यर्थः । वागादयो

मुख्यप्राणेन सह स्वाध्यायतोषिताः सन्तः श्वरूपं धृत्वैनमनुगृह्णन्तीति भावः। बुभुक्षिताः वयमशनायामः अशितुमिच्छाम इत्येवमुक्तः श्वा श्वेतस्तान् क्षुल्लकान् शुन उवाच। किमिति? इहैवास्मिन् देशे मा मां प्रातः प्रातःकाले उपसमीयातेति। दैर्घ्यं छान्दसम्। प्रातरिति शब्दतः प्रातःकाल एव आदित्याभिमुख्येन कर्तव्यता द्योत्यते। अपराह्ण आदित्यानभिमुख्यात्। तद्ध बको दाल्भ्यो ग्लावो वा मैत्रेय ऋषिः प्रतिपालयाञ्चकार तत्कालप्रतीक्षणं कृतवानित्यर्थः। ते श्वानस्तत्रैव ऋषेः समक्षमागम्य यथैवेह कर्मणि बहिष्पवमानेन स्तोत्रेणोद्गातृपुरुषाः स्तोष्यमाणा अन्योन्यं संरब्धाः सर्पन्तीत्येवमेवेह श्वानो मुखं मुखेनाबध्यासस्रुपुः परिभ्रमणं कृतवन्त इत्यर्थः। त एवं संसृप्य समुपविश्योपविष्टास्सन्तः हिंचक्रुः हिंकारं कृतवन्त इत्यर्थः। ओमदाम ओं पिबाम ओं द्योतनाद्देवो जगतोऽभिवर्षणाद्वरुणः प्रजानां पालनात् प्रजापतिः सर्वस्य प्रसवितृत्वात् सविता। एतैः पर्यायैः एवंभूतस्स आदित्योऽन्नमस्मभ्यमिहाहरत् आहरत्विति। त एवं हिंकृत्वा पुनरप्यूचुः—हेऽन्नपते सवितः! अन्नमस्मभ्यमिहाहर। आहरेत्यभ्यास आदरार्थः॥ १२॥

स्तोभाक्षरोपासनम्

अयं वाव लोको हाउकारो वायुर्हाइकारश्चन्द्रमा अथकार आत्मा इहकारोऽग्निरीकारः। आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोइकारः प्रजापतिर्हिंकारः प्राणः स्वरोऽन्नं या वाग्विराट्। अनिरुक्तस्त्रयोदशः स्तोभः संचरो हुंकारः। दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवꣳ साम्नामुपनिषदं वेद उपनिषदं वेद इति॥ १३॥

भक्तिविषयोपासनस्य सामावयवसंबद्धत्वात् सामावयवीभूतस्तोभाक्षरविषयोपासनानि वक्तुमिदमारभ्यते—अयमिति। "इयं वै रथन्तरम्" इति श्रुत्या रथन्तरे साम्नि यः प्रसिद्धः अयं वाव अयमेव लोको हाउकारः स्तोभः

उकारः स्तोभोऽयं लोक इत्युपासीतेत्यर्थः। वामदेवसाम्नि यः प्रसिद्धः स **वायुर्हाइकारः**। वामदेवसाम्नो वायुसंबन्धाद्वा। इकारं वायुदृष्ट्योपासीत। **चन्द्रमा अथकारः** चन्द्रदृष्ट्या अथकारमुपासीत। अन्नात्मा हि चन्द्रः। अन्ने हीदं स्थितं थकाराकारसामान्यात्। **आत्मेहेति** स्तोभः प्रत्यक्षत्वेनोपदिश्यते। इहेति च स्तोभे तत्सामान्यात्। यतो निधनानि चाग्नेयानि सामानीत्यग्नि**रीकारः**। **आदित्य ऊकारः**। उच्चैस्सन्तमादित्यं गायन्तीत्यूकारश्चायं स्तोभ आदित्यदैवत्ये साम्नि प्रसिद्धः। **निहव एकार** इत्यत्र निहव इत्याह्वानमेकारः स्तोभः। एहीति चाह्वयन्तीति सामान्यात्। **विश्वेदेवा औहोइकारः**। एतत् स्तोभस्य वैश्वदेव्ये साम्नि दर्शनात्। **प्रजापतिः हिंकारः** आनिरुक्त्यात् हिंकारस्य चाव्यक्तत्वात्। **प्राणः स्वरः** प्राणस्य स्वर इति स्तोभहेतुत्वसामान्यात्। **या** इति स्तोभो**ऽन्नं** अन्ने हीदं यातीत्यतस्तत्सामान्यात्। **वागिति विराट् स्तोभो विराडन्नं** देवताविशेषो वा। वैराजे साम्नि अयं स्तोभः प्रसिद्धः। अव्यक्तत्वाद**निरुक्तः**। इदं वा इदं वेति निर्वक्तुमशक्यत्वाद्विकल्प्यमानस्वरूपः **संचरः**। **त्रयोदशो हुंकारः** अव्यक्तो ह्ययमतोऽनिरुक्तविशेष एवोपास्यः। स्तोभाक्षरोपासनफलमाह— दुग्ध इति। **दुग्धेऽस्मै वाग्दोहमित्याद्युक्तार्थम्**। य एतामेवं साम्नां सामावयवस्तोभाक्षरविषयामुपनिषदं वेद तस्यैतत् यथोक्तं फलमित्यर्थः। द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः सामावयवोपासनापरिसमाप्त्यर्थो वा इति ॥१३॥

इति **प्रथमोऽध्यायः**

---

# द्वितीयोऽध्यायः

समस्तसामोपासनानि

समस्तस्य खलु साम्न उपासनꣳ साधु यत्खलु साधु तत्सामेत्याचक्षते यदसाधु तदसामेति। तदुताप्याहुः साम्नैनमुपा-

गादिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागादिति असाधुनैनमुपागादित्येव तदाहुः । अथ उताप्याहुः साम नो बतेति यत्साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति यदसाधु भवति असाधु बतेत्येव तदाहुः । स य एतदेवं विद्वान् साधु सामेत्युपास्ते अभ्याशो ह यदेनꣳ साधवो धर्मा आ च गच्छेयुः उप च नमेयुः ॥ १ ॥

"ओमित्येतदक्षरं" इत्यादिना अनेकफलदं सामावयवविषयं स्तोभाक्षरविषयं चोपासनमुक्तम् । उक्तस्य सामैकदेशसंबन्धमात्रत्वात् समस्तोपासनाया व्यस्तोपासनापूर्वकत्वाच्च अथेदानीं समस्तसामविषयाण्युपासनानि वक्तव्यानीति श्रुतिरारभते—**समस्तस्येत्यादिना** । पाञ्चभक्तिकसाप्तभक्तिकत्वेन सर्वावयवविशिष्टस्य **समस्तस्य साम्न उपासनं खलु साधु** समस्ते साम्नि साधुदृष्टिविधानात् साधु सामेत्युपास्त इत्युपसंहाराच्च । व्यस्तोपासनापेक्षया समस्तोपासनायाः साधुत्वं युज्यत इत्युक्तं हि । व्यस्तोपासनायामसाधुत्वविवक्षयेत्यर्थः । साधुशब्दः शोभनवाची । कथम्? इत्यत आह—**यदिति** । लोके **यत्खलु साधु** शोभनत्वेन प्रसिद्धं शिष्टास्**तत्सामेत्याचक्षते** । **यद्विपरीततयासाधु तदसामेति** । तत्तत्र साध्वसाधुकरणे सन्त **एवमुताप्याहुरेनं** राजानं सामन्तं वा **साम्नोपागात्** उपगतवान् । लौकिकास्तु **साधुना** शोभनाभिप्रायेणै**नमुपागादित्येवाहुः** । यत्र बन्धनाद्यसाधुकार्यं दृश्यते **तत्रासाम्नैनमुपागादिति असाधुनैनमुपागादित्येव तदाहुः** । **अथ उतापि चाहुर्नो**ऽस्माकं स्वसंवेद्यं **साम बते**त्यनुकम्पया संपृक्तमित्याहुरित्याह—**यदिति** । **यत् साधु भवति साधु बतेत्येव तदाहुरसाम नो बतेति** । विपर्यये जाते **यदसाधु भवति असाधु बतेत्येव तदाहुः** । तस्मात्सामसाधुशब्दयोरेकार्थत्वं सिद्धमित्यर्थः । **स यः** कश्चित्**साधु साम** साधुगुणवत् **सामेत्युपास्ते** तस्यैतत्फलम् । **अभ्याशो ह** क्षिप्रमेव ह । **यदिति** क्रियाविशेषणम् । एनमुपासकं श्रुतिस्मृत्यविरुद्धतया **साधवः** शोभना **धर्मा**

**आ च गच्छेयुः** । न केवलमागच्छेयुः भोग्यत्वेन **उप च नमेयुश्च** उपतिष्ठेयुरित्यर्थः ॥ १ ॥

साधुदृष्ट्योपासनीयकथनम्

लोकेषु पञ्चविधꣳ सामोपासीत पृथिवी हिंकारः अग्निः प्रस्तावः अन्तरिक्षमुद्गीथः आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु । अथावृत्तेषु द्यौर्हिंकार आदित्यः प्रस्तावः अन्तरिक्षमुद्गीथः अग्निः प्रतिहारः पृथिवी निधनम् । कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च य एतदेवं विद्वान् लोकेषु पञ्चविधꣳ सामोपास्ते ॥ २ ॥

कानि साधुदृष्ट्योपासनीयानि ? इत्यत आह—**लोकेष्विति** । **लोकेषु** पृथिव्यादिषु पञ्चभक्तिभेदेन **पञ्चविधं** साधु समस्तं **सामोपासीत** । लोकेष्वित्यत्र या सप्तमी तां प्रथमात्वेन विपरिणम्य, **पृथिवी हिङ्कारः** प्राथम्यसामान्यात् । **अग्निः प्रस्तावः** । अग्नौ हि कर्माणि प्रस्तूयन्ते । **अन्तरिक्षमुद्गीथः** । अन्तरिक्षे हि गानम् । उद्गीथस्य गकारविशिष्टत्वात् । **आदित्यः प्रतिहारः** । आदित्यस्य मां प्रति मां प्रतीति सर्वप्राण्यभिमुखत्वात् । **द्यौः निधनम्** । निधीयन्तेऽस्मिन् सर्वे इति निधनम् । दिवः पृथिव्याद्याधारत्वात् । **इत्यूर्ध्वगतेषु लोकेषु** लोकदृष्ट्या सामोपासनं विहितम् । **अथावृत्तेन** द्युमुखलोकेषु पञ्चविधमुच्यते । लोकानां गत्यागतिविशिष्टत्वात् । यत एवमत **आवृत्तेषु द्यौः हिङ्कारः** प्राथम्यात् । **आदित्यः प्रस्तावः** आदित्योदयस्य सर्वप्राणिकर्मप्रस्तावहेतुत्वात् । **अन्तरिक्षमुद्गीथः** । अन्तरिक्षे हि गानमभिव्यज्यत इत्याद्युक्तार्थम् । **अग्निः प्रतिहारः** अग्नेः प्राणिभिः प्रतिहरणात् । **पृथिवी निधनं** भूतग्रामाश्रयत्वात् । एवमुपासनाफलमाह—**कल्पन्त** इति । **अस्मा** उपासकाय गत्यागतिविशिष्टो-र्ध्वाश्चावृत्ताश्च **लोकाः** भोग्यत्वेन **कल्पन्ते** समर्थीभवन्तीत्यर्थः । **य एतदेवं**

**विद्वान् लोकेषु पञ्चविधं** सप्तविधं साधु **सामेत्युपास्त** इति सर्वत्र योजनीयम् ॥ २ ॥

वृष्टौ पञ्चविधसामोपासनम्

वृष्टौ पञ्चविधꣳ सामोपासीत पुरोवातो हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः उद्गृह्णाति तन्निधनम् । वर्षति हास्मै वर्षति ह य एतदेवं विद्वान् वृष्टौ पञ्चविधꣳ सामोपास्ते ॥ ३ ॥

तत्रादौ **वृष्टौ पञ्चविधं सामोपासीत** इति । **वृष्टौ पञ्चविधं सामोपासीत** सर्वप्राणिस्थितेः वृष्टिनिमित्तत्वात् । **पुरोवातो हिङ्कारः** । यथा साम हिङ्कारादिनिधनान्तं तथा पुरोवाताद्युद्ग्रहणान्ता वृष्टिरित्यर्थः । अतः पुरोवातो हिङ्कारः प्राथम्यात् । **मेघो जायते स प्रस्तावः** प्रावृषि मेघजनेर्वृष्टिहेतुत्वात् । **वर्षति स उद्गीथः** श्रैष्ठ्यात् । **विद्योतते स्तनयति स प्रतिहारः** प्रतिहृतत्वात् । **उद्गृह्णाति तन्निधनं** समाप्तिसामान्यात् । विद्याफलं **वर्षति हास्मा** इच्छातः । असत्यामपि वृष्टौ **वर्षति ह** । **य एतदि**त्यादि पूर्ववत् ॥ ३ ॥

अप्सु पञ्चविधसामोपासनम्

सर्वास्वप्सु पञ्चविधꣳ सामोपासीत मेघो यत्संप्लवते स हिंकारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्यन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रो निधनम । न हाप्सु प्रैति अप्सुमान् भवति य एतदेवं विद्वान् सर्वास्वप्सु पञ्चविधꣳ सामोपास्ते ॥ ४ ॥

अप्सु पाञ्चभक्तिकमाह—**सर्वास्विति** । **सर्वास्वप्सु पञ्चविधं सामोपासीत** सर्वासामपां वृष्टिपूर्वकत्वात् । **मेघो यत्संप्लवते** इतरेतरमेकीभावेन

घनीभवति **स हिङ्कारः**। **यद्वर्षति स प्रस्तावः** अपां सर्वतो व्याप्तेः। **याः प्राच्यः स्यन्दन्ते स उद्गीथः** श्रैष्ठ्यात्। **याः प्रतीच्यः स प्रतिहारः** प्रतिशब्दसाम्यात्। अपां **समुद्रो निधनम्। न हाप्सु प्रैति अप्सुमान् भवतीति** फलम्॥ ४॥

ऋतुषु पञ्चविधसामोपासनम्

ऋतुषु पञ्चविधꣳ सामोपासीत वसन्तो हिंकारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनम्। कल्पन्ते हास्मा ऋतव ऋतुमान् भवति य एतदेवं विद्वान् ऋतुषु पञ्चविधꣳ सामोपास्ते॥ ५॥

तथा **ऋतुषु पञ्चविधं**—इति। **ऋतुषु पञ्चविधं सामोपासीत**। ऋतूनां व्यवस्थितत्वात्। **वसन्तो हिङ्कारः** प्राथम्यात्। **ग्रीष्मः प्रस्तावः**। प्रावृडर्थं यवादिसङ्ग्रहः प्रस्तूयते। प्राधान्यात् **वर्षा उद्गीथः**। **शरत् प्रतिहारः** रोगिणां प्रतिहरणात्। **हेमन्तो निधनं** निवाते निधनात्प्राणिनाम्। **अस्मा** उपासकाय **ऋतव** ऋतुव्यवस्थितफलं भोग्यत्वेन **कल्पन्ते**। **ऋतुमान्** आर्तवभोगैः संपन्नो **भवती**त्यर्थः॥ ५॥

पशुषु पञ्चविधसामोपासनम्

पशुषु पञ्चविधꣳ सामोपासीत अजा हिंकारः अवयः प्रस्तावो गाव उद्गीथः अश्वाः प्रतिहारः पुरुषो निधनम्। भवन्ति हास्य पशवः पशुमान् भवति य एतदेवं विद्वान् पशुषु पञ्चविधꣳ सामोपास्ते॥ ६॥

**पशुषु पञ्चविधं**—इति। **पशुषु पञ्चविधं सामोपासीत**। **अजा हिङ्कारः** अजस्य हिङ्कारवत् पशूनां प्राथम्यात् "अजः पशूनाम्" इति श्रुतेः।

साहचर्यादवयः **प्रस्तावः** । श्रैष्ठ्यात् **गाव उद्गीथः** । प्रतिहरणात् **अश्वाः प्रतिहारः** । **पुरुषो निधनं** पशूनां पुरुषाश्रयत्वात् । **भवन्ति हास्य पशवः पशुमान् भवतीति** फलम् । शिष्टमुक्तार्थम् ॥ ६ ॥

प्राणेषु पञ्चविधसामोपासनम्

प्राणेषु पञ्चविधं परोवरीयः सामोपासीत प्राणो हिंकारो वाक् प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनं परोवरीयाꣳसि वैतानि । परोवरीयो हास्य भवति परोवरीयसो ह लोकान् जयति य एतदेवं विद्वान् प्राणेषु पञ्चविधं परोवरीयः सामोपास्त इति तु पञ्चविधस्य ॥ ७ ॥

प्राणेषु **पञ्चविधं**—इति । **प्राणेषु पञ्चविधं परोवरीयः** प्राणदृष्टिविशिष्टं **सामोपासीत** । घ्राणाख्यप्राणो **हिंकारः** उत्तरोत्तरवरीयसां प्राथम्यात् । **वाक् प्रस्तावः** वाचा हि सर्वं प्रस्तूयते । अतो घ्राणादपि वाग्वरीयसी । **चक्षुरुद्गीथः** वाचो ह बहुतरविषयप्रकाशनात् । **श्रोत्रं प्रतिहारः** प्रतिहृतत्वात् । चक्षुरपेक्षया श्रोत्रं वरीयः सर्वप्राणिरुतश्रवणात् । **मनो निधनं** सर्वेन्द्रियतद्विषयाणां मनस्येव निधानात् । मनसो वागादीनां वरीयस्त्वं युज्यते, मनसो व्यापकत्वेनातीन्द्रियविषयगोचरत्वात् । एवमुत्तरोत्तरहेतुभ्यः प्राणादीनि **परोवरीयांसि** । एतद्दृष्टिविशिष्टं परोवरीयस्सामोपास्ते । **परोवरीयो हास्य** जीवनं **भवती**त्युक्तार्थमेतत् । **इति तु पञ्चविधस्य** साम्न उपासनमुक्तम् ॥ ७ ॥

सप्तविधसमस्तसामोपासनस्य साधुत्वम्

अथ सप्तविधस्य वाचि सप्तविधꣳ सामोपासीत यत्किञ्च वाचो हुमिति स हिंकारो यत् प्रेति स प्रस्तावो यदेति स आदिः ।

यत् उदिति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवो यन्नीति तन्निधनम् । दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान् वाचि सप्तविधꣳ सामोपास्ते ॥ ८ ॥

सप्तविधस्य समस्तस्य साम्न उपासनं साध्वितीदमारभ्यते—**अथेति** । **वाचीति** सप्तम्याः पूर्ववत्प्रथमार्थः । वाग्दृष्टिविशिष्टं **सप्तविधं सामोपासीत** । **यत्किञ्च वाचो हुमिति** विशेषः **स हिङ्कारः** हिङ्कारसामान्यात् । **यत्प्रेति** शब्दरूपं **स प्रस्तावः** प्रशब्दसामान्यात् । **यदेति** आ इति एति **स आदि**-राकारसामान्यात् । यद्वा—आदिरोङ्कारः तस्य सर्वादित्वात् । **यदुदिति स उद्गीथः** उद्गीथस्य उत्पूर्वत्वात् । **यत्प्रतीति स प्रतिहारः** प्रतिशब्द-सामान्यात् । **यदुपेति स उपद्रवः** उपद्रवस्योपोपक्रमत्वात् । **यन्नीति तन्निधनं** निशब्दसामान्यात् । **दुग्धेऽस्मा** इत्याद्युक्तार्थम् ॥ ८ ॥

समस्तसाम्नि आदित्यस्य सप्तधा उपास्यत्वम्

अथ खल्वमुमादित्यꣳ सप्तविधꣳ सामोपासीत सर्वदा समस्तेन साम मां प्रति मां प्रतीति सर्वेण समस्तेन साम । तस्मि-न्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात् तस्य यत्पुरोदयात् स हिंकारस्तदस्य पशवोऽन्वायत्तास्तस्मात्ते हिंकुर्वन्ति हिंकारभाजिनो ह्येतस्य साम्नः । अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्तस्मात्ते प्रस्तुतिकामाः प्रशꣳसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः । अथ यत्संगववेलायाꣳ स आदिस्तदस्य वयाꣳस्य-न्वायत्तानि तस्मात्तान्यन्तरिक्षेऽनारम्भणान्यादायात्मानं परिपतन्ति आदिभाजीनि ह्येतस्य साम्नः । अथ यत् संप्रति मध्यन्दिने स

उद्गीथः तदस्य देवा अन्वायत्तास्तस्मात्ते सत्तमाः प्राजापत्याना-मुद्गीथभाजिनो ह्येतस्य साम्नः। अथ यदूर्ध्वं मध्यंदिनात् प्रागपराह्णात् स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात्ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः। अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात् स उपद्रवस्तदस्यारण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा कक्षꣳ श्वभ्रमित्युपद्रवन्ति उपद्रवभाजिनो ह्येतस्य साम्नः। अथ यत्प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यꣳ सप्तविधꣳ सामोपास्ते ॥ ९ ॥

प्रथमाध्याये पञ्चावयवसाम्नि आदित्यदृष्टिरुक्ता। इदानीं समस्तसाम्नि आदित्यः सप्तधा उपास्यत इत्याह—**अथेति**। **अथ खल्वमुमादित्यं** समस्ते साम्नि अवयवशो विभज्य **सप्तविधं सामोपासीत**। आदित्यस्य कथं सामत्वं? इत्यत आह—**सर्वदेति**। आदित्यस्य उद्गीथसामहेतुत्वेन वृद्धिक्षयवैरल्यात् **सर्वदा समः**। **तेन** हेतुनादित्यः **साम**। यतो **मां प्रति मां प्रतीति** समानबुद्धिविषयो भवति अतः **सर्वेण समः**। अतः **सामादित्यः**। **तस्मिन्नादित्ये** अवयवविभागशः **इमानि सर्वाणि भूतानि अन्वायत्तानि** उपजीव्यत्वेनादित्यमनुगतानीति विद्यात्। तत्कथं? **तस्यादित्यस्योदयात् पुरा यत्** धर्मरूपं **स हिङ्कारो** भक्तिः। तत्रेदं हि सामान्यम्। यदस्य हिङ्कारभक्तिरूपं **तदस्य** गवादयः **पशवोऽन्वायत्ताः** तद्भक्तिरूपं उपजीवन्तीत्यर्थः। यस्मादेवं **तस्मात्ते** पशवो **हिङ्कुर्वन्ति**। उदयात्प्रागेव पशूनामादित्यसामभक्तिरूपहिङ्कारभजनशीलत्वात्। तस्माद्**ध्येतस्य साम्नो हिङ्कारभाजिनः** पशव इत्यर्थः। **अथ प्रथमोदिते** यत्सवितृरूपं **स प्रस्तावः**। **तदस्य मनुष्या अन्वायत्ताः** पूर्ववत्। यस्मा**देतस्या**दित्यस्य **साम्नः प्रस्तावभाजिनो** मनुष्या भवन्ति **तस्मात्ते** प्रस्तुतिं प्रशंसां कामयन्त इति

**प्रस्तुतिकामाः प्रशंसाकामाश्च** भवन्तीत्यर्थः। **अथ** यद्गवां रश्मीनां सहगमनं सङ्गवो यस्यां वेलायां, सा हि गवां वत्सैः **संगववेला**। तस्मिन् काले यत्सवितृरूपं **स आदिर्भक्तिविशेष** ओङ्कारः। **तदस्य वयांसि** पक्षिणोऽ**न्वायत्तानि**। यस्मादेवं **तस्मात्तानि** वयांसि **अन्तरिक्षेऽनारम्भणानि** अनालम्बनानि **आत्मानमेवालम्बनत्वेन** गृहीत्वा **परिपतन्ति**। अत आकारसाम्यादादिभक्तिभाजितसाम्न इत्यर्थः। **अथ यत्संप्रति मध्यंदिने** यद्रूपं **स उद्गीथभक्तिः**। **तदस्य** द्योतनात् **देवा अन्वायत्ताः**। **तस्मात्ते** प्रजापत्यपत्यानां **सत्तमाः** श्रेष्ठतमाः **एतस्य साम्न उद्गीथभाजिनो** भवन्तीत्यर्थः। **अथ यदूर्ध्वं मध्यन्दिनात् प्रागपराह्णात्** सवितुर्यद्रूपं **स प्रतिहारः**। **तदस्य गर्भा अन्वायत्तास्तस्मात्ते** सवितुः प्रतिहारभक्तिरूपेणोर्ध्वं **प्रतिहृताः** सन्तो **नावपद्यन्ते** पतनद्वारे सत्यपि नाधः पतन्तीत्यर्थः। अत **एतस्य साम्नः प्रतिहारभाजिनो** गर्भा भवन्ति। **अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात् स उपद्रवः**। **तदस्यारण्याः** पशवो**ऽन्वायत्ताः**। **तस्मात्ते पुरुषं दृष्ट्वा** भीताः सन्तः **कक्षमरण्यं श्वभ्रं** भयशून्यं मत्वो**पद्रवन्ति**। यस्मात्पुरुषं दृष्ट्वा उपद्रवणात् **एतस्य साम्न उपद्रवभाजिनो** भवन्ति। **अथ यत्प्रथमास्तमिते** सवितर्यदर्शनं जिगमिषति **तन्निधनम**। **तदस्य पितरोऽन्वायत्ताः**। **तस्मात्तान्निदधति** वर्गद्वयपित्रादीन् दर्भेषु निक्षिपन्ति पिण्डस्थापनस्य तदर्थत्वात्। निधनसंबन्धाच्च **एतस्य साम्नः** पितरो **निधनभाजिनो** भवन्ति। **एवमवयवशः सप्तधा** विभक्तं **खल्वमुमादित्यं सप्तविधं सामोपास्ते**। तस्य तदापत्तिः फलमिति वाक्यशेषः ॥ ९ ॥

आदित्यात्मकमृत्युतरणाय सामोपासनम्

अथ खल्वात्मसंमितमतिमृत्यु सप्तविधꣳ सामोपासीत हिंकार इति त्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम्। आदिरिति द्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्समम्। उद्गीथ इति त्र्यक्षर-

**मुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवति अक्षरमतिशिष्यते त्र्यक्षरं तत्समम् । निधनमिति त्र्यक्षरं तत्सममेव भवति तानि ह वा एतानि द्वाविꣳशतिरक्षराणि । एकविꣳशत्यादित्यमाप्नोत्येकविꣳशो वा इतोऽसावादित्यो द्वाविꣳशेन परमादित्याज्जयति तन्नाकं तद्विशोकम् । आप्नोति हादित्यस्य जयं परो हास्यादित्यजयात् जयो भवति य एतदेवं विद्वानात्मसंमितमतिमृत्यु सप्तविधꣳ सामोपास्ते सामोपास्ते ॥ १० ॥**

आदित्यात्मकोऽयं मृत्युरहोरात्रादिकालरूपेण प्राणिजातं प्रमापयति । तत्तरणाय इदं सामोपासनमुपदिश्यते—**अथेति । अथा**दित्यविषयसामोपासनानन्तरं स्वावयवसमतया परमात्मना मितमा**त्मसंमितं** मृत्योरत्ययहेतुत्वा**दतिमृत्यु सप्तविधं सामोपासीत** । यथा प्रथमाध्याये उद्गीथ इत्युद्गीथाक्षराणि उपास्यत्वेनोक्तानि तथैवेह साम्नः सप्तविधभक्तिनामाक्षराणि समाहृत्य त्रिभिस्त्रिभिः समतया सामत्वं परिकल्प्य तदुपासनेन मृत्युगोचराक्षरसंख्यासामान्यात् मृत्युमादित्यं प्राप्य तदतिरिक्ताक्षरेणादित्यस्य मृत्योरतिक्रमणं स्यादित्यतिमृत्यु साम । तस्य प्रथमभक्तिनामाक्षराणि **हिङ्कार इति, त्र्यक्षरं** भक्तिनाम । **प्रस्ताव इति** भक्तिनामापि **त्र्यक्षरमेव** । पूर्वेण **तत्समम् । आदिरिति द्व्यक्षरम् ।** सप्तविधसामसंख्यापूरणे ओङ्कार आदिरित्युच्यते । तेन वैषम्यं प्राप्तम् । तत्साम्यायाह—**प्रतिहार इति चतुरक्षरम् । तत** आद्यक्षरयोरेकाक्षरं विच्छिद्य प्रतिक्षिप्यते । तेन **तत्सममेव** भवति । **उद्गीथ इति त्र्यक्षरं उपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवति । अक्षरमतिशिष्यते**ऽतिरिच्यते । तेन प्राप्तवैषम्यसाम्यकरणाय तदेकमपि सदक्षरमिति **त्र्यक्षरमेव** भवति । अत**स्तत्समम् । निधनमिति त्र्यक्षरं तत्सममेव भवति ।** एवं त्र्यक्षरसमतया सामत्वं संपाद्य यथाप्राप्तान्यक्षराण्येव संख्यायन्ते । **तानि ह वा एतानि** सप्तभक्तिनामाक्ष**राणि द्वाविंशतिः** । तत्रै**कविंशत्य**क्षरसंख्यया **आदित्यं** मृत्यु-

**माप्नोति** । "द्वादश मासाः पञ्चर्तवः त्रय इमे लोका असावादित्य एकविंशः" इति श्रुतेः । **एकविंशो वा इतोऽसावादित्यः** शिष्टद्वाविंशाक्षरेण मृत्योरादित्यात्परं **जयत्याप्नोति** । आदित्यात् परं किं ? इत्यत आह—**तन्नाकमिति** । कं न भवतीत्यकम् । तन्न भवतीति **नाकम्** । कं सुखमेवेत्यर्थः । दुःखस्य मृत्युविषयत्वात् तद्विपरीतसुखस्य मानसदुःखवैरल्यात् । **विशोकं तदाप्नोति** । तत्कथं ? इत्यत्रैकविंशतितमसंख्ययादित्यस्य **जयमनु परो** ह्यस्यादित्यस्य **जयात्** द्वाविंशत्यक्षरसंख्यया परो **जयो भवति** । **य एतदेवं विद्वानित्युक्तार्थं** फलम् । द्विरावृत्तिः साप्तभक्तिकसामपरिसमाप्त्यर्था ॥ १० ॥

गायत्रादिफलकसामोपासनान्तराणि

मनो हिंकारो वाक् प्रस्तावः चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतम् । स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणी भवति सर्वमायुरेति ज्योक् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या महामनाः स्यात् तद्व्रतम् ॥ ११ ॥

अभिमन्थति स हिंकारो धूमो जायते स प्रस्तावो ज्वलति स उद्गीथः अङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनꣳ संꣳशाम्यति तन्निधनमेतद्रथन्तरमग्नौ प्रोतम् । स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्वी अन्नादो भवति सर्वमायुरेति ज्योक् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न प्रत्यक् अग्निमाचामेत् न निष्ठीवेत् तद्व्रतम् ॥ १२ ॥

उपमन्त्रयते स हिंकारो ज्ञपयते स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रतिस्त्रि सह शेते स प्रतिहारः कालं गच्छति तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतम् । स य

एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति मिथुनात् मिथुनात् प्रजायते सर्वमायुरेति ज्योक् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न कांचन परिहरेत् तद्व्रतम् ॥ १३ ॥

उद्यन् हिंकार उदितः प्रस्तावो मध्यन्दिन उद्गीथः अपराह्णः प्रतिहारः अस्तं यन्निधनमेतत् बृहत् आदित्ये प्रोतम् । स य एवमेतत् बृहत् आदित्ये प्रोतं वेद तेजस्वी अन्नादो भवति सर्वमायुरेति ज्योक् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या तपन्तं न निन्देत् तद्व्रतम् ॥ १४ ॥

अभ्राणि संप्लवन्ते स हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वैरूपं पर्जन्ये प्रोतम् । स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद विरूपांश्च सुरूपांश्च पशूनवरुन्धे सर्वमायुरेति ज्योक् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या वर्षन्तं न निन्देत् तद्व्रतम् ॥ १५ ॥

वसन्तो हिंकारो ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत् प्रतिहारो हेमन्तो निधनमेतद्वैराजमृतुषु प्रोतम् । स य एवमेतद्वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योक् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या ऋतुं न निन्देत् तद्व्रतम् ॥ १६ ॥

पृथिवी हिंकारः अन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रतिहारः समुद्रो निधनमेताः शक्कर्यो लोकेषु प्रोताः । स य एवमेताः

शक्वर्यो लोकेषु प्रोता वेद लोकी भवति सर्वमायुरेति ज्योक् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या लोकान् न निन्देत् तद्व्रतम् ॥ १७ ॥

अजा हिंकारः अवयः प्रस्तावो गाव उद्गीथः अश्वाः प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः । स य एवमेता रेवत्यः पशुषु प्रोता वेद पशुमान् भवति सर्वमायुरेति ज्योक् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या पशून् न निन्देत् तद्व्रतम् ॥१८॥

लोम हिंकारः त्वक् प्रस्तावो माꣳसमुद्गीथः अस्थि प्रतिहारो मज्जा निधनमेतत् यज्ञायज्ञीयमङ्गेषु प्रोतम् । स य एवमेतत् यज्ञायज्ञीयमङ्गेषु प्रोतं वेद अङ्गी भवति नाङ्गेन विहूर्छति सर्वमायुरेति ज्योक् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या संवत्सरं मज्ज्ञो नाश्नीयात् तद्व्रतं मज्ज्ञो नाश्नीयादिति वा ॥ १९ ॥

अग्निर्हिंकारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु प्रोतम् । स य एवमेतद्राजनं देवतासु प्रोतं वेद एतासामेव देवतानाꣳ सलोकताꣳ सार्ष्टिताꣳ सायुज्यं गच्छति सर्वमायुरेति ज्योक् जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या ब्राह्मणान् न निन्देत् तद्व्रतम् ॥२०॥

त्रयी विद्या हिंकारः त्रय इमे लोकाः स प्रस्तावः अग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयाꣳसि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत्साम सर्वस्मिन् प्रोतम् । स य एवमेतत्साम सर्वस्मिन् प्रोतं वेद सर्वꣳ ह भवति । तदेष श्लोकः—

यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति ।
यस्तद्वेद स वेद सर्वꣳ सर्वा दिशो बलिमस्मै हरन्ति ॥
सर्वमस्मीत्युपासीत तद्व्रतं तद्व्रतम् ॥ २१ ॥

पञ्चसप्तविधभक्तिसाम्नोः नामग्रहणं विनोपासनमुक्तम् । अथेदानीं गायत्रादिनामग्रहणविशिष्टफलानि सामोपासनान्तराण्युच्यन्ते—**मनो हिङ्कार** इत्यादिना । सर्वकरणप्रवृत्तीनां मनसः प्राथम्यात् **मनो हिङ्कारः** । तदानन्तर्यतो **वाक् प्रस्तावः** वाचः प्रस्तवनहेतुत्वात् । **चक्षुरुद्गीथः** श्रैष्ठ्यात् । **श्रोत्रं प्रतिहारः** प्रतिहृतत्वात् । **प्राणो निधनं** स्वापकाले करणग्रामस्य प्राणे निधनात् । **एतद्गायत्रं** साम **प्राणेषु प्रोतं** गायत्र्याः प्राणत्वेन संस्तुतत्वात् । **स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद** सोऽयमविकलकरणः **प्राणी भवति** । **सर्वमायुरेति** शतसंवत्सरं जीवति । यावदायुषं **ज्योक्** ज्वलन् **जीवति** । **महान् प्रजया पशुभिः भवति** । **महान् कीर्त्या** । एवं गायत्रोपासकस्य **एतद्व्रतम्** । **महामनाः** अक्षुद्रमतिः **स्यादित्यर्थः** ॥ ११ ॥ **अभिमन्थति** इति । **अभिमन्थति स हिङ्कारः** प्राथम्यात् । **धूमो जायते स प्रस्तावः** आनन्तर्यात् । **ज्वलति स उद्गीथः** । हविराज्यसंबन्धाद**ङ्गारा भवन्ति स प्रतिहारः** अङ्गाराणां प्रतिहृतत्वात् । अग्नेः सावशेषता उपशमः । निश्शेषता संशमः । शमाप्तिसामान्या**न्निधनम्** । **एतद्रथन्तरमग्नौ प्रोतम्** । **स य** इत्यादि पूर्ववत् । स्वाध्यायनिमित्तं तेजो ब्रह्मवर्चसम् । तद्वान् । **अन्नादो** दीप्ताग्निः । **प्रत्यक्** अग्नेराभिमुख्येन **नाचामेत्** न भक्षयेत् **न निष्ठीवेत्** श्लेष्मनिरसनं न कुर्यात् **तद्व्रतम्** ॥ १२ ॥ **उपमन्त्रयते** इति । **उपमन्त्रयते** सङ्केतं करोतीति यत् **स हिङ्कारः** प्राथम्यात् । **ज्ञपयते** तोषयति **स प्रस्तावः** । **स्त्रिया सह** पर्यङ्के **शेते** इति यत् **स उद्गीथः** श्रैष्ठ्यात् । **प्रतिस्त्रि सह शेते** स्त्रियोऽभिमुखीकरणं **स प्रतिहारः** । मैथुनेन **कालं गच्छति** समाप्तितः **पारं गच्छतीति** यत् **तन्निधनम्** । **एतद्वामदेव्यं मिथुने प्रोतम्** । **स य** इत्यादि पूर्ववत् । **मिथुनी** अविधुरो भवति । **मिथुनात् मिथुनात्**

**प्रजायते** अमोघरेता भवति। स्वपर्यङ्कगतां स्त्रियं **न कांचन परिहरेत्**। समागमनार्थिन्याः स्त्रियो वामदेव्योपासनाङ्गत्वेन विधानात्। एतस्मादन्यत्र प्रतिषेधो युक्त एव ॥ १३ ॥ **उद्यन् हिङ्कारः** इति। **उद्यन्** सविता **हिङ्कारः** प्राथम्यात्। **उदितः प्रस्तावः** कर्मणां प्रस्तवनहेतुत्वात्। **मध्यंदिन उद्गीथः** श्रैष्ठ्यात्। **अपराह्णः प्रतिहारः** पश्वादिगृहप्रतिहरणात्। **अस्तं यन्निधनं** प्राणिनां रात्रौ गृहे निधानात्। बृहत आदित्यदेवत्वात् **एतद्बृहत् आदित्ये प्रोतम्**। **स य** इत्यादि पूर्ववत्। **तपन्तं न निन्देत् तद्व्रतम्** ॥ १४ ॥ **अभ्राणि संप्लवन्ते** इति। अब्भरणादभ्राणि **मेघाः** उदकवर्षणहेतुत्वात्। उक्तार्थमन्यत्। **एतद्वैरूपं** नाम साम **पर्जन्ये प्रोतम्**। पर्जन्यस्यानेकरूपत्वाद्वैरूप्यम्। **विरूपांश्चा**जाविकादिपशूनवरुन्धे प्राप्नोति। **वर्षन्तं न निन्देत् तद्व्रतम्** ॥ १५ ॥ **वसन्त** इति। **वसन्तो हिंकारः** प्राथम्यात्। **ग्रीष्मः** इत्यादि पूर्ववत्। **एतद्वैराजमृतुषु प्रोतं वेद** सोऽयं यथा ऋतव आर्तवैर्धर्मैः विराजन्ते तथा विद्वान् प्रजादिभिरित्युक्तार्थम्। **ऋतून्न निन्देत्** तद्व्रतम् ॥ १६ ॥ **पृथिवी हिंकारः** इति। **पृथिवी हिंकार** इत्यादि पूर्ववत्। रेवत्य इव शक्वर्य इति नित्यबहुवचनम्। **लोकेषु प्रोताः**। **लोकी भवति** लोकफलेन युज्यते। **लोकान्न निन्देत्** तद्व्रतम् ॥ १७ ॥ **अजा हिङ्कारोऽवयः** इति। **अजा हिङ्कार** इत्यादि पूर्ववत् ॥ १८ ॥ **लोम हिङ्कारः** इति। **लोम हिङ्कारः** लोम्नो देहावयवानां प्राथम्यात्। **त्वक् प्रस्ताव** आनन्तर्यात्। **मांसं उद्गीथः** श्रैष्ठ्यात्। **अस्थि प्रतिहार** प्रतिहृतत्वात्। **मज्जा निधनम्**। **एतत् यज्ञायज्ञीयं** नाम साम **अङ्गेषु प्रोतं वेद अङ्गी** समग्राङ्गो **भवति**। **नाङ्गेन विहूर्च्छति** न हि पङ्ग्वादिर्भवति। **संवत्सरं मज्ज्ञो** संवत्सरमात्रं **मांसानि नाश्नीयात्**। बहुवचनं मत्स्याद्युपलक्षणार्थम्। सर्वदैव **नाश्नीयादिति** वा **तद्व्रतम्** ॥ १९ ॥ **अग्निः हिंकार** इति। **अग्निर्हिङ्कारः** प्रथमस्थानत्वात्। **वायुः प्रस्तावः** आनन्तर्यात्। **आदित्य उद्गीथः** श्रैष्ठ्यात्। **नक्षत्राणि प्रतिहारः** प्रतिहृतत्वात्। **चन्द्रमा निधनं** कर्मिणां तन्निधनात्। **एतद्राजनं देवतासु प्रोतं वेद**। विद्याफलम्—**एतासामग्न्यादिदेवतानां सलोकतां सार्ष्टितां** समानर्धितां **सायुज्यं**

देहैकत्वम् । वाशब्दोऽत्र लुप्तो द्रष्टव्यः । सलोकतां वेत्यादिभावनाविशेषतः फलविशेषोपपत्तेः एतत्समुच्चयानुपपत्तेश्च । **ब्राह्मणान्न निन्देत् तद्व्रतम्** । "एते वै देवाः प्रत्यक्षं यद्ब्राह्मणाः" इति श्रुतेः । सर्वदेवानां ब्राह्मणदेहाश्रयत्वेन तन्निन्दा सर्वदेवतानिन्देत्यर्थः ॥ २० ॥ **त्रयी विद्या** इति । त्रयीविद्याया अग्न्यादिसाम्न आनन्तर्यात् **त्रयी विद्या हिङ्कारः** सर्वकर्तव्यानां प्राथम्यात् । **त्रय इमे लोकाः स प्रस्तावः** तत्कार्यत्वेनानन्तर्यात् । अग्न्यादीनामुद्गीथत्वं श्रैष्ठ्यात् । नक्षत्रादीनां प्रतिहृतत्वात्प्रतिहारत्वम् । सर्पादीनामन्तकारित्वसामान्यान्निधनत्वम् । **एतत्साम्नां** नामविशेषाभावात् सामसामान्यं **सर्वस्मिन् प्रोतम्** । हिंकारादिसामभक्तयस्त्रयीविद्यादृष्ट्या उपास्याः । अतीतेष्वपि सामोपासनेषु **यत्साम** यत्र **प्रोतं** तद्दृष्ट्या तदुपास्यम् । सर्वविषयसामविदः फलं—**सर्वं ह भवति** सर्वभावापत्त्या सर्वेश्वरो भवतीत्यर्थः । निरुपचरितसर्वभावापत्तौ दिग्भ्यो बलिप्राप्त्यनुपपत्तेः, इत्यत्रास्मिन्नर्थे **तदेष श्लोको** मन्त्रो भवतीत्याह—**यानीति** । **यानि पञ्चधा** हिंकारादिविभागतः प्रोक्तानि **त्रीणि** त्रयीविद्यादीनि तेभ्यः पञ्चधा त्रिकेभ्यो **ज्यायो** महत्तरं **परं** व्यतिरिक्त**मन्यन्नास्ति** तत्रैव हि सर्वस्यान्तर्भावात् । **यस्तद्य**थोक्तं सर्वात्मकं साम **वेद स वेद सर्वं** तस्य सर्वज्ञत्वात् । **अस्मा** एवंविदे सर्वदिक्स्था नानाविध**बलिं हरन्ति** प्रापयन्ति । अत एतत्**सर्वमस्मीति** सामोपासीत । **तस्यैतदेव व्रतम्** । द्विर्वचनं सामोपासनासमाप्त्यर्थम् ॥ २१ ॥

### उद्गातुः गानविशेषसंपदुपदेशः

विनर्दि साम्नो वृणे पशव्यमित्यग्नेरुद्गीथः अनिरुक्तः प्रजापतेर्निरुक्तः सोमस्य मृदु श्लक्ष्णं वायोः श्लक्ष्णं बलवदिन्द्रस्य क्रौञ्चं बृहस्पतेरपध्वानं वरुणस्य तान् सर्वानेवोपासीत वारुणं त्वेव वर्जयेत् । अमृतत्वं देवेभ्य आगायानि इत्यागायेत् स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमा-

त्मन आगायानि इत्येतानि मनसा ध्यायन् अप्रमत्तः स्तुवीत । सर्वे स्वरा इन्द्रस्यात्मानः सर्व ऊष्माणः प्रजापतेरात्मानः सर्वे स्पर्शा मृत्योरात्मानः तं यदि स्वरेषु उपालभेत इन्द्रं॰ शरणं प्रपन्नोऽभूवं स त्वा प्रति वक्ष्यतीत्येनं ब्रूयात् । अथ यद्येनमूष्मसु उपालभेत प्रजापतिं॰ शरणं प्रपन्नोऽभूवं स त्वा प्रति पेक्ष्यतीत्येनं ब्रूयात् अथ यद्येनं॰ स्पर्शेषु उपालभेत मृत्युं॰ शरणं प्रपन्नोऽभूवं स त्वा प्रति धक्ष्यतीत्येनं ब्रूयात् । सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति सर्वे ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥ २२ ॥

उद्गातुः सामोपासनाप्रसङ्गेन फलविशेषसंबन्धिगानविशेषसंपदुपदिश्यते— **विनर्दी**ति । वृषभकूजितसमतया विशिष्टो नर्दः स्वरविशेषोऽस्यास्तीति **विनर्दि** गानम् । तच्च **साम्नः** संबन्धि । पशुहितत्वात्**पशव्यम्** । **अग्ने**रग्निदैवत्यं **उद्गीथ** उद्गानम् । तद्विशिष्टमहं एवं **वृणे** प्रार्थय इति कश्चित् यजमान उद्गाता वा मन्यते । **अनिरुक्तः** अविशेषितः **प्रजापतेः** प्रजापतिदैवत्यसामगानविशेषः, आनिरुक्त्यात् प्रजापतेः । यो हि **निरुक्तः** स्पष्टः **सोमस्य** सोमदैवत्यः स उद्गीथ इत्यर्थः । **मृदु श्लक्ष्णं** च गानं **वायो**र्वायुदैवत्यम् । **श्लक्ष्णं** गानं **बलवत्** प्रयत्नाधिक्योपेतं यदिन्द्रस्यैन्द्रं तद्गानम् । क्रौञ्चपक्षिनादसमं **क्रौञ्चं बृहस्पतेः** बार्हस्पत्यम् । यद**पध्वानं** भिन्नकांस्यरवतुल्यं **वरुणस्य** तद्गानम् । **तान् सर्वानेवोपासीत** उपास्यत्वेन प्रयुञ्जीतेत्यर्थः । उपसेवेतेति यावत् । **वारुणं त्वेवैकं वर्जयेत्** । **अमृतत्वं देवेभ्यः आगायानि** साधयानीत्यागायेत् । **स्वधां पितृभ्यः आशां मनुष्येभ्यः तृणोदकं पशुभ्यः स्वर्गं लोकं यजमानायान्नमात्मने** मह्यमागायानीति सर्वत्रानुषज्यते । **एतानि मनसा ध्यायन्**

स्वरोष्मव्यञ्जनादिभ्योऽप्रमत्तः सन् स्तुवीत। सर्वेऽकारादयः स्वराः इन्द्रस्यात्मानः देहावयवस्थानीयत्वात्। शषसहादयः सर्व ऊष्माणः प्रजापतेः काश्यपस्यात्मानः। सर्वे स्पर्शाः कादयो व्यञ्जनानि मृत्योः आदित्यस्यात्मानः। तमेवंविदमुद्गातारं यदि कश्चित् स्वरेषु उपालभेत त्वया दुष्टः स्वरः प्रयुक्त इत्युपालम्भनं कुर्यात् तदा प्राणिनामीश्वरमिन्द्रं शरणं प्रपन्नोऽभूवम्। इन्द्रभावमेत्य स्वरान् प्रयुञ्जानोऽहं स्वराणामिन्द्राश्रयत्वात्। सोऽयमिन्द्रः त्वा त्वां प्रति वक्ष्यतीत्येनं ब्रूयात्। अथ यद्येनमूष्मसु उपालभेत प्रजापतिं शरणं प्रपन्नोऽभूवम्। स त्वा प्रति पेक्ष्यति सम्यक् पेषणं करोतीत्येनं ब्रूयात्। अथ यद्येनं स्पर्शेषूपालभेत मृत्युं शरणं प्रपन्नोऽभूवम्। स त्वा प्रति धक्ष्यति भस्मीकरिष्यतीत्येनं ब्रूयात्। यतः स्वरादय इन्द्राद्यात्मानः अतः सर्वे स्वराः घोषवन्तो बलवन्तो वक्तव्याः। तथाहमिन्द्रे बलं ददानि। तथा सर्व ऊष्माणोऽन्तरग्रस्ता बहिरनिरस्ता विवृता विवृतप्रयत्नोपेताः। प्रजापतेरात्मानं परिददानीति। सर्वे स्पर्शा लेशेन शनकैरनभिनिहिता अनभिक्षिप्ता वक्तव्याः। मृत्योरात्मानं परिहरन् परिहराणीति ॥ २२ ॥

केवलोङ्कारोपासनादिभिः परब्रह्मप्राप्तिः

त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुले अवसादयन् सर्व एते पुण्यलोका भवन्ति ब्रह्मसꣳस्थोऽमृतत्वमेति। प्रजापतिर्लोकानभ्यतपत् तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत् तामभ्यतपत् तस्या अभितप्ताया एतान्यक्षराणि संप्रास्रवन्त भूर्भुवः स्वरिति। तान्यभ्यतपत् तेभ्योऽभितप्तेभ्य ओङ्कारः संप्रास्रवत् तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णानि एवमोंकारेण सर्वा वाक् संतृण्णा ओंकार एवेदꣳ सर्वमोंकार एवेदꣳ सर्वम् ॥ २३ ॥

सामावयवोङ्कारोपासनं फलवत् न केवलमित्याशङ्क्य समस्तसामोपासनैर्-परब्रह्माप्तिः फलम्। परब्रह्माप्तिः केवलोङ्कारोपासनादिभिः स्यादेव इतीदमार-भ्यते—**त्रय** इति। **त्रयो** हि **धर्मस्कन्धाः** विभागाः। के ते? **यज्ञः** अग्नि-होत्रादिकं कर्म। **अध्ययनं** यथोक्तनियमपूर्वकं ऋगादिवेदाभ्यासः। **दानं** बहिर्वेदि भिक्षमाणेभ्योऽर्थिभ्यो यथाशक्ति न्यायतः स्वार्जितद्रव्यत्यागः—इत्येष **प्रथमो** धर्मस्कन्धः। प्राथमिकधर्मस्कन्धस्य गृहस्थसमवेतत्वात् तेनैव स निर्वर्तनीयः। द्वितीयतृतीयश्रवणादस्य प्राथम्यम्। द्वितीय**स्तप एव** कृच्छ्रचान्द्रायणादि। तद्वान् तापसो वानप्रस्थ इत्यर्थः—**द्वितीयो** धर्मस्कन्धः। दर्शनाद्यष्टाङ्गमैथुनविरलो **ब्रह्मचारी आचार्यकुलवासी**। नियमतो यावज्जीवमात्मा**नमाचार्यकुलेऽवसा-दयन्**—अयं **तृतीयो** धर्मस्कन्धः। अत्यन्तमित्यादिविशेषणादयं नैष्ठिक इत्यवगम्यते। ब्रह्मचर्यस्य विद्यार्थत्वात्। **सर्वे एते** त्रय आश्रमिणः स्वोचितधर्मानुष्ठानप्रभव**पुण्यलोकाः** व्रतिकामिवनिन आश्रमिणो **भवन्ति**। तत्र स्कन्धत्रयेऽप्यनुक्तो हि परिव्राट् अवशिष्टो भवति। तस्य व्रत्यादिवत् कर्मानधिकृतत्वात् न तस्य देवादिप्राप्तिलक्षणममृतत्वमस्ति इति चेत्—सत्यम्; तस्य पृथक्फलश्रवणात्। सोऽयं परिव्राट् तु **ब्रह्मसंस्थः** स्वातिरिक्तकलनाविरलं ब्रह्म स्वमात्रमिति ब्रह्ममात्रावशेषतया स्थितत्वात्। सोऽयं ब्रह्मीभूतः परिव्राट् ब्रह्ममात्रज्ञानसमकालमेव तन्मात्रावस्थानलक्षण**ममृतत्वमेति**। चतुर्णामाश्रमिणां ज्ञानाभावेऽपि स्वस्वधर्मानुष्ठानात् सर्वे एते पुण्यलोका भवन्तीत्युक्तेनात्र परिव्राडवशेषितः। तस्यापि स्वाश्रमोचिततपआदिदर्शनात्। तपःशब्देन परिव्राट्तापसौ गृहीतौ। ततस्तेषां चतुर्णां मध्ये यो हि प्रणवसेवनया ब्रह्मसंस्थो भवति सोऽमृतत्वमेतीति चतुर्णामधिकृतत्वाविशेषात्। न हि गवादि-शब्दवत् ब्रह्मसंस्थशब्दः परिव्राजके रूढितामर्हति। तस्मात् सर्वेषां च ब्रह्म-संस्थत्वमुपपद्यत इति चेन्न; कर्मप्रत्यययोर्विरोधात्। कर्तृकारकक्रियाफलभेद-जुष्टकर्मप्रत्ययारूढा व्रत्यादयः। परिव्राट् तु "सत् एकमेवाद्वितीयं," "ब्रह्म-व्यतिरिक्तं न किञ्चिदस्ति," "ब्रह्ममात्रमसन्नहि" इति कर्तृकारकादिक्रिया-फलकलनाविरलब्रह्ममात्रप्रत्ययो भवति विद्याविद्ययोर्विरोधात्। स्वातिरिक्तास्ति-

त्वप्रत्ययमुपादाय कर्मविधयः प्रवृत्ताः। "सन्मात्रं सत्यं तदतिरिक्तमन्यदसदन्यत्" इति श्रुतिप्रमाणजनिताविधेयब्रह्ममात्रप्रत्ययेन यस्य कर्मविधयो निवृत्ताः सोऽयं ब्रह्मज्ञानमृदितकर्मा परिव्राडेव ब्रह्मसंस्थ उच्यते। न हि तदितरस्तन्निष्ठामर्हति। इदं कृत्वा इदमाप्नुयादित्यभिसन्धिदर्शनात्। निवृत्तकर्मण एव ब्रह्मविद्यायामधिकार इत्यत्र प्रवृत्तिलक्षणं कर्म ज्ञानं सन्न्यासलक्षणम्—

तस्मात् ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान्।
कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते।
तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः॥
अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यक् ऋषिसंघजुष्टम्। इत्यादि,
नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति।

इति श्रुतेः स्मृतेश्च। तस्मात् ब्रह्मसंस्थशब्दः व्याविद्धसर्वकर्मणि परिव्राजके युज्यते मुख्यामृतत्वश्रवणात्। तस्यैव ब्रह्मसंस्थत्वं पारिव्राज्यं चेति सिद्धम्। स यत्संस्थोऽमृतत्वमेति तन्निरूप्यं निरूपयति—**प्रजापतिर्**विराट् काश्यपो वा सारजिघृक्षया **लोकानुद्दिश्याभ्यतपत्** तपो ध्यानं कृतवान्। **तेभ्योऽभितप्तेभ्यः** सारभूता **त्रयी विद्या** प्रजापतेर्मनसि **संप्रास्रवत्** प्रादुरभूदित्यर्थः। **तामभ्यतपत्। तस्या अभितप्तायास्**त्रयीविद्यायाः **एतान्यक्षराणि भूर्भुवःस्वरिति** व्याहृतयः **संप्रास्रवन्त**। **तान्यक्षराण्यभ्यतपत्। तेभ्योऽभितप्तेभ्य ओङ्कारः संप्रास्रवत्**। तदोङ्काराख्यं ब्रह्म कीदृशं? इत्यत आह—**तदिति। तद्यथा** पर्णनालेन **शंकुना सर्वाणि पर्णानि संतृण्णानि** व्याप्तानि **एवं** ब्रह्मप्रतीकेनो**ङ्कारेण सर्वा वाक्** शब्दराशिः **संतृण्णा**। अत **ओङ्कार एवेदं** शब्दजातं अर्थजातञ्च **सर्वम्**। ओङ्कारगताभिधानाभिधेयकलनापाये तुरीयोङ्कारत्वेन विद्योतमानं ब्रह्मैवावशिष्यते। "ओङ्काराग्रविद्योतं तुरीयतुरीयं",

यतो वाचो निवर्तन्ते विकल्पकलनान्विताः।
विकल्पसंक्षयाज्जन्तोः पदं तदवशिष्यते॥

इति श्रुतेः। द्विरुक्तिरादरार्था॥ २३॥

सामामन्त्रहोमार्थसाम्नामुपदेशः

ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनꣳ रुद्राणां माध्यन्दिनꣳ सवनमादित्यानां च विश्वेषां च देवानां तृतीयसवनम् । क्व तर्हि यजमानस्य लोक इति स यस्तं न विद्यात् कथं कुर्यात् अथ विद्वान् कुर्यात् । पुरा प्रातरनुवाकस्योपाकरणात् जघनेन गार्हपत्यस्योदङ्मुख उपविश्य स वासवꣳ सामाभिगायति । लो ३ कद्वारमपावा ३ र्णू ३३ पश्येम त्वा वयꣳरा ३३३३३ हुं ३ आ ३३ ज्या ३ यो ३ आ ३२१११ इति । अथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्द एष वै यजमानस्य लोक एतास्मि । अत्र यजमानः परस्तादायुषः स्वाहा अपजहि परिघमित्युक्त्वा उत्तिष्ठति तस्मै वसवः प्रातःसवनꣳ संप्रयच्छन्ति । पुरा माध्यन्दिनस्य सवनस्योपाकरणात् जघनेनाग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रꣳ सामाभिगायति । लो ३ कद्वारमपावा ३ र्णू ३३ पश्येम त्वा वयं वैरा ३३३३३ हुं ३ आ ३३ ज्या ३ यो ३ आ ३२१११ इति । अथ जुहोति नमो वायवे अन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्द एष वै यजमानस्य लोक एतास्मि । अत्र यजमानः परस्तादायुषः स्वाहा अपजहि परिघमित्युक्त्वा उत्तिष्ठति तस्मै रुद्रा माध्यन्दिनꣳ सवनꣳ संप्रयच्छन्ति । पुरा तृतीयसवनस्य उपाकरणात् जघनेनाहवनीयस्य उदङ्मुख उपविश्य स आदित्यꣳ स वैश्वदेवꣳ सामाभिगायति ।

लो ३ कद्वारमपावा ३ र्णू ३३ पश्येम त्वा वय९स्वारा ३३३३३ हुं ३ आ ३३ ज्या ३ यो ३ आ ३२१११ इति। आदित्यमथ वैश्वदेवं लो ३ कद्वारमपावा ३ र्णू ३३ पश्येम त्वा वय९ साम्रा ३३३३३ हुं ३ आ ३३ ज्या ३ यो ३ आ ३२१११ इति। अथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दत। एष वै यजमानस्य लोक एतास्मि अत्र यजमानः परस्तादायुषः स्वाहा अपहत परिघमित्युक्त्वा उत्तिष्ठति। तस्मा आदित्याश्च विश्वे च देवास्तृतीयं सवन९ संप्रयच्छन्ति एष ह वै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद ॥ २४ ॥

लोकादिनिष्यन्दनकथनमोङ्कारस्तुत्यर्थम्। सामोपासनाप्रसङ्गमध्ये परापरब्रह्मप्रतीकत्वेनालम्बनत्वेनोङ्कारं अमृतत्वहेतुतया प्रतिपाद्य अथ प्रकृतियज्ञाङ्गभूतसाममन्त्रहोमार्थसामान्युपदिशति—**ब्रह्मवादिन** इति। **ब्रह्मवादिनो वदन्ति।** **यद्वसूनां प्रातःसवनं** प्रसिद्धं तैश्च प्रातःसवनसंबद्धोऽयं लोको वशीकृतः। तथा रुद्रैर्माध्यंदिनसवनेशानैरन्तरिक्षलोकः। तथादित्यैश्च विश्वैर्देवैश्च तृतीयसवनेशानैस्तृतीयो लोको वशीकृतः। यजमानस्य लोकोऽन्यः परिशिष्टो न विद्यत इति। ततः **क तर्हि यजमानस्य लोकः** यदर्थमयं यजते? "लोकाय वै यजते" इति श्रुतेः। लोकाभावे च **स यो** यजमानस्तं लोकस्वीकरणोपायं साम होममन्त्रार्थलक्षणं **न विद्यात्** सोऽज्ञः **कथं कुर्यात्** यज्ञम्? न कथञ्चन तस्य कर्तृत्वमुपपद्यते। अविदुषः कर्ममात्रविदः कर्तृत्वं प्रतिषिध्यत इति सामादिविज्ञानस्तुतय इत्यर्थः। **अथ** तद्वक्ष्यमाणं सामाद्युपायं **विद्वान् कर्म कुर्यात्।** कथम्? **पुरा** पूर्वं **प्रातरनुवाकस्य** शस्त्रस्य प्रारम्भात् **गार्हपत्यस्य जघनेन** पश्चादुदङ्मुखस्सन्नुपविश्य वसुदैवत्यं **स वासवं सामाभिगायति।**

हे अग्ने! पृथिव्यादिलोकाप्तिद्वारमपावृणु। तेन द्वारेण **पश्येम त्वा** त्वां राज्यायेति। **अथानन्तरं जुहोति**। केन मन्त्रेण? इत्यत्र **अग्नये** तुभ्यं **नमः** वयं प्रह्वीभूताः। **पृथिवीक्षिते** पृथिवीनिवासाय **लोकं मे** मह्यं **यजमानाय विन्द** लभस्व। **एष वै यजमानस्य लोकः**। **एता** आगन्तास्मि। अस्मिन् लोके **यजमानोऽहमायुषः परस्तादूर्ध्वं** मृतः सन्, **स्वाहेति** जुहोति। **अपजहि परिघमपनय** लोकद्वारकवाटं--इत्येतं मन्त्र**मुक्त्वा उत्तिष्ठति**। एवमेतैर्वसुभ्यः प्रातस्सवनसंबद्धो लोको निष्क्रीतः स्यात्। ततस्ते **प्रातस्सवनं** यजमानाय **वसवः प्रयच्छन्ति**। तथाग्नी**ध्रीयस्य** दक्षिणाग्नेर्जघनेन **उदङ्मुख उपविश्य स रौद्रं सामाभिगायति**। अन्तरिक्षक्षित इत्यादि समानम्। तथाहव**नीयस्य उदङ्मुख उपविश्य स आदित्यं स वैश्वदेवं च सामाभिगायति**। क्रमेण स्वाराज्याय साम्राज्याय दिविक्षिद्भ्य इत्येवमादि समानम्। अन्यत् विन्दत अपहतेति बहुवचनमात्रविशेषः। यथोक्तसाम विद्वानेष **वै** यजमानः **यज्ञस्य मात्रां वेद। य एवं वेदेति** द्विर्वचनमध्यायपरिसमाप्त्यर्थम्॥ २४॥

इति द्वितीयोऽध्यायः

---

# तृतीयोऽध्यायः

सवित्रुपासनस्य पुरुषार्थसाधकतमत्वम्

असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवꣳशः, अन्तरिक्षमपूपो मरीचयः पुत्राः। तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्य ऋच एष मधुकृत ऋग्वेद एष पुष्पं

ता अमृता आपः ता वा एता ऋचः । एतमृग्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत । तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतत् यदेतदादित्यस्य रोहितꣳरूपम् ॥ १ ॥

अतीताध्यायान्ते "यज्ञस्य मात्रां वेद" इति यज्ञाङ्गविषयसामहोमादीन्युपदिष्टानि । सर्वयज्ञनिर्वाहकः सविता महत्या श्रिया दीप्यते । स हि सर्वप्राणिकर्मफलभूतः सन् सर्वप्रत्यक्षतयावगम्यते । अतः सवितृविषयमुपासनं पुरुषार्थसाधकतममिति श्रुतिरारभते— **असाविति । असौ वा आदित्यो देवानां** मध्विव **मधु** । आदित्यस्य सर्वयज्ञफलरूपत्वात् । कथं तस्य मधुत्वं ? इत्यत आह— **तस्येति । तस्य** मधुन आदित्यस्य **द्यौरेव** भ्रमरसेव्यमध्वाधारतिरश्चीनवंश इव **तिरश्चीनवंशः** दिवस्तिर्यग्गतेव लक्ष्यमाणत्वात् । **अन्तरिक्षं** मध्व**पूपः** द्युवंशलग्नमिव लम्बमानत्वात् । तस्यादित्यस्य **मरीचयो** रश्मिस्था आपः पुत्रा इव **पुत्राः । तस्य ये प्राञ्चः** प्राच्यां दिशि गता **रश्मयः ता एवास्य** प्रागञ्चनात् **प्राच्यो मधुनाड्यः** मध्वाधारछिद्राणि । तत्र सवित्राश्रयं रोहितरूपं मधु कुर्वन्तीति भ्रमरा इव **ऋच एव मधुकृतः** । यत्र रसानादाय भ्रमरा इव मधु कुर्वन्ति सोऽयं **ऋग्वेद एव पुष्पम्** । ऋग्वेदशब्देन तद्विहितं कर्मोच्यते, न हि शब्दराशिः । तत्र भोग्यरसनिष्यन्दासम्भवात् , कर्मफलमधुनिस्स्रावसम्भवात् । पुष्पस्थानीयऋग्वेदविहितात्कर्मणः सकाशादापः कर्मफलान्यादाय ऋग्भिर्मधु निर्वर्त्यन्ते । कास्ता आपः ? इत्यत्र सोमाज्यपयोरूपा आप अग्नौ प्रक्षिप्तास्तत्पाकाभिनिर्वृत्ता **अमृता** अत्यन्तरसवत्य **आपो** भवन्ति । अपाममृतार्थत्वात् । पुष्पेभ्यो रसमाददाना भ्रमरा इव **ता वा एता ऋचः । एतमे**तदृग्वेदविहितं कर्म पुष्पस्थानीय**मभ्यतपन्** अभितापं कृतवत्य इव । एता ऋचः कर्मणि प्रयुक्तास्त**तस्य** ऋग्वेदस्या**भितप्तस्य यशो** दिगन्तविश्रुतत्वं **तेजो** देहगता दीप्तिः **इन्द्रिय**सामर्थ्यं **वीर्यं** बलमन्नाद्यमन्नादशक्तित्वं यागादिलक्षणात् कर्मणो यशआद्यन्नाद्यान्तं **रसोऽजायत । तद्व्यक्षरत्** व्यचलत् । गत्वा **तदादित्यमभितः** पार्श्वतः **अश्रयद**ाश्रितवत् । कर्षकैः केदारनिष्पत्तिवत् मनुष्यै-

रादित्यसञ्चितमधु भोक्ष्याम इति यशआदिलक्षणफलाप्तये कर्माणि क्रियन्त इत्यर्थः। किं तत्? **यदेतदादित्यस्य** उद्यतो **रोहितं रूपं** दृश्यते तद्वा एतदित्यर्थः ॥ १ ॥

दक्षिणरश्म्युपासनफलम्

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूꣳष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपः। तानि वा एतानि यजूꣳषि एतं यजुर्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत। तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतत् यदेतदादित्यस्य शुक्लꣳ रूपम् ॥ २ ॥

दक्षिणरश्मितदुपासनां तत्फलं चाह—अथेति। **अथ येऽस्य दक्षिणा रश्मय** इत्यादि समानम्। **यजूंष्येव मधुकृतः**। यजुर्वेदविहितं कर्म पुष्पमुच्यते पुष्पस्थानीयत्वात्। ता एव सोमाद्या **अमृता आपः**। **तानि वा एतानी**त्यादि समानम्। मध्ये तदादित्यस्य **शुक्लं रूप**मिति ॥ २ ॥

प्रत्यग्रश्म्युपासनम्

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः। तानि वा एतानि सामानि एतꣳ सामवेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत। तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतत् यदेतदादित्यस्य परं कृष्णꣳ रूपम् ॥ ३ ॥

**अथ येऽस्य प्रत्यञ्च** इति। **अथ येऽस्य प्रत्यञ्चो रश्मय** इत्यादि समानम्। तथा **सामान्येव मधुकृतः**। **यदेतदादित्यस्य कृष्णं रूप**मिति ॥ ३ ॥

उदग्रश्म्युपासनम्

अथ येऽस्य उदञ्चो रश्मयस्ता एवास्य उदीच्यो मधुनाड्यः अथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पं ता अमृता आपः । ते वा एते अथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत । तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतत् यदेतदादित्यस्य परं कृष्णꣳ रूपम् ॥ ४ ॥

**अथ येऽस्य उदञ्चो रश्मयस्ता** इति । **अथ येऽस्योदञ्च** इत्यादि समानम् । अथर्वाङ्गिरोभिर्दृष्टा मन्त्रा **अथर्वाङ्गिरस एव मधुकृतः** कर्मणि प्रयुक्तत्वात् । **इतिहासपुराणं पुष्पम्** । अश्वमेधीयपारिप्लवरात्रिषु तयोरितिहासपुराणयोः कर्माङ्गत्वेन विनियोगसिद्धेः । मधु **एतदादित्यस्य परं कृष्णं** अतिशयेन कृष्णं रूपमित्यर्थः ॥ ४ ॥

ऊर्ध्वरश्म्युपासनम्

अथ येऽस्य ऊर्ध्वा रश्मयस्ता एवास्य ऊर्ध्वा मधुनाड्यो गुह्या एवादेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः । ते वा एते गुह्या आदेशा एतत् ब्रह्माभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्यमन्नाद्यꣳ रसोऽजायत । तद्व्यक्षरत् तदादित्यमभितोऽश्रयत् तद्वा एतत् यदेतदादित्यस्य मध्ये क्षोभत इव । ते वा एते रसानाꣳ रसा वेदा हि रसाः तेषामेते रसास्तानि वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ५ ॥

**अथ येऽस्य ऊर्ध्वा रश्मयस्ता** इति । **अथ येऽस्य ऊर्ध्वा रश्मय** इत्यादि समानम् । **गुह्या** गोप्या **एवादेशा** लोकद्वाराद्युपासनानि कर्माङ्गविषयाणि **मधुकृतः** । प्राणाख्यं **ब्रह्मैव पुष्पं** शब्दाधिकारात् । समानमन्यत् । **मध्वे-तदादित्यस्य मध्ये क्षोभत इव** समाहितदृष्टेः दृश्यते । **ते वा एते** यथोक्ता रोहितादिरूपविशेषा **रसानां रसाः** । के ते? इत्यत्र **वेदा हि रसाः** लोकनिष्यन्दत्वात् । **तेषां** कर्मभावमापन्नानामप्येते रोहितादिविशेषा **रसा** अत्यन्तसारभूतत्वात् । तथा**मृतानाममृतानि । वेदा ह्यमृताः तेषां** नित्यत्वात् । **एतानि** रोहितादिरूपाण्य**मृतानि** रसानां रसा इत्यादिरेषा कर्मस्तुतिः । यस्यैवं-विशिष्टान्यमृतानि फलानि स कृतकृत्यो भवति आदित्यादिभावमश्नुत इत्यर्थः ॥५॥

प्रथमामृतस्य वसूनामुपजीव्यत्वम्

तद्यत् प्रथमममृतं तद्वसव उपजीवन्ति अग्निना मुखेन न वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति । त एतदेव रूपमभिसंविशन्ति एतस्माद्रूपादुद्यन्ति । स य एतदेवममृतं वेद वसूनामेवैको भूत्वाग्निनैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यति स य एतदेव रूपमभिसंविशति एतस्माद्रूपादुदेति । स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ६ ॥

पर्यायपञ्चकं विशिनष्टि—**तद्यदित्या**दिना । **तत्**त्र **यत्प्रथमं** रोहितरूपलक्षण**ममृतं तत्** प्रातस्सवनेशाना **वसव उपजीवन्ति** । **अग्निना** प्रधानभूतेन **मुखेना**ग्निप्रधानास्सन्तः उपजीवन्ति । किं देवाः कबलग्रहमश्नन्ति? इत्यत आह—**न देवा अश्नन्ति न पिबन्ती**ति । तथा चेत् कथमुपजीवन्ति? इत्यत आह—**एतदि**ति । **एतदेव** रोहितरूप**ममृतं दृष्ट्वा** सर्वकरणैरनुभूय **तृप्यन्ति** दृशेः सर्वकरणद्वारोपलब्ध्यर्थत्वात् । रूपं दृष्ट्वा जीवन्तीत्युक्त्या

रूपस्य चाक्षुषत्वेन तत्कथमितरे विषयतामश्नुवते? इति चेत्; रूपस्य चाक्षुषत्वेऽपि यशआदीनां श्रोत्रादिगम्यत्वात्। देवानामादित्याश्रयत्वेन एतत्सर्वं स्वकरणैरनुभूय तृप्यन्तीत्यर्थः। कथं निरुद्यमा अमृतमुपजीवन्ति? इत्यत्र **त एतदेव रूपमभि**लक्ष्य नास्माकमिदानीं भोगावसर इति ज्ञात्वा**भिसंविशन्ति** उदासते। यदा भोगावसरो भवेत् तदा **एतस्माद्रूपादुद्यन्ति** उत्साहवन्तो भवन्ति। न ह्यनुत्साहवतां भोगाप्तिर्दृष्टा। **स यः** कश्चि**देतदेवं** यथोक्तलक्षण**ममृत**मृग्वेद-विहितं कर्म पुष्पं तदादित्याश्रयणं रोहितरूपत्वममृतस्य प्राचीदिग्गतरश्मिनाडी-संस्थतां वसुभोग्यतामग्निमुखेन उपजीवनं दर्शनमात्रेण तृप्तिं स्वभोगावसरोद्यमनं तत्संवेशनं **वेद** सोऽपि वसुवत् सर्वमनुभवति। एवं विद्वान् कियन्तं काल उपजीवति? इत्यत्राह—**स** इति। **स** विद्वान् **यावदादित्यः पुरस्तात्** प्राच्यां दिशि **उदेता पश्चात्** प्रतीच्यां दिशि **अस्तमेता** तावद्धि वसूनां भोगकालः। तावन्तं कालं **वसूनामाधिपत्यं स्वाराज्यं पर्येता** परितो गन्तेत्यर्थः ॥ ६ ॥

द्वितीयाद्यमृतस्य रुद्रादीनामुपजीव्यत्वम्

अथ यत् द्वितीयममृतं तद्रुद्रा उपजीवन्ति इन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति। त एतदेव रूपमभिसंविशन्ति एतस्माद्रूपादुद्यन्ति। स य एतदेवममृतं वेद रुद्राणामेवैको भूत्वा इन्द्रेणैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशति एतस्माद्रूपादुदेति। स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेता उत्तरतोऽस्तमेता रुद्राणामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ७ ॥

अथ यत् तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति। त एतदेव रूपमभिसंविशन्ति एतस्माद्रूपादुद्यन्ति। स य एतदेवममृतं

वेद आदित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशति एतस्माद्रूपादुदेति। स यावदादित्यो दक्षिणत उदेता उत्तरतोऽस्तमेता द्विस्तावत् पश्चादुदेता पुरस्तादस्तमेता आदित्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ८ ॥

अथ यत् चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति। त एतदेव रूपमभिसंविशन्ति एतस्माद्रूपादुद्यन्ति। स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशति एतस्माद्रूपादुदेति। स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ ९ ॥

अथ यत् पञ्चमममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्ति। त एतदेव रूपमभिसंविशन्ति एतस्माद्रूपादुद्यन्ति। स य एतदेवममृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेन एतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशति एतस्माद्रूपादुदेति। स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वमुदेता अर्वागस्तमेता साध्यानामेव तावदाधिपत्यꣳ स्वाराज्यं पर्येता ॥ १० ॥

**अथ यत् द्वितीयं इति। अथ यत् द्वितीयममृतं तद्रुद्रा उपजीवन्ति इत्यादि खण्डचतुष्टयं समानम्। स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता**

द्विस्तावत् ततो द्विगुणं कालं दक्षिणत उदेता उत्तरतोऽस्तमेता । रुद्राणां तावद्भोगकालः । तथा पश्चादुत्तरत ऊर्ध्वमुदेता विपर्ययेणास्तमेता पूर्वपूर्वापेक्षया उत्तरोत्तरेण कालेनादित्यस्य चतुर्दिक्षु विलसितेन्द्रयमवरुणसोमपुरीषु उदयास्तमनकालस्तुल्य इति चेन्न; आदित्यगतेः व्यत्यस्तवद्भानात् । आदित्योदयो नाम तत्रतत्रत्यप्राणिनां चक्षुर्गोचरत्वम् । तदगोचरत्वमस्तमनम । न ह्यादित्यस्य परमार्थत उदयास्तमने स्तः । तत्रतत्रत्यपश्यत्प्राणिजाताभावे पूर्ववद्गच्छन्नपि नैवोदेति नास्तमेति । चक्षुर्गोचरतागोचरतावैरल्यात् तत्रतत्रत्यप्राणिनः सत्त्वे तदा अमरावत्या द्विगुणं कालं सांयमिनीं पुरीं प्रति आदित्यो दृश्यते । अतस्तन्निवासिनः प्रति दक्षिणत उदेति उत्तरतोऽस्तमेतीव भाति । तथोत्तरास्वपि पुरीषु आदित्योदयास्तमने पूर्ववत् योजनीये । सर्वेषां पुरीणामपि मेरुरुत्तरो भवति । यदायमादित्यः अमरावत्यां मध्यंगतो दृश्यते तदा संयमिन्यामुदयवत् दृश्यते । यदा तत्र मध्यंगतस्तदा वारुण्यामुदयवत् दृश्यते । तत्रापि यदा मध्यंगतस्तदा सौम्यामुदयवत् दृश्यते । तथोत्तरस्यां प्रदक्षिणावृत्तेस्तुल्यत्वात् । सर्वतश्चक्रवालपर्वतप्राकारनिवारितादित्यरश्मीनामिलावृतवासिनामादित्य उर्ध्वं उदेता अर्वाङस्तमेतेव दृश्यते आदित्यरश्मिकदम्बस्य पर्वतोर्ध्वच्छिद्रप्रवेशनात् । तथा ऋगाद्यमृतोपजीविनाममृतानां च द्विगुणोत्तरोत्तरवीर्यवत्त्वमनुमीयते । रुद्रादीनां स्वीयामृतभोगकाले द्वैगुण्यलिङ्गेन उद्यमनसंवेशनादि द्रष्टव्यम् । तत्तत्प्रकारविदुषश्च तत्तत्फलं समानम् । तत्तत्कर्मफलभोगक्षयतः सर्वानात्मन्युपसंहृत्यादित्यः स्वयमेव विजृम्भत इत्यर्थः ॥ ७–१० ॥

चिदादित्यो भूत्वा स्वस्वरूपभजनम्

अथ तत ऊर्ध्वं उदेत्य नैवोदेता नास्तमेता एकल एव मध्ये स्थाता । तदेष श्लोकः—

न वै तत्र न निम्लोच नोदियाय कदाचन ।
देवास्तेनाहꣳ सत्येन मा विराधिषि ब्रह्मणा ॥ इति ।

न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद। तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैतदुद्दालकाय आरुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच। इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्राणाय्याय वान्तेवासिने। नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यात् एतदेव ततो भूय इति एतदेव ततो भूय इति ॥ ११ ॥

स्वभास्यप्रपञ्चाभावात् चिदादित्यो भूत्वा भासकतामपि सन्त्यज्य स्वस्वरूपं भजतीत्याह—**अथेति**। **अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेता एकल एव मध्ये स्थाता**। **तदेष श्लोकः—न वै तत्र** इति। अथादित्योपासना-सञ्जातसत्त्वशुद्ध्यनन्तरं यतः स्वाज्ञानविजृम्भिताततप्रपञ्चोऽस्तं गतः ततस्त-स्मादसावादित्यः स्वभास्याचित्प्रपञ्चवैरल्यात् सर्वोर्ध्वपदंगतचिदादित्यो भूत्वा **ऊर्ध्व** उदेता स्वात्मन्येव सकृदुदितत्वात्। उदितस्यास्तंगतता स्यादित्यत आह—**नेति**। प्राणिजातभावाभावसापेक्षतया **नैवोदेता नास्तमेता**। स्वातिरिक्तकलनायां सत्यां उदयास्तमनविरलता कुतः? इत्यत आह—**एकल** इति। स्वातिरिक्त-विश्वजातमेकब्रह्ममात्रावशेषतया यत्र विरूपविलयं भजति सोऽयमे**कलो** निष्प्रति-योगिकाद्वैतरू**पेणैव** मध्ये स्वात्मनि स्वावशेषतया तिष्ठतीति **मध्ये स्थाता**। एकब्रह्म वाशेषेण यत्र विश्वं विलीयते तद्ब्रह्म एकलमाख्यातम्। "भेदे सत्यपि वस्तुतः" इति स्मृतेः। एवं चिदादित्यो निष्प्रतियोगिकमवशिष्यते। तत्र कश्चिद्यथोक्तलक्षणं चिदादित्यं स्वावशेषधियोपेत्य समाहितस्सन् एतन्मन्त्रं ददर्श। एवं दृष्ट्वोत्थितं कश्चित् वस्वादिसमानचरणः रोहिताद्यमृतभोगी किं त्वं ब्रह्म-लोकादागतोऽसि? तत्राप्यहोरात्राभ्यामादित्यः प्राणिनामायुः क्षपयति किम्? इत्येवं पृष्टः तं प्रत्याह। **तत्तत्र** यथापृष्टेऽर्थे **एष श्लोको** मन्त्रो भवतीति श्रुतेर्वचनमिदम्। नाहं ब्रह्मलोकादागतोऽस्मि। ब्रह्मणो निष्प्रतियोगिकत्वेन तदतिरिक्तलोकवैरल्यात्।

यत्र ब्रह्म स्वमात्रतया लोक्यते सोऽयं ब्रह्मलोकः परमात्मा। यत्राहं तन्मात्रतया स्थितोऽस्मि **न वै तत्र** ब्रह्ममात्रे त्वदभिप्रेतब्रह्मलोके वा सविता **न निम्लोच** न कदाप्यस्तं गच्छति। **कदाचन नोदियाय** नोदितो भवति। उदयास्तमनविरलो हि चिदादित्यः परमात्मा। भूरादिलोकापेक्षया ब्रह्मलोकोऽपि तथाविध इत्युक्तो न हि तद्वचः सत्यं मेने। तत्प्रत्ययार्थं शपथयति। हे **देवाः**! यूयं साक्षिणः शृणुत किं मयोक्तं सत्यम्? **तेन सत्येनाहं ब्रह्मणा** तन्मात्रेण **मा विराधिषि** मा विराध्येयम्। यद्यनृतं मयोक्तं तदा मे ब्रह्मभावो मा भूत्। सत्यमेव त्वयोक्तमिति देवा आहुरिति श्रुतिराह। स्वाज्ञदृष्ट्यादित्यस्योदयास्तमयवत्त्वेऽपि **अस्मै** ब्रह्ममात्रदृशे **न ह वा** आदित्य **उदेति न निम्लोचति** अस्तमेति। तद्दृष्ट्या भास्यभासकघटादित्यादिकलनावैरल्यात्। **सकृद्दिवा** अहोरात्रकलना-विरलस्वमात्रप्रकाशरूपिणी **हैवास्मै भवति** तस्य सकृद्भानस्वरूपत्वात्। **य एतामेवं ब्रह्मोपनिषदं** वेदान्तसिद्धान्तोक्तिं **वेद** जानाति सोऽयं विद्वानुदयास्तमन-कलनापह्नवसिद्धचिदादित्यतयावशिष्यते "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः। **तद्धैतत्** परापरब्रह्मगोचरमधुज्ञानं **ब्रह्मा** हिरण्यगर्भः **प्रजापतये** विराज **उवाच**। **स च मनवे**। **मनुरिक्ष्वाक्वादिप्रजाभ्यः** प्रोवाचेति विद्यां महीकरोति। **तद्धैतद्**यथोक्तं मधुज्ञान**मुद्दालकायारुणये ज्येष्ठाय पुत्राय** तत्पिता **प्रोवाच**। **इदं वाव ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात्**। एवं यः कोऽपि **वा प्रणाय्याय** प्रियतमायान्तेवासिने ब्रह्मचर्यादिसाधनसंपद्विशिष्टाय ब्रूयात् **नान्यस्मै कस्मैचन** ब्रूयात्। **यद्यप्यस्मा** आचार्याय **इमामद्भिः परिगृहीतां** समुद्रवेष्टितां समस्तामपि भोगोपकरणैः साकं **धनस्य पूर्णां** वा **दद्यात्** नासावस्या निष्क्रयो भवति। यस्मात्तत्तोऽपि निष्क्रयदानादेतदेव मधुविद्यादानं **भूयः** बहुतमफलमित्यर्थः। द्विरभ्यास आदरार्थः॥ ११॥

गायत्रीविद्यैव ब्रह्मविद्या

**गायत्री वा इदꣳ सर्वं भूतं यदिदं किंच वाग्वै गायत्री वाग्वा इदꣳ सर्वं भूतं गायति च त्रायते च। या वै सा गायत्रीयं वाव**

सा येयं पृथिवी अस्याᳫं हीदᳫं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते। या वै सा पृथिवी इयं वाव सा यदिदमस्मिन् पुरुषे शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते। यद्वै तत्पुरुषे शरीरमिदं वाव तत् यदिदमस्मिन्नन्तःपुरुषे हृदयमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते। सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तम्।

तावानस्य महिमा ततो ज्यायाᳫंश्च पुरुषः।
पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि॥ इति।

यद्वै तद्ब्रह्म इतीदं वाव तद्योऽयं बहिर्धा पुरुषादाकाशो यो वै स बहिर्धा पुरुषादाकाशः। अयं वाव स योऽयमन्तःपुरुष आकाशो यो वै सोऽन्तःपुरुष आकाशः। अयं वाव स योऽयमन्तर्हृदय आकाशस्तदेतत्पूर्णमप्रवर्ति पूर्णामप्रवर्तिनीᳫं श्रियं लभते य एवं वेद॥ १२॥

यत एवैषातिशयितफला ब्रह्मविद्या अतः प्रकारान्तरेणापि सैव वक्तव्येतीदमारभ्यते—**गायत्रीति**। "अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति" इति श्रुत्यनुरोधेन प्रत्यस्तमितसर्वविशेषब्रह्मणो दुर्विज्ञेयत्वादनेकेषु छन्दःसु सत्स्वपि गायत्र्या ब्राह्मण्याधारत्वेन प्राधान्यात् तस्यामत्यन्तगौरवस्य प्रसिद्धत्वादतो गायत्रीविद्ययैव ब्रह्म ज्ञातुं युक्तम्। स्वयाथात्म्यं गायन्तं कीर्तयन्तं जानन्तं स्वातिरिक्तभयात् त्रायत इति **गायत्री** ब्रह्मविद्या चिद्रूपिणी। **वै**शब्दोऽवधारणार्थः। स्वाज्ञदृष्टिविकल्पित**मिदं सर्वं भूतं** प्राणिजातं **यदिदं किञ्च** स्थावरं जङ्गमं वास्ति तत्सर्वं स्वज्ञदृष्ट्या गायत्र्येव। गायत्र्याः प्रणवात्मकत्वेनाभिधानप्रपञ्चोऽपि सैवेत्याह—**वाग्वै गायत्रीति। वाग्वा इदं सर्वं**

भूतमभिधानाभिधेययोरेकत्वात् । असौ गौरसावश्व इति **गायति च** शब्दयति **त्रायते च** स्वातिरिक्तकलना वस्तुतो न ह्यस्ति अतस्त्वं मा भैषीरिति वाचा रक्षति । गायत्र्या वाचोऽनन्यत्वात् । गानात् त्राणनाच्च गायत्र्या गायत्रीत्वम् । **या वै** सर्वभूतरूपा **सा गायत्री । इयं वाव सा येयं पृथिवी** सर्वभूतसंबन्धात् । यतोऽ**स्यां पृथिव्यां हीदं सर्वं** स्थावरजङ्गमात्मकं जगत् **प्रतिष्ठितम् । एतामेव** तत्सर्वकलना **नातिशीयन्ते** नातिवर्तन्ते । यथा गानत्राणनाभ्यां गायत्री तथा भूतसंबन्धा पृथिवी सर्वभूतप्रतिष्ठानात् । अतो हि गायत्री पृथिवी । **या वै सा पृथिवी** गायत्री । **इयं वाव सा यदिदमस्मिन् पुरुषे** जीवति । शिरःपाण्यादिमति **अस्मिन् हीमे** भूतशब्दवाच्याः **प्राणाः प्रतिष्ठिताः** । अतः पृथिवीवच्छरीरस्य भूतशब्दवाच्यप्राणप्रतिष्ठानात् **एतच्छरीरं** गायत्र्येव । यतः प्राणाः शरीरं **नातिशीयन्ते । यद्वै तत्पुरुषे शरीरं** गायत्री । **इदं वाव तत् यदिदमस्मिन्नन्तःपुरुषे** पुरुषान्तः पुण्डरीकाख्यं **हृदयमेतदपि** गायत्री । **अस्मिन् हीमे प्राणाः प्रतिष्ठिताः** । अतः शरीरवत् हृदयमपि गायत्री । प्राणा **एतदेव नातिशीयन्ते** । "अहिंसन् सर्वभूतानि", "प्राणो ह पिता प्राणो माता" इत्यादिश्रुतेः । **सैषा चतुष्पदा** "परो रजसे सावदोम्" इति तुर्यपादेन सहेत्यर्थः । वाग्भूतपृथिवीशरीरहृदयप्राणरूपेण **षड्विधा गायत्री । तत्तस्मिन्नर्थे एतद्गायत्रमनुगतं** ब्रह्म गायत्रीमुखेन ज्ञातव्यमिति **ऋचा** मन्त्रेणा**भ्यनूक्तं** प्रकाशितमित्यर्थः । **तावानस्य** गायत्र्याख्यब्रह्मणो **महिमा** विभूतिविस्तरः यावांश्चतुष्पात् षड्विध इति गायत्रीब्रह्मविकारो व्याख्यातः । **ततस्तस्माद्गायत्रीविकारात्** वाचारम्भणमात्रात् तदारोपापवादाधिकरणतया पुरीतति शयनात्तत्समष्टिप्रपञ्चपूरणाच्च परमार्थसत्यो निर्विकारः **पुरुष** एव **ज्यायान्** । निरतिशयमहत्वा**दस्य** गायत्र्यधिष्ठितब्रह्मणः प्रथमः **पादः । सर्वाः** सर्वाणि **भूतानि** तेजोऽबन्नादीन्यनन्तकोटिब्रह्माण्डानि स्वातिरिक्तत्वेनाविद्यारूपाणीत्यर्थः । **अस्य** गायत्रीप्रपञ्चाधिकरणपुरुषस्य **दिवि** द्योतनवति स्वात्मनि स्वमात्रतयावस्थितं मर्त्यभावमापन्नस्वाविद्यापदतत्कार्यापह्नवसिद्धं **त्रिपाच्चैतन्यममृतं** सन्मात्रस्वरूपत्वात् । "पश्यतेहापि सन्मात्रमसदन्यत्" इति श्रुतेः,

स्वाविद्यापदतत्कार्यं यद्बोधाद्यात्यपह्नवम् ।
तत् त्रिपाद्ब्रह्मचैतन्यं स्वमात्रमवशिष्यते ॥

इति स्मृतेश्च । त्रयः पादा अस्येति त्रिपादिति व्युत्पत्त्या परिच्छिन्नता स्यादिति चेन्न; त्रिपाच्छब्दस्य निरवधिकव्यापकद्योतनार्थत्वात् । तेन परिच्छिन्नदृष्टौ नष्टायां व्याप्यव्यापककलनापह्नवसिद्धं त्रिपात् निष्प्रतियोगिकतया स्वमात्रमवशिष्यत इत्यर्थः । स्वाज्ञादिदृष्ट्या **यद्वै** त्रिपादमृतं गायत्रीमुखेन **ब्रह्मेत्युक्तं इदं वाव** तदिदमेव **तद्योऽयं** प्रसिद्धो **बहिर्धा पुरुषात्** बहिर्भौतिकाकाशो **यो वै स बहिर्धा पुरुषादाकाश** उक्तः । **अयं वाव स योऽयमन्तःपुरुषे** शरीरान्तराकाशो **यो वै सोऽन्तः पुरुष आकाशः** । अयं **वाव स योऽयमन्तर्हृदय आकाशो** हृत्पुण्डरीकावच्छिन्नो व्याकृताकाशः । कथमाकाशस्य त्रिधा भेदः? इत्यत्र जागरितस्थानविलसितबाह्याकाशे दुःखबाहुल्यं दृश्यते । ततः स्वप्नस्थानविलसितान्तःशरीराकाशे स्वल्पदुःखं भाति स्वापस्थानविलसितहृदयाकाशे दुःखनिवृत्तिर्दृश्यते—इत्याकाशस्य त्रिधा भेदेन व्याख्यानं युक्तम् । यत्रैतत् सर्वावस्थाभिः सह स्वाविद्यापदतत्कार्याकाशत्रयं विरूपविलयं भजति **तदेतत्**स्वातिरिक्तकलनापह्नवसिद्धं ब्रह्म स्वमात्रतया **पूर्णं** निष्प्रतियोगिकत्वात् । एवं तदुपलब्धिः कुत्र? इत्यत्र हार्दाकाशे तत्रत्यकामादिवृत्तिभावाभावप्रकाशकप्रत्यग्रूपेण तदभिन्नब्रह्मरूपेण प्रत्यक्परविभागैक्यकलनाविरलब्रह्ममात्ररूपेणोपलभ्यते । यत एवमतस्तदप्रवर्ति निस्तरङ्गपरिपूर्णचिदर्णवत्वात् । य एवं **पूर्णमप्रवर्ति** ब्रह्म निष्प्रतियोगिकस्वमात्रमिति वेद सोऽयं विद्वान् तद्वेदनसमकालं **पूर्णामप्रवर्तिनीं** तद्रूपावस्थानलक्षणां विकळेबरकैवल्यश्रियं स्वावशेषतया **लभते** । "य एवं निर्बीजं वेद निर्बीज एव स भवति" इति श्रुतेः ॥ १२ ॥

गायत्र्याख्यब्रह्मप्रापकद्वारनिर्देशः

तस्य ह वा एतस्य हृदयस्य पञ्च देवसुषयः स योऽस्य प्राङ् सुषिः स प्राणः तच्चक्षुः स आदित्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत

तेजस्वी अन्नादो भवति य एवं वेद । अथ योऽस्य दक्षिणः सुषिः स व्यानस्तच्छ्रोत्रꣳ स चन्द्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान् यशस्वी भवति य एवं वेद । अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद्ब्रह्मवर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्वी अन्नादो भवति य एवं वेद । अथ योऽस्य उदङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान् व्युष्टिमान् भवति य एवं वेद । अथ योऽस्य ऊर्ध्वः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीत ओजस्वी महस्वान् भवति य एवं वेद । ते वा एते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद अस्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद । अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषु उत्तमेषु लोकेषु इदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिः । यत्रैतदस्मिन् शरीरे सꣳस्पर्शेन उष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपिगृह्य निनदमिव नदथुरिव अग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टं च श्रुतं चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥ १३ ॥

गायत्र्याख्यब्रह्मण उपासनाङ्गत्वेन मन्दानां गायत्र्याख्यब्रह्मप्रतिपत्तये तत्प्रापकद्वारनिर्दिदृक्षया इदमारभ्यते—तस्य हेति । यथा लोके द्वारपालप्रसादतो

राज्ञो दर्शनं भवति तथेहापि गायत्रीब्रह्मोपलब्धिस्थानत्वेन प्रकृतस्य **तस्य ह वा एतस्य हृदयस्य** पञ्चसंख्याका **देवानां सुषयः** स्वर्गाप्तिसाधनद्वाराणि प्राणादित्यादिभिरभिरक्ष्यमाणानीति देवसुषयः पञ्च सन्ति। **अस्य** स्वर्गाख्य-हृदयस्य पूर्वाभिमुखस्य **प्राङ् सुषिः** प्राक्छिद्रं यस्तत्सुषिरासनो भूत्वा नवद्वारेण सञ्चरन् प्रागनिति **स प्राणः**। **तच्चक्षुः** तथैवादित्यः "आदित्यो ह वै बाह्यः प्राणः" इति श्रुतेः। यश्चक्षुषि तिष्ठति **स आदित्यः**। स आदित्यः कस्मिन् प्रतिष्ठितः ? इति। चक्षुषीति श्रुतेः। **तदेतत्** प्राणादित्याख्यं ब्रह्म **तेजोऽन्नाद्यमिति** गुणद्वय-विशिष्ट**मुपासीत**। ततस्**तेजस्वी अन्नाद**श्चामयावित्ववर्जितो **भवति**। **य एवं वेद** तेनोपासकेन वशीकृतो द्वारपालः हार्दब्रह्मप्राप्तिहेतुर्भवतीत्यदृष्टफलमेतत्। **अथ योऽस्य दक्षिणः सुषिः स** वीर्यवत्कर्मकर्ता **व्यानो** वायुविशेषः। तत्संबन्धि **श्रोत्रमिन्द्रियम्**। तथा **स चन्द्रमाः** श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्चेति सहाश्रयश्रुतेः। पूर्ववत्त**देतच्छ्रीश्च यशश्चेत्युपासीत**। तादृग्गुणवान् भवतीति समानम्। **अथ योऽस्य प्रत्यङ् सुषिः सोऽपानः**। अर्वागञ्चनादपानः। तथा **सा वाक्**। तत्संबन्धात्**सोऽग्निः**। **तदेतद्ब्रह्मवर्चसं** स्वाध्यायनिमित्तं तेजः स्वाध्यायस्याग्निसंबन्धात्। समानमन्यत्। **अथ योऽस्योदङ् सुषिः** तत्स्थः सन्नशितं पीतं समं नयतीति **स समानः**। तत्संबन्धं **मनो**ऽन्तःकरणं **स** वृष्ट्यात्मकः **पर्जन्यः** अपां पर्जन्यनिमित्तत्वात्। "मनसा सृष्टा आपश्च वरुणश्च" इति श्रुतेः। मनसो ज्ञानकीर्तिहेतुत्वात्। **कीर्ति**र्यशः सर्वत्र विश्रुतत्वम्। **व्युष्टि**र्देहगतलावण्यम्। समानमन्यत्। **अथ योऽस्योर्ध्वः सुषिः स** उत्क्रमणकर्म कुर्वन् उत् अनितीत्यु**दानः** तदाधारश्चाकाशः। तदेतद्वाय्वा-काशयोरोजोहेतुत्वा**दोजो** बलं महत्त्वाच्च **मह** इति। समानमन्यत्। **ते वा एते पञ्च ब्रह्मपुरुषाः** पञ्चसुषिसंबन्धादेते हार्दस्**वर्गलोकस्य द्वारपालाः**। एतैर्हि चक्षुःश्रोत्रवाङ्मनःप्राणैःबहिर्मुखप्रवृत्तैर्हार्दब्रह्मप्राप्तिद्वाराणि निरुद्धानि अनृत-प्रत्यूढत्वात्। ततो न हार्दे ब्रह्मणि मनस्तिष्ठति। तस्मादेते पञ्च ब्रह्मपुरुषाः स्वर्गस्य लोकस्य द्वारपाः। तदुपासनया ते प्रसन्ना भूत्वा हार्दब्रह्मपदं प्रापयन्तीत्यर्थः। अतः **स य एतानेवं पञ्च ब्रह्मपुरुषान् स्वर्गस्य**

**लोकस्य द्वारपान् वेद** उपासनेन वशीकरोति अयमुपासकस्तैरनिवारितः सन् **स्वर्गं लोकं** हार्दं ब्रह्म प्रतिपद्यते। किञ्चास्य **विदुषः कुले वीरः पुत्रो जायते**। स्वर्गलोकप्रतिपत्तिरेकं फलम्। **अथ** द्वारपालोपासनानिष्पन्नचित्त-शुद्ध्यनन्तरं "पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि" इति **यदुक्तं** तत् त्रैपदं ब्रह्म ज्योतिः। **अतोऽमुष्माद्दिवो** द्युलोकोपलक्षिताविद्यापदतत्कार्य-जातात् **परः** परं **ज्योतिः** विद्वद्दृष्ट्यनुभूतिप्रमाणतो दीप्यत इव **दीप्यते**। अस्याग्नीन्धनयोगवद्दीप्तेरसंभवत्वेन प्रकाशमात्रत्वात्। तस्य प्रकाशमात्रत्वेन परि-च्छिन्नत्वप्रसक्तौ **विश्वतः पृष्ठेष्वि**त्यस्य व्याख्यानं **सर्वतः पृष्ठेष्वि**ति। अनुत्तमेष्वित्यत्र तत्पुरुषशङ्कानिरसनायाह—**उत्तमेषु लोकेष्विति**। सर्वव्या-पकता द्योत्यते। वस्तुतो ब्रह्म व्याप्यव्यापककलनाविरलं, व्याप्यव्यापकता मिथ्या—

केवलं ब्रह्ममात्रत्वान्नास्त्यनात्मेति निश्चिनु।

इति श्रुतेः। स्वाज्ञादिदृष्ट्या इदमेव त्रिपाद्ब्रह्म। **इदं वाव तद्यदिदमस्मिन् पुरुषेऽन्तर्मध्ये ज्योतिरवगम्यते तस्यैषा दृष्टिः**। सा द्विविधा **यत्रैतज्ज्योति-रस्मिन् शरीरे** हस्तसंस्पर्शे**नोष्णिमानं विजानाति**। उष्णिमा नाम चैतन्य-ज्योतिषो लिङ्गम्। न हि जीवच्छरीरमुष्णिमा व्यभिचरति। ज्ञातयश्चरमदशा-सन्दिग्धं स्पृष्ट्वा यदा औष्ण्यमुपलभ्यते तदा जीवति यदि शैत्यमुपलभ्यते तदा मरिष्यतीति वदन्ति। "तेजः परस्यां देवतायां" इति वक्ष्यति। अतस्तस्यैषा दृष्टिरित्युक्तं दर्शनोपायत्वात्। तथा **तस्य** ज्योतिष **एषा श्रुतिः** श्रवणम्। **यत्रैत**ज्ज्योतिषो लिङ्गं पुरुषः श्रोतुमिच्छति **तदैतत्कर्णावपिगृह्य**—एतच्छब्दः क्रियाविशेषणं—कर्णावङ्गुलीभ्यां पिधाय रथादेर्घोषो **निनदः** तमिव शृणोति। **नदथुरिव** ऋषभकूजितमिवान्तःशरीरे एवं शब्दं **शृणोति**। **तदेत**ज्ज्योतिः दृष्टश्रुतिलिङ्गत्वेन **दृष्टं च श्रुतं चेत्युपासीत**। एवमुपासना**च्चक्षुष्यो** दर्शनीयः **श्रुतो** विश्रुतश्च **भवति**। **य एवं वेदे**ति दृष्टफलमेतत्। अदृष्टफलं पूर्वोक्तमेव। द्विरभ्यास आदरार्थः ॥ १३ ॥

स्वाज्ञदृष्ट्या परिच्छिन्नत्वस्य मार्जनम्

सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत। अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत। मनोमयः प्राणशरीरो भारूपः सत्यसंकल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः। एष म आत्मान्तर्हृदयेऽणीयान् व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा एष म आत्मान्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षात् ज्यायान् दिवो ज्यायानेभ्यो लोकेभ्यः। सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष म आत्मान्तर्हृदय एतद्ब्रह्म एतमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्यः शाण्डिल्यः ॥ १४ ॥

एवं स्वाज्ञदृष्ट्या परिच्छिन्नत्वप्रसक्तौ तन्मार्जनायेदमारभ्यते— सर्वमिति। परमार्थदृष्ट्या त्रिपात् ब्रह्म निष्प्रतियोगिकस्वमात्रमपि स्वाज्ञदृष्ट्या नानेव भाति। तन्नामरूपादिविकृतिमदिदं सर्वमविद्यापदतत्कार्यजातं **सर्वं** स्वज्ञदृष्ट्या **ब्रह्मैव खलु**। यथा मृदाद्यतिरेकेण न हि घटादिरस्ति तथा ब्रह्मातिरेकेण किञ्चिदपि नास्तीत्यर्थः। कथं पुनः सर्वस्य ब्रह्मत्वम्? इत्यत्र हेतुमाह— **तदिति**। तस्माद्ब्रह्मणः सकाशात् तेजोबन्नादिक्रमेणाविद्यकपदं जायत इति तज्जम्। तथा सम्भूतिवैपरीत्येन तस्मिन्नेव लीयते तन्मात्रतयावशिष्यत इति तल्लम्। तथा स्थितिकाले तस्मिन्नेव अनिति चेष्टत इति तदनमित्येवं **तज्जलानिति** रागद्वेषादिवैरल्यात् अतः **शान्तः** सन् त्रिपाद्ब्रह्ममात्रावगतये वक्ष्यमाणगुणविशिष्टं **ब्रह्मोपासीत**। **अथ खल्विति** हेत्वर्थः। यतः **क्रतुमयः** क्रतुप्रायः **पुरुषः**

जीवस्य सङ्कल्पादिवृत्तिमत्वात्। यथा **क्रतुरस्मिन् लोके** जीवन्निह **पुरुषो भवति तथेतो**ऽस्माल्लोकात् **प्रेत्य** क्रत्वनुरूपफलात्मको **भवति**। तथा च स्मृतिः—

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम्।
तं तमेवैति—

इति। एवमतो जानन् **स** विद्वान् वक्ष्यमाणानुरोधेन **क्रतुं कुर्वीत**। एवं शास्त्रप्रामाण्यात् क्रत्वनुरूपं फलमुपपद्यते। किं तद्वक्ष्यमाणं? इत्यत्र अनेन मनुत इति मनः। तन्मयस्तत्प्रायः। तद्वृत्तिमवष्टभ्य विषयेषु प्रवृत्तत्वात्प्रवृत्त इव निवृत्त इव भाति वस्तुतोऽस्यामनस्कत्वात्। "यो वै प्राणस्सा प्रज्ञा या वा प्रज्ञा स प्राणः" इति श्रुत्यनुरोधेन क्रियाज्ञानशक्त्यात्मकः प्राण एव शरीरं यस्य सोऽयं **प्राणशरीरः** "प्राणशरीरनेता" इति श्रुतेः। भा दीप्तिः एवं रूपं यस्य स **भारूपः**। तथा **सत्यसङ्कल्पः** मिथ्यासङ्कल्पजीवविलक्षणत्वात्। जीवास्तु मिथ्यासङ्कल्पाः "अनृतेन हि प्रत्यूढाः" इति श्रुतेः। आकाश इव स्वगतसूक्ष्मादिरात्मा स्वरूपमस्येत्या**काशात्मा**। स्वाज्ञदृष्ट्या येन स्वाविद्यापदं क्रियते सोऽयं **सर्वकर्मा** "स हि सर्वस्य कर्ता" इति श्रुतेः। यस्य सर्वे कामा दोषविरलाः स **सर्वकामः**—

धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ।

इति स्मृतेः। न ह्यत्र बहुव्रीहिः संभवति। तथा **सर्वगन्धः** सुखकरः "पुण्यो गन्धः पृथिव्याम्" इति स्मृतेः। तस्य पापपुण्यविद्भूत्वात् **सर्वमिदम**विद्यापद-तत्कार्यजात**मभ्यात्तः** विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तरूपेणाविद्यापदव्याप्तेः। अनया वक्तीति वाक्। वागेव वाकः। वचेर्वा घञन्तस्य करणे वाकः। स यस्य विद्यते स वाकी। तथा न भवतीत्य**वाकी**। वाक्प्रतिषेधः सर्वकरणोपलक्षणार्थः। करणग्रामवैरल्ये तत्तत्प्रबोधः कुतः? इति **चेन्न**; अलुप्तविज्ञप्तिस्वरूपत्वात्।

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता—

इति श्रुतेः । करणग्रामप्रवृत्तिनिमित्तत्वेऽपि तत्प्रवृत्त्युदासीन इत्याह—**अनादर** इति । आप्तकामत्वात् स्वातिरेकेण कामानां सत्त्वे तत्र संभ्रमः स्यात् । न हि नित्यतृप्तस्य सम्भ्रमोऽस्ति । **एष** हि **मे** मम **आत्मान्तर्हृदये** हृत्पुण्डरीकमध्ये **व्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा** परिच्छिन्न-प्रमाणाद**प्यणीयान्** अणुतमः । तथा चेदणुप्रमाणत्वं स्यादित्याशङ्कायामाह—**एष म आत्मान्तर्हृदये ज्यायान् पृथिव्या** इत्यादिना । ज्यायस्त्वमनन्त-परिमाणत्वं च दर्शयति—**मनोमय** इत्यादिना **ज्यायानेभ्यो लोकेभ्य** इत्यन्तेन । यथोक्तलक्षणोऽयमीश्वरो ध्येयः न तु विशिष्ट एवेति शङ्कायां तन्निवृत्त्यर्थं पुनस्सर्वकर्मेत्यादि मनोमयत्वादिगुणविशिष्ट एवेश्वरोऽत्र ध्येयः । अत एव षष्ठ-सप्तमयोरिव तत्त्वमसि आत्मैवेदं सर्वमिति नेह स्वाराज्येऽभिषिञ्चति प्रेत्याभि-संभवितास्मीति लिङ्गदर्शनात् । **एष म आत्मान्तर्हृदय** इत्यत्र सर्वं खल्विदं ब्रह्मेति यत्प्रकृतं **तत्** **ब्रह्मे**त्युच्यते । **इतोऽस्माच्छरीरात् प्रेत्यैतमात्मानं अभि-संभवितास्मि** यथाक्रतुस्तथा प्रतिपत्तास्मीत्यर्थः । **यस्यैवंविद** एवं स्यामहमित्य**द्धा** सत्यं क्रतुफलसंबन्धे प्रेत्य एवं स्यामिति **न च विचिकित्सा** स्यात् स तथेश्वर-भावं प्रतिपद्यते—**इत्येतदेव शाण्डिल्यो** मुनि**राह** स्म उक्तवान् किल । यथा क्रतुस्तथा भवतीत्यत्र स्वविकल्पितसर्वविशेषापह्नवसिद्धब्रह्मणि स्वावशेषतया ज्ञाते तज्ज्ञानसमकालं तद्भावापत्तिः स्यादित्यर्थात् सिद्धं भवति ।

सर्ववर्जितचिन्मात्रं ब्रह्ममात्रमसन्न हि ।

इति श्रुतेः । द्विरभ्यास आदरार्थः ॥ १४ ॥

वीरपुत्रस्य दीर्घायुष्ट्वसिद्धये कोशविज्ञानम्

अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलꣳ स एष कोशो वसुधानस्तस्मिन्

विश्वमिदꣳ श्रितम् । तस्य प्राची दिक् जुहूर्नाम, सहमाना नाम दक्षिणा, राज्ञी नाम प्रतीची, सुभूता नाम उदीची ; तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदꣳ रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदꣳ रुदम् । अरिष्टं कोशं प्रपद्ये अमुना अमुना अमुना प्राणं प्रपद्ये अमुना अमुना अमुना भूः प्रपद्ये अमुना अमुना अमुना भुवः प्रपद्ये अमुना अमुना अमुना स्वः प्रपद्ये अमुना अमुना अमुना । स यदवोचं प्राणं प्रपद्य इति प्राणो वा इदꣳ सर्वं भूतं यदिदं किंच तमेव तत्प्रापत्सि । अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्ये इत्येव तदवोचम् । अथ यदवोचं भुवः प्रपद्य इति अग्निं प्रपद्ये वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् । अथ यदवोचꣳ स्वः प्रपद्य इति ऋग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्ये इत्येव तदवोचं तदवोचम् ॥ १९ ॥

पुरास्य कुले वीरो जायत इत्युक्तं ; न हि वीरजन्ममात्रं पितुस्तुष्टिकरं भवति । "तस्मात्पुत्रमनुशिष्टं लोक्यमाहुः" इति श्रुत्यनुरोधेन तस्य दीर्घायुष्ट्वसिद्धये कोशविज्ञानमारभ्यते—**अन्तरिक्ष** इति । अन्तरिक्षमुदरमन्तःसुषिरं यस्य कोशस्य सोऽयम**न्तरिक्षोदरः** कोश इव **कोशः** । कोशधर्मपूगविशिष्टत्वात् । भूमिर्बुध्नो मूलं यस्य सोऽयं **भूमिबुध्नः** । स कदापि **न जीर्यति** न विनश्यति । तस्य त्रैलोक्यात्मकत्वेन सहस्रादियुगकालावस्थायित्वात् । **अस्य दिशः** सर्वा हि **स्रक्तयः** कोणाः । **अस्य** कोशस्य **द्यौरुत्तरं बिलम्** । यथोक्तगुणः **स एष कोशो वसुधानः** प्राणिकर्मफलाख्यवस्वधिकरणत्वात् । **तस्मिन्** कोशे हि समस्तप्राणिकर्मफललक्षणं **विश्वमिदं श्रित**माश्रितमित्यर्थः । **तस्य प्राची दिग्**भागः

कर्मिणो जुह्वतीति **जुहूर्नाम** भवति । प्राणिनोऽस्यां यमपुर्यां पापफलानि सहन्त इति **सहमाना नाम दक्षिणा** दिक् । तथा राज्ञा वरुणेनाधिष्ठिता **राज्ञी नाम** पश्चिमा दिक् । सुभूतिमद्भिः ईश्वरकुबेरादिभिः अधिष्ठिता **सुभूता नाम उदीची** दिक् । **तासां** दिशां **वायुर्वत्सः** वायोर्दिक्प्रभवत्वात्, पुरोवात इत्यादि-प्रतीतेः । स्वपुत्रदीर्घजीवितार्थी **स यः कश्चिदेतं वायुं दिशां वत्समममृतं वेद न** हि **स पुत्रनिमित्तं रोदनं रोदिति** तत्पुत्रो न म्रियत इत्यर्थः । यत एवंविदः फलं कोशविज्ञानं अतः **सोऽहं** पुत्रजीवनार्थं **तमेव वायुं दिशां वत्सं वेद** जाने । अतो **मा पुत्ररोदं रुदं** मम पुत्रनिमित्तरोदनं मा भूदित्यर्थः । अतोऽह-**मरिष्टमविनाशिनं कोशं प्रपद्ये** पुत्रायुषे प्रपन्नोऽस्मि । अमुनाऽमुनामुनेति पुत्रस्य त्रिर्नाम गृह्णाति । तथा पुत्रस्य **प्राणं प्रपद्येऽमुनाऽमुनामुना । भूः प्रपद्ये-ऽमुनाऽमुनामुना । भुवः प्रपद्येऽमुनाऽमुनामुना । स्वः प्रपद्येऽमुनाऽमुनामुना ।** सर्वत्र प्रपद्य इति पुनः पुनः त्रिः नाम गृह्णाति । **स यदवोचं प्राणं प्रपद्य इति** व्याख्यानार्थं **प्राणो वा इदं सर्वं भूतं यदिदं किंच** "यथा वा अरा नाभौ" इति वक्ष्यति । अतस्तमेव प्राणं सर्वभावेन **प्रापत्सि** प्रपन्नोऽभूवम । **अथ यदवोचं भूः प्रपद्य इति** भूरादित्रीन् लोकान् **प्रपद्य इति तदवोचम्** । **अथ यदवोचं भुवः प्रपद्य इति** अग्न्यादीन् **प्रपद्य इति तदवोचम्** । **अथ यदवोचं स्वः प्रपद्य इति** ऋगादिवेदान् **प्रपद्य इति तदवोचम्**— इत्युपदिष्टानेतान् मन्त्रान् जपेत् । पूर्वोक्तमन्तरिक्षोदरं कोशं सदिग्वत्सं यथावत् ध्यायेत् । द्विर्वचनमादरार्थम् ॥ १९ ॥

स्वदीर्घजीवनाय उपासनम्

पुरुषो वाव यज्ञः तस्य यानि चतुर्विꣳशतिवर्षाणि तत्प्रातःसवनं चतुर्विꣳशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदꣳ सर्वं वासयन्ति । तं चेदेतस्मिन् वयसि किंचिदुपतपेत् स ब्रूयात् स प्राणा वसव

इदं मे प्रातःसवनं माध्यन्दिन॑ सवनमनुसन्तनुतेति माहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीय इत्युद्धैव तत एति अगदो ह भवति। अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिन॑ सवनं चतुश्चत्वारि॑शदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यदिन॑ सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीद॑ सर्व॑ रोदयन्ति। तं चेदेतस्मिन् वयसि किंचिदुपतपेत् स ब्रूयात् प्राणा रुद्रा इदं मे माध्यन्दिन॑ सवनं तृतीयसवनमनुसन्तनुतेति माहं प्राणाना॑ रुद्राणां मध्ये यज्ञो विलोप्सीय इत्युद्धैव तत एति अगदो ह भवति। अथ यान्यष्टाचत्वारि॑शद्वर्षाणि तृतीयसवनमष्टाचत्वारि॑शदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या अन्वायत्ताः प्राणा वाव आदित्या एते हीद॑ सर्वमाददते। तं चेदेतस्मिन् वयसि किंचिदुपतपेत् स ब्रूयात् प्राणा आदित्या इदं मे तृतीयसवनं आयुरनुसन्तनुतेति माहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीय इत्युद्धैव तत एति अगदो हैव भवति। एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योऽहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतमजीवत् प्र ह षोडशं वर्षशतं जीवति य एवं वेद ॥ १६ ॥

पुत्रजीवनार्थमुपासनं जपश्चोक्तः। यदि स्वयं दीर्घायुस्तदा तत्फलेन युज्यते नान्यथेति। अथेदानीं स्वदीर्घजीवनायेदमुच्यते—**पुरुष** इति। **पुरुषो वाव** वावशब्दोऽवधारणार्थः। पुरुष एव **यज्ञः**। कथं तस्य यज्ञत्वं? इत्यत आह—**तस्येति**। **तस्यायुषो यानि चतुर्विंशतिवर्षाणि** पुरुषाख्ययज्ञस्य **तत्प्रात-**

**स्सवनम्**। केन सामान्येन? इत्यत्र **चतुर्विंशत्यक्षरा गायत्री**। विधियज्ञ-**प्रातस्सवनं** गायत्रीछन्दस्कं हि। विधियज्ञसामान्यात् पुरुषस्य यज्ञत्वम्। तथोत्तरयोरप्यायुषोः सवनद्वयसंपत् त्रिष्टुब्जगत्यक्षरसंख्यासामान्यतो वाच्या। किञ्च **तदस्य** पुरुषयज्ञस्य विधियज्ञवत् **वसवोऽन्वायत्ताः** अनुगता इत्यर्थः। के ते वसवः? इत्यत्र **प्राणा वाव** वागादय एव **वसवः**। **एते हि** यस्मात् पुरुषजातं **वासयन्ति**। सत्सु प्राणेष्विदं सर्वं वसति नान्यथेति। अतो वसनाद्वसवः। **तं चेत्** यज्ञभावमापन्नं पुरुष**मेतस्मिन्** प्रातस्सवनवयसि **किंचित्** व्याध्यादिशङ्का **तमुपतपेत्** दुःखमुत्पादयेत् तदात्मानं यज्ञं मन्यमानो **ब्रूयात्** इमं मन्त्रं जपेत्—हे **प्राणा वसवः**! **इदं मे प्रातस्सवनं** वर्तते। तन्माध्यंदिनं **सवनमनुसन्तनुत** माध्यंदिनसवनायुषं मां कुरुतेत्यर्थः। **माहं यज्ञो** युष्माकं **प्राणानां वसूनां** मध्ये **विलोप्सीय** मा विच्छेदेयमित्यर्थः। **इति**शब्दो मन्त्रसमाप्त्यर्थः। **स** तेन जपादिना ततस्तस्मादुपतापा**दुदेति** उद्गच्छति **अगदो** नीरोगी **भवत्येव**। **अथ यानि चतुश्चत्वारिंशद्वर्षाणी**त्यादि समानम्। रुदन्ति **रोदयन्ती**ति **प्राणा रुद्राः**। क्रूरा हि ते मध्यमे वयसि रुद्राः। तथा आदित्याः प्राणाः। ते शब्दादिजातमिदमाददते अत **आदित्याः**। **तृतीयसवनमायुः** षोडशोत्तरं वर्षशतम**नुसंतनुत** यज्ञं समापयतेत्यर्थः। समानमन्यत्। एवमविद्या-फलनिश्चयमित्येतदुदाहरति—**एतत्** यज्ञदर्शनं **ह स्म वै** किल **तद्विद्वान् महिदासो** नामतः इतराया अपत्य**मैतरेय आह**—**किं** कस्मात् **मामेत**दुपतपनं **उपतपसि**? स त्वं हे रोग! **योऽहं** यज्ञोऽनेन त्वत्कृतोपतापेन **न प्रेष्यामि** न मरिष्यामि, वृथा ते श्रमः—इत्येवमाह स्मेति पूर्वेण संबन्धः। **स ह्येवं**निश्चयः सन् **षोडशं वर्षशतमजीवत्**। अन्योऽप्येवंनिश्चयः षोडशसहितं **वर्षशतं** **जीवति**। **य एवं** यज्ञसंपदं **वेद** स यथोक्तफलमश्नुत इत्यर्थः॥ १६॥

पुरुषयज्ञाङ्गत्वेन कथनम्

**स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः। अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैरेति। अथ यद्धसति**

यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेति । अथ यत्तपो दान-मार्जवमहिꣳसा सत्यवचनमिति ता अस्य दक्षिणाः । तस्मादाहुः सोष्यति असोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवास्य अवभृथः । तद्धैतत् घोर आङ्गिरसः कृष्णाय देवकीपुत्राय उक्त्वोवाच अपिपास एव स बभूव सोऽन्तवेलायामेतत् त्रयं प्रतिपद्येत अक्षितमसि अच्युतमसि प्राणसꣳशितमसीति तत्रैते द्वे ऋचौ भवतः । आदित्प्रत्नस्य रेतसः । उद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरꣳ स्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति ज्योतिरुत्तममिति ॥ १७ ॥

पुरुषयज्ञाङ्गत्वेनेदमाम्नायते—**स यदिति**। स पुरुषो **यदशिशिषति यत्पिपासति** अशितुं पातुं चेच्छति इष्टाद्यप्राप्तिनिमित्तं **यन्न रमते** यदेवंजातीयकं दुःखमनुभवति **ता अस्य दीक्षाः** विधियज्ञस्येव दुःखसामान्यात् । **अथ यदश्नाति यत्पिबति यद्रमते** इष्टादिसंयोगात् रतिं चानुभवति **तदुपसदैरुपसद्भिः** समानतामेति । उपसदां पयोव्रतनिमित्तमत्यल्पसुखमतोऽशनादीनामुपसदां च सामान्यम् । **अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव** तत्समानतामेति शब्दवत्त्वसामान्यात् । **अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः** धर्मतुष्टिकरत्वसामान्यात् । यस्मात् यज्ञः पुरुषः **तस्मात्तं** जनयिष्यति यदा माता तदाहुरन्ये **सोष्यतीति** तस्य मातरम् । यदा च प्रसूता भवति तदा विधियज्ञवद**सोष्ट** देवदत्तः सोमं सोष्यति । यज्ञदत्तस्सोममसोष्टेति । शब्दसामान्याद्वा पुरुषो यज्ञः । **अस्य** तत् पुरुषाख्य-यज्ञस्य विधियज्ञस्येव **पुनरुत्पादनमेव** सोष्यति असोष्टेतिशब्दसंबन्धित्वम् । किञ्च पुरुषयज्ञस्य **तन्मरणमेवावभृथः** समाप्तिसामान्यात् । **तद्धैतत्** यज्ञदर्शनं नामतो **घोरः** गोत्रत **आङ्गिरसो** मुनिः **कृष्णाय देवकीपुत्राय** शिष्या-

**योक्त्वोवाच** । किमुक्तवान्? इत्यत्र एतत् त्रयमुक्तवानिति व्यवहितेन संबन्धः । **सोऽयं कृष्ण** एतद्दर्शनं श्रुत्वान्यविद्याभ्योऽ**पिपासो**ऽवितृष्णो **बभूव** । यत्कृष्णस्यान्यविद्यातृष्णाविच्छेदकरी सैवंविधेति विद्या महीकृता । य एवं यथोक्तयज्ञवित् **अन्तवेलायां** मरणकाले **एतन्मन्त्रत्रयं प्रतिपद्येत** जपेत् । किं तन्मन्त्रत्रयम्? आदित्यप्राणावेकीकृत्या**क्षितमक्षतमसी**त्येकं यजुः । तथा तमेव स्वरूपाद**प्रच्युतमसी**ति द्वितीयं यजुः । **प्राणसंशितं** सूक्ष्मतत्त्व**मसीति** तृतीयं यजुः । तदेतस्मिन् विद्यास्तुत्यर्थे **द्वे ऋचौ** मन्त्रौ **भवतः** । किं जपार्थाविमावपि? न, एतत् त्रयं प्रतिपद्येतेति त्रित्वसंख्याबाधात् । तेन साकं स्यादिति चेन्न; पञ्चसंख्याविधानात् । **आत् इत्** आकारानुबद्धः तकारो निरर्थकः इच्छब्दश्च । **प्रत्नस्य** चिरन्तनस्य **रेतसो** जगत्कारणस्य सतो ज्योतिः प्रकाशमापश्यन्ति । आशब्द उत्सृष्टानुबन्धः पश्यन्तीत्यनेन संबध्यते । किं तज्ज्योतिः पश्यन्ति? इत्यत्र—वासरमहरहरिव तत्सर्वतो व्याप्तं ब्रह्मज्योतिः ब्रह्मचर्यादिसाधनसंपन्ना ब्रह्मविदः पश्यन्तीत्यर्थः । परमपरं ज्योतिः दिवि विद्योतनवति इध्यते दीप्यत इति येन ज्योतिषा इद्धस्सविता तपति चन्द्रमा भाति ग्रहतारकादयो भासन्ते । किंचान्या ऋगाह—**उद्वयमि**ति । स्वाज्ञानलक्षणात् **तमसस्परि** परस्तात् **उद्वयं ज्योतिः** पश्यन् **उत्तर**मादित्यस्थं **पश्यन्तो** वयं तज्ज्योतिः **स्वः** स्वात्मीयमादित्यस्थं च तदेकं ज्योतिः ये **उत्तर**मुत्कृष्टतरं **पश्यन्तो** वयमुदगन्म । किमुदगन्म? इत्यत आह—**देवमि**ति । देवत्रा देवेषु सर्वेषु देवं द्योतनावन्तं **सूर्यं** रश्मिप्राणेरणात् तं सूर्यमुदगन्म **ज्योतिरुत्तमं** सर्वज्योतिर्भ्यः उत्कृष्टतममहो प्राप्ता वयमित्यर्थः । इदं ज्योतिः यजुस्त्रयेण ऋग्भ्यां च स्तुतं प्रकाशितमित्यर्थः । द्विर्वचनं यज्ञकल्पनासमाप्त्यर्थम् ॥ १७ ॥

आध्यात्मिकादिप्रपञ्चस्य ब्रह्मदृष्टिविधानम्

**मनो ब्रह्मेत्युपासीत इत्यध्यात्मं अथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवति अध्यात्मं चाधिदैवतं च । तदेतच्चतुष्पाद्ब्रह्म वाक् पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्मं अथा-**

धिदैवतं अग्निः पादो वायुः पाद आदित्यः पादो दिशः पाद इत्युभयमेवादिष्टं भवति अध्यात्मं चैवाधिदैवतं च। वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद। प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद। चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद। श्रोत्रमेव ब्रह्मणश्चतुर्थः पादः स दिग्भिः ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद य एवं वेद ॥ १८ ॥

आध्यात्मिकादिप्रपञ्चस्य ब्रह्मदृष्टिविधानार्थमिदमुच्यते—**मनो ब्रह्मेति**। अनेन मनुत इत्यन्तःकरणं **मनः**। तत् परं **ब्रह्मेत्युपासीते**त्येतद्दर्शनस्यात्मविषयत्वादध्यात्ममुच्यते। **अथाधिदैवतमिति** देवताविषयं दर्शनमुच्यते। **आकाशो ब्रह्मे**त्येवमुपासीतेत्यध्यात्मम**धिदैवतं चोभयं** ब्रह्मविषयत्वेना**दिष्ट**मुपदिष्टं **भवति**। मनआकाशयोः सूक्ष्मत्वेन रूपादिविरलत्वेन सर्वगतत्वात्तदेतन्मनआख्यं **ब्रह्म** चत्वारः पादा अस्येति **चतुष्पात्**। कथं चतुष्पात्त्वं? इत्यत्र **वाक् पादः प्राणश्चक्षुः श्रोत्र**मित्येते चत्वारः पादा **इत्यध्यात्मम्**। एतच्चतुष्पदं मनो ब्रह्मविषयमित्यर्थः। अथाकाशब्रह्मणश्चतुष्पात्त्वं विवृणोति—अथेति। **अथाधिदैवतमग्निर्वायुरादित्यो दिश इति**। एवमेतदु**भयमे**वाध्यात्मादिभेदेन चतुष्पात् **ब्रह्म आदिष्टं भवति**। इतरपादत्रयापेक्षया **वागेव ब्रह्मणश्चतुर्थः पादः** वक्तव्यविषयस्य वाचि प्रतिष्ठितत्वात्। तथा प्राणो घ्राणः पादः। तत्र गन्धविषयस्य प्रतिष्ठितत्वात्। तथा चक्षुः पादः श्रोत्रं पाद इति मानस-

ब्रह्मणोऽध्यात्मं चतुष्पात्त्वम् । अथाधिदैवतमग्निवाय्वादित्यदिश आकाशब्रह्मण उपलभ्यन्ते । तेनास्याग्न्यादयः पादा उच्यन्ते । इत्यध्यात्मादिभेदेनोभयं तच्चतुष्पात्त्वमादिष्टं भवति । तत्र मानसब्रह्मणो वागेव चतुर्थः पादः । **सोऽग्निनाधिदैवतेन ज्योतिषा भाति च** दीप्यते **तपति च** सन्तापमौष्ण्यं करोति । **य एवं** यथोक्तं वेद एवं वेदनफलं सोऽयं विद्वान् **कीर्त्या यशसा ब्रह्मवर्चसेन** इद्धो भवति । तथा **प्राण एव ब्रह्मणश्चतुर्थः पादः । स वायुना** गन्धग्रहाय **भाति च तपति** चेत्यादि समानम् । तथा **चक्षुः आदित्येन** रूपग्रहणाय **श्रोत्रं** तावद्**दिग्भिः** शब्दग्रहणाय । सर्वत्र कीर्त्यादि दृष्टफलम् । तत्तत्करणहेयांशविलयाधिकरणब्रह्मसंपत्तिरदृष्टफलम् । य एवं वेदेति द्विरुक्तिर्दर्शनसमाप्त्यर्था ॥ १८ ॥

आदित्ये सकलब्रह्मदृष्टिकरणम्

आदित्यो ब्रह्मेत्यादेशः तस्योपव्याख्यानं असदेवेदमग्र आसीत् तत्सदासीत् तत्समभवत् तदाण्डं निरवर्तत तत्संवत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णं चाभवताम् । तत् यद्रजतꣳ सेयं पृथिवी यत्सुवर्णꣳ सा द्यौः यज्जरायु ते पर्वता यदुल्बꣳ समेघो नीहारो या धमनयः ता नद्यो यद्वास्तेयमुदकꣳ स समुद्रः । अथ यत्तदजायत सोऽसावादित्यस्तं जायमानं घोषा उलूलवोऽनूदतिष्ठन्त सर्वाणि च भूतानि च सर्वे च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवः अनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे चैव कामाः । स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्ते अभ्याशो ह यदेनꣳ साधवो घोषा आ च गच्छेयुः उप च निम्रेडेरन् निम्रेडेरन् ॥ १९ ॥

आदित्यो ब्रह्मणः पाद इति यदुक्तं तस्मिन् सकलब्रह्मदृष्टिः कर्तव्येतीदमारभ्यते—**आदित्य** इति। **आदित्यो ब्रह्मेत्यादेश** उपदेशः। तत्स्तुत्यर्थं **व्याख्यानं** क्रियते। **इदं** जगत् सृष्टेरग्रे प्रागनभिव्यक्तनामरूपम**सदासीत्**। असतस्तत्कार्यप्रतिषेधान्न केवलमसत्। "कथमसतः सज्जायेत" इति वक्ष्यति च। अस्याव्याकृतनामरूपत्वादसदिवासदित्युच्यते। असदेवेत्यवधारणस्याव्याकृतनामरूपत्वेन जगदस्तीत्यवधारणपरत्वात्। तद्व्याकृतविषये सच्छब्दप्रयोगदर्शनाच्च। प्रायशो जगन्नामरूपव्याकरणमादित्यायत्तम्। तदभावे इदमित्थमिति ज्ञातुमशक्यत्वात्। आदित्योदयात्पुरा जगतोऽनभिव्यक्तत्वेनादित्यसंबन्धवैरल्यात्। असदेवेदमित्युक्तिरादित्यस्तुत्यर्था। सदिति व्यवहृतेरादित्यनिमित्तत्वात्। जगतस्सत्त्वासत्त्वोक्तिः आदित्यब्रह्मोपदेशपरेत्यर्थः। तथा चोपसंहरिष्यति—"आदित्यं ब्रह्मेत्युपास्ते" इति। यदुत्पत्तेः प्रागसच्छब्दवाच्यं **तत्** नामरूपाभिव्यक्त्या **सदासीत्**। अत्यल्पनामरूपव्याकरणतोऽङ्कुरीभूतबीजमिवासीत्। **तत्** क्रमेण स्थूलभावं **समभजत्। तदाण्डं निरवर्तत।** दैर्घ्यं छान्दसम्। संवृत्तमासीदित्यर्थः। **तदण्डं संवत्सरमात्रामशयत** तावन्तं कालं तूष्णीं स्थितं बभूव। **तदण्डं** तत ऊर्ध्वं वयसामण्डमिव **निरभिद्यत** निर्भिण्णमभूत्। इत्थं निर्भिण्णाण्डकपाले **द्वे रजतं च सुवर्णं चाभवताम्।** तत्तयोः कपालयोर्यद्रजतमासीत् **सेयं पृथिवी** अधोऽण्डकपालमित्यर्थः। **यत्कपालं सुवर्णं सा द्यौः** तदूर्ध्वाण्डकपालमित्यर्थः। **यज्जरायु** गर्भवेष्टनभस्त्रिकाण्डद्विशकलीकाले आसीत् **ते पर्वता** बभूवुः। **यदुल्बम**ल्पगर्भपरिवेष्टनं **मेघैः** सह वर्तत इति **समेघो नीहारः** अवश्यायो बभूव। **या** जातगर्भस्य देहगा **धमनयो** भूसिराः **ता नद्यो** बभूवुः। **यद्गर्भ**बस्तौ भवं **वास्तेयमुदकं स समुद्रः। अथ** गर्भरूपं **यत्तदजायत सोऽसावादित्य**स्तपति। **तं जायमान**मादित्य**मनु घोषाः** शब्दाः उलूलव उरूरवा विस्तीर्णा रवा **उदतिष्ठन्।** ईश्वरस्यैवेह प्रथमपुत्रजन्मनि **सर्वाणि** स्थावरादि**भूतानि सर्वे च** स्त्र्यन्नवस्त्रादयः काम्यन्त इति **कामाः** यस्मादादित्यजन्मनिमित्ता**स्तस्मात्** तस्यादित्य**स्योदयं प्रति प्रत्यायनं प्रति** प्रत्यस्तमनम्। यद्वा—**पुनः** प्रत्यागमनं प्रत्यायनं,

तन्निमित्तीकृत्य **सर्वाणि च भूतानि सर्वे चैव कामाः घोषा उल्लूलवश्चा-नूत्तिष्ठन्ति** । सवितुरुदयादेवैतत् प्रसिद्धमित्यर्थः । **यः** कश्चिदेतमेवमादित्यं **ब्रह्मेत्युपास्ते** तद्भावं प्रतिपद्यते । **अभ्याशो ह** क्षिप्रम् । **यदिति** क्रियाविशेषणम् । **एनमेवंविदं** प्रति **साधवो घोषाः** साध्वयमिति वार्ता **आगच्छेयुः** । न केवलं घोषाणामागमनमात्रं किन्तु **उप च** समीपं चागत्य **निम्रेडेरन्** परमसुखं च कुर्युरित्यर्थः । द्विर्वचनमादरार्थमध्यायपरिसमाप्त्यर्थश्च ॥ १९ ॥

**इति तृतीयोऽध्यायः ।**

---

# चतुर्थोऽध्यायः

वायुप्राणयोर्ब्रह्मत्वेनोपासनम्

जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वत आवसथान् मापयांचक्रे सर्वत एव मे अत्स्यन्तीति । अथ ह हꣳसा निशायामतिपेतुः तद्धैवꣳ हꣳसो हꣳसमभ्युवाद हो होऽयि भल्लाक्ष ! भल्लाक्ष ! जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीः तत्त्वा मा प्रधाक्षीरिति । तमु ह परः प्रत्युवाच कम्बर एनमेतत्सन्तꣳ सयुग्वानमिव रैक्कमात्थेति यो नु कथꣳ सयुग्वा रैक्क इति । यथा कृतायविजितायाधरेयाः संयन्ति एवमेनꣳ सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत् स वेद स मयैतदुक्त इति । तदु ह जानश्रुतिः पौत्रायण

उपशुश्राव स ह संजिहान एव क्षत्तारमुवाच अङ्गारे ह सयुग्वानमिव रैक्कमात्थेति यो नु कथꣳ सयुग्वा रैक्क इति । यथा कृतायविजितायाधरेयाः संयन्ति एवमेनꣳ सर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति । स ह क्षत्ता अन्विष्य नाविदमिति प्रत्येयाय तꣳ होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमर्च्छेति । सोऽधस्तात् शकटस्य पामानं कषमाणमुपोपविवेश तꣳ हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्क इति अहꣳ ह्यरा३ इति ह प्रतिजज्ञे स ह क्षत्ता अविदमिति प्रत्येयाय ॥ १ ॥

पुरस्ताद्ब्रह्मपाददृष्ट्या वायुप्राणाध्यासो वर्णितः । अथेदानीं वायुप्राणयोर्ब्रह्मत्वेनोपासनार्थमयमध्याय आरभ्यते । इयमाख्यायिका तु सुखावबोधार्था— **जानश्रुतिरि**ति । जनश्रुतस्यापत्यं **जानश्रुतिः** । **ह** इत्यैतिह्यार्थः । पुत्रस्य पौत्रः **पौत्रायणः** । श्रद्धापुरस्सरं ब्राह्मणेभ्यो देयमस्येति स **श्रद्धादेयः** । बह्वनेकं धनं दातुं शीलमस्येति **बहुदायी** । यस्य गृहेऽहन्यहनि बहु पक्तव्यमस्ति स **बहुपाक्यः** । एवंगुणसंपन्नो जानश्रुतिः कस्मिंश्चिद्देशविशेषे **आस** बभूव । **स ह सर्वतः** सर्वासु दिक्षु नगरेषु ग्रामेषु च आवसन्त्येष्वित्या**वसथाः** प्राणिनिवासयोग्यस्थलानि तान् **मापयाञ्चक्रे** कारितवानित्यर्थः । **सर्वत** एत्य मदावसथेषु वसन्तः सन्तो मद्दत्तान्न**मत्स्यन्ती**त्यभिप्रायेण **कृत**वानित्यर्थः । स कदाचिद्राजा घर्मकाले हर्म्योपरि निषसाद । **अथ** तत्र **ह निशायां** रात्रौ राज्ञोऽन्नदानादिगुणैस्तोषिता देवता **हंसरूपा** भूत्वा महाराजदृग्गोचरप्रदेशेऽति**पेतुः** पतितवन्तः । **एवं** पततां हंसानां एकः स्वयं पृष्ठतः पतन्नग्रतः पतन्तमभ्युवाद । भो भो ! इति संबोध्य **अयि भल्लाक्ष भल्लाक्ष** ! इत्यादरोक्तिः । जानश्रुतेः **पौत्रायणस्य** पश्य पश्येदमाश्चर्यम् । **समं** तुल्यं **दिवा** द्युलोकव्यापि ज्योतिस्तेजोऽन्नादिदानप्रभवमाततं व्याप्तम् । **तन्मा प्रसाङ्क्षीस्त**ज्ज्योतिषा

संबन्धं मा कार्षीः। **तज्ज्योतिस्त्वा** त्वां मा प्रधाक्षीत् पुरुषव्यत्ययेन **मा प्रधाक्षीरि**ति। **तमेवमुक्तवन्तं परो**ऽग्रगामी **प्रत्युवाच**। अरे! निकृष्टोऽयं राजा। तं **कमु वरमेनं** केन माहात्म्येन **सन्तं** युक्तं **सयुग्वानं रैक्वमिव** त्वमात्थ रैक्वमिवैनं वक्तुमयुक्तमित्यर्थः। इतर आह—**सयुग्वा** रैक्व इति। **यो नु कथं** त्वयोच्यते नामतः सह युग्वना गन्त्र्या युक्त इति **सयुग्वा**। उक्तवन्तं भल्लाक्ष आह—**यथे**ति। **यथा** लोके **कृतो** नाम द्यूतसमये प्रसिद्धश्चतुरङ्कः। तस्मै **कृताय विजिताय** तदर्थमितरे त्रिद्व्येकाङ्कास्त्रेताद्वापरकलिनामानः **संयन्ति** संगच्छन्ते अन्तर्भवन्ति। चतुरङ्के तु आये त्रिद्व्येकाङ्कानां विद्यमानत्वात्तस्मिन्नन्तर्भवन्तीति दृष्टान्तः। **एवमेव** कृतायस्थानीयं रैक्वं त्रेताद्यायस्थानीयं **सर्वं तदभिसमेति** अन्तर्भवति। तत्कथं? लोके तावत् **यत्किञ्च** सर्वाः **प्रजाः साधु** कर्मजातं **कुर्वन्ति** तत्सर्वं तत्फलं च रैक्वधर्मतत्फलेऽन्तर्भवतीत्यर्थः। **यत्स** रैक्वो **वेद** तद्वेद्यं यः कश्चिद्वेद चेत् तदा रैक्वमिव तमपि सर्वप्राणिकृतधर्मजातं तत्फलं चाभिसमेतीत्यनुवर्तते। **यो मयोक्तो** रैक्वः स एवंप्रभाववानित्युक्त्वा हंसास्तिरोधानं जग्मुः। **तदे**तदात्मनः कुत्सारूपं रैक्वस्य प्रशंसारूपं हंसवाक्यं हर्म्याग्रासनो **जानश्रुतिः पौत्रायणो** राजोपशुश्राव। एवं हंसवाक्यं पुनः पुनः स्मरन् रात्रिशेषमतिवाहयामास। ततः **स** वन्दिभिः प्रबोध्यमान इव **संजिहानः** शयनं परित्यजन्नेव **क्षत्तारमुवाच**। हे **अङ्ग** वत्स **अरे! ह सयुग्वानमिव रैक्वमात्थ**। स हि स्तुत्यर्हो नाहम्। अथवा सयुग्वानं गत्वा रैक्वं त्वमात्थ। तद्दिदृक्षा ममास्ति। इवशब्दोऽवधारणार्थः। स ह क्षत्ता प्रत्युवाच क्षत्तुः राज्ञः प्रियकारित्वात्। **यो नु कथं सयुग्वा रैक्वः? इति** क्षत्त्रा पृष्टः स च भल्लाक्षवचनतः तच्चिह्नं स्मरन् तदुक्तिमवोचत्। **यथा कृताये**त्याद्युक्तार्थम्। **स ह क्षत्ता** नगरं ग्रामं वा गत्वा **रैक्वमन्विष्य नाविदं** नाज्ञासिषं **इति प्रत्येयाय** प्रत्यागतवान्। **तं** क्षत्तारं स **होवाच अरे** क्षत्तः! **ब्राह्मणस्य** ब्रह्मविदोऽ**न्वेषणा** यत्रारण्यनदीपुलिनादौ अनुमार्गणं भवति तत्त**त्रैनं** रैक्वम**र्च्छ** मार्गणं कुर्वित्युक्तः क्षत्तान्विष्य विजनप्रदेशे गन्त्र्याः**शकटस्याधस्तात् पामानं कषमाणं** कण्डूयमानं रैक्वं दृष्ट्वा नूनमयं सयुग्वा रैक्व इति विनयेन

तत्समीपमुपोपविवेश। हे भगवो भगवन्! त्वन्नु सयुग्वा रैक्वः? इति रैक्वं तं हाभ्युवाद। क्षत्त्रैवं पृष्टो मुनिः अरे! अहमस्मि रैक्व इत्यनादरवत् प्रतिजज्ञेऽभ्युपगतवान्। स क्षत्ता तं विज्ञाय अविदं ज्ञातवानस्मीति राजानं प्रति प्रत्येयाय प्रत्यागत्य तदुदन्तं विज्ञापयामासेत्यर्थः ॥ १ ॥

राज्ञा रैक्वसमीपगमनम्

तदुह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरीरथं तदादाय प्रतिचक्रमे तꣳ हाभ्युवाद ॥ १ ॥ रैक्व! इमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवताꣳ शाधि यां देवतामुपास्स इति। तमु ह परः प्रत्युवाचाह हारेत्वा शूद्र! तवैव सह गोभिरस्त्विति तदुह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे। तꣳ हाभ्युवाद रैक्व! इदꣳ सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जाया अयं ग्रामो यस्मिन्नास्से अन्वेव मा भगवः शाधीति। तस्या ह मुखमुपोद्गृह्णन् उवाच आजहार इमाः शूद्र! अनेनैव मुखेनालापयिष्यथा इति ते हैते रैक्व! पर्णा नाम महावृषेषु यत्रास्मा उवास तस्मै होवाच ॥ २ ॥

क्षत्तृमुखतस्तदभिप्रायं ज्ञात्वा तत्समीपं स राजा गतवानित्याह—तदु हेति। तत् ऋषेर्गार्हस्थ्यानुकूलधनार्थितामवगम्य उ ह एव जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कं कर्णाभरणादिकं अश्वतरीभ्यां युक्तं रथं धनं च तदादाय रैक्वं प्रति प्रतिचक्रमे। तं च गत्वाभ्युवाद—हे रैक्व! गवां षट् शतानीमानि मया त्वदर्थमानीतानि। अयं निष्कोऽश्वतरीरथश्च

इदमेतद्धनं चादत्स्व। हे **भगवः! अनु म एतां** मम तामेव **देवतां यां देवता-मुपास्स इति** तदुपदेशेन मामनुशाधीत्यर्थः। तमेवमुक्तवन्तं राजानं **परो रैक्वः प्रत्युवाच**। अहेत्यनर्थको निपातः पृथगवधारणश्रवणात्। हारेण युक्ता गन्त्री सेयं **हारेत्वा गोभिस्सह तवैवास्तु**। हे **शूद्र**! किमनेन मे प्रयोजनमस्ति? राज्ञः शूद्रत्वं कुतः? इत्यत्र भल्लाक्षवचःश्रवणादेनं शुक् अविवेश। तेन शुचायं द्रवतीति ज्ञात्वा मुनिराह—**शूद्रेति**। यद्वा—शुश्रूषां विना केवलधनेनोपजगामेति। न त्वयं जात्या शूद्रः। शूद्रस्य ब्रह्मविद्यानधिकारात् "तस्माच्छूद्रो निर्विद्योऽभवत्" इति श्रुतेः। यद्ययं शूद्रस्तदा कथं विद्यार्थं ब्राह्मणसमीपं व्रजेत्? अथवाल्पधनमनेनाहृतमिति शूद्र इति रुषा उक्तवान्। **तदु ह जानश्रुतिः पौत्रायणः** ऋषेरभिप्रायं ज्ञात्वा **गवां सहस्रा**दिकमृषेरभिमतामात्मनो **दुहितरं तदादाय प्रतिचक्रमे। रैक्व! इदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जाया** मम दुहितानीता। **अयं ग्रामो** मया त्वदर्थे परिकल्पितः। तदेतत्सर्वमादाय हे **भगवः! मामनुशाधीत्युक्तः** जायार्थमानीताया राज्ञो दुहितुर्हैव विद्याया मुखद्वारतामु**पोद्गृह्णन्** अनुजान**न्नुवाच**।

> ब्रह्मचारी धनदायी मेधावी श्रोत्रियः प्रियः।
> विद्यया वापि विद्यां यस्तानि तीर्थानि षण्मम ॥

इति स्मृत्यनुरोधेन राजानमुवाचेत्यर्थः। **इमा** गोप्रभृतय **आजहार** आहृतवानसि। **शूद्रेति** पूर्ववत्। **अनेनैव मुखेन** विद्याग्रहणतीर्थे**नालापयिष्यथाः** मां प्रीणयसीत्यर्थः। हे **रैक्व! ते हैते** ग्रामाः **पर्णा नाम** विख्याताः सन्ति। तेषु **महावृषेषु देशेषु यत्र** येषु ग्रामेषु **उवास रैक्व** उषितवान् तांस्तात् ग्रामान् राजास्मै रैक्वाय ददौ। स रैक्व एवं दत्तवते ह किल विद्या**मुवाच** ॥ २ ॥

रैक्वेण राज्ञे संवर्गविद्योपदेशः

वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति।

यदाप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येव एतान् सर्वान् संवृङ्क्त इत्यधिदैवतम् । अथाध्यात्मं प्राणो वाव संवर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणꣳ श्रोत्रं प्राणं मनः प्राणो ह्येवैतान् सर्वान् संवृङ्क्त इति । तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु । अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः । स होवाच महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन् बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति । तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयाय आत्मा देवानां जनिता प्रजानाꣳ हिरण्यदꣳष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुः अनद्यमानो यदनन्नमत्तीति [नि] वै वयं ब्रह्मचारिन् नेदमुपास्महे दत्तास्मै भिक्षामिति । तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृतं तस्मात् सर्वासु दिक्षु अन्नमेव दशकृतꣳ सैषा विराडन्नादी तयेदꣳ सर्वं दृष्टꣳ सर्वमस्येदं दृष्टं भवति अन्नादो भवति य एवं वेद य एवं वेद ॥ ३ ॥

राज्ञे संवर्गविद्यामुपदिदेशेत्याह—**वायुरिति** । बाह्यो **वायुर्वा** वाह्न्यादिसंग्रसनात् **संवर्गः** । वावेत्यवधारणार्थः । वायोः संवर्गत्वं कुतः ? इत्यत आह—यदेति । **यदा वा** यस्मिन्काले वै **अग्निरुद्वायति** उपशाम्यति तदासावग्निर्**वायुमेवाप्येति** वायुभावमेतीत्यर्थः । **यदा सूर्योऽस्तमेति वायुमेवाप्येति** । **यदा चन्द्रोऽस्तमेति वायुमेवाप्येति** तयोरदर्शनप्राप्तेर्वायुनिमित्तत्वात् । यदा प्रलये

सूर्याचन्द्रमसोस्तेजोरूपत्वेन वायावप्ययं स्यादित्यत्र "तेजो वायौ विलीयते" इति श्रुतेः। **यदाप उच्छुष्यन्ति वायुमेवापियन्ति**। यस्माद्वायुर्महाबलानग्न्यादीने- **तान संवृङ्क्ते** अतो वायुः संवर्गगुणत्वेनोपास्यः देवतासु संवर्गनिमित्त **इत्यधि- दैवतम्**। **अथानन्तरमध्यात्ममुच्यते**। आत्मसंसर्गनिमित्तत्वान्मुख्यः **प्राणो वाव संवर्गः**। **यदा** यस्मिन् काले **स** पुरुषः **स्वपिति** तदा वायुमग्निरिव **प्राणमेव वागप्येति**। तथा **चक्षुः श्रोत्रं मनश्च प्राणमे**वाप्येति। हि यस्मात् **प्राण एवैतान्** वागादीन् **संवृङ्क्त** इति प्राणोऽपि संवर्गगुणत्वेनोपास्य इत्यर्थः। अग्न्यादिबाह्यप्रपञ्चविलयाधारो वायुस्तत्पदार्थः परमात्मा। वागा- द्यन्तःप्रपञ्चविलयाधारः प्राणः प्रत्यगात्मा। तयोराधेयनिरूपिताधारतावैरल्ये तदवशिष्टं ब्रह्मेत्यर्थात् सिद्धं भवतीति भावः। स्वाज्ञदृष्ट्या तु **तौ वा एतौ द्वौ संवर्गौ** संवर्जनगुणविशिष्टत्वात्। तत्र **देवेषु वायुरेव** संवर्गः। वागादि**प्राणेषु** मुख्य**प्राणो** हि संवर्गः। तयोः स्तुत्यर्थमाख्यायिकामवतारयति—**अथे**ति। संवर्गद्वयकथनानन्तरं शुनकस्यापत्यं **शौनकं** कपिगोत्रजं **कापेयं** नामतोऽभि- **प्रतारिणं च** कक्षसेनस्यापत्यं **काक्षसेनिं** भोजनायोपविष्टौ सूपकारैः **परिवि- ष्यमाणौ** तौ प्रति ब्रह्मविच्छौण्डो **ब्रह्मचारी बिभिक्षे** भिक्षितवान्। तज्ज्ञान- जिज्ञासया **तस्मा उ ह** भिक्षां **न ददतुः**। किमयं वक्ष्यति? इति न दत्तवन्ता- वित्यर्थः। **स ह उवाच** ब्रह्मचारी। द्वितीयाबहुवचनं **महात्मनश्चतुर** इति। अग्न्यादीने**को देवो** वायुः संवृङ्क्ते वागादीन् प्राणः। **कोऽसौ** प्रजापतिः जगार ग्रस्तवान्। **कस्स जगार**? इति प्रश्ने भवन्त्यस्मिन् भूतानीति भुवनं भूरादिचतुर्दश- लोकः। तस्य **भुवनस्य** एको देवः **गोपाः** गोप्ता। **तं** प्रजापतिं **कापेय! मर्त्या नाभिपश्यन्ति** न जानत इत्यर्थः। तेषामविवेकित्वेन मरणधर्मविशिष्टत्वात्। हे **अभिप्रतारिन्**! अध्यात्माधिदैवाधिभूतप्रकारै**र्बहुधा वसन्तं** प्रजापतिम्। **यस्मै वा एतदहन्यहन्यन्न**मदनाय ह्रीयते संस्क्रियते च **तस्मै** प्रजापतये **न दत्तमेतदन्नमिति** ब्रह्मचारिणो वचनं **शौनकः कापेयः प्रतिमन्वानो** मनसा सम्यगालोचयन् ब्रह्मचारिणं **प्रत्येयाय**—गत्वा न पश्यन्ति मर्त्या इति यं त्वमवोचस्तं वयं सर्वात्मेति पश्यामः। किञ्च वायुरूपेणाग्न्यादि**देवानात्**मन्युप-

संहृत्य पुनर्जनितोत्पादयिता। एतदधिदैवतं तथाध्यात्मं च। प्राणरूपेण वागादिकरणानां **प्रजानां जनिता। हिरण्यदंष्ट्रः** अमृतदंष्ट्रः। **बभसो** भक्षणशीलः। सूरिः सर्वज्ञः तद्विपरीतोऽसूरिः तत्प्रतिषेधो**ऽनसूरिः** सूरिरेवेत्यर्थः। **अस्य** प्रजापते**र्महान्तं महिमानं** विभूतिं ब्रह्मविदः प्राण**माहुः**। यस्मादयमन्यै**रनद्यमानो यद**ग्निवागादिदेवतारूपं **तदनन्नमत्ति। नि वा** इति निरर्थकौ निपातौ। हे **ब्रह्मचारिन्! वयं** आ **इदमेव** ब्रह्मो**पास्महे** इतोऽन्यन्न वयमुपास्महे। इदमहमस्मीति परमेव ब्रह्मोपास्मह इत्यर्थः। स्वभृत्यान् **दत्तास्मै भिक्षा**मित्यवोचत्। **ते** वै भृत्या भिक्षा**मस्मा उ ह ददुः**। ये गृह्यन्ते **ते वा एते** अग्न्यादयो वागादिभ्यो**ऽन्ये**ऽधिदेवतारूपाः **पञ्च**। तत्सर्वग्रसिता वायुः तथा तेभ्यो**ऽन्ये पञ्चा**ध्यात्मसंज्ञिका वागादयः तत्सर्वग्रासो प्राणश्च संख्यया सर्वे दश भवन्ति। **ते दश सन्तः** एतत्सर्वं **तत्कृतं** भवति। एक आयः चतुरङ्कश्चत्वारः। त्रयोऽपरे त्र्यङ्काः। द्वावन्यौ द्व्यङ्कौ। यदेकान्य एकाङ्कः। इत्येव दश सन्तः। यस्मादेवं **तस्मात् सर्वासु दिक्षु** अग्न्याद्या वागाद्याश्च दशसंख्यासामान्यात् **अन्नमेव**। "दशाक्षरा विराट् विराडन्नं" इति श्रुतितोऽन्नमेव **दश कृतं** दशसंख्यासामान्यात् चतुरङ्कायत्वेन कृतेऽन्तर्भावात्। **सैषा विराट्** दशसंख्या सती अन्नमश्नातीत्य**न्नादी**। दशसंख्यासु नवसंख्या अन्तर्भूतेत्यतोऽन्नमन्नादिनी च। तथा विद्वान् दशदेवताभूतस्सन् विराट्त्वेन दशसंख्यायान्नं कृतसंख्ययान्नादी। **तया** अन्नान्नादिन्या **एवेदं** दशदिक्स्थं **सर्वं** जगत् **दृष्टं** कृतसंख्याभूतया उपलब्धमित्यर्थः। एवंविदो**ऽस्य** कृतसंख्याभूतस्य दशदिक्संबद्धं **सर्वं दृष्टमुपलब्धं भवति**। किंच **अन्नादश्च भवति य एवं वेद** तस्य यथोक्तदर्शिनः स्वदर्शनानुरूपं फलं भवतीत्यर्थः। द्विरुक्तिरुपासनापरिसमाप्त्यर्था ॥ ३ ॥

श्रद्धातपसोः ब्रह्मदृष्टिविधानम्

सत्यकामो ह जाबालो जबालां मातरमामन्त्रयांचक्रे ब्रह्मचर्यं भवति! विवत्स्यामि किंगोत्रो न्वहमस्मीति। सा हैनमुवाच

नाहमेतद्वेद तात! यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रुवीथा इति। स ह हारिद्रुमतं गौतममेत्य उवाच ब्रह्मचर्यं भगवति वत्स्यामि उपेयां भगवन्तमिति। तꣳ होवाच किंगोत्रो नु सोम्य! असीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्मि अपृच्छं मातरꣳ सा मा प्रत्यब्रवीत् बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसीति सोऽहꣳ सत्यकामो जाबालोऽस्मि भो इति। तꣳ होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधꣳ सोम्य! आहर उप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्य उवाच इमाः सोम्य! अनुसंव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणावर्तयेति स ह वर्षगणं प्रोवास ता यदा सहस्रꣳ संपेदुः ॥ ४ ॥

अन्नान्नादित्वलक्षणमध्यात्माधिदैवतप्रपञ्चमेकीकृत्य पुनः षोडशधा प्रविभज्य तत्र श्रद्धातपसोः ब्रह्मविद्याङ्गत्वेन ब्रह्मदृष्टिर्विधातव्येतीयमाख्यायिकारभ्यते—**सत्यकाम** इति। नामतः **सत्यकामः**। हकार ऐतिह्यार्थः। जबालाया अपत्यं **जाबालः** जबालां **मातरमामन्त्रयांचक्रे**। किमिति? हे **भवति**! आचार्यकुले स्वाध्यायग्रहणनिमित्तं **ब्रह्मचर्यं विवत्स्यामि**। किं मम गोत्रम्? **किंगोत्रो न्वहमस्मि**? इति। एवं पृष्टा जबाला **सा हैनं पुत्रमुवाच**। हे **तात! यद्गोत्रस्त्वमसि नाहमेतत्तत्र** गोत्रं **वेद**। कथं न वेत्थ? इत्युक्ता तमाह—**बह्विति**। भर्तृगृहेऽतिथ्यभ्यागतेभ्यो **बहु** परिचर्यां **चरन्त्यहं परि-**

चारिणी स्याम्। तेन परिचरणचित्तेन गोत्रादिस्मरणे मम मनो नाभूत्। यौवनकाले त्वामलभे लब्धवत्यस्मि। तदैव ते पिता उपरतः। अनाथा नाहमेतद्वेद यद्गोत्रस्त्वमसि। जबाला तु नामाहमस्मि सत्यकामो नाम त्वमसि। स त्वं सत्यकाम एवाहं जाबालोऽस्मीत्याचार्याय ब्रुवीथाः यद्याचार्येण पृष्टस्तदेत्यर्थः। स ह सत्यकामो हरिद्रुमतोऽपत्यं हारिद्रुमतं गोत्रतो गौतममेत्य गत्वा तं होवाच—ब्रह्मचर्यं भगवति पूजावति विवत्स्यामि। अत उपेयामुपगच्छेयं शिष्यत्वेन भगवन्तमित्युक्तवन्तं तं होवाच गौतमः। विज्ञातकुलगोत्रो हि शिष्य उपनेतव्य इति मत्वा किंगोत्रो नु सोम्यासि? इति गौतमेन पृष्ट आह सत्यकामः स होवाच। नाहमेतद्वेद भोः! यद्गोत्रोऽहमस्मि। किन्त्वपृच्छं मातरम्। सा तु मां प्रत्यब्रवीत्। बह्वहं चरन्तीत्यादि पूर्ववत्। तस्या अहं वचः स्मरामि। सोऽहं सत्यकामो जाबालोऽस्मि भोः! इति। गौतमस्तं होवाच—एतदार्जवयुक्तं वचो ब्राह्मणो विशेषेण वक्तुमर्हति ब्राह्मणानामृजुस्वभावात्। यस्मान्न सत्यात् ब्राह्मणजातिधर्मात् अगाः न व्यपेतवानसि अतो ब्राह्मण! त्वामुपनेष्ये। उपनयनसंस्कारार्थं समिधं सोम्य! आहरेत्युक्त्वा तमुपनीय कृशानामबलानां चतुश्शता गा निराकृत्योवाच। इमाः सोम्य! अनुसंव्रजेत्युक्तः ता अरण्यं प्रत्यभिप्रस्थापयन्नुवाच। नासहस्रेणापूर्णेन नावर्तय न प्रत्यागच्छ। स च गुरुणैवमुक्तः तृणोदकबाहुल्यद्वन्द्वरहितारण्ये गाः प्रवेश्य स ह वर्षगणं प्रोवास। तत्र वसतानेन गावः सम्यक् रक्षिताः। यदा सहस्रं ताः संपेदुः तावन्तं कालं गाः पालयन् तत्रैव उषितवानित्यर्थः॥ ४॥

ऋषभरूपेण वायुना सत्यकामस्यानुग्रहः

अथ हैनं ऋषभोऽभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य! सहस्र९ स्मः प्रापय न आचार्यकुलम्। ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच

प्राची दिक्कला प्रतीची दिक्कला दक्षिणा दिक्कला उदीची दिक्कला एष वै सोम्य ! चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम । स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति प्रकाशवतो ह लोकान् जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ९ ॥

तत्कृतब्रह्मचर्यश्रद्धादिसाधनसन्तुष्टो वायुः ऋषभभावमेत्य तमनुगृह्णातीत्याह — **अथेति । अथ हैनमृषभोऽभ्युवाद सत्यकाम ! इति । भगव इति ह प्रतिवचनं शुश्राव** दत्तवान् । **प्राप्ताः सोम्य ! सहस्रं स्मः** । पूर्णा तव प्रतिज्ञा । अतः **प्रापय नोऽस्मानाचार्यकुलम्** । अहं परस्य **ब्रह्मणः पादं ते ब्रवाणीत्युक्तः** प्रत्युवाच । **ब्रवीतु मे** मह्यं **भगवानित्युक्त** ऋषभः **तस्मै** सत्यकामा**योवाच** ब्रह्मपादचतुर्थांशमुक्तवान् । स कीदृशः ? इत्यत्र **प्राची दिक्** कलेत्यादि । **एष वै सोम्य !** ब्रह्मणः पादः । चतस्रः कला अवयवा यस्येति सोऽयं **चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम** प्रकाशवानित्येव नामाभिधानं यस्य । तथोत्तरेऽपि पादाः त्रयः ब्रह्मणश्चतुष्कलाः । **स यः** कश्चिदे**तमेवं ब्रह्मणश्चतुष्कलं पादं विद्वान् प्रकाशवान्** प्रकाशगुणविशिष्टमुपास्ते उपासनाफलं **अस्मिन् लोके प्रकाशवान्** प्रख्यातो **भवति** । अदृष्टफलं तु **प्रकाशवतो** देवजातस्य **लोकान् जयति । य एतमेवं विद्वान् चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्त** इति ॥ ९ ॥

अग्निना ब्रह्मपादकथनम्

अग्निः ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभि सायं बभूवुः तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश । तमग्निरभ्युवाद सत्यकाम३

इति भगव इति ह प्रतिशुश्राव । ब्रह्मणः सोम्य ! ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच पृथिवी कला अन्तरिक्षं कला द्यौः कला समुद्रः कला एष वै सोम्य ! चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम । स य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते अनन्तवानस्मिँल्लोके भवति अनन्तवतो ह लोकान् जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ६ ॥

वृषभोऽयमग्निः ते पादं वक्तेत्युक्त्वा उपररामेत्याह—अग्निरिति। स सत्यकामो ह श्वोभूते नित्यकर्मादि कृत्वाचार्यकुलं प्रति गा अभिप्रस्थापयाञ्चकार । ता गावो यत्र यस्मिन् देशे अभि सायं बभूवुः तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः ऋषभवचो ध्यायन् प्राङ्मुख उपविवेश । सत्यकाम ! इति तमग्निरभ्युवाद । स भगव इति ह प्रतिशुश्राव प्रतिवचनं ददौ । ब्रह्मणः सोम्य ! ते पादं ब्रवाणीति । ब्रवीतु मे भगवानिति । तस्मै होवाच—पृथिवी कला । अन्तरिक्षं कला । द्यौः कला । समुद्रः कला इत्यात्मगोचरमेव दर्शनमग्निरब्रवीत् । एष वै सोम्य ! चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम । स यः कश्चित् यथोक्तमनन्तगुणत्वेन ब्रह्मणः पादमुपास्ते स तद्गुणो भवति । स्वयममृतो भूत्वानन्तवतो ह लोकान् जयतीति पूर्ववत् ॥ ६ ॥

हंसेन ब्रह्मपादकथनम्

हꣳसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश । तꣳ हꣳस उपनिपत्य

अभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव । ब्रह्मणः सोम्य! ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच अग्निः कला सूर्यः कला चन्द्रः कला विद्युत् कला एष वै सोम्य! चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम । स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतो ह लोकान् जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ ७ ॥

सोऽग्निः हंसस्ते पादं वक्तेत्युक्त्वा उपररामेत्याह— **हंस** इति । **हंसस्ते** **पादं वक्तेति** । आदित्यो हंसः शौक्ल्यात् पतनसामान्याच्च । **स ह श्वोभूते** उक्तार्थमेतत् । हंसो ज्योतिर्विषयदर्शनं प्रोवाच । अत एव हंसस्यादित्यत्वं स्पष्टमित्यर्थः । विद्वत्फलं **ज्योतिष्मान्** दीप्तियुक्तोऽस्मिन् **लोके भवति** । मृत्वाग्न्यादि**ज्योतिष्मत एव लोकान् जयति** । उक्तार्थमेतत् ॥ ७ ॥

मद्गुना ब्रह्मपादकथनम्

मद्गुः ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभि सायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश । तं मद्गुरुपनिपत्य अभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव । ब्रह्मणः सोम्य! ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कला एष वै सोम्य! चतुष्कलः पादो ब्रह्मण आयतनवान्नाम । स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण

आयतनवानित्युपास्ते आयतनवानस्मिँल्लोके भवति आयतनवतो ह लोकान् जयति य एतमेवं विद्वाꣳश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ ८ ॥

हंसोऽपि मद्गुः ते पादं वक्तेत्युक्त्वा उपररामेत्याह—मद्गुः ते पादं **वक्तेति** । **मद्गुरिति** जलचरपक्षिविशेषः । अप्संबन्धादसौ प्राण इत्यर्थः । पूर्ववत् मद्गुः स्वविषयमेव दर्शनमुवाचेत्याह—**प्राणः कला चक्षुः कला** इत्यादि । आयतनं मनः सर्वकरणानां मनआयतनत्वात् । अस्मिन् लोक **आयतनवाना**श्रयवान् **भवति** । **आयतनवतो ह लोकान् जयति** । **य एतमि**त्यादि पूर्ववत् ॥८॥

सत्यकामेनाचार्यकुलगमनं विद्योपदेशश्च

प्राप हाचार्यकुलं तमाचार्योऽभ्युवाद सत्यकाम३ इति भगव इति ह प्रतिशुश्राव । ब्रह्मविदिव वै सोम्य ! भासि को नु त्वानुशशास इति अन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवाꣳस्त्वेव मे कामे ब्रूयात् । श्रुतꣳ ह्येव मे भगवद्दृशेभ्य आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापदिति तस्मै हैतदेव उवाच अत्र ह न किंचन वीयायेति वीयायेति ॥ ९ ॥

एवं सत्यकामो ब्रह्मवित्पदमासाद्य स्वाचार्यनिकटं प्रापेत्याह—**प्राप हाचार्यकुलं** इति । चिन्तासर्वस्वविरलतया प्रसन्नकरणग्रामो ब्रह्मवित् तथा भासीत्यर्थः । **को न्विति** वितर्कयन्नुवाच—**कस्त्वामनुशशास ? इति** । स च सत्यकाम आह—**अन्य** इति । भगवच्छिष्यं मां कोऽन्यो वा मनुष्योऽनुशासितुमुत्सहते ? अतो **मनुष्येभ्योऽन्ये** मामनुशिष्टवन्तो देवाः । अतो मनुष्येभ्योऽन्य **इति ह प्रतिजज्ञे** प्रतिज्ञातवानित्यर्थः । **भगवांस्त्वेव मे कामे ब्रूयात्** मे मम **कामे** इच्छायां **ब्रूयात्** । नाहं भगवदन्योक्तं गणयामीत्यर्थः । **श्रुतं ह्येव मे**

**भगवद्दृशेभ्यः आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्** इति। भगवत्समेभ्यो मया आचार्याद्धैव विद्या विदिता। सैव विद्या साधिष्ठं साधुतमत्वं प्रापत् भवत्कटाक्षत इत्यर्थः। अतो भगवानेव ब्रूयादित्युक्तः आचार्य आह— **तस्मै हैतदेवोवाच** अत्र ह **न किंचन वीयायेति**। देवताभियोक्ता तामेव विद्यामुवाचेत्यर्थः। **अत्र ह** षोडशकलविद्यायां **न किञ्चन** एकदेशमपि **वीयाय** न्यूनता न ह्यस्तीत्यर्थः। द्विरुक्तिर्विद्यापरिसमाप्त्यर्था॥ ९॥

उपकोसलाय त्रेताग्निभिः संभूय ब्रह्मोपदेशः

उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास तस्य ह द्वादशवर्षाण्यग्नीन् परिचचार स ह स्म अन्यानन्तेवासिनः समावर्तयन् तꣳ ह स्मैव न समावर्तयति। तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन् परिचचारीन्मा त्वाग्नयः परिप्रवोचन् प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवासांचक्रे। स ह व्याधिनानशितुं दध्रे तमाचार्यजायोवाच ब्रह्मचारिन्! अशान किंनु नाश्नासि? इति स होवाच बहव इमेऽस्मिन् पुरुषे कामा नानात्यया व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीति। अथ हाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्यचारीत् हन्तास्मै प्रब्रवामेति तस्मै होचुः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्म इति। स होवाच विजानाम्यहं यत्प्राणो ब्रह्म कं च तु खं च न विजानामीति ते होचुर्यद्वाव कं तदेव खं यदेव खं तदेव कमिति प्राणं च हास्मै तदाकाशं च ऊचुः॥ १०॥

पूर्ववत् श्रद्धातपसोः ब्रह्मविद्यासाधनत्वं प्रदर्शयन् प्रकारान्तरेण ब्रह्मविद्यामारभते। आख्यायिकामवतारयति—**उपकोसल** इति। नामतो **ह वा** उप-

**कोसलः** कमलस्यापत्यं **कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास । तस्य** स्वाचार्यस्या**ग्नीन् द्वादशवर्षाणि** परिचरणं कृतवानित्यर्थः । **स ह स्म अन्यानन्तेवासिनः समावर्तयंस्तं ह स्मैव न समावर्तयतीति** । सोऽयमाचार्योऽन्यान् स्वाध्यायं ग्राहयित्वा समावर्तयन् तत्रोपकोसलमेकं न समावर्तयति स्म ह । तस्य चित्तशुद्ध्यपूर्तेरित्यर्थः । उपकोसले करुणया स्वभर्तारं **जायोवाचे**त्याह—**तमिति** । एवमयं **ब्रह्मचारी** अग्निपरिचरणं कृतवान् । यतो भवानग्निभक्तं न समावर्तयति अतो**ऽग्नयस्त्वा** त्वामस्मद्भक्तं न समावर्तयतीति **मा परिप्रवोचन** तव गर्हणं न कुर्युः । अतस्त्वरया**स्मै** शिष्याय तदभिलषितब्रह्मविद्यां **प्रब्रूहि** । एवं जाययोक्तोऽपि **तस्मै हाप्रोच्यैव प्रवासाञ्चक्रे** इति साधनवैकल्यधियेत्यर्थः । ततः किम्? इत्यत आह—**स ह** इति । **स** उपकोसलो **मनोऽव्याधिनानशन**व्रतं कर्तुं **मनो दध्रे** निश्चयं कृतवानित्यर्थः । आचार्यजाया तमुवाचेत्याह—तूष्णीमनश्नन् अग्न्यगारेऽवस्थितं **तमाचार्यजाया** हे **ब्रह्मचारिन्! अशान** भुङ्क्ष्व । **किन्नु** कस्मात्कारणा**न्नाश्नासि**? **इत्युवाच** । एवमुक्तः स होवाचेत्याह—**स होवाच** इति । **अस्मिन्नकृतार्थे पुरुषे** बहवः कर्तव्येच्छाविषयाः **कामाः** । नाना अत्ययोऽतिगमनं येषां कर्तव्यचिन्तारूपव्याधीनां ते **नानात्यया** व्याधयः । तैर्यतः **प्रतिपूर्णोऽस्मि** अतो **नाशिष्यामी**त्युक्त्वा उपरराम । ततः किं जातम्? इत्यत आह—**अथाग्नय** इति । इत्थं तूष्णींभूते ब्रह्मचारिणि **अथ हाग्नय**स्त्रयोऽपि तत्कृतशुश्रूषया कारुण्याविष्टाः सन्तः **समूदिरे** त्रयः संभूय उक्तवन्त इत्यर्थः । अस्मत्कृते **तप्तो ब्रह्मचारी कुशलं नः पर्यचारीत्** यतो निरशनः सन् परिचरणं कृतवान् अतो **हन्तेदानीं अस्मै** ब्रह्मचारिणेऽस्मद्भक्ताय दुःखिताय तपःश्रद्धान्विताय सर्वे वयं ब्रह्मविद्यां **प्रब्रवामेति तस्मै होचुः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति** । तदुपदेशमाकर्ण्यार्धप्रबुद्धस्स **होवाच—प्राणो ब्रह्मेति** यद्भवद्भिरीरित**महं** तत् **विजानामि** । प्राणस्य सर्वजीवननिमित्तत्वेन प्रसिद्धपदार्थत्वात् । अतः प्राणस्य ब्रह्मत्वं युक्तमेवेत्यर्थः । **कं च तु खं च न विजानामीति** । कंखंशब्दयोः सुखाकाशविषयत्वेन कथमत्र ब्रह्मचारिणो ज्ञानम्? इति चेन्न; कंखंशब्दवाच्यसुखा-

काशयोरचेतनत्वेनोद्भूतप्रध्वंसित्वात् तत् कथं ब्रह्म ? इति सन्दिहानो न विजानामीत्युक्तवान् । एवमुक्तवन्तं ब्रह्मचारिणं **ते होचुः—यद्वाव कं तदेव खं** कमिति यदेव वयमवोचाम तदेव खमाकाशम् । इत्येवं खेन विशेष्यमाणं कं विषयेन्द्रियसंयोगजन्यसुखान्निवर्तितं स्यात् । **यदेवाकाशं खमित्यवोचाम तदेव कं** सुखमिति विजानीहि । सुखेनैवं विशेष्यमाणं खं रक्तादिभ्यो नीलोत्पलवत् भौतिकाचेतनात् खान्निवर्तितं स्यात् । सुखाकाशयोरलौकिकत्वेन ब्रह्मरूपत्वात् । ब्रह्मचारिणो मोहापनयनाय कं ब्रह्म खं ब्रह्मेति कंखंशब्दयोरितरेतरविशेषणविशेष्यत्वनिर्देशः । यद्वाव कमित्याद्यग्निभिरुक्तवाक्यं विशेषबोधाय श्रुतिराचष्टे । **अस्मै** ब्रह्मचारिणे **प्राणञ्च** प्राणसंबन्धाश्रयत्वेन तस्याकाशस्तदाकाशः हार्दाकाश इत्यर्थः । तस्य सुखगुणनिर्देशात्तं **चाकाशं** सुखगुणविशिष्टं ब्रह्म तत्स्थं च प्राणं ब्रह्मसंपर्कादेव ब्रह्मेत्युभयं समुच्चित्याग्नयो ब्रह्मचारिणे **ऊचुः** उक्तवन्त इत्यर्थः ॥ १० ॥

तस्मै गार्हपत्येन स्वविषयब्रह्मविद्योपदेशः

अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति । स य एतमेवं विद्वानुपास्ते अपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योक् जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामः अस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ ११ ॥

इमेऽग्नयः संभूय ब्रह्मचारिणे ब्रह्म उक्त्वा प्रत्येकं स्वस्वविषयां ब्रह्मविद्यां वक्तुमारेभिरे इत्याह—**अथे**ति । **अथ** संभूय उपदेशानन्तरं **एनं** ब्रह्मचारिणं **गार्हपत्योऽग्निरनुशशास** ह । किं तत् ? **पृथिव्यग्निरन्नमादित्य इति** चतस्रो मम एतास्तनवः । तत्र**आदित्ये पुरुषो दृश्यते सोऽहं** गार्हपत्योऽग्नि**रस्मि** । यश्च गार्हपत्योऽग्निः **स एवाहं** आदित्ये पुरुषोऽ**स्मीति** पुनः पुनरावृत्य स

एवाहमस्मीति वचनं पृथिव्यन्नतन्वोर्भोज्यत्वं गार्हपत्यादित्ययोरत्तृत्वं प्रकाशनधर्मविशिष्टत्वात् । एवं ज्ञानफलमाह—**स य** इति । **स यः** कश्चिद्**एतमन्ना**न्नादत्वेन चतुर्धा प्रविभक्तं गार्हपत्या**ग्निमुपास्ते** स च **पापकृत्यामपहते** पापं कर्म विनाशयति । अस्मदीयाग्नेय**लोकी भवति । सर्वं** वर्षशत**मायुरेति** । सर्वत्र **ज्योक्** उज्ज्वलं **जीवति** विख्यातो भवति । **न ह्यस्य** विदुषो**ऽवरपुरुषाः क्षीयन्ते** नास्य सन्ततिर्विच्छिद्यत इत्यर्थः । किञ्च **तं वयमस्मिंश्चामुष्मिंश्च लोके उपभुञ्जामः** पालयामः । **य एतमेवं विद्वानुपास्ते** तस्यैतत्फलं स्यादित्यर्थः ॥ ११ ॥

दक्षिणाग्निना स्वीयविषयब्रह्मविद्योपदेशः

अथ **है**नमन्वाहार्यपचनोऽनुशशास आपो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति । स य एतमेवं विद्वानुपास्ते अपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योक् जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामः अस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥ १२ ॥

**अथे**ति । **अथ** गार्हपत्योपदेशानन्तर**मेनमन्वाहार्यपच**नाभिधानो दक्षिणाग्नि**रनुशशास ह** । किमिति ? **आपो दिशो नक्षत्राणि चन्द्रमा इति** मम एताश्चतस्रस्तनवः ममैवं चतुर्धा व्यवस्थितत्वात् । तत्र **य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति** पूर्ववत् । अन्नसंबन्धादन्वाहार्यपचनचन्द्रमसोर्ज्योतिष्ट्वसामान्याच्च अपां नक्षत्राणां च दक्षिणदिक्संबन्धात् पूर्ववदन्नत्वेन संबन्धः । नक्षत्राणां चन्द्रमसो भोज्यत्वप्रसिद्धेः । अपामन्नोत्पादकत्वादन्नत्वम् । विद्याफलं **स य** इति । **स य** इत्यादि पूर्ववत् ॥ १२ ॥

आहवनीयेन स्वीयविषयब्रह्मविद्योपदेशः

अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति । स य एतमेवं विद्वानुपास्ते अपहते पापकृत्यां लोकी भवति सर्वमायुरेति ज्योक् जीवति नास्यावरपुरुषाः क्षीयन्ते उप वयं तं भुञ्जामः अस्मिꣳश्च लोकेऽमुष्मिꣳश्च य एतमेवं विद्वानुपास्ते ॥१३॥

**अथ हैनमिति । प्राण आकाशो द्यौर्विद्युदिति** मम एताश्चतस्रस्तनवः । **य एष विद्युति पुरुषो दृश्यते सोऽहमस्मी**त्यादि पूर्ववत् । दिवाकाशयोराश्रयत्वेन सामान्यम् । विद्युदाहवनीययोः भोज्यत्वेन सामान्यम् । समानमन्यत् ॥

त्रेताग्निभिस्तस्याचार्यसमीपप्रेषणम्

ते होचुः उपकोसल ! एषा सोम्य ! ते अस्मद्विद्या आत्मविद्या च आचार्यस्तु ते गतिं वक्तेति आजगाम हास्याचार्यः तमाचार्योऽभ्युवाद उपकोसल३ इति । भगव इति ह प्रतिशुश्राव ब्रह्मविद इव सोम्य ! ते मुखं भाति को नु त्वानुशशास ? इति को नु मानुशिष्यात् ? भो इति इहापेव निह्नुत इमे नूनमीदृशा अन्यादृशा इतीह अग्नीनभ्यूदे किं नु सोम्य ! किल ते अवोचन् ? इति । इदमिति ह प्रतिजज्ञे लोकान् वाव किल सोम्य ! ते अवोचन् अहं तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ॥ १४ ॥

तं प्रति ते पुनरग्नयः संभूय ऊचुरित्याह—**त** इति। हे **सोम्य उपकोसल! ते** तवास्मदीयाग्निविद्या प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति **चात्मविद्या सैषोक्ता** अभिहिता। उक्तविद्याफलप्राप्तये **आचार्यस्तु ते गतिं वक्ता** इत्युक्त्वाग्नय उपरेमुरित्यर्थः। ततः किम्? इत्यत आह—**आजगाम हास्याचार्य** इति त्वरयेत्यर्थः। आगत्य किं कृतवान्? इत्यत आह—**तमाचार्य** इति। तं च शिष्यमुपकोसल! **इत्याचार्योऽभ्युवाद**। स **भगव इति ह प्रतिशुश्राव**। हे **सोम्य! ब्रह्मविद इव ते मुखं प्रसन्नं भाति। को नु त्वानुशशास?** इति गुरुणोक्तः प्रत्याह। हे भगवन्! त्वयि प्रोषिते **को नु मानुशिष्यात्** अनुशासनं कुर्यात्? इति। **इहापेव निह्नुते** अपनिह्नुत इवेति व्यवहितेन संबन्धः। न चापनिह्नुते न च यथावदग्न्युक्तमब्रवीदित्याशयः। कथं मया परिचरिता अग्नय उक्तवन्तः! यतस्त्वां दृष्ट्वा **नूनं** वेपमाना इव पूर्व**मन्यादृशाः** सन्तः **ईदृशा दृश्यन्त इति इहाग्नीनभ्यूदे** अभ्युक्तवान्। को नु त्वा अग्नीन् दर्शयन्? **किन्नु सोम्य!** अग्नयस्ते तुभ्य**मवोचन्**? इत्येवमुक्तवन्तं **प्रतिजज्ञे** किञ्चित्प्रतीक-मात्रं प्रतिज्ञातवान्, न ह्यग्न्युक्तं सर्वमवोचत्। यतः पृथिव्यादि**लोकान् वा** आचार्य आह—हे **सोम्य!** अग्नयस्ते न हि साकल्येन ब्रह्मावोचन्। यदीच्छसि त्वं श्रोतुमहं तु ते तुभ्यं साकल्येन **तद्ब्रह्म वक्ष्यामि**। मयोच्यमानब्रह्मज्ञानमाहात्म्यं शृणु। **यथा पुष्करपलाशे आपो न श्लिष्यन्ते** यथाहं वक्ष्यामि ब्रह्म तथै**वंविदि पापं कर्म न श्लिष्यते** न संबध्यत इत्यर्थः। एवमुक्तवत्यचार्ये उपकोसल आह—**ब्रवीतु मे भगवानिति**। आचार्यस्त**स्मै होवाच** ॥ १४ ॥

आचार्येण तस्मै साकल्यब्रह्मविद्योपदेशः

य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाच एत-
दमृतमभयं एतद्ब्रह्मेति तत् यद्यप्यस्मिन् सर्पिर्वोदकं वा सिञ्चन्ति
वर्त्मनी ह्येव गच्छति। एतꣳ संयद्वाम इत्याचक्षत एतꣳ हि सर्वाणि
वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद। एष

उ एव वामनीरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद । एष उ एव भामनीः एष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद । अथ यदु चैवास्मिन् शव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षडुदङ्ङेति मासाꣳस्तान् मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः । स एनान् ब्रह्म गमयति एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते नावर्तन्ते ॥ १५ ॥

साकल्यब्रह्मविद्यामाचार्य आह— **य एष** इति । " चक्षुषश्चक्षुः " इत्यादिश्रुत्यनुरोधेन ब्रह्मचर्यशान्तिदान्त्यादिसाधनसंपत्तितो निवृत्तबाह्यचक्षुर्भिर्य **एषोऽक्षिणि पुरुषो दृश्यते एष** एव सर्वप्राणिनामात्मेति **होवाच** । एतस्य चक्षुरादिकरणग्रामप्रवृत्तिनिमित्तत्वात् । यदात्मतत्त्वमवोचं **एतदमृतम**विनाशित्वात् । अत एवा**भयं** भवहेतुमरणशङ्कावैरल्यात् । अत एव **एतद्ब्रह्म** तस्यानन्तत्वेन बृहत्स्वरूपत्वात् । " आचार्यस्तु ते गतिं वक्ता " इत्युक्त्वा अग्नीनां साकल्यं ब्रह्मविद्यापरिज्ञानं नेतीति चेन्न ; तैरपि कं ब्रह्म खं ब्रह्मेत्युक्तत्वात् । तदुक्तसुखाकाशस्यैवाक्षिण्यादित्यमण्डले च विद्यमानत्वात् । न ह्यग्नयः साकल्यब्रह्मविदः इति वक्तुमयुक्तम् । यथावदनुक्तेराचार्यतोषणार्थत्वात् । न हि सा स्वापरिज्ञाननिमित्तेत्यर्थः । यदक्षिस्थं ब्रह्म तन्माहात्म्यमिदमुच्यते— **तत्तत्र** ब्रह्मोपलब्धिस्थानेऽस्मिन्नक्षिण **यद्यपि सर्पिर्वोदकं वा सिञ्चति वर्त्मनी** पक्ष्मणी **ह्येव गच्छति** । न चक्षुषा संबध्यते । अक्ष्णः पद्मपत्रमिव सर्पिरादिसंश्लेषाभावात् । किं पुनः स्थानिनोऽक्षिपुरुषस्यासंश्लेषत्वम् ? **एतं** पुरुषं **संयद्वाम इत्याचक्षते** पुण्यकर्मफलाश्रयत्वात् । पुण्यानुरूपेण **एतं सर्वाणि वामानि** पुण्यकर्मफलानि प्राणिभ्यो नयति । य एवं वेद स्वात्मधर्मत्वेन तं सर्वाणि वामानि नयति । एतमेव हि **सर्वाणि वामानि** पुण्यफलानि **अभिसंयन्ति** ।

**य एवं वेद** । एनमपि सर्वाणि वामानि **अभिसंयन्ति** । **एष उ एव भामनीः** एष हि यस्मात् **सर्वेषु लोकेषु** आदित्यचन्द्राग्न्यादिरूपेण **भाति** "तस्य भासा सर्वमिदं विभाति" इति श्रुतेः । भामानि नयतीति **भामनीः** । **य एवं वेद** असावपि सर्वेषु लोकेषु भाति । **अथे**दानीं ब्रह्मविदो गतिरुच्यते । **यद्यपि उ चैवास्मिन्ने**वंविदि मृते **शव्यं** शवकर्म **कुर्वन्ति** यदि च ऋत्विजो न कुर्वन्ति करणाकरणयोरस्य विदुषो न हि लाभहानी भवतः "न कर्मणा वर्धते नो कनीयान्" इति श्रुतेः । ये सुखाकाशमक्षिस्थं संयद्वामो वामनी-र्भामनीरित्येवंगुणमुपासते प्राणसहितामग्निविद्यां च **तेऽर्चिषमेवाभिसंभवन्ति** अर्चिरभिमानिदेवतामभिप्रतिपद्यन्ते । **अर्चिषो** देवताया **अहर्**देवतां, **अह्न आपूर्य-माणपक्षं** शुक्लपक्षदेवतां, **आपूर्यमाणपक्षात् यान् षण्मासानुदङ्**ङुत्तरां दिश**मेति** । कः सः ? विततान् मासानुत्तरायणदेवतारूपान् । तेभ्यो **मासेभ्यः संवत्सरं** संवत्सरदेवतां, ततः **संवत्सरात् आदित्यं, आदित्याच्चन्द्रमसं, चन्द्रमसो विद्युतं** ; **तत्**तत्रस्थान् **पुरुषः** कश्चिद्ब्रह्मलोकादागत्य मानव्यां सृष्टौ भवो मानवः । तद्विपरीतोऽयम**मानवः स** पुरुषः सत्यलोकालङ्कारहैरण्यगर्भं **ब्रह्म गमयति** गन्तृगन्तव्यादिव्यपदेशात् सविशेषं ब्रह्म गच्छतीत्यर्थः । निर्विशेषब्रह्मप्राप्तौ तदनुपपत्तेरत्रैव समवलीयन्ते "ब्रह्मैव सन् ब्रह्माप्येति" इति श्रुतेः । निश्शेषस्यातिरिक्तभेदनिरासतस्सन्मात्रभावापत्तिं वक्ष्यति "यत्र नान्यत् पश्यति" इत्यादि । न च तत्र गमनमार्गोऽस्ति सर्वस्य सन्मात्रत्वात् । यः प्रकृतः **एष** देवैरर्चिरादिभिः गमयितृभिरुपलक्षितः पन्था **देवपथः** । तेनैव ब्रह्म गन्तव्यमिति **ब्रह्मपथः** । **एतेन** ब्रह्म **प्रतिपद्यमाना** गच्छन्तः **इमं मानवं** मनोः सृष्टिलक्षण-**मावर्तं नावर्तन्ते नावर्तन्ते** घटीयन्त्रवत् जननादिसंसारावर्तं न प्रतिपद्यन्त इत्यर्थः । द्विरुक्तिर्विद्यापरिसमाप्त्यर्था ॥ १९ ॥

### व्याहृतिविधानं ऋत्विग्ब्रह्मणो मौनं च

एष ह वै यज्ञो योऽयं पवत एष ह यन् इदꣳ सर्वं पुनाति यदेष यन् इदꣳ सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक् च

वर्तनी । तयोरन्यतरां मनसा सꣳस्करोति ब्रह्मा वाचा होताध्वर्यु-रुद्गाता अन्यतराꣳ स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यववदति । अन्यतरामेव वर्तनीꣳ सꣳस्करोति हीयते-ऽन्यतरा स यथैकपात् व्रजन् रथो वैकेन चक्रेण वर्तमानो रिष्यति एवमस्य यज्ञो रिष्यति यज्ञꣳ रिष्यन्तं यजमानः अनुरिष्यति स इष्ट्वा पापीयान् भवति । अथ यत्रोपाकृते प्रातरनुवाके न पुरा परिधानीयाया ब्रह्मा व्यववदति उभे एव वर्तनी सꣳस्कुर्वन्ति न हीयतेऽन्यतरा । स यथा उभयपात् व्रजन् रथो वा उभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठति एवमस्य यज्ञः प्रतितिष्ठति यज्ञं प्रतितिष्ठन्तं यजमानः अनु प्रतितिष्ठति स इष्ट्वा श्रेयान् भवति ॥ १६ ॥

रहस्यप्रकरणत आरण्यकत्वसामान्यतश्च यज्ञक्षते उत्पन्ने प्रायश्चित्तत्वेन व्याहृतयो विधातव्यास्तदभिज्ञऋत्विग्ब्रह्मणो मौनं चेतीदमारभ्यते—एष हेति । **एष ह वै वायुर्योऽयं पवते** अयं **यज्ञः** । ह वा इति प्रसिद्धयर्थौ । वायुप्रतिष्ठो हि यज्ञः श्रुतिषु प्रसिद्धः । "अयं वै यज्ञो योऽयं पवते", "स्वाहा वातेधाः" इति श्रुतेः । वातस्य चलनात्मकत्वेन क्रियासमवायित्वं यज्ञारम्भप्रतिष्ठादेः वाताधीनत्वात् । **एष ह यन्** गच्छन् **इदं सर्वं पुनाति** पावयति चलद्वायोरपवित्रनिरासकत्वात् न ह्यचलतः । **यस्माच्चलन्नेष इदं सर्वं पुनाति तस्मात्** यत् पुनातीत्येष **एव यज्ञः** । तस्यैवंविधयज्ञस्य कर्मज्ञानव्यापृतं **मनश्च**, मन्त्रोच्चारण-व्यापृता **वाक् च**, त एते वाङ्मनसे **वर्तनी** मार्गौ । याभ्यां वर्तनीभ्यां त्रायमानस्सन् यज्ञः प्रवर्तते । "वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञः" इति श्रुतेः । अतो वाङ्मनसे वर्तनी उच्येते । यज्ञस्य **तयोरन्यतरां** वर्तनीं **मनसा** विवेकवता **संस्करोति** । **ब्रह्मा वाचा होताध्वर्युरुद्गाता** इत्येते त्रयोऽपि ऋत्विजोऽ**न्यतरां** वाग्वर्तनीं वाचैव संस्कुर्वन्ति । अथ **स ब्रह्मा यत्र**

यस्मिन् यज्ञे **उपाकृते** प्रारब्धे **प्रातरनुवाके** शस्त्रे **पुरा** पूर्वं **परिधानीयाया** ऋचो **ब्रह्मा** एतस्मिन्नन्तरे काले **व्यववदति** मौनं परित्यजति यदि तदा-**न्यतरामेव** वाग्वर्तनीं **संस्करोति**। ब्रह्मणा संस्क्रियमाणान्यतरा मनोवर्तनी **हीयते** विनश्यति। स यज्ञोऽन्यतरया वाग्वर्तन्यैव वर्तितुमशक्नुवन् रिष्यति। रिष्येदित्यत्र दृष्टान्तमाह—**स यथेति। स यथैकपात्** अध्वानं गच्छन् रिष्यति। **रथो वैकेन चक्रेण वर्तमानो** गच्छन् **रिष्यत्येवमस्य** यजमानस्य मूढब्रह्मणो **यज्ञो रिष्यति। यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति**। यज्ञजीवनो हि यजमानः। तद्रेषे तस्य रेषः स्यादित्यर्थः। तत्तादृशं **यज्ञमिष्ट्वा पापीयान्** पापतरो **भवति। अथ पुनर्यत्र ब्रह्मा** विद्वान् वाग्विसर्गमकुर्वन् मौनमास्थाय वर्तते यावत्**परिधानीयाया** न **व्यववदति** तथैव सर्वर्त्विज **उभे एव वर्तनी संस्कुर्वन्ति अन्यतरापि न हीयते**। तत्र दृष्टान्तमाह—**स यथा उभय-पात् व्रजन् रथो वा उभाभ्यां चक्राभ्यां वर्तमानः प्रतितिष्ठति। एवं** वर्तनीभ्यां युक्तो **यज्ञोऽविनश्यन्** स्वेनात्मना **प्रतितिष्ठति। यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतितिष्ठति**। मौनवद्ब्रह्मोपेतः **स** यजमानो **यज्ञमिष्ट्वा श्रेयान्** श्रेष्ठतरो **भवतीत्यर्थः** ॥ १६ ॥

### व्याहृतिहोमविधानम्

प्रजापतिर्लोकानभ्यतपत् तेषां तप्यमानानाꣳ रसान् प्रावृह-दग्निं पृथिव्या वायुमन्तरिक्षादादित्यं दिवः। स एतास्तिस्रो देवता अभ्यतपत् तासां तप्यमानानाꣳ रसान् प्रावृहत् अग्नेः ऋचः वायोर्यजूꣳषि सामान्यादित्यात्। स एतां त्रयीं विद्यामभ्यतपत् तस्यास्तप्यमानाया रसान् प्रावृहत् भूरिति ऋग्भ्यः भुवरिति यजुर्भ्यः स्वरिति सामभ्यः। तद्यद्धि ऋक्तो रिष्येत् भूः स्वाहेति गार्हपत्ये जुहुयात् ऋचामेव तद्रसेन ऋचां वीर्येण ऋचां यज्ञस्य

विरिष्टꣳ संदधाति । अथ यदि यजुष्टो रिष्येत् भुवः स्वाहेति दक्षिणाग्नौ जुहुयात् यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टꣳ संदधाति । अथ यदि सामतो रिष्येत् स्वः स्वाहेत्याहवनीये जुहुयात् साम्नामेव तद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टꣳ संदधाति । तद्यथा लवणेन सुवर्णꣳ संदध्यात् सुवर्णेन रजतꣳ रजतेन त्रपु त्रपुणा सीसꣳ सीसेन लोहं लोहेन दारु दारु चर्मणा । एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टꣳ संदधाति भेषजकृतो ह वा एष यज्ञो यत्र एवंवित् ब्रह्मा भवति । एष ह वा उदक्प्रवणो यज्ञो यत्र एवंवित् ब्रह्मा भवति एवंविदꣳ ह वा एषा ब्रह्माणमनु गाथा यतो यत आवर्तते तत्तद्गच्छति । मानवो ब्रह्मैव एक ऋत्विक् कुरूनश्वाभिरक्षति एवंविद्ध वै ब्रह्मा यज्ञं यजमानꣳ सर्वांश्च ऋत्विजोऽभिरक्षति तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम् ॥ १७ ॥

अत्र ब्रह्मणो मौनं विहितं, प्रायश्चित्तार्थं व्याहृतिहोमा विधातव्या इत्याह— **प्रजापतिरिति** । **प्रजापतिर्लोकानु**द्दिश्य तत्सारजिघृक्षया **अभ्यतपत्** ध्यानाख्यं तपश्चचार । **तेषां तप्यमानानां रसान् प्रावृहत्** जग्राहेत्यर्थः । कथं कान् जग्राह ? इत्यत्र **पृथिव्याः** सारम**ग्निमन्तरिक्षाद्वायुं दिव आदित्यं** जग्राह । **स** पुनः अग्न्यादिदेवतोद्देशेनैवमभ्यतपत् । तत्सारत्वेन त्रयीविद्यां जग्राहेत्याह— **अग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात्** । **स पुनस्तां त्रयीविद्यां अभ्यतपत् तस्यास्तप्यमानाया रसान् प्रावृहत्** । **ऋग्भ्यो भूरिति** व्याहृतिं **यजुर्भ्यो भुवरिति** व्याहृतिं **सामभ्यः स्वरिति** व्याहृतिं च जग्राहेत्यर्थः । यत एवं लोकदेववेदसारा महाव्याहृतयो भवन्ति अतस्तत्र

यत् **ऋक्तः** ऋक्संबन्धात् ऋङ्निमित्तं **रिष्येत् यज्ञः** क्षतं प्राप्नुयात् तदा **भूः स्वाहेति गार्हपत्ये जुहुयात्**। सा हि तत्र प्रायश्चित्तिः। तत्कथम्? **ऋचामेव तद्रसेन** तदिति क्रियाविशेषणम्। रसेन **ऋचां वीर्येणौ**जसा तथा च सति **ऋचां यज्ञस्य** ऋक्संबन्धतो **विरिष्टं** क्षतं **संदधाति** संधत्ते तदा पूर्वोक्त-प्रायश्चित्तं कुर्यादित्यर्थः। **अथ यदि यजुष्टो रिष्येत् भुवः स्वाहेति दक्षिणाग्नौ जुहुयात्**। **यजुषामि**त्यादि समानम्। तथा **सामनिमित्तरेषे स्वः स्वाहे-त्याहवनीये जुहुयात्**। शिष्टं पूर्ववत्। ब्रह्मनिमित्तरेषे तु त्रिष्वग्निषु तिसृभिर्जुहु-यात्। त्रय्या विद्यया हि ब्रह्मत्वम्। तथाविधब्रह्मत्वनिमित्ते रेषे उक्तप्रायश्चित्तं विना किञ्चिदन्यन्मृग्यम्। **तद्यथा—लवणेन सुवर्णं सन्दध्यात्** क्षारस्य स्वर्णगतमालिन्यग्रासत्वात्। अशक्यमपि पक्वकाले **सुवर्णेन रजतं** संदध्यात्। तथा **रजतेन त्रपु त्रपुणा सीसं सीसेन लोहं लोहेन दारु दारु चर्मणा** बन्धनीयम्। **एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया** रसाख्य-**वीर्येण यज्ञस्य विरिष्टं संदधाति**। चिकित्सकेन रोगार्त इव **भेषजकृतो वा एष यज्ञो** भवति। कोऽसौ? इत्यत्र योऽयं यज्ञः। **एवंवित्** व्याहृतिहोम-प्रायश्चित्तवित् **ब्रह्मा** ऋत्विक् **भवति**। सोऽयं यज्ञो यथोक्तफलकृत् भवतीत्यर्थः। किञ्च—**एष ह वा उदक्प्रवणः** उदङ्निम्नः दक्षिणोच्छ्रितो **यज्ञो** भवति उत्तरमार्गप्रतिपत्तये भवतीत्यर्थः; **यत्रैवंविद्ब्रह्मा भवति**। य **एवंविदं ह वै ब्रह्माणमृत्विजं** प्रत्ये**षा अनुगाथा** ब्रह्मणः स्तुतिपरा **यतो यत आवर्तते** कर्मक्षतिरभवत् तद्यज्ञक्षतरूपं सन्दधानः **तत्तत्**प्रायश्चित्तेन **गच्छति** परिपाल-यतीत्यर्थः। मौनाचरणात् मननाद्वा **मानवो ब्रह्मा**। **स एवैक ऋत्विक् कुरून्** कर्तॄन् यथा योद्धॄनारूढानश्वा बडबा सैन्धवी **रक्षति**। **एवंवित् ह वै ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति** तत्कृतदोषापनयनात्। यत एवंविशिष्टो ब्रह्मा विद्वान् **तस्मादेवंविदमेव** यथोक्तव्याहृत्यादिप्रायश्चित्तविदमेव **ब्रह्माणं कुर्वीत**। कदापि **नानेवंविदम्**। द्विरभ्यासोऽध्यायपरिसमाप्त्यर्थः॥ १७॥

इति चतुर्थोऽध्यायः

# पञ्चमोऽध्यायः

वागादिभ्यः प्राणस्य श्रेष्ठत्वम्

यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च । यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाक् वाव वसिष्ठः । यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठति अस्मिंश्च लोके अमुष्मिꣳश्च चक्षुर्वाव प्रतिष्ठा । यो ह वै संपदं वेद सꣳहास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च श्रोत्रं वाव संपत् । यो ह वा आयतनं वेद आयतनꣳ ह स्वानां भवति मनो ह वा आयतनम् । अथ ह प्राणा अहꣳ श्रेयसि व्यूदिरे अहꣳ श्रेयानस्मि अहꣳ श्रेयानस्मीति । ते ह प्राणाः प्रजापतिं पितरमेत्य ऊचुः भगवन् ! को नः श्रेष्ठः ? इति तान् होवाच यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति । सा ह वाक् उच्चक्राम सा संवत्सरं प्रोष्य पर्येत्य उवाच कथमशकत ऋते मत् जीवितुमिति यथा कला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसा एवमिति प्रविवेश ह वाक् । चक्षुर्होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्य उवाच कथमशकत ऋते मत् जीवितुमिति यथान्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसा एवमिति प्रविवेश ह चक्षुः । श्रोत्रꣳ होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्य उवाच कथमशकत ऋते मत् जीवितुमिति यथा बधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो

वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रम् । मनो होच्चक्राम तत्संवत्सरं प्रोष्य पर्येत्य उवाच कथमशकत ऋते मत् जीवितुमिति यथा बाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः । अथ ह प्राण उच्चिक्रमिषन् स यथा सुहयः पड्वीशशंकून् संखिदेत् एवमितरान् प्राणान् समखिदत् तꣳ हाभिसमेत्योचुर्भगवन्! एधि त्वं नः श्रेष्ठोऽसि मा उत्क्रमीरिति । अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीति अथ हैनं चक्षुरुवाच यदहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठासीति । अथ हैनं श्रोत्रमुवाच यदहꣳ संपदस्मि त्वं तत्संपदसीति अथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति । न वै वाचो न चक्षूꣳषि न श्रोत्राणि न मनाꣳसीत्याचक्षते प्राणा इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवति ॥ १ ॥

ॐ अपरब्रह्मविद्याया उत्तरा गतिरुक्ता । अथेदानीं पञ्चमाध्याये ऊर्ध्वरेतसां श्रद्धालूनां पञ्चाग्निविदां विद्यान्तरशीलानां च तामेव गतिं प्रकटयन् केवलकर्मिणां धूमादिमार्गेण पुनरावृत्तिरूपा गतिः तद्विपरीतानां वैराग्यहेतोः कष्टतरा संसारगतिर्वक्तव्येति पञ्चमाध्याय आरभ्यते । गतित्रयाश्रयो हि प्राणः । "प्राणो वाव संवर्गः प्राण आकाशः प्राणो ब्रह्म" इति प्राणस्य श्रैष्ठ्यमाम्नातम् । तस्माद्वागादिभ्यः तस्य श्रेष्ठतां वक्तुमिदमारभ्यते— **यो ह वा** इति । फलेनादौ पुरुषमभिमुखीकरोति— **यो** हेति । **यो ह वै** कश्चित् **ज्येष्ठं** प्रथमजं गुणतः स्वरूपतश्च **श्रेष्ठं वेद स ज्येष्ठश्च श्रेष्ठश्च भवति** । वागादिभ्यः **प्राणो वाव ज्येष्ठश्च** । गर्भस्थपुरुषे वागादिप्रवृत्तेः पुरैव प्राणवृत्तिदर्शनात् । यत्प्रवर्तनाद्गर्भो

वर्धते अत एव प्राणो ज्येष्ठः। यथा सुहय इत्यादिवक्ष्यमाणगुणतो मुख्यप्राणस्वरूपतश्च अस्मिन् कार्यकरणसंघाते **श्रेष्ठश्च। यो ह वै वसिष्ठं** वस्तृतमं वसुमत्तमं वा **वेद** स तथैव **स्वानां** ज्ञातीनां **वसिष्ठो भवति।** कथं वसिष्ठता? इत्यत आह—**वागिति। वाग्वाव वसिष्ठः** सदस्यन्यानभिभूय वाग्मिनो वसन्तीति वसिष्ठत्वम्। **यो ह वै प्रतिष्ठां वेद स चास्मिन् लोके अमुष्मिंश्च प्रतितिष्ठति। ह** किल। तर्हि का प्रतिष्ठा? इत्यत्र **चक्षुर्वाव प्रतिष्ठा।** समदुर्गे पश्यतः प्रतिष्ठासिद्धेः। **यो ह वै संपदं वेद हास्मै दैवाश्च मानुषाश्च कामाः संपद्यन्ते।** का संपत्? इत्यत्र **श्रोत्रं वाव संपत्।** यतः श्रोत्रेणार्थविज्ञानपूर्वकं वेदा गृह्यन्ते। ततः कर्माणि क्रियन्ते। ततः कामाः संपद्यन्ते। अतः श्रोत्रस्य संपत्त्वम्। **यो ह वा आयतनं वेद स्वानामायतनं ह** वाश्रयो **भवति।** आयतनं किम्? इत्यत्र **मनो ह वा** इन्द्रियार्थप्रत्ययाना**मायतनं** मनसः सर्वप्रत्ययाश्रयत्वात्। **अथ ह प्राणाः** एवं यथोक्तगुणाः सन्तोऽहं **श्रेयसि श्रेयानहमस्मीति** मिथो विरुद्धतया **व्यूदिर** उक्तवन्तः। **ते ह**ैवमात्मनः श्रेष्ठताविज्ञानाय **प्रजापतिं पितरमेत्य ऊचुः**—हे **भगवन्! को नो**ऽस्माकं मध्ये गुणतः **श्रेष्ठः?** इत्येवं पृष्टवन्तः। **तान् होवाच** प्रजापतिः—**यस्मिन् वो** युष्माकं मध्ये **उत्क्रान्ते शरीरमिदमतिशयेन पापिष्ठतर**मस्पृश्यतया **दृश्येत स वः श्रेष्ठ इत्यवोचत्।** पित्रा तथोक्तेषु प्राणेषु **सा ह वाक् उच्चक्राम। सा** वागुत्क्रम्य **संवत्सरमात्रं प्रोष्य** पुनः **पर्येत्य** इतरान् प्राणा**नुवाच**—यूयं **मदृते** मया विना **जीवितुं कथं** केन प्रकारेणा**शकत** शक्तवन्तः? इत्युक्तास्ते होचुः। **यथा** लोके **कला** मूका **अवदन्तो** वाचा जीवन्ति। तत्कथम्? इत्यत्र **प्राणन्तः प्राणेन पश्यन्तः चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसा** सर्वकरणचेष्टां कुर्वन्तो वयं अजीविष्मेति श्रुत्वा स्वयं **वाक्** प्राणेभ्योऽवरतामवगम्य **प्रविवेश ह** पूर्ववत् स्वव्यापारे प्रवृत्तेत्यर्थः। समानमन्यत्—चक्षुः श्रोत्रं मनो होच्चक्रामेत्यादि। यथा बाला अमनसः अनभिव्यक्तमनसः। एवं वागादिषु परीक्षितेषु **अथ ह प्राण उच्चिक्र-**

**मिषन्** उत्क्रान्तुमिच्छन्; ततः किम्? इत्यत्र दृष्टान्तमाह—**यथेति**। **यथा** लोके **सुहयः पड्वीशशंकून्** पादबन्धनकीलान् कशया हतः **संखिदेत्** समुत्पाटयेत्, **एवमितरान्** वागादीन् **प्राणान् समखिदत्** समुत्पाटितवान्। ते **ह** प्राणाः स्वस्थानाच्चालिताः सन्तः **अभिसमेत्य** मिलित्वा मुख्यप्राण**मूचुः**। हे **भगवन्! एधि** भवान् नः स्वामी। यतस्त्वं **नोऽस्माकं श्रेष्ठोऽसि** अतस्त्वमस्माद्देहात् **मोत्क्रमीरिति**। **अथ हैनं** प्राणं राज्ञो विश इव तद्बलिं हरन्तः आहुः। तत्राथ **हैनं वागुवाच**। यदिति क्रियाविशेषणम्। **यदहं वसिष्ठोऽस्मि त्वं तत्** गुणतो **वसिष्ठोऽसि**। तथोत्तरेष्वपि योज्यम्। **अथ हैनं चक्षुः श्रोत्रं मनश्च** प्राणमुवाचेति यत् तद्युक्तं लोके, यस्मात् **न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसी**त्यागमज्ञा लौकिका वा वागादिकरणान्या**चक्षते**। किं तर्हि? **प्राणा इत्येवाचक्षते**। तत्कथं? **प्राणो ह्येवैतानि सर्वाणि** वागादिकरणादीनि **भवति**। अतो वागादिभिः मुख्यप्राणं प्रति युक्तमुक्तमिति प्रकरणार्थः। अथ हैनं वागुवाचेत्याद्यचेतनानां कथमुपपद्यते? देहप्रवेशो निर्गमो ब्रह्मगमनं प्राणस्तुतिर्वा कथमुपपद्यते? इति चेन्न; वागादीनामग्न्यादिचेतनावत् देवताधिष्ठितत्वादागमतश्चेतनावत्त्वं सिद्धमित्यर्थः॥ १॥

प्राणादीनां संलापः मन्थाख्यं कर्म च

स होवाच किं मेऽन्नं भविष्यति? इति यत्किंचिदिदं आ श्वभ्य आ शकुनिभ्य इति होचुः तद्वा एतदनस्यान्नं अनो ह वै नाम प्रत्यक्षं न ह वा एवंविदि किंचनानन्नं भवतीति। स होवाच किं मे वासो भविष्यति? इति आप इति होचुः तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्च अद्भिः परिदधति लम्भुको ह वासो भवति अनग्नो ह भवति। तद्धैतत् सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्याय उक्त्वा उवाच यद्यप्येनच्छुष्काय स्थाणवे ब्रूयाज्जाये-

रन्नेवास्मिन् शाखाः प्ररोहेयुः पलाशानीति । अथ यदि महत् जिगमिषेदमावास्यायां दीक्षित्वा पौर्णमास्यां रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् । वसिष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् संपदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् आयतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे संपातमवनयेत् । अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपति अमो नामासि अमा हि ते सर्वमिदꣳ स हि ज्येष्ठः श्रेष्ठो राजाधिपतिः स मा ज्यैष्ठ्यꣳ श्रैष्ठ्यꣳ राज्यमाधिपत्यं गमयतु अहमेवेदꣳ सर्वमसानीति । अथ खल्वेतया ऋचा पच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य भोजनमित्याचामति श्रेष्ठꣳ सर्वधातममित्याचामति तुरं भगस्य धीमहीति सर्वं पिबति । निर्णिज्य कꣳसं चमसं वा पश्चादग्नेः संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात् । तदेष श्लोकः—

यदा कर्मसु काम्येषु स्त्रियꣳ स्वप्नेषु पश्यति ।
समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने ।
तस्मिन् स्वप्ननिदर्शने ॥ २ ॥

प्राणं प्रष्टारं वागादीन् वक्तॄनिव श्रुतिरनुवदति—स होवाचेति । यो वागादिकरणानुग्राहकः प्राणः स होवाच—किं मेऽन्नं भविष्यति ?

इति पृष्टा वागादय आहुः। यत्किञ्चेदं **आ श्वभ्य आ शकुनिभ्यः** श्वभिः शकुनिभिः सह सर्वप्राणिनां यदन्नं तत्तवान्नमिति **होचुः** प्राणस्यान्नजातात्तृत्वात्। **तद्वा एतत्** यत्किञ्चिल्लोके प्राणिभिरन्नमद्यते **तदन्नमनस्य** प्राणस्य प्राणेनैव तदद्यत इत्यर्थः। न ह्यप्राणः कश्चिदन्नमश्नाति। अनस्य तु सर्वप्रकारचेष्टागुणप्रदर्शनात्। **अन** इति प्राणस्य **प्रत्यक्षं नाम** सर्वान्नानामत्तुः साक्षादभिधानम्। **न ह वा एवंविदि** सर्वान्नानामत्तृत्वेन सर्वभूतस्थप्राणोऽहमस्मीत्येवंविदि **किञ्चन** प्राणिभिरद्यमानम**नन्नं भवति**। विदुषः प्राणभूतत्वात्। "प्राणाद्वा एष उदेति प्राणेऽस्तमेति" इत्युपक्रम्य "एवंविदो ह वा उदेति सूर्य एवंविदि अस्तमेति" इति श्रुतेः। **स होवाच प्राणः किं मे वासो भविष्यति? इति। आप इति होचुः।** यस्मादबालयः प्राणः **तस्माद्वा एतदशिष्यन्तो** ब्राह्मणा वासःस्थानीयाभि**रद्भिः** भोजनात्पुरस्ता**दुपरिष्टाच्च परिदधति** परिधानं कुर्वन्ति। प्राणस्य **लम्भुको** लंभनशीलो **वासो ह भवति** वाससो लब्धैव भवति। वाससो लाभा**दनग्नो ह भवति** उत्तरीयवान् भवति। भोजनपूर्वोत्तरकालयोः यदाचमनं तत्प्राणस्य वासोदर्शनमात्रम्। आचमनस्यामूलत्वात्। अपां प्राणस्य वासस्स्थानत्वात्। तस्मादाचमनस्य तदर्थत्वेन प्राणदर्शनं स्तूयते। **तद्धैतत्** प्राणदर्शनं **सत्यकामो जाबालो** नामतो **गोश्रुतये** व्याघ्रपदोऽपत्यं तस्मै **वैय्याघ्रपद्याय**ान्यदपि वक्ष्यमाण**मुक्त्वोवाच**। किं तदुवाच? इत्यत्र प्राणवित् **यद्यप्येनद**दर्शनं **शुष्काय स्थाणवे ब्रूयात् जायेरन्नस्मिन्** स्थाणौ **शाखाः प्ररोहेयुः** च **पलाशानि** पत्राणि च। **इति**शब्दतः किमु वक्तव्यं जीवते पुरुषाय ब्रूयादिति द्योत्यते। यथोक्तब्रह्मविदे मन्थाख्यमिदं कर्मारभ्यते। **अथानन्तरं यदि महत् जिगमिषेत्** गन्तुमिच्छेत् महत्त्वप्राप्तिं यदि कामयेत् तदा तस्येदं कर्म विधीयते। महत्त्वे हि सति श्रीमान्। श्रीमतो धनम्। धनवतः कर्मानुष्ठानम्। ततो देवयानादिपन्थानं प्रतिपद्यत इति। न ह्येतत्कामिनः। तस्य कालादिरुच्यते— **अमावास्यायां** भूमिशयनादिनियमपूर्वकं **दीक्षित्वा** पयःपानपूर्वकं तपः-

सत्यब्रह्मचर्यादिधर्मविशिष्टो भूत्वा **पौर्णमास्यां रात्रौ** कर्मारभते। ग्राम्यारण्यभव**सर्वौषधस्य** यावच्छक्त्यल्पमनल्पमुपादाय तद्वितुषीकृत्य आममेव पिष्टं **दधिमधुनोरौदुम्बरे** कंसाकारे चमसाकारे वा अमत्रे प्रक्षिप्य **उपमथ्याग्रतः** स्थापयित्वा **ज्येष्ठाय श्रेष्ठाय स्वाहा** इत्यग्नावावसथ्ये **आज्य-स्यावापस्थाने** हुत्वा **स्रुवलग्नं मन्थे संपातमवनयेदि**ति। समानमन्यत्— **वसिष्ठाय प्रतिष्ठायै संपदे आयतनाय स्वाहे**ति प्रत्येकं **संपातमवनयेत्** संस्रावं पातयेत्। **हुत्वाथ** अग्नेरीषत्**प्रतिसृप्याञ्जलौ** च प्रतिसृप्य **मन्थ-माधाय जपतीमं** मन्त्रं—**अमो नामास्यमा हि ते**। अम इति प्राणस्य नाम। प्राणोऽयमन्नेन प्राणिति हि देहं धारयति। अमो मन्थद्रव्यम्। अमो नामासीति प्राणः स्तूयते प्राणस्य मन्थान्नत्वात्। यतस्ते प्राणभूतस्य **सर्वमिदं** जगत् अन्नत्वेन व्यवस्थितं अतोऽ**मो नाम** त्वम्। **स हि** प्राणभूतो मन्थो **ज्येष्ठः श्रेष्ठश्च**। अत एवायं **राजा** वागादीना**मधिपतिः** तत्पालयितृत्वात्। **स** मन्थः प्राणः मामपि ज्येष्ठादिगुणवन्तं **गमयतु**। **अहमेवेदं सर्वं** जग**दसानि** प्राणवत्। इतिशब्दो मन्त्रपरिसमाप्त्यर्थः। **अथानन्तरं खल्वेतया** वक्ष्यमाणया **ऋचा पच्छः** पादश **आचामति**। मन्त्रैकैकपदेन एकैकं ग्रासं भक्षयति। **तत्** भोजनं प्राणादित्ययोरेकत्वेन सर्वप्रसवितृत्वात् तथाविध**सवितुः वृणीमहे** येन मन्थरूपसावित्रान्नभोजनेन **वयं** सवितृरूपमापन्ना भवेमेत्यर्थः। **देवस्य** सवितुरिति पूर्वेण संबन्धः। सर्वान्नेभ्यः **श्रेष्ठं** प्रशस्यतमत्वात्। **सर्वधातमं** सर्वजगद्धारयितृत्वात्। **तुरं** तूर्णं **भगस्य** सवितुः स्वरूपं **धीमहि** विशिष्टभोजनतः शुद्धान्तराः सन्तः चिन्तयेम**हीति सर्वं** च मन्थलेपं **पिबति**। **कंसं** कंसाकारं चमसाकारमौदुम्बरं पात्रं **निर्णिज्य** प्रक्षाल्य पीत्वाचम्या**ग्नेः पश्चात् चर्मण्य**जिने **वा** केवल**स्थण्डिले** भूमौ **वा** प्राक्शिराः **संविशति**। **वाचंयमो** वाग्यतः सन् अनिष्टस्वप्नदर्शनेन न प्रसह्यते नाभिभूयत इत्य**प्रसाहः** संयतकरणग्रामः स्वपेदित्यर्थः। **यदि** स्वप्नेषु **स स्त्रियं पश्येत्** तदा ममेदं **कर्म समृद्धमिति विद्यात्**। **तदे**तस्मिन्नर्थे **एष श्लोको** मन्त्रो भवति—**यदा** यस्मिन् काले काम्यार्थ**कर्मसु** स्वप्नप्रदेशेषु **स्त्रियं पश्यति**

तदा तत्र कर्मफलसमृद्धिं जानीयात्। तस्मिन् प्रशस्तस्वप्रदर्शने सतीत्यर्थः। कर्मसमाप्त्यर्थेयं द्विरुक्तिः ॥ २ ॥

मुमुक्षूणां वैराग्यहेतोः संसारगतिकथनम्

श्वेतकेतुर्हारुणेयः पञ्चालानां समितिमेयाय तꣳह प्रवाहणो जैवलिरुवाच कुमार! अनु त्वाशिषत् पितेति अनु हि भगवः! इति। वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगवः! इति वेत्थ यथा पुनरावर्तन्त३ इति न भगवः! इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्तना३ इति न भगवः! इति। वेत्थ यथासौ लोको न संपूर्यत३ इति न भगवः! इति वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति नैव भगवः! इति। अथानु किमनुशिष्टोऽवोचथाः? यो हीमानि न विद्यात् कथꣳ सोऽनुशिष्टो ब्रुवीतेति स हायस्तः पितुरर्धमेयाय तꣳहोवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाशिषमिति। पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् तेषां नैकंचन अशकं विवक्तुमिति स होवाच यथा मा त्वं तदैतानवदो यथाहमेषां नैकंचन वेद यद्यहमिमानवेदिष्यं कथं ते नावक्ष्यम्? इति। स ह गौतमो राज्ञोऽर्धमेयाय तस्मै ह प्राप्तायार्हां चकार स ह प्रातः सभाग उदेयाय तꣳ होवाच मानुषस्य भगवन् गौतम! वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन्! मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति। स ह कृच्छ्रीबभूव तꣳ ह चिरं वसेत्याज्ञापयांचकार तꣳ होवाच

**यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति तस्मादु सर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥ ३ ॥**

मुमुक्षूणां वैराग्यहेतोः ब्रह्मादिस्तम्बान्तसंसारगतयो वक्तव्या इत्येवमाख्यायिका आरभ्यते—नामतः **श्वेतकेतुः** अरुणस्यापत्यमारुणिः तदपत्य**मारुणेयः पञ्चालानां** जनपदानां **समितिं** सभा**मेयाय** जगाम। तं गतवन्तं **प्रवाहणो** नामतः जीवलस्यापत्यं **जैवलिः उवाच**। हे **कुमार! अनु त्वा** त्वां **पिता अशिषत्** पित्रा किमनुशिष्टस्त्वम्? इत्यर्थः। राज्ञैवमुक्त आह—**अनु** **ह्यनुशिष्टोऽस्मि भगवः! इति**। तं होवाच यद्यनुशिष्टोऽसि **इतो**ऽस्माल्लोकात् **अधि** उपरि **प्रजा यत् प्रयन्ति** तत्किं **वेत्थ** जानीषे? हे **भगवः!** यत्पृच्छसि त**न्नाहं** जाने इतीतर आह। **यथा** येन क्रमेण **पुनरावर्तन्ते** **इति** यदि त्वं **वेत्थ। न भगवः! इति। वेत्थ यथासौ लोकः** पैत्र्यं प्राप्य येन कारणेन बहुभिः प्रयद्भिरपि **न संपूर्यते इति। न भगवः! इति** प्रत्याह। **देवयानस्य पितृयाणस्य च पथो**र्मार्गयोः **व्यावर्तना** व्यावर्तनं नाम सहगच्छतामितरेतरवियोगस्थानमित्यर्थः। तत्किं त्वं **वेत्थ? न भगवः! इति।** **यथा** येन क्रमेण **पञ्चसं**ख्याका**यामाहुतौ** हुतायामाहुतिसाधना **आपः** पुरुष इत्यभिधानं वचो यासां हूयमानषष्ठाहुतिभूतानां ताः **पुरुषवचसः** पुरुषशब्दवाच्या **भवन्तीति वेत्थ** त्वं? इति राज्ञोक्तो **नैव भगवः!** अहं जान इत्याह। **अथानु किमनुशिष्टो**ऽस्मीत्य**वोचथाः** उक्तवानसि? **यो हीमानि** पृष्टार्थजातानि **न विद्यात् स कथमनुशिष्टो**ऽस्मि इति ब्रुवीत? **इत्येवं स** श्वेतकेतुः राज्ञा**यस्त** आयासितः सन् **पितुरर्धं** स्थान**मेयाय** गतवान्। **स तं** पितर**मुवाच। अननुशिष्य** अनुशासनमकृत्**वैव मा** मां **किल** **भगवान्** समावर्तनकाले **अब्रवीत्** उक्तवान्। **अनु त्वा अशिषं** अन्वशिषं त्वा**मिति।** यतो **मा** मां राजन्या बन्धवो यस्येति स **राजन्यबन्धुः** स्वयं दुर्वृत्तः **पञ्च**संख्याकान् **प्रश्नान् अप्राक्षीत्**

पृष्टवान् । **तेषां** प्रश्नानां **नैकञ्चन** एकमपि **वक्तुमशकं** अर्थतो निर्णेतुमसमर्थोऽस्मीत्यर्थः । पुत्रेणैवमुक्तः **स होवाच** पिता—**यथा मा** मां वत्स! **त्वं तदागतमात्रमेवैतान्** प्रश्नान**वदः** उक्तवानसि **तेषां नैकञ्चनाशकं** विवक्तुमिति तथा मां जानीहि । **यथाहमप्येषां** प्रश्नानामेकमपि, यथा त्वं न जानीषे तथाहमप्येतं न जाने । मय्यन्यथाभावो न कर्तव्यः । **यद्यहमिमान् प्रश्नानवेदिष्यं** विदितवानस्मि **कथं** समावर्तनकाले पुरा प्रियपुत्राय **ते नावक्ष्यं** नोक्तवानस्मि? इत्युक्त्वा **स ह** गोत्रतो **गौतमो राज्ञो** जैवलेरर्धं **स्थानमेयाय** । स **तस्मै ह** गौतमाय **प्राप्तायार्हामर्हणां चकार** । गौतमः कृतातिथ्यः तत्रैव उषित्वा परेद्युः **प्रातः**काले **सभागे** सभां गते राजनि **उदेयाय** । सभागः पूज्यमानोऽन्यैः स्वयं गौतम उदेयाय । **तं होवाच** गौतमं राजा । हे **भगवन् गौतम! मानुषस्य वित्तस्य** ग्रामादे**र्वरं** कामं **वृणीथाः । स होवाच** गौतमः । हे **राजन्! मानुषं वित्तं तवैव** तिष्ठतु । **यामेव** मम **कुमारस्यान्ते** समीपे पञ्चप्रश्नलक्षणां **वाचमभाषथाः तामेव** वाचं **मे** मह्यं **ब्रूहि इति** गौतमेनोक्तो राजा **स ह कृच्छ्री** दुःखी **बभूव** । ब्राह्मणमप्रत्याख्येयं मन्वानो न्याय्येन विद्या वक्तव्येति मत्वा **तं** गौतमं **चिरं वसेत्येवमाज्ञापयाञ्चकार** । पुरा प्रत्याख्यानं चिरं वसेत्युक्तिप्रभवस्वापराधं हेतुवचनोक्त्या क्षमापयति । स राजा **तं** गौतम**मुवाच** । ब्राह्मणः सर्वविद्योऽपि सन् तामेव वाचं मे ब्रूहीति पृष्टवानसि । तथाहं करिष्ये । तत्र किंचिद्वक्तव्यमस्ति । **यथेयं विद्या त्वत्तु** त्वत्तस्तु **पुरा** पूर्वं **ब्राह्मणान् न गच्छति** । अनया विद्यया ब्राह्मणा न हि अनुशिष्टवन्त इति तत्प्रसिद्धं लोके । **तस्मात्तु** पुरा **सर्वेषु लोकेषु क्षत्रस्य** क्षत्रियजातेरेवानया विद्यया **प्रशासनं** शिष्याणां प्रशास्तृत्व**मभूत्** । क्षत्रियपरम्परयैव इयं विद्या एतावन्तं कालं आगता । तथाप्येतां तुभ्यं वक्ष्यामि । त्वत्संप्रदानादूर्ध्वं ब्राह्मणान् गमिष्यति । अतो मया यदुक्तं तत्क्षन्तुमर्हसि इत्युक्त्वा **तस्मै** विद्यां राजा स **होवाच** ॥ ३ ॥

लोकस्याग्नित्वेनोपासनं प्रथमहोमपर्यायश्च

असौ वाव लोको गौतम ! अग्निस्तस्यादित्य एव समित् रश्मयो धूमोऽहरर्चिः चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा संभवति ॥ ४ ॥

"इति तु पञ्चम्यामाहुतावापः" इति पञ्चमप्रश्नोऽयं प्रथममपाक्रियते । तदपाकरणस्य इतरापाकरणानुकूलत्वादित्यतोऽग्निहोत्रापूर्वविपरिणामलक्षणं पञ्चधा प्रविभज्याग्नित्वेनोपासनमुत्तरमार्गप्रतिपत्तिसाधनं विधित्सन्नाह---**असाविति** । हे **गौतम** ! यथाग्निहोत्राधिकरणं आहवनीयः तथैवेहा**सौ वाव** द्यु**लोको**ऽ**ग्निः** । तस्य द्युलोकाग्नेः **आदित्य एव समित्** । द्युलोकस्यादित्येन सम्यगिद्धत्वात् आदित्यस्य समित्त्वम् । **रश्मयो धूमः** रश्मीनामादित्याद्युत्थानात् । समिधो हि धूम उत्तिष्ठति । प्रकाशसामान्यात् **अहरर्चिः** । अह्न आदित्यकार्यत्वात् । **चन्द्रमा अङ्गाराः** । अर्चिःप्रशमे अङ्गारवत् अहःप्रशमेऽभिव्यक्तत्वात् । **नक्षत्राणि विस्फुलिङ्गाः** । चन्द्रावयवत्वे नक्षत्राणां विप्रकीर्णत्वसामान्यात् । **तस्मिन्नेतस्मिन्नग्नौ** यजमानप्राणा हि **देवाः** अबाकारां **श्रद्धां जुह्वति** । **तस्या आहुतेः सोमो राजा संभवति** । "पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति" इति प्रश्नेऽपां होम्यतया श्रुतत्वात् अब्भाविता श्रद्धेयमित्यर्थः । "श्रद्धा वा आपः श्रद्धामेवारभ्य प्रणीय प्रचरति" इति श्रुतेः ॥ ४ ॥

पर्जन्यस्याग्नित्वेनोपासनं द्वितीयहोमपर्यायश्च

पर्जन्यो वाव गौतम ! अग्निस्तस्य वायुरेव समित् अभ्रं धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुतेर्वर्षꣳ संभवति ॥ ५ ॥

द्वितीयहोमपर्यायार्थमाह—**पर्जन्य** इति। **पर्जन्यो वाव गौतम! अग्निः**। पर्जन्यस्य वृष्ट्युपकरणाभिमानित्वात्। **तस्य वायुरेव समित्**। पर्जन्यस्य वायुना समिद्धत्वात्। "पुरोवातमेव जनयति वर्षस्यावरुद्धयै" इति श्रुतेः। **अभ्रं धूमः**। धूमवल्लक्ष्यमाणत्वात्। **विद्युदर्चिः** प्रकाशसामान्यात्। **अशनिरङ्गाराः** विद्युत्संबन्धात्। **ह्रादुनयो विस्फुलिङ्गाः**। मेघगर्जनविकीर्णत्वसामान्यात्। **तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति। तस्या आहुतेर्वर्षः संभवति**। द्वितीयपर्याये श्रद्धाख्या आपः सोमाकारेण परिणम्य पर्जन्याग्निं प्रतिपद्य वृष्टित्वेन परिणमन्त इत्यर्थः॥ ५॥

पृथिव्या अग्नित्वेनोपासनं तृतीयहोमपर्यायश्च

पृथिवी वाव गौतम! अग्निस्तस्याः संवत्सर एव समित्
आकाशो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः।
तस्मिन्नेतस्मिन्नग्नौ देवा वर्षं जुह्वति तस्या आहुतेरन्नꣳ संभवति॥६॥

तृतीयहोमपर्याय उच्यते—**पृथिवी**ति। **पृथिवी वाव गौतम! अग्निः**। तस्याः पृथिव्याख्याग्नेः **संवत्सर एव समित्**। संवत्सरसमिद्धा हि पृथिवी व्रीह्यादिनिष्पत्तये भवति। **आकाशो धूमः**। अग्न्युत्थधूमवत् पृथिव्युत्थितवदाकाशदर्शनात्। **रात्रिरर्चिः** पृथिव्यनुरूपात्। **दिशोऽङ्गारा** उपशान्तत्वसामान्यात्। **अवान्तरदिशो विस्फुलिङ्गाः** क्षुद्रत्वसामान्यात्। **तस्मिन्नि**त्यादि समानम्। **तस्या आहुतेः** व्रीहियवाद्यन्नं **संभवति**॥ ६॥

पुरुषस्याग्नित्वेनोपासनं चतुर्थहोमपर्यायश्च

पुरुषो वाव गौतम! अग्निस्तस्य वागेव समित् प्राणो धूमो
जिह्वार्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः। तस्मिन्नेतस्मिन्नग्नौ देवा
अन्नं जुह्वति तस्या आहुते रेतः संभवति॥ ७॥

चतुर्थहोमपर्याय उच्यते—**पुरुष** इति । **पुरुषो वाव गौतम ! अग्निः** । **तस्य वागेव समित्** । पुरुषस्य वाक्समिद्धत्वात् । **प्राणो धूमः** धूमवन्मुखान्निर्गमनात् । **जिह्वार्चिः** लौहित्यात् । **चक्षुरङ्गाराः** भास आश्रयत्वात् । **श्रोत्रं विस्फुलिङ्गाः** विप्रकीर्णत्वसामान्यात् । **तस्मिन्नि**त्यादि समानम् । व्रीह्यादिसंस्कृतमन्नं **जुह्वति । तस्या आहुते रेतः संभवति** ॥ ७ ॥

योषाया अग्नित्वेनोपासनं पञ्चमहोमपर्यायश्च

योषा वाव गौतम ! अग्निस्तस्या उपस्थ एव समित् यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः । तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुतेर्गर्भः संभवति ॥ ८ ॥

पञ्चमहोमपर्याय उच्यते—**योषेति । योषा वाव गौतम ! अग्निः** । **तस्या उपस्थ एव समित्** । तेन हि सा समिद्ध्यते । **यदुपमन्त्रयते** सङ्केतं करोति **स धूमः** । उपमन्त्रणस्य स्त्रीवश्यहेतुत्वात् । **योनिरर्चिः** लौहित्यात् । **यदन्त**र्मैथुनं **करोति** तेऽङ्गारा अग्निसंबन्धात् । **अभिनन्दाः** सुखलवा **विस्फुलिङ्गाः** क्षुद्रत्वसामान्यात् । **तस्मिन्नेतस्मिन्नग्नौ** देवा रेतो **जुह्वति । तस्या आहुतेर्गर्भः संभवती**ति ॥ ८ ॥

गर्भोत्पत्त्यादिकथनम्

इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा नव वा मासानन्तः शयित्वा यावद्वाथ जायते । स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नये एव हरन्ति यत एवेतो यतः संभूतो भवति ॥ ९ ॥

प्रश्नपञ्चके प्रथमः प्रश्नो व्याख्यात इत्याह—**इतीति**। इति त्वेवं श्रद्धासोमवर्षान्नरेतोहोमपर्यायक्रमेण योषिदग्निं प्राप्यापो गर्भा भवन्ति। अपामाहुतिसमवायित्वात्। न हि केवला आप एव सोमादिकार्यमारभन्ते। त्रिवृत्कृता एवाप इत्युच्यन्ते। अपां तेजोऽबन्नयोगतः कार्यारम्भकत्वात्। कार्ये दृश्यते ह्यब्बाहुल्यम्। सोमवृष्ट्यन्नरेतोदेहानां द्रवयुक्तत्वात् अपामेव सोमादिक्रमेण गर्भीभूतत्वाच्च। **इति त्वेव तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति** इति प्रश्नपञ्चके व्याख्यातोऽयमेकः प्रश्नः। योऽपां पञ्चमपरिणामविशेषः **सोऽयं गर्भ** आहुतिकर्मसमवायिश्रद्धाद्युल्बेन जरायुणा**वृतो दश नव वा मासान्** मातुरन्तः कुक्षौ **शयित्वा यावद्वा** यथासंभवकालेऽथ **जायते**। स एवं **जातो यावदायुषं** कर्मनिमित्तं ताव**ज्जीवति**। **तमेतं** क्षीणायुषं **प्रेतं** परलोकं प्रति **दिष्टं** निर्दिष्टं यदि जीवन् ज्ञाने कर्मणि वाधिकृत**स्ततैनमितो**ऽस्माद्ग्रामा**दग्नये**ऽग्न्यर्थमृत्विजो **हरन्ति** पुत्रा वा। **यत एव इतो**ऽग्नेः सकाशाच्छ्रद्धाद्याहुतिक्रमेण **यतश्च** पञ्चभ्योऽग्निभ्यः **संभूतः** अतः स्वामेव योनिमापादयन्तीत्यर्थः॥ ९॥

देवयानादिमार्गैर्गतागतनिरूपणम्

**तद्य इत्थं विदुः ये च इमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षट् उदङ्ङेति मासाꣳस्तान्। मासेभ्यः संवत्सरꣳ संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषो मानवः स एनान् ब्रह्म गमयति एष देवयानः पन्था इति। अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमात् रात्रिं रात्रेरपरपक्षमपरपक्षात् यान् षड्दक्षिणैति मासाꣳस्तान्नैते संवत्सरमभिप्राप्नुवन्ति। मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो**

राजा तद्देवानामन्नं तं देवा भक्षयन्ति । तस्मिन् यावत्संपातमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाभ्रं भवति । अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते अतो वै खलु दुर्निष्प्रपतरं यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति । तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा अथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चाण्डालयोनिं वा । अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयꣳ स्थानं तेनासौ लोको न संपूर्यते तस्माज्जुगुप्सेत तदेष श्लोकः—स्तेनो हिरण्यस्य सुरां पिबꣳश्च गुरोस्तल्पमावसन् ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाचरꣳस्तैरिति । अथ ह य एतानेवं पञ्चाग्नीन् वेद न स ह तैरप्याचरन् पाप्मना लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥१०॥

"वेत्थ यदितोऽधि प्रजाः प्रयन्ति" इति प्रश्नो ह्यपाकर्तव्यतया प्रत्युपस्थापित इत्याह—**तद्य इत्थमिति** । तत्तत्र लोके प्रत्युत्थितानां व्रतिकामिवनिनां मध्ये ये पञ्चाग्निदर्शनमित्थमेवं **विदुः** द्युलोकाद्यग्निभ्यो वयं जाता अग्न्यात्मान इति जानन्ति ये इत्थं न विदुस्ते केवलेष्टापूर्तदत्तपरा भूत्वा धूमादिना चन्द्रं गच्छन्तीति वक्ष्यति । **ये चारण्योपलक्षिता** वैखानसाः परिव्राजकाश्च **श्रद्धा तप इत्युपासते** तेषामप्यर्चिरादिना गमनं वक्ष्यति—

यान्त्यूर्ध्वरेतसो ब्रह्मचारिणश्चोत्तरां गतिम् ।

इति स्मृत्यनुरोधेन । इत्थं कर्मिभिः साकं वनिब्रह्मचारिणोऽपि सत्यं ब्रह्म हिरण्यगर्भाख्यमुपासते यदि तदा **ते सर्वे अर्चिषम**र्चिरभिमानिदेवतां **अभिसंभवन्ति** प्रतिपद्यन्ते । **अर्चिषोऽहरह्नः** इत्यादि चतुर्थाध्याये व्याख्यातम् । **एष देवयानः पन्था** व्याख्यातः । **इति**शब्दो देवयानमार्गाप्तिसमाप्त्यर्थः । **अथ** देवयानमार्गकथनानन्तरं **ये इमे** गृहस्थाः, यथारण्यविशेषणं गृहिव्यावृत्तिं कुर्वत् सत् वानप्रस्थादिपर्यवसन्नं तथा **ग्राम** इति विशेषणं वन्यादिव्यावृत्तिं कुर्वत् सत् गृहिणि पर्यवस्यतीति । **ग्रामे** गृहस्थाश्रमे अग्निहोत्रादिवैदिकं कर्म इष्टं च वापीकूपतटाकारामादिकरणं पूर्तञ्च **इष्टापूर्ते** । यज्ञादन्यत्रार्थिभ्यो यथाशक्ति स्वार्जितद्रव्यसंविभागो **दत्तमित्युपासते** । इतिशब्दस्तेषां दर्शनवैरल्यद्योतकः । येषामपरब्रह्मदर्शनमपि न ह्यस्ति **ते** हि **धूमं** धूमाभिमानिदेवता**मभिसंभवन्ति** प्रतिपद्यन्त इत्यर्थः । तया ह्यतिवाहिता **धूमात् रात्रिं** रात्रिदेवतां **रात्रेरपरपक्ष**देवतां कृष्णपक्षाभिधाना**परपक्षात् यान् षण्**मासान् **दक्षिणां दिशमेति** सविता **तान् षण्मासान्** दक्षिणायनाभिमानिनीर्देवताः सङ्घचारिण्यः प्रतिपद्यन्ते । ता एव मासानिति बहुवचनात् । तानेते प्रकृताः कर्मिणः **संवत्सरं** संवत्सराभिमानिनीं देवतां **नाभिप्राप्नुवन्ति** तेषामुत्तरायणप्रापकज्ञानाभावात् । **मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसं** योऽन्तरिक्षे **दृश्यते** चन्द्रमाः स **एष** ब्राह्मणानां **सोमो राजा** । **त**च्चन्द्रमसं **देवानामन्नमि**न्द्रादयो **देवा भक्षयन्ति** । अतस्ते चन्द्रभूताः कर्मिणो धूमादिमार्गतो गत्वा देवैर्भक्ष्यन्ते । इष्टादिकारिणो देवा अद्यमाना इति चेन्न; देवोपकरणमात्रत्वात् । न हि ते कबलोत्क्षेपेण देवैर्भक्ष्यन्ते । स्त्रीपशुपुत्राद्युपकरणेऽन्नशब्दप्रयोगात् । राज्ञां स्त्रियोऽन्नं पशवोऽन्नं विशोऽन्नमित्यादि । स्त्र्यादेः पुरुषोपभोग्यत्वेनान्नत्वम् । न हि स्त्र्यादिरुपभोगो भवति । तस्मात् कर्मिणो देवानामुपभोग्यास्सन्तो देवैः क्रीडन्ते । तेषां सुखोपभोग्यं शरीरं चन्द्रमण्डले आप्यमारभ्यते । श्रद्धाशब्दवाच्या आपो द्युलोकाग्नौ हुतास्सत्यः सोमो राजा संभवतीति पुरस्तादेवोक्तम् । तत्रैव

कर्मणि इष्टादिफलमुपभुञ्जाना आसते। **तस्मिन्ननेन** संपततीति कर्मफलक्षयः संपातः। **यावत्संपातं** तावच्चन्द्रमण्डले **उषित्वा अथ** अनन्तरं **एतमेव** वक्ष्यमाण**मध्वानं पुनर्निवर्तन्ते**। पुनःशब्दतोऽसकृच्चन्द्रमण्डलं गत्वा निवर्तन्त इति द्योत्यते। कर्मशेषेण जनित्वा पूर्ववासनया पुनः कर्मैव कृत्वा तत्फललिप्सया स्वर्गं प्राप्य घटीयन्त्रवदविश्रान्तं संसरन्तीत्यर्थः। चन्द्रात्कथं निवर्तन्ते? इत्यत आह—**यथेतमिति**। यथागतमित्यर्थः। चन्द्रमण्डलात् भौतिकाकाशं प्रतिपद्यन्ते। चन्द्रमण्डले शरीरारम्भका या आपस्ताः कर्मक्षये लीयन्ते आकाशभूता इव सूक्ष्मा भवन्ति। ता अन्तरिक्षाद्वायुर्भवन्ति। ताभिः सह **वायुर्भूत्वा धूमो भवति**। क्षीणकर्मा **धूमो भूत्वा** अब्भरणाद**भ्रं भवति**। **अभ्रं भूत्वा** ततः सेचनसमर्थो **मेघो भवति**। **मेघो भूत्वा प्रवर्षति**। शेषकर्मणा सह पततीत्यर्थः। **त इह व्रीहियवाः ओषधिवनस्पतयः तिलमाषा** इत्येवंप्रकारेण **जायन्ते**। क्षीणकर्मणामनेकत्वात् बहुवचननिर्देशः। मेघादिष्वेकरूपत्वादेकवचननिर्देशः। यतो वर्षधाराभिः पतितानां गिरितटदुर्गनदीसमुद्रारण्यमरुदेशादिसन्निवेशः **अतो वै खलु दुर्निष्प्रपतरं** दुर्निस्सरणम्। यद्यभक्ष्येषु स्थावरेषु पतितास्तत्रैव शुष्येरन्। यदि कदाचित् भक्ष्यस्थावरेषु पतितानां पुंदेहसंबन्धो दुर्लभ एव। स्थावराणां बहुत्वात्तत्र व्रीहियवादिभावः। दुर्निष्प्रपततरमिति वक्तव्ये तकारलोपो द्रष्टव्यः। अन्नदानामनेकत्वादूर्ध्वरेतोबालस्थविरनपुंसकभक्षिता यदि तदान्तराले विशीर्यन्ते। कदाचित् काकतालीयवृत्त्या पुंभिर्भक्ष्यन्ते तदा तद्भुक्तान्नं रेतोरूपेण परिणमते। तत्कथं? **यो यो ह्यन्नमत्ति** तत्परिणतमृतुकाले योषिति **यश्च रेतः सिञ्चति तद्भूय एव** तदाकृतिरेव **भवति**। अतः पुरुषात् पुरुषाकृतिरेव जायते, न हि जात्यन्तराकृतिः जायमानानां जनकाकृतिनियमात्। ये त्वन्ये चन्द्रमण्डलमनारुह्यैव पापकर्मतो घोरव्रीहियवादिभावं प्रतिपद्यन्ते न हि मनुष्यादिभावं तेषां नानुशयिनामिव दुर्निष्प्रपतरं यथाकर्मार्जितं नवं देहान्तरं तृणं जलूकावत् सङ्क्रमन्ते। "सविज्ञानमेवान्ववक्रामति" इति श्रुतेः। तत्र तेष्वनुशायिनामिह लोके

रमणीयं चरणं शीलं येषां पुण्यकर्मणां ते **रमणीयचरणाः** चन्द्रमण्डल-भुक्तशेषेण पुण्यकर्मणा **अभ्याशो ह** क्षिप्रम्। यदिति क्रियाविशेषणम्। क्रौर्यानृतमायाकौटिल्यादिराहित्येन **रमणीयां योनिमापद्येरन्**। **ब्राह्मणयोनिं वा क्षत्रियोनिं वा वैश्ययोनिं** वा योनिमापद्येरन्नित्यनुवर्तते। अथ पुनरेतद्विपरीता **ये** कपूयं कुत्सितं चरणं शीलं येषामशुभाशयानां ते **कपूयचरणाः अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं** वा **चाण्डालयोनिं वा** स्वस्वकर्मानुसारेण प्रतिपद्यन्त इत्यर्थः। ये तु रमणीयचरणा ब्राह्मणादयः ते केवलकर्मिणश्चेत् इष्टादिसाधनतो धूमादिवर्त्मना पुनः पुनर्घटीयन्त्रवत् गच्छन्त्यागच्छन्ति च। "गतागतं कामकामा लभन्ते" इति स्मृतेः। यदि ते विद्याशीलिनस्तदा अर्चिरादिना ब्रह्मलोकं गत्वा न पुनरावर्तन्ते। ये तु कर्मज्ञानबहिर्मुखाः स्वच्छन्दानुवर्तिनस्ते तु **अथैतयोरर्चिर्धूमादिपथोः न कतरेणान्यतरेण** यन्ति तेषां मार्गद्वयपरिभ्रष्ट-त्वात्। यान्येवंविधानि **तानीमानि भूतानि क्षुद्राणि** दंशमशककीटाद्यस-**कृदावर्तीनि भवन्ति** जायन्ते म्रियन्त इत्यर्थः। तेषां जनिमृतिसान्तत्यं दर्शयति—**जायस्व म्रियस्वेति**। जनिमृतिभ्यां कालं क्षपयन्ति। क्रिया-तत्फलभोगाभावात् तेषां जन्म व्यर्थमित्यर्थः। एतत्तु क्षुद्रजन्तुलक्षणम्। पुरोक्तपन्थानावपेक्ष्य **तृतीयं स्थानम्**। **तेनासौ लोको न संपूर्यते**। यस्मादेवं संसारगतिः कष्टा **तस्माज्जुगुप्सेत** बीभत्सेत ममैवंविधघोरा-पारसंसारपातो मा भूदिति घृणी भवेदित्यर्थः। **तदेतस्मिन्नर्थे** पञ्चाग्निविद्यास्तु-त्यर्थोऽयं **एष श्लोको** मन्त्रो भवति। **हिरण्यस्य स्तेनो** ब्रह्मस्वहर्ता ब्राह्मणोऽपि **सुरां पिबन् गुरोस्तल्पं** दारानावसन् **ब्रह्महा चैते चत्वारः पतन्ति**। पतितैश्चतुर्भिः सह चरतीति **पञ्चमश्च तैः** सह पतति। चतुर्भिः सहकारिणः प्रायश्चित्तमाह—**तैरिति**। **अथ ह यः** पुमान् **पञ्चाग्नीन्** यथाव**द्वेद स तै**र्महा-पातकिभिरप्या**चरन्नपि** तत्पाप्मना **न लिप्यते**। तत्पञ्चाग्निदर्शनेन **शुद्धः पूतः** प्राजापत्यादिपुण्य**लोको भवति**। **य एवं** पञ्चप्रश्नप्रत्युत्तरं **वेद** स यथोक्तफलमश्नुत इत्यर्थः। समस्तप्रश्ननिर्णयप्रदर्शनार्थेयं द्विरुक्तिरित्यर्थः॥ १०॥

वैश्वानरात्मभावप्रतिपत्तिः

प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विः ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमाꣳसां चक्रुः को नु आत्मा? किं ब्रह्म? इति। ते ह संपादयांचक्रुरुद्दालको वै भगवन्तोऽयमारुणिः संप्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः। स ह संपादयांचकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रोत्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति। तान् होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः संप्रतीममात्मानं वैश्वानरमध्येति तꣳ हन्ताभ्यागच्छामेति तꣳ हाभ्याजग्मुः। तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयांचकार स ह प्रातः संजिहान उवाच न मे स्तेनो जनपदे न कदर्यो न मद्यपो नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति। ते होचुर्येन हैवार्थेन पुरुषश्चरेत् तꣳ हैव वदेदात्मानमेवेमं वैश्वानरꣳ संप्रत्यध्येषि तमेव नो ब्रूहीति। तान् होवाच प्रातर्वः प्रतिवक्तास्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान् हानुपनीयैव एतदुवाच ॥११॥

"तद्देवानामन्नं तं देवा भक्षयन्ति" इति दक्षिणपथा गच्छतामन्नभाव उक्तः। क्षुद्रजन्तुलक्षणेयं कष्टा संसारगतिरप्युक्ता। तदुभयदोषपरिजिहीर्षया

वैश्वानरात्मभावप्रतिपत्त्यर्थमुत्तरग्रन्थारम्भः । "अत्स्यन्नं पश्यसि" इति लिङ्गात् । आख्यायिका तु सुखावबोधार्था—**प्राचीने**ति । नामतः **प्राचीनशालः**, उपमन्योरपत्यम**औपमन्यवः** । नामतः **सत्ययज्ञः**, पुलुषस्यापत्यं **पौलुषिः** । नामत **इन्द्रद्युम्नः**, भल्लवस्यापत्यं भाल्लविः । तदपत्यं **भाल्लवेयः** । नामतो **जनः**, शर्कराक्षस्यापत्यं **शार्कराक्ष्यः** । नामतो **बुडिलः**, अश्वतराश्वस्यापत्यं **आश्वतराश्विः** । पञ्चापि **ते हैते** विस्तीर्णशालासंपन्नत्वेन **महाशाला महागृहस्थाः** । श्रुताध्ययनसंपन्नत्वेन **महाश्रोत्रियाः** । त एवंभूतास्सन्तः **समेत्य** संभूय क्वचिन्**मीमांसां** विचारणां **चक्रुः** । कथमिति ? **को नोऽस्माकमात्मा ? किं ब्रह्म ? इति** । आत्मब्रह्मणोरितरेतरविशेषणविशेष्यत्वम् । ब्रह्मेत्यध्यात्मपरिच्छिन्नात्मतां निवर्तयति । आत्मेति शब्दादात्मातिरिक्तादित्याद्युपास्यतां निवर्तयति ब्रह्मात्मनोरेकत्वात् । यः सर्वात्मा वैश्वानरो ब्रह्मत्वेनाभिमतः स एवात्मेत्येतत् सिद्धं भवति "मूर्धा ते व्यपतिष्यत्" इत्यादि लिङ्गदर्शनात् । **ते ह** ब्रह्मात्मनिश्चयमलभमानाः तल्लाभाय मीमांसमानाः स्वाचार्यं **संपादयाञ्चक्रुः** । नामत **उद्दालको वै** प्रसिद्धः । **भगवन्तः**, अरुणस्यापत्य**मयमारुणिः संप्रति** सम्यगि**ममात्मानम**स्मदभिप्रेतं **वैश्वानरमध्येति** जानाति । **हन्त** ! इदानीं **तं** प्रति गच्छाम इति निश्चित्य **तं हाभ्याजग्मुः** । **स** चारुणिस्तान् दृष्ट्वा तदागमनप्रयोजनं ज्ञात्वा **संपादयांचकार** । तत्कथम् ? **इमे महाशालाः महाश्रोत्रिया मां** वैश्वानरं **प्रक्ष्यन्ति** । **तेभ्योऽहं न सर्वमिव** पृष्टं **प्रतिपत्स्ये** वक्तुं नोत्सहे । अतो **हन्त** ! इदानीं **अहमेषामन्यमभ्यनुशासानि** वक्ष्यामीत्युपदेष्टारं संपाद्य **तान् होवाच** आगतान् । नामतो**ऽश्वपतिर्भगवन्तोऽयं** केकयस्यापत्यं **कैकेयः संप्रति** सम्यगि**ममात्मानं** वैश्वानरमध्येतीत्यादि समानम् । राजा **तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि** पुरोहितादिभिरर्हणानि **कारयाञ्चकार** । **स ह** राजा परेद्युः **प्रात**र्विनयेनोपगम्य **सञ्जिहान उवाच**—किमिति ? इदं धनं मत्तः सकाशादुपादध्वमिति । स तैः इदं धनं मास्त्विति प्रत्याख्यातः सन् राजा स्वात्मनः सद्वृत्ततां ख्यापयति—**न मे** इति । यतो मद्दत्तं न प्रतिगृह्णन्ति अतो मयि नूनं दोषं पश्यन्तीत्यालोच्य **न** हि **मे** मम **जनपदे**

परस्वहर्ता **स्तेनो** विद्यते। विभवे सति **न** हि **कदर्योऽ**दातास्ति। **न** हि द्विजो **मद्यपोऽ**स्ति। **नानाहिताग्निः** शतगुः। स्वाधिकारानुरूपं **नाविद्वान**स्ति। **न स्वैरी** परदारहर्तास्ति। अत एव **स्वैरिणी कुतः**? असंभवात्। वयं न धनार्थिन इति तैरुक्त आह—न मत्तः स्वल्पमपि धनं एते गृह्णन्तीत्यालोच्य हे **भगवन्तः**! अहं कतिभिरहोभि**र्यक्ष्यमाणोऽस्मी**ति। तदर्थं मया धनं क्लृप्तं रक्षितम्। **यावदेकैकस्मा** इति **ऋत्विजे धनं दास्यामि तावत्** प्रत्येकं **भगवद्भ्यो दास्यामि वसन्तु भगवन्त** इति राज्ञोक्तास्ते **होचुः—येन हैवार्थेन पुरुषश्चरेत् तं हैवार्थं वदेत्**। अस्मदागमप्रयोजनमिदमित्याहुः। वयं वैश्वानरज्ञानार्थिनः। **आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि** सम्यग्जानासि। अतस्तमेव **नोऽ**स्मभ्यं **ब्रूहीत्युक्तः प्रातः वो** युष्मभ्यं **प्रतिवक्तास्मीति तान् होवाच**। **ते ह** राज्ञोऽभिप्रायज्ञाः **समित्पाणयः** परेद्युः **पूर्वाह्णे** महाशालत्वाभिमानं हित्वा जातितो हीनं राजानं विनयेन विद्यार्थितया **प्रतिचक्रमिरे**। यथा ते महाशालास्तथान्यैर्विद्यार्थिभिः भवितव्यम्। तेभ्यश्च विद्यामनु**पनीय** उपनयनमकृत्वैव **तान्** विद्याभाजनं मत्वा वैश्वानरविज्ञान**मुवाचेति** वक्ष्यमाणेन संबन्धः। यथा योग्येभ्यो विद्या मया दत्ता तथान्येनापि विद्या दातव्या। तैरपि श्रद्दधानतया ग्राह्येत्याख्यायिकार्थः॥ ११॥

प्राचीनशालेन दिव एव आत्मत्वेनोपासनम्

औपमन्यव! कं त्वमात्मानमुपास्स? इति दिवमेव भगवो राजन्! इति होवाच एष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते। अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इति होवाच मूर्धा ते व्यपतिष्यत् यन्मां नागमिष्य इति॥ १२॥

स कथमुवाच? इत्यत आह—**औपमन्यवेति**। **औपमन्यव! कं त्वमात्मानमुपास्से? इति** पप्रच्छ। आचार्यः शिष्यं पृच्छतीति यत् तदयुक्तमिति चेन्न; प्रश्नस्य शिष्यप्रतिभोत्पादनार्थत्वात्। तथा च वक्ष्यति "यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामि" इति। हे **भगवः राजन्! दिवं** द्युलोकमेव वैश्वानरमुपासे **इति होवाच। एष वै सुतेजा** इति प्रसिद्धो **वैश्वानरः आत्मा**। तस्यात्मावयवभूतत्वात्। **यमात्मै**कदेशत्वेन **त्वमात्मानमुपास्से तस्मात्** सुतेजसो वैश्वानरस्योपासनात् **तव सुतम**भिषुतं सोमरूपं कर्मणि **प्र**कर्षेण च **सुत**मह**र्ग**णादिष्वा**सुतं** तव **कुले दृश्यते**। त्वत्कुलीना अतीव कर्मठा इत्यर्थः। दीप्ताग्निः सन् **अत्स्यन्नं** पुत्रपौत्रादि**प्रियमि**ष्टं **पश्यसि** च। अतोऽन्योऽपि **अत्त्यन्नं पश्यति प्रियम्। अस्यापि** च प्रियं भवति। सुतमासुतमित्यादिकं कर्मित्वं **ब्रह्मवर्चसं** च **कुले भवती**त्यर्थः। **यः** कश्चि**देवं** यथोक्तगुणमेतं **वैश्वानरमुपास्ते**। एष तु वैश्वानरस्य **मूर्धा** उत्तमाङ्गं न हि **कृत्स्नम्**। अतः समस्तबुद्ध्या वैश्वानरोपासनाद्विपरीतग्राहिणस्ते **मूर्धा व्यपतिष्यत्** विपतितमभविष्यत् **यत् मां नागमिष्यो** नागतोऽभविष्यः। साध्वकार्षीः यस्त्वं मामागतोऽसीत्यर्थः॥ १२ ॥

### सत्ययज्ञेन आदित्यस्यैव आत्मत्वेनोपासनम्

अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य! कं त्वमात्मानमुपास्से? इति आदित्यमेव भगवो राजन्! इति होवाच एष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव बहु विश्वरूपं कुले दृश्यते। प्रवृत्तोऽश्वतरीरथो दासीनिष्कोऽत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धोऽभविष्यत् यन्मां नागमिष्य इति॥ १३ ॥

प्राचीनयोग्य ! कं त्वमात्मानमुपास्से ? इति । आदित्यमेव भगवो राजन् ! इति होवाच । आदित्यस्य विश्वरूपत्वेन शुक्लादिसर्वरूपत्वात् । तदुपासनात्तव कुले बहु विश्वरूपमिहामुत्रार्थोपकरणं दृश्यते । किञ्च अश्वतरीभ्यां युक्तो रथोऽश्वतरीरथः त्वामनु प्रवृत्तो दासीगणयुक्तो निष्को हारो यस्य स दासीनिष्कः । अत्स्यन्नमित्यादि समानम् । वैश्वानरस्य चक्षुः सविता । तस्य समस्तबुद्ध्योपासनादन्धोऽभविष्यः चक्षुर्हीनोऽभविष्यः यन्मां नागमिष्य इति पूर्ववत् ॥ १३ ॥

इन्द्रद्युम्नेन वायोरेवात्मत्वेनोपासनम्

अथ होवाच इन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य ! कं त्वमात्मानमुपास्से ? इति वायुमेव भगवो राजन् इति होवाच एष वै पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्बलय आयन्ति पृथक रथश्रेणयोऽनुयन्ति । अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रमिष्यत् यन्मां नागमिष्य इति ॥ १४ ॥

अथ होवाच इन्द्रद्युम्नं भाल्लवेयं इति । यस्यावाहोद्वाहादिभेदतः पृथक् नानावर्त्मानि स्युः सोऽयं पृथग्वर्त्मात्मा वायुः । तस्मात् पृथग्वर्त्मात्मनो वैश्वानरस्योपासनात् पृथक् नानादिग्भ्यस्त्वां बलयो वस्त्रान्नादिलक्षणा बलय आयन्ति आगच्छन्ति । पृथक् रथश्रेणयो रथपङ्क्तयोऽपि त्वामनुयन्ति । अत्स्यन्नमित्यादि समानम् । प्राणस्त्वेष आत्मन इति होवाच । प्राणस्ते तव उदक्रमिष्यत् यन्मां नागमिष्य इति ॥ १४ ॥

जनेन आकाशस्यैवात्मत्वेनोपासनम्

अथ होवाच जनꣳ शार्कराक्ष्य ! कं त्वमात्मानमुपास्से ? इति आकाशमेव भगवो राजन् ! इति होवाच एष वै बहुल आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं बहुलोऽसि प्रजया च धनेन च। अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते संदेहस्त्वेष आत्मन इति होवाच संदेहस्ते व्यशीर्यत् यन्मां नागमिष्य इति ॥ १९ ॥

अथ होवाच जनं इति। एष वै बहुल आत्मा वैश्वानरो विराट्। आकाशस्य सर्वगतत्वेन बहुलत्वम्। बहुलगुणोपासनात् त्वं पुत्रपौत्रादिलक्षणया प्रजया च धनेन बहुलोऽसि। सन्देहस्त्वेष आत्मनः वैश्वानरस्य सन्देहो मध्यशरीरम्। दिहेरुपचयार्थत्वान्मांसरुधिरादिभिर्बहुलं शरीरं सन्देहस्ते तव शरीरं व्यशीर्यत् विशीर्णमभविष्यत यन्मां नागमिष्य इति ॥ १९ ॥

बुडिलेन अपामेवात्मत्वेनोपासनम्

अथ होवाच बुडिलमाश्वतराश्वि वैयाघ्रपद्य ! कं त्वमात्मानमुपास्से ? इति अप एव भगवो राजन्! इति होवाच एष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वꣳ रयिमान्पुष्टिमानसि। अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते बस्तिस्त्वेष आत्मन इति होवाच बस्तिस्ते व्यभेत्स्यत् यन्मां नागमिष्य इति ॥ १६ ॥

**अथ होवाच बुडिलमाश्वतराश्वि इति । एष वै रयिरात्मा वैश्वानरः । तदुपासनात् तस्मात्त्वं रयिमान्** धनवान् **पुष्टिमान्** शरीरपुष्टेश्चान्ननिमित्तत्वात् । **बस्तिस्त्वेष आत्मनो** वैश्वानरस्य मूत्रस्थानम् । **बस्तिस्ते व्यभेत्स्यत् यन्मां नागमिष्य** इति ॥ १६ ॥

उद्दालकेन पृथिव्या एवात्मत्वेनोपासनम्

अथ होवाच उद्दालकमारुणिं गौतम ! कं त्वमात्मानमुपास्से ? इति पृथिवीमेव भगवो राजन् इति होवाच एष वै प्रतिष्ठात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च । अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नागमिष्य इति ॥ १७ ॥

**अथ होवाच उद्दालकमारुणिं**—इति । **पृथिवीमेव भगवः ! एष वै** वैश्वानरस्य **प्रतिष्ठा** पादौ । **पादौ** ते **व्यम्लास्येतां** विम्लानौ शिथिलीभूतौ भविष्यतः **यन्मां नागमिष्य इति** ॥ १७ ॥

वैश्वानरात्मस्वरूपं तदुपासनफलं च

तान् होवाच एते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाꣳसोऽन्नमात्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु अन्नमत्ति । तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर

एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ १८ ॥

सर्वान् प्रति राजोवाचेत्याह—**तानिति**। यथोक्तवैश्वानरज्ञानवतस्तान् **होवाच**। **वै खलु** इत्यनर्थकौ निपातौ। **एते यूयमपृथक्सन्तमेकं वैश्वानरं पृथगिव विद्वांसोऽन्नमात्थ**। युष्माकं परिच्छिन्नात्मदृष्टित्वात् परिमितं फलं पुत्रपश्वादिरूपम्। **यस्त्वेतमेवं** द्युमूर्धत्वाद्यवयवविशिष्टमेकं प्रादेशैर्द्युमूर्धादिपृथिवीपादान्तैरध्यात्मं मीयत इति **प्रादेशमात्रम्**। यद्वा—शास्त्रेण प्रकृष्टमादिश्यत इति प्रादेशमात्रम्। प्रत्यगात्मतयाभिविधो मीयत इत्य**भिविमानः**। तमेतमात्मानं विश्वान्नरान् पुण्यपापानुरूपं गतिं नयतीति **वैश्वानरमुपास्ते** यः **सोऽयं सर्वेषु** द्युलोकादिषु चराचरसर्व**भूतेषु सर्वेषु** शरीरेन्द्रियावच्छिन्नात्मसु वैश्वानरात्मवित् सर्वात्मा सन् **अन्नमत्ति**। न तथा पिण्डमात्राभिमान्यज्ञः। कथमेवं? इत्यत आह—**तस्येति**। **तस्य ह वा एतस्य** प्रकृतस्या**त्मनः वैश्वानरस्य मूर्धैव सुतेजा** इत्यादि **पृथिव्येव पादा**वित्यन्तमुक्तार्थमेतत्। अथेदानीं वैश्वानरविदो भोजनेऽग्निहोत्रदृष्टिः कार्येत्याह—**उर** इति। **वैश्वानरस्य उर एव वेदिः** आकृतिसामान्यात्। **लोमानि बर्हिः** वेद्यामिव उरसि लोम्नामास्तीर्णवद्भानात्। **हृदयं गार्हपत्यः** मनआदेर्हृदयात् प्रणीतवद्भानात्। यत एवमतोऽन्वाहार्य**पचनोऽग्निर्मनः**। **आस्यं** मुखं अस्मिन्नन्नं हूयत इत्या**हवनीयः** ॥ १८ ॥

प्राणाग्निहोत्रप्रकारः तत्फलं च

तद्यद्भक्तं प्रथममागच्छेत् तद्धोमीयꣳ स यां प्रथमामाहुतिं जुहुयात् तां जुहुयात् प्राणाय स्वाहेति प्राणस्तृप्यति। प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतस्त-

तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ १९ ॥

अथ यां द्वितीयां जुहुयात् तां जुहुयात् व्यानाय स्वाहेति व्यानस्तृप्यति । व्याने तृप्यति श्रोत्रं तृप्यति श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २० ॥

अथ यां तृतीयां जुहुयात् तां जुहुयादपानाय स्वाहेत्यपानस्तृप्यति । अपाने तृप्यति वाक् तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २१ ॥

अथ यां चतुर्थीं जुहुयात् तां जुहुयात् समानाय स्वाहेति समानस्तृप्यति । समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत् तृप्यति विद्युति तृप्यन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २२ ॥

अथ यां पञ्चमीं जुहुयात् तां जुहुयादुदानाय स्वाहेत्युदानस्तृप्यति । उदाने तृप्यति त्वक् तृप्यति त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यति आकाशस्तृप्यति आकाशे तृप्यति यत्किञ्च वायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यति तस्यानु तृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २३ ॥

हूयमानपश्चाहुतिप्रकारं तत्फलं चाह— **तद्यदिति**। **तत्** तत्रैवं भोजनकाले **प्रथमं यद्भक्तमागच्छेत् तद्धोमीयं** होतव्यमित्यर्थः। प्राणाग्निहोत्रस्य विवक्षितत्वात्। **सोऽयं** भोक्ता **यां प्रथमामाहुतिं जुहुयात् तां प्राणाय स्वाहेत्यनेन** मन्त्रेण **जुहुयात्**। आहुतिशब्दादवदानप्रमाणमन्नं प्रक्षिपेदित्यर्थः। तेन होमेन **प्राणस्तृप्यति**। **प्राणे तृप्यति** सति ततश्चक्षुस्तत **आदित्यस्ततो द्यौश्च** तृप्यति। **यच्चान्यत् द्यौश्चादित्यश्च** स्वामित्वेनाधितिष्ठतः **तत्तृप्यति**। **तस्यानुतृप्तिं तृप्यति** तेषां तृप्तितः स्वयमभुञ्जानोऽपि तृप्यति। **प्रजया पशुभिरन्नाद्येन तेजसा** देहकान्त्या प्रागल्भ्येन व्यावृत्तस्वाध्यायनिमित्ततेजसा **ब्रह्मवर्चसे**नापि तृप्यत्ययमित्यर्थः। **अथ यां द्वितीयां, अथ यां तृतीयां, अथ यां चतुर्थीं, अथ यां पञ्चमीं**—इति। अथ यां द्वितीयां तृतीयां चतुर्थीं पञ्चमीं इत्यादि समानम्॥ १९–२३॥

वैश्वानरविद्याप्रबोधाप्रबोधफलम्

स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात् तादृक् तत् स्यात्। अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति। तद्यथा इषीकातूलमग्नौ प्रोतं प्रदूयेत एवꣳहास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति। तस्मादु हैवंवित् यद्यपि चण्डालाय उच्छिष्टं प्रयच्छेत् आत्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति तदेष श्लोकः—

यथेह क्षुधिता बाला मातरं पर्युपासते।
एवꣳ सर्वाणि भूतानि अग्निहोत्रमुपासते।
अग्निहोत्रमुपासत इति॥ २४॥

यथावद्वैश्वानरविद्याप्रबोधाप्रबोधफलमाह—**स य** इति। **स यः** कश्चि**दिदं** वैश्वानरदर्शनं यथावद**विद्वान्** प्रसिद्धा**ग्निहोत्रं जुहोति यथा**हुतियोग्या**नङ्गारानपोह्य** अनाहुतिस्थाने **भस्मनि जुहुयात् तादृक्** तत्तुल्यमविद्वदग्निहोत्रहवनं **स्यात्**। अविद्वदग्निहोत्रनिन्दावैश्वानरविदग्निहोत्रस्तुत्यर्थं विद्वदग्निहोत्रफलं विशदयति—**अथे**ति। **य एतदेवं विद्वानग्निहोत्रं जुहोति** विदुष**स्तस्य सर्वेषु लोके**ष्वित्याद्युक्तार्थम्। हुतं भवति हुतमन्नमत्तीत्यनयोरेकार्थत्वम्। किञ्च **तद्यथा इषीकायास्तूलमग्नौ प्रोतं** क्षिप्तं **प्रदूयेत** दह्येत **एवं हास्य** वैश्वानरभावमापन्नस्य सर्वान्नात्तुर्विदुषः **सर्वे** निरवशिष्टा धर्माधर्मलक्षणाः **पाप्मानो**ऽनेकजन्मसञ्चिता अपि **प्रदूयन्ते** दह्येरन्। तत्र ज्ञानप्राक्कालीना अज्ञानसहभाविनश्च प्रदूयन्ते। न हि वर्तमानशरीरारम्भकाः। तस्य लक्ष्योद्दिष्टबाणवत् प्रवृत्तफलत्वान्न दाहः संभवति। "क्षीयन्ते चास्य कर्माणि" इति, "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते" इति श्रुतिस्मृत्यनुरोधेन समग्रं कर्मत्रयं विलीयत इति चेत्सत्यम्; निर्विशेषज्ञानतः वैश्वानरस्य विश्वरूपत्वेन सविशेषत्वात्। न हि सविशेषज्ञानं कर्मत्रयं निर्मूलयितुं पारयति। तस्मादारब्धकर्मणः उपभोगेन क्षयो युक्त इत्यर्थः। अथ **य एतदेवं विद्वानग्निहोत्रं जुहोति** भुङ्क्ते स **यद्यपि चण्डालाय** उच्छिष्टानर्हाय **उच्छिष्टं प्रयच्छेत्,** उच्छिष्टदानस्य प्रतिषिद्धत्वेऽपि यद्यपि कुर्यात् तच्चण्डालदेहस्थितात्मनि **वैश्वानर** एव ह **तत् हुतं स्यात्**। **तदे**तस्मिन् स्तुत्यर्थः **एष श्लोको** मन्त्रः भवति। **यथेह** लोके **क्षुधिता बालाः** कदा नो माता अन्नं प्रयच्छतीति **मातरं पर्युपासते एवं हि सर्वाणि भूतानि** अन्नादानि एवंविद्वद**ग्निहोत्रं** भोजनं कदा नु अन्नमयं भोक्ष्यत **इत्युपासते**। विद्वद्भोजनेन सर्वं जगत् तृप्तं भवतीत्यत्र—

यद्येको ब्रह्मविद्भुङ्क्ते जगत्तर्पयतेऽखिलम्।

इति स्मृतेः। द्विर्वचनमध्यायपरिसमाप्त्यर्थम् ॥ २४ ॥

इति पञ्चमोऽध्यायः

# षष्ठोऽध्यायः

सर्वभूतेषु आत्मैकत्वप्रकटनम्

श्वेतकेतुर्हारुणेय आस तꣳ ह पितोवाच श्वेतकेतो ! वस ब्रह्मचर्यं न वै सोम्य ! अस्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति । स ह द्वादशवर्ष उपेत्य चतुर्विꣳशतिवर्षः सर्वान् वेदानधीत्य महामना अनूचानमानी स्तब्ध एयाय तꣳ ह पितोवाच श्वेतकेतो ! यन्नु सोम्य ! इदं महामना अनूचानमानी स्तब्धोऽसि उत तमादेशमप्राक्ष्यः । येनाश्रुतꣳ श्रुतं भवति अमतं मतमविज्ञातं विज्ञातमिति कथं नु भगवः स आदेशो भवति ? इति । यथा सोम्य ! एकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातꣳ स्यात् वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । यथा सोम्य ! एकेन लोहमणिना सर्वं लोहमयं विज्ञातꣳ स्यात् वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम् । यथा सोम्य ! एकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातꣳ स्यात् वाचारम्भणं विकारो नामधेयं कृष्णायसमित्येव सत्यम् । एवꣳ सोम्य ! स आदेशो भवतीति । न वै नूनं भगवन्तस्त एतदवेदिषुः यद्ध्येतदवेदिष्यन् कथं मे नावक्ष्यन् ? इति भगवाꣳस्त्वेवमेतद्ब्रवीत्विति तथा सोम्य ! इति होवाच ॥ १ ॥

ॐ "सर्वं खल्विदं ब्रह्म तज्जलान्" इति विश्वोत्पत्तिस्थितिलयकारणता उक्ता । अनन्तरं चैकस्मिन् विदुषि तृप्ते भुक्ते सर्वजगत्तृप्तिरप्युक्ता । सर्वभूतात्मन एकत्वे तदुपपद्यते । स्वाङ्गदृष्टिप्रसक्तसर्वभूतेषु स्वाङ्गदृष्टिप्रसक्ता-

त्मैकत्वं प्रकटयितुं षष्ठाध्याय आरभ्यते। पितापुत्राख्यायिका तु सर्ववेदान्तसारिष्ठतया विद्यास्तुत्यर्था—**श्वेतकेतुरिति**। नामतोऽयं **श्वेतकेतुः** अरुणस्य पौत्र **आरुणेयः आस** बभूव। **ह** इत्यैतिह्यार्थः। **तं** पुत्रं विद्याभाजनं **तत्पिता** आरुणिः तदुपनयनकालात्ययं चालोक्य **उवाच**। किमिति? हे **श्वेतकेतो**! नः कुलानुरूपं गुरुकुलं गत्वा **ब्रह्मचर्यं वस**। हे **सोम्य**! **अस्मत्कुलीनो**ऽस्मद्वंशजः कश्चिद**प्यननूच्या**नधीत्य ब्राह्मणा बन्धवो यस्य स **ब्रह्मबन्धुरिव भवति**। न स्वयं ब्राह्मणवृत्त इत्यर्थः। तथा कोऽपि न भवति। यतः पिता योग्यं पुत्रं नोपनेष्यति अतस्स आचार्यान्तरं गत्वा ब्रह्मचर्यं वसत्वित्यभिसन्धिना पित्रैवमुक्तस्सन् **स ह** श्वेतकेतु**र्द्वादशवर्षः** सन् आचार्य**मुपेत्य** याव**च्चतुर्विंशतिवर्षो** बभूव ताव**त्सर्वांश्चतुरो वेदानधीत्य** तदर्थं चावगम्य स्वतुल्यः कोऽपि नास्तीति महत् विद्यागर्वितं मनो यस्य सोऽयं **महामनाः** स्वयमेवानूचान इत्यभिमतिर्यस्य **सोऽनूचानमानी स्तब्धः** अप्रणतस्वभावः सन् **गृहमेयाय**। स्वकुलाननुरूपशीलं स्तब्धतया निषण्णं पुत्रं दृष्ट्वा **तं होवाच**। तमसन्मार्गतो व्यावर्त्य सन्मार्गं प्रापिपयिषया हे **श्वेतकेतो**! **यन्नु सोम्य**! **इदं महामना अनूचानमानी स्तब्धश्चासि**। आचार्यनिकटात् कस्त्वयातिशयः प्राप्तः? येन वा परं ब्रह्मादिश्यते स आदेशः। **तमादेश**माचार्यं **प्रत्यप्राक्ष्यः** किं पृष्टवानसि? आदेशस्य श्रुत्याचार्यैकलभ्यत्वात्। तमादेशमाचष्टे—**येनेति**। **येन** श्रुतेनान्य**दश्रुतमपि श्रुतं भवति**। **अमतमतर्कितं** तर्कितं भवति। इत्थमिदमित्य**विज्ञातं विज्ञातं** निश्चितं भवति। इति कृत्स्नवेदाध्ययनेऽपि स्वात्मतत्त्वाज्ञानादकृतार्थतैव स्यादित्याख्यायिकया द्योत्यते। श्वेतकेतुरेवं श्रुत्वा कथमन्यविज्ञानेनान्यद्विज्ञातं भवति? इति असंभवमालोच्य पृच्छति—**हे भगवः**! **कथन्नु** केन प्रकारेण **स आदेशो भवति**? **इति** पृष्ट इतर आह—**यथेति**। सोऽयमादेशो यथा भवति तच्छृणु। हे **सोम्य**! **यथैकेन मृत्पिण्डेन** घटशरावादिकारणतया विज्ञातेनान्यद्विकारजातं **सर्वं मृन्मयं** मृद्विकारं **विज्ञातं स्यात्**। कार्यस्य कारणानन्यत्वात् कार्यकारणयोर्भेदावगतेरित्यत्र शृण्वेतत्—

**वाचारम्भणं** वागालम्बनं **विकारो नामधेयं** नाममात्रं विना न हि विकारो नाम किञ्चिद्वस्त्वस्ति। परमार्थतो **मृत्तिकेत्येव सत्यम्**। न हि मृदतिरेकेण किञ्चिदपि घटशरावाद्यस्ति। तस्मात् कार्यावस्थायामपि कारणरूपमृदेव सत्यमित्यर्थः। **यथा सोम्य! एकेन लोहमणिना** सुवर्णघनेन **सर्वमन्यत्** कटकमकुटादिविकारजातं **विज्ञातं स्यात्**। **वाचारम्भणम्**इत्यादि समानम्। **यथा सोम्य! एकेन नखनिकृन्तनेन** कृष्णायसपिण्डेन **सर्वं कृष्णायस-विकारजातं विज्ञातं स्यात्**। समानमन्यत्। दृष्टान्तबाहुल्यं दार्ष्टान्तिक-दृढप्रतीत्यर्थम्। **एवं सोम्य!** यो मयोक्तः **स आदेशो भवतीत्युक्त** इतर आह—**न वा** इति। **नूनं** भगवदुक्तार्थं **भगवन्तो मे गुरवो नावेदिषुः** न विज्ञातवन्तः। **यदि ह्यवेदिष्यन् एतद्वस्तु** तत्**कथं मे** भक्ताय **नावक्ष्यन्**? अतो मन्ये न विदितवन्त इति। यत एवमतो **भगवांस्त्वेव मे** मह्यं यद्विज्ञानतः सर्वज्ञत्वं स्यात् **तद्वस्तु ब्रवीतु**। एवमुक्त**स्तथा सोम्य**! अस्त्विति **पिता उवाच** ॥ १ ॥

सद्वस्तुस्वरूपं जगत्सृष्टिश्च

सदेव सोम्य! इदमग्र आसीदेकमेवाद्वितीयं तद्धैक आहु-रसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायत। कुतस्तु खलु सोम्य! एवꣳ स्यात् इति होवाच कथमसतः सज्जायेत? इति सत्त्वेव सोम्य! इदमग्र आसीत् एकमेवाद्वितीयम्। तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐक्षत बहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क्व च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते। ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्त तस्मात् यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति अद्भ्य एव तदध्यन्नाद्यं जायते ॥ २ ॥

किं तद्वस्तु? इत्यत आह—**सदेवेति**। "पश्यतेहापि सन्मात्रमसदन्यत्" इति श्रुतिसहस्रेभ्यो यन्निष्प्रतियोगिकसन्मात्रमवगम्यते तदेव **सदिति** सच्छब्देनोच्यते। सदेवेत्येवकारोऽवधारणार्थः। सद्व्यतिरिक्तं न किञ्चिदस्तीत्यवधृतम्। सदतिरिक्तं जगदस्तीत्यत आह—**इदमिति**। यत् स्वाज्ञदृष्ट्या नामरूपक्रियावत् व्याकृतमुपलब्धं तदिदं जगत् स्वज्ञदृष्ट्या सदे**वासीत्**। कदेदं सदेवासीत्? इत्यत आह—**अग्र** इति। जगदभिव्यक्तेरग्रे प्राक्। किं नेदानीम्? इदानीमपि सदेव स्वज्ञानां स्वाज्ञानां नामरूपविशेषावच्छिन्नेदंबुद्धिविषयवत् भाति। उत्पत्त्यग्रे तु स्वाज्ञादेरभावात् सदेवेदमासीदित्यत्र न विवादः। यथा घटशरावादिकं न हि कालत्रयेऽपि मृदतिरिक्तं तथेदं जगत् कालत्रयेऽपि न सदतिरिक्तमस्तीत्यर्थः। यत् सदेवेत्यवधृतं तत् किं सप्रतियोगि? तत्राह— **एकमिति**। निष्प्रतियोगिकभावरूपं ब्रह्म कालत्रयेऽप्येकमित्यर्थः। **एक**शब्दतो निष्प्रतियोगिकभावरूपत्वेन सजातीयमायासंभवो द्योत्यते। **एव**कारतो विजातीयप्रपञ्चनिरासः। **अद्वितीय**शब्दतो विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तत्रिपञ्चदशस्वगतभेदनिरासः। एवं स्वाज्ञदृष्टिप्रसक्तसजातीयादिभेदः स्वज्ञदृष्ट्या निरस्यते। वस्तुतस्तु स्वाज्ञादिदृष्टिमोहे सत्यसति सन्मात्रं निष्प्रतियोगिकस्वमात्रमवशिष्यत इत्यर्थः।

अनाख्यमनभिव्यक्तं सत् किञ्चिदवशिष्यते।

इति श्रुतेः। एवं सिद्धान्तेऽपि **तत्त्व** सन्मात्रे वस्तु**न्येके** वैनाशिका **आहुः**। किमिति? **असदेव** सदभावमात्र**मग्रे एकमेवाद्वितीयमासीदिति**। सदभावमात्रं हि प्रागुत्पत्तेस्तत्त्वं कल्पयन्ति। यस्मादेवं **तस्मादसतः** शशविषाणतुल्यात् **सत्** विद्यमानं वस्तु जायेतेत्येवं वैनाशिकपक्षं दर्शयित्वा प्रतिषेधति—**कुत** इति। कुतस्तु प्रमाणात् **खलु सोम्य! एवं स्यात्**? **इति होवाच**। **कथमसतस्सज्जायेत**? **इति**। न कुतश्चन प्रमाणादेवं संभवतीत्यर्थः। न ह्यभावात् भावोत्पत्तिरिष्यते। यदि स्यात्तदा घटार्थिना तत्कारणं नोपादीयेत। घटादावप्यभावता प्रसज्येत। न त्वेतदस्ति। अतो नासतः सदुत्पत्तिः।

न च—मृद्बुद्धिः घटबुद्धेः कारणम्; न हि मृत् घटो वास्तीति वाच्यम्। तथापि विद्यमानमृद्बुद्धेः विद्यमानघटबुद्धिकारणत्वात् न ह्यसतः सदुत्पत्तिदृष्टान्तोऽस्तीत्यसद्वादिपक्षमुन्मूल्य स्वपक्षं स्थापयति--**सत्त्वेव सोम्य! इदमग्र आसीदेकमेवाद्वितीयमिति**। सतः सदुत्पत्तिदृष्टान्तो नास्तीति चेन्न; सतः संस्थानान्तरेणावस्थितत्वात्। यथा सर्पः कुण्डली यथा च मृत् चूर्णकपालघटाद्यात्मनावस्थिता तथा सदेव सर्वावस्थं भवतीत्यर्थः। यद्वा मृदादिसंस्थानमात्रं घटादयस्तथा सत्संस्थानमात्रमिदं सर्वमिति युक्तम्। तद्विकारसंस्थानस्य वाचारम्भणमात्रत्वात्। उक्तं हि "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यं" इति, "तदेतत् ब्रह्म अपूर्वमनपरमनन्तरमबाह्यं निष्कलं निष्क्रियं" इत्यादिश्रुतिसिद्धस्य सतः कथं सर्वविकारावस्थता? इति चेन्न; रज्ज्वज्ञानविजृम्भितसर्पसंस्थानवत् सन्मात्राज्ञर्धाविकल्पितविकारसंस्थानोपपत्तेः। न स्वज्ञदृष्ट्या "एकमेवाद्वितीयं" इति यत् सदभिहितं इदंबुद्धिकालेऽपि **तत्सत् ऐक्षत** ईक्षां दर्शनं कृतवत्। तदितरस्याचेतनत्वादिदं सचेतनं ईक्षितृत्वात्। तत्कथमैक्षत? इत्यत आह--**बहु स्यामिति**। बहु प्रभूतं स्यां भवेयम्। यथा रज्ज्वादि स्वाज्ञानां सर्पादिरूपेण भासमानमिव जायते तथा स्वाज्ञदृष्ट्या **प्रजायेय** उत्पद्येय इव। न वस्तुयाथात्म्यदृशामधिष्ठानदर्शनस्यारोपबुद्धिनिरासकत्वात्।

> यतो वाचो निवर्तन्ते विकल्पकलनान्विताः।
> विकल्पसंक्षयाज्जन्तोः पदं तदवशिष्यते ॥

इति श्रुतेः। प्रकृते तु स्वाज्ञदृष्ट्या तदैक्षतेति यत् मूलाविद्याबीजांशयोगतो बीजभावं प्राप्तवद्भातं **तत्** एवमीक्षित्वा **तेजोऽसृजत** सृष्टवत्। आदावाकाशादिसृष्टिप्रमाणविरोध इति चेन्न; आकाशवायुसृष्ट्यनन्तरभावित्वात् तेजआदिसृष्टेः। यद्वा सृष्टिक्रमस्याविवक्षितत्वात् मृदादिदृष्टान्ततः सत्कार्यमिदं सर्वमेकमेवाद्वितीयमिति विवक्षितम्। अथवा तेजोऽबन्नानामिव त्रिवृत्करणस्य विवक्षितत्वात्। तेजआदिसृष्टिमेवाचष्टे—**तदिति**। यत् रोहितरूपेण दग्धृपक्तृ-

प्रकाशकतया प्रकाशति चकास्ति **तत्** तेजोरूपसंस्थितं **सदैक्षत । बहु स्यां प्रजायेयेति** पूर्ववत् । **तदपोऽसृजत** । यतस्तेजसः कार्यभूता द्रवाः स्निग्धाः स्यन्दिन्यः आपः **तस्माद्यत्र क्व च देशे** काले वा **शोचति** सन्तप्यते **स्वेदते** प्रस्विद्यते **वा पुरुषः तेजस एव तत्तदापोऽधिजायन्ते । ता आप ऐक्षन्त** अबाकारसंस्थितं सत् ऐक्षतेत्यर्थः । **बह्व्यः** प्रभूताः **स्यामो** भवेम **प्रजायेमहि** उत्पद्येमहीति । **ताः** पृथिवीलक्षणं पार्थिवं **अन्नमसृजन्त** । यस्मात् अप्कार्यमन्नं **तस्मात् यत्र क्व च देशे वर्षति** तत्तत्रैव **भूयिष्ठमन्नं भवति** । अतोऽद्भ्य **एव तदन्नाद्यमधिजायते** । पूर्वं ता अन्नमसृजन्तेति पृथिव्युक्ता । इह तु दृष्टान्ते तावदन्नं च तदद्यं चेति विशेषतो व्रीहियवाद्युच्यते । तेजःप्रभृतीनामचेतनत्वात् कथं तेज ऐक्षत ? इति चेन्न ; तेजःप्रभृतीनामीक्षितृकारणपरिणामित्वात् ईक्षितृ अवेक्षितृ उच्यते । तद्गतेक्षितृत्वस्य तदनुगतसन्निष्ठत्वात् । यत एवमतश्चेतश्चेतनावत्कारणं जगदित्यर्थः ॥ २ ॥

तेजोऽबन्नानां त्रिवृत्करणप्रकारः

तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति आण्डजं जीवजमुद्भिज्जमिति । सेयं देवता ऐक्षत हन्त ! अहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति । तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवता इमास्तिस्रो देवता अनेनैव जीवेनात्मनानुप्रविश्य नामरूपे व्याकरोत् । तासां त्रिवृतं त्रिवृतमेकैकामकरोत् यथा नु खलु सोम्य ! इमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥ ३ ॥

तेजोऽबन्नानां त्रिवृत्करणमुच्यते—तेषामिति । तेजःप्रभृतीनां त्रिवृत्करणस्य विवक्षितत्वात् तदभावे प्रत्यक्षनिर्देशानुपपत्तेः । तेजःप्रभृतिषु तिस्रो

देवता इति देवताशब्दप्रयोगान्न तेषां बीजनिर्देशः। तस्मात् **तेषां खल्वेषां** जीवविशिष्टपशुपक्षिस्थावरादीनामन्यूनातिरेकेण **त्रीण्येव बीजानि** कारणानि **भवन्ति**। तानि कानि? इत्यत्र अण्डात् जातमण्डजं तस्मादेवाण्डजं पक्षिसर्पादि। तज्जातितस्तदुत्पत्तिनियमात्। तज्जातिः तज्जातिर्बीजमित्यर्थः। अण्डाज्जातमण्डजमित्यत्र अण्डजस्याण्डमेव बीजं स्यादिति चेत्, सत्यम्; श्रुतेः स्वच्छन्दानुवर्तित्वे स्यादेवम्। यतोऽण्डजाद्येव बीजं नाण्डादीत्याह अतो हि श्रुतिः स्वतन्त्रा। अण्डजाद्यभावे तज्जातीयसन्ततिविच्छेदात्। अतोऽण्डजादीनामण्डजान्येव बीजानि। तथा जीवाज्जातं **जीवजं** पुरुषपश्वादि जरायुजमित्येतत्। उद्भिनत्तीत्युद्भित् स्थावरम्। ततो जातमुद्भिज्जम्। स्थावराणां स्थावरमेव बीजम्। स्वेदजशोकजयोरण्डजोद्भिज्जयोर्यथायोगमन्तर्भावः। एवं चेत् त्रीण्येव बीजानीत्युत्पन्नं भवतीत्यर्थः। या प्रकृता **सेयं** सदाख्या **देवता** तेजोबन्नयोनि**रैक्षत**। यथापूर्वं बहु स्यामितीक्षितवती बहुभवनमेव प्रयोजनमुररीकृत्य। **हन्त!** इदानी**महमिमास्तिस्रस्**तेजआद्या **देवता अनेन जीवेना**न्तःकरणावच्छिन्नवद्भातेन वस्तुतस्तेजोऽबन्नभूततत्कार्यासङ्गा**त्मना** तेजआदिभूततत्कार्य**मनुप्रविश्य**, नाम च रूपं च **नामरूपे** असौनामा अयं इदंरूप इति **व्याकरवाणि** विस्पष्टं व्याकुर्या**मिति**। अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीति महासङ्कल्पपूर्वकमनेकदेहानुप्रवेशो बहुदुःखाय स्यादिति चेन्न; तत्संबन्धाभावात्। यथादर्शादौ पुरुषादिः छायामात्रेणानुप्रविष्टवत् भातोऽपि तद्गतदोषासंसर्गी तद्वत् देवतापीत्यत्र--

सूर्यो यथा सर्वलोकस्य चक्षुः न लिप्यते चाक्षुषैर्बाह्यदोषैः।
एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः॥

इति श्रुतेः। छायामात्रप्रवेशेन मृषात्वं स्यादिति चेन्न; सदात्मना सत्त्वाभ्युपगमात्। नामरूपादिविकारजातं सदात्मना सत्यं विकाराणां सद्भिन्नत्वे वाचारम्भणमित्युक्तत्वात्। यत एवमतस्सर्वविकाराणां व्यावहारिकप्रातिभासिकदृष्टिभ्यां सत्त्वम्। "ब्रह्ममात्रमसन्न हि" इति श्रुत्यनुगृहीतपारमार्थिक-

दृष्ट्या ब्रह्मातिरिक्तस्यासत्त्वमेव न विरोधः। व्यावहारिकदृष्ट्या या सदेवेत्यवधारिता सैवेयं तिस्रो देवता अनुप्रविश्य स्वविकल्पितानभिव्यक्तनामरूपेऽभिव्यक्ततया व्याकरवाणीतीक्षित्वा **तासां** तिसृणां देवतानां **एकैकां त्रिवृतं त्रिवृतं** पृथक् पृथक् **करवाणीति**। इदं तेज इमा आप इदमन्नमिति व्यवहारप्रयोजनमीक्षित्वा **सेयं देवता इमास्तिस्रो देवता अनेन जीवेनात्मना** जलसूर्यप्रवेशवत् देवानां प्रथमं वैराजदेहम**नुप्रविश्य** यथाक्लृप्तमेव **नामरूपे व्याकरोत्**। तासां देवतानां गुणप्रधानतः **त्रिवृत्त्रिवृतमेकैकामकरोत्**। **यथा नु खलु सोम्य! इमाः तिस्रो देवताः त्रिवृत्त्रिवृदेकैका भवति**। देवतानां तेजोऽबन्नमयत्वेन त्रिधात्वमिति यत् **तन्मे** निगदतो **विजानीहि** विस्पष्टमवधारयेत्यर्थः ॥ ३ ॥

त्रिवृत्करणस्य उदाहरणम्

यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागात् अग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्। यदादित्यस्य रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागात् आदित्यादादित्यत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्। यच्चन्द्रमसो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागात् चन्द्राच्चन्द्रत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्। यद्विद्युतो रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागात् विद्युतो विद्युत्त्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम्। एतद्ध स्म वै तद्विद्वाꣳस आहुः पूर्वे महाशाला महाश्रोत्रिया न नोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाह-

रिष्यतीति ह्येभ्यो विदांचक्रुः । यदु रोहितमिवाभूदिति तेजस-
स्तद्रूपमिति तद्विदांचक्रुः यदु शुक्लमिवाभूत् इत्यपा॑ँ रूपमिति
तद्विदांचक्रुः यदु कृष्णमिवाभूदित्यन्नस्य रूपमिति तद्विदांचक्रुः ।
यद्विज्ञातमिवाभूत् इत्येतासामेव देवताना॑ँ समास इति तद्विदांचक्रुः
यथा नु खलु सोम्य! इमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रि-
वृदेकैका भवति तन्मे विजानीहीति ॥ ४ ॥

एकदेशसिद्धितोऽशेषसिद्धये यत् देवतानां त्रिवृत्करणमुक्तं तस्योदाहरण-माह—**यदिति**। लोके त्रिवृत्कृतस्या**ग्नेः यत् रोहितं रूपं** प्रसिद्धं तत् अत्रिवृत्कृ-तस्य **तेजसो रूपमिति** विद्धि । तथा **यदग्नेः शुक्लं** रूपं तत् अत्रिवृत्कृ**तापां** **रूपम्** । **यत्कृष्णं** रूपं **तदत्रिवृत्कृतान्नाख्य**पृथिव्या रूपमिति विद्धि । तत्रैवं रूपत्रयव्यतिरेकेणाग्निरिति यन्मन्यसे तस्या**ग्नेरग्नित्वम्** । रूपत्रय-विवेकात् पूर्वमग्निबुद्धिरासीत् तव । इदानीं तु याग्निशब्दवाच्या सा बुद्धिर**पागाद्**-पगता स्यात् । रोहितादिरूपविवेकात् पुरा खल्वग्नेरग्नित्वम् । ततोऽग्निरिति बुद्धिर्निवर्तते । पुराग्निरिति यन्नाम **विकारः तन्नामधेयं वाचारम्भणं** नाममात्रमित्यर्थः । एवमग्निबुद्धेरनृतत्वे किं तत्सत्यं? इत्यत्र **त्रीणि रूपाणीत्येव** **सत्यम्** । एवेत्यवधारणतो रूपत्रयातिरिक्तं किंचिदपि नास्तीति द्योत्यते । तथा **यदादित्यस्य यच्चन्द्रमसो यद्विद्युत** इत्यादि समानम् । तेजोऽबन्नानां त्रिवृत्करणं प्रतिज्ञाय अग्न्यादिचतुर्भिर्विशेषणैः तेजस एव त्रिवृत्करणमुक्त्वा अबन्नयोरुदाहरणं किं न प्रकाशितं? इति चेत्, सत्यम्; एवं वक्तव्यम् । किन्तु तेजस उदाहरणं अबन्नोदाहरणोपलक्षणार्थं मन्यते श्रुतिः । यद्वा गन्धरसयोरनुदाहरणं युक्तमेव त्रयाणामसम्भवात् । न हि गन्धरसौ तेजस्युपलभ्येते । शब्दस्पर्शयोर्विभागेन दर्शयितुमशक्यत्वात् अनुदाहरणं युक्तम् । इदं जगत् अग्न्यादिवत् त्रिवृत्कृतमित्युक्त्या अग्नेरग्नित्वापगमवत् जगतो जगत्त्वमप्यपगमतां भजेदिति । तथान्नस्यापां शुङ्गत्वेनापां सत्यत्वमपां तेजसः

शुक्लत्वेन तेजसः सत्यत्वम्। तेजसोऽपि सच्छुक्लत्वेन सत एव निरङ्कुश-सत्यत्वम्। अन्नाप्तेजसां तु स्वस्वकारणानुप्रवेशतो वाचारम्भणमेवेत्यतदर्थस्य विवक्षितत्वात्। वाय्वाकाशयोरत्रिवृत्कृतत्वेन तेजोऽबन्नेष्वनन्तर्भूतत्वात् स्पर्शशब्दो विशिष्येत। कथं सता विज्ञातेन सर्वमन्यदविज्ञातं विज्ञातं भवेत्? इति चेन्न; रूपवद्द्रव्ये सर्वस्यान्तर्भूतत्वात्। तत्कथं? तेजसि शब्दस्पर्शयोरप्युपलब्धेः। अतस्तेजसि शब्दस्पर्शगुणवदाकाशवायुसद्भावोऽनुमीयते। तथा रूपवदबन्नयोः रसगन्धान्तर्भाव इति रूपवद्भूतत्रयत्रिवृत्करणतः सर्वं तदन्तर्भूतम्। सर्वस्य सद्विकारत्वात्। सर्वं रूपत्रयवद्विज्ञातं मन्यते श्रुतिः। यथा त्रिवृत्कृते त्रीणि रूपाणीत्येव सत्यं तथा पञ्चीकरणेऽपि समानोऽयं विभागः। त्रिवृत्करणवत् पञ्चीकरणस्यापि सद्विकारत्वाविशेषात्। सद्विज्ञानतः सर्वमिदं विज्ञातं स्यात्। तदेकस्मिन् सति विज्ञाते सर्वमिदं विज्ञातं भवति इति यदुक्तं तद्युक्तमित्यर्थः। **एतद्ध स्म वै तद्विद्वांसः पूर्वेऽतिक्रान्ता महाशाला महाश्रोत्रिया आहुः**। किमिति? **नोऽ**स्माकं कुले**ऽद्ये**दानीं **कश्चन** कश्चिदप्य**श्रुतममतमविज्ञातमुदाहरिष्यति** अस्मत्कुलीनानां सद्याथात्म्यज्ञत्वात्। कथं? इत्यत्र **एभ्यस्त्रिवृत्कृत**रोहितादिरूपेभ्यः सर्वं सदिति **विदाञ्चक्रुः**। सद्विज्ञानादेते सर्वज्ञा आसुरित्यर्थः। केन प्रकारेण विदाञ्चक्रुः? इत्यत्र—यस्मिन् कस्मिंश्चिद्वस्तुनि कपोतादिरूपे **यद्रोहितवद्**भाति **तत्तेजसो रूपमिति विदाञ्चक्रुः**। **यच्छुक्लव**द्भातं **तदपां यत्कृष्णमिव** स्यात् **तदन्नस्य रूपमिति** विदाञ्चक्रुः। **यत्** इदमित्थमिति दुर्लक्ष्यतया **विज्ञातमिवाभूत्** तदप्ये**तासामेव देवतानां समासः** समुदाय **इति विदाञ्चक्रुः**। किं त्वया एतावताग्न्यादिवत् बाह्यं वस्तु विज्ञातम्? अथेदानीं ते विशेषतो निरूप्यते—**यथे**ति। **यथा नु खलु सोम्य! इमास्तिस्रो देवताः** शिरःपाण्यादिलक्षणं **पुरुषं प्राप्य** पुरुषेण भुज्यमानास्सत्यः **त्रिवृत्त्रिवृदेकैका भवति**। भेदतस्तन्मे **विजानीहीति** ॥ ४ ॥

अन्नादीनां त्रेधा विधानम्

अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत् पुरीषं भवति यो मध्यमस्तन्माꣳसं योऽणिष्ठस्तन्मनः। आपः

पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्ठो धातुस्तन्मूत्रं भवति यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः। तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः स मज्जा योऽणिष्ठः सा वाक्। अन्नमयꣳ हि सोम्य! मनः आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्य! इति होवाच ॥ ५ ॥

किं तत्? इत्यत आह—**अन्नमिति**। **अन्नमशितं** जाठराग्निना पच्यमानं **त्रेधा विधीयते** विभज्यते। तत्कथम्? अशितान्नस्य **तस्य यः स्थविष्ठो धातुः तत्पुरीषं भवति**। तदन्नस्य **यो मध्यमो** धातुः **तत्** रसादिक्रमेण परिणम्य **मांसं** भवति। **योऽणिष्ठो**ऽणुतमो धातुः स हृदयं प्राप्य सूक्ष्मनाडीष्वनुप्रविश्य वागादिकरणग्रामानुग्राहकं **मनो** भवति। मनसोऽन्नोपचितत्वात् भौतिकत्वम्। ततो न हि नित्यत्वं निरवयवत्वं वा उपपद्यते। "मनोऽस्य दैवं चक्षुः" इति यदपि वक्ष्यते तदपीन्द्रियापेक्षया नित्यत्वमापेक्षिकम्। "सदेकमेवाद्वितीयं" इति स्वातिरिक्तसत्त्वासहश्रुतेः। तथा**पः पीतास्त्रेधा विधीयन्ते**। **तस्ये**त्यादि समानम्। तथा च वक्ष्यति—"आपोमयः प्राणो न पिबतो विच्छेत्स्यते" इति। तथा **तेजोऽशितं** तैलघृतादि भक्षितं **त्रेधा विधीयते**। **तस्य यः स्थविष्ठो धातुः तदस्थि भवति**। **यो मध्यमः स मज्जा**। **योऽणिष्ठः सा वाक्**। तैलघृतादिभक्षणस्य वाग्मित्वहेतुत्वात्। यत एवमतो**ऽन्नमयं हि सोम्य! मन आपोमयः प्राणस्तेजोमयी वागिति**। केवलान्नमापः स्नेहद्रव्यं भक्षतामाखुमत्स्यादीनां मनस्वित्वप्राणवत्त्ववाग्मित्वाविशेषात् कथमन्नमयं हि सोम्य! मन इत्यादिव्यपदेशः? इति चेन्न; अन्नाप्तेजसां त्रिवृत्कृतत्वेन सर्वत्र मनस्वित्वाद्युपपत्तेः। न हि कश्चिदप्यत्रिवृत्कृतमन्नमापस्तेजो वाश्नाति। एवं प्रत्यायितः श्वेतकेतुर्विस्पष्टप्रतिपित्सया पृच्छतीत्याह—**भूय**

इति । **भूय एव** दृष्टान्तान्तरेण **मा** मां प्रति **भगवान् विज्ञापयतु** अवगमयतु । तमेवमुक्तवन्तं यथा एतदुपपद्यते तत **तथास्तु सोम्य! इति पितोवाच ह** ॥५॥

मनःप्रभृतीनामन्नादिमयत्वम्

दध्नः सोम्य! मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवति । एवमेव खलु सोम्य! अन्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति । अपाꣳ सोम्य! पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति । तेजसः सोम्य! अश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाक् भवति । अन्नमयꣳ हि सोम्य! मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्य! इति होवाच ॥ ६ ॥

वक्ष्यमाणदृष्टान्तः कः? इत्यत आह—दध्न इति । हे **सोम्य! दध्नो मथ्यमानस्य योऽणिमा** सुसूक्ष्मभागः **स ऊर्ध्वः समुदीषति** संभूय नवनीतभावेन ऊर्ध्वमुत्तिष्ठति **तत्सर्पिर्भवति** । यथा दृष्टान्तोऽयं **एवमेव खलु सोम्य! अन्नस्याश्यमानस्य** औदर्यवाय्वग्निभ्यां मथ्यमानस्य **योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति** । मनोऽवयवैर्मिलित्वोपचिनोतीति यावत् । तथापां **सोम्य! पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवतीति** । एवमेव खलु **सोम्य! तेजसोऽश्यमानस्य योऽणिमा स** ऊर्ध्वः **समुदीषति सा वाक् भवती**त्यादि समानम् । यदुक्तं भवता तत्सत्यमेवास्तु । मनस्तु अन्नमयमित्यत्र मम निश्चयो नैकान्तेन जातः । अतो मनसोऽन्नमयत्वं दृष्टान्तेन **भूय एव मा भगवान् विज्ञापयत्विति । तथा सोम्य! इति होवाच** पितेति ॥ ६ ॥

मनसस्त्वन्नविकारत्वे दृष्टान्तकथनम्

षोडशकलः सोम्य ! पुरुषः पञ्चदशाहानि माशीः काममपः पिब आपोमयः प्राणो न पिबतो विच्छेत्स्यत इति । स ह पञ्चदशाहानि नाश अथ हैनमुपससाद किं ब्रवीमि भोः ? इति ऋचः सोम्य ! यजूꣳषि सामानीति स होवाच न वै मा प्रतिभान्ति भो इति । तꣳ होवाच यथा सोम्य ! महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात् तेन ततोऽपि न बहु दहेदेवꣳ सोम्य ! ते षोडशानां कलानामेका कलातिशिष्टा स्यात् तयैतर्हि वेदान्नानुभवसि अशान अथ मे विज्ञास्यसीति । स हाश अथ हैनमुपससाद तꣳह यत्किञ्च पप्रच्छ सर्वꣳ ह प्रतिपेदे । तꣳ होवाच यथा सोम्य ! महतोऽभ्याहितस्यैकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्रज्वालयेत् तेन ततोऽपि बहु दहेत् । एवꣳ सोम्य ! ते षोडशानां कलानामेका कलातिशिष्टाभूत् सान्नेनोपसमाहिता प्राज्वालीत् तयैतर्हि वेदाननुभवसि अन्नमयꣳहि सोम्य ! मन आपोमयः प्राणस्तेजोमयी वागिति तद्धास्य विजज्ञाविति विजज्ञाविति ॥ ७ ॥

मनसस्त्वन्नविकारत्वे दृष्टान्तमाह—**षोडशेति** । यो भुक्तान्नाणिष्ठधातुः स्वस्वशक्तिं मनस्यादधाति । सा अन्नोपचिता मनश्शक्तिः पुरुषकलात्वेन निर्दिदिक्षया षोडशधा प्रविभक्ता । तया संयुक्तः **षोडशकलः** जीवः शिरःपाण्यादिलक्षणः **पुरुष** उच्यते । यस्यां सत्यां द्रष्टृत्वादिशक्तिः यदभावे सामर्थ्यहानिः अतः सर्वकारणसामर्थ्यं मनःकृतमेव । तद्बलेन हि संपन्ना लोके बलिनो भवन्ति । षोडशकलपुरुषस्यान्नकृतमेव हि मानसं वीर्यम् ।

यदि तत्प्रत्यक्षीकर्तुमिच्छसि तदैवं कुरु। किं मया कर्तव्यम्? हे सोम्य! त्वमितः **पञ्चदशसङ्ख्याकान्यहानि माशीः** अशनं मा कार्षीः निरशनं कुरु इत्येतत् यथा**काममपः पिब**। एवं **पिबतस्ते प्राणो न विच्छेत्स्यते** न हि विच्छेदमापत्स्यते। यस्मादा**पोमयः प्राणः** तस्याब्विकारत्वात्। **स हैवं** मनसोऽन्नमयत्वं श्रुत्वा तत्प्रत्यक्षीकरणेच्छया **पञ्चदशाहानि नाश** निरशनेन उषितवान्। **अथ ह** षोडशे**ऽहन्येनं** पितर**मुपससाद** उपगम्योवाच—**किं ब्रवीमि भोः! इति**। तमितर आह—हे **सोम्य! ऋचो यजूंषि सामान्यधीष्वेति**। पित्रैवमुक्त आह—**न वै मां** ऋगादीनि **प्रतिभान्ति** मन्मनसि न स्फुरन्तीत्यर्थः। **भो** भगवन्! इत्येवमुक्तवन्तं पिताह—यतस्ते ऋगादीनि न प्रतिभान्ति तत्कारणं शृण्विति **तं होवाच**—हे **सोम्य!** यथा इन्धनैः **अभ्याहितस्य महतो** महत्परिमाणस्याग्नेः पुनरिन्धनायोगादुपशान्तस्य **खद्योत**परिमाणमात्रोऽयं **एको**ऽङ्गारः **परिशिष्टः स्यात्**। तेनाङ्गारेण **ततोऽपि** तत्परिमाणादीषदपि **न बहु दहेत्**। **एवमेव** खलु **सोम्य! ते** तवान्नोपचितानां **षोडशानां कलानामेका कलातिशिष्टा स्यात्। तया** खद्योतमात्राङ्गारतुल्यया त्वं **एतर्हीदानीं वेदान्नानुभवसि**। **मे** मम वाचं **शृणु**। **अथाशेषं विज्ञास्यसि**। किं तत्? इदानीमश भुङ्क्ष्व। **स ह तथैवाश** भुक्तवान्। **अथ हैनं** पितरं शुश्रूषु**रुपससाद**। स होपगतवन्तं पुत्रं **यत्किंचित्** ऋगादिग्रन्थजातं तदर्थं च **पप्रच्छ**। स ह श्वेतकेतुस्तत्**सर्वं** ग्रन्थतोऽर्थतश्च **प्रतिपेदे**। पुनः पिता **तं होवाच—यथा सोम्य! महतोऽभ्याहित**स्येत्यादि समानम्। शान्ताग्नेः **खद्योतमात्रं परिशिष्टमेकमङ्गारं तं तृणादिभिरुपसमाधाय** उपचयं कृत्वा **प्रज्वालयेत्** वर्धयेत्। **तेनाङ्गारेण ततः** पूर्वपरिमाणा**दपि बहु दहेत्**। **एवं सोम्य! ते** तव पञ्चदशाहान्यभुक्तवतः **एका कलातिशिष्टा** स्यात् अपरपक्षशशिकलावत्। **सा** पुनर्भुक्ता**न्नेन** प्रतिकबलं पूर्वपक्षशशिकलावत् **उपसमाहिता** वर्धिता सती **प्राज्वालीदिति** तदान्नेन उपसमाहिता स्वयं प्रज्वलितवतीत्यर्थः। **तया एतर्हि** इदानीं **वेदाननुभवसी**त्येवं व्यावृत्त्यनुवृत्तिभ्यां मनसोऽन्नमयत्वं सिद्धमित्युपसंहरति—**अन्नमयं हि सोम्य!**

**मन** इत्यादि । मनसोऽन्नमयत्वं यथा तव सिद्धं तथा **आपोमयः प्राणः तेजोमयी वागिति** च सिद्धमित्यभिप्रायः । **तदेतत् हास्य** पितुरुक्तं मनआदीनामन्नमयत्वं श्वेतकेतु**र्विजज्ञौ** विस्पष्टं ज्ञातवान् । द्विर्वचनं त्रिवृत्करणसमाप्त्यर्थम् ॥ ७ ॥

सदाख्यदेवतायाः परमार्थतः सन्मात्रतयावशेषः

उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य ! विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य ! तदा संपन्नो भवति स्वमपीतो भवति तस्मादेनꣳ स्वपितीत्याचक्षते स्वꣳ ह्यपीतो भवति । स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य ! तन्मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनꣳ हि सोम्य ! मन इति । अशनापिपासे मे सोम्य ! विजानीहीति यत्रैतत्पुरुषोऽशिशिषति नामाप एव तदशितं नयन्ते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्गमुत्पतितꣳ सोम्य ! विजानीहि नेदममूलं भविष्यतीति । तस्य क्व मूलꣳ स्यादन्यत्रान्नात् ? एवमेव खलु सोम्य ! अन्नेन शुङ्गेनापो मूलमन्विच्छ अद्भिः सोम्य ! शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य ! शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्य ! इमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः । अथ यत्रैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्टे उदन्येति तत्रैतदेव शुङ्गमुत्पतितꣳ सोम्य ! विजानीहि

नेदममूलं भविष्यतीति । तस्य क्व मूलꣳ स्यादन्यत्राद्भ्यः ? अद्भिः सोम्य ! शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य ! शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्य ! इमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठा यथा तु खलु सोम्य ! इमास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवति अस्य सोम्य ! पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् । स य एषोऽणिमा ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो ! इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्य ! इति होवाच ॥ ८ ॥

दर्पणजलाद्यनुप्रविष्टपुरुषसूर्यादिप्रतिबिम्बवत् अनेन जीवेनात्मना आद्यं वैराजपिण्डं यानुप्रविष्टा सदाख्या देवता सा सन्मात्ररूपापि स्वाज्ञदृष्ट्या स्वविकल्पितान्नाप्तेजोमयमनःप्राणवागुपाधिमिथ्यासंसर्गतो जीवभावमेत्य मननप्राणनवदनादिव्यापृतिविशिष्टेव भाता । स्वज्ञदृष्ट्या तद्व्यापृत्युपरमे पुनः स्वरूपं प्रतिपन्नेव भासते "ध्यायतीव लेलायतीव" इति श्रुतेः । स्वाज्ञदृष्ट्या यत्सत् सोपाधिकं जीवतामगात् तदेव स्वज्ञदृष्ट्या स्वाज्ञविकल्पितकरणग्रामप्रवृत्तिनिमित्तेश्वररूपेण तद्भावाभावप्रकाशकप्रत्यग्रूपेण तदभिन्नब्रह्मरूपेण च भासमानापि परमार्थदृशां सेयं देवता निष्प्रतियोगिकसन्मात्रतयावशिष्यत इत्येतमर्थं प्रकटयितुमुत्तरो ग्रन्थ आरभ्यते—उद्दालक इति । उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच—हे **सोम्य**! **मे** निगदतः **स्वप्नान्तं** स्वातिरिक्तकलनाजातस्वापरूपं **विजानीहि** । कदा मे स्वप्नान्तो भवति ? इत्यत्र **यत्रैतत्**काले स्वप्स्यतः पुरुषस्य **स्वपितीत्ययं** **पुरुष** इत्येत**न्नाम** भवति **तदा** तस्मिन् काले **सता** प्रकृतसच्छब्दवाच्यदेवतया **संपन्नो भवति** । स्वाज्ञताविकल्पितोपाधिकृतजीवभावं विस्मृत्य **यत्स्वं** परमार्थसत् तदपी**तो**ऽपिगतो **भवति** । यस्मादेवं **तस्मादेनं** लौकिकाः

**स्वपितीत्याचक्षते**। कथं लौकिकानां स्वात्मसंपत्तिदर्शनं? इत्यत्रोच्यते। **स्वं** देवतारूपमप्रतिपन्नस्य जाग्रदादिव्यापृतिप्रभवश्रमानिवृत्तेः। अतः स्वं **ह्यपीतो भवतीति** दर्शनं लौकिकानां युक्तम्। तेषां लोकयाथात्म्यज्ञत्वात्। यथा रोगार्तानां तन्निवृत्तितः स्वस्थता तथा स्वातिरिक्तकलनाव्यापृत्युपरमतः सत्संपत्तिरुपचर्यते। न परमार्थतो जाग्रदादौ पुनः प्रवृत्तिदर्शनात्। तत्प्रवृत्तेरनर्थरूपत्वेन व्यापृतिश्रान्तकरणग्रामोपरतिर्भवतीत्यत्र "वाक् श्राम्यति चक्षुः श्राम्यति" इति, "गृहीता वाक् गृहीतं चक्षुर्गृहीतं मनः" इत्यादि श्रुतिसिद्धकरणानि प्राणग्रस्तानि। प्राणस्त्वेकोऽश्रान्तो देहे जागर्ति "य एष सुप्तेषु जागर्ति" इति श्रुतेः। जाग्रत्स्वप्नस्वापानां सच्चिदानन्दावृतिरूपत्वेऽपि स्वापे निरायासस्थितिः सत्संपत्तिरिव भाति। सर्वावस्थास्वपि सत्संपत्तिरविशेषा सतो विभुत्वात्। अवस्थात्रयावृतदृशां सत्संपत्तिर्नानुभूयते। तथा च वक्ष्यति "सति संपद्य न विदुः" इति। तत्र करणानां प्राणबद्धत्वात्। कथं प्राणबद्धत्वं? इत्यत्र दृष्टान्तः—**स यथा** लोके **शकुनिः** पक्षिघातकहस्तगत**सूत्रेण प्रबद्धो** बन्धमोक्षणार्थी सन् **दिशं दिशं** प्रतिदिशं **पतित्वा** बन्धनादन्य**त्रायतनं** विश्रमणाया**लब्ध्वा बन्धनमेवोपश्रयते एवमेव** यथादृष्टान्तं **खलु सोम्य!** तत्प्रकृतषोडशकलमन्नोपचितं **मनो** मश्वाक्रोशनवत् मनउपाधिको जीवः स्वाविद्याकामकर्मोरुपाशपाशितो **दिशं दिशं** जाग्रत्स्वप्नयोः **पतित्वा** सतोऽन्य**त्रात्मन आयतनमलब्ध्वा प्राणमेव** "स उ प्राणस्य प्राणः" इति, "प्राणशरीरो भारूपः" इति च श्रुतिसिद्धप्राणादेः प्राणनादिशक्तिदां देवतामेव **उपश्रयते**। यस्य मनसः प्राणो बन्धनं तत्**प्राणबन्धनं हि सोम्य! मनः**। तदुपाधिकजीव एव स्वपिति नाम। तद्याथात्म्यं जगतो मूलम्। तत्पुत्रस्य दर्शयित्वा अन्नादिकार्यकारणपरम्परया जगन्मूलं सदिति दिदर्शयिषुः अशितुमिच्छा अशना, सन्यलोपेन, पातुमिच्छा पिपासा ते **अशनापिपासे मे** निगदतः **सोम्य!** त्वं **विजानीहि**। **यत्र** यस्मिन् काले **एतन्नामायं पुरुषोऽशिशिषति** अशितुमिच्छति तदा तस्य पुरुषस्य **नाम** निमित्तम्। तेन कठिनमन्न**मशितं** पीता **आपो** रसादिभावेन **नयन्ते** परिणमन्ते।

तदा भुक्तमन्नं जीर्यति । अथास्य अशिशिषतीति नाम भवतीति यत् तद्गौणम् । सर्वोऽपि जन्तुर्जीर्णेऽन्नमशितुमिच्छति । तत्रापामशितनेतृत्वादशनाया इति तन्नाम प्रसिद्धम् । अस्मिन्नर्थे **यथा** गां नयतीति **गोनायो** गोपालो ह्युच्यते । तथाश्वं नयतीत्यश्वपालोऽ**श्वनायः** । तथा पुरुषं नयतीति राजा सेनाधिपतिर्वा **पुरुषनायः** । **एवमशनायेति** विसर्जनीयलोपेन लौकिकास्**तदप आचक्षते** । **तत्रैवमद्भिः** रसादिभावेन नीतेनाशितेनान्नेन निष्पादितमिदं शरीरं वटकणिकायामिव शुङ्गोऽङ्कुरः उत्पतितः । **उत्पतितं** तदिदं **शुङ्गं** शरीरादिकार्यं हे **सोम्य!** वटादिशुङ्गवदुत्पतितमिति **विजानीहि** । किं तत्र विज्ञेयं? इत्यत्र शृणु—**इदं** शरीरं शुङ्गमिव कार्यत्वा**न्नामूलं भविष्यतीत्युक्तः** श्वेतकेतुराह----यद्येवं शरीरमिदं वटादिशुङ्गवत् समूलं तदा **तस्य क मूलं स्यात्** ? इति पृष्टः पिता तदाह— तस्या**न्नादन्यत्र** मूलं न विद्यते । अन्नमेव तन्मूलमित्यर्थः । तत्कथम्? पुरुषाशितान्नमद्भिः द्रवीकृतं जाठराग्निना पच्यमानं सत् रसादिभावेन परिणमते । ततो रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसोऽस्थीन्यस्थिभ्यो मज्जा मज्जायाः शुक्रम् । "शुक्रशोणितसंयोगादावर्तते गर्भो हृदि व्यवस्थां नयति" इति श्रुत्यनुरोधेन योषिद्भुक्तान्नमपि रसादिक्रमेण परिणम्य लोहितं भवति । ताभ्यामन्नकार्याभ्यां कालतः संयुक्तशुक्रशोणिताभ्यां प्रत्यहमुपचीयमानोऽन्नमूलोऽयं देहशुङ्गः परिनिष्पन्नो भवति । यथान्नमूलत्वेन देहशुङ्ग उक्तः **एवमेव खलु सोम्य! अन्नेन शुङ्गेनो**त्पत्तिनाशविशिष्टेना**पो मूलमन्विच्छ** प्रतिपद्यस्व । तासामपामप्युत्पत्तिनाशवत्त्वेन कार्यरूपत्वात् तत्कारणं **तेजो मूलमन्विच्छ** । तेजसोऽप्युत्पत्तिनाशवत्त्वात् शुङ्गत्वमेवेति निश्चित्य **सोम्य! तेजसा शुङ्गेन** यस्मिन्ननृतजडदुःखविकारजातं जगद्विकल्पितं तदेतत्सन्मूलमेकमेवाद्वितीयम् । तदेव हि जगतो **मूलं सदेवेत्यन्विच्छ** । यत एवमतो हे **सोम्य!** स्थावरजङ्गमलक्षणाः **सर्वाः प्रजाः सन्मूलाः** सत्कारणाः स्थितिकाले **सदायतनाः** अन्ते च **सत्प्रतिष्ठाः** सदात्मना परिशेषिता इत्यर्थः । यथा घटादिकार्यजातं मृन्मूलं मृदायतनं मृत्प्रतिष्ठं कालत्रयेऽपि मृदनतिरिक्तत्वात् । **अथेदानीमप्शुङ्गद्वारेण सन्मूलमव**-

गन्तव्यमित्याह—**यत्रेति**। यस्मिन् काले **पिपासति** पातुमिच्छतीत्येतन्नाम **पुरुषो** भवति। तदप्यशिशिषतीतिवत् गौणं नाम भवति। अन्नशुङ्गं देहं द्रवीकृत्याशितान्ननेत्र्य आपः क्लेदयन्त्यतितरां तेजसा न शोष्यन्ते। तेजसा देहभावपरिणतात् शोषणात् पुरुषस्य पातुमिच्छा जायते। अथ तदा पुरुषः **पिपासति नाम**। अतस्तेज **एव** तत्तदा **पीत**मबादि शोषयत् सत् देहगतलोहितप्राणभावेन **नयते** परिणमति। **तद्यथा गोनाय** इत्यादि समानम्। लोक **एवं तत्तेज आचष्टे**। किमिति? उदकं नयतीत्युदन्यम्। **उदन्येतीति** छान्दसम्। पूर्ववत् तत्राप्यपां एतदेव शरीराख्यं **शुङ्गं** नान्यदित्येवमादि समानमन्यत्। सामर्थ्यादेतदेव तेजसोऽपि शुङ्गमाप्यं तन्मूलं तेजो गम्यते। तन्मूलं सदवगम्यते। पूर्ववदेवं हि तेजोऽबन्नमयस्य देहशुङ्गस्य वाचारम्भणमात्रत्वात्। सन्मूलं तु परमार्थसत्यमभयमन्विच्छेति पुत्रं गमयित्वाशिशिषति पिपासति नाम। प्रसिद्धद्वारेण यदन्यदिहास्मिन् प्रकरणे तेजोऽबन्नानां पुरुषोपभुज्यमानानां साङ्कर्येणोपचयकरत्वं वक्तव्यमिति पूर्वोक्तं व्यपदिशति—**यथेति**। यथा तु **खलु सोम्य! इमास्तेजोऽबन्नाख्यास्तिस्रो देवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति**। "अन्नमशितं त्रेधा विधीयते" इत्यादिना **पुरस्तादेव तदुक्तं भवति**। अन्नादीनामशितानां ये स्थविष्ठादयो धातवस्ते सप्तधातुकं शरीरमुपचिन्वन्ति मांसलोहितास्थिमज्जानो भवन्ति। तत्र ये त्वणिष्ठधातवो मनः प्राणं वाचश्चान्तःकरणसङ्घातमुपचिन्वन्तीति चोक्तं तन्मनो भवति स प्राणो भवति सा वाग्भवतीति। सोऽयं मनःप्राणादिकरणसङ्घातो जीवाधिष्ठितः सन् देहे जीर्णभावं गतेऽथ देहान्तरमवष्टभ्य पूर्वदेहात् प्रच्युतो गच्छति। हे **सोम्य! अस्य** महतः **पुरुषस्य प्रयतो** म्रियमाणस्य **वाक् मनसि संपद्यते** मनसस्तत्रोपसंहृतत्वात्। तदा ज्ञातयो न वदतीत्याहुः वाग्व्यापृतेर्मनःपूर्वकत्वात्। "यद्धि मनसा ध्यायति तद्वाचा वदति" इत्यादिश्रुतेः। यदा वागुपरमते तदा मनो मननव्यापारेण वर्तते। यदा मनोऽप्युपरतिं भजति तदा स्वापकाल इव **मनः प्राणसम्पन्नं** भवति। तदायं किमपि न जानातीति पार्श्वस्था ज्ञातय आहुः। स्वात्मन्युप-

संहृतकरणग्रामः **प्राणोऽपि** जीवाधिष्ठितः सन् देहसम्बन्धं विहाय **तेजसि** संपद्यते। न चलत्ययं मृतो न वेति सन्दिहानाः तद्देहं स्पृष्ट्वा उष्णमुपलभ्य जीवयुक्तं तं वदन्ति। यदा तेज उपरराम तदा **तेजः परस्यां देवतायां** उपशाम्यति। यदा करणग्रामो जीवावशेषितो भवति तदा जीवोऽपि स्वाज्ञानोपसंहारपूर्वकमुपसंह्रियते यदि तदा सदेव संपद्यते। यदि स्वाज्ञस्तदा सन्मूलादुत्थाय पुनर्देहजालमाविशति, यन्मूलादुत्थाय जीवो देहमाविशति पुनर्यद्भावमुपैति यत् सर्वप्रपञ्चारोपापवादयोरप्यास्पदवद्भाति, स्वाज्ञादिदृष्ट्या स्वातिरिक्तप्रपञ्चे सत्यसति परमार्थदृष्ट्या निष्प्रतियोगिकसन्मात्रतया योऽवशिष्यते कस्याप्यनास्पदतया **स** यस्सदाख्य **एष** उक्तो**ऽणिमा** केशकोट्येकभागादपि सूक्ष्मरूपत्वात्। स्वाज्ञदृष्टिविकल्पितजगदारोपापवादयोः स्वज्ञदृष्ट्या मूलं स्वाविद्यापदतत्कार्यजातस्य यस्य सदेवात्मा तत् एतदात्म। तद्भावः **ऐतदात्म्यमिदं सर्वं** सर्वस्य तदात्मकत्वात्। न हि तदतिरेकेण संसारी नाम कश्चिदस्ति। "नान्यदतोऽस्ति द्रष्टा नान्यदतोऽस्ति श्रोता नान्यदतोऽस्ति मन्ता" इत्यादिश्रुतेः। येन सर्वमात्मसात्कृतं स्वातिरिक्तकलनापह्नवतः **तदेव** परमार्थसत्यम्।

अनात्मेति प्रसङ्गो वा अनात्मेति मनोऽपि वा।
अनात्मेति जगद्वापि नास्त्यनात्मेति निश्चिनु ॥

इति श्रुत्यनुरोधेनात्मापह्नवसिद्ध **आत्मा स** एव हे **श्वेतकेतो**! यत् सत् आत्ममात्रतयावशिष्टं **तत् त्वमसि** भवसि। यद्वा— तच्छब्देन जगन्मूलमीशचैतन्यं, त्वंशब्देन तेजोऽबन्नतत्कार्यवागादिकरणग्रामोपाधिकं जीवचैतन्यं, असिपदेन तु तत्त्वंपदगतवाच्यार्थकारणकार्योपाधिनिरसनप्रादुर्भूतप्रत्यक्परयोरैक्यमुच्यते। तयोः स्वविकल्पितकार्यकारणोपाधिवैरल्यतो निर्विशेषत्वात्। परमार्थदृष्ट्या तयोरुपाधिसत्त्वासत्त्वसञ्जातभेदैक्यभ्रमोऽपि न ह्यस्ति—

केवलं ब्रह्ममात्रत्वात् नास्त्यनात्मेति निश्चिनु।

इति श्रुतेः। एवं पित्रा प्रत्यायितः पुत्र आह—**भूय एव मा भगवान् विज्ञापयत्विति**। भवदुक्तं यत् तत्तथैव। तत्र स्वापे सत्संपत्तिरुक्ता—सता

सोम्य! तदा संपन्नो भवतीति। तत्र लोके सत्संपन्ना वयमिति सत्संपद्य न विदुरित्यत्र दृष्टान्तेन मां प्रत्याययतु इत्युक्तः पिता **तथास्तु सोम्य! इति होवाच** इति ॥ ८ ॥

प्रत्यहं भूतानां सति संपद्यापि तदवेदनम्

यथा सोम्य! मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाꣳ रसान् समवहारमेकताꣳ रसं गमयन्ति। ते यथा तत्र न विवेकं लभन्तेऽमुष्याहं वृक्षस्य रसोऽस्म्यमुष्याहं वृक्षस्य रसोऽस्मी- त्येवमेव खलु सोम्य! इमाः सर्वाः प्रजाः सति संपद्य न विदुः सति संपत्स्यामह इति। त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदा- भवन्ति। स य एषोऽणिमा ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो! इति भूय एव मा भगवान् विज्ञाप- यत्विति तथा सोम्य! इति होवाच ॥ ९ ॥

अहन्यहनि सति संपद्य भूतानि न विदुरिति यन्मां पृच्छसि शृणु तत्र दृष्टान्तमित्याह—**यथे**ति। हे **सोम्य! यथा** लोके मधु कुर्वन्तीति **मधुकृतो** मधुमक्षिका **मधु निस्तिष्ठन्ति** तत्पराः सन्तो निष्पादयन्ति। तत्कथम्? **नानात्ययानां** नानादिग्गतानां नानाविधवृक्षाणां **रसान् समव- हारं** समाहृत्य मधुत्वेनैकतां एकभावं **गमयन्ति** मधुत्वमविशेषेणापादयन्ति। ये मधुत्वेनैकीकृताः **ते** रसा **अमुष्य** वकुलस्य चूतस्य वा **वृक्षस्य रसोऽस्मीति विवेकं न लभन्ते। यथा**मुष्य अहं पुत्रोऽमुष्याहं नप्तास्मीति लोके लब्धविवेका न सङ्कीर्यन्ते नानामनुष्या न तथा नानावृक्षसंजात- मधुराम्लकट्वादिरसाः। यथायं दृष्टान्तः **एवमेव खलु सोम्य! इमाः**

**सर्वाः प्रजा** अहन्यहनि नित्यादिप्रलयचतुष्टयेऽपि सति **सम्पद्य संपत्स्यामहे** संपन्ना इति वा **न विदुः**। कुतः? सद्याथात्म्याज्ञानात्। **अतस्त इह** लोके स्वकृतकर्मनिमित्ततो यां यां जातिं प्रपन्ना **व्याघ्रादिजन्तवः** सत्प्रतिष्ठा अपि कर्मनिमित्तवासनावासिताः सन्तः **तद्भावेनैव पुनराभवन्ति**। पुनः पुनः सत आगम्य व्याघ्रो वा सिंहो वेत्यादिजन्तवो यद्यत्पूर्वमिह लोके भवन्ति युगसहस्रकोट्यन्तरिता अपि वासनाबलात् तत्तदेव पुनरागम्य भवन्ति तत्तद्भाववासनाया अक्षीणत्वात्। ताः प्रजा यस्मिन् प्रविश्य पुनराभवन्ति, ये त्वन्ये सद्याथात्म्यज्ञानसंपन्नास्सदात्मानं प्रविश्य न पुनरावर्तन्ते, **स य एष** इत्यादि व्याख्यातम्। यथा स्वगृहे सुप्तः पुनरुत्थाय ग्रामान्तरं गतः स्वगृहादागतोऽस्मीति जानाति। कस्मादेवं जन्तूनां सत आगताः स्मेति विज्ञानं नोदेति? अतो **भूय एव मा भगवान् विज्ञापयतु** इत्युक्तः पिता **तथा सोम्य! इति होवाच** इति ॥ ९ ॥

जन्तूनां सत एवागतत्वज्ञानानुदये नदीदृष्टान्तः

इमाः सोम्य! नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात्प्रतीच्यस्ताः समुद्रात् समुद्रमेवापियन्ति स समुद्र एव भवति ता यथा तत्र न विदुरियमहमस्मीति। एवमेव खलु सोम्य! इमाः सर्वाः प्रजाः सत आगत्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा सिꣳहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति। स य एषोऽणिमा ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो! इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्य! इति होवाच ॥१०॥

त्वदुक्तार्थे दृष्टान्तं शृण्वित्याह—**इमा** इति। यथा **सोम्य! इमा** गङ्गाद्या **नद्यः पुरस्तात्** पूर्वां दिशं प्रागञ्चनात्**प्राच्यः स्यन्दन्ते** स्रवन्ति।

पश्चात् प्रतीचीं दिशं प्रत्यगञ्चनात् सिन्ध्वाद्याः **प्रतीच्यः । ताः समुद्रात्** जलधरैराक्षिप्ताः पुनर्वृष्टिरूपेण पतिताः गङ्गादिनदीरूपिण्यः पुनः **समुद्रमेवापियन्ति । स समुद्र एव भवति ।** ता नद्यो यथा समुद्रात्मना एकतां गतास्तत्र **इयं** गङ्गाहमस्मि **इयं** यमुनाहमस्मीति च **न** विदुः । **एवमेव खलु सोम्य! इमाः सर्वाः प्रजा** यतः सत आगम्य न विदुः सत **आगच्छामह इति** वा । **ते इह** व्याघ्र इत्यादि समानमन्यत् । जले तरङ्गफेनादयः उत्पत्तिं स्थितिं प्रलयं गता इति लोके दृष्टम् । जीवास्तु प्रत्यहं सद्भावं गच्छन्तो नित्यादिप्रलयचतुष्टयेऽपि न विनश्यन्तीत्येतत् भूय एव **मा भगवान् विज्ञापयत्विति । तथा सोम्य !** इति **होवाच** पिता इति ॥१०॥

जीवानामविनाश्यत्वे वृक्षदृष्टान्तः

अस्य सोम्य ! महतो वृक्षस्य यो मूलेऽभ्याहन्यात् जीवन् स्रवेत् यो मध्येऽभ्याहन्यात् जीवन् स्रवेत् योऽग्रेऽभ्याहन्यात् जीवन् स्रवेत् स एष जीवेनात्मनानुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति । अस्य यदेका॰ शाखां जीवो जहाति अथ सा शुष्यति द्वितीयां जहाति अथ सा शुष्यति तृतीयां जहाति अथ सा शुष्यति सर्वं जहाति सर्वः शुष्यति एवमेव खलु सोम्य ! विद्धीति होवाच । जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति स य एषोऽणिमा ऐतदात्म्यमिद॰ सर्वं तत्सत्य॰ स आत्मा तत्त्वमसि श्वेतकेतो ! इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्य ! इति होवाच ॥ ११ ॥

त्वत्पृष्टेऽर्थे शृणु दृष्टान्तमित्याह—अस्येति । हे **सोम्य ! अस्यानेक**शाखामण्डितत्वेन **महतो वृक्षस्य** कश्चित् **यो मूलेऽभ्याहन्यात्** । सकृत्

घातमात्रेण न शुष्यति जीवन्नेव भवति। तदा तस्य रसः स्रवेत्। तथा यो मध्येऽभ्याहन्यात् जीवन् स्रवेत्। तथा योऽग्रेऽभ्याहन्यात् जीवन् स्रवेत्। स एष वृक्ष इदानीं जीवेनात्मनाऽनुप्रभूतोऽनुव्याप्तः स्वमूलैरुदकं भौमरसांश्च पेपीयमानो मोदमानस्तिष्ठति। तस्यास्य यदेकां शाखां रोगग्रस्तां हतां वा जीवो जहाति। वृक्षगतो जीवः तच्छाखागतात्मानं उपसंहरति। अथ तदा सा शाखा शुष्यति। तथा द्वितीयां तृतीयां च जहाति। अथ सा शुष्यति। तथा सर्वं वृक्षावयवं यदा जहाति तदा सर्वोऽपि वृक्षः शुष्यति। वृक्षस्य रसस्रावणशोषणादिलिङ्गात् जीवत्वं युक्तम्। "चेतनावन्तः स्थावराः" इति श्रुतेः। अचेतनाः स्थावरा इति केचन वदन्तीति यत् तदसारम्। वृक्षस्य स्वपादतो नीरभूरसपातृत्वेन सजीवत्वात्। तद्वैपरीत्ये म्रियत इति प्रसिद्धेः। अत एव पेपीयमानो मोदमानस्तिष्ठतीत्युक्तम्। यथायं वृक्षदृष्टान्तः एवमेव खलु सोम्य! विद्धीति होवाच। जीवापेतं जीवरहितं वाव किलेदं शरीरं म्रियते। न हि जीवो म्रियत इति च। स्वकर्तव्य-कार्यशेषेण सुप्तस्य पुनरुत्थानकाले कार्यशेषमपरिसमाप्तमिति समापनदर्शनात्। किंच जातमात्रशिशोः जन्मान्तरानुभूतस्तन्यपानादिप्रवृत्तिदर्शनात् अग्निहोत्रादि-कर्मणामर्थवत्त्वाच्च न जीवो म्रियत इति युक्तमुक्तम्। स य एष इत्यादि समानम्। पृथिव्यादिनामरूपात्मकं जगदत्यन्तस्थूलम्। तत् कथं पुनरत्यन्तसूक्ष्मात् सतो जायते? इत्येतमर्थं दृष्टान्तेन भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्य! इति होवाच इति॥ ११॥

अतिस्थूलस्य जगतः सूक्ष्मात् सतो जायमानत्वे न्यग्रोधफलदृष्टान्तः

न्यग्रोधफलमत आहरेति इदं भगवः! इति भिन्द्धीति भिन्नं भगवः! इति किमत्र पश्यसि? इति अण्व्य इव इमा धाना भगवः! इति आसामङ्गैकां भिन्द्धीति भिन्ना भगवः! इति किमत्र पश्यसि? इति न किंचन भगवः! इति। तꣳ होवाच यं वै सोम्य! एतमणि-

मानं न निभालयस एतस्य वै सोम्य! एषोऽणिम्न एवं महान् न्यग्रोधस्तिष्ठति। श्रद्धत्स्व सोम्य! इति स य एषोऽणिमा ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो! इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्य! इति होवाच ॥१२॥

त्वत्पृष्टार्थं प्रत्यक्षेण दर्शयामीत्याह—**न्यग्रोधेति**। अतो विप्रकृष्टस्थितन्यग्रोधवृक्षात् **फलमेकमाहरेति** पित्रोक्तः स तथा चकार। **इदं भगवः!** उपाहृतमिति फलं दर्शितवन्तं प्रत्याह—तत् **भिन्द्धीति**। **भिन्नं भगवः!** इति। **किमत्र पश्यसि?** इत्युक्त आह। अण्व्य **इमे धानाः** बीजानि पश्यामि **भगवः! इति**। हे **अङ्ग** वत्स! **आसामेकां** धानां **भिन्द्धीति**। **भिन्ना भगवः! इति**। अत्र भिन्नधानायां **किं पश्यसि?** इत्युक्तो **न किंचन** पश्यामि **भगवः! इति**। **तं होवाच**—हे **सोम्य!** भिन्नवटधानायां **यमणिमानं न निभालयसे** न पश्यसि **एतस्य वै सोम्य! अणिम्नो** दृश्यमानस्य कार्यत्वेन **एष महान् न्यग्रोधः** स्थूलशाखास्कन्धफलपलाशवांस्तिष्ठतीत्यत्र उच्छब्दोऽध्याहार्यः उत्तिष्ठतीति। यत एवं **सोम्य!** अतः **श्रद्धत्स्व**। अणिम्नः सत एव स्थूलनामरूपकार्यविशिष्टं जगदुत्पन्नमिति विश्वसि हि। श्रद्धायां सत्यां बुभुत्सितेऽर्थे मनसः समाधानं भवेत्। ततस्तदर्थावगतिः "अन्यत्रमना अभूवं नादर्शम्" इत्यादिश्रुतेः। स य इत्यादि समानम्। यदि जगत् सन्मूलं किं तत् नोपलभ्यते? इत्येतत् दृष्टान्तेन **भूय एव मा भगवान् विज्ञापयत्विति**। **तथा सोम्य! इति होवाच** इति ॥ १२ ॥

सन्मूलस्य जगतोऽनुपलभ्यमानत्वे लवणदृष्टान्तः

लवणमेतदुदकेऽवधाय अथ मा प्रातरुपसीदथा इति स ह तथा चकार तꣳहोवाच यद्दोषा लवणमुदकेऽवाधा अङ्ग! तदाहरेति तद्धावमृश्य न विवेद। यथा विलीनमेवाङ्ग! अस्यादावाचामेति

कथमिति ? लवणमिति मध्यादाचामेति कथमिति ? लवणमिति अन्तादाचामेति कथमिति ? लवणमिति अभिप्रास्य एनदथ मोपसीदथा इति तद्ध तथा चकार तत् शश्वत्संवर्तते तꣳहोवाचात्र वाव किल सत्सोम्य ! न निभालयसेऽत्रैव किलेति । स य एषोऽणिमा ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो ! इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्य ! इति होवाच ॥१३॥

यन्नोपलभ्यत इत्युक्तं तत् प्रकारान्तरेण उपलभ्यत इत्यत्र शृणु दृष्टान्तमित्याह — लवणमिति । हे अङ्ग ! लवणमेतत् पिण्डरूपं परिच्छिन्नघटाद्युदकेऽवधाय प्रक्षिप्याथ मा मां श्वः प्रातरुपसीदथा उपगच्छथा इति पित्रोक्तः तत् प्रत्यक्षीकर्तुं तथा चकार । परेद्युः प्रातःकाले तं होवाच पुत्रम्—यल्लवणं दोषा रात्रौ घटोदके अवाधा निक्षिप्तवानसि तदाहरेत्युक्तः तल्लवणमुदके ह किलावमृश्य न विवेद न विज्ञातवान् । यथा विद्यमानमेव तल्लवणमप्सु लीनमणवभूत् । यथैवं विलीनं लवणं न वेत्थ तथापि तत्र चाक्षुषस्पार्शनप्रत्यक्षागम्यतया लवणं विद्यत उपलभते । तत्कथम् ? इति शङ्कमानं प्रत्यालक्ष्याह—अङ्ग ! अस्योदकस्यादावुपरि गृहीत्वाचामेत्युक्तः तथा कृतवन्तं तमुवाच । कथम् ? इतीतर आह स्वादुतो लवणमिति । उदकमध्यादाचामेति । कथम् ? इति । लवणमिति । अन्तादाचामेति । कथम् ? इति । लवणमिति । यद्येवमभिप्रास्य परित्यज्य एनदुदकमाचम्याथ मोपसीदथा इति । तद्ध तथा चकार । त्यक्तलवणः पितृसमीपमाजगाम । स पितृसमीपं गत्वा एवमुवाच—यन्मया रात्रौ घटोदके लवणं निक्षिप्तं तत्रैव तत्संवर्तते । एवमुक्तवन्तं तं होवाच पिता—यथोदकनिक्षेपात् पुरा इदं लवणपिण्डं दर्शनस्पर्शनाभ्यां गृहीतं पुनरुदकयोगतस्ताभ्यामगृह्यमाणमपि विद्यते, उपायान्तरजिह्वया तदुपलभ्यते, एवं तेजोऽबन्नादिकार्यशुङ्गदेहे वाव किल तेजोऽबन्नादिशुङ्गकारणं सत् चैतन्यवटबीजाणिमावत् विद्यमानमेव । न हि तन्ने-

न्द्रियैरुपलभसे **न निभालयसे**। यथा घटोदके लवणं दर्शनस्पर्शनाभ्यामनुपलभ्यमानमपि विद्यमानमेव मत्वा जिह्वया उपलब्धवानसि, एवं जगतो मूलं सत् **अत्रैव** विद्यमानमुपायान्तरेण लवणाणिमवदुपलभस्वेत्यध्याहार्यम्। **स य** इत्याद्युक्तार्थम्। उपायान्तरेण यदुपलम्भात् कृतार्थः स्यामनुपलम्भादकृतार्थः स्यां तदुपलब्धावुपायः कः? इत्येतमर्थं **भूय एव मा भगवान् विज्ञापयत्विति**। **तथा सोम्य! इति होवाच** ॥ १३ ॥

सदुपलब्ध्युपायकथने गन्धारानीतपुरुषदृष्टान्तः

यथा सोम्य! पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत् स यथा तत्र प्राङ्वोदङ्वाऽधराङ्वा प्रत्यङ्वा प्रध्मायीताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः। तस्य यथाभिनहनं प्रमुच्य प्रब्रूयादेतां दिशं गन्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गन्धारानेवोपसंपद्येत एवमेवेहाचार्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथ संपत्स्य इति। स य एषोऽणिमा ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो! इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्य! इति होवाच ॥ १४ ॥

सदुपलब्ध्युपायमाह—यथेति। हे **सोम्य**! यथा लोके कश्चित् द्रव्यहर्ता तस्करः यं कञ्चन **पुरुषं** अभिनद्धाक्षं बद्धचक्षुषं **गन्धारेभ्यो** जनपदेभ्यः समानीय पुनरभिनद्धाक्षं बद्धचक्षुषं बद्धहस्तं अतिजने निर्मानुष्यारण्ये **विसृजेत्**। **ततः स** दिग्भ्रमोपेतस्सन् **तत्र प्राङ्वा उदङ्वा** प्रागादिदिग्विभागमजानन् **प्रध्मायीत** तस्करेण गन्धारदेशेभ्योऽ**पानीतोऽभिनद्धाक्ष** एव निर्जनारण्ये **विसृष्ट** इत्येवं **विक्रोशेत्**। एवं विक्रोशतस्तस्य

विक्रोशनं कश्चित् पथिकः कारुणिकः श्रुत्वा **यथाभिनहनं** यथाबन्धनं **प्रमुच्य** एतदुत्तरतो **गन्धारा** वर्तन्ते **एतामुत्तरां दिशं व्रजेति ब्रूयात्**। स एवं केनचित् कारुणिकेन बन्धनान्मोक्षितः **ग्रामात् ग्रामान्तरं पृच्छन्** उपदेशार्थग्रहणात् **पण्डितः** परोपदिष्टस्वग्रामसृत्यवधारणतो **मेधावी गन्धारानेवोपसंपद्येत**। न ह्येतद्विपरीतेन प्राप्तुं शक्यते। स गन्धारानेवोपसंपन्नो यथा निर्वृतः सुख्यभूत् तथैवं सन्मात्रतः स्वाज्ञानाख्यतस्करेण स्वाज्ञस्तेजोऽबन्नादिमयदेहारण्ये वातपित्तश्लेष्मरुधिरमेदोमांसास्थिमज्जाशुक्रमूत्रपुरीषवत् शीतोष्णसुखदुःखाद्यनेकद्वन्द्वमोहपटाभिनद्धाक्षो दारपुत्रादिपाशेन पाशितोऽमुष्य पुत्रोऽहं मम पुत्रो मम धनं सुख्यहं दुःख्यहं मूढः पण्डितो वाहं जायतेऽस्त्यादिषड्भावविकारवानहं हा हतोऽस्मि कथं जीविष्यामि? का मे गतिः? इति विक्रोशन् वर्तमानस्यानेकजनिसुकृतपरिपाकवशात् सत्संगतिर्लभ्यते। ततः सन्मार्गप्रवृत्तिः। ततो भगवद्भक्तिः। ततो देशिककटाक्षः प्रसरेत्। ततस्तदुपदेशो लभ्यते। न त्वममुष्य पुत्रादिधर्मवान् संसारी, किन्तु स्वातिरिक्ततेजोऽबन्नोपलक्षितस्वाविद्यापदतत्कार्यापह्नवसिद्धं यत् सदवशिष्यते तत् त्वमसि तन्निष्प्रतियोगिकस्वमात्रमित्युपदेशसमकालं "पश्यतेहापि सन्मात्रमसदन्यत्" इति श्रुतिसिद्धासदपह्नवसिद्धसद्ब्रह्म स्वमात्रमित्युपसंपद्य तन्मात्रतयावशिष्यत इत्येतमर्थमाह—**आचार्यवान् पुरुषो** वेदेति। **तस्यास्यैवमाचार्यवतो** यावत् सद्याथात्म्यज्ञानं नोदेति **तावदेव** संसारित्वम्। **चिरं यावन्न विमोक्ष्ये** न स्वातिरिक्तास्तिताभ्रमाद्विमोक्ष्यते तावदेव स्वाज्ञत्वम्। यावता कालेनाचार्योपदिष्टशास्त्रज्ञानमुदेति तेनागामिकर्मस्थूलांशनिवृत्त्या तत्राश्लेषो जायते। एतद्देहकृतमागामिकर्म यदि मननोपायतः शास्त्रजन्यं ज्ञानं विज्ञानं जायते तदा तेनानेकजन्मोपादानं सञ्चितकर्म पूर्वोक्तागामिसञ्चितयोरर्धांशो विलीयते। येन कर्मणा शरीरमारब्धं तदारब्धकर्म। तत् भोगमात्रेण विलीयते। देहावसानसमये वा यदि निदिध्यासनप्रभवसम्यज्ज्ञानं जायते तदागाम्यादिकर्मत्रयस्थूलादिभागत्रयं विलीयते। तदानीमयं जीवन्मुक्तो मुनिः कर्मत्रयभागत्रयापवादाधिकरणतदर्धमात्राकलनासङ्गसत् संपत्स्ये सत्संपत्स्यत इत्यर्थः।

न हि तद्दृष्ट्या देहमोक्षसत्संपत्त्योः कालभेदोऽस्ति। येन अथशब्द आनन्तर्यार्थः स्याद्यदि "ब्रह्ममात्रमसन्न हि" इति श्रुत्यनुरोधेन स्वातिरिक्तसर्वासदपह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति तत्त्वज्ञानमेव जायते अथ तदुत्तरक्षणोपलक्षिततद्ज्ञानसमकालमेव सत् ब्रह्ममात्रं स्वावशेषतया संपत्स्यते। सन्मात्रज्ञानस्य निष्प्रतियोगिकत्वेन कर्मत्रयतत्कार्यकलनापह्नवपूर्वकत्वात्। सद्याथात्म्यज्ञानसमकालं सद्भावापत्तिः निरङ्कुशेत्यत्र "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति", "य एवं निर्बीजं वेद निर्बीज एव स भवति" इत्यादिवेदनसमकालं ब्रह्मभावापत्तिश्रुतेः। स य इत्याद्युक्तार्थम्। येन क्रमेण सत्संपत्तिः तत् दृष्टान्तेन **भूय एव मा भगवान्** विज्ञापयत्विति। तथा **सोम्य! इति होवाच** पिता इति॥ १४॥

सत्संपत्तिक्रमे मुमूर्षुदृष्टान्तः

पुरुषꣳ सोम्य! उतोपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति। अथ यदास्य वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति। स य एषोऽणिमा ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो! इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्य! इति होवाच॥ १५॥

त्वत्प्रश्नानुरोधेन दृष्टान्त उच्यते—**पुरुषमिति**। हे **सोम्य! पुरुषमुत** ज्वराद्युप**तापिनं** मुमूर्षुं **ज्ञातयः** परिवार्य उपासते। किमिति? तव पितरं पुत्रं वा **मां जानासि मां जानासि** किम्? इति। स **यावन्न वाङ्मनसि संपद्यते** इत्युक्तार्थम्। अयं स्वाज्ञमरणक्रमः। परस्यां देवतायां तेजस्यसंपन्ने **जानाति**। संपन्ने तु **न जानाति**। अथाविद्वान् मृत्वा स्वकृतकर्म-

निमित्तदेवमनुष्यतिर्यगादिभावं मुहुर्मुहुरविश्रान्तमुपैति। विद्वांस्तु श्रुत्याचार्यप्रसादजनितज्ञानसमकालमेव सत्संपद्यते। अपरब्रह्मविदस्तु मूर्धन्यया नाड्योत्क्रम्य सूर्यद्वारेण सदाख्यमपरं ब्रह्म गत्वा न हि धूमादिमार्गगता इव पुनरावर्तन्त इत्येष सत्संपत्तेः क्रमः। स य इत्यादि समानम्। अविद्वानावर्तते विद्वान्नावर्तत इत्यत्र दृष्टान्तेन **भूय एव मा भगवान् विज्ञापयत्विति। तथा सोम्य! इति होवाच** पिता इति॥ १९॥

विद्वदविदुषोः अनावर्तनावर्तनयोः चोरदृष्टान्तः

पुरुषꣳ सोम्य! उत हस्तगृहीतमानयन्ति अपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते। अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते। स यथा तत्र नादाह्येत ऐतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो! इति तद्धास्य विजज्ञाविति विजज्ञाविति॥ १६॥

यत्त्वया पृष्टं तदुच्यते—**पुरुषमिति**। हे **सोम्य**! राजपुरुषाः चौर्यकर्मणि सन्दिह्यमानं **पुरुषं** निग्रहार्थं **उता**पि परीक्षणार्थं वा **हस्तगृहीतं** बद्धहस्त**मानयन्ति**। अयमस्य धनमपाहार्षीत्। किमनेन भवद्धनमपहृतम्? इति पृष्टा आहुः—**स्तेयमकार्षीत्** चौर्येण धनमपाहार्षीदिति। तेष्वेवं वदत्सु नाहं तत्कर्तेति चोरस्तदपह्नुते। पुनस्तस्मिन् सन्दिह्यमाना आहुः—त्वमस्य धनस्तेयमकार्षीरिति। पुनस्तदपह्नुवाने **परशुमस्मै तपत** शोधयात्मानमिति। **स यदि तस्य** स्तैन्यस्य **कर्ता भवति** धैर्येण बहिरपह्नुते। स एवंभूतस्तत

एवानृतमन्यथाभूतं सन्तमन्यथात्मानं कुरुते। स तथानृताभिसन्धोऽनृतेनात्मानमन्तर्धाय तिरोधानं कृत्वा मोहात् परशुं तप्तं प्रतिगृह्णाति। स दह्यतेऽथ हन्यते। स यथा सत्याभिसन्धो न दह्यते सत्यव्यवधानादथ मुच्यते। अनृतसत्याभिसन्धिनोः हस्ततलतप्तपरशुसंयोगस्य तुल्यत्वेऽपि स्तेयकर्ता दह्यते अनृताभिसन्धित्वात्। तद्विपरीतस्य सत्याभिसन्धित्वेन स न दह्यते। सत्यव्यवहितहस्तत्वानादाह्येत न दह्यत इत्येवं सद्ब्रह्म। स्वयाथात्म्यज्ञाज्ञयोरत्यन्तशरीराभिमानत्यागकाले सत्संपत्तौ तुल्यायामपि तत्राविद्वान् सत् संपद्य पुनर्व्याघ्रादिभावं देवमनुष्यादिभावं वा यथाकर्म यथाश्रुतं प्रतिपद्यते। विद्वांस्तु—

यावद्यावन्मुनिश्रेष्ठ! स्वयं सन्त्यज्यतेऽखिलम्।
तावत्तावत् परालोकः परमात्मैव शिष्यते॥

इति श्रुत्यनुरोधेन स्वप्रतिपत्त्यनुरूपं सन्मात्रपर्यवसन्नो भवति। न हि कदाप्यज्ञवत् पुनरावर्तते पुनरावृत्तिहेतुस्वाज्ञानवैरल्यात्। यदज्ञानज्ञानप्रभवौ बन्धमोक्षौ स्वाज्ञादिदृष्ट्या यत्स्वातिरिक्ततेजोऽबन्नादिविकारं जगद्भाति, यज्जाता यत्प्रतिष्ठा यत्पर्यवसानाः सर्वाः प्रजा यदात्मकमिदं सर्वं परमार्थदृष्ट्यायदेतत्सर्वापह्नवसिद्धं निष्प्रतियोगिकब्रह्ममात्रं तदेव हि परमार्थसत्यम्। स हि तवात्मा स्वमात्रपर्यवसानात्। अतस्तत्त्वमसि श्वेतकेतो! इत्याद्युक्तार्थम्। श्वेतकेतुः पितुरुपदेशात् पुरा स्वातिरिक्तासत्प्रपञ्चकलनापह्नवसिद्धं सत् स्वमात्रमिति न विजज्ञौ। अथेदानीं पित्रा बहुभिर्हेतुभिः प्रत्यक्षानुभूयमानदृष्टान्तैर्बोधितः तत्त्वमसीत्युपदेशजनितज्ञानसमकालमसदपह्नवसिद्धं यत् प्रकरणादौ सत् एकमेवाद्वितीयमिति प्रपञ्चितं तत् निष्प्रतियोगिकस्वमात्रमिति विजज्ञौ विज्ञातवान्। द्विर्वचनमध्यायपरिसमाप्त्यर्थम्॥ १६॥

## इति षष्ठोऽध्यायः

---

# सप्तमोऽध्यायः

स्वात्मतत्त्ववेदनमेव निःश्रेयसप्राप्तिसाधनम्

अधीहि भगवः! इति होपससाद सनत्कुमारं नारदः तꣳ होवाच यद्वेत्थ तेन मा उपसीद ततस्त ऊर्ध्वं वक्ष्यामीति । स होवाच ऋग्वेदं भगवः! अध्येमि यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद्भगवः! अध्येमि । सोऽहं भगवः! मन्त्रविदेवास्मि नात्मवित् श्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः! शोचामि तं मा भगवान् शोकस्य पारं तारयत्विति तꣳ होवाच यद्वै किंचैतदध्यगीष्ठा नामैवैतत् । नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवजनविद्या नामैवैतन्नामोपास्स्वेति । स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्ते अस्ति भगवः! नाम्नो भूय इति? नाम्नो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ १ ॥

षष्ठाध्यायः परमात्मयाथात्म्यप्रतिपादनपरः सन्मात्रावशेषपर्यवसायित्वेन उपक्षीणत्वात् । तत्रत्यसन्मात्रं निष्प्रतियोगिकमिति ये न जानन्ति तेषां तत्पदारोहाय

नामादिप्राणान्ततत्त्वानि स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमतया सोपानारोहणक्रमेण निर्दिश्य तत्कलनाविरलं सदेव निरतिशयभूमस्वरूपतया निर्देष्टव्यमिति सप्तमाध्याय आरभ्यते। नारदो देवर्षिः सर्वविद्यः कृतकृत्योऽपि सन् यतः स्वात्मानमनात्मज्ञं मत्वा शुशोच, अतः किमु वक्तव्यमल्पवित् जन्तुरनात्मज्ञतया शोचति? इति। अत एव स्वात्मतत्त्ववेदनात् निश्श्रेयसः प्राप्तिसाधनं न किंचिदस्तीत्येतत्प्रदर्शनार्थं सनत्कुमारनारदाख्यायिका विद्यास्तुत्यर्थतयारभ्यते—अधीहीति। देवर्षिरिति सर्वत्र विख्यातोऽयं **नारदः** सनत्कुमार एव **सनत्कुमारः**। तं ब्रह्मविद्वरिष्ठं स्वातिरिक्तकलनास्तितबुद्धिजन्यशोकग्रासमात्मयाथात्म्यज्ञानोपायम**धीहि भगवः!** इति मन्त्रः। हे भगवन्! अधीष्वेत्यु**पससाद**। ह किल। एवं विधिवदुपसन्नं **तं होवाच**—**यद्**आत्मविषये किञ्चि**द्वेत्थ तेन** तत्प्रख्यापनेन **मामुपसीद** इदमहं जान इति वद। **ततो** भवद्विज्ञापनादू**र्ध्वं** तदवष्टभ्यात्मयाथात्म्यं **ते** तुभ्यं **वक्ष्यामी**त्युक्तवति **स होवाच** नारदः—हे **भगवः**! ऋग्वेदमध्येमि यद्वेत्थेति मद्विज्ञानस्य पृष्टत्वात्। ऋग्वेदं स्मरामि। तथा **यजुर्वेदं सामवेदमाथर्वणं चतुर्थं** वेदम्। वेदशब्दस्य प्रज्ञानविषयत्वात्। **इतिहासपुराणं पञ्चमं** वेदम्। पञ्चानां **वेदानां वेदं** भारतं सर्ववेदार्थोपबृंहणत्वात्। यद्वा—वेदानां वेदं व्याकरणम्। तेन हि ऋग्वेदादयः पदादिविभागशो ज्ञायन्ते। **पित्र्यं** श्राद्धकल्पम्। **राशिं** गणितम्। **दैवमु**त्पातज्ञानम्। **निधिं** तद्दर्शनहेतुनिधिशास्त्रम्। **वाकोवाक्यं** तर्कशास्त्रम्। **एकायनं** नीतिशास्त्रम्। **देवविद्यां** देवत्वप्राप्तिनिमित्ताम्। **ब्रह्मविद्यां** ऋग्यजुःसामाख्यस्य ब्रह्मणो विद्या शिक्षादयः। **भूतविद्यां** भूतोत्सारणमन्त्रम्। **क्षत्रविद्यां** धनुर्वेदम्। **नक्षत्रविद्यां** ज्योतिषम्। **सर्पदेवजनविद्यां** तत्र सर्पविषशान्त्यादि सर्पविद्या। गान्धर्वयुक्तं नृत्तगीतवाद्यशिल्पादिविज्ञानं देवजनविद्या। हे **भगवः**! **अहमेतत्सर्वमध्येमि**। एतत्सर्वं जानन्नपि **सोऽहं भगवः! मन्त्रविदेवास्मि** शब्दार्थज्ञानवानस्मीत्याशयः। शब्दराशेरभिधानमात्रत्वेन मन्त्रान्तर्भूतत्वात्। मन्त्रवित् कर्मविदप्यस्मीत्यर्थः। तथा च वक्ष्यति "मन्त्रेषु कर्माणि" इति। **नात्मवित्** स्वात्मप्रकृत्यज्ञत्वात्। अत एवोक्तम्—"आचार्यवान् पुरुषो वेद"

इति । मन्त्रैरात्मा प्रकाश्यते कथं मन्त्रवित् अनात्मवित्? इति चेन्न; मन्त्रप्रकाशिताभिधानाभिधेययोरनात्मविकारत्वात् । न ह्यनात्मविकारः आत्मेष्यते । अतोऽनात्मविकारज्ञानवानस्मि । **श्रुतं ह्येव मे** मया **भगवद्दृशेभ्यः** "तरति शोकं तरति पाप्मानं," "तमेव विदित्वातिमृत्युमेति," "ब्रह्मसंस्थोऽतिमृत्युमेति," "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुत्यर्थविशारदेभ्यो भवत्सदृशेभ्यो ब्रह्मवित् विद्वान् स्वातिरिक्तदर्शननिमित्तं **शोकं तरत्यतिक्रामतीति** । हे **भगवः!** **अतोऽहं शोचामि** अनात्मवित्त्वात् । योऽहं स्वाज्ञानाग्निना सन्तप्तोऽस्मि **तं मा** मां **भगवान्** स्वाज्ञानप्रभवशोकसागरस्य **पारमन्तं** स्वात्मयाथात्म्यज्ञानोडुपेन **तारयतु** परमाभयं प्रापयतु । एवमुक्तवन्तं **तं होवाच—यद्वै किंचैतदध्यगीष्ठाः** अर्थवदधीतवानसि "वाचारम्भणं विकारो नामधेयं" इति श्रुत्यनुरोधेन त्वया यदधीतं **नामैवैतत्** । **नाम वा ऋग्वेदो यजुर्वेद** इत्याद्युक्तार्थमेतत् । **सर्वं नामैवैतत्** । प्रतिमादौ विष्ण्वादिबुद्धिवत् ब्रह्मबुद्ध्या **नाम उपास्स्वेति** । **यस्तु नाम ब्रह्मेत्युपास्ते** विद्याफलं **यावन्नाम्नो गतं तत्रास्मि**न्नामविषयस्य उपासकस्य स्वविषये राज्ञ इव **कामचारः** कामचरणं **भवति** । **यो नाम ब्रह्मेत्युपास्ते** इत्युपसंहारः । ब्रह्मदृष्ट्यर्हतया किमस्ति **भगवः! नाम्नो भूयो**ऽधिकतरम्? एवं पृष्टः सनत्कुमार आह—**नाम्नो वाव भूयोऽस्तीति** । एवमुक्त आह—यद्यस्ति **तन्मे भगवान् ब्रवीत्विति** ॥ १ ॥

वागेव नाम्नो भूयसीत्युपासनम्

वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च

तृणवनस्पतीन् श्वापदानि आकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं च यद्वै वाङ् नाभविष्यत् न धर्मो नाधर्मो व्यज्ञापयिष्यन्न सत्यं नानृतं न साधु नासाधु न हृदयज्ञो नाहृदयज्ञो वागेव एतत्सर्वं विज्ञापयति वाच-मुपास्स्वेति। स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचो गतं तत्रास्य यथाकामचारो भवति यो वाचं ब्रह्मेत्युपास्ते अस्ति भगवः! वाचो भूय इति? वाचो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ॥

नाम्नो भूयसी इयमित्याह—**वागिति**। वर्णानामभिव्यञ्जकतया या जिह्वा-मूलाद्यष्टस्थानेषु स्थिता सेयं **वाग्वाव नाम्नो भूयसी** कार्यापेक्षया कारणस्य भूयस्त्वदर्शनात्। यथा पुत्रात् पिता भूयान्। कथं पुनर्नाम्नो वाचो भूयस्त्वम्? इत्यत्र अयं ऋग्वेदो यजुर्वेद इति **वाग्वा विज्ञापयति**। सामवेदमित्याद्युक्तार्थम्। मनःप्रीतिविषयं **हृदयज्ञम्**। तद्विपरीतमहृदयज्ञम्। **यत्** यदि **वाक् नाभविष्यत्** वागभावेऽध्ययनाभावः अध्ययनस्य वाङ्निर्व-र्त्यत्वात्। अध्ययनाभावे तदर्थश्रवणं न सिद्ध्यति। तदभावे धर्मादि न **व्यज्ञापयिष्यत्** न विज्ञातं अभविष्यदित्यर्थः। यस्मादेवं तस्मात् **वागेवैतत्** शब्दोच्चारणेन **सर्वं विज्ञापयति**। अतो नाम्नो वाग्भूयसी। तस्माद्वाचं ब्रह्मेत्युपास्स्व। समानमन्यत् ॥ २ ॥

मन एव वाचो भूय इत्युपासनम्

मनो वाव वाचो भूयो यथा वै द्वे वामलके द्वे वा कोले द्वौ वाक्षौ मुष्टिरनुभवति एवं वाचं च नाम च मनोऽनुभवति स यदा मनसा मनस्यति मन्त्रानधीयीयेति अथाधीते कर्माणि कुर्वीयेति अथ कुरुते पुत्रांश्च पशूंश्चेच्छेयेति अथेच्छते इमं च लोकममुं

चेच्छेयेति अथेच्छते मनो ह्यात्मा मनो हि लोको मनो हि ब्रह्म मन उपास्स्वेति। स यो मनो ब्रह्मेत्युपास्ते यावन्मनसो गतं तत्रास्य यथाकामचारो भवति यो मनो ब्रह्मेत्युपास्ते अस्ति भगवः! मनसो भूय इति? मनसो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ३ ॥

वाचो भूयः किम्? इत्यत आह—**मन** इति। मननविषयमन्तःकरणं **मनो वाव वाचो भूयः**। तन्मनो हि वक्तव्यार्थे वाचं प्रेरयति। तेन वाङ्मनस्यन्तर्भवति। यद्यदन्तर्भवति तत्तद्व्यापकं सत् भूयो भवति। **यथा वै** लोके **द्वे वामलके** फले **द्वे वा कोले** बदरफले **द्वौ वाक्षौ** विभीतकफले **मुष्टिरनुभवति** फलापेक्षया मुष्टेर्व्यापकत्वात्। **एवमामलकादिस्थानीयवाचं च नाम च मनोऽनुभवति। यदा** यस्मिन् काले **स** पुरुषो **मनसा मनस्यति** मननव्यापारवान् भवति। तत्कथम्? इत्यत्र **मन्त्रानधीयीय** उच्चारयेयमिति विवक्षित्वाथाधीते। तथा **कर्माणि कुर्वीयेति** चिकीर्षाबुद्धिपूर्वकमथ **कुरुते। पुत्रांश्च पशूंश्चेच्छेयेति** तदाप्त्युपायेनाथेच्छते इच्छया पुत्रादीन् प्राप्नोति। **इमं च लोकममुं** चोपायतः **इच्छेयेति** तदाप्त्युपायानुष्ठानम्। अतः **अथेच्छते। मनो ह्यात्मा** कर्तृत्वादेर्मनोनिमित्तत्त्वात्। **मनो हि लोकः** लोकव्यापृतेस्तदायत्तत्वात्। **मनो हि ब्रह्म** मनोवृत्तितानवस्य ब्रह्माप्त्युपायत्वात्। यस्मादेवं तस्मात् **मनः उपास्स्वेति। स यो मन** इत्यादि समानम् ॥ ३ ॥

संकल्प एव मनसो भूयान् इत्युपासनम्

संकल्पो वाव मनसो भूयान् यदा वै संकल्पयतेऽथ मनस्यति अथ वाचमीरयति तामु नाम्नि ईरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि। तानि ह वा एतानि संकल्पैकायनानि संकल्पात्मकानि संकल्पे प्रतिष्ठितानि समकॢप्तां द्यावापृथिवी समकल्पेतां

वायुश्चाकाशं च समकल्पन्तापश्च तेजश्च तेषाꣳ संक्लृप्त्यै वर्षꣳ संकल्पते वर्षस्य संक्लृप्त्या अन्नꣳ संकल्पतेऽन्नस्य संक्लृप्त्यै प्राणाः संकल्पन्ते प्राणानाꣳ संक्लृप्त्यै मन्त्राः संकल्पन्ते मन्त्राणाꣳ संक्लृप्त्यै कर्माणि संकल्पन्ते कर्मणाꣳ संक्लृप्त्यै लोकः संकल्पते लोकस्य संक्लृप्त्यै सर्वꣳ संकल्पते स एष संकल्पः संकल्पमुपास्स्वेति। स यः संकल्पं ब्रह्मेत्युपास्ते क्लृप्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिध्यति यावत्संकल्पस्य गतं तत्रास्य यथाकामचारो भवति यः संकल्पं ब्रह्मेत्युपास्ते अस्ति भगवः! संकल्पाद्भूय इति? संकल्पाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ४ ॥

मनसो भूयान् कः? इत्यत आह— **सङ्कल्प** इति। **सङ्कल्पो वाव मनसो भूयान्** सङ्कल्पस्य कर्तव्याकर्तव्यविषयविभागसमर्थत्वात्। यदेदं कर्तुं युक्तमयुक्तमिति **सङ्कल्पयतेऽथ मनस्यति** मन्त्रानधीयीयेत्यादिमननं करोति। **अथ** मन्त्राद्युच्चारणे **वाचमीरयति**। नामोच्चारणे **ताञ्च वाचमीरयति**। **नाम्नि मन्त्राः** सर्वे **एकं भवन्ति**। नामसामान्ये शब्दविशेषाः समर्प्यन्ते। विशेषस्य सामान्येऽन्तर्भूतत्वात्। **मन्त्रेषु कर्माण्येकीभवन्ति**। वैदिकः मन्त्रप्रकाशितानि हि कर्माणि क्रियन्ते। नामन्त्रकं कर्मास्ति "न कर्म मन्त्ररहितं" इति श्रुतेः। लोके त्रयीविहितं कर्मेति प्रसिद्धम्। ऋगादिवेदत्रयं त्रयीशब्दार्थः। "मन्त्रेषु कर्माणि कवयो यान्यपश्यन्" इति श्रुतेः। **तानि ह वा एतानि** मनआदीनि **सङ्कल्पैकायनानि** तेषां सङ्कल्पपर्यवसायित्वात्। **सङ्कल्पात्मकानि** तेषामुत्पत्तौ सङ्कल्पातिरेकेण स्थित्यभावात्। स्थितौ **सङ्कल्पे प्रतिष्ठितानि**। **समक्लृपतां द्यावापृथिवीति** द्यावापृथिव्योः सङ्कल्पेनैव निश्चलतया लक्षितत्वात्। द्यावापृथिव्यावीश्वरेण निश्चलतया

संक्लृप्ते इति वा सङ्कल्पः स्तूयते। सङ्कल्पं कृतवत्याविव **समकल्पेताम्**। अपि च **वायुश्चाकाशश्च**। **समकल्पन्त**—चलाचलत्वेन सङ्कल्पिता इत्यर्थः—स्वेन रूपेणापश्च तेजश्च निश्चलानि लक्ष्यन्ते। यतस्तेषां द्यावापृथिव्यादीनां **सङ्क्लृप्त्यै** सङ्कल्पनिमित्तं **वर्षं सङ्कल्पते** समर्थीभवति। तथा **वर्षस्य संक्लृप्त्या अन्नं सङ्कल्पते** अन्नस्य वर्षनिमित्तत्वात्। **अन्नस्य संक्लृप्त्यै प्राणाः सङ्कल्पन्ते** प्राणानामन्नायत्तत्वात्। तत्**प्राणानां संक्लृप्त्यै मन्त्राः सङ्कल्पन्ते**। प्राणवान् हि मन्त्रानधीते। **मन्त्राणां संक्लृप्त्यै** अग्निहोत्रादि**कर्माणि सङ्कल्पन्ते** मन्त्रप्रकाशित**कर्मणां** सफलत्वात्। **कर्मणां संक्लृप्त्यै लोकः सङ्कल्पते** लोकस्य कर्मफलरूपत्वात्। **लोकस्य संक्लृप्त्यै सर्वं** जगत् **सङ्कल्पते**। यद्यत्फलवत् तत्तत् सङ्कल्पनिमित्तम्। यत एवंविशिष्ट **एष सङ्कल्पोऽतः सङ्कल्पमुपास्स्वेत्युक्त्वा** विद्याफलेन प्ररोचयति—**स यः सङ्कल्पं ब्रह्मबुद्धया उपास्ते स** विद्वान् धात्रा फलत्वेन **क्लृप्तान् वै लोकान्** संकल्पितानध्रुवापेक्षया **ध्रुवान्** नित्यान् ध्रुवश्च लोकी तद्दृष्ट्या पशुपुत्राद्युपकरणवत् **प्रतिष्ठितान्** आत्मीयोपकरणसंपत्त्या स्वयं चापि तत्र **प्रतिष्ठितः** अमित्रादिवैरल्या**दव्यथमानान्** स्वयम**प्यव्यथमानस्सन् अभिसिद्धयति** प्राप्नोति। **यावत् सङ्कल्पस्य गतं** यावत् स्वसङ्कल्पनाशो भवति तावत् **तत्रास्य यथाकामचारो भवति**। **य** इत्यादि पूर्ववत् ॥ ४ ॥

चित्तमेव संकल्पात् भूय इत्युपासनम्

**चित्तं वाव संकल्पाद्भूयो यदा वै चेतयते अथ संकल्पयते अथ मनस्यति अथ वाचमीरयति तामु नाम्नि ईरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि। तानि ह वा एतानि चित्तैकायनानि चित्तात्मानि चित्ते प्रतिष्ठितानि तस्मात् यद्यपि बहुवित् अचित्तो भवति नायमस्तीत्येवैनमाहुः यदयं वेद यद्वा अयं विद्वान् नेत्थमचित्तः स्यादिति अथ यद्यल्पवित् चित्तवान् भवति तस्मा एव उत शुश्रूषन्ते**

चित्तꣳ ह्येवैषामेकायनं चित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति । स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान् वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति यावच्चित्तस्य गतं तत्रास्य यथाकामचारो भवति यश्चित्तं ब्रह्मेत्युपास्ते अस्ति भगवः ! चित्ताद्भूय इति ? चित्ताद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ९ ॥

सङ्कल्पात् किं भूयः ? इत्यत आह— चित्तमिति । प्राप्तकालानुरूपं यत् चेतयितृ तच्चित्तं वाव संङ्कल्पात् भूयः । यदा वै इदमेवमुपस्थितमिति चेतयते तदादानाय संङ्कल्पयते । अथ मनस्यतीत्यादि पूर्ववत् । तानि सङ्कल्पादिकर्मफलान्तादीनि तत्प्रलये चित्तैकायनानि । उत्पत्तौ चित्तात्मानि । स्थितौ चित्ते प्रतिष्ठितानि । यस्माच्चित्तं सङ्कल्पादिमूलं तस्माद्यद्यपि बहुवित् सकलज्ञोऽपि सन् अचित्तो भवति चेतयितृत्ववैरल्यात्, लौकिकास्तं विद्यमानमपि नायमस्तीत्येवैनमाहुः । तदधीतमपि व्यर्थमिति कथयन्ति । यदि विद्वानेवमचित्तः स्यात् तच्छ्रुतमप्यश्रुतमेवेति भावः । अथाल्पविदपि यदि चित्तवान् भवति तस्मा एव तदुक्तार्थग्रहणायैव उतापि शुश्रूषन्ते तत एव श्रोतुमिच्छन्ति । यस्मात् चित्तं ह्येवैषां संकल्पादीनामेकायनं इत्यादि पूर्ववत् । चित्तमुपास्स्वेत्यादि समानम् ॥ ९ ॥

ध्यानमेव चित्ताद्भूय इत्युपासनम्

ध्यानं वाव चित्ताद्भूयो ध्यायतीव पृथिवी ध्यायतीवान्तरिक्षं ध्यायतीव द्यौर्ध्यायन्तीवापो ध्यायन्तीव पर्वता ध्यायन्तीव देवमनुष्याः तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानापादांशा इवैव ते भवन्ति अथ येऽल्पाः कलहिनः पिशुना

उपवादिनस्तेऽथ ये प्रभवो ध्यानापादाꣳशा इवैव ते भवन्ति ध्यानमुपास्स्वेति । स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्ते अस्ति भगवः! ध्यानाद्भूय इति? ध्यानाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ६ ॥

चित्तात् किं भूयः? इत्यत आह—**ध्यानमिति**। शास्त्रोक्तार्थविजातीयानन्तरितदेवतालम्बनाचलप्रत्ययसन्तानतया मनस एकाग्रतया लक्ष्यैकतानत्वं **ध्यानं वाव चित्ताद्भूयः**। यथा योगी ध्यानफलाभिलाषया निश्चलो भवति तथा **पृथिवी ध्यायतीव** निश्चला दृश्यते। **ध्यायतीवान्तरिक्षमि**त्यादि समानमन्यत्। देवाश्च मनुष्याश्च **देवमनुष्याः**। यद्वा—धर्मसाम्यात् मनुष्या एव देवाः शमादिगुणसंपन्नत्वात्। ते देवभावं न जहति। यस्मादेवं ध्यानमेतादृशं **तस्मात् य** इह लोके धनतो गुणतो विद्यया **मनुष्याणां महत्तां प्राप्नुवन्ति** स्वार्जितधनादिभिर्महत्त्वं लभन्ते। ध्यानस्य पादोऽवयवः कला येषां ते ध्यानफललाभकलावन्त **इवैव ते भवन्ति** निश्चला इव उपलक्ष्यन्ते। **अथ ये** पुनरल्पाः क्षुद्रा धनादिलेशवैरल्यात् **कलहिनः** कलहोत्सुकाः **पिशुनाः** परदोषप्रकाशका **उपवादिनः** परस्वभावमनुसृत्य वदनशीला भवन्ति, **अथ ये** धनादिनिमित्तमहत्त्वं प्राप्ता विद्याचार्यराजेश्वरादयः ते परान् परिभवं कुर्वन्तोऽपि सन्तः **ध्यानापादांशा इवैव ते भवन्ती**त्युक्तार्थमेतत्। ध्यानस्य माहात्म्यमीदृशम्। यतः फलतोऽपि चित्तापेक्षया ध्यानं भूयः अतो **ध्यानमुपास्स्वे**त्युक्तार्थम् ॥ ६ ॥

विज्ञानमेव ध्यानाद्भूय इत्युपासनम्

विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं

पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यां दिवं च पृथिवीं च वायुं चाकाशं चापश्च तेजश्च देवाꣳश्च मनुष्याꣳश्च पशूꣳश्च वयाꣳसि च तृणवनस्पतीन् श्वापदान्याकीटपतङ्गपिपीलकं धर्मं चाधर्मं च सत्यं चानृतं च साधु चासाधु च हृदयज्ञं चाहृदयज्ञं चान्नं च रसं च इमं च लोकममुं च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति । स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै स लोकान् ज्ञानवतोऽभिसिद्ध्यति यावद्विज्ञानस्य गतं तत्रास्य यथाकामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्ते अस्ति भगवः! विज्ञानाद्भूय इति? विज्ञानाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ७ ॥

ध्यानादपि किं भूयः? इत्यत आह—**विज्ञानमि**ति । शास्त्रीयविषयकज्ञानं **विज्ञानं वाव ध्यानाद्भूयः** विज्ञानस्य ध्यानकारणत्वात् । कथं पुनः तद्ध्यानकारणम्? इत्यत आह—**विज्ञानेने**ति । अयं ऋग्वेद इत्यादि प्रमाणतया **विज्ञानेनैव विजानाति** । **यजुर्वेद**मित्यादि समानम् । पश्चार्धांश्च शास्त्रप्रमाणसिद्धौ धर्माधर्मौ सत्यासत्ये चाक्षुषाचाक्षुषे । शिष्टमुक्तार्थम् । एतत्सर्वं **विज्ञानेनैव विजानाति** । यतो विज्ञानस्य ध्यानाद्भूयस्त्वमतो **विज्ञानमुपास्स्वेति** । उपासनाफलं—येषु लोकेषु विज्ञानं विद्यते तान् **विज्ञानवतो वै स लोकान् ज्ञानवतश्चाभिसिद्ध्यति** प्राप्नोति । **यावद्विज्ञानस्ये**त्यादि पूर्ववत् ॥ ७ ॥

बलमेव विज्ञानाद्भूय इत्युपासनम्

बलं वाव विज्ञानाद्भूयः अपि ह शतं विज्ञानवतामेको बलवानाकम्पयते स यदा बली भवति अथ उत्थाता भवति उत्तिष्ठन्

परिचरिता भवति परिचरन्नुपसत्ता भवति उपसीदन् द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति कर्ता भवति विज्ञाता भवति बलेन वै पृथिवी तिष्ठति बलेनान्तरिक्षं बलेन द्यौर्बलेन पर्वता बलेन देवमनुष्या बलेन पशवश्च वयांसि च तृणवनस्पतयः श्वापदान्या-कीटपतङ्गपिपीलकं बलेन लोकस्तिष्ठति बलमुपास्स्वेति । स यो बलं ब्रह्मेत्युपास्ते यावद्बलस्य गतं तत्रास्य यथाकामचारो भवति यो बलं ब्रह्मेत्युपास्ते अस्ति भगवः! बलाद्भूय इति? बलाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ८ ॥

विज्ञानादपि किं भूयः? इत्यत आह—**बलमिति**। अन्ननिमित्तमनसो विज्ञेयवस्तुप्रतिभानसामर्थ्यं **बलं वाव विज्ञानात् भूयः**। अत एवोक्तं अनश्नतः ऋगादीनि "न वै मा प्रतिभान्ति" इति। अतो **विज्ञानवतामपि शतमेको बलवानाकम्पयते**। यथा मत्तगज एकोऽपि मनुष्यशतमाकम्पयते तथेत्यर्थः। अन्नादिनिमित्ततो **यदायं बली भवति अथ उत्थाता** उत्थानस्य कर्ता **भवति**। **उत्तिष्ठन्** स्वाचार्यादेः **परिचरिता** शुश्रूषणकर्ता **भवति**। **परिचरन्नुपसत्ता**न्त-रङ्गो **भवति**। **उपसीदन्** एकाग्रतया गुरूक्तद्रष्टा **भवति**। तदुक्तश्रोता **भवति**। तत उपपत्तितो **मन्ता भवति**। मननात् **बोद्धा भवति**। तदुक्तार्थकर्तानुष्ठाता **विज्ञाता** विज्ञानफलानुभविता च **भवती**त्यर्थः। **बलेन वै पृथिवी तिष्ठती**त्यादि स्पष्टार्थम् ॥ ८ ॥

अन्नमेव बलात् भूय इत्युपासनम्

अन्नं वाव बलाद्भूयः तस्माद्यद्यपि दश रात्रीर्नाश्नीयात् यद्यु ह जीवेत् अथवाद्रष्टाश्रोतामन्ताबोद्धाकर्ताविज्ञाता भवति अथान्नस्यायै द्रष्टा भवति श्रोता भवति मन्ता भवति बोद्धा भवति

कर्ता भवति विज्ञाता भवति अन्नमुपास्स्वेति । स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान् पानवतोऽभिसिध्यति यावदन्नस्य गतं तत्रास्य यथाकामचारो भवति योऽन्नं ब्रह्मेत्युपास्ते अस्ति भगव ! अन्नाद्भूय इति? अन्नाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ९ ॥

बलादपि किं भूयः ? इत्यत आह—**अन्नमिति । अन्नं वाव बलात् भूयः** अन्नस्य बलहेतुत्वात् । तत्कथम् ? यस्मादन्नं बलहेतुः **तस्मात् यद्यपि** कश्चित् **दश रात्रीर्नाश्नीयात्** सोऽन्ननिमित्तबलहान्या म्रियते । **यदि उ ह जीवेत्** , मासमप्यनश्नन्तो जीवन्तो दृश्यन्ते । **अथवा** स जीवन्नपि गुरूक्ताद्रष्टा **अश्रोतेत्यादि** पूर्वविपरीतं सर्वं **भवति । अथ** यदा बहून्यहानि अनशितो दर्शनादिक्रियासमर्थः सन् अन्नस्यागमनं आयो यस्य विद्यते सोऽन्नस्यायी । आयीत्येतत् वर्णव्यत्ययेन । अथान्नस्यायै इति पाठः । एवमेव द्रष्टेत्यादि कार्यश्रवणात् । अन्नोपयोगे दृश्यते हि दर्शनादिसामर्थ्यम् । न हि तदभावे दृश्यते । यत एवमतो**ऽन्नमुपास्स्वे**ति । उपासनाफलं—**अन्नवतः** प्रभूतान्नान् **वै लोकान्** तथा **पानवतः** अन्नपानाभ्यां नित्यसंयुक्तान् लोकान् **अभिसिध्यती**त्यादि समानमन्यत् ॥ ९ ॥

आप एवान्नात् भूयस्य इत्युपासनम्

आपो वाव अन्नाद्भूयस्यः तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयो भविष्यतीति अथ यदा सुवृष्टिर्भवति आनन्दिनः प्राणा भवन्ति अन्नं बहु भविष्यतीति आप एवेमा मूर्ता येयं पृथिवी यदन्तरिक्षं यत् द्यौः यत् पर्वता यद्देवमनुष्या यत्पशवश्च वयाꣳसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपील-

कमाप एवेमा मूर्ता अप उपास्स्वेति। स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान् कामाꣳस्तृप्तिमान् भवति यावदपां गतं तत्रास्य यथाकामचारो भवति योऽपो ब्रह्मेत्युपास्ते अस्ति भगवः! अद्भ्यो भूय इति? अद्भ्यो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ १० ॥

अन्नाद्भूयस्य: का:? इत्यत आह—**आप** इति। **आपो वाव अन्नात् भूयस्य:** अपामन्नकारणत्वात्। यस्मादेवं **तस्मात् यदा** सस्यहिता **सुवृष्टिर्न भवति** तदा **प्राणा:** प्राणिनो **व्याधीयन्ते** दु:खिनो भवन्ति। किन्निमित्तम्? अस्मिन्नब्देऽ**न्नं कनीयो**ऽल्पतरं **भविष्यति इति। अथ** पुनर्य**दा सुवृष्टिर्भवति** तदा**नन्दिनो** हृष्टा: **प्राणा भवन्ति अन्नम**प्संपत्त्या **बहु भविष्यतीति। आप एव इमा** मूर्तिभेदपरिणतत्वेन **मूर्ता** उच्यन्ते— **येयं पृथिवी**त्यादि। **आप एव इमा मूर्ता** अतोऽ**प उपास्स्वेति**। फलम्—**स योऽपो ब्रह्मेत्युपास्ते** काम्यन्त इति **सर्वान्** मूर्तिमत: **कामानाप्नोति**। तत: **तृप्तिमांश्च भवति**। समानमन्यत् ॥ १० ॥

तेज एवाद्भ्यो भूय इत्युपासनम्

तेजो वाव अद्भ्यो भूयः तद्वा एतद्वायुमागृह्याकाशमभितपति तदाहुर्निशोचति नितपति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिराह्रादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाथापः सृजते तेज उपास्स्वेति। स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान् भास्वतोऽपहततम-

स्कानभिसिध्यति यावत्तेजसो गतं तत्रास्य यथाकामचारो भवति यस्तेजो ब्रह्मेत्युपास्ते अस्ति भगवः! तेजसो भूय इति? तेजसो वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ ११ ॥

अद्भ्यः किं भूयः? इत्यत आह—तेज इति। तेजो वाव अद्भ्यो भूयः तेजसः अप्कारणत्वात्। कथं? यस्मादब्योनिस्तेजः तस्माद्वा **एतत्** तेजो **वायुमागृह्य** निश्चलीकृत्या**काशमभितपति** अभितस्तपति यदा तदाहुर्लौकिकाः **निशोचति** सामान्येन सन्तपयति। यतो देहं **नितपति** अतो **वर्षिष्यति वा इति** प्रसिद्धं लोके। कारणोदयतः कार्यं भविष्यतीति दर्शनवन्त आहुरित्यर्थः। **तेज एव तत्पूर्वं दर्शयित्वाथापः सृजते** सृजति। अतोऽद्भ्यो भूयस्तेजः। किञ्च **तदेतत्तेजः** स्तनयित्नुरूपेण वर्षहेतुर्भवति। तत्कथम? इति। ऊर्ध्वगाभिस्तिर्यग्गाभिः **विद्युद्भिश्च** सह **आह्रादाः** स्तनयित्नुशब्दा**श्चरन्ति**। **तस्मात्** तन्निमित्तदर्शिनो लौकिका **आहुः**। **विद्योतते स्तनयती**त्याद्युक्तार्थमन्यत्। **तेज उपास्स्वेति**। तत्फलं—**तेजस्वी वै स** भवति। तेजस्वत एव **लोकान् भास्वतः** प्रकाशवतोऽ**पहततमस्कान्** बाह्याध्यात्मिकज्ञानाद्यपनीततमस्का**नभिसिध्यति**। शिष्टं स्पष्टम् ॥ ११ ॥

आकाश एव तेजसो भूयानित्युपासनम्

आकाशो वाव तेजसो भूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निः आकाशेनाह्वयत्याकाशेन शृणोत्याकाशेन प्रतिशृणोत्याकाशे रमत आकाशे न रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति। स य आकाशं ब्रह्मेत्युपास्ते आकाशवतो वै स लोकान् प्रकाशवतोऽसंबाधानुरुगायवतोऽभिसिध्यति यावदाकाशस्य गतं तत्रास्य यथाकामचारो भवति य

आकाशं ब्रह्मेत्युपास्ते अस्ति भगवः! आकाशाद्भूय इति? आकाशाद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ १२ ॥

तेजसो भूयान् कः? इत्यत आह—**आकाश** इति। **आकाशो वाव तेजसो भूयान्**। आकाशस्य वायुसहिततेजःकारणत्वात्। कथं? **आकाशे वै** तेजोरूपावुभौ **सूर्याचन्द्रमसौ विद्युन्नक्षत्राण्यग्निश्च**। यत् यदन्तर्वर्ति तदल्पं "तदधिकरणं भूयः" इति प्रसिद्धेः। किंच अन्यमन्य **आकाशेनाह्वयति**। आहूतश्चेतर **आकाशेन** प्रति**शृणोति**। **आकाशेन** अन्योक्तशब्दमन्यः **प्रतिशृणोति**। अन्योन्य**माकाशे रमते** क्रीडति सर्वम्। तथा **न रमते च** अन्नबन्ध्वादिवियोगे। मूर्तजात**माकाशे जायते**। तथाकाशमभिलक्ष्याङ्कुरादि **जायते** न हि प्रतिलोमतः। मूर्तै**नाकाशं जायते**। यत एवमत **आकाशमुपास्स्वेति**। तत्फलं—स विद्वाना**काशवतो वै** अवकाशबहुलान् **लोकान्** प्रकाशाकाशयोर्नित्यसंबन्धात् **प्रकाशवतश्च** लोकानसंबाधानन्योन्यसंबाधरहितानु**रुगायवतो** विस्तीर्णगतीन् लोकान**भिसिध्यति**। उक्तार्थमितरत् ॥ १२ ॥

स्मर एव आकाशात् भूयान् इत्युपासनम्

स्मरो वाव आकाशाद्भूयान् तस्माद्यद्यपि बहव आसीरन्न स्मरन्तो नैव ते कंचन शृणुयुः न मन्वीरन् न विजानीरन् यदा वाव ते स्मरेयुरथ शृणुयुरथ मन्वीरन् अथ विजानीरन् स्मरेण वै पुत्रान् विजानाति स्मरेण पशून् स्मरमुपास्स्वेति। स यः स्मरं ब्रह्मेत्युपास्ते यावत्स्मरस्य गतं तत्रास्य यथाकामचारो भवति यः स्मरं ब्रह्मेत्युपास्ते अस्ति भगवः! स्मराद्भूय इति? स्मराद्वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ १३ ॥

आकाशादपि भूयान् कः? इत्यत आह—**स्मर** इति। अन्तःकरणधर्मस्मरणव्यापारो हि **स्मरो वाव आकाशात् भूयान्**। स्मरणमित्यत्र स्मर इति लिङ्गव्यत्ययः छान्दसः। स्मर्तुः स्मरणे सति आकाशादि सर्वमर्थवत्। असति स्मरणे सदप्यसदेव। यस्माद्यद्यपि **बहवः** समुदिताः एकस्मिन्**नासीरन्**नुपविशेयुः, यद्यासीनास्ते परस्परभाषणं **न स्मरन्तश्चेत् नैव ते कञ्चन** शब्दं **शृणुयु**स्तथा **न मन्वीरन्**। स्मृत्यभावान्न **जानीरन्**। यदा **वाव ते** स्मर्तव्यं **स्मरेयुः अथ शृणुयुः** श्रोतव्यम्। **अथ** मन्तव्यं **मन्वीरन्**। **अथ** विज्ञातव्यं **विजानीरन्**। एते मम पुत्रा इति **स्मरेण वै पुत्रान्** विजानाति। तथा **स्मरेण पशून्**। अतः स्मरस्य भूयस्त्वात् **स्मरमुपास्स्वे**त्याद्युक्तार्थम्॥ १३॥

आशैव स्मरात् भूयसीत्युपासनम्

आशा वाव स्मराद्भूयसी आशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्रांश्च पशूंश्च इच्छते इमं च लोकममुं चेच्छते आशामुपास्स्वेति। स य आशां ब्रह्मेत्युपास्त आशयास्य सर्वे कामाः समृध्यन्ति अमोघा ह्यस्याशिषो भवन्ति यावदाशाया गतं तत्रास्य यथाकामचारो भवति य आशां ब्रह्मेत्युपास्ते अस्ति भगवः! आशाया भूय इति? आशाया वाव भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति॥ १४॥

स्मराद्भूयसी का? इत्यत आह—**आशे**ति। अप्राप्तवस्तुविषयकतृष्णा ह्य**आशा वाव स्मरात् भूयसी**। कथं भूयस्त्वमाशायाः? स्मर्तव्यं स्मरन्नसौ **स्मरो** भवति। अतोऽय**माशेद्धः** आशया वर्धितः सन् ऋगादीन् **मन्त्रानधीते**। तदर्थानुरोधेन **कर्माणि कुरुते**। तत्फलाशयैव **पुत्रांश्च**

**पशूंश्च** कर्मफलभूतानि **इच्छते**ऽभिवाञ्छति। आशयेद्धस्सन् **इमं च लोकममुं चेच्छते** तत्तदुचितसाधनेनेत्यर्थः। स्मरादिनामपर्यन्तं जगच्चक्रमाशापाशबद्धम्। अत **आशामुपास्स्व**। तत्फलं तु—आशाब्रह्मविदः **सर्वे कामाः समृध्यन्ति। अमोघा ह्यस्याशिषः** सर्वा **भवन्ति** चिन्तितकार्यार्थसिद्धिर्भवतीत्यर्थः। शिष्टं पूर्ववत् ॥ १४ ॥

प्राण एव आशाया भूयानित्युपासनम्

प्राणो वा आशाया भूयान् यथा वा अरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वꣳ समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणो ह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्यः प्राणो ब्राह्मणः। स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाचार्यं वा ब्राह्मणं वा किंचित् भृशमिव प्रत्याह धिक् त्वा अस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा वै त्वमसि भ्रातृहा वै त्वमसि स्वसृहा वै त्वमसि आचार्यहा वै त्वमसि ब्राह्मणहा वै त्वमसीति। अथ यद्यप्येनानुत्क्रान्तप्राणान् शूलेन समासं व्यतिषं दहेत् नैवैनं ब्रूयुः पितृहासीति न मातृहासीति न भ्रातृहासीति न स्वसृहासीति नाचार्यहासीति न ब्राह्मणहासीति। प्राणो ह्येवैतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन् अतिवादी भवति तं चेत् ब्रूयुरतिवाद्यसीति अतिवाद्यस्मीति ब्रूयात् नापह्नुवीत ॥ १५ ॥

आशाया अपि भूयान् कः? इत्यत आह—**प्राण** इति। कार्यकारणत्वेन उत्तरोत्तरभूयस्तया नामाद्याशान्तमुक्तम्। तत् यत्र पर्यवसन्नं सोऽयं **प्राणो वाव**

**आशाया भूयान्**। कथं भूयस्त्वम्? इत्यत्र दृष्टान्तमाह—**यथेति**। **यथा** लोके रथचक्रारा **रथनाभौ समर्पिताः** संप्रवेशिताः **एवमस्मिन् प्राणे** यस्मिन्नादर्शादि-प्रतिबिम्बवत् नामरूपव्याकरणार्थं परदेवता प्रविष्टा। "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति। यस्तु राजप्रधानिवदीश्वरः सर्वाधिकारी तस्मिन्नेवमस्मिन् प्राणे **सर्वं समर्पितम्**। तथा च श्रुतिः "तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः स एष प्राण एव प्रज्ञात्मा" इति। यत एवमतः क्रिया-कारकफलभेदजातं सर्वं प्राण एव। न हि प्राणादतिरिक्तमस्तीति प्रकरणार्थः। यत् ददाति **प्राणः प्राणं** प्रियवस्तु स्वात्मभूतं यस्मै कस्मैचिद्वा **ददाति** तत्प्राणः **प्राणायैव ददाति**। न हि पित्राद्याख्यापि प्राणातिरेकेणास्ति। कथं तदाख्या प्राणस्य? इत्यत आह—**प्राणो ह पितेत्यादि**। पित्राद्याख्या कथं प्राणस्य इति चेन्न; आख्यासामान्यस्य प्राणायत्तत्वात्। सति प्राणे पित्रादेः पित्रादित्वम्। विपर्यये विपर्ययात्। अत एव प्राणस्य पित्रादित्वं युक्तम्। प्राणस्य हिरण्यगर्भत्वेन ईश्वराभिन्नत्वात्।

पिताहमस्य जगतो माता धाता पितामहः।

इति स्मृतेः। अत एव स यः कश्चित् पित्रादीनामन्यतमं यदि कदाचित् **भृशमिव** तत्तदननुरूपमिव त्वङ्कारादियुक्तं **प्रत्याह, तदैनं** पार्श्वस्था एवमाहुः। किमिति? **धिक्** त्वा त्वां प्रत्यस्त्विति, **पितृहा वै त्वमसीत्यादि**। **अथ यद्यप्येनानुत्क्रान्त-प्राणान्** शवभावं गतपित्रादीन् **शूलेन** साम्परायविधिना **समासं** समन्तकं एव-मसम्भवे **व्यतिषममन्तकं** वा **दहेत्**। समासव्यासादिप्रकारेण दहनमति-क्रूरकृत्यमपि देहसंबन्धतः **कुर्वाणं नैवैनं ब्रूयुः पितृहेत्यादि**। तस्मादन्वय-व्यतिरेकाभ्यां पित्राद्याख्या प्राणस्येत्यवगम्यते। यस्मादेवं तस्मात् **प्राणो ह्येवैतानि** पित्रादिचराणि तद्भोज्यस्थिराणि च **सर्वाणि भवति**। **स वा एष** प्राणविदि **एवं** फलतः **पश्यन्नेवमुपपत्तितो मन्वान एवं** दृढनिश्चयेन **विजानन् अतिवादी भवति**। अस्यातिक्रान्तनामाद्याशान्तत्वाद्यतिनामाद्या-

शान्तारोपाधिकरणतया वर्तमानप्राणोऽहमस्मीति ब्रुवाणं प्राणविदं **अतिवाद्य-सीति ब्रूयुः** । तदायं विद्वानतिवाद्यस्मीति **ब्रूयात्** । न नाहमतिवादीत्यपह्नुवीत । यतः स एष नारदः सर्वात्मानं प्राणं श्रुत्वा किमस्ति भगवः! प्राणाद्भूयः? इति प्रश्नमकृत्वा उपरराम नातःपरमस्तीति अतः प्राणो हिरण्यगर्भ ईश्वरो वा भवितुमर्हतीत्यर्थः ॥ १९ ॥

सत्यस्यैव जिज्ञास्यत्वम्

**एष तु वा अतिवदति यः सत्येनातिवदति सोऽहं भगवः! सत्येनातिवदानीति सत्यं त्वेव विजिज्ञासितव्यमिति सत्यं भगवः! विजिज्ञास इति ॥ १६ ॥**

एवं सविशेषब्रह्मज्ञानपरितुष्टं कृतार्थं मन्यमानं नारदं तदतिवदनं नामादिसा-पेक्षं मत्वा सर्वापह्नवसिद्धनिर्विशेषब्रह्मपदारोहाय तं सविशेषतः प्रच्यावयन्नाह— **एष त्विति** । परमार्थतो न हि प्राणविदतिवादीति यमहं वक्ष्यामि तं परमार्थसत्यं भूमानं न त्वं वेद । यस्तं स्वमात्रमिति वेद **एष तु वा अतिवदति** । **यः सत्येन** परमार्थे**नातिवदति** हे **भगवः!** यस्त्वां प्रपन्नः **सोऽहं** सत्येनाति-वदानि । तथा नियुनक्तु मां भगवान् यथा **सत्येनातिवदानि** । यद्येवं सत्येनातिवदितुमिच्छसि तदा **सत्यमेव तु** तावत् **विजिज्ञासितव्यमित्युक्तो** नारद आह—हे **भगवः!** त्वत्तोऽहं **सत्यं विजिज्ञासे** विशेषेण ज्ञातुमिच्छेय-मित्यर्थः ॥ १६ ॥

सत्यस्य ज्ञानलभ्यत्वम्

**यदा वै विजानाति अथ सत्यं वदति नाविजानन् सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानं त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवः! विजिज्ञास इति ॥ १७ ॥**

ज्ञानलभ्यं सत्यमित्याह—**यदेति**। **यदा वै** इदं परमार्थसत्यमिति **विजानाति अथ** स्वाज्ञदृष्टिविकल्पितासत्प्रपञ्चे सत्यसति सदेवैकं सत्यमिति **वदति**। "नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः", "प्राणा वै सत्यं" इति च विकारस्यापि सत्यतावादिश्रुतेः। इन्द्रियसापेक्षत्वेऽपि "प्राणा वै सत्यं तेषामेष सत्यं" इत्युक्त्या परमार्थसत्यप्रबोधोपायत्वात्। इह तु प्राण एव परमार्थसत्यमिति मन्वानं नारदं यत् परमार्थसत्यं भूमाख्यं तद्विज्ञापयिष्यामीति विवक्षितत्वात्। अतो **नाविजानन् सत्यं वदति**। यस्त्वेवमविजानन् सत्यं वदति सोऽयं नामादिप्राणान्तान् परमार्थसद्रूपानेव मन्यमानो वदति। न तु भूमातिरेकेण नामादयः सन्ति। अतो नाविजानन् सत्यं वदति। न च तत्सत्यं ज्ञानं च विजिज्ञासितम्। **विज्ञानं त्वेवादौ विजिज्ञासितव्यमिति**। यद्येवं **भगवः! विज्ञानं विजिज्ञास** इति ॥ १७ ॥

सत्यादिकरोत्यन्तानां पूर्वपूर्वहेतुत्वम्

यदा वै मनुतेऽथ विजानाति न अमत्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवः! विजिज्ञास इति ॥ १८ ॥

यदा वै श्रद्दधाति अथ मनुते नाश्रद्दधन्मनुते श्रद्दधदेव मनुते श्रद्धा त्वेव विजिज्ञासितव्येति श्रद्धां भगवः! विजिज्ञास इति ॥ १९ ॥

यदा वै निस्तिष्ठति अथ श्रद्दधाति नानिस्तिष्ठन् श्रद्दधाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठा त्वेव विजिज्ञासितव्येति निष्ठां भगवः! विजिज्ञास इति ॥ २० ॥

यदा वै करोति अथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवः! विजिज्ञास इति ॥ २१ ॥

सत्यादीनां करोत्यन्तानां उत्तरोत्तरेषां पूर्वपूर्वहेतुत्वं द्रष्टव्यमित्याह—**यदेति**। **यदा वै मनुते**। **यदा वै श्रद्धधाति**। **यदा वै निस्तिष्ठति**। **यदा वै करोति** इति। मन्तव्यार्थविषयं मननं **मतिः**। आस्तिक्यबुद्धिः **श्रद्धा**। गुरुशुश्रूषाद्यप्रमत्तता **निष्ठा**। इन्द्रियसंयमः चित्तैकाग्रता **कृतिः**। सत्यां हि कृतौ यथोक्तनिष्ठादीनि विज्ञानावसानानि भवन्ति ॥ १८–२१ ॥

कृतिनिष्पत्तिनिदानकथनम्

यदा वै सुखं लभते अथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति सुखं त्वेव विजिज्ञासितव्यमिति सुखं भगवः! विजिज्ञास इति ॥ २२ ॥

कृतिनिष्पत्तिनिदानं किं? इत्यत आह—**यदेति**। या उक्ता करणग्रामनिग्रहरूपिणी **यदा** सेयं कृतिः। यल्लब्धव्यमिति मया वक्ष्यमाणनिरतिशय**सुखं लभतेऽथ** निश्शेषं सुखावरणकरणग्रामापह्नवं **करोति** यथेदं दृष्टफलं सुखाकृतिः तथेहापि **नासुखं लब्ध्वा करोति**। **सुखमेव लब्ध्वा करोति**। भविष्यदपि फलं लब्ध्वेत्यर्थः। कृत्यादौ सति स्वयमेवाविर्भवति पारमार्थिकसत्यम्। तद्विज्ञानयत्नो न कार्य इत्यत आह—**सुखं त्वेव विजिज्ञासितव्यमिति**। यत्पारमार्थिकसत्यत्वेन निष्पन्नं परमसुखं तन्निष्प्रतियोगिकस्वमात्रमिति ज्ञातव्यमित्यर्थः। **सुखं भगवः! विजिज्ञास इति** ॥ २२ ॥

निरतिशयसुखस्य सूक्ष्मताभावः

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य इति भूमानं भगवः! विजिज्ञास इति ॥ २३ ॥

निरतिशयसुखस्य सूक्ष्मत्वेनाल्पतामाशङ्कयाह—**यो वा** इति। **यो वै भूमा** स्वातिरिक्तपरिच्छेदत्रयं अस्तिनास्तीतिविभ्रमापह्नवसिद्ध इति यत् **तत्सुखम्**। नामादिप्राणान्तगतसुखस्य सातिशयत्वेनाल्पत्वमाह—**नाल्पे सुखमस्तीति**। नामादिप्राणान्तगताल्पसुखावलेः स्वाज्ञानावधिकत्वेन पारमार्थिकसुखावरण-दुःखस्वरूपत्वात् तदल्पसुखदुःखापह्नवसिद्धभूमैव सुखम्। अतो **भूमा त्वेव विजिज्ञासितव्य इति। भूमानं भगवः! विजिज्ञास इति** ॥ २३ ॥

भूमाल्पयोः याथात्म्यकथनम्

**यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा अथ यत्रान्यत् पश्यति अन्यच्छृणोति अन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यꣳ स भगवः! कस्मिन् प्रतिष्ठितः? इति स्वे महिम्नि यदि वा न महिम्नीति। गोअश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीमीति होवाच अन्यो ह्यन्यस्मिन् प्रतिष्ठित इति ॥२४॥**

स्वातिरिक्तयोः भूमाल्पयोः याथात्म्यं किं? इत्यत आह—**यत्रेति**। **यत्र** यस्मिन् वस्तुतोऽवस्तुतो वाप्य**न्यत्** स्वातिरिक्तं तद्ग्राहकमन्यत्करणम्। तथा स्वातिरिक्तद्रष्टावन्यदस्तीति परमार्थदृष्टिर्न कदापि **पश्यति**। तथा **नान्यच्छृणोति**। दर्शनीयश्रोतव्यनामरूपवत् स्वाविद्यापदतत्कार्यापह्नवप्रबोधे जाते पुनः स्वातिरेकेण मन्तव्यं ज्ञातव्यं वा किमवशिष्यते? यत एवमतो नान्यन्मनुते **नान्यद्विजानाति** स्वान्यविज्ञानप्रतिषेधस्य मननप्रतिषेधपूर्वकत्वात्। एवं स्वातिरिक्तकलनातद्दर्शनश्रवणवेदनापह्नवपूर्वकं यः स्वमात्रमवशिष्यते **स भूमेति** यत् तत् भूमयाथात्म्यम्।

चिन्मात्रमेव चिन्मात्रमखण्डैकरसं रसम्।
सर्ववर्जितचिन्मात्रं ब्रह्ममात्रमसन्न हि ॥

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥
एकमेवाद्वयं ब्रह्म नेह नानास्ति किञ्चन ।
अनाख्यमनभिव्यक्तं सत् किञ्चिदवशिष्यते ॥

इति भूम्नो निष्प्रतियोगिकत्वेन स्वमात्रसिद्धितावादिश्रुतेः । स्वातिरिक्तयाथात्म्यं किं? इत्यत आह—**अथेति** । **अथ** स्वाज्ञानानन्तरं **यत्र** स्वातिरिक्ते **अन्यः अन्यत् पश्यति, अन्यः अन्यच्छृणोति, अन्यः अन्यद्विजानातीति** यत् **तदल्पं** वस्तुतः स्वातिरिक्तवैरल्यात् । तद्धि स्वातिरिक्तयाथात्म्यम् । तत्र स्वातिरिक्तयोः **यो वै भूमा** तद्याथात्म्यं **अमृतम्** । **यत्** तदतिरिक्तं तद्याथात्म्यमल्पं **मर्त्यं** स्वाज्ञानावधिकत्वात् मर्त्यमित्युक्तम् । वस्तुतस्तदपह्नवविषयतामपि नार्हतीत्यर्थः । एवं स्वातिरिक्तप्रपञ्चापह्नवसिद्धो यो भूमावशिष्यते हे **भगवः** भगवन्! **सोऽयं** भूमा **कस्मिन् प्रतिष्ठितः?** इत्युक्तवन्तं नारदं भगवान् सनत्कुमारः प्रत्याह—**स्वे महिम्नीति** । स्वस्वरूपे स्वमात्रतया प्रतिष्ठितो भूमेत्यर्थः । **यदि** स्वे स्वात्मीये माहात्म्ये नामादिप्राणान्तस्वविभूतौ वा प्रतिष्ठित इति मन्यसे तदा कस्मिन् प्रतिष्ठितः? इत्युक्तिर्मृषैव । **महिम्न्यपि** प्रतिष्ठित इति **न** वयं ब्रूमः । भूम्नः स्वमात्रत्वेन कुत्राप्यप्रतिष्ठितत्वात् । महिमा कीदृशः? इत्यत आह—**गोअश्वमिह महिमेत्याचक्षत** इति । गावश्च अश्वाश्च गोअश्वमिति द्वन्द्वैकवद्भावः । सर्वत्र गवाश्वादि महिमेति प्रसिद्धम् । चैत्रादेस्तदाश्रितत्वेन तत्प्रतिष्ठितत्वम् । यथा **हस्तिहिरण्यं दासभार्यं क्षेत्राण्यायतनानि** प्रतिष्ठाशब्दवाच्यानि तथा **नाहमेवं** चैत्रादिवत् **अन्यो ह्यन्यस्मिन् प्रतिष्ठित इति ब्रवीमीति** स **होवाच** भगवानित्यर्थः ॥ २४ ॥

भूमयाथात्म्यबुद्ध्यारोहोपायकथनम्

स एवाधस्तात् स उपरिष्टात् स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदꣳ सर्वमिति अथातोऽहङ्कारादेश

एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदꣳसर्वमिति । अथात आत्मादेश एवात्मैवाधस्तादात्मा उपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मा उत्तरत आत्मैवेदꣳ सर्वमिति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन् आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराट् भवति तस्य सर्वेषु लोकेषु कामचारो भवति । अथ येऽन्यथा अतो विदुः अन्यराजानस्ते क्षय्यलोका भवन्ति तेषाꣳ सर्वेषु लोकेषु अकामचारो भवति ॥ २५ ॥

किन्त्वहं भूमयाथात्म्यबुद्ध्यारोहोपायं ब्रवीमीत्याह— स एवेत्यादि । स्वातिरिक्तकलना यत्रापह्नवतां गता स एव भूमाधस्तादुपरिष्टात् पश्चात् पुरस्ताद्दक्षिणत उत्तरतश्च सर्वत्र स एव सर्वम् । तदतिरिक्तस्वाज्ञविकल्पिताधऊर्ध्वादिकलनायाः सम्यज्ज्ञानावधिकत्वात् । यस्माद्भूमैव स्वमात्रमवशिष्टः तस्मिन्नासौ क्वचित्प्रतिष्ठित इत्यर्थः । स एवाधस्तादिति परोक्षनिर्देशतो भूम्नोऽन्यो द्रष्टा स्यादित्यत आह—अथेति । परोक्षवन्निर्देशानन्तरं द्रष्टुरनन्यत्वप्रदर्शनार्थमहङ्कारेण भूमैव निर्दिश्यत इत्यहङ्कारादेशः ।

आत्ममात्रमिदं सर्वं आत्मनोऽन्यन्न किञ्चन ।

इति श्रुतेः । यद्वा— स एवाधस्तादिति तच्छब्देन स्वातिरिक्तसमष्टिप्रपञ्चारोपापवादाधारस्तत्पदार्थः । अस्मच्छब्देन व्यष्टिप्रपञ्चारोपापवादाधारः प्रत्यगात्मा । आत्मशब्देन तत्त्वंपदगताधेयतानिरूपिताधारादिकलनाविरलः परमात्मा उच्यत इत्यर्थः । अथवा स्वाज्ञविकल्पिताधस्तादित्यादिपरिच्छिन्नभावे सम्यग्दृष्ट्यापह्नवतां गते अथ तदहमात्मशब्दगोचरं सदेकमेवाद्वितीयं निष्प्रतियोगिकभूमब्रह्मतत्त्वं स्वमात्रमवशिष्यत इत्यर्थः ।

सर्वग्रहोपसंशान्तौ स्वयमेवावशिष्यते ।

इति खिलश्रुतेः । यः सर्वापह्नवसिद्धो भूमा निष्प्रतियोगिकस्वमात्रमिति वेद **स वा एष** विद्वानेवं भूमाल्पयोर्निष्प्रतियोगिकभावाभावरूपतया **पश्यन्** तयोराधाराधेयाभावं **मन्वानः** स्वमात्रावशेषतां **विजानन्** रतिक्रीडामिथुनहेतुस्वातिरिक्तबाह्यदेहदारादिवैरल्यात् **आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्द** इति विशेषणचतुष्टयस्यायमर्थः । स्वातिरिक्ताविद्यापदस्थूलांशप्रविभक्तव्यष्टिसमष्टितदैक्यजाग्रज्जाग्रदाद्योतृविकल्पान्तषोडशकलनागतहेयांशापह्नवसिद्धवस्तुनि स्वमात्रधिया यो रमते स **आत्मरतिः** । तथा तत्सूक्ष्मांशप्रविभक्तस्वप्नजाग्रदाद्यनुज्ञातृविकल्पान्तषोडशकलनाहेयांशापह्नवसिद्धवस्तुनि स्वमात्रतया यः क्रीडति स **आत्मक्रीडः** । तथा तद्बीजांशगतस्वापजाग्रदाद्यनुज्ञैकरसाविकल्पान्तषोडशकलनापह्नवसिद्धवस्तुनि मिथुनमैक्यमपृथग्भावो यस्य सोऽयमा**त्ममिथुनः** । तथा तत्तुर्यांशप्रविभक्ततुर्यजाग्रदाद्यविकल्पानुज्ञैकरसान्तद्वादशकलनाहेयांशापह्नवसिद्धतुर्यतुर्यात्मा स्वमात्रमिति नन्दतीत्या**त्मानन्दः** । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः । एवं विशेषणचतुष्टयविशिष्टो विद्वान् स्वमात्रतया राजत इति **स्वराट् स भवति** । जीवन्नेव स्वाराज्यपट्टाभिषिक्तो भवतीत्यर्थः । यस्य निर्विशेषभूममात्रप्रबोधो नोदेति नामादिप्राणान्तबोधो जायते **तस्य** तदुपासनामहिम्ना **सर्वेषु लोकेषु कामचारो भवति** । परिच्छिन्नदृष्टेः कामचारत्वमपि परिच्छिन्नमित्यर्थः । **अथ पुनर्येऽन्यथा** मदुक्तविपरीतात्मानं **विदुः** । अन्यो राजा स्वामी येषां **तेऽन्यराजानो भवन्ति** तेषां नामादिप्राणान्तविज्ञानवैरल्यात् । क्षय्यो लोको येषां ते क्षीणलोका भवन्तीत्यर्थः । ततस्तेषां **सर्वेषु लोकेषु अकामचारो भवति** । यथावद्भूमब्रह्मविदां तन्मात्रावस्थानलक्षणकैवल्यं तत्सोपाननामादिप्राणान्तविदां तद्भावापत्त्यनुरूपेण कामचारत्वं भूमसोपानास्पर्शिनां क्षीणलोकत्वमुक्तं भवतीत्यर्थः ॥ २९ ॥

सर्वं भूमब्रह्ममात्रमिति कथनम्

**तस्य ह वा एतस्य एवं पश्यत एवं मन्वानस्य एवं विजानत आत्मतः प्राण आत्मत आशा आत्मतः स्मर आत्मत आकाश**

आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावौ आत्मतोऽन्नम् आत्मतो बलमात्मतो विज्ञानं आत्मतो ध्यानमात्मतश्चित्तमात्मतः संकल्प आत्मतो मन आत्मतो वाक् आत्मतो नाम आत्मतो मन्त्रा आत्मतः कर्माणि आत्मत एवेदꣳ सर्वमिति । तदेष श्लोकः—

न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् ।
सर्वꣳ ह पश्यः पश्यति सर्वमाप्नोति सर्वशः ॥ इति ॥
स एकधा भवति त्रिधा भवति पञ्चधा ।
सप्तधा नवधा चैव पुनश्चैकादश स्मृतः ।
शतं च दश चैकश्च सहस्राणि च विꣳशतिः ॥

आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान् सनत्कुमारः तꣳ स्कन्द इत्याचक्षते तꣳ स्कन्द इत्याचक्षते ॥ २६ ॥

स्वाज्ञदृष्टिविकल्पितेयं प्राणादिनामान्तकलना भिन्नभिन्नापि विद्वद्दृष्ट्या एतत्सर्वं भूमब्रह्ममात्रं भवतीत्याह—तस्येति । तस्य ह वा एतस्येत्याद्युक्तविशेषणविशिष्टभूममात्रपदारूढविदुषो ब्रह्ममात्रप्रबोधात् पुरा प्राणादिनामान्तकलना स्वभिन्नवद्भाता हि । इदानीं भूममात्रप्रबोधे सति ततः प्राणादिनामान्तभिदाकदम्बमात्मत एव स्वात्मैव संवृत्तम् । "यत्र त्वस्य सर्वमात्मैवाभूत्" इति स्वातिरिक्तदर्शनाद्यसंभवश्रुतेः । किञ्च तदेतस्मिन्नर्थे **एष श्लोको** मन्त्रो भवति । भूमब्रह्मातिरिक्तं न किञ्चिदस्तीति यः पश्यति स **पश्यः** ।

भूमब्रह्मात्मवित् विद्वान् स्वातिरिक्तं किमपि नेति निश्चयतो देहसंबन्धतो **मृत्युं** मरणं जरादिरोगमाध्यात्मिकादिदुःखं वा **न** कदापि **पश्यति**। एतद्विपरीतो नपश्योऽविद्वान् देहात्मभावेन मृत्युं मरणं **रोगं** दुःखं च **न** पश्यतीति **न**, किन्तु पदे पदे पश्यति। घटीयन्त्रवदविश्रान्तं जन्ममरणादि प्राप्नोतीत्यर्थः। स एवेदं **सर्वं** आत्मैवेदं सर्वमिति यः **पश्यः** सर्वमात्मत्वेन **पश्यति** सोऽयं विद्वान् सर्वं ब्रह्म **सर्वशः सर्वप्रकारेणाप्नोति**। परमार्थतः स्वातिरिक्तसर्वाभावात् स्वयमेव स्वमात्रं भवतीत्यर्थः। किञ्च स विद्वान् स्वयं स्वाज्ञादिदृष्टिमोहे सत्यसति **एकधा** एकरूपोऽपि स्वाज्ञादिदृष्ट्या सृष्टिस्थितिप्रलयवद्विश्वाकारेण **त्रिधेव भवति**। पञ्चब्रह्मरूपेण **पञ्चधेव भवति**। तथा व्याहृतिरूपेण **सप्तधा** प्रजापतिरुद्ररूपेण **नवधा एकादशधा** चेत्याद्यनन्तभेदेन वर्तमानोऽपि स्वदृष्ट्यात्मानमतथाविधमेकमेव मन्यते स्वात्मनो निष्प्रतियोगिकाद्वैतरूपत्वात्। अथेदानीमेतादृशविद्यासाधनमुपदिशति--**आहारेति**। **आहारशुद्धौ** सत्यां सत्त्वस्यान्तःकरणस्य शुद्धिर्नैर्मल्यं भवति। **सत्त्वशुद्धौ** सत्यां **ध्रुवा स्मृतिः** अनवरतानुसन्धानं भवति। तथाविध**स्मृतिलम्भे** सति हृदयाश्रितसर्वग्र**न्थीनां विप्रमोक्षो** विनाशो भवति। यत एवमतो मुमुक्षुभिः शुद्धाहारादिनियमः कार्य इत्यर्थः। यदि विद्वान् **कृतकृत्य**स्तदा न तस्य एतादृशसाधनाकांक्षास्ति। तस्य स्वातिरिक्ताखिलग्रासत्वेन **कृतकृत्य**त्वात्। स्वज्ञदृष्ट्या रविवन्निर्लिप्तत्वादित्यत्र--

यथा रविः सर्वरसान् प्रभुङ्क्ते हुताशनश्चापि हि सर्वभक्षः।
तथैव योगी विषयान् प्रभुङ्क्ते न लिप्यते पुण्यपापैश्च शुद्धः॥
अहमन्नं सदान्नाद इति हि ब्रह्मवेदनम्।
ब्रह्मवित् ग्रसति ज्ञानात् सर्वं ब्रह्मात्मनैव तु॥

इति श्रुतेः। एवं शास्त्रार्थमशेषेणोक्त्वा श्रुतिराख्यायिकामुपसंहरति--**तस्मा** इति। श्रुत्याचार्यप्रसादलब्धज्ञानवैराग्यशुद्धोदकेन मृदितः क्षालितः ज्ञानप्रतिबन्धकरूपकषायो यस्य **तस्मै मृदितकषायाय** नारदाय स्वाज्ञान**तमसः पारं** परं परमार्थतत्त्वं **दर्शयति** दर्शितवानित्यर्थः।

उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ।
वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥

इति स्मृत्युक्तधर्मा **भगवान् सनत्कुमारः** । तद्याथात्म्यविदः सन्तः तमेव देवं सनत्कुमारं स्कन्द इत्याचक्षते कथयन्ति । तं स्कन्द इत्याचक्षते तं स्कन्द इत्याचक्षते इति द्विर्वचनं त्वध्यायपरिसमाप्तिद्योतकम् ॥ २६ ॥

इति सप्तमोऽध्यायः

---

# अष्टमोऽध्यायः

दहरोपासनाप्रकारः

अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः तस्मिन् यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यमिति । तं चेत् ब्रूयुः यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किं तदत्र विद्यते ? यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति । स ब्रूयात् यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन् समाहितमिति । तं चेत् ब्रूयुरस्मिँश्चेदिदं ब्रह्मपुरे सर्वँसमाहितँसर्वाणि च भूतानि सर्वे च

कामा यदैनज्जरामाप्नोति प्रध्वꣳसते वा किं ततोऽतिशिष्यते ? इति । स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्य हन्यत एतत्सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्मापहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पो यथा ह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति । तद्यथेह कर्मचितो लोकः क्षीयत एवमेवामुत्र पुण्यचितो लोकः क्षीयते तद्य इहात्मानमननुविद्य व्रजन्ति एतांꣳश्च सत्यान् कामाꣳस्तेषाꣳ सर्वेषु लोकेष्वकामचारो भवति अथ य इहात्मानमनुविद्य व्रजन्ति एताꣳश्च सत्यान् कामाꣳस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ १ ॥

यद्यपि षष्ठसप्तमयोः सत् एकमेवाद्वितीयं भूमब्रह्मतत्त्वं स्वातिरिक्तसर्वापह्नवमुखेन निष्प्रतियोगिकतयाभिहितं तस्य दिग्देशकालविभागविरलत्वेन स्वाज्ञानां दिग्देशादिपरिच्छिन्नभावारूढा बुद्धिर्न सहसा परमार्थसद्वस्तु विषयीकर्तुं शक्या । तदधिगमायादौ दहराद्युपासना विधातव्या मन्दानुकम्पया सत्यकामादिगुणवत्त्वं च वक्तव्यमिति विषयनिरसनहेतुब्रह्मचर्यादिसाधनं सगुणोपासकानां सुषुम्नाद्वारा परब्रह्मगतिरिति वक्तव्येत्यष्टमाध्याय आरभ्यते । दिग्देशगुणगतिफलभेदगन्धविरलं हि परमार्थभूमतत्त्वम् । तन्मन्दबुद्धीनामसदिव प्रतिभाति । तान् शनैरुपायतः सन्मात्रमपि ग्राहयिष्यामीति श्रुतिरादौ दहरोपासनाप्रकारमाचष्टे—**अथे**ति । अथेत्यारम्भार्थः संसारहेयबुद्ध्यानन्तर्यार्थो वा । **यदिदं** वक्ष्यमाणं दहरमल्पं पुण्डरीकसदृशं वेश्मेव वेश्म । हृदयस्य मध्ये लोहितं मांसपिण्डं यस्मिन् तत् **दहरं पुण्डरीकम्** । "कुमुदमिवानेकधा विकसितं" इति श्रुतेः । **अस्मिन्** द्वारपालादिमति परस्यापरस्य वा ब्रह्मणः पुरे यथा राज्ञः पुरमनेकप्रकृतिमत् तथा इदमनेकेन्द्रियान्तःकरणवृत्तिसहस्रस्वाम्यर्थकारि-

विशिष्टं हि ब्रह्मपुरं शरीरम्। यथा तत्र राज्ञो वेश्म तथास्मिन् **ब्रह्मपुरे** शरीरे **दहरं वेश्म**। तत्र हि परमपरं वा ब्रह्म उपलभ्यते। अस्मिन् स्वविकार-शुङ्गदेहे "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इत्युक्तरीत्या यस्मात् सदाख्यं ब्रह्म दर्पणजलादौ मुखसूर्यादिप्रतिबिम्बवत् प्रविष्टं श्रुतं तस्मा-**दस्मिन्** हृदयपुण्डरीकवेश्मनि बाह्यविषयहेयधिया उपरतकरणग्रामब्रह्मचर्यादि-साधनसंपन्नैर्निपुणं वक्ष्यमाणगुणविशिष्टं वा ब्रह्म उपलभ्यते इति प्रकरणार्थ-सङ्ग्रहः। **दहरो**ऽल्पतरो वेश्मनोऽल्पत्वात्तदन्तर्वर्तिनोऽप्यल्पत्वम्। **अस्मिन अन्तराकाशः** आकाशो ब्रह्मेत्यर्थः। तथा च वक्ष्यति "आकाशो ह वै नाम" इति। आकाशवदमूर्तत्वसूक्ष्मत्वसर्वगतत्वादिसामान्यात्। **तस्मिन** हृदयपुण्डरीकेऽन्त**र्मध्ये यद्विद्यते तदन्वेष्टव्यम्**। गुरुप्रसादलभ्यश्रवणाद्युपायैः **तद्वाव विजिज्ञासितव्यं** साक्षात्करणीयम्। **तं चेदे**वमुक्तवन्तमाचार्यं यद्यन्ते-वासिन एवं **ब्रूयुः यदिदमस्मिन्** परिच्छिन्न**ब्रह्मपुरे** ततोऽपि परिच्छिन्नं **दहरं पुण्डरीकं वेश्म**। ततोऽप्यल्पतरो **दहरोऽस्मिन्नन्तराकाशः**। किं तदत्र **विद्यते**? न किमपीत्यर्थः। तत्र **किमन्वेष्टव्यम्**? किं वा **विजिज्ञासितव्यम्**? तेन किं वा प्रयोजनम्? एवमुक्त**स्स** आचार्योऽब्रवीदिति श्रुतेः वचनमेतत्। हार्दाकाशस्याल्पत्वं यदुक्तं तदसत् तस्यापरिच्छिन्नत्वात्। यद्दहराकाशमल्पं मन्यध्वे शृणुत तत्रोच्यते—हार्दाकाशपरिच्छिन्नमन्तःकरणं विद्यते। विशुद्धे तस्मिन्नुपसंहृतकरणानां तत्र हि ब्रह्म उपलभ्यते। अत एव दहरोऽस्मिन्नन्तराकाश इति ब्रूमः। तत्रत्यव्योम्नः परिच्छिन्नत्वं तदुपाधिनिमित्तम्। वस्तुतस्तु **यावान् वै** परिमाणतो **भौतिकाकाशः तावानेषोऽन्तर्हृदय आकाशः** यत्रान्वेष्टव्यं विजिज्ञासितव्यं वस्त्वस्तीत्युक्तम्। न हि तद्भूताकाशवत् परिच्छिन्नम्। तद्विना नीरूपि ब्रह्म दृष्टान्तवैरल्यात्। नाप्याकाशसमं ब्रह्म भवितुमर्हति ब्रह्मणोऽव्यक्ताकाशादेरपि कारणत्वात्। निरङ्कुशविभु ब्रह्मेत्यत्र "तस्माद्वा एतस्मादात्मन आकाशः संभूतः", "एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च", "येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च", "सर्वमावृत्य तिष्ठति" इत्यादिश्रुतेः स्मृतेश्च। किञ्च

ब्रह्माकाशेऽस्मिन्नुभे **द्यावापृथिवी** स्वाविद्योपाधिवैशिष्ट्यादन्तरेव **समाहिते**। तत **उभावग्निश्च वायुश्चे**त्यादि रथनाभावरा इवास्मिन् सर्वं प्रतिष्ठितमित्यर्थः। **यच्चा-स्या**त्मन इहात्मीयत्वेनास्ति **यच्चैवं नास्ति** तत्सर्वमात्मन्येव **समाहितमिति**। **तं चेदेवमुक्तवन्तं अन्तेवासिनो ब्रूयुः**। किमिति? **यदिदमस्मिन् ब्रह्मपुरे** तदुपलक्षितान्तराकाशे **सर्वं समाहितम्**। **सर्वाणि च भूतानि सर्वे च कामाः** समाहिताः। आचार्येण कामा नानुगृहीता इति चेन्न; सर्वं समाहितमित्युक्तितः कामानां गृहीतत्वात्। **यदा** यस्मिन् काले **एतत्** ब्रह्मपुराख्यं शरीरं **जरां** वलीपलितादिप्रभववयोहानिं **प्राप्नोति** शस्त्रादिना **वा प्रध्वंसते** विनश्यति घटनाशे घटाश्रितक्षीरादिवत् **किं ततोऽतिशिष्यते**? देहनाशे तदाश्रयमुत्तरोत्तरं पूर्वपूर्वनाशान्नश्यति। ततः किमवशिष्यते? न किञ्चनेत्येवमन्तेवासिभिराक्षिप्तस्स आचार्यो **ब्रूयात्**। यस्मिन् सर्वं समाहितं तत्कथं ब्रह्म? **अस्य देहस्य जरया जीर्यति** देहवत् **न** विक्रियत इत्यर्थः। **न चास्य वधेन हन्यते** आकाशादेरपि सूक्ष्मत्वात्। देहेन्द्रियादिदोषैर्न स्पृश्यत इत्यर्थः। "अशब्दमस्पर्शमरूपमव्ययम्" इति श्रुतेः। **एतत्सत्यं ब्रह्म** यत् ब्रह्मोपलब्ध्यर्थं **पुरं** तदनृतं वाचारम्भणमात्रं मिथ्याभूतदेहशुङ्गे ब्रह्मोपलभ्यत इति। तस्य सर्वव्यवहारास्पदत्वेन व्यावहारिकदृष्ट्या सत्यत्वमङ्गी-कृत्या**स्मिन्** हृदयोपलक्षितब्रह्मपुरे ये बहिः भवद्भिः प्रार्थ्यन्ते ते **कामाः** स्वात्मन्येव **समाहिताः**। अतो यूयं बाह्यकामतृष्णां त्यक्त्वा तत्प्राप्त्यु-पायमेवानुतिष्ठतेत्यर्थः। यत् भवदात्मस्वरूपं वक्ष्यमाणं तच्छृणुत। किं तद्वक्ष्यमाणम्? इत्यत्र **एष हि** वक्ष्यमाणो भव**दात्मा**। स किंविशेषणविशिष्टः? इत्यत्र यस्य धर्माधर्माख्यपाप्मापहतो विनाशितः सोऽय**मपहतपाप्मा**। नास्य जरया एतज्जीर्यति न वधेनास्य हन्यते इत्युक्त्या **विजरो विमृत्यु**रिति पदद्वयं व्याख्यातम्। तत् किमर्थं पुनरुच्यते? देहसंबन्धतो जरामृत्युसंबन्धाभावेऽपि प्रकारान्तरेण ताभ्यां संबन्धः स्यादित्याशङ्कानिरसनार्थत्वात्। मनस्सन्ताप-राहित्यात् **विशोकः**। अशनेच्छाभावात् **विजिघत्सः**। पानेच्छावैरल्याद-**पिपासः**। अपहतपाप्मेत्यादिपञ्चविशेषणतः पापनिमित्तदुःखानामानन्त्यात्

सर्वदुःखप्रतिषेधार्थं विशेषणपञ्चकमित्यर्थः। **सत्यकामः** ईशस्यासंसारित्वेनावितथकामत्वात्। तथा **सत्यसङ्कल्पः** सङ्कल्पास्तद्धेतुकामाश्च सत्त्वोपाधिनिमित्ताः। न स्वतः स्वस्य कामसंकल्पाद्यस्पृष्टत्वात्। यथोक्तलक्षण एष आत्मा गुरुतः शास्त्रतश्च विज्ञेयः। सोऽयमात्मा स्वात्मसंवेद्यतया स्वाराज्यकामैर्न विज्ञातव्यश्चेत् का हानिः? इत्यत्र दृष्टान्तमाह—**यथेति**। **यथा ह्येवेह** लोके **प्रजाः** स्वामिनमन्यं मन्यमाना **अन्वाविशन्ति** यद्यत् स्वाम्यनुशास्ति तत्तथानुवर्तन्ते। किं किं? इत्यत्र **यं यं देशं जनपदं** क्षेत्रभागं वा तं तमभिकामा अर्थिनो **भवन्ति** फल्गुविषय**मुपजीवन्ति**। तन्नश्वरमित्यत्र दृष्टान्तमाह—**तद्यथेति**। **तत्तत्र यथेह** लोके स्वाम्यनुशासनानुवर्तिप्रजानां तत्सेवात्मककर्मणा **चितः** संपादितो **लोकः क्षीयते**ऽन्तवान् भवति, तथैवमेवाग्निहोत्रादिपुण्य**चितो लोकः क्षीयते** पुण्यक्षयसापेक्षत्वात्। एवमुक्तोऽयं कामिनां दोषः। तद्विषयं दर्शयति—**तद्य** इति। **तत्** तत्र **ये इहास्मिन्** लोके ज्ञानकर्मणोरधिकृता योग्यास्सन्तः **स्वात्मानं** श्रुत्याचार्यमुखतोऽ**ननुविद्य** अविदित्वास्माद्देहात् **व्रजन्ति, एतांश्च** सत्यसंकल्पकार्यान् **सत्यान् कामान्** अननुविद्य व्रजन्ति, **तेषां** राजानुशासनानुवर्तिप्रजानामिवास्वतन्त्रतया **सर्वेषु लोकेषु अकामचारो भवति**। **अथ ये**ऽन्ये स्वात्मान**मिह** लोके श्रुत्याचार्यमुखा**दनुविद्य** स्वात्मसंवेद्यतामापाद्य यथोक्तांश्च **सत्यान् कामांश्च व्रजन्ति तेषां** सार्वभौमस्येव स्वातन्त्र्येण **सर्वेषु लोकेषु कामचारो भवति** ॥ १ ॥

स्वात्मवेदिनां सर्वलोकेषु कामचारकथनम्

स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते। अथ यदि मातृलोककामो भवति संकल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन संपन्नो महीयते। अथ यदि भ्रातृलोककामो भवति

संकल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन संपन्नो महीयते। अथ यदि स्वसृलोककामो भवति संकल्पादेवास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन संपन्नो महीयते। अथ यदि सखिलोककामो भवति संकल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन संपन्नो महीयते। अथ यदि गन्धमाल्यलोककामो भवति संकल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन संपन्नो महीयते। अथ यदि अन्नपानलोककामो भवति संकल्पादेवास्यान्नपाने समुत्तिष्ठतः तेनान्नपानलोकेन संपन्नो महीयते। अथ यदि गीतवादित्रलोककामो भवति संकल्पादेवास्य गीतवादित्रे समुत्तिष्ठतस्तेन गीतवादित्रलोकेन संपन्नो महीयते। अथ यदि स्त्रीलोककामो भवति संकल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन संपन्नो महीयते। यं यमन्तमभिकामो भवति यं कामं कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति तेन संपन्नो महीयते ॥ २ ॥

कथं पुनस्तेषां सर्वेषु लोकेषु कामचारो भवति? इत्यत्रोच्यते—**स यदीति**। योऽयं वक्ष्यमाणब्रह्मचर्यादिसाधनसंपन्नो विद्वान् यथोक्तलक्षणमात्मानं हृदि साक्षात्कृतवान् भवति स त्यक्तदेहो **यदि** तदा पितरः पितृलोककामाः सुखहेतुभोग्यलोका उच्यन्ते। तेषु लोकेषु यस्य कामो भवति तस्य **संकल्पमात्रादेव पितरः समुत्तिष्ठन्ति** स्वात्मसंबन्धितामापद्यन्ते। अस्य योगिन ईश्वरस्येव सत्यसङ्कल्पत्वात्। **तेन पितृलोकेन** पितृगतभोगेन **संपन्नः** समृद्धो **महीयते** महिमानमनुभवतीति समानमन्यत्। मातरो जनयित्र्यः। सूकरादिजन्मनिमित्तासु मातृषु योगिन इच्छावशात् ता अपि पुण्यलोका भवन्ति।

यं यमन्तं प्रदेशमभिकामो भवति यं यं कामं वा कामयते सोऽस्य संकल्पादेव समुत्तिष्ठति । स्वाभिप्रेतार्थप्राप्त्या संपन्नोऽयं महीयते ॥ २ ॥

अविदुषां सत्यकामबाह्यत्वम्

त इमे सत्याः कामा अनृतापिधानाः तेषाꣳसत्यानाꣳ सतामनृतमपिधानं यो यो ह्यस्य इतः प्रैति न तमिह दर्शनाय लभते । अथ ये चास्य इह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विन्दते अत्र ह्यस्यैते सत्याः कामा अनृतापिधानाः तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुः एवमेव इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति अनृतेन हि प्रत्यूढाः । स वा एष आत्मा हृदि तस्यैतदेव निरुक्तꣳ हृद्ययमिति तस्माद्धृदयमहरहर्वा एवंवित् स्वर्गं लोकमेति । अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति । तानि ह वा एतानि त्रीण्यक्षराणि सतीयमिति तत् यत् सत् तदमृतं अथ यत् ति तन्मर्त्यं अथ यत् यं तेन उभे यच्छति यदनेन उभे यच्छति तस्मात् यमहरहर्वा एवंवित् स्वर्गं लोकमेति ॥३॥

यथोक्तात्मविदामुत्साहजननार्थमविदुषामनृताभिसन्धित्वेन सत्यकामबाह्यतामाह—त इति । त इमे यथाव्याख्याताः सत्याः कामा अनृतापिधानाः सत्यकामानामस्तिरेव पिधानमिव पिधानम् । किं नामानृतम् ? बाह्यस्त्र्यादिभोगेच्छानिमित्तमिथ्याज्ञानम् । कथं पुनरनृताभिधानाः कामाः ? तेषामात्माश्रयाणां

सतामित्यत्र तदलाभ एव पिधानमित्युक्तत्वात्। **अस्य जन्तोर्यो यो हि** पुत्रो भ्राता सुहृद्वा **इतोऽ**स्माल्लोकात् **प्रैति** म्रियते तं इष्टबन्धुजनं स्वहृदयाकाशे विद्यमानमपि तदविज्ञाय बाह्यप्रदेशे **तद्दर्शनाय** इच्छन्नपि **न लभते। अथास्य जीवा ये** देहसंबन्धिनो **विद्यन्ते ये चेह प्रेता यदिह** लोके वस्त्रान्नपानादि **इच्छन्न लभते तत्सर्वमत्र** हार्दब्रह्मणि **विन्दते। अत्रास्य** हार्दब्रह्मणि एते **सत्याः कामा** वर्तन्ते। कथमिव **तेऽनृतापिधानाः**? इत्यत्र **दृष्टान्त**माह— **यथेति। यथा** हिरण्यमेव निधातृभिः निधीयत इति निधिः। तं **हिरण्यनिधिं** भूमेरधस्तान्निहितं निक्षिप्तं निधिमत् क्षेत्रमज्ञातवन्तो **ह्यक्षेत्रज्ञास्ते** निधे**रुपर्युपरि संचरन्तोऽ**पि **न विन्देयुः** मन्त्राञ्जनादिभिः वेदितुं शक्यमपि न विजानीयुः। **एवमेवेमाः** स्वाविद्यावृताः **प्रजाः**, हार्दब्रह्मैव लोकः, **तमहरहः** स्वापावस्थायां **गच्छन्त्योऽ**पि **न विन्दन्ति ब्रह्मलोक**मिदानीमापन्नाः स्म इति नैव जानन्ति। कथं तन्न जानन्ति? इत्यत्र यथोक्ता**नृतेन हि प्रत्यूढाः** स्वाविद्यादृढपटेन सम्यगावृता इत्यर्थः। यतः स्वायत्तमपि ब्रह्म न लभन्ते अतस्तेषां कष्टं वर्तत इत्यर्थः। **स वा एष आत्मा**। वैशब्दः प्रकृतपरामर्शार्थः। अपहतपाप्मेत्यादि-विशेषणविशिष्ट आत्मा **हृदि** हृदयाकाशशब्देनाभिहितः। **तस्य** हार्दब्रह्मणः **एतदेव निरुक्तं** नान्यन्निर्वचनम्। **हृदि अयमात्मा** वर्तत **इति** यस्मात् **तस्माद्धृदयम्**। हृदयनामनिर्वचनप्रसिद्ध्यापि स्वहृदयमात्मेत्यवगन्तव्यम्। **अहरहः** प्रत्यहं वा हृदयमात्**मेत्येवंवित् स्वर्गं लोकं** हार्दं **ब्रह्म एति** प्रतिपद्यते। "सता सोम्य तदा संपन्नो भवति" इति श्रुत्यनुरोधेनाविद्वानपि स्वापकाले हार्दं ब्रह्म एति चेत् सत्यम्; विद्वानविद्वानपि सद्ब्रह्मैव। तथाप्यस्ति विशेषः कश्चित्। स्वाचार्येण तत्त्वमसीति बोधितो विद्वान् सदेवास्मीति जानन् सदेव भवति नाविद्वान्। सोऽपि यद्यपि स्वापे सत्संपद्यते तथाप्ययमावृतः सन् तं नैति। एवंवित्तु स्वर्गं लोकमेतीति निरङ्कुशं विद्याफलस्य देहपातेऽप्यवश्यं-भावित्वात्। **यो** जाग्रदाद्यवस्थासु विषयेन्द्रियसंयोगजसुखाभासपराङ्मुखतया स्वेनात्मना सता संपन्नः सम्यक् प्रसीदतीति सोऽयमेष **संप्रसादो** विद्वान् **अस्माच्छरीरा**भिमानात् **समुत्थाय** न पुनर्देहाद्यात्मभावं गत्वा देहाद्युपलक्षित-

स्वाविद्यापदतत्कार्यध्वान्तग्रासं **परं ज्योतिः** स्वमात्रतया **उपसंपद्य** ततः स्वातिरिक्तसर्वकलनापह्नवसिद्धं यत् सन्मात्रमवशिष्यते "सत् किञ्चिदवशिष्यते" इति श्रुतेः, तदेव हि संप्रसादस्वरूपम्। **तेन स्वेन रूपेणाभिनिष्पद्यते** संप्रसादः सन्मात्रतयावशिष्यत इति योऽर्थः "पूर्णमेवावशिष्यते" इत्यादिश्रुतिप्रकटितो विजयते **एष आत्मेति होवाच**। "अन्तेवासिभ्यः स ब्रूयात्" इति श्रुत्या प्रदर्शितोऽयमेवेत्यर्थः। किमेतत्स्वरूपं? इत्यत्र **एतदेव ह्यमृतं** भूमरूपत्वात्। उक्तं चैतत् "यो वै भूमा तदमृतं" इति। अत एव तदभयं भूम्नो भयहेतुद्वयापह्नवसिद्धत्वात्। "द्वितीयाद्वै भयं भवति," "अमृतोऽभयो ब्रह्म" इति श्रुतेः। **एतदमृतमभयं एतद्ब्रह्मेति** यदुक्तं तस्य स्वातिरिक्तनामरूपकलनापह्नवसिद्धत्वेन तदाप्त्युपायाभावमाशङ्क्य तदाप्त्युपायतया निर्नामरूपब्रह्मणो नाम निर्दिशति--**तस्येति**। **तस्य ह वा एतस्य ब्रह्मणो नामाभिधानं** योग्यं किं? इत्यत्र **सत्यमिति** हि ब्रह्माभिधीयते तस्य स्वाज्ञविकल्पितानृतप्रपञ्चे सत्यसति सन्मात्रतया विद्यमानत्वात्। उक्तं हि "तत् सत्यं स आत्मा" इति, किमर्थं पुनरुच्यते? इति चेन्न; अत्र मन्दप्रतिपत्त्यर्थत्वात्। तथा च **तानि ह वा एतानि त्रीणि ब्रह्मणो नामाक्षराणि सतीयमिति**। "स इत्येकमक्षरं तीत्येकमक्षरं यमित्येकमक्षरं" इति श्रुतेः। तत्र सकारः **सद्ब्रह्म तत् अमृतं** तस्यामृतवाचकत्वात्। **अथ यत् ति** तकारइकारः **तन्मर्त्यम्**। **अथ यमित्यक्षरममृतम्**। मध्यमं मार्त्यम्। **तदुभे** सकारयकाराख्ये अक्षरे **यच्छति** यमयति वशीकरोतीत्यर्थः। **यस्मात् यमित्येतेन उभे यच्छति तस्मात्** ब्रह्मनामाक्षरस्यामृतत्वादिधर्मवत्त्वं माहात्म्यमुक्तम्। किमु वक्तव्यं नामवतः? इति स्तूयते। एवं ब्रह्मनामनिर्वचनतो नामवद्ब्रह्म बोध्यम्। तस्मात् हार्दं सत्यात्मकं ब्रह्म। **अहरहर्वा एवंवित् स्वर्गं लोकमेतीत्युक्तार्थम्** ॥ ३ ॥

संप्रसादात्मनः सेतुत्वेन स्तुतिः

अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय नैनꣳ सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतꣳ

सर्वे पाप्मानोऽतो निवर्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः । तस्माद्वा एतꣳ सेतुं तीर्त्वान्धः सन् अनन्धो भवति विद्धः सन् अविद्धो भवति उपतापी सन् अनुपतापी भवति तस्माद्वा एतꣳ सेतुं तीर्त्वापि नक्तमहरेवाभिनिष्पद्यते सकृद्विभातो ह्येवैष ब्रह्मलोकः । तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकः तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ४ ॥

ब्रह्मचर्यादिसाधनसंबन्धार्थं यः संप्रसादात्मा विवक्षितः स एष आत्मा पुनरुक्तानुक्तगुणैः स्तूयते—**अथेति** । **अथ** पराग्भावतानवानन्तरं **य आत्मा**-विर्भवति **सोऽयमात्मा** तत्तद्वर्णाश्रमादिविहितक्रियाकारकफलासंकीर्णनिमित्तसेतुरिव **सेतुर्विधृतिः** विधरणः । जगत ईश्वरेण महामण्डूककूर्मशेषादिरूपिणा ध्रियमाणत्वात् किमर्थं सेतुता ? इत्यत आह—**एषामिति** । एषां कर्तृकर्मफलाश्रय-भूरादिलोकानामसंभेदायाविनाशाय । स किं कालपरिच्छेद्यः ? इत्यत आह—**नैनं सेतुमहोरात्रे तरतः** इति । तस्य देशकालवस्तुपरिच्छेदशून्यत्वात् । अत एव एतं **न जरा** तरति । तथा **न मृत्युर्न शोको न सुकृतं दुष्कृतं** धर्माधर्मौ वा नैनं तरति । न हि स्वकार्येण कारणमतिक्रमितुं शक्तम् । य आत्मापहतपाप्मेत्यादिना यद्यपि पुरोक्त एव तथापीहायं विशेषः । न तरतीति प्राप्तिविषयत्वं प्रतिषिध्यते । तत्र विशेषेण जराद्यभावमात्रमुक्तम् । अत्राहोरात्राद्या उक्तानुक्ताः **सर्वे पाप्मानोऽतो निवर्तन्ते** तमस्पृष्टेत्यर्थः । **अपहतपाप्मा ह्येष** ब्रह्मैव लोको **ब्रह्मलोक** उक्तः । यस्माच्छरीरवत एव पाप्मकार्यमान्ध्यादिना शरीरिण आत्मनस्तस्माद्वा **एतमात्मानं सेतुं तीर्त्वा** प्राप्य देहदृष्ट्यान्धोऽपि **सन्** स्वदृष्ट्यानन्धो **भवति** । देहविद्धोऽपि **सन्** देहाभिमानापाये **अविद्धो भवति** । तथा रोगाद्युपतापी **सन् अनुपतापी भवति** । किञ्च यस्मादात्मन्यहोरात्रादिकलना न विद्यते **तस्माद्वा एतं सेतुं तीर्त्वा** प्राप्य तमोरूपमपि **नक्तमहरेवाभिनिष्पद्यते** । विदुषः सर्वावस्थातीत-

त्वेन परंज्योतिस्स्वरूपत्वात् । अत एव यथोक्तलक्षणोऽयमेष **ब्रह्मलोकः सकृद्विभातः** तस्य निरावृतः स्वेन रूपेण सदा विभातत्वात् । तत् तत्र ये एतं यथोक्तलक्षणब्रह्मलोकं स्त्रीविषयतृष्णात्यागलक्षणब्रह्मचर्येण श्रुत्याचार्योपदेशमनुविन्दन्ति तेषां ब्रह्मचर्यादिसाधनवतामेव ब्रह्मलोको नेतरेषाम् । स्त्र्यादिविषयासक्तानां तेषां सर्वेषु लोकेषु कामचारो भवतीत्युक्तार्थम् । तस्मात् ब्रह्मविदां ब्रह्मलोकादिसाधनं ब्रह्मचर्यादृते न ह्यस्तीत्यर्थः ॥ ४ ॥

ब्रह्मचर्यस्य यज्ञादिभिः स्तुतिः

**अथ यत् यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तत् ब्रह्मचर्येण ह्येव यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तत् ब्रह्मचर्येण ह्येवेष्ट्वात्मानमनुविन्दते । अथ यत् सत्त्रायणमित्याचक्षते ब्रह्मचर्यमेव तत् ब्रह्मचर्येण ह्येव सत आत्मनस्त्राणं विन्दते अथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तत् ब्रह्मचर्येण ह्येवात्मानमनुविद्य मनुते । अथ यद्-नाशकायनमित्याचक्षते ब्रह्मचर्यमेव तत् एष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दते अथ यदरण्यायनमित्याचक्षते ब्रह्मचर्यमेव तत् तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितो दिवि तदैरं मदीयꣳ सरः तदश्वत्थः सोमसवनस्तदपराजिता पूः ब्रह्मणः प्रभुविमितꣳ हिरण्मयम् । तद्य एवैतौ अरं च ण्यं च अर्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकः तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ५ ॥**

अत एव ब्रह्मलोकाप्तये ज्ञानसहकारिब्रह्मचर्याख्यसाधनस्यावश्यकत्वेन तत् यज्ञादिभिः स्तौति—अथेति । **अथ** शिष्टाः परमपुरुषार्थसाधनं लोके **यज्ञ इत्याचक्षते । तद्ब्रह्मचर्यमेव ।** ब्रह्मचर्यवान् हि यज्ञफलं लभते । अतो यज्ञोऽपि

ब्रह्मचर्यमुच्यते। कथं ब्रह्मचर्यं यज्ञः? इत्यत्र **यो ज्ञाता ब्रह्मचर्येणैव** हि यज्ञस्यापि पारम्पर्येण फलभूतं **तं** ब्रह्मलोकं स विद्वान् **विन्दते**। ज्ञातेति सर्वत्रानुषज्यते। **अथ यत् इष्टमित्याचक्षते ब्रह्मचर्यमेव तत्**। कथं? ब्रह्मचर्यसाधनेनैव ह्यात्मानमीश्वरमिष्ट्वा सकलेषणामात्मविषयां कृत्वा तमात्मान**मनुविन्दते**। एषणादीष्टमपि ब्रह्मचर्यमेव। **अथ यत् सत्त्रायणमित्याचक्षते तदपि ब्रह्मचर्यमेव**। ब्रह्मचर्यसाधनेन **हि सत आत्मनस्त्राणं** रक्षणं अथ **विन्दते**। सत्त्रायणशब्देनापि ब्रह्मचर्यमेवोच्यते। **अथ यन्मौनमित्याचक्षते ब्रह्मचर्यमेव तत्**। ब्रह्मचर्यसाधनयुक्तश्रुत्याचार्यमुखतः **स्वात्मानमनुविद्य मनुते** ध्यायति। अतो मौनमपि ब्रह्मचर्यमेव। **अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तत्**। अनाशकायनं नाम कृच्छ्रचान्द्रायणादिकमित्यर्थः। तद्वान् **ब्रह्मचर्येण यमात्मानं विन्दते**। इत्थं ब्रह्मचर्यसाधनवतः स **एष ह्यात्मा न नश्यति** तदपि ब्रह्मचर्यमेव। **अथ यदारण्यायनमित्याचक्षते** ब्रह्मचर्यवतो यदयनं तदरण्यायनम्। **ब्रह्मचर्यमेव तत्**। योऽज्ञानाद्यज्ञः स्वात्मेषणामिष्टः सतस्त्राणात् सत्त्रायणं मननान्मौनं निरशनादनाशकायनमरण्ययोर्गमनाद-रण्यायनमित्यादिभिः महद्भिः पुरुषार्थसाधनैः ब्रह्मचर्यस्य स्तुतत्वात् तत् ब्रह्मचर्यमेव नितरां ज्ञानसहकारिसाधनम्। अतः तत् यत्नतो रक्षणीय-मित्यर्थः। **तत्** तत्र हि **अरश्च ह वै** प्रसिद्धौ **ण्यश्च अर्णवौ** समुद्रौ समुद्रोपमे वा सरसि तद्वति **ब्रह्मलोके** भुवमन्तरिक्षं चापेक्ष्य तृतीया द्यौः। तस्यां **तृतीयस्यामितो**ऽस्माल्लोकात् मौनिमण्डलगण्यमानायां **दिवि**। तत्र इर एव ऐरः मण्डः। तेन **पूर्णमैरं मदीयं** तत्रत्यानां प्रहर्षमदकरत्वात्। तादृशं **सरः** पुनस्तत्रैव **सोमसवननामतोऽश्वत्थो** वृक्षः सोमाभिधानामृतप्रस्रवणात्। पुनस्तत्रैव ब्रह्मलोके कैश्चिदपि न जीर्यत **इत्यपराजिता** नाम **ब्रह्मणः पूः** पुरमस्ति। **प्रभुणा** ब्रह्मणा **विशेषेण मितं** निर्मितं **हिरण्मयं** सौवर्णं मण्डपमिति वाक्यशेषः। तत्तत्र **ब्रह्मलोके ये एतावर्णवौ** यावरण्याख्यवृत्तौ ब्रह्मचर्य-साधनेनानु**विन्दन्ति तेषामेवैष** यो व्याख्यातो **ब्रह्मलोकः**। ब्रह्मचर्यादि-साधनविशिष्टानां ब्रह्मविदामेव **सर्वेषु लोकेषु कामचारो भवति** न हि

ब्रह्मचर्यपराङ्मुखविषयासक्तबुद्धीनामित्यर्थः। ज्ञानसहकारित्वेन स्त्र्यादिविषयतृष्णानिवृत्तिसाधनं बलवदिति मन्तव्यम् ॥ ५ ॥

हार्दब्रह्मोपासकस्य मूर्धन्यनाड्या गतिकथनम्

अथ या एता हृदयस्य नाड्यः ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येति असौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः। तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं चामुं चामुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः। तत् यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति आसु तदा नाडीषु सृप्तो भवति तं न कश्चन पाप्मा स्पृशति तेजसा हि तदा संपन्नो भवति। अथ यत्रैतदबलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति। अथ यत्रैतदस्माच्छरीरादुत्क्रामति अथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ओमिति वा होद्वा मीयते स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति एतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम्। तदेष श्लोकः—

शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिस्सृतैका।
तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति।

उत्क्रमणे भवन्ति ॥ ६ ॥

यस्तु ब्रह्मचर्यादिसाधनसंपन्नो विद्वान् त्यक्तबाह्यविषयानृततृष्णः सन् यथोक्तगुणविशिष्टं हार्दं ब्रह्म उपास्ते तस्येयं मूर्धन्यया नाड्या गतिर्वक्तव्येत्युत्तर-खण्ड आरभ्यते— **अथेति**। **अथ या एता** वक्ष्यमाणा ब्रह्मोपलब्धिस्थानत्वेन प्रसिद्ध**हृदयस्य** संबन्धिन्यो **नाड्यो** रविमण्डलादिव रश्मयो हृदयाकारमांस-पिण्डात् सर्वतो निस्सृताः **पिङ्गलस्य** पिङ्गलवर्णेना**णिम्नः** सूक्ष्मरसेन पूर्णा-स्तावदाकारा**स्तिष्ठन्ति** वर्तन्त इत्यर्थः। कफयोगतः **शुक्लस्य** पित्तवातयोगतो **नीलस्य** कफपित्तयोगतः **पीतस्य** शोणितयोगतो **लोहितस्य** च तेषां रसेन पूर्णा इत्यध्याहार्यम्। आदित्यसंबन्धादेव तत्तेजसो नाडीष्वनुगतस्य एते वर्णविशेषा इति श्रुत्यनुरोधेन **असौ वा आदित्यः पिङ्गलो** वर्णतः। **एष** आदित्यः **शुक्लोऽप्येष नीलः एष पीतः एष लोहितः**। तस्य नाडीभिः कथं संबन्धः? इत्यत्र दृष्टान्त उच्यते—**तद्यथेति**। **तत्**तत्र **यथा** लोके **महान्** विस्तीर्णः पन्थाः महापथः **आततो** व्याप्तः **उभौ ग्रामौ गच्छति** सन्निहित**मिमं च** विप्रकृष्ट**ममुं च** उभौ ग्रामौ प्रविष्टः **एवमेवैता आदित्यस्य रश्मय** आदित्यमण्डलमिमं पुरुषं **चोभौ लोकौ गच्छन्ति**। कथं? **ता अमुष्मादादित्यमण्डलात् प्रतायन्ते** आध्यात्मिकपिङ्गलादिवर्णविशिष्ट**नाडीषु सृप्ताः** सत्यः सन्तता भवन्तीत्यर्थः। **आभ्यो नाडीभ्यः प्रतायन्ते** प्रवृत्ताः सत्यो रश्मीनामुभयलिङ्गत्वेन **तेऽमुष्मिन्नादित्ये सृप्ताः**। **तत्** तत्रैवं सति **यत्र** यस्मिन् काले जीवो बाह्यव्यापृतिसुप्तः सुषुप्तो भवति तत्र बाह्यविषय-संपर्कवैरल्यात् उपसंहृत**समस्तकरणो** भवति। अत एव सम्यक् **प्रसन्नः** संपन्नो **भवति**। ततः मनस्संकल्पविजृम्भितस्वप्नं **न विजानाति**। यदैवमयं जीवः सुप्तो भवति तदा सौरतेजःपूरित**नाडीषु सृप्तः** प्रविष्टः सन् द्वारभूतनाडीभिः हृदयाकाशं गतो **भवति**। नाडीष्विति सप्तमी तृतीयात्वेन विपरिणेया। जीवस्य स्वापकाले सति संपन्नत्वात्। सता संपन्नं **तं** जीवं **न हि कश्चन** धर्माधर्मरूपः **पाप्मा स्पृशति** तदात्मनः स्वरूपावस्थत्वात्। न हि स्वरूपावस्थं पाप्मा स्प्रष्टुं पारयति निर्विषयत्वात्। यदैवं सुषुप्तः **तदा** सर्वतो नाड्यन्तर्गतसौरतेजसा **संपन्नो** व्याप्तो **भवति**। **अथ** यस्मिन् काले

स्वदेहज्वरादिरोगनिमित्तम**बलिमानं** बलाभावं मुमूर्षुत्वं वा **नीतः** प्रापितो **भवति तमभितो** वेष्टयित्वा**सीना** ज्ञातयो **जानासि मां** तव पुत्रं **जानासि मां** तव **पौत्रमित्याहुः** । **सोऽयं** मुमूर्षुः **यावदस्माच्छरीरादनुत्क्रान्तो भवति तावत्** पुत्रादीन् **जानाति** । **अथ यत्र एतदिति** क्रियाविशेषणम् । **अस्माच्छरीरादुत्क्रामति अथ तैरेव** यथोक्तरश्मिभि**रूर्ध्वं आक्रमते** । यद्यविद्वान् तदा स्वकर्मजनितं लोकं प्रति गच्छति । यद्ययं विद्वान् तदा स्वयथोक्तसाधनसंपन्नः सन् **ओमित्येकाक्षरेणा**त्मानमनुध्यायन् यथापूर्वं **वा ह** एव **उत् ऊर्ध्वं वा मीयते** गच्छतीत्यर्थः । **स** विद्वानुत्क्रमिष्यन् **यावत् क्षिप्येत्** यावता कालेन मनसः क्षेपः स्यात् तावता काले**नादित्यं गच्छति** । किमर्थं तद्गमनम् ? विदुषा**मेतद्वै खलु** प्रसिद्धं ब्रह्म**लोकद्वार**मादित्यः । तेन हि विद्वान् ब्रह्मलोकं गच्छति । अनेन द्वारेण विद्वान् ब्रह्मलोकं प्रपद्यत इति **विदुषां प्रपदनम्** । **अविदुषा**मादित्या**न्निरोधो** भवति । अविद्वांसस्तु सौरतेजसा निरुद्धाः सन्तो मूर्धन्यनाड्या नोत्क्रमन्ते "विष्वङ्ङन्याः" इति पृथग्गतिदर्शनात् । **तदेतस्मिन्नर्थे एष श्लोको** मन्त्रो भवति । मांसपिण्ड**हृदयस्य** संबन्धिन्यः **शतं चैका** च एकोत्तरशत**नाड्यः** प्रधानतो भवन्ति । ते ह गतनाडीनामानन्त्यात् । **तासामेका** सुषुम्ना नाडी **मूर्धानमभिनिस्सृता** निर्गता । विद्वान् **तया ऊर्ध्वमायन्नमृतत्वमेति** । **विष्वङ्** नानागतयः संसारगमनद्वारभूताः **अन्या** नाडयो नामृतत्वाय भवन्ति । किं तर्हि ? **उत्क्रमणे** उत्क्रान्त्यर्थमेव **भवन्तीत्यर्थः** । प्रकरणपरिसमाप्त्यर्थेयं द्विरुक्तिः ॥ ६ ॥

विद्याग्रहणार्थं ब्रह्मचर्यादिविधिप्रदर्शनम्

**य आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच । तद्धोभये देवासुरा अनुबुबुधिरे ते**

होचुः हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामानिति इन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः। तौ ह द्वात्रिꣳशतं वर्षाणि ब्रह्मचर्यमूषतुः तौ ह प्रजापतिरुवाच किमिच्छन्ताववास्तम् ? इति। तौ होचतुर्य आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोविजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान् यस्तमात्मानमनुविद्य विजानातीति भगवतो वचो वेदयन्ते तमिच्छन्ताववास्तमिति। तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति अथ योऽयं भगवोऽप्सु परिख्यायते यश्चायमादर्शे कतम एषः ? इति। एष उ एव एषु सर्वेष्वन्तेषु परिख्यायत इति होवाच ॥ ७ ॥

"अथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्म" इति यदुक्तं तत्र कोऽसौ संप्रसादः ? तस्याभिगमनं कथम् ? सोऽयं यथास्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते। संप्रसादात्मा स किंलक्षणः ? तस्य देहावच्छिन्नत्वेन तद्वैलक्षण्यं कथम् ? इत्याद्याशङ्कासमाधानार्थं विद्याग्रहणसंप्रदानब्रह्मचर्यादिविधिप्रदर्शनार्थं च उत्तरो ग्रन्थ आरभ्यते। आख्यायिका तु राजसेवितं पानीयमितिवत् विद्यास्तुत्यर्था—**य आत्मेति। य आत्मा अपहतपाप्मे**त्यादिविशेषणाष्टकविशिष्टो भाति यदुपासनार्थं हृत्पुण्डरीकमभिहितं यस्मिन् कामाः समाहिता अविदुषामनृतापिधानाश्च यदुपासनसहभाविब्रह्मचर्य-

साधनमुक्तं यदुपासनफलाप्तये मूर्धन्यनाडीगतिरभिहिता सर्वथा **सोऽन्वेष्टव्यः** श्रुत्याचार्योपदेशतः **स विजिज्ञासितव्यः** स्वसंवेद्यतामापादयितव्य इत्यर्थः। किं तदन्वेषणविज्ञानाभ्यां? इत्यत आह—**स** इति। **यो** यथोक्तलक्षणं **तमात्मानं** श्रुत्याचार्योपदेशतोऽन्विष्य **विजानाति** स्वसंवेद्यतामापादयति **स सर्वांश्च लोकानाप्नोति। स सर्वांश्च कामानि**ति। तस्य सर्वात्मकत्वेन सर्वलोककामाप्तिफलं भवतीति **प्रजापतिरुवाच**। सोऽन्वेष्टव्य इत्यादिरपूर्वविधिरिति चेन्न; तयोर्दृष्टार्थत्वेन नियमविधिसंभवात्। तथा च वक्ष्यति "नाहमत्र भोग्यं पश्यामि" इति। देहात्मभावविशिष्टस्य स्वरूपाधिगमतो विपरीतभ्रमनिवृत्तेः दृष्टफलत्वेन नियमविधेर्युक्तत्वात्। **तद्ध** किल प्रजापतेः वचनात् देवाश्च असुराश्च **उभये देवासुरा अनुबुबुधिरे** प्रजापतिमुखतोऽनुबुद्धवन्तः। ततस्ते किं कुर्वन्ति? इत्यत्र देवासुरा**स्ते होचुः हन्त**! यदि प्राजापत्यं वचो भवतां रोचते तदा वयं प्रजापतिनोक्त**मात्मानमन्विष्यामो**ऽन्वेषणं कुर्मः **यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानि**ति निश्चित्य **देवानां** राजा **इन्द्रो ह वै** देवैः सह स्वपरिकरं सर्वं बहिः स्थापयित्वा स्वदेहात्मावशिष्टः प्रजापतिं प्रति **प्रवव्राज**। तथासुराणां राजा **विरोच**नोऽपि विद्याफलमिच्छन् प्रवव्राज। **तौ** देवासुरराजौ मिथो**ऽसंविदानावे**वान्योन्यमीर्ष्यां दर्शयन्तावेव **समित्पाणी प्रजापतिसकाशमाजग्मतुः। तौ ह द्वात्रिंशतं वर्षाणि** प्रजापतिशुश्रूषापरौ भूत्वा **ब्रह्मचर्यमूषतुः**। तयोरभिप्रायज्ञः **प्रजापतिः तावुवाच—किं** प्रयोजन**मिच्छन्तावववास्त**मुषितवन्तौ युवाम्? इत्युक्तौ **तौ ह ऊचतुः** आत्मेत्यादि **भगवतो वचो वेदयन्ते** शिष्टाः। अतस्तमात्मानं ज्ञातु**मिच्छन्तावववास्तं** इत्यावामुषितवन्तावित्यर्थः। प्रजापत्युपसदनात् पुरान्योन्यमीर्ष्यायुक्तावभूताम्। ततो विद्याफलगौरवात् त्यक्तमात्सर्यौ भूत्वा प्रजापतौ ब्रह्मचर्यमूषतुः। तावेवं तपस्विनावुपलभ्य **प्रजापतिरुवाच ह**। किमिति? मृदितावृतित्रययोगिभिः **य एषोऽक्षिणि पुरुषो दृश्यते** अक्ष्याद्युपाध्यपगमे यत् सन्मात्रमवशिष्यते ततो भूमरूपत्वेन **तदमृतम्**। भयहेत्वसम्भवा**दभयम्**। स्वमात्रतता उपबृंहणात् **ब्रह्मेति** प्रजापतिनोक्तं श्रुत्वा तयोः सत्त्वशुद्ध्यभावात्

तदुक्तार्थवैपरीत्येन छायापुरुषं जग्रहतुः। पुनस्तद्दृढीकरणाय प्रजापतिं पृष्टवन्तौ। किमिति? **अथ योऽयं भगवोऽप्सु परिख्यायते** परि समन्तात् ज्ञायते, **यश्चायमात्मनः** प्रतिबिम्बाकार **आदर्शे** परिख्यायते, खड्गकांस्यादौ च तत्रभवद्भिः **कतम एष** उक्तः? सर्वेष्वपि किमयमेक एव? इति पृष्टः प्रजापतिरुवाच—यश्चक्षुषि द्रष्टा मयोक्त **एष उ एव सर्वेष्वन्तेष्वबादिषु परिख्यायते इति होवाच**। सर्वविदः प्रजापतेः कथं शिष्यविपरीतग्रहणमनुज्ञातुं युक्तम्? इति चेत् सत्यं; तन्निराकरणं कर्तव्यम्। तथापि स्वात्मन्यध्यारोपितपाण्डित्यमहत्त्वप्रथिताविन्द्रविरोचनौ यदि तौ प्रजापतिना यद्युक्तार्थविपरीतग्राहिणौ युवां मूढावित्युक्तौ स्यातां तदा तौ दुःखिनौ भूत्वा निरुत्साहतः पुनः प्रश्नावधारणाशक्तौ स्यातामिति तद्गृहीतोदशरावदृष्टान्तेन तद्विपरीतग्रहः क्रमेण मार्जनीय इति प्रजापतेरभिप्रायः। एष उ एवेत्यनृतमुक्तमिति चेन्न; स्वज्ञदृष्ट्याक्षिपुरुषस्य व्यापकत्वेन शिष्यगृहीतछायात्मन्यप्यन्तरत्वात्। "एष त आत्मा सर्वान्तरः" इति श्रुतेः। प्रजापतिना एष उ एवेत्युक्तम्। अतो नानृतमित्यर्थः॥ ७॥

इन्द्रविरोचनयोरुदशरावे आत्मदर्शनम्

उदशरावे आत्मानमवेक्ष्य यदात्मनो न विजानीथः तन्मे प्रब्रूतमिति तौ ह उदशरावेऽवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथः? इति। तौ होचतुः सर्वमेवेदमावां भगवः! आत्मानं पश्याव: आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति। तौ ह प्रजापतिरुवाच साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वा उदशरावेऽवेक्षेथामिति तौ ह साध्वलंकृतौ सुवसनौ परिष्कृतौ भूत्वा उदशरावेऽवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथः? इति। तौ होचतुः यथैवेदमावां भगवः! साध्वलंकृतौ सुवसनौ परिष्कृतौ

स्व एवमेव इमौ भगवः! साध्वलंकृतौ सुवसनौ परिष्कृताविति एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः। तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्यात्मानमननुविद्य व्रजतो यतरे एतदुपनिषदो भविष्यन्ति देवा वासुरा वा ते पराभविष्यन्तीति स ह शान्तहृदय एव विरोचनोऽसुरान् जगाम तेभ्यो हैतामुपनिषदं प्रोवाच आत्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन् उभौ लोकाववाप्नोति इमं चामुं चेति। तस्मादप्यद्य इहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेति असुराणाꣳ ह्येषोपनिषत् प्रेतस्य शरीरं भिक्षया वसनेनालंकारेणेति सꣳस्कुर्वन्ति एतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते ॥ ८ ॥

प्रजापतेर्यथार्थाभिधायित्वात् तयोः विपरीतग्रहनिरासमाह—**उदशराव** इति। **उद**कपूरित**शरावे** स्वा**त्मानमवेक्ष्याथ यदात्मनः** स्वरूपं पश्यन्तौ **न विजानीथस्तद्रूपं मे ब्रूत**माचक्षाथामित्युक्तौ तथैव **उदशरावेऽवेक्षाञ्चक्राते**। तथा कृतवन्तौ **ह प्रजापतिरुवाच—किं पश्यथः?** इति पृष्टौ स्वानुभूतार्थं **तौ होचतुः—सर्वमेवेदमावां भगवः! आत्मानं पश्यावः आ लोमभ्य आ नखेभ्यः प्रतिरूपमिति**। इत्थं छायात्मप्रत्ययाभिनिवेशतो विपरीतग्राहिणावपि शिष्यावनुपेक्षणीयाविति तद्विपरीतग्रहापनयनाय तत्प्रत्ययं विडम्बयन्तौ **ह प्रजापतिरुवाच—साध्वलङ्कृता**वित्यादिना। यथा स्वगृहे भूषणादिभिः **साध्वलङ्कृतौ** महार्ह**सुवसन**परिधानौ छिन्नरोमनखादिभिः **सुपरिष्कृतौ** भूत्वा **उदशरावेऽवेक्षेथामिति**। उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे प्रब्रूतमिति पुरोक्त्वा पुनस्साध्वलङ्कारपूर्वकमुदशरावेऽवेक्षेथामित्युक्तितः तद्विपरीतग्रहोऽपनीतः स्यात्। साध्वलङ्काराणां देहाश्रयत्वेन देहस्यापि छायाकारत्वेन चावगतम्। किंच देहगतलोमादीनामखण्डितानां नित्यत्वेन

छायाकारत्वं पूर्वमासीत् खलु। पुनश्छिन्नेषु लोमनखादिषु न हि तच्छाया **दृश्यते**। यत एवमतो लोमादिवत् देहस्यापि आगमापायित्वम्। तत्कथम्? उदशरावदृश्यमानछायायाः तन्निमित्तशरीरस्य च मिथ्यात्वेनानात्मत्वं सिद्धम्। एवमशेषमिथ्याग्रहणनिराकरणनिमित्ते साध्वलंकारादिदृष्टान्ते करुणया प्रजापतिनोक्तेऽपि तयोः सत्त्वशुद्धिवैकल्यात् तद्वाक्यश्रवणतोऽपि विपरीतग्रहालङ्कारछायात्मा तद्गतस्नेहं न मुमोच। यत एवमतस्तौ स्वाज्ञानावृतावभूतामित्यवगम्यते। तादृशदृढात्मप्रत्ययौ तौ पप्रच्छ—**किं पश्यथः? इति**। तथैव **तौ** प्रतिपन्नौ **यथैवेदमिति** पूर्ववत्। यथा साध्वलंकारादिविशिष्टावावां **स्वः एवमेवेमौ** छायात्मानाविति सुतरां विपरीतनिश्चयौ बभूवतुः। पुरा "य आत्मा अपहतपाप्मा" इत्याद्यसाधारणतयात्मनो लक्षणमुक्तम्। विशेषतो "य एषोऽक्षिणि पुरुषो दृश्यते" इति साक्षादात्मनि निर्दिष्टेऽपि स्वचित्तदोषतो विपरीतग्राहिणावालोच्य तद्विपरीतग्रहापनयनाय साध्वलंकारदृष्टान्तेऽभिहितेऽपि तयोर्विपरीतग्रहो नापगतः। द्वयोर्मध्ये क्रमेण देवराट् सिद्धो भविष्यतीति ज्ञात्वा स्वाभिप्रेतमात्मानं मनसि निधाय **एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति** प्रजापतिरुक्तवान्। इत्थं मद्वाक्यमननमेकः करिष्यतीति प्रजापतिनैवं बोधितावपि तदुक्तार्थमगृहीत्वा विपरीतात्मग्रहहर्षेणात्मानं कृतार्थं मन्यमानौ गच्छतामिति प्रजापतिना उपेक्षिताविन्द्रविरोचनौ मिथ्या**शान्तहृदयौ** यथायथं **प्रवव्रजतुः**। **तौ** दूरं गच्छन्तौ **वीक्ष्य प्रजापतिरुवाच**—मया बहुप्रकारं बोध्यमानावपि **स्वात्मानमनुपलभ्य प्रव्रजतः** गच्छेयाताम्। अत **यतरे देवा वा असुरा वा एतदुपनिषद** एवंविज्ञानाः परा**भविष्यन्ति** परमार्थबहिर्भूता भविष्यन्तीत्यर्थः। एवं स्वगृहं गच्छतोरसुरराजः **स ह शान्तहृदय एवासुरान् जगाम**। गत्वाथ तेभ्यः शरीरच्छायाबुद्धिः या उपनिषत्तामेतां **उपनिषदं प्रोवाच**। देह **एवात्मा इह** लोके महनीयः तथा परिचरणीयः। तथा**त्मानमेवेह महयन् परिचरंश्चोभौ लोकाववाप्नोति इमं चामुं च**। इहामुत्र लोकयोरेव सर्वे लोकाः कामाश्चान्तर्भवन्तीति राज्ञोऽभिप्रायः। **तस्मादिह** लोके**ऽद्यापि** तत्संप्रदायोऽनुवर्तते। किं तत्? **अददानं** दानमकुर्वाणं **अश्रद्दधानं** सत्कार्यश्रद्धारहितं

यथाशक्त्ययजमानं चाहुस्तेषामासुरप्रकृतित्वात् । यत एवं शिष्टाः खिद्यमानाः सन्तो **बतेत्येवमाहुः** । **हि** यस्मादसुराणां अश्रद्दधानतादिलक्षणा **उपनिषत्** तयोपनिषदा संस्कृताः सन्तः **प्रेतस्यापि शरीरं भिक्षया** गन्धमाल्याद्यलंकरणलक्षणया **वसनादिना** ध्वजपताकादिलक्षणेनेत्येवं **संस्कुर्वन्ति** । **एतेन** कुणपसंस्कारेण यत्प्रेत्य प्रतिपत्तव्यं **अमुं लोकं जेष्यन्तो मन्यन्ते** ॥ ८ ॥

इन्द्रस्यात्मतत्त्वावगमप्रयत्नः

अथ हेन्द्रोऽप्राप्यैव देवान् एतद्भयं ददर्श यथैव खल्वयमस्मिन् शरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन् अन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णः अस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति । स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन् ! यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन् पुनरागमः ? इति । स होवाच यथैव खल्वयं भगवः ! अस्मिन् शरीरे साध्वलंकृते साध्वलंकृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन् अन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णः अस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति । एवमेवैष मघवन् ! इति होवाच एतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिꣳशतं वर्षाणीति स हापराणि द्वात्रिꣳशतं वर्षाण्युवास तस्मै होवाच ॥ ९ ॥

तयोरिन्द्रस्य सत्त्वस्वभावतो विपरीतग्रहे सन्दिहानः सन् पुनः प्रजापतिनिकटं प्राप्य स्वानुभवविज्ञापनपूर्वकं ब्रह्मचर्यमुषित्वा चतुर्थपर्याये प्रजापतिना

पूर्वोक्तमेवात्मतत्त्वमवगम्य इन्द्रः कृतकृत्यतामगमदित्याह—**अथेति** । **अथ स्वसदन**-प्रवेशानन्तरमिन्द्रो **ह** किल स्वात्मतत्त्वम**प्राप्यैव** दैवीप्रकृतिविशिष्टान् **देवान्** प्रति वक्ष्यमाणछायात्मग्रहणनिमित्त**मेतद्भयं ददर्श** दृष्टवान् । आदौ तावदुद-शरावदृष्टान्तेन प्रजापतिना योऽर्थोऽभिहितः तत्र मघवद्बुद्धौ तदेकदेशार्थः प्रत्यभात् । स कीदृशः? इत्यत्र **यथैव खल्वयमस्मिन् शरीरे साध्वलंकृते** छायात्मापि **साध्वलंकृतो भवति । सुवसने सुवसनः परिष्कृते परिष्कृतो** भवति । देहावयवीभूतनखलोमाद्यपगमे छायात्मापि नखरोमादिराहित्येन परिदृश्यत इत्यर्थः । नखरोमादीनां देहावयवतुल्यत्वादस्मि**न्नन्धे** छायात्माप्य**न्धो भवति** । यस्य चक्षुर्नासिका वा सदा स्रवति स **स्रामः** । **परिवृक्णः** छिन्नहस्तः । **अस्यैव नाशमन्वेष नश्यति** । अतो **नाहमस्मिन्** छायात्मदर्शने तद्धेतुदेहात्म-दर्शने च स्वात्मभोग्यं फलं **पश्यामीत्येवं** छायादेहात्मनि दोषमवगम्य **समित्पाणि**र्ब्रह्मचर्यं वस्तुं **पुनरेयाय** । **तं ह प्रजापतिरुवाच—मघवन्! यच्छान्तहृदयो विरोचनेन सार्धं प्राव्राजीः** । जानन्नपि इन्द्राभिप्रायाभिव्य-क्त्यर्थं पप्रच्छ । प्रजापतिनैवं पृष्टः स्वानुभूतार्थदोषं **स होवाच—यथैव खल्वयमित्यादिना** । प्रजापतिरपि तदन्वमोदत । तुल्यब्रह्मचर्यश्रवणयोर्देवासुर-राजयोरिन्द्रो देहछायामात्मेत्यग्रहीत् । विरोचनस्तु देहमेवात्मेति । तत्र किं निमित्तम्? इत्यत्र इन्द्रस्य प्राजापत्यवाक्यमननतश्छायात्मग्रहणं तद्दोषदर्शनं चाभूत् । न तथा विरोचनस्य । किन्तु तद्वाक्यमननाभावात् छायामूलदेहात्म-दर्शनम् । न हि तत्र दोषदर्शनं जातम् । तयोरेवं दर्शने प्रतिबन्धाल्पत्वं बहुत्वं च निमित्तम् । अल्पप्रतिबन्धो हीन्द्रः स्वग्रहदोषदृष्ट्या पुनः प्राजापत्य-वाक्यार्थयाथात्म्यं विविदिषति । विरोचनस्तु प्रतिबन्धबाहुल्यवशात् स्वग्रहमेव परमार्थं मत्वा न तत्र दोषं जग्राह । तयोरेवं तुल्येऽपि श्रवणे स्वस्वचित्त-दोषानुरोधेन वाक्यार्थावधारणं जातम् । द द द इति दकारत्रयं देवमनुष्यासुराः श्रुत्वा दाम्यत दत्त दयध्वमिति स्वप्रकृतिवैपरीत्यं जगृहिरे यथा **एवमेवैष मघवन्!** त्वया सम्यगवगतम् । न हि कदापि च्छाया स्वात्मा भवितुमर्हति इति प्रजापति**रुवाच** । य एषोऽक्षिणीति यो मयोक्त **एतमेवात्मानं तु ते पूर्वं**

व्याख्यातमपि भूय एवानुव्याख्यास्यामि । यतोऽज्ञानप्रतिबन्धवशात् मदुक्तार्थं यथावन्न गृहीतवानसि अतस्तत्क्षयाय **वसापराणि द्वात्रिंशतं वर्षाणीत्युक्तः स हापराणि द्वात्रिंशतं वर्षाण्युवास** । ब्रह्मचर्यतः क्षपितचित्तदोषाय **तस्मै होवाच** ॥९॥

स्वप्नपुरुषोपदेशेऽपि इन्द्रस्यासम्मतिः

**य एष स्वप्ने महीयमानश्चरति एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श तद्यद्यपीदꣳ शरीरमन्धं भवति अनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति । न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवति अपि रोदितीव नाहमत्र भोग्यं पश्यामीति । स समित्पाणिः पुनरेयाय तꣳ ह प्रजापतिरुवाच मघवन्! यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागमः? इति । स होवाच तद्यद्यपि इदं भगवः! शरीरमन्धं भवति अनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति । न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीव अप्रियवेत्तेव भवति अपि रोदितीव नाहमत्र भोग्यं पश्यामीति एवमेवैष मघवन्! इति होवाच एतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिꣳशतं वर्षाणीति स हापराणि द्वात्रिꣳशतं वर्षाण्युवास तस्मै होवाच ॥ १० ॥**

किमुवाच? इत्यत आह—**य एष** इति । योऽयमपहतपाप्मेत्यादिविशेषणविशिष्टोऽक्ष्याद्यवभासकत्वेन व्याख्यातः स **एष स्वप्ने** स्त्र्यादिभिः **महीयमानः** पूज्यमानः **चरति** अनेकधा स्वाप्निकभोगाननुभवति। **एष आत्मेत्यादि**

समानम्। स एवमुक्तः शान्तहृदयः प्रवव्राज। स हाप्राप्यैव पूर्ववत् देवानेतद्भयं ददर्श। कथम्? यत्तदिदं शरीरं यद्यप्यन्धं भवति यः स्वप्नात्मा सोऽनन्धो भवति। इदं शरीरं यदि स्राममं सोऽस्रामश्च भवति। अस्य देहस्य दोषेण नैवैष स्वप्नात्मा दुष्यति। छायात्मवन्नाप्यस्य वधेन हन्यते। न चास्य स्राम्येण स्वप्नात्मा स्रामो भवति। नास्य जरयैतज्जीर्यतीत्यादि यत् अध्यायादावागममात्रेण उपन्यस्तं तदिह न्यायेनोपपादितम्। न तावच्छायात्मवदयं देहदोषयुक्तः किन्तु घ्नन्ति त्वेवैनमिति एवशब्द इवार्थः। घ्नन्ति वैनं केचनेति द्रष्टव्यम्। उत्तरेष्विवशब्ददर्शनात्। न तु घ्नन्त्येव। नास्य वधेन हन्यत इत्युक्तत्वात्। घ्नन्ति त्वेवेति चेन्न; एतदमृतमिति प्रजापतिनोक्तत्वात् कथमिन्द्रः प्राजापत्यं वचो मृषा कुर्यात्? तथा चेत् प्रजापतिनिरूपितछायात्मनि दोषमदधादिति चेन्न; प्रजापतिना अक्ष्यवभासकपुरुषस्योक्तत्वात्। न हीन्द्रः प्रजापतिना छायात्मोच्यत इति मन्यते। यदि स्वपृष्टान्यथार्थं प्रजापतिनोक्तमिति मन्येत तदा कथं पुनः प्रजापतिं प्रमाणीकृत्य समित्पाणिः श्रवणार्थमगच्छत्? तस्मात् स्वदोषमेवेन्द्रो मन्यते न हि प्रजापतावित्यवगम्यते। तथा च य एषोऽक्षिणि पुरुषो दृश्यत इति व्याख्यातम्। तथा विच्छादयन्ति विद्रावयन्तीव। तथा चेष्टबन्धुमरणनिमित्तमप्रियवेत्तेव भवति अपि रोदितीव भवतीति। यत एवमतः छायात्मवत् स्वाप्निकात्मज्ञानेऽपि नाहमत्र भोग्यं फलं पश्यामीत्येवमेवैष इन्द्र उपससाद। मया न्यायतो द्विरुक्तमप्ययं नावधारयति। तस्मादद्याप्यस्य प्रतिबन्धकारणमस्तीति मत्वा तन्मार्जनाय प्रजापतिः पूर्ववत् मघवन्! इति होवाच—एतं त्वेव ते भूयोऽनुव्याख्यास्यामि। वसापराणि द्वात्रिंशतं वर्षाणीति। तथापराणि द्वात्रिंशतं वर्षाण्युवास। यथोक्तकारिणे तस्मै होवाच ॥ १० ॥

इन्द्रस्य प्रजापतावात्मतत्त्वलाभाय एकोत्तरशतवर्षाणि ब्रह्मचर्यवासः

तद्यत्रैतत् सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानाति एष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः

प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाह खल्वयमेव संप्रत्यात्मानं जानाति अयमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति । स समित्पाणिः पुनरेयाय तꣳह प्रजापतिरुवाच मघवन्! यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागमः? इति । स होवाच नाह खल्वयं भगवः! एवꣳ संप्रत्यात्मानं जानाति अयमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति । एवमेवैष मघवन्! इति होवाच एतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्र एतस्माद्वसापराणि पञ्च वर्षाणीति स हापराणि पञ्च वर्षाण्युवास तान्येकशतꣳ संपेदुः एतत्तत् यदाहुरेकशतꣳ ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवास तस्मै होवाच ॥ ११ ॥

किमुवाच? इत्यत आह—**तद्यत्रैतदिति** । **तद्यत्रैतदिति** यत् तत्र पर्यायद्वयेऽभिहितं य एषोऽक्षिणि द्रष्टा स्वप्ने महीयमानश्चरतीति स एष **सुषुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाच एतदमृतमभयमेतद्ब्रह्मेति । स ह शान्तहृदयः** इत्यादि समानम् । तृतीयपर्यायेऽपि दोषं ददर्श । तत्कथं? **नाह खल्वयं** नैवैतं सुषुप्तोऽपि **संप्रतीदानीमयमहमस्मीति** स्वात्मानं **जानाति । नो एवेमानि भूतानि** स्वभेदेन वेत्तीत्यत्र—

नात्मानं न परं चैव न सत्यं नापि चानृतम् ।
प्राज्ञः किंच न संवेत्ति तुर्यं तत्सर्वदृक् सदा ॥

इति खिलश्रुतेः । यतो जाग्रत्स्वप्नयोरिवायं न वेत्त्यतो **विनाशमेव**—पूर्ववदेवकार इवार्थः—**अपीतो** अपिगतो नष्ट इव **भवति** । ज्ञातुः सद्भावस्य ज्ञानसापेक्षत्वात् । न हि प्राज्ञे ज्ञानं दृश्यते । अतो विनष्ट इव । न तु विनाशमेवात्मनो मन्यते ।

कुतः? अमृताभयवचनप्रामाण्यात्। शिष्टं पूर्ववत्। इत्थं त्रिभिः पर्यायैः मयोक्तोऽपि तमेवैतं यथावन्नो वेदैव। एतस्मात् मदुक्तात्मनोऽन्यत्रान्यन्न किंचन विद्यत इति तमेव तु व्याख्यास्यामि। हे **मघवन्!** तव स्वल्पदोषो विद्यते। तावन्मात्रापनोदनाय **वसापराणि पञ्च वर्षाणीत्युक्तः स** तथा चकार। ततो व्याविद्धसर्वकल्मषाय तस्मै मघवते जाग्रदाद्यवस्थादोषास्पृष्टमपहतपाप्मत्वादि-लक्षणमात्मतत्त्वं होवाच। **तान्येकशतं** वर्षाणि **संपेदुः**। लोके शिष्टास्तु **एकशतं ह वै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्यमुवासेत्याहुः** ॥ ११ ॥

इन्द्राय प्रजापतिनात्मज्ञानोपदेशः तन्महिमा फलञ्च

मघवन्! मर्त्यं वा इद९ं शरीरमात्तं मृत्युना तदस्यामृतस्याशरीरस्यात्मनोऽधिष्ठानमात्तो वै सशरीरः प्रियाप्रियाभ्यां न वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः। अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथैतान्यमुष्मादाकाशात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन स्वेन रूपेणाभिनिष्पद्यन्ते। एवमेवैष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षत् क्रीडन् रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजन९ं स्मरन् इद९ं शरीर९ं स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः। अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेद इदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेद इदमभिव्याहराणीति स आत्माभिव्याहाराय वाक् अथ यो वेद इद९ं शृणवानीति

स आत्मा श्रवणाय श्रोत्रम् । अथ यो वेद इदं मन्वानीति स आत्मा मनोऽस्य दिव्यं चक्षुः स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते । य एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते तस्मात्तेषाꣳ सर्वे च लोका आत्ताः सर्वे च कामाः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥ १२ ॥

त्रिलोकेश्वरेणेन्द्रेणापि एकोत्तरशतवर्षकृतायासेनात्मज्ञानं प्राप्तम् । यत एवमतो नातः परं पुरुषार्थोऽस्तीत्यात्मज्ञानं महीकरोति—**मघवन्निति** । हे **मघवन्! यदिदं शरीरं** पश्यसि तन्मर्त्यं **वै** मरणशीलत्वेन विनाशित्वात् । तत्कथम्? **मृत्युनात्तं** मृत्युग्रस्तमित्यर्थः । तदात्माभिमानतो देह्यपि मृत्युमेति । ततस्तदात्माभिमतिः मुमुक्षुभिस्त्याज्या । यन्मृत्युग्रस्तमित्युक्तं तच्छरीरमस्य संप्रसादस्य शरीरत्रयसंबन्धाभावाद**मृतस्य** सावयवमूर्तिमद्वाय्वादिविलक्षणत्वेना**शरीरस्यात्मनोऽधिष्ठानं** भोगायतनत्वात् । यत् तेजोऽबन्नादिक्रमेणोत्पन्नमधिष्ठानमनेन जीवेनेति प्रविश्य स एव तदधितिष्ठति । एवं प्रियाप्रियवदधिष्ठानशरीर**मात्तो**ऽधिष्ठितः **सशरीरो** भवति । तदभिमानादयं **प्रियाप्रियाभ्यामात्तो** ग्रस्तः **सशरीरस्य सतः** प्रसिद्धमेतत् । **न ह वै** मम बाह्यसुखदुःखरूप**प्रियाप्रिययोरपहतिरस्तीति** यो मन्यते तन्निवर्तितस्वाज्ञानम**शरीरं सन्तं प्रियाप्रिये न स्पृशतः** तद्धेतुस्वाज्ञानस्य निवृत्तत्वात् । प्रकृत्या शरीरोऽयमात्मा स्वाविद्यया शरीरीव भानात् । ततः समुत्थाय स्वेन रूपेण यथा निष्पत्तिस्तथा वक्तव्येति दृष्टान्त उच्यते—**अशरीर** इति । **अशरीरो** हि **वायुः** शिरःपाण्यादिवैरल्यात् । तथा**भ्रं विद्युत् स्तनयित्नुरित्येतान्यशरीराणि** वर्षणादिप्रयोजनावसाने **तद्यथैतानि** यथोक्तानि वाय्वादिरूपेणागृह्यमाणानि सन्ति । आकाशरूपतामापन्नानि **पुनरमुष्मादाकाशात समुत्थाय** सवित्रं **परं ज्योतिरुपसंपद्य** पुनः प्रावृडागमे वाय्वभ्रविद्युत्स्तनयित्नवः पुरोवातहस्त्याद्याकारचलज्योतिर्लतागर्जनादि **स्वेन स्वेन**

**रूपेणाभिनिष्पद्यन्ते**। तथा **एवमेव संप्रसादोऽस्माच्छरीरात् समुत्थाय** देहात्मभावनां हित्वा **स्वेन रूपेणाभिनिष्पद्यते** इति पुरस्तादेव व्याख्यातम्। यः संप्रसादस्वभावं गतः **स** उत्तमश्चासौ पुरुषश्चेत्यु**त्तमः पुरुषः** क्षराक्षरविलक्षणत्वात्।

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः॥

इति स्मृतेः। य उत्तमपुरुषभावमापन्नः **सोऽयं** विद्वान् यदि जीवन्मुक्तिलीलामनुभवितुमीहते तदा तद्दशामवलम्ब्य सर्वात्मभूतः **पर्येति**। क्वचित् स्वसंकल्पविजृम्भितेन्द्राद्यात्मना तथाविधभोगान् **जक्षत्** क्वचित् संकल्पविकल्पितवयस्यैः **क्रीडन्** क्वचित्तथाविधस्त्रीयानज्ञात्यादिभिः **रममाणश्च** मनसैव **न** कायतः। कायस्य स्त्रीपुरुषान्योन्यतः संपर्कजन्यत्वा**दुपजनमिदं शरीरं** स्मर्तुमप्यरमणीयमिति तन्न **स्मरन्** स्वभावतः कालं नयेत्। यद्वा—सोऽयं विद्वान् तत्र स्वे महिम्नि पर्येत्य तत्प्रपञ्चाधारदृष्ट्या समन्ताद्वर्तते व्याप्नोति। न स्वदृष्ट्या स्वस्य व्याप्यव्यापकताविरलात्ममात्रसंस्थत्वात्। यद्यत्प्राप्तं तत्तत परदृष्ट्या जक्षत् व्याविद्धात्मात्मीयाभिमानतो मिथ्यादृष्ट्या स्त्रिया न ज्ञातिवयस्यादिभिः क्रीडन् रममाण इव भासमानोऽपि पूर्ववदुपजनमिदं शरीराभासमात्मात्मीयाभिमानास्पदतयास्तिनास्तीति न हि कदाचिदपि स्मरन्नवतिष्ठते। इत्थं ब्रह्मभावमापन्नस्य विस्मृतदेहस्मृतित्वेन ब्रह्ममात्रदृक्त्वात्। स तिष्ठतु। जीवन्मुक्तिदशारूढयोगिनोऽपि ब्रह्मपरायणत्वात् तस्यापि चलनादिकं कथं सेद्धुं पारयति? इत्यत्र दृष्टान्तमाह—**स यथेति**। **यथा** लोकेऽश्वो बलीवर्दो वा रथानसोः प्रयुज्यत इति **प्रयोग्यः**। रथोऽनो वा आचरन्त्यनेनेत्याचरणः। तदाकर्षणाय तस्मि**न्नाचरणे युक्तः**। **एवमस्मिन्** रथस्थानीये **शरीरे** करणग्रामोज्जीवकक्रियाज्ञानशक्तिद्वयसंपन्नपञ्चवृत्तिविशिष्टप्रज्ञात्मक**प्राणो युक्तः**। तस्य करणग्रामव्यापृतिप्रवर्तकत्वेन ईश्वरेण सृष्टत्वात्। तदुपजीवत्वेन करणग्रामस्यापि सृष्टत्वात्। **यत्र** चक्षुर्गतकृष्णतारोपलक्षित**माकाशं** शरीरच्छिद्र**मनुविषण्णमनुषक्तं** स प्रकृतः शारीर आत्मा यश्चक्षुषश्चक्षुः **स चाक्षुषः**। तस्य **दर्शनाय** रूपोपलब्धये **चक्षुः** करणम्। तस्य संहतत्वेन परार्थत्वात्। असंहतो हि पर अक्षिणि **दृश्यत** इति प्रजापति-

स आत्मा श्रवणाय श्रोत्रम् । अथ यो वेद इदं मन्वानीति स आत्मा मनोऽस्य दिव्यं चक्षुः स वा एष एतेन दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते । य एते ब्रह्मलोके तं वा एतं देवा आत्मानमुपासते तस्मात्तेषाꣳ सर्वे च लोका आत्ताः सर्वे च कामाः स सर्वाꣳश्च लोकानाप्नोति सर्वाꣳश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच प्रजापतिरुवाच ॥ १२ ॥

त्रिलोकेश्वरेणेन्द्रेणापि एकोत्तरशतवर्षकृतायासेनात्मज्ञानं प्राप्तम् । यत एवमतो नातः परं पुरुषार्थोऽस्तीत्यात्मज्ञानं महीकरोति—**मघवन्निति** । हे **मघवन्! यदिदं शरीरं** पश्यसि तन्मर्त्यं **वै** मरणशीलत्वेन विनाशित्वात् । तत्कथम् ? **मृत्युनात्तं** मृत्युग्रस्तमित्यर्थः । तदात्माभिमानतो देह्यपि मृत्युमेति । ततस्तदात्माभिमतिः मुमुक्षुभिस्त्याज्या । यन्मृत्युग्रस्तमित्युक्तं तच्छरीरमस्य संप्रसादस्य शरीरत्रयसंबन्धाभावाद**मृतस्य** सावयवमूर्तिमद्वाग्व्यादिविलक्षणत्वेना**शरीरस्यात्मनोऽधिष्ठानं** भोगायतनत्वात् । यत् तेजोऽबन्नादिक्रमेणोत्पन्नमधिष्ठानमनेन जीवेनेति प्रविश्य स एव तदधितिष्ठति । एवं प्रियाप्रियवदधिष्ठानशरीर**मात्तोऽ**धिष्ठितः **सशरीरो** भवति । तदभिमानादयं **प्रियाप्रियाभ्यामात्तो** ग्रस्तः **सशरीरस्य सतः** प्रसिद्धमेतत् । **न ह वै** मम बाह्यसुखदुःखरूप**प्रियाप्रिययोरपहतिरस्ती**ति यो मन्यते तन्निवर्तितस्वाज्ञानम**शरीरं सन्तं प्रियाप्रिये न स्पृशतः** तद्धेतुस्वाज्ञानस्य निवृत्तत्वात् । प्रकृत्या शरीरोऽयमात्मा स्वाविद्यया शरीरीव भानात् । ततः **समुत्थाय स्वेन रूपेण** यथा निष्पत्तिस्तथा वक्तव्येति दृष्टान्त उच्यते—**अशरीर** इति । **अशरीरो** हि **वायुः** शिरःपाण्यादिवैरल्यात् । तथा**भ्रं विद्युत् स्तनयित्नुरित्येतान्यशरीराणि** वर्षणादिप्रयोजनावसाने **तद्यथै-तानि** यथोक्तानि वाय्वादिरूपेणागृह्यमाणानि सन्ति । आकाशरूपतामापन्नानि **पुनरमुष्मादाकाशात् समुत्थाय** सवित्रं **परं ज्योतिरुपसंपद्य** पुनः प्रावृडागमे वाय्वभ्रविद्युत्स्तनयित्नवः पुरोवातहस्त्याद्याकारचलज्ज्योतिर्लतागर्जनादि **स्वेन स्वेन**

**रूपेणाभिनिष्पद्यन्ते**। तथा **एवमेव संप्रसादोऽस्माच्छरीरात् समुत्थाय** देहात्मभावनां हित्वा **स्वेन रूपेणाभिनिष्पद्यते** इति पुरस्तादेव व्याख्यातम्। यः संप्रसादस्वभावं गतः स उत्तमश्चासौ पुरुषश्चेत्युत्तमः **पुरुषः** क्षराक्षरविलक्षणत्वात्।

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः॥

इति स्मृतेः। य उत्तमपुरुषभावमापन्नः **सोऽयं** विद्वान् यदि जीवन्मुक्तिलीलामनुभवितुमीहते तदा तद्दशामवलम्ब्य सर्वात्मभूतः **पर्येति**। क्वचित् स्वसंकल्पविजृम्भितेन्द्राद्यात्मना तथाविधभोगान् **जक्षत्** क्वचित् संकल्पविकल्पितवयस्यैः **क्रीडन्** क्वचित्तथाविधस्त्रीयानज्ञात्यादिभिः **रममाणश्च** मनसैव न कायतः। कायस्य स्त्रीपुरुषान्योन्यतः संपर्कजन्यत्वा**दुपजनमिदं शरीरं** स्मर्तुमप्यरमणीयमिति **तन्न स्मरन्** स्वभावतः कालं नयेत्। यद्वा—सोऽयं विद्वान् तत्र स्वे महिम्नि पर्येत्य तत्प्रपञ्चाधारदृष्ट्या समन्ताद्वर्तते व्याप्नोति। न स्वदृष्ट्या स्वस्य व्याप्यव्यापकताविरलात्ममात्रसंस्थत्वात्। यद्यत्प्राप्तं तत्तत परदृष्ट्या जक्षत् व्याविद्धात्मात्मीयाभिमानतो मिथ्यादृष्ट्या स्त्रिया न ज्ञातिवयस्यादिभिः क्रीडन् रममाण इव भासमानोऽपि पूर्ववदुपजनमिदं शरीराभासमात्मात्मीयाभिमानास्पदतयास्तिनास्तीति न हि कदाचिदपि स्मरन्नवतिष्ठते। इत्थं ब्रह्मभावमापन्नस्य विस्मृतदेहस्मृतित्वेन ब्रह्ममात्रदृक्त्वात्। स तिष्ठतु। जीवन्मुक्तिदशारूढयोगिनोऽपि ब्रह्मपरायणत्वात् तस्यापि चलनादिकं कथं सेद्धुं पारयति? इत्यत्र दृष्टान्तमाह—**स यथेति**। **यथा** लोकेऽश्वो बलीवर्दो वा रथानसोः प्रयुज्यत इति **प्रयोग्यः**। रथोऽनो वा आचरन्त्यनेनेत्याचरणः। तदाकर्षणाय तस्मि**न्नाचरणे युक्तः**। **एवमस्मिन्** रथस्थानीये **शरीरे** करणग्रामोज्जीवकक्रियाज्ञानशक्तिद्वयसंपन्नपञ्चवृत्तिविशिष्टप्रज्ञात्मक**प्राणो युक्तः**। तस्य करणग्रामव्यापृतिप्रवर्तकत्वेन ईश्वरेण सृष्टत्वात्। तदुपजीवत्वेन करणग्रामस्यापि सृष्टत्वात्। **यत्र** चक्षुर्गतकृष्णतारोपलक्षित**माकाशं** शरीरच्छिद्र**मनुविषण्णम**नुषक्तं स प्रकृतः शारीर आत्मा यश्चक्षुषश्चक्षुः **स चाक्षुषः**। तस्य **दर्शनाय** रूपोपलब्धये **चक्षुः** करणम्। तस्य संहतत्वेन परार्थत्वात्। असंहतो हि पर अक्षिणि **दृश्यत** इति प्रजापति-

नोक्तत्वात् संप्रसादात्मनोऽसंहतत्वं सिद्धम् । संप्रसादस्य सर्वकरणविषयोपलब्धृत्वे समानेऽपि "य एषोऽक्षिणि पुरुषो दृश्यते" इत्यक्षिणि विशेषो दृश्यते । "चक्षुषा यत्पश्यति तत्सत्यं भवति" इति श्रुतेः । सर्वविषयोपलब्धृत्वं कथं? इत्यत्र—**अथ योऽस्मिन्** कार्यकरणसंघाते सुरभि दुर्गन्धि च **जिघ्राणीति वेद स ह्यात्मा** तस्य गन्धविषयोपलब्धये **घ्राणम्** । अथ **योऽभिव्याहराणीति वेद स ह्यात्मा** । तस्य तत्क्रियासिद्धये **वाक्** । **अथ यः शृणवानीति वेद स आत्मा । श्रवणाय श्रोत्रम् । अथ यो मन्वानि** मननव्यापारं करोमीति वेद **स ह्यात्मा** । इत्येवं सर्वत्र सर्वदा वेदनमेवास्य रूपमित्यवगम्यते । "यथा यः पूर्वाग्नेयादिदिक्षु विदिक्षु च ऊर्ध्वं च प्रकाशयति स सविता" इत्युक्त्या प्रकाशमात्रत्वमवगम्यते । तथा चक्षुरादिप्रतिकरणमात्मा । तत्प्रवृत्तिनिमित्तं जानातीत्युक्त्यात्मनो ज्ञप्तिमात्रत्वमवगम्यते । तद्व्यापृततया ज्ञानकर्तृत्वमिति चेन्न; सत्तास्वरूपेण ज्ञप्तिमात्रत्वात् । सवितृवत् तदुपलब्धिकरणं **मनोऽस्य दिव्यं चक्षुः** । तस्य सर्वविषयोपलब्धिकरणत्वात् मनसो दिव्यत्वम् । **स एष वै** संप्रसादो विद्वान् स्वाविद्याकृतदेहेन्द्रियमनोवियुक्तसर्वात्मभावमेत्य मनआदिकरणग्रामप्रवृत्तिनिमित्तं भूत्वा स्वभास्य**दिव्येन चक्षुषा मनसैतान् कामान् पश्यन् रमते** । **य एते ब्रह्मलोके** प्रजापतिनोक्त आत्मा इन्द्रात् **देवास्तं** श्रुत्वा **उपासते** । तदुपासनाच्च **तेषां सर्वे च लोका अत्ताः सर्वे च कामाः** । यदर्थं हीन्द्र एकशतं वर्षाणि प्रजापतौ ब्रह्मचर्यमुवास देवैरपि तत्फलं प्राप्तमित्यर्थः । इदानींतनोऽपि **यस्तमात्मानमनुविद्य विजानाति सोऽपि सर्वान् लोकान् सर्वांश्च कामानाप्नोति** । अतः सर्वेषामात्मज्ञानं तत्फलञ्च तुल्यमित्यर्थः । द्विरुक्तिः प्रकरणसमाप्त्यर्था ॥ १२ ॥

मन्त्राम्नायकथनम्

श्यामाच्छबलं प्रपद्ये शबलाच्छ्यामं प्रपद्ये अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात् प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामीत्यभिसंभवामीति ॥१३॥

मन्त्राम्नाय उच्यते—**श्यामादिति**। श्याम इव श्यामो गम्भीरवर्णः। हार्दब्रह्मध्यानेन तज्जित्वा तस्मात् **श्यामात्** शबल इव शबलो ब्रह्मलोकः। सर्वकाममिश्रत्वादस्य शाबल्यम्। शरीरपातादूर्ध्वं **शबलं** ब्रह्मलोकं **प्रपद्ये**। तद्विपर्ययेण नामरूपव्याकरणाय **शबलात्** ब्रह्मलोकात् **श्यामं** हार्दभावं **प्रपद्ये**। कथं शबलं प्रपद्ये? इत्यत आह—**अश्व इवेति**। यथाश्वो **रोमाणि विधूय** स्वगतपांसुजालं श्रमं चापनयति निर्मलो भवति तथैवमेव हार्दब्रह्मजयेन धर्माधर्मनिमित्तं पुण्यं **पापञ्च** विधूय यथा च राहुग्रस्त**चन्द्रो राहुमुखात् प्रमुच्य** प्रच्याव्य स्वभावभारूपतामेति तथैव शरीरग्रस्तः संप्रसादः राहुस्थानीयं **शरीरं धूत्वा** यत् ध्यातव्यं तद्ध्यानेन **कृतात्मा** कृतकृत्यः सन् **अकृतं ब्रह्मलोकमभिसंभवामीति**। द्विरुक्तिर्मन्त्रसमाप्त्यर्था ॥ १३ ॥

ध्यानार्थंससाधनब्रह्मस्वरूपनिर्देशः

**आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतꣳ स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्वेतमदत्कमदत्कꣳ श्वेतं लिन्दु माभिगां लिन्दु माभिगाम् ॥ १४ ॥**

ध्यानार्थं ससाधनब्रह्मस्वरूपं निर्दिशति—**आकाश** इति। आकाशो नाम श्रुतिषु प्रसिद्ध आत्मा। आकाशवदशरीरत्वात् सूक्ष्मत्वात् व्यापकत्वाच्च। स **आकाशो नाम** स्वात्मस्थजगद्बीजभूत**नामरूपयोर्निर्वहिता**। **ते** नामरूपे **यदन्तरा** यन्मध्ये विकल्पिते रज्जुसर्पवत् यत्सत्तां विना सद्रूपे यत्सत्तया सत्यवदवभासमाने तदारोपापवादाधिकरणं यत् **तद्ब्रह्म** स्वाधेयसापेक्षाधारतावैरल्यात्। **तदमृतं** सन्मात्ररूपत्वात्। तदेव स्वाज्ञदृष्टिविकल्पितसर्वजन्तुषु स्वज्ञदृष्ट्या तद्धृदयगतकामादिवृत्तिसहस्रभावाभावप्रकाशकप्रत्यग्रूपेण

योऽवभासते **स** ह्यात्मा। ब्रह्मैवात्मेत्यत्र "सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येव न विचिकित्स्यं" इति श्रुतेः। इत ऊर्ध्वं मन्त्रः **प्रजापते**श्चतुर्मुखस्य **सभां** मौनिमण्डलमण्डितां यत्प्रभुविमितमित्युक्तं **तद्वेश्म प्रपद्ये**। किंच **यशो** नामात्माहं **भवामि**। विशेषतस्तं ब्राह्मणा उपासत इति **ब्राह्मणानां यशो**ऽहमात्मा **भवामि**। तथा **राज्ञां विशां च**। तयोरप्यधिकृतत्वात्तद्यश आत्मा भवामि। इत्थं सर्वजन्तूनां **यशोऽहमनुप्रापत्सि**। **स** **ह्यहं यशसां** सर्वजन्तूनामपि हृदयासनप्रत्यगात्माभिधानयशो भवामीत्यर्थः। कदापि **श्वेतं** वर्णतो रोहितमिश्र-पक्वबदरोपमं **तच्चादत्कं** दन्तहीनमपि **अदत्क**मखिलप्राण्यायुःप्रज्ञासत्त्वादिभक्ष-यितृ। तादृशश्वेतं स्त्रीत्वव्यञ्जकं **लिन्दु** पिच्छिलं माभिगच्छेयम्। **माभिगां माभिगामि**ति द्विरुक्तिः सर्वानर्थप्रदर्शनार्था॥ १४॥

विद्यापरम्परा उक्तार्थसंक्षेपश्च

**तद्धैतत् ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यः आचार्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य अहिꣳसन् सर्वभूतानि अन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते॥ १५॥**

एतद्विद्यापरम्परामनुक्रामति—**तदि**ति। **तद्धैतत्** सोपासनं सोपकरणमात्म-ज्ञानं तद्वाचकत्वेन ओमित्येतदक्षरमित्याद्यष्टाध्यायलक्षणग्रन्थरूपेण **ब्रह्मा** चतुरा-ननः **प्रजापतये** कश्यपा**योवाच**। असावपि **मनवे मनुः प्रजाभ्य** इत्येवं संप्रदायपरम्परयागतमिदमुपनिषद्विज्ञानमद्यापि विद्वन्मुखतः प्रवर्तते। षष्ठाध्या-यादिप्रकाशितपरविद्यैव सफला नापरविद्येति प्राप्तानर्थपरिजिहीर्षया इयमपरब्रह्म-विद्यापि विद्वदनुष्ठीयमाना यदि तदा ब्रह्मलोकाप्तिद्वारा परविद्यतामेत्य सफला

भवेदितीदमुच्यते—**आचार्येति**। मुमुक्षुः स्मृत्युक्तनियमतो यथाविधान**माचार्यकुलात्** सहार्थतो **वेदमधीत्य** धर्मजिज्ञासामावृत्य धर्मजिज्ञासां समापयित्वा गुर्वनुज्ञया न्यायतः स्वकुलानुरूपान् दारानाहृत्य **कुटुम्बे** गार्हस्थ्योचितकर्मणि स्थित्वा विविक्ते **शुचौ देशे** यथावदासीनः **स्वाध्यायमधीयानः** नियमतो यथाशक्ति ऋगाद्यभ्यासं कुर्वन् **धार्मिकान्** पुत्रान् शिष्यांश्च **विदधत्** नियमयन् स्वहार्दे ब्रह्मणि **सर्वेन्द्रियाणि संप्रतिष्ठाप्य** तन्निर्वर्त्यकायिकवाचिकमानसकर्माणि च संन्यस्य स्थावरजङ्गमप्रविभक्त**सर्वभूतान्यहिंसन्**, भिक्षानिमित्तपर्यटनतो भूतहिंसा स्यादित्यत्राह—**अन्यत्र तीर्थेभ्य** इति। तीर्थानि नाम तत्तदाश्रमोचितश्रुतिस्मृतिविहितकर्माणि। तेभ्यो**ऽन्यत्राहिंसन्निति** यथोक्तप्रकारेण **यावदायुषमेवं वर्तयन्** देहान्ते निर्वासनो भूत्वा **ब्रह्मलोकमभिसंपद्यते**। तदुपसंपद्य तन्मुखात् परब्रह्मविद्यामवाप्य **न च पुनरावर्तते** पुनरावृत्तिहेतुस्वाज्ञानतत्प्रभववासनावैरल्यात् तल्लोकस्थितिपर्यन्तं तत्रोषित्वा चतुष्पदैक्यसमये तेन साकं कैवल्यमेतीत्यर्थः। औपनिषदविद्यापरिसमाप्त्यर्थेयं द्विरावृत्तिः॥ १९॥

## इति अष्टमोऽध्यायः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
छान्दोग्यस्य विवरणं लिखितं स्यात् स्फुटं लघु॥
छान्दोग्योपनिषद्व्याख्याग्रन्थसंख्यानमुच्यते।
अष्टसप्तत्यधिकाष्टशताधित्रिसहस्रकम्॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे नवसंख्यापूरकं
छान्दोग्योपनिषद्विवरणं सम्पूर्णम्

# बृहदारण्यकोपनिषत्

पूर्णमदः—इति शान्तिः

## प्रथमोऽध्यायः [1]

### प्रथमं अश्वब्राह्मणम्

अश्वमेधविज्ञानाय अश्वविषयदर्शनम्

उषा वा अश्वस्य मेध्यस्य शिरः सूर्यश्चक्षुर्वातः प्राणो व्यात्तमग्निर्वैश्वानरः संवत्सर आत्माश्वस्य मेध्यस्य । द्यौः पृष्ठमन्तरिक्षमुदरं पृथिवी पाजस्यम् । दिशः पार्श्वे अवान्तरदिशः पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मांसानि । ऊवध्यं सिकताः सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमानि उद्यन् पूर्वार्धो निम्लोचन् जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत् स्तनयति यन्मेहति तद्वर्षति वागेवास्य वाक् ॥ १ ॥

[1] अयमध्याय उपनिषदि प्रथमोऽपि आरण्यकक्रमेण तृतीयः एवमुपरिष्टादपि

काण्वीयोपनिषद्विद्याकमलाभाग्यगौरवम् ।
कैवल्यानन्दसाम्राज्यं स्वमात्रं कलयेऽन्वहम् ॥

इह खलु वाजसनेयान्तर्गतकाण्वीये शुक्लयजुर्वेदे शतपथब्राह्मणे सप्तदशकाण्डे "उषा वा अश्वस्य" इत्यादिषडध्यायगर्भितेयं बृहदारण्यकोपनिषत् आम्नाता। तस्याः पाठतोऽर्थतोऽपि बृहत्त्वात् आरण्यकमध्ये पठितत्वात् आरण्यैर्वनियतिभिः पठ्यमानत्वाद्वा बृहदारण्यकम्। तथा च महावार्तिकेऽभिहितं—

अर्थतः पाठतश्चैव बृहत्त्वात् बृहदुच्यते ।
आरण्यैः पठ्यमानत्वादारण्यकमिति स्मृतम् ॥

इति। बृहदारण्यकसंज्ञिकेयमुपनिषत् ब्रह्मविद्यातत्पराणां स्वाज्ञानावसादनात् उपनिपूर्वस्य सदेरर्थानुगमात् तादर्थ्येन ग्रन्थोऽप्युपनिषत्। विशुद्धसत्त्वो ह्यत्राधिक्रियते। सत्त्वशुद्धेः सत्कर्मानुष्ठानप्रभवत्वात्।

स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ।

इति स्मृतेः। पूर्वकाण्डे तावत् दर्शपूर्णमासादि वाजिमेधान्तं कर्माणि विहितानि। समस्तकर्माश्रयभूतेश्वरोपासनानि चाभिहितानि। केवलं कर्म तदध्यक्षेशज्ञानं वा तदुभयं समुच्चित्य वा सम्यगनुष्ठितं सत् सकामस्य पुनरावृत्त्यर्हदक्षिणमार्गप्रापकं भवति। तच्च्युतेः पुण्यक्षयसापेक्षत्वात् "क्षीणे पुण्ये मर्त्यलोकं विशन्ति" इति स्मृतेः। निष्कामस्य तु तद्भावानुरोधेनार्चिरादिमार्गेणापुनरावृत्तिलक्षणब्रह्मलोकाप्तिः। तथा च वक्ष्यति "तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः" इति। यथोक्तमार्गद्वयबहिष्कृतानां तिर्यग्भावापत्तिं वक्ष्यति "य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकं" इति। न ह्युक्तलक्षणलक्षितगतित्रयेऽपि ब्रह्मभावापत्तिरिष्यते। तद्भावापत्तिस्तु स्वातिरिक्तप्रपञ्चगन्धविरलनिष्प्रतियोगिकाद्वैतात्मावगतिसमकालमवगम्यते। तदवगतेः क्रियाकारकफलस्पृहोपमर्दनपूर्वकत्वात्। "नान्यः पन्था अयनाय विद्यते" इति श्रुतेः।

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
बहूनां जन्मनामन्ते ज्ञानवान् मां प्रपद्यते ।

"ज्ञानी त्वात्मैव मे मतं" इत्यादिस्मृत्यनुरोधेन स्वकृतसत्कर्मफलार्पण-सन्तुष्टेश्वरप्रसादप्रादुर्भूतचित्तशुद्धिनित्यादिसाधनचतुष्टयालङ्कारपारमहंस्यधर्ममुपेयुषः कस्यचिदेव निष्प्रतियोगिकब्रह्ममात्रजिज्ञासा उदेति। तथाविधजिज्ञासोः "आत्मानमेवावेत् अहं ब्रह्मास्मीति," "विज्ञानमानन्दं ब्रह्म," "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः," "अजरोऽमरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति," "अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्ति अथ नामधेयं सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यं" इत्यादिवक्ष्यमाणश्रुतिसिद्धब्रह्ममात्रावगतिहेतुतया इयं बृहदारण्यकोपनिषदारब्धा। न हि ब्रह्मदर्शनादन्यत्र ब्रह्मभावापत्तिरस्ति ज्ञानस्य स्वातिरिक्तभ्रमनिरासकत्वात्। तथा चेत् "उषा वा" इत्यत्र विराडुपासनाभिधीयते। "य एष एतस्मिन् मण्डले पुरुषः," "मनोमयोऽयं पुरुषः," "विद्युद्ब्रह्मेति," "वाचं धेनुमुपासीत" इत्याद्यङ्गोपासनानि च निष्फलानि स्युरिति चेन्न; तेषां निष्कामस्य सत्त्वशुद्धिहेतुत्वेन ब्रह्मावगत्युपकारकत्वात् न हि निष्फलत्वं वक्तुं युक्तम्। विशुद्धसत्त्वस्य हि ब्रह्मावगतिरुदेति। यत एवमतो विराडादितदङ्गोपासनानि तत्सहकारिकर्माणि च विशिष्टाधिकारिप्राप्यब्रह्मज्ञानं चेत्येतत्सर्वं यत्र पौष्कल्यमर्हति तस्या बृहदारण्यकोपनिषदो यथोक्तजिज्ञासुप्रतिपत्त्यर्थमल्पग्रन्थतो विवरणमारभ्यते—**उषा वा अश्वस्य** इत्यादिना। अश्वमेधविज्ञानाय उषा वेत्यादि। अश्वमेधक्रतोः प्राजापत्यात्मकत्वात्। उषाशब्देन ब्राह्मोऽयं मुहूर्त उच्यते। **वै**शब्दः प्रसिद्धं कालं स्मारयति। **अश्वस्य** याज्ञीयत्वेन **मेध्यस्य** सर्वावयवानां शिरःप्राधान्यात्। तस्य **उषाः शिर** इव **शिरः**। शिरआद्यवयवेषु कालादिदृष्टिः पशुसंस्कारार्थेत्यर्थः। प्रतिमादौ विष्ण्वादिदृष्टिवत् पशौ काललोकदेवतात्मकवैराजदृष्टिः कार्या। क्रतोः प्राजापत्यत्वात्। शिरसोऽनन्तरत्वात्। **सूर्यश्चक्षुः** चक्षुषः सूर्याधिष्ठितत्वाद्वा। **वातो ह्यस्य प्राणः**। "वायुः प्राणः" इति श्रुतेः। **अयमग्निर्वैश्वानरोऽस्य व्यात्तं** विवृतं मुखम्। "आस्यमाहवनीयः" इति श्रुतेः। **संवत्सर आत्मा**। निमेषादिकालावयवानां संवत्सरस्य शरीरत्वात्। द्वादशमासात्मकः संवत्सरोऽय-

मात्मा शरीरम् । "मध्यं ह्येषामङ्गानामात्मा" इति श्रुतेः । सर्वत्रानुषङ्गार्थम-**श्वस्य मेध्यस्येति** पुनर्वचनम् । ऊर्ध्वत्वसामान्यात् **द्यौः पृष्ठम्** । सुषिरत्व-सामान्या**दन्तरिक्षमुदरम्** । पादस्यमिति वर्णव्यत्ययेन **पाजस्यम्** । **पृथिवी** पादस्थानमित्यर्थः । दिशां पार्श्वसंबन्धात् पूर्वादिचतस्रो **दिशः पार्श्वे** । दिक्पार्श्वयोः सङ्ख्यावैषम्यमिति चेन्न; अस्य सर्वतोमुखत्वेन पार्श्वाभ्यामेव सर्वदिशां संबन्धात् । **आग्नेयाद्यवान्तरदिशो** हि **पर्शवः** पार्श्वास्थीनि । **ऋतवोऽङ्गानि** ऋतूनां संवत्सरावयवत्वेनाङ्गसाधर्म्यम् । **पर्वाण्यङ्गसन्धयो मासाश्चार्धमासाश्च** भवेयुः । **प्रतिष्ठा** पादाः **अहोरात्राणि** प्राजापत्य-दैवपित्र्यमानुषाभिधानपादैः प्रतिष्ठितत्वात् बहुवचनम् । कालात्मनोऽहोरात्रैः प्रतिष्ठितत्वात् । **अस्थीनि नक्षत्राणि** शुक्लत्वसामान्यात् । पुरान्तरिक्षस्य उद-रत्वाभिधानात् **नभो** नभःस्था मेघा **मांसानि** जलरुधिरसेचनसामान्यात् । **सिकता ऊवध्यं** उदरस्थार्धपक्वाशनं विशिष्टावयवत्वसामान्यात् । **गुदाः सिन्धवो** नद्यः स्यन्दनसामान्यात् । गुदा इति तद्गतनाड्यभिप्रायेण बहु-वचनम् । **यकृच्च क्लोमानश्चेति** हृदयदक्षिणोत्तरमांसखण्डौ । क्लोमान इति नित्यबहुवचनम् । यकृत्क्लोमैकदेशे **पर्वताः** काठिन्योच्छ्रितत्वसामान्यात् । **ओषधयश्च वनस्पतयश्च** क्षुद्राल्पस्थावराः **लोमानि** केशाश्च । **उद्यन्** सविता अश्वस्य **पूर्वार्धः** । नाभेरूर्ध्वं **निम्लोचन्** अस्तमयन् सविता अश्वस्य **जघनार्धः** पूर्वापरत्वसामान्यात् । **यद्विजृम्भते** गात्राणि विक्षिपति **तद्विद्योतते** मुखघनविदारणसामान्यात् । **यद्विधूनुते** गात्रकम्पनं करोति **तत् स्तनयति** गर्जनसामान्यात् । अश्वो **यन्मेहति** मूत्रयति **तद्वर्षति** तत्सेचन-सामान्यात् । **वाक्** शब्दराशिरेवास्य अश्वस्य **वाक्** इति ॥ १ ॥

अश्वस्य उत्पत्तिः स्तुतिश्च

अहर्वा अश्वं पुरस्तान्महिमान्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेनं पश्चान्महिमान्वजायत तस्यापरे समुद्रे योनिरेतौ

**वा अश्वं महिमानावभितः संबभूवतुः । हयो भूत्वा देवानवहत् वाजी गन्धर्वानर्वासुरानश्वो मनुष्यान् समुद्र एवास्य बन्धुः समुद्रो योनिः ॥ २ ॥**

अहरेवास्य सुवर्णरजतमहिमाग्रहावित्याह—**अहरिति** । अहर्वाहरेव सौवर्णः दीप्तिसामान्यात् । अहर्वा **अश्वं पुरस्तात् महिमान्वजायत** अश्वस्य प्रजापतित्वेन सौराह्ना लक्ष्यमाणत्वात् । वृक्षमनु विद्योतत इतिवत् । अश्वं लक्षयित्वा महिमा जायते । **तस्य** ग्रहस्य **पूर्वे** पूर्वः **समुद्रे** समुद्रः विभक्तिव्यत्ययेन द्रष्टव्यः । तस्य मेघयोनित्वात् **योनि**रित्यासादनस्थानम् । तथा रजतो ग्रहो **रात्रिः** जघनवर्णसामान्यात् । एनमश्वं **पश्चात्** पृष्ठतो**ऽन्वजायत** । **तस्यापरे समुद्रे योनि**रश्वस्य महतो महिमा विभूतिरित्यर्थः । यत्सौवर्णराजतग्रहावुभयतः स्थाप्येते **तावेतौ वै महिमानौ** । ग्रहावश्वम**भितः संबभूवतु**रिति पुनर्वचनं स्तुत्यर्थम् । हयो भूत्वेत्यादिरपि स्तुत्यर्थ एव । हिनोतेः गतिकर्मविशिष्टत्वात् । **हयो भूत्वा देवानवहत्** देवानां वोढाभवत् । प्रजापतित्वात् देववोढृत्वं युज्यते । वाहत्वं निन्दा स्यादिति चेन्न ; स्वाभाविकत्वात् । न हि स्वाभाविकी वृत्तिः निन्दनाय कल्पते । अस्य देवादिसंबन्धः स्तुतिरेवेत्यर्थः । तथा जातिविशेषा वाज्यादयः । **वाजी** भूत्वा **गन्धर्वा**नवहदित्यनुषज्यते । तथा**र्वा** भूत्वा**सुरान्** **अश्वो** भूत्वा **मनुष्या**नवहत् । **समुद्र एवास्य बन्धुः** । समुद्रशब्देन परमात्मोच्यते । विराडादेस्तत्रैव बध्यमानत्वात् । स्वोत्पत्तिं प्रति **समुद्रो योनिः** कारणम् । एवं शुद्धयोनित्वेनाश्वः स्तूयते । अश्वस्य समुद्रयोनित्वं प्रसिद्धमेव "अप्सुयोनिर्वाश्वः" इति श्रुतेः ॥ २ ॥

**इति प्रथमं ब्राह्मणम्**

## द्वितीयं अग्निब्राह्मणम्

### आदौ अप्सृष्टिः

नैवेह किंचनाग्र आसीत् मृत्युनैव इदमावृतमासीत्। अशनायया अशनाया हि मृत्युस्तन्मनोऽकुरुत आत्मन्वी स्यामिति। सोऽर्चन् अचरत् तस्यार्चत आपोऽजायन्तार्चते वै मे कमभूदिति तदेवार्कस्यार्कत्वं कꣳ ह वा अस्मै भवति य एवमेतदर्कस्यार्कत्वं वेद ॥ १ ॥

अथाश्वमेधोपयोग्यग्नेरुत्पत्तिं तद्दर्शनं तत्फलं च प्रकटयितुं द्वितीयब्राह्मणमारभ्यते—**नैवेति**। **अग्रे** सृष्टेः प्राक् **इह** स्वाज्ञविकल्पितसंसारचक्रे **किञ्चन** किञ्चिदपि नामरूपविकल्पजातं **नैवासीत्** न बभूवेत्यर्थः। सृष्टेः प्रागिदमसत्तया शून्यमेव स्यादिति चेन्न; तदा स्वाज्ञदृष्ट्यास्य जगतो बीजात्मना विद्यमानत्वात् न हि शून्यता स्यात्। तथा चेत् किं न दृश्यते? इति चेत्; मृत्युनावृतत्वात्। एवमावारको मृत्युः किंविशेषणविशिष्ट इत्यत आह—**अशनाययेति**। अशितुमिच्छा **अशनाया**। सैव मृत्युः सर्वप्राणिलिङ्गशरीराभिमानी हिरण्यगर्भः। तेन **मृत्युना इदं** कार्यजातं मृदा घटादिवत् **आवृतमासीत्**। कथं पुनरशनायाया मृत्युत्वं? इत्यत आह—**अशनाया हि मृत्युरिति**। हिशब्दः प्रसिद्ध्यर्थः। यः परस्वमशितुमिच्छति तदनन्तरमेव हि परान् हन्ति। तेनासावशनायया लक्षितो **मृत्युर्**हिरण्यगर्भो यत् वक्ष्यमाणकार्यालोचनक्षमं **तत्** सङ्कल्पादिलक्षणं **मनोऽ**न्तःकरण**मकुरुत** कृतवानित्यर्थः। केनाभिप्रायेण? इत्यत आह—**आत्मन्वी स्यामिति**। लिङ्गव्यत्ययेनात्मवान् भवेयमिति। **स** मृत्युरभिव्यक्तमनसा समनाः सन् आत्मानम**र्चन्** कृतार्थोऽस्मीति पूजयन् **अचरत्** चरणमकरोत्। एवमात्मानम**र्चतः** पूजयतो मृत्योः पूजाङ्गत्वेन रसात्मिका **आपोऽजायन्त** उत्पन्नाः। आकाशादिभूतत्रयसृष्ट्यनन्तरमपूसृष्टिरिति

मन्तव्या। "आत्मन आकाशः संभूतः" इति श्रुत्यन्तरात् विकल्पासम्भवाच्च सृष्टिक्रमस्य। **अर्चते वै** पूजां कुर्वते मे मह्यं **कं** उदकम**भूदि**त्यमन्यत। यतो मृत्युस्तदेव तस्मादेव हेतोरश्वमेधक्रतूपयोगिकस्यार्कस्याग्नेरर्कत्वे हेतुरित्यर्थः। अग्नेरर्कनामनिर्वचनमेतद्गौणं अर्चनात् सुखहेतुपूजाकारणादप्संबन्धाच्च। **य एवमर्कस्याग्नेरर्कत्वं** वेद **अस्मा** एवंविदे नामसामान्यात् कं उदकं सुखं वा **ह वा** इत्यवधारणात् **भवत्ये**वेत्यर्थः॥ १॥

अपामर्कत्वं पृथिवीसृष्टिश्च

**आपो वा अर्कस्तद्यदपाꣳ शर आसीत् समहन्यत सा पृथिव्यभवत् तस्यामश्राम्यत् तस्य श्रान्तस्य तप्तस्य तेजोरसो निरवर्तताग्निः॥ २॥**

कः पुनरसावर्कः? इत्यत्र आह—**आप** इति। या अर्चनाङ्गभूतास्ता एवा**पो वा अर्कः** अपां तद्धेतुत्वात्। अप्सु अग्निः प्रतिष्ठितः। "आपो वाग्नेर्योनिः" इति श्रुतेः। न पुनः साक्षादर्कता अग्निप्रकरणात्। तथा च वक्ष्यति "अयमग्निरर्कः" इति। **तत्**तत्र **यदपां शर** इव शरो दधिक्षीरादिमण्डवत् मण्डभूतमा**सीत् तत् समहन्यत** सम्यक् घातमापद्यत। लिङ्गव्यत्ययः छान्दसः। योऽपां शरः स समहन्यत। **सा पृथिव्यभवत्**। तयाप्छरपृथिव्या निर्वृत्तमिदमण्डमित्यर्थः। **तस्या**मेवमुत्पादितायां स मृत्युर**श्राम्यत्** यथान्यो गुरुतरकार्यं कृत्वा श्राम्यति तथायं श्रमयुक्तो बभूवेत्यर्थः। एवं **तस्य श्रान्तस्य** खिन्नस्य मृत्योः शरीरात् **तेज** एव **रसः** सारोऽग्निः प्रथमजो विराट् **निरवर्तत** प्रादुर्बभूवेत्यर्थः। "स वै शरीरी प्रथमः" इति स्मृतेः॥ २॥

विराडात्मनः त्रेधा विभजनम्

**स त्रेधात्मानं व्यकुरुतादित्यं तृतीयं वायुं तृतीयꣳ स एष प्राणस्त्रेधा विहितः। तस्य प्राची दिक् शिरोऽसौ चासौ च ईर्मौ।**

**अथास्य प्रतीची दिक् पुच्छमसौ चासौ च सक्थ्यौ दक्षिणा च उदीची च पार्श्वे द्यौः पृष्ठमन्तरिक्षमुदरमियमुरः स एषोऽप्सु प्रतिष्ठितो यत्र क्वचैति तदेव प्रतितिष्ठत्येवं विद्वान् ॥ ३ ॥**

स विराडात्मानं त्रिधा व्यभजदित्याह--**स** इति । **स** प्रथमजः स्वयमेव कार्यकारणसंघातमात्मानं **त्रेधा** त्रिप्रकारं **व्यकुरुत** व्यभजदित्यर्थः । कथम् ? अग्निवाय्वपेक्षयादित्यं **तृतीयं** अकुरुतेत्यनुवर्तते । तथाग्न्यादित्यापेक्षया **वायुं तृतीयम्** । तथा वाय्वादित्यापेक्षयाग्निं तृतीयमिति संख्यापूरणम् । त्रयाणां समवीर्यत्वात् । **स एष** सर्वभूतान्तर्यामी **प्राणोऽ**ग्निवाय्वादित्यरूपेण **त्रेधा विहितः** स्वेनैव मृत्युरूपेण त्रेधा विभक्त इत्यर्थः । न हि विराट्स्वरूपोपमर्देन । तस्याश्वमेधोपयोगिकाग्निस्वरूपत्वात् । इत्थमसौ शुद्धजन्मेति यः स्तूयते **तस्य प्राची दिक् शिरः** वैशिष्ट्यसामान्यात् । **असौ चासौ च** ऐशान्याग्नेय्यौ **ईर्मौ** बाहू । ईरयतेर्गतिकर्मार्थत्वात् । **अथास्याग्नेः पुच्छं प्रतीची दिक्** । पूर्वाभिमुखस्य जघन्यभागसंबन्धात् । **असौ चासौ च** वायव्यनैर्ऋत्यौ **सक्थ्यौ** पृष्ठकोणत्वसामान्यात् । **दक्षिणा च उदीची च पार्श्वे** उभयदिक्संबन्धसामान्यात् । **द्यौः पृष्ठमन्तरिक्षमुदरमिति** पूर्ववत् । **इयमुरः** अधोभागसामान्यात् । **स एषोऽ**ग्निर्विश्वात्मको**ऽप्सु प्रतिष्ठितः** । "इमे लोका अप्स्वन्तः" इति श्रुतेः । य **एवम**ग्नेरप्रतिष्ठितत्वं **विद्वान्** सोऽयं **यत्र क्व च एति** यस्मिन् कस्मिंश्चिद्देशे गच्छति **तदेव प्रतितिष्ठति** तत्रैव स्थितिं लभत इत्युपासनाफलमेतत् ॥ ३ ॥

मिथुनसंवत्सरादिसृष्टिः

**सोऽकामयत द्वितीयो म आत्मा जायेतेति स मनसा वाचं मिथुनꣳ समभवदशनाया मृत्युस्तद्यत् रेत आसीत् स संवत्सरोऽभवत् । न ह पुरा ततः संवत्सर आस तमेतावन्तं कालमबिभः ।**

**यावान् संवत्सरस्तमेतावतः कालस्य परस्तादसृजत। तं जातमभि-व्याददात् स भाणकरोत् सैव वागभवत् ॥ ४ ॥**

सोऽबादिक्रमेणात्मानमसृजतेत्युक्तम्। स किंव्यापारस्सन्नकुरुत? इत्याकाङ्क्षायामाह—**सोऽकामयतेति**। यो मृत्युरित्युक्तः **सोऽयं द्वितीयो मे** ममात्मा शरीरं **जायेतेति अकामयत** कामितवान्। स एवं कामयित्वा पूर्वोत्पन्नमनसा त्रयीलक्षणां **वाचं मिथुनं समभवत्** मनसा त्रयीं तद्विहितसृष्टिक्रमं चान्वालोचयदित्यर्थः। अन्यत्र एतत्प्रसङ्गो मा भूदित्युक्तार्थमेव परामृशति—**अशनाया मृत्युरिति**। अशनायालक्षित इत्यर्थः। **तत्**तत्र मिथुने प्रथमशरीरिप्रजापतिकारणं **यद्रेत आसीत्** तद्बीजभूतरेतसाप्सु अनुप्रविश्याण्डाकारेण गर्भितः सन् **स संवत्सरोऽभवत्** संवत्सरादिकालनिर्माता प्रजापतिरभवत्। संवत्सरनिर्मातृप्रजापतेः **ततः न ह पुरा संवत्सरः** काल **आस** न बभूव। **तं** संवत्सरनिर्मातृगर्भं प्रजापतिं यावान् कालोऽभवत् **एतावन्तमेतावत्**संवत्सरपरिमाणं **कालं अबिभः** भृतवान् **यावान् संवत्सर** इह प्रसिद्धः। ततः परस्तात् किं कृतवान्? **तं एतावतः** संवत्सरमात्रकालस्य **परस्ता**दूर्ध्वं प्रथमज**मसृजत**। **तमेतं जात**मशनायावत्त्वात् मृत्युर**भिव्याददात्** स्वमुखविदारणं कृतवान् तमत्तुमित्यर्थः। **सोऽयं** कुमारो भीतस्सन् स्वभावविद्यायुक्तो **भाण्** इत्येवं शब्द**मकरोत्**। **सैव वाक्** शब्दो**ऽभवत्** ॥ ४ ॥

तस्य जगत्सृष्टिः तद्भक्षणप्रवृत्त्या अदितित्वम्

**स ऐक्षत यदि वा इममभिमꣳस्ये कनीयोऽन्नं करिष्य इति स तया वाचा तेनात्मना इदꣳ सर्वमसृजत यदिदं किंच ऋचो यजूꣳषि सामानि छन्दाꣳसि यज्ञान् प्रजाः पशून्। स यद्यदेव असृजत तत्तदत्तुमध्रियत सर्वं वा अत्तीति तददितेः अदितित्वꣳ**

सर्वस्यैतस्य अत्ता भवति सर्वमस्यान्नं भवति य एवमेतददितेरदितित्वं वेद ॥ ५ ॥

ततः किं? इत्यत आह—स इति। स मृत्युर्भीतरवं पुत्रमैक्षत अशनायावानपीक्षितवान्। यदि कदाचित् वा इमं कुमारं अभिमंस्ये हिंसिष्ये—अभिपूर्वमन्यतेर्हिंसार्थत्वात्—तदा कनीयोऽल्पतरमन्नं करिष्य इत्येवमीक्षित्वा एतन्मात्रभक्षणे कनीयोऽन्नं स्यात्। दीर्घकालभक्षणार्थं बह्वन्नं कर्तव्यमिति मनीषया स्वकुमारभक्षणादुपरराम। स बह्वन्नार्थी सन् तयैव पूर्वोक्तत्रयीरूप-वाचात्मना मनसा मिथुनीभावमालोच्य इदं सर्वं यदिदं किञ्च यत्किञ्चेदं स्थावरजङ्गमं चासृजत। किं तत्? ऋचो यजूंषि सामानि गायत्र्यादीनि सप्तछन्दांसि स्तोत्रशस्त्रादिकर्माङ्गत्रिविधमन्त्रान् विशेषतो यज्ञांश्च तत्साध्यप्रजाः च कर्मसाधनभूतग्राम्यारण्यपशूंश्च। स प्रजापतिरेवमन्नवृद्धिं बुद्ध्वा यद्यदेव क्रियाकारकफलजातमसृजत तत्तत्सर्वमत्तुमध्रियत सर्वान्नग्रसनाय मनो धृतवान्। यस्मादयं सर्वमत्ति तस्मादयमदितिः। तस्यादितिनाम्नो मृत्योरदितित्वं प्रसिद्धम्। "अदितिर्द्यौरदितिरन्तरिक्षं" इत्यादि मन्त्रवर्णनात्। य एवमेतददितेरदितित्वं वेद तस्यैतत् फलम्। सोऽयं सर्वात्मना सर्वस्य एतस्यान्नभूतजगतोऽत्ता भवति। एकस्य सर्वात्तृत्वं विरुद्धमिति चेन्न; एकस्य सर्वात्मकत्वेन सर्वात्तृत्वोपपत्तेः। सर्वमस्यान्नं भवति सर्वात्मायं भवतीत्यर्थः॥ ५ ॥

तस्य यजनकामः

सोऽकामयत भूयसा यज्ञेन भूयो यजेयेति सोऽश्राम्यत् स तपोऽतप्यत तस्य श्रान्तस्य तप्तस्य यशो वीर्यमुदक्रामत् प्राणा वै यशो वीर्यं तत्प्राणेषु उत्क्रान्तेषु शरीरꣳ श्वयितुमध्रियत तस्य शरीर एव मन आसीत् ॥ ६ ॥

अश्वमेधनिर्वचनाय इदमाह— **सोऽकामयत भूयसा यज्ञेनेति**। प्रजापतिर्भवान्तरेऽश्वमेधेनायजत। कल्पादौ तद्भावभावितः सन् तदपेक्षया **भूयसा यज्ञेनाश्वमेधेन भूयः** पुनरपि **यजेयेति स** प्रजापति**रकामयत**। महत्कार्यकर्तृलोकवत् **सोऽश्राम्यत्** श्रान्तिमगमत्। **स तपोऽतप्यत**। एवं **श्रान्तस्य तप्तस्य** पूर्ववत् **यशो वीर्यमुदक्रामत्** इत्यर्थं श्रुतिः स्वयमेवाह—**प्राणा वै यशो वीर्यमिति**। चक्षुःप्राणानां यशोहेतुत्वात्। तेषु हि सत्सु यशो वीर्यं च भवति। न हि उत्क्रान्तप्राण उत्क्रान्तिं प्राप्तः प्राणः यशस्वी बलवान् भवति। तस्मादस्मिन् शरीरे प्राणा वै यशो वीर्यम्। प्रजापतेर्यशोवीर्यभूतप्राणेषूत्क्रान्तेषु **तत् शरीरं श्वयितुमु**च्छूनभावं गन्तुमध्रियत अमेध्यमभवत्। **तस्य** शरीरान्निर्गतस्य **तस्मिञ्छरीरे मन आसीत्**। यथा प्रेयोविषयं त्यक्त्वा दूरं गतस्यापि तद्विषयस्पर्शि मनो भवति तथेत्यर्थः॥ ६॥

अश्वोत्पत्तिः अश्वमेधनिर्वचनं च

सोऽकामयत मेध्यं म इदꣳ स्यात् आत्मन्वी अनेन स्यामिति ततोऽश्वः समभवत् यदश्वत् तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम्। एष ह वा अश्वमेधं वेद य एनमेवं वेद तमनवरुद्ध्यैवामन्यत तꣳ संवत्सरस्य परस्तादात्मन आलभत पशून् देवताभ्यः प्रत्यौहत् तस्मात् सर्वदेवत्यं प्रोक्षितं प्राजापत्यमालभन्ते। एष ह वा अश्वमेधो य एष तपति तस्य संवत्सर आत्मायमग्निरर्कस्तस्येमे लोका आत्मानस्तावेतौ अर्काश्वमेधौ सो पुनरेकैव देवता भवति मृत्युरेवाप पुनर्मृत्युं जयति नैनं मृत्युराप्नोति मृत्युरस्यात्मा भवति एतासां देवतानामेको भवति॥ ७॥

स्वशरीरसंलग्नमनाः किमकरोत्? इत्यत्राह—**स** इति। **सोऽयं** प्रजापतिः **मे** मम **इदं** शरीरं यज्ञार्हतया **मेध्यं** मेधार्हं **स्यादित्यकामयत**। किं तेन? इत्यत

आह— **आत्मन्वीति**। **अनेन** शरीरेणात्मवान् **स्यामिति**। यद्वियोगात् गतयशोवीर्यं सत् अश्वत् अश्वयत् तत् पुनः प्रविवेश। **ततस्तस्मादश्वः समभवत्**। ततः साक्षादश्वनामा प्रजापतिरिति स्तूयते। स्वप्रवेशात् पुरा **यदमेध्यं** जातं स्वप्रवेशतस्त**देव मेध्यमभूत्**। यस्मादेवं तस्मादश्वमेधक्रतोरश्व-मेधत्वम्। सोऽयं क्रतुः प्रजापतिरेवेति स्तूयते—"उषा वा अश्वस्य" इत्यादिना। तस्याश्वरूपप्राजापत्याग्नेः क्रतुफलत्वेन उपासनं विधातव्यमित्यारब्धम्। **यः** कश्चिदश्वमर्कञ्च यथावद्वेद **स एषोऽश्वमेधं वेद** नान्यः। कथमेतद्दर्शनं पशुविषयं? इत्यत्र "भूयसा यज्ञेन भूयो यजेय" इति कामयित्वा प्रजापतिः स्वात्मानमेव मेध्यपशुत्वेन विभाव्य पुनस्तं **पशुमनवरुध्यैव** अवरोधमकृत्वैव मुक्तप्रग्रहं **पशुममन्यताचिन्तयदित्यर्थः**। **स तं** पशुं **संवत्सरस्य परस्तादूर्ध्व-मात्मन आलभत** प्रजापतिदेवताकत्वेनेत्येतदालम्भनं कृतवान्। ग्राम्यानारण्यांश्च **पशून्** यथादेवतं **प्रत्यौहत्** विभागशः प्रतिगमितवान्। यथैवं प्रजापतिस्तथा-न्योऽप्युक्तप्रकारेणात्मानं मेध्यपशुं भावयित्वाहमेव सर्वस्वरूपः इतरे पशवो मदवयवभूताश्च एवेति विद्यात्। अत एवेदानीं याज्ञिकाः **सर्वदेवत्यं प्राजापत्यं प्रोक्षितमालभन्ते**। **एष ह वाश्वमेधो य एष तपति** यः पशुसाधनोऽसौ क्रतुः स एष फलत्वेन निर्दिश्यते। य एष सविता तपति स्वतेजसा जगदवभासयति स एष ह वा अश्वमेधः। **तस्यास्य** क्रतुतत्फलात्मनः प्रजापतेरा**त्मा** शरीरं **संवत्सरः** तस्य तन्निर्वर्त्यत्वात्। तस्य क्रत्वात्मनो**ऽयमग्निरर्कः** क्रतुसाधनभूतः। **तस्य** क्रतुचितार्कस्य **इमे त्रयो लोकाः** स्वावयवाः। तथा व्याख्यातं "तस्य प्राची दिक्" इत्यादिना। **तावग्न्यादित्यावर्काश्वमेधौ**। तत्र योऽर्कः पार्थिवोऽग्निः क्रतोरग्निसाध्यत्वात् तद्रूपेण निर्देशः। फलस्य क्रतुसाध्यत्वात् क्रतुरूपेण निर्देशः। इत्थं क्रतुफलभूतावग्न्यादित्यौ। **सोपुनर्भूय एकैव देवता भवति**। का सा देवता? **मृत्युरेव** पूर्वमप्येकैवासीत्। क्रियाफलसाधनभेदं पुरस्कृत्य "स त्रेधात्मानं व्यकुरुत" इति त्रिधा विभक्ता। पुनरपि सा क्रियानिर्वृ-त्त्युत्तरकाले एकैव देवता भवति। यः फलभूतो मृत्युः स एवाश्वमेध इत्यश्वमेधं मृत्युं चैकां देवतां वेद, अहमेव मृत्युरस्मि अश्वमेध एका देवता

मद्रूपाश्वाग्निसाध्येति यस्य बोधो जायते **सोऽप पुनर्मृत्युं जयति** सकृत् मृत्वा मरणाय पुनर्न जायत इत्यर्थः। पुनरेनं मृत्युराप्नुयादित्यत आह—**नैनं मृत्युराप्नोतीति**। कुतः? **मृत्युरस्यात्मैव भवति**। किञ्चायं मृत्युरेव सन् **एतासां देवतानामेको भवतीत्युपासनाफलमेतत् ॥ ७ ॥**

**इति द्वितीयं ब्राह्मणम्**

---

## तृतीयं उद्गीथब्राह्मणम्

प्राजापत्यानां देवासुराणां स्पर्धा

द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुराः त एषु लोकेष्वस्पर्धन्त ते ह देवा ऊचुः हन्त असुरान् यज्ञ उद्गीथेनात्ययामेति ॥ १ ॥

ज्ञानसहितकर्मणां परा गतिरुक्ता। अथ मृत्वात्मभावसाधनकर्मज्ञानोत्पादकोद्गीथब्राह्मणमारभ्यते—**द्वया** हेति। ज्ञानकर्मफलं मृत्युना एकत्वम्। उद्गीथस्य तद्भिन्नं फलं वक्तव्यमिति चेन्न; उद्गीथफलस्याग्न्यादित्यात्मभावत्वात्। "एतासामेव देवतानामेको भवति" इति पुरस्तादेवोक्तत्वात् न हि फलभेदोऽस्ति। मृत्युमतिक्रान्त इति श्रुतिविरोध इति चेन्न; मृत्योरतिक्रमणस्य पाप्मासङ्गविषयत्वात्। पाप्मासङ्गमृत्युः कीदृशः? कुतस्तदुत्पत्तिः? केन वा तदतिक्रमणं? इत्याद्यर्थप्रकाशनाय इयमाख्यायिका। केयं? **द्वया** हेत्यत्र हकारो द्विप्रकार इति वृत्तावद्योतकः वर्तमानप्रजापतेः पूर्ववृत्तद्योतकत्वात्। प्रजापतेरपत्यानि **प्राजापत्याः**। के ते? **देवाश्चासुराश्च** वागादिप्राणाः। तेषां देवासुरत्वं कथं? इत्यत्र ये शास्त्रविहितकर्मज्ञानद्योतनात् देवा भवन्ति त एव तद्विपरीताश्चेत् असुरा

भवन्ति। यतोऽशास्त्रीयप्रवृत्त्यारूढा असुराः **ततः** कनीयांस एव **कानीयसाः**—स्वार्थे वृद्धिः—अल्पा **एव देवाः**। **ज्यायसा असुराः** प्राणिनामशास्त्रप्रवृत्तिबाहुल्यात् ज्यायस्त्वम्। शास्त्रीयप्रवृत्तेः दुर्लभत्वात् कनीयस्त्वम्। इत्थं विरुद्धस्वभावा देवाश्चासुराश्च प्रजापतिशरीरस्थाः सन्तः **त एषु लोकेष्वस्पर्धन्त** शास्त्रीयाशास्त्रीयविषयेषु स्पर्धां कृतवन्तः। तेषां स्पर्धानिमित्तं किं? इत्यत्र—यदा देवाभिधानप्राणानां शास्त्रीयकर्मज्ञानरूपा वृत्तिरुदेति तदा दैवी वृत्तिरासुरीं ग्रसति। तदानीं देवानां जयः असुराणां पराजयो भवति। कदाचिदासुर्या दैवी वृत्तिरभिभूयते। तदासुराणां जयो देवानां पराजयो भवति। धर्माधर्मभूयस्त्वमेव तेषां जयाजयहेतुस्पर्धानिमित्तम्। यथोक्तधर्मोत्कर्षे प्रजापतित्वप्राप्तिः। तदपकर्षे स्थावरत्वाप्तिः। तदुभयसाम्ये मनुष्यत्वप्राप्तिः। असुराणां भूयस्त्वात् तैरभिभूता देवाः किं कृतवन्तः? इत्यत आह—**त** इति। असुरार्दितास्ते **ह देवा ऊचुः**। किमिति? **हन्त** इदानीं ज्योतिष्टोमेऽस्मिन् **यज्ञे उद्गीथेन** कर्मज्ञानाश्रयप्रणवेन **असुरानत्ययाम** अतिगच्छाम। असुरान् जित्वा शास्त्रप्रकाशितस्वस्वभावं प्रतिपद्यामह इत्यर्थः॥ १॥

देवानां संभूय कथनम्

**ते ह वाचमूचुः त्वं न उद्गायेति तथेति तेभ्यो वागुदगायत् यो वाचि भोगस्तं देवेभ्य आगायत् यत् कल्याणं वदति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव स पाप्मा॥ २॥**

ते देवाः संभूय वाचमूचुरित्याह—ते हेति। **ते ह** देवा **वाचं** वागभिमानिदेवतामूचुः। **त्वं नो**ऽस्मभ्यं **उद्गायेति**। औद्गात्रकर्मणो वाङ्निर्वर्त्यत्वात्। एवं देवैरुक्ता **वाक् तथेति तेभ्यो**ऽर्थाय **उदगायत्** उद्गानं कृतवतीत्यर्थः। वाङ्निर्वर्त्योद्गानकर्मविशेषः कः? इत्यत्र—**यो** निमित्तभूतायां **वाचि** वाग्देवतानिर्वर्त्यो **भोगः** तं भोगं **देवेभ्यो**ऽर्थायागायत्। तिसृषु पवमानेषु

तदवशिष्टेषु नवसु स्तोत्रेषु यत् वाचनिकमार्त्विज्यं कल्याणं वदति सुष्ठु वर्णानभिनिर्वर्तयति—सम्यग्वर्णोच्चारणस्य वाङ्निर्वर्त्यत्वात्—यत्सङ्घातोपकारकत्वेन वदनकार्यं तदात्मने मह्यमेवेति देवा मेनिरे। देवकृतस्वपराभवकृत्यमसुरास्ते विदुः। कथम्? ते देवा अनेन उद्गात्रास्मान् स्वाभाविकप्रवृत्तान् शास्त्रीयकर्मज्ञानगोचरज्योतिषा अत्येष्यन्तीति अतिगमिष्यन्तीति विज्ञाय तमुद्गातारमभिद्रुत्याभिगम्य स्वेन पाप्मनाविध्यन् अनृतेन संयोजितवन्तः। ततः पूर्वजन्मावस्थप्रजापतिवाचि क्षिप्तः स यः स पाप्मा यदेवेदमप्रतिरूपं शास्त्रप्रतिषिद्धमनृतमपि वदति स एव स पाप्मा। यतः प्रजापतिवागप्यनृतविद्धा ततस्तत्कार्यभूतप्रजापूगवाच्यपि तदनुवर्तते कार्यस्य कारणानुवृत्तेरित्यर्थः ॥ २ ॥

### प्राणादीनामसामर्थ्ये मुख्यप्राणवरणम्

अथ ह प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्यः प्राण उदगायत् यः प्राणे भोगस्तं देवेभ्य आगायत् यत् कल्याणं जिघ्रति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं जिघ्रति स एव स पाप्मा ॥ ३ ॥ अथ ह चक्षुरूचुः त्वं न उद्गायेति तथेति तेभ्यश्चक्षुरुदगायत् यश्चक्षुषि भोगस्तं देवेभ्य आगायत् यत्कल्याणं पश्यति तदात्मने ते विदुरनेन वै न उदात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं पश्यति स एव स पाप्मा ॥ ४ ॥ अथ ह श्रोत्रमूचुः त्वं न उद्गायेति तथेति तेभ्यः श्रोत्रमुदगायत् यः श्रोत्रे भोगस्तं देवेभ्य आगायत् यत्कल्याणꣳ शृणोति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्य-

न्तीति तमभिद्रुत्य पाप्मनाविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपꣳ शृणोति स एव स पाप्मा ॥ ५ ॥ अथ ह मन ऊचुः त्वं न उद्गायेति तथेति तेभ्यो मन उदगायत् यो मनसि भोगस्तं देवेभ्य आगायत् यत् कल्याणꣳ संकल्पयति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपꣳ संकल्पयति स एव स पाप्मा एवमु खल्वेता देवताः पाप्मभिरुपासृजन् एवमेनाः पाप्मनाविध्यन् ॥ ६ ॥ अथ ह इममासन्यं प्राणमूचुः त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत् ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविव्यत्स्यन् स यथाश्मानमृत्वा लोष्टो विध्वꣳसेत एवꣳ हैव विध्वꣳसमाना विष्वञ्चो विनेशुस्ततो देवा अभवन् परा असुरा भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेद ॥ ७ ॥

यथा कल्याणवदनशीलां वाचमुद्गातृत्वेन वृत्वासुरसंबन्धतः परित्यजन्ति तथैव घ्राणचक्षुःश्रोत्रमनसामुद्गीथनिर्वर्तकत्वेन निश्चित्यासुरसंबन्धत उद्गीथनिर्वर्तनासामर्थ्यमवगम्य तत्यजुरित्याह—**अथे**त्यादिना । एवं वा घ्राणचक्षुःश्रोत्राद्युक्तासु देवतासु अनुक्तत्वगादिदेवतासु चासुरपाप्मभिः विद्धासु सतीषु देवाः किं कुर्वन्ति ? इत्यत्र मुख्यप्राणं स्वशरणं मत्वा तमुद्गातृत्वेन वव्रुरित्याह—**अथे**ति । **अथ ह इममा**स्ये भव**मासन्यं प्राणमूचुः—त्वं न उद्गायेति । तथेति मुख्यप्राण उदगाय**दित्यादि समानम् । वागादिवत् **तमभिद्रुत्य पाप्मनाविव्यत्स्यन्** दोषासंसर्गिणं मुख्यप्राणं वेधनं कर्तुमुद्युक्तास्तेऽसुरा वागादिवत् एनं मत्वा संसिसृक्षमाणाः सन्तो विनेशुः स्वयमेव विनष्टा बभूवुः । कथमिव ? इत्यत्र दृष्टान्तमाह—**स यथे**ति । **यथा** लोके पांसुपिण्डोऽश्मानं

पाषाणं **ऋत्वा** प्राप्य स्वयमेव **विध्वंसेत** चूर्णीभवेत् **एवं हैव** असुरा **विध्वंसमाना विष्वञ्चो** नानागतयो **विनेशुः** विनष्टा बभूवुः। **ततः** परं मुख्यप्राणाश्रयबलात् वागादयो **देवा अभवन्** पुरासुरसंबन्धतः पिण्ड-मात्राभिमाना आसन्। ततस्त आसुरवियोगानन्तरं व्याविद्धपिण्डाभिमानाः सन्तः शास्त्रसमर्पितवागाद्यभिमाना बभूवुः। तत्प्रतिपक्षिणोऽसुराः **परा अभवन्नि**त्यनुवर्तते विनष्टा इत्यर्थः। य एतामाख्यायिकारूपां श्रुतिं दृष्टान्तेन **क्रमेण** वागादिदेवानासुरविद्धत्वेनापोह्य निःसपत्नं प्राणमात्मत्वेन उपगम्य पिण्डाभिमानं हित्वा वैराजपिण्डाभिमानिनं शास्त्रप्रकाशितं प्रजापतिं प्रतिपन्नो भवति तथैवायं यजमानः प्रजापत्यात्म**ना भवति**। **परा** चास्य प्रजापतेः प्रतिपक्षभूतः पाप्मा **भ्रातृव्यो भवति** स्वात्मतिरस्करणहेतुत्वात्। स पाषाणक्षिप्तलोष्टवत् **पराभवति** विशीर्यत इत्यर्थः। य **एवं** वेद तस्य फलमेतत् ॥ ३—७ ॥

मुख्यप्राणस्य सशरीरकरणात्मत्वम्

ते होचुः क्व नु सोऽभूत् यो न इत्थमसक्त इति ? अय-
मास्येऽन्तरिति सोऽयास्य आङ्गिरसोऽङ्गानाꣳ हि रसः ॥ ८ ॥

योऽयं मुख्यप्राण इति ख्यातः स एव सशरीरकरणात्मेत्येतमर्थं श्रुतिराख्यायिकया दर्शयति—**ते होचुरि**ति। ते ह प्राजापत्याः प्राणाः मुख्यप्राणप्रापितस्वस्वरूपाः सन्त ऊचुः। किमिति ? **क्व नु** इतिशब्दो वितर्कार्थः। **यो नो**ऽस्मानित्थमेव**मसक्त** देवभावायासञ्जितवान् स्वात्मभावमुप-गमितवान् क्व नु कस्मिन्नु **सोऽभूत** ? एवं लोके स्मरन्ति हि केनचिदुप-कारिताः स्वोपकारिणम्। तदियत्तां विचारयमाणा देवास्तमात्मन्येव उपलब्ध-वन्तः। यथा लोको विचार्याध्यवस्यति तथा देवाः। **अयमास्येऽन्तरिति**। अस्य आस्याकाशान्तरुपलभ्यमानत्वात्। यस्मादेवं तस्मात् स प्राण **अयास्यो** हि विशेषानाश्रयत्वात् वागादीन् असक्त आसञ्जितवान्। अत एवा**ङ्गिरसः**

कार्यकारणरूपाणामङ्गानां हि रसः सार आत्मेत्यर्थः। प्राणस्याङ्गिरसत्वे तदपाये प्राणहानिः स्यादिति चेन्न; प्राणस्याङ्गानाश्रयत्वात्। जाग्रदादौ वागादिसत्त्वे तद्रसत्वम्। स्वापादौ तदभावे स्वात्मरसरूपेण प्राणोऽवशिष्यत इत्यर्थः॥ ८॥

प्राणस्याङ्गिरसत्वेऽपि शुद्धत्वम्

सा वा एषा देवता दूर्नाम दूरꣳ ह्यस्या मृत्युः दूरꣳ ह वा अस्मात् मृत्युर्भवति य एवं वेद॥ ९॥

प्राणस्याङ्गिरसत्वेऽङ्गसंपर्कादशुद्धता स्यादित्यत्र शुद्धो हि प्राण इत्याह— सेति। यमाप्य अश्मप्राप्तलोष्टवदसुरा विध्वस्तास्सेति स हि परामृश्यते। येयं वर्तमानशरीरस्था "अयमास्येऽन्तः" इति देवैरवधारिता **सैषा देवता दूर्नाम** दूरित्येवं ख्यापिता। तस्मादस्या विशुद्धिः प्रसिद्धा। दूर्नामत्वात्। कुतोऽस्य दूर्नामत्वम्? यस्मादस्याः प्राणदेवताया दूरं दूरे हि मृत्युरासुरः पाप्मा। प्राणस्य तत्संश्लेषवैरल्यात्। तस्मात् प्राणस्य दूरित्येवं ख्यातिर्युज्यते। एवंविदः फलमुच्यते—दूरं ह **वा अस्मात् मृत्युर्भवति** विशुद्धिगुणोपेतप्राणोपासकस्येत्यर्थः॥ ९॥

प्राणोपासकस्य विमृत्युत्वम्

सा वा एषा देवता एतासां देवतानां पाप्मानं मृत्युमपहत्य यत्रासां दिशामन्तस्तद्गमयांचकार तदासां पाप्मनो विन्यदधात् तस्मान्न जनमियात् नान्तमियात् नेत्पाप्मानं मृत्युमन्ववायानीति॥

उपासनं नाम देहात्मप्रत्ययवत् देवतात्माभिमतिः। कथमेवंवित् विमृत्युर्भवति? इत्यत आह—सेति। **सा वा एषा देवता** इत्युक्तार्थम्। **एतासां** वागादिदेवतानां स्वाभाविकाज्ञानप्रयुक्तं **पाप्मानं मृत्युं** केवलप्राणात्माभिमानतोऽपहत्य तदपहन्ता प्राणः विदुषः प्राणभावारूढत्वेन तद्दृष्ट्या मृत्युर्दूरं

गतो भवति। एवं विद्वद्देवतानां प्राप्मानमपहत्य किं पुनश्चकार ? इत्यत आह— **यत्रेति**। **यत्र** स्थित्वासां प्राच्यादि**दिशामन्तो**ऽवसानं तत्र **गमयाञ्चकार**। दिशामनन्तत्वात् तदन्तगमनं कथं ? इत्यत्र दिशां श्रौतविज्ज्ञकल्पितत्वात्। तदितरदिशामन्तो देशान्तरमित्यर्थः। **तत्तत्र** गमयित्वासां देवतानां—**पाप्मन** इति द्वितीयाबहुवचनं—**विन्यदधात्** विविधन्यद्भावमधात्। प्राणाभिमानविकलान्यजनेषु तदेतत्पाप्मानं प्राणदेवता स्थापितवती। यतः पाप्मा इन्द्रियसंसर्गजः **तस्मात्** तमन्य**जनं** **नेयात्**। न हि तं संभाषणदर्शनादिभिः संसृज्येत। तत्संसर्गे पाप्मनायं संसर्गी स्यात्। पाप्माश्रयो हि सः। तज्जननिवासस्थानमेवान्तं दिगन्तशब्दवाच्यं नेयात्। प्राणात्मभावहीनो देशः सजनो वा विजनो वा भवतु। तत्प्रदेशवियोगः कार्यः। **नेत्** इति निपातः परिभवार्थः। इत्थंभूतजनसंसर्गे मृत्युमन्ववायानि अनुगच्छेयमिति भीतो **न** जनमन्तं चेयादिति पूर्वेण संबन्धः॥ १०॥

प्राणस्यापहतपाप्मत्वम्

सा वा एषा देवता एतासां देवतानां पाप्मानं मृत्युमपहत्य अथैना मृत्युमत्यवहत्॥ ११॥

**सा वा एषा देवता** इति। **सा वा एषा देवतेति** पूर्ववत्। वागादीनामग्न्याद्यात्मत्वं प्राणात्मज्ञानकर्मसमुच्चयफलम्। **अथ तेनैना मृत्युमत्यवहत्** आध्यात्मिकादिपरिच्छेदकरो हि मृत्युः। प्राणात्मज्ञानेन सोऽपहतः। यत एवमतः प्राणोऽपहतपाप्मेत्यर्थः। एना देवताः प्रकृतमृत्युमतीत्यावहत् स्वं स्वमपरिच्छिन्नाग्न्यादिभावं प्रापयदित्यर्थः॥ ११॥

प्राणेनाग्नेरपरिच्छिन्नत्वप्रापणम्

स वै वाचमेव प्रथमामत्यवहत् सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत् सोऽयमग्निः परेण मृत्युमतिक्रान्तो दीप्यते॥ १२॥

तत्कथं? इत्यत्राह—**स** इति। **स वै** प्राणो **वाचमेवोद्गीथकर्मणि** इतरकरणापेक्षया प्रधानतः **प्रथमामत्यवहत्** मृत्युतोऽतिवहनं कृतवान्। तदा विमृत्यु वचः किंरूपं? इत्यत्र—**यदा** वाक् **मृत्युमत्यमुच्यत** प्राणेन मोचिता तदा स्वयमेव **सोऽग्निरभवत्**। पुरापि वागग्निरेव मृत्युनावृता सती वागित्यभिधां गतेव भाता। पुनः स्वावारकमृत्व्यपगमतोऽग्निरेवाभवत्। **सोऽयं परेण** परस्मान्मृत्योरतिक्रान्तोऽग्निर्दीप्यते। मृत्युप्रतिबन्धतोऽध्यात्मवागात्मना परिच्छेद आसीत्। नेदानीमिव दीप्यते। इदानीं मृत्युवियोगान्निरावृतस्सन् दीप्यत इत्यर्थः॥ १२॥

प्राणेन घ्राणादीनां स्वस्वभावेन प्रकाशनम्

**अथ ह प्राणमत्यवहत् स यदा मृत्युमत्यमुच्यत स वायुरभवत् सोऽयं वायुः परेण मृत्युमतिक्रान्तः पवते॥ १३॥ अथ चक्षुरत्यवहत तद्यदा मृत्युमत्यमुच्यत स आदित्योऽभवत् सोऽसावादित्यः परेण मृत्युमतिक्रान्तस्तपति॥ १४॥ अथ श्रोत्रमत्यवहत् तद्यदा मृत्युमत्यमुच्यत ता दिशोऽभवꣳस्ता इमा दिशः परेण मृत्युमतिक्रान्ताः॥ १५॥ अथ मनोऽत्यवहत् तद्यदा मृत्युमत्यमुच्यत स चन्द्रमा अभवत् सोऽसौ चन्द्रः परेण मृत्युमतिक्रान्तो भाति एवꣳ ह वा एनमेषा देवता मृत्युमतिवहति य एवं वेद॥ १६॥**

प्राणेन विमृत्युपदं प्रापिता घ्राणचक्षुःश्रोत्रमनआख्या देवता वाय्वादित्यदिक्चन्द्रप्राप्यस्वस्वभावतः प्रकाशन्त इत्याह—**अथे**त्यादिना। यथा पूर्वयजमानं वागाद्यग्न्यादिभावेन मृत्युमत्यवहत् तथैवं वर्तमानयजमानमपि **ह वा एषा** प्राणदेवता **मृत्युमतिवहति**। यो वागादिपञ्चकविशिष्टं प्राणं **वेद** सोऽतिमृत्युर्भवति "तं यथा यथोपासते तदेव भवति" इति श्रुतेः॥ १३–१६॥

प्राणकृतमात्मार्थमागानं तत्फलञ्च

अथात्मनेऽन्नाद्यमागायत् यद्धि किंचान्नमद्यतेऽनेनैव तदद्यत इह प्रतितिष्ठति ॥ १७ ॥

प्राणस्य वागाद्यनुग्राहकत्वेन तत्कृतमात्मार्थमागानं तत्फलं च प्राणस्येत्याह—अथेति । **अथात्मन** आत्मार्थं यथा वागादिभिरागानं कृतं तथा मुख्योऽपि प्राणः सर्वप्राणसाधारणं प्राजापत्यफलमागानं कृत्वा त्रिषु पवमानेषु, अथानन्तरमवशिष्टनवस्तोत्रेष्वात्मने आत्मार्थमन्नं च तदद्यं चेत्य**न्नाद्यमागायत्** । तदन्नाद्यं प्राणेनागीतमित्यवगम्यते । तत्र हेतुः । हीति हेतौ । यत्किञ्चेति सामान्यान्नमात्रपरामर्शार्थः । यस्माल्लोके प्राणिभिः यत्किंचिद**न्नमद्यते** । अन इति प्राणस्याख्या प्रसिद्धा । **अनेन प्राणेनैव तदद्यत** इत्यर्थः । अनशब्दः सान्तश्चेत् शकटवाची । यस्त्वन्यः स्वरान्तः स प्राणपर्यायः । न केवलं प्राणेनाद्यते, किन्तु शरीराकारपरिणतेऽन्नाद्ये **इह** प्राणः **प्रतितिष्ठति** । तस्मादात्मनः प्रतिष्ठार्थमन्नाद्यमागीतं वागादिवदस्यापापविद्धत्वात् । वागादीनामन्नोपकरणत्वेनानेनैव तदद्यत इत्यवधारणमयुक्तमिति चेन्न; वागाद्युपकरणतायाः प्राणनिमित्तकत्वादवधारणं युक्तमेवेत्यर्थः ॥ १७ ॥

वागादीनां प्राणद्वारकत्वं तद्वेदनफलं च

ते देवा अब्रुवन् एतावद्वा इदꣳ सर्वं यदन्नं तदात्मन आगासीः अनु नोऽस्मिन् अन्न आभजस्वेति ते वै माभिसंविशतेति तथेति तꣳ समन्तं परिण्यविशन्त तस्मात् यदनेनान्नमत्ति तेनैतास्तृप्यन्ति एवꣳ ह वा एनꣳ स्वा अभिसंविशन्ति भर्ता स्वानाꣳ श्रेष्ठः पुर एता भवति अन्नादोऽधिपतिर्य एवं वेद य उ हैवंविदꣳ स्वेषु प्रति प्रतिबुभूषति न हैवालं भार्येभ्यो भवति अथ य एवैत-

**मनु भवति यो वैतमनु भार्यान् बुभूर्षति स हैवालं भार्येभ्यो भवति ॥ १८ ॥**

कथं वागादीनां प्राणद्वारकता ? इत्यत आह—**ते देवा** इति। **ते** वागादयो देवता **अब्रुवन्**। किमिति ? मुख्यप्राणचैतन्यमिदमेतावत्। नातोऽधिकमस्ति। **वै** इति स्मरणार्थः। **इदं तत्सर्वमेतावदेव**। किं तत् ? लोके **यदन्नमद्यते** तत्सर्वमात्मने आत्मार्थ**मागासीः**आगीतवानसि अन्नागानेनात्मसात्कृतमित्यर्थः। वयमप्यन्नं विना स्थातुं नोत्सहामहे। अतो**ऽनु** पश्चा**न्नो**ऽस्मान**स्मिन्** स्वार्थे **अन्ने आभजस्व** आभजयस्व। णिचोऽश्रवणं छान्दसम्। अस्मानप्यन्नानुभागिनः कुरु। तद्वाक्यानुरूपं प्राण आह—यदि ते यूयमन्नार्थिनस्तदा **मा वै** मामेवा**भिसंविशत**। इत्येवमुक्तवति प्राणे **तथेति तं** प्राणं **परि** समन्तात् **न्यविशन्त**ाविशन्त। प्राणानुज्ञया एवं निविष्टानां देवतानां प्राणेनैवाद्यमानमन्नं तृप्तिकरं भवति। न हि वागादीनां स्वातन्त्र्येणान्नसंबन्धः। **तस्मादनेनैव** तदद्यत इत्यवधारणं युक्तमेव। "वागादयः प्राणाश्रयाः" इति वागाद्याश्रयणं प्राणं यो वेद तमप्ये**वंविदं ह वै** वागादयः प्राणमिव **स्वा** ज्ञातयः **अभिसंविशन्ति** स ज्ञातीनामाश्रयणीयो भवति। **स्वानां** सन्निविष्टानां वागादीनामिव स्वान्नेन **भर्ता** भवति। तथा सर्वेषामपि **श्रेष्ठः**। यथा वागादीनां प्राणोऽग्रेसरस्तथा स्वानामयं **पुर** एता गन्ता **भवति**। **अन्नादः** अनामयावी **अधिपति**र्वागादीन् प्राणवदधिष्ठाय पालयिता स्वतन्त्रो भवति। इत्थं प्राणं **यो वेद** तस्यैतत् यथोक्तं फलं भवति। किंच **य एवं** प्राणविदं **प्रति** स्वज्ञातिमध्ये **प्रति** प्रातिकूल्येन **बुभूषति** प्रतिस्पर्धी भवितुमिच्छति सोऽयं प्राणप्रतिकूलासुरवत् **भार्येभ्यः** स्वेन भरणीयेभ्यो भर्तुं न पर्याप्तो **भवति**। अथ पुनर्यः स्वज्ञातिमध्ये **एतमेवंविदं** वागादयः प्राणमिव **अनु** अनुगतो **भवति**, यश्चैनमनुवर्तयन्नेव **भार्यान् बुभूर्षति** भर्तुमिच्छति, यथा वागादयः प्राणमनुसृत्यात्मबुभूर्षवः आसन् **स हैव भार्येभ्यो** भर्तुमलं पर्याप्तो **भवति**। नेतरः स्वतन्त्रः ॥ १८ ॥

प्राणस्याङ्गिरसत्वं तस्यैव उपास्यत्वं च

सोऽयास्य आङ्गिरसोऽङ्गानाꣳ हि रसः प्राणो वा अङ्गानाꣳ रसः प्राणो हि वा अङ्गानाꣳ रसः तस्मात् यस्मात्कस्माच्चाङ्गात् प्राण उत्क्रामति तदेव तच्छुष्यति एष हि वा अङ्गानाꣳ रसः ॥ १९ ॥

सर्वमेतत् प्राणज्ञानफलमुक्तम् । प्राणस्य संघातात्मनिदर्शनाय "सोऽयास्य आङ्गिरसः" इत्यादि आङ्गिरसत्वमभिहितम् । तत्र हेतुर्नोक्तः । तदर्थमिदमारभ्यते—**स** इति । **सोऽयास्य आङ्गिरस** इत्यादि **प्राणो वा अङ्गानां रस** इत्यन्तं व्याख्यातम् । तत् पुनः स्मारयति—**प्राणो हीति**। **हि**शब्दः प्रसिद्ध्यर्थः । प्राणस्याङ्गिरसत्वं प्रसिद्धमेतत, न वागादीनाम् । तस्माद्युक्तं **प्राणो हीति** स्मरणम् । यस्मादवयवात् कस्मादनुक्तविशेषणात् **यस्मात्कस्मात्** यतः कुतश्चिच्च **अङ्गात्** शरीरावयवासाकल्यात् ततः **प्राण उत्क्रामति** तदङ्गं शुष्यति शोषमुपैति । तस्मादे**ष हि वा अङ्गानां रस** इत्युपसंहारार्थः । अतः संघातात्मा प्राण इति सिद्धम् । यतः प्राणापाये मृतिः स्यादतः सर्वे प्राणिनः तेनैव जीवन्ति । तस्माद्वागादीनपास्य प्राण एव उपास्य इति समुदायार्थः ॥ १९ ॥

प्राणस्य ऋगात्मत्वं महीकरणं च

एष उ एव बृहस्पतिः वाक् वै बृहती तस्या एष पतिः तस्मादु बृहस्पतिः ॥ २० ॥

न केवलमयं सङ्घातात्मा किन्तु ऋग्यजुःसाम्नामपीति सर्वात्मकत्वेन प्राणं महीकरोति—**एष** इति । **एष उ एव** प्रकृतः आङ्गिरसः प्राणो **बृहस्पतिः** । तत्कथम्? **वाग्वै बृहती** । बृहत्यां हि सर्वा ऋचोऽन्तर्भवन्तीति प्राणस्य

स्तुतत्वात् । "प्राणो वै बृहती प्राण ऋच इत्येव विद्यात्" इति श्रुतेः । ऋचां वागात्मकत्वेन प्राणेऽन्तर्भावो युक्तः । यत **एष** वाचो बृहत्याः **पतिः** तन्निर्वर्तकत्वात् । प्राणेन हि वाक् पाल्यते । न ह्यप्राणस्य शब्दोच्चारणसामर्थ्यमस्ति । **तस्मादु** प्राणो **बृहस्पतिः** । ऋगात्मायमित्यर्थः ॥ २० ॥

प्राणस्यैव यजुर्वेदत्वम्

**एष उ एव ब्रह्मणस्पतिर्वाक् वै ब्रह्म तस्या एष पतिः तस्मादु ब्रह्मणस्पतिः ॥ २१ ॥**

तथा यजुषामित्याह—**एष** इति । **एष उ एव ब्रह्मणस्पतिः** । **वाग्वै** यजुर्वेदवाच्यं **ब्रह्म** । **तस्या** वाचो यजुषो ब्रह्मण **एष पतिः** । **तस्मादु ब्रह्मणस्पतिः** ॥ २१ ॥

प्राणस्यैव सामत्वम्

**एष उ एव साम वाक् वै साम एष सा च अमश्चेति तत्साम्नः सामत्वं यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्य* सलोकतां जयति य एवमेतत्साम वेद ॥ २२ ॥**

ऋग्यजुःसामोद्गीथशब्दानां प्राणविशेषणत्वेन सामाप्येष एवेत्याह—**एष** इति । **एष उ एव साम** । तत्कथम्? **वाग्वै साम** स्त्रीलिंगसामान्यं सेतिशब्दार्थः । पुंलिंगसामान्यं अमशब्दार्थः । एष एव प्राणः **सा च अमश्चेति** । "केन पौंस्यानि नामान्याप्नोषि? प्राणेनेति ब्रूयात् केन स्त्रीनामानि इति? वाचा इति" इत्यादिश्रुतेः । वाक्प्राणनिर्वर्त्यस्वरादिसमुदायमात्रगीतिर्हि साम । यत एवमतो न प्राणव्यतिरेकेण साम नामास्ति । किञ्चित्स्वरवर्णादेरपि प्राणनिर्वर्त्यत्वात् । यस्माद्वाक् प्राणात्मिकेयं सा च अमश्चेति द्विरुक्तिः तस्मात् स्वरादि-

समुदायगीतिरूपसाम्नः **सामत्वमिति** भुवि प्रगीतम्। यत् उ एव **यद्वेव** वक्ष्यमाणप्रकारेण तुल्यस्तस्माद्वाव सामेति वक्ष्यमाणेन संबन्धः। केन प्राणस्य समत्वं? इत्यत्र **प्लुषिणा** पुत्तिकादिशरीरेण परमाणुतुल्येन **समः**। तथा **मशकनागहस्ति**शरीरेण **समः**। तथा **एभिः त्रिभिः लोकैः** त्रैलोक्यशरीर-विराजापि **समः**। हैरण्यगर्भरूपेणापि समः। पुत्तिकादिहिरण्यगर्भान्तेनानेन **सर्वेण** सम इति प्राणस्य समत्वम्। न हि शरीरमात्रपरिमाणता सर्वत्र चित्रपटवत् संकोचविकासता वा समत्वं भवति। न ह्याकाशवत् सर्वानुस्यूतस्य शरीरमात्रपरिमाणता सङ्कोचविकासता वा सेद्धुं पारयति। "त एते सर्व एव समाः सर्वेऽनन्ताः" इति श्रुतेः। ईशभावमापन्नप्राणस्यामूर्तत्वेन सर्व-समत्वम्। "प्राणोऽस्मि प्रज्ञात्मा" इतिश्रुतिप्रकटितसमभावमापन्नं सामाख्यं प्राणं यो वेद तस्यैतत् फलमुच्यते। यस्मात् सा च अमश्चेति प्राणः सर्वसमः **तस्मात्** उपासकोऽपि **उ एव सामाश्नुते** व्याप्नोति। किंच **साम्नः** प्राणस्य **सायुज्यं** सयुग्भावं सालोक्यं **समानलोकतां** जयति प्राप्नोति। **य एवमेतत् साम वेद** आप्राणमुपास्ते स यथोक्तफलभाक् भवतीत्यर्थः ॥ २२ ॥

प्राणस्य उद्गीथशब्दवाच्यत्वमपि

एष उ वा उद्गीथः प्राणो वा उत् प्राणेन हीद॰ सर्व-मुत्तब्धं वागेव गीथा उच्च गीथा चेति स उद्गीथः ॥ २३ ॥

तथा उद्गीथशब्दवाच्योऽपि प्राण इत्याह— **एष** इति। **एष उ वा** प्राण एव सामावयवभक्तिविशेषरूपेण **उद्गीथः**। तत्कथम्? **प्राणो वा उत्**। **प्राणेन हि** यस्मादिदं **सर्वं** जगदु**त्तब्धं** ऊर्ध्वं स्तम्भितं विधृतमित्यर्थः। प्राण-गुणाभिधायकोऽयमुच्छब्दः। तस्मात् उत् प्राणः। **वागेव गीथा** शब्दवै-शिष्ट्यात्। उद्गीथभक्तेः शब्दार्थत्वात्। न हि शब्दव्यतिरेकेण उद्गीथभक्ति-रुपलभ्यते। तस्मात् वागेव गीथेत्यवधारणं युक्तम्। **उच्च** प्राणो **गीथा चे**त्युभयं प्राणतन्त्रतया एकेन शब्देनाभिधीयते—**उद्गीथ** इति ॥ २३ ॥

उद्गीथार्थदाढर्यार्थमाख्यायिकाकथनम्

तद्धापि ब्रह्मदत्तश्चैकितानेयो राजानं भक्षयन् उवाचायं त्यस्य राजा मूर्धानं विपातयतात् यदितोऽयास्य आङ्गिरसोऽन्येन उदगायदिति वाचा च ह्येव स प्राणेन च उदगायदिति ॥ २४ ॥

उद्गीथार्थदाढ्यार्थं इयमाख्यायिकारभ्यते—तद्धापीति। **तत्** तत्र एतस्मिन् उक्तार्थे आख्यायिकापि श्रूयते **ह** स्म। नामतोऽयं **ब्रह्मदत्तः** चिकितानस्यापत्यं चैकितानः। तदपत्यं **चैकितानेयो** यज्ञे **भक्षयन्** सन् सोमं **राजानमुवाच**। किमिति? यद्यहमनृतवादी स्यां तदा चमसस्थो मया भक्ष्यमाणो **राजा त्यस्य** तस्य ममानृतवादिनो **मूर्धानं** शिरो **विपातयतात्** विस्पष्टं पातयतु। कथमनृतवादित्वम्? **यत्** यदि **इतो**ऽस्मात् प्रकृतात् वाक्संयुक्तप्राणात् **अयास्यो** मुख्यप्राणाभिधायकेनायास्य **आङ्गिरस**शब्देनाभिधीयते। विश्वसृजां सत्रे उद्गाता यः **सोऽन्येन** वाक्प्राणातिरेकेण **उदगायत्** उद्गानं कृतवान्। ततोऽहमनृतवादी स्याम्। तस्य देवताविपरीतप्रतिपत्तुः मम मूर्धानं विपातयतु इत्येवं शपथं चकारेति यत् तत् ज्ञानदार्ढ्यायेति। तमिममाख्यायिकानिर्धारितार्थं श्रुतिरुपसंहरति—वाचेति। प्राणप्रधानया **वाचा च प्राणेन च सोऽ**यास्य आङ्गिरस उद्गाता **उदगायदि**त्येषोऽर्थः शपथेन निर्धारित इत्यर्थः ॥ २४ ॥

साम्नः सुस्वरवत्त्वमेव धनम्

तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वं तस्मादार्त्विज्यं करिष्यन् वाचि स्वरमिच्छेत तया वाचा स्वरसंपन्नया आर्त्विज्यं कुर्यात् तस्मात् यज्ञे स्वरवन्तं दिदृक्षन्त एव अथो यस्य स्वं भवति भवति हास्य स्वं य एवमेतत् साम्नः स्वं वेद ॥ २५ ॥

एवं सामविदः फलं प्रकटयति—तस्येति। **तस्य ह** प्रकृतस्य **एतस्य** मुख्यप्राणस्य **साम्नो यः स्वं** धनं **वेद** तस्यास्य **भवति ह स्वं** इति फलेनाभिमुखीकृत्य, साम्नः स्वं किं? इत्याकांक्षायां **स्वर** इति कण्ठगतमाधुर्यम्। तदेवास्य **स्वं** भूषणम्। यस्मादेवं **तस्मादार्त्विज्यं** ऋत्विक्कर्म उद्गानं **करिष्यन् वाचि** वागाश्रितं **स्वरमिच्छेत**। उद्गाता साम्नः स्वरवत्तामिच्छेत्। इदं तु प्रासङ्गिकं विधीयते। साम्नः सौस्वर्येण स्वरवत्प्रत्यये कर्तव्ये इच्छामात्रेण सौस्वर्यं न भवति, किन्तु दन्तधावनघृतपानादिसामर्थ्यात् कर्तव्यमित्यर्थः। एवं संस्कृतया **तया वाचा स्वरसंपन्नया आर्त्विज्यं कुर्यात्**। यस्मात् साम्नः स्वभूतः स्वरः तेन हि भूषितं साम। **तस्मात् यज्ञे स्वरवन्तमुद्गातारं दिदृक्षन्ते** धनिनमिव लौकिकाः तं द्रष्टुमिच्छन्त्येव। **अथो** अपि **यस्य स्वं** धनं **भवति** तं दिदृक्षन्त इति लोके प्रसिद्धम्। फलमुपसंहरति—भवतीति। **य एवमेतत् साम्नः स्वं वेद भवति हास्य स्वमिति** ॥ २५ ॥

तस्यैव सुवर्णवैशिष्ट्यकथनम्

तस्य **हैतस्य साम्नो यः** सुवर्णं वेद भवति हास्य सुवर्णं तस्य वै स्वर एव सुवर्णं भवति हास्य सुवर्णं य एवमेतत्साम्नः सुवर्णं वेद ॥ २६ ॥

पूर्वोक्तसौस्वर्यं कण्ठगतमाधुर्यं तस्यैव सुवर्णवैशिष्ट्यमुच्यते—**तस्येति**। **तस्य ह एतस्ये**त्यादि समानम्। स्वरसुवर्णयोः शब्दसामान्यात्। लौकिकमेव **सुवर्णं** गुणविज्ञानफलम्। पूर्ववत् सर्वम् ॥ २६ ॥

तस्यैव प्रतिष्ठागुणवदुपासनम्

तस्य **हैतस्य साम्नो** यः प्रतिष्ठां वेद प्रति ह तिष्ठति तस्य वै वागेव प्रतिष्ठा वाचि हि खल्वेष एतत्प्राणः प्रतिष्ठितो गीयतेऽन्न इत्यु हैक आहुः ॥ २७ ॥

तस्यैव प्रतिष्ठागुणवदुपासनमाह—**तस्येति**। **तस्य हैतस्य साम्नो यः** प्रतितिष्ठत्यस्मिन्निति प्रतिष्ठा, तां **प्रतिष्ठां** साम्नो गुणधिया **वेद** सोऽयं विद्वान् **प्रति तिष्ठति**। "तं यथा यथोपासते तदेव भवति" इति श्रुतेः तद्गुणत्वं युक्तम्। का प्रतिष्ठा? इत्यत आह—**तस्येति**। **तस्य** साम्नो जिह्वामूलादि-स्थानानां वागित्याख्या। सा **वागेव प्रतिष्ठा**। **एष प्राणो वाचि प्रतिष्ठितः** सन् एतद्गानं **गीयते**। तस्मात् साम्नः प्रतिष्ठिता वाक्। **एक एवमाहुः अन्ने** प्रतिष्ठितो गीयत **इति**। वाचि प्रतिष्ठितो गीयत इत्यपरे। वाग्वा प्रतिष्ठा अन्नं वेति। एकीयपक्षस्याप्यनिन्दितत्वात्। येन केन वा विकल्पेन प्रतिष्ठा-गुणविज्ञानं कुर्यात् ॥ २७ ॥

एवंविदे जपकर्मविधानम्

अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात् तदेतानि जपेत् असतो मा सद्गमय तमसो मा ज्योतिर्गमय मृत्योर्मामृतं गमयेति स यदाह असतो मा सद्गमयेति मृत्युर्वा असत् सदमृतं मृत्योर्मामृतं गमय अमृतं मा कुर्वित्येव एतदाह तमसो मा ज्योतिर्गमयेति मृत्युर्वै तमो ज्योतिरमृतं मृत्योर्मामृतं गमयामृतं मा कुर्वित्येव एतदाह मृत्यो-र्मामृतं गमयेति नात्र तिरोहितमिवास्ति। अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत् तस्मादु तेषु वरं वृणीत यं कामं कामयेत त१ स एष एवंविदुद्गातात्मने वा यजमानाय वा यं कामं कामयते तमागायति तद्धैतल्लोकजिदेव न हैवालोक्यताया आशास्ति य एवमेतत् साम वेद ॥ २८ ॥

एवंविदे जपकर्म विधित्सन्नाह—**अथेति**। वाक् प्रतिष्ठा अन्नं प्रतिष्ठेति यद्विज्ञानवतो जपकर्मण्यधिकारः तदर्थं जपकर्म विधित्स्यते। **अथानन्तरं** यतो विदुषा प्रयुज्यमानं जपकर्म तदभ्यारोहफलदं **अतस्तद्विधीयते**। तस्य उद्गीथसंबन्धात् **पवमानानामिति** वचनात्। त्रिष्वपि पवमानेषु कर्तव्यतायां प्राप्तायां पुनः कालसंकोचनं करोति। **स वै खलु प्रस्तोता साम प्रस्तौति**। **स यत्र** यस्मिन् काले साम **प्रस्तुयात्** तस्मिन् काले **एतानि जपेत्**। **अभ्यारोह** इत्यस्याख्या स्यात्। अनेन जपकर्मणा देवभावमाभिमुख्येन अभ्यारोहतीत्यभ्यारोहः। एतानीति बहुवचनात् त्रीणि यजूंषि ब्राह्मणोत्पन्नानि। स्वरस्तु यथापठित एव। मन्त्रो मौनं जपकर्म चेत्येतानि तानि यजूंषि। **असतो मा सद्गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मा अमृतं गमय इति**। मन्त्रत्रयार्थस्य तिरोहितवद्भानात् स मन्त्रो यदाह तदर्थं ब्राह्मणं व्याचष्टे—**मृत्युरिति**। स्वाभाविककर्मज्ञानाश्रयो **मृत्युरसत्**। तस्यैवाधोगतिहेतुत्वात्। असत्त्वं सच्छास्त्रीयधर्मविज्ञानाश्रय**ममृतं सत्** अमरणहेतुत्वात्। तस्मादसतः कर्मणोऽज्ञानात् शास्त्रीयकर्मविज्ञाने गमय देवभावसाधनात्मभावमापादयेति। वाक्यार्थस्तु **अमृतं मां कुर्विति एवैतदाहेति**। तथा **तमसो मा ज्योतिर्गमयेत्यत्र मृत्युर्वै तमः**। तस्य स्वाज्ञानावृतिरूपत्वेन मरणहेतुत्वात् तमसो मृत्युत्वम्। **ज्योतिरमृतं** देवतारूपस्य ज्योतिस्स्वरूपत्वेनामृतस्वरूपत्वात्। तमसो मा ज्योतिर्गमयेति पूर्ववत्। **मृत्योर्मा अमृतं गमयेति**। **अमृतममृत्युं मा** मां **कुर्वित्येवैतदाह**। फलभूतप्राजापत्यभावमापादयेत्यर्थः। पूर्वमन्त्रः साधनपरः। द्वितीयः साध्यपरः। तृतीयः तयोः समुच्चयपरः। **न** हि पूर्वमन्त्रयोरिव तृतीयमन्त्रे **तिरोहितार्थोऽस्ति** यथाश्रुतार्थत्वात्। **अथानन्तरं यानीतराण्य**वशिष्टानि **स्तोत्राणि** प्राणवित् उद्गाता प्राणभूतः **तेष्वात्मनेऽन्नाद्यमागायेत्**। यस्मात् स एष उद्गाता यथोक्तकाममागातुं समर्थः **तस्मात्** यजमानप्रयुज्यमानस्तोत्रेषु **उ वरं वृणीत**। यजमानो **यं कामं कामयेत** उद्गाता तं वरं वृणीत। यस्मादेवंविदुद्गाता **आत्मने वा यजमानाय वा यं कामं कामयते तमागायति** गानेन तं साधयत्येव। इत्थं ज्ञानकर्मभ्यां प्राणभावापत्ति-

रुक्ता । न तत्राशङ्कास्ति । कर्मापाये तदापत्तिर्भवति न वेत्याशङ्कायां तत्परिहार उच्यते— **तद्धैतल्लोकजिदेवेति** । तदेतत् केवलप्राणदर्शनं लोकजिदेव स्वेप्सितलोकगमकत्वात् । **न हैवालोक्यतायै** अलोकत्वाय **आशा** आशंसनं प्रार्थनं **नैवास्ति** । न हि प्राणात्माविष्टाभिमानस्य तत्प्राप्त्याशङ्का भवति । न हि ग्रामस्थोऽरण्यस्थवत् कदा ग्रामं एमि ? इत्याकाङ्क्षते तद्वदित्यर्थः । **यो** व्याविद्धपाप्मा यस्त्वासुरपाप्मभ्यो वागादिपञ्चकं मोचयित्वाग्न्यादिभावमनीनयत् यः सर्वभूतानामाङ्गिरसः य ऋग्यजुःसामोद्गीथाश्रय आत्मा यः साम्नो भूषणं सौस्वर्यं ततोऽप्यन्तरतरं सौवर्ण्यं यो वागन्नादिप्रतिष्ठागुणः यः पुत्तिकादिशरीरेष्वमूर्तभावेन समतया व्याप्तः **एवमेतत्** यथोक्तलक्षणं **साम** प्राणमनिर्धारितमहिमानं अयमहमस्मीति **वेद** उपास्ते तस्य तद्भावापत्तिरेव परमफलमित्यर्थः ॥ २८ ॥

---

## चतुर्थं पुरुषविधब्राह्मणम्

### प्रजापतेः स्वातन्त्र्यादिविभूतिप्रकटनम्

आत्मैवेदमग्र आसीत् पुरुषविधः सोऽनुवीक्ष्य नान्यदात्मनोऽपश्यत् सोऽहमस्मीत्यग्रे व्याहरत् ततोऽहंनामाभवत् तस्मादप्येतर्हि आमन्त्रितोऽहमयमित्येवाग्र उक्त्वा अथान्यन्नाम प्रब्रूते यदस्य भवति स यत्पूर्वोऽस्मात् सर्वस्मात् सर्वान् पाप्मन औषत् तस्मात् पुरुष ओषति ह वै स तं योऽस्मात्पूर्वो बुभूषति य एवं वेद ॥ १ ॥

समुच्चितज्ञानकर्मभ्यां प्राजापत्याप्तिरुक्ता । “ तद्धैतल्लोकजिदेव ” इत्यादिना केवलप्राणदर्शिनोऽपि तदाप्तिरभिहिता । इदानीं फलभूतप्रजापतेः जगत्सृष्टिस्थिति-

संहारेषु स्वातन्त्र्यादिविभूतिप्रकटनपूर्वकं वैदिकज्ञानकर्मणोः फलोत्कर्षप्रकटनाय इदं ब्राह्मणमारभ्यते—**आत्मैवेदमिति**। आत्मैव असावेव प्रजापतिस्तस्य प्रथमजत्वेन ज्ञानकर्मसमुच्चयफलरूपत्वात्। तथाविधात्मैवेदं नानाविधशरीर-भेदजातं शरीरान्तरोत्पत्तेः **प्रागग्रे** प्राजापत्यशरीराविभक्त**मासीत्**। पुरुषाकारशिरः-पाण्यादिमत्त्वात्। **सोऽयं पुरुषविधो** विराट् प्रथमशरीर्य**नुवीक्ष्य** स्वात्मनो-ऽतिरिक्तं **नापश्यत्** न ददर्श। सर्वमात्मानमेवापश्यत्। **सोऽहं** सर्वात्माह-**मस्मीत्यग्रे व्याहरत्**। **ततो**ऽग्रे स्वात्मानमेवाहमित्यभ्यधात्। **तस्माद**हं**नामा-भवत्**। यस्मात् कारणे प्रजापतावेवं वृत्तं **तस्मात्** तत्कार्यभूतेषु प्राणिषु **एतर्हि** एतस्मिन् काले स्वयमा**मन्त्रितः** कस्त्वं? इत्युक्तः सन् **अयमहमस्मी-त्येवाग्र उक्त्वा** कारणात्माभिधानेनाग्रे स्वात्मानमभिधाय पुनर्विशेषाकाङ्क्षाया-**मन्यन्नाम प्रब्रूते**। अथानन्तरं देवदत्तो यज्ञदत्त इत्यादि कथयति। **यन्मातापितृ-कृतं** तदेव कथयति। **स** भवान्तरे ज्ञानकर्मसाधनदशायां प्राजापत्यप्रतिपित्सूनां प्रथमस्सन् **अस्मात्सर्वस्मात्** प्रजापतित्वप्रतिपित्सुसमुदायात् पूर्वमेव प्राजापत्याप्ति-प्रतिबन्धक**पाप्मन औषत्** अदहत्। यस्मादेवं तस्मात् पूर्व औषदिति पुरुषः। स्वाप्तिप्रतिबन्धकौषणात **पुरुषः** प्रजापतिरभवत्। एवमन्योऽपि कर्मज्ञानाग्निना केवलज्ञानाग्निना वा सर्वान् **पाप्मन ओषति** भस्मीकरोति। **योऽयमस्माद्विदुषः पूर्वः** प्रजापतित्वं **बुभूषति** स तं दर्शयति। **योऽयं** ज्ञानकर्मप्रभावतो **वेद** स प्रजापतिरेव भवतीत्यर्थः ॥ १ ॥

प्राजापत्यप्रबोधं विना संसारदुःखस्यानतिक्रमणम्

**सोऽबिभेत् तस्मादेकाकी बिभेति स हायमीक्षांचक्रे यन्मद-न्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाय कस्माद्धि अभेष्यत द्वितीयाद्वै भयं भवति ॥ २ ॥**

इत्थं प्राजापत्यप्रबोधं विना संसारदुःखं नातिक्रामतीति इममर्थं दर्शयति—**स** इति। **सोऽयं** प्रथमशरीरी **अबिभेत्** अस्मादादिवत् भीतवान्। स्वनाशहेतु-

विपरीतदर्शनादित्यर्थः। यस्मादेवं **तस्मात्** सामान्यादे**काकी बिभेति। सोऽयं** प्रजापतिः स्वभीनिरसनहेतु यथाभूतात्मदर्शनमीक्षांचक्रे **ह स्म**। तत्कथं? इत्यत्र—**यन्मदन्यत्** भयकारणं **नास्ति** स्वात्मनाशहेत्वभावे **कस्मान्नु बिभेमि? इति। तत** एवास्य प्रजापतेर्भयं **वीयाय** यथाभूतात्मदर्शनात् विस्पष्टं भयमपगतवत्। भयं स्वाज्ञाननिमित्तं, स्वज्ञाने तदनुपपन्नमित्याह—**कस्माद्धि अभेष्यत्? इति**। भयहेतुस्वातिरिक्तवस्त्वभावात्। यतो **द्वितीयाद्वै भयं भवति**। द्वितीयस्याविद्यामात्रत्वेन भयहेतुमोहो नास्तीत्यत्र—

तत्र को मोहः कः शोक एकत्वमनुपश्यतः।

इति श्रुतेः॥ २॥

प्रजापतेः मिथुनीभावः मनुष्यसृष्टिश्च

**स वै नैव रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् स हैतावानास यथा स्त्रीपुमाꣳसौ संपरिष्वक्तौ स इममेवात्मानं द्वेधापातयत् ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव स्वः इति ह स्माह याज्ञवल्क्यः तस्मादयमाकाशः स्त्रिया पूर्यत एव ताꣳ समभवत् ततो मनुष्या अजायन्त॥ ३॥**

प्रजापतेः स्वदृष्ट्याद्वयत्वेऽपि बहुभवननिमित्तमेकात्मत्वेन रतिरस्य जातेत्याह—**स वा इति**। लोकदृष्ट्या **स वै** प्रजापतिः आत्मरतिरपि सन् स्वमात्रे **नैव रेमे** लोकवदरत्याविष्टोऽभूदित्यर्थः। यस्मादेवं **तस्मादिदानी-मप्येकाकी न रमते**। रतिर्नाम इष्टार्थसंयोगजा क्रिया। तद्विपरीतेयमरतिः। तदपनोदनाय **स द्वितीयं** स्त्रीवस्तु **ऐच्छत्** गर्धिमकरोत्। तस्य स्त्रीविषयेच्छया तया परिष्वक्तजनवत् तद्विषयभावो बभूव। **स हैतावानास** एतत्परिमाणवान् बभूव। तत्र दृष्टान्तमाह—**यथेति**। **यथा** लोकेऽरत्यपनोदनाय **स्त्रीपुमांसौ संपरिष्वक्तौ** यत्परिमाणौ स्यातां तथा तत्परिमाणो बभूव। तदानीं स्वातिरिक्त-

जनाभावात् **स** प्रजापतिः **एकमेवात्मानं द्वेधापातयत्** आपातितवान्। **ततस्तस्मात्** पातनात् **पतिश्च पत्नी चाभवताम्**। **तस्मादिदं** शरीरमात्मनोऽर्धं च तत् बृगलं विदलं **चेत्यर्धबृगलमिव** कार्यार्थत्वान्न वस्तुनः स्वात्मनोऽर्ध-बृगलत्वमस्तीत्यत्र **ह स्माह याज्ञवल्क्यः** यज्ञवल्कस्यापत्यम्। **यस्मादयं पुरुषोऽर्ध आकाशः** स्त्र्यर्धशून्यः पुनरुद्वहनेन **तस्मात् पूर्यते**। स्त्र्यर्धेन पुनः संपुटीकरणेनेव विदलार्धरूपा या **तां** मन्वाख्यः स प्रजापतिरात्मनो दुहितरं शतरूपाख्यां पत्नीत्वेन **समभवत्** मिथुनीभावमुपगतवान्। **ततस्तस्मादुप**-गमनात् **मनुष्या अजायन्त**। ततः प्रभृति मनुष्यसृष्टिरित्यर्थः ॥ ३ ॥

प्रजापतिना नानाविधसृष्टिकथनम्

**सो हेयमीक्षांचक्रे कथं नु मात्मान एव जनयित्वा संभवति ? हन्त तिरोऽसानीति सा गौरभवत् ऋषभ इतरस्ताꣳ समेवाभवत् ततो गावोऽजायन्त बडबा इतराभवदश्ववृष इतरो गर्दभी इतरा गर्दभ इतरस्ताꣳ समेवाभवत् तत एकशफमजायत अजा इतराभवत् बस्त इतरोऽविरितरा मेष इतरस्ताꣳसमेवाभवत् ततोऽजावयोऽजायन्त एवमेव यदिदं किंच मिथुनमापिपीलिकाभ्यस्तत्सर्वमसृजत ॥ ४ ॥**

सेयं शतरूपा कथं प्रजापतिर्मां जनयित्वा श्रुतिस्मृतिनिषिद्धाचरणं कृतवान्? इति जुगुप्सया स्वयं तिरोभूत्वा गवादिबहुरूपतामियात्। तदाशये सोऽपि वृषभादिबहुरूपतामियात्। ततो नानाविधसृष्टिरासीदित्याह— सेति। **सा उ ह इयं सो हेयं** शतरूपा दुहितृगमनप्रतिषेधमनुस्मरन्ती सती **ईक्षाञ्चक्रे। कथन्नु मामात्मनो जनयित्वायं संभवत्युपगच्छति**? निर्घृणोऽयं भाति। तथापि **हन्त** इदानीमहं जात्यन्तरेणात्मानं **तिरोऽसानि** स्वात्मानं तिरस्कृता भवामि इत्येवमीक्षित्वा **सा गौरभवत्**। तस्या उत्पाद्यप्राणिकर्मभिश्चोद्यमानत्वात्। तदानीमितर **ऋषभो** भूत्वा **तां समेवाभवदि**त्यादि पूर्ववत्। **ततस्ताभ्यां**

**गावोऽजायन्त** । तथा **बडवा इतराभवत्** । **अश्ववृष इतरः** । **गर्दभी इतरा** । **गर्दभ इतरः** । तत्र बडबाश्ववृषादीनां समागमात् **ततोऽ**श्वाश्वतरगर्दभाख्यं त्रय**मेकशफं** खुर**मजायत** । तथा **अजा इतराभवत्** । **बस्त**श्छाग **इतरः** । तथा **अविरितरा मेष इतरः तां समेवाभवत्** । **ततोऽजाश्च** अवयश्चा-**जावयः अजायन्त** । **एवमेव यदिदं किञ्च मिथुनं** स्त्रीपुरुषलक्षणं द्वन्द्वं **आपिपीलिकाभ्यः** । स ह्यनेन न्यायेन **तत् सर्वमसृजत** । स एवं प्रजापतिः सर्वमिदं जगत्सृष्ट्वा कृतकृत्यवदभवदित्यर्थः ॥ ४ ॥

स्रष्टुः तस्य कृतकृत्यताकथनम्

**सोऽवेदहं वाव सृष्टिरस्मि अहꣳ हीदꣳ सर्वमसृक्षीति ततः सृष्टिरभवत् सृष्ट्याꣳ हास्यैतस्यां भवति य एवं वेद ॥ ५ ॥**

तस्य कृतकृत्यता कथं ? इत्यत आह—**सोऽवेदिति** । **सो**ऽयं प्रजापति-रहमेव सृष्टं जगदस्मीत्यवेत् । मत्सृष्टजगतो मदभिन्नत्वादहमेव इदमस्मि । न हि तन्मत्तोऽतिरिच्यते । **यतोऽहं सर्वं जगदसृक्षि** सृष्टवानस्मि तस्मादित्यर्थः । यस्मादयं सृष्टिमात्मत्वेनाभ्यधात् तस्मात् **तत्सृष्टिरभवत्** । **य एवं** प्रजापति-वत् कृत्स्नं जगदहमस्मीति **वेद** सोऽयं **ह्यस्य** प्रजापतेरिव **सृष्ट्यामेतस्यां** एतस्मिन् जगति प्रजापतिवत् स्रष्टा **भवति** प्रजापतिरेव स भवतीत्यर्थः ॥ ५ ॥

प्रजापतेरतिसृष्टिः तद्वेदनफलं च

**अथेत्यभ्यमन्थत् स मुखाच्च योनेर्हस्ताभ्यां चाग्निमसृजत तस्मादेतदुभयमलोमकमन्तरतोऽलोमका हि योनिरन्तरतस्तद्यदिदमा-हुरमुं यजामुं यजेत्येकैकं देवमेतस्यैव सा विसृष्टिरेष उ ह्येव सर्वे देवा अथ यत्किंचेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतावद्वा इदꣳ सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः सैषा ब्रह्मणोऽति-**

**सृष्टिर्यच्छ्रेयसो देवानसृजत अथ यन्मर्त्यः सन् अमृतानसृजत तस्मादतिसृष्टिरतिसृष्ट्यां हास्यैतस्यां भवति य एवं वेद ॥ ६ ॥**

इत्थं प्रजापतिः मिथुनात्मकं जगदिदं सृष्ट्वाथ ब्राह्मणादिवर्णानुग्राहकदेवताः सिसृक्षुः अतिसृजतीत्याह—**अथेति**। अभिनयप्रदर्शनार्थमथेतिशब्दद्वयम्। सोऽयं प्रजापतिरनेन प्रकारेण स्वमुखे हस्तौ प्रवेशयित्वा**भ्यमन्थत्**। स्वमुखं हस्ताभ्यां मथित्वा **मुखाच्च हस्ताभ्यां च योनेर्योनिभ्यां** ब्राह्मणजातेरनुग्रहकर्तार**मग्निमसृजत**। यस्माद्दाहकाग्नेर्मुखं हस्तौ चेत्येतदुभयं योनिः **तस्मादेतदुभयमप्यलोमकमन्तरतः**। उभयस्यास्ति हि योन्या सामान्यम्। स्त्रीणां **योनिरन्तरतोऽलोमका हि**। तथा प्रजापतेर्मुखादेव ब्राह्मणोऽपि जज्ञे। तत्राग्निर्ज्येष्ठः। ब्राह्मणः कनीयान्। तयोरप्येकयोनित्वेन ज्यायसा कनीयाननुगृह्यते। "आस्यमाहवनीयः," "ब्राह्मणोऽस्य मुखमासीत्" इति,

ब्राह्मणस्त्वग्निदैवत्यो मुखवीर्यो महाद्युतिः।

इति च श्रुतेः स्मृतेश्च। इह क्षत्रियादिसर्गमनुक्तमपि वक्ष्यमाणमुक्तवदुपसंहर्तव्यमिति। बाहुभ्यां क्षत्रियमूरुभ्यां वैश्यं पद्भ्यां शूद्रमसृजतेति श्रुतिस्मृतिप्रसिद्धेः। तथा प्रजापतिरेव सर्वमित्यर्थः। सृज्यमानचेतनाचेतनात्मकजगतः स्रष्टुरनन्यत्वात्। एवं व्यवस्थितेऽपि यज्ञकाले केवलयाज्ञिका **यदिदं** वचनमाहुः **अमुमग्निं यज अमुमिन्द्रं यज** इत्यादिना तयोः स्तोत्रकर्मादिभिन्नत्वात् एकैकमन्यमाहुः। तन्न तथा विद्यात्। तस्मा**देतस्यैव** प्रजापतेः **सा विसृष्टिः** देवभेदः सर्वः। **एष उ एव** प्रजापतिरेव प्राणः **सर्वे देवाः**। "एष ब्रह्मा एष इन्द्र एष प्रजापतिरेते सर्वे देवाः" इति श्रुतेः। तस्मात् प्रजापतेरेकस्यात्वादिभेदो विवक्षितः। "तत्राग्निरत्ता अद्यः सोमः" इति। तदिहाप्युच्यते—**अथेति**। लोके **यत्किंचेदमार्द्रं तदात्मनो रेतसो** बीजा**दसृजत** "रेतस आपः" इति श्रुतेः। अबात्मकश्च सोम एतावान्। नातोऽधिकं सर्वम्। तस्मात्प्रजापतिना यदार्द्रं रेतसः सृष्टं तदु **सोम** एवाभवत्। **सोम एवान्नं** द्रवात्मकत्वात्। **अन्नादश्चाग्नि**रौष्ण्यात्

रूक्षत्वाच्च । यदद्यतेऽन्नं तत्सोम एव । य एवात्ता स एवाग्निरिति अर्थ-बलादवधारणम् । एवमग्नीषोमात्मकं जगत् आत्मत्वेन पश्यन्निर्दोषः प्रजापतिरेव भवति । **सैषा ब्रह्मणः** प्रजापतेरतिसृष्टिः । यस्मादात्मनः सकाशात् **श्रेयसः** प्रशस्यतरान् **देवानसृजत** येयं सृष्टिः यस्मादुक्ता तस्मात् सैषा देवसृष्टिः अतिसृष्टिः । कथमात्मनोऽतिसृष्टिः ? इत्यत आह—**अथेति** । **अथ यत्** यस्मात् स्वयं **मर्त्यः सन अमृतान् देवानसृजत** कर्मज्ञानवह्निना निष्पापविद्वान् सृष्टवानिति याभिहिता **सेयमतिसृष्टिः** ज्ञानोत्कृष्टफलमित्यर्थः । यस्तस्मात्प्राजापत्यामतिसृष्टिं **वेद स एतस्यामतिसृष्ट्यां** प्रजापतिरेव **भवती**त्यर्थः ॥ ६ ॥

पुरा जगतोऽव्याकृतत्वकथनम्

तद्धेदं तर्हि अव्याकृतमासीत् तन्नामरूपाभ्यामेव व्याक्रियते असौनामायमिदꣳरूप इति तदिदमप्येतर्हि नामरूपाभ्यामेव व्याक्रियते असौनामायमिदꣳरूप इति स एष इह प्रविष्ट आ नखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्यात् विश्वंभरो वा विश्वंभरकुलाये तं न पश्यन्ति । अकृत्स्नो हि स प्राणन्नेव प्राणो नाम भवति वदन् वाक् पश्यꣳश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनः तान्यस्यैतानि कर्मनामान्येव स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो हि एषोऽत एकैकेन भवति आत्मेत्येवोपासीत अत्र ह्येते सर्व एकं भवन्ति तदेतत्पदनीयमस्य सर्वस्य यदयमात्मानेन ह्येतत्सर्वं वेद । यथा ह वै पदेनानुविन्देत् एवं कीर्तिꣳ श्लोकं विन्दते य एवं वेद ॥ ७ ॥

इत्थं व्याकरणात् पुरा इदमव्याकृतमासीदित्याह—**तद्धेदमिति** । **तद्धेदं तर्हि अव्याकृतमासीदि**त्यत्र ससाधनवैदिकज्ञानकर्मलक्षणमनेककर्तृकारकाद्यपेक्षं

प्राजापत्यफलावसानमिदं जगत् एवं व्याकरणात्पुरा बीजावस्थायामव्याकृतमनभिव्यक्तनामरूपमासीदिति। हकार ऐतिह्यार्थः। तदिदंशब्दवाच्ययोः व्याकृताव्याकृतजगतोः सामानाधिकरण्यादेकत्वमवगम्यते तदेवेदं इदमेव तत् इति। यत एवमतो नासत उत्पत्तिर्न सतो विनाश इत्यवधृतम्। तदेवंभूतं जगत् अव्याकृतं सत् **नामरूपाभ्यामेव व्याक्रियत**। व्याक्रियतेति कर्मकर्तृप्रयोगात् स्वयमेव नामरूपविशेषवत् व्यक्तीभावमापद्यत। देवदत्तो यज्ञदत्त इति वा नाम अस्येति **असौनामायम्**। तथा इदं शुक्लमिदं कृष्णमिति वा रूपमस्येति **इदंरूपः**। **तदिदमव्याकृतवस्तु** एतस्मिन्नपि काले **नामरूपाभ्यामेव व्याक्रियते असौनामायं इदंरूप इति**। सर्वशास्त्रारम्भो यदर्थः यत्र यदज्ञानतः कर्तृकारकाद्यध्यारोपः यस्तु सर्वजगत्कारणं यदात्मके नामरूपे शुद्धसलिलफेनादिवदव्याकृते यस्तद्विलक्षणो नित्यशुद्धबुद्धस्वभावः **स एषोऽव्याकृतनामरूपे व्याकुर्वन्** ब्रह्मादिस्तम्बान्तकर्मफलाश्रयाशनायादिमद्देहेषु मूर्धानमारभ्य **आ नखाग्रेभ्योऽनुप्रविष्टः**। यथोक्तकालेऽव्याकृतं स्वयमेव व्याक्रियत इत्युक्त्वा पुनः पर एवाव्याकृतं व्याकुर्वन् इह प्रविष्ट इति विरुद्धमुच्यत इति चेन्न ; परस्याव्याकृतजगदात्मत्वेन विवक्षितत्वात् तदिदंशब्दसामानाधिकरण्याच्च। त्वदाक्षिप्तनियन्तृकर्तृक्रियादिनिमित्तमव्याकृतं जगत् व्याक्रियते। न वस्तुत एकत्वात्। "तत्सृष्ट्वा तदेवानुप्राविशत्" इति सृष्टिप्रवेशश्रुतेरात्मैकत्वप्रदर्शनार्थत्वात् न कोपि विरोधः संभवति। कार्योपलब्धिरेव प्रवेश इत्युपचर्यते आलोमभ्य आनखेभ्यः चैतन्योपलब्धिदर्शनात्। तत्कथं? इत्यत्र दृष्टान्तमाह—यथेति। **यथा** लोके **क्षुरो** धीयतेऽस्मिन्निति क्षुरधानम्। तस्मिन् नापितोपकरणाभिधाने क्षुरः प्रवेशितोऽन्तरुपलभ्यते। यथा विश्वस्य भरणात् **विश्वम्भरोऽग्निः** कुलाये नीडे काष्ठादाववहित इत्यनुवर्तते। न तत्राग्निः स्वयमुपलभ्यते। तत्रायं मथ्यमान उपलभ्यते। यथा क्षुरः क्षुरधान एकदेशस्थितः यथा चाग्निः काष्ठादौ सर्वतो व्याप्य स्थितः तथैवमयमात्मा सामान्यतो विशेषतश्चावस्थितः। तत्र हि प्राणनादिक्रियावान् दर्शनादिक्रियावांश्च उपलभ्यते। तस्मात् तत्रैवायं प्रविष्ट इव प्रविष्टः। तस्मात् **तमात्मानं** प्राणनादिक्रियाविशिष्टं **न पश्यन्ति**। तथादर्शने हेतुमाह—

**अकृत्स्नो** **हीति**। असमस्त इत्यर्थः। कथमकृत्स्नत्वम्? **सोऽयमात्मा प्राणन्नेव** प्राणनक्रियामेव कुर्वन् **प्राणो नाम भवति**। प्राणक्रियाकर्तृत्वेन हि प्राणः प्राणितीत्युच्यते नान्यां क्रियां कुर्वन्। याचकपाचकादिवत् क्रियान्तरानुपसंहारात् अकृत्स्नो हि सः। तथा वदनक्रियां कुर्वन् **वाक्** नानारूपनानाशब्दजालं **पश्यंश्चक्षुः शृण्वन् श्रोत्रं** प्राणिति वदतीत्यनेन क्रियाशक्तिमत्त्वं पश्यति शृणोतीत्यनेन विज्ञानशक्तिमत्त्वं उक्तं भवति। विज्ञानशक्तेर्नामरूपविषयत्वात्। त्रयं वा इदं नामरूपं कर्मेति हि वक्ष्यति। ज्ञानशक्तिरूपेण मनसा मनुत इति मनः। अनेन मनुत इति मननकर्ता **मन्वानो मन** उच्यते। **तानि** प्राणनादीन्येतानि **अस्यात्मनः कर्मनामानि** कर्मनिमित्तत्वात्। न च वस्तुमात्रविषयाणि। अतो न कृत्स्नात्मावद्योतकानि। एवं ह्यसावात्मा प्राणनादिक्रियाजनितनामरूपाभ्यां व्याक्रियमाणोऽपि **स यो**ऽतोऽस्मात् प्राणनादिक्रियासमुदायादेकैकं मनसायमात्मेत्युपास्ते। **न स वेद** स तु ब्रह्म न जानाति तस्याकृत्स्नवित्त्वात्। **अकृत्स्नो ह्येष** आत्मा प्राणनादिसमुदायप्रविभक्त एकैकविशेषणविशिष्ट इतरधर्मान्तरानुपसंहारात्। पश्यामि शृणोतीत्यादि यावदयमेवं वेद तावत्कृत्स्नमात्मानमयं न वेद। कथं पश्यन् वेद? इत्यत आह—**आत्मेति**। प्राणनादिविशेषणानि यान्युक्तानि यान्यनुक्तानि तानि सर्वाणि "इदं सर्वं यदयमात्मा" इति श्रुत्यनुरोधेन येन स्वात्मतया व्याप्तानि सोऽयमात्मेत्युच्यते। एवं कृत्स्नविशेषणोपबृंहणात् कृत्स्नो भवति। तस्मादेतत्सर्वमात्मेत्ये**वोपासीतेति**। एवं चेदयं स्वेन रूपेण कृत्स्नो भवति। तत्कथं? इत्यत्र **अत्र** ह्यस्मिन्निरुपाधिकात्मनि जलसूर्यप्रतिबिम्बभेदाः सूर्य इव प्राणनादिकर्मजविकारा **ह्येते सर्वे एक**मभिन्नतां **भवन्ति**। "आत्मेत्येवोपासीत" इति नायमपूर्वविधिः पक्षे प्राप्तत्वात्। "यत् साक्षादपरोक्षात् ब्रह्म य आत्मा" इत्यादि श्रुतिमुखादेवात्मावगतेः सिद्धत्वादर्थादात्मातिरिक्तमनात्मेति निरसितं स्यात्। पारिशेष्यादात्मैवावशिष्टपक्षेण तदुपासनमप्राप्तत्वाद्विधातव्यम्। आत्मन उपास्यत्वेनावगमात्। अवगम्यते हि कार्त्स्न्येनात्मा उपास्यत्वेन। **तदेतत् पदनीयमस्य सर्वस्य यदयमात्मा,** "आत्मैव सर्वं" "आत्मनोऽन्यत्र

किंचन" इत्यनेन उपायेन ह्येतत्सर्वं वेद। कथं पुनरेतत् पदनीयं? इत्यत्र यथेह लोके गवादिखुराङ्कितो देशः पदमित्युच्यते। तेन पदेनान्विष्यमाणो नष्टं लिप्सितं पदार्थमनुविन्देत् लभेत। ज्ञानस्य प्रकृतत्वादप्रकृतलाभः कथं? इति चेन्न; ज्ञानलाभयोरेकार्थत्वेन विवक्षितत्वात्। ज्ञानं ह्यात्मलाभहेतुः। विन्देदिति विदेः लाभार्थत्वात् गुणविज्ञानफलमिदमुच्यते। य एवं वेदेति यथायमात्मा नामरूपानुप्रवेशेन ख्यातिं गत आत्मेत्यादिनामरूपाभ्यां प्राणादियोगतः श्लोकं प्राप्तवानिति वेदनानुरूपं फलं स्वेष्टैः सह कीर्तिं श्लोकं च विन्दते लभते। सविशेषात्मवेदनफलमेतादृशमित्यर्थः॥ ७॥

आत्मा सर्वप्रेमास्पदत्वेन वेदितव्यः

तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात् प्रेयोऽन्यस्मात् सर्वस्मादन्तरतरं यदयमात्मा स योऽन्यमात्मनः प्रियं ब्रुवाणं ब्रूयात् प्रियꣳ रोत्स्यतीति ईश्वरो ह तथैव स्यादात्मानमेव प्रियमुपासीत स य आत्मानमेव प्रियमुपास्ते न हास्य प्रियं प्रमायुकं भवति॥ ८॥

यतो ज्ञेयमात्ममात्रमनादृत्य विशेषवद्वेदनफलं परिच्छिन्नं अतः सर्वप्रेमास्पदत्वेनात्मा निर्विशेषतया वेदितव्य इत्याह—तदेतदिति। तदेतत् आत्मतत्त्वं प्रेयः निरतिशयानन्दरूपत्वात्। कथं पुनरात्मतत्त्वस्य प्रेयोमात्रत्वं प्रेयोऽन्तरसत्त्वात्? इत्यत्र सर्वस्मादपि प्रेयस्त्वमात्मनो दर्शयति—पुत्रादित्यादिना। लोके तावत् पुत्रोऽपि प्रियः। तथा वित्तं हिरण्यरत्नादि प्रियत्वेन प्रसिद्धम्। तस्मात् पुत्रात् वित्ताच्च इदमात्मतत्त्वमेव प्रेयः। किंच लोके यद्यत् प्रियत्वेन प्रसिद्धं तस्मात् सर्वस्मादपि आत्मतत्त्वमेव प्रियतरं न प्राणादिः। तस्य बाह्यपुत्रवित्ताद्यपेक्षया प्रियतरत्वेऽपि तस्मादप्यान्तरतमत्वेन सन्निकृष्टत्वात्। यदेतदात्मतत्त्वं तत्प्राणादप्यन्तरतरं यन्निरतिशयप्रेमरूपं बहुलतरप्रयत्नेनापि तल्लाभे यत्न आस्थेय इति भावः। स यः कश्चिदन्यमनात्मविषयं पुत्रादिकमात्मनः सकाशात् प्रियतरं ब्रुवाणमात्ममात्रप्रियवादी ब्रूयात्। किमिति?

किं तवाभिमतं **प्रियं** पुत्रवित्तादिलक्षणम्? तत् किं त्वां **रोत्स्यति** आवृणोति? तदा भवान् प्राणसंरोधनं प्राप्स्यति। स कस्मादेवं ब्रवीति? यस्मा**दीश्वर** एवं वक्तुं समर्थस्तस्मात् **तथैव स्यात्** यत्तेनोक्तं प्राणसंरोधं प्राप्स्यतीति तदन्यथा न भवेत्। स हि यथाभूतवादी। तस्मादात्मातिरिक्तप्रियपुत्रवित्तादिमुज्झित्वा स्वात्मा**नं** पुत्राद्यनात्मारोपापवादास्पदमेव **प्रियमुपासीत** स्वात्मैव प्रियो नान्योऽस्तीति। **स य आत्मानमेव प्रियमुपास्ते न हास्यैवंविदः प्रियं** पुत्रवित्तादिकं **प्रमायुकं** प्रमापणशीलं **भवतीति** यत् तदात्ममात्रप्रियविषयस्तुत्यर्थं गुणफलविधानार्थं वा। यथाभूतात्मविदस्तु स्वात्ममात्रगोचरप्रियमेव प्रमायुकं भवतीत्यर्थात् सिद्धमित्यर्थः ॥ ८ ॥

ब्रह्मविद्यास्वरूपकथनम्

**तदाहुर्यद्ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेत् यस्मात् तत्सर्वमभवदिति ॥ ९ ॥**

"आत्मेत्येवोपासीत" इति या ब्रह्मविद्या सूत्रिता यत्प्रयोजनाभिधित्सया सर्वे वेदान्ता आरब्धाः तदियत्ता कीदृशी? इत्याकाङ्क्षायामाहुरित्याह— **तदाहु-रिति**। यद्विद्यैव वेदनीयं **तदिति** वक्ष्यमाणं वस्तु ब्राह्मणा **आहुः**। किमिति? जनिमृतिचक्रभ्रमणकृतायाससंसारसागरप्लवभूतदेशिकचरणप्रतिपित्सवो धर्माधर्म-तत्फललक्षणपराग्भावसंसारनिर्विण्णा ब्रह्म विविदिषवो **यद्विद्यया** कृतकृत्या भवेयुः सेयं विद्या कीदृशी? इत्यत्र— यया यत्परमं ब्रह्म निष्प्रतियोगिकस्वमात्रतया विद्योतते सेयं ब्रह्मविद्या। तया स्वाज्ञदृष्टिविकल्पितसर्वकलनाविरलं **सर्वं** निष्प्रतियोगिकचिन्मात्रं **भविष्यन्तो** भविष्याम इत्येवं **मनुष्या मन्यन्ते**। मनुष्यग्रहणस्याधिकारख्यापनार्थत्वात्। अभ्युदयनिःश्रेयसार्थयोः मनुष्या एवाधि-कृता भवन्ति। यथा प्रेयोविषये फलाप्तिर्ध्रुवेति कामिनो मन्यन्ते तथा श्रेयोविषये चिन्मात्राप्तिर्ध्रुवेत्यकामिनः तयोः श्रुतिप्रामाण्याविशेषात्। तत्र परमपरं वा **किमु तद्ब्रह्मावेत् यस्मात् तत्सर्वमभवदिति** ब्रवीषि?

यत्सर्वदोषोत्थितं यद्वेदनात्सर्वभावापत्तिरिति पृच्छाम इति। मनुष्या मन्यन्त इति मनुष्याधिकारादपरं ब्रह्म भवितुमर्हतीत्याकांक्षायां "यदेव साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः", "तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म", "अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्" इत्यादिस्वातिरिक्ताविद्यापदतत्कार्यजातस्थूलसूक्ष्मादिभागचतुष्टयासंभवतावादिश्रुत्यर्थसंजातप्रबोधानामपरब्रह्म अस्तिनास्तीतिविभ्रमवैरल्यात् परमेव ब्रह्म मनुर्वेदान्तपूगः, तदर्थज्ञानसमकालं निष्प्रतियोगिकस्वमात्रं भविष्याम इति मननादध्यवसायान्मनुष्याः ब्रह्मविदादयो मन्यन्त इति यत् तत्परमेव ब्रह्म। न हि तत्र संशयोऽस्ति ॥ ९ ॥

ब्रह्मस्वरूपं तद्वेदनफलं च

ब्रह्म वा इदमग्र आसीत् तदात्मानमेवावेत् अहं ब्रह्मास्मीति तस्मात्तत् सर्वमभवत् तत् यो यो देवानां प्रत्यबुध्यत स एव तदभवत् तथा ऋषीणां तथा मनुष्याणां तद्धैतत् पश्यन् ऋषिर्वामदेवः प्रतिपेदेऽहं मनुरभवꣳसूर्यश्चेति तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदꣳ सर्वं भवति तस्य ह न देवाश्चनाभूत्या ईशते आत्मा ह्येषाꣳ स भवति अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवꣳ स देवानां यथा ह वै बहवः पशवो मनुष्यं भुञ्ज्युः एवमेकैकः पुरुषो देवान् भुनक्ति एकस्मिन्नेव पशावादीयमानेऽप्रियं भवति किमु बहुषु तस्मादेषां तन्न प्रियं यदेतन्मनुष्या विद्युः ॥ १० ॥

"किमु तद्ब्रह्मावेत् यस्मात्तत् सर्वमभवत्" इति यत्त्वया पृष्टं सोपायं तत्रेदमुच्यते—**ब्रह्म वा इदमिति**। **ब्रह्म वा इदमा**विद्यकपदतत्कार्यजातं स्वप्र-

बोधादग्रे प्राक् तत्तदुपाध्यनुगतमिव विभाव्यमानमासीत्। तदेव ब्रह्म स्वातिरिक्तोपाध्यसम्भवप्रबोधसमकालं निष्प्रतियोगिकमात्मानमेवावेत् विदितवत्। किमिति? अहं ब्रह्मास्मीति। यत् पुरा स्वाज्ञदृष्टिविकल्पितस्वातिरिक्तनानोपाधितदवच्छिन्नजीववत् स्वज्ञदृष्ट्या तदपवादास्पदत्वेन तद्भावाभावप्रकाशकप्रत्यग्रूपेण भातं तदहंशब्दार्थः परमार्थदृष्ट्या तदेव पराग्भावाप्रकाशसापेक्षप्रत्यक्प्रकाशगतविशेषांशापायोपबृंहितं ब्रह्मास्मि निष्प्रतियोगिकस्वमात्रमिति भातीत्यर्थः। यस्मादेवं तस्मात् ब्रह्म सर्वकलनाविरलं सर्वं स्वमात्रमभवत्। तत्तत्र देवानां मध्ये यो यः स्वात्मानमेव ब्रह्मेति प्रत्यबुध्यत प्रतिबुद्धवान् सोऽयं प्रतिबुद्धात्मा तत् ब्रह्म अभवत्। तथा ऋषीणां तथा मनुष्याणां मध्येऽपि यः कोऽप्येवमात्मानं निष्प्रतियोगिकब्रह्ममात्रमिति प्रत्यबुध्यत सोऽपि तन्मात्रतयावशिष्यते। देवर्षिमनुष्याद्युपाधिषु ब्रह्मानुप्रवेशस्य तुल्यत्वात्। तथा च वक्ष्यति "पुरः पुरुष आविशत्" इति।

स्वयमेव जगद्भूत्वा प्राविशज्जीवरूपतः।

इति खिलश्रुत्यनुरोधेन प्रबोधात् प्रागपि इदं सर्वं ब्रह्मैव स्वाज्ञानतोऽब्रह्मवद्भातम्। पुनः स्वज्ञानतः स्वाज्ञानापाये पुरानुभूतं सर्वं ब्रह्मैवाभवदिति ब्रह्मज्ञानस्य सर्वात्मभावापत्तिः फलमित्यस्मिन्नर्थे श्रुतिर्मन्त्रानुदाहरति स्वोक्तार्थद्रढिम्ने। किं तत्? इत्यत्र वामदेवाख्यो ऋषिः यत् स्वाज्ञादिदृष्टिमोहे सत्यसति निष्प्रतियोगिकस्वमात्रतया विजृम्भते स्वात्मानमेव तद्ब्रह्माहमस्मीति पश्यन् तद्दर्शनसमकालमेव तत् ब्रह्म प्रतिपेदे। ह किल। तद्दर्शनवेलायामयमेतान् मन्त्रान् ददर्श—अहं मनुरभवं सूर्यश्चेति। तत्र पश्यन्निति ब्रह्मविद्या परामृश्यते। अहं मनुरभवं सूर्यश्चेत्यादिना ब्रह्मविद्याफलत्वेन सर्वात्मभावापत्तिः परामृश्यते। पश्यन् प्रतिपेद इति वर्तमानप्रयोगात् भुञ्जानस्तृप्यतीतिवत् दर्शनसमकालं तद्भावापत्तिरवगम्यते। प्राक्कालीनानां देवर्षीणां वीर्यातिशयादेवं स्यादेव, नेदानीमैदंयुगीनानाम्। विशेषतो मनुष्याणामल्पवीर्यत्वात् ब्रह्मदर्शनं तद्भावापत्तिर्वा दुर्लभेति चेन्न; तद्भावापत्तेः निष्प्रतियोगिकब्रह्ममात्रज्ञाननिमित्तत्वात्। मनुष्ये-

ष्वपि **यः** कश्चित् स्वातिरिक्तास्तिताभ्रमं निरस्य स्वात्मानमेवावेत् **अहं ब्रह्मास्मीति**ज्ञानतो ब्रह्मैव भवति। न हि प्राक्कालीनमहावीर्येषु वामदेवादिषु हीनवीर्यत्वेन वार्तमानिकमनुष्येषु वा ब्रह्मणस्तद्विज्ञानस्य वा विशेषोऽस्ति। तथापि वार्तमानिकमानुषात्तब्रह्मविद्याफलं बह्वन्तरायविशिष्टमित्यत आह—**तस्येति**। **तस्य** यथोक्तब्रह्मविदः कृते **देवा** महावीर्या अपि तदात्तब्रह्मभावस्या**भूत्यै** अभवनाय **नेशते** न समर्था भवन्ति। देवैरपि विघ्नं कर्तुमशक्येऽर्थे किमुतान्ये विघ्नं कर्तुं शक्ताः स्युः? न केऽपीत्यर्थः। ये ज्ञानफलं विघ्नं कुर्युरिति ब्रवीषि ब्रह्मविदोऽस्य एषामप्यात्मभूतत्वात्। **सोऽयमेषामप्यात्मा भवति हि**। न हि स्वात्मनि स्वयमुपकर्तुमपकर्तुं वेच्छति कर्मकर्तृविरोधात्। "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवा जायते" इति श्रुतिप्रामाण्यतो देवर्षिपितृवर्गऋणानपाकरणतस्ते ज्ञानतत्फलविघ्नं कुर्वन्तीति चेन्न; ऋणतदपाकरणादेरविद्वद्विषयत्वात्। निर्विशेषब्रह्ममात्रावगतेः सर्वान्तरायमूलस्वाज्ञानापह्नवपूर्वकत्वात्। ज्ञानसमकालमुक्तब्रह्ममात्रविदि काप्याशंका सेद्धुं पारयति "ब्रह्म वेद ब्रह्मैव भवति", "ज्ञानसमकालमेव मुक्तः कैवल्यं याति" इत्यादिश्रुतेः। तथा चेत् "त्रिभिः ऋणवा जायते" इतिश्रुतेः का गतिः? इति चेत्; अब्रह्मविदि सा श्रुतिर्गतिमर्हत्येव। तथा चेत् कोऽयमब्रह्मवित् इति? उच्यते। **अथ** स्वाज्ञोऽहमिति विभ्रमानन्तरं **यः** कश्चिदब्रह्मवित् आत्मनोऽन्यां **कांचिद्देवतामन्योऽसावन्योऽहमस्मीति** सेव्यसेवकतया स्तुतिनमस्कारप्रणिधानादिना **उपास्ते सोऽ**यमित्थंप्रत्ययः स्वात्मानं जात्वपि **न वेद**। तस्य स्वाज्ञानदृढपटावृतत्वात्। न केवलमेवम्। किं तर्हि? **यथा** लोके गृहमेधिनां **पशुर्**गवादिः वाहनदोहनाद्युपकारैः उपभुज्यते तथायमेवं **देवा**दीनामिज्याद्यनेकोपकारैरुपभोग्यत्वमेत्य स्वस्वामिगृहाङ्गणस्थाणुरज्जुबद्धपशुवत् कर्मतत्फलदृढपाशबद्धः सन् विविधकर्मस्वधिकृतो भवति। एवं सकामनिष्कामतया कर्मकाण्डवशवर्त्यविदुषः कर्मफलं दक्षिणोत्तरमार्गाभ्यामावृत्त्यनावृत्तिलक्षणचन्द्रब्रह्मलोकौ भवतः। शास्त्रविपरीतस्वाभाविककर्मफलं तु तिर्यक्स्थावराद्यापत्तिः ज्ञेयम्। यथा चैतत् तथा कृत्स्नाध्यायशेषेण ब्रह्मविद्याफलं तद्भावापत्तिः अविद्या-

फलमपि ब्रह्मलोकादिस्थावरान्तापत्तिरित्येवमीशाद्यष्टोत्तरशतवेदान्तपटलं विद्याविद्यातत्फलं प्रकाशयित्वा स्वयमपि ब्रह्ममात्रपर्यवसन्नं भवेदिति परमोऽयं सिद्धान्तः। यस्मादेवं तस्मात् देवादयः स्वाविद्यावन्तं पुरुषं प्रत्येव निग्रहमनुग्रहं वा कर्तुमीशत इत्येतमर्थं दर्शयति—**यथे**ति। **यथा ह वै लोके बहवो** गवादयः **पशवो मनुष्यं** स्वाधिष्ठातारं **भुञ्ज्युः** पालयेयुः **एवं** बहुपशुस्थानीय **एकैकः पुरुषो**ऽविद्वान्—**देवा**निति पित्राद्युपलक्षणार्थं—**भुनक्ति** पालयतीत्यर्थः। इन्द्रादयः त्वमर्त्याः ममेशितारोऽहमेषां स्तुतिनमस्कारेज्यादिनाराधनं कृत्वा तद्दत्ताभ्युदयनिःश्रेयसफलं प्राप्स्यामीत्यभिसन्धिमान् हि मर्त्यः। तत्र लोके बहुपशुमतः कुटुम्बिनो यथा **एकस्मिन्नेव पशौ** व्याघ्रादिना **आदीयमाने** अपह्रियमाणे **महदप्रियं भवति** तथा बहुपशुस्थानीये एकस्मिन् पुरुषे पशुभावादुत्तिष्ठति सति अप्रियं भवतीति **किं** वक्तव्यम्? **तस्मादेषां** देवानां **तन्न प्रियं** ब्रह्मात्मतत्त्वं **मनुष्या विद्युरिति यत्**। तथा च स्मर्यते—

> क्रियावद्भिर्हि कौन्तेय! देवलोकः समावृतः।
> न चैतदिष्टं देवानां मर्त्यैरुपरि वर्तनम्॥

इति। अतो देवा अब्रह्मविदं ब्रह्मवित्पदमारोढुमिच्छन्तं तत्पदानारोहाय अश्रद्धादिप्रदानतो विघ्नमाचरन्ति। यं मुमोचयिष्यन्ति तं श्रद्धादिसाधनैर्योक्ष्यन्ति। तस्मान्मुमुक्षुर्ब्रह्मविद्यां प्रति श्रद्धाभक्तिपुरस्सरं देवानाराध्य तत्प्रसादतः चित्तशुद्धिमेत्य ब्रह्मविद्याभिमुखो भूयात्॥ १०॥

ब्राह्मणरूपेण ब्रह्मणा क्षत्रियसृष्टिः देवाधिपसृष्टिश्च

**ब्रह्म वा इदमग्र आसीदेकमेव तदेकꣳ सत् न व्यभवत्तच्छ्रेयोरूपमत्यसृजत क्षत्रं यान्येतानि देवत्रा क्षत्राणि इन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशान इति तस्मात् क्षत्रात्परं नास्ति तस्मात् ब्राह्मणः क्षत्रियमधस्तादुपास्ते राजसूये क्षत्र एव तद्यशो**

दधाति सैषा क्षत्रस्य योनिर्यद्ब्रह्म तस्माद्यद्यपि राजा परमतां गच्छति ब्रह्मैवान्तत उपनिश्रयति स्वां योनिं य उ एनꣳ हिनस्ति स्वाꣳ स योनिमृच्छति स पापीयान् भवति यथा श्रेयाꣳसꣳ हिꣳसित्वा ॥ ११ ॥

आदौ तावत् "आत्मेत्येवोपासीत" इति शास्त्रार्थः सूत्रितः। तदर्थवादेन "तदाहुः यद्ब्रह्मविद्यया" इति संबन्धादिरभिहितः। विदुषः "स्वात्मानमेवावेत् अहं ब्रह्मास्मि" इति वेदनसमकालं ब्रह्मास्तिर्दर्शिता। अथ "योऽन्यां देवतामुपास्ते" इत्यादिना विदुषो देवोपजीव्यताभिहिता। सोऽयमविद्वान् देवादिकर्मकर्तव्यतया पशुवत् ऋणी परतन्त्र इत्युक्तः। किं पुनर्देवादिकर्मकर्तव्यत्वे निमित्तम्? वर्णाश्रमादिमूलं स्वाज्ञानमेव, यन्निमित्तमयं परतन्त्रपशुवत् सर्वकर्मस्वधिकृतः संसरति। एतदर्थप्रदर्शनायाग्निसर्गानन्तरमिन्द्रादिसर्गो नोक्तः। प्राजापत्यसर्गपूरणायाग्निसर्गो दर्शितः। अयं च इन्द्रादिसर्गोऽपि क्षत्रविट्च्छूद्रसर्गोपन्यासेनात्रैव सूचितः। तच्छेषतया इहाविदुषः कर्माधिकारहेतुप्रकटनाय इदमारभ्यते—**ब्रह्मे**ति। **ब्रह्म वा इदमग्र आसी**दिति। यदग्निं सृष्ट्वा तद्भावापन्नं ब्रह्म ब्राह्मणजात्यभिमानवद्भवति तद्ब्रह्मैवेत्यभिधीयते वै। इदं क्षत्रियादिजातं ब्रह्माभिन्नमेवासीत्। तदानभिव्यक्तत्वादेकमेव नासीत्। **स्वयमेकमपि** पालयित्रा रहितं **सत् न व्यभवत्** न विभूतवत् कर्मणो न पर्याप्तमासीत्। ततस्त**त्** ब्राह्मणोऽस्मीति तज्जातिनिमित्तकर्मचिकीर्षया **श्रेयोरूपं क्षत्रमत्यसृजत** अतिशयेन सृष्टवत्। व्यक्तिभेदेन तत् प्रदर्शयति—**यानी**ति। लोके **यान्येतानि** प्रसिद्धानि **देवत्रा** देवेषु **क्षत्राणी**ति जात्याख्यायां पक्षे बहुवचनस्मरणात्। कानि पुनस्तानि? इत्याकांक्षायां विशेषतस्तत्राभिषिक्ता एव निर्दिश्यन्ते—**इन्द्र** इत्यादिना। देवानां राजा **इन्द्रः**। यादसां **वरुणः**। ब्राह्मणानां **सोमः**। पशूनां **रुद्रः**। विद्युदादीनां **पर्जन्यः**। पितॄणां **यमः**। रोगादीनां **मृत्युः**। भासा**मीशान** इत्येवमादीनि देवेषु क्षत्राणि। सोमसूर्यवंश्यानि मानुषक्षत्राणि पुरूरवेक्ष्वाकुप्रभृतीनि सृष्टानीति। देवक्षत्रसर्गस्तदर्थ

एव प्रस्तुतः। यस्मात् क्षत्रं ब्राह्मणातिशयेन सृष्टं **तस्मात् क्षत्रात् परं नास्ति**। क्षत्रस्य ब्राह्मणजातेरपि नियन्तृत्वात्। यस्मादेवं **तस्मात् ब्राह्मणः** क्षत्रस्य कारणभूतोऽपि स्वयम**धस्तात्** व्यवस्थितः सन् उपरि स्थितं **क्षत्रियमुपास्ते**। **राजसूये क्षत्र एव** तदात्मीयं **यशः** ब्रह्म **दधाति**। किञ्च राजसूयाभिषिक्तेन आसन्द्यासनस्थितराज्ञा ऋत्विक् ब्रह्मन्! इति निमन्त्रितः सन् पुनस्तं प्रत्याह—किमिति? हे राजन्! त्वं ब्रह्मासीति। अत एव क्षत्र एव तद्यशो दधातीति सम्यगुक्तम्। **सैषा क्षत्रस्य योनिः** प्रकृता **यद्ब्रह्म**। **तस्माद्यद्यपि राजा** राजसूयाभिषेकतः **परमतां** विभूतिं **गच्छति ब्रह्मैव** ब्राह्मणजातिमेवान्ते कर्मसमाप्तावु**पनिश्रयति** पुरोहितादीन् प्रणमति। **य उ** यस्तु पुनः बलाभिमानात् **एनमेनां स्वां योनिं** ब्राह्मणजातिं **हिनस्तीत्य**न्यद्भावेन पश्यति **सोऽयं** स्वात्मीयामेव **योनिमृच्छति**। **स** एवंकृत् **पापीयान् भवति**। पूर्वमपि क्षत्रियः पाप एव तस्य क्रौर्यविशिष्टत्वात्। आत्मप्रसवहिंसया सुतरां पापतरो भवति। **यथा** लोके **श्रेयांसं हिंसित्वा** परिभूय पापतरो भवति तथा-यमपीत्यर्थः॥ ११॥

### वैश्यसृष्टिः देवगणसृष्टिश्च

**स नैव व्यभवत् स विशमसृजत यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वेदेवा मरुत इति॥ १२॥**

इत्थं क्षत्रं सृष्ट्वाथ वित्तोपार्जयितारं वैश्यमसृजदित्याह—**स** इति। सृष्टेऽपि क्षत्रे वित्तोपार्जयित्रभावात् **स नैव व्यभवत्**। कर्मसाधनवित्तोपार्जनाय **स विशमसृजत**। कः पुनरसौ विट्? **यान्येतानि देवजातानि गणशो** गणं गण**माख्यायन्ते** प्रायेण विशो गणप्राया हि। वित्तोपार्जने संहता हि समर्थाः। नैकैकशो वित्तार्जनसामर्थ्यमस्ति। तत्कथम्? अष्टौ **वसव** एको गणः। तथा एकादश **रुद्राः**। द्वादश **आदित्याः**। विश्वाया अपत्यानि दश **विश्वेदेवाः**। **मरुत**स्सप्त। इत्थं गणशो वैश्यजातिः सृष्टेत्यर्थः॥ १२॥

शूद्रसृष्टिः पूषादिसृष्टिश्च

स नैव व्यभवत् स शौद्रं वर्णमसृजत पूषणमियं वै पूषा इयꣳ हीदꣳ सर्वं पुष्यति यदिदं किंच ॥ १३ ॥

त्रैवर्णिकानां परिचरणार्थं चतुर्थजातिमसृजतेत्याह—**स** इति। त्रैवर्णिकानां परिचारकाभावे तत्तत्स्थितिलोपो भवेदिति पुनरपि **स नैव व्यभवत्**। शूद्र एव शौद्रः स्वार्थे वृद्धिः। **स शौद्रं वर्णमसृजत**। कः पुनरसौ ? इत्यत्र पुष्यतीति पूषा। **पूषणं** शौद्रवर्णविशेषणम्। कः पुनरसौ पूषा ? इत्याकाङ्क्षायां श्रुतिः तदर्थं स्वयमेव निर्वक्ति—**पूषेयं** पृथिवी **हीदं सर्वं पुष्यति यदिदं किञ्च** ॥१३॥

तत्तद्वर्णोचितधर्मसृष्टिः धर्मप्रशंसा च

स नैव व्यभवत् तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत् क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्ति अथो अबलीयान् बलीयाꣳसमाशꣳसते धर्मेण यथा राज्ञा एवं यो वै स धर्मः सत्यं वै तत् तस्मात् सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वा वदन्तꣳ सत्यं वदतीति एतद्ध्येव एतदुभयं भवति ॥ १४ ॥

तत्तद्वर्णोचितधर्मानप्यसृजतेत्याह—**स** इति। स चतुरो वर्णान् सृष्ट्वापि **नैव व्यभवत्**। क्षत्रस्योग्रत्वेन नियन्तृसापेक्षत्वात् शमायेति **तच्छ्रेयोरूपमत्यसृजत**। किं तत् ? **धर्मं** हि तच्छ्रेयोरूपम्। **तद्धि क्षत्रस्य क्षत्रम्**। तस्मादप्युग्रत्वात्। **यद्धर्मो** यो धर्मः। **तस्मात्** क्षत्रियस्यापि नियन्तृ **धर्मात् परं नास्ति**। तेन हि सर्वे नियम्यन्ते। तत् कथम् ? **अथो** अपि **अबलीयान्** दुर्बलतमो यः स स्वात्मनो **बलीयांसं** बलवत्तरम**प्याशंसते** बलवद्धर्मेण जेतुमिच्छति। **यथा** लोके सर्वबलवत्तमेन **राज्ञा** कुटुम्बिकः तथैवं धर्मबलेन सर्वं जेयमित्यर्थः। तस्मात् धर्मस्य सर्वस्मात् बलवत्तमत्वं नियन्तृत्वं च

सिद्धमित्यर्थः। **यो वै** लौकिकवैदिकव्यवहारलक्षणो **धर्मः स सत्यं वै तत्।** यच्छास्त्राविरुद्धतया ज्ञेयं तत् सत्यं भवति। यस्मादेवं **तस्मात्** धर्माधर्मविवेककुशला यथाशास्त्रार्थं **सत्यं वदन्तं धर्मं वदतीत्याहुः।** तथा विपर्ययेण **धर्मं वा वदन्तं सत्यं वदतीति। यदेतदुभयं** ज्ञायमानमनुष्ठीयमानं च **स धर्म एव भवति हि॥ १४॥**

ब्रह्मणा तत्तद्देवतारूपप्राप्तिः

तदेतद्ब्रह्म क्षत्रं विट् शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रस्तस्मादग्नावेव देवेषु लोकमिच्छन्ते ब्राह्मणे मनुष्येष्वेताभ्याꣳ हि रूपाभ्यां ब्रह्माभवत्। अथ यो ह वा अस्माल्लोकात् स्वं लोकमदृष्ट्वा प्रैति स एनमविदितो न भुनक्ति यथा वेदो वाननूक्तोऽन्यद्वा कर्माकृतं यदिह वा अप्यनेवंवित् महत्पुण्यं कर्म करोति तद्धास्य अन्ततः क्षीयत एव आत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते अस्माद्ध्येवात्मनो यद्यत् कामयते तत्तत् सृजते॥ १५॥

यदेतद्ब्रह्म स्वसृष्टब्रह्मक्षत्रादीन् धर्मतो नियमयति तदेतद्ब्रह्म अग्न्यादितत्तज्जात्यभिमानिदेवतां निमित्तीकृत्य तत्तद्रूपतां प्राप्तवत् भातीत्याह— **तदेतदिति।** येन ब्रह्म **क्षत्रं विट् शूद्र** इति चातुर्वर्ण्यं सृष्टं **तदेतत् ब्रह्म अग्निनैव** रूपेण निमित्तभूतेन **देवेषु ब्रह्म** ब्राह्मणजातिर**भवत्। मनुष्येषु ब्राह्मण**रूपेण ब्रह्माभवत्। ब्राह्मणेतरवर्णेषु विकृतिमाप्य **क्षत्रियेण क्षत्रियो**ऽभवत्। इन्द्रादिदेवतामवष्टभ्येत्यर्थः। तथा **वैश्येन वैश्यः शूद्रेण शूद्रः।** यस्मात् क्षत्रियादिषु विकारापन्नमग्नौ ब्राह्मणे चाविकृतं ब्रह्मासीत्

**तस्मादग्नावेव देवेषु** देवमध्येऽग्निसंबन्धकर्म कृत्वा तत्कर्मफलभूत**लोक**मिच्छन्ति। तदर्थमेव हि ब्रह्म कर्माधिकरणाग्निरूपेण व्यवस्थितम्। तस्मात् तस्मिन्नग्नौ कर्म कृत्वा तत्फलप्रार्थनमुपपन्नं भवति। तथा **ब्राह्मणे मनुष्येषु** मनुष्याणां मध्ये ब्राह्मण एवाग्निः। तेषां कर्मफलेच्छया अन्नाग्न्यादिनिमित्तापेक्षास्ति। जातिमात्रस्वरूपप्रतिलम्भनस्य पुरुषार्थप्रापकत्वात्। यत्र पुरुषार्थसिद्धिः देवताधीना तत्राग्न्यादिसंबन्धक्रियाकांक्षास्ति। तथा च स्मर्यते—

जप्येनैव तु संसिद्ध्येत् ब्राह्मणो नात्र संशयः।
कुर्यादन्यत् न वा कुर्यात् मैत्रो ब्राह्मण उच्यते॥ इति।

तस्मात् ब्राह्मणाग्निरूपाभ्यां यत् स्रष्टृ ब्रह्म तत् साक्षादभवत्। अत्राग्नौ ब्राह्मणे च परमात्मलोकमिच्छन्ति इति चेन्न; वर्णाश्रमविभागस्याविद्याधिकारत्वेन प्रस्तुतत्वात्। यदि ह्यत्र परविशेषणात् लोकशब्दतः पर एवात्मा स्यात् तदा परेण विशेषणमनर्थकं स्यात्। स्वं लोकमदृष्ट्वेत्यग्न्यधीनलोकः स्वलोकव्यतिरिक्तश्चेत् ततः स्वमिच्छतीति विशेषणं युक्तं स्यात्। ब्रह्मणा कर्मार्थं वर्णाश्रमादिव्यवस्था सृष्टा। तेनैव कर्मणा स्वशब्दवाच्यः परलोकोऽविदितोऽपि तत्प्राप्यत इत्यत आह—**अथेति**। **अथ**शब्दः पक्षव्यावृत्त्यर्थः। **यः** कश्चित् **ह वा अस्माल्लोकात्** पिण्डलक्षणात् **स्वमा**त्मानं "अहं ब्रह्मास्मि" इत्य**दृष्ट्वा प्रैति** म्रियते यद्यपि स्वाविद्याव्यवहितत्वेन स्वो लोकः स्व इव विदितो भवति तदा **स** एवमात्मानम**विदितो न भुनक्ति** न पालयतीत्यत्र दृष्टान्तमाह— **यथेति**। लोके **यथा वेदोऽननूक्तो** नाधीतः कर्माद्यवबोधनतो न भुनक्ति, **अन्यद्वा** कृष्यादि लौकिकं **कर्माकृत**मात्मीयफलप्रदानेन भुनक्ति, एवमात्माप्यविदितो न भुनक्त्येव। इष्टफलनिमित्तकर्मणो बाहुल्यात् तदेवाक्षयफलप्रापकं भविष्यतीत्यत आह— **यदीति**। **यदि ह वास्मिन्** संसारचक्रे कश्चि**न्महानप्यनेवंवित्** यथावत् स्वं लोकमविदित्वा बह्वश्वमेधादि**पुण्यं कर्म करोति** तस्य स्वाज्ञानकलितत्वेन तत्फलमन्तवद्भवति। तत्कर्म तु स्वविद्यावृतं सत् भुक्तावस्थां गतायां ततस्तत्फलभोगानन्तरं **क्षीयत एव**। हि यस्मात् पुण्यकर्मानुष्ठानतोऽप्यानन्त्याशास्ति तस्मादत एव स्**वात्मानमेव** स्वातिरिक्तकलनाविरलतया लोक्यत इति **लोक**-

मात्ममात्रमुपासीत । स य आत्मानमेव लोकमुपास्ते न हास्याविद्वत्कृतकर्मवत् तत्कृतकर्म क्षीयते तस्याक्षयात्मलोकदृष्टित्वात् । स्वात्मातिरिक्तं न किंचिदस्तीति अस्माद्ध्येवात्मन उपासनादात्ममात्रचिन्तनात् सोऽयमात्मैव भवतीति स्थितौ यद्यत्कामयते तत्तदस्मादात्मनः सृजत इति स्वलोकोपासनस्तुतिः । वस्तुतस्तेन न किंचित् कांक्षणीयमस्ति । तस्यात्मस्वरूपत्वेनावाप्तसमस्तकामत्वात् । "एषोऽस्य परमो लोकः" इति श्रुतेः ॥ १५ ॥

आत्मानात्मलोकैयत्ताकथनम्

अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत् प्रजामिच्छते तेन पितॄणामथ यन्मनुष्यान् वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयाꣳस्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोको यथा ह वै स्वाय लोकायारिष्टिमिच्छेत् एवꣳ हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमाꣳसितम् ॥ १६ ॥

स्वात्मलोकस्वरूपं दर्शयित्वाथात्मानात्मलोकैयत्तां विशदयति--अथो इति । अथोशब्दो वाक्योपन्यासार्थः । पुरा विद्वान् देवादिकर्मकर्तव्यतया परतन्त्र इत्युक्तम् । यत्कर्तव्यतयायं परतन्त्रो भवति तत्कर्तव्यकर्माणि कानि ? येषामयं स्वकृतकर्मभिः पशुवदुपकरोति के वा ते देवादयः ? कथं वै तत्सर्वं विदुष आत्मैव भवति ? इत्यत्र यः प्रकृतोऽयं गृही कर्माधिकृतः पिण्डा आत्मेत्युच्यते । स हि सर्वेषां पिपीलिकादिब्रह्मान्तभूतानां भोग्यत्वेन लोक्य इति लोको भवति । अस्य वर्णाश्रमादिविहितकर्मभिः सर्वभूतोपकारित्वात् । कथं पुनरय-

मेतेषां लोक इति? उच्यते। **स** गृही स्वत्वपरित्यागपूर्वकं देवतामुद्दिश्य **यत् जुहोति यद्यजते** तेन होमयागलक्षणकर्मणावश्यकर्तव्यतया विधिपारतन्त्र्यमेत्य पशुवत् बध्यते। **तेनायं देवानां लोकः। अथाहरहर्यदनुब्रूते** स्वाध्यायमधीते **तेन ऋषीणामयं** लोकः। **अथ यत् पितृभ्यः** पिण्डोदकादि **निपृणाति** प्रयच्छति, **यत् प्रजामिच्छते**—इच्छायाश्चोत्पत्त्युपलक्षणार्थत्वात्—प्रजाः चोत्पादयति **तेनायं पितृणां** लोकः। तद्भोज्यत्वे परतन्त्रत्वात्। **अथ यत्** स्वगृहे स्थलोदकप्रियवचनादिना **मनुष्यान् वासयते यदेभ्यो** वसद्भ्योऽशनं **ददाति तेनायं मनुष्याणां** लोकः। **अथ यत् पशुभ्यस्तृणोदकं विन्दति** प्रदास्यति **तेनायं पशूनां** लोकः। **यदस्य गृहेष्वापिपीलिकाभ्यः श्वापदा वयांसि च** बलिभाण्डसंक्षालनादिना **उपजीवन्ति तेनायं तेषां लोकः**। यस्मादयमेतादृशकर्म कुर्वन् देवादिभ्य उपकरोति तस्मात् **यथा ह वै स्वाय लोकाय** स्वस्मै देवादिपिपीलिकान्ताधाराय **सर्वाणि** देवादीनि **भूतानि** स्वत्वाप्रच्युत्यै **अरिष्टिमविनाशमिच्छन्ति**। कुटुम्बिन इव पशून् सर्वतः संरक्षन्ति। यस्मात् देवादयो विद्वद्भिरेवमुपकृताः तस्मात् तदूर्ध्वपदारोहणमेषां तन्न प्रियमित्युक्तम्। एवंप्रायेष्वनेकेषु सत्सु कस्यचित् पुरुषधौरेयस्य "आत्मानमेवावेदहं ब्रह्मास्मि" इति स्वातिरिक्तानात्मासंभवप्रबोधसिद्धात्ममात्रज्ञानमुदेति। तदा पुरा विद्वद्दशायां यद्यत् देवादि तल्लोकादि भावितं तत्सर्वमात्मैवाभूत्। स्वात्मातिरिक्तं न भवतीत्यत्र "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत्" इत्यादिस्वातिरिक्तानात्मासंभवात्ममात्रश्रुतेः। **तद्वा एतत्** यथोक्तकर्मणा**मृणिवदवश्यकर्तव्यत्वं** देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति श्रुतिसिद्धपञ्चमहायज्ञप्रकरणे कर्तव्यतया **विदितं मीमांसितं** विचारितं चेत्यर्थः ॥१६॥

विद्वदविदुषोः कृत्स्नाकृत्स्नात्मापत्तिः

आत्मैवेदमग्र आसीत् एक एव सोऽकामयत जाया मे स्यात् अथ प्रजायेय अथ वित्तं मे स्यात् अथ कर्म कुर्वीय इत्येतावान्

**वै कामो नेच्छꣳश्चनातो भूयो विन्देत् तस्माद्प्येतर्हि एकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोति अकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता मन एवास्यात्मा वाक् जाया प्राणः प्रजा चक्षुर्मानुषं वित्तं चक्षुषा हि तद्विन्दते श्रोत्रं दैवꣳ श्रोत्रेण हि तच्छृणोति आत्मैवास्य कर्म आत्मना हि कर्म करोति स एष पाङ्क्तो यज्ञः पाङ्क्तः पशुः पाङ्क्तः पुरुषः पाङ्क्तमिदꣳ सर्वं यदिदं किंच तदिदꣳ सर्वमाप्नोति य एवं वेद ॥ १७ ॥**

पशुभावात् विद्वान् मुच्यते। अविद्वान् बध्यते। तयोः कृत्स्नाकृत्स्नात्मापत्तिः भवतीत्येतत्प्रदर्शनार्थमिदमारभ्यते—**आत्मैवेति**। यो ह्यात्मा स्वातिरिक्तानात्मासंभवबोधतो निष्प्रतियोगिकैकरूपेणावशिष्टः सोऽयमात्मैव देहदाराध्यारोपाद**ग्रे पुरा इदं** दारादिभेदरूपं **नासीत्**। **स एव एक** आसीत्। जायाद्येषणाबीजाविद्यातत्कार्यमात्मन्यध्यस्य तदवष्टभ्य **सोऽकामयत**। कथं कामितवान्? इत्यत्र कर्म कर्तुम्। **मे** मम कर्माधिकारहेतुभूतजायाभावे यतः कर्मण्यनधिकारी स्यां अतः कर्माधिकारसंपत्तये **जाया स्यात्**। किमर्थं जाया? इत्यत्र **अथाहं प्रजायेय** प्रजारूपेण उत्पद्येय। **अथ मे** यत् कर्मसाधनं गवादिलक्षणं तद्वि**त्तं स्यात्**। येनाहमनृणी भूत्वा देवादिपदं प्राप्नुयां **अथ तत्कर्म कुर्वीय**। पुत्रवित्तस्वर्गादिसाधनानि काम्यानि एतावद्विषयपरिच्छिन्नत्वात्। **एतावान् वै कामः** "पराचः कामाननुयन्ति बालाः" इति, "काम एष क्रोध एषः" इत्यादिश्रुतिस्मृतिसिद्धलोकत्रयकामना एषणात्रयम्। मनुष्यलोकः पितृलोको देवलोक इति लोकत्रयं एषणाफलभूतम्। अत्रैव ह्यविद्वानवशात् कोशकारवदात्मानं वेष्टयति। तथाभूतो न स्वात्मानं प्रति जानाति। तथा च श्रुतिः "अग्निमुग्धो हैव धूमतान्तः स्वं लोकं न प्रतिजानाति" इति। एतावानिति कथमवधारणं

"नैव हि कामस्यान्तोऽस्ति" इति श्रुत्यनुरोधेन कामानामनन्तत्वात्? इत्यत्र हेतुमाह—**नेच्छंश्चनातो भूय** इति। तिष्ठत्वेवं कामानामनन्तता। स्वाविद्यापरिकल्पितत्वादितोऽधिकतरमिच्छन्नपि **न विन्देत्** न लभेत। सर्वकामानामत्रैवान्तर्भूतत्वादित्यवधारणं युज्यते। यत एवं परिच्छित्तिरुक्ता कामानामतो विद्वानेषणात्रयतत्फलतो व्युत्थाय पशुभावात् विमुक्तस्सन् स्वात्मलोकः कृत्स्नात्मा भवति। तद्विपरीतोऽविद्वानत्रैव बद्धस्सन् आभूतसंप्लवं पशुरेव भवति। **इयमेव** हि लोकस्थितिः। तथा च पुरायं प्रजापतिः कामप्रयुक्तस्सन् तदुपभोगाय स्त्रियमैच्छत्। तां समभवत्। ततः सर्गोऽयमासीदित्युक्तं ननु। **तस्मादेतर्हि** एतस्मिन्नपि काले दारादिक्रियातः प्राक् **एकाकी** सन् **कामयते**। किमिति? **जाया मे स्यात्। अथ प्रजायेय। अथ वित्तं मे स्यात्। अथ कर्म कुर्वीय**। इत्युक्तार्थमेतत्। **स** एवं जायादीन् कामयमान **एतेषामेकैकमपि न प्राप्नोति**। ततोऽयम**कृत्स्नोऽस्मी**त्यात्मानं **मन्यते**। ततस्तानेवैतान् संपादयति। तदास्य स्वदृष्ट्याकृत्स्नता भवति। यदा त्वयं कृत्स्नतां संपादितुं न शक्नोति तदास्य कृत्स्नत्वसंपादनायाह—**तस्येति**। **तस्य** उ अकृत्स्नताभिमानिनः **इयमेव कृत्स्नता** भवति। कथम्? तत्कार्यकरणसंघातानुग्राहकं यत् तन्**मन एवात्मै**वात्मा प्रधानत्वात्। यथा जायादीनां पतिः कृत्स्नतायै परिकल्प्यते तथा **वाक् जाया** वाचो मनोवृत्तिसामान्यात्। चोदनादिलक्षणः शब्दो हि वाक् **मनसा** श्रोत्रद्वारेण **गृह्यते**। यतस्तत्प्रवृत्तिर्मनोऽधीना अतो मनसो जायेव वाक्। ताभ्यां जायापतिस्थानीयवाङ्मनोभ्यां कर्मार्थं **प्राणः** प्रसूयते। स **प्रजेव** चेष्टादिलक्षणं कर्म करोति। यत् दृष्टवित्तसाध्यं भवति तत् **चक्षुर्मानुषं वित्तम्**। मानुषमितरच्चेति तत् द्विविधम्। गवादि मनुष्यसंबन्धि वित्तं चक्षुर्ग्राह्यम्। चक्षुस्तु साक्षान्मानुषं वित्तम, यस्मात् **चक्षुषा हि** मानुषवित्तं गवादि **विन्दते**। किं पुनरितरत् वित्तम्? **श्रोत्रं दैवं** वित्तम्, यस्माद्दैवं वित्तं विज्ञानं **शृणोति** विज्ञानस्य श्रोत्राधीनत्वात्। पुनरेतैरात्मादिवित्तान्तैः निर्वर्त्यं कर्मेत्युच्यते। शरीरमात्मेत्युच्यते कर्महेतुत्वात्। कथम्? यत **आत्मना हि कर्म करोति**। अकृत्स्नाभिमानिन एवं कृत्स्नता संपन्ना। यस्मादेवं तस्मात् यः पञ्चभिः

निर्वर्तितः स एष पाङ्क्तो यज्ञः। कथमस्य पञ्चसंख्यायोगेन पाङ्क्तत्वम्? यतो बाह्योऽपि यज्ञः पशुपुरुषसाध्यः स पशुः पुरुषश्च पाङ्क्त एव। किं बहुना? कर्मसाधनं फलं च यत्किंचेदं सर्वं पाङ्क्तमेव। यज्ञात्मानं यः संपादयति सोऽयं विद्वानिदं सर्वं जगत् आत्मत्वेन आप्नोति। य एवं वेद सोऽप्येवं विश्वात्मा भवतीत्यर्थः॥ १७॥

इति चतुर्थं ब्राह्मणम्

---

## पञ्चमं सप्तान्नब्राह्मणम्

जगतः कार्यकारणतया विभावनम्

यत्सप्तान्नानि मेधया तपसाजनयत्पिता। एकमस्य साधारणं द्वे देवानभाजयत्। त्रीण्यात्मनेऽकुरुत पशुभ्य एकं प्रायच्छत् तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा। यो वैतामक्षितिं वेद सोऽन्नमत्ति प्रतीकेन स देवानपि यच्छति स ऊर्जमुपजीवतीति श्लोकाः॥ १॥

अत्र "अन्योऽसावन्योऽहमस्मि" इत्यविद्वान् सर्वत्रात्मात्मीयाभिमानी सन् कर्मकर्तव्यतया प्रसक्तः। स हि कामनाधिया देवादीनामुपकुर्वन् तेषां लोक इति पुरैवाभिहितम्। प्रजापतिना एवं यः सृष्टः सोऽयं सर्वं जगत् भोज्यत्वेनासृजत। एवमेकैकस्वकर्मज्ञानानुरूपेण सर्वजगद्भोक्ता भोज्यं च कर्ता कार्यं च भवति। येनेदं विभावितं तेनेदं जगत् कार्यकारणतया विभाव्यत इत्यस्मिन्नर्थे संक्षेपतः सूक्ष्मसूत्रभूता इमे मन्त्रा भवन्तीत्याह—

**यत्सप्तान्नानीति। यत्सप्तान्नानि** यत् **अजनयदिति** क्रियाविशेषणम्। **मेधया** प्रज्ञया **तपसा** कर्मणा च। मेधातपःशब्दवाच्ये ज्ञानकर्मणी तयोः प्रकृतत्वात्। जायादिसाधनं कर्म पाङ्क्तं हि। तदनन्तरं ज्ञानं प्रकृतं **य एवं वेदेति**। अतो मेधातपःशब्दवाच्यज्ञानकर्मभ्यां पिता सप्तान्नानि जनितवानित्येतत्सर्वं ब्राह्मणे स्पष्टं भविष्यतीति पदशो न व्याख्यातम्॥ १॥

पूर्वोक्तमन्त्रार्थप्रकाशनम्

यत्सप्तान्नानि मेधया तपसाजनयत्पितेति मेधया हि तपसाजनयत्पिता एकमस्य साधारणमिति इदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्यावर्तते मिश्रꣳ ह्येतद्द्वै देवानभाजयदिति हुतं च प्रहुतं च तस्माद्देवेभ्यो जुह्वति च प्र च जुह्वति अथो आहुर्दर्शपूर्णमासाविति। तस्मान्नेष्टियाजुकः स्यात् पशुभ्य एकं प्रायच्छदिति तत्पयः पयो ह्येवाग्रे मनुष्याश्च पशवश्च उपजीवन्ति तस्मात् कुमारं जातं घृतं वै वाग्रे प्रतिलेहयन्ति स्तनं वानुधापयन्ति अथ वत्सं जातमाहुरतृणाद इति। तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेति पयसि हीदꣳ सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च न। तद्यदिदमाहुः संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयतीति न तथा विद्यात् यदहरेव जुहोति तदहः पुनर्मृत्युमपजयति एवंविद्वान् सर्वꣳ हि देवेभ्योऽन्नाद्यं प्रयच्छति। कस्मात्तानि न क्षीयन्तेऽद्यमानानि सर्वदा इति? पुरुषो वा अक्षितिः स हीदमन्नं पुनः पुनर्जनयते यो वैतामक्षितिं वेदेति पुरुषो वा अक्षितिः स हीदमन्नं धिया धिया जनयते। कर्मभिर्यद्धैतन्न कुर्यात् क्षीयेत

ह सोऽन्नमत्ति प्रतीकेनेति मुखं प्रतीकं मुखेनेत्येतत् स देवानपि-गच्छति स ऊर्जमुपजीवतीति प्रशꣳसा ॥ २ ॥

प्रायशो मन्त्रार्थस्य दुर्विज्ञेयत्वेन तिरोहितत्वात् तदर्थप्रकाशनाय ब्राह्मणं प्रवृत्तमित्याह—**यत्सप्तेति** । **यत्सप्तान्नानि मेधया तपसाजनयत् पितेति** मन्त्रार्थ उच्यते । हिशब्देन मन्त्रार्थः प्रसिद्ध इति द्योत्यते । यत् पिताजनयदिति तत् प्रसिद्धमेव हि । अतो ब्राह्मणमाह—**मेधया हि तपसाजन-यत्पितेति** । अस्यार्थस्य कथं प्रसिद्धता ? इत्यत्र " जाया मे स्यात् " इत्यादिना जायादिसाधनानां देवादिलोकफलहेतुत्वात् । पितृत्वं तावत् प्रत्यक्षमवगम्यते । तत्र च फलभूतलोकसाधनं दैवं वित्तं विद्या कर्म पुत्रश्च कार्यत्वेन प्रतीयते । तस्मात् मेधयेत्यादि वक्तुं युक्तम् । लोके जायाद्येषणा फलविषयत्वेन प्रसिद्धा । " एतावान् वै कामः " इत्यनेनाशास्त्रीयस्वाभाविकप्रज्ञातपोभ्यां जगत्स्रष्टृत्वमुक्तमेव भवति । तिर्यक्स्थावरान्तानिष्टफलस्य स्वाभाविककर्मज्ञाननिमित्तत्वात् । इत्थं-भूतकर्मसामान्यस्य स्वाविद्याविकल्पितत्वेन कारणतुल्यधिया विरक्तस्य ब्रह्म-विद्यारभ्येति सप्तान्नविभागोपक्रमः । **एकमस्य साधारणमिति** मन्त्रपदं व्याचष्टे । **अस्य** भोक्तृसमुदायस्य साधारण**मिदमेकमन्नम्** । किं तत् ? **यदिदम**हन्यहनि सर्वप्राणिभि**रद्यते तत् साधारणमन्नं** सर्वप्राण्यर्थमकल्पयत् पिता । **स य एतत्** पितृसृष्टसाधारणमिति **अन्नमुपास्ते** तस्य शरीरस्थितिरेव दृष्टफलम् । **न स पाप्मनोऽ**ज्ञानात् **व्यावर्तते** न मुच्यते । " मोघमन्नं विन्दते " इति मन्त्रवर्णात् ।

तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ।

इति स्मृतेः ।

कस्मात् पुनः पाप्मनो न व्यावर्तते ? **मिश्रं ह्येतत्** । सर्वेषां हि तदविभक्तं सर्वभोज्यत्वात् । तथा सति अतिथिभ्योऽदत्वा केवलकुक्षिम्भरस्य स्वात्मग्रासश्रुतेः " अहमन्नमन्नमदन्तमाद्मि " इति । यस्मादेवं तस्मात् वैश्वदेवपुरस्सरमतिथितृप्तिं कृत्वा तच्छिष्टं यो भुंक्ते स एव पाप्मनो व्यावर्तते । तथा च स्मर्यते—

यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः ।

"यान्ति ब्रह्म सनातनम्" इति च। **द्वे देवानभाजयत् इति** मन्त्रपदस्यायमर्थः। अग्नौ हवनं **हुतं च**, हुत्वा बलिहरणं **प्रहुतं च** हुतप्रहुते। द्वे अन्ने सृष्ट्वा पिता देवानभाजयत्। **तस्मात्** गृहिणः काले **देवेभ्य** इदमिति मन्यमाना **जुह्वति च प्र च जुह्वति** हुत्वा बलिहरणं च कुर्वत इत्यर्थः। **अथो अप्यन्य एवमाहुः**। किं तत्? इति। **दर्शपूर्णमासावेव** हुतप्रहुते इति मन्त्रप्रदर्शितत्वात् दर्शपूर्णमासयोर्देवान्नत्वं प्रसिद्धतरमेव। तस्मात् द्वे देवानभाजयत् इति तयोरेव ग्रहणं युक्तम्। **तस्मात्** तयोः देवार्थत्वाविघाताय **इष्टियाजुको** यजनशीलः काम्येष्टियजनप्रधानो **न स्यात्** ताच्छील्यप्रत्यययोगात्। इष्टिशब्देन शातपथिकाः काम्येष्टय उच्यन्ते। तत्प्रधाने महाननर्थः स्यादिति। **पशुभ्य एकं प्रायच्छदिति**। यत् पशुभ्यः प्रायच्छत पिता किं पुनस्तदन्नम्? **पयः** पशुमनुष्योपजीवकत्वात्। तस्मात् **मनुष्याश्च पशवश्च** पयसैव **जीवन्तीति** युक्तम्। एवमादौ पित्रा नियोगः कृतः। **तस्मात् जातं कुमारं** जातकर्मणि त्रैवर्णिका **घृतं वै वाग्रे प्रतिलेहयन्ति** प्राशयन्ति। **स्तनं वानुधापयन्ति** पश्चात् पाययन्ति। मनुष्यान्यपशूनां **अथ वत्सं जातं**, कियत्प्रमाणो वत्सः? इति पृष्टा **अतृणादः** पयसैवाद्यापि वर्तत **इत्याहुः**। यच्चाग्रे जातकर्मादौ घृतमुपजीवन्ति यच्चेतरे पय एव सर्वथापि **सर्वे** पय एव उपजीवन्ति घृतस्यापि पयोविकारत्वात्। कस्मात् पुनः सप्तमं सत् पश्वन्नं चतुर्थत्वेन व्याक्रियते? पयसः कर्मसाधनत्वात्। वक्ष्यमाणान्नत्रयस्य वित्तसाध्यत्वम्। यथा पूर्वोक्तदर्शपूर्णमासौ द्वे अन्ने। कर्मपक्षत्वात् कर्मणा सह पिण्डीकृत्य उपदेशः, साधनत्वाविशेषादर्थसंबन्धात् आनन्तर्यम विवक्षितं प्रतिपत्तिसौकर्याच्च। सुखं हि नैरन्तर्येण व्याख्यातुं शक्यते। व्याख्यातानि च तानि सुखं प्रतीयन्ते। तस्मात् **तस्मिन् सर्वं प्रतिष्ठितं यच्च प्राणिति यच्च नेत्य**स्यायमर्थः। तस्मिन् पश्वाद्यन्ने **पयसि** सर्वमाध्यात्मिकादि कृत्स्नं जगत् **प्रतिष्ठितं यच्च प्राणिति** चेष्टावत्, **यच्च ने**ति शैलादि। **हि**शब्दः प्रसिद्धयर्थः। कथं पयसः प्रतिष्ठात्वं? तस्य कारणत्वोपपत्तेः। तत् कथम्? अग्निहोत्रादिकर्मसमवायित्वात्। अग्निहोत्राद्याहुति-

विपरिणामात्मकं जगदिति वक्ष्यति। तथा च श्रुतिस्मृत्यन्तरेष्वपि। अतो हिशब्देन व्याख्यातं युक्तमेव। **ब्राह्मणान्तरेष्वपीदमाहुः—संवत्सरं पयसा जुह्वदप पुनर्मृत्युं जयति इति**। संवत्सरमात्मानं प्रजापतिं प्राप्य न हि पुनर्म्रियते। एवमाहुः केचन—**न तथा विद्यात् यदहरेव जुहोति तदहः पुनर्मृत्युमपजयति** न संवत्सराभ्यासमपेक्षते "अहोरात्रे वै प्रजापतिः" इति श्रुतेः। यदुक्तं पयसि हीदं सर्वं प्रतिष्ठितं पयःपरिणामात्मकत्वादित्ये**वं विद्वान्** तदेकेनैवाह्ना जगदात्मतां प्रतिपद्यते। अप पुनः मृत्युं जयति। सकृन्मृत्वा प्रजापतिभावमेत्य न पुनः परिच्छिन्नशरीरं गृह्णाति। **सर्वं हि देवेभ्योऽन्नाद्यं प्रयच्छति**। सायंप्रातराहुतिप्रक्षेपेण सर्वदेवान्नरूपेण सर्वदेवभावमेत्य न हि पुनर्म्रियते। **कस्मात् तानि न क्षीयन्ते अद्यमानानि सर्वदा इति**? यदा पित्रा पृथक् पृथक् सप्तान्नानि सृष्ट्वा भोक्तृभ्यः प्रदत्तानि तदा प्रभृति तैरद्यमानानि कस्मात् पुनः तानि न क्षीयन्ते? इति प्रश्नः। तत्प्रतिवचनं—**पुरुषो वा अक्षितिः**। यदासौ पिता पूर्वमन्नस्रष्टासीत् मेधया जायादिसाधननिष्पन्नपाङ्क्तकर्मणा येभ्यो दत्तान्यन्नानि तेऽपि तेषां भोक्तारः पितर एव। मेधया तपसा च यतोऽन्नानि जनयन्तीति यत् तदेतदभिधीयते। यः **पुरुषो** वा अन्नानां भोक्ता सो**ऽक्षितिः** अक्षयहेतुत्वात्। तत् कथम्? **स हि** यस्मादिदं भुज्यमानसप्तविधा**न्नं पुनः पुनः जनयते धिया धिया** उत्पादयति तस्मात् पुरुषोऽक्षितिः। तस्य सन्ततकर्तृत्वेन तद्भुज्यमानमन्नं न क्षीयते। धिया धिया जनयत इत्युक्त्या गन्धर्वनगरादिवत् कल्पनामात्रता द्योत्यते। एवंविदुषस्तत्र वैराग्यमुदेति। **कर्मभिर्यद्धैतन्न कुर्यात् क्षीयेत** हेति। ह्यस्मात् विरक्तानां चतुर्थमुखेन ब्रह्मविद्यारब्धव्येति। यो वैतामक्षितिं वेद इति वक्ष्यमाणान्नत्रयमपि व्याख्यातमेवेति कृत्वा तेषां याथात्म्यज्ञानफलमुपसंहरति—**यो वैतामक्षितिं वेद** इति। अक्षितिहेतुं यो वेद सोऽन्नमत्ति। यथाज्ञो गुणभूतः सन् अन्नमत्ति न तथा विद्वान् अत्तैव भवति। अविद्वानिव नान्नभावमापद्यते। **स देवानपिगच्छति स ऊर्जमुपजीवतीति**। सोऽयं विद्वान् देवानपिगच्छति देवात्मभावं प्रतिपद्यते। ऊर्जममृतं च उपजीवतीति यदुक्तं सा पूर्वोक्तार्थ**प्रशंसा** ॥२॥

उत्कृष्टान्नख्यापनम्

त्रीण्यात्मनेऽकुरुतेति मनो वाचं प्राणं तान्यात्मनेऽकुरुत अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति। कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव तस्मादपि पृष्ठत उपस्पृष्टो मनसा विजानाति यः कश्च शब्दो वागेव सा एषा ह्यन्तमायत्ता एषा हि न प्राणोऽपानो व्यान उदानः समानः अन इत्येतत्सर्वं प्राण एव एतन्मयो वा अयमात्मा वाङ्मयो मनोमयः प्राणमयः ॥ ३ ॥

पाङ्क्तकर्मफलत्वेन त्रीण्यन्नान्यपनीतानि। तदुत्कृष्टान्नव्याख्यानार्थमाब्राह्मणसमाप्तेरुत्तरो ग्रन्थ आरभ्यते—**त्रीणीति**। **त्रीण्यात्मनेऽकुरुते**त्यस्यायमर्थः। मनो वाक् प्राणः एतानि त्रीण्यन्नानि। **तानि मनो वाचं प्राणमात्मन** आत्मार्थ**मकुरुत** कृतवान् सृष्ट्यादौ पितेत्यर्थः। यदुक्तमन्नत्रयं तत्र मनो नाम न किञ्चिदस्तीत्यत्र अस्ति तावन्मनः श्रोत्रादिबाह्यकरणानुग्राहकम्। कथं तत्? किं त्वयेदं रूपं दृष्टं? किं त्वया मदीयं वचः श्रुतं? इति पृष्टोऽन्यो वदति। अन्यत्र विषयान्तरे मे मनो गतं व्यापृतम्। सोऽह**मन्यत्रमनाः** सन् **नादर्शम्**। तथा**न्यत्रमनाः अभूवं नाश्रौषमिति** वदति। तदुक्तविषये मनसि सति पश्यति शृणोति च। तस्मादस्ति मनो नामान्तःकरणम्। तस्मात् सर्वो हि लोको **मनसा ह्येव पश्यति मनसा शृणोति**। एवमन्वयव्यतिरेकाभ्यां दर्शनादिव्यापृतेः मनोनिमित्तत्वेन सर्वकरणानुग्राहकं मनोऽस्त्येव। अस्तु नाम तत्, किं तत्स्वरूपं? इत्यत आह—**काम** इति। स्त्रीव्यतिकराभिलाषः **कामः**। शुक्लनीलादिभेदेन उपस्थितविषयविकल्पनं **सङ्कल्पः**। संशयज्ञानं **विचिकित्सा**। श्रुत्याचार्यवाक्यार्थास्तिक्यबुद्धिः **श्रद्धा**। तद्विपरीतबुद्धि**रश्रद्धा**। सर्वं साधयामीति धैर्यं **धृतिः**। तद्विपरीतमधैर्य**मधृतिः**। लज्जा **ह्रीः**। प्रज्ञा **धीः**। भयं **भीः**। **इत्येतत् सर्वं मन एव**। इतश्च मनोऽस्तित्वे हेत्वन्तरमुच्यते। **तस्मादप्य-**

चाक्षुषः **पृष्ठत उपस्पृष्टो मनसा विजानाति**। तत्स्पर्शवेदनस्य त्वचापि ज्ञातुं शक्यत्वात् किं मनसा? इति चेन्न; तद्विवेकस्यापि मनोनिमित्तत्वात् तत्प्रतिपत्तिहेतुर्मनोऽस्त्येव। तस्मात् मनसा सह त्रीण्यन्नानि फलभूतानि मनोवाक्प्राणाख्यानि। तत्र अध्यात्ममधिभूतमधिदैवं च व्याचिख्यासितानि। तत्राध्यात्मिकानां मनो व्याख्यातम्। अथ वाक्स्वरूपमुच्यते। लोके **यः कश्चन** प्राणिताल्वादिव्यङ्ग्यवर्णादिशब्दो ध्वनिः इतरो मेघवादित्रादिनिमित्तः सर्वोऽपि ध्वनिः **वागेव सा**। एवमिदं वाक्स्वरूपमुक्त्वा तत्कार्यमुच्यते—**सैषा** वाक् **हि** यस्मादन्तमभिधेयावसानमायत्तानुगता नैषा पुनरभिधेयवत् प्रकाश्या। किन्तु तत्प्रकाशिकैव प्रदीपवत् प्रकाशात्मकत्वात्। तथा च श्रुतिः वाचः प्रकाश्यतां परिहरति—**एषा हि नेति**। प्रकाशकत्वं वाचः कार्यमित्यर्थः। अथ प्राणस्वरूपमुच्यते—हृदयास्यनासिकावर्तित्वेन प्रणयनात् **प्राणः**। अधोवृत्त्या मूत्रपुरीषादेरपनयनाद**पानः**। आनाभ्यासनो वीर्यवद्व्यायमनकर्मकर्ता **व्यानः**। आपादमस्तकस्थानः ऊर्ध्ववृत्ति**रुदानः**। अशितपीतसमानयनात् अन्नपक्ता **समानः**। एवं प्राणादिवृत्तिजात**मेतत्सर्वं प्राण एव**। न हि साक्षादाध्यात्मिकप्राणो नोक्तः, किन्तु तद्वृत्तिभेदतः कर्मैव व्याख्यातम्। एवमाध्यात्मिकत्वेन मनोवाक्प्राणान्नानि व्याख्यातानि। **एतन्मयो वायमात्मा** प्रजापतिः प्राजापत्यवाङ्मनःप्राणारब्धत्वात्। एतन्मय इत्युक्तस्य विशेषणं **वाङ्मयो मनोमयः प्राणमय** इति ॥ ३ ॥

### मनआदिप्राजापत्यान्नानामाधिभौतिकत्वम्

**त्रयो लोका एत एव वागेवायं लोको मनोऽन्तरिक्षलोकः प्राणोऽसौ लोकः ॥ ४ ॥ त्रयो वेदा एत एव वागेव ऋग्वेदो मनो यजुर्वेदः प्राणः सामवेदः ॥ ५ ॥ देवाः पितरो मनुष्या एत एव वागेव देवा मनः पितरः प्राणो मनुष्याः ॥ ६ ॥ पिता माता प्रजा एत एव मन एव पिता वाङ्माता प्राणः प्रजा ॥ ७ ॥**

विज्ञातं विजिज्ञास्यमविज्ञातमेत एव यत् किंच विज्ञातं वाचस्तद्रूपं वाक् हि विज्ञाता वागेनं तद्भूत्वावति ॥ ८ ॥ यत्किंच विजिज्ञास्यं मनसस्तद्रूपं मनो हि विजिज्ञास्यं मन एनं तद्भूत्वावति ॥ ९ ॥ यत्किंचाविज्ञातं प्राणस्य तद्रूपं प्राणो ह्यविज्ञातः प्राण एनं तद्भूत्वावति ॥ १० ॥

पुनस्तेषामेव प्राजापत्यान्नानामाधिभौतिकत्वमभिधीयते—**त्रय** इति । भूरादित्रयो **लोका एत एव** वाङ्मनःप्राणाः । विशेषस्तु **वागेवायं लोक** इत्यादिः । तथा त्रयो वेदादयोऽप्येत एवेत्याह—**त्रय** इति । ऋज्वर्थमेतत्खण्ड-त्रयम् । किञ्च—**विज्ञातं** इति । **विज्ञातं विजिज्ञास्यं अविज्ञातमेत एव** । तत्र विशेषस्तु **यत्किञ्चिद्विस्पष्टं ज्ञातं वाचस्तद्रूपम्** । तत्र हेतुः **वाक् हि विज्ञातेति** प्रकाशात्मकत्वात् । यः अन्यान्यपि विज्ञापयति । तथा च वक्ष्यति "वाचा वै सम्राट् बन्धुः प्रज्ञायते" इति । एवंविदः फलं एतत्—**वागेवैनं तद्भूत्वावति** पिता पालयति । विज्ञातरूपेणास्यान्नं भोज्यतां प्रतिपद्यते । किञ्च—**यत्किञ्च** इति । **यत् किञ्च** विज्ञातुमिष्टं **विजिज्ञास्यं तत्** सर्वं **मनसो** रूपं सन्दिह्यमानाकारत्वात् । **मनो हि विजिज्ञास्यम्** । विद्याफलम्—**मन एवैनं भूत्वावति** विजिज्ञास्यरूपेणास्यान्नमापद्यते । किञ्च—**यत्किञ्च** इति । तथा **यत् किञ्चाविज्ञातं** विज्ञानागोचरं **प्राणस्य तद्रूपम्** । **प्राणो ह्यविज्ञातः** तस्यानिरुक्तत्वात् । **प्राण एनं तद्भूत्वावति** अविज्ञात-रूपेणास्यान्नं भवति ॥ ४–१० ॥

वाङ्मनःप्राणानामाधिदैविकत्वम्

तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निस्तद्यावत्येव वाक् तावती पृथिवी तावानयमग्निः ॥ ११ ॥ अथैतस्य मनसो द्यौः शरीरं ज्योतीरूपमसावादित्यः तद्यावदेव मनस्तावती द्यौस्ता-

वानसावादित्यः तौ मिथुनꣳ समैतां ततः प्राणोऽजायत स इन्द्रः स एषोऽसपत्नो द्वितीयो वै सपत्नो नास्य सपत्नो भवति य एवं वेद ॥ १२ ॥ अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रस्तद्यावानेव प्राणस्तावत्य आपस्तावानसौ चन्द्रस्त एते सर्व एव समाः सर्वेऽनन्ताः स यो ह एतानन्तवत उपास्तेऽन्तवन्तꣳ स लोकं जयति अथ यो ह एताननन्तानुपास्तेऽनन्तꣳ स लोकं जयति ॥ १३॥

वाङ्मनःप्राणानामाधिभौतिको विकारो व्याख्यातः। अथाधिदैविकार्थोऽयमारम्भः—**तस्या** इति। **तस्यै** एतस्या **वाचः** प्राजापत्यान्नत्वेन स्तुतत्वात् **पृथिवी शरीरं** बाह्याधारत्वात्। **ज्योतीरूपं** प्रकाशात्मकत्वात् पृथिव्याधेयभूतो**ऽयं** पार्थिवो**ऽग्निः**। प्रजापतेरियं वाक् द्विरुपा हि। कार्यमाधारः प्रकाशः करणं चाधेयम्। तदुभयं पृथिव्यग्नी प्रजापतेर्वागेव। **तत्** तत्र **यावत्येव** यावत्परिमाणा **वाक्** भवति तत्र सर्वाधारत्वेन या व्यवस्थिता सेयं **पृथिवी तावती** भवति। ज्योतीरूपेण करणरूपः **तावानयमग्निः** पृथिवीमनुप्रविश्य तावानेव भवति ॥ ११ ॥ **अथैतस्य** इति। **अथैतस्य** प्राजापत्यान्न**मनसो द्यौः शरीरं** कार्यमाधारः। **ज्योतीरूपं** करणमाधेयः सो**ऽसावादित्यः**। तत्राध्यात्ममधिभूतं **मनो यावत्**परिमाणं **तावती द्यौः** मनस आधारत्वात्। **तावानसावादित्यो** ज्योतीरूपं करणमाधेयम्। **ताव**ग्न्यादित्यौ वाङ्मनसे आधिदैविके मातापितरौ **मिथुनं** इतरेतरसंसर्ग **समैतां** समगच्छताम्। मनसादित्येन पित्रा वाचाग्निना मात्रा च प्रसूतं प्रकाशितं कर्म करिष्यामीत्यन्तरा रोदस्योः **ततस्त**योरेव सङ्गमनात् स्पन्दनादिशक्तिमान् **प्राणो** वायु**रजायत**। एवं यो जातः **स इन्द्रः** परमेश्वरः। न केवलमिन्द्र एवायं, यस्य सपत्ना न विद्यन्ते **सोऽयमसपत्नः**। **सपत्न**स्तु स्वप्रतिपक्षित्वेन **द्वितीयः**। प्राणं प्रति द्वितीयत्वेऽपि वाङ्मनसे न हि सपत्नत्वं भजेते, किन्तु गुणभूते अध्यात्माविशेषात्। **एवं** विदुषो **न** हि **सपत्नः** प्रतिपक्षो **भवति**। एवमसपत्नं प्राणं **यो** वेद स विद्वान् प्राजापत्यं पदमश्नुते ॥ १२ ॥

किञ्च—**अथैतस्य** इति। **अथैतस्य** प्राजापत्यान्नत्वेन प्रकृतप्राणस्य **आपः शरीरम्**। करणाधारज्योतीरूपं **असौ चन्द्रः**। तत्र **यावानेव प्राणो**ऽध्यात्मादिभेदेषु तावत् व्याप्तिमत्य **आपः। तावानसौ** अबाधारश्चन्द्रः। एतान्येतानि त्रीण्यन्नानि पाङ्क्तेन कर्मणा सृष्टानि। समस्तं जगत् एतैरेव व्याप्तम्। तेभ्योऽतिरिक्तं कार्यात्मकं कारणात्मकं वा न किञ्चिदस्ति। **त एते** वाङ्मनःप्राणाः **सर्व एव समाः**। तत **एवानन्ताः**। यावत् संसारभावित्वेनानन्तत्वम्। न हि कार्यकरणकलनाविरलदृष्टेः संसारलेशोऽप्यस्ति। अत एव कार्यकरणात्मका हि ते। **स यः** कश्चन **ह** प्रजापतेरात्मभूतान् वाङ्मनःप्राणान् अध्यात्मादिरूपेणान्तवत **उपास्ते सोऽयं** तदनुरूपमन्तवत् फलमन्तवन्तं **लोकं जयति**। परिच्छिन्नतयायं जायते। न हि तेषामात्मभूतो भवति। **अथ** पुनर्य **एताननन्तान्** सर्वप्राण्यात्मत्वेनापरिच्छिन्नानुपास्ते **सोऽनन्तदेवलोकं जयति** ॥ १३ ॥

वित्तकर्मसंभावना

स एष संवत्सरः प्रजापतिः षोडशकलस्तस्य रात्रय एव पञ्चदशकला ध्रुवैवास्य षोडशी कला स रात्रिभिरेव आ च पूर्यतेऽप च क्षीयते सोऽमावास्याꣳ रात्रिमेतया षोडश्या कलया सर्वमिदं प्राणभृदनुप्रविश्य ततः प्रातर्जायते तस्मादेताꣳ रात्रिं प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्य एतस्या एव देवताया अपचित्यै ॥ १४ ॥

सर्वपितृभूतः प्रजापतिः पाङ्क्तेन कर्मणा सप्तान्नानि सृष्ट्वा तत्रान्नत्रयमात्मार्थमकरोदित्युक्तं तद्व्याख्यातं च। तत्र पृथिव्यग्नी माता दिवादित्यौ पिता तयोः प्राणः प्रजेति व्याख्यातम्। तत्र वित्तकर्मणी संभावितव्ये इत्ययमारम्भः—**स एष** इति। योऽयं त्र्यन्नात्मा **प्रजापतिः** प्रकृतः **स एष संवत्सरः** तदात्मना निर्दिश्यते। यस्यावयवाः षोडश कलाः सोऽयं **षोडशकलः**। **तस्य** संवत्स-

रात्मनः कालस्वरूपत्वेन **रात्रय** एवाहोरात्राणि तिथयः **पञ्चदश कलाः**। **अस्यं प्रजापतेः ध्रुवैव** नित्यैव **षोडशी कला** संख्यापूरणात्। **स रात्रिभिः** कलोत्तरतिथिभिरेव **आपूर्यतेऽपक्षीयते च**। शुक्लप्रतिपदारभ्य पौर्णमास्यान्तं चन्द्रमाः प्रजापतिरुपचीयमानकलाभिः वर्धते। तथा कृष्णप्रतिपदारभ्यामावास्यान्तमपचीयमानकलाभिः सोऽयमपक्षीयते। अमायामपि या कला क्षीणतयावशिष्टा तयावशिष्टध्रुवाख्य**षोडश्या कलया स** प्रजापतिः **सर्वमिदं प्राणभृत्** प्राणिजात**मनुप्रविश्य** यदपः पिबति यदोषधीरश्नाति तत् सर्वमोषध्यात्मना व्याप्य अमारात्रिमास्थाय परेद्युः **प्रातर्जायते** द्वितीयकलासंयुक्तो भवति। तत्र दिवादित्यौ मनः पिता पृथिव्यग्नी माता। तयोः प्रजा प्राणः। कलास्तु चान्द्रमस्यस्तिथयः। तासां वित्तवदुपचयापचयत्वात् वित्तत्वमुक्तम्। तासां कालावयवकलानां जगत्परिणामहेतुत्वं कर्मैवेत्येष **कृत्स्नः** प्रजापतिः जायादिकर्मान्तैषणानुरूपपाङ्क्तकर्मफलत्वेन संवृत्तः कार्यस्थितेः कारणानुविधायित्वात्। यस्मादेष चन्द्रमा एतां रात्रिं सर्वप्राणिजातमनुप्रविश्यावशिष्टकलान्वितो यतो वर्तते **तस्मात्** हेतोः **एताममावास्यां रात्रिं प्राणभृतः** प्राणिनः **प्राणं न विच्छिन्द्यात् न** प्रमापयेत् इत्येतद**पि कृकलासस्य**। कृकलासो हि पाप्मस्वभावेनैव प्राणिभिर्हिंस्यते। "अहिंसन् सर्वभूतानि" इति हिंसायाः प्रतिषिद्धत्वात् इति चेन्न; बाढं, प्रतिषिद्धा, तथापि "अन्यत्र तीर्थेभ्यः" इत्युक्तत्वात् न ह्यमावास्याया अन्यत्रेत्यदोषः। इद**मेतस्याः** सोम**देवताया अपचित्यै** पूजार्थम्॥ १४॥

परोक्षत्वेन कथितस्य प्रत्यक्षतया प्राप्तिः

यो वै स संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित् पुरुषस्तस्य वित्तमेव पञ्चदश कला आत्मैवास्य षोडशी कला स वित्तेनैव आ च पूर्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनागादित्येवाहुः॥ १५॥

यः परोक्षत्वेनाभिहितस्तस्य प्रत्यक्षेणाप्युपलब्ध्यर्थमिदमुच्यते—**यो वा** इति। यः त्र्यन्नात्मकं प्रजापतिं वेत्ति **स एवंवित् पुरुषः**। **तस्य** गवादि-**वित्तमेव पञ्चदश कला** उपचयापचयधर्मित्वात्। वित्तसाध्यं च कर्म तस्य विदुषः कृत्स्नताहेतुः। **आत्मा देह एव** समग्रकलापूरणी चन्द्रमसो ध्रुवेव **षोडशी कला**। लोके प्रसिद्धं **वित्तेन पूर्यतेऽपक्षीयत** इति च। **तदेतन्नभ्यं** नाभ्यं नाभ्यै हितं नाभिं वार्हति। तत् किं? इत्यत्र **यदयमात्मा** पिण्डः। **प्रधिः** बाह्यपरिवारस्थानीयं **वित्तं** चक्रस्येवारनेम्यादिः। **तस्मात् यद्यपि सर्वज्यानिं** सर्वापहरणं **जीयते** हीयते, चक्रस्थानीयेनात्म**ना** प्राप्नोति, बाह्यपरिवारेणात्मना **प्रधिनागात्**। यदि **जीवति** तदा तन्नेमिवियुक्तचक्र-मिवाहुः ॥ १५ ॥

पुत्रादीनां साध्यसाधनविशेषसंबन्धद्योतनम्

**अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक इति सोऽयं मनुष्यलोकः पुत्रेणैव जय्यो नान्येन कर्मणा कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानाꣳ श्रेष्ठस्तस्माद्विद्यां प्रशꣳसन्ति ॥ १६ ॥**

विद्याविशिष्टपाङ्क्तकर्मणा त्र्यन्नात्मकः प्रजापतिः भवतीत्युक्तम्। ततो जायादिवित्तं तत्परिवारस्थानीयमित्यभिहितम्। तत्र पुत्रकर्मापरविद्यानां लोकादि-साधनमात्रमवगतं न पुत्रादीनाम्। पुनस्तेषां साध्यसाधनविशेषसंबन्धद्योतनार्थ-मुत्तरखण्डारम्भः—**अथेति**। **अथेति** वाक्योपन्यासार्थः। **त्रयो वा**। वेत्यव-धारणतः त्रय एव। न न्यूना नाधिका इति द्योत्यते। के ते **लोकाः**? **मनुष्यलोकः पितृलोको देवलोक इति**। तत्र **सोऽयं मनुष्यलोकः** तत्साधनीभूतपुत्र**ेणैव जय्यो** जेतव्यः **नान्येन कर्मणा**। विद्यया वा जेतव्य इत्यर्थः। केवलाग्निहोत्रादिलक्षणकर्मणा **पितृलोको** जेतव्यः न हि पुत्रेण विद्यया वा। केवल**विद्यया देवलोकः**; न हि पुत्रेण नापि कर्मणा। **देवलोको**

वै लोकत्रयाणां श्रेष्ठः प्रशस्यतमत्वात्। यस्माद्विद्या तदाप्तिसाधनतामर्हति तस्मात् विद्यां विद्वांसः प्रशंसन्ति ॥ १६ ॥

पुत्रस्य लोकजयहेतुत्वकथनम्

अथातः संप्रत्तिर्यदा प्रैष्यन् मन्यतेऽथ पुत्रमाह त्वं ब्रह्म त्वं यज्ञस्त्वं लोक इति स पुत्रः प्रत्याहाहं ब्रह्माहं यज्ञोऽहं लोक इति यद्वै किंचानूक्तं तस्य सर्वस्य ब्रह्मेत्येकता। ये वै केच यज्ञास्तेषाꣳ सर्वेषां यज्ञ इत्येकता ये वै केच लोकास्तेषाꣳ सर्वेषां लोक इत्येकता एतावद्वा इदꣳ सर्वमेतन्मा सर्वꣳ सन्नयमितोऽभुनजदिति तस्मात् पुत्रमनुशिष्टं लोक्यमाहुस्तस्मादेनमनुशासति स यदैवंवित् अस्माल्लोकात्प्रैति अथ एभिरेव प्राणैः सह पुत्रमाविशति स यद्यनेन किंचिदक्ष्णया अकृतं भवति तस्मादेनꣳ सर्वस्मात् पुत्रो मुञ्चति तस्मात्पुत्रो नाम स पुत्रेणैवास्मिँल्लोके प्रतितिष्ठति अथैनमेते दैवाः प्राणा अमृता आविशन्ति ॥ १७ ॥

पुत्रकर्मविद्या मनुष्यादिलोकसाधनत्वेनाभिहिता। जायायाः पुत्रकर्मार्थत्वेन सा न पृथगभिहिता। वित्तस्यापि कर्मसाधनत्वेन न पृथक्साधनता उक्ता। स्वात्मप्रतिलम्भेनैव विद्याकर्मणोः लोकजयहेतुत्वं प्रसिद्धमेव। पुत्रस्याक्रियात्मकत्वात् तस्य लोकजयहेतुत्वं केन प्रकारेण भवति? इति न ज्ञायते। तदवबोधाय इदमारभ्यते—अथेति। अथ कर्मविद्यागतिज्ञानानन्तरं यतो लोकजयहेतुत्वेन पुत्रो न ज्ञातः अतोऽस्य विचारः क्रियते। पिता पुत्रे स्वात्मव्यापारसंप्रदानं करोतीति संप्रत्तिः तत्संज्ञं कर्म। तत् कदा कर्तव्यं? इत्यत्र स पिता स्वात्महानिसूचकारिष्टदर्शनेन यदा प्रैष्यन् मरिष्यामीति मन्यते, अथ तदा पुत्रमाहूय तं त्वं ब्रह्म त्वं यज्ञः त्वं लोक इत्याह।

एवं **स** पित्रोक्तः **पुत्रः प्रत्याह**। किमिति? **अहं ब्रह्म अहं यज्ञः अहं लोक इति**। एतद्वाक्यत्रयार्थस्तिरोहित इति तद्व्याख्यानाय श्रुतिः प्रवर्तते। **यद्वै किञ्चानूक्तमधीतमनधीतं च तत्सर्वस्यैव ब्रह्मेत्येतस्मिन् पदे एकता** एकत्वम्। एतावन्तं कालं मत्कर्तव्यतया योऽध्ययनव्यापार आसीत् स इत ऊर्ध्वं त्वं ब्रह्म त्वत्कर्तृकोऽस्ति। तथा **ये वै केचन यज्ञाः** मयानुष्ठेया अनुष्ठिताश्च **तेषां यज्ञ इत्येकस्मिन्** पदे एकत्वम्। मत्कर्तृका यज्ञा य आसन् ते इत ऊर्ध्वं त्वत्कर्तृका भवन्तु। मया जिता अजिताश्च **ये वै के च लोकाः सन्ति तेषां लोक इत्येतस्मिन् पदे एकता**। इत ऊर्ध्वं त्वं लोकः। त्वया लोका जेतव्याः। एवं कर्तव्यक्रतुः त्वयि समर्पितः। अहं तु कर्तव्यताबन्धात् विमुक्तोऽस्मि। स एवं पित्रानुशिष्टः पुत्रस्तथेति सर्वं प्रतिपन्नवान्। तत्र श्रुतिः पितुरभिप्रायमिममाचष्टे। **एतावत्परिमाणं वा इदं सर्वं** मयापि वेदास्त्वध्येतव्याः। यज्ञा यष्टव्याः। लोकाश्च जेतव्याः। एतावत् खलु गृहिणा कर्तव्यम्। **एतन्मा सर्वं सन्नयं** सर्वं भारं मदधीनं हि **इतोऽस्माल्लोकात्** माम**भुनजत्** पालयिष्य**तीति**। लृडर्थे लङ्। छन्दसि नियमाभावात्। यस्मादेवं संपन्नः पुत्रः पितरमस्मात् लोकात् कर्तव्यबन्धात् मोचयिष्यति, **तस्मात् पुत्रमनुशिष्टं लोक्यमाहुः** ब्राह्मणाः। **तस्मादेनं** लोक्योऽयं स्यादित्य**नुशासति**। **स यदैवं** पुत्रसमर्पितकर्तव्यक्रतुः पिता **अस्मात् लोकात् प्रैति** म्रियते **अथ** तदा **एभिः** प्रकृतवाङ्मनःप्राणैः **पुत्रमाविशति** पितुर्वाङ्मनःप्राणभावित्वात्। यस्यैवमनुशिष्टः पुत्रो भवति स पितास्मिन्नेव लोके पुत्ररूपेण वर्तते। न हि मृत इति मन्तव्यः। तथा च श्रुतिः—"सोऽस्यायमितर आत्मा पुण्येभ्यः कर्मभ्यः प्रतिधीयते" इति। अथेदानीं सत्पुत्रलक्षणमाह—**यदीति**। **स** पुत्रो **यदि** कदाचित् **अनेन** पित्राक्ष्णया कोणच्छिद्रतोऽन्तरा **अकृतं भवति तस्मात्** पितृकृतलोकप्राप्तिप्रतिबन्धकरूपात् **पुत्रो मुञ्चति** मोचयति। पित्रा यत् कर्तव्यं तत् सर्वं स्वेन पूरयित्वा पितरं त्रायते। यस्मादेवं **तस्मात्** पुत्रस्य पुत्रत्वम्। **पुत्रो नाम** भवति यत् पितुः छिद्रं पूरयित्वा त्रायते। मृतोऽपि स पिता पुत्ररूपेण सन् अमृतो**ऽस्मिन्**

**लोके प्रतितिष्ठति**। एवमसौ पिता पुत्रेण मनुष्यलोकं जयति। न तथा विद्याकर्मभ्याम्। **अथ कृतसंप्रत्तिकमेनं** पितरमेते वागादयः **प्राणा दैवा अमृता आविशन्ति** ॥ १७ ॥

कृतसंप्रत्तिके पितरि वागादीनामावेशः

**पृथिव्यै चैनमग्नेश्च दैवी वागाविशति सा वै दैवी वाक् यया यद्यदेव वदति तत्तद्भवति ॥ १८ ॥ दिवश्चैनमादित्याच्च दैवं मन आविशति तद्वै दैवं मनो येनानन्द्येव भवति अथो न शोचति ॥१९॥ अद्भ्यश्चैनं चन्द्रमसश्च दैवः प्राण आविशति स वै दैवः प्राणो यः संचरꣳश्चासंचरꣳश्च न व्यथते अथो न रिष्यति स एवंवित् सर्वेषां भूतानामात्मा भवति यथैषा देवता एवꣳ स यथैतां देवताꣳ सर्वाणि भूतान्यवन्ति एवꣳ हैवंविदꣳ सर्वाणि भूतान्यवन्ति यदु किंचेमाः प्रजाः शोचन्ति अमैवासां तद्भवति पुण्यमेवामुं गच्छति न ह वै देवान् पापं गच्छति ॥ २० ॥**

तत् कथं? इत्यत आह--**पृथिव्या** इति। **पृथिव्यै** पृथिव्याश्च **एनमग्नेश्च दैवी** आधिदैवात्मिका **वाक् आविशति**। सर्वेषामुपादानभूता हि पृथिव्यग्निलक्षणा वाक्। सा च **दैवी वाक्** अनृतादिदोषरहिता। अत एव **यया** वाचा दैव्या **यद्यदा**त्मने परस्मै वा **वदति तत्तत् भवति**। अमोघा हीयं वाक्। **दिव** इति। तथा **दिवश्चैनमादित्याच्च दैवं मन आविशति**। स्वभावनिर्मलत्वात् **तद्वै दैवं मनः**, **येन** मनसा **आनन्द्येव** भवति सुख्येव **भवति**। **अथो** अप्यसौ **न शोचति** शोकनिमित्ताभावात्। **अद्भ्यश्चैनं** इति। अथाद्भ्यः प्राणं **चन्द्रमसः च दैवः प्राण आविशति**। **स वै दैवः प्राणः** किंलक्षणः? इत्यत्र—**यो** व्यष्टिसमष्टिरूपेण जङ्गमस्थावरेषु **संचरंश्च असंचरंश्च**

न व्यथते निमित्ताभावात् । **अथो अपि न रिष्यति** न हि हिंसामापद्यते । **स य:** त्र्यन्नात्मदर्शनं यथावद्वेत्ति **स सर्वेषां भूतानामात्मा** वाङ्मनःप्राणरूपो **भवति** । सर्वभूतात्मतया सर्वज्ञो भवति सर्वकृच्च भवतीत्यर्थः । **यथैषा** हिरण्यगर्भदेवता न ह्यस्याः सर्वभूतात्मत्वे सर्वकृत्त्वे वा क्वचित् प्रतिघातोऽस्ति । **स** इति दृष्टान्तनिर्देशः । **यथैतां** हिरण्यगर्भदेवतां इज्यादिभिः **सर्वाणि भूतान्यवन्ति** पालयन्ति, **एवं हैवंविदं सर्वाणि भूतान्यवन्ति** इज्यादिकं प्रयुञ्जत इत्यर्थः । सर्वप्राणिनामात्मा भवतीत्यन्तम् । तथात्वे सर्वप्राणिसुखदुःखैः संबध्यत इति चेन्न; तस्य सर्वात्मकत्वेनापरिच्छिन्नदृष्टित्वात् । यथा लोकानामात्मात्मीयनिमित्तसुखदुःखाद्युपजायते नैवमीश्वरस्य सुखदुःखादिनिमित्तात्मीयविभ्रमालङ्कारस्वाज्ञानमस्ति । तदेतदुच्यते—**यत् उ किञ्च** यत् **किञ्चेमाः प्रजाः शोचन्ति आसां** प्रजानां **अमैव** सहैव शोकादिर्भवति तद्गतदृष्टेः परिच्छिन्नत्वात् । सर्वात्मनः प्रजापतेः केन सह संयोगो वियोगो वा भवेत् ? येनास्य शोकहर्षौ स्यातां तन्निमित्तमेव नास्तीत्यर्थः । यथा प्रजापतिः तथा प्राजापत्यपदे निषण्णममुं स्वकृतनिरतिशयपुण्यतत्फलमेव **गच्छति । न ह वै देवान् पापं गच्छति** पापतत्फलावकाशवैरल्यात् ॥१८–२० ॥

### वाङ्मनःप्राणानामुपास्यत्वे विशेषः

अथातो व्रतमीमाꣳसा प्रजापतिर्ह कर्माणि ससृजे तानि सृष्टान्यन्योन्येनास्पर्धन्त वदिष्याम्येवाहमिति वाक् दध्रे द्रक्ष्याम्यहमिति चक्षुः श्रोष्याम्यहमिति श्रोत्रमेवमन्यानि कर्माणि यथाकर्म तानि मृत्युः श्रमो भूत्वा उपयेमे तान्याप्नोत् तान्याप्त्वा मृत्युरवारुन्ध तस्मात् श्राम्यत्येव वाक् श्राम्यति चक्षुः श्राम्यति श्रोत्रमथेममेव नाप्नोत् योऽयं मध्यमः प्राणस्तानि ज्ञातुं दध्रिरे अयं वै नः श्रेष्ठो यः संचरꣳश्चासंचरꣳश्च न व्यथतेऽथो न रिष्यति हन्तास्यैव

सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवꣳस्तस्मादेत एतेनाख्या-यन्ते प्राणा इति तेन ह वाव तत्कुलमाचक्षते यस्मिन्कुले भवति य एवं वेद य उ हैवंविदा स्पर्धतेऽनुशुष्यति अनुशुष्य हैवान्ततो म्रियत इत्यध्यात्मम् ॥ २१ ॥

वाङ्मनःप्राणानामुपास्यत्वमुक्तं, तद्गतविशेषो नोक्तः। तदर्थमियं मीमांसेत्याह—**अथेति**। **अथा**नन्तरं **व्रतस्य मीमांसा** उपासनकर्मविचारणा। किमिति? एषां वागादीनां कस्य कर्म व्रतत्वेन धारयितव्यं? इति मीमांसा प्रसक्तेत्यर्थः। तत्र **प्रजापतिर्ह** किल प्रजाः सृष्ट्वाथ **कर्माणि ससृजे** वागादिकरणानां कर्मार्थत्वात्। **तानि** पुनः **सृष्टानि अन्योन्येन** परस्पर**मस्पर्धन्त** स्वात्मप्रशंसया स्पर्धां चक्रुः। कथं तत्? निरन्तरं **वदिष्याम्येवाहमिति वाक्** अभिमतिं **दध्रे** धृतवती। तथा **द्रक्ष्याम्यहमिति चक्षुः**। **श्रोष्याम्यहमिति श्रोत्रम्**। **एवमन्यानि कर्माणि** करणानि यत् यस्य कर्म **यथाकर्म तानि** करणानि **मृत्युः** मारकः **श्रमः** श्रमरूपी **भूत्वा उपयेमे** करणानि उपसंजग्राह। कथम्? स्वव्यापारप्रवृत्तकरणानि **मृत्युः** श्रमरूपेण**आप्नोत्**। **तान्येवमाप्त्वावा-रुन्ध** स्वस्वव्यापृतितोऽवरोधं **कृ**तवान्। यस्मादेवं **तस्मात्** स्वकर्मण्यप्रापि **वाक् श्राम्यति** श्रमरूपमृत्युनाक्रान्तेयं स्वव्यापृतितः प्रच्याव्यते। तथैव **श्राम्यति चक्षुः**। **श्राम्यति श्रोत्रम्**। **अथेममेव** मुख्यप्राणं **नाप्नोत्**। श्रमरूपी मृत्युः **योऽयं मध्यमः प्राणः न** कदापि श्रान्तः स्वकर्मणि प्रवर्तते। एवं तं **तानि** करणानि **ज्ञातुं दध्रिरे** मनो धृतवन्ति। **अयं वै नोऽ**स्माकं मध्ये **श्रेष्ठः यः संचरंश्च असंचरंश्च न व्यथते**। **अथो न रिष्यति**। **हन्त**! इदानीं **सर्वे** वयमस्यैव प्राणस्य **रूपमसाम** तदात्मतया प्रतिपद्येमहि। इत्येवं निश्चित्य **ते सर्वे** प्राणमेवात्मत्वेन प्रतिपद्य प्राणव्रतमेव दध्रिरे। यस्माच्चलनात्मकप्राणरूपेण रूपवन्ति करणानि **तस्मादेते** वागादय **एतेन** प्राणाभिधाने**नाख्यायन्ते प्राणा** इत्येवमभिधीयन्ते। य एवं सर्वकरणानां प्राणात्मतां वेत्ति प्राणशब्दाभिधेयत्वं च **तेन ह वाव** विदुषा **तत्कुलमाचक्षते**

लौकिकाः। **यस्मिन् कुले स विद्वान् जातो भवति** तत् कुलमपि विद्वन्नाम्नैव प्रथितं भवति। अमुष्य कुलमेतदिति विख्यातं भवतीत्यर्थः। **य एवं वेद** तस्यैतत् फलम्। किञ्च **यः कश्चित् उ ह य एवंविदा स्पर्धते सोऽस्मिन्नेव** शरीरे **अनुशुष्यति। अनुशुष्य हैवान्ततो म्रियते।** इत्येवमुक्तमध्यात्मम्। इतिशब्दः उपसंहारार्थः॥ २१॥

अधिदैवतदर्शनम्

अथाधिदैवतं ज्वलिष्याम्येवाहमित्यग्निर्दध्रे तप्स्याम्यहमि-त्यादित्यो भास्याम्यहमिति चन्द्रमा एवमन्या देवता यथादैवतꣳ स यथैषां प्राणानां मध्यमः प्राण एवमेतासां देवतानां वायुः म्लोचन्ति ह्यन्या देवता न वायुः सैषानस्तमिता देवता यद्वायुः॥ २२॥

अथाधिदैवतदर्शनमुच्यते---**अथेति। अथानन्तरं** कस्य देवताविशेषस्य व्रतधारणं श्रेयः? इति मीमांस्यते। अध्यात्मपरिच्छिन्नवागादिवत् सर्वे **ज्व-लिष्याम्येवाहमिति अग्निर्दध्रे। तप्स्याम्यहमित्यादित्यो भास्याम्यहमिति चन्द्रमाः। एवमन्या देवताः। यथादैवतं** सोऽध्यात्मवागादि**प्राणानां** मध्ये **यथा प्राणो मध्यमः एवमेतासाम**ग्न्यादि**देवतानां** मध्ये वायुरपि प्राणवन्न म्लोचति। इतरास्तु **म्लोचन्ति** अस्तं यन्ति स्वकर्मभ्य उपरमन्ते। यथाध्यात्मं वागादिदेवता अग्न्याद्या **न वायुरस्तं** याति। यथाध्यात्मं मध्यमः प्राणः। अथ **सैषानस्तमिता देवता** यो वायुर्यद्वायुः। एवमध्यात्ममधिदैवतं च मीमांसित्वा निर्धारितम्। प्राणवाय्वात्मनो व्रतं प्राजापत्यपदप्रापक-मित्यर्थः॥ २२॥

प्राणस्यैव उपास्यत्वकथनम्

अथैष श्लोको भवति यतश्चोदेति सूर्योऽस्तं यत्र च गच्छतीति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्मꣳ

स एवाद्य स उ श्व इति यद्वा एतेऽमुर्हि अध्रियन्त तदेवाप्यद्य कुर्वन्ति । तस्मादेकमेव व्रतं चरेत् प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नुवदिति यद्यु चरेत् समापिपयिषेत् तेनो एतस्यै देवतायै सायुज्यꣳ सलोकतां जयति ॥ २३ ॥

उक्तार्थे मन्त्रोऽपि भवतीत्याह—**अथेति । यतश्च** यस्मात् वायोः **सूर्य उदेति** प्राणादेवोद्गच्छतीत्यर्थः । **यत्र च** वायौ प्राणे **चास्तं गच्छति** पुरुषस्यापरसन्ध्यासमये स्वापसमये च सूर्यः चक्षुश्चादर्शनतां गच्छति । तं धर्मभूतं वागादयोऽग्न्यादयो देवाः प्राणव्रतं वायुव्रतं च **चक्रिरे** धृतवन्तः । यः पुरा मीमांसितः स एवाद्येदानीं श्वो भवष्यित्यपि कालेऽनुवर्तते वर्तिष्यते च । तत्रेमं मन्त्रं संक्षेपतो विवृणोति—**प्राणादिति । प्राणाद्वा एष सूर्य उदेति प्राणेऽस्तमेति । तं देवाश्चक्रिरे धर्मं स एवाद्य स उ श्वः** इत्यस्यार्थः । **यद्वा एते** एतद्व्रत**ममुर्हि** अमुष्मिन् काले वागादयोऽग्न्यादयश्च प्राणव्रतं वायुव्रतं **चाध्रियन्त । तदेवाद्याप्यन्येऽनुवर्तन्ते** । तैरप्याचरितव्रतमभग्नमेव भवति । मुख्यं प्राणं विना यत्तु वागादिव्रतमग्न्यादिव्रतं चाभग्नमिति ये कर्तुं वाञ्छन्ति तेषामस्तमनकाले स्वापकाले च वायौ प्राणे च निम्लुक्तिर्भवतीत्यत्र—यदा वै पुरुषः स्वपिति प्राणं तर्हि वागप्येति प्राणं मनः प्राणं चक्षुः प्राणं श्रोत्रमिति यदायं प्रबुध्यते तदा वागादयः पुनः प्राणादेव जायन्ते । यथेद-मध्यात्मं तथाधिदैवतमपि । यदा वा वायुमग्निरनुगच्छति तदायमनूद्वाति । तस्मादेनमुदवासीदित्याहुः । यदादित्योऽस्तमेति वायुं तर्हि प्रविशति । वायुं चन्द्रमा वायुं दिशः पुनर्वायोरेवाधिजायन्त इति यस्मादेतदेव व्रतं वागादिष्व-ग्न्यादिषु चानुगतं यदेतत् वायोः प्राणस्य च परिस्पन्दात्मकत्वं तत् व्रतं सर्वदेवैरनुवर्त्यम् । **तस्मादन्योऽप्येकमेव व्रतं चरेत्** । किं तत् ? **प्राण्याच्च अपान्याच्च** प्राणनापानन्व्यापारं कुर्यात् । न हि प्राणापानव्यापारयोः उपर-मोऽस्ति । तस्मात् तदेवैकं व्रतं चरेत् । इन्द्रियादिव्यापारान्तरं हित्वा मुख्यप्राणो-पासनमेव कुर्यादित्यर्थः । **नेत् मा** न हि मां **पाप्मा** श्रमरूपी **मृत्युराप्नुवत्**

आप्नुयात् । यद्यहमस्मात् व्रतात् प्रच्युतः स्यां तदा मृत्युना ग्रस्तो भवामीति भिया यावदायुषं प्राणव्रतमेव धारयेदित्याशयः । **यदि** कदाचित् **उ चरेत्** प्रारभेत यदि वा प्राणव्रतं **समापिपयिषेत्** समापयितुमिच्छेत् तदा प्राणः परिभूतः स्यात् देवाश्च । तस्मात् समापयेदेव । तेनानेन व्रतेन सर्वभूतेषु वागादयोऽग्न्यादयश्च मदात्मका एव । अहं तु प्राणात्मा सर्वपरिस्पन्दकृत्त्वात् । **तेन उ** व्रतधारणेन **एतस्याः** प्राणदेवतया एव **सायुज्यं** सयुग्भावं **सलोकतां** एकस्थानत्वं स्वविज्ञानापेक्षमेतत् **जयति** प्राप्नोतीत्यर्थः ॥ २३ ॥

**इति पञ्चमं ब्राह्मणम्**

---

## षष्ठं उपसंहारब्राह्मणम्

सर्वनामग्रासं ब्रह्मैव

**त्रयं वा इदं नाम रूपं कर्म तेषां नाम्नां वागित्येतदेषामुक्थमतो हि सर्वाणि नामान्युत्तिष्ठन्ति एतदेषाꣳ साम एतद्धि सर्वैर्नामभिः सममेतदेषां ब्रह्म एतद्धि सर्वाणि नामानि बिभर्ति ॥ १ ॥**

यदेतदाविद्यकं जगत् प्रस्तुतं तस्य व्याकृतत्वेन नामरूपकर्मात्मकत्वात् एतस्य ब्रह्मविकल्पितत्वेन ब्रह्मातिरिक्तसत्तावैरल्यात् एतत् सर्वं ब्रह्मैव नेतरत् इति प्रकटयितुं षष्ठं ब्राह्मणमारभ्यते—**त्रयमिति** । यदेतत् ब्रह्माज्ञानविजृम्भितं तदिदं जगत् कतिविकारविशिष्टं ? इत्यत्र **नाम रूपं कर्म** चेति विकारत्रयविशिष्टमित्यर्थः । **त्रयं वा**—वेत्यवधारणात् नामरूपकर्मातिरिक्तविकृतिः नास्तीति द्योत्यते । **तेषां नाम्नां** शब्दविकाराणां कारणं **वागित्युच्यते** । "यः कश्च शब्दो वागेव" इति श्रुतेः । **एतदेषां** नामविशेषाणां **उक्थं** कारणम् । **अतो**

हि अस्मात् नामसामान्यात् यज्ञदत्त इत्यादिसर्वाणि नामान्युत्तिष्ठन्ति। यथा लवणाचलात् लवणकणाः प्रविभज्यन्ते तथा कारणात् कार्याणि विशेषाणां सामान्यनिमित्तत्वात्। तत् कथं सामान्यविशेषभावः? तयोः एतच्छब्द-सामान्यात् एषां विशेषाणां नाम साम समत्वात् सामान्यम्। एतत् हि यस्मात् **सर्वैः नामभिः समं** नामविशेषाणां आत्मलाभाविशेषात्। यस्य यत् आत्मलाभहेतुः तेनायमप्रविभक्तो लोके दृष्टः। घटस्य मृदा यथा-प्रविभक्तता तथा वाच्यवाचकयोरविभक्ततेत्यर्थः। यत **एतदेषां** वाक्छब्दवाच्यं **ब्रह्म** अतो नाम्नां आत्मलाभः शब्दार्थयोरविनाभूतत्वात्। यस्मादेवं तस्मात् सर्वनामार्थभूतं ब्रह्मैव स्वाभेदेन **सर्वाणि नामानि बिभर्ति** नाम्नां शब्द-मात्रत्वेन मिथ्यात्वात् तदर्थस्य तत्संबन्धास्पृष्टत्वात् परमार्थतः सर्वनामग्रासं ब्रह्ममात्रमवशिष्यत इत्यर्थः ॥ १ ॥

रूपसामान्यग्रासं च ब्रह्मैव

अथ रूपाणां चक्षुरित्येतदेषामुक्थमतो हि सर्वाणि रूपाण्यु-त्तिष्ठन्ति एतदेषाꣳ साम एतद्धि सर्वै रूपैः सममेतदेषां ब्रह्म एतद्धि सर्वाणि रूपाणि बिभर्ति ॥ २ ॥

रूपकर्मणोरप्येवमेव योज्यमित्याह—**अथेति**। **अथ** शुक्लकृष्णादिनाना-**रूपाणां** चक्षुर्विषयसामान्यं प्रकाश्यमात्रं यत् तत् प्रकाशकम्। तस्मादेव **हि सर्वाणि रूपाण्युत्तिष्ठन्ति। एतदेषां साम। एतद्धि सर्वैः रूपैः समम्। एतदेषां ब्रह्म।** एतद्धि स्वाज्ञदृष्ट्या **सर्वाणि रूपाणि** बिभर्तीव **बिभर्ति।** वस्तुतः स्वातिरिक्तरूपवैरल्यात् रूपसामान्यग्रासं ब्रह्ममात्रमवशिष्यते ॥ २ ॥

स्वारोपितकर्मसामान्यं स्वयमेव

अथ कर्मणामात्मेत्येतदेषामुक्थमतो हि सर्वाणि कर्मा-ण्युत्तिष्ठन्ति एतदेषाꣳ साम एतद्धि सर्वैः कर्मभिः सममेतदेषां ब्रह्म

**एतद्धि सर्वाणि कर्माणि बिभर्ति तदेतत्त्रयꣳ सदेकमयमात्मात्मो एकः सन् एतत्त्रयं तदेतदमृतꣳ सत्येन छन्नं प्राणो वा अमृतं नामरूपे सत्यं ताभ्यामयं प्राणश्छन्नः ॥ ३ ॥**

स्वारोपितकर्मसामान्यं स्वयमेवेत्याह—**अथेति**। **अथे**दानीं मनोवाक्कायनिर्वर्त्यत्वेन सर्वकर्मविशेषाणामात्मना कर्तुमकर्तुमन्यथाकर्तुं शक्यत्वात् क्रियासामान्यमात्रमात्मनिमित्तम्। तत् कथमिति? आत्मना शरीरेण हि कर्म करोति। सर्वं कर्म शरीरे ह्यभिव्यज्यते। तस्मात् कर्मसामान्यमात्रं सर्वेषामुक्थमित्यादि पूर्ववत्। तदेतन्नामरूपकर्मत्रयं इतरेतराश्रयं केनात्मना एकत्वमेति? इत्यत्र कार्यकारणादिसङ्घातोऽयमात्मा। तथा चोक्तं "एतन्मयो वा अयमात्मा" इति। एतावद्धीदं सर्वं व्याकृतमव्याकृतं च। नामरूपकर्मात्मकमात्माज्ञानविकल्पितत्वेनानात्ममात्रमिदं सर्वं जगत्। तदारोपापवादाधिकरण**ममृतं** तद्याथात्म्यं **सत्येन** नामरूपादिविकारेण **छन्नं** आवृतवदावृतम्। वस्तुतो निरावृतं हि तत्। आवृतित्रयावृतदृशां तु **प्राणो वा** करणग्रामानुग्राहक एवा**मृतम्**। वस्तुतः तद्गतहेयांशापाये तस्याविनाशित्वेनामृतरूपत्वात्। एवमजानतां **नामरूपे सत्यम्**। **ताभ्यां** मार्त्यनामरूपाभ्यां **छन्नो**ऽप्रकाशीकृत इत्येवं तृतीयाध्याये प्राधान्यतः स्वाविद्यातत्कार्यसंसारतत्त्वं प्रदर्शितम्। अत्रैव "आत्मेत्येवोपासीत", "आत्मानमेवावेदहं ब्रह्मास्मि इति" परविद्यापि प्रदर्शिता ॥ ३ ॥

**इति षष्ठं ब्राह्मणम्**

इति प्रथमोऽध्यायः

---

# द्वितीयोऽध्यायः

## प्रथमं बालाकिब्राह्मणम्

गार्ग्याजातशत्रुसंवादः

**दृप्तबालाकिर्हानूचानो गार्ग्य आस स होवाचाजातशत्रुं काश्यं ब्रह्म ते ब्रवाणीति स होवाचाजातशत्रुः सहस्रमेतस्यां वाचि दद्मो जनको जनक इति वै जना धावन्तीति ॥ १ ॥**

"आत्मेत्येवोपासीत" इति तृतीयेऽध्याये यत् सूत्रितं यदन्वेषणमात्रतः सर्वमन्विष्टं स्यात् तस्य परप्रेमास्पदतया तदेवान्वेष्टव्यम्। "आत्मानमेवावेत् अहं ब्रह्मास्मीति" परमात्मतत्त्वं विद्याविषयत्वेन विभाति। एवं यो न जानाति स हि स्वाज्ञः। "अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मि इति न स वेद यथा पशुः" इत्यविद्याविषयः। "एकधैवानुद्रष्टव्यं", "विज्ञानमानन्दं ब्रह्म", "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिभिः विद्याविद्याविषयौ प्रविभक्तौ। एवमेव सर्वोपनिषत्स्वपि। तत्रादौ तृतीयाध्याये साध्यसाधनादिभेदविशेषेण अविद्याविषयो व्याख्यातः। इत ऊर्ध्वं यः परविद्यैकविषयः स आत्मैवाधिगन्तव्य इति चतुर्थाध्याय आरभ्यते। पूर्वपक्ष-सिद्धान्तरूपेयमाख्यायिका वक्ष्यमाणब्रह्मविद्यास्तुत्यर्था—**दृप्तबालाकिरिति**। तत्रा-विद्याशबलब्रह्मवित् तस्यासम्यग्दर्शित्वेन **दृप्तो** गर्वितः बलाकाया अपत्यं **बालाकिः**। दृप्तश्चासौ बालाकिश्चेति दृप्तबालाकिः। हकार ऐतिह्यार्थः। अनुवचनसमर्थो वाग्मी **अनूचानः**। गर्गगोत्रजो **गार्ग्यः**। **आस** बभूव। कचित् कालविशेषे **अजातशत्रु**नामानं काशीदेशाधिपतिं **काश्य**मधिगम्य **स होवाच**। किमिति? **ब्रह्म ते ब्रवाणि** कथयानीति। तेनैवमुक्तोऽ**जातशत्रु-रुवाच**। किमिति? ब्रह्म ते ब्रवाणीति या वागुक्ता तस्या**मेतस्यां वाचि** गवां **सहस्रं दद्मः**। ब्रवाणीति तावन्मात्रमेव गोसहस्रप्रदाननिमित्तं परिच्छिन्नं

च। वाक् हि निमित्तमपेक्षते। राज्ञोऽभिप्रायं श्रुतिराह। किमिति? **जनको जनक इति**। जन्म च नाशं च न कस्याप्यस्ति सर्वस्याजत्वादमृतत्वाच्चेति ज्ञानजनकः परमार्थविदित्यर्थः। यद्वा—जनको दाता जनकः श्रोतेति पदद्वयमभ्यस्यते जनको जनक इति। वैशब्दः एवं प्रसिद्धिद्योतकः—जनको दित्सुः जनको ब्रह्म विवक्षुः इति। तं प्रति स्वाभिप्रेतार्थसिद्धये **जना धावन्ति** अभिगच्छन्ति ॥ १ ॥

आदित्यादिषु ब्रह्मोपासना, तत्प्रत्याख्यानं च

स होवाच गार्ग्यो य एवासावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा अतिष्ठाः सर्वेषां भूतानां मूर्धा राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽतिष्ठाः सर्वेषां भूतानां मूर्धा राजा भवति ॥ २ ॥ स होवाच गार्ग्यो य एवासौ चन्द्रे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा बृहन् पाण्डरवासाः सोमो राजेति वा अहमेतमुपास इति स य एतमेवमुपास्तेऽहरहर्ह सुतः प्रसुतो भवति नास्यान्नं क्षीयते ॥ ३ ॥ स होवाच गार्ग्यो य एवासौ विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठास्तेजस्वीति वा अहमेतमुपास इति स य एतमेवमुपास्ते तेजस्वी ह भवति तेजस्विनी हास्य प्रजा भवति ॥ ४ ॥ स होवाच गार्ग्यो य एवायमाकाशे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठाः पूर्णमप्रवर्तीति वा अहमेतमुपास इति स य एतमेवमुपास्ते पूर्यते प्रजया

पशुभिर्नास्यास्माल्लोकात् प्रजा उद्वर्तते ॥ ५ ॥ स होवाच गार्ग्यो य एव वायौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति स य एतमेवमुपास्ते जिष्णुर्हापराजिष्णुर्भवति अन्यतस्त्यजायी ॥ ६ ॥ स होवाच गार्ग्यो य एवायमग्नौ पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा विषासहिरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते विषासहिर्ह भवति विषासहिर्हास्य प्रजा भवति ॥ ७ ॥ स होवाच गार्ग्यो य एवायमप्सु पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति स य एतमेवमुपास्ते प्रतिरूपꣳ हैवैनमुपगच्छति नाप्रतिरूपमथो प्रतिरूपोऽस्माज्जायते ॥ ८ ॥ स होवाच गार्ग्यो य एवायमादर्शे पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा रोचिष्णुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते रोचिष्णुर्ह भवति रोचिष्णुर्हास्य प्रजा भवति अथो यैः सन्निगच्छति सर्वाꣳस्तानतिरोचते ॥ ९ ॥ स होवाच गार्ग्यो य एवायं यन्तं पश्चाच्छब्दोऽनूदेति एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा असुरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वꣳ हैवास्मिँल्लोक आयुरेति नैनं पुरा कालात् प्राणो जहाति ॥ १० ॥ स होवाच गार्ग्यो य एवायं दिक्षु पुरुष

एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति स य एतमेवमुपास्ते द्वितीयवान् ह भवति नास्माद्गणश्छिद्यते ॥ ११ ॥ स होवाच गार्ग्यो य एवायं छायामयः पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा मृत्युरिति वा अहमेतमुपास इति स य एतमेवमुपास्ते सर्वꣳ हैवास्मिँल्लोक आयुरेति नैनं पुरा कालान्मृत्युरागच्छति ॥ १२ ॥ स होवाच गार्ग्यो य एवाय-मात्मनि पुरुष एतमेवाहं ब्रह्मोपास इति स होवाचाजातशत्रुर्मा मैतस्मिन् संवदिष्ठा आत्मन्वीति वा अहमेतमुपास इति स य एतमेवमुपास्त आत्मन्वी ह भवति आत्मन्विनी हास्य प्रजा भवति स ह तूष्णीमास गार्ग्यः ॥ १३ ॥

एवं राजानं स्ववक्ष्यमाणब्रह्म शुश्रूषुं मत्वा तं प्रत्येवमुवाच—स हेति। **स होवाच गार्ग्यः**। **य एवासावादित्ये** चक्षुषि चैकोऽभिमानी चक्षुरिन्द्रिय-द्वारा हृदयं प्रविश्य कर्तृत्वादिकलनामवलम्ब्य योऽवतिष्ठते **तमेवाहं ब्रह्म** पश्यामि अस्मिन् कार्यकरणसङ्घाते तमेवाहमुपासे। तमेव तुभ्यं ब्रवीमि। त्वमपि तमुपास्स्वेति। तमेवमुक्तः **प्रत्युवाचाजातशत्रुः**। किमिति? **मा मेति** द्विर्वचनमसङ्गतार्थम्। यत् त्वयोक्तं तस्मिन् ज्ञेये मा **संवदिष्ठाः** मा संवादं कार्षीः। यद्यन्यत् जानासि तद्वक्तुमर्हसि। यद्येवं ब्रह्ममात्रं जानीषे न तु तद्विशेषणोपासनफलानीति न हि मन्तव्यम्। सर्वमेतदप्यहं जाने। यथाहं जाने तथा त्वं न जानासि। तत् कथम्? **अतिष्ठाः** सर्वभूतानि अतीत्य स्थितत्वात्। **सर्वेषां** प्राणिनां **मूर्धा** शिरः दीप्तिगुणविशिष्टत्वात्। इत्थं विशेषणविशिष्टं एतत् ब्रह्म अस्मिन् संघाते कर्तृ भोक्तृ चेत्यहमेतमुपास इति। एवं विशिष्टोपासकस्य फलमपि जानामि। **स य एतमेवमुपास्ते अतिष्ठाः सर्वेषां**

**भूतानां मूर्धा** शिरो **राजा भवति**। यथागुणमुपास्ते तथागुणो भवतीत्यर्थः। एवमादित्यब्रह्मणि प्रत्याख्याते ब्रह्मान्तरमाह—**स** इति। **स होवाचे**त्यादि सर्वत्र समानम्। **य एवासौ** चन्द्रमस्येकः **पुरुषः** भोक्तृत्वादिगुणविशिष्टः इत्यादि पूर्ववत्। विशेषस्तु **बृहन्** महान् पाण्डरं शुक्लं वासो यस्य सोऽयं **पाण्डरवासाः** प्राणस्याप्शरीरत्वात्। यश्चान्नभूतोऽभिषूयते यज्ञे लतात्मकः सन् तावेतावेकीकृत्य एतमेवाहं ब्रह्मोपासे। **एवं** यथोक्तगुणं **य उपास्ते** तस्याहरहः सोमो यज्ञेऽभिषुतः सुतविकारेषु **प्रसुतश्च**। **अस्यान्नं न क्षीयते** अन्नात्मोपासनात्। किञ्च—**स** इति। तथा **विद्युति** त्वचि हृदये चैका देवता। तद्विशेषणं **तेजस्वीति**। **तेजस्वी भवतीति**। तत्फलं—**तेजस्विनी ह्यस्य प्रजा भवतीति** च। विद्युतां बहुत्वात् तत्प्रजाया अपि बहुत्वम्। किञ्च—**स होवाचेति**। तथा बाह्यान्तराकाशयोरपि देवतैका। **पूर्णमप्रवर्तीति वा** इति विशेषणद्वयं पूर्णफलद्योतनार्थम्। **पूर्यते प्रजया पशुभिः** अप्रवर्तीति विशेषणतः न **ह्यस्मात् लोकात् प्रजा उद्वर्तते** नास्य सन्तति-विच्छेदो भवतीत्यर्थः। किञ्च—स **होवाचेति**। तथा **वायौ** प्राणे हृदि चैका देवता। विशेषणं तु, **इन्द्रः** परमेश्वरः। अप्रसह्यो **वैकुण्ठः**। न हीतरैर्जितपूर्वा **अपराजिता सेना** मरुतां गणत्वप्रसिद्धेः। उपासनाफलं तु जयशीलो **जिष्णुः**। न हि परैः जितपूर्वो**ऽपराजिष्णु**स्वभावो **भवति**। **अन्यतस्त्यानां** सपत्नानां **जायी** जयशीलो भवतीत्यर्थः। **स होवाचेति**। **अग्नौ** वाचि हृदि चैका विशेषणं **विषासहिः** परेषां मर्षयिता अग्निबाहुल्यात् फलबाहुल्यम्। स **होवाचेति**। तथाप्सु रेतसि हृदये चैका विशेषणं **प्रतिरूपो**ऽनुरूपः। श्रुतिस्मृत्यप्रतिकूलतः तच्छासनानुरूपमे**वैनमुपगच्छति** तद्वंश्यस्तथाविध एवोपजायते। **स होवाचेति**। स्वच्छा**दर्शे** खड्गादौ हार्दे च देवतैका। विशेषणं **रोचिष्णुः** दीप्तिस्वभावः। फलबहुत्वं रोचनाधारबाहुल्यम्। **स होवाचेति**। **यन्तं** गच्छन्तं य एवायं **शब्दः** पृष्ठतो**ऽनूदेति** जीवनहेतुः अध्यात्मप्राणस्तमेकीकृत्य **असुरि**त्याह। गुणस्तु प्राणो जीवनहेतुः। तत्फलं तु **अस्मिन् लोके सर्वमायुरेतीति**। कर्मफलपरिच्छिन्न**कालात् पुरा** रोगादिभिः

**एनं प्राणो न जहाति**। **स होवाचेति**। **दिक्षु** कर्णयोर्हृदि चैका अविनाभूतावश्विनौ देवौ। गुणस्तु **द्वितीयवत्त्वं अनपगत्वं** अन्योन्यमवियुक्तता च। उपासकफलं तदेव गुणाविच्छेदो द्वितीयवत्त्वम्। **स होवाचेति**। बाह्यतमोरूपच्छायायामध्यात्मं चावरणाज्ञाने हृदि चैका देवता। मृत्युस्तदधिकरणं फलम्। शिष्टं पूर्ववत्। विशेषस्तु—मृत्युवीक्षणाभावात् रोगादिपीडाभावः। **स होवाचेति**। **आत्मनि** प्रजापतौ बुद्धौ हृदि चैका देवता। विशेषण**मात्मन्वी** आत्मवानिति। फलं तु **आत्मन्वी ह भवति**। **आत्मन्विनी हास्य प्रजा भवति**। एवमजातशत्रुणा स्वेनोपन्यस्तब्रह्मसु प्रत्याख्यातेषु क्षीणप्रज्ञः अवाक्शिराः निरुत्तरो **गार्ग्यस्तूष्णीमास** ॥ २–१३ ॥

गार्ग्येण शिष्यवदुपगमनम्

स होवाचाजातशत्रुरेतावन्नू ३ इति एतावद्धीति नैतावता विदितं भवतीति स होवाच गार्ग्य उप त्वायानीति ॥ १४ ॥

**स होवाचेति**। **स होवाचाजातशत्रुः**। **एतावन्नू** इति विडम्बनार्थः। किं एतावत् ब्रह्म विज्ञातं, आहोस्वित् एतत्सदृशमधिकं किमस्ति? इतर आह—**एतावद्धीति**। विदिते**नैतावता न** हि ब्रह्म **विदितं भवति**। ब्रह्म ते ब्रवाणीति किमर्थं गर्वितोऽसि? परब्रह्म यथावत् त्वया न विदितमित्यर्थः। अजातशत्रुः मुख्यब्रह्मवित्। अयं अमुख्यब्रह्मवित्। मुख्यब्रह्मविदा अमुख्यब्रह्मवित् प्रतिषेधितुं युक्त एव। यद्यमुख्यब्रह्मविज्ञानमपि प्रत्याख्यायेत तदा नैतावतेति न हि ब्रूयात्। न किञ्चित् त्वया विज्ञातमित्येवं ब्रूयात्। तस्मादपरब्रह्मविद्याविषयं वस्त्वस्त्येव परब्रह्मविज्ञानस्यापरब्रह्मविज्ञानपूर्वकत्वात्। नैतावता विदितं भवतीति युक्तमुक्तम्। यावदविद्यावद्विषयं नामरूपकर्माख्यं तृतीयाध्याये प्रदर्शितं ततो नैतावता विदितं भवतीति ब्रुवता इतोऽप्यधिकं ब्रह्म विज्ञातव्यमस्तीति दर्शितं भवति। तच्च तावत् यथावदनुपसन्नाय न वक्तव्यमिति आचारविधिज्ञो **गार्ग्यः** स्वाधीतविद्याप्रभवाचार्यताभिमतिं दूरतः त्यक्त्वा शिष्य-

भावमेत्य **स होवाच—उप त्वा यानीति** । यथान्यः शिष्यः गुरुं तथा त्वामुपगच्छामीति ॥ १४ ॥

तयोः सुप्तं पुरुषं प्रति गमनं तत्प्रबोधनं च

**स होवाचाजातशत्रुः प्रतिलोमं चैतत् यद्ब्राह्मणः क्षत्रियमुपेयात् ब्रह्म मे वक्ष्यतीति व्येव त्वा ज्ञपयिष्यामीति तं पाणावादाय उत्तस्थौ तौ ह पुरुषꣳ सुप्तमाजग्मतुः तमेतैर्नामभिरामन्त्रयांचक्रे बृहन् पाण्डरवासः सोम राजन्! इति स नोत्तस्थौ तं पाणिनापेषं बोधयांचकार स होत्तस्थौ ॥ १५ ॥**

तदभिप्रायानुरोधमजातशत्रुरुवाच—स इति । **स होवाचाजातशत्रुः** । **प्रतिलोमं** विपरीतम् । किं तत् ? **यत् ब्राह्मण** उत्तमवर्णः स्वयमाचार्यपदमारूढः सन् अनाचार्यस्वभावं **क्षत्रियं ब्रह्म मे वक्ष्यतीति** शिष्यवृत्त्या **उपेयात्** उपगच्छेदिति यत् तत् विधिशास्त्रविरुद्धम् । तस्मादाचार्य एव सन् तिष्ठ त्वम् । त्वामहं **विज्ञपयिष्यामि** यत् मुख्यं ब्रह्म वेद्यं यद्वेदनात् ब्रह्म विदितं भवति तथा प्रतिपादयामीत्यर्थः । सलज्जं तं गार्ग्यमालक्ष्य तद्विस्रम्भजननाय **तं पाणावादाय उत्तस्थौ** । **तौ ह** गार्ग्याजातशत्रू **पुरुषं** क्वचित् प्रदेशे **सुप्तमाजग्मतुः** । आगतौ तौ **तं** सुप्तं प्राप्य **बृहन्! पाण्डरवासः! सोम! राजन्!** इत्येतैः **नामभिः आमन्त्रयाञ्चक्रे** । एवमामन्त्र्यमाणोऽपि **स नोत्तस्थौ** । तथाविधं **तं पाणिनापेषं** आपिष्यापिष्य **बोधयाञ्चकार** । तेन **स होत्तस्थौ** प्रबुद्धः सन् उत्थितवान् । एतेनास्मिन् शरीरे कर्ता भोक्ता ब्रह्मेति गार्ग्येण यदुक्तं तत् प्रत्याख्यातमित्यर्थः । तत्प्रत्याख्याने किं अवशिष्यते ? इत्यत्र शबलं ब्रह्म तेनोपन्यस्तम् । अजातशत्रोरभिप्रेतं ब्रह्म निर्विशेषम् । निर्विशेषे सविशेषं समाप्यते । तस्य स्वेतरग्रासत्वेन स्वमात्रत्वात् । एतदेव हि परमपुरुषार्थत्वेन विजिज्ञापयिषितम् । तदवगते स्वाज्ञदृष्टिविकल्पि-

तादित्याद्यात्मान्तगतविशेषप्रविलापनपूर्वकत्वात्। तथा च वक्ष्यति--"स एष नेति नेत्यात्मा" इति ॥ १९ ॥

तत आत्मस्वरूपप्रतिपादनम्

**स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषः क्वैष तदाभूत् कुत एतदागादिति तदु ह न मेने गार्ग्यः ॥ १६ ॥**

एवं विशेषनिरसनसिद्धं ब्रह्मेति निश्चित्य तत्स्वरूपं क्रमेण प्रतिपादयितव्यमिति तं प्रत्युवाचेत्याह--**स** इति। **सोऽयमजातशत्रुः** सर्वविकारास्पृष्टं ब्रह्म विवक्षुः गार्ग्य**मुवाच**। किं तत्? इति। **यत्र** यस्मिन् काले स **एष** विज्ञानमयः पुरुषः पाणिपेषणप्रबोधनात् प्राक् **एतत्**स्वापावृतः **सुप्तोऽभूत्**। पुनः प्रबोधात् विज्ञायतेऽनेनेति विज्ञानमन्तःकरणम्। तन्मयः तत्प्रायः **विज्ञानमयः**। किं पुनः तत्प्रायत्वम्? तदुपलब्धृत्वात्। "अयमात्मा ब्रह्म विज्ञानमयः" इत्यादौ प्रायार्थप्रयोगो दृश्यते। तत्र विकारत्वस्याप्रसिद्धत्वात् अवयवोपमार्थयोरपि सुतरामसंभवाच्च। तत् कथम्? तस्य निरवयवत्वेन निरूपमत्वात् पारिशेष्यात् प्रायार्थतैव। तस्मात् संकल्पादिवृत्तिमत् अन्तःकरणं तद्वृत्तिसहस्रभावाभावप्रकाशकतया पुरि शयनात् स्वभासा तत् सर्वं पूरणाद्वा **पुरुषः**। तत्स्वभावविजिज्ञापयिषया प्रबोधात् प्राक् **क्व एष तदाभूत्**? इति प्रश्नः। तदात्मनः क्रियाकारकफलविपरीतबोधगम्यत्वात्। न हि प्रबोधात् प्राक् धर्मादिकार्यं सुखादिर्वा विद्यते। तदा कर्मसामान्याभावात् तत्स्वभाव आत्मनोऽवगम्यते। यत्स्वभावोऽयमभूत् पुनर्यत्स्वभावात् प्रच्युतः संसारी भवेत् इत्येतद्विवक्षया क्व एष तदाभूत्? **कुत एतदागात्**? इत्येतदुभयं गार्ग्येण हि प्रष्टव्यम्। तेनापृष्टमपि ज्ञपयिष्याम्येवेति प्रतिज्ञातत्वात् तत्राजातशत्रुः नोदास्ते, बोधयितव्य एवेति प्रवर्तते। एवमसौ गार्ग्यो व्युत्पाद्यमानोऽपि

प्रबोधात् प्राक् यत्रैष आत्माभूत् कुत एतदागात्? इति **तदुभयं** प्रष्टुमवगन्तुं वा **न मेने** न ज्ञातवान् **गार्ग्यः** ॥ १६ ॥

आत्मनः स्वरूपावस्थत्वम्

**स होवाचाजातशत्रुर्यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते तानि यदा गृह्णाति अथ हैतत्पुरुषः स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाक् गृहीतं चक्षुर्गृहीतं श्रोत्रं गृहीतं मनः ॥ १७ ॥**

तथापि विवक्षितार्थसमर्पणाय स होवाचेत्याह—**स** इति । **स होवाचाजातशत्रुः** । **यत्रैष एतत्सुप्तोऽभूत् य एष विज्ञानमयः पुरुषः** क्व एष तदाभूत्? कुत एतदागात्? इति यदपृच्छाम तत् मयोच्यमानं शृणु । यत्रैष एतत् सुप्तोऽभूत् **तत्** तदा तस्मिन् काले **एषां** वागादि**प्राणानामन्**तःकरणाभिव्यक्तविशेष**विज्ञानेन विज्ञानं** वागादिगतसामर्थ्य**मादाय** गृहीत्वा **य एषोऽन्तर्हृदय**मध्ये तदवच्छिन्न**आकाशः** य आकाशशब्देन पर एव स्वात्मोच्यते **तस्मिन्** स्वात्मन्याकाशे **शेते** । "सता सोम्य! तदा संपन्नो भवति" इति लिङ्गोपाधिसंबन्धकृतं विशेषात्मस्वरूपमुत्सृज्य स्वाभाविकात्मन्येव वर्तते शरीरेन्द्रियतदध्यक्षसंबन्धवैरल्यात् । कथमेतदवगम्यते? इत्यत आह— **तानीति** । यदा यस्मिन् काले **तानि** वागादिविज्ञानानि **गृह्णाति** आदत्ते **अथ** तदाह **एतत्पुरुषः स्वपिति नाम** । तत् गौणमेवास्य नाम भवति । स्वमेवात्मानमप्येतीति स्वपितीत्युच्यते । एवं नामप्रसिद्ध्या आत्मनः संसारधर्मवैलक्षण्यमवगम्यते । न त्वत्र युक्तिरस्तीत्यत आह—**तदिति** । **तत्** तत्र स्वापकाले **गृहीत एव प्राण**शब्देन घ्राणो भवति इन्द्रियादिप्रकरणात् । वागादिसंबन्धतः संसारित्वं स्यात् इति चेन्न ; वागादीनामुपसंहृतत्वात् । तत् कथं? **गृहीता**

**वाक् गृहीतं चक्षुः गृहीतं श्रोत्रं गृहीतं मन** इति। एवं वागादिषु उपसंहृतेषु तद्गतक्रियाकारकादिवैरल्यात् स्वरूपावस्थ एवात्मा भवतीत्यवगम्यते ॥ १७ ॥

विज्ञानात्मनो विलक्षणत्वकथनम्

**स यत्रैतत् स्वप्न्यया चरति ते हास्य लोकास्तदुतेव महाराजो भवति उतेव महाब्राह्मण उतेव उच्चावचं निगच्छति स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेत एवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते ॥१८॥**

दर्शनलक्षणस्वप्नावस्थायां कार्यकरणवियोगेऽपि संसारधर्मित्वमवगम्यते। यथा जागरितावस्थायां स्वान्यत्रात्मात्मीयाध्यासतः शोचति मुह्यति। तस्मात् धर्मवानेवायम्। न त्वस्य शोकादयः करणसंयोगभ्रान्तिजनिता इत्यत आह— **स** इति। **सोऽयं** प्रकृत आत्मा **यत्र** यस्मिन् काले दर्शनलक्षण**स्वप्न्यया** स्वप्नवृत्त्या **चरति** तदा **ते हास्य लोकाः** कर्मफलानि तत्तत्र **उ**तापि **महाराज** इव **भवति**। जागरित इव न महाराजत्वमेव। तथा **महाब्राह्मण** इव **उत इव** अपि **उच्चं** देवत्वादि **अवचं** तिर्यक्त्वादि उच्चमिव अवचमिव च **निगच्छति**। महाराजत्वादयोऽस्य लोका मृषैव। इवशब्दतो व्यभिचारदर्शनाच्च मिथ्यात्वं सिद्धमित्यर्थः। तस्मादयं स्वप्ने न हि स्वात्मात्मीयप्रभवशोकमोहादिभिः संबध्यते। जाग्रत्कालाव्यभिचारिलोकवत् स्वप्नकालभाविलोको व्यभिचारीति चेन्न; जाग्रत्कालीनकार्यकरणदेवतात्मतायाः स्वाविद्याविकल्पितत्वेन न परमार्थत्वात्। तदारोपाधिकरणत्वेन विज्ञानमयस्य तद्विलक्षणत्वात् कथं मिथ्याभूतजाग्रद्दृष्टान्तेन स्वप्नलोकमुज्जीवयसि? न हि जाग्रदाद्यवस्थायाः कालत्रयेऽपि सत्यत्वमिष्यते। तस्याः स्वाज्ञानविकल्पितत्वेन कारणतुल्यत्वात्। तदारोपाधारो विज्ञानात्मा उच्चावचोपाधिं गच्छतीव गच्छति न परमार्थतः। करणोपसंहारविषये दृष्टान्त उच्यते—**यथे**ति। **यथा स महाराजो** जनपदे भवान्

**जानपदान्** स्वोपकरणभूतभृत्यानन्यांश्च **गृहीत्वा** स्वार्जितजनपदे **यथाकामं** यथेच्छं **परिवर्तेत, एवमेवैष** विज्ञानमयः—एतदिति क्रियाविशेषणम्—**प्राणान् गृहीत्वा** जाग्रत्प्रपञ्चादुपसंहृत्य **स्वे शरीरे यथाकामं परिवर्तते**। कामकर्मोद्भूतपूर्वानुभूतवस्तुसदृशवासना अनुभवति। यथा स्वप्नपदार्थस्यावस्तुत्वेन मृषात्वं तथा जागरितेऽपि प्रत्येतव्यम्। ततो विज्ञानात्मा तद्विलक्षण इति सिद्धम्॥ १८॥

विज्ञानात्मनः स्वभावतः शुद्धत्वं ब्रह्ममात्रत्वं च

**अथ यदा सुषुप्तो भवति यदा न कस्यचन वेद हिता नाम नाड्यो द्वासप्ततिसहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते ताभिः प्रत्यवसृप्य पुरीतति शेते स यथा कुमारो वा महाराजो वा महाब्राह्मणो वा अतिघ्नीमानन्दस्य गत्वा शयीत एवमेवैष एतच्छेते॥ १९॥**

यथाकामं परिवर्तते इत्यनेन कामवशात् परिवर्तनमुक्तम्। तत्र दृश्यादिसंबन्धात् अशुद्धता स्यादित्याशंकायामत आह—**अथे**ति। **अथ यदा सुषुप्तो भवति** जाग्रदादिप्रविभक्तदर्शनादिवृत्तिं विहाय स्वान्यसंबन्धरहितसलिलवत् संप्रसादं स्वाभाव्यं गतो भवति। कदा सुषुप्तो भवति? इत्यत्र **यदा** यस्मिन् काले **न कस्यचन** न किञ्चनेत्यर्थः। **वेद** विजानाति स्वातिरिक्तं न किमपि जानातीत्यर्थः। विशेषविज्ञानाभावः सुषुप्तिरित्युक्तम्। तत्र केन प्रकारेण सुषुप्तो भवति? इत्यत आह—**हिता नामे**ति। **हिता नाम नाड्यः** सिराः देहस्यान्नरसपरिणामभूताः। ताश्च **द्वासप्ततिः** द्वे सहस्रे अधिके सप्ततिश्च **सहस्राणि** नाड्यः मांसपिण्डाकार**हृदय**पुण्डरीकात् हृदयपरिवेष्टनं **पुरीतत**मित्याचक्षते। पुरीतच्छब्देन तदुपलक्षितं शरीर**मभिप्रतिष्ठन्ते**। शरीरकात्स्न्र्यं व्याप्नुवत्यः अश्वत्थपर्णराजय इव बहिर्मुखाः प्रवृत्ता इत्यर्थः। तत्रान्तः-

करणस्थानं हृदयम्। तत्रत्यान्तःकरणतन्त्राणि बाह्यकरणानि नाडीभिः प्रसारयति। विज्ञानात्मा जाग्रत्काले व्याप्नोति स्वप्नादावनुसंकुचति। विज्ञानमयस्वापस्तु जाग्रत्स्वप्नव्यापृतिग्रासः। अत एव न हि सुषुप्तिकाले करणग्रामविशिष्टशरीरसंबन्धोऽस्ति। तथा च वक्ष्यति—"तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति" इति। तथापि **ताभिः** नाडीभिः **प्रत्यवसृप्य** व्याप्य **पुरीतति शेते**। तप्तलोहपिण्डमग्निवत् व्याप्य शरीर एव वर्तते। स्वापावस्थेयं सर्वसंसारदोषास्पृष्टेत्यत्र दृष्टान्तः—**स यथा कुमारोऽ**त्यन्तबालो **वा**त्यन्तवश्यप्रकृतिः **महाराजो वा**त्यन्तपरिपक्वविद्याविनयसंपन्न**महाब्राह्मणो वा**तिशयेन दुःखजातं हन्ती**त्यतिघ्नीमानन्दस्या**वस्था सुखावस्थातां प्राप्य **गत्वा शयीता**वतिष्ठेत। एषां कुमारादीनां स्वभावावस्थानिष्पन्नसुखं लोकप्रसिद्धम्। तस्य प्रसिद्धत्वात् दृष्टान्तत्वेनोपादीयते तत्र विशेषाभावात्। सति हि विशेषे दृष्टान्तदार्ष्टान्तिकभेदः स्यात्। तथापि दृष्टान्तत्वेन स्वापः प्रणीयते। **एवमेवैष** विज्ञानमयः—एतच्छब्दः क्रियाविशेषणार्थः—**एत**च्छयनं **शेते** स्वापकालेऽयं सर्वसंसारविरलस्वाभाविकात्मनि वर्तते। एतेन क्व एष तदाभूत्? इति प्रश्नस्य प्रतिवचनमुक्तम्। तेन विज्ञानमयस्य सङ्घातास्पृष्टत्वेन स्वभावतो विशुद्धत्वं स्वगतहेयांशापाये ब्रह्ममात्रत्वं चोक्तं भवति॥ १९॥

तस्य गतागतकथनम्

स यथा ऊर्णनाभिस्तन्तुना उच्चरेत् यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि व्युच्चरन्ति तस्योपनिषत् सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्॥ २०॥

कुत एतदागात्? इति प्रश्नस्यापाकरणार्थं खण्डिकारभ्यते—**स यथे**ति। यो यस्मिन् ग्रामे नगरे वा भवति सोऽन्यत्र गच्छन् ग्रामात् नगराद्वा

निर्गच्छति नान्यतः। तथा सति एतावानेवास्तु प्रश्नः क्व एष तदाभूत्? इति। यत्राभूत् तत एवागमनं सिद्धं नान्यतः। कुत एतत् आगात्? इति प्रश्नो निरर्थक एवेति चेन्न; स्वात्मनो निष्क्रियत्वात्। तथापि द्वितीयप्रश्नस्यार्थान्तरं वक्तव्यमिति चेन्न; अर्थान्तरानुपपत्तेः। अपादानार्थता स्यादिति चेन्न; पुनरुक्ततापत्तेः। कुत एतदागात्? इति निमित्तार्थता स्यादिति चेन्न; प्रतिवचनवैरूप्यात्। किं तत् प्रतिवचनम्? आत्मनः सकाशात् जगतो महाग्निविस्फुलिंगादिवत् उत्पत्तिः प्रतिवचनेऽवगम्यते। न ह्यग्निः विस्फुलिङ्गविद्रवणे निमित्तम्। सोऽयं विज्ञानमय आत्मा अपादानमेव। न हि निमित्तार्थता शक्यते वर्णयितुम्। अपादानपक्षेऽपि पुनरुक्तता स्यादिति चेन्न; क्व एष तदाभूत्? कुत एतदागात्? इति प्रश्नाभ्यामात्मनि क्रियाकारकफलापोहस्य विवक्षितत्वात्। अत्रोपन्यस्तौ हि विद्याविद्याविषयौ। तत्र "आत्मेत्येवोपासीत", "आत्मानमेवावेदहं ब्रह्मास्मि" इति विद्याविषयः। पाङ्क्तं कर्म तत्फलं चाविद्याविषयः। तत्रानिर्णीतो विद्याविषयस्त्वात्मा। तन्निर्णयाय खलु "ब्रह्म ते ब्रवाणि", "ज्ञपयिष्यामि" इति च प्रक्रान्तम्। तद्ब्रह्मयाथात्म्यं स्वातिरिक्तक्रियाकारकफलापह्नवसिद्धनिष्प्रतियोगिकाद्वैतं हि विवक्षितम्। अतस्तदनुरूपेण श्रुत्या प्रश्नावुत्थाप्येते क्व एष तदाभूत्? कुत एतदागात्? इति। यत्र किंचित् भवति तदधिकरणम्। यत् भवति तदधिकर्तव्यम्। लोके तावत् तयोर्भेदः दृष्टः। तथा यत आगच्छति तदपादानम्। य आगच्छति स कर्ता। तस्मादन्यो दृष्टः। तथात्मान्यस्मिन् अन्यवत् क्वाप्यभूत्। अन्यस्मादन्यवत् कुतश्चिदागात्। एवं हि लोकबुद्धिः सा प्रतिवचनेन निराकर्तव्येति नायमात्मान्योऽन्यत्राभूत्। अन्यो वान्यस्मादागतः। किं तर्हि स्वात्मन्येवाभूत्? "स्वात्मानमेवापीतो भवति", "सता सोम्य! तदा संपन्नो भवति", "पर आत्मनि संप्रतिष्ठितः" इति श्रुत्यनुरोधेन न ह्यन्योन्यस्मादागच्छतीत्येतदर्थं श्रुतिरेव प्रकटयति। अस्मादात्मन इति स्वातिरिक्तवस्त्वन्तराभावात्। वस्त्वन्तरं प्राणादीति चेन्न? प्राणादेः तन्निष्पन्नत्वात्। तत् कथम्? इत्यत्रायं दृष्टान्तः—**स यथा लोके ऊर्णनाभिः**

लूताकीटः एक एव सन् स्वाविभक्ततन्तुना **उच्चरेत्** उद्गच्छेत्। **न** ह्यस्योद्गमने स्वातिरिक्तकारकान्तरमस्ति। **यथा** एकस्मा**दग्नेः क्षुद्रा विस्फुलिङ्गाः** अग्न्यवयवा **व्युच्चरन्ति**। कारकभेदाभावेऽपि प्रवृत्तिं यथेमौ दृष्टान्तौ प्रदर्शयतः प्रवृत्तेः प्राक् एकत्वस्वाभाविकत्वात् **एवमेव अस्मादात्मनो** विज्ञानमयस्य प्रबोधात् प्राक् स्वरूपम्। तस्मात् **सर्वे प्राणा** वागादयः **सर्वे लोकाः** सर्वाणि कर्मफलानि **सर्वे** प्राणलोकाधिष्ठातारो **देवाः सर्वाणि** ब्रह्मादिस्तम्बपर्यन्तानि **भूतानि** प्राणिजातानि **व्युच्चरन्ति**। सर्व एत आत्मान इति पाठान्तरम्। तत्रोपाधिसंपर्कजनितप्रतिबुध्यमानविशेषात्मानो व्युच्चरन्ति। यस्मादात्मन इदं जगत् अग्निविस्फुलिंगवत् व्युच्चरति सृष्टिकाले संभवति स्थितिकाले यदात्मना वर्तते पुनः प्रलयकाले जलबुद्बुदवत् यस्मिन्नेव लीयते सोऽयमात्मा प्रपञ्चारोपापवादाधिकरणतया प्रसिद्धः। **तस्या**त्मनो ब्रह्मण उप समीपं नयतीति **उपनिषत्**। अभिधायकः शब्द उपनिषदित्युच्यते। शास्त्रप्रामाण्यात् उपनिषच्छब्देन ब्रह्मविद्यावसीयते। तत्सिद्धे ग्रन्थपाठतदर्थविचारणपूर्वकत्वात्। तद्विद्यावेद्यं ब्रह्म कीदृशं? इत्यत आह—**सत्यस्य सत्यमिति**। प्राथमिकसत्यपदेन व्यावहारिकत्वादिसत्यतोच्यते। द्वितीयसत्यपदेन स्वातिरिक्तकलना अस्ति नास्तीति विभ्रमापह्नवसिद्धं सन्मात्रमुच्यते। एतदर्थस्य दुर्विज्ञेयतया श्रुतिरेवं व्याचष्टे—**प्राणा वै सत्यं तेषामेष सत्यमिति**। **प्राणा** इति प्राणशब्दोपलक्षिताविद्यापदतत्कार्यं स्वाज्ञदृष्ट्या **सत्य**मुच्यते। स्वज्ञदृष्ट्या **यस्तेषा**मारोपापवादाधिकरणत्वेनावशिष्यते स **एष** पारमार्थिक**सत्यम्**। परमार्थदृष्ट्या तु स्वाधेयसामान्यस्य स्वाविद्याविकल्पितत्वेन कारणतुल्यत्वात्। अधिष्ठेयाभावे निरधिष्ठानं निष्प्रतियोगिकसन्मात्रमेवावशिष्यत इत्यर्थः। "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं जिघ्रेत् तत् केन कं पश्येत्" इत्यादिस्वातिरिक्तवस्तुदर्शनाद्यसंभवश्रुतेः ॥ २० ॥

**इति प्रथमं ब्राह्मणम्**

---

# द्वितीयं शिशुब्राह्मणम्

## मध्यमप्राणस्य शिशुत्वम्

योह वै शिशुꣳ साधानꣳ सप्रत्याधानꣳ सस्थूणꣳ सदामं वेद सप्त ह द्विषतो भ्रातृव्यानवरुणद्धि अयं वाव शिशुर्योऽयं मध्यमः प्राणस्तस्येदमेवाधानं इदं प्रत्याधानं प्राणः स्थूणान्नं दाम ॥ १ ॥

"ब्रह्म ज्ञपयिष्यामि" इति प्रस्तुतम्। तत्र यस्मात् स्वातिरिक्तं जगत् जन्मस्थितिभङ्गं भजति तत् ब्रह्म "सत्यस्य सत्यं" इत्युक्तम्। तद्वृत्त्यर्थं "प्राणा वै सत्यं तेषामेष सत्यं" इत्यभिहितम्। तत्र प्राथमिकसत्यस्थानीयप्राणाः पञ्चीकृतापञ्चीकृतमूर्तामूर्तात्मकपञ्चमहाभूतानि तत्कार्यानन्तकोटिब्रह्माण्डानि सत्कार्याणीति कृत्वा सत्यमुच्यते। तेषां कार्यकरणात्मकभूतानां सत्यत्वनिर्दिधारयिषया ब्राह्मणद्वयमारभ्यते—**यो ह वा** इत्यादिना। "प्राणा वै सत्यं" इत्यत्र—के ते? कियन्तः प्राणाः? प्राणविषया उपनिषदः काः? इति ब्रह्मोपनिषत्प्रसङ्गेन पथिगततृणकूपारामाद्यवधारणवत् तेषां स्वरूपमवधारयितुं **यो ह वै शिशुं साधानं सप्रत्याधानं सस्थूणं सदामं वेद** तस्येदं फलम्। किं तत्? **सप्त** सप्तसंख्याकान् **द्विषतो** विद्वेषकान्—द्विषन्तोऽद्विषन्तश्चेति भ्रातृव्या द्विविधाः। तत्र द्विषन्तो ये भ्रातृव्याः तान् द्विषतो **भ्रातृव्यानवरुणद्धि**। सप्त वै शीर्षण्याः प्राणाः विषयोपलब्धिद्वाराणि। तत्र सहजत्वात् विषयरागा हि भ्रातृव्याः। ते ह्यस्य विज्ञानात्मनः स्वात्मस्थां दृष्टिं विषयविषयां कुर्वन्ति। अतस्तेन हि ते द्वेष्टारो भ्रातृव्याः प्रत्यग्भावप्रतिकूलत्वात्। तथा च श्रुतिः—

पराञ्चि खानि व्यतृणत् स्वयंभूः
तस्मात् पराङ् पश्यति नान्तरात्मन्।

इति। तत्र यः शिश्वादीन् वेद तद्याथात्म्यमवधारयति स एतान् भ्रातृव्यान् पराग्भावारूढानवरुणद्धि विनाशयतीत्येतत् एवं फलश्रवणेनाभिभूतायाह— **अयमिति। अयं वाव शिशुः योऽयं मध्यमः प्राणः** लिङ्गात्मनः शरीरमध्यपातित्वात्। यः पञ्चधा शरीरमाविष्टः यस्तु "बृहन् पाण्डरवासः सोम राजन्" इत्युक्तः यस्मिन् वाङ्मनःप्रभृतीनि करणानि विषक्तानि पड्वीशशंकुनिदर्शनात् स एष शिशुरिव शिशुः विषयेष्वितरकरणवत् अपटुत्वात् शिशुं साधानमित्युक्तम्। किं पुनर्वत्सस्थानीयस्य करणात्मन आधानम्? **तस्य इदमेव शरीरमाधानं** कार्यजाताधानात्। तस्य हि शिशोः प्राणस्येदं शरीरमधिष्ठानम्। तत्र हि करणान्यधिष्ठितानि दृश्यन्ते। न तु प्राणमात्रे विषक्तानि। तथेदमजातशत्रुणा दर्शितम्। करणेषूपसंहृतेषु विज्ञानमयो नोपलभ्यते। तद्विपर्यय उपलभ्यते। तथा च दर्शितम्। पाणिपेषप्रतिबोधनेनेदं शिरःप्रदेशविशेषेषु प्रत्याधीयत इति **प्रत्याधानम्। प्राणः स्थूणा** अन्नपानजनिता शक्तिः। प्राणो बलमिति पर्यायः। प्राणस्य बलावष्टम्भात् यथावत् सस्थूणावष्टम्भः। शरीरपक्षपाती वायुः स्थूणेति केचित्। **अन्नं दाम**। अन्नं हि त्रेधा परिणमते मूत्रं पुरीषं च। तत्स्थूलपरिणामः। मांसलोहितादि मध्यमपरिणामः। अमृतमूर्जमणिष्ठपरिणामः। इत्थं स्वकार्यं शरीरं सप्तधातुकमुपचिनोति शरीरस्यान्नयोनित्वात्। तदलाभे क्षीयते पतति च। तद्धि नाभेरूर्ध्वं हृदयदेशमासाद्य हृदयात् विप्रसृतद्वासप्ततिनाडीसहस्रेषु अनुप्रविश्य यत् तत्कारणसंघातरूपं लिङ्गं शिशुसंज्ञकं तस्य बलवृद्धिं कुर्वत् शरीरस्थितिकारणं भवति। यत एवमतः स्थूणाख्यमन्नं सदामवत् पाशवत् स्थूलसूक्ष्मशरीरनिबन्धनं भवतीत्यर्थः॥ १॥

तस्य शिशोः प्रत्याधानदर्शनम्

तमेताः सप्ताक्षितय उपतिष्ठन्ते तद्या इमा अक्षन् लोहिन्यो राजयस्ताभिरेनꣳ रुद्रोऽन्वायत्तोऽथ या अक्षन्नापस्ताभिः पर्जन्यो

या कनीनिका तयादित्यो यत्कृष्णं तेनाग्निर्यच्छुक्लं तेनेन्द्रोऽधरया एनं वर्तन्या पृथिवी अन्वायत्ता द्यौरुत्तरया नास्यान्नं क्षीयते य एवं वेद ॥ २ ॥

इदानीं तस्यैव शिशोः प्रत्याधानदर्शनमुच्यते—**तमिति**। चक्षुषि ऊढत्वेन करणात्मकं **तं** शिशुं **एता** वक्ष्यमाणाः **सप्त** सप्तसंख्याका अक्षितिहेतुत्वात् **अक्षितयो ह्युपतिष्ठन्ते**। तिष्ठतेरात्मनेपदं न विरुद्धं देवतावाचकानां मन्त्रस्थानीयानां करणत्वात्। काः ता अक्षितयः? इत्यत्र—**तत्** तत्र **या इमाः** प्रसिद्धाः **अक्षन्** अक्षिणि **लोहिन्यो** लोहिता **राजयो** रेखाः **ताभिः** द्वारभूताभि**रेनं** मध्यमं प्राणं **रुद्रोऽन्वायत्तो**ऽनुगतः। **अथ या अक्षन्** अक्षिणि धूमादिसंयोगेऽभिव्यज्यमाना **आपः ताभिः पर्जन्योऽन्वायत्तो**ऽनुगतः। स चान्नभूतोऽक्षितिः प्राणस्य। "पर्जन्ये वर्षति आनन्दिनः प्रजा भवन्ति" इति श्रुतेः। यादृक्छक्तिः **कनीनिका तया** कनीनिकया द्वारभूतया-यमा**दित्यो** मध्यमं प्राणमुपतिष्ठते। **यत्** चक्षुषि **कृष्णं तेनैनमग्निरु**पतिष्ठते। चक्षुषि **यत् शुक्लं तेनेन्द्रोऽधरया वर्तन्या** पक्ष्मणा **पृथिव्यन्वायत्ता** तयोर-धरत्वसामान्यात्। **द्यौरुत्तरया** ऊर्ध्वत्वसामान्यात्। एताः सप्तान्नभूताः प्राणं सन्तमुपतिष्ठन्ते। इत्येवं **यो वेद** तस्यैतत् फलं **नास्यान्नं क्षीयते** ॥ २ ॥

शिरसः चमसत्वकथनम्

तदेष श्लोको भवति—

अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन् यशो निहितं विश्वरूपम्।
तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदाना ॥

इति। अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति इदं तच्छिर एष ह्यर्वाग्बिलश्च-मस ऊर्ध्वबुध्नः तस्मिन् यशो निहितं विश्वरूपमिति प्राणा वै यशो

**विश्वरूपं प्राणानेतदाह तस्यासत ऋषयः सप्त तीर इति प्राणा वा ऋषयः प्राणानेतदाह वागष्टमी ब्रह्मणा संविदानेति वाक् हि अष्टमी ब्रह्मणा संवित्ते ॥ ३ ॥**

एवमुक्तार्थे मन्त्रो भवतीत्याह—**तदिति**। **तत्** तत्र एतस्मिन्नर्थे **एष श्लोको** मन्त्रो **भवति—अर्वाग्बिलश्चमस** इत्यादिः। तत्र श्रुतिः मन्त्रार्थ-माचष्टे—**अर्वाग्बिलश्चमस ऊर्ध्वबुध्न इति**। कः पुनरसौ? इत्यत्र—**इदं तत् शिरः**। चमसाकारं हि तत्। कथं? **एष ह्यर्वाग्बिलः** मुखस्य बिलरूपत्वात्। शिरसो बुध्नाकारत्वात् **ऊर्ध्वबुध्नः**। **तस्मिन् यशो निहितं विश्वरूपमिति**। यथा चमसे सोमः एतस्मिन् शिरसि विश्वरूपं नानारूपं यशो निहितं स्थितं भवति। किं तत् यशः? **प्राणा वै यशो विश्वरूपं** प्राणाः श्रोत्रादयो वायवश्च मरुतः सप्तधा तेषु प्रसृताः। तान् यश इत्याह मन्त्रः। तस्य शब्दादिख्यापनहेतुत्वात्। **तस्यासते ऋषयः सप्त तीरे** इति परिस्पन्दनात्मकाः **प्राणाः** त एव **ऋषयः**। तान् **प्राणानेतदाह** मन्त्रः— **वागष्टमी ब्रह्मणा संविदाना इति**। ब्रह्मणा सादनं कुर्वन्ती अष्टमी भवति। तत्र हेतुः **वाक् ह्यष्टमी ब्रह्मणा संवित्त** इति ॥ ३ ॥

चमसतीरस्थऋषिकथनम्

**इमावेव गोतमभरद्वाजौ अयमेव गोतमोऽयं भरद्वाज इमावेव विश्वामित्रजमदग्नी अयमेव विश्वामित्रोऽयं जमदग्निः इमावेव वसिष्ठकश्यपौ अयमेव वसिष्ठोऽयं कश्यपो वागेवात्त्रिर्वाचा ह्यन्नमद्यते अत्तिर्ह वै नाम एतत् यदत्त्रिरिति सर्वस्यात्ता भवति सर्वमस्यान्नं भवति सर्वमस्यान्नं भवति य एवं वेद ॥ ४ ॥**

के तस्य चमसस्य तीर आसते ऋषयः? इत्यत आह—**इमाविति**। **इमावेव गोतमभरद्वाजौ** दक्षिणोत्तरकर्णावयवौ। **अयमेव गोतमः**। **अयं**

**भरद्वाजः** । विपर्ययेण वा । **इमावेव विश्वामित्रजमदग्नी** दक्षिणोत्तरचक्षुषी । दक्षिणं **विश्वामित्रः** उत्तरं **जमदग्निः** विपर्ययेण वा । **इमावेव वसिष्ठकश्यपौ** । दक्षिणनासिकापुटो **वसिष्ठः** । उत्तरः **कश्यपः** । पूर्ववदनक्रियायोगात् **वागेव अत्त्रिः** सप्तमः । **वाचा ह्यन्नमद्यते** । तस्मादत्तिर्ह **वै** प्रसिद्धं **नाम एतदत्तृ**-त्वात् । अत्तीति तदत्तिरेव सत् **अत्त्रिरुच्यते** । परोक्षेण **सर्वस्य** एतस्यान्न-जातस्य प्राणोऽत्तेति निर्वचनज्ञानात् **अत्ता भवति** । न ह्यन्नेनायमद्यते । एतदुक्तं भवति—**य एवमेतत्** यथोक्तं प्राणयाथात्म्यं **वेद सर्वमस्यान्नं भवति** । स मध्यमः प्राणो भूत्वा आधानप्रत्याधानगतो भोक्तैव भवति न कदापि भोज्यं भवति इति भोज्यात् व्यावर्तत इत्यर्थः ॥ ४ ॥

**इति द्वितीयं ब्राह्मणम्**

---

## तृतीयं मूर्तामूर्तब्राह्मणम्

ब्रह्मणो मूर्तामूर्तरूपकथनम्

**द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यच्च ॥ १ ॥**

पुरा "प्राणा वै सत्यं" इत्युक्तम् । ब्रह्मोपनिषत्प्रसङ्गेन याः प्राणा-नामुपनिषदो व्याख्याताः त एव हि प्राणाः किमात्मकाः? कथं वा तेषां सत्यत्वं? इत्यत्र "अथात आदेशः" इति वक्ष्यमाणश्रुतिगतचतुर्नेतिशब्दतः स्वारोपितप्राणोपलक्षिताविद्याण्डस्थूलाद्यंशचतुष्टयप्रतिषेधद्वारेण हि ब्रह्मणो या-थात्म्यं निर्दिधारयिषितम् । स्वापनोदितव्यस्वातिरिक्तेयत्तापरिज्ञानं विना न हि तदपह्नोतुं शक्यते । न ह्यसतः प्रतिषेधविषयत्वं संभवति । यद्यत् सद्विकल्पितं तत्तत् सदेवेति कृत्वा कार्यकारणात्मकपञ्चीकृतापञ्चीकृतमहाभूतानामियत्तापरि-

ज्ञानार्थं मूर्तामूर्तब्राह्मणमारभ्यते—**द्वे** वेति। कार्यकारणभूतभौतिकसंबन्धात् द्विरूपं ब्रह्म। मूर्तामूर्तप्रपञ्चयोगायोगाभ्यां तन्मर्त्यामृतस्वभावं क्रियाकारकफल-भेदभिन्नसर्वव्यवहारास्पदं तद्गतविशेषापाये निर्विशेषं ब्रह्मावशिष्यते। तत्र स्वातिरिक्तकलनावच्छिन्नशबल**ब्रह्मणो द्वे वाव रूपे**। वावशब्दो द्वे एवेत्यव-धारणार्थः। के ते द्वे? **मूर्तं चामूर्तं** चेति। किं तद्विशेषणं? इत्यत्र **मर्त्यं** मरणधर्मि **च**। तद्विपरीत**ममृतं च**। **स्थितं** स्थास्नु परिच्छिन्नम्। **यच्च** व्यापि अपरिच्छिन्नं स्थितविपरीतम्। **सच्च** प्रत्यक्षं **त्यच्च** परोक्षम्। एवं चतुर्विशेषणविशिष्टं मूर्तं चामूर्तं चेत्यर्थः ॥ १ ॥

मूर्तस्वरूपकथनम्

**तदेतन्मूर्तं यदन्यद्वायोश्चान्तरिक्षाच्च तन्मर्त्यमेतत् स्थितमेतत् सत् तस्यैतस्य मूर्तस्य एतस्य मर्त्यस्य एतस्य स्थितस्य एतस्य सत एष रसो य एष तपति सतो ह्येष रसः ॥ २ ॥**

तत्र कानि मूर्तामूर्तविशेषणानि? इत्यत आह—**तदेत**दिति। **तदेतत्** इतरेतरानुप्रविष्टावयवं **मूर्तम्**। किं तत्? **वायोश्चान्तरिक्षाच्च** भूतद्वयात् **यदन्यत्** पृथिव्यादिभूतत्रय**मेतन्मर्त्यं** मरणधर्मि। कस्मात्? **स्थितमेतत्** अर्थान्तर-संबन्धात् परिच्छिन्नम्। यत् विशेष्यमाणासाधारणधर्मवत् तत् परिच्छिन्नत्वात् मूर्तम्। मूर्तत्वात् मर्त्यम्। मर्त्यत्वात् स्थितम्। स्थितत्वात् **सत्**। अन्यो-न्याव्यभिचारात् चतुर्णां धर्माणां विशेषणविशेष्यभावो हेतुहेतुमद्भावश्च। एवं विशेषणचतुष्टयविशिष्टभूतत्रयं मूर्तं ब्रह्मणो रूपमित्यर्थः। चतुर्णामेकस्मिन् गृहीते इतरत् गृहीतमेवेत्याह—**तस्ये**ति। **तस्यैतस्य मूर्तस्य एतस्य मर्त्यस्य एतस्य स्थितस्य एतस्य सतः** चतुष्टयविशेषणविशिष्टस्य भूतत्रयस्य **एष रसः** सार इत्यर्थः। भूतत्रयसारिष्ठः सविता। यतः **य एष** मण्डलस्थः सविता **तपति**। **सतो** भूतत्रयस्य **एष हि रसः**। मूर्तो हि सविताधिदैविकः सारिष्ठश्चेत्यर्थः ॥ २ ॥

अमूर्तस्वरूपनिरूपणम्

अथामूर्तं वायुश्चान्तरिक्षं च एतदमृतमेतत् यत् एतत् त्यत् तस्य एतस्यामूर्तस्य एतस्यामृतस्य एतस्य यत एतस्य त्यस्य एष रसो य एष एतस्मिन् मण्डले पुरुषस्तस्य ह्येष रस इत्यधिदैवतम् ॥

अमूर्तस्वरूपमाह— अथेति। **अथामूर्तं वायुश्चान्तरिक्षं च** भूतद्वयम्। यत् परिशेषितं **तदेतदमृतम्**। अमूर्तत्वात् अस्थितं केनाप्यसंसर्गात् अमृतम-मरणधर्मि। **एतत्** स्थितविपरीतं अपरिच्छिन्नत्वात्। यत **एतदन्याविभज्य-**मानविशेषणं अतः त्यत्। त्यदिति परोक्षाभिधानार्हमेव। पूर्ववत् **तस्यैतस्या-मूर्तस्य एतस्यामृतस्य एतस्य यत एतस्य त्यस्य** चतुर्विशेषणविशिष्टो मूर्तस्य **एष रसः**। कोऽसौ? इत्यत्र **य एष एतस्मिन् मण्डले पुरुषो** हिरण्यगर्भः प्राणः यः स **एषो**ऽमूर्तस्य भूतद्वयस्य **रसः** सारिष्ठः। **इत्यधिदैवत-**मित्युक्तोपसंहारार्थः॥ ३ ॥

मूर्तामूर्तविवेकपूर्वकाध्यात्मदर्शनम्

अथाध्यात्ममिदमेव मूर्तं यदन्यत् प्राणाच्च यश्चायमन्तरात्मन्नाकाशः एतन्मर्त्यमेतत् स्थितमेतत् सत् तस्यैतस्य मूर्तस्य एतस्य मर्त्यस्य एतस्य स्थितस्य एतस्य सत एष रसो यच्चक्षुः सतो ह्येष रसः ॥ ४ ॥

अधुना मूर्तामूर्तविवेकपूर्वकमध्यात्मदर्शनमुच्यते—अथेति। **अथाध्या-त्मम्**। किं तत्? **इदमेव मूर्तं यदन्यत् प्राणाच्च** वायोः **यश्चायमन्तरात्मन्** आत्म**न्याकाशः** शरीरस्थश्च यः प्राणः एतत् द्वयं वर्जयित्वा यदेतच्छरीरा-रम्भकभूतत्रयं **एतन्मर्त्य**मित्यादि समानमन्यत् पूर्वेण। **एतस्य सत एष रसो यच्चक्षुः** इत्याध्यात्मिकस्य कार्यत्वेन शरीरारम्भकस्य एष रसः सारः। तद्रसेन

हि सारवदिदं शरीरम्। "तेजो रसो निरवर्तताग्निः" इति लिङ्गात्। तैजसं हि चक्षुः। एतत्सारमाध्यात्मिकं भूतत्रयं **सतो ह्येष रस** इति भूतत्रयसारत्वे हेत्वर्थः ॥ ४ ॥

### अमूर्तस्वरूपम्

अथामूर्तं प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमृतमेतद्यत् एतत् त्यं तस्य एतस्यामूर्तस्य एतस्यामृतस्य एतस्य यत एतस्य त्यस्य एष रसो योऽयं दक्षिणेऽक्षन् पुरुषः त्यस्य ह्येष रसः ॥ ५ ॥

अमूर्तमुच्यते—**अथे**ति। **अथा**धुना यत् परिशेषितं भूतद्वयं **प्राणश्च यश्चायमन्तरात्मन्नाकाश एतदमूर्तम्**। अन्यत् पूर्ववत्। **एतस्यैष रसः** सारः **योऽयं दक्षिणेऽक्षन् पुरुषः** दक्षिणेऽक्षन्निति विशेषग्रहणं शास्त्रप्रत्यक्षं तत्रैवोपलब्धिपाटवदर्शनात्। **त्यस्य ह्येष रस** इति विशेषतः पूर्ववदग्रहणात् अमूर्तसारत्व एव हेत्वर्थः। ब्रह्मोपाधिभूतकार्यकारणात्मकाध्यात्माधिदैवताभावमापन्नसत्त्यच्छब्दवाच्यमूर्तामूर्तविभागो व्याख्यातः ॥ ५ ॥

### मूर्तामूर्तकल्पनापवादसिद्धार्थप्रकटनम्

तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपो यथाग्न्यर्चिर्यथा पुण्डरीकं यथासकृद्विद्युत्तँ सकृद्विद्युत्तेव ह वा अस्य श्रीर्भवति य एवं वेद अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति अथ नामधेयँ सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ॥ ६ ॥

मूर्तामूर्तकल्पनापवादसिद्धमर्थं प्रकटयति—**तस्ये**ति। अथेदानीं **तस्य हैतस्य पुरुषस्य** यन्मूर्तामूर्तवासनासंयोगजं स्वाविद्येन्द्रजालगन्धर्वनगरमृग-

तृष्णिकोपमं **रूप**मुच्यत इत्यर्थः। न हि तत् विज्ञानात्मनो रूपम्। विज्ञानमयस्य स्वातिरिक्तासंभवप्रबोधतो ब्रह्ममात्रत्वात्। नानाविधवासनानुयोगात् नानारूपाण्यात्तवत् भातीत्यत्र दृष्टान्त उच्यते—**यथे**ति। **यथा** लोके **माहारजनं** हरिद्रादियोगात् **वासो** वस्त्रं हरिद्रादिवत् भाति एवं स्त्र्यादिविषयसंयोगात् तादृशवासनानुरूपं रञ्जनाकारमुत्पद्यते। **यथा** च लोके **पाण्ड्वाविकम**विदेहयोगतः पाण्डरं भवति। **यथा** लोके **इन्द्रगोपो**ऽत्यन्तरक्तो भवति। एवमस्य क्वचित् विशेषापेक्षया रागस्य तारतम्यम्। क्वचित् पुरुषचित्तवृत्त्यपेक्षया। **यथा** लोके**ऽग्न्यर्चिः** भास्वरं भवति तथायमपि वासनानुरूपतां भजति। **यथा पुण्डरीकं** शुक्लं **यथा सकृद्विद्युत्तं** यथा च लोके सकृद्विद्योतनं सर्वतः प्रकाशकं भवति तथा ज्ञानप्रकाशकवृद्ध्यपेक्षया कस्यचित् वासनारूपं जायते। न च तेषां वासनारूपाणामियत्तेति परिच्छेदो विद्यते। तासामसंख्येयत्वात्। तथा च वक्ष्यति "तद्यदेतत् इदंमयोऽदोमयः" इति। यथा माहारजनं वास इत्यादयः प्रकारप्रदर्शनार्थाः **एवं** हिरण्यगर्भस्य वासनारूपं **यो वेद तस्य सकृद्विद्युत्ता इवास्य श्रीः** ख्याति**र्भवति**। ह वै इत्यवधारणार्थौ। "सत्यस्य सत्यं" इत्यत्र प्राथमिकसत्यस्वरूपं चतुरंशाढ्यस्वाविद्यापदतत्कार्यत्वेनाभिधाय एतत्सर्वापह्नवसिद्धद्वितीयसत्ययाथात्म्यं वक्तुं ब्राह्मणमारभ्यते—**अथे**ति। **अथ** प्राथमिकसत्यस्वरूपनिर्देशानन्तरं यत् द्वितीयसत्यं निष्प्रतियोगिकसन्मात्रतयावशिष्यते तन्निर्दिधारयिषया तदावृतिरूपस्थूलादिचतुरंशाढ्यस्वाविद्यापदतत्कार्यगतविशेषांशापह्नवप्रबोधाय **अयमादेशो** निर्देशः। कः पुनरसौ? इत्यत्र ब्रह्म तावत् निष्प्रतियोगिकनिर्विशेषम्। तदवगतेः सर्वविशेषापह्नवबोधपूर्वकत्वात्। स्वातिरिक्तसामान्यापह्नवे न हि तत् येन केन वा बोधयितुमवगन्तुं शक्यम्। केन प्रकारेण तस्यादेशो भवेत्? इत्यत्र स्वाज्ञदृष्ट्यारोपितनामरूपजातिगुणक्रियाजुष्टस्थूलादिचतुरंशाढ्याविद्यापदतत्कार्यप्रतिषेधद्वारेण स्वज्ञैः ब्रह्म निर्दिश्यते—"तदेतत् ब्रह्म अपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म" इति। कथं तत्प्रतिषेधः? इत्यत्र **नेति नेती**ति। चतुर्नेतिशब्दतः स्वातिरिक्ताविद्यापदश्चतुरंशान् निह्नुते। तदपह्नवप्रबोधतः स्वाज्ञादिदृष्ट्या स्वातिरिक्ताविद्यापदतत्कार्ये सत्यसति तत्कल-

नान्यत्वे नास्तीति सन्मात्रं ब्रह्मावशिष्यते। एवंप्रकारेण **सत्यस्य सत्यं** यत् परं ब्रह्म तदेव ब्रह्मणो **नामधेयम्**। किं तत्? सत्यस्य सत्यम्। प्राथमिक-सत्यार्थमाह—**प्राणा वै सत्यमिति**। प्राणोपलक्षितस्वाविद्यापदतत्कार्यजातस्य सद्विकल्पितत्वात् सत्यत्वम्। पृथक्सत्तावैरल्यात् वाचारम्भणमात्रत्वं च **तेषामेष सत्यं** इति द्वितीयसत्यशब्दार्थः ॥ ६ ॥

**इति तृतीयं ब्राह्मणम्**

---

## चतुर्थं मैत्रेयीब्राह्मणम्

सर्वप्रत्ययविषयसंन्यासः ब्रह्मविद्यासाधनम्

**मैत्रेयीति होवाच याज्ञवल्क्यः उद्यास्यन् वा अरेऽहम-स्मात् स्थानादस्मि हन्त तेऽनया कात्यायन्यान्तं करवाणीति ॥१॥**

"आत्मानमेवावेदहं ब्रह्मास्मि", "सर्वस्मात् प्रियतमः" इति "अन्योऽसावन्योऽहमस्मि", "त्रयं वा इदं नाम रूपं कर्म च" इति शास्त्रीयविद्याविद्याविषयः पूर्वमेव दर्शितः "द्वया ह" इत्यादिना। स्वाविद्या-विषयात् विरक्तस्य ब्रह्मविद्याधिकारो वर्णितः। यतो जायापुत्रवित्तादिलक्षणं पाङ्क्तं कर्म अविद्याविषयं न ह्यात्माप्तिसाधनं, तत्त्यागपूर्वकं ब्रह्मवेदनं ब्रह्माप्ति-साधनमित्यत्र—

कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते।
तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ इति,
कां गतिं विद्यया याति कां च गच्छति कर्मणा।
संन्यस्याखिलकर्माणि ब्रह्मविद्यां समाश्रय ॥

इति च श्रुतेः स्मृतेश्च। अतः कर्मादिसाधननैरपेक्ष्येण पारिव्राज्यं पुरुषार्थसाधनमिति सर्वसाधनसंन्यासलक्षणं ब्रह्मज्ञानाङ्गत्वेन विधित्स्यते। एतदेवामृतत्वसाधनमिति अवधारणात्। कर्मी सन् याज्ञवल्क्यः प्रवव्राज। कर्मरहितायै मैत्रेय्यै ब्रह्मविद्यां इतरसाधननैरपेक्ष्येण उपदिदेश। "अमृतत्वस्य तु नाशास्ति वित्तेन" इति कर्माधिकारनिमित्तवर्णाश्रमादिप्रत्ययोपमर्दात् सर्वप्रत्ययविषयसंन्यासो ब्रह्मविद्यासाधनमिति संन्यासविधित्सया इयमाख्यायिकारभ्यते—**मैत्रेयीति**। **मैत्रेयि! इति होवाच याज्ञवल्क्यः** स्वभार्यामामन्त्रितवान्। किमर्थं? हे **अरे** मैत्रेयि! **अहमस्मात् स्थानात्** गार्हस्थ्याश्रमात् **उद्यास्यन्** ऊर्ध्वं पारिव्राज्यपदं यास्यन् तत्पदं गन्तुमिच्छन् **अस्मि**। अतः तवानुमतिं प्रार्थयामि "मातरं भार्यामनुमोदयित्वा संन्यसेत्" इति श्रुतेः। किंचान्यत् ते तवानया **कात्यायन्या अन्तं** दाम्पत्यविच्छेदं **करवाणि** युवयोर्विभागं करोमि। एवं काङ्क्षितार्थं दत्वा गमिष्यामीत्यर्थः॥ १॥

याज्ञवल्क्येनामृतत्वसाधनकथनम्

**सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् कथं तेनामृता स्याँ इति नेति होवाच याज्ञवल्क्यो यथैव उपकरणवतां जीवितं तथैव ते जीवितꣳ स्यात् अमृतत्वस्य तु नाशास्ति वित्तेनेति॥ २॥**

सा एवमुक्ताह—सेति। **सा होवाच**। **यन्नु** इति वितर्के। हे **भगोः** भगवन्! **मे ममेयं सर्वा पृथिवी** चतुःसागरपर्यन्ता **वित्तेन पूर्णा स्यात्**। **कथं तेने**त्याक्षेपार्थः प्रश्नार्थो वा। **तेन** पृथिवीवित्तसाध्येन कर्मणा**मृता** किं **स्यां? इति** व्यवहितेन संबन्धः। कथमिति यद्याक्षेपार्थः तदानुमोदनं **नेति होवाच याज्ञवल्क्यः**। प्रश्नार्थश्चेत् प्रतिवचनार्थं नैव स्यात्। तेनामृताहम्। किं तर्हि? **यथैव** लोके धनोप**करणवतां जीवितं तथैव ते जीवितं स्यात्**।

वित्तसाध्येन कर्मणा **अमृतत्वस्य तु नाशास्ति** अमृतावगतेः वित्तादित्याग-पूर्वकत्वात् ॥ २ ॥

मैत्रेय्या अमृतत्वसाधनविद्याप्रार्थनम्

सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां? यदेव भगवान् वेद तदेव मे ब्रूहीति ॥ ३ ॥

एवं श्रुत्वा वित्ताद्याशामुत्सृज्य अमृतत्वसाधनविद्यामेव प्रार्थयति इत्याह—सेति। **सा होवाच मैत्रेयी येन** वित्तेनाहं **नामृता स्यां किमहं तेन** कुर्याम्? **यदेवा**मृतत्वसाधनं **भगवान् वेद तदेव मे** मह्यं **ब्रूहीति** ॥ ३ ॥

याज्ञवल्क्येन उपदेशप्रतिज्ञा

स होवाच याज्ञवल्क्यः प्रिया बतारे नः सती प्रियं भाषसे एह्यास्स्व व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्या-सस्वेति ॥ ४ ॥

एवं जायोक्तितुष्टो मुनिराह—**स** हेति। **स होवाच याज्ञवल्क्यः**। किमिति? **प्रिया** इष्टा **बते**त्यनुकंपयन् इदमाह—हे **अरे** मैत्रेयि! पूर्वमेव प्रिया **सती नो**ऽस्माकमिदानीं मत्प्रियमेव कालोचितं **भाषसे**। अतः त्वमे**हि आस्स्व** उपविश। **ते**ऽमृतत्वसाधनब्रह्मविद्यां **व्याख्यास्यामि**। **व्याचक्षाणस्य** व्याख्यानं कुर्वतो **मे** वाक्यमर्थानुसन्धानपूर्वकं **निदिध्यासस्व** ध्यातुमिच्छ-स्वेत्यर्थः ॥ ४ ॥

अमृतत्वसाधनब्रह्मविद्योपदेशः

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै

कामाय जाया प्रिया भवति आत्मनस्तु कामाय जाया प्रिया भवति न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति आत्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति आत्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवति आत्मनस्तु कामाय ब्रह्म प्रियं भवति न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवति आत्मनस्तु कामाय क्षत्रं प्रियं भवति न वा अरे लोकानां कामाय लोकाः प्रिया भवन्ति आत्मनस्तु कामाय लोकाः प्रिया भवन्ति न वा अरे देवानां कामाय देवाः प्रिया भवन्ति आत्मनस्तु कामाय देवाः प्रिया भवन्ति न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्ति आत्मनस्तु कामाय भूतानि प्रियाणि भवन्ति न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः मैत्रेयि! आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेन इदꣳ सर्वं विदितम् ॥ ५ ॥

जायापतिपुत्रादिभ्यो विरागोत्पादनपूर्वकममृतत्वसाधनब्रह्मविद्यां मुनिराह— **स होवाचेति**। स **होवाच न वा** इति। प्रसिद्धस्मरणार्थो वैशब्दः। कथम्? प्रसिद्धमेवैतल्लोके **पत्युः** भर्तुः **कामाय** प्रयोजनाय जायायाः **पतिः प्रियो न भवति**। किं तर्हि? **स्वात्मनस्तु कामाय** स्वप्रयोजनायैव जायायाः **पतिः प्रियो भवति**। तथा **न वा अरे जायाया** इत्यादि समानमन्यत्। **पुत्रवित्तब्रह्मक्षत्रलोकदेवभूतानि** तद्गतप्रीतिः स्वात्मनिमित्तेत्यर्थः। पुनः **सर्वग्रहणं** तु स्वातिरिक्तसर्वप्रपञ्चगतप्रीतेरात्मनिमित्तत्वेन स्वातिरिक्ता-

नात्मताप्रकटनार्थम्। इदं तावत् लोकप्रसिद्धं "आत्मैव प्रियो नान्यत्" इति। पुरा "तदेतत् प्रेयः" इत्यादि यदुपन्यस्तं तद्वृत्तिस्थानीयमिदं प्रपञ्चितम्। स्वाज्ञदृष्ट्या स्वान्यत्र प्रीतिस्तु गौणी। स्वात्ममात्रप्रीतिर्मुख्या। यस्मादेवं तस्मात् **आत्मा वा अरे** स्वमात्रतया **द्रष्टव्यः**। तस्य निष्प्रतियोगिकत्वेन तद्दर्शने निरुपायत्वमाशंक्याह—**श्रोतव्य** इति। श्रुत्याचार्यमुखतः स्वात्मा स्वातिरिक्तानात्मापह्नवसिद्धात्ममात्रतया **श्रोतव्यः**। तथा श्रुतियुक्तिभ्यां **मन्तव्यः**। तथा **निदिध्यासितव्यः**। एवं श्रवणमनननिदिध्यासनोपायतः स्वात्मा स्वावशेषतया द्रष्टुं शक्यः नान्यथा। स्वात्मन्यध्यस्तब्रह्मक्षत्रवर्णाश्रमविहितक्रियाकारकफलादिविभ्रमनिरसनपूर्वकं **अरे मैत्रेयि**! स्वात्मनो **वा दर्शनेन** तदुपायश्रवणेन **मत्या विज्ञानेन च** यत् स्वाज्ञदशायां इदन्त्वेन सर्वमवगतं इदानीमिदं **सर्वमात्ममात्रमिति विदितं** भवतीत्यत्र—

आत्ममात्रमिदं सर्वं आत्मनोऽन्यन्न किंचन।

इति श्रुतेः ॥ ५ ॥

इदं सर्वमात्ममात्रमिति कथनम्

**ब्रह्म तं परादात् योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादात् योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान् वेद देवास्तं परादुः योऽन्यत्रात्मनो देवान् वेद भूतानि तं परादुः योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद इदं ब्रह्म इदं क्षत्रमिमे लोका इमे देवा इमानि भूतानि इदꣳ सर्वं यदयमात्मा ॥ ६ ॥**

कथं पुनरिदं सर्वमात्ममात्रं? इत्यत आह—**ब्रह्मे**ति। **यः** स्वात्मनो**ऽन्यत्र ब्रह्म** ब्राह्मणजातिं **वेद तं ब्रह्म** ब्राह्मणजातिः मामनात्मदृष्ट्या पश्यतीति **परादात्**

पराकुर्यात् स्वात्मविकल्पितानां निर्विकल्पस्वप्रबोधतो विकल्पापाये स्वात्ममात्रत्वात्। तथा **क्षत्रं** क्षत्रियजातिः। तथा **लोका देवा भूतानि सर्वमिदं ब्रह्मेति** यान्यनुक्रान्तानि तानि सर्वाण्यात्मैव। **यदयमात्मा इदं सर्वम्**। यथा घटशरावादिकः स्वोत्पत्तिस्थितिप्रलयेष्वपि स्वकारणीभूतमृदतिरिक्तं न भवति तथा स्वातिरिक्तानात्मप्रपञ्चस्वोत्पत्तिस्थितिप्रलयेष्वपि स्वात्मातिरिक्तं न भवतीत्यत्र—

गृह्यमाणे घटे यद्वत् मृत्तिका भाति वै बलात्।
वीक्ष्यमाणे प्रपञ्चे तु ब्रह्मैवाभाति भासुरम्॥

इति श्रुतेः॥ ६॥

सर्वं चिन्मात्रमेवेत्यत्र दृष्टान्तजातम्

स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः॥ ७॥ स यथा शङ्खस्य ध्मायमानस्य न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः॥ ८॥ स यथा वीणायै वाद्यमानायै न बाह्यान् शब्दान् शक्नुयात् ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः॥ ९॥

कथं पुनः "इदं सर्वं यदयमात्मा", "चिन्मात्रान्न परं किंचित्" इति श्रुत्या सर्वं चिन्मात्रमेव? इत्यत्र सर्वलोकप्रत्यक्षतया दृष्टान्तजातमाह—**स यथे**-त्यादिना। **स यथा** लोके **दुन्दुभेः हन्यमानस्य** ताड्यमानस्य **न** हि **बाह्यान्** बहिर्भूतान् **शब्दान्** दुन्दुभिशब्दविशेषान् **ग्रहणाय** ग्रहीतुं **शक्नुयात्**। **दुन्दुभेस्तु** शब्द**ग्रहणेन** दुन्दुभिशब्दा एत इति गृहीता भवन्ति। दुन्दुभि-

शब्दव्यतिरेकेणाभावात् । तथा दुन्दुभेराघातो **दुन्दुभ्याघातः** । तस्य दुन्दुभिशब्दसामान्यस्य ग्रहणेन तद्गतविशेषा गृहीता भवन्ति । न हि त एव निर्भिद्य ग्रहीतुं शक्यन्ते । तथा जाग्रदाद्यवस्थात्रयेऽपि प्रज्ञानमेव दृश्यते प्रज्ञानातिरिक्तस्य मृग्यत्वात् । किञ्च—**स यथा शङ्खस्य, स यथा वीणायै** इति । **स यथा शङ्खस्य ध्मायमानस्य** भङ्कारशब्देन पूर्यमाणस्य, तथा **वीणायै वाद्यमानायै** वीणाया वाद्यमानाया **न बाह्यान् शब्दान् शक्नुयाद्** इत्यादि पूर्ववत् । एवमनेकदृष्टान्तोपपादनं दार्ष्टान्तिकदार्ढ्यार्थम् ॥ ७–९ ॥

प्रज्ञानविकल्पितभावानां प्रज्ञानमात्रत्वम्

स यथा आर्द्रैधाग्नेरभ्याहितात् पृथग्धूमा विनिश्चरन्ति एवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतत् यत् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानि ॥ १० ॥

यथा दुन्दुभिशङ्खादिशब्दानां शब्दमात्रं सामान्यं एवं प्रज्ञानविकल्पितभावानां स्वाज्ञदृष्ट्या जन्मस्थितिभङ्गवतामपि स्वज्ञदृष्ट्या प्रज्ञानमात्रमिति प्रकटयति—**स यथेति** । **स यथार्द्रै**रेधोभिः इद्धोऽग्निः **आर्द्रैधाग्निः** । तस्मादग्ने**रभ्याहितात् पृथक् धूम**विस्फुलिङ्गादयो **विनिश्चरन्ति** निर्गच्छन्ति तथैवं **वा अरे अस्य महतो भूतस्य** प्रकृतात्मनो **निश्श्वसितमेतत्** । यथा प्रयत्नतः पुरुषनिःश्वासो भवति तथा निश्श्वसितवत् आविर्भूतम् । किं तत् ? इत्यत्र **यत्** चतुर्विधमन्त्रजातं **ऋग्वेद** इत्यादि । उर्वशीपुरूरवसोः संवादादिः **इतिहासः** । “ असद्वा इदमग्र आसीत् ” इत्यादि **पुराणम्** । देवयजनादिर्**विद्या** । “ आत्मेत्येवोपासीत ” इत्याद्या **उपनिषदः** । “ तदेते श्लोका भवन्ति ” इति ब्राह्मणप्रभवमन्त्राः **श्लोकाः** । “ आत्मानमेवावेदहं ब्रह्मास्मि ” इति

"ब्रह्मविदाप्नोति परं" इत्यादिवस्तुसंग्रहवाक्यानि **सूत्राणि**। मन्त्रविवरणानि **अनुव्याख्यानानि** वस्तुसंग्रहवाक्यविवरणानि वा। यथा "आत्मेत्येवोपासीत", "न स वेद यथा पशुः" इत्यादितृतीयाध्यायगतसङ्ग्रहवाक्यस्य चतुर्थाध्यायः। केवलमन्त्रविवरणानि **व्याख्यानानि** वेदाभिव्यक्तिः पुरुषनिश्श्वासवत्। न हि पुरुषबुद्धिप्रयत्नपूर्वकः अतः स्वार्थे प्रमाणनिरपेक्ष एव। तस्मात् वेदेन यदुक्तं तत् श्रेयोऽर्थिभिः प्रतिपत्तव्यम्। एवमुक्तानुक्तानि सर्वाणि **निःश्वसितानि** अग्निविस्फुलिङ्गादिवत् स्वकाले प्रादुर्भवन्तीत्यर्थः ॥१०॥

चिन्मात्रविकल्पिताचित्प्रपञ्चस्यापि चिन्मात्रत्वमेव

स यथा सर्वासामपाᳫं समुद्र एकायनमेवᳫं सर्वेषाᳫं स्पर्शानां त्वक् एकायनमेवᳫं सर्वेषां गन्धानां नासिके एकायनमेवᳫं सर्वेषाᳫं रसानां जिह्वा एकायनमेवᳫं सर्वेषाᳫं रूपाणां चक्षुरेकायनमेवᳫं सर्वेषाᳫं शब्दानाᳫं श्रोत्रमेकायनमेवᳫं सर्वेषाᳫं संकल्पानां मन एकायनमेवᳫं सर्वासां विद्यानाᳫं हृदयमेकायनमेवᳫं सर्वेषां कर्मणाᳫं हस्तावेकायनमेवᳫं सर्वेषामानन्दानामुपस्थ एकायनमेवᳫं सर्वेषां विसर्गाणां पायुरेकायनमेवᳫं सर्वेषामध्वनां पादावेकायनमेवᳫं सर्वेषां वेदानां वागेकायनम् ॥ ११ ॥

यथा जलोद्भूततरङ्गबुद्बुदफेनादि स्वोत्पत्तिस्थितिप्रलयेष्वपि जलमात्रं चिन्मात्रविकल्पिताचित्प्रपञ्चोऽपि तथा स्वोत्पत्तिस्थितिप्रलयेष्वपि चिन्मात्रमेव तद्व्यतिरेकेण निरूपयितुमशक्यत्वात् इत्यत्र दृष्टान्तपरम्परामनुक्रामति—**स यथेति**। **स** इति दृष्टान्तप्रदर्शनार्थः। **यथा सर्वासां** नदीनदवापीकूपतटाकादीनाम**पां समुद्रोऽब्धिरेकायनम्**। मेघव्यवधानेन समुद्रादेव तासामुत्पत्तिः तद्रूपतया स्थितिः पुनस्तत्रैव प्रलयः। यत एवमतः कालत्रयेऽप्यपां सम्यक्

द्रवात्मकत्वात् ताः समुद्ररूपा एवेति। यथायं दृष्टान्त **एवं सर्वेषां** मृदुकठिनादि**स्पर्शानां त्वक् एकायनं** स्पर्शानां मनोगृहीतत्वगाश्रितत्वात् तदतिरिक्ताश्रयाभावाच्च। तदपि स्पर्शसामान्यं मनसि। मनस्तु विज्ञानमात्रे परब्रह्मणि समुद्रे नदनदीप्रवाहवत् विलीयते। तदा प्रज्ञानमात्रमवशिष्यते। एवं सर्वत्र योज्यम्। तथा **सर्वेषामब्विशेषरसानां जिह्वेन्द्रियसामान्यमेकायनम्**। तथा **सर्वेषां** पार्थिव**गन्धानां नासिका**वाच्यघ्राणेन्द्रिय**मेकायनम्**। तथा तेजोविशेष**रूपाणां चक्षुः**। तथा **शब्दानां श्रोत्रम्**। तथा **सङ्कल्पादिवृत्तीनां मनो**ऽन्तःकरणम्। तथा **विद्या**सामान्यानां **हृदयं** धीः। तथा **कर्मणां हस्तौ**। तथा **सर्वेषामानन्दानामुपस्थः**। तथा **विसर्गाणां पायुः**। तथा**ऽध्वनां पादौ**। तथा **सर्वेषां वेदानां वागिन्द्रियमेकायनम्**। वागादिबाह्यकरणं मनसि मनस्तत्कार्यं विज्ञानमात्रं भूत्वा परमात्मनि विलीयते। "इदं सर्वं यदयमात्मा" इति यत् प्रतिज्ञातं तत्र हेतुः सम्यगभिहितः। कथम्? करणग्रामोपलक्षिताविद्यापदतत्कार्यजातं स्वाज्ञादिदृष्ट्या चिन्मात्रोत्थं चिन्मात्रस्थं चिन्मात्रपर्यवसन्नम्। यत एवमतः स्वाज्ञादिदृष्ट्याविद्यापदतत्कार्यजाते सत्यसति परमार्थदृष्ट्या सर्वं निष्प्रतियोगिकचिन्मात्रमेव। यच्चिन्मात्रमिति प्रतिज्ञातं तत् श्रुतियुक्तिभ्यां साधितमित्यर्थः॥ ११॥

आत्यन्तिकप्रलयस्यापि ब्रह्मविद्यानिमित्तत्वम्

**स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत न हास्य उद्ग्रहणायेव स्यात् यतो यतस्त्वाददीत लवणमेव एवं वा अर इदं महद्भूतमनन्तमपारं विज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानु विनश्यन्ति न प्रेत्य संज्ञास्तीति अरे ब्रवीमीति होवाच याज्ञवल्क्यः॥ १२॥**

आत्यन्तिकप्रलयोऽपि स्वाभाविक इत्याकाङ्क्षायां ब्रह्मविद्यानिमित्तोऽयमित्यत्र दृष्टान्तमाह—**स यथेति**। स्यन्दनात् सिन्धुरुदकं तद्विकारः सैन्धवः

चासौ खिल एव खिल्यश्च । स्वार्थे यत्प्रत्ययः । **स यथा सैन्धवखिल्यः** स्वयोनावु**दके प्रास्तः** प्रक्षिप्तः लीयमान**मुदकमेवानुविलीयेत । न ह नैवास्य** खिल्यस्य उद्धृत्य **ग्रहणाय** पूर्ववत् ग्रहीतुं न हि कश्चित् समर्थो भवति। **यतो यतो** देशा**दुदकमाददीत** गृहीत्वास्वादयेत् तदुदकं **लवणमेव** । न हि सलिलं प्रतीयते । यथायं दृष्टान्तस्त**थैवं वा अरे** मैत्रेयि ! यत्प्रबोधसमकालं स्वातिरिक्तत्वेन परिच्छिन्नभूतभौतिकसन्ततिरपह्नवपदं भजति **तदिदं महद्भूतं** निष्प्रतियोगिकमहत्त्वात् सैन्धवघनवत् अखण्डैकरसत्वा**दनन्तम्** । किं तदापेक्षिकानन्त्यं ? **अपारम्** । एवं विज्ञप्तिः विज्ञानं च तत् घनं चेति विज्ञानघनं ब्रह्म । त**देव** तवात्मा **विज्ञानघनः** । घनशब्दः स्वातिरिक्तजात्यन्तरप्रतिषेधार्थः तथावधारणात् । यदिदमेकं निष्प्रतियोगिकाद्वितं स्वमात्रमित्यज्ञानमहिम्ना स्वाज्ञाग्रणीः खिल्यभावमेत्य जातो मृतः सुखी दुःखी स्वान्यत्राहं ममेत्यादि संसारसागरे मग्नो भवति । तद्दृष्ट्या स्वतुल्योच्चावचभूतानि विकल्पितानि । यदास्यानेककोटिजन्मकृतसुकृतफलार्पणसन्तुष्टेश्वरप्रसादतः श्रुत्याचार्यकटाक्षो जायते तदायं तदुपदिष्टनिष्प्रतियोगिकब्रह्ममात्रप्रबोधसमकालं **एतेभ्यो** भूतभौतिकपरिच्छिन्नोपाधि**भूतेभ्यः समुत्थाय** स्वातिरिक्तभूतभौतिकजातं नेतीत्यवधार्य स्वातिरिक्तकलनापह्नवसिद्धब्रह्ममात्रतयावशिष्यते । तत्समकालमेव **तान्येव** स्वाज्ञदृष्टिविकल्पितभूतभौतिकानि नदीसमुद्रवत् सलिलविकल्पितफेनबुद्बुदादिवच्च **विनश्यन्ति** ब्रह्ममात्रावशिष्टानि भवन्तीत्यर्थः । तदानीं स्वाज्ञादिदृष्ट्या स्वातिरिक्तभ्रमे सत्यसति महद्भूतमनन्तमपारं प्रज्ञानघनं स्वमात्रमवशिष्यते । एवं स्वातिरिक्तभ्रमासंभवप्रबोधतः तद्भावापत्तावपि कालान्तरे पुनर्विशेषसंज्ञा स्यादित्याशङ्कमानामालक्ष्याह—**नेति** । एवं स्वातिरिक्तास्तिताभ्रमतः **प्रेत्य** व्यावृत्य ब्रह्ममात्रावस्थानलक्षणविकळेबरकैवल्यपदमारूढस्य हे अरे मैत्रेयि! **न** हि कदाचिदपि विशेष**संज्ञास्तीति ब्रवीमि** । स्वाज्ञदशायां यदनुभूतमहममुष्य पुत्रो ममेदं क्षेत्रं धनमित्येवमादिविशेषसंज्ञाया ब्रह्ममात्रप्रबोधसमकालमपह्नवतां गतत्वात् कालत्रयेऽप्ययं विद्वान् निष्प्रतियोगिकब्रह्ममात्रतयावशिष्यत **इति** स्वभार्यायै मैत्रेय्यै **होवाच याज्ञवल्क्य** इति श्रुतेर्वचः ॥ १२ ॥

महाभूतमेव विज्ञानायालमिति कथनम्

सा होवाच मैत्रेयी अत्रैव मा भगवानमूमुहत् न प्रेत्य संज्ञास्तीति स होवाच याज्ञवल्क्यो न वा अरेऽहं मोहं ब्रवीमि अलं वा अरे इदं विज्ञानाय ॥ १३ ॥

"न प्रेत्य संज्ञास्तीति" अत्र सन्दिहाना पतिं प्रत्याह—**सा हेति**। एवं प्रतिबोधितापि **सा ह** किल **मैत्रेय्युवाच**। ह किल। किमिति? **अत्रैव** एतस्मिन् ब्रह्मणि पुरा "विज्ञानघनं ब्रह्म स्वमात्रमवशिष्यते" इति प्रतिज्ञाय पुनः **न प्रेत्य संज्ञास्तीति** विरुद्धधर्ममाचक्षाणो **भगवान् मा** माम**मूमुहत्** कथं मोहनं कृतवान्? न ह्यग्निरेक एव उष्णः शीतो भवितुमर्हतीति। **स होवाच** याज्ञवल्क्यः। किमिति? **न वा अरे अहं मोहं** मोहनवाक्यं **ब्रवीमि**। विज्ञानघनत्वं संज्ञाभावं च कथं? इति चेन्न; स्वातिरिक्तसंज्ञाभावस्य निष्प्रतियोगिकस्वमात्रावगतिहेतुत्वात्। भ्रान्त्या त्वयैव एतदन्यथा गृहीतम्। मया त्विदमुक्तम्। यस्तु स्वाविद्योपाधियोगभ्रान्त्या आत्मनः खिल्यभावः तस्मिन् ब्रह्ममात्रप्रबोधसमकालमपह्नवतां गते विशेषसंज्ञानिमित्ताभावात् न प्रेत्य संज्ञास्तीत्युक्तम्। घटनाशात् तद्गतचन्द्रादिप्रतिबिम्बनाशवत्। न हि चन्द्रादिस्थानीयविज्ञानघनस्य नाशोऽस्ति तस्य पारमार्थिकसद्रूपत्वात्। यत एवमतो **अरे इदं** महद्भूतमनन्तमपारं यथा व्याख्यातं तदेव **विज्ञानायालम्**। तथा च वक्ष्यति "न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति ॥ १३ ॥

आत्ममात्रस्यैवावशेषः

यत्र हि द्वैतमिव भवति तदितर इतरं जिघ्रति तदितर इतरं पश्यति तदितर इतरꣳ शृणोति तदितर इतरमभिवदति तदितर इतरं मनुते तदितर इतरं विजानाति यत्र वा अस्य सर्वमात्मैवाभूत् तत्केन कं जिघ्रेत् तत्केन कं पश्येत् तत्केन कꣳ शृणुयात् तत्केन

कमभिवदेत् तत् केन कं मन्वीत तत् केन कं विजानीयात् येनेदꣳ सर्वं विजानाति तं केन विजानीयात् विज्ञातारमरे केन विजानीयादिति ॥ १४ ॥

कथं पुनः "न प्रेत्य संज्ञास्तीति" उच्यते ? इत्यत आह—**यत्र हीति** । **यत्र** यस्मिन् निष्प्रतियोगिकाद्वैते तद्याथात्म्याज्ञदृष्ट्या तदतिरेकेण यत्किञ्चित् स्वातिरिक्तं प्रतियोगिक**द्वैतमिव** भिन्नवत् **भवति** । अद्वैतस्य द्वैतसापेक्षत्वेनावास्तवता स्यादिति चेन्न; तस्य निष्प्रतियोगिकभावरूपत्वेन पारमार्थिकसत्यत्वात् । द्वैतस्यापि तथात्वं स्यादिति चेन्न; तत्रत्य—इवशब्दस्य तद्गतभावरूपताग्रासत्वात् । वस्तुतो द्वैतजातं निष्प्रतियोगिकाभावरूपमेवेत्यर्थः । एवं द्वैताद्वैतेयत्तां यो न जानाति सोऽयं ब्रह्ममात्रे**तरः** खिल्यात्मदृष्टिः घ्राता स्वेतरघ्राणेन स्वेतरघ्रातव्यं **जिघ्रति** । इतर इतरं जिघ्रतीति कारकप्रदर्शनार्थम् । **तदितर इतरं पश्यतीत्यादि** समानम् । यत्र **वास्य** विदुषः **सर्वमविद्यापदतत्कार्यजातं** ब्रह्ममात्रप्रबोधसमकालम**ात्मैवाभूत्** **तत्त्र केन** करणेन **कं** घ्रातव्यं **जिघ्रेत्** ? क्रियासामान्यस्य कारकनिमित्तत्वम् । कारकाभावे क्रियाभावः । क्रियाभावे फलाभावः । तस्मात् कारकादीनामविद्याकार्यत्वेन कारणतुल्यत्वात् विद्वद्दृष्ट्या आत्ममात्रमवशिष्यते । स्वाज्ञदशायां कारकक्रियादि भातं स्वज्ञदशायां तत् सर्वमात्मैव भवति । यत एवमतः स्वात्ममात्रप्रत्ययारूढानां विदुषां क्रियाकारकफलप्रत्ययो मृग्य इत्यर्थः । यदि प्रमादतः स्फुरेत् तदा निवृत्तिरेव कार्येत्यत्र—

अनुतिष्ठन्तु कर्माणि परलोकधियासवः ।
सर्वलोकात्मकः कस्मादनुतिष्ठामि किं मुधा ॥
दुःखिनोऽज्ञाः संसरन्तु कामं पुत्राद्यपेक्षया ।
परमानन्दपूर्णोऽहं संसरामि किमिच्छया ॥

इति श्रुतेः । तथा **तत् केन कं पश्येत्** ? इत्यादि समानम् । तत् केन कं इत्याक्षेपार्थतः स्वातिरिक्तक्रियाकारकफलासंभवप्रबोधसिद्धस्वात्ममात्रमवगम्यते ।

यत्र स्वाप्नदशायां अन्योन्यं पश्यति तत्राप्ययं स्वाप्नो **येनेदं सर्वं विजानाति तं केन विजानीयात्**? करणेन विजानातीति चेन्न; तस्य ज्ञेयनियुक्तत्वेन जड-त्वात्। ज्ञेये एव हि ज्ञातुः जिज्ञासा न ह्यात्मनि न ह्यग्नौ। अग्निरिव स्वात्मा स्वविषयो भवितुमर्हति। नापि निर्विषये ज्ञातुर्ज्ञानमुपपद्यते। तस्मात् येनेदं सर्वं विजानाति तं **विज्ञातारं केन** करणेन को वान्यो **विजानीयात्**? न केनापीत्याक्षेपार्थादनात्मापह्नवसिद्धमात्ममात्रं अवशिष्यत इति द्योत्यते।

आत्ममात्रमिदं सर्वमात्मनोऽन्यन्न किंचन।

इति श्रुतेः॥ १४॥

**इति चतुर्थं ब्राह्मणम्**

---

## पञ्चमं मधुब्राह्मणम्

आत्मनो नानात्वनिवृत्तिः

**इयं पृथिवी सर्वेषां भूतानां मधु अस्यै पृथिव्यै सर्वाणि भूतानि मधु यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शारीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा इदममृतमिदं ब्रह्म इदꣳ सर्वम्॥ १॥**

सर्वकर्मनैरपेक्ष्येणामृतत्वसाधनं वक्तव्यमिति मैत्रेयीब्राह्मणमारब्धम्। तच्च ज्ञानं सर्वकर्मसंन्यासाङ्गविशिष्टम्। स्वात्मनि विज्ञाते स्वविकल्पितमिदं सर्वं विकल्पासंभवप्रबोधतः स्वात्ममात्रतया विदितं भवति। एवमवगत्युपायत्वेन श्रवणादिरुक्तः। "आत्मैवेदं सर्वं" इति यत् प्रतिज्ञातं तत्र हेतुत्वेन इदं सर्वमात्मजमात्मस्थमात्मप्रलयं चोक्तम्। तत्र तत्तत्काले स्वेनैवेदं जायते।

किंनिमित्ताकाङ्क्षास्य ? इति हेत्वसिद्ध्याशंकायां लोके तावत् यत् पृथिव्यादि-परस्परोपकार्योपकारकभूतं तदेककारणपूर्वकं न स्वतः संभूतिमत् भवितुमर्हति जडत्वेन परार्थत्वात् । यद्वा—"आत्मैवेदं सर्वं" इति यत् प्रतिज्ञातं तत्र सर्वस्यात्मोत्पत्तिप्रलयवत्त्वेन कार्यकारणयोरभेदतः सर्वं ब्रह्मेत्युक्तम् । पुनरागम-प्राधान्यतः प्रतिज्ञातार्थनिगमनार्थमिदं मधुब्राह्मणमारभ्यते । मैत्रेयीब्राह्मणे श्रोतव्य इति श्रवणविधिरुक्तः । तद्वाद्ध्याय पुनः मधुब्राह्मणात् तदर्थमनननिदिध्यासनविधि-रुच्यते । अध्यायद्वयार्थोऽप्यस्मिन् मधुब्राह्मणे उपसंह्रियत इति न पुनरुक्तिः—**इयमिति** । प्रसिद्धेयं **पृथिवी सर्वेषां** ब्रह्मादिस्तम्बान्तभूतानां कार्यत्वेन मध्विव **मधु** । यथा मध्वपूपो बहुमधुकरनिर्वर्तितः एवमियं पृथिवी सर्वभूतनिर्वर्तिता । तथा **सर्वाणि भूतानि अस्यै पृथिव्यै** पृथिव्या **मधु** कार्यम् । किञ्च **अस्यां पृथिव्यां यश्चायं** पुरुषः चित्प्रकाशप्रायत्वात् **तेजोमयोऽमृतमयो**ऽमरणधर्मा **यश्चायमध्यात्मं**, शरीरे भवः **शारीरः** पूर्वोक्त**तेजोमयोऽमृतमयः पुरुषो** लिङ्गाभिमानी **सोऽयं** सर्वभूतानामुपकारात् कारणत्वेन मधु । सर्वाणि भूतान्यस्य च मधु । चशब्दात् एतच्चतुष्टयं तावदेकं सर्वभूतकार्यम् । सर्वाणि भूतानि अस्य कार्यम् । यस्मात्तयोर्मिथः एकैककारणपूर्वकता तस्मात् एकस्मात् कारणात् एत-ज्जातम् । व्यष्टिसमष्टिप्रपञ्चारोपाधिकरणयोः यदेकत्वं तदेव तद्गतहेयांशापायात् **ब्रह्म** । इतरत् **सर्वं** कार्यं तद्व्यावहारिकप्रातिभासिकदृष्टिभ्यां वाचारम्भणमात्रम् । वस्तुमात्रदृष्ट्या तत्कार्यजातं वाचारम्भणतामपि नार्हति । मधुपर्यायाणामयमेवार्थ-संक्षेपः । "इदं सर्वं यदयमात्मा" इति योऽयं प्रतिज्ञातः अयमेव स इदमेवामृतमिति यन्मैत्रेय्यै मुनिनामृतत्वसाधनत्वेनोक्तमात्मयाथात्म्यविज्ञानमध्या-यादौ यत् प्रकृतं "ब्रह्म ते ब्रवाणि", "ज्ञपयिष्यामि" इति च यन्मात्रज्ञानं ब्रह्मविद्या तन्मात्रज्ञानादिदं सर्वं स्वगतहेयांशापायतो ब्रह्मैव भवति ॥ १ ॥

अबादीनां मधुत्वख्यापनम्

इमा आपः सर्वेषां भूतानां मधु आसामपाᳬ सर्वाणि भूतानि मधु यश्चायमास्वप्सु तेजोमयोऽमृतमयः पुरुषो यश्चाय-

मध्यात्मꣳ रैतसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा इदममृतमिदं ब्रह्म इदꣳ सर्वम् ॥ २ ॥ अयमग्निः सर्वेषां भूतानां मधु अस्याग्नेः सर्वाणि भूतानि मधु यश्चायमस्मिन्नग्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं वाङ्मयस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा इदममृतमिदं ब्रह्म इदꣳ सर्वम् ॥ ३ ॥ अयं वायुः सर्वेषां भूतानां मधु अस्य वायोः सर्वाणि भूतानि मधु यश्चायमस्मिन् वायौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं प्राणस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा इदममृतमिदं ब्रह्म इदꣳ सर्वम् ॥ ४ ॥ अयमादित्यः सर्वेषां भूतानां मधु अस्यादित्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नादित्ये तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं चाक्षुषस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा इदममृतमिदं ब्रह्म इदꣳ सर्वम् ॥ ५ ॥ इमा दिशः सर्वेषां भूतानां मधु आसां दिशाꣳ सर्वाणि भूतानि मधु यश्चायमासु दिक्षु तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ श्रौत्रः प्रातिश्रुत्कः तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा इदममृतमिदं ब्रह्म इदꣳ सर्वम ॥ ६ ॥ अयं चन्द्रः सर्वेषां भूतानां मधु अस्य चन्द्रस्य सर्वाणि भूतानि मधु यश्चायमस्मिꣳश्चन्द्रे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं मानसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा इदममृतमिदं ब्रह्म इदꣳ सर्वम् ॥ ७ ॥ इयं विद्युत् सर्वेषां भूतानां मधु अस्यै विद्युतः सर्वाणि भूतानि मधु यश्चाय-

मस्यां विद्युति तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं तैजसस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा इदममृतमिदं ब्रह्म इदꣳ सर्वम् ॥ ८ ॥ अयꣳ स्तनयित्नुः सर्वेषां भूतानां मधु अस्य स्तनयित्नोः सर्वाणि भूतानि मधु यश्चायमस्मिन् स्तनयित्नौ तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ शाब्दः सौवरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा इदममृतमिदं ब्रह्म इदꣳ सर्वम् ॥ ९ ॥ अयमाकाशः सर्वेषां भूतानां मधु अस्याकाशस्य सर्वाणि भूतानि मधु यश्चायमस्मिन्नाकाशे तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मꣳ हृद्याकाशस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा इदममृतमिदं ब्रह्म इदꣳ सर्वम् ॥ १० ॥

एवमब्ग्निवाय्वादित्यदिक्चन्द्रविद्युत्स्तनयित्न्वाकाशधर्मसत्यमानुषात्मनां कार्यत्वेन उपकारात् मधुत्वम् । तदन्तर्गततेजोमयादिविशेषणविशिष्टपुरुषस्य कारणत्वेनोपकारात् मधुत्वं समानमित्याह—**इमा आप** इत्यादिना । तथा आप **अध्यात्मम्** । रेतसि भवो **रैतसः** । अपां विशेषतो रेतस्यवस्थानात् । **अयमग्निः** इति । वाच्यग्नेर्विशेषतोऽवस्थानात् । **अयं वायुः** इति । तथा **वायुरध्यात्मं** प्राणः । स हि सर्वभूतशरीरारम्भहेतुः । तथा चोक्तं "तस्यै वाचः पृथिवी शरीरं ज्योतीरूपमयमग्निः" इति । **अयमादित्यः** इति । तथादित्यो मधु । **चक्षुरध्यात्मम्** । **इमा दिशः** इति । तथा **दिशो** मधु यद्यपि श्रोत्रमध्यात्मं शब्दं प्रति श्रवणवेलायां तु विशेषतः सन्निहितो भवतीत्यध्यात्मम् । प्रतिश्रुत्कायां श्रवणवेलायां भवः **प्रातिश्रुत्कः** । **अयं चन्द्रः** इति । तथा **चन्द्रः अध्यात्मं मानसः** । **इयं विद्युत्** इति । तथा **विद्युत्** त्वक्तेजसि भवः **तैजसोऽध्यात्मम्** । **अयꣳ स्तनयित्नुः** इति । तथा **स्तनयित्नुः** शब्दे भवः **शाब्दः अध्यात्मम्** । विशेषतः स्वरे भवतीति **सौवरः** । **अयमाकाश** इति । तथा-

काशोऽध्यात्मं हृद्याकाशः। पृथिव्याद्याकाशान्ता भूतगणाश्च कार्यकरण-संघातात्मना उपकुर्वन्तो मधु भवन्ति प्रतिशरीरमित्युक्तम् ॥ २–१० ॥

एतैर्धर्मरूपेण उपकारित्वम्

अयं धर्मः सर्वेषां भूतानां मधु अस्य धर्मस्य सर्वाणि भूतानि मधु यश्चायमस्मिन् धर्मे तेजोमयोऽमृतमयः पुरुषो यश्चाय-मध्यात्मं धार्मस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा इदममृतमिदं ब्रह्म इदꣳ सर्वम् ॥ ११ ॥

कथमेते शरीरिभिः संबध्यमाना मधुत्वेन उपकुर्वन्ति? इत्यत्र इदमारभ्यते—**अयमिति**। अप्रत्यक्षोऽप्ययं **धर्मः** कार्यतः प्रत्यक्षवत् व्यपदिश्यते "श्रुतिस्मृतिलक्षणोऽयं धर्मः" इति। तस्य क्षत्रादीनामपि नियन्तृत्वेन जगद्वैचित्र्यकृत्त्वात्। सोऽयं धर्मः पृथिव्यादिपरिणामहेतुतया प्राणिभिरनुष्ठीयमानः सन् प्रत्यक्षव्यपदेशमर्हति। तथा**ध्यात्मम्**। संघातकर्तरि धर्मे भवो **धार्मः** ॥११॥

सत्यधर्मयोर्भेदेन व्यपदेशः

इदꣳ सत्यꣳ सर्वेषां भूतानां मधु अस्य सत्यस्य सर्वाणि भूतानि मधु यश्चायमस्मिन् सत्ये तेजोमयोऽमृतमयः पुरुषो यश्चा-यमध्यात्मꣳ सात्यस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा इदममृतमिदं ब्रह्म इदꣳ सर्वम् ॥ १२ ॥

शास्त्राचारलक्षणसत्यधर्मयोः दृष्टादृष्टभिदा। कार्यारम्भकत्वादभेदेन निर्देशः कृतः। इह तु भेदेन व्यपदेशमर्हतीति प्राह—**इदमिति**। योऽयमदृष्टरूपेण कार्यमारभते स धर्मः। यत् दृष्टरूपेणानुष्ठीयमानं सत् कार्यमारभते तत् **सत्यम्**। सामान्यविशेषरूपेण तत् द्विविधम्। पृथिव्यादिसमवेतं सामान्यम्। कार्यकरण-

संघातसमवेतं विशेषवत्। तत्र पृथिवीसमवेतवर्तमानक्रियान्वितं समष्टिसत्यम्। तथाध्यात्मं कार्यकरणसंघातसमवेतम्। तत्र भवः सात्यः।

सत्येन वायुरावाति सत्ये सर्वं प्रतिष्ठितम्।

इति श्रुतेः॥ १२॥

मानुषस्य मधुत्वम्

**इदं मानुषꣳ सर्वेषां भूतानां मधु अस्य मानुषस्य सर्वाणि भूतानि मधु यश्चायमस्मिन् मानुषे तेजोमयोऽमृतमयः पुरुषः यश्चायमध्यात्मं मानुषः तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा इदममृतमिदं ब्रह्म इदꣳ सर्वम्॥ १३॥**

इदं मानुषं इति। यः कार्यकरणसंघातविशेषो येन जातिविशेषेण समवैति स जातिविशेषो मानुषाख्यः। तत्र मानुषादिजातिविशिष्टा हि सर्वे प्राणिनः परस्परोपकार्योपकारकभावेन वर्तमाना दृश्यन्ते। यत एवमतो मानुषजातिरपि सर्वेषां भूतानां मधु। सेयं मानुषजातिरपि बाह्याध्यात्मिकव्यपदेशभाक् भवति॥ १३॥

मानुषजातिविशिष्टस्यात्मत्वम्

**अयमात्मा सर्वेषां भूतानां मधु अस्यात्मनः सर्वाणि भूतानि मधु यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा इदममृतमिदं ब्रह्म इदꣳ सर्वम्॥ १४॥**

यस्तु कार्यकरणसंघातमानुषजातिविशिष्टः सोऽयमात्मेत्याह—**अयमात्मा** इति। पृथिवीपर्याय एवात्मनः शारीरशब्देन निर्दिष्टत्वात् पार्थिवांशोऽयमात्मेति

चेन्न; अत्रत्यात्मनः पार्थिवाध्यात्मादिविकृतिग्रासत्वेन सर्वात्मकत्वात्। अत्र तेजोमयोऽमृतमयः पुरुषः सर्वात्मको निर्दिश्यते ॥ १४ ॥

अन्त्यपर्यायप्रविष्टस्यात्मनः स्वरूपकथनम्

स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूतानाꣳ राजा तद्यथा रथनाभौ च रथनेमौ च अराः सर्वे समर्पिता एवमेवास्मिन् आत्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः ॥ १५ ॥

अत्राध्यात्मं विज्ञानमय आत्मेत्युच्यते। अन्त्यपर्यायप्रविष्ट आत्मा कीदृशः? इत्यत आह—**स वा** इति। यः परिशिष्टः **स वा अयमात्मा**नन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघनः **सर्वेषां भूतानामा**त्मा सर्वोपास्यत्वात्। सर्वाधिपतिः **सर्वेषां भूतानां राजा**धिपतिः। अधिपतिराजशब्दाभ्यां कर्तुमकर्तुमन्यथाकर्तुं निरङ्कुशस्वातन्त्र्यमभिधीयते सर्वेश्वरत्वात्। एवं विद्वान् सर्वात्मा सन् विमुक्तो भवति। तथा चोक्तं "यत् ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तत् ब्रह्मावेत् यस्मात् तत्सर्वमभवत्" इति। तदत्र व्याख्यातम। एवमाचार्योक्तितः स्वबुद्धितर्कतश्च यन्मधुब्राह्मणेन दर्शितं तद्विज्ञाय तन्मात्रतयावशिष्यते। एवं वेदनात् पुरापि ब्रह्मैवायमविद्यया ब्रह्मवदासीत्। विद्यया तदावृतिनिवृत्तौ ब्रह्मैव सन् ब्रह्माभवत्। शास्त्रार्थोऽयमेवं परिसमाप्तः। एवं सर्वात्मभावमापन्ने ब्रह्मविदि सर्वं जगत् समर्पितमित्यत्र दृष्टान्तमाह—**तद्यथे**ति। **तद्यथा रथनाभौ च रथनेमौ च अराः सर्वे समर्पिता** इति। स्पष्टोऽर्थः। **एवमेवास्मिन्नात्मनि** ब्रह्मविदि **सर्वाणि** ब्रह्मादिस्तम्बान्त**भूतानि** अग्न्यादयो **देवाः सर्वे** भूरादयो **लोकाः प्राणा** वागादयः **सर्व एत आत्मानो** जलसूर्यकादिवत् **समर्पिताः** तेषां स्वविकल्पितत्वात् ॥ १५ ॥

ब्रह्मविद्यास्तुतये मन्त्रप्रकाशनम्

इदं वै तन्मधु दध्यङ्ङाथर्वणोऽश्विभ्यामुवाच तदेतत् ऋषिः पश्यन्नवोचत् । तद्वां नरा सनये दंस उग्रमाविष्कृणोमि तन्यतुर्न वृष्टिं दध्यङ् ह यन्मधु आथर्वणो वां अश्वस्य शीर्ष्णा प्र यत् ईं उवाचेति ॥ १६ ॥ इदं वै तन्मधु दध्यङ् आथर्वणोऽश्विभ्यामुवाच तदेतत् ऋषिः पश्यन्नवोचत् आथर्वणायाश्विना दधीचेऽश्व्यꣳ शिरः प्रत्यैरयतं स वां मधु प्रवोचत् ऋतायन् त्वाष्ट्रं यत् दस्रावपि कक्ष्यं वामिति ॥ १७ ॥

येयममृतत्वसाधनभूता सेयं ब्रह्मविद्या परिसमाप्ता । तद्विद्यास्तुतये हीयमाख्यायिका । तत्प्रकाशनार्थावेतौ मन्त्रौ भवत इत्याह— इदमिति । का पुनः सेयमाख्यायिका ? इत्यत्र इदमित्यनन्तरनिर्दिष्टं बुद्धिसन्निहितं व्यपदिशति । प्रकारान्तरनिर्दिष्टार्थं वैशब्देन स्मारयन् इह व्यपदिशति । यत् प्रवर्ग्यप्रकरणे सूचितं तन्मधु । "इयं पृथिवी" इत्यादिना निर्दिष्टं प्रकारान्तरेण सूचयति । कथम् ? दध्यङ् ह वा आथर्वणोऽश्विभ्यां मधुनाम ब्राह्मणमुवाच । तदेनयोः प्रियं धाम तदेनयोरेतेन उपगच्छति । इन्द्रेणैवमुक्तोऽस्मीति स होवाच । एतच्चेदन्यस्मा अनुब्रूयास्ते शिरश्छिन्द्यामिति । तस्माद्वै बिभेमि । स यन्मे शिरो न छिन्द्यात् तद्वामुपनेष्य इति । तौ होचतुः तस्मात् त्रास्याव इति । कथं मे त्रास्येथे ? इति । यदा नावुपनेष्यसे अथ ते शिरश्छित्वान्यत्राहृत्योपनिधास्यावः । अथाश्वस्य शिर आहृत्य तत्ते प्रतिधास्यावः तेन नावनुवक्ष्यसि । स यदा नावनुवक्ष्यसि अथ ते तदिन्द्रः शिरः छेत्स्यति । अथ ते स्वशिर आहृत्य प्रतिधास्याव इति । तथेति तौ होपनिन्ये । तौ यदा उपनिन्येऽथास्य शिरश्छित्वान्यत्र उपनिदधतुः । अथाश्वस्य शिर आहृत्य तद्धास्य प्रतिदधतुः । तेन स हाभ्यामनूवाच । स यदाभ्यामनूवाच अथास्य तदिन्द्रः शिरश्चिच्छेद । अथास्य स्वशिर आहृत्य तद्धास्य प्रतिदधतुरिति । यावत्तु प्रवर्ग्याङ्गभूतं

मधु तावदेव तत्राभिहितम्। न तु कक्ष्यमात्मज्ञानाख्यम्। तत्रेयमाख्यायिकाभिहिता। सेह स्तुत्यर्था प्रदर्श्यते। **इदं वै तन्मधु दध्यङ् आथर्वणोऽनेन** प्रपञ्चेनाश्विभ्यामुवाच। **तदेतदृषिः मन्त्रः पश्यन्नुपलभमानोऽवोचत्** उक्तवान्। कथम्? **तत् दंसः** इति व्यवहितेन संबन्धः। **दंस** इति कर्मनाम। तत् किंविशिष्टम्? **उग्रं** क्रूरम्। वां युवयोः हे **नरा** नराकारावश्विनौ! तत् कर्म **सनये** लाभाय। लोके तावत् लाभलुब्धो हि क्रूरं कर्म करोति। तथैव तावुपलक्ष्येते। तदाविः प्रकाशं **कृणोमि** करोमि यत् रहसि भवद्भ्यां कृतम्। तत् किमिव? इत्यत्र **तन्यतुः** पर्जन्यः **न** इव। नकारस्तु उपरिष्टादुपचारादुपमार्थः। यथा "अश्वं न" इत्यश्वमिवेति यद्वत्। तन्यतुरिव **वृष्टिं** यथा पर्जन्यो वृष्टिं प्रकाशयति दिशः शब्दैः स्तनयित्वा सर्वजनाह्लादनं करोति तद्वदहं युवयोः क्रूरं कर्माविष्कृणोमीति संबन्धः। **दध्यङ् आथर्वणः**। हकारोऽनर्थकः प्रसिद्धार्थो वा। मधु कक्ष्यमात्मज्ञानलक्षणमाथर्वणो **वां** युवाभ्यामश्वस्य **शीर्ष्णा** शिरसा **प्र यत् ई उवाच** यत् प्रोवाच मधु। ई इत्यनर्थको निपातः॥ १६॥ तथान्यो मन्त्रः तामेवाख्यायिकामनुसरति—इदमिति। **इदं वै तन्मधु** इत्यादि पूर्ववत्। **दध्यङ्** नामाथर्वणोऽन्यो विद्यते। तस्मै **दधीचे आथर्वणाय** हे **अश्विनौ**! इति मन्त्रदृशो वचनम्। **अश्व्यं** अश्वस्य स्वभूतं **शिरो** ब्राह्मणस्य शिरसि छिन्ने अश्वस्य शिरश्छित्वा क्रूरकृत्यमीदृशं कृत्वाश्व्यं शिरो ब्राह्मणं **प्रति ऐरयतं** युवां गमितवन्तौ। **स** चाथर्वणो **वां** युवाभ्यां तन्मधु **प्रावोचत्**। जीवितसन्देहे कथं मुनिः प्रवृत्तः? इत्यत्रोच्यते। **ऋतायन्** स्वोक्तप्रतिज्ञातमर्थं सत्यं परिपालयितुमिच्छन् जीवितादपि सत्यपरिपालनमेव वरमित्येतत्। किं मधु प्रावोचत्? इत्यत्र—त्वष्टा सविता तत्संबन्धि यज्ञस्य शिरः छिन्नं त्वष्ट्राभवत्। तत्प्रतिसन्धानार्थं हि प्रवर्ग्यं कर्म। तदङ्गभूतं यद्विज्ञानं तत् **त्वाष्ट्रं मधु** हे **दस्रौ**! परबलशत्रुपटलहिंसितारावपि न हि केवलं त्वाष्ट्रमेव मधु कर्मसंबन्धि युवाभ्यामवोचत्, अपि तु **कक्ष्यं**मतिरहस्यं परमात्मसंबन्धि यदध्यायद्वयप्रकाशकमधुब्राह्मणप्रकाशितमधुज्ञानं तच्च **वां** युवाभ्यां प्रावोचदित्यनुवर्तते॥ १७॥

अध्यायद्वयार्थसंग्रहः

इदं वै तन्मधु दध्यङ् आथर्वणोऽश्विभ्यामुवाच तदेतत् ऋषिः पश्यन्नवोचत् ।

पुरश्चक्रे द्विपदः पुरश्चक्रे चतुष्पदः ।
पुरः स पक्षी भूत्वा पुरः पुरुष आविशत् ॥ इति ॥

स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैनेन किंचनानावृतं नैनेन किंचनासंवृतम् ॥ १८ ॥ इदं वै तन्मधु दध्यङ् आथर्वणोऽश्विभ्यामुवाच तदेतत् ऋषिः पश्यन्नवोचत् रूपꣳ रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश इत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम् ॥ १९ ॥

पुनरध्यायद्वयार्थं वक्ष्यमाणऋग्भ्यां प्रकाशयति—इदमिति । इदं वै मधु इत्यादि पूर्ववत् । यत्कक्ष्यं मधुज्ञानं युवाभ्यामुक्तं किं तत् ? **पुरः** पुरा सर्गादौ स परमेश्वरोऽव्याकृतनामरूपव्याकरणाय मनश्चक्रे । **द्विपदः** तदुपलक्षित-मनुष्यशरीराणि पक्षिशरीराणि च **पुरः चतुष्पदः** तदुपलक्षितपशुशरीराणि **पुरः** पुरस्तात् सोऽयमीश्वरः **पक्षी** लिङ्गशरीरं **भूत्वा पुरः** शरीराणि **पुरुष आविशदिति** । अस्यार्थं श्रुतिराचष्टे—**स वा** इति । **स वायं पुरुषः सर्वासु पूर्षु** सर्वशरीरेषु पुरि शेत इति **पुरिशयः** सन् पुरुष उच्यते । एतेनानेन **किंचन** किञ्चिदप्यनावृतं अनाच्छादितम् । तथा **नैनेन किञ्चनासंवृतमन्तरनु-**प्रवेशितम् । स एवं सर्वभूतानामन्तर्बहिः व्याप्य व्यवस्थित इति मन्त्रार्थपर्या-

लोचनया सर्वभूतान्तरात्मा एक एवेत्ययमर्थोऽवसीयते ॥ १८ ॥ स्वयमेव स्वाविद्यातत्कार्यानुयोगतः सर्वरूपी भूत्वा पुनः स्वविद्यया स्वाविद्यां ग्रसित्वा स्वयमेव निष्प्रतियोगिकमवशिष्यत इत्याद्यपि मन्त्र आह—**इदमिति** । **इदं वा** इत्यादि पूर्ववत् । **रूपं रूपं प्रतिरूपो** रूपान्तरं **बभूव** । यादृशौ मातापितरौ तदनुरूप एव पुत्रो जायते । न हि जातौ जात्यन्तरम् । सोऽयमीश्वर एवं नामरूपे व्याकुर्वाणो रूपं रूपं प्रतिरूपोऽनुरूपो बभूवेत्यर्थः । कथम्? इत्यत्र **तदस्यात्मनो रूपं प्रतिचक्षाणाय** प्रतिख्यापनाय **इन्द्रो** विश्वाधिकः परमेश्वरो **मायाभिः** प्रज्ञाभिः **पुरुरूपो** बहुरूप **ईयते** न तु परमार्थतः । वस्तुतः स्वस्य एकरूपत्वेन चिन्मात्रत्वात् । मायोपाधियोगतोऽस्य पुरुरूपता । तत् कथं? इत्यत्र अस्य स्वविषयप्रकाशनाय **हरयो** रथवाजिन इव **युक्ता हि** । विषयजातहरणात् इन्द्रियाणि हरय उच्यन्ते । **शता** शतानि **दश** च प्राणिनां बहुत्वात् शतानि दश च भवन्ति । इन्द्रियविषयबाहुल्यात् नानाविषयप्रकाशनाय तद्विषयैरीयत इव ईयते न स्वेन रूपेणेत्यर्थः । हर्यपेक्षयायमन्य इति चेत्, उच्यते—**अयं वै हरयः अयं वै दश च सहस्राणि बहूनि चानन्तानि च** प्राणिनामानन्त्यात् । वस्तुतस्तु **तदेतत् ब्रह्म** इत्यत्र तच्छब्देन समष्टिप्रपञ्चारोपापवादाधिकरणं, एतच्छब्देन व्यष्टिप्रपञ्चारोपापवादाधिकरणं; तयोर्वाच्यार्थपरित्यागेनावशिष्टलक्ष्ययोरैक्यचैतन्यम**यमात्मा ब्रह्म** । स्वाज्ञदृष्ट्या द्रष्टा श्रोता मन्ता विज्ञाता जीवः । स्वज्ञदृष्ट्या तु सर्वात्मना सर्वं स्वाभेदेनानुभवतीति **सर्वानुभूः** । तत् किं पूर्वम्? नेत्याह—**अपूर्वमिति** । नास्य पूर्वं कारणं विद्यते । वस्तुतः स्वयं वा कस्यचित् पूर्वं न भवतीति वा **तदपूर्वम्** । तथात्वे इदमपरं स्यादित्यत आह—**अनपरमिति** । नास्यापरं पश्चाद्भावि कार्यं विद्यत इत्य**नपरं** कार्यकरणकलनाविरलमित्यर्थः । तस्यान्तरं स्यादित्यत आह—**अनन्तरमिति** । स्वान्तराले जात्यन्तरं न विद्यत इत्यर्थः । तद्बाह्यं वा किंचित् स्यादित्यत आह—**अबाह्यमिति** । स्वान्तर्बाह्यविभागहेतुशरीरवैरल्यात् । तदेतत् **ब्रह्म** स्वविकल्पितपूर्वापरान्तर्बाह्योपलक्षितस्वाविद्यापदतत्कार्यजातमस्ति नास्तीति विभ्रमापह्नवसिद्धनिष्प्रतियोगिकस्वमात्रमव-

शिष्यत इत्यनुशासनम् । एष एव हि सर्ववेदान्तानामुपसंहारार्थः । "सर्वविशेषं नेति नेतीति विहाय यदवशिष्यते तदद्वयं ब्रह्म" इति श्रुतेः ॥ १९ ॥

इति पञ्चमं ब्राह्मणम्

---

## षष्ठं वंशब्राह्मणम्

मधुविद्यास्तुतये वंशब्राह्मणम्

अथ वꣳशः पौतिमाष्यो गौपवनात् गौपवनः पौतिमाष्यात् पौतिमाष्यो गौपवनात् गौपवनः कौशिकात् कौशिकः कौण्डिन्यात् कौण्डिन्यः शाण्डिल्यात् शाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥ आग्निवेश्यादाग्निवेश्यः शाण्डिल्याच्चानभिम्लाताच्चानभिम्लात आनभिम्लातादानभिम्लात आनभिम्लातादानभिम्लातो गौतमात् गौतमः सैतवप्राचीनयोग्याभ्याꣳ सैतवप्राचीनयोग्यौ पाराशर्यात् पाराशर्यो भारद्वाजात् भारद्वाजो भारद्वाजाच्च गौतमाच्च गौतमो भारद्वाजात् भारद्वाजः पाराशर्यात् पाराशर्यो बैजवापायनात् बैजवापायनः कौशिकायनेः कौशिकायनिः ॥ २ ॥ घृतकौशिकात् घृतकौशिकः पाराशर्यायणात् पाराशर्यायणः पाराशर्यात् पाराशर्यो जातूकर्ण्यात् जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेः त्रैवणिः औपजन्धनेरौपजन्धनिः आसुरेरासुरिर्भारद्वाजात् भारद्वाज

आत्रेयादात्रेयो माण्टेर्माण्टिर्गौतमात् गौतमो गौतमाद्गौतमो वात्स्यात् वात्स्यः शाण्डिल्यात् शाण्डिल्यः कैशोर्यात् काप्यात् कैशोर्यः काप्यः कुमारहारितात् कुमारहारितो गालवात् गालवो विदर्भीकौण्डिन्याद्विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवात् वत्सनपात् बाभ्रवः पथः सौभरात् पन्थाः सौभरोऽयास्यादाङ्गिरसात् अयास्य आङ्गिरस आभूतेस्त्वाष्ट्रात् आभूतिस्त्वाष्ट्रो विश्वरूपात्त्वाष्ट्रात् विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणात् दध्यङ्ङाथर्वणो-ऽथर्वणो दैवादथर्वा दैवो मृत्योः प्राध्वꣳसनान्मृत्युः प्राध्वꣳसनः प्रध्वꣳसनात् प्रध्वꣳसन एकर्षेरेकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात् सनातनः सनगात् सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ३ ॥

अथेदानीं मधुविद्यास्तुतये वंशब्राह्मणमारभ्यते—अथेति। अयं वंश-ब्राह्मणः स्वाध्यायार्थो जपार्थश्च। यथा वेणुवंशः पर्वणः पर्वणो भिद्यते तद्वत् अग्रात् प्रभृति आमूलप्राप्तेरयं ब्रह्मविद्यासंपन्नाचार्यपारंपर्यक्रमो वंश उच्यते। तत्र प्रथमान्तः शिष्यः पञ्चम्यन्त आचार्यः। परमेष्ठी विराट्। ब्रह्मणो हिरण्यगर्भात् परमाचार्यपरंपरा नास्ति। यत् पुनर्ब्रह्म तदेव नित्यं स्वयंभु। तस्मै ब्रह्मणे नमः ॥ १–३ ॥

इति षष्ठं ब्राह्मणम्

इति द्वितीयोऽध्यायः

---

# तृतीयोऽध्यायः

## प्रथमं अश्वलब्राह्मणम्

जनकेनानूचानतमब्राह्मणजिज्ञासापूर्वकं यजनादि

जनको ह वैदेहो बहुदक्षिणेन यज्ञेन ईजे तत्र ह कुरुपञ्चालानां ब्राह्मणा अभिसमेता बभूवुस्तस्य ह जनकस्य वैदेहस्य विजिज्ञासा बभूव कःस्विदेषां ब्राह्मणानामनूचानतम इति ? स ह गवाꣳ सहस्रमवरुरोध दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः ॥ १ ॥

स्वात्मतत्त्वं करतलबिल्वफलवत् दर्शयितुं "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति सोपायं "तदेतत् ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म" इति वस्तुयाथात्म्यं प्रकटितम् । तदागममात्रं पुनस्तर्कतो निर्दिधारयिषया याज्ञवल्कीयं काण्डमारभ्यते । आख्यायिका वक्ष्यमाणविद्यास्तुत्यर्था—**जनक** इति । पुरा **जनको** नाम ह किल विदेहानामधिपतिः । तत्र भवो **वैदेहः** सम्राट् राजा बभूव । स च बहुर्दक्षिणा यत्र सोऽयं बहुदक्षिणो यज्ञोऽश्वमेधः । तेन **बहुदक्षिणेन यज्ञेन ईजे** अयजत् । तस्मिन् यज्ञे राज्ञा निमन्त्रिता दर्शनकामा वा **कुरुपञ्चाल**देशानामलङ्कारभूता **ब्राह्मणा अभिसमेता** अभिसङ्गता **बभूवुः** । तद्ब्राह्मणसमाजदर्शनतः **तस्य ह** किल **जनकस्य वैदेहस्य** राज्ञः अत्र ब्राह्मणसमाजे को वा ब्रह्मिष्ठाग्रगण्यः ? इति **विजिज्ञासा** विज्ञातुमिच्छा **बभूव** । तत् कथम् ? **कःस्वित्** को नु खलु **एषां ब्राह्मणानामनूचानतमः** ? येऽत्रागतास्ते सर्वे तथा भान्ति । तद्विशेषबुभुत्सया प्रथमवयसां **गवां सहस्रमवरुरोध** गोष्ठेऽवरोधं कारयामास । ताः पुनः

किंविशिष्टाः ? इत्यत्र—सुवर्णपलचतुर्थांशः पादः। एवं **दश दश पादा एकैकस्याः शृङ्गयोराबद्धा बभूवुः** ॥ १ ॥

जनकवचनानन्तरं याज्ञवल्क्यस्य कर्म अश्वलप्रश्नश्च

तान् होवाच ब्राह्मणा भगवन्तो यो वो ब्रह्मिष्ठः स एता गा उदजतामिति ते ह ब्राह्मणा न दधृषुः अथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाच एताः सोम्य! उदज सामश्रवा३ इति ता ह उदाचकार ते ह ब्राह्मणाश्चुक्रुधुः कथं नो ब्रह्मिष्ठो ब्रुवीतेति ? अथ ह जनकस्य वैदेहस्य होताश्वलो बभूव स हैनं पप्रच्छ त्वं नु खलु नो याज्ञवल्क्य ब्रह्मिष्ठोऽसी३ इति स होवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयꣳ स्म इति तꣳ ह तत एव प्रष्टुं दध्रे होताश्वलः ॥ २ ॥

ततः किम्? इत्यत आह—**तानिति**। राजा गा एवमवरुध्य **तान्** ब्राह्मणान् **होवाच**। किमिति? हे **भगवन्तो ब्राह्मणाः**! युष्माकं **ब्रह्मिष्ठः** ब्रह्मयाथात्म्यवित् **स एता गा उदजतां** स्वगृहानुत्कालयतु। **ते ह ब्राह्मणाः** स्वात्मनो ब्रह्मिष्ठत्वं **न दधृषुः**। तेष्वेवमप्रगल्भभूतेषु ब्राह्मणेषु **अथ ह याज्ञवल्क्यः स्वमेव ब्रह्मचारिणं** स्वान्तेवासिनमु**वाच**—हे **सोम्य! एता गा** अस्मद्गृहान् प्रति **उदज** उद्गमय। सामविधिं शृणोतीति **सामश्रवा** वा याज्ञवल्क्यशिष्यः अतश्चतुर्वेदी मुनिरित्यर्थः। सोऽयमाचार्यगृहान् प्रति **ता** गा **ह उदाचकार** उत्कालितवानित्यर्थः। यो ब्रह्मिष्ठपणस्वीकारी तेनात्मनो ब्रह्मिष्ठता प्रतिज्ञातेति **ते ह ब्राह्मणाः चुक्रुधुः**। तेषां क्रोधाभिप्रायस्तु—**कथं** दिगन्तविश्रान्तयशसामस्माकं पुरतो **ब्रह्मिष्ठो**ऽस्मीति **ब्रूवीतेति**? एवं क्रुद्धेषु ब्राह्मणेषु **अथ ह जनकस्य वैदेहस्य होता** ऋत्विक् **अश्वलो** नाम

**बभूव**। **सोऽयं** ब्रह्मिष्ठाभिमानी राजाश्रयतोऽपि धृष्टः सन् **याज्ञवल्क्यमेनं पप्रच्छ**। किमिति? **त्वं नु खलु नो याज्ञवल्क्य! ब्रह्मिष्ठोऽसि इति**। प्लुतिस्तु भर्त्सनार्था। तदाकर्ण्य **स होवाच** याज्ञवल्क्यः। **ब्रह्मिष्ठाय इदानीं वयं नमस्कुर्मः। वयं** तु **गोकामा एव स्मः इति**। ब्रह्मिष्ठपणस्वीकारात् ब्रह्मिष्ठप्रतिज्ञं सन्तं याज्ञवल्क्यं ततः **प्रष्टुं** मनो **दध्रे होताश्वलः** ॥ २ ॥

यजमानस्य कर्मप्रयुक्तमृत्योरतिमुक्तिः

**याज्ञवल्क्य! इति होवाच यदिदꣳ सर्वं मृत्युनाप्तꣳ सर्वं मृत्युनाभिपन्नं केन यजमानो मृत्योराप्तिमतिमुच्यत इति? होत्रा ऋत्विजा अग्निना वाचा वाग्वै यज्ञस्य होता तद्येयं वाक् सोऽयमग्निः स होता स मुक्तिः सातिमुक्तिः ॥ ३ ॥**

किं पृष्टवान्? इत्यत आह—**याज्ञवल्क्येति। याज्ञवल्क्य! इति होवाच**। किमिति? मधुकाण्डे उद्गीथप्रकरणे च पाङ्क्तयज्ञकर्मणा मृत्योरत्ययो यजमानस्य दर्शितः। तदिदमयं जानाति नवेति परीक्षार्थं **यदिदं सर्वं** कर्मसाधनजातं ऋत्विगग्न्यादिसाध्यकर्मलक्षणमृत्युनाप्तं व्याप्तं **मृत्युनाभिपन्नं** वशीकृतं च। **केन** साधनेन **यजमानो मृत्योराप्तिमतीत्य मुच्यते** मृत्योरवश्यो भवतीति? एवं पृष्टो याज्ञवल्क्य आह। किमिति? **होत्रा ऋत्विजा अग्निना वाचेति**। कः पुनरसौ होता? इत्यत्र या **वाक् यज्ञस्य** यजमानस्य सैव **होता**। "यज्ञो वै यजमानः" इति श्रुतेः। अधियज्ञे तु **तत्तत्र येयं वाक्** यजमानस्य **सोऽयमग्निरिति** प्रसिद्धः। तदेतदधिदैवतं त्र्यन्नप्रकरणे व्याख्यातम्। **सोऽयमग्निर्होतेति**। तथा च श्रुतिः "अग्निर्वै होता" इति। यदेतत् यज्ञस्याधियज्ञं होताध्यात्मं च वाक् इत्येतदुभयं परिच्छिन्नं ज्ञानविकलकेवलकर्ममृत्युनाप्तम्। तत्तु अधिदैवताग्निना दृश्यमानं सत् यजमानस्य मृत्योरतिमुक्तये भवति। तत् कथम्? **स** होताग्निरूपेण दृष्टः **मुक्तिः**।

मुक्तिसाधनत्वात् परिच्छिन्नसाधनद्वयस्य मृत्युत्वम्। तत् पुनः अधिदैवताग्नि-दृष्टिर्या **सातिमुक्तिः** ॥ ३ ॥

दर्शपूर्णमासादिकालादप्यतिमुक्तिः

**याज्ञवल्क्य ! इति होवाच यदिदꣳ सर्वमहोरात्राभ्यामाप्तꣳ सर्वमहोरात्राभ्यामभिपन्नं केन यजमानोऽहोरात्रयोराप्तिमतिमुच्यत इति ? अध्वर्युणा ऋत्विजा चक्षुषादित्येन चक्षुर्वै यज्ञस्याध्वर्युस्तद्य-दिदं चक्षुः सोऽसावादित्यः सोऽध्वर्युः स मुक्तिः सातिमुक्तिः ॥४॥**

केवलकर्मप्रयुक्तमृत्योरतिमुक्तिः व्याख्याता। पूर्वोक्तकर्ममृत्योराश्रयदर्शपूर्णमा-सादिकर्मविपरिणामहेतुकालादप्यतिमुक्तिः वक्तव्येतीदमारभ्यते—**याज्ञवल्क्ये**ति। **याज्ञवल्क्य! इति होवाच। यदिदं सर्वमहोरात्राभ्यामाप्तम्**। स च कालो द्विरूपः। तत्र होत्रादिलक्षणस्त्वेकः। अपरः तिथ्यादिलक्षणः। तत्राद्येनातिमुक्ति-माह—**सर्व**मिति। **सर्वमहोरात्राभ्यां** हि जायते नश्यति च। तथा यज्ञसाधनं यजमानरूपयज्ञस्य **चक्षुरध्वर्युः**। शिष्टं पूर्ववदुन्नेयम्। एवं साधनभूताध्यात्माधि-भूतपरिच्छेददृष्टिं विहायाधिदैवतादित्यात्मना यत् दृष्टं स **मुक्तिः**। या दृष्टि-रध्वर्युमादित्यात्मना पश्यति सैव **मुक्तिः अतिमुक्तिश्च**। न ह्यादित्यभावमा-पन्नस्याहोरात्रकलनास्ति ॥ ४ ॥

तिथ्यादिकालादप्यतिमुक्तिः

**याज्ञवल्क्य ! इति होवाच यदिदꣳ सर्वं पूर्वपक्षापरपक्षा-भ्यामाप्तꣳ सर्वं पूर्वपक्षापरपक्षाभ्यामभिपन्नं केन यजमानः पूर्वपक्षा-परपक्षयोराप्तिमतिमुच्यत इति ? उद्गात्रा ऋत्विजा वायुना प्राणेन प्राणो वै यज्ञस्य उद्गाता तद्योऽयं प्राणः स वायुः स उद्गाता स मुक्तिः सातिमुक्तिः ॥ ५ ॥**

अहोरात्रादिलक्षणादतिमृत्युमङ्गीकृत्य तिथ्यादिलक्षणादप्यतिमुक्त्यवगमाय इदमारभ्यते—**याज्ञवल्क्य!** इति। **यदिदं सर्वं** पूर्वोक्ताहोरात्रयोरादित्यः कर्ता न प्रतिपदादितिथीनाम्। तासां तु चन्द्रमाः कर्ता वृद्धिक्षयसाम्यात्। यथादित्या-पत्त्याहोरात्रात्ययः तथा चन्द्रापत्त्या पूर्वपक्षापरपक्षात्ययः। यजमानप्राणवायुरेव उद्गातेति उद्गीथब्राह्मणेऽभिहितं "वाचा च ह्येव स प्राणेन चोदगायदिति" इति। तथा च "अथैतस्य प्राणस्यापः शरीरं ज्योतीरूपमसौ चन्द्रः" इति प्राणवायुचन्द्रमसामेकत्वात्। वायुनिमित्तौ हि वृद्धिक्षयौ चन्द्रमसः। यतः तिथिरूपकालकारयिता वायुः अतो वायुभावमापन्नः तिथ्यादिकालातीतो भवति। वाय्वात्मदृष्टिः **मुक्तिः अतिमुक्तिश्चेति** ॥ ५ ॥

कालादिमुक्तेरवष्टम्भकथनम्

**याज्ञवल्क्य! इति होवाच यदिदमन्तरिक्षमनारम्बणमिव केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमत इति? ब्रह्मणा ऋत्विजा मनसा चन्द्रेण मनो वै यज्ञस्य ब्रह्मा तद्यदिदं मनः सोऽसौ चन्द्रः स ब्रह्मा स मुक्तिः सातिमुक्तिरित्यतिमोक्षा अथ संपदः ॥ ६ ॥**

कालातिमुक्तिः व्याख्याता। स केनावष्टम्भेन परिच्छेदमृत्युमतीत्य यथोक्तफलमाप्नोति? इति पृच्छति—**याज्ञवल्क्य!** इति। **याज्ञवल्क्य! इति होवाच। यदिदं** प्रसिद्धम**न्तरिक्षमनारम्बणम**नालम्बनमि**व**। इवशब्दादा-लम्बनमस्त्येव। तत्तु न ज्ञायते। तदर्थं केनेति पृच्छ्यते। अन्यथा फलाप्ति-वैरल्यात्। यदवष्टभ्य यजमानः कर्मफलप्रतिपत्त्यातिमुच्यते। **केनाक्रमेण यजमानः स्वर्गं** लोकमाप्नोति अतिमुच्यते? इत्यत्र **ब्रह्मणा ऋत्विजा मनसा चन्द्रेणेति** पूर्ववत्। तत्र **यज्ञस्य** यजमानस्य यदिदं **मनः** तदध्यात्मम्। प्रसिद्धं हि तदधिदैवतं चन्द्र इति। स एव चन्द्रमा **ब्रह्मा** ऋत्विक्। तेन ब्रह्मणः परिच्छिन्नरूपमधिभूतमध्यात्मं च। तदुभयमपरिच्छिन्नचन्द्ररूपेण पश्यति।

तेन चन्द्रमसालम्बनेन कर्मफलभूतस्वर्गं लोकमाप्नोत्यतिमुच्यते । इत्येवं प्रकारा मृत्योरतिमोक्षाः ॥ ६ ॥

फलप्रापकसंपत्कथनम्

**याज्ञवल्क्य ! इति होवाच कतिभिरयमद्य ऋग्भिर्होतास्मिन् यज्ञे करिष्यतीति ? तिसृभिरिति कतमास्तास्तिस्र इति ? पुरोनुवाक्या च याज्या च शस्यैव तृतीया किं ताभिर्जयतीति ? यत्किंचेदं प्राणभृदिति ॥ ७ ॥**

अथाधुना संपद उच्यन्ते । या फलप्रापकाः ताः संपदः । तत्प्रकारकथनाय इदमारभ्यते—**याज्ञवल्क्य !** इति । स्वाभिमुखीकरणाय **याज्ञवल्क्य ! इति होवाच । कतिभिः ऋग्भिः अयं** होताद्यास्मिन् **यज्ञे करिष्यति** शस्त्रं शंसति ? इतर आह । **तिसृभिरि**त्युक्तवन्तं इतर आह—**कतमाः ताः तिस्र** इति ? इतर आह—**पुरोनुवाक्या चे**ति । यागकालात् प्राक् याः प्रयुज्यन्ते ऋचः सा ऋग्जातिः **पुरोनुवाक्ये**त्युच्यते । या ऋचो यागार्थं प्रयुज्यन्ते सा ऋग्जातिः **याज्या** । या ऋचः शस्त्रार्थं प्रयुज्यन्ते सा ऋग्जातिः **शस्या** । सर्वास्तु याः काश्चन ऋचः स्तोत्रिया अन्या वा । एतास्वेव तिसृषु ऋग्जातिषु सर्वा अन्तर्भवन्ति । **किं ताभिः जयतीति ? यत्किञ्चेदं प्राणभृदिति** यत्किञ्चित् प्राणभृज्जातं सर्वं जयति सङ्ख्यासामान्यात् तत्फलजातं संपादयतीत्यर्थः ॥ ७ ॥

अध्वर्युनिर्वर्त्यकार्यं तत्फलं च

**याज्ञवल्क्य ! इति होवाच कत्ययमद्याध्वर्युरस्मिन् यज्ञे आहुतीर्होष्यतीति ? तिस्र इति कतमास्तास्तिस्र इति ? या हुता उज्ज्वलन्ति या हुता अतिनेदन्ते या हुता अधिशेरते किं ताभि-**

जयतीति ? या हुता उज्ज्वलन्ति देवलोकमेव ताभिर्जयति दीप्यत इव हि देवलोको या हुता अतिनेदन्ते पितृलोकमेव ताभिर्जयत्यतीव हि पितृलोको या हुता अधिशेरते मनुष्यलोकमेव ताभिर्जयति अध इव हि मनुष्यलोकः ॥ ८ ॥

अध्वर्युनिर्वर्त्यकार्यं तत्फलं च पृच्छति—**याज्ञवल्क्य** इति। **याज्ञवल्क्य ! इति होवाच । कत्ययमद्याध्वर्युः अस्मिन् यज्ञे आहुतीर्होष्यतीति ?** पूर्ववत् **तिस्र इति। कतमास्तास्तिस्र इति ?** इतर आह—**या हुता उज्ज्वलन्ति** समिदाज्यादिभिः। **या हुता अतिनेदन्ते** मांसाद्याहुतयः शब्दं कुर्वन्ति। **या हुता अधिशेरते** पयस्सोमाद्या अधो भूप्रदेशं गत्वा शेरते। **किं ताभिराहुतीभिर्जयतीति ?** इतर आह—**या हुताः** समिदाज्यादिभिः **उज्ज्वलन्ति** यजमानस्ताभिरुज्ज्वलद्**देवलोकमेव ताभिः जयतीति। दीप्यत इव हि देवलोकः।** यजमाननिर्वर्तिताहुतयो यजमानस्य देवलोकं संपादयन्ति। **या हुता अतिनेदन्ते पितृलोकमेव ताभिः** जयतीति। शब्दवन्मांसाद्याहुतीनां हा हतोऽस्मि मुञ्च मुञ्च इति यमलोकगतपापिजनाक्रोशसामान्यात्। ता आहुतयो यजमानस्य पितृलोकमेव संपादयन्ति। **या** आहुतयो**ऽधिशेरते मनुष्यलोकमेव ताभिः जयतीति** भूम्युपरि संबन्धसामान्यात्। **मनुष्यलोकस्तु** गन्धर्वादिलोकापेक्षयावर **इव हि** अवर एव लक्ष्यते। तन्निर्वर्तिताहुतयो मनुष्यलोकमेव संपादयन्तीत्यर्थः ॥ ८ ॥

ब्रह्मनिर्वर्त्यकर्म तत्फलं च

याज्ञवल्क्य ! इति होवाच कतिभिरयमद्य ब्रह्मा यज्ञं दक्षिणतो देवताभिर्गोपायति ? एकयेति कतमा सा एकेति ? मन एवेति अनन्तं वै मनोऽनन्ता विश्वेदेवा अनन्तमेव स तेन लोकं जयति ॥ ९ ॥

ब्रह्मनिर्वर्तितकर्म तत्फलं च पृच्छति—**याज्ञवल्क्य!** इति। **याज्ञवल्क्य! इति** पूर्ववत्। **अद्यास्मिन्** यज्ञे ब्रह्मा **दक्षिणतः** स्वासने स्थित्वा **कतिभिः देवताभिः यज्ञं गोपायति?** अत्रत्यबहुवचनस्य प्रासङ्गिकत्वात् पूर्वखण्डिकाद्वयकृतप्रश्नप्रतिवचनेषु कतिभिः तिसृभिः इति प्रसङ्गानुरोधेन इहापि कतिभिः इति प्रश्नोपक्रमः। यद्वा प्रतिवादिबुद्धिव्यामोहार्थं बहुवचनम्। तत् ज्ञात्वा इतर आह—**एकयेति**। यया ब्रह्मा यज्ञं गोपायति सा एकेत्यर्थः। इतर आह—**कतमा सा एकेति?** आह इतरः। **मन एवेति**। मनसा हि ब्रह्मा व्याप्रियते। "तस्य यज्ञस्य मनश्च वाक् च वर्तनी तयोरन्यतरां मनसा संस्करोति ब्रह्मा" इति श्रुतेः। मनो हि देवता। तया ब्रह्मा मौनेन यज्ञं गोपायति मनोवृत्तीनां बहुत्वात्। **तन्मनोऽनन्तम्**। **वै**शब्दः प्रसिद्धिद्योतकः। तथानन्त्याभिमानिनो **वै विश्वे देवाः** "सर्वे वेदा यत्रैकं भवन्ति" इति श्रुतेः। तेनानन्त्यसामान्या**दनन्तमेव स तेन लोकं जयती**त्यर्थः॥ ९॥

उद्गातृनिर्वर्त्यकर्म तत्फलं च

**याज्ञवल्क्य! इति होवाच कत्ययमद्य उद्गातास्मिन् यज्ञे स्तोत्रियाः स्तोष्यतीति? तिस्र इति कतमास्तास्तिस्र इति? पुरोनुवाक्या च याज्या च शस्यैव तृतीया कतमास्ता या अध्यात्ममिति? प्राण एव पुरोनुवाक्यापानो याज्या व्यानः शस्या किं ताभिर्जयतीति? पृथिवीलोकमेव पुरोनुवाक्यया जयति अन्तरिक्षलोकं याज्यया द्युलोकꣳ शस्यया ततो ह होताश्वल उपरराम॥ १०॥**

उद्गातृनिर्वर्त्यकर्म तत्फलं च पृच्छति—**याज्ञवल्क्य!** इति। **याज्ञवल्क्य! इति** पूर्ववत्। **अयमुद्गाता कति स्तोत्रिया अस्मिन् यज्ञे स्तोष्यति? इति**। **तिस्र इति**। **कतमास्तास्तिस्रः? इति**। पूर्ववत् **पुरोनुवाक्या च**

**याज्या च शस्यैव तृतीयेति** व्याख्यातमेतत्। यत्किञ्चेदं प्राणभृत् तत् सर्वं जयतीति। तत् केन सामान्येन? इत्यत्र **कतमास्तास्तिस्र ऋचो या अध्यात्मं** भवन्ति इवशब्दसामान्यात्। **प्राण एव पुरोनुवाक्या**। तदानन्तर्यादपानो **याज्या**, देवताया अपानतो हविर्ग्रसनात् "तदपानेनाजिघृक्षत् तदावयत्" इति श्रुतेः। **व्यानः शस्या** "अप्राणन् अनपानन् ऋचं अभिव्याहरति" इति श्रुतेः। **किं ताभिः जयति?** इत्युक्तार्थम्। तत्रानुक्तमिहोच्यते। लोकसंबन्धसामान्येन **पृथिवीलोकमेव पुरोनुवाक्यया जयति**। मध्यत्वसामान्याद**न्तरिक्षलोकं याज्यया**। ऊर्ध्वत्वसामान्यात् **द्युलोकं शस्यया**। **ततो ह** स्वकृतप्रश्नपूरणादस्मदादिभिः अजेयोऽयमिति **होताश्वल उपरराम** अवाक्छिरा बभूवेत्यर्थः॥ १०॥

**इति प्रथमं ब्राह्मणम्**

---

## द्वितीयं जारत्कारवब्राह्मणम्

ग्रहातिग्रहबन्धमोक्षकथनम्

**अथ हैनं जारत्कारव आर्तभागः पप्रच्छ याज्ञवल्क्य! इति होवाच कति ग्रहाः कत्यतिग्रहा इति? अष्टौ ग्रहा अष्टावतिग्रहा इति ये तेऽष्टौ ग्रहा अष्टावतिग्रहाः कतमे ते? इति॥ १॥**

आख्यायिकासंबन्धस्तु काललक्षणात् कर्मलक्षणाच्च मृत्योरतिमुक्तिरुद्गीथादिब्राह्मणेषु व्याख्याता। इह तु ग्रहातिग्रहलक्षणो मृत्युबन्धः। तस्मान्मोक्षो वक्तव्य इति जारत्कारवब्राह्मणमारभ्यते— **अथेति**। **अथा**श्वलोपरत्यनन्तरं—**ह**कार ऐतिह्यार्थः—जरत्कारुगोत्रतो **जारत्कारवः** ऋतभागस्यापत्य**मार्तभागः** स्वाभिमुखीकरणाय **याज्ञवल्क्य! इति होवाच**। ततो ग्रहातिग्रहविषय**प्रश्नमेनं**

याज्ञवल्क्यं **पप्रच्छ** । **कति ग्रहाः? कत्यतिग्रहाः? इति प्रश्नः** । **इति**-शब्दो वाक्यसमाप्त्यर्थः । कतिसंख्याका ग्रहाः अतिग्रहाश्च? इति पृच्छति । इतर आह—**अष्टौ ग्रहा अष्टावतिग्रहा इति** । ये तेऽभिहिता **अष्टौ ग्रहा अष्टावतिग्रहाः कतमे ते** नियमेन गृहीतव्याः? **इति** ॥ १ ॥

प्राणादीनां ग्रहातिग्रहत्वकथनम्

**प्राणो वै ग्रहः सोऽपानेनातिग्राहेण गृहीतोऽपानेन हि गन्धाञ्जिघ्रति ॥ २ ॥ वाक् वै ग्रहः स नाम्नातिग्राहेण गृहीतो वाचा हि नामान्यभिवदति ॥ ३ ॥ जिह्वा वै ग्रहः स रसेनातिग्राहेण गृहीतो जिह्वया हि रसान् विजानाति ॥ ४ ॥ चक्षुर्वै ग्रहः स रूपेणातिग्राहेण गृहीतः चक्षुषा हि रूपाणि पश्यति ॥ ५ ॥ श्रोत्रं वै ग्रहः स शब्देनातिग्राहेण गृहीतः श्रोत्रेण हि शब्दान् शृणोति ॥ ६ ॥ मनो वै ग्रहः स कामेनातिग्राहेण गृहीतो मनसा हि कामान् कामयते ॥ ७ ॥ हस्तौ वै ग्रहः स कर्मणातिग्राहेण गृहीतो हस्ताभ्याँ हि कर्म करोति ॥ ८ ॥ त्वक् वै ग्रहः स स्पर्शेनातिग्राहेण गृहीतः त्वचा हि स्पर्शान् वेद यत इत्येतेऽष्टौ ग्रहा अष्टावतिग्रहाः ॥ ९ ॥**

प्रश्नोत्तरमाचष्टे—**प्राण** इत्यादिना । घ्राणाभिधानप्राणो **वै ग्रहः** प्रकरणात् । **सोऽपानेनातिग्राहेण गृहीतः** अपानस्य गन्धापहारित्वात् । सर्वो लोकोऽपानद्वारा घ्राणेन गन्धं जिघ्रति । अत इदमुच्यते—**अपानेन हि गन्धान् जिघ्रति** इति । वाग्वै ग्रहः इति । **वाग्वै ग्रहः** । **स** वागाख्यग्रहः वक्तव्य**नाम्नातिग्राहेण गृहीतः** । अतिग्राहेणेति दैर्घ्यं छान्दसम् । वक्तव्यार्था

हि वाक् स्वकार्यमकृत्वा नैव शाम्यति । अत एव हि लोको **वाचा नामान्यभिवदति** । जिह्वादित्वगन्तं समानमित्याह—**जिह्वेति** ॥ २–९ ॥

ग्रहप्रयुक्तमृत्युतरणम्

**याज्ञवल्क्य ! इति होवाच यदिद्ं॰ सर्वं मृत्योरन्नं कास्वित् सा देवता यस्या मृत्युरन्नमिति ? अग्निर्वै मृत्युः सोऽपामन्नमप पुनर्मृत्युं जयति ॥ १० ॥**

ग्रहविषयकप्रश्नपूरणानन्तरं तत्प्रयुक्तमृत्युतरणाय पृच्छति—**याज्ञवल्क्य ! इति** । **यदिदं सर्वं** व्याकृतं **मृत्योरन्नं** ग्रहातिग्रहमृत्युना ग्रस्तं सत् जायते विपद्यते च । **कास्वित्** का नु स्यात् **सा देवता यस्या** देवताया **मृत्युरन्नं** भवति ? "मृत्युर्यस्योपसेचनम्" इति श्रुतेः । मृत्योरपि मृत्युरस्तीति कथनाकथनाभ्यामनवस्थानिर्मोक्षौ स्यातामिति चेन्न ; स्वातिरिक्तसामान्यमृत्योः मृत्यन्तरानुपपत्तेः । तत् कथम् ? इत्यत्र—**अग्निस्तावत्** सर्वस्य **मृत्युः** विनाशकत्वेन दृष्टत्वात् । **सोऽग्निरद्भिः** भक्ष्यत इत्य**पामन्नम्** । अतो मृत्योरपि मृत्युरस्ति । तेन हि ग्रहातिग्रहजातं भक्ष्यते । ग्रहातिग्रहबन्धने मृत्युमृत्युना नाशिते संसृतिमुक्तिरुपपन्ना भवति । बन्धनं ग्रहातिग्रहदर्शनम् । मृत्युमृत्युप्रबोधः तन्मुक्तिहेतुः । यत एवमतो बन्धमोक्षाय पुरुषप्रयत्नः सफलो भवति । एवंवित् **पुनः मृत्युमपजयति** ॥ १० ॥

एवंवित्प्राणोऽप्युत्क्रामति किं इति प्रश्नः

**याज्ञवल्क्य ! इति होवाच यत्रायं पुरुषो म्रियत उद्स्मात् प्राणाः क्रामन्ति आहो३ नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयति आध्मायत्याध्मातो मृतः शेते ॥ ११ ॥**

एवंवित्प्राणोऽप्युत्क्रामतीति पृच्छति—**याज्ञवल्क्य!** इति। परमात्मप्रबोधाविर्भूतपरमृत्युना स्वातिरिक्तग्रहादिमृत्यौ भक्षिते सति, अथ **यत्र** यस्मिन् काले **सोऽयं** विद्वान् **म्रियते**। **ऊर्ध्वमस्मात्** ब्रह्मविदो म्रियमाणात् वागादयः **प्राणा** ग्रहा नामादयोऽतिग्रहाश्च **क्रामन्ति** ऊर्ध्वमुत्क्रमन्ते, आहोस्वित् **नेति**। **नेति होवाच याज्ञवल्क्यः**। विदुषः प्राणादयो नोत्क्रमन्ति। **अत्रैव** स्वात्मनि परतत्त्वे **समवनीयन्ते** ऊर्मयः समुद्र इव सम्यक् विलीयन्त इत्यर्थः। "एवमेवास्य परिद्रष्टुरिमाः षोडश कलाः पुरुषायणाः पुरुषं प्राप्यास्तं गच्छन्ति" इति श्रुतेः। यस्मात् **स उच्छ्वयति** उच्छूनभावमेति ब्राह्यवायुनाध्**मायति** पूर्यते दृतिवदाध्**मातो मृतः शेते**। विदुषो न कुत्रापि गमनमस्तीत्यर्थः॥ ११॥

सर्वस्य समवनयनं मुक्तिश्च

**याज्ञवल्क्य! इति होवाच यत्रायं पुरुषो म्रियते किमेनं न जहातीति? नामेति अनन्तं वै नाम अनन्ता विश्वे देवा अनन्तमेव स तेन लोकं जयति॥ १२॥**

किं विदुषः प्राणा एव समवनीयन्ते तत्प्रयोजकमपि? तद्विद्यमाने पुनः प्राणप्रसङ्गोऽपि स्यात्। अतः सर्वं समवनीयते। ततो मुक्तिः स्यात् इति ख्यापनायायं प्रश्नारम्भः—**याज्ञवल्क्य!** इति। **यत्रायं पुरुषो म्रियते किमेनं न जहाति? इत्यत्र** इतर आह—**नामेति**। नामातिरिक्तं सर्वं विलीयते। प्रकृतिसंबन्धात् नाममात्रं तु न लीयते। नाम्न आनन्त्याधिकृता **अनन्ता वै विश्वे देवाः। अनन्तमेव स तेन लोकं जयति**। नामाधिकृतविश्वेदेवाभेदज्ञानतोऽक्षयलोकाप्तिरान्तरालिकं फलम्॥ १२॥

ग्रहातिग्रहप्रलयो मुक्तिः

**याज्ञवल्क्य! इति होवाच यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीं**

**शरीरमाकाशमात्मा औषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयते क्वायं तदा पुरुषो भवतीति? आहर सोम्य! हस्तमार्तभाग! आवामेव एतस्य वेदिष्यावो न नावेतत् सजन इति तौ होत्क्रम्यामन्त्रयांचक्राते तौ ह यदूचतुः कर्म हैव तदूचतुः अथ यत्प्रशशꣳसतुः कर्म हैव तत्प्रशशꣳसतुः पुण्यो वै पुण्येन कर्मणा भवति पापः पापेनेति ततो ह जारत्कारव आर्तभाग उपरराम ॥ १३ ॥**

ग्रहातिग्रहयोः मृत्युरूपत्वेन बन्धनत्वं मृत्युमृत्युज्ञानात्तन्मुक्तत्वं चोक्तम्। प्रदीपनिर्वाणवत् ग्रहातिग्रहप्रलयो मुक्तिरिति प्रकटनार्थमिदमारभ्यते—**याज्ञवल्क्य!** इति। **याज्ञवल्क्य! इति होवाच। यत्रास्य** शिरःपाण्यादिमतः **पुरुषस्य मृतस्य वागिन्द्रियमग्निं** प्रत्यप्येति। **प्राणो** वातमप्येतीति सर्वत्रानुषज्यते। **चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीꣳशरीरमाकाशमात्मा** हृदयाकाशं महाकाशमप्येति। **लोमान्योषधीरपियन्ति। केशा वनस्पतीनपियन्ति। लोहितं च रेतश्चाप्सु निधीयते। न** तु वागादिशब्देन करणान्येव, अपि तु तत्तत्करणाभिमानिदेवता गृह्यते। विमोक्षात् प्राक् साधिष्ठानकरणानि व्याविद्धदात्राद्युपमानि भवन्ति हि। तदानीं पुरुषः किमाश्रितो भवति? इति पृच्छति—**क्वायं तदा पुरुषो भवतीति?** यमाश्रित्य पुनः कार्यकारणसङ्घातमुपादत्ते येन ग्रहातिग्रहप्रयुक्तबन्धनभाक् भवति इति प्रश्नः। तत्रोच्यते। **आहर सोम्य! हस्तमार्तभाग!** इति। **आवामेव** यद्वेदितव्यं **तद्वेदिष्यावः**। कस्मात्? **न नौ** आवयोः **एतद्वस्तु सजने** निर्णेतुं शक्यते। **तौ ह** इत्यादि श्रुतेः वचः। **तौ** याज्ञवल्क्यार्तभागौ एकान्तं गत्वा किं चक्रुः? इत्यत आह—**तौ ह उत्क्रम्यामन्त्रयाञ्चक्रात** इति। आदौ तावत् लोकायतिकादिपक्षाणां एकैकपक्षमादाय विचारितवन्तौ। ततः किं ऊचतुः? इत्यत्र तावेवं विचार्य पूर्वपक्षं दूरीकृत्य **कर्म हैव** कार्यकारणोपादानहेतुं कर्माश्रितं **तत्** तत्रोचतुः। तत्र किं प्रशशंसतुः?

**कर्म हैव तत् प्रशशंसतुः** । यत एवं निर्धारितमेतत् कर्म ग्रहातिग्रहकार्यकरणोपादानं शास्त्रविहित**पुण्येन कर्मणा पुण्यो भवति** । तद्विपरीतपापकर्मणा **पापो** भवतीति । इत्थं याज्ञवल्क्येन स्वकृतप्रश्नजालपूरणतः अयमप्रकम्प्य इति मत्वा **जारत्कारव आर्तभाग उपरराम** ॥ १३ ॥

**इति द्वितीयं ब्राह्मणम्**

---

## तृतीयं लाह्यायनिब्राह्मणम्

कर्मफलस्य संसारत्वप्रदर्शनम्

अथ हैनं भुज्युर्लाह्यायनिः पप्रच्छ याज्ञवल्क्य! इति होवाच मद्रेषु चरकाः पर्यव्रजाम ते पतञ्जलस्य काप्यस्य गृहान् ऐम तस्यासीत् दुहिता गन्धर्वगृहीता तमपृच्छाम कोऽसि इति? सोऽब्रवीत् सुधन्वाङ्गिरस इति तं यदा लोकानामन्तानपृच्छाम अथैनमब्रूम क्व पारिक्षिता अभवन्निति क्व पारिक्षिता अभवन्? स त्वा पृच्छामि याज्ञवल्क्य! क्व पारिक्षिता अभवन्? इति ॥ १ ॥

ग्रहातिग्रहलक्षणं बन्धनम् । येन बद्धः संसरति स मृत्युः । स हि मृत्युः । तस्मान्मोक्षणहेतुमृत्युमृत्युरात्मा । ग्रहातिग्रहरूपमृत्युवर्त्मनि संसरतां "पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन" इति संसारगतिरभिहिता । तस्मान्न मोक्षार्थानि कर्माणि इति सिद्धम् । अतः कर्मफलस्य संसारत्वप्रदर्शनाय इदं ब्राह्मणमारभ्यते—**अथेति** । **अथ** जारत्कारवप्रश्नानन्तरं नामतो **भुज्युः** लह्यस्यापत्यं लाह्यः तदपत्यं **लाह्यायनिः पप्रच्छ** । **याज्ञवल्क्य! इति**

**होवाच** । समष्टिव्यष्टिफलात्मकमश्वमेधदर्शनमादावुक्तम् । तत्कर्तुरश्वमेधस्य कर्मणां काष्ठारूपत्वात् ।

भ्रूणहत्याश्वमेधाभ्यां न वरं पुण्यपापयोः ।

इति स्मरणात् । तत् किं केवलकर्मणा ज्ञानेन वा तदुभयसमुच्चितेन वा समष्टि व्यष्टिफलं च प्राप्नोति । तत्र व्यष्टिफलस्याण्डान्तःपातित्वेन ज्ञातत्वात् मृत्यु-रस्यात्मा भवतीत्युक्तम् । मृत्योरशनायादिलक्षणत्वात् । समुच्चयफलन्तु समष्टि-लिङ्गशरीराभिमानिहिरण्यगर्भाप्तिः यत्पदमपरविद्यापरमफलम् । एतद्व्यष्टिसमष्टि-दर्शनस्यालौकिकत्वेन दक्षिणोत्तरमार्गप्रापकत्वात् । अस्मिन्नर्थे इमामाख्यायिकां स्वानुभूतां प्रकुरुते । न हि भवद्बुद्धिव्यामोहाय उच्यते । मद्रा नाम जनपदाः । तेषु **मद्रेषु** अध्ययनार्थं व्रतचरणात् **चरका** अध्वर्यवो वा **पर्यव्रजाम** पर्यटितवन्तः । **ते पतञ्चलस्य** ते वयं पर्यटन्तः नामतः पतञ्जलस्य कपिगोत्रस्य **काप्यस्य गृहान् ऐम** गतवन्तः । **तस्यासीत् दुहिता गन्धर्वगृहीता** । गन्धर्वशब्देनाग्निरुच्यते । ऋत्विग्देवताविशिष्टविज्ञानवत्त्वात् । न हि सत्त्वमात्रस्य ईदृशं विज्ञानमस्ति । **तं** परिवार्य सर्वे वयं **अपृच्छाम—कोऽसि? इति** । किन्ना-मासि? इति पृष्टः **सोऽब्रवीत्**—गन्धर्वो नामतः **सुधन्वा** गोत्रत **आङ्गिरसः** । **तं यदा** यस्मिन् काले **लोकानामन्तान्** पर्यवसानान् **अपृच्छाम** भुवनकोश-परिमाणबोधाय **अथैनं** गन्धर्वमब्रूम—**क पारिक्षिता अभवन्? इति** । **स** सर्वमस्मभ्यमब्रवीत् । तन्मुखतो मया दिव्यज्ञानं लब्धम् । न हि ते तदस्ति । अतो मया निगृहीतोऽसि । गन्धर्वात् गृहीतविद्योऽहं **त्वा पृच्छामि—हे याज्ञवल्क्य! क** पारिक्षिता अभवन्? इति । तत् किं त्वं जानासि? कथय यत्त्वां पृच्छामि—**क पारिक्षिता अभवन्? इति** ॥ १ ॥

याज्ञवल्क्येन तद्गूढार्थकथनम्

**स होवाचोवाच वै सोऽगच्छन् वै ते तत् यत्राश्वमेधयाजिनो गच्छन्तीति क नु अश्वमेधयाजिनो गच्छन्तीति? द्वात्रिंशतं**

वै देवरथाह्न्यानि अयं लोकः तꣳ समन्तं पृथिवी द्विस्तावत्पर्येति ताꣳ समन्तं पृथिवीं द्विस्तावत् समुद्रः पर्येति तत् यावती क्षुरस्य धारा यावद्वा मक्षिकायाः पत्रं तावानन्तरेणाकाशः तानिन्द्रः सुपर्णो भूत्वा वायवे प्रायच्छत् तान् वायुरात्मनि धित्वा तत्रागमयत् यत्राश्वमेधयाजिनोऽभवन्निति एवमेव वै स वायुमेव प्रशशꣳस तस्माद्वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद ततो ह भुज्युर्लाह्यायनिरुपरराम ॥ २ ॥

तद्गूढार्थं भगवानाह—**स** हेति। **स होवाच**। याज्ञवल्क्य **उवाच वै सः**। वैशब्दः स्मरणार्थः। तुभ्य**मगच्छन् वै स** गन्धर्व उवाच। तत्तत्र क्व? **यत्र** यस्मिन् **अश्वमेधयाजिनो गच्छन्तीति**। एवं प्रश्ने निर्णीते आह इतरः—**क्व नु** कस्मिन् **अश्वमेधयाजिनो गच्छन्ति**? इति। तेषां गतिविवक्षया भूकोशपरिमाणमाह। कथम्? **द्वात्रिंशतं वै, देवः** सविता। तस्य रथो देवरथः। तद्गत्याह्ना यावद्देशपरिमाणं परिच्छिद्यते तद्देवरथाह्न्यं यदि द्वात्रिंशद्गुणितं तदा तानि **देवरथाह्न्यानि**। तावत्परिमाणो**ऽयं** लोकालोकपर्वतपरिक्षिप्तो **लोकः** यत्र प्राणिनां कर्मफलोपभोगः स एष लोक एतावान्। अतः परमलोकः। **तं** लोकं **समन्तं** समन्ततो विस्तारात् द्विगुणपरिमाणेन तं परिक्षिप्यति **पृथिवी**। **तां** पुनः **पृथिवीं** तथैव समन्तात् **द्विस्तावत्** द्विगुणपरिमाणेन **समुद्रः पर्येति** यं पौराणिका घनोदकमाचक्षते। तत्राण्डकपालद्वयपरिमाणं यद्विवरणबहिर्गता अश्वमेधयाजिनो वाप्नुवन्ति। **तत्** तत्र **यावती** यावत्परिमाणा **क्षुरस्य धारा** अतीव तीक्ष्णसूक्ष्माग्रं तथा **यावद्वा मक्षिकायाः पत्रं तावा**नण्डकपालयो**रन्तरेण** मध्ये **आकाश**श्छिद्रम्। तेन **तान्** पारिक्षितानश्वमेधयाजिनः प्राप्तान् यस्य यादृग्विज्ञानं तदनुरोधेन **इन्द्रः** परमेश्वरः **सुपर्णः** पक्षी **भूत्वा वायवे प्रायच्छत्**। **तान्** पारिक्षितान् **वायुरात्मनि धित्वा** स्थापयित्वा स्वात्मभूतान् कृत्वा **तत्र** तस्मिन्न**गमयत्**। क्व? **यत्र** पूर्वे अतिक्रान्ता **अश्वमेधयाजिनोऽभवन् इत्येवमिव**

**वै स** गन्धर्वो **वायुमेव प्रशशंस** वायोः पारिक्षितगतित्वात्। समाप्तेयमाख्यायिका। तन्निर्वृत्तमर्थं श्रुतिराचष्टेऽस्मभ्यम्। यतो वायुर्जगदन्तरात्मा स एवाध्यात्मादिभेदेन **व्यष्टिः समष्टिश्च** वायोः सूत्ररूपत्वात्। **य एवं** व्यष्टिसमष्ट्यात्मानं वायुमात्मत्वेन उपगच्छति सोऽप **पुनर्मृत्युं जयति**। एवमात्मनो गूढप्रश्ननिर्णयात् **भुज्युर्लाह्यायनिरुपरराम** ॥ २ ॥

**इति तृतीयं ब्राह्मणम्**

---

## चतुर्थं उषस्तब्राह्मणम्

आत्मावगतिप्रकारः

अथ हैनमुषस्तश्चाक्रायणः पप्रच्छ याज्ञवल्क्य! इति होवाच यत् साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः तं मे व्याचक्ष्व इति एष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य! सर्वान्तरो यः प्राणेन प्राणिति स त आत्मा सर्वान्तरो योऽपानेनापानीति स त आत्मा सर्वान्तरो यो व्यानेन व्यानीति स त आत्मा सर्वान्तरो य उदानेन उदानिति स त आत्मा सर्वान्तर एष त आत्मा सर्वान्तरः ॥ १ ॥

पुण्यपापतः संसरति इत्युक्तम्। तत्कलनासंभवात्मावगतये इदमुषस्तब्राह्मणमारभ्यते—**अथेति**। **अथ** लाह्यायनिप्रश्नपूरणानन्तर**मेनं** याज्ञवल्क्यं नामत **उषस्तः** चक्रस्यापत्यं चाक्रिः तदपत्यं **चाक्रायणः पप्रच्छ**। स्वाभिमुखीकरणाय **याज्ञवल्क्य! इति होवाच। यत् साक्षाद**व्यवहित**परोक्षाद**परोक्षं व्यष्टिप्रपञ्चोपबृंहणात् **ब्रह्म**। किं तत्? **य आत्मा** प्रत्यक् **सर्वान्तरः** व्यष्टिभूत-

कदम्बान्तःकरणवृत्तिसहस्रभावाभावप्रकाशकत्वेन तद्गतदोषास्पृष्टत्वात्। **तमात्मानं मे** मह्यं **व्याचक्ष्वेति**। एवं पृष्टः तं प्रत्याह याज्ञवल्क्यः—**एष ते** तवात्**मा सर्वान्तरः** "सबाह्याभ्यन्तरः" इति श्रुतेः। त्वत्कार्यकरणसंघातो येनात्मनात्मवान् स एष हि तवात्मा। पिण्डात्मलिङ्गात्मनोः कतरो ममात्मा? इति। तत्र इतर आह—**य** इति। **यो** हृन्मुखनासिकालय**प्राणेन प्राणिति** प्राणनचेष्टां करोति—"येन प्राणः प्रणीयते" इति श्रुतेः—**स ते** कार्यकरणसंघा**तात्मा** विज्ञानमयः। समानमन्यत्। **योऽपानेनापानीतीति** दैर्घ्यं छान्दसम्। दारुयन्त्रस्थानीयकरणसन्ततिः यद्योगात् स्वं स्वं व्यापारं करोति यद्विना विशीर्यते एवं यश्चेष्टानिमित्तं स संघातविलक्षण इत्यर्थः॥ १॥

स्पष्टतयात्मलक्षणकथनम्

स होवाच उषस्तश्चाक्रायणो यथा विब्रूयात् असौ गौरसावश्व इति एवमेव एतद्व्यपदिष्टं भवति यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति एष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य! सर्वान्तरो न दृष्टेर्द्रष्टारं पश्येर्न श्रुतेः श्रोतारꣳ शृणुयान्न मतेर्मन्तारं मन्वीथा न विज्ञातेर्विज्ञातारं विजानीया एष त आत्मा सर्वान्तरः अतोऽन्यदार्तं ततो होषस्तश्चाक्रायण उपरराम॥ २॥

मया यत्पृष्टं तदपोह्यान्यत् वदतीति पुनः पृच्छति—**स** हेति। **स होवाच** इत्यादि समानम्। त्वत्पृष्टप्रश्नोत्तरं सम्यग्वक्ष्यामीति प्रतिज्ञाय किं पुनस्त्वमन्यथा ब्रूषे? **यथा** प्राकृतः प्रतिज्ञाविपरीतं **ब्रूयात्**। **असौ गौरसावश्वो** यश्चलति धावतीति वा। पूर्वं तत् दर्शयामीति प्रतिज्ञाय तत्-श्चलनादिलिङ्गैः व्यपदिशति **तथैवमेवैतत्** ब्रह्म त्वया प्राणादिलिङ्गैः **व्यपदिष्टं भवति**। तत् विहाय **यदेव साक्षादपरोक्षात्** ब्रह्म **य आत्मा सर्वान्तरः**

**तं मे व्याचक्ष्वेति**। इतर आह—**एष त आत्मा सर्वान्तर** इति। एवंलक्षणस्त्वात्मेति यथा मयात्मा प्रतिज्ञातः तथैवोक्तम्। घटादिवत् तमात्मानं निदर्शयेति यदि वदसि तदैवमयमात्मा निर्वक्तुमशक्यः निष्प्रतियोगिकनिर्विशेषत्वात्। तथा चेत् तदवगतिः कथं? इत्याकाङ्क्षायां चक्षुरादिकरणग्रामारोपापवादाधिकरणप्रबोधोपायतो निरधिकरणनिर्विशेषं ब्रह्म स्वमात्रमित्यवगन्तुं शक्यमित्याह—**न दृष्टेर्द्रष्टारं पश्येरि**त्यादिना। लौकिकादिभेदात् दृष्टिर्द्विविधा। तत्र चक्षुरादिकरणानुग्रहान्तःकरणवृत्तिः लौकिकी दृष्टिः। सा जायते नश्यति च। अग्न्युष्णप्रकाशवत् या वस्तुस्वरूपभूता सा त्वलौकिकी दृष्टिः। सा जात्वपि न जायते न विनश्यति च। तस्या ज्ञप्तिमात्रत्वेन नित्यत्वात्। तद्दृष्ट्यारूढो द्रष्टा स्वातिरिक्तरूपादिकं स्वाज्ञदृष्ट्या पश्यन्नपि स्वज्ञदृष्ट्या पश्यति न परमार्थदृष्ट्या तत्प्रसक्तिरेव नास्तीत्यर्थः। न ह्यलौकिकदृष्टेरन्यथाभावः कदापि विद्यते। तथा च वक्ष्यति "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते" इति। लौकिक्या दृष्टेर्द्रष्टारं प्रत्यञ्चमात्मानं न पश्येः। तथा श्रुतेः **श्रोतारं न शृणुयाः**। तथा **मतेर्मन्तारं न मन्वीथाः**। तथा **विज्ञाते**र्धीवृत्तिततेर्**विज्ञातारं न विजानीया एष त आत्मा सर्वान्तरः**। सर्वान्तर इत्युक्त्या व्याप्यव्यापकता स्यात् इत्यत्र यत् लौकिकदृष्ट्यादिकं स्वातिरिक्तत्वेन व्याप्य धिया विकल्पितं तद्धि **अतः** स्वात्मनो लौकिकदृष्टिरूपात् **अन्यत्** अतिरिक्त**मार्तं** वाचारम्भणमात्रं वस्तुतः स्वातिरिक्तसामान्यस्य मृग्यत्वात्। स्वातिरिक्तप्रसक्तव्याप्यव्यापककलनापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमवशिष्यत इत्यत्र—

ततः स्तिमितगम्भीरं न तेजो न तमस्ततम्।
अनाख्यमनभिव्यक्तं सत् किंचिदवशिष्यते ॥

इति श्रुतेः। एवं स्वप्रश्नपूरणहर्षतः **ह्येषस्तश्चाक्रायण उपरराम** ॥ २ ॥

**इति चतुर्थं ब्राह्मणम्**

---

## पञ्चमं कहोलब्राह्मणम्

### स्वात्मसाधनत्वेन सर्वसंन्यासकथनम्

अथ हैनं कहोलः कौषीतकेयः पप्रच्छ याज्ञवल्क्य ! इति होवाच यदेव साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्वेति एष त आत्मा सर्वान्तरः कतमो याज्ञवल्क्य ! सर्वान्तरो योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय अथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणा उभे ह्येते एषणे एव भवतः तस्मात् ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् बाल्यं च पाण्डित्यं च निर्विद्य अथ मुनिरमौनं च मौनं च निर्विद्य अथ ब्राह्मणः स ब्राह्मणः केन स्यात्? येन स्यात् तेन ईदृश एव अतोऽन्यदार्तं ततो ह कहोलः कौषीतकेय उपरराम ॥ १ ॥

स्वात्मैव सत्यं तदतिरिक्तमार्तं इत्युक्तम्। तत्साधनत्वेन स्वातिरिक्तसर्वसंन्यासो वक्तव्य इति कहोलब्राह्मणमारभ्यते—**अथे**ति। **अथ** उषस्तप्रश्नप्रतिवचनानन्तर**मेनं** याज्ञवल्क्यं नामतः **कहोलः** कुषीतकस्यापत्यं कौषीतकिः तदपत्यं **कौषीतकेयः पप्रच्छ। याज्ञवल्क्य! इति होवाच। यदेव साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः तं मे व्याचक्ष्वे**ति पूर्ववत्। मुमुक्षुर्यज्ज्ञानतो निर्मुक्तबन्धो भवति एष हि ते तवात्मा। उषस्तकहोलप्रश्नप्रतिवचनाभ्यां पुनरुक्तिः स्यादिति चेन्न; तयोरर्थविशेषावगमात्। पूर्वब्राह्मणे कार्यकरणसंघातवैलक्षण्येन वस्तुतः स्वमात्रतया च यः प्रकटितस्तस्यैवात्मनः

कहोलब्राह्मणे स्वाज्ञदृष्टिप्रसक्ताशनायादिसंसारधर्मातीतं संन्याससहितज्ञानादेव मुनिः स्वातिरिक्तभ्रमात् विमुक्तो भूत्वा निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्नो भवतीति विशेषार्थसद्भावात् न पुनरुक्तिः। कथमेकस्य संसारित्वासंसारित्वे भवतः? इति चेत्, उपाधियोगायोगाभ्यामित्युक्तत्वात्। यथा रज्जुशुक्तिस्थाण्वादि अज्ञदृशां तदेव सर्परजतपुरुषवदवभासते न वस्तुज्ञदृशाम्। वस्तुतः "एकमेवाद्वितीयं ब्रह्म", "नेह नानास्ति किञ्चन" इति श्रुत्यनुरोधेन न हि ब्रह्मातिरिक्तं किंचिदपि विकारजातमस्ति ब्रह्मणो निष्प्रतियोगिकस्वमात्रत्वात्। तदेव स्वाज्ञविकल्पितमूलाविद्याबीजांशमवष्टभ्य सर्वज्ञः सर्वान्तरो भवति। परमार्थतत्त्वमपेक्ष्य **सर्वान्तरः कतमो याज्ञवल्क्य!** इति प्रश्नोत्तरं मुनिराह—**य** इति। अशितुमिच्छा अशनाया। पातुमिच्छा पिपासा। ते अशनायापिपासे तयोः प्राणधर्मत्वात्। शोकमोहावन्तःकरणधर्मौ। जरामृत्यू स्थूलशरीरधर्मौ। स्वाज्ञः तद्विशिष्टो भूत्वा क्षुधितोऽहं पिपासितोऽहं स्वेष्टबन्धुजनवियोगतः शोचामि। ब्राह्मणादिर्ब्रह्मचार्यादिर्वाहमस्मि जातो मृत इत्यादिविभ्रमारूढः सन् स्वात्मानमेवंविशिष्टं मन्यते। स्वज्ञस्तु स्वात्मानमेतद्विपरीतं मन्यते। **यः** स्वज्ञात्मा **अशनायापिपासे शोकं मोहं जरां मृत्युमत्येति** अतिरिच्यते सोऽयं साक्षादव्यवहितोऽपरोक्षादगौणः सर्वान्तर आत्माकाशवदशनायादिविकारजातमस्पृश्य परमेश्वरो विजयते। वस्तुतोऽयं स्वाविद्याद्वयतत्कार्यव्यष्टिसमष्टिप्रपञ्चतदारोपापवादतदधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तगतहेयांशापह्नवसिद्धब्रह्ममात्रतयावशिष्यते। **एतं वै तमात्मानं** निष्प्रतियोगिकस्वमात्रमिति **विदित्वा ब्राह्मणा** ब्रह्मविदो ब्रह्मवेदनानन्तरं ब्रह्मभावापन्नस्य स्वात्मलोकत्वेनाकर्मब्रह्मास्मीति भावविशिष्टत्वेन स्वातिरिक्तब्रह्मादिपदवितृष्णत्वेन च कृतकृत्यत्वात् बाह्यपुत्रवित्तादिभिः स्वप्रयोजनाभावात् व्युत्तिष्ठन्तीत्याह—**पुत्रेति**। सोऽयं मनुष्यलोकः पुत्रेणैव जय्य इति लोकसाधनत्वेन पुत्रं प्रति या इच्छा सा पुत्रैषणा। तस्याः **पुत्रैषणायाश्च** स्वात्मलोकानां ततो व्युत्थानमुपपद्यते। "कर्मणा पितृलोकः" इति दारवित्तसंग्रहस्य कर्मार्थत्वात् अकर्मब्रह्मविदां कर्मतत्साधनवित्तादिभिः प्रयोजनाभावात् **वित्तैषणायाश्च** व्युत्थानं संपद्यते।

"विद्यया देवलोकः" इति विद्यासाध्यो हि ब्रह्मादिलोकः। लोकसामान्यस्य स्वातिरिक्तत्वेनासंभवं मन्यमानानां लोकैषणायाश्च व्युत्थानमुपपद्यते। एवं पुत्रैषणायाश्च वित्तैषणायाश्च **लोकैषणायाश्च व्युत्थाय** अनात्मलोकप्राप्तिसाधनैषणात्रये तृष्णामकृत्वाथ शरीरस्थितिमात्रनिमित्त**भिक्षाचर्यं चरन्ति**। साधनफलेच्छयोरेकत्वं मन्यमाना श्रुतिराचष्टे—**या** हीति। अदृष्टफलसाधनतुल्यत्वेन **या ह्येव पुत्रैषणा सा वित्तैषणा। या** कर्मफलसाधनधिया **वित्तैषणा सा लोकैषणा** फलार्थैव। यत एवमतः एकैवैषणा साध्यसाधनभेदेन। यद्वा **उभे ह्येते एषणे भवतः**। यस्मादेवं तस्मात् ब्रह्मविदां न ह्यस्ति कर्म तत्फलमोहः। तस्मादेव पूर्वे अतिक्रान्ता ब्राह्मणा विविदिषवो विद्वांसश्च कर्मभ्यः तत्साधनयज्ञोपवीतादिभ्यो व्युत्थाय पारिव्राज्यं प्रतिपद्य परारोपितप्रातिभासिकशरीरस्थितिमात्रप्रयोजनतया भिक्षाचर्यं चरन्तीति पुरस्तादेवेत्युक्तम्। यस्मात् पूर्वे तमात्मानं विदित्वा पारिव्राज्यं भजन्ति **तस्मात्** इदानींतनोऽपि **ब्राह्मणो** ब्रह्मवित् श्रुत्याचार्यमुखतः **पाण्डित्यं** सर्ववेदान्तार्थश्रवणजनितज्ञानं **निर्विद्य** यावत् श्रोतव्यं स्वावगतिपर्यन्तं तावत् श्रवणं कृत्वा न हि कश्चिदप्येषणात्रयमतिरस्कृत्य पाण्डित्यपदं स्प्रष्टुं पारयति। अतः स्वात्मज्ञानेनैव विहितमेषणात्रयव्युत्थानम्। यस्मात् स्वात्मज्ञानसमानकर्तृकप्रत्ययोपादानलिङ्गश्रुतिप्रमाणदृढीकृतं तस्मात् ज्ञानबलभावेन एषणाभ्यो व्युत्थाय साधनफलाश्रयविपरीतरूप**बाल्येन तिष्ठासेत्** स्थातुमिच्छेत्। किं नाम बलम्? स्वातिरिक्तास्तितादृष्टितिरस्करणम्। तद्भावो बाल्यम्। "नायमात्मा बलहीनेन लभ्यः" इति श्रुतेः। एवं **बाल्यं च पाण्डित्यं च निर्विद्य** स्वातिरिक्तकलनाविरतिपूर्वकं स्वात्मानमवगम्याथ श्रुतार्थमननात् **मुनिः** योगी भवति—

मननात् स मुनिर्भवति नारण्यवसनान्मुनिः।

इति स्मृतेः। एतावदेव हि ब्राह्मणेन कर्तव्यम्। तत्कृत्वायं कृतकृत्यो मुनिः योगी भवति। **अमौनं** पाण्डित्यं बाल्यसहकृतं **च मौनं** मननं **च निर्विद्य** निश्शेषीकृत्याथ **ब्राह्मणः** कृतकृत्यो भवति। स्वातिरिक्तप्रपञ्चोऽस्ति नास्तीति

विभ्रमापह्नवसिद्धं ब्रह्म स्वमात्रमिति प्रबोधसमकालं तन्मात्रतयावशिष्यते। इत्थंभूतो यः स ब्राह्मणो ब्रह्मैव। "ब्रह्मैव ब्रह्मवित् स्वयं" इति श्रुतेः। एवं ब्रह्मभावमापन्नो **ब्राह्मणः** स्वाज्ञदृष्ट्या **केन स्यात् येन स्यात्** विधिनिषेधाचरणप्रवृत्त इव भवेत्। **तेन ईदृश एव** उक्तलक्षणब्राह्मण एव भवति। तस्य प्रवृत्तिनिवृत्तितद्धेत्वन्तःकरणापह्नवसिद्धब्रह्ममात्रपदारूढत्वात् न तस्य प्रवृत्तिनिवृत्तिविभ्रमोऽस्ति। यद्ययं इयं प्रवृत्तिः इयं निवृत्तिरिति विभ्रमारूढो भवति तदा प्रवृत्तिसामान्यं हित्वा निवृत्तिरेवाश्रयणीयेत्यत्र ज्ञानवैराग्यसंपन्नस्य स्वस्मिन्नेव मुक्तिरिति न सर्वत्राचारप्रसक्तिः "तदाचारवशात् तत्तद्रूपो भवति" इति श्रुतेः। यदा प्रवृत्तिनिवृत्तिकलनासंभवप्रबोधसिद्धनिष्प्रतियोगिकब्रह्ममात्रवित् तन्मात्रतयावशिष्यते, तदतिरेकेण यद्यदेषणालक्षणं स्वातिरिक्तवदवभासते **ततदतो ब्रह्मणोऽन्यत् आर्तं** मायामात्रमसत्। तदपह्नवसिद्धं सन्मात्रमेव सदावशिष्यत इत्यत्र "पश्यतेहापि सन्मात्रमसदन्यत्" इति श्रुतेः। इत्थं **कहोलः कौषीतकेयो** याज्ञवल्क्यतो ब्रह्मयाथात्म्यमवगम्य तत्समकालं स्वातिरिक्तभ्रमत **उपरराम** ॥ १ ॥

इति पञ्चमं ब्राह्मणम्

---

## षष्ठं ओतप्रोतब्राह्मणम्

आवरणोद्घाटनपूर्वकमात्मदर्शनम्

**अथ हैनं गार्गी वाचक्नवी पप्रच्छ याज्ञवल्क्य! इति होवाच यदिदꣳ सर्वमप्स्वोतं च प्रोतं च कस्मिन्नु खल्वाप ओताश्च प्रोताश्च इति? वायौ गार्गि! इति कस्मिन्नु खलु वायुरोतश्च प्रोतश्च इति?**

अन्तरिक्षलोकेषु गार्गि! इति कस्मिन्नु खल्वन्तरिक्षलोका ओताश्च प्रोताश्च इति? गन्धर्वलोकेषु गार्गि! इति कस्मिन्नु खलु गन्धर्वलोका ओताश्च प्रोताश्च इति? आदित्यलोकेषु गार्गि! इति कस्मिन्नु खल्वादित्यलोका ओताश्च प्रोताश्च इति? चन्द्रलोकेषु गार्गि! इति कस्मिन्नु खलु चन्द्रलोका ओताश्च प्रोताश्च इति? नक्षत्रलोकेषु गार्गि! इति कस्मिन्नु खलु नक्षत्रलोका ओताश्च प्रोताश्च इति? देवलोकेषु गार्गि! इति कस्मिन्नु खलु देवलोका ओताश्च प्रोताश्च इति? इन्द्रलोकेषु गार्गि! इति कस्मिन्नु खल्विन्द्रलोका ओताश्च प्रोताश्च इति? प्रजापतिलोकेषु गार्गि! इति कस्मिन्नु खलु प्रजापतिलोका ओताश्च प्रोताश्च इति? ब्रह्मलोकेषु गार्गि! इति कस्मिन्नु खलु ब्रह्मलोका ओताश्च प्रोताश्च इति? स होवाच गार्गि! मातिप्राक्षीर्मा ते मूर्धा व्यपप्तत् अनतिप्रश्न्यां वै देवतामतिपृच्छसि गार्गि! मातिप्राक्षीरिति ततो ह गार्गी वाचक्नवी उपरराम ॥ १ ॥

"यत् साक्षादपरोक्षात् ब्रह्म य आत्मा सर्वान्तरः" इति प्रश्नप्रतिवचनतो योऽर्थः प्रकटितः तत्स्वरूपाधिगमाय आशाकल्यब्राह्मणावधि ग्रन्थ आरभ्यते। तत्रादौ स्वाज्ञदृष्टिप्रसक्तस्वाविद्यापदतत्कार्यवियदादिपञ्चभूतभौतिकजातं स्वावरणतयावभासते। तदावरणोद्घाटनपूर्वकं तद्धर्मं विरलात्मा दर्शयितव्य इति ओतप्रोतब्राह्मणमारभ्यते—अथेति। **अथ ह** कहोलप्रश्नानन्तरं **एनं** याज्ञवल्क्यं नामतो **गार्गी** वाचक्नोः दुहिता **वाचक्नवी पप्रच्छ। याज्ञवल्क्य! इति होवाच। यदिदं सर्वं** पार्थिवविकारजातं **अप्सु** उदके दीर्घतन्तुवत् **ओतं च** तिर्यक्तन्तुवत् **प्रोतं च** सर्वमद्भिः व्याप्तं लक्ष्यते। नो चेत् सक्तुमुष्टिवत् विशीर्येत। यत् परिच्छिन्नस्थूलकार्यसामान्यं तत्तदपेक्षया सूक्ष्मपरिच्छिन्नकारणं

व्याप्यं भवितुमर्हति तद्धेतुत्वात्। यथाद्भिः पृथिवी तथा पूर्वपूर्वमुत्तरेणोत्तरेण परिच्छेद्यम्। न हि तत् स्वात्मातिरिक्तमस्ति "सत्यस्य सत्यं" इत्युक्तत्वात्। स्वातिरिक्तभूतपञ्चकतत्कार्यं सत्यं सद्विकल्पितत्वात्। तत् यत्रापह्नवपदं भजति तत् सत्यस्य सत्यं निष्प्रतियोगिकसन्मात्रमित्यर्थः। प्रकृते तु सद्विकल्पिता **आपः कस्मिन् खलु ओताश्च प्रोताश्च? इति**। तासां कार्यत्वेन स्थूलतया परिच्छिन्नत्वात्। एवं सर्वत्र योज्यम्। **वायौ गार्गि? इति**। अपामोतप्रोतभावोऽग्नौ वक्तव्य इति चेन्न; अग्नेरस्वतन्त्रत्वात्। न हि पार्थिवमाप्यं वा धातुमनाश्रित्य पृथिव्यादिवत् आत्मलाभः स्वतन्त्रतयास्तीति। अत एव न ह्यग्नावोतप्रोतभावो दर्शितः। **कस्मिन्नु खलु वायुरोतश्च प्रोतश्च? इति। अन्तरिक्षलोकेषु। अन्तरिक्षलोका गन्धर्वलोकेषु गन्धर्वलोका आदित्यलोकेषु आदित्यलोकाश्चन्द्रलोकेषु चन्द्रलोका नक्षत्रलोकेषु नक्षत्रलोका देवलोकेषु देवलोका इन्द्रलोकेषु इन्द्रलोका** वैराजपदमापन्न**प्रजापतिलोकेषु प्रजापतिलोका ब्रह्मलोकेषु**। अण्डारम्भकपञ्चभूततन्मात्राणि ब्रह्मलोकशब्देनोच्यन्ते। तेषां बहुत्वात् बहुवचनं युज्यते। **कस्मिन् नु खलु ब्रह्मलोका ओताश्च प्रोताश्च? इति** पृष्टः **स होवाच** याज्ञवल्क्यः—हे **गार्गि! मातिप्राक्षीरिति**। आगमेन प्रष्टव्यार्थमनुमानेन मातिप्राक्षीः। एवं पृच्छन्त्या **मा ते** तव **मूर्धा** शिरो **व्यपप्तत्** विस्पष्टं पतेत्। आगमविषयो हि देवताप्रश्नः। गार्गीप्रश्नस्य तदतिक्रान्तत्वात्। अतस्त्वं **अनतिप्रश्न्यां देवतां अतिपृच्छसि**। यतो मर्तुं नेच्छसि अतस्त्वं **मातिप्राक्षीः** इत्युक्ता स्वकृतापराधं विदित्वा वेपमाना सती **गार्गी वाचक्नवी उपरराम** ॥ १ ॥

**इति षष्ठं ब्राह्मणम्**

---

## सप्तमं अन्तर्यामिब्राह्मणम्

### सूत्रनिरूपणम्

अथ हैनमुद्दालक आरुणिः पप्रच्छ याज्ञवल्क्य! इति होवाच मद्रेष्ववसाम पतञ्जलस्य काप्यस्य गृहेषु यज्ञमधीयानाः तस्यासीद्भार्या गन्धर्वगृहीता तमपृच्छाम कोऽसीति? सोऽब्रवीत् कबन्ध आथर्वण इति सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकाꣳश्च वेत्थ नु त्वं काप्य! तत्सूत्रं येनायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्तीति सोऽब्रवीत्पतञ्जलः काप्यो नाहं तद्भगवन्! वेदेति सोऽब्रवीत् पतञ्जलं काप्यं याज्ञिकाꣳश्च वेत्थ नु त्वं काप्य! तमन्तर्यामिणं य इमं च लोकं परं च लोकꣳ सर्वाणि च भूतानि योऽन्तरो यमयतीति सोऽब्रवीत्पतञ्जलः काप्यो नाहं तं भगवन्! वेदेति सोऽब्रवीत्पतञ्जलं काप्यं याज्ञिकाꣳश्च यो वै तत् काप्य! सूत्रं विद्यात् तं चान्तर्यामिणमिति स ब्रह्मवित् स लोकवित् स देववित् स वेदवित् स भूतवित् स आत्मवित् स सर्वविदिति तेभ्योऽब्रवीत् तदहं वेद तत् चेत् त्वं याज्ञवल्क्य! सूत्रमविद्वाꣳस्तं चान्तर्यामिणं ब्रह्मगवीरुदजसे मूर्धा ते विपतिष्यतीति वेद वा अहं गौतम! तत् सूत्रं तं चान्तर्यामिणमिति यो वा इदं कश्चित् ब्रूयाद्वेद वेदेति यथा वेत्थ तथा ब्रूहीति ॥ १ ॥

इदानीं ब्रह्मलोकादपि यदन्तरतमं तत्सूत्रनिरूपणं कर्तव्यमिति अन्तर्यामिब्राह्मणमारभ्यते—अथेति। **अथ** वाचक्नवीप्रश्नानन्तरमेनं प्रकृतं याज्ञवल्क्यं

नामत उद्दालकोऽरुणस्यापत्यमारुणिः पुरा विदितेतिहासार्थं मनसि निधाय **पप्रच्छ । याज्ञवल्क्य ! इति होवाच ।** पुरा वयं **मद्रेषु** देशेषु **अवसाम** उषितवन्तः । तदानीं नामतः **पतञ्चलस्य** कपिगोत्रतः **काप्यस्य गृहेषु यज्ञं** तच्छास्त्रम**धीयाना** अध्ययनं कुर्वाणाः । **तस्यासीत् भार्या गन्धर्वगृहीता । तमपृच्छाम—कोऽसि ? इति । सोऽब्रवीत्** नामतः **कबन्धः** अथर्वणोऽपत्य-**माथर्वण इति । सोऽब्रवीत्** गन्धर्वः **पतञ्चलं काप्यं याज्ञिकांश्च** तच्छिष्यान-स्मान्—**वेत्थ** हे **काप्य ! नु त्वं** जानीषे **तत् सूत्रम्** । किं तत् ? **येन सूत्रेणायं च लोकः** इदं च जन्म **परश्च लोकः** परं च जन्म **सर्वाणि च** ब्रह्मादिस्तम्बान्तभूतानि सूत्रेण स्रगिव **संदृब्धानि** संग्रथितानि **भवन्ति ।** त्वं तत् किं सूत्रं वेत्थ ? एवं पृष्टः **सोऽब्रवीत् काप्यः—नाहं तत् भगवन् ! वेदेति ।** पुनः **सोऽब्रवीत्** गन्धर्वः उपाध्यायमस्मांश्च—**वेत्थ नु त्वं काप्य ! तमन्तर्यामिणं य इमं च लोकं परं च लोकं सर्वाणि च भूतानि योऽन्तरो**ऽभ्यन्तरः सन् **यमयति** दारुयन्त्रमिव भ्रामयतीत्यादिनान्तर्यामी विशेष्यते । एवमुक्तः **सोऽब्रवीत् पतञ्चलः काप्यः—नाहं तं भगवन् ! वेदेति ।** पुनः स **गन्धर्वोऽब्रवीत्—हे काप्य ! यः** कश्चिदेतत् **सूत्रं विद्यात्** सूत्रान्तर्गतो यः **तं चान्तर्यामिणं स हि ब्रह्मवित्** । तद्गतविशेषांशापाये स एव परमात्मविच्च । योऽन्तर्यामी नियम्य लोकान् वेद **स लोकवित् । स** लोकिनोऽग्न्यादिदेवान् वेदेति **स देववित्** । सर्वप्रमाणभूतऋगादिवेदान् वेत्तीति **स वेदवित्** । अन्तर्यामिनियम्यत्वेन स्वात्मना सह सर्वाणि भूतानि वेत्तीति **स भूतवित्** । एवमन्तर्यामिविज्ञाने स्तुते सति अथ तदिच्छया काप्योऽभिमुखी-भूतो वयं च । एवमभिमुखीभूतेभ्यस्तेभ्योऽस्मभ्यं च **सूत्रमन्तर्यामिणं च स गन्धर्वोऽब्रवीत् । तदहं** गन्धर्वात् लब्धागमः सन् सूत्रान्तर्यामिविज्ञानं **वेद । तच्चेत् त्वं याज्ञवल्क्य ! सूत्रमन्तर्यामिणं च अविद्वांश्चेत्** वद । यदिह अब्रह्मविदसि **ब्रह्मगवीरुदजसे** ब्रह्मविदां स्वभूता गा उदजसे अन्यायेन उन्नयसि । अतो मच्छापदग्धस्य **ते** तव **मूर्धा विपतिष्यति** । एवमुक्तो याज्ञ-वल्क्य आह । किमिति ? हे **गौतम !** गोत्रतः यत् गन्धर्वः तुभ्यमुक्तवान्

यत् गन्धर्वात् विदितवन्तो वयं तत् सूत्रं तमन्तर्यामिणं च वेदाहमित्युक्त इतर आह— **यो वै कश्चित्** त्वयोक्तमिदं **ब्रूयात् वेद वेदे**त्यात्मानं श्लाघयति स हि प्राकृतः। किं वृथा कत्थनेन? कार्येण तत् दर्शय **यथा** वेत्थ **तथा ब्रूहीति** ॥ १ ॥

सूत्रान्तर्यामिस्वरूपम्

**स होवाच वायुर्वै गौतम! तत्सूत्रं वायुना वै गौतम! सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि भवन्ति तस्माद्वै गौतम! पुरुषं प्रेतमाहुर्व्यस्रंसिषत अस्याङ्गानीति वायुना हि गौतम! सूत्रेण संदृब्धानि भवन्तीति एवमेवैतत् याज्ञवल्क्य! अन्तर्यामिणं ब्रूहीति ॥ २ ॥**

एवमाक्षिप्तो मुनिः सूत्रान्तर्यामिणोरियत्तामाह—**स हे**ति। वर्तमानकाले ब्रह्मलोका यस्मिन् ओताश्च प्रोताश्च अप्सु पृथिवीव तत्सूत्रमागमगम्यतया वक्तव्यमिति गार्गीप्रश्ननिर्णयाय च **स होवाच** याज्ञवल्क्यः—**वायुर्वै गौतम! तत् सूत्रम्**। किं तत्? यत् पृथिव्यादीनामाकाशवत् विष्टम्भकं यदात्मकं कर्म वासनासमवायि सप्तदशात्मकं लिङ्गं व्यष्टिसमष्ट्यात्मकं यद्बाह्यभेदाः समुद्रोर्मय इव सप्त सप्त मरुद्गणाः तद्धि वायव्यतत्त्वं सूत्रं भवति नान्यत्। **वायुना गौतम! सूत्रेणायं च लोकः परश्च लोकः सर्वाणि च भूतानि संदृब्धानि** संग्रथितानि **भवन्तीति** लोके प्रसिद्धिः। यस्मात् वायुः सूत्रं तस्य सर्वविधृतत्वात् **तस्मात् गौतम! पुरुषं प्रेत**मुद्दिश्य इदमा**हुः**। किमिति? सूत्रापगमतो मणिविस्रंसनमिवास्याङ्गानि **व्यस्रंसिषते**ति। वायुर्हि सूत्रम्। अस्य पुरुषस्याङ्गान्यस्मिन् मणिवत् प्रोतानि **वायुना सूत्रेण संदृब्धानि भवन्तीति** ह **याज्ञवल्क्य!** त्वया यदुक्तं तदेवमेव सम्यगुक्तम् ॥ २ ॥

अन्तर्यामिणः सूत्रनियन्तृत्वम्

यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ ३ ॥ योऽप्सु तिष्ठन् अद्भ्योऽन्तरो यमापो न विदुर्यस्यापः शरीरं योऽपोऽन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ ४ ॥ योऽग्नौ तिष्ठन् अग्नेरन्तरो यमग्निर्न वेद यस्याग्निः शरीरं योऽग्निमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ ५ ॥ योऽन्तरिक्षे तिष्ठन् अन्तरिक्षादन्तरो यमन्तरिक्षं न वेद यस्यान्तरिक्षꣳ शरीरं योऽन्तरिक्षमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ ६ ॥ यो वायौ तिष्ठन् वायोरन्तरो यं वायुर्न वेद यस्य वायुः शरीरं यो वायुमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ ७ ॥ यो दिवि तिष्ठन् दिवोऽन्तरो यं द्यौर्न वेद यस्य द्यौः शरीरं यो दिवमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ ८ ॥ य आदित्ये तिष्ठन् आदित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ ९ ॥ यो दिक्षु तिष्ठन् दिग्भ्योऽन्तरो यं दिशो न विदुर्यस्य दिशः शरीरं यो दिशोऽन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ १० ॥ यश्चन्द्रतारके तिष्ठꣳश्चन्द्रतारकादन्तरो यं चन्द्रतारकं न वेद यस्य चन्द्रतारकꣳ शरीरं यश्चन्द्रतारकमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ ११ ॥ य आकाशे तिष्ठन् आकाशादन्तरो

यमाकाशो न वेद यस्याकाशः शरीरं य आकाशमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ १२ ॥ यस्तमसि तिष्ठꣳस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोऽन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ १३ ॥ यस्तेजसि तिष्ठꣳस्तेजसोऽन्तरो यं तेजो न वेद यस्य तेजः शरीरं यस्तेजोऽन्तरो यमयति एष त आत्मान्तर्याम्यमृत इत्यधिदैवतमथाधिभूतम् ॥ १४ ॥ यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यꣳ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयति एष त आत्मान्तर्याम्यमत इत्यधिभूतमथाध्यात्मम् ॥ १५ ॥ यः प्राणे तिष्ठन् प्राणादन्तरो यं प्राणो न वेद यस्य प्राणः शरीरं यः प्राणमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ १६ ॥ यो वाचि तिष्ठन् वाचोऽन्तरो यं वाक् न वेद यस्य वाक् शरीरं यो वाचमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ १७ ॥ यश्चक्षुषि तिष्ठꣳश्चक्षुषोऽन्तरो यं चक्षुर्न वेद यस्य चक्षुः शरीरं यश्चक्षुरन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ १८ ॥ यः श्रोत्रे तिष्ठन् श्रोत्रादन्तरो यꣳ श्रोत्रं न वेद यस्य श्रोत्रꣳ शरीरं यः श्रोत्रमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ १९ ॥ यो मनसि तिष्ठन् मनसोऽन्तरो यं मनो न वेद यस्य मनः शरीरं यो मनोऽन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ २० ॥ यस्त्वचि तिष्ठꣳस्त्वचोऽन्तरो यं त्वक् न वेद यस्य त्वक् शरीरं यस्त्व-

चमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ २१ ॥ यो विज्ञाने तिष्ठन् विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानꣳ शरीरं यो विज्ञानमन्तरो यमयति एष त आत्मान्तर्याम्यमृतः ॥ २२ ॥

इदानीं सूत्रनियन्तारमन्तर्यामिणं ब्रूहीति एवमुक्त आह—यः पृथिव्यामित्यादिना। यः **पृथिव्यां** तिष्ठति सोऽन्तर्यामी। **पृथिव्या अन्तरः** तदभ्यन्तरत्वात्। पृथिव्यभिमानिदेवतैवान्तर्यामीत्यत आह—**यमिति**। मय्यन्यः कश्चित् प्रेरयितास्तीति **पृथिवी** देवतापि **न वेद**। **यस्य पृथिवी शरीरं** शरीरग्रहणं सर्वकरणानामुपलक्षणार्थम्। पृथिवीदेवताकरणग्रामप्रवृत्तिनिमित्तमन्तर्यामी **य** ईश्वरः **पृथिवीमन्तरनुप्रविश्य यमयति** नियमयति **एष ते** तव मम सर्वभूतानां **चात्मा**। यस्त्वया पृष्ट एषो**ऽन्तर्याम्यमृतः**। अन्तर्यामिणः सर्वभूतगतसंसारधर्मास्पष्टत्वादमृतत्वं युज्यते। योऽप्सु तिष्ठन्नित्यादि सर्वं समानमित्याह—**योऽप्सु तिष्ठन्** इत्यादि ॥ ३–२२ ॥

पृथिव्यादीनां स्वान्तर्याम्यवेदने मूलहेतुः

यो रेतसि तिष्ठन् रेतसोऽन्तरो यꣳ रेतो न वेद यस्य रेतः शरीरं यो रेतोऽन्तरो यमयति एष त आत्मान्तर्याम्यमृतः अदृष्टो द्रष्टा अश्रुतः श्रोता अमतो मन्ता अविज्ञातो विज्ञाता नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोता नान्योऽतोऽस्ति मन्ता नान्योऽतोऽस्ति विज्ञाता एष त आत्मान्तर्याम्यमृतः अतोऽन्यदार्तं ततो ह उद्दालक आरुणिरुपरराम ॥ २३ ॥

महाभागा हि पृथिव्यादिदेवताः। ताः कथं मनुष्यादिवत् नियन्तृत्वेन स्वात्मनि तिष्ठन्तमन्तर्यामिणं न विदुः? इत्यत आह—**अदृष्ट** इति। कस्याप्यविषयत्वेन न दृष्टः तथापि स्वयं दृग्रूपतया **सर्वद्रष्टा**। तथायम**श्रुतः** श्रोत्रा-

गोचरत्वात् । श्रोत्रप्रवृत्तिनिमित्तत्वात् स्वयं **श्रोता** । तथायममतः मनोविलक्षणत्वात् । सर्वो हि लोको दृष्टश्रुते हि संकल्पयति । यतोऽयमदृष्टोऽश्रुतः मानसवृत्तिसहस्रप्रवृत्तिनिमित्तत्वेनालुप्तमनःशक्तित्वात् सर्वमानसवृत्ति**मन्ता** । तथायं रूपादिवद**विज्ञातः** अलुप्तविज्ञानशक्तित्वात् । ज्ञप्तिमात्रतयायं **विज्ञाता** । तत्र यं पृथिवी न वेद यं सर्वाणि भूतानि न विदुः इत्यत्र स्वातिरिक्तद्रष्ट्राद्यभावात् **नान्योऽतोऽस्ति द्रष्टा** । तथा **नान्योऽतोऽस्ति श्रोता** । तथा **नान्योऽतोऽस्ति मन्ता** । तथा **नान्योऽतोऽस्ति विज्ञाता** । यस्मात् स्वातिरेकेण द्रष्टा श्रोता मन्ता विज्ञाता च न विद्यते तस्मादयमदृष्टोऽश्रुतोऽमतोऽविज्ञातोऽमृतः । **एष ते आत्मान्तर्याम्यमृतः** । अतोऽस्मादीश्वरात् **अन्यदार्तम्** । **ततो ह उद्दालक आरुणिरुपरराम** ॥ २३ ॥

**इति सप्तमं ब्राह्मणम्**

---

## अष्टमं वाचक्नवीब्राह्मणम्

गार्ग्याः याज्ञवल्क्यं प्रति प्रश्नानुज्ञाप्रार्थना

**अथ ह वाचक्नवी उवाच ब्राह्मणा भगवन्तो हन्त ! अहमिमं द्वौ प्रश्नौ प्रक्ष्यामि तौ चेन्मे वक्ष्यति न वै जातु युष्माकमिमं कश्चित् ब्रह्मोद्यं जेतेति पृच्छ गार्गि ! इति ॥ १ ॥**

यत् साक्षादपरोक्षात् ब्रह्म स्वाज्ञविकल्पितसर्वान्तरं वस्तुतो निष्प्रतियोगिकस्वमात्रमवशिष्यत इति प्रकटनार्थं वाचक्नवीब्राह्मणमारभ्यते---**अथेति** । **अथ ह** उद्दालकोपरत्यनन्तरं पुरा मूर्धपातभयादुपरतापि पुनस्तं प्रष्टुं ब्राह्मणानुज्ञामाकांक्षती **वाचक्नवी उवाच**—हे **ब्राह्मणाः ! भगवन्तो** यूयं मम वचः

शृणुत। किं तत्? **हन्त! अहमिमं** याज्ञवल्क्यं पुनर्द्वौ **प्रश्नौ प्रक्ष्यामि**। यद्यनुमतिर्भवतां यद्ययं मत्प्रश्नद्वयोत्तरं **वक्ष्यति** तदा **युष्माकं** मध्ये याज्ञवल्क्य**मिमं ब्रह्मोद्यं** ब्रह्मवदनं प्रति **जेता न वै कश्चित्** भवेत्। तथैवमुक्ता ब्राह्मणाः **पृच्छ गार्गि!** इत्यनुज्ञां ददुः ॥ १ ॥

गार्ग्याः स्वप्रश्नप्रशंसा

सा होवाच अहं वै त्वा याज्ञवल्क्य! यथा काश्यो वा वैदेहो वा उग्रपुत्र उज्ज्यं धनुरधिज्यं कृत्वा द्वौ बाणवन्तौ सपत्नातिव्याधिनौ हस्ते कृत्वा उपोत्तिष्ठत् एवमेवाहं त्वा द्वाभ्यां प्रश्नाभ्यामुपोदस्थां तौ मे ब्रूहीति पृच्छ गार्गि! इति ॥ २ ॥

लब्धानुज्ञा याज्ञवल्क्यं पृच्छति—**सा** हेति। या पुरा भवता निरुद्धा **साहं वै त्वा याज्ञवल्क्य! यथा** लोके काशीदेशभवः **काश्यः** प्रख्यातवीर्यः तथा विदेहानां राजा **वैदेहो वा** शूरान्वयजत्वा**दुग्रपुत्रः** अवतारितज्याक**मुज्ज्यं धनुरधिज्य**मारोपितज्याकं **कृत्वा द्वौ बाणवन्तौ** बाणविशिष्टचापौ **सपत्नातिव्याधिनौ** शत्रुतापनदक्षौ **हस्ते कृत्वा उपोत्तिष्ठेत्** परेषां स्वात्मशौर्य दर्शयेत्, **एवमेवाहं त्वा द्वाभ्यां** शरस्थानीय**प्रश्नाभ्यां उपोदस्थां** त्वत्समीप उत्थितवत्यस्मि। यदि त्वं ब्रह्मवित् तदा **तौ मे ब्रूहि इति**। इतर आह— **पृच्छ गार्गि! इति** ॥ २ ॥

सूत्रं कस्मिन् ओतमिति गार्गीप्रश्नः

सा होवाच यदूर्ध्वं याज्ञवल्क्य! दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिꣳस्तदोतं च प्रोतं च? इति ॥ ३ ॥

लब्धानुज्ञा सैनं पृच्छति—**सा** हेति। **सा होवाच—यदूर्ध्वम्**उपरि **दिवो**ऽण्डकपालात् **यत् पृथिव्या अवाक्** अधोऽण्डकपालात् **यच्च द्यावापृथिव्योरन्तरा** मध्ये **इमे** द्यावापृथिव्यौ **यत् भूतं** चातीतं **भवच्च** वर्तमानं **भविष्यच्च** वर्तमानादूर्ध्वभावि यत् **सर्वमेतदाचक्षते** श्रुतिविदः। द्वैतजातं यत्रैकं भवति **कस्मिन्नेतत् सर्वमोतं च प्रोतं चेति**? अप्सु पृथिवीव ॥ ३ ॥

सूत्रमाकाशे ओतं प्रोतमिति

स होवाच यदूर्ध्वं गार्गि! दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाशे तदोतं च प्रोतं चेति ॥ ४ ॥

प्रश्नोत्तरं मुनिराह—**स** हेति। **स होवाच** मुनिः—हे **गार्गि**! यदूर्ध्वं **दिवः** इत्यादिना। **यत्** त्वयोक्तं तत् सर्वं सूत्रमित्याचक्षते। **तत्** सूत्र**माकाशे ओतं च प्रोतं च** भवति। यदेतत् व्याकृतं सूत्रं पृथिव्यप्स्विव कालत्रयेऽप्यव्याकृताकाशे ओतप्रोततया वर्तते ॥ ४ ॥

गार्ग्याः तुष्टिः प्रश्नान्तरप्रार्थना च

सा होवाच नमस्तेऽस्तु याज्ञवल्क्य! यो म एतं व्यवोचोऽपरस्मै धारयस्वेति पृच्छ गार्गि! इति ॥ ५ ॥

स्वप्रश्नपूरणतः सन्तुष्टा वाचक्नवी आह—**सा** हेति। पुनः **सा होवाच**। **यो** मम**ैतं** प्रश्नं **व्यवोचो** विशेषेणापाकृतवानसि। सूत्रमेव तावदितरैः दुर्वचं, त्वं तु तदधिकरणमपि ब्रवीषि। अतो **नमस्ते** तुभ्य**मस्तु**। **अपरस्मै** द्वितीयप्रश्नाय मनो **धारयस्व** इत्युक्तः प्रत्याह—**पृच्छ गार्गि! इति** ॥ ५ ॥

आकाशः कस्मिन् ओतः प्रोत इति

सा होवाच यदूर्ध्वं याज्ञवल्क्य! दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते कस्मिँस्तदोतं च प्रोतं च? इति ॥ ६ ॥ स होवाच यदूर्ध्वं गार्गि! दिवो यदवाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याचक्षते आकाश एव तदोतं च प्रोतं चेति कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च? इति ॥ ७ ॥

वाचक्नवी प्रश्नान्तरं पृच्छति—सा हेति। **सा होवाच—यदूर्ध्वं**मित्यादि समानम् ॥ ६ ॥ स हेति। "सा होवाच" इत्यादिगार्ग्युक्तिमनूद्य सर्वमाकाश एव तदोतं च प्रोतं च इत्युक्त्वा उपरराम। पुनः सा होवाच—**कस्मिन् खल्वाकाश ओतश्च प्रोतश्च? इति**। आकाशवाच्येश्वरस्य कालापरिच्छिन्नत्वेन दुर्वाच्यत्वम्। ततोऽपि दुर्वाच्यः तदधिकरणविषयकप्रश्न इत्यर्थः ॥ ७ ॥

अक्षरस्वरूपकथनम्

स होवाच एतद्वै तदक्षरं गार्गि! ब्राह्मणा अभिवदन्ति अस्थूलमनणु अह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवायु अनाकाशमसङ्गमरसमगन्धमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणममुखममात्रमनन्तरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चन ॥ ८ ॥

गार्गी एवं मन्यते—मत्पृष्टप्रश्नः दुर्वचनीयः। कथमयं तदपाकरिष्यति? इति। तत् लीलया परिजिहीर्षन् मुनिराह—स हेति। **स होवाच** याज्ञवल्क्यः—कस्मिन् खल्वाकाश ओतश्च प्रोतश्च? इति यत् पृष्टवत्यसि काल-

त्रयेऽपि **यत्** न क्षीयते न क्षरतीति वा **तदेतदक्षरं त्वदुक्ताकाशाधिकरणम्** । एवं न केवलं मयोच्यते, किन्तु हे **गार्गि** ! तदेतदक्षरं स्वातिरिक्ताविद्यापद-तत्कार्यभूतभौतिकारोपापवादाधिकरणतया वस्तुतो निरधिकरणनिष्प्रतियोगिक-स्वमात्रतया च ब्रह्मयाथात्म्यविदो **ब्राह्मणा अभिवदन्ति** । अभिवदन्तीत्यनेना-वाच्यकथनं तदप्रतिपत्तिश्च दोषद्वयं परिहृतं स्यात् । किं तत् ब्राह्मणा अभिवदन्ति ? तत् ब्रूहि इत्युक्त आह—**अस्थूल**मित्यादिना । स्वाज्ञदृष्टिविकल्पितस्थूलाण्वादि-परिमाणो यद्बोधसमकालमक्षरमात्रपदं भजति तत् **अस्थूलं अनणु अह्रस्वमदीर्घं** स्थूलादिपरिमाणचतुष्टयप्रतिषेधतो द्रव्यत्वं प्रतिषिद्धं स्यात् । द्रव्यत्वाभावेऽपि गुण-त्वं स्यात् इत्यत आह --**अलोहित**मिति । लोहिताग्नेयगुणान्यत्वात् । तथा **अस्नेहं** स्नेहगुणनीरविलक्षणत्वात् । अस्तु, तर्हि सच्छायमिदं स्यात् इत्यत आह— **अच्छाय**मिति । स्वाविद्या तत्कार्यबुद्धिः वा च्छाया । तद्विलक्षणत्वात् । अस्तु, तर्हि तमो वा स्यात् **अतमः** स्वयंप्रकाशरूपत्वात् । तथेदम**वायु अनाकाशं** पञ्चभूतविलक्षणत्वात् । अत एव **केनाप्यसङ्गम्** । तथा **अरसमगन्धं** पञ्च-तन्मात्रविलक्षणत्वात् । तथेदम**चक्षुष्कमश्रोत्रमवाक्** ज्ञानकर्मेन्द्रियविलक्षणत्वात् । " पश्यत्यचक्षुः स शृणोत्यकर्णः " इत्यादिश्रुतेः । तथेदम**मनोऽतेजस्कं** अन्तः-करणभूततेजोविलक्षणत्वात् । तथेदम**प्राण**माध्यात्मिकवायुविलक्षणत्वात् । तथे-दम**मुखं** नीरन्ध्रत्वात् । तथेदम**मात्रं** तुरीयत्वात् । " अमात्रश्चतुर्थोऽव्यवहार्यः " इति श्रुतेः । तथेदम**नन्तरमबाह्य**मन्तर्बाह्यविभागहेतुस्थूलकायविलक्षणत्वात् । तर्हि एतत् सर्वग्रासं, तत्र **न तदश्नाति किञ्चन** स्वातिरिक्ताशनासंभवात् । तर्हि स्वयं वा कस्यचिदशनं स्यात्, **न तदश्नाति कश्चने**ति । एतदक्षरं वस्तुतः सर्वविशेषकलनाविरलमित्यर्थः ॥ ८ ॥

अक्षरस्यास्तित्वे अनुमानोपन्यासः

एतस्य वा अक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि ! द्यावापृथिव्यौ

**विधृते तिष्ठत एतस्य वा अक्षरस्य प्रशासने गार्गि! निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा इति विधृतास्तिष्ठन्ति एतस्य वा अक्षरस्य प्रशासने गार्गि! प्राच्योऽन्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या यां यां च दिशमनु एतस्य वा अक्षरस्य प्रशासने गार्गि! ददतो मनुष्याः प्रशꣳसन्ति यजमानं देवा दर्वीं पितरोऽन्वायत्ताः ॥ ९ ॥**

इत्थंभूतमक्षरं नास्तीत्याशंकायां लोकबुद्धिमनुसृत्य तदस्तित्वायानुमानमुपन्यस्यति—**एतस्येति**। यदेव साक्षात् अपरोक्षात् ब्रह्म अशनायादिधर्मातीतं **एतस्य वा अक्षरस्य प्रशासने गार्गि!** राजशासनानुवर्तिराष्ट्रवत् सूर्यश्च चन्द्रमाश्च **सूर्याचन्द्रमसौ** लोकाहोरात्रप्रकाशकदीपवत् **विधृतौ तिष्ठतः** स्याताम्। सूर्याचन्द्रमसौ लोकप्रकाशकर्मणि नियुक्तौ प्रकाशार्थत्वात्। मणिप्रदीपादिवत् येन ईश्वरेण विधृतौ सूर्याचन्द्रमसौ उदयास्तमयवृद्धिक्षयाभ्यां वर्तेते तत् सर्वप्रशासकमक्षरं अस्त्येव सर्वोद्दीपकत्वेन सर्वविधारकत्वात्। **एतस्य वा अक्षरस्य प्रशासने गार्गि!** द्यौश्च पृथिवी च **द्यावापृथिव्यौ** सावयवत्वगुरुत्वाभ्यां स्फुटनपतनस्वभावे अपि स्वभावविपरीतं **विधृते तिष्ठतः**। इतश्चाप्यक्षरमस्ति "येन द्यौरुग्रा पृथिवी च दृढा" इति श्रुतेः। किञ्च **एतस्य वा अक्षरस्य प्रशासने गार्गि! निमेषा मुहूर्ता अहोरात्राण्यर्धमासा मासा ऋतवः संवत्सरा** इत्यतीतानागतवर्तमानकलनाकलयितारः कालावयवाः प्रभुनियमितगणकवत् स्वस्वकलनां कलयन्ति। नासति प्रशास्तरि तदुपपद्यते। तथा **श्वेतेभ्यो** हिमवदादिपर्वतेभ्यः प्रागञ्चनात् **प्राच्यो** गङ्गाद्या **नद्यः स्यन्दन्ते** स्रवन्ति। तथा **प्रतीच्योऽन्याः** सिन्ध्वाद्याः ताः तां **दिशं** न व्यभिचरन्ति। इतश्चापि तत्प्रशासकमक्षरमस्ति। **एतस्य वा अक्षरस्य प्रशासने** हिरण्यादीन् **ददतः** प्रयच्छतो **मनुष्याः प्रशंसन्ति**। तत्र यच्च दीयते ये वा ददति ये च प्रतिगृह्णन्ति तेषामिहैव समागमो विलयश्च दृश्यते। तथापि

मनुष्या ददतां दानफलसंयोगं पश्यन्तः प्रशंसन्ति । नासति कर्मफलप्रदातरि तदुपपद्यते । तस्मादस्ति दानादिकर्मफलसंयोजयितृत्वेनाक्षरम् । तदपूर्वमिति चेन्न ; तत्संभवप्रमाणानुपपत्तेः । तथाक्षरसद्भावेऽपीति चेन्न ; तत्सद्भावप्रकाशकवेदशास्त्र-पुराणादीनां विद्यमानत्वात् तत्प्रतिपाद्यमक्षरमस्त्येव । तथा च **यजमानं देवाः** स्वयमीश्वरा अपि चरुपुरोडाशाद्युपजीवनप्रयोजना उपजीवन्ति । तथा **पितरो दर्वीं** दर्वीहोमम**न्वायत्ताः** अनुगताः । एवं प्रशास्तुः प्रशासनादित्यर्थः ॥ ९ ॥

ज्ञानाज्ञानतत्फलसंयोजयितृत्वेनाक्षरस्यास्तित्वम्

**यो वा एतदक्षरं गार्गि! अविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्गि! अविदित्वास्माल्लोकात्प्रैति स कृपणः अथ य एत-दक्षरं गार्गि! विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः ॥ १० ॥**

इतश्चाप्यक्षरं ज्ञानाज्ञानतत्फलसंयोजयितृत्वेनास्तीत्याचष्टे—**यो वा** इति । हे **गार्गि! यो वा एतदक्षरमविदित्वा**विज्ञाया**स्मिन् लोके बहूनि वर्षसहस्राणि जुहोति यजते तपस्तप्यते तत्** फल**मन्तवदेव भवति** पुण्यक्षयसापेक्षत्वात् । किंच **यो वा एतदक्षरं गार्गि! अविदित्वा अस्मात् लोकात् प्रैति स कृपणः** पणक्रीतदासादिवत् स्वकृतफलं भुक्त्वा तत्क्षयतः पुनः पुनर्घटीयन्त्रवत् जन्ममरणे प्रतिपद्याभूतसंप्लवं संसरति । **अथ य एतदक्षरं विदित्वास्मात् लोकात् प्रैति** अक्षरातिरिक्तलोको नास्ति तदक्षरमहमेवेति जानाति **स** हि **ब्राह्मणः** । यदज्ञानज्ञानाभ्यां कार्पण्यब्राह्मण्यसिद्धिः तथाविधमक्षरमस्त्येव ॥१०॥

अक्षरस्य स्वाभाविकस्वरूपकथनम्

**तद्वा एतदक्षरं गार्गि! अदृष्टं द्रष्टृ अश्रुतꣳ श्रोतृ अमतं मन्तृ अविज्ञातं विज्ञातृ नान्यदतोऽस्ति द्रष्टृ नान्यदतोऽस्ति श्रोतृ**

**नान्यदतोऽस्ति मन्तृ नान्यदतोऽस्ति विज्ञातृ एतस्मिन्नु खल्वक्षरे गार्गि! आकाश ओतश्च प्रोतश्चेति ॥ ११ ॥**

कथं पुनः तदक्षरं? इत्यत आह—**तद्वा** इति। यस्याग्नेर्दहनप्रकाशशक्तिवत् सर्वप्रवृत्तिनिमित्ततया प्रशास्तृत्वं वस्तुतः स्वातिरिक्तकलनापह्नवसिद्धनिष्प्रतियोगिकस्वमात्रत्वं च स्वाज्ञस्वज्ञदृष्टिभ्यां सिद्धम्। हे **गार्गि! अदृष्टमविषयत्वात्** स्वातिरिक्तद्रष्टृभावाच्च। स्वयं तु स्वाज्ञदृष्टिप्रसक्तसर्वद्रष्टृ विज्ञप्तिमात्रस्वरूपत्वात् "स वेत्ति वेद्यं न च तस्यास्ति वेत्ता" इति श्रुतेः। तथेदम**श्रुतं** श्रोत्राविषयत्वात्। स्वयं तु सर्व**श्रोतृ** श्रोत्रश्रवणशक्तिजनकत्वात्। तथेदम**मतं** मनोवृत्त्यविषयत्वात्। स्वयं तु **मन्तृ** मतिस्वरूपत्वात्। तथेदं केनाप्य**विज्ञातं** बुद्धिसामान्यप्रत्ययाविषयत्वात्। स्वयं तु **विज्ञातृ** विज्ञानस्वरूपत्वात्। यत एवम**तोऽ**स्मादक्षरादतिरेकेण **द्रष्टृ श्रोतृ मन्तृ विज्ञातृ न** कदाप्यस्ति। एतदक्षरमेव स्वाज्ञादिदृष्ट्यनुरोधेन दर्शनश्रवणमननविज्ञानक्रियाकर्तृवदवभासते। वस्तुतो निष्प्रतियोगिकस्वमात्रं हि। तदेत**स्मिन् खल्वक्षरे गार्गि! आकाशः ओतश्च प्रोतश्चेति।** यदेव साक्षादपरोक्षात् ब्रह्म यदेतत् पृथिव्याद्यव्यक्तान्तसत्यस्य सत्यं स्वातिरिक्तपृथिव्यादिगतहेयांशापाये निष्प्रतियोगिकसन्मात्रं एतदेवाक्षरमित्यर्थः ॥ ११ ॥

गार्ग्या याज्ञवल्क्यप्रशंसा

**सा होवाच ब्राह्मणा भगवन्तः! तदेव बहुमन्येध्वं यदस्मान्नमस्कारेण मुच्येध्वं न वै जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह वाचक्नवी उपरराम ॥ १२ ॥**

एवं स्वकृतप्रश्नद्वयपूरणतो याज्ञवल्क्यमकुण्ठितशक्तिमदीश्वरं मत्वा ब्राह्मणानां ब्रह्मवित्पणनैराश्यं जनयन्ती ब्राह्मणान् प्रति वाचक्नवी उवाच—सा हेति। हे **ब्राह्मणा भगवन्तः!** यूयं मदीयां वाचं श्रृणुत। **तदेव बहुमन्येध्वं** मन्यध्वम्। नमस्कृत्वाकुण्ठितशक्तयेऽस्मै तस्मा**दस्मा**द्याज्ञवल्क्या**न्नमस्कारेण**

**मुच्येध्व**मिति यन्मयोच्यते तदेव बहुमन्यध्वम् । मनसाप्ययं जेतुं न हि शक्यो भवति । किमुत वादतः ? **न वै जात्वपि युष्माकं** मध्ये **कश्चिदप्येनं ब्रह्मोद्यं** याज्ञवल्क्यं जेतुं भविता । मत्प्रश्नद्वयमनेन लीलयापाकृतम् । पूर्वमेव भवन्निकटे मया विज्ञापितं खलु । एतत्तुल्यो न कोऽप्यस्तीति प्रतिभातीत्युक्त्वा **वाचक्नवी उपरराम** ॥ १२ ॥

**इति अष्टमं ब्राह्मणम्**

---

## नवमं शाकल्यब्राह्मणम्

शाकल्येन देवताविषयकप्रश्नः

अथ हैनं विदग्धः शाकल्यः पप्रच्छ कति देवा याज्ञवल्क्य! इति ? स ह एतयैव निविदा प्रतिपेदे यावन्तो वैश्वदेवस्य निविदि उच्यन्ते त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ओमिति होवाच कत्येव देवा याज्ञवल्क्य ! इति ? त्रयस्त्रिंशदिति ओमिति होवाच कत्येव देवा याज्ञवल्क्य ! इति ? षडिति ओमिति होवाच कत्येव देवा याज्ञवल्क्य ! इति ? त्रय इति ओमिति होवाच कत्येव देवा याज्ञवल्क्य ! इति ? द्वाविति ओमिति होवाच कत्येव देवा याज्ञवल्क्य ! इति ? अध्यर्ध इति ओमिति होवाच कत्येव देवा याज्ञवल्क्य ! इति ? एक इति ओमिति होवाच कतमे ते ? त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति ॥ १ ॥

पृथिव्यादीनां स्थूलसूक्ष्मतरतमभावमवष्टभ्य पूर्वपूर्वस्य उत्तरोत्तरस्मिन् ओतप्रोततया सर्वान्तरं ब्रह्म प्रकाशितम्। तस्यैव साक्षादपरोक्षत्वे नियन्तृ-देवताभेदसङ्कोचविकासाधिगमाय इदं शाकल्यब्राह्मणमारभ्यते—**अथेति**। **अथ** ह वाचक्नव्युपरत्यनन्तरं नामतो **विदग्धः** शकलस्यापत्यं **शाकल्यः** पप्रच्छ। हे **याज्ञवल्क्य!** इति तं स्वाभिमुखीकृत्य **कतिसंख्याका देवा इति**। स याज्ञवल्क्यो ह किल वक्ष्यमाणया **एतया निविदा** देवतासंख्यावाचकमन्त्रपद-रूपया शाकल्यो वैश्वदेवशस्त्रविहितदेवतासंख्यायां पृष्ट इति **प्रतिपेदे**। **यावन्तो वैश्वदेवस्य** शस्त्रस्य **निविदि** संख्यायां तद्वाचकमन्त्रपदानि वैश्वदेवशस्त्रे शस्यन्ते तानि निवित्संज्ञकानि स्युः। तस्यां निविदि यावन्तो देवाः श्रूयन्ते। इतर आह—**त्रयश्च त्री च शता त्रयश्च** देवतानां **त्री च** त्रीणि च शता शतानि। पुनरप्येवं **त्रयश्च त्री च सहस्रा** सहस्राणि। एतावन्तो वै देवा इति याज्ञवल्क्येनाभिहितम्। तत् शाकल्योऽप्योमिति **होवाच**। त्वयैवमेषां मध्यमा संख्या सम्यगुक्ता। पुनरयं याज्ञवल्क्य! इति संबोध्य देवतासङ्कोचविषयसंख्यां पृच्छति—**कत्येव देवा याज्ञवल्क्य! इति**। **त्रयस्त्रिंशत् षट् त्रयो द्वावध्यर्ध** एक इति। एवं देवताविषयसंख्यां पृष्ट्वा पुनः संख्येयस्वरूपं पृच्छति—**कतमे** ते? **त्रयश्च त्री च शता त्रयश्च त्री च सहस्रेति** ॥ १ ॥

त्रयस्त्रिंशद्देवताप्रश्नः उत्तरं च

स होवाच **महिमान** एवैषामेते त्रयस्त्रिꣳशत्त्वेव देवा इति
कतमे ते त्रयस्त्रिꣳशदिति? **अष्टौ** वसव एकादश रुद्रा द्वादशादित्यास्त
एकत्रिꣳशदिन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिꣳशाविति ॥ २ ॥

प्रश्नोत्तरमाह इतरः—**स हेति**। **एषां महिमानो** विभूतयः त्रयस्त्रिंशतं देवानां **एते** त्रयश्च त्री च शतेत्येवमादयः। वस्तुतस्तु **त्रयस्त्रिंशत्त्वेव देवा** इति। **कतमे ते** त्रयस्त्रिंशत्संख्याका देवाः? इत्यत्र—**अष्टौ वसव एकादश रुद्रा द्वादशादित्याः** ते **एकत्रिंशत्**। **इन्द्रश्चैव प्रजापतिश्च त्रयस्त्रिंशाविति** संख्यापूरकावित्यर्थः ॥ २ ॥

वसुविशेषकथनम्

कतमे वसव इति? अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च चन्द्रमाश्च नक्षत्राणि च एते वसव एतेषु हीदं सर्वꣳ वसु हितमिति तस्माद्वसव इति ॥ ३ ॥

तत्र वसूनां विशेषं पृच्छति—**कतमे**? इति। **कतमे वसवः? इत्यत्र अग्न्याद्या नक्षत्रान्ता एते वसवः**। कार्यकरणसंघातावच्छिन्नप्राणिजातकर्मफलाश्रयतया ये सर्वं जगदिदं वासयन्ति स्वयं तत्र वसन्ति च। यस्मादेवं **तस्मात् वसव इति** ॥ ३ ॥

रुद्रविशेषकथनम्

कतमे रुद्रा इति? दश इमे पुरुषे प्राणा आत्मा एकादशस्ते यदास्माच्छरीरान्मर्त्यादुत्क्रामन्ति अथ रोदयन्ति तद्यत् रोदयन्ति तस्माद्रुद्रा इति ॥ ४ ॥

अथ रुद्रविशेषं पृच्छति—**कतमे**? इति। **कतमे रुद्राः? इत्यत्र दश इमे पुरुषे प्राणाः** कर्मज्ञानेन्द्रियाणि **आत्मा** तदनुग्राहकं मन **एकादशः**। ते सर्वे प्राणा **यदास्माच्छरीरात् मर्त्यात्** प्राणिकर्मफलक्षयत **उत्क्रामन्ति, अथ** तदा **रोदयन्ति**। यत् यस्मादेवं **रोदयन्ति तस्मात्** ते **रुद्रा इति** ॥ ४ ॥

आदित्यविशेषकथनम्

कतम आदित्या इति? द्वादश वै मासाः संवत्सरस्य एत आदित्या एते हीदꣳ सर्वमाददाना यन्ति ते यदिदꣳ सर्वमाददाना यन्ति तस्मादादित्या इति ॥ ५ ॥

तत आदित्यविशेषं पृच्छति—**कतमे** ? इति । **कतमे आदित्याः ? इत्यत्र** कालात्मक**संवत्सरस्या**वयवा **द्वादश वै मासाः** प्रसिद्धा एते ह्यादित्याः । यस्मात् पुनः पुनः परिवर्तमानाः सन्तः प्राणिनामायूंषि कर्मफलानि चाददाना गृह्णन्तो यन्ति गच्छन्ति । **यत्** यस्मा**दिदं सर्वमाददाना यन्ति तस्मादेते आदित्याः** ॥ ५ ॥

इन्द्रादिविशेषकथनम्

**कतम इन्द्रः ? कतमः प्रजापतिः इति ? स्तनयित्नुरेव इन्द्रो यज्ञः प्रजापतिरिति कतमः स्तनयित्नुः इति ? अशनिरिति कतमो यज्ञ इति ? पशव इति ॥ ६ ॥**

तत इन्द्रादिविशेषं पृच्छति—**कतमः** ? इति । **कतम इन्द्रः ? कतमः प्रजापतिः ? इत्यत्र स्तनयित्नुरेव इन्द्रो यज्ञः प्रजापतिः इति । कतमः स्तनयित्नुः ? इति । अशनिरिति** वज्रम् । यः प्राणिवीर्यं प्रमापयति स हीन्द्रः तत्कर्म । तत् **कतमो यज्ञः ? इति । पशव इति** । पशूनां यज्ञसाधनत्वात् यज्ञत्वव्यपदेशः ॥ ६ ॥

षट्स्वरूपकथनम्

**कतमे षट् इति ? अग्निश्च पृथिवी च वायुश्चान्तरिक्षं चादित्यश्च द्यौश्च एते षट् एते हीदꣳ सर्वꣳ षडिति ॥ ७ ॥**

षट्संख्यापूरकाः के ? इति पृच्छति—**कतमे** ? इति । **कतमे षट् ? इत्यत्र** पुराग्न्यादयो वसुत्वेन पठिताः । तत्र चन्द्रमसं नक्षत्राणि च वर्जयित्वा षट् भवन्ति । पूर्वोक्तत्रयस्त्रिंशादिविस्तारः **सर्वं षडेव** । वस्वादिविस्तारोऽप्यत्रैवा-न्तर्भवतीत्यर्थः ॥ ७ ॥

त्रिस्वरूपकथनम्

कतमे ते त्रयो देवाः इति ? इम एव त्रयो लोका एषु हीमे सर्वे देवा इति कतमौ तौ द्वौ देवौ इति ? अन्नं चैव प्राणश्चेति कतमोऽध्यर्ध इति ? योऽयं पवत इति ॥ ८ ॥

अथ त्रयआद्यध्यर्धान्तं पृच्छति—**कतमे** ? इति । **कतमे ते त्रयो देवाः** ? इत्यत्र पृथिवीमग्निं चैकीकृत्य एको देवः । अन्तरिक्षं वायुं चैकीकृत्य द्वितीयः । दिवमादित्यं चैकीकृत्य तृतीयः । एत **इम एव त्रयो लोका देवा इति** । हि यस्मात् त्रिषु देवेषु सर्वे देवा अन्तर्भवन्ति तेन एत एव देवाः त्रयः । **कतमौ तौ द्वौ देवौ** ? इत्यत्र **अन्नं चैव प्राणश्च** तौ द्वौ देवौ । अनयोर्हि सर्वेषामन्तर्भावः । **कतमोऽध्यर्ध इति ? योऽयं पवते** वायुरिति ॥८॥

अध्यर्धस्वरूपकथनम्

तदाहुर्यदयमेक इवैव पवतेऽथ कथमध्यर्ध इति ? यदस्मिन्निदꣳ सर्वमध्यार्ध्नोत् तेनाध्यर्ध इति कतम एको देव इति ? प्राण इति स ब्रह्म तदित्याचक्षते ॥ ९ ॥

पुनरध्यर्धैयत्तामेकविषयं च पृच्छति—**तदाहुरिति** । **यदयं** योऽयं वायुरेक **इव** एक **एव पवते** । **अथ कथमध्यर्धः** ? **इति** । **यदस्मिन् इदं सर्वमध्याध्नोंत्** अस्मिन् वायौ सति इदं सर्वमध्याध्नोंत् ऋद्धिं प्राप्नोति **तेनाध्यर्ध इति** । **कतम एको देवो** हि ? **इति** । **प्राण इति** । प्राणस्य सूत्रत्वेन सर्वदेवतात्मकत्वात् । परोक्षताभिधायकशब्देन **सोऽयं** प्राणो **ब्रह्म इत्याचक्षते** तद्विदो यं ब्रह्मेति व्यवहरन्ति । एवमनन्तदेवानां निवित्संख्याविशिष्टत्रयस्त्रिंशद्देवेष्वन्तर्भावः । तेषामप्युत्तरोत्तरेषु । यावदेकस्मिन् प्राणेऽन्तर्भावः सर्वो हि विस्तारः प्राणस्यैव । अत एवायमेकोऽनन्तश्च । नामरूपकर्मगुणशक्तिभेदादनन्तत्वं युज्यत इत्यर्थः ॥ ९ ॥

एकस्यैव प्राणस्याष्टधा भेदः

पृथिव्येव यस्यायतनमग्निर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् याज्ञवल्क्य ! वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायꣳ शारीरः पुरुषः स एष वदैव शाकल्य ! तस्य का देवता इति ? अमृतमिति होवाच ॥ १० ॥ काम एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् याज्ञवल्क्य ! वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं काममयः पुरुषः स एष वदैव शाकल्य ! तस्य का देवतेति ? स्त्रिय इति होवाच ॥ ११ ॥ रूपाण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् याज्ञवल्क्य ! वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवासावादित्ये पुरुषः स एष वदैव शाकल्य ! तस्य का देवतेति ? सत्यमिति होवाच ॥ १२ ॥ आकाश एव यस्यायतनꣳ श्रोत्रं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् याज्ञवल्क्य ! वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायꣳ श्रौत्रः प्रातिश्रुत्कः पुरुषः स एष वदैव शाकल्य ! तस्य का देवतेति ? दिश इति होवाच ॥ १३ ॥ तम एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात्

सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् याज्ञवल्क्य ! वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं छायामयः पुरुषः स एष वदैव शाकल्य ! तस्य का देवता इति ? मृत्युरिति होवाच ॥ १४ ॥ रूपाण्येव यस्यायतनं चक्षुर्लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् याज्ञवल्क्य ? वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायमादर्शे पुरुषः स एष वदैव शाकल्य ! तस्य का देवतेति ? असुरिति होवाच ॥ १५ ॥ आप एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् याज्ञवल्क्य ! वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायमप्सु पुरुषः स एष वदैव शाकल्य ! तस्य का देवतेति ? वरुण इति होवाच ॥ १६ ॥ रेत एव यस्यायतनꣳ हृदयं लोको मनोज्योतिर्यो वै तं पुरुषं विद्यात् सर्वस्यात्मनः परायणꣳ स वै वेदिता स्यात् याज्ञवल्क्य ! वेद वा अहं तं पुरुषꣳ सर्वस्यात्मनः परायणं यमात्थ य एवायं पुत्रमयः पुरुषः स एष वदैव शाकल्य ! तस्य का देवतेति ? प्रजापतिरिति होवाच ॥ १७ ॥

इदानीमेकस्यैव प्राणस्याष्टधा भेद उपदिश्यते—**पृथिवीति** । **यस्यायतनम्**-आश्रयः **पृथिव्येव** । अनेनालोकयतीत्यग्निना पश्यतीत्य**ग्निर्लोकः** । मानसज्योतिषा संकल्पादिकार्यं करोतीति **मनोज्योतिः** । **य** एवंविशिष्ट**स्तं पुरुषं वै विद्यात्** विजानीयात् । **सर्वस्य** कार्यकरणसंघातात्**मनः परायणं** कारणं य एतमेवं

वेत्ति **स वै वेदिता** पण्डितः **स्यात्**। एवं **याज्ञवल्क्य**! त्वं न जानीषे। कथं त्वं पण्डितो भवसि? इत्याक्षिप्तो मुनिराह—**वेद वा अहं तं पुरुषं सर्वस्यात्मनः परायणमिति**। यदि त्वं वेत्थ तं पुरुषं तदियत्तां ब्रूहि इत्याक्षिप्त इतर आह—**यं त्वमात्थ** कथयसि **य एवायं** मातापितृजशरीरे भवः **शारीरः पुरुषः** हे **शाकल्य**! यस्त्वया पृष्टः **स एष** देवः। **तस्य** शारीरस्य **का देवता**? **इति** पृष्टः मुनिः **अमृतमिति होवाच**। मातापितृभुक्तान्नरसस्य शोणितशुक्रपरिणामशरीरहेतुत्वादमृतत्वम् ॥ १० ॥ किञ्च—**काम** इति। स्त्री-व्यतिकराभिलाषः **काम एव यस्यायतनम्**। हृदयेन बुद्ध्या पश्यतीति **हृदयं लोकः** अध्यात्ममपि काममय **एव**। **तस्य का देवता**? **इति**। कामस्य स्त्रीनिमित्तत्वात्। समानमन्यत्। **स्त्रिय इति होवाच** ॥ ११ ॥ किञ्च—**रूपाणीति**। शुक्लकृष्णादि**रूपाण्येव यस्यायतनं य एवासावादित्ये पुरुषः तस्य का देवता**? **इति**। **सत्यमिति होवाच**। अधिदेवताध्यात्मविषये आदित्य-चक्षुषी सत्यशब्देनोच्येते ॥ १२ ॥ **आकाश** इति। सर्वावकाशदोऽयम**आकाश एव यस्यायतनम्**। श्रोत्रे भवः **श्रौत्रः**। तत्र प्रतिश्रवणवेलायां **प्रातिश्रुत्कः**। **तस्य का देवता**? **इति**। **दिश इति होवाच**। आध्यात्मिकस्यापि दिग्भ्यो निष्पन्नत्वात् ॥ १३ ॥ **तम** इति। शार्वराद्यन्धकाररूपं **तम एव यस्यायतनम्**। अध्यात्मं तु **छायामयो**ऽयमज्ञानमयः **पुरुषः**। **तस्य का देवता इति**? **मृत्युरिति होवाच**। अधिदेवताभावमापन्नमृत्योः छायामयहेतुत्वात् ॥ १४ ॥ **रूपाण्येव** इति। पूर्वोक्तानि साधारण**रूपाणि**। इह तु प्रकाशविशिष्टानि **रूपाण्येव यस्यायतनम्**। आदर्शादिः प्रतिबिम्बाधारः। **तस्य का देवता**? **इति**। **असुरिति होवाच**। असोः प्रतिबिम्बितपुरुषनिष्पत्तिहेतुत्वात् ॥ १५ ॥ **आप** इति। साधारणा हि सर्वा **आप एव यस्यायतनम्**। वापीकूपाद्यप्सु विशेषावस्थानम्। **तस्य का देवता**? **इति**। **वरुण इति होवाच**। वरुणस्य वाप्यादिनिष्पत्तिहेतुत्वात् ॥ १६ ॥ **रेत** इति। **रेत एव यस्यायतनम्**। **य एवायं पुत्रमयः पुरुषः** रेतसः पुत्रनिमित्तत्वात् पुरुषगता-स्थिमज्जादीनां रेतःपरिणामत्वाच्च। **तस्य का देवता**? **इति**। **प्रजापतिरिति**

**होवाच**। पितृरूपप्रजापतेः पुत्रनिमित्तत्वात्। एवमष्टधा लोकदेवपुरुषभेदतः त्रिधात्मानं विभज्य एकैको देवो व्यवस्थितः। सर्वः प्राणभेद एवोपासनार्थं व्यपदिष्टः ॥ १७ ॥

दिग्विभागतः पञ्चधोपासनम्

**शाकल्य! इति होवाच याज्ञवल्क्यस्त्वा३ स्विदिमे ब्राह्मणा अङ्गारावक्षयणमक्रता३ इति ॥ १८ ॥**

इदानीं दिग्विभागतः पञ्चधोपासनं वक्तव्यमिति मनीषया शाकल्यस्याग्रहं जनयन्तमधिक्षिपति—**शाकल्य**! इति। **त्वां**—**स्विदिति** वितर्के—**इमे** नूनं **ब्राह्मणाः** अङ्गारा अवक्षीयन्ते यस्मिन् इति **अङ्गारावक्षयणं** नूनं त्वां कृतवन्तः। त्वं तु मोहान्न बुध्यसे ॥ १८ ॥

सदेवसप्रतिष्ठदिक्प्रश्नः

**याज्ञवल्क्य! इति होवाच शाकल्यो यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः किं ब्रह्म विद्वानिति? दिशो वेद सदेवाः सप्रतिष्ठा इति यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः ॥ १९ ॥**

पुनस्तमधिक्षिपति—**याज्ञवल्क्य**! इति। ब्राह्मणाः स्वयं भीताः सन्तः त्वामङ्गारावक्षयणमक्रता इति, **यदिदं कुरुपञ्चालानां ब्राह्मणानत्यवादीः** अत्युक्तवानसि। **किं ब्रह्म विद्वान्** सन् एवं ब्राह्मणानधिक्षिपसि? इत्युक्त आहेतरः—परापरब्रह्मयाथात्म्यविज्ञानं ममास्त्येव। तेन तव किम्? प्रकृते तु त्वया विदितापरविद्याविषये **सदेवाः सप्रतिष्ठाः दिशो वेद**। इतर आह—**यद्दिशो वेत्थ सदेवाः सप्रतिष्ठाः** सफलं यदि विज्ञानं त्वया प्रतिज्ञातं तदा तद्विषये त्वां पृच्छामि। स्थिरो भवेत्यर्थः ॥ १९ ॥

प्राचीदिक्स्थदेवता तत्प्रतिष्ठा च

**किंदेवतोऽस्यां प्राच्यां दिशि असीति? आदित्यदेवत इति स आदित्यः कस्मिन् प्रतिष्ठित इति? चक्षुषीति कस्मिन्नु चक्षुः प्रतिष्ठितं इति? रूपेष्विति चक्षुषा हि रूपाणि पश्यति कस्मिन्नु रूपाणि प्रतिष्ठितानीति? हृदय इति होवाच हृदयेन हि रूपाणि जानाति हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीति एवमेवैतद्याज्ञवल्क्य! ॥ २० ॥**

सर्वं जगदात्मत्वेनावलोकयन्तं दिगात्माहमस्मीति व्यवस्थितं पूर्वाभिमुखं तत्संकल्पानुरोधेनायं पृच्छति—**किमिति । किंदेवतस्त्वमस्यां प्राच्यां दिशि असि? इति ।** यो यो यां यां देवतामुपास्ते स स पुरुषस्तां तां देवतां प्रतिपद्यते । तथा च वक्ष्यति हि "देवो भूत्वा देवानप्येति" इति । यत एवमतो मुनेः ब्रह्मभूतत्वेन सर्वदेवताद्यात्मता युज्यते ब्रह्मणः सर्वात्मकत्वात् । दिगात्मनस्ते प्राच्यां दिशि का देवता? यया त्वं प्राचीदिग्रूपेण संपन्नोऽसि इत्युक्त इतर आह—**आदित्यदेवत इति ।** प्राच्यां दिशि आदित्यात्मना स्थितोऽस्मीत्यर्थः । तत्प्रतिष्ठां पृच्छति—**स आदित्यः कस्मिन् प्रतिष्ठितः? इति । चक्षुषीति ।** उदितोऽयमनुदितोऽयमिति चक्षुषा ह्यादित्यः प्रकाश्यते "चक्षुष आदित्यः चक्षोः सूर्योऽजायत" इति श्रुतेः । कार्यं हि कारणे प्रतितिष्ठति । **कस्मिन्नु चक्षुः प्रतिष्ठितं? इति । रूपेष्विति ।** चक्षुषो रूपनिमित्तत्वात् । चक्षुषा सह प्राची दिक् सर्वा रूपभूता । **कस्मिन्नु रूपाणि प्रतिष्ठितानि? इति । हृदय इति होवाच ।** रूपाणां हृदयारब्धत्वात् । रूपाकारेण हृदयमेव परिणतमित्यर्थः । यस्माल्लोको **हृदयेन हि रूपाणि जानाति**—एकीकृत्य बुद्धिमनसी हृदयमित्युच्यते—तस्मात् **हृदये ह्येव रूपाणि प्रतिष्ठितानि भवन्तीति ।** याज्ञवल्क्योक्तिमनुमोदते—**एवमेवैतत् याज्ञवल्क्य!** इति ॥ २० ॥

दक्षिणदिक्स्थदेवता तत्प्रतिष्ठा च

किंदेवतोऽस्यां दक्षिणायां दिशि असीति? यमदेवत इति स यमः कस्मिन्प्रतिष्ठित इति? यज्ञ इति कस्मिन्नु यज्ञः प्रतिष्ठित इति? दक्षिणायामिति कस्मिन्नु दक्षिणा प्रतिष्ठिता इति? श्रद्धायामिति यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति श्रद्धायाꣳ ह्येव दक्षिणा प्रतिष्ठितेति कस्मिन्नु श्रद्धा प्रतिष्ठितेति? हृदय इति होवाच हृदयेन हि श्रद्धां जानाति हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीति एवमेवैतद्याज्ञवल्क्य! ॥ २१ ॥

**किंदेवतोऽस्यामिति।** **किंदेवतोऽस्यां दक्षिणायां दिशि असि? इति** पूर्ववत्। **यमदेवत इति।** दक्षिणदिग्भूतस्य मे यमो देवता भवति। **स यमः कस्मिन् प्रतिष्ठितः? इति। यज्ञ इति।** स्वकारणयज्ञप्रतिष्ठितत्वात् यमस्य। **कस्मिन्नु यज्ञः प्रतिष्ठितः? इति। दक्षिणायामिति।** यज्ञस्य दक्षिणानिष्क्रीतत्वात् दक्षिणाकार्यं यज्ञ इत्यर्थः। **कस्मिन्नु दक्षिणा प्रतिष्ठिता? इति। श्रद्धायामिति।** दित्सूनामास्तिक्यबुद्धिर्हि श्रद्धा। तत् कथम्? **यदा ह्येव श्रद्धत्तेऽथ दक्षिणां ददाति।** तस्मात् **श्रद्धायामेव दक्षिणा प्रतिष्ठिता इति। कस्मिन्नु श्रद्धा प्रतिष्ठिता? इति। हृदय इति होवाच।** श्रद्धाया हृद्वृत्तित्वात्। यतो **हृदयेन हि श्रद्धां जानाति**—वृत्तेः वृत्तिमत्प्रतिष्ठितत्वात्—अतो **हृदये ह्येव श्रद्धा प्रतिष्ठिता भवतीति। एवमेवैतत् याज्ञवल्क्य!** इति ॥ २१ ॥

प्रतीचीदिक्स्थदेवता तत्प्रतिष्ठा च

किंदेवतोऽस्यां प्रतीच्यां दिशि असीति? वरुणदेवत इति स वरुणः कस्मिन् प्रतिष्ठित इति? अप्स्विति कस्मिन्नु आपः

प्रतिष्ठिता इति? रेतसीति कस्मिन्नु रेतः प्रतिष्ठितमिति? हृदय इति तस्मादपि प्रतिरूपं जातमाहुर्हृदयादिव सृप्तो हृदयादिव निर्मित इति हृदये ह्येव रेतः प्रतिष्ठितं भवतीति एवमेवैतद्याज्ञवल्क्य! ॥२२॥

**किंदेवतोऽस्यां** इति। **किंदेवतोऽस्यां प्रतीच्यां दिशि असि? इति। वरुण इति।** तद्दिग्भावमापन्नस्य मे वरुणो देवता। **स कस्मिन् प्रतिष्ठितः? इति। अप्सु इति।** अपां वरुणकार्यत्वात्। **कस्मिन्नु आपः प्रतिष्ठिताः? इति। रेतसीति।** "रेतस आपः" इति श्रुतेः। **कस्मिन्नु रेतः प्रतिष्ठितं? इति। हृदय इति।** यतो रेतो हृत्कार्यं, कामवृत्तेः हृत्प्रभवत्वात्—हृदयाद्धि कामिनो रेतोऽवस्कन्दति—**तस्मादपि प्रतिरूपं** अनुरूपं लौकिकाः पुत्रं **जातमाहुः**। अस्य पितुः पुत्रोऽयं **हृदयादिव सृप्तो** विनिस्सृतः। यथा सुवर्णेन निर्मितं कुण्डलादिकं तथ हृदयेन **निर्मितः**। तस्मात् **हृदये ह्येव रेतः प्रतिष्ठितं भवतीति। एवमेवैतत् याज्ञवल्क्य!** इति ॥ २२ ॥

उदीचीदिक्स्थदेवता तत्प्रतिष्ठा च

किंदेवतोऽस्यामुदीच्यां दिशि असीति? सोमदेवत इति स सोमः कस्मिन् प्रतिष्ठित इति? दीक्षायामिति कस्मिन्नु दीक्षा प्रतिष्ठिता इति? सत्य इति तस्मादपि दीक्षितमाहुः सत्यं वदेति सत्ये ह्येव दीक्षा प्रतिष्ठितेति कस्मिन्नु सत्यं प्रतिष्ठितमिति? हृदय इति होवाच हृदयेन हि सत्यं जानाति हृदये ह्येव सत्यं प्रतिष्ठितं भवतीति एवमेवैतद्याज्ञवल्क्य! ॥ २३ ॥

**किंदेवतोऽस्यामिति**। सोमलतां देवतां चैकीकृत्य **सोम** इति निर्देशः। **स कस्मिन् प्रतिष्ठितः? इति। दीक्षायामिति।** दीक्षितो हि सोमं क्रीणाति। यथावत् तेन इष्ट्वा उत्तरां गतिं प्रतिपद्यते। **कस्मिन्नु दीक्षा प्रतिष्ठिता?**

इति । **सत्य इति** । यस्मात् सत्ये दीक्षा प्रतिष्ठिता **तस्मादपि दीक्षितमाहुः— सत्यं वदेति** । **कस्मिन्नु सत्यं प्रतिष्ठितं ? इति । हृदय इति होवाच** । यस्मात् **हृदयेन हि सत्यं जानाति** तस्मात् **हृदये ह्येव सत्यं प्रतिष्ठितं भवतीति** । **एवमेवैतत् याज्ञवल्क्य** ! इति ॥ २३ ॥

ध्रुवास्थदेवता तत्प्रतिष्ठा च

किंदेवतोऽस्यां ध्रुवायां दिशि असीति ? अग्निदेवत इति सोऽग्निः कस्मिन् प्रतिष्ठित इति ? वाचीति कस्मिन्नु वाक् प्रतिष्ठिता इति ? हृदय इति कस्मिन्नु हृदयं प्रतिष्ठितं ? इति ॥ २४ ॥

**किंदेवतोऽस्यामिति** । मेर्वग्रवासिनामूर्ध्वा दिक् ध्रुवेत्युच्यते । **किंदेवतोऽस्यां ध्रुवायां दिशि असि ? इति । अग्निदेवत इति** । ऊर्ध्वदिशः प्रकाशात्मकत्वात् सैवाग्निरुच्यते । **सोऽग्निः कस्मिन् प्रतिष्ठितः ? इति । वाचीति । कस्मिन्नु वाक् प्रतिष्ठिता ? इति । हृदय इति** । यत एतत् सर्वं सर्वात्मभावारूढयाज्ञवल्क्यहृद्विकल्पितं अतः तत् हृदयं सर्वात्मकम् । तादृशं **हृदयं कस्मिन्नु प्रतिष्ठितं ? इति** याज्ञवल्क्यं पृच्छति ॥ २४ ॥

हृदयाधिष्ठानकथनम्

अहल्लिकेति होवाच याज्ञवल्क्यो यत्रैतत् अन्यत्रास्मन्मन्यासै यद्ध्येतत् अन्यत्रास्मत्स्यात् श्वानो वा एनत् अद्युः वयांसि वा एनत् विमथ्नीरन्निति ॥ २५ ॥

हृदयाधिष्ठानमाह—**अहल्लिकेति** । हृदयाधिकरणं नामान्तरेण **अहल्लिकेति होवाच याज्ञवल्क्यः** । स्वापादावहन्यहनि लीयत इति अहल्लिका तनुः । सैव हृदयायतनमित्यर्थः । **यत्र एतत्** हृदयं **अस्मत्** अस्मत्तः शरीरादन्यत्र वर्तत

इति **मन्यासै** मन्यसे यद्धि **एतद्धृदयं अस्मदन्यत्र स्यात्** भवेत् तदा **एनत्** शरीरं **श्वानो वा अद्युः** भक्षयेयुः। **वयांसि वा एनत्** शरीरं **विमथ्नीरन्**। यस्मादेवं तस्मात् मयि शरीरे हृदयं प्रतिष्ठितमित्यर्थः ॥ २५ ॥

हृदयशरीरयोरधिष्ठानकथनम्

कस्मिन्नु त्वं चात्मा च प्रतिष्ठितौ स्थ इति? प्राण इति कस्मिन्नु प्राणः प्रतिष्ठित इति? अपान इति कस्मिन्नु अपानः प्रतिष्ठित इति? व्यान इति कस्मिन्नु व्यानः प्रतिष्ठित इति? उदान इति कस्मिन्नु उदानः प्रतिष्ठित इति? समान इति स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यते अशीर्यो नहि शीर्यते असङ्गो न हि सज्यते असितो न व्यथते न रिष्यति एतान्यष्टावायतनानि अष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान् पुरुषान्निरुह्य प्रत्युह्य अत्यक्रामत् तं त्वौपनिषदं पुरुषं पृच्छामि तं चेन्मे न विवक्ष्यसि मूर्धा ते विपतिष्यतीति तꣳ ह न मेने शाकल्यस्तस्य ह मूर्धा विपपात अपि हास्य परिमोषिणोऽस्थीन्यपजह्रुः अन्यत् मन्यमानाः ॥ २६ ॥

शरीरस्य नामरूपकर्मात्मकत्वेन हृदयप्रतिष्ठितत्वमुक्तम्। पुनर्गोलकाभिप्रायेण हृदयं शरीरे प्रतिष्ठितमिति च। अतो हृदयशरीरयोरन्योन्यप्रतिष्ठितता उक्ता। अतस्त्वां पृच्छामीत्याह—**कस्मिन्नु**? इति। **कस्मिन्नु त्वं च** शरीरमात्मा ते हृदयं च **प्रतिष्ठितौ स्थः**? **इति**। **प्राण इति**। शरीरहृदययोः प्राणायत्तत्वात्। **कस्मिन्नु प्राणः प्रतिष्ठितः**? **इति**। **अपान इति**। अपानो हि प्राणायतनम्। अपानप्रतिष्ठाभावे प्राणोऽयमूर्ध्वं गच्छेत्। **कस्मिन्नु अपानः प्रतिष्ठितः**? **इति**। **व्यान इति**। यदि व्यानवृत्त्या प्राणापानौ न

गृहीतौ तदा ऊर्ध्वाधोमार्गेण प्राणापानौ गच्छेताम्। **कस्मिन्नु व्यानः प्रतिष्ठितः? इति। उदान इति।** एते त्रयः किल स्थानीयोदानाभावे विष्वगेव ईयुः। **कस्मिन्नु उदानः प्रतिष्ठितः? इति। समान इति।** समानप्रतिष्ठिता एते प्राणादयः। समानो हि विराट्। स्वगतविशेषांशनिरासतः स एवात्मा भवति। यः शरीरहृदयप्राणेन्द्रियादिकरणसङ्घातप्रवृत्तिनिमित्तं यस्मिन् सर्वमोतं च प्रोतं च यन्निर्विशेषस्वरूपप्रपञ्चनाय यत्साक्षादपरोक्षादित्याद्यारम्भः यस्तु व्यष्टिसमष्टिस्थूलादिचतुरंशाढ्यस्वाविद्यापदतत्कार्यजातारोपापवादाधिकरणं यस्तु वस्तुतो निरधिकरणत्वेन निष्प्रतियोगिकस्वमात्रमवशिष्यते **स एष** चिद्धातुः। स्वाज्ञदृष्टिप्रसक्तविशेषजातं कालत्रयेऽपि स्वस्मिन् **नेति नेतीति** निषिध्य अपह्नवीकृत्य स्वात्ममात्रं योऽवशिष्टः **सोऽयमात्मा केनाप्यगृह्यः।** कथम्? मूर्तामूर्तकलनाविरलत्वान्न **हि गृह्यते।** तथायम**शीर्यो न हि शीर्यते।** सर्वत्र मूर्तादिविरलहेतुः संयोजनीयः। तथा**सङ्गो न हि सज्यते।** तथा**सितो न व्यथते।** अतो **न रिष्यति** न विनश्यति सन्मात्रत्वात्। इदानीं क्रममतिक्रम्य औपनिषत्पुरुषाख्यायिकातोऽपसृत्य श्रुतिः स्वेन रूपेण त्वरया निर्दिशति, पुनराख्यायिकामनुसरति च---**एतानीति।** पृथिव्येव यस्यायतनमित्यादिना यान्युक्ता-न्य**ष्टावायतनानि** अग्निर्लोक इत्यादिना **अष्टौ लोकाः** अमृतमित्यादिना **अष्टौ देवाः** शारीरः पुरुष इत्यादिना **अष्टौ पुरुषाः। स यः** कश्चित् शारीर-प्रभृतीन् **पुरुषान् निरुह्य** अष्टचतुष्कभेदेन लोकस्थितिं प्रपञ्च्य प्राचीदिगादि-द्वारेण **प्रत्युह्य** हृदयाद्युपाधिधर्मा**नत्यक्रामत्** नेति नेतीत्यतिक्रान्तवान् स्वाज्ञ-विकल्पिताशनायादिधर्मा यत्र न दृश्यन्ते सोऽयं स्वेनैव रूपेण औपनिषदः पुरुषः उपनिषत्स्वेव वेदितव्यः तस्य प्रमाणान्तरागम्यत्वात्। य एवमौपनिषदः पुरुषः स्वातिरिक्ताष्टायतनाद्यसंभवप्रबोधसमकालं स्वमात्रमवशिष्यते **तमौपनिषदं पुरुषं** तदियत्तां त्वा त्वां **पृच्छामि।** यदि **तं मे न विवक्ष्यसि चेत्** तदा **ते** तव **मूर्धा विपतिष्यतीति** याज्ञवल्क्य आह। **शाकल्यस्तु तं** औपनिषदं पुरुषं **न मेने** तस्यापरब्रह्ममात्रज्ञत्वेन परब्रह्मज्ञानविकलत्वात् तन्न विज्ञातवान् खलु। **तस्य ह मूर्धा विपपातेति।** श्रुतेर्वचः—**तं ह न मेन** इत्यादि।

समाप्तेयमाख्यायिका। किञ्च **अपि हास्य** शाकल्यस्यास्थीनि शिष्यैः गृहान् प्रति नीयमानानि **परिमोषिणः** तस्करा **अपजह्रुः** अपहृतवन्तः **अन्यत्** धनं नीयमानं **मन्यमानाः**। तत् किन्निमित्तम्? एवं याज्ञवल्क्यशापात्। पुरा अष्टाध्याय्या आख्यायिका सूचिता। तत्र शाकल्ययाज्ञवल्क्ययोः संवादो निर्वृत्तः। तदा पुरेऽतिथ्ये मरिष्यसि न तेऽस्थीनि गृहान् प्राप्स्यन्तीति शापो दत्तः। सैषाख्यायिका आचारार्थं विद्यास्तुतये च सूचिता॥ २६॥

याज्ञवल्क्येन प्रश्नप्रकारः

**अथ होवाच ब्राह्मणा भगवन्तो यो वः कामयते स मा पृच्छतु सर्वे वा मा पृच्छत यो वः कामयते तं वः पृच्छामि सर्वान् वा वः पृच्छामीति ते ह ब्राह्मणा न दधृषुः॥ २७॥**

पुरा नेति नेतीति स्वातिरिक्तप्रतिषेधेन ब्रह्मणो निर्देशः कृतः। पुनर्जगन्मूलप्रदर्शनमुखेनाख्यायिकामनुसृत्य निरस्तसमस्तविशेषं ब्रह्म निर्दिदिक्षति—**अथे**ति। वादतो ब्राह्मणान्निर्जित्य गोधनमवाप्य **अथा**नन्तरं तूष्णींभूतेषु ब्राह्मणेषु स **होवाच** याज्ञवल्क्यः। किमिति? हे **ब्राह्मणा भगवन्तः**! इति तान् संबोध्य **यो वो** युष्माकं मध्ये याज्ञवल्क्यं मां पृच्छामीति **कामयते स** मामागत्य **पृच्छतु**। **सर्वे वा** मिलित्वा **मा** मां प्रति **पृच्छत**। नो चेत् **यो वो** याज्ञवल्क्यो मां पृच्छत्विति **कामयते तं वः पृच्छामि**। **सर्वान् वा वः** युष्मानहं **पृच्छामीति**। **ते ह ब्राह्मणाः** प्रत्युत्तरं दातुं तन्निकटे स्थातुं वा मनो **न दधृषुः** न कृतवन्त इत्यर्थः॥ २७॥

ब्रह्मनिर्देशाय पुरुषवृक्षयोः साधर्म्यं विशेषश्च

**तान् ह एतैः श्लोकैः पप्रच्छ—**

**यथा वृक्षो वनस्पतिस्तथैव पुरुषोऽमृषा।**
**तस्य लोमानि पर्णानि त्वगस्योत्पाटिका बहिः॥**

त्वच एवास्य रुधिरं प्रस्यन्दि त्वच उत्पटः ।
तस्मात्तदातृण्णात् प्रैति रसो वृक्षादिवाहतात् ॥
मांसान्यस्य शकराणि किनाटं स्नाव तत्स्थिरम् ।
अस्थीन्यन्तरतो दारूणि मज्जा मज्जोपमा कृता ॥
यद्वृक्षो वृक्णो रोहति मूलान्नवतरः पुनः ।
मर्त्यः स्विन्मृत्युना वृक्णः कस्मात् मूलात्प्ररोहति ॥
रेतस इति मा वोचत जीवतस्तत्प्रजायते ।
धानारुह इव वै वृक्षोऽञ्जसा प्रेत्य संभवः ॥
यत्समूलमावृहेयुर्वृक्षं न पुनराभवेत् ।
मर्त्यः स्विन्मृत्युना वृक्णः कस्मान्मूलात्प्ररोहति ॥
जात एव न जायते को न्वेनं जनयेत्पुनः ।
विज्ञानमानन्दं ब्रह्म रातिर्दातुः परायणं
तिष्ठमानस्य तद्विद इति ॥ २८ ॥

एवमुपरतबाह्यान्तर्व्यापारान् ब्राह्मणानयमेव पृच्छतीत्याह—**तानिति**। याज्ञवल्क्यस्तान् वक्ष्यमाणैरेतैः श्लोकैः पप्रच्छ ह। किमिति? **यथा** लोके **वनस्पतिः**शब्दवाच्यो **वृक्षो**ऽमृषा तस्यादिमध्यावसानेषु अदृष्टदृष्टनष्टस्वभावत्वात्, तथैव शिरःपाण्यादिमान् **पुरुषोऽमृषा**। तद्गतहेयांशापायसिद्धपुरुषोऽमृषा तस्य परमार्थसद्रूपत्वात्। **तस्य** पूर्वोक्तपुरुषस्य **लोमानि** वनस्पतेः **पर्णानि**। अस्येतरस्य पुरुषस्य **बहिस्त्वगुत्पाटिका**। वनस्पतेस्**त्वच एव** सकाशात् **अस्य** पुरुषस्य **रुधिरं प्रस्यन्दि**। त्वच एव उत्स्फुटतीति **त्वच उत्पटः**। वनस्पतेः पुरुषस्य च यस्मादेवं तुल्यता **तस्मात्तदातृण्णात्** हिंसितात् **प्रैति** आहतात् छिन्नात् **वृक्षात् रस इव** पुरुषात् रुधिरं निर्गच्छति। **अस्य**

पुरुषस्य **मांसानि** वनस्पतेः **शकराणि** शकलानि। वृक्षस्य **किनाटं** काष्ठसंलग्नवल्कलरूपं पुरुषस्य **स्नाव तत् स्थिरं** च। पुरुषस्य **स्नावान्तरतोऽस्थीनि** भवन्ति। तथा किनाटस्यान्तरतो **दारूणि** भवन्ति। वनस्पतेः पुरुषस्य **मज्जा** मज्जाया उपमा **मज्जोपमा कृता**। अनयोर्नान्यो विशेषोऽस्ति। **यत्** यदि **वृक्षो वृक्णः** छिन्नो **रोहति पुनः मूलात् नवतरः** प्रादुर्भवति। एवं वनस्पतिपुरुषयोः समानम्। छिन्नस्य प्ररोहणं तु वनस्पतौ विशेषः। पुरुषे न हि तदस्ति। मृत्युना वृक्णस्य पुनः प्ररोहणं न हि दृश्यते। कुतश्चित् प्ररोहणेन तत् भवितव्यमिति। तस्मात् वः पृच्छामि—**मर्त्यो** मनुष्यः **स्विन्मृत्युना वृक्णो** मृतः पुनः **कस्मात् मूलात् प्ररोहति**? **रेतसः** प्ररोहतीति यद्येवं वदथ तथा **मैवं वोचत**। यस्मात् **जीवतः** पुरुषात् रेतः **प्रजायते** न मृतात्। अपि च **धानारुहो** धाना बीजं इवशब्दोऽनर्थकः। **वै वृक्षोऽञ्जसा प्रेत्य** मृत्वा **संभवो** भवेत्। **यत्** यदि वनस्पतेः **समूलमावृहेयुः** वृक्षमुत्पाटयेयुः **न** हि वृक्षः **पुनराभवेत्**। तस्मात् वः पृच्छामि। **मर्त्यः स्वित्** सर्वस्य जगतो मूलमपि **मृत्युना** वृक्णः सन् **कस्मात् मूलात् प्ररोहति**? जात एवेति मन्यध्वम्। किमत्र प्रष्टव्यम्? जनिष्यतो हि भावः प्रष्टव्यः न जातस्य। अयं तु **जात एव**। न ह्यत्र प्रश्न उपपद्यते इति चेन्न; जातस्य विद्यमानत्वात्। न हि तस्य पुनर्जात्याकांक्षास्ति। मृतः पुनर्जायत इति चेन्न; मृतस्याभावरूपतया वस्तुत्वात् न तस्यापि जातिरस्ति। अतो वः पृच्छामि—**को न्वेनं** मृतस्थानीयस्वाविद्यापदतत्कार्यजातं **पुनर्जनयेत्**? को न्वेनमित्याक्षेपार्थतः परमार्थवस्तुनि कार्यत्वं कारणत्वं वा मृग्यमिति द्योत्यते। एवं पृष्टा ब्राह्मणा याज्ञवल्क्येन पृष्टार्थं न जग्मुः। यत एवमतो याज्ञवल्क्यस्य ब्रह्मिष्ठता ध्रुवपदं गता। तेनैव ब्राह्मणा गावश्च जिताः। समाप्तेयमाख्यायिका। यत् स्वाज्ञदृष्टिविकल्पितस्वाविद्यापदतत्कार्यस्य स्वज्ञदृष्ट्या मूलं, यत् याज्ञवल्क्यो ब्राह्मणान् पृष्टवान् तदस्मभ्यं श्रुतिराह—**विज्ञानमानन्दं ब्रह्मेति**। **विज्ञानं** विज्ञप्तिः ज्ञप्तिमात्रत्वात्। चिन्मात्रं विज्ञानशब्दार्थः। वैषयिकविज्ञानवत् किं दुःखानुविद्धम्? नेत्याह—**आनन्दमिति**।

कार्यं चेत् कारणं किंचित् कार्याभावे न कारणम् ।
कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ॥

इत्यादिश्रुत्यनुरोधेन कार्यकारणकलनाविरलपूर्णज्ञप्तिमात्रस्य स्वातिरिक्तविषयज्ञानासंभवसिद्धत्वेन निष्प्रतियोगिकपरमानन्दमात्रत्वात् न हि दुःखानुविद्धता सेद्धुं पारयति । विज्ञानानन्दयोः भेद इति चेन्न ; तयोरेकार्थपर्यवसायित्वात् । यत् विज्ञानं स आनन्द इति लौकिकज्ञानानन्दवत् परिच्छिन्नता स्यादिति तत्राह— **ब्रह्मे**ति ।

सच्चिदानन्दमात्रोऽहमनुत्पन्नमिदं जगत् ।

इतिश्रुत्यनुरोधेन स्वातिरिक्तानृतजडदुःखाढ्यस्वाविद्यापदतत्कार्यापह्नवसिद्धसच्चिदानन्दमात्रतया उपबृंहणात् । यत् विज्ञानमानन्दं ब्रह्म प्रतिपादितं तद्याथात्म्यं यो जानाति स तन्मात्रतयावशिष्यते । यस्तु जगन्मूलत्वेन तज्जानाति क्रमेण सोऽपि तत्रैव पर्यवस्यतीत्याह—**रातिर्दातुः परायणमि**ति । षष्ठ्यर्थे प्रथमा **राति**रिति । रातेः कर्मफलधनस्य **दातुः** स्वकृतकर्मफलमर्पयतो यजमानस्य स्वाश्रमोचितसत्कर्मानुष्ठातुः **परायणं** जगन्मूलभावमापन्नेशितुः कर्माध्यक्षत्वेन कर्मिपटलपरागतित्वात् तत्तद्भावानुरोधेन कर्मफलदातृ तदेवेत्यर्थः । किञ्च यस्त्वेषणाभ्यो व्युत्थाय कर्मकृत् ब्रह्म वेत्तीति तद्वित् तस्यैवं **तिष्ठमानस्य ब्रह्मविदो** ब्रह्मैव परायणं " ब्रह्म वेद ब्रह्मैव भवति " इति वेदनसमकालब्रह्मभावापत्त्यनुवादिश्रुतेः ॥ २८ ॥

**इति नवमं ब्राह्मणम्**

इति तृतीयोऽध्यायः

---

# चतुर्थोऽध्यायः

## प्रथमं ब्राह्मणम्

जनकयाज्ञवल्क्यसंलापः

जनको ह वैदेह आसांचक्रे अथ ह याज्ञवल्क्य आवव्राज तꣳ होवाच याज्ञवल्क्य! किमर्थमचारीः पशूनिच्छन् अण्वन्तानीति उभयमेव सम्राट्! इति होवाच ॥ १ ॥

पञ्चमाध्याये "अष्टावायतनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः स यस्तान् पुरुषान् निरुह्य प्रत्युह्यात्यक्रामत्" इति पुनः पञ्चधा निरुह्य प्रत्युह्य प्राणादिपञ्चात्मके समानाख्ये जगदात्मनि विराजि सूत्रतयावशेषिते सूत्रं बीजात्मावशेषितं भवति। नेति नेतीति तद्गतविशेषांशनिरासतः साक्षादपरोक्षात् ब्रह्म औपनिषदं विज्ञानमानन्दं ब्रह्मेति प्रपञ्चितम्। पुनस्तस्यैव वागादिद्वारेणाधिगमः कर्तव्य इति षष्ठाध्याय आरभ्यते। ब्राह्मणद्वयसूचिताख्यायिका त्वाचारार्था वक्ष्यमाणब्रह्मविद्यास्तुत्यर्था वा भवति—**जनक** इति। **जनको ह वैदेहो** राजा सर्ववित् याज्ञवल्क्यदर्शनोत्सुकः सन् स्वोचितासने **आसाञ्चक्रे** स्थितवान्। **अथ** तस्मिन्नवसरे तं राजानं दिदृक्षुः तन्निकटं **याज्ञवल्क्य आवव्राज** तदनुग्रहार्थमुपगतवान्। जनकस्तु **तमागतं** याज्ञवल्क्यं विधिवत् पूजयित्वा **उवाच ह**। किमिति? **याज्ञवल्क्य! किमर्थमचारीः** आगतोऽसि? किं पुनः **पशूनिच्छन्** यद्वा **अण्वन्तान्** मत्तः सूक्ष्मवस्तुनिर्णयान्तान् प्रश्नान् श्रोतुमिच्छन् वा समागतोऽसि? इत्युक्तो मुनिः **उभयमेव सम्राट्! इति होवाच**। वाजपेययाजी भारतवर्षाधिपो वा सम्राट् ॥ १ ॥

वाग्वै ब्रह्मेति शैलिनिमतम्

यत्ते कश्चिदब्रवीत तच्छृणवामेत्यब्रवीत् मे जित्वा शैलिनिर्वाग्वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात्तथा तच्छैलिनिरब्रवीत् वाग्वै ब्रह्मेत्यवदतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत् सम्राट्! इति स वै नो ब्रूहि याज्ञवल्क्य! वागेवायतनमाकाशः प्रतिष्ठा प्रज्ञेत्येनदुपासीत का प्रज्ञता? याज्ञवल्क्य! वागेव सम्राट्! इति होवाच वाचा वै सम्राट्! बन्धुः प्रज्ञायते ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि इष्टꣳ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतानि वाचैव सम्राट्! प्रज्ञायन्ते वाग्वै सम्राट्! परमं ब्रह्म नैनं वाक् जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ २ ॥

हे राजन्! त्वमनेकाचार्यसेवी। तत्तदाचार्यमुखतो यो योऽर्थस्त्वयावधृतः त्वत्तः तं तमर्थं श्रोतुमिच्छन् समागतोऽस्मि इत्याह—**यत्त** इति। **यत् ते** तुभ्यं **कश्चिदा**चार्यो**ऽब्रवीत् तच्छृणवामेति** पृष्ट इतर आह—**अब्रवीदिति**। नामतः **शैलिनिः मे** मां वादतो **जित्वा वाग्वै** वाग्देवतैव **ब्रह्मेत्यब्रवीत्** उक्तवान्। इतर आह—**यथेति**। **यथा** स्वहितकर्त्री माता यस्य विद्यते स **मातृमान्**। ततः परं पितानुशास्ता यस्य विद्यते स **पितृमान्**। यस्य उपनयनात् परं आसमावर्तनं आचार्योऽनुशास्ता स **आचार्यवान्**। एवं संस्कारत्रययुक्तस्य मनः

श्रेयोमार्गे न व्यभिचरति। **तथा** त्वां जित्वा **वाग्वै ब्रह्मेति शैलिनिरब्रवीत्।** **अवदतो हि** मूकस्यार्थज्ञानाभावात् तस्य **किं वा स्यात्? इति** अब्रवीत् **ते** तुभ्यमित्युक्त इतर आह—**तस्य** वागाख्यब्रह्मणः **आयतनं प्रतिष्ठां न मेऽब्रवीत्।** इतर आह—**एकपाद्वा एतद्ब्रह्म।** अनेन उपदिष्टं पादत्रय-विकलोपासनं न हि यथोक्तफलदं भवति इत्येवं मुनिनोक्तः **स** सम्राट् राजा स्वाभिमुखीकरणाय **याज्ञवल्क्य!** इति संबोध्य तं प्रार्थयति—यदि त्वमेवं विद्वान् **स वै नोऽस्मभ्यं ब्रूहि।** वाग्देवतस्य ब्रह्मणो **वाक्करणमेवायतनं** शरीरम्। **आकाश** एव तस्य **प्रतिष्ठा** आकाशस्य वागुत्पत्तिस्थितिप्रलयाधि-करणत्वात्। चतुष्पाद्ब्रह्म **एनत् प्रज्ञेत्युपासीत। याज्ञवल्क्य!** वागाख्यब्रह्मणः **का प्रज्ञता?** यथायतनप्रतिष्ठे ब्रह्मणो व्यतिरिक्ते तथा प्रज्ञापि चतुष्पदब्रह्मणो व्यतिरिक्ता। अतो **वागेव सम्राट् इति होवाच।** तत् कथं वागेव सम्राट्! उच्यते? **वाचा वै सम्राट्!** बन्धुरिव **बन्धुः** ऋग्वेदादिः **प्रज्ञायते।** ऋगादीनां कथं बन्धुत्वम्? हितोपदेष्टृत्वात्। **ऋग्वेद** इत्यादि **व्याख्यानानीयन्तं** व्या-ख्यातम्। यागादिधर्मजातं **इष्टम्।** होमनिमित्तं **हुतम्।** अन्नदाननिमित्त**माशितम्।** पानदाननिमित्तं **पायितम्।** **अयं च लोकः** इदं च जन्म **परश्च लोको** भावि जन्म **सर्वाणि च भूतानि वाचैव सम्राट्! प्रज्ञायन्ते। वाग्वै सम्राट्!** स्वगतविशेषांशापाये **परमं ब्रह्म।** एवंविद**मेनं** वाक् **प्रज्ञा न जहाति। एनं** ब्रह्मविदं प्रति **सर्वाणि भूतानि** बलि**मभिक्षरन्ति** दास्यन्ति। देवोऽस्मीति ज्ञानबलात् **देवो** भूत्वात्यन्तिकदेहाद्यभिमतिनिवृत्तौ **देवानप्येति** अपिगच्छति। **य एवं विद्वानेतदुपास्ते** स देव एव भवतीत्यत्र "तं यथा यथोपासते तथैव भवति" इत्यादिश्रुतेः। एवं मुन्युपदिष्टार्थसन्तुष्टो राजा विद्यानिष्क्रयार्थं, हस्त्यृषभमित्यत्र हस्तिश्रेष्ठः, हस्ती च ऋषभश्च हस्त्यृषभं वा, हस्तितुल्य ऋषभो यस्मिन् गोसहस्रे वर्तते तत्सर्वं **हस्त्यृषभं** वा। एवं **सहस्रं ददामीति होवाच जनको वैदेहः।** एवं राजवाक्यं श्रुत्वा **स होवाच याज्ञवल्क्यः।** किमिति? **अननुशिष्य** शिष्यं कृतार्थमकृत्वा शिष्यात् धनं **नापाहरेतेति पिता मेऽमन्यत।** ममाप्ययमेवाभिप्रायः ॥ २ ॥

प्राणो वै ब्रह्मेति उदङ्कमतम्

यदेव ते कश्चिदब्रवीत् तच्छृणवामेत्यब्रवीन्म उदङ्कः शौल्बायनः प्राणो वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तच्छौल्बायनोऽब्रवीत् प्राणो वै ब्रह्मेत्यप्राणतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदित्येकपाद्वा एतत्सम्राट्! इति स वै नो ब्रूहि याज्ञवल्क्य! प्राण एवायतनमाकाशः प्रतिष्ठा प्रियमित्येनदुपासीत का प्रियता? याज्ञवल्क्य! प्राण एव सम्राट्! इति होवाच प्राणस्य वै सम्राट्! कामायायाज्यं याजयति अप्रतिगृह्यस्य प्रतिगृह्णात्यपि तत्र वधाशङ्कं भवति यां दिशमेति प्राणस्यैव सम्राट्! कामाय प्राणो वै सम्राट्! परमं ब्रह्म नैनं प्राणो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ३ ॥

यदेव ते **कश्चिदब्रवीत्** इत्यादि समानम्। नामत **उदङ्कः** शुल्वस्यापत्यं **शौल्बायनः**। **प्राणः** प्राणवायुरेव **ब्रह्मेत्यब्रवीत्**। पूर्ववदायतनप्रतिष्ठे। प्रियमित्येनदुपास्ते। प्रियत्वं कथं? इत्यत्र—हे **सम्राट्! प्राणस्य कामाय** प्राणस्यार्थाय **अयाज्यं याजयति**। उग्रादेरप्रति**गृह्यस्य प्रतिगृह्णात्यपि। तत्र** तस्यां दिशि वधनिमित्तमाशङ्कं **वधाशङ्कं** वधाशङ्केत्यर्थः। **यां** तस्कराद्याकीर्णां **दिशमेति** तस्यां दिशि इयमाशङ्का। तच्चेत् सर्वं **प्राणस्य** प्रीतये भवति। **प्राणो वै सम्राट्! परमं ब्रह्मे**त्यादि समानम् ॥ ३ ॥

चक्षुर्वै ब्रह्मेति बर्कुमतम्

यदेव ते कश्चिदब्रवीत् तच्छृणवामेत्यब्रवीन्मे बर्कुर्वार्ष्णश्चक्षुर्वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तद्वार्ष्णोऽब्रवीत् चक्षुर्वै ब्रह्मेत्यपश्यतो हि किᳪ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदिति एकपाद्वा एतत् सम्राट्! इति स वै नो ब्रूहि याज्ञवल्क्य! चक्षुरेवायतनमाकाशः प्रतिष्ठा सत्यमित्येनदुपासीत का सत्यता? याज्ञवल्क्य! चक्षुरेव सम्राट्! इति होवाच चक्षुषा वै सम्राट्! पश्यन्तमाहुरद्राक्षीरिति स आह अद्राक्षमिति तत्सत्यं भवति चक्षुर्वै सम्राट्! परमं ब्रह्म नैनं चक्षुर्जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभᳪ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ४ ॥

नामतो **बर्कुः** वृष्णस्यापत्यं **वार्ष्णः चक्षुर्वै ब्रह्मेति** । चक्षुष्यादित्योपनिषत् सत्यं चक्षुः । इतरत् श्रोत्रेण श्रुतमप्यनृतमेव तत् । तस्माद्वै **सम्राट्! पश्यन्तमाहुः** हस्तिनमद्राक्षीरिति । स चेदद्राक्षमित्याह तत् सत्यं **भवती**त्यादि समानम् ॥ ४ ॥

श्रोत्रं वै ब्रह्मेति भारद्वाजमतम्

यदेव ते कश्चिदब्रवीत् तच्छृणवामेत्यब्रवीन्मे गर्दभीविपीतो भारद्वाजः श्रोत्रं वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान्

ब्रूयात् तथा तद्भारद्वाजोऽब्रवीत् श्रोत्रं वै ब्रह्मेत्यश्रृण्वतो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदिति एकपाद्वा एतत् सम्राट्! इति स वै नो ब्रूहि याज्ञवल्क्य! श्रोत्रमेवायतनमाकाशः प्रतिष्ठानन्त इत्येनदुपासीत कानन्तता? याज्ञवल्क्य! दिश एव सम्राट्! इति होवाच तस्माद्वै सम्राडपि यां कां च दिशं गच्छति नैवास्या अन्तं गच्छति अनन्ता हि दिशो दिशो वै सम्राट्! श्रोत्रꣳ श्रोत्रं वै सम्राट्! परमं ब्रह्म नैनꣳ श्रोत्रं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ९ ॥

नामतो गर्दभीविपीतः गोत्रतो भारद्वाजः श्रोत्रं वै ब्रह्मेति। अनन्त इत्येनदुपासीत। श्रोत्रस्य दिश एवानन्त्यम्। कश्चिदपि यां कां च दिशं गच्छति नैवास्या अन्तं गच्छति। अतोऽनन्ता हि दिशः। दिशो वै सम्राट्! इत्यादि समानम् ॥ ९ ॥

मनो वै ब्रह्मेति जाबालमतम्

यदेव ते कश्चिदब्रवीत् तच्छृणवामेत्यब्रवीन्मे सत्यकामो जाबालो मनो वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तज्जाबालोऽब्रवीन्मनो वै ब्रह्मेत्यमनसो हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठं न मेऽब्रवीदिति एकपाद्वा एतत् सम्राट्! इति स वै नो ब्रूहि याज्ञवल्क्य! मन एवायतनमाकाशः प्रतिष्ठा आनन्द

इत्येनदुपासीत का आनन्दता ? याज्ञवल्क्य ! मन एव सम्राट् ! इति होवाच मनसा वै सम्राट् ! स्त्रियमभिहार्यते तस्यां प्रतिरूपः पुत्रो जायते स आनन्दो मनो वै सम्राट् ! परमं ब्रह्म नैनं मनो जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ६ ॥

नामतः **सत्यकामो** जबालाया अपत्यं **जाबालः** । मनसि देवता चन्द्रमाः आनन्द इत्युपनिषत् । यस्मान्मन एवानन्दः तस्मात् **मनसा वै सम्राट्!** **स्त्रियम**भिकामयमानोऽ**भिहार्यते** प्रार्थयते । **तस्यां प्रतिरूपो**ऽनुरूपः **पुत्रो जायते** पुत्रस्यानन्दहेतुत्वात् । स एव मनसा निर्वर्त्यते । तन्मनो ह्यानन्दहेतुः ॥ ६ ॥

हृदयं वै ब्रह्मेति शाकल्यमतम्

यदेव ते कश्चिदब्रवीत् तच्छृणवामेत्यब्रवीन्मे विदग्धः शाकल्यो हृदयं वै ब्रह्मेति यथा मातृमान् पितृमानाचार्यवान् ब्रूयात् तथा तच्छाकल्योऽब्रवीत् हृदयं वै ब्रह्मेति अहृदयस्य हि किꣳ स्यादित्यब्रवीत्तु ते तस्यायतनं प्रतिष्ठां न मेऽब्रवीदिति एकपाद्वा एतत् सम्राट् ! इति स वै नो ब्रूहि याज्ञवल्क्य ! हृदयमेवायतनमाकाशः प्रतिष्ठा स्थितिरित्येनदुपासीत का स्थितता ? याज्ञवल्क्य ! हृदयमेव सम्राट् ! इति होवाच हृदयं वै सम्राट् ! सर्वेषां भूतानामायतनꣳ हृदयं वै सम्राट् ! सर्वेषां भूतानां प्रतिष्ठा हृदये ह्येव सम्राट् ! सर्वाणि

भूतानि प्रतिष्ठितानि भवन्ति हृदयं वै सम्राट्! परमं ब्रह्म नैनꣳ हृदयं जहाति सर्वाण्येनं भूतान्यभिक्षरन्ति देवो भूत्वा देवानप्येति य एवं विद्वानेतदुपास्ते हस्त्यृषभꣳ सहस्रं ददामीति होवाच जनको वैदेहः स होवाच याज्ञवल्क्यः पिता मेऽमन्यत नाननुशिष्य हरेतेति ॥ ७ ॥

**विदग्धः शाकल्यो हृदयं वै ब्रह्मेति** । नामरूपकर्मात्मना हि भूतानि हृदयाश्रयाणि । तस्मात् हृदये ह्येव **सम्राट्! सर्वाणि भूतानि प्रतिष्ठितानि भवन्ति** । तस्मात् **हृदयं** स्थितिरित्युपासीत । हृदयदेवता प्रजापतिः । शिष्टमुक्तार्थम् ॥ ७ ॥

**इति प्रथमं ब्राह्मणम्**

---

## द्वितीयं कूर्चब्राह्मणम्

जनकयाज्ञवल्क्ययोः गन्तव्यदेशं प्रति विचारः

जनको ह वैदेहः कूर्चादुपावसर्पन् उवाच नमस्तेऽस्तु याज्ञवल्क्य! अनु मा शाधीति स होवाच यथा वै सम्राट्! महान्तमध्वानमेष्यन् रथं वा नावं वा समाददीत एवमेव एताभिरुपनिषद्भिः समाहितात्मासि एवं वृन्दारक आढ्यः सन् अधीतवेद उक्तोपनिषत्क इतो विमुच्यमानः क्व गमिष्यसि इति? नाहं तद्भगवन्! वेद यत्र गमिष्यामीति अथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसीति ब्रवीतु भगवानिति ॥ १ ॥

जनको याज्ञवल्क्यं स्वाचार्यं मत्वा प्रणिपातपूर्वकं स्वात्मयाथात्म्यज्ञानं ब्रूहीति विज्ञापयतीत्याह—**जनक** इति । **जनको ह वैदेहः** स्वाचार्यं याज्ञवल्क्यं सर्वज्ञं मत्वा **कूर्चात्** स्वासनात् उत्थाय **उपावसर्पन्** पादयोर्निपतन् आचार्यनिकटे शिष्येण यद्विज्ञाप्यं तदुवाच—हे **याज्ञवल्क्य! नमस्ते** तुभ्य**मस्तु** । **अनु मा शाधि** यथाहं कृतार्थः स्यां तथा मां आमोक्षमनुशाधि । इतिशब्दो वाक्यपरिसमाप्त्यर्थः । **स होवाच** याज्ञवल्क्यः—हे **सम्राट्! यथा वै** लोके **महान्तं** दीर्घ**मध्वानं एष्यन् रथं वा नावं वा** स्थलजलसञ्चारसाधनं **समाददीत** संगृह्णीत **एवमेव एताभिः** वागादिब्रह्मोपास**नोपनिषद्भिः** समाहित आत्मा अन्तःकरणं यस्य सोऽयं **समाहितात्मा** न केवलमुपनिषत्समाहित **एवासि,** किन्तु बृन्दारकैः देवैर**प्याढ्यः** पूज्यश्च **सन्** । किञ्च अधीता वेदा येन **सोऽयमधीतवेदः** । यस्मै तुभ्यमाचार्यैरुपनिषद उक्ताः स त्व**मुक्तोपनिषत्कः** । एवं सर्वविभूतिसंपन्नोऽपि सन् निष्प्रतियोगिकसन्मात्रज्ञानं विना एवं स्थलजलचररथनौस्थानीयब्रह्मोपासनोपनिषत्संपन्नोऽपि **इतोऽ**स्मात् स्वावारकवर्तमानदेहभ्रमात् **विमुच्यमानः** सन् त्वं **क गमिष्यसि?** किं प्राप्स्यसे? **इति** मुनिनाक्षिप्तः सम्राडाह—**नाहं तदियत्तां भगवन्! वेद यत्र गमिष्यामीति** । यद्येव त्वं न विजानीषे यद्वस्तुप्रबोधसमकालं तन्मात्रमवशिष्यामीति, **अथ** स्वातिरिक्तहेयप्रबोधानन्तरं **ते** तुभ्यं मुख्याधिकारिणे वक्ष्यमाणप्रबोधसमकालं **यत्र** यस्मिन् स्वे महिम्नि **गमिष्यसि** स्वमात्रमवशिष्यसे **तत्** पद**महं ते** तुभ्यं **वक्ष्यामी**त्यनुगृहीतः सम्राडाह—तत्पदं **ब्रवीतु मे भगवानिति** । अस्माभिरुद्धरणीयोऽयमिति केवलकृपया उपदिदेशेत्यर्थः ॥ १ ॥

दक्षिणाक्षिस्थपुरुषस्वरूपम्

इन्धो ह वै नाम एष योऽयं दक्षिणेऽक्षन् पुरुषः तं वा एतमिन्धꣳ सन्तमिन्द्र इत्याचक्षते परोक्षेणैव परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः ॥ २ ॥

याज्ञवल्क्य आह— **इन्ध** इति। **इन्धो** दीप्तिमान् **ह वै नाम योऽयं** चक्षुर्ब्रह्मेति पूर्वोक्तादित्यान्तर्गतः **पुरुष एष** एव **योऽयं दक्षिणेऽक्षन्** अक्षिणि विशेषतो व्यवस्थितः। सत्याभिधानस्तं वा दीप्तिमत्पुरुष**मिन्धं सन्तं** सन्तः **इन्द्रः परोक्षेणेत्याचक्षते**। यस्मात् **परोक्षप्रिया इव हि देवाः प्रत्यक्षद्विषः**। असुरादयः प्रत्यक्षनामग्रहणप्रिया इत्यर्थः ॥ २ ॥

वामाक्षिस्थपुरुषस्वरूपम्

अथैतद्वामेऽक्षणि पुरुषरूपमेषास्य पत्नी विराट् तयोरेष संस्तावो य एषोऽन्तर्हृदय आकाशः अथैनयोरेतदन्नं य एषोऽन्तर्हृदये लोहितपिण्डः अथैनयोरेतत् प्रावरणं यदेतदन्तर्हृदये जालकमिव अथैनयोरेषा सृतिः संचरणी यैषा हृदयादूर्ध्वा नाडी उच्चरति यथा केशः सहस्रधा भिन्न एवमस्य एता हिता नाम नाड्योऽन्तर्हृदये प्रतिष्ठिता भवन्ति एताभिर्वा एतदास्रवदास्रवति तस्मादेष प्रविविक्ताहारतर इवैव भवति अस्माच्छारीरादात्मनः ॥ ३ ॥

**अथैतद्वामेऽक्षणि पुरुषरूपं** यं त्वं वैश्वानरमात्मानं संपन्नोऽसि **एषास्य** इन्द्रस्य **पत्नी**। **विराडन्नं** भोज्यत्वात्। तदेतदन्नं च अत्ता चेति। **तयोरन्नान्नाद**भावमापन्नेन्द्राणीन्द्रयोः **एष संस्तावः** अन्योन्यसंस्थत्वम्। कोऽसावेष संस्तावः? **य एषोऽन्तर्हृदय आकाशः** हृदयान्तरावच्छिन्नाव्याकृताकाशः। **अथैनयो**रिन्द्राणीन्द्रयोः **एतदन्नं** शरीरस्थितिनिमित्तम्। किं तत्? **य एषोऽन्तर्हृदये** लोहितस्य घनीभूतत्वात् **लोहितपिण्डः** भुक्तान्नसारपरिणामः स एव। **अथैनयो**र्मिथुनीभूतेन्द्राणीन्द्रयोः भुक्तवतोः स्वपतोश्च **एतदेव** हि **प्रावरणं** भवति। किं तत् प्रावरणं? इत्यत्र **यदेतदन्तर्हृदये** बहुनाडीच्छिद्रबाहुल्यात् **जालकमिव** प्रावरणसामान्यं श्रुतिः कल्पयति। **अथैनयो**रिन्द्राणीन्द्रयोः **एषा**

**सृति**र्मार्गः। अनेन जाग्रदाद्यवस्थात्रयं सञ्चरतीति **सञ्चरणी यैषा हृदय**-देशादूर्ध्वा**भिमुखा नाडी उच्चरति**। देहगतनाडीनां सुसूक्ष्मत्वदृष्टान्तमाह—**यथे**ति। **यथा केशः सहस्रधा भिन्नः** अत्यन्तसुसूक्ष्मो भवति **एवमस्य** देहस्य संबन्धिन्यो **हिता नाम नाड्यः** सुसूक्ष्मरूपाः सत्यो मांस-पिण्डाकारहृ**दये प्रतिष्ठिता भवन्ति**। **एताभि**रत्यन्तसूक्ष्मनाडीभिः **एतत्** शरीर**मास्रवत्** गच्छत् **आस्रवति** अन्नेन उपचीयमानं तिष्ठति। **तस्माद**न्नेनोप-चीयमानः पिण्डः मूत्रपुरीषादिस्थूलमपेक्ष्य प्रविविक्ताहारादपि **प्रविविक्ताहारतरः** एष लिङ्गात्मा **इवैव भवति**। **अस्मात् शारीरात्** स्थूलशरीराभिमानिविश्वा-**दात्मन**स्तैजसो हि प्रविविक्तभुगित्यर्थः ॥ ३ ॥

तस्याध्यात्मप्राणलयः

**तस्य प्राची दिक् प्राञ्चः प्राणा दक्षिणा दिक् दक्षिणे प्राणाः प्रतीची दिक् प्रत्यञ्चः प्राणा उदीची दिक उदञ्चः प्राणा ऊर्ध्वा दिक् ऊर्ध्वाः प्राणा अवाची दिक अवाञ्चः प्राणाः सर्वा दिशः सर्वे प्राणाः स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यते अशीर्यो न हि शीर्यते असङ्गो न हि सज्यते असितो न व्यथते न रिष्यत्यभयं वै जनक! प्राप्तोऽसीति होवाच याज्ञवल्क्यः स होवाच जनको वैदेहोऽभयं त्वा गच्छतात् याज्ञवल्क्य! यो नो भगवन्! अभयं वेदयसे नमस्तेऽस्तु इमे विदेहा अय-महमस्मि ॥ ४ ॥**

एवंविदुषः सर्वात्मकतां प्रपञ्चयन् तद्गतविशेषाभयसिद्धपरमाभयतामुपदि-शति—**तस्ये**ति। यस्तु स्थूलशरीरावच्छिन्नो विश्वो व्यष्टिसमष्ट्यैक्यज्ञानतो विराट्पदं भजति तस्यास्य विराड्भावं विहाय सूत्रभावमापन्नस्य मुख्यप्राण-रूपत्वात् **तस्या**स्य प्राणात्मनः **प्राची दिक्** अञ्चतीति **प्राञ्चः प्राणाः**।

तथा **दक्षिणा दिक् दक्षिणे प्राणाः। प्रतीची दिक् प्रत्यञ्चः प्राणाः। उदीची दिक् उदञ्चः प्राणाः। ऊर्ध्वा दिक् ऊर्ध्वाः प्राणाः। अवाची दिक् अवाञ्चः प्राणाः। सर्वा दिशश्च सर्वे प्राणा** इति सूत्रभावमापन्नो विद्वान् सूत्रभावमपि बीजात्मावशेषं कृत्वा अथ वैराजसूत्रबीजगतविशेषांशं **नेति नेतीति** प्रविलाप्य तद्विलापनाधिकरणं ब्रह्मैवात्मा **अगृह्य** इत्यादि व्याख्यातमेतत्। हे **जनक**! त्वं स्वातिरिक्तभिदासामान्यापह्नवसिद्धं यत् निष्प्रतियोगिकत्वेनाद्वैतमवशिष्यते तदेतद**भयं वै** परमाभयमेव **प्राप्तोऽसीति होवाच याज्ञवल्क्यः। स होवाच जनको वैदेहः—अभयमेव** त्वा त्वां **गच्छतात्** गच्छतु। हे **भगवन्**! यस्त्वं **नोऽस्मान्** परम**ाभयं** ब्रह्म **वेदयसे** ज्ञापयसि। एवं परमाभयदात्रे किं देयमवशिष्यते? तत्तुल्यनिष्क्रयाभावात् इयमेव निष्कृतिरस्त्विति **नमस्तेऽस्तु। इमे विदेहा अयमहमस्मि**। भवतामहं दासभावे स्थितः। मद्राज्यादिकं सर्वं प्रतिपद्यस्वेत्यर्थः ॥ ४ ॥

**इति द्वितीयं ब्राह्मणम्**

---

## तृतीयं ज्योतिर्ब्राह्मणम्

जनकयाज्ञवल्क्यसमागमः जनकप्रश्नश्च

जनकꣳ ह वैदेहं याज्ञवल्क्यो जगाम स मेने न वदिष्य इति अथ ह यज्जनकश्च वैदेहो याज्ञवल्क्यश्च अग्निहोत्रे समूदाते तस्मै ह याज्ञवल्क्यो वरं ददौ स ह कामप्रश्नमेव वव्रे तꣳ हास्मै ददौ तꣳ सम्राडेव पूर्वं पप्रच्छ ॥ १ ॥

"आत्मेत्येवोपासीत", "आत्मानमेवावेत् अहं ब्रह्मास्मीति", "तदेतत् ब्रह्मापूर्वमनपरमनन्तरमबाह्यं अयमात्मा ब्रह्म सर्वानुभूः", "यदेव साक्षादपरोक्षात् ब्रह्म", "विज्ञानमानन्दं ब्रह्म" इत्यादि तृतीयचतुर्थपञ्चमाध्यायेषु

निर्विशेषं ब्रह्म प्रतिपादितम् । षष्ठाध्यायेऽपि "नाहं तत् भगवन्! वेद यत्र गमिष्यामि" इति जनकः स्वाज्ञानमवष्टभ्य "अथ वै तेऽहं तद्वक्ष्यामि यत्र गमिष्यसि" इति प्रतिज्ञाय संक्षेपतः स्वाज्ञदृष्टिविकल्पितव्यष्टिसमष्टिप्रपञ्चारोपापवादाधिकरणविराट्सूत्रबीजतुरीयस्वरूपं प्रतिपाद्य तद्गतविशेषजातं "नेति नेति" इति प्रविलाप्य तद्विलापनाधिकरणं प्रत्यगभिन्नं ब्रह्म अधिष्ठेयसापेक्षाधिष्ठानतामपि ग्रसित्वा यत् परमाभयरूपेणावशिष्टं "तदेतदभयं वै जनक! प्राप्तोऽसि" इति याज्ञवल्क्येन सम्राट् अभयं प्रापितः । इदानीं तु तमेतमर्थं स्वाज्ञविकल्पितावस्थात्रयावष्टम्भद्वारा महता तर्केणापि अयं सम्राट् परमाभयं प्रापयितव्य इतीदमारभ्यते । विद्यादानप्रतिग्रहविधिप्रकाशनार्थेयमाख्यायिका वरप्रदानसूचनतो विद्यास्तुत्यर्था च—**जनकमिति । जनकं ह वैदेहं** प्रति **याज्ञवल्क्यो जगाम** । स गच्छन् एवं चिन्तितवान् । किमिति ? **स मेने न वदिष्य इति** । सं एनेनेति पदच्छेदः । एनेन अनेन राज्ञा संवदिष्ये संवादं करिष्ये इति । यद्वा—मदागमनप्रयोजनमद्यापि न वदिष्ये इति मेने इत्येवं संकल्पविशिष्टं याज्ञवल्क्यं जनकः तत्संकल्पकुण्ठनहेत्वाख्यायिकामाचष्टे—**अथेति । अथ** कालान्तरे जनकयाज्ञवल्क्यसमागमानन्तरं तयोः संवाद आसीत् । जनकस्याग्निहोत्रविषयविज्ञानसन्तुष्टो **याज्ञवल्क्यः तस्मै ह** जनकाय **वरं ददौ** । किं तत् ? **स** जनको **ह कामप्रश्नमेव वव्रे** । त्वया यद्देयं तत् त्वय्येव तिष्ठतु । तद्वरं यदा वृणोमि तदा देयमिति । तथेति तस्मै याज्ञवल्क्यो वरं **ददौ** । तदर्थं तूष्णीमवस्थितं याज्ञवल्क्यं प्रति विज्ञाप्य **तं ह** वरं **सम्राट्** राजा एव **पूर्वमादौ पप्रच्छ** ॥ १ ॥

पुरुषस्य आदित्यज्योतिष्ट्वकथनम्

**याज्ञवल्क्य! किंज्योतिरयं पुरुष इति? आदित्यज्योतिः सम्राट्! इति होवाच आदित्येनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति एवमेवैतत् याज्ञवल्क्य! ॥ २ ॥**

किं पृष्टवान् राजा? इत्यत आह—**याज्ञवल्क्य!** इति। स्वाभिमुखीकरणाय याज्ञवल्क्य! इति संबोध्य येन ज्योतिषायं व्यवहरति **किंज्योतिरयं पुरुषः? इति।** किमयमन्तःकरणज्योतिषा व्यवहरति तदतिरिक्तज्योतिषैव? इति पृच्छति। याज्ञवल्क्योऽपि जनकाभिप्रायानुरोधेन अन्तःकरणादिव्यतिरिक्तमादित्य**ज्योतिः सम्राट्! इति होवाच।** तत् कथम्? स्वव्यतिरेकेण चक्षुरनुग्राहकादि**त्येनैव ज्योतिषायं** प्राकृतः पुरुष **आस्ते। पल्ययते** परस्मा उपदिशति। क्षेत्रमरण्यं वा गत्वा तत्र यत् विधेयं तत् **कर्म कुरुते। विपल्येति** विपर्येति। विशेषणबाहुल्यस्यान्तःकरणाद्यतिरिक्तात् ज्योतिःप्रसिद्ध्यर्थत्वात् याज्ञवल्क्योक्तं युक्तमित्यङ्गीकरोति—**एवमेवैतत् याज्ञवल्क्य!** इति ॥ २ ॥

ततः परं चन्द्राद्यात्मान्तज्योतिष्ट्वकथनम्

अस्तमित आदित्ये याज्ञवल्क्य! किंज्योतिरेवायं पुरुष इति? चन्द्रमा एवास्य ज्योतिर्भवतीति चन्द्रमसैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति एवमेवैतत् याज्ञवल्क्य! ॥ ३ ॥ अस्तमित आदित्ये याज्ञवल्क्य! चन्द्रमस्यस्तमिते किंज्योतिरेवायं पुरुष इति? अग्निरेवास्य ज्योतिर्भवतीति अग्निनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति एवमेवैतत् याज्ञवल्क्य! ॥ ४ ॥ अस्तमित आदित्ये याज्ञवल्क्य! चन्द्रमस्यस्तमिते शान्तेऽग्नौ किंज्योतिरेवायं पुरुष इति? वागेवास्य ज्योतिर्भवतीति वाचैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति तस्माद्वै सम्राट् अपि यत्र स्वः पाणिर्न विनिर्ज्ञायते अथ यत्र वागुच्चरति उपैव तत्र न्येतीति एवमेवैतत् याज्ञवल्क्य! ॥ ५ ॥ अस्तमित आदित्ये याज्ञवल्क्य! चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि

किंज्योतिरेवायं पुरुष इति ? आत्मैवास्य ज्योतिर्भवतीति आत्मनैवायं ज्योतिषास्ते पल्ययते कर्म कुरुते विपल्येतीति ॥ ६ ॥

आदित्यास्तमये चन्द्रमा ज्योतिः । चन्द्रमसि अस्तमिते अग्निर्ज्योतिः । तस्मिन् शान्ते वाक् शब्दराशिः ज्योतिः । तस्यां शान्तायां आत्मैवास्य ज्योतिर्भवतीत्याह—**अस्तमित** इत्यादिना । यस्मात् वाग्ज्योतिषानुगृहीतोऽयं पुरुषः व्यवहरति तस्माद्वै सम्राट् अपि बाह्यज्योतिषोऽभावात् **यत्र स्वः पाणिः** स्वीयौ हस्तौ **न हि विस्पष्टं निर्ज्ञायते** तदानीं सर्वचेष्टानिरोधो भवति । **यत्र वागुच्चरति** तत्र तेन शब्दज्योतिषा श्रोत्रमनसोः नैरन्तर्यं भवति । तत्कार्यत्वं वाक् भजति । वाग्ग्रहणं गन्धादीनामुपलक्षणार्थम् । **उपैव तत्र न्येति** समीप एव विद्यमानगन्धादिं घ्राणादिः गृह्णाति । एवमित्यादि समानम् । जाग्रति चक्षुरादिकरणानि बहिर्मुखानि भवन्ति । तत्रानुग्राहकमादित्यज्योतिः । तदानीमस्य समग्रव्यवहृतिर्भवति । स्वप्ने व्यवहृतिः प्रातिभासिकी । सर्वावृतिः सुषुप्तिः । तस्मात् सुषुप्तौ शान्तायां वाचि तत्र किं ज्योतिः ? इत्यत्र—**आत्मैवास्य ज्योतिर्भवतीति** । स्वातिरिक्तकार्यकरणसङ्घातातिरेकेण स्वयं स्थित्वा तत्प्रवृत्तिनिमित्ततया अततीत्यात्मा । स एव हि प्रत्यग्ज्योतिर्भवति । आदित्यादिज्योतिषामुपरमेऽपि अन्तःकरणस्थं ज्योतिः तद्वृत्तिप्रकाशकतयावगम्यते आदित्यादिवत् अचाक्षुषत्वात् । सोऽयं विद्वान् **आत्मनैवायं ज्योतिषास्ते** प्रत्यग्भावेनास्ते । **पल्ययते** स्वयाथात्म्यं परस्मै उपदिशति । स्वातिरिक्तान्तःकरणप्रविलापनं **कर्म कुरुते** । कदाचित् **विपल्येति** स्वभावतो विपर्येति । **इति**शब्द इवार्थः । वस्तुतो न विपर्येतीत्यर्थः ॥ ३–६ ॥

### आत्मनो विज्ञानमयत्वम्

कतम आत्मा इति ? योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन् उभौ लोकावनुसंचरति ध्यायतीव

लेलायतीव स हि स्वप्नो भूत्वा इमं लोकमतिक्रामति मृत्यो रूपाणि ॥ ७ ॥

सर्वव्यतिरिक्तोऽपि करणग्रामयोगतो यथावत् न ज्ञायते। अतः त्वां पृच्छामि—**कतम आत्मा? इति**। येनात्मज्योतिषा आस्ते इत्युक्तं देहेन्द्रियमनस्सु **कतमोऽसावात्मा**? यद्वा—**योऽयं विज्ञानमयो** वा तवाभिप्रेतः, इमे देहादयो विज्ञानमया इव भान्ति। वागादि**प्राणेषु** तेजस्विषु **हृदि चान्तर्ज्योतिः पुरुषः** कतमः? इत्यन्तं प्रश्नवाक्यम्। अथवा कतम आत्मा? इत्येतावदेव प्रश्नवाक्यम्। योऽयमित्यादि प्रतिवचनम्। **योऽयमिति** आत्मनः प्रत्यक्षनिर्देशः। विज्ञानं बुद्धिः तदुपाधिको विज्ञानमय उच्यते। यथा चन्द्रादिसंपृक्तो राह्वादिरुपलभ्यते तथा बुद्धिवृत्तिसंपृक्तात्माधिगमः बुद्धेः तदवगत्युपायत्वात्। उक्तं हि "मनसा ह्येव पश्यति मनसा शृणोति" इति। अतोऽवसीयते **विज्ञानमय** इति। युक्तमेवास्य विज्ञानप्रायत्वं ह्यन्तः उपलभ्यत्वात्। वागादि**प्राणेषु** तद्गतविकारजातमस्पृश्य तद्विलक्षणतया तत्प्रवृत्तिनिमित्तत्वेन तद्वृत्तिसहस्रभावाभावप्रकाशकत्वेन वस्तुतः स्वातिरिक्तप्राणाद्यपह्नवसिद्धनिष्प्रतियोगिकस्वमात्रत्वेन च यो विद्वद्धृ**दि अन्तर्ज्योति**ष्ट्वेनावभासते सोऽयमात्मा उच्यते। तेनात्मज्योतिषा आस्ते लोकः। पल्ययते कर्म कुरुते। सर्वव्यवहृत्यास्पदमात्मैव। नासति परमज्योतिषि सर्वान्तरे सूर्यादिरपि न भासते। न ह्यभारूपस्य भासकता उपपद्यते। यस्मादेवं तस्मात् आत्मज्योतिरेव सर्वप्रकाशकमिति फलितोऽर्थः। एवं स्वाज्ञदृष्टिविकल्पितजाग्रदवस्थायां साधिष्ठानकरणग्रामप्रवृत्तिनिवृत्तिनिमित्तमात्मज्योतिः दर्शितम्। स्वप्नेऽप्येतदेवेति प्रदर्शयन्नाह—**स** इति। यः स्वयंज्योतिरात्मा जाग्रत्प्रपञ्चावभासकः **सोऽयं** भासकत्वादिधर्मतः स्वप्नेऽपि **समानः सन् उभौ लोकौ** स्वविकल्पितान्तःकरणमवष्टभ्य जाग्रत्स्वप्नप्रपञ्चौ समानतयानुसञ्चरति सन्निहितत्वात्। तद्योगेन तद्वानिव लक्ष्यते। यथा शुक्लरक्तनीलपीतादिकमवभासयन् तत्सदृशस्तदाकारो भवति तथान्तःकरणमवभासयन् तद्वान्। अतः कृत्स्नं क्षेत्रमवभासयन् तत्तदाकारो भवतीति स्वाज्ञलोको मुह्यति। तद्दृष्ट्यायमु-

भाविहलोकपरलोकौ वान्तःकरणोपाधियोगभ्रमा**दनुसञ्चरति**। न स्वप्नदृष्ट्यानुभवं दर्शयति। ध्यायतीव लेलायतीवेति कालत्रयाविकृतस्वेन ज्योतिषा ध्यानादिव्यापारवतीं बुद्धिं अवभासयन् तत्सदृशं ध्यायतीति लोकभ्रान्तिः। तां इवकारो निराकरोति—**ध्यायतीवेति**। तथा **लेलायतीव** लेलायमानेषु देहेन्द्रियादिषु चलत्सु स्वयमपि लेलायति चलतीव भाति। न वस्तुतः निरुपाधिकत्वात्। उपाधियोगभ्रान्तिरेव उभयलोकानुकूलध्यानलेलायमानादिव्यापृतिहेतुः न स्वतः इत्यत्र हेतुमाह—**स हीति**। य आत्मा जाग्रद्व्यापृतिहेतुधीवृत्तिसहस्रं भासयन् जागरितवत् लक्ष्यते तथा **स** ह्यात्मा स्वप्नादिव्यापृतिहेतुधीवृत्तिकदम्बमवभासयन् **स्वप्नो भूत्वा** तत्रत्यकार्यकरणसंघातसंबन्धशून्यः सन् स्वात्मज्योतिषा **इमं लोकं** शास्त्रीयव्यवहारास्पदमुभयलोकसञ्चारहेतुस्वाविद्यातत्कार्यक्रियाकारकफलायमान**मृत्योः रूपाणि** चा**तिक्रामति** स्वेन ज्योतिषा तत् सर्वमतिक्रम्य वर्तते ॥ ७ ॥

तस्यैव स्वाज्ञदृष्ट्या संसारदशानुक्रमः

**स वा अयं पुरुषो जायमानः शरीरमभिसंपद्यमानः पाप्मभिः सꣳसृज्यते स उत्क्रामन् म्रियमाणः पाप्मनो विजहाति ॥ ८ ॥**

बुद्ध्याद्युपाधियोगायोगभ्रमतः संसारित्वासंसारित्वे। वस्तुतो बुद्ध्याद्युपलक्षितस्वाविद्यापदतत्कार्यकलना अस्ति नास्तीति विभ्रमासंभवप्रबोधसिद्धात्मा निष्प्रतियोगिकस्वमात्रमवशिष्यत इति सर्वोपनिषदामर्थः। तत्र स्वाज्ञदृष्टिप्रसक्तसंसारदशामनुक्रामति—**स वा** इति। यः स्वाज्ञदृष्ट्या संसारित्वेन प्रकृतः **स वायं पुरुषः** स्वकृतकर्मानुरोधेन **जायमानः**। तत् कथं अजस्य जातिः? इत्यत आह—**शरीरमभिसंपद्यमान** इति। स्वान्यत्र देहदारादावात्मात्मीयाभिमानत इत्यर्थः। तेनैव ह्ययं धर्माधर्माश्रय**पाप्मभिः संसृज्यते**। वर्तमानकर्मक्षयार्थ-

स्वात्तशरीरात् उत्क्रामन् म्रियमाण ऊर्ध्वं गच्छन् स्वसंसृष्टपाप्मनो विजहाति तैः वियुज्यते ॥ ८ ॥

तस्य लोकद्वयभजनम्

तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवत इदं च परलोकस्थानं च सन्ध्यं तृतीयꣳ स्वप्नस्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन् एते उभे स्थाने पश्यति इदं च परलोकस्थानं च अथ यथाक्रमोऽयं परलोकस्थाने भवति तमाक्रममाक्रम्य उभयान् पाप्मन आनन्दाꣳश्च पश्यति स यत्र प्रस्वपिति अस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति अत्रायं पुरुषः स्वयंज्योतिर्भवति ॥ ९ ॥

एवं जाग्रदाद्यवस्थारूढः संसारी घटीयन्त्रवत् लोकद्वयं सञ्चरन् अविश्रान्तं संसरति। तद्दृष्ट्या स्वाज्ञानावधि लोकद्वयं भोग्यत्वेन सत्यं भवतीत्याचष्टे—तस्येति। यः संसारित्वेन व्यपदिष्टः **तस्य वा एतस्य पुरुषस्य** भोग्यतया **द्वे एव स्थाने भवतः**। न ह्यस्य तृतीयादिस्थानमस्ति अवधारणात्। के ते? इत्यत आह—**इदमिति**। शरीरेन्द्रियाद्यभिमानास्पदं स्थान**मिदं च** जन्म शरीरवियोगोत्तरकालानुभाव्यं **परलोकस्थानं च**। यत् तयोः सन्ध्यं तत् लोकद्वयसन्धिः। तत् **सन्ध्यं तृतीयं स्वप्नस्थानम्**। **तस्मिन् सन्ध्ये स्थाने** स्वप्नमये **तिष्ठन् एते उभे स्थाने पश्यति**। के ते? इति। **इदं च परलोकस्थानं च**। स्वप्नजागरितव्यतिरेकेण उभौ लोकौ जनिमृतितोऽनुसञ्चरति। कथमयं स्वप्नासन उभौ लोकौ पश्यति? इत्यत्र आक्रमत्यनेनेति **यथाक्रमोऽयं** पुरुषः परलोकप्रतिपत्तिसाधनाविद्याकर्मपूर्वप्रज्ञातो ह्युभयमाक्रामति। यः परादिस्थानाभिमुखः तं **आक्रममाक्रम्या**वष्टभ्य धर्माधर्मफलरूपान् **उभयान् पाप्मनः** पापफलानि दुःखानि **आनन्दान्** पुण्यफलानि च

जन्मान्तरादृष्टवासनाप्रतिपत्तव्यक्षुद्रधर्माधर्मफलजन्मानि **च पश्यति**। कथमे-तदवगम्यते? दृष्टादृष्टश्रुताश्रुतादिविषयो हि स्वप्नः। तद्विपरीतं जागरणम्। प्रायशः स्वप्नजागरितस्थानातिरेकेण उभयलोकान् आदित्यादिबाह्यज्योतिषामभावे यत् विविक्तं स्वयंज्योतिरुपलभ्यते तेनैव सर्वं पश्यति। यो हि भूतभौतिक-संसर्गशून्यः **सोऽयं** पुरुषो **यत्र प्रस्वपिति** प्रकर्षेण स्वापमनुभवति। किं उपादाय? इत्यत आह—**अस्येति**। **अस्य** दृष्टानुभूतजागरित**लोकस्य** कार्य-करणसङ्घातं सर्वं वासनया अवतीति **सर्वावतो मात्रामुपादाय** भूतभौतिक-जातैकदेशमुपादाय संगृह्य तत्तद्वासनावासितः सन् साधनान्तरनैरपेक्ष्येण **स्वयमेव** जाग्रत्प्रपञ्चं **विहत्य** विपात्य **स्वयमेव** पुनर्नूतनप्रपञ्चं **निर्माय स्वेनैव भासा स्वेनैव ज्योतिषा** लुप्तदृङ्मात्रप्रकाशेन वासनाप्रपञ्चं विषयीकुर्वन् वर्तत इति यत् तत् **प्रस्वपितीत्युच्यते**। **अत्रावस्थायामयं पुरुषः स्वयमेव** विविक्त**ज्योतिर्भवति**। साधनसामग्रीमनपेक्ष्य स्वयमेव वासनाप्रपञ्चावभासक-त्वात् स्वयंज्योतिष्ट्वं युज्यत इत्यर्थः॥ ९॥

स्वप्नस्य प्रतीतिमात्रत्वम्

**न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते न तत्रानन्दा मुदः प्रमुदो भवन्ति अथानन्दान् मुदः प्रमुदः सृजते न तत्र वेशान्ताः पुष्करिण्यः स्रवन्त्यो भवन्ति अथ वेशान्तान् पुष्करिणीः स्रवन्तीः सृजते स हि कर्ता॥ १०॥**

जाग्रदवस्थायामिव स्वप्नेऽपि विषया उपलभ्यन्त इत्याकाङ्क्षायां ब्रह्ममात्र-दृष्ट्या सर्वावस्थास्वपि स्वातिरिक्तविषयान्तरं नास्त्येव। स्वाज्ञदृष्ट्या जाग्रति विषय-बाहुल्यं तत्तदुपलब्धिश्च। तद्दृष्ट्या तत्प्रदेशस्य विपुलत्वात्। स्वप्नकल्पनाधार-कण्ठस्यात्यल्पत्वेन द्रष्टव्यबाह्यपदार्थासत्त्वात् प्रतीतिमात्रोऽयं स्वप्न इत्याह—**न तत्रेति**। **न** हि **तत्र** स्वप्ने **रथा**दिविषयाः सन्ति। तथा रथेन युज्यन्त इति

**रथयोगा** अश्वादयोऽपि न सन्ति। **न हि तत्र** रथप्रचारपन्थानो मार्गा **भवन्ति**। अणुस्थानीयकण्ठगतनाड्यां मेर्वादिस्थानीयरथादिकल्पनासंभवात्। तथापि तत्र मनोऽधिष्ठाय तैजसोऽथ **रथान् रथयोगान् पथः सृजते**। न तत्र कारणं तदनुग्राहकदेवता वास्ति। वासनानिमित्तेयं कल्पनेत्यर्थः। किञ्च **न हि तत्र** सुखविशेषा **आनन्दाः** पुत्रादिनिमित्ता **मुदः** चिरप्रोषितागतपुत्रादिनिमित्ताः **प्रमुदो** वा **भवन्ति**। **अथायमत्रानन्दान् मुदः प्रमुदः सृजते**। तथा **न हि** जात्वपि **तत्र वेशान्ताः** पल्वलाः **पुष्करिण्यः** तटाकाः **स्रवन्त्यो** नद्यो वा **भवन्ति**। **अथ वेशान्तान् पुष्करिणीः स्रवन्तीः सृजते**। एवं वासनातो यः स्रष्टा **स हि** तत्**कर्मकर्ता**। एवमस्यान्तःकरणसंबन्धभ्रान्त्या कर्तृत्वं न परामार्थतः तदस्तीत्यर्थः॥ १०॥

आत्मनः स्वयंज्योतिष्ट्वादिकथनम्

तदेते श्लोका भवन्ति—

स्वप्नेन शारीरमभिप्रहत्यासुप्तः सुप्तानभिचाकशीति।
शुक्रमादाय पुनरेति स्थानꣳ हिरण्मयः पुरुष एकहꣳसः॥११॥
प्राणेन रक्षन्नवरं कुलायं बहिष्कुलायादमृतश्चरित्वा।
स ईयतेऽमृतो यत्र कामꣳ हिरण्मयः पुरुष एकहꣳसः॥१२॥
स्वप्नान्त उच्चावचमीयमानो रूपाणि देवः कुरुते बहूनि।
उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन्।
आराममस्य पश्यन्ति न तं पश्यति कश्चन इति॥ १३॥

तं नायतं बोधयेदित्याहुः। दुर्भिषज्यꣳ हास्मै भवति यमेष न प्रतिपद्यते अथो खल्वाहुर्जागरितदेश एवास्य एष इति यानि ह्येव जाग्रत् पश्यति तानि सुप्त इत्यत्रायं पुरुषः स्वयंज्योतिर्भवति सोऽहं भगवते सहस्रं ददामि अत ऊर्ध्वं विमोक्षाय ब्रूहीति॥ १४॥

अस्मिन्नर्थे एते श्लोका भवन्तीत्याह—**तदिति**। **तदेतस्मिन्** उक्तार्थे **एते श्लोका** मन्त्रा **भवन्ति**। अयमात्मा स्वप्नभावेन **शारीरं** शरीरं **अभिप्रहत्य** चेष्टाविरलं **कृत्वा** स्वयम**सुप्तो**ऽलुप्तदृक्छक्तिः सन् स्वबाह्या- ध्यात्मिकव्यापृतिनिर्वाहकान्तःकरणारूढान् सर्वानेव भावान् प्रत्यस्तमित- बाह्यान्तर्व्यापृतित्वेन **सुप्तान**लुप्तदृक्छक्त्या**भिचाकशीति** अवभासयति। य एवं स्वातिरिक्तं पश्यति सोऽयं **हिरण्मयो** ज्योतिर्मयः **पुरुषः एक एव** जाग्रत्स्वप्नाविहलोकपरलोकौ। तेषु हंसशब्दार्थप्रत्यगभिन्नब्रह्मरूपेतरबुद्धिं हन्ती- त्येक**हंसः**। स्वभावोऽपि **शुक्रं** ज्योतिष्मत्करणकदम्ब**मादायावष्टभ्य पुन-** र्जागरितं **स्थानमेत्य** आगच्छतीत्यर्थः॥ ११॥ किञ्च—**प्राणेनेति**। नरकोपम**मवरं कुलायमिदं** शरीरं मृतभ्रान्तिनिरासाय पञ्चवृत्त्यात्मकप्राणेन **रक्षन्** स्वयं तु **कुलायात् बहिः** स्वयम**मृतः** सन् **चरित्वा यत्र कामं** वासनारूपः कामो यत्र यस्यामवस्थायामुदेति यो **हिरण्मयः पुरुषः एकहंस** इत्युक्तः सोऽयं विज्ञानात्मा तं काम**मीयते** तमवष्टभ्य तद्विषयावस्थां गच्छतीत्यर्थः॥१२॥ किञ्च—**स्वप्नान्त** इति। **स्वप्नान्ते** स्वप्नस्थाने देवतिर्यगा**द्युच्चावच**योनि**मीयमानो** गम्यमानो **देवो** द्योतनावान् विज्ञानात्मा **बहून्यनन्तानि** वासना**रूपाणि कुरुते** निर्वर्तयति। **उतेव स्त्रीभिः** वयस्यैर्वा **सह मोदमान इव जक्षदिव उतापि** सिंहव्याघ्रादिदर्शनतो **भयानि पश्यन्निव** पश्यति॥ १३॥ **आराममिति**। सर्वे जीवा **अस्या**त्मानो यद्यत् वासनानिर्मितं ग्रामं पुरं स्त्रियमन्नाद्यमित्याद्यारमणमाक्रीडन**मारामं** गन्धर्वनगरतुल्यं सत्यवत् **पश्यन्ति**। **कश्चन** कोऽपि य एवंरूपकल्पनाधिकरणं तत्तद्रूपेण निरधिकरणरूपेण वा **न पश्यति**। स्वात्मभूतमपि यन्न पश्यति अहो भाग्यहीनोऽयं लोक इति श्रुतिराक्रोशति। स्वाज्ञदृष्टिप्रसक्तजाग्रदादावपि तत्कल्पनाधिकरणं स्वयंज्योतिरात्मा तत्कलनामस्पृश्य विविक्त उपलभ्यते। यत् विकल्पजातं स्वप्नाद्यवस्थारूपं तदायतनमधिकरणं यो न वेद **तं नावबोधयेदि**त्याहुः सन्तः। बोधितोऽप्ययं सहसा न प्रतिबुध्यते। किन्तु विपरीतं गृह्णातीत्याह— **दुर्भिषज्यमिति**। यः स्वाज्ञादिदृष्टिप्रसक्तस्वातिरिक्तप्रपञ्चारोपापवादाधारतया वस्तुतो निराधारस्वमात्रता

चावशिष्यते तद्वित् तदेव भवति। प्रमाणतो ज्ञापितोऽपि बोधितोऽपि **यमात्मानमेष** स्वाज्ञो यथावन्न **प्रतिपद्यते** तस्य स्वाज्ञनदृढपटावृतत्वेन मूढत्वात्। तथा-विधायास्मै श्रुत्याचार्यकृतपरमार्थोपदेशस्तु जात्यन्धबधिरमूकादिदोषचिकित्सावत् **दुर्भिषज्यं भवति** तत्त्वतोऽप्यधिकतरदुःखायासहेतुः भवतीत्यत्र—

अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत्।
महानरकसाम्राज्ये स तेन विनियोजितः॥ इति,
न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्।

इति च श्रुतेः स्मृतेश्च। यत एवमतः स्वाज्ञस्य सफलं कर्मोपदिश्य क्रमेण चित्तशुद्ध्युपायः कथनीयः। तद्विना परमार्थोपदेशो न कर्तव्यः। "स हि स्वप्नो भूत्वा इमं लोकमतिक्रामति मृत्यो रूपाणि" इत्युक्तरीत्या यतः स्वप्ने स्वयंज्योतिरात्मा तद्बहिर्विविक्त उपलभ्यते। य एवमुपलब्धः **स एवाथो** अपि **खलु** जागरितदेशेऽपि वर्तत इत्याहुः। स्थानद्वयप्रविभक्तात्मन एकत्वात्। न चेहपरलोकाभ्यामन्यत् सन्ध्यं स्थानमस्ति। किन्तु इहलोक एव **जागरित-देशः**। तत्र यो विज्ञानात्मावभासते स **एषोऽस्य** स्वप्नस्थानः स्वात्मा स्वयंज्योतिः। तत्र हेतुमाह—**यानीति**। विज्ञानात्मा जागरितदेशे **यान्य-** श्यादीनि **पश्यति तान्येव** सुप्तोऽपि पश्यतीति तदसत्; तत्र करणोपरमात् नान्यज्ज्योतिषः संभवोऽस्ति। तथा चोक्तं "न तत्र रथाः" इत्यादि। तस्मात् **अत्रायं पुरुषः स्वयंज्योतिः**रतिक्रामति इति च। इहलोकपरलोक-जाग्रत्स्वप्नाद्यतिरेकेण नित्यः सन् आत्मा वर्तत इति याज्ञवल्क्येन यत् प्रतिपादितं तच्छ्रुत्वा सम्राट् यतोऽहं त्वयैवं बोधितः अतो हे भगवन्! ते तुभ्यं सहस्रं ददामि। अत ऊर्ध्वं विमोक्षाय ब्रूहि इति॥ १४॥

अवस्थात्रयेऽप्यस्य असङ्गत्वकथनम्

**स वा एष एतस्मिन् संप्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नायैव स यत्तत्र**

**किंचित् पश्यति अनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुष इति एवमेवैतत् याज्ञवल्क्य ! सोऽहं भगवते सहस्रं ददामि अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १५ ॥ स वा एष एतस्मिन् स्वप्ने रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव स यत्तत्र किंचित् पश्यत्यनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुष इति एवमेवैतद्याज्ञवल्क्य ! सोऽहं भगवते सहस्रं ददामि अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १६ ॥ स वा एष एतस्मिन् बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति स्वप्नान्तायैव ॥ १७ ॥**

जनकेनैवं याज्ञवल्क्यः प्रार्थितः सन् एवमाह—**स वा** इति । य एषः स्वप्ने स्वयंज्योतिष्ट्वेन दर्शितः स वै प्रकृतः स्वयंज्योतिः पुरुषः **एतस्मिन् संप्रसादे** स्वापे जाग्रत्स्वप्नयोरन्तर्बाह्यविक्षेपकलुषितत्वेन तदपेक्षया स्वापस्य निर्दुष्टत्वेन सम्यक् प्रसीदतीति संप्रसादः स्वाप उच्यते । तस्मिन् संप्रसादे स्वप्नात् सुषुप्तिं जिगमिषुः विज्ञानात्मा स्वप्नावस्थ एव सन् **रत्वा** धीविकल्पितस्त्र्यादिरतिमनुभूयानेकधा इष्टबन्धुदर्शनादिना **चरित्वा** तत्कृतश्रममलब्ध्वा **दृष्ट्वैव पुण्यं च पापं च** तत्फलं च न तु कृत्वेत्यर्थः । कर्तैव पुण्यादिफलमनुभवति न द्रष्टा । तस्मात् स्वप्नो भूत्वा इमं लोकमतिक्रामति मृत्यो रूपाणि । एवं स्वावस्थानुभवोत्तरकालं पुनः **पुनः प्रतिन्यायं** प्रत्यहं **प्रतियोन्याद्रवति** निर्गच्छति । पुनः **स्वप्नस्थानायैव** जागरितवत् स्वप्नेऽपि करोतीत्यत आह—**स यदिति**। **सोऽयमात्मा स्वप्ने यत्किञ्चित्** पुण्यपापफलं यथा जाग्रति पश्यति तद्वत् पुण्यपापफलं **पश्यति** । स्वप्नदृक् **तेनानन्वागतोऽ**ननुबद्धो **भवति** । यदि स्वप्ने पापपुण्यादिकं कृतं तदा तेन बध्येत । न हि स्वप्ने पापादिकृत् पापिनमात्मानं मन्यते । नापि लोकः तं गर्हति बहिष्करोति वा । अतोऽयं तेनानन्वागतो भवति । स्वप्ने कृत्युपलब्धिमात्रं न तत्र क्रियास्ति ।

मूर्तस्य मूर्तसंश्लेषो युज्यते। न ह्यमूर्तस्य कुत्रापि संश्लेषोऽस्ति। यत एवमतो **असङ्गो ह्ययं पुरुषः** स्वप्नदृशस्तत्रत्यकर्मणा संश्लिष्टत्वात्। यतोऽसङ्गः ततोऽमृतो भवतीति मुनेर्वचनं सम्राड् श्रुत्वा तदनुमोदनं कृत्वा स्वकृतार्थतां पृच्छतीत्याह—**एवमिति**। **एवमेवैतत् याज्ञवल्क्य! सोऽहं भगवते सहस्रं ददामि अत ऊर्ध्वं विमोक्षायैव ब्रूहीति** मोक्षपदार्थैकदेशकर्मविवेकस्य दर्शितत्वात्। अत ऊर्ध्वं विमोक्षायैव ब्रूहीति ॥ १५ ॥ कथं पुनस्तत्रासङ्गत्वं? इत्यत आह— **स वा** इति। **स वै पुरुषः** संप्रसादात् प्रत्यागतः **स्वप्ने** यथाकामं **रत्वा चरित्वा दृष्ट्वैव पुण्यं** चेत्यादि पूर्ववत्। **बुद्धान्ताय** जागरितस्थानायैव स्वप्नस्थानतो द्रवति। यथासौ स्वप्ने तज्जदोषतो न लिप्यते तथा बुद्धान्ते जागरितकर्मसङ्गदोषतो न लिप्यत इत्यत आह—**स यदिति**। **स यत् तत्र** बुद्धान्ते **किंचित् पश्यति अनन्वागतस्तेन भवति असङ्गो ह्ययं पुरुषः**। एतस्मिन् बुद्धान्ते यदुक्तं दृष्ट्वैवेति तदनुपपन्नम्। तत्रायं पुण्यपापे करोति। तत्फलभूतस्वर्गादिकं पश्यति अनुभवति तथा व्यवहरति च। तेनास्यासङ्गता कुतः? इति चेन्न; कर्तृत्वतत्सङ्गादेः स्वविकल्पितान्तःकरणोपाधिधर्मत्वेन स्वस्य तद्वृत्तिभावाभावप्रकाशकत्वेन तत्प्रवृत्तिनिमित्तमात्रत्वात् असङ्गता उपपद्यते। उक्तं चैतत् "ध्यायतीव लेलायतीव" इति। तस्मात् दृष्ट्वैव पुण्यं च पापं चेति सम्यगुक्तम्। न हि परमार्थतोऽस्य कर्तृत्वसंगत्वे भवतः। तथा च स्मृतिः "शरीरस्थोऽपि न करोति न लिप्यते" इति। अत एवास्यासङ्गत्वं निरङ्कुशमित्यर्थः। असङ्गो ह्ययं पुरुषः इत्याद्युक्तार्थम् ॥ १६ ॥ स्थानत्रयेऽप्ययमसङ्ग इत्याह—**स वा** इति। **स वा एष एतस्मिन्नि**त्यादि खण्डद्वयेनासङ्गतैव प्रतिपादिता। यतः स्थानद्वयेऽस्यासङ्गता अतः स्वापेऽप्यसङ्गता अस्याविरुद्धा। स्थानत्रयधर्मविलक्षणत्वेनातोऽयममृतः **प्रतियोन्याद्रवति स्वप्नान्तायैव**। शिष्टमुक्तार्थम् ॥ १७ ॥

आत्मनोऽसङ्गत्वे महामत्स्यदृष्टान्तः

**तद्यथा महामत्स्य उभे कूलेऽनुसंचरति पूर्वं चापरं च एवमेवायं पुरुष एतावुभावन्तावनुसंचरति स्वप्नान्तं च बुद्धान्तं च ॥**

"स वा एष एतस्मिन्" इत्यादि खण्डत्रयेण या सिसाधयिषिता सेयमात्मनः सर्वत्रासङ्गता साधिता। अतोऽयमसङ्गात्मा स्थानत्रयातिरेकेण साधितः। उक्तं चैतत् "स हि स्वप्नो भूत्वा इमं लोकमतिक्रामति" इति। एवं प्रतिपादितार्थं दृष्टान्तेन स्पष्टयति—**तद्यथेति**। **तत्** तत्र **यथा** लोके महांश्चासौ नादेयो मत्स्यश्चेति **महामत्स्यः** स्वच्छन्दचारी नद्या **उभे कूले पूर्वं चापरं च सञ्चरति**, एवं चरन्नपि स्रोतसो वेगेन न ह्यपाकृष्यते, **एवमेवायं पुरुषः स्वप्नान्तं च बुद्धान्तं चेति एतावुभावन्तौ अनुसञ्चरति** तत्प्रयोजककामकर्मभ्यामसङ्गत्वेन विलक्षणो भवतीत्यर्थः ॥ १८ ॥

आत्मनोऽवस्थात्रयवैलक्षण्ये श्येनदृष्टान्तः

**तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः सꣳहत्य पक्षौ संलयायैव ध्रियते एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति ॥ १९ ॥**

स्थानत्रयासङ्गात्मनः संसारित्वमाविद्यकम्। तत्र जागरिते ससङ्गः समृत्युरिव स्वप्ने तद्वियुक्त इव। स्वापे तु न हि कामकर्मप्रसक्तिः दृश्यते। तत्रत्यकारणतापाये तदवच्छिन्नस्य नित्यमुक्तता प्रसीदति। तथा च वक्ष्यति "तस्यैतदतिच्छन्दा अपहतपाप्मा" इति। एवमवस्थात्रयवैलक्षण्यमात्मनो विवक्षुः दृष्टान्तं प्रकटयति—**तद्यथेति**। **यथास्मिन्** भौतिकाकाशे **श्येनो वा सुपर्णो वा** क्षिप्रचारी शीघ्रसञ्चारी **विपरिपत्य** चिरं विहृत्य पतनतः **श्रान्तः सन् पक्षौ संहृत्य** सङ्कुच्य, सम्यक् लीयत इति संलयो नीडः तस्मै **संलयायैव** स्वयं ध्रीयते धार्यते तथा **एवमेवायं पुरुषः एतस्मा अन्ताय** स्वापाय **धावति यत्र** स्वापान्ते **सुप्तो न कञ्चन कामं कामयते**। न कंचनेत्यविशेषतोऽभिधानात् स्वप्नबुद्धान्तर्गताः सर्वे कामाः प्रतिषिध्यन्ते। तथा **न कञ्चन**

जाग्रत्प्रविभक्तस्वप्नं **पश्यति** । जाग्रद्दर्शनमपि स्वप्न इति श्रुतेराशयः । तथा च श्रुतिः "त्रय आवसथाः त्रयः स्वप्नाः" इति । यथा पक्षी पतनजश्रमापनुत्तये नीडाभिमुखो भवति तथायं जाग्रत्स्वप्नयोर्व्यवहृत्य श्रान्तः सन् क्रियाकारककलनास्पृष्टनीडस्थानीयमात्मानं प्रविशति । तदा निरायासानन्दभुक् विलक्ष्यते ॥

अविद्यातत्कार्यनिरूपणम्

ता वा अस्य एता हिता नाम नाड्यो यथा केशः सहस्रधा भिन्नः तावताणिम्ना तिष्ठन्ति शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य पूर्णा अथ यत्रैनं घ्नन्तीव जिनन्तीव हस्तीव विच्छाययति गर्तमिव पतति यदेव जाग्रत् भयं पश्यति तदत्राविद्यया मन्यते अथ यत्र देव इव राजेव अहमेवेदꣳ सर्वोऽस्मीति मन्यते सोऽस्य परमो लोकः ॥ २० ॥

स्वाविद्यातत्कार्यसङ्गासङ्गाभ्यामवस्थात्रयावच्छिन्नत्वं तदतीतत्वं च उक्तम् । तत्राविद्यातत्कार्यनिरूपणार्थमियं खण्डिकारभ्यते—**ता वा** इति । **अस्य** शिरःपाण्यादिमतः पुरुषस्य **ता वा एता हिता नाम नाड्यः यथा केशः सहस्रधा भिन्नः तावता** तावत्परिमाणेन **अणिम्ना** अणुत्वेन **तिष्ठन्ति** । ताश्च पुनः **शुक्लस्य नीलस्य पिङ्गलस्य हरितस्य लोहितस्य** वातपित्तश्लेष्मणामितरेतरसंयोगजरसस्य **वर्णैः पूर्णा** विचित्राश्च भवन्ति । तासु नाडीषु सप्तदशात्मकं लिङ्गशरीरं वर्तते । तदाश्रित्य हि स्वबाह्यान्तर्विलसितनानाविधवासना वर्तन्ते । **अथ** एवं सति **यत्र** यस्मिन् काले केचन तस्कराः स्वप्नसदृशं मां **घ्नन्तीवे**त्यविद्याप्रत्ययो जायते । तथा **जिनन्तीव** वशीकुर्वन्तीव । केचन न घ्नन्तीव न वशीकुर्वन्तीव । तथा **हस्तीव एनं विच्छाययति** विद्रावयति । **गर्तं** जीर्णकूपादिं प्रति **पततीव** पतन्तमात्मानमवधारयति । किं बहुना ? मृषाविद्यावासनया **यदेव** चोरव्याघ्रयक्षराक्षसादिजुष्टजगद्भयं **पश्यति** भयहेत्वभावेऽपि स्वाविद्ययैव

एतत् भयं **मन्यते**। **अथ** च पुनः **यत्र** एतस्मिन् काले स्वाविद्ययैव इन्द्रादिदेव **इव** मन्वादिराजा इव च आत्मानं मन्यते। जाग्रन्मनोरथमात्र-देवराजादिवासनावासितः तद्भावमेतीत्यर्थः। कदाचित् अविद्याक्षयसापेक्ष-प्रभवविद्यया **अहमेवेदं सर्वोऽस्मीति मन्यते**। अस्यात्मनः सर्वात्मभावोऽयं **परमो लोकः**। यथा स्वप्ने स्वयंज्योतिष्ट्वं प्रत्यक्षमुपलभ्यते तथैव फलीभूत-विद्यायां सर्वात्मभावरूपो मोक्षः प्रत्यक्षमुपलभ्यते। स्वाज्ञानफलं घ्नन्तीव जिनन्तीवेत्यादि। संसृतिपतनरूपो बन्धः। स्वज्ञानफलं मोक्षः। बन्धमोक्षकलना-विरलब्रह्ममात्रे बन्धमोक्षहेतुस्वाज्ञानस्वज्ञाने विकल्पिते। ते तु निष्प्रतियोगिक-ज्ञानावधि व्यावहारिकपदं गते। वस्तुतो बन्धमोक्षकलनापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रतयावशिष्यते।

नाविद्यास्तीह नो माया शान्तं ब्रह्मेदमक्रमम्।

इति श्रुतेः। ब्रह्ममात्रावस्थितिर्हि परमो लोक इत्यर्थः॥ २०॥

स्वातिरिक्तासहब्रह्मस्वरूपम्

**तद्वा अस्य एतदतिच्छन्दा अपहतपाप्म अभयꣳ रूपं तद्यथा प्रियया स्त्रिया संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरमेवमेवायं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरं तद्वा अस्य एतदाप्तकाममात्मकाममकामꣳ रूपꣳ शोकान्तरम्॥ २१॥**

स्वातिरिक्तासहं ब्रह्म कीदृशं? इत्यत आह—**तद्वा** इति। यत् निष्प्रतियोगिकब्रह्ममात्रं **तद्वा** तदेव स्वात्मयाथात्म्यम्। तद्धि **अतिच्छन्दाः** अतिच्छन्दमित्यर्थः रूपपरत्वात्। गायत्र्यादिच्छन्दोवाची सान्तः। असावन्यः स्वरान्तः। अतिच्छन्दा इति पाठः स्वाध्यायपरो द्रष्टव्यः। अस्ति च लोके स्वच्छन्दः परच्छन्द इति। छन्दःशब्दः कामवाचकः। तस्मादेतत् अति-च्छन्दमित्युन्नेयम्। कामविरलमेतत् पदमित्यर्थः। धर्माधर्मविषयककामसत्त्वात् कथमतिछन्दता? इत्यत आह—**अपहतपाप्मेति**। पाप्मशब्देन धर्माधर्मा-

वुच्येते। उक्तं चैतत् "पाप्मभिः संसृज्यते पाप्मनो विजहाति" इति च। यत्र धर्माधर्माख्यः पाप्मापहतः तदास्पदं तत् धर्मवर्जितमित्यर्थः। किञ्च एतद्रूपमभयं भयहेतुद्वितीयप्रलयात्। यदेतद्विद्याफलं तदतिच्छन्दाः **अपहत-पाप्म अभयं रूपं** संसारधर्मास्पृष्टम्। एतदतीतब्राह्मणावसानेऽभिहितं "अभयं वै जनक प्राप्तोऽसि" इति। तद्वृत्त्यर्थमत्रापि प्रपञ्चितम्। उपरिष्टादप्येतदेव विशदीक्रियते "ब्रह्माभयं वै ब्रह्म" इति। इत्थं परमाभयमापन्नो विद्वान् स्वातिरिक्तबाह्यान्तःकलनां न जहातीत्यत्र दृष्टान्तमाचष्टे—**तद्यथेति**। **तत्** तत्र **यथा** लोके कामुकः कश्चित् **प्रियया स्त्रिया** कामिन्या **संपरिष्वक्तः** सन् स्वात्मनो **बाह्यं किंचन** किंचिदपि **न वेद**, तथा **न ह्यन्तरं** वा किंचिद्-भयमस्तीति वेद, **तथैवमेवायं पुरुषो** विज्ञानात्मा पारमार्थिकभावमापन्न-**प्राज्ञेनात्मना संपरिष्वक्तो** यदि तदा **न बाह्यं** भेदजातं **वेद नान्तरम**भयम-स्तीति वा वेद। अस्य तुर्यैकदृष्टित्वात्। तथा च खिलश्रुतिः—

नात्मानं न परं चैव न सत्यं नापि चानृतम्।
प्राज्ञः किंच न संवेत्ति तुर्यं तत् सर्वदृक् सदा॥

इति। यदेवं स्वातिरिक्तासंभवप्रबोधसिद्धं **तद्वा** तदेवास्यात्मनो याथात्म्य**रूपं** कामनीयकलनासंभवेऽपि स्वाज्ञदृष्टिप्रसक्तकामानां ब्रह्मात्मतयाप्तत्वादा**प्तकामं** आ-त्ममात्रकामत्वादा**त्मकामं**, अमनस्कत्वाद**कामं**, यदेवं **रूपम**वशिष्यते तत् **शोकान्तरं** शोचनीयविषयासंभवात् शोकविरलमित्यर्थः॥ २१॥

तत्र विशोकपदप्राप्तिः तीर्णत्वं च

अत्र पिता अपिता भवति माता अमाता लोका अलोका देवा अदेवा वेदा अवेदा अत्र स्तेनोऽस्तेनो भवति भ्रूणहा अभ्रूणहा चाण्डालोऽचाण्डालः पौल्कसोऽपौल्कसः श्रमणो अश्रमण-स्तापसोऽतापसोऽनन्वागतं पुण्येनानन्वागतं पापेन तीर्णो हि तदा सर्वान् शोकान् हृदयस्य भवति॥ २२॥

शोचनीयपित्रादिभेदसत्त्वात् कथं एतत् विशोकपदमर्हति? इत्यत आह—**अत्रेति**। यदेतदतिच्छन्दमभवदित्यादिवस्तुयाथात्म्यमत्रास्मिन् ब्रह्ममात्रे स्वाज्ञदृष्ट्या पित्रादितापसान्तकलनोपलक्षितस्वाविद्यापदतत्कार्यजातं विद्यत इति यत् तत् स्वज्ञदृष्ट्या अपित्राद्यतापसान्तपदं पित्रादिविलयाधिकरणं ब्रह्म भवति। परमार्थदृष्ट्या निष्प्रतियोगिकब्रह्ममात्रमवशिष्यते। तन्मात्रावस्थिते स्वातिरिक्तपित्राद्यसंभवप्रबोधनिष्पन्नत्वात्। यस्य यो जनकः तस्य स **पिता**। तथा या जनयित्री सा **माता**। कर्मभिः जेतव्या **लोकाः**। कर्मफलभोक्तारो **देवाः**। साध्यसाधनसंबन्धविधायकमन्त्रब्राह्मणात्मका ऋगादयो **वेदाः**। ब्रह्मस्वहर्ता **स्तेनः**। गर्भविच्छेदकृत् **भ्रूणहा**। शूद्रब्राह्मणीसंपर्कजः चण्डालः। स एव **चाण्डालः**। जातितो वा शूद्रक्षत्रियवनितोत्पन्नः पुल्कस एव **पौल्कसः**। जातितो वा कर्मत्यागनिमित्तः परिव्राट् **श्रमणः**। वानप्रस्थो हि **तापसः**। पित्रादितापसान्तग्रहणं सर्ववर्णाश्रमोपलक्षणार्थम्। किं बहुना? एतदभयं ब्रह्म येन केनापि शास्त्रविहित**पुण्य**कर्मणा विहिताकरणप्रतिषिद्धाचरण**पाप**कर्मणा **वानन्वागतं** तत्संबन्धविरलमित्यर्थः। किं पुनरसंबन्धकारणं? इत्यत आह—**तीर्णो हीति**। यदैवमभयं ब्रह्मास्मीति जानाति **तदैव हृदयस्या**न्तःकरणस्य वृत्तिविशेषान् **शोकान्** नानाविधकामान् **तीर्णो**ऽयमतीतो **भवति**। तन्मात्रतयायमवशिष्यत इत्यत्र वक्ष्यति च—

यदा सर्वे प्रलीयन्ते कामा येऽस्य हृदि श्रिताः।
अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते॥

इति॥ २२॥

अस्य कदापि स्वयंज्योतिष्ट्वक्षत्यभावः

**यद्वै तन्न पश्यति पश्यन् वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् पश्येत्॥ २३॥ यद्वै तन्न जिघ्रति जिघ्रन् वै तन्न जिघ्रति न हि घ्रातुर्घ्रातेर्विपरिलोपो विद्यतेऽविनाशित्वात् न तु तद्द्वितीय-**

मस्ति ततोऽन्यद्विभक्तं यज्जिघ्रेत् ॥ २४ ॥ यद्वै तन्न रसयते रसयन् वै तन्न रसयते न हि रसयितुः रसयतेर्विपरिलोपो विद्यतेऽविनाशित्वात् न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् रसयेत् ॥ २५ ॥ यद्वै तन्न वदति वदन् वै तन्न वदति न हि वक्तुर्वक्तेर्विपरिलोपो विद्यतेऽविनाशित्वात् न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्वदेत् ॥ २६ ॥ यद्वै तन्न शृणोति शृण्वन् वै तन्न शृणोति न हि श्रोतुः श्रुतेर्विपरिलोपो विद्यतेऽविनाशित्वात् न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यच्छृणुयात् ॥ २७ ॥ यद्वै तन्न मनुते मन्वानो वै तन्न मनुते न हि मन्तुर्मतेर्विपरिलोपो विद्यतेऽविनाशित्वात् न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यन्मन्वीत ॥ २८ ॥ यद्वै तन्न स्पृशति स्पृशन् वै तन्न स्पृशति न हि स्प्रष्टुः स्पृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत् स्पृशेत् ॥ २९ ॥ यद्वै तन्न विजानाति विजानन् वै तन्न विजानाति न हि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यतेऽविनाशित्वात् न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यद्विजानीयात् ॥ ३० ॥

अत्रायं पुरुषः स्वयंज्योतिर्भवतीति यः प्रकृतः स्वयंज्योतिरात्मा आगन्तुकाविद्याकामकर्मविरल इत्युक्तम् । तत्रैवं चिन्त्यं—कामकर्मादिवत् स्वयंज्योतिष्ट्वमप्यागन्तुकम् । कुतः ? संप्रसादानुपलब्धत्वात् । एतच्छङ्कानिरसनाय स्त्रीपुंदृष्टान्तपूर्वकमुपलब्धस्यात्मनः स्वयंज्योतिष्ट्वस्य सुप्तावग्रहणनिमित्तमेकीभावः "सुषुप्तस्थान एकीभूतः" इति श्रुतेः । न तु कामकर्मादिवत् स्वयंज्योतिष्ट्वमा-

गन्तुकम्। सवितुरौष्ण्यप्रकाशवत् स्वाभाविकमेतत्। अस्त्वेतत् स्वयंज्योतिष्ट्वं स्वयंज्योतिरपि सुप्तौ न पश्यतीति विप्रतिषिद्धम्। स्वभावतश्चैतन्यं किंचिदपि न जानातीत्याशङ्कायां कदापि स्वयंज्योतिष्ट्वक्षतिः नास्तीति प्रकटयितुमिदमाम्नायते—**यद्वै तत्** इत्यादिना। **यद्वै तत्** स्वापे भेदजातं **न पश्यतीति** जानीषे युक्तं चैतत्, स्वापावस्थाप्रवेशस्य चक्षुर्मनआदिदर्शनकरणोपरतिपूर्वकत्वात् वस्त्वन्तराभावाच्च। तस्मादयं न किंचित् पश्यति। स्वापादौ स्वातिरिक्तं नास्तीति **पश्यन्नेव** स्वातिरिक्तं **न पश्यति** भास्यघटादिविषयाभावे दीपादेर्भास्यसापेक्षभासकता निवर्तते। यथा दीपप्रकाशस्य न हि विपरिलोपोऽस्ति तथा **न हि द्रष्टुः** स्वरूपभूत**दृष्टेः विपरिलोपो** विनाशो **विद्यते**। कुतः? **अविनाशित्वात्**। एवं चेत् अविनाशित्वमस्यास्तु, किं न पश्यति? इत्यत आह—**न त्विति**। **ततः** स्वस्मादतिरेकेण **विभक्तं यत् पश्येत्** यदुपलभ्येत **द्वितीयं** वस्तु **न तु** नैव स्वभिन्नं **द्वितीयं** वस्त्व**स्ति** ग्राह्यग्राहकविषयकरणानां परेण एकीभूतत्वात् चैतन्यदृष्टिरेकैव अवशिष्यते ॥ २३ ॥ **यद्वै तन्न जिघ्रति** इत्यादि **यद्वै तन्न विजानाति** इत्यन्तं "यद्वै तन्न पश्यति" इत्युक्तार्थसमानमित्यर्थः ॥ २४–३० ॥

जाग्रत्स्वप्नवत् स्वापे विशेषज्ञानाभावः

यत्र वान्यदिव स्यात् तत्रान्योऽन्यत् पश्येत् अन्योऽन्यत् जिघ्रेत् अन्योऽन्यत् रसयेत् अन्योऽन्यत् वदेत् अन्योऽन्यच्छृणुयात् अन्योऽन्यन्मन्वीत अन्योऽन्यत् स्पृशेत् अन्योऽन्यत् विजानीयात् ॥ ३१ ॥

कथं पुनः स्वापे जाग्रत्स्वप्नवत् विशेषं न विजानाति? इत्यत आह—**यत्रेति**। **यत्र** यस्मिन् जागरिते स्वप्ने **वा** स्वात्मनोऽ**न्यत्** वस्त्वन्तर**मिव** स्वाज्ञदृष्टिविकल्पितं **स्यात् तत्रान्योऽन्यत् पश्येत्**। तथा च दर्शितं "स्वप्ने

प्रत्यक्षतो घ्नन्तीव जिनन्तीव" इति। तत्रान्योऽन्यत् जिघ्रेत् रसयेत् वदेत् शृणुयात् मन्वीत स्पृशेत् विजानीयादिति। एवं विभ्रमहेत्वविद्या यदि शान्ता तदा तद्विकल्पितवस्त्वन्तराभावात् को वा केन कं पश्येत् शृणुयात् विजानीयात्? वस्तुतः क्रियाकारकफलोपलक्षितस्वातिरिक्तप्रपञ्चग्रासं ब्रह्म निष्प्रतियोगिकस्वमात्रतयावशिष्यत इत्यर्थः ॥ ३१ ॥

### स्वमात्रतयावशिष्टात्मस्वरूपम्

सलिल एको द्रष्टाद्वैतो भवति एष ब्रह्मलोकः सम्राट्! इति हैनमनुशशास याज्ञवल्क्यः एषास्य परमा गतिः एषास्य परमा संपत् एषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति ॥ ३२ ॥

स्वमात्रतयावशिष्टात्मा कीदृशः? इत्यत आह—**सलिल** इति। य एवं स्वातिरिक्तकलनाविरलः सोऽयमात्मा स्वातिरिक्तकल्मषाभावात् **सलिलवत्** स्वच्छभूतः। तत्तुल्यः कोऽप्यस्तीत्यत आह—**एक** इति। द्वित्वापादकस्वाज्ञदृष्टिप्रसक्तौ तद्भावाभाव**द्रष्टा** दृङ्मात्ररूपत्वात्। दृश्यसापेक्षद्रष्टुः सविशेषता स्यात् इत्यत आह—**अद्वैत** इति। द्रष्ट्रतिरिक्तदृश्याद्यभावतो द्रष्टा द्रष्टृत्वमुत्सृज्य निष्प्रतियोगिकाद्वैतरूपो **भवती**त्यर्थः। "प्रपञ्चोपशमः शिवोऽद्वैतः" इति श्रुतेः। य एवमद्वैतः स **एष** ब्रह्मैव लोको **ब्रह्मलोकः** तदतिरिक्तलोकादेर्मृग्यत्वात्। हे **सम्राट्!** इत्येनं राजानं संबोध्य मयोक्तो य आत्मा स्वाज्ञादिदृष्टिप्रसक्तस्वातिरिक्तजाग्रदाद्यवस्थावच्छिन्नप्रपञ्चमोहे सत्यसति निष्प्रतियोगिकस्वमात्रतयावशिष्यत इति **याज्ञवल्क्योऽनुशशासे**ति श्रुतेर्वचनम्। किमिति? या स्वमात्रावस्थानलक्षणा तृप्तिः **सैषास्य** विज्ञानमयस्य **परमा गतिः** पर्यवसानभूमित्वात्। "सा काष्ठा सा परा गतिः" इति श्रुतेः। किंच **एषैवास्य परमा संपत्** मोक्षसाम्राज्यरूपत्वात्। **एषोऽस्य परमो लोकः** कर्मादिसाधनबहिर्भूत-

ज्ञानमात्रनिष्पन्नत्वं परमत्वम्। **एषोऽस्य परम आनन्दः** निष्प्रतियोगिकतृप्तिरूपत्वात्। **एतस्यैव** निरंशाखण्डानन्दस्य स्वाज्ञदृष्टिप्रविभक्तमात्रां कलामन्यानि ब्रह्मादिस्तम्बान्तभूतानि विषयेन्द्रियसंयोगजां मत्वा उपजीवन्ति आनन्दिनो भवन्ति। वस्तुतोऽयमखण्डानन्दः। न हि तत्र उपजीव्यानि भूतानि सन्ति अखण्डानन्दस्य सन्मात्रत्वात् इत्यर्थः॥ ३२॥

मानुषाद्यानन्देयत्ताप्रपञ्चनम्

स यो मनुष्याणाꣳ राद्धः समृद्धो भवति अन्येषामधिपतिः सर्वैर्मानुष्यकैर्भोगैः संपन्नतमः स मनुष्याणां परम आनन्दः अथ ये शतं मनुष्याणामानन्दाः स एकः पितृणां जितलोकानामानन्दः अथ ये शतं पितृणां जितलोकानामानन्दाः स एको गन्धर्वलोक आनन्दः अथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसंपद्यन्ते अथ ये शतं कर्मदेवानामानन्दाः स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः अथ ये शतमाजानदेवानामानन्दाः स एकः प्रजापतिलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः अथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आनन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः अथ एष एव परम आनन्द एष ब्रह्मलोकः सम्राट्! इति होवाच याज्ञवल्क्यः सोऽहं भगवते सहस्रं ददामि अत ऊर्ध्वं विमोक्षायैव ब्रूहीति अत्र ह याज्ञवल्क्यो बिभयांचकार मेधावी राजा सर्वेभ्यो मा अन्तेभ्य उदरौत्सीदिति॥ ३३॥

विषयेन्द्रियसङ्गजपरमानन्दमात्रावयवब्रह्मादिमनुष्यपर्यन्तानुभूतानन्दतारतम्यकथनद्वारेण मात्रिणमखण्डानन्दमभिव्यक्तीकर्तुं तदुपायमानुषाद्यानन्देयत्तां प्रपञ्चयति—**स य** इत्यादिना। **मनुष्याणां** मध्ये **स यः** कश्चित् **राद्धो**ऽविकलः समग्रावयवसंपन्नः **समृद्ध** उपभोगोपकरणसंपन्नो **भवति**। किंच समानजातीयानाम**न्येषां अधिपतिः** स्वतन्त्रः मनुष्याणामुपभोगकरणानि यानि तैः **सर्वैः मानुष्यकैः भोगैः संपन्नतमः**। **स हि मनुष्याणां परम आनन्दः**। तत्रानन्दानन्दिनोरभेदनिर्देशात् विषयानन्दोऽपि परमानन्दस्य नार्थान्तरम्। अत्र प्रियव्रतः तत्तुल्यो वा सार्वभौमो राजा उदाहर्तव्यः। एवं सार्वभौमानन्दमादिं कृत्वा शतगुणोत्तरोत्तरक्रमेण भूमिकां प्रतिपाद्य अथ यत्र विषयविषयिसंयोगजानन्दः शतगुणोत्तरोत्तरक्रमेण वर्धमानः काष्ठां भजति यत्र गणना समाप्यते तमेव परमानन्दं विवक्षन् आह—अथेति। **ये मनुष्याणां** एवंप्रकाराः **शतमानन्द**भेदा मिलिता यदि तदा **स एको**ऽयं स्वार्जितकर्मणा **जितलोकानां पितॄणामानन्दः**। तस्य मनुष्यादिशतगुणपरिमितत्वात् पित्रानन्द **एको** भवति। सोऽपि शतगुणीकृतो **गन्धर्वलोक आनन्दो** भवति। सोऽपि शतगुणीकृतो यदि तदा अग्निहोत्रादिश्रौत**कर्मणा देवत्वं** प्रतिपन्नाः तेषां **कर्मदेवानामानन्दो** भवति। कर्मदेवानां शतगुणितानन्दस्तु आजानत उत्पत्तित एव ये देवाः ते आजानदेवाः। तेषामेक **आनन्दो** भवति। **यश्च** अधीतवेदवेदार्थः **श्रोत्रियः** पापजातं वृजिनं, तद्रहितोऽय**मवृजिनः**। स्वातिरिक्तविषयसमुदायतृष्णारहितोऽय**मकामहतः**। तस्याजानदेवैः समानानन्द इत्येतत्। चशब्दाच्छतगुणीकृतपरिमाणोऽयं विराट्छरीरायमाण**प्रजापतिलोके आनन्दो** भवति। तथा तादृशविज्ञानवान् **श्रोत्रियोऽवृजिनोऽकामहत** इत्युक्तार्थम्। एवं तत् शतगुणीकृतपरिमाण एक आनन्दो **ब्रह्मलोके** हिरण्यगर्भा**नन्दः**। नातः परमानन्दगणना विद्यते। एवं ब्रह्मलोकाद्यानन्दपरम्परा यद्ब्रह्मानन्दमहोदधिकणमात्रतां भजति, यश्चैवं श्रोत्रियप्रत्यक्षः, अथ स **एष एव परम आनन्दः** निष्प्रतियोगिकभूमानन्दरूपत्वात् "यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा", "विज्ञानमानन्दं ब्रह्म" इति श्रुतेः। श्रोत्रियावृजिनत्वे तु सर्वत्र तुल्ये।

विशेषस्तु—अकामहत एव आनन्दशतगुणवृद्धिहेतुः। तथाविधानन्दाप्तिसाधनानि श्रोत्रियत्वावृजिनत्वाकामहतत्वान्यभिहितानि। कामसामान्यविरलश्रोत्रियप्रत्यक्षो हि परमानन्दः सर्वकामसङ्कल्पासम्भवप्रबोधसमकालमवशिष्यत इत्यत्र "सर्वविशेषं नेति नेतीति विहाय यदवशिष्यते तदद्वयं ब्रह्म",

यावद्यावन्मुनिश्रेष्ठ स्वयं सन्त्यज्यतेऽखिलम्।
तावत् तावत् परालोकः परमात्मैव शिष्यते ॥ इति,
यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥

इति च श्रुतिस्मृती मानम्। **एष ब्रह्मलोकः सम्राट्! इति होवाच याज्ञवल्क्यः। सोऽहमेवमनुशिष्टो भगवते तुभ्यं सहस्रं गवां ददामि। अत ऊर्ध्वं विमोक्षायैव ब्रूहीति** सम्राड्वचो निशम्य **याज्ञवल्क्यो बिभयाञ्चकार** भीतवान्। न हि **याज्ञवल्क्यो** वक्तुं सामर्थ्याभावात् अज्ञानाद्वा बिभयाञ्चकार। किं तर्हि? **मेधावी राजा सर्वेभ्यो मा अन्तेभ्यो** मत्प्रश्ननिर्णयावसानेभ्य **उदरौत्सीत्** अवरोधं कृतवान्। यद्यन्मया विमोक्षप्रश्नरूपं निर्णीतं मदीयं विज्ञानं कामप्रश्नव्याजेन अपहरतीति भयकारणमेतत् नान्यदित्यर्थः ॥ ३३ ॥

विस्तरेण सनिमित्तसंचरणवर्णनम्

**स वा एष एतस्मिन् स्वप्नान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव ॥ ३४ ॥**

पुरा विज्ञानमयः स्वयंज्योतिरात्मा स्वप्ने प्रदर्शितः। स्वप्नान्तबुद्धान्तसंचारेण कार्यप्रपञ्चासङ्गत्वं अतिरिक्तत्वं चाभिहितम्। महामत्स्यदृष्टान्तेन च "घ्नन्तीव जिनन्तीव" इति स्वाविद्यातत्त्वं निर्धारितम्। तथा विद्यया सर्वात्मभावोऽपि प्रकटितः। सोऽस्य परमो लोक इति यः स्वयंज्योतिरात्मा स एष स्वाज्ञविकल्पितविशेषसामान्यापाये निरंशाखण्डपरमानन्दतया निष्प्रतियोगिकस्वमात्र-

मवशिष्यत इत्येतावता ग्रन्थेन प्रकाशितम्। एवं विद्याविद्याकार्ये मोक्षबन्धने निर्दिष्टे। तथापि मदुक्तं सर्वं दृष्टान्तं मत्वा दार्ष्टान्तिकस्थानीयमोक्षबन्धने सहेतुके कामप्रश्नार्थभूते त्वया वक्तव्ये इति पुनः पर्यनुयुङ्क्ते सम्राट्। "अत ऊर्ध्वं विमोक्षायैव ब्रूहि" इति पृच्छतः अयमाशयः—यत् दार्ष्टान्तिकत्वेन वर्णितं तदेव विस्तरेण वर्णनीयमिति। तदर्थोऽयमारम्भः—**स वा** इत्यादिना। **स वा एष एतस्मिन् स्वप्नान्ते रत्वा** इति पूर्ववत्। **बुद्धान्तायैव द्रवती**त्यादि संसारो वर्ण्यते ॥ ३४ ॥

आत्मनो देहान्तरप्राप्तौ शकटदृष्टान्तः

**तद्यथा अनः सुसमाहितमुत्सर्जत् यायात् एवमेवायꣳ शारीर आत्मा प्राज्ञेनात्मनान्वारूढ उत्सर्जन् याति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३५ ॥**

यथायं स्वप्नान्तात् बुद्धान्तमागतः तथास्मात् देहात् देहान्तरं प्रतिपद्यत इत्यत्र दृष्टान्तमाह—**तद्यथे**ति। **तत्** तत्र **यथा अनः** शकटः **सुसमाहितं** संसारोपयोग्युपकरणेन संपन्नं यावद्भारभरितं शाकटिकेनाप्यधिष्ठितं सत् **उत्सर्जत्** शब्दं कुर्वत् **यायात्** गच्छेत् तथा **एवमेव अयं** शरीरे भवः **शारीर आत्मा** स्वप्नबुद्धान्ताविव पाप्मसंयोगवियोगलक्षणजन्ममरणाभ्यां इहलोकपरलोकावनुसंचरति। **प्राज्ञेनात्मनान्वारूढो**ऽधिष्ठित **उत्सर्जन् याति**। उक्तं चैतत् "आत्मनैवायं ज्योतिषास्ते" इति। स्वभास्यप्राणप्रधानलिङ्गे गच्छति सति तदुपाधिरप्यात्मा गच्छतीव गच्छति। उक्तं हि तत् "ध्यायतीव लेलायतीव" इति। स्वाङ्गदृष्ट्यायमात्मा यमदूतैर्मर्मसु निकृत्यमानेषु हा हतोऽस्मीति आर्तशब्दं कुर्वन् याति। कदा? इत्यत्र—एतदिति क्रियाविशेषणम्। **यत्रैतदूर्ध्वोच्छ्वासी भवति**। एवमुत्क्रान्तिकाले परवशीकृतचित्ततया पारलौकिकस्मृतिलोपो जायते। यस्मादेवं तस्मात् चरमावस्थागमनात् पुरैव पुरुषार्थसाधनकर्तव्यतायामप्रमत्ता भवतेति श्रुतिराह—यत्रोच्छ्वासी भवतीति ॥ ३५ ॥

ऊर्ध्वोच्छ्वासित्वे आम्रादिदृष्टान्तः

स यत्रायमणिमानं न्येति जरया वा उपतपता वा अणिमानं निगच्छति तद्यथा आम्रं वा उदुम्बरं वा पिप्पलं वा बन्धनात् प्रमुच्यते एवमेवायं पुरुष एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव ॥ ३६ ॥

कदा एवं स्यात्? इत्यत आह—**स यत्रेति**। **सो**ऽयं पिण्डात्मा **यत्र** यस्मिन् काले यं **अणिमानं** कार्श्यं नितरामेति ; किंनिमित्तं ? इत्यत्र स्वाभाविक-**जरया वा** कार्श्यं गच्छति। ज्वरादिना उपतपतीत्युपतापः तेन **उपतपता वा अणिमानं निगच्छति**। पिण्डात्ममानिनः षड्भावविकारध्रौव्यात् वैराग्यहेतोः उत्सर्जन् यातीत्युक्तम्। तत् कथं ? इत्यत्र दृष्टान्त उच्यते—**तद्यथेति**। **तत्** तत्र **यथा आम्रं** फलं **उदुम्बरं पिप्पलं वा** यस्मिन् रसो बध्यत इति बन्धनं रसः। तस्मात् **रसबन्धनात् प्रमुच्यत** इति विषमानेकदृष्टान्ततो दार्ष्टान्तिकमृतेरप्य-नियतदेशकालनिमित्तता द्योत्यत इति यत् तत् वैराग्यप्रदर्शनार्थम्। **एवमेवायं पुरुषो** लिङ्गात्मा **एभ्यः** चक्षुराद्य**ङ्गेभ्यः संप्रमुच्य** सह वायुना उपसंहृत्य **पुनः प्रतिन्यायं प्रतियोन्याद्रवति**। यथा स्वप्नबुद्धान्तौ पुनः पुनः गच्छति तथा नानायोनिमृच्छति। किमर्थम्? **प्राणायैव**। प्राणव्यूहाय हि गमनं देहान्तरं प्रतिपद्यते। प्राणिमात्रगतागतेः कर्मफलक्षयाक्षयवैचित्र्यनिमित्तत्वात्। किं बहुना ? स्वाविद्यापदतत्कार्यस्थित्यादिरपि कर्मनिमित्त इत्यर्थः ॥ ३६ ॥

सर्वभूतानामात्मप्रतीक्षणम्

तद्यथा राजानमायान्तमुग्राः प्रत्येनसः सूतग्रामण्योऽन्नैः पानैरावसथैः प्रतिकल्पन्तेऽयमायाति अयमागच्छतीति एवꣳ हैवं-विदꣳ सर्वाणि भूतानि प्रतिकल्पन्ते इदं ब्रह्म आयाति इदमाग-च्छतीति ॥ ३७ ॥

उक्तार्थे लोकप्रसिद्धदृष्टान्तमाचष्टे—**तद्यथेति । तत्** तत्र **यथा** पट्टाभिषिक्त-**राजानमायान्तमुग्राः** क्रूरकर्माणः **प्रत्येनसि** पापकर्मणि तस्करादिदण्डादौ नियुक्ताः **प्रत्येनसः** वर्णसङ्करविशेषाः **सूता** ग्रामनेतारो **ग्रामण्यश्च** अस्मद्राजा आगच्छतीति मत्वा भक्ष्यभोज्यादिलक्षणैरन्नैः पानैर्यथोक्तसंभारविशिष्टतक्रादिभिः **आवसथैः** सौधैः **प्रतिकल्पन्ते** । एवमादितदुचितोपस्करैः तदागमनमार्गमलङ्कृत्य **अयं** सम्राट् **आयाति अयमागच्छतीति** तदागमनं प्रतीक्षन्ते । **एवं हैवं** कर्मफलविदं संसारिणं **इदं ब्रह्म आयाति इदमागच्छतीति सर्वाणि** चक्षुरादिकरणग्रामतदध्यक्षादित्यादिसहित**भूतानि प्रतिकल्पन्ते** प्रतीक्षन्त इत्यर्थः ॥ ३७ ॥

सर्वप्राणानामात्मानुगमनम्

तद्यथा राजानं प्रयियासन्तमुग्राः प्रत्येनसः सूतग्रामण्योऽभिसमायन्ति एवमेव इममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति ॥ ३८ ॥

एवं स्वस्थानं त्यक्त्वा स्थानात् स्थानान्तरं जिगमिषुं के नु गच्छन्ति के वा न गच्छन्ति? इत्यत्र दृष्टान्तमाह—**तद्यथेति । तद्यथा राजानं** प्रकर्षेण यातुमिच्छन्तं **प्रयियासन्तं प्रत्येनसः** सूतग्रामण्यः तमेवाभिमुख्येन **समायन्ति** न ह्याज्ञप्ताः तमनुगन्तुं पारयन्ति, **एवमिममात्मानमन्तकाले सर्वे** वागादयः **प्राणा** एवा**भिसमायन्ति** सहैव गच्छन्ति । न हि ज्ञातयोऽनुयन्ति । **यत्रैतदूर्ध्वोच्छ्वासी भवति** व्याख्यातमेतत् ॥ ३८ ॥

इति तृतीयं ब्राह्मणम्

---

## चतुर्थं शारीरकब्राह्मणम्

संप्रमोक्षणं तदियत्तावर्णनं च

स यत्रायमात्मा अबल्यं न्येत्य संमोहमिव न्येति अथैनमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेव अन्ववक्रामति स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्तते अथारूपज्ञो भवति ॥ १ ॥

अत्र प्रस्तुतं संसारोपवर्णनम्। प्रकृतपुरुषः संसरन् "एभ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति" इत्युक्तम्। कस्मिन् काले तत्संप्रमोक्षणं? तदियत्ता वर्णयितव्या इतीदं ब्राह्मणमारभ्यते—**स यत्रेति**। संसारित्वेन यः प्रस्तुतः **सोऽयमात्मा यत्र** यस्मिन् काले **अबल्य**मबलभावं दुर्बलत्वं नितरा**मेत्य** देहगतदौर्बल्यमात्मन्यध्यस्य तथा **संमोहमिव** संमोहतामिव **न्येति** निगच्छति। न चास्य संमोहोऽसंमोहो वास्ति नित्यचैतन्यस्वभावत्वात्। लौकिकैरुत्क्रान्तिसमये यः करणोपसंहरणनिमित्तो व्याकुलीभावो लक्ष्यते। तथा च संमूढोऽयमिति लौकिका अपि वदन्ति। यद्वा—उभयत्र इवशब्दप्रयोगो योज्यः अबल्यमिव न्येति असंमोहमिव न्येतीति। उभयस्यापि परोपाधिनिमित्तत्वाविशेषात्। **अथास्मिन्** काले **एते एन**मात्मानं वागदयः **प्राणा अभिसमायन्ति**। तदास्य शारीरात्मनोऽङ्गेभ्यः संप्रमोक्षणम्। तत् केन प्रकारेणात्मानमभिसमायन्ति? इत्यत्र—**सो**ऽयमात्मा **एतास्तेजसो मात्राः** चक्षुरादिकरणानि निर्लेपधिया **समभ्याददानः** पुण्डरीकाकार**हृदयमेव अन्ववक्रामति** हृदयाभिव्यक्तविज्ञानो भवतीत्यर्थः। उक्तं चैतत् "शुक्रमादाय पुनरेति स्थानं" इति। तस्य चलनाचलनादिः बुद्ध्यादिचलनसापेक्षः न स्वतः स्वस्याखण्डचिन्मात्रत्वात्। स्वाज्ञदृष्ट्या बुद्धिगतविक्रिया अध्यारोप्यते। पुनस्तेजोमात्राभ्यादानं कदा? इत्यत्र—**सो**ऽयं चक्षुषि भवः **चाक्षुषः पुरुषः यत्र** यस्मिन् काले परि समन्तात् **पराङ् पर्यावर्तते, अथास्मिन्** काले **अरूपज्ञो**

**भवति** रूपं न जानाति। तदायमात्मा चक्षुरादितेजोमात्राः समभ्याददानो भवतीत्यर्थः ॥ १ ॥

सर्वेन्द्रियोपरमणेन तस्य सर्वकलनाराहित्यम्

**एकीभवति न पश्यतीत्याहुः एकीभवति न जिघ्रतीत्याहुः एकीभवति न रसयत इत्याहुः एकीभवति न वदतीत्याहुः एकीभवति न शृणोतीत्याहुः एकीभवति न मनुत इत्याहुः एकीभवति न स्पृशतीत्याहुः एकीभवति न विजानातीत्याहुः तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेन एष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यः तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तꣳ सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेव अन्ववक्रामति तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ॥ २ ॥**

सर्वेन्द्रियोपरमणलिङ्गेन तं पार्श्वस्थाः सर्वकलनारहितं कथयन्तीत्याह— **एकीभवतीति**। तत्पार्श्वस्था आहुः। किमिति? स्वापकाल इव करणग्राम-विलयाधिकरण **एकीभवति** "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं **प्राणः** चक्षुरादित्यं" इत्यादि यदुक्तं तत् तथा। चक्षुरादिकरणानां स्वाधिकरण-देवताभावं गतत्वात् एनं **न पश्यतीत्याहुः**। तथा घ्राणस्य तद्देवतैकीभूतत्वात् **न जिघ्रतीत्याहुः**। समानमन्यत्। जिह्वादिकरणानां वरुणादिदेवतैकीभूतत्वात् **न रसयते न वदति न शृणोति न मनुते न स्पृशति न विज्ञानातीत्याहुः**। अस्याः करणसन्ततेः हृदये उपसंहृतत्वात्। **तस्य हैतस्य हृदयस्याग्रं** नाडीनिर्गमनद्वारं **प्रद्योतते। तेनैष आत्मा** विज्ञानमयो हृदयात् **निष्क्रामति।** तथा च श्रुतिः—"कस्मिन्नहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन् वा प्रतिष्ठिते

प्रतिष्ठास्यामीति स प्राणमसृजत" इति। सर्वत्रात्मज्योतिः व्योमवदसङ्गं वर्तते। तद्विकल्पितस्थूलदेहात्तजनिमृतिगमनागमनादिविक्रिया शरीरनिष्ठैव। न ह्येषा तदधिकरणचैतन्यनिष्ठेत्यज्ञानतः करणजालाभिमतिमेत्य तेन साकमुत्क्रामतीत्युक्तम्। केन द्वारेण निष्क्रामति? इत्यत्र यस्यादित्यलोकप्रापकज्ञानं कर्म वा स्यात् सोऽयं **चक्षुष्टो निष्क्रामति**। तथा यस्य ब्रह्मलोकाप्तिनिमित्तज्ञानं कर्म वास्ति स **मूर्धन्य**नाड्या निष्क्रम्य तत् पदं भजति। तथा स्वर्गनरकादिप्रापकनानाविधकर्मनिमित्तवशादन्येभ्यो वा **शरीरदेशेभ्यः तमुत्क्रामन्तं** विज्ञानात्मानं परलोकं प्रति जिगमिषुं राजानमिव भृत्याः **सर्वे** वागादयः **प्राणा अनूत्क्रामन्ति**। तदैष आत्मा स्वप्न इव **सविज्ञानो** विशेषविज्ञानवान् **भवति**। न हि स्वातन्त्र्येण विज्ञानवान् कर्मपरवशत्वात्। **सविज्ञानमेव च गन्तव्यमन्ववक्रामति** अनुगच्छति। अत एव स्वातन्त्र्यार्थं तत्काले श्रद्धालुभिः अप्रमादेन स्वात्मानुसन्धानं कर्तव्यमित्यत्र—

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम्।
तं तमेवैति कौन्तेय! सदा तद्भावभावितः॥

इति स्मृतेः। यो यथा विज्ञानी भवति **तं** परलोकं जिगमिषुं विद्या च कर्म च **विद्याकर्मणी समन्वारभेते**। पूर्वकृतविहिताविहितकर्मफलानुभववासना **पूर्वप्रज्ञा च तं** समन्वारभते। यस्मादेवं तस्मात् विद्याकर्मादि शुभमेव समाचरेत्॥ २॥

देहिनो देहान्तरप्राप्तौ दृष्टान्तः

**तद्यथा तृणजलायुका तृणस्यान्तं गत्वान्यमाक्रममाक्रम्य आत्मानमुपसꣳहरति एवमेवायमात्मा इदꣳ शरीरं निहत्याविद्यां गमयित्वान्यमाक्रममाक्रम्य आत्मानमुपसꣳहरति॥ ३॥**

एवं यथानुरूपविद्याकर्मसंभारसंभृतो देही वर्तमानदेहमुत्सृज्य देहान्तरं यातीत्यत्र दृष्टान्तमाचष्टे— **तद्यथेति**। **तत्** तत्र **यथा तृणजलायुका** जलभूचर-

जन्तुविशेषः **तृणस्यान्तं** तृणमध्यं **गत्वा अन्यमाक्रमं** तृणान्तरमाक्रम्यावष्टभ्य प्रसारितवासनयान्यमात्मानमुपसंहरति अत्रात्मभावमारभते यथा स्वप्ने देहान्तरस्थ एव तत्तत्कर्मवासनावैचित्र्यवशात् देहान्तरं परिकल्प्य पूर्वदेहवासनां त्यजति, **एवमेव** यः प्रकृतः **सोऽयमात्मा** संसारी **इदं शरीरं** पूर्वाधिष्ठितं **निहत्य** स्वप्नप्रतिपित्सुवत् पातयित्वा **अविद्यामचेतनभावं गमयित्वा** स्वात्मोपसंहारेणान्यमाक्रममाक्रम्यात्मानमुपसंहरति पुनर्देहान्तरमारभत इत्यर्थः ॥ ३ ॥

देहान्तरप्राप्तिप्रकारः

**तद्यथा पेशस्कारी पेशसो मात्रामुपादाय अन्यत् नवतरं कल्याणतरꣳ रूपं तनुते एवमेवायमात्मा इदꣳ शरीरं निहत्याविद्यां गमयित्वान्यत् नवतरं कल्याणतरꣳ रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वा अन्येषां वा भूतानाम् ॥ ४ ॥**

किं नित्योपात्तमेव उपादानमुपसंहृत्य पुनर्देहान्तरं स्वीकरोति? यद्वा पूर्वोपचितमेव पुनरादत्ते? इत्यत्र दृष्टान्तमाह—**तद्यथेति** । तत्तत्र **यथा** पेशः सुवर्णं करोतीति **पेशस्कारी** स्वर्णकारः **पेशसो मात्रामेकदेशमुपादाय** पूर्वरचनापेक्षयान्यत् **नवतरं** कल्याणादपि **कल्याणतरं रूपं तनुते** निर्मिनोति **एवमेवायमात्मे**त्यादि पूर्ववत् । "द्वे वाव ब्रह्मणो रूपे" इत्युक्तरीत्या यानि पृथिव्यादिपञ्चभूतानि पेशस्स्थानीयानि तान्युपमृद्य उपमृद्य अन्यदन्यच्च **नवतरं कल्याणतरं** देहान्तर**रूपं कुरुते** । तत् किम्? पितृभ्यो हितं तल्लोकभोगयोग्यं **पित्र्यं वा** । तथा गन्धर्वाणामुपभोगयोग्यं **गान्धर्वं वा** । तथा देवानां **दैवम्** । प्रजापतेः **प्राजापत्यम्** । तथा ब्रह्मण इदं **ब्राह्मं वा** । यथाकर्म यथाश्रुतं **अन्येषां वा भूतानां** संबन्धि शरीरान्तरं कुरुत इत्यनुषज्यते ॥ ४ ॥

कामादिपदार्थानामेकत्र प्रदर्शनम्

स वा अयमात्मा ब्रह्म विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः पृथिवीमय आपोमयो वायुमय आकाशमयस्तेजोमयोऽतेजोमयः काममयोऽकाममयः क्रोधमयोऽक्रोधमयो धर्ममयोऽधर्ममयः सर्वमयः तद्यदेतत् इदंमयोऽदोमय इति यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन। अथो खल्वाहुः काममय एवायं पुरुष इति स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते ॥ ५ ॥

यैः कामादिभिः संयुक्तः तन्मयो भवति ते सर्वे पदार्थाः पुञ्जीकृत्य एकत्र प्रदर्श्यन्ते—**स वा** इति। **स वा अयमेवं** संसार्यात्मा स्वगतविशेषांशापाये "तदेतद्ब्रह्म अपूर्वं", "यत् साक्षादपरोक्षात् ब्रह्म", "विज्ञानमानन्दं ब्रह्म" इति श्रुत्यर्थज्ञानैकसिद्धं **ब्रह्मैव** निष्प्रतियोगिकब्रह्ममात्रमित्यर्थः। तद्याथात्म्याज्ञानविकल्पिता बुद्धिः विज्ञानं तदुपाधिकस्तन्मयः योऽयं **विज्ञानमयः**। प्राणेषु हृद्यन्तर्ज्योतिरित्युक्तं विज्ञानमयत्वाद्युपाधिनिमित्तं न वस्तुतः ध्यायतीवेत्युक्तम्। मनःसन्निकर्षान्**मनोमयः**। येन चेतनश्चलतीति लक्ष्यते स हि पञ्चवृत्त्यात्मकः प्राणः। तदध्यक्षस्तन्मयः। रूपशब्ददर्शनश्रवणकाले **चक्षुर्मयः श्रोत्रमयः**। तत्तदिन्द्रियव्यापृतिकाले तत्तन्मयो भवतीत्यर्थः। पार्थिवादिशरीरारम्भे **पृथिवीमयो** भवति। तथा वरुणादिलोकगताप्छरीरारम्भे **आपोमयो** भवति। तथा वायव्यशरीरारम्भे **वायुमयो** भवति। तथाकाशादिशरीरारम्भे **आकाशमयो** भवति। एवं तैजसदेवशरीरारम्भे **तेजोमयो** भवति। तद्विपरीतातेजोमयपश्वादि-

भूतप्रेतपिशाचादिशरीरारम्भे **अतेजोमयो** भवतीत्येवं कार्यकरणसंघातमयः सन् आत्मा इदं मया प्राप्तव्यमिति विपरीत**काममयो** भवति। तत्र दोषदर्शनतोऽय**मकाममयो** भवति। स्वेप्सितकामकुण्ठनजक्रोधवृत्त्युदये **क्रोधमयो** भवति। विवेकतः क्रोधवृत्तिशान्तितोऽय**मक्रोधमयो** भवति। एवं कामाकामक्रोधाक्रोधाभ्यां तन्मयतामेत्य **धर्माधर्ममयश्च** भवति धर्माधर्मप्रवृत्तेः कामक्रोधमूलत्वात्। तथा च स्मृतिः—

यद्यद्धि कुरुते जन्तुः तत्तत् कामस्य चेष्टितम्।

इति। धर्माधर्ममयो भूत्वायं **सर्वमयो** भवति सर्वस्य धर्माधर्मनिमित्तत्वात्। किं बहुना? **तत् यदेतत् इदंमयः** गृह्यमाणविषयादिमयः ततोऽय**मदोमयः** अदसः परोक्षत्वेन विप्रकृष्टत्वात्। यथावत्कर्तुं यथावच्चरितुं च शीलमस्येति **यथाकारी यथाचारी तथा भवति**। यथाकारीति विशेषणं **साधुकारी साधुर्भवतीति**। यथाचारीति विशेषणं **पापकारी पापो भवतीति**। ताच्छील्यप्रत्ययोपादानात् **पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति** पुण्यपापमात्रतः तन्मयता। न हि ताच्छील्यमपेक्षते। ताच्छील्ये तु तन्मयत्वातिशयो विशेषः। कामादिपूर्वकपुण्यादिकारिता सर्वमयत्वहेतुः देहपरम्पराप्तिकारणत्वात्। एतद्विषयो हि विधिप्रतिषेधशास्त्रफलमर्हति। **अथो** अप्यन्य **एवमाहुः**। किमिति? पुण्यपापवृत्तिकारणं काम एवेति। कामप्रयुक्तो हि खलु पुण्यापुण्यकर्म उपचिनोति। न हि निष्कामधीनिर्वर्त्यं कर्म पुण्यापुण्योपचयहेतुर्भवति। यस्मादेवं तस्मात् काम एव सर्वसंसारमूलम्। तथा च श्रुतिः—"कामान् यः कामयते मन्यमानः स काममभिजायते तत्र तत्र" इति। तस्मात् **काममय एवायं पुरुषः** यादृशकामेन **यथाकामो भवति तत्क्रतुर्भवति**। यस्मिन् विषये कामलेशोऽभिव्यज्यते स कामोऽध्यवसायलक्षणक्रतुत्वेन परिणमते। अथानन्तरं क्रिया प्रवर्तते। यद्विषयकक्रतुरध्यवसायो **भवति** तद्विषयकं **कर्म कुरुते** निर्वर्तयति। **यत् कर्म कुरुते तत्कर्मफलमभिसंपद्यते**। यस्मादेवं तस्मात् संसारित्वलक्षणसर्वमयत्वे हेतुः काम एवेत्यर्थः॥ ९॥

कामस्यैव बन्धमोक्षमूलकत्वम्

तदेष श्लोको भवति—

तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य ।
प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् ।

तस्माल्लोकात् पुनरैत्यस्मै लोकाय कर्मण इति नु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति ॥ ६ ॥

सर्वानर्थमूलकामसंभवासंभवाभ्यां संसारित्वासंसारित्वलक्षणबन्धमोक्षौ स्यातामित्यस्मिन्नर्थे एष श्लोको मन्त्रो भवतीत्याह—**तदेष श्लोको भवतीति** । यत्र कामो जायते **तदेव** तत्रैवासक्तः सन् यत्फलासक्तितः कर्म करोति तत्साधनकर्मणा **सहैव** तत्फलमेतीत्यत्र—मनो हि लिङ्गं मनसः प्रधानत्वात् । यद्वा—लीनमर्थं गमयतीति **लिङ्गम्** । सप्तदशात्मकमस्य संसारिणो **यत्र सक्तं** वासनावासितं **मनो** भवति । एवं मनःसंयोगवशादेवास्य तत्कर्मणा तत्फलाप्तिः । यत एवमतः संसारमूलं मन एवेति सिद्धम् । यस्य कामो विषयमस्पृश्य स्वात्मन्येव विलीयते तस्यैवं ब्रह्मविदः विद्यमानोऽपि कर्माभासो न तद्बन्धनाय भवति । तथा च श्रुतिः "पर्याप्तकामस्य कृतात्मनस्त्विहैव सर्वे प्रविलीयन्ति कामाः" इति । किञ्च **कर्मणोऽन्तमवसानं** फलसमाप्तिं **प्राप्य** भुक्त्वा पुनरिहलोकं प्राप्य **अयं यत्किंचित्** कर्म **करोति** तत्कर्मफलममुष्मिन् लोके भुक्त्वा तदुपभोगक्षयतः **तस्मात् लोकात् पुनरैत्या**गच्छति । किमर्थम् ? **अयमस्मै लोकाय** कर्मप्राधान्यतः **कर्मण इति** पुनः कर्म कृत्वा तत्फलभोगायामुं लोकं एवन्नु **कामयमानः** संसरति । फलासक्तस्य हि गतिरुक्ता । न ह्यकामस्य क्रिया तत्फलं वा उपपद्यते । कथं पुनर**कामयमानो** भवति ? कामनीयविषयाभावाद**काम** एवाकामयमानः । कथमकामता ? इत्यत्र कामा

यस्मान्निर्गताः सोऽयं **निष्कामः**। कामनिर्गमनं कुतः? इत्यत्र स्वेन यदाप्तव्यं तस्याप्तत्वात् **आप्तकामः**। कथमाप्यन्ते कामाः? इत्यत्र यस्यात्मैव कामो नान्यः सोऽयम**आत्मकामः** आत्मनः परिच्छेदसामान्यविरलत्वात्। आत्मैवानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव भवति। "यत्र त्वस्य सर्वमात्मैवाभूत् तत् केन कं पश्येत् शृणुयान्मन्वीत विजानीयात्?" इत्यादिस्वातिरिक्तवस्तुदर्शनश्रवणमननाद्यसम्भवश्रुतेः। एवं स्वातिरिक्तकलना अस्ति नास्तीति विभ्रमापह्नवसिद्धं ब्रह्म स्वमात्रमिति यो जानाति **तस्य** ब्रह्ममात्रविदः स्वातिरेकेण देहो वा तत्र वागादयः **प्राणा** वा स्थित्वा पुनः देहात् **नोत्क्रमन्ति**। येषां पुनः स्वातिरेकेण प्राणोपलक्षितस्थूलसूक्ष्मादिदेहाभासाः सन्तीति भ्रान्तिः तद्दृष्ट्या प्राणादयः स्वाधिकरणे विलयं भजन्तु। वस्तुतो ब्रह्ममात्रभावापत्तेः स्वातिरिक्तप्राणोपलक्षितस्वाविद्यापदतत्कार्यसंभूतिस्थितिप्रलयकलना अस्ति नास्तीति विभ्रमापह्नवपूर्वकत्वात्। अत एवायं ब्रह्ममात्रवित् स्वाज्ञदृष्टिप्रसक्तस्वातिरिक्तप्रपञ्चमोहे सत्यसति **ब्रह्मैव सन् ब्रह्माप्येति** इत्युपचर्यते। "आप्तेः स्वभावत्वात् आप्तिमात्रावशेषः न हि ग्रामान्तराप्तिवत्" इति नामार्थविवेकोक्तेः ॥ ६ ॥

सर्वकामप्रलयसमकालं ब्रह्मभावापत्तिः

**तदेष श्लोको भवति—**

**यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः।**
**अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते ॥ इति।**

**तद्यथाहिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीत एवमेवेदꣳ शरीरꣳ शेते अथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव सोऽहं भगवते सहस्रं ददामीति होवाच जनको वैदेहः ॥ ७ ॥**

कथं पुनर्ब्रह्ममात्रप्रबोधतः तद्भावापत्तिर्भवति स्वातिरिक्तनानाविषयारूढकामानां विद्यमानत्वात्? इत्याकाङ्क्षायां ब्रह्ममात्रस्य निष्प्रतियोगिकत्वेन तत्प्रति-

योगितया न हि स्वातिरिक्तविषया वा तदारूढकामा वा सन्ति तेषामाविद्यकत्वेन कारणतुल्यत्वात् । यद्याभासतो वा कामादयः सन्तीति यो मन्यते तद्दृष्टिमाश्रित्य सर्वकामप्रलयसमकालं ब्रह्मभावापत्तिः स्यादित्यस्मिन् अर्थे **तदेष श्लोको** मन्त्रो **भवती**त्याह—**तदेष** इति । अस्याप्तकामस्य ब्रह्मविदो **यदा** यस्मिन् काले स्वातिरिक्तं हरतीति **हृत्** अन्तःकरणं तस्मिन् **हृदि** समाश्रि**ता ये सर्वे कामा** ब्रह्मातिरिक्तं न किंचिदस्तीति प्रबोधसमकालं **प्रमुच्यन्ते** समूलतो विशीर्यन्ते ब्रह्ममात्रतया समाप्यन्ते **अथ** तदा स्वातिरिक्तकामान् मृत्युपदं प्रापयतीति **मर्त्यो** विद्वान् स्वातिरिक्तकामासम्भवप्रबोधसमकालं **अमृतो भवति** । किं वर्तमानदेहपातात् ऊर्ध्वं? इत्यत आह—**अत्रे**ति । अत्र स्वाज्ञदृष्टिविकल्पितशरीरे परमार्थदृष्ट्या,

यथैव मृन्मयः कुम्भः तद्वद्देहोऽपि चिन्मयः ।

इति श्रुत्यनुरोधेन ब्रह्ममात्रपर्यवसन्ने ब्रह्ममात्रदृष्ट्या जीवन्नेव ब्रह्ममात्रावस्थितिलक्षणकैवल्यं प्रतिपद्यत इत्यर्थः । "स यो ह वै तत् परमं ब्रह्म वेद ब्रह्मैव भवति", "य एवं निर्बीजं वेद निर्बीज एव स भवति" इत्यादिब्रह्ममात्रप्रबोधसमकालं तद्भावापत्तिश्रुतेः । यत एवमतो मोक्षो न हि देशान्तरे कालान्तरे वा विद्यते । मोक्षस्य स्वातिरिक्तकामादिरस्ति नास्तीति विभ्रमासंभवप्रबोधसमकालं स्वमात्रतयावशिष्टत्वादित्यत्र—

न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
सर्वाशासंक्षये चेतःक्षयो मोक्ष इतीष्यते ॥

इति श्रुतेः । यतः स्वमात्रावस्थानं मोक्षः अत एव स्वाज्ञदृष्टिदृष्टप्राणादयो नोत्क्रामन्ति । स्वस्वकारणे समवनीयन्ते नाममात्रमवशिष्यन्ते । तदानीं विद्वान् देहादिरस्ति नास्तीति विभ्रमविरलो भूत्वा ब्रह्ममात्रतयावशिष्यत इत्यत्र दृष्टान्त उच्यते—**तद्यथे**ति । **तत्** तत्र **यथा** लोके अहिर्यस्यां निलीयत इत्य**हिनिर्ल्वयनी** सर्पत्वक् स्वाश्रयवल्मीकादौ **मृता प्रत्यस्ता** अहिना परित्यक्ता **शयीत** वर्तते **एवमेवायं** विद्वान् स्वेन त्यक्तमिदं सर्पनिर्मोकस्थानीयं **शरीरं** मृतमिव **शेते**

चेतनवत् चलतु वा। **अथेतरः** सर्पस्थानीयोऽयं विद्वान् सर्पवत् तत्र विद्यमानोऽपि **अशरीर** एव। न हि पूर्ववत् गच्छामि तिष्ठामीति मन्यते देहात्मदृष्टेः परित्यक्तत्वात्। यतोऽयमशरीरः अत **एवायममृतः**। तथापि प्राणितीति **प्राणः** स्वज्ञदृष्टिप्रसक्तप्राणादिप्रवृत्तिनिमित्तत्वात्। तथा च वक्ष्यति "प्राणस्य प्राणं" इति। प्राणशब्देनात्र परमात्मोच्यते। यः परमात्मा तत् **ब्रह्मैव**। किं पुनः? तत् **तेज एव** निष्प्रतियोगिकचिन्मात्रत्वात्। एवं याज्ञवल्क्येन जनकाय कामप्रश्नवरो दत्तः इत्येवं जनकयाज्ञवल्क्याख्यायिकारूपिण्या श्रुत्या प्राणिभ्यो बन्धमोक्षोपाय उक्तः। इदानीं जनकेनैवमुक्तमिति श्रुतिराह। किमिति? यत एवाहं त्वया स्वातिरिक्तास्तिताभ्रमतो विमोक्षितः अतस्तुभ्यं **भगवते** विद्यानिष्क्रयाय **सहस्रं ददामीति होवाच जनक** इत्याद्युक्तार्थम्॥ ७॥

ससाधनात्मज्ञानतः कृतकृत्यता

तदेते श्लोका भवन्ति—

अणुः पन्था विततः पुराणो माꣳस्पृष्टोऽनुवित्तो मयैव।
तेन धीरा अपियन्ति ब्रह्मविदः स्वर्गं लोकमित ऊर्ध्वं विमुक्ताः॥८॥

मुनिना निरवशेषब्रह्मविद्या उपदिष्टा। राज्ञः सर्वस्वमपि निष्क्रयाय न कल्पते। विदेहराज्यमात्मानं चानिवेदयित्वा सहस्रं ददामीत्युक्तवान्। अत्र को हेतुः? सम्राट् अध्यात्मविद्यारसिकः ब्राह्मणोक्तार्थमेव पुनः मन्त्रैरपि श्रोतुमिच्छन् न हि सर्वं निवेदयति। वक्ष्यति च ब्राह्मणान्ते "सोऽहं भगवते विदेहान् ददामि इमां चापि सह दास्याय" इति। किञ्च ब्रह्मविद्यासाधनत्वेन संन्यासोऽपि वर्णनीयः। ससाधनात्मज्ञानतः कृतकृत्यता स्यात् इत्यस्मिन् अर्थे विस्तरप्रतिपादका एते श्लोका मन्त्रा भवन्ति—**तदेते श्लोका भवन्तीति**। निष्प्रतियोगिकब्रह्ममात्रावस्थानलक्षणकैवल्यसाधनज्ञान**पन्था** मार्गोऽ**णुः** दुर्विज्ञेयत्वात्। कुतः? **विततः** विस्तीर्णः अनन्तकोटिजन्मसुकृतसाध्यत्वात्। तथा च श्रुतिः—

जन्मान्तरशताभ्यस्ता मिथ्या संसारवासना ।
सा चिराभ्यासयोगेन विना न क्षीयते क्वचित् ॥

इति । वितर इति पाठान्तरम् । विस्पष्टतरणहेतुरित्यर्थः । सोऽयं पन्थाः तार्किकादिसमयवत् इदानीन्तन इत्यत आह—**पुराण** इति । चिरन्तनत्वेन श्रुतिप्रकाशितत्वात् । कथं त्वयावगतं ? इत्यत आह—**मां स्पृष्ट** इति । **मां स्पृष्टो** मया श्रुत्याचार्यमुखतो लब्ध इत्यर्थः । केवलं न हि मया लब्धः किन्तु **मयैवानुवित्तः** । यथा भुक्तेः तृप्त्यवसानता तथा वेदनफलावसानता ह्यनुवित्तिः । तन्मात्रनिष्ठा सापि मयैव लब्धेत्यर्थः । किमसौ मन्त्रदृक् एक एव ब्रह्मविद्याफलं प्राप्तवान् नान्यः ? मयैवानुवित्त इत्यवधारणात् इति चेत् ; सत्यं, "नातः परं वेदितव्यं हि किंचित्" इति ब्रह्ममात्रनिष्ठारूढदृष्ट्या स्वातिरिक्तमुमुक्षोरभावात् मयैवानुवित्त इत्युक्तिरुपपद्यते । "प्राप्तव्यं सर्वमत्र संपन्नं" इति श्रुतेः ब्रह्मविद्यास्तुतिपरत्वात् न ह्यन्यो ब्रह्मवित् वेदनफलं नाप्नोतीत्युक्तम् । "तद्यो यो देवानां प्रत्यबुद्ध्यत स एव तदभवत्" इति श्रुत्यनुरोधेन **तेन** ब्रह्मविद्यामार्गेण बहवो **धीरा ब्रह्मविद इतो**ऽस्मादात्यन्तिकस्वातिरिक्तापह्नवप्रबोधादूर्ध्वमुत्तरक्षणं जीवन्त एव **विमुक्ताः** सन्तः **स्वर्गं लोकं** ब्रह्मविद्याफलं कैवल्य**मपियन्ति** तन्मात्रतयावशिष्यन्ते । स्वर्गलोकशब्दस्य त्रिविष्टपवाचित्वेऽपि ब्रह्मविद्याप्रकरणात् स्वमात्रावशेषतया गीयते लोक्यत इति च स्वर्गं लोकं ब्रह्मैवेत्यर्थः ॥ ८ ॥

मुमुक्षूणां मोक्षमार्गे विप्रतिपत्तिः

तस्मिन् शुक्लमुत नीलमाहुः पिङ्गलꣳ हरितं लोहितं च ।
एष पन्था ब्रह्मणा हानुवित्तः तेनैति ब्रह्मवित् पुण्यकृत्तैजसश्च ॥९॥

मुमुक्षूणां मोक्षमार्गे विप्रतिपत्तिं दर्शयति—**तस्मिन्निति** । यः करणग्रामसंघातभौतिकदेहोऽवभासते **तस्मिन्** देहे विद्यमाना याः सुषुम्नाद्या नाड्यः श्लेष्मादिरसपूर्णा भवन्ति तत्र केचन मुमुक्षवः "चक्षुष्टो वा मूर्ध्नो वा

अन्येभ्यो वा शरीरदेशेभ्यः'' इत्युक्तोत्क्रान्तिनाडीमध्ये **शुक्लं** सुषुम्नाच्छिद्रं "तयोर्ध्वमायन् अमृतत्वमेति" इति श्रुत्यनुरोधेन ब्रह्मप्रापकद्वारमाहुः। केचन मुमुक्षवः इडा पिङ्गला वरुणा गान्धारी विश्वोदरा यशस्विनीति नाड्यः षट् दक्षिणमार्गप्रापकाः। तासां मध्ये इडाद्वारं **नीलम्**। पिङ्गलाद्वारं **पिङ्गलम्**। वरुणाद्वारं **हरितम्**। गान्धारीद्वारं **लोहितम्**। **च**शब्दात् विश्वोदरायशस्विन्यो-र्द्वारे कृष्णकपिशरूपे भवत इत्यनुवर्तते। यान्येवमुत्तरदक्षिणद्वाराणि पुरुषार्थ-साधनत्वेन उक्तानि तान्यपि परमार्थापेक्षया संसारप्रतिपत्तिसाधनान्येव। यस्मादेवं तस्मात् श्रोत्रियत्वावृजिनत्वाकामहतत्वसाधनसहकृतस्वातिरिक्तसर्वप्रपञ्चा-संभवप्रबोधसिद्धब्रह्ममात्रप्रबोधरूपोऽयमेष **पन्था ब्रह्मणा** सन्त्यक्तसर्वैषणो भूत्व-ब्रह्मभावमापन्नब्राह्मणेन **हानुवित्तः** लब्धोऽयमात्मेत्यर्थः। कीदृशोऽयमेवंवित्? इत्यत आह—**पुण्यकृदिति**। पूर्वं श्रवणादि पुण्यं कर्म करोतीति **पुण्यकृत्**। त्यक्तैषणो भूत्वा निष्प्रतियोगिकब्रह्ममात्रं तेजः स्वात्मेति ज्ञानसमकालं **तैजसो** भवति। **च**शब्दतः तन्मात्रतयावशिष्यत एवेत्यर्थः। अथ यो वा **ब्रह्मवित्** स पुण्यकृत् तैजसश्चेति ब्रह्मवित्स्तुतिरेषा। पुण्यकृति तैजसे च योगिनि प्रसिद्धमेता न्माहात्म्यमित्यर्थः ॥ ९ ॥

तत्तन्मार्गानुसारिणां फलम्

अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ।
ततो भूय इव ते तमो य उ विद्यायाꣳ रताः ॥ १० ॥

एवमेतन्मार्गेतरमार्गानुसारिणां फलं प्रकटयति—**अन्धमिति**। ये त्वविद्वांसः साध्यसाधनलक्षणाम**विद्यामुपासते** ते इडादिनाडीमार्गात् उत्क्रम्य स्वर्गाख्यम**न्धं तमः प्रविशन्ति** स्वकृतक्षयतः पुनः कर्मभूमौ पतन्तीत्यर्थः। **य उ** ये तु अपर**विद्यायां रता** व्यवसायिनो भवन्ति ते परमार्थज्ञानफलमपेक्ष्य **ततस्**तस्मात् नीलादिनाडीद्वारादपि शुक्लनाडीद्वारतो **भूयो** बहुतर**मिव तमः** प्रविशन्ति। कथं पुनः धूमादिमार्गादपि अर्चिरादिमार्गगतस्य भूरितमःप्रवेशः? इति चेत्;

उच्यते—धूमादिमार्गफलस्य क्षणिकत्वेन पुनरावृत्तिः भवति। स कदाचित् श्रुत्याचार्यप्रसादतो वेदान्तश्रवणादिना स्वातिरिक्तेषणातो व्युत्थाय झटिति श्रुतज्ञानफलं ब्रह्ममात्रावस्थानलक्षणकैवल्यमेति। तदपेक्षयार्चिरादिमार्गफलब्रह्म-लोकस्य ब्रह्मकल्पान्तस्थायित्वेनार्चिरादिना तत्प्रविष्टस्य कर्मभूमिवत् न सहसा कैवल्यं स्यादिति कालविलंबः ततो भूय इव तमः प्रविशतीत्युक्तं युक्तमित्यर्थः ॥१०॥

अविदुषां स्ववेदनानुरूपफलम्

अनन्दा नाम ते लोका अन्धेन तमसावृताः।
ताꣳस्ते प्रेत्याभिगच्छन्ति अविद्वाꣳसोऽबुधो जनाः ॥ ११ ॥

"नान्यः पन्था अयनाय विद्यते" इति श्रुतिसिद्धपरमार्थज्ञानोपायं विना उपायान्तरालम्बिनो ह्यविद्वांसः स्ववेदनानुरूपं फलं प्राप्नुवन्तीत्याह—**अनन्दा** इति। स्वातिरिक्तप्रपञ्चासंभवब्रह्ममात्रं ये न जानन्ति ते **ह्यविद्वांसः**। किं ते केवलाविद्वांसः? **अबुधश्च** बुधेरवगमार्थस्य क्विप्प्रत्ययान्तस्य धातोः रूपं, आत्मावगतिः, तद्विरला इत्यर्थः। अत एव जननादिधर्मिणो जनाः प्राकृता इत्यर्थः। **ते जना** ये **त्वन्धेन तमसावृता** आच्छादिताः **ते अनन्दा** अनानन्दा **नाम लोकाः** परमानन्दापेक्षया दुःखात्मकाः। तथा-विधान् **तान्** लोकानविद्वांसः **प्रेत्य** मृत्वा**भिगच्छन्ति** परमार्थात् हीयन्त इत्यर्थः ॥ ११ ॥

कस्यचिदेव विदुषः कृतकृत्यत्वम्

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ १२ ॥

अविद्वद्विपरीतो विद्वान् कश्चिदेव कृतकृत्यो भवतीत्याह—**आत्मानमिति**। यः पुरुष एव **पूरुषो** विद्वान् "तदेतत् ब्रह्मापूर्वमनपरं", "विज्ञानमानन्दं

ब्रह्म ", " अथैष एव परम आनन्दः " इत्यादिश्रुत्यनुरोधेन स्वातिरिक्तानात्मप्रपञ्चासंभवप्रबोधसिद्धमात्मानमयमहमस्मीति **विजानीयात् चेत्** तदा तद्वेदनसमकालमेव विद्वान् तन्मात्रतयावशिष्यते। तन्मात्रस्थिते स्वातिरिक्तशरीरशोषणपोषणादिकलनेच्छापह्नवपूर्वकत्वात् कृतकृत्यो भवतीत्यर्थः। कृतकृत्यस्यापि तन्निष्ठाप्रच्युत्यभावाय शरीरेन्द्रियनिग्रहेच्छा स्यादित्यत आह—**किमिच्छन्निति**। स्वात्तब्रह्मनिष्ठाया निष्प्रतियोगिकाचलत्वेन तच्च्युतिस्मृतेरप्यसंभवात् स्वानात्तं **किं फलमिच्छन्**, **कस्य** वा प्रयोजनाय **कामाय** करणसंघात**शरीरं** कृच्छ्रचान्द्रायणादिना **संज्वरेत्** शोषयेत् पोषयेद्वा? तद्दृष्ट्या शोषणपोषणार्हशरीरादिरस्ति नास्तीति विभ्रमो न हि सेद्धुं पारयतीत्यर्थः॥ १२॥

ब्रह्मभावापन्नस्य कर्तव्यताभावः

**यस्यानुवित्तः प्रतिबुद्ध आत्मा अस्मिन् संदेह्ये गहने प्रविष्टः।**
**स विश्वकृत् स हि सर्वस्य कर्ता तस्य लोकः स उ लोक एव॥**

एवं ब्रह्मभावापन्नस्य ब्रह्मरूपत्वेन किंचित्कर्तव्यता स्यादित्यत आह—**यस्येति**। **यस्य** ब्रह्मविदो ब्राह्मणस्यात्मायमहमस्मीति **अनुवित्त** उपलब्धः **प्रतिबुद्धः** स्वमात्रतया साक्षात्कृतः, यः पुरा**स्मिन् संदेह्ये** बहुसन्देहास्पदे **गहने** विषमे विवेकविज्ञानप्रतिपक्षे हृदयकुहरे तत्रत्यलिङ्गशरीरचलनादिप्रवृत्तिनिमित्तत्वेन तद्वृत्तिसहस्रासङ्गतया तद्भावाभावप्रकाशकत्वेन तन्निरूपितप्रकाश्यप्रकाशककलनाविरलत्वेन च प्रविष्ट इव **प्रविष्टः** सोऽयं स्वाज्ञदृष्टिप्रसक्तानात्मप्रपञ्चापह्नवसिद्धः परमात्मा स्वमात्रमवशिष्यते। **स हि** पुनः स्वाज्ञदृष्ट्या मायाबीजांशयोगतो **विश्वकृ**दीश्वरवदवभासते। किमस्य नाममात्रतो विश्वकृत्त्वं? तत्राह—**स हि सर्वस्य कर्तेति**। सर्वप्रपञ्चोत्पत्तिस्थितिप्रलयकृत्त्वात्। किं **तस्य लोको** भिन्नः? तत्राह—**स उ लोक एवेति**। " इदं सर्वं यदयमात्मा ", " अहमेवेदं सर्वं " इति श्रुत्यनुरोधेन सर्वमात्मतया लोक्यत इति लोकशब्देन आत्मा उच्यत इत्यर्थः॥ १३॥

अस्मिन् जन्मन्येव ब्रह्मवेदनम्

**इहैव सन्तोऽथ विद्मस्तद्वयं न चेदवेदीर्महती विनष्टिः ।**
**ये तद्विदुरमृतास्ते भवन्ति अथेतरे दुःखमेवापियन्ति ॥ १४ ॥**

यतः पर एवात्मा ब्राह्मणेन स्वमात्रतया वेदितव्यः स्वाज्ञदृष्ट्या गहने प्रविष्टोऽप्यसंसारी भवति स हि विश्वस्य कर्ता । वस्तुतः तत्सर्वकलनापह्नवसिद्धब्रह्ममात्रतयावशिष्यत इत्यस्मिन् जन्मन्येव ब्राह्मणेन वेदितव्यः । अन्यथा महाननर्थो भवेदित्याहायं मन्त्रः—**इहे**ति । **इहैव** स्वाज्ञानविकल्पितदेहे वसन्तो **वयं** स्वविकल्पिताविद्यापदतत्कार्यजातापह्नवसिद्धं ब्रह्म **अथ** स्वमात्रमिति **विद्मो** विजानीमः । एवं चेत् कृतकृत्या भविष्याम इत्यर्थः । **न चेदि**हा**वेदीः** न वयमेवं विदितवन्तश्चेत् का हानिः ? इत्यत्र—**महती** अनन्तकोटिजन्मादिलक्षणा **विनष्टिः** । यस्मादेवं तस्मात् वयं निष्प्रतियोगिकब्रह्ममात्रवेदनसमकालं तन्मात्रतयावशिष्याम इत्यर्थः । वयमिव **ये** ब्रह्म स्वमात्रमिति **विदुः** त एवा**मृता** मुक्ता **भवन्ति** । यद्येवमि**तरे** न विदुः अब्रह्मविदस्ते जन्ममरणादिलक्षणं **दुःखमेवापियन्ति** । न हि कदापि ते परमसुखं भजन्ति । यतो ब्रह्मज्ञानतो जन्मादिदुःखपरम्परा एनं न मुञ्चति अतो जनिमद्भिः अपारदुःखध्वान्तग्रासचित्सूर्यं ब्रह्म स्वमात्रमिति वेदितव्यम् । एवं वेदनसमकालं तेऽपि परमसुखं भजन्तीत्यर्थः ॥ १४ ॥

यः स्वात्मानं जानाति सोऽयमात्मैव

**यदैतमनुपश्यत्यात्मानं देवमञ्जसा ।**
**ईशानं भूतभव्यस्य न ततो विजुगुप्सते ॥ १५ ॥**

यः श्रुत्याचार्यमुखतः स्वात्मानं जानाति सोऽयमात्मैव भवतीत्याह—**यदे**ति । **यदा** यस्मिन् काले श्रुत्याचार्यदर्शितवर्त्मना **एतं** प्रत्यगभिन्नं परमा**त्मानं अनुपश्यति** साक्षात्करोति, किंविशेषणविशिष्टं ? इत्यत्र स्वमात्रतया द्योतनात्

**देवं, भूतभव्यस्य** तत्कालावच्छिन्नप्राणिपटलस्य कर्माध्यक्षत्वेन **ईशानमहमस्मीति** ज्ञात्वा **ततः** तद्वेदनान्तरं स्वातिरिक्तदेहादिकं **न** हि विशेषेण **जुगुप्सते** गोपायितुं नेच्छति। तथा चोक्तं—

किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्।

इति। स्वात्ममात्रावगतेः देहाद्यनात्मा अस्ति नास्तीति विभ्रमापह्नवपूर्वकत्वात्। आत्मवित् आत्मैव भवतीत्यर्थः॥ १५॥

अपरब्रह्मभेदोपासकानामपि स्वानुरूपफलम्

**यस्मादर्वाक् संवत्सरः अहोभिः परिवर्तते।**
**तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्॥ १६॥**

आत्मानमयमहमस्मीत्यञ्जसा पश्यतः तद्भावापत्तिरुक्ता। इदानीमपरब्रह्म-भेदोपासका अपि कामनाधिया तमात्मानमुपास्य स्वभावनानुरूपं फलं लभेयुरित्याह—**यस्मादिति**। **यस्मादीशानादर्वाक् संवत्सरः** कालात्मा स्वावयवा**होभि**रहोरात्रैः **परिवर्तते** परिच्छिद्यते तादृशकालात्मनोऽपि कारणं स्वभास्यादित्यादि**ज्योतिषा**मपि भासकज्योतीरूपमात्मानं **आयु**रिति **देवा उपासते**। यतो ज्योतिर्न म्रियतेऽतस्तद**मृतं ज्योतिः**। यस्मादायुर्गुणविशिष्टं ज्योतिरुपास्य देवा आयुष्मन्तो भवन्ति तस्मादायुष्कामेन एवमुपास्यं ब्रह्मेत्यर्थः॥ १६॥

तदभेदोपासकानां ततोऽप्युत्कृष्टफलम्

**यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः।**
**तमेव मन्य आत्मानं विद्वान् ब्रह्मामृतोऽमृतम्॥ १७॥**

किञ्च तदभेदोपासकानां ततोऽप्युत्कृष्टफलमाचष्टे—**यस्मिन्निति**। **यस्मिन्** ब्रह्मण्यक्षरे **पञ्च पञ्चजना** गन्धर्वादयः गन्धर्वाः पितरो देवाः असुरा

रक्षांसि **आकाशश्च** ओतप्रोततया यत्र **प्रतिष्ठितः**, उक्तं हि "एतस्मिन्नु खल्वक्षरे गार्गि! आकाश ओतश्च प्रोतश्च" इति। य एतत्सर्वकल्पनाधारस्तमेतमेवात्मानममृतं ब्रह्म अहमस्मीति **मन्ये** जान इत्यर्थः। पुराहमज्ञानान्मर्त्यो भूत्वा श्रुत्याचार्यप्रसादलब्धज्ञानतो **विद्वान्** सन् मर्त्यभावं विहाय **विद्वानमृतो** भूत्वा **अमृतं ब्रह्म** स्वमात्रमिति मन्यते तदेव भवतीत्यर्थः ॥ १७ ॥

विद्वद्गम्यब्रह्मस्वरूपम्

**प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुः।**
**ते निचिक्युर्ब्रह्म पुराणमग्र्यम् ॥ १८ ॥**

विद्वद्गम्यं ब्रह्म कीदृशं? इत्यत आह—**प्राणस्येति**। यः प्राणादिप्राणननिमित्तं स हि प्राणस्यापि प्राणः। तं **प्राणस्यापि प्राणं** तथा **चक्षुषोऽपि चक्षुरुत श्रोत्रस्यापि श्रोत्रं** काष्ठलोष्टसमप्राणचक्षुःश्रोत्रादिकरणजातं येन चैतन्यज्योतिषा प्राणनादिव्यापारवत् भवति तद्धि चक्षुराद्यनुग्राहक**मनसोऽपि मनः** मननादिप्रवृत्तिनिमित्तमिति **ये विदुः ते** ब्रह्मविद्वरीयांसः यत्करणग्रामप्रवृत्तिनिमित्तं यद्भावाभावप्रकाशकं यद्वस्तुतो निष्प्रतियोगिकब्रह्ममात्रतया विशिष्टं तदेव हि **ब्रह्म पुराणं** चिरन्तनत्वात्। स्वाज्ञदृष्टिप्रसक्तविकृतिसामान्यासङ्गतया अग्रे भातत्वात् **अग्र्यमिति निचिक्युः** निश्चयेन ज्ञातवन्तः। "तद्यदात्मविदो विदुः" इति श्रुतेः। वेदनसमकालं कृतकृत्या भवन्तीत्यर्थः ॥ १८ ॥

तद्ब्रह्मदर्शनोपायः

**मनसैवानुद्रष्टव्यं नेह नानास्ति किंचन।**
**मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ १९ ॥**

तद्ब्रह्मदर्शनोपायमाचष्टे—**मनसेति**। श्रुत्याचार्योपदिष्टपरमार्थज्ञानसंस्कृत**मनसैवानुद्रष्टव्यम्**। किं तत्? ब्रह्मयाथात्म्यम्। किमिति? स्वातिरिक्तकलना-

पह्ववसिद्धं ब्रह्म निष्प्रतियोगिकभावरूपम् । स्वाज्ञदृष्टिप्रसक्ततदतिरिक्तं तु निष्प्रतियोगिकाभावरूपम् । परमार्थदृष्ट्या न तयोर्व्याप्यव्यापकभास्यभासकाधेयाधारभावादिकलना सेद्धुं पारयतीति ब्रह्मणो नानात्वेनाद्वैतरूपत्वात् । स्वाज्ञानुभूतिप्रमाणसिद्धनानात्वे सति कथमद्वैतं निष्प्रतियोगिकं? इत्यत आह—**नेह नानास्ति किंचनेति** । इह निष्प्रतियोगिकाद्वैतब्रह्ममात्रे दिवान्धस्थानीयस्वाज्ञविकल्पितनानात्वस्य तदनुभूतसूर्याद्यभाववत् मृषात्वात् तत् कथं प्रमाणपदवीमर्हति? इति नानानिषेधः प्रसक्तः । तस्मात्तन्निषेधमर्हतीति । इह निष्प्रतियोगिकब्रह्ममात्रे किञ्चन किञ्चिदपि स्वाज्ञविकल्पितनाना वा स्वज्ञविकल्पिततन्निषेधो वापि नास्ति शशविषाणवदवस्तुत्वात् । तथा च श्रुतिः "पश्यतेहापि सन्मात्रमसदन्यत्", "ब्रह्मव्यतिरिक्तं न किंचिदस्ति" इति,

तथा च—

नात्मभावेन नानेदं न स्वेनापि कथञ्चन ।
न पृथङ्नापृथक् किंचिदिति तत्त्वविदो विदुः ॥

इति गौडपादाचार्योक्तेश्च । इत्थं निष्प्रतियोगिकत्वेन प्रसिद्धब्रह्ममात्रे **यः** स्वाज्ञो नानात्वमारोपयति **नानेव** वा **पश्यति सोऽयमविद्वान् मृत्योः** जनिमृतिलक्षणसंसारात् **मृत्युमविच्छिन्नप्रवाहरूपमाप्नोति** अनन्तकल्पकोटिकालं संसरतीत्यर्थः ॥ १९ ॥

अनानापदमेव सदानुसन्धेयम्

एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम् ।
विरजः पर आकाशादज आत्मा महान् ध्रुवः ॥ २० ॥
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायात् बहून् शब्दान् वाचो विग्लापनꣳ हि तत् ॥ इति ॥

"उदरमन्तरं कुरुते", "अथ तस्य भयं भवति" इति श्रुतितो नानात्वदर्शनं भयहेतुः। अतोऽनानाग्रासमनानापदमेव सदानुसन्धेयमित्याह—**एकधेति**। **यदेतत्** ब्रह्ममात्रप्रबोधं विना प्रत्यक्षादिप्रमाणशतेनापि न प्रमीयत इत्यप्रमेयम**प्रमेयम्**। कूटस्थत्वात् **ध्रुवम्**। तत् किम्? स्वाज्ञविकल्पित-स्वातिरिक्तप्रपञ्चे सत्यसति **एकधैवानुद्रष्टव्यम्**। अप्रमेयं द्रष्टव्यमिति विरुद्धमुच्यत इति चेन्न; उभयसिद्धेरप्यविरोधात्। प्रत्यक्षादिप्रमाणमेयं स्वाविद्यापदतत्कार्यजातं तदपह्नवसिद्धमप्रमेयं तत् स्वातिरेकेण द्रष्टुमशक्यमपि स्वमात्रतया द्रष्टुं शक्य-मित्यत्र—"अहमस्मीत्यभिध्यायेत् ध्येयातीतं" इति श्रुतेः। स्वमात्रसिद्धे स्वाति-रिक्तापह्नवपूर्वकत्वात्। यदप्रमेयं तत् स्वमात्रतया द्रष्टुं शक्यमित्युभयमप्यविरुद्ध-मित्यर्थः। यस्त्वप्रमेयतया दृष्टः सोऽयमात्मा **विरजः** रजआदिगुणप्रभवधर्माधर्म-विरलत्वात्। अत एव**आकाशादे**रपि **परः** ततोऽपि सूक्ष्मत्वात्। सूक्ष्मत्वे स्तम्बादिवत् जन्मभाक् स्यादित्यत आह—**अज** इति। जन्मादिहेतुमायावैरल्यात् स्वतः परतो वा स्वयं न जायते, स्वस्माद्वा किंचिदपि न जायत इत्यजत्वं निरङ्कुशमित्यर्थः। अत एवाय**मात्मा महान्** त्रिविधपरिच्छेदशून्यत्वात्। अत एवायं **ध्रुवः** सन्मात्रत्वात्। य एवमीदृशविशेषणविशिष्टः **तमेवात्मानं**,

आत्ममात्रमिदं सर्वमात्मनोऽन्यन्न किंचन।

इति **धीरो** ब्रह्मविद्वरो देशिकशास्त्रोपदेशतो **विज्ञाय ब्राह्मणो** ब्रह्मविद्वरीयान् भूत्वा स्वातिरिक्तवस्तुजिज्ञासापह्नवपूर्वकं स्वमात्रपर्यवसानलक्षणां **प्रज्ञां** ज्ञप्तिरूपां **कुर्वीत**। यद्वा—प्रज्ञोत्पत्तिहेतुसाधनचतुष्टयसंन्यासपुरस्सरवेदान्तश्रवणमननादिकं कुर्यादित्यर्थः। ततो वेदान्तश्रवणातिरेकेण **बहून् शब्दान् नानुध्यायात्** नानुचिन्तयेत्। स्वात्मप्रतिपत्तिविपरीतव्यापृतिनिरसनपूर्वकमात्मावगतिमात्रहेतु-व्यापृतिरनुज्ञायते। "ओमित्येवं ध्यायथ आत्मानमन्या वाचो विमुञ्चथ" इति श्रुतेः। अन्यथा बहुशब्दानुकरणं तु **वाचो विशेषेण ग्लापनं** ग्लानिकरं **हि तत्**। यावत् ब्रह्मावगतिः तावत् तदुपायव्यापृतिर्भवेत्। इतिशब्दो मन्त्रपरिसमाप्त्यर्थः॥ २०–२१ ॥

स्वात्मयाथात्म्ये कृत्स्नवेदसमन्वयः

स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिन् शेते सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः स न साधुना कर्मणा भूयान् नो एवासाधुना कनीयान् एष सर्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन एतमेव विदित्वा मुनिर्भवति एवमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति एतद्ध स्म वा एतत्पूर्वे विद्वाꣳसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय अथ भिक्षाचर्यं चरन्ति या ह्येव पुत्रैषणा सा वित्तैषणा या वित्तैषणा सा लोकैषणा उभे ह्येते एषणे एव भवतः । स एष नेति नेत्यात्मा अगृह्यो न हि गृह्यते अशीर्यो न हि शीर्यते असङ्गो न हि सज्यते असितो न व्यथते न रिष्यति एतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमिति उभे उ हैवैष एते तरति नैनं कृताकृते तपतः ॥ २२ ॥

ब्राह्मणतो मन्त्रतश्च स्वात्मयाथात्म्यं यथावत् प्रतिपादितम् । तथा चास्मिन् प्रपाठके उक्तानुवादमनूद्य योऽर्थः प्रकाशितः तत्रैव कृत्स्नवेदसमन्वयो भवतीत्यर्थप्रकाशनाय इयं खण्डिकारभ्यते—**स वा** इति । **स** इत्युक्तः परामृश्यते । कथम् ? पूर्वं जनकप्रश्नारम्भे कतम आत्मा ? इति योऽयं विज्ञानमयः प्राणेष्वित्येतदुक्तं सोऽयं विज्ञानमयः स्वयं ज्योतिरात्मा स्वात्तो-

पाधितद्धर्मणामाविद्यकत्वेन कारणतुल्योपदेशेन स्वातिरिक्तास्तिताभ्रमतो मोक्षितः परमात्मभावमापादितः खलु । **स वा एष महानज आत्मा** पर एव नान्य इत्यर्थः । **योऽयं विज्ञानमयः प्राणेष्विति** व्याख्यातम् । **य एषोऽन्तर्हृदये** हृत्पुण्डरीकमध्ये लिङ्गशरीराश्रयत्वेन योऽयमव्याकृता**काशो** वर्तते लिङ्गशरीरावच्छिन्ने **तस्मिन् शेते** तद्वृत्तिप्रवृत्तिनिमित्ततया तिष्ठति । यद्वा— संप्रसादकालीनहृदयाकाशे निरुपाधिकत्वेन स्वस्वभावे शेते । क्वैष तदाभूत् ? इत्यस्य प्रतिवचनत्वेन व्याख्यातमेतत् । यः स्वभावमापन्नो विज्ञानमयः स हि **सर्वस्य** ब्रह्मेन्द्रादेः **वशी** ब्रह्मादीनां तद्वशवर्तित्वात् । "एतस्य वा अक्षरस्य प्रशासने" इत्युक्तत्वात् । न केवलं वशी किंतु **सर्वस्य ईशानः** ईशिता च "भीषास्मात् वातः पवते" इत्यादिश्रुतेः । किमीशितृत्वं राजभृत्ययोरिव सातिशयं ? तत्राह—**सर्वस्याधिपतिरि**ति । सर्वात्मत्वेन सर्वमधिष्ठाय पालयितृत्वात् । यतः सर्वाधिपतिः अत ईशानः । यत एवमतो वशीति विशेषणत्रयस्य हेतुहेतुमद्भावो द्रष्टव्यः । य एवं हृद्यन्तर्ज्योतिः विज्ञानमयः पुरुष उक्तः **सोऽयं** शास्त्रीय**कर्मणा साधुना न भूयान्न वर्धते नो** एवायं शास्त्रप्रतिषिद्धेना**साधुना** कर्मणा **कनीयानल्पतरो** भवति । पूर्वावस्थातो जात्वपि न वर्धते न हीयते चेत्यर्थः । सर्वविकारास्पृष्टचिद्रूपत्वात् परानुग्रहादिकर्मजविकृतिः स्यादित्यत आह—**एष सर्वेश्वर** इति । ईश्वरस्य सर्वप्राणिकृतकर्माध्यक्षत्वेऽपि तत्रात्मात्मीयाभिमानवैरल्यतो विकृतत्वं सिद्धमित्यर्थः । किञ्च **एष भूताधिपति**रित्युक्तार्थम् । **एष भूतपालः** सर्वपालयितृत्वात् । **एष सेतुर्विधरणः** सर्वविधारयितृत्वात् । किमर्थम् ? **एषां** सत्यादिचतुर्दश**लोकानामसंभेदाय** असाङ्कर्याय परमेश्वर एव सेतुरिव सेतुः । तत्तद्वर्णाश्रमादिमर्यादापालकत्वात् सेतुत्वं युज्यते । एवंविदात्मैवास्य ज्योतिर्भवतीति विद्याफलम् । काम्यैकदेशवर्जितं कृत्स्नं कर्मकाण्डं सत्त्वशुद्धिहेतुभूतं सत् तादर्थ्येन विनियुज्यत इत्याह —**तमि**ति । यः स्वयंज्योतिः महानज आत्मेति प्रकृतः **तमेतमौ**पनिषदं पुरुषं मन्त्रब्राह्मणात्मक**वेदानुवचनेन ब्राह्मणा विविदिषन्ति** तद्याथात्म्यमुपनिषद्वाक्यैः वेदितुमिच्छन्ति । यद्वा— कर्मकाण्डगोचरमन्त्रब्राह्मणात्मकवेदानुवचनेन विविदिषन्ति । कथं ? **यज्ञेन**

निष्कामबुद्ध्यानुष्ठितेन चित्तशुद्धिमेत्य अथ औपनिषदं पुरुषं विविदिषन्ति " विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः " इति,

ज्ञानमुत्पद्यते पुंसां क्षयात् पापस्य कर्मणः ।

इति श्रुतेः स्मृतेश्च । एवं विधिवत् यज्ञसंस्कृतस्य आदौ सत्त्वशुद्धिर्जायते । ततो ज्ञानमप्रतिबद्धं भविष्यति । ज्ञानसमकालं कृतकृत्यो भवतीत्यर्थः । तथा **दानेन** तस्यापि पापक्षयपूर्वकं सत्त्वशुद्धिप्राप्यज्ञानद्वारा मुक्तिहेतुत्वात् । **तपसा** कृच्छ्रचान्द्रायणादिना विचारात्मकेन वा विविदिषन्ति । तथा च श्रुतिस्मृती— " तपसा ब्रह्म विजिज्ञासस्व ",

तपसा प्राप्यते सत्त्वं सत्त्वात् संप्राप्यते मनः ।
मनसा प्राप्यते त्वात्मा ह्यात्मापत्त्या निवर्तते ॥

इति । " तपसा कल्मषं हन्ति " इति च । **तथानाशकेन** प्राणमात्रधारणहेतुना " प्राणसन्धारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन् " इति श्रुतेः । न त्वशननिवृत्तिः, तथात्वे मृतिः स्यात् । यद्वा—वेदपठनपाठनयज्ञदानतपःशब्देन निष्कामकर्मोच्यते । तत्सत्त्वशुद्धिजज्ञानतो मोक्षसाधनं भवतीति कर्मकाण्डस्यापि मुक्तिहेतुत्वमभिहितम् । एवं यथाप्रकाशितोपायेन आत्मानं विदित्वा मुनिर्योगी भवति । न हि प्रकारान्तरेण मुनित्वं संभवति " मननात् स मुनिर्भवति " इति स्मृतेः । **एतमेव विदित्वा मुनिर्भवतीत्यवधारणात्** न ह्युपायान्तरेण मुनित्वं संभवति । विदित्वा मुनिर्भवतीत्यनेन विद्वत्संन्यासोऽभिहित इत्याह—**एतमेवेति** । स्वमात्रतया एतस्मिन् विदिते " तत् केन कं पश्येत् " इत्यादिक्रियाकारकफलासंभवश्रुत्यनुरोधेन अथ मौनमेवावशिष्यते । अत एव **एतमेव** यथावत् विदित्वा क्रियाकारकफलमार्गतः **प्रव्राजिनः** ब्रह्ममात्र**लोकमिच्छन्तः प्रव्रजन्ति** सर्वकर्मसंन्यासं कुर्वन्तीत्यर्थः । एतमेवेत्यवधारणात् बाह्यलोकत्रयाभिलाषिणां न हि पारिव्राज्याधिकारोऽस्तीत्यवगम्यते । तेषां लोकत्रयावृतदृष्टित्वात् । यथा पुत्रकर्मविद्यादि लोकत्रयसाधनं तथा तत्संन्यास एव स्वात्मलोकाप्तिसाधनमित्यर्थः । यस्मादेवं तस्मादात्मलोकार्थिनः सर्वैषणानिवृत्ति-

पारिव्राज्यकरणानुकूलार्थवादवाक्यमनुक्रामति—एतदिति। **एतत् ह स्म वै** किल **पूर्वे** प्राक्कालीना **विद्वांसः** बाह्यलोकत्रयोपलक्षितप्रजां **न कामयन्ते**। पुत्रादि लोकत्रयसाधनं नानुतिष्ठन्तीत्यर्थः। मृगतृष्णिकायामुदकदर्शिन इव ये त्वविद्वांसः ते प्रजादिसाधनैः लोकत्रयमिच्छन्तु, न वयमित्याह—**किमिति**। बाह्यानात्मलोका यत्र समाप्यन्ते तस्मिन्नात्मलोके स्वमात्रधियाधिष्ठिते मरुमरीचिकास्थानीयानात्मलोकत्रयसाधनप्रजादिना **किं करिष्यामः**? आत्मलोकावगतेरनात्मलोकतत्कार्याभावप्रबोधपूर्वकत्वात्। **येषां नोऽ**स्माकं अनात्मप्रपञ्चापह्नवसिद्धो**ऽयमात्मा** स्वमात्रतया लोक्यत इति **लोको** भवति। एवं स्वात्मलोकाः किं कृतवन्तः? इत्यत आह—**त** इति। **ते ह स्म** किल **पुत्रैषणायाश्चे**त्यादि न **रिष्यति** इत्यन्तं व्याख्यातम्। यः स्वातिरिक्तकलना नेति नेति स्वमात्रदृक् **तमेतं** ब्रह्मभावारूढं **उ हैवैते** पुण्यपापे **न तरतः** नाप्नुत इत्यर्थः। तद्दृष्ट्या स्वातिरेकेण पुण्यपापवैरल्यादित्यत्र "पुण्यं पापं च चिन्मात्रं" इति "स्वाज्ञदृष्टिप्रसक्तपुण्यपापादि स्वज्ञदृष्ट्या चिन्मात्रमेव" इति श्रुतेः। यतः पुण्यपापादिकं स्वाज्ञदृष्टिप्रसक्तं अतः **पापं** कर्मा**करवं** कृतवानस्मि तेन नरकपातः स्यादिति। तथातो यज्ञदानादिलक्षणं **कल्याणं** कर्मा**करवं** कृतवानस्मि। तेनाहं देहपातानन्तरं तत्फलं स्वर्गं विशामीति च विषादहर्षाविनं ब्रह्मविदं न स्पृशतः। एवं विषादहर्षमूलभूते पुण्यपापे सफलकर्मणी **एष** ब्रह्मवित् **तरति**। ब्रह्मज्ञानसमकालमुभे अपि कर्मणी क्षीयेते इत्यर्थः। किञ्च **कृतं** नित्यं कर्म तदकरणम**कृतं** च **कृताकृते नैनं तपतः** तद्दृष्ट्या कृताकृतप्रभवसन्तापहेतुस्वाज्ञानवैरल्यादित्यर्थः ॥ २२ ॥

सम्यग्ज्ञानिनः सर्वकर्माभावः

तदेतदृचाभ्युक्तम्—

एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्।
तस्यैव स्यात् पदवित् तं विदित्वा न लिप्यते कर्मणा
पापकेन ॥ इति ॥

तस्मादेवंवित् शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति नैनं पाप्मा तरति सर्वं पाप्मानं तरति नैनं पाप्मा तपति सर्वं पाप्मानं तपति विपापो विरजोऽविचिकित्सो ब्राह्मणो भवति एष ब्रह्मलोकः सम्राट्! एनं प्रापितोऽसीति होवाच याज्ञवल्क्यः सोऽहं भगवते विदेहान् ददामि मां चापि सह दास्याय इति ॥ २३ ॥

ब्रह्मज्ञानाग्निना विद्वान् निर्दहेत् कर्मबन्धनम्। इति,

"क्षीयन्ते चास्य कर्माणि" इति,

ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुते तथा।

इत्यादिश्रुतिस्मृत्यनुरोधेन सम्यज्ज्ञानिनः सर्वकर्माभावो ब्राह्मणेन प्रतिपादितः। तमेतमर्थं मन्त्रोऽप्यनुवदतीत्याह—**तदेतदिति**। ब्राह्मणेन योऽर्थोऽभिहितः तमेतमर्थं मन्त्रेणाभ्युक्तं प्रकाशितम्। किमिति? स्वातिरिक्तं नेति नेतीति स्वमात्रपदवीं गतस्य **ब्राह्मणस्य** ब्रह्ममात्रावस्थानलक्षणोऽयमेष **महिमा नित्यः** स्वाभाविकत्वात्। कथं पुनरस्य नित्यत्वं? इत्यत्र हेतुमाह—**नेति**। शुभ**कर्मणा न वर्धते** वृद्धिविक्रियां नाप्नोति। तथाशुभेन कर्मणा **नो कनीयान**पक्षयविक्रियां नाप्नोति। एवमुपचयापचयविक्रियास्पृष्टत्वेनाविक्रियत्वात् नित्यत्वं सिद्धमित्यर्थः। यस्मादेवं तस्मात् **तस्यैव** महिम्नः स्वरूपमेव पदं, तद्याथात्म्यज्ञः **पदवित् स्यात्**। सोऽयं पदवित् महिमानं विदित्वा धर्माधर्मलक्षणपुण्यपापयोरपि स्वातिरिक्तधिया हेयत्वेन पापकत्वम्। तेन **पापकेन कर्मणायं न लिप्यते** न संबध्यत इत्यर्थः। यस्मात् ब्राह्मणस्य महिमा स्वातिरिक्तपुण्यपापग्रासः **तस्मात् एवंवित्** बाह्येन्द्रियेन्द्रियार्थतः **शान्तः** तथा अन्तःकरणवृत्तितत्कार्यतो **दान्तः** तथा सर्वैषणाविनिर्मुक्त **उपरतः** संन्यासीत्यर्थः। द्वन्द्वसहिष्णुः **तितिक्षुः** बाह्यान्तःकरणव्यापृतिरहितः **समाहितो भूत्वा**यम**ात्मन्येव** स्वदेहे

**स्वात्मानं** प्रत्यक्चेतयितारं परमात्माभेदेन **पश्यति**। किं देह एव पश्यति? इत्यत्र यद्यत् स्वाज्ञदशायां स्वातिरिक्तत्वेन दृष्टं तत्तत् **सर्वमात्मानं** आत्ममात्रं **पश्यति**। न ह्यात्मनोऽतिरिक्तमणुमात्रं वा पश्यति स्वातिरिक्तस्यालब्धात्मकत्वात्।

आत्ममात्रमिदं सर्वमात्मनोऽन्यन्न किञ्चन।

इति श्रुतेः। एवं स्वात्मानं निष्प्रतियोगिकब्रह्ममात्रं पश्यन्त**मेनं** वस्तुदृष्ट्या लब्धात्मकोऽयं **पाप्मा न हि तरति** न स्प्रष्टुं पारयति। अयमात्ममात्रदृक् स्वमात्रतया **सर्वं पाप्मानं तरति** ग्रसति। **न चैनं** कृताकृतलक्षणः **पाप्मा** स्वफलत**स्तपति** न स्पृशति। अयं तु **सर्वं पाप्मानं तपति** स्वातिरिक्तहेतुनापह्नवं करोति। यत एवमतोऽयं **विपापो विरजोऽविचिकित्सः**। निष्पापत्वान्निर्गुणत्वान्निर्विचिकित्सत्वादयं "ब्रह्ममात्रमसन्न हि" इति श्रुत्यनुरोधेन स्वातिरिक्तासदविद्यापदतत्कार्यमस्तिनास्तीति विभ्रमासंभवप्रबोधतो **ब्राह्मणो भवति** मुख्यावधूतो भवतीत्यर्थः। **योऽयमेष ब्रह्मलोकः** यत्र हि ब्रह्म स्वमात्रं लोक्यते हे **सम्राट्**! योऽयमेष ब्रह्मलोकः परमाभयरूपेणावशिष्यते **तमेतं** परमाभयलक्षणं ब्रह्मलोकं **प्रापितोऽसीति होवाच याज्ञवल्क्यः**। एवं याज्ञवल्क्येन परमाभयं प्रापितः सम्राडेवमाह—किमिति? **सोऽह**मेवं त्वया परमाभयं प्रापितः सन् **भगवते** तुभ्यं यावत् **विदेहान्** देशान् **तैः सह मां च दास्याय ददामीति**। समाप्तेयं पुरुषार्थोपयोगिनी ब्रह्मविद्या। एतावद्धि पुरुषेण ज्ञातव्यं यत् प्राप्य ब्राह्मणः कृतकृत्यो भवति। एतद्धि कृत्स्नवेदानुशासनमित्यर्थः॥ २३॥

आख्यायिकोपसंहारः

स वा एष महानज आत्मान्नादो वसुदानो विन्दते वसु य एवं वेद॥ २४॥

आख्यायिकामुपसंहरति—**स वा** इति। सोऽयं जनकयाज्ञवल्क्याख्यायिकायां प्रपञ्चितः **स वा एष महानज आत्मा** स्वाज्ञदृष्टिप्रसक्तान्नं स्वावशेषतयात्तीत्य**न्नादः** प्रसक्तप्राणिकर्मानुरोधेन वसु कर्मफलं ददातीति **वसुदानः**।

तमेतमन्नादवसुदानगुणविशिष्टं **यो वेद** स सर्वात्मा सन् सर्वमन्नमत्ति । **वसु** कर्मफलजातं **विन्दते** लभते ॥ २४ ॥

सर्ववेदान्तार्थनिर्देशः

स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म अभयं वै ब्रह्म अभयꣳ हि वै ब्रह्म भवति य एवं वेद ॥ २५ ॥

इदानीं बृहदारण्यकोपनिषदि सर्ववेदान्तेषु च योऽर्थोऽभिहितः एतावान् सोऽर्थ इत्यस्यां खण्डिकायां निर्दिशति—स वा इति । **स वा एष महानज आत्मा** प्रज्ञानघनः स्वारोपिताविद्यापदवन्न जीर्यत इत्य**जरः** यतो न जीर्यते । अतोऽय**ममरः** यतो जनिमृतिरहितः । अत एवा**मृतः** । अमृतत्वादेवा**भयः** स्वस्यैव सर्वग्रासत्वेन स्वभयजनकमृत्युवैरल्यात् । अयमेवार्थो हि पुरा "अभयं वै जनक ! प्राप्तोऽसि" इति योऽर्थोऽभिहितः तदुपसंहरणार्थम् । **अभयं ब्रह्म** स्वमात्रतयोपबृंहणात् । **ब्रह्मै**वा**भय**मिति प्रसिद्धमेतत् । लोके **यः** स्वाज्ञदृष्टि-विकल्पितस्वातिरिक्तास्तिताप्रभवभयसामान्यापह्नवसिद्ध**मभयं ब्रह्म** स्वमात्रमिति **वेद** सो**ऽभयं हि वै ब्रह्म भवति** निष्प्रतियोगिकब्रह्ममात्रतयावशिष्यते "यदव-शिष्यते तदद्वयं ब्रह्म" इति श्रुतेः ॥ २५ ॥

इति चतुर्थं ब्राह्मणम्

---

## पञ्चमं मैत्रेयीब्राह्मणम्

याज्ञवल्क्यचरितम्

अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च तयोर्ह मैत्रेयी ब्रह्मवादिनी बभूव स्त्रीप्रज्ञैव तर्हि कात्यायनी अथ ह याज्ञवल्क्योऽन्यद्वृत्तमुपाकरिष्यन् ॥ १ ॥

मधुकाण्डे यत् ब्रह्मतत्त्वं निर्धारितं आगमात्रतः पुनस्तस्यैव याज्ञवल्कीय-काण्डेन तर्कितोऽपि प्रतिपक्षीभूतान् वादेन निर्जित्य सन्मात्रं ब्रह्म "विज्ञानमानन्दं ब्रह्म" इति समर्थितम्। तदेव हि पुनः षष्ठे शिष्याचार्यसंवादरूपेण उपसंहृतम्। इदानीं तु तन्निगमनस्थानीयं मैत्रेयीब्राह्मणमारभ्यते। एतत् कृत्स्नं ब्राह्मणं प्रायशो मधुकाण्डे व्याख्यातम्। यानि तत्र न व्याख्यातानि तान्येवात्र व्याख्यायन्ते—अथेति। **अथे**ति हेत्वर्थ आनन्तर्यार्थो वा। हेतुप्रधानानि हि वाक्यानि पुरा दृश्यन्ते। तदनन्तरमागमप्रधानेन ससंन्यासमात्मज्ञानममृतत्व-साधनमित्यवगम्यते। यत एवमतोऽमृतत्वप्रतिपित्सुभिः तर्कागमाभ्यां स्वातिरिक्त-कलनासंन्याससिद्धस्वमात्रज्ञानं तन्मात्रावस्थानलक्षणकैवल्यसाधनमिति प्रतिपत्त-व्यमित्यर्थः। अत्र हकारो वृत्तावद्योतकः। पुरावृत्ताख्यायिका तु—**याज्ञवल्क्य-स्य द्वे भार्ये बभूवतुः** आस्ताम्। के ते? इत्यत्र—नामतो **मैत्रेयी च कात्यायनी च**। **तयोर्ह** किल **मैत्रेयी ब्रह्मवादिनी बभूव**। अपरा **कात्यायनी** तु गृहप्रयोजनान्वेषणलक्षण**स्त्रीप्रज्ञैव** तर्हि तस्मिन् काले। अथैवं सति **याज्ञवल्क्यः** स्वात्तगार्हस्थ्यवृत्तात् **अन्यत्** वृत्तं पारिव्राज्य**मुपाकरिष्यन्** उपाचिकीर्षुः सन् उवाचेत्यर्थः॥ १ ॥

तस्य पारिव्राज्यकथनम्

**मैत्रेयि! इति होवाच याज्ञवल्क्यः प्रव्रजिष्यन् वा अरेऽय-मस्मात्स्थानादस्मि हन्त तेऽनया कात्यायन्या अन्तं करवा-णीति॥ २ ॥**

किमुवाच? इत्यत आह—**मैत्रेयी**ति। **याज्ञवल्क्यः** प्रव्रजिष्यन् ज्येष्ठ-भार्यां **मैत्रेयि! इति** संबोध्य त्वमनुजानीहि। **अस्मात्** गार्हस्थ्यात् **प्रव्रजिष्यन् अस्मि**। शिष्टं व्याख्यातम्॥ २ ॥

मैत्रेयीप्रश्नः

सा होवाच मैत्रेयी यन्नु म इयं भगोः सर्वा पृथिवी वित्तेन पूर्णा स्यात् स्यां न्वहं तेनामृता आहो३नेति नेति होवाच याज्ञवल्क्यो यथैवोपकरणवतां जीवितं तथैव ते जीवितꣳ स्यादमृतत्वस्य तु नाशास्ति वित्तेनेति ॥ ३ ॥ सा होवाच मैत्रेयी येनाहं नामृता स्यां किमहं तेन कुर्यां? यदेव भगवान् वेद तदेव मे विब्रूहीति ॥ ४ ॥

सैवमुक्ता उवाच—सा हेति। वित्तसाध्येन कर्मणा किमहम**मृता आहो नेति? नेति होवाच याज्ञवल्क्यः** हीत्यादि समानम् ॥ ३–४ ॥

याज्ञवल्क्येन उपदेशः

स होवाच याज्ञवल्क्यः प्रिया वै खलु नो भवती सती प्रियमवृधत् हन्त तर्हि भवति! एतद्व्याख्यास्यामि ते व्याचक्षाणस्य तु मे निदिध्यासस्वेति ॥ ५ ॥

**प्रियैव खलु नोऽस्मभ्यं भवती प्रियमेवावृधत्** वर्धितवत्यसि। अतस्तुष्टोऽहम्। हन्त! इच्छसि अमृतत्वसाधनं तत् ते तुभ्यं **व्याख्यास्यामि** शृणिवत्यर्थः ॥ ५ ॥

आत्मलक्षणं अमृतत्वसाधनं च

स होवाच न वा अरे पत्युः कामाय पतिः प्रियो भवति आत्मनस्तु कामाय पतिः प्रियो भवति न वा अरे जायायै कामाय जाया प्रिया भवति आत्मनस्तु कामाय जाया प्रिया

भवति न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्ति आत्मनस्तु कामाय पुत्राः प्रिया भवन्ति न वा अरे वित्तस्य कामाय वित्तं प्रियं भवति आत्मनस्तु कामाय वित्तं प्रियं भवति न वा अरे पशूनां कामाय पशवः प्रिया भवन्ति आत्मनस्तु कामाय पशवः प्रिया भवन्ति न वा अरे ब्रह्मणः कामाय ब्रह्म प्रियं भवति आत्मनस्तु कामाय ब्रह्म प्रियं भवति न वा अरे क्षत्रस्य कामाय क्षत्रं प्रियं भवति आत्मनस्तु कामाय क्षत्रं प्रियं भवति न वा अरे लोकानां कामाय लोकाः प्रिया भवन्ति आत्मनस्तु कामाय लोकाः प्रिया भवन्ति न वा अरे देवानां कामाय देवाः प्रिया भवन्ति आत्मनस्तु कामाय देवाः प्रिया भवन्ति न वा अरे वेदानां कामाय वेदाः प्रिया भवन्ति आत्मनस्तु कामाय वेदाः प्रिया भवन्ति न वा अरे भूतानां कामाय भूतानि प्रियाणि भवन्ति आत्मनस्तु कामाय भूतानि प्रियाणि भवन्ति न वा अरे सर्वस्य कामाय सर्वं प्रियं भवति आत्मनस्तु कामाय सर्वं प्रियं भवति आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेयि ! आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदꣳ सर्वं विदितम् ॥ ६ ॥ ब्रह्म तं परादात् योऽन्यत्रात्मनो ब्रह्म वेद क्षत्रं तं परादात् योऽन्यत्रात्मनः क्षत्रं वेद लोकास्तं परादुः योऽन्यत्रात्मनो लोकान् वेद देवास्तं परादुः योऽन्यत्रात्मनो देवान् वेद वेदास्तं परादुः योऽन्यत्रात्मनो वेदान्

वेद भूतानि तं परादुः योऽन्यत्रात्मनो भूतानि वेद सर्वं तं परादात् योऽन्यत्रात्मनः सर्वं वेद इदं ब्रह्म इदं क्षत्रमिमे लोका इमे देवा इमे वेदा इमानि भूतानि इदꣳ सर्वं यदयमात्मा ॥ ७ ॥ स यथा दुन्दुभेर्हन्यमानस्य न बाह्यान् शब्दान् शक्नुयाद्ग्रहणाय दुन्दुभेस्तु ग्रहणेन दुन्दुभ्याघातस्य वा शब्दो गृहीतः ॥ ८ ॥ स यथा शङ्खस्य ध्मायमानस्य न बाह्यान् शब्दान् शक्नुयाद्ग्रहणाय शङ्खस्य तु ग्रहणेन शङ्खध्मस्य वा शब्दो गृहीतः ॥ ९ ॥ स यथा वीणायै वाद्यमानायै न बाह्यान् शब्दान् शक्नुयाद्ग्रहणाय वीणायै तु ग्रहणेन वीणावादस्य वा शब्दो गृहीतः ॥ १० ॥ स यथा आर्द्रैधाग्नेरभ्याहितस्य पृथग्धूमा विनिश्चरन्ति एवं वा अरेऽस्य महतो भूतस्य निःश्वसितमेतत् यत् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि इष्टꣳ हुतमाशितं पायितमयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि सर्वाणि निःश्वसितानि ॥ ११ ॥ स यथा सर्वासामपाꣳ समुद्र एकायनमेवꣳ सर्वेषाꣳ स्पर्शानां त्वक् एकायनमेवꣳ सर्वेषां गन्धानां नासिके एकायनमेवꣳ सर्वेषां रसानां जिह्वा एकायनमेवꣳ सर्वेषाꣳ रूपाणां चक्षुरेकायनमेवꣳ सर्वेषाꣳ शब्दानाꣳ श्रोत्रमेकायनमेवꣳ सर्वेषाꣳ संकल्पानां मन एकायनमेवꣳ सर्वासां विद्यानाꣳ हृदयमेकायनमेवꣳ सर्वेषां कर्मणाꣳ हस्तावेकायनमेवꣳ सर्वेषामानन्दानामुपस्थ एकायन-

मेवꣳ सर्वेषां विसर्गाणां पायुरेकायनमेवꣳ सर्वेषामध्वनां पादावेकायन-
मेवꣳ सर्वेषां वेदानां वागेकायनम् ॥ १२ ॥ स यथा सैन्धव-
घनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एव एवं वा अरेऽयमात्मानन्त-
रोऽबाह्यः कृत्स्नः प्रज्ञानघन एव एतेभ्यो भूतेभ्यः समुत्थाय
तान्येवानुविनश्यति न प्रेत्य संज्ञास्तीति अरे ब्रवीमीति होवाच
याज्ञवल्क्यः ॥ १३ ॥ सा होवाच मैत्रेयी अत्रैव मा भगवान्
मोहान्तमापीपिपत् न वा अहमिमं विजानामीति स होवाच न
वा अरेऽहं मोहं ब्रवीमि अविनाशी वा अरेऽयमात्मानुच्छित्ति-
धर्मा ॥ १४ ॥ यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति
तदितर इतरं जिघ्रति तदितर इतरꣳ रसयते तदितर
इतरमभिवदति तदितर इतरꣳ शृणोति तदितर इतरं मनुते
तदितर इतरꣳ स्पृशति तदितर इतरं विजानाति यत्र त्वस्य
सर्वमात्मैवाभूत् तत्केन कं पश्येत् तत्केन कं जिघ्रेत् तत्केन
कꣳ रसयेत् तत्केन कमभिवदेत् तत्केन कꣳ शृणुयात् तत्केन कं
मन्वीत तत्केन कꣳ स्पृशेत् तत्केन कं विजानीयात् येनेदꣳ सर्वं
विजानाति तं केन विजानीयात् स एष नेति नेत्यात्मा अगृह्यो
न हि गृह्यते अशीर्यो न हि शीर्यते असङ्गो न हि सज्यते
असितो न व्यथते न रिष्यति विज्ञातारमरे केन विजानीयादिति ?
उक्तानुशासनासि मैत्रेयि ! एतावदरे ! खल्वमृतत्वमिति होक्त्वा
याज्ञवल्क्यो विजहार ॥ १५ ॥

देशिकागमाभ्यामात्मनि दृष्टे श्रुते पुनस्तर्केण मते अथ विज्ञाते इदमेतदिति निर्धारिते किं भवति? इत्यत आह—**इदमिति**। यत् स्वाज्ञदशायां इदन्त्वेनानुभूतं तदिदानीं ब्रह्ममात्रतया विदितं भवतीत्यर्थः। कार्यसामान्यप्रलयतः तन्निरूपितकारणतापाये कार्यकारणकलनाविरलोऽ**यमात्मा सैन्धवघनवत् अनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन** एकल आत्मा स्वमात्रमवशिष्यत इत्युक्त्वा **न प्रेत्य संज्ञास्तीति मोहान्तं** मोहमध्यं **आपीपिपत्** गमितवानसि मोहितवानसीति यावत्। अतो **न वा अहमिममात्मानं विजानामीत्युक्तः स होवाच—न ह्यहं मोहं ब्रवीमि**। यतोऽयमात्मा **अविनाशी** अविक्रियत्वात् अतोऽ**यमात्माऽनुच्छित्तिधर्मा**। एवमध्यायचतुष्टयेऽप्येक एवात्मा निर्धारितः। तत्प्रापकोपायास्तु भिद्यन्ते। "अथात आदेशो नेति नेति" इति यश्चतुर्थाध्याये निर्दिष्टः स एव हि पञ्चमे याज्ञवल्क्यशाकल्यसंवादेऽपि निर्धारितः। पञ्चमान्ते च पुनः जनकयाज्ञवल्क्यसंवादे पुनरिह उपनिषत्समाप्तौ च। एवमध्यायचतुष्टयेऽपि एक एवात्मा नान्यः कश्चिदस्तीति एतत्प्रदर्शनाय अन्तेऽप्युपसंहारः कृतः। "स एष नेति नेति" इत्यादिना स्वाज्ञविकल्पितस्वातिरिक्तविशेषजातमपनिह्नुते। तदपह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रगोचरं ससंन्यासं विज्ञानं तन्मात्रावस्थानलक्षणकैवल्यसाधनमिति विवक्षन्नाह—**एतावदिति**। **अरे मैत्रेयि**! "यदेव भगवान् वेद तदेव मे ब्रूहि" इति यत् पृष्टवत्यसि तदेव तेऽमृतत्वसाधनमुक्तम्। **एतावद्धि** त्वया विज्ञेयम्। एव**ममृतत्व**साधनमात्मज्ञानं स्वप्रियभार्यायै याज्ञवल्क्य **उक्त्वा** किं कृतवान्? इत्यत्र प्रव्रजिष्यन्निति यत् प्रतिज्ञातं तत् चकारेत्याह—**याज्ञवल्क्यो विजहारेति**। परिव्राट्पदं गतवानित्यर्थः। येयं संन्यासपर्यवसाना सेयं ब्रह्मविद्या परिसमाप्ता। एतावान् हि परमार्थोपदेशः। एतद्धि सकलवेदान्तानुशासनस्वातिरिक्तसामान्यसंन्याससहकृतनिष्प्रतियोगिकब्रह्ममात्रज्ञानं तन्मात्रावस्थानलक्षणविकलेबरकैवल्यसाधनं, नान्यदिति सिद्धम् ॥ ६–१५ ॥

**इति पञ्चमं ब्राह्मणम्**

---

## षष्ठं वंशब्राह्मणः

### आचार्यशिष्यवंशवर्णनम्

अथ वꣳशः पौतिमाष्यात् पौतिमाष्यो गौपवनाद्गौपवनः पौतिमाष्यात् पौतिमाष्यो गौपवनाद्गौपवनः कौशिकात् कौशिकः कौण्डिन्यात् कौण्डिन्यः शाण्डिल्यात् शाण्डिल्यः कौशिकाच्च गौतमाच्च गौतमः ॥ १ ॥ आग्निवेश्यादाग्निवेश्यो गार्ग्याद्गार्ग्यो गार्ग्याद्गार्ग्यो गौतमाद्गौतमः सैतवात् सैतवः पाराशर्यायणात् पाराशर्यायणो गार्ग्यायणाद्गार्ग्यायण उद्दालकायनादुद्दालकायनो जाबालायनाज्जाबालायनो माध्यन्दिनायनात् माध्यन्दिनायनः सौकरायणात् सौकरायणः काषायणात् काषायणः सायकायनात् सायकायनः कौशिकायनेः कौशिकायनिः ॥ २ ॥ घृतकौशिकात् घृतकौशिकः पाराशर्यायणात् पाराशर्यायणः पाराशर्यात् पाराशर्यो जातूकर्ण्यात् जातूकर्ण्य आसुरायणाच्च यास्काच्चासुरायणस्त्रैवणेस्त्रैवणिरौपजङ्घनेः औपजङ्घनिरासुरेरासुरिः भारद्वाजाद्भारद्वाज आत्रेयात् आत्रेयो माण्टेर्माण्टिर्गौतमाद्गौतमो गौतमाद्गौतमो वात्स्याद्वात्स्यः शाण्डिल्यात् शाण्डिल्यः कैशोर्यात् काप्यात् कैशोर्यः काप्यः कुमारहारितात् कुमारहारितो गालवात् गालवो विदर्भीकौण्डिन्यात् विदर्भीकौण्डिन्यो वत्सनपातो बाभ्रवात् वत्सनपात् बाभ्रवः पथः सौभरात् पन्थाः सौभरोऽयास्यादाङ्गिरसात् अयास्य आङ्गिरस आभूतेस्त्वाष्ट्रात् आभूतिस्त्वाष्ट्रो विश्वरूपात्त्वा-

ष्ट्राद्विश्वरूपस्त्वाष्ट्रोऽश्विभ्यामश्विनौ दधीच आथर्वणात् दध्यङ् आथर्वणो दैवात् अथर्वा दैवो मृत्योः प्राध्वꣳसनात् मृत्युः प्राध्वꣳसनः प्रध्वꣳसनात् प्रध्वꣳसन एकऋषेः एकर्षिर्विप्रचित्तेर्विप्रचित्तिर्व्यष्टेर्व्यष्टिः सनारोः सनारुः सनातनात् सनातनः सनगात् सनगः परमेष्ठिनः परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ३ ॥

अथ वंशब्राह्मणमारभ्यते—अथेति । मधुकाण्डवंशब्राह्मणवत् याज्ञवल्कीयकाण्डगतवंशब्राह्मणमपि समानमित्यर्थः ॥ १–३ ॥

**इति षष्ठं ब्राह्मणम्**

इति चतुर्थोऽध्यायः

---

# पञ्चमोऽध्यायः

## प्रथमं ब्राह्मणम्

शान्तिपाठः ओङ्कारोपासनं च

ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते । ॐ ३ खं ब्रह्म खं पुराणं वायुरं खमिति ह स्माह कौरव्यायणीपुत्रो वेदो यं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम् ॥

अतीताध्यायचतुष्टये "आत्मेत्येवोपासीत", आत्मानमेवावेदहं ब्रह्मास्मीति", "तदेतद्ब्रह्म अपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः", "यदेव साक्षादपरोक्षात् ब्रह्म", "विज्ञानमानन्दं ब्रह्म", "अभयं वै जनक प्राप्तोसि", "नेति नेति न ह्येतस्मादिति नेत्यन्यत् परमस्ति" इत्यादिवाक्यतः स्वातिरिक्तव्यष्टिसमष्ट्यात्मकस्वाविद्यापदतत्कार्यजातस्थूलादिभागचतुष्टयमपि चतुर्नेतिशब्दतोऽपह्नवं कृत्वा तदपह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति निर्धारितम्। तद्विज्ञानमेवामृतत्वसाधनमिति च यदुक्तं तत् खिलकाण्डगतप्रथमब्राह्मणेन विस्पष्टं प्रतिपाद्य अथ मन्दाधिकारिणां तत्पदारोहाय तदुपायत्वेन पुरस्तादनुक्तान्युपासनानि वक्तव्यानीति खिलकाण्डमारभ्यते—पूर्णमिति। यत् न कुतश्चित् व्यावृत्तं व्यापि तत्। यत् **अद** इति परोक्षाभिधायि सर्वनाम तदपि **पूर्णं** निरुपाधिकत्वात्। यत् **इदं**शब्दवाच्यं व्यवहारापन्नं तदपि **पूर्णं** शबलात्मना व्याप्तत्वात्। यत् अदःशब्दवाच्यं कारणभावापन्नं पूर्णं ब्रह्म तदेव हि इदंशब्दवाच्यं कार्योपाध्यवच्छिन्नमिव भाति। वस्तुतः कार्यकारणकलनाविरलमित्यर्थः।

> यदेवेह तदमुत्र यदमुत्र तदन्विह।
> मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥

इति श्रुतेः। इदंशब्दगोचरद्वैतप्रपञ्चारोपाधिकरणत्वेन **पूर्णात्** तत्प्रपञ्चापवादाधिकरणतया **पूर्णं** ब्रह्म **उदच्यते** उद्रिच्यतेऽतिरिच्यत इत्यर्थः। एवं कार्यकारणात्मना **पूर्णस्य** वस्तुनः व्यष्टिसमष्टिस्वाविद्योपाधिसापेक्षकार्यकारणकलनाविरलं अहं ब्रह्मास्मीति तथाविधं **पूर्णमादाय** विदित्वा तद्वेदनसमकालं स्वातिरिक्तकार्यकारणकलनास्ति नास्तीति विभ्रमापह्नवसिद्धं निष्प्रतियोगिक**पूर्णमेव** ब्रह्म स्वमात्र**मवशिष्यत** इति संक्षेपेण सर्ववेदान्तसारार्थः प्रकाशितः। विस्तरार्थस्तु महावाक्यरत्नावलीप्रभालोचने सम्यक् प्रपञ्चित इत्यर्थः। पूर्णब्रह्मणो निष्प्रतियोगिकनिर्विशेषत्वेन तदवगत्युपायाभावमाशङ्क्य तदवगत्युपायत्वेन "एतद्वै सत्यकाम! परं चापरं च ब्रह्म यदोङ्कारः" इति श्रुत्यनुरोधेन प्रणवालम्बनादिना निर्विशेषं ब्रह्म

स्वावशेषतयावगन्तुं शक्यमित्याह—**ओमिति**। योऽयं सर्ववेदान्तार्थः “पूर्णमदः” इत्यादि “पूर्णमेवावशिष्यते” इत्यन्तश्रुत्या सूत्रितः सोऽयमर्थ ओङ्कारेण सूत्र्यते। तत् कथम्? स्थूलसूक्ष्मबीजतुर्यांशाढ्याकाराद्यर्धमात्रान्तावयवविशिष्ट-प्रणवो ब्रह्माभिधानम्। व्यष्टिसमष्टिभेदेन तत् द्विविधम्। तत्र व्यष्टिप्रणवाभिधेयं विश्वविश्वादितुर्यप्राज्ञान्तम्। समष्ट्यभिधेयं तु विराड्विराडादितुर्यबीजान्तम्। तदुभयैक्याभिधेयं तु ओत्रोत्राद्यविकल्पानुज्ञैकरसान्तम्। तत्राकारादिमात्रात्रयप्रपञ्चा-रोपाधिकरणं सविशेषम्। तदपवादाधिकरणमर्धमात्राभागत्रयाभिव्यक्तं निर्विशेषम्। अकारादिपञ्चदशमात्रातद्व्यष्टिसमष्ट्यारोपापवादाधिकरणगतहेयांशापह्नवसिद्धनिष्प्र-तियोगिकपूर्णचैतन्यं तुर्यतुर्यमिति प्रणवार्थः संक्षेपेणोक्तः। अयमेवार्थो दीपिकादौ विस्तरेणाभिहितः। तत्रार्धमात्राभिव्यक्तं किंविशेषणविशिष्टं? इत्यत्र—**खं ब्रह्मेति**। खंशब्देनार्धमात्रोच्यते। तस्या गुणसाम्यतया व्योमवन्निरवयवत्वात्। तत्राप्य-सङ्गतयाभिव्यक्तं निर्गुणं ब्रह्मेत्यर्थः। खमिति विशेषणयोगात् कार्यं ब्रह्मेत्याह—**खं पुराणमिति**। खादिभूतभौतिकविलक्षणत्वेन तत्कारणत्वात् चिरन्तनं ब्रह्मेत्यर्थः। तस्य परमाकाशत्वात् चिरन्तनत्वं युज्यते। अकारादिमात्रात्रयाप-वादाधिकरणस्वरूपमुक्त्वा तन्मात्रात्रयप्रपञ्चारोपाधिकरणस्वरूपमाह—**वायुरं ख-मिति** “वायुर्वै गौतम! तत् सूत्रं” इति श्रुतिसिद्धसूत्रात्मकवायुग्रहणमकारा-दिमात्रात्रयप्रञ्चारोपाधिकरणविश्वविश्वाद्यनुज्ञैकरसाविकल्पान्तचैतन्योपलक्षणार्थम्। सूत्रात्मकवायोः सोपाधिकत्वात्। कोऽयमुपाधिः? तदवच्छिन्नः कीदृशः? तयोरियत्ता का? इत्यत आह—**अं खमिति**। अकारादिमात्रात्रयप्रपञ्चोऽयमुपाधिः। तदारोपाधारो हि तदवच्छिन्नः। तद्याथात्म्यं खं परमाकाशमेवेत्यर्थः। कथं त्वया एतदवगतं? इत्यत्र—**आह स्म ह्येवं कौरव्यायणीपुत्रो** मन्त्रदृक् मुनिः। किमिति? **यं ब्राह्मणाः** पररूपेण अपररूपेण वा **विदुः** जानन्ति। तेषां वेदनहेतुः कः? इत्यत्र **वेदो**ऽयमोङ्कारः। “ओमित्येतदक्षरं” इत्यारभ्य “आत्मनात्मानं य एवं वेद” इत्यन्तं, “अन्यत्र धर्मात्” इत्यारभ्य “ब्रह्मलोके महीयते” इत्यन्तं, “एतद्वै सत्यकाम! परं चापरं च” इत्यारभ्य “परात परं पुरुषमीक्षते” इत्यन्तं, एवमेनेन परापरब्रह्माभिधा-

नालम्बनप्रतीकभावमापन्नोङ्कारेण यत् वेदितव्यं तमेतमर्थं अयं मन्त्रदृक् मुनिः वेद । यत एवमाह स्म अतोऽयं विजानातीत्यर्थः ॥

इति प्रथमं ब्राह्मणम्

---

## द्वितीयं ब्राह्मणम्

प्रजापतिना दमाद्युपदेशः

त्रयः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुः देवा मनुष्या असुरा उषित्वा ब्रह्मचर्यं देवा ऊचुः ब्रवीतु नो भवानिति तेभ्यो हैतदक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुर्दाम्यतेति न आत्थेति ओमिति होवाच व्यज्ञासिष्टेति ॥ १ ॥ अथ हैनं मनुष्या ऊचुः ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुः दत्तेति न आत्थेति ओमिति होवाच व्यज्ञासिष्टेति ॥ २ ॥ अथ हैनमसुरा ऊचुः ब्रवीतु नो भवानिति तेभ्यो हैतदेवाक्षरमुवाच द इति व्यज्ञासिष्टा३ इति व्यज्ञासिष्मेति होचुः दयध्वमिति न आत्थेति ओमिति होवाच व्यज्ञासिष्टेति तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुः द द द इति दाम्यत दत्त दयध्वमिति तदेतत् त्रयꣳ शिक्षेत् दमं दानं दयामिति ॥ ३ ॥

एवमोङ्काराभिधेयपरापरब्रह्मप्रतिपत्तौ दमादेः साधनत्वादिति तद्विधानार्थमिदं ब्राह्मणमारभ्यते—**त्रय** इति । त्रयस्त्रिसंख्याकाः प्रजापतेरपत्यानि **प्राजापत्या** मिलित्वा शिष्यभावमेत्य **ब्रह्मचर्यमूषुः** उषितवन्तः । के ते ? **देवा मनुष्या असुराश्च** । त एवं **ब्रह्मचर्यमुषित्वा** किं कृतवन्तः ? इत्यत्र **देवाः** पितरं प्रत्यूचुः । किमिति ? **नोऽस्मभ्यं भगवान् ब्रवीतु** अनुशासनमिति । तैरेवं पृष्टः प्रजापतिः **तेभ्यो हैतदेवाक्षरमुवाच द इति** । किं मया उपदिष्टाक्षरार्थं **व्यज्ञासिष्ट** विज्ञातवन्तः ? प्लुतिर्नवेति विकल्पार्थः । एवमाक्षिप्ता देवा ऊचुः—**व्यज्ञासिष्म** विज्ञातवन्तो वयमिति । यद्येवं विज्ञातवन्तः तदा तदुच्यतामित्युक्ता देवा ऊचुः—**दाम्यतेति** स्वभावतो दान्ता यूयं भवतेति **नोऽस्मानात्थ** कथयसीत्यर्थः । पिता तदुक्तं **ओमित्यङ्गीकृत्य व्यज्ञासिष्टेति होवाच** । मनुष्याः किं कृतवन्तः ? इत्यत आह—**अथेति** । हे मनुष्याः ! स्वभावतो लुब्धा यूयं, अतो यथाशक्ति संविभजत **दत्तेति** । समानमन्यत् । हे असुराः ! यतो यूयं स्वभावतो निर्दयाः अतः स्वस्वभावमुत्सृज्य **दयध्वं** प्राणिमात्रेषु दयां कुरुतेत्यर्थः । एवं प्रजापत्यनुशासनं अद्याप्यनुवर्तते । यः पुरा देवादीनन्वशात् सोऽद्याप्यनुशास्त्येव । कथं ? देव्या स्तनयित्नुरूपया । कथमेषा श्रूयते ? **दैवी वाक्** स्वयं **स्तनयित्नुर्भूत्वा द द द इति** । दकारत्रयग्रहणं **दाम्यत दत्त दयध्वमित्युपलक्षणार्थम्** । स्तनयित्नुः अनुकृतिः अनुकरणं, न हि स्तनयित्नुशब्दः त्रिरेव, नियमाभावात् । यतोऽद्यापि प्रजापतिः दाम्यत दत्त दयध्वं इत्यनुशशास तस्मात् **एतत् त्रयं दमं दानं दयामिति शिक्षेत्** उपादद्यात् । यस्मादेवमन्वशात् तस्मात्तदनुशासनं सर्वैरप्यनुवर्तनीयमित्यर्थः ॥ १–३ ॥

इति द्वितीयं ब्राह्मणम्

---

## तृतीयं ब्राह्मणम्

सोपाधिकब्रह्मोपासनमभ्युदयनिश्श्रेयसफलदम्

एष प्रजापतिर्यत् हृदयमेतद्ब्रह्म एतत्सर्वं तदेतत् त्र्यक्षरꣳहृदयमिति हृ इत्येकमक्षरमभिहरन्त्यस्मै स्वाश्चान्ये च य एवं वेद द इत्येकमक्षरं ददत्यस्मै स्वाश्चान्ये च य एवं वेद यं इत्येकमक्षरं एति स्वर्गं लोकं य एवं वेद ॥

" वायुरं खं " इति यत् सोपाधिकं ब्रह्मोक्तं तदुपासनमभ्युदयनिश्श्रेयसफलदमिति तदर्थमिदं ब्राह्मणमारभ्यते—**एष** इति। कः पुनरसावनुशास्ता? इत्यत्र **एष प्रजापतिः। यत् हृदयमिति** हृदयगा बुद्धिरुच्यते। तस्मिन्नेव हृदये शाकल्यब्राह्मणान्ते नामरूपकर्मोपसंहारः कृतः। दिग्विभागद्वारेण सर्वभूतात्मभूतं हृदयं प्रजापतिः। **एतद्धि ब्रह्म** बृहत्त्वेन सर्वात्मकत्वात् **ब्रह्म एतत् सर्वमुक्तम्**। यस्मात् हृदयं ब्रह्म तस्मात् तदुपास्यम्। किं तदुपासनम्? **हृदयमिति** नाम **त्र्यक्षरम्**। कानि तान्यक्षराणि? इत्यत्र **हृ इत्येकमक्षरम्**। अभिहरति हृञ् मो हरति कर्मण एतत् रूपं इति यो वेद **अस्मै** हृदयाय ब्रह्मणे **स्वाश्चे**न्द्रियाणि **अन्ये च** शब्दादयो विषयाः स्वं स्वं कार्य**मभिहरन्ति**। एवं हृ इत्येकमक्षरं **यो वेद** अस्मै विदुषे स्वाश्च अन्ये च तद्विज्ञानानुरोधेन बलिं हरन्तीत्यर्थः। तथा **द इत्येकमक्षरम्**। एतदपि दाञो रूपं हृदयनामाक्षरत्वेन निबद्धम्। अत्रापि हृदयाय ब्रह्मणे **स्वाश्च अन्ये च** स्वं स्वं वीर्यं **ददति**। **एवं** दकार इति **यो वेद** अस्मै स्वाश्च अन्ये च स्वेप्सितं ददतीत्यर्थः। तथा यं **इत्येकमक्षरम्**। इणो गत्यर्थस्य यं इत्येतत् रूपम्। अस्मिन् नाम्नि बद्धमिति यो वेद स हि **स्वर्गं लोकमेति** नामाक्षरविशिष्टफलं प्राप्नोति। विशिष्टोपासनेन चित्तशुद्धिप्राप्यज्ञानफलमपि प्राप्नोतीत्यर्थः ॥

**इति तृतीयं ब्राह्मणम्**

---

## चतुर्थं ब्राह्मणम्

हृदयब्रह्मणः सत्यत्वेन उपासनम्

तद्वैतदेव तदास सत्यमेव स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति जयतीमाँल्लोकान् जित इन्नु असावसत् य एवमेतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति सत्यꣳ ह्येव ब्रह्म ॥

हृदयाख्यब्रह्मणः सत्यत्वेन उपासनविधित्सया इदं ब्राह्मणमारभ्यते—**तदिति**। तच्छब्देन हृदयं ब्रह्म परामृश्यते। वाशब्देन एतत् ब्रह्म स्मर्यते। **एतदेव तदिति** वक्ष्यमाणं बुद्धौ सन्निधीकृत्याह—**एतदेवेति**। **तदास** बभूव। किं तत्? **सत्यमेव**। सच्च त्यच्च मूर्तामूर्तात्मकं **सत्यं ब्रह्म**। तस्य पञ्चभूतभौतिकात्मकत्वात्। **स यः** कश्चित् **ह एतन्महत् यक्षं** पूज्यत्वात् **प्रथमजं** हिरण्यगर्भं सत्यं ब्रह्मेति **वेद** तस्य इदं फलं—**स इमान् लोकान् जयति**। **जितो** वशीकृतः। **इन्नु** इत्थं यथा ब्रह्मणा **असौ** शत्रुरिति वाक्यशेषः। **असच्च** असौ असंश्च असन्नसौ शत्रुर्विजितो भवेदित्यर्थः। तस्यैतत् फलं पुनः निगमयति—स **एवमेतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्मेति**। अतो विद्यानुरूपं फलं युक्तमित्याह—**सत्यं ह्येव ब्रह्मेति**। हिरण्यगर्भो भवतीत्यर्थः॥

इति चतुर्थं ब्राह्मणम्

---

## पञ्चमं ब्राह्मणम्

सत्यस्य ब्रह्मणो महद्यक्षत्वनिरूपणम्

आप एवेदमग्र आसुः ता आपः सत्यमसृजन्त सत्यं ब्रह्म ब्रह्म प्रजापतिं प्रजापतिर्देवाꣳस्ते देवाः सत्यमेव उपासते तदेतत्

**त्र्यक्षरꣳ सत्यमिति स इत्येकमक्षरं ति इत्येकमक्षरं यं इत्येकमक्षरं प्रथमोत्तमे अक्षरे सत्यं मध्यतोऽनृतं तदेतदनृतमुभयतः सत्येन परिगृहीतꣳ सत्यभूयमेव भवति नैवं विद्वाꣳसमनृतꣳ हिनस्ति ॥१॥**

कथं पुनः सत्यस्य ब्रह्मणो महद्यक्षत्वं ? इत्याशङ्कायां तन्निरूपणार्थमिदं ब्राह्मणमारभ्यते—**आप** इति। **आप एवेदमग्र आसु**रित्यत्र अग्निहोत्राद्याहुतय आप उच्यन्ते। तासां द्रवात्मकत्वात् अप्त्वं युज्यते। तास्तु कर्मसमवायित्वमपरित्यज्य इतरभूतसहिताः सत्योऽव्याकृतात्मना जगतो बीजभूता भवन्ति। ता एव हीदं जगदग्रे आसुः। तदानीं नान्यत् किञ्चन विकृतिरासीत्। **ताः पुनरापः सत्यमसृजन्त**। तस्मात् सत्यं प्रथमजम्। तद्धि सूत्रात्मजन्म अव्याकृतव्याकरणहेतुत्वात्। तत् **सत्यं ब्रह्म**। कुतः ? विराडपेक्षया बृहत्त्वात्। यदेवं सत्यं **ब्रह्म** महद्यक्षं तत् सूर्यादिकारणं **प्रजापतिं** विराजमसृजतेत्यनुषज्यते। सोऽयं **प्रजापतिर्विराट्** क्रमेण **देवानसृजत**। यस्मात् सूत्रं विराडादेरपि कारणं तस्मान्महद्यक्षं सत्यं ब्रह्म। विराट्सृष्टास्ते **देवाः** स्वपितरमनादृत्य **सत्यमेव उपासते**। सत्याख्यब्रह्मणः प्रथमजत्वेन महद्यक्षत्वात् तदुपासनमेव युक्तमित्यर्थः। किंप्रकारकं तदुपासनं ? इत्यत्र—**तदेतन्नाम त्र्यक्षरम्**। तद्गताक्षराणि कानि ? इत्यत आह—**स** इति। तत्र तकार इकारो निर्देशार्थः। तेषां **प्रथमोत्तमे अक्षरे** सकारयकारौ **सत्यं** तत्र अनृताख्यमृत्योरभावात्। **मध्यतो** मध्येऽ**नृतम्**। अनृतं हि मृत्युः मृत्य्वनृतयोः तकारसामान्यात्। तदेतन्मृत्युरूप**मनृतमुभयतः** सकारयकारलक्ष्य**सत्येन परिगृहीतं** व्याप्तं कवलितमित्यर्थः। यतः सत्येन कवलितं अतः **सत्यभूयमेव** सत्यबाहुल्यमेव **भवति**। अतः तदनृतमकिंचित्करमित्यर्थः। **एवमनृताकिंचित्करतां यो वेद तेन प्रमादत उक्तमप्यनृतं तं न हिनस्ति** ॥ १ ॥

सत्यस्य संस्थानप्रदर्शनं तदुपासनं च

**तद्यत् तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन् पुरुषस्तावेतावन्योन्यस्मिन् प्रतिष्ठितौ**

**रश्मिभिरेषोऽस्मिन् प्रतिष्ठितः प्राणैरयममुष्मिन् स यदा उत्क्रमिष्यन् भवति शुद्धमेवैतन्मण्डलं पश्यति नैनमेते रश्मयः प्रत्यायन्ति ॥२॥**

अधुना सत्यस्य संस्थानप्रदर्शनपूर्वकं तदुपासनमुच्यते—**तद्यदिति**। यदक्षरमित्यभिहितं **तत् सत्यं** ब्रह्म। समष्ट्यादिभिदामाश्रित्य द्विधेव दृश्यते। तत्र समष्टौ आधिदैविकभावमेत्य सोऽसावादित्यो भवति। कोऽसौ किंविशेषणविशिष्टः? **य एतस्मिन्** आदित्य**मण्डले पुरुषो**ऽवभासते **सोऽसावेष आदित्यः**। स हि सत्यं ब्रह्म। यश्च व्यष्टिपरिच्छेदमेत्य **यो**ऽयमध्यात्मसंज्ञकः **दक्षिणेऽक्षन्** अक्षिणि **पुरुषः**। चशब्दात् सोऽपि सत्यं ब्रह्मेति संबध्यते। **तौ एतौ** आदित्यमण्डलाक्ष्याधारौ संस्थानविशेषौ तावुभौ **अन्योन्यस्मिन् प्रतिष्ठितौ** तयोरन्योन्योपकारकत्वात्। कथमेवं? इत्यत्र—**एष** आदित्यः **स्वरश्मिभिः** अनुग्रहं कुर्वन् अध्यात्मपरिच्छिन्नचक्षुषि **प्रतिष्ठितो** भवति। तथायं चाक्षुषोऽपि **प्राणै**रादित्यमनुगृह्णन् **अमुष्मिन्** अधिदैवे प्रतितिष्ठति। **सोऽ**स्मिन् शरीरे विज्ञानमयो भोक्ता **यदा** यस्मिन् काले **उत्क्रमिष्यन् भवति** तदासौ चाक्षुषः आदित्यरश्मीन् उपसंहृत्य चन्द्रमण्डलमिव **शुद्धमेव एतन्मण्डलं पश्यति**। **एनं** चाक्षुष**मेते रश्मयः न प्रत्यायन्ति** न प्रत्यागच्छन्ति परस्परोपकार्योपकारकभावात्। स्थानद्वयाधिकरणं सत्याख्यं ब्रह्मेत्यर्थः॥ २ ॥

सत्यस्य व्याहृत्यवयवत्वम्

य एष एतस्मिन् मण्डले पुरुषः तस्य भूरिति शिर एकꣳ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहरिति हन्ति पाप्मानं जहाति च य एवं वेद ॥ ३ ॥

तस्य व्याहृत्यवयवतामाह—**य** इति। य **एषो**ऽयमधिदेवताभावमापन्नोऽत्र **एतस्मिन् मण्डले पुरुषः तस्य** सत्याभिधानस्य सर्वा व्याहृतयोऽवयवा भवन्ति।

तत् कथं ? येयं **भूरिति** व्याहृतिः सैव तस्य **शिरः** प्राथम्यात् । तत् सामान्यं श्रुतिराह—**एकं शिरः तथैतदक्षरमेकं** भूरिति । तथा **भुव इति बाहू द्वौ** द्वित्वसामान्यात् । तथा **सुवरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे** प्रतितिष्ठत्याभ्यामिति प्रतिष्ठे पादावित्यर्थः । **तस्य** व्याहृत्यवयवसत्याख्यब्रह्मण **इयमुपनिषत्** रहस्याभिधानम् । कासौ ? इत्यत आह—**अहरिति । यो वेद** स विद्वान् **हन्ति पाप्मानं जहातीति** वेदनफलम् ॥ ३ ॥

अधिदैववदध्यात्ममपि समानम्

**योऽयं दक्षिणेऽक्षन् पुरुषः तस्य भूरिति शिर एकꣳ शिर एकमेतदक्षरं भुव इति बाहू द्वौ बाहू द्वे एते अक्षरे स्वरिति प्रतिष्ठा द्वे प्रतिष्ठे द्वे एते अक्षरे तस्योपनिषदहमिति हन्ति पाप्मानं जहाति च य एवं वेद ॥ ४ ॥**

अधिदैववत् अध्यात्ममपि समानमित्याह—**योऽयमिति । योऽयं दक्षिणेऽक्षन् पुरुषः** तस्य **भूरिति शिरः** इत्यादि पूर्ववत् । **तस्योपनिषत् अहमिति** प्रत्यग्रूपत्वात् । हन्तेर्जहातेरर्थः पूर्ववत् ॥ ४ ॥

इति पञ्चमं ब्राह्मणम्

---

## षष्ठं ब्राह्मणम्

सत्यस्यैव मानसोपाधिवैशिष्ट्योपासनम्

**मनोमयोऽयं पुरुषो भाःसत्यः तस्मिन्नन्तर्हृदये यथा व्रीहिर्वा यवो वा स एष सर्वस्य ईशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किंच ॥**

तस्यैव पुनः मानसोपाधिवैशिष्ट्योपासनविधित्सया इदं ब्राह्मणमारभ्यते—**मन** इति। मनस्युपलभ्यमानत्वात् **मनोमयोऽयं पुरुषः भाःसत्यः** भास्वरः मनसः सर्वार्थावभासकत्वात्। **तस्मिन् अन्तर्हृदये** परिमाणतो **यथा व्रीहिर्वा यवो वा** एवंपरिमाणोऽयमात्मा योगिभिः हृदयान्तरुपलभ्यते। **स एष सर्वस्य** भेदजातस्य **ईशानः** स्वामी। तथा **सर्वस्य अधिपतिः**। "अहमेवेदं सर्वं" इति श्रुत्यनुरोधेन **सर्वमधिष्ठाय** पालयितृत्वात्। **यदिदं किञ्च** यत्किंचित् यावत् जगदिदं **प्रशास्ति**। एवं मनोमयोपासकस्य ईश्वरत्वं फलमित्यर्थः॥

**इति षष्ठं ब्राह्मणम्**

---

## सप्तमं ब्राह्मणम्

सत्यब्रह्मणो विशिष्टफलकमुपासनान्तरम्

**विद्युद्ब्रह्मेत्याहुः विदानात् विद्युत् विद्यत्येनं पाप्मनो य एवं वेद विद्युद्ब्रह्मेति विद्युत् ह्येव ब्रह्म॥**

पुनः सत्याख्यब्रह्मणो विशिष्टफलं उपासनान्तरं विधातव्यमिति इदं ब्राह्मणमारभ्यते—**विद्युदिति**। ब्राह्मणा **विद्युत् ब्रह्मेत्याहुः**। श्रुतिरेव तत् निर्वक्ति—**विदानात् विद्युदिति**। तमसोऽवखण्डनात्। इत्थं विद्युद्वत् प्रकाशगुणविशिष्टं ब्रह्म **यो वेद** असावेनमात्मानं प्रति प्रतिकूलभूतान् सर्वान् **पाप्मनः** अवखण्डयति। विद्युद्वत् प्रकाशात्मकं ब्रह्म इत्युपासनात् प्रत्यक्प्रकाशपर्यवसन्नो भवतीत्यर्थः॥

**इति सप्तमं ब्राह्मणम्**

---

## अष्टमं ब्राह्मणम्

सत्यवाचो धेनुवदुपासनम्

**वाचं धेनुमुपासीत तस्याश्चत्वारः स्तनाः स्वाहाकारो वषट्कारो हन्तकारः स्वधाकारः तस्या द्वौ स्तनौ देवा उपजीवन्ति स्वाहाकारं च वषट्कारं च हन्तकारं मनुष्याः स्वधाकारं पितरस्तस्याः प्राण ऋषभो मनो वत्सः ॥**

केवलाभ्युदयफलं इदं ब्राह्मणमारभ्यते---**वाचमिति** । वागिति शब्दराशिः । तन्मयीं **वाचं धेनुं** धेनुरिव । यथा धेनुः स्ववत्साय चतुर्भिः स्तनैः पयः क्षरति तथैवं वाग्धेनुः देवादिभ्यो वक्ष्यमाणैः स्तनैः पय इव अन्नं क्षरति । तस्या एतस्याः के स्तनाः कथं देवादिभ्यः क्षरति ? इत्यत्र—**तस्या** वाचो धेन्वा **द्वौ स्तनौ** वत्सस्थानीया **देवा** उपजीवन्ति । कौ तौ ? इत्यत्र **स्वाहाकारं च वषट्कारं च** । ताभ्यां हि देवेभ्यो हविर्दीयते । **हन्तकारं मनुष्या** उपजीवन्ति । मनुष्येभ्यो हन्त इत्यन्नं प्रयच्छन्ति हि । **स्वधाकारं पितर** उपजीवन्ति । पितृभ्यः स्वधास्त्विति स्वधां प्रयच्छन्ति । **तस्या** वाचो धेन्वा **ऋषभः प्राणः** । प्राणेन हि वाक् प्रसूयते । **मनो वत्सः** । मनसारोपितविषये हि वाक् प्रवर्तते । अत एव हि मनो वत्सस्थानीयम् । एवं वाग्धेनूपासनात् वाञ्छितार्थसिद्धिर्भवतीत्यर्थः ॥

**इत्यष्टमं ब्राह्मणम्**

---

## नवमं ब्राह्मणम्

सत्यब्रह्मणो जाठराग्नित्वेन उपासनम्

**अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यमेतत्कर्णावपिधाय शृणोति स यदा उत्क्रमिष्यन् भवति नैनं घोषꣳ शृणोति ॥**

पूर्ववदुपासनान्तरविधित्सया इदं ब्राह्मणमारभ्यते—**अयमिति** । **अयमग्निर्वैश्वानरः** । कोऽसौ ? इत्यत आह—**योऽयमन्तः पुरुषे** जाठराग्निः वर्तते । **येन** जाठराग्निना **इदमन्नं पच्यते** । किं तदन्नम् ? प्राणिभिः **यदिदमद्यते** भुज्यते तदेवान्नमित्यर्थः । तत्स्वरूपमाह—**तस्येति** । **तस्य** जाठराग्नेः अन्नं पचतः **घोषो भवति** । यं घोषं—**एतदिति** क्रियाविशेषणं—अङ्गुलीभ्यां **कर्णावपिधाय शृणोति** तमेतं प्रजापतिमित्युपासीत । तद्भावानुरोधेन वैश्वानरो भवति । प्रासङ्गिकमिदमरिष्टमुच्यते । **सो**ऽन्तःशरीरे भोक्ता **यदा उत्क्रमिष्यन् भवति** तदानीं **नैनं घोषं शृणोति** सः ॥

इति नवमं ब्राह्मणम्

---

## दशमं ब्राह्मणम्

उक्तोपासनानां गतिकथनम्

**यदा वै पुरुषोऽस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छति तस्मै स तत्र विजिहीते यथा लम्बरस्य खं तेन**

**स ऊर्ध्व आक्रमते स चन्द्रमसमागच्छति तस्मै स तत्र विजिहीते यथा दुन्दुभेः खं तेन स ऊर्ध्व आक्रमते स लोकमागच्छति अशोकमहिमं तस्मिन् वसति शाश्वतीः समाः ॥**

अस्मिन् प्रकरणे उपासनाभेदानां इयं गतिरिति सूचनार्थमिदं ब्राह्मणमारभ्यते—**यदे**ति । **यदा वै पुरुषो** विद्वान् **अस्मात् लोकात् प्रैति** स्वात्तशरीरं परित्यजति **स** तदा खेचरवायु**मागच्छति** । स वायुस्तत्र स्वात्मनि प्रविष्टाय **तस्मै विजिहीते** तत्प्रवेशानुकूलच्छिद्रं विदधाति । किंपरिमाणं छिद्रं ? इत्यत्र दृष्टान्तमाह—**यथे**ति । **यथा रथचक्रस्य** छिद्रं प्रसिद्धम् । तादृशच्छिद्रेण विद्वान् **ऊर्ध्व आक्रमते** ऊर्ध्वं गच्छति । स विद्वानादित्यमा**गच्छति** । **सो**ऽयं ब्रह्मलोकद्वारनिरोधकोऽप्यादित्यः तस्मा एवंविदुषे द्वारं प्रयच्छति । स **तत्र विजिहीते** । **यथा लम्बरस्य** वादित्रविशेषस्य **खं** छिद्रं **तेन** स **ऊर्ध्व आक्रमते** । **स चन्द्रमसमागच्छति** । **सो**ऽपि **तस्मै विजिहीते** । **यथा दुन्दुभेः खं** प्रसिद्धं **तेन स ऊर्ध्व आक्रमते** । स विद्वान् प्राजापत्य**लोकमागच्छति** । किंविशेषणविशिष्टं ? **अशोकमहिमं** नीहारायमाणमानसदुःखवर्जितं शारीरदुःखवर्जितं च । तं प्राप्य **तस्मिन् वसति शाश्वतीः समाः** । तत्र आब्रह्मकल्पमुषित्वा तेन सह मुक्तो भवतीत्यर्थः ॥

**इति दशमं ब्राह्मणम्**

---

## एकादशं ब्राह्मणम्

शरीरदुःखसहनममृतत्वसाधनम्

**एतद्वै परमं तपो यत् व्याहितस्तप्यते परमꣳ हैव लोकं जयति य एवं वेद एतद्वै परमं तपो यं प्रेतमरण्यꣳ हरन्ति परमꣳ**

**हैव लोकं जयति य एवं वेद एतद्वै परमं तपो यं प्रेतमग्नावभ्यादधति परमꣳ हैव लोकं जयति य एवं वेद ॥**

अप्रतीकारपूर्वकं शारीरदुःखसहनं विवेकयुक्तं सत् अमृतत्वसाधनमिति इदं ब्राह्मणमारभ्यते—**एतदिति** । यत् **व्याहितो** ज्वरादिव्याधितः संतप्यते तत्प्रतीकारं तत्प्रयुक्तविषादं चाकुर्वन् एवमाधिव्याध्यादि देहस्यैव नात्मनः इति जानन् स इति यत् तदेतत् **वै परमं तपः** । **य एवं वेद** सोऽयमेवंविधतपसा दग्धकिल्बिषो भूत्वा **परमं हैव लोकं** जयति । तथैतत् मुमूर्षुः आदावेव संकल्पयति । किं तत् ? ऋत्विजोऽन्त्यकर्मणे **यं प्रेतं** ग्रामादरण्यं **हरन्तीति** यत् **एतद्वै परमं तपः** । यत् ग्रामादरण्यगमनं तत् तपो भवतीति प्रसिद्धम् । **य एवं** विद्वान् स **परमं हैव लोकं** जयति । **यं प्रेतं अग्नावभ्यादधति** अग्निप्रवेशसामान्यात् **एतद्वै परमं** तपः । **य एवं वेद** स **परमं लोकं** जयति ॥

इत्येकादशं ब्राह्मणम्

---

## द्वादशं ब्राह्मणम्

उपासनान्तरविधिः

**अन्नं ब्रह्मेत्येक आहुः तन्न तथा पूयति वा अन्नं ऋते प्राणात् प्राणो ब्रह्मेत्येक आहुः तन्न तथा शुष्यति वै प्राण ऋतेऽन्नात् एते ह त्वेव देवते एकधाभूयं भूत्वा परमतां गच्छतः तद्ध स्माह प्रातृदः पितरं किꣳस्विदेव एवं विदुषे साधु कुर्यां किमेवास्मा असाधु कुर्यामिति ? स ह स्माह पाणिना मा प्रातृद**

कस्त्वेनयोरेकधाभूयं भूत्वा परमतां गच्छतीति ? तस्मा उ हैतदुवाच वीति अन्नं वै वि अन्ने हीमानि सर्वाणि भूतानि विष्टानि रमिति प्राणो वै रं प्राणे हीमानि सर्वाणि भूतानि रमन्ते सर्वाणि ह वा अस्मिन् भूतानि विशन्ति सर्वाणि भूतानि रमन्ते य एवं वेद ॥

उपासनान्तरमाह—**अन्नमिति**। यत् प्राणिभिरद्यते तदन्नं **ब्रह्मेत्येक** आचार्या **आहुः**। **तत्** युक्तमेवेत्यत्र **तन्नेत्याह** अन्नं ब्रह्मेति **तथा न** ग्रहीतव्यम्। कुतः ? **प्राणादृते अन्नं पूयति वै** पूतिभावमापद्यत एव। तत् कथं ब्रह्म भवितुमर्हति ? ब्रह्म ह्यविनाशि। तथा **प्राणो ब्रह्मेत्येक आहुः**। **तथा तदपि न** ग्रहीतव्यम्। कुतः ? **अन्नादृते प्राणोऽपि शुष्यति वै**। अन्नमृते प्राणः स्वात्मानं धारयितुं न हि शक्नोति। तस्मादन्नादृते प्राणः शुष्यत्येव। यस्मात् एकैकस्य ब्रह्मत्वं न संभवति तस्मात् **एते** अन्नप्राण**देवते एकधाभूयं भूत्वा परमतां** ब्रह्मत्वं **गच्छतः** प्राप्नुत इत्यर्थः। **तदेतत्** एवमध्यवस्य नामतः **प्रातृदः** आत्मनः **पितरमाह स्म**। **किंस्वित्** इति वितर्के। यथा मया ब्रह्म परिकल्पितं एवं **एवंविदुषे** किंस्वित् साधु **कुर्यां इति**। अन्नप्राणैक्य-ब्रह्मवित् साध्वसाधुकरणतो न वर्धते न हीयते वेति वादिनं पुत्रं स्व**पाणिना** वारयन् **मा प्रातृद**! मैवं वोचः। **कस्त्वेनयोः** अन्नप्राणयो**रेकधाभूयं भूत्वा परमतां गच्छति** ? न कश्चिदपि विद्वाननेन दर्शनेन परमतां गच्छति। तस्मान्नैवं वक्तुमर्हसि। यद्येवं, ब्रवीतु भवान् कथं परमतां गच्छति इति ? एवं पृष्टवते **तस्मा उ ह एतत्** वक्ष्यमाण**मुवाच**। किं तत् ? **अन्नं वै वि**। **अन्ने हीमानि सर्वाणि भूतानि विष्टानि** आश्रितानि। अतोऽन्नं वि इत्युच्यते। किञ्च सवितारमिति चोक्तवान्। किं पुनः तत् रम् ? **प्राणो वै रम्**। कुतः ? **प्राणे** हि यस्मात् **इमानि सर्वाणि भूतानि रमन्ते** अतो रं प्राणः। प्राणस्य सर्वभूताश्रयत्वेन रतिगुणविशिष्टत्वात्। इदानीमेवंविदः फलमाचष्टे—**सर्वाणि ह वा अस्मिन् भूतानि विशन्तीति**। एवमन्नप्राणगुणज्ञानवान्।

**अस्मिन् विदुषि सर्वाणि भूतानि विशन्ति । सर्वाणि भूतानि रमन्ते य एवं वेद** तस्येदं फलमित्यर्थः ॥

**इति द्वादशं ब्राह्मणम्**

---

## त्रयोदशं ब्राह्मणम्

उक्थरूपेण प्राणोपासनम्

उक्थं, प्राणो वा उक्थं प्राणो हीदꣳ सर्वमुत्थापयति उत् हास्मा उक्थवित् वीरस्तिष्ठत्युक्थस्य सायुज्यꣳ सलोकतां जयति य एवं वेद ॥ १ ॥

उक्थरूपेण उपासनान्तरविधित्सया इदं ब्राह्मणमारभ्यते—**उक्थमिति** । महाव्रताख्यक्रतौ यत् शस्त्रं शंसन्ति तदुक्थम् । किं पुनः तदुक्थम् ? **प्राणो वा उक्थम्** । शस्त्राणामुक्थवत् प्राणस्य करणग्रामप्रधानत्वात् तदुक्थमित्युपासीत । कथं प्राणस्य उक्थत्वं ? इत्यत आह—**प्राण** इति । **प्राणो हि** यस्मात् **इदं सर्वमुत्थापयति** उत्थापनात् उक्थं प्राणः । न ह्यप्राणः कश्चिदुत्तिष्ठति । उपासनाफलमेतत् । **उत् ह अस्मा** एवंविदे **उक्थवित्** प्राणवित् **वीरः** पुत्रः **तिष्ठ**त्युत्तिष्ठति । दृष्टफलमेतत् । अदृष्टफलं तु **उक्थस्य सायुज्यं सलोकतां जयति य एवं वेद**ेति ॥ १ ॥

यजुष्ट्वेन प्राणोपासनम्

यजुः, प्राणो वै यजुः प्राणे हीमानि सर्वाणि भूतानि युज्यन्ते युज्यन्ते हास्मै सर्वाणि भूतानि श्रैष्ठ्याय यजुषः सायुज्यꣳ सलोकतां जयति य एवं वेद ॥ २ ॥

तथा यजुष्ट्वेन प्राणोपासनमाह—यजुरिति। यजुरित्येवं प्राणमुपासीत। **प्राणो वै यजुः**। तत् कथम्? **प्राणे हि** यस्मात् **सर्वाणि भूतानि युज्यन्ते**। न ह्यसति प्राणे केनचित् योगः संभवति। अतः प्राणो वै यजुः। दृष्टफलं—**अस्मा एवंविदे सर्वाणि भूतानि श्रैष्ठ्याय युज्यन्ते**। अदृष्टफलं तु **यजुषः** प्राणस्य **सायुज्यं सलोकतां जयति य एवं वेदेति** ॥ २ ॥

सामतया प्राणोपासनम्

**साम, प्राणो वै साम प्राणे हीमानि सर्वाणि भूतानि सम्यञ्चि, सम्यञ्चि हास्मै सर्वाणि भूतानि श्रैष्ठ्याय कल्पन्ते साम्नः सायुज्यꣳ सलोकतां जयति य एवं वेद ॥ ३ ॥**

तथा सामतया प्राणोपासनमाह—सामेति। प्राणं **सामतया** उपासीत। **प्राणो वै साम**। कथम्? **प्राणे हि** यस्मात् **सर्वाणि भूतानि** सम्यक् अञ्चन्त इति **सम्यञ्चि**। प्राणस्य साम्यापत्तिहेतुत्वात् सामत्वम्। **हास्मै सर्वाणि भूतानि** न केवलं **सम्यञ्चि** किन्तु श्रेष्ठभावायास्मै **कल्पन्ते**। **साम्नः सायुज्यमि**त्यादि समानम् ॥ ३ ॥

क्षत्त्रतया प्राणोपासना

**क्षत्त्रं, प्राणो वै क्षत्त्रं प्राणो हि वै क्षत्त्रं त्रायते हैनं प्राणः क्षणितोः प्र क्षत्त्रमत्रमाप्नोति क्षत्त्रस्य सायुज्यꣳ सलोकतां जयति य एवं वेद ॥ ४ ॥**

क्षत्त्रतया प्राणोपासना कार्येत्याह—**क्षत्त्रमिति**। क्षत्त्रतया प्राणमुपासीत। **प्राणो हि वै क्षत्त्रम्**। प्रसिद्धमेतत्। कथम्? **प्राणो ह्येनं** देहं **त्रायते** पालयति। कस्मात्? **क्षणितोः** क्षतात् शस्त्रादिहिंसितात् पुनर्मांसेन पूरयति।

तस्मात् क्षतत्राणात् प्राणस्य क्षत्त्रत्वं प्रसिद्धम् । विद्वत्फलं—**प्रक्षत्त्रं अत्रम्** । न त्रायतेऽन्येन केनचिदिति अत्रम् । क्षत्त्रं प्राणः । तं अत्रं क्षत्त्रं प्राणं **प्राप्नोति** प्राणो भवतीत्यर्थः । **क्षत्त्रस्य सायुज्यं सलोकतां जयतीति** पूर्ववत् ॥ ४ ॥

**इति त्रयोदशं ब्राह्मणम्**

---

## चतुर्दशं ब्राह्मणम्

गायत्रीब्रह्मोपासनम्

**भूमिरन्तरिक्षं द्यौः इत्यष्टावक्षराणि अष्टाक्षरꣳ ह वा एकं गायत्र्यै पदम् । एतदु हैवास्या एतत् स यावदेषु त्रिषु लोकेषु तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ १ ॥**

अनेकोपाधिविशिष्टब्रह्मोपासनमुक्त्वा इदानीं गायत्र्युपाधिविशिष्टब्रह्मोपासनं वक्तव्यमिति इदं ब्राह्मणमारभ्यते—**भूमिरिति** । **भूमिरन्तरिक्षं द्यौरिति** एतान्य**ष्टावक्षराणि** यत्पादाक्षराण्यष्टौ तदिद**मष्टाक्षरम्** । **ह वा** इति प्रसिद्धिद्योतकौ । **एकं** प्रथमं **गायत्र्यै** गायत्र्याः **पदम्** । द्यौरित्यत्र दकारोपरि विद्यमानो यकारस्तु अष्टसंख्यापूरकः । **उ हैवास्या** गायत्र्याः भूम्यादिलक्षणं पदमष्टाक्षरत्वसामान्यात् । एवमेतत् त्रैलोक्यात्मकं गायत्र्याः प्रथमपदं यो वेद तस्यैतत् फलम् । **स** विद्वान् **त्रिषु लोकेषु यावत्** जेतव्यं **तावत ह** सर्वं **जयति योऽस्या एतदेवं पदं वेद** । छन्दोजातमतिक्रम्य गायत्रीछन्द एव किमर्थं गृहीतं ? इत्यत्र गायत्त्राणनतो गायत्र्याः प्रधानत्वात् । सर्वछन्दसामात्मभूतप्राणात्मकत्वात् क्षतत्राणनाच्च प्राणस्य क्षत्रता उक्ता । प्राणे हि गायत्री ब्राह्मण्याधारत्वात् । अतस्तन्मूलं परमपुरुषार्थः ॥ १ ॥

गायत्रीद्वितीयपदनिर्वचनम्

**ऋचो यजूꣳषि सामानीत्यष्टावक्षराणि अष्टाक्षरꣳ ह वा एकं गायत्र्यै पदम्। एतदु हैवास्या एतत्स यावतीयं त्रयी विद्या तावद्ध जयति योऽस्या एतदेवं पदं वेद ॥ २ ॥**

गायत्र्या द्वितीयपदं विशिनष्टि— **ऋच** इति। **ऋचो यजूंषि सामानीति** त्रयीविद्यानामाक्षराणि। एतान्यप्यष्टावेव। तथैव **अष्टाक्षरं ह वा एकं गायत्र्यै पदम्।** द्वितीयमेतत् **उ हैवास्या एतत्** ऋग्यजुस्सामलक्षणं अष्टाक्षरत्वसामान्यात्। **स यावतीयं त्रयी विद्या** तया यावत् जेतव्यं **तावत् ह जयति योऽस्या एतदेवं पदं वेद** ॥ २ ॥

गायत्रीतृतीयपदादिव्याख्या

**प्राणोऽपानो व्यान इत्यष्टावक्षराणि अष्टाक्षरꣳ ह वा एकं गायत्र्यै पदम्। एतदु हैवास्या एतत्स यावदिदं प्राणि तावद्ध जयति योऽस्या एतदेवं पदं वेद अथास्या एतदेव तुरीयं दर्शितं पदं परोरजा य एष तपति यद्वै चतुर्थं तत् तुरीयं दर्शितं पदमिति ददृश इव ह्येष परोरजा इति सर्वमु ह्येवैष रज उपर्युपरि तपति एवꣳ हैव श्रिया यशसा तपति योऽस्या एतदेवं पदं वेद ॥ ३ ॥**

गायत्र्याः तृतीयपदादि व्याचष्टे—**प्राण** इति। तथा **प्राणोऽपानो व्यान इति** प्राणादिनामाक्षराणि **अष्टौ**। तथा गायत्र्याः तृतीयपदम्। **स यावदिदं प्राणि**जातं **तावत् ह जयति। योऽस्या एतदेवं** गायत्रीतृतीयपदं **वेद** स यथोक्तफलभाक् भवतीत्यर्थः। **अथ** अनन्तरं गायत्र्याः तुर्यपदमुच्यते। किं तत्? **एतदेव** वक्ष्यमाणं **तुरीयं दर्शितं पदम्। परोरजा य एष तपती**त्यर्थं श्रुतिरेव व्याचष्टे। **यद्वै चतुर्थ**मिति प्रसिद्धं तदिह तुर्यशब्देनोच्यते। **दर्शितं**

पदमित्यत्र **ददृश इव** दृश्यत इव **ह्येष** मण्डलान्तर्गतः पुरुषः अतो दर्शितं पदमभिधीयते। **परोरजा** इत्यत्र **सर्वमु ह्येवैष** मण्डलस्थः पुरुषः **रजः** तज्जं सर्वलोकं **तदुपर्युपर्या**धिपत्येन सर्वं लोकं रजोजातं **तपति**। सर्वलोकाधिपत्यख्यापनार्थमुपर्युपरीति वीप्सा। यथासौ सविता सर्वाधिपत्यलक्षणया क्रियया तपति तथैवं **योऽस्या एतदेवं** तुरीयं **पदं** दर्शितं **वेद** सोऽयं **विद्वान् श्रिया यशसा तपति** ॥ ३ ॥

## तुरीयपदविवरणम्

सैषा गायत्री एतस्मिꣳस्तुरीये दर्शिते पदे परोरजसि प्रतिष्ठिता तद्वैतत् सत्ये प्रतिष्ठितं चक्षुर्वै सत्यं चक्षुर्हि वै सत्यं तस्मात् यदिदानीं द्वौ विवदमानावेयातां अहमदर्शमहमश्रौषमिति य एवं ब्रूयादहमदर्शमिति तस्मा एव श्रद्दध्याम तद्वै तत् सत्यं बले प्रतिष्ठितं प्राणो वै बलं तत् प्राणे प्रतिष्ठितं तस्मादाहुर्बलꣳ सत्यादोजीय इति एवं वैषा गायत्री अध्यात्मं प्रतिष्ठिता सा हैषा गयाꣳस्तत्रे प्राणा वै गयाः तत्प्राणाꣳस्तत्रे तद्यत् गयाꣳस्तत्रे तस्मात् गायत्री नाम स यामेवामूꣳ सावित्रीमन्वाह एषैव स यस्मा अन्वाह तस्य प्राणाꣳस्त्रायते ॥ ४ ॥

तुर्यपदं विशदयति—**सैषेति**। या प्राणादिलक्षणा त्रिपदोक्ता **सैषा गायत्री एतस्मिन् तुरीये दर्शिते पदे परोरजसि प्रतिष्ठिता** आदित्यस्य मूर्तामूर्तरसत्वात्। अत एव हि वस्तुजातं रसवत् प्रतिष्ठितम्। रसापाये नीरसदारुवत् अप्रतिष्ठितमेव भवति। यथा रसवत्तरुः प्रतिष्ठितः तथा मूर्तामूर्तात्मिका त्रिपदा गायत्री सवितृप्रतिष्ठिता त्रिभिः पादैः गायत्र्याः सवितृरसत्वात्। यद्वत् त्रिपदा सवितृप्रतिष्ठिता **तद्वै तत्** तुरीयं **सत्ये प्रतिष्ठितम्**।

किं तत् सत्यं? इत्यत्र—**चक्षुर्वै सत्यम्**। कथं? **चक्षुर्हि वै सत्यं** इति। हकारः प्रसिद्धिद्योतकः। कथं प्रसिद्धिः? इत्यत्र प्रसिद्धत्वात्। **तस्मात् यदिदानीमेव द्वौ विवदमानौ** विरुद्धं पदं तौ एयातां आगच्छेयाताम्—**अहमदर्शं** दृष्टवानस्मि। अन्य आह—न तु मया दृष्टं किन्तु **अहमश्रौषं** तद्वस्तु इति। **तयोर्य एवं ब्रूयात् अहमदर्शमिति तस्मा एव श्रद्दध्याम**। न पुनः यो ब्रूयात् अहमश्रौषमिति श्रोतुर्मृषाश्रवणमपि संभवति। न हि चक्षुः मृषा दर्शनं द्रष्टुं पारयति मृषाया अचाक्षुषत्वात्। तस्मात् नाश्रौषमित्युक्तवते श्रद्दध्याम। तस्मात् सत्यप्रतिपत्तिहेतुत्वात् **तत् सत्यं** तस्मिन् चक्षुरात्मके सत्ये त्रिभिरेभिः पादैः सह तुरीयं प्रतिष्ठितम्। उक्तं चैतत् "स आदित्यः कस्मिन् प्रतिष्ठित इति चक्षुषीति"। यत् पादत्रयाश्रयं तद्वै तुरीयं **बले प्रतिष्ठितम्**। किं तत् बलम्? **प्राणो वै बलम्**। तस्मिन् बलवति **प्राणे प्रतिष्ठितं** सत्यम्। तथा चोक्तं—"सूत्रे तदोतं च प्रोतं च" इति। यस्मादेवं **तस्मात् आहुर्बलं वै सत्यादोजीयः** ओजस्तरम्। आश्रितापेक्षयाश्रयस्य बलवत्त्वप्रसिद्धेः। **इत्येवमु हैवैषा गायत्री अध्यात्मं** या प्राणे **प्रतिष्ठिता** तस्यां गायत्र्यां हि जगत् प्रतिष्ठितम्। सर्वे देवाः कर्माणि फलं च यत्रैकं भवन्ति सैषा प्राणरूपिणी गायत्री जगत आत्मा। **सा हैषा गयान् तत्रे** त्रातवती। केऽपि पुनर्गयाः? **प्राणा** वागादयो हि गयाः। तान् तत्रे। सैषा गायत्री **तत्** तत्र **यत्** यस्मात् **गयान् तत्रे** एवं गयत्राणतो **गायत्री नाम** प्रथिता। **सोऽयमाचार्योऽ**ष्ट-वर्षं माणवकमुपनीय **यामेव अमूं सावित्रीं अन्वाह** पच्छः अर्धर्चशः समस्तां च, **एषैव** हि साक्षात् प्राणो जगत आत्मा माणवकाय समर्पिता। या ह इदानीं व्याख्याता, यैः **सोऽयमाचार्यो यस्मै** माणवकाय **अन्वाह** अनुवक्ति सेयं गायत्री **तस्य** माणवकस्य नरकादिपतनात् गयान् **प्राणान् त्रायते** रक्षतीत्यर्थः॥ ४॥

गायत्र्या आनुष्टुभनिराकरणम्

**ता**ँ हैतामेके सावित्रीमनुष्टुभमन्वाहुः वागनुष्टुप् एतद्वाच-मनुब्रूम इति न तथा कुर्यात् गायत्रीमेव सावित्रीमनुब्रूयात् यदिह

वा अप्येवंवित् बह्विव प्रतिगृह्णाति न हैव तत् गायत्र्या एकंचन पदं प्रति ॥ ९ ॥

या गयत्राणकरी तामेवैके अनुष्टुभमाहुः उपपत्तितः। तन्निराकृत्य विचक्षणा गायत्रीमेवाहुरित्याह—**तामिति**। **तामेव एके** शाखिनः **अनुष्टुप्**छन्दस्कामाहुः। तत्र उपपत्तिः **वाक् अनुष्टुप्** सरस्वती। **तामेव** माणवकाय **अनुब्रूम इति** वदन्ति। यदेवं वदन्ति तत् मृषैव इति अपर आहुः। तत् कथम्? **गायत्रीमेव सावित्रीमनुब्रूयात्**। अन्यथा **न कुर्यात्**। कस्मादेवम्? यस्मात् प्राणो गायत्रीत्युक्तम्। उक्ते हि प्राणे वाक् च सरस्वती च। अनेन प्राणाश्च एतत् सर्वं माणवकाय समर्पितं भवति। किञ्च प्रसङ्गादागतमिदमुक्त्वा अथ गायत्रीविदं स्तौति—**यदिति**। इदानीं **यदिह वापि एवंवित् बह्विव प्रतिगृह्णाति**, विदुषः सर्वात्मकत्वात्, **न हैव तत्** प्रतिग्रहजातं **गायत्र्या एकञ्चन पदैकं** प्रत्यपि पर्याप्तम् ॥ ९ ॥

गायत्रीवित्स्तुतिः

स य इमाꣳस्त्रींल्लोकान् पूर्णान् प्रतिगृह्णीयात् सोऽस्या एतत्प्रथमं पदमाप्नुयात् अथ यावतीयं त्रयी विद्या यस्तावत् प्रतिगृह्णीयात् सोऽस्या एतद्द्वितीयं पदमाप्नुयादथ यावदिदं प्राणि यस्तावत्प्रतिगृह्णीयात् सोऽस्या एतत्तृतीयं पदमाप्नुयात् अथास्या एतदेव तुरीयं दर्शितं पदं परोरजा य एष तपति नैव केनचनाप्यं कुत उ एतावत् प्रतिगृह्णीयात् ॥ ६ ॥

पुनर्गायत्रीविदं स्तौति—**स य** इति। **स यस्तु** गायत्रीवित् **इमान्** गोऽश्वादिधनसंपूर्णान् भूरादीन् **त्रीन् लोकान् पूर्णान् प्रतिगृह्णीयात्** तत् प्रथमपदविज्ञानफलम्। **सोऽस्या एतत् प्रथमं पदमाप्नुयात्**। न हि तं प्रतिग्रहदोषः

स्पृशतीत्यर्थः । अथ पुनः **यावतीयं त्रयी विद्या यस्तावत् प्रतिगृह्णीयात् सोऽस्या एतत् द्वितीयं पदमाप्नुयात्** । द्वितीयपदविज्ञानफलं तेन भुक्तं स्यात् । तथाथ **यावदिदं प्राणि यस्तावत् प्रतिगृह्णीयात् सोऽस्या एतत् तृतीयं पदमाप्नुयात्** । तृतीयपदज्ञानफलमनेन भुक्तं स्यादिति विकल्प्य एतदुच्यते—न चैवं दाता प्रतिग्रहीता च विद्यत इति यत् तत् विद्यास्तुतये । दाता प्रतिग्रहीता च तौ संभाव्येते । तथापि न हि तदा तत्प्रयुक्तदोषादिः सेद्धुं पारयति । कस्मात् ? चतुर्थपदविज्ञानस्य परमपुरुषार्थसाधकत्वेन तत्प्रतिपन्थिसर्वदोषग्रासत्वात् । तत् चतुर्थपदं दर्शयति । किं तत् ? **अथास्या एतदेव तुरीयं दर्शितं पदम् । परोरजा य एष तपति तच्चैतत् नैव केनचिदपि** प्रतिग्रहेण अस्यानाप्यं अप्राप्यमस्ति । पूर्वोक्तत्रीणि पदान्यपि नैवाप्यानि केनचित् परमार्थतः । **कुत उ एतावत् प्रतिगृह्णीयात्** । यस्मादेवं तस्मात् गायत्री एवंप्रभाववतीत्यर्थः ॥ ६ ॥

### तुर्यगायत्र्युपस्थानम्

तस्या उपस्थानं गायत्र्यसि एकपदी द्विपदी त्रिपदी चतुष्पदी अपत् असि नहि पद्यसे नमस्ते तुरीयाय दर्शिताय पदाय परोरजसेऽसावदो मा प्रापदिति यं द्विष्यात् असावस्मै कामो मा समृद्धीति वा न हैवास्मै स कामः समृध्यते यस्मा एवमुपतिष्ठतेऽहमदः प्रापमिति वा ॥ ७ ॥

तुर्यगायत्र्युपस्थानमुच्यते—**तस्या** इति । **तस्या** उपेत्य स्थानं **उपस्थानम्** । अनेन मन्त्रेण नमस्करणम् । कोऽसौ मन्त्रः ? इत्यत्र—हे चतुष्पदे ! त्वं **गायत्र्यसि** । त्रैलोक्यपादेन **एकपदी** । त्रयीविद्यारूपेण **द्विपदी** । प्राणादिना **त्रिपद्यसि** । चतुर्थपादेन **चतुष्पद्यसि** । एवं चतुर्भिः पादैः उपासकैः पद्यसे । वस्तुतः स्वेन रूपेण **अपदसि** । कथम् ? **न हि पद्यसे** स्वारोपितविशेषस्य

नेति नेतीति प्रविलापितत्वात्। अतोऽव्यवहार्यपदाय **नमस्ते तुरीयाय दर्शिताय पदाय परोरजसे असौ** शत्रुः तत्प्राप्तिविघ्नकरः **अदः** तत् कार्यं तत्प्राप्तिविघ्नकर्तृत्वं **मा प्रापत्** मैव प्राप्नोतु। **इति**शब्दो मन्त्रपरिसमाप्त्यर्थः। स्वयं विद्वान् **यं द्विष्यात्** द्वेषं कुर्यात् तं प्रयत्नेन उपस्थानं असौ शत्रुरमुकनामेति नाम गृह्णीयात्। **असावस्मै** शत्रवे **कामो मा समृद्धि** समृद्धिं मा प्राप्नोतु **इति वा** उपतिष्ठते। **न हैवास्मै कामः समृध्यते यस्मा एवमुपतिष्ठते अहमदो** देवदत्ताभिप्रेतं **प्रापमिति वा** उपतिष्ठते। असावदो मा प्रापदित्यादि-मन्त्रत्रयस्य यथाकामं विकल्पः॥ ७॥

गायत्र्या मुखविधानाय अर्थवादः

**एतद्ध वै तज्जनको वैदेहो बुडिलमाश्वतराश्विमुवाच यन्नु हो तद्गायत्रीविद् अब्रूथाः अथ कथꣳ हस्तीभूतो वहसीति मुखꣳ ह्यस्याः सम्राट्! न विदांचकारेति होवाच तस्या अग्निरेव मुखं यदिह वा अपि बह्विव अग्नावभ्यादधति सर्वमेव तत् संदहति एवꣳ हैव एवंवित् यद्यपि बह्विव पापं कुरुते सर्वमेव तत् संप्साय शुद्धः पूतोऽजरोऽमृतः संभवति॥ ८॥**

गायत्र्या मुखविधानाय अर्थवाद उच्यते—**एतदिति**। **एतद्ध** किल **वै** स्मर्यते। तत्तत्र गायत्रीविज्ञानविषये **जनको** ह **वैदेहः** नामतो **बुडिलः** अश्वतराश्वस्य अपत्यं **आश्वतराश्विः** तं किल उक्तवान्। **यन्नु** इति वितर्के। **हो** अहो इत्येतत् तत् यतो **गायत्रीविद् अब्रूथा** गायत्रीविदस्मीति यदब्रूथाः। किमिदम्? तद्वचोरूपम्। **अथ कथं** यदि गायत्रीवित् असत्प्रतिग्रहादोषेण **हस्तीभूतो वहसीति** स्मारितो **मुखं ह्यस्या** गायत्र्या हे **सम्राट्! नैव विदाञ्च-कार** न विज्ञातवानस्मीति **होवाच** एकाङ्गविकलत्वात्। गायत्रीविज्ञानफलं शृणु—**तस्या** गायत्र्या **अग्निरेव मुखम्**। **यदि ह वा अपि बह्विव** इन्धनं

**अग्नावभ्यादधति सर्वमेव** तत् सन्दहत्येव इन्धनमग्निः । **एवं हैव एवंवित्** गायत्र्यास्त्वग्निर्मुखमित्येवंवित् स्वयं **यद्यपि बह्विव पापं** करोति प्रतिग्रहादिपापजातं **संप्साय** सम्यक् भक्षयित्वा **शुद्धः** अग्निवत् **पूतश्च** । तस्मात् प्रतिग्रहदोषात् गायत्र्यात्मा **अजरोऽमृतश्च संभवति** ॥ ८ ॥

**इति चतुर्दशं ब्राह्मणम्**

---

## पञ्चदशं ब्राह्मणम्

ज्ञानकर्मादिफलोपसंहारः

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् । तत् त्वं पूषन्! अपावृणु सत्यधर्माय दृष्टये । पूषन्! एकर्षे! यम! सूर्य! प्राजापत्य! व्यूह रश्मीन् समूह तेजो यत्ते रूपं कल्याणतमं तत्ते पश्यामि योऽसावसौ पुरुषः सोऽहमस्मि । वायुरनिलममृतमथेदं भस्मान्तꣳ शरीरम् । ॐ ३ क्रतो! स्मर कृतꣳ स्मर क्रतो! स्मर कृतꣳ स्मर । अग्ने! नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नमउक्तिं विधेम ॥

ज्ञानकर्मसमुच्चयानुष्ठानफलं प्रकृतोपस्थानं च उपसंहर्तुमिदं ब्राह्मणमारभ्यते—**हिरण्मयेने**ति । एतन्मन्त्रपञ्चकमीशावास्यविवरणे पदशो व्याख्यातमिह संक्षेपतो व्याख्यायते । गायत्रीपदचतुष्टयगतविशेषासंभवप्रबोधसिद्धमपदं निष्प्रतियोगिकब्रह्ममात्रमिति जानतः तन्मात्रावस्थानलक्षणकैवल्यभाक्त्वात् अयमत्र न विवक्षितः । पादत्रयवित् चतुर्थपादाप्तये तत्प्राप्त्यन्तरायनिरसनपूर्वकं गायत्र्यात्मानं

सवितारं मार्गं याचते। कथम्? हे **पूषन्** सर्वजगत्पोषक! **हिरण्मयेन** असमाहितचेतसां स्वप्राप्तिपिधानभूत**पात्रेण सत्यस्य** ब्रह्मणः **ते मुखं** स्वरूपं स्वप्राप्तिद्वारं वा पिहितमिव **पिहितमिति** यत् **तत् त्वमपावृणु** त्वद्दर्शनप्रतिबन्धमपनय। किमर्थमपाकरणं? इत्यत्र **सत्यधर्माय दृष्टये** सत्यात्मास्मीति ज्ञानायेत्यर्थः। पूषन्नित्यादिविशेषणपञ्चकविशिष्ट हिरण्यगर्भ! मम त्वत्प्राप्त्यन्तरायतावक**रश्मीन् व्यूह** विगमय। यथा त्वामहं द्रक्ष्ये तथा तावकरस्मीन् **समूह** संक्षिप्य उपसंहर। झटिति **यत्ते रूपं कल्याणतमं तत्ते पश्यामि**। कथं पश्यसि? इत्यत्र—**योऽसौ** व्याहृतिस्थानीयगायत्रीपदावयवात्मा स्वगतविशेषापायाधिकरणरूपेण निरधिकरणः स्वेन रूपेण वा स्वमात्रतया सर्वत्र पूरणात् **पुरुषः** शिष्यते **सोऽसावहमस्मीति** त्वां प्रपद्ये न तु भृत्यवदित्यर्थः। स्वात्मदशायामध्यात्मपरिच्छिन्नो यः प्राणवायुरधिदैवभावमापन्नबाह्यानिलं प्रत्यप्येतु। तथान्यानि करणानि स्वं स्वं देवताभावं भजन्तु। पुरा मदधिष्ठितस्थूल**शरीरं तु भस्मावसानतया** पृथिवीं भजतु। **ओं क्रतो**! इति संबोध्य हे सत्यसङ्कल्प! मत्कृते यत् स्मर्तव्यं तत् **स्मर**। द्विरुक्तिरादरार्था। किञ्च हे **अग्ने**! **उत्तरेण सुपथा मां नय**। त्वत्पदाप्त्यन्तरायभूत**मस्मज्जुहुराणमेनः** पापजातं **युयोधि** वियोजय विनाशयेत्यर्थः। इदानीं वयं पूर्ववत् सपर्यां कर्तुं न शक्नुमः। किन्तु **भूयिष्ठां ते नमउक्तिं विधेम** नमस्कारोक्त्या परिचरामेत्यर्थः। जरठत्वादन्यत्कर्तुं न हि शक्नुमः। केवलकृपया स्वात्मभावं दत्वा मामुद्धरेत्यर्थः॥

**इति पञ्चदशं ब्राह्मणम्**

इति पञ्चमोऽध्यायः

---

# षष्ठोऽध्यायः

## प्रथमं ब्राह्मणम्

प्राणस्य ज्येष्ठत्वश्रेष्ठत्वे तद्वेदनफलं च

**यो ह वै ज्येष्ठं च श्रेष्ठं च वेद ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति प्राणो वै ज्येष्ठश्च श्रेष्ठश्च ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति अपि च येषां बुभूषति य एवं वेद ॥ १ ॥**

सप्तमाध्यायगतगायत्रीब्राह्मणे गायत्री प्राण इत्युक्तम् । पुनः उक्थ-यजुस्सामक्षत्रादिभावैः प्राणस्य उपासनमभिहितम् । पुनः पुनर्विशेषता अस्यापि खिलकाण्डत्वात् । येन वागादयो ज्यैष्ठ्यश्रैष्ठ्यभाजो भवन्ति । कथं प्राणस्य ज्यैष्ठ्यश्रैष्ठ्यभाक्त्वम्? पूर्वत्र यदनुक्तं विशिष्टफलं प्राणोपासनं तद्वक्तव्यमिति अष्टमाध्याय आरभ्यते । ईशावास्यादिमुक्तिकोपनिषदन्तं विशिष्टं शास्त्रमिति उपोद्घातप्रकरणे प्रतिज्ञातत्वात् तदनुरोधेन छान्दोग्यपञ्चमाध्याये "यो ह वै ज्येष्ठं च" इत्यारभ्य "य एतानेवं पञ्चाग्नीन् वेद स शुद्धः पूतः पुण्यलोको भवति" इति दशमखण्डिकान्तं योऽर्थोऽभिहितः सोऽयमर्थोऽत्र बृहदारण्य-काष्टमाध्याये च यो ह वै ज्येष्ठं इत्यादि ब्राह्मणद्वयेन यतो वर्णितः अतोऽत्र न पुनर्वक्तव्यमवशिष्यते । अत्र यान्यनुक्ताक्षराणि तानि हि व्याख्यातव्यानि । तथापि संक्षेपतः कृत्स्नं व्याख्यायते । तत्रादौ वेदनफलप्ररोचनाय इदमुच्यते—**यो ह वा** इत्यादिना । **यः** कश्चित्—**ह वा** इत्यवधारणार्थौ—वक्ष्यमाणज्येष्ठ-श्रेष्ठगुणं **वेद** सोऽयं **स्वानां ज्येष्ठश्च श्रेष्ठश्च भवति** । एवं फलाभिमुखीभूतं प्रत्याह—**प्राणो वै ज्येष्ठश्च श्रेष्ठश्चे**ति । शुक्रशोणितसंबन्धः प्राणादीनामव-शिष्टत्वेऽपि प्राणप्रवेशानन्तरं शुक्रादि प्ररोहतीति चक्षुराद्यपेक्षया प्राणस्य ज्येष्ठत्वम् । प्राणस्य निषेककालादारभ्य गर्भपोषणहेतुत्वात् । अस्तु प्राणस्य

ज्येष्ठत्वं, श्रेष्ठता कुतः? इत्यत्र प्राणग्रामसंवादतः तस्य श्रेष्ठताप्यवगम्यते। एवं ज्येष्ठश्रेष्ठगुणप्राणं **यो वेद स स्वानां ज्येष्ठश्च श्रेष्ठश्च भवति**। स्वातिरेकेण योऽन्यो ज्येष्ठश्च श्रेष्ठश्च भविष्यामीति **बुभूषति** तेषामप्ययं ज्येष्ठश्च श्रेष्ठश्च भवति। उपासनोत्कर्षतायाः फलोत्कर्षताहेतुत्वात्॥ १॥

वसिष्ठगुणकवागुपासनाफलम्

**यो ह वै वसिष्ठां वेद वसिष्ठः स्वानां भवति वाग्वै वसिष्ठा वसिष्ठः स्वानां भवति अपि च येषां बुभूषति य एवं वेद॥ २॥**

वसिष्ठादिगुणविशिष्टवागाद्युपासनया स्वानां तद्गुणविशिष्टो भवतीत्याह—**यो** हेति। **यो ह वै वसिष्ठ**गुणवतीं वाचं वेद **वसिष्ठो** ह **स्वानां भवति**। कथं वाचो वसिष्ठता? इत्यत्र **वाग्वै वसिष्ठा**। यतो वाग्मिनो धनवन्तो वसन्ति अतो वसिष्ठगुणवद्वागुपासनात् स्वदर्शनानुरूपेण ज्ञातिमध्ये **वसिष्ठो भवती**त्यर्थः॥ २॥

प्रतिष्ठागुणवच्चक्षुरुपासनाफलम्

**यो ह वै प्रतिष्ठां वेद प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे चक्षुर्वै प्रतिष्ठा चक्षुषा हि समे च दुर्गे च प्रतितिष्ठति प्रतितिष्ठति समे प्रतितिष्ठति दुर्गे य एवं वेद॥ ३॥**

प्रतिष्ठागुणवच्चक्षुरुपासनाफलमाह—**यो** हेति। **यो ह वै**—प्रतितिष्ठत्यनयेति प्रतिष्ठा—तां **वेद**, प्रतिष्ठागुणवच्चक्षुर्वेदनफलं—सोऽयं विद्वान् **समे** देशे काले च यथा **प्रतितिष्ठति** तथा **दुर्गे** दुर्गमनप्रदेशे दुर्भिक्षकाले वा प्रतितिष्ठति। कथम्? प्रतिष्ठागुणवच्चक्षुः। **चक्षुर्वै प्रतिष्ठा**। कथम्? **चक्षुषा हि समे च दुर्गे** दृष्ट्वा **प्रतितिष्ठति**। यत एवमतः तदनुरूपं फलम्। **समे च दुर्गे च प्रतितिष्ठती**त्यर्थः॥ ३॥

संपद्गुणकश्रोत्रवेदनफलम्

यो ह वै संपदं वेद स१ँहास्मै पद्यते यं कामं कामयते श्रोत्रं वै संपत् श्रोत्रे हीमे सर्वे वेदा अभिसंपन्नाः स१ँहास्मै पद्यते यं कामं कामयते य एवं वेद ॥ ४ ॥

संपद्गुणविशिष्टश्रोत्रवेदनफलमाह—**यो** हेति। **यो ह वै संपद्गुण-विशिष्टं श्रोत्रं वेद** स विद्वान् **यं कामं कामयते** सं **हास्मै** कामः **पद्यते**। कथम्? संपद्गुणवत् **श्रोत्रं वै संपत्**। कथम्? **श्रोत्रे** सति **सर्वे वेदा अभिसंपन्ना** भवन्ति। श्रोत्रवतो हि वेदविहितकर्मानुकूलकामः संपद्यते। **य एवं वेद** स विद्वान् **यं कामं कामयते** तद्विज्ञानानुरूपं फलं **हास्मै** सं **पद्यते** ॥ ४ ॥

आयतनगुणवन्मनोवेदनफलम्

यो ह वा आयतनं वेद आयतन१ँ स्वानां भवति आयतनं जनानां मनो ह वा आयतनमायतन१ँ स्वानां भवति आयतनं जनानां य एवं वेद ॥ ५ ॥

आयतनगुणवन्मनोवेदनफलमाह—**यो** हेति। **यो ह वा** आयतनगुण-वन्मनो **वेद** सोऽयं **स्वानामायतनं** अन्येषां **जनानां** च **भवति**। किं तत्? **मनो** ह **वा आयतनं** इन्द्रियेन्द्रियार्थानामाश्रयत्वात्। **य** एवमिन्द्रियप्रवृत्ति-निवृत्ती संकल्पायत्ते इति वेद सोऽयं विद्वान् दर्शनानुरूपं फलं **स्वानामन्येषां** च **आयतनं भवती**त्यर्थः ॥ ५ ॥

प्रजापतिगुणयुक्तरेतोवेदनफलम्

यो ह वै प्रजापतिं वेद प्रजायते ह प्रजया पशुभिः रेतो वै प्रजापतिः प्रजायते ह प्रजया पशुभिर्य एवं वेद ॥ ६ ॥

प्रजापतिगुणविशिष्टरेतोवेदनफलमाह—**यो** **हेति**। **यो ह वै प्रजापति-गुणवद्रेतो वेद स प्रजायते ह प्रजया पशुभिः** संपन्नो भवति। कोऽयं प्रजापतिः? इत्यत्र—**रेतो वै प्रजापतिः**। रेतोग्रहणं प्रजननेन्द्रियोपलक्षणार्थम्। **य एवमेवं वेद** सोऽयं **प्रजया पशुभिः प्रजायत** इति दर्शनानुरूपं फलमित्यर्थः॥ ६॥

वागादिप्राणानां विवादः तत्र ब्रह्मवाक्यं च

**ते ह इमे प्राणा अहꣳश्रेयसे विवदमाना ब्रह्म जग्मुः तद्धोचुः को नो वसिष्ठ इति? तद्धोवाच यस्मिन् व उत्क्रान्ते इदꣳ शरीरं पापीयो मन्यते स वो वसिष्ठ इति॥ ७॥**

वागादयः प्राणा विवदमानाः प्राजापत्यसूत्रवाक्यार्थमहमेवेति सर्वे मत्वा पृथक् पृथक् उत्क्रम्य आगत्य प्राजापत्यसूत्रार्थविषयः प्राण एवेति विज्ञाय प्राणशरणा बभूवुरित्याह—**ते हेति**। **ते ह इमे प्राणाः** स्वस्व**श्रेयसे** विरुद्धं वदन्तो **ब्रह्म जग्मुः**। **तत् होचुः** तं गत्वा ऊचुः। किमिति? **को नो**ऽस्माकं मध्ये **वसिष्ठः**? **इति**। **तत्** ब्रह्म तान् **होवाच**। किमिति? **वो** युष्माकं मध्ये **यस्मिन् उत्क्रान्ते शरीरमिदं** पूर्वस्मादतिशयेन **पापीयः** पापतमं शावं **मन्यते** लोकः **स वो** युष्माकं मध्ये **वसिष्ठो** भविष्यति। जीवतोऽपि पापीय एव शरीरम्। ततोऽपि पापवत्तममित्युक्तिः वैराग्य-प्रदर्शनार्था। प्रजापतिर्जानन्नपि वसिष्ठं सर्वेषामप्रियशङ्कया नोक्तवान्॥ ७॥

वागादीनां स्वस्ववीर्यपरीक्षणाय क्रमादुत्क्रमणम्

**वाक् होच्चक्राम सा संवत्सरं प्रोष्य आगत्य उवाच कथम-शकत मदृते जीवितुमिति? ते होचुर्यथा अकला अवदन्तो वाचा प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा**

प्रजायमाना रेतसा एवमजीविष्मेति प्रविवेश ह वाक् ॥ ८ ॥ चक्षुर्होच्चक्राम तत् संवत्सरं प्रोष्य आगत्य उवाच कथमशकत मदृते जीवितुमिति? ते होचुर्यथा अन्धा अपश्यन्तश्चक्षुषा प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा प्रजायमाना रेतसा एवमजीविष्मेति प्रविवेश ह चक्षुः ॥ ९ ॥ श्रोत्रꣳ होच्चक्राम तत् संवत्सरं प्रोष्य आगत्य उवाच कथमशकत मदृते जीवितुमिति? ते होचुर्यथा बधिरा अशृण्वन्तः श्रोत्रेण प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा विद्वाꣳसो मनसा प्रजायमाना रेतसा एवमजीविष्मेति प्रविवेश ह श्रोत्रम् ॥ १० ॥ मनो होच्चक्राम तत् संवत्सरं प्रोष्य आगत्य उवाच कथमशकत मदृते जीवितुमिति? ते होचुर्यथा मुग्धा अविद्वाꣳसो मनसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण प्रजायमाना रेतसा एवमजीविष्मेति प्रविवेश ह मनः ॥ ११ ॥ रेतो होच्चक्राम तत् संवत्सरं प्रोष्य आगत्य उवाच कथमशकत मदृते जीवितुमिति? ते होचुर्यथा क्लीबा अप्रजायमाना रेतसा प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण विद्वाꣳसो मनसा एवमजीविष्मेति प्रविवेश ह रेतः ॥ १२ ॥

ब्रह्मणैवमुक्ता वागादयः स्वात्मनो वीर्यपरीक्षणाय क्रमात् उच्चक्रमुः इत्याह—**वागित्यादिना**। प्राणानां मध्ये प्रथमं **वागेव हास्मात्** शरीरादु**च्चक्राम**। सेयं वाक् उत्क्रम्य **संवत्सर**मात्रं **प्रोष्य** पुन**रागत्य उवाच**। किमिति? हे चक्षुरादिप्राणाः! यूयं मत् ऋते मां विना जीवितुं **कथमशकत** शक्तवन्तः?

इत्येवमुक्ताश्चक्षुरादय ऊचुः। किमिति? **यथा** लोके **अकला** मूका **वाचा अवदन्तोऽपि प्राणेन** प्राणनव्यापारं कुर्वन्तः **चक्षुषा** रूपजातं **पश्यन्तः श्रोत्रेण** शब्दजातं **शृण्वन्तः मनसा** कार्याकार्यादिकं **विद्वांसः रेतसा प्रजायमानाः** पुत्रानुत्पादयन्तः **एवमजीविष्म वयमिति** । प्राणैरेवमुक्ता **वाक्** नाहं वसिष्ठोऽस्मीति स्वाभिमतिमुत्सृज्य व्रीलिता पुनः शरीरं **प्रविवेश ह** इत्यर्थः। तथा **चक्षुः श्रोत्रं मनः** प्रजातिरित्येतत् सर्वं समानमित्याह—**चक्षु**-रित्यादिना ॥ ८–१२ ॥

मुख्यप्राणस्य वागादिवारितस्य अनुत्क्रमणेच्छा

**अथ ह प्राण उत्क्रमिष्यन् यथा महासुहयः सैन्धवः पड्वीशशंकून् संवृहेत् एवꣳ हैव इमान् प्राणान् संववर्ह ते होचुर्मा भगवः! उत्क्रमीः न वै शक्ष्यामस्त्वदृते जीवितुमिति तस्यो मे बलिं कुरुतेति तथेति ॥ १३ ॥**

वागुत्क्रमणागमनानन्तरं प्राणोऽप्युत्क्रमणव्यापारं कुर्वन् वागादिभिः वारितो नोत्क्रमितुमिच्छतीत्याह—अथेति। **अथ ह प्राणः** स्वस्थानादुत्क्र-**मिष्यन्** तदानीं वागादयोऽपि प्रचलिता भवन्तीत्यत्र—**यथा** लोके **महान् सुहयः** सिन्धुदेशजत्वात् **सैन्धवः पड्वीशशङ्कून्** पादबन्धनकीलान् **संवृहेत्** उद्यच्छेत् युगपदुद्धृत्य खं नयेत् अश्वारोहे आरूढे परीक्षणाय **एवमेव** वागादीन् **संववर्ह** स्वस्थानादुद्धृतवान् स्थानात् भ्रंशितवानित्यर्थः। **ते ह** वागादयो भीता **ऊचुः**। किमिति? हे **भगवो** भगवन्! **मा उत्क्रमीः** यस्मान्न **शक्ष्यामः त्वदृते जीवितुमिति**। यद्येवं भवद्भिः मम श्रेष्ठता विज्ञाता तदाहमत्र श्रेष्ठः स्याम्। योऽहमेवंविधः **तस्य उ** मम **बलिं कुरुत**। एवं कल्पितोऽयं प्राणसंवादः विदुषो विशिष्टफलज्ञापनार्थः। एवं श्रेष्ठपरीक्षणप्रकारोपदेशः। अनेनायं श्रेष्ठ इति ज्ञातुं शक्यते। न ह्यन्यथा जडानां करणानां मिथः संवादो वत्सरमात्र-मेकैकस्य निर्गमनं संभवति। प्राणोपासनाय इयं कल्पनेत्यर्थः॥ १३ ॥

वागादिभिः मुख्यप्राणस्य बलिदानम्

सा ह वागुवाच यद्वा अहं वसिष्ठास्मि त्वं तद्वसिष्ठोऽसीति यद्वा अहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठोऽसीति चक्षुर्यद्वा अहꣳ संपदस्मि त्वं तत्संपदसीति श्रोत्रं यद्वा अहमायतनमस्मि त्वं तदायतनमसीति मनो यद्वा अहं प्रजातिरस्मि त्वं तत्प्रजातिरसीति रेतस्तस्यो मे किमन्नं किं वास इति ? यदिदं किंच आ श्वभ्य आ कृमिभ्य आ कीटपतङ्गेभ्यस्तत्तेऽन्नमापो वास इति न ह वा अस्य अनन्नं जग्धं भवति न अनन्नं परिगृहीतं य एवमेतदनस्यान्नं वेद तद्विद्वाꣳसः श्रोत्रिया अशिष्यन्त आचामन्ति अशित्वा आचामन्ति एतमेव तदनं अनग्नं कुर्वन्तो मन्यन्ते ॥ १४ ॥

ये मा उत्क्रमीरिति प्राणं प्रार्थितवन्तः बलिं कुरुतेत्याज्ञप्ताः ते तथा कर्तुमुद्युक्ताः। तत्रादौ क्रमेण वागादिर्बलिं ददान एवमुवाचेत्याह— सा हेति। ये प्राणस्य बलिं करवाम इति प्रतिज्ञातवन्तः तत्रादौ **वागेवमुवाच ह**। किमिति ? **यद्वा** यद्यप्यहं त्वत्प्रसादात् **वसिष्ठास्मि** यन्मम वसिष्ठत्वं तत् तवैव। अतस्त्वं **तद्वसिष्ठोऽसीति**। **यद्वा अहं** प्रतिष्ठास्मीत्यादि समानमन्यत्। संपदायतनप्रजातिगुणान् क्रमेण समर्पितवन्त इत्यर्थः। यद्येवं मद्बलिदायिनो यूयं ब्रूत किं तत् ? य एवं ज्येष्ठश्रेष्ठत्वादिगुणविशिष्टस्तस्य उ मम **किमन्नं** ? **किं वासः** ? इति पृष्टा वागादय आहुः—**यदिदं** लोके **किञ्चाल्पं आ श्वभ्य आ कृमिभ्यः आ कीटपतङ्गेभ्यः** सह प्राणिभिः यद्यत् अद्यमानं **तत्** सर्वं **ते** तवान्नम्। आपस्ते **वासः** वस्त्रमाप एव। प्राणिभिः यद्यत् अद्यते तत् सर्वं अनस्य प्राणस्य अन्नं नेतरस्येति। य एवं वेद **न ह वा अस्य अनन्नं जग्धं भवति** अन्नसामान्यस्य प्राणायत्तत्वात्। सर्वं प्राणस्येति स्तुत्यर्थमेतत्। तथा विदुषो **न अनन्नं परिगृहीतं** भवतीति यत् तत् सर्वं

प्राणस्येदमन्नं अन्नसामान्यात् । ताः प्राण एवेति प्राणात्मदर्शनमिह विधित्सितं न तु सर्वान्नममार्गेण परिगृह्य भक्षयेदिति । यस्माच्च आपो वासः प्राणस्य तस्मात् **विद्वांसः** ब्राह्मणाः **श्रोत्रियाः अशिष्यन्तो** भक्षमाणा **आचामन्ति अशित्वा आचामन्ति** । **एवं** पूर्वोत्तरापोशनं कुर्वतां कोऽभिप्राय इत्यत्र— **एतमेव अनं प्राणमनग्नं कुर्वन्तो मन्यन्ते** । अपां प्राणस्य वासोरूपत्वात् । "यदपः पिबामि प्राणस्य तद्वासः प्राणस्यापो वासः" इत्युक्तत्वात् । एवं भोक्ष्यमाणस्य भुक्तवतश्च यदाचमनं तत् प्राणस्य वास इति दर्शनमात्रं विधीयते तस्याप्राप्तत्वात् ॥ १४ ॥

**इति प्रथमं ब्राह्मणम्**

---

## द्वितीयं श्वेतकेतुब्राह्मणम्

सर्वसंसारगत्युपसंहारः

**श्वेतकेतुर्ह वा आरुणेयः पञ्चालानां परिषदमाजगाम स आजगाम जैवलिं प्रवाहणं परिचारयमाणं तमुदीक्ष्याभ्युवाद कुमार३ इति स भो३ इति प्रतिशुश्राव अनुशिष्टो न्वसि पित्रेति ओमिति होवाच ॥ १ ॥**

सप्तमाध्यायान्ते "अग्ने नय" इति मन्त्रेण समुच्चयकारिणा मार्गयाचनं कृतम् । सुपथेति विशेषणात् मार्गान्तरमस्तीति द्योत्यते । तदियत्तापरिज्ञानपूर्वकं सर्वसंसारगत्युपसंहारः कर्तव्य इति इदं ब्राह्मणमारभ्यते—**श्वेतकेतुरिति** । कर्मकाण्डस्य एषा निष्ठेति सर्वसंसारगत्युपसंहारार्थं विद्यास्तुत्यर्थं च इयमाख्यायिका । केयं ? इत्यत्र—नामतः **श्वेतकेतुः** अरुणस्यापत्यमारुणिः तदपत्यमा**रुणेयः**—

हशब्द ऐतिह्यार्थः—पित्रानुशिष्टोऽस्मीति महता गर्वेण—यावद्भूम्याधिपत्याय पञ्चैव अलमिति प्रसिद्धाः जैवलिप्रमुखाः पञ्चालाः—तेषां **परिषदं** सभामागत्य तत्रत्यान् जेष्यामीत्याजगाम। अत्रत्यजयेन किं कार्यं? इत्यालोच्य जीवलस्यापत्यं **जैवलिं** नामतः **प्रवाहणं** भृत्यैः **परिचारयमाणं** राजानं प्रति स श्वेतकेतुः त्वरयाजगाम। विद्यागर्वसंपन्नं **तमुदीक्ष्य** तद्गतगर्वोऽपनेतव्य इति स्वागतादि-सपर्यामकृत्वैव तद्दर्शनमात्रेण **अभ्युवाद**। किमिति? **कुमार! इति** भर्त्सनार्थ-प्लुत्या संबोध्य ततः **स भोः! इति प्रतिशुश्राव** प्रतिरूपं प्रत्युक्तवान्। तदुक्तफ्लुतितः क्रुद्धो राजा किं त्वं **पित्रानुशिष्टोऽसि?** इत्युवाच। इतर **ओमिति होवाच ॥ १ ॥**

राजकृतपञ्चप्रश्नाः

वेत्थ यथेमाः प्रजाः प्रयत्यो विप्रतिपद्यन्ता३ इति? नेति होवाच वेत्थो यथेमं लोकं पुनरापद्यन्ता३ इति? नेति हैवोवाच वेत्थो यथासौ लोक एवं बहुभिः पुनः पुनः प्रयद्भिर्न संपूर्यता३ इति? नेति हैवोवाच वेत्थो यतिथ्यामाहुत्या१ हुतायामापः पुरुष-वाचो भूत्वा समुत्थाय वदन्ती३ इति? नेति हैवोवाच वेत्थो देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा? यत् कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वापि हि न ऋषेर्वचः श्रुतम्। द्वे सृती अश्रृणवं पितॄणामहं देवानामुत मर्त्यानाम्। ताभ्यामिदं विश्वमेजत् समेति यदन्तरा पितरं मातरं चेति नाहमत एकंचन वेदेति होवाच ॥ २ ॥

यदि ते यत्र कुत्रापि संशयोऽस्ति तत् पृच्छ वदामि इति मन्यमानं प्रति राजा पृच्छतीत्याह— वेत्थेति। हे कुमार! यद्येवं त्वं **वेत्थ** विजानासि

किं तत्? **यथा** येन प्रकारेण **इमाः प्रजाः प्रयत्यो** म्रियमाणा **विप्रतिपद्यन्ता** विप्रतिपद्यन्ते। विचारणार्थेयं प्लुतिः। विप्रतिपत्तिस्तु मार्गद्वैविध्यं यत्र भवति तत्र काश्चित् प्रजाः सुपथा गच्छन्ति। तद्वैपरीत्येन काश्चिदिति। तत् किं वेत्थ? इति पृष्टो **नेति होवाच** इतरः। किं तर्हि **वेत्थ? यथा इमं लोकं पुनरापद्यन्ता** पुनरापद्यन्ते यथा पुनरागच्छन्ति इमं लोकम्। **नेति होवाच**। **वेत्थ यथा** प्रसिद्धोऽयं **लोकः** येन **पुनः** पुनः असकृत् **प्रयद्भिः** म्रियमाणैः यथा च न **संपूर्यता** न संपूर्यते। तं किं वेत्थ? **इति। नेति होवाच। वेत्थो यतिथ्यां** यत्संख्याकायामाहुत्यामाहुतौ **हुतायां** पुरुषस्य या वाक् सैव यासां ताः **पुरुषवाचो भूत्वा** पुरुषशब्दवाच्या वाग्भूत्वा यदा पुरुषाकारपरिणतास्तदा पुरुषवाचो भवन्ति। **समुत्थाय** सम्यगुत्थाय उद्भूताः सत्यो **वदन्तीति। नेति होवाच**। यद्येवं **वेत्थ देवयानस्य वा पथो** मार्गस्य येनासौ प्रतिपद्यते इति **प्रतिपदं पितृयाणस्य वा** प्रतिपदं यथा विशिष्टं कर्म **कृत्वा देवयानं वा पन्थानं प्रतिपद्यन्ते पितृयाणं वा यत् कृत्वा** प्रतिपद्यन्ते तत् कर्म प्रतिपच्छब्दवाच्यमित्यर्थः। तां प्रतिपदं किं त्वं वेत्थ? देवलोकपितृलोकप्रतिपत्तिसाधनं किं त्वं वेत्थ? इत्येतदर्थप्रकाशकं **ऋषेर्मन्त्रस्य सुवचो** वाक्यं **न श्रुतम**स्ति मन्त्रस्याप्यस्य अर्थप्रकाशकत्वात्। कोऽसौ मन्त्रः? इत्यत आह—द्वे इति। **द्वे सृती** द्वौ मार्गौ **अशृणवं** श्रुतवानस्मि। तयोरेका पितृलोकप्रापिका। अपरा देवलोकप्रापिका। के पुनराभ्यां सृतिभ्यां पितॄन् देवांश्च गच्छन्ति? उतापि **मर्त्यानां** संबन्धिन्यौ। मनुष्या एव गच्छन्ति **ताभ्यां** सृतिभ्याम्। **इदं विश्वं** अखिलं जगत् **समेति** सम्यक् गच्छति। ते च द्वे सृती **यदन्तरा** ययोरन्तरा यत् यस्मात् तदन्तः मध्ये **पितरं मातरं च** कौ तौ मातापितरौ? द्यावापृथिव्यावण्डकपाले। इयं वै माता असौ पितेति ब्राह्मणेन व्याख्यातः। अण्डकपालयोर्मध्ये संसार-विषय एवैते सृती न हि मुख्यामृतत्वगमनायेत्यर्थः। इतर आह—**नाह-मतोऽ**स्मात् प्रश्नसमुदायात् **एकञ्चन** एकमपि न **वेद नाहं वेदेति होवाच** श्वेतकेतुः॥ २॥

श्वेतकेतोः स्वपितरं प्रत्येव गमनम्

अथैनं वसत्या उपमन्त्रयांचक्रे अनादृत्य वसतिं कुमारः प्रदुद्राव स आजगाम पितरं तꣳ होवाचेति वाव किल नो भवान् पुरानुशिष्टानवोचदिति कथꣳ सुमेधः! इति? पञ्च मा प्रश्नान् राजन्यबन्धुरप्राक्षीत् ततो नैकंचन वेदेति कतमे त इति इम इति ह प्रतीकान्युदाजहार ॥ ३ ॥

विद्याभिमानं हित्वा राज्ञा वस इहेति प्रार्थितोऽपि स्वपितरं प्रति जगामेत्याह—अथेति। यः पञ्चालानां परिषदमाजगाम सोऽयं श्वेतकेतुः स्वागमप्रयोजनमकृत्वा **अथ** राजप्रश्नोपरत्यनन्तरं विद्याप्रयुक्तगर्वं दूरतः परित्यज्य पलायितुमिच्छन्तं प्रकृतं श्वेतकेतुं राजा इह वसन्तु भवन्त इति **वसत्या** वसतिप्रयोजनेन **उपमन्त्रयांचक्रे** इदं पाद्यं इदं आचमनीयमित्याद्युपमन्त्रणं कृतवान्। एवं स्वापराधेन अवमानितः श्वेतकेतुः राज्ञा दीयमानां तां **वसतिमनादृत्य** पितरं प्रति **प्रदुद्राव**। **स** च **आजगाम पितरम्**। **तं** गत्वा **उवाच**। किमिति? कथं **वाव किल नो**ऽस्मान् **पुरा भवान्** समावर्तनकाले सर्वाभिः विद्याभिः **अनुशिष्टान् अवोचदिति**। पुत्रस्य सोपालम्भं वचः श्रुत्वा पिता—हे **सुमेधः! कथं** ईदृशं दुःखं ते प्रादुर्भूतं? **इति** पित्रा पृष्ट आह—श्रृणु मद्यथावृत्तम्। राजन्या बन्धवोऽस्येति कश्चन **राजन्यबन्धुः पञ्च** पञ्चसंख्याकान् **प्रश्नान् मां अप्राक्षीत्**। तत्राहं **नैकञ्चन वेद** न विज्ञातवानस्मि। **कतमे ते** प्रश्नाः? **इति** पृष्टः तत्प्रश्नस्य **प्रतीकानि** मुखानि **उदाजहार** उदाहृतवान् ॥ ३ ॥

पित्रा गौतमेन राजानं प्रत्यागमनादि

स होवाच तथा नस्त्वं तात जानीथा यथा यदहं किंचन वेद सर्वमहं तत्तुभ्यमवोचं प्रेहि तु तत्र प्रतीत्य ब्रह्मचर्यं वत्स्याव इति।

भवानेव गच्छत्विति स आजगाम गौतमो यत्र प्रवाहणस्य जैवलेरास तस्मा आसनमाहृत्य उदकमाहारयांचकार अथ हास्मा अर्घ्यं चकार तꣳ होवाच वरं भगवते गौतमाय दद्म इति ॥ ४ ॥

पुत्रक्रोधोपशमनं कुर्वन् पिता उवाचेत्याह—स हेति। क्रुद्धं पुत्रं प्रति पिता एवमुवाच। किमिति? हे तात वत्स! नोऽस्मान् त्वं गृह्णीथाः। यदहं किञ्चन विज्ञानजातं वेद तत् सर्वं तुभ्यमवोचं इत्येव जानीथाः। कोऽन्यः त्वत्तः प्रियतरो मेऽस्ति? यत् राज्ञा पृष्टं तदहमप्येतन्न जानामि। तस्मात् प्रेहि आगच्छ। तं प्रतीत्य गत्वा ब्रह्मचर्यं वत्स्यावः विद्याग्रहणार्थम्। नाहं तन्मुखं द्रष्टुमुत्सहे। भवानेव गच्छत्विति। स आजगाम गोत्रतो गौतमः आरुणिः यत्र प्रवाहणस्य जैवलेः आस आसनं आस्थायिका। तस्मै गौतमाय तदनुरूपमासनमाहृत्य भृत्यैः उदकमाहारयाञ्चकार। अथ हास्मै पुरोधसा अर्घ्यं मन्त्रवत् मधुपर्कं च चकार कारयामास। एवं विधिवत् संपूज्य तं होवाच। किमिति? वरं भगवते गौतमाय दद्मः इति ॥ ४ ॥

वरप्रदात्रे राज्ञे मुनिवचनम्

स होवाच प्रतिज्ञातो म एष वरो यां तु कुमारस्यान्ते वाचमभाषथाः तां मे ब्रूहीति ॥ ५ ॥

प्रतिवचनं मुनिराह—स हेति। स होवाच गौतमः—यस्त्वया प्रतिज्ञातो मम एष वरः तत्रात्मानं दृढीकुरु। यां तु कुमारस्यान्ते समीपे प्रश्नरूपां वाचमभाषथाः तां मे ब्रूहीति ॥ ५ ॥

राज्ञः प्रत्युत्तरम्

स होवाच दैवेषु वै गौतम! तद्वरेषु मानुषाणां ब्रूहीति ॥

प्रत्युत्तरं राजोवाच—**स** हेति। हे **गौतम**! मत्तो वरलिप्सया यं त्वं प्रार्थयसे तद्वरं **मनुष्याणामन्यतमं** प्रार्थय ॥ ६ ॥

मुनिना स्वाभिलषितवरकथनम्

स होवाच विज्ञायते हास्ति हिरण्यस्यापात्तं गोअश्वानां दासीनां प्रवाराणां परिधानस्य मा नो भवान् बहोरनन्तस्यापर्यन्तस्याभ्यवदान्योऽभूदिति स वै गौतम तीर्थेन इच्छासा इति उपैम्यहं भवन्तमिति वाचा ह स्मैव पूर्व उपयन्ति स ह उपायनकीर्त्या उवास ॥ ७ ॥

स्वाभिलषितवरं मुनिरुवाच—**स** हेति। **स** होवाच गौतमः। यस्त्वं दित्ससि तेन न हि मे प्रयोजनमस्तीति भवता **विज्ञायते**। यस्त्वं दित्ससि तन्ममाप्यस्ति। किं तत्? इत्यत्र—**हिरण्यस्यापात्तं** प्राप्तं तथा **गवाश्वानां दासीनां प्रवाराणां** परिवाराणां **परिधानस्य** च। न हि मानुषवित्तेष्वविद्यमानं त्वत्तो मे प्रार्थनीयमस्ति। त्वया तु वरं भवते गौतमाय दद्म इति प्रतिज्ञातं तत् कर्तव्यं वा न वेति त्वमेव जानीषे। मम त्वेवमाशयः—पुरा वदान्यो भूत्वा मत्कृते तद्विपरीतो मा भवेति। त्वं तु **बहोः** प्रभूतस्य **अनन्त**साधनफलस्य **अपर्यन्तस्य** अपरिसमाप्तस्य ईदृशस्य वित्तस्य **अभ्यवदान्योऽभूत**। न ह्यदेयं त्वया किंचिदस्तीति। एवमुक्त आह—**स वा** इति। हे **गौतम**! **स** त्वं **तीर्थेन** शास्त्रीयन्यायेन मत्तो विद्यामिच्छासै इच्छसे। यत एवमतस्त्वं मत्तो विद्यामाप्नुहि। एवमुक्तो गौतमस्तमाह—**भवन्तं** शिष्यत्वेन **अहमुपैमीति वाचा ह स्मैव** किल **पूर्वे** ब्राह्मणाः क्षत्रियान् वैश्यान् वा शिष्यवृत्त्या **उपयन्ति** न ह्युपायनशुश्रूषादिभिः। अतः स गौतमः **उपायनकीर्त्या** कीर्तनमात्रेणैव **उवास** नोपायनं चकारेत्यर्थः ॥ ७ ॥

राज्ञा क्षमापणपूर्वकं वरप्रदानम्

स होवाच यथा नस्त्वं गौतम ! मापराधास्तव च पितामहा यथेयं विद्या इतः पूर्वं न कस्मिꣳश्चन ब्राह्मण उवास तां त्वहं तुभ्यं वक्ष्यामि को हि त्वैवं ब्रुवन्तमर्हति प्रत्याख्यातुमिति ? ॥८॥

मया क्षुभितोऽयमिति मत्वा स्वापराधं क्षमापयन् तत्काङ्क्षितवरं ददातीत्याह—**स** हेति। **स होवाच** राजा। किमिति ? गौतमं व्याकुलितं मत्वा क्षमापयन् हे **गौतम** ! यथा महान्तः अनन्तापराधिन्यपि तत्कृतापराधं विस्मृत्य तमनुगृह्णन्ति तथा **नोऽस्मान्** प्रति **त्वं मापराधाः** अपराधं माकार्षीः। न स्मर्तव्योऽस्मदपराध इत्यर्थः। **तव च पितामहा** अस्मत्पितामहेषु यथापराधान्न जहुः तथास्मत्कृतापराधान् विस्मृत्य पितामहवृत्तमेव भवता पालनीयमित्यर्थः। यां त्वं प्रार्थितवानसि **सेयं विद्या** त्वत्संप्रदानात् प्राक् **न कस्मिंश्चि**दपि **ब्राह्मणे उवास** उषितवती। यथा मयोक्तं तथा त्वमपि जानीषे। सर्वदा क्षत्रियपरम्परायामेव इयं विद्या आगता। अत इयं मया परिरक्षिता। इतः परं न हि मया रक्षितुं शक्या। अतस्तुभ्यं **वक्ष्यामि**। **को** ह्यन्योऽपि हि यस्मादेवं **ब्रुवन्तमर्हति प्रत्याख्यातुमिति** ॥ ८ ॥

आदौ चतुर्थप्रश्नापाकरणम्

असौ वै लोकोऽग्निर्गौतम ! तस्यादित्य एव समित् रश्मयो धूमोऽहरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुत्यै सोमो राजा संभवति ॥ ९ ॥

आदौ चतुर्थप्रश्नमपाकरोति—**असा**विति। हे **गौतम** ! **असौ द्यौर्लोकोऽग्निः** द्युलोके अग्निदृष्टिः कार्येत्यर्थः। **तस्य आदित्य एव समित्**

द्युलोकस्यादित्येन समिन्धनात् । **रश्मयो धूमः** समिध उत्थानसाम्यात् । **अहरर्चिः** प्रकाशसाम्यात् । **दिशोऽङ्गारा** उपशमसामान्यात् । **अवान्तरदिशो विस्फुलिङ्गाः** विक्षेपसामान्यात् । **तस्मिन्** एवंगुणविशिष्टे द्युलोकाग्नौ **देवाः** इन्द्रादयः **श्रद्धां जुह्वति । तस्या आहुत्यै** आहुतेः **सोमो राजा** पितॄणां ब्राह्मणानां वा **संभवति** "श्रद्धा वा आपः" इति श्रुतेः । "वेत्थो यतिथ्यामाहुत्यां हुतायां आपः पुरुषवाचो भूत्वा समुत्थाय वदन्ति" इति प्रश्ननिर्णयविषये असौ लोकोऽग्निः इति प्रस्तुतम् । तस्मादापः कर्मसमवायिन्यः । शरीरारम्भकश्रद्धा वाच्येति निश्चीयते । शरीरादिकर्तृत्वे पञ्चभूतानां कारणत्वं तत्रापां प्राधान्यमित्यर्थः ॥ ९ ॥

द्वितीयाहुतिस्वरूपम्

**पर्जन्यो वाग्निर्गौतम ! तस्य संवत्सर एव समित् अभ्राणि धूमो विद्युदर्चिः अशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गाः तस्मिन्नेतस्मिन्नग्नौ देवाः सोमꣳ राजानं जुह्वति तस्या आहुत्यै वृष्टिः संभवति ॥ १० ॥**

द्वितीयाहुतिस्वरूपमाह---**पर्जन्य** इति । **पर्जन्यो** नाम वृष्टिकरणाभिमानी । सोऽयमग्निः । **तस्य संवत्सर एव समित्** । संवत्सरान्तर्गतवर्षाद्यृतुभिः पर्जन्याग्नेः समिद्धत्वात् । **अभ्राणि धूमः** धूमवत् दृश्यमानत्वात् । **विद्युदर्चिः** प्रकाशसामान्यात् । **अशनिरङ्गाराः** उपशान्तत्वकाठिन्यसामान्यात् । **ह्रादुनयः** स्तनयित्नुशब्दा **विस्फुलिङ्गाः** विक्षेपानेकत्वसामान्यात् । **तस्मिन एतस्मिन्** आहुत्यधिकरणे होतारो **देवाः सोमं राजानं जुह्वति** । द्युलोकाग्नौ श्रद्धायां हुतायां योऽसौ सोमो राजा अभिनिर्वृत्तः अयमेव द्वितीयपर्जन्येऽग्नौ हूयते । अस्याश्च सोमाहुतेः **वृष्टिः संभवति** इति ॥ १० ॥

तृतीयाहुतिस्वरूपम्

अयं वै लोकोऽग्निर्गौतम ! तस्य पृथिव्येव समित् अग्निर्धूमो रात्रिरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः तस्मिन्नेतस्मिन्नग्नौ देवा वृष्टिं जुह्वति तस्या आहुत्या अन्नꣳ संभवति ॥ ११ ॥

तृतीयाहुतिस्वरूपमाह—**अयमिति** । हे **गौतम** ! प्राणिकर्मफलाश्रयोऽ**यं वै लोकः अग्निः** । तस्याग्नेः **पृथिव्येव समित्** पृथिव्या ह्ययं लोकः समिध्यते । **अग्निर्धूमः** पृथिव्याश्रयोत्थानसामान्यात् । पार्थिवेन्धनद्रव्यमाश्रित्य ह्यग्निरुत्तिष्ठति । **रात्रिरर्चिः** समित्संबन्धप्रसवसामान्यादग्नेः समित्संबन्धतो ह्यर्चिः संभवति । तथा पृथिवीसंबन्धतः पृथिवीच्छायां शार्वरं तम आचक्षते । **चन्द्रमा अङ्गाराः** तत्प्रभवत्वसामान्यात् । **नक्षत्राणि विस्फुलिङ्गाः** विस्फुलिङ्गवत् अनेकत्वसामान्यात् । **तस्मिन्नित्यादि** पूर्ववत् । **वृष्टिं जुह्वति तस्या आहुत्या अन्नं संभवति** अन्नस्य वृष्टिप्रभवत्वात् ॥ ११ ॥

चतुर्थाहुतिस्वरूपम्

पुरुषो वा अग्निर्गौतम ! तस्य व्यात्तमेव समित् प्राणो धूमो वागर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुत्यै रेतः संभवति ॥ १२ ॥

चतुर्थाहुतिस्वरूपमाह—**पुरुष इति** । हे **गौतम** ! शिरःपाण्यादिमान् **पुरुषो वा अग्निः** । **तस्य व्यात्त**मपावृतं यन्मुखं तदे**व समित्** वृत्तस्वाध्यायादेः विवृतमुखप्रभवत्वात् । **प्राणो धूमः** उत्थानसामान्यात् । मुखाद्धि प्राण उत्तिष्ठति । **वागर्चिः** व्यञ्जकत्वसामान्यात् । वाचोऽभिधेयव्यञ्जकत्वात् । **चक्षुरङ्गाराः** प्रकाशाश्रयत्वात् । **श्रोत्रं विस्फुलिङ्गाः** विक्षेपसामान्यात् । **तस्मिन् एतस्मिन् अग्नौ देवा अन्नं जुह्वति** प्राणानां देवत्वोपपत्तेः । **तस्या आहुत्यै रेतः संभवति** रेतसोऽन्नपरिणामत्वात् ॥ १२ ॥

पञ्चमाहुतिस्वरूपम्

योषा वा अग्निर्गौतम ! तस्या उपस्थ एव समित् लोमानि धूमो योनिरर्चिः यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुत्यै पुरुषः संभवति स जीवति यावज्जीवति अथ यदा म्रियते ॥ १३ ॥

पञ्चमाहुतिस्वरूपमाह—**योषेति** । **योषेति** स्त्री पञ्चमो होमाधारोऽग्निः । **तस्या उपस्थ एव समित्** उपस्थेन हि सा समिध्यते । **लोमानि धूमः** तदुत्थानसामान्यात् । **योनिरर्चिः** लोहितवर्णसामान्यात् । **यदन्तः करोति** मिथुनव्यापृतेरन्तःकरणत्वात्, **ते अङ्गारा** वीर्योपशमत्वसामान्यात् । **अभिनन्दाः** सुखलवा **विस्फुलिङ्गाः** क्षुद्रत्वसामान्यात् । **तस्मिन् एतस्मिन् अग्नौ देवा रेतो जुह्वति** । **तस्या आहुत्यै पुरुषः संभवति** । इत्थं द्युपर्जन्यायंलोकपुरुषयोषित्सु क्रमेण हूयमाना आपः श्रद्धासोमवृष्ट्यन्नरेतोभावेन स्थूलादितारतम्यमापद्यमानाः पुरुषशरीरमारभन्ते । “यतिथ्यामाहुत्यां हुतायामापः पुरुषवाचो भूत्वा समुत्थाय वदन्ति” इति यश्चतुर्थः प्रश्नः स निर्णीतः । पञ्चम्यामाहुतौ योषाग्नौ हुतायां रेतो भूत्वा आपः पुरुषवाचो भवन्तीति योऽर्थः **स** पुरुष एवं क्रमेण जातो **जीवति** । कियन्तं कालं ? इत्यत्र **यावदस्मिन्** शरीरे स्थितिनिमित्तं कर्म विद्यते तावत् **जीवति** । **अथ** तादृशकर्मक्षये **यदा म्रियते** ॥ १३ ॥

म्रियमाणस्य कारणप्राप्तिः

अथैनमग्नये हरन्ति तस्याग्निरेवाग्निर्भवति समित् समित् धूमो धूमोऽर्चिरर्चिरङ्गारा अङ्गारा विस्फुलिङ्गा विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः पुरुषं जुह्वति तस्या आहुत्यै पुरुषो भास्वरवर्णः संभवति ॥ १४ ॥

यदायं म्रियते तदायं कारणभावमेतीत्याह—**अथेति**। **अथ** कालतो मरणानन्तरम**एनं** मृतं **ऋत्विजोऽग्नये** आज्याहुत्यै **हरन्ति**। **तस्य** एवमाहुतिभावमापन्नस्य होमाधिकरणतया प्रसिद्धोऽ**ग्निरेवाग्निर्भवति**। तथा **समिद्धूमार्चिरङ्गारविस्फुलिङ्गाः** सर्वे यथाप्रसिद्धा एव भवन्ति। **तस्मिन् एतस्मिन्** होमाधिकरणा**ग्नौ देवाः पुरुष**मन्त्याहुतियोग्यं **जुह्वति**। "पुरुषाहुतिर्यस्य प्रियतमः" इति श्रुतेः। **तस्या आहुत्यै** आहुतेः **पुरुषो भास्वरवर्णोऽयं संभवति** निषेकादिचरमाहुत्यन्तकर्मभिः संस्कृतत्वात् तस्य दिव्यदेहसंपत्तिः भवतीत्यर्थः॥ १४॥

प्रथमप्रश्ननिराकरणम्

**ते य एवमेतद्विदुः ये चामी अरण्ये श्रद्धाꣳ सत्यमुपासते तेऽर्चिरभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षात् यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्यात् वैद्युतं तान् वैद्युतान् पुरुषो मानस एत्य ब्रह्मलोकान् गमयति तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषां न पुनरावृत्तिः॥ १५॥**

इदानीं प्रथमप्रश्नं निराकरोति—**ते य एवमिति**। **य एवं** पञ्चाग्निदर्शनं **विदुः** पञ्चाग्निदर्शनस्यार्चिरादिप्रतिपत्तिसाधनत्वात्। के पुनस्ते? य एवं विदुः गृहस्था **ये चामी** आरण्या वानप्रस्थाः परिव्राजकाश्च, तेषामरण्यालयत्वात्, **श्रद्धां** पुरस्कृत्य **सत्यं** हिरण्यगर्भाख्यं ब्रह्मो**पासते ते** खल्व**र्चिरभिसंभवन्ति**। न तद्विपरीता गृहस्थाः तेषां गतेर्भिन्नत्वात्। न ह्यर्चिश्शब्देन केवलं ज्वलनमभिधीयते किन्तु उत्तरमार्गप्रतिपत्तिसाधनार्चिरभिमानिनी देवता उच्यते। तामभिसंभवन्ति। ततो**ऽर्चिषोऽहः**। अर्चिश्शब्दो यथा देवतापरः तथाहरादिशब्दोऽप्यातिवाहिकदेवताविषय इत्यर्थः। अर्चिरभिमानिदेवतामादौ प्रतिपद्य

ततोऽहरभिमानिनीं देवतामह्नः सकाशात् **आपूर्यमाणपक्ष**देवतां प्रतिपद्यन्ते। तत **आपूर्यमाणपक्षात् यान् षण्मासान्** उदक् उत्तरां दिशं **आदित्यः** सविता **एति** तान् मासान् प्रतिपद्यन्ते। ततः षण्मा**सेभ्यः** तदभिमानिदेवताभिः **देवलोका**भिमानिदेवतां प्रतिपद्यन्ते। **देवलोकादादित्यं** आदित्यात् **वैद्युतं** विद्युदभिमानिदेवतां प्रतिपद्यन्ते। **तान्** विद्युद्भावमापन्नान् **वैद्युतान्** ब्रह्मणो मनसा सृष्टो **मानसो** मानवः **पुरुषः** कश्चिदेत्य आगत्य मुमुक्षून् **ब्रह्मलोकान् गमयति**। उपासनोपासकादितारतम्यभिदां निम्नोन्नतस्थानभेदमादाय बहुवचनम्। **ते** मुमुक्षवः तेन मानवेन गमिताः सन्तः **तेषु ब्रह्मलोकेषु पराः** प्रकृष्टाः सन्तः स्वयं **परावतः** संवत्सरान् कल्पान्तपरिमितान् **वसन्ति**। एवं ब्रह्मलोकगतानां **न** ह्यस्ति **पुनरावृत्तिः** "यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते" इति श्रुतेः॥ १९॥

धूमादिमार्गेयत्ताकथनम्

अथ ये यज्ञेन दानेन तपसा लोकान् जयन्ति ते धूममभिसंभवन्ति धूमात् रात्रिꣳ रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षात् यान् षण्मासान् दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकात् चन्द्रं ते चन्द्रं प्राप्य अन्नं भवन्ति ताꣳस्तत्र देवा यथा सोमꣳ राजानमाप्यायस्व अपक्षीयस्वेति एवमेनाꣳस्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैति अथेममेवाकाशमभिनिष्पद्यन्ते आकाशात् वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति ते पुनः पुरुषाग्नौ हूयन्ते ततो योषाग्नौ जायन्ते लोकान् प्रत्युत्थायिनस्त एवमेवानुपरिवर्तन्ते अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्॥ १६॥

अपुनरावृत्तिलक्षणार्चिरादिमार्गेयत्तां प्रतिपाद्य श्रद्धासत्यादिसाधनविरलानां कामिनां पुनरावृत्तिसाधनं धूमादिमार्गेयत्ताख्यापनार्थं खण्डिकेयमारभ्यते—**अथेति**। **अथ** पुनर्ये नैवंविदो गृहस्थाः केवलकर्मिणोऽग्निहोत्रादिलक्षणेन **यज्ञेन** बहिर्वेदि भिक्षमाणेषु द्रव्यविभागलक्षण**दानेन** बहिर्वेद्येव दीक्षादिव्यतिरिक्तकृच्छ्रचान्द्रायणादिलक्षण**तपसा लोकान् जयन्ति**—तत्तद्भावानुरोधेन फलतारतम्यात् लोकानिति बहुवचनम्—**ते धूममभिसंभवन्ति** धूमाभिमानिदेवतां प्रतिपद्यन्ते। **धूमात् रात्रिं** ततोऽ**पक्षीयमाणपक्ष**देवतां ततो **यान् षण्मासान्** दक्षिणां दिशमादित्य **एति** तान् मासान् देवताविशेषान् प्रतिपद्यन्ते। **मासेभ्यः पितृलोकं पितृलोकात्** चन्द्रमसं ते **चन्द्रं प्राप्य अन्नं भवन्ति। तान् तत्र** अन्नभूतान् **यथा सोमं राजानमिह** ह यज्ञे ऋत्विजः **आप्यायस्व अपक्षीयस्वेति भक्षयन्ति एवमेनान्** चन्द्रं प्राप्तान् कर्मिणो भृत्यानिव स्वामिनो भक्षयन्ति उपभुञ्जते **देवाः**। आप्यायस्व अपक्षीयस्वेति न मन्त्रः। किं तर्हि? आपूर्यापूर्यावश्यं चमसस्थं भक्षणेन अपक्षयं च कृत्वा पुनः पुनः भक्षयन्ति। एवं देवता अपि सोमलोके लब्धशरीरान् कर्मिणः स्वोपकरणभूतान् पुनः पुनः विश्रामयन्ति उपभुञ्जते। तद्धि तेषां कर्मिणामाप्यायनमिव। **यदा** यस्मिन् काले **तत्** यज्ञदानादिलक्षणं सोमलोकप्रापकं कर्म **पर्यवैति** परिक्षीयते **अथ** कर्मक्षयानन्तरं तदा **इममेव** प्रसिद्ध**माकाशमभिनिष्पद्यन्ते**। यास्ताः श्रद्धाशब्दवाच्या आपः सोमाकारपरिणतिमेत्य कर्मिणामुपभोगार्हाम्मयशरीरारम्भका भवन्ति। तत् कर्मक्षयात् महातपसंतप्तहिमपिण्डवत् अम्मयशरीरं प्रविलीयते। पुनस्ता आप आकाशभूता इव भवन्ति। तदिदमुच्यते इममेवाकाशमभिनिष्पद्यन्ते इति। तेऽपि कर्मिणः तथाविधशरीराः सन्तः पुरोवातात् इतश्चामुतश्च नीयन्ते। तत **आकाशात् वायुं वायोर्वृष्टिं** प्रतिपद्यन्ते। उक्तं हि "तत्पर्जन्याग्नौ सोमं राजानं जुह्वति" इति। ततो वृष्टिरूपेण इमां **पृथिवीं** पतन्ति। तां **प्राप्य** व्रीहियवाद्य**न्न**भावं भजंति। तदुक्तं "वृष्टिं जुह्वति तस्या आहुत्या अन्नं संभवति" इति। ते **पुनः पुरुषाग्नौ हूयन्ते। ततो** रेतो भूत्वा **योषाग्नौ** हूयन्ते। ततः पुनः **जायन्ते**। ततो लोकं

प्रत्युत्थायिनोऽग्निहोत्रकर्मानुतिष्ठन्ति। ततो धूमादिना पुनः सोमलोकमिति। एवं कर्मिणो घटीयन्त्रवत् अविश्रान्तं परिभ्रमन्ति। यावत् सर्वकलनासंभवप्रबोधसिद्धब्रह्मभावापत्तिः तावदित्यर्थः। **अथ** पुनर्ये उत्तरायणदक्षिणायन**पन्थानौ न विदुः** तत्साधनीभूतज्ञानं कर्म च अनुतिष्ठन्ति ते किं भवन्ति? इत्यत्र—**कीटाः पतङ्गाः यदिदं दन्दशूकं** भवन्ति। एवं हीयं संसारगतिरतिकष्टा। ततः पुनर्निर्गमनमतिदुर्लभमित्यत्र श्रुतिः "तानीमानि क्षुद्राणि असकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत् तृतीयं स्थानं तेनासौ लोको न संपूर्यते तस्मात् जुगुप्सेत" इति। एवं प्रश्नाः सर्वे निर्णीताः "असौ वै लोकः" इत्यादिना चतुर्थप्रश्नः "यतिथ्यामाहुत्यां" इत्यादिः प्राथम्येन। पञ्चमस्तु द्वितीयत्वेन "देवयानस्य वा पथः प्रतिपदं पितृयाणस्य वा" इति दक्षिणोत्तरमार्गप्रतिपत्तिसाधनकथनेन। तेनैव प्रथमोऽपि अग्नेरारभ्य केचिदर्चिः प्रतिपद्यन्ते केचित् धूममिति विप्रतिपत्तिः। पुनरावृत्तिश्च द्वितीयः प्रश्नः—आकाशादिक्रमेण इमं लोकं वागच्छन्तीति। तेनैव असौ लोको न संपूर्यते कीटपतङ्गादिप्रतिपत्तेश्च केषांचित् इति, तृतीयोऽपि प्रश्नो निर्णीतः॥ १६॥

इति द्वितीयं ब्राह्मणम्

---

## तृतीयं ब्राह्मणम्

### महत्त्वसिद्धये मन्थानकर्म

स यः कामयेत महत् प्राप्नुयामिति उदगयने आपूर्यमाणपक्षस्य पुण्याहे द्वादशाहमुपसद्व्रती भूत्वा औदुम्बरे कꣳसे चमसे वा सर्वौषधं फलानीति संभृत्य परिसमूह्य परिलिप्याग्निमुपसमाधाय परिस्तीर्य आवृता आज्यꣳ सꣳस्कृत्य पुꣳसा नक्षत्रेण मन्थꣳ संनीय जुहोति—यावन्तो देवास्त्वयि जातवेदः! तिर्यञ्चो घ्नन्ति पुरुषस्य

**कामान्। तेभ्योऽहं भागधेयं जुहोमि ते मा तृप्ताः सर्वैः कामैस्तर्पयन्तु स्वाहा। या तिरश्ची निपद्यतेऽहं विधरणी इति। तां त्वा घृतस्य धारया यजे सꣳराधनीमहꣳ स्वाहा॥ १॥**

एवं ज्ञानकर्मणोर्गतिरुक्ता। तत्र ज्ञानं स्वायत्तम्। कर्म तु दैवमानुषवित्तद्वयायत्तम्। तदर्थं वित्तमुपार्जनीयम्। तत्साधनीभूतमहत्त्वसिद्धये मन्थानं कर्म आरभ्यते—**स य** इति। **स यः कामयेत** स यो वित्तार्थी कर्मण्यधिकृतो यः कामयेत। किमिति? **महत्त्वं प्राप्नुयामिति**। तद्विधित्सितकालो विधीयते—आदित्यस्य उदगयनम्। तत्र **आपूर्यमाणशुक्लपक्षस्य** तत्रापि **पुण्याहे** स्वात्मनः सर्वसिद्धिप्रदे द्वादशाहे यत्र कर्म चिकीर्षितं प्राक् पुण्याहमेवारभ्य **द्वादशाहमुपसद्व्रतं** उपसदः प्रसिद्धा ज्योतिष्टोमे। तत्र च स्तनोपचयापचयद्वारेण पयोभक्षणं तत् व्रतम्। तत्र च तत्कर्मानुपसंहारात् पयोभक्षणमात्रं उपादीयते। स्मार्तं हीदं मन्थनकर्म। अत एव चावसथ्याग्नावेव तत् कर्म विधीयते। सर्वा वाक् स्मार्तैवेति। **उपसद्व्रती भूत्वा** पयोव्रती सन् **औदुम्बरवृक्षमये कंसे चमसे**—तस्यैव विशेषणं कंसाकारे चमसाकारे **वा** औदुम्बरे। आकारे विकल्पः, न औदुम्बरत्वे। **सर्वौषधं** सर्वासामोषधीनां समूहं यथासंभवं यथाशक्ति च सर्वा ओषधीः समाहृत्य तत्र ग्राम्या व्रीहियवाद्या वक्ष्यमाणा यथासंभवं **फलानि** च यथाशक्ति। **इतिशब्दः** समस्तसंभारोपदर्शनार्थः। अन्यदपि यत् संभरणीयं तत् सर्वं **संभृत्य** क्रमस्तु गृह्योक्तो द्रष्टव्यः परिसमूहनपरिलेपनभूमिसंस्कारः **अग्निमुपसमाधाय**·इतिवचनात्। आवसथ्याग्नौ होमविधानात् कर्मणः स्मार्तत्वात् विद्यमानस्यैव उपसमाधानम्। दर्भैः **परिस्तीर्य** स्थालीपाकावृत् परिगृह्य तया **संस्कृत्य** पुंनाम्ना **पुंसा नक्षत्रेण** पुण्याहसंयुक्तेन **मन्थं** सर्वौषधफलं तत्र औदुम्बरे चमसे दधिमधुनी घृतेन वा उपसिच्य एकया उपमन्थिन्या उपमथ्य **सन्नीय** मेध्ये संस्थाप्य औदुम्बरस्रुवेण आवापस्थाने वक्ष्यमाणैरेतैः **मन्त्रैः आज्यं जुहोति**। वक्ष्यमाणमन्त्रानुदाहरति। **यावन्त** इत्यादिमन्त्रद्वयमस्यां खण्डिकायामभिहितम्॥ १॥

तत्रोपयोगिमन्त्रोदाहरणम्

ज्येष्ठाय स्वाहा श्रेष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्राणाय स्वाहा वसिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति वाचे स्वाहा प्रतिष्ठायै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति चक्षुषे स्वाहा संपदे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति श्रोत्राय स्वाहा आयतनाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति मनसे स्वाहा प्रजात्यै स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति रेतसे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ २ ॥ अग्नये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सोमाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भुवः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूर्भुवः स्वः स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ब्रह्मणे स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति क्षत्राय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भूताय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति भविष्यते स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति विश्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति सर्वाय स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति प्रजापतये स्वाहेत्यग्नौ हुत्वा मन्थे सꣳस्रवमवनयति ॥ ३ ॥

ज्येष्ठाय स्वाहेत्यादिमन्त्रानुदाहरति—**ज्येष्ठायेति** । **ज्येष्ठाय स्वाहेत्या**रभ्य द्वे द्वे आहुती कृत्वा स्रुवावलेपनमाज्यं **मन्थे संस्रावयति** । एतस्मादेव ज्येष्ठं **मन्थे संस्रवमवनयति** अपरया उपमन्थिन्या पुनर्मथ्नाति ॥ २, ३ ॥

पुनस्तत्कर्मकरणम्

अथैनमभिमृशति भ्रमदसि ज्वलदसि पूर्णमसि प्रस्तब्धमसि एकसभमसि हिंकृतमसि हिंक्रियमाणमसि उद्गीथमसि उद्गीयमानमसि श्रावितमसि प्रत्याश्रावितमसि आर्द्रे संदीप्तमसि विभूरसि प्रभूरसि अन्नमसि ज्योतिरसि निधनमसि संवर्गोऽसीति ॥ ४ ॥ अथैनमुद्यच्छति आमꣳस्यामꣳहि ते महि स हि राजा ईशानोऽधिपतिः स माꣳराजा ईशानोऽधिपतिं करोत्विति ॥ ५ ॥ अथैनमाचामति तत्सवितुर्वरेण्यं मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः माध्वीर्नः सन्त्वोषधीर्भूः स्वाहा भर्गो देवस्य धीमहि मधु नक्तमुतोषसो मधुमत्पार्थिवꣳरजः मधु द्यौरस्तु नः पिता भुवः स्वाहा धियो यो नः प्रचोदयात् मधुमान्नो वनस्पतिर्मधुमाँ२ अस्तु सूर्यः माध्वीर्गावो भवन्तु नः स्वः स्वाहेति सर्वां च सावित्रीमन्वाह सर्वाश्च मधुमतीरहमेवेदꣳ सर्वं भूयासं भूर्भुवः स्वः स्वाहेति अन्तत आचम्य पाणी प्रक्षाल्य जघनेनाग्निं प्राक्शिराः संविशति प्रातरादित्यमुपतिष्ठते दिशामेकपुण्डरीकमसि अहं मनुष्याणामेकपुण्डरीकं भूयासमिति यथेतमेत्य जघनेनाग्निमासीनो वꣳशं जपति ॥ ६ ॥

**अथैनमिति** । **अथैनमभिमृशति भ्रमदसी**त्यनेन मन्त्रेण । **अथैनमुद्यच्छति** सह पात्रेण हस्ते गृह्णाति **आमं स्यामं** हि तेत्यनेन मन्त्रेण । **अथैनमाचामति** भक्षयति । किं तत् ? कथम् ? गायत्रीप्रथमपादेन मधुमत्या एकया व्याहृत्या च प्रथमया प्रथमं ग्रासमाचामति । तथा गायत्रीमधुमतीव्याहृतीनां द्वितीयपादेन द्वितीयं ग्रासमाचामति । तथा गायत्रीमधुमतीव्याहृतीनां तृतीयपादेन

तृतीयं ग्रासमाचामति । सर्वां गायत्रीं मधुमतीं व्याहृतीं च त्रिरुक्त्वा **अहमेवेदं सर्वं भूयासमिति** चान्ते **भूर्भुव: स्व: स्वाहेति** समस्तं भक्षयति । तथा चतुर्भिः ग्रासैः तत् सर्वं परिसमाप्यते । तथा पूर्वमेव निरूपयेत् । ततः पात्रोपलिप्तं तत् पात्रं सर्वं निर्णिज्य तूष्णीं प्राशयेत् । ततः **पाणी प्रक्षाल्याचम्य जघनेनाग्निं** पश्चादग्नेः **प्राक्शिरा: संविशति** । ततः **प्रातः** सन्ध्यामुपास्य **आदित्यमुपतिष्ठते—दिशामेकपुण्डरीकमित्यनेन** मन्त्रेण । **यथागतमेत्यागत्य जघनेनाग्निमासीनो वंशं जपति** ॥ ४–६ ॥

आचार्यवंशजपक्रमः

तꣳ हैतमुद्दालक आरुणिर्वाजसनेयाय याज्ञवल्क्यायान्तेवासिने उक्त्वा उवाच अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेत् जायेरन् शाखाः प्ररोहेयुः पलाशानीति ॥ ७ ॥ एतमु हैव वाजसनेयो याज्ञवल्क्यो मधुकाय पैङ्ग्यायान्तेवासिने उक्त्वा उवाच अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेत् जायेरन् शाखाः प्ररोहेयुः पलाशानीति ॥ ८ ॥ एतमु हैव मधुकः पैङ्ग्यश्चूलाय भागवित्तयेऽन्तेवासिने उक्त्वा उवाच अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेत् जायेरन् शाखाः प्ररोहेयुः पलाशानीति ॥ ९ ॥ एतमु हैव चूलो भागवित्तिर्जानकय आयस्थूणायान्तेवासिने उक्त्वा उवाच अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेत् जायेरन् शाखाः प्ररोहेयुः पलाशानीति ॥ १० ॥ एतमु हैव जानकिरायस्थूणः सत्यकामाय जाबालायान्तेवासिने उक्त्वा उवाच अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेत् जायेरन् शाखाः प्ररोहेयुः पलाशानीति ॥ ११ ॥ एतमु हैव सत्य-

**कामो जाबालोऽन्तेवासिभ्य उक्त्वा उवाच अपि य एनꣳ शुष्के स्थाणौ निषिञ्चेत् जायेरन् शाखाः प्ररोहेयुः पलाशानीति तमेतं नापुत्राय वानन्तेवासिने वा ब्रूयात् ॥ १२ ॥**

तत्क्रममाचष्टे—**तमिति**। एतदर्थाचार्यपरम्परा तु उद्दालकप्रभृति सत्यकामान्तं एकैकस्मात् गुरोः एकैकेनासादितम्। सत्यकामस्तु स्वान्तेवासिभ्योऽसंख्यातेभ्य उक्त्वा उवाच। किं तत्? **अपि य एनं शुष्के स्थाणौ** विगतप्राणेऽप्येनं मन्थं भक्षणाय संस्कृतं **निषिञ्चेत्** प्रक्षिपेत् **जायेरन्नेव** अस्मिन् नीरसस्थाणावपि **शाखाः प्ररोहेयुः पलाशानि** पर्णानि। किमुत अनेन कर्मणा वाञ्छितार्थः सिद्ध्येत् इति। विचित्रफलमेतत् कर्मेत्यर्थः। यत एवमेतत्कर्म एतादृशमेतत् कर्म अतो गोपनीयम्। सर्वत्र विद्याधिगमे तीर्थानि षट्। प्राणविद्याधिगमे तु तीर्थद्वयमेवानुज्ञातम्। किं तत्? पुत्रश्च अन्तेवासी चेति ॥ ७—१२ ॥

सर्वौषधत्वेन ख्यातस्य कथनम्

**चतुरौदुम्बरो भवति औदुम्बरः स्रुव औदुम्बरश्चमस औदुम्बर इध्म औदुम्बर्यौ उपमन्थन्यौ दश ग्राम्याणि धान्यानि भवन्ति व्रीहियवास्तिलमाषा अणुप्रियङ्गवो गोधूमाश्च मसूराश्च खल्वाश्च खलकुलाश्च तान् पिष्टान् दधनि मधुनि घृत उपसिञ्चति आज्यस्य जुहोति ॥ १३ ॥**

**चतुरेति**। **चतुरौदुम्बरो भवतीति** व्याख्यातम्। **दश ग्राम्याणि धान्यानि भवन्तीति** ग्राम्यधान्यानां दशत्वं विशदयति—**व्रीहियवा** इति। **अणुप्रियङ्गव** इत्यत्र अणवश्च अणुशब्दवाच्याः। क्वचित् देशे प्रियङ्गवः प्रसिद्धाः कङ्गुशब्देन। **खल्वा** निष्पावा वल्लशब्दवाच्याः। लोके **खलकुलाः**

कुलुत्थाः । इत्येतद्व्यतिरेकेण यथाशक्ति सर्वौषधयो ग्राह्याः फलानि चायाज्ञिकानि वर्जयित्वेत्यर्थः ॥ १३ ॥

**इति तृतीयं ब्राह्मणम्**

---

## चतुर्थं ब्राह्मणम्

पुत्रमन्थविधानम्

एषां वै भूतानां पृथिवी रसः पृथिव्या आपः अपामोषधय ओषधीनां पुष्पाणि पुष्पाणां फलानि फलानां पुरुषः पुरुषस्य रेतः ॥ १ ॥

स्वात्मोत्पादनीयपुत्रो यादृग्जन्म यैर्वा गुणैर्विशिष्टः पितृतुल्यलोक्यो भवतीति यत् तत्प्रतिपादनाय इदं ब्राह्मणमारभ्यते । मन्थं कर्म कृतवतः प्राणदर्शिन एवास्यां विद्यायामधिकारः । यदा पुत्रमन्थं चिकीर्षति तदा मन्थं कृत्वा पत्न्या ऋतुकालं प्रतीक्ष्य कर्म एतत् कुर्यादित्याह—**एषामिति** । **एषां** चराचर**भूतानां पृथिवी रसः** सारभूतः । तस्याः सर्वभूतमधुत्वेन उक्तत्वात् । **पृथिव्या आपो** रसः अप्सु हि पृथिवी ओतप्रोतभावं गता । **अपां ओषधयः** तत्कार्यत्वात् ओषधीनां रसत्वम् । **ओषधीनां पुष्पाणि** । **पुष्पाणां फलानि** । **फलानां पुरुषः** । **पुरुषस्य रेतः** "सर्वेभ्योऽङ्गेभ्यः तेजः संभूतं" इति श्रुतेः ॥ १ ॥

प्रजापतिना रेतःप्रतिष्ठाचिन्तनम्

स ह प्रजापतिरीक्षांचक्रे हन्तास्मै प्रतिष्ठां कल्पयानीति स स्त्रियꣳ ससृजे ताꣳ सृष्ट्वा अध उपास्ते तस्मात् स्त्रियमध उपासीत स एतं प्राञ्चं ग्रावाणमात्मन एव समुदपारयत् तेनैनामभ्यसृजत् ॥ २ ॥

यतः सर्वभूतसारं रेतः अतः का नु खल्वस्य प्रतिष्ठा भवति? इति प्रजापतिः व्यचिन्तयदित्याह—**स हेति**। **स ह प्रजापतिः** का नु अस्य योग्या? इति **ईक्षाञ्चक्रे**। ततः किं कृतवान्? इत्यत्र **स स्त्रियं ससृजे**। **तामेवं सृष्ट्वा अध उपास्ते**। प्रजोत्पादनव्यापृतिः अधउपासनशब्दार्थः। यस्मात् प्रजापतिरेवं कृतवान् **तस्मात् स्त्रियमध उपासीत** कार्यस्य कारणानुकारित्वात्। अत्र वाजपेयसामान्यक्लृप्तिमाह—**स एतमिति**। **स एतमात्मनो ग्रावाणं** सोमाभिषवोपलस्थानीयं—काठिन्यसामान्यात्—प्रजननेन्द्रियम**ुदपारयत्** स्त्रीव्यञ्जनं प्रति पूरितवान्। **तेन एनां स्त्रियमभ्यसृजत** अभिसंसर्गं कृतवान्॥ २॥

अधोपहासे वाजपेयदृष्टिः तत्फलं च

**तस्या वेदिरुपस्थो लोमानि बर्हिश्चर्माधिषवणे समिद्धो मध्यतस्तौ मुष्कौ स यावान् ह वै वाजपेयेन यजमानस्य लोको भवति तावानस्य लोको भवति य एवं विद्वानधोपहासं चरति आसाꣳ स्त्रीणाꣳ सुकृतं वृङ्क्ते अथ य इदमविद्वान् अधोपहासं चरति अस्य स्त्रियः सुकृतं वृञ्जते॥ ३॥**

**तस्या** इति। **तस्या वेदिरि**त्यादि सर्वं सामान्यम्। प्रसिद्धमेतत् लोके स्त्रीव्यञ्जनस्य मध्येऽग्निरिति। **तौ मुष्कौ** अधिषवणफलके इति व्यवहितेन संबध्यते। वाजपेययाजिनो **यावान्** लोकः प्रसिद्धः **तावान्** विदुषो मैथुनकर्मणः फलमिति स्तूयते। तस्मात् बीभत्सा न कार्येति। **य एवं विद्वान् अधोपहासं चरति आसां स्त्रीणां सुकृतं वृङ्क्ते** आवर्जयति। **अथ** पुनर्यो वाजपेयसंपत्तिं न जानाति सोऽविद्वान् रेतसो रेतस्त्वं **चरति**। **अस्य** स्त्री **सुकृतमावृङ्क्ते**॥ ३॥

अविदुषामेतत् गर्हितमित्यनेकाचार्यसंमतिः

एतत् ह स्म वै तद्विद्वानुद्दालक आरुणिराह एतद्ध स्म वै तद्विद्वान्नाको मौद्गल्य आह एतद्ध स्म वै तद्विद्वान् कुमारहारित आह बहवो मर्या ब्राह्मणायना निरिन्द्रिया विसुकृतोऽस्माल्लोकात् प्रयन्ति य इदमविद्वाꣳसोऽधोपहासं चरन्तीति बहु वा इदꣳ सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति ॥ ४ ॥

एतद्ध स्म वै इति । एतत् ह स्म वै तद्विद्वान् उद्दालक आरुणिराह । किमिति ? अधोपहासाख्यं मैथुनं कर्म वाजपेयसंपन्नं विद्वानिति । अथ नाको मौद्गल्यः कुमारहारितश्च । किञ्च बहवो मर्या मरणधर्मिणो मनुष्या ब्राह्मणायना निरिन्द्रिया विनष्टेन्द्रिया विगतसुकृतकर्माणोऽविद्वांसो मिथुन-कर्मण्यासक्ता भवेयुः । एवमस्मात् जाग्रल्लोकात् प्रेत्य इदमविद्वांसो वा उपहासं चरन्ति तेषां बहु वा इदं रेतः सुप्तस्य वा जाग्रतो वा स्कन्दति ॥ ४ ॥

रेतोऽभिमन्त्रणं गर्भधारणोपायाश्च

तदभिमृशेत् अनु वा मन्त्रयेत—यन्मेऽद्य रेतः पृथिवी-मस्कान्त्सीत् यदोषधीरप्यसरत् यदप इदमहं तद्रेत आददे पुनर्मा-मैत्विन्द्रियं पुनस्तेजः पुनर्भगः पुनरग्निर्धिष्ण्या यथास्थानं कल्पन्ताम्—इत्यनामिकाङ्गुष्ठाभ्यामादाय अन्तरेण स्तनौ वा भ्रुवौ वा निमृज्यात् ॥ ५ ॥ अथ यद्युदके आत्मानं पश्येत् तदभिमन्त्रयेत—मयि तेज इन्द्रियं यशो द्रविणꣳ सुकृतमिति—श्रीर्ह वा एषां स्त्रीणां यन्मलोद्वासाः तस्मान्मलोद्वाससं यशस्विनी-मभिक्रम्य उपमन्त्रयेत ॥ ६ ॥ सा चेदस्मै न दद्यात् काममेनाम-

वक्रीणीयात् सा चेदस्मै नैव दद्यात् काममेनां यष्ट्या वा पाणिना वा उपहत्य अतिक्रामेत्—इन्द्रियेण ते यशसा यश आदद इति—अयशा एव भवति ॥ ७ ॥ सा चेदस्मै दद्यात्—इन्द्रियेण ते यशसा यश आदधामीति—यशस्विनावेव भवतः ॥ ८ ॥ स यामिच्छेत् कामयेत मेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधाय उपस्थमस्या अभिमृश्य जपेत्—अङ्गादङ्गात् संभवसि हृदयादधि जायसे । स त्वमङ्गकषायोऽसि दिग्धविद्धामिव मादय इमाममूं मयि इति ॥ ९ ॥ अथ यामिच्छेत् न गर्भं दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधायाभिप्राण्यापान्यात्—इन्द्रियेण ते रेतसा रेत आदद इति । अरेता एव भवति ॥ १० ॥ अथ यामिच्छेत् दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधायापान्याभिप्राण्यात्—इन्द्रियेण ते रेतसा रेत आदधामीति । गर्भिण्येव भवति ॥ ११ ॥

वक्ष्यमाणमन्त्रतः तदभिमन्त्र्य भ्रूमध्ये स्तनान्तरे वा निमृज्यादित्याह—तदिति । अथ पुत्रार्थी निरिन्द्रियोऽपि यशस्विनीमुपमन्त्र्य स यामिच्छेत् **न गर्भं दधीत** पश्चात् भूयोऽन्यामिन्द्रियेण **ते रेतसा रेत आदद** इति अनेन मन्त्रेण । गर्भिणी न भवति । **अथ यामिच्छेत्** गर्भं दधीतेति पूर्वविपर्ययेण अपान्याभिप्राण्यादिन्द्रियेण ते रेतसा रेत आदधामीति । **गर्भिण्येव भवति** ॥ ९–११ ॥

जायाजाराभिचारः

अथ यस्य जायायै जारः स्यात् तं चेत् द्विष्यादामपात्रेऽग्निमुपसमाधाय प्रतिलोमꣳ शरबर्हिस्तीर्त्वा तस्मिन्नेताः शरभृष्टीः

प्रतिलोमाः सर्पिषाक्ता जुहुयात्—मम समिद्धेऽहौषीः प्राणापानौ त आददेऽसाविति मम समिद्धेऽहौषीः पुत्रपशूंस्त आददेऽसाविति मम समिद्धेऽहौषीरिष्टासुकृते त आददेऽसाविति मम समिद्धेऽहौषीराशापराकाशौ त आददेऽसाविति। स वा एष निरिन्द्रियो विसुकृत् अस्माल्लोकात् प्रैति यमेवं विद्वान् ब्राह्मणः शपति तस्मादेवंवित् श्रोत्रियस्य दारेण नोपहासमिच्छेत् उत ह्येवंवित् परो भवति ॥ १२ ॥

**अथ पुनः यस्य जायायै जारः** उपपतिः **स्यात् तं चेत् द्विष्यात्** अभिचरिष्याम्येनमिति मन्येत तस्येदं—**आमपात्रे अग्निमुपसमाधाय सर्वं प्रतिलोमं** कुर्यात्। **प्रतिलोमाः सर्पिषाक्ता** जुहुयात् **शरभृष्टीः** शरेषीकाः। **मम समिद्धेऽहौषीः** इत्याद्याहुतीः अन्ते सर्वासामसाविति नाम ग्राह्यं प्रत्येकम्। स **एवंवित् यं ब्राह्मणः शपति स** हि **विसुकृत्** विगतपुण्यकर्मा **प्रैति**। **तस्मात् एवंवित् श्रोत्रियस्य** द्वारैः सह **नोपहासमिच्छेत्**। लीलया प्रीत्यर्थं, किमुत अधोपहासम्? **एवंविदपि** तावत् **परो भवति** शत्रुः भवतीत्यर्थः ॥१२॥

जायाया रजस्वलाकरणम्

अथ यस्य जायामार्तवं विन्देत् त्र्यहं कंसेन पिबेत् अहतवासा नैनां वृषलो न वृषली उपहन्यात्त्रिरात्रान्ते आप्लुत्य व्रीहीनवघातयेत् ॥ १३ ॥

**अथ यस्य जायां आर्तवं विन्देत्** ऋतुभावं प्राप्नुयात् इत्येवमादिग्रन्थः पूर्वोऽत्र द्रष्टव्यः। **त्र्यहं कंसेन पिबेत् अहतवासा**श्च स्यात्। तां स्नातां **वृषलो वृषली** वा **नोपहन्यात्** न स्पृशेत्। **त्रिरात्रान्ते** समाप्तौ ततो **व्रीहीनवघातयेत्** तत्कर्मणि नियुञ्ज्यात् ॥ १३ ॥

शुक्लपुत्रादिजननोपायाः

स य इच्छेत् पुत्रो मे शुक्लो जायेत वेदमनुब्रुवीत सर्वमायुरियादिति क्षीरौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १४ ॥ अथ य इच्छेत् पुत्रो मे कपिलः पिङ्गलो जायेत द्वौ वेदावनुब्रुवीत सर्वमायुरियादिति दध्योदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १५ ॥ अथ य इच्छेत् पुत्रो मे श्यामो लोहिताक्षो जायेत त्रीन् वेदाननुब्रुवीत सर्वमायुरियादित्युदौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥ १६ ॥ अथ य इच्छेत् दुहिता मे पण्डिता जायेत सर्वमायुरियादिति तिलौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै ॥१७॥ अथ य इच्छेत् पुत्रो मे पण्डितो विगीतः समितिंगमः शुश्रूषितां वाचं भाषिता जायेत सर्वान् वेदाननुब्रुवीत सर्वमायुरियादिति माꣳसौदनं पाचयित्वा सर्पिष्मन्तमश्नीयातामीश्वरौ जनयितवै औक्षेण वार्षभेण वा ॥१८॥ अथाभिप्रातरेव स्थालीपाकावृता आज्यं चेष्टित्वा स्थालीपाकस्य उपघातं जुहोति—अग्नये स्वाहानुमतये स्वाहा देवाय सवित्रे सत्यप्रसवाय स्वाहेति । हुत्वा उद्धृत्य प्राश्नाति प्राश्य इतरस्याः प्रयच्छति प्रक्षाल्य पाणी उदपात्रं पूरयित्वा तेनैनां त्रिरभ्युक्षति—उत्तिष्ठातो विश्वावसोऽन्यामिच्छ प्रपूर्व्यां सं जायां पत्या सहेति ॥ १९ ॥ अथैनामभिपद्यते—अमोऽहमस्मि सा त्वꣳ सा त्वमसि अमोऽहं सामाहमस्मि ऋक् त्वं द्यौरहं पृथिवी त्वं तावेहि सꣳरभावहै सह रेतो दधावहै पुꣳसे पुत्राय वित्तये—इति ॥ २० ॥ अथास्या ऊरू विहापयति—विजिहीथां द्यावा-

पृथिवी इति । तस्यामर्थं निष्ठाय मुखेन मुखꣳ संधाय त्रिरेनामनु-
लोमामनुमार्ष्टि—विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिꣳशतु ।
आसिंचतु प्रजापतिर्धाता गर्भं दधातु ते । गर्भं धेहि सिनीवालि गर्भं
धेहि पृथुष्टुके । गर्भं ते अश्विनौ देवावाधत्तां पुष्करस्रजौ ॥ २१ ॥
हिरण्मयी अरणी याभ्यां निर्मन्थतामश्विनौ । तं ते गर्भं हवामहे
दशमे मासि सूतये । यथाग्निगर्भा पृथिवी यथा द्यौरिन्द्रेण गर्भिणी ।
वायुर्दिशां यथा गर्भ एवं गर्भं दधामि तेऽसाविति ॥ २२ ॥

स य इच्छेत् पुत्रो मे वर्णतः शुक्लो जायेत वेदमेकमनुब्रुवीत सर्वमायुर्वर्षशतमियात्, क्षीरमन्नं पाचयित्वा सर्पिष्मन्तमश्नीयाताम् । ईश्वरौ समर्थौ । जनयितवै । द्यावापृथिवी इत्यनेन मन्त्रेण । तस्यामर्थमित्यादि पूर्ववत् । त्रिरेनां शिरःप्रभृत्यनुलोमां अनुमार्ष्टि—विष्णुर्योनिं इत्यादि । नाम गृह्णाति अस्याः ॥ १४–२२ ॥

सुखप्रसवोपायः

सोष्यन्तीमद्भिरभ्युक्षति—यथा वायुः पुष्करिणीꣳ समिङ्गयति
सर्वतः । एवा ते गर्भ एजतु सहावैतु जरायुणा इन्द्रस्यायं व्रजः कृतः
सार्गलः सपरिश्रयः । तमिन्द्र ! निर्जहि गर्भेण सावराꣳ सहेति ॥ २३ ॥

सोष्यन्तीं अद्भिरभ्युक्षति प्रसवकाले सुखप्रसवार्थमनेन मन्त्रेण—एवा ते गर्भ एजतु इत्यादिना ॥ २३ ॥

जातकर्मकथनम्

जातेऽग्निमुपसमाधाय अङ्क आधाय कꣳसे पृषदाज्यꣳ
संनीय पृषदाज्यस्य उपघातं जुहोति—अस्मिन् सहस्रं पुष्यासमेध-

मानः स्वे गृहे । अस्योपसन्द्यां मा च्छैत्सीत् प्रजया च पशुभिश्च स्वाहा । मयि प्राणाꣳस्त्वयि मनसा जुहोमि स्वाहा । यत्कर्मणात्यरीरिचं यद्वा न्यूनमिहाकरम् । अग्निः तत् स्विष्टकृत् विद्वान्त्स्विष्टꣳसुहुतं करोतु नः स्वाहेति ॥ २४ ॥ अथास्य दक्षिणं कर्णमभिनिधाय——वाग्वागिति त्रिः । अथ दधि मधु घृतꣳ संनीय अनन्तर्हितेन जातरूपेण प्राशयति——भूस्ते दधामि भुवस्ते दधामि स्वस्ते दधामि भूर्भुवः स्वः सर्वं त्वयि दधामीति ॥ २९ ॥

अथ जातकर्म । **जातेऽग्निमुपसमाधाय अङ्क आधाय पुत्रं कंसे पृषदाज्यं** सन्नियमनं संयोज्य दधिघृते **पृषदाज्यस्य** उपघातं **जुहोति——अस्मिन् सहस्रमित्याद्यावापस्थाने । कर्णमभिनिधाय** स्वमुखं वागादिगीतीः **त्रिर्जपेत्** । **अथ दधि मधु घृतं** सन्निधाय **अनन्तर्हितेन** अव्यवहितेन **जातरूपेण** हिरण्येन **प्राशयति** एभिर्मन्त्रैः ॥ २४, २९ ॥

नामकरणम्

अथास्य नाम करोति——वेदोऽसीति । तदस्य तत् गुह्यमेव नाम भवति ॥ २६ ॥

**अथास्य नाम करोति—वेदोऽसीति । तदस्य तत् गुह्यं नाम भवति** ॥

पुत्रस्य मात्रे प्रदानं स्तनप्रदापनमन्त्रश्च

अथैनं मात्रे प्रदाय स्तनं प्रयच्छति——यस्ते स्तनः शशयो यो मयोभूर्यो रत्नधा वसुविद्यः सुदत्रः । येन विश्वा पुष्यसि वार्याणि सरस्वति ! तमिह धातवेऽकरिति ॥ २७ ॥

**अथैनं मात्रे प्रदाय यस्ते स्तनः** इत्यादिमन्त्रेण **स्तनं प्रयच्छति** ॥२७॥

मात्रभिमन्त्रणं सुपितापुत्रस्तुतिश्च

अथास्य मातरमभिमन्त्रयते—इळासि मैत्रावरुणी वीरे वीरमजीजनत्। सा त्वं वीरवती भव याऽस्मान् वीरवतोऽकरदिति। तं वा एतमाहुः अतिपिता बत अभूरतिपितामहो बत अभूः परमां बत काष्ठां प्रापत् श्रिया यशसा ब्रह्मवर्चसेन य एवंविदो ब्राह्मणस्य पुत्रो जायत इति॥ २८॥

**इळासि** इत्यनेन **अथास्य मातरमभिमन्त्रयते**। अनेन विधिना जातः पितरं पितामहं चातिशेते। **श्रिया यशसा ब्रह्मवर्चसेन परमां काष्ठां प्रापत्** इत्येवं स्तुतो भवति। **एवंविदः** सुपुत्रो **जायते** इति॥ २८॥

इति चतुर्थं ब्राह्मणम्

---

## पञ्चमं ब्राह्मणम्

वंशब्राह्मणम्

अथ वꣳशः पौतिमाषीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रो गौतमीपुत्रात् गौतमीपुत्रो भारद्वाजीपुत्रात् भारद्वाजीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्र औपस्वस्तीपुत्रात् औपस्वस्तीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रः कात्यायनीपुत्रात् कात्यायनीपुत्रः कौशिकीपुत्रात् कौशिकीपुत्र आलम्बीपुत्राच्च वैयाघ्रपदीपुत्राच्च वैयाघ्रपदीपुत्रः काण्वीपुत्राच्च कापीपुत्राच्च कापीपुत्रः॥ १॥

आत्रेयीपुत्रात् आत्रेयीपुत्रो गौतमीपुत्रात् गौतमीपुत्रो भारद्वाजीपुत्रात् भारद्वाजीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रो वात्सीपुत्रात् वात्सीपुत्रः पाराशरीपुत्रात् पाराशरीपुत्रो वार्कारुणीपुत्रात् वार्कारुणीपुत्रो वार्कारुणीपुत्रात् वार्कारुणीपुत्र आर्तभागीपुत्रात् आर्तभागीपुत्रः शौङ्गीपुत्रात शौङ्गीपुत्रः सांकृतीपुत्रात् सांकृतीपुत्र आलम्बायनीपुत्रात् आलम्बायनीपुत्र आलम्बीपुत्रात आलम्बीपुत्रो जायन्तीपुत्रात् जायन्तीपुत्रो माण्डूकायनीपुत्रात् माण्डूकायनीपुत्रो माण्डूकीपुत्रात् माण्डूकीपुत्रः शाण्डिलीपुत्रात् शाण्डिलीपुत्रो राथीतरीपुत्रात् राथीतरीपुत्रो भालुकीपुत्रात् भालुकीपुत्रः क्रौञ्चिकीपुत्राभ्यां क्रौञ्चिकीपुत्रौ वैदभृतीपुत्रात् वैदभृतीपुत्रः कार्शकेयीपुत्रात् कार्शकेयीपुत्रः प्राचीनयोगीपुत्रात् प्राचीनयोगीपुत्रः सांजीवीपुत्रात् सांजीवीपुत्रः प्राश्नीपुत्रात् आसुरिवासिनः प्राश्नीपुत्र आसुरायणादासुरायण आसुरेरासुरिः ॥ २ ॥ याज्ञवल्क्यात् याज्ञवल्क्य उद्दालकात् उद्दालकोऽरुणादरुण उपवेशेरुपवेशिः कुश्रेः कुश्रिर्वाजश्रवसो वाजश्रवा जिह्वावतो बाध्योगात् जिह्वावान् बाध्योगोऽसिताद्वार्षगणात् असितो वार्षगणो हरितात् कश्यपात् हरितः कश्यपः शिल्पात् कश्यपात् शिल्पः कश्यपः कश्यपात् नैध्रुवेः कश्यपो नैध्रुविर्वाचो वाक् अम्भिण्या अम्भिणी आदित्यात् आदित्यानीमानि शुक्लानि यजूꣳषि वाजसनेयेन याज्ञवल्क्येनाख्यायन्ते ॥३॥ समानं आ सांजीवीपुत्रात् सांजीवीपुत्रो माण्डूकायनेः माण्डूकायनिर्माण्डव्यात् माण्डव्यः कौत्सात् कौत्सो माहित्थेर्माहित्थिर्वामक-

क्षायणात् वामकक्षायणः शाण्डिल्यात् शाण्डिल्यो वात्स्यात् वात्स्यः कुश्रेः कुश्रिर्यज्ञवचसो राजस्तम्बायनात् यज्ञवचा राजस्तम्बायनः तुरात् कावषेयात् तुरः कावषेयः प्रजापतेः प्रजापतिर्ब्रह्मणो ब्रह्म स्वयंभु ब्रह्मणे नमः ॥ ४ ॥

अथ वंशब्राह्मणमारभ्यते—अथेति । अथेदानीं समस्तप्रवचनवंशः स्त्रीप्राधान्यात् । गुणवान् पुत्रो भवतीति प्रस्तुतम् । अतः स्त्रीविशेषणेन पुत्रविशेषणेन च । तानीमानि शुक्लानि यजूंषि । प्रजापतिमारभ्य यावत्पौतिमाषीपुत्रः तावदधोनीताचार्यपूर्वक्रमोऽयं वंशब्राह्मणः । यत्र एतस्मिन् अखिलं विकल्पितं तद्धि स्वयंभु स्वविकल्पितहेयांशापाये यत् स्वमात्रमवशिष्यते तद्धि ब्रह्म । तस्मै नमो नम इत्यर्थः ॥ १-४ ॥

इति पञ्चमं ब्राह्मणम्

इति षष्ठोऽध्यायः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं बृहदारण्यकस्य हि ॥
बृहदारण्यकव्याख्याग्रन्थसंख्या निगद्यते ।
त्रिशताधिकयुक्पञ्चसहस्रं परिकीर्तिता ॥
ईशादिबृहदारण्यावधि व्याख्यानविस्तरः ।
सप्तविंशाधिकशतत्रयोदशसहस्रकम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे दशसंख्यापूरकं बृहदारण्यकोपनिषद्विवरणं संपूर्णम्

श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुरामचन्द्रार्पणमस्तु

# नामधेयपदसूची

यत्र पुटसंख्यानन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या।

पदम् पुटसंख्या

---

# विशेषपदसूची

यत्र पुटसंख्यानन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या।

# THE YOGA UPANISHADS

WITH THE COMMENTARY OF

# SRI UPANISHAD-BRAHMA-YOGIN


EDITED BY

PANDIT A. MAHADEVA SASTRI, B.A

DIRECTOR, ADYAR LIBRARY, ADYAR, MADRAS



PUBLISHED FOR THE ADYAR LIBRARY

(THEOSOPHICAL SOCIETY)

1920

अष्टोत्तरशतोपनिषत्सु

# योग-उपनिषदः

श्री उपनिषद्ब्रह्मयोगिविरचितव्याख्यायुताः

अडयार्-पुस्तकालयाध्यक्षेण

**अ. महादेवशास्त्रिणा**

संपादिताः

अडयार्-पुस्तकालयार्थं

प्रकटीकृताश्च

ॐ नमो
ब्रह्मादिभ्यो
ब्रह्मविद्यासंप्रदायकर्तृभ्यो
वंशऋषिभ्यो
नमो गुरुभ्यः

**DEDICATED TO**
**Brahma and the Rishis,**
**The Great Teachers**
**Who handed down Brahmavidya**
**through Generations**

# PREFACE

It will be remembered that Dr. F. O. Schrader, my predecessor in office, soon after taking charge of the Library in 1905, projected a scheme for the publication of the texts of the Minor Upanishads comprised in the collection of the well known One-Hundred-and-Eight Upanishads and brought out in 1912 the first volume of the Minor Upanishads, containing all those Upanishads which treat of Saṃnyāsa. After another interval of eight years I have the pleasure of issuing the second volume in the series comprising the Upanishads which treat of Yoga. This long interval in the publication of the first and the second volumes is due to several causes, not the least of which is the outbreak of war and the immediate removal of Dr. Schrader to the camp of war-prisoners. The interval though regrettable in many ways has proved beneficial in one respect. Since I took charge of the Library in 1916, I have been able to collect more materials and have also had the fortune of coming by a commentary of a single author on all the 108 Upanishads. This commentary by Sri Upanishad-Brahma-Yogin of a Kanchi Advaita Mutt, which is as clear and full as necessary, given side by side with the

text of the Upanishads will be valued more by the reader than the editor's own notes or those compiled by him from extraneous works, such as were appended at the end of the first volume by Dr. Schrader. The plan of giving the commentary along with the text has rendered it desirable to give in the body of the text that reading which is endorsed by the commentary and to note at foot only those variants which are found in the MSS. of the southern recension, reserving all other critical notes to the volumes of translations which will follow.

The materials available for a critical edition of the 108 Upanishads have been described in full by Dr. Schrader in the first volume, and it only remains for me to say that more MSS. have been since collected under each head. The MSS. on which the edition of the Upanishads contained in the present volume is based are the following:

अ — Adyar Library IX K 7—Devanāgari MS. containing Minor Upanishads with Appayadîkshita's commentary.

अ १. — Adyar Library XXXIV B 2—A Grantha MS. of 108 Upanishads.

क. — A Grantha MS. of 108 Upanishads lent by Mr. V. Kachchapesvara Iyer, B.A., B.L., of Vellore.

उ, उ १.— Adyar Library XXXVI E 1 and XXXIV I 6—Two copies of 108 Upanishads with Srī Upanishad-Brahmendra-Yogin's

commentary in Devanāgari and
Grantha characters respectively.

Except for any unforeseen cause, there will be no occasion for delay in the publication of the succeeding volumes of the text and the commentary according to the present plan. One volume at least of the size of the present one may be issued every year. I can, however, make no promise at present as to when the first volume of the English translation of these Upanishads will appear.

ADYAR .
*August, 1920* A. MAHADEVA SASTRI

# विषयसूचिका

## अद्वयतारकोपनिषत्



## अमृतनादोपनिषत्

## अमृतबिन्दूपनिषत्

## क्षुरिकोपनिषत्



## तेजोबिन्दूपनिषत्

प्रथमोऽध्यायः

## त्रिशिखिब्राह्मणोपनिषत्

# दर्शनोपनिषत्

प्रथमखण्डः



द्वितीयखण्डः

तृतीयखण्डः



चतुर्थखण्डः

नवमखण्डः



दशमखण्डः



## ध्यानबिन्दूपनिषत्

## नादबिन्दूपनिषत्

## पाशुपतब्रह्मोपनिषत्

### पूर्वकाण्डः



### उत्तरकाण्डः

## ब्रह्मविद्योपनिषत्

## मण्डलब्राह्मणोपनिषत्

प्रथमे ब्राह्मणे प्रथमः खण्डः



प्रथमे ब्राह्मणे द्वितीयः खण्डः



प्रथमे ब्राह्मणे तृतीयः खण्डः



प्रथमे ब्राह्मणे चतुर्थः खण्डः

## महावाक्योपनिषत्



## योगकुण्डल्युपनिषत्

थमोऽध्यायः

द्वितीयोऽध्यायः



तृतीयोऽध्यायः

## योगचूडामण्युपनिषत्

## योगतत्त्वोपनिषत्

## योगशिखोपनिषत्

प्रथमोऽध्यायः

## द्वितीयोऽध्यायः



## तृतीयोऽध्यायः



## चतुर्थोऽध्यायः

पञ्चमोऽध्यायः



षष्ठोऽध्यायः

## वराहोपनिषत्

### प्रथमाध्यायः



### द्वितीयाध्यायः

## तृतीयाध्यायः



## चतुर्थाध्यायः—१. ब्राह्मणम्

## चतुर्थाध्यायः—२. मन्त्रः



## पञ्चमाध्यायः

## शाण्डिल्योपनिषत्

**प्रथमाध्याये प्रथमः खण्डः**



**प्रथमाध्याये द्वितीयः खण्डः**



**प्रथमाध्याये तृतीयः खण्डः**

प्रथमाध्याये चतुर्थः खण्डः



प्रथमाध्याये पञ्चमः खण्डः



प्रथमाध्याये षष्ठः खण्डः

तृतीयाध्याये द्वितीयः खण्डः



## हंसोपनिषत्

# ADDENDUM

PREFACE, pp. ७–८ : Add to the list the following :

अ २. — Adyar Library XXXIII C 22—A Grantha MS. of 108 Upanishads.

मु. — The printed edition of 108 Upanishads published by Tukaram Javaji, Bombay, 1913, based on a South Indian MS.

# अद्वयतारकोपनिषत्

पूर्णमदः—इति शान्तिः

तारकयोगाधिकारः

अथातोऽद्वयतारकोपनिषदं व्याख्यास्यामो यतये जितेन्द्रियाय शमादिषड्गुणपूर्णाय ॥ १ ॥

उपनिषद्ब्रह्मयोगिविरचितं विवरणम्

ॐ श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुरामचन्द्राय नमः

द्वैतासम्भवविज्ञानसंसिद्धाद्वयतारकम् ।
तारकब्रह्मेति गीतं वन्दे श्रीरामवैभवम् ॥

इह खलु शुक्लयजुर्वेदप्रविभक्तेयं अद्वयतारकोपनिषत् राजयोगसर्वस्वं कटयन्ती ब्रह्ममात्रपर्यवसन्ना दृश्यते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । त्र यथोक्ताधिकार्युद्देशेन श्रुतयः तारकयोगमुपदिशन्तीत्याह—**अथेति** ॥ थ कर्मोपासनाकाण्डद्वयनिरूपणानन्तरं यतः तेन पुरुषार्थासिद्धिः **अतः**

तदर्थं यत्र स्वातिरेकेण द्वयं न विद्यते तत् अद्वयं ब्रह्म तन्मात्रबोधिनी विद्या **तारकोपनिषत्** तां श्रुतयो वयं **व्याख्यास्यामः** । कस्मा अधिकारिण इत्यत आह—**यतय इति** । स्वाश्रमानुष्ठानपूर्वकं देशिकमुखतो वेदान्तश्रवणं ततो युक्तिभिः श्रुत्यविरुद्धाभिः मननं च कृत्वा निदिध्यासनाय यतत इति यतिः । अजितेन्द्रियस्य यतित्वं कुत इत्यत आह—**जितेन्द्रियायेति** । जितेन्द्रियस्य यतित्वोपपत्तेः । अरिषड्वर्गाक्रान्तस्य जितेन्द्रियता कुत इत्यत आह—**शमादिषड्गुणपूर्णायेति** । शमादिषड्गुणसम्पत्तेः अरिषड्वर्गोपगतिपूर्वकत्वात् । एवं साधनवते श्रुतयः तारकयोगमुपदिशन्तीत्यर्थः ॥ १ ॥

योगोपायतत्फलम्

चित्स्वरूपोऽहमिति सदा भावयन् सम्यङ्निमीलिताक्षः किंचिदुन्मीलिताक्षो वाऽन्तर्दृष्ट्या भ्रूदहरादुपरि सच्चिदानन्दतेजःकूट-रूपं परं ब्रह्मावलोकयन् तद्रूपो भवति ॥ २ ॥

एवं निदिध्यासनोपायतत्फलमाह—**चिदिति** ॥ योगी स्वान्तः चिद्रूपोऽस्मीति **भावयन्** अर्धोन्मीलितलोचनः भ्रूमध्यादौ सच्चिदानन्दमात्रं ब्रह्माहमस्मीत्यालोकयन् तद्रूपः तारकरूपो भवति ॥ २ ॥

तारकस्वरूपम्

गर्भजन्मजरामरणसंसारमहद्भयात् संतारयति तस्मात्तारक-मिति । जीवेश्वरौ मायिकाविति विज्ञाय सर्वविशेषं नेति नेतीति विहाय यदवशिष्यते तदद्वयं ब्रह्म ॥ ३ ॥

किं तारकमित्यत आह—**गर्भेति** ॥ "ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत् सदा यतिः ।" इति श्रुतिसिद्धज्योतिर्लिङ्गस्य प्रत्यग्रूपत्वेन

ाज्ञविकल्पितगर्भवासादिसंसारतारकत्वात् तारकं प्रत्यगात्मेत्यर्थः । जीवेशभेदे ति प्रत्यगभिन्नब्रह्मभावः कुत इत्याशङ्क्य तयोर्भेदस्य मायिकत्वेन मिथ्यात्वात तो यच्छिष्यते तदेव ब्रह्मेत्याह—जीवेति ॥ ३ ॥

लक्ष्यत्रयानुसन्धानविधिः

तत्सिद्ध्यै लक्ष्यत्रयानुसंधानं कर्तव्यम् ॥ ४ ॥

तदधिगमोपायः कथमित्यत आह तत्सिद्ध्या इति ॥ ४ ॥

अन्तर्लक्ष्यलक्षणम्

देहमध्ये ब्रह्मनाडी सुषुम्ना सूर्यरूपिणी पूर्णचन्द्राभा वर्तते । सा तु मूलाधारादारभ्य ब्रह्मरन्ध्रगामिनी भवति । तन्मध्ये तटित्कोटिसमानकान्त्या मृणालसूत्रवत् सूक्ष्माङ्गी कुण्डलिनीति प्रसिद्धाऽस्ति । तां दृष्ट्वा मनसैव नरः सर्वपापविनाशद्वारा मुक्तो भवति । फालोर्ध्वगल्लाटविशेषमण्डले निरन्तरं तेजस्तारकयोग-विस्फुरणेन पश्यति चेत् सिद्धो भवति । तर्जन्यग्रोन्मीलितकर्ण-रन्ध्रद्वये तत्र फूत्कारशब्दो जायते । तत्र स्थिते मनसि चक्षुर्मध्यगतनीलज्योतिस्स्थलं विलोक्य अन्तर्दृष्ट्या निरतिशयसुखं प्राप्नोति । एवं हृदये पश्यति । एवमन्तर्लक्ष्यलक्षणं मुमुक्षुभिरुपास्यम् ॥ ५ ॥

अन्तर्बाह्यमध्यभेदेन लक्ष्यं त्रिविधम् । तत्र अन्तर्लक्ष्यलक्षणं तदभ्यासफलं चाह—देहेति ॥ यदा कुण्डलिनी प्राणदृष्टिमनोभिभिः

मूलाधारत्रिकोणाग्रालङ्कारसुषुम्नाऽधोवक्त्रं विभिद्य तन्मध्ये प्रविशति तदा बाह्यान्तःप्रपञ्चविस्मरणपूर्वकं मुन्यन्तःकरणं निर्विकल्पब्रह्मपदं भजति। मुनिः निर्विकल्पज्ञानात् विकल्पात् मुक्तो भवतीत्यर्थः। तत्सिद्ध्युपायः कः इत्यत आह—फालेति। तद्गतसुखानुभवोपायं वदन् अन्तर्लक्ष्यं उपसंहरति—तर्जनीति। सुखं प्राप्नोति, न केवलं कर्णरन्ध्रद्वये, एवं हृदये ॥ ५ ॥

### बहिर्लक्ष्यलक्षणम्

अथ बहिर्लक्ष्यलक्षणम्। नासिकाग्रे चतुर्भिः षड्भिरष्टभिः दशभिः द्वादशभिः क्रमात् अङ्गुलान्ते नीलद्युतिश्यामत्वसदृग्रक्तभङ्गीस्फुरत्पीतवर्णद्वयोपेतं व्योम यदि पश्यति स तु योगी भवति। चलदृष्ट्या व्योमभागवीक्षितुः पुरुषस्य दृष्ट्यग्रे ज्योतिर्मयूखा वर्तन्ते। तद्दर्शनेन योगी भवति। तप्तकाञ्चनसंकाशज्योतिर्मयूखा अपाङ्गान्ते भूमौ वा पश्यति तद्दृष्टिः स्थिरा भवति। शीर्षोपरि द्वादशाङ्गुलसमीक्षितुः अमृतत्वं भवति। यत्र कुत्र स्थितस्य शिरसि व्योमज्योतिर्दृष्टं चेत् स तु योगी भवति ॥ ६ ॥

बहिर्लक्ष्यलक्षणमाह—अथेति ॥ योगी भवति इत्यादिकृत्स्नोपनिषत् प्रायशो मण्डलब्राह्मणोपनिषद्व्याख्यानेन व्याख्यातं स्यादिति मन्तव्यम् ॥ ६ ॥

### मध्यलक्ष्यलक्षणम्

अथ मध्यलक्ष्यलक्षणं प्रातश्चित्रादिवर्णाखण्डसूर्यचक्रवत् वह्निज्वालावलीवत् तद्विहीनान्तरिक्षवत् पश्यति। तदाकाराकारितया

अवतिष्ठति । तद्भूयोदर्शनेन गुणरहिताकाशं भवति । विस्फुरत्तारकाकारदीप्यमानगाढतमोपमं परमाकाशं भवति । कालानलसमद्योतमानं महाकाशं भवति । सर्वोत्कृष्टपरमद्युतिप्रद्योतमानं तत्त्वाकाशं भवति । कोटिसूर्यप्रकाशवैभवसंकाशं सूर्याकाशं भवति । एवं बाह्याभ्यन्तरस्थव्योमपञ्चकं तारकलक्ष्यम् । तद्दर्शी विमुक्तफलस्तादृग्व्योमसमानो भवति । तस्मात् तारक एव लक्ष्यं अमनस्कफलप्रदं भवति ॥ ७ ॥

अन्तर्बाह्यलक्ष्यस्वरूपमुक्त्वा मध्यलक्ष्यस्वरूपमाह—अथेति ॥ **तद्दर्शी** विमुक्तस्याज्ञानतत्कार्यफलः । यस्मादेवं तस्मात् ॥ ७ ॥

### द्विविधं तारकम्

तत्तारकं द्विविधं पूर्वार्धं तारकं उत्तरार्धं अमनस्कं चेति । तदेष श्लोको भवति—

तद्योगं च द्विधा विद्धि पूर्वोत्तरविधानतः ।
पूर्वं तु तारकं विद्यात् अमनस्कं तदुत्तरमिति ॥ ८ ॥

### तारकयोगसिद्धिः

अक्ष्यन्तस्तारयोः चन्द्रसूर्यप्रतिफलनं भवति । तारकाभ्यां सूर्यचन्द्रमण्डलदर्शनं ब्रह्माण्डमिव पिण्डाण्डशिरोमध्यस्थाकाशे रवीन्दुमण्डलद्वितयमस्तीति निश्चित्य तारकाभ्यां तद्दर्शनम् ।

अत्राप्युभयैक्यदृष्ट्या मनोयुक्तं ध्यायेत्, तद्योगाभावे इन्द्रियप्रवृत्ते-
रनवकाशात्। तस्मात् अन्तर्दृष्ट्या तारक एवानुसंधेय ॥ ९ ॥

ब्रह्माण्डवत् पिण्डाण्डेऽपि रवीन्दू विद्येते इति निश्चित्य तारकाभ्यां तदैक्यदर्शनतः तारकयोगसिद्धिः भवेदित्याह—**अक्षीति** ॥ अयोगी यथा ब्रह्माण्डस्थचन्द्रसूर्यौ मनस्सहकृततारकाभ्यां पश्यति तथा योगी स्वमस्तकाकाशविभातरवीन्दुद्वयं मनस्सहकृतताराभ्यां अवलोकयेदित्यर्थः। रूपदर्शनस्य चक्षुरधीनत्वात् किं मनसेत्यत आह—**तदिति**। मनसि अन्यत्र व्यापृते रूपादिग्रहणशक्तिः चक्षुरादेः नास्तीत्यत्र "अन्यत्रमना अभूवं नादर्शम्, अन्यत्रमना अभूवं नाश्रौषं" इत्यादिश्रुतेः। यस्मादेवं **तस्मात्** ॥ ९ ॥

मूर्तामूर्तभेदेन द्विविधमनुसन्धेयम्

तत्तारकं द्विविधं, मूर्तितारकं अमूर्तितारकं चेति। यत् इन्द्रियान्तं तत् मूर्तिमत्। यत् भ्रूयुगातीतं तत् अमूर्तिमत्। सर्वत्र अन्तःपदार्थविवेचने मनोयुक्ताभ्याम इष्यते। तारकाभ्यां तदूर्ध्वस्थसत्त्वदर्शनात् मनोयुक्तेन अन्तरीक्षणेन सच्चिदानन्दस्वरूपं ब्रह्मैव। तस्मात् शुक्लतेजोमयं ब्रह्मेति सिद्धम्। तद्ब्रह्म मनःसहकारिचक्षुषा अन्तर्दृष्ट्या वेद्यं भवति। एवं अमूर्तितारकमपि। मनोयुक्तेन चक्षुषैव दहरादिकं वेद्यं भवति, रूपग्रहणप्रयोजनस्य मनश्चक्षुरधीनत्वात् बाह्यवदान्तरेऽपि आत्ममनश्चक्षुःसंयोगेनैव रूपग्रहणकार्योदयात्। तस्मात् मनोयुक्ता अन्तर्दृष्टिः तारकप्रकाशाय भवति॥ १० ॥

यदनुसन्धेयं तत् कतिविधं इत्यत्र तत्तारकं ॥ बाह्यपदार्थविवेचनवत् न्तःपदार्थविवेचनमपि मनश्चक्षुरधीनमित्याह—सर्वत्रेति । तदूर्ध्वस्थसत्व-नात् भ्रूमध्योर्ध्वविलसितोत्तरतारकलक्ष्यदर्शनात् । केनैतद्दर्शनीयमित्यत्र नोयुक्तेनेति । ब्रह्मैव उत्तरतारकलक्ष्यमित्यनुसन्धेयम् । यस्मादेवं तस्मात् । मध्यादिस्थलविलसितशुक्लतेजसो मनःकल्पितत्वेऽपि ब्रह्मणः सर्वव्यापकत्वेन त्रापि विद्यमानत्वात् तदेव ब्रह्मेति अभिमतिद्रढिम्ना लीने तत्र मनसि कल्पक-पेक्षकल्पनावैरळ्ये निर्विकल्पकं ब्रह्मैव अवशिष्यते इत्यर्थः । यत्तेजो मनः-ल्पितं तद्ब्रह्म । यस्मादेवं तस्मात् ॥ १० ॥

## तारकयोगस्वरूपम्

भ्रूयुगमध्यबिले दृष्टिं तद्द्वारा ऊर्ध्वस्थिततेज आविर्भूतं तारकयोगो भवति । तेन सह मनोयुक्तं तारकं सुसंयोज्य प्रयत्नेन भ्रूयुग्मं सावधानतया किंचिदूर्ध्वमुत्क्षेपयेत् । इति पूर्वतारकयोगः । उत्तरं तु अमूर्तिमत् अमनस्कमित्युच्यते । तालुमूलोर्ध्वभागे महान् ज्योतिर्मयूखो वर्तते । तत् योगिभिर्ध्येयम् । तस्मात् अणिमादि-सिद्धिर्भवति ॥ ११ ॥

कोऽयं तारकयोग इत्यत्र भ्रूयुगमध्यबिले तत्रत्याज्ञाचक्रे दृष्टियुग्मं निवेश्य । सावधानतया विलोकयन् । ध्येयम् तज्ज्योतिः ब्रह्मेति योगि-श्चिन्त्यमित्यर्थः । ततः किं भवतीत्यत्र तस्मादिति ॥ ११ ॥

## शाम्भवीमुद्रा

अन्तर्बाह्यलक्ष्ये दृष्टौ निमेषोन्मेषवर्जितायां सत्यां शांभवी मुद्रा भवति । तन्मुद्रारूढज्ञानिनिवासात् भूमिः पवित्रा भवति ।

**तद्दृष्ट्या सर्वे लोकाः पवित्रा भवन्ति । तादृशपरमयोगिपूजा यस्य लभ्यते सोऽपि मुक्तो भवति ॥ १२ ॥** ८

यत् योगिभिः ध्येयमुक्तं पर्यवसाने तदेव शांभवी मुद्रा भवतीत्याह **अन्तरिति ॥ मुद्रा भवति** इत्यत्र

अन्तर्लक्ष्यं बहिर्दृष्टिः निमेषोन्मेषवर्जिता ।
एषा सा शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता ॥

इति श्रुतेः । तन्मुद्रारूढयोगिनं स्तौति—**तदिति । पवित्रा भवति** इत्यत्र "स्वपादन्यासमात्रेण पावयन् वसुधातलं" इति स्वरूपदर्शनोक्तेः । **पवित्रा भवन्ति**—

खेचरा भूचराः सर्वे ब्रह्मविद्दृष्टिगोचराः ।
सद्य एव विमुच्यन्ते कोटिजन्मार्जितैरघैः ॥

इति श्रुतेः ॥ १२ ॥

### अन्तर्लक्ष्यविकल्पाः

**अन्तर्लक्ष्यज्वलज्ज्योतिःस्वरूपं भवति । परमगुरूपदेशेन सहस्रारज्वलज्ज्योतिर्वा बुद्धिगुहानिहितचिज्ज्योतिर्वा षोडशान्तस्थ-तुरीयचैतन्यं वा अन्तर्लक्ष्यं भवति । तद्दर्शनं सदाचार्यमूलम् ॥ १३ ॥**

अन्तर्लक्ष्यं विकल्प्य निर्धारयति—**परमेति ॥** उक्तविकल्पानां एकार्थपर्यवसायित्वात् तद्दर्शनमूलं किमित्यत्र—**तद्दर्शनमिति** ॥ १३ ॥

आचार्यलक्षणम्

आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः ।
योगज्ञो योगनिष्ठश्च सदा योगात्मकः शुचिः ॥ १४ ॥
गुरुभक्तिसमायुक्तः पुरुषज्ञो विशेषतः ।
एवंलक्षणसंपन्नो गुरुरित्यभिधीयते ॥ १५ ॥
गुशब्दस्त्वन्धकारः स्यात् रुशब्दस्तन्निरोधकः ।
अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते ॥ १६ ॥
गुरुरेव परं ब्रह्म गुरुरेव परा गतिः ।
गुरुरेव परा विद्या गुरुरेव परायणम् ॥ १७ ॥
गुरुरेव परा काष्ठा गुरुरेव परं धनम् ।
यस्मात्तदुपदेष्टाऽसौ तस्माद्गुरुतरो गुरुरिति ॥ १८ ॥

आचार्यलक्षणमुक्त्वा गुरुशब्दार्थमाह—गुशब्दस्त्विति ॥ १४–१८ ॥

ग्रन्थाभ्यासफलम्

यः सकृदुच्चारयति तस्य संसारमोचनं भवति । सर्वजन्मकृतं पापं तत्क्षणादेव नश्यति । सर्वान् कामानवाप्नोति । सर्वपुरुषार्थसिद्धिर्भवति । य एवं वेदेत्युपनिषत् ॥ १९ ॥

ग्रन्थतदर्थपठनानुसन्धानफलमाह—य इति ॥ कामाकामधियां पठनफलं सर्वकामाप्तिः परमपुरुषार्थाप्तिश्च । इत्युपनिषच्छब्दः अद्वयतारकोपनिषत्समाप्त्यर्थः ॥ १९ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
अद्वयोपनिषद्व्याख्या लिखितेश्वरगोचरा ।
अद्वयोपनिषद्व्याख्याग्रन्थोऽशीतिरितीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे त्रिपञ्चाशत्सङ्ख्यापूरकं अद्वयतारकोपनिषद्विवरणं सम्पूर्णम्

ॐ श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुरामचन्द्रार्पणमस्तु ॥

---

ॐ

# अमृतनादोपनिषत्

सह नाववतु—इति शान्तिः

श्रवणाद्युपायः

शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः ।
परमं ब्रह्म विज्ञाय उल्कावत्तान्यथोत्सृजेत् ॥ १ ॥

विवरणम्

ॐ श्रीमद्विश्वाधिष्ठानपरमहंससद्गुरुरामचन्द्राय नमः

अमृतनादोपनिषत्प्रतिपाद्यं पराक्षरम् ।
त्रैपदानन्दसाम्राज्यं हृदि मे भातु संततम् ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं अमृतनादोपनिषत् । कठवल्ल्यादि-समं उपोद्घातादिकम् । षडङ्गयोगप्रकाशनात्मिकोपनिषदोऽल्पग्रन्थतो विवरणमारभ्यते । आदौ तावत्—विशुद्धचित्तानां श्रवणाद्युपायादेव पुरुषार्थसिद्धिः, मलिनचित्तानां ब्रह्मोपासनाविशिष्टषडङ्गयोगाभ्यासद्वारकज्ञानेन

पुरुषार्थसिद्धिः अस्यामुपनिषदि प्रतिपाद्यते । तत्रादौ मुख्याधिकारिणां श्रवणाद्युपायमाह—**शास्त्राणीति** । मुमुक्षून् प्रति सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति अनुशासनं कुर्वन्तीति **शास्त्राणि** ईशाद्यष्टोत्तरशतोपनिषत्संज्ञकानि श्रुतार्थधारणासमर्थो **मेधावी** ब्रह्मविद्वरिष्ठदेशिकमुखात् यथावत् अधीत्य यावत् संशयादिपञ्चदोषनिवृत्तिः **पुनः पुनः** तावत् **अभ्यस्य** श्रवणमनननिदिध्यासनानि नैरन्तर्येण कृत्वा तत्सञ्जातसम्यज्ज्ञानेन स्वातिरिक्ताविद्यापदतत्कार्यजातं यत्र पर्यवस्यति अपह्नवं भजति तत् **परमं** तन्मात्रतया उपबृंहणात् **ब्रह्म** निष्प्रतियोगिकस्वमात्रमिति **विज्ञाय** तज्ज्ञानसमकालं विद्वान् तद्भावमेत्य तन्मात्रतयाऽवशिष्यते । यतः शास्त्राभ्यासः एवं प्रभाववान् अतो ब्रह्मभावापत्त्यनन्तरमपि शास्त्राभ्यास एव अप्रमादेन कर्तव्य इत्यत आह—**उल्कावदिति** । यथा उल्काप्रकाशतो द्रव्यमालोक्य उल्कां परित्यजति तथा ब्रह्मभावापत्त्यनन्तरं तत्साधनानि **तानि** शास्त्राणि तत्प्रभवज्ञानं चापि **अथोत्सृजेत्** इत्यत्र

उल्काहस्तो यथा कश्चिद् द्रव्यमालोक्य तां त्यजेत् ।
ज्ञानेन ज्ञेयमालोक्य पश्चात् ज्ञानं परित्यजेत् ॥ इति,
आत्मानमात्मना साक्षात् ब्रह्म बुद्ध्वा सुनिश्चलम्
देहजात्यादिसंबन्धान् वर्णाश्रमसमन्वितान् ॥
वेदशास्त्रपुराणानि पदपांसुमिव त्यजेत् ॥ इति च श्रुतेः ॥ १ ॥

प्रणवोपासना

**ओंकाररथमारुह्य विष्णुं कृत्वाऽथ सारथिम् ।**
**ब्रह्मलोकपदान्वेषी रुद्राराधनतत्परः ॥ २ ॥**

**तावद्रथेन गन्तव्यं यावद्रथपथि [1]स्थितः ।**
**स्थात्वा रथपथिस्थानं रथमुत्सृज्य गच्छति ॥ ३**

[1] स्थितिः । स्थि—क.

**मात्रालिङ्गपदं त्यक्त्वा शब्दव्यञ्जनवर्जितम् ।**
**अस्वरेण मकारेण पदं सूक्ष्मं हि गच्छति ॥ ४ ॥**

प्रथममन्त्रेणोत्तमाधिकारिणां कृतार्थतामभिधाय मध्यममन्दाधिकारिणां तत्पदारोहाय प्रणववाच्यार्थोपासनां षडङ्गयोगं चाह—**ओङ्कारेति** । रथस्थानीयमोङ्कारं **आरुह्य** कांस्यघण्टानिनादवत् प्रणवोच्चारणपूर्वकं तदर्थानुसन्धानं कृत्वा रथ**सारथिं** बुद्धितत्त्वं **विष्णुं** व्यापकं प्रणवार्थेश्वराकाराकारितं कृत्वा । "बुद्धिं तु सारथिं विद्धि" इति श्रुतेः । ब्रह्मैव लोको ब्रह्मलोकः निर्विशेषपरमात्मा तद्रूपतया पद्यत इति ब्रह्मलोकपदं स्वमात्रतया **अन्वेष्टुमिच्छ**तीति **ब्रह्मलोकपदान्वेषी** तदुपायत्वेन **रुद्राराधनतत्परो** भवेत् स्वातिरिक्तत्वेन पराग्भावमापन्नस्वाविद्यापदतत्कार्यभूतरुजं द्रावयतीति रुद्रः प्रत्यगात्मा तदाराधनं व्यष्टिसमष्ट्यन्तःकरणवृत्तिसहस्रभावाभावप्रकाशकप्रत्यगस्मीत्यनुसन्धानं तदेकनिष्ठत्वं तत्परत्वमित्यर्थः । आदौ ओङ्कारार्थेश्वरानुचिन्तनं, तदाकाराकारितान्तःकरणं प्रसन्नं सत् निर्विशेषब्रह्ममात्रावस्थितिं ईहते, तदुपायत्वेन प्रत्यगनुसन्धानं, ततः प्रत्यक्पराग्भावसापेक्षप्रत्यग्भावं विहाय निष्प्रतियोगिकब्रह्ममात्रतया अवशिष्यत इति भावः ॥ २ ॥ ब्रह्मभावापत्तावपि सदा प्रणवानुसन्धानं कर्तव्यमित्यत आह—**तावदिति** । **यावद्रथपथि** प्रणवानुसन्धानवर्त्मनि **स्थित**स्तिष्ठति **तावद्रथेन गन्तव्यं** ओङ्कारोच्चारणपूर्वकं अर्थानुसन्धानं कर्तव्यम् । एवं **रथपथिस्थानं** रथपथेन यत् गन्तव्यस्थानं निर्विशेषं ब्रह्म तत्र तन्मात्रावशेषतया **स्थात्वा** स्थित्वा ततः रथेन गन्तव्यप्रदेशस्य प्राप्तत्वात् ओङ्कार**रथमुत्सृज्य** तत्प्राप्यतुर्यतुर्यस्थानं **गच्छति** तुर्यतुर्यो भवतीत्यर्थः ॥ ३ ॥ तुर्यतुर्याधिगमोपायमाह—**मात्रेति** । सर्वव्यवहारहेत्वकारादयः स्वराः शब्दाः, ककारादीनि व्यञ्जनानि, तैः वर्जितं शब्दव्यञ्जनात्मकपञ्चाशद्वर्णव्यवहार्यप्रपञ्चकलनाविरळं यत् **मात्रालिङ्गपदं** अकारादिमात्रातदध्यक्षविश्वविराडोत्रादिरूपं **त्यक्त्वा** स्वातिरेकेण किञ्चिन्नास्तीति निश्चित्य अथ **अस्वरेण मकारेण** मकारार्थेश्वरभावेन निरावृतक्रियाज्ञानेच्छाशक्तिसम्पत्त्या यत् **सूक्ष्मं हि**

पदं विराजते तत् सूक्ष्मपदं ब्रह्म स्वमात्रमिति गच्छति मात्रालिङ्गशब्दव्यञ्जन-कलनापह्नवसिद्धब्रह्ममात्रतया मुनिः अवशिष्यत इत्यर्थः ॥ ४ ॥

प्रत्याहारलक्षणम्

शब्दादिविषयान् पञ्च मनश्चैवातिचञ्चलम् ।
चिन्तयेदात्मनो रश्मीन् प्रत्याहारः स उच्यते ॥ ५ ॥

मन्दाधिकारिचित्तशुद्धिहेतुषडङ्गयोगमुपदिशति । तत्र प्रत्याहार-स्वरूपमाह—शब्दादीति । "यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति भावयेत्" इत्यादिश्रुत्यनुरोधेन श्रोत्रादिग्राह्यपञ्चशब्दादिविषयान् स्वात्मनो रश्मीन् स्वात्मविकल्पितत्वेन स्वरूपभूतान् । मनश्चेति चशब्दतः सविषयान्तः-करणचतुष्टयं गृह्यते । तत्तु अतिचञ्चलं क्षणविकारित्वात् । तदप्यात्मनो रूपं चिन्तयेत् स्वातमातिरिक्तविषयतः प्रत्याहरेदिति योऽर्थोऽभिहितः सः प्रत्याहारः उच्यते ॥ ५ ॥

षडङ्गयोगः

प्रत्याहारस्तथा ध्यानं प्राणायामोऽथ धारणा ।
तर्कश्चैव समाधिश्च षडङ्गो योग उच्यते ॥ ६ ॥

योगषडङ्गानि गणयति—प्रत्याहार इति । स्पष्टोऽर्थः ॥ ६ ॥

प्राणायामादिफलम्

यथा पर्वतधातूनां [1]दह्यन्ते धमता मलाः ।
तथेन्द्रियकृता दोषा दह्यन्ते प्राणधारणात् ॥ ७ ॥

[1] दह्यते धमता मलम्—अ.

प्राणायामैर्दहेद्दोषान् धारणाभिश्च किल्बिषम् ।
किल्बिषं हि क्षयं [1]नीत्वा रुचिरं चैव चिन्तयेत् ॥ ८ ॥

प्राणायामादिफलप्रदर्शनपूर्वकं प्राणायामादिप्रकारमाह—**यथेति** ॥ **यथा धमता** धमनाभिवर्धितवह्निना **पर्वतधातूनां मलाः** मलानि **दह्यन्ते तथा प्राणधारणात् दशेन्द्रियकृताः दोषा दह्यन्ते** ॥ ७ ॥ यत एवं अतः **प्राणायामैः** लिङ्गदेहाश्रय**दोषान् दहेत्** । तथा **धारणाभिश्च** अन्तःकरणगत**किल्बिषं** दहेत् । एवं अन्तःकरणज**किल्बिषं** अशुद्धिं **क्षयं नीत्वा रुचिरं** किल्बिषक्षयाधिकरणं **चैव** हीतिशब्दात् सर्ववृत्तिकुम्भकं मनःप्राणवृत्तिस्तम्भनं चिन्तयेत् ॥ ८ ॥

त्रिविधप्राणायामः

रुचिरं रेचकं चैव वायोराकर्षणं तथा ।
प्राणायामास्त्रयः प्रोक्ता रेचपूरककुम्भकाः ॥ ९ ॥

त्रिविधप्राणायाममाह—**रुचिरमिति** । कुम्भकरेचकपूरकभेदेन **प्राणायामाः त्रयः प्रोक्ताः** । अत्र रुचिरशब्दः कुम्भकवाची, रेचकपूरकसहपठितत्वात् ॥ ९ ॥

प्राणायामलक्षणम्

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।
त्रिः पठेदायतप्राणः प्राणायामः स उच्यते ॥ १० ॥

प्राणायामस्वरूपमाह—**सव्याहृतिमिति** । कुम्भकावस्थायां "ॐ भूः" इत्यादिप्रणवसम्पुटितसप्तव्याहृतिभिः "परोरजसेसावदोम्" इति **शिरसा** च

[1] तीर्त्वा—अ १.

सह गायत्रीं त्रिः पठेत् त्रिवारं मनसा उच्चरेदिति योऽर्थोऽभिहितः स प्राणायामः उच्यते ॥ १० ॥

रेचकलक्षणम्

उत्क्षिप्य वायुमा[1]काशे शून्यं कृत्वा निरात्मकम् ।
शून्यभावे नियुञ्जीयाद्रेचकस्येति लक्षणम् ॥ ११ ॥

रेचकलक्षणमाह—उत्क्षिप्येति । बाह्याकाशे वायुमुत्क्षिप्य तैलधारावत् मन्दंमन्दं विरेच्य अन्तः निरात्मकं वायुं शून्यं कृत्वा शून्यभावे नियुञ्जीयात् इति यत्तत् रेचकस्य लक्षणम् ॥ ११ ॥

पूरकलक्षणम्

[2]वक्त्रेणोत्पलनाळेन तोयमाकर्षयेन्नरः ।
एवं वायुर्ग्रहीतव्यः पूरकस्येति लक्षणम् ॥ १२ ॥

पूरकलक्षणमाह—वक्त्रेणेति । यथा नरो वक्त्रेण वक्त्रस्थोत्पलनाळेन वा तोयं आकर्षयेत् एवमिडया पिङ्गळया शीतल्या वा वायुः ग्रहीतव्यः इति यत्तत् पूरकस्य लक्षणम् ॥ १२ ॥

कुम्भकलक्षणम्

[3]नोच्छ्वसेन्न च [4]निश्वासेत् नैव गात्राणि चालयेत् ।
एवं भावं नियुञ्जीयात् कुम्भकस्येति लक्षणम् ॥ १३ ॥

[1] काशं—क, अ १, अ २. शे इत्येतत् शं इति शोधितं—अ.
[2] वक्रे—क. [3] नोच्छ्वासे—अ २. [4] निश्वसे—अ १.

अन्धवत् पश्य रूपाणि शब्दं बधिरवच्छृणु ।
काष्ठवत् पश्य वै देहं [1]प्रशान्तस्येति लक्षणम् ॥ १४ ॥

कुम्भकलक्षणमाह—**नोच्छ्वसेदिति** । सिद्धाद्यासनमास्थाय निश्चलगात्रो योगी रेचकपूरकव्यापारमकृत्वा एवं वायुस्तम्भनभावं नियुञ्ज्यादिति यत्तत् कुम्भकलक्षणम् ॥ १३ ॥ कुम्भकवेळायां अन्धबधिरवत् रूपशब्दादिव्यापृतिविरळो भूयादिति प्रशान्तलक्षणमाह—**अन्धवदिति** । अन्धबधिरग्रहणं शिष्टेन्द्रियवैकल्योपलक्षणार्थं, यथा अन्धादिः रूपादिग्रहणं न करोति तथा अविकलेन्द्रियोऽपि । रूपादीन् अन्धादिवत् पश्य स्वदेहं काष्ठवत् पश्येति यत्तत् प्रशान्तस्य लक्षणम् । योगी सर्वेन्द्रियव्यापृतिविरळो भवेदित्यर्थः ॥१४॥

धारणालक्षणम्

मनः संकल्पकं ध्यात्वा संक्षिप्यात्मनि बुद्धिमान् ।
धारयित्वा तथाऽऽत्मानं धारणा परिकीर्तिता ॥ १५ ॥

धारणालक्षणमाह—**मन इति** । **बुद्धिमान्** योगी सङ्कल्पात्मकं **मनः** तद्वृत्तिजातं **सङ्क्षिप्य** अथ निस्सङ्कल्पकं **ध्यात्वा आत्मनि** निर्विकल्पके प्रत्यग्भावपरिणते मनसि तथाविधं परमात्मानं **धारयित्वा** या प्रत्यक्परैक्यस्थितिः सेयं **धारणेति परिकीर्तिता** ॥ १५ ॥

तर्कलक्षणम्

आगमस्याविरोधेन ऊहनं तर्क उच्यते ।

तर्कलक्षणमाह—**आगमस्येति** । श्रुत्यनुगृहीतोहनमेव तर्क इत्यभिधीयते ॥

[1] प्रशान्तस्यैव—अ २.

समाधिलक्षणम्

समं मन्येत [1]यं लब्ध्वा स समाधिः प्रकीर्तितः ॥ १६ ॥

समाधिलक्षणमाह—सममिति । ब्रह्माहं, अहमेव ब्रह्म इति यं परमात्मानं मत्वा स्वविकल्पितप्रपञ्चजातं समं आत्मानमेव मन्येत स समाधिरिति श्रुतिभिः परिकीर्तितः ॥ १६ ॥

समाधिसिद्ध्युपायः

भूमौ दर्भासने रम्ये सर्वदोषविवर्जिते ।
कृत्वा मनोमयीं रक्षां जप्त्वा वै रथमण्डले ॥ १७ ॥
पद्मकं स्वस्तिकं वाऽपि भद्रासनमथापि वा ।
बद्ध्वा योगासनं सम्यक् उत्तराभिमुखः स्थितः ॥ १८ ॥
नासिकापुटमङ्गुल्या पिधायैकेन मारुतम् ।
आकृष्य धारयेदग्निं शब्दमेव विचिन्तयेत् ॥ १९ ॥
ओमित्येकाक्षरं ब्रह्म ओमित्येतन्न [2]रेचयेत् ।
दिव्यमन्त्रेण बहुधा कुर्या[3]न्मलविमुक्तये ॥ २० ॥
पश्चात् ध्यायीत पूर्वोक्तक्रमशो मन्त्रविद् बुधः ।
स्थूलादिस्थूलसूक्ष्मं च नाभेरूर्ध्वमुपक्रमः ॥ २१ ॥

[1] यल्लब्ध्वा समाधिः परिकीर्तितः—उ १. [2] रोचयेत्—अ, अ १.

[3] दमलमुक्तये—अ. दामलमुक्तये—उ, उ १, अ १, अ २. 'दात्ममलच्युतिं' इति शोधितं—क.

तिर्यगूर्ध्वमधोदृष्टिं विहाय च महामतिः ।
स्थिरस्थायी विनिष्कम्पः सदा योगं समभ्यसेत् ॥ २२ ॥
तालमात्राविनिष्कम्पो धारणायोजनं तथा ।
द्वादशमात्रो योगस्तु कालतो नियमः स्मृतः ॥ २३ ॥
अघोषमव्यञ्जनमस्वरं च अतालुकण्ठोष्ठमनासिकं च [1]यत् ।
अरेफजातमुभयोष्मवर्जितं यदक्षरं न क्षरते कथंचित् ॥ २४ ॥

एतादृशसमाधिसिद्ध्युपायमाह—भूमाविति । विशुद्धभूमौ—दर्भासनग्रहणं चेलाजिनोपलक्षणार्थं—कुशाजिनचेलमृद्वासने सर्वदोषरहिते तत्संस्कारार्थं भूशुद्धिभूतशुद्ध्यादिमनोमयीं रक्षां कृत्वा तदासनमुपस्पृश्य रथमण्डले प्रणवव्याहृतिसौराष्टाक्षरे यथाशक्ति जप्त्वा ॥ १७ ॥ ततस्तदासने यथाविध्युपविश्य अथ पद्मस्वस्तिकभद्रयोगासनेष्वन्यतमासनमास्थाय सम्यक् उत्तराभिमुखतया आसीनः सन् ॥ १८ ॥ नासिकापुटं एकेन साङ्गुलीकरेण पिधाय मारुतमाकृष्य मूलाधारत्रिकोणे अग्निं धारयेत्, धारयन् शब्दं ओङ्कारमेव विचिन्तयेत् ॥ १९ ॥ किं तत् । ओमित्येकाक्षरमिति । ओङ्कारानुसन्धानविच्छित्तिं न कुर्यात् । स्वान्तःकरणस्थमलविमुक्तये बहुधेति ॥ २० ॥ एवं मन्त्रविदिति । ध्यानक्रमनियम उच्यते—स्थूलादीति । स्वाविद्यापदस्थूलाद्यंशारोपापवादाधिकरणविराट्सूत्रबीजतुर्यरूपेण तत्प्रविभक्तस्थूलं सूक्ष्मं चाधिष्ठाय । चशब्दात् बीजतुर्यांशमप्यधिष्ठायेति द्योत्यते । विराडादयो भवन्ति (?) स्वनाभेरूर्ध्वं विद्यमानहृदयादिषु विराडादिध्यानस्य उपक्रमः कर्तव्यः ॥ २१ ॥ विराडादिध्यानोपक्रमानन्तरं महामतिः योगी स्वध्येयस्वरूपातिरिक्ततिर्यगूर्ध्वमधोदृष्टिं विहाय । चशब्दात्तदेकनिष्ठो भूत्वेति द्योत्यते । पूर्वोक्तपद्मासने स्थिरस्थायी भूत्वा स्वाभिलषितलक्ष्यानुसन्धानतो विनिष्कम्पः लक्ष्यैकतानचित्तः सन् सदा विराडादिरहमस्मीत्यनुसन्धानरूपं

[1] 'यत्' इत्येतत् लुप्तं—अ.

**योगं समभ्यसेत्** ॥ २२ ॥ कुम्भकमात्रानियमस्तु हटशाब्वादि-**ताळमात्राविनिष्कम्पः** कालः अष्टमात्रात्मकः सप्तमात्रात्मको वा यथा लोके प्रथितः **तथा** कुम्भके श्वासधारणायोजनं कार्यम् । तथा सम्पूर्णकुम्भके **कालतो द्वादशमात्रात्मको योगस्तु** नियमेन स्मृतः । अत्रत्यद्वादशमात्राकालस्तु सहजो-च्छ्वासनिश्वासकालमानेन षण्णवतिमात्रात्मकः स्मृतः । एतावत्कालकुम्भके स्वरूपं ध्यायतः तदक्षरसाक्षात्कारो भवतीत्यर्थः ॥ २३ ॥ किं तदक्षरं घोषादि-वर्णात्मकं ? इत्यत आह—**अघोषमिति** । हशो घोषाः तद्रहितं **अघोषं व्यञ्जनं** ककारादिः तद्रहितं **अव्यञ्जनं** तथाऽकारादिस्वरविरळं **अस्वरं च** यत्तालुकण्ठोष्ठनासिकास्थाने अभिव्यज्यते तद्रहितं **अरेफजातं** अन्तःस्थ-कलनाविरळं शषसहायुभयोष्मवर्जितं **कथंचिदपि यन्न क्षरते तदेवाक्षरं** योगिप्रत्यक्षमुपलभ्यत इत्यर्थः ॥ २४ ॥

योगस्य नित्यकर्तव्यता

**येनासौ [1]पश्यते मार्गं प्राणस्तेनाभिगच्छति ।**
**अतस्तमभ्यसेन्नित्यं यन्मार्गगमनाय वै ॥ २५ ॥**

यतः स्वप्राप्य[प्ति]मार्गदर्शनहेतुः योगः अतस्तमेव सदा अभ्यसेदित्याह—**येनेति** ॥ **असौ** योगी **येन** योगेन स्वप्राप्यमार्गं **पश्यते** पश्यति **प्राणस्तु** दब्मनोग्निभिः सह **तेन** एव मार्गेण **अभिगच्छति** । यत एवं **अतः यन्** पदप्रापकमार्गगमनायैव तमेव योगमप्रमादेन **अभ्यसेत्** ॥ २५ ॥

सप्त स्वप्राप्तिद्वाराणि

**हृद्द्वारं वायुद्वारं च मूर्धद्वारमथापरम् ।**
**मोक्षद्वारं बिलं चैव सुषिरं मण्डलं विदुः ॥ २६ ॥**

[1] गच्छते-क, अ २.

स्वप्राप्य[प्ति]द्वाराणि कतिविधानीत्यत आह—**हृद्वारमिति** ॥ **हृद्वारं** विराट्प्रापकं, विराजो हृदयाश्रितब्रह्माण्डोपाधिकत्वात् । **वायुद्वारं** सूत्रप्रापकं, वायोः सूत्ररूपत्वात्, "वायुर्वै गौतम तत्सूत्रं" इति श्रुतेः । **मूर्धद्वारं** बीजेश्वरप्रापकं, "तयोर्ध्वमायन्नमृतत्वमेति" इति श्रुतेः । **अथापरं** किमित्युक्ते **मोक्षद्वारं** अर्धमात्रात्मकं प्रत्यगभिन्नब्रह्मप्रापकं, तदवगतेरर्धमात्राद्वारकत्वात् । मोक्षद्वारं त्रिधा भिद्यते । तत् कथं? अर्धमात्रास्थूलांशात्मकं **बिलं**, तस्य तुर्यवैराजप्रापकत्वात् । अर्धमात्रासूक्ष्मांशात्मकं **सुषिरं**, तुर्यसूत्रप्रापकत्वात् । अर्धमात्राबीजांशात्मकं **मण्डलं**, तुर्यबीजप्रापकत्वात् । **च**शब्दात् परेति विख्यातकैवल्यद्वारमस्तीति द्योत्यते, तस्य निष्प्रतियोगिकब्रह्ममात्रगमकत्वात् । एवं सप्तधा स्वात्माप्तिद्वाराणि सन्तीति ब्रह्मविद्वरीयांसो **विदुः** जानन्तीत्यर्थः ॥ २६ ॥

भयादीनां त्यागः

**भयं क्रोधमथालस्यम् अतिस्वप्नातिजागरम् ।**
**अत्याहारमनाहारं नित्यं योगी विवर्जयेत् ॥ २७ ॥**

भयक्रोधादिविघ्नबाहुळ्ये सति कथमेवं सिद्धिः स्यादित्याशङ्क्य भयादित्यागतः तत्सिद्धिः स्यादित्यत आह—**भयमिति** ॥ निर्भयादिदर्शनेन भयादिवृत्तित्यागयोगो भवतीत्यत्र

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥

इति स्मृतेः ॥ २७ ॥

अभ्यासफलम्

अनेन विधिना सम्यङ् नित्यमभ्यस्यते क्रमात् ।
स्वयमुत्पद्यते ज्ञानं त्रिभिर्मासैर्न संशयः ॥ २८ ॥
चतुर्भिः पश्यते देवान् पञ्चभिर्वि[1]ततः क्रमः ।
इच्छयाऽऽप्नोति कैवल्यं षष्ठे मासि न संशयः ॥ २९ ॥

एवमभ्यासं कुर्वतः अवान्तरफलं मुख्यफलं चाह—**अनेनेति** ॥ "भूमौ दर्भासने रम्ये" इति यदुक्तं **अनेन विधिना** अभ्यासं कुर्वतः **त्रिभिः मासैः स्वयमेव** उपदेशमन्तरा ब्रह्मज्ञानं **उत्पद्यते** ॥ २८ ॥ मासचतुष्टयाभ्यासात् इन्द्रादिदेवान् **पश्यते** पश्यति । मासपञ्चकाभ्यासतो **विततः क्रमो** विराडादिः दृश्यते । षण्मासाभ्यासतो यद[दि]च्छया **कैवल्यं** आप्नोतीत्यत्र **न** हि **संशयः** अस्तीत्यर्थः ॥ २९ ॥

योगचिन्त्यम्

पार्थिवः पञ्चमात्रस्तु चतुर्मात्रस्तु वारुणः ।
आग्नेयस्तु त्रिमात्रोऽसौ वायव्यस्तु द्विमात्रकः ॥ ३० ॥
एकमात्रस्तथाऽऽकाशो ह्यमात्रं तु विचिन्तयेत् ।

योगेन यच्चिन्त्यं तदाह **पार्थिव इति** ॥ ३० ॥ पार्थिवाद्याकाशान्तं एकैकगुणापकर्षतः सूक्ष्मत्वं प्रत्यक्त्वं व्यापकत्वम् । इत्थं मात्राविशिष्टभूतभौतिकजातापह्नवसिद्धं **अमात्रं** ब्रह्म निष्प्रतियोगिस्वमात्रमिति **विचिन्तयेदि**त्यर्थः ॥

[1] ततक्रमः—अ.

चिन्तनाप्रकारः

संधिं कृत्वा तु मनसा चिन्तयेदात्मनाऽऽत्मनि ॥ ३१ ॥

[1]त्रिंशत्सार्धाङ्गुलः प्राणो यत्र प्राणैः प्रतिष्ठितः ।

एष प्राण इति ख्यातो बाह्यप्राणस्य गोचरः ॥ ३२ ॥

तच्चिन्तनाप्रकारमाह **सन्धिमिति** ॥ ३१ ॥ अर्धाङ्गुलाधिकत्रिंशदङ्गुलगतिः **प्राणो यत्र** हृदयाकाशे वागादिभिः **प्राणैः** सह **प्रतिष्ठितः** योऽयं **बाह्यप्राणस्य** आधिदैविकस्य **गोचरो** विषयो भवति एष एव आध्यात्मिक**प्राण** इति वि**ख्यातो** भवति । स यत्र हृदयाकाशे प्रत्यग्भास्ये स्वोपजीव्यकरणग्रामेण सह विलीयते तद्विलयाधिकरणं प्रत्यगभिन्नं ब्रह्म तस्मिन् **ब्रह्मात्मनि** ब्रह्माकारपरिणतमनसा तद्भासकप्रत्यगात्मना **सन्धिमैक्यं कृत्वा** प्रत्यक्परभेदसापेक्षतदैक्यगतसविशेषांशापह्नवसिद्धं ब्रह्म स्वमात्रमिति **विचिन्तयेत्** ॥ ३२ ॥

श्वासप्रमाणम्

अशीतिश्च शतं चैव सहस्राणि त्रयोदश ।

[2]लक्षश्चैकोननिश्वास अहोरात्रप्रमाणतः ॥ ३३ ॥

अहोरात्रनिर्वर्त्यश्वासप्रमाणमाह—**अशीतिश्चेति** ॥ द्व्यशीत्यधिकशतोत्तरसहस्रलक्षसङ्ख्याविशिष्टनिश्वासादिः अहोरात्रप्रमाणतो गण्यते । श्रुत्यन्तरे तु षट्सङ्ख्याहोरात्रयोः एकविंशतिसहस्राणि षट्छतान्यधिकानि भवन्तीत्याम्नातम् । प्रकारद्वयप्रविभातसङ्ख्याभेदस्तु बाल्यादिशरीरतारतम्यतः उपपद्यते । सुखं तिष्ठतो दृढगात्रस्य श्वासगतिः स्तिमिता विभाति, एतद्विपरीतस्य विपरीतं भवतीति उभयमपि सङ्गच्छते, नहि विरोधोऽस्तीत्यर्थः ॥ ३३ ॥

[1] त्रिंशत्यार्धा-क. त्रिंशत्वार्धाङ्गुलः-अ, उ. त्रिंशत्सार्धाङ्गुलः-इति तु पाठः व्याख्यानुसारीति धृतः [2] लक्षश्चैकोवि-अ १. लक्षश्चैकोवि-क, अ २.

प्राणादीनां स्थानानि

**प्राण आद्यो हृदि स्थाने अपानस्तु पुनर्गुदे ।**
**समानो नाभिदेशे तु उदानः कण्ठमाश्रितः ॥ ३४ ॥**
**व्यानः सर्वेषु चाङ्गेषु व्याप्य तिष्ठति सर्वदा ।**

एवं श्वासकृत्प्राणादिस्थानान्याह—**प्राण इति** ॥ ३४ ॥

तेषां वर्णभेदाः

**अथ वर्णास्तु पञ्चानां प्राणादीनामनुक्रमात् ॥ ३५ ॥**
**रक्तवर्णो मणिप्रख्यः प्राणवायुः प्रकीर्तितः ।**
**अपानस्तस्य मध्ये तु इन्द्रकोपसमप्रभः ॥ ३६ ॥**
**समानस्तु द्वयोर्मध्ये गोक्षीरधवलप्रभः ।**
**आपाण्डर उदानश्च व्यानो [1]ह्यर्चिसमप्रभः ॥ ३७ ॥**

प्राणाद्याकृतिवर्णभेदमाह **अथेति** ॥ ३५-३७ ॥

परमफलम्

**यस्येदं मण्डलं भित्त्वा मारुतो याति मूर्धनि ।**
**यत्र यत्र म्रियेद्वाऽपि न स भूयोऽभिजायते ।**
**न स भूयोऽभिजायत इत्युपनिषत् ॥ ३८ ॥**

षडङ्गयोगाभ्यासपरमफलं प्रकटयन् उपसंहरति—**यस्येति** ॥ **यस्य मुमुक्षोः** योगिनो **मारुतः** प्राणादिः **इदं** स्वाधिष्ठेयहृदयादि **मण्डलं** अभ्यासबलेन

[1]:सम-अ.

भित्त्वा मूर्धनि सहस्रारे विद्यमानं तुर्यं तुर्यतुर्यं वा स्वमात्रमित्येति सोऽयं तादृशपरिपक्वयोगी "तीर्थे श्वपचगृहे वा" इत्यादिश्रुत्यनुरोधेन यत्र क्व जीवन् तिष्ठेत् म्रियेद्वाऽपि सोऽयं नहि भूयोऽभिजायते [illegible] कालं ब्रह्मैव भवतीत्यर्थः । आवृत्तिः आदरार्था । इत्युपनि[illegible] अमृतनादोपनिषत्समाप्त्यर्थः ॥ ३८ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं नादोपनिषदः स्फुटम् ।
प्रकृतोपनिषद्व्याख्याग्रन्थः षष्ट्युत्तरं शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकविंशतिसङ्ख्यापूरकं
अमृतनादोपनिषद्विवरणं सम्पूर्णम्

# अमृतबिन्दूपनिषत्

सह नाववतु—इति शान्तिः

मन एव बन्धमोक्षयोः कारणम्

मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥ १ ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ २ ॥

अमृतबिन्दूपनिषद्वेद्यं यत् [1] परमामृतम् ।
तदेव हि त्रिपाद्रामचन्द्राख्यं नः परा गतिः ॥

अथ खलु कृष्णयजुर्वेदप्रविभक्तेयं अमृतबिन्दूपनिषत् । तस्या उपोद्घातादिसङ्गतिः कठवल्ल्यादिसमा । इयं आख्यायिकां विना अवान्तररूपेण प्रवृत्ता । अल्पग्रन्थतोऽस्या विवरणमारभ्यते ॥ मन इति ॥ स्वातिरिक्ता-विद्यापदतत्कार्यापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्राज्ञदृष्टिः यत् स्वातिरिक्तमस्तीति मननं करोति तदेव मनो मायातत्त्वम् । हिशब्देन त्रिगुणात्मकमनसो निष्प्रतियोगिकाभावरूपत्वं द्योत्यते । स्वाज्ञदृष्टिसत्यवद्विकल्पितमनो द्विविधमिति

[1] परमाक्षरं—उ, अ १.

शास्त्रतः **प्रोक्तम्** । किंरूपेण द्विविधमित्यत्र तत्सत्त्वांशः **शुद्धं च** तद्रजस्तमोंशः **अशुद्धमेव च** । पदद्वयं श्रुतिरेव व्याकरोति **अशुद्धमिति** । कामसङ्कल्पविशिष्टं अशुद्धं अविद्यांशत्वात्, कामसामान्यविवर्जितं शुद्धं विद्यांशत्वात् ॥ १ ॥ बन्धमोक्षहेतुः मन एवेत्याह—**मन एवेति** । सङ्कल्पादिवृत्तिमन्मनो बन्धहेतुः निःसङ्कल्पं मनो मुक्तिहेतुः इत्यर्थः ॥ २ ॥

मनोनिरोधो मोक्षोपायः

**यतो निर्विषयस्यास्य मनसो मुक्तिरिष्यते ।**
**अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ॥ ३ ॥**
**निरस्तविषयासङ्गं संनिरुद्धं मनो हृदि ।**
**यदा यात्यात्मनोऽभावं तदा तत्परमं पदम् ॥ ४ ॥**
**तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम् ।**
**एतज्ज्ञानं च ध्यानं च शेषो न्यायश्च विस्तरः ॥ ५ ॥**

यतो निर्विषयमनसो मुक्तिहेतुत्वं अतो मुमुक्षुणा मनो निर्विषयं कार्यमित्याह—**यत इति** ॥ ३ ॥ अमनीभाव एव मोक्ष इत्याह—**निरस्तेति** । यस्य मनसो ब्रह्मध्यानतो विषयासङ्गो निरस्तः तत् **निरस्तविषयासङ्गं मनो हृदि संनिरुद्धं** सत् **यदा** यस्मिन् काले **आत्मनः** स्वस्य **अभावं** अमनीभावं **याति तदा** तस्मिन् काले यत् सर्वापह्नवसिद्धपदं **तत् परमं पदं** निष्प्रतियोगिकब्रह्ममात्रमवशिष्यते ॥ ४ ॥ मनस्तत्कार्यापह्नवसिद्धं ब्रह्मेति यत् तदेव ज्ञानमिति सर्ववेदान्तपरमतात्पर्यमित्याह—**तावदिति** । **यावद्धृदि** कामादिवृत्तिमन्मनः **क्षयं गतं तावदेव मनो निरोद्धव्यम्** । यत् मनस्तत्कार्यापह्नवसिद्धं ब्रह्मस्वमात्रमिति जानाति तत् **एतत्** निर्विशेष**ज्ञानं ध्यानं च** । शब्दद्वयतः निष्प्रतियोगिकस्वमात्रतया ब्रह्म ज्ञातुं ध्यातुं

शक्यते इति द्योत्यते । स्वातिरेकेण ज्ञातुं ध्यातुं किमन्यदस्ति, ब्रह्ममात्रस्यैव निष्प्रतियोगिकत्वात् । तदतिरेकेण शेषो न्यायश्च विस्तरः वाचारम्भणमात्रत्वात, "वाचारम्भणं विकारो नामधेयम्" इति श्रुतेः ॥ ५ ॥

ब्रह्मज्ञानेन ब्रह्मभावप्राप्तिः

नैव चिन्त्यं न चाचिन्त्यं न चिन्त्यं चिन्त्यमेव च ।
पक्षपातविनिर्मुक्तं ब्रह्म संपद्यते [1]तदा ॥ ६ ॥

ब्रह्मयाथात्म्यविदः तद्भावापत्तिमाह—नैवेति । स्वातिरेकेण एतत् नैव चिन्त्यं स्वमात्रत्वात् । स्वमात्रतया नचाचिन्त्यं, सविशेषतया न चिन्त्यं, स्वयमेवेति चिन्त्यमेव तत् । नैव चिन्त्यमित्यादिपक्षे पततीति पक्षपातं तद्विनिर्मुक्तं ब्रह्म स्वमात्रमिति यदा वेद तदा वेदनसमकालं ब्रह्म सम्पद्यते ब्रह्मैव भवतीत्यर्थः ॥ ६ ॥

सविशेषब्रह्मानुसन्धानेन निर्विशेषब्रह्माधिगमः

स्वरेण संधयेद्योगमस्वरं भावयेत्परम् ।
अस्वरेणानुभावेन [2]नाभावो भाव इष्यते ॥ ७ ॥
तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवम् ॥ ८ ॥
निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् ।
अप्रमेयमनादिं च यत् ज्ञात्वा मुच्यते बुधः ॥ ९ ॥

[1] ध्रुवं—क, अ २.    [2] नभावो-क, अ १, अ २.

न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न [1]मुमुक्षुर्न वै मुक्तः इत्येषा परमार्थता ॥ १० ॥

सविशेषब्रह्मोपासनया निर्विशेषब्रह्माधिगमः स्यादित्याह—**स्वरेणेति** । ओङ्कारस्वरेण आदावपरब्रह्मयोगं **सन्धयेत्** सविशेषेश्वरोऽस्मीत्यनुसन्धानं कुर्यात् । सविशेषब्रह्मप्रसादात् **परं अस्वरं** निर्विशेषं ब्रह्म **भावयेत्** । **अस्वरेण** निर्विशेषब्रह्मणा **अनुभावेन** अनुभवेन अस्वरं परं ब्रह्मैव भावयेदिति पूर्वेणान्वयः । स्वराभावोऽस्वर इति चेन्न, अस्वरस्य निर्विशेषब्रह्मतया भावरूपत्वात् । न हि **भावः** कदाऽप्यभाव **इष्यते** ॥ ७ ॥ यस्मादेवं तस्मात् यदेव अस्वरं **तदेव** प्राणादिनामान्तषोडशकला-वैलक्षण्येन उपबृंहणात् **निष्कळं ब्रह्म** स्वविकल्पितविकल्पासम्भवात् **निर्विकल्पं** स्वाञ्जनार्हस्वातिरिक्तवैरळ्यात **निरञ्जनं** यत् **तत् ब्रह्माहमिति ज्ञात्वा** तज्ज्ञानसमकालं **ध्रुवं** निर्विशेषं **ब्रह्म सम्पद्यते** ॥ ८ ॥ उक्तार्थमेव भङ्ग्यन्तरेणाह—**निर्विकल्पमिति** । जाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तचतुष्पञ्चदशविकल्पाः यत्र स्वावशेषतया पर्यवस्यन्ति तत् निर्विकल्पम् । निर्विकल्पस्य सूक्ष्मत्वेनान्तवत्त्वं स्यादित्यत आह—**अनन्तं चेति** । त्रिविधपरिच्छेदवैरळ्यात् "देशतः कालतो वस्तुतः परिच्छेदरहित ब्रह्म" इति श्रुतेः । चशब्दो निष्प्रतियोगिकानन्त्यद्योतकः । उक्तार्थे को हेतुः, दृष्टान्तो वा कः, इत्यत आह—**हेतुदृष्टान्तवर्जितमिति** । स्वसिद्धौ स्वातिरिक्तहेत्वभावात् स्वस्य निष्प्रतियोगिकत्वेन दृष्टान्तासम्भवाच्च । यतः एवं अतः तत् **अप्रमेयं** वेदान्तेतरप्रमाणासहत्वात् । अप्रमेयत्वेऽपि तदादिमत् स्यात् इत्यत आह—**अनादिं चेति** । निष्प्रतियोगिकसन्मात्रस्य उत्पत्त्यादेरसम्भवात् । **च**-शब्दतः स्वातिरिक्तस्याप्यजत्वं द्योत्यते, "पश्यतेहापि सन्मात्रमसदन्यत्" "ब्रह्ममात्रमसन्नहि" इति श्रुतेः । यत् एवं **ज्ञात्वा बुधो** विद्वान् ज्ञानसमकालं स्वातिरिक्तास्तित्वभ्रमतो **मुच्यते** तत् स्वमात्रमवशिष्यते इत्यर्थः ॥ ९ ॥

[1] मुमुक्षान—अ २.

उत्पत्तिप्रलयबन्धमोक्षादिव्यवस्थादर्शनात् कथं स्वमात्रसिद्धिरित्याशङ्क्य अस्याः स्वाविद्याविकल्पितत्वेन कारणतुल्यत्वात् निष्प्रतियोगिकस्वमात्रसिद्धिः निरङ्कुशा इत्याह—**न निरोध** इति। **निरोधः** प्रलयः, **उत्पत्तिः** जातिः, **बद्धः** संसारी, मोक्षसाधकः प्रमाता, स्वाज्ञानतत्कार्यात् मोक्तुमिच्छुः **मुमुक्षुः**, संछिन्नसंसृतिपाशो **मुक्तः** इत्यादिकल्पना यतः स्वातिरिक्तास्तिताप्रभवा अतः स्वातिरिक्तसामान्यस्य शशविषाणवदवस्तुत्वेनाविद्यकत्वात् स्वातिरिक्तोत्पत्तिप्रलयादिः निष्प्रतियोगिकाभावरूपः इत्यत्र मायाविद्याज्ञानविश्वाभावान्तःकरणादयः ब्रह्मातिरिक्तपर्यायाः अत्यन्ताभावरूपिणः इति परमाक्षरोक्तेः निरोधादि न स्वमात्रे अस्ति **इत्येषैव परमार्थता**। अतो निष्प्रतियोगिकब्रह्ममात्रसिद्धिः निरङ्कुशेत्यर्थः ॥ १० ॥

### आत्मनः एकत्वम्

**एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु।**
**स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥ ११ ॥**
**एक एव हि भूतात्मा भूते भूते व्यवस्थितः।**
**एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १२ ॥**

अवस्थाभेदानुरोधेन तदध्यक्षभेदः स्यादित्यत आह—**एक इति**। चतुश्चतुर्धाभिन्न**जाग्रत्स्वप्नसुषुप्तिषु** विश्वविश्वाद्यनुज्ञैकरसाविकल्पान्तभेदेन यो विभागः सोऽयं **आत्मा एक एव** इति **मन्तव्यः**, घटशरावाद्यनुगतव्योमैकत्ववत् जाग्रज्जाग्रदाद्यवस्थानुगतविश्वविश्वादिचित एकत्वात्। एवं चतुश्चतुर्धाभिन्न**स्थानत्रयव्यतीतस्य** तुर्यावस्थाऽऽरूढस्य विश्वविश्वादिरूपेण **पुनर्जन्म न विद्यते** तथा जन्महेतुस्वाज्ञानवैरळ्यात् ॥ ११ ॥ कथं पुनरात्मनः एकत्वमित्यत्र सदृष्टान्तमेकत्वमाह—**एक इति**। पञ्चभूतभौतिकव्यवस्थित **आत्मा एक एव हि** स्वज्ञादिदृष्ट्यनुरोधेन नभोजलबिम्बप्रतिबिम्बभावमापन्न**चन्द्रवत्** शिवजीवभेदेन **एकधा बहुधेव दृश्यते**, वस्तुत आत्मन एकत्वात् ॥ १२ ॥

आत्मनो जन्मनाशराहित्यम्

घटसंवृतमाकाशं नीयमाने घटे यथा ।
घटो [1]लीयेत नाकाशः तद्वज्जीवो नभोपमः ॥ १३ ॥

घटवद्विविधाकारं भिद्यमानं पुनः पुनः ।
तद्भेदे च न जानाति स जानाति च नित्यशः ॥ १४ ॥

सर्वोपाध्यवच्छिन्नात्मनः तत्सत्त्वासत्त्वाभ्यां स्थितिनाशौ स्यातामित्यत आह—**घटेति** । **घटसंवृतं** घटावच्छिन्नाकाशं अन्येन **घटे नीयमाने यथा** घटावच्छिन्नाकाशं नीतमिव भाति न वस्तुतः आकाशस्याचलत्वात्, यदा **घटो लीयेत न** हि तदवच्छिन्नाकाशो लीनो भवति तथा **तद्वत् नभोपमो जीवः** स्वोपाधिचलननाशाभ्यां जीवो न चलति न नश्यति चेत्यर्थः "जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते" इति श्रुतेः ॥ १३ ॥ स्वोपाधिसत्त्वासत्त्वाभ्यां आत्मा दृश्यते न दृश्यते इति यो जानाति स एव आत्मयाथात्म्यं जानातीत्याह—**घटवदिति** । यथा घटादिः **विविधाकारः** तद्वत् तदवच्छिन्नाकाशमपि **पुनः पुनः** उद्भूतघटादिरूपं विविधाकारमिव दृश्यते । तद्घटादीनां भेदे ध्वंसे लोकस्तदवच्छिन्नाकाशभेदं यथा न जानाति अखण्डाकाशमेव पश्यति, तद्याथात्म्यज्ञस्तु घटाद्युपाधिसत्त्वासत्त्वाभ्यां **नित्यशो**ऽखण्डाकाशमेव **जानाति** ॥ १४ ॥

निरुपाधिकात्मदर्शनम्

शब्दमायावृतो नैव [2]तमसा याति पुष्करे ।
भिन्ने तमसि चैकत्व[3]मेक एवानुपश्यति ॥ १५ ॥

[1] नीयेत—अ, अ २. [2] तमसो—क, अ, अ १, अ २. [3] मेकमेवा—क.

तथा स्वाज्ञदृष्टिरुपाध्यनुकारिनानात्मभेदं पश्यति उपाध्यपाये तद्भेदं न पश्यति। परमार्थमतिस्तूपाधिसत्त्वासत्त्वाभ्यां निरुपाधिकमात्मानमेकमेवानुपश्यतीत्याह—**शब्देति** । शब्दार्थप्रपञ्चहेतुभूता **शब्दमाया**, यद्वा अर्थशून्यतया शब्दमात्ररूपिणी वाचारम्भणात्मिका अघटितघटनापटीयसी माया, तयाऽऽ**वृतो** जन्तुः **तमसा** अन्धकारेण आवृतजन्तुवत् **पुष्करे** परमपावने स्वात्मनि **नैव याति** । प्रदीपादिना अन्धकारभेदवत् स्वज्ञानेन स्वाज्ञानतमसि **भिन्ने**, **चकारात्** तद्वासनायां नष्टायां, प्रत्यक्परचितोः **एकत्वं एक एवानुपश्यति** । यद्वा—स्वाज्ञस्तु **शब्दमायावृतः** सन् **पुष्करे तमसाऽऽवृतजन्तुवत्** सर्वभूतप्रत्यग्ब्रह्मैक्यज्ञानं **नैव याति** । स्वज्ञस्तु स्वाज्ञानतमसि **भिन्ने** पुष्करे परमात्मनि सर्वभूतप्रत्यगेकत्वमनुपश्यति । परमार्थदृष्टिस्तु प्रत्यक्परविभागैक्यासहब्रह्मतत्त्वं निष्प्रतियोगिकस्वमात्रमिति पश्यति ॥ १५ ॥

शब्दब्रह्मध्यानेन परब्रह्माधिगमः

**शब्दाक्षरं परं ब्रह्म तस्मिन्क्षीणे यदक्षरम् ।**
**तद्विद्वानक्षरं ध्यायेद्यदीच्छेच्छान्तिमात्मनः ॥ १६ ॥**
**द्वे विद्ये वेदितव्ये तु शब्दब्रह्म परं च यत् ।**
**शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ १७ ॥**
**ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।**
**पलालमिव धान्यार्थी त्यजेद् ग्रन्थमशेषतः ॥ १८ ॥**

निर्विशेषब्रह्ममात्रावगत्युपायमाह—**शब्देति** । निर्विशेषब्रह्मास्त्युपायत्वेन यत् प्रसिद्धं **शब्दाक्षरं** ॐ इत्येतदक्षरं **परं ब्रह्मा**लम्बनं तदर्थज्ञानतः **तस्मिन्** सावयवे शब्दाक्षरे **क्षीणे** विलयं प्रपन्ने सति **यत्** शब्दाक्षरविलयाधिकरणं **अक्षरं** न क्षरति तदेतत् आधेयाधारात्मकक्षराक्षरगतहेयांशापह्नवसिद्धं परमाक्षरं **यदि** **विद्वानात्मनः** स्वातिरिक्तक्षराक्षरप्रपञ्च**शान्तिं इच्छेत्** तदा **तदक्षरं**

अहमस्मीति ध्यायेत् ॥ १६ ॥ शब्दब्रह्मयाथात्म्यज्ञानतः शब्दप्रपञ्च-निरसनपूर्वकं तदर्थब्रह्माधिगमो भवतीत्याह—**द्वे** इति । **शब्दब्रह्म परब्रह्मे**ति यत् ब्रह्म द्विविधं तच्छब्दपरब्रह्मगोचरे **द्वे विद्ये वेदितव्ये** सगुण-निर्गुणब्रह्मयाथात्म्ये ज्ञातव्ये । तु शब्दोऽवधारणार्थः । तयोरुपायोपेयात्मक-त्वात् तत्रोपायभूते **शब्दब्रह्मणि** सविशेषब्रह्मणि **निष्णातो** मुनिः—प्रणववाच्यब्रह्मानुसन्धानतः निर्विशेषब्रह्मज्ञानमुदेति—तज्ज्ञानोदयसमकालं स्वातिरिक्तसर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति **परं ब्रह्माधिगच्छति** तन्मात्रतया विद्वानवशिष्यते इत्यर्थः ॥ १७ ॥ ब्रह्माधिगमेऽपि तद्धेतुग्रन्थाभ्यासः कर्तव्य इत्यत आह—**ग्रन्थमिति** । साधनचतुष्टयसम्पन्नो विद्वान् यावत् ब्रह्ममात्रज्ञानं नोदेति तावत् **तज्ज्ञानविज्ञानतत्परः** सन् सर्ववेदान्त**ग्रन्थ**जात**मभ्यस्य** संशयादिपञ्चदोषशान्त्यन्तं गुरुमुखात् श्रवणं कृत्वा अथ मनननिदिध्यासनप्रभवसम्यज्ज्ञानं यदि जायते तदा **धान्यार्थी पलालमिव ग्रन्थ**जात**मशेषतः त्यजेत्**, प्रयोजनाभावात् । नहि सरित्पारं प्रविष्टस्य नौकापेक्षाऽस्ति, तथेत्यर्थः ॥ १८ ॥

### सर्वभूतप्रत्यगात्मनः एकत्वम्

गवामनेकवर्णानां क्षीरस्याप्येकवर्णता ।
क्षीरवत्पश्यते ज्ञानं लिङ्गिनस्तु गवां यथा ॥ १९ ॥
घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानम् ।
[1]सततं मनसि मन्थयितव्यं मनोमन्थानभूतेन ॥ २० ॥

नानाऽन्तःकरणावच्छिन्नप्रतीचो नानात्वं स्यादित्यत आह—**गवामिति** । नानावर्णविशिष्टगोक्षीरं यथा एकरूपं तथा नानालिङ्गयनुगतप्रत्यज्ज्ञानमेकरूपम् ।

[1] अत्र उत्तरार्धं मूलाकरानुसारेण धृतम्. तत्र "मनसि" इत्येतस्य लोपो युज्येत. "मनसा मन्थानभूतेन" इति मु. पाठः

तुशब्दोऽवधारणार्थः ॥ १९ ॥ एवं सर्वभूतप्रतीचः एकत्वं किं न भातीत्यत आह—**घृतमिवेति** । यथा **पयसि निगूढं घृतं** मथनादिना आविर्भवति तथा **भूते भूते** सर्वभूतान्तःकरणे तद्वृत्तिभावाभावप्रकाशकमपि **विज्ञानं प्रत्यक्तत्त्वं** स्वाज्ञदृष्टिनिगूढतया **वसति** । चशब्दो निस्संशयार्थः । प्रत्यगभिमुखीभूते **मनसि मन्थानभूतेन** प्रत्यग्भावमापन्नेन मनसा **मन्थयितव्यम्** । एवं सन्ततमननात् पराक्सापेक्षप्रत्यक्परविभागैक्यगतहेयांशापह्नवसिद्धं ब्रह्ममात्रं निष्प्रतियोगिकतया आविर्भवतीत्यर्थः ॥ २० ॥

तत्साक्षात्कारसाधनं ध्यानम्

ज्ञाननेत्रं समाधाय चोद्धरेद्वह्निवत् परम् ।
निष्कलं निश्चलं शान्तं तद् ब्रह्माहमिति स्मृतम् ॥ २१ ॥
सर्वभूताधिवासं यद्भूतेषु च वसत्यपि ।
सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः ॥ २२ ॥

तदस्म्यहं वासुदेव इत्युपनिषत् ॥

सर्वभूतनिगूढं ब्रह्म कथं साक्षात्कर्तुं शक्यमित्यत आह—**ज्ञानेति** । सर्वापह्नवसिद्धब्रह्ममात्रगोचरज्ञानमेव नेत्रं **ज्ञाननेत्रम**न्तःकरणे **समाधाय** विन्यस्य —**च**शब्दात् ज्ञानेतरसाधनासिद्धत्वं द्योत्यते—दार्वोः मथनाविर्भूत**वह्निवत्** निष्प्रतियोगिकं **परं** ब्रह्म **उद्धरेत्** । प्राणादिकलासु सत्सु कथं निष्प्रतियोगिकता इत्यत आह—**निष्कलमिति** । ब्रह्ममात्रसिद्धेः प्राणादिनामान्तषोडशकलापह्नवपूर्वकत्वात् । पूर्णत्वात् **निश्चलं** स्वातिरिक्त**शान्तं** यदवशिष्यते **तत्** **निष्कलमि**त्यादिपदत्रयविशिष्टं **ब्रह्मेति स्मृतं**, ब्रह्म स्वमात्रमिति पर्यवसन्नमित्यर्थः ॥ २१ ॥ निष्प्रतियोगिकब्रह्ममात्रस्य अर्धमात्राभागत्रयावष्टम्भतः सार्वात्म्यं वस्तुतः स्वमात्रसिद्धिं प्रकटयन् उपसंहरति—**सर्वेति** । यत् सर्वभूतानामधिवासः स्थानं अधिष्ठानत्वात्, यदन्तर्याम्यात्मनाऽपि **भूतेषु च वसति**, **यत् सर्वानुग्राहकत्वेन**

कूटस्थचिन्मात्रतया अवशिष्यते तदस्म्यहं वासुदेवः तत्परवासुदेवाख्यं ब्रह्मास्मि । यः स्वातिरिक्ताधिवसनाद्वासुः सचासौ अधिष्ठेयसापेक्षाधिष्ठानगतहेयांशापह्नव-सिद्धनिष्प्रतियोगिकब्रह्ममात्रतया दीव्यत इति देवः परमात्मा स्वमात्रमवशिष्यत इति फलितोऽर्थः । आवृत्तिरादरार्था । इत्युपनिषच्छब्दः प्रकृतोपनिषत्स-माप्त्यर्थः ॥ २२ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं बिन्दूपनिषदः स्फुटम् ।
प्रकृतोपनिषद्व्याख्याग्रन्थस्त्रिशाधिकं शतम् ।

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे विंशतिसङ्ख्यापूरकं
अमृतबिन्दूपनिषद्विवरणं सम्पूर्णम्

# क्षुरिकोपनिषत्

सह नाववतु—इति शान्तिः

योगाधिकारः

क्षुरिकां संप्रवक्ष्यामि धारणां योगसिद्धये ।
यां प्राप्य न पुनर्जन्म योगयुक्तस्य जायते ॥ १ ॥
वेदतत्त्वार्थविहितं यथोक्तं हि स्वयम्भुवा ।

कैवल्यनाडिकान्तस्थपराभूमि[1]वरासनम् ।
क्षुरिकोपनिषद्योगभासुरं राममाश्रये ॥

इह खलु कृष्णयजुर्वेदान्तर्गतेयं क्षुरिकोपनिषत् ज्ञानप्रतिबन्धकनिरसनयोगशास्त्ररूपिणी प्रवृत्ता । तस्याः उपोद्घातादि कठवल्लीवदूह्यम् । उक्तलक्षणलक्षितायाः अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । श्रुतिरेव यथोक्ताधिकारिण उद्दिश्य स्वच्छन्दं प्रवृत्तेति यत्तद्विद्यास्तुत्यर्थम् । केयं श्रुतिरित्यत आह—क्षुरिकामिति ॥ ये यथोक्तयोगसाधनसम्पन्नाः तान् प्रति स्वाज्ञानहृदयग्रन्थिच्छेदनपट्वीं क्षुरिकामिव शस्त्ररूपां धारणां ब्रह्मातिरिक्तं न किञ्चिदस्तीति भावनालक्षणां सम्यक् प्रवक्ष्यामि । किमर्थं? ब्रह्ममात्रानुसन्धानं

[1] निवासिनं-इति पाठान्तरम्.

योगः तत्सिद्धये तदवगतय इत्यर्थः। यां उक्तलक्षणलक्षितां धारणां प्राप्य योगयुक्तस्य मुनेः न पुनर्जन्म जायते जनिमृतिकलना न हि भवति तामेव संप्रवक्ष्यामीति पूर्वेणाऽन्वयः ॥ १ ॥ किं तद्योगलक्षणं, केनोक्तं, किं तत्साधनजातं, इत्यत आह—वेदेति । स्वयमेव भवतीति स्वयंभूः तेन स्वयंभुवा ब्रह्मणा परमेश्वरेण योगशिखाऽऽदौ ब्रह्माणं प्रति यथोक्तं तत् वेदतत्त्वार्थविहितं सर्ववेदान्तसम्मतमित्यर्थः ॥

आसनप्राणायामौ

निःशब्दं देशमास्थाय तत्रासनमवस्थितः ॥ २ ॥
कूर्मोऽङ्गानीव संहृत्य मनो हृदि निरुध्य च ।
मात्राद्वादशयोगेन प्रणवेन शनैःशनैः ॥ ३ ॥
पूरयेत् सर्वमात्मानं सर्वद्वारं निरुध्य च ।
उरोमुखकटिग्रीवं किंचिद्धृदयमुन्नतम् ॥ ४ ॥
प्राणान् संधारयेत् तस्मिन् नासाभ्यन्तरचारिणः ।
भूत्वा तत्रायतप्राणः शनैरुच्छ्वासमुच्छ्वसेत् ॥ ५ ॥

तथाविधयोगसिद्धये साधनान्युपदिशति—निःशब्दमिति ॥ यो निर्विकल्पकयोगार्थी सोऽयं जनसंबाधराहित्यात् निःशब्दं देशमास्थाय तत्र रहस्यप्रदेशे सिद्धपद्माद्यासनं अवस्थितः सन् ॥ २ ॥ श्रोत्रादीनीन्द्रियाणि कूर्मोऽङ्गानीव संहृत्य स्वहृदि मनो निरुध्य । चशब्दात् प्राणेन्द्रियद्वारसङ्कल्पविरळं मनः कृत्वेति द्योत्यते ।

जानू प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ।
अङ्गुलीस्फोटनं कुर्यात् सा मात्रा परिकीर्तिता ॥

इति **श्रुतिसिद्धकालरूपमात्राद्वादशयोगेन** चतुर्मात्रप्रणवेन **शनैःशनैः** ॥ ३ ॥ **सर्वमात्मानं** स्वशरीरं वायुना **पूरयेत** । वायुनिर्गमनद्वारेषु सत्सु कथं वायुधारणा स्यादित्यत्र अपानादि**सर्वद्वारं निरुध्य** । **च**शब्दात् पूरितं वायुं अष्टचत्वारिंशन्मात्राकालं कुम्भयेदिति द्योत्यते । एवं धारणां कृत्वा यथावत् रेचयेत इत्याह—**उर** इति । सिद्धाद्यासनस्थितो योगी उरश्च मुखं च कटिश्च ग्रीवा च **उरोमुखकटिग्रीवमिति** । प्राण्यङ्गत्वात एकवद्भावः । **हृदयं च किंचित् उन्नतं** विधाय ॥ ४ ॥ एवं यथोक्तकालं **आयतप्राणो भूत्वा शनैःशनैः** उच्छ्वासं उच्छ्वसेत चतुर्विंशतिमात्राकालं पूरितं वायुं रेचयेत् । इडया वायुमापूर्य कुम्भयित्वा पिङ्गळया विरेच्य पुनः पिङ्गळयाऽऽपूर्य कुम्भयित्वा इडया विरेचयेत । एवं प्रतिदिनं चतुष्कालं अशीति-प्राणायामं कुर्यात इति भावः ॥ ५ ॥

प्रत्याहारः

स्थिरमात्मदृढं कृत्वा अङ्गुष्ठेन समाहितः ।
द्वे गुल्फे तु प्रकुर्वीत जङ्घे चैव त्रयस्त्रयः ॥ ६ ॥
द्वे जानुनी तथोरू द्वे गुदे शिश्ने त्रयस्त्रयः ।
पायोरायतनं तत्र नाभिदेशे समाश्रयेत् ॥ ७ ॥
तत्र नाडी सुषुम्ना तु नाडिभिर्दशभिर्वृता ।
तत्र रक्ता च पीता च कृष्णा ताम्रा विलोहिता ॥ ८ ॥
अतिसूक्ष्मा च तन्वी च [1]शुक्लां नाडीं समाश्रयेत् ।
तत्र सञ्चारयेत् प्राणान् ऊर्णनाभीव तन्तुना ॥ ९ ॥

[1] शुक्ला नाडी-अ.

ततो रक्तोत्पलाभासं हृदयायतनं महत् ।
दहरं पुण्डरीकं तत् वेदान्तेषु निगद्यते ॥ १० ॥
तद्भित्त्वा [1]कण्ठमायाति तन्नाडीं पूरयेदिति ।

आसनप्राणायामलक्षणमुक्त्वा प्रत्याहारलक्षणमाह—**स्थिरमिति** । एवं प्राणाभ्यासपाटवात योगी सिद्धं पद्मासनं वा आस्थाय समाहितेन्द्रियो भूत्वा कनिष्ठिकानामिकाभ्यां सहाङ्गुष्ठेन नासिकापुटं निरुध्य हृदये **स्थिरं** यथा भवति तथा **स्वात्ममनःप्राणं** दृढं कृत्वा केवलकुम्भकमास्थाय । अथ **द्वे गुल्फे** वर्तते तत्र वायुं समारोप्य धारणां **कुर्वीत** । तुशब्दतः पादाङ्गुलीष्वपि वायुमारोपयेदिति द्योत्यते । ततो **जङ्घे** जङ्घाप्रदेशे **चैव** । **त्रयस्त्रय** इत्यावृत्तिः आदरार्था । पादाङ्गुलीगुल्फजङ्घेषु त्रयस्त्रय इति द्वितीयार्थे प्रथमा—त्रिसङ्ख्याकान् दृष्टिमनःप्राणान् क्रमेण आरोप्य ततस्ततः प्रत्याहरेत् ॥ ६ ॥ **तथा द्वे जानुनी ऊरू द्वे गुदे शिश्ने च त्रयस्त्रयो** दृष्टिमनःप्राणान् प्रत्याहरेत् । जानूरुमूलाधारस्वाधिष्ठानेषु तत्र तत्र कुम्भित्वा प्रत्याहृत्य अथ **पायोः** मूलाधारादेः यदायतनं आश्रयः **तत्र नाभिदेशे** मणिपूरके दृष्टिमनःप्राणान् समारोप्य तज्जयपर्यन्तं **समाश्रयेत्** ॥ ७ ॥ **तत्र** मणिपूरकाश्रयनाडीकन्दे इडापिङ्गळादिनाडीभिः **दशभिः वृता सती सुषुम्ना** नाम काचन ब्रह्मनाडी वर्तते । **तत्रैव** नाडीकन्दे **रक्ता,** चशब्दात् कपिशा, **पीता** चशब्दात् पिशङ्गा, **कृष्णा, ताम्रा, विलोहिता** । पाण्डरादिवर्णविशिष्टा इडा-पिङ्गळा-गान्धार-वरुणेत्यादिदशनाडीततिः ॥ ८ ॥ **सूक्ष्मा च तन्वी च** । चशब्दद्वयतः द्वासप्ततिसहस्रसङ्ख्याः प्रधाननाड्यः सन्तीति द्योत्यते । सर्वासु नाडीषु या प्रधानभूता शुक्लवर्णोज्ज्वला तां **शुक्लां सुषुम्नानाडीं समाश्रयेत्** । तत्र दृङ्मनःप्राणान् प्रत्याहरेत् इत्याह—**तत्रेति** । यथा **ऊर्णनाभिः तन्तुना सञ्चरति तथा तत्र** सुषुम्नायां दृगादीन् **संक्रमेत्** इत्यर्थः ॥ ९ ॥ ततः सुषुम्नामार्गात् **रक्तोत्पलाभासं हृदयायतनं** नाड्यपेक्षया

[1] कर्ण-अ.

महत्। "दहरं पुण्डरीकं वेश्म" इत्यादिवेदान्तेषु यत् दहरं पुण्डरीकं निगद्यते तत्र सुषुम्नानाळार्पितहृदये दृगादीन् त्रीनपि प्रत्याहरेत् ॥ १० ॥ ततः तत् हृदयपङ्कजं भित्त्वा दृगादिः कण्ठं तद्गतविशुद्धिचक्रं याति। तत्र प्रत्याहृत्य, ततो भ्रूमध्यं आज्ञाचक्रं ततः सहस्रारचक्रं च पूरयेत् प्रत्याहरेत्। इतिशब्दः प्रत्याहारसमाप्त्यर्थः ॥

धारणाध्यानसमाधयः

मनसस्तु परं गुह्यं [1]सुतीक्ष्णं बुद्धिनिर्मलम् ॥ ११ ॥
पादस्योपरि यन्मर्म तद्रूपं नाम चिन्तयेत्।
मनोद्वारेण तीक्ष्णेन योगमाश्रित्य नित्यशः ॥ १२ ॥
इन्द्रवज्रमिति प्रोक्तं मर्मजङ्घानुकृन्तनम्।
तद्ध्यानबलयोगेन धारणाभिर्निकृन्तयेत् ॥ १३ ॥
ऊर्वोर्मध्ये तु संस्थाप्य मर्मप्राणविमोचनम्।
चतुरभ्यस्य योगेन छिन्देदनभिशङ्कितः ॥ १४ ॥
ततः कण्ठान्तरे योगी [2]समूहेन्नाडिसंचयम्।
एकोत्तरं नाडिशतं तासां मध्ये परा स्थिरा ॥ १५ ॥
सुषुम्ना तु परे लीना विरजा ब्रह्मरूपिणी।
इडा तिष्ठति वामेन पिङ्गळा दक्षिणेन तु ॥ १६ ॥
तयोर्मध्ये परं स्थानं यस्तं वेद स वेदवित्।
द्वासप्ततिसहस्राणि प्रतिनाडीषु तैतिलम् ॥ १७ ॥

[1] सुतीर्णं-अ.
[2] समूहे ना-क, अ.

छिद्यते ध्यानयोगेन सुषुम्नैका न छिद्यते ।
• [1]योगनिर्मलसारेण क्षुरेणानलवर्चसा ॥ १८ ॥
छिन्देन्नाडीशतं धीरः प्रभवादिह जन्मनि ।
[2]जातीपुष्पसमं योगी यदा पश्यति तैतिलम् ॥ १९ ॥
एवं शुभाशुभैर्भावैः सा नाडीनां विभावयेत् ।
तद्भाविताः प्रपद्यन्ते पुनर्जन्मविवर्जिताः ॥ २० ॥

ततो धारणाध्यानसमाधिलक्षणमाह—**मनस** इति ॥ **मनसः** अन्तःकरणवृत्तिसहस्रात् **परम्** । तुशब्दो मनस्तत्कार्यस्य वस्तुतोऽसम्भवार्थः । **गुह्यं**, अनधिकारिणो गोपनीयत्वात् । **सुतीक्ष्णं**, स्वाज्ञानतत्कार्यतन्तुच्छेदनसुतीक्ष्णस्वज्ञानशस्त्रवत्वात् । **बुद्धिनिर्मलं**, निर्मलबुद्धिवेद्यत्वात् ॥ ११ ॥ विश्वविराडोत्रादिपादजातस्य **उपरि यन्मर्म** विश्वाद्यसम्भवप्रबोधसिद्धसीम **तद्रूपं नाम** तदस्मीति **चिन्तयेत्** धारयेत् । एवं ब्रह्मधारणं स्वाज्ञानग्रन्थिच्छेदकं स्यादित्याह—**मन** इति ॥ एवं **नित्यशः** सदा **तीक्ष्णेन मनोधारेण** ब्रह्मातिरिक्तं न किञ्चिदस्तीति मनोधारणारूपशस्त्रेण, स्वाज्ञानं भ्रमं छिन्देत् इत्यन्वयः ॥ १२ ॥ यत् स्वाज्ञानपर्वतभेदने **इन्द्रवज्रमिति प्रोक्तं** स्वातिरिक्तमर्माद्यवयवकृन्तनं तथाविधयोगं सुषुम्नाभेदनलक्षणं आश्रित्य **तद्ब्रह्माहमस्मीति ध्यानबलयोगेन** तद्विशिष्टपदाङ्गुष्ठादिसहस्रारान्त**धारणाभिः** स्वातिरिक्तं भ्रमं **निकृन्तयेत्** ॥ १३ ॥ यदि पुनः स्वातिरिक्तभ्रम उदेति तदा स्वाविद्यापदस्य **ऊर्वोः** व्यष्टिसमष्ट्योः तदारोपापवादाधारविश्वविराट्तत्तुर्ययोः यत् मध्यं अविकल्पं तस्मिन् मध्ये दृङ्मनःप्राणान् **संस्थाप्य** धारणां कृत्वा । तुशब्दः अवधारणार्थः । यथोक्तयोगेन स्थूलादिचतुरंशाढ्यस्वाविद्यापदतत्कार्यं **मर्म** । तदारोपापवादाधारः **प्राणो** विश्वविराडोत्रादिः **तन्मोचनं चतुरभ्यस्य** मर्मप्राणस्थूलादिचतुरंशापवादं कृत्वा तदपवादाधिकरणं

[1] योगे नि-अ.
[2] जातिपुष्पमयं-क,

ब्रह्मास्मीति धारणाबलेन **अनभिशङ्कितः** सन् योगी योगान्तरायं **छिन्देत्** ॥१४॥ ततः किं इत्यत आह—**तत** इति ॥ यतः नाडीसञ्चयशुद्धिं विना योगसिद्धिः न भवति **ततः** कारणात् **योगी स्वकण्ठान्तरे** विलसन्नाडीस**ञ्चये** प्राणवायुं **सम्यक्** ऊहेत् , केवलकुम्भकोपायतो नाडीसञ्चयशुद्धिं कुर्यात् । प्रधाननाड्यः काः इत्यत आह—**एकेति** ॥ **स्वदेहमध्ये एकोत्तरं** इडादिप्रधान**नाडीशतं** विद्यते । **तासां मध्ये स्थिरा** सुषुम्ना नाडी **परा** सर्वोत्कृष्टा ॥ १९ ॥ **सेयं सुषुम्ना तु परे ब्रह्मणि लीना,** ब्रह्मसूत्रत्वात् । **विरजा,** रजस्तमोविकार-वैरळ्यात् । **ब्रह्मरूपिणी,** ब्रह्मलोकाप्तिहेतुत्वात् । सुषुम्नाज्ञानफलमाह—**इडेति** ॥ सुषुम्नाया **वामभागेन,** सप्तम्यर्थे तृतीया, सुषुम्नावामदक्षिणपार्श्वयोः **इडा पिङ्गला च तिष्ठति** ॥ १६ ॥ **तयोर्मध्ये** सुषुम्नायां **परमुत्कृष्टं ब्रह्मस्थानं** वर्तते। **तं** तत्रत्यपरमात्मानं प्रत्यगभेदेन **यो वेद स मुनिः वेदार्थब्रह्मवित्** भवति । यथोक्तध्यानयोगेन सुषुम्नेतरनाडीषु प्राणगतिः छिद्यते, सुषुम्नाप्राणगतिस्तु न छिद्यत इत्याह—**द्वासप्ततीति** ॥ प्रधाननाड्यस्तु **द्वासप्ततिसहस्राणि** भवन्ति । तत्र सुषुम्नानाड्यन्तर्गतकैवल्यनाडिकान्तःस्थनिष्प्रतियोगिकचिन्मात्रध्यानयोगेन **प्रतिनाडीषु** प्राणवायोस्तैतिलं गतागतलक्षणं ॥ १७ ॥ **छिद्यते** विच्छिद्यते । तदानीं **सुषुम्ना एका** सुषुम्नामध्यगकैवल्यनाडिकायां दङ्मनःप्राणवृत्तिः **न छिद्यते** आब्रह्मकल्पं न नश्यति, न बहिः निर्गच्छति, कल्पान्ते विरूपविलयं भजति । अत एव कैवल्यनाडीप्रविष्टदग्वायुमनोवृत्तिमन्मुनिकळेबरं आब्रह्मकल्पं तिष्ठतीत्यत्र भगवद्वचनं मानम् ।

> मत्तत्ववेत्तुः करणाळिरादौ कैवल्यनाड्यन्तरचित्त्वमेत्य ।
> आब्रह्मकल्पं विलयं भजन् सन् कायेन कैवल्यमवाप्य तिष्ठेत् ॥

इति ॥ यतः एवं अतो **धीरो** योगी **योगः** तत्त्वज्ञानं तथाविधयोग एव **निर्मलसारः** सूक्ष्मधारारूपः तेन **योगनिर्मलसारेण क्षुरेण अनलवर्चसा** ॥ १८ ॥ **इह** अस्मिन्नेव **जन्मनि प्रभवात्** ब्रह्मातिरिक्तं न किंचिदस्तीति भावनाबलात् **नाडीशतं** तद्गतप्राणप्रचरान् **छिन्देत् कैवल्यनाड्यामेव**

दृङ्मनःप्राणप्रचारं कुर्यात् इति भावः । कैवल्यतदितरनाडीवायुप्रचाराप्रचारतो योगी कृतकृत्यो भवतीत्याह—जातीति ॥ यथोक्तसाधनसम्पन्नो योगी जातीपुष्पपरिमळाविनाभाववत् यदा कैवल्यनाड्यां दृङ्मनःप्राणतैतिलं स्थैर्यं पश्यति तदा विदेहमुक्तो भवति, "गमनं तैतिलं स्थैर्य" इति कोशात् ॥ १९ ॥ एवं यदा सुषुम्नान्तःस्थकैवल्यनाडीतरनाडीनां या दृङ्मनःप्राणगतिः सेयं स्वर्गनरकगमनागमनलक्षणैः शुभाशुभैः भावैः युक्तेति विभावयेत् । अपुनर्भवगतिप्रदा इयं सुषुम्ना नाडी, कैवल्यगतिप्रदा इयं सुषुम्नाऽन्तर्गतकैवल्यनाडी, तदितररमादिनाडीततिः शुभफलस्वर्गादिप्रापिका, अरमादिनाडीततिः अशुभफलनरकादिप्रापिका, तदितरनाड्यस्तु नानाविचित्ररोगादिगतिप्रापिका इत्यत्र "रमा पुण्येन पुण्यं लोकं नयति अरमा पापेन पापं इच्छया यत् स्मरति तदभिसम्पद्यते अपुनर्भवायाकोशं भिनत्ति" इत्यादि, "मृत्युर्वै परे देव एकीभवति" इत्यादि श्रुतेः । यतः इतरनाडीवायुप्रचारः शुभाशुभहेतुः अतो योगाभ्यासेन तद्गतिनिरोधं कृत्वा सुषुम्नादिनाड्यामेव वायुप्रचारं भावयेत् । एवं भावनाफलमाह—तदिति ॥ एवं सुषुम्नादौ प्राणमारोप्य तद्ब्रह्माहमस्मीति धिया भाविता एवं भावनया ते पुनर्जन्मविवर्जिताः सन्तः तदेव ब्रह्म प्रपद्यन्ते ॥ २० ॥

योगसाधनं तदधिकारी च

तपोविजितचित्तस्तु निःशब्दं देशमास्थितः ।
निःसङ्गः साङ्ख्ययोगज्ञो निरपेक्षः शनैःशनैः ॥ २१ ॥

तद्योगसाधनं अधिकारिणं च निरूपयति—तप इति ॥ स्वाश्रमाचारसहकृतयोगाभ्यासतपसा विजितचित्तस्तु योगी निर्विकल्पकसमाध्यर्थं जनसम्बाधराहित्यात् निःशब्दं देशमास्थितः स्वान्तर्बहिःकलनानिःसङ्गः साङ्ख्ययोगज्ञः अष्टाङ्गयोगतत्त्ववित् स्वातिरिक्तनिरपेक्षः सन् शनैःशनैः विकल्पजातं हित्वा निर्विकल्पकसमाधिनिष्ठो भवेत् इति वाक्यशेषः ॥ २१ ॥

समाधिफलम्

पाशान् छित्त्वा यथा हंसो निर्विशङ्कं खमुत्पतेत् ।
[1]छिन्नपाशस्तथा जीवः संसारं तरते सदा ॥ २२ ॥
यथा निर्वाणकाले तु दीपो दग्ध्वा लयं व्रजेत् ।
तथा सर्वाणि कर्माणि योगी दग्ध्वा लयं व्रजेत् ॥ २३ ॥
प्राणायामसुतीक्ष्णेन मात्राधारेणयोगवित् ।
वैराग्योपल[2]घृष्टेन छित्त्वा तन्तुं न बध्यते ॥ २४ ॥
इत्युपनिषत् ॥

सदृष्टान्तं समाधिफलमाह—**पाशानिति** ॥ **यथा हंसः** स्वतुण्डेन स्वपादबन्धनमानससरोरुहकमलपाशान् **छित्त्वा निर्विशङ्कं** यथा भवति तथा **खमुत्पतेत् तथा** योगी **जीवः सदा** योगाभ्यासतीक्ष्णखड्गेन सञ्छिन्नसंसृतिपाशः सन् **संसारं तरते** ॥ २२ ॥ किं च—**यथा दीपो निर्वाणकाले** स्वाश्रयवर्त्यादिकं **दग्ध्वा** स्वयोनौ **लयं** शान्तिं **व्रजेत्** **तथा योगी** स्वावारकब्रह्मात्मावरणसर्वकर्मजालं **दग्ध्वा** स्वातिरिक्तलयमपह्नवं **व्रजेत्** ॥ २३ ॥ उक्तोपनिषदर्थमुपसंहरति—**प्राणेति** ॥ **यथोक्तयोगवित्** मुनिः **प्राणायामा**दिसाधन**सुतीक्ष्णेन** सम्यक्तीव्रतर**वैराग्योपलघृष्टेन** अर्ध**मात्राधारेण** स्वज्ञानशस्त्रेण स्वाज्ञान**तन्तुं छित्त्वा न** पुनः **बध्यते** स्वाज्ञानेन । स्वज्ञानेन तन्तुच्छेदन समकालं योगी स्वमात्रं अवशिष्यते । **इति**शब्दो निःसंशयार्थः । **उपनिषच्छब्दः** प्रकृतोपनिषत्परिसमाप्त्यर्थः ॥ २४ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं क्षुरिकायाः स्फुटं लघु ॥
क्षुरिकोपनिषद्व्याख्या विंशत्यधिशतं स्मृता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकत्रिंशत्सङ्ख्यापूरकं
क्षुरिकोपनिषद्विवरणं सम्पूर्णम्

[1] छिन्नवंश—क. [2] कृष्टेन—अ.

# तेजोबिन्दूपनिषत्

सह नाववतु—इति शान्तिः

## प्रथमोऽध्यायः

निर्विशेषतेजोबिन्दुस्वरूपम्

तेजोबिन्दुपरं ध्यानं विश्वात्महृदि संस्थितम् ।
[1]अणुवं शांभवं शान्तं स्थूलसूक्ष्मपरं च यत् ॥ १ ॥
दुःखाढ्यं च दुराराध्यं दुष्प्रेक्ष्यं मुक्तमव्ययम् ।
दुर्लभं तत्स्वयं ध्यानं मुनीनां च मनीषिणाम् ॥ २ ॥

यत्राचिन्मात्रकलना यात्यपह्नवमञ्जसा ।
तच्चिन्मात्रमखण्डैकरसं ब्रह्म भवाम्यहम् ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं तेजोबिन्दूपनिषत् स्वातिरिक्तखण्डाचिन्मात्रापह्नवसिद्धाखण्डानन्दचिन्मात्ररूपावस्थानलक्षणविकळेबरकैवल्यार्थबोधिनी विजृम्भते । अस्या उपोद्घातादिकं कठवल्ल्यादिसमम् । अस्या ब्रह्ममात्रानुभवप्रकाशिकायाः तेजोबिन्दूपनिषदः स्वल्पग्रन्थतो विवरणमारभ्यते ।

[1] आणवं—अ.

वक्ष्यमाणशिवस्कन्दऋभुनिदाघप्रश्नप्रतिवचनाख्यायिका तु विद्यास्तुत्यर्था । अत्रादौ तावत् प्रथमाध्याये प्रश्नप्रतिवचनकलनां विना श्रुतिः स्वयमेव यथोक्ताधिकारिभ्यः पञ्चदशाङ्गयोगसाधनसिद्धं निर्विशेषब्रह्मतत्त्वमुपदिशति —**तेजोबिन्दुरिति** । ये स्वात्मयाथात्म्यमननेच्छवो मुनयः तेषां **मुनीनां** निर्विशेषब्रह्मध्याने येषां मनीषा विद्यते तेषां **मनीषिणां** च स्वातिरिक्ताविद्यापद-तत्कार्यध्वान्तापह्नवसिद्धं निष्प्रतियोगिकस्वमात्रतेजोबिन्दुस्वरूपं तत्परं तद्विष-यकं **ध्यानं** वक्ष्यामीति शेषः । ध्येयं कीदृशं इत्यत आह—**विश्वेति** । स्वाज्ञैः स्वातिरेकेणास्तीति विश्वसनीयं विश्वं स्वाविद्यापदतत्कार्यजातमेव यस्यात्मा शरीरं सोऽयं **विश्वात्मा** विराट्, तस्य **हृत्कमले** तद्वृत्तिसहस्रावभासकतया **स्थितम्** । निराधारं अविद्यापदं कथं तिष्ठेत् इत्यत आह—**अण्विति** । अणुं अविद्यापदसर्वस्वं आदिकूर्मादिरूपेण अन्तर्यामिरूपेण सर्वाधिष्ठानरूपेण वा वहतीति **अणुवं** । स्वापेक्षया अस्य परिच्छिन्नत्वात् अणुत्वम् । शं अस्मात् भवतीति शम्भुः प्रत्यक्, तद्विषयकसुखस्य तदधीनत्वात् । तद्याथात्म्यं निर्विशेषं ब्रह्म **शाम्भवम्** । वस्तुतः विश्वविराडादि-कलनाशान्तम् । स्वाज्ञदृष्ट्या स्थूलसूक्ष्मादिप्रपञ्चकलनाप्रसक्तौ यत्तदारोपापवा-दाधिकरणं तत् **स्थूलसूक्ष्मादिप्रपञ्चात् परं** विलक्षणमित्यर्थः । **च**शब्दात्तुर्य-भागादपि वैलक्षण्यं द्योत्यते ॥ १ ॥ तस्य स्वाज्ञदृष्टिग्रहणाराधनाशक्यतया **दुःखाढ्यं दुराराध्यं दुष्प्रेक्ष्यं च** । स्वज्ञदृष्ट्या तत्सर्वकलनामुक्तं, अत एव **अव्ययं** व्ययहेतुस्वातिरिक्तभ्रमासम्भवात् । श्रुत्याचार्यप्रसादं विना तत्स्वरूपं तद्विषयकध्यानं वा स्वयं स्वतो दुर्लभं, श्रुत्याचार्यप्रसादतः तदवगन्तुं सुलभमेवेत्यर्थः ॥ २ ॥

निर्विशेषब्रह्मावगतिसाधनानि

यताहारो जितक्रोधो जितसङ्गो जितेन्द्रियः ।
निर्द्वन्द्वो निरहंकारो निराशीरपरिग्रहः ॥ ३ ॥

अगम्यागम[1]कर्तारो गम्यागमन[2]मानसाः ।
मुखे त्रीणि च [3]विन्दन्ति त्रिधामा हंस उच्यते ॥ ४ ॥
परं गुह्यतमं विद्धि ह्यस्त[4]तन्द्री निराश्रयः ।
सोमरूपकला सूक्ष्मा विष्णोस्तत्परमं पदम् ॥ ५ ॥

उत्तमाधिकारिणां तदवगतिः भवत्येव । मन्दमध्यमानां तदवगतिः कथमित्यत्र साधनान्युपदिशति—**यतेति** । हे स्वाज्ञलोक यदि त्वं मदुपदेशप्रभवस्वज्ञानतः स्वपदं प्राप्तुमीहसे तदा मदुक्तसाधनसम्पन्नो भूत्वा **विष्णोस्तत् परमं पदं** यास्यसीत्यन्वयः ।

आहारस्य च भागौ द्वौ तृतीयमुदकस्य च ।
वायोः सञ्चरणार्थाय चतुर्थमवशेषयेत् ॥

इति येनाहारो यतो नियतः स त्वमादौ **यताहारो** भव, "आहारशुद्धौ सत्वशुद्धिः" इत्यादि श्रुतेः । कामालाभजः क्रोधो येन जितः स त्वं **जितक्रोधो** भव । स्वविकल्पितेन्द्रियेन्द्रियार्थेषु सङ्गो येन जितः स त्वं **जितसङ्गो जितेन्द्रियवर्गो** भव । शीतोष्णादिद्वन्द्वो यस्मान्निर्गतः स त्वं **निर्द्वन्द्वो** भव । शरीरत्रये अहङ्कारो यस्मान्निर्गतः स त्वं **निरहङ्कारो** भव । स्वातिरिक्तविषयभोगानशितुमिच्छा आशीः यस्मान्निर्गता स त्वं **निराशीः** भव । प्राणमात्रधारणानुकूलपरिग्रहेतरपरिग्रहो येनागृहीतः स त्वं **अपरिग्रहो** भव ॥ ३ ॥ स्वज्ञैकदेशिनो यत्पदं विन्दन्ति तत्पदमादावुपास्स्वेत्याह—**अगम्येति** । केवलस्वाज्ञ[ज्ञा]गम्ये स्वाविद्यापदारोपाधिकरणे विश्वविराडोत्रादौ तद्भावाभावितधिया अगमनं कुर्वन्तीति **अगम्यागमकर्तारः**, स्वाज्ञदृष्टिगम्ये स्वाविद्यापदतत्कार्ये येषां मानसं गमनं न भजंति ते हि **गम्यागमनमानसाः**

[1] कर्ता यो—अ.
[2] मानसः—अ, अ १.
[3] विन्देत—अ.
[4] तन्द्रो—मु.

शबळब्रह्मशरणाः स्वज्ञैकदेशिनः । "नेत्रस्थं जागरितं विद्यात्" "दक्षिणाक्षिमुखे विश्वः" इति श्रुतिसिद्धे मुखे जाग्रज्जाग्रदादौ व्यष्टिसमष्टितदुभयैक्याधिकरणतया विश्वविश्वादिविराड्विराडाद्योत्रोत्रादिभेदेन त्रीणि त्रीणि रूपाणि, चशब्दात् तत्तत्तुर्यरूपाण्यपि, स्वाभेदेन विन्दन्ति जानन्ति । एवं त्रीणि धामानि यस्य सोऽयं त्रिधामा हंस उच्यते । स्वज्ञानतः स्वभजत्स्वात्मानं हन्तीति हंसः परमेश्वर इत्यर्थः ॥ ४ ॥ तमेतं हंसं सोऽहमित्युपास्य तत्प्रसादतो हि अस्ता तन्द्रीं जामिता यस्य सः त्वं अस्ततन्द्री सन् स्वात्मेतराश्रयाभावात् निराश्रयो भूत्वा यन्मयोच्यते तत्सर्वापवादाधिकरणतया जाग्रज्जाग्रदादिकलनायाः परं अनधिकारिणे अवक्तव्यत्वात् गुह्यतमं ब्रह्म अधिष्ठेयसापेक्षाधिष्ठानताऽपाये निष्प्रतियोगिकस्वमात्रमिति विद्धि जानीहि । किं तदित्यत आह—सोमेति । उमया स्वविद्यया सहितमुनिसम्यज्ज्ञानविदिता कला चिन्मात्ररूपिणी सोमरूपकला निर्विशेषतया सूक्ष्मा, सैव, स्वाज्ञदृष्टिविकल्पितव्याप्यप्रसक्तौ, व्यापकभावमापन्नस्य विष्णोः सम्यज्ज्ञदृष्ट्या व्याप्यव्यापकताऽपह्नवसिद्धं यत् तत् परमं निष्प्रतियोगिकनिरतिशयं तन्मात्रतया पद्यत इति पदं स्वमात्रमवशिष्यत इत्यर्थः ॥ ५ ॥

परवस्तुन एव सविशेषत्वादिभावाः

त्रिवक्त्रं [1]त्रिगुणं स्थानं त्रिधातुं रूपवर्जितम् ।
निश्चलं निर्विकल्पं च निराकारं निराश्रयम् ॥ ६ ॥
उपाधिरहितं स्थानं वाङ्मनोऽतीतगोचरम् ।
स्वभावं भावसंग्राह्यमसंघा[2]तं पदाच्युतम् ॥ ७ ॥

[1] त्रिगुणस्था—अ.

[2] तपदा—उ. तं च यदच्युतं—अ. तं पदाच्चयुतं—क, अ २. तं पदच्युतं —अ १.

अनानानन्दनातीतं [1]दुष्प्रेक्ष्यं मुक्तमव्ययम् ।
चिन्त्यमेवंविनिर्मुक्तं शाश्वतं ध्रुव[2]मच्युतम् ॥ ८ ॥

तद्ब्रह्मणस्तदध्यात्मं तद्विष्णोस्तत्परायणम् ।
अचिन्त्यं चिन्मयात्मानं यद्व्योम परमं स्थितम् ॥ ९ ॥

अशून्यं शून्यभावं तु शून्यातीतं हृदि स्थितम् ।
न ध्यानं च न च ध्याता न ध्येयो ध्येय एव च ॥ १० ॥

सर्वं च न परं शून्यं न परं [3]न परात्परम् ।
अचिन्त्यमप्रबुद्धं च न सत्यं न [4]परं विदुः ॥ ११ ॥

मुनीनां संप्रयुक्तं च न देवा न परं विदुः ।
लोभं मोहं भयं दर्पं कामं क्रोधं च किल्बिषम् ॥ १२ ॥

शीतोष्णे क्षुत्पिपासे च संकल्पक[5]विकल्पकम् ।
न ब्रह्मकुलदर्पं च न [6]मुक्ति[7]ग्रन्थिसंचयम् ॥ १३ ॥

न भयं न सुखं दुःखं तथा मानावमानयोः ।
एतद्भावविनिर्मुक्तं तद्ब्रह्म ब्रह्म तत्परम् ॥ १४ ॥

तदेव स्वाज्ञादिदृष्ट्या सविशेषतां तत्प्रतियोगिकनिर्विशेषतां, परमार्थदृष्ट्या निष्प्रतियोगिकनिर्विकल्पतां च भजतीव भातीत्याह—त्रिवक्त्रमिति । विश्वतैजसप्राज्ञभेदेन त्रिवक्त्रं, विराट्सूत्रादिभेदेन त्रिगुणं, स्थानं मुक्तप्राप्यत्वात्, ओत्रनुज्ञात्रनुज्ञाभेदेन ब्रह्मविष्ण्वीशभेदेन वा त्रिधातुं, वस्तुत उक्तत्रिवक्त्रादि[8]स्वरूपविवर्जितं, चलविकल्पाकृत्या-

[1] दुष्प्राप्यं पूर्णमद्वयं—अ.
[2] मक्रियः—अ.
[3] नापरात्—क, अ १, अ २.
[4] परे—अ.
[5] विकल्पकौ—अ.
[6] मुनि—अ, अ १.
[7] ग्रन्थ—उ.
[8] वर्ज्यस्व—उ १.

**श्रयवैरळ्यात् निश्चलं निर्विकल्पं च निराकारं निराश्रयम्** ॥ ६ ॥ **उपाधिरहितं** निरुपाधिकत्वात् । **स्थानं** उक्तार्थं । **वाङ्मनोतीततुर्यतया गोचरं** । स्वयमेव भवतीति **स्वभावं** । भावरूपेणैव सम्यग्ग्राह्यं सन्मात्रत्वात् । **असञ्जातं** करणग्रामबाह्यत्वात् । स्वस्वभावादच्युतम् ॥ ७ ॥ नानानन्दनो जीवः स न भवतीति **अनानानन्दनः** साक्षी तद्भावादप्यतीतं । **दुष्प्रेक्ष्यं मुक्तमव्ययं** इति पदत्रयं व्याख्यातम् । सदा अव्ययतया **चिन्त्यं** । चिन्तितस्य सविशेषप्रसक्तौ **एवंविनिर्मुक्तं,** केनाप्यचिन्त्यत्वात् । अशाश्वतविश्वाभावात् **शाश्वतं** । अध्रुवमायापायात् **ध्रुवं** । सर्वप्रकारेणापि च्युत्यभावात् **अच्युतम्** ॥ ८ ॥ यदेवंभूतं **तद्ब्रह्मणः** स्वरूपम् । **तत्** प्रत्यग्रूपेण सर्वात्मानं विराजमधिकृत्य भवतीति **अध्यात्मम्** । तदेव **विष्णोः** स्वरूपमपि । तदेव **तत्परायणं** मुक्तप्राप्यनारायणत्वात् । निर्विशेषात्मना **अचिन्त्यम्** । अन्तःकरणाभावात् **चिन्मयात्मानं** इति, विभक्तिलिङ्गव्यत्ययः छान्दसः, चिन्मयात्मकम् । **यद्व्योम** चिदाकाशत्वात् । **परमं** व्याख्यातम् । **स्थितं** सत्तामात्रत्वात् ॥ ९ ॥ अत एव **अशून्यम्** । पूर्णत्वात् स्वातिरिक्त**शून्यभावम्** । तुशब्दोऽवधारणार्थः । शून्यभावमापन्नस्वातिरिक्तादप्यतीतं निष्प्रतियोगिकत्वात् । प्रत्यगादिरूपेण **हृदि स्थितम्** । तस्य प्रत्यक्त्वे त्रिपुटी स्यादित्यत आह—**नेति** । स्वातिरेकेण **न ध्यानं च नच ध्याता न ध्येयः** । स्वावशेषतया **ध्येय एव च** ॥ १० ॥ स्वातिरेकेण यदि सर्वं प्रसक्तं तदा **न च सर्वं** अस्ति । यदि स्यात् तदा स्वस्मात् **परं शून्यम्** । अत एव **न परं** अस्ति । सापेक्षपरात् **परं** अपि स्वयं **न** भवति । स्वातिरेकेण चिन्तितुं बोद्धुं द्रष्टुं अशक्यतया **मुनयः अचिन्त्यमप्रबुद्धं च न सत्यं न परं विदुः** ॥ ११ ॥ यत्परं अतिरिक्तं नेति **मुनीनां**—तृतीयार्थे षष्ठी—मुनिभिः यत् **सम्प्रयुक्तं** अवधृतं तत्र **देवाः** सूक्ष्मबुद्धयोऽपि ततः **परं** अस्तीति **न विदुः** । लोभमित्यादौ लिङ्गव्यत्ययो द्रष्टव्यः । नहि तत्र लोभमोहाद्यन्तःकरणवृत्तयः शीतोष्णादिद्वन्द्वं क्षुत्पिपासादिषडूर्मयः सङ्कल्पविकल्पादिमानसवृत्तयः ब्रह्मादिकुलप्रसूतोऽस्मीति दर्पश्च बन्धमोक्षादिग्रन्थिसञ्चयश्च मानावमानवृत्तयो वा विद्यन्ते । यत् **एतत्**

सर्वभावविनिर्मुक्तं स्वातिरिक्तसामान्यापह्नवसिद्धं तत् ब्रह्म। ब्रह्म तत्परं स्वमात्रमवशिष्यते इत्यर्थः ॥ १२-१४ ॥

परब्रह्मावगतसाधन पञ्चदशाङ्गयोगः

यमो हि नियमस्त्यागो मौनं देशश्च कालतः ।
आसनं मूलबन्धश्च देहसाम्यं च दृक्स्थितिः ॥ १५ ॥
प्राणसंयमनं चैव प्रत्याहारश्च धारणा ।
आत्मध्यानं समाधिश्च प्रोक्तान्यङ्गानि वै क्रमात् ॥ १६ ॥

यद्येवं ब्रह्म निष्प्रतियोगिकं तदा तदवगत्युपायवैरल्यमाशङ्क्य यदि ते तदवगतीच्छा विद्यते तदा तदवगतिसाधनतया पञ्चदशाङ्गयोग उच्यते—यमो हीति । इत्थं पञ्चदशयोगाङ्गानि सूत्रितानि ॥ १५-१६ ॥

पञ्चदशाङ्गानां लक्षणानि

सर्वं ब्रह्मेति वै ज्ञानादिन्द्रियग्रामसंयमः ।
यमोऽयमिति संप्रोक्तोऽभ्यसनीयो मुहुर्मुहुः ॥ १७ ॥
सजातीयप्रवाहश्च विजातीयतिरस्कृतिः ।
नियमो हि परानन्दो नियमात्क्रियते बुधैः ॥ १८ ॥
त्यागः प्रपञ्चरूपस्य सच्चिदात्मावलोकनात् ।
त्यागो हि महतां पूज्यः सद्यो मोक्षप्रदायकः ॥ १९ ॥
यस्माद्वाचो निवर्तन्ते अप्राप्य मनसा सह ।
यन्मौनं योगिभिर्गम्यं तद्भवेत्सर्वदा जडैः ॥ २० ॥

वाचो यस्मान्निवर्तन्ते तद्वक्तुं केन शक्यते ।
प्रपञ्चो यदि वक्तव्यः सोऽपि शब्दविवर्जितः ॥ २१ ॥
इति वा तद्भवेन्मौनं सर्वं सहजसंज्ञितम् ।
गिरा मौनं तु बालानामयुक्तं ब्रह्मवादिनाम् ॥ २२ ॥
आदावन्ते च मध्ये च जनो यस्मिन्न विद्यते ।
येनेदं सततं व्याप्तं स देशो विजनः स्मृतः ॥ २३ ॥
कल्पना सर्वभूतानां ब्रह्मादीनां निमेषतः ।
कालशब्देन निर्दिष्टं ह्यखण्डानन्दमद्वयम् ॥ २४ ॥
सुखेनैव भवेद्यस्मिन्नजस्रं ब्रह्मचिन्तनम् ।
आसनं तद्विजानीयादन्यत्सुखविनाशनम् ॥ २५ ॥
सिद्धये सर्वभूतादि विश्वाधिष्ठानमद्वयम् ।
[1]तस्मिन्सिद्धिं गताः सिद्धास्तत्सिद्धासनमुच्यते ॥ २६ ॥
यन्मूलं सर्वलोकानां यन्मूलं चित्तबन्धनम् ।
मूलबन्धः सदा सेव्यो योग्योऽसौ [2]राजयोगिनाम् ॥ २७ ॥
अङ्गानां समता विद्यात्समे ब्रह्मणि [3]लीयते ।
नो चेन्नैव समानत्वमृजुत्वं शुष्कवृक्षवत् ॥ २८ ॥
दृष्टिं ज्ञानमयीं कृत्वा पश्येद्ब्रह्ममयं जगत् ।
सा दृष्टिः परमोदारा न नासाग्रावलोकिनी ॥ २९ ॥

[1] यस्मिन्—क, अ २. [2] ब्रह्मवादिनाम्—अ, अ १, अ २.
[3] नीयते—अ.

द्रष्टृदर्शनदृश्यानां विरामो यत्र वा भवेत् ।
दृष्टिस्तत्रैव कर्तव्या न नासाग्रावलोकिनी ॥ ३० ॥
चित्तादिसर्वभावेषु ब्रह्मत्वेनैव भावनात् ।
निरोधः सर्ववृत्तीनां प्राणायामः स उच्यते ॥ ३१ ॥
निषेधनं प्रपञ्चस्य रेचकाख्यः समीरितः ।
ब्रह्मैवास्मीति या वृत्तिः पूरको वायुरुच्यते ॥ ३२ ॥
ततस्तद्वृत्तिनैश्चल्यं कुम्भकं प्राणसंयमः ।
[1]अयं चापि प्रबुद्धानामज्ञानां घ्राणपीडनम् ॥ ३३ ॥
विषयेष्वात्मतां दृष्ट्वा मनसश्चित्त[2]रञ्जकम् ।
प्रत्याहारः स विज्ञेयोऽभ्यसनीयो मुहुर्मुहुः ॥ ३४ ॥
यत्र यत्र मनो याति ब्रह्मणस्तत्र दर्शनात् ।
[3]मनसा धारणं चैव धारणा सा परा मता ॥ ३५ ॥
ब्रह्मैवास्मीति [4]सद्वृत्त्या निरालम्बतया स्थितिः ।
ध्यानशब्देन विख्यातः परमानन्ददायकः ॥ ३६ ॥
निर्विकारतया वृत्त्या ब्रह्माकारतया पुनः ।
वृत्तिविस्मरणं सम्यक्समाधिरभिधीयते ॥ ३७ ॥

सूत्रीभूतपञ्चदशाङ्गानि यथाक्रमं श्रुतिरेव व्याचष्टे। तत्र यमशब्दार्थमाह— सर्वमिति । करणग्रामे ब्रह्मभाव एव यम इत्यर्थः ॥ १७ ॥ नियमशब्दार्थमाह—

[1] अध—अ १. [2] रञ्जनम्—अ, अ १. [3] मनसो—अ.
[4] सद्वृत्त्या—(क) आदिसर्वकोशेषु. सद्वत्या—अयं पाठः (उ१) कोश एव.

**सजातीयेति** । अखण्डचिन्मात्रादिवृत्तिः सजातीया, घटपटादिवृत्तिःविजातीया ॥ १८ ॥ त्यागशब्दं व्याकरोति—**त्याग इति** । सच्चिदानन्ददृष्टिः अनृतादिप्रपञ्चं ग्रसतीत्यर्थः ॥ १९ ॥ मौनशब्दार्थं प्रकटयति—**यस्मादिति** । पक्षान्तरम्—**वाच इति** । प्रथमपक्षे जडैः वागादिकरणैः स्वस्वव्यापृत्युपरमणं मौनमित्युक्तम् । द्वितीयपक्षे तु स्वातिरिक्तयोः निष्प्रतियोगिकभावाभावरूपतया निर्वक्तुमशक्यत्वात् । प्रथमपर्यायगदितमौनं तु बालानां न हि ब्रह्मविदामस्ति ॥ २०-२२ ॥ देशशब्दार्थं व्याकरोति—**आदाविति** । तादृशदेशो ब्रह्मैवेत्यर्थः ॥ २३ ॥ कालशब्दार्थमाह—**कल्पनेति** । यदज्ञाननिमेषविकल्पितं निखिलं तदधिकरणं ब्रह्म कालशब्दवाच्यम् ॥ २४ ॥ आसनशब्दार्थं विशदीकरोति—**सुखेनेति** । ध्यानानुकूलं सुखासनं सिद्धसिद्धिदं ब्रह्म सिद्धासनं, नह्युक्तलक्षणमित्यर्थः ॥ २५-२६ ॥ मूलबन्धस्वरूपं व्यक्तीकरोति—**यदिति** । सर्वकारणं ब्रह्मैव मूलबन्धः, नत्वाकुञ्चनादिः । अयं राजयोगिनां योग्यो न हठयोगिनामित्यर्थः ॥ २७ ॥ देहसाम्यशब्दार्थमाह—**अङ्गानामिति** । स्थूलादिदेहानां **समब्रह्मणि** विलयभावः समता नहि स्तम्भवत् ऋजुतेत्यर्थः ॥ २८ ॥ दृष्टिस्वरूपमाह—**दृष्टिमिति** । स्वाज्ञदृष्टिः स्वातिरिक्तं जगत् पश्यति । सर्वाधिकरणदृष्टिः स्वज्ञः परमार्थदृष्टिः ब्रह्ममात्रवित् । तेन दृश्यादित्रिपुट्यपह्नवसिद्धे ब्रह्मणि स्वमात्रदृष्टिः कार्येत्यर्थः ॥ २९-३० ॥ रेचकपूरककुम्भकसहितविद्वत्प्राणायामस्वरूपमाचष्टे—**चित्तादीति** । सर्वं ब्रह्मेति भावनं प्राणायामः । स्वातिरिक्तं जगत् नेत्यनुसन्धानं रेचकवृत्तिः । तदेवास्मीति पूरकवृत्तिः । तद्वृत्तिस्थैर्यं कुम्भकवृत्तिः । स्वज्ञानामेवम् । स्वाज्ञानां घ्राणपीडनमेव फलमित्यर्थः ॥ ३१-३३ ॥ प्रत्याहारस्वरूपमाह—**विषयेष्विति** । विषयसामान्यब्रह्मदृष्टिः प्रत्याहारः ॥ ३४ ॥ धारणास्वरूपमाह—**यत्रेति** । मनःप्रचाराधिकरणं ब्रह्मेत्यर्थः ॥ ३५ ॥ ध्यानलक्षणमाह—**ब्रह्मेति** । निरालम्बब्रह्मभावनं ध्यानम् ॥ ३६ ॥ समाधिस्वरूपमाह—**निर्विकारेति** । अखण्डाकारवृत्तिः सविकल्पः, तद्वृत्त्यस्मरणं निर्विकल्पसमाधिरित्यर्थः ॥ ३७ ॥

योगाभ्यासेन ब्रह्मभवनम्

इमं चाकृत्रिमानन्दं तावत्साधु समभ्यसेत् ।
[1]लक्ष्ये यावत्क्षणात्पुंसः प्रत्यक्त्वं संभवेत्स्वयम् ॥ ३८ ॥
ततः साधननिर्मुक्तः सिद्धो भवति योगिराट् ।
तत्स्वरूपं [2]भवेत्तस्या विषयो [3]मनसो गिराम् ॥ ३९ ॥

मुमुक्षुः इममेव पञ्चदशावयवयोगं यावद्ब्रह्ममात्रतया स्थितिः तावदभ्यसेत्, ततो ब्रह्मैव भवतीत्याह—इममिति ॥ ३८–३९ ॥

समाधिविघ्नशमनम्

समाधौ क्रियमाणे तु विघ्नान्यायान्ति वै बलात् ।
अनुसंधानराहित्यमालस्यं भोगलालसम् ॥ ४० ॥
लयस्तमश्च विक्षेपस्तेजः स्वेदश्च शून्यता ।
एवं हि विघ्नबाहुल्यं त्याज्यं ब्रह्मविशारदैः ॥ ४१ ॥
भाववृत्त्या हि भावत्वं शून्यवृत्त्या हि शून्यता ।
ब्रह्मवृत्त्या हि पूर्णत्वं तया पूर्णत्वमभ्यसेत् ॥ ४२ ॥

अनुसन्धानराहित्यादिसमाधिविघ्ने सति कथं निर्विकल्पकसमाधिरुदेति इत्याशङ्क्य तद्विघ्नशान्तितः पूर्णाखण्डसमाधिरुदेतीत्याह—समाधाविति । समाध्यभ्यासयुक्तस्य कादाचित्कप्रसक्तानुसन्धानादिशून्यवृत्त्यन्तविघ्नसमूहे प्रातिस्विकेन युगपद्वा अभ्युदिते अनुसन्धानाद्युपायतः तद्विघ्नसमूहं निर्मूल्य अथ ब्रह्मैवाहमस्मि इत्यखण्डाकारवृत्त्या स्वपूर्णभावमभ्यसेदित्यर्थः ॥ ४०-४२ ॥

[1] लक्ष्यो—क, अ १, अ २. [2] भवेत्तस्य—अ, अ १.
[3] मनसा—क, अ १, उ १. मनसां—अ, अ २.

समाधिना शुद्धब्रह्मपदप्राप्तिः

ये हि वृत्तिं विहायैनां ब्रह्माख्यां पावनीं पराम् ।
वृथैव ते तु जीवन्ति पशुभिश्च समा नराः ॥ ४३ ॥
ये तु वृत्तिं विजानन्ति ज्ञात्वा वै वर्धयन्ति ये ।
ते वै सत्पुरुषा धन्या वन्द्यास्ते भुवनत्रये ॥ ४४ ॥
येषां वृत्तिः समा वृद्धा परिपक्वा च सा पुनः ।
ते वै सद्ब्रह्मतां प्राप्ता नेतरे शब्दवादिनः ॥ ४५ ॥
कुशला ब्रह्मवार्तायां वृत्तिहीनाः सुरागिणः ।
तेऽप्यज्ञानतया नूनं पुनरायान्ति यान्ति च ॥ ४६ ॥
निमिषार्धं न तिष्ठन्ति वृत्तिं [1]ज्ञानमयीं विना ।
यथा तिष्ठन्ति ब्रह्माद्याः सनकाद्याः शुकादयः ॥ ४७ ॥
कारणं यस्य वै कार्यं कारणं तस्य जायते ।
कारणं तत्त्वतो नश्येत्कार्याभावे विचारतः ॥ ४८ ॥
अथ शुद्धं भवेद्वस्तु यद्वै वाचामगोचरम् ।
उदेति शुद्धचित्तानां वृत्तिज्ञानमतः परम् ॥ ४९ ॥
भावितं तीव्र[2]योगेन [3]यद्वस्तु निश्चयात्मकम् ।
दृश्यं ह्यदृश्यतां नीत्वा ब्रह्माकारेण चिन्तयेत् ॥ ५० ॥
विद्वान्नित्यं सुखे तिष्ठेद्धिया चिद्रसपूर्णया ॥ ५१ ॥ इति ॥

[1] ब्रह्ममयीं—क, अ, अ १, अ २.

[2] वेगेन—(क) आदिकोशेषु.

[3] वस्तु यश्चि—अ.

**ब्रह्माकारवृत्तिविरळान्** दूषयति—**ये हीति** ॥ ४३ ॥ **अखण्डाकारवृत्ति-मन्त** एव ब्रह्मपदं यान्ति, तद्विपरीताः संसारं भजन्ति। यत एवं अतः श्रीशुकसनकादिवत् ब्रह्मपदेच्छुभिः समाधिरेव अभ्यसनीय इत्याह—**येत्विति** ॥ ४४–४७ ॥ अखण्डाकारवृत्तेः अभ्यासजन्यत्वात् कारणं अभ्यासः, कार्यं अखण्डाकारवृत्तिः, तस्याः कृतकत्वेनाध्रुवत्वात् तया ध्रुवब्रह्मापत्तिः कथमित्याशङ्क्य यावदेवं विचारो नोदेति तावदेवमभ्यस्य ततः "कार्यं चेत् कारणं किञ्चित् कार्याभावे न कारणम्" इति सापेक्षश्रुतियुक्तितः कार्यकारणकलनां अपह्नवं कृत्वा अथ तदपह्नवसिद्धं शुद्धचैतन्यं स्वावशेषतया विजृम्भते इत्याह—**कारणमिति**। यस्य एवंवादिनः अभ्यासाख्यं **कारणमेव कार्यं** भवति **तस्य कारणमेव जायते**। कार्यस्य कृतकत्वोक्त्या **कार्याभावे** कार्यं चेदिति सापेक्ष-श्रुतियुक्तितः **कारणमेव नश्येत्**। अभ्यासाखण्डाकारवृत्त्युपलक्षितस्वाविद्यापद-तत्कार्यतदारोपाधिकरणयोः अपह्नवतां गतयोः कार्यकारणकलनाविरळं ब्रह्म स्वमात्रमवशिष्यते इति भावः ॥ ४८ ॥ ततः किं इत्यत आह—**अथेति। अथ** कार्यकारणत्वविभ्रमनिरसनानन्तरं **यद्वै वाचामगोचरं** करणग्रामासम्भवप्रबोधसिद्धं **तदेव वस्तु** यत् स्वाज्ञदशायां अशुद्धनानारूपेण भातं स्वज्ञदशायां स्वप्रकृतिमवलम्ब्येव **शुद्धं भवेत्**। वस्तुतस्तु स्वाज्ञादिदृष्टिमोहे सत्यसति विशुद्धं वस्तु स्वमात्रमवशिष्यते। यदि ब्रह्म स्वमात्रं तदवगतिः कथमित्यत्र सत्कर्मानुष्ठानतो **विशुद्धचित्तानां** ततः परं वेदान्तश्रवणादिसञ्जाताखण्डाकारवृत्तिज्ञानमुदेति ॥ ४९ ॥ तज्ज्ञानं तीव्रयोगेन अखण्डनिर्विकल्पसमाधिना तत्त्वज्ञाने **भावितं सत् यद्वस्तु निश्चयात्मकं** तदेव भवति। यस्मादेवं तस्मात् **विद्वान्**—स्वाज्ञदशायां स्वाविद्यापदतत्कार्यजातं **दृश्यं** भवति—सम्यज्ज्ञानबलात् तत् **अदृश्यतां** अभावरूपतां **नीत्वा ब्रह्माकारेण चिन्तयेत्** ॥ ५० ॥ एवं **धिया** चिद्रसपूर्णया दृश्यं ब्रह्माकारेण चिन्तित्वा **सुखे** नित्यानन्दे ब्रह्मणि स्वावशेषतया **तिष्ठेत्** ॥ ५१ ॥ इतिशब्दः अध्यायपरिसमाप्त्यर्थः ॥

इति प्रथमोऽध्यायः

# द्वितीयोऽध्यायः

## सर्वस्य अखण्डैकरसत्वम्

अथ ह कुमारः शिवं पप्रच्छाखण्डैकरसचिन्मात्रस्वरूपमनुब्रूहीति। स होवाच परमशिवः ।

अखण्डैकरसं दृश्यमखण्डैकरसं जगत् ।
अखण्डैकरसं भावमखण्डैक[1]रसः स्वयम् ॥ १ ॥
अखण्डैकरसो मन्त्र अखण्डैकरसा क्रिया ।
अखण्डैकरसं ज्ञानमखण्डैकरसं जलम् ॥ २ ॥
अखण्डैकरसा भूमिरखण्डैकरसं वियत् ।
अखण्डैकरसं शास्त्रमखण्डैकरसा त्रयी ॥ ३ ॥
अखण्डैकरसं ब्रह्म चाखण्डैकरसं [2]वृतम् ।
अखण्डैकरसो जीव अखण्डैकरसो ह्यजः ॥ ४ ॥
अखण्डैकरसो ब्रह्मा अखण्डैकरसो हरिः ।
अखण्डैकरसो रुद्र अखण्डैकरसोऽस्म्यहम् ॥ ५ ॥
अखण्डैकरसो ह्यात्मा अखण्डैकरसो गुरुः ।
अखण्डैकरसं लक्ष्यमखण्डैकरसं महः ॥ ६ ॥
अखण्डैकरसो देह अखण्डैकरसं मनः ।
अखण्डैकरसं चित्तमखण्डैकरसं सुखम् ॥ ७ ॥

[1] रसं—अ, अ १, अ २, क.

[2] व्रतं—अ १.

अखण्डैकरसा विद्या अखण्डैकरसोऽव्ययः ।
अखण्डैकरसं नित्यमखण्डैकरसं [1]परम् ॥ ८ ॥
अखण्डैकरसं किंचिदखण्डैकरसं [2]वरम् ।
अखण्डैकरसादन्यन्नास्ति नास्ति षडानन ॥ ९ ॥
अखण्डैकरसान्नास्ति अखण्डैकरसान्न हि ।
अखण्डैकरसात्किंचिदखण्डैकरसादहम् ॥ १० ॥
अखण्डैकरसं स्थूलं सूक्ष्मं चाखण्डरूपकम् ।
अखण्डैकरसं वेद्यमखण्डैकरसो भवान् ॥ ११ ॥
अखण्डैकरसं गुह्यमखण्डैकरसादिकम् ।
अखण्डैकरसो ज्ञाता अखण्डैकरसा स्थितिः ॥ १२ ॥
अखण्डैकरसा माता अखण्डैकरसः पिता ।
अखण्डैकरसो भ्राता अखण्डैकरसः पतिः ॥ १३ ॥
अखण्डैकरसं सूत्रमखण्डैकरसो विराट् ।
अखण्डैकरसं गात्रमखण्डैकरसं शिरः ॥ १४ ॥
अखण्डैकरसं चान्तरखण्डैकरसं बहिः ।
अखण्डैकरसं पूर्णमखण्डैकरसामृतम् ॥ १५ ॥
अखण्डैकरसं गोत्रमखण्डैकरसं गृहम् ।
अखण्डैकरसं गोप्यमखण्डैकरसः शशी ॥ १६ ॥

[1] पदं—अ १.    [2] परं—क, अ २.

अखण्डैकरसास्तारा अखण्डैकरसो रविः ।
अखण्डैकरसं क्षेत्रमखण्डैकरसा क्षमा ॥ १७ ॥
अखण्डैकरसः शान्त अखण्डैकरसो गुणः ।
अखण्डैकरसः साक्षी अखण्डैकरसः सुहृत् ॥ १८ ॥
अखण्डैकरसो बन्धुरखण्डैकरसः सखा ।
अखण्डैकरसो राजा अखण्डैकरसं पुरम् ॥ १९ ॥
अखण्डैकरसं राज्यमखण्डैकरसाः प्रजाः ।
अखण्डैकरसं तारमखण्डैकरसो जपः ॥ २० ॥
अखण्डैकरसं ध्यानमखण्डैकरसं पदम् ।
अखण्डैकरसं ग्राह्यमखण्डैकरसं महत् ॥ २१ ॥
अखण्डैकरसं ज्योतिरखण्डैकरसं धनम् ।
अखण्डैकरसं भोज्यमखण्डैकरसं हविः ॥ २२ ॥
अखण्डैकरसो होम अखण्डैकरसो जयः ।
अखण्डैकरसः स्वर्गः अखण्डैकरसः स्वयम् ॥ २३ ॥

स्वाज्ञविकल्पितस्वाविद्यापदतत्कार्यं यद्यत् दृश्यते यद्यत् श्रूयते यद्यत् स्मर्यते तत्तत खण्डं अचिन्मात्रं लक्ष्यते । तद्व्यतिरेकेण किं अखण्डैकरसं किं वा चिन्मात्रं विद्यते इति तदियत्ताबुभुत्सुः कुमारः स्कन्दः जानन्नपि लोकानुग्रहार्थं **अखण्डैकरसचिन्मात्रमनुब्रूहीति** सर्वज्ञं शिवं **पप्रच्छ**। यः तेनैवं पृष्टः **परमशिवः स होवाचेत्याह**—**अथेति** ॥ किं तत? **अखण्डैकरसं दृश्यमित्यादि** ॥१-४१॥

सर्वस्य चिन्मात्रत्वभावना

अखण्डैकरसं सर्वं चिन्मात्रमिति भावयेत् ।
चिन्मात्रमेव चिन्मात्रमखण्डैकरसं रसम् ॥ २४ ॥

भववर्जितचिन्मात्रं सर्वं चिन्मात्रमेव हि ।
इदं च सर्वं चिन्मात्रमयं [1]चिन्मात्रमेव हि ॥ २५ ॥
आत्मभावं च चिन्मात्रमखण्डैकरसं विदुः ।
सर्वलोकं च चिन्मात्रं त्वत्ता मत्ता च चिन्मयम् ॥ २६ ॥
आकाशो भूर्जलं वायुरग्निर्ब्रह्मा हरिः शिवः ।
यत्किंचिद्यन्न किंचिच्च सर्वं चिन्मात्रमेव हि ॥ २७ ॥
अखण्डैकरसं सर्वं यद्यच्चिन्मात्रमेव हि ।
भूतं भव्यं भविष्यच्च सर्वं चिन्मात्रमेव हि ॥ २८ ॥
द्रव्यं कालं च चिन्मात्रं ज्ञानं ज्ञेयं चिदेव हि ।
ज्ञाता चिन्मात्ररूपश्च सर्वं चिन्मयमेव हि ॥ २९ ॥
संभाषणं च चिन्मात्रं यद्यच्चिन्मात्रमेव हि ।
असच्च सच्च चिन्मात्रमाद्यन्तं चिन्मयं सदा ॥ ३० ॥
आदिरन्तश्च चिन्मात्रं गुरुशिष्यादि चिन्मयम् ।
दृग्दृश्यं यदि चिन्मात्रमस्ति चेच्चिन्मयं सदा ॥ ३१ ॥
सर्वाश्चर्यं च चिन्मात्रं देहश्चिन्मात्रमेव हि ।
लिङ्गं च कारणं चैव चिन्मात्रान्न हि विद्यते ॥ ३२ ॥
अहं त्वं चैव चिन्मात्रं मूर्तामूर्तादि चिन्मयम् ।
पुण्यं पापं च चिन्मात्रं जीवश्चिन्मात्रविग्रहः ॥ ३३ ॥
चिन्मात्रान्नास्ति संकल्पश्चिन्मात्रान्नास्ति वेदनम् ।
चिन्मात्रान्नास्ति मन्त्रादि चिन्मात्रान्नास्ति देवता ॥ ३४ ॥

[1] चिन्मय—अ १, अ २.

चिन्मात्रान्नास्ति दिक्पालाश्चिन्मात्राद्व्यावहारिकम् ।
चिन्मात्रात्परमं ब्रह्म चिन्मात्रान्नास्ति कोऽपि हि ।। ३५ ।।
चिन्मात्रान्नास्ति माया च चिन्मात्रान्नास्ति पूजनम् ।
चिन्मात्रान्नास्ति मन्तव्यं चिन्मात्रान्नास्ति सत्यकम् ।। ३६ ।।
चिन्मात्रान्नास्ति कोशादि चिन्मात्रान्नास्ति वै वसु ।
चिन्मात्रान्नास्ति मौनं च चिन्मात्रान्नास्त्यमौनकम् ।। ३७ ।।
चिन्मात्रान्नास्ति वैराग्यं सर्वं चिन्मात्रमेव हि ।
यच्च यावच्च चिन्मात्रं यच्च यावच्च दृश्यते ।। ३८ ।।
यच्च यावच्च दूरस्थं सर्वं चिन्मात्रमेव हि ।
यच्च यावच्च भूतादि यच्च यावच्च लक्ष्यते ।। ३९ ।।
यच्च यावच्च वेदान्ताः सर्वं चिन्मात्रमेव हि ।
चिन्मात्रान्नास्ति गमनं चिन्मात्रान्नास्ति मोक्षकम् ।। ४० ।।
चिन्मात्रान्नास्ति लक्ष्यं च सर्वं चिन्मात्रमेव हि ।
अखण्डैकरसं ब्रह्म चिन्मात्रान्न हि विद्यते ।। ४१ ।।
शास्त्रे मयि त्वयीशे च ह्यखण्डैकरसो भवान् ।

स्वातिरिक्तखण्डाविद्यापदतत्कार्यरसजातापह्नवसिद्धं ब्रह्म स्वाज्ञादिदृष्टिमोहे सत्यसति निष्प्रतियोगिकाखण्डैकरसचिन्मात्रतया सदा अवशिष्यते इत्यत्र नहि संशयोऽस्ति । तदेव स्वाज्ञदृष्टेः अचिद्रूपदृश्यजगद्भावादिखण्डरूपेण स्वाध्यस्तवैधर्म्यं सत्यं विभाति । तथैवं स्वाज्ञसमर्पितवैधर्म्यं केवलशास्त्रजन्य-ज्ञानिनो व्यावहारिकं प्रतिभाति, विज्ञानिनां तु प्रातिभासिकं, सम्यज्ज्ञानिनां

शून्यं, तत्त्वज्ञानां तु स्वाज्ञसमर्पितदृश्यजगद्भावादिखण्डवैधर्म्यजातं निष्प्रतियोगिकाखण्डैकरसचिन्मात्रमेव विभाति । स्वाज्ञादिदृष्टिदृष्टवैधर्म्यजातं स्वाज्ञादिदृष्टैरेव, नहि तद्वस्तुस्पर्शी भवितुमर्हति, वस्तुनो निष्प्रतियोगिकस्वमात्रत्वादित्यत्र "पश्यतेहापि सन्मात्रम्—असदन्यत्", "ब्रह्ममात्रमसन्नहि",

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्याऽस्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥ इत्यादि ।
अक्षरार्पितवैधर्म्यं सत्यं भात्यज्ञसन्ततेः ।
ज्ञविज्ञसम्यज्ज्ञतत्त्वज्ञैर्वैधर्म्यं यथाक्रमम् ॥
ज्ञेयं भवेत् दृश्यमिथ्याशून्यचिन्मात्रभेदतः ।
तत्तद्दृष्टिविपर्यासः तत्तद्दृष्टेर्नचात्मनः ॥

इत्यादि श्रुतेः, परमाक्षरोक्तेश्च । अखण्डैकरसचिन्मात्रात् न किञ्चिदस्तीति फलितोऽर्थः । "अखण्डैकरसं भावं" इत्याद्यस्मिन्नध्याये वक्ष्यमाणाध्यायेषु च "कालभेदं" इत्यादि च लिङ्गव्यत्ययः छान्दसः । शिष्टं स्पष्टम् ॥

विद्याफलम्

इत्येकरूपकतया यो वा जानात्यहं त्विति ॥ ४२ ॥
सकृज्ज्ञानेन मुक्तिः स्यात्सम्यज्ज्ञाने स्वयं गुरुः ॥ ४३ ॥
इति ॥

विद्याफलमुपसंहरति—इतीति । "अखण्डैकरसं दृश्यं" इत्यारभ्य "अखण्डैकरसं ब्रह्म चिन्मात्रान्नहि विद्यते । शास्त्रे मयीशे त्वयि च योऽखण्डैकरसः" परमात्मा विद्यते स एव "भवान्" नेतरः इत्यन्तं **एकरूपकतया यः** कोपि **वा** अखण्डैकरसचिन्मात्रमहमेवेति **जानाति** सोऽयमेवं विद्वान् **सम्यज्ज्ञाने**—तृतीयार्थे सप्तमी—सम्यज्ज्ञानेन **गुरुः** ब्रह्मविद्वरीयान्

वरिष्ठो वा भूत्वा अवतिष्ठते । पुनस्तस्यैव सकृद्विभातनिष्प्रतियोगिकब्रह्ममात्र-ज्ञानेन विकळेबरमुक्तिः स्यात् । इतिशब्दः अध्यायपरिसमाप्त्यर्थः ॥ ४२-४३ ॥

इति द्वितीयोऽध्यायः

## तृतीयोऽध्यायः

आत्मनः सच्चिदानन्दब्रह्मत्वानुभवः

कुमारः पितरमात्मानुभवमनुब्रूहीति पप्रच्छ । स होवाच भगवान् परमशिवः ।

परंब्रह्मस्वरूपोऽहं परमानन्दमस्म्यहम् ।
केवलं ज्ञानरूपोऽहं केवलं परमोऽस्म्यहम् ॥ १ ॥
केवलं शान्तरूपोऽहं केवलं चिन्मयोऽस्म्यहम् ।
केवलं नित्यरूपोऽहं केवलं शाश्वतोऽस्म्यहम् ॥ २ ॥
केवलं सत्त्वरूपोऽहमहं त्यक्त्वाऽहमस्म्यहम् ।
सर्वहीनस्वरूपोऽहं चिदाकाशमयोऽस्म्यहम् ॥ ३ ॥
केवलं तुर्यरूपोऽस्मि तुर्यातीतोऽस्मि केवलः ।
सदा चैतन्यरूपोऽस्मि चिदानन्दमयोऽस्म्यहम् ॥ ४ ॥
केवलाकाररूपोऽस्मि शुद्धरूपोऽस्म्यहं सदा ।
केवलं ज्ञानरूपोऽस्मि केवलं प्रियमस्म्यहम् ॥ ५ ॥

निर्विकल्पस्वरूपोऽस्मि निरीहोऽस्मि निरामयः ।
सदाऽसङ्गस्वरूपोऽस्मि निर्विकारोऽहमव्ययः ॥ ६ ॥
सदैकरसरूपोऽस्मि सदा चिन्मात्रविग्रहः ।
अपरिच्छिन्नरूपोऽस्मि ह्यनन्तानन्दरूपवान् ॥ ७ ॥
सत्परानन्दरूपोऽस्मि चित्परानन्दमस्म्यहम् ।
अन्तरान्तररूपोऽहमवाङ्मनसगोचरः ॥ ८ ॥
आत्मानन्दस्वरूपोऽहं सत्यानन्दोऽस्म्यहं सदा ।
आत्मारामस्वरूपोऽस्मि ह्यहमात्मा सदाशिवः ॥ ९ ॥
आत्मप्रकाशरूपोऽस्मि ह्यात्मज्योतीरसोऽस्म्यहम् ।
आदिमध्यान्तहीनोऽस्मि ह्याकाशसदृशोऽस्म्यहम् ॥ १० ॥
नित्यशुद्धचिदानन्दसत्तामात्रोऽहमव्ययः ।
नित्यबुद्धविशुद्धैकसच्चिदानन्दमस्म्यहम् ॥ ११ ॥
नित्यशेषस्वरूपोऽस्मि सर्वातीतोऽस्म्यहं सदा ।
रूपातीतस्वरूपोऽस्मि परमाकाशविग्रहः ॥ १२ ॥
भूमानन्दस्वरूपोऽस्मि भाषाहीनोऽस्म्यहं सदा ।
सर्वाधिष्ठानरूपोऽस्मि सर्वदा चिद्घनोऽस्म्यहम् ॥ १३ ॥
देहभावविहीनोऽस्मि चिन्ताहीनोऽस्मि सर्वदा ।
चित्तवृत्तिविहीनोऽहं चिदात्मैकरसोऽस्म्यहम् ॥ १४ ॥
सर्वदृश्यविहीनोऽहं दृग्रूपोऽस्म्यहमेव हि ।
सर्वदा पूर्णरूपोऽस्मि नित्यतृप्तोऽस्म्यहं सदा ॥ १५ ॥

अहं ब्रह्मैव सर्वं स्यादहं चैतन्यमेव हि ।
अहमेवाहमेवास्मि भूमाकारस्वरूपवान् ॥ १६ ॥
अहमेव महानात्मा ह्यहमेव परात्परः ।
अहमन्यवदाभामि ह्यहमेव शरीरवत् ॥ १७ ॥
अहं शिष्यवदाभामि ह्यहं लोकत्रयाश्रयः ।
अहं कालत्रयातीत अहं वेदैरुपासितः ॥ १८ ॥
अहं शास्त्रेण निर्णीत अहं चित्ते व्यवस्थितः ।
मत्त्यक्तं नास्ति किंचिद्वा मत्त्यक्तं पृथिवी तु वा ॥ १९ ॥
मयाऽतिरिक्तं यद्यद्वा तत्तन्नास्तीति निश्चिनु ।
अहं ब्रह्मास्मि सिद्धोऽस्मि नित्यशुद्धोऽस्म्यहं सदा ॥ २० ॥
निर्गुणः केवलात्माऽस्मि निराकारोऽस्म्यहं सदा ।
केवलं ब्रह्ममात्रोऽस्मि ह्यजरोऽस्म्यमरोऽस्म्यहम् ॥ २१ ॥
स्वयमेव स्वयं भामि स्वयमेव सदात्मकः ।
स्वयमेवात्मनि स्वस्थः स्वयमेव परा गतिः ॥ २२ ॥
स्वयमेव स्वयं भुञ्जे स्वयमेव स्वयं रमे ।
स्वयमेव स्वयंज्योतिः स्वयमेव स्वयं महः ॥ २३ ॥
स्वस्यात्मनि स्वयं रंस्ये स्वात्मन्येव विलोकये ।
स्वात्मन्येव सुखासीनः स्वात्ममात्रावशेषकः ॥ २४ ॥
स्वचैतन्ये स्वयं स्थास्ये स्वात्मराज्ये सुखे रमे ।
स्वात्मसिंहासने स्थित्वा स्वात्मनोऽन्यन्न चिन्तये ॥ २५ ॥

चिद्रूपमात्रं ब्रह्मैव सच्चिदानन्दमद्वयम् ।
आनन्दघन एवाहमहं ब्रह्मास्मि केवलम् ॥ २६ ॥
सर्वदा सर्वशून्योऽहं [1]सर्वात्मानन्दवानहम् ।
नित्यानन्दस्वरूपोऽहमात्माकाशोऽस्मि [2]सर्वदा ॥ २७ ॥
अहमेव हृदाकाशे चिदादित्यस्वरूपवान् ।
आत्मनाऽऽत्मनि तृप्तोऽस्मि ह्यरूपोऽस्म्यहमव्ययः ॥ २८ ॥
एकसंख्याविमुक्तोऽस्मि नित्यमुक्तस्वरूपवान् ।
आकाशादपि सूक्ष्मोऽहमाद्यन्ताभाववानहम् ॥ २९ ॥
सर्वप्रकाशरूपोऽस्मि परावरसुखोऽस्म्यहम् ।
सत्तामात्रस्वरूपोऽहं शुद्धमोक्षस्वरूपवान् ॥ ३० ॥
सत्यानन्दस्वरूपोऽहं ज्ञानानन्दघनोऽस्म्यहम् ।
विज्ञानमात्ररूपोऽहं सच्चिदानन्दलक्षणः ॥ ३१ ॥
ब्रह्ममात्रमिदं सर्वं ब्रह्मणोऽन्यन्न किंचन ।
तदेवाहं सदानन्दं ब्रह्मैवाहं सनातनम् ॥ ३२ ॥
त्वमित्येतत्तदित्येतन्मत्तोऽन्यन्नास्ति किंचन ।
चिच्चैतन्यस्वरूपोऽहमहमेव परः शिवः ॥ ३३ ॥
अतिभावस्वरूपोऽहमहमेव सुखात्मकः ।
साक्ष्यवस्तुविहीनत्वात्साक्षित्वं नास्ति मे सदा ॥ ३४ ॥
केवलं ब्रह्ममात्रत्वादहमात्मा सनातनः ।
अहमेवादिशेषोऽहमहंशेषोऽहमेव हि ॥ ३५ ॥

[1] सदात्मा—अ, अ १.   [2] नित्यशः—अ, अ १, क.

नामरूपविमुक्तोऽहमहमानन्दविग्रहः ।
इन्द्रियाभावरूपोऽहं सर्वभावस्वरूपकः ॥ ३६ ॥
बन्धमुक्तिविहीनोऽहं शाश्वतानन्दविग्रहः ।
आदिचैतन्य[1]रूपोऽहमखण्डैकरसोऽस्म्यहम् ॥ ३७ ॥
वाङ्मनोऽगोचरश्चाहं सर्वत्र सुखवानहम् ।
सर्वत्र पूर्णरूपोऽहं भूमानन्दमयोऽस्म्यहम् ॥ ३८ ॥
सर्वत्र तृप्तिरूपोऽहं परामृतरसोऽस्म्यहम् ।
एकमेवाद्वितीयं सद्ब्रह्मैवाहं न संशयः ॥ ३९ ॥
सर्वशून्यस्वरूपोऽहं [2]सकलागमगोचरः ।
मुक्तोऽहं मोक्षरूपोऽहं निर्वाणसुखरूपवान् ॥ ४० ॥
सत्यविज्ञानमात्रोऽहं सन्मात्रानन्दवानहम् ।
तुरीयातीतरूपोऽहं निर्विकल्पस्वरूपवान् ॥ ४१ ॥
सर्वदा ह्यजरूपोऽहं [3]नीरागोऽस्मि निरञ्जनः ।
अहं शुद्धोऽस्मि बुद्धोऽस्मि नित्योऽस्मि प्रभुरस्म्यहम् ॥ ४२ ॥
ओङ्कारार्थस्वरूपोऽस्मि निष्कलङ्कमयोऽस्म्यहम् ।

एवं स्वपितृमुखतः कुमारः अखण्डैकरसचिन्मात्रेयत्तां श्रुत्वा तत्र स्वानुभवं पृच्छतीत्याह—कुमार इति। तत्प्रश्नमङ्गीकृत्य अखण्डैकरसचिन्मात्रानुभवं स्वाज्ञविकल्पितात् सर्वस्मात् परं विलक्षणं यत् सम्यक् बृंहयति विजृम्भते तत् परंब्रह्म तत्स्वरूपोऽहम् । परमानन्दमिति लिङ्गव्यत्ययः,

[1] मात्रो—क, अ, अ १, अ २
[2] सकलामर—क, अ २.
[3] निरागो—क, अ १, अ २, उ १.

परमानन्दोऽस्म्यहमित्यर्थः । किंच—केवलमित्यादि । प्रत्यक्प्रकाशत्वात् ज्ञानरूपः । सर्वोत्कृष्टत्वात् परमः ॥ १ ॥ क्रूरस्वातिरिक्ताभावात् शान्तः । अनित्यापायात् नित्यः । चिरन्तनत्वात् शाश्वतः ॥ २ ॥ ईश्वरत्वात् सत्स्वरूपः । पराक्सापेक्षप्रत्यगहम्भावं त्यक्त्वा शिष्टाहम्भावोऽस्मि । सर्वं ब्रह्मेत्यत्र सर्वापह्नवसिद्धब्रह्ममात्रमस्मि । चिदाकाशमयः चिदाकाशस्वरूपः ॥ ३ ॥ तुर्यः प्रत्यक् । तदतीतः परः । अशेषविशेषाभावात् केवलः ॥ ४–५ ॥ विकल्पासहत्वात् निर्विकल्पः । अन्तःकरणाभावात् निरीहः । भवरोगहानात् निरामयः । उपाधिसत्त्वेऽपि असङ्गः । विकाराभावात् निर्विकारः । स्वतः परतो वा व्ययाभावात् अव्ययः ॥ ६ ॥ अपरिच्छिन्नः त्रिविधपरिच्छेदाभावात् । अनन्तानन्दः अपरिमितानन्दरूपत्वात् ॥ ७ ॥ सच्चित्परानन्दरूपः सच्चित्परमानन्दरूपत्वात । सर्वान्तरः प्रत्यक् तस्मादप्यन्तरः परः प्रत्यगभिन्न-ब्रह्मरूपत्वात । वाङ्मानसादिकरणग्रामागोचरः ॥ ८ ॥ सत्यात्मानन्दरूपः । प्रत्यगादिरूपेण सर्वात्मसु रमत इति आत्मारामः ॥ ९ ॥ स्वोत्पत्तिस्थिति-लयाभावात् आदिमध्यान्तहीनः । निरवयवत्वात् आकाशसदृशः ॥ १० ॥ सत्तासामान्यत्वात् सत्तामात्रः ॥ ११ ॥ सर्वावशेषरूपत्वात् नित्यशेषः ॥ १२ ॥ अपरिच्छिन्नानन्दत्वात् भूमानन्दः । वागादिकरणाभावात् भाषाहीनः ॥ १३–१४ ॥ दृश्यासम्भवतो दृङ्मात्रः ॥ १५–१६ ॥ स्वाज्ञदृष्टेः अहमन्यवत् गुरुशिष्यवत् भातोऽस्मि । वेदशास्त्रैः उपास्यो निर्णीतोऽस्मि ॥ १७–१८ ॥ शिष्टं स्पष्टम् ॥ मया अव्याप्तं मदतिरिक्तं वा नास्तीति जानीहीत्याह—मत्त्यक्तमिति ॥ १९ ॥ किञ्च—अहमिति ॥ २० ॥ केवलं ब्रह्ममात्रोऽस्मि निष्प्रतियोगिकत्वात् ॥ २१ ॥ यतः स्वयमेवेदं सर्वं अतः स्वस्मादन्यत् न चिन्तये इत्याह—स्वयमेवेति ॥ २२ ॥ "भुङ्क्ते" इत्यत्र पुरुषव्यत्ययः, भुञ्जे इत्यर्थः ॥ २३–२५ ॥ यच्चिद्रूपमात्रं तदेवाह-मस्मीत्याह—चिदिति ॥ २६ ॥ सर्वशून्योऽहं [1]सर्वदा सर्वासम्भवात् ॥ २७ ॥

[1] सर्वथा—उ १.

**अहमेव चिदादित्यस्वरूपवान्** सर्वप्राणिहृद्गतकामादिवृत्तिसहस्रभासकचित्सूर्यत्वात् ॥ २८ ॥ **एकसङ्ख्याविमुक्तः** असङ्ख्येयत्वात् । **आद्यन्ताभाववान्** सम्भूतिप्रलयाभावात् ॥ २९ ॥ **परावरसुखः** प्रत्यगभिन्नब्रह्मानन्दत्वात् । **शुद्धमोक्षस्वरूपवान्** स्वस्य स्वातिरिक्तभ्रममोक्षसिद्धत्वात् ॥ ३०–३१ ॥ यतः अन्यत् न विद्यते तदेवाहमित्याह—**ब्रह्ममात्रमिति** ॥ ३२ ॥ त्वंतदित्यादिशब्दवाच्यं मदतिरिक्तं नास्तीत्याह—**त्वमिति** ॥ ३३ ॥ **अतिभावस्वरूपः** सर्वभावातीतत्वात् । **साक्षित्वं**—साक्ष्यसापेक्षसाक्षितायाः सविशेषत्वात् तद्विरळोऽस्मीत्यर्थः ॥ ३४ ॥ **आदिशेषः** धरणीधरत्वात् । **अहंशेष** इति स्वमात्रत्वमवशिष्टत्वात् ॥ ३५–३८ ॥ **एकमेवाद्वितीयं** सजातीयविजातीयस्वगतभेदवैरळ्यात् ॥ ३९ ॥ **सकलागमगोचरः** वेदान्तवेद्यत्वात् । स्वाविद्याद्वयतो मुक्तः । **निर्वाणसुखरूपवान्** विदेहकैवल्यानन्दत्वात् ॥ ४०–४१ ॥ **बुद्धः** विशुद्धबोधरूपत्वात ॥ ४२ ॥ **ओङ्कारार्थस्वरूपः** तुर्यतुर्यत्वात् ॥

आत्मनि सर्वप्रविभक्तरूपाभावानुभवः

चिदाकारस्वरूपोऽस्मि नाहमस्मि न सोऽस्म्यहम् ॥ ४३ ॥
न हि किंचित्स्वरूपोऽस्मि निर्व्यापारस्वरूपवान् ।
निरंशोऽस्मि निराभासो न मनो नेन्द्रियोऽस्म्यहम् ॥ ४४ ॥
न बुद्धिर्न विकल्पोऽहं न देहादित्रयोऽस्म्यहम् ।
न जाग्रत्स्वप्नरूपोऽहं न सुषुप्तिस्वरूपवान् ॥ ४५ ॥
न तापत्रयरूपोऽहं नेषणात्रयवानहम् ।
श्रवणं नास्ति मे सिद्धेर्मननं च चिदात्मनि ॥ ४६ ॥
सजातीयं न मे किंचिद्विजातीयं न मे क्वचित् ।
स्वगतं च न मे किंचिन्न मे भेदत्रयं क्वचित् ॥ ४७ ॥

अहंशब्दबोध्यं स्थूलदेहादिप्रत्यगन्तं, तच्छब्दबोध्यं विराडादितुर्यान्तं, तदुभयविलक्षणत्वात् **नाहमस्मि न सोऽस्म्यहम्** ॥ ४३ ॥ स्वातिरेकेण **किञ्चित्स्वरूपः** । अखण्डार्थत्वात् निरंशः । देहत्रयविलक्षणत्वात् न **मन इत्यादि** ॥ ४४–४५ ॥ स्वस्य स्वतःसिद्धत्वेन न हि श्रवणादिसाधनाकाङ्क्षा अस्तीत्याह—**श्रवणमित्यादि** ॥ चशब्दो निदिध्यासनसमुच्चयार्थः ॥ ४६ ॥ न हि सजातीयादिभेदत्रयमस्तीत्याह—**सजातीयमिति** ॥ ४७ ॥

**स्वेतरस्य सर्वस्य असत्त्वानुभवः**

असत्यं हि मनोरूपमसत्यं बुद्धिरूपकम् ।
अहंकारमसद्धीति नित्योऽहं शाश्वतो ह्यजः ॥ ४८ ॥
देहत्रयमसद्विद्धि कालत्रयमसत्सदा ।
गुणत्रयमसद्विद्धि ह्यहं सत्यात्मकः शुचिः ॥ ४९ ॥
श्रुतं सर्वमसद्विद्धि वेदं सर्वमसत्सदा ।
शास्त्रं सर्वमसद्विद्धि ह्यहं सत्यं चिदात्मकः ॥ ५० ॥
मूर्तित्रयमसद्विद्धि सर्वभूतमसत्सदा ।
सर्वतत्त्वमसद्विद्धि ह्यहं भूमा सदाशिवः ॥ ५१ ॥
गुरुशिष्यमसद्विद्धि गुरोर्मन्त्रमसत्ततः ।
यद्दृश्यं तदसद्विद्धि न मां विद्धि तथाविधम् ॥ ५२ ॥
यच्चिन्त्यं तदसद्विद्धि यन्न्याय्यं तदसत्सदा ।
यद्धितं तदसद्विद्धि न मां विद्धि तथाविधम् ॥ ५३ ॥
सर्वान्प्राणीनसद्विद्धि सर्वान्भोगानसत्त्विति ।
दृष्टं श्रुतमसद्विद्धि [1]ओतं प्रोतमसन्मयम् ॥ ५४ ॥

[1] बोतं—उ, उ १.

कार्याकार्यमसद्विद्धि नष्टं प्राप्तमसन्मयम् ।
दुःखादुःखमसद्विद्धि सर्वासर्वमसन्मयम् ॥ ९९ ॥
पूर्णापूर्णमसद्विद्धि धर्माधर्ममसन्मयम् ।
लाभालाभावसद्विद्धि जयाजयमसन्मयम् ॥ ९६ ॥
शब्दं सर्वमसद्विद्धि स्पर्शं सर्वमसत्सदा ।
रूपं सर्वमसद्विद्धि रसं सर्वमसन्मयम् ॥ ९७ ॥
गन्धं सर्वमसद्विद्धि सर्वाज्ञानमसन्मयम् ।
असदेव सदा सर्वमसदेव भवोद्भवम् ॥ ९८ ॥
असदेव गुणं सर्वं सन्मात्रमहमेव हि ।

स्वातिरिक्तसामान्यं शशविषाणवदत्यन्ताभावरूपतया असदेव । अहं तु तदपह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रभावरूपोऽस्मीत्याह—असत्यं हीति ॥ ४८–९८ ॥

अहंब्रह्मास्मीत्यात्ममन्त्राभ्यासः

स्वात्ममन्त्रं सदा पश्येत्स्वात्ममन्त्रं सदाभ्यसेत् ॥ ९९ ॥
अहं ब्रह्मास्मिमन्त्रोऽयं दृश्यपापं विनाशयेत् ।
अहं ब्रह्मास्मि मन्त्रोऽयमन्यमन्त्रं विनाशयेत् ॥ ६० ॥
अहं ब्रह्मास्मि मन्त्रोऽयं देहदोषं विनाशयेत् ।
अहं ब्रह्मास्मि मन्त्रोऽयं जन्मपापं विनाशयेत् ॥ ६१ ॥
अहं ब्रह्मास्मि मन्त्रोऽयं मृत्युपाशं विनाशयेत् ।
अहं ब्रह्मास्मि मन्त्रोऽयं द्वैतदुःखं विनाशयेत् ॥ ६२ ॥

अहं ब्रह्मास्मि मन्त्रोऽयं भेदबुद्धिं विनाशयेत् ।
अहं ब्रह्मास्मि मन्त्रोऽयं चिन्तादुःखं विनाशयेत् ॥ ६३ ॥
अहं ब्रह्मास्मि मन्त्रोऽयं बुद्धिव्याधिं विनाशयेत् ।
अहं ब्रह्मास्मि मन्त्रोऽयं चित्तबन्धं विनाशयेत् ॥ ६४ ॥
अहं ब्रह्मास्मि मन्त्रोऽयं सर्वव्याधीन्विनाशयेत् ।
अहं ब्रह्मास्मि मन्त्रोऽयं सर्वशोकं विनाशयेत् ॥ ६५ ॥
अहं ब्रह्मास्मि मन्त्रोऽयं कामादीन्नाशयेत्क्षणात् ।
अहं ब्रह्मास्मि मन्त्रोऽयं [1]क्रोधवृत्तिं विनाशयेत् ॥ ६६ ॥
अहं ब्रह्मास्मि मन्त्रोऽयं चित्तवृत्तिं विनाशयेत् ।
अहं ब्रह्मास्मि मन्त्रोऽयं संकल्पादीन्विनाशयेत् ॥ ६७ ॥
अहं ब्रह्मास्मि मन्त्रोऽयं कोटिदोषं विनाशयेत् ।
अहं ब्रह्मास्मि मन्त्रोऽयं सर्वतन्त्रं विनाशयेत् ॥ ६८ ॥
अहं ब्रह्मास्मि मन्त्रोऽयमात्माज्ञानं विनाशयेत् ।
अहं ब्रह्मास्मि मन्त्रोऽयमात्मलोकजयप्रदः ॥ ६९ ॥
अहं ब्रह्मास्मि मन्त्रोऽयमप्रतर्क्यसुखप्रदः ।
अहं ब्रह्मास्मि मन्त्रोऽयमजडत्वं प्रयच्छति ॥ ७० ॥
अहं ब्रह्मास्मि मन्त्रोऽयमनात्मासुरमर्दनः ।
अहं ब्रह्मास्मि वज्रोऽयमनात्माख्यगिरीन्हरेत् ॥ ७१ ॥
अहं ब्रह्मास्मि चक्रोऽयमनात्मं[2]त्वासुरान्हरेत् ।
अहं ब्रह्मास्मि मन्त्रोऽयं सर्वांस्तान्मोक्षयिष्यति ॥ ७२ ॥

[1] क्रोधशक्तिं—अ, अ १, अ २, क.    [2] ख्यासुरान्—क, अ २.

अहं ब्रह्मास्मि मन्त्रोऽयं ज्ञानानन्दं प्रयच्छति ।
सप्तकोटिमहामन्त्रं जन्म[1]कोटिशतप्रदम् ॥ ७३ ॥
सर्वमन्त्रान्समुत्सृज्य एतन्मन्त्रं [2]समभ्यसेत् ।
सद्यो मोक्षमवाप्नोति नास्ति संदेहमण्वपि ॥ ७४ ॥

इति ॥

स्वात्ममन्त्राभ्यासस्य ब्रह्मास्यन्तरायनिरसनद्वारा निष्प्रतियोगिकब्रह्ममात्रपदप्रापकत्वात् यत एवं अतः बन्धमोक्षभ्रममुमुक्षुः इममेव अहं ब्रह्मास्मीति मन्त्रं सदा अभ्यसेदित्याह—स्वात्ममन्त्रमिति । स्पष्टोऽयमर्थः ॥ ६९.–७४ ॥ इतिशब्दः अध्यायपरिसमाप्त्यर्थः ॥

इति तृतीयोऽध्यायः

# चतुर्थोऽध्यायः

जीवन्मुक्तिः—प्रत्यगभिन्नब्रह्मभावापत्तिः

कुमारः परमेश्वरं पप्रच्छ जीवन्मुक्तविदेहमुक्तयोः स्थितिमनुब्रूहीति । स होवाच परः शिवः ।

चिदात्माऽहं परात्माऽहं निर्गुणोऽहं परात्परः ।
आत्ममात्रेण यस्तिष्ठेत्स जीवन्मुक्त उच्यते ॥ १ ॥
देहत्रयातिरिक्तोऽहं शुद्धचैतन्यमस्म्यहम् ।
ब्रह्माहमिति यस्यान्तः स जीवन्मुक्त उच्यते ॥ २ ॥

[1] कोश—क, अ २,
[2] सदाभ्य—क, अ २,

आनन्दघनरूपोऽस्मि परानन्दघनोऽस्म्यहम् ।
यस्य देहादिकं नास्ति यस्य ब्रह्मेति निश्चयः ।
परमानन्दपूर्णो यः स जीवन्मुक्त उच्यते ॥ ३ ॥
यस्य किंचिदहं नास्ति चिन्मात्रेणावतिष्ठते ।
चैतन्यमात्रो यस्यान्तश्चिन्मात्रैकस्वरूपवान् ॥ ४ ॥
सर्वत्र पूर्णरूपात्मा सर्वत्रात्मावशेषकः ।
आनन्दरतिरव्यक्तः परिपूर्णश्चिदात्मकः ॥ ५ ॥
शुद्धचैतन्यरूपात्मा सर्वसङ्गविवर्जितः ।
नित्यानन्दः प्रसन्नात्मा ह्यन्यचिन्ताविवर्जितः ॥ ६ ॥
किंचिदस्तित्वहीनो यः स जीवन्मुक्त उच्यते ।
न मे चित्तं न मे बुद्धिर्नाहंकारो न चेन्द्रियम् ॥ ७ ॥
न मे देहः कदाचिद्वा न मे प्राणादयः क्वचित् ।
न मे माया न मे कामो न मे क्रोधः परोऽस्म्यहम् ॥ ८ ॥
न मे किंचिदिदं वापि न मे किंचित्क्वचिज्जगत् ।
न मे दोषो न मे लिङ्गं न मे चक्षुर्न मे मनः ॥ ९ ॥
न मे श्रोत्रं न मे नासा न मे जिह्वा न मे करः ।
न मे जाग्रन्न मे स्वप्नं न मे कारणमण्वपि ॥ १० ॥
न मे तुरीयमिति यः स जीवन्मुक्त उच्यते ।
इदं सर्वं न मे किंचिदयं सर्वं न मे क्वचित् ॥ ११ ॥

न मे [1]कालो न मे देशो न मे वस्तु न मे मतिः ।
न मे स्नानं न मे संध्या न मे दैवं न मे स्थलम् ॥ १२ ॥
न मे तीर्थं न मे सेवा न मे ज्ञानं न मे पदम् ।
न मे बन्धं न मे जन्म न मे वाक्यं न मे रविः ॥ १३ ॥
न मे पुण्यं न मे पापं न मे कार्यं न मे शुभम् ।
न मे जीव इति स्वात्मा न मे किंचिज्जगत्त्रयम् ॥ १४ ॥
न मे मोक्षो न मे द्वैतं न मे वेदो न मे विधिः ।
न मेऽन्तिकं न मे दूरं न मे बोधो न मे [2]रहः ॥ १५ ॥
न मे गुरुर्न मे शिष्यो न मे हीनो न चाधिकः ।
न मे ब्रह्मा न मे विष्णुर्न मे रुद्रो न चन्द्रमाः ॥ १६ ॥
न मे पृथ्वी न मे तोयं न मे वायुर्न मे वियत् ।
न मे वह्निर्न मे गोत्रं न मे लक्ष्यं न मे भवः ॥ १७ ॥
न मे ध्याता न मे ध्येयं न मे ध्यानं न मे मनुः ।
न मे शीतं न मे चोष्णं न मे तृष्णा न मे क्षुधा ॥ १८ ॥
न मे मित्रं न मे शत्रुर्न मे मोहो न मे जयः ।
न मे पूर्वं न मे पश्चान्न मे चोर्ध्वं न मे दिशः ॥ १९ ॥
न मे वक्तव्यमल्पं वा न मे श्रोतव्यमण्वपि ।
न मे मन्तव्यमीषद्वा न मे ध्यातव्यमण्वपि ॥ २० ॥
न मे भोक्तव्यमीषद्वा न मे स्मर्तव्यमण्वपि ।
न मे भोगो न मे [3]रागो न मे यागो न मे लयः ॥ २१ ॥

[1] लोका—उ. लोको—उ १. [2] रविः—उ, उ १. [3] रोगो— उ १.

न मे मौर्ख्यं न मे शान्तं न मे बन्धं न मे प्रियम् ।
न मे मोदः प्रमोदो वा न मे स्थूलं न मे [1]कृशम् ॥ २२ ॥
न मे दीर्घं न मे ह्रस्वं न मे वृद्धिर्न मे क्षयम् ।
अध्यारोपापवादौ वा न मे चैकं न मे बहु ॥ २३ ॥
न मे आन्ध्यं न मे मान्द्यं न मे [2]पट्विदमण्वपि ।
न मे मांसं न मे रक्तं न मे मेदो न मे ह्यसृक् ॥ २४ ॥
न मे मज्जा न मेऽस्थिर्वा न मे त्वग्धातुसप्तकम् ।
न मे शुक्लं न मे रक्तं न मे नीलं न मे पृथक् ॥ २५ ॥
न मे तापो न मे लोभो मुख्यं गौणं न मे क्वचित् ।
न मे भ्रान्तिर्न मे स्थैर्यं न मे गुह्यं न मे कुलम् ॥ २६ ॥
न मे त्याज्यं न मे ग्राह्यं न मे हास्यं न मे नयः ।
न मे व्रतं न मे ग्लानिर्न मे शोष्यं न मे सुखम् ॥ २७ ॥
न मे ज्ञाता न मे ज्ञानं न मे ज्ञेयं न मे स्वयम् ।
न मे तुभ्यं न मे मह्यं न मे त्वं च न मे त्वहम् ॥ २८ ॥
न मे जरा न मे बाल्यं न मे यौवनमण्वपि ।
अहं ब्रह्मास्म्यहं ब्रह्मास्म्यहं ब्रह्मेति निश्चयः ॥ २९ ॥
चिदहं चिदहं चेति स जीवन्मुक्त उच्यते ।
ब्रह्मैवाहं चिदेवाहं परो वाहं न संशयः ॥ ३० ॥
स्वयमेव स्वयं हंसः स्वयमेव स्वयं स्थितः ।
स्वयमेव स्वयं पश्येत्स्वात्मराज्ये सुखे वसेत् ॥ ३१ ॥

[1] त्वहं—उ, उ १.   [2] पट्वीद—क, उ. पट्वमद—अ.

स्वात्मानन्दं स्वयं भोक्ष्येत्स जीवन्मुक्त उच्यते ।
स्वयमेवैकवीरोऽग्रे स्वयमेव प्रभुः स्मृतः ।
स्वस्वरूपे स्वयं स्वप्स्ये स जीवन्मुक्त उच्यते ॥ ३२ ॥

कुमारः स्वपितुः परमेश्वरस्य मुखतः अखण्डैकरसचिन्मात्रज्ञानं तदनुभवं च यथावदवगम्य तदान्तरालिकमुख्यफलरूपजीवन्मुक्तिविदेहमुक्तिस्वरूपमवगन्तुं शिवं पृच्छतीत्याह—कुमार इति ॥ तदङ्गीकृत्य क्रमेण जीवन्मुक्तविदेहमुक्त-लक्षणं स होवाच । तत्र जीवन्मुक्तलक्षणमुच्यते—चिदात्मेति । पराग्भावप्रास-प्रत्यग्भावस्थितिः जीवन्मुक्तिः प्रत्यगभिन्नब्रह्मभावापत्तिर्वेति वक्ष्यमाणजीवन्मुक्ति-पर्यायसमुदायार्थः ॥ १–४ ॥ आनन्दात्मन्येव रतिः यस्य सोऽयं आनन्दरतिः ॥ ५ ॥ अन्यचिन्ताविवर्जितः स्वान्यस्य मृग्यत्वात् ॥ ६–९ ॥ देहत्रयवैलक्षण्यवदवस्थाचतुष्टयवैलक्षण्यमाह—न मे जाग्रदिति ॥ १०–१४ ॥ न मे विधिः न निषेधोऽपीत्यर्थः ॥ १५–३१ ॥ स्वयमेव प्रभुः ईश्वरत्वात् । "चिदात्माऽहं परात्माऽहं" इत्येतावता ग्रन्थेन ब्रह्मविदादिचतुर्भेदभिन्न-जीवन्मुक्तलक्षणमभिहितम् । प्रायशः इयं तेजोबिन्दूपनिषत् विध्यादिविदेहमु-क्त्यन्तमहावाक्यरत्नावलीप्रभालोचने प्रसक्तानुप्रसक्त्या व्याख्याता नेह पुनः पदशो व्याख्यायते ग्रन्थविस्तरभयादिति ॥ ३२ ॥

विदेहमुक्तिः—निष्प्रतियोगिकस्वमात्रब्रह्ममात्रावस्थानम्

ब्रह्मभूतः प्रशान्तात्मा ब्रह्मानन्दमयः सुखी ।
[1]स्वच्छरूपो महामौनी वैदेही मुक्त एव सः ॥ ३३ ॥
सर्वात्मा समरूपात्मा शुद्धात्मा त्वह[2]मुत्थितः ।
एकवर्जित एकात्मा सर्वात्मा स्वात्ममात्रकः ॥ ३४ ॥

[1] स्वस्व—अ, अ १.    [2] मुज्झि—अ, अ १, अ २, क.

अजात्मा चामृतात्माऽहं स्वयमात्माऽहमव्ययः ।
लक्ष्यात्मा ललितात्माऽहं तूष्णीमात्मस्वभाववान् ॥ ३५ ॥
आनन्दात्मा प्रियो ह्यात्मा मोक्षात्मा बन्धवर्जितः ।
ब्रह्मैवाहं चिदेवाहमेवं वापि न चिन्त्यते ॥ ३६ ॥
चिन्मात्रेणैव यस्तिष्ठेद्वैदेही मुक्त एव सः ॥ ३७ ॥
निश्चयं च परित्यज्य अहं ब्रह्मेति निश्चयम् ।
आनन्दभरितस्वान्तो वैदेही मुक्त एव सः ॥ ३८ ॥
[1]सर्वमस्तीति नास्तीति निश्चयं त्यज्य तिष्ठति ।
अहं ब्रह्मास्मि नास्मीति सच्चिदानन्दमात्रकः ॥ ३९ ॥
किंचित्क्वचित्कदाचिच्च आत्मानं न स्पृशत्यसौ ।
तूष्णीमेवं स्थितस्तूष्णीं तूष्णीं सत्यं न किंचन ॥ ४० ॥
परमात्मा गुणातीतः सर्वात्मा भूतभावनः ।
कालभेदं वस्तुभेदं देशभेदं स्वभेदकम् ॥ ४१ ॥
किंचिद्भेदं न तस्यास्ति किंचिद्वाऽपि न विद्यते ।
अहं त्वं तदिदं सोऽयं कालात्मा कालहीनकः ॥ ४२ ॥
शून्यात्मा सूक्ष्मरूपात्मा विश्वात्मा विश्वहीनकः ।
देवात्मा देवहीनात्मा मेयात्मा मेयवर्जितः ॥ ४३ ॥
सर्वत्र जडहीनात्मा सर्वेषामन्तरात्मकः ।
सर्वसंकल्पहीनात्मा चिन्मात्रोऽस्मीति सर्वदा ॥ ४४ ॥

1 सर्वमस्मीति नास्मीति-

केवलः परमात्माऽहं केवलो ज्ञानविग्रहः ।
सत्तामात्रस्वरूपात्मा नान्यत्किंचिज्जगद्भयम् ॥ ४५ ॥
जीवेश्वरेति वाक् क्वेति वेद[1]शास्त्राः क्वहं त्विति ।
इदं चैतन्यमेवेति अहं चैतन्यमित्यपि ॥ ४६ ॥
इति निश्चयशून्यो यो वैदेही मुक्त एव सः ।
चैतन्यमात्रसंसिद्धस्वात्मारामः सुखासनः ॥ ४७ ॥
अपरिच्छिन्नरूपात्मा अणुस्थूलादिवर्जितः ।
तुर्यतुर्यः परानन्दो वैदेही मुक्त एव सः ॥ ४८ ॥
नामरूपविहीनात्मा परसंवित्सुखात्मकः ।
तुरीयातीतरूपात्मा शुभाशुभविवर्जितः ॥ ४९ ॥
योगात्मा योगयुक्तात्मा बन्धमुक्तिविवर्जितः ।
गुणागुणविहीनात्मा देशकालादिवर्जितः ॥ ५० ॥
साक्ष्यसाक्षित्वहीनात्मा किंचित्किंचिन्न किंचन ।
यस्य प्रपञ्चमानं न ब्रह्माकारमपीह न ॥ ५१ ॥
स्वस्वरूपे स्वयंज्योतिः स्वस्वरूपे स्वयंरतिः ।
वाचामगोचरानन्दो वाङ्मनोऽगोचरः स्वयम् ॥ ५२ ॥
अतीतातीतभावो यो वैदेही मुक्त एव सः ।
चित्तवृत्तेरतीतो यश्चित्तवृत्त्यवभासकः ॥ ५३ ॥
सर्ववृत्तिविहीनात्मा वैदेही मुक्त एव सः ।
तस्मिन्काले [2]विदेहीति देहस्मरणवर्जितः ॥ ५४ ॥

[1] वेदशास्त्राण्यहं—अ. [2] विदेहोति—अ १, अ २, क, उ १. विदेहोस्ति

ईषन्मात्रं स्मृतं चेद्यस्तदा सर्वसमन्वितः ।
परैरदृष्टबाह्यात्मा परमानन्दचिद्घनः ॥ ५५ ॥
परैरदृष्टबाह्यात्मा सर्ववेदान्तगोचरः ।
ब्रह्मामृतरसास्वादो ब्रह्मामृतरसायनः ॥ ५६ ॥
ब्रह्मामृतरसासक्तो ब्रह्मामृतरसः स्वयम् ।
ब्रह्मामृतरसे मग्नो ब्रह्मानन्दशिवार्चनः ॥ ५७ ॥
[1]ब्रह्मामृतरसे तृप्तो ब्रह्मानन्दानुभावकः ।
ब्रह्मानन्दशिवानन्दो ब्रह्मानन्दरस[2]प्रभः ॥ ५८ ॥
ब्रह्मानन्दपरं ज्योतिर्ब्रह्मानन्दनिरन्तरः ।
ब्रह्मानन्दरसान्नादो ब्रह्मानन्दकुटुम्बकः ॥ ५९ ॥
ब्रह्मानन्दरसारूढो ब्रह्मानन्दैकचिद्घनः ।
ब्रह्मानन्दरसोद्बाहो ब्रह्मानन्दरसंभरः ॥ ६० ॥
ब्रह्मानन्दजनैर्युक्तो ब्रह्मानन्दात्मनि स्थितः ।
आत्मरूपमिदं सर्वमात्मनोऽन्यन्न किंचन ॥ ६१ ॥
सर्वमात्माऽहमात्माऽस्मि परमात्मा परात्मकः ।
नित्यानन्दस्वरूपात्मा वैदेही मुक्त एव सः ॥ ६२ ॥
पूर्णरूपो महानात्मा प्रीतात्मा शाश्वतात्मकः ।
सर्वान्तर्यामिरूपात्मा निर्मलात्मा निरात्मकः ॥ ६३ ॥
निर्विकारस्वरूपात्मा शुद्धात्मा शान्तरूपकः ।
शान्ताशान्तस्वरूपात्मा नैकात्मत्वविवर्जितः ॥ ६४ ॥

1 ब्रह्मानन्द—उ, उ १.  2 प्रदः—अ, अ १.

जीवात्मपरमात्मेति चिन्तासर्वस्ववर्जितः ।
मुक्तामुक्तस्वरूपात्मा मुक्तामुक्तविवर्जितः ॥ ६५ ॥
बन्धमोक्षस्वरूपात्मा बन्धमोक्षविवर्जितः ।
द्वैताद्वैतस्वरूपात्मा द्वैताद्वैतविवर्जितः ॥ ६६ ॥
सर्वासर्वस्वरूपात्मा सर्वासर्वविवर्जितः ।
[1]मोदप्रमोदरूपात्मा [2]मोदादिविनिवर्जितः ॥ ६७ ॥
सर्वसंकल्पहीनात्मा वैदेही मुक्त एव सः ।
निष्कलात्मा निर्मलात्मा बुद्धात्मा पुरुषात्मकः ॥ ६८ ॥
आनन्दादिविहीनात्मा अमृतात्मामृतात्मकः ।
कालत्रयस्वरूपात्मा कालत्रयविवर्जितः ॥ ६९ ॥
अखिलात्मा ह्यमेयात्मा मानात्मा मानवर्जितः ।
नित्यप्रत्यक्षरूपात्मा नित्यप्रत्यक्ष[3]निर्णितः ॥ ७० ॥
अन्यहीनस्वभावात्मा अन्यहीनस्वयंप्रभः ।
विद्याऽविद्यादिमेयात्मा विद्याऽविद्यादिवर्जितः ॥ ७१ ॥
नित्यानित्यविहीनात्मा इहामुत्रविवर्जितः ।
शमादिषट्कशून्यात्मा मुमुक्षुत्वादिवर्जितः ॥ ७२ ॥
स्थूलदेहविहीनात्मा सूक्ष्मदेहविवर्जितः ।
कारणादिविहीनात्मा [4]तुरीयादिविवर्जितः ॥ ७३ ॥

[1] मोदः—अ १, अ २, उ.
[2] मोदामोदवि—क.
[3] निर्णीतः—उ १.
[4] तुर्यातुर्यादिव—उ १.

अन्नकोशविहीनात्मा प्राणकोशविवर्जितः ।
मनःकोशविहीनात्मा विज्ञानादिविवर्जितः ॥ ७४ ॥
आनन्दकोशहीनात्मा पञ्चकोशविवर्जितः ।
निर्विकल्पस्वरूपात्मा सविकल्पविवर्जितः ॥ ७५ ॥
दृश्यानुविद्धहीनात्मा शब्दविद्धविवर्जितः ।
सदा समाधिशून्यात्मा आदिमध्यान्तवर्जितः ॥ ७६ ॥
प्रज्ञानवाक्यहीनात्मा अहंब्रह्मास्मिवर्जितः ।
तत्त्वमस्यादिहीनात्मा अयमात्मेत्यभावकः ॥ ७७ ॥
ओंकारवाच्यहीनात्मा सर्ववाच्यविवर्जितः ।
अवस्थात्रयहीनात्मा अक्षरात्मा चिदात्मकः ॥ ७८ ॥
आत्मज्ञेयादिहीनात्मा यत्किंचिदिदमात्मकः ।
भानाभानविहीनात्मा वैदेही मुक्त एव सः ॥ ७९ ॥

स्वातिरिक्ताविद्यापदतत्कार्यजातकलनापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति तन्मात्रावस्थानं विदेहमुक्तलक्षणम् । तदिह प्रपञ्च्यते—**ब्रह्मभूत** इत्यादिना । **ब्रह्मभूतः** ब्रह्ममात्रतया अवस्थितत्वात् । **प्रशान्तात्मा** प्रशान्तदेहत्रयाभिमतित्वात् । **ब्रह्मानन्दमयः** आनन्दस्वरूपः निष्प्रतियोगिकभूमानन्दमात्र इत्यर्थः । **स्वच्छरूपः** पूर्णबोधस्वरूपत्वात् । **महामौनी** स्वमात्रतया तूष्णीमवस्थितत्वात् । देहत्रयोपलक्षितस्वाविद्यापदतत्कार्यजाते आत्मात्मीयाभिमतिमूलभूता विगताश्च ते देहाश्च विदेहाः, विदेहा एव वैदेहाः, ते अस्य सन्तीति **वैदेही** । तद्रूपेण व्यपदिष्टस्य बद्धत्वं स्यादित्यत आह—**मुक्त** इति । स्वातिरिक्तं यत्र मुक्तं अपह्नवतां गतं सोऽयं वैदेही मुक्त एवेत्यत्र—

यस्मिन् व्यष्टिसमष्ट्याख्यस्थूलदेहादिवासना ।
विरूपविलयं याति स विदेहो महामुनिः ॥ ६
सर्वापह्नवसंसिद्धब्रह्ममात्रं स एव हि ।
अकल्पविद्वरिष्ठोऽयमिति सर्वत्र गीयते ॥

इति स्मृतिः मानम् । एवमेव विदेहमुक्तिश्रुतयो बोद्धव्याः ॥ ३३ ॥ किंच—**सर्वात्मेति । स्वात्ममात्रकः** निष्प्रतियोगिकैकरूपत्वात् ॥ ३४ ॥ **लक्ष्यात्मा** स्वावशेषतया लक्षितत्वात । **ललितात्मा** केवलनिर्विशेषत्वात् । **तूष्णीमात्मस्वभाववान्** महामौनफलरूपत्वात् ॥ ३५ ॥ **न चिन्त्यते** तथाविधचिन्ताया अपि विद्यावृत्तित्वेन अपह्नोतव्यत्वात ॥ ३६ ॥ स्वातिरिक्तमस्तीति, चशब्दात् नास्तीति, **निश्चयं च** इति ॥ ३७–३९ ॥ यत्र स्वाज्ञजातं संसरति तत्र ज्ञानी विज्ञानी वा सङ्गोदासीनतया प्रत्यगभिन्नब्रह्मगोचराखण्डाकारवृत्तिपरवशो भूत्वा एवं तूष्णीमास्ते । यद्येवं अखण्डाकारवृत्तिमपि असहमानो योगी सम्यज्ज्ञानी निर्विकल्पकसमाधिपरवशो भूत्वा क्वचित्कालं तूष्णीं स्थितो भवति । **तूष्णीं सत्यं न किञ्चन** इत्यत्र—"सरूपविलयसिद्धनिर्विकल्पसमाधितः कादाचित्कव्युत्थानमप्यसहमानः तत्त्वज्ञानी सुषुम्नानाडयन्तर्गतकैवल्यनाडिकोज्ज्वलचिदाकाशे स्वान्तर्बहिर्भावित-स्वाविद्याद्वयतत्कार्यविकल्पजातापह्नवसिद्धनिष्प्रतियोगिकनिर्विकल्पब्रह्ममात्रतया तूष्णींस्वभावेनावशिष्यते इति यत् तदेव सत्यं सन्मात्रावस्थानलक्षणविदेहकैवल्यं तत्र न किञ्चन स्वातिरिक्तमस्ति नास्तीति विभ्रमोऽस्ति ब्रह्मव्यतिरिक्तं न किञ्चिदस्ति मद्व्यतिरिक्तमणुमात्रं न विद्यते सन्मात्रमसदन्यत्" इत्यादि श्रुतेः ॥ ४०–४१ ॥ भेद इति वक्तव्ये **भेदमिति** विभक्तिव्यत्ययः ॥ ४२–४५ ॥ जीवेश्वराविति वक्तव्ये **जीवेश्वरेति** सम्बुद्धिः, वेदशास्त्राणीति वक्तव्ये **वेदशास्त्राः** इति लिङ्गव्यत्ययः ॥ ४६–४७ ॥ **तुर्यतुर्यः** अविकल्पाविकल्परूपत्वात्

॥ ४८–४९ ॥ **गुणागुणविहीनात्मा** त्रिगुणवत्तत्सापेक्षनिर्गुणस्यापि सविशेषत्वात् । मिथः सापेक्षसगुणनिर्गुणताविरळनिष्प्रतियोगिकनिर्गुणात्माऽयमित्यर्थः ॥ ५० ॥ साक्ष्यसाक्षिनिरूपितसविशेषजातं **किञ्चित् किञ्चिदपि न किञ्चन** ॥ ५१–६० ॥ विदेहमुक्तेः पुरा यद्यदन्नादिकं आस्वादितं यद्यदुद्वाहादिकुटुम्बभरणशिवपूजादि कृतं तत्तत सर्वं इदानीं ब्रह्मानन्द एव भवति, विदेहमुक्तस्य स्वातिरिक्तकलनातत्प्रवृत्तिनिवृत्तिव्यापृत्यपह्नवसिद्धत्वात् । विदेहमुक्तातिरेकेण न किञ्चिदस्तीत्याह—**आत्मरूपमिति** ॥ ६१-६२ ॥ **निरात्मकः** ईश्वरसाक्षिचिन्मात्रत्वात् ॥ ६३–६६ ॥ **सर्वासर्वविवर्जितः** सापेक्षबन्धमोक्षद्वैताद्वैतादेः सविशेषत्वात् निष्प्रतियोगिकाद्वैतात्माऽयमित्यर्थः ॥ ६७–६९ ॥ **नित्यप्रत्यक्षनिर्णितः** स्वाज्ञादिभिः स्वस्वदृष्ट्यनुरोधेन निर्णीत इत्यर्थः ॥ ७०–७३ ॥ चतुर्महावाक्यवाच्यलक्ष्यता स्यादित्यत आह—**प्रज्ञानेति** ॥ ७७–८१ ॥

स्वात्मनिष्ठाविधिः

आत्मानमेव वीक्षस्व आत्मानं बोधय स्वकम् ।
स्वमात्मानं स्वयं भुङ्क्ष्व स्वस्थो भव षडानन ॥ ८० ॥
स्वमात्मनि स्वयं तृप्तः स्वमात्मानं स्वयं चर ।
आत्मानमेव मोदस्व वैदेही मुक्तिको भव ॥ ८१ ॥

इत्युपनिषत् ॥

इत्युपनिषच्छब्दः कुमारशिवाख्यायिकासमाप्त्यर्थः ॥ ८२ ॥

इति चतुर्थोऽध्यायः

# पञ्चमोऽध्यायः

## स्वात्मयाथात्म्यम्

निदाघो नाम वै मुनिः पप्रच्छ ऋभुं भगवन्तमात्मानात्मविवेकमनुब्रूहीति । स होवाच भगवान् ऋभुः ।

सर्ववाचोऽवधिर्ब्रह्म सर्वचिन्तावधिर्गुरुः ।
सर्वकारणकार्यात्मा कार्यकारणवर्जितः ॥ १ ॥
सर्वसंकल्परहितः [1]सर्वनादमयः शिवः ।
सर्ववर्जितचिन्मात्रः सर्वानन्दमयः परः ॥ २ ॥
सर्वतेजःप्रकाशात्मा नादानन्दमयात्मकः ।
सर्वानुभवनिर्मुक्तः सर्वध्यानविवर्जितः ॥ ३ ॥
सर्वनादकलातीत एष आत्माऽहमव्ययः ।
आत्मानात्मविवेकादिभेदाभेदविवर्जितः ॥ ४ ॥
शान्ताशान्तादिहीनात्मा [2]नादान्तर्ज्योतिरूपकः ।
महावाक्यार्थतो दूरो ब्रह्मास्मीत्यतिदूरतः ॥ ५ ॥
तच्छब्दवर्ज्यस्त्वंशब्दहीनो वाक्यार्थवर्जितः ।
क्षराक्षरविहीनो यो [3]नादान्तर्ज्योतिरेव सः ॥ ६ ॥
अखण्डैकरसो वाऽहमानन्दोऽस्मीति वर्जितः ।
सर्वातीतस्वभावात्मा [4]नादान्तर्ज्योतिरेव सः ॥ ७ ॥

[1] सर्वानन्द—क, अ २, उ १. [2] नादान्तज्यो—अ, अ २.
[3] नादान्तज्यो—अ. [4] नादान्तज्यो—अ, अ २.

आत्मेति [1]शब्दहीनो य आत्मशब्दार्थवर्जितः ।
सच्चिदानन्दहीनो य एषैवात्मा सनातनः ॥ ८ ॥
स निर्देष्टुमशक्यो यो वेदवाक्यैरगम्यगः ।
यस्य किंचिद्बहिर्नास्ति किंचिदन्तः कियन्न च ॥ ९ ॥
यस्य लिङ्गं प्रपञ्चं वा ब्रह्मैवात्मा न संशयः ।
नास्ति यस्य शरीरं वा जीवो वा भूतभौतिकः ॥ १० ॥
नामरूपादिकं नास्ति भोज्यं वा भोगभुक् च वा ।
सद्वाऽसद्वा स्थितिर्वाऽपि यस्य नास्ति क्षराक्षरम् ॥ ११ ॥
गुणं वा विगुणं वाऽपि स म आत्मा न संशयः ।
यस्य वाच्यं वाचकं वा श्रावणं मननं च वा ॥ १२ ॥
गुरुशिष्यादिभेदं वा देवलोकाः सुरासुराः ।
यत्र धर्ममधर्मं वा शुद्धं वाऽशुद्धमण्वपि ॥ १३ ॥
यत्र कालमकालं वा निश्चयः संशयो न हि ।
यत्र मन्त्रममन्त्रं वा विद्याऽविद्ये न विद्यते ॥ १४ ॥
द्रष्टृदर्शनदृश्यं वा ईषन्मात्रं [2]कलात्मकम् ।

कुमारेण साकं ऋभुर्नाम ब्रह्ममानसपुत्रः सोऽपि शिवमुखतः अखण्डैकरसचिन्मात्रज्ञानतदनुभवतदान्तरगळिकमुख्यफलात्मकजीवन्मुक्तिविदेहमुक्त्योः इयत्तामवगम्य कृतकृत्यपदं गतः खलु । तं कदाचित् निदाघो नाम मुनिः समस्तवेदशास्त्रपुराणेतिहासादिषु आत्मानात्मानौ स्त इति श्रूयते तयोः इयत्ताजिज्ञासया पृष्टवानित्याह श्रुतिः—निदाघ इति । तत्प्रश्नमङ्गीकृत्य

[1] शब्दरूपो—क. [2] कलामृतं—अ २, क.

स होवाच । किं तत् इत्यत्र **सर्ववाच** इति । **सर्ववाचोऽवधिः** अशब्दत्वात् । **सर्वचिन्तावधिः** प्रतीचश्चिन्तादिवृत्तिग्रासत्वात् । स्वाज्ञादिदृष्ट्या **सर्वकारणकार्यात्मा** ॥ १ ॥ **सर्वनादमयः** नादतज्जवेदशास्त्रसिद्धान्तार्थत्वात् । स्वाज्ञसमर्पितसर्ववर्जितचिन्मात्रः ॥ २ ॥ स्वानुभूतिध्यानादिविषयस्य सविशेषता स्यादित्यत आह—**सर्वेति** ॥ ३–४ ॥ तत्त्वंपदवाक्यार्थ आत्मेत्यत आह—**महावाक्येति** ॥ ५ ॥ **क्षराक्षरविहीनः** क्षराक्षरकलनाविरळपरमाक्षरत्वात् ॥ ६–८ ॥ परमात्मनो व्याविद्धनानापदवाक्यार्थत्वेन महावाक्यात्मसच्चिदानन्दशब्दतद्वाच्यार्थवर्जितत्वात् **स निर्देष्टुमिति** । कर्मकाण्डगोचरवेदवाक्यैः साक्षादगम्यतां गच्छतीति **अगम्यगः** ॥ ९–१४ ॥

अनात्मनः सर्वस्य मिथ्यात्वम्

अनात्मेति प्रसङ्गो वा अनात्मेति मनोऽपि वा ॥ १५ ॥
अनात्मेति जगद्वाऽपि [1]नास्त्यनात्मेति निश्चिनु ।
सर्वसंकल्पशून्यत्वात्सर्वकार्यविवर्जनात् ॥ १६ ॥
केवलं ब्रह्ममात्रत्वात् [2]नास्त्यनात्मेति निश्चिनु ।
देहत्रयविहीनत्वात्कालत्रयविवर्जनात् ॥ १७ ॥
जीवत्रयगुणाभावात्तापत्रयविवर्जनात् ।
लोकत्रयविहीनत्वात्सर्वमात्मेति शासनात् ॥ १८ ॥
चित्ताभावाच्चिन्तनीयं देहाभावाज्जरा न च ।
पादाभावाद्गतिर्नास्ति हस्ताभावात्क्रिया न च ॥ १९ ॥
मृत्युर्नास्ति जनाभावाद्बुद्ध्यभावात्सुखादिकम् ।
धर्मो नास्ति शुचिर्नास्ति सत्यं नास्ति [3]भयं न च ॥ २० ॥

[1] नास्तिनास्तीति—क, अ, अ १, अ २.
[2] नास्तिनास्तीति—अ २.
[3] भवं—अ २.

अक्षरोच्चारणं नास्ति गुरुशिष्यादि नास्त्यपि ।
एकाभावे द्वितीयं न न द्वितीये न चैकता ॥ २१ ॥
सत्यत्वमस्ति चेत्किंचिद्[1]सत्त्वं न च संभवेत् ।
असत्यत्वं यदि भवेत्सत्यत्वं न [2]घटिष्यति ॥ २२ ॥
शुभं यद्यशुभं विद्धि अशुभाच्छुभमिष्यते ।
भयं यद्यभयं विद्धि ह्यभयाद्भयमापतेत् ॥ २३ ॥
[3]बन्धत्वमस्ति चेन्मोक्षो बन्धाभावे क्व मोक्षता ।
मरणं यदि चेज्जन्म जन्माभावे मृतिर्न च ॥ २४ ॥
त्वमित्यपि भवेच्चाहं त्वं नो चेदहमेव न ।
इदं यदि तदेवास्ति तदभावादिदं न च ॥ २५ ॥
अस्तीति चेन्नास्ति तदा नास्ति चेदस्ति किंचन ।
कार्यं चेत्कारणं किंचित्कार्याभावे न कारणम् ॥ २६ ॥
द्वैतं यदि तदाऽद्वैतं द्वैताभावेऽद्वयं न च ।
दृश्यं यदि दृगप्यस्ति दृश्याभावे दृगेव न ॥ २७ ॥
अन्तर्यदि बहिः सत्यमन्ताभावे बहिर्न च ।
पूर्णत्वमस्ति चेत्किंचिदपूर्णत्वं प्रसज्यते ॥ २८ ॥
तस्मादेतत्क्वचिन्नास्ति त्वं चाहं वा इमे इदम् ।
नास्ति दृष्टान्तिकं सत्ये नास्ति दार्ष्टान्तिकं ह्यजे ॥ २९ ॥

[1] सत्यं—अ, अ १, अ २.   [2] वदि—अ.
[3] इदं श्लोकार्धं (उ) (उ १) कोशयोर्नास्ति.

परं ब्रह्माहमस्मीति स्मरणस्य मनो न हि ।
ब्रह्ममात्रं जगदिदं ब्रह्ममात्रं त्वमप्यहम् ॥ ३० ॥
चिन्मात्रं केवलं चाहं नास्त्यनात्मेति निश्चिनु ।
इदं प्रपञ्चं नास्त्येव नोत्पन्नं नो स्थितं क्वचित् ॥ ३१ ॥
चित्तं प्रपञ्चमित्याहुर्नास्ति नास्त्येव सर्वदा ।
न प्रपञ्चं न चित्तादि नाहंकारो न जीवकः ॥ ३२ ॥
मायाकार्यादिकं नास्ति माया नास्ति भयं न हि ।
कर्ता नास्ति क्रिया नास्ति श्रवणं मननं न हि ॥ ३३ ॥
समाधिद्वितयं नास्ति मातृमानादि नास्ति हि ।
अज्ञानं चापि नास्त्येव ह्यविवेकं कदाचन ॥ ३४ ॥
अनुबन्धचतुष्कं न संबन्धत्रयमेव न ।
न गङ्गा न गया सेतुर्न भूतं नान्यदस्ति हि ॥ ३५ ॥
न भूमिर्न जलं नाग्निर्न वायुर्न च खं क्वचित् ।
न देवा न च दिक्पाला न वेदा न गुरुः क्वचित् ॥ ३६ ॥
न दूरं नान्तिकं नाळं न मध्यं न क्वचित्स्थितम् ।
नाद्वैतं द्वैतसत्यं वा ह्यसत्यं वा इदं न च ॥ ३७ ॥
बन्धमोक्षादिकं नास्ति सद्वाऽसद्वा सुखादि वा ।
जातिर्नास्ति गतिर्नास्ति वर्णो नास्ति न लौकिकम् ॥ ३८ ॥
सर्वं ब्रह्मेति नास्त्येव [1]ब्रह्मेत्यपि च नास्ति हि ।
चिदित्येवेति नास्त्येव चिदहंभाषणं न हि ॥ ३९ ॥

[1] ब्रह्म इत्येव—क, अ, अ १, अ २. ब्रह्मेत्येव च—उ १.

अहं ब्रह्मास्मि नास्त्येव नित्यशुद्धोऽस्मि न क्वचित् ।
वाचा यदुच्यते किंचिन्मनसा मनुते क्वचित् ॥ ४० ॥
बुद्धया निश्चिनुते नास्ति चित्तेन ज्ञायते न हि ।
योगियोगादिकं नास्ति सदा सर्वं सदा न च ॥ ४१ ॥
अहोरात्रादिकं नास्ति स्नानध्यानादिकं न हि ।
भ्रान्तिरभ्रान्ति[1]नास्त्येव नास्त्यनात्मेति निश्चिनु ॥ ४२ ॥
वेदं शास्त्रं पुराणं च कार्यं कारणमीश्वरः ।
लोको भूतं जनस्त्वैक्यं सर्वं मिथ्या न संशयः ॥ ४३ ॥
बन्धो मोक्षः सुखं दुःखं ध्यानं चित्तं सुरासुराः ।
गौणं मुख्यं परं चान्यत्सर्वं मिथ्या न संशयः ॥ ४४ ॥
वाचा वदति यत्किंचित्संकल्पैः कल्प्यते च यत् ।
मनसा चिन्त्यते यद्यत्सर्वं मिथ्या न संशयः ॥ ४५ ॥
बुद्धया निश्चीयते [2]यद्यच्चित्ते निश्चीयते क्वचित् ।
शास्त्रैः प्रपञ्च्यते यद्यन्नेत्रेणै[3]व निरीक्ष्यते ॥ ४६ ॥
श्रोत्राभ्यां श्रूयते यद्यदन्यत्सद्भावमेव च ।
नेत्रं श्रोत्रं गात्रमेव मिथ्येति च सुनिश्चितम् ॥ ४७ ॥
[4]इदमित्येव निर्दिष्टमयमित्येव कल्प्यते ।
त्वमहं तदिदं सोऽहमन्यत्सद्भावमेव च ॥ ४८ ॥

[1] र्नास्त्येव—उ.
[2] किंचि—क, अ १.
[3] वं—उ १.
[4] इदं मिथ्येव—अ.

यद्यत्संभाव्यते लोके सर्वसंकल्पसंभ्रमः ।
सर्वाध्यासं सर्वगोप्यं सर्वभोगप्रभेदकम् ॥ ४९ ॥
सर्वदोषप्रभेदाश्च नास्त्यनात्मेति निश्चिनु ।
मदीयं च त्वदीयं च ममेति च तवेति च ॥ ५० ॥
मह्यं तुभ्यं मयेत्यादि तत्सर्वं वितथं भवेत् ।
रक्षको विष्णुरित्यादि ब्रह्मा सृष्टेस्तु कारणम् ॥ ५१ ॥
संहारे रुद्र इत्येवं सर्वं मिथ्येति निश्चिनु ।
स्नानं जपस्तपो होमः स्वाध्यायो देवपूजनम् ॥ ५२ ॥
मन्त्रं तन्त्रं च सत्सङ्गो गुणदोषविजृम्भणम् ।
अन्तःकरणसद्भाव अविद्यायाश्च संभवः ॥ ५३ ॥
अनेककोटिब्रह्माण्डं सर्वं मिथ्येति निश्चिनु ।
सर्वदेशिकवाक्योक्तिर्येन केनापि निश्चितम् ॥ ५४ ॥
दृश्यते [1]जगति यद्यद्यज्जगति वीक्ष्यते ।
वर्तते [1]जगति यद्यत्सर्वं मिथ्येति निश्चिनु ॥ ५५ ॥
येन केनाक्षरेणोक्तं येन केन विनिर्णितम् ।
येन केनापि गदितं येन केनापि मोदितम् ॥ ५६ ॥
येन केनापि यद्दत्तं येन केनापि यत्कृतम् ।
यत्र यत्र शुभं कर्म यत्र यत्र च दुष्कृतम् ॥ ५७ ॥
यद्यत्करोषि सत्येन सर्वं मिथ्येति निश्चिनु[2] ।

[1] जगती—अ, अ १.

[2] अत्र प्रथमखण्डान्तः—॥ १ ॥—चिह्नितोऽस्ति—अ १.

निदाघेन आत्मानात्मयाथात्म्यमनुब्रूहीति यत पृष्टं तत्र स्वातिरिक्ताविद्यापदतत्कार्यजातापह्नवसिद्धोऽयमात्मेत्यात्मयाथात्म्यमभिहितम् । अथानात्मयाथात्म्यमुच्यते—**अनात्मेति** । अनात्मा अस्ति नास्तीति वार्ताऽपि न विद्यते । अविद्यारूपेण अविद्याऽभावेऽपि तत्कार्यमनोरूपेण जगद्रूपेण वा अविद्या स्यादित्यत आह—**अनात्मेति** ॥ १९ ॥ मनःकार्य**जगद्वाऽपि** **न विद्यते** । यस्मादेवं तस्मात कार्यकारणात्मना येन केनापि वा हे निदाघ **नास्त्यनात्मेति निश्चिनु** निश्चयवान् भव, "नाविद्याऽस्तीह नो माया" इति, "अविद्यमानैवाविद्यावस्तुतत्त्वविचारिणाम्" इति,

नात्मभावेन नानेदं न स्वेनापि कथं चन ।
न पृथङ्‍ नापृथक्किञ्चिदिति तत्त्वविदो विदुः ॥

इति श्रुतिस्मृतिगौडपादाचार्योक्तेः । जगन्मनोऽनात्मासम्भवे हेतुत्रयमाचष्टे—**सर्वेति** ॥ **सर्वसङ्कल्पशून्यत्वात्** सङ्कल्पादिवृत्तिसहस्रजुष्टमानसाभावात् । **सर्वकार्यविवर्जनात्** मनःकार्यजगदभावात ॥ १६ ॥ ब्रह्ममात्रस्य निष्प्रतियोगिकत्वेन मनस्तत्कार्यहेत्वनात्मापह्नवसिद्धत्वात **नास्त्यनात्मेति निश्चिनु** । इतश्च अनात्मासम्भवे हेतूनुपन्यस्यति—**देहेति** ॥ १६–२० ॥ यद्यत सापेक्षं तत्तत् सविशेषं अनात्मत्वात् । यद्यत् अनात्मा न भवति तत्तत सविशेषमपि न भवति यथा निर्विशेषं ब्रह्मेति श्रुतियुक्तितः स्वविकल्पितानात्मापह्नवसिद्धात्ममात्रसिद्धये सापेक्षश्रुतिवाक्यान्युपन्यस्यति—**एकाभाव** इति ॥ २१–२७ ॥ **अन्ताभावे,** विसर्गलोपः, अन्तरभावे ॥ २८–३० ॥ कथं पुनः अनात्मा नास्तीत्युच्यते सम्भूतिस्थितिप्रलयवदनात्मप्रपञ्चदर्शनादित्यत आह—**इदमिति** ॥ अयं प्रपञ्चः इति वक्तव्ये इदं **प्रपञ्चं** इति लिङ्गव्यत्ययः ॥ ३१–३६ ॥ **नाळं** [न आळं] दूरान्तिकयोः अन्तराळमित्यर्थः । मिथः सापेक्षतया **नाद्वैतं** ॥ ३७–४१ ॥ भ्रान्तिः अतस्मिन् तद्भावः, अभ्रान्तिः तस्मिन् तद्भावः, भ्रान्त्यादिगतभावस्य तूलान्तःकरणाविद्याकार्यत्वेन कारणतुल्यत्वात् । अभ्रान्ति नास्तीत्यत्र विसर्गलोप इति केचित् । तत्पक्षे—**भ्रान्तिरभ्रान्ति**

**नास्त्येव** इति पाठः ॥ ४२ ॥ स्वाज्ञदृष्ट्या यद्यत् विकल्पितं स्वज्ञस्तु तत्तत् मिथ्येति मन्यते इत्याह वेदमित्यादिना । वेदं इति विभक्ति-व्यत्ययः ॥ ४३–५७ ॥

अहंवस्तुनः परमात्मत्वम्

त्वमेव परमात्माऽसि त्वमेव परमो गुरुः ॥ ५८ ॥
त्वमेवाकाशरूपोऽसि साक्षिहीनोऽसि सर्वदा ।
त्वमेव सर्वभावोऽसि त्वं ब्रह्मासि न संशयः ॥ ५९ ॥
कालहीनोऽसि कालोऽसि सदा ब्रह्मासि चिद्घनः ।
सर्वतः स्वस्वरूपोऽसि चैतन्यघनवानसि ॥ ६० ॥
सत्योऽसि सिद्धोऽसि सनातनोऽसि मुक्तोऽसि मोक्षोऽसि मुदामृतोऽसि ।
देवोऽसि शान्तोऽसि निरामयोऽसि ब्रह्मासि पूर्णोऽसि परात्परोऽसि ॥
समोऽसि सच्चासि सनातनोऽसि सत्यादिवाक्यैः प्रतिबोधितोऽसि ।
सर्वाङ्गहीनोऽसि सदा स्थितोऽसि ब्रह्मेन्द्ररुद्रादिविभावितोऽसि ॥
सर्वप्रपञ्चभ्रमवर्जितोऽसि सर्वेषु भूतेषु च [1]भासितोऽसि ।
सर्वत्र संकल्पविवर्जितोऽसि सर्वागमान्तार्थविभावितोऽसि ॥६३॥
सर्वत्र संतोषसुखासनोऽसि सर्वत्र गत्यादिविवर्जितोऽसि ।
सर्वत्र लक्ष्यादिविवर्जितोऽसि ध्यातोऽसि विष्ण्वादिसुरैरजस्रम् ॥

[1] भावितो—अ. भाव्यतो—उ १.

[1]चिदाकारस्वरूपोऽसि चिन्मात्रोऽसि निरङ्कुशः ।
आत्मन्येव स्थितोऽसि त्वं सर्वशून्योऽसि निर्गुणः ॥ ६५ ॥
आनन्दोऽसि परोऽसि [2]त्वमेक एवाद्वितीयकः ।
चिद्घनानन्दरूपोऽसि परिपूर्णस्वरूपकः ॥ ६६ ॥
सदसि त्वमसि ज्ञोऽसि सोऽसि जानासि वीक्षसि ।
सच्चिदानन्दरूपोऽसि वासुदेवोऽसि वै [3]प्रभुः ॥ ६७ ॥
अमृतोऽसि विभुश्चासि चञ्चलो ह्यचलो ह्यसि ।
सर्वोऽसि सर्वहीनोऽसि शान्ताशान्तविवर्जितः ॥ ६८ ॥
सत्तामात्रप्रकाशोऽसि सत्तासामान्यको ह्यसि ।
नित्यसिद्धिस्वरूपोऽसि सर्व[4]सिद्धिविवर्जितः ॥ ६९ ॥
ईषन्मात्रविशून्योऽसि अणुमात्रविवर्जितः ।
अस्तित्ववर्जितोऽसि त्वं नास्तित्वादिविवर्जितः ॥ ७० ॥
लक्ष्यलक्षणहीनोऽसि निर्विकारो निरामयः ।
सर्वनादान्तरोऽसि त्वं कला[5]काष्ठाविवर्जितः ॥ ७१ ॥
ब्रह्मविष्णवीशहीनोऽसि स्वस्वरूपं प्रपश्यसि ।
स्वस्वरूपावशेषोऽसि स्वानन्दाब्धौ निमज्जसि ॥ ७२ ॥
[6]स्वात्मराज्ये स्वमेवासि स्वयंभावविवर्जितः ।
शिष्टपूर्णस्वरूपोऽसि स्वस्मात्किंचिन्न पश्यसि ॥ ७३ ॥

[1] चिदाकाश—अ. [2] त्वमेकमे—उ. [3] विभुः—क, अ २.
[4] विद्ध—उ. [5] काष्ठ—अ १. [6] स्वात्मा—अ.

स्वस्वरूपान्न चलसि स्वस्वरूपेण जृम्भसि ।
स्वस्वरूपादनन्योऽसि ह्यहमेवासि निश्चिनु ॥ ७४ ॥[1]

वेदं शास्त्रं इत्यारभ्य एतावता ग्रन्थेन सर्वं मिथ्येत्यवधृतं; किमहं मिथ्याऽन्तःपाती इत्याशङ्कमानमालक्ष्य मिथ्याऽऽधारो निराधारो वा परमात्मा त्वमसीत्याह—त्वमेवेति । भगवदात्मना ब्रह्मविद्याऽऽचार्यत्वात् ॥ ९८–७४ ॥

अविद्यातत्कार्यप्रपञ्चस्य निष्प्रतियोगिकाभावरूपत्वम्

इदं प्रपञ्चं यत्किंचिद्यद्यज्जगति [2]विद्यते ।
दृश्यरूपं च दृग्रूपं सर्वं शशविषाणवत् ॥ ७५ ॥
भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकारश्च तेजश्च लोकं भुवनमण्डलम् ॥ ७६ ॥
नाशं जन्म च सत्यं च पुण्यपापजयादिकम् ।
रागः कामः क्रोधलोभौ ध्यानं ध्येयं गुणं परम् ॥ ७७ ॥
गुरुशिष्योपदेशादिरादिरन्तं शमं शुभम् ।
भूतं भव्यं वर्तमानं लक्ष्यं लक्षणमद्वयम् ॥ ७८ ॥
शमो विचारः संतोषो भोक्तृभोज्यादिरूपकम् ।
यमाद्यष्टाङ्गयोगं च गमनागमनात्मकम् ॥ ७९ ॥
आदिमध्यान्तरङ्गं च ग्राह्यं त्याज्यं हरिः शिवः ।
इन्द्रियाणि मनश्चैव अवस्थात्रितयं तथा ॥ ८० ॥

[1] अत्र द्वितीयखण्डान्तः—॥ २ ॥—चिह्नितोऽस्ति—क. अ १, अ २.
[2] वीक्ष्यते—उ.

चतुर्विंशतितत्त्वं च साधनानां चतुष्टयम् ।
सजातीयं विजातीयं लोका भूरादयः क्रमात् ॥ ८१ ॥
सर्ववर्णाश्रमाचारं मन्त्रतन्त्रादिसंग्रहम् ।
विद्याऽविद्यादिरूपं च सर्ववेदं जडाजडम् ॥ ८२ ॥
बन्धमोक्षविभागं च ज्ञानविज्ञानरूपकम् ।
बोधाबोधस्वरूपं वा द्वैताद्वैतादिभाषणम् ॥ ८३ ॥
सर्ववेदान्तसिद्धान्तं सर्वशास्त्रार्थनिर्णयम् ।
अनेकजीवसद्भावमेकजीवादिनिर्णयम् ॥ ८४ ॥
यद्यद्ध्यायति चित्तेन यद्यत्संकल्प्यते क्वचित् ।
बुद्ध्या निश्चीयते यद्यद्गुरुणा संश्रृणोति यत् ॥ ८५ ॥
यद्यद्वाचा व्याकरोति यद्यदाचार्यभाषणम् ।
यद्यत् [1]स्वरेन्द्रियैर्भाव्यं यद्यन्मीमांस्यते पृथक् ॥ ८६ ॥
यद्यन्न्यायेन निर्णीतं महद्भिर्वेदपारगैः ।
शिवो क्ष[ह]रति लोकान्वै विष्णुः पाति जगत्त्रयम् ॥ ८७ ॥
ब्रह्मा सृजति लोकान्वै एवमादिक्रियादिकम् ।
यद्यदस्ति पुराणेषु यद्यद्वेदेषु [2]निर्णयम् ॥ ८८ ॥
सर्वोपनिषदां भावं सर्वं शशविषाणवत् ।[3]

हे स्वामिन् भवदनुग्रहमहिम्ना शिष्टपूर्णस्वरूपोऽस्मीत्यत्र न हि संशयोऽस्ति । पुरा अनुभूतस्वान्तर्बाह्यविजृम्भितदृग्दृश्यकलनान्वितव्यष्टिसमष्टिविभागेद्धस्वाविद्या-

[1] सुरे—अ १. सर्वे—क.
[2] निर्णितम्—अ, अ १.
[3] अत्र तृतीयखण्डान्तचिह्नं ॥ ३ ॥—अ १.

पदतत्कार्यप्रपञ्चस्य का गतिः इत्याकाङ्क्षायां स्वाज्ञदृष्ट्या सत्यत्वेन [1]स्वज्ञदृष्ट्या मिथ्यात्वेन अनुभूतोऽपि परमार्थदृष्ट्या शशविषाणवत् निष्प्रतियोगिकाभावरूप एवेत्याह—इदमिति ॥ ७९ ॥ स्वातिरिक्तापह्नवः उक्तः । पुनरपह्नोतव्यविषयाभावात् उत्तरग्रन्थारम्भः किमर्थ इत्याकाङ्क्षायां, सत्यमपह्नवविषयो न विद्यते तस्य शशविषाणवत् अवस्तुत्वात् । तथाऽपि "इदं प्रपञ्चं" इत्यादि "सर्वं शशविषाणवत्" इत्यन्तश्रुतिवृत्त्यर्थतया उत्तरग्रन्थारम्भो युज्यते इत्याह—भूमिरित्यादि ॥ ७६–८३ ॥ तूलान्तःकरणाविद्याया यदनेकत्वं तदनेकजीवसद्भावप्रयोजकं; आदिशब्देन एकत्वानेकत्वहेत्वविद्याद्वयस्य व्यावहारिकादिदृष्ट्या मिथ्यात्वम् ॥ ८४–८८ ॥ परमार्थदृष्ट्या ब्रह्मातिरिक्तस्य शशविषाणवत् अवस्तुत्वं युज्यत एवेत्यर्थः ॥

सङ्कल्पादिरूपं मन एव सर्वानर्थहेतुः

देहोऽहमिति संकल्पं तदन्तःकरणं स्मृतम् ॥ ८९ ॥
देहोऽहमिति [2]संकल्पो महत्संसार उच्यते ।
देहोऽहमिति संकल्पं तद्बन्धमिति चोच्यते ॥ ९० ॥
देहोऽहमिति संकल्पं तद्दुःखमिति चोच्यते ।
देहोऽहमिति यत् ज्ञानं तदेव नरकं स्मृतम् ॥ ९१ ॥
देहोऽहमिति संकल्पं जगत्सर्वमितीर्यते ।
देहोऽहमिति संकल्पो हृदयग्रन्थिरीरितः ॥ ९२ ॥
देहोऽहमिति यज्ज्ञानं तदेवाज्ञानमुच्यते ।
देहोऽहमिति यज्ज्ञानं तदसद्भावमेव च ॥ ९३ ॥

[1] स्वाज्ञ—उ १. [2] संकल्पं—क.

देहोऽहमिति या बुद्धिः सा चाविद्येति भण्यते ।
देहोऽहमिति यज्ज्ञानं तदेव द्वैतमुच्यते ॥ ९४ ॥
देहोऽहमिति संकल्पः सत्यजीवः स एव हि ।
देहोऽहमिति यज्ज्ञानं परिच्छिन्नमितीरितम् ॥ ९५ ॥
देहोऽहमिति संकल्पो महापापमिति स्फुटम् ।
देहोऽहमिति या बुद्धिस्तृष्णा दोषामयः किल ।
यत्किंचिदपि संकल्पं तापत्रयमितीरितम् ॥ ९६ ॥
कामं क्रोधं बन्धनं सर्वदुःखं विश्वं दोषं कालनानास्वरूपम् ।
यत्किंचेदं सर्वसंकल्पजालं तत्किंचेदं मानसं सोम्य विद्धि ॥९७॥
मन एव जगत्सर्वं मन एव [1]महारिपुः ।
मन एव हि संसारो मन एव जगत्त्रयम् ॥ ९८ ॥
मन एव महद्दुःखं मन एव जरादिकम् ।
मन एव हि कालं च मन एव मलं तथा ॥ ९९ ॥
मन एव हि संकल्पो मन एव हि जीवकः ।
मन एव हि चित्तं च मनोऽहंकार एव च ॥ १०० ॥
मन एव महद्बन्धं मनोऽन्तःकरणं च तत् ।
मन एव हि भूमिश्च मन एव हि तोयकम् ॥ १०१ ॥
मन एव हि तेजश्च मन एव मरुन्महान् ।
मन एव हि चाकाशं मन एव हि शब्दकम् ॥ १०२ ॥

सदा—अ २, क.

स्पर्शं रूपं रसं गन्धं कोशाः पञ्च मनोभवाः ।
जाग्रत्स्वप्नसुषुप्त्यादि मनोमयमितीरितम् ॥ १०३॥
दिक्पाला वसवो रुद्रा आदित्याश्च मनोमयाः ।
दृश्यं जडं द्वन्द्वजातमज्ञानं मानसं स्मृतम् ॥ १०४ ॥
संकल्पमेव यत्किंचित्तत्तन्नास्तीति निश्चिनु ।
नास्ति नास्ति जगत्सर्वं गुरुशिष्यादिकं नहि ॥ १०५ ॥

इत्युपनिषत् ॥[1]

स्वाज्ञदृष्टिप्रसक्तस्यातिरिक्तानर्थनिदानं किं इत्याशङ्क्य सर्वानर्थहेतुः सङ्कल्प एवेत्याह—देह इति ॥ सङ्कल्पमित्यादि विभक्तिव्यत्ययः ॥ ८९–९६ ॥ सङ्कल्पमूलं किमित्यत्र कामं इत्यादि ॥ ९७–१०४ ॥ स्वाविद्यापदतत्कार्यजातं मन एवेत्यर्थः । इत्युपनिषच्छब्दः अध्यायपरिसमाप्त्यर्थः ॥ १०५ ॥

इति पञ्चमोऽध्यायः

## षष्ठोऽध्यायः

सर्वस्य सच्चिदानन्दत्वम्

ऋभुः—

सर्वं सच्चिन्मयं विद्धि सर्वं सच्चिन्मयं ततम् ।
सच्चिदानन्दमद्वैतं सच्चिदानन्दमव्ययम् ॥ १ ॥
सच्चिदानन्दमात्रं हि सच्चिदानन्दमन्यकम् ।
सच्चिदानन्दरूपोऽहं सच्चिदानन्दमेव खम् ॥ २ ॥
सच्चिदानन्दमेव त्वं सच्चिदानन्दकोऽस्म्यहम् ।

[1] अत्र चतुर्थखण्डान्तचिह्नं ॥ ४ ॥—क.

यद्यत् स्वाज्ञदृष्टिविकल्पितं नामरूपविकल्पजालं तत्तत् स्वज्ञदृष्ट्या सच्चिदानन्दस्वरूपम् । परमार्थदृष्ट्या ब्रह्ममात्रातिरिक्तप्रसक्तिरेव नास्ति । यदि स्वाज्ञादिदृष्ट्या अस्ति नास्तीति प्रसक्तं तदा तत् असदेव । स्वातिरिक्तासदपह्नवसिद्धं निष्प्रतियोगिकब्रह्ममात्रमवशिष्यते इत्येतत्प्रपञ्चनाय षष्ठाध्याय आरभ्यते—ऋभुरिति ॥ १–२ ॥

सर्वस्य ब्रह्मत्वम्

न मनोबुद्ध्यहंकारचित्तसंघातका अमी ॥ ३ ॥
न त्वं नाहं न चान्यं वा सर्वं ब्रह्मैव केवलम् ।
न वाक्यं न पदं वेदं नाक्षरं न जडं क्वचित् ॥ ४ ॥
न मध्यं नादि नान्तं वा न सत्यं न निबन्धनम् ।
न दुःखं न सुखं भावं न माया प्रकृतिस्तथा ॥ ५ ॥
न देहं न मुखं घ्राणं न जिह्वा न च तालुनी ।
न दन्तोष्ठौ ललाटं च निश्वासोच्छ्वास एव च ॥ ६ ॥
न स्वेदमस्थि मांसं च न रक्तं न च मूत्रकम् ।
न दूरं नान्तिकं नाङ्गं नोदरं न किरीटकम् ॥ ७ ॥
न हस्तपादचलनं न शास्त्रं न च शासनम् ।
न वेत्ता वेदनं वेद्यं न जाग्रत्स्वप्नसुप्तयः ॥ ८ ॥
तुर्यातीतं न मे किंचित्सर्वं सच्चिन्मयं ततम् ।
नाध्यात्मिकं नाधिभूतं नाधिदैवं न मायिकम् ॥ ९ ॥
न विश्वस्तैजसः प्राज्ञो विराट्सूत्रात्मकेश्वराः ।
न गमागमचेष्टा च न नष्टं न प्रयोजनम् ॥ १० ॥

त्याज्यं ग्राह्यं न दूष्यं वा [1]ह्यमेध्यामेध्यकं तथा ।
न पीनं न कृशं क्लेदं न कालं देशभाषणम् ॥ ११ ॥
न सर्वं न भयं द्वैतं न वृक्षतृणपर्वताः ।
न ध्यानं योगसंसिद्धिर्न ब्रह्मक्षत्रवैश्यकम् ॥ १२ ॥
न पक्षी न मृगो नाङ्गी न लोभो मोह एव च ।
न मदो न च मात्सर्यं कामक्रोधादयस्तथा ॥ १३ ॥
न स्त्रीशूद्रबिडालादि भक्ष्यभोज्यादिकं च यत् ।
न प्रौढहीनौ नास्तिक्यं न वार्तावसरोऽस्ति हि ॥ १४ ॥
न लौकिको न लोको वा न व्यापारो न मूढता ।
न भोक्ता भोजनं भोज्यं न [2]मातृ मानमेयकम् ॥ १५ ॥
न शत्रुमित्रपुत्रादिर्न माता न पिता स्वसा ।
न जन्म न मृतिर्वृद्धिर्न देहोऽहमिति भ्रमः ॥ १६ ॥
न शून्यं नापि चाशून्यं नान्तःकरणसंसृतिः ।
न रात्रिर्न दिवा नक्तं न ब्रह्मा न हरिः शिवः ॥ १७ ॥
न वारपक्षमासादि वत्सरं न च चञ्चलम् ।
न ब्रह्मलोको वैकुण्ठं न कैलासो न चान्यकः ॥ १८ ॥
न स्वर्गो न च देवेन्द्रो नाग्निलोको न चाग्निकः ।
न यमो यमलोको वा न लोका लोकपालकाः ॥ १९ ॥
न भूर्भुवःस्वस्त्रैलोक्यं न पातालं न भूतलम् ।
नाविद्या न च विद्या च न माया प्रकृतिर्जडा ॥ २० ॥

[1] ह्यमेध्यं मे—अ, अ १.

[2] मात्रं—उ.

न स्थिरं क्षणिकं नाशं न गतिर्न च धावनम् ।
न ध्यातव्यं न मे स्थानं न मन्त्रो न जपः क्वचित् ॥ २१ ॥
न पदार्थं न पूजार्हं नाभिषेकं न चार्चनम् ।
न पुष्पं न फलं पत्रं गन्धपुष्पादिधूपकम् ॥ २२ ॥
न स्तोत्रं न नमस्कारो न प्रदक्षिणमण्वपि ।
न प्रार्थना पृथग्भावो न हविर्नाग्निवन्दनम् ॥ २३ ॥
न होमो न च कर्माणि न दुर्वाक्यं सुभाषणम् ।
न गायत्री न वा संधिर्न [1]मनस्यं न दुःस्थितिः ॥ २४ ॥
न दुराशा न [2]दुष्टात्मा न चण्डालो न पौल्कसः ।
न दुःसहं दुरालापं न किरातो न कैतवम् ॥ २५ ॥
न पक्षपातं पक्षं वा न विभूषणतस्करौ ।
न च डम्भो डाम्भिको वा न हीनो नाधिको नरः ॥ २६ ॥
नैकं द्वयं त्रयं तुर्यं न महत्त्वं न चाल्पता ।
न पूर्णं न परिच्छिन्नं न काशी न व्रतं तपः ॥ २७ ॥
न गोत्रं न कुलं सूत्रं न विभुत्वं न शून्यता ।
न स्त्री न योषि[3]न्नो वृद्धा न कन्या न वितन्तुता ॥ २८ ॥
न सूतकं न जातं वा नान्तर्मुखसुविभ्रमः ।
न महावाक्यमैक्यं वा नाणिमादिविभूतयः ॥ २९ ॥
[4]सर्वं चैतन्यमात्रत्वात्सर्वदोषः सदा न हि ।
सर्वं सन्मात्ररूपत्वात्सच्चिदानन्दमात्रकम् ॥ ३० ॥

[1] नमस्यं—उ. [2] तुष्टात्मा—उ १. [3] न्मातृद्धं—उ १. [4] सर्वचै—उ.

ब्रह्मैव सर्वं नान्योऽस्ति तदहं तदहं तथा ।
तदेवाहं तदेवाहं ब्रह्मैवाहं सनातनम् ॥ ३१ ॥
ब्रह्मैवाहं न संसारी ब्रह्मैवाहं न मे मनः ।
ब्रह्मैवाहं न मे बुद्धिर्ब्रह्मैवाहं न चेन्द्रियम् ॥ ३२ ॥
ब्रह्मैवाहं न देहोऽहं ब्रह्मैवाहं न गोचरः ।
ब्रह्मैवाहं न जीवोऽहं ब्रह्मैवाहं न भेदभूः ॥ ३३ ॥
ब्रह्मैवाहं जडो नाहमहं ब्रह्म न मे मृतिः ।
ब्रह्मैवाहं न च प्राणो ब्रह्मैवाहं परात्परः ॥ ३४ ॥
इदं ब्रह्म परं ब्रह्म सत्यं ब्रह्म प्रभुर्हि सः ।
कालो ब्रह्म कला ब्रह्म सुखं ब्रह्म स्वयंप्रभम् ॥ ३५ ॥
एकं ब्रह्म द्वयं ब्रह्म मोहो ब्रह्म शमादिकम् ।
दोषो ब्रह्म गुणो ब्रह्म दमः शान्तं विभुः प्रभुः ॥ ३६ ॥
लोको ब्रह्म गुरुर्ब्रह्म शिष्यो ब्रह्म सदाशिवः ।
पूर्वं ब्रह्म परं ब्रह्म शुद्धं ब्रह्म शुभाशुभम् ॥ ३७ ॥
जीव एव सदा ब्रह्म सच्चिदानन्दमस्म्यहम् ।
सर्वं ब्रह्ममयं प्रोक्तं सर्वं ब्रह्ममयं जगत् ॥ ३८ ॥
स्वयं ब्रह्म न संदेहः स्वस्मादन्यन्न किंचन ।
सर्वमात्मैव शुद्धात्मा सर्वं चिन्मात्रमद्वयम् ॥ ३९ ॥
नित्यनिर्मलरूपात्मा ह्यात्मनोऽन्यन्न किंचन ।

सच्चिदानन्दब्रह्मातिरेकेण न मन इत्यादि ॥ ३–२९ ॥ "न मनोबुद्ध्यहङ्कार" इत्यारभ्य "अणिमादिविभूतयः" इत्यन्तं यद्यत्

स्वाज्ञदृष्ट्यारोपितं स्वज्ञदृष्ट्या ब्रह्मातिरिक्तं नेत्यपोदितं च तत्तत् सर्व-मित्यादि ॥ ३०-३९ ॥

ब्रह्मणः निष्प्रतियोगिकस्वमात्रत्वम्

अणुमात्रलसद्रूपमणुमात्रमिदं जगत् ॥ ४० ॥
अणुमात्रं शरीरं वा ह्यणुमात्रमसत्यकम् ।
अणुमात्रमचिन्त्यं वा चिन्त्यं वा ह्यणुमात्रकम् ॥ ४१ ॥
ब्रह्मैव सर्वं चिन्मात्रं ब्रह्ममात्रं जगत्त्रयम् ।
आनन्दं परमानन्दमन्यत्किंचिन्न किंचन ॥ ४२ ॥
चैतन्यमात्रमोंकारं ब्रह्मैव सकलं स्वयम् ।
अहमेव जगत्सर्वमहमेव परं पदम् ॥ ४३ ॥
अहमेव गुणातीत अहमेव परात्परः ।
अहमेव परं ब्रह्म अहमेव गुरोर्गुरुः ॥ ४४ ॥
अहमेवाखिलाधार अहमेव सुखात्सुखम् ।
आत्मनोऽन्यज्जगन्नास्ति आत्मनोऽन्यत्सुखं न च ॥ ४५ ॥
आत्मनोऽन्या गतिर्नास्ति सर्वमात्ममयं जगत् ।
आत्मनोऽन्यन्नहि क्वापि आत्मनोऽन्यत्तृणं न हि ॥ ४६ ॥
आत्मनोऽन्यत्तुषं नास्ति सर्वमात्ममयं जगत् ।
ब्रह्ममात्रमिदं सर्वं ब्रह्ममात्रमसन्न हि ॥ ४७ ॥
ब्रह्म[1]मात्रं श्रुतं सर्वं स्वयं ब्रह्मैव केवलम् ।
ब्रह्ममात्रं वृतं सर्वं ब्रह्ममात्रं रसं सुखम् ॥ ४८ ॥

[1] मात्रमिदं—अ, अ १.

ब्रह्ममात्रं चिदाकाशं सच्चिदानन्दमद्वयम् ।
ब्रह्मणोऽन्यतरन्नास्ति ब्रह्मणोऽन्यज्जगन्न च ॥ ४९०॥
ब्रह्मणोऽन्यदहं नास्ति ब्रह्मणोऽन्यत्फलं न हि ।
ब्रह्मणोऽन्यत्तृणं नास्ति ब्रह्मणोऽन्यत्पदं न हि ॥ ९० ॥
ब्रह्मणोऽन्यद्गुरुर्नास्ति ब्रह्मणोऽन्यदसद्वपुः ।
ब्रह्मणोऽन्यन्न चाहंता त्वत्तेदन्ते न हि क्वचित् ॥ ९१ ॥
स्वयं ब्रह्मात्मकं विद्धि स्वस्मादन्यन्न किंचन ।
यत्किंचिद्दृश्यते लोके यत्किंचिद्भा[1]ष्यते जनैः ॥ ९२ ॥
यत्किंचिद्भुज्यते क्वापि तत्सर्वमसदेव हि ।
कर्तृभेदं क्रियाभेदं गुणभेदं रसादिकम् ॥ ९३ ॥
लिङ्गभेदमिदं सर्वमसदेव सदा सुखम् ।
कालभेदं देशभेदं वस्तुभेदं जयाजयम् ॥ ९४ ॥
यद्यद्भेदं च तत्सर्वमसदेव हि केवलम् ।
असदन्तःकरणकमसदेवेन्द्रियादिकम् ॥ ९५ ॥
असत्प्राणादिकं सर्वं संघातमसदात्मकम् ।
असत्यं पञ्चकोशाख्यमसत्यं पञ्च देवताः ॥ ९६ ॥
असत्यं षड्विकारादि असत्यमरिवर्गकम् ।
असत्यं षडृतुश्चैव असत्यं षड्रसस्तथा ॥ ९७ ॥
सच्चिदानन्दमात्रोऽहमनुत्पन्नमिदं जगत् ।
आत्मैवाहं परं सत्यं [2]नान्याः संसारदृष्टयः ॥ ९८ ॥

[1] षते—अ, अ१, उ १, क. [2] नान्यासं—अ १, अ २, क.

सत्यमानन्दरूपोऽहं चिद्घनानन्दविग्रहः ।
अहमेव परानन्द अहमेव परात्परः ॥ ५९ ॥
ज्ञानाकारमिदं सर्वं ज्ञानानन्दोऽहमद्वयः ।
सर्वप्रकाशरूपोऽहं [1]सर्वाभावस्वरूपकः ॥ ६० ॥
अहमेव सदा भामीत्येवंरूपं कुतोऽप्यसत् ।
त्वमित्येवं परं ब्रह्म चिन्मयानन्दरूपवान् ॥ ६१ ॥
चिदाकारं चिदाकाशं चिदेव परमं सुखम् ।
आत्मैवाहमसन्नाहं कूटस्थोऽहं गुरुः परः ॥ ६२ ॥
सच्चिदानन्दमात्रोऽहमनुत्पन्नमिदं जगत् ।
कालं नास्ति जगन्नास्ति मायाप्रकृतिरेव न ॥ ६३ ॥
अहमेव हरिः साक्षादहमेव सदाशिवः ।
शुद्धचैतन्यभावोऽहं शुद्धसत्त्वानुभावनः ॥ ६४ ॥
अद्वयानन्दमात्रोऽहं चिद्घनैकरसोऽस्म्यहम् ।
सर्वं ब्रह्मैव सततं सर्वं ब्रह्मैव केवलम् ॥ ६५ ॥
सर्वं ब्रह्मैव सततं सर्वं ब्रह्मैव चेतनम् ।
सर्वान्तर्यामिरूपोऽहं सर्वसाक्षित्वलक्षणः ॥ ६६ ॥
परमात्मा परं ज्योतिः परं धाम परा गतिः ।
सर्ववेदान्तसारोऽहं सर्वशास्त्रसुनिश्चितः ॥ ६७ ॥
योगानन्दस्वरूपोऽहं मुख्यानन्दमहोदयः ।
सर्वज्ञानप्रकाशोऽस्मि मुख्यविज्ञानविग्रहः ॥ ६८ ॥

[1] सर्व—क.

तुर्यातुर्यप्रकाशोऽस्मि तुर्यातुर्यादिवर्जितः ।
चिदक्षरोऽहं सत्योऽहं वासुदेवोऽजरोऽमरः ॥ ६९ ॥
अहं ब्रह्म चिदाकाशं नित्यं ब्रह्म निरञ्जनम् ।
शुद्धं बुद्धं सदामुक्तमनामकमरूपकम् ॥ ७० ॥
सच्चिदानन्दरूपोऽहमनुत्पन्नमिदं जगत् ।
सत्यासत्यं जगन्नास्ति संकल्पकलनादिकम् ॥ ७१ ॥
नित्यानन्दमयं ब्रह्म केवलं सर्वदा स्वयम् ।
अनन्तमव्ययं शान्तमेकरूपमनामयम् ॥ ७२ ॥

स्वाज्ञदृष्टिविकल्पितब्रह्मातिरिक्तजगतः परिच्छिन्नतां तदधिष्ठानब्रह्मणः त्रिविधपरिच्छेदशून्यतां वस्तुतो ब्रह्मातिरिक्तसामान्यस्य अपह्नवतां ब्रह्मणो निष्प्रतियोगिकस्वमात्रतां चाह—**अणुमात्रेति** ॥ ४०–४६ ॥ **जगत्** स्वाज्ञविकल्पितासत्प्रपञ्चापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रमित्याह— **ब्रह्ममात्रमिदमिति** ॥ ४७ ॥ उक्तार्थमेव प्रपञ्चयति— **ब्रह्ममात्रं श्रुतं** इत्यादिना ॥ ४८–७१ ॥ केवलं ब्रह्म कीदृशं इत्यत आह— **अनन्तमिति** ॥ ७२ ॥

स्वातिरिक्तप्रपञ्चस्यासत्त्वम्

मत्तोऽन्यदस्ति चेन्मिथ्या यथा मरुमरीचिका ।
वन्ध्याकुमारवचने भीतिश्चेदस्ति किंचन ॥ ७३ ॥
शशशृङ्गेण नागेन्द्रो मृतश्चेज्जगदस्ति तत् ।
मृगतृष्णाजलं पीत्वा तृप्तश्चेदस्त्विदं जगत् ॥ ७४ ॥
नरशृङ्गेण नष्टश्चेत्कश्चिदस्त्विदमेव हि ।
गन्धर्वनगरे सत्ये जगद्भवति सर्वदा ॥ ७५ ॥

गगने नीलिमासत्ये जगत्सत्यं भविष्यति ।
शुक्तिकारजतं सत्यं भूषणं चेज्जगद्भवेत् ॥ ७६ ॥
रज्जुसर्पेण दष्टश्चेन्नरो [1]भवतु संसृतिः ।
जातरूपेण बाणेन ज्वालाग्नौ नाशितं जगत् ॥ ७७ ॥
विन्ध्याटव्यां पायसान्नमस्ति चेज्जगदुद्भवः ।
रम्भास्तम्भेन काष्ठेन [2]पाके सिद्धे जगद्भवेत् ॥ ७८ ॥
सद्यःकुमारिकारूपैः पाके सिद्धे जगद्भवेत् ।
चित्रस्थदीपैस्तमसो नाशश्चेदस्त्विदं जगत् ॥ ७९ ॥
मासात्पूर्वं मृतो मर्त्यो ह्यागतश्चेज्जगद्भवेत् ।
तक्रं क्षीरस्वरूपं चेत्क्वचिन्नित्यं जगद्भवेत् ॥ ८० ॥
गोस्तनादुद्भवं क्षीरं पुनरारोपणं जगत् ।
भूरजोऽब्धौ समुत्पन्ने [3]जगद्भवतु सर्वदा ॥ ८१ ॥
कूर्मरोम्णा गजे बद्धे जगदस्तु तदोत्कटे ।
नालस्थतन्तुना मेरुश्चालितश्चेज्जगद्भवेत् ॥ ८२ ॥
तरङ्गमालया सिन्धुर्बद्धश्चेदस्त्विदं जगत् ।
अग्नेरधश्चेज्ज्वलनं जगद्भवतु सर्वदा ॥ ८३ ॥
ज्वालावह्निः शीतलश्चेदस्तिरूपमिदं जगत् ।
ज्वालाग्निमण्डले पद्मवृद्धिश्चेज्जगदस्त्विदम् ॥ ८४ ॥

[1] भवति—अ १, अ २, क. [2] पाकसिद्धिर्जे—अ, अ १, अ २, क.
[3] जगद्भवति—अ २, क.

महच्छैलेन्द्रनीलं वा संभवेच्चेदिदं जगत् ।
मेरुरागत्य पद्माक्षे स्थितश्चेदस्त्विदं जगत् ॥ ८५ ॥

निगिरिश्चेद्भृङ्गसूनुर्मेरुश्चलवदस्त्विदम् ।
मशकेन हते सिंहे जगत्सत्यं तदाऽस्तु ते ॥ ८६ ॥

अणुकोटर[1]विस्तीर्णे त्रैलोक्यं चेज्जगद्भवेत् ।
तृणानलश्च नित्यश्चेत्क्षणिकं यज्जगद्भवेत् ॥ ८७ ॥

स्वप्नदृष्टं च यद्वस्तु जागरे चेज्जगद्भवः ।
नदीवेगो निश्चलश्चेत्केनापीदं भवेज्जगत् ॥ ८८ ॥

क्षुधितस्याग्नि[2]भोज्यश्चेन्निमिषं कल्पितं भवेत् ।
जात्यन्धै रत्नविषयः सुज्ञातश्चेज्जगत्सदा ॥ ८९ ॥

नपुंसककुमारस्य स्त्रीसुखं चेद्भवेज्जगत् ।
निर्मितः शशशृङ्गेण [3]रथश्चेज्जगदस्ति तत् ॥ ९० ॥

सद्योजाता तु या कन्या भोगयोग्या भवेज्जगत् ।
वन्ध्या [4]गर्भाप्ततत्सौख्यं ज्ञाता चेदस्त्विदं जगत् ॥ ९१ ॥

काको वा हंसवद्गच्छेज्जगद्भवतु निश्चलम् ।
महाखरो वा सिंहेन युध्यते चेज्जगत्स्थितिः ॥ ९२ ॥

महाखरो गजगतिं गतश्चेज्जगदस्तु तत् ।
संपूर्णचन्द्रसूर्यश्चेज्जगद्भातु स्वयं जडम् ॥ ९३ ॥

[1] विस्तीर्णं—अ. [2] भोज्य—अ, अ १. [3] जगच्चे—अ, अ २.
[4] गर्भास्तितस्सौ—अ. गर्भाप्तवत्सौ—अ १.

चन्द्रसूर्यादिकौ त्यक्त्वा राहुश्चेद्दृश्यतं जगत् ।
भृष्टबीजसमुत्पन्नवृद्धिश्चेज्जगदस्तु सत् ॥ ९४ ॥
[1]दरिद्रो धनिकानां च [2]सुखं भुङ्क्ते तदा जगत् ।
शुनां वीर्येण सिंहस्तु जितो यदि जगत्तदा ॥ ९५ ॥
ज्ञानिनो हृदयं मूढैर्ज्ञातं [3]चेत्कल्पनं तदा ।
श्वानेन सागरे पीते निःशेषेण मनो भवेत् ॥ ९६ ॥
शुद्धाकाशो मनुष्येषु पतितश्चेत्तदा जगत् ।
भूमौ वा पतितं व्योम व्योमपुष्पं [4]सुगन्धकम् ॥ ९७ ॥
शुद्धाकाशे वने जातं चलितं तु तदा जगत् ।
केवले दर्पणे नास्ति प्रतिबिम्बं तदा जगत् ॥ ९८ ॥
अजकुक्षौ जगन्नास्ति ह्यात्मकुक्षौ जगन्न हि ।
सर्वथा भेदकलनं द्वैताद्वैतं न विद्यते ॥ ९९ ॥
मायाकार्यमिदं भेदमस्ति चेद्ब्रह्मभावनम् ।
देहोऽहमिति दुःखं चेद्ब्रह्माहमिति निश्चयः ॥ १०० ॥
हृदयग्रन्थिरस्तित्वे छेदनं ब्रह्मचक्रकम् ।
संशये समनुप्राप्ते ब्रह्मनिश्चय[5]माप्नुयात् ॥ १०१ ॥
अनात्मरूपचोरश्चेदात्मरत्नस्य रक्षणम् ।
नित्यानन्दमयं ब्रह्म केवलं सर्वदा स्वयम् ॥ १०२ ॥

परिच्छिन्नत्तिव्ययकलनाऽनेकत्वप्रसक्तौ अनन्तमित्याद्यनेकविशेषणविशिष्टं न वस्तुतः तदस्ति । यदि मदतिरेकेण अनन्तमित्यादिविशेषणमस्तीति भ्रान्तिः

[1] दरिद्रैर्ध—अ. [2] सुखे ज्ञाते—उ. [3] चेदस्त्विदं जगत्—अ.
[4] सग—क. सुगन्धिकं—अ १. [5] माश्रयेत्—अ, अ १, क.

तदा तदसदेवेत्याह---**मत्त** इति । कथं पुनः स्वातिरिक्तप्रपञ्चस्य अत्यन्तासत्त्वं, घटोऽस्ति पटोऽस्ति इत्याद्यनेकधा प्रतीयमानत्वात्, इत्याशङ्क्य। अस्त्यस्तीति प्रतीतेः सन्मात्रत्वेन निष्प्रतियोगिकब्रह्ममात्रत्वात् तत्र स्वातिरिक्तप्रपञ्चासम्भवे "वन्ध्याकुमारवचने भीतिश्चेदस्त्विदं जगत्" इत्याद्यनेकदृष्टान्तेन विश्वसत्त्वं विडम्बयन् विश्वासत्त्वं प्रकटयति-- **वन्ध्ये**त्यादिना ॥ ७३–७८ ॥ **अस्त्विदं जगत्** परमार्थदृष्ट्येत्यर्थः ॥ ७९–८५ ॥ पर्यन्तपर्वता **निगिरिः** ॥ ८६–८८ ॥ **अग्निभोज्यः**, विसर्गलोपः ॥ ८९–९० ॥ सद्यःकुमारिका, **सद्योजाता तु या कन्या**, इत्यत्र पुनरुक्तिः स्यादिति चेत् न; शब्दभेदवत् **अर्थभेदसम्भवात्** । तत् कथमित्यत्र "सद्यःकुमारिकारूपैः" वैद्यशास्त्रख्यातौषधिविशेषैः इन्धनैः "पाके सिद्धे" इत्युक्त्या पाकसाधनेन्धनविशेषो द्योत्यते, कुमारिकाया जलपूरितत्वेन नित्यक्लिन्नत्वात्, तस्या गाढाग्निमध्यपातितत्वेऽप्यग्निशान्तिकरत्वात् न पुनर्वचः, तया पाकासम्भवात् ॥ ९१–९८ ॥ यदेवमपह्नोतव्यं व्यष्ट्यादिकलनाविशिष्टं जगत् तत्र समष्टिजगदजकुक्षौ व्यष्टिजगज्जीवकुक्षौ वर्तते, नह्यभावपदमर्हतीत्याशङ्क्य कालत्रयेऽपि न विद्यत इत्याह---**अजे**ति । स्वाज्ञस्वज्ञदृष्टिविभातद्वैताद्वैतवृत्तेरपि परमार्थदृष्ट्याऽसम्भवात् स्वमात्रे स्वातिरिक्तकलना नास्त्येवेत्यर्थः ॥ ९९ ॥ तथाऽपि ब्रह्मानुसन्धानमजस्रं कर्तव्यमित्यत आह--- **माये**ति । भेदः स्वाज्ञदृष्ट्या **अस्ति चेत्** स्वज्ञदृष्ट्या इदं जगत् न भवति किं तु ब्रह्मैवेदमिति **ब्रह्मभावनं** कर्तव्यं, न हि परमार्थदृष्टेः तदुभयमस्तीत्यर्थः । तथा **देहोऽहमिति** ॥ १००–१०१ ॥ वस्तुतः **नित्यानन्दमयं ब्रह्म केवलं** निष्प्रतियोगिकब्रह्ममात्रमित्यर्थः ॥ १०२ ॥

अहं ब्रह्मेति भावनाविधिः

**एवमादिसुदृष्टान्तैः साधितं ब्रह्ममात्रकम् ।**
**ब्रह्मैव सर्व[1]भवनं भुवनं नाम संत्यज ॥ १०३ ॥**

[1] भुवनं---अ

अहं ब्रह्मेति निश्चित्य अहंभावं परित्यज ।
सर्वमेव लयं याति सुप्तहस्तस्थपुष्पवत् ॥ १०४ ॥
न देहो न च कर्माणि सर्वं ब्रह्मैव केवलम् ।
न भूतं न च कार्यं च न चावस्थाचतुष्टयम् ॥ १०५ ॥
लक्षणात्रयविज्ञानं सर्वं ब्रह्मैव केवलम् ।
सर्वव्यापारमुत्सृज्य ह्यहं ब्रह्मेति भावय ॥ १०६ ॥
अहं ब्रह्म न संदेहो ह्यहं ब्रह्म चिदात्मकम् ।
सच्चिदानन्दमात्रोऽहमिति निश्चित्य तत्त्यज ॥ १०७ ॥

वन्ध्याकुमारवचन इति एवमादि इति । अस्यामुपनिषदि—

चिन्मात्रमेव चिन्मात्रमखण्डैकरसं रसम् ।
सर्ववर्जितचिन्मात्रं ब्रह्ममात्रमसन्न हि ॥

इत्यादिश्रुत्या योऽर्थोऽभिहितः स्वातिरिक्तसर्वापह्नवसिद्धं स्वमात्रमिति तमेतमर्थं दुर्विज्ञेयं मन्यमाना श्रुतिः स्वाज्ञानां यथायथा स्वातिरिक्तापह्नवसिद्धब्रह्ममात्रज्ञानमुदेति तथातथा भूयोभूयः प्रसङ्गमापाद्यापाद्य स्वप्रकटितसिद्धान्तार्थमेव आदौ "तेजोबिन्दुपरं" इत्यारभ्य पञ्चदशाङ्गज्ञानयोगसहितमवान्तरवाक्येनाखण्डशुद्धचैतन्ययाथात्म्यं प्रतिपाद्य, स्वाज्ञदृष्ट्या दृश्यजडजगद्द्वतभावादिस्वर्गान्तखण्डताप्रसक्तौ कुमारशिवसंवादरूपेण "अखण्डैकरसं दृश्यं" इत्यादि "अखण्डैकरसं सर्वं" इत्यन्तेन "अखण्डैकरसः स्वयं" इति प्रकटयित्वा, अथ पुनरिदमयमित्यादिशब्दवाच्यभावानामचिन्मात्रत्वप्रसक्तौ "यत्किञ्चिद्यन्न किञ्चिच्च सर्वं चिन्मात्रमेव हि" इत्यादिना निष्प्रतियोगिकचिन्मात्रस्वरूपमभिधाय, ब्रह्मद्वयप्रसक्तौ "अखण्डैकरसं ब्रह्म चिन्मात्रान्न हि भिद्यते" इत्यखण्डैकरसचिन्मात्रयोरेकार्थपर्यवसानत्वमुक्त्वा, अथ "परं ब्रह्मस्वरूपोऽहम्" इत्यारभ्य स्वातिरिक्तप्रपञ्चासत्त्वप्रकटनपूर्वकं स्वानुभवं प्रकाशयित्वा, अहं ब्रह्मास्मीतिमन्त्रमाहात्म्यप्रशंसापूर्वकं मुमुक्षुकोटिग्राह्यतां प्रतिपाद्य, तदान्तरालिकमुख्यफलप्रकटनव्याजेन "चिदात्माऽहं परात्माऽहं" इत्युपक्रम्य

"स्वस्वरूपे स्वयं स्वप्स्ये स जीवन्मुक्त उच्यते" इत्यन्तेन निर्विशेषज्ञानान्तरालिकफलजीवन्मुक्तिं, "ब्रह्मभूतः प्रशान्तात्मा" इत्युपक्रम्य "स्वात्मानमेव मोदस्व वैदेही मुक्तिगो भव" इत्यन्तेन ब्रह्ममात्रज्ञानमुख्यफलं तन्मात्रावस्थानलक्षणविदेहमुक्तिं च प्रकटयित्वा, पुनराख्यायिकाऽन्तरमवलम्ब्य "सर्ववाचोऽवधिर्ब्रह्म" इत्यादिना स्वात्मयाथात्म्यं, "अनात्मेति प्रसङ्गो वा" इत्यादिना अनात्मयाथात्म्यं च प्रतिपाद्य आत्मानात्मेत्युक्त्या तयोरेकत्वानेकत्वप्रसक्तसविशेषतां "एकाभावे द्वितीयं न" इत्यादिसापेक्षश्रुतियुक्तिभिः शिथिलयित्वा, क्वचित् क्वचित् स्वातिरिक्तयोः आत्मानात्मनोः शब्दभेदेन अर्थभेदेन च स्वमात्रस्य निष्प्रतियोगिकभावरूपत्वं स्वातिरिक्तसामान्यस्य "इदं प्रपञ्चं नास्त्येव" इत्यादिना "वन्ध्याकुमारवचने भीतिश्चेत्" इत्यादिस्वातिरिक्तजगदत्यन्तासम्भवदृष्टान्तेन च शशविषाणवत् अत्यन्ताभावरूपतां च विभक्तिलिङ्गपुरुषव्यत्ययमप्यनादरेण विस्मृत्येव महता वेगेन यत इयं श्रुतिः जामितामन्तरेण प्रवृत्ता अतोऽस्मिन् वेदान्तशास्त्रसमुदाये न हि पुनरुक्तिशङ्का सेद्धुं पारयति । स्वाज्ञादिमात्रभावमापन्नायाः श्रुतेः स्वसन्तानस्वातिरिक्तमस्ति नास्तीति विभ्रमापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रावशेषलक्षणविकलेबरकैवल्यसाम्राज्यपट्टाभिषेचनकर्मव्यग्रत्वात् सद्भिरत्र न कोऽपि दोषः स्मर्तव्यः । प्रकृते तु यद्यज्ञोऽसि तदा आदौ ब्रह्मैव सर्वभवनं सर्वाधिकरणं विचिन्तय । ततः स्वाधिष्ठेयनिरूपितमधिष्ठानभ्रममपि भुवनं सन्त्यज ॥ १०३ ॥ सर्वं अहं ब्रह्मेति निश्चित्य तत्रत्याहम्भावं परित्यज । यद्येवमुद्योगवानसि तदा यद्यत् स्वविकल्पितं तत्तत् सर्वमेव ॥ १०४ ॥ तदानीं न देह इत्यादि ॥ १०५ ॥ जहदादि लक्षणा । आदौ सर्वव्यापारं ॥ १०६ ॥ तन्निश्चयमपि संत्यज, तद्वृत्तेरपि स्वातिरिक्ततया त्याज्यत्वात् । तथा चोक्तं—

तस्मिन् काले विदेहोतिदेहस्मरणवर्जितः ।
ईषन्मात्रं स्मृतं चेद्यस्तदा सर्वसमन्वितः ॥

इति ॥ १०७ ॥

शास्त्रसम्प्रदायविधिः

[1]शांकरीयं महाशास्त्रं न देयं यस्य कस्यचित् ।
नास्तिकाय कृतघ्नाय दुर्वृत्ताय दुरात्मने ॥ १०८ ॥
गुरुभक्तिविशुद्धान्तःकरणाय महात्मने ।
सम्यक् परीक्ष्य दातव्यं मासं षाण्मासवत्सरम् ॥ १०९ ॥
सर्वोपनिषदभ्यासं दूरतस्त्यज्य सादरम् ।
तेजोबिन्दूपनिषदमभ्यसेत्सर्वदा मुदा ॥ ११० ॥
सकृदभ्यासमात्रेण ब्रह्मैव भवति स्वयम् ।
ब्रह्मैव भवति स्वयमित्युपनिषत् ॥ १११ ॥

शास्त्रसम्प्रदायार्थं प्रकटयन् उपसंहरति—**शाङ्करीयमिति** । कस्य वा न देयं कस्य वा देयं इत्यत आह—**नास्तीति** ॥ १०८–१०९ ॥ एवं गुरुमुखात् लब्धविद्यो मुमुक्षुः **सर्वोपनिषत्** । सर्वं परित्यज्य एतदभ्यासेन किमित्यत आह—**सकृदिति** । सकृच्छ्रवणपठनमात्रतो विद्वान् सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रमवशिष्यत इत्यर्थः । **इत्युपनिषच्छब्दः** तेजोबिन्दूपनिषत्समाप्त्यर्थः ॥ १११ ॥

इति षष्ठोऽध्यायः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं तेजोबिन्दोः स्फुटं लघु ॥
तेजोबिन्दूपनिषदो व्याख्यानग्रन्थविस्तरः ।
चतुष्पञ्चाशदधिकशतानां सप्तकं स्मृतः ॥

इतीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे सप्तत्रिंशत्सङ्ख्यापूरकं
तेजोबिन्दूपनिषद्विवरणं सम्पूर्णम्

---

[1] शैवमेतन्म—अ.

# त्रिशिखिब्राह्मणोपनिषत्

पूर्णमदः—इति शान्तिः

## ब्राह्मणम्

### आत्मब्रह्मविषयं प्रश्नाः

त्रिशिखी ब्राह्मण आदित्यलोकं जगाम । तं गत्वोवाच ।
भगवन् किं देहः किं प्राणः किं कारणं किमात्मा ॥ १ ॥

योगज्ञानैकसंसिद्धशिवतत्त्वतयोज्ज्वलम् ।
प्रतियोगिविनिर्मुक्तं परं ब्रह्म भवाम्यहम् ॥

इह खलु शुक्लयजुर्वेदप्रविभक्तेयं त्रिशिखिब्राह्मणोपनिषत् निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना तदुपायाष्टाङ्गयोगप्रपञ्चप्रकाशिनी विजृम्भते । तस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । त्रिशिखिब्राह्मणादित्यप्रश्नप्रतिवचनरूपेयं आख्यायिका विद्यास्तुत्यर्था । केयं आख्यायिका इत्यत आह—त्रिशिखीति । नामतः त्रिशिखी, ब्रह्मणोऽपत्यं ब्राह्मणः, सनातनो नाम मुनिः, आदित्यलोकासनं आदित्यं विधिवत् उपसङ्गम्य देहप्राणादिकं तत्कारणं किं, स्वयं वा कीदृश इति पप्रच्छ ॥ १ ॥

### सर्वस्य शिवत्वम्

स होवाच सर्वमिदं शिव एव विजानीहि । किं तु नित्यः शुद्धो निरञ्जनो विभु[1]रद्वयानन्दः शिव एकः स्वेन [2]भासेदं सर्वं [3]सृष्ट्वा तप्तायःपिण्डवत् [4]ऐक्यं भिन्नवत् अवभासते । तद्भासकं किमिति चेत् उच्यते । सच्छब्दवाच्यं अविद्याशबलं ब्रह्म ॥ २ ॥

तत्प्रश्नं अङ्गीकृत्य तं होवाच भगवान् । किमिति? सर्वमिदं इत्यादि । त्वया किं देह इत्यादि यत् पृष्टं तत् शिव एवेति विजानीहि, सर्वस्य शिवाज्ञानविकल्पितत्वात् । विकल्पाधिकरणत्वे अनित्यत्वादि स्यात् इत्यत आह—किन्त्विति । स्वाज्ञस्वविकल्पितविकल्पजालं अनित्यत्वादिदोषदुष्टमेव । किन्तु तद्विकल्पनाधारो नित्यत्वादिविशेषणविशिष्टः अद्वैतात्मा शिव एक एव, न कदाऽपि द्वैतभावमुपैतीत्यर्थः । विकल्पजातं केन विकल्पितं सदेकतां गतं, तद्भासकं किं इत्याशङ्कायां य एकः शिवः स स्वेन तेजसा सर्वमिदं सृष्ट्वा तेन तप्तायःपिण्डवत् एकीभूय तद्वैलक्षण्येनापि भासते इत्याह—स्वेनेति । ऐक्यं प्राप्य स्वज्ञदृष्ट्या भिन्नवत् अवभासते । किं तदित्यत्र किं देह इत्यादि त्रिशिखिप्रश्नप्रतिवचने सर्वमिदं शिव एवेति यत् प्रतिज्ञातं तत्र स्वविकल्पित-कार्यापेक्षया स्वस्य कारणत्वं स्वातिरिक्ताव्यक्तादेः कार्यत्वं च विशदीकरोति—सदिति । "सदेव सोम्येदमग्र आसीत्" इति स्वाविद्यायोगात् शबळत्वं स्वेन रूपेण ब्रह्मत्वं सिद्धं इत्यर्थः ॥ २ ॥

### ब्रह्मणः अखिलजगदुत्पत्तिः

ब्रह्मणोऽव्यक्तम् । अव्यक्तान्महत् । महतोऽहंकारः । अहंकारात् पञ्चतन्मात्राणि । पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि । पञ्चमहाभूतेभ्योऽखिलं जगत् ॥ ३ ॥

[1] रद्वयः शि—क.
[2] भासेनेदं—क, अ २.
[3] दृष्ट्वा—क, अ, अ १, अ २.
[4] एकं—अ, अ १.

केवलब्रह्मणः कल्पनाऽनधिकरणत्वेन निष्प्रतियोगिकनिर्विकल्पत्वात् तत् तिष्ठतु, शबळब्रह्मणः किं विकल्पितं इत्यत आह—**ब्रह्मणोऽव्यक्तमिति** । ततः किं इत्यत्र **गुणसाम्यभावमापन्नाव्यक्तात् महत्** । सत्वभावमापन्न**महतः अहङ्कारः** । रजोभावमापन्ना**हङ्कारात् पञ्चतन्मात्राणि** । तमःप्रधान**पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि**, पञ्चीकृतानीत्यर्थः । तमस्तमःप्रधानत्रिगुणोपसर्जनपञ्चीकृत**पञ्चमहाभूतेभ्यः अखिलं जगत्** ॥ ३ ॥

### एकस्य पिण्डस्य बहुधा विभागः

[1]तदखिलं किमिति । भूतविकारविभागादिति । एकस्मिन् पिण्डे कथं भूतविकारविभाग इति । [2]तत्कार्यकारणभेदरूपेण अंशतत्त्ववाचकवाच्यस्थानभेदविषयदेवताकोशभेदविभागा भवन्ति ॥

एकस्य पिण्डात्मनो जगतः कथं अखिलत्वं इत्यत्र पञ्चीकृतपञ्चमहा**भूतविकारविभागादिति** । तत्राप्याक्षिपति—**एकस्मिन्निति** । तत्प्रकारमाह—**तदिति** । पृथिव्यादेः आकाशकार्यत्वं आकाशादेः पृथिव्यादिकारणत्वमिति तत्तद्भूतकार्यकारणभेदरूपेण पृथिव्यादिपञ्चभूतविभागः । आकाशाद्यंशश्रोत्रादितत्त्वभेदेन तेषामभिधानाभिधेयभेदेन तत्तद्गोळकस्थानभेदेन शब्दादिविषयभेदेन दिगादिदेवताभेदेन आनन्दमयादिकोशभेदेन च बहुधा विभागा भवन्ति । एकस्मिन् अविद्याऽण्डपिण्डे भूतभौतिकविकारविभागाः उपपद्यन्त इत्यर्थः ॥ ४ ॥

### आकाशादीनामंशभेदाः

अथाकाशः अन्तःकरणमनोबुद्धिचित्ताहंकाराः । वायुः समानो[3]दानोव्यानापानप्राणाः । वह्निः श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणाः । आपः शब्दस्पर्शरूपरसगन्धाः । पृथिवी वाक्पाणिपादपायूपस्थाः ॥

[1] जगदखिलं—क. [2] तत्तत्कार्य—क, अ, अ १, अ २. [3] दान—अ.

एवं यत् सूत्रितं तदर्थं आकाशादिक्रमेण विशदीकरोति—अथेत्यादिना ॥ आकाशांशा इत्यर्थः । अथ वाय्वाद्यंशा उच्यन्ते—वायुरिति ॥ ५ ॥

तेषां विषयभेदाः

ज्ञानसंकल्पनिश्चयानुसंधानाभिमाना आकाश[1]कार्यान्तःकरणविषयाः । समीकरणोन्नयनग्रहण[2]श्रपणोच्छ्वासा वायुकार्यप्राणादिविषयाः । [3]शब्दस्पर्शरूपरसगन्धा अग्निकार्यज्ञानेन्द्रियविषया अबाश्रिता । वचनादानगमनविसर्गानन्दाः पृथिवीकार्यकर्मेन्द्रियविषयाः । कर्मज्ञानेन्द्रियविषयेषु प्राणतन्मात्रविषया अन्तर्भूताः । मनोबुद्ध्योश्चित्ताहंकारौ चान्तर्भूतौ ॥ ६ ॥

अंशभेदानुक्त्वा विषयभेदानाह—ज्ञानेति ॥ ६ ॥

सूक्ष्मभूतमात्राः

अवकाशविधूतदर्शनपिण्डीकरणधारणाः सूक्ष्मतमा [4]जैवतन्मात्रविषयाः ॥ ७ ॥

सूक्ष्मभूतमात्रा उच्यन्ते—अवकाशेति ॥ ७ ॥

आध्यात्मिकादिविभागः

एवं द्वादशाङ्गानि आध्यात्मिकान्याधिभौतिकान्याधिदैविकानि । अत्र निशाकरचतुर्मुखदिग्वातार्कवरुणाश्व्यग्नीन्द्रोपेन्द्रप्रजापति[5]यमा अक्षाधिदेवतारूपैर्द्वादशनाड्यन्तःप्रवृत्ताः प्राणा एवाङ्गानि अङ्गज्ञानं तदेव ज्ञातेति ॥ ८ ॥

[1] कार्या अन्तः—अ २.
[2] श्रवणो—क, अ.
[3] कर्मज्ञानेन्द्रियविषयेषु शब्दस्पर्श—अ.
[4] 'जैव' इत्येतत् 'एव' इति शोधितं—क.
[5] यमाख्या—क, अ, अ १, अ २.

अंशादिभेदेन एवं इत्यादि । अत्र आत्मानं देहं भूतजातं देवताजातं च अधिकृत्य भवन्तीति आध्यात्मिकानि इत्यादि । तत्र आध्यात्मिकानि आधिभौतिकानि उक्तानि । अत्र आधिदैविकविवक्षया करणाधिपाः उच्यन्ते—अत्रेति । इडादि द्वादशनाडी । यत् सर्वाङ्गज्ञानं अन्तःकरणं तदेव उपाधित्वेन योऽभिमन्यते स एव ज्ञाता जीवो भवतीत्यर्थः ॥ ८ ॥

ज्ञातृव्यापाराभिव्यक्तिः

अथ व्योमानिलानलजलान्नानां पञ्चीकरणमिति । ज्ञातृत्वं समानयोगेन श्रोत्रद्वारा शब्दगुणो वागधिष्ठित आकाशे तिष्ठति आकाशस्तिष्ठति । मनो व्यानयोगेन त्वग्द्वारा स्पर्शगुणः पाण्यधिष्ठितो वायौ तिष्ठति वायुस्तिष्ठति । बुद्धिरुदानयोगेन चक्षुर्द्वारा रूपगुणः पादाधिष्ठितोऽग्नौ तिष्ठत्यग्निस्तिष्ठति । चित्तमपानयोगेन जिह्वाद्वारा रसगुण उपस्थाधिष्ठितोऽप्सु तिष्ठत्यापस्तिष्ठन्ति । अहंकारः प्राणयोगेन घ्राणद्वारा गन्धगुणो गुदाधिष्ठितः पृथिव्यां तिष्ठति पृथिवी तिष्ठतीत्येवं वेद ॥ ९ ॥

एवं आध्यात्मिकादितापत्रयं निरूप्य अथ पञ्चीकरणाभिव्यक्तज्ञातृव्यापृतिं व्यक्तीकरोति—अथेति । **पञ्चीकरणमिति** पञ्चीकरणनिष्पन्नं ज्ञातुः ज्ञातृत्वमित्यर्थः । व्यष्टिसमष्टिप्रपञ्चोपाधिकरणजीवेश्वरयोः व्यापृतिं भूत-तत्कार्यानुप्रवेशं चाह—ज्ञातृत्वमिति । जीवेशाववष्टभ्य **ज्ञातृत्वं** इत्यादि । **आकाशस्तिष्ठति** आकाशादौ आकाशादिः भूत्वा तिष्ठतीत्यर्थः । **एवं वेद** य एवं पञ्चभूततत्कार्यासङ्गान्तर्यामिणं वेद सोऽन्तर्यामी भवतीति शेषः ॥ ९ ॥

## मन्त्रः

### ब्रह्मणः सकाशात् पञ्चीकरणान्ता सृष्टिः

अत्रैते श्लोका भवन्ति—

पृथग्भूते षोडश कलाः स्वार्धभागान् [1]परान् क्रमात् ।
अन्तःकरण[2]व्यानाक्षिरस[3]पायुनभःक्रमात् ॥ १ ॥
[4]मुख्यान् पूर्वोत्तरैर्भागैर्भूतेभूते चतुश्चतुः ।
पूर्वमाकाशमाश्रित्य पृथिव्यादिषु [5]संस्थितः ॥ २ ॥
[6]मुख्या[7]ऊर्ध्वे परा ज्ञेया ना[अ]परानुत्तरान्विदुः ।
[8]एवमंशो अभूत्तस्मात्तेभ्यश्चां[9]शो अभूत्तथा ॥ ३ ॥
तस्मादन्योन्यमाश्रित्य ह्यो[10]तं प्रोतमनुक्रमात् ।

ब्राह्मणेन योऽर्थोऽभिहितः तमेतमर्थं मन्त्रा अप्यनुवदन्तीत्याह—**अत्रेति**। स्वाज्ञविकल्पितस्वातिरिक्तषोडशकलातत्कार्यजातात् स्वज्ञदृष्ट्या **पृथग्भूते** निष्कळे ब्रह्मणि निर्बीजे सकलकलनानिर्वाहकस्वाज्ञदृष्ट्या प्रश्नोपनिषत्परिपठितप्राणादिनामान्तकला बीजरूपेण आदौ विकल्पिताः सत्यः स्वारोपाधिकरणेश्वरयोगात् ईश्वरो भूत्वा । **अन्तःकरणशब्देन** तत्कारणं आकाशमुच्यते, **व्यानशब्देन** वायुः, **अक्षिशब्देन** अग्निः—अक्ष्णः तैजसत्वात्—**रसशब्देन** आपः, **पायुशब्देन** पृथिवी, इत्येवं **नभःक्रमात्** आकाशादिक्रमात् **परान् स्वार्धभागान्** पञ्चभूतानां **मुख्यान्** अंशान् **क्रमात्** तत्तद्भूते निक्षिप्य ॥ १ ॥ **पूर्वोत्तरैः** आकाशादिपृथिव्यन्तैः **भागैः** तत्तद्भूतार्धांशानां तत्तद्भूते निक्षिप्तत्वात् शिष्टार्धांशान् **चतुश्चतुर्धा** विधाय आकाशः स्वांशेतरार्धांशान् वाय्वादिभूतचतुष्टये निक्षिप्य, तथा वायुः स्वांशेतरार्धांशान् आकाशाग्निजलपृथिवीषु निक्षिप्येत्यादि

[1] वरान्—अ १. [2] व्यानोऽक्षि—क. [3] पायू नभः —क, अ २.
[4] मुख्यात्—क, अ १. [5] संस्थिताः—अ १. [6] परा—अ.
[7] ऊर्ध्वं—अ १. [8] एवमंशा—क, अ, अ १, अ २.
[9] शा—क, अ, अ १, अ २. [10] तप्रोतं—अ १.

समानम् । एवं पञ्चीकृते सति पूर्वं आकाशमाश्रित्य योंऽशोऽस्ति सोऽयं पञ्चीकरणानन्तरं पृथिव्यादिषु संस्थितो भवति ॥ २ ॥ ऊर्ध्वे पूर्वं तत्तद्भूतमुख्यांशा एव पराः श्रेष्ठाः इति ज्ञेयाः । पञ्चीकृतेऽपि "वैशेष्यात्तु तद्वादस्तद्वादः" इति वैय्यासिकसूत्रानुरोधेन तत्तद्भूतव्यपदेशात् परत्वं युज्यते । उत्तरान् मुख्यांशेतरान् अंशान् अपरान् गौणान् विदुः तद्विद इत्यर्थः । यस्मात् एवं पञ्चभूतांशः अभूत् तस्मात् तेभ्यः मुख्यांशेभ्यः तथा गौणांशः अभूत् । "पञ्चभूतांशा अभूत्" "गौणांशा अभूत्" इति पाठे अभूवन्नित्यर्थे अभूदिति वचनव्यत्ययः ॥ ३ ॥ यस्मात् एवं तस्मात् अनुक्रमात् ओतं प्रोतं यथा भवति तथा पञ्चभूतेषु मुख्यांशोज्वलेषु गौणांशाः अन्योन्यमाश्रित्य वर्तन्ते इत्यर्थः ॥

चराचरात्मकविश्वसृष्टिः

पञ्चभूतमया भूमिः सा चेतनसमन्विता ॥ ४ ॥
तत ओषधयोऽन्नं च ततः पिण्डाश्चतुर्विधाः ।
रसासृङ्मांसमेदोऽस्थिमज्जाशुक्लानि धातवः ॥ ५ ॥
केचित्तद्योगतः पिण्डा भूतेभ्यः संभवाः क्वचित् ।
तस्मिन्नन्नमयः पिण्डो नाभिमण्डलसंस्थितः ॥ ६ ॥
अस्य मध्येऽस्ति हृदयं सनालं पद्मकोशवत् ।
सत्वान्तर्वर्तिनो देवाः कर्त्रहंकारचेतनाः ॥ ७ ॥
अस्य बीजं तमःपिण्डं मोहरूपं जडं घनम् ।
वर्तते कण्ठमाश्रित्य मिश्रीभूतमिदं जगत् ॥ ८ ॥
प्रत्यगानन्दरूपात्मा [1]मूर्ध्नि स्थाने परंपदे ।
अनन्तशक्ति[2]संयुक्तो जगद्रूपेण भासते ॥ ९ ॥

[1] मूर्ध्नः—अ. [2] संयुक्ते—अ, अ १.

एवं पञ्चीकृतभूततः चेतनयुक्तात् किं जायते इत्यत्र चराचरात्मकं विश्वं जायते इत्याह—पञ्चेति ॥ ४ ॥ चेतनाधिष्ठितात् ततः, चैतन्याधिष्ठितान्नात्, जरायुजादिभेदेन चतुर्विधाः पिण्डाः सञ्जाताः इत्यर्थः। धातवोऽप्यन्नादेव जायन्ते इत्याह—रसेति ॥ ५ ॥ केचिदेव वदन्तीत्याह—केचिदिति। तद्योगतः शुक्लशोणितयोगतः पिण्डाः भुक्तान्नपुरुषभूतेभ्यः सञ्जातशुक्लशोणित-सम्भवाः पिण्डाः इति केचिदाहुः। सर्वथा अन्नमया इत्यर्थः। अन्नसारःपिण्डः क आसनमर्हति इत्यत आह—तस्मिन्निति। तस्मिन् भूतकदम्बे, तस्य सर्वप्राणिर्जीवननिमित्तत्वात ॥ ६ ॥ तन्मध्ये किं वर्तते इत्यत आह—अस्येति। अन्नमयस्य। तदाश्रित्य के वर्तन्ते इत्यत आह—सत्त्वेति। सत्वान्तर्वर्तिनः सत्वगुणप्रधानाः इन्द्रादयो ब्रह्मादयश्च देवाः वर्तन्ते। यद्वा—कर्त्रहङ्कारचेतनाः अन्तःकरणविशिष्टाः देवाः इन्द्रियाणि विद्यन्ते इत्यर्थः ॥ ७ ॥ हृदयबीजं किं इत्यत आह—अस्येति। घनम् स्वाज्ञानमित्यर्थः। तत कुत्र वर्तते इत्यत आह—वर्तते इति। "स्वाज्ञानं मनःस्थानं गळान्तं" इति श्रुत्यनुरोधेन कण्ठं कण्ठासनं मनः आश्रित्य वर्तते। तेन स्वाज्ञानकबळितमनसा इदं जगत मिश्रीभूतं व्याप्तं भवति ॥ ८ ॥ जगतः स्वाज्ञानमिश्रितत्वे जगद्रूपेण भानं किं इत्यत आह—प्रत्यगिति। जगतः स्वाज्ञानव्याप्तत्वेऽपि "तुरीयं मूर्ध्नि संस्थितम्" इति श्रुत्या स्वाज्ञानास्पृष्टमूर्ध्नि स्थाने परंपदे प्रत्यगानन्दरूपात्मा स्थिरासनो भूत्वा ईश्वरात्मना अनन्त-शक्तियुक्तः सन् जगद्रूपेण भासते। यतः एवं अतः जगद्रूपेणापि भानं प्रत्यगात्मनिष्ठं न स्वाज्ञानतत्कार्यजगन्निष्ठं इत्यर्थः ॥ ९ ॥

### अवस्थाचतुष्टयम्

सर्वत्र वर्तते जाग्रत्स्व[1]प्नं जाग्रति वर्तते।

सुषुप्तं च तुरीयं च नान्यावस्थासु कुत्रचित् ॥ १० ॥

[1] प्रज्ञा—अ १, अ २.

सर्वदेशेष्वनुस्यूतश्च[1]तूरूपः शिवात्मकः ।
यथा महाफले सर्वे रसाः सर्वप्रवर्तकाः ॥ ११ ॥
तथैवान्नमये कोशे कोशास्तिष्ठन्ति [2]चान्तरे ।
यथा कोशस्तथा जीवो यथा जीवस्तथा शिवः ॥ १२ ॥
सविकारस्तथा जीवो निर्विकारस्तथा शिवः ।
कोशास्तस्य विकारास्ते ह्यवस्था[3]सु प्रवर्तकाः ॥ १३ ॥
यथा रसाशये फेनं मथनादेव जायते ।
मनोनिर्मथनादेव विकल्पा बहवस्तथा ॥ १४ ॥

जगत्कलनानिर्वर्त्यावस्थाचतुष्टयेयत्तां तद्भासकचिद्धातुस्वरूपं चाह— **सर्वत्रेति** । साक्षिभास्यप्रपञ्चे सर्वत्र जाग्रदवस्था वर्तते, करणग्रामव्यापृतेः स्फुटं अवगन्तुं शक्यत्वात् । अन्नमयकोशे प्राणादिकोशवत् जाग्रति स्वप्नादित्रयं वर्तते, नान्यावस्थास्वित्यर्थः ॥ १० ॥ जाग्रदवस्थायाः स्वप्नाद्याधारत्वं स्वांगपाधारेश्वगनिष्टं इत्याह- **सर्वेति** । विश्वविराडोत्रादिद्वितुर्याविकल्पान्तरूपेण व्यष्टिसमष्ट्यात्मकजाग्रदादिसर्वदेशेष्वनुस्यूतः प्रत्यगात्मा सदा वर्तते इत्यर्थः । कथं पुनः प्रतीचः सर्वानुस्यूतत्वं इत्यत्र विकारवत् कोशजीवदृष्टान्तेन सर्वानुस्यूतत्वं साधयति—**यथेति** । **यथा** अन्नमयकोशः सर्वकोशाधारो व्यापकश्च भवति तथा जीवः यथा कृत्स्नकोशविकारं आत्मात्मीयाभिमानपूर्वकं व्याप्य वर्तते तथा तद्विकारास्पृष्टः सन् **शिवो**ऽपि वर्तते । जीवशिवयोः सविकारनिर्विकारत्वं कोशाभिमानभावाभावनिष्ठम् ॥ ११-१३ ॥ य(क?)स्मात् अवस्थात्रयतद्धेतुपञ्चकोशादिविकल्पः सञ्जात इत्यत्र—मथनसञ्जातरसाशयफेनवत् एवं **मनोनिर्मथनात्** जाग्रदादि विद्यते इति । सङ्कल्पात् एवमादिबहवो विकल्पाः जायन्ते, मनःसङ्कल्पाभावे किमपि नास्तीत्यर्थः ॥ १४ ॥

[1] तुरूपः—अ, क. [2] चापरे—क, क २. [3] सं—अ २.

दक्षिणोत्तरायणगतिः

कर्मणा वर्तते कर्मी तत्त्यागाच्छान्तिमाप्नुयात् ।
अयने दक्षिणे प्राप्ते प्रपञ्चाभिमुखं गतः ॥ १५ ॥
अहंकाराभिमानेन जीवः स्याद्धि सदाशिवः ।
स चाविवेकप्रकृतिसङ्गत्या तत्र मुह्यते ॥ १६ ॥
नानायोनिशतं गत्वा शेतेऽसौ वासनावशात् ।
विमोक्षात्संचरत्येव मत्स्यः कूलद्वयं यथा ॥ १७ ॥
ततः कालवशादेव ह्यात्मज्ञानविवेकतः ।
उत्तराभिमुखो भूत्वा स्थानात्स्थानान्तरं क्रमात् ॥ १८ ॥
मूर्ध्न्याधायात्मनः प्राणान्योगाभ्या[1]सं स्थितश्चरन् ।

एवं सङ्कल्पसञ्जातनानाविधकर्मणा कर्मी जीवो मनःकल्पितसंसारपाशेन निरुच्छ्वासं बद्धः सन् वर्तते । यावत् स्वज्ञानेन स्वभावापत्तिः तावत् संसरति । यदाऽयं स्वज्ञानेन स्वाज्ञानतत्कार्यं त्यजति तदा स्वातिरिक्तविभ्रमशान्तिमाप्नुयात् । शिवस्य जीवत्वं जीवस्य शिवत्वं कथं भवतीत्याशङ्क्य अनात्मनि आत्माभिमानात् शिवस्य जीवत्वं तदभिमतित्यागात् जीवस्य शिवत्वं च स्यादित्याह—अयन इति । ज्ञानगन्धविकलकामसङ्कल्पादिघटितेष्टापूर्तादिकर्मणा अयने दक्षिणे प्राप्ते ॥ १५–१७ ॥ कदा जीवः शिवो भवति? स्वभावाप्तौ किं साधनं? इत्यत आह—तत इति । ततो निष्कामबुद्ध्या अनुष्ठितसत्कर्मफलसमर्पणेश्वरप्रसादात् उत्तराभिमुखो भूत्वा "तेऽर्चिषमभिसम्भवन्ति" इत्यादिस्थानात् स्थानान्तरं प्राप्य शबलब्रह्मपदं क्रमात् प्राप्नोतीत्यर्थः ॥ १८ ॥ किं कुर्वन् उत्तराभिमुखो भवति इत्यत आह—

[1] सस्थितः—अ २.

**मूर्ध्नीति** । सिद्धाद्यासनस्थो योगी **स्वात्मनः प्राणान् सुषुम्नाद्वारेण मूर्ध्नि आधाय** सदा एवं योगाभ्यासं चरन् यथोक्तकाले मूर्धानं भित्त्वा देवयानेन पथा ब्रह्मलोकमेत्य न पुनरावर्तते इत्यर्थः ॥

### सद्योमुक्तिप्रापकं ज्ञानम्

योगात्संजायते ज्ञानं ज्ञानाद्योगः प्रवर्तते ॥ १९ ॥
योगज्ञानपरो नित्यं स योगी न प्रणश्यति ।
विकारस्थं शिवं पश्येद्विकारश्च शिवे न तु ॥ २० ॥
*योगप्रकाशकं योगैर्ध्यायेच्चानन्यभावनः ।*

केवलकर्मानुष्ठानफलं चान्द्रपदं, कर्मज्ञानसमुच्चयानुष्ठानफलं तु ब्रह्मलोकावाप्तिः इत्युक्त्वा सद्यःकैवल्यप्रापकनिर्विशेषज्ञानं सोपायमाह —**योगादिति** । स्वाश्रमाचारसत्कृतनित्यादिसाधनचतुष्टयवदनुष्ठितसर्ववेदान्तश्रवणयोगात् निर्विशेषज्ञानं **सञ्जायते** । यथोक्तमननाभिवर्धितज्ञानात् योगो निदिध्यासो ब्रह्मातिरिक्तं न किञ्चिदस्तीति सम्यज्ज्ञानं **प्रवर्तते** प्रादुर्भवति ॥ १९ ॥ नित्यमेवं **योगज्ञानपरो योगी** स्वाज्ञवत् स्वातिरिक्तास्तित्वधिया न कदाऽपि **प्रणश्यति** सम्यज्ज्ञानसमकालं सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रभावापन्नो भवतीत्यर्थः । सम्यज्ज्ञानोपायस्तु —"सर्वं खल्विदं ब्रह्म" इति श्रुत्यनुरोधेन स्वाज्ञदृष्टिप्रसक्तसर्व**विकारस्थं शिवं पश्येत्** । एवं सर्वं ब्रह्मेति बोधे सिद्धे सर्व**विकार**जातं **शिवे न** किञ्चिदस्तीति विज्ञानं जायते ॥ २० ॥ ततो विज्ञानयोगी सर्वविकारासम्भवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रं इति **अनन्यभावनः** सम्यज्ज्ञानीभूत्वा पुरोदितश्रवणादि**योगैः** सञ्जातसम्यज्ज्ञान**योगप्रकाशकं** आत्मानं ब्रह्ममात्रं **ध्यायेत्** । एवं ध्यानात्मकसम्यज्ज्ञानसमकालं कृतकृत्यो भवतीत्यर्थः ॥

ज्ञानोपायभूतो योगः

योगज्ञाने न विद्येते तस्य भावो न सिध्यति ॥ २१ ॥
तस्मादभ्यासयोगेन मनःप्राणान्निरोधयेत् ।
योगी निशितधारेण क्षुरेणैव निकृन्तयेत् ॥ २२ ॥
शिखा [1]प्राणमयी वृत्तिर्यमाद्यष्टाङ्गसाधनैः ।

यदि श्रवणाधिकारी न भवति तस्य स्वप्नेऽपि योगज्ञाने न विद्येते, सम्यज्ज्ञानभावोऽपि न सिध्यति ॥ २१ ॥ यस्मात् एवं तस्मात् । एवं अभ्यासयोगतः ब्रह्मास्मिप्रतिबन्धकाज्ञानं योगी निशितधारेण अभ्यासयोगक्षुरेणैव निकृन्तयेदिति ॥ २२ ॥ एवं अभ्यासयोगः केनोपायेन जायते इत्यत आह—शिखेति । वक्ष्यमाणयमाद्यष्टाङ्गयोगसाधनैः प्राणमयी वृत्तिः योगशिखा अभ्यासयोगफलप्रापिका सञ्जायते इत्यर्थः ॥

कर्मज्ञानयोगौ

ज्ञानयोगः कर्मयोग इति योगो द्विधा मतः ॥ २३ ॥
क्रियायोगमथेदानीं शृणु ब्राह्मणसत्तम ।
अव्याकुलस्य चित्तस्य बन्धनं विषये क्वचित् ॥ २४ ॥
यत्संयोगो द्विजश्रेष्ठ स च द्वैविध्यमश्नुते ।
कर्म कर्तव्यमित्येव विहितेष्वेव कर्मसु ॥ २५ ॥
बन्धनं मनसो [2]नित्यं कर्मयोगः स उच्यते ।
यत्तु चित्तस्य [3]सततमर्थे श्रेयसि बन्धनम् ॥ २६ ॥

[1] ज्ञातमयी—अ २. ज्ञानमयी—क. [2] नित्यः—क.
[3] वितत—क.

**ज्ञानयोगः स विज्ञेयः सर्वसिद्धिकरः शिवः ।**

**यस्योक्तलक्षणे योगे द्विविधेऽप्यव्ययं मनः ॥ २७॥**

**स याति परमं श्रेयो मोक्षलक्षणमञ्जसा ।**

ज्ञानकर्मभेदेन योगद्वैविध्यं तदियत्तामाह—**ज्ञानेति** ॥ २३ ॥ तत्र **क्रियायोगं** इत्यादि । किं तत्? **अव्याकुलस्य** इत्यादि ॥ २४ ॥ क्रियायोगस्य कथं द्वैविध्यं इत्यत्र **कर्म कर्तव्यं** इत्यादि । ईश्वराराधनधिया निष्कामकर्मानुष्ठानाभिनिवेश एव कर्मयोग इत्यर्थः ॥ २५ ॥ श्रेयोमार्गाभिनिवेश एव ज्ञानयोगः इत्याह—**यस्त्विति** ॥ २६ ॥ एवं उपायोपेयद्विविधयोगानुष्ठानतः श्रेयो भवतीत्याह—**यस्येति** ॥ २७ ॥

निर्विशेषब्रह्मज्ञानोपायः अष्टाङ्गयोगः

देहेन्द्रियेषु वैराग्यं यम इत्युच्यते बुधैः ॥ २८ ॥

अनुरक्तिः परे तत्त्वे सततं नियमः स्मृतः ।

सर्ववस्तुन्युदासीनभाव [1]आसनमुत्तमम् ॥ २९ ॥

जगत्सर्वमिदं मिथ्याप्रतीतिः प्राणसंयमः ।

चित्तस्यान्तर्मुखीभावः प्रत्याहारस्तु सत्तम ॥ ३० ॥

चित्तस्य निश्चलीभावो धारणा धारणं विदुः ।

सोऽहं चिन्मात्रमेवेति चिन्तनं ध्यानमुच्यते ॥ ३१ ॥

ध्यानस्य विस्मृतिः सम्यक्समाधिरभिधीयते ।

पूर्वोक्तनिर्विशेषब्रह्मज्ञानोपायतया संक्षेपविस्तराभ्यां अष्टाङ्गयोगं उपदिशति—**देहेति** ॥ २८–३१ ॥

[1] मासन—क, अ, अ १, अ २.

दशविधयमनियमाः

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽऽर्जवम् ॥ ३२ ॥
क्षमा धृतिर्मिताहारः शौचं चेति यमा दश ।
तपस्सन्तुष्टिरास्तिक्यं दानमाराधनं हरेः ॥ ३३ ॥
वेदान्तश्रवणं[1] चैव ह्रीर्मतिश्च जपो व्रतम् ॥

इति ॥

उत्तमाधिकारिणां ब्रह्मज्ञानसाधनतया अष्टाङ्गयोगो निरूपितः । तत्र यमो दशधा भिद्यते इत्यत आह—अहिंसेति ॥ ३२ ॥ तथा नियमोऽपीत्याह—तप इति ॥ ३३ ॥

हठयोगरीत्या आसनानि

आसनानि तदङ्गानि स्वस्तिकादीनि वै द्विज ॥ ३४ ॥
[2]वर्ण्यते स्वस्तिकं पादतलयोरुभयोरपि ।
पूर्वोत्तरे जानुनी द्वे [3]कृत्वाऽऽसनमुदीरितम् ॥ ३५ ॥
सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे नियोजयेत् ।
दक्षिणेऽपि तथा सव्यं गोमुखं गोमुखं यथा ॥ ३६ ॥
एकं चरणमन्यस्मिन्नूरावारोप्य निश्चलः ।
आस्ते यदिदमेनोघ्नं वीरासनमुदीरितम् ॥ ३७ ॥
गुदं नियम्य गुल्फाभ्यां व्युत्क्रमेण [4]समाहितः ।
योगासनं भवेदेतदिति योगविदो विदुः ॥ ३८ ॥

[1] ह्रीश्च जप इत्यादि लक्षणं—अ, अ १.
[2] वर्ण्यन्ते—क, अ, अ १, अ २.
[3] कूर्मासन—अ.
[4] समासितः—अ, अ १.

ऊर्वोरुपरि वै धत्ते यदा पादतले उभे ।
पद्मासनं भवेदेतत्सर्वव्याधिविषापहम् ॥ ३९ ॥
पद्मासनं सुसंस्थाप्य [1]तदङ्गुष्ठद्वयं पुनः ।
व्युत्क्रमेणैव हस्ताभ्यां बद्धपद्मासनं भवेत् ॥ ४० ॥
पद्मासनं सुसंस्थाप्य जानूर्वोरन्तरे करौ ।
निवेश्य भूमावातिष्ठेद्व्योमस्थः कुक्कुटासनः ॥ ४१ ॥
कुक्कुटासनबन्धस्थो दोर्भ्यां संबध्य कन्धरम् ।
शेते कूर्मवदुत्तान एतदुत्तानकूर्मकम् ॥ ४२ ॥
पादाङ्गुष्ठौ तु पाणिभ्यां गृहीत्वा श्रवणावधि ।
धनुराकर्षकाकृष्टं धनुरासनमीरितम् ॥ ४३ ॥
सीवनीं गुल्फ[2]देशेभ्यो निपीड्य व्युत्क्रमेण तु ।
प्रसार्य [3]जानुनोर्हस्तावासनं सिंहरूपकम् ॥ ४४ ॥
गुल्फौ च वृषणस्याधः [4]सीविन्युभयपार्श्वयोः ।
निवेश्य [5]भूमौ हस्ताभ्यां बद्ध्वा भद्रासनं भवेत् ॥ ४५ ॥
[6]सीवनीपार्श्वमुभयं गुल्फाभ्यां व्युत्क्रमेण तु ।
निपीड्यासनमेतच्च मुक्तासनमुदीरितम् ॥ ४६ ॥

[1] पद—क.
[2] देशाभ्यां—अ, क, अ १, अ २.
[3] जानुनो (तो?) हस्तौ—अ, क, अ १, अ २.
[4] सीविन्यो—क, अ २.
[5] पादौ—अ, क, अ १, अ २.
[6] 'सीविनीं गुल्फदेशाभ्यां निपीड्य' इति च—क.

[1]अवष्टभ्य धरां सम्यक्तलाभ्यां हस्तयोर्द्वयोः ।
कूर्परौ नाभिपार्श्वे तु स्थापयित्वा मयूरवत् ॥ ४७ ॥
समुन्नतशिरः[2]पादो मयूरासनमिष्यते ।
वामोरुमूले दक्षाङ्घ्रिं जान्वोर्वेष्टितपाणिना ॥ ४८ ॥
वामेन वामाङ्गुष्ठं तु गृहीतं मत्स्यपीठकम् ।
योनिं वामेन संपीड्य मेढ्रादुपरि दक्षिणम् ॥ ४९ ॥
ऋजुकायः समासीनः सिद्धासनमुदीरितम् ।
प्रसार्य भुवि पादौ [3]तु दोर्भ्यामङ्गुष्ठमादरात् ॥ ५० ॥
जानूपरि ललाटं तु पश्चिमं ताणमुच्यते ।
येन केन प्रकारेण सुखं [4]धार्यं च जायते ॥ ५१ ॥
तत्सुखासनमित्युक्तमशक्तस्तत्समाचरेत् ।
आसनं विजितं येन जितं तेन जगत्त्रयम् ॥ ५२ ॥

अथ मध्यमाधिकारिणां हठयोगरीत्या आसनाद्यङ्गानि उपदिशति—**आसनानीति** ॥ ३४ ॥ तत्र स्वस्तिकासनलक्षणमाह—**वर्ण्यत** इति ॥ ३५ ॥ गोमुखासनलक्षणमुच्यते—**सव्य** इति ॥ ३६ ॥ वीरासनलक्षणमाचष्टे—**एकमिति** ॥ ३७ ॥ योगासनलक्षणं व्यनक्ति—**गुदमिति** ॥ ३८ ॥ पद्मासनलक्षणं प्रकाशयति—**ऊर्वोरिति** ॥ ३९ ॥ बद्धपद्मासनलक्षणं विशदयति—**पद्मासनमिति**। हस्ताभ्यां बद्ध्वेति यत् तत् **बद्धपद्मासनं** भवेत् ॥ ४० ॥ कुक्कुटासनप्रकारं व्यक्तीकरोति—**पद्मेति** ॥ ४१ ॥ उत्तानकूर्मलक्षणमाह—**कुक्कुटेति** ॥ ४२ ॥ धनुरासनमाह—

[1] अवष्टभ्याधरां—अ.
[2] पादं—क, अ, अ १, अ २.
[3] तौ—अ.
[4] धैर्य—अ, अ २.

पादेति ॥ ४३ ॥ सिंहासनं दर्शयति—सीविनीमिति ॥ ४४ ॥ भद्रासनलक्षणमाह—गुल्फाविति ॥ ४५ ॥ मुक्तासनस्वरूपमाह—सीविनीति ॥ ४६ ॥ मयूरासनप्रकारमाह—अवष्टभ्येति ॥ ४७ ॥ मत्स्यासनलक्षणमाचष्टे—वामेति ॥ ४८ ॥ सिद्धासनलक्षणमाह— योनिमिति ॥ ४९ ॥ पश्चिमताणलक्षणं प्रकटयति—प्रसार्येति ॥ ५० ॥ अशक्तोपयोग्यासनमाह—येनेति ॥ ५१ ॥ आसनफलमाह—आसनमिति ॥ ५२ ॥

नाडीशुद्धिपूर्वकप्राणायामविधिः

यमैश्च नियमैश्चैव ह्यासनैश्च सुसंयतः ।
नाडीशुद्धिं च कृत्वाऽऽदौ प्राणायामं समाचरेत् ॥ ५३ ॥
देहमानं स्वाङ्गुलिभिः षण्णवत्यङ्गुलायतम् ।
प्राणः शरीरादधिको द्वादशाङ्गुलमानतः ॥ ५४ ॥
देहस्थमनिलं देहसमुद्भूतेन वह्निना ।
न्यूनं समं वा योगेन कुर्वन्ब्रह्मविदिष्यते ॥ ५५ ॥

यमाद्यङ्गत्रयविशिष्टयोगिनो नाडीशुद्धिपूर्वकं प्राणायामक्रममाह—यमैश्चेति । पूर्वोक्तैः ॥ ५३ ॥ अभ्यासानुकूलदेहप्राणमानं तत्र प्राणाभ्यासफलं चाह—देहमानमिति ॥ ५४–५५ ॥

अग्निमण्डलस्वरूपम्

देहमध्ये शिखिस्थानं तप्तजाम्बूनदप्रभम् ।
त्रिकोणं द्विपदामन्यच्चतुरश्रं चतुष्पदाम् ॥ ५६ ॥
वृत्तं [1]विहङ्गमानां तु षडश्रं [2]सर्पजन्मनाम् ।
अष्टाश्रं स्वेदजानां तु तस्मिन्दीपवदुज्ज्वलम् ॥ ५७ ॥

[1] विहङ्गमानं—उ.
[2] सर्व—क, अ २.

मूलाग्निमण्डलस्वरूपमाह—देहेति ॥ ९६ ॥ तत्तजन्त्वग्निमण्डले तस्मिन् उज्ज्वलं वह्निं विद्धीत्यर्थः ॥ ९७ ॥

नाभिस्थानम्

कन्दस्थानं मनुष्याणां [1]देहमध्यं नवाङ्गुलम् ।
चतुरङ्गुलमुत्सेधं चतुरङ्गुलमायतम् ॥ ९८ ॥
अण्डाकृति तिरश्चां च द्विजानां च चतुष्पदाम् ।
तुन्दमध्यं तदिष्टं वै तन्मध्यं नाभिरिष्यते ॥ ९९ ॥

मनुष्यादिदेहमध्यं विशदयति—कन्देति ॥ ९८–९९ ॥

नाडीचक्रे जीवभ्रमणम्

तत्र चक्रं द्वादशारं तेषु विष्ण्वादिमूर्तयः ।
अहं तत्र स्थितश्चक्रं भ्रामयामि स्वमायया ॥ ६० ॥
अरेषु भ्रमते जीवः क्रमेण द्विजसत्तम ।
तन्तुपञ्जरमध्यस्था यथा भ्रमति लूतिका ॥ ६१ ॥
प्राणाधिरूढश्चरति जीवस्तेन विना न हि ।

तत्रस्थनाडीचक्रं विष्ण्वादिभिरधिष्ठितं सत् वर्तते । तत्राहमन्तर्याम्यात्मना स्थित्वा तच्चालयामीत्याह—तत्रेति । तत्र नाभिमध्ये नाडीचक्रं ।

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।
भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥

इति स्मृत्यनुरोधेन अहं इत्यादि ॥ ६० ॥ को वा त्वया भ्राम्यते इत्यत आह—अरेष्विति । नाडीचक्रारेषु । जीवभ्रमणं सदृष्टान्तमाह—तन्त्विति । लूतिका ऊर्णनाभिः कीटविशेषः । तथा जीवः चलनमेतीत्यर्थः ॥ ६१ ॥

[1] देहमध्ये—अ.

कुण्डलिनीस्थानं तद्व्यापारश्च

तस्योर्ध्वे कुण्डलीस्थानं नाभेस्तिर्यगथोर्ध्वतः ॥ ६२ ॥
अष्टप्रकृतिरूपा सा चाष्टधा कुण्डलीकृता ।
यथावद्वायु[1]संचारं [2]जलान्नादि च नित्यशः ॥ ६३ ॥
परितः कन्दपार्श्वे तु निरुध्यैव सदा स्थिता ।
मुखेनैव समावेष्ट्य ब्रह्मरन्ध्रमुखं तथा ॥ ६४ ॥
योगकालेन मरुता साग्निना बोधिता सती ।
स्फुरिता हृदयाकाशे नागरूपा महोज्ज्वला ॥ ६५ ॥

तदूर्ध्वविलसितकुण्डलिनीस्थानं तद्व्यापारं चाह—**तस्येति** । नाडीचक्रस्य तस्य ॥ ६२ ॥

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥

इति स्मृत्यनुरोधेन अष्टप्रकृतिरूपा वायुसञ्चारं प्राणापानयोरैक्यमित्यर्थः । भुक्तजलान्नादि ॥ ६३ ॥ किं कुर्वती स्थितेत्यत्र **मुखेनैव** इत्यादि ॥ ६४ ॥ सा कदा ऊर्ध्वं प्रसरतीत्यत्र **योगकालेन** इत्यादि ॥ ६५ ॥

देहमध्यस्थनाडीकन्दस्वरूपम्

[3]अपानाद्द्व्यङ्गुलादूर्ध्वमधो मेढ्रस्य तावता ।
देहमध्यं मनुष्याणां हृन्मध्यं तु चतुष्पदाम् ॥ ६६ ॥

[1] सारं च—क, अ १, अ २.

[2] चलनादि—अ. ज्वलनादि—क, अ १, अ २. 'सञ्चारं जलान्नादि' इति च—क, अ २.

[3] अपानद्व्य—अ, अ १.

इतरेषां तुन्द[1]मध्यं नानानाडीसमावृतम् ।
[2]चतुष्प्रकारद्व्ययुते देहमध्ये सुषुम्नया ॥ ६७ ॥
कन्दमध्ये स्थिता नाडी सुषुम्ना सुप्रतिष्ठिता ।
पद्मसूत्रप्रतीकाशा ऋजुरूर्ध्व[3]प्रवर्तिनी ॥ ६८ ॥
ब्रह्मणो विवरं यावद्वि[4]द्युदाभासनालकम् ।
वैष्णवी ब्रह्मनाडी च निर्वाणप्राप्तिपद्धतिः ॥ ६९ ॥
इडा च पिङ्गला चैव तस्याः सव्येतरे स्थिते ।
इडा समुत्थिता कन्दाद्वामनासापुटावधिः ॥ ७० ॥
पिङ्गला चोत्थिता तस्माद्दक्षनासापुटावधिः ।
गान्धारी हस्तिजिह्वा च द्वे चान्ये नाडिके स्थिते ॥ ७१ ॥
पुरतः पृष्ठतस्तस्याः वामेतरदृशौ प्रति ।
पूषायशस्विनीनाड्यौ तस्मादेव समुत्थिते ॥ ७२ ॥
सव्येतरश्रुत्यवधि पायु[5]मूलावलम्बुसा ।
अधोगता शुभा नाडी मेढ्रान्तावधिरायता ॥ ७३ ॥
पादाङ्गुष्ठावधिः कन्दादधोयाता च कौशिकी ।
दशप्रकारभूतास्ताः कथिताः कन्दसंभवाः ॥ ७४ ॥

[1] मध्ये—अ १, अ.
[2] चतुष्प्रकारेत्यादि श्लोकार्धं (अ, अ १) कोशानुसारेण मूले धृतं.
[3] प्रकाशिनी—क, अ २.
[4] युदाभं स—क, अ २.
[5] मूलादलम्बुसा— अ.

तन्मूला बहवो नाड्यः [1]स्थूलाः सूक्ष्माश्च नाडिकाः ।
द्वासप्ततिसहस्राणि स्थूलाः सूक्ष्माश्च नाडयः ॥ ७५ ॥
संख्यातुं नैव शक्यन्ते [2]स्थूलमूलाः पृथग्विधाः ।
यथाऽश्वत्थ[3]दले सूक्ष्माः स्थूलाश्च वितितास्तथा ॥ ७६ ॥

देहमध्यं तदाश्रयनाडीकन्दस्वरूपमाह—अपानादिति ॥ ६६–६७ ॥ तत्र केयं प्रधाननाडी? तदाश्रित्य कति नाडयो वर्तन्ते? इत्यत्रोच्यते—कन्देति। वीणादण्डमाश्रित्य ऋजुरूर्ध्वप्रवर्तिनी ॥ ६८ ॥ कियत्पर्यन्तं ऊर्ध्वं प्रवृत्तेत्यत्र ब्रह्मरन्ध्रान्तमित्याह—ब्रह्मण इति । विद्युल्लेखेव आ समन्तात् भासमाननाळकं ब्रह्मरन्ध्रं तावत्, मूलाधारमारभ्य ब्रह्मरन्ध्रपर्यन्तं प्रवर्तते इत्यर्थः । तस्या नाम निर्दिशति—वैष्णवीति । विष्ण्वधिष्ठितत्वात् । ब्रह्मनाडी ब्रह्मलोकप्रापकत्वात्, तदन्तर्गतकैवल्यनाडी । निर्वाणप्राप्तिपद्धतिः कैवल्य-सृतित्वात् ॥ ६९ ॥ तदाश्रयनाड्यः उच्यन्ते—इडा चेति ॥ ७०–७५ ॥ असङ्ख्येयत्वे दृष्टान्तमाह—यथेति ॥ ७६ ॥

नाडीचराः वायवः

प्राणापानौ समानश्च उदानो व्यान एव च ।
नागः कूर्मश्च कृकरो देवदत्तो धनंजयः ॥ ७७ ॥
चरन्ति दशनाडीषु दश प्राणादिवायवः ।
प्राणादिपञ्चकं तेषु प्रधानं तत्र च द्वयम् ॥ ७८ ॥
प्राण एवाथवा ज्येष्ठो जीवात्मानं बिभर्ति यः ।
आस्यनासिकयोर्मध्यं हृदयं नाभिमण्डलम् ॥ ७९ ॥

[1] स्थूलसूक्ष्माश्च—अ, क, अ १, अ २. [2] स्थूले—अ, अ १.
[3] दळैः—अ, अ १.

पादाङ्गुष्ठमिति प्राणस्थानानि द्विजसत्तम ।
अपानश्चरति ब्रह्मन् गुदमेढ्रोरुजानुषु ॥ ८० ॥
समानः सर्वगात्रेषु सर्वव्यापी व्यवस्थितः ।
उदानः सर्वसन्धिस्थः पादयोर्हस्तयोरपि ॥ ८१ ॥
व्यानः श्रोत्रोरुकट्यां च गुल्फस्कन्धगलेषु च ।
नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः ॥ ८२ ॥
तुन्दस्थं जलमन्नं च [1]रसादि च समीकृतम् ।
तुन्दमध्यगतः प्राणस्तानि कुर्यात्पृथक्पृथक् ॥ ८३ ॥
इत्यादिचेष्टनं प्राणः करोति च पृथक् [2]स्थितः ।
अपानवायुर्मूत्रादेः करोति च विसर्जनम् ॥ ८४ ॥
प्राणापानादिचेष्टादि क्रियते व्यानवायुना ।
उज्जीर्यते शरीरस्थमुदानेन नभस्वता ॥ ८५ ॥
पोषणादि शरीरस्य समानः कुरुते सदा ।
उद्गारादिक्रियो नागः कूर्मोऽक्ष्यादिनिमीलनः ॥ ८६ ॥
कृकरः क्षपयोः कर्ता दत्तो निद्रादिकर्मकृत् ।
मृतगात्रस्य [3]शोभादि धनंजय उदाहृतः ॥ ८७ ॥

नाडीचरा वायवः कतिसङ्ख्याकाः इत्यत्र **प्राणापानौ** इत्यादि ॥ ७७ ॥ तेषु कः प्रधानः इत्यत आह—**प्राणादीति** ॥ ७८ ॥ तेषां स्थानानि निर्दिशति—**आस्येति** ॥ ७९–८२ ॥ प्राणादिव्यापारमाह—**तुन्दस्थमिति** ॥ ८३–८६ ॥ **क्षपयोः** निमेषोन्मेषयोः ॥ ८७ ॥

[1] रसानि च समीकृतौ—अ, अ १. [2] स्थितं—अ, क, अ १, अ २.
[3] शोभादेर्धनंजयः इति मुद्रितपुस्तके. यो भाति धनंजयः—अ.

नाडीज्ञानपुरःसरा नाडीशुद्धिः

नाडीभेदं मरुद्भेदं मरुतां स्थानमेव च ।
चेष्टाश्च विविधास्तेषां [1]ज्ञात्वैवं द्विजसत्तम ॥ ८८ ॥
शुद्धौ यतेत नाडीनां पूर्वोक्तज्ञानसंयुतः ।

एवं नाडीभेदस्थानादिकं ज्ञात्वा तच्छुद्ध्यर्थं यतेदित्याह—नाडीति ॥ ८८ ॥

योगाभ्यासस्थलं तद्विधिश्च

विविक्तदेश[2]मास्थाय सर्वसंबन्धवर्जितः ॥ ८९ ॥
योगाङ्गद्रव्यसंपूर्णं तत्र दारुमये शुभे ।
आसने कल्पिते दर्भकुशकृष्णाजिनादिभिः ॥ ९० ॥
तावदासनमुत्सेधे तावद्द्वयसमायते ।
उपविश्यासनं सम्यक्स्वस्तिकादि यथारुचि ॥ ९१ ॥

योगस्थलं योगविधिं चाह—विविक्तेति ॥ ८९–९१ ॥

चिन्मुद्रासहितकेवलकुंभकम्

बद्ध्वा प्रागासनं विप्र ऋजुकायः समाहितः ।
नासाग्रन्यस्तनयनो दन्तै[3]र्दन्तानसंस्पृशन् ॥ ९२ ॥
रसनां तालुनि न्यस्य स्वस्थचित्तो निरामयः ।
आकुञ्चितशिरः किंचिन्निबध्नन्योगमुद्रया ॥ ९३ ॥
हस्तौ यथोक्तविधिना प्राणायामं समाचरेत् ।

[1] ज्ञात्वैव—अ, अ १. [2] माश्रित्य—क, अ २. मासाद्य—अ, अ १.
[3] र्दन्तासनं-

प्राणायामलक्षणं वक्तुं भूमिकां रचयति—बद्धेति । नासिकाबन्धनं बन्धत्रयं वा योगमुद्रेत्यर्थः ॥ ९२–९३ ॥ हस्तौ इत्यादि । यद्वा—हस्तौ चिन्मुद्रायुतौ विधाय केवलकुम्भकप्राणायामं कुर्यादित्यर्थः ॥

सहितप्राणायामः

रेचनं पूरणं वायोः शोधनं रेचनं तथा ॥ ९४ ॥
चतुर्भिः क्लेशनं वायोः प्राणायाम उदीर्यते ।

सहितप्राणायामलक्षणमाह—रेचनमिति ॥ ९४ ॥ प्राणायामारम्भसमये शरीरगतदुष्टवायुरेचनं ततः पूरणं ततः कुम्भकेन वायोः शोधनं पुनः निःशेषतो रेचनं, एवं चतुर्भिः पर्यायैः वायोः क्लेशनं उपक्रमप्राणायामः उदीर्यते । एवं प्राणायामत्रये कृते सति अथ यथोक्तप्राणायामयोग्यं शरीरं भवतीत्यर्थः ॥

नाडीशोधकप्राणायामः

हस्तेन दक्षिणेनैव पीडयेन्नासिकापुटम् ॥ ९५ ॥
शनैः शनैरथ बहिः प्रक्षिपेत्पिङ्गलानिलम् ।
इडया वायुमापूर्य ब्रह्मन्षोडशमात्रया ॥ ९६ ॥
पूरितं कुम्भयेत्पश्चाच्चतुःषष्ट्या तु मात्रया ।
द्वात्रिंशन्मात्रया सम्यग्रेचयेत्पिङ्गलानिलम् ॥ ९७ ॥
एवं पुनः पुनः कार्यं व्युत्क्रमानुक्रमेण तु ।
संपूर्णकुम्भवद्देहं कुम्भयेन्मातरिश्वना ॥ ९८ ॥
पूरणान्नाडयः सर्वाः पूर्यन्ते मातरिश्वना ।
एवं कृते सति ब्रह्मंश्चरन्ति दश वायवः ॥ ९९ ॥

हृदयाम्भोरुहं चापि व्याकोचं भवति स्फुटम् ।
तत्र पश्येत्परात्मानं वासुदेवमकल्मषम् ॥ १०० ॥
[1]प्रातर्माध्यन्दिने सायमर्धरात्रे च कुम्भकान् ।
शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत् ॥ १०१ ॥
एकाहमात्रं कुर्वाणः सर्वपापैः प्रमुच्यते ।
संवत्सरत्रयादूर्ध्वं प्राणायामपरो नरः ॥ १०२ ॥
योगसिद्धो भवेद्योगी वायुजिद्विजितेन्द्रियः ।
अल्पाशी स्वल्पनिद्रश्च तेजस्वी बलवान्भवेत् ॥ १०३ ॥
अपमृत्यु[2]मपक्रम्य दीर्घमायुरवाप्नुयात् ।

नाडीशोधनहेतुतया अभ्यसनीयप्राणायामक्रमः उच्यते—**हस्तेनेति** । **अनुक्रमस्तु**, इडया आपूर्य कुम्भित्वा पिङ्गळया रेचनम् । **व्युत्क्रमस्तु**, पिङ्गळया आपूर्य कुम्भित्वा इडया रेचनम् ॥ ९५–९७ ॥ एवं अहरहः चतुर्वारं दिनैकमात्रावृद्धिपूर्वकं अशीतिप्राणायाममभ्यसेत् इत्याह—**सम्पूर्णेति** ॥ ९८–९९ ॥ **व्याकोचं** विकासम् ॥ १००–१०३ ॥

प्राणायामफलम्

प्रस्वेदजननं यस्य [3]प्राणायामेषु सोऽधमः ॥ १०४ ॥
कम्पनं वपुषो यस्य प्राणायामेषु मध्यमः ।
उत्थानं वपुषो यस्य स उत्तम उदाहृतः ॥ १०५ ॥
अधमे व्याधिपापानां नाशः स्यान्मध्यमे पुनः ।
पापरोगमहाव्याधिनाशः स्यादुत्तमे पुनः ॥ १०६ ॥

[1] प्रातर्म—अ, अ २. [2] मतिक्रम्य—क, अ, अ १, अ २.
[3] प्राणायामस्तु—क, अ, अ १, अ २.

अल्पमूत्रोऽल्पविष्ठश्च लघुदेहो मिताशनः ।
पट्विन्द्रियः पटुमतिः कालत्रयविदात्मवान् ॥ १०७ ॥
रेचकं पूरकं मुक्त्वा कुम्भीकरणमेव यः ।
करोति त्रिषु कालेषु नैव तस्यास्ति दुर्लभम् ॥ १०८ ॥

प्रथमाभ्यासकाले स्वेदकम्पनोत्थानादिसिद्धिं तत्फलं चाह—प्रस्वेदेति ॥ १०४–१०७ ॥ केवलकुम्भकारूढयोगिनो वाञ्छितार्थसिद्धिः स्यादित्याह—रेचकमिति ॥ १०८ ॥

प्राणधारणाद्रोगनाशः

नाभिकन्दे च नासाग्रे पादाङ्गुष्ठे च यत्नवान् ।
धारयेन्मनसा प्राणान्सन्ध्याकालेषु वा सदा ॥ १०९ ॥
सर्वरोगैर्विनिर्मुक्तो जीवेद्योगी गतक्लमः ।
कुक्षिरोगविनाशः स्यान्नाभिकन्देषु धारणात् ॥ ११० ॥
[1]नासाग्रधारणाद्दीर्घमायुः स्याद्देहलाघवः ।
ब्राह्मे मुहूर्ते संप्राप्ते वायुमाकृष्य जिह्वया ॥ १११ ॥
पिबतस्त्रिषु मासेषु वाक्सिद्धिर्महती भवेत् ।
[2]अभ्यस्यतश्च षण्मासान्महारोगविनाशनम् ॥ ११२ ॥
यत्रयत्र धृतो वायुरङ्गे रोगादिदूषिते ।
धारणादेव मरुतस्तत्तदारोग्यमश्नुते ॥ ११३ ॥

[1] नासाग्रे—क, अ, अ १, अ २.

[2] अभ्यासतश्च—मु. 'अभ्यस्यतश्च' इति तु पाठो युक्तो भाति.

यद्यदङ्गं रोगदूषितं भवति तत्तदङ्गवायुधारणात् तत्तद्रोगनिवृत्तिद्वारा आयुर्वृद्धिः स्यादित्याह—नाभीति । केवलकुम्भकाभ्याससिद्धो योगी नाभिकन्दे इत्यादि ॥ १०९–११३ ॥

षण्मुखीमुद्रया मनोजयः

मनसो धारणादेव पवनो धारितो भवेत् ।
मनसः स्थापने हेतुरुच्यते द्विजपुङ्गव ॥ ११४ ॥
कारणानि समाहृत्य विषयेभ्यः समाहितः ।
अपानमूर्ध्वमा[1]कृष्येदुदरोपरि धारयेत् ॥ ११५ ॥
बध्नन्कराभ्यां श्रोत्रादिकरणानि [2]यथातथम् ।
[3]युञ्जानस्य यथोक्तेन [4]वर्त्मना स्ववशं मनः ॥ ११६ ॥
[5]मनोवशात्प्राणवायुः स्ववशे स्थाप्यते सदा ।

मनःप्राणयोरविनाभावात् मनोवशार्थं षण्मुखीमुद्रां दर्शयति—मनस इति ॥ ११४ ॥ किं तत्? कारणानि इत्यादि ॥ ११५–११६ ॥ मनोवशातः प्राणोऽपि स्ववशो भवतीत्याह—मन इति ॥

प्राणगतिः

नासिकापुटयोः प्राणः पर्यायेण प्रवर्तते ॥ ११७ ॥
तिस्रश्च नाडिकास्तासु स [6]यावन्तश्चरत्ययम् ।
शङ्खिनीविवरे याम्ये प्राणः प्राणभृतां सताम् ॥ ११८ ॥
[7]तावन्तं च पुनः कालं सौम्ये चरति संततम् ।

[1] कृष्य उ—अ. [2] यथा तथा—क, अ २. [3] युञ्जानश्च—अ, अ १. [4] वर्तनात्—क, अ २. [5] मनश्चक्षुश्च वै—अ, अ १.
[6] यावन्तं च—क, अ २. यावन्नश्च—अ १.
[7] तावन्तश्च—अ, क, अ २.

प्राणगतिं विवृणोति—नासिकेति ॥ ११७ ॥ मूलाधारमारभ्य भ्रूमध्यान्तमिडापिङ्गळादिभेदेन तिस्रश्च इत्यादि । इडादिभेदेन तिस्रो नाडिकाः सन्ति । तासु सुषुम्नायां प्राणगतिः प्राणभृतां मध्ये सतां योगिनामेव भवति । अयोगिनां तु सोऽयं प्राणः शङ्खवत् अन्तरावर्तत्रयविशिष्टेयं शङ्खिनी नासिका तस्या याम्ये विवरे पिङ्गळेतिविश्रुतदक्षिणनासापुटे यावन्तं कालं चरति ॥ ११८ ॥ पुनः तावन्तं कालं सौम्ये वामनासापुटे चरति । एवं प्राणगतिः पिङ्गळेडयोः सन्ततं भवतीत्यर्थः ॥

प्राणगतिज्ञानेन योगाविर्भावः

इत्थं क्रमेण चरता वायुना वायुजिन्नरः ॥ ११९ ॥
अहश्च रात्रिं पक्षं च [1]मासं मत्वायनादिकम् ।
अन्तर्मुखो विजानीयात् [2]कालभेदं [3]समाहितः ॥ १२० ॥
अङ्गुष्ठादि[4]स्वावयवास्फुरणादर्शनैरपि ।
अरिष्टैर्जीवितस्यापि जानीयात्क्षयमात्मनः ॥ १२१ ॥
ज्ञात्वा यतेत कैवल्यप्राप्तये योगवित्तमः ।
पादाङ्गुष्ठे कराङ्गुष्ठे स्फुरणं यस्य नश्यति ॥ १२२ ॥
तस्य संवत्सरादूर्ध्वं [5]जीवितव्यक्षयो भवेत् ।
मणिबन्धे तथा गुल्फे स्फुरणं यस्य नश्यति ॥ १२३ ॥
षण्मासावधिरेतस्य जीवितस्य स्थितिर्भवेत् ।
[6]कूर्परास्फुरणं यस्य तस्य त्रैमासिकी स्थितिः ॥ १२४ ॥

[1] मासमृत्वय—मु. [2] कालभेदस्स—अ, अ १. [3] समाहितं—अ २.
[4] स्वावयवात्—क. स्वावयव—अ, अ १.
[5] जीवितस्य—क, अ, अ २. [6] कूर्परे—अ, क, अ २.

कक्षे मेहनपार्श्वे च स्फुरणानुपलम्भने ।
मासावधि[1]जीवितं स्यात् [2]तदर्धं सत्वदर्शने ॥ १२५ ॥
आश्रिते [3]जठरे द्वारे दिनानि दश जीवितम् ।
ज्योतिः खद्योतवद्यस्य तदर्धं तस्य जीवितम् ॥ १२६ ॥
जिह्वाग्रादर्शने त्रीणि दिनानि स्थितिरात्मनः ।
ज्वालाया दर्शने मृत्युर्द्विदिने भवति ध्रुवम् ॥ १२७ ॥
एवमादीन्यरिष्टानि दृष्ट्वाऽऽयुः[4]क्षरकारणम् ।
निःश्रेयसाय युञ्जीत जपध्यानपरायणः ॥ १२८ ॥
मनसा परमात्मानं ध्यात्वा तद्रूपतामियात् ।

यद्येवं वायुगतिज्ञो योगी भवति तदा स्वग्शास्त्रानुरोधेन स्वकालगतिं विदित्वा झटिति मानसं निःश्रेयसाय युञ्जन् अनात्मापह्नवसिद्धं परमात्मानं स्वमात्रमिति ज्ञात्वा तद्भावापन्नो भवेदित्याह---इत्थमिति ॥ ११९-१२० ॥ कालभेदज्ञानोपायमाह---अङ्गुष्ठादीत्यादिना ॥ १२१ ॥ स्ववाक्यं स्वयमेव विवृणोति---पादाङ्गुष्ठ इति ॥ १२२-१२८ ॥

मर्मस्थानेषु प्राणस्य प्रत्याहारः

यद्यष्टादशभेदेषु मर्मस्थानेषु धारणम् ॥ १२९ ॥
स्थानात्स्थानं समाकृष्य प्रत्याहारः स उच्यते ।
पादाङ्गुष्ठं तथा गुल्फं जङ्घामध्यं तथैव च ॥ १३० ॥
मध्यमूर्वोश्च मूलं च पायुर्हृदयमेव च ।
मेहनं देहमध्यं च नाभिं च गलकूर्परम् ॥ १३१ ॥

[1] जीवितस्य—अ, क, अ १, अ २.
[2] तदर्धस्य तु—अ.
[3] जठर—क, अ २.
[4] क्षय—अ, क, अ १, अ २.

तालुमूलं च मूलं च घ्राणस्याक्ष्णोश्च मण्डलम् ।
भ्रुवोर्मध्यं ललाटं च मूलमूर्ध्वं च जानुनी ॥ १३२ ॥
मूलं च करयोर्मूलं महान्त्येतानि वै द्विज ।

प्रत्याहारप्रकारमाह—यदीति ॥ १२९ ॥ कानि मर्मस्थानानीत्यत आह—पादाङ्गुष्ठमिति । पादाङ्गुष्ठाद्यष्टादशस्थानेषु आरोहावरोहणक्रमेण प्राणं प्रत्याहरेदित्यर्थः ॥ १३०–१३२ ॥

धारणाप्रकारः

पञ्चभूतमये देहे भूतेष्वेतेषु पञ्चसु ॥ १३३ ॥
मनसो धारणं यत्तद्युक्तस्य च यमादिभिः ।
धारणा सा च संसारसागरोत्तारकारणम् ॥ १३४ ॥

सङ्क्षेपविस्तराभ्यां धारणाप्रकारमाह—पञ्चेति । प्रविभक्तपञ्चभूतेषु ॥ १३३–१३४ ॥

देहावयवेषु पञ्चभूतधारणम्

आजानुपादपर्यन्तं पृथिवीस्थानमिष्यते ।
[1]पीतला चतुरस्रा च वसुधा वज्रलाञ्छिता ॥ १३५ ॥
स्मर्तव्या पञ्चघटिका तत्रारोप्य प्रभञ्जनम् ।
आजानुकटिपर्यन्तमपां स्थानं प्रकीर्तितम् ॥ १३६ ॥
अर्धचन्द्रसमाकारं श्वेतमर्जुनलाञ्छितम् ।
स्मर्तव्यमम्भः श्वसनमारोप्य दश[2]नाडिका ॥ १३७ ॥

[1] पित्तला—मु.
[2] नाडिकां—क. नाडिकाः—अ.

आदेहमध्यकट्यन्तमग्निस्थानमुदाहृतम् ।
तत्र सिन्दूरवर्णोऽग्निर्ज्वलनं दश पञ्च च ॥ १३८ ॥
[1]स्मर्तव्या घटिका प्राणं कृत्वा कुम्भे तथेरितम् ।
नाभेरुपरि नासान्तं वायुस्थानं तु तत्र वै ॥ १३९ ॥
वेदिकाकारवद्धूम्रो बलवान्भूतमारुतः ।
स्मर्तव्यः कुम्भकेनैव प्राणमारोप्य मारुतम् ॥ १४० ॥
घटिकाविंशतिस्तस्माद् [2]घ्राणाद्ब्रह्मबिलावधि ।
व्योमस्थानं नभस्तत्र भिन्नाञ्जनसमप्रभम् ॥ १४१ ॥
[3]व्योम्नि मारुतमारोप्य कुम्भकेनैव यत्नवान् ।

स्वदेहावयवे पृथिव्यादिपञ्चभूतधारणं तत्फलं चाह—**आजान्विति** ॥ १३५ ॥ एवं पृथिव्यादिपञ्चभूतधारणात् पञ्चभूतभौतिकजयः । तत्र मृत्युरपि न विद्यते इत्यर्थः । अबादिधारणाक्रममाह—**आजान्विति** ॥ १३६–१४१ ॥

पृथिव्यादिषु अनिरुद्धादिध्यानं तत्फलं च

पृथिव्यंशे तु देहस्य चतुर्बाहुं किरीटिनम् ॥ १४२ ॥
अनिरुद्धं हरिं योगी यतेत भवमुक्तये ।
अबंशे पूरयेद्योगी नारायणमुदग्रधीः ॥ १४३ ॥
प्रद्युम्नमग्नौ वाय्वंशे संकर्षणमतः परम् ।
व्योमांशे परमात्मानं वासुदेवं सदा स्मरेत् ॥ १४४ ॥
अचिरादेव तत्प्राप्तिर्युञ्जानस्य न संशयः ।

[1] स्मर्तव्या नाडिका—अ, क, अ १, अ २.
[2] प्राणा—अ १.
[3] ध्येयं मारुत—अ, अ १.

एवं आदौ पञ्चभूतधारणां कृत्वा अथ पृथिव्याद्यंशेषु अनिरुद्धादीन् ध्यायेदित्याह- पृथिवीति ॥ १४२–१४४ ॥ ध्यानफलमाह— अचिरादिति ॥

परमात्मध्यानं तत्फलं च

बद्ध्वा योगासनं पूर्वं हृद्देशे हृदयाञ्जलिः ॥ १४५ ॥
नासाग्रन्यस्तनयनो जिह्वां कृत्वा च तालुनि ।
दन्तैर्दन्तानसंस्पृश्य ऊर्ध्वकायः समाहितः ॥ १४६
संयमेच्चेन्द्रियग्राम[1]मात्मबुद्ध्या विशुद्धया ।
चिन्तनं वासुदेवस्य परस्य परमात्मनः ॥ १४७ ॥
स्वरूपव्याप्तरूपस्य ध्यानं कैवल्यसिद्धिदम् ।
याममात्रं वासुदेवं चिन्तयेत्कुम्भकेन यः ॥ १४८ ।
सप्तजन्मार्जितं पापं तस्य नश्यति योगिनः ।

परमात्मध्यानोपायं तत्फलं चाह—बद्ध्वेति ॥ १४५–१४७ ॥ एवं ध्यानावान्तरफलमाह—याममिति ॥ १४८ ॥ पापं तदुपलक्षितागाम्यादि-कर्मत्रयम् ॥

तुरीयातीतं वासुदेवचैतन्यम्

नाभिकन्दात्समारभ्य यावद्धृदयगोचरम् ॥ १४९ ॥
जाग्रद्वृत्तिं विजानीयात्कण्ठस्थं स्वप्नवर्तनम् ।
सुषुप्तं तालुमध्यस्थं तुर्यं भ्रूमध्यसंस्थितम् ॥ १५० ॥

[1] मात्र—उ.

तुर्यातीतं परं ब्रह्म ब्रह्मरन्ध्रे तु लक्षयेत् ।
जाग्रद्वृत्तिं समारभ्य यावद्ब्रह्मबिलान्तरम् ॥ १९१ ॥
तत्रात्माख्यं [1]तुरीयः स्यात् [2]तुर्यान्ते विष्णुरुच्यते ।

वासुदेवापेक्षया तुर्यातीतं भिन्नं इत्याशङ्क्य तुर्यातीतभूमिकाप्रदर्शनपूर्वकं वासुदेवचैतन्यमेव तुर्यातीतमित्याह—नाभीति ॥ १४९ ॥ ब्रह्मरन्ध्राद्यसम्भवप्रबोधतः तुर्यातीतमेव विष्णुतत्त्वं नेतरदित्यर्थः ॥ १९०–१९१ ॥

सगुणध्यानम्

ध्यानेनैव समायुक्तो व्योम्नि चात्यन्तनिर्मले ॥ १९२ ॥
सूर्यकोटिद्युतिधरं नित्योदितमधोक्षजम् ।
हृदयाम्बुरुहासीनं ध्यायेद्वा विश्वरूपिणम् ॥ १९३ ॥
अनेकाकारखचितमनेकवदनान्वितम् ।
अनेकभुजसंयुक्तमनेकायुधमण्डितम् ॥ १९४ ॥
नानावर्णधरं देवं शान्तमुग्रमुदायुधम् ।
अनेकनयनाकीर्णं सूर्यकोटिसमप्रभम् ॥ १९५ ॥
ध्यायतो योगिनः सर्वमनोवृत्तिर्विनश्यति ।

सगुणनिर्गुणध्यानप्रकारमाह—ध्यानेनेति ॥ १९२ ॥ ध्यायेत् यद्वा विराजं विश्वरूपिणम ॥ १९३ ॥ अनेकाकारखचितं स्थिरचरात्मकमित्यर्थः ॥ १९४–१९५ ॥ वैराजपदध्यानफलमाह—ध्यायत इति । वैराजपदध्यानारूढमनसः विराजो विभुत्वेन तत्रैव पर्यवसन्नत्वात् मनो मनस्त्वं विहाय वैराजपदमेव भजतीत्यर्थः ॥

[1] तु तुर्यस्य—क, अ २, तुरीयस्य—अ, अ १. [2] कथान्ते—अ, अ १.

निर्गुणध्यानम्

हृत्पुण्डरीकमध्यस्थं [1]चैतन्यज्योतिरव्ययम् ॥ १९६ ॥
कदम्बगोलकाकारं तुर्यातीतं परात्परम् ।
अनन्तमानन्दमयं चिन्मयं भास्करं विभुम् ॥ १९७ ॥
निवातदीपसदृशमकृत्रिममणिप्रभम् ।
ध्यायतो योगिनस्तस्य मुक्तिः करतले स्थिता ॥ १९८ ॥

निर्गुणध्यानमाह—हृदिति ॥ हृत्पुण्डरीकमध्ये प्रत्यग्रूपेण तिष्ठतीति **हृत्पुण्डरीकमध्यस्थम्** । हृत्सम्बन्धात् जडत्वप्रसक्तौ **चैतन्यज्योतिः**। तस्य स्वाश्रयनाशात् व्ययप्रसक्तौ **अव्ययम्** ॥ १९६ ॥ कदम्बगोळकवत् आकारो यस्य सहस्रारस्य तत् **कदम्बगोळकाकारम्** । "तुरीयं मूर्ध्नि संस्थितम्" इति श्रुत्यनुरोधेन तत्र उपलभ्यमानतुरीयस्य तदाकृतित्वं युज्यत एवेत्यर्थः । तदुपाध्यभावे तदेव **तुरीयातीतं** परात् तुरीयादपि **परं**, **अनन्तं** परिच्छेदत्रयाभावात्, "देशतः कालतो वस्तुतः परिच्छेदरहितं ब्रह्म" इति श्रुतेः । **आनन्दमयं**, परमानन्दस्वरूपत्वात् । **चिन्मयं**, चिन्मात्रत्वात् । खद्योतादिसूर्यान्तभासामपि भासकाकारत्वात् **भास्करम्** । विद्वद्दृष्ट्या ब्रह्ममात्रं भवतीति **विभुम्** ॥ १९७ ॥ **निवातदीपसदृशं**, आकाशवदचलत्वात् । **अकृत्रिम**-कौस्तुभादिमणि**प्रभं** प्रकाशमात्रमित्यर्थः । य एवंविशेषणविशिष्टं ब्रह्म स्वमात्रधिया ध्यायति तस्य एवं **ध्यायतो योगिनो मुक्तिः** विदेहमुक्तिः **करे स्थिता**, तद्भावापन्नत्वात् इत्यर्थः ॥ १९८ ॥

सविशेषज्ञानस्यापि मुक्तिहेतुत्वम्

विश्वरूपस्य देवस्य रूपं यत्किंचिदेव हि ।
स्थवीयः सूक्ष्ममन्यद्वा पश्यन्हृदयपङ्कजे ॥ १९९ ॥

[1] वैतानज्योति—अ, अ १.

ध्यायतो योगिनो यस्तु साक्षादेव प्रकाशते ।
अणिमादिफलं चैव सुखेनैवोपजायते ॥ १६० ॥
जीवात्मनः परस्यापि यद्येवमुभयोरपि ।
अहमेव परंब्रह्म ब्रह्माहमिति संस्थितिः ॥ १६१ ॥
समाधिः स तु विज्ञेयः सर्ववृत्तिविवर्जितः ।
ब्रह्म संपद्यते योगी न भूयः संसृतिं व्रजेत् ॥ १६२ ॥
एवं विशोध्य तत्त्वानि योगी निःस्पृहचेतसा ।
यथा निरिन्धनो वह्निः स्वयमेव प्रशाम्यति ॥ १६३ ॥
ग्राह्याभावे मनःप्राणो निश्चयज्ञानसंयुतः ।
शुद्धसत्त्वे परे लीनो जीवः सैन्धवपिण्डवत् ॥ १६४ ॥
मोहजालक[1]संघातं विश्वं पश्यति स्वप्नवत् ।
सुषुप्तिवद्यश्चरति स्वभावपरि[2]निश्चलः ॥ १६५ ॥
निर्वाणपदमाश्रित्य योगी कैवल्यमश्नुते ॥

इत्युपनिषत् ॥

निर्विशेषज्ञानिन एव मुक्तिः न हि सविशेषज्ञानिनः इत्याशङ्क्य सविशेषज्ञानस्य निर्विशेषज्ञानहेतुतया तस्यापि मुक्तिहेतुत्वं सिद्धं इत्याह—**विश्वरूपस्येति** ॥ १५९ ॥ अणिमादिफलं सकामस्येत्यर्थः । यदि निष्कामः तदा तस्य प्रत्यगभिन्नब्रह्मनिर्विकल्पकसमाधिः स्यादिति ॥ १६० ॥ समाधिलक्षणमप्याह—जीवेति । अब्रह्मत्वानात्मत्वप्रसक्तौ तन्निरसनाय तयोः एकत्वप्रबोधाय च व्यतिहारेण **अहमेव परं ब्रह्म ब्रह्माहमिति** प्रत्यगभिन्नब्रह्मरूपेण

[1] सङ्घातो—अ, अ १.  [2] निश्चयः—अ, अ १.

अवस्थानासंप्रज्ञातनिर्विकल्पकसमाधिः । एवं निर्विकल्पकसमाधिबलात् पराक्सापेक्षप्रत्यगभिन्नब्रह्मगतविशेषासम्भवप्रबोधसिद्धं ब्रह्म संपद्यते ॥ १६१–१६२ ॥ केन ब्रह्म सम्पद्यते इत्यत्र—एवं इति । स्वातिरिक्तस्पृहाविरळचेतसा ब्रह्म सम्पद्यते इत्यर्थः । मनआदिकरणग्रामे सति ब्रह्मसम्पत्तिः कुत इत्याशङ्क्य निष्प्रतियोगिकब्रह्ममात्रप्रबोधसमकालं आभासतो वाऽपि करणग्रामोऽस्तीति यदि भ्रान्तिः तदा तच्छान्तिः भवेदिति सदृष्टान्तमाह—यथेति । प्रशाम्यते शाम्यति ॥ १६३ ॥ कुतः? स्वातिरेकेण ग्राह्याभावे प्राणोपाधिकः शुद्धसत्वे परे लीनो जीवः सलिलसैन्धवपिण्डवत् जीवभावं विहाय ब्रह्मीभूतो भवतीत्यर्थः ॥ १६४ ॥ यदि स्वातिरिक्तविश्वस्फूर्तिः स्यात् तदा तत्स्फूर्तौ मोह इत्यादि । तदस्फूर्तौ सुषुप्तिवद्यश्चरति सः स्वभावपरिनिश्चलः ॥ १६५ ॥ स्वातिरिक्तविश्वस्फूर्त्यपह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रतया अवस्थानं यत् तत् निर्वाणपदम् । एवं ब्रह्ममात्रज्ञानयोगी ज्ञानसमकालं कैवल्यरूपेण अवशिष्यते इत्यर्थः । इत्युपनिषच्छब्दः त्रिशिखिब्राह्मणोपनिषत्समाप्त्यर्थः ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
प्रकृतोपनिषद्व्याख्या लिखिता स्फुटतो लघु ॥
प्रकृतोपनिषद्व्याख्या षष्ट्युत्तरशतत्रयम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे चतुश्चत्वारिंशत्सङ्ख्यापूरकं त्रिशिखिब्राह्मणोपनिषद्विवरणं सम्पूर्णम्

---

# दर्शनोपनिषत्

आप्यायन्तु—इति शान्तिः

जीवन्मुक्तिसाधनं अष्टाङ्गयोगः

दत्तात्रेयो महायोगी भगवान्भूतभावनः ।
चतुर्भुजो महाविष्णुर्योगसाम्राज्यदीक्षितः ॥ १ ॥
तस्य शिष्यो मुनिवरः सांकृतिर्नाम भक्तिमान् ।
पप्रच्छ गुरुमेकान्ते प्राञ्जलिर्विनयान्वितः ॥ २ ॥
भगवन्ब्रूहि मे योगं साष्टाङ्गं सप्रपञ्चकम् ।
येन विज्ञानमात्रेण जीवन्मुक्तो भवाम्यहम् ॥ ३ ॥
सांकृते शृणु वक्ष्यामि योगं साष्टाङ्गदर्शनम् ।

यमाद्यष्टाङ्गयोगेद्धब्रह्ममात्रप्रबोधतः ।
योगिनो यत्पदं यान्ति तत्कैवल्यपदं भजे ॥

इह खलु सामवेदप्रविभक्तेयं दर्शनोपनिषत् निर्विशेषब्रह्मज्ञानसहकृतयमाद्यष्टाङ्गयोगप्रकटनव्यग्रा निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । साङ्कृतिदत्तात्रेयप्रश्नप्रतिवचनरूपेयं आख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—**दत्तात्रेय** इति ॥ १–२ ॥ किमिति ? **भगवन्** इत्यादि ॥ ३ ॥ साङ्कृतिना एवं पृष्टो भगवानाह—**साङ्कृत** इति ॥

अष्टाङ्गोद्देशः

यमश्च नियमश्चैव तथैवासनमेव च ॥ ४ ॥
प्राणायामस्तथा ब्रह्मन्प्रत्याहारस्ततः परम् ।
धारणा च तथा ध्यानं समाधिश्चाष्टमं मुने ॥ ५ ॥

अष्टाङ्गानि कानीत्यत आह—यमश्चेति ॥ ४–५ ॥

दशविधयमः

अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयाऽऽर्जवम् ।
क्षमा धृतिर्मिताहारः शौचं चेति यमा दश ॥ ६ ॥

दशधा भिन्नयमावयवमाह—अहिंसेति ॥ ६ ॥

अहिंसा

वेदोक्तेन प्रकारेण विना सत्यं तपोधन ।
कायेन मनसा वाचा हिंसा हिंसा न चान्यथा ॥ ७ ॥
आत्मा सर्वगतोऽच्छेद्यो न ग्राह्य इति या मतिः ।
सा चाहिंसा वरा प्रोक्ता मुने वेदान्तवेदिभिः ॥ ८ ॥

उपायोपेयभेदेन अहिंसादिदशयमलक्षणमाह—वेदेति । वेदोक्तयज्ञीयपश्वादिहिंसा अहिंसैवेत्यर्थः ॥ ७ ॥ यद्वा—आत्मेत्यादि ॥ ८ ॥

सत्यम्

चक्षुरादीन्द्रियैर्दृष्टं श्रुतं घ्रातं मुनीश्वर ।
तस्यैवोक्तिर्भवेत्सत्यं विप्र तन्नान्यथा भवेत् ॥ ९ ॥

सर्वं सत्यं [1]वरं ब्रह्म न चान्यदिति या मतिः ।
तच्च सत्यं वरं प्रोक्तं वेदान्तज्ञानपारगैः ॥ १० ॥

उपायोपेयसत्यलक्षणं तु—चक्षुरित्यादि ॥ ९–२९ ॥

अस्तेयम्

अन्यदीये तृणे रत्ने काञ्चने मौक्तिकेऽपि च ।
[2]मनसा विनिवृत्तिर्या तदस्तेयं विदुर्बुधाः ॥ ११ ॥
आत्मन्यनात्मभावेन व्यवहारविवर्जितम् ।
यत्तदस्तेयमित्युक्तमात्मविद्भिर्महा[3]मुने ॥ १२ ॥

ब्रह्मचर्यम्

कायेन वाचा मनसा स्त्रीणां परिविवर्जनम् ।
ऋतौ भार्यां तदा [4]स्वस्य ब्रह्मचर्यं तदुच्यते ॥ १३ ॥
ब्रह्मभावे मनश्चारं ब्रह्मचर्यं परन्तप ।

दया

स्वात्मवत्सर्वभूतेषु कायेन मनसा गिरा ॥ १४ ॥
अनुज्ञा या दया सैव प्रोक्ता वेदान्तवेदिभिः ।

आर्जवम्

पुत्रे मित्रे कलत्रे च रिपौ स्वात्मनि संततम् ॥ १५ ॥
एकरूपं [5]मुने यत्तदार्जवं प्रोच्यते मया ।

[1] परं—अ, क. [2] मनसाऽपिनि—अ. [3] मते—क, अ, अ १.
[4] तस्य—अ १, क. [5] मनो—अ.

क्षमा

कायेन मनसा वाचा शत्रुभिः परिपीडिते ॥ १६ ॥
बुद्धिक्षोभनिवृत्तिर्या क्षमा सा मुनिपुङ्गव ।

धृतिः

वेदादेव विनिर्मोक्षः संसारस्य न चान्यथा ॥ १७ ॥
इति विज्ञाननिष्पत्तिर्धृतिः प्रोक्ता हि वैदिकैः।
अहमात्मा न चान्योऽस्मीत्येवमप्रच्युता मतिः ॥ १८ ॥

मिताहारः

अल्पमृष्टाशनाभ्यां च चतुर्थांशावशेषकम् ।
[1]तस्माद्योगानुगुण्येन भोजनं मितभोजनम् ॥ १९ ॥

शौचम

स्वदेहमलनिर्मोक्षो मृज्जलाभ्यां महामुने ।
यत्तच्छौचं भवेद्बाह्यं मानसं मननं विदुः ॥ २० ॥
अहं शुद्ध इति ज्ञानं शौचमाहुर्मनीषिणः ।
अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः ॥ २१ ॥
उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ।
ज्ञानशौचं परित्यज्य बाह्ये यो रमते नरः ॥ २२ ॥
स मूढः काञ्चनं त्यक्त्वा लोष्टं गृह्णाति सुव्रत ।

[1] यत्तयो—अ.

ब्रह्मात्मवेदनविधिः

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ॥ २३ ॥
न चास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित् ।
लोकत्रयेऽपि कर्तव्यं किंचिन्नास्त्यात्मवेदिनाम् ॥ २४ ॥
तस्मात्सर्वप्रयत्नेन मुनेऽहिंसादिसाधनैः ।
आत्मानमक्षरं ब्रह्म विद्धि [1]ज्ञानात्तु वेदनात् ॥ २५ ॥

इति प्रथमः खण्डः

दशविधनियमः

तपः संतोषमास्तिक्यं दानमीश्वरपूजनम् ।
सिद्धान्तश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम् ॥ १ ॥
एते च नियमाः प्रोक्तास्तान्वक्ष्यामि क्रमाच्छृणु ।

दशधा भिन्ननियमावयवानाह—तप इति ॥ १ ॥

तपः

वेदोक्तेन प्रकारेण कृच्छ्रचान्द्रायणादिभिः ॥ २ ॥
शरीरशोषणं यत्तत्तप इत्युच्यते बुधैः ।
को वा मोक्षः कथं [2]केन संसारं प्रतिपन्नवान् ॥ ३ ॥
इत्या[3]लोकनमर्थज्ञास्तपः शंसन्ति पण्डिताः ।

उपायोपेयभेदेन तपआदिनियमलक्षणमाह—वेदेति ॥ २–१० ॥

[1] ज्ञानात्म—अ, [2] तेन—उ, [3] लोचन—अ २, क.

सन्तोषः

यदृच्छालाभतो नित्यं प्रीतिर्या जायते नृणाम् ॥ ४ ॥

तत्संतोषं विदुः प्राज्ञाः परिज्ञानैकतत्पराः ।
[1]ब्रह्मावलोकपर्यन्ताद्विरक्त्या यल्लभेत्प्रियम् ॥ ५ ॥
सर्वत्र विगतस्नेहः संतोषं परमं विदुः ।

आस्तिक्यम्

श्रौते स्मार्ते च विश्वासो [2]यत्तदास्तिक्यमुच्यते ॥ ६ ॥

दानम्

न्यायार्जितधनं श्रान्ते श्रद्धया वैदिके जने ।
अन्यद्वा [3]यत्प्रदीयन्ते तद्दानं प्रोच्यते मया ॥ ७ ॥

ईश्वरपूजनम्

रागाद्यपेतं हृदयं वागदुष्टाऽनृतादिना ।
हिंसादिरहितं कर्म यत्तदीश्वरपूजनम् ॥ ८ ॥

सिद्धान्तश्रवणम्

सत्यं ज्ञानमनन्तं च परानन्दं परं ध्रुवम् ।
प्रत्यगित्यवगन्तव्यं वेदान्तश्रवणं [4]बुधः ॥ ९ ॥

[1] ब्रह्मादि—उ.
[2] यस्तदा—अ, अ १.
[3] यत्प्रदीयेत—अ. यत्प्रतीयन्ते—उ १.
[4] बुधाः—अ, अ १, अ २. बुध—क.

ह्रीः

वेदलौकिकमार्गेषु कुत्सितं कर्म यद्भवेत् ।

तस्मिन्भवति या लज्जा ह्रीः सैवेति प्रकीर्तिता ॥ १० ॥

मतिः

वैदिकेषु च सर्वेषु श्रद्धा या सा मतिर्भवेत् ।

गुरुणा चोपदिष्टोऽपि [1]तत्र संबन्धवर्जितः ॥ ११ ॥

वेदविरुद्धमार्गः गुरुणा उपदिष्टोऽपि तत्र संबन्धवर्जितः सन वेदोक्तानुष्ठानमेव कुर्यादित्यर्थः ॥ ११-१६ ॥

जपः

वेदोक्तेनैव मार्गेण मन्त्राभ्यासो जपः स्मृतः ।

कल्पसूत्रे यथा वेदे धर्मशास्त्रे पुराणके ॥ १२ ॥

इतिहासे च वृत्तिर्या स जपः प्रोच्यते मया ।

जपस्तु द्विविधः प्रोक्तो वाचिको मानसस्तथा ॥ १३ ॥

वाचिकोपांशुरुच्चैश्च द्विविधः परिकीर्तितः ।

मानसो मननध्यानभेदाद्वैविध्यमाश्रितः ॥ १४ ॥

उच्चैर्जपादुपांशुश्च सहस्रगुणमुच्यते ।

मानसश्च तथोपांशोः सहस्रगुणमुच्यते ॥ १५ ॥

[1] तन्त्र—अ.

उच्चैर्जपश्च सर्वेषां यथोक्तफलदो भवेत् ।
नीचैः श्रोत्रेण चेन्मन्त्रः [1]श्रुतश्चेन्निष्फलं भवेत् ॥ १६ ॥

इति द्वितीयः खण्डः

आसनानि नव

स्वस्तिकं गोमुखं पद्मं वीरसिंहासनं तथा ।
भद्रं मुक्तासनं चैव मयूरासनमेव च ॥ १ ॥
सुखासनसमाख्यं च नवमं मुनिपुङ्गव ।

यमनियमलक्षणमुक्त्वा आसनलक्षणमाह---स्वस्तिकमिति ॥ १-१४ ॥

स्वस्तिकम्

जानूर्वोरन्तरे कृत्वा सम्यक् पादतले उभे ॥ २ ॥
समग्रीवशिरःकायः स्वस्तिकं नित्यमभ्यसेत् ।

गोमुखम्

सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे नियोजयेत् ॥ ३ ॥
दक्षिणेऽपि तथा सव्यं गोमुखं तत्प्रचक्षते ।

पद्मम्

अङ्गुष्ठावधि गृह्णीयाद्धस्ताभ्यां व्युत्क्रमेण तु ॥ ४ ॥
ऊर्वोरुपरि विप्रेन्द्र कृत्वा पादतलद्वयम् ।
पद्मासनं भवेत्प्राज्ञ सर्वरोगभयापहम् ॥ ५ ॥

[1] श्रुतःस्यान्निष्फलो---अ. श्रुतं चे---क, अ २.

देहमध्यं विजानीहि मनुजानां तु सांकृते ।
कन्दस्थानं मुनिश्रेष्ठ मूलाधारान्नवाङ्गुलम् ॥ ३ ॥
चतुरङ्गुलमायामविस्तारं मुनिपुङ्गव ।
कुक्कुटाण्डवदाकारं भूषितं तु त्वगादिभिः ॥ ४ ॥
तन्मध्ये नाभिरित्युक्तं योगज्ञैर्मुनिपुङ्गव ।

प्राणायामस्य नाडीपुञ्जदेहप्राणनिर्वर्त्यत्वेन देहतत्कार्येयत्तापरिज्ञानं विन प्राणायामसिद्धिः न स्यादिति देहनाडीप्राणेयत्तां प्रपञ्चयति—शरीरमिति शिखिस्थानं अग्निस्थानम् ॥ १–१० ॥

नाडीपरिगणनम्

कन्दमध्यस्थिता नाडी सुषुम्नेति प्रकीर्तिता ॥ ५ ॥
तिष्ठन्ति परितस्तस्य नाड्यो मुनिपुङ्गव ।
द्विसप्ततिसहस्राणि तासां मुख्याश्चतुर्दश ॥ ६ ॥
सुषुम्ना पिङ्गला तद्वदिडा चैव सरस्वती ।
पूषा च वरुणा चैव हस्तिजिह्वा यशस्विनी ॥ ७ ॥
अलम्बुसा कुहूश्चैव विश्वोदारा पयस्विनी ।
शङ्खिनी चैव गान्धारा इति मुख्याश्चतुर्दश ॥ ८ ॥
आसां मुख्यतमास्तिस्रस्तिसृष्वेकोत्तमोत्तमा ।
ब्रह्मनाडीति सा प्रोक्ता मुने वेदान्तवेदिभिः ॥ ९ ॥
पृष्ठमध्यस्थितेनास्था वीणादण्डेन सुव्रत ।
सह मस्तकपर्यन्तं सुषुम्ना सुप्रतिष्ठिता ॥ १० ॥

कुण्डल्याः स्थानं स्वरूपं च

नाभिकन्दादधः स्थानं कुण्डल्या द्व्यङ्गुलं मुने ।
अष्टप्रकृतिरूपा सा कुण्डली मुनिसत्तम ॥ ११ ॥
यथावद्वायुचेष्टां च जलान्नादीनि नित्यशः ।
परितः कन्दपार्श्वेषु निरुध्यैव सदा स्थिता ॥ १२ ॥
स्वमुखेन [1]सदाऽऽवेष्ट्य ब्रह्मरन्ध्रमुखं मुने ।

कुण्डलिन्याःस्थानं तत्स्वरूपं चाह— नाभीति । पृथिव्यप्तेजोवाय्वाकाशमनोबुद्ध्यहङ्काररूपिण्यः अष्टौ प्रकृतयः ॥ ११–१२ ॥

नाडीस्थानानि

सुषुम्नाया इडा सव्ये दक्षिणे पिङ्गला स्थिता ॥ १३ ॥
सरस्वती कुहूश्चैव सुषुम्नापार्श्वयोः स्थिते ।
गान्धारा हस्तिजिह्वा च इडायाः पृष्ठपूर्वयोः ॥ १४ ॥
पूषा यशस्विनी चैव पिङ्गलापृष्ठपूर्वयोः ।
कुहोश्च हस्तिजिह्वाया मध्ये विश्वोदरा स्थिता ॥ १५ ॥
यशस्विन्याः कुहोर्मध्ये वरुणा सुप्रतिष्ठिता ।
पूषायाश्च सरस्वत्या मध्ये प्रोक्ता यशस्विनी ॥ १६ ॥
गान्धारायाः सरस्वत्या मध्ये प्रोक्ता च शङ्खिनी ।
अलम्बुसा स्थिता पायुपर्यन्तं कन्दमध्यगा ॥ १७ ॥
पूर्वभागे सुषुम्नाया राकायाः संस्थिता कुहूः ।
अधश्चोर्ध्वं स्थिता नाडी [2]याम्यनासान्तमिष्यते ॥ १८ ॥

[1] समावेष्ट्य—क, अ २.
[2] वामना—अ, अ १.

इडा तु सव्यनासान्तं संस्थिता मुनिपुङ्गव ।
यशस्विनी च वामस्य पादाङ्गुष्ठान्तमिष्यते ॥ १९ ॥
पूषा वामाक्षिपर्यन्ता पिङ्गलायास्तु पृष्ठतः ।
पयस्विनी च याम्यस्य कर्णान्तं प्रोच्यते बुधैः ॥ २० ॥
सरस्वती तथा [1]चोर्ध्वं गता जिह्वा तथा मुने ।
हस्तिजिह्वा तथा सव्यपादाङ्गुष्ठान्तमिष्यते ॥ २१ ॥
शङ्खिनी नाम या नाडी सव्यकर्णान्तमिष्यते ।
गान्धारा सव्यनेत्रान्ता प्रोक्ता वेदान्तवेदिभिः ॥ २२ ॥
विश्वोदराभिधा नाडी कन्दमध्ये व्यवस्थिता ।

सुषुम्नानाडीपरितः प्रधाननाड्यः तिष्ठन्तीत्याह—सुषुम्नाया इति ॥ १३–२२ ॥

नाडीषु वायुसञ्चारः

प्राणोऽपानस्तथा व्यानः समानोदान एव च ॥ २३ ॥
नागः कूर्मश्च कृकरो देवदत्तो धनंजयः ।
एते नाडीषु सर्वासु चरन्ति दश वायवः ॥ २४ ॥
तेषु प्राणादयः पञ्च मुख्याः पञ्चसु सुव्रत ।
प्राणसंज्ञस्तथाऽपानः पूज्यः प्राणस्तयोर्मुने ॥ २५ ॥
आस्यनासिकयोर्मध्ये नाभिमध्ये तथा हृदि ।
प्राणसंज्ञोऽनिलो नित्यं वर्तते मुनिसत्तम ॥ २६ ॥

[1] चोर्ध्वगा जिह्वान्तं स्थिता मुने—क, अ २. चोर्ध्वानाजिह्वायास्तथा मुने—अ १. चोर्ध्वाजिह्वायाश्च तथा मुने—अ.

अपानो वर्तते नित्यं गुद[1]मध्योरुजानुषु ।
उदरे सकले कट्यां नाभौ जङ्घे च सुव्रत ॥ २७ ॥
व्यानः श्रोत्राक्षिमध्ये च ककुद्भ्यां गुल्फयोरपि ।
प्राणस्थाने गले चैव वर्तते मुनिपुङ्गव ॥ २८ ॥
उदानसंज्ञो विज्ञेयः पादयोर्हस्तयोरपि ।
समानः सर्वदेहेषु व्याप्य तिष्ठत्य[2]संशयः ॥ २९ ॥
नागादिवायवः पञ्च त्वगस्थ्यादिषु संस्थिताः ।

एवमुक्तासु नाडीषु प्राणादयश्चरन्तीत्याह—प्राण इति ॥ २३–२६ ॥ उदरे सकले यावदुदरे । जङ्घे जङ्घायां ॥ २७–२९ ॥

वायुव्यापाराः

निःश्वासोच्छ्वासकासाश्च प्राणकर्म हि सांकृते ॥ ३० ॥
अपानाख्यस्य वायोस्तु विण्मूत्रादिविसर्जनम् ।
समानः सर्वसामीप्यं करोति मुनिपुङ्गव ॥ ३१ ॥
उदान ऊर्ध्वगमनं करोत्येव न संशयः ।
व्यानो [3]विवादकृत् प्रोक्तो मुने वेदान्तवेदिभिः ॥ ३२ ॥
उद्गारादिगुणः प्रोक्तो नागाख्यस्य महामुने ।
धनंजयस्य शोभादि कर्म प्रोक्तं हि सांकृते ॥ ३३ ॥
निमीलनादि कूर्मस्य क्षुधा तु कृकरस्य च ।
देवदत्तस्य विप्रेन्द्र तन्द्रीकर्म प्रकीर्तितम् ॥ ३४ ॥

प्राणादिदशवायुव्यापारानाह—निःश्वासेति ॥ ३०–३४ ॥

[1] मेढ्रोरु—क, अ २. [2] संशयम्—अ. [3] विनाद—क.

नाडीदेवता:

सुषुम्नायाः शिवो देव इडाया देवता हरिः ।
पिङ्गलाया विरिञ्चः स्यात् सरस्वत्या विराण्मुने ॥ ३५ ॥
पूषाऽधिदेवता प्रोक्तो वरुणा वायुदेवता ।
हस्तिजिह्वाभिधायास्तु वरुणो देवता भवेत् ॥ ३६ ॥
यशस्विन्या मुनिश्रेष्ठ भगवान् भास्करस्तथा ।
अलम्बु[1]माया अब्रात्मा वरुणः परिकीर्तितः ॥ ३७ ॥
कुहोः क्षुद्देवता प्रोक्ता गान्धारी चन्द्रदेवता ।
शङ्खिन्याश्चन्द्रमास्तद्वत् पयस्विन्याः प्रजापतिः ॥ ३८ ॥
विश्वोदराभिधायास्तु भगवान् पावकः पतिः ।

सुषुम्नादिचतुर्दशनाडीदेवताभेदमाह सुषुम्नाया इति ॥ ३५--३८ ॥

नाडीषु चन्द्रसूर्यसञ्चार:

इडायां चन्द्रमा नित्यं चरत्येव महामुने ॥ ३९ ॥
पिङ्गलायां रविस्तद्वन्मुने वेदविदां वर ।

सदेडापिङ्गळयोश्चन्द्रसूर्यौ चरतः इत्याह--इडायामिति ॥ ४० ॥

नाडीषु संवत्सरात्मकप्राणसूर्यसञ्चार:

पिङ्गलाया इडायां तु वायोः संक्रमणं तु यत् ॥ ४० ॥
तदुत्तरायणं प्रोक्तं मुने वेदान्तवेदिभिः ।
इडायाः पिङ्गलायां तु प्राणसंक्रमणं मुने ॥ ४१ ॥

[1] षाधमन्यात्मा—अ, अ १.

दक्षिणायनमित्युक्तं पिङ्गलायामिति श्रुतिः ।
इडापिङ्गलयोः संधिं यदा प्राणः समागतः ॥ ४२ ॥
अमावास्या तदा प्रोक्ता देहे देहभृतां वर ।
मूलाधारं यदा प्राणः प्रविष्टः पण्डितोत्तम ॥ ४३ ॥
तदाद्यं विषुवं प्रोक्तं तापसैस्तापसोत्तम ।
प्राणसंज्ञो मुनिश्रेष्ठ मूर्धानं [1]प्राविशद्यदा ॥ ४४ ॥
तदन्त्यं विषुवं प्रोक्तं तापसैस्तत्त्वचिन्तकैः ।
निःश्वासोच्छ्वासनं सर्वं मासानां संक्रमो भवेत् ॥ ४५ ॥
[2]इडया कुण्डलीस्थानं यदा प्राणः समागतः ।
सोमग्रहणमित्युक्तं तदा तत्त्वविदां वर ॥ ४६ ॥
यदा पिङ्गलया प्राणः कुण्डलीस्थानमागतः ।
तदातदा भवेत् सूर्यग्रहणं मुनिपुङ्गव ॥ ४७ ॥

संवत्सरात्मकप्राणसूर्यस्य नाडीगराशिसञ्चारतो दिनपक्षमासायनादिग्रहणादिः भवतीत्याह—पिङ्गलाया इति ॥ ४१–४७ ॥

अन्तस्तीर्थप्राशस्त्यम्

श्रीपर्वतं शिरःस्थाने केदारं तु ललाटके ।
वाराणसीं महाप्राज्ञ भ्रुवोर्घ्राणस्य मध्यमे ॥ ४८ ॥
कुरुक्षेत्रं कुचस्थाने प्रयागं हृत्सरोरुहे ।
चिदम्बरं तु हृन्मध्ये आधारे कमलालयम् ॥ ४९ ॥

[1] प्रविशेद्यदा—अ.
[2] इडायाः—अ, अ १, अ २.

आत्मतीर्थं समुत्सृज्य बहिस्तीर्थानि यो व्रजेत् ।
करस्थं स महारत्नं त्यक्त्वा काचं विमार्गते ॥ ९० ॥
भावतीर्थं परं तीर्थं प्रमाणं सर्वकर्मसु ।
अन्यथाऽऽलिङ्गयते कान्ता [1]अन्यथाऽऽलिङ्गयते सुता ॥ ९१ ॥
तीर्थानि तोयपूर्णानि देवान् काष्ठादिनिर्मितान् ।
योगिनो न प्रपद्यन्ते स्वात्मप्रत्ययकारणात् ॥ ९२ ॥
बहिस्तीर्थात् परं तीर्थमन्तस्तीर्थं महामुने ।
आत्मतीर्थं महातीर्थमन्यत्तीर्थं निरर्थकम् ॥ ९३ ॥
चित्तमन्तर्गतं दुष्टं तीर्थस्नानैर्न शुध्यति ।
शतशोऽपि जलैर्धौतं सुराभाण्डमिवाशुचि ॥ ९४ ॥
विषुवायनकालेषु ग्रहणे चान्तरे सदा ।
वाराणस्यादिके स्थाने स्नात्वा शुद्धो भवेन्नरः ॥ ९५ ॥
ज्ञानयोगपराणां तु पादप्रक्षालितं जलम् ।
भावशुद्धयर्थ[2]मज्ञानां तत्तीर्थं मुनिपुङ्गव ॥ ९६ ॥

मस्तकाद्याधारान्तं श्रीशैलादिपुण्यस्थलं भवतीत्याह—**श्रीपर्वतमिति** ॥ ४८–४९ ॥ एवं भावनामयमात्मतीर्थं तदेव मुमुक्षुभिः सेव्यं इति स्तौति—**आत्मतीर्थमिति** । **काचं**—काचमणिम् ॥ ९० ॥ देहादिनिर्वर्त्य-सर्वकर्मसु तीर्थबुद्धिः गरीयसीत्यर्थः । तत्र दृष्टान्तस्तु—**अन्यथेति** ॥ ९१ ॥ अत एवं **तीर्थानीति** ॥ ९२ ॥ तदेव **आत्मतीर्थम्** ॥ ९३ ॥ बाह्यतीर्थस्नानेन कोऽपि न शुध्यतीति सदृष्टान्तमाह—**चित्तमिति** ॥ ९४ ॥ न तथा

[1] 'भावेनदुहिताऽन्यथा' इति पाठान्तरम्—उ. [2] मज्ञानात्—अ, अ १.

भावतीर्थस्नानेनेत्याह—विषुवेति । भ्रूमध्यादिस्थानेषु स्वात्मलक्ष्यानुसन्धानतः शुद्धात्मैव भवतीत्यर्थः ॥ ५५ ॥ एवमात्मतीर्थस्नानानधिकारे[री]तीर्थपादचरणोदकस्पर्शतः शुद्धो भवतीत्याह—ज्ञानेति ॥ ५६ ॥

### आत्मनि शिवदृष्टिः

तीर्थे दाने जपे यज्ञे काष्ठे पाषाणके सदा ।
शिवं पश्यति मूढात्मा शिवे देहे प्रतिष्ठिते ॥ ५७ ॥
अन्तःस्थं मां परित्यज्य बहिष्ठं यस्तु सेवते ।
हस्तस्थं पिण्डमुत्सृज्य लिहेत् कूर्परमात्मनः ॥ ५८ ॥
शिवमात्मनि पश्यन्ति प्रतिमासु न योगिनः ।
अज्ञानां भावनार्थाय प्रतिमाः परिकल्पिताः ॥ ५९ ॥

स्वाज्ञाः स्वातिरिक्तात्मानं द्रष्टुमिच्छन्ति, स्वज्ञाः स्वमात्मानं पश्यन्तीत्याह—तीर्थे इति ॥ ५७–५८ ॥ अत एव शिवमिति । अयोगिजनानुकम्पया प्रतिमाऽपि विकल्पितेत्याह—अज्ञानामिति ॥ ५९ ॥

### ब्रह्मदर्शनेन ब्रह्मभावः

अपूर्वमपरं ब्रह्म स्वात्मानं सत्यमद्वयम् ।
प्रज्ञानघनमानन्दं यः पश्यति स पश्यति ॥ ६० ॥
नाडीपुञ्जं सदाऽसारं नरभावं महामुने ।
समुत्सृज्यात्मनाऽऽत्मानमहमित्यवधारय ॥ ६१ ॥
अशरीरं शरीरेषु महान्तं विभुमीश्वरम् ।
आनन्दमक्षरं साक्षान्मत्वा धीरो न शोचति ॥ ६२ ॥

विभेदजनके ज्ञाने नष्टे ज्ञानबलान्मुने ।
आत्मनो ब्रह्मणो भेदमसन्तं [1]किं करिष्यति ॥ ६३ ॥

निर्विशेषं ब्रह्म यः पश्यति स तदेव भवतीत्याह—अपूर्वमिति । यस्मात् पूर्वं कारणं परं कार्यं वा न विद्यते तत् कार्यकारणकलनाशून्यं ब्रह्म स्वमात्रमिति यः पश्यति स तन्मात्रमवशिष्यते इत्यर्थः ॥ ६० ॥ यावच्चित्तशुद्धिः तावत् नरभावनया योगं युञ्जीत, ततः शुद्धावुदितायां नरभावं विहाय ब्रह्मभावेन वर्तस्वेत्याह—नाडीति ॥ ६१ ॥ यः कोऽप्येवमात्मानं जानाति स कृतकृत्यो भवतीत्याह—अशरीरमिति ॥ ६२ ॥ स्वाज्ञान-जभेददृष्टयपाये निर्भेदं ब्रह्म प्रसीदतीत्याह—विभेदेति । वस्तुतः कालत्रये-ऽप्यसंभवभेदः किं करिष्यति? स्वस्य लब्धात्मकत्वान्निर्भेदं ब्रह्मावशिष्यते इत्यर्थः ॥ ६३ ॥

इति चतुर्थः खण्डः

नाडीशोधनम्

सम्यक्कथय मे ब्रह्मन् नाडीशुद्धिं समासतः ।
यया शुद्धया सदा ध्यायन् जीवन्मुक्तो भवाम्यहम् ॥ १ ॥
सांकृते शृणु वक्ष्यामि नाडीशुद्धिं समासतः ।
विध्युक्तकर्मसंयुक्तः कामसंकल्पवर्जितः ॥ २ ॥
यमाद्यष्टाङ्गसंयुक्तः शान्तः सत्यपरायणः ।
स्वात्मन्यवस्थितः सम्यक् ज्ञानिभिश्च सुशिक्षितः ॥ ३ ॥

[1] कः—अ.

पर्वताग्रे नदीतीरे बिल्वमूले वनेऽथवा ।
मनोरमे शुचौ देशे मठं कृत्वा समाहितः ॥ ४ ॥
आरभ्य चासनं पश्चात् प्राङ्मुखोदङ्मुखोऽपि वा ।
समग्रीवशिरःकायः संवृतास्यः सुनिश्चलः ॥ ५ ॥
नासाग्रे शशभृद्बिम्बे बिन्दु[1]मध्ये तुरीयकम् ।
स्रवन्तममृतं पश्येन्नेत्राभ्यां सुसमाहितः ॥ ६ ॥
[2]इडया प्राणमाकृष्य पूरयित्वोदरस्थितम् ।
ततोऽग्निं देहमध्यस्थं ध्यायन् ज्वालावलीयुतम् ॥ ७ ॥
बिन्दुनादसमायुक्तमग्निबीजं विचिन्तयेत् ।
पश्चाद्विरेचयेत् सम्यक् प्राणं पिङ्गलया बुधः ॥ ८ ॥
पुनः पिङ्गलयाऽऽपूर्य वह्निबीजमनुस्मरेत् ।
पुनर्विरेचयेद्धीमानिडयैव शनैःशनैः ॥ ९ ॥
त्रिचतुर्वासरं [3]वाऽथ त्रिचतुर्वारमेव [4]च ।
षट्[5]कृत्वो विचरेन्नित्यं [6]रहस्येवं त्रिसंधिषु ॥ १० ॥

नरभावभावितनाडीशुद्धिबुभुत्सया पृच्छतीत्याह—सम्यगिति ॥ १ ॥ प्रश्नोत्तरं भगवानाह—साङ्कृत इति ॥ कस्तत्प्रकारः इत्यत्र—विध्युक्तेति ॥ २–५ ॥ स्रवदमृतचन्द्रबिम्बं नासाग्रे अवलोकयन् योगं समारभेदित्यर्थः ॥ ६–७ ॥ रामिति अग्निबीजम् ॥ ८–९ ॥ प्रतिदिनं त्रिचतुर्वारम् ॥ १०–१४ ॥

[1] मध्यतु—अ १. मध्यं तु—अ. [2] इडायाः—अ. [3] वाऽपि—अ.
[4] वा—अ. [5] कृत्वा—अ १, अ २, क. [6] रहस्ये—उ, अ १.

नाडीशुद्धिचिह्नानि

नाडीशुद्धिमवाप्नोति पृथक्चिह्नोपलक्षितः ।
शरीरलघुता दीप्तिर्वह्नेर्जाठरवर्तिनः ॥ ११ ॥
नादाभिव्यक्तिरित्येतच्चिह्नं तत्सिद्धिसूचकम् ।
यावदेतानि संपश्येत्तावदेवं समाचरेत् ॥ १२ ॥

स्वात्मशुद्धिः

अथवैतत् परित्यज्य स्वात्मशुद्धिं समाचरेत् ।
आत्मा शुद्धः सदा नित्यः सुखरूपः स्वयंप्रभः ॥ १३ ॥
अज्ञानान्मलिनो भाति ज्ञानाच्छुद्धो [1]विभात्ययम् ।
अज्ञानमलपङ्कं यः क्षालयेज्ज्ञानतोयतः ।
स एव सर्वदा शुद्धो नान्यः कर्मरतो हि सः ॥ १४ ॥

इति पञ्चमः खण्डः

प्राणायामलक्षणम्

प्राणायामक्रमं वक्ष्ये सांकृते शृणु सादरम् ।
प्राणायाम इति प्रोक्तो रेचपूरककुम्भकैः ॥ १ ॥
वर्णत्रयात्मकाः प्रोक्ता रेचपूरककुम्भकाः ।
स एष प्रणवः प्रोक्तः प्राणायामश्च तन्मयः ॥ २ ॥

[1] भव—उ,

इडया वायुमाकृष्य पूरयित्वोदरस्थितम् ।
शनैः षोडशभिर्मात्रैरकारं तत्र संस्मरेत् ॥ ३ ॥
पूरितं धारयेत् पश्चाच्चतुःषष्ट्या तु मात्रया ।
उकारमूर्तिमत्रापि संस्मरन् प्रणवं जपेत् ॥ ४ ॥
यावद्वा शक्यते तावद्धारयेज्जपतत्परः ।
पूरितं रेचयेत् पश्चान्मकारेणानिलं बुधः ॥ ५ ॥
शनैः पिङ्गलया तत्र द्वात्रिंशन्मात्रया पुनः ।
प्राणायामो भवेदेषः ततश्चैवं समभ्यसेत् ॥ ६ ॥
पुनः पिङ्गलयाऽऽपूर्य मात्रैः षोडशभिस्तथा ।
अकारमूर्तिमत्रापि स्मरेदेकाग्रमानसः ॥ ७ ॥
धारयेत् पूरितं विद्वान् प्रणवं संजपन् वशी ।
उकारमूर्तिं [1]स ध्यायन् चतुःषष्ट्या तु मात्रया ॥ ८ ॥
मकारं तु स्मरन् पश्चाद्रेचयेदिडयाऽनिलम् ।
एवमेव पुनः कुर्यादिडयाऽऽपूर्य बुद्धिमान् ॥ ९ ॥
एवं समभ्यसेन्नित्यं प्राणायामं मुनीश्वर ।
एवमभ्यासतो नित्यं षण्मासाद् ज्ञानवान् भवेत् ॥ १० ॥
वत्सराद्ब्रह्मविद्वान् स्यात् तस्मान्नित्यं समभ्यसेत् ।
योगाभ्यासरतो नित्यं स्वधर्मनिरतश्च यः ॥ ११ ॥
प्राणसंयमनेनैव ज्ञानान्मुक्तो भविष्यति ।

विशेषतः प्राणायामेति ॥ १–११ ॥

[1] संधाय च—अ २. संध्यायां च—अ १. स ध्यायात् च—अ.

पूरकादिलक्षणम्

बाह्यादापूरणं वायोरुदरे पूरको हि सः ॥ १२ ॥
संपूर्णकुम्भवद्वायोर्धारणं कुम्भको भवेत् ।
बहिर्विरेचनं वायोरुदराद्रेचकः स्मृतः ॥ १३ ॥

पूरकादिलक्षणमाह—बाह्यादिति ॥ १२–१३ ॥

प्राणायामसिद्धयः

प्रस्वेदजनको यस्तु प्राणायामेषु सोऽधमः ।
कम्पनं मध्यमं विद्यादुत्थानं चोत्तमं विदुः ॥ १४ ॥
पूर्वपूर्वं प्रकुर्वीत यावदुत्थानसंभवः ।
संभवत्युत्तमे प्राज्ञः प्राणायामे सुखी भवेत् ॥ १५ ॥
प्राणायामेन चित्तं तु शुद्धं भवति सुव्रत ।
चित्ते शुद्धे शुचिः साक्षात् प्रत्यग्ज्योतिर्व्यव[1]स्थितः ॥ १६
[2]प्राणश्चित्तेन संयुक्तः परमात्मनि तिष्ठति ।
प्राणायामपरस्यास्य पुरुषस्य महात्मनः ॥ १७ ॥
देहश्चोत्तिष्ठते तेन किंचिज्ज्ञानाद्विमुक्तता ।
रेचकं पूरकं मुक्त्वा कुम्भकं नित्यमभ्यसेत् ॥ १८ ॥
सर्वपापविनिर्मुक्तः सम्यग्ज्ञानमवाप्नुयात् ।
मनोजवत्वमाप्नोति पलितादि च नश्यति ॥ १९ ॥

[1] स्थितम्—अ.

[2] प्राणश्चि—उ, क.

प्राणायामैकनिष्ठस्य न किंचिदपि दुर्लभम् ।
तस्मात् सर्वप्रयत्नेन प्राणायामान समभ्यसेत् ॥ २० ॥

स्वेदादिसिद्धिमाह— प्रस्वेदेति ॥ १४–१७ ॥ उत्तिष्ठते भूतलात् ॥ १८–२० ॥

रोगनिवर्तकप्राणायामभेदाः

विनियोगान् प्रवक्ष्यामि प्राणायामस्य सुव्रत ।
संध्ययोर्ब्राह्मकालेऽपि मध्याह्ने वाऽथवा सदा ॥ २१ ॥
बाह्यं प्राणं समाकृष्य [1]पूरयित्वोदरेण च ।
नासाग्रे नाभिमध्ये च पादाङ्गुष्ठे च धारणात् ॥ २२ ॥
सर्वरोगविनिर्मुक्तो जीवेद्वर्षशतं नरः ।
नासाग्रधारणाद्वाऽपि जितो भवति सुव्रत ॥ २३ ॥
सर्वरोगनिवृत्तिः स्यान्नाभिमध्ये तु धारणात् ।
शरीरलघुता विप्र [2]पादाङ्गुष्ठनिरोधनात् ॥ २४ ॥
जिह्वया वायुमाकृष्य यः पिबेत् सततं नरः ।
श्रमदाहविनिर्मुक्तो योगी नीरोगतामियात् ॥ २५ ॥
जिह्वया वायुमाकृष्य जिह्वामूले निरोधयेत् ।
पिबेदमृतमव्यग्रं सकलं सुखमाप्नुयात् ॥ २६ ॥
इडया वायुमाकृष्य भ्रुवोर्मध्ये निरोधयेत् ।
यः पिबेदमृतं शुद्धं व्याधिभिर्मुच्यते हि सः ॥ २७ ॥

[1] पूरयित्वाऽऽद—अ १.    [2] पादाङ्गुष्ठे—अ.

इडया वेदतत्त्वज्ञ तथा पिङ्गलयैव च ।
नाभौ निरोधयेत्तेन व्याधिभिर्मुच्यते नरः ॥ २८ ॥
मासमात्रं त्रिसन्ध्यायां जिह्वयाऽऽरोप्य मारुतम् ।
अमृतं च [1]पिबन्नाभौ मन्दंमन्दं निरोधयेत् ॥ २९ ॥
वातजाः पित्तजा दोषा नश्यन्त्येव न संशयः ।
नासाभ्यां वायुमाकृष्य नेत्र[2]द्वन्द्वे निरोधयेत् ॥ ३० ॥
नेत्ररोगा विनश्यन्ति तथा श्रोत्रनिरोधनात् ।
तथा वायुं समारोप्य धारयेच्छिरसि स्थितम् ॥ ३१ ॥
शिरोरोगा विनश्यन्ति सत्यमुक्तं हि सांकृते ।

योगसिद्ध्यन्तरायरोगनिरासकान् धारणाभेदानाह— **विनियोगानिति** । **ब्राह्मकाले** ब्राह्मे मुहूर्ते ॥ २१–३९ ॥

षण्मुखीमुद्राभ्यासादिना वायुजयः

स्वस्तिकासनमास्थाय समाहितमनास्तथा ॥ ३२ ॥
अपानमूर्ध्वमुत्थाप्य प्रणवेन शनैः शनैः ।
हस्ताभ्यां धारयेत्सम्यक् कर्णादिकरणानि च ॥ ३३ ॥
अङ्गुष्ठाभ्यां मुने श्रोत्रे तर्जनीभ्यां तु चक्षुषी ।
नासापुटावथान्याभ्यां प्रच्छाद्य करणानि वै ॥ ३४ ॥
आनन्दावि[3]र्भवो यावत् तावन्मूर्धनि [4]धारयेत् ।
प्राणः प्रयात्यनेनैव ब्रह्मरन्ध्रं महामुने ॥ ३५ ॥

[1] पिब—क, अ २.
[2] द्वन्द्वं—अ १.
[3] र्भवं—अ १.
[4] धाराणात्—क, अ १, अ २.

ब्रह्मरन्ध्रं गते वायौ नादश्चोत्पद्यतेऽनघ ।
शङ्खध्वनिनिभश्चादौ मध्ये मेघध्वनिर्यथा ॥ ३६ ॥
शिरोमध्यगते वायौ गिरिप्रस्रवणं यथा ।
पश्चात् प्रीतो महा[1]प्राज्ञ साक्षादात्मोन्मुखो भवेत् ॥ ३७ ॥
पुनस्तज्ज्ञाननिष्पत्तिर्योगात् संसारनिह्नुतिः ।
[2]दक्षिणोत्तरगुल्फेन सीविनीं पीडयेत् स्थिराम् ॥ ३८ ॥
सव्येतरेण गुल्फेन पीडयेद्बुद्धिमान् नरः ।
जान्वोरधः स्थितां सन्धिं स्मृत्वा देवं त्रियम्बकम् ॥ ३९ ॥
विनायकं च संस्मृत्य तथा वागीश्वरीं पुनः ।
[3]लिङ्गनालात् समाकृष्य वायुमप्यग्रतो मुने ॥ ४० ॥
प्रणवेन नियुक्तेन बिन्दुयुक्तेन बुद्धिमान् ।
मूलाधारस्य विप्रेन्द्र मध्ये तं तु निरोधयेत् ॥ ४१ ॥
निरुध्य वायुना दीप्तो वह्निरूहति कुण्डलीम् ।
पुनः सुषुम्नया वायुर्वह्निना सह गच्छति ॥ ४२ ॥
एवमभ्यसतस्तस्य जितो वायुर्भवेद्भृशम् ।

एवं षण्मुखीमुद्राभ्यासतः ब्रह्मरन्ध्रमिति ॥ ३६ ॥ यथा तथा चन्द्रमण्डलगिरितः अमृतप्रवाहो जायते । तेन भ्रूमध्यस्थज्योतिर्लिङ्गमभिषिच्य तदमृतास्वादनतो योगी विमृत्युः भवति । ततः पश्चात् ॥ ३७–३८ ॥ दक्षिणेतरगुल्फाभ्यां सीविनीं मेढ्रगुदान्तराळस्थनाडीं सम्पीडयन् जान्वोरधः-स्थितसन्धिं शिवलिङ्गं स्मृत्वा विनायकं वागीश्वरीं च ध्यात्वा ततो लिङ्गनालादित्यादि ॥ ३९–४२ ॥

[1] प्रज्ञः—अ. [2] दक्षिणेतर—अ, अ २, क. [3] लिङ्गे—क.

वायुजयचिह्नानि

प्रस्वेदः प्रथमः पश्चात् कम्पनं मुनिपुङ्गव ॥ ४३ ॥

उत्थानं च शरीरस्य चिह्नमेतज्जितेऽनिले ।

वायुजयसूचकचिह्नान्याह — प्रस्वेद इति ॥ ४३–४८ ॥

वायुजयेन रोगपापविनाशवैराग्यपूर्विका ज्ञानोत्पत्तिः

एवमभ्यसतस्तस्य मूलरोगो विनश्यति ॥ ४४ ॥

भगन्धरं च नष्टं स्यात् सर्व[1]रोगाश्च सांकृते ।

पातकानि विनश्यन्ति क्षुद्राणि च महान्ति च ॥ ४५ ॥

नष्टे पापे विशुद्धं स्याच्चित्तदर्पणमद्भुतम् ।

पुनर्ब्रह्मादिभोगेभ्यो वैराग्यं जायते हृदि ॥ ४६ ॥

विरक्तस्य तु संसाराज्ज्ञानं कैवल्यसाधनम् ।

तेन पाशापहानिः स्यात् [2]ज्ञात्वा देवं सदाशिवम् ॥ ४७ ॥

ज्ञानामृतरसो येन सकृदास्वादितो भवेत् ।

स सर्वकार्यमुत्सृज्य तत्रैव परिधावति ॥ ४८ ॥

ज्ञानस्वरूपमेवाहुर्जगदेतद्वि[3]चक्षणाः ।

अर्थस्वरूपमज्ञानात् पश्यन्त्यन्ये कुदृष्टयः ॥ ४९ ॥

आत्मस्वरूपविज्ञानादज्ञानस्य परिक्षयः ।

क्षीणेऽज्ञाने महाप्राज्ञ रागादीनां परिक्षयः ॥ ५० ॥

[1] रोगाणि—उ. [2] ज्ञाना—अ १. ज्ञानादेव सदाशिवः—अ. [3] लक्ष—उ.

रागाद्यसंभवे प्राज्ञ पुण्यपापवि[1]मर्शनम् ।
तयोर्नाशे शरीरेण न पुनः संप्रयुज्यते ॥ ५१ ॥

विचक्षणाः ज्ञानिनः ॥ ४९–५० ॥ विमर्शनं विशोधनं विनाशनमित्यर्थः ॥ ५१ ॥

इति षष्ठः खण्डः

---

प्रत्याहारलक्षणम्, तद्भेदाश्च

अथातः संप्रवक्ष्यामि प्रत्याहारं महामुने ।
इन्द्रियाणां विचरतां विषयेषु स्वभावतः ॥ १ ॥
बलादाहरणं तेषां प्रत्याहारः स उच्यते ।
यत्पश्यति तु तत्सर्वं ब्रह्म पश्यन्समाहितः ॥ २ ॥
प्रत्याहारो भवेदेष ब्रह्मविद्भिः पुरोदितः ।
[2]यद्यच्छुद्धमशुद्धं वा करोत्यामरणान्तिकम् ॥ ३ ॥
तत्सर्वं ब्रह्मणे कुर्यात् प्रत्याहारः स उच्यते ।
अथवा नित्यकर्माणि ब्रह्माराधनबुद्धितः ॥ ४ ॥
काम्यानि च तथा कुर्यात् प्रत्याहारः स उच्यते ।
अथवा वायुमाकृष्य स्थानात् स्थानं निरोधयेत् ॥ ५ ॥
दन्तमूलात्तथा कण्ठे कण्ठादुरसि मारुतम् ।
उरोदेशात् समाकृष्य नाभिदेशे निरोधयेत् ॥ ६ ॥

[1] मर्दनम्—अ, अ १, अ २, क.

[2] यदिच्छु—अ २.

नाभिदेशात् समाकृष्य कुण्डल्यां तु निरोधयेत् ।
कुण्डलीदेशतो विद्वान् मूलाधारे निरोधयेत् ॥ ७ ॥
अथापानात् कटिद्वन्द्वे तथोरौ च सुमध्यमे ।
तस्माज्जानुद्वये जङ्घे पादाङ्गुष्ठे निरोधयेत् ॥ ८ ॥
प्रत्याहारोऽयमुक्तस्तु प्रत्याहारपरैः पुरा ।

यमनियमासनप्राणायामेयत्ता प्रतिपाद्य ततः प्रत्याहारस्वरूपमाह—अथेति ॥ १–१२ ॥

प्रत्याहारफलम्

एवमभ्यासयुक्तस्य पुरुषस्य महात्मनः ॥ ९ ॥
सर्वपापानि नश्यन्ति भवरोगश्च सुव्रत ।

वायुधारणात्मकप्रत्याहारः

नासाभ्यां वायुमाकृष्य निश्चलः स्वस्तिकासनः ॥ १० ॥
पूरयेदनिलं विद्वानापादतलमस्तकम् ।
पश्चात् पादद्वये तद्वत् मूलाधारे तथैव च ॥ ११ ॥
नाभिकन्दे च हृन्मध्ये कण्ठमूले च तालुके ।
भ्रुवोर्मध्ये ललाटे च तथा मूर्धनि धारयेत् ॥ १२ ॥

वदान्तसम्मतप्रत्याहारः

देहे त्वात्ममतिं विद्वान् समाकृष्य समाहितः ।
आत्मनाऽऽत्मनि निर्द्वन्द्वे निर्विकल्पे निरोधयेत् ॥ १३ ॥

प्रत्याहारः समाख्यातः साक्षाद्वेदान्तवेदिभिः ।
एवमभ्यसतस्तस्य न किंचिदपि दुर्लभम् ॥ १४ ॥

किं बहुना—देहे इति ॥ १३–१४ ॥

इति सप्तमः खण्डः

पञ्चभूतेषु धारणा

अथातः संप्रवक्ष्यामि धारणाः पञ्च सुव्रत ।
देहमध्यगते व्योम्नि बाह्याकाशं तु धारयेत् ॥ १ ॥
प्राणे बाह्यानिलं तद्वत् ज्वलने चाग्निमौदरे ।
तोयं तोयांशके भूमिं भूमिभागे महामुने ॥ २ ॥
हयरावलकाराख्यं मन्त्रमुच्चारयेत् क्रमात् ।
धारणैषा परा प्रोक्ता सर्वपापविशोधिनी ॥ ३ ॥
[1]जान्वन्तं पृथिवी ह्यंशो ह्यपां [2]पाय्वन्तमुच्यते ।
[3]हृदयांशस्तथाग्न्यंशो भ्रू[4]मध्यान्तोऽनिलांशकः ॥ ४ ॥
आकाशांशस्तथा प्राज्ञ मूर्धांशः परिकीर्तितः ।
ब्रह्माणं पृथिवीभागे विष्णुं तोयांशके तथा ॥ ५ ॥
अग्न्यंशे च महेशानमीश्वरं चानिलांशके ।
आकाशांशे महाप्राज्ञ धारयेत्तु सदाशिवम् ॥ ६ ॥

प्रत्याहारलक्षणमुक्त्वा धारणालक्षणमाह—अथेति ॥ १–६ ॥

[1] जान्वन्तः—अ. [2] पाय्वंश—अ २, क. पाय्वन्त उ, अ.
[3] हृदयान्त—अ, अ १. [4] मध्यांशो—क, अ २.

आत्मनि धारणा

अथ वा तव वक्ष्यामि धारणां मुनिपुङ्गव ।
पुरुषे सर्व[1]शास्तारं बोधानन्दमयं शिवम् ॥ ७ ॥
धारयेद्बुद्धिमान् नित्यं सर्वपापविशुद्धये ।
ब्रह्मादिकार्यरूपाणि स्वेस्वे संहृत्य कारणे ॥ ८ ॥
सर्वकारणमव्यक्तमनिरूप्यमचेतनम् ।
साक्षादात्मनि संपूर्णे धारयेत् प्रणवे मनः ।
इन्द्रियाणि समाहृत्य मनसात्मनि योजयेत् ॥ ९ ॥

पुरुषे प्रतीचि स्वातिरिक्तसर्वग्रासतया शिवं धारयेत् । यद्वा—पुरुषे परमात्मनि सर्वशास्तारं प्रत्यञ्चं धारयेत् ॥ ७–९ ॥

इत्यष्टमः खण्डः

सविशेषब्रह्मध्यानम्

अथातः संप्रवक्ष्यामि ध्यानं संसारनाशनम् ।
ऋतं सत्यं परं ब्रह्म सर्वसंसारभेषजम् ॥ १ ॥
ऊर्ध्व[2]रेतं विरूपाक्षं विश्वरूपं महेश्वरम् ।
सोऽहमित्यादरेणैव ध्यायेद्योगीश्वरेश्वरम् ॥ २ ॥

धारणामुक्त्वा सविशेषनिर्विशेषब्रह्मध्यानमाह—अथेति । ऋतं कर्मफलमपरं ब्रह्म । सत्यं ज्ञानफलं परं ब्रह्म ॥ १–२ ॥

[1] शास्ता—उ १. [2] रूपं—अ, अ१.

निर्विशेषब्रह्मध्यानम्

अथ वा सत्यमीशानं ज्ञानमानन्दमद्वयम् ।
अत्यर्थ[1]ममलं नित्यमादिमध्यान्तवर्जितम् ॥ ३ ॥
तथाऽस्थूलमनाकाशमसंस्पृश्यमचाक्षुषम् ।
न रसं न च गन्धाख्यमप्रमेयमनूपमम् ॥ ४ ॥
आत्मानं सच्चिदानन्दमनन्तं ब्रह्म सुव्रत ।
अहमस्मीत्यभिध्याये[2]द्देहातीतं विमुक्तये ॥ ५ ॥

अर्थजातमतीत्य ज्ञप्तिमात्रतया वर्तते इति अत्यर्थम ॥ ३ ॥ अनाकाशमित्यादिपञ्चविशेषणतः पञ्चभूतवैलक्षण्यमुक्तं भवति ॥ ४–६ ॥

ध्यानफलम्

एवमभ्यासयुक्तस्य पुरुषस्य महात्मनः ।
क्रमाद्वेदान्तविज्ञानं [3]विजायेत न संशयः ॥ ६ ॥

इति नवमः खण्डः

समाधिस्वरूपम्

अथातः संप्रवक्ष्यामि समाधिं भवनाशनम् ।
समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ॥ १ ॥
नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ।
[4]एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः ॥ २ ॥

[1] मचलं—अ, अ १, अ २, क.
[2] द्ध्येया—मु.
[3] विज्ञायेत—अ २.
[4] एकस्मिन्—उ.

तस्माददद्वैतमेवास्ति न प्रपञ्चो न संसृतिः ।
यथाऽऽकाशो घटाकाशो [1]मठाकाश इतीरितः ॥ ३ ॥
तथा भ्रान्तैर्द्विधा प्रोक्तो ह्यात्मा जीवेश्वरात्मना ।
नाहं देहो न च प्राणो नेन्द्रियाणि मनो न हि ॥ ४ ॥
सदा साक्षिस्वरूपत्वाच्छिव [2]एवास्मि केवलः ।
इति धीर्या मुनिश्रेष्ठ सा समाधिरिहोच्यते ॥ ५ ॥

ध्यानप्रकारमुक्त्वा समाधिप्रकारमाह-- अथेति ॥ १–२ ॥ यस्मादेवं तस्मात् । यथाऽऽकाश एव घटाकाशः ॥ ३–६ ॥

ब्रह्ममात्रावशेषः

सोऽहं ब्रह्म न संसारी न मत्तोऽन्यः कदाचन ।
यथा फेनतरङ्गादि समुद्रादुत्थितं पुनः ॥ ६ ॥
समुद्रे लीयते तद्वत् जगन्मय्यनुलीयते ।
तस्मान्मनः पृथङ् नास्ति जगन्माया च नास्ति हि ॥ ७ ॥
यस्यैवं परमात्माऽयं प्रत्यग्भूतः प्रकाशितः ।
स तु याति [3]च पुंभावं स्वयं साक्षात् परामृतम् ॥ ८ ॥
यदा मनसि चैतन्यं भाति सर्वत्रगं सदा ।
योगिनोऽव्यवधानेन तदा संपद्यते स्वयम् ॥ ९ ॥
यदा सर्वाणि भूतानि स्वात्मन्येव हि पश्यति ।
सर्वभूतेषु चात्मानं ब्रह्म संपद्यते तदा ॥ १० ॥

[1] महाकाश—अ, अ १. [2] एवास्ति—अ २.
[3] सपुं—क, अ १, अ २, उ १. स्वपुं—अ.

यदा सर्वाणि भूतानि समाधिस्थो न पश्यति ।
एकीभूतः परेणासौ तदा भवति केवलः ॥ ११ ॥
यदा पश्यति चात्मानं केवलं परमार्थतः ।
मायामात्रं जगत् कृत्स्नं तदा भवति निर्वृतिः ॥ १२ ॥

यस्मादेवं तस्मात् मनः मत्तः पृथक् नास्ति ॥ ७ ॥ प्रत्यक्परचितोरेकत्वात् स्वयं इत्यादि । स्वातिरिक्तप्रपञ्चे मायामात्रपदं गते स्वयमेव निष्प्रतियोगिकब्रह्ममात्रमवशिष्यते इति दर्शनोपनिषत्फलितोऽर्थः ॥ ८–१२ ॥

उपसंहारः

एवमुक्त्वा स भगवान् दत्तात्रेयो महामुनिः ।
[1]सांकृतिः स्वस्वरूपेण सुख[2]मास्तेऽतिनिर्भयः ॥ १३ ॥
इति ॥

आख्यायिकामुपसंहरति—एवमिति । इतिशब्दो दर्शनोपनिषत्परिसमाप्त्यर्थः ॥ १३ ॥

इति दशमः खण्डः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
दर्शनोपनिषद्व्याख्या लिखिता ब्रह्ममात्रगा ॥
दर्शनोपनिषद्व्याख्याग्रन्थस्तु द्विशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे नवतिसंख्यापूरकं
दर्शनोपनिषद्विवरणं सम्पूर्णम्

[1] सांकृतेः—अ.    [2] मास्थे—क, अ १.

# ध्यानबिन्दूपनिषत्

सह नाववतु—इति शान्तिः

ब्रह्मध्यानयोगमहिमा

यदि शैलसमं पापं विस्तीर्णं बहुयोजनम् ।
भिद्यते ध्यानयोगेन नान्यो भेदः कदाचन ॥ १ ॥
बीजाक्षरं परं [1]बिन्दु [2]नादं तस्योपरि स्थितम् ।
सशब्दश्चाक्षरे क्षीणे निःशब्दं परमं पदम् ॥ २ ॥
अनाहतं तु यच्छब्दं तस्य शब्दस्य यत्परम् ।
तत्परं विन्दते यस्तु स योगी छिन्नसंशयः ॥ ३ ॥

ध्यात्वा यद्ब्रह्ममात्रं ते स्वावशेषधिया ययुः ।
योगतत्त्वज्ञानफलं तत्स्वमात्रं विचिन्तये ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं ध्यानबिन्दूपनिषत् निर्विशेषब्रह्ममात्रपर्यवसन्नाऽन्तःप्रणवार्थप्रकाशिनी तदुपायाजपाहंसविद्यातदुपायषडङ्गयोगप्रकाशिनी च सती प्रवृत्ता । तस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । तस्याः उपोद्घातादिकं कठवल्ल्यादिवत् ऊह्यम् । श्रुतिरादौ तावत् ध्यानयोगसामान्यमुख्यफलप्रकटनपूर्वकं निर्विशेषब्रह्मस्वरूपं प्रकाशयति—यदीति ।

[1] बिन्दुं—अ, अ १. बीज—अ २. [2] नादान्त—अ.

यस्य कस्यचिद्योगिनोऽनन्तकोटिजन्मसञ्चितं **विस्तीर्णं बहुयोजनं यदि शैलसमं पापं** दुर्भेदं विद्यते तदा तदपि वज्रटङ्कोपमब्रह्मध्यान**योगेन भिद्यते** तिलशश्छिद्यते । इत्थंभूतध्यानयोगं विना **कदाचन नान्यो भेदो** भेदकोऽस्तीत्यर्थः ॥ १ ॥ एवं ध्यानयोगं स्तुत्वा ध्येयस्वरूपमाह—**बीजेति** । प्रणवो हि **बीजाक्षरं** अकारोकारमकारार्धमात्रात्मकं तत्परं तु बिन्दु[1]नादकला-कलातीतम् । यः एवंविशेषणविशिष्टः शब्दप्रपञ्चः प्रणवः **तस्योपरि** निर्विशेषतया यत् **स्थितं** तत् **निःशब्दं** इत्यर्थः । **सशब्दः** प्रणवः **चशब्दः** तदभिधेयोपलक्षणार्थः । तस्मिन् शब्दप्रपञ्चे स्वाधिकरणपरमाक्षरे **क्षीणे** विलयमपह्नवं वा गते सति ततो यन्निःशब्दं ब्रह्म अवशिष्यते तदेव **परमं पदं** विदेहकैवल्यमित्यर्थः ॥ २ ॥ एवंविदं स्तौति—**अनाहतमिति** । हृज्जत्वात् नित्यत्वाद्वा **अनाहतम्** । तुशब्दो नित्यत्वख्यापनार्थः । तथाच भाष्यवार्तिककारोक्तेः "नित्यो ह्योङ्कारः" इति, "ओङ्कारस्य तु नित्यत्वात् नाञ्जसोत्पत्तिरिष्यते" इति च । **यच्छब्दं** शब्दात्मकप्रणवरूपं विद्यते **तस्य शब्दस्य यत् परं** व्यष्टिसमष्टिसाक्षिरूपं तत् **परं** निर्विशेषं ब्रह्म **यस्तु** यो वा को वा स्वमात्रमिति **विन्दते सः योगी छिन्नसंशयो** विदेहमुक्तो भवति ॥ ३ ॥

ब्रह्मणः सूक्ष्मत्वं सर्वव्यापकत्वं च

वालाग्रशतसाहस्रं तस्य भागस्य भागिनः ।
तस्य भागस्य भागार्धं तत्क्षये तु निरञ्जनम् ॥ ४ ॥
पुष्पमध्ये यथा गन्धः पयोमध्ये यथा घृतम् ।
तिलमध्ये यथा तैलं पाषाणेष्विव काञ्चनम् ॥ ५ ॥
एवं सर्वाणि भूतानि मणौ सूत्र इवात्मनि ।
स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥ ६ ॥

[1] नादकलातीतम्—अ १.

तिलानां तु यथा तैलं पुष्पे गन्ध इवाश्रितः ।
पुरुषस्य शरीरे तु सबाह्याभ्यन्तरे स्थितः ॥ ७ ॥
वृक्षं तु सकलं विद्याच्छाया तस्यैव निष्कला ।
सकले निष्कले भावे सर्वत्रात्मा व्यवस्थितः ॥ ८ ॥

इत्थंभूतयोगिगम्यब्रह्मणो निर्विशेषत्वेन परमसूक्ष्मतामाह—**वालाग्रेति** । वालाग्रं नीवारशूकं दृश्यादृश्यतया स्थितसुसूक्ष्मं, तस्य शतसाहस्रं लक्षैकांशसूक्ष्मं जीवचैतन्यं सूक्ष्मं व्यष्टिप्रपञ्चव्यापकत्वात्, तस्य जीवचैतन्यगतसूक्ष्मस्य शतसहस्रैकभागयुक्तमीश्वरचैतन्यं सूक्ष्मतरं [1]समष्टयण्डव्यापकत्वात्, तस्यैवं **भागिनः ईश्वरस्य भागार्धं** पञ्चाशत्सहस्रैकभागरूपं साक्षिचैतन्यं सूक्ष्मतमं स्वाविद्यापदतत्कार्यव्यापकत्वात्, साक्ष्यसापेक्षसाक्षिचैतन्यगतसविशेषक्षये तु तत्सर्वकलनानिरञ्जनं अञ्जनीयस्वातिरिक्तासम्भवात् निष्प्रतियोगिकब्रह्ममात्रमवशिष्यते इत्यर्थः ॥ ४ ॥ कथं पुनः साक्षिणोऽविद्यापदव्यापकत्वमित्यत आह—**पुष्पेति** । पुष्पतिलपाषाणेषु गन्धतैलकाञ्चनं यथा व्याप्य वर्तते, यथा मणिगणे सूत्रं, तथैव जीवात्मना **पुरुषस्य शरीरे तु सबाह्याभ्यन्तरे स्थितः** ॥ ५–७ ॥ ईश्वरसाक्ष्यात्मना व्रश्चनं छेदनमर्हतीति **वृक्षं तु** स्वाविद्यापादं **सकळमिति विद्यात्** । स्वेन रूपेणाविद्यापदवृक्षं छादयत्यावृणोतीति छाया माया तु **निष्कळा** निरवयवत्वात् । इत्थं **सकळे निष्कळे भावे** वृक्षच्छायास्थानीयस्वाविद्यापदतद्धेतुमायातत्त्वे **सर्वत्र** तत्कार्ये च **परमात्मा व्यवस्थितः** व्याप्य स्थितः, "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुतेः । यद्वा—**सकळे** जीवादिसाक्ष्यन्ते **निष्कळे भावे**—इत्यत्र द्वितीयार्थे सप्तमी—निष्कळभावं गते पुरा स्वाज्ञदशायां **सर्वत्र** स्वातिरिक्तं यदनुभूतं तदात्मैव स्वमात्रं **व्यवस्थितो** भवतीत्यर्थः ॥ ८ ॥

[1] समष्ट्याण्ड—उ १.

प्रणवस्वरूपम्

ओमित्येकाक्षरं ब्रह्म ध्येयं सर्वं मुमुक्षुभिः ।
पृथिव्यग्निश्च ऋग्वेदो भूरित्येव पितामहः ॥ ९ ॥
अकारे तु लयं प्राप्ते प्रथमे प्रणवांशके ।
अन्तरिक्षं यजुर्वायुर्भुवो विष्णुर्जनार्दनः ॥ १० ॥
उकारे तु लयं प्राप्ते द्वितीये प्रणवांशके ।
द्यौः सूर्यः सामवेदश्च स्वरित्येव महेश्वरः ॥ ११ ॥
मकारे तु लयं प्राप्ते तृतीये प्रणवांशके ।
अकारः पीतवर्णः स्याद्रजोगुण उदीरितः ॥ १२ ॥
उकारः सात्त्विकः शुक्लो मकारः कृष्णतामसः ।
अष्टाङ्गं च चतुष्पादं त्रिस्थानं पञ्चदैवतम् ॥ १३ ॥
ओंकारं यो न जानाति ब्राह्मणो न भवेत्तु सः ।

तदर्थं मुमुक्षुभिः किं ध्येयमित्यत आह—**ओमिति** । तस्य सर्वापवादाधिकरणतामाह—**पृथिवीति** ॥ ९ ॥ प्राप्ते इति सप्तमी प्रथमार्था । पृथिव्यादिः प्रणवप्रथमांशाकारे विलयं प्राप्तो भवतीत्युक्त्या सम्भूतिस्थितिरपि तत्रेति द्योत्यते । तथा च अन्तरिक्षादिः द्यौरादिश्च क्रमेण उकारे मकारे च संभूतिस्थितिप्रळयं प्राप्नोतीत्यर्थः,

अकारे लीयते ब्रह्मा उकारे लीयते हरिः ।
मकारे लीयते रुद्रः प्रणवो हि परः स्मृतः ॥

इत्यादि श्रुतेः ॥ १०–११ ॥ अकारादिप्रणवमात्राणां त्रिगुणान्वितत्वेन पीतादिवर्णवैशिष्ट्यमुच्यते—**अकार इति** ॥ १२ ॥ अङ्गपादस्थानदेवता-

विशिष्टप्रणवज्ञानाज्ञानाभ्यां ब्राह्मणानां ब्राह्मणत्वं भवेदित्याह—अष्टाङ्गमिति। अकारोकारमकारबिन्दुनादकलाकलातीततत्परभेदेनाष्टावङ्गानि यस्य तं, विश्वतैजसप्राज्ञतुरीयभेदेन व्यष्टौ, समष्टौ तु विराट्सूत्रबीजतुर्यभेदेन, व्यष्टिसमष्ट्यविभागे तु ओतानुज्ञात्रनुज्ञैकरसाविकल्पभेदेन चत्वारः पादा यस्य तं चतुष्पादं, जाग्रदाद्यवस्थात्रयं स्थूलादिदेहत्रयं सत्वादिगुणत्रयं क्रियाशक्त्यादि शक्तित्रयं भूतादिकालत्रयं वा यस्य स्थानमावसथं भवति तं त्रिस्थानं, ब्रह्मविष्णुरुद्रेश्वरसदाशिवा यदवयवाकारादिदेवभावं प्रपेदिरे तं पञ्चदैवतम् ॥ १३ ॥ इत्थंभूतमोङ्कारं यो जानाति स ब्राह्मणो ब्रह्मनिष्ठो जीवन्मुक्तो भवेत्। य एवं न जानाति स ब्राह्मणो न भवेदित्यर्थः ॥

प्रणवध्यानविधिः

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ॥ १४ ॥
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत्।
निवर्तन्ते क्रियाः सर्वास्तस्मिन्दृष्टे परावरे ॥ १५ ॥
ओंकारप्रभवा देवा ओंकारप्रभवाः स्वराः।
ओंकारप्रभवं सर्वं त्रैलोक्यं सचराचरम् ॥ १६ ॥
ह्रस्वो दहति पापानि दीर्घः संपत्प्रदोऽव्ययः।
अर्धमात्रासमायुक्तः प्रणवो मोक्षदायकः ॥ १७ ॥
तैलधारामिवाच्छिन्नं दीर्घघण्टानिनादवत्।
अवाच्यं प्रणवस्याग्रं यस्तं वेद स वेदवित् ॥ १८ ॥

यत एवमन्तःप्रणवो विशिष्टफलदः अतः तत्साधनेन ब्रह्म जानतस्तद्भावापत्तिः निरङ्कुशं भवेदित्याह—प्रणव इति। अष्टमात्रात्मकान्तःप्रणव एव धनुरिव धनुः शरस्थानीयान्तःकरणाधिकरणत्वात्। शरो ह्यात्मा मनः वेगवत्तरत्वाच्छरस्य। किं लक्ष्यमित्यत्र

ब्रह्म तल्लक्ष्यमुच्यते स्वात्मतया लक्ष्यमाणत्वात् ॥ १४ ॥ तदेतल्लक्ष्यं अप्रमत्तेन एकाग्रचित्तेन वेद्धव्यं अन्तःप्रणवार्थब्रह्मैवास्मीत्यनुसन्धानं कर्तव्यम् । एवं कृते यथा शरो लक्ष्यनिमग्नो भवति तथा तन्मयो ब्रह्मैव भवेत् । सक्रियस्य ब्रह्मभावापत्तिः कुत इत्यत आह—निवर्तन्त इति ॥ १५ ॥ परावग्प्रत्यगभिन्नब्रह्मदर्शनस्य सर्वव्यापृतिन्यासपूर्वकत्वात् ब्रह्मालम्बनोङ्कारस्य सर्वारोपाधिकरणतामाह— ओङ्कारेति ॥ १६ ॥ ह्रस्वदीर्घप्लुततया प्रणवजप-फलमाह—ह्रस्व इति । "यदि [1]ह्रस्वो भवति सर्वं पाप्मानं दहति अमृतत्वं च गच्छति । यदि [2]दीर्घो भवति महतीं श्रियमाप्नोति अमृतत्वं च गच्छति । यदि [3]प्लुतो भवति ज्ञानवान् भवति अमृतत्वं च गच्छति" इति श्रुतेः ॥ १७ ॥ प्रणवाग्रज्ञानफलमाह—तैलेति ॥ १८ ॥

प्राणायामपूर्वकं प्रणवध्यानम्

हृत्पद्मकर्णिकामध्ये स्थिरदीपनिभाकृतिम् ।
अङ्गुष्ठमात्रमचलं ध्यायेदोंकारमीश्वरम् ॥ १९ ॥
इडया वायुमापूर्य पूरयित्वोदरस्थितम् ।
ओंकारं देहमध्यस्थं ध्यायेज्ज्वालावलीवृतम् ॥ २० ॥
ब्रह्मा पूरक इत्युक्तो विष्णुः कुम्भक उच्यते ।
रेचो रुद्र इति प्रोक्तः प्राणायामस्य देवताः ॥ २१ ॥

कथमोङ्कारो ध्येय इत्यत आह—हृदिति ॥ १९ ॥ किं तूष्णीं ध्यातव्य-मित्यत आह—इडयेति । "मूलाग्रावग्निरूपं प्रणवं सन्दध्यात्" इति श्रुत्यनुरोधेन मूलाधारत्रिकोणे जाज्वल्यमानतया प्रणवार्थेश्वरं कुम्भकेऽनुध्यायेत् ॥ २० ॥ प्राणायामावयवदेवतास्वरूपमाह—ब्रह्मेति । पूरकादिकाले ब्रह्मविष्णु-रुद्रान् ध्यायेदित्यर्थः ॥ २१ ॥

[1] ह्रस्वा—उ १.   [2] दीर्घा—उ १.   [3] प्लुता—उ १.

प्रकारान्तरेण प्रणवध्यानम्

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासा[1]द्देवं पश्येन्निगूढवत् ॥ २२ ॥
ओंकारध्वनिनादेन वायोः संहरणान्तिकम् ।
[2]यावद्बलं समादध्यात्सम्यङ्नादलयावधि ॥ २३ ॥
गमागमस्थं गमनादिशून्यमोंकारमेकं रविकोटिदीप्तम् ।
पश्यन्ति ये सर्वजनान्तरस्थं हंसात्मकं ते विरजा भवन्ति ॥२४॥

विधान्तरेश्वरध्यानमाह—आत्मानमिति । आत्मानं अन्तःकरणं अधरारणिं कृत्वा प्रणवमुत्तरारणिं प्रणवोच्चारणपूर्वकं प्रणवार्थब्रह्माहमस्मीति पौनःपुन्येनानुसन्धानं ध्याननिर्मथनाभ्यासः तस्मात् निगूढकलशान्तरदीपवत् एवं आत्मानमयमहमस्मीति पश्येत् अवलोकयेदित्यर्थः ॥ २२ ॥ प्रणवोच्चारणप्रणवनादावसानविद्योतब्रह्मदर्शनफलमाह—ओङ्कारेति । यावद्बलमोङ्कारोच्चारणप्रभवनादवायुविलयाधिकरणतया यत् विभाति तत् स्वाज्ञदृष्ट्या गमनागमनलक्षणनादरूपप्राणोपाधिस्थमिव भातमपि स्वज्ञदृष्ट्या गमनादिशून्यं अनन्तकोटिरविप्रभं सर्वान्तरं हंसात्मकं प्रत्यगभिन्नब्रह्मरूपं ये पश्यन्ति ते विरजाः कृतकृत्याः भवन्तीत्यर्थः ॥ २३–२४ ॥

सविशेषब्रह्मध्यानम्

यन्मनस्त्रिजगत्सृष्टिस्थिति[3]प्रलयकर्मकृत् ।
तन्मनो विलयं याति तद्विष्णोः परमं पदम् ॥ २५ ॥
अष्टपत्रं तु हृत्पद्मं द्वात्रिंशत्केसरान्वितम् ।
तस्य मध्यगतो भानुर्भानुमध्यगतः शशी ॥ २६ ॥

[1] देवं—अ, अ १. [2] यावद्बन्धः—अ २. [3] व्यसन—अ, अ १, अ २; क.

शशिमध्यगतो वह्निर्वह्निमध्यगता प्रभा ।
प्रभामध्यगतं पीठं नानारत्नप्रवेष्टितम् ॥ २७ ॥
तस्य मध्यगतं देवं वासुदेवं निरञ्जनम् ।
श्रीवत्सकौस्तुभोरस्कं मुक्तामणिविभूषितम् ॥ २८ ॥
शुद्धस्फटिकसंकाशं चन्द्रकोटिसमप्रभम् ।
एवं ध्यायेन्महाविष्णुमेवं वा विनयान्वितः ॥ २९ ॥

ब्रह्ममात्रावरणं मनः, तदपह्नवतो निष्प्रतियोगिकं ब्रह्ममात्रं प्रकाशते इत्याह—यदिति ॥ २५ ॥ एवं ध्यातुमशक्तस्य यथोक्तलक्षणहृत्कमले सविशेषब्रह्मध्यानप्रकारमाह—अष्टपत्रमिति ॥ २७–२८ ॥ एवं कल्पनासृष्टमित्यर्थः । एवं ध्यानं कृतं चेत् तत्प्रसादलब्धचित्तशुद्धिप्राप्यज्ञानद्वारा कृतकृत्यो भवेत् । एवं कर्तुमलसस्य एवं वा वक्ष्यमाणपूरकादौ त्रिमूर्तिध्यानमाह—एवमिति ॥ २९–३१ ॥

### त्रिमूर्तिध्यानम्

अतसीपुष्पसंकाशं नाभिस्थाने प्रतिष्ठितम् ।
चतुर्भुजं महाविष्णुं पूरकेण विचिन्तयेत् ॥ ३० ॥
कुम्भकेन हृदि स्थाने चिन्तयेत्कमलासनम् ।
ब्रह्माणं रक्तगौराभं चतुर्वक्त्रं पितामहम् ॥ ३१ ॥
रेचकेन तु विद्यात्मा ललाटस्थं त्रिलोचनम् ।
शुद्धस्फटिकसंकाशं निष्कलं पापनाशनम् ॥ ३२ ॥

विद्यात्मा सगुणविद्याविशिष्टोपासकः । वस्तुतो निष्कळं ॥ ३२ ॥

हृदये ध्यानं तत्फलं च

अब्जपत्रमधःपुष्पमूर्ध्वनालमधोमुखम् ।
कदलीपुष्पसंकाशं [1]सर्ववेदमयं शिवम् ॥ ३३ ॥
शताब्दं शतपत्राढ्यं विप्रकीर्णाब्जकर्णिकम् ।
तत्रार्कचन्द्रवह्नीनामुपर्युपरि चिन्तयेत् ॥ ३४॥
पद्मस्योद्घाटनं कृत्वा [2]सूर्यचन्द्राग्निवर्चसः ।
तस्य हृद्बीजमाहृत्य आत्मानं चरते ध्रुवम् ॥ ३५ ॥
त्रिस्थानं च [3]त्रिमार्गं च त्रिब्रह्म च त्रयाक्षरम् ।
त्रिमात्रमर्धमात्रं वा यस्तं वेद स वेदवित् ॥ ३६ ॥
तैलधारामिवाच्छिन्नं दीर्घघण्टानिनादवत् ।
[4]अवाच्यं प्रणवस्याग्रं यस्तं वेद स वेदवित् ॥ ३७ ॥

ध्यानाधारहृदयं विधान्तरेण वर्णयति--अब्जेति ॥ अब्जं अब्जातं अम्मयं शरीरं परितः त्रायत इति अब्जपत्रं हृत्कमलं, अधःपुष्पं अधोभागकुसुमितत्वात्, ऊर्ध्वनाळमधोमुखं लम्बमानकदळीपुष्पसदृशं, सर्ववेदमयं वेदहेतुनादाधारत्वात्, अत एव शिवम् ॥ ३३ ॥ शताब्दं शतायुःपरिमितस्थितित्वात्, शतपत्राढ्यं शतपत्रकुशेशयोपमत्वात्, विप्रकीर्णाब्जकर्णिकं विकसितपद्मकर्णिकोपमं हृत्कमलं यदस्ति तस्य लम्बमानसूर्यचन्द्राग्निवर्चसः हृत्पद्मस्य प्रणवेनोद्घाटनं कृत्वा ऊर्ध्वमुखं विधाय तत्र अर्कचन्द्रवह्नीनां मण्डलं उपर्युपरि चिन्तयेत् भावयेत् । तस्य हृत्पद्मस्य

[1] सर्वदेव—अ २. सर्ववेदमवाङ्मुखं—अ, अ १.
[2] बोधचन्द्राग्निसूर्यकं—अ, अ १. [3] त्रिमात्रं—अ, अ १, अ २, क.
[4] बिन्दुनादकलातीतं—अ, अ १, अ २, क.

हृद्बीजमकाराख्यं तदाहृत्य गृहीत्वा तद्रूपं ध्रुवमात्मानं सम्भाव्य ततस्त्राकारार्थो विष्णुश्चरते—पदव्यत्ययः—चरति ॥ ३४–३५ ॥ एवं चरन्तं हंसमात्मानं प्रणवत्वेन चिन्तयतः जीवन्मुक्ततामाह—त्रिस्थानमिति । अवस्थात्रयादि-स्थानत्रयं यस्य तं, यद्याथात्म्यविदः [1]स्वज्ञानानुरोधेन धूमार्चिरगतिभेदेन यत् यान्ति तं त्रिमार्गं, विश्वविराडोतृब्रह्मादिभेदेन ब्रह्मत्रयं यदर्थभूतं तं त्रिब्रह्मात्मकं, अकारादित्रीण्यक्षराणि यदवयवतयोक्तानि तं त्र्याक्षरं, ह्रस्वदीर्घप्लुतभेदेन तिस्रो मात्रा यस्य तं त्रिमात्रमर्धमात्रं वा, यः तं वेद स वेदवित् जीवन्मुक्तो भवतीत्यर्थः ॥ ३६ ॥ "ओङ्काराग्रविद्योतं तुर्यतुरीयं" इति श्रुत्यनुरोधेन प्रणवाग्रदर्शनफलमाह—तैलेति ॥ ३७ ॥

### ब्रह्मायतने प्राणविलापनम्

यथैवोत्पलनालेन तोयमाकर्षयेन्नरः ।
तथैवोत्कर्षयेद्वायुं योगी योगपथे स्थितः ॥ ३८ ॥
अर्धमात्रात्मकं कृत्वा कोशभूतं तु पङ्कजम् ।
कर्षयेन्नालमात्रेण भ्रुवोर्मध्ये लयं नयेत् ॥ ३९ ॥
भ्रूमध्ये तु ललाटे तु [2]नासिकायास्तु मूलतः ।
जानीयादमृतस्थानं तद्ब्रह्मायतनं महत् ॥ ४० ॥

पराग्वायुं प्रत्यङ्मुखं नीत्वा ब्रह्मायतने विलापयेदित्याह—यथेति । यथैव नरः उत्पलनाळेन तोयमाकर्षयेत् तथैव योगी योगमार्गे तिष्ठन् मूलाधारात् अपानैक्यमापन्नप्राणवायुमूर्ध्वं उत्कर्षयेत् सुषुम्नायामूर्ध्वमुखं नयेत् ॥ ३८ ॥ पुनः स्थूलसूक्ष्मबीजभावमापन्नं दृष्टिमनोग्निभिरेकीभूतं कोशभूतं यत् हृदयपङ्कजं वर्तते तत्र अर्धमात्रात्मकं कृत्वा सुषुम्नामार्गेण भ्रुवोर्मध्ये लयं नयेत् विलयं प्रापयेत् ॥ ३९ ॥ प्राणलयाधिकरणं कीदृशमित्यत आह—

[1] सज्ञा—उ.  [2] नासिकायां तु—अ, अ २.

**भ्रूमध्ये** **त्विति** । भ्रूमध्यस्य ब्रह्मोपलब्धिस्थानत्वात् । तुशब्दत्रयतः तस्मात् बहिर्निर्गतमपि तत्रैव पुनःपुनः लयं नयेदिति द्योत्यते ॥ ४० ॥

षडङ्गयोगः

आसनं प्राणसंरोधः प्रत्याहारश्च धारणा ।
ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट् ॥ ४१ ॥

अमृतस्थाने प्राणादिलयस्य सुषुम्नाद्वारकत्वात्, नहि सुषुम्नाप्रवेशः सर्वसाधारणो भवति, नहि योगाभ्यासं विना सुषुम्नामार्गः स्प्रष्टुं शक्यते, अतस्तदुपायत्वेन षडङ्गयोग उच्यते—**आसनमिति** ॥ ४१ ॥

आसनचतुष्टयम्

आसनानि च तावन्ति यावन्त्यो जीवजातयः ।
एतेषामतुलान्भेदान् विजानाति महेश्वरः ॥ ४२ ॥
सिद्धं भद्रं तथा सिंहं पद्मं चेति चतुष्टयम् ।

योगासनानामनेकत्वात् तत्र श्रेष्ठतया सिद्धाद्यासनचतुष्टयमुद्दिशति—**आसनानीति** । असंख्येयतया दुर्विज्ञेयत्वात् **एतेषामिति** ॥ ४२ ॥ तेषु मुख्यान्यासनचतुष्टयानीत्यत्र **सिद्धं** इति । तत्प्रतिपादकश्रुतयो लिख्यन्ते—

योनिं वामेन सम्पीड्य मेढ्रादुपरि दक्षिणम् ।
ऋजुकायः समासीनः सिद्धासनमिदं भवेत् ॥
गुल्फौ तु वृषणस्याधः सीविन्याः पार्श्वयोः क्षिपेत् ।
पार्श्वपादौ च पाणिभ्यां दृढं बध्वा सुनिश्चलम् ।
भद्रासनं भवेदेतद्विषरोगविनाशनम् ॥

सीविनीं गुल्फदेशाभ्यां निपीड्य व्युत्क्रमेण तु ।
प्रसार्य जानुनोर्हस्तावासनं सिंहरूपकम् ॥
ऊर्वोरुपरि वै धत्ते यदा पादतले उभे ।
पद्मासनं भवेदेतत् सर्वव्याधिविषापहम् ॥

इति ॥

### योनिस्थानम्

आधारं प्रथमं चक्रं स्वाधिष्ठानं द्वितीयकम् ॥ ४३ ॥
योनिस्थानं तयोर्मध्ये कामरूपं निगद्यते ।
आधाराख्ये गुदस्थाने पङ्कजं यच्चतुर्दलम् ॥ ४४ ॥
तन्मध्ये प्रोच्यते योनिः कामाख्या सिद्धवन्दिता ।
योनिमध्ये स्थितं लिङ्गं पश्चिमाभिमुखं तथा ॥ ४५ ॥
मस्तके मणिवद्भिन्नं यो जानाति स योगवित् ।

ततो मूलाधारस्वाधिष्ठानमध्यगतव्यष्टिप्रपञ्चयोन्यादिज्ञानफलं षडाधारस्वरूपं च विशदयति—**आधारमिति** ॥ ४३ ॥ मूलाधारस्वाधिष्ठानमध्ये योनिस्थानं वर्तते इत्युक्तम् । तत्र योनिः कीदृशीत्यत आह—**आधारेति** ॥ ४४ ॥ मूलाधारचतुर्दळमध्ये व्यष्टिसंसारप्रवृत्तिनिवृत्तिहेतुतया योगायोगसिद्धैरपि वन्दिता कामरूपिणी नाम काचन योनिः कुण्डलिनीशक्तिः विद्यते । तस्याः सिद्धासिद्धवन्दितत्वं कथमित्यत्र—यदि हृदयादूर्ध्वगामिनी स्यात्तदा निवृत्तिमार्गभूषणसिद्धसेव्या भवति । यदा पुनः स्वस्थानान्न चलति तदा प्रवृत्तिहेतुतया संसारिसेविता भवतीत्यर्थः । तादृशयोनिमध्ये कुण्डलिनीमध्यप्रदेशे मस्तकभागे **मणिवत्** **भिन्नं** स्वयं प्रकाशितं **पश्चिमाभिमुखं** प्रत्यगात्मलिङ्गं विद्यते । प्रवृत्तिनिवृत्तिप्रकाशकत्वात् तदस्तीति **यो जानाति स योगवित्** प्रत्यक्परैक्यज्ञो जीवन्मुक्तो भवतीत्यर्थः ॥ ४५–४६ ॥

मूलाधारादिचतुश्चक्रस्वरूपम्

तप्तचामीकराकारं तडिल्लेखेव विस्फुरत् ॥ ४६ ॥

चतुरस्रमुपर्यग्नेरधो मेढ्रात्प्रतिष्ठितम् ।
स्वशब्देन भवेत्प्राणः स्वाधिष्ठानं तदाश्रयम् ॥ ४७ ॥

स्वाधिष्ठानं ततश्चक्रं मेढ्रमेव निगद्यते ।
मणिवत्तन्तुना यत्र वायुना पूरितं वपुः ॥ ४८ ॥

तन्नाभिमण्डलं चक्रं प्रोच्यते मणिपूरकम् ।
द्वादशारमहाचक्रे पुण्यपापनियन्त्रितः ॥ ४९ ॥

तावज्जीवो भ्रमत्येवं यावत्तत्त्वं न विन्दति ।

ततो मूलाधारस्वरूपमाह—तप्तेति । मूलाधारचक्रस्याग्निमण्डलमेढ्रमध्यगतत्वात् ॥ ४६–४७ ॥ स्वाधिष्ठानस्वरूपमाह—स्वेति । लिङ्गमूले षड्दळयुक्तं स्वाधिष्ठानमित्यर्थः ॥ ४७–४८ ॥ मणिपूरकं व्युत्पादयति- मणिवदिति । दशदळान्वितं मणिपूरकमित्यर्थः । तत अनाहतचक्रं द्वादशदळं षोडशदळं विशुद्धिचक्रं द्विदळमाज्ञाचक्रं तदुपरि चन्द्रसूर्यमण्डलं तदुपरि सहस्रारचक्रं विद्यते इति मन्तव्यम् ॥ ४८–४९ ॥ तत्रानाहतचक्रे जीवात्मस्वरूपमाह—द्वादशेति । तत्रत्यो जीवो यावत् स्वयाथात्म्यं न जानाति तावत् संसरति, स्वज्ञानेन स्वाज्ञाने नष्टे जीवस्य ब्रह्ममात्रत्वादित्यर्थः ॥ ४९–५० ॥

नाडीचक्रम्

ऊर्ध्वं मेढ्रादधो नाभेः कन्दो योऽस्ति खगाण्डवत् ॥ ५० ॥

तत्र नाड्यः समुत्पन्नाः सहस्राणि द्विसप्ततिः ।
तेषु नाडीसहस्रेषु द्विसप्ततिरुदा[1]हृता ॥ ५१ ॥

[1] हृताः-

प्रधानाः प्राणवाहिन्यो भूयस्तत्र दश स्मृताः ।
इडा च पिङ्गला चैव सुषुम्ना च तृतीयका ॥ ९२ ॥
गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी ।
अलम्बुसा कुहूरत्र शङ्खिनी दशमी स्मृता ॥ ९३ ॥
एवं नाडीमयं चक्रं विज्ञेयं योगिनां सदा ।
सततं प्राणवाहिन्यः सोमसूर्याग्निदेवताः ॥ ९४ ॥
इडापिङ्गलासुषुम्नास्तिस्रो नाड्यः प्रकीर्तिताः ।
इडा वामे स्थिता [1]नाडी पिङ्गला दक्षिणे स्थिता ॥ ९५ ॥
सुषुम्ना मध्य[2]देशस्था प्राणमार्गास्त्रयः स्मृताः ।

ततो नाडीकन्दस्थानं तदियत्तामधिदेवतासहितप्रधाननाडीस्वरूपं चाह— **ऊर्ध्वमिति** ॥ ९०–९३ ॥ **योगिनां**, तृतीयार्थे षष्ठी, योगिभिरित्यर्थः । एतत् सर्वं स्पष्टमिति न व्याख्यातम् ॥ ९४–९६ ॥

प्राणादिदशवायवः

प्राणोऽपानः समानश्चोदानो व्यानस्तथैव च ॥ ९६ ॥
नागः कूर्मः कृकरको देवदत्तो धनंजयः ।
प्राणाद्याः पञ्च विख्याता नागाद्याः पञ्च वायवः ॥ ९७ ॥
एते नाडीसहस्रेषु वर्तन्ते जीवरूपिणः ।

जीवाधिष्ठेयनाडीचरप्राणादिदशवायुनाम निर्दिशति— **प्राण इति** ॥ ९७ ॥ तत्र **प्राणाद्याः पञ्च** प्रधानतया **विख्याताः नागाद्या वायवस्तु**

[1] भागे—क, अ १, अ २.  [2] देशे तु—अ १. देशस्थाः—अ २.

उपप्राणाः उच्यन्ते ॥ ५७ ॥ तेषां जीवरूपेण नाडीचरत्वं जीवस्य प्राणापानवशतः यातायातत्वमविश्रान्तमित्याह प्रन इति ॥ ५८ ॥

जीवस्य प्राणापानवशत्वम्

प्राणापानवशो जीवो ह्यधश्चोर्ध्वं च धावति ॥ ५८ ॥
वामदक्षिणमार्गेण चञ्चलत्वान्न दृश्यते ।
आक्षिप्तो भुजदण्डेन यथोच्चलति कन्तुकः ॥ ५९ ॥
प्राणापानसमाक्षिप्तस्तद्वज्जीवो न विश्रमेत् ।

अविश्रान्तत्वे दृष्टान्तः आक्षिप्त इति ॥ ५९ ॥

योगकाले प्राणापानैक्यम्

अपानात्कर्षति प्राणोऽपानः प्राणाच्च कर्षति ॥ ६० ॥
खगरज्जुवदित्येतद्यो जानाति स योगवित् ।

योगकाले प्राणापानैक्यं तज्ज्ञानफलं चाह अपानादिति । प्राणादपानादिति पञ्चमी द्वितीयार्था ॥ ६० ॥

अजपाहंसविद्या

हकारेण बहिर्याति सकारेण विशेत्पुनः ॥ ६१ ॥
हंसहंसेत्यमुं मन्त्रं जीवो जपति सर्वदा ।
शतानि षड् दिवारात्रं सहस्राण्येकविंशतिः ॥ ६२ ॥
एतत्संख्याऽन्वितं मन्त्रं जीवो जपति सर्वदा ।
अजपा नाम गायत्री योगिनां मोक्षदा सदा ॥ ६३ ॥

अस्याः संकल्पमात्रेण नरः पापैः प्रमुच्यते ।

अनया सदृशी विद्या अनया सदृशो जपः ॥ ६४ ॥

अनया सदृशं पुण्यं न भूतं न भविष्यति ।

अहोरात्रनिर्वर्त्योच्छ्वासनिःश्वासरूपहंसविद्याऽजपास्वरूपमाह — **हकारे-णेति** ॥ ६१ ॥ प्राणापानव्यापारोच्छ्वासनिःश्वासव्यापार एव हंसमनुः तं **हंसहंसेत्यमुं** मन्त्रं हंसमन्त्रावर्तनसंख्येयत्तामाह — **शतानीति** ॥ ६२ ॥ **स्वयमजपन्** तूष्णीं तिष्ठन्नपि एतत् इति । या अजपतो जपभावमेति सेयं **अजपा गायत्री** सदैवमनुसन्धानयोगिनां **मोक्षदा** भवति ॥ ६३ ॥ यतः एवं अतः **अस्याः** इति । अजपां स्तौति—**अनयेति** ॥ ६४ ॥

कुण्डलिनीबोधनेन मोक्षद्वारविभेदनम्

येन मार्गेण गन्तव्यं [1]ब्रह्मस्थानं निरामयम् ॥ ६५ ॥

मुखेनाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी ।

प्रबुद्धा वह्नियोगेन मनसा मरुता सह ॥ ६६ ॥

सूचिवद्गुणमादाय व्रजत्यूर्ध्वं सुषुम्नया ।

उद्घाटयेत्कपाटं तु यथा [2]कुञ्चिकया हठात् ॥ ६७ ॥

कुण्डलिन्या तथा योगी मोक्षद्वारं विभेदयेत् ॥ ६८ ॥

कृत्वा संपुटितौ करौ दृढतरं बध्वाऽथ पद्मासनं

गाढं वक्षसि सन्निधाय चुबुकं ध्यानं च तच्चेतसि ।

वारंवारमपानमूर्ध्वमनिलं प्रोच्चारयन्पूरितं

मुञ्चन्प्राणमुपैति बोध[3]मतुलं शक्ति[4]प्रभावान्नरः ॥ ६९ ॥

[1] ब्रह्मरन्ध्रं—क. ब्रह्मद्वारं—अ २. [2] कुञ्चितया—अ १, अ २.
[3] ममलं—क. [4] प्रवाहान्न—अ २ (पाठान्तरत्वेन).

कुण्डलिनीस्थितिमाह— येनेति । "तुरीयं मूर्ध्नि संस्थितं" इति श्रुत्यनुरोधेन सहस्रारचक्रं ब्रह्मस्थानं, तत्रैवोपलभ्यते हि ब्रह्म योगिनाम् । तत्र स्वातिरिक्तामयवैरळ्यात् निरामयम् ॥ ६५ ॥ येन सुषुम्नामार्गेण तद्गन्तव्यं तद्द्वारं स्वमुखेन आच्छाद्य परमेश्वरी कुण्डलिनी प्राणिसामान्यजठरे प्रसुप्ता भवति । सा कदा प्रतिबुध्यते इत्यत्र योगिनः केवलकुम्भकावस्थायां मूलाधारस्थाग्निना मनसा मरुता च सह प्रबुद्धा सती ॥ ६६ ॥ सूक्ष्मसूचिवत् गुणं भोगमादाय सुषुम्नयोर्ध्वं ब्रह्मस्थानं सहस्रारं व्रजति । कुण्डलिन्या सुषुम्नावदनं विभेदयेदित्याह—उद्घाटयेदिति । यथा नरो हठात् कुञ्चिकाप्रयत्नेन कवाटमुद्घाटयेत् तथैव योगी कुण्डलिन्या मोक्षहेतुसुषुम्नाद्वारं विभेदयेदित्यर्थः ॥ ६७–६८ ॥ सुषुम्नामार्गभेदोपायमाह—कृत्वेति । आदौ योगी पद्मासनं बद्ध्वा अथ स्वकरौ संपुटितौ कृत्वा वक्षसि चुबुकं चेतसि स्वस्वरूपध्यानं च सन्निधाय वारंवारमपानानिलमूर्ध्वं प्रोच्चारयन् आकुञ्चयन् एवं पूरितं प्राणं सुषुम्नायां मुञ्चन् नरो योगी सुषुम्नां प्रविष्टकुण्डलिनीशक्तिप्रभावात् निरुपमं अतुलं निरतिशयं ब्रह्माहं अहमेव ब्रह्मेति ब्रह्मात्मबोधमुपैति ॥ ६९ ॥

ब्रह्मचर्यादिना कुण्डलिनीबोधः

पद्मासनस्थितो योगी नाडीद्वारेषु पूरयन् ।
मारुतं कुम्भयन्यस्तु स मुक्तो नात्र संशयः ॥ ७० ॥
अङ्गानां मर्दनं कृत्वा श्रमजातेन वारिणा ।
कट्वम्ललवणत्यागी क्षीरपानरतः सुखी ॥ ७१ ॥
ब्रह्मचारी मिताहारी योगी योगपरायणः ।
अब्दादूर्ध्वं भवेत्सिद्धो नात्र कार्या विचारणा ॥ ७२ ॥
[1]कन्दोर्ध्वकुण्डलीशक्तिः स योगी सिद्धिभाजनम् ।

[1] कन्दोर्ध्वे—उ.

एवं सुषुम्नाकुम्भकान्मुक्तो भवतीत्याह पद्मेति । यस्तु पुनः योगी पद्मासने स्थित्वा बाह्यं वायुमिडया आकृष्य नाडीद्वारेषु पूरयन् पूरितं मारुतं कुम्भयन् सुषुम्नां प्रापयित्वा यदा योगी ब्रह्मरन्ध्रं भिनत्ति सोऽयं योगी ततो ब्रह्मरन्ध्रं भित्त्वा यत्प्राप्यं तत् प्राप्य मुक्तो भवतीत्यत्र न हि संशयोऽस्तीत्यर्थः ॥ ७० ॥ तत्रोपायमाह —अङ्गानामिति । अभ्यासदशाया-मादौ प्राणायामकाले स्वेदो जायते । तेन सर्वाङ्गानां मर्दनं कृत्वा दृढकायो भूत्वा तदानीं कट्वम्ललवणत्यागी क्षीरपानरतः सुखी ॥ ७१ ॥ एवं ब्रह्मचर्यादिनियमसम्पन्नो भूत्वा संवत्सरादूर्ध्वं सिद्धो भवति ॥ ७२ ॥ यस्य नाडीकन्दोर्ध्वभागे सुषुम्नायां कुण्डलिनीशक्तिः स्यात् सोऽयं योगी योगसिद्धिभाजनं भवति ॥

### बन्धत्रयम्

अपानप्राणयोरैक्यं [1]क्षयान्मूत्रपुरीषयोः ॥ ७३ ॥
युवा भवति वृद्धोऽपि सततं मूलबन्धनात् ।
पार्ष्णिभागेन संपीड्य योनिमाकुञ्चयेद्गुदम् ॥ ७४ ॥
अपानमूर्ध्वमुत्कृष्य मूलबन्धोऽयमुच्यते ।
उड्याणं कुरुते यस्मादविश्रान्तमहाखगः ॥ ७५ ॥
उड्डियाणं तदेव स्यात्तत्र बन्धो विधीयते ।
उदरे पश्चिमं ताणं नाभेरूर्ध्वं तु कारयेत् ॥ ७६ ॥
उड्डियाणोऽप्ययं बन्धो मृत्युमातङ्गकेसरी ।
बध्नाति हि शिरोजातमधोगामिनभोजलम् ॥ ७७ ॥
ततो जालन्धरो बन्धः कण्ठदुःखौघनाशनः ।
जालन्धरे कृते बन्धे कण्ठ[2]संकोचलक्षणे ॥ ७८ ॥

[1] क्षयोमू—अ १. [2] दुःखौघल—अ २.

तदङ्गत्वेन बन्धत्रयं तत्फलं चाचष्टे—अपानेति ॥ ७३–७५ ॥ उदरसङ्कोचनं पश्चिमं ताणमित्यर्थः ॥ ७६ ॥ अयमुड्डियाणबन्धः शिरोनभोजातं सहस्रारनभोविद्यमानं सर्वरोगाकरं कफजलं बध्नाति शुष्कं करोतीत्यर्थः ॥ ७७–७८ ॥

खेचरीमुद्राऽभ्यासः

न पीयूषं पतत्यग्नौ न च वायुः प्रधावति ।
कपालकुहरे जिह्वा प्रविष्टा विपरीतगा ॥ ७९ ॥
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ।
न रोगो मरणं तस्य न निद्रा न क्षुधा तृषा ॥ ८० ॥
न च मूर्च्छा भवेत्तस्य यो मुद्रां वेत्ति खेचरीम् ।
पीड्यते न च रोगेण लिप्यते न च कर्मणा ॥ ८१ ॥
बध्यते न च कालेन यस्य मुद्राऽस्ति खेचरी ।
चित्तं चरति खे यस्माज्जिह्वा भवति खेगता ॥ ८२ ॥
तेनैषा खेचरी नाम मुद्रा सिद्धनमस्कृता ।

योगाङ्गतया बन्धत्रयमुक्त्वाऽथ खेचरीमुद्रां तदभ्याससिद्धफलं चाह—कपालेति ॥ ७९ ॥ तदभ्यासान्तरालिकफलं तु न रोग इति ॥ ८०–८२ ॥

खेचर्यभ्यासेन वज्रोलिसिद्धिः

खेचर्या मुद्रया यस्य विवरं [1]लम्बिकोर्ध्वतः ॥ ८३ ॥
[2]बिन्दुः क्षरति नो यस्य कामिन्यालिङ्गितस्य च ।
यावद्बिन्दुः स्थितो देहे तावन्मृत्युभयं कुतः ॥ ८४ ॥

[1] बन्धि—अ २.
[2] बीजं—अ २.

यावद्बद्धा नभोमुद्रा तावद्बिन्दुर्न गच्छति ।
गलितोऽपि यदा बिन्दुः संप्राप्तो योनिमण्डले ॥ ८५ ॥
व्रजत्यूर्ध्वं हठाच्छक्त्या निबद्धो योनिमुद्रया ।

खेचरीमुद्रारूढस्य जीवनहेतुबिन्दुस्थैर्यं वज्रोलिसिद्धिरपि भवतीत्याह—खेचर्येति । खेचर्या मुद्रया यस्य जिह्वा लम्बिकायाः अन्तर्जिह्वाया ऊर्ध्वतः तद्विवरं प्रविशति ॥ ८३ ॥ यच्छब्दस्तच्छब्दार्थः । अप्यर्थः चकारः । कामिन्यालिङ्गितस्यापि यस्य तस्य नैव बिन्दुः शुक्लं क्षरति । यावद्बिन्दुस्थैर्यं जायते तावत्तस्य मृत्युभयं कुतः संभवति ॥ ८४ ॥ यावत्खेचरीमुद्रा बद्धा भवेत् तावद्बिन्दुः न गच्छति । यदा गलितोऽपि बिन्दुः योनिमण्डले संप्राप्तोऽपि ॥ ८५ ॥ तदा वज्रोलिसंस्कृतयोनिमुद्रया हठाच्छक्त्या ऊर्ध्वं व्रजति ॥

द्विविधबिन्द्वैक्यबोधतो जीवन्मुक्तत्वम्

स एव द्विविधो बिन्दुः पाण्डरो लोहितस्तथा ॥ ८६ ॥
पाण्डरं शुक्लमित्याहुर्लोहिताख्यं महारजः ।
विद्रुमद्रुमसंकाशं योनिस्थाने स्थितं रजः ॥ ८७ ॥
शशिस्थाने वसेद्बिन्दुस्तयोरैक्यं सुदुर्लभम् ।
बिन्दुः शिवो रजः शक्तिर्बिन्दुरिन्दू रजो रविः ॥ ८८ ॥
उभयोः संगमादेव प्राप्यते परमं वपुः ।
वायुना शक्ति[1]चालेन प्रेरितं खे यथा रजः ॥ ८९ ॥
रविणैकत्वमायाति भवेद्दिव्यवपु[2]स्तदा ।
शुक्लं चन्द्रेण संयुक्तं रजः सूर्यसमन्वितम् ॥ ९० ॥
द्वयोः समरसीभावं यो जानाति स योगवित् ।

[1] जालेन—अ १.    [2] स्तथा—क, अ १.

बिन्दोर्द्वैविध्यं तयोरैक्यप्रबोधतो जीवन्मुक्तत्वं चाह---स एवेति ॥ ८६ ॥ मूलाधारस्थं योनिस्थानं तत्र रजो देवीतत्त्वं जीवाख्यं वा भवति ॥ ८७ ॥ भ्रूमध्यसहस्रारमध्यं शशिस्थानं, तत्र बिन्दुः शिवतत्त्वं वसति । तयोः शिवशक्त्योः जीवपरयोर्वा ऐक्यं योगिनो विना यस्य कस्यापि दुर्लभं भवेत् ॥ ८८-९० ॥ शुक्लरजोरूपभ्रूसहस्रारमध्यस्थसोमसूर्यैक्यं यो जानाति स योगविन् ब्रह्मवित् भवतीत्यर्थः ॥

महामुद्राऽभ्यासः

शोधनं मलजालानां घटनं चन्द्रसूर्ययोः ॥ ९१ ॥

रसानां शोषणं सम्यङ् महामुद्राऽभिधीयते ॥ ९२ ॥

वक्षोन्यस्तहनुर्निपीड्य सुषिरं योनेश्च वामाङ्घ्रिणा

हस्ताभ्यामनुधारयन् प्रविततं पादं तथा दक्षिणम् ।

आपूर्य श्वसनेन कुक्षियुगलं बध्वा शनै रेचये-

देषा पातक[1]नाशिनी ननु महामुद्रा नृणां प्रोच्यते ॥९३॥

महामुद्रालक्षणमुच्यते - शोधनमिति । नानासाधनसिद्धरेचकपूरक-कुम्भकात्मकप्राणायामशुद्धोदकेन नाडीगतमलजातशोधनं चन्द्रसूर्ययोरैक्यं वातपित्तादिरसानां शोषणं च यया भवति सेयं महामुद्रेत्यभिधीयते ॥ ९१-९२ ॥ महामुद्राभ्यासमाह - वक्ष इति । आदौ योगी जालन्धरबन्धमारोप्य वामाङ्घ्रिणा योनिसुषिरं निपीड्य प्रसारितदक्षिणपादं हस्ताभ्यां धारयन् कुक्षियुगळं श्वसनेनापूर्य कुम्भयित्वाऽथ शनैरिडया रेचयेत् । सैषा रीतिः सर्वपातकनाशिनी नृणां योगिनां योगविघ्ननाशिनी महामुद्रेति प्रोच्यते ॥ एवं प्राणायाम उक्तः । अनात्मदेहादि[2]गताहंभावं [वस्य] प्रतीचि प्रत्याहरणं

[1] नाशनी—उ, मु.    [2] गतं भा—उ १.

प्रत्याहारः । प्रत्यगेव ब्रह्मेति निश्चयो धारणा भवति । अहं ब्रह्माऽस्मि ब्रह्मैवाऽहमस्मि इति दृढभावना ध्यानम् । ध्यानादित्रिपुटीविकल्पलयो निर्विकल्पसमाधिः । "षडङ्गो योग उच्यते" इति प्रतिज्ञातत्वात् तदनुरोधेन प्रतिवचनाभावेऽप्येवं प्रत्याहारादि ऊह्यमित्यर्थः ॥ ९३ ॥

हृदये आत्मसाक्षात्कारः

अथात्मनिर्णयं व्याख्यास्ये—हृदि स्थानं अष्टदलपद्मं वर्तते तन्मध्ये रेखावलयं कृत्वा जीवात्मरूपं ज्योतीरूपमणुमात्रं वर्तते । तस्मिन्सर्वं प्रतिष्ठितं भवति सर्वं जानाति सर्वं करोति सर्वमेतच्चरितमहं कर्ताऽहं भोक्ता सुखी दुःखी काणः खञ्जो बधिरो मूकः कृशः स्थूलोऽनेन प्रकारेण स्वतन्त्रवादेन वर्तते ॥ ९३–१ ॥ पूर्वदले विश्रमते पूर्वदलं श्वेतवर्णं तदा भक्तिपुरःसरं धर्मे मतिर्भवति ॥ ९३–२ ॥ यदाऽऽग्नेयदले विश्रमते तदाग्नेयदलं रक्तवर्णं तदा निद्रालस्यमतिर्भवति ॥ ९३–३ ॥ यदा दक्षिणदले विश्रमते तद्दक्षिणदलं कृष्णवर्णं तदा द्वेषकोपमतिर्भवति ॥ ९३–४ ॥ यदा नैर्ऋतदले विश्रमते तन्नैर्ऋतदलं नीलवर्णं तदा पापकर्महिंसामतिर्भवति ॥ ९३–५ ॥ यदा पश्चिमदले विश्रमते तत्पश्चिमदलं स्फटिकवर्णं तदा क्रीडा[1]विनोदमतिर्भवति ॥ ९३–६ ॥ यदा वायव्यदले विश्रमते वायव्यदलं माणिक्यवर्णं तदा गमन[2]चालनवैराग्यमतिर्भवति ॥ ९३–७ ॥ यदोत्तरदले विश्रमते तदुत्तरदलं पीतवर्णं तदा सुखशृङ्गारमतिर्भवति ॥ ९३–८ ॥ यदेशानदले

[1] विनोदे—क, अ १, अ २.

[2] चलन—क, अ २.

विश्रमते तदीशानदलं वैडूर्यवर्णं तदा दानादिकृपामतिर्भवति ॥ ९३–९ ॥ यदा संधिसंधिषु मतिर्भववि तदा वातपित्तश्लेष्म-महाव्याधिप्रकोपो भवति ॥ ९३–१० ॥ यदा मध्ये तिष्ठति तदा सर्वं जानाति गायति नृत्यति पठत्यानन्दं करोति ॥ ९३–११ ॥ यदा नेत्रश्रमो भवति श्रमनिर्हरणार्थं प्रथमरेखावलयं कृत्वा मध्ये निमज्जनं कुरुते प्रथमरेखा बन्धूकपुष्पवर्णं तदा निद्रावस्था भवति । निद्रावस्थामध्ये स्वप्नावस्था भवति । स्वप्नावस्थामध्ये दृष्टं श्रुतमनुमानसंभववार्ता इत्यादिकल्पनां करोति [1]तदादिश्रमो भवति ॥ ९३–१२ ॥ श्रमनिर्हरणार्थं द्वितीयरेखावलयं कृत्वा मध्ये निमज्जनं कुरुते द्वितीयरेखा इन्द्रकोपवर्णं तदा सुषुप्त्यवस्था भवति सुषुप्तौ केवलपरमेश्वरसंबन्धिनी बुद्धिर्भवति नित्यबोधस्वरूपा भवति पश्चात्परमेश्वर[2]रूपेण प्राप्तिर्भवति ॥ ९३–१३ ॥ तृतियरेखावलयं कृत्वा मध्ये निमज्जनं कुरुते तृतीयरेखा पद्मरागवर्णं तदा तुरीयावस्था भवति तुरीये केवलपर[3]मात्म[4]संबन्धिनी मतिर्भवति नित्यबोधस्वरूपो भवति तदा

शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥ ९३–१४ ॥

तदा प्राणापानयोरैक्यं कृत्वा सर्वं विश्वमात्मस्वरूपेण लक्ष्यं धारयति यदा तुरीयातीतावस्था तदा सर्वेषामानन्दस्वरूपो भवति द्वन्द्वातीतो भवति यावद्देहधारणा वर्तते तावत्तिष्ठति पश्चात्परमात्म-

[1] तदाति—क.
[2] स्वरूपे—क, अ १, अ २.
[3] मात्मनिसं—अ २.
[4] संबन्धिनी भवति—क, अ १, अ २.

स्वरूपेण प्राप्तिर्भवति इत्यनेन प्रकारेण मोक्षो भवतीदमेवात्मदर्शनोपायं भवति ॥ ९३–१९ ॥

चतुष्पथसमायुक्तमहाद्वारगवायुना ।
सहस्थित[1]त्रिकोणोर्ध्वगमनं दृश्यतेऽच्युतः ॥ ९४ ॥

ध्येयनिर्णयः कथं स्यादित्याशङ्क्य सोपायं परमात्मनिर्णयमाचष्टे— अथेति । अथ यथोक्ताधिकारिलाभानन्तरं आत्मयाथात्म्यं सोपायं व्याख्यास्य इति परमदयावती श्रुतिः एवमाह— हृदीति । हृदयाष्टदळमध्ये रेखावलयं कृत्वा वृत्ताकारं विभाव्य तन्मध्ये प्राणाधारं हंसज्योतीरूपं जीवात्मरूपं अणुमात्रं वर्तते । य एवं वर्तते तस्मिन् सर्वं प्रतिष्ठितं भवति तस्य सर्वाधिकरणत्वात् । स हि सर्वं जानाति सर्वं करोति यत् कर्तव्यं तत् कृतमेव सर्वं अहं कर्ता इत्याद्यभिमानी सन् वर्तते इत्यर्थः ॥ ९३-१ ॥ तस्य पूर्वादिदळयोगतो धर्मादिवृत्तिमत्त्वमाह—पूर्वेति । सोऽयं जीवाख्योऽहं हंसः यदा पूर्वदळे ॥ ९३-२—९३-१३ ॥ यत एवं अतः पूर्वदळादिद्वितीयरेखान्तं विहाय तृतीयरेखामवलम्ब्य तुर्यस्वरूपं तुर्यादिविश्रान्तगतहेयांशापह्नवसिद्धं तुर्यातीतं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति तन्मात्रतयाऽवशिष्टो भवतीत्याह— तदा शनैः-शनैरिति ॥ ९३-१४ ॥ यदि स्वातिरिक्तवृत्त्युदयो भवति तदा प्राणापानयोरैक्यमित्यादि । सर्वं विश्वमात्मस्वरूपेण लक्ष्यं धारयति, विश्वगतहेयांशापह्नवसिद्धब्रह्मणः स्वावशेषतया लक्षितत्वात् । यदेवमवस्था लक्ष्यते तदा सेयं तुरीयावस्था । यावद्देहधारणा . . . प्राप्तिर्भवति— यावत्प्रातिभासिकतयाऽपि देहोऽस्मीति ज्ञानं तावज्जीवन्मुक्तिदशामवलम्ब्य पश्चात् स्वातिरिक्तं न किञ्चिदस्तीति प्रबोधानन्तरं परमात्मैव भवतीत्यर्थः । जीवताया अनेन प्रकारेण मोक्षो भवति । इदमेवात्मदर्शनोपायं नेतरदित्यर्थः ॥ ९३–१९ ॥ मन्दानामात्मदर्शनोपायमाह—चतुष्पथेति ।

[1] त्रिकोणार्ध—क, अ २. त्रिकोणार्थ—अ १.

चतुष्पथो जालन्धरबन्धः तेन समायुक्तं महाद्वारं सुषुम्नारन्ध्रं गच्छतीति महाद्वारगः सचाऽसौ वायुश्चेति महाद्वारगवायुः तेन महाद्वारगवायुना सह स्थितमूलाधारत्रिकोणस्योर्ध्वमूलाधारगमनो मूलाधारस्थसुषुम्नायां दृक्प्राणाग्निमनः-कुण्डलिनीप्रवेशमात्रेण स्वमात्राच्युतः परमात्मा दृश्यते साक्षात्क्रियते इत्यर्थः ॥ ९४ ॥

नादानुसन्धानतः आत्मदर्शनम्

पूर्वोक्तत्रिकोणस्थानादुपरि पृथिव्यादिपञ्चवर्णकं ध्येयम् ।
प्राणादिपञ्चवायुश्च बीजं वर्णं च स्थानकम् ।
यकारं प्राणबीजं च नीलजीमूतसन्निभम् ।
रकारमग्निबीजं च अपानादित्यसंनिभम् ॥ ९५ ॥
लकारं पृथिवीरूपं व्यानं बन्धूकसंनिभम् ।
वकारं जीवबीजं च उदानं शङ्खवर्णकम् ॥ ९६ ॥
हकारं वियत्स्वरूपं च समानं स्फटिकप्रभम् ।
हृन्नाभि[1]नासिकाकण्ठपादाङ्गुष्ठादिसंस्थितः ॥ ९७ ॥
द्विसप्ततिसहस्राणि नाडिमार्गेषु वर्तते ।
अष्टाविंशतिकोटीषु रोमकूपेषु संस्थितः ॥ ९८ ॥
समानप्राण एकस्तु [2]जीवः स एक एव हि ।
रेचकादित्रयं कुर्याद्दृढचित्तः समाहितः ॥ ९९ ॥
शनैः समस्तमाकृष्य हृत्सरोरुहकोटरे ।
प्राणापानौ च बध्वा तु प्रणवेन समुच्चरेत् ॥ १०० ॥

[1] नासिकर्णं च—क, अ १, अ २.
[2] जीवस्थो—क. जीवस्सो—अ १, अ २.

[1]कण्ठसंकोचनं कृत्वा लिङ्गसंकोचनं तथा ।
मूलाधारात्सुषुम्ना च [2]बिसतन्तुनिभा शुभा ॥ १०१ ॥
अमूर्तो [3]वर्तते नादो वीणादण्डसमुत्थितः ।
शङ्खनादादिभिश्चैव मध्यमेव ध्वनिर्यथा ॥ १०२ ॥
व्योमरन्ध्रगतो नादो मायूरं [4]नादमेव च ।
कपालकुहरे मध्ये चतुर्द्वारस्य मध्यमे ॥ १०३ ॥
तदात्मा राजते तत्र यथा व्योम्नि दिवाकरः ।
कोदण्डद्वयमध्ये तु ब्रह्मरन्ध्रेषु शक्ति च ॥ १०४ ॥
स्वात्मानं पुरुषं पश्येन्मनस्तत्र लयं गतम् ।
रत्नानि ज्योत्स्निनादं तु बिन्दु माहेश्वरं पदम् ॥ १०५ ॥
य एवं वेद पुरुषः स कैवल्यं समश्नुते ॥ १०६ ॥

इत्युपनिषत् ॥

एवमकृतसाक्षात्काराणां नादानुसन्धानोपायतः तत्पदाप्तिं प्रकटयन्नुपसंहरति—पूर्वेति ॥ ध्येयम्—किं तत्? प्राणादि । यद्येवमपक्वचित्तः कश्चित् तेन पूर्वोक्तमूलाधारत्रिकोणाग्निमण्डलादुपरि प्राणादिवायुजातं पृथिव्यादिपञ्चवर्णयुक्तं ध्येयम् । यकारादिबीजं नीलजीमूतादिवर्णं हृदयादिस्थानविशिष्टं ध्येयमिति पूर्वेणान्वयः । आदौ हृदि यकारं प्राणबीजं विद्यात् नीलजीमूततुल्यवर्णविशिष्टं प्राणं जानीयादित्यध्याहार्यम् । गुदे रेफमग्निबीजमपानमादित्यसन्निभं विद्यात् ॥ ९५ ॥ पृथिवीबीजं लकारं बन्धूकसन्निभं व्यानं कृत्स्नशरीरव्यापकं विद्यात् । कण्ठदेशे वकारं जीवबीजमुदानं शङ्खवर्णविशिष्टं विद्यात् ॥ ९६ ॥ हकारं वियद्बीजं समानं नाभ्यासनं स्फटिकप्रभं च विद्यात् । एवं प्राणपञ्चकं

[1] कर्ण—क, अ १.
[2] पद्म—क, अ १, अ २.
[3] दृश्यते—उ.
[4] नाद एव—उ.

हृन्नाभिनासिकाकण्ठपादाङ्गुष्ठादिषु संस्थितं विद्यात् ॥ ९७ ॥ तत्र समानवायुस्तु द्विसप्ततिसहस्रनाडीमार्गेषु सदा सञ्चरन् वर्तते अष्टाविंशतिकोटिरोमकूपेषु व्याप्य स्थितो भवति ॥ ९८ ॥ विचार्यमाणे एकस्तु—तुशब्दोऽवधारणार्थः—समानादिप्राणान्तवायुभेदः एक एव । य एवं पञ्चप्राणाधारः सोऽयं जीव एक एव । हिशब्दः प्रसिद्धिद्योतकः । एवं ज्ञात्वा ततः परं रेचकादि इति । एवं यथोक्तपञ्चप्राणारूढजीवस्वरूपं ज्ञात्वा ततो दृढचित्तो योगी समाहितो भूत्वा रेचकाद्यवयवत्रयविशिष्टप्राणायामत्रयं कुर्यात् ॥ ९९ ॥ शनैः स्वान्तःकरणवृत्तिसहस्रं हृत्सरोरुहकोटरे समाकृष्य तत्रैव प्राणापानौ च बद्ध्वा प्रणवेन तु प्रणवेनैव प्रणवेनाऽऽज्ञासहस्रारचक्रं प्रत्युच्चरेत् ऊर्ध्वं नयेत् ॥ १०० ॥ तदुपायतया कण्ठलिङ्गसङ्कोचनग्रहणं बन्धत्रयोपलक्षणार्थम् । तथा बन्धत्रयं कृत्वा मूलाधारात् मूलाधारमारभ्य पद्मतन्तुनिभा शुभा सुषुम्ना—चशब्दात् तदन्तःकैवल्यनाडी च—प्रतिष्ठिता भवतीति द्योत्यते ॥ १०१ ॥ तत्र सुषुम्नाश्रयवीणादण्डे समुत्थितः सन् अमूर्तो नादो वर्तते । अत एव वीणादण्डमध्यमेव नादोत्पत्तिस्थानं यथा शङ्खनादादिभिश्चैव ॥ १०२ ॥ हृद्व्योमरन्ध्रगतो नादोऽभिव्यक्तो भवति । यदाऽयं नादो मायूरं नादमेवानुकरोति तदा इडापिङ्गळासुषुम्नाघण्टिकाभेदेन चतुर्द्वारस्य मध्यमे कपालकुहरमध्ये ॥ १०३ ॥ तत्र यथा व्योम्नि दिवाकरः तथा परमात्मा राजते सम्यगभिव्यक्तो भवति । यत्र मनउपलक्षितदृष्टिवाग्वह्निकुण्डल्यादिकं लयं गतं तत्र मूलाधारादिब्रह्मोपलब्धिरन्ध्रेषु कोदण्डद्वयमध्ये तु—तुश्चार्थः—यथाशक्ति यथाबलं ॥ १०४ ॥ स्वात्मानं पुरुषं पश्येत् । किंविशेषणविशिष्टमित्यत्र, “वज्रदण्डसमुद्भूताः मणयश्चैकविंशतिः” इति श्रुत्यनुरोधेन विश्वतुर्यमित्यारभ्याविकल्पानुज्ञैकरसान्तानि एकविंशतितुरीयरत्नानि तेषां ज्योतिश्च ज्योतिष्मदधिकरणं जाग्रज्जाग्रदादिचतुष्पञ्चदशविकल्पं न ददातीति नदं तदेव नादं तुर्यतुर्यं बिन्दु निर्विशेषरूपं महांश्चासौ निष्प्रतियोगिकब्रह्ममात्रतयाऽवस्थातुमीश्वरश्चेति महेश्वरः तद्भावो माहेश्वरं स्वमात्रतया पद्यते इति पदं विद्वान् पश्येदिति पूर्वेणान्वयः ॥ १०५ ॥ विद्याफलं वदन्नुपसंहरति—य

इति । विद्वान् वेदनसमकालं कैवल्यरूपेण अवशिष्यते इत्यत्र, "ब्रह्म वेद ब्रह्मैव भवति" इति ज्ञानसमकालमेव ब्रह्ममात्रभावापत्तिश्रुतेः । इत्युपनिषच्छब्दोऽयं ध्यानबिन्दूपनिषत्समाप्त्यर्थः ॥ १०६ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं ध्यानबिन्दोः स्फुटं लघु ॥
ध्यानबिन्दुविवरणं त्रिंशदधिशतत्रयम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकोनचत्वारिंशत्सङ्ख्यापूरकं ध्यानबिन्दूपनिषद्विवरणं सम्पूर्णम्

---

# नादबिन्दूपनिषत्

वाङ्मे मनसि—इति शान्तिः

वैराजप्रणवस्वरूपम्

अकारो दक्षिणः पक्ष उकारस्तूत्तरः स्मृतः ।
मकारं पुच्छमित्याहुरर्धमात्रा तु मस्तकम् ॥ १ ॥
पादादिकं गुणास्तस्य शरीरं तत्त्वमुच्यते ।
धर्मोऽस्य दक्षिणश्चक्षुरधर्मो योऽपरः स्मृतः ॥ २ ॥
भूर्लोकः पादयोस्तस्य भुवर्लोकस्तु जानुनि ।
सुवर्लोकः कटीदेशे नाभिदेशे महर्जगत् ॥ ३ ॥
जनोलोकस्तु हृद्देशे कण्ठे लोकस्तपस्ततः ।
भ्रुवोर्ललाटमध्ये तु सत्यलोको व्यवस्थितः ॥ ४ ॥

वैराजात्मोपासनया सञ्जातज्ञानवह्निना ।
दग्ध्वा कर्मत्रयं योगी यत्पदं याति तद्भजे ॥

इह खलु ऋग्वेदप्रविभक्तेयं नादबिन्दूपनिषत् विराट्प्रणवप्रकटनपूर्वकं तद्गतसविशेषब्रह्मविदां स्वात्तज्ञानानुरोधेन सविशेषब्रह्माप्तिमभिधाय निर्विशेषब्रह्म-

याथात्म्यप्रकटनपूर्वकं तज्ज्ञानान्नादोपायसाधनसम्पन्नानां कर्मत्रयभङ्गप्रभा[भ]व-विकळेबरकैवल्यं प्रकटयन्ती विजृम्भते स्वयमवान्तररूपेण । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । श्रुतिस्तु— अकारइत्यादिना । अन्तर्विराट्-प्रणवावेकीकृत्य द्वादशमात्रात्मको महाविराजप्रणव उच्यते । तद्भावापत्तये महाविराजः सुपर्णतयोक्तिः । सुपर्णभावमापन्नमहाविराजः स्थूलप्रपञ्चाभिधायको-ऽयमकारो दक्षिणः पक्षः । तस्योत्तरपक्षस्तु सूक्ष्मप्रपञ्चाभिधायक उकारः स्मृतः । तस्य पुच्छं बीजप्रपञ्चाभिधायकं मकारमिति ब्रह्मविद आहुः । अर्धमात्रा तु तन्मस्तकभावं गतेत्यामनन्ति ॥ १ ॥ तस्य पादादिकं सत्वादिगुणा भवन्ति । तस्य विशिष्टावयवसम्पन्नं शरीरं तु वराहोपनिषदुक्त-षण्णवतितत्त्वजातमुच्यते । अस्य दक्षिणोत्तरचक्षुषी धर्माधर्मौ भवतः । दक्षिणश्चक्षुरिति लिङ्गव्यत्ययः ॥ २ ॥ तस्य पादजानुकटिनाभिहृदयकण्ठ-भ्रूमध्येषु भूरादिसप्तलोकाः प्रतिष्ठिताः इत्यर्थः । पादयोरिति सप्तमीद्वि-वचनम् ॥ ३–४ ॥

### वैराजविद्याफलम्

सहस्रार्णमती वाऽत्र मन्त्र एष प्रदर्शितः ।
एवमेतां समारूढो हंसयोगविचक्षणः ॥ ९ ॥
न भिद्यते कर्मचारैः पापकोटिशतैरपि ।

एवंविशेषणविशिष्टो वैराजप्रणव उक्तः इत्याह—सहस्रेति । सहस्रार्णमि-[र्णमती]ति लिङ्गव्यत्ययः । प्रणवाद्य[द्या]वयवाकारस्य सहस्रावयवत्वं श्रूयते, "अकारः सहस्रावयवान्वितः" इति । अत्र अस्मिन् महावैराजप्रणवात्मनि सहस्रार्णाख्यावयवविशिष्टाकारान्वितोऽयमेष ओङ्कारो मन्त्र अभिधानतया स्थितः इति श्रुतिभिः प्रदर्शित इत्यर्थः । वाशब्दः अवधारणे । इत्थं वक्ष्यमाणद्वादशमात्रात्मकप्रणवार्थमहाविराडस्मि इत्यनुसन्धानं हंसयोगः, तद्वतः पापाद्यभेद्यतामाह—एवमिति । स्वतत्त्वज्ञानेन स्वातिरिक्तकलनां हन्तीति

हंसः । स एवास्मीत्यनुसन्धानं हंसयोगः । तद्विचक्षणः तदभिज्ञो योगी ॥ ५ ॥ एवमुक्तलक्षणां महाविराजविद्यां समारूढो यदा तदनुसन्धानपरो भवति तदा स्वकृतकर्मचारैः कर्मप्रभवैः पापकोटिशतैरपि न कदाऽपि भिद्यते— इति वक्ष्यमाणविद्याफलं दर्शयति ॥

प्रणवस्य प्रधानमात्राचतुष्टयस्वरूपम्

आग्नेयी प्रथमा मात्रा वायव्येषा तथा परा ॥ ६ ॥

भानुमण्डलसंकाशा भवेन्मात्रा तथोत्तरा ।

परमा चार्धमात्रा या वारुणीं तां विदुर्बुधाः ॥ ७ ॥

कालत्रयेऽपि [1]यत्रेमा मात्रा नूनं प्रतिष्ठिताः ।

एष ओंकार आख्यातो धारणाभिर्निबोधत ॥ ८ ॥

प्रधानमात्राचतुष्टयस्वरूपमाह—आग्नेयीति । अग्निः वैश्वानरः तत्सम्बन्धिनी आग्नेयी वैराज्यकाराभिधाना प्रथमा मात्रा भवति । तथा वायुशब्देन सूत्रात्मोच्यते, "वायुर्वै गौतम तत्सूत्रं" इति श्रुतेः । तत्सम्बन्धिनी वायवी एषा परा उकाररूपिणी द्वितीया मात्रा भवति ॥ ६ ॥ भानुमण्डलवत् सम्यक् काशत इति बीजात्मा भानुमण्डलसङ्काशः तदभिधानमकारात्मिका भानुमण्डलसङ्काशा परा तृतीयमात्रा भवेत् । या च पुनः मात्रात्रयापेक्षया अर्धमात्रा परमा सर्वोत्कृष्टा भवति बुधाः तामेतां स्वविकल्पितभेदजातं स्वेन रूपेण वारयति व्याप्नोतीति वरुणः तुर्यः तद्रूपिणीं वारुणीं चतुर्थमात्रात्मिकां विदुः ॥ ७ ॥ यत्र प्रणवे भूतादिकालत्रयेऽपि इमाः मात्राः प्रतिष्ठिताः एषः ओङ्कारः एवं श्रुतिभिराख्यातो भवति । हे स्वाङ्गलोकाः यूयं वक्ष्यमाणघटिकापञ्चककालात्मकघोषिण्यादिमात्रा धारणाभिः निबोधत जानथेत्यर्थः ॥ ८ ॥

[1] यस्ये—क, अ २.

प्रणवस्य व्यष्टिसमष्ट्यात्मकद्वादशमात्राभेदविवरणम्

घोषिणी प्रथमा मात्रा विद्युन्मात्रा तथा परा ।
पतङ्गिनी तृतीया स्याच्चतुर्थी वायुवेगिनी ॥ ९ ॥
पञ्चमी नामधेया तु षष्ठी चैन्द्र्यभिधीयते ।
सप्तमी वैष्णवी नाम अष्टमी शांकरीति च ॥ १० ॥
नवमी महती नाम धृतिस्तु दशमी मता ।
एकादशी भवेन्नारी ब्राह्मी तु द्वादशी परा ॥ ११ ॥

व्यष्टिसमष्ट्यात्मकद्वादशमात्राभेदं विवृणोति—घोषिणीति ॥ ९ ॥ अन्तःप्रणवमात्रा अकाराद्याः पञ्चब्रह्मवाचका ज्ञेयाः ॥ १० ॥ समष्ट्यकाराद्या-[अ]ण्डविराडादिवाचका भवन्ति ॥ ११ ॥

उपासकानां तत्तन्मात्राकालोत्क्रमणफलम्

प्रथमायां तु मात्रायां यदि प्राणैर्वियुज्यते ।
भरते वर्षराजाऽसौ सार्वभौमः प्रजायते ॥ १२ ॥
द्वितीयायां समुत्क्रान्तो भवेद्यक्षो महात्मवान् ।
विद्याधरस्तृतीयायां गान्धर्वस्तु चतुर्थिका ॥ १३ ॥
पञ्चम्यामथ मात्रायां यदि प्राणैर्वियुज्यते ।
उषितः सह देवत्वं सोमलोके महीयते ॥ १४ ॥
[1]षष्ठ्यामिन्द्रस्य सायुज्यं सप्तम्यां वैष्णवं पदम् ।
अष्टम्यां व्रजते रुद्रं पशूनां च पतिं तथा ॥ १५ ॥

[1] षष्ठ्यांमित्रस्य-

नवम्यां तु महर्लोकं दशम्यां तु जनं व्रजेत् ।
एकादश्यां तपोलोकं द्वादश्यां ब्रह्म शाश्वतम् ॥ १६ ॥

षष्टिघटिकास्वेवं द्वादशमात्रादृष्टिं कृत्वा उपासनां कुर्वतः तत्तन्मात्राकालोत्क्रमणफलमाह—प्रथमायामिति । चतुर्मुखदैवत्यघोषिण्याख्याकाराभिधानोदयादिपञ्चघटिकाकालपरिमितायां प्रथमायां तु मात्रायां यद्येवमुपासकः **प्राणैः वियुज्यते सोऽसौ योगी भरते वर्षे राजा सार्वभौमः सन् प्रजायते ॥ १२ ॥** तथा च **द्वितीयायाम** । सप्तम्यर्थे **चतुर्थिकेति** । प्रथमपर्यायवदेकादशपर्यायोऽप्यूह्यः ॥ १३–१६ ॥

**निर्विशेषब्रह्मस्वरूपं, तज्ज्ञानफलं च**

ततः परतरं शुद्धं व्यापकं निर्मलं [1]शिवम् ।
सदोदितं परं ब्रह्म ज्योतिषामुदयो यतः ॥ १७ ॥
अतीन्द्रियं गुणातीतं मनो लीनं यदा भवेत् ।
अनूपमं शिवं शान्तं [2]योगयुक्तः सदा विशेत् ॥ १८ ॥
तद्युक्तस्तन्मयो जन्तुः शनैर्मुञ्चेत् [3]कुले चिरम् ।
संस्थितो योगचारेण सर्वसङ्गविवर्जितः ॥ १९ ॥
ततो विलीनपाशोऽसौ विमलः कमलाप्रभुः ।
तेनैव ब्रह्मभावेन परमानन्दमश्नुते ॥ २० ॥

सविशेषब्रह्मविदामेवं फलतारतम्यमुक्त्वा निर्विशेषब्रह्मस्वरूपं तज्ज्ञानफलं चाह—**तत इति । ततः**—" अकारो दक्षिणः पक्षः " इत्यारभ्य महावैराजाभिधानं सविशेषं ब्रह्म तदुपासकानां तत्फलं चाभिहितं, **ततः परतरं** महावैराजगतहेयां-

[1] परं—क, अ २. [2] योगयुक्तं—अ २. [3] कळेबरं—उ (पाठान्तरं), मु.

शापह्नवमिद्धं अत एव शुद्धं, स्वाज्ञदृष्ट्या व्याप्यमलाशिवप्रसक्तौ **व्यापकं निर्मलं शिवं**, यतः सूर्यादिज्योतिषामुदयो भवति तदेतत् **ब्रह्म सदोदितम्** ॥ १७ ॥ करणग्रामतद्धेतुत्रिगुणप्रसक्तौ अतीन्द्रियं गुणातीतं निर्गुणं, यदा स्वातिरिक्तकलनोज्जीवकमनो लीनं भवेत्तदा तदनूपमं निरुपमं, चिन्मात्रत्वात् शिवं, शान्तस्वातिरिक्तं यत् ब्रह्म अवशिष्यते सदा तन्निर्विकल्पकयोगयुक्तो विशेत् ॥ १८ ॥ तद्योगयुक्तो जन्तुः तन्मयो भूत्वा स्वकारणभूते **कुले** स्वाविद्याद्वयतत्कार्यं शनैःशनैः मुञ्चेन अथ यच्चिरं चिन्मात्रं भवेत् । कोऽयं एवमधिकारीत्याह— **संस्थित** इति । योगचारेण योगाभ्यासेन सम्यक् स्थितः । अन्तर्बाह्यकलनासङ्गिनो योगाभ्यासेच्छा कुत इत्यत आह— **सर्वसङ्गविवर्जितः** इति ॥ १९ ॥ अतो योगी **विमलान्तरो** भूत्वा **विलीन**स्वबन्धनहेतुस्वातिरीक्तपाशः सन् **विदेहकैवल्यकमलया** प्रभवतीति **प्रभुः परमानन्दं** यः स्वेन **अनुष्ठितः तेनैव ब्रह्मभावेन** सर्वापह्नवसिद्धं **ब्रह्म** निष्प्रतियोगिकस्वमात्रमिति ज्ञानयोगेन **अश्नुते**, कृतकृत्यो भवतीत्यर्थः ॥ २० ॥

ज्ञानिनः प्रारब्धकर्मभावाभावविचारः

आत्मानं सततं ज्ञात्वा कालं नय महामते ।
प्रारब्धमखिलं भुञ्जन्नोद्वेगं कर्तुमर्हसि ॥ २१ ॥
उत्पन्ने चात्मविज्ञाने प्रारब्धं नैव मुञ्चति ।
तत्त्वज्ञानोदयादूर्ध्वं प्रारब्धं नैव विद्यते ॥ २२ ॥
देहादीनामसत्त्वात्तु यथा [1]स्वप्नो विबोधतः ।
कर्म जन्मान्तरीयं यत्प्रारब्धमिति कीर्तितम् ॥ २३ ॥
यत्तु जन्मान्तराभावात्पुंसो नैवास्ति कर्हिचित् ।
स्वप्नदेहो यथाध्यस्तस्तथैवायं हि देहकः ॥ २४ ॥

[1] स्वप्ने—क, अ १, अ २.

अध्यस्तस्य कुतो जन्म जन्माभावे कुतः स्थितिः ।
उपादानं प्रपञ्चस्य मृद्भाण्डस्येव पश्यति ॥ २५ ॥
अज्ञानं चेति वेदान्तैस्तस्मिन्नष्टे क्व विश्वता ।
यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात् ॥ २६ ॥
तद्वत्सत्यमविज्ञाय जगत्पश्यति मूढधीः ।
रज्जुखण्डे परिज्ञाते सर्परूपं न तिष्ठति ॥ २७ ॥
अधिष्ठाने तथा ज्ञाते प्रपञ्चे शून्यतां गते ।
देहस्यापि प्रपञ्चत्वात्प्रारब्धावस्थितिः कुतः ॥ २८ ॥
अज्ञानजनबोधार्थं प्रारब्धमिति चोच्यते ।
ततः कालवशादेव प्रारब्धे तु क्षयं गते ॥ २९ ॥
ब्रह्मप्रणवसंधाननादो ज्योतिर्मयः शिवः ।
स्वयमाविर्भवेदात्मा मेघापायेऽशुमानिव ॥ ३० ॥

कंचनापक्वज्ञानिनमुद्दिश्येदमाह—आत्मानमिति । सततं श्रुत्याचार्यप्रसादलब्धश्रवणादिसाधनेन स्वात्मानं ब्रह्मेति ज्ञात्वा हे महामते आयुःशेषकालं नय इच्छाऽनिच्छापरेच्छाप्रभवसुखदुःखतन्मिश्रप्रारब्धमखिलं भुञ्जन् नोद्वेगं सन्तापं कर्तुं अर्हसि ॥ २१ ॥ तव एवं उत्पन्ने चात्मविज्ञाने नैव प्रारब्धं त्वां मुञ्चति । यदि ते ब्रह्ममात्रतत्त्वज्ञानं जायते तदा न हि ते प्रारब्धं कर्म अस्तीत्याह—तत्त्वज्ञानेति ॥ २२ ॥ प्रारब्धसम्भवे हेतुमाचष्टे—देहादीनामिति । यत् जन्मान्तरीयं कर्म सुखादिभोगप्रदं प्रारब्धं तत्तु प्रबोधात् स्वप्नवत् तत्त्वज्ञानेन नश्यत्येव । तत्र हेतुः—वस्तुतो देहादीनामसत्त्वात् ॥ २३ ॥ एवं देहादीनामसत्त्वे पुंसो जन्मान्तराभावात् यत् प्रारब्धमिति मन्यसे तत्तु

कर्हिचिदपि नैवास्तीति निश्चिन्विव्यर्थः । प्राग्धायत्तदेहस्यासत्त्वं स्फुटयति सदृष्टान्तं- स्वप्नेति ॥ २४–२५ ॥ स्वाज्ञानं अध्यासहेतुः । तस्मिन् वेदान्तैः तत्प्रभवज्ञानविज्ञानसम्यग्ज्ञानैः अभावपदं गते क तत्कार्यविश्वता सेद्धुं पारयति, देहादेः विश्वान्तःपातित्वात् । न कदाऽपि प्राग्धादिकर्मत्रयं विद्यते इत्यर्थः । शिष्टं स्पष्टम् ॥ २६–२८ ॥ तथा चेन् कथं प्राग्धकल्पनेत्यत आह—अज्ञानेति । स्वज्ञानेन स्वाज्ञानतत्कार्ये नष्टे कथं ते देहो विद्यत इति स्वाज्ञानानुरोधमाक्षिपन्ति, तद्वाग्बन्धनायेयं प्राग्धकल्पनेत्यर्थः । ततः किमित्यत आह—तत इति । ततः सम्यग्ज्ञानादूर्ध्वं कालवशान् ईश्वरप्रसादादेव प्रारब्धकर्मोपलक्षितस्वातिरिक्तास्तित्वभ्रमे क्षयं अपह्नवं गते सति ॥ २९ ॥ अथ पुरा ब्रह्मप्रणवानुसन्धानप्रभवप्रबोधः पुनः स्वातिरिक्तास्तित्वभ्रमं न ददाति, ज्योतिर्मयः शिवो नादः तुर्यतुर्यो भूत्वा मेघापाये अंशुमानिव स्वयं आविर्भवेन् आत्मा स्वमात्रमवशिष्यत इत्यर्थः ॥ ३० ॥

### तुरीयतुरीयाधिगमोपायभूतं नादानुसन्धानम्

सिद्धासनस्थितो योगी मुद्रां संधाय वैष्णवीम् ।
शृणुयाद्दक्षिणे कर्णे नादमन्तर्गतं सदा ॥ ३१ ॥
अभ्यस्यमानो नादोऽयं बाह्यमावृणुते [1]ध्वनिम् ।
पक्षाद्विपक्षमखिलं जित्वा तुर्यपदं व्रजेत् ॥ ३२ ॥
श्रूयते प्रथमाभ्यासे नादो नानाविधो महान् ।
वर्धमानस्तथाऽभ्यासे श्रूयते सूक्ष्मसूक्ष्मतः ॥ ३३ ॥
आदौ जलधिजीमूतभेरीनिर्झरसंभवः ।
मध्ये मर्दलशब्दाभो घण्टाकाहलजस्तथा ॥ ३४ ॥

[1] ध्वनिः—क, अ १, अ २.

अन्ते तु किंकिणीवंशवीणाभ्रमरनिस्वनः ।
इति नानाविधा नादाः श्रूयन्ते सूक्ष्मसूक्ष्मतः ॥ ३५ ॥
महति श्रूयमाणे तु महाभेर्यादिकध्वनौ ।
तत्र सूक्ष्मं सूक्ष्मतरं नादमेव परामृशेत् ॥ ३६ ॥
घनमुत्सृज्य वा सूक्ष्मे सूक्ष्ममुत्सृज्य वा घने ।
रममाणमपि [1]क्षिप्तं मनो नान्यत्र चालयेत् ॥ ३७ ॥
यत्र कुत्रापि वा नादे लगति प्रथमं मनः ।
तत्र तत्र स्थिरीभूत्वा तेन सार्धं विलीयते ॥ ३८ ॥
विस्मृत्य सकलं बाह्यं नादे दुग्धाम्बुवन्मनः ।
एकीभूयाथ सहसा चिदाकाशे विलीयते ॥ ३९ ॥
उदासीनस्ततो भूत्वा सदाऽभ्यासेन संयमी ।
उन्मनीकारकं सद्यो नादमेवावधारयेत् ॥ ४० ॥
सर्वचिन्तां समुत्सृज्य सर्वचेष्टाविवर्जितः ।
नादमेवानुसंदध्यान्नादे चित्तं विलीयते ॥ ४१ ॥

ब्रह्मप्रणवार्थतुर्यतुर्याधिगमोपायतया नादानुसन्धानप्रकारमाह—सिद्धासनेति ॥

गुदं वामेन सम्पीड्य मेढ्रादुपरि दक्षिणम् ।
ऋजुकायत्रिबन्धाभ्यां सिद्धासनमिदं भवेत् ॥

इति योगशास्त्रप्रसिद्धसिद्धासने स्थितो योगी

[1] कॢप्तं— अ २.

अन्तर्लक्ष्यं बहिर्दृष्टिः निमेषोन्मेषवर्जिता ।
एषा सा वैष्णवी मुद्रा सर्वतन्त्रेषु गोपिता ॥

इति श्रुतिसिद्धवैष्णवीं मुद्रामनुसन्धाय स्वान्तरनाहतगतं नादं दक्षिणकर्णे सदा शृणुयात् ॥ ३१ ॥ एवं नादश्रवणतः किं स्यादित्यत आह—अभ्यस्यमान इति । एवं अभ्यस्तो नादः स्वावारकबाह्यशब्दादिकमावृत्य पक्षमात्रेण स्वविपक्षभूतस्वातिरिक्तास्तित्वं निर्मूल्य नादसाधनो योगी तुर्यतुर्यपदं स्वमात्रमिति व्रजेत् ॥ ३२ ॥ नादेयत्तां तदभ्यासानुभवं च प्रकटयति—श्रूयत इति ॥ ३३ ॥ कथं? आदौ ॥ ३४–३५ ॥ तत् किं ग्राह्यमित्यत आह—महतीति ॥ ३६ ॥ यथाकथंचित् नादात् मनो न चालयेदित्याह—घनमिति ॥ ३७ ॥ जलध्यादिभ्रमरनिस्वनान्तनादेषु यत्र कुत्र वा मनः स्थिरीभवेत् तेन नादेन साकं चिदाकाशे विलीयत इत्याह—यत्रेति ॥ ३८–३९ ॥ तदितरकार्येषु उदासीनः ॥ ४० ॥ यतो नादाभ्यासः क्षिप्रफलदः अत एव सर्वचिन्ताम् ॥ ४१ ॥

### नादस्य मनोनियमनसामर्थ्यम्

मकरन्दं पिबन्भृङ्गो गन्धान् [1]नापेक्षते यथा ।
नादासक्तं सदा चित्तं विषयं न हि काङ्क्षते ॥ ४२ ॥
बद्धः सुनादगन्धेन सद्यःसंत्यक्त[2]चापलम् ।
नादग्रहणतश्चित्तमन्तरङ्ग[3]भुजङ्गमम् ॥ ४३ ॥
विस्मृत्य विश्व[4]मेकाग्रं कुत्रचिन्न हि धावति ।
[5]मनोन्मत्तगजेन्द्रस्य विषयोद्यानचारिणः ॥ ४४ ॥

[1] नाक्षेपते—उ, अ १. [2] चापलः—क, अ १, अ २, मु.
[3] भुजंगमः—मु. [4] मेकाग्रः—मु. [5] मनोम—क, अ १.

नियामनसमर्थोऽयं निनादो निशिताङ्कुशः ।
नादोऽन्तरङ्गसारङ्गबन्धने वागुरायते ॥ ४५ ॥
अन्तरङ्ग[1]तरङ्गस्य रोधे वेलायतेऽपि च ।

नादासक्तं चित्तं तदतिरिक्तविषयं न काङ्क्षतीति सदृष्टान्तमाह—मकरन्दमिति ॥ ४२ ॥ नादपाशनिरुच्छ्वासबद्धं चित्तं अचलं सत् स्वबाह्याभ्यन्तरं विस्मृत्य स्तब्धीभवतीत्याह—बद्ध इति ॥ ४३ ॥ स्वान्तर्बाह्यं विस्मृत्य स्वस्मिन्नेव स्थिरं सत् न कुत्रचित् परिधावतीत्यर्थः । नादाङ्कुशो मनोगजनियमनदक्ष इत्याह—मन इति ॥ ४४ ॥ नादोन्तरङ्गविहङ्गमतरङ्गरोधनजालवेलेव दक्ष इत्याह—नाद इति ॥ ४५ ॥

उपेयनादस्वरूपम्

ब्रह्मप्रणवसंलग्ननादो ज्योतिर्मयात्मकः ॥ ४६ ॥
मनस्तत्र लयं याति तद्विष्णोः परमं पदम् ।
तावदाकाशसंकल्पो यावच्छब्दः प्रवर्तते ॥ ४७ ॥
निःशब्दं तत्परं ब्रह्म परमात्मा [2]समीर्यते ।
नादो यावन्मनस्तावन्नादान्ते तु मनोन्मनी ॥ ४८ ॥
सशब्दश्चाक्षरे क्षीणे निःशब्दं परमं पदम् ।
सदा नादानुसंधानात्संक्षीणा वासना [3]भवेत् ॥ ४९ ॥
निरञ्जने विलीयेते मनोवायू न संशयः ।
नादकोटिसहस्राणि बिन्दुकोटिशतानि च ॥ ५० ॥
सर्वे तत्र लयं यान्ति ब्रह्मप्रणव[4]नादके ।

[1] समुद्रस्य—क, अ २.
[2] समीयते—अ १, अ २.
[3] तुया—क, अ १, अ २.
[4] नादकः—उ.

उपायनादस्वरूपमुक्त्वा फलात्मकोपेयनादस्वरूपं तज्ज्ञानफलं च प्रकटयति—ब्रह्मेति । अकारस्थूलांशादिप्रविभक्तजाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तकलनोपबृंहणात् ब्रह्म यस्मिन् षोडशमात्रात्मकप्रणवे विराजते स ब्रह्मप्रणवः तत्संलग्नः तदभिन्नः सचाऽसौ स्वज्ञानां परागभावं न ददातीति नदः स एव नादः प्रत्यगात्मा स्वयंप्रकाशकतया ज्योतिर्मयात्मको भवति ॥ ४६ ॥ यन्मनः पराक्प्रत्यग्विभागहेतुः तत्र प्रत्यगभिन्नपरब्रह्मणि लयं याति, मनउपलक्षितस्वाविद्यापदाधिकरणं यत् तस्य विष्णोः तद्विष्णोः व्याप्यसापेक्षव्यापनशीलस्य व्याप्यसापेक्षव्यापकताऽभावे यद्व्याप्यव्यापककलनाविरळमवशिष्यते, तदेव परमं निष्प्रतियोगिकनिर्विशेषं तन्मात्रतया पद्यत इति पदं विकळेबरकैवल्यमित्यर्थः । किं सदा ब्रह्मप्रणवानुसन्धानं कर्तव्यमित्यवधिमाह—तावदिति । यावद्बाह्यान्तःशब्दकामादिप्रतीतिः तावदाकाशसङ्कल्पः स्वातिरिक्तशब्दादिप्रपञ्चोऽस्ति नास्तीति विभ्रमसङ्कल्पविरळो भवेत् ॥ ४७ ॥ ततोऽयं निःशब्दतया विभाति परमात्मेति सम्यगीर्यते । नादानुसन्धानावधिं तत्फलं चाह—नाद इति ॥ ४८–४९ ॥ ब्रह्मप्रणवनादस्य सर्वापवादाधिकरणतामाह—नादेति । नादस्य सर्वसाक्षिणोऽधिगमे यान्युपायतया कोटिसहस्राणि साधनानि सन्ति यानि बिन्दोः ईश्वरस्य अधिगमे सालोक्यादितत्पदाप्तिसाधनानि कोटिशतानि सन्ति तानि सर्वाणि ॥ ५० ॥ चशब्दात् ये ये स्वाज्ञविकल्पिताः विकाराः सन्ति ते सर्वे तत्र ब्रह्मप्रणवनादके प्रत्यगभिन्ने ब्रह्मणि लयं यान्ति । ततः प्रत्यगभिन्नं ब्रह्म स्वाधिष्ठेयाभावात् निरधिष्ठानं सत् स्वमात्रमवशिष्यत इति भावः ॥

नादारूढयोगिनां विदेहमुक्तिलाभः

सर्वावस्थाविनिर्मुक्तः सर्वचिन्ताविवर्जितः ॥ ५१ ॥
मृतवत्तिष्ठते योगी स मुक्तो नात्र संशयः ।
शङ्खदुन्दुभिनादं च न शृणोति कदाचन ॥ ५२ ॥
काष्ठवज्ज्ञायते देह उन्मन्यावस्थया ध्रुवम् ।
न जानाति स शीतोष्णं न दुःखं न सुखं तथा ॥ ५३ ॥

न मानं नावमानं च संत्यक्त्वा तु समाधिना ।
अवस्थात्रयमन्वेति न चित्तं योगिनः सदा ॥ ५४ ॥
जाग्रन्निद्राविनिर्मुक्तः स्वरूपावस्थतामियात् ॥ ५५ ॥
दृष्टिः स्थिरा यस्य विना सदृश्यं
वायुः स्थिरो [1]यस्य विना प्रयत्नम् ।
चित्तं स्थिरं यस्य विनाऽवलम्बं
स ब्रह्मतारान्तरनादरूपः ॥ ५६ ॥

इत्युपनिषत् ॥

एवं ब्रह्मप्रणवनादारूढयोगिनां स्थितिं तत्कृतकृत्यतां विशदीकरोति—सर्वेति ॥ ५१–५२ ॥ ब्रह्ममात्रभावमापन्नो योगी ब्रह्मातिरिक्तकलनां न जानाति ब्रह्मातिरिक्तयोः निष्प्रतियोगिकभावाभावरूपत्वात् इत्यर्थः ॥ ५३–५५ ॥ तस्य ब्रह्मप्रणवनादरूपतां दर्शयन् उपसंहरति—दृष्टिरिति । यस्य दृष्टिवायुचित्तानि दृश्यप्रयत्नावलम्बकलनां विना स्थिरीभूत्वा ब्रह्मप्रणवपर्यवसन्ना भवन्ति सोऽयं विद्वान् ब्रह्मतारान्तरतुर्यतुर्याभिधाननादरूपतया अवशिष्यते, विदेहमुक्तो भवतीत्यर्थः ॥ ५६ ॥ इत्युपनिषच्छब्दो नादबिन्दूपनिषत्समाप्त्यर्थो ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं नादबिन्दोः स्फुटं लघु ।
नादबिन्दुविवरणं पञ्चाशदधिकं शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे अष्टत्रिंशत्सङ्ख्यापूरकं
नादबिन्दूपनिषद्विवरणं सम्पूर्णम्

[1] यत्र—उ १.

# पाशुपतब्रह्मोपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

## पूर्वकाण्डः

जगन्नियन्तृविषयाः सप्तप्रश्नाः

अथ ह वै स्वयंभूर्ब्रह्मा प्रजाः सृजानीति कामकामो जायते कामेश्वरो वैश्रवणः ॥ १ ॥ वैश्रवणो ब्रह्मपुत्रो वालखिल्यः स्वयंभुवं परिपृच्छति—जगतां का विद्या का देवता जाग्रत्तुरीययोरस्य को देवो [1]यानि कस्य वशानि कालाः कियत्प्रमाणाः कस्याज्ञया रविचन्द्रग्रहादयो भासन्ते कस्य महिमा गगनस्वरूप एतदहं श्रोतुमिच्छामि नान्यो जानाति त्वं ब्रूहि ब्रह्मन् ॥ २ ॥

पाशुपतब्रह्मविद्यासंवेद्यं परमाक्षरम् ।
परमानन्दसम्पूर्णं रामचन्द्रपदं भजे ॥

इह खलु अथर्वणवेदप्रविभक्तेयं पाशुपतब्रह्मोपनिषत् हंससूत्रस्वरूपप्रकटनव्यग्रा निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः सङ्क्षेपतो

[1] युगानि—अ.

विवरणमारभ्यते । वालखिल्यस्वयम्भूप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—अथेति । अथ प्राण्यदृष्टपरिपाकानन्तरम् । हवा इति वृत्तार्थस्मरणार्थौ निपातौ । स्वयमेव भवतीति स्वयम्भूः ब्रह्मा तस्य प्रजाः सृजेयमिति कामं कामः कामकामो जायते प्रादुर्बभूव । तत्सङ्कल्पानुरोधेन कामेश्वरो रुद्रः, "ललाटात् क्रोधजो रुद्रोऽजायत" इति श्रुतेः, वैश्रवणश्च ॥ १ ॥ वैश्रवणोनामकः ब्रह्मपुत्रः वालखिल्यो ऋषिपुगश्च स्वयम्भुवं परिपृच्छति । किमिति? जगतां का विद्यादि सप्तधा प्रश्नः कृतः । एतदहं त्वत्तः सकाशात् श्रोतुमिच्छामि । त्वद्भिन्नतद्वक्ता न हि कोऽपि विद्यते । अतो ब्रह्मन् त्वं ब्रूहि ॥ २ ॥

सप्तप्रश्नानामुत्तराणि

स्वयंभूरुवाच—[1]कृत्स्नजगतां मातृका विद्या ॥ ३ ॥ द्वित्रिवर्णसहिता द्विवर्णमाता त्रिवर्णसहिता चतुर्मात्रात्मकोङ्कारो मम प्राणात्मिका देवता ॥ ४ ॥ अहमेव जगत्त्रयस्यैकः पतिः ॥ ५ ॥ मम वशानि सर्वाणि युगान्यपि [2]च ॥ ६ ॥ अहो[3]रात्रादिमतिसंवर्धिताः कालाः ॥ ७ ॥ मम रूपा रवेस्तेजश्चन्द्रनक्षत्र[4]ग्रहतेजांसि ॥ ८ ॥ गगनो मम त्रिशक्तिमायास्वरूपः नान्यो मदस्ति ॥ ९ ॥ तमोमायात्मको रुद्रः सात्विकमायात्मको विष्णू राजसमायात्मको ब्रह्मा । इन्द्रादयस्तामसराज[5]सात्मिका न सात्विकः कोऽपि अघोरः [6]साधारणस्वरूपः ॥ १० ॥

[1] कृत्स्नं—अ १, अ २, क. [2] "च" लुप्तम्—क, अ २.
[3] रात्रामति सं—क, अ १, अ २, उ १. रात्रादयः मत्सं—अ.
[4] ग्रहास्ते—अ, अ १, अ २. [5] ससात्विका [6] सर्वसाधा—क, अ २.

इति पृष्टो भगवान् स्वयम्भूस्त्वाच । किमिति? 'जगतां का विद्या' इत्याद्यप्रश्नमपाकरोति—कृत्स्नजगतां मातृका अकारादिक्षकारान्तरूपिणी विद्या, तस्या वैखरीप्रपञ्चनिर्वाहकत्वात् ॥ ३ ॥ 'का देवता' इति द्वितीयप्रश्नमपाकरोति—द्वित्रिवर्णेति । पदरूपेण द्वित्रिवर्णसहिता स्वयमकारोकाराख्यद्विवर्णतो मीयत इति द्विवर्णमाता मकारेण सह त्रिवर्णसहिता "स्थूलमेतद्ध्रस्वदीर्घप्लुतम्" इति श्रुत्यनुरोधेन य ओङ्कारः चतुर्मात्रात्मको भवति सोऽयं मम प्राणात्मिका देवता ॥ ४ ॥ 'जाग्रत्तुरीययोरस्य को देवः' इति प्रश्नमपाकरोति—अहमेवेति । अस्य जाग्रदादितुरीयान्तकलनाकलितस्य जगत्त्रयस्य अहमेक एव देवः, मम सूत्रादिरूपेण जगत्त्रयचालकत्वात् ॥ ५ ॥ 'यानि कस्य वशानि' इति प्रश्नमपाकरोति—ममेति । कृतादियुगानि, अपिचशब्दाभ्यां स्थावरजङ्गमात्मकं जगच्च मद्वशे वर्तत इत्यर्थः ॥ ६ ॥ 'कालाः कियत्प्रमाणाः' इति प्रश्नमपाकरोति—अहोरात्रेति । निमेषाहोरात्रादिमत्या संवर्धिताः कल्पावसानाः कालाः ॥ ७ ॥ 'कस्याज्ञया रविचन्द्रग्रहादयो भासन्ते' इति प्रश्नमपाकरोति—मम रूपा इति ।

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥

इति स्मृतेः ॥ ८ ॥ 'कस्य महिमा गगनस्वरूपः' इति चरमप्रश्नमपाकरोति—गगन इति । गगनः गगनम् । क्रियाज्ञानेच्छारूपेण दुर्गालक्ष्मीसरस्वतीरूपेण वा मायामयाः तिस्रः शक्तयः तत्कार्यजातं च मन्महिमास्वरूपमित्यर्थः । अहं एतादृशः परमेश्वरः, मदतिरेकेण न किञ्चिदस्तीत्याह—नान्य इति ॥ ९ ॥ रुद्रादयः किंगुणविशिष्टाः इत्यत आह—तम इति । तस्य सर्वसंहारकतया तामसगुणोपाधित्वात् । विष्ण्वतिरेकेण न सात्त्विकः कोऽपि, तस्य सर्वमर्यादापालकतया शुद्धसत्वरूपत्वात् । अत एवाऽयं अघोरः सर्वसाधारणस्वरूपः सत्वगुणावष्टम्भतः शान्तरूपेण भक्तकोटिसाधारणत्वात् ॥ १० ॥

सृष्टियज्ञे कर्त्रादिनिरूपणम्

समस्तयागानां रुद्रः [1]पशुकर्ता रुद्रो यागदेवो विष्णु-
रध्वर्युर्होतेन्द्रो देवता यज्ञभुङ् मानसं ब्रह्म महेश्वरं ब्रह्म ॥ ११ ॥

सृष्टियज्ञे रुद्रादयः कीदृशाः सन्तः किं कुर्वन्ति इत्यत आह— **समस्तेति** । तत्र **रुद्रस्तु** अग्निष्टोमादिवाजिमेधान्तसमस्तयागानां विशसनकर्मणि पशून् करोतीति **पशुकर्ता** यागसामान्यस्य पशुप्रधानत्वात् **रुद्रः** । **यागदेवः**, यागप्रधानाहुतिद्रव्यस्य विष्ण्वायत्तत्वात्, **विष्णुः अध्वर्युः** अन्यूनाधिकतया तत् पालयन् । चालकत्वात् **होता इन्द्रः**, स्तुतशास्त्रकृत्त्वात् । तत्तद्देवतारूपेण पशुपतिरेव **यज्ञभुक्** । **मानसं ब्रह्म**—वाङ्मौनपूर्वं मानसं मनसा सर्वर्त्विङ्निर्वर्त्यप्रयोगद्रष्टृत्वेन यज्ञोपबृंहणात्—**महेश्वरं ब्रह्म** ब्रह्मणः सर्वद्रष्टृतया ब्रह्म ब्रह्माणं महेश्वरं विद्धि ॥ ११ ॥

नादानुसन्धानयज्ञः

मानसो हंसः [2]सोऽहं हंस इति तन्मयं यज्ञो नादानुसंधानम् ।
तन्मयविकारो जीवः ॥ १२ ॥

कोऽयं यज्ञ इत्यत्र नादानुसन्धानं इत्याह—**मानस** इति । **हंसः**-सोऽहमिति चिरभावनातः **तन्मयं** तद्भावसाधनं यत् **नादानुसन्धानं** तदेव **मानसो यज्ञो** भवतीत्यर्थः । एवं अनुसन्धाता **जीवस्तु** उच्छ्वासनिःश्वासवद्यन्मनः **तन्मयविकारः** । जीवस्य प्राणमनउपाधिकत्वात् तद्विकारत्वं युज्यत इत्यर्थः ॥ १२ ॥

परमात्मनो हंसत्वनिरूपणम्

परमात्मस्वरूपो हंसः । अन्तर्बहिश्चरति हंसः । अन्तर्गतो-
ऽनवकाशान्तर्गतसुपर्णस्वरूपो हंसः ॥ १३ ॥

[1] पशुपतिः कर्ता—अ.   [2] सोहमिति—अ.

हंसस्तु स्वतत्त्वज्ञानेन स्वातिरिक्तभ्रमं हन्ति अपह्नवं करोतीति हंसः परमात्मा भवति। स कुत्र आसनमर्हतीत्यत्र— सोऽयं हंसः प्राणापानोपाधियोगात् अन्तर्बहिश्चरति। यद्वा—सर्वप्राण्यन्तर्बहिश्चरति प्रत्यगभिन्नब्रह्मरूपेण उपलभ्यते, "अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः" इति श्रुतेः। सर्वप्राण्यन्तः कामादयो वर्तन्ते, बाह्ये शब्दादिविषयाश्च, तथा सति स्वव्याप्तेः अनवकाशात् कथं अन्तर्गतो बहिर्गतो वा भवितुमर्हतीत्यत्र—सर्वप्राण्यन्तर्बाह्यगतकामशब्दादिविषसर्पग्रासमुपर्णस्वरूपो हंसः। प्रत्यगभिन्नं ब्रह्मास्मीति सम्यज्ज्ञानस्य स्वान्तर्बाह्यकलनाविलयपूर्वकत्वात् हंसः स्वान्तर्बहिः व्याप्य परिपूर्णो भवतीत्यर्थः। तथाच स्मृतिः—

विषया बाह्यदेशस्था देहस्यान्तरहङ्कृतिः।
सर्वग्रहोपसंशान्तौ स्वयमेवावशिष्यते॥

इति॥ १३॥

यज्ञसूत्रब्रह्मसूत्रयोः साम्यम्

षण्णवतितत्त्वतन्तुवद्व्यक्तं चित्सूत्रत्रयचिन्मयलक्षणं नवतत्त्वत्रिरावृतं ब्रह्मविष्णुमहेश्वरात्मकमग्नित्रयकलोपेतं चिद्ग्रन्थिबन्धनम् अद्वैतग्रन्थिः॥ १४॥ यज्ञसाधारणाङ्गं बहिरन्तर्ज्वलनं यज्ञाङ्गलक्षणब्रह्मस्वरूपो हंसः॥ १५॥

बाह्यान्तर्भासमानयज्ञब्रह्मसूत्रयोः साम्यमाह—षण्णवतीति। चतुरङ्गुलमानेन षण्णवतिसङ्ख्याविशिष्टं यज्ञसूत्रं यथा व्यक्तं भवति तथा षण्णवतितत्त्वतन्तुविशिष्टं ब्रह्मसूत्रं व्यक्तं भवति। यज्ञसूत्रं तु सूत्रत्रयविशिष्टतन्तुलक्षणं, ब्रह्मसूत्रं तु द्वितुर्याविकल्पात्मना चित्सूत्रत्रयचिन्मयलक्षणं भवति। यथा यज्ञसूत्रं सूत्रत्रयं त्रिरावृतं यदि तदा नवसूत्रं भवति तथा ब्रह्मसूत्रमपि द्वितुर्याविकल्पत्रयं त्रिरावृतं चेत् नवमहातत्त्वात्मकं भवति। यद्वा—तुर्यविश्वविराडोत्रादिभेदेन नवतत्त्वं तुर्यप्राज्ञबीजानुज्ञैकरसात्मना त्रिरावृतं तृतीयपाद-

पर्यवसन्नं भवति । यद्वा—**नवतत्त्वत्रिरावृतं** ब्रह्मसूत्रं **ब्रह्मविष्णुमहेश्वरात्मकं गार्हपत्याद्यग्नित्रयकलोपेतं** वा भवति । एवं त्रिधाभिन्नब्रह्मसूत्रैक्योपायस्तु चिन्मात्रादतिरिक्तं त्रिधा विभक्तं न किञ्चिदस्तीति **चिद्ग्रन्थिबन्धनम्** । व्यष्टिसमष्टितदैक्यावभासकचितामैक्यं ग्रन्थिबन्धनतः कथमित्यत्र—**अद्वैतग्रन्थिः** तदैक्यग्रन्थेः तद्भेदग्रासत्वात् अद्वैतग्रन्थिः अद्वितीयपरमात्मा भवतीत्यर्थः । यथा यज्ञसूत्रब्रह्मग्रन्थिः तदैक्यहेतुः तथा अत्रापीत्यर्थः ॥ १४ ॥ बाह्यान्तः-सूत्रयोः सामानाधिकरण्यमाह—**यज्ञेति** । यज्ञसूत्रं बहिः ज्वलतीति यथा **बाह्ययज्ञसाधारणाङ्गं** भवति तथा ब्रह्मसूत्रं अन्तर्ज्वलतीत्यन्तर्यज्ञसाधारणाङ्गं भवतीति ज्ञेयम् । **हंसस्तु अन्तर्यज्ञाङ्गलक्षणब्रह्मस्वरूपो** भवति ॥ १५ ॥

ब्रह्मयज्ञो ब्राह्मणाधिकारिकः

उपवीतलक्षणसूत्र[1]ब्रह्मगा यज्ञाः । ब्रह्माङ्गलक्षणयुक्तो यज्ञसूत्रम् । तद्ब्रह्मसूत्रम् । यज्ञसूत्रसंबन्धी ब्रह्मयज्ञः तत्स्वरूपः ॥ १६ ॥

बाह्ययज्ञास्तु **उपवीतलक्षणसूत्रवद्ब्रह्मगा** ब्राह्मणाश्रया भवन्ति । **यज्ञसूत्रं ब्रह्माङ्गलक्षणयुक्तो** वेदाङ्गलक्षणयुक्तो ब्राह्मणो भजति । **तत् ब्रह्मसूत्रमपि** स एव भजति । तत् कथं इत्यत्र—**यज्ञसूत्रवद्ब्राह्मणसम्बन्धी ब्रह्मयज्ञः**, ब्रह्मनिष्ठाया ब्राह्मणनिर्वर्त्यत्वात् । यो यन्निष्ठः स **तत्स्वरूपो** भवति ॥ १६ ॥

प्रणवहंसस्य ब्रह्मयज्ञत्वम्

अङ्गानि मात्राणि । मनोयज्ञस्य हंसो यज्ञसूत्रम् । प्रणवं ब्रह्मसूत्रं ब्रह्मयज्ञमयम् । प्रणवान्तर्वर्ती हंसो ब्रह्मसूत्रम् । तदेव ब्रह्मयज्ञमयं मोक्षक्रमम् ॥ १७ ॥

[1] ब्रह्मसूत्रगा—क.

यत्प्रणवनिष्ठः प्रणवो भवति तदङ्गानि कानीत्यत्र—**मात्राणि** अकारादि-मात्राः। अङ्गिप्रणवस्वरूपं कीदृशं इत्यत्र—**मनोयज्ञस्य** अन्तर्यज्ञस्य फलत्वेन यो विराजते **हंसः** तत्स्वरूपमेव **यज्ञसूत्रम्**। प्रणवं प्रणवः **ब्रह्मसूत्रमयं ब्रह्मयज्ञश्च**। यत एवं अतो हंस एव सर्वं, तदतिरिक्तं न किञ्चिदस्ति इत्यर्थः। यो **हंसः** प्रणवार्थतया **प्रणवान्तरुपलभ्यते** स एव **ब्रह्मसूत्रम्**। प्रत्यगभिन्नं ब्रह्म यत् ब्रह्मसूत्रं **तदेव ब्रह्मयज्ञमयं** निर्विशेषब्रह्मज्ञानम्। तदेव **मोक्षक्रमं** स्वातिरिक्तभ्रममोक्षणस्य स्वमात्रज्ञानमेव साधनं, तदतिरिक्तसाधनजालस्य तन्मोक्षणेऽकिञ्चित्करत्वात्। अयमेव हि क्रमः, "नान्यः पन्था अयनाय विद्यते" इति श्रुतेः ॥ १७ ॥

ब्रह्मसन्ध्याक्रियारूपो मनोयागः

**ब्रह्मसंध्याक्रिया मनोयागः। संध्याक्रिया मनोयागस्य लक्षणम् ॥ १८ ॥**

मनोयागः कीदृशः इत्यत आह—**ब्रह्मेति**। "तत् त्वमसि," "अहं ब्रह्मास्मि" इति प्रत्यक्परब्रह्मणोरैक्यमेव **सन्ध्याक्रिया मनोयागः** उच्यते। तयोः **सन्ध्याक्रिया** हि **मनोयागस्य लक्षणं** इत्यत्र—जीवात्मपरमात्मनोः एकत्वज्ञानेन तयोः भेद एव विभग्नः, सा सन्ध्येति—

नोदकैर्जायते सन्ध्या न मन्त्रोच्चारणेन तु।
सन्धौ जीवात्मनोरैक्यं सा सन्ध्या सद्भिरुच्यते ॥

इति श्रुतेः स्मृतेश्च ॥ १८ ॥

हंसप्रणवाभेदानुसन्धानं अन्तर्यागः

**यज्ञ[1]सूत्रं प्रणवम्। ब्रह्मयज्ञक्रियायुक्तो ब्राह्मणः। ब्रह्मचर्येण चरन्ति देवाः। हंससूत्रचर्या यज्ञाः। हंसप्रणवयोरभेदः ॥ १९ ॥**

[1] सूत्रप्रणवञ्च—अ.

**हंसस्य प्रार्थनास्त्रिकालाः । त्रिकालास्त्रिवर्णाः । त्रेताग्न्यनुसंधानो याग । त्रेताग्न्यात्माकृतिवर्णोङ्कारहंसानुसंधानोऽन्तर्यागः ॥ २० ॥ चित्स्वरूपवत्तन्मयं तुरीयस्वरूपम् । अन्तरादित्ये ज्योतिःस्वरूपो हंसः ॥ २१ ॥ यज्ञाङ्गं ब्रह्मसंपत्तिः । ब्रह्म[1]प्रवृत्तितत्प्रणवहंससूत्रेणैव ध्यानमाचरन्ति ॥ २२ ॥**

हंसप्रणवयोः अभेदं वक्तुं भूमिकां करोति—**यज्ञसूत्रमिति** । यज्ञत्वेन सूचनात् **यज्ञसूत्रं ब्रह्मप्रणवं** प्रणवः, यज्ञस्य विष्णोः प्रणवार्थत्वात् **ब्रह्म-यज्ञक्रिया** निष्कामकर्मानुष्ठानसहकृतध्यानसमाधिः, तदनुष्ठाता **ब्राह्मणः**, तस्य परापरब्रह्मवित्त्वात् । "ब्रह्मभावे मनश्चारो ब्रह्मचर्यं विदुर्बुधाः" इति श्रुत्यनुरोधेन **देवा** इन्द्रादयोऽपि सदा **ब्रह्मचर्येण चरन्ति**, तेषां प्रजापति-शिष्यत्वेन ब्रह्मवित्त्वात् । **यज्ञा** अपि **हंससूत्रचर्याः** अन्तर्यज्ञानां प्रत्याहार-धारणाध्यानसमाधीनां हंससूत्रचर्याविर्भावहेतुत्वात् । "आत्ममन्त्रस्य हंसस्य परस्परसमन्वयात्" इति स्मृतिसिद्धः **हंसप्रणवयोरभेदः**, वाच्यवाचकयोरेकत्वात् ॥ १९ ॥ हंसप्रणवयोरेकत्वं कथमित्यत्राह—**हंसस्येति** । प्रत्यगभिन्नपरमात्मनो **हंसस्य** आप्त्युपायभूताः **प्रार्थनाः** श्रवणादयः । ते **त्रिकालाः**, श्रवणादीनां कालपरिच्छेद्यत्वात् । भूतादित्रिकाला एव अकारादित्रि**वर्णाः** । विश्वविराडोत्रादि-**त्रेताग्न्यनुसन्धानो**ऽनुसन्धानमन्त**र्यागः** । तत् कथं इत्यत्र—विश्वादि**त्रेताग्न्या-त्म**नां द्वितुर्यविकल्पपर्यवसन्नानां व्यष्टिसमष्टितदुभयैक्याकारा**त्माकृतिवर्णवदो-ङ्कारा**र्थनिष्प्रतियोगिकतुर्यतुर्य**हंसः** स्वमात्रमित्यनुसन्धानोऽनुसन्धानमन्त**र्यागः** ॥ २० ॥ विश्वविराडोत्रादि**चित्स्वरूपवत्तन्मयं** तद्गतहेयांशापायसिद्धं तुर्यप्रवि-भक्त**तुरीयस्वरूपम्** । तद्विकल्पि**तान्तरादित्ये** स्वान्तःकामादिवृत्त्यवभासक-प्रत्यक्सूर्ये तदभेदेन विद्योतमान**ज्योतिःस्वरूपो हंसः** परमात्मा ॥ २१ ॥ तदनुसन्धानात्मकान्तर्य**ज्ञाभिधानाङ्गं** सम्यज्ज्ञानमङ्गि**ब्रह्मसम्पत्तिहेतुः**, स्वाप्तेः

[1] प्रवृत्तौ—अ.

स्वातिरिक्तासम्भवसिद्धस्वज्ञानपूर्वकत्वात् । अत एव ब्रह्मविदादयः पराक्प्रवृत्ति-निरसनपूर्वकं प्रत्यगभिन्नब्रह्मगोचरा प्रवृत्तिः तदालम्बनभूतः प्रणवः तदर्थभूतप्रत्यक्परविभागैक्यासहतुर्यतुर्यहंसरूपेण तुरीयोङ्काराग्रविद्योतं तुर्यतुर्यं "ब्रह्ममात्रमसन्न हि" इत्यादिश्रुतिततिसूचनात् हंससूत्रं "मद्व्यतिरिक्तमणुमात्रं न विद्यते" इति निर्विशेषब्रह्मज्ञानं तेनैव हंसः स्वमात्रमिति ध्यानमाचरन्ति । एवंनिष्ठाः तत्स्वरूपा एव भवन्तीत्यर्थः ॥ २२ ॥

षण्णवतिहंससूत्राणि

प्रोवाच पुनः स्वयंभुवं प्रतिजानीते ब्रह्मपुत्रो ऋषिर्वाल-खिल्यः । हंससूत्राणि कतिसंख्यानि कियद्वा प्रमाणम् ॥ २३ ॥ हृदादित्यमरीचीनां पदं षण्णवतिः । [1]चित्सूत्राघ्राणयोः स्वर्निर्गता प्रणवाधारा षडङ्गुल्दशाशीतिः ॥ २४ ॥

वालखिल्यः स्वयम्भूमुखात् एवमवगम्य पुनः स्वावगतिदार्ढ्याय ब्रह्मयज्ञसूत्रेयत्तां पृच्छतीत्याह---प्रोवाचेति । वालखिल्यो मुनिः पुनः स्वयम्भुवं प्रति हे भगवन्---भवान् सर्वं प्रतिजानीते, तव निरङ्कुशसर्वज्ञत्वात्—हंसस्य परमात्मनः प्रापकतया सूचनात् सूत्राणि कतिसङ्ख्याकानि कियद्वा तत्प्रमाणं तदियत्तेति तद्बुभुत्सया प्रोवाच पृष्टवान् ॥ २३ ॥ प्रश्नोत्तरं भगवानाह—हृदीति । हृदि विलसितकामादिवृत्तिसहस्रभावाभावप्रकाशचि-दादित्यमरीचीनां तत्त्वकिरणानां वराहोपनिषत्प्रकाशितानां पदं स्वरूपं षण्णवतिः, कार्पासकयज्ञसूत्रषण्णवतितुल्यमित्यर्थः । षण्णवतिसङ्ख्याक-चित्तत्वमरीचयः क आविर्भूता इत्यत्र—चित्सूत्रोपलब्धिहेतुहृदयाद्याघ्राणयोः विश्वकायविराड्हृदये तत्सङ्कल्पत आविर्भूय—आघ्राण इत्यत्राकारः छान्दसः—घ्राणयोः घ्राणाभ्यां अकारादिस्वरात्मकोच्छ्वासरूपेण बहिर्निर्गतानि तत्त्वानि

[1] चित्सूत्रघ्रा—क, अ.

तेषां भेदाः । किमाधारा इत्यत्र परापरब्रह्माधिष्ठितप्रणवाधाराः सन्तः अद्यापि वर्तन्ते । कतिविधा इत्यत्र षडङ्गुलदशाशीतिः षण्णवतिविधा भवन्ति । यद्वा—षण्णवत्यङ्गुलपरिमितषण्णवतितत्त्वात्मका भवन्ति ॥ २४ ॥

हंसात्मविद्यैव मुक्तिः

वाम[1]बाहुदक्षिणकट्योरन्तश्चरति हंसः परमात्मा ब्रह्मगुह्यप्रकारो नान्यत्र विदितः ॥ २५ ॥ ये जानन्ति तेऽमृतफलकाः । सर्वकालं [2]हंसं न प्रकाशकम् । प्रणवहंसान्त[3]र्ध्यान[4]प्रकृतिं विना न मुक्तिः ॥ २६ ॥

इत्थंभूतविराट्छरीरवामबाहुदक्षिणकट्योरन्तश्चरति हंसः परमात्मा यथा यज्ञसूत्रं वामबाहुदक्षिणकट्यन्तं विराजते तथा वामबाहुदक्षिणकट्युपलक्षितसर्वाङ्गं स्वाविद्यापदतत्कार्यजातं तदन्तर्बहिश्च विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तभेदेन चरति । वस्तुतस्तु हंसः तत्सर्वापह्नवसिद्धपरमात्मरूपेण अवशिष्यत इति योऽर्थः सोऽयमर्थो ब्रह्मगुह्यप्रकारः नान्यत्र विदितः, अत्रैव विशेषतः प्रकटितत्वात् ॥ २५ ॥ विद्याफलमाह—य इति । किं सर्वेऽप्येवं हंसं आत्मतया विदित्वा तद्वेदनफलं अमृतत्वं नापुः इत्यत आह—सर्वेति ।

श्रुतिः स्मृतिः ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥

इति स्मृतिसिद्धस्वाज्ञारूपश्रुतिस्मृतिमार्गोल्लङ्घकानां निष्प्रतियोगिकब्रह्ममात्रं भावरूपं ब्रह्मातिरिक्ताविद्यापदतत्कार्यजातमपि निष्प्रतियोगिकाभावरूपं नानयोः वाच्यवाचककार्यकारणाधाराधेयत्वं अस्तीति सर्वकालं सदा न प्रकाशकं

[1] वामबाहोर्द—उ, उ १, अ १.
[2] हंसप्र—अ.
[3] र्धान—क, अ १.
[4] प्रकृतिर्वि—क, अ १, अ २, उ.

हंसमात्मानं, विद्धीति शेषः । तेषां स्वापराधदोषावृतत्वात् दिवाभीतसूर्यवदात्मा स्वरूपप्रकाशको न भवतीत्यर्थः । सत्त्वप्रकृतेः मुक्तिः नेतरस्येत्याह—प्रणवेति । प्रणवहंसः स्वान्तःप्रणवार्थतुर्यतुर्यहंसः सोऽहमिति ध्यानप्रकृतिः ध्यानशीलो जीवन्मुक्तः । तस्य मुक्तिः करस्था । तं विना न कस्यापि मुक्तिरस्ति ॥ २६ ॥

बाह्यापेक्षया आन्तरयागस्य श्रेष्ठत्वम्

नवसूत्रान्परिचर्चितान् । तेऽपि यद्ब्रह्म चरन्ति । अन्तरादित्यं न ज्ञातं मनुष्याणाम् ॥ २७ ॥ जगदादित्यो रोचत इति ज्ञात्वा ते मर्त्या विबुधास्तपनप्रार्थनायुक्ता आचरन्ति ॥ २८ ॥ वाजपेयः पशुहर्ता अध्वर्युरिन्द्रो देवता अहिंसा धर्मयागः परमहंसोऽध्वर्युः परमात्मा देवता पशुपतिः ॥ २९ ॥ ब्रह्मोपनिषदो ब्रह्म । स्वाध्याययुक्ता ब्राह्मणाश्चरन्ति ॥ ३० ॥

ये तु पुनः विश्वविराडोत्रादिप्राज्ञबीजानुज्ञैकरसान्ततया मिथो भिदाचर्चितान् परस्परभेदेन व्याहतान् नवसूत्रान् आत्मेति भजन्ति तेऽपि यत् ब्रह्मेति वदन्ति तदेव चरन्ति भजन्ति, विश्वादिनवकगतहेयांशापाये तेषामपि ब्रह्मरूपत्वात् । तथाऽपि ते यथावत् न जानन्तीत्याह—अन्तरिति । मनुष्याणां मनुष्यैः स्वान्तर्विलसितचिदादित्यस्वरूपं न ज्ञातं, तेषां स्वाज्ञानावृतत्वात् ॥ २७ ॥ तेषां कुत्र रुचिः? जगदात्मकादित्यो रोचते, तेषां नामरूपमोहितदृष्टित्वात् । ते परमार्थात् हीयन्त इत्यर्थः । केचन एवं ज्ञात्वा मर्त्या विबुधाश्च स्वाज्ञानजस्वातिरिक्तध्वान्तग्रासचित्तपनप्रार्थनायुक्ताः चिदादित्योऽस्मीति नित्यानुसन्धानशीलाः परमार्थतत्त्वमाचरन्ति ॥ २८ ॥ किमाचरन्तीत्यत्र अन्तर्यागमित्याह—वाजपेय इति । वाजं स्वातिरिक्तान्नरसं

**पिबतीति वाजपेयो निर्विशेषज्ञानयज्ञः** । देहादावात्मात्मीयाभिमतिपशुं-हरतीति **पशुहर्ता** । **य इन्द्रः** परमेश्वरो देवतात्वेन अभिमतः स एव **अध्वर्युः** भूत्वा ज्ञान-यज्ञचालको भवति । बाह्ययज्ञापेक्षया अस्य श्रैष्ठ्ये हेतुः **अहिंसात्मकोऽयं मोक्षधर्मयागः** । ज्ञानयागनिर्वाहकोऽध्वर्युः परमहंसपरिव्राजक एव । यज्ञदेवता तु **पशुपतिः परमात्मैव देवता** ॥ २९ ॥ इत्थंभूतब्रह्मोपनिषदः परमतात्पर्यार्थस्तु **ब्रह्मैव** नेतरत्, ब्रह्मणो वेदवेदान्तार्थत्वात् । के एवं आचरन्तीत्यत्र—**स्वाध्याययुक्ता** वेदवेदान्तार्थपारीणाः **ब्राह्मणाः** आचरन्ति, तेषां ज्ञानयज्ञे मुख्याधिकारित्वात् ॥ ३० ॥

ज्ञानयज्ञरूपोऽश्वमेधः

**अश्वमेधो महायज्ञकथा । तद्राज्ञा ब्रह्मचर्यमाचरन्ति ।**
**सर्वेषां पूर्वोक्तब्रह्मयज्ञक्रमं मुक्तिक्रममिति ॥ ३१ ॥**

**महायज्ञकथा** कीदृशी इत्यत्र—स्वातिरिक्तप्रपञ्चपशुमेधनं विशसनं अपह्नवः, श्वः परश्वो वा भवत्विति विश्वासानर्होऽश्वमेधः स्वज्ञानसमकालमेव स्वातिरिक्तसामान्यस्य अपह्नोतुं युक्तत्वात् । इयमेव हि निर्विशेषमहाज्ञानयज्ञ-कथा ख्यातिरित्यर्थः । तादृशाश्वमेधमहायज्ञे निष्प्रतियोगिकस्वमात्रतया राजत इति तद्राजा तेन **तद्राज्ञा** स्वकृतसाधनानुष्ठानेन ये अनुगृहीताः कृतार्था भवन्त्विति ते हि द्विविध**ब्रह्मचर्यमाचरन्ति** ब्रह्मचर्यस्य तत्प्रसादब्रहिर्भूतानां सुदुर्लभत्वात् इति यत् तत् **सर्वेषां** मुमुक्षूणां यो ब्रह्मप्रापकमार्गोऽस्ति तं **पूर्वोक्तब्रह्मयज्ञक्रमं मुक्तिक्रमं** चेति विद्धि ॥ ३१ ॥

तारकहंसज्योतिः

**ब्रह्मपुत्रः प्रोवाच । उदितो हंस ऋषिः । स्वयंभूस्तिरोदधे ।**
**[1]रुद्रो ब्रह्मोपनिषदो हंसज्योतिः पशुपतिः प्रणवस्तारकः स एवं वेद ॥ ३२ ॥**

[1] रुद्रोप—क, अ २.

इति स्वयम्भुवा अनुगृहीतः ब्रह्मपुत्रः वालखिल्यगणः प्रोवाच । किमिति ? भगवदुपदेशमहिम्ना उदितो हंस ऋषिः सर्वापह्नवसिद्धनिष्प्रतियोगिकस्वमात्रतया हंसः परमात्मा प्रादुर्भूतः, तेन अहं कृतकृत्योऽस्मीति शिष्योक्तिमाकर्ण्य अतीव हर्षितः सन् स्वयम्भूस्तिरोदधे । स्वस्वरूपं गतवानित्यर्थः । रुद्रो वैश्रवणोऽप्येवं वेदेत्याह—रुद्र इति । वैश्रवणेन साकं रुद्रोऽपि स्वयम्भूमुखतः ब्रह्मोपनिषदः परमाशयो ब्रह्मतारकार्थः पशुपतिः हंसज्योतिरस्मीत्येवं विदितवानित्यर्थः ॥ ३२ ॥

# उत्तरकाण्डः

### अखण्डवृत्त्या ब्रह्मसम्पत्तिः

हंसात्ममालिका[1]वर्णब्रह्मकालप्रचोदिता ।
परमात्मा पुमानिति ब्रह्मसंपत्तिकारिणी ॥ १ ॥
अध्यात्मब्रह्मकल्पस्य आकृतिः कीदृशी कथा ।

कथं एवं विदितवानित्यत आह—हंसेति । अभिधेयरूपस्य हंसात्मनो मालिकावर्णोऽभिधानात्मकोऽयमोङ्कारः तदर्थरूपं ब्रह्मैव कालेश्वरस्वरूपमासाद्य एवं कर्तव्यं एवमकर्तव्यमिति सर्वप्राणिहिताहितविषयप्रचोदिता प्रचोदयिता प्रेरको भवति । स्वेन रूपेण पुमान् ईश्वरः स्वगतविशेषापाये निष्प्रतियोगिकपरमात्मा स्वमात्रमवशिष्यत इति या संविदखण्डाकारवृत्तिरुदेति सेयं ब्रह्मसम्पत्तिं करोतीति ब्रह्मसम्पत्तिकारिणी भवति ॥ १ ॥ इति या "ब्रह्म वेद ब्रह्मैव भवति" इत्यादिवेदान्तप्रसिद्धा सैवाध्यात्मब्रह्मकल्पस्यात्मावाकृतिः निरङ्कुशोपायभूतेत्यर्थः । उक्तार्थदार्ढ्याय चोदयत्येवम्—कीदृशी कथेति ॥

[1] वर्णा—उ, उ १.

परमात्मनि जगदाविर्भावो मायिकः

ब्रह्मज्ञानप्रभा सन्ध्या कालो गच्छति धीमताम् ।
हंसाख्यो देवमात्माख्यमात्मतत्त्वप्रजा कथम् ॥ २ ॥
[1]अन्तःप्रणवनादाख्यो [2]हंसः प्रत्ययबोधकः ।
अन्तर्गतप्रमा[3]गूढं [4]ज्ञाननालं विराजितम् ॥ ३ ॥
शिव[5]शक्त्यात्मकं रूपं चिन्मयानन्दवेदितम् ।
नादबिन्दुकला [6]त्रीणि नेत्र विश्वविचेष्टितम् ॥ ४ ॥
[7]त्रियङ्गानि शिखा त्रीणि [8]द्वित्रीणि संख्यमाकृतिः ।
अन्तर्गूढप्रमा हंसः [9]प्रमाणान्निर्गतं बहिः ॥ ५ ॥

ब्रह्माकारवृत्तिकथा कीदृशी इत्यत्र—**ब्रह्मज्ञान**सूर्य**प्रभा** प्रत्यक्परचित्सिद्धि-मैक्यं करोतीति **सन्ध्ये**त्युच्यते । तया हि खलु **धीमतां** जीवन्मुक्तानां **कालो गच्छति**, जीवन्मुक्तानां निर्विशेषब्रह्मसमाधिक्षपितकालत्वात् । स्वातिरिक्तपराक्प्र-पञ्चग्रासहंसाख्यः प्रत्यग्देवं स्वप्रकाशचिन्मात्रं परमात्मानं भजति चेत् तदा **स्वात्म-तत्त्वे कथं** विश्वविराडोत्रादि**प्रजा** जायते ॥ २ ॥ इत्यत्र—परमार्थतः स्वातिरेकेण कापि प्रजा न जायते, मायया पुनः प्रत्यगादिभावमेत्य यदा भासते तदा तद्भास्यवर्गो-ऽपि जात इव लक्ष्यत इत्याह—**अन्त**रिति । नारदपरिव्राजकोपनिषद्यष्टमा त्रात्मकोऽन्तःप्रणवः सम्यक् प्रपञ्चितः । तत्रान्तःप्रणवनादावभासकः प्रत्यक् **हंसः** स्वान्तर्बाह्यविकल्पितपराक्प्रत्ययकदम्बबोधकोऽवभासको भवति । तथा चेत् किं तत् प्रत्यक्तत्त्वं न दृश्यते इत्यत्र—पराग्दृशामन्त**र्गतप्रम**या **गूढं** भाति

[1] अतः—अ. [2] हंसप्रत्ययरो—क. [3] रूढम्—उ. [4] ज्ञानं—उ, क.
[5] तत्वा—क. [6] तीतनेत्रं—उ १. [7] क्रियांगानि.—अ २, क.
[8] द्वित्राणांसांख्य—अ. द्वित्रीणिस्संख्य—क, अ १, अ २. द्वित्रिणीसं—उ १.
[9] प्रमाणं नि—अ, अ १. प्रमाणाम्नि—उ.

तद्दृष्ट्या ज्ञाननाळं सर्वप्रकाशकज्ञानप्रत्यग्रूपेण प्रकाशितुं नाळं नालं, समर्थमिव न हि स्थितमित्यर्थः । किं तदप्रकाशात्मकं ? इत्यत्र—स्वेन रूपेण विराजितं तस्य स्वयंप्रकाशत्वेन सर्वप्रकाशकत्वात् ॥ ३ ॥ कैः एवं विदितं इत्यत्र—प्रत्यग्दृष्टिभिः यत् शिवशक्त्यात्मकं शबळरूपं तदेव स्वगतविशेषांशापायतः सच्चिदानन्दोऽस्मीति वेदितं भवतीत्यत्र

एष सर्वेषु भूतेषु गूढात्मा न प्रकाशते ।
दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥

इति श्रुतेः । पुनः स्वाज्ञदृष्ट्या नादबिन्दुकळा इति प्रणवावयवाः तत्कार्याणि अनुग्रहोपसंहारगतिरोधानानि त्रीणि सदाशिवाद्यधिष्ठितानि एतद्विकल्पजातं "दक्षिणाक्षिमुखे विश्व" इति, "नेत्रस्थं जागरितं विद्यात्" इति च, श्रुतिसिद्धनेत्रादिचतुर्दशकरणनिर्वर्त्यजाग्रदवस्थाभिमानिविश्वविचेष्टितं विकल्पितमित्यर्थः ॥ ४ ॥ विश्वेन कानि कानि विकल्पितानीत्यत्र स्थूलसूक्ष्मकारणभेदेन त्र्यङ्गानि शरीराणि तदारूढविश्वतैजसप्राज्ञाख्यशिखारूपाणि त्रीणि द्वित्रीणि पञ्चभूततत्कार्यभौतिकानि सङ्ख्यं सङ्ख्यानि यानि सङ्ख्यावाचकानि सर्वत्र आकृतिः नामरूपविकृतिश्च उक्तानि अनुक्तानि च सर्वाणि विश्वस्वाज्ञानविकल्पितानीत्यर्थः । एवंविकल्पकविश्वगतविकल्पापाये स एव प्रत्यक् भवतीत्याह- अन्तरिति । यः पुरा सर्वप्राण्यन्तर्गूढप्रमारूपेण हंसो वर्तते "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतिप्रमाणात् प्रत्यगभिन्नब्रह्मतत्त्वं बहिर्निर्गतं प्रकाशितं भवति । यदेवं श्रुतिप्रमाणसिद्धं तदेव सच्चिदानन्दमात्मानमद्वितीयं ब्रह्म भावयेत् ॥ ५ ॥

हंसार्कप्रणवध्यानविधिः

ब्रह्मसूत्रपदं ज्ञेयं ब्राह्मचं विध्युक्तलक्षणम् ।
हंसार्कप्रणवध्यानमित्युक्तो ज्ञानसागरे ॥ ६ ॥
एतद्विज्ञानमात्रेण ज्ञानसागरपारगः ।

"आत्मानमेवावेदहं ब्रह्मास्मि" इति विधिच्छायापह्नव[पन्न]वाक्योक्त-लक्षणं ब्राह्मयं ब्रह्ममात्रतया सूचनात् ब्रह्मसूत्रं स्वावशेषतया पद्यत इति पदं सदैकरूपेण विजृम्भत इति ज्ञेयम् । एवं हंसार्कप्रणवध्यानं यः करोति सोऽयं ज्ञानसागरे ब्रह्मणि समाप्तो भवेदित्युक्तो भवति ॥ ६ ॥ यः कोऽपि मुमुक्षुः एतदुक्तलक्षणं ब्रह्माहमस्मीति विज्ञानमात्रेण स्वान्तर्बाह्यविजृम्भितस्वातिरिक्तज्ञाना-ज्ञानतत्कार्यभ्रमसागरपारनिष्प्रतियोगिकब्रह्ममात्रावस्थानलक्षणविकळेबरकैवल्यतो भवतीत्यर्थः ॥

परचित एव करणप्रेरकत्वम्

स्वतः शिवः पशुपतिः साक्षी सर्वस्य सर्वदा ॥ ७ ॥
सर्वेषां तु मनस्तेन प्रेरितं नियमेन तु ।
विषये गच्छति प्राणश्चेष्टते वाग्वदत्यपि ॥ ८ ॥
चक्षुः पश्यति रूपाणि श्रोत्रं सर्वं शृणोत्यपि ।
अन्यानि खानि सर्वाणि तेनैव प्रेरितानि तु ॥ ९ ॥
स्वं स्वं विषयमुद्दिश्य प्रवर्तन्ते निरन्तरम् ।
प्रवर्तकत्वं चाप्यस्य मायया न स्वभावतः ॥ १० ॥
श्रोत्रमात्मनि चाध्यस्तं स्वयं पशुपतिः पुमान् ।
अनुप्रविश्य श्रोत्रस्य ददाति श्रोत्रतां शिवः ॥ ११ ॥
मनः स्वात्मनि चाध्यस्तं प्रविश्य परमेश्वरः ।
मनस्त्वं तस्य सत्त्वस्थो ददाति नियमेन तु ॥ १२ ॥
स एव विदितादन्यस्तथैवाविदितादपि ।
अन्येषामिन्द्रियाणां तु कल्पितानामपीश्वरः ॥ १३ ॥
तत्तद्रूपमनुप्राप्य ददाति नियमेन तु ।

स्वाज्ञविकल्पितकरणग्रामसत्त्वे तच्चालकः कः? इत्यत आह—**स्वत** इति ॥ ७ ॥ **स्वस्वविषये** ॥ ८–९ ॥ **न स्वभावतः**, स्वतो निर्विकारत्वात् ॥ १०–१२ ॥ स्वस्यैव करणत्वं करणग्रामचालकत्वं यदि तदा अयं संसारी स्यादित्याशङ्क्य तत्रात्मात्मीयाभिमानाभावात् तद्विलक्षणतो न संसारीत्याह—**स एवेति** । यः करणजातस्वरूपी सन् तच्चालकोऽपि भवति **स एव** ॥ १३–१४ ॥

आत्मान्यस्य मायाकल्पितत्वम्

ततश्चक्षुश्च वाक्चैव मनश्चान्यानि खानि च ॥ १४ ॥
न गच्छन्ति स्वयंज्योतिःस्वभावे परमात्मनि ।
[1]अकर्तृविषयप्रत्यक्प्रकाशं स्वात्मनैव तु ॥ १५ ॥
विना तर्कप्रमाणाभ्यां ब्रह्म यो वेद वेद सः ।

इत्यादि केनोपनिषदि सम्यक् प्रपञ्चितमित्यर्थः । समानप्रकरणत्वात् प्रत्यक्त्वमपि मायिकमित्यत्राह—**अकर्तृविषयेति** ॥ १५ ॥

वस्तुतः स्वात्मनि मायाऽसम्भवः

प्रत्यगात्मा परं ज्योतिर्माया सा तु महत्तमः ॥ १६ ॥
तथा सति कथं मायासंभवः प्रत्यगात्मनि ।
तस्मात्तर्कप्रमाणाभ्यां स्वानुभूत्या च चिद्घने ॥ १७ ॥
स्वप्रकाशैकसंसिद्धे नास्ति माया परात्मनि ।
व्यावहारिकदृष्ट्येयं विद्याऽविद्या न चान्यथा ॥ १८ ॥

[1] **अकर्त्रवि—क**, अ १, अ २.

तत्त्वदृष्ट्या तु नास्त्येव तत्त्वमेवास्ति केवलम् ।
व्यावहारिकदृष्टिस्तु प्रकाशाव्यभिचारतः ॥ १९ ॥
प्रकाश एव सततं तस्माद्द्वैत एव हिं ।
अद्वैतमिति चोक्तिश्च प्रकाशाव्यभिचारतः ॥ २० ॥
प्रकाश एव सततं तस्मान्मौनं हि युज्यते ।

वस्तुतः स्वात्मनि मायाऽसम्भवमाह—**प्रत्यगिति** ॥ १६ ॥ **यस्मादेवं तस्मान** ॥ १७–१८ ॥ स्वातिरेकेण व्यावहारिकदृष्टिरपि नास्तीत्याह—**व्यावहारिकेति** ॥ १९ ॥ अद्वैतमित्युक्तिरपि न तात्त्विकीत्याह—**अद्वैतमिति** । तद्द्वैतसापेक्षा **अद्वैतमिति चोक्तिः** ॥ २० ॥

आत्मज्ञानिनः ब्रह्मात्मत्वम्

अयमर्थो महान्यस्य स्वयमेव प्रकाशितः ॥ २१ ॥
न स जीवो न च [1]ब्रह्मा न चान्यदपि किंचन ।
न तस्य वर्णा विद्यन्ते नाश्रमाश्च तथैव च ॥ २२ ॥
न तस्य धर्मोऽधर्मश्च न निषेधो विधिर्न च ।
यदा ब्रह्मात्मकं सर्वं विभाति स्वत एव तु ॥ २३ ॥
तदा दुःखादिभेदोऽयमाभासोऽपि न भासते ।
जगज्जीवादिरूपेण पश्यन्नपि परात्मवित् ॥ २४ ॥
न तत्पश्यति चिद्रूपं ब्रह्मवस्त्वेव पश्यति ।
धर्मधर्मित्ववार्ता च भेदे सति हि भिद्यते ॥ २५ ॥

[1] ब्रह्म—क, अ, अ २.

भेदा[दो ऽ]भेदस्तथा [1]भेदाभेदः साक्षात्परात्मनः ।
नास्ति स्वात्मातिरेकेण स्वयमेवास्ति सर्वदा ॥ २६ ॥
ब्रह्मैव विद्यते साक्षाद्वस्तुतोऽवस्तुतोऽपि च ।
तथैव ब्रह्मविज्ज्ञानी किं गृह्णाति जहाति किम् ॥ २७ ॥
अधिष्ठानमनौपम्यमवाङ्मनसगोचरम् ।
यत्तदद्रेश्यमग्राह्यमगोत्रं रूपवर्जितम् ॥ २८ ॥
अचक्षुःश्रोत्रमत्यर्थं तदपाणिपदं तथा ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं च तदव्ययम् ॥ २९ ॥
ब्रह्मैवेदममृतं तत्पुरस्ता-
द्ब्रह्मानन्दं परमं चैव पश्चात् ।
ब्रह्मानन्दं परमं दक्षिणे च
ब्रह्मानन्दं परमं चोत्तरं च ॥ ३० ॥
स्वात्मन्येव स्वयं सर्वं सदा पश्यति निर्भयः ।
तदा मुक्तो न मुक्तश्च [2]बद्धस्यैव विमुक्तता ॥ ३१ ॥

एवंज्ञानी शिव एवेत्याह—अयमिति ॥ २१ ॥ ब्रह्मा चतुर्मुखः ॥ २२–२५ ॥ भेदाभेदः साक्षात् परात्मनः—सापेक्षभेदाभेदयोः सविशेषत्वात्—नास्ति ॥ २६–२८ ॥ तदपाणिपदं तथा इत्यादि मुण्डकोपनिषत्समानप्रकरणमित्यर्थः ॥ २९–३५ ॥

### सत्यादि परविद्यासाधनम्

एवंरूपा परा विद्या सत्येन तपसाऽपि च ।
ब्रह्मचर्यादिभिर्धर्मैर्लभ्या वेदान्तवर्त्मना ॥ ३२ ॥

[1] भेदाद् भे—क. [2] बन्धस्यैव विमुक्तिता—क.

स्वशरीरे स्वयंज्योतिःस्वरूपं पारमार्थिकम् ।
क्षीणदोषाः प्रपश्यन्ति नेतरे माययाऽऽवृताः ॥ ३३ ॥

स्वज्ञस्य क्वचित् गमनाभावः

एवं स्वरूपविज्ञानं यस्य कस्यास्ति योगिनः ।
कुत्रचिद्गमनं नास्ति तस्य संपूर्णरूपिणः ॥ ३४ ॥
आकाशमेकं संपूर्णं कुत्रचिन्न हि गच्छति ।
तद्वद्ब्रह्मात्मविच्छ्रेष्ठः कुत्रचिन्नैव गच्छति ॥ ३५ ॥

ब्रह्मज्ञानिनः अभक्ष्याभावः

अभक्ष्यस्य निवृत्त्या तु विशुद्धं हृदयं भवेत् ।
आहारशुद्धौ चित्तस्य विशुद्धिर्भवति स्वतः ॥ ३६ ॥
[1]चित्ते शुद्धे क्रमाज्ज्ञानं त्रुट्यन्ते ग्रन्थयः स्फुटम् ।
अभक्ष्यं ब्रह्मविज्ञानविहीनस्यैव देहिनः ॥ ३७ ॥
न सम्यग्ज्ञानिनस्तद्वत्स्वरूपं सकलं खलु ।
अहमन्नं सदाऽन्नाद इति हि ब्रह्मवेदनम् ॥ ३८ ॥
ब्रह्मविद्ग्रसति ज्ञानात्सर्वं ब्रह्मात्मनैव तु ।
ब्रह्मक्षत्रादिकं सर्वं यस्य स्यादोदनं सदा ॥ ३९ ॥
यस्योपसेचनं मृत्युस्तज्ज्ञानी तादृशः खलु ।
ब्रह्मस्वरूपविज्ञानाज्जगद्भोज्यं भवेत्खलु ॥ ४० ॥

[1]—अ, अ १, क.

जगदात्मतया भाति यदा भोज्यं भवेत्तदा ।
ब्रह्म[1]स्वात्मतया नित्यं भक्षितं सकलं तदा ॥ ४१ ॥
यदा[2]भानेन रूपेण जगद्भोज्यं भवेत्तु तत् ।
मानतः स्वात्मना भातं भक्षितं भवति ध्रुवम् ॥ ४२ ॥
स्वस्वरूपं स्वयं भुङ्क्ते नास्ति भोज्यं पृथक् स्वतः ।
अस्ति चेदस्तितारूपं ब्रह्मैवास्तित्वलक्षणम् ॥ ४३ ॥

आहारशुद्धिः चित्तशुद्धिद्वारा ज्ञानहेतुः स्वाज्ञानाम् । स्वज्ञानी तु स्वातिरिक्तं सर्वं स्वमात्रतया प्रसतीत्याह अभक्ष्यस्येति ॥ ३६ ॥ ज्ञानं जायते तेन त्रुट्यन्ते ॥ ३७–४९ ॥

ज्ञानिनः स्वसर्वात्मत्वदर्शनम

अस्तितालक्षणा सत्ता सत्ता ब्रह्म न चापरा ।
नास्ति सत्ताऽतिरेकेण नास्ति माया च वस्तुतः ॥ ४४ ॥
योगिनामात्मनिष्ठानां माया ह्यात्मनि कल्पिता ।
साक्षिरूपतया भाति ब्रह्मज्ञानेन बाधिता ॥ ४५ ॥
ब्रह्मविज्ञानसंपन्नः प्रतीतमखिलं जगत् ।
पश्यन्नपि सदा नैव पश्यति स्वात्मनः पृथक् ॥ ४६ ॥

इत्युपनिषत् ॥

सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकं स्वमात्रमवशिष्यते न कदाचित् तदतिरिक्तमस्तीति ब्रह्मविज्ञानसम्पन्नो योगी स्वाज्ञदृष्टिप्रतीतं अखिलं जगत्

[1] सात्म—क. [2] भासेन—मु.

मरुमरीचितुल्यतया कदाचित् **पश्यन्नपि सदा तत् स्वात्मनः पृथक् नैव पश्यति** । ब्रह्ममात्रस्य निष्प्रतियोगिकत्वेन ब्रह्मातिरिक्तं अस्ति नास्तीति नहि विभ्रमावकाशोऽस्तीत्यर्थः ॥ ४६ ॥ **इत्युपनिषच्छब्दः** प्रकृतोपनिषत्समाप्त्यर्थः ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
पाशुपतोपनिषदो व्याख्यानं लिखितं लघु ।
पाशुपतीयविवृतिः द्विशतग्रन्थभूषिता ॥

**इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे सप्तसप्ततिसङ्ख्यापूरकं पाशुपतब्रह्मोपनिषद्विवरणं सम्पूर्णम्**

---

# ब्रह्मविद्योपनिषत्

सह नाववतु—इति शान्तिः

ब्रह्मविद्यारहस्यार्थप्रणवब्रह्मसूचनम्

अथ ब्रह्मविद्योपनिषदुच्यते—

प्रसादाद्ब्रह्मणस्तस्य विष्णोरद्भुतकर्मणः ।
रहस्यं ब्रह्मविद्यायां [1]ध्रुवाग्निः संप्रचक्षते ॥ १ ॥
ओमित्येकाक्षरं ब्रह्म यदुक्तं ब्रह्मवादिभिः ।
शरीरं तस्य वक्ष्यामि स्थानं कालत्रयं तथा ॥ २ ॥
तत्र देवास्त्रयः प्रोक्ता लोका वेदास्त्रयोऽग्नयः ।
तिस्रो मात्रार्धमात्रा च त्र्यक्षरस्य शिवस्य तु ॥ ३ ॥

स्वाविद्यातत्कार्यजातं यद्विद्यापह्नवं गतम् ।
तद्धंसविद्यानिष्पन्नं रामचन्द्रपदं भजे ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं ब्रह्मविद्योपनिषत् प्रणवहंसविद्यातद्वेद्यब्रह्मानुभूतिं प्रकटयन्ती ब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः स्वल्पग्रन्थतो

[1] ध्रुवाग्निं—क, अ १, अ २.

विवरणमारभ्यते । उपोद्घातादिकमस्याः कठवल्ल्यादिसमम् । **ब्रह्मविष्णु-प्रसादलभ्येयमिति** विद्या स्तूयते । श्रुतिरेव स्वाज्ञजनान् प्रत्येवमाह— **अथेत्यादिना** । अथ स्वाज्ञानां ब्रह्मविद्योचितसाधनसम्पत्त्यनन्तरं **इयं ब्रह्मविद्योपनिषदुच्यते** । तत् कथं? यः सर्वलोकस्रष्टा पालयिता च भवति **तस्य ब्रह्मणः** अघटितघटनाघटनपटुतरशक्तेरद्भुतकर्मणो **विष्णोश्च प्रसादात् ब्रह्मविद्यायां** यत् **रहस्यं,** अनधिकारिणे गोपनीयत्वात्, स्वाज्ञानतत्कार्य-स्वातिरिक्तप्रपञ्चतूलाचलभस्मीकरणपटुत्वात् **ध्रुवाग्निः** प्रत्यक् तदभिन्नः परमात्मेति **सम्यक् प्रचक्षते** ॥ १ ॥ किं तत्स्वरूपमित्याकांक्षायां—

सर्वे वेदा यत्पदमामनन्ति
तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् ॥

इत्यादिश्रुत्यनुरोधेन सप्रकारं ब्रह्मालम्बनभूतप्रणवस्वरूपं विशदीकरोति— **ओमिति** ॥ २–३ ॥

प्रणवमात्राचतुष्टयप्रपञ्चनम्

**ऋग्वेदो गार्हपत्यं च पृथिवी ब्रह्म एव च ।**
**अकारस्य शरीरं तु व्याख्यातं ब्रह्मवादिभिः ॥ ४ ॥**
**यजुर्वेदोऽन्तरिक्षं च दक्षिणाग्निस्तथैव च ।**
**विष्णुश्च भगवान्देव उकारः परिकीर्तितः ॥ ५ ॥**
**सामवेदस्तथा द्यौश्चाहवनीयस्तथैव च ।**
**ईश्वरः परमो देवो मकारः परिकीर्तितः ॥ ६ ॥**
**सूर्यमण्डलमध्येऽथ ह्यकारः शङ्खमध्यगः ।**
**उकारश्चन्द्रसंकाशस्तस्य मध्ये व्यवस्थितः ॥ ७ ॥**

मकारस्त्वग्निसंकाशो विधूमो विद्युतोपमः ।
तिस्रो मात्रास्तथा ज्ञेयाः सोमसूर्याग्निरूपिणः ॥ ८ ॥
शिखा तु दीपसंकाशा तस्मिन्नुपरि वर्तते ।
अर्धमात्रा तथा ज्ञेया प्रणवस्योपरि स्थिता ॥ ९ ॥

सूत्रार्थं व्याकरोति—ऋग्वेद इति । ब्रह्म एव च, ब्रह्मा इत्यर्थः ॥ ४–६ ॥ अकारादेः स्थानं वर्णं चाह—सूर्येति ॥ ७–८ ॥ एवं मात्रात्रयं प्रपञ्चयित्वा अथ अर्धमात्रां प्रपञ्चयति—शिखात्विति । यथा दीपे दीपशिखा वर्तते तथा प्रणवोपरि अर्धमात्रा वर्तत इत्यर्थः ॥ ९ ॥

सुषुम्नायोगेन नाडीसूर्ययोः भेदनम्

पद्मसूत्रनिभा सूक्ष्मा शिखा सा दृश्यते परा ।
सा नाडी सूर्यसंकाशा सूर्यं भित्त्वा तथा परा ॥ १० ॥
द्विसप्ततिसहस्राणि नाडीं भित्त्वा च मूर्धनि ।
[1]वरदा सर्वभूतानां सर्वं व्याप्येव तिष्ठति ॥ ११ ॥

सुषुम्नास्वरूपकथनं प्रणवानुसन्धानविधानं तत्सर्वापवादाधिकरण-ब्रह्मज्ञानफलं चाह—पद्मेति । सुषुम्नायाः सूर्यनाडित्वेन तद्वारोत्क्रान्तस्य मूर्ध्नि ब्रह्मरन्ध्रे लक्ष्यानुसन्धानं कुर्वतः द्विसप्ततिसहस्रनाडीभेदनं सूर्यमण्डलभेदनं च उपपद्यत इत्यर्थः ॥ १०–११ ॥

प्रणवनादलयेन मोक्षप्राप्तिः

कांस्यघण्टानिनादस्तु यथा लीयति शान्तये ।
ओङ्कारस्तु तथा योज्यः शान्तये सर्वमिच्छता ॥ १२ ॥

[1] वरदः-

यस्मिन्स लीयते शब्दस्तत्परं ब्रह्म गीयते ।
धियं हि लीयते ब्रह्म सोऽमृतत्वाय कल्पते ॥ १३ ॥

एवं योगाभ्यासमकुर्वतोऽपि प्रणवालम्बनेन तत्फलं प्राप्तुं शक्यमित्याह—**कांस्येति**। हेममूलिकाषोडशवारसंस्कृतकांस्यघण्टानादशान्तिवत् षोडशमात्राकालोच्चारितप्रणवनादलयकृत् योगी य एवं प्रणवजपं करोति ॥ १२ ॥ यस्य—**धियमिति** विभक्तिव्यत्ययः, प्रथमार्थे द्वितीया—धीः अन्तःकरणं प्रणवनादेन साकं विलीयते सोऽयं योगी तल्ल्याधिकरणब्रह्मभूयाय **अमृतत्वाय** स्वातिरिक्तास्तित्वभ्रममोक्षाय **कल्पते** ॥ १३ ॥

जीवस्वरूपनिरूपणम्

[1]वायुस्तेजस्तथाकाशस्त्रिविधो जीवसंज्ञकः ।
स जीवः प्राण इत्युक्तो वालाग्रशतकल्पितः ॥ १४ ॥
नाभिस्थाने स्थितं विश्वं शुद्धतत्त्वं सुनिर्मलम् ।
आदित्यमिव दीप्यन्तं रश्मिभिश्चाखिलं शिवम् ॥ १५ ॥

हंसविद्याप्रकटनाय तद्विद्याऽनुष्ठातारं जीवं निरूपयति—**वायुरिति** ॥ १४ ॥ तस्य स्थानं निर्दिशति—**नाभीति** । विश्वं वैश्वानरांशं वस्तुतः स्वगतहेयांशापाये शुद्धतत्त्वम् । शिवं प्रत्यञ्चमात्मानं अन्तःकरणयोगतो जीवं पश्यन्ति ॥ १५ ॥

बन्धमोक्षकारणनिरूपणम्

सकारं च हकारं च जीवो जपति सर्वदा ।
नाभि[2]देशाद्विनिष्क्रान्तं विषयव्याप्तिवर्जितम् ॥ १६ ॥

[1] वायुःप्राण—क, अ २. [2] रन्ध्रा—अ १, अ २, क.

तेनेदं निष्कलं विद्यात्क्षीरात्सर्पिर्यथा तथा ।
कारणेनात्मना युक्तः प्राणायामैश्च पञ्चभिः ॥ १७ ॥
चतुष्कलासमायुक्तो भ्राम्यते च हृदि स्थितः ।
गोलकस्तु [1]यदा देहे क्षीरदण्डेन वाऽ[2]हतः ॥ १८ ॥
एतस्मिन् [3]वसते शीघ्रमवि[4]श्रामं महाखगः ।
यावन्निश्वसितो जीवस्तावन्निष्कलतां गतः ॥ १९ ॥
नभस्स्थं निष्कलं ध्यात्वा मुच्यते भवबन्धनात् ।
अनाहतध्वनियुतं हंसं यो वेद हृद्गतम् ॥ २० ॥
स्वप्रकाशचिदानन्दं स हंस इति गीयते ।

सोऽयं जीवः उच्छ्वासनिःश्वासच्छलेन सकारं च । निष्क्रमणवेळायां **विषयव्याप्तिवर्जितम्** ॥ १६ ॥ येन हेतुना विषयविरळः स्यात् **तेनेदं निष्कलम्** । **यथा क्षीरात्** कारणात् **सर्पिः** कार्यतो भिन्नमपि कारणावस्थायां क्षीरमेव भवति **तथा** अयं सर्पिःस्थानीयो जीवः क्षीरस्थानीय**कारणेनात्मना युक्तो** भवति । स्वकारणभावापत्तिसाधनं किमित्यत्र—**प्राणायामैश्च पञ्चभिः** प्राणायामप्रत्याहारधारणाध्यानसमाधिभिः ॥ १७ ॥ विश्वतैजसप्राज्ञतुर्यभेदेन **चतुष्कळासमायुक्तो** भवति । एवं **हृदि स्थितः** सन् बन्धमोक्षतत्कार्यकलनासु **भ्राम्यते** चेत्यर्थः । यावत् ब्रह्मनाडीं न प्रविशति तावत् अविश्रान्तं संसरतीत्याह—**गोळकस्त्विति** । **यदा** यस्मिन् काले स्थूल**देहे** विद्यमान-मूलाधारत्रिकोणाप्रविलसत्सुषुम्नागोळकस्तु **क्षीरदण्डेन** क्षीरवद्धवळदण्डवत् भोगविशिष्टकुण्डलीशक्तितत्त्वेन प्राणेन **वा** यावत् **अहत** अनाक्रान्तो भवति ॥ १८ ॥ तदा **एतस्मिन** देहे **महाखगो** हंसः प्राणाधारो जीवः **अविश्रामं**

[1] यथा—अ १.
[2] हतं—क, अ १, अ २.
[3] वहते—अ १.
[4] श्रान्तं—अ १, उ.

अविश्रान्तं यथा भवति तथा यत् स्वज्ञाननाश्यं **शीघ्रं** स्वाज्ञानमवलम्ब्य **वसते** वसति, आभूतसंप्लवं स्वज्ञानावधि संसरतीत्यर्थः । कदा तत्संसृतिनिवृत्तिरित्यत आह—**यावदिति** । अयं जीवः प्राणादिवृत्तिमवष्टभ्य **यावन्निश्वसितो न श्वसितः** प्राणनादिव्यापारविरळो भवति **तावत्**सर्वकरणव्यापृत्युपरमणलक्षणनिर्विकल्पकावस्थायां **निष्कळतां गतो** भवति ॥ १९ ॥ हृदयनभसि तिष्ठति उपलभ्यत इति **नभस्स्थं** प्राणादिनामान्तकलाभावात् **निष्कळमात्मानं ध्यात्वा भवबन्धनात् मुच्यते** निवृत्तसंसारः कृतकृत्यो भवतीत्यर्थः । हंसज्ञानी हंस एवेत्याह—**अनाहतेति** । **अनाहतध्वनियुतं** हृदयविभातनादोपाधिकमित्यर्थः ॥ २० ॥

हंसविद्ययैव परमेश्वरप्राप्तिः

रेचकं पूरकं मुक्त्वा कुम्भकेन स्थितः सुधीः ॥ २१ ॥
नाभिकन्दे [1]समं कृत्वा प्राणापानौ समाहितः ।
मस्तकस्थामृतास्वादं पीत्वा ध्यानेन सादरम् ॥ २२ ॥
दीपाकारं महादेवं ज्वलन्तं नाभिमध्यमे ।
अभिषिच्यामृतेनैव हंसहंसेति यो जपेत् ॥ २३ ॥
जरामरणरोगादि न तस्य भुवि विद्यते ।
एवं दिनेदिने कुर्यादणिमादिविभूतये ॥ २४ ॥
ईश्वरत्वमवाप्नोति सदाऽभ्यासरतः पुमान् ।
बहवो नैकमार्गेण प्राप्ता नित्यत्वमागताः ॥ २५ ॥
हंसविद्यामृते लोके नास्ति नित्यत्वसाधनम् ।

केवलकुम्भके परमेश्वरं ध्यायतः तदाप्तिमाह—**रेचकमिति** २१–२४ ॥ हंसविद्यामृते मुक्तिसाधनं न किञ्चिदस्तीति विद्यां स्तौति—**बहव इति** ॥ २५ ॥

[1] समौ—क, अ १.

हंसविद्यागुरुभक्तिविधिः

यो ददाति महाविद्यां हंसाख्यां [1]पावनीं पराम् ॥ २६ ॥

तस्य दास्यं सदा कुर्यात् [2]प्रज्ञया परया सह ।

शुभं वाऽशुभमन्यद्वा यदुक्तं गुरुणा भुवि ॥ २७ ॥

तत्कुर्यादविचारेण शिष्यः संतोषसंयुतः ।

हंसविद्यामिमां लब्ध्वा गुरुशुश्रूषया नरः ॥ २८ ॥

आत्मानमात्मना साक्षाद्ब्रह्म [3]बुद्ध्वा सुनिश्चलम् ।

देहजात्यादिसंबन्धान्वर्णाश्रमसमन्वितान् ॥ २९ ॥

वेदशास्त्राणि चान्यानि पदपांसुमिव त्यजेत् ।

गुरुभक्तिं सदा कुर्याच्छ्रेयसे भूयसे नरः ॥ ३० ॥

गुरुरेव हरिः साक्षान्नान्य इत्यब्रवीच्छ्रुतिः ॥ ३१ ॥

हंसविद्योपदेष्टारं ईश्वरं मत्वा तदाज्ञाऽनुवर्ती योगी तत्प्रसादतः प्रत्यगभिन्नं ब्रह्मास्मीति निश्चित्य स्वातिरिक्तमखिलं त्यक्त्वा यावदुपाधि गुरुदेवतैक्य भावयेदित्याह—यो ददातीति ॥ २६–२९ ॥ "यावदुपाधिपर्यन्तं तावच्छुश्रूषयेत् गुरून्" इति श्रुत्यनुरोधेन गुरुभक्तिं सदा कुर्यात् ॥ ३० ॥ "गुरुः साक्षात् आदिनारायण एव" इति श्रुतिः ॥ ३१ ॥

आत्मनः श्रुत्याचार्यैकगम्यत्वम्

श्रुत्या यदुक्तं परमार्थ[4]मेतत्

तत्संशयो नात्र ततः समस्तम् ।

[1] पारमेश्वरीम्—अ १, अ २, क.　　[2] श्रद्धया—अ १.

[3] बुद्ध्या—क.　　[4] मेव—क, अ १, अ २.

श्रुत्या विरोधे न भवेत्प्रमाणं
भवेदनर्थाय विना प्रमाणम् ॥ ३२ ॥

देहस्थः सकलो ज्ञेयो निष्कलो देहवर्जितः ।
आप्तोपदेशगम्योऽसौ सर्वतः किमवस्थितः ॥ ३३ ॥

हंसहंसेति यो ब्रूयाद्धंसो ब्रह्मा हरिः शिवः ।
गुरुवक्त्रात्तु लभ्येत प्रत्यक्षं सर्वतोमुखम् ॥ ३४ ॥

तिलेषु च यथा तैलं पुष्पे गन्ध [1]इवास्थितः ।
पुरुषस्य शरीरेऽस्मिन् स बाह्याभ्यन्तरे [2]स्थितः ॥ ३५ ॥

श्रुत्युक्तं प्रमाणम् । तदतिरिक्तं अप्रमाणम् । प्रमाणाप्रमाणानुष्ठानतः स्वार्थानर्थौ स्यातामित्याह---श्रुत्येति ॥ ३२ ॥ देहयोगायोगाभ्यां सकळत्व-निष्कळत्वं निष्कळस्य देशिकोपदेशगम्यत्वं चाह---देहस्थ इति। सर्वव्यापकोऽपि निष्कळः स्वाचार्योपदेशेन गम्यः नान्यथेत्यर्थः ॥ ३३ ॥ आचार्यः क इत्यत आह—हंसेति । उक्तार्थमेतत् ॥ ३४ ॥ हंसस्य सदृष्टान्तं सर्वव्यापकता-माह—तिलेष्विति ॥ ३५ ॥

सकलनिष्कलदेवताविवेकः

उल्काहस्तो यथा[3]कश्चित् द्रव्यमालोक्य तां त्यजेत् ।
ज्ञानेन ज्ञेयमालोक्य पश्चाज्ज्ञानं परित्यजेत् ॥ ३६ ॥

पुष्पवत्सकलं विद्याद्गन्धस्तस्य तु निष्कलः ।
वृक्षस्तु सकलं विद्याच्छाया तस्य तु निष्कला ॥ ३७ ॥

[1] इवाश्रितः—क, अ २. [2] तथा—क, अ २.
[3] लोके—क, अ २.

निष्कलः सकलो भावः सर्वत्रैव व्यवस्थितः ।
उपायः सकलस्तद्वदुपेयश्चैव निष्कलः ॥ ३८ ॥
सकले सकलो भावो निष्कले निष्कलस्तथा ।
एकमात्रो द्विमात्रश्च त्रिमात्रश्चैव भेदतः ॥ ३९ ॥
अर्धमात्रा परा ज्ञेया तत ऊर्ध्वं परात्परम् ।
पञ्चधा पञ्चदैवत्यं सकलं परिपठ्यते ॥ ४० ॥
ब्रह्मणो हृदयस्थानं कण्ठे विष्णुः समाश्रितः ।
तालुमध्ये स्थितो रुद्रो ललाटस्थो महेश्वरः ॥ ४१ ॥
नासाग्रे अच्युतं विद्यात्तस्यान्ते तु परं पदम् ।
परत्वात्तु परं नास्तीत्येवं शास्त्रस्य निर्णयः ॥ ४२ ॥
देहातीतं तु तं विद्यान्नासाग्रे द्वादशाङ्गुलम् ।
तदन्तं तं विजानीयात्तत्रस्थो व्यापयेत्प्रभुः ॥ ४३ ॥

कैवल्यप्राप्तावपि तदुपकारकज्ञानं न त्याज्यमित्यत्राह—उल्केति ॥ ३६ ॥ दृश्यादृश्ययोः सकलनिष्कलत्वं चाह—पुष्पवदिति । वृक्षः स्वाविद्यापादः । स्वज्ञानव्रश्चनात् वृक्षत्वं, तद्धेतुमायायाः तच्छादकत्वात् छायात्वं इत्यर्थः ॥ ३७ ॥ एवं निष्कलसकलभावः सर्वत्र वर्तत इत्याह—निष्कल इति । स्वातिरिक्तकलाविशिष्टस्वाविद्यापदे सकलभावः । तदपवादाधिकरणे निष्कले सकलसापेक्षतः सप्रतियोगिकनिष्कले सापेक्षप्रभवसप्रतियोगिकनिष्कलगतसविशेषापह्नवात् निष्प्रतियोगिकनिष्कलात्मा अवशिष्यते इत्यर्थः ॥ ३८ ॥ अकारादिमात्राचतुष्टयात् परं ब्रह्मेत्याह—एकमात्र इति ॥ ३९ ॥ अकारादिमात्रात्रयापेक्षया **अर्धमात्रा** । हृदयादिपञ्चस्थानासनपञ्चब्रह्मातीतं परं ब्रह्मैव, तस्य सर्वपरत्वेन तत्परं नास्तीत्याह—पञ्चधेति ॥ ४०–४१ ॥ अच्युतं सदाशिवम् ॥ ४२ ॥

तस्य देहातीतत्वं व्यापकत्वं चाह—देहेति । प्राणलयस्थानं नासाग्रद्वादशाङ्गुलं यः तल्लयाधारः तं देहातीतं प्रत्यगात्मानं विद्यात् । यः प्रत्यग्भावविरळः तदन्तं तं परमात्मानं जानीयात् । सोऽयं परमात्मा प्रभुः तत्रस्थः सर्वातीतपदे स्थितोऽपि स्वविकल्पितं विश्वं विश्वविराडोत्राद्यात्मना व्यापयेत् ॥ ४३ ॥

योगस्य परमगोप्यत्वम्, उत्तमाधिकारिण एव दातव्यत्वं च

मनोऽप्यन्यत्र निक्षिप्तं चक्षुरन्यत्र पातितम् ।
तथाऽपि योगिनां योगो ह्यविच्छिन्नः प्रवर्तते ॥ ४४ ॥
एतत्तु परमं गुह्यमेतत्तु परमं शुभम् ।
नातः परतरं किंचिन्नातः परतरं शुभम् ॥ ४५ ॥
शुद्धज्ञानामृतं प्राप्य परमाक्षरनिर्णयम् ।
गुह्याद्गुह्यतमं गोप्यं ग्रहणीयं प्रयत्नतः ॥ ४६ ॥
नापुत्राय प्रदातव्यं नाशिष्याय कदाचन ।
गुरुदेवाय भक्ताय नित्यं भक्तिपराय च ॥ ४७ ॥
प्रदातव्यमिदं शास्त्रं नेतरेभ्यः प्रदापयेत् ।
दाताऽस्य नरकं याति सिध्यते न कदाचन ॥ ४८ ॥

योगिनां करणग्रामस्य स्वस्वव्यापारव्यग्रत्वेन योगविच्छित्तिः स्यादित्याह—मनोऽपीति । मनस्तु स्वात्मनोऽन्यत्र नादे निक्षिप्तं तथा चक्षुरपि नासाग्रे पातितं सङ्कल्परूपादिविषयादुपरतम् । स्वान्तर्बाह्ययोगविघ्नाभावात् योगियोगस्य अविच्छिन्नत्वं युज्यत इत्यर्थः ॥ ४४ ॥ यत् योगमुख्यफलं तदतिरिक्तरहस्यं नास्तीत्याह—एतदिति ॥ ४५ ॥ सर्वमन्यत् परित्यज्य

परमाक्षरज्ञानमेव सदा ग्राह्यं इत्याह—शुद्धेति ॥ परमाक्षरनिर्णयात्मकं ज्ञानं प्रयत्नाद्देशिकमुखेन ग्रहणीयं ग्राह्यम् ॥ ४६ ॥ यदेवं गुह्यतमं तत् उत्तमाधिकारिणे दातव्यं तदितरेभ्यो न दातव्यम् । यदि दद्यात् तदा दातुः नरकपातः स्यादित्याह—नेति ॥ ४७–४८ ॥

केवलशास्त्रज्ञानवतोऽपि पापपुण्यलेपाभावः

गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ भिक्षुकः ।
यत्र तत्र स्थितो ज्ञानी परमाक्षरवित्सदा ॥ ४९ ॥
विषयी विषयासक्तो याति [1]देहान्तरे शुभम् ।
ज्ञानादेवास्य शास्त्रस्य सर्वावस्थोऽपि मानवः ॥ ५० ॥
ब्रह्महत्याश्वमेधाद्यैः पुण्य[2]पापैर्न लिप्यते ।

यः कोऽपि वा वृत्त्यादिज्ञानादेव कृतार्थो भवति तस्य न पुण्यपापलेपोऽस्तीत्याह—गृहस्थ इति । आभासतोऽपि विषयासक्तिदर्शनात् अयं सविशेषज्ञानी ॥ ४९ ॥ तस्य देहावसानसमये विषयासक्तिवैगल्यात् शुभप्राप्तिरिष्यत इत्यर्थः । केवलशास्त्रजन्यज्ञानात् आगामिपुण्यपापालेपो भवतीत्यर्थः ॥ ५० ॥

त्रिविधा आचार्याः

चोदको बोधकश्चैव मोक्षदश्च परः स्मृतः ॥ ५१ ॥
इत्येषां त्रिविधो ज्ञेय आचार्यस्तु महीतले ।
चोदको दर्शयेन्मार्गं बोधकः स्थान[3]मादिशेत् ॥ ५२ ॥
मोक्षदस्तु परं तत्त्वं यज्ज्ञात्वाऽमृतमश्नुते ।

[1] देहान्तरं—उ. [2] पापैः प्रमुच्यते—क.
[3] माचरेत्—अ २.

चोदकादिभेदेन देशिकत्रैविध्यं तज्ज्ञानतः कृतकृत्यतां चाह— **चोदक** इति ॥ ९१ ॥ "अहं ब्रह्मास्मि" इत्यनुसन्धानं कुर्यादिति स्वाङ्गं ब्रह्माभिमुख्येन चोदयतीति **चोदको** वेदान्तः, मार्गदर्शकत्वात् । "तत् त्वमेव त्वमेव तत्" इति स्वाङ्गं बोधयतीति **बोधको** देशिकः, ब्रह्मप्रापकत्वात् ॥ ९२ ॥ मत्स्वरूपमेव सर्वं मामेव प्राप्स्यसि, मद्व्यतिरिक्तमणुमात्रं न विद्यते इति परमोपदेशेन स्वातिरिक्तभ्रममोक्षं ददातीति **मोक्षदः** परमेश्वरः, **परतत्त्वस्वरूपत्वात्** । यज्ज्ञानात् मुमुक्षुः अमृतो भवति सोऽयं ईश्वर इत्यर्थः ॥

प्रणवहंसानुसन्धानात्मकं प्रत्यक्षयजनम्

प्रत्यक्षयजनं देहे संक्षेपाच्छृणु गौतम ॥ ९३ ॥
तेनेष्ट्वा स नरो याति शाश्वतं पदमव्ययम् ।
स्वयमेव [1]कृतः पश्येद्देहे बिन्दुं च निष्कलम् ॥ ९४ ॥
अयने द्वे च विषुवे [2]सदा पश्यति मार्गवित् ।
कृत्वा यामं पुरा वत्स रेचपूरककुम्भकान् ॥ ९५ ॥
पूर्वं चोभयमुच्चार्य अर्चयेत्तु यथाक्रमम् ।
नमस्कारेण योगेन मुद्रयाऽऽरभ्य चार्चयेत् ॥ ९६ ॥
सूर्यस्य ग्रहणं वत्स प्रत्यक्षयजनं स्मृतम् ।

किं तत् प्रत्यक्षयजनं इत्यत्र शृण्वेतत् इत्याह—**प्रत्यक्षेति** ॥ ९३ ॥ यदा प्राणः पिंगळया कुण्डलिनीस्थानं प्रविशति तदेव सूर्यग्रहणं, येनेष्ट्वा मुनिः ब्रह्मपदं एति तत् प्रत्यक्षयजनमित्याह—**स्वयमेवेति** । इडापिंगळयोः पिंगळेडयोः क्रमणं उत्तरायणदक्षिणायने भवतः । तथा मूलाधारे मूर्धनि च

[1] तुसंप—अ, अ २, क.

[2] तदा—उ.

यदा प्राणः प्रविशति तदा द्वे विषुवे भवतः । एवं अयनविषुवद्वये च प्राणमार्गविन् स्वयमेव देहे बिन्दुं सकलं निष्कलं च सदा पश्येत् पश्यति । हे वत्स पुरा आदौ रेचपूरककुम्भकान् सहितान् केवलान् वा अहरहः याममात्रं कृत्वा ॥ ९४–९५ ॥ ओं इति हंस इति च यन्मन्त्रद्वयं पूर्वमुक्तं तदुभयं चार्थानुसन्धानपूर्वकं उच्चार्य यः प्रणवार्थो हंसः सोऽहमित्यनुसन्धानं नमस्कारयोगः, ऐक्यानुसन्धानस्य नमस्कारयोगत्वात् "नमस्त्वैक्यं प्रवदेत्" इति श्रुतेः । तेन नमस्कारयोगेन स्वातिरिक्तं नेति चिन्मुद्रया शाम्भवीखेचरीमुद्रया वा युक्तः सन् यथाक्रमं आत्मानं अर्चयेत्, सदा सोऽहमस्मीति ध्यायेत्, "सोऽहंभावेन पूजयेत्" इति श्रुतेः ॥ ९६ ॥ इदमेव हि प्रत्यक्षयजनं विज्ञेयम् ॥

हंसयोगलब्धज्ञानात् सायुज्यप्राप्तिः

ज्ञानात्सायुज्यमेवोक्तं तोये तोयं यथा तथा ॥ ९७ ॥
एते गुणाः प्रवर्तन्ते [1]योगमार्गकृतश्रमैः ।
यस्माद्योगं समादाय सर्वदुःखबहिष्कृतः ॥ ९८ ॥
योगध्यानं सदा कृत्वा ज्ञानं तन्मयतां व्रजेत् ।
ज्ञानात्स्वरूपं परमं हंसमन्त्रं समुच्चरेत् ॥ ९९ ॥

ब्रह्मज्ञानात् जले जलयोगवत् सायुज्यं प्रत्यक्परैक्यमुक्तं योगिभिः ॥ ९७ ॥ एवं जीवन्मुक्तगुणाः प्रवर्तन्ते । यस्मात् एवं योगाभ्यासतः सर्वदुःखबहिष्कृतो भवति तस्मात् योगध्यानं सदा कृत्वा तत्प्रभवविज्ञानमवाप्य ज्ञानसमकालं ब्रह्ममात्रतामियादित्यर्थः ॥ ९८ ॥ यद्यत् अन्तर्बाह्यविलसितं तत्तत् हंस एव, हंसातिरिक्तं न किञ्चिदस्तीति ज्ञानी परमहंसः परमात्मा भवतीत्याह—ज्ञानादिति । हंसः सोऽहमिति यः सदा हंसमन्त्रमुच्चरेत् सोऽयं

[1] योगाभ्यास—क, अ १, अ २.

सोऽहमिति ज्ञानात् हंसस्य यत् परमं स्वरूपं यत् निष्प्रतियोगिकस्वमात्रं अवशिष्यते तदेव भवतीत्यर्थः ॥ ५९ ॥

हंसोपलब्धिस्थानम्

प्राणिनां देहमध्ये तु स्थितो हंसः सदाऽच्युतः ।
हंस एव परं सत्यं हंस एव तु [1]सत्यकम् ॥ ६० ॥
हंस एव परं वाक्यं हंस एव तु वैदिकम् ।
हंस एव परो रुद्रो हंस एव परात्परम् ॥ ६१ ॥
सर्वदेवस्य मध्यस्थो हंस एव महेश्वरः ।
पृथिव्यादिशिवान्तं तु अकाराद्याश्च वर्णकाः ॥ ६२ ॥
कूटान्ता हंस एव स्यान्मातृकेति व्यवस्थिताः ।

स कुत्रोपलभ्यत इत्यत आह— प्राणिनामिति । नित्यानुसन्धानात् स्वमात्राच्युतो हंसः हृद्येवोपलभ्यते इत्यर्थः । हंसस्य सार्वात्म्यमाह— हंस एवेति । अक्षाक्षाधिपान्तर्यामित्वात् ॥ ६०–६१ ॥ अभिधेयं अभिधानं च हंस एवेत्याह—पृथिव्यादीति ॥ ६२ ॥ कूटशब्देन क्षकार उच्यते ॥

हंसमन्त्रानुस्मरणपूर्वकसमाध्यभ्यासः

मातृकारहितं मन्त्रमादिशयन्ते न कुत्रचित् ॥ ६३ ॥
हंसज्योतिरनूपम्यं देवमध्ये व्यवस्थितम् ।
दक्षिणामुखमाश्रित्य ज्ञानमुद्रां प्रकल्पयेत् ॥ ६४ ॥

[1] शक्तिदं—अ २. शक्तिकं—अ १, क.

सदा समाधिं कुर्वीत हंसमन्त्रमनुस्मरन् ।

निर्मलस्फटिकाकारं दिव्यरूपमनूपमम् ॥ ६५ ॥

मध्यदेशे परं हंसं ज्ञानमुद्राऽऽत्मरूपकम् ।

मातृकामन्त्रयोरैक्यं हंसज्योतिरवगम्य ज्ञानमुद्रामाबध्य स्वात्ममन्त्रं स्मरन् सदा समाधिं कुर्वीतेत्याह— मातृकेति । अनूपम्यं अनूपमं निरुपमं सर्वदेवमध्ये दक्षिणाभिमुखं देवमाश्रित्य ॥ ६३–६४ ॥ देवं कीदृशमित्यत्र निर्मलेति ॥ ६५ ॥

हंसस्यासननिरूपणम्

प्राणापानसमानाश्चोदानव्यानौ च वायवः ॥ ६६ ॥

पञ्चकर्मेन्द्रियैर्युक्ताः क्रियाशक्तिबलोद्यताः ।

नागः कूर्मश्च कृकरो देवदत्तो धनंजयः ॥ ६७ ॥

पञ्चज्ञानेन्द्रियैर्युक्ता ज्ञानशक्तिबलोद्यताः ।

पावकः शक्तिमध्ये तु नाभिचक्रे रविः स्थितः ॥ ६८ ॥

[1]बद्धमुद्रा कृता येन नासाग्रे तु स्वलोचने ।

हंसः क्व आसनमर्हतीत्यत्र नाभिचक्रे नासाग्रे नेत्रयोश्च व्यवस्थित इत्याह—प्राणेति ॥ ६६–६७ ॥ शक्तिद्वयमध्ये मूलाधारस्थपावकरूपेण हंस एव स्थितः । येन नासाग्रे स्वलोचने च बद्धखेचरीमुद्रा कृता सोऽयं हंसो रविर्भूत्वा नाभिचक्रे नासाग्रे लोचनयोश्च स्थित इत्यर्थः ॥ ६८ ॥

हंसयोगाभ्यासक्रमः

अकारे वह्निरित्याहुरुकारे हृदि संस्थितः ॥ ६९ ॥

[1] बन्धमुद्रा—मु. बध्य—उ.

मकारे च भ्रुवो[1]र्मध्ये प्राणशक्त्या प्रबोधयेत् ।
ब्रह्मग्रन्थिरकारे च विष्णुग्रन्थिर्हृदि स्थितः ॥ ७० ॥
रुद्रग्रन्थिर्भ्रुवोर्मध्ये भिद्यतेऽक्षरवायुना ।
अकारे संस्थितो ब्रह्मा उकारे विष्णुरास्थितः ॥ ७१ ॥
मकारे संस्थितो रुद्रस्ततोऽस्यान्तः परात्परः ।
कण्ठं संकुच्य नाड्यादौ स्तम्भितं येन शक्तितः ॥ ७२ ॥
रसना पीड्यमानेयं षोडशीवोर्ध्वगामिनी ।
त्रिकूटं [2]त्रिविधं चैव गोलाखं निखरं तथा ॥ ७३ ॥
त्रिशङ्खं वज्रमोंकारमूर्ध्वनालं भ्रुवोर्मुखम् ।
कुण्डलीं चालयन्प्राणान्भेदयन्शशिमण्डलम् ॥ ७४ ॥
साधयन्वज्रकुम्भानि नव द्वाराणि बन्धयेत् ।
सुमनःपवनारूढः सरागो निर्गुणस्तथा ॥ ७५ ॥
ब्रह्मस्थाने तु नादः स्याच्छंकि[3]न्यमृतवर्षिणी ।
षट्चक्रमण्डलोद्धारं ज्ञानदीपं प्रकाशयेत् ॥ ७६ ॥
सर्वभूतस्थितं देवं सर्वेशं नित्यमर्चयेत् ।
आत्मरूपं तमालोक्य ज्ञानरूपं निरामयम् ॥ ७७ ॥
दृश्यं तं दिव्यरूपेण सर्वव्यापी निरञ्जनः ।
हंस हंस वदेद्वाक्यं प्राणिनां देहमाश्रितः ।
स प्राणापानयोर्ग्रन्थिरजपेत्यभिधीयते ॥ ७८ ॥

[1] मध्यं—अ १.
[2] त्रिविधा—अ १, अ २, क.
[3] न्यामृ—क, अ १, अ २.

सहस्रमेकं ह्ययुतं षट् शतं चैव सर्वदा ।
उच्चरन्पतितो हंसः सोऽहमित्यभिधीयते ॥ ७९ ॥
पूर्वभागे ह्यधोलिङ्गं शिखिन्यां चैव पश्चिमम् ।
ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत्सदा यतिः ॥ ८० ॥

विराडादिरूपेणाकारादिमात्रात्रये यो वसेत् तं प्राणशक्त्या बोधयेदित्याह—**अकार** इति । अकारे मूलाधारे च **वह्निः** वैश्वानरो वर्तत **इत्याहुः** । शिष्टं स्पष्टम् ॥ ६९ ॥ यथोक्तस्थानविशिष्टाकारादिमात्रात्रये यत् विद्यते ग्रन्थित्रयं तद्धंसज्ञानवायुना भिद्यते । तत अकारादौ ब्रह्मादयः प्रकाशन्ते । तद्देहकलनापाये निर्विशेषपरमात्मा स्वमात्रं प्रकाशते इत्याह—**ब्रह्मेति** ॥ ७०–७१ ॥ तद्दर्शनग्रन्थित्रयभेदनोपायतया योगमुपदिशति—**कण्ठमिति** । जालन्धरबन्धेन **कण्ठं सङ्कुच्य** सिद्धासनारूढेन **येन** योगिना **नाड्यादौ** सुषुम्नामूले कुण्डलिनीशक्तिः कुण्डलिनीशक्त्या सह दृष्टिप्राणादौ **स्तम्भिते** सति ॥ ७२ ॥ अथ "ऊर्ध्वमुन्नमत इत्योङ्कारः" इति श्रुत्यनुरोधेनाकारादिपरान्तषोडशावयवा यस्य सः **षोडशीप्रणव इव ऊर्ध्वगामिनी** घण्टिकाकुहरगामिनी **इयं** जिह्वा **पीड्यमाना** भवति तनुतामेत्य ब्रह्मबिलं प्रविशति । तदा तिस्रो नाड्यो यत्रैक्यं भजन्ति तं **त्रिकूटं** भ्रूमध्यं मूलाधारविशुद्ध्यादिभेदेन तत् **त्रिविधं** विराजते । तत्र गोशब्देन पृथिव्यादिभूतपञ्चकतत्कार्यमुच्यते, तन्नित्यादिप्रलये यदात्मना लीयते सेयं गोला अव्यक्तशक्तिः, तदात्मकं खं **गोलाखं** अव्याकृताकाशं यस्मात् निर्गतं व्याकृताव्याकृताकाशादिपृथिव्यन्तं **तन्निखरं** चिदाकाशं योगिरमणस्थानं ब्रह्म च विद्यत इत्यर्थः । यद्वा—गोशब्देन जिह्वोच्यते । तथा च हठतन्त्रे आम्नायते—"गोमांसं भक्षयेत्" इत्यंशविवरणे "गोशब्देनेरिता जिह्वा" इत्युक्तत्वात् । शिष्टं समानम् ॥ ७३ ॥ पुनः त्रिकूटविशेषणमेतत्—इच्छानिच्छापरेच्छाप्रभवस्वान्तरुपलभ्यमानं त्रिशं सुखदुःखत्रयं खादतीति **त्रिशङ्खं**, अयोगिभिः

कदाऽपि दुर्भेद्यत्वात् **वज्रं, ओङ्कारं** अकारादिमात्रात्रयावसानस्थानत्वात्, **ऊर्ध्वनाळं भ्रुवोर्मुखं** भ्रूमध्यम्। यदि तत्र योगी ज्योतिर्लिङ्गं द्रष्टुमिच्छति तदा शक्तिचालनाद्युपायतो ज्ञानदीपं पश्यतीत्याह—**कुण्डलीमिति** ॥ ७४ ॥ सूर्योज्जायीशीतळ्यादीनि **वज्रकुम्भकानि,** तेषां ग्रन्थित्रयभेदनपटुत्वात्। ततो नादः आविर्भवतीत्याह—**सुमन** इति । **सुमनः** मनोज्ञत्वात् **पवनारूढः** प्राणोपाधिकत्वात् **सरागो** नैसर्गिकत्वात् तथा **निर्गुणः** तमआदिगुणत्रया-स्पृष्टत्वात् ॥ ७५ ॥ "दहरं पुण्डरीकं वेश्म" इति श्रुतिसिद्ध**ब्रह्मस्थाने नादाविर्भावः स्यात्** । शं सुधां किरतीति **शङ्खिनी** चान्द्री कला **अमृतवर्षिणी** भवति । ततो योगी प्रत्यग्रूपेण प्रकाशयेदित्याह—**षडिति** । मूलाधारादि-षट्चक्रमण्डलं अधोमुखं ऊर्ध्वं धरतीति **षट्चक्रमण्डलोद्धारं** ज्ञानाज्ञानवृत्तिं दीपयतीति **ज्ञानदीपं** प्रत्यक्तत्त्वं, तद्रूपेण विद्वान् **प्रकाशयेदित्यर्थः** ॥ ७६ ॥ प्रत्यञ्चं सर्वान्तरत्वेन भावयेदित्याह—**सर्वेति** । ततः प्रत्यगभिन्नपरं ब्रह्मास्मीति ध्यायेदित्याह—**आत्मेति** ॥ ७७ ॥ ज्ञानिभिः **दिव्यरूपेण दृश्यं तं** परमात्मानं प्रत्यगभेदेन यो जानाति सोऽयं मुनिः **सर्वव्यापी निरञ्जनो** भूत्वा । हंसहंसेति वीप्सया "हंसः सोऽहं" इति **वाक्यं वदेदिति** द्योत्यते । योऽयं हंसानुसन्धानव्यापारः **सः** ॥ ७८ ॥ अजपाजपसङ्ख्येयत्तामाह—**सहस्रमिति** ॥ ७९ ॥ एवं हंसयोगिना यतिना प्रत्यहं यत् कर्तव्यं तदाह—**पूर्वेति** । सुषुम्नायाः **पूर्वभागे** मूलाधारचक्रे **ह्यधोलिङ्गं** वैराजतत्त्वं ध्यायेत्। "तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः" इति श्रुत्यनुरोधेन अनाहतस्थशिखिन्यां पावकज्वालायां **पश्चिमं सौत्रं** प्रत्यगात्मलिङ्गं वा अहमस्मीति ध्यायेत् । **भ्रुवोराज्ञाचक्रमध्ये** तु ब्रह्ममात्रभावापत्तौ यतत इति **यतिः** मुनिः **ज्योतिरैश्वरं** नित्यं निष्प्रतियोगिक-ब्रह्ममात्र**लिङ्गं** वा **सदा ध्यायेत्** अहमस्मीत्यनुसन्धानं कुर्यादित्यर्थः ॥ ८० ॥

हंसयोगिना अनुसन्धेयं आत्मस्वरूपम्

अच्युतोऽहमचिन्त्योऽहमतर्क्योऽहमजोऽस्म्यहम् ।
अव्रणोऽहमकायोऽह[1]मनङ्गोऽस्म्यभयोऽस्म्यहम् ॥ ८१ ॥
अशब्दोऽहमरूपोऽहमस्पर्शोऽस्म्यहमद्वयः ।
अरसोऽहमगन्धोऽहमनादिरमृतोऽस्म्यहम् ॥ ८२ ॥
अक्षयोऽहमलिङ्गोऽहमजरोऽस्म्यकलोऽस्म्यहम् ।
अप्राणोऽहममूकोऽहमचिन्त्योऽस्म्यकृतोऽस्म्यहम् ॥ ८३ ॥
अन्तर्याम्यहमग्राह्योऽनिर्देश्योऽहमलक्षणः ।
अगोत्रोऽहमगात्रोऽहमचक्षुष्कोऽस्म्यवागहम् ॥ ८४ ॥
[2]अदृश्योऽहमवर्णोऽहमखण्डोऽस्म्यहमद्भुतः ।
अश्रुतोऽहमदृष्टोऽहमन्वेष्टव्योऽमरोऽस्म्यहम् ॥ ८५ ॥
अवायुरप्यनाकाशोऽतेजसोऽव्यभिचार्यहम् ।
अमतोऽहमजातोऽहमतिसूक्ष्मोऽविकार्यहम् ॥ ८६ ॥
अरजस्कोऽतमस्कोऽहमसत्त्वोऽस्म्यगुणोऽस्म्यहम् ।
अमायोऽनुभवात्माऽहमनन्योऽविषयोऽस्म्यहम् ॥ ८७ ॥
अद्वैतोऽहमपूर्णोऽहमबाह्योऽहमनन्तरः ।
अश्रोत्रोऽहमदीर्घोऽहमव्यक्तोऽहमनामयः ॥ ८८ ॥
अद्वयानन्दविज्ञानघनोऽस्म्यहमविक्रियः ।
अनिच्छोऽहमलेपोऽहमकर्ताऽस्म्यहमद्वयः ॥ ८९ ॥

[1] मसङ्गो—क.
[2] अदृ—क, अ १, अ २.

अविद्याकार्यहीनोऽहमवाङ्मनसगोचरः ।
अनल्पोऽहमशोकोऽहमविकल्पोऽस्म्यविज्वलन् ॥ ९० ॥
आदिमध्यान्तहीनोऽहमाकाशसदृशोऽस्म्यहम् ।
आत्मचैतन्यरूपोऽहमहमानन्दचिद्घनः ॥ ९१ ॥
आनन्दामृतरूपोऽहमात्मसंस्थोऽहमन्तरः ।
आत्मकामोऽहमाकाशात्परमात्मेश्वरोऽस्म्यहम् ॥ ९२ ॥
ईशानोऽस्म्यहमीड्योऽहमहमुत्तमपूरुषः ।
उत्कृष्टोऽहमुपद्रष्टाऽहमुत्तरतरोऽस्म्यहम् ॥ ९३ ॥
केवलोऽहं कविः कर्माध्यक्षोऽहं करणाधिपः ।
गुहाशयोऽहं गोप्ताऽहं चक्षुषश्चक्षुरस्म्यहम् ॥ ९४ ॥
चिदानन्दोऽस्म्यहं चेताश्चिद्घनश्चिन्मयोऽस्म्यहम् ।
ज्योतिर्मयोऽस्म्यहं ज्यायान् ज्योतिषां ज्योतिरस्म्यहम् ॥९५॥
तमसः साक्ष्यहं तुर्युतुर्योऽहं तमसः परः ।
दिव्यो देवोऽस्मि दुर्दर्शो दृष्टाध्यायो ध्रुवोऽस्म्यहम् ॥ ९६ ॥
नित्योऽहं निरवद्योऽहं निष्क्रियोऽस्मि निरञ्जनः ।
निर्मलो निर्विकल्पोऽहं निराख्यातोऽस्मि निश्चलः ॥ ९७ ॥
निर्विकारो नित्यपूतो निर्गुणो निस्स्पृहोऽस्म्यहम् ।
निरिन्द्रियो नियन्ताऽहं निरपेक्षोऽस्मि निष्कलः ॥ ९८ ॥
पुरुषः परमात्माऽहं पुराणः परमोऽस्म्यहम् ।
परावरोऽस्म्यहं प्राज्ञः प्रपञ्चोपशमोऽस्म्यहम् ॥ ९९ ॥

परामृतोऽस्म्यहं पूर्णः प्रभुरस्मि पुरातनः ।
पूर्णानन्दैकबोधोऽहं प्रत्यगेकरसोऽस्म्यहम् ॥ १०० ॥
प्रज्ञातोऽहं प्रशान्तोऽहं प्रकाशः परमेश्वरः ।
एकधा चिन्त्यमानोऽहं द्वैताद्वैतविलक्षणः ॥ १०१ ॥
बुद्धोऽहं भूतपालोऽहं भारूपो भगवानहम् ।
महादेवो महानस्मि महाज्ञेयो महेश्वरः ॥ १०२ ॥
विमुक्तोऽहं विभुरहं वरेण्यो व्यापकोऽस्म्यहम् ।
वैश्वानरो वासुदेवो विश्वतश्चक्षुरस्म्यहम् ॥ १०३ ॥
विश्वाधिकोऽहं विशदो विष्णुर्विश्वकृदस्म्यहम् ।
शुद्धोऽस्मि शुद्धः शान्तोऽस्मि शाश्वतोऽस्मि शिवोऽस्म्यहम् ॥
सर्वभूतान्तरात्माऽहमहमस्मि सनातनः ।
अहं सकृद्विभातोऽस्मि स्वे महिम्नि सदा स्थितः ॥ १०५ ॥
सर्वान्तरः स्वयंज्योतिः सर्वाधिपतिरस्म्यहम् ।
सर्वभूताधिवासोऽहं सर्वव्यापी स्वराडहम् ॥ १०६ ॥
समस्तसाक्षी सर्वात्मा सर्वभूतगुहाशयः ।
सर्वेन्द्रियगुणाभासः सर्वेन्द्रियविवर्जितः ॥ १०७ ॥
स्थानत्रयव्यतीतोऽहं सर्वानुग्राहकोऽस्म्यहम् ।
सच्चिदानन्दपूर्णात्मा सर्वप्रेमास्पदोऽस्म्यहम् ॥ १०८ ॥
सच्चिदानन्दमात्रोऽहं स्वप्रकाशोऽस्मि चिद्घनः ।
सत्त्वस्वरूपसन्मात्रसिद्धसर्वात्मकोऽस्म्यहम् ॥ १०९ ॥

सर्वाधिष्ठानसन्मा[1]त्रः सर्वबन्धहरोऽस्म्यहम् ।

सर्वग्रासोऽस्म्यहं सर्वद्रष्टा सर्वानुभूरहम् ॥ ११० ॥

एवं यो वेद तत्त्वेन स वै पुरुष उच्यते ॥ इत्युपनिषत् ॥

यथायथा यतिभिः अनुसन्धेयं तदेवाह—**अच्युतोऽहमित्यादिना** । **अच्युतोऽहं**, अच्युतस्वभावात्, **अचिन्त्यः** चित्तवृत्त्यभावात्, **अतर्क्यः** अनिर्वाच्यत्वात्, **अजः** जन्माद्यभावात् । **अप्राण** इत्यादिविशेषणत्रयं शरीरत्रयप्रतिषेधार्थम् । **अभयः**, भयहेतुर्द्वैताभावात् ॥ ८१ ॥ किं च—**अशब्दोऽहमित्यादि** । पञ्चतन्मात्रवैरळ्यात् शब्दादिप्रतिषेधसिद्धोऽस्मि । **अद्वयः**, द्वैताभावात् । **अनादिरमृतः**, सम्भूतिप्रळयाभावात् ॥ ८२ ॥ किं च—**अक्षयोऽहमित्यादि** । **अक्षयोऽहं**, क्षयिष्णुस्थूलशरीराभावात् । **अलिङ्गः**, अचिह्नत्वात् । **अजरः**, जरादिषड्भूर्म्यभावात् । **अप्राणोऽहममूकोऽहं** सप्राणवागिन्द्रियाभावात् । **अकृतः**, कृतिहेत्वभावात् ॥ ८३ ॥ किं च—**अन्तर्याम्यहमित्यादि** । **अन्तर्यामी**, सर्वान्तरत्वात् । **अग्राह्यः** करणैः । **अनिर्देश्यः** अनिदंस्वरूपत्वात् । **अलक्षणः**, लक्षणात्रयाभावात् । **अगोत्रः**, कुलगोत्रविवर्जितत्वात् । **अचक्षुष्कः**, ज्ञानाक्षाभावात् । **अवाक्**, कर्माक्षाभावात् ॥ ८४ ॥ किं च—**अदृश्योऽहमित्यादि** । दृश्याभावात् **अदृश्यः** । **अवर्णः** वर्णाश्रमाभावात् । **अखण्डः** पूर्णत्वात् । **अद्भुतः**—स्वस्य निष्प्रतियोगिकस्वमात्रत्वेऽपि स्वाज्ञादिदृष्ट्यनुरोधेन जाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तवत् भानात् अद्भुतत्वं युज्यते । वेदान्तवाक्येषु मुमुक्षुभिः **अन्वेष्टव्यः** । **अमरः** पारमार्थिकनित्यत्वात् ॥ ८५ ॥ किं च—**अवायुरित्यादि** । वाय्वाकाशतेजोग्रहणं जलपृथिव्युपलक्षणम् । **अतेजस** इति षष्ठी प्रथमार्था । **अव्यभिचारी** सदेकरूपत्वात् । अन्तःकरणवृत्तिभिः **अमतः** । **अजातः** अजत्वात् । **अतिसूक्ष्मः** केशाकोटयंशैकभागसूक्ष्माव्यक्तादपि

[1] त्रस्वात्मब—क, अ १, अ २.

सूक्ष्मत्वात् । **अविकारी** विकारकलनावैरळ्यात् ॥ ८६ ॥ किं च— **अरजस्क** इत्यादि । गुणत्रयगुणसाम्याभावतो निर्गुणत्वात् । **अमायः** निर्मायत्वात् । **अनुभवात्मा** विज्ञानगम्यत्वात् । **अनन्यः** ब्रह्माभिन्नत्वात् । **अविषयः** निर्विषयत्वात् ॥ ८७ ॥ **अद्वैतः** निष्प्रतियोगिकत्वात् । **अपूर्णः** जीवात्मना परिच्छिन्नदृष्टित्वात् । यद्वा—अकारवाच्यविष्ण्वात्मना सर्वत्र पूर्णत्वात् । **अबाह्योऽहमनन्तरः** स्वबाह्यान्तःकलनावैरळ्यात् । अकरणत्वात् परिमाणाभावात् अदृश्यत्वात् अम्नाविरत्वाच्च **अश्रोत्रादिविशेषणचतुष्टयमुपपद्यते** ॥ ८८ ॥ किं च—**अद्वयेति** । पूर्णानन्दबोधस्वरूपत्वात् **अनिच्छः** ॥ ८९ ॥ **अनल्पः** अपरिच्छिन्नत्वात् । **अशोकोऽहं** निरहङ्कृतित्वात् । **अविकल्पः** निर्विकल्पत्वात् । **अविज्वलन्** निरग्नित्वात् ॥ ९० ॥ **आदिमध्यान्तशून्यः** उत्पत्तिस्थितिप्रळयाभावात् । **आकाशसदृशः** चिदाकाशत्वात् ॥ ९१ ॥ **आत्मसंस्थः** स्वे माहिम्नि स्थितत्वात् । **अन्तरः** सर्वान्तरत्वात् ॥ ९२ ॥ **उत्तमपूरुषः** क्षराक्षराकलनाविरळपुरुषोत्तमत्वात्, "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इति स्मृतेः । सर्वस्मात् **उत्कृष्टः** । **उपद्रष्टा** सर्वसाक्षिस्वरूपत्वात् । **उत्तरतरः** सर्वोत्तरत्वात् ॥ ९३ ॥ **केवलः** अशेषविशेषाभावात् । **कविः** क्रान्तदर्शित्वात् । **कर्माध्यक्षः** कर्मिणां कर्मफलदातृत्वात् । **करणाधिपः** दिग्वातादिरूपत्वात् । **गुहाशयः** सर्वप्रत्यक्स्वरूपत्वात् । **गोप्ता** विष्णुत्वात् । **चक्षुषश्चक्षुः** चक्षुरादीन्द्रियप्रवृत्तिनिमित्तत्वात् ॥ ९४ ॥ अचेतनचेतयितृत्वात् **चेताः** । **ज्यायान्** पृथिव्यादेः । **ज्योतिषां ज्योतिः** सूर्यादिप्रकाशकत्वात् ॥ ९५ ॥ **ध्रुवः** शाश्वतत्वात् ॥ ९६ ॥ **निरञ्जनः** असङ्गत्वात् ॥ ९७–१०० ॥ **एकधा चिन्त्यमानोऽहं** सर्वापह्नवसिद्धं ब्रह्म, निष्प्रतियोगिकैकरूपेण चिन्तनीयत्वात् । **सापेक्षद्वैताद्वैतविलक्षणः** निष्प्रतियोगिकपरमाद्वैतरूपत्वात् ॥ १०१–१०३ ॥ **शिवः** स्वातिरिक्ताशिवग्रासत्वात् ॥ १०४ ॥ **सकृद्विभातः** निरावृतप्रकाशः ॥ १०५ ॥ **स्वराट्** स्वमात्रतया राजमानत्वात् ॥ १०६ ॥ **सर्वेन्द्रियगुणाभासः सर्वेन्द्रियविवर्जितः**, स्वाज्ञस्वज्ञदृष्टिभ्यामित्यर्थः ॥ १०७ ॥ जाग्रदादिस्थानत्रयव्यतीतोऽहम् ॥ १०८–११० ॥

विद्याफलमाह—एवमिति । अच्युतोऽहमित्यादिसर्वानुभूरित्यन्तस्वानुभूतिवाक्यानि स्वानुभूतिमहावाक्यरत्नावलीप्रभालोचने प्रायशो व्याख्यातानीत्यर्थः । इत्युपनिषच्छब्दः ब्रह्मविद्योपनिषत्समाप्त्यर्थः ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
ब्रह्मविद्योपनिषदो व्याख्येयं लिखिता लघु ।
प्रकृतोपनिषद्व्याख्या सप्तत्यधिशतद्वयम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे चत्वारिंशत्संख्यापूरकं ब्रह्मविद्योपनिषद्विवरणं सम्पूर्णम्

---

# मण्डलब्राह्मणोपनिषत्

पूर्णमदः—इति शान्तिः

## प्रथमं ब्राह्मणम्

आत्मतत्त्वजिज्ञासा

याज्ञवल्क्यो ह वै महामुनिरादित्यलोकं जगाम । तमादित्यं नत्वा भो भगवन्नादित्यात्मतत्त्वमनुब्रूहीति ॥ १ ॥

बाह्यान्तस्तारकाकारं व्योमपञ्चकविग्रहम् ।
राजयोगैकसंसिद्धं रामचन्द्रमुपास्महे ॥

अथ खलु शुक्लयजुर्वेदप्रविभक्तेयं मण्डलब्राह्मणोपनिषत् सूक्ष्माष्टांगयोगप्रकटनपूर्वकं लक्ष्यत्रयव्योमपञ्चकतारकद्वयादिप्रकाशकराजयोगसर्वस्वं प्रकाशयन्ती विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । याज्ञवल्क्यादित्यप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—याज्ञवल्क्य इति ॥ १ ॥

सूक्ष्माष्टाङ्गयोगप्रतिज्ञा

स होवाच नारायणः । ज्ञान[1]सहितयमाद्यष्टाङ्गयोग उच्यते ॥२॥

[1] युक्तय—अ, अ १, अ २, क.

याज्ञवल्क्येन एवं पृष्टः तत्प्रश्नमंगीकृत्य **स होवाच** । आदित्यमण्डलान्तर्वर्ती सर्वलोकपरायणरूपोऽसौ याज्ञवल्क्यप्रश्नोत्तरमाहेत्यर्थः । किं तदित्याकांक्षायां तत्पृष्टात्मतत्त्वोपायतया यमाद्यष्टांगयोगमादावाह—**ज्ञानेति** । "ब्रह्मैव सर्वं, ब्रह्मातिरिक्तं न किञ्चिदस्ति" इति **ज्ञानं** उपेयं तत्सहितः तद्गर्भित इत्यर्थः ॥ २ ॥

**चतुर्विधयमः**

**शीतोष्णाहारनिद्राविजयः सर्वदा शान्तिर्निश्चलत्वं विषयेन्द्रियनिग्रहश्चैते यमाः ॥ ३ ॥**

अष्टांगेषु चतुर्धा भिन्नयमलक्षणमाह—**शीतेति** । देहादावात्मात्मीयाभिमानत्यागतः शीतादिविनिवृत्तिः भवति । स्वाप्राप्तं वस्तु नेतीति ज्ञानात् **सर्वदा शान्तिः** भवति । स्वाभिलषितलक्ष्ये मनसो **निश्चलत्वम्** । इन्द्रियेन्द्रियार्थेषु वस्तुचिन्तनं **इन्द्रियेन्द्रियार्थनिग्रहो** भवति । चशब्दः समुच्चयार्थः । एते चतुष्प्रकारा **यमा** इत्यर्थः ॥ ३ ॥

**नवविधनियमः**

**गुरुभक्तिः सत्यमार्गानुरक्तिः सुखागतवस्त्वनुभवश्च तद्वस्त्वनुभवेन तुष्टिर्निःसङ्गता एकान्तवासो मनोनिवृत्तिः फलानभिलाषो वैराग्यभावश्च नियमाः ॥ ४ ॥**

नवधा भिन्ननियम उच्यते—**गुर्विति** । नित्यं अमायया स्वाज्ञानमोचकगुरुभजनं **गुरुभक्तिः**, "गुरुभक्तिं सदा कुर्यात् श्रेयसे" इति श्रुतेः । **सत्यं** ब्रह्म तत्प्रापक**मार्गः** तद्बोधः तत्रा**नुरक्तिः** आसक्तिः । निरतिशयसुखरूपतया श्रुत्याचार्यप्रसादादागतब्रह्मवस्त्वनुभवश्च । **तद्वस्त्वनुभवेनैव तुष्टिः** न बाह्यविषयानुभवतः । तुष्टावपि **निस्सङ्गता** । सदा आदिमध्यान्तभेदेन **एकान्तत्रये वासः**—विजने प्रयत्नपूर्वकं मनोनियमनं आद्यैकान्तं, विजने

सजने वाऽपि प्रयत्नपूर्वकमनोनियमनं मध्यैकान्तं, विजने सजने वा प्रदेशे अप्रयत्नेन मनोनियमनं अन्तैकान्तं, यस्य येन यदा एकान्तं साधितं स तत्रैव वसेदित्यर्थः । स्वातिरेकेण मनो नास्तीति दृढाभिसन्धिः मनोनिवृत्तिः । स्वानुष्ठितकर्मफलानभिलाषः । स्वातिरिक्तविषयसामान्ये वान्ताशनमूत्रपुरीषवदिच्छाराहित्यं सर्वत्र वैराग्यभावश्च । सर्वत्र समुच्चयार्थं चशब्दद्वयम् । एते नियमा नवविधाः ॥ ४ ॥

आसनादिषडङ्गविवरणम्

सुखासनवृत्तिश्चिरवासश्चैवमासननियमो भवति ॥ ५ ॥ पूरककुम्भकरेचकैः षोडशचतुष्षष्टिद्वात्रिंशत्संख्यया यथाक्रमं प्राणायामः ॥ ६ ॥ विषयेभ्य इन्द्रियार्थेभ्यो मनोनिरोधनं प्रत्याहारः ॥ ७ ॥ विषयव्यावर्तनपूर्वकं चैतन्ये चेतस्स्थापनं धारणं भवति ॥ ८ ॥ सर्वशरीरेषु चैतन्यैकतानता ध्यानम् ॥ ९ ॥ ध्यानविस्मृतिः समाधिः ॥ १० ॥

आसननियम उच्यते—सुखेति । यत्र सुखेनाखण्डाकारात्मिका वृत्तिरुदेति सा सुखासनवृत्तिः । निरायासेन यत्र चिरं वसति स चिरासनवासः ॥ ५ ॥ प्राणायामलक्षणमाह—पूरकेति । षोडशमात्राकालपरिमितं पूरकं, कुम्भकं तच्चतुर्गुणितं, रेचकं तदर्धमित्यर्थः ॥ ६ ॥ प्रत्याहारलक्षणमाह—विषयेभ्य इति ॥ ७ ॥ धारणाध्यानसमाधिलक्षणमाह—विषयेति । सर्वत्र विषयेति ॥ ८ ॥ अनेकघटशरावादिषु भिद्यमानेष्वपि यथा तदवच्छिन्नव्योम्न एकत्वं तथेत्यर्थः ॥९॥ समाधिः निर्विकल्पकसमाधिः त्रिपुटीग्रासत्वात् ॥१०॥

सूक्ष्मयोगाष्टाङ्गज्ञानफलम्

एवं सूक्ष्माङ्गानि । य एवं वेद स मुक्तिभाग्भवति ॥ ११ ॥

एवं अष्टांगयोगज्ञानफलमाह—एवमिति । सूक्ष्म-अष्ट-अङ्गानि । स्वात्तज्ञानानुरोधेन स मुक्तिभाग्भवति ॥ ११ ॥

इति प्रथमः खण्डः

देहपञ्चदोषनिरसनम्

देहस्य पञ्च दोषा भवन्ति कामक्रोधनिश्वासभयनिद्राः ॥१॥

तन्निरासस्तु निःसंकल्पक्षमालघ्वाहाराप्रमादतातत्त्वसेवनम् ॥ २ ॥

पञ्चदोषवद्देहावच्छिन्नस्य मुक्तिभाक्त्वं कथमित्याशङ्क्य तन्निरसनोपायसत्त्वात् तत्सिद्धिः स्यादित्याह—देहस्येति । के ते इत्यत्र—कामेति ॥ १ ॥ क्रमेण तन्निरासस्तु । निस्सङ्कल्पतः कामादिनिवृत्तिः, क्षमातः क्रोधनिवृत्तिः, लघ्वाहारोपलक्षितप्राणायामतः श्वासस्थिरत्वं, सर्वत्र द्वैतधीत्यागतो भयनिवृत्तिः, परमार्थतत्त्वसेवनतः स्वाज्ञाननिद्रानिवृत्तिः । एवं पञ्चदोषशान्तितो मुक्तिभाक्त्वं स्यादित्यर्थः ॥ २ ॥

तारकावलोकनं तत्फलं च

[1]निद्राभयसरीसृपं हिंसादितरङ्गं तृष्णावर्तं दारपङ्कं संसारवार्धिं तर्तुं सूक्ष्ममार्गमवलम्ब्य सत्त्वादिगुणानतिक्रम्य तारकमवलोकयेत् ॥ ३ ॥ भ्रूमध्ये सच्चिदानन्दतेजःकूटरूपं तारकं ब्रह्म ॥ ४ ॥

अपारदुस्तारसंसारवारिधेः सत्त्वात् तत्तरणोपायो नास्तीत्याशङ्क्य लक्ष्यत्रयगोचरतारकनौकासत्त्वात् तदाश्रित्य तद्वारिधिः तरितुं शक्यः इत्याह—

[1] निद्रासरी—उ.

निद्रेति । संसृतेः सागरत्वं कथमित्यत्र निद्रेत्यादि । उक्तविशेषणविशिष्टं संसारवार्धिं तर्तुं तरितुं वक्ष्यमाणसूक्ष्ममार्गम् ॥ ३ ॥ किंतत्तारकमित्यत्र भ्रूमध्य इति । नासाग्रदर्शिनो भ्रूमध्ये ज्योतिर्दृश्यते, सच्चिदानन्दस्य सर्वव्यापकत्वेन चक्षुर्मनोविकल्पिततेजःकूटरूपेऽपि व्याप्तत्वात् । भ्रूमध्यविलसितसच्चिदानन्दतेजः-कूटरूपस्य परमेश्वररूपत्वेन स्वभजद्भक्तपटलस्वातिरिक्तास्तित्वलक्षणसंसारसागर-सन्तारणात् तारकत्वम् । वस्तुतः स्वमात्रतया बृंहणात् तारकं ब्रह्मेति व्यपदिश्यते ॥ ४ ॥

लक्ष्यत्रयावलोकनेन तारकप्राप्तिः

[1]तदाप्त्युपायं लक्ष्यत्रयावलोकनम् ॥ ५ ॥

तदुपायः कः इत्यपेक्षायामाह—तदाप्त्युपायमिति । विद्धि इत्यर्थः ॥ ५ ॥

अन्तर्लक्ष्यदर्शनम्

मूलाधारादा ब्रह्मरन्ध्रपर्यन्तं सुषुम्ना सूर्याभा । तन्मध्ये तटित्कोटिसमा मृणालतन्तुसूक्ष्मा कुण्डलिनी । [2]तत्र तमोनिवृत्तिः । तद्दर्शनात्सर्वपापनिवृत्तिः ॥ ६ ॥ तर्जन्यग्रोन्मीलित[3]कर्णरन्ध्रद्वये फूत्कारशब्दो जायते । तत्र स्थिते मनसि चक्षु[4]र्मध्यनीलज्योतिः पश्यति । एवं हृदयेऽपि ॥ ७ ॥

लक्ष्यत्रयं किं इत्यत्र अन्तर्बाह्यमध्यभेदेन तत् त्रिविधम् । तत्र अन्तर्लक्ष्यलक्षणं तत्फलं चाह—मूलेति । वीणादण्डमाश्रित्य सुषुम्ना वर्तते । तटित्कोटिसमाभा कुण्डलिनीशक्तिरस्ति । तत्र मनसि स्थिरीभूते स्वाज्ञान-तमोनिवृत्तिः । कुण्डलिनीमध्ये यदाकाशं विद्यते तद्दर्शनात् सर्वपापनिवृत्तिः

[1] तदुपायं—क, अ १.
[2] "तत्र" इत्येतत्लुप्तम्—अ, उ.
[3] कर्णद्वये—क. अ २.
[4] र्मध्यं—अ, अ १.

*भवति ॥ ६ ॥ कर्णद्वयान्तः तर्जनीद्वयप्रवेशो मुकुन्दमुद्रा, तया* **तर्जनीति** । तर्जनीभ्यां कर्णद्वयपिधानात् तत्र फूत्कारादिनादः उदेति । **तत्र स्थिते मनसि** साधकः **चक्षुरित्यादि** । न केवलं नादे, किं तु एवं **हृदयेऽपि** पश्यति ॥ ७ ॥

बहिर्लक्ष्यदर्शनम्

**बहिर्लक्ष्यं तु नासाग्रे चतुःषडष्टदशद्वादशाङ्गुलीभिः क्रमान्नीलद्युतिश्यामत्वसदृग्रक्तभङ्गीस्फुरत्पीतवर्णद्वयोपेतं व्योमत्वं पश्यति स तु योगी ॥ ८ ॥ चलदृष्टया व्योमभागवीक्षितुः पुरुषस्य दृष्ट्यग्रे ज्योतिर्मयूखा वर्तन्ते । तद्दृष्टिः स्थिरा भवति ॥ ९ ॥ शीर्षोपरि द्वादशाङ्गुलिमानज्योतिः पश्यति तदाऽमृतत्वमेति ॥१०॥**

अन्तर्लक्ष्येयत्तामुक्त्वा बहिर्लक्ष्येयत्तामनुक्रामति—**बहिरिति** । योगी स्वदृष्टी समे कृत्वा स्वनासाग्रे स्वकृताभ्यासानुरोधेन **क्रमा**च्चतुरादिद्वादशांगुलिपर्यन्तं **व्योमत्वं** व्योमभावं **पश्यति** । किंविशिष्टं व्योमेत्यत्र दृश्यमाननीलद्युतिः ईषच्छ्यामत्वगुणसदृशा आपाततो **रक्तभङ्गी** च **स्फुरत्पीतवर्णविशिष्टा** । तत्र नीलपीतवर्णौ प्रधानौ । श्यामादिवर्णस्तु उपसर्जनभूतः । एवं वर्णद्वयविशिष्टं व्योमेत्यर्थः । यदा एवं पश्यति तदा अयं **योगी** भवति ॥ ८ ॥ एवं दर्शनान्मनो[1]नुगृहीतदृष्टिः स्थिरा भवतीत्याह—**चलेति** । **स्वदृष्ट्यग्रे** । **मयूखाः** किरणाः । यद्दृष्टिः तत्र समारोपिता **तद्दृष्टिः** ॥ ९ ॥ मस्तकोपरि ज्योतिर्दर्शनं अमृतत्वफलकमित्याह—**शीर्षेति** । यदा अयं योगी **शीर्षोपरि** ॥ १० ॥

मध्यलक्ष्यदर्शनम्

**मध्यलक्ष्यं तु प्रातश्चित्रादिवर्णसूर्यचन्द्रवह्निज्वालावलीवत्तद्विहीनान्तरिक्षवत्पश्यति ॥ ११ ॥ तदाकाराकारी भवति ॥ १२ ॥**

[1] निगृहीत—ड.

अभ्यासान्निर्विकारं गुणरहिताकाशं भवति । विस्फुरत्तारकाका-[1]रगाढतमोपमं [2]पराकाशं भवति । कालानलसमद्योतमानं महाकाशं भवति । सर्वोत्कृष्टप[3]रमाद्वितीयप्रद्योतमानं तत्त्वाकाशं भवति । कोटिसूर्य[4]प्रकाशसंकाशं सूर्याकाशं भवति ॥ १३ ॥ एवमभ्यासा-त्तन्मयो भवति । य एवं वेद ॥ १४ ॥

अन्तर्बाह्यलक्ष्यलक्षणमुक्त्वा मध्यलक्ष्यलक्षणं प्रकटयति—मध्येति । योगी नातिदूरदेशपुरोभागान्तरिक्षे प्रातरित्यादि ॥ ११ ॥ एवं दर्शनतः किं स्यादित्याशङ्क्य तन्मयत्वं व्योमपञ्चकदर्शनं तद्भावापत्तिरपि स्यादित्याह—तदाकारेति ॥ १२–१३ ॥ अभ्यासज्ञानफलमाह—एवमिति ॥ १४ ॥

इति द्वितीयः खण्डः

तारकामनस्कभेदेन द्विविधो योगः

तद्योगं च द्विधा विद्धि पूर्वोत्तर[5]विधानतः ।
पूर्वं तु तारकं विद्यादमनस्कं तदुत्तरमिति ॥

तारकं द्विविधम् । मूर्तितारकममूर्तितारकमिति । यदिन्द्रियान्तं तन्मूर्तितारकम् । यद्भ्रूयुगातीतं तदमूर्तितारकमिति ॥ १ ॥

व्योमपञ्चकाभ्यासतः किं स्यादित्यत्र पर्यवसाने तारकामनस्कसिद्धिः स्यादित्याह—तदिति । यद्व्योमपञ्चकाभ्यासयोगः उक्तः पर्यवसाने तद्योगम् ।

[1] रं गा—अ. रा गा—अ १.
[2] परमाका—अ.
[3] रमद्युतिप्र—अ, अ १.
[4] प्रकाशं सू—अ १, अ२, क.
[5] विभागतः—अ, अ १, अ २, क.

किं मूर्तितारकं किं अमूर्तितारकं इत्यत्र मूलाधारमारभ्याज्ञाचक्रपर्यन्तं मूर्तितारकं, आज्ञाचक्रमारभ्य सहस्रारान्तं अमूर्तितारकमित्याह—यदिति ॥ १ ॥

### मनोयोगविधिः

उभयमपि मनोयुक्तमभ्यसेत् । मनो[1]युक्तान्तरदृष्टिस्तारकप्रकाशाय भवति ॥ २ ॥

लक्ष्यदर्शनस्य चक्षुरधीनत्वात् किं मनसेत्याशङ्क्य मनोनुगृहीतदृष्टिः अन्तर्दृष्टिर्भूत्वा तारकग्राही भवति न केवलदृष्टिरित्याह—मन इति ॥ २ ॥

### पूर्वतारकम्

भ्रूयुगमध्यबिले तेजस आविर्भावः । एतत्पूर्वतारकम् ॥ ३ ॥

पूर्वतारकस्वरूपमाह—भ्रूयुगेति ॥ ३ ॥

### उत्तरतारकम्

उत्तरं त्वमनस्कम् । तालुमूलोर्ध्वभागे महज्ज्योतिर्विद्यते । तद्दर्शनादणिमादिसिद्धिः ॥ ४ ॥

सफलोत्तरतारकस्वरूपमाह—उत्तरं त्विति । सिद्धिः भवति ॥ ४ ॥

### उत्तरतारकस्य शाम्भवीपर्यवसानम्

लक्ष्येऽ[2]न्तर्बाह्यायां दृष्टौ निमेषोन्मेषवर्जितायां च इयं शाम्भवी मुद्रा भवति । सर्वतन्त्रेषु गोप्या महाविद्या भवति । तज्ज्ञानेन संसारनिवृत्तिः । तत्पूजनं मोक्षफलदम् ॥ ५ ॥

[1] युक्तान्तद—उ.

[2] न्तस्थबा—अ, अ १.

उत्तरतारकमेव पर्यवसाने मुक्तिफलप्रदशाम्भवीमुद्रा भवतीत्याह—लक्ष्य इति। तथा च श्रुत्यन्तरम्—

अन्तर्लक्ष्यं बहिर्दृष्टिः निमेषोन्मेषवर्जिता।
एषा सा शाम्भवीमुद्रा सर्वतन्त्रेषु गोपिता॥

इति। शांभवीज्ञानं संसारनिवर्तकं, तद्योगिपूजनं मुक्तिफलदं भवेदित्याह—तदिति॥ ९॥

अन्तर्लक्ष्यलक्षणम्

अन्तर्लक्ष्यं [1]जलज्योतिस्स्वरूपं भवति महर्षिवेद्यं अन्तर्बाह्येन्द्रियैरदृश्यम्॥ ६॥

किं पुनः अन्तर्लक्ष्यमित्यत्र यत्करणग्रामागोचरं तदेव अन्तर्लक्ष्यमित्याह—अन्तरिति॥

इति तृतीयः खण्डः

अन्तर्लक्ष्ये वादिविप्रतिपत्तिः

सहस्रारे [1]जलज्योतिरन्तर्लक्ष्यम्। बुद्धिगुहायां सर्वाङ्गसुन्दरं पुरुषरूपमन्तर्लक्ष्यमित्यपरे। शीर्षान्तर्गतमण्डलमध्यगं पञ्चवक्त्रमुमासहायं नीलकण्ठं प्रशान्तमन्तर्लक्ष्यमिति केचित्। अङ्गुष्ठमात्रः पुरुषोऽन्तर्लक्ष्यमित्येके॥ १॥

[1] ज्वल—अ २.

अन्तर्लक्ष्यविषये वादिविप्रतिपत्तिं परमार्थदृष्ट्या सर्ववादिविकल्पगोचरलक्ष्यस्यैकत्वं तद्दर्शनतो ब्रह्मनिष्ठत्वं चाह—**सहस्रार** इति । योगिनः बुद्धिगुहायां, अपरे वैष्णवाः । केचित् शैवाः । एके दहरविद्योपासकाः ॥ १ ॥

सर्वलक्ष्यानुस्यूतात्मदर्शनविधिः

**उक्तविकल्पं सर्वमात्मैव । तल्लक्ष्यं शुद्धात्मदृष्ट्या वा यः पश्यति स एव ब्रह्मनिष्ठो भवति ॥ २ ॥**

परमार्थदृष्ट्या योग्यादिभिः उक्तेति । एवमन्तर्लक्ष्यैक्यदर्शी ब्रह्मनिष्ठः इत्याह—**तल्लक्ष्यमिति** ॥ २ ॥

आत्मनिष्ठस्य ब्रह्मभावप्राप्तिः

**जीवः पञ्चविंशकः स्वकल्पितचतुर्विंशतितत्त्वं परित्यज्य षड्विंशकः परमात्माऽहमिति निश्चयाज्जीवन्मुक्तो भवति ॥ ३ ॥ एवमन्तर्लक्ष्यदर्शनेन जीवन्मुक्तिदशायां स्वयमन्तर्लक्ष्यो भूत्वा परमाकाशाखण्डमण्डलो भवति ॥ ४ ॥**

स्वतत्त्वे स्थितो जीवः स्वन्यूनतत्त्वं परित्यज्य स्वाधिकतत्त्ववेदनान्मुक्तो भवतीत्याह—**जीव** इति । ज्ञानकर्माक्षप्राणभूतपञ्चकानि विंशतिः अन्तःकरणचतुष्टयं चेति चतुर्विंशतितत्त्वानि । तदुपाधिको **जीवः पञ्चविंशकः**, "पञ्चविंश आत्मा भवति" इति श्रुतेः । तत्सर्वोपाधिसम्बन्धरहितः **षड्विंशक** इत्यर्थः ॥ ३ ॥ जीवन्मुक्तः कां गतिं भजतीत्याशङ्क्य जीवन्मुक्ताभिमतित्यागानन्तरं ब्रह्मैव भवतीत्याह—**एवमिति** । **भूत्वा** तदभिमतित्यागसमकालम् **भवति**, परमात्मैव भवतीत्यर्थः ॥

इति चतुर्थः खण्डः

**इति प्रथमं ब्राह्मणम्**

# द्वितीयं ब्राह्मणम्

## सर्वाधारज्योतिरात्मनःअन्तर्लक्ष्यत्वम्

अथ ह याज्ञवल्क्य आदित्यमण्डलपुरुषं पप्रच्छ। भगवन्नन्तर्लक्ष्यादिकं बहुधोक्तम्। मया तन्न ज्ञातम्। तद्ब्रूहि मह्यम् ॥ १ ॥ तदु होवाच पञ्चभूतकारणं तटित्कूटाभं तद्वच्चतुःपीठम्। तन्मध्ये [1]तत्त्वप्रकाशो भवति। सोऽतिगूढ अव्यक्तश्च ॥ २ ॥

जानन्नपि याज्ञवल्क्यो मन्दबुद्ध्यारोहाय पुनरन्तर्लक्ष्येयत्तां पृच्छतीत्याह—अथेति। किमिति? भगवन्निति। यथावत् मया ॥ १ ॥ तत्प्रश्नोत्तरं भगवानुवाच। किमिति? पञ्चेति। अन्तर्लक्ष्यात्मनः पञ्चभूतहेतुत्वात्, "आत्मन आकाशः सम्भूतः" इति श्रुतेः। तटित्कूटाभं, तेजःपुञ्जरूपत्वात्। तद्वत्तेजोवदात्मनः स्वाज्ञादिदृष्ट्यनुरोधेन तमोरजःसत्वगुणसाम्यरूपेण जाग्रदाद्यवस्थाचतुष्टयभेदेन स्वाविद्यापदस्थूलादिचतुरंशभेदेन वा चत्वारि पीठस्थानानि यस्य तत् तद्वत् चतुष्पीठं, जाग्रदादेः विश्वविराडोत्राद्यासनत्वात्। स्वाधिष्ठिताविद्यापादप्रकाशकः स्वयमेवेत्याह—तदिति। तस्य अविद्यापादस्य मध्ये तद्गतविशेषजातं ग्रसित्वा तत्त्वप्रकाशः तुर्यतुर्यज्योतिः सदा भवति। तादृशश्चेत्प्रकाशः किं न दृश्यत इत्यत आह—स इति। स्वावृत्यावृतदृष्टेः सोऽतिगूढ अव्यक्तश्च भवति ॥ २ ॥

## ज्योतिरात्मज्ञानफलम्

तज्ज्ञानप्लवाधिरूढेन ज्ञेयम्। तद्बाह्याभ्यन्तर्लक्ष्यम् ॥ ३ ॥ तन्मध्ये जगल्लीनम्। तन्नादबिन्दुकलाऽतीतमखण्डमण्डलम्। [2]सगुणनिर्गुणस्वरूपम्। तद्वेत्ता विमुक्तः ॥ ४ ॥

[1] तत्प्र—क.

[2] तत्सगु—अ, अ १, अ २, क.

तत् केन वा ज्ञातुं शक्यते इत्यत आह—**तदिति**। **ज्ञानप्लवाधिरूढेन** स्वाज्ञानसागरं तीर्त्वा तत्पारं यत् **तत्** स्वमात्रमिति **ज्ञेयम्**। तत् कीदृशमित्यत्र **तत् बाह्याभ्यन्तर्लक्ष्यं**, बाह्याभ्यन्तःकलनाऽऽरोपापवादाधिकरणतया लक्षितत्वात् ॥ ३ ॥ अत एव **तन्मध्ये जगल्लीनं**, लयाधारत्वात्। लयाधारत्वे सविशेषता स्यादित्यत आह – **तदिति**। यत् सर्वाधिकरणं **तन्नादेति**। नादादि-विशेषापह्नवसिद्धं निष्प्रतियोगिकाखण्डैकरसचिन्मात्रमित्यर्थः। सविशेषं तद्भिन्नमित्यत आह—**सगुणेति**। तद्गतविशेषाविशेषत्वं स्वाज्ञादिदृष्टिनिष्ठं न स्वनिष्ठमिति। वेदनफलमाह –**तद्वेत्तेति** ॥ ४ ॥

### शाम्भव्या तदधिगमः

**आदावग्निमण्डलम्। तदुपरि सूर्यमण्डलम्। तन्मध्ये सुधा[1]चन्द्रमण्डलम्। तन्मध्येऽखण्डब्रह्मतेजोमण्डलम्। तद्विद्युल्लेखाव-च्छुक्लभास्वरम्। तदेव शाम्भवीलक्षणम् ॥ ५ ॥**

यद्वेत्ता मुक्तो भवति तदधिगमोपायमाह— **आदाविति**। सिद्धासनमारुह्य षण्मुखीमुद्राऽभ्यासयोगिनः वह्निमण्डलादि क्रमेण दृश्यते। पर्यवसाने तदेवोन्मन्यवस्थाजनकशाम्भवी भवतीत्यर्थः ॥ ५ ॥

### पूर्णिमादृष्टिविधिः

**तद्दर्शने त्रयो दृष्टय अमा प्रतिपत्पूर्णिमा चेति। निमीलि-तदर्शनममादृष्टिः। अर्धोन्मीलितं प्रतिपत्। सर्वोन्मीलनं पूर्णिमा भवति। तासु पूर्णिमाऽभ्यासः कर्तव्यः ॥ ६ ॥ तल्लक्ष्यं नासाग्रम्। तदा तालुमूले गाढतमो दृश्यते। तदभ्यासादखण्डमण्डलाकारज्योति-र्दृश्यते। तदेव सच्चिदानन्दं ब्रह्म भवति ॥ ७ ॥**

[1] चक्रम—क.

तद्दर्शनोपायमाह—तद्दर्शन इति । कथं दृष्टेः त्रैविध्यमित्यत्र अमेति । तत्र निमीलितेति ॥ ६ ॥ दृष्टित्रयलक्ष्यं किमित्यत्र—तल्लक्ष्यमिति । नासाग्रावलोकनतः किं दृश्यते इत्यत्र—तदेति । एवं तदभ्यासीत । तद्दृष्ट्या तदेव । सच्चिदानन्दब्रह्मातिरिक्तस्य मृग्यत्वात् सहजानन्दरूपं तदेवेत्यर्थः ॥ ७ ॥

पूर्णिमादृष्टेः शाम्भवीपर्यवसानम्

एवं सहजानन्दे यदा मनो लीयते तदा शांभवी भवति । तामेव खेचरीमाहुः ॥ ८ ॥

तत्र मनोलय एव शाम्भवीत्याह—एवमिति । पर्यवसाने शाम्भवीखेचर्योः एकलक्ष्यसमाप्तत्वात् ॥ ८ ॥

मुद्रासिद्धिः तच्चिह्नानि च

तदभ्यासान्मनःस्थैर्यम् । ततो [1]बुद्धिस्थैर्यम् ॥९॥ तच्चिह्नानि । आदौ तारकवद्दृश्यते । ततो वज्रदर्पणम् । [2]ततः परिपूर्णचन्द्रमण्डलम् । [3]ततो रत्नप्रभामण्डलम् । ततो मध्याह्नार्कमण्डलम् । ततो वह्निशिखामण्डलं क्रमाद्दृश्यते ॥ १० ॥

मुद्राऽभ्यासेन किं स्यादित्यत आह—तदिति ॥ ९ ॥ तच्चिह्नानि तत्सिद्धिचिह्नानि । कानीत्यत आह—आदाविति । तारकवत् नक्षत्रवत् । परिष्कृतवज्रवत् दर्पणवच्चेत्यर्थः । तथा च श्रुतिः—

नीहारधूमार्कानलानिलानां खद्योतविद्युत्स्फटिकशशीनाम् ।
एतानि रूपाणि पुरस्सराणि ब्रह्मण्यभिव्यक्तिकराणि योगे ॥ इति ॥ १० ॥

इति प्रथमः खण्डः

[1] वायुस्थै—अ, अ १, अ २, क. [2] ततउपरि—क. ततःपू—अ, अ १.
[3] ततो नवर—क, अ २.

प्रणवस्वरूपप्रत्यक्प्रकाशानुभवः, तच्चिह्नानि च

तदा पश्चिमाभिमुखप्रकाशः स्फटिकधूम्रबिन्दुनादकला-नक्षत्रखद्योतदीपनेत्रसुवर्णनवरत्नादिप्रभा दृश्यन्ते । तदेव [1]प्रणवरूपम् ॥ १ ॥

यदैवं चिह्नानि दृष्टानि तदा प्रत्यक्प्रकाशानुभवो भवति । ततः कानि चिह्नानि दृश्यन्ते इत्यत्र—स्फटिकेति । दृश्यन्ते प्रणवानुसन्धानं कुर्वतः । बिन्दुशब्देन मनस्तत्त्वं, नादशब्देन बुद्धितत्त्वं, कलाशब्देन महत्तत्त्वं, शिष्टं स्पष्टम् । यदेतदेवं दृष्टं तत् सर्वं प्रणवरूपमित्याह—तदिति ॥ १ ॥

षण्मुख्या प्रणवाधिगमः

प्राणापानयोरैक्यं कृत्वा धृत[2]कुम्भको नासाग्रदर्शनदृढभावनया द्विकराङ्गुलिभिः षण्मुखीकरणेन [3]प्रणवादिध्वनिं निशम्य मनस्तत्र लीनं भवति ॥ २ ॥

षण्मुख्युपायपूर्वकं मनस्तत्कार्यलयाधिकरणं प्रणवार्थं ब्रह्मेत्याह—प्राणेति । हठयोगरीत्या प्राणेति । धृतकुम्भको योगी । तत्र नादावसाने ब्रह्मणि ॥ २ ॥

प्रणवविदः कर्मलेपाभावः

तस्य न कर्मलेपः । रवेरुदयास्तमययोः किल कर्म कर्तव्यम् । एवं[4]विदश्चिदादित्यस्योदयास्तमयाभावात्सर्वकर्माभावः ॥ ३ ॥

[1] प्रणवस्वरूपं—क, अ २.
[2] कुम्भके—अ २.
[3] प्रणवध्व—क, अ २.
[4] विदिचि—अ.

यस्य मनो ब्रह्मणि लीयते तस्य न कर्मलेपः, योगिनो निर्लिप्तत्वात्। कर्तव्यकर्मसु सत्सु कथं तत्र निर्लेपतेत्याशङ्क्य कर्मणामादित्योदयास्तमयनिमित्तत्वेन योग्यात्मादित्यस्योदयास्तमयाभावात्तन्निमित्तकर्माभावतो निर्लिप्तोऽयमित्युक्तिरपि गौणीत्याह—रवेरिति।

कर्मणा बध्यते जन्तुः विद्ययाऽमृतमश्नुते ।
तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥

इति श्रुतेः ॥ ३ ॥

उन्मन्यवस्थाद्वारा अमनस्कसिद्धिः

शब्दकाललयेन दिवारात्र्यतीतो भूत्वा सर्वपरिपूर्णज्ञानेनोन्मन्यवस्थावशेन ब्रह्मैक्यं भवति । उन्मन्या अमनस्कं भवति ॥ ४ ॥

एवं प्रणवनादलयतः किं स्यादित्यत्र सर्वकलनाविरळब्रह्मैक्यं भवतीत्याह—शब्देति । अभिधानाभिधेयात्मकशब्दकाललयेन—शब्दः अभिधानप्रपञ्चः, अभिधेयकलनात्मकः कालः, तयोः श्रावणज्ञानतो मिथ्यादृष्ट्या सत्ताबाध एव लयः । ततो विज्ञानं जायते । तेन ब्रह्मातिरेकेण दिवारात्र्युपलक्षितावस्थात्रयं नास्तीति निश्चयज्ञानतः तदतीतो भूत्वा ततो ब्रह्मातिरिक्तसामान्यासम्भवपरिपूर्णसम्यज्ज्ञानेन उन्मन्यवस्था जायते । उन्मनी नाम तत्त्वज्ञानम् । तेन सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति ब्रह्मैक्यं भवति । न हि पृथग्भावं गतजीवेशयोरेकत्वमित्यर्थः । उन्मन्या किं जायते इत्यत आह—उन्मन्येति । "अमनस्कं स्वरूपं तन्न तत्र कलनामलं" इति श्रुत्या ब्रह्मैव अमनस्कशब्दार्थः ॥ ४ ॥

अमनस्कपूजाप्रकारः

तस्य निश्चिन्ता ध्यानम् । सर्वकर्मनिराकरणमावाहनम् । निश्चयज्ञानमासनम् । उन्मनीभावः पाद्यम् । सदाऽमनस्कमर्घ्यम् ।

सदा दीप्ति[1]रपारामृतवृत्तिः स्नानम् । [2]सर्वत्र भावना गन्धः । दृक्स्वरूपावस्थानमक्षताः । चिदाप्तिः पुष्पम् । चिदग्निस्वरूपं धूपः । चिदादित्यस्वरूपं दीपः । परिपूर्णचन्द्रामृतस्यैकीकरणं नैवेद्यम् । निश्चलत्वं प्रदक्षिणम् । सोऽहंभावो नमस्कारः । मौनं स्तुतिः । सर्वसंतोषो विसर्जनमिति । य एवं वेद ॥ ९ ॥

यदमनस्कं ब्रह्म तस्य ध्यानाद्युपचारः कथमित्याशङ्क्य "सोऽहंभावेन पूजयेत्" इति श्रुत्यनुरोधेन तदस्मीत्यनुसन्धानमेव तत्पूजेत्याह—तस्येति । दीप्तिमद्ब्रह्मगोचराखण्डाकारवृत्तिरेव स्नानमित्यर्थः । सर्वत्र ब्रह्मेति भावना । भ्रूमध्यसहस्रारान्तरालविलसत्परिपूर्णचन्द्रमण्डलनिस्सृतामृतस्य एकीकरणं अमृतसागररूपं नैवेद्यम् । सर्वदा संतोषः । सोऽयमेवं ब्रह्मानुसन्धानतो ब्रह्मैव भवतीत्यर्थः ॥ ९ ॥

इति द्वितीयः खण्डः

---

ब्रह्मानुसन्धानेन कैवल्यप्राप्तिः

एवं त्रिपुट्यां निरस्तायां निस्तरङ्गसमुद्रवन्निवातस्थितदीपवदचलसंपूर्णभावाभावविहीनकैवल्यज्योतिर्भवति ॥ १ ॥

ब्रह्मानुसन्धानस्य त्रिपुटीकबळितत्वेन कथं योगी ब्रह्मभावमेतीत्याशङ्क्य सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमित्यनुसन्धानात्मकसम्यग्ज्ञानस्य ध्यात्रादित्रिपुटीग्रासत्वात् ब्रह्मभावापत्तिरिष्यते इत्याह—एवमिति । स्वातिरिक्तमस्ति नास्तीति भावाभावकलनासम्भवप्रबोधसिद्धं कैवल्यज्योतिः स्वमात्रमवशिष्यते विद्वानित्यर्थः ॥ १ ॥

[1] रवारा—अ. [2] सर्वात्म—अ, अ १.

ब्रह्मवित्स्वरूपम्

जाग्रन्निद्राऽन्तपरिज्ञानेन ब्रह्मविद्भवति ॥ २ ॥

तस्य ब्रह्मत्वं विना ब्रह्मवित्त्वं कुत इत्यत्र कृत्स्नब्रह्मवेदनतः ब्रह्मत्वं सिद्धमेव । अकृत्स्नब्रह्मज्ञानतो ब्रह्मवित्त्वं स्यादित्याह—जाग्रदिति ॥ २ ॥

सुषुप्तिसमाध्योः भेदः

सुषुप्तिसमाध्योर्मनोलयाविशेषेऽपि महदस्त्युभयोर्भेदस्तमसि लीनत्वान्मुक्तिहेतुत्वाभावाच्च ॥ ३ ॥ समाधौ मृदिततमोविकारस्य तदाकाराकारिताखण्डाकारवृत्त्यात्मकसाक्षिचैतन्ये प्रपञ्चलयः संपद्यते प्रपञ्चस्य मनःकल्पितत्वात् ॥ ४ ॥

सुषुप्तिसमाध्योः मनोलयसाम्यतः बन्धमुक्तिहेतुत्वं उभयमपि स्यादित्यत आह—सुषुप्तीति । तत् कथं? तमसीति ॥ ३ ॥ तत् कथं? प्रपञ्चस्येति ॥ ४ ॥

ब्रह्मविदो ब्रह्मभावः

ततो भेदाभावात् कदाचिद्बहिर्गतेऽपि मिथ्यात्व[1]भानात् । सकृद्विभातसदानन्दानुभवैकगोचरो ब्रह्मवि[2]त्तदेव भवति ॥ ५ ॥

मनस्तत्कार्याभावे तत्तदनुस्यूतचैतन्यस्य यत एकत्वं ततः बहिर्गतेऽपि मनसि तद्विकल्पितप्रपञ्चस्य मिथ्यात्वभानात् । सर्वप्रकारेण ब्रह्मवित् ब्रह्मैव भवतीत्याह—सकृदिति । सदाद्यावृतित्रयानावृतसकृदित्यादि ॥ ५ ॥

[1] हानात्—अ.    [2] त्तदैव—अ.

सङ्कल्पत्यागपूर्वकपरमात्मध्यानेन मुक्तिसिद्धिः

यस्य संकल्पनाशः स्यात्तस्य मुक्तिः करे स्थिता । तस्माद्भावा[1]भावौ परित्यज्य परमात्मध्यानेन मुक्तो भवति ॥ ६ ॥ पुनःपुनः सर्वावस्थासु ज्ञानज्ञेयौ ध्यानध्येयौ लक्ष्यालक्ष्ये दृश्यादृश्ये चोहापोहादि परित्यज्य जीवन्मुक्तो [2]भवति । य एवं वेद ॥ ७ ॥

सङ्कल्पभावाभावौ बन्धमुक्तिहेतू स्यातामित्याह—**यस्येति** । यस्मादेवं **तस्मात्** । सङ्कल्पोऽस्ति नास्तीति **तद्भावाभावौ** । निष्प्रतियोगिकपरमात्मा स्वमात्रमिति ज्ञानाविर्भूतपरमात्मध्यानेन ॥ ६ ॥ इत्थंभूतज्ञानफलमाह— **पुनरिति** । स्वावशेषधिया ब्रह्मणि ज्ञातेऽपि स्वातिरिक्तधिया यदि ज्ञानज्ञेयादिवृत्तिरुदेति तदा पुनःपुनरिति । तत्त्यागाधिकरणं ब्रह्मास्मीति **य एवं वेद** स विद्वान् जीवन्मुक्तो भवेदित्यर्थः ॥ ७ ॥

इति तृतीयः खण्डः

जाग्रदादिपञ्चावस्थाः

पञ्चावस्थाः जाग्रत्स्वप्नसुषुप्तितुरीयतुरीयातीताः ॥ १ ॥

बन्धमोक्षहेतुः कः? इत्यत आह—**पञ्चेति** । कास्ता इति?-**जाग्रदिति** । पञ्चावस्था इत्यर्थः ॥ १ ॥

प्रवृत्तिसङ्कल्पः

जाग्रति प्रवृत्तो जीवः प्रवृत्तिमार्गासक्तः पापफलनरकादि माऽस्तु शुभकर्मस्वर्गफलमस्त्विवति काङ्क्षते ॥ २ ॥

[1] भावं—उ. भावे—क. [2] भवेत्—अ २.

तत्र जीवप्रवृत्तिनिवृत्तिसङ्कल्पौ प्रतिपादयति—जाग्रनीति । शुभकर्मज-स्वर्गफलम् । एवं कांक्षन् स्वाज्ञः संसारबद्धो भवति ॥ २ ॥

निवृत्तिसङ्कल्पः

एवं स एव स्वीकृतवैराग्यात्कर्मफलजन्मालं संसारबन्धनमल-मिति विमुक्त्यभिमुखनिवृत्तिमार्गप्रवृत्तो भवति ॥ ३ ॥

एवं स्थितेष्वनेकेषु कश्चिदनन्तकोटिजन्मस्वनुष्ठितकर्मफलार्पणसन्तुष्टे-श्वरप्रसादतः निवृत्तिमार्गप्रवृत्तो भवतीत्याह—एवमिति । य एवंविधसंसार-निर्विण्णो भवति सः । इतः कर्मफलजन्म ॥ ३ ॥

संसारतरणमार्गः

स एव संसारतारणाय गुरुमाश्रित्य कामादि त्यक्त्वा विहितकर्माचरन् साधनचतुष्टयसंपन्नो हृदयकमलमध्ये भगवत्सत्ता-मात्रान्तर्लक्ष्यरूपमासाद्य सुषुप्त्यवस्थायामुक्तब्रह्मानन्दस्मृतिं लब्ध्वा एक एवाहमद्वितीयः कंचित्कालमज्ञानवृत्त्या विस्मृतजाग्रद्वास-नाऽनुफलेन तैजसोऽस्मीति तदुभयनिवृत्त्या प्राज्ञ इदानीम-स्म्यहमेक एव स्थानभेदादवस्थाभेदस्य परं तु न हि मदन्यदिति [1]जातिविवेकः शुद्धाद्वैतब्रह्माहमिति भिदागन्धं निरस्य स्वान्तर्वि-जृम्भितभानुमण्डलध्यानतदाकाराकारित[2]परंब्रह्माकारितमुक्ति[3]मार्गमा-रूढः परिपक्वो भवति ॥ ४ ॥

[1] जातवि—अ १. [2] परब्रह्माकारमु—अ, अ १. परब्रह्मका—क.
[3] मार्गारू—उ.

कामादि पराग्भावप्रवृत्तिं त्यक्त्वा । पुरा स्वाज्ञदशायां कंचित् कालम् । तैजसोऽस्मीति विश्वभावग्रासतैजसभावमेत्य तद्भोगक्षयतो यत् जाग्रत्स्वप्नकलनान्वितं तदुभयेति । जाग्रदादिस्थानभेदात् अवस्थाभेदस्य स्वाज्ञानविकल्पितस्य स्वज्ञानतः प्रळयात् यदवशिष्यते तत् परं तु ब्रह्म न हि मदन्यदिति जातिविवेकः—ब्रह्मातिरेकेण जायते इति जातिः जन्मादि न कदाऽपि मेऽस्तीति विवेकः —उदेति । ततः किमित्यत आह—शुद्धेति । ब्रह्माहमिति विज्ञानेन व्यावहारिकभिदागन्धम् । यदा विज्ञानेन भिदागन्धनिरासो भवति तदा स्वान्तःप्रत्यग्भानुमण्डलसाक्षात्कारो भवति । तद्ध्यानाभ्यासतः ब्रह्माकाराकारितो यो मुक्तिमार्गः सम्यज्ज्ञानाख्यः तमवष्टभ्य परिपक्वः कृतकृत्यो भवतीत्यर्थः ॥ ४ ॥

मनसो बन्धमोक्षहेतुत्वनिरूपणम्

संकल्पादिकं मनो बन्धहेतुः । तद्वियुक्तं मनो मोक्षाय भवति ॥ ५ ॥ तद्वांश्चक्षुरादिबाह्यप्रपञ्चोपरतो विगतप्रपञ्चगन्धः सर्वं जगदात्मत्वेन पश्यंस्त्यक्ताहंकारो ब्रह्माहमस्मीति चिन्तयन्निदं सर्वं यदयमात्मेति भावयन् कृतकृत्यो भवति ॥ ६ ॥

स्वाज्ञादिदशाविजृम्भितबन्धमोक्षहेतुः मन एवेत्याह—सङ्कल्पादिकमिति ॥ ५ ॥ एवं निस्सङ्कल्पान्तरो योगी स्वातिरिक्तास्तित्वभ्रमविरळो भूत्वा ब्रह्ममात्रं निष्प्रतियोगिकमिति वेदनसमकालं कृतकृत्यो योगी भवतीत्याह—तद्वानिति । निर्विकल्पकवृत्तिमान् ज्ञानी तद्वान् । "ब्रह्मैवेदं सर्वं" इति श्रुत्यनुरोधेन सर्वं भावयन् ज्ञानसहितभावनात् ॥ ६ ॥

इति चतुर्थः खण्डः

निर्विकल्पकसमाध्यभ्यासेन ब्रह्मविद्वरत्वप्राप्तिः

सर्वपरिपूर्णतुरीयातीतब्रह्म[1]भूतो योगी भवति । तं ब्रह्मेति स्तुवन्ति ॥ १ ॥ सर्वलोकस्तुति[2]पात्रं [3]सर्वलोकसंचारशीलः परमात्मगगने बिन्दुं निक्षिप्य शुद्धाद्वैताजाड्यसहजामनस्कयोगनिद्राऽखण्डानन्दपदानुवृत्त्या जीवन्मुक्तो भवति ॥ २ ॥

ब्रह्मभूतः भूत्वा ब्रह्ममात्रयोगी । ब्रह्मविदो य एवं विद्वान् तम् ॥ १ ॥ उक्तविशेषणविशिष्टो योगी परमात्मगगने बिन्दुं निक्षिप्य चिदाकाशे मनोविलयं कृत्वा तद्विलयाधिकरणशुद्धाद्वैतेति । मनोलयाधारशुद्धाद्वैते ब्रह्मणि जाड्यजाग्रदाद्यवस्थावैकल्यात् अजाड्यसहजामनस्कयोगनिद्रा निर्विकल्पसमाधिः तत्राखण्डानन्दतया पद्यत इत्यखण्डानन्दपदं तदनुवृत्त्या अनवरतानुसन्धानात् ब्रह्मविद्वरो भवतीत्यर्थः ॥ २ ॥

अपरिच्छिन्नानन्दरूपब्रह्मावाप्तिः

तच्चानन्दसमुद्रमग्ना योगिनो भवन्ति ॥ ३ ॥ तदपेक्षया इन्द्रादयः स्वल्पानन्दाः । एवं प्राप्तानन्दः परमयोगी भवतीत्युपनिषत् ॥ ४ ॥

यद्ब्रह्म निस्तरंगानन्दसमुद्रतया विख्यातं तच्च ॥ ३ ॥ इन्द्रादिरस्मीत्यभिमानात् परिच्छिन्नानन्दत्वं, तद्वैपरीत्येन अपरिच्छिन्नब्रह्मभावारूढतया एवम् ॥४॥

इति पञ्चमः खण्डः

इति द्वितीयं ब्राह्मणम्

[1] भूतयो—क, अ २.
[2] पात्रः—अ, अ १, अ २, क.
[3] सर्वदेश—अ, अ १, अ २, क.

# तृतीयं ब्राह्मणम्

### शाम्भवीमुद्राऽन्वितं अमनस्कम्

याज्ञवल्क्यो महामुनिर्मण्डलपुरुषं पप्रच्छ स्वामिन्नमनस्कलक्षणमुक्तमपि विस्मृतं पुनस्तल्लक्षणं ब्रूहीति ॥ १ ॥ तथेति मण्डलपुरुषोऽब्रवीत् । इदममन[1]स्कमतिरहस्यम् । यज्ज्ञानेन कृतार्थो भवति तन्नित्यं शांभवीमुद्राऽन्वितम् ॥ २ ॥

याज्ञवल्क्यो मन्दबुद्धिर्वैशद्यार्थं अमनस्कलक्षणमादित्यं पृच्छतीत्याह— **याज्ञवल्क्य** इति । किमिति? **स्वामिन्निति** ॥ १ ॥ तत्प्रश्नमंगीकृत्य तदुत्तरं भगवानाह—**तथेति** । किं तदित्यत्र वक्ष्यमाणविद्यां स्तौति— **इदमिति** । मनो यत्र विलीयते अमनीभावमेति **इदम्** । योगी **यज्ज्ञानेन** ॥ २ ॥

### परमात्मप्रत्ययलक्ष्यदर्शनेन अमनस्कप्राप्तिः

परमात्मदृष्ट्या तत्प्रत्ययलक्ष्याणि दृष्ट्वा तदनु सर्वेशमप्रमेयमजं शिवं पराकाशं निरालम्बमद्वयं ब्रह्मविष्णुरुद्रादीनामेकलक्ष्यं सर्वकारणं परं ब्रह्मात्मन्येव पश्यमानो गुहाविहरणमेवं निश्चयेन ज्ञात्वा भावाभावादिद्वन्द्वातीतः संविदितमनोन्मन्य[2]नुभवस्तदनन्तरमखिलेन्द्रियक्षयवशादमनस्कसुखब्रह्मानन्दसमुद्रे मनःप्रवाहयोगरूपनिवातस्थितदीपवदचलं परं ब्रह्म प्राप्नोति ॥ ३ ॥

शाम्भवीमुद्रोपायसिद्धं तुर्यचैतन्यं **परमात्मदृष्ट्या** । **ब्रह्मविष्णुरुद्रादीनामिति** तृतीयार्थे षष्ठी, तैः सर्वात्मैक्यधिया लक्षितत्वात् ।

[1] स्कलक्षणमति—अ. [2] न्यवस्थस्त—अ.

गुहाशब्देन बुद्धिगुहोच्यते । तत्र तद्वृत्तिभासकप्रत्यग्रूपेण विहरणात् गुहाविहरणं मनो यत्र उन्मनीभावं निस्सङ्कल्पतामेति तादृशं ब्रह्मास्मीत्यनुभवो मनोन्मन्यनुभवः । शिष्टं स्पष्टं तत्र तत्र व्याख्यातं च ॥ ३ ॥

ततः संसारनिवृत्तिः

ततः शुष्कवृक्षवन्मूर्च्छानिद्रामयनिश्वासोच्छ्वासाभावान्नष्टद्वन्द्वः सदाऽचञ्चलगात्रः परमशान्तिं स्वीकृत्य मनः प्रचारशून्यं परमात्मनि लीनं भवति ॥ ४ ॥

योगी स्वात्मानं एवं ज्ञात्वा परब्रह्म प्राप्नोतीत्युक्तम् । ततः परं योगी पूर्ववत् किं संसरतीत्याशङ्क्य संसारकलनानिर्वाहकमानसाभावात् ब्रह्मैव भवतीत्याह—तत इति । प्राणान्तःकरणसरूपविलयो मूर्च्छा निद्राऽवस्थेत्यर्थः । तन्मयः तद्विकारः मूर्च्छास्वापयोरिव निश्वासोच्छ्वासकामसङ्कल्पादिव्यापृत्यभावात् नष्टद्वन्द्वः । बाह्यान्तर्व्यापारोपरमात् परमशान्तिं स्वीकृत्य ब्रह्मभूतो विजयते दीर्घनिर्विकल्पकसमाधिपरवशो भवति । तदा तत् मनः । शून्यं सत् ॥ ४ ॥

तारकमार्गेण करणविलयद्वारा मनोनाशः

पयःस्रावानन्तरं धेनुस्तनक्षीरमिव सर्वेन्द्रियवर्गे परिनष्टे मनोनाशं भवति तदेवामनस्कम् ॥ ५ ॥ तदनु नित्यशुद्धः परमात्माऽहमेवेति तत्त्वमसीत्युपदेशेन त्वमेवाहमहमेव त्वमिति तारकयोगमार्गेणाखण्डानन्दपूर्णः कृतार्थो भवति ॥ ६ ॥

समाधिस्थयोगिनः इन्द्रियग्रामे सति कथं मनोनाश उपपद्यते इत्यत आह—पय इति । भवति इति यत् तदेव ॥ ५ ॥ यदि कदाचित्

विरूपलयमप्राप्य सरूपलयमेत्य तन्मनो बहिः निस्सरति तदा तदनु । तारकयोगमार्गेण योगी करणग्रामविरूपविलयमेव भजति । ततो योगी अखण्डेति । ब्रह्मैव भवतीत्यर्थः ॥ ६ ॥

इति प्रथमः खण्डः

---

उन्मनीप्राप्त्या योगिनो ब्रह्मात्मभवनम्

परिपूर्ण[1]परमाकाशमग्नमनाः प्राप्तोन्मन्यवस्थः संन्यस्तसर्वेन्द्रियवर्गः अनेकजन्मार्जितपुण्यपुञ्जपक्वकैवल्यफलोऽखण्डानन्दनिरस्तसर्वक्लेशकश्मलो ब्रह्माहमस्मीति कृतकृत्यो भवति ॥ १ ॥

त्वमेवाहं न भेदोऽस्ति पूर्णत्वात्परमात्मनः ।
इत्युच्चरन्त्समालिङ्ग्य शिष्यं ज्ञप्तिमनीनयत् ॥ २ ॥

कथं पुनः योगी कृतार्थो भवतीत्यत आह—परिपूर्णेति । प्राप्तोन्मन्यवस्थः संप्राप्तदीर्घनिर्विकल्पकावस्थः ॥ १ ॥ ब्राह्मणोक्तार्थं मन्त्रोऽपि अनुवदति—त्वमेवेति । मण्डलपुरुषो याज्ञवल्क्यं प्रति हे याज्ञवल्क्य परमात्मनो मम पूर्णरूपत्वात् त्वमेवाहं नावयोः भेदोऽस्ति इत्युच्चरन् स्वशिष्यं याज्ञवल्क्यं गाढं समालिङ्ग्य स्वीयां ज्ञप्तिं ब्रह्मैव अस्मीति प्रज्ञामनीनयत् ॥ २ ॥

इति द्वितीयः खण्डः

इति तृतीयं ब्राह्मणम्

---

[1] पराका—अ १, क.

# चतुर्थं ब्राह्मणम्

व्योमपञ्चकज्ञानं तत्फलं च

अथ ह याज्ञवल्क्यो मण्डलपुरुषं पप्रच्छ व्योमपञ्चकलक्षणं विस्तरेणानुब्रूहीति ॥ १ ॥ स होवाचाकाशं पराकाशं महाकाशं सूर्याकाशं परमाकाशमिति पञ्च भवन्ति ॥ २ ॥ सबाह्याभ्यन्तरमन्धकारमयमाकाशम् । सबाह्याभ्यन्तरे कालानलसदृशं पराकाशम् । सबाह्याभ्यन्तरेऽपरिमितद्युतिनिभं तत्त्वं महाकाशम् । सबाह्याभ्यन्तरे सूर्यनिभं सूर्याकाशम् । अनिर्वचनीयज्योतिः सर्वव्यापकं निरतिशयानन्दलक्षणं परमाकाशम् ॥ ३ ॥ एवमन्तर्लक्ष्यदर्शना[1]त्तद्रूपो भवति ॥ ४ ॥

पुनः याज्ञवल्क्यो मन्दबुद्ध्यनुकम्पया व्योमपञ्चकलक्षणं पृच्छतीत्याह—अथेति । किमिति? व्योमेति ॥ १ ॥ स होवाच किं तदिति—आकाशमित्यादि ॥ २ ॥ तत्र आकाशं कीदृशमित्यत्र जडभूतिरित्याह—सबाह्येति । पराकाशं किमित्यत्र जडभूतिग्रासमोहभूतिरित्याह—सबाह्येति । मोहभूतेः कृत्स्नजडभूतिव्यापकत्वेन तत्परतया च काशमानत्वात् पराकाशत्वम् । महाकाशं किमित्यत्र जडमोहभूतिग्रासलीलाभूतिरित्याह—सबाह्येति । लीलाभूतेः जडमोहभूतिभ्यां व्यापकत्वेन तदपेक्षया अपरिमितद्युतिनिभतत्त्वरूपेण काशमानत्वात् । सूर्याकाशं किमित्यत्र जडादिभूतित्रयग्रासनित्यभूतिरित्याह—सबाह्येति । नित्यविभूतेः लीलादिभूतित्रयव्यापकत्वेन सर्वावभासकसूर्यवत् काशमानत्वात् । परमाकाशस्वरूपं किमित्यत्र नित्यभूत्यादिव्यापकत्वेन अनिर्वचनीयेति । त्रिपाद्भूतेः नित्यादिभूतिचतुष्टयगतहेयांशापह्नवसिद्धत्वात्

[1] एवं तत्तल्लक्ष्यदर्शनात् तत्तद्रूपो—अ १, अ २, क. एवमन्तर्लक्ष्यमर्दनात्त—उ.

निरतिशयादिविशेषणता उपपद्यते इत्यर्थः ॥ ३ ॥ व्योमपञ्चकात्मकभूतिपञ्चक-ज्ञानफलमाह—**एवमिति** ॥ ४ ॥

राजयोगसर्वस्वक्रोडीकरणम्

**नवचक्रं षडाधारं त्रिलक्ष्यं व्योमपञ्चकम् ।**
**सम्यगेतन्न जानाति स योगी नामतो भवेत् ॥ ५ ॥**

राजयोगसर्वस्वं क्रोडीकृत्योपसंहरति—**नवचक्रमिति** । मूलाधारादि-षट्चक्रं ताल्वाकाशभ्रूचक्रभेदात् चक्रत्रयं आहत्य **नवचक्रम्** । लक्ष्यत्रयं व्योमपञ्चकं च व्याख्यातम् । **सम्यगेतत्** सर्वं यो **न जानाति** तद्याथात्म्याज्ञानात् केवलग्रन्थार्थज्ञानमात्रतो **नाममात्रयोगी** भवति । यस्तु यथावत् जानाति स योगी कृतकृत्यो भवतीत्यर्थः ॥ ५ ॥

**इति चतुर्थं ब्राह्मणम्**

---

# पञ्चमं ब्राह्मणम्

परमात्मनि मनोलयाभ्यासविधिः

**सविषयं मनो बन्धाय निर्विषयं मुक्तये भवति ॥ १ ॥ अतः [1]सर्वं चित्तगोचरम् । तदेव चित्तं निराश्रयं [2]मनोन्मन्यव-स्थापरिपक्वं लययोग्यं भवति ॥ २ ॥ तल्लयं परिपूर्णे मयि समभ्यसेत् । मनोलयकारणमहमेव ॥ ३ ॥**

[1] सर्वं जगच्चित्त—अ, अ १, अ २, क.
[2] उन्म—उ.

अनाहतस्य शब्दस्य तस्य शब्दस्य यो ध्वनिः ।
ध्वनेरन्तर्गतं ज्योतिर्ज्योतिरन्तर्गतं मनः ॥ ४ ॥
यन्मनस्त्रिजगत्सृष्टिस्थितिव्यसनकर्मकृत् ।
तन्मनो विलयं याति तद्विष्णोः परमं पदम् ॥ ५ ॥

बन्धमोक्षहेतुः किमित्याशङ्क्य विषयसंगासंगमन एवेत्याह—सविषयमिति ॥ १ ॥ यतः एवं अतः । यच्चित्तं योगाभ्यासतः शुद्धं भवति तदेव निराश्रयं विषयसंबन्धविरळम् ॥ २ ॥ लयाधिकरणं किमित्यत्र तल्लयमिति ॥ ३ ॥ यत् सर्वलयास्पदं आधेयसापेक्षाधारगतविशेषापाये तदेव निर्विशेषपरमपदमित्याह—अनाहतस्येति । अनाहतभवनादान्तर्गतप्रत्यग्ज्योतिर्विकल्पितं स्वातिरिक्तसृष्टिस्थितिनाशनिर्वर्तकं मनो यत्र विलीयते तत् लयाधिकरणं परमार्थदृष्ट्या निरधिकरणवैष्णवपदरूपेण अवशिष्यते इत्यर्थः ॥ ४–५ ॥

अमनस्काभ्यासेन ब्रह्मावस्थानसिद्धिः

तल्लयाच्छुद्धाद्वैतसिद्धिर्भेदाभावात् । एतदेव परमतत्त्वम् ॥ ६ ॥ [1]स तज्ज्ञो बालोन्मत्तपिशाचवज्जडवृत्त्या लोकमाचरेत् ॥ ७ ॥ एवममनस्काभ्यासेनैव नित्यतृप्तिरल्पमूत्रपुरीषमितभोजनदृढाङ्गाजाड्यनिद्रादृग्वायुचलनाभावब्रह्मदर्श[2]नाज्ञातसुखस्वरूपसिद्धिर्भवति ॥ ८ ॥

यन्मनो द्वैतहेतुः तल्लयात् । तदा प्रत्यक्परयोः भेदाभावात् । यत् त्वया परमतत्त्वमनुब्रूहीति पृष्टं एतदेव ॥ ६ ॥ मदुक्तप्रकारेण य एवं परमतत्त्वं जानाति स तज्ज्ञः । आचरेत् स्वमाहात्म्यख्यापनप्रयोजनाभावात् ॥ ७ ॥

[1] "स" इत्येतन्न—अ, अ १.  [2] नाज्ञा—अ, अ २, क.

एवममनस्काभ्यासतः का सिद्धिरुदेतीत्यत आह—**एवमिति** । यदा योगी निर्विकल्पकसमाध्यारूढो भवति तदा अतृप्तिहेतुवृत्त्यनुदयात् **नित्यतृप्तिः**, समाधितो व्युत्थानेऽपि केवलकुम्भकतो **मूत्रपुरीषादेः** शोषितत्वात् मूत्रादेरल्पत्वं, उदरे निरवकाशतोऽल्पभोजनं, तथाऽपि योगमहिम्ना **दृढाङ्गत्वं**, पदे पदे जाड्यनिद्राऽभावादजाड्यनिद्रो निर्विकल्पकसमाधिः । तत्र **दृग्वायुचलनाभावतो** निश्चलब्रह्मदर्शनसञ्जातं अवाङ्मानसगोचरतया **अज्ञातसुखस्वरूपब्रह्ममात्राव-स्थानरूपिणी सिद्धिः भवति** । विद्वान् तद्रूपेण अवशिष्यते इत्यर्थः ॥ ८ ॥

अमनस्कसिद्धस्य महिमा

एवं चिरसमाधिजनितब्रह्मामृतपानपरायणोऽसौ संन्यासी परमहंस अवधूतो भवति । तद्दर्शनेन सकलं जगत्पवित्रं भवति । तत्सेवापरोऽज्ञोऽपि मुक्तो भवति । तत्कुलमेकोत्तरशतं तारयति । तन्मातृपितृजायाऽपत्यवर्गं च मुक्तं भवतीत्युपनिषत् ॥ ९ ॥

यः एवंवित् स एव मुख्यावधूतः, तद्दृष्टिपथं गतं अखिलं अखिलतामेति, तत्सेवया अज्ञोऽपि मुच्यते, तत्कुलमपि कृतार्थत्वं भजतीति शास्त्रमुपसंहरति—**एवमिति** । **इत्युपनिच्छब्दः** प्रकृतोपनिषत्समाप्त्यर्थः ॥ ९ ॥

**इति पञ्चमं ब्राह्मणम्**

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
मण्डलब्राह्मणव्याख्या लिखिता ब्रह्मगोचरा ।
मण्डलब्राह्मणव्याख्याग्रन्थस्तु त्रिशतं स्मृतः ॥

**इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे अष्टचत्वारिंशत्संख्यापूरकं मण्डलब्राह्मणोपनिषद्विवरणं सम्पूर्णम्**

# महावाक्योपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

अपरोक्षानुभवोपदेशाधिकारी

अथ होवाच भगवान्ब्रह्माऽपरोक्षानुभवपरोपनिषदं व्याख्या-
स्यामः ॥ १ ॥ गुह्याद्गुह्य[1]तरमेषा न प्राकृतायोपदेष्टव्या ।
सात्त्विकायान्तर्मुखाय परिशुश्रूषवे ॥ २ ॥

यन्महावाक्यसिद्धान्तमहाविद्याकळेबरम् ।
विकळेबरकैवल्यरामचन्द्रपदं भजे ॥

इह खलु अथर्वणवेदप्रविभक्तेयं महावाक्योपनिषत् स्वातिरिक्तप्रपञ्चतदसम्भवप्रबोधसिद्धब्रह्ममात्रप्रपञ्चनपूर्वकं विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । उत्तमाधिकारिपुरुषानुपलभ्य ब्रह्मा स्वानुभवं प्रकटयतीत्याह—अथेति । किमिति? अपरोक्षेति ॥ १ ॥ आदौ वक्ष्यमाणोपनिषदो रहस्यार्थतया गोप्यतामाह—गुह्यादिति । प्राकृताय यथोक्तसाधनविकलाय । कस्मा उपदेष्टव्येत्यत्र सात्त्विकायेति । केवलसत्त्ववृत्तिमत्प्रत्यङ्मुखाय स्वाचार्यशुश्रूषाऽऽदिसाधनसम्पन्नाय उपदेष्टव्येत्यर्थः ॥ २ ॥

[1] तरैषा—अ.

विद्याऽविद्ययोः स्वरूपं कार्यं च

अथ संसृतिबन्धमोक्षयोर्विद्याऽविद्ये चक्षुषी उपसंहृत्य विज्ञायाविद्या[1]लोकाण्डस्तमोदृक् ॥ ३ ॥ तमो हि शारीरप्रपञ्चमाब्रह्मस्थावरान्तमनन्ताखिलाजाण्डभूतम् । निखिलनिगमोदितसकामकर्मव्यवहारो लोकः ॥ ४ ॥

केयमुपनिषदित्यत्र तामेव विशिनष्टि--**अथेति** । **अथ** यथोक्तसाधनसम्पत्त्यनन्तरं मुमुक्षुः स्वातिरिक्तास्तितारूपेयं संसृतिः तदस्तीति प्रवृत्तिमार्गो बन्धः तन्नास्तीति निवृत्तिमार्गो मोक्षः । तयोः **संसृतिमोक्षबन्धयोः** हेतू कावित्यत्र— विद्याचक्षुः संसारनिवर्तकतया मोक्षहेतुः । अविद्याचक्षुस्तु संसारोऽस्तीति प्रवर्तकतया बन्धहेतुः । ते उभे संसारो नास्त्यस्तीति वेदनरूपे **विद्याऽविद्ये चक्षुषी** ब्रह्मातिरिक्तवस्तुसामान्यासम्भवप्रबोधतः **उपसंहृत्य** अपह्नवं कृत्वा तदपह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति **विज्ञाय** । सम्यज्ज्ञानसमकालं विद्वान् विदेहमुक्तो भवतीति वाक्यशेषः । अविद्याचक्षुः कीदृशमित्यत्राह— **अविद्येति** । ब्रह्मातिरेकेण कालत्रयेऽपि या अविद्यमाना सेयमविद्या तया सत्यवल्लोक्यते इत्य**विद्यालोकः** स **एवाण्डः** अण्डमविद्यापदं तदेव **तमोदृष्टिः** स्वमात्रावारकत्वात् ॥ ३ ॥ किं तत् स्वावारकं तम इत्यत आह— **तमो हीति** । **तमो हि शारीरप्रपञ्चं** प्रपञ्चः स्वज्ञानतः कालतो वा शीर्यत इति शरीरं तदेव शारीरं अविद्यापदं तत्कार्यं **आब्रह्मस्थावरान्तं**, तस्य निष्प्रतियोगिकब्रह्ममात्रावरणतया प्रपञ्चनात् प्रपञ्च इति व्यवहरणात् प्रतीतिकालमात्रस्थायिवत् [2]भानाद्वा व्यावहारिकत्वं प्रातिभासिकत्वं च ज्ञेयम् । किं तद्व्यावहारिकत्वं प्रातिभासिकत्वं च अर्हतीत्यत्र--यावत् स्वाज्ञानं तावदनन्ततया अखिलाण्डवत् अनन्तकोटिब्रह्माण्डवत् भवतीत्य**नन्ताखिलाजाण्डभूतम्** । स्वाज्ञ**लोक**स्तु "वायव्यं श्वेतमालभेत भूतिकामः," "चित्रया

[1] लोकान्ध—अ २. लोकाण्डं ततोदृक्—अ. [2] भानाद्व्याव—उ १.

यजेत पशुकामः," "अपाम सोमममृता अभूम," इत्यादिनिखिलनिगमोदितसकामकर्मव्यवहारो व्यवहारवान् भवति ॥ ४ ॥

हंसविद्याऽभ्यासेन परमात्माविर्भावः

**नैषोऽन्धकारोऽयमात्मा । विद्या हि काण्डान्तरादित्यो ज्योतिर्मण्डलं ग्राह्यं नापरम् ॥ ५ ॥ असावादित्यो ब्रह्मेत्यजपयोपहितं हंसः सोऽहम् । प्राणापानाभ्यां प्रतिलोमानुलोमाभ्यां समुपलभ्यैवं सा चिरं लब्ध्वा त्रिवृदात्मनि ब्रह्मण्यभिध्यायमाने सच्चिदानन्दः परमात्माऽऽविर्भवति ॥ ६ ॥**

स्वात्माऽप्येवं संसरतीत्यत आह—**नैषोऽन्धकारोऽयमात्मा** । योऽनात्मप्रपञ्चापह्नवसिद्ध एषोऽयमात्मा नान्धकारो भवति, स्वस्य प्रत्यक्प्रकाशाभिन्नपरप्रकाशमात्रत्वात् । यावदेवं स्वात्मा नोपलभ्यते तावन्मुमुक्षुणा विद्याऽभ्यासः कर्तव्य इत्याह—**विद्या हीति** । स्वातिरिक्तगन्धासहं ब्रह्म निष्प्रतियोगिकस्वमात्रतया विद्यत इति ज्ञानविज्ञानसम्यज्ज्ञानतत्त्वज्ञानवृत्तिः **विद्या हि काण्डान्तरादित्यः** कुत्सितस्वाविद्यापदाण्डान्तर्बाह्यावभासकचिदादित्यपर्यवसन्नेति चिदादित्य इत्युक्ता । सैव चिन्मात्र**ज्योतिर्मण्डलं**, तत्प्रभापुञ्जं निर्विशेषब्रह्ममात्रगोचरतत्त्वज्ञानमेव **ग्राह्यं**, तस्य चरमसाक्षात्कारहेतुत्वात् ब्रह्ममात्रपर्यवसन्नत्वाच्च । तदेव ग्राह्यं **नापर**मपरब्रह्मगोचरं सविशेषज्ञानं, कालविळम्बफलदत्वात् । तीव्रतममुमुक्षुभिस्तन्न ग्राह्यमित्यर्थः ॥ ५ ॥ तथाविधतत्त्वज्ञानप्राप्यपरमात्माविर्भावोपायतत्त्वज्ञानाधिगमहेतुज्ञानविज्ञानादिसाधनं किमित्यत आह—**असाविति** । "स यश्चायं पुरुषे । यश्चासावादित्ये । स एकः । स य एवंवित् ।" इत्यादिश्रुत्यनुरोधेन अस्मद्दृष्टिगोचरोऽ**सावादित्यो ब्रह्म**, स्वगतविशेषांशापाये तस्यैव ब्रह्मत्वात् । सोऽयमसावादित्यः नाडीद्वारा प्रतिशरीरं समुपलभ्य उच्छ्वासनिश्वासव्यापारतः **प्रतिलोमानुलोमाभ्यां प्राणापानाभ्यां हंसः** सूर्यः **सोऽहमिति** सहजयाऽप्रयत्ननिष्पन्नयाऽ**जपयोपहितम्** ।

एवमजपाऽनुसन्धाननिष्पन्नं ज्ञानं विज्ञानं सम्यज्ज्ञानं वा चिरं चिरकालसाध्यं असौ विद्वान् लब्ध्वाऽथ व्यष्टिसमष्टितदैक्यप्रपञ्चानुवृत्तविश्वविराडोत्रादिद्वितुर्या-विकल्पभेदेन त्रिवृदात्मनि ब्रह्मणि व्यष्ट्यादिविभागमूलस्वाज्ञानतत्कार्यनामरूपा-पह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रावशेषतया अभिध्यायमाने सति अथ अनृतजडदुःखासम्भवप्रबोधसिद्धसच्चिदानन्दः परमात्मा आविर्भवति स्वमात्रमवशिष्यत इत्यर्थः ॥ ६ ॥

तत्त्वज्ञानवृत्तिस्वरूपम्

सहस्रभानुमच्छुरिता पूरित[1]त्वादलीया पारावारपूर इव । [2]नैषा समाधिः । [2]नैषा योगसिद्धिः । [2]नैषा मनोलयः । ब्रह्मैक्यं तत् ॥ ७ ॥ आदित्यवर्णं तमसस्तु पारे । सर्वाणि [3]रूपाणि विचित्य धीरः । नामानि कृत्वाऽभिवदन्यदास्ते ॥ ८ ॥ धाता पुरस्ताद्य-मुदाजहार । शक्रः प्रविद्वान्प्रदिशश्चतस्रः । तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते ॥ ९ ॥ यज्ञेन यज्ञमयजन्त देवाः । तानि धर्माणि प्रथमान्यासन् । ते ह नाकं महिमानः सचन्ते । यत्र पूर्वे साध्याः सन्ति देवाः ॥ १० ॥

इत्थंभूतब्रह्ममात्रपर्यवसन्नतत्त्वज्ञानवृत्तिस्तु युगपदुदितसहस्रोपलक्षिता-नन्तकोटिभानुमत्प्रत्यक्प्रकाशाभिन्नपरप्रकाशात्मना छुरिता स्फुरिता । पारावारपूर इव निस्तरंगसमुद्रवत् ब्रह्ममात्ररसरूपेण पूरितत्वात् पूर्णत्वात् न हि लीयते इत्यलीया ब्रह्मरूपत्वात् । नह्येषा वृत्तिः समाधिः योगसिद्धिः मनोलयो वा भवितुमर्हति । किं तु प्रत्यग्ब्रह्मैक्यं तत् ॥ ७ ॥ किं तत्प्रत्यग्ब्रह्मैक्यं इत्यत आह—आदित्येति । यत् पराक्सापेक्षप्रत्यक्परचिदैक्य-

[1] स्वानिलीयः—अ. त्वानिलीयः—अ १.
[2] सैषा—अ, अ १.
[3] भूतानि—क, अ २.

गतसविशेषापह्नवसिद्धं तत् स्वातिरिक्ततमसस्तु पारे विद्योतमानमुदयास्तमनकल-नाविरळचिदादित्यवर्णं चिदादित्यस्वरूपं सच्चिदानन्दरूपेण सर्वत्र पूर्णमवशिष्यते। धीरो विद्वान् स्वातिरिक्ताविद्यापदतत्कार्यगोचररूपाणि नामानि च विचित्य मिथ्येति विचिन्त्य अपह्नवं कृत्वा ब्रह्मातिरिक्तं न किञ्चिदस्तीति यदभिवदन्नास्ते तन्मात्रमवशिष्यते, "स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति," "य एवं निर्बीजं वेद निर्बीज एव स भवति," इति वेदनसम-कालब्रह्मभावापत्तिश्रुतेः ॥ ८ ॥ तथा च धाता ब्रह्मा पुरस्तादेव अमुमर्थ-मुदाजहार, पूर्वाग्नेयादिचतस्रो दिशः प्रदिशश्च ब्रह्मवित्त्वेन विख्यातकीर्तिः प्रविद्वान शक्रोऽपि "प्राणोऽस्मि प्रज्ञाऽऽत्मा तं मामायुरमृतमित्युपास्स्व" इति, वेदनफलं तु " विपापो विरजो ब्रह्मविद्वान् ब्रह्मैवाभिप्रैति" इति यमर्थमुदाजहार तं परमात्मानं निष्प्रतियोगिकस्वमात्रमिति एवं विद्वान् वेदनसमकालं अमृतः परमात्मेह भवति, "ज्ञानसमकालमेव मुक्तः कैवल्यं याति" इति श्रुतेः । स्वाज्ञानप्रभवोऽयं बन्धः स्वज्ञानान्मोक्षः। अयमेवाव्याहतः पन्थाः । अयनाय मोक्षाय ब्रह्मज्ञानादृते अन्यः पन्था न विद्यते ॥ ९ ॥ एवं देवाः इन्द्रादयोऽपि ब्रह्म निष्प्रतियोगिकस्वमात्रमवशिष्यते ब्रह्मातिरिक्तं न किञ्चिदस्तीति ज्ञानयज्ञेन यज्ञं विष्णवाख्यं ब्रह्मायजन्त, ब्रह्माहमस्मीति भावयन्ते जीवन्मुक्ता महीयन्ते । तेषां जीवन्मुक्तपदारूढानां देवानां तानि धर्माणि प्रथमान्यासन् ते जीवन्मुक्तधर्माः अमानित्वादयः मैत्र्यादयश्च प्रथमाः प्रधाना आसन् बभूवुः । य एवं महिमानो देवा यत्र पूर्वे साध्या देवविशेषा जीवन्मुक्ताः सन्ति तन्नाकं सच(क)न्ते तं स्वर्गं प्राप्य प्रकाशन्ते ॥ १० ॥

प्रणवहंसज्योतिर्ध्यानम्

सोऽह[1]मर्कः परं ज्योतिरर्कज्योतिरहं शिवः ।
आत्मज्योतिरहं शुक्रः सर्वज्योतिरसावहोम् ॥ ११ ॥

[1] मेकः—अ.

तत्र देवाः किं कुर्वन्तो वर्तन्ते इत्यत्र प्रत्यक्परचितोरैक्यानुसन्धानं कुर्वन्तो वर्तन्ते इत्याह—**सोऽहमिति** । यः **परंज्योतिः सोऽहं चिदर्कः** योऽर्कज्योतिरहं **शिवः** योऽहं शिवार्कज्योतिः **अहं शुक्रः** प्रत्यगभिन्नपरमात्मा **सर्वज्योतिरसावहोम्** । एवं व्यतिहारेण प्रत्यक्प्रकाशाभिन्नपरप्रकाशोऽहमों ओङ्कारार्थप्रत्यक्परविभागैक्यासहतुरीयतुरीयं ब्रह्म निष्प्रतियोगिकस्वमात्रमित्येवं ध्यायन्तोऽद्यापि महीयन्त इत्यर्थः ॥ ११ ॥

हंसज्योतिर्विद्याफलम्

एतदथर्वशिरोऽधीते । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । तत्सायं प्रातः प्रयुञ्जानः पापोऽपापो भवति । माध्यन्दिनमादित्याभिमुखोऽधीयानः पञ्चमहापातकोपपातकात्प्रमुच्यते । सर्ववेदपारायणपुण्यं लभते । श्रीमहाविष्णुसायुज्यमवाप्नोतीत्युपनिषत् ॥ १२ ॥

विद्याफलमाह—**एतदिति** । किं बहुना—**श्रीमहाविष्णुसायुज्यमवाप्नोति** । **इत्युपनिषच्छब्दः** महावाक्योपनिषत्समाप्त्यर्थः ॥ १२ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
महावाक्योपनिषदो व्याख्यानं लिखितं लघु ।
महावाक्यविवृतिस्तु द्विषष्टिः ग्रन्थतो भवेत् ॥

**इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे द्विनवतिसङ्ख्यापूरकं महावाक्योपनिषद्विवरणं सम्पूर्णम्**

---

# योगकुण्डल्युपनिषत्

सह नाववतु—इति शान्तिः

## प्रथमोऽध्यायः

वायुजयोपायत्रयम्

हेतुद्वयं हि चित्तस्य वासना च समीरणः ।
तयोर्विनष्ट एकस्मिं[1]स्तद्वावपि विनश्यतः ॥ १ ॥
तयोरादौ समीरस्य जयं कुर्यान्नरः सदा ।
मिताहारश्चासनं च शक्तिचालस्तृतीयकः ॥ २ ॥

योगकुण्डल्युपनिषद्योगसिद्धहृदासनम् ।
निर्विशेषब्रह्मतत्त्वं स्वमात्रमिति चिन्तये ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं योगकुण्डल्युपनिषत् हठलम्बिकायोगप्रकटनव्यग्रा निर्विशेषब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः संक्षेपतो विवरणमारभ्यते । आदाववान्तरवाक्यरूपेण हठयोगमवतारयति—हेतुद्वयमित्यादिना । वासनाप्राणरोधाभ्यां चित्तचलनाचलने भवतः । एतदन्यतररोधेऽपि द्वयमपि निरुद्धं भवतीत्यर्थः ॥ १ ॥ तदुपायतया मिताहारः इत्यादि ॥ २ ॥

[1] स्तेद्वा—अ १.

मिताहारः

एतेषां लक्षणं वक्ष्ये शृणु गौतम सादरम् ।
सुस्निग्धमधुराहारश्चतुर्थांश[1]शावशेषकः ॥ ३ ॥
भुज्यते शिवसंप्रीत्यै मिताहारः स उच्यते ।

तत्र सुस्निग्धेति ॥ ३–४ ॥

पद्मवज्रासन

आसनं द्विविधं प्रोक्तं पद्मं वज्रासनं तथा ॥ ४ ॥
ऊर्वोरुपरि चेद्धत्ते उभे पादतले यथा ।
पद्मासनं भवेदेतत्सर्वपापप्रणाशनम् ॥ ५ ॥
वामाङ्घ्रि[2]मूलं कन्दाधः अन्यं तदुपरि क्षिपेत् ।
समग्रीवशिरःकायो वज्रासनमितीरितम् ॥ ६ ॥

तत्र पद्मासनलक्षणं तु ऊर्वोरिति ॥ ५–६ ॥

शक्तिचालनं तत्साधनद्वयं च

कुण्डल्येव भवेच्छक्तिस्तां तु संचालयेद्बुधः ।
स्वस्थानादाभ्रुवोर्मध्यं शक्तिचालनमुच्यते ॥ ७ ॥
तत्साधने द्वयं मुख्यं सरस्वत्यास्तु चालनम् ।
प्राणरोधमथाभ्यासादृज्वी कुण्डलिनी भवेत् ॥ ८ ॥

[1] शविवर्जितः—क, अ १, अ २. [2] मूल—अ १.

किं तच्छक्तिचालनमित्यत्र कुण्डल्येव ॥ ७ ॥ तत्साधनं किमित्यत्र तत्साधने इति ॥ ८–१४ ॥

सरस्वतीचालनम्

तयोरादौ सरस्वत्याश्चालनं कथयामि ते ।
अरुन्धत्यैव कथिता पुराविद्भिः सरस्वती ॥ ९ ॥
यस्याः संचालने[1] नैव स्वयं चलति कुण्डली ।
इडायां वहति प्राणे बद्ध्वा पद्मासनं दृढम् ॥ १० ॥
द्वादशाङ्गुलदैर्घ्यं च अम्बरं चतुरङ्गुलम् ।
विस्तीर्य तेन तन्नाडीं वेष्टयित्वा ततः सुधीः ॥ ११ ॥
अङ्गुष्ठतर्जनीभ्यां तु हस्ताभ्यां धारयेद्दृढम् ।
स्वशक्त्या चालयेद्वामे दक्षिणेन पुनःपुनः ॥ १२ ॥
मुहूर्तद्वयपर्यन्तं निर्भयाच्चालयेत्सुधीः ।
ऊर्ध्वमाकर्षयेत्किंचित्सुषुम्नां कुण्डलीगता ॥ १३ ॥
तेन कुण्डलिनी तस्याः सुषुम्नाया मुखं व्रजेत् ।
जहाति तस्मात्प्राणोऽयं सुषुम्नां व्रजति स्वतः ॥ १४ ॥
तुन्दे तु ताणं कुर्याच्च कण्ठसंकोचने कृते ।
सरस्वत्याश्चालनेन वक्षः स्यादूर्ध्वगो मरुत् ॥ १५ ॥
सूर्येण रेचयेद्वायुं सरस्वत्यास्तु चालने ।
कण्ठसंकोचनं कृत्वा वक्षः स्यादूर्ध्वगो मरुत् ॥ १६ ॥

[1] चैव—क.

तस्मात्संचालयेन्नित्यं शब्दगर्भां सरस्वतीम् ।
यस्याः संचालनेनैव योगी रोगैः प्रमुच्यते ॥ १७ ॥
गुल्मं जलोदरप्लीहो ये चान्ये तुन्दमध्यगाः ।
सर्वे ते शक्तिचालेन रोगा नश्यन्ति निश्चयम् ॥ १८ ॥

मूलादिबन्धत्रयपूर्वकं सरस्वतीचालनतः वक्षः वक्षसः ऊर्ध्वगो मरुत् स्यात् ॥ १५ ॥ उक्तार्थमेतत् ॥ १६ ॥ यस्मादेवं तस्मात् ॥ १७–२४ ॥

प्राणायामभेदाः

प्राणरोधमथेदानीं प्रवक्ष्यामि समासतः ।
प्राणश्च देहगो वायुरायामः कुम्भकः स्मृतः ॥ १९ ॥
स एव द्विविधः प्रोक्तः सहितः केवलस्तथा ।
यावत्केवलसिद्धिः स्यात्तावत्सहितमभ्यसेत् ॥ २० ॥
सूर्योज्जायी शीतली च भस्त्री चैव चतुर्थिका ।
भेदैरेव समं कुम्भो यः स्यात्सहितकुम्भकः ॥ २१ ॥

पवित्रे निर्जने देशे शर्करादिविवर्जिते ।
धनुःप्रमाणपर्यन्तं शीताग्निजलवर्जिते ॥ २२ ॥
पवित्रे नात्युच्चनीचे ह्यासने सुखदे सुखे ।
बद्धपद्मासनं कृत्वा सरस्वत्यास्तु चालनम् ॥ २३ ॥

दक्षनाड्या समाकृष्य बहिष्ठं पवनं शनैः ।
यथेष्टं पूरयेद्वायुं रेचयेदिडया ततः ॥ २४ ॥
कपालशोधने वाऽपि रेचयेत्पवनं शनैः ।
चतुष्कं वातदोषं तु कृमिदोषं निहन्ति च ॥ २५ ॥
पुनः पुनरिदं कार्यं सूर्यभेदमुदाहृतम् ।

चतुष्कं चतुर्विधम् ॥ २५–४२ ॥

उज्जायीकुम्भकः

मुखं संयम्य नाडीभ्यामाकृष्य पवनं शनैः ॥ २६ ॥
यथा लगति कण्ठात्तु हृदयावधि सस्वनम् ।
पूर्ववत्कुम्भयेत्प्राणं रेचयेदिडया ततः ॥ २७ ॥
शीर्षोदिता[1]नलहरं गलश्लेष्महरं परम् ।
सर्वरोगहरं पुण्यं देहानलविवर्धनम् ॥ २८ ॥
नाडीजलोदरं धातुगतदोषविनाशनम् ।
गच्छतस्तिष्ठतः कार्यमुज्जाय्याख्यं तु कुम्भकम् ॥ २९ ॥

शीतलीकुम्भकः

जिह्वया वायुमाकृष्य पूर्ववत्कुम्भकादनु ।
शनैस्तु घ्राणरन्ध्राभ्यां रेचयेदनिलं सुधीः ॥ ३० ॥
गुल्मप्लीहादि[2]का दोषाः क्षयं पित्तं ज्वरं तृषाम् ।
विषाणि शीतली नाम कुम्भकोऽयं निहन्ति च ॥ ३१ ॥

[1] निल—क. [2] कान् दोषान्—क, अ १, अ २.

भस्त्रकुम्भकः

ततः पद्मासनं बद्ध्वा समग्रीवोदरः सुधीः ।
मुखं संयम्य यत्नेन प्राणं घ्राणेन रेचयेत् ॥ ३२ ॥
यथा लगति कण्ठात्तु कपाले सस्वनं ततः ।
वेगेन पूरयेत् किंचिद्धृत्पद्मावधि मारुतम् ॥ ३३ ॥
पुनर्विरेचयेत्तद्वत्पूरयेच्च पुनः पुनः ।
यथैव लोहकाराणां भस्त्रा वेगेन चाल्यते ॥ ३४ ॥
तथैव स्वशरीरस्थं चालयेत्पवनं शनैः ।
यथा श्रमो भवेद्देहे तथा सूर्येण [1]रेचयेत् ॥ ३५ ॥
यथोदरं भवेत्पूर्णं पवनेन तथा लघु ।
धारयन्नासिकामध्यं तर्जनीभ्यां विना दृढम् ॥ ३६ ॥
कुम्भकं पूर्ववत्कृत्वा रेचयेदिडयाऽनिलम् ।
कण्ठोत्थितानलहरं शरीराग्निविवर्धनम् ॥ ३७ ॥
कुण्डलीबोधकं पुण्यं पापघ्नं शुभदं सुखम् ।
ब्रह्मनाडीमुखान्तस्थकफाद्यर्गलनाशनम् ॥ ३८ ॥
गुणत्रयसमुद्भूतग्रन्थित्रयविभेदकम् ।
विशेषेणैव कर्तव्यं भस्त्राख्यं कुम्भकं त्विदम् ॥ ३९ ॥

बन्धत्रयविधिः

चतुर्णामपि भेदानां कुम्भके समुपस्थिते ।
बन्धत्रयमिदं कार्यं योगिभिर्वीतकल्मषैः ॥ ४० ॥

[1] पूर—क, अ १, अ २.

प्रथमो मूलबन्धस्तु द्वितीयोड्डीयणाभिधः ।
जालन्धरस्तृतीयस्तु तेषां लक्षणमुच्यते ॥ ४१-॥

### मूलबन्धः

अधोगतिमपानं वै ऊर्ध्वगं कुरुते बलात् ।
आकुञ्चनेन तं प्राहुर्मूलबन्धोऽयमुच्यते ॥ ४२ ॥
अपाने चोर्ध्वगे याते संप्राप्ते वह्निमण्डले ।
ततोऽनलशिखा दीर्घा वर्धते वायुना हता ॥ ४३ ॥
ततो यातौ वह्न्यपानौ प्राणमुष्णस्वरूपकम् ।
तेनात्यन्तप्रदीप्तेन ज्वलनो देहजस्तथा ॥ ४४ ॥
तेन कुण्डलिनी सुप्ता संतप्ता संप्रबुध्यते ।
दण्डाहतभुजङ्गीव निश्वस्य ऋजुतां व्रजेत् ॥ ४५ ॥
बिलप्रवेशतो यत्र ब्रह्मनाड्यन्तरं व्रजेत् ।
तस्मान्नित्यं मूलबन्धः कर्तव्यो योगिभिः सदा ॥ ४६ ॥

हता चलिता ॥ ४३–६२ ॥

### उड्डियाणबन्धः

कुम्भकान्ते रेचकादौ कर्तव्यस्तूड्डियाणकः ।
बन्धो येन सुषुम्नायां प्राणस्तूड्डीयते यतः ॥ ४७ ॥
तस्मादुड्डीयणाख्योऽयं योगिभिः समुदाहृतः ।
सति वज्रासने पादौ कराभ्यां धारयेद्दृढम् ॥ ४८ ॥

गुल्फदेशसमीपे च कन्दं तत्र प्रपीडयेत् ।
पश्चिमं ताणमुदरे धारयेद्धृदये गले ॥ ४९ ॥
शनैः शनैर्यदा प्राणस्तुन्दसन्धि निगच्छति ।
तुन्ददोषं विनिर्धूय कर्तव्यं सततं शनैः ॥ ५० ॥

जालन्धरबन्धः

पूरकान्ते तु कर्तव्यो बन्धो जालन्धराभिधः ।
कण्ठसंकोचरूपोऽसौ वायुमार्गनिरोधकः ॥ ५१ ॥
अधस्तात्कुञ्चनेनाशु कण्ठसंकोचने कृते ।
मध्ये पश्चिमताणेन स्यात्प्राणो ब्रह्मनाडिगः ॥ ५२ ॥
पूर्वोक्तेन क्रमेणैव सम्यगासनमास्थितः ।
चालनं तु सरस्वत्याः कृत्वा [1]प्राणं निरोधयेत् ॥ ५३ ॥

अभ्यासकुम्भकसंख्यानियमः

प्रथमे दिवसे कार्यं कुम्भकानां चतुष्टयम् ।
प्रत्येकं दशसंख्याकं द्वितीये पञ्चभिस्तथा ॥ ५४ ॥
विंशत्यलं तृतीयेऽह्नि पञ्चवृद्ध्या दिने दिने ।
कर्तव्यः कुम्भको नित्यं बन्धत्रयसमन्वितः ॥ ५५ ॥

योगाभ्यासविघ्नाः, तत्त्यागश्च

दिवा [2]सुप्तिर्निशायां तु जागरादतिमैथुनात् ।
बहुसंक्रमणं नित्यं रोधान्मूत्रपुरीषयोः ॥ ५६ ॥

[1] प्राणान्—उ १. [2] सिनि—अ १.

विषमासनदोषाश्च प्रयासप्राणचिन्तनात् ।
शीघ्रमुत्पद्यते रोगः स्तम्भयेद्यदि संयमी ॥ ५७ ॥
योगाभ्यासेन मे रोग उत्पन्न इति कथ्यते ।
ततोऽभ्यासं त्यजेदेवं प्रथमं विघ्नमुच्यते ॥ ५८ ॥
द्वितीयं संशयाख्यं च तृतीयं च प्रमत्तता ।
आलस्याख्यं चतुर्थं च निद्रारूपं तु पञ्चमम् ॥ ५९ ॥
षष्ठं तु विरतिर्भ्रान्तिः सप्तमं परिकीर्तितम् ।
विषयं चाष्टमं चैव अनाख्यं नवमं स्मृतम् ॥ ६० ॥
अलब्धिर्योगतत्त्वस्य दशमं प्रोच्यते बुधैः ।
इत्येतद्विघ्नदशकं विचारेण त्यजेद्बुधः ॥ ६१ ॥

योगाभ्यासेन कुण्डलिनीबोधः

प्राणाभ्यासस्ततः कार्यो नित्यं सत्त्वास्थया धिया ।
सुषुम्ना लीयते चित्तं न च वायुः प्रधावति ॥ ६२ ॥
शुष्के मले [1]तु योगी [2]च स्याद्गतिश्चालिता ततः ।
अधोगतिमपानं वै ऊर्ध्वगं कुरुते बलात् ॥ ६३ ॥
आकुञ्चनेन तं प्राहुर्मूलबन्धोऽयमुच्यते ।
अपानश्चोर्ध्वगो भूत्वा वह्निना सह गच्छति ॥ ६४ ॥
प्राणस्थानं ततो वह्निः प्राणापानौ च सत्वरम् ।
मिलित्वा कुण्डलीं याति प्रसुप्ता कुण्डलाकृतिः ॥ ६५ ॥

[1] चा—अ १.   [2] स्याद्गति—क.

तेनाग्निना च संतप्ता पवनेनैव चालिता ।
प्रसार्य स्वशरीरं तु सुषुम्नावदनान्तरे ॥ ६६ ॥

एवं सत्वास्थया प्राणायामं कुर्वतः चित्तादिकं न चलति । न च कदाऽपि वायुः प्रधावति । केवलकुम्भकतो नाडीगतमले शुष्के सत्यथ सुषुम्नायां प्राणगतिः चालिता स्तम्भिता यदि तदा ततोऽयं योगी स्यादित्यर्थः ॥ ६३–६४ ॥ याति यातः ॥ ६५ ॥ चालिता कुण्डलिनी ॥ ६६–६७ ॥

ग्रन्थित्रयभेदन कुण्डलिन्याः सहस्रारगमनम्

ब्रह्मग्रन्थिं ततो भित्त्वा रजोगुणसमुद्भवम् ।
सुषुम्नावदने शीघ्रं विद्युल्लेखेव संस्फुरेत् ॥ ६७ ॥
विष्णुग्रन्थिं प्रयात्युच्चैः सत्वरं हृदि संस्थिता ।
ऊर्ध्वं गच्छति यच्चास्ते रुद्रग्रन्थिं तदुद्भ[1]वम् ॥ ६८ ॥
भ्रुवोर्मध्यं तु संभिद्य याति शीतांशुमण्डलम् ।
अनाहताख्यं यच्चक्रं दलैः षोडशभिर्युतम् ॥ ६९ ॥
तत्र शीतांशुसंजातं द्रवं शोषयति स्वयम् ।
चलिते प्राणवेगेन रक्तं पित्तं [2]रविग्रहात् ॥ ७० ॥
यातेन्दुचक्रं यत्रास्ते शुद्धश्लेष्मद्रवात्मकम् ।
(तत्र सिक्तं ग्रसत्युष्णं कथं शीतस्वभावकम्) ॥ ७१ ॥
तथैव रभसा शुक्लं चन्द्ररूपं हि तप्यते ।
ऊर्ध्वं प्रवहति [3]क्षुब्धा तदैवं [4]स्रवतेतराम् ॥ ७२ ॥

[1] वाम्—उ १.
[2] रविग्र—क, अ १, अ २.
[3] क्षुब्धं—क, अ २. क्षुब्ध—अ १.
[4] भ्रमते—क, अ १, अ २.

तस्यास्वादवशाच्चित्तं बहिष्ठं विषमेषु यत् ।
तदेव परमं भुक्त्वा स्वस्थस्यात्मरतो युवा ॥ ७३ ॥

तदुद्भवं आज्ञाचक्रमूलोद्भवं रुद्रग्रन्थिम ॥ ६८ ॥ दलैः षोडशभिर्युतम्—प्रधानदळान्यष्टौ, तथा उपदळानि, आहत्य षोडश ॥ ६९ ॥ यदा प्राणो हृदये शीतांशुजं द्रवं शोषयति तदा तत्रत्यरक्तादौ प्राणवेगेन चलिते सति रविः रक्तपित्तादिकं ग्रहान् ग्रसेत् शोषयेदित्यर्थः ॥ ७० ॥ ततः प्राणे यातेन्दुचक्रमिति ॥ ७१ ॥ स्रवंततरं अमृतधारेत्यर्थः ॥ ७२ ॥ अस्या अमृतधारायाः आस्वादवशात् यच्चित्तं विषमेषु विषयेषु उदासीनतया बहिष्ठं बहिर्भूतं भवति तद्वानात्मरतो मुनिः तदेव परमं अमृताख्यं हविर्भुक्त्वा स्वस्थः स्यात् । स्वस्थस्यात्मरत इत्यत्र [1]विसर्गतकाराकाराणां लोपः ॥ ७३ ॥

प्राणादिविलयः, विलीनानां बहिःप्रसरश्च

प्रकृत्यष्टकरूपं च स्थानं गच्छति कुण्डली ।
क्रोडीकृत्य शिवं याति क्रोडीकृत्य विलीयते ॥ ७४ ॥
इत्यधोर्ध्वरजः [2]शुक्ले शिवे तदनु मारुतः ।
प्राणापानौ समौ याति [3]सह जातौ तथैव च ॥ ७५ ॥
भूतेऽल्पे [4]च मनोल्पे वा वाचके त्वतिवर्धते ।
[5]धावयत्यखिला वाता अग्निमूषाहिरण्यवत् ॥ ७६ ॥

[1] तकारलोपः—उ १.
[2] शुक्ले—क, अ १, अ २.
[3] सदा जातौ—सर्वकोशेषु. "सहजातौ" इति पाठस्तु व्याख्यानुसारी.
[4] चमनल्पेत्वे वा च—क, अ १, अ २. चमनल्पेत्व—उ १. चाप्यनल्पेवा वा च—मु.
[5] धावयन्त्य—उ.

ततः किमित्यत आह—**प्रकृतीति** ।

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥

इति स्मृत्यनुरोधेन हित्वा स्वात्तप्रकृत्यष्टकरूपम् । सहस्रारस्थानम् । दृक्मनः-प्राणादिकं **क्रोडीकृत्य** ॥ ७४ ॥ यदा कुण्डलिनी सर्वं क्रोडीकृत्य सहास्रारे विलीयते [1]**इत्यथोर्ध्वेरजःशुक्ले शिवे** इत्यत्र कुण्डलिनीविलयादथोर्ध्वक्षणं सौरं प्राकृतं जीवतत्त्वं रजश्च चान्द्रं ऐश्वरं शुक्लं च रजःशुक्ले सहस्रारालङ्कारे स्वातिरिक्ताशिवप्रासे शिवे परमात्मनि विलीयेते **तदनु** तदुत्तरक्षणं **मारुतोऽपि** विलीयते । सहजप्राणादेः कथं विलय इत्यत्र यथा अहोरात्रे सहजे सन्ध्ययोः समे भवतः **तथैव सहजातौ** सहजौ तुर्यस्वरूपावस्थानलक्षणनिर्विकल्पकाव-स्थायां प्राणापानौ **समौ** ऊर्ध्वाधोगतिविरळौ निर्व्यापारतां **याति** यातः । अयमेव प्राणादिविलय इत्यर्थः ॥ ७५ ॥ एवं विलीनप्राणमनोवागादिः कथमन्तर्बाह्ये प्रसरतीत्यत्र बाह्ये स्वातिरेकेण घटाद्यत्यल्पं भवतीति भूतमल्पं तस्मिन् **भूते अल्पे च स्मृते प्राणः प्रसरति** । स्वातिरेकेण अल्पं **वा** किञ्चिदस्तीति यन्मनुते तन्मनल्पं मनोल्पं तस्मिन् **मनोल्पे सङ्कल्पिते** सङ्कल्पविकल्पात्मकं मनः प्रसरति । स्वातिरेकेण **वाचके तु स्मृते** तदा वाग्वृत्तिः प्रसरति । एवं प्राणमनोवागादिरुत्पन्नः सन् **वर्धते** । एवं प्राणादिनिष्पत्तौ सत्यां मूषानिषिक्तद्रुतसुवर्णवदापादमस्तकमखिलाः प्राणादिवाता **धावयति** धावन्ति आपादमस्तकं व्याप्य वर्तन्ते इत्यर्थः ॥ ७६ ॥

समाधौ सर्वस्य चिन्मात्रत्वानुभवः

आधिभौतिकदेहं तु आधिदैविकविग्रहे ।
देहोऽतिविमलं याति चातिवाहिकतामियात् ॥ ७७ ॥

[1] इत्यत्र यत्तथो—उ.

जाड्यभावविनिर्मुक्तममलं चिन्मयात्मकम् ।
तस्यातिवाहिकं मुख्यं सर्वेषां तु मदात्मकम् ॥ ७८ ॥
जायाभवविनिर्मुक्तिः कालरूपस्य विभ्रमः ।
इति [1]तं स्वस्वरूपा हि मती रज्जुभुजङ्गवत् ॥ ७९ ॥
मृषैवोदेति सकलं मृषैव प्रविलीयते ।
रौप्यबुद्धिः शुक्तिकायां स्त्रीपुंसोर्भ्रमतो यथा ॥ ८० ॥
पिण्डब्रह्माण्डयोरैक्यं लिङ्गसूत्रात्मनोरपि ।
स्वापाव्याकृतयोरैक्यं स्वप्रकाशचिदात्मनोः ॥ ८१ ॥

पुनः समाहितावस्थायां एतत् सर्वं चिन्मात्रपर्यवसन्नं भवतीत्याह—**आधिभौतिकेति** । स्वाज्ञविकल्पितभौतिकदेहमधिकृत्य भवतीत्याधिभौतिकदेहः तं तु **आधिभौतिकदेहं** आत्मानं प्रत्यञ्चं देवमधिकृत्य भवतीत्याधिदैविकविग्रहः तस्मिन् **आधिदैविकविग्रहे** प्रत्यगभिन्नपरमात्मनि तन्मात्रतया प्रविलापयेत् । ततः पूर्वाधिष्ठितदेहः मलवद्देहादिभावं विहाय विमलब्रह्मभानमेव **याति** स्वाज्ञविकल्पितप्रपञ्चाधारतया समन्ताद्वहतीत्यातिवाहिकतां ब्रह्मतामियादित्यर्थः ॥ ७७ ॥ यत् स्वातिरिक्तजडशरीरादिकमनुभूतं तत् सर्वं **जाड्यभाव-विनिर्मुक्तममलं चिन्मयात्मकम्** । यत् **सर्वेषां** देहादीनां अधिष्ठेयानां आरोपापवादाधिष्ठानं **मदात्मकं** अस्मत्प्रत्ययालम्बनभूतप्रत्यगभिन्नं ब्रह्म **तस्यातिवाहिक**त्वमेव **मुख्यं** वास्तवमित्यर्थः ॥ ७८ ॥ यदि ते पराक्सापेक्ष-प्रत्यगभिन्ने ब्रह्मणि सविशेषधीः जायते तदा जनित्वा भवतीति **तज्जायाभावः** सविशेषत्वस्फूर्तिः । तदपह्नवसिद्धिः तद्विनिर्मुक्तिः । एवं सविशेषापह्नवोक्तिरपि **कालरूपस्य** ब्रह्मणो ज्ञानविभ्रमः सर्वापह्नवसिद्धब्रह्ममात्रस्य निष्प्रतियोगिकत्वेन स्वातिरिक्तमस्ति नास्तीति विभ्रमापह्नवोक्तिरप्यपह्नवतां अर्हतीति भावः ।

[1] तुस्व . . . . मति—उ १.

इत्येवं योऽवशिष्यते तं स्वावशेषधिया विदित्वा वेदनसमकालं या हि स्वस्वरूपावस्थितिः, तन्मतिरेव मुक्तिः ॥ ७९ ॥ तदतिरेकेण स्वाज्ञदशायां यद्यदनुभूतं रज्जुभुजङ्गवत्, शुक्तिकायां **यथा अनुभूतं** इदं रजतमिति विपरीतभ्रमतः स्त्रीपुंसोः गौप्यबुद्धिवच्च, **मृषैवोदेति सकलं मृषैव प्रविलीयते** । वस्तुतः स्वाज्ञादिद्वष्टिमोहे सत्यसति ब्रह्ममात्रं निष्प्रतियोगिकमवशिष्यत इति फलितोऽर्थः ॥ ८० ॥ कथं पुनः ब्रह्ममात्रमवशिष्यत इत्युक्तम् ? व्यष्टिसमष्टिविभागसिद्धविश्वादिजीवत्रयविराडादीश्वरत्रयभेदसत्त्वादित्याशङ्क्य, यदि सर्वत्र भेदं मन्यसे तदा व्यष्टिसमष्टिप्रपञ्चतदारोपापवादाधारविश्वादितुरीयान्तस्य विराडादितुर्यान्तेनैक्यं विचिन्तयेदित्याह—**पिण्डेति** । **ऐक्यं** विश्वविराडैक्योपलक्षणार्थम् । भेदसापेक्षतदैक्यगतसविशेषताऽपाये ब्रह्म निष्प्रतियोगिकस्वमात्रमवशिष्यते इत्यर्थः ॥ ८१ ॥

समाधियोगः

शक्तिः कुण्डलिनी नाम बिसतन्तुनिभा शुभा ।
मूलकन्दं फणाग्रेण दष्ट्वा कमलकन्दवत् ॥ ८२ ॥
मुखेन पुच्छं संगृह्य ब्रह्मरन्ध्रसमन्विता ।
पद्मासनगतः स्वस्थो गुदमाकुञ्च्य साधकः ॥ ८३ ॥
वायुमूर्ध्वगतं कुर्वन् कुम्भकाविष्टमानसः ।
वाय्वाघातवशादग्निः स्वाधिष्ठानगतो ज्वलन् ॥ ८४ ॥
ज्वलनाघातपवना[1]घातोरुन्निद्रितोऽहिराट् ।
ब्रह्मग्रन्थिं ततो भित्त्वा विष्णुग्रन्थिं भिनत्त्यतः ॥ ८५ ॥

[1] घातोरु—बहुकोशेषु.

रुद्रग्रन्थिं च भित्त्वैव कमलानि भिनत्ति षट् ।
सहस्रकमले शक्तिः शिवेन सह मोदते ॥ ८६ ॥
सैवावस्था परा ज्ञेया सैव निर्वृतिकारणा ॥ ८७ ॥

इति ॥

इत्थंभूतज्ञानोपायतया समाधियोगमाचष्टे—**शक्तिरिति** ॥ ८२–८४ ॥ घातेनेत्यत्र घातोरिति छान्दसः ॥ ८५ ॥ षट्चक्रालङ्कारग्रन्थित्रयभेदनानन्तरं इयं कुण्डलिनीशक्तिः **शिवेन सह** सहस्रारे **मोदते** ॥ ८६ ॥ स्वविकल्पित-भेदप्रपञ्चं ग्रसित्वा निर्विशेषब्रह्मविद्यारूपमासाद्य स्वयमपि निष्प्रतियोगिकब्रह्ममात्र-पर्यवसन्नेति याऽवस्थोक्ता **सैवावस्था** परा विदेहमुक्तिरिति **ज्ञेया** । **सैव निर्वृतिकारणा,** तस्याः परमानन्दाविर्भावहेतुत्वात् । इतिशब्दो हठयोगसमाप्त्यर्थोऽध्यायपरिसमाप्त्यर्थश्च ॥ ८७ ॥

इति प्रथमोऽध्यायः

# द्वितीयोऽध्यायः

## खेचरीविद्या

अथाहं संप्रवक्ष्यामि विद्यां खेचरिसंज्ञिकाम् ।
यथा [1]विज्ञातवानस्य लोकेऽस्मिन्नजरामरः ॥ १ ॥
मृत्युव्याधिजराग्रस्तो दृष्ट्वा विद्यामिमां मुने ।
बुद्धिं दृढतरां कृत्वा खेचरीं तु समभ्यसेत् ॥ २ ॥

[1] विज्ञान—अ २.

जरामृत्यु[1]गदघ्नो यः खेचरीं वेत्ति भूतले ।
ग्रन्थतश्चार्थतश्चैव तदभ्यासप्रयोगतः ॥ ३ ॥
तं मुने सर्वभावेन गुरुं मत्वा समाश्रयेत् ।
दुर्लभा खेचरी विद्या तदभ्यासोऽपि दुर्लभः ॥ ४ ॥
अभ्यासं मेलनं चैव युगपन्नैव सिध्यति ।
अभ्यासमात्रनिरता न विन्दन्ते ह मेलनम् ॥ ५ ॥
अभ्यासं लभते ब्रह्मन् जन्मजन्मान्तरे क्वचित् ।
मेलनं जन्मनां तत्तु शतान्तेऽपि न लभ्यते ॥ ६ ॥
अभ्यासं बहुजन्मान्ते कृत्वा तद्भावसाधितम् ।
मेलनं लभते कश्चिद्योगी जन्मान्तरे क्वचित् ॥ ७ ॥
यदा तु मेलनं योगी लभते गुरुवक्त्रतः ।
तदा तत्सिद्धिमाप्नोति [2]यदुक्ता शास्त्रसंततौ ॥ ८ ॥
ग्रन्थतश्चार्थतश्चैव मेलनं लभते यदा ।
तदा शिवत्वमाप्नोति निर्मुक्तः सर्वसंसृतेः ॥ ९ ॥
शास्त्रं विनाऽपि संबोद्धुं गुरवोऽपि न शक्नुयुः ।
तस्मात्सुदुर्लभतरं [3]लभ्यं शास्त्रमिदं मुने ॥ १० ॥
यावन्न लभ्यते शास्त्रं तावद्गां पर्यटेद्यतिः ।
यदा संलभ्यते शास्त्रं तदा सिद्धिः करे स्थिता ॥ ११ ॥

[1] गदा—उ, उ १. [2] यदुक्तं—उ, उ १. [3] लभ्य—उ, उ १.

न शास्त्रेण विना सिद्धिर्दृष्टा चैव जगत्त्रये ।
तस्मान्मेलनदातारं शास्त्रदातारमच्युतम् ॥ १२ ॥
तदभ्यासप्रदातारं शिवं मत्वा समाश्रयेत् ।
लब्ध्वा शास्त्रमिदं [1]मह्यमन्येषां न प्रकाशयेत् ॥ १३ ॥
तस्मात्सर्वप्रयत्नेन गोपनीयं विजानता ।
यत्रास्ते च गुरुर्ब्रह्मन्दिव्ययोगप्रदायकः ॥ १४ ॥
तत्र गत्वा च [2]तेनोक्तविद्यां संगृह्य खेचरीम् ।
[3]तेनोक्तः सम्यगभ्यासं कुर्यादादावतन्द्रितः ॥ १५ ॥
अनया विद्यया योगी खेचरीसिद्धिभाग्भवेत् ।
खेचर्या खेचरीं युञ्जन् खेचरीबीजपूरया ॥ १६ ॥
खेचराधिपतिर्भूत्वा खेचरेषु सदा वसेत् ।

ज्ञानसहितहठयोगसर्वस्वं प्रतिपाद्य सप्रपञ्चं लम्बिकायोगमाचष्टे—**अथेति** । **यथा** यथावत् ॥ १–१२ ॥ **मह्यं** मत्तः ॥ १३–१५ ॥ ह्रीमित्यादिखेचरीबीजपूरया

अन्तर्लक्ष्यविलीनचित्तपवनो योगी सदा वर्तते
दृष्ट्या निश्चलतारया बहिरधः पश्यन्नपश्यन्नपि ।
मुद्रेयं खलु खेचरी भवति सा लक्ष्यैकताना शिवा
शून्याशून्यविवर्जितं स्फुरति सा तत्त्वं पदं वैष्णवि ॥

इति श्रुतिसिद्धखेचरीमुद्रया खेचरीयोगं युञ्जन् यः कालं नयति ॥ १६ ॥ स योगी देहान्ते **खेचराधिपतिः** सूर्यो भूत्वा **खेचरेषु** खेचरणीयलोकेषु **सदा वसेत्** ॥

[1] गुह्य—क  [2] तेनोक्तं—क, अ १, अ २, उ १.  [3] तेनोक्त—अ १.

खेचरीमन्त्रराजोद्धारः

खेचरावसथं वह्निमम्बुमण्डलभूषितम् ॥ १७ ॥
आख्यातं खेचरीबीजं तेन योगः प्रसिध्यति ।
सोमांशनवकं वर्णं प्रतिलोमेन चोद्धरेत् ॥ १८ ॥
तस्मात् त्र्यं[1]शकमाख्यातमक्षरं चन्द्ररूपकम् ।
तस्मादप्यष्टमं वर्णं विलोमेनापरं मुने ॥ १९ ॥
[2]तथा तत्परमं विद्धि तदादिरपि पञ्चमा ।
इन्दोश्च बहुभिन्नं च कूटोऽयं परिकीर्तितः ॥ २० ॥

मेळनमन्त्रराजमुद्धरति—खेचरेति । खवाचकतया चरतीति **खेचरः** हकारः **आवसथमिति** धारणाशक्तिरीकारः रेति **वह्निः अम्बुमण्डलमिति** बिन्दुः । एतत् सर्वं मिळित्वा **भूषितं** ह्रीमिति ॥ १७ ॥ **खेचरीबीजं आख्यातम्** । **तेनैव** लम्बिकायोगः **प्रसिध्यति** । शिष्टबीजषट्कमप्यम्बुमण्डल-भूषितमिति ज्ञेयम् । **सोमांशः** सकारः चन्द्रबीजं **तत्प्रतिलोमेन तन्नवकं वर्णमुद्धरेत्** भमिति ॥ १८ ॥ **तस्मात्** भकारादनुलोमेन **त्रित्र्यंशकं** चन्द्रबीज-**माख्यातं** समिति । **तस्मात्** सकारात् **विलोमेन अपरमष्टमं वर्णमुद्धरेत्** [3]ममिति ॥ १९ ॥ तथा मकारात् विलोमेन अपरं पञ्चमवर्णं[4]पमिति **विद्धि** । पुनरिन्दोश्च बीजं समित्युद्धरेत् । बहुभिः ककारषकारबिन्दुभिः युक्तोऽयं **कूटः** क्षमिति । आहृत्य बीजानि सप्त—ह्रीं, भं, सं, मं, पं, सं, क्षं, इति ॥ २०–२१ ॥

मन्त्रजपात् खेचरीसिद्धिः

गुरूपदेशलभ्यं च सर्वयोगप्रसिद्धिदम् ।
*यत्तस्य देहजा माया निरुद्धकरणाश्रया ॥ २१ ॥*

[1] त्रक—क. [2] तदा—क, अ १, अ २, उ १. [3] ष—उ १. [4] ष—उ १.

स्वप्नेऽपि न लभेत्तस्य नित्यं द्वादशजप्यतः ।
• य इमां पञ्च लक्षाणि जपेदपि सुयन्त्रितः ॥ २२ ॥
तस्य श्रीखेचरीसिद्धिः स्वयमेव प्रवर्तते ।
नश्यन्ति सर्वविघ्नानि प्रसीदन्ति च देवताः ॥ २३ ॥
वलीपलितनाशश्च भविष्यति न संशयः ।
एवं लब्ध्वा महाविद्यामभ्यासं कारयेत्ततः ॥ २४ ॥
अन्यथा क्लिश्यते [1]ब्रह्मन्न सिद्धिः खेचरीपथे ।
यदभ्यासविधौ विद्यां न लभेद्यः सुधामयीम् ॥ २५ ॥
ततः संमेलकादौ च लब्ध्वा विद्यां सदा जपेत् ।
नान्यथा रहितो ब्रह्मन्न किंचित्सिद्धिभाग्भवेत् ॥ २६ ॥
[2]यदिदं लभ्यते शास्त्रं तदा विद्यां समाश्रयेत् ।
ततस्तदोदितां सिद्धिमाशु तां लभते मुनिः ॥ २७ ॥

नित्यं द्वादशवारं यो जपति स मायातीतो भवतीत्यर्थः ॥ २२–२७ ॥

खेचर्यभ्यासक्रमः

तालुमूलं समुत्कृष्य सप्तवासरमात्मवित् ।
स्वगुरूक्तप्रकारेण मलं सर्वं विशोधयेत् ॥ २८ ॥
स्नुहिपत्रनिभं शस्त्रं सुतीक्ष्णं स्निग्धनिर्मलम् ।
समादाय ततस्तेन लोममात्रं समुच्छिनेत् ॥ २९ ॥

[1] ब्रह्म न—क. [2] यदि तं—अ १.

हित्वा सैन्धवपथ्याभ्यां चूर्णिताभ्यां प्रकर्षयेत् ।
पुनः सप्तदिने प्राप्ते रोममात्रं समुच्छिनेत् ॥ ३० ॥
एवं क्रमेण षाण्मासं नित्योद्युक्तः समाचरेत् ।
षाण्मासाद्रसनामूलं सिराबन्धं प्रणश्यति ॥ ३१ ॥
अथ वागीश्वरीधाम शिरो वस्त्रेण वेष्टयेत् ।
शनैरुत्कर्षयेद्योगी कालवेलाविधानवित् ॥ ३२ ॥
पुनः षाण्मासमात्रेण नित्यं संघर्षणान्मुने ।
भ्रूमध्यावधि चाप्येति तिर्यक्कर्णबिलावधि ॥ ३३ ॥
अधश्च चुबुकं मूलं प्रयाति क्रम[1]चारिता ।
पुनः संवत्सराणां तु तृतीयादेव लीलया ॥ ३४ ॥
केशान्तमूर्ध्वं क्रमति तिर्यक्शाखाऽवधिर्मुने ।
अधस्तात्कण्ठकूपान्तं पुनर्वर्षत्रयेण तु ॥ ३५ ॥
ब्रह्मरन्ध्रं समावृत्य तिष्ठेदेव न संशयः ।
तिर्यक् चूलितलं याति अधः कण्ठबिलावधिः ॥ ३६ ॥
शनैः शनैर्मस्तकाच्च महावज्रकवाटभित् ।
पूर्वं बीजयुता विद्या ह्याख्याता याति दुर्लभाम् ॥ ३७ ॥
तस्याः षडङ्गं कुर्वीत तया षट्स्वरभिन्नया ।
कुर्यादेवं करन्यासं सर्वसिद्ध्यादिहेतवे ॥ ३८ ॥
शनैरेवं प्रकर्तव्यमभ्यासं युगपन्न हि ।
युगपद्वर्तते यस्य शरीरं विलयं व्रजेत् ॥ ३९ ॥

[1] चारितां—क. चारितः—अ १, अ २.

तस्माच्छनैः शनैः कार्यमभ्यासं मुनिपुङ्गव ।
यदा च बाह्यमार्गेण जिह्वा ब्रह्मबिलं व्रजेत् ॥ ४० ॥
तदा ब्रह्मार्गलं ब्रह्मन्दुर्भेद्यं त्रिदशैरपि ।
अङ्गुल्यग्रेण संघृष्य जिह्वामात्रं निवेशयेत् ॥ ४१ ॥
एवं वर्षत्रयं कृत्वा ब्रह्मद्वारं [1]प्रविश्यति ।
ब्रह्मद्वारे प्रविष्टे तु सम्यङ्मथनमाचरेत् ॥ ४२ ॥
मथनेन विना केचित्साधयन्ति विपश्चितः ।
खेचरीमन्त्रसिद्धस्य सिध्यते मथनं विना ॥ ४३ ॥
जपं च मथनं चैव कृत्वा शीघ्रं फलं लभेत् ।
स्वर्णजां रौप्यजां वाऽपि लोहजां वा शलाकिकाम् ॥ ४४ ॥
नियोज्य नासिकारन्ध्रं दुग्धसिक्तेन तन्तुना ।
[2]प्राणान्निरुध्य हृदये सुखमासनमात्मनः ॥ ४५ ॥
शनैः सुमथनं कुर्याद्भ्रूमध्ये न्यस्तचक्षुषि ।
[3]षाण्मासान्मथनावस्थाभावेनैव प्रजायते ॥ ४६ ॥
यथा सुषुप्तिर्बालानां यथा भावस्तथा भवेत् ।
न सदा मथनं शस्तं मासे मासे समाचरेत् ॥ ४७ ॥
सदा रसनया योगी मार्गं न परिसंक्रमेत् ।
एवं द्वादशवर्षान्ते संसिद्धिर्भवति [4]ध्रुवा ॥ ४८ ॥

[1] प्रप—क.
[2] प्राणं नि—क, अ १, अ २.
[3] षाण्मासं म—क, अ २.
[4] ध्रुवं—अ २.

शरीरे सकलं विश्वं पश्यत्यात्माविभेदतः ।
ब्रह्माण्डोऽयं महामार्गो राजदन्तोर्ध्वकुण्डली ॥ ४९ ॥

इति ॥

अभ्यासक्रममाह—ताल्विति ॥ २८–२९ ॥ कार्यान्तरं हित्वेति । हरीतकी पथ्याशब्दार्थः ॥ ३०–३१ ॥ वागीश्वरीधामशिरः जिह्वाग्रम् ॥ ३२–३४ ॥ तिर्यक्च्छाखावधिः शिखामूलमित्यर्थः ॥ ३५—३६ ॥ दुर्लभां दुर्लभताम् ॥ ३७ ॥ षट्स्वरभिन्नया ह्रां ह्रीं इत्यादिनेत्यर्थः ॥ ३८–४० ॥ ब्रह्मार्गळं अन्तर्जिह्वासुषिरम् ॥ ४१–४७ ॥ एवं गुरुमुखात् लम्बिकाविद्यां अभ्यस्य द्वादशवर्षानुष्ठानात् लम्बिकायोगसिद्धिः भवति ॥ ४८ ॥ शरीरे सकलं विश्वं पश्यतीत्यनेन विराट्सूत्रबीजतुर्यरूपं क्रमेण प्रतिपद्यते । यत्र सहस्रारे राजदन्तोर्ध्वकुण्डली जिह्वा प्रसरति सोऽयं मार्गः ब्रह्माण्डनिभो भवति, सुपथत्वात् । इतिशब्दः लम्बिकायोगसमाप्त्यर्थः, द्वितीयाध्यायसमाप्त्यर्थश्च भवति ॥ ४९ ॥

इति द्वितीयोऽध्यायः

# तृतीयोऽध्यायः

मेळनमन्त्रः

ह्रीं [1]भं सं [2]मं [3]पं सं क्षम् ।

मेळनमनुं कण्ठतः पठति—ह्रीमिति ।

[1] हं—अ २. [2] पं—उ १.
[3] फं—उ १. वं—अ १. यं—अ २.

अमावास्याप्रतिपत्पूर्णिमाभेदेन दृष्टिभेदः

पद्मज उवाच—

अमावास्या च प्रतिपत्पौर्णमासी च शंकर ।
अस्याः का वर्ण्यते संज्ञा एतदाख्याहि तत्त्वतः ॥ १ ॥
प्रतिपद्दिनतोऽकाले अमा[1]वास्या तथैव च ।
पौर्णमास्यां स्थिरीकुर्यात्स च पन्था हि नान्यथा ॥ २ ॥

दृष्टित्रयतल्लक्ष्ययाथार्थ्यबुभुत्सया शिवं प्रति ब्रह्मा पृच्छतीत्याह—**पद्मज** इति ॥ १ ॥ प्रश्नोत्तरं भगवानाह—**प्रतिपदिति** । बाह्यमध्यान्तर्लक्ष्यदर्शनकरणं मनस्सहकृतदृष्टिः । अमादिभेदेन सेयं त्रिधा भिद्यते । तत्र गाढनिर्मीलनदृष्टिरमा, अर्धोन्मीलनदृष्टिः प्रतिपत्, सर्वोन्मीलनदृष्टिः पूर्णिमा भवति । लक्ष्यदर्शने पूर्णिमादृष्टिः प्रशस्यते । अभ्यासकाले यदि नेत्रश्रमो भवति तदा **प्रतिपद्दिनतोऽकाले** प्रतिपद्दृष्ट्याऽवलोकयेत् अमादृष्ट्या वा । यदा जितश्रमो भवति तदा पूर्णिमादृष्टिमेव **स्थिरीकुर्यात्**,

कदाचित् पूर्णिमादृष्ट्या कदाचित् प्रतिपद्दृशा ।
अमादृष्ट्या कदाचिच्च निर्विघ्नेनावलोकयेत् ॥

इति ब्रह्मप्रणवोक्तेः । प्राणापाना[णायामा]द्यपेक्षया अयमेव पन्थाः वरीयानित्यर्थः ॥ २ ॥

पूर्णिमादृष्टिविधिः

कामेन विषयाकाङ्क्षी विषयात्काममोहितः ।
द्वावेव संत्यजेन्नित्यं निरञ्जनमुपाश्रयेत् ॥ ३ ॥

[1] वास्यां—अ १.

अपरं संत्यजेत्सर्वं यदिच्छेदात्मनो हितम् ।
शक्तिमध्ये मनः कृत्वा मनः शक्तेश्च मध्यगम् ॥ ४ ॥
मनसा मन आलोक्य तत्त्यजेत्परमं पदम् ।
मन एव हि बिन्दुश्च उत्पत्तिस्थितिकारणम् ॥ ५ ॥
मनसोत्पद्यते बिन्दुर्यथा क्षीरं घृतात्मकम् ।
न च बन्धनमध्यस्थं तद्वै [1]कारणमा[2]नसम् ॥ ६ ॥
चन्द्रार्कमध्यमा शक्तिर्यत्रस्था तत्र बन्धनम् ।
ज्ञात्वा सुषुम्ना तद्भेदं कृत्वा वायुं च मध्यगम् ॥ ७ ॥
[3]स्थित्वाऽसौ बैन्दवस्थाने घ्राणरन्ध्रे निरोधयेत् ।
वायुं बिन्दुं समाख्यातं सत्वं प्रकृतिमेव च ॥ ८ ॥
षट् चक्राणि परिज्ञात्वा प्रविशेत्सुखमण्डलम् ।
मूलाधारं स्वाधिष्ठानं मणिपूरं तृतीयकम् ॥ ९ ॥
अनाहतं विशुद्धिं च आज्ञाचक्रं च षष्ठकम् ।
आधारं गुदमित्युक्तं स्वाधिष्ठानं तु लैङ्गिकम् ॥ १० ॥
मणिपूरं नाभिदेशं हृदयस्थमनाहतम् ।
विशुद्धिः कण्ठमूले च आज्ञाचक्रं च मस्तकम् ॥ ११ ॥

विषयविषयिकलनात्यागपूर्वकं पूर्णिमादृष्ट्या ब्रह्माहमिति लक्षयेत् इत्याह—कामेनेति ॥ ३ ॥ किंच—शक्तिमध्ये । कुण्डलिनीशक्तिमध्ये पूर्णिमादृष्टिकलितं मनः कृत्वा पुनः शक्तेश्च मध्यगं मनोऽपि कृत्वा

[1] करण—क, अ १, अ २.
[2] सनं—क.
[3] स्थित्वा तु—उ, उ १.

ब्रह्माकारपरिणतमनसा मनस्तत्कार्यापवादाधिकरणं ब्रह्मास्मीत्यालोक्य एवमालोकनवृत्तिमपि सन्त्यजेदिति यत् तदेव हि परमं पदं कैवल्यमित्यर्थः ॥ ४ ॥ किं तन्मनः इत्यत आह—मन इति । मनसः व्यष्टिप्रपञ्चोत्पत्त्यादिकारणत्वात् तदेव बिन्दुरीश्वरः, "बिन्दुरीश्वरसंज्ञः" इति श्रुतेः ॥ ५ ॥ यद्वा—मनसोत्पद्यते बिन्दुः बिन्द्वादिकल्पनाया मनोहेतुकत्वात् मनःकार्यत्वं, "सेशं मया कल्पितं" इति भगवत्पादाचार्योक्तेः । यथा क्षीरं घृतात्मकं तथा बिन्दुः मनआत्मकमित्यर्थः । मनोबद्धमीश्वरतत्त्वं इत्यत्राह—नचेति । स्वसङ्कल्पतो बन्धनमेतीति बन्धनं मनः नच बिन्दुतत्त्वं बन्धनमध्यस्थं मनसो मृषात्वात् । नापि तद्वै तदेव स्वकारणमानसवत् भवति, मानसापाये बिन्दोः ईश्वरस्य निर्विशेषब्रह्ममात्रत्वात् ॥ ६ ॥ ईश्वरादतिरिक्तमेव बन्धनमित्याह—चन्द्रेति । ब्रह्मरन्ध्रमूलाधारासनचन्द्रार्कमध्यमा शक्तिः कुण्डलिनी यत्र तिष्ठति तत्र बन्धनं मनोऽस्तीति ज्ञात्वा । स्वातिरिक्तकुण्डलीकार्यं मनोबन्धनमिति ज्ञात्वा तदुन्मूलनाय यत् सुषुम्नायां ग्रन्थित्रयं विद्यते तद्भेदं कृत्वा प्राणादिकमपि तत्सुषुम्ना मध्यगं कृत्वा ॥ ७ ॥ बैन्दवस्थाने भ्रूमध्यादौ बिन्द्वाख्येश्वरोऽस्मीति स्थित्वा वायुं स्थिरीकृत्य प्राणरन्ध्रे निरोधयेत् केवलकुम्भकमेव कुर्यात् इत्यर्थः । प्राणादीन् ज्ञात्वा योगानन्दं विशेदित्याह—वायुर्मिति ॥ ८ ॥ कानि षट्चक्राणीत्यत आह—मूलेति ॥ ९–१२ ॥

प्राणाभ्यासात् विराड्रूपापत्तिः

षट् चक्राणि परिज्ञात्वा प्रविशेत्सुखमण्डले ।
प्रविशेद्वायुमाकृष्य [1]तयैवोर्ध्वं नियोजयेत् ॥ १२ ॥
एवं समभ्यसेद्वायुं स ब्रह्माण्डमयो भवेत् ।
वायुं बिन्दुं तथा चक्रं चित्तं चैव समभ्यसेत् ॥ १३ ॥

[1] तये—अ.

एवं प्राणाभ्यासात् विगड्रूपो भवतीत्यर्थः । **वायु . . . समभ्यसेत्** चित्तप्राणावेकीकृत्य षट्चक्रेषु बिन्दुध्यानपूर्वकं योगमभ्यसेदित्यर्थः ॥ १३ ॥

अभ्यासयोगेन विना न स्वात्मप्रकाशः

**समाधिमेकेन सममभृतं यान्ति योगिनः ।**
**यथाऽग्निर्दारुमध्यस्थो नोत्तिष्ठेन्मथनं विना ॥ १४ ॥**
**विना चाभ्यासयोगेन ज्ञानदीपस्तथा न हि ।**
**घटमध्यगतो दीपो बाह्ये नैव प्रकाशते ॥ १५ ॥**
**भिन्ने तस्मिन्घटे चैव दीपज्वाला च भासते ।**
**स्वकायं घटमित्युक्तं यथा दीपो हि तत्पदम् ॥ १६ ॥**

**एकेन** निर्विकल्पयोगेन **समं** सर्वसाम्यं **समाधिं** ब्रह्म **अमृतं योगिनो यान्ति** । एवमभ्यासयोगं विना स्वात्मा न प्रकाशते इति सदृष्टान्तमाह—**यथेति** ॥ १४–१५ ॥ **स्वकायो** घटस्थानीय इत्युक्तः ॥ १६ ॥

गुरूपदेशात् ब्रह्मज्ञानम्

**गुरुवाक्यसमा भिन्ने ब्रह्मज्ञानं स्फुटीभवेत् ।**
**कर्णधारं गुरुं प्राप्य कृत्वा सूक्ष्मं तरन्ति च ॥ १७ ॥**
**अभ्यासवासनाशक्त्या तरन्ति भवसागरम् ।**

*गुरुवाक्यसमं स्वाज्ञानावरणे* **भिन्ने** *अथ* **ब्रह्मज्ञानम्** । **गुरुं प्राप्य** तदुपदिष्टार्थं नौकां **कृत्वा** ॥ १७ ॥

वाग्वृत्त्यधिष्ठानं ब्रह्म

परायामंकुरी[1]भूय पश्यन्त्यां द्विदलीकृता ॥ १८ ॥
मध्यमायां मुकुलिता वैखर्यां विकसीकृता ।
पूर्वं यथोदिता या वाग्विलोमेनास्तगा भवेत् ॥ १९ ॥
तस्या वाचः परो देवः कूटस्थो वाक्प्रबोधकः ।
सोऽहमस्मीति निश्चित्य यः सदा वर्तते पुमान् ॥ २० ॥
शब्दैरुच्चावचैर्नीचैर्भाषि[2]तोऽपि न लिप्यते ।

व्यावहारिकप्रपञ्चदृष्टीनां भवसागरतारणं कथमित्याशङ्क्य व्यावहारिकप्रपञ्चनिर्वाहकवाग्वृत्तिसम्भूतिस्थितिप्रळयाधिष्ठानब्रह्मज्ञानतो निर्लिप्तो भूत्वा लीलया भवसागरपारब्रह्मपदं यान्तीत्याह—परायामिति । वाग्वृत्तिः

चत्वारि वाक्परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेंगयन्ति
तुरीयं वाचो मनुष्या वदन्ति ॥

इति श्रुत्यनुरोधेन मूलाधारस्थपरायां अङ्कुरीभूय । अनाहतस्थपश्यन्त्याम् ॥ १८ ॥ विशुद्धिचक्रस्थमध्यमायां, आस्यस्थवैखर्याम् ॥ १९-२० ॥

विश्वादिप्रपञ्चाधिष्ठानं ब्रह्म

विश्वश्च तैजसश्चैव प्राज्ञश्चेति च ते त्रयः ॥ २१ ॥
विराड्ढिरण्यगर्भश्च ईश्वरश्चेति ते त्रयः ।
ब्रह्माण्डं चैव पिण्डाण्डं लोका भूरादयः क्रमात् ॥ २२ ॥

[1] भावं—अ. [2] तेष—अ.

स्वस्वोपाधिलयादेव लीयन्ते प्रत्यगात्मनि ।
अण्डं ज्ञानाग्निना तप्तं लीयते कारणैः सह ॥ २३ ॥
परमात्मनि लीनं तत्परं ब्रह्मैव जायते ।

व्यष्टिसमष्टिप्रपञ्चसापेक्षविश्वविराडादिभेदे सति कथं विद्वान् भवसागरपारब्रह्मतया अवशिष्यते इत्याशङ्क्य यदि ते स्वातिरेकेण साधारव्यावहारिकप्रपञ्चोऽस्तीति भ्रान्तिस्तदा स्वज्ञानतः स्वाज्ञानप्रपञ्चो विलीयते, तद्विलयाधिकरणं स्वातिरिक्तासम्भवब्रह्ममात्रज्ञानेन निरधिकरणं सत् निष्प्रतियोगिकस्वमात्रमवशिष्यते इत्याह—विश्वश्चेति ॥ २१–२३ ॥ स्वाज्ञदृष्टिविकल्पितस्वातिरिक्तं स्वज्ञदृष्ट्या विलीनं सत् परमार्थदृष्ट्या ब्रह्मैव भवतीत्यर्थः ॥

### निष्प्रतियोगिकं ब्रह्म

ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् ॥ २४ ॥
अनाख्यमनभिव्यक्तं सत्किंचिदवशिष्यते ।

परमार्थदृष्ट्या कथं तद्ब्रह्म भवतीत्यत्राह—तत इति । यतः स्वाज्ञादिदृष्ट्या स्वातिरिक्तप्रपञ्चः तदपवादोऽपि भवति ततो वस्तुयाथार्थ्यदर्शनात् निर्गुणनिरवयवव्योमवत् स्तिमितगम्भीरं भूतभौतिकतेजस्तमःपरिच्छेदासम्भवात् न तेजो न तमस्ततम् ॥ २४ ॥ तथा नामरूपासम्भवात् अनाख्यमनभिव्यक्तं स्वाज्ञादिदृष्टिमोहे सत्यसति सत् किंचिदवशिष्यते, "ब्रह्ममात्रमसन्न हि" इति श्रुतेः ॥

### ब्रह्मसिद्ध्युपायभूतं ध्यानम्

ध्यात्वा मध्यस्थमात्मानं कलशान्तरदीपवत् ॥ २५ ॥
अङ्गुष्ठमात्रमात्मानमधूमज्योतिरूपकम् ।
प्रकाशयन्तमन्तस्स्थं ध्यायेत्कूटस्थमव्ययम् ॥ २६ ॥

विज्ञानात्मा तथा देहे जाग्रत्स्वप्नसुषुप्तितः ।
मायया मोहितः पश्चाद्बहुजन्मान्तरे पुनः ॥ २७ ॥
सत्कर्मपरिपाकात्तु स्वविकारं चिकीर्षति ।
कोऽहं कथमयं दोषः संसाराख्य उपागतः ॥ २८ ॥
जाग्रत्स्वप्ने व्यवहरन्त्सुषुप्तौ क्व गतिर्मम ।
इति चिन्तापरो भूत्वा स्वभासा च विशेषतः ॥ २९ ॥
अज्ञानात्तु चिदाभासो बहिस्तापेन तापितः ।
दग्धं भवत्येव तदा तूलपिण्डमिवाग्निना ॥ ३० ॥
दहरस्थः प्रत्यगात्मा नष्टे ज्ञाने ततः परम् ।
विततो व्याप्य विज्ञानं दहत्येव क्षणेन तु ॥ ३१ ॥
मनोमयज्ञानमयान् सम्यग्दग्ध्वा क्रमेण तु ।
घटस्थदीपवच्छश्वदन्तरेव प्रकाशते ॥ ३२ ॥

एवं निष्प्रतियोगिकब्रह्ममात्रसिद्ध्युपायमाह—ध्यात्वेति ॥ १९–२६ ॥ स्वेन रूपेण विज्ञानात्मा परमात्माऽपि स्वातिरिक्तात्मात्मीयाभिमानतः संसरति, अनेककोटिजन्मसुकृतपरिपाकवशात् प्रत्यगभिमुखो भवति, ततः स्वाज्ञविकल्पितप्रपञ्चकलनाविरळविदेहमुक्तात्मरूपतया अवशिष्यते इत्याह—विज्ञानात्मेति ॥ २७–३२ ॥

जीवन्मुक्तिविदेहमुक्ती

ध्यायन्नास्ते मुनिश्चैवमा सुप्तेरा मृतेस्तु यः ।
जीवन्मुक्तः स विज्ञेयः स धन्यः कृतकृत्यवान् ॥ ३३ ॥

जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ ३४ ॥
अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं तदेव शिष्यत्यमलं निरामयम् ॥३५॥
इत्युपनिषत् ॥

स्वदेहे रूढमूलदेहाभिमाने कालसात्कृते विरूपविलयं गते सत्यथ देहादावात्मात्मीयाभिमानासम्भवप्रध्वंससमकालमस्पन्द पवनाकाशवद्विदेहमुक्तत्वं विशति विदेहमुक्तः स्वमात्रमवशिष्यते इत्यर्थः ॥ ३४ ॥ शब्दादिप्रपञ्चे सति विदेहमुक्तस्य स्वात्ममात्रता कथमित्यत आह—अशब्दमिति । सर्वापह्नवसिद्ध-विदेहमुक्तस्वरूपं ब्रह्म निष्प्रतियोगिकस्वमात्रमित्यत्र न विवादः । यदि स्वाज्ञदृष्ट्या शब्दादिविकारः स्यात् तदा स्वज्ञदृष्ट्या शब्दादिविलयाधिकरणम-शब्दादिविशेषणविशिष्टं भवति, तदेव परमार्थदृष्ट्या निष्प्रतियोगिकस्वमात्रं अवशिष्यते इत्यर्थः ॥ ३५ ॥ इत्युपनिषच्छब्दः योगकुण्डल्युपनिषत्समाप्त्यर्थः ॥

इति तृतीयोऽध्यायः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
योगकुण्डल्युपनिषद्व्याख्यानं लिखितं स्फुटम् ।
कुण्डल्युपनिषद्व्याख्याग्रन्थस्तु द्विशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे षडशीतिसंख्यापूरकं
योगकुण्डल्युपनिषद्विवरणं सम्पूर्णम्

# योगचूडामण्युपनिषत्

आप्यायन्तु·· इति शान्तिः

योगाङ्गषट्कम्

योगचूडामणिं वक्ष्ये योगिनां हितकाम्यया ।
कैवल्यसिद्धिदं गूढं सेवितं योगवित्तमैः ॥ १ ॥
आसनं प्राणसंरोधः प्रत्याहारश्च धारणा ।
ध्यानं समाधिरेतानि योगाङ्गानि भवन्ति षट् ॥ २ ॥
एकं सिद्धासनं प्रोक्तं द्वितीयं कमलासनम् ।

मूलाधारादिषट्चक्रसहस्रारोपरिस्थितम् ।
[1]योगज्ञानमुख्यफलं रामचन्द्रपदं भजे ॥

इह खलु सामवेदप्रविभक्तेयं योगचूडामण्युपनिषत् षडंगयोगोपाय-प्रदर्शनपूर्वकं निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । स्वाङ्गलोकमुद्दिश्य श्रुतिरेवमाह—योगेति । योगचूडामणिं योगश्रेष्ठमित्यर्थः । कथमस्य चूडामणित्वं? इत्यत्राह—कैवल्येति । अस्य कैवल्यफलतया योगवित्तमसेवितत्वात् चूडामणित्वं युज्यते इत्यर्थः ॥ १ ॥

[1] योगज्ञानैकफलकं—इति च पाठः. योगज्ञानं मु—क.

यमनियमसाधनसम्पन्नानां षडंगयोगः उच्यते—आसनमिति ॥ २ ॥ आदावासनमुद्दिशति—एकमिति । प्रोक्तं—सिद्धपद्मासनलक्षणस्य त्रिशिखिब्राह्मणोपनिषदि प्रकाशितत्वात् ॥

योगसिद्धये आवश्यकं देहतत्त्वज्ञानम्

षट्चक्रं षोडशाधारं त्रिलक्ष्यं व्योमपञ्चकम् ॥ ३ ॥
स्वदेहे यो न जानाति तस्य सिद्धिः कथं भवेत् ।

देहतत्त्वज्ञानं विना देहे सिद्धिः कथं स्यादित्याक्षिपति— षट्चक्रमिति । मूलाधारादिषट्चक्रम् । मूलाधारत्रिकोणमारभ्य षोडशान्तावधि षोडशाधारं विद्यते । तद्राजयोगसारे प्रसिद्धम् । बाह्यमध्यान्तर्भेदेन त्रिलक्ष्यम् । आकाशादिपरमाकाशान्तं व्योमपञ्चकम् ॥ ३ ॥ शिष्टं स्पष्टम् ॥

मूलाधारादिचक्राणि

चतुर्दलं स्यादाधारं स्वाधिष्ठानं च षड्दलम् ॥ ४ ॥
नाभौ दशदलं पद्मं हृदयं द्वादशारकम् ।
षोडशारं विशुद्धाख्यं भ्रू[1]मध्ये द्विदलं तथा ॥ ५ ॥
सहस्रदलसंख्यातं ब्रह्मरन्ध्रे महापथि ।

यत् त्वया पृष्टं तत् मूलाधारादिसहस्रारान्तेष्वन्तर्भवतीत्याह—चतुर्दलमिति ॥ ४–५ ॥

योनिस्थानं परमज्योतिर्दर्शनम्

आधारं प्रथमं चक्रं स्वाधिष्ठानं द्वितीयकम् ॥ ६ ॥
योनिस्थानं द्वयोर्मध्ये कामरूपं निगद्यते ।
कामाख्यं तु गुदस्थाने पङ्कजं तु चतुर्दलम् ॥ ७ ॥

[1] मध्यं विदलं—उ.

तन्मध्ये प्रोच्यते योनिः कामाख्या सिद्धवन्दिता ।
तस्य मध्ये महालिङ्गं पश्चिमाभिमुखं स्थितम् ॥ ८ ॥
नाभौ तु मणिवद्विम्बं यो जानाति स योगवित् ।
तप्तचामीकराभासं तडिल्लेखेव विस्फुरत् ॥ ९ ॥
त्रिकोणं तत्पुरं वह्नेरधोमेढ्रात्प्रतिष्ठितम् ।
समाधौ परमं ज्योतिरनन्तं विश्वतोमुखम् ॥ १० ॥
तस्मिन्दृष्टे महायोगे यातायातो न विद्यते ।

प्रथमद्वितीयचक्रतया नामोद्दिश्य क्रमेण विवृणोति—आधारमिति ॥ ६ ॥ योनिस्थानं किमित्यत्र—योनिस्थानमिति । द्वयोः मूलाधारस्वाधिष्ठानयोः । योगसिद्धेः तत्पीडनपूर्वकत्वात् तदेव विशदयति—कामाख्यमिति । योगसिद्धिकामाख्यम् ॥ ७ ॥ योनिः कुण्डलिनीशक्तिः । अस्या जगत्प्रसूतिहेतुत्वात् योनित्वमुपपद्यते । अत एव कामाख्या । तस्य सुषुम्नामध्यविलसित-कुण्डलिनीभोगस्य मध्ये वायव्यं पश्चिमाभिमुखं महालिङ्गं केवलकुम्भके योगिप्रत्यक्षतया स्थितं भवति ॥ ८ ॥ एवंज्ञानवदभ्यासफलमाह—नाभाविति । मेढ्रादधोविद्यमानवह्निमण्डलस्वरूपमाह—तप्तेति ॥ ९ ॥ यस्य एवं योगकाले पावकी ज्वाला दृश्यते तस्य पुनरिडादिमार्गेण यातायातो न विद्यते इत्याह—समाधाविति ॥ १० ॥

स्वाधिष्ठानादिचक्रलक्षणम्

स्वशब्देन भवेत्प्राणः स्वाधिष्ठानं [1]तदाश्रयम् ॥ ११ ॥
स्वाधिष्ठानाश्रयादस्मान्मेढ्रमेवाभिधीयते ।
तन्तुना मणिवत्प्रोतो योऽत्र कन्दः सुषुम्नया ॥ १२ ॥

[1] तदाश्रयः—क, अ १, अ २.

तन्नाभिमण्डले चक्रं प्रोच्यते मणिपूरकम् ।
द्वादशारे महाचक्रे पुण्यपापविवर्जिते ॥ १३ ॥
तावज्जीवो भ्रमत्येवं यावत्तत्त्वं न विन्दति ।

स्वाधिष्ठानलक्षणमाह—स्वेति ॥ ११ ॥ मेढ्रस्य प्राणनाडित्वात् स्वाधिष्ठानाश्रयत्वं युज्यते । मणिपूरकलक्षणं किमित्यत्र तन्तुनेति ॥ १२ ॥ स्वाज्ञानावधि जीवो हृदासनः सन् संसारमण्डले परिभ्रमतीत्याह—द्वादशार इति । पुण्यपापविवर्जिते—तत्र प्रत्यग्दृष्टेः पुण्यपापसम्बन्धाभावात् ॥ १३ ॥

नाडीमहाचक्रम्

ऊर्ध्वं मेढ्रादधोनाभेः [1]कन्दयोनिः खगाण्डवत् ॥ १४ ॥
तत्र नाड्यः समुत्पन्नाः [2]सहस्राणि द्विसप्ततिः ।
तेषु नाडीसहस्रेषु द्विसप्ततिरुदाहृ[3]ता ॥ १५ ॥
प्रधानाः प्राणवाहिन्यो भूयस्तासु दश स्मृताः ।
इडा च पिङ्गला चैव सुषुम्ना च तृतीयगा ॥ १६ ॥
गान्धारी हस्तिजिह्वा च पूषा चैव यशस्विनी ।
अलम्बुसा कुहूश्चैव शङ्खिनी दशमी स्मृता ॥ १७ ॥
एतन्नाडीमहाचक्रं ज्ञातव्यं योगिभिः सदा ।

नाडीकन्दं तद्गतनाडीभेदं चाह—ऊर्ध्वमिति ॥ १४–१५ ॥ दशनाडीनां स्थानानि निर्दिशति—इडेति ॥ १६–१७ ॥

[1] कन्द यो—क, अ २.
[2] सहस्राणां—क, अ १.
[3] ताः—क, अ १, अ २.

नाडीस्थानानि

इडा वामे स्थिता भागे दक्षिणे पिङ्गला स्थिता ॥ १८ ॥
सुषुम्ना मध्यदेशे तु गान्धारी वामचक्षुषि ।
दक्षिणे हस्तिजिह्वा च पूषा कर्णे [1]तु दक्षिणे ॥ १९ ॥
यशस्विनी वामकर्णे चानने चाप्यलम्बुसा ।
कुहूश्च लिङ्गदेशे तु मूलस्थाने तु शङ्खिनी ॥ २० ॥
एवं द्वारं समाश्रित्य तिष्ठन्त नाडयः क्रमात् ।

मध्यस्थसुषुम्नायाः इडा वामे स्थिता ॥ १८–२० ॥

नाडीसञ्चारिवायवः तद्व्यापाराश्च

इडापिङ्गलसौषुम्नाः प्राणमार्गे च संस्थिताः ॥ २१ ॥
सततं प्राणवाहिन्यः सोमसूर्याग्निदेवताः ।
प्राणापानसमानाख्या व्यानोदानौ च वायवः ॥ २२ ॥
नागः कूर्मोऽथ कृकरो देवदत्तो धनंजयः ।
हृदि प्राणः स्थितो नित्यमपानो गुदमण्डले ॥ २३ ॥
समानो नाभिदेशे तु उदानः कण्ठमध्यगः ।
व्यानः सर्वशरीरे तु प्रधानाः पञ्च वायवः ॥ २४ ॥
उद्गारे नाग आख्यातः कूर्म उन्मीलने तथा ।
कृकरः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे ॥ २५ ॥

[1] अ १, अ २.

न जहाति मृतं वापि सर्वव्यापी धनंजयः ।
एते नाडीषु सर्वासु भ्रमन्ते जीवजन्तवः ॥ २६ ॥

तत्र अयोगियोगिभेदेन इडेति ॥ २१ ॥ नाडीगतप्राणादिस्वरूपं तद्व्यापारं चाह—प्राणेति ॥ २२–२५ ॥ जीवजन्तवः—जीवरूपिण इत्यर्थः, तेषां जीवाधारत्वात् ॥ २६ ॥

प्राणचलनाचलनाभ्यां जीवचलनाचलने

आक्षिप्तो भुजदण्डेन [1]यथोच्चलति कन्तुकः ।
प्राणापानसमाक्षिप्तस्तथा जीवो न तिष्ठति ॥ २७ ॥
प्राणापानवशो जीवो ह्यधश्चोर्ध्वं च [2]धावति ।
वामदक्षिणमार्गाभ्यां चञ्चलत्वान्न दृश्यते ॥ २८ ॥
रज्जुबद्धो यथा श्येनो गतोऽप्याकृष्यते पुनः ।
गुणबद्धस्तथा जीवः प्राणापानेन कर्षति ॥ २९ ॥
प्राणापानवशो जीवो ह्यधश्चोर्ध्वं च गच्छति ।
अपानः कर्षति प्राणं प्राणोऽपानेन कर्षति ॥ ३० ॥
ऊर्ध्वाधःसंस्थितावेतौ यो जानाति स योगवित् ।

प्राणचलनाचलनसापेक्षं जीवचलनाचलनमित्याह—आक्षिप्त इति ॥ २७ ॥ तदेव विशदयति—प्राणेति ॥ २८–३० ॥

[1] यथा च— क, अ १, अ २.    [2] गच्छति—ख.

अजपागायत्र्या अनुसन्धानम्

हकारेण बहिर्याति सकारेण विशेत्पुनः ॥ ३१ ॥
हंसहंसेत्यमुं मन्त्रं जीवो जपति सर्वदा ।
षट्शतानि दिवा[1]रात्रौ सहस्राण्येकविंशतिः ॥ ३२ ॥
एतत्संख्यान्वितं मन्त्रं जीवो जपति सर्वदा ।
अजपा नाम गायत्री योगिनां मोक्षदा सदा ॥ ३३ ॥
अस्याः संकल्पमात्रेण सर्वपापैः प्रमुच्यते ।
अनया सदृशी विद्या अनया सदृशो जपः ॥ ३४ ॥
अनया सदृशं ज्ञानं न भूतं न भविष्यति ।
कुण्डलिन्यां समुद्भूता गायत्री प्राणधारिणी ॥ ३५ ॥
प्राणविद्या महाविद्या यस्तां वेत्ति स वेदवित् ।

प्राणापानोच्छ्वासादिव्यापृतिरेव हंसमनुः अजपागायत्री जीवनिर्वर्त्या भवतीति अजपेयत्तां तज्ज्ञानफलं चाह—हकारेणेति ॥ ३१–३३ ॥ उच्छ्वासनिःश्वासयोः हंसः सोऽहमित्यजपाऽनुसन्धानेन जीवः सर्वपापैः प्रमुच्यते । अजपां स्तौति—अनयेति ॥ ३४ ॥ अजपा कुण्डलिनीजन्येति ज्ञानफलमाह—कुण्डलिन्यामिति ॥ ३५ ॥

कुण्डलिन्या मोक्षद्वारभेदनम्

कन्दोर्ध्वे कुण्डलीशक्तिरष्टधा कुण्डलाकृतिः ॥ ३६ ॥
ब्रह्मद्वारमुखं नित्यं मुखेनाच्छाद्य तिष्ठति ।
येन द्वारेण गन्तव्यं ब्रह्म[2]द्वारमनामयम् ॥ ३७ ॥

[1] रात्रं—क, अ २.     [2] द्वारं मनो—अ २.

मुखेनाच्छाद्य तद्द्वारं प्रसुप्ता परमेश्वरी ।
प्रबुद्धा वह्नियोगेन मनसा मरुता सह ॥ ३८ ॥
सूचीवद्गात्रमादाय व्रजत्यूर्ध्वं सुषुम्नया ।
उद्घाटयेत्कवाटं तु [1]यथा कुञ्चिकया गृहम् ।
कुण्डलिन्या तथा योगी मोक्षद्वारं प्रभेदयेत् ॥ ३९ ॥
कृत्वा संपुटितौ करौ दृढतरं [2]बद्ध्वाऽथ पद्मासनं
गाढं वक्षसि संनिधाय चुबुकं ध्यानं च तच्चेष्टितम् ।
वारंवारमपानमूर्ध्वमनिलं प्रोच्चा[3]रयेत्पूरितं
मुञ्चन्प्राणमुपैति बोधमतुलं शक्तिप्रभावान्नरः ॥ ४० ॥
अङ्गानां मर्दनं कृत्वा श्रमसंजातवारिणा ।
कट्वम्ललवणत्यागी क्षीरभोजनमाचरेत् ॥ ४१ ॥
ब्रह्मचारी मिताहारी योगी योगपरायणः ।
अब्दादूर्ध्वं भवेत्सिद्धो नात्र कार्या विचारणा ॥ ४२ ॥
सुस्निग्धमधुरा[4]हारश्चतुर्था[5]शावशेषितः ।
भुञ्जते शिवसंप्रीत्या मिता[6]हारी स उच्यते ॥ ४३ ॥
कन्दोर्ध्वे कुण्डलीशक्तिरष्टधा कुण्डलाकृतिः ।
बन्धनाय च मूढानां योगिनां मोक्षदा सदा ॥ ४४ ॥

[1] यदा—क, अ १. [2] बद्ध्वा तु—क, अ १, अ २.
[3] रितं—क. रयन्—अ २. [4] हारं च—अ १.
[5] शविवर्जितः—क, अ २. शावशेषितं—अ १.
[6] हारः—क, अ २.

सर्वप्राण्याधारकुण्डलिनीस्वरूपं तद्व्याप्तिं चाह—कन्देति ॥ ३६ ॥ सुषुम्नाख्यं ब्रह्मद्वारमुखम् ॥ ३७ ॥ अयोगिनां मूलाधारप्रदेशे-प्रसुप्ता । योगिनां योगकाले प्रबुद्धा ॥ ३८ ॥ यतः इयं मोक्षद्वारभेदनपटुः अतः कुञ्चिकया देवालयकवाटमिव योगी तया मोक्षद्वारं विभेदयेदित्याह—उद्घाटयेदिति ॥ ३९ ॥ तद्भेदनोपायं तत्फलं चाह—कृत्वेति । नरो योगी स्वहृदयसमं स्वकरौ सम्पुटितौ कृत्वा पद्मासनं बद्ध्वा गाढं वक्षसि सन्निधाय चुबुकं कण्ठसङ्कोचलक्षणजालन्धरबन्धमारोप्य मूलबन्धेन वारंवारं अपानं ऊर्ध्वं अनिलपूरितं प्रोच्चारयेत् ऊर्ध्वं प्राणेनैक्यं नयेत् । ऐक्यानन्तरं केवल-कुम्भकमास्थाय कुण्डलिनीशक्तिप्रभावान् तत्कुण्डलिनीचेष्टितं प्राणादिव्यापारं मुञ्चन् शरीरत्रयकलनाविरळं ब्रह्मास्मीति मननं ध्यानं च कृत्वा सम्यक् प्रबोधमेत्य तत्समकालं प्राणं परमात्मानं उपैति ॥ ४० ॥ एवं साधनानुष्ठानवान् योगी अचिरात् सिद्धो भवतीत्याह—अङ्गानामिति । यद्यभ्यासकाले स्वेदो जायते तदा अङ्गानां . . . वारिणा दृढकायो भवेदित्यर्थः । योगानुकूलाहार-नियममाह—कट्विति ॥ ४१–४३ ॥ अयोगियोगिनां इयं शक्तिः बन्धमोक्षहेतुः स्यादित्याह—कन्देति । कन्दाधोभागे यदि स्थिता तदा बन्धनाय । यदि सुषुम्नामार्गेण कन्दोर्ध्वमार्गं गता तदा योगिनां मोक्षदा ॥ ४४ ॥

### बन्धत्रयम्

महामुद्रा नभोमुद्रा [1]ओड्याणं च जलन्धरम् ।
मूलबन्धं च यो वेत्ति स योगी मुक्तिभाजनम् ॥ ४५ ॥
पार्ष्णिघातेन संपीड्य योनिमाकुञ्चयेदृढम् ।
अपानमूर्ध्वमाकृष्य मूलबन्धो[2]ऽयमुच्यते ॥ ४६ ॥

[1] ओड्या—क, अ १, अ २. [2] विधीयते—क, अ १, अ २.

अपानप्राणयोरैक्यं क्षयान्मूत्रपुरीषयोः ।
युवा भवति [1]वृद्धोऽपि सततं मूलबन्धनात् ॥ ४७ ॥
ओड्याणं कुरुते यस्मादविश्रान्तं महाखगः ।
ओड्डियाणं तदेव स्यान्मृत्युमातङ्गकेसरी ॥ ४८ ॥
उदरात्पश्चिमं ताणमधोनाभेर्निगद्यते ।
ओड्याणमुदरे बन्धस्तत्र बन्धो विधीयते ॥ ४९ ॥
बध्नाति हि शिरोजातमधोगामि नभोजलम् ।
ततो जालन्धरो बन्धः कण्ठदुःखौघनाशनः ॥ ५० ॥
जालन्धरे कृते बन्धे कण्ठ[2]दुःखौघनाशने ।
न पीयूषं पतत्यग्नौ न च वायुः प्रधावति ॥ ५१ ॥

वक्ष्यमाणमहामुद्राऽऽदिज्ञानतो मुक्तिभाक् भवतीत्याह—महामुद्रेति ॥ ४५ ॥ मूलबन्धादिलक्षणमाह—पार्ष्णीति ॥ ४६ ॥ तत्फलमेतत्—अपानेति ॥ ४७–५२ ॥

खेचरीमुद्रा

कपालकुहरे जिह्वा प्रविष्टा विपरीतगा ।
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥ ५२ ॥
न रोगो मरणं तस्य न निद्रा न क्षुधा तृषा ।
न च मूर्छा भवेत्तस्य यो मुद्रां वेत्ति खेचरीम् ॥ ५३ ॥

[1] वृद्धो वा—उ, उ १.    [2] संकोचलक्षणे—क, अ १, अ २.

पीड्यते न च रोगेण लिप्यते न स कर्मभिः ।
[1]बध्यते न च केनापि यो मुद्रां वेत्ति खेचरीम् ॥ ५४ ॥
चित्तं चरति खे यस्माज्जिह्वा चरति खे यतः ।
तेनेयं खेचरी मुद्रा सर्वसिद्धनमस्कृता ॥ ५५ ॥
बिन्दुमूलशरीराणि सिरा[2]यत्र प्रतिष्ठिताः ।
भावयन्ति शरीराणि आपादतलमस्तकम् ॥ ५६ ॥
खेचर्या मुद्रितं येन विवरं लम्बिकोर्ध्वतः ।
न तस्य क्षीयते बिन्दुः कामिन्यालिङ्गितस्य च ॥ ५७ ॥
यावद्बिन्दुः स्थितो देहे तावन्मृत्युभयं कुतः ।
यावद्बद्धा नभोमुद्रा तावद्बिन्दुर्न गच्छति ॥ ५८ ॥

तत्फलमेतत् न रोग इति ॥ ५३–५५ ॥ खेचरीमुद्रारूढाः योगिनः शरीरे सर्वं पश्यन्तीत्याह— बिन्द्विति । सिराशब्देन नाड्यः उच्यन्ते । तदुपलक्षितचतुर्दशभुवनानि यत्र प्रतिष्ठितानि तद्बिन्दुः ईश्वरः एव मूलं येषां अनन्तकोटिब्रह्माण्डानां तानि बिन्दुमूलानि तानि च शरीराणि अनन्तकोटिब्रह्माण्डानि खेचरीमुद्रारूढयोगिनः स्वाधिष्ठितापादतलमस्तकं स्वशरीरं भावयन्ति महाविराड्भावं नयन्तीत्यर्थः ॥ ५६ ॥ किंच— खेचर्येति ॥ ५७ ॥ नभोमुद्रा खेचरीत्यर्थः ॥ ५८ ॥

वज्रोल्यादियोगिलक्षणम्

ज्वलितोऽपि यथा बिन्दुः संप्राप्तश्च हुताशनम् ।
व्रजत्यूर्ध्वं गतः शक्त्या निरुद्धो योनिमुद्रया ॥ ५९ ॥

[1] बाध्यते—क, अ १, अ २.  [2] स्तत्र—अ १.

स पुनर्द्विविधो बिन्दुः पाण्डरो लोहितस्तथा ।
पाण्डरं शुक्लमित्याहुर्लोहिताख्यं महारजः ॥ ६० ॥

सिन्दूरव्रातसंकाशं रविस्थानस्थितं रजः ।
शशिस्थानस्थितं शुक्लं तयोरैक्यं सुदुर्लभम् ॥ ६१ ॥

बिन्दुर्ब्रह्मा रजः शक्तिर्बिन्दुरिन्दू रजो रविः ।
उभयोः सङ्गमादेव प्राप्यते परमं पदम् ॥ ६२ ॥

वायुना शक्तिचालेन प्रेरितं च यथा रजः ।
याति बिन्दुः सदैकत्वं भवेद्दिव्यवपुस्तदा ॥ ६३ ॥

शुक्लं चन्द्रेण संयुक्तं रजः [1]सूर्यसमन्वितम् ।
तयोः समरसैकत्वं यो जानाति स योगवित् ॥ ६४ ॥

वज्रोळ्यादियोगिलक्षणमाह—ज्वलितोऽपीति । यथा लोहद्रावकबिन्दुः लोहसान्निध्यात् ज्वलति तथाऽयं बिन्दुः योषित्सान्निध्यात् ज्वलितोऽपि पुरुषेण हुतं रेतः अश्नातीति हुताशनं योषिद्योनिमण्डलं संप्राप्तोऽपि लिंगाकुञ्चनलक्षणया योनिमुद्रया शक्त्या यथाबलं निरुद्धः सन् ऊर्ध्वमेव व्रजति नाधः पततीत्यर्थः । अस्याममरोळियोगसिद्धत्वात् तद्बिन्दुः कदाऽपि न क्षरतीति भावः ॥ ५९–६० ॥ भ्रूमण्डलोर्ध्ववामदक्षिणभागयोः रविशशिस्थाने भवतः । रजःशुक्लरूपयोः सूर्याचन्द्रमसोः ऐक्यं योगिनो विना यस्य कस्यापि दुर्लभमित्यर्थः ॥ ६१ ॥ किञ्च—बिन्दुरिति ॥ ६२ ॥ केन रवीन्द्वोरैक्यं, तेन किं जायते इत्यत आह—वायुनेति । यथा स्वशक्तिचालेन प्रचण्डवायुना प्रेरितं सद्रजो रविनैकत्वमायाति तथा वायुना सह कुण्डलिनीशक्तिचालेन प्रेरितं शशिमण्डलस्थं रजः, बिन्दुरिति तृतीयार्थे प्रथमा, बिन्दुना रविणा सदा एकत्वं

[1] सूर्येण संगतं—क, अ १, अ २.

याति । यदा सूर्याचन्द्रमसोरैक्यं भवति तदा अयं योगी दिव्यवपुः भवेत् ॥ ६३–६४ ॥

महामुद्रा

शोधनं नाडिजालस्य चालनं चन्द्रसूर्ययोः ।
रसानां शोषणं चैव महामुद्राऽभिधीयते ॥ ६५ ॥
वक्षोन्यस्तहनुः प्रपीड्य सुचिरं योनिं च वामाङ्घ्रिणा
हस्ताभ्यामनुधारयन्प्रसरितं पादं तथा दक्षिणम् ।
आपूर्य श्वसनेन कुक्षियुगलं बद्ध्वा शनै रेचये-
देतद्व्याधिविनाशिनी सुमहती मुद्रा नृणां प्रोच्यते ॥ ६६ ॥
चन्द्रांशेन समभ्यस्य सूर्यांशेनाभ्यसेत्पुनः ।
या तुल्या तु भवेत्संख्या ततो मुद्रां विसर्जयेत् ॥ ६७ ॥
नहि पथ्यमपथ्यं वा रसाः सर्वेऽपि नीरसाः ।
अतिभुक्तं विषं घोरं पीयूषमिव जीर्यते ॥ ६८ ॥
क्षयकुष्ठगुदावर्तगुल्माजीर्णपुरोगमाः ।
तस्य रोगाः क्षयं यान्ति महामुद्रां तु योऽभ्यसेत् ॥ ६९ ॥
कथितेयं महामुद्रा महासिद्धिकरी नृणाम् ।
गोपनीया प्रयत्नेन न देया यस्य कस्यचित् ॥ ७० ॥

महामुद्रास्वरूपं तत्फलं चाह—शोधनमिति । यन्नाडीशुद्धिकरं चन्द्रसूर्ययोरपि चालकं शरीरस्थदुष्टवातपित्तादिरसानां शोषणकरं भवति तदेव महामुद्रेत्यभिधीयते ॥ ६५ ॥ तदभ्यासप्रकारस्तु—आदौ जालन्धरबन्ध-

मारोप्य वामपादतलेन योनिं निपीड्य बहिः प्रसारितदक्षिणचरणं हस्ताभ्यां धारयन् चन्द्रनाडीसमुद्भवश्वसनेन वामदक्षिणकुक्षियुगळमापूर्य निरुच्छ्वासं बद्ध्वा कुम्भकान्ते पिंगळया शनैरेव रेचयेदिति यदेतत् सैषा नृणां सर्वव्याधिविनाशिनी महामुद्रा भवति ॥ ६६ ॥ एवं चन्द्रांशेनेति ॥ ६७–७० ॥

प्रणवजपः

पद्मासनं समारुह्य समकायशिरोधरः ।
नासाग्रदृष्टिरेकान्ते जपेदोंकारमव्ययम् ॥ ७१ ॥

एवं महामुद्रामभ्यस्य ततो यथोक्तविधिना प्रणवार्थानुसन्धानपूर्वकं प्रणवं सदा जपेदित्याह—पद्मेति ॥ ७१ ॥

प्रणवार्थरूपं ब्रह्म

ॐ नित्यं शुद्धं बुद्धं निर्विकल्पं निरञ्जनं निराख्यातमनादिनिधनमेकं तुरीयं यद्भूतं भवद्भविष्यत् परिवर्तमानं सर्वदाऽनवच्छिन्नं परं ब्रह्म । तस्माज्जाता परा शक्तिः स्वयं ज्योतिरात्मिका । आत्मन आकाशः संभूतः । आकाशाद्वायुः । वायोरग्निः । अग्नेरापः । अद्भ्यः पृथिवी । तेषां पञ्चभूतानां पतयः पञ्च सदाशिवेश्वररुद्रविष्णुब्रह्माणश्चेति । तेषां ब्रह्मविष्णुरुद्राश्चोत्पत्तिस्थितिलयकर्तारः । राजसो ब्रह्मा सात्त्विको विष्णुस्तामसो रुद्र इति । एते त्रयो गुणयुक्ताः । ब्रह्मा देवानां प्रथमः संबभूव । धाता च सृष्टौ विष्णुश्च स्थितौ रुद्रश्च नाशे भोगाय चेन्द्रः प्रथमजा बभूवुः । एतेषां ब्रह्मणो लोका देवतिर्यङ्नरस्थावराश्च जायन्ते । तेषां मनुष्यादीनां

पञ्चभूतसमवायः शरीरम् । ज्ञानकर्मेन्द्रियैर्ज्ञानविषयैः प्राणादिपञ्चवायुमनोबुद्धिचित्ताहंकारैः स्थूलकल्पितैः सोऽपि स्थूलप्रकृतिरित्युच्यते । ज्ञानकर्मेन्द्रियैर्ज्ञानविषयैः प्रणादिपञ्चवायुमनोबुद्धिभिश्च सूक्ष्मस्थोऽपि लिङ्गमेवेत्युच्यते । गुणत्रययुक्तं कारणम् । सर्वेषा[1]मेवं त्रीणि शरीराणि वर्तन्ते । जाग्रत्स्वप्नसुषुप्तितुरीयाश्चेत्यवस्थाश्चतस्रः । तासामवस्थानामधिपतयश्चत्वारः पुरुषा विश्वतैजसप्राज्ञात्मानश्चेति ॥

विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभुक् ।
आनन्दभुक्तथा प्राज्ञः सर्वसाक्षीत्यतः परः ॥ ७२ ॥

प्रणवः सर्वदा तिष्ठेत्सर्वजीवेषु भोगतः ।
अभिरामस्तु सर्वासु ह्यवस्थासु ह्यधोमुखः ॥ ७३ ॥

ओङ्कारार्थचैतन्यं किमित्यत्र ब्रह्मेत्याह—ओमिति । नित्यशुद्धादिपदानां नृसिंहतापिन्यां पदशो व्याख्यातत्वात् । भूतमिति भूतादिकालत्रयेऽपि स्वयं एकरूपेणावस्थितं, उत्पत्तिप्रळयवर्ज्यादनादिनिधनं, अनवच्छिन्नं परिच्छेदरहितं यत् तदेव प्रणवार्थचैतन्यं ब्रह्मेत्यर्थः । ब्रह्मणो निष्प्रतियोगिकस्वमात्रत्वे अव्यक्तादिस्थावरान्तसृष्टिः कुतः? इत्याशङ्क्य तदज्ञानादेतत् सर्वं तस्मात् जातवत् भातीत्याह—तस्मादिति । स्वाज्ञदृष्ट्या यन्निर्विशेषं ब्रह्म निष्प्रतियोगिकस्वमात्रं तस्मान्निर्विशेषब्रह्मणः सकाशात् चित्सामान्यात्मिका परा शक्तिः स्वारोपापवादाधिकरणसान्निध्यात् स्वयंज्योतिरात्मिका जातेव जाता न वस्तुत इत्यर्थः । एवं स्वाज्ञदृष्टिविकल्पिताव्यक्तमहत्तत्त्वोपाधिकात् आत्मनः । एवं आत्मनः सकाशात् क्रमेण पञ्चभूतानि जातानि, तेषां इत्यादि । सृष्ट्यादिकर्तृत्वं गुणत्रययोगनिमित्तं तत् कथं? राजस इति । सृष्ट्यादिकर्तारो ब्रह्मादयः

[1] मेव—अ १, अ २.

प्रथमजपदं गता इत्याह—ब्रह्मेति । "सदेव सोम्येदमग्र आसीत्", "हिरण्यगर्भः समवर्तताग्रे," इति श्रुतेः । तत्र धातेत्यादि । यदेकमेवाग्रे सच्चैतन्यं समवर्तत तदेव सृष्ट्यादिकार्यभेदानुरोधेन ब्रह्मविष्णुरुद्रेन्द्रतां प्राप्तवत् भातीति तेषां प्रथमजत्वं उक्तमित्यर्थः । एतेषां मध्ये ब्रह्मण इत्यादि । ब्रह्मणः सकाशात् भूरादिचतुर्दशलोकाः तन्निवासिनो देवतिर्यङ्नराः तद्भोज्यतया स्थावराश्च स्थावराणि च जायन्ते । तेषां शरीरं भौतिकमित्याह—तेषामिति । शरीरं भवति । जाग्रदाद्यवस्थारूढजीवापेक्षया तत्तदवस्थाऽनुरोधेन शरीरत्रयं प्रदर्शयति —ज्ञानेति । विषयैः सह स्थूलकल्पितैः पञ्चीकृतभूतकार्यैः यो विशिष्टः सोऽपि जीवः । जाग्रदवस्थाभिमानिस्थूलशरीरोपाधिको विश्व इत्यर्थः । तैजसभोग्यलिंगशरीरमाह—ज्ञानेति । अपञ्चीकृतभूतकार्यैः ज्ञान . . . विषयैः सह प्राणादि . . . बुद्धिभिश्च युक्तस्तैजसः स्वप्नावस्थायां सूक्ष्मस्थोऽपि सूक्ष्मशरीरस्थोऽपि तदभेदेन अयं लिङ्गमेवेत्युच्यते । स्वापाभिमानिप्राज्ञनिर्वर्त्यं यत् तत् गुणत्रययुक्तं कारणं कारणशरीरं भवति । विश्वादित्रयस्य स्थूलादिभुक्त्वं तुरीयस्य तद्राहित्यं चाह—विश्व इति ॥ ७२ ॥ तुर्यप्रणवस्य सर्वव्यापकत्वमाह—प्रणव इति । प्रणवः तुरीयोङ्कारस्तुरीयः साक्षी स्थूलप्रविभक्तादिभोगाभिमानतः विश्वादिभावं गतेषु सर्वजीवेषु सर्वदा प्रत्यग्रूपेण तिष्ठन् । अभितः परितो राजते महीयते इत्यभिरामः । तुरीयस्तु सर्वासु जाग्रदाद्यवस्थासु मिथ्यात्वदृष्ट्या अधोमुखः पराङ्मुखः उदासीनो भवति, विश्वादिवत् जाग्रदादिसम्मुखो न कदाऽपि भवतीत्यर्थः ॥ ७३ ॥

प्रणवावयवानां प्रत्येकमर्थः

अकार उकारो मकारश्चेति त्रयो वर्णास्त्रयो वेदास्त्रयो लोकास्त्रयो गुणास्त्रयोऽक्षराणि एवं प्रणवः प्रकाशते ।

अकारो [1]जाग्रति नेत्रे वर्तते सर्वजन्तुषु ।
उकारः कण्ठतः स्वप्ने मकारो हृदि सुप्तितः ॥ ७४ ॥

[1] जग्रती—क, अ २.

विराड्विश्वः स्थूलश्चाकारः । हिरण्यगर्भस्तैजसः सूक्ष्मश्च उकारः । कारणाव्याकृतप्राज्ञश्च मकारः ।

अकारो राजसो रक्तो ब्रह्मा चेतन उच्यते ।
उकारः सात्त्विकः शुक्लो विष्णुरित्यभिधीयते ॥ ७५ ॥
मकारस्तामसः कृष्णो रुद्रश्चेति तथोच्यते ।
प्रणवात्प्रभवो ब्रह्मा प्रणवात्प्रभवो हरिः ॥ ७६ ॥
प्रणवात्प्रभवो रुद्रः प्रणवो हि परो भवेत् ।
अकारे लीयते ब्रह्मा [1]उकारे लीयते हरिः ॥ ७७ ॥
मकारे लीयते रुद्रः प्रणवो हि प्रकाशते ।

स्वातिरिक्तप्रपञ्चजातं प्रणवावयवसम्भूतमित्याह—अकार इति । त्रयः त्रीणि अक्षराणि । एवं वस्तुतः सदा प्रणवः प्रकाशते कथमकारादीनां सर्वव्यापकत्वमित्यत्र—अकार इति ॥ ७४–७५ ॥ ब्रह्माद्यारोपापवादाधारस्तुरीयोङ्कार एवेत्याह—प्रणवादिति ॥ ७६ ॥ रुद्रः, ततः प्रणवः ॥ ७७ ॥

तुरीयोङ्काराग्रविद्योतब्रह्म

ज्ञानिनामूर्ध्वगो भूयादज्ञा[2]नीनामधोमुखः ॥ ७८ ॥
एवं वै प्रणवस्तिष्ठेद्यस्तं वेद स वेदवित् ।
अनाहतस्वरूपेण ज्ञानिनामूर्ध्वगो भवेत् ॥ ७९ ॥
तैलधारामिवाच्छिन्नं दीर्घघण्टानिनादवत् ।
प्रणवस्य ध्वनिस्तद्वत्तदग्रं ब्रह्म चोच्यते ॥ ८० ॥

[1] लुकारे—क, अ १.
[2] ने स्यादधो—मु.

45

ज्योतिर्मयं तदग्रं स्यादवाच्यं बुद्धिसूक्ष्मतः ।
ददृशुर्ये महात्मानो यस्तं वेद स वेदवित् ॥ ८१ ॥

स्वज्ञस्वाज्ञदृष्ट्या ऊर्ध्वाधोमुखतया प्रणव एव प्रकाशत इति यो वेद स वेदवित् भवतीत्याह—ज्ञानिनामिति । ज्ञानिदृष्ट्या अनाहतविलसत्प्रत्यगभिन्न-ब्रह्मरूपेण तुरीयोङ्काराप्रविद्योतब्रह्ममात्रतया सर्वोर्ध्वं प्रणवो विभाति, अज्ञानामधो-मुखाकारादितया विभातीत्यर्थः ॥ ७८–७९ ॥ किंच—तैलेति ॥ ८०–८१ ॥

प्रणवार्थतुरीयहंसः

जाग्रन्नेत्रद्वयोर्मध्ये हंस एव प्रकाशते ।
सकारः खेचरी प्रोक्तस्त्वंपदं चेति निश्चितम् ॥ ८२ ॥
हकारः परमेशः स्यात्तत्पदं चेति निश्चितम् ।
सकारो ध्यायते जन्तुर्हकारो हि भवेद् ध्रुवम् ॥ ८३ ॥
इन्द्रियैर्बध्यते जीव आत्मा चैव न बध्यते ।
ममत्वेन भवेज्जीवो निर्ममत्वेन केवलः ॥ ८४ ॥

प्रणवार्थतुरीयहंसः क्व आसनमासाद्य प्रकाशते इत्यत आह—जाग्रदिति । "नेत्रस्थं जागरितं विद्यात्" इति श्रुतितः नेत्रजागरणयोः आधाराधेयता श्रूयते । एवं आधाराधेयात्मकजाग्रन्नेत्रद्वययोः मध्ये तदारोपापवादाधिकरणतया हंसः प्रत्यगभिन्नपरमात्मैव प्रकाशते । हंसस्य प्रत्यक्त्वं परत्वं तयोः ऐक्यसिद्धत्वं वा कुत इत्यत आह—सकार इति । सर्वप्राणिहृदये विद्यमाने खे अव्या-कृताकाशे तत्रत्यपराग्रूपलिंगशरीरप्रातिलोम्येन चरतीति खेचरी सकार इति प्रोक्तः सकारस्य खेचरीबीजत्वात्, "सत्वंपदार्थः" इति प्रभोक्तेः । अतः सकारबीजं त्वंपदार्थप्रत्यक्चैतन्यमिति निश्चितम् ॥ ८२ ॥ हकारार्थः परमेशः परमात्मा स्यात् । अतः हकारबीजार्थभूतं तत्पदलक्ष्यपरमात्मचैतन्यमिति

निश्चितम् । एवं सकारवाच्यो जन्तुः जीवः स्वगतजीवत्वमपास्य सोऽहंशब्दलक्ष्यप्रत्यगभिन्नपरमात्माऽस्मीति यद्यात्मानं ध्यायते जानाति तदा हकारार्थः परमात्मैव भवेदिति यत् तत् ध्रुवं सत्यं इत्यर्थः, "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः ॥ ८३ ॥ देहेन्द्रियादौ अहंममाभिमानभावाभावौ जीवपर भेदाभेदहेतू भवत इत्याह—इन्द्रियैरिति ॥ ८४ ॥

केवलात्मप्रकाशकप्रणवजपः

भूर्भुवः स्वरिमे लोकाः सोमसूर्याग्निदेवताः ।
यस्य मात्रासु तिष्ठन्ति तत्परं ज्योतिरोमिति ॥ ८५ ॥
इच्छा क्रिया तथा ज्ञानं ब्राह्मी रौद्री च वैष्णवी ।
त्रिधा मात्रा[1]स्थितिर्यत्र तत्परं ज्योतिरोमिति ॥ ८६ ॥
वचसा तज्जपेन्नित्यं वपुषा तत्समभ्यसेत् ।
मनसा तज्जपेन्नित्यं तत्परं ज्योतिरोमिति ॥ ८७ ॥
शुचिर्वाऽप्यशुचिर्वाऽपि यो जपेत्प्रणवं सदा ।
न स लिप्यति पापेन पद्मपत्रमिवाम्भसा ॥ ८८ ॥

केवलात्मप्रकाशकप्रणवस्वरूपं निर्दिशति—भूरिति ॥ ८५–८६ ॥ सन्तो यदनुसन्धानतः कृतकृत्या भवन्ति तदेव प्रणवार्थपरंज्योतिरित्याह—वचसेति ॥ ८७ ॥ प्रणवजपस्य शुच्यादिनियमाभावप्रकटनपूर्वकं तत्फलमाह—शुचिरिति ॥ ८८ ॥

प्रणवानुष्ठायिनोऽपि प्राणजय आवश्यकः

चले वाते चलो बिन्दुर्निश्चले निश्चलो भवेत् ।
योगी स्थाणुत्वमाप्नोति ततो वायुं निरुन्धयेत् ॥ ८९ ॥

[1] स्थिताय—अ १, अ २.

यावद्वायुः स्थितो देहे तावज्जीवो न मुञ्चति ।
मरणं तस्य निष्क्रान्तिस्ततो [1]वायुं निरोधयेत् ॥ ९० ॥
यावद्बद्धो मरुत् देहे तावज्जीवो न मुञ्चति ।
यावद्दृष्टिर्भ्रुवोर्मध्ये तावत्कालभयं कुतः ॥ ९१ ॥
अल्पकालभयाद्ब्रह्मा प्राणायामपरो भवेत् ।
योगिनो मुनयश्चैव ततः प्राणान्निरोधयेत् ॥ ९२ ॥

*प्रणवानुष्ठानेन पुरुषार्थसिद्धेः किं प्राणजयेनेत्याशङ्क्य बिन्दुप्राणयो अन्योन्याश्रयतः जीवनहेतुबिन्दुजयार्थं प्राणजयः कर्तव्य इत्याह—चल इति ॥ ८९-९१ ॥* अत एव ब्रह्मादयोऽपि प्राणायामपरा भवन्तीत्याह—**अल्पेति** । यतः प्राणायामपरा भवन्ति ततः तस्मात् ॥ ९२ ॥

नाडीशुद्धितः प्राणायामसिद्धिः

षड्विंशदङ्गुली[2]र्हंसः प्रयाणं कुरुते बहिः ।
वामदक्षिणमार्गेण प्राणायामो विधीयते ॥ ९३ ॥
शुद्धिमेति यदा सर्वं नाडीचक्रं मलाकुलम् ।
तदैव जायते योगी प्राणसंग्रहणक्षमः ॥ ९४ ॥

प्राणगतिनिरोधनमेव प्राणायाम इत्याह— षड्विंशदिति । इडापिंगळमार्गमाश्रित्य बहिः षड्विंशत्यंगुलपर्यन्तं प्राणः प्रसरति, तद्गतिकुण्ठनाय प्राणायामो विधीयते इत्यर्थः ॥ ९३ ॥ नाडीशुद्ध्यनन्तरं केवलकुम्भकशक्तिः भवतीत्याह—शुद्धिमिति ॥ ९४ ॥

[1] द्वायुर्नि—उ.        [2] हंसः—क, अ १, अ २, उ १.

प्राणायामलक्षणम्

बद्धपद्मासनो योगी प्राणं चन्द्रेण पूरयेत् ।
धारयेद्वा यथाशक्त्या भूयः सूर्येण रेचयेत् ॥ ९५ ॥
अमृतोदधिसंकाशं गोक्षीरधवलोपमम् ।
ध्यात्वा चन्द्र[1]मसं बिम्बं प्राणायामे सुखी भवेत् ॥ ९६ ॥
स्फुरत्प्रज्वलसज्ज्वालापूज्यमादित्यमण्डलम् ।
ध्यात्वा हृदि स्थितं योगी प्राणायामे सुखी भवेत् ॥ ९७ ॥

प्राणायामलक्षणं तत्र ध्येयबिम्बद्वयं चाह—बद्धेति ॥ ९५–९७ ॥

नाडीशोधनम्

प्राणं चेदिडया पिबेन्नियमितं भूयोऽन्यथा रेचयेत्
पीत्वा पिङ्गलया समीरणमथो [2]बद्ध्वा त्यजेद्वामया ।
सूर्याचन्द्रमसोरनेन विधिना बिन्दुद्वयं ध्यायतः
शुद्धा नाडिगणा भवन्ति यमिनो मासद्वयादूर्ध्वतः ॥ ९८ ॥
यथेष्ट[3]धारणं वायोरनलस्य प्रदीपनम् ।
नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् ॥ ९९ ॥

नाडीशुद्ध्युपायमाह—प्राणमिति ॥ ९८ ॥ तत्फलं—यथेष्टेति ॥ ९९ ॥

मात्रानियमपूर्वकः प्राणायामः

प्राणो देहस्थितो यावदपानं तु निरुन्धयेत् ।
एकश्वासमयी मात्रा [4]ऊर्ध्वाधो गगने स्थितिः ॥ १०० ॥

[1] समं—उ १.
[2] पीत्वा जपेद्वा—अ १.
[3] धारणाद्वा—अ १.
[4] ऊर्ध्वयोर्गगने गतिः—अ १.

रेचकः पूरकश्चैव कुम्भकः प्रणवात्मकः ।
प्राणायामो भवेदेवं मात्राद्वादशसंयुतः ॥ १०१ ॥
मात्राद्वादशसंयुक्तौ निशाकरदिवाकरौ ।
दोषाजालमबध्नन्तौ ज्ञातव्यौ योगिभिः सदा ॥ १०२ ॥
पूरकं द्वादशं कुर्यात्कुम्भकं षोडशं भवेत् ।
रेचकं दश चोंकारः प्राणायामः स उच्यते ॥ १०३ ॥
अधमे द्वादशा मात्रा मध्यमे द्विगुणा मता ।
उत्तमे त्रिगुणा प्रोक्ता प्राणायामस्य निर्णयः ॥ १०४ ॥
अधमे स्वेदजननं कम्पो भवति मध्यमे ।
उत्तमे स्थानमाप्नोति ततो वायुं निरुन्धयेत् ॥ १०५ ॥
बद्धपद्मासनो योगी नमस्कृत्य गुरुं शिवम् ।
नासाग्रदृष्टिरेकाकी प्राणायामं समभ्यसेत् ॥ १०६ ॥
द्वाराणां नव संनिरुध्य मरुतं [1]बद्ध्वा दृढां धारणां
नीत्वा कालमपानवह्निसहितं शक्त्या समं चालितम् ।
आत्मध्यानयुतस्त्वनेन विधिना विन्यस्य मूर्ध्नि स्थिरं
यावत्तिष्ठति तावदेव महतां सङ्गो न संस्तूयते ॥ १०७ ॥
प्राणायामो भवेदेवं पातकेन्धनपावकः ।
भवोदधिमहासेतुः प्रोच्यते योगिभिः सदा ॥ १०८ ॥

मूलबन्धावधिं, मात्रालक्षणं, भंगयन्तरेण प्राणायामलक्षणं चाह—प्राण इति । सहजोच्छ्वासनिःश्वासकालो मात्राकाल इत्यर्थः ॥ १००–१०१ ॥

[1] लब्ध्वा—उ, मु.

योगिना द्वादशमात्राऽलङ्कारचन्द्रसूर्यौ ध्येयावित्याह—मात्रेति । अहोरात्रं द्वादशधा विभज्य पञ्चघटिकाकालो मात्राकालः । तत्संयुक्तौ निशाकरदिवाकरौ चन्द्रसूर्यनाडीभ्यां गमनागमनं कुर्वन्तौ । दोषाग्रहणमहश्चाप्युग्रलक्षणार्थम् । दोषाजालमबध्नन्तौ अहोरात्रमविश्रान्तौ योगिभिः आदौ ज्ञातव्यौ । चन्द्रसूर्यनाडीगतिं ज्ञात्वा यदा या नाडी प्रवहति तदा तया पूरकं निरुद्ध्या अन्यया रेचकं कुर्यात् । एवं कृते वायोः नाडीद्वयेऽपि प्राणस्य समगतिः स्यात् । ततः प्राणायामो निरायासेन भवेदिति भावः ॥ १०२ ॥ ततः पूरकं द्वादशं द्वादशमात्राकालं कुर्यात् । दश चोङ्कार इति दशमात्राकालः इत्यर्थः ॥ १०३ ॥ किंच—अधमे ॥ १०४–१०५ ॥ पद्माद्यासनस्थो योगी आत्मध्यानयुतः सन् नवद्वारं सन्निरुध्य अपानवह्निसहितं कुण्डलिनीशक्त्या समं चालितं मारुतं बद्ध्वा मूलाधारादिषट्चक्रेषु क्रमात् नीत्वा अनेन विधिना कालं तुर्यात्मानं मूर्ध्नि सहस्रारचक्रे विन्यस्य स्थिरं सम्भाव्य यावन्मूर्ध्नि स्थिरं तिष्ठति तावदेव महतां सङ्गो न संस्तूयते मूर्ध्नि साक्षात्कृततुर्यतत्त्वस्य कृतकृत्यत्वेन नहि संगकांक्षा अस्ति । यावत्सहस्रारे तुर्यात्मानं न पश्यति तावन्महतां संगः स्तूयत इत्यर्थः ॥ १०६–१०७ ॥ प्राणायामं स्तौति—प्राणेति । महासेतुः इति प्रोच्यते ॥ १०८ ॥

योगाङ्गानां प्रत्येकं फलं तत्तारतम्यं च

आसनेन रुजं हन्ति प्राणायामेन पातकम् ।
विकारं मानसं योगी प्रत्याहारेण मुञ्चति ॥ १०९ ॥
धारणाभिर्मनोधैर्यं याति चैतन्यमद्भुतम् ।
समाधौ मोक्षमाप्नोति त्यक्त्वा कर्म शुभाशुभम् ॥ ११० ॥
प्राणायामद्विषट्केन प्रत्याहारः प्रकीर्तितः ।
प्रत्याहारद्विषट्केन जायते धारणा शुभा ॥ १११ ॥

धारणा द्वादश प्रोक्तं ध्यानं योगविशारदैः ।
ध्यानद्वादशकेनैव समाधिरभिधीयते ॥ ११२ ॥
[1]समाधौ परमं ज्योतिरनन्तं विश्वतोमुखम् ।
तस्मिन्दृष्टे क्रियाकर्म यातायातो न विद्यते ॥ ११३ ॥

प्रातिस्विकेन षडंगयोगफलमाह—आसनेनेति ॥ १०९ ॥ ध्यानेन याति ॥ ११० ॥ आसनजयापेक्षया प्राणायामादेः द्वादशगुणाधिक्यं दर्शयति—प्राणेति ॥ १११–११२ ॥ समाधिसिद्ध्यनन्तरं कृतकृत्यता स्यादित्याह—समाधाविति । विश्वतोमुखं ब्रह्म विजयते अयमहमस्मीति ॥ ११३ ॥

षण्मुखीमुद्राऽभ्यासेन नादाभिव्यक्तिः

संबद्ध्वाऽऽसनमेढ्रमङ्घ्रियुगलं कर्णाक्षिनासापुट-
द्वारानङ्गुलिभिर्नियम्य पवनं वक्त्रेण वा पूरितम् ।
बद्ध्वा वक्षसि बह्वपानसहितं मूर्ध्नि स्थितं धारये-
देवं याति विशेषतत्त्वसमतां योगीश्वरस्तन्मनाः ॥ ११४ ॥
गगनं पवने प्राप्ते ध्वनिरुत्पद्यते महान् ।
घण्टाऽऽदीनां प्रवाद्यानां नादसिद्धिरुदीरिता ॥ ११५ ॥

एवं समाधिः केन सिध्यतीत्यत्राह—संबद्ध्वेति । योगी सम्यक् सिद्धासनं बद्ध्वा मध्ये मेढ्रं तदधोर्ध्वे अंघ्रियुगळं च बद्ध्वेत्यर्थः । षण्मुखीमुद्रया वक्त्रेण वायुमापूर्य बन्धत्रयपूर्वकं मूर्ध्नि सहस्रारे तुर्ये तुर्यातीते वा मनो धारयेत् । एवं धारणया योगीश्वरो विशेषतत्त्वसमतां अवशिष्टतत्त्वतुर्यातीतभावं यातीत्यर्थः ॥ ११४ ॥ षण्मुखीमुद्राऽभ्याससिद्धिः नादाभिव्यक्तिरित्याह—गगनमिति । हृदयावच्छिन्नाव्याकृतगगनम् ॥ ११५ ॥

[1] यत्समाधौ परं ज्योतिः—क, अ १, अ २.

प्राणाभ्यासः सर्वरोगनिरासकः

प्राणायामेन युक्तेन सर्वरोगक्षयो भवेत् ।
प्राणायामवियुक्तेभ्यः सर्वरोगसमुद्भवः ॥ ११६ ॥
हिक्का कासस्तथा श्वासः शिरःकर्णाक्षिवेदनाः ।
भवन्ति विविधा रोगाः पवनव्यत्ययक्रमात् ॥ ११७ ॥
यथा सिंहो गजो व्याघ्रो भवेद्वश्यः शनैः शनैः ।
तथैव सेवितो वायुरन्यथा हन्ति साधकम् ॥ ११८ ॥
युक्तंयुक्तं त्यजेद्वायुं युक्तंयुक्तं प्रपूरयेत् ।
युक्तंयुक्तं प्रबध्नीयादेवं सिद्धिमवाप्नुयात् ॥ ११९ ॥

विधिवत् प्राणाभ्यासः सर्वरोगनिरासकः विपरीते विपरीतफलदो भवतीत्याह—प्राणायामेनेति ॥ ११६–११७ ॥ यतः एवं अतः यथाशास्त्रं गुरूक्तप्रकारेण प्राणाभ्यासो विशिष्टफलदः इत्याह—यथेति । वायुः सिद्धकरो भवति ॥ ११८ ॥ अत एव युक्तमिति ॥ ११९ ॥

प्राणाभ्यासे इन्द्रियप्रत्याहार आवश्यकः

चरतां चक्षुरादीनां विषयेषु यथाक्रमम् ।
तत्प्रत्याहरणं तेषां प्रत्याहारः स उच्यते ॥ १२० ॥
यथा तृतीयकाले तु रविः प्रत्याहरेत्प्रभाम् ।
तृतीयाङ्गस्थितो योगी विकारं मानसं हरेत् ॥ १२१ ॥

इत्युपनिषत् ॥

इन्द्रियाणामिन्द्रियार्थपरवशतया स्थितत्वात् कथं अभ्याससिद्धिरित्यत्र तत्प्रत्याहरणादभ्यासः सफलो भवेदित्याह—चरतामिति ॥१२०॥ कथं प्रत्याहरणं

कर्तव्यं इत्यत्र सदृष्टान्तं तदाह—यथेति। यथा रविः तृतीयकाले सायाह्ने स्वप्रभां प्रत्याहरेत् तथा बाल्ययौवनकौमारभेदेन स्थूलसूक्ष्मकारणशरीरभेदेन तमोरजः-सत्वभेदेन व्रतिकामिवनिभेदेन वा तत्राप्यसंगतया तृतीयाङ्गस्थितो योगी सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति बोधेन मानसं तद्विकारं सङ्कल्पादिं च हरेत् विलापयेत् अपह्नवं कुर्यादित्यर्थः। इत्युपनिषच्छब्दः योगचूडामण्युपनिषत्समाप्त्यर्थः ॥ १२१ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
लिखितं स्याद्विवरणं योगचूडामणेः स्फुटम् ॥
चूडामणिविवरणमशीत्यधिशतद्वयम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे षट्चत्वारिंशत्संख्यापूरकं योगचूडामण्युपनिषद्विवरणं सम्पूर्णम्

# योगतत्त्वोपनिषत्

सह नाववतु---इति शान्तिः

अष्टाङ्गयोगजिज्ञासा

योगतत्त्वं प्रवक्ष्यामि योगिनां हितकाम्यया ।
यच्छ्रुत्वा च पठित्वा च सर्वपापैः प्रमुच्यते ॥ १ ॥
विष्णुर्नाम महायोगी महाभूतो महातपाः ।
तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तमः ॥ २ ॥
तमाराध्य जगन्नाथं प्रणिपत्य पितामहः ।
पप्रच्छ योगतत्त्वं मे ब्रूहि चाष्टाङ्गसंयुतम् ॥ ३ ॥

योगैश्वर्यं च कैवल्यं जायते यत्प्रसादतः ।
तद्वैष्णवं योगतत्त्वं रामचन्द्रपदं भजे ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं योगतत्त्वोपनिषत् मन्त्रलयराजयोगविशिष्टारम्भघटपरिचयनिष्पत्तिचैत्यावस्थोपेतयमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधितत्साधनबन्धत्रयमहामुद्राबन्धवेधखेचरीप्रकटनपूर्वकं ब्रह्ममात्रपर्यवसन्ना विराजते । अस्याः उपनिषदः संक्षेपतो विवरणमारभ्यते । सृष्टिस्थितिकर्तृब्रह्मविष्णवाख्यायिका तु विद्यास्तुत्यर्था । आदौ तावत्

वक्ष्यमाणयोगतत्त्वोपनिषच्छ्रवणपठनफलं प्रकटयति—**योगतत्त्वमिति** । प्रत्यक्पयोः योगः तत्त्वं प्रत्यक्परविभागैक्यासहं निष्प्रतियोगिकब्रह्ममात्रं यस्यां उपनिषदि प्रतिपाद्यते सेयं योगतत्त्वोपनिषत् । केवलं तच्छ्रवणपठनतः सर्वपापनिवृत्तिर्भवतीत्यर्थः ॥ १ ॥ एतद्विद्याऽऽचार्यस्वरूपं विशदयति—**विष्णुरिति** । तत्त्वज्ञानयोगमार्गे योगिभिः यथा दीपः तथा पुरुषोत्तमो विष्णुः दृश्यते साक्षात्क्रियत इत्यर्थः ॥ २ ॥ तं ब्रह्मा पृच्छतीत्याह—**तमिति** ॥ ३ ॥

### योगतत्त्वस्य दुर्लभत्वम्

तमुवाच हृषीकेशो वक्ष्यामि शृणु तत्त्वतः ।
सर्वे जीवाः सुखैर्दुःखैर्मायाजालेन वेष्टिताः ॥ ४ ॥
तेषां मुक्तिकरं मार्गं मायाजालनिकृन्तनम् ।
जन्ममृत्युजराव्याधिनाशनं मुक्तितारकम् ॥ ५ ॥
नानामार्गैस्तु दुष्प्रापं कैवल्यं परमं पदम् ।
पतिताः शास्त्रजालेषु प्रज्ञया तेन मोहिताः ॥ ६ ॥
अनिर्वाच्यपदं वक्तुं न शक्यं तैः सुरैरपि ।
स्वात्मप्रकाशरूपं तत्किं शास्त्रेण प्रकाश्यते ॥ ७ ॥

एवं पृष्टो भगवान् प्रश्नोत्तरमाह—**तमिति** । स्ववक्तव्यरहस्यार्थस्य नानामार्गालङ्कारनानाशास्त्रतत्प्रवर्तकैरपि दुष्प्रापतामाह—**सर्वे इति** । मायाजालेन वेष्टिताः मायातत्कार्यपटैः आवृताः इत्यर्थः ॥ ४–५ ॥ कैवल्यमार्गस्य ज्ञानेतरसाधनेन दुष्प्रापत्वे "नान्यः पन्था अयनाय विद्यते" इति श्रुतेः । शास्त्रजालमोहितैः यन्मयोच्यमानं तद्वक्तुं न शक्यमित्याह—**पतिता इति** । तेन स्वाज्ञानेन च मोहिताः ॥ ६ ॥ सूर्यादिघटान्ताः येन प्रकाश्यन्ते

येन वेदशास्त्राण्यर्थवन्ति तत् कदाऽपि शास्त्रप्रकाश्यं न भवति, ब्रह्मणः स्वप्रकाशमात्रत्वेन व्याविद्धपदवाक्यार्थत्वात् ॥ ७ ॥

### परस्यैव जीवत्वम्

निष्कलं निर्मलं शान्तं सर्वातीतं निरामयम् ।
तदेव जीवरूपेण पुण्यपापफलैर्वृतम् ॥ ८ ॥
परमात्मपदं नित्यं तत्कथं जीवतां गतम् ।
सर्व[1]भावपदातीतं ज्ञानरूपं निरञ्जनम् ॥ ९ ॥
वारिवत्स्फुरितं तस्मिंस्तत्राहंकृतिरुत्थिता ।
पञ्चात्मकमभूत्पिण्डं धातुबद्धं गुणात्मकम् ॥ १० ॥
सुखदुःखैः समायुक्तं जीवभावनया कुरु ।
तेन जीवाभिधा प्रोक्ता विशुद्धे परमात्मनि ॥ ११ ॥

जीवः परस्मात् भिद्यत इत्याशङ्क्य यन्निर्विशेषं तदेव जीवतां गच्छतीव भातीत्याह—निष्कलमिति ॥ ८ ॥ तत् कथं जीवतामर्हति इत्याक्षिपति—परमात्मेति । प्रश्नोत्तरमाह—सर्वेति । वस्तुतो ब्रह्म सर्वभावपदातीतम् । स्वातिरिक्तभावः शशविषाणवत् नास्त्येव । यदि स्वाज्ञदृष्ट्या स्यात्तदा स्वज्ञदृष्ट्या सर्वभावपदातीतं ज्ञानरूपं ज्ञप्तिमात्रत्वात्, निरञ्जनं सर्वत्रासंगमित्यर्थः ॥ ९ ॥ यत् स्वमात्रं अवशिष्टं तत्र स्वाज्ञः स्वातिरिक्तं अध्यस्यतीत्याह—वारिवदिति । यत् सर्वभावपदातीतं तत्र तस्मिन् आदौ मन्दवातेरितवारिवत् स्फुरितं तत्र गुणसाम्यात्मिका मूलप्रकृतिवाच्यां अहङ्कृतिरुत्थिता । ततः पञ्चतन्मात्राणि, ततः पञ्चीकृतपञ्चमहाभूतानि, ततः सप्तधातुबद्धं त्रिगुणात्मकं पञ्चात्मकं पिण्डमभूत् ॥ १० ॥ तत्र सुखदुःखसमायुक्तं यच्चैतन्यं तत्

[1] ताप—अ १.

जीवभावनया कुरु । सर्वभावातीतविशुद्धे परमात्मनि तेन प्राकृतगुणयोगेन निर्विशेषब्रह्मण एव जीवाभिधा प्रोक्ता ॥ ११ ॥

प्राकृतगुणवियुक्तस्य जीवस्य परमात्मत्वम्

कामक्रोधभयं चापि मोहलोभमदो रजः ।
जन्म मृत्युश्च कार्पण्यं शोकस्तन्द्रा क्षुधा तृषा ॥ १२ ॥
तृष्णा लज्जा भयं दुःखं विषादो हर्ष एव च ।
एभिर्दोषैर्विनिर्मुक्तः स जीवः केवलो मतः ॥ १३ ॥

यदा प्राकृतगुणवियुक्तो भवति तदा जीव एव केवलपरमात्मा भवतीत्याह—**कामेति** । अत्र वचनलिंगव्यत्ययः छान्दसः ॥ १२–१३ ॥

ज्ञानयोगयोः युगपदभ्यासः

तस्माद्दोषविनाशार्थमुपायं कथयामि ते ।
योगहीनं कथं ज्ञानं मोक्षदं भवति ध्रुवम् ॥ १४ ॥
योगोऽपि ज्ञानहीनस्तु न क्षमो मोक्षकर्मणि ।
तस्माज्ज्ञानं च योगं च मुमुक्षुर्दृढमभ्यसेत् ॥ १५ ॥

यस्मादेवं तस्मात् । केवलनिर्विशेषज्ञानस्य मोक्षदत्वेऽपि सविशेषज्ञानस्य तदभावात् योगाकांक्षा भवेदिति ज्ञानयोगौ युगपदभ्यसेदित्याह—**योगहीनमिति** ॥ १४ ॥ यस्मादेवं **तस्मात्** ॥ १५ ॥

ज्ञानस्वरूपम्

अज्ञानादेव संसारो ज्ञानादेव विमुच्यते ।
ज्ञानस्वरूपमेवादौ ज्ञानं ज्ञेयैकसाधनम् ॥ १६ ॥

ज्ञातं येन निजं रूपं कैवल्यं परमं पदम् ।
निष्कलं निर्मलं साक्षात्सच्चिदानन्दरूपकम् ॥ १७ ॥
उत्पत्तिस्थितिसंहारस्फूर्तिज्ञानविवर्जितम् ।
एतज्ज्ञानमिति प्रोक्तमथ योगं ब्रवीमि ते ॥ १८ ॥

बन्धमोक्षहेतू स्वाज्ञानस्वज्ञाने इत्याह—अज्ञानादिति । तत्र ज्ञानं कीदृशं इत्याह—ज्ञानेति ॥ १६–१७ ॥ स्वातिरेकेण इदमुत्पन्नं स्थितं उपसंहृतं इति या स्फूर्तिः तज्ज्ञानविवर्जितं तदेव निर्विशेषज्ञानमिति प्रोक्तम् । नहि तत् स्वफलाप्तौ योगादिसाधनमपेक्षते । यद्यपरब्रह्मगोचरं सविशेषज्ञानं स्वगतविशेषताशान्तये तदेव योगमपेक्षते । यत् सविशेषज्ञानेन समुच्चिचीषितं तत् ब्रवीमीत्याह—अथेति । अथ सविशेषज्ञानोत्पत्त्यनन्तरं तन्निर्विशेषताहेतुयोगं शृण्वित्यर्थः ॥ १८ ॥

मन्त्रयोगादिः चतुर्विधो योगः

योगो हि बहुधा ब्रह्मन् भिद्यते व्यवहारतः ।
मन्त्रयोगो लयश्चैव हठोऽसौ राजयोगकः ॥ १९ ॥

सोऽयं योगः कीदृश इत्याकांक्षायां पारमार्थिकयोग एकोऽपि साधनवैचित्र्यात् बहुधा भिद्यते इत्याह—योगो हीति । तत् कथमित्यत्र मन्त्रेति । इति प्रधानयोगाः चत्वारः ॥ १९ ॥

आरम्भादयो योगावस्थाः

आरम्भश्च घटश्चैव तथा परिचयः स्मृतः ।
निष्पत्तिश्चेत्यवस्था च सर्वत्र परिकीर्तिता ॥ २० ॥

अङ्गयोगास्तु—आरम्भश्चेति ॥ २० ॥

मन्त्रयोगलक्षणम्

एतेषां लक्षणं ब्रह्मन् वक्ष्ये शृणु समासतः ।
मातृकादियुतं मन्त्रं द्वादशाब्दं तु यो जपेत् ॥ २१ ॥
क्रमेण लभते ज्ञानमणिमादिगुणान्वितम् ।
अल्पबुद्धिरिमं योगं सेवते साधकाधमः ॥ २२ ॥

इति सूत्रवाक्यानि, एतेषाम् । तत्रादौ मन्दानुकम्पया मन्त्रयोगमाह-मातृकेति ॥ २१-२२ ॥

लययोगलक्षणम्

लययोगश्चित्तलयः कोटिशः परिकीर्तितः ।
गच्छंस्तिष्ठन्स्वपन्भुञ्जन्ध्यायेन्निष्कलमीश्वरम् ॥ २३ ॥
स एव लययोगः स्याद्धठयोगमतः शृणु ।

लययोगप्रकारमाह—लयेति । तत्रायं सारतरो गच्छन्निति ॥ २३ ॥

हठयोगाङ्गानि

यमश्च नियमश्चैव ह्यासनं प्राणसंयमः ॥ २४ ॥
प्रत्याहारो धारणा च ध्यानं भ्रूमध्यमे हरिम् ।
समाधिः समताऽवस्था साष्टाङ्गो योग उच्यते ॥ २५ ॥
महामुद्रा महाबन्धो महावेधश्च खेचरी ।
जालंधरोड्डियाणश्च मूलबन्धस्तथैव च ॥ २६ ॥

द्रीर्घप्रणवसंधानं सिद्धान्तश्रवणं [1]तथा ।
वज्रोली चामरोली च सहजोली त्रिधा मता ॥ २७ ॥

अष्टांगविशिष्टहठयोगमाह—हठेति ॥ २४–२५ ॥ पुनः द्वादशांगयोग-माचष्टे—महामुद्रेति ॥ २६–२७ ॥

यमनियमासनेषु प्रधानाङ्गानि

एतेषां लक्षणं ब्रह्मन् प्रत्येकं शृणु तत्त्वतः ।
लघ्वाहारो यमेष्वेको मुख्यो भवति नेतरः ॥ ॥
अहिंसा नियमेष्वेका मुख्या वै चतुरानन ।
सिद्धं पद्मं तथा सिंहं भद्रं चेति चतुष्टयम् ॥ ॥

आहत्य अयं योगो विंशत्यंगविशिष्टः । एतेषामंगान लक्षणमाह—एतेषामिति । दशयमेषु प्रधानसाधनमाह—लघ्विति ॥ २८ । तथा दशनियमेषु मुख्यसाधनमाह—अहिंसेति । आसनानि अनन्तानि । ते अशीत्यासनानि मुख्यानि । तेष्वपि सिद्धाद्यासनचतुष्टयं मुख्यं इत्याह—सिद्धमिति ॥ २९ ॥

योगाभ्यासविघ्नत्यागः

प्रथमाभ्यासकाले तु विघ्नाः स्युश्चतुरानन ।
आलस्यं कत्थनं धूर्तगोष्ठी मन्त्रादिसाधनम् । ३० ॥
धातुस्त्रीलौल्यकादीनि मृगतृष्णामयानि वै ।
ज्ञात्वा सुधीस्त्यजेत्सर्वान् विघ्नान् पुण्यप्रभाव ॥ ३१ ॥

योगाभ्यासकालप्रादुर्भूतविघ्नजालं त्यजेदित्याह—प्रथ ॥ ३०–३१ ॥

[1] परं—क, अ १, अ २.

### प्राणायामोचितमठासनयोः स्वरूपम्

प्राणायामं ततः कुर्यात्पद्मासनगतः स्वयम् ।
सुशोभनं मठं कुर्यात्सूक्ष्मद्वारं तु निर्व्रणम् ॥ ३२ ॥
सुष्ठुलिप्तं गोमयेन सुधया वा प्रयत्नतः ।
मत्कुणैर्मशकैर्लूकैर्वर्जितं च प्रयत्नतः ॥ ३३ ॥
दिने दिने च संमृष्टं संमार्जन्या विशेषतः ।
वा तं च सुगन्धेन धूपितं गुग्गुलादिभिः ॥ ३४ ॥
ना युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् ।
त पविश्य मेधावी पद्मासनसमन्वितः ॥ ३५ ॥

ततः कि यत आह—प्राणायाममिति । प्राणायामोचितमठलक्षणमाह-सुशोभनमिति ३२–३४ ॥ योगिनो लक्षणमाह—तत्रेति ॥ ३५ ॥

### प्राणायामारम्भप्रकारः

ऋ कायः प्राञ्जलिश्च प्रणमेदिष्टदेवताम् ।
त दक्षिणहस्तस्य अङ्गुष्ठेनैव पिङ्गलाम् ॥ ३६ ॥
नि य पूरयेद्वायुमिडया तु शनैः शनैः ।
य ाक्त्यविरोधेन ततः कुर्याच्च कुम्भकम् ॥ ३७ ॥
पु जेत्पिङ्गलया शनैरेव न वेगतः ।
पु पिङ्गलयाऽऽपूर्य [1]पूरयेदुदरं शनैः ॥ ३८ ॥

[1] भार—उ.

धारयित्वा यथाशक्ति रेचयेदिडया शनैः ।
यया त्यजेत्तयाऽऽपूर्य धारयेदविरोधतः ॥ ३९ ॥

योगारम्भसमये प्रणमेत् । ततः किमित्यत्र प्राणायामानुष्ठानक्रममाह—तत इति ॥ ३६–३९ ॥

मात्रानियमपूर्वकः प्राणायामः

जानु प्रदक्षिणीकृत्य न द्रुतं न विलम्बितम् ।
अङ्गुलिस्फोटनं कुर्यात्सा मात्रा परिगीयते ॥ ४० ॥
इडया वायुमा[1]पूर्य शनैः षोडशमात्रया ।
कुम्भयेत्पूरितं पश्चाच्चतुःषष्ट्या तु मात्रया ॥ ४१ ॥
रेचयेत्पिङ्गलानाड्या द्वात्रिंशन्मात्रया पुनः ।
पुनः पिङ्गलयाऽऽपूर्य पूर्ववत्सुसमाहितः ॥ ४२ ॥
प्रातर्माध्यंदिने सायमर्धरात्रे च कुम्भकान् ।
शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत् ॥ ४३ ॥

सामान्यप्राणायामलक्षणमुक्त्वा अथ मात्राकालप्र[मा]णपूर्वकं विशेषप्राणायामलक्षणमाह—जान्विति ॥ ४०–४२ ॥ प्रत्यहं प्राणा[याम]कालसंख्येयत्तामाह—प्रातरिति ॥ ४३ ॥

आन्तरालिकफलं नाडीशुद्धिः तच्चिह्नानि च

एवं मासत्रयाभ्यासान्नाडीशुद्धिस्ततो भवेत् ।
यदा तु नाडीशुद्धिः स्यात्तदा चिह्नानि बाह[्यतः] ॥ ४४ ॥

[1] रोप्य—क, अ १.

जायन्ते योगिनो देहे तानि वक्ष्याम्यशेषतः ।

शरीरलघुता दीप्तिर्जाठराग्निविवर्धनम् ॥ ४५ ॥

कृशत्वं च शरीरस्य तदा जायेत [1]निश्चितम् ।

एवमभ्यासान्तरालिकफलमाह—एवमिति । नाडीशुद्धिचिह्नानि कानीत्यत आह—यदेति ॥ ४४–४८ ॥

योगाभ्यासकाले आहारादिनियमः

ये ।विघ्नकराहारं वर्जयेद्योगवित्तमः ॥ ४६ ॥

ल णं सर्षपं चाम्लमुष्णं रूक्षं च तीक्ष्णकम् ।

: रुजातं रामठादि वह्निस्त्रीपथिसेवनम् ॥ ४७ ॥

प्र स्नानोपवासादिकायक्लेशांश्च वर्जयेत् ।

अ यासकाले प्रथमं शस्तं क्षीराज्यभोजनम् ॥ ४८ ॥

ग ूममुद्गशाल्यन्नं योगवृद्धिकरं विदुः ।

केवलकुम्भकसिद्धिः

त परं यथेष्टं तु शक्तः स्याद्वायुधारणे ॥ ४९ ॥

य ाधारणाद्वायोः सिध्येत्केवलकुम्भकः ।

के । कुम्भके सिद्धे रेचपूरविवर्जिते ॥ ५० ॥

न न्य दुर्लभं किंचित् त्रिषु लोकेषु विद्यते ।

ततः । यत आह—तत इति ॥ ४९ ॥ तेन किं स्यादित्यत आह—यथेष्टे ५० ॥

[1] निश्चयं— ;, उ १.

प्रस्वेदादिसिद्धयः

प्रस्वेदो जायते पूर्वं मर्दनं तेन कारयेत् ॥ ९१ ॥
ततोऽपि धारणाद्वायोः क्रमेणैव शनैः शनैः ।
कम्पो भवति देहस्य आसनस्थस्य देहिनः ॥ ९२ ॥
ततोऽधिकतराभ्यासात् [1]दर्दुरी स्वेन जायते ।
यदा च [2]दर्दुरो भाव उत्प्लुत्योत्प्लुत्य गच्छति ॥ ९३ ॥
पद्मासनस्थितो योगी तथा गच्छति भूतले ।
ततोऽधिकतराभ्यासाद्भूमित्यागश्च जायते ॥ ९[illegible] ॥
पद्मासनस्थ एवासौ भूमिमुत्सृज्य [3]गच्छति ।
अतिमानुषचेष्टादि तथा सामर्थ्यमुद्भवेत् ॥ ९[illegible] ॥
न दर्शयेच्च सामर्थ्यं दर्शनं वीर्यवत्तरम् ।
स्वल्पं वा बहुधा दुःखं योगी न व्यथते तदा ९६ ॥
अल्पमूत्रपुरीषश्च स्वल्पनिद्रश्च जायते ।
कीलवो दूषिका लाला स्वेददुर्गन्धताऽऽनने ॥ ७ ॥
एतानि सर्वथा तस्य न जायन्ते ततः परम् ।
ततोऽधिकतराभ्यासाद्बलमुत्पद्यते बहु ॥ ९८
येन भूचरसिद्धिः स्याद्भूचराणां जये क्षमः
व्याघ्रो वा शरभो वाऽपि गजो गवय एव [illegible] ९९ ॥

[1] दार्दरी—क. दर्दुरी—अ १. [2] दर्दु —उ, अ २.
[3] वर्तते—क, अ १, अ २.

सिंहो वा योगिना तेन म्रियन्ते हस्तताडिताः ।
कन्दर्पस्य यथा रूपं तथा [1]स्यादपि योगिनः ॥ ६० ॥
तद्रूपवशगा नार्यः काङ्क्षन्ते तस्य सङ्गमम् ।
यदि सङ्गं करोत्येष तस्य बिन्दुक्षयो भवेत् ॥ ६१ ॥
वर्जयित्वा स्त्रियां संगं कुर्यादभ्यासमादरात् ।
योगिनोऽङ्गे सुगन्धश्च जायते बिन्दुधारणात् ॥ ६२ ॥

पादार्धी पादपूर्णाभ्यासतः प्रस्वेदाद्यतिमानुषचेष्टाऽन्तसिद्धिरुदेति। तत्सिद्धिजालं सद ' गोपयेदित्याह—प्रस्वेद इति । पादप्राणायामतः प्रस्वेदः ॥ ५१–५५ ॥ दुःखं प्राप्यापि ॥ ५६ ॥ एवमभ्यासं कुर्वतो योगिनो मानुषविकाररा॰ गपूर्वकं महाबलं सौन्दर्यं स्त्र्यादिपराङ्मुखत्वं स्वांगदिव्यसुगन्धश्च जायत इत्याह —अल्पेति । स्वदेहजकीलं सन्धिबन्धमुद्भ्रन्तीति कीलवो वायुबन्धाः । शरीरं दूषयति कार्श्यभावं करोतीति दूषिका क्षयादिः, नेत्रमलं वा । शिष्टं ृष्टम् ॥ ५७ ॥ किंच—तत इति ॥ ५८ ॥ तत् कथं? व्याघ्र इति ॥ ९–६२ ॥

### योगप्रतिबन्धनाशाय प्रणवजपः आरम्भावस्था

त रहस्युपाविष्टः प्रणवं प्लुतमात्रया ।
ज पूर्वार्जितानां तु पापानां नाशहेतवे ॥ ६३ ॥
स घ्नहरो मन्त्रः प्रणवः सर्वदोषहा ।
ए भ्यासयोगेन सिद्धिरारम्भसंभवा ॥ ६४ ॥

[1] स्या—, अ २, उ १.

यदि प्रतिबन्धकवशात् योगो न सिध्यति तदा तच्छान्त्यै प्रणवजपः कार्यः इत्याह—तत इति ॥ ६३ ॥ प्रस्वेदादिसुगन्धश्च जायते इत्यन्तसिद्धे-रारब्धत्वादयमारम्भः इत्याह—एवमिति ॥ ६४ ॥

घटावस्था

ततो भवेद्धटावस्था पवनाभ्यासतत्परा ।
प्राणोऽपानो मनो बुद्धिर्जीवात्मपरमात्मनोः ॥ ६५ ॥
अन्योन्यस्याविरोधेन [1]एकतां घटते यदा ।
घटावस्थेति सा प्रोक्ता तच्चिह्नानि ब्रवीम्यहम् ॥ ६६ ॥
पूर्वं यः कथितोऽभ्यासश्चतुर्थांशं परिग्रहेत् ।
दिवा वा यदि वा [2]सायमेककालं समभ्यसेत् ॥ ६७ ॥
एकवारं प्रतिदिनं कुर्यात्केवलकुम्भकम् ।

घटयोगमाह—तत इति ॥ ६५–६७ ॥

प्रत्याहारलक्षणम्

इन्द्रियाणीन्द्रियार्थेभ्यो यत्प्रत्याहरणं स्फुटम् ॥ ६८ ॥
योगी कुम्भकमास्थाय प्रत्याहारः स उच्यते

प्रत्याहारस्वरूपमाह—इन्द्रियाणीति ॥ ६८ ॥

धारणास्वरूपम्

यद्यत्पश्यति चक्षुर्भ्यां तत्तदात्मेति भावयेत् ॥ ६९ ॥
यद्यच्छृणोति कर्णाभ्यां तत्तदात्मेति भावयेत्
लभते नासया यद्यत्तत्तदात्मेति भावयेत् ॥

[1] एकता—मु.    [2] सायं याममात्रं- क, १, अ २.

जिह्वया यद्रसं ह्यत्ति तत्तदात्मेति भावयेत् ।
त्वचा यद्यत्स्पृशेद्योगी तत्तदात्मेति भावयेत् ॥ ७१ ॥
एवं ज्ञानेन्द्रियाणां तु तत्त[1]दात्मनि धारयेत् ।

धारणालक्षणमाह—यद्यदिति ॥ ६९–७१ ॥ चक्षुरादीन्द्रियेन्द्रियार्थजात स्वाज्ञदशायामब्रह्मतया विकल्पितं स्वज्ञदशायां तत् ब्रह्मेति प्रतीचि धारयेदित्यर्थः ॥

धारणासिद्धयः तद्गोपनविधिश्च

य नमात्रं प्रतिदिनं योगी यत्नादतन्द्रितः ॥ ७२ ॥
य वा [2]चित्तसामर्थ्यं जायते योगिनो ध्रुवम् ।
दू ुतिर्दूरदृष्टिः क्षणाद्दूरागमस्तथा ॥ ७३ ॥
व सिद्धिः कामरूपत्वमदृश्यकरणी तथा ।
म मूत्रप्रलेपेन लोहादेः स्वर्णता भवेत् ॥ ७४ ॥
खे ातिस्तस्य जायेत संतताभ्यासयोगतः ।
स बुद्धिमता भाव्यं योगिना योगसिद्धये ॥ ७५ ॥
ए विघ्ना महासिद्धेर्न रमेत्तेषु बुद्धिमान् ।
न र्शयेत्स्वसामर्थ्यं यस्य कस्यापि योगिराट् ॥ ७६ ॥
य मूढो यथा मूर्खो यथा बधिर एव वा ।
तथ र्तेत लोकस्य स्वसामर्थ्यस्य गुप्तये ॥ ७७ ॥

[1] तु ।वयेत्—क, अ १, अ २. [2] चित्र—अ १, अ २, क.

शिष्याश्च स्वस्वकार्येषु प्रार्थयन्ति न संशयः ।
तत्तत्कर्मकरव्यग्रः स्वाभ्यासे विस्मृतो भवेत् ॥ ७८ ॥
सर्वव्यापारमुत्सृज्य योगनिष्ठो भवेद्यतिः ।
अविस्मृत्य गुरोर्वाक्यमभ्यसेत्तदहर्निशम् ॥ ७९ ॥
एवं भवेद्घटावस्था संतताभ्यासयोगतः ।
अनभ्यासवतश्चैव वृथागोष्ठ्या न सिध्यति ॥ ८० ॥
तस्मात्सर्वप्रयत्नेन योगमेव सदाऽभ्यसेत् ।

ततः किं जायते इत्यत आह—याममात्रमिति ॥ ७२ ॥ किं तत्? दूरश्रुतिरिति ॥ ७३–७५ ॥ यतः स्वात्तसिद्धिप्रकटनाद्योगान्तरायो भवति तस्मात् सिद्धिजालोपेक्षापूर्वकं स्वसामर्थ्यं गोपयन् योगमेवाभ्यसेत् इत्याह—एत इति ॥ ७६–७७ ॥ तत्तत्कर्मकरव्यग्रः तत्तत्कर्मणि व्यग्रचित्तो भवति । ततः स्वाभ्यासे ॥ ७८–७९ ॥ अभ्यासत इयं घटावस्था सिध्यति नान्यथेत्याह—एवमिति ॥ ८० ॥

## परिचयावस्था

ततः परिचयावस्था जायतेऽभ्यासयोगतः ॥ ८१ ॥
वायुः परिचितो यत्नादग्निना सह [1]कुण्डलीम् ।
भावयित्वा सुषुम्नायां प्रविशेदनिरोधतः ॥ ८२ ॥
वायुना सह चित्तं च प्रविशेच्च महापथम् ।
यस्य चित्तं [2]स्वपवनः सुषुम्नां प्रविशेदिह ॥ ८३ ॥

परिचयस्वरूपमाह—तत इति ॥ ८१ ॥ तत् कथं? वायुरिति ॥ ८२ ॥ महापथं सुषुम्नाद्वारमित्यर्थः । तदा सेयं परिचयावस्थेत्युच्यते ॥ ८३ ॥

[1] कुण्डली—क, अ १, अ २. [2] स्वपवनं [सपवनः]—अ १.

## पञ्चभूतमण्डलेषु पञ्चब्रह्मधारणानि

भूमिरापोऽनलो वायुराकाशश्चेति [1]पञ्चकः ।
येषु पञ्चसु देवानां धारणा पञ्चधोच्यते ॥ ८४ ॥
पादादिजानुपर्यन्तं पृथिवीस्थानमुच्यते ।
पृथिवी चतुरश्रं च पीतवर्णं लवर्णकम् ॥ ८५ ॥
पार्थिवे वायुमारोप्य लकारेण समन्वितम् ।
ध्यायंश्चतु[2]र्भुजाकारं चतुर्वक्त्रं हिरण्मयम् ॥ ८६ ॥
ध रयेत्पञ्च घटिकाः पृथिवीजयमाप्नुयात् ।
पृ थेवीयोगतो मृत्युर्न भवेदस्य योगिनः ॥ ८७ ॥
अ नानोः पायुपर्यन्तमपां स्थानं प्रकीर्तितम् ।
अ [3]ऽर्धचन्द्रं शुक्लं च [4]वंबीजं परिकीर्तितम् ॥ ८८ ॥
[5]व रुणे वायुमारोप्य वकारेण समन्वितम् ।
स रन्नारायणं देवं चतुर्बाहुं किरीटिनम् ॥ ८९ ॥
शु स्फटिकसंकाशं पीतवाससमच्युतम् ।
ध येत्पञ्च घटिकाः सर्वपापैः प्रमुच्यते ॥ ९० ॥
त : जलाद्भयं नास्ति जले मृत्युर्न विद्यते ।
अ ायोर्हृदयान्तं च वह्निस्थानं प्रकीर्तितम् ॥ ९१ ॥
:त्रिकोणं रक्तं च रेफाक्षरसमुद्भवम् ।
:वानिलमारोप्य रेफाक्षरसमुज्ज्वलम् ॥ ९२ ॥

-क, अ २.
यं—अ १. [5] वारुणो—अ १.

त्रियक्षं वरदं रुद्रं तरुणादित्यसंनिभम् ।
भस्मोद्धूलितसर्वाङ्गं सुप्रसन्नमनुस्मरन् ॥ ९३ ॥
धारयेत्पञ्च घटिका वह्निनाऽसौ न [1]दह्यते ।
न दह्यते शरीरं च प्रविष्टस्याग्निकुण्डके ॥ ९४ ॥
आहृदयाद्भ्रुवोर्मध्यं वायुस्थानं प्रकीर्तितम् ।
वायुः षट्कोणकं कृष्णं यकाराक्षरभासुरम् ॥ ९५ ॥
मारुतं मरुतां स्थाने यकाराक्षरभासुरम् ।
धारयेत्तत्र सर्वज्ञमीश्वरं विश्वतोमुखम् ॥ ९६ ॥
धारयेत्पञ्च घटिका वायुवद्व्योमगो भवेत् ।
मरणं न तु वायोस्तु भयं भवति योगिनः ॥ ९ ॥
आभ्रूमध्यात्तु मूर्धान्तमाकाशस्थानमुच्यते ।
व्योम वृत्तं च धूम्रं च हकाराक्षरभासुरम् ॥ ९
आकाशे वायुमारोप्य हकारोपरि शंकरम् ।
बिन्दुरूपं महादेवं व्योमाकारं सदाशिवम् ॥ ९ ॥
शुद्धस्फटिकसंकाशं धृतबालेन्दुमौलिनम् ।
पञ्चवक्त्रयुतं सौम्यं दशबाहुं त्रिलोचनम् ॥ १
सर्वायुधैर्धृताकारं सर्वभूषणभूषितम् ।
उमार्धदेहं वरदं सर्वकारणकारणम् ॥ १०१
आकाशधारणात्तस्य खेचरत्वं भवेद्ध्रुवम् ।
यत्र कुत्र स्थितो वाऽपि सुखमत्यन्तमश्नुते ॥

[1] दा—क, अ १, अ २.

एवं च धारणाः पञ्च कुर्याद्योगी विचक्षणः ।

ततो दृढशरीरः स्यान्मृत्युस्तस्य न विद्यते ॥ १०२ ॥

ब्रह्मणः प्रलयेनापि न सीदति महामतिः ।

ततः स्वावयवप्रविभक्तपञ्चभूतमण्डले पञ्चब्रह्मधारणमाह—भूमिरिति । देवानां ब्रह्मादिसदाशिवान्तानाम् ॥ ८४ ॥ तत्रादौ पादादीति । पृथिवीशब्देन पार्थिवमण्डलमुच्यते ॥ ८५ ॥ ततः पार्थिवे ॥ ८६–८७ ॥ अम्मण्डले विष्णुध्यानं तत्फलं चाह—आजानोरिति ॥ ८८–९० ॥ वह्निमण्डले रुद्रध्यानं तत्फलं चाह—आपायोरिति ॥ ९१–९४ ॥ वायुमण्डले ईश्वरध्यानं तत्फलं चाह—आहृदयादिति ॥ ९५–९७ ॥ आकाशमण्डले सदाशिवध्यानं तत्फलं चाह—आभ्रूमध्यादिति ॥ ९८–१०२ ॥

### सगुणध्यानम्

[illegible]भ्यसेत्तथा ध्यानं घटिकाषष्टिमेव च ॥ १०४ ॥

व[illegible] निरुध्य चाकाशे देवतामिष्टदामिति ।

स[illegible]णध्यानमेतत्स्यादणिमादिगुणप्रदम् ।

सगुणनि[illegible]णभेदेन द्विप्रकारं ध्यानमाह—समभ्यसेदिति ॥ १०४ ॥

### निर्गुणध्यानतः समाधिसिद्धिः

नि[illegible]णध्यानयुक्तस्य समाधिश्च ततो भवेत् ॥ १०५ ॥

दि[illegible]शकेनैव समाधिं समवाप्नुयात् ।

[illegible]निरुध्य मेधावी जीवन्मुक्तो भवत्ययम् ॥ १०६ ॥

[illegible]ः समताऽवस्था जीवात्मपरमात्मनोः ।

ब्रह्मातिरिक्तं न किञ्चिदस्तीति तत्स्वरूपेणावस्थानं समाधिरित्यर्थः ॥ १०५ ॥ तथाविधं दिनद्वादशकेनैव ॥ १०६ ॥ समाधिशब्दं व्युत्पादयति—समाधिरिति । जीवात्मपरमात्मनोः वाच्यार्थवैषम्यत्यागपूर्वकं तयोः लक्ष्यरूपेण समताऽवस्थैव समाधिरित्यर्थः ॥

सिद्धयोगस्य स्वेच्छया देहत्यागात्यागौ

यदि स्वदेहमुत्स्रष्टुमिच्छा चेदुत्सृजेत्स्वयम् ॥ १०७ ॥
परब्रह्मणि लीयेत न तस्योत्क्रान्तिरिष्यते ।
अथ नो चेत्समुत्स्रष्टुं स्वशरीरं प्रियं यदि ॥ १०८ ॥
सर्वलोकेषु विहरन्नणिमादिगुणान्वितः ।
कदाचित्स्वेच्छया देवो भूत्वा स्वर्गे महीयते ॥ १०९ ॥
मनुष्यो वाऽपि यक्षो वा स्वेच्छयाऽपि क्षणाद्भ[वे]त् ।
सिंहो व्याघ्रो गजो वाऽश्वः स्वेच्छया बहुतामि[या]त् ॥ ११० ॥
यथेष्टमेव वर्तेत योगी यद्वा महेश्वरः ।
अभ्यासभेदतो भेदः फलं तु सममेव हि ॥ [११]१ ॥

यः स्वातिरेकेणाभासतोऽपि शरीरत्रयमस्तीति म[न्य]ते सोऽयं योगी तत्त्यक्त्वा परब्रह्मणि लीयते । यद्येवं नहि त्यक्तुमिच्छति [चि]त्रशक्तिं प्रकटयन् आभूतसंप्लवं अस्मिन् लोके विहरेदित्याह—यदीति ॥ १०७–११० ॥ अभ्यासतत्फलभेदेन भिद्यते । तत्रान्तरालिकफलनिरपेक्ष[ं] मुख्यफलं कैवल्यं सममेवेत्यर्थः ॥ १११ ॥

महाबन्धलक्षणम्

पार्ष्णिं वामस्य पादस्य योनिस्थाने नियोजयेत् ।
प्रसार्य दक्षिणं पादं हस्ताभ्यां धारयेद्दृढम् ॥ ११२ ॥
चुबुकं हृदि विन्यस्य पूरयेद्वायुना पुनः ।
कुम्भकेन यथाशक्त्या धारयित्वा तु रेचयेत् ॥ ११३ ॥
वामाङ्गेन समभ्यस्य दक्षाङ्गेन [1]समभ्यसेत् ।
प्रसारितस्तु यः पादस्तमूरूपरि मानयेत् ॥ ११४ ॥
अयमेव महाबन्ध उभयत्रैवमभ्यसेत्

महामुद्रालक्षणं अन्यत्राम्नायते-

वक्षो न्यस्तहनुर्निपीड्य सुषिरं योनेश्च वामांघ्रिणा
हस्ताभ्यामनुधारयन् प्रसरितं पादं तथा दक्षिणम् ।
आपूर्य श्वसनेन कुक्षियुगळं मूर्ध्नि स्थितं धारये-
देषा पातकनाशनी ननु महामुद्रा नृणां प्रोच्यते ॥

इति । महाबन्धलक्षणमाह—पार्ष्णिमिति ॥ ११२–११३ ॥ मानयेत् समर्पयेत् आरोपयेदित्यर्थः ॥ ११४ ॥ अभ्यसेत् वामांगवत् दक्षांगेऽपीत्यर्थः

महावेधलक्षणम्

महाबन्धस्थितो योगी कृत्वा पूरकमेकधीः ॥ ११५ ॥
[2]वायूनां गतिमा[3]वृत्य निभृतं कण्ठमुद्रया ।
पुटद्वयं समाक्रम्य वायुः स्फुरति सत्वरम् ॥ ११६ ॥
अयमेव महावेधः सिद्धैरभ्यस्यतेऽनिशम् ।

[1] ततोभ्य—क, अ १, अ २. [2] वायुना—क, अ १, अ २. [3] हत्य—अ १.

वेधस्वरूपमाह—महाबन्धेति ॥ ११९ ॥ उच्छ्वासनिश्वासरेचकपूरकवायूनां गतिं आवृत्य आच्छाद्य कण्ठमुद्रया जालन्धरबन्धेन निरुध्य ततः प्राणवायुः इडापिंगळापुटद्वयं सम्यगाक्रम्य अतिक्रम्य सत्वरं सुषुम्नायां स्फुरतीति यत् अयमेव ॥ ११६ ॥

### खेचरीस्वरूपम्

अन्तः कपालकुहरे जिह्वां व्यावृत्य धारयेत् ॥ ११७ ॥
भ्रूमध्यदृष्टिरप्येषा मुद्रा भवति खेचरी

खेचरीस्वरूपमाह—अन्तरिति ॥ ११७ ॥

### बन्धत्रयस्वरूपं तत्फलं च

कण्ठमाकुञ्च्य हृदये स्थापयेद्दृढया धिर ॥ १ ८ ॥
बन्धो जालंधराख्योऽयं मृत्युमातङ्गकेस ।
बन्धो येन सुषुम्नायां प्राणस्तूड्डीयते य : ॥ १९ ॥
उड्याणाख्यो हि बन्धोऽयं योगिभिः मुदा : ।
पार्ष्णिभागेन संपीड्य योनिमाकुञ्चयेद्दृढ ॥ २० ॥
अपानमूर्ध्वमुत्थाप्य योनिबन्धोऽयमुच्य ।
प्राणापानौ नादबिन्दू मूलबन्धेन चैकता ॥ २१ ॥
गत्वा योगस्य संसिद्धिं यच्छतो नात्र

बन्धत्रयस्वरूपं तत्फलं चाह—कण्ठमिति ॥ १२१ ॥

### विपरीतकरणीलक्षणं तत्फलं च

करणी विपरीताख्या [1]सर्वव्याधिविनाशिनी ॥ १२२ ॥
नित्यमभ्यासयुक्तस्य जाठराग्निविवर्धनी ।
आहा[2]रा बहवस्तस्य [3]संपाद्याः साधकस्य च ॥ १२३ ॥
अल्पाहारा यदि भवेदग्निर्देहं हरेत्क्षणात् ।
अधःशिरश्चोर्ध्वपादः क्षणं स्यात्प्रथमे दिने ॥ १२४ ॥
[4]क्षणात्तु [illegible] चिदधिकमभ्यसे[5]त्तु दिनेदिने ।
वल[illegible] च प[illegible]तं चैव षण्मासार्धान्न दृश्यते ॥ १२५ ॥
या[illegible]मात्रं [illegible] यो नित्यमभ्यसेत्स तु कालजित् ।

[illegible]र्णी [illegible]नित्फलं चाह—करणीति ॥ १२२–१२३ ॥ स्वस्थितिविपरीत[illegible] क्रि[illegible]नु इति विपरीतकरणी । तदेव प्रपञ्चयति—अध इति ॥ १२[illegible]–१[illegible]न ॥

क[illegible]

### वज्रोलीस्वरूपम्

[illegible]म

[illegible]ीमभ्[illegible] सेद्यस्तु स योगी सिद्धिभाजनम् ॥ १२६ ॥
[illegible] यां तस्यैव योगसिद्धिः करे स्थिता ।
[illegible]ान[illegible] तं वेत्ति खेचरी च भवेद्ध्रुवम् ॥ १२७ ॥

[illegible]

वज्रो[illegible] तत्फलं चाह—वज्रोळीमिति । किं नाम वज्रोळी? कांस्यपात्रे गो[illegible] [illegible]क्षिप्य वज्रोळीतुल्यलिंगनाळेन प्रसित्वा पुनर्विरेच्य

[illegible]मा[illegible]

[1] [illegible]—अ १, अ २. [2] रो बहुल—अ १, अ २. रो बहुश—क.
[3] [illegible]—[illegible]१, अ २. [4] क्षणाच्च—क, अ १, अ २.
[5] [illegible]—अ १[illegible] १.

पुनर्ग्रसनादिकमभ्यस्याथ स्त्रीयोनिमण्डले रेतो विसृज्य तच्छोणितेन साकं ग्रसेदिति यत् सैव वज्रोळीत्युच्यते । यस्तामभ्यस्यति स तु सिद्धो भवतीत्याह —लभ्यत इति । सोऽयं योगी अतीतानागतं वेत्ति । तस्यैव खेचरी ॥ १२६–१२७ ॥

अमरोळीस्वरूपम्

अमरीं यः पिबेन्नित्यं नस्यं कुर्वन् दिने दिने ।
वज्रोलीमभ्यसेन्नित्यममरोलीति कथ्यते ॥ १२८ ॥

अमरोळीस्वरूपमाह—अमरीमिति । अमरीशब्देन मूत्रमुच्यते । तत्र प्रथमान्त्यधारे विहाय मध्यधारां हस्ते पात्रे वा गृहीत्वा योऽयं योगी तत्त्रिभागं दिनेदिने पिबन् नासापुटयोः नस्यं कुर्वन् नित्यं वज्रोळीमभ्यसेत् इति यत् सैव अमरोळीति कथ्यते । तथा च हठयोगतन्त्रे अभिहितम्—

पित्तोल्बणत्वात् प्रथमां च धारां
विहाय निस्सारतयाऽन्त्यधाराम् ।
निषेव्यते शीतळमध्यधारा
वज्रोळिसिद्धैरमरोळिसिद्धैः ॥

इति । एवममरोळीसिद्धस्यामरीपाननस्यं विना [illegible] रिन्द्रुदेति सैव सहजोळीत्युच्यते ॥ १२८ ॥

राजयोगनिष्पत्तिः

ततो भवेद्राजयोगो नान्तरा भवति ध्रुवम्
यदा तु राजयोगेन निष्पन्ना योगिभिः [1][illegible]याः ॥ १२९ ॥
तदा विवेकवैराग्यं जायते योगिनो ध्रुवम्
विष्णुर्नाम महायोगी महाभूतो महातपाः ॥ [illegible]० ॥
तत्त्वमार्गे यथा दीपो दृश्यते पुरुषोत्तमः ।

[1] क्रिया—क, अ १, अ २.

राजयोगस्वरूपमाह—तत इति । न हि विशल्यवयवहठाभ्यासमन्तरा राजयोगो भवतीत्यर्थः ॥ १२९ ॥ हठयोगसिद्धोऽयं राजयोगः योगराजत्वात् । तत्रैव हि भगवान् दृश्यते इत्याह—विष्णुरिति । क्षराक्षरकलनाविरळपुरुषोत्तमतत्त्वस्य सोऽहमस्मीति राजयोगेनैव लक्षितत्वात् ॥ १३० ॥

### वैराग्यहेतुनिरूपणम्

यः स्तनः पूर्वपीतस्तं निष्पीड्य मुदमश्नुते ॥ १३१ ॥
यस्माज्जातो भगात्पूर्वं तस्मिन्नेव भगे रमन् ।
या माता सा पुनर्भार्या या भार्या मातरेव हि ॥ १३२ ॥
यः पिता स पुनः पुत्रो यः पुत्रः स पुनः पिता ।
एवं संसारचक्रेण कूपचक्रे घटा इव ॥ १३३ ॥
भ्रमन्तो योनिजन्मानि श्रुत्वा लोकान् समश्नुते ।

पुरुषोत्तमाति रुद्रागादिबाह्यवैराग्यहेतवे इदमाम्नायते—यः स्तन इति । तं तादृशमित्यर्थः ॥ १३१ ॥ तस्मिन्नेव तथाविधे भगे रमन् रममाणो मुदमश्नुते । अस्मिन् जन्मनि या माता सा पुनः भवान्तरे भार्या भवति, या भार्या सा भवान्तरे माता भवतीत्याह—या मातेति । मातरेव मातैवेत्यर्थः ॥ १३२ ॥ एवं पुरुषोत्तमव्यतिरिक्तं किञ्चिदप्यस्तीति पश्यन्तः कूपचक्रे घटा इव—संसारचक्रेणेति तृतीया सप्तम्यर्था—संसारचक्रे ॥ १३३ ॥ परिभ्रमन्तो नानायोनिषु जन्मानि भजन्ते । यतः एवं अतः "ब्रह्मैव सर्वं" "ब्रह्मातिरिक्तं न किञ्चिदस्ति" इति कुल्याचार्यमुखतः श्रुत्वा मुमुक्षुरुत्तमलोकान् ब्रह्माद्यावासभूतान् समश्नुते । यावद्ब्रह्मोपाधि तावदुषित्वा तेन साकं कैवल्यं लभन्ते ॥

हृत्पद्मे प्रणवोपासनम्

त्रयो लोकास्त्रयो वेदास्तिस्रः संध्यास्त्रयः स्वराः ॥ १३४ ॥
त्रयोऽग्नयश्च त्रिगुणाः स्थिताः सर्वे [1]त्र
त्रयाणामक्षराणां च योऽधीतेऽप्यर्धमक्षर ॥ १३५ ॥
तेन सर्वमिदं प्रोतं तत्सत्यं तत्परं पदम्
पुष्पमध्ये यथा गन्धः पयोमध्ये यथा घृतम् ॥ १३६ ॥
तिलमध्ये यथा तैलं पाषाणेष्विव काञ्चनम्
हृदि स्थाने स्थितं पद्मं तस्य वक्त्रमधोमुखम् ॥ १३७ ॥
ऊर्ध्वनालमधोबिन्दु[2]स्तस्य मध्ये स्थितं नः ।
अकारे रेचितं पद्ममुकारेणैव भिद्यते ॥ १३८ ॥
मकारे लभते नादमर्धमात्रा तु निश्चला ।
शुद्धस्फटिकसंकाशं निष्कलं पापनाशनम् ॥ १३९ ॥
लभते योगयुक्तात्मा पुरुषस्तत्परं पदम्

तदुपायत्वेन परापरब्रह्मगोचराकारादिमात्राचत यविशिष्टप्रणवोपासना-
ाचष्टे—त्रय इति । प्रणवावयवाकारादित्र्यक्षरे क्रमेण रादयः त्रयो लोकाः, ऋगादयः त्रयो वेदाः, प्रातःसन्ध्यादिसन्ध्याः तिस्रः, कारोकारमकारभेदेन यः स्वराः ॥ १३४ ॥ गार्हपत्यादिभेदेन अग्नयः त्र:, सत्वादित्रिगुणाश्च सर्वे स्थिताः प्रतिष्ठिता इत्यर्थः । अकारादित्रयाणामक्ष णां तद्वारोपाधिकरण-वेश्वविराडोत्रादिप्राज्ञबीजानुज्ञैकरसान्तानां सविशेषत्वेऽ लोकत्रयादित्रिगुणा-न्ताश्रयाकारादिमात्रात्रयतदध्यक्षापवादाधिकरणार्धमात्रासं र्धमक्षरं तुर्यचैतन्यं ब्रह्मास्मीति योऽधीते श्रुत्याचार्यमुखतो जानाति १३५ ॥ तेन

[1] त्रियक्षरे—उ.   [2] तस्य- अ १. अ २.

तुर्यभावमापन्नेन योगिना सर्वमिदं प्रपञ्चजातं प्रोतं अहमेवेदं सर्वमिति व्याप्तम् । यद्व्याप्यसापेक्षव्यापकतापह्नवसिद्धं तत् सत्यम् । यत् सत्तामात्रं तदेव परं निरतिशयं स्वावशेषतया पद्यत इति पदं ब्रह्ममात्रमवशिष्यत इत्यर्थः । कथं पुनः तुर्यस्य सर्वप्रोतत्व ेत्यत्र दृष्टान्तचतुष्टयमाचष्टे—पुष्पेति ॥ १३६ ॥ यथा हेमनिमिळ[विड]शि ायां निर्विशेषतया काञ्चनं तत् सर्वं व्याप्य वर्तते तथा इत्यर्थः । यदेवं ापकचैतन्यं तदुपलब्धिस्थाननिर्देशपूर्वकं तत्स्वरूपं तज्ज्ञानफलं च वि दयति—हृदिस्थान इति । हृदिस्थाने उरोभागे कदळीपुष्पवदूर्ध्वनाळं धोवक्त्रं हृत्पद्मं स्थितं भवति ॥ १३७ ॥ तदधोभागे बिन्दुव्यावृ शं विद्यते । तस्य मध्ये मनउपलक्षितं लिंगशरीरं वर्तते । तत्र तद्वृत्ति भावाभावप्रकाशकतया प्रत्यक्चैतन्यं स्थितं भवति । तदूर्ध्वनयनार्थं विक र्थं तद्गतचैतन्यसाक्षात्कारार्थं चोपायमाह—अकार इति । अकारे वि गडातृचैतन्ये साक्षात्कृते सति हृत्पद्ममूर्ध्वमुखतया रेचितं उत्थितं भव । उकारतदध्यक्षतैजससूत्रानुज्ञातृचैतन्यसाक्षात्कारेण तत् पद्मं भिद्यते विका ति ॥ १३८ ॥ मकारतदध्यक्षप्राज्ञबीजानुज्ञैकरसचैतन्ये साक्षात्कृते सति ना भ्वरतत्त्वं तदात्मकप्रणवनादो विजृम्भते । अकारादिमात्रात्रयप्रपञ्चपर्यवसान मात्रा तु द्वितुर्याविकल्पाधिष्ठिता निश्चला भवति । तत्र यदुपलभ्यते यदनुसन्ध तः पुण्यपापजालं नश्यति तत् शुद्धस्फटिकसङ्काशं पापनाशनं वस्तुतो नि प्रतियोगिकनिष्कळं यत् स्वमात्रमवशिष्यते ॥ १३९ ॥ यथोक्तयोगयुक्तात्मा षः तत् परं पदं लभते कृतकृत्यो भवतीत्यर्थः ॥

करणव्यापारोपरतिः आत्मावगत्युपायः

कूर्मः स्व णिपादादिशिरश्चात्मनि धारयेत् ॥ १४० ॥

एवं द्वारे सर्वेषु वायुपूरितरेचितः ।

निषिद्धे नवद्वारे ऊर्ध्वं प्राङ्[1]निःश्वासस्तथा ॥ १४१ ॥

[1] श्वसतस्तदा— श्वसतस्तथा—अ १. श्वासतस्तथा—अ २.

घटमध्ये यथा दीपो निवातं कुम्भकं विदुः ।
निषिद्धैर्नवभिर्द्वारैर्निर्जने निरुपद्रवं ॥ १४२ ॥
निश्चितं त्वात्ममात्रेणावशिष्टं योगसेवया ॥

इत्युपनिषत् ॥

तदवगत्युपायस्तु सर्वकरणव्यापृत्युपरतिरवन्य —कूर्म इति । यथा कूर्मः स्वाङ्गान्युपसंहृत्य शिलावत् वर्तते ॥ १४ ॥ एवं योगी नवद्वारेषु सर्वेषु नाडीद्वारेषु च वायुपूरितरेचितः पूरक रकावस्थायां वायुना पूरितरेचितनाडीसुषिरावच्छिन्ननिर्व्यापारदेहविशिष्टो भवे । रेचकपूरकादिव्यापारं विना सुषुम्नामार्गेण ऊर्ध्वनिःश्वासो भवेदित्याह—नि षिद्ध इति । नवद्वारे निषिद्धे निरुद्धे सत्यथ सुषुम्नायाः प्राक् पूर्वद्वारं मू धारस्थं भित्त्वा अथोर्ध्व निःश्वासः निर्गतश्वासव्यापारो भवेत्, केवलकुम्भकेन सिद्धेदित्यर्थः ॥ १४१ ॥ कुम्भकलक्षणमाह—घटमध्य इति । एवं केवलकुम्भक योगेन आत्मतत्त्वमवगम्य कृतार्थो भवेदित्युपसंहरति—निषिद्धैरिति । स्वव्यापृतिनिषिद्धैः निरुद्धैः नवद्वारैः विशिष्टदेहो योगी निर्जने निरुपद्रवं देशे सिद्धाद्यासनमास्थाय ॥ १४२ ॥ निर्विकल्पकयोगसेवया कैवल्यनाडीं भि त्त्वा तत्र आत्ममात्रेणावशिष्टमिति तत्त्वज्ञानेन निश्चितं विकळेबरकैवल्यं भजे दिति शेषः । तुशब्दोऽवधारणार्थः । इत्युपनिषच्छब्दो योगतत्त्वोपनिषत्समाप्त्यर्थो ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं योगतत्त्वस्य सुस्फुटम्
योगतत्त्वविवरणं षष्ट्युत्तरशतद्वयम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकच त्वारिंशत्संख्यापूरकं योगतत्त्वोपनिषद्विवरणं सम्पूर्णम् ॥

# योग शिखोपनिषत्

सह नाववतु इति शान्तिः

## प्रथमोऽध्यायः

मुक्तिमार्गजिज्ञासा

सर्वे जीवाः सुखैर्दुःखैर्मायाजालेन वेष्टिताः ।
तेषां मुक्तिः कथं देव कृपया वद शंकर ॥ १ ॥
सर्वसिद्धिकरं मार्गं मायाजालनिकृन्तनम् ।
जन्ममृत्युजराव्याधिनाशनं सुखदं वद ॥ २ ॥

इति ॥

योगज्ञाने यत्प्राप्तिसाधनत्वेन विश्रुते ।
तत्त्रैपदं ब्रह्मतत्त्वं स्वमात्रमवशिष्यते ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं योगशिखोपनिषत् ससाधनज्ञानयोगसर्वस्वप्रकटनव्यग्रा ब्रह्ममात्रविश्रान्ता विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । शिष्याचार्यभावं गतचतुराननमहेश्वरप्रश्नप्रतिवचनरूपाख्यायिका तु विद्यास्तुत्यर्था । आदौ आख्यायिकामवतारयति—सर्वे इति ॥ १ ॥

किं तदित्यत्र—सर्वेति ॥ २ ॥

मुक्तिमार्गस्य दुर्लभत्वम्

हिरण्यगर्भः पप्रच्छ स होवाच महेश्वरः।
नानामार्गैस्तु दुष्प्रापं कैवल्यं परमं पद ॥ ३ ॥
सिद्धिमार्गेण लभते नान्यथा पद्मसंभव

लोकोपकारार्थं महेश्वरं प्रति हिरण्यगर्भः प्रच्छ । तत्प्रश्नमंगीकृत्य स होवाच । किं तदुवाचेत्यत्र वक्ष्यमाणार्थं प्रकाः मन् स्तौति—नानेति । निर्विशेषज्ञानैकगम्यत्वात् ॥ ३ ॥ "नान्यः पन्थाः अयनाय विद्यते" इति श्रुतिसिद्धसिद्धिमार्गेण । कैवल्यसिद्धिप्रदोऽयं मार्गो विशेषब्रह्ममात्रज्ञानरूपः तेनैव कैवल्यं लभते नान्यथेत्यर्थः ॥

ब्रह्म केवलशास्त्रागम्यम्

पतिताः शास्त्रजालेषु प्रज्ञया तेन मोहि ॥ ४ ॥
स्वात्मप्रकाशरूपं तत् किं शास्त्रेण प्रका ते ।
निष्कलं निर्मलं शान्तं सर्वातीतं निराम ॥ ५ ॥
तदेव जीवरूपेण पुण्यपापफलैर्वृतम् ।
परमात्मपदं नित्यं तत्कथं जीवतां गतम् ॥ ६ ॥
तत्त्वातीतं महादेव प्रसादात्कथयेश्वर ।

उन्मार्गगामिन आभासज्ञानिनो विडम्बयति— तिता इति । ब्रह्मचर्य-गुरुकुलवाससाधनचतुष्टयादिकं विस्मृत्य "तन्तत्र मयाऽधीतं नाधीतं तुर्यतन्त्रकं" इत्यादिस्वरूपदर्शनसिद्धाज्ञनोक्तरीत्या पा : ॥ ४ ॥ शास्त्रेण ब्रह्म प्रकाश्यते इत्यत्र स्वात्मेति ब्रह्मणो व्यावि दवाक्यार्थत्वेन स्वयं-प्रकाशरूपत्वात्, "येनार्थवन्ति तं किं तु वि तारं प्रकाशयेत्" ।

स्वात्मप्रकाशरूपं ब्रह्म कीदृशं इत्यत्र—निष्कळमिति । प्राणादिनामान्तषोडशकलाऽपह्नवसिद्धं ब्रह्म निष्प्रतियोगिकनिष्कळं ब्रह्ममात्रमित्यर्थः ॥ ५ ॥ निष्कळस्य ब्रह्ममात्रत्वे जीवजातं [illegible]द्भिन्नमित्यत आह —तदेवेति । यत् स्वाज्ञदृष्ट्या स्वमात्रं अवशिष्टं स्वाज्ञदृष्ट्या [illegible]व । कथं पुनः ब्रह्म जीवत्वं भजतीत्याक्षिपति—परमात्मेति ॥ ६ ॥ तत् कीदृशं ? तत्वातीतम् ॥

ब्रह्मणो जीवभावः

[1]सर्वभावप[illegible]तीतं ज्ञानरूपं निरञ्जनम् ॥ ७ ॥
वायुवत्स्फु[illegible]रतं स्वस्मिंस्तत्राहंकृतिरुत्थिता ।
पञ्चात्मक[illegible]भूत् पिण्डं धातुबद्धं गुणात्मकम् ॥ ८ ॥
सुखदुःखै[illegible]समायुक्तं जीवभावनया कुरु ।
तेन जीवा[illegible]ख्या प्रोक्ता विशुद्धे परमात्मनि ॥ ९ ॥

प्रश्नोत्तरं भगव[illegible]ह—सर्वेति ॥ ७ ॥ तदेव स्वाज्ञदृष्ट्या व्योम्नि वायुवत् इति । तस्म[illegible]शात् पञ्चात्मकमभूत् पिण्डम् । यन्निष्प्रतियोगिकस्वमात्रमवशिष्टं तदेव [illegible]स्वज्ञादिदृष्ट्या किञ्चित् स्फुरितं सत् साक्षिभावं भजति । त्रिपाद्भूतिरेव नित्यभूति[illegible] चकास्ति । नित्यभूतिरेव पूर्णाहम्भावमेत्य लीलाभूतिः भवति । लीलाभूति[illegible]पे परिच्छिन्नपिण्डाभिमानात् मोहभूतिः । साऽपि पिण्डादिरूपेण जडभू[illegible]पि भवतीत्यर्थः ॥ ८–९ ॥

कामादिदोषविमुक्तजीवस्य शिवत्वम्

कामक्रो[illegible]धं चापि मोहलोभमथो रजः ।
जन्म मृ[illegible]श्च कार्पण्यं शोकस्तन्द्रा क्षुधा तृषा ॥ १० ॥

[1] महेश्वरः इत्यधि[illegible]—अ.

तृष्णा लज्जा भयं दुःखं विषादो हर्ष [1]एव च ।
एभिर्दोषैर्विनिर्मुक्तः स जीवः शिव उच्यते ॥ ११ ॥

त्रिपादेव परिच्छिन्नपिण्डाभिमानात् मोहभूतित भजतीत्युक्तं पुनर्मोहभूतेः लीलादिभूतित्वं कथमित्यत्र त्रिपादस्मीति प्रबोधतः ण्डाद्यभिमतिमूलकामादिवृत्तित्यागसमकालं त्रिपाद्भूतिरेव भवतीत्याह—कामो ॥ १० ॥ कामादिवृत्तिपरिग्रह एव दोषः, त्रिपाद्भूतेः मोहभूतिप्रापकत्वात् ॥ ११ ॥

ज्ञानयोगाभ्यां दोषविनाशः

तस्माद्दोषविनाशार्थमुपायं कथयामि ते
ज्ञानं केचिद्वदन्त्यत्र केवलं तन्न सिद्धये ॥ १२ ॥
योगहीनं कथं ज्ञानं मोक्षदं भवतीह भो
योगोऽपि ज्ञानहीनस्तु न क्षमो मोक्षक ॥ १३ ॥
तस्माज्ज्ञानं च योगं च मुमुक्षुर्दृढमभ्य

यस्मादेवं कामादिवृत्तिसंगादनर्थो जातः तस्मा मोहभूतेस्त्रिपाद्भूतित्वप्रापकोपायः कः इत्यत्र "पश्यतेहापि सन्मात्रमसदन्य" "ब्रह्मव्यतिरिक्तं न किञ्चिदस्ति," "ब्रह्ममात्रमसन्नहि," इत्यादिश्रुतिसिद्ध तिरिक्तासत्प्रपञ्चापह्नवज्ञानप्रादुर्भूतनिष्प्रतियोगिकब्रह्ममात्रज्ञानसमकालं त्रैपद्ब्र मात्रावस्थानलक्षणविकळेबरकैवल्यं स्यादित्यत्र न विवादः, स्वाज्ञानप्रभ वित्वादेः स्वज्ञानावधिकत्वात् तज्ज्ञानस्य चरमजन्माश्रयत्वात् । तद्विना सवि आभासज्ञानं केचिदिति ॥ १२–१३ ॥ यथोक्तसाधनविकलबद्धचित्ताश्रिताभास विशेषज्ञानस्य स्वफलसाधनानीशत्वात् विविधफल्गुसिद्धिप्रापकाभासयोगस्या मुख्ययोगफलप्रापणानीशत्वाच्च यस्मादेतावाभासज्ञानयोगौ प्रातिस्विकेन स्व लसाधनानीशौ भवतः

[1] मेव—अ, अ १, क, उ १.

तस्मात् ज्ञानयोगौ समुच्चित्य मुमुक्षुः दृढमभ्यसेत् । तेनाभासज्ञानयोगौ स्वगताभासतां विहाय निष्प्रतियोगिकनिर्विशेषब्रह्ममात्रज्ञानपर्यवसन्नौ भवतः । तथा च श्रुतिः "शाम्[illegible]ति ह्यत्रमन्त्रेण मलेन क्षाल्यते मलम्" इत्यादि । तत्र योगाभासस्तु आभासज्ञान[illegible]ताभासत्वं निर्मूल्य निर्विशेषज्ञानपर्यवसन्नो भवति ॥

ज्ञानस्वरूपं तत्फलं च

ज्ञानस्वरूप[illegible]वादौ ज्ञेयं ज्ञानैकसाधनम् ॥ १४ ॥
अज्ञानं क[illegible]शं चेति प्रविचार्य मुमुक्षुणा ।
ज्ञातं येन [illegible]जं रूपं कैवल्यं परमं पदम् ॥ १५ ॥
असौ दो[illegible]निर्मुक्तः कामक्रोधभयादिभिः ।
सर्वदोषैर्वृ[illegible] जीवः कथं ज्ञानेन मुच्यते ॥ १६ ॥
स्वात्मरूप[illegible]था [1]ज्ञानं पूर्णं तद्व्यापकं तथा ।
कामक्रोध[illegible]दोषाणां [2]स्वरूपान्नास्ति भिन्नता ॥ १७ ॥
पश्चात्तस्य[illegible]धिः [3]किं नु निषेधोऽपि कथं भवेत् ।
विवेकी स[illegible]ा मुक्तः संसारभ्रमवर्जितः ॥ १८ ॥
परिपूर्णस्व[illegible]पं तत्सत्यं कमलसंभव ।
सकलं नि[illegible]ष्कलं चैव पूर्णत्वाच्च तदेव हि ॥ १९ ॥

यत एवमतो [illegible]विशेषज्ञानं स्वफलसाधनसमर्थं स्यादेवेति मनसि निधाय मुमुक्षुभिः ज्ञानाज्ञाने[illegible] ज्ञातव्येत्याह—ज्ञानेति ॥ १४ ॥ तत्र निर्विशेषज्ञान-स्वरूपमाह—ज्ञातमि[illegible] । तदेव यथोक्तज्ञानमित्यर्थः ॥ १५ ॥ य एवं

[1] ज्ञातं—अ, अ [illegible]
[2] स्वरूपं ना—क, अ १, उ १.
[3] किं तु—क, अ[illegible]

ज्ञानी सोऽयं असौ । कृतकृत्यो भवतीत्यर्थः । पुनराभासज्ञानाभिप्रायेणाक्षिपति । किमिति? कामक्रोधादिसर्वदोषैरिति । कामक्रोधादयो दोषाः स्वाज्ञानविजृम्भिताः ॥ १६ ॥ सर्वदोषग्रासस्वज्ञाने वा तदेकाद्रे स्वात्मनि दोषासम्भवं प्रकटयन् परिहरति—स्वात्मेति । यथा स्वात्मनः सर्वपरिपूर्णं व्याप्यसत्वे व्यापकमपि भवति तथा तद्गोचरज्ञानस्य तन्मात्रप्रसन्नत्वान्न तत् भिद्यते । स्वात्मातिरेकेण ज्ञानाभावेऽपि कामादिदोषाः तद्भिन्न भवेयुरित्यत आह—कामेति । न हि निष्प्रतियोगिकब्रह्ममात्रे कामादिदोषः स्यान्न वेति स्मृतिर्वा कथं सेद्धुं पारयति ब्रह्ममात्रगतनिष्प्रतियोगिकयाः स्वातिरिक्तमस्ति नास्तीति गन्धासहत्वात् ॥ १७ ॥ एवं ज्ञानी कृतकृत्यो भवतीत्याह—विवेकीति ॥ १८ ॥ तस्यैव ब्रह्मत्वमाह—परिपूर्णेति । सांसारिकभ्रमविरळब्रह्मविदो ब्रह्मत्वात् यत् सत्यमिति ख्यातं तदेव स्वदिदृष्ट्या सकळादिभावं भजतीत्याह—सकळमिति ॥ १९ ॥

आभासज्ञान्यज्ञानिनोरविशेषः

[1]कलिना स्फूर्तिरूपेण संसारभ्रमतां गतम् ।
निष्कलं निर्मलं साक्षात्सकलं गगनोपमम् ॥ २० ॥
उत्पत्तिस्थितिसंहारस्फूर्तिज्ञानविवर्जितम् ।
एतद्रूपं समायातः स कथं मोहसागरे ॥ २१ ॥
निमज्जति महाबाहो त्यक्त्वा विद्यां पुनः पुनः ।
सुखदुःखादिमोहेषु यथा संसारिणां स्थितिः ॥ २२ ॥
तथा ज्ञानी यदा तिष्ठेद्वासनावासितस्तदा ।
तयोर्नास्ति विशेषोऽत्र समा संसारभावना ॥ २३ ॥
ज्ञानं चेदीदृशं ज्ञातमज्ञानं कीदृशं पुनः

[1] कलना—अ, अ १.

अप्रकाशकल्यन्तःकरणयोगात् संसारित्वं भजतीवेत्याह—कलिनेति वस्तुतस्तु निष्कळम् ॥ २० ॥ यन्निष्कळमित्यादिविशेषणविशिष्टमेतद्रू चित्तशुद्धिसाधनचतुष्टयसम्पत्त्यभावेऽपि येन केनोपायेन समार्थीतो यदि ज्ञानी तदा कृतकृत्यो भवेत्, स कथं स्वात्तज्ञानं विहाय स्वाज्ञवन्मोहसागरे निमज्जतीति प्रश्नोत्तरं भगवानाह—सुखेति ॥ २१–२२ ॥ तथा अयमाभासज्ञानी । स्वाज्ञानेनास्यापि समा ॥ २३ ॥ आभासज्ञानिनः ज्ञानम् । आभासज्ञानाज्ञानयोरविरोधादेकार्थपर्यवसायित्वं युज्यत इत्यर्थः ।

आभासज्ञानिनो योगेन विना न मोक्षसिद्धिः

ज्ञाननिष्ठो विरक्तोऽपि धर्मज्ञोऽविजितेन्द्रियः ॥ २४ ॥
विना देहेन योगेन न मोक्षं लभते विधे ।
अपक्काः परिपक्वाश्च देहिनो द्विविधाः स्मृताः ॥ २५ ॥
अपक्का योगहीनास्तु पक्का योगेन देहिनः ।
सर्वो योगाग्निना देहो ह्य[1]जडः शोकवर्जितः ॥ २६ ॥
जडस्तु पार्थिवो ज्ञेयो ह्यपक्को दुःखदो भवेत् ।

तस्य योगं विना अकिञ्चित्करतामाह—ज्ञानेति । स्वारोपितज्ञाननिष्ठः । शास्त्रतो धर्मज्ञः । स्वतो अविजितेन्द्रियः ॥ २४ ॥ अयमाभासज्ञानी योगेन विना स्वात्तज्ञानगताभासमलं संक्षाल्य शुद्धं ज्ञानं प्राप्य तत्समकालं न कदापि मोक्षं लभते, योगादस्य चित्तमलशोधकत्वात् । नह्यशुद्धचित्तासादितज्ञानं कार्यकारि भवतीत्यर्थः आभासपारमार्थिकभेदेन ज्ञानिनौ द्विविधावित्याह—अपक्क इति ॥ २५ ॥ केवलाभासज्ञानिनः अपक्काः अशुद्धान्तरत्वात् । योगेन पक्काः पारमार्थिकज्ञानिनः इत्यर्थः । शुद्धाशुद्धज्ञानिनोरधिष्ठितदेहादेः जडाजडतामाह—सर्व इति । ज्ञानाग्निदग्धकल्मषत्वात् ज्ञानिदेहादेरजडत्वं युज्यते इत्यत्र "यथैव मृण्मयः कुम्भः तद्वद्देहोऽपि चिन्मयः" इति श्रुतेः ॥ २६ ॥

[1] जः शोकविवर्जितः—क

आभासज्ञानिनां दुःखानिवृत्तिः

ध्यानस्थोऽसौ तथाऽप्येवमिन्द्रियैर्विवशो भवेत् ॥ २७ ॥
तानि गाढं नियम्यापि तथाऽप्यन्यैः प्र
शीतोष्णसुखदुःखाद्यैर्व्याधिभिर्मानसैस्तथ ॥ २८ ॥
अन्यैर्नानाविधैर्जीवैः शस्त्राग्निजल्मारुतैः
शरीरं पीड्यते तैस्तैश्चित्तं संक्षुभ्यते ततः ॥ २९ ॥
तथा प्राणविपत्तौ तु क्षोभमायाति मारुतः
ततो दुःखशतैर्व्याप्तं चित्तं क्षुब्धं भवेन्नृण ॥ ३० ॥
देहावसानसमये चित्ते यद्यद्विभावयेत्
तत्तदेव भवेज्जीव इत्येवं जन्मकारणम् ॥ १ ॥
देहान्ते किं भवेज्जन्म तन्न जानन्ति म ाः ।
तस्माज्ज्ञानं च वैराग्यं जीवस्य केवलं ः ॥ ३२ ॥
पिपीलिका यथा[दा ?]लग्ना देहे ध्यानां ुच्यते ।
असौ किं वृश्चिकैर्दष्टो देहान्ते वा कथं ी ॥ ३३ ॥
तस्मान्मूढा न जानन्ति मिथ्यातर्केण वे ताः ।

यद्याभासज्ञानी शुद्धज्ञानिवत् ध्यानस्थः । वि ो भवेत् ब्रह्मातिरेकेण इन्द्रियादिकं नास्तीत्यसमाहितकरणग्रामत्वात् ॥ २ ॥ यथाबलं तानि ॥ २८–२९ ॥ नराणां निर्विशेषब्रह्मज्ञानीतराणाम् ॥ ३ –३१ ॥ यस्मादाभासज्ञानिनः एवं न विदुः तस्मात् आभासज्ञानम् । ि वेशेषज्ञानिनोऽप्येवं न विदुरिति चेत्, सत्यं ब्रह्मातिरेकेण देहः तदवसान मयो वा अस्ति चेत् जानन्ति, निर्विशेषब्रह्ममात्रावगतेः देहाद्युपलक्षितां ापदतत्कार्यजातमस्ति

नास्तीति विभ्रमापह्नवपूर्वकत्वात् । तस्मादाभासज्ञानी अत्र विषयो भवतीति मन्तव्यम् । ज्ञानियोगिशब्देन मुख्यज्ञानियोगिनौ गृहीतौ चेत् मूलश्रुत्यनुरूप भवेदिति चेन्न; मूलश्रुतेरप्याभासज्ञान्यादिविषयतात्पर्यत्वात्, चतुर्थाध्याये शुद्धज्ञानिसमाचारस्य स्पष्टीकृतत्वाच्च । न हि कदाऽपि श्रुतिविरुद्धार्थं वदति । तस्मादाभासपारमार्थिकज्ञानिनौ मिथोविविक्तं श्रुतिरनुवदतीति वक्तुं युक्तमित्यर्थः ॥ ३२ ॥ आभासज्ञानी अस्मिन् प्रकरणे विशेषितव्यः इति स एव विशेष्यते—पिपीलिकेति ॥ ३३ ॥ यस्मादेवं ब्रह्मातिरेकेण स्वदेहध्यानतद्विरोधादिकमस्तीति भ्रान्तिः तस्मात् ॥

अहंभाव एव सर्वानर्थमूलम्

अहंकृतिर्यदा यस्य नष्टा भवति तस्य वै ॥ ३४ ॥
देहस्त्वपि विनष्टो व्याधयश्चास्य किं पुनः ।
जलाग्निशस्त्रवातादिबाधा कस्य भविष्यति ॥ ३५ ॥
यदा यदा परिक्षीणा पुष्टा चाहंकृतिर्भवेत् ।
[1]तमनेनास्य नश्यन्ति प्रवर्तन्ते रुगादयः ॥ ३६ ॥
कारणेन विना कार्यं न कदाचन विद्यते ।
अहंकारं विना तद्वद्देहे दुःखं कथं भवेत् ॥ ३७ ॥

स्वाज्ञविकल्पितदेहादौ अहंकृतिः ॥ ३४ ॥ ज्ञानिनो विदेहत्वात् यद्यपि स्वाज्ञदृष्ट्या देहोऽस्तु शस्त्रवातादिः तस्यैवास्तु ज्ञानिनो न काचित् क्षतिरस्तीत्यर्थः ॥ ३५ ॥ यदि पुनरस्य देहादावहम्भावः उदेति तदा स्वाज्ञवत् सर्वानर्थो भवतीत्याह—यदेति । अनेन देहाभिमानदोषेण अस्य ब्रह्मास्मीत्यादिवृत्तयो नश्यन्ति तिरोभवन्ति । किंच तं देहाभिमानिनं प्रति रुगादयः प्रवर्तन्ते ॥ ३६ ॥ अहम्भाव एव सर्वानर्थमूलमित्याह—कारणेनेति ॥ ३७ ॥

[1] तदा तदा-

योगसिद्धस्य ईश्वरत्वं जीवन्मुक्तत्वं च

शरीरेण जिताः सर्वे शरीरं योगिभिर्जितम् ।
तत्कथं कुरुते तेषां सुखदुःखादिकं फलम् ॥ ३८ ॥
इन्द्रियाणि मनो बुद्धिः कामक्रोधादिकं जितम् ।
तेनैव विजितं सर्वं नासौ केनापि बाध्यते ॥ ३९ ॥
महाभूतानि तत्त्वानि संहृतानि क्रमेण च
सप्तधातुमयो देहो दग्धो योगाग्निना शनैः ॥ ४० ॥
देवैरपि न लक्ष्येत [1]योगिदेहो महाबलः
भेदबन्धविनिर्मुक्तो नानाशक्तिधरः परः ॥ ४१ ॥
यथाऽऽकाशस्तथा देह आकाशादपि निर्मलः ।
सूक्ष्मात्सूक्ष्मतरो दृश्यः [2]स्थूलात्स्थूलो [3]जडाजडः ॥ ४२ ॥
इच्छारूपो हि योगीन्द्रः स्वतन्त्रस्त्वजरामरः ।
क्रीडते त्रिषु लोकेषु लीलया यत्रकुत्रचित् ॥ ४३ ॥
अचिन्त्यशक्तिमान् योगी नानारूपाणि धारयेत् ।
संहरेच्च पुनस्तानि स्वेच्छया विजितेन्द्रियः ॥ ४४ ॥
नासौ मरणमाप्नोति पुनर्योगबलेन तु ।
हठेन मृत एवासौ मृतस्य मरणं कुतः ॥ ४५ ॥
मरणं यत्र सर्वेषां तत्रासौ परिजीवति ।
यत्र जीवन्ति मूढास्तु तत्रासौ मृत एव हि ॥ ४६ ॥

[1] योग—अ, अ १, अ २, क. [2] स्थूलात्स्थू—उ.
[3] जडाजड:—अ, अ २, उ.

कर्तव्यं नैव तस्यास्ति कृतेनासौ न लिप्यते ।

जीवन्मुक्तः सदा स्वच्छः सर्वदोषविवर्जितः ॥ ४७ ॥

सर्वे स्वाज्ञाः [illegible] ब्रह्मात्मैक्ययोगिभिः ॥ ३८ ॥ "ब्रह्मातिरिक्तं न किञ्चिदस्ति" इति ज्ञा[illegible]खड्गेन इन्द्रियाणि ॥ ३९ ॥ किंच—महाभूतानि ॥ ४० ॥ सम्यज्ज्ञानि[illegible] ईश्वरभावापत्त्या सत्यसङ्कल्पत्वाद्यदि सम्यज्ज्ञानयोगी अयं देहः सर्वादृश्यो भ[illegible]तु ईश्वरादिसामर्थ्यमीहते तदा देवैरपीति ॥ ४१–४४ ॥ नासौ मरणमाप्नोति [illegible]रणादेः देहनिष्ठत्वेन योगिनो देहातीतत्वात्, "न जायते म्रियते वा [illegible]पश्चित्" इति श्रुतेः । ब्रह्मातिरेकेण देहादिकं नास्तीति बोध एव हठः, हठे[illegible] सम्यज्ज्ञानेन मृत एवासौ देहः ॥ ४५ ॥ "या निशा सर्वभूतानां" इत्यादिस्[illegible]णात् ॥ ४६–४७ ॥

आभासज्ञानिनां विडम्बनम्

विरक्ता ज्ञा[illegible]नेनश्चान्ये देहेन विजिताः सदा ।

ते कथं यो[illegible]गेभिस्तुल्या मांसपिण्डाः कुदेहिनः ॥ ४८ ॥

देहान्ते ज्ञा[illegible]नेभिः पुण्यात्पापाच्च फल[1]माप्यते ।

ईदृशं तु [illegible]त्तत्तद्भुक्त्वा ज्ञानी पुनर्भवेत् ॥ ४९ ॥

योगव्याविद्धचि[illegible]मलनिर्विशेषज्ञानिनमीश्वरत्वेन जीवन्मुक्तत्वेन च स्तुत्वा तदपेक्षया आभासज्ञा[illegible]नो विडम्बयति—विरक्ता इति । स्वातिरिक्तविषये विशेषेण रक्ताः वि[illegible]क्ताः ॥ ४८ ॥ प्रारब्धादिकर्मफलं भुक्त्वा ज्ञानी पुनर्भवेत् । न हि प[illegible]मार्थिकज्ञानिनः पुण्यपापतत्फलोच्चावचजन्मादिकमस्ति, आभासज्ञानिनि तु [illegible]र्वमुपपद्यत इति श्रुतेराशयः । अन्यथा "ब्रह्म वेद ब्रह्मैव भवति," "य एवं [illegible]निर्बीजं वेद निर्बीज एव स भवति," "तमेवं विद्वानमृत

[1] मश्नुते—क, [illegible]२.

इह भवति नान्यः पन्था अयनाय विद्यते," इत्यादयो वेदनसमकालमेव ब्रह्ममात्रावस्थानलक्षणविदेहकैवल्यानुवादिश्रुतयो बाध्येरन् । तस्मादत्र ज्ञानिनः पापपुण्यानुरोधेन पुनर्भवोक्तिराभासज्ञानिनिष्ठेति ॥ ४९ ॥

तेषां सिद्धसङ्गत्या कृतकृत्यत्वं

पश्चात्पुण्येन लभते सिद्धेन सह [1]सङ्गमम् ।
ततः सिद्धस्य कृपया योगी भवति नान्यथा ॥ ५० ॥
ततो नश्यति संसारो नान्यथा शिवभाषितम् ।

तादृशाभासज्ञानिनः सुकृतविशेषात् जीवन्मुक्तसंगत्या कृतकृत्यता स्यादित्याह—पश्चादिति ॥ ५० ॥

ज्ञानयोगयोः मिथः कार्यकारणत्वम्

योगेन रहितं ज्ञानं न मोक्षाय भवेद्विधे ॥ ५१ ॥
ज्ञानेनैव विना योगो न सिध्यति कदाचन ।

आभासज्ञानयोगसमुच्चयाभिप्रायेण प्रातिस्विकेन तयोः निन्दोच्यते—योगेनेति ॥ ५१ ॥

योग एव परमो मोक्षमार्गः

जन्मान्तरैश्च बहुभिर्योगो ज्ञानेन लभ्यते ॥ ५२ ॥
ज्ञानं तु जन्मनैकेन योगादेव प्रजायते ।
तस्माद्योगात्परतरो नास्ति मार्गस्तु मोक्षदः ॥ ५३ ॥

[1] संगतिः—अ, अ १, अ २, क.

प्रविचार्य चिरं ज्ञानं मुक्तोऽहमिति मन्यते ।
किमसौ मननादेव मुक्तो भवति तत्क्षणात् ॥ ९४ ॥
पश्चाज्जन्मान्तरशतैर्योगादेव विमुच्यते ।
न तथा भवतो योगाज्जन्ममृत्यू पुनःपुनः ॥ ९५ ॥
प्राणापानसमा[1]योगश्चन्द्रसूर्यैकता भवेत् ।
सप्तधातुमयं देहमग्निना रञ्जयेद्ध्रुवम् ॥ ९६ ॥
व्याधयस्तस्य नश्यन्ति छेदखातादि का[2]कथा ।
तदसौ परमाकाशरूपो देह्यवतिष्ठति ॥ ९७ ॥
किं पुनर्बहुनोक्तेन मरणं नास्ति तस्य वै ।
[3]देहिवद्दृश्यते लोके दग्धकर्पूरवत्स्वयम् ॥ ९८ ॥

तयोः मिथः कार्यकारणतामाह---जन्मेति ॥ ९२ ॥ यस्मादेवं तस्मात् । नास्ति, अभ्यासज्ञानगताभासतां ग्रसित्वा शुद्धज्ञानजनकत्वात् । अत एव योगमार्गस्तु ज्ञानद्वारा मोक्षदः ॥ ९३ ॥ योगाभावे ज्ञानाभासेनापि प्रविचार्य । कदाचित् मननादेव ॥ ९४ ॥ योगादेव विमुच्यते इति योगं स्तौति । यथा आभासज्ञानिनां जन्ममृत्यू भवतः न तथा ॥ ९५ ॥ सप्तधातुमयं देहं---शुक्लादयः सप्तधातवः देहस्य तन्मयत्वात् तम् ॥ ९६-९८ ॥

### योगसंस्कृतमनस्येव आत्मज्ञानोत्पत्तिः

चित्तं प्राणेन संबद्धं सर्वजीवेषु संस्थितम् ।
रज्ज्वा यद्वत्सुसंबद्धः पक्षी तद्वदिदं मनः ॥ ९९ ॥

[1] योगाच---अ २.
[2] स्तथा---अ.
[3] देहीव दृ---क, अ १.

नानाविधैर्विचारैस्तु न [1]बाध्यं जायते मनः ।
तस्मात्तस्य जयोपायः प्राण एव हि नान्यथा ॥ ६० ॥
तर्कैर्जल्पैः शास्त्रजालैर्युक्तिभिर्मन्त्रभेषजैः
न वशो जायते प्राणः सिद्धोपायं विना विधे ॥ ६१ ॥
उपायं तमविज्ञाय योगमार्गे प्रवर्तते ।
खण्डज्ञानेन सहसा जायते क्लेश[2]वत्तरः ॥ ६२ ॥
योऽजित्वा पवनं मोहाद्योगमिच्छति योगिनाम् ।
सोऽपक्वं कुम्भमारुह्य सागरं तर्तुमिच्छति ॥ ६३ ॥
यस्य प्राणो विलीनोऽन्तः साधके जीविते सति ।
पिण्डो न पतितस्तस्य [3]चित्तं दोषैः प्रबाधते ॥ ६४ ॥

संस्थितं स्वात्मानं विषयीकरोतीत्यर्थः । तद्वदिदं मनः, "प्राणबन्धनं हि सोम्य मनः" इति श्रुतेः ॥ ५९ ॥ यस्मादेवं तस्मात् ॥ ६०–६५ ॥

योगाभ्यास एव प्रथमकृत्यम्

शुद्धे चेतसि तस्यैव स्वात्मज्ञानं प्रकाशते ।
तस्माज्ज्ञानं भवेद्योगाज्जन्मनैकेन पद्मज ॥ ६५ ॥
तस्माद्योगं तमेवादौ साधको नित्यमभ्यसेत् ।
मुमुक्षुभिः प्राणजयः कर्तव्यो मोक्षहेतवे ॥ ६६ ॥

[1] साध्यं—अ, अ १.   [2] वत्तरः—अ २.   वाक्तरः—क.
[3] चित्तदो—अ, अ १, अ २.

योगात्परतरं पुण्यं योगात्परतरं शिवम् ।
योगात्परतरं सूक्ष्मं योगात्परतरं न हि ॥ ६७ ॥
योऽपानप्रा[illegible]ोरैक्यं [1]रजसो[2]रेतसस्तथा ।
न्द्रम[illegible]र्योगो जीवात्मपरमात्मनोः ॥ ६८ ॥
एवं हि द्व[illegible]जालस्य संयोगो योग उच्यते ।
यस्माद्योग एवं [illegible]ावान् तस्मात् ॥ ६६–६८ ॥

योगशिखोपदेशः

अथ योगशिखां वक्ष्ये सर्वज्ञानेषु चोत्तमाम् ॥ ६९ ॥
यदाऽनुध्यायते मन्त्रं गात्रकम्पोऽथ जायते ।
आसनं पद्मकं बद्ध्वा यच्चान्यदपि रोचते ॥ ७० ॥
नासाग्रे दृष्टिमारोप्य हस्तपादौ च [3]संयतौ ।
मनः सर्वत्र संगृह्य ॐकारं तत्र चिन्तयेत् ॥ ७१ ॥
ध्यायते सततं प्राज्ञो हृत्कृत्वा परमे[4]श्वरम् ।
एकस्तम्भे नवद्वारे त्रिस्थूणे पञ्चदैवते ॥ ७२ ॥
ईदृशे तु शरीरे वा मतिमान्नोपलक्षयेत् ।
आदित्यमण्डलाकारं रश्मिज्वालासमाकुलम् ॥ ७३ ॥
तस्य मध्यगतं वह्निं प्रज्वलेद्दीपवर्तिवत् ।
दीपशिखा तु या मात्रा सा मात्रा परमेश्वरे ॥ ७४ ॥

[1] स्वरजो—अ, अ १, अ २, क, मु.
[2] रेतसो—अ, मु.
[3] संयतौ—उ १.
[4] छिन्नं—उ. उ १.

इत्थं योगं स्तुत्वा अथ अनन्तरं योगसारभूतां शिखां प्रपञ्चयति—अथेति । योगमस्तकविलसितत्वात् योगशिखा । आभासादिज्ञानापेक्षया इयमुत्तमा, अशुद्धचित्ताश्रयज्ञानगताभासग्रासत्वात् । तां तुभ्यं वक्ष्ये इत्यर्थः ॥ ६९ ॥ किं तत् इत्यत्र तदियत्तां तदभ्यासक्रमं चाह—यदेति । मन्तारं अनुसन्धातारं त्रायते इति मन्त्रः नादः । मन्त्रं, मन्त्रो यदा अनुध्यायते अनुसन्धीयते तदा अथ अनन्तरं योगिनो गात्रकम्पो जायते । तदुपशमनार्थं आसनमिति । यद्वान्यदपि रोचते सिद्धासनादि ॥ ७० ॥ एवं आसने स्थित्वा नासाग्रे इति ॥ ७१ ॥ तदानीं देहदृष्टिः न कार्येत्याह—एकेति । वीणादण्डस्य शरीरमण्टपाधारत्वात् । स्थूणशब्देन आगाम्यादिकर्मत्रयमुच्यते । पञ्चदैवतशब्देन ब्रह्मादिसदाशिवान्तपञ्चब्रह्माण उच्यन्ते ॥ ७२ ॥ एतत्संघाते शरीरे स्वात्मात्मीयदृष्टिं न कुर्यादित्यर्थः । ततः किं कर्तव्यमित्यत्र स्वहृदये आदित्येति ॥ ७३ ॥ प्राणायामानुकूलध्यानेन मूलाधारगताग्निज्वालावलीयुतं भावयेदित्यर्थः । तत्र दीपशिखारूपेण परमेश्वरो भावनीयः इत्याह—दीपशिखेति । मूलाधारस्थदीपशिखा तु या मात्रा नीवारशूकादपि तन्वी सा मात्रा तदाकारेण परमेश्वरे भाविते सति ॥ ७४ ॥

### योगाभ्यासात् परमपदसाक्षात्कारः

भिन्दन्ति योगिनः सूर्यं योगाभ्यासेन वै पुनः ।
द्वितीयं सुषुम्नाद्वारं परिशुभ्रं समर्पितम् ॥ ७५ ॥
कपालसंपुटं पीत्वा ततः पश्यति तत्पदम् ।

अथ तत्प्रसादतो योगिनः योगाभ्यासबलेन सूर्यमण्डलं भित्त्वा तत्पदं यान्तीत्यत्र "सूर्यद्वारेण ते विरजाः प्रयान्ति" इति श्रुतेः ॥

संन्यस्तं पुरुषं दृष्ट्वा स्थानाच्चलति भास्करः ।
एष मे मण्डलं भित्त्वा परं ब्रह्म प्रयास्यति ॥

इति स्मृत्यनुरोधेन सन्न्यासयोगिनः सूर्यमण्डलं भित्त्वा तत्पदं यान्तीत्युक्तम् । केवलयोगिनस्तु द्वितीयं सुषुम्नाद्वारं कुण्डलिन्या विभिद्य ॥ ७५ ॥ तन्मार्गेण कपालसम्पुटं सहस्रारचक्रं प्रविश्य तत्र रवीन्द्वग्निजममृतं पीत्वा ततः तत्पदं तत्रत्यतुरीयं तुरीयातीतं वा सोऽहमिति पश्यति पश्यन्ति । ततः तदात्म-ज्ञानानुरोधेन सविशेषं निर्विशेषं वा ब्रह्म प्रयान्तीत्यर्थः ॥

ध्यानाशक्तस्य पुण्यलोकप्राप्तिः

अथ तद् ध्यायते जन्तुरालस्याच्च प्रमादतः ॥ ७६ ॥
यदि त्रिकालमागच्छेत् [1]स गच्छेत्पुण्यसंपदम् ।
पुण्यमेतत्समासाद्य संक्षिप्य कथितं मया ॥ ७७ ॥

एवं ध्यातुमशक्तानां पुण्यलोकाप्तिमाह—अथेति । यदि यो जन्तुः यथावत् ध्यानकलनायामालस्यात् प्रमादतश्च भेदधिया तत् ब्रह्म ध्यायते ध्यायति ॥ ७६ ॥ एवं अहरहः त्रिकालं ध्यानमागच्छेत् ध्यानं करोति सोऽयं मुनिः स्वभावनाऽनुरोधेन पुण्यसम्पदं ब्रह्मेन्द्राद्यैश्वर्यं गच्छेत् प्राप्नुयात् । एतत्पुण्यानुरोधेन संक्षेपेण मयोक्तमित्यर्थः ॥ ७७ ॥

लब्धयोगस्य स्वात्मबोधः

लब्धयोगोऽथ बुध्येत प्रसन्नं परमेश्वरम् ।
जन्मान्तरसहस्रेषु यदा क्षीणं तु किल्बिषम् ॥ ७८ ॥
तदा पश्यति योगेन संसारोच्छेदनं महत् ।

वक्ष्यमाणरीत्या लब्धयोगः स्वात्मानं बुध्यते इत्याह—लब्धेति । सोऽहमिति बुध्येत । किल्बिषवतां स्वातिरिक्तकलनोच्छेदनेश्वरसाक्षात्कारः कुत इत्यत आह—जन्मान्तरेति । नित्यादिकर्मफलसमर्पणसन्तुष्टेश्वरप्रसादतः यदा ॥ ७८ ॥

[1] संग—अ १.

योगाभ्यासार्थं जितप्राणगुरूपसदनम्

अधुना संप्रवक्ष्यामि योगाभ्यासस्य लक्षणम् ॥ ७९ ॥
मरुज्जयो यस्य सिद्धः सेवयेत्तं गुरुं सदा ।
गुरुवक्त्रप्रसादेन कुर्यात्प्राणजयं बुधः ॥ ८० ॥

तदा पश्यति योगेनेत्युक्तं, सोऽयं योगः कीदृश इत्याकांक्षायां तदियत्तां ससाधनां सफलामाचष्टे—अधुनेति ॥ ७९ ॥ तत् गुरुमुखेनैव ज्ञेयमित्याह—मरुदिति ॥ ८० ॥

सरस्वतीचालनम्

वितस्तिप्रमितं दैर्घ्यं चतुरङ्गुलविस्तृतम् ।
मृदुलं धवलं प्रोक्तं वेष्टनाम्बरलक्षणम् ॥ ८१ ॥

आदौ सरस्वतीनाडीचालनपुरस्सरं कुण्डलिनीस्थितिं तच्चालनोपायं चाह—वितस्तीति । सरस्वतीनाडीमस्तकमुक्तलक्षणलक्षितवस्त्रेणावेष्टय ब्राह्मे मुहूर्ते उत्थाय मुहूर्तपर्यन्तं निर्भयाच्चालयेत् ॥ ८१ ॥

कुण्डलीचालनेन ग्रन्थित्रयभेदः

निरुध्य मारुतं गाढं शक्तिचालनयुक्तितः ।
अष्टधा कुण्डलीभूतामृज्वीं कुर्यात्तु कुण्डलीम् ॥ ८२ ॥
पायोराकुञ्चनं कुर्यात्कुण्डलीं चालयेत्तदा ।
मृत्युवक्त्रगतस्यापि तस्य मृत्युभयं कुतः ॥ ८३ ॥
एतदेव परं गुह्यं कथितं तु मया तव ।
वज्रासनगतो नित्यमूर्ध्वाकुञ्चनमभ्यसेत् ॥ ८४ ॥

वायुना ज्वलितो वह्निः कुण्डलीमनिशं दहेत् ।
संतप्ता साऽग्निना [1]जीवा शक्तिस्त्रैलोक्यमोहिनी ॥ ८५ ॥
प्रविशेच्चन्द्र[2]तुण्डे तु सुषुम्नावदनान्तरे ।
वायुना वह्निना सार्धं ब्रह्मग्रन्थिं भिनत्ति सा ॥ ८६ ॥
विष्णुग्रन्थिं ततो भित्त्वा रुद्रग्रन्थौ च तिष्ठति ।
ततस्तु कुम्भकैर्गाढं पूरयित्वा पुनःपुनः ॥ ८७ ॥

सरस्वतीनाडीचालनानन्तरं निरुध्य ॥ ८२ ॥ तदा वायोः । कुण्डलिनीचालनतोऽस्य विमृत्युत्वमाह—मृत्युवक्त्रेति ॥ ८३ ॥ कुण्डलीं चालयेदिति यदुक्तं सोपायं तदाह—वज्रेति ॥ ८४ ॥ आकुञ्चनोत्थवायुना । तेन दाहेन सन्तप्ता ॥ ८५ ॥ ततः सा किं करोतीत्यत्र प्रविशेत् । सुषुम्नायाः चन्द्रवत् शीतलत्वात् कुण्डलीतापशान्तिकरत्वं योग्यनुभवसिद्धमित्यर्थः । दृक्प्राणवायुना । मूलाधारप्रवेशमार्गकवाटाभं ब्रह्मग्रन्थिम् ॥ ८६ ॥ अनाहतकवाटं विष्णुग्रन्थिम् । आज्ञाकवाटे रुद्रग्रन्थौ । रुद्रग्रन्थिभेदनोपायमाह—तत इति ॥ ८७ ॥

### कुम्भकचतुष्टयाभ्यासविधिः

अथाभ्यसेत्सूर्यभेदमुज्जायीं चापि शीतलीम् ।
भस्त्रां च सहितो नाम स्याच्चतुष्टयकुम्भकः ॥ ८८ ॥
बन्धत्रयेण संयुक्तः केवलप्राप्तिकारकः ।

कुम्भकभेदमाह—अथेति ॥ ८८–८९ ॥

[1] जीव—अ, मु. [2] कुण्डे—क. खण्डे—अ. तुण्डेन—अ २.

## सूर्यकुम्भकलक्षणम्

अथास्य लक्षणं सम्यक्कथयामि समासतः ॥ ८९ ॥

एकाकिना समुपगम्य विविक्तदेशं
प्राणादिरूपममृतं परमार्थतत्त्वम् ।
लघ्वाशिना धृतिमता परिभावितव्यं
संसाररोगहरमौषधमद्वितीयम् ॥ ९० ॥

सूर्यनाड्या समाकृष्य वायुमभ्यासयोगिना ।
विधिवत्कुम्भकं कृत्वा रेचयेच्छीतरश्मिना ॥ ९१ ॥

उदरे बहुरोगघ्नं क्रिमिदोषं निहन्ति च ।
मुहुर्मुहुरिदं कार्यं सूर्यभेदमुदाहृतम् ॥ ९२ ॥

आदौ समुदायलक्षणमुच्यते—एकाकिनेति ॥ ९० ॥ ततः सूर्यभेदलक्षणं तत्फलं चाह—सूर्येति ॥ ९१–९२ ॥

## उज्जायीकुम्भकलक्षणम्

नाडीभ्यां वायुमाकृष्य कुण्डल्याः पार्श्वयोः क्षिपेत् ।
धारयेदुदरे पश्चाद्रेचयेदिडया सुधीः ॥ ९३ ॥

कण्ठे कफादिदोषघ्नं शरीराग्निविवर्धनम् ।
नाडीजलापहं धातुगतदोषविनाशनम् ॥ ९४ ॥

गच्छतस्तिष्ठतः कार्यमुज्जाय्याख्यं तु कुम्भकम् ।

उज्जायीकुम्भकलक्षणमाह—नाडीभ्यामिति ॥ ९३–९४ ।

मुखेन वायुं संगृह्य घ्राणरन्ध्रेण रेचयेत् ॥ ९५ ॥
शीतलीकरणं चेदं हन्ति पित्तं क्षुधां तृषम् ।

शीतळीलक्षणमाह—मुखेनेति ॥ ९५ ॥

भस्त्रिकाकुम्भकलक्षणम्

स्तनयोरथ भस्त्रेव लोहकारस्य वेगतः ॥ ९६ ॥
रेचयेत्पूरयेद्वायुमाश्रमं देहगं धिया ।
यथा श्रमो भवेद्देहे तथा सूर्येण पूरयेत् ॥ ९७ ॥
कण्ठसंकोचनं कृत्वा पुनश्चन्द्रेण रेचयेत् ।
वातपित्तश्लेष्महरं शरीराग्निविवर्धनम् ॥ ९८ ॥
कुण्डलीबोधकं वक्रदोषघ्नं शुभदं सुखम् ।
ब्रह्मनाडीमुखान्तःस्थकफाद्यर्गलनाशनम् ॥ ९९ ॥
सम्यग्बन्धसमुद्भूतं ग्रन्थित्रयविभेदकम् ।
विशेषेणैव कर्तव्यं भस्त्राख्यं कुम्भकं त्विदम् ॥ १०० ॥

भस्त्रिकाकुम्भकलक्षणमाह—स्तनयोरिति । भस्त्रिकाचालकस्तनयोः समं अथ ॥ ९६–९९ ॥ भस्त्रिकाकुम्भकात् रुद्रग्रन्थिरपि भिद्यते इत्यर्थः ॥ १०० ॥

बन्धत्रयविधिः

बन्धत्रयमथेदानीं प्रवक्ष्यामि यथाक्रमम् ।
नित्यं कृतेन तेनासौ वायोर्जयमवाप्नुयात् ॥ १०१ ॥

चतुर्णामपि भेदानां कुम्भके समुपस्थिते ।
बन्धत्रयमिदं कार्यं वक्ष्यमाणं मया हि तत् ॥ १०२ ॥
प्रथमो मूलबन्धस्तु द्वितीयोड्डीयणाभिधः ।
जालन्धरस्तृतीयस्तु लक्षणं कथयाम्यहम् ॥ १०३ ॥

कुम्भकचतुष्टयांगतया बन्धत्रयलक्षणमाह—बन्धेति ॥ १०१–१०४ ॥

मूलबन्धः

गुदं पार्ष्ण्या तु संपीड्य [1]वायुमाकुञ्चयेद्बलात् ।
वारंवारं यथा चोर्ध्वं समायाति समीरणः ॥ १०४ ॥
प्राणापानौ नादबिन्दू मूलबन्धेन चैकताम् ।
गत्वा योगस्य संसिद्धिं यच्छतो नात्र संशयः ॥ १०५ ॥

नादबिन्दुशब्देन बुद्धिमनसी उच्येते ॥ १०५–१०७ ॥

उड्डियाणबन्धः

कुम्भकान्ते रेचकादौ कर्तव्यस्तूड्डियाणकः ।
बन्धो येन सुषुम्नायां प्राणस्तूड्डीयते यतः ॥ १०६ ॥
तस्मादुड्डीयणाख्योऽयं योगिभिः समुदाहृतः ।
उड्डियाणं तु सहजं गुरुणा कथितं सदा ॥ १०७ ॥
अभ्यसेत्तदतन्द्रस्तु वृद्धोऽपि तरुणो भवेत् ।
नाभेरूर्ध्वमधश्चापि ताणं कुर्यात्प्रयत्नतः ॥ १०८ ॥
षाण्मासमभ्यसेन्मृत्युं जयत्येव न संशयः ।

[1] पायु—क, अ २.

ताणं आकुञ्चनम् ॥ १०८–१११ ॥

जालन्धरबन्धः

पूरकान्ते तु कर्तव्यो बन्धो जालन्धराभिधः ॥ १०९ ॥
कण्ठसंकोचरूपोऽसौ वायुमार्गनिरोधकः ।
कण्ठमाकुञ्च्य हृदये स्थापयेद्दृढमिच्छया ॥ ११० ॥
बन्धो जालन्धराख्योऽयममृता[1]प्यायकारकः ।
अधस्तात्कुञ्चनेनाशु कण्ठसंकोचने कृते ॥ १११ ॥
मध्ये पश्चिमताणेन स्यात्प्राणो ब्रह्मनाडिगः ।

कुण्डल्या ग्रन्थित्रयविभेदनेन निर्विकल्पकप्राप्तिः

वज्रासनस्थितो योगी चालयित्वा तु कुण्डलीम् ॥ ११२ ॥
कुर्यादनन्तरं भस्त्रीं कुण्डलीमाशु बोधयेत् ।
भिद्यन्ते ग्रन्थयो वंशे तप्तलोहशलाकया ॥ ११३ ॥
तथैव पृष्ठवंशे स्याद्ग्रन्थिभेदस्तु वायुना ।
पिपीलिकायां लग्नायां कण्डूस्तत्र प्रवर्तते ॥ ११४ ॥
सुषुम्नायां तथाऽभ्यासात्सततं वायुना भवेत् ।
रुद्रग्रन्थिं ततो भित्त्वा ततो याति शिवात्मकम् ॥ ११५ ॥
चन्द्रसूर्यौ समौ कृत्वा तयोर्योगः प्रवर्तते ।
गुणत्रयमतीतं स्याद्ग्रन्थित्रयविभेदनात् ॥ ११६ ॥
शिवशक्तिसमायोगे जायते परमा [2]स्थितिः ।

[1] प्यय—अ १, अ २, क.  [2] स्थितः—अ, अ १.

बन्धत्रययुक्तो योगी वज्रासनेति ॥ ११२–११६ ॥ ब्रह्मरन्ध्रगातत्तुरीय एव शिवः, शक्तिस्तु कुण्डलिनी, तयोर्योगादेव परमा स्थितिः सहजनिर्विकल्पकावस्था जायते इत्यर्थः ॥

सुषुम्नायाः मोक्षमार्गत्वं कालभोक्तृत्वं च

यथा करी करेणैव पानीयं प्रपिबेत्सदा ॥ ११७ ॥
सुषुम्नावज्रनालेन पवमानं ग्रसेत्तथा ।
वज्रदण्डसमुद्भूता मणयश्चैकविंशतिः ॥ ११८ ॥
सुषुम्नायां स्थिताः सर्वे सूत्रे मणिगणा इव ।
मोक्षमार्गे प्रतिष्ठाना सुषुम्ना विश्वरूपिणी ॥ ११९ ॥
यथैव निश्चितः कालश्चन्द्रसूर्यनिबन्धनात् ।
आपूर्य कुम्भितो वायुर्बहिर्नो याति साधके ॥ १२० ॥
पुनःपुनस्तद्वदेव पश्चिमद्वारलक्षणम् ।
पूरितस्तु स तद्द्वारैरीषत्कुम्भकतां गतः ॥ १२१ ॥
प्रविशेत्सर्वगात्रेषु [1]वायुः पश्चिममार्गतः ।
रेचितः क्षीणतां याति [2]पूरितः पोषयेत्ततः ॥ १२२ ॥

सुषुम्नया प्राणोदकं पिबेदित्यत्र दृष्टान्तमाह—यथेति ॥ ११७ ॥ वज्रदण्डो नाम सुषुम्नाश्रयो वीणादण्डः तत्र भवा एकविंशतिमणयश्चणकवन्मांसपिण्डाः सुषुम्नामार्गगतध्वान्तग्रासत्वात् दीपवत् प्रकाशरूपेण मूलाधारमारभ्य ब्रह्मरन्ध्रान्तं सुषुम्नावेणुपर्ववत् विद्यन्ते योगिप्रत्यक्षाः भवन्तीत्यर्थः ॥ ११८ ॥ तथाविधसुषुम्नाया मोक्षमार्गत्वं कालभोक्तृत्वं चाह—

[1] वायु—अ, अ १.   [2] पूरितं—अ

मोक्षेति । विश्वरूपिणी विश्वाधारब्रह्माश्रयत्वात् ॥ ११९ ॥ निमिषादिकल्पान्तकालः यत्र विलीयते सेयं सुषुम्ना कालभोक्त्रीत्यर्थः । साधके योगिनि या सुषुम्ना वर्तते तया आपूर्य कुम्भितो वायुः उच्छ्वासनिश्वासरूपेण निमेषादिकल्पान्तकालकलनानिर्वाहकः प्राणवायुः सहसा बहिः नो याति । अतः कालभोक्तृत्वं सुषुम्नायाः सिद्धमित्यर्थः ॥ १२० ॥ यदि प्रमादतः सुषुम्नाया बहिः निर्गच्छति तदा पुनःपुनः तद्वत् पूर्ववदेव । सुषुम्नया प्राणमापूर्य कुम्भयेदिति यत्तत् पश्चिमद्वारलक्षणं भवति । सोऽयं प्राणः तद्द्वारैः तद्द्वारेण पूरितः सन्नादावीषत्कुम्भकतां भजति ॥ १२१ ॥ ततः प्राणवायुः पश्चिममार्गतः सर्वगात्रेषु प्रविशेन् । यदि कालकर्मसंयोगतः सुषुम्नया रेचितो वायुः क्षीणतां याति ततः तदा पूरितः शरीरं पोषयेत् पुष्टिं कुर्यादित्यर्थः ॥ १२२ ॥

सुषुम्नायोगेन ब्रह्मज्ञानसिद्धिः

यत्रैव जातं सकलेवरं मन-
स्तत्रैव लीनं कुरुते स योगात् ।
स एव मुक्तो निरहंकृतिः सुखी
मूढा न जानन्ति हि पिण्डपातिनः ॥ १२३ ॥

चित्तं विनष्टं यदि भासितं स्या-
त्तत्र प्रतीतो मरुतोऽपि नाशः ।
न चेद्यदि स्यान्न तु तस्य शास्त्रं
नात्मप्रतीतिर्न गुरुर्न मोक्षः ॥ १२४ ॥

जम्बुको रुधिरं यद्वद्बलादाकृष्यति स्वयम् ।
ब्रह्मनाडी तथा धातून्संततताभ्यासयोगतः ॥ १२५ ॥

अनेनाभ्यासयोगेन नित्यमासनबन्धतः ।
चित्तं विलीनतामेति बिन्दुर्नो यात्यधस्तथा ॥ १२६ ॥

स्वातिरिक्तमनस्तत्कार्यजातारोपापवादाधिष्ठानात्मज्ञानं यस्यास्ति स एव मुक्त इत्याह—यत्रेति । स्वातिरिक्तभ्रमतो मुक्तः । एवं अधिष्ठानयाथात्म्यज्ञानं ये न जानन्ति ते मूढाः तेषां आवृतित्रयावृतदृष्टित्वात् मूढत्वं सिद्धमित्यर्थः ॥१२३॥ यस्य एवमधिष्ठानज्ञानं नोदेति तदृष्ट्या श्रुत्याचार्यतत्प्रभवज्ञानतत्फलमोक्षादिकं नास्तीत्याह—चित्तमिति । तज्जन्म व्यर्थमित्यर्थः ॥ १२४ ॥ यतः अयं अधिष्ठानज्ञानाभावोऽनर्थहेतुः अतः तत्प्रबोधार्थं उत्तरो ग्रन्थ आरभ्यते । ब्रह्मातिरिक्तधातुषु सत्सु ब्रह्मज्ञानं कथं भवतीत्यत्र जम्बूको रुधिरमिव धातून् सुषुम्ना ग्रसति ततो ब्रह्मज्ञानं जायते इत्याह—जम्बुक इति । ब्रह्मनाडी तथा धातून् बहिः पदार्थतत्प्रबोधान् ग्रसत्येव । ततो ब्रह्मज्ञानमुदेति तत्समकालं स्वातिरिक्तभ्रममुक्तिश्च भवति । एवं सिद्धावुपायस्तु—सन्ततेति । योगतः उक्तार्थसिद्धिः स्यादित्यर्थः ॥ १२५ ॥ अभ्यासतः किं स्यादित्यत्र अनेनेति ॥ १२६ ॥

योगाभ्यासेन स्वरूपावस्थितिसिद्धिक्रमः

रेचकं पूरकं मुक्त्वा वायुना स्थीयते स्थिरम् ।
नानानादाः प्रवर्तन्ते संस्रवेच्चन्द्रमण्डलम् ॥ १२७ ॥
नश्यन्ति क्षुत्पिपासाद्याः सर्वदोषास्तत[1]स्तदा ।
स्वरूपे सच्चिदानन्दे स्थितिमाप्नोति केवलम् ॥ १२८ ॥
कथितं तु तव प्रीत्या ह्येतदभ्यासलक्षणम् ।

ततः किं स्यादित्यत्र रेचकमिति । यदा वायुः स्थिरो भवति तदा नानानादाः ॥ १२७ ॥ एवं अमृतास्वादनतः, "ब्रह्मातिरिक्तं न किञ्चिदस्ति" इति प्रबोधाच्च नश्यन्ति इत्यादि ॥ १२८ ॥

[1] स्सदा—क, अ २,

मन्त्रादियोगचतुष्टयात्मको महायोगः

मन्त्रो लयो हठो राज[1]योगान्ता भूमिकाः क्रमात् ॥ १२९ ॥
एक एव चतुर्धाऽयं महायोगोऽभिधीयते ।

पुनस्ते महायोगं कथयामीत्याह—मन्त्र इति ॥ १२९ ॥

मन्त्रयोगः

हकारेण बहिर्याति सकारेण विशेत्पुनः ॥ १३० ॥
हंसहं सेति मन्त्रोऽयं सर्वैर्जीवैश्च जप्यते ।
गुरुवाक्यात्सुषुम्नायां विपरीतो भवेज्जपः ॥ १३१ ॥
सोऽहं सोऽहमिति [2]यः स्यान्मन्त्रयोगः स उच्यते ।

आदौ मन्त्रयोगलक्षणमाह—हकारेणेति ॥ १३० ॥ मन्त्रोऽयं सदाऽवशादुच्छ्वासनिश्वासरूपेण सर्वैः जप्यते । अयोगिनामेव भवतीत्यर्थः । योगिनां तु गुरुवाक्यात् इति ॥ १३१ ॥

हठयोगः

प्रतीतिमन्त्रयोगाच्च जायते पश्चिमे पथि ॥ १३२ ॥
हकारेण तु सूर्यः स्यात्सकारेणेन्दुरुच्यते ।
सूर्याचन्द्रमसोरैक्यं हठ इत्यभिधीयते ॥ १३३ ॥

सूत्रवाक्यपठितलययोगं पश्चाद्विवक्षन् हठयोगलक्षणमाह—प्रतीतीति ॥ १३२ ॥ चन्द्रसूर्यैक्यं जायते इत्याह—हकारेणेति ॥ १३३ ॥

[1] योगान्तर्भू—अ, अ १, अ २, क.  [2] यस्य म—अ, अ १, अ २, क.

हठेन [1]ग्रस्यते जाड्यं सर्वदोषसमुद्भवम् ।
क्षेत्रज्ञः परमात्मा च तयोरैक्यं यदा भवेत् ॥ १३४ ॥
तदैक्ये साधिते ब्रह्मंश्चित्तं याति विलीनताम् ।
पवनः स्थैर्यमायाति लययोगोदये सति ॥ १३५ ॥
लयात्संप्राप्यते सौख्यं स्वात्मानन्दं परं पदम् ।

लययोगलक्षणमाह—हठेनेति ॥ १३४–१३५ ॥

राजयोगः

योनिमध्ये महाक्षेत्रे जपाबन्धूकसंनिभम् ॥ १३६ ॥
रजो वसति जन्तूनां देवीतत्त्वं समावृतम् ।
रजसो रेतसो योगाद्राजयोग इति स्मृतः ॥ १३७ ॥
अणिमादिपदं प्राप्य राजते राजयोगतः ।

राजयोगलक्षणमाह—योनीति ॥ १३६ ॥ शशि[शिश्न ?]स्थाने रेतो वर्तते तद्धि शिवतत्त्वम् । रजसो रेतसो योगात् शक्तिशिवयोगात् राजयोगः ॥ १३७ ॥

योगसामान्यस्वरूपम्, योगेन मुक्तिप्राप्तिश्च

प्राणापानसमायोगो ज्ञेयं योगचतुष्टयम् ॥ १३८ ॥
संक्षेपात्कथितं ब्रह्मन्नान्यथा शिवभाषितम् ।
क्रमेण प्राप्यते प्राप्यमभ्यासादेव नान्यथा ॥ १३९ ॥

[1] ग्रस्य—अ, अ १, क.

एकेनैव शरीरेण योगाभ्यासाच्छनैः शनैः ।

चिरात्संप्राप्यते मुक्तिर्मर्कटक्रम एव सः ॥ १४० ॥

मन्त्रादियोगचतुष्टयस्यापि एकार्थपर्यवसायित्वमाह—प्राणेति । योगचतुष्टयेऽपि प्राणापानयोगः समानः इत्यर्थः ॥ १३८ ॥ एवं सङ्क्षेपात् । स्वोक्तयोगफलमाह—क्रमेणेति । निर्विशेषब्रह्मज्ञानसमकालप्राप्यकैवल्यवद्योगफलस्य न ह्यचिरात् प्राप्तिरिष्यते इत्यर्थः ॥ १३९–१४० ॥

असिद्धयोगस्य मृतस्य उत्तरजन्मनि सिद्धिप्रकारः

योगसिद्धिं विना देहः प्रमादाद्यदि नश्यति ।

पूर्ववासनया युक्तः शरीरं चान्यदाप्नुयात् ॥ १४१ ॥

ततः पुण्यवशात्सिद्धो गुरुणा सह संगतः ।

पश्चिमद्वारमार्गेण जायते त्वरितं फलम् ॥ १४२ ॥

पूर्वजन्मकृताभ्यासात्सत्वरं फलमश्नुते ।

योगाभ्यासिनो योगफलाप्तेः पुरा यदि देहो नश्यति तदा तत्कृतश्रमो निष्फलो भवतीत्यत आह—योगेति । तदाऽयं योगी पूर्ववासनया ॥ १४१–१४२ ॥

अभ्यासयोगादेव मुक्तिः

एतदेव हि विज्ञेयं तत्काकमतमुच्यते ॥ १४३ ॥

नास्ति काकमतादन्यदभ्यासाख्यमतः परम् ।

तेनैव प्राप्यते मुक्तिर्नान्यथा शिवभाषितम् ॥ १४४ ॥

तदेव स्तौति—एतदिति । वस्तुतः अस्याः स्थितिः केत्याक्षेपार्थेन किंशब्देन मायोच्यते । सा यस्य वशे वर्तते सोऽयं काको मायी महेश्वरः । "मायां तु प्रकृतिं विद्यात् मायिनं तु महेश्वरम्" इति श्रुतिसिद्धकाकस्य महेश्वरस्याभ्यासयोगाख्यमिदमेव मतम् ॥ १४३ ॥ अज्ञानिनामाभासज्ञानिनामपि तच्चित्तमालिन्यसंक्षाळनद्वारा निर्विशेषब्रह्मज्ञानहेतुत्वात् कलौ तेनैव प्रायशो मुक्तिः प्राप्यते नान्यथेत्यर्थः ॥ १४४ ॥

योगिनः सर्वैश्वर्यजीवन्मुक्त्यादिसिद्धिलाभः

हठयोगक्रमात्काष्ठा सह जीवलयादिकम् ।
नाकृतं मोक्ष[1]मार्गं स्यात्प्रसिद्धं पश्चिमं विना ॥ १४५ ॥
आदौ रोगाः प्रणश्यन्ति पश्चाज्जाड्यं शरीरजम् ।
ततः समरसो भूत्वा चन्द्रो वर्षत्यना[2]रतम् ॥ १४६ ॥
धातूंश्च संग्रहेद्वह्निः पवनेन समं ततः ।
नानानादाः प्रवर्तन्ते मार्दवं स्यात्कलेबरम् ॥ १४७ ॥
जित्वा वृष्ट्यादिकं जाड्यं खेचरः स भवेन्नरः ।
सर्वज्ञोऽसौ भवेत्कामरूपः पवनवेगवान् ॥ १४८ ॥
क्रीडते त्रिषु लोकेषु जायन्ते सिद्धयोऽखिलाः ।
कर्पूरे लीयमाने किं काठिन्यं तत्र विद्यते ॥ १४९ ॥
अहंकारक्षये तद्वद्देहे कठिनता कुतः ।
सर्वकर्ता च योगीन्द्रः स्वतन्त्रोऽनन्तरूपवान् ॥ १५० ॥
जीवन्मुक्तो महायोगी जायते नात्र संशयः ।

[1] मार्गः—अ, अ १, क.   [2] रतः—उ.

हठयोगं स्तौति—हठेति । अकृतमकृत्रिमं "तयोर्ध्वमायन्नमृतत्वमेति," "सुषुम्ना तु परे लीना विरजा ब्रह्मरूपिणी" इत्यादिश्रुतिप्रसिद्धं यत्रार्थजातं तत्तज्ज्ञानेन सह जीवतो योगिनो लयादिकमश्नुते तदिदं हठयोगकर्मादिनुष्ठानात् सिद्धं पश्चिमं मोक्षमार्गं महापथं विना योगिनां काऽपि काष्ठा न विद्यते इत्यर्थः ॥ १४५ ॥ इत्थंभूतयोगप्रशंसापूर्वकं नानाविधसिद्धिभूषणं योगिनं जीवन्मुक्तत्वेन ईश्वरत्वेन च स्तौति—आदाविति । आदौ अभ्यासदशायामेव सर्वे रोगाः । शरीरजं आलस्यादि । प्राणाग्निसूर्यचन्द्रशक्तिशिवयोगतश्चन्द्रोऽनारतमनवरतं अमृतधारां वर्षति ॥ १४६ ॥ ततो मूलाधारगतोऽग्निः पवनेन समं स्थित्वा धातूंश्च संग्रहेत् बलवृद्धिं वीर्यस्तम्भनं च कुर्यादित्यर्थः । मार्दवं बालवत् कोमलं भवतीत्यर्थः ॥ १४७ ॥ जित्वा "अभ्रं भूत्वा मेघो भवति" इत्यादिजडतां विहाय तेजसा खेचरः स भवेन्नरः । एवमभ्यासयोगी सोऽयं सूर्यो भवतीत्यर्थः । किंच—सर्वज्ञः ॥ १४८ ॥ स्वेच्छामात्रेण जायन्ते । कथं पुनरस्य कळेबरं काठिन्यं विहाय मार्दवं भजतीत्यत्र सदृष्टान्तमुत्तरमाह—कर्पूर इति । दीपकणिकायोगतः कर्पूरे ॥ १४९ ॥ योगाग्निना अहङ्कारक्षये । मार्दवदेहः आकाशदेहो वा भवेदयमित्यर्थः । किंच—सर्वकर्ता ॥ १५० ॥

कृत्रिमाकृत्रिमसिद्धीनां गोपनविधिः

द्विविधाः सिद्धयो लोके कल्पिताकल्पितास्तथा ॥ १५१ ॥
रसौषधिक्रियाजालमन्त्राभ्यासादिसाधनात् ।
सिध्यन्ति सिद्धयो यास्तु कल्पितास्ताः प्रकीर्तिताः ॥ १५२ ॥
अनित्या अल्पवीर्यास्ताः सिद्धयः साधनोद्भवाः ।
साधनेन विनाऽप्येवं जायन्ते स्वत एव हि ॥ १५३ ॥
स्वात्मयोगैकनिष्ठेषु स्वातन्त्र्यादीश्वरप्रियाः ।
प्रभूताः सिद्धयो यास्ताः कल्पनारहिताः स्मृताः ॥ १५४ ॥

सिद्धा नित्या महावीर्या इच्छारूपाः स्वयोगजाः ।
चिरकालात्प्रजायन्ते वासनारहितेषु च ॥ १९५ ॥
तास्तु गोप्या महायोगात्परमात्मपदेऽव्यये ।
विना कार्यं सदा [1]गुप्तं योगसिद्धस्य लक्षणम् ॥ १९६ ॥

योगजाः सिद्धयः कतिविधाः इत्यत्र कृत्रिमाकृत्रिमभेदेन द्विविधाः इत्याह—द्विविधा इति ॥ १९१–१९२ ॥ अकल्पितास्तु साधनेन ॥१९३–१९४॥ स्वेनैव सिद्धाः ॥ १९५ ॥ तासां गोपनीयतामाह—तास्त्विति । महायोगात् परमात्मपदे स्थितेन योगिना कार्यं विना ताः सिद्धयो गोपनीयाः । सदा सिद्धिजालं गुप्तं गोप्यं भवितव्यमिति यत् तद्योगसिद्धस्य लक्षणं सहजमित्यर्थः ॥ १९६ ॥

योगसिद्धजीवन्मुक्तयोः सूचकम्

यथाऽऽकाशं [काशीं ?] समुद्दिश्य गच्छद्भिः पथिकैः पथि ।
नानातीर्थानि दृश्यन्ते नानामार्गास्तु सिद्धयः ॥ १९७ ॥
स्वयमेव प्रजायन्ते लाभालाभविवर्जिते ।
योगमार्गे तथैवेदं सिद्धिजालं प्रवर्तते ॥ १९८ ॥
परीक्षकैः स्वर्णकारैर्हेम संप्रोच्यते यथा ।
सिद्धिभिर्लक्षयेत्सिद्धं [2]जीवन्मुक्तं तथैव च ॥ १९९ ॥
अलौकिकगुणस्तस्य कदाचिद्दृश्यते ध्रुवम् ।
सिद्धिभिः परिहीनं तु नरं बद्धं तु लक्षयेत् ॥ १६० ॥

[1] दीप्तं—अ, अ १.
[2] जीवन्मुक्तिस्त—अ, अ १. जीवन्मुक्तिं त—अ २.

सिद्धयो योगिनामेव स्युः इति सङ्कल्पिता भवेयुरित्यत आह—यथेति। कार्यं समुद्दिश्य। तथा यदृच्छया योगिनो नानामार्गाः सिद्धयो दृश्यन्ते ॥ १५७ ॥ योगिनि स्वयमेव। यथा आकाशमार्गे तीर्थानि दृश्यन्ते योगमार्गे ॥ १५८ ॥ स्वर्णं स्वर्णपरीक्षकवत् सिद्धं सिद्धिभिः परीक्ष्य तन्निकटे सिद्धयो यदि स्युः तदा तं सिद्धं मुक्तं विद्यात्। यदि ताः न स्युः तदा तं बद्धं विद्यादित्याह—परीक्षकैरिति। यद्ययं ज्ञानी तदा तं जीवन्मुक्तम् ॥ १५९ ॥ तस्मिन् यद्यस्ति तदा चिरपरिचयात् अलौकिकेति। तस्य तस्मिन् ॥ १६० ॥

देहे सत्यपि ज्ञानिनो विदेहमुक्तिलाभः

अजरामरपिण्डो यो जीवन्मुक्तः स एव हि।
पशुकुक्कुटकीटाद्या मृतिं संप्राप्नुवन्ति वै ॥ १६१ ॥
तेषां किं पिण्डपातेन मुक्तिर्भवति पद्मज।
न बहिःप्राण आयाति पिण्डस्य पतनं कुतः ॥ १६२ ॥
पिण्डपातेन या मुक्तिः सा मुक्तिर्न तु हन्यते।
देहे ब्रह्मत्वमायाते जलानां सैन्धवं यथा ॥ १६३ ॥
अनन्यतां यदा याति तदा मुक्तः स उच्यते।
विमतानि शरीराणि इन्द्रियाणि तथैव च ॥ १६४ ॥
ब्रह्म देहत्वमापन्नं [1]वारि बुद्बुदतामिव।

यद्ययं योगसहितज्ञानी तदा अजरेति। अजरामरपिण्डत्वं ज्ञानयोगिनः कथं? पिण्डस्याजरामरत्वे अस्य पिण्डपातलक्षणविदेहमुक्तिस्वप्नोऽपि दुर्लभः इत्यत आह—पश्विति ॥ १६१ ॥ न बहिःप्राण आयाति योगी ॥ १६२ ॥ पिण्डपातेनोत्था मुक्तिः हन्यते नेति काक्वर्थः। किंतु हन्यत एवेत्यर्थः।

[1] यथावासं पुनस्तथा—अ, अ १.

विदेहमुक्तिः कथमित्यत्र देह इति । जलानां कार्यं सैन्धवम् ॥ १६२ ॥
परदृष्टिसमर्पितदेहाभासादावात्मात्मीयाभिमतिवैरळ्यपूर्वकं निष्प्रतियोगिकब्रह्ममात्रज्ञानं यस्य यदा उदेति स तदा विदेहमुक्तो भवतीत्यर्थः । विदेहमुक्तेः स्वातिरेकेण किञ्चिदस्ति नास्तीति विभ्रमापह्नवपूर्वकत्वात् , स्वमात्रातिरेकेण

देहासुभानं शिवजीवभानं
जगद्विभानं परमात्मभानम् ।
नानाविभानं न हि भाति यस्मिन्
स रामचन्द्रोऽस्मि विदेहमुक्तः ॥

इति विदेहमुक्तिमहावाक्यप्रभोक्तेः, आत्यन्तिकदेहाद्यभिमानासम्भवज्ञान्येव परदृष्ट्या देहे सत्यपि विदेहमुक्तो भवतीत्यर्थः । अन्यथा इदानीं मे देहादिः आत्मात्मीयाभिमानतया सत्यवत् भाति तेन जीवो बद्धः स्यां, इदानीं देहादिः व्यावहारिकप्रातिभासिकदृष्टिभ्यां मिथ्यात्वेन दृश्यते जीवन्मुक्तो वा स्यां, इतो वर्तमानदेहपातानन्तरं विदेहमुक्तो भविष्यामीति स्वातिरिक्तकलनावतां विदेहमुक्तिः भवितव्या स्यात् । न हि तेषां स्वप्नेऽपि सा भवितुमर्हति तेषां स्वातिरिक्तदेहाभासानुवर्तनादित्यत्र

तस्मिन् काले विदेहातिदेहेस्मरणवर्जितः ।
ईषन्मात्रं स्मृतश्चेद्यस्तदा सर्वसमन्वितः ॥

इति ॥

अणुमात्रेऽपि वैधर्म्ये जायमाने विपश्चितः ।
असंगताऽपि नास्त्येव किमुतावरणच्युतिः ॥

इति श्रुतेः, गौडपादाचार्योक्तेश्च । येषां स्वातिरेकेण देहादिकमस्तीति भ्रान्तिः तद्दृष्ट्या देहापायसिद्धेयं विदेहमुक्तिः स्यादेव । येषां पुनः स्वातिरिक्तदेहाद्युपलक्षितस्वाविद्यापदतत्कार्यजातमस्ति नास्तीति विभ्रमोक्तिरप्यपह्नवतां भजति तदपह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रज्ञानसमकालमेव ते परदृष्ट्या देहवन्त इव भाता अपि विदेहमुक्ता एव भवन्तीत्यत्र न विवाद इति सिद्धम् । तथा च स्मृतिः—

स्वकल्पितशरीरादावात्मात्मीयाभिमानतः ।
जीवत्वमेत्य चिन्मात्रं बद्धवत् संसरत्यहो ॥
यदि स्वज्ञानतो देहः प्रातिभासिकतामियात् ।
तदा जीवन्मुक्तवत्तच्चिन्मात्रं प्रतिभाति हि ॥
स्वमात्रव्यतिरेकेण यदा देहादि न स्फुरेत् ।
तदा विदेहकैवल्यं चिन्मात्रं प्राप्तवत् भवेत् ॥
स्वकल्पितशरीरादिः भात्वा भातु सदा स्वयम् ।
चिन्मात्रमेव चिन्मात्रमचिन्मात्रं भवेत् कथम् ॥

इति ॥

प्रकृते तु परदृष्ट्या विमतानि । सन्तु न सन्तु वा ॥ १६४ ॥ सर्वप्रकारेणापि ब्रह्म । यथा वार्यतिरिक्तं बुद्बुदादिकं नास्ति तथा ब्रह्मातिरेकेण देहादिकं नास्तीत्यर्थः ॥

### पिण्डाण्डस्य शिवालयत्ववर्णनम्

दशद्वारपुरं देहं दशनाडीमहापथम् ॥ १६५ ॥
दशभिर्वायुभिर्व्याप्तं दशेन्द्रियपरिच्छदम् ।
षडाधारापवरकं षडन्वयमहावनम् ॥ १६६ ॥
चतुःपीठसमाकीर्णं चतुराम्नायदीपकम् ।
बिन्दुनादमहालिङ्गं शिवशक्तिनिकेतनम् ॥ १६७ ॥
देहं शिवालयं प्रोक्तं सिद्धिदं सर्वदेहिनाम् ।

उत्तमाधिकारिणां ब्रह्मयाथात्म्यं प्रकटयित्वा मध्यमाधिकारिणां पिण्डाण्डेयत्तां प्रकटयंति—दशद्वारेति ॥ १६५–१६६ ॥ चतुराम्नायदीपकं चतुर्वेदप्रकाशकमित्यर्थः । बिन्दुनादमहालिङ्गं बिन्दुः मनः, नादो बुद्धिः,

तद्वृत्तिसहस्रभावाभावप्रकाशकमहालिंगं प्रत्यक्चैतन्यं यत्र तत्तथोक्तम् । शिवशक्तिनिकेतनं, जीवकुण्डल्याधारत्वात् देहस्येत्यर्थः ॥ १६७ ॥ देहं शिवालयं प्रोक्तं,

देहो देवालयः प्रोक्तः स जीवः केवलः शिवः ।
त्यजेदज्ञाननिर्माल्यं सोऽहंभावेन पूजयेत् ॥

इति श्रुत्यन्तरात् ॥

आधारषट्कपीठचतुष्टययोः विवरणम्

गुदमेढ्रान्तरालस्थं मूलाधारं त्रिकोणकम् ॥ १६८ ॥
शिवस्य जीवरूपस्य स्थानं [1]तद्धि प्रचक्षते ।
यत्र कुण्डलिनी नाम परा शक्तिः प्रतिष्ठिता ॥ १६९ ॥
यस्मादुत्पद्यते वायुर्यस्माद्वह्निः प्रवर्तते ।
यस्मादुत्पद्यते बिन्दुर्यस्मान्नादः प्रवर्तते ॥ १७० ॥
यस्मादुत्पद्यते हंसो यस्मादुत्पद्यते मनः ।
तदेतत्कामरूपाख्यं पीठं कामफलप्रदम् ॥ १७१ ॥
स्वाधिष्ठानाह्वयं चक्रं लिङ्गमूले षडश्रके ।
नाभिदेशे स्थितं चक्रं दशारं मणिपूरकम् ॥ १७२ ॥
द्वादशारं महाचक्रं हृदये चाप्यनाहतम् ।
तदेतत्पूर्णगिर्याख्यं पीठं कमलसंभव ॥ १७३ ॥
कण्ठकूपे विशुद्ध्याख्यं यच्चक्रं षोडशाश्रकम् ।
पीठं जालन्धरं नाम तिष्ठत्यत्र सुरेश्वर ॥ १७४ ॥

[1] तत्र—अ.

आज्ञा नाम भ्रुवोर्मध्ये द्विदलं चक्रमुत्तमम् ।
उड्याणाख्यं महापीठमुपरिष्टात्प्रतिष्ठितम् ॥ १७५ ॥
चतुरश्रं धरण्यादौ ब्रह्मा तत्राधिदेवता ।
अर्धचन्द्राकृतिजलं विष्णुस्तस्याधिदेवता ॥ १७६ ॥
त्रिकोणमण्डलं वह्नी रुद्रस्तस्याधिदेवता ।
वायोर्बिम्बं तु षट्कोणमीश्वरोऽस्याधिदेवता ॥ १७७ ॥
आकाशमण्डलं वृत्तं देवताऽस्य सदाशिवः ।
नादरूपं भ्रुवोर्मध्ये मनसो मण्डलं विदुः ॥ १७८ ॥

षडाधारापवरकमित्यंशं विवृणोति—गुदेति ॥ १६८–१७० ॥ चतुष्पीठसमाकीर्णमित्यंशं च विवृणोति—तदेतदिति ॥ १७१–१७७ ॥ मनः-प्रकाशकं ज्योतिर्लिंगं प्रत्यगभिन्नं ब्रह्मास्मीति विदुः, "ज्योतिर्लिंगं भ्रुवोर्मध्ये नित्यं ध्यायेत् सदा यतिः" इति श्रुतेः । एवं पिण्डाण्डयाथात्म्यं प्रत्यञ्चमात्मानं यो जानाति सोऽयं मुनिः ब्रह्माण्डयाथात्म्यं ब्रह्म जानाति व्यष्टिसमष्टि-प्रपञ्चापवादाधिकरणप्रत्यक्परचितोरेकत्वात् । कृतकृत्यो भवतीत्यर्थः ॥ १७८ ॥

इति प्रथमोऽध्यायः

## द्वितीयोऽध्यायः

योगज्ञानाधिकारी

पुनर्योगस्य माहात्म्यं श्रोतुमिच्छामि शंकर ।
येन [1]विज्ञानमात्रेण खेचरीसमतां व्रजेत् ॥ १ ॥

[1] विज्ञात—क.

शृणु ब्रह्मन्प्रवक्ष्यामि गोपनीयं प्रयत्नतः ।
द्वादशा[1]ब्दं तु शुश्रूषां यः कुर्यादप्रमादतः ॥ २ ॥
तस्मै वक्ता यथातथ्यं दान्ताय ब्रह्मचारिणे ।
पाण्डित्यादर्थ[2]लोभाद्वा प्रमादा[3]द्यः प्रयच्छति ॥ ३ ॥
तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।
मूलमन्त्रं विजानाति यो विद्वान्गुरुदर्शितम् ॥ ४ ॥

एवं ईश्वरमुखात् ज्ञानयोगं श्रुत्वाऽप्यतृप्त इव चतुराननः पुनर्योगज्ञान-माहात्म्यं पृच्छतीत्याह—पुनरिति । खेचरसूर्यवदतितेजस्वी भवेत् ॥ १ ॥ प्रश्नोत्तरं भगवानाह— शृण्विति ॥ २ ॥ मया वक्ष्यमाणविद्यां तस्मै ॥ ३ ॥ अनधिकारिविद्यादानदोषेण तत् सर्वं हीयते इत्यर्थः । यद्यधिकारी गुरुमुखतो यथावत् विजानाति स कृतकृत्यो भवतीत्याह—मूलेति ॥ ४ ॥

प्रणवाख्यमूलमन्त्रमहिमा

[4]शिवशक्तिमयं मन्त्रं मूलाधारात्समुत्थितम् ।
तस्य मन्त्रस्य वै ब्रह्मञ्छ्रोता वक्ता च दुर्लभः ॥ ५ ॥
एतत्पीठमिति प्रोक्तं नादलिङ्गं मदात्मकम् ।
तस्य विज्ञानमात्रेण जीवन्मुक्तो भवेज्जनः ॥ ६ ॥
अणिमादिकमैश्वर्यमचिरादेव जायते ।

तन्मन्त्रं स्तौति—शिवेति । स मन्त्रः प्रणवो नादो वा भवितुमर्हति । तदियत्तां बुद्ध्वा वक्ता श्रोता परमेश्वरोऽहमेव । न हि मद्व्यतिरिक्तः कोऽपि

1 ब्दस्तु—उ, उ १.
2 लाभा—अ, अ १, क.
3 द्वा प्र—अ, अ १, अ २, क.
4 मूलश—अ.

तदियत्ताज्ञो वक्ता श्रोता अस्ति ॥ ५ ॥ तन्मन्त्रस्वरूपमाचष्टे—एतदिति । एतन्मन्त्रस्वरूपं पीठमिति प्रोक्तं, मन्त्रार्थब्रह्मणः सर्वाधिकरणत्वात् पीठत्वम् । यद्व्रजतां स्वातिरिक्तलिंगज्ञानं न ददाति तन्नादलिङ्गम् । तत् किं त्वत्तोऽन्यदित्यत्र अहमेवात्मा स्वरूपं यस्य तत् मदात्मकमेव अभिधानाभिधेययोरेकत्वात् । तज्ज्ञानफलमाह—तस्येति ॥ ६ ॥

मूलमन्त्रत्वनिर्वचनम्

मननात्प्राणनाच्चैव मद्रूपस्यावबोधनात् ॥ ७ ॥
मन्त्रमित्युच्यते ब्रह्मन् मदधिष्ठानतोऽपि वा ।
मूलत्वात्सर्वमन्त्राणां मूला[1]धारात् समुद्भवात् ॥ ८ ॥
मूलस्वरूपलिङ्गत्वान्मूलमन्त्र इति स्मृतः ।

तस्य मूलमन्त्रत्वं कुत इत्यत आह—मननादिति ॥ ७ ॥ मन्त्रमिति विभक्तिव्यत्ययः । "तद्यथा शंकुना सर्वाणि पर्णानि सन्तृण्णानि एवमेवोङ्कारेण सर्वा वाक् सन्तृण्णा" "ओङ्कार एवेदं सर्वं" इति श्रुत्यनुरोधेन मूलत्वात् ॥ ८ ॥

नादलिङ्गत्वनिर्वचनम्

सूक्ष्मत्वात् [2]कारणत्वाच्च लयनाद्गमनादपि ॥ ९ ॥
लक्षणात्परमेशस्य लिङ्गमित्यभिधीयते ।

पुनस्तस्य लिंगत्वं सूत्रत्वं चाह—सूक्ष्मत्वादिति ॥ ९–१० ॥

सूत्रत्वनिर्वचनम्

संनिधानात्समस्तेषु जन्तुष्वपि च संततम् ॥ १० ॥
सूचकत्वाच्च रूपस्य सूत्रमित्यभिधीयते ।

[1] धारस—क, अ २. [2] कर—उ.

प्रणवस्य बिन्दुपीठत्वम्

महामाया महालक्ष्मीर्महादेवी सरस्वती ॥ ११ ॥
आधारशक्तिरव्यक्ता यया विश्वं प्रवर्तते ।
सूक्ष्माभा बिन्दुरूपेण पीठरूपेण वर्तते ॥ १२ ॥

प्रणवस्यैव मूलमन्त्रत्वेन लिंगत्वेन सूत्रत्वेन च प्रकृतत्वात् प्रकृतित्वं "प्रणवत्वात् प्रकृतित्वं वदन्ति ब्रह्मवादिनः" इति श्रुतेः । सेयं प्रकृतिः कीदृशीत्यत आह—महामायेति ॥ ११ ॥ यया प्रणवप्रकृत्य अभिधानाभिधेयात्मकं विश्वं प्रवर्तते, या च दुर्गालक्ष्मीसरस्वतीत्वेन व्यवह्रियते सेयमाधारशक्तिरव्यक्तरूपा भवति । केन रूपेण व्यक्ताव्यक्तत्वमित्यत्र बिन्दुः मनस्तद्रूपेण सूक्ष्माभा । कामरूपादिचतुष्पीठरूपेण स्थूलत्वम् ॥ १२ ॥

निर्विशेषप्रणवब्रह्मावगत्युपायः

बिन्दुपीठं विनिर्भिद्य नादलिङ्गमुपस्थितम् ।
प्राणेनोच्चार्यते ब्रह्मन् षण्मुखीकरणेन च ॥ १३ ॥
गुरूपदेशमार्गेण सहसैव प्रकाशते ।

एवं स्थूलसूक्ष्माकारेण या वर्तते तद्गतहेयांशापायसिद्धं ब्रह्म गुरूपदेशतो प्रकाशते इत्याह—बिन्द्विति । हे ब्रह्मन् या प्राणापानव्यापारतः सोऽहमोमित्युच्चार्यते तद्गतहेयांशं बिन्दुपीठं व्यक्ताव्यक्तात्मकं गुरूपदेशमार्गेण षण्मुखीकरणेन, चशब्दतो निर्विशेषब्रह्मज्ञानासिना च, तिलशो विनिर्भिद्य वर्तमानस्य योगिनः यदुपस्थितं नादलिंगं स्वातिरिक्तबिन्दुपीठोपलक्षितजाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तभेदलिंगावकाशं स्वाज्ञादिदृष्टिमोहे सत्यसति कालत्रयेऽपि यन्न ददाति तुर्यतुरीयं ब्रह्म निष्प्रतियोगिकस्वमात्रतया सहसैव प्रकाशते इत्यर्थः ॥ १३ ॥

स्थूलसूक्ष्मबीजरूपैः त्रिविधं ब्रह्म

स्थूलं सूक्ष्मं परं चेति त्रिविधं ब्रह्मणो वपुः ॥ १४ ॥
पञ्चब्रह्ममयं रूपं स्थूलं वैराजमुच्यते ।
हिरण्य[1]गर्भसूक्ष्मं तु नादं बीजत्रयात्मकम् ॥ १५ ॥

यत्तुर्यतुर्यरूपेण अवशिष्टं तदेव स्वाज्ञादिदृष्टितारतम्यानुरोधेन स्थूलसूक्ष्मपररूपेण त्रिधा विभातीत्याह—स्थूलमिति ॥ १४ ॥ तत्र स्थूलं तु पञ्चेति । अपरं तु हिरण्येति । तुशब्दात् बीजचैतन्यमपि गृह्यते । तत्तु आकारादिबीजत्रयात्मकम् ॥ १५ ॥

शुद्धतत्त्वस्य आत्ममन्त्राभ्यासैकवेद्यत्वम्

परं ब्रह्म परं सत्यं सच्चिदानन्दलक्षणम् ।
अप्रमेयमनिर्देश्यमवाङ्मनसगोचरम् ॥ १६ ॥
शुद्धं सूक्ष्मं निराकारं निर्विकारं निरञ्जनम् ।
अनन्तमपरिच्छेद्यमनूपममनामयम् ॥ १७ ॥
आत्ममन्त्रसदाभ्यासात् परतत्त्वं प्रकाशते ।

सर्वस्मात् परं तु आत्ममन्त्राभ्यासेन प्रकाशते न स्वेनेत्याह—परमिति ॥ १६–१७ ॥ प्रकाशते, न स्वत इत्यर्थः । आत्ममन्त्रशब्देन प्रणवमहावाक्यजातमुच्यते । "सुप्तेरुत्थाय सुप्त्यन्तं ब्रह्मैकं प्रविचिन्त्यताम्" इति श्रुत्यनुरोधेन श्रवणमनननिदिध्यासनानुसन्धानं अभ्यासः ॥

परतत्त्वाभिव्यक्तिचिह्नानि

तदभिव्यक्तिचिह्नानि सिद्धिद्वाराणि मे शृणु ॥ १८ ॥

[1] गर्भे—अ, अ १.

दीपज्वालेन्दुखद्योतविद्युन्नक्षत्रभास्वराः ।
दृश्यन्ते सूक्ष्मरूपेण सदा युक्तस्य योगिनः ॥ १९ ॥
अणिमादिकमैश्वर्यमचिरात्तस्य जायते ।

एवं परतत्त्वसाक्षात्काराभिव्यक्तिचिह्नानि कानीत्यत आह—तदिति ॥ १८–१९ ॥ यदीच्छा जायते तदा अणिमादिकम् ।

नादानुसन्धानमहिमा

नास्ति नादात्परो मन्त्रो न देवः स्वात्मनः परः ॥ २० ॥
नानुसंधेः परा पूजा न हि तृप्तेः परं सुखम् ।
गोपनीयं प्रयत्नेन सर्वदा सिद्धिमिच्छता ॥ २१ ॥

नादात्मानुसन्धानतृप्तितुल्यं नास्तीत्याह—नास्तीति ॥ २० ॥ एवं-विशेषणविशिष्टस्वात्ममन्त्रस्यातिरहस्यार्थत्वेन गोपनीयतामाह—गोपनीयमिति ॥

गुरुभगवद्भक्तेरेव परतत्त्वज्ञानसम्भवः

मद्भक्त एतद्विज्ञाय कृतकृत्यः सुखी भवेत् ।
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ २२ ॥

एतज्ज्ञानफलमाह—मद्भक्त इति ॥ २१ ॥ श्रुत्याचार्यभक्तस्यैव उक्तार्थः प्रकाशते इत्याह—यस्येति ॥ २२ ॥

इति द्वितीयोऽध्यायः

# तृतीयोऽध्यायः

नादब्रह्मणः परापश्यन्त्यादिरूपचतुष्टयम्

यन्न[1]मस्य चिदाख्यातं यत्सिद्धीनां च कारणम् ।
येन विज्ञानमात्रेण जन्मबन्धात्प्रमुच्यते ॥ १ ॥
अक्षरं परमो नादः शब्दब्रह्मेति कथ्यते ।
मूलाधारगता शक्तिः स्वाधारा बिन्दुरूपिणी ॥ २ ॥
तस्यामुत्पद्यते नादः सूक्ष्मबीजादिवांकुरः ।
तां पश्यन्तीं विदुर्विश्वं यया पश्यन्ति योगिनः ॥ ३ ॥
हृदये व्यज्यते घोषो गर्जत्पर्जन्यसंनिभः ।
तत्र स्थिता सुरेशान मध्यमेत्यभिधीयते ॥ ४ ॥
प्राणेन च स्वराख्येन प्रथिता वैखरी पुनः ।

"नास्ति नादात् परो मन्त्रः" इति यदुक्तं तद्वैखरीप्रपञ्चप्रपञ्चनाय तृतीयाध्याय आरभ्यते—यन्नमस्येति । "नमस्त्वैक्यं प्रवदेत्" इति श्रुत्यनुरोधेन यन्नमस्य यदैक्यमनुभूय योगिभिः स्वशिष्येभ्यः चिदतिरिक्तं न किंचिदस्ति इत्याख्यातमित्यत्र

चिदिहास्तीति चिन्मात्रमिदं चिन्मयमेव च ।
चित्त्वं चिदहमेते च लोकाश्चिदिति भावयेत् ॥

इत्यादि श्रुतेः । यत्सर्वसिद्धिनिदानं पर्यवसानं चिन्मात्रसिद्धिसमकालं सिद्धिजालस्यासिद्धिपदं गतत्वात् यद्विज्ञानमात्रतः स्वातिरिक्तभ्रमात् अज्ञोऽपि

[1] मस्यं—मु. कस्य—अ, अ १.

मुच्यते स्वाज्ञानविजृम्भितस्वातिरिक्तविभ्रमस्य स्वज्ञानतः प्रलयप्रमाणतः स्वयमेव अवशिष्यते इत्यत्र स्मृतिः

स्वाज्ञानोत्थे स्वातिरिक्ते स्वज्ञानात् प्रलयं गते ।
प्रतियोगिविनिर्मुक्तं स्वमात्रमवशिष्यते ॥

इति ॥ १ ॥

यज्ज्ञानात् मुच्यते इत्युक्तं तत् स्वाज्ञादिदृष्टिं आश्रित्य परापररूपेण द्विधा भिद्यते इत्याह—अक्षरमिति । अत्र स्वज्ञदृष्ट्या अनुभूतं तु अक्षरं परमः परमाक्षरमित्यर्थः । स्वाज्ञदृष्ट्यनुभूतं तु नादः नादरूपं शब्दब्रह्म परमाक्षरावगत्युपायभूतं, "शब्दब्रह्मणि निष्णातः परं ब्रह्माऽधिगच्छति" इति श्रुतेः । तदेतदपरं ब्रह्म क्व आविर्भवतीत्यत आह—मूलेति । मूलाधारगता परेति चित्सामान्यात्मिका बिन्द्वाख्याव्यक्तरूपिणी नादाधारा काचन शक्तिरस्ति ॥ २ ॥ तस्यामेव सूक्ष्मबीजांकुरवन्नाद उत्पद्यते इत्यत्र

परायामंकुरीभूय पश्यन्त्यां द्विदळीकृता ।
मध्यमायां मुकुळिता वैखर्यां विकसीकृता ॥

इति श्रुतेः । या परात्वेनाभिमता तामेव पश्यन्तीं मध्यमां वैखरीं च विदुरित्याह—तामिति ॥ ३ ॥ मूलाधारस्थपरायां योऽङ्कुरतां गतः सोऽयं नादः अनाहताख्यपश्यन्त्यां हृदये ॥ ४ ॥ सैव प्राणेन ॥ ५–९ ॥

### वैखरीस्वरूपविवरणम्

शाखापल्लवरूपेण ताल्वादिस्थानघट्टनात् ॥ ५ ॥
अकारादिक्षकारान्तान्यक्षराणि समीरयेत् ।
अक्षरेभ्यः पदानि स्युः पदेभ्यो वाक्यसंभवः ॥ ६ ॥
सर्वे वाक्यात्मका मन्त्रा वेदशास्त्राणि कृत्स्नशः ।
पुराणानि च काव्यानि भाषाश्च विविधा अपि ॥ ७ ॥

सप्तस्वराश्च गाथाश्च सर्वे नादसमुद्भवाः ।
एषा सरस्वती देवी सर्वभूतगुहाश्रया ॥ ८ ॥
वायुना वह्नियुक्तेन प्रेर्यमाणा शनैः शनैः ।
[1]द्वित्रिवर्णपदैर्वाक्यैरित्येवं वर्तते सदा ॥ ९ ॥

वैखरीसाक्षात्कारात् वाक्सिद्धिः

य इमां वैखरीं शक्तिं योगी स्वात्मनि पश्यति ।
स वाक्सिद्धिमवाप्नोति सरस्वत्याः प्रसादतः ॥ १० ॥
वेदशास्त्रपुराणानां स्वयं कर्ता भविष्यति ।

चत्वारि वाक्परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेंगयन्ति
तुरीयं वाचो मनुष्या वदन्ति ॥

इति श्रुतिसिद्धवैखरीज्ञानफलमाह—य इति ॥ १० ॥

परमाक्षरस्वरूपम्

यत्र बिन्दुश्च नादश्च सोमसूर्याग्निवायवः ॥ ११ ॥
इन्द्रियाणि च सर्वाणि लयं गच्छन्ति सुव्रत ।
[2]वायो यत्र विलीयन्ते मनो यत्र विलीयते ॥ १२ ॥

[1] तद्विवर्ण—अ, अ १, अ २, क. तद्विवर्त—मु. [2] वायवो यत्र ली—अ, क.

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते ॥ १३ ॥
यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनाऽऽत्मानं पश्यन्नात्मनि तुष्यति ॥ १४ ॥
सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
एतत्क्षराक्षरातीतमनक्षरमितीर्यते ॥ १५ ॥
क्षरः सर्वाणि भूतानि सूत्रात्माऽक्षर उच्यते ।
अक्षरं परमं ब्रह्म निर्विशेषं निरञ्जनम् ॥ १६ ॥
अलक्षणमलक्ष्यं तदप्रतर्क्यमनूपमम् ।
अपारपारमच्छेद्यमचिन्त्यमतिनिर्मलम् ॥ १७ ॥
आधारं सर्वभूतानामनाधारमनामयम् ।
अप्रमाणमनिर्देश्यमप्रमेयमतीन्द्रियम् ॥ १८ ॥
अस्थूलमनणुह्रस्वमदीर्घमजमव्ययम् ।
अशब्दस्पर्शरूपं तदचक्षुःश्रोत्रनामकम् ॥ १९ ॥
सर्वज्ञं सर्वगं शान्तं सर्वेषां हृदये स्थितम् ।
सुसंवेद्यं गुरुमतात्सुदुर्बोधमचेतसाम् ॥ २० ॥
निष्कलं निर्गुणं शान्तं निर्विकारं निराश्रयम् ।
निर्लेपकं निरापायं कूटस्थमचलं ध्रुवम् ॥ २१ ॥

परमाक्षरं किमित्याकांक्षायां यत्सर्वापवादाधिष्ठानं स्वाधिष्ठेयनिरूपिताधिष्ठानतापायसिद्धं तदेतदित्याह—यत्रेति ॥ ११ ॥ वायो वायवः ॥१२–१४॥ अनक्षरं परमाक्षरम् ॥ १५–१९ ॥ गुरुमतात् गुरूक्तार्थानुष्ठानात् ॥२०–२१॥

शब्दब्रह्मभक्तिभावनाभ्यां परब्रह्माधिगमः

ज्योतिषामपि तज्ज्योतिस्तमःपारे प्रतिष्ठितम् ।
भावाभावविनिर्मुक्तं भावनामात्रगोचरम् ॥ २२ ॥
भक्तिगम्यं परं तत्त्वमन्तर्लीनेन चेतसा ।
भावनामात्रमेवात्र कारणं पद्मसंभव ॥ २३ ॥
यथा देहान्तरप्राप्तिकारणं भावना नृणाम् ।
विषयं ध्यायतः पुंसो विषये रमते मनः ॥ २४ ॥
मामनुस्मरतश्चित्तं मय्येवात्र विलीयते ।
सर्वज्ञत्वं परेशत्वं सर्वसंपूर्णशक्तिता ॥ २५ ॥
अनन्तशक्तिमत्त्वं च ममानुस्मरणाद्भवेत् ।

इति ॥

निष्कामधिया शब्दब्रह्माभिधानमादोपासकानां शब्दब्रह्मप्रसादतः सर्वापवादाधिकरणं "एतत्क्षराक्षरातीतमनक्षर"मित्यादिना य"न्निर्विशेष"मित्यादि"परं तत्त्व"मित्यन्तविशेषणविशिष्टं निष्प्रतियोगिकब्रह्ममात्रं स्वयमेवेति प्रसीदति। यत एवं अतः शब्दब्रह्मपरब्रह्मणोरुपायोपेयत्वं सिद्धमित्यर्थः ।

यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कळेबरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥

इति स्मृत्यनुरोधेन यथा देहान्तरप्राप्तिकारणं भावनैव तथा अस्मिन् लोके ये ये सविशेषेण निर्विशेषेण वा भावेन मां भजन्ति ते ते पुरुषाः सविशेषं निर्विशेषं वा ब्रह्म भवन्तीत्यत्र "तं यथा यथोपासते तथैव भवती"ति श्रुतेः । इतिशब्दः अध्यायपरिसमाप्त्यर्थः ॥

इति तृतीयोऽध्यायः

# चतुर्थोऽध्यायः

### जीवत्वस्य असत्यत्वम्

चैतन्यस्यैकरूपत्वाद्भेदो युक्तो न कर्हिचित् ।
जीवत्वं च तथा ज्ञेयं रज्ज्वां सर्पग्रहो यथा ॥ १ ॥
रज्ज्वज्ञानात्क्षणेनैव यद्वद्रज्जुर्हि सर्पिणी ।
भाति तद्वच्चितिः साक्षाद्विश्वाकारेण केवला ॥ २ ॥

स्वातिरिक्ताविद्यापदतत्कार्यजातं सर्वैरपि नानाविधभेदभिन्नं सत् सत्यत्वेन अनुभूयते । तत् कथं भावनाशतेनाप्यभावपदं भजतीत्याकांक्षायां— परमार्थदृष्ट्यमातत्वात् स्वातिरिक्तं नास्त्येव । न हि शशशृङ्गवदवस्तुनि भावना प्रसरति । यत् परमार्थं वस्तु निष्प्रतियोगिकब्रह्ममात्रमवशिष्यते तदेव स्वाज्ञदृष्टेः स्वातिरिक्तवदवभासते । यदा पुनः स्वज्ञानेन स्वाज्ञानं नष्टं भवति तदा ब्रह्मातिरिक्तं परमार्थदृष्टेः ब्रह्ममात्रमवशिष्यते इत्येतदर्थप्रपञ्चनार्थं चतुर्थाध्याय आरभ्यते— चैतन्यस्येति । घटशरावाद्यनुगतव्योमवत् चैतन्यस्य । जीवत्वं वास्तवं इत्यत्र सदृष्टान्तमुत्तरमाह—जीवत्वमिति ॥ १ ॥ ब्रह्मातिरेकेण जगतो दृश्यमानत्वात् तत् सत्यमित्यत्र तत्सत्त्वस्य स्वाज्ञानावधिकत्वात् स्वज्ञानोदये तज्जगच्चिदेव भवतीति सदृष्टान्तमाह—रज्ज्वज्ञानादिति ॥ २ ॥

### सर्वप्रपञ्चस्य ब्रह्मत्वम्

उपादानं प्रपञ्चस्य ब्रह्मणोऽन्यन्न विद्यते ।
तस्मात्सर्वप्रपञ्चोऽयं ब्रह्मैवास्ति न चेतरत् ॥ ३ ॥
व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात् ।
इति ज्ञाते परे तत्त्वे भेदस्यावसरः कुतः ॥ ४ ॥

ब्रह्मणः सर्वभूतानि जायन्ते परमात्मनः ।
तस्मादेतानि ब्रह्मैव भवन्तीति विचिन्तय ॥ ५ ॥
ब्रह्मैव सर्वनामानि रूपाणि विविधानि च ।
कर्माण्यपि समग्राणि [1]बिभर्तीति विभावय ॥ ६ ॥
सुवर्णाज्जायमानस्य सुवर्णत्वं च शाश्वतम् ।
ब्रह्मणो जायमानस्य ब्रह्मत्वं च तथा भवेत् ॥ ७ ॥

कार्यकारणव्याप्यव्यापककलनासत्वात् प्रपञ्चोऽस्तीति मन्यमानमालक्ष्याह—उपादानमिति । यस्मादेवं तस्मात् ॥ ३–४ ॥ नामरूपकर्मवत् भूतजातस्य ब्रह्मकार्यत्वहेतुना तद्ब्रह्मैवेति सदृष्टान्तमाह—ब्रह्मण इति । यस्मात् ब्रह्मणः ॥ ५ ॥ किंच—ब्रह्मैव ॥ ६ ॥ यथा सुवर्णात् ॥ ७ ॥

ब्रह्मातिरिक्तदर्शनात् अनर्थप्राप्तिः

स्वल्पमप्यन्तरं कृत्वा जीवात्मपरमात्मनोः ।
यस्तिष्ठति विमूढात्मा भयं तस्यापि भाषितम् ॥ ८ ॥
यदज्ञानाद्भवेद्द्वैतमितरत्तत्प्रपश्यति ।
आत्मत्वेन तदा सर्वं नेतरत्तत्र चाण्वपि ॥ ९ ॥

ईषदपि ब्रह्मातिरिक्तमस्तीति पश्यतोऽनर्थमाह—स्वल्पमिति । "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति" इति श्रुत्यन्तरेणापि भयं भाषितमित्यर्थः ॥ ८ ॥ स्वाज्ञानविजृम्भितं द्वैतं स्वज्ञानेनाद्वैतं विभातीत्याह—यदिति ॥ ९ ॥

[1] बिभर्त्यस्तीति भा—अ २, उ १.

### व्यावहारिकप्रपञ्चस्य मिथ्यात्वम्

अनुभूतोऽप्ययं लोको व्यवहारक्षमोऽपि सन् ।
असद्रूपो यथा स्वप्न उत्तरक्षणबाधितः ॥ १० ॥
स्वप्ने जागरितं नास्ति जागरे स्वप्नता नहि ।
द्वयमेव लये नास्ति लयोऽपि ह्यनयोर्न च ॥ ११ ॥
त्रयमेव भवेन्मिथ्या गुणत्रयविनिर्मितम् ।
अस्य द्रष्टा गुणातीतो नित्यो ह्येष चिदात्मकः ॥ १२ ॥
यद्वन्मृदि घटभ्रान्तिः शुक्तौ हि रजतस्थितिः ।
तद्वद्ब्रह्मणि जीवत्वं [1]वीक्षमाणे विनश्यति ॥ १३ ॥
यदा मृदि घटो नाम कनके कुण्डलाभिधा ।
शुक्तौ हि रजतख्यातिर्जीव[2]शब्दार्थता परे ॥ १४ ॥
यथैव व्योम्नि नीलत्वं यथा नीरं मरुस्थले ।
पुरुषत्वं यथा स्थाणौ तद्वद्विश्वं चिदात्मनि ॥ १५ ॥
यथैव शून्यो वेतालो गन्धर्वाणां पुरं यथा ।
यथाऽऽकाशे द्विचन्द्रत्वं तद्वत्सत्ये जगत्स्थितिः ॥ १६ ॥
यथा तरङ्गकल्लोलैर्जलमेव स्फुरत्यलम् ।
घटनाम्ना यथा पृथ्वी पटनाम्ना हि तन्तवः ॥ १७ ॥
जगन्नाम्ना चिदाभाति सर्वं ब्रह्मैव केवलम् ।

[1] णे—अ. वीक्षमाणो—क.
[2] शब्दस्तथा—अ, अ १, अ २, क.

स्वातिरिक्तस्य व्यावहारिकसत्यत्वं मन्यमानं प्रत्याह—अनुभूत इति ॥ १० ॥ जाग्रदाद्यवस्थानां मिथो व्यभिचारित्वं तत्कल्पनाधारस्य नित्यत्वं चाह—स्वप्न इति ॥ ११–१२ ॥ जीवत्वादिकं स्वातिरिक्तयाथात्म्यज्ञानावधिकमिति सदृष्टान्तमाह—यद्वदिति ॥ १३–१७ ॥

स्वातिरिक्तप्रपञ्चस्य अत्यन्तासम्भवः

यथा वन्ध्यासुतो नास्ति यथा नास्ति मरौ जलम् ॥ १८ ॥
यथा नास्ति नभोवृक्षस्तथा नास्ति जगत्स्थितिः ।
गृह्यमाणे घटे यद्वन्मृत्तिका भाति वै बलात् ॥ १९ ॥
[1]वीक्ष्यमाणे प्रपञ्चे तु ब्रह्मैवाभाति भासुरम् ।

किं बहुना स्वातिरिक्तप्रपञ्चस्यात्यन्तासम्भवमाह—यथेति ॥ १८–१९ ॥

अज्ञानकृतः आत्मनि देहाद्यारोपः

सदैवात्मा विशुद्धोऽ[2]स्मि ह्यशुद्धो भाति वै सदा ॥ २० ॥
यथैव द्विविधा रज्जुर्ज्ञानिनोऽज्ञानिनोऽनिशम् ।
यथैव मृन्मयः कुम्भस्तद्वद्देहोऽपि चिन्मयः ॥ २१ ॥
आत्मानात्मविवेकोऽयं मुधैव क्रियते बुधैः ।
सर्पत्वेन यथा रज्जू रजतत्वेन शुक्तिका ॥ २२ ॥
विनिर्णीता विमूढेन देहत्वेन तथाऽऽत्मता ।
घटत्वेन यथा पृथ्वी जलत्वेन मरीचिका ॥ २३ ॥

[1] वीक्ष—अ १, अ २, क.   [2] स्ति—क, अ २.

गृहत्वेनै हि काष्ठानि खड्गत्वेनैव लोहता ।

तद्वदात्मनि देहत्वं पश्यत्यज्ञानयोगतः ॥ २४ ॥

इति ॥

यत एवमतः सदैवेति ॥ २०–२१ ॥ तथा सति आत्मेत्यादि । अनात्मनो दुर्लभत्वात् सर्पत्वेन ॥ २२–२३ ॥ वस्तुतस्तु सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकमेवेति फलितोऽर्थः ॥ २४ ॥ इतिशब्दः अध्यायपरिसमाप्त्यर्थः ॥

इति चतुर्थोऽध्यायः

# पञ्चमोऽध्यायः

देहस्य विष्ण्वालयत्वम्

पुनर्योगं प्रवक्ष्यामि गुह्यं ब्रह्मस्वरूपकम् ।

समाहितमना भूत्वा शृणु ब्रह्मन् यथाक्रमम् ॥ १ ॥

दशद्वारपुरं देहं दशनाडीमहापथम् ।

दशभिर्वायुभिर्व्याप्तं दशेन्द्रियपरिच्छदम् ॥ २ ॥

षडाधारापवरकं षडन्वयमहावनम् ।

चतुष्पीठसमाकीर्णं चतुराम्नायदीपकम् ॥ ३ ॥

बिन्दुनादमहालिङ्गविष्णुलक्ष्मीनिकेतनम् ।

देहं विष्ण्वालयं प्रोक्तं सिद्धिदं सर्वदेहिनाम् ॥ ४ ॥

उत्तमाधिकारिणामेवं निर्विशेषं ब्रह्म प्रतिपाद्य मध्यमाधिकारिणां पुरोक्तोऽपि योगो भूयोऽपि सप्रकारं वक्तव्य इति पञ्चमाध्याय आरभ्यते— पुनरिति ॥ १–२ ॥ योगाचार्यैः भुसुण्डप्रभृतिभिः मन्त्र-लय-हठ-राज-भावना-

सहजयोगसम्प्रदायभेदेन षडन्वय एव महावनं यस्मिन् तत्तथोक्तं, एकैकस्य अन्वयस्य समुद्रवदपारत्वात् ॥ ३ ॥ पुरा शिवशक्तिनिकेतनं शिवालयमित्युक्तं, पुनः विष्णुलक्ष्मीनिकेतनं विष्णवालयमित्युक्तिः शिवविष्णवोः भेदभ्रमनिरसनार्थेति मन्तव्या ॥ ४–१९ ॥

आधारषट्कपीठचतुष्टययोः विवरणम्

गुदमेढ्रान्तरालस्थं मूलाधारं त्रिकोणकम् ।
शिवस्य जीवरूपस्य स्थानं तद्धि प्रचक्षते ॥ ५ ॥
यत्र कुण्डलिनी नाम परा शक्तिः प्रतिष्ठिता ।
यस्मादुत्पद्यते वायुर्यस्माद्वह्निः प्रवर्तते ॥ ६ ॥
यस्मादुत्पद्यते बिन्दुर्यस्मान्नादः प्रवर्तते ।
यस्मादुत्पद्यते हंसो यस्मादुत्पद्यते मनः ॥ ७ ॥
तदेतत्कामरूपाख्यं पीठं कामफलप्रदम् ।
स्वाधिष्ठानाह्वयं चक्रं लिङ्ग[1]मूलं षडश्रकम् ॥ ८ ॥
नाभिदेशे स्थितं चक्रं दशारं मणिपूरकम् ।
द्वादशारं महाचक्रं हृदये चाप्यनाहतम् ॥ ९ ॥
तदेतत्पूर्णगिर्याख्यं पीठं कमलसंभव ।
कण्ठकूपे विशुद्धाख्यं यच्चक्रं षोडशाश्रकम् ॥ १० ॥
पीठं जालन्धरं नाम तिष्ठत्यत्र चतुर्मुख ।
आज्ञा नाम भ्रुवोर्मध्ये द्विदलं चक्रमुत्तमम् ॥ ११ ॥

[1] मूले—क, अ २,

उड्याणाख्यं महापीठमुपरिष्टात्प्रतिष्ठितम् ।
स्थानान्येतानि देहेऽस्मिञ्छक्तिरूपं प्रकाशते ॥ १२ ॥
चतुरश्रा धरण्यादौ ब्रह्मा तत्राधिदेवता ।
अर्धचन्द्राकृति जलं विष्णुस्तस्याधिदेवता ॥ १३ ॥
त्रिकोणमण्डलं वह्नी रुद्रस्तस्याधिदेवता ।
[1]वायोर्बिम्बं तु षट्कोणं संकर्षोऽत्राधिदेवता ॥ १४ ॥
आकाशमण्डलं वृत्तं श्रीमन्नारायणोऽत्राधिदेवता ।
नादरूपं भ्रुवोर्मध्ये मनसो मण्डलं विदुः ॥ १५ ॥
शांभवस्थानमेतत्ते वर्णितं पद्मसंभव ।

एतत् प्रथमाध्यायान्ते प्रायशः उक्तं इत्याह—शाम्भवेति ॥

नाडीचक्रस्वरूपम्

अतः परं प्रवक्ष्यामि नाडीचक्रस्य निर्णयम् ॥ १६ ॥
मूलाधारत्रिकोणस्था सुषुम्ना द्वादशाङ्गुला ।
मूलार्धच्छिन्नवंशाभा ब्रह्मनाडीति सा स्मृता ॥ १७ ॥
इडा च पिङ्गला चैव तस्याः पार्श्वद्वये गते ।
विलम्बिन्यामनुस्यूते नाडिकाऽन्तमुपागते ॥ १८ ॥
इडायां हेमरूपेण वायु[2]र्वामेन गच्छति ।
पिङ्गलायां तु सूर्यात्मा याति दक्षिणपार्श्वतः ॥ १९ ॥
विलम्बिनीति या नाडी व्यक्ता नाभौ प्रतिष्ठिता ।
तत्र नाड्यः समुत्पन्नास्तिर्यगूर्ध्वमधोमुखाः ॥ २० ॥

[1] वायौ बि—क.   [2] र्मेहे—उ १. र्हेमे—उ.

तन्नाभिचक्रमित्युक्तं कुक्कुटाण्डमिव स्थितम् ।
गान्धारी हस्तिजिह्वा च तस्मान्नेत्रद्वयं गते ॥ २१
पूषा चालम्बुसा चैव श्रोत्रद्वयमुपागते ।
शूरा नाम महानाडी तस्माद्भ्रूमध्यमाश्रिता ॥ २२ ॥
विश्वोदरी तु या नाडी सा भुङ्क्तेऽन्नं चतुर्विधम् ।
सरस्वती तु या नाडी सा जिह्वाऽन्तं प्रसर्पति ॥ २३ ॥
राकाऽऽह्वया तु या नाडी पीत्वा च सलिलं क्षणात् ।
क्षुतमुत्पादयेद् घ्राणे श्लेष्माणं संचिनोति च ॥ २४ ॥
कण्ठकूपोद्भवा नाडी शङ्खिन्याख्या त्वधोमुखी ।
अन्नसारं समादाय मूर्ध्नि संचिनुते सदा ॥ २५ ॥
नाभेरधोगतास्तिस्रो नाड्यः स्युरधोमुखाः ।
मलं त्यजेत्कुहूर्नाडी मूत्रं मुञ्चति वारुणी ॥ २६ ॥
चित्राख्या सीविनी नाडी शुक्लमोचनकारिणी ।
नाडीचक्रमिति प्रोक्तं बिन्दुरूपमतः शृणु ॥ २७ ॥

ततो नाडीचक्रस्वरूपमाह—अत इति ॥ १६–२७ ॥

बिन्द्वग्निसोमात्मकं ब्रह्मशरीरत्रयम्

स्थूलं सूक्ष्मं परं चेति त्रिविधं ब्रह्मणो वपुः ।
स्थूलं शुक्लात्मकं [1]बिन्दुः सूक्ष्मं पञ्चाग्निरूपकम् ॥ २८ ॥
सोमात्मकः परः प्रोक्तः सदा साक्षी सदाऽच्युतः ।

[1] बिन्दुसू—क, अ १, अ २.

कालाग्न्यादि पञ्चाग्निरूपकम् ॥ २८ ॥

पञ्चाग्निभावना, तत्फलं च

पातालानामधोभागे कालाग्निर्यः प्रतिष्ठितः ॥ २९ ॥
स मूलाग्निः शरीरेऽग्निर्यस्मान्नादः प्रजायते ।
बडबाग्निः शरीरस्थो ह्यस्थिमध्ये प्रवर्तते ॥ ३० ॥
काष्ठपाषाणयोर्वह्निर्ह्यस्थिमध्ये प्रवर्तते ।
काष्ठपाषाणजो वह्निः पार्थिवो ग्रहणीगतः ॥ ३१ ॥
अन्तरिक्षगतो वह्निर्वैद्युतः स्वान्तरात्मकः ।
नभःस्थः सूर्यरूपोऽग्निर्नाभिमण्डलमाश्रितः ॥ ३२ ॥
विषं [1]वर्षति सूर्योऽसौ स्रवत्यमृतमुन्मुखः ।
तालुमूले स्थितश्चन्द्रः सुधां वर्षत्यधोमुखः ॥ ३३ ॥
भ्रूमध्यनिलयो बिन्दुः शुद्धस्फटिकसंनिभः ।
महाविष्णो[2]श्च देवस्य तत्सूक्ष्मं रूपमुच्यते ॥ ३४ ॥
एतत्पञ्चाग्निरूपं यो भावयन् बुद्धिमान् धिया ।
तेन भुक्तं च पीतं च हुतमेव न संशयः ॥ ३५ ॥

क्रमात् पञ्चाग्निस्वरूपमाह—पातालानामिति । अतलादिपातालानां पातालान्तलोकानां पातालानाम् ॥ २९ ॥ कालाग्निरेव नादाधाराग्निर्भूत्वा शरीरे वर्तते ॥ ३० ॥ तथा काष्ठेति । ग्रहणीगतः—पार्थिवाग्निरेव योषात्वं प्राप्त इत्यर्थः ॥ ३१–३४ ॥ पञ्चाग्निभावनाफलमाह—एतदिति ॥ ३५ ॥

[1] पिबति—क. [2] स्य—क, अ २, उ १.

कुण्डलिनीप्रबोधनम्

सुखसंसेवितं स्वप्नं सुजीर्णमितभोजनम् ।
शरीरशुद्धिं कृत्वाऽऽदौ सुखमासनमास्थितः ॥ ३६ ॥
प्राणस्य शोधयेन्मार्गं रेचपूरककुम्भकैः ।
गुदमाकुञ्च्य यत्नेन मूलशक्तिं प्रपूजयेत् ॥ ३७ ॥

एवमाहारतः शरीरशुद्धिम् । स्वस्य येन सुखधारणा स्यात् तत् सुखमासनम् ॥ ३६ ॥ मूलशक्तिं प्रपूजयेत् कुण्डलिनीशक्तिं प्रबोधयेदित्यर्थः ॥ ३७–४२ ॥

खेचरीमुद्राभ्यासः तत्फलं च

नाभौ लिङ्गस्य मध्ये तु उड्याणाख्यं च बन्धयेत् ।
उड्डीय याति तेनैव शक्तितोड्याणपीठकम् ॥ ३८ ॥
कण्ठं संकोचयेत्किंचिद्बन्धो जालन्धरो ह्ययम् ।
बन्धयेत्खेचरीमुद्रां दृढचित्तः समाहितः ॥ ३९ ॥
कपालविवरे जिह्वा प्रविष्टा विपरीतगा ।
भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥ ४० ॥
खेचर्या मुद्रितं येन विवरं लम्बिकोर्ध्वतः ।
न पीयूषं पतत्यग्नौ न च वायुः प्रधावति ॥ ४१ ॥
न क्षुधा न तृषा निद्रा नैवालस्यं प्रजायते ।
न च मृत्युर्भवेत्तस्य यो मुद्रां वेत्ति खेचरीम् ॥ ४२ ॥

सहस्रारे नारायणभावनातः कैवल्यसिद्धिः

ततः पूर्वापरे व्योम्नि द्वादशान्तेऽच्युतात्मके ।
उड्याणपीठे निर्द्वन्द्वे निरालम्बे निरञ्जने ॥ ४३ ॥
ततः पङ्कजमध्यस्थं चन्द्रमण्डलमध्यगम् ।
नारायणमनुध्यायेत्स्रवन्तममृतं सदा ॥ ४४ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ ४५ ॥

ततो योगी सहस्राराकाशे स्रवदमृतं नारायणं स्वात्मतया ध्यायन् ग्रन्थिसंशयकर्मासम्भवकैवल्यसिद्धिमेतीत्याह—तत इति । सहस्रारे आज्ञायां वा ॥ ४३–४५ ॥

यथोक्तभावनायुक्तस्य तत्तत्सिद्ध्युपायाः

अथ सिद्धिं प्रवक्ष्यामि सुखोपायं सुरेश्वर ।
जितेन्द्रियाणां शान्तानां जितश्वासविचेतसाम् ॥ ४६ ॥
नादे मनोलयं ब्रह्मन् दूरश्रवणकारणम् ।
बिन्दौ मनोलयं कृत्वा दूरदर्शनमाप्नुयात् ॥ ४७ ॥
कालात्मनि मनो लीनं त्रिकालज्ञानकारणम् ।
परकायमनोयोगः परकायप्रवेशकृत् ॥ ४८ ॥
अमृतं चिन्तयेन्मूर्ध्नि क्षु[1]तृषाविषशान्तये ।
पृथिव्यां धारयेच्चित्तं पातालगमनं भवेत् ॥ ४९ ॥

[1] तृष्णा—अ, अ १.

सलिले धारयेच्चित्तं नाम्भसा परिभूयते ।
अग्नौ संधारयेच्चित्तमग्निना दह्यते न सः ॥ ९० ॥
वायौ मनोलयं कुर्यादाकाशगमनं भवेत् ।
आकाशे धारयेच्चित्तमणिमादिकमाप्नुयात् ॥ ९१ ॥
विराड्[1]रूपे मनो युञ्जन् महिमानमवाप्नुयात् ।
चतुर्मुखे मनो युञ्जन् जगत्सृष्टिकरो भवेत् ॥ ९२ ॥
इन्द्ररूपिणमात्मानं भावयन् मर्त्यभोगवान् ।
विष्णुरूपे [2]महायोगी पालयेदखिलं जगत् ॥ ९३ ॥
रुद्ररूपे महायोगी संहरत्येव तेजसा ।
नारायणे मनो युञ्जन् नारायण[3]मयो भवेत् ।
वासुदेवे मनो युञ्जन् सर्वसिद्धिमवाप्नुयात् ॥ ९४ ॥
यथा संकल्पयेद्योगी योगयुक्तो जितेन्द्रियः ।
तथा तत्तदवाप्नोति भाव एवात्र कारणम् ॥ ९५ ॥

एवं भावयतः ते नानाविधसिद्ध्युपायं वदामीत्याह—अथेति ॥ ४६ ॥ बिन्दौ चक्षुस्तारके ॥ ४७–६१ ॥

गुरुपूजाविधिः

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवः सदाऽच्युतः ।
न गुरोरधिकः कश्चित् त्रिषु लोकेषु विद्यते ॥ ९६ ॥

[1] रूपं—अ, अ १. [2] मनो—उ.
[3] मयं—अ १, अ २, क.

दिव्यज्ञानोपदेष्टारं देशिकं परमेश्वरम् ।
पूजयेत्परया भक्त्या तस्य ज्ञानफलं [1]भवेत् ॥ ५७ ॥
यथा गुरुस्तथैवेशो यथैवेशस्तथा गुरुः ।
पूजनीयो महाभक्त्या न भेदो विद्यतेऽनयोः ॥ ५८ ॥
नाद्वैतवादं कुर्वीत गुरुणा सह कुत्रचित् ।
अद्वैतं भावयेद्भक्त्या गुरोर्देवस्य चात्मनः ॥ ५९ ॥

योगशिखामहिमा

योगशिखां महागुह्यं यो जानाति महामतिः ।
न तस्य किंचिदज्ञातं त्रिषु लोकेषु विद्यते ॥ ६० ॥
न पुण्यपापे [2]नास्वस्थो न दुःखं न पराजयः ।
न चास्ति पुनरावृत्तिरस्मिन् संसारमण्डले ॥ ६१ ॥

सिद्धिषु उपेक्षाविधिः

सिद्धौ चित्तं न कुर्वीत चञ्चलत्वेन चेतसः ।
तथाऽपि ज्ञाततत्त्वोऽसौ मुक्त एव न संशयः ॥ ६२ ॥

इत्युपनिषत् ॥

विज्ञातस्वात्मतत्त्वानां योगिनां सिद्धिगोपनागोपनतो न काचित् क्षतिः लाभो वा अस्तीत्यर्थः । इत्युपनिषच्छब्दः पञ्चमाध्यायसमाप्त्यर्थः ॥ ६२ ॥

इति पञ्चमोऽध्यायः

[1] लभेत्—अ, अ १, अ २, क.
[2] नस्व—अ, अ १, अ २, क.

# षष्ठोऽध्यायः

कुण्डलिनीशक्तेः उपासनाविधिः

उपासनाप्रकारं मे ब्रूहि त्वं परमेश्वर ।
येन विज्ञानमात्रेण मुक्तो भवति संसृतेः ॥ १ ॥
उपासनाप्रकारं ते रहस्यं श्रुतिसारकम् ।
हिरण्यगर्भ वक्ष्यामि श्रुत्वा सम्यगुपासय ॥ २ ॥
सुषुम्नायै कुण्डलिन्यै सुधायै चन्द्रमण्डलात् ।
मनोन्मन्यै नमस्तुभ्यं महाशक्त्यै चिदात्मने ॥ ३ ॥

स्वाङ्गलोको येन मुच्यते तदुपायोपासनाप्रकारं ब्रूहीति महेश्वरं प्रति चतुर्मुखः पृच्छतीत्याह—उपासनेति ॥ १ ॥ प्रश्नोत्तरं भगवानाह—उपासनेति ॥ २ ॥ उपासनामन्त्रतत्प्रकारं तत्फलं चाह—सुषुम्नाया इति ॥ ३ ॥

सुषुम्नास्वरूपम्

शतं चैका च हृदयस्य नाड्य-
स्तासां मूर्धानमभिनिःसृतैका ।
तयोर्ध्वमायन्नमृतत्वमेति
विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ ४ ॥
एकोत्तरं नाडिशतं तासां मध्ये परा स्मृता ।
सुषुम्ना तु परे लीना विरजा ब्रह्मरूपिणी ॥ ५ ॥
इडा तिष्ठति वामेन पिङ्गला दक्षिणेन तु ।
तयोर्मध्ये परं स्थानं [1]यस्तद्वेद स वेदवित् ॥ ६ ॥

[1] यस्तं वे—उ.

प्राणान् संधारयेत्तस्मिन् नासाभ्यन्तरचारिणः ।
भूत्वा तत्रायतप्राणः शनैरेव समभ्यसेत् ॥ ७ ॥
गुदस्य पृष्ठभागेऽस्मिन्वीणा[1]दण्डस्तु देहभृत् ।
दीर्घास्थिदेहपर्यन्तं ब्रह्मनाडीति कथ्यते ॥ ८ ॥
तस्यान्ते सुषिरं सूक्ष्मं ब्रह्मनाडीति सूरिभिः ।
इडापिङ्गलयोर्मध्ये सुषुम्ना सूर्यरूपिणी ॥ ९ ॥

सुषुम्नारूपं तन्मार्गगमनफलं चाह—शतमिति ॥ ४–१९ ॥

सुषुम्नायाः सर्वाधारत्वम्

सर्वं प्रतिष्ठितं तस्मिन् सर्वगं सर्वतोमुखम् ।
तस्य मध्यगताः सूर्यसोमाग्निपरमेश्वराः ॥ १० ॥
भूतलोका दिशः क्षेत्राः समुद्राः पर्वताः शिलाः ।
द्वीपाश्च निम्नगा वेदाः शास्त्रविद्याकलाऽक्षराः ॥ ११ ॥
स्वरमन्त्रपुराणानि गुणाश्चैते च सर्वशः ।
बीजं बीजात्मकस्तेषां क्षेत्रज्ञाः प्राणवायवः ॥ १२ ॥
सुषुम्नाऽन्तर्गतं विश्वं तस्मिन् सर्वं प्रतिष्ठितम् ।
नानानाडीप्रसवगं सर्वभूतान्तरात्मनि ॥ १३ ॥
ऊर्ध्वमूलमधःशाखं वायुमार्गेण सर्वगम् ।
द्विसप्ततिसहस्राणि नाड्यः स्युर्वायुगोचराः ॥ १४ ॥
सर्वमार्गेण सुषिरास्तिर्यञ्चः सुषिरात्मकाः ।
अधश्चोर्ध्वं च कुण्डल्याः सर्वद्वारनिरोधनात् ॥ १५ ॥

[1] दण्डस्य—क, अ, अ १, अ २. दण्डः स—मु.

परशक्तेः उद्बोधनम्

वायुना सह जीवोर्ध्वज्ञानान्मोक्षमवाप्नुयात् ।
ज्ञात्वा सुषुम्ना तद्भेदं कृत्वा पायुं च मध्यगम् ॥ १६ ॥
कृत्वा तु बैन्दवस्थाने घ्राणरन्ध्रे निरोधयेत् ।
द्विसप्ततिसहस्राणि नाडीद्वाराणि पञ्जरे ॥ १७ ॥
सुषुम्ना शाम्भवी शक्तिः शेषास्त्वन्ये निरर्थकाः ।
हृल्लेखे परमानन्दे तालु[1]मूलव्यवस्थिते ॥ १८ ॥
अत ऊर्ध्वं निरोधे तु मध्यमं मध्यमध्यमम् ।
उच्चारयेत्परां शक्तिं ब्रह्मरन्ध्रनिवासिनीम् ।
यदि भ्रमरसृष्टिः स्यात् संसारभ्रमणं त्यजेत् ॥ १९ ॥

जीवशक्तिः कुण्डलिनीत्यर्थः ॥ १६ ॥ **बैन्दवस्थाने** भ्रूमध्ये । **पञ्जरे** शरीरे ॥ १७ ॥ **हृल्लेखे** ह्रींकारवाच्ये **परमानन्दे** ईश्वरतत्त्वे **तालुमूलव्यवस्थिते** चित्तादिकं निरोधयेत् ॥ १८ ॥ मध्यमं तुरीयं, मध्यमध्यमं तुर्यतुरीयं, तत्र लक्ष्यं कृत्वा **उच्चारयेत्**, षोडशमात्राकालं प्रणवप्रकृतिमुच्चारयेत् । **ब्रह्मरन्ध्रनिवासिनीं**—षोडशसंख्यापूरकमात्रायाः परभूमित्वेन ब्रह्मरन्ध्रासनत्वात् । तत्र यदीति । स्वातिरिक्तं विकल्प्य परिभ्रमतीति **भ्रमरः** कामसङ्कल्पादिमनोवृत्तिपूगः, "कामः सङ्कल्पो विचिकित्सा श्रद्धा अश्रद्धा धृतिः अधृतिः ह्रीः धीः भीः इत्येतत् सर्वं मन एव" इति श्रुतेः । **तत्सृष्टिः** कल्पना **स्यात्** । तत्र कदाऽपि कल्पनावकाशो नह्यस्ति ब्रह्मरन्ध्रस्य निर्बीजत्वात् । यदि भ्रूमध्यादधःप्रदेशमेत्य विशुद्धिचक्रे कामसङ्कल्पादिसृष्टिः स्यात् तदाऽऽज्ञाचक्रमवष्टभ्य स्वानर्थकारणं **संसारभ्रमणं** स्वातिरिक्तविषयपरिभ्रमणं "स्वातिरिक्तं न किञ्चिदस्ति" इति धैर्येण **त्यजेत्** अपह्नवं कुर्यादित्यर्थः ॥ १९ ॥

[1] मूले—अ, अ १, अ २, क.

गमागमस्थं गमनादिशून्यं चिद्रूपदीपं तिमिरा[1]न्धकारम् ।

पश्यामि ते सर्वजनान्तरस्थं नमामि हंसं परमात्मरूपम् ॥२०॥

अनाहतस्य शब्दस्य तस्य शब्दस्य यो ध्वनिः ।

ध्वनेरन्तर्गतं ज्योतिर्ज्योतिरन्तर्गतं मनः ।

तन्मनो विलयं याति तद्विष्णोः परमं पदम् ॥ २१ ॥

ततः किमित्यत आह—गमेति । स्वान्तःकरणवृत्तिकदम्बगमनागमनावभासकप्रत्यगभिन्नब्रह्मरूपेण तिष्ठतीति गमागमस्थम् । वस्तुतः स्वातिरिक्तान्तःकरणतत्कार्याभावात् गमनादिशून्यम् । ततः स्वातिरिक्तं तिमिरान्धकारं चिद्रूपाग्निशिखया दीपयति भस्मावशेषं करोतीति चिद्रूपदीपम् । शिष्टं स्पष्टम् ॥ २० ॥ अनाहतोपलक्षितमूलाधारादिवैखर्यन्तप्रादुर्भूतशब्दज्योतिः प्रपञ्चकलनाकलितसवृत्तिकमानसासम्भवप्रबोधसिद्धं विष्णुपदं अवशिष्यते इत्यर्थः ॥२१॥

आधारब्रह्मणि प्राणादिविलयान्मुक्तिः

केचिद्वदन्ति चाधारं सुषुम्ना च सरस्वती ।

आधाराज्जायते विश्वं विश्वं तत्रैव लीयते ॥ २२ ॥

तस्मात्सर्वप्रयत्नेन गुरुपादं समाश्रयेत् ।

आधारशक्तिनिद्रायां विश्वं भवति निद्रया ॥ २३ ॥

तस्यां शक्तिप्रबोधेन त्रैलोक्यं प्रतिबुध्यते ।

आधारं यो विजानाति तमसः परमश्नुते ॥ २४ ॥

तस्य विज्ञानमात्रेण नरः पापैः प्रमुच्यते ॥ २५ ॥

[1] न्धनाशम्—मु. पहारम्—अ.

आधारचक्रमहसा विद्युत्पुञ्जसमप्रभा ।
तदा मुक्तिर्न संदेहो यदि तुष्टः स्वयं गुरुः ॥ २६
आधारचक्रमहसा पुण्यपापे निकृन्तयेत् ।
आधारवातरोधेन लीयते गगनान्तरे ॥ २७ ॥
आधारवातरोधेन शरीरं कम्पते यथा ।
आधारवातरोधेन योगी नृत्यति सर्वदा ॥
आधारवातरोधेन विश्वं तत्रैव दृश्यते ॥ २८ ॥
सृष्टिराधारमाधारमाधारे सर्वदेवताः ।
आधारे सर्व[1]वेदाश्च तस्मादाधारमाश्रयेत् ॥ २९ ॥
आधारे पश्चिमे भागे त्रिवेणीसङ्गमो भवेत् ।
तत्र स्नात्वा च पीत्वा च नरः पापात् प्रमुच्यते ॥ ३० ॥
आधारे पश्चिमं लिङ्गं कवाटं तत्र विद्यते ।
तस्योद्घाटनमात्रेण मुच्यते भवबन्धनात् ॥ ३१ ॥
आधारपश्चिमे भागे चन्द्रसूर्यौ स्थिरौ यदि ।
तत्र तिष्ठति विश्वेशो ध्यात्वा ब्रह्ममयो भवेत् ॥ ३२ ॥

केचिन्नादाधारप्राणादिविलयात् स्वाधेयाभावतो निराधारब्रह्मस्वरूपावस्थानलक्षणमुक्तिः स्यादिति वदन्ति । तदपि युक्तमेवेत्याह—केचिदिति । सुषुम्नासरस्वतीनाड्यौ यत्र प्रतिष्ठिते तन्मूलाधारमित्यर्थः । तस्य ब्रह्मात्मना विश्वारोपापवादाधिकरणतामप्याह—आधारादिति ॥ २२ ॥ यस्मादेवं तस्मात् । येन मूलाधारयाथात्म्यं दर्शितं स गुरुः परमात्मा स्वाज्ञानमोचकत्वात् ।

[1] देवा—अ, अ १.

तत्पादं तद्भावं समाश्रयेत् । किंच—आधारेति । आधारशक्तिः कुण्डलिनी तस्याः स्वाधारावस्थितिः निद्रा तस्यां सत्यां विश्वं स्वाज्ञाननिद्राविशिष्टं भवति ॥ २३ ॥ तत्प्रबो[illegible] सुषुम्नाप्रवेशः । तेन त्रैलोक्ययाथात्म्यबोधो जायते । एवं ज्ञानफ[illegible]ह—आधारमिति ॥ २४–२५ ॥ मुक्तेः गुरुप्रसादैकलभ्यत्वात्, "यमेवैष वृणुते तेन लभ्यः" इति श्रुतेः ॥ २६ ॥ किंच—आधारेति । विश्वं तत्रैव दृश्यते—स्वातिरिक्तं नेति प्रकाशते इत्यर्थः ॥ २७–२८ ॥ आधारत्वं कथमित्यत्र यतः स्वातिरिक्तसृष्टिः स्वाधारमवष्टभ्य प्रवृत्ता यतः तदभावे न सम्भवति, अतः सर्वाधारमधिष्ठानं ब्रह्मेति सिद्धम् । तत् कथमित्यत्र आधारे सति सर्वदेवताः ॥ २९ ॥ इडा पिंगळा सुषुम्ना चेति त्रिवेणी ॥ ३० ॥ पश्चिमलिङ्गं प्रत्यक्चैतन्यं तत्कवाटमावारकं ग्रन्थित्रयम् ॥ ३१ ॥ आधारपश्चिमे भागे सुषुम्नायाम् ॥ ३२ ॥

चक्रेषु ब्रह्मादिमूर्तिध्यानेन ब्रह्मरन्ध्रप्रवेशः

आधारपश्चिमे भागे मूर्तिस्तिष्ठति संज्ञया ।
षट् चक्राणि च निर्भिद्य ब्रह्म[1]रन्ध्राद्बहिर्गतम् ॥ ३३ ॥
वामदक्षे [2]निरुद्धन्ति प्रविशन्ति सुषुम्नया ।
ब्रह्मरन्ध्रं प्रविश्यन्ति ते यान्ति परमां गतिम् ॥ ३४ ॥

ब्रह्मादीनां मूर्तिः । एवमुपासकाः तत्तच्चक्रालङ्कारमूर्तिध्यानपुरस्सरं षट्चक्राणीति । ब्रह्मरन्ध्रात् सुषुम्नारन्ध्रात् पुरा बहिर्गतं प्राणमादौ योगिनो वामदक्षे इडापिंगळे निरुद्धन्ति निरोधं कुर्वन्ति । ततः तत्प्राणादयः सहसा सुषुम्नया क्रमात् ग्रन्थित्रयालंकृतषट्चक्राणि च निर्भिद्य चन्द्रसूर्याग्न्यैक्यजम-मृतमास्वाद्य सहस्रारचक्रोज्ज्वलत्तुरीयं तुरीयातीतं वा प्रविशन्ति । ये एवं ब्रह्मरन्ध्रम् ॥ ३३–३४ ॥

[1] रन्ध्रे ब—अ, अ १.        [2] निरुन्धन्ति—क, अ १, अ २.

### ब्रह्मरन्ध्रविलीनकरणस्य मुक्तिः

सुषुम्नायां यदा हंसः अध ऊर्ध्वं प्रधावति ।
सुषुम्नायां यदा प्राणं [1]भ्रामयेद्यो निरन्तरम् ॥ ३५ ॥
सुषुम्नायां यदा प्राणः स्थिरो भवति धीमताम् ।
सुषुम्नायां प्रवेशेन चन्द्रसूर्यौ लयं गतौ ॥ ३६ ॥
तदा समरसं भावं यो जानाति स योगवित् ।
सुषुम्नायां यदा यस्य म्रियते मनसो रयः ॥ ३७ ॥
सुषुम्नायां यदा योगी क्षणैकमपि तिष्ठति ।
सुषुम्नायां यदा योगी क्षणार्धमधितिष्ठति ॥ ३८ ॥
सुषुम्नायां यदा योगी सुलग्नो लवणाम्बुवत् ।
सुषुम्नायां यदा योगी लीयते क्षीरनीरवत् ॥ ३९ ॥
भिद्यते [2]च तदा ग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते परमाकाशे ते यान्ति परमां गतिम् ॥ ४० ॥

यत्करणपटलं सुषुम्नाद्वारेण ब्रह्मरन्ध्रे विलीयते ते मुक्ता भवन्तीत्याह—**सुषुम्नायामिति** । हंसः प्राणः ॥ ३५–३९ ॥ एवं सुषुम्नाविलयफलमाह—**भिद्यत इति** । जीवेशभेदग्रन्थिः ॥ ४० ॥

### सुषुम्नायोगमहिमा

गङ्गायां सागरे स्नात्वा नत्वा च मणिकर्णिकाम् ।
मध्यनाडीविचारस्य कलां नार्हन्ति षोडशीम् ॥ ४१ ॥

[1] भ्रा—अ. [2] हृदय—अ २. च तथा—क, अ १, उ.

श्रीशैलदर्शनान्मुक्तिर्वाराणस्यां मृतस्य च ।
केदारोदकपानेन मध्यनाडीप्रदर्शनात् ॥ ४२ ॥
अश्वमेधसहस्राणि वाजपेयशतानि च ।
सुषुम्नाध्यान[1]योगस्य कलां नार्हन्ति षोडशीम् ॥ ४३ ॥
सुषुम्नायां यदा गोष्ठीं यः कश्चित्कुरुते नरः ।
स मुक्तः सर्वपापेभ्यो निश्रेयसमवाप्नुयात् ॥ ४४ ॥
सुषुम्नैव परं तीर्थं सुषुम्नैव परो जपः ।
सुषुम्नैव परं ध्यानं सुषुम्नैव परा गतिः ॥ ४५ ॥
अनेकयज्ञदानानि व्रतानि नियमानि च ।
सुषुम्नाध्यानयोगस्य कलां नार्हन्ति षोडशीम् ॥ ४६ ॥

सुषुम्नाविचारादिकं स्तौति—गङ्गायामिति ॥ ४१–४६ ॥

चिच्छक्तिजीवयोः स्थानविवेकः

ब्रह्मरन्ध्रे महास्थाने वर्तते सततं शिवा ।
चिच्छक्तिः परमा देवी मध्यमे सुप्रतिष्ठिता ॥ ४७ ॥
मायाशक्तिर्ललाटाग्रभागे व्योमाम्बुजे तथा ।
नादरूपा परा शक्तिर्ललाटस्य तु मध्यमे ॥ ४८ ॥
भागे बिन्दुमयी शक्तिर्ललाटस्यापरांशके ।
बिन्दुमध्ये च जीवात्मा सूक्ष्मरूपेण वर्तते ॥ ४९ ॥
हृदये स्थूलरूपेण मध्यमे न तु मध्यमे ॥ ५० ॥

[1] लेशस्य—अ, अ १, क.

ब्रह्मरन्ध्रादिस्थानेषु चिच्छक्त्यादयो वर्तन्ते । बिन्द्वादिमध्ये जीवोऽ वर्तते । सोऽयं प्राणापानवशतो विश्रान्तिमलब्ध्वा उच्छ्वासादिव्यापारच्छले हंसमनुजपनिष्ठो भवतीत्याह—ब्रह्मरन्ध्र इति । मध्यमे भ्रूमध्ये हृदयाकाशे च तथा वर्तते इत्यनुषज्यते ॥ ४८ ॥ बिन्दुमयं। [illegible] ॥ ४९ ॥ मध्यमे हृदये स्थूलरूपेण जीवो वर्तते, न तु मध्यमे, भ्रूमध्ये सहस्रारे वा न तु जीवः सरति । यदि भ्रूमध्यादौ गच्छति तदा क्षरः परमाक्षरो वा भवतीत्यर्थः ॥ ५० ॥

वायुवशस्य जीवस्य हंसमन्त्रजपप्रकारः

प्राणापानवशो जीवो ह्यधश्चोर्ध्वं प्रधावति ।
वामदक्षिणमार्गेण चञ्चलत्वान्न दृश्यते ॥ ५१ ॥
आक्षिप्तो भुजदण्डेन यथोच्चलति कन्तुकः ।
प्राणापानसमाक्षिप्तस्तथा जीवो न विश्रमेत् ॥ ५२ ॥
अपानः कर्षति प्राणं प्राणोऽपानं च कर्षति ।
हकारेण बहिर्याति सकारेण विशेत्पुनः ॥ ५३ ॥
हंसहंसेत्यमुं मन्त्रं जीवो जपति सर्वदा ।
तद्विद्वानक्षरं नित्यं यो जानाति स योगवित् ॥ ५४ ॥

सोऽयं प्राणापानेति । केन मार्गेण यावद्दृ[धावन्नदृ]श्यते इत्यत्र वामेति ॥ ५१ ॥ तच्चलनदृष्टान्तमाह—आक्षिप्त इति ॥ ५२ ॥ तत् कथं? हकारेणेति ॥ ५३ ॥ इत्थंभूतोऽपि जीवः स्वगतजीवत्वं निरस्याक्षरोऽस्मीति ज्ञानात् तदैव भवतीत्याह—तदिति ॥ ५४ ॥

कुण्डल्यवस्थाभेदतो बन्धमुक्तिव्यवस्था

कन्दोर्ध्वे कुण्डली शक्तिर्मुक्ति[1]रूपाऽस्य योगिनाम् ।
बन्धनाय च मूढानां यस्तां वेत्ति स योगवित् ॥ ५५ ॥

कुण्डली यदि स्वस्थानादूर्ध्वं गच्छति तदाऽयं मुक्तो भवति, यदि सा स्वस्थानं न मुञ्चति तदाऽयं बद्धो भवतीत्याह—कन्देति ॥ ५५ ॥

प्रणवस्य सर्वाधारत्वम्

भूर्भुवःस्वरिमे लोकाश्चन्द्रसूर्याग्निदेवताः ।
[2]यासु मात्रासु तिष्ठन्ति तत्परं ज्योतिरोमिति ॥ ५६ ॥
त्रयः कालास्त्रयो देवास्त्रयो लोकास्त्रयः स्वराः ।
त्रयो वेदाः स्थिता यत्र तत्परं ज्योतिरोमिति ॥ ५७ ॥

भूरादिलोकाधारः प्रणवः इत्याह—भूरिति ॥ ५६–५७ ॥

चित्तचलनाचलनाभ्यां बन्धमुक्ती

चित्ते चलति संसारो निश्चलं मोक्ष उच्यते ।
तस्माच्चित्तं स्थिरीकुर्यात्प्रज्ञया परया विधे ॥ ५८ ॥
चित्तं कारणमर्थानां तस्मिन् सति जगत्त्रयम् ।
तस्मिन् क्षीणे जगत् क्षीणं तच्चिकित्स्यं प्रयत्नतः ॥ ५९ ॥

यतः चित्तचलनाचलने बन्धमोक्षहेतू अतः स्वातिरेकेण चित्तं नास्तीत्यनुसन्धेयमित्याह—चित्त इति । यस्मादेवं तस्मात् ॥ ५८–५९ ॥

[1] रूपाय—क, उ. रूपा हि—मु. [2] तासु—अ १.

चित्तस्य स्वात्मानतिरिक्तत्वानुसन्धानेन ब्रह्मसाक्षात्कारः

मनोऽहं गगनाकारं मनोऽहं सर्वतोमुखम् ।
मनोऽहं सर्वमात्मा च न मनः केवलः परः ॥ ६० ॥
मनः कर्माणि जायन्ते मनो लिप्यति पातकैः ।
मनश्चेदुन्मनीभूयान्न पुण्यं न च पातकम् ॥ ६१ ॥
मनसा मन आलोक्य वृत्तिशून्यं यदा भवेत् ।
ततः परं परब्रह्म दृश्यते च सुदुर्लभम् ॥ ६२ ॥
मनसा मन आलोक्य मुक्तो भवति योगवित् ।
मनसा मन आलोक्य उन्मन्यन्तं सदा स्मरेत् ॥ ६३ ॥
मनसा मन आलोक्य योगनिष्ठः सदा भवेत् ।
मनसा मन आलोक्य[1] दशप्रत्ययदृश्यते ॥ ६४ ॥
यदा प्रत्यया दृश्यन्ते तदा योगीश्वरो भवेत् ॥ ६५ ॥
बिन्दुनादकलाज्योतिरबिन्दुर्ध्रुवतारकम् ।
शान्तं च तदतीतं च परंब्रह्म तदुच्यते ॥ ६६ ॥

मनस्तु ब्रह्मावरणं तन्मनसः सत्वांशतः स्वावरणे नष्टे निरावरणं ब्रह्म प्रकाशत इत्याह—मनइति । शुद्धसत्वेश्वरभावमापन्नमनस्तु **मनोऽहं गगनाकारं**, सङ्कल्पादिवृत्त्यभावात् । तथा चेत् सत्ववृत्तिमन्मनो ब्रह्मेत्यत आह— **न मनः केवलः पर** इति ॥ ६० ॥ रजस्तमोवृत्तिकं मनस्तु **मनः कर्माणि जायन्ते** । यस्य **मनश्चेदुन्मनीभूयात्** ॥ ६१ ॥ सात्विकभावापन्नेन **मनसा** तमआदिभावापन्नं **मन आलोक्य** मिथ्येति दृष्ट्वा एवं दर्शनतो **वृत्तिशून्यम्**

[1] दशप्रत्ययो—क, अ २. दृश्यन्ते प्रत्यया दश—अ.

॥ ६२–६३ ॥ आलोक्य स्थितस्य योगिनः दशप्रत्ययदृश्यते—"दशमोऽसि" इति बोधितस्य "दशमोऽस्मि" इति प्रत्ययवत् "तत् त्वमसि" इति बोधि[illegible] "ब्रह्मास्मि" इति प्रत्ययो दृश्यते। ब्रह्मास्मीति ज्ञानमुदेतीति भाव[illegible] ६४–६५ ॥ प्रत्ययगोचरं ब्रह्म कीदृशमित्यत्र बिन्दुनादेति। स्वाज्ञादिदृष्ट्या विराडादिरूपेण बिन्दुनादकलाज्योतिः। ओत्रादेर्विराडादिविलक्षणत्वात् अबिन्दुः ओता, ध्रुवतारकं अनुज्ञातृचैतन्यं, स्वकार्यापेक्षया स्वयं ध्रुवं सत् स्वोपासकभवसागरसन्तारणात्। विराडाद्यनुज्ञात्रन्तकलनाशान्तं अनुज्ञैकरसचैतन्यं, तदतीतं त्वविकल्पचैतन्यम्। यत् त्रिन्द्वादि तदतीतान्तं विभाति वस्तुतः तत् सर्वं परं ब्रह्मेत्युच्यते। स्वातिरिक्तबिन्द्वादिगतहेयांशापह्नवसिद्धनिष्प्रतियोगिकस्वमात्रतया बृंहणात् ब्रह्मत्वं निरंकुशमित्यर्थः ॥ ६६ ॥

प्राणचित्तयोरविनाभावः

हसत्युल्लसति प्रीत्या क्रीडते मोदते तदा।
तनोति जीवनं बुद्ध्या बिभेति सर्वतो भयात् ॥ ६७ ॥
रोधते बुध्यते शोके मुह्यते नवसंपदा।
कम्पते शत्रुकार्येषु कामेन रमते हसन् ॥ ६८ ॥
स्मृत्या कामरतं चित्तं विजानीयात्कलेबरे।
यत्र देशो वसेद्वायुश्चित्तं तद्व[1]सते ध्रुवम् ॥ ६९ ॥
मनश्चन्द्रो रविर्वायुर्दृष्टिरग्निरुदाहृतः।
बिन्दुनादकला ब्रह्मन् विष्णुब्रह्मेशदेवताः ॥ ७० ॥

ब्रह्मातिरेकेण यच्चिन्तनीयं तच्चित्तमित्याह—हसतीति ॥ ६७–६८ ॥ एवं हसनादिकामरमणान्तस्मृत्या। प्राणचित्तयोरविनाभावतामाह—यत्रेति

[1] सति—अ, मु.

॥ ६९ ॥ मनःप्राणदृष्टीनां चन्द्रार्काग्नितां बिन्दुनादकलानां ब्रह्मविष्णवीशतां चाह—मन इति ॥ ७० ॥

नादानुसन्धानं मनोलयहेतुः

सदा नादानुसन्धानात् संक्षीणा वासना भवेत् ।
निरञ्जने [1]विलीयेते मरुन्मनसि पद्मज ॥ ७१ ॥
यो वै नादः स वै बिन्दुस्तद्वै चित्तं प्रकीर्तितम् ।
नादो बिन्दुश्च चित्तं च त्रिभिरैक्यं प्रसाधयेत् ॥ ७२ ॥
मन एव हि बिन्दुश्च उत्पत्तिस्थितिकारणम् ।
मनसोत्पद्यते बिन्दुर्यथा क्षीरं घृतात्मकम् ॥ ७३ ॥

वासनावन्मनोलयहेतुः किमित्यत्र सदेति । वासनाक्षयसमकालं निरञ्जने ॥ ७१ ॥ नादबिन्दुचित्तानामेकत्वं भावनीयमित्याह—य इति ॥ ७२ ॥ कथं पुनः मनोबिन्द्वोरेकत्वमित्यत आह—मन इति ॥ ७३ ॥

मनोयुक्तप्राणाभ्यासविधिः

षट् चक्राणि परिज्ञात्वा प्रविशेत्सुखमण्डलम् ।
प्रविशेद्वायुमाकृष्य तथैवोर्ध्वं नियोजयेत् ॥ ७४ ॥
वायुं बिन्दुं तथा चक्रं चित्तं चैव समभ्यसेत् ।
[2]समाधिनैकेन सममममृतं यान्ति योगिनः ॥ ७५ ॥

सर्वानर्थहेतुमनोविलयार्थं षट्चक्रपरिज्ञानपूर्वकं मनोयुक्तपवनाभ्यासः कर्तव्य इत्याह—षडिति । सुषुम्नाऽन्तर्विलसितं सुखमण्डलम् ॥ ७४ ॥ योगिनः समाधिसमकालं कृतकृत्या भवन्तीत्याह—समाधिनेति ॥ ७५ ॥

[1] विलीयेत—मु. लयं याति—अ. [2] समाधिभे—अ, अ १, अ २, क.

गुरूपदेशपूर्वकं अभ्यासं विना न ज्ञानोदयः

यथाऽग्निर्दारुमध्यस्थो नोत्तिष्ठेन्मथनं विना ।
विना चाभ्यासयोगेन ज्ञानदीपस्तथा न हि ॥ ७६ ॥
घटमध्ये यथा दीपो बाह्ये नैव प्रकाशते ।
भिन्ने तस्मिन् घटे चैव दीपज्वालाऽवभासते ॥ ७७ ॥
स्वकायं घटमित्युक्तं यथा जीवो हि तत्पदम् ।
गुरुवाक्य[1]समं भिन्ने ब्रह्मज्ञानं प्रकाशते ॥ ७८ ॥
कर्णधारं गुरुं प्राप्य तद्वाक्यं प्लववद्दृढम् ।
अभ्यासवासनाशक्त्या तरन्ति भवसागरम् ॥ ७९ ॥

इत्युपनिषत् ॥

अभ्यासं विना ज्ञानं नोदेतीत्यत्र सदृष्टान्तमुत्तरमाह—यथेति ॥ ७६ ॥ किंच—घटमध्ये ॥ ७७ ॥ घटमित्युक्तम्, अत्र प्रथमार्थे द्वितीया । जीवो हि तत्पदं जीवगतहेयांशापाये जीवस्य तत्पदत्वात् । तद्गतस्वाज्ञाने गुरुवाक्यसमं भिन्ने ॥ ७८ ॥ नौकाचालकस्थानीय आचार्यः, प्लवस्थानीयोऽयं तदुपदिष्टार्थः । सन्तस्तमाश्रित्य भवसागरं तरन्तीत्याह—कर्णेति । शिष्याः श्रुत्याचार्यप्रसादजज्ञानसमकालं निष्प्रतियोगिकब्रह्ममात्रावस्थानलक्षणकैवल्यं यान्तीत्यर्थः ॥ ७९ ॥ इतिशब्दः षष्ठाध्यायपरिसमाप्त्यर्थः । उपनिषच्छब्दस्तु शास्त्रपरिसमाप्त्यर्थः ॥

इति षष्ठोऽध्यायः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
योगशिखोपनिषदो व्याख्यानं लिखितं स्फुटम् ।
शिखोपनिषदो व्याख्याग्रन्थः सप्तशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे त्रिषष्टिसंख्यापूरकं योगशिखोपनिषद्विवरणं सम्पूर्णम्

[1] समाप्ति—क, अ १, अ २. समाभासे—अ.

# वराहोपनिषत्

सह नाववतु—इति शान्तिः

## प्रथमोऽध्यायः

तत्त्वसंख्याविकल्पाः

अथ ऋभुर्वै महामुनिर्देवमानेन द्वादशसंवत्सरं तपश्चचार । तदवसाने वराहरूपी भगवान् प्रादुरभूत् । स होवाचोत्तिष्ठोत्तिष्ठ वरं वृणीष्वेति । सोदतिष्ठत् । तस्मै नमस्कृत्योवाच भगवन् कामिभिर्यद्यत्कामितं तत्तत् त्वत्सकाशात्स्वप्नेऽपि न याचे । समस्तवेदशास्त्रेतिहासपुराणानि समस्तविद्याजालानि ब्रह्मादयः सुराः सर्वे त्वद्रूपज्ञानान्मुक्तिमाहुः । अतस्त्वद्रूपप्रतिपादिकां ब्रह्मविद्यां ब्रूहीति होवाच । तथेति स होवाच वराहरूपी भगवान् ।

चतुर्विंशतितत्त्वानि केचिदिच्छन्ति वादिनः ।
केचित् षट्त्रिंशत्तत्त्वानि केचित् षण्णवतीनि च ॥ १ ॥
तेषां [1]क्रमं प्रवक्ष्यामि सावधानमनाः शृणु ।

[1] क्रमात्—क, अ १.

श्रीमद्वराहोपनिषद्वेद्याखण्डसुखाकृति ।
त्रैपान्नारायणख्यातरामचन्द्रपदं भजे ॥

खलु कृष्णयजुर्वेदप्रविभक्तेयं वराहोपनिषत् षण्णवतितत्त्वप्रकाशनज्ञानयोगप्रकटनव्यग्रा निष्प्रतियोगिकब्रह्मप्रणवार्थतुर्यतुर्यपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । तपोब्रह्मचर्यदेवताप्रसादादिसाधनसम्पत्तिनिष्पन्नेयमिति ब्रह्मविद्या महीक्रियते । ऋभुवराहयोः निदाघऋभ्वोश्च प्रश्नप्रतिवचनरूपेयं आख्यायिका ब्रह्मविद्यास्तुत्यर्था । आदावाख्यायिकामवतारयति—**अथेति** । **तपश्चचार** एवमत्युग्रं तपः कृतवान् । **प्रादुरभूत्** स्वपुरतः आविर्भूतवान् । एवमाविर्भूय तत्कृततपःफलदित्सया **स होवाच** । इत्थं भगवद्वाक्यमाकर्ण्य **सोदतिष्ठत्** । उवाच, किमिति ? **भगवन्निति** । पुनरन्यत् किं वाञ्छन् तपश्चरसि इत्युक्ते **समस्तेति** । सर्वे त्वद्रूपाज्ञानप्रभवं बन्धं **त्वद्रूपज्ञानात्** **मुक्तिं** च **आहुः** । ऋभुकृतप्रश्नमंगीकृत्य **तथेति** । आदौ स्वातिरिक्ततत्त्वेयत्तापरिज्ञानाभावे न हि स्वमात्रतत्त्वे शिष्यबुद्धिः प्रसरेदिति स्वातिरिक्ततत्त्वेयत्तामाचष्टे—**चतुरिति** ॥ १ ॥

चतुर्विंशतितत्त्वानि

ज्ञानेन्द्रियाणि पञ्चैव श्रोत्रत्वग्लोचनादयः ॥ २ ॥
कर्मेन्द्रियाणि पञ्चैव वाक्पाण्यङ्घ्र्यादयः क्रमात् ।
प्राणादयस्तु पञ्चैव पञ्च शब्दादयस्तथा ॥ ३ ॥
मनोबुद्धिरहंकारश्चित्तं चेति चतुष्टयम् ।
चतुर्विंशतितत्त्वानि तानि ब्रह्मविदो विदुः ॥ ४ ॥

किं तदित्यत्र—**ज्ञानेति** ॥ २–४ ॥

षट्त्रिंशत्तत्त्वानि

एतैस्तत्त्वैः समं पञ्चीकृतभूतानि पञ्च च ।
पृथिव्यापस्तथा तेजो वायुराकाश एव च ॥ ५ ॥
देहत्रयं स्थूलसूक्ष्मकारणानि विदुर्बुधाः ।
अवस्थात्रितयं चैव जाग्रत्स्वप्नसुषुप्तयः ॥ ६ ॥
आहत्य तत्त्वंजातानां षट्त्रिंशन्मुनयो विदुः ।

षट्त्रिंशत्तत्त्वानि कानीत्यत्र—एतैरिति ॥ ५–६ ॥

षण्णवतितत्त्वानि

पूर्वोक्तैस्तत्त्वजातैस्तु समं तत्त्वानि योजयेत् ॥ ७ ॥
षड्भावविकृतिश्चास्ति जायते वर्धतेऽपि च ।
परिणामं क्षयं नाशं षड्भावविकृतिं विदुः ॥ ८ ॥
अशना च पिपासा च शोकमोहौ जरा मृतिः ।
एते षडूर्मयः प्रोक्ताः षट्कोशानथ [1]वच्मि ते ॥ ९ ।
त्वक रक्तं मांसमेदोमज्जास्थीनि निबोधत ।
कामक्रोधौ लोभमोहौ मदो मात्सर्यमेव च ॥ १० ॥
एतेऽरिषट्का विश्वश्च तैजसः प्राज्ञ एव च ।
जीवत्रयं सत्त्वरजस्तमांसि च गुणत्रयम् ॥ ११ ॥
प्रारब्धागाम्यर्जितानि कर्मत्रयमितीरितम् ।
वचनादानगमनविसर्गानन्दपञ्चकम् ॥ १२ ॥

[1] चोच्यते—क, अ १, अ २.

संकल्पोऽध्यवसायश्च अभिमानोऽवधारणा ।
मुदिता करुणा मैत्री उपेक्षा च चतुष्टयम् ॥ १३ ॥
दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमृत्युकाः ।
तथा चन्द्रश्चतुर्वक्त्रो रुद्रः क्षेत्रज्ञ [1]ईश्वरः ॥ १४ ॥
आहत्य तत्त्वजातानां षण्णवत्यस्तु कीर्तिताः ।

षण्णवतितत्त्वानि कानीत्यत्र—पूर्वोक्तैरिति ॥ ७–१४ ॥

तत्त्वातीतभगवद्भक्तस्यैव मुक्तिः

पूर्वोक्ततत्त्वजातानां वैलक्षण्यमनामयम् ॥ १५ ॥
वराहरूपिणं मां ये भजन्ति मयि [2]तत्त्वतः ।
विमुक्ताज्ञानतत्कार्या जीवन्मुक्ता भवन्ति ते ॥ १६ ॥

उक्ततत्त्वेषु त्वं कीदृशः त्वज्ज्ञानफलं किं इत्यत आह—पूर्वोक्तेति ॥ १५–१६ ॥

तत्त्वज्ञानफलम्

ये षण्णवतितत्त्वज्ञा यत्र कुत्राश्रमे रताः ।
जटी मुण्डी शिखी वाऽपि मुच्यते नात्र संशयः ॥ १७ ॥
इति ॥

विशिष्टतत्त्वज्ञानफलमाह—य इति । सांख्यपरिगृहीतषण्णवतितत्त्वानि शैवपरिगृहीतषट्त्रिंशत्तत्त्वे अन्तर्भवन्ति । तानि च वेदान्त्येकदेशिपरिगृहीत-

[1] ईश्वराः—क, अ १, अ २. [2] भक्तितः—क, अ, अ १, अ २.

चतुर्विंशतितत्त्वेषु अन्तर्भवन्ति । पुनस्तान्यपि स्वातिरिक्तमायैकतत्त्वे अन्तर्भवन्ति, सर्वस्य मायाकार्यत्वात् । स्वातिरिक्तमायातत्त्वस्य निष्प्रतियोगिकाभावरूपतया निष्प्रतियोगिकब्रह्मतत्त्वमात्रमवशिष्यत इति सर्ववेदान्तसिद्धान्तार्थः [illegible] ॥ इतिशब्दः अध्यायसमाप्त्यर्थः ॥

इति प्रथमाऽध्यायः

# द्वितीयोऽध्यायः

साधनचतुष्टयसम्पत्तिः

ऋभुर्नाम महायोगी क्रोडरूपं रमापतिम् ।
वरिष्ठां ब्रह्मविद्यां त्वमधीहि भगवन्मम ॥ १ ॥
एवं स पृष्टो भगवान् प्राह भक्तार्तिभञ्जनः ।
स्ववर्णाश्रमधर्मेण तपसा गुरुतोषणात् ॥ २ ॥
साधनं प्रभवेत्पुंसां [1]वैराग्यादिचतुष्टयम् ।
नित्यानित्यविवेकश्च इहामुत्र विरागता ॥ ३ ॥
शमादिषट्कसंपत्तिर्मुमुक्षा तां समभ्यसेत् ।

एवं सामान्यतः ब्रह्मतत्त्वमवगम्य विस्पष्टं ससाधनं ब्रह्मतत्त्वं ज्ञातुमिच्छन् मुनिः भगवन्तं पृच्छतीत्याह—ऋभुरिति ॥ १ ॥ किं प्राहेत्यत्र आदौ साधनानुष्ठानं कर्तव्यमित्याह—स्ववर्णेति ॥ २ ॥ किं तदभ्यसनीयचतुष्टयसाधनमित्यत्राह—नित्येति । ब्रह्मैव नित्यं ब्रह्मातिरिक्तं अनित्यं इति नित्यानित्य-

[1] विवेकादि—अ;

विवेकः इह स्रक्चन्दनवनितादिषु अमुत्र स्वर्गादिभोगेषु च वान्ताशनमूत्रपुरीषादिष्विव इच्छाराहित्यं इहामुत्रविरागता ॥ ३ ॥ शमः दमः उपरतिः तितिक्षा श्रद्धा समाधानं चेति शमादिषट्कसम्पत्तिः । अन्तःकरणनिग्रहः शमः बाह्यकरणनिग्रहो दमः, उपरतिः सर्वकर्मसंन्यासः, शीतोष्णादिद्वन्द्वसहनं तितिक्षा, श्रुत्याचार्यवाक्यविश्वासः श्रद्धा, चित्तैकाग्रता समाधानम् । स्वातिरिक्तभ्रमतो मोक्तुमिच्छा मुमुक्षा । इत्थं साधनचतुष्टयाभ्यासतो जितेन्द्रियो भवतीत्यर्थः ॥

### ब्रह्मात्मज्ञान्येव कृतकृत्यः

एवं जितेन्द्रियो भूत्वा सर्वत्र ममतामतिम् ॥ ४ ॥
विहाय साक्षिचैतन्ये मयि कुर्यादहंमतिम् ।
दुर्लभं प्राप्य मानुष्यं तत्रापि नरविग्रहम् ॥ ५ ॥
ब्राह्मण्यं च महाविष्णोर्वेदान्तश्रवणादिना ।
अतिवर्णाश्रमं रूपं सच्चिदानन्दलक्षणम् ॥ ६ ॥
यो न जानाति सोऽविद्वान् कदा मुक्तो भविष्यति ।

ब्रह्मातिरिक्तत्यागपूर्वकं ब्रह्ममात्रमतिं कुर्यादित्याह—एवमिति ॥ ४ ॥ एवं ज्ञानसाधनब्राह्मणादिदेहमाश्रित्य यः स्वात्मतत्त्वं न जानाति स कदा मुक्तो भवति? न कदेत्याह—दुर्लभमिति ॥ ५ ॥ वेदान्तश्रवणादिनिष्पन्नं महाविष्णोः व्यक्तलिंगं पारिव्राज्यं अव्यक्तलिंगं अतिवर्णाश्रममित्यर्थः ॥ ६ ॥

### आत्मनः सुखरूपत्वम्

अहमेव सुखं नान्यदन्यच्चेन्नैव तत्सुखम् ॥ ७ ॥

अमदर्थं न हि प्रेयो मदर्थं [तु] [तत्] स्वतःप्रियम् ।

परप्रेमास्पदतया मा न भूवमहं सदा ॥ ८ ॥

भूयासमिति यो द्रष्टा सोऽहं विष्णुर्मुनीश्वर ।

स्वात्मन एव सर्वप्रेमास्पदत्वमाह—अहमिति । अहं प्रत्यगेव परमानन्द परमसुखं ब्रह्म भवामि नान्यत्, ब्रह्मातिरिक्तान्यस्य मृग्यत्वात् । वस्तुतो यद्यन्यत् तदा तद्ब्रह्म निष्प्रतियोगिकसुखं नैव भवति, "यो वै भूमा तत् सुखं" इति भूमब्रह्मणो निष्प्रतियोगिकसुखस्वरूपमात्रतावादिश्रुतेः ॥ ७ ॥ अत एव यत् मदर्थं तदेव सुखं, अमदर्थं तु न हि सुखं भवितुमर्हति । मदर्थमपि न हि प्रियं भवतीति चेन्न; तत् स्वत एव प्रियं भवतीत्यर्थः । स्वात्मानं सुखरूपतया यो जानाति सोऽहं विष्णुरित्याह—परेति । अहं निर्विशेषसुखरूपतया मा भूवमिति न किं तु भूयासमेवेत्यर्थः ॥ ८ ॥

आत्मनः स्वयंप्रकाशत्वम्

न प्रकाशोऽहमित्युक्तिर्यत्प्रकाशैकबन्धना ॥ ९ ॥

स्वप्रकाशं तमात्मानमप्रकाशः कथं स्पृशेत् ।

स्वयं भातं निराधारं ये जानन्ति सुनिश्चितम् ॥ १० ॥

ते हि विज्ञानसंपन्ना इति मे निश्चिता मतिः ।

सत्तामात्रत्वात् यत् सन्मात्रं तदेव स्वयंप्रकाशं ब्रह्मेत्याह—नेति । न प्रकाशोऽहमिति यत्प्रकाशतः पश्यति तत्स्वरूपं प्रकाशमात्रम् ॥ ९ ॥ तस्याप्रकाशग्रासत्वात् अप्रकाशस्पर्शो न युज्यत इत्यर्थः । एवं स्वयंप्रकाशमात्मानं ये मन्यन्ते ते कृतकृत्या इति मन्येऽहमित्याह—स्वयमिति ॥ १० ॥

आत्मनः मायातत्कार्यविलक्षणत्वम्

स्वपूर्णात्मातिरेकेण जगज्जीवेश्वरादयः ॥ ११ ॥

न सन्ति नास्ति माया च तेभ्यश्चाहं विलक्षणः ।
अज्ञानान्धतमोरूपं कर्मधर्मादिलक्षणम् ॥ १२ ॥
स्वयंप्रकाशमात्मानं नैव मां [1]स्प्रष्टुमर्हति

परमार्थदृष्ट्या स्वातिरिक्तं न किञ्चिदस्ति । यदि स्वाज्ञदृष्ट्या स्यात् तदा स्वज्ञदृष्ट्या तद्विलक्षणोऽस्मीत्याह—स्वेति ॥ ११ ॥ स्वातिरिक्तविलक्षणमपि त्वां स्वातिरिक्तं स्पृशेदित्यत आह—अज्ञानेति ॥ १२ ॥

ब्रह्मात्मज्ञानिनः ब्रह्मभावः

सर्वसाक्षिणमात्मानं वर्णाश्रमवि[2]लक्षणम् ॥ १३ ॥
ब्रह्मरूपतया पश्यन् ब्रह्मैव भवति स्वयम् ।
भासमानमिदं सर्वं भानरूपं परं पदम् ॥ १४ ॥
पश्यन् वेदान्तमानेन सद्य एव विमुच्यते ।
देहात्मज्ञानवज्ज्ञानं देहात्मज्ञानबाधकम् ॥ १५ ॥
आत्मन्येव भवेद्यस्य स नेच्छन्नपि मुच्यते ।

प्रत्यक्प्रकाशमात्मानं ब्रह्मेति यो जानाति स प्रत्यगभिन्नं ब्रह्मैव भवतीत्याह—सर्वेति ॥ १३ ॥ भानातिरेकेण भास्यं नेति ज्ञानी भास्यभावतो विमुच्यत इत्याह—भासमानमिति ॥ १४ ॥ एवं सम्यज्ज्ञानी स्वयमेव मुच्यत इत्याह—देहेति ॥ १५ ॥

आत्मज्ञानिनः कर्मबन्धाभावः

सत्यज्ञानानन्दपूर्णलक्षणं तमसः परम् ॥ १६ ॥

[1] द्रष्टु—अ, अ १.  [2] वर्जितम्—क, अ, अ १, अ २.

ब्रह्मानन्दं सदा पश्यन् कथं बध्येत कर्मणा ।
त्रिधामसाक्षिणं सत्यज्ञानानन्दादिलक्षणम् ॥ १७ ॥
त्वमहंशब्दलक्ष्यार्थमसक्तं सर्वदोषतः ।

स्वात्मदर्शिनः कर्मबन्धासम्भवमाह—सत्येति ॥ १६ ॥ स्वात्मनः कर्मबन्धाभावे हेतुः असक्तत्वमित्याह—त्रिधामेति ॥ १७ ॥

अज्ञानिज्ञानिनोः दर्शनस्थितिवैलक्षण्यम्

सर्वगं सच्चिदानन्दं ज्ञानचक्षुर्निरीक्षते[1] ॥ १८ ॥
अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ।
प्रज्ञानमेव तद्ब्रह्म सत्य[2]प्रज्ञानलक्षणम् ॥ १९ ॥
एवं ब्रह्मपरिज्ञानादेव मर्त्योऽमृतो भवेत् ।
तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ॥ २० ॥
विदित्वा स्वात्मनो रूपं न बिभेति कुतश्चन ।
चिन्मात्रं सर्वगं नित्यं संपूर्णं सुखमव्ययम् ॥ २१ ॥
साक्षाद्ब्रह्मैव नान्योऽस्तीत्येवं ब्रह्मविदां स्थितिः ।
अज्ञस्य दुःखौघमयं ज्ञस्यानन्दमयं जगत् ॥ २२ ॥
अन्धं भुवनमन्धस्य प्रकाशं तु सुचक्षुषाम् ।

ज्ञानचक्षुः स्वात्मानं सर्वासक्तं पश्यति, स्वाज्ञानचक्षुस्तु दिवान्धवत् भास्वन्तमात्मानं न पश्यतीत्याह—सर्वगमिति ॥ १८ ॥ यादृग्ब्रह्मज्ञानी तादृग्ब्रह्मैव भवतीत्याह—प्रज्ञानमिति ॥ १९ ॥ ब्रह्मज्ञानी कुतश्चित् न बिभेतीत्याह—तदिति ॥ २० ॥ निर्भयब्रह्मविदां स्थितिः केत्यत आह—चिन्मात्रमिति ॥ २१ ॥ स्वज्ञगृहीतं स्वाज्ञो विपरीतं पश्यतीत्याह—अज्ञस्येति ॥ २२ ॥

[1] क्ष्यते—क, अ १, अ २.   [2] ज्ञानादि—क, अ २.

आत्मनि वस्तुतो बन्धमुक्त्यभावः

अनन्ते सच्चिदानन्दे मयि वाराहरूपिणि ॥ २३ ॥
स्थितेऽद्वितीयभावः स्यात् को बन्धः कश्च मुच्यते ।
स्वस्वरूपं तु चिन्मात्रं सर्वदा सर्वदेहिनाम् ॥ २४ ॥
नैव देहादिसंघातो घटवद्दृशिगोचरः ।
स्वात्मनोऽन्यतया भातं चराचरमिदं जगत् ॥ २५ ॥
स्वात्ममात्रतया बुद्ध्वा तदस्मीति विभावय ।
स्वस्वरूपं स्वयं भुङ्क्ते नास्ति भोज्यं पृथक् स्वतः ॥ २६ ॥
अस्ति चेदस्तितारूपं ब्रह्मैवास्तित्वलक्षणम् ।
ब्रह्मविज्ञानसंपन्नः प्रतीतमखिलं जगत् ॥ २७ ॥
पश्यन्नपि सदा नैव पश्यति स्वात्मनः पृथक् ।
मत्स्वरूपपरिज्ञानात् कर्मभिर्न स बध्यते ॥ २८ ॥
यः शरीरेन्द्रियादिभ्यो विहीनं सर्वसाक्षिणम् ।
परमार्थैकविज्ञानं सुखात्मानं स्वयंप्रभम् ॥ २९ ॥
स्वस्वरूपतया सर्वं वेद स्वानुभवेन यः ।
स धीरः स तु विज्ञेयः सोऽहं तत्त्वं ऋभो भव ॥ ३० ॥
अतः प्रपञ्चानुभवः सदा न हि
स्वरूपबोधानुभवः सदा खलु ।
इति प्रपश्यन् परिपूर्णवेदनो
न बन्धमुक्तो न च बद्ध एव तु ॥ ३१ ॥

वस्तुतो मम निष्प्रतियोगिकाद्वितीयत्वेन न कोऽपि बद्धो मुक्तो वा भवितुमर्हतीत्याह—अनन्त इति ॥ २३ ॥ अद्वितीयभावेन को [illegible]ध्यः । "चिन्मात्रमेव चिन्मात्रं" इति श्रुत्यनुरोधेन स्वस्वरूपमेव नि[illegible] न अन्यदित्याह—स्वस्वरूपमिति ॥ २४ ॥ स्वातिरिक्तदेहादिकं स्व[illegible] । चिन्तयेत्याह—स्वात्मन इति ॥ २५ ॥ स्वातिरिक्तं नास्त्येव । यद्य[illegible]ते भ्रान्तिस्तदा तदप्यस्तित्वं ब्रह्मेत्याह—स्वेति ॥ २६ ॥ स्वज्ञानी स्वातिरिक्तं स्वातिरिक्तत्वेन न पश्यति, किंतु स्वमात्रतया पश्यतीत्याह—ब्रह्मेति ॥ २७ ॥ कर्मबन्धे सति कथं एवं पश्यतीत्यत आह—मदिति ॥ २८ ॥ शरीरादौ सति कथं एवं न बध्यते इत्याशंक्य तद्विलक्षणत्वेन आत्मानं यः पश्यति सोऽहमेव स्यामित्याह—य इति ॥ २९–३० ॥ एवं मद्भावापन्नस्य स्वात्मानुभूतिं विनाऽनात्मप्रपञ्चानुभूतिः नास्ति । एवं स्वात्मानुभूतियोगिनो बन्धमोक्षविभ्रमो नास्तीत्याह—अत इति ॥ ३१ ॥

बन्धनिवृत्तये ब्रह्मात्मानुसन्धानम्

स्वस्वरूपानुसंधानान्नृत्यन्तं सर्वसाक्षिणम् ।
मुहूर्तं चिन्तयेन्मां यः सर्वबन्धैः प्रमुच्यते ॥ ३२ ॥

सर्वभूतान्तरस्थाय नित्यमुक्तचिदात्मने ।
प्रत्यक्चैतन्यरूपाय मह्यमेव नमो नमः ॥ ३३ ॥

त्वं वाऽहमस्मि भगवोऽहं वै त्वमसि देवते ।
तुभ्यं मह्यमनन्ताय मह्यं तुभ्यं चिदात्मने ॥ ३४ ॥

नमो मह्यं परेशाय नमस्तुभ्यं शिवाय च ।
किं करोमि क्व गच्छामि किं गृह्णामि त्यजामि किम् ॥ ३५ ॥

यन्मया पूरितं विश्वं महाकल्पाम्बुना यथा ।

अन्तःसङ्गं बहिःसङ्गमात्मसङ्गं च यस्त्यजेत् ।

सर्वसङ्गनिवृत्तात्मा स मामेति न संशयः ॥ ३६ ॥

अहिरिव जनयोगं सर्वदा वर्जयेद्यः

कुणपमिव सुनारीं त्यक्तकामो विरागी ।

विषमिव विषयादीन् मन्यमानो दुरन्तान्

जगति परमहंसो वासुदेवोऽहमेव ॥ ३७ ॥

इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते ।

अहं सत्यं परं ब्रह्म मत्तः किंचिन्न विद्यते ॥ ३८ ॥

बन्धनिवृत्तिहेतुः किमित्याशंक्य मच्चिन्तनमित्याह—स्वेति ॥ ३२ ॥ प्रत्यगभिन्नब्रह्मानुसन्धानप्रकारमाह—सर्वेति ॥ ३३–३४ ॥ स्वस्याविक्रियतां परिपूर्णतामप्याह—किं करोमीति ॥ ३५ ॥ तव विभुत्वेन सर्वेऽपि त्वामेव प्रतिपद्यन्ते इत्यत्र—मां नित्यं प्राप्ता अपि स्वातिरिक्तसंगिनो मां नाप्नुवन्ति । तत्र यः कश्चित् स्वान्तर्बाह्यसंगविरळो भवति स एव मां एतीत्याह— अन्तरिति ॥ ३६ ॥ स्वातिरिक्तसंगत्यागोपायं तज्ज्ञानफलं चाह—अहिरिति ॥ ३७ ॥ अहमेव वासुदेवः सत्यं, मदतिरिक्तं असत्यं न विद्यते, मदतिरिक्तस्य मृग्यत्वादित्याह—इदमिति ॥ ३८ ॥

ब्रह्माप्तिसाधनभूतस्योपवासस्य निर्वचनम्

उप समीपे यो वासो जीवात्मपरमात्मनोः ।

उपवासः स विज्ञेयो न तु कायस्य शोषणम् ॥ ३९ ॥

कायशोषणमात्रेण का तत्र ह्यविवेकिनाम् ।

वल्मीकताडनादेव मृतः किं नु महोरगः ॥ ४० ॥

सत्यब्रह्मात्युपायः क इत्यत आह—उपेति ॥ ३९–४० ॥

जीवन्मुक्तिसाधनं अपरोक्षज्ञानम्

अस्ति ब्रह्मेति चेद्वेद परोक्षज्ञानमेव तत् ।
अहं ब्रह्मेति चेद्वेद साक्षात्कारः स उच्यते ॥ ४१ ॥
यस्मिन् काले स्वमात्मानं योगी जानाति केवलम् ।
तस्मात् कालात् समारभ्य जीवन्मुक्तो भवेदसौ ॥ ४२ ॥
अहं ब्रह्मेति नियतं मोक्षहेतुर्महात्मनाम् ।

परोक्षापरोक्षज्ञानस्वरूपमाह—अस्तीति ॥ ४१ ॥ अपरोक्षज्ञानसमकालं जीवन्मुक्तो भवतीत्याह—यस्मिन्निति ॥ ४२ ॥ सदा अहं ब्रह्मेति ज्ञानं मोक्षहेतुरित्याह—अहमिति ॥

बाह्यान्तश्चिन्तात्यागविधिः

द्वे पदे बन्धमोक्षाय निर्ममेति ममेति च ॥ ४३ ॥
ममेति बध्यते जन्तुर्निर्ममेति विमुच्यते ।
बाह्यचिन्ता न कर्तव्या तथैवान्तरचिन्तिका ।
सर्वचिन्तां समुत्सृज्य स्वस्थो भव सदा ऋभो ॥ ४४ ॥

देहादावहंकारममकारभावाभावौ बन्धमोक्षहेतू भवतः इत्याह—द्वे इति ॥ ४३ ॥ अहंभावाद्यनुदयहेतुः बाह्यान्तश्चिन्तात्याग एवेत्याह—बाह्येति ॥४४॥

भगवच्चिन्तनमेव सर्वचिन्तात्यागोपायः

संकल्पमात्रकलनेन जगत्समग्रं
संकल्पमात्रकलने हि जगद्विलासः ।

सकल्पमात्रमिदमुत्सृज निर्विकल्प-

माश्रित्य मामकपदं हृदि भावयस्व ॥ ४५ ॥

मच्चिन्तनं मत्कथनमन्योन्यं मत्प्रभाषणम्

मदेकपरमो भूत्वा कालं नय महामते ॥ ४६ ॥

चिदिहास्तीति चिन्मात्रमिदं चिन्मयमेव च ।

चित्त्वं चिदहमेते च लोकाश्चिदिति भावय ॥ ४७ ॥

रागं नीरागतां नीत्वा निर्लेपो भव सर्वदा ।

चिन्तामूलसङ्कल्पमुन्मूल्य निर्विकल्पं मां आश्रयेत्याह—सङ्कल्पेति ॥ ४५ ॥ सङ्कल्पत्यागोपायमाह—मदिति ॥ ४६ ॥ त्वच्चिन्तनं कीदृशं इत्यत्र सर्वं चिन्मात्रमिति चिन्तनमित्याह—चिदिति ॥ ४७ ॥ स्वातिरिक्तविषये रागम् ॥

सर्वकल्पनातीतं ब्रह्मैव चिन्तनीयम्

अज्ञानजन्यकर्त्रादिकारकोत्पन्नकर्मणा ॥ ४८ ॥

श्रुत्युत्पन्नात्मविज्ञानप्रदीपो बाध्यते कथम् ।

अनात्मतां परित्यज्य निर्विकारो जगत्स्थितौ ॥ ४९ ॥

एकनिष्ठतयाऽन्तस्स्थसंविन्मात्रपरो भव ।

घटाकाशमठाकाशौ महाकाशे प्रतिष्ठितौ ॥ ५० ॥

एवं मयि चिदाकाशे जीवेशौ परिकल्पितौ ।

या च प्रागात्मनो मे मा तथाऽन्ते च तिरस्कृता ॥ ५१ ॥

ब्रह्मवादिभिरुद्गीता सा मायेति विवेकतः ।
मायातत्कार्यविलये नेश्वरत्वं न जीवता ॥ ५२ ॥
ततः शुद्धश्चिदेवाहं व्योमवन्निरुपाधिकः ।
जीवेश्वरादिरूपेण चेतनाचेतनात्मकम् ॥ ५३ ॥
ईक्षणादिप्रवेशान्ता सृष्टिरीशेन कल्पिता ।
जाग्रदादिविमोक्षान्तः संसारो जीवकल्पितः ॥ ५४ ॥
[1]त्रिणाचिकादियोगान्ता ईश्वरभ्रान्तिमाश्रिताः ।
लोकायतादिसांख्यान्ता जीवविभ्रान्तिमाश्रिताः ॥ ५५ ॥
तस्मान्मुमुक्षुभिर्नैव मतिर्जीवेशवादयोः ।
कार्या किं तु ब्रह्मतत्त्वं निश्चलेन विचार्यताम् ॥ ५६ ॥
अद्वितीयब्रह्मतत्त्वं न जानन्ति [2]यथा यथा ।
भ्रान्ता एवाखिलास्तेषां क्व मुक्तिः क्वेह वा सुखम् ॥ ५७ ॥

कर्मलेपस्यानिवार्यत्वात् निर्लेपत्वं कुतो मे स्यादित्यत आह—अज्ञानेति ॥ ४८ ॥ अनात्मनि सति स्वात्ममात्रज्ञानं कथं उदेतीत्यत आह—अनात्मतामिति ॥ ४९ ॥ जीवेशभेदे सति संविन्मात्रपरता कुतो मे स्यादित्यत आह—घटेति ॥ ५० ॥ जीवेशादिकल्पनामूलमायायाः सत्त्वात् निर्मायभावः कथं मे स्यात् इत्यत्र मायामूलविचारतो निर्मायं ब्रह्म प्रसीदतीत्याह—या चेति ॥ ५१–५२ ॥ उक्तलक्षणलक्षितजीवेशादिनानाकल्पनां हित्वा निर्विकल्पाद्वैतब्रह्मैव सदा चिन्त्यमित्याह—जीवेति । "जीवेश्वरादिरूपेण" इत्यादि "निश्चलेन विचार्यतां" इत्यन्तं महोपनिषदि व्याख्यातम् ॥ ५३–५६ ॥ एवं अखण्डैकरसब्रह्माज्ञानिनो भ्रान्ता एवेत्याह—अद्वितीयेति ॥ ५७ ॥

[1] त्रिणा च—क, अ. त्रिणार्च—अ १. [2] यदा तदा—अ, अ १.

प्रत्यगभिन्नब्रह्म सर्वावस्थाऽतीतम्

उत्तमाधमभावश्चेत्तेषां स्यादस्ति तेन किम् ।
स्वप्नस्थराज्यभिक्षाभ्यां प्रबुद्धः [1]स्पृश्यते खलु ॥ ५८ ॥
अज्ञाने बुद्धिविलये निद्रा सा भण्यते बुधैः ।
विलीनाज्ञानतत्कार्ये मयि निद्रा कथं भवेत् ॥ ५९ ॥
बुद्धेः पूर्णविकासोऽयं जागरः परिकीर्त्यते ।
विकारादिविहीनत्वाज्जागरो मे न विद्यते ॥ ६० ॥
सूक्ष्मनाडिषु संचारो बुद्धेः स्वप्नः प्रजायते ।
संचारधर्मरहिते मयि [2]स्वप्नो न विद्यते ॥ ६१ ॥

शिवजीवाद्युत्तमाधमभेदे सति कथं अद्वितीयब्रह्मज्ञानं उदेतीत्यत्र सदृष्टान्तं तन्निराकरोति —**उत्तमेति** ॥ ५८ ॥ अवस्थात्रयावृतस्य तुर्यानन्दानुभवः कुत इत्यत आह—**अज्ञान** इति । निद्रा सुषुप्तिः ॥ ५९–६१ ॥

निर्विशेषब्रह्मज्ञानेन ब्रह्मभावः

सुषुप्तिकाले सकले विलीने तमसाऽऽवृते ।
स्वरूपं महदानन्दं भुङ्क्ते [3]दृश्यविवर्जितः ॥ ६२ ॥
अविशेषेण सर्वं तु यः पश्यति चिदन्वयात् ।
स एव साक्षाद्विज्ञानी स शिवः स हरिर्विधिः ॥ ६३ ॥

एवं स्वातिरिक्तप्रपञ्चसुषुप्तिकाले ॥ ६२ ॥ चितः सर्वावस्थानुस्यूतज्ञानी चिदेव भवतीत्याह—**अविशेषेणेति** ॥ ६३ ॥

[1] स्पृशते—अ, अ १. [2] स्वापो—अ, अ १. [3] विश्व—अ, अ १.

जगद्विलापनपुरस्सरं ब्रह्मैकत्वचिन्तनम्

दीर्घस्वप्नमिदं यत्तद्दीर्घं वा चित्तविभ्रमम् ।
दीर्घं वाऽपि मनोराज्यं संसारं दुःखसागरम्
सुप्तेरुत्थाय सुप्त्यन्तं ब्रह्मैकं प्रविचिन्त्यताम् ॥ ६४ ॥

आरोपितस्य जगतः प्रविलापनेन
चित्तं मदात्मकतया परिकल्पितं नः ।
शत्रून्निहत्य गुरुषट्कगणान्निपातात्
गन्धद्विपो भवति केवलमद्वितीयः ॥ ६५ ॥

अवस्थात्रयसंसृतेः चित्तविकल्पतामाह—दीर्घेति । दुःखसागरं विद्धीत्यर्थः । यत एवं अतः तच्छान्तये सुप्तेरुत्थाय ॥ ६४ ॥ केनोपायेन ब्रह्मैकमिति चिन्त्यमित्यत आह—आरोपितस्येति । स्वाज्ञदृष्ट्या आरोपितस्य प्रविलापनेन विलापनाधिष्ठानमवशिष्यते । तत्राखण्डाकारवृत्तिमत् चित्तं मत्स्वरूपमेव भवतीत्यर्थः । शत्रून् सच्चिदानन्दावरणान् कामाद्यरिषड्वर्गान् वा गुरुषट्कगणात् गणेन शमादिषड्गुणासिना निहत्य निर्मूल्य इत्थं शत्रुनिपातात् निपातेन आत्मा गन्धद्विपो मत्तगज इव केवलं अद्वितीयः स्वात्मा अवशिष्यत इत्यर्थः ॥ ६५ ॥

प्रत्यगभिन्नब्रह्मविषयको विद्वदनुभवः

अद्यास्तमेतु वपुराशशितारमास्तां
कस्तावताऽपि मम चिद्वपुषो विशेषः ।
कुम्भे विनश्यति चिरं समवस्थिते वा
कुम्भाम्बरस्य न हि कोऽपि विशेषलेशः ॥ ६६ ॥

अहिनिर्ल्वयिनी सर्पनिर्मोको जीववर्जितः ।
वल्मीके पतितस्तिष्ठेत्तं सर्पो नाभिमन्यते ॥ ६७ ॥
एवं स्थूलं च सूक्ष्मं च शरीरं नाभिमन्यते ।
प्रत्यग्ज्ञानशिखिध्वस्ते मिथ्याज्ञाने सहेतुके ।
नेति नेतीति [1]रूपत्वादशरीरो भवत्ययम् ॥ ६८ ॥

शास्त्रेण नश्येत् परमार्थदृष्टिः
कार्यक्षमं नश्यति चापरोक्ष्यात् ।
प्रारब्धनाशात् प्रतिभाननाश
एवं त्रिधा नश्यति चात्ममाया ॥ ६९ ॥

ब्रह्मत्वे योजिते स्वस्मिन् जीवभावो न गच्छति ।
अद्वैते बोधिते तत्त्वे वासना विनिवर्तते ॥ ७० ॥
आरब्धान्ते देहहानिर्मायेत्थं क्षीयतेऽखिला ।
अस्तीत्युक्ते जगत्सर्वं सद्रसं ब्रह्म तद्भवेत् ॥ ७१ ॥
भातीत्युक्ते जगत्सर्वं भानं ब्रह्मैव केवलम् ।
मरुभूमौ जलं सर्वं मरुभूमात्रमेव तत् ।
जग[2]त्त्रयमिदं सर्वं चिन्मात्रं स्वविचारतः ॥ ७२ ॥

अज्ञानमेव न कुतो जगतः प्रसङ्गो
जीवेशदेशिकविकल्पकथाऽतिदूरे ।
एकान्तकेवलचिदेकरसस्व[3]भावे
ब्रह्मैव केवलमहं परिपूर्णमस्मि ॥ ७३ ॥

[1] दूर—क.
[2] द्रूप—क, अ २.
[3] भावो—अ २.

**बोधचन्द्रमसि पूर्णविग्रहे**
**मोहराहुमुषितात्मतेजसि ।**
**स्नानदानयजनादिकाः क्रिया**
**मोचनावधि वृथैव तिष्ठते ॥ ७४ ॥**

मद्भावापन्नविद्वदनुभव एवं भवतीत्याह—**अग्नेति** । तत्र दृष्टान्तस्तु **कुम्भे विनश्यति** ॥ ६६ ॥ विदुषोऽपि शरीरदर्शनात् अशरीरत्वं कुत इत्याशंक्य "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति श्रुत्यनुरोधेन स्वाज्ञविकल्पितशरीरत्रये स्वात्मात्मीयाभिमतिवैकल्यमेव अशरीरत्वमिति सदृष्टान्तमाह—**अहिनिर्ल्वयिनीति** ॥ ६७ ॥ **विद्वान् एवम्** ॥ ६८ ॥ शरीरत्रयहेतुमायायां सत्यां कथं अशरीरत्वं इत्याशंक्य शास्त्रजन्यज्ञानविज्ञानसम्यक्तत्त्वज्ञानतो ब्रह्मातिरेकेण माया नास्तीति माया निर्मायं पदं भजति, तत्समकालं मायाकार्यागाम्यादिकर्मत्रयमपि सवासनं क्षीयते, ततो विद्वान् अशरीरब्रह्ममात्रतया अवशिष्यत इत्याह—**शास्त्रेणेति** । ब्रह्मैव सत्यं ब्रह्मातिरिक्तं न किञ्चिदस्ति इति शास्त्रजन्यज्ञानात् मायायाः **परमार्थदृष्टिः** नश्यति । तेन तद्बीजांशप्रभवभ्रान्तिजतादात्म्यास्पदागामिकर्मणोऽश्लेषो भवति । तदा स्वातिरिक्तं व्यावहारिकं प्रतिभाति । पूर्वाभ्यस्तशास्त्रजन्यज्ञानमनुभवारूढं चेत् विज्ञानपदं भजति तेन यत् **कार्यक्षमं** व्यावहारिकं तत् **नश्यति** । तेन स्वातिरिक्तं प्रातिभासिकं भाति । तेन सहजतादात्म्यास्पदसञ्चितकर्मापि नश्यति । विज्ञानिनः प्रारब्धकर्म भोगेन क्षीयते, न हि तदानीं नश्यति, आरब्धत्वात् । विज्ञानं दृढानुभवकलितं चेत् सम्यज्ज्ञानपदं भजति । तेन प्रातिभासिकतया भातं स्वातिरिक्तं शून्यभावं भजति । तेन कर्मजतादात्म्यास्पदमायास्थूलांशारब्धं कर्मापि नश्यति । **प्रारब्धनाशसमकालं** मायायाः शून्यतया प्रतिभासोऽपि नश्यति । **एवं माया त्रेधा** विनश्यतीत्यर्थः । यदा स्वातिरिक्तसामान्यमस्ति नास्तीति विभ्रमापह्नवो भवति एवं स्वातिरिक्तापह्नववृत्तिः तत्त्वज्ञानपदं भजति । तेन ब्रह्म निष्प्रतियोगिकस्वमात्रमिति विद्वान् अवशिष्यत इति भावः ॥ ६९ ॥ **उक्तार्थमेव पुनः**

ब्रह्मत्व इति । केवलशास्त्रजन्यज्ञानेन ब्रह्मत्वे योजिते ॥ ७० ॥
हाभिमानवृत्तिः माया । अस्ति भाति प्रियमिति यद्युत् व्यवहृतं
नन्दं ब्रह्मेत्याह—अस्तीति ॥ ७१ ॥ यद्यत् प्रियं तदेव ब्रह्म
ध्यमित्यत्र—

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥

इति श्रुतेः । नामरूपसद्वितीयं ब्रह्मेत्यत आह—मरुभूमाविति ॥ ७२ ॥ कथं पुनः चिन्मात्रं निष्प्रतियोगिकं, जीवेशादिविकल्पजुष्टजगतः सत्त्वादित्यत आह—अज्ञानमिति । जगतः स्वाज्ञानकार्यत्वात् स्वज्ञानेन स्वाज्ञाननाशे तत्कार्यं जगत् कुतः सत्पदमर्हतीत्यत्र—"कारणाभावतः कार्यं कथं सिद्धिपदं भजेत्" इति परमाक्षरोक्तेः ॥ ७३ ॥ स्वातिरिक्तकलनामुक्ते ब्रह्मणि मूढाः स्वातिरिक्तं कल्पयित्वा तच्छान्तये मुधा व्याप्रियन्त इत्याह—बोधेति ॥ ७४ ॥

समाधिसाधनं नादानुसन्धानम्

सलिले सैन्धवं यद्वत् साम्यं [1]भजति योगतः ।
तथाऽऽत्ममनसोरैक्यं समाधिरिति कथ्यते ॥ ७५ ॥
दुर्लभो विषयत्यागो दुर्लभं तत्त्वदर्शनम् ।
दुर्लभा सहजावस्था सद्गुरोः करुणां विना ॥ ७६ ॥
उत्पन्नशक्तिबोधस्य त्यक्तनिःशेषकर्मणः ।
योगिनः सहजावस्था स्वयमेव प्रकाशते ॥ ७७ ॥
रसस्य मनसश्चैव चञ्चलत्वं स्वभावतः ।
रसो बद्धो मनो बद्धं किं न सिध्यति भूतले ॥ ७८ ॥

[1] भवति—क, अ २.

मूर्च्छितो हरति व्याधिं मृतो जीवयति स्वयम्
[1]बद्धः खेचरतां धत्ते ब्रह्मत्वं रसचेतसि ॥ ७९ ॥
इन्द्रियाणां मनो नाथो मनोनाथस्तु मारुतः ।
मरुतस्य लयो नाथस्तन्नाथं लयमाश्रय ॥ ८० ॥
निश्चेष्टो निर्विकारश्च लयो जीवति योगिनाम् ।
उच्छिन्नसर्वसंकल्पो निःशेषाशेषचेष्टितः ।
स्वावगम्यो लयः कोऽपि मनसां वागगोचरः ॥ ८१ ॥
[2]पुङ्खानुपुङ्खविषयेक्षणतत्परोऽपि
ब्रह्मावलोकनधियं न जहाति योगी ।
सङ्गीततालल्यवाद्यवशं गताऽपि
मौलिस्थकुम्भपरिरक्षणधीर्नटीव ॥ ८२ ॥
सर्वचिन्तां परित्यज्य सावधानेन चेतसा ।
नाद एवानुसंधेयो योगसाम्राज्यमिच्छता ॥ ८३ ॥

इति ॥

स्वातिरिक्तासम्भवप्रबोधसिद्धं ब्रह्मास्मीति ब्रह्ममनसोरेकत्वं समाधिरिति सदृष्टान्तमाह—सलिल इति ॥ ७५ ॥ एवं तत्त्वदर्शनं गुरुकटाक्षतो भवतीत्याह—दुर्लभः इति ॥ ७६ ॥ कस्येयं सहजावस्था जायत इत्यत आह—उत्पन्नेति । ज्ञानसहकृतयोगाभ्यासपाटवेन उत्पन्नकुण्डलिनीशक्तिबोधस्य, "ब्रह्मातिरिक्तं न किञ्चिदस्ति" इत्यजडक्रियाज्ञानेच्छाशक्तिबोधस्य, सम्यज्ज्ञानिनो वा शक्तिबोधस्य ॥ ७७ ॥ ब्रह्मातिरेकेण मनसः सत्त्वं ये मन्यन्ते तद्दृष्टिमाश्रित्य

[1] बन्धः—अ, अ २.    [2] पुंखा—अ २, उ.

लनादिः बन्धमुक्तिहेतुरिति सदृष्टान्तमाह—रसस्येति ॥ ७८–७९ ॥ द्वयमनःप्राणादिकं विलाप्य तल्लयाधिकरणं ब्रह्मास्मीत्याश्रयेत्याह—मेति ॥ ८० ॥ कीदृशोऽयं लय इत्यत्र निश्चेष्ट इति । किञ्च— । लयशब्देन लयाधिकरणं ब्रह्मोच्यते इत्यर्थः ॥ ८१ ॥ विदुषो सत्सु तल्लयाधिकरणब्रह्मदृष्टिः कुत इत्यत्र सदृष्टान्तमुत्तरमाह—पुञ्जेति ॥ ८२ ॥ स्वातिरिक्तभ्रमासम्भवप्रबोधप्रसिद्धपरमात्मा स्वावशेषधिया अनुसन्धेय इति अध्यायार्थमुपसंहरति—सर्वेति । योगसाम्राज्यं कैवल्यमिच्छता स्वातिरिक्तावकाशं न ददातीति नदः स एव नादः परमात्मैव निष्प्रतियोगिक-स्वमात्रमित्यनुसन्धेयः ॥ ८३ ॥ इतिशब्दोऽध्यायपरिसमाप्त्यर्थः ॥

इति द्वितीयोऽध्यायः

# तृतीयोऽध्यायः

अद्वितीयपरमात्मानुभवः

न हि नानास्वरूपं स्यादेकं वस्तु कदाचन ।
तस्मादखण्ड एवास्मि यन्मदन्यन्न किंचन ॥ १ ॥
दृश्यते श्रूयते यद्यद्ब्रह्मणोऽन्यन्न तद्भवेत् ।
नित्यशुद्धविमुक्तैकमखण्डानन्दमद्वयम् ।
सत्यं ज्ञानमनन्तं यत् परं [1]ब्रह्म भवामि तत् ॥ २
आनन्दरूपोऽहमखण्डबोधः
परात्परोऽहं घनचित्प्रकाशः ।

[1] ब्रह्माहमेव—क, अ १, अ २.

मेघा यथा व्योम न च स्पृशन्ति
संसारदुःखानि न मां स्पृशन्ति ॥ ३ ॥
सर्वं सुखं विद्धि सुदुःखनाशात्
सर्वं च सद्रूपम[1]सत्यनाशात् ।
चिद्रूपमेव प्रतिभानयुक्तं
तस्मादखण्डं मम रूपमेतत् ॥ ४ ॥
न हि जनिर्मरणं गमनागमौ
न च मलं विमलं न च वेदनम् ।
चिन्मयं हि सकलं विराजते
स्फुटतरं परमस्य तु योगिनः ॥ ५ ॥

कथं त्वं निष्प्रतियोगिकपरमात्माऽसि स्वप्रतियोगिनानात्वस्य विद्यमानत्वादित्याशङ्कमानमालक्ष्य भगवान् स्वस्य निष्प्रतियोगिकाद्वितीयत्वस्थापनाय स्वानुभवं प्रकटयति—न हीति । यस्मादेवं तस्मात् ॥ १ ॥ स्वान्यत् दृश्यते श्रूयते चेदित्यत्राह—दृश्यत इति । कीदृशं ब्रह्म त्वं भवसीत्यत्राह—नित्येति ॥ २ ॥ जीववद्देहधारणसामान्यात् त्वमपि संसारदुःखी भवसीत्यत आह—आनन्देति ॥ ३ ॥ सच्चिदानन्दाखण्डं मां विद्धीत्याह—सर्वमिति ॥ ४ ॥ निर्विशेषज्ञानयोगिनो मद्रूपमेवं विभातीत्याह—न हि जनिरिति । योगी स्वात्मनो मम जनिमृतिगमनागमनादिविक्रिया नास्तीति मत्वा सर्वत्र मामेव निष्प्रतियोगिकचिन्मात्रं पश्यतीत्यर्थः ॥ ५ ॥

चिन्मात्रभावापत्तिसाधनमौनविधिः

सत्यचिद्घनमखण्डमद्वयं सर्वदृश्यरहितं निरामयम् ।
यत्पदं विमलमद्वयं शिवं तत्सदाऽहमिति मौनमाश्रय ॥ ६ ॥

[1] सत्त्व—क, अ २.

जन्ममृत्युसुखदुःखवर्जितं जातिनीतिकुलगोत्रदूरगम् ।
चिद्विवर्तजगतोऽस्य कारणं तत्सदाऽहमिति मौनमाश्रय ॥ ७ ॥
पूर्णमद्वयमखण्डचेतनं विश्वभेदकलनादिवर्जितम् ।
अद्वितीयपर[1]संविदंशकं तत्सदाऽहमिति मौनमाश्रय ॥ ८ ॥

तवेश्वरत्वेन निष्प्रतियोगिकचिन्मात्रत्वं युज्यते । ममानीशत्वेन तद्भावापत्त्युपायमादिशेति पृच्छमानमालक्ष्य भगवान् स्वभावापत्त्युपायमादिशति —सत्येति ॥ ६–८ ॥

भगवतः सच्चिदानन्दत्वम्

केनाप्यबाधितत्वेन त्रिकालेऽप्येकरूपतः ।
विद्यमानत्वमस्त्येतत् सद्रूपत्वं सदा मम ॥ ९ ॥
निरुपाधिकनित्यं यत् सुप्तौ सर्वसुखात्परम् ।
सुखरूपत्वमस्त्येतदानन्दत्वं सदा मम ॥ १० ॥

एवं मुनेः स्वभावापत्त्युपायमुपदिश्य तद्दार्ढ्याय स्वात्मनः सच्चिदानन्दत्वं साधयति—केनेति ॥ ९–१० ॥

भगवद्भक्तिरेव मोक्षसाधनम्

दिनकरकिरणैर्हि शार्वरं तमो
निबिडतरं झटिति प्रणाशमेति ।
घनतरभवकारणं तमो य-
द्धरिदिनकृत्प्रभया न चान्तरेण ॥ ११ ॥

[1] सचि—क, अ २.

मम चरणस्मरणेन पूजया च
स्वकतमसः परिमुच्यते हि जन्तुः ।
न हि मरणप्रभवप्रणाशहेतु-
र्मम चरणस्मरणादृतेऽस्ति किंचित् ॥ १२
आदरेण यथा स्तौति धनवन्तं धनेच्छया ।
तथा चेद्विश्वकर्तारं को न मुच्येत बन्धनात् ॥ १३ ॥

मद्भावापत्तिहेतुमद्भक्तिं विना कोऽपि न मुच्यत इति सदृष्टान्तमुपपादयति—दिनकरेति । दिनकृत्प्रभया विनाशमेति ॥ ११–१२ ॥ कश्चिद्राजसेव्यपि दारिद्र्यतो मुच्यते तथा मामुपास्य को वा स्वातिरिक्तभ्रमतः न मुच्यत इत्याह—आदरेणेति ॥ १३ ॥

ईश्वरस्य सर्वसमत्वम्

आदित्यसंनिधौ लोकश्चेष्टते स्वयमेव तु ।
तथा मत्संनिधावेव समस्तं चेष्टते जगत् ॥ १४ ॥
शुक्तिकायां यथा तारं कल्पितं मायया तथा ।
महदादि जगन्मायामयं मय्येव [1]केवलम् ॥ १५ ॥
चण्डालदेहे पश्वादिस्थावरे ब्रह्मविग्रहे ।
अन्येषु तारतम्येन स्थितेषु न तथा ह्यहम् ॥ १६ ॥
विनष्टदिग्भ्रमस्यापि यथापूर्वं विभाति दिक् ।
तथा विज्ञानविध्वस्तं जगन्मे भाति तन्न हि ॥ १७ ॥

[1] कल्पितम्

न देहो नेन्द्रियप्राणो न मनोबुद्ध्यहंकृतिः ।
न चित्तं नैव माया च न च व्योमादिकं जगत् ॥ १८ ॥
न कर्ता नैव भोक्ता च न च भोजयिता तथा ।
केवलं चित्सदानन्दब्रह्मैवाहं जनार्दनः ॥ १९ ॥

स्वाज्ञादिलोकप्रवृत्तिनिवृत्तिनिमित्तमप्यहमेवेत्याह—आदित्येति ॥ १४ ॥ मदतिरिक्तं मय्येव विकल्पितम् । विषमेष्वपि समोऽहमेवेत्याह—शुक्तिकायामिति ॥ १५–१६ ॥ मदज्ञानविकल्पितं मज्ज्ञानतो न भातीत्याह—विनष्टेति । विनष्टदिग्भ्रमस्यापि भ्रमापाये ॥ १७ ॥ तवापि जगदन्तःपातिदेहेन्द्रियादिसत्त्वात् कथं जगत् न भातीत्युच्यते इत्यत्राह—न देह इति ॥ १८–१९ ॥

चित्तमेव संसारकारणम्

जलस्य चञ्चलादेव चञ्चलत्वं यथा रवेः ।
तथाऽहंकारसंबन्धादेव संसार आत्मनः ॥ २० ॥
चित्तमूलं हि संसारस्तत्प्रयत्नेन शोधयेत् ।
हन्त चित्तमहत्तायां कैषा विश्वासता तव ॥ २१ ॥
क्व धनानि महीपानां ब्राह्मणः क्व जगन्ति वा ।
[1]प्राक्तनानि प्रयातानि गताः सर्गपरम्पराः ॥ २२ ॥
कोट्यो ब्रह्मणां याता भूपा नष्टाः परागवत् ।
[2]स चाध्यात्माभिमानोऽपि विदुषो ह्यासुरत्वतः ॥ २३ ॥
विदुषोऽप्यासुरश्चेत्स्यान्निष्फलं तत्त्वदर्शनम् ।

[1] स्वारोपिताशेषपदार्थभासकत्वमात्मनः साधनमन्तरेण यत् ।
वदन्ति वेदान्तविदो हि तां स्वयंप्रकाशमानस्य तु चित्स्वरूपताम् ॥
इत्यधिकः—अ १.     [2] न च—अ १. तथा—अ.

तव ईश्वरस्य देहादिवैरल्यमस्तु वस्तुतो निर्विशेषब्रह्मरूपत्व बन्धमोक्षहेतू कावित्यत्र अतस्मिंस्तद्भावातद्भावावित्याह—जलस्थं एवं संसारमूलं किं इत्यत्र चित्तमित्याह—चित्तेति संसारमूलचि तद्विकल्पितं सर्वं स इति मन्यमानं प्रत्याह—हन्तेति । भ्रान्त्युज्जीवकत्वात् तदपाये यथापूर्वमदर्शनात् चित्ततत्कार्यकलना ॥ २१–२२ ॥ विदुषोऽप्येवं सत्यवत् भातं चेत् तस्य वैदुष्यं नास्ति... स चेति । यः अनात्मनि आत्मधीप्रभवः अविद्वद्गोचरः स चाध्यात्माभिमानः देहाभिमानः स्वान्यत्र ममताऽपि विदुषोऽप्यनर्थकर एव । कुतः? देहादावात्मात्मीयाभिमानस्य आसुरत्वतः आसुरकृत्यत्वात् ॥ २३ ॥ अविदुष इव विदुषोऽपि आसुरश्चेत् तदार्जिततत्त्वदर्शनं निष्फलमेव स्यात् । तथा च श्रुतिः—

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः ।
नचास्ति किञ्चित् कर्तव्यमस्ति चेन्न स तत्त्ववित् ॥

इति ॥

अनात्मनि रागाद्यनुभवो विद्वल्लक्षणम्

उत्पाद्यमाना रागाद्या विवेकज्ञानवह्निना ॥ २४ ॥
यदा तदैव दह्यन्ते कुतस्तेषां प्ररोहणम् ।
यथा सुनिपुणः सम्यक् परदोषेक्षणे रतः ॥ २५ ॥
तथा चेन्निपुणः स्वेषु को न मुच्येत बन्धनात् ।
अनात्मविदमुक्तोऽपि सिद्धिजालानि वाञ्छति ॥ २६ ॥
द्रव्यमन्त्रक्रियाकालयुक्त्याऽऽप्नोति मुनीश्वर ।
नात्मज्ञस्यैष विषय आत्मज्ञो ह्यात्ममात्रदृक् ॥ २७ ॥
आत्मनाऽऽत्मनि संतृप्तो नाविद्यामनुधावति ।
ये केचन जगद्भावास्तानविद्यामयान् विदुः ॥ २८ ॥

# शाण्डिल्योपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

## प्रथमोऽध्यायः

योगाष्टाङ्गनिर्देशः

शाण्डिल्यो ह वा अथर्वाणं पप्रच्छात्मलाभोपायभूतमष्टाङ्गयोगमनुब्रूहीति ॥ १ ॥ स होवाचाथर्वा—यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयोऽष्टाङ्गानि ॥ २ ॥ तत्र दश यमाः । तथा नियमाः । आसनान्यष्टौ । [1]त्रिः प्राणायामः । पञ्च प्रत्या[2]हाराः । तथा धारणाः । द्विप्रकारं ध्यानम् । समाधिस्त्वेकरूपः ॥ ३ ॥

शाण्डिल्योपनिषत्प्रोक्तयमाद्यष्टांगयोगिनः ।
यद्बोधाद्यान्ति कैवल्यं स रामो मे परा गतिः ॥

इह खलु अथर्वणवेदप्रविभक्तेयं शाण्डिल्योपनिषत् यमाद्यष्टांगयोगतद्गौणमुख्यसिद्धिप्रकाशनव्यग्रा निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः

[1] त्रयः प्राणायामाः—अ.　　[2] हारः—अ १, अ २, उ १, क.

स्वल्प[illegible]थतो विवरणमारभ्यते । शाण्डिल्याथर्वप्रश्नप्र[illegible]पयमाख्यायिका वि[illegible]र्था । आख्यायिकामवतारयति—शाण्डि[illegible] इति । किमिति? [illegible] १ ॥ एवं शाण्डिल्येन पृष्टः स होवाच । किं तत्? योगोऽष्टांग उच्य[illegible]मेति ॥ २–१४ ॥

### दशविधयमनिरूपणम्

तत्राहिंसासत्यास्तेयब्रह्मचर्यदयाऽऽर्जवक्षमाधृतिमिताहारशौचानि चेति यमा दश ॥ ४ ॥ तत्राहिंसा नाम मनोवाक्कायकर्मभिः सर्वभूतेषु सर्वदाऽक्लेशजननम् ॥ ५ ॥ सत्यं नाम मनोवाक्कायकर्मभिर्भूतहितयथार्थाभिभाषणम् ॥ ६ ॥ अस्तेयं नाम मनोवाक्कायकर्मभिः परद्रव्येषु निःस्पृहा ॥ ७ ॥ ब्रह्मचर्यं नाम सर्वावस्थासु मनोवाक्कायकर्मभिः सर्वत्र मैथुनत्यागः ॥ ८ ॥ दया नाम सर्वभूतेषु सर्वत्रानुग्रहः ॥ ९ ॥ आर्जवं नाम मनोवाक्कायकर्मणां विहिताविहितेषु जनेषु प्रवृत्तौ निवृत्तौ वा एकरूपत्वम् ॥ १० ॥ क्षमा नाम प्रियाप्रियेषु सर्वेषु [1]ताडनपूजनेषु सहनम् ॥ ११ ॥ धृतिर्नामार्थहानौ स्वेष्टबन्धुवियोगे तत्प्राप्तौ सर्वत्र चेतःस्थापनम् ॥ १२ ॥ मिता[2]हारो नाम चतुर्थांशावशेषकसुस्निग्धमधुराहारः ॥ १३ ॥ शौचं नाम द्विविधं बाह्यमान्तरं चेति । तत्र मृज्जलाभ्यां बाह्यम् । मनःशुद्धिरान्तरम् । तदध्यात्मविद्यया लभ्यम् ॥ १४ ॥

इति प्रथमः खण्डः

[1] तारतम्यपू—अ.

[2] हारं—अ, अ १, अ २, क.

### दशविधयमनिरूपणम्

तपःसन्तोषास्तिक्यदानेश्वरपूजनसिद्धान्तश्रवणह्रीमतिजपव्रतानि दश नियमाः ॥ १ ॥ तत्र तपो नाम विध्युक्तकृच्छ्रचान्द्रायणादिभिः शरीरशोषणम् ॥ २ ॥ [1]संतोषो नाम यदृच्छालाभतुष्टिः ॥ ३ ॥ आस्तिक्यं नाम वेदोक्तधर्माधर्मेषु विश्वासः ॥ ४ ॥ दानं नाम न्यायार्जितधनधान्यादेः श्रद्धयाऽर्थिभ्यः प्रदानम् ॥ ५ ॥ ईश्वरपूजनं नाम प्रसन्नस्वभावेन यथाशक्ति विष्णुरुद्रादिपूजनम् ॥ ६ ॥ सिद्धान्तश्रवणं नाम वेदान्तार्थविचारः ॥ ७ ॥ ह्रीर्नाम वेदलौकिकमार्गकुत्सितकर्मणि लज्जा ॥ ८ ॥ मतिर्नाम वेदविहितकर्ममार्गेषु श्रद्धा ॥ ९ ॥ जपो नाम विधिवद्गुरूपदिष्टवेदाविरुद्धमन्त्राभ्यासः । तद्विविधं वाचिकं मानसं चेति । मानसं तु मनसा ध्यानयुक्तम् । वाचिकं द्विविधमुच्चैरुपांशुभेदेन । उच्चैरुच्चारणं यथोक्तफलम् । [2]उपांशु सहस्रगुणम् । मानसं कोटिगुणम् ॥ १० ॥ [3]व्रतं नाम वेदोक्तविधिनिषेधानुष्ठाननैयत्यम् ॥ ११ ॥

दशधा भिन्नयमस्वरूपमुक्त्वा तथा नियमस्वरूपमाह—तप इति ॥१–९॥ मन्त्रार्थानुसन्धानं मानसमित्यर्थः ॥ १०–११ ॥

इति द्वितीयः खण्डः

[1] संतोर्षं—अ, अ १, अ २, क. [2] उपांशुः—अ, अ १.
[3] एतद्वाक्यं मुद्रितकोश एव दृश्यते.

### अष्टविधासननिरूपणम्

स्वस्तिकगोमुखपद्मवीरसिंहभद्रमुक्तमयूराख्यान्यासनान्यष्टौ ।

; नाम—

जानूर्वोरन्तरे सम्यक्कृत्वा पादतले उभे ।
ऋजुकायः समासीनः स्वस्तिकं तत्प्रचक्षते ॥ १ ॥
सव्ये दक्षिणगुल्फं तु पृष्ठपार्श्वे नियोजयेत् ।
दक्षिणेऽपि तथा सव्यं गोमुखं गोमुखं यथा ॥ २ ॥
अङ्गुष्ठेन निबध्नीयाद्धस्ताभ्यां व्युत्क्रमेण च ।
ऊर्वोरुपरि शाण्डिल्य कृत्वा पादतले उभे ।
पद्मासनं भवेदेतत् सर्वेषामपि पूजितम् ॥ ३ ॥
एकं पादमथैकस्मिन् विन्यस्योरुणि संस्थितः ।
इतरस्मिंस्तथा चोरुं वीरासनमुदीरितम् ॥ ४ ॥
दक्षिणं सव्यगुल्फेन दक्षिणेन तथेतरम् ।
हस्तौ च जान्वोः संस्थाप्य स्वाङ्गुलीश्च प्रसार्य च ॥ ५ ॥
व्यात्तवक्त्रो निरीक्षेत नासाग्रं सुसमाहितः ।
सिंहासनं भवेदेतत् पूजितं योगिभिः सदा ॥ ६ ॥
योनिं वामेन संपीड्य मेढ्रादुपरि दक्षिणम् ।
भ्रूमध्ये च मनोलक्ष्यं सिद्धासनमिदं भवेत् ॥ ७ ॥
गुल्फौ तु वृषणस्याधः सीवन्याः पार्श्वयोः क्षिपेत् ।
पादपार्श्वे तु पाणिभ्यां दृढं बद्ध्वा सुनिश्चलम् ।
भद्रासनं भवेदेतत् सर्वव्याधिविषापहम् ॥ ८ ॥

संप[illegible]ीविनीं सूक्ष्मां गुल्फेनैव तु सव्यतः ।
सव्यं दक्षिणगुल्फेन मुक्तासनमिदं भवेत् ॥ ९ ॥
अवष्टभ्य धरां सम्यक् तलाभ्यां तु करद्वयोः ।
हस्तयोः कूर्परौ चापि स्थापयेन्नाभिपार्श्वयोः ॥ १० ॥
समुन्नतशिरःपादो दण्डवद्व्योम्नि संस्थितः ।
मयूरासनमेतत्तु सर्वपापप्रणाशनम् ॥ ११ ॥

शरीरान्तर्गताः सर्वरोगा विनश्यन्ति । विषाणि जीर्यन्ते ॥१२॥ येन केनासनेन सुखधारणं भवत्यशक्तस्तत्समाचरेत् ॥१३॥

स्वस्तिकाद्यष्टासनप्रकारमाह—स्वस्तिकेति ॥ १ ॥ गोमुखासनमाह—सव्य इति ॥ २ ॥ पद्मासनमाचष्टे—अङ्गुष्ठेनेति ॥ ३ ॥ वीरासनलक्षणमाह—एकमिति ॥ ४ ॥ सिंहासनप्रकारमाह—दक्षिणमिति ॥ ५–६ ॥ सिद्धासनस्वरूपमाह—योनिमिति ॥ ७ ॥ भद्रासनमाह—गुल्फाविति ॥ ८ ॥ मुक्तासनप्रकारमाह—सम्पीड्येति ॥ ९ ॥ मयूरासनमाह—अवष्टभ्येति ॥ १०–१३ ॥

आसनजयफलम्

येनासनं विजितं जगत्त्रयं तेन विजितं भवति ॥ १४ ॥ यमनियमासनाभ्यासयुक्तः पुरुषः प्राणायामं चरेत् । तेन नाड्यः शुद्धा भवन्ति ॥ १५ ॥

आसनजयफलमाह—येनेति ॥ १४ ॥ ततः किमित्यत आह—यमेति ॥ १५ ॥

इति तृतीयः खण्डः

### नाडीसंख्यादिजिज्ञासा

अथ हैनमथर्वाणं शाण्डिल्यः पप्रच्छ केनोपायेन नाड्यः शुद्धाः स्युः । नाड्यः कतिसंख्याकाः तासामुत्पत्तिः कीदृशी । तासु कति वायवस्तिष्ठन्ति । तेषां कानि स्थानानि । तत्कर्माणि कानि । देहे यानियानि विज्ञातव्यानि तत्सर्वं मे ब्रूहीति ॥ १ ॥

शाण्डिल्यः प्रश्नबीजमवष्टभ्याथर्वाणं पृच्छतीत्याह—अथेति ॥ १ ॥

### शरीरप्राणप्रमाणम्

स होवाचाथर्वा । अथेदं शरीरं षण्णवत्यङ्गुलात्मकं भवति । शरीरात्प्राणो द्वादशाङ्गुलाधिको भवति ॥ २ ॥

शाण्डिल्येन एवं पृष्टः सः स्वस्वांगुलिमानेन षण्णवतीति ॥ २ ॥

### कुम्भकविधिः

शरीरस्थं प्राणमग्निना सह योगाभ्यासेन समं न्यूनं वा यः करोति स योगिपुङ्गवो भवति ॥ ३ ॥

समन्यूनशब्दाभ्यां कुम्भकदीर्घकुम्भकावुच्येते इत्यर्थः ॥ ३ ॥

### मनुष्यादीनां अग्निस्थानम्

देहमध्ये शिखिस्थानं त्रिकोणं तप्तजाम्बूनदप्रभं मनुष्याणाम् । चतुष्पदां चतुरश्रम् । विहगानां वृत्ताकारम् । तन्मध्ये शुभा तन्वी पावकी शिखा तिष्ठति ॥ ४ ॥

मनुष्यादीनां स्थानमाह—देहेति ॥ ४ ॥

मनुष्यादिदेहमध्यलक्षणम्

गुदाद्व्यङ्गुलादूर्ध्वं मेढ्राद्व्यङ्गुलादधो देहमध्यं मनुष्याणां भवति । चतुष्पदां हृन्मध्यम् । विहगानां तुन्दमध्यम् । देहमध्यं नवाङ्गुलं चतुरङ्गुलमुत्सेधायतमण्डाकृति ॥ ५ ॥

मनुष्यादिदेहमध्यलक्षणमाह—गुदादिति ॥ ५–७ ॥

नाभिचक्रे जीवभ्रमणम्

तन्मध्ये नाभिः । तत्र द्वादशारयुतं चक्रम् । तच्चक्रमध्ये पुण्यपापप्रचोदितो जीवो भ्रमति ॥ ६ ॥ तन्तुपञ्जरमध्यस्थलूतिका यथा भ्रमति तथा चासौ तत्र प्राणश्चरति । देहेऽस्मिञ्जीवः प्राणारूढो भवेत् ॥ ७ ॥

कुण्डलिनीस्वरूपचेष्टाः

नाभेस्तिर्यगधोर्ध्वं कुण्डलिनीस्थानम् । अष्टप्रकृतिरूपाऽष्टधा कुण्डलीकृता कुण्डलिनी शक्तिर्भवति । यथावद्वायुसंचारं जलान्नादीनि परितः [1]स्कन्धपार्श्वेषु निरुध्यैनं मुखेनैव समावेष्ट्य ब्रह्मरन्ध्रं योगकालेऽपानेनाग्निना च स्फुरति हृदयाकाशं महोज्ज्वला ज्ञानरूपा भवति ॥ ८ ॥

तत्स्वरूपं तच्चेष्टां चाह—अष्टेति । ब्रह्मरन्ध्रं पुच्छेन च ॥ ८ ॥

[1] स्कन्द[कन्द?]पा—अ २, उ १.

चतुर्दशनाड्यः

मध्यस्थकुण्डलिनीमाश्रित्य मुख्या नाड्यश्चतुर्दश भवन्ति । इडा पिङ्गला सुषुम्ना सरस्वती [1]वारुणा पूषा हस्तिजिह्वा यशस्विनी विश्वोदरा कुहूः शङ्खिनी पयस्विनी अलम्बुसा गान्धारीति नाड्यश्चतुर्दश भवन्ति ॥ ९ ॥

देहमध्यस्थेति । कान्ता इत्यत्र इडेति ॥ ९ ॥

सुषुम्नानाडी

तत्र सुषुम्ना विश्वधारिणी मोक्षमार्गेति चाचक्षते । गुदस्य पृष्ठभागे वीणादण्डाश्रिता [2]मूर्धपर्यन्तं ब्रह्मरन्ध्रेति विज्ञेया व्यक्ता सूक्ष्मा वैष्णवी भवति ॥ १० ॥

सुषुम्नास्वरूपमाह --गुदस्येति ॥ १० ॥

सुषुम्नापरितः इतरनाडीस्थानानि

सुषुम्नायाः सव्यभागे इडा तिष्ठति । दक्षिणभागे पिङ्गला । इडायां चन्द्रश्चरति । पिङ्गलायां रविः । तमोरूपश्चन्द्रः । रजोरूपो रविः । विषभागो रविः अमृतभागश्चन्द्रमाः । तावेव सर्वकालं धत्ते । सुषुम्ना कालभोक्त्री भवति । सुषुम्ना-पृष्ठपार्श्वयोः सरस्वतीकुहू भवतः । यशस्विनीकुहू[3]मध्ये वारुणी प्रतिष्ठिता भवति । पूषासरस्वतीमध्ये पयस्विनी भवति । गान्धारी-

[1] वारुणी—मु. वरुणा—उ, अ २. [2] मूर्धिक, अ २, उ १.
[3] र्मे—क, अ १, अ २.

सरस्वतीमध्ये [illegible]स्विनी भवति । कन्दमध्येऽलम्बुसा भवति । सुषुम्नापूर्वभागे मेढ्रान्तं कुहूर्भवति । कुण्डलिन्या अधश्चोर्ध्वं वारुणी सर्वगामिनी भवति । यशस्विनी सौम्या च पादांगुष्ठान्तमिष्यते । पिङ्गला चोर्ध्वगा याम्यनासान्तं भवति । पिङ्गलायाः पृष्ठतो याम्यनेत्रान्तं पूषा भवति । याम्यकर्णान्तं यशस्विनी भवति । जिह्वाया ऊर्ध्वान्तं सरस्वती भवति । आसव्यकर्णान्तमूर्ध्वगा शङ्खिनी भवति । इडापृष्ठभागात्सव्यनेत्रान्तगा गान्धारी भवति । पायुमूलादधोर्ध्वगाऽलम्बुसा भवति । एतासु चतुर्दशनाडीष्वन्या नाड्यः संभवन्ति । तास्वन्यास्तास्वन्या भवन्तीति विज्ञेयाः । यथाऽश्वत्थादिपत्रं सिराभिर्व्याप्तमेवं शरीरं नाडीभिर्व्याप्तम् ॥ ११ ॥

सुषुम्नायाः परितः इडादिनाड्यस्तिष्ठन्तीत्याह—सुषुम्नाया इति ॥ ११ ॥

प्राणादिदशवायुस्थानचेष्टाः

प्राणापानसमानोदानव्याना नागकूर्मकृकरदेवदत्तधनञ्जया एते दश वायवः सर्वासु नाडीषु चरन्ति ॥ १२ ॥ आस्यनासिका-[1]कण्ठनाभिपादाङ्गुष्ठद्वयकुण्डल्यधश्चोर्ध्वभागेषु प्राणः संचरति । श्रोत्राक्षिकटिगुल्फघ्राणगलस्फिग्देशेषु व्यानः संचरति । गुदमेढ्रोरुजानूदरवृषणकटिजङ्घानाभिगुदाग्न्यगारेष्वपानः संचरति । सर्वसंधिस्थ उदानः । पादहस्तयोरपि सर्वगात्रेषु सर्वव्यापी समानः । भुक्तान्नरसादिकं गात्रेऽग्निना सह व्यापयन् द्विसप्ततिसहस्रेषु नाडीमार्गेषु

[1] हृन्नाभि—अ १.

चरन् समानवायुरग्निना सह साङ्गोपाङ्गकलेवरं व्याप्य—नागादिवायवः पञ्च त्वगस्थ्यादिसंभवाः तुन्दस्थं जलमन्नं च रसादिषु समीरितं—तुन्दमध्यगतः प्राणस्तानि पृथक्कुर्यात् । अग्नेरुपरि जलं स्थाप्य जलोपर्यन्नादीनि संस्थाप्य स्वयमपानं संप्राप्य तेनैव सह मारुतः प्रयाति देहमध्यगतं [1]ज्वलनम् । वायुना पतितो वह्निरपानेन शनैर्देहमध्ये ज्वलति । ज्वलनो ज्वालाभिः प्राणेन कोष्ठमध्यगतं जलमत्युष्णमकरोत् । जलोपरि समर्पितं व्यञ्जनसंयुक्तमन्नं वह्निसंयुक्तवारिणा पक्वमकरोत् । तेन स्वेदमूत्रजलरक्तवीर्यरूपरसपुरीषादिकं प्राणः पृथक्कुर्यात् । समानवायुना सह सर्वासु नाडीषु रसं व्यापयन् श्वासरूपेण देहे वायुश्चरति । नवभिर्व्योमरन्ध्रैः शरीरस्य वायवः कुर्वन्ति विण्मूत्रादिविसर्जनम् । निश्वासोच्छ्वासकासश्च प्राणकर्मोच्यते । विण्मूत्रादिविसर्जनमपानवायुकर्म । हानोपादानचेष्टादि व्यानकर्म । देहस्योन्नयनादिकमुदानकर्म । शरीरपोषणादिकं समानकर्म । उद्गारादि नागकर्म । निमीलनादि कूर्मकर्म । क्षुत्करणं कृकरकर्म । तन्द्री देवदत्तकर्म । श्लेष्मादि धनञ्जयकर्म ॥ १३ ॥

नाडीभेदमुक्त्वा वायुभेदमाह—प्राणेति ॥ १२ ॥ प्राणादिचेष्टामाचष्टे—आस्येति ॥ १३–१४ ॥

नाडीशोधनविधिः

एवं नाडीस्थानं वायुस्थानं तत्कर्म च सम्यज्ज्ञात्वा नाडीसंशोधनं कुर्यात् ॥ १४ ॥

इति चतुर्थः खण्डः

[1] जलं—क, अ २.

योगाधिकारियोगमठयोः लक्षणम्

यमनियमयुतः पुरुषः सर्वसङ्गविवर्जितः कृतविद्यः सत्यधर्मरतो जितक्रोधो गुरुशुश्रूषानिरतः पितृमातृविधेयः स्वाश्रमोक्तसदाचार[1]विद्वच्छिक्षितः फलमूलोदकान्वितं तपोवनं प्राप्य रम्यदेशे ब्रह्मघोषसमन्विते स्वधर्मनिरतब्रह्मवित्समावृते फलमूलपुष्पवारिभिः सुसंपूर्णे देवायतने नदीतीरे ग्रामे नगरे वाऽपि सुशोभनमठं नात्युच्चनीचायतमल्पद्वारं गोमयादिलिप्तं सर्वरक्षासमन्वितं कृत्वा तत्र वेदान्तश्रवणं कुर्वन् योगं समारभेत् ॥ १ ॥

सप्रकारं सोपायं सामान्यविशेषप्राणायामलक्षणमाह—यमेति । योगाधिकारिलक्षणमुक्त्वा योगमठलक्षणमाह—फलेति । तत्र योगमठे ॥ १ ॥

प्राणायामारम्भप्रकारः

आदौ विनायकं संपूज्य स्वेष्टदेवतां नत्वा पूर्वोक्तासने स्थित्वा प्राङ्मुख उदङ्मुखो वाऽपि मृद्वासनेषु जितासनगतो विद्वान् समग्रीवशिरोनासाग्रदृग्भ्रूमध्ये शशभृद्बिम्बं पश्यन् नेत्राभ्याममृतं द्वादशमात्रया इडया वायुमापूर्योदरे स्थितं ज्वालावलीयुतं रेफबिन्दुयुक्तमग्निमण्डलयुतं ध्यायेद्रेचयेत् पिङ्गलया । पुनः पिङ्गलयाऽऽपूर्य कुम्भित्वा रेचयेदिडया ॥ २ ॥

योगारम्भप्रकारमाह—आदाविति । अमृतं स्रवन्तं चन्द्रमण्डलं पश्यन् ॥ २ ॥

[1] विच्छि—क, अ २.

नाडीशोधकप्राणायामाभ्यासकालावधिः

त्रिचतुस्त्रिचतुः सप्तत्रिचतुर्मासपर्यन्तं त्रिसंधिषु तदन्त[1]राले च षट्कृत्व आचरेन्नाडीशुद्धिर्भवति ॥ ३ ॥

कियन्तं कालं कर्तव्यमित्यत्र अवधिमाह—त्रिचतुरिति । त्रिचतुस्त्रिचत्वारिंशद्दिनपर्यन्तं वा, त्रिचतुस्त्रिमासं चतुर्मासं सप्तमासं वा, त्रिचतुर्मासपर्यन्तं संवत्सरपर्यन्तं वा, एवं षट्कालं प्राणायामं कुर्वतो नाडीशुद्धिः भवति ॥ ३ ॥

नाडीशुद्धिचिह्नानि

ततः शरीरलघुदीप्तिवह्निवृद्धिनादाभिव्यक्तिर्भवति ॥ ४ ॥

ततः किमित्यत आह—तत इति । योगिनः शरीरस्य लघुत्वं दीप्तिमत्त्वं सौन्दर्यादिः जायते इत्यर्थः ॥

इति पञ्चमः खण्डः

प्रणवात्मकप्राणायामः

प्राणापानसमायोगः प्राणायामो भवति । रेचकपूरक[2]कुम्भकभेदेन स त्रिविधः ॥ १ ॥ ते वर्णात्मकाः । तस्मात् प्रणव एव प्राणायामः ॥ २ ॥

प्रणवात्मकप्राणायामस्वरूपमाह—प्राणेति ॥ १ ॥ रेचकादयः ते । यस्मात् रेचकादयः अकारोकारमकारात्मकाः तस्मात् ॥ २ ॥

[1] रालेषुच—क, अ २.     [2] कुम्भकैः स—अ, अ २.

प्रणववर्णध्यानप्रकारः

पद्माद्यासनस्थः पुमान्नासाग्रशशभृद्बिम्बज्योत्स्नाजालविताानि-[1]ताकारमूर्ती रक्ताङ्गी हंसवाहिनी दण्डहस्ता बाला गायत्री भवति । उकारमूर्तिः श्वेताङ्गी तार्क्ष्यवाहिनी युवती चक्रहस्ता सावित्री भवति । मकारमूर्तिः कृष्णाङ्गी वृषभवाहिनी वृद्धा त्रिशूलधारिणी सरस्वती भवति ॥ ३ ॥ अकारादित्रयाणां सर्वकारणमेकाक्षरं परंज्योतिः प्रणवं भवति ॥ ४ ॥

यथोक्तसाधनसम्पन्नो योगी अकारादिवर्णत्रयवाच्यगायत्र्यादिमूर्तित्रयध्यानपूर्वकं यथाविधि प्राणायामं कुर्यादित्याह—पद्मेति ॥ ३ ॥ अकारादिमात्रात्रयसमष्टिः प्रणवो भवतीत्याह—अकारादीति । प्रणवं प्रणवस्वरूपम् ॥ ४ ॥

प्राणाभ्यासप्रकारः

इडया बाह्याद्वायुमापूर्य षोडशमात्राभिरकारं चिन्तयन् पूरितं वायुं चतुःषष्टिमात्राभिः कुम्भयित्वोंकारं ध्यायन् पूरितं पिङ्गलया द्वात्रिंशन्मात्रया मकार[2]मूर्तिध्यानेनैवं क्रमेण पुनः पुनः कुर्यात् ॥५॥

प्राणाभ्यासप्रकारमाह—इडयेति ॥ ५ ॥

इति षष्ठः खण्डः

[1] तमका—अ, अ १, क. च मका—अ २. [2] मूर्ति—अ, अ १.

अथासनदृढो योगी वशी मितहिताशनः सुषुम्नानाडीस्थ-मलशोषार्थं योगी बद्धपद्मासनो वायुं चन्द्रेणापूर्य यथाशक्ति कुम्भयित्वा सूर्येण रेचयित्वा पुनः सूर्येणापूर्य कुम्भयित्वा चन्द्रेण विरेच्य यया त्यजेत्तया संपूर्य धारयेत्। तदेते श्लोका भवन्ति—

प्राणं प्रागिडया पिबेन्नियमितं भूयोऽन्यया रेचयेत्
पीत्वा पिङ्गलया समीरणमथो बद्ध्वा त्यजेद्वामया ।
सूर्याचन्द्रम[1]सोरनेन विधिनाऽभ्यासं सदा तन्वतां
शुद्धा नाडिगणा भवन्ति यमिनां मासत्रयादूर्ध्वतः ॥१॥

योगी सुषुम्नाऽन्तर्गतमलशोधनार्थं पुरोक्तरीत्या प्राणायामं कुर्यादित्याह-अथेति । उक्तार्थं वक्ष्यमाणाः श्लोकाः मन्त्रा भवन्तीत्याह—तदिति ॥ १ ॥

अहरहः कर्तव्यप्राणायामसङ्ख्या

प्रातर्मध्यन्दिने सायमर्धरात्रे तु कुम्भकान् ।
शनैरशीतिपर्यन्तं चतुर्वारं समभ्यसेत् ॥ २ ॥

अहरहः कति प्राणायामाः कर्तव्याः इत्यत आह—प्रातरिति ॥ २ ॥

अभ्यासोचितसिद्धिभेदः

कनीयसि भवेत् स्वेदः कम्पो भवति मध्यमे ।
उत्तिष्ठत्युत्तमे प्राणरोधे पद्मासनं [2]भवेत् ॥ ३ ॥

[1] सोऽप्यने—उ, उ १.
[2] महत्—अ, अ १.

जलेन श्रमजातेन गात्रमर्दनमाचरेत् ।

दृढता लघुता चापि तस्य गात्रस्य जायते ॥ ४ ॥

अभ्यासोचितसिद्धिभेदमाचष्टे—कनीयसीति ॥ ३ ॥ तेन किं स्यादित्यत्र जलेनेति ॥ ४ ॥

अभ्यासकाले आहारनियमः

अभ्यासकाले प्रथमं शस्तं क्षीराज्यभोजनम् ।

ततोऽभ्यासे स्थिरीभूते न [1]तावन्नियमग्रहः ॥ ५ ॥

आहारनियममाह—अभ्यासेति ॥ ५ ॥

अभ्यासे सावधानताविधिः

यथा सिंहो गजो व्याघ्रो भवेद्वश्यः शनैःशनैः ।

तथैव सेवितो वायुरन्यथा हन्ति साधकम् ॥ ६ ॥

युक्तंयुक्तं त्यजेद्वायुं युक्तंयुक्तं च पूरयेत् ।

युक्तं युक्तेन बध्नीयादेवं सिद्धिमवाप्नुयात् ॥ ७ ॥

यावत् सुषुम्नाप्रवेशः तावत् सावधानतया अभ्यासः कार्यः इत्यत आह—यथेति ॥ ६ ॥ तत्रोपायस्तु युक्तमिति । एवं अभ्यासं कुर्वतो नाडीशुद्धिः भवति ॥ ७ ॥

नाडीशुद्धितो मनोन्मन्यवस्थाप्राप्तिः

यथेष्ट[2]धारणं वायोरनलस्य प्रदीपनम् ।

नादाभिव्यक्तिरारोग्यं जायते नाडिशोधनात् ॥ ८ ॥

[1] तद्व—अ, अ १. [2] धारणाद्वा—क, अ २.

विधिवत् प्राणसंयामैर्नाडीचक्रे विशोधिते ।
सुषुम्नावदनं भित्त्वा सुखाद्विशति मारुतः ॥ ९ ॥
मारुते मध्यसंचारे मनःस्थैर्यं प्रजायते ।
यो मनःसुस्थिरीभावः सैवावस्था मनोन्मनी ॥ १० ॥

ततो वायुः सुषुम्नां प्रविश्य योगिनं मनोन्मन्यवस्थाऽऽरूढं कुर्यादित्याह—यथेष्टेति ॥ ८–९ ॥ तेन किं स्यादित्यत्र—मारुत इति ॥ १० ॥

बन्धत्रयस्य कर्तव्यता

पूरकान्ते तु कर्तव्यो बन्धो जालन्धराभिधः ।
कुम्भकान्ते रेचकादौ कर्तव्यस्तूड्डियाणकः ॥ ११ ॥
अधस्तात्कुञ्चनेनाशु कण्ठसंकोचने कृते ।
मध्ये पश्चिमतानेन स्यात् प्राणो ब्रह्मनाडिगः ॥ १२ ॥

बन्धत्रयपूर्वकाभ्यास एव फलवानित्याह—पूरकान्त इति ॥ ११–१२ ॥

प्राणापानयोगफलम्

अपानमूर्ध्वमुत्थाप्य प्राणं कण्ठादधो नयन् ।
योगी जराविनिर्मुक्तः षोडशो वयसा भवेत् ॥ १३ ॥

प्राणापानयोगफलमाह—अपानमिति ॥ १३ ॥

कपालशोधनोपायः

सुखासनस्थो दक्षनाडया बहिस्थं पवनं समाकृष्याकेशमानखाग्रं कुम्भयित्वा सव्यनाडया रेचयेत् । तेन कपालशोधनं वातनाडीगतसर्वरोगविनाशनं भवति ॥ १३–१ ॥

कपालशोधनोपायमाह—सुखेति । योगी सुखासनस्थः । कपालशोधनं भवति । तेन किं भवतीत्यत्र—वातेति ॥ १३–१ ॥

उज्जायीप्राणायामः

हृदयादिकण्ठपर्यन्तं सस्वनं नासाभ्यां शनैः पवनमाकृष्य यथाशक्ति कुम्भयित्वा इडया विरेच्य गच्छंस्तिष्ठन्कुर्यात् । तेन श्लेष्महरं जाठराग्निवर्धनं भवति ॥ १३–२ ॥

श्लेष्महरोज्जायीलक्षणमाह—हृदयादीति । तिष्ठन् उज्जायीनामकं प्राणायामं कुर्यात् ॥ १३–२ ॥

सीत्कारप्राणायामः

वक्त्रेण सीत्कारपूर्वकं वायुं गृहीत्वा यथाशक्ति कुम्भयित्वा नासाभ्यां रेचयेत् । तेन क्षुत्तृष्णाऽऽलस्यनिद्रा न जायन्ते ॥१३–३॥

सीत्कारप्राणायाममाह—वक्त्रेणेति ॥ १३–३ ॥

शीतलप्राणायामः

जिह्वया वायुं गृहीत्वा यथाशक्ति कुम्भयित्वा नासाभ्यां रेचयेत् । तेन गुल्मप्लीहज्वरपित्तक्षुधादि नश्यति ॥ १३–४ ॥

शीतळी तु जिह्वया ॥ १३–४ ॥

उपायापयकुम्भकद्वयम्

[1]कुम्भकः स द्विविधः सहितः केवलश्चेति । रेचकपूरकयुक्तः सहितः । तद्विवर्जितः केवलः । केवलसिद्धिपर्यन्तं सहितमभ्यसेत् ।

[1] अथकुम्भकः—क, अ २.

केवलकुम्भके सिद्धे त्रिषु लोकेषु न तस्य दुर्लभं भवति । केवल-
कुम्भकात् कुण्डलिनीबोधो जायते ॥ १३–९ ॥

उपायोपेयकुम्भकद्वयमाह—कुम्भक इति । ततः किं जायत इत्यत्र-
केवलेति ॥ १३–९ ॥

कुम्भकाभ्यासफलम्

ततः कृशवपुः प्रसन्नवदनो निर्मललोचनोऽभिव्यक्तनादो
निर्मुक्तरोगजालो जितबिन्दुः पट्वग्निर्भवति ॥ १३–६ ॥

ततः किं स्यादित्यत्र ततः इति ॥ १३–६ ॥

वैष्णवीमुद्राप्राप्तिः

अन्तर्लक्ष्यं बहिर्दृष्टिर्निमेषोन्मेषवर्जिता ।
एषा सा वैष्णवी मुद्रा सर्वतन्त्रेषु गोपिता ॥ १४ ॥

तेन किमित्याकांक्षायां अनेन योगी वैष्णवीमुद्राऽऽरूढो भवतीत्याह—अन्तर्लक्ष्यमिति । मूलाधारानाहताज्ञासहस्रारेषु यथाक्रमं विराट् सूत्रं बीजं तुरीयं वा अन्तर्लक्ष्यं तदेकतानं मनः बहिर्दृष्टिस्तु अन्तर्दृष्टिर्भूत्वा यदा निमेषोन्मेषवर्जिता भवति तदा दृष्टिरियं वैष्णवीमुद्रा भवतीत्यर्थः ॥ १४ ॥

खेचरीप्राप्त्या ब्रह्मदर्शनम्

अन्तर्लक्ष्यविलीनचित्तपवनो योगी सदा वर्तते
दृष्ट्या निश्चलतारया बहिरधः पश्यन्नपश्यन्नपि ।
मुद्रेयं खलु खेचरी भवति सा लक्ष्यैकताना शिवा
शून्याशून्यविवर्जितं स्फुरति सा तत्त्वं पदं [1]वैष्णवी ॥

[1] वैष्णवं—अ.

अर्धोन्मीलितलोचनः स्थिरमना नासाग्रदत्तेक्षण-

श्चन्द्रार्कावपि लीनतामुपनयन्निष्पन्दभावोत्तरम् ।

ज्योतीरूपमशेषबाह्यरहितं देदीप्यमानं परं

तत्त्वं तत्परमस्ति वस्तुविषयं शाण्डिल्य विद्धीह तत् ॥

यदा योगी वैष्णवीमुद्राऽऽरूढो भवति तदा इयं वैष्णवीमुद्रा खेचरीपदवीमेत्य तत्त्वंपदलक्ष्यैक्यप्रत्यगभिन्नब्रह्मगोचरा भवतीत्याह—अन्तरिति । अन्तर्दृष्टिभावमापन्ननिश्चलबहिर्दृष्टिरेव मुद्रेयम् । शून्यं सुषुप्तिः अशून्यं स्वप्नादिकं तदुभयवर्जितं यथा भवति तथा लक्ष्यैकताना वैष्णवी स्फुरतीत्यर्थः ॥ १५ ॥ खेचरीमुद्राऽऽरूढयोगिनः स्थितिं तद्ध्येयस्वरूपं चाह—अर्धेति । अर्धोन्मीलितलोचनः इत्यादिविशेषणविशिष्टो योगी चन्द्रार्कौ इडापिंगळागोचरवायू मनोदृष्ट्यग्निभिः सह सुषुम्नायां लीनतां लयभावं उपनयन् यदा तिष्ठति तदा स्वान्तर्बाह्यविस्मारकब्रह्मानन्दनदी प्रवहति । ततो निष्पन्दभावोत्तरं नितरां स्रवदानन्दभावानुभवानन्तरं तदनुभूत्यसंगतया यद्वस्तु प्रत्यग्ज्योतीरूपं अशेषबाह्यान्तःकलनाविरळं परमात्माभेदेन देदीप्यमानं "परो दिवो ज्योतिर्दीप्यते" इति श्रुतिसिद्धं परं तत्त्वमस्ति हे शाण्डिल्य तद्विषयं तद्भावापन्नं वस्तु ब्रह्माहमिति विद्धि ॥ १६ ॥

खेचर्या उन्मनीभावापत्तिः

तारं ज्योतिषि संयोज्य किंचिदुन्नमय भ्रुवौ ।

पूर्वाभ्यासस्य मार्गोऽयमुन्मनीकारकः क्षणात् ॥ १७ ॥

तस्मात् खेचरीमुद्रामभ्यसेत् । ततोन्मनी भवति । ततो योगनिद्रा भवति । लब्धयोगनिद्रस्य योगिनः कालो नास्ति ॥ १७–१ ॥

कथं एवं ज्ञातुं शक्यते इत्यत्रोपायमाह—तारमिति । भ्रूमध्यविलसज्ज्योतिषि समभावमापन्नकृष्णतारयुगळं दृढं संयोज्य अवलोक्य किंचित्

भ्रुवौ ऊर्ध्वमुन्नमय्य उर्ध्वोत्क्षेपणं कृत्वा अथ सहस्रारविलसिततुरीयं तत्कलनाविरळतुरीयातीतं वा स्वावशेषधिया पश्येदिति शेषः । "तारं ज्योतिषि संयोज्य" इति यो दर्शितः "अन्तर्लक्ष्यं" इत्यादिपूर्वाभ्यासस्य अयमेव मार्गः क्षणादुन्मनीकारकः निर्विकल्पकब्रह्मभावापत्तिहेतुरित्यर्थः ॥ १७ ॥ यस्मादेवं तस्मात् । ततोन्मनीभवति निर्व्यापारं मनो भवतीत्यर्थः । ततः किमित्यत आह—तत इति । योगनिद्रा निर्विकल्पभावापत्तिः । ततो व्युत्थान-शङ्कां वारयति—लब्धेति । एवं लब्धयोगनिद्रस्य योगिनः निर्विकल्पकतो व्युत्थापककालो नास्ति ॥ १७-१ ॥

### कालापरिच्छिन्नब्रह्मप्राप्तिसाधनम्

शक्तिमध्ये मनः कृत्वा शक्तिं च मनमध्यगाम् ।
मनसा मन आलोक्य शाण्डिल्य त्वं सुखी भव ॥ १८ ॥
खमध्ये कुरु चात्मानमात्ममध्ये च खं कुरु ।
सर्वं च खमयं कृत्वा न किंचिदपि चिन्तय ॥ १९ ॥

कालापरिच्छिन्ननिर्विकल्पकब्रह्मभावापत्त्युपायमाह—शक्तीति । कुण्ड-लिनीशक्तिमध्ये मनः कृत्वा मनोलयं कृत्वा ततः कुण्डलिनीशक्तिं, चशब्दात् दृष्टिं, मनमध्यगां मनःप्रवृत्तिनिमित्तप्रत्यक्चैतन्यपर्यवसन्नां कृत्वा प्रत्यग्भावापन्नेन मनसा मनः मनोवृत्तिसहस्रभावाभावप्रकाशकप्रत्यगभिन्नं ब्रह्म अहमस्मीत्यालोक्य हे शाण्डिल्य त्वं तन्मात्रावस्थानलक्षणकैवल्यसुखी भवेत्यर्थः ॥ १८ ॥ प्रकारान्तरमाह—खमध्य इति । चित्खमध्ये आत्मानमन्तःकरणं कुरु आत्मान्तःकरणमध्ये च खं कुरु । एवं व्यतिहारेण सर्वं चित्खमयं कृत्वा चिदाकाशातिरिक्तं न किंचिदस्ति इति चिन्तय ॥ १९ ॥

मनोविलापनेन कैवल्यप्राप्तिः

बाह्यचिन्ता न कर्तव्या तथैवान्तरचिन्तिका ।
सर्वचिन्तां परित्यज्य चिन्मात्रपरमो भव ॥ २० ॥
कर्पूरमनले यद्वत् सैन्धवं सलिले यथा ।
तथा च लीयमानं च मनस्तत्त्वे विलीयते ॥ २१ ॥
ज्ञेयं [1]सर्वप्रतीतं च तज्ज्ञानं मन उच्यते ।
ज्ञानं ज्ञेयं समं नष्टं नान्यः पन्था द्वितीयकः ॥ २२ ॥
ज्ञेयवस्तुपरि[2]त्यागे विलयं याति मानसम् ।
मानसे विलयं याते कैवल्यमवशिष्यते ॥ २३ ॥

बाह्यान्तर्वृत्त्यावृतस्य कथं चिदाकाशदृष्टिः उदेतीत्यत आह—**बाह्येति** ॥ २० ॥ निष्प्रतियोगिकचिन्मात्रावगतेः अन्तर्बाह्यविभागकलनापह्नवपूर्वकत्वात् ज्ञेयसामान्यासम्भवप्रबोधसमकालं योगी कैवल्यरूपेण अवशिष्यते इत्याह—**कर्पूरमिति** । दग्धकर्पूरवत् जलगतसैन्धवपिण्डवच्च जाग्रदाद्यवस्थात्रयलीयमानं मनः स्वरूपध्यानसंस्कृतं सत्प्रपञ्चविमुखं भूत्वा स्वतत्त्वे ब्रह्मणि लीयते ॥ २१ ॥ प्रपञ्चतद्गोचरज्ञेयज्ञानसत्त्वात् कथं मनः स्वतत्त्वे विलीयत इत्यत आह—**ज्ञेयमिति** । सर्वत्र स्वातिरेकेण प्रतीयत इति **सर्वप्रतीतम्** । अविद्यापदशब्दात् जाग्रदादितत्कार्यप्रपञ्च उच्यते । तत् सर्वं **ज्ञेयशब्दार्थः** तद्गोचरं मनः **ज्ञानमुच्यते** । "ब्रह्मातिरिक्तं न किञ्चिदस्ति" इति यज्ज्ञानसमकालं **ज्ञानं ज्ञेयं समं** युगपन्नष्टं भवति अयमेव अद्वितीयब्रह्मप्रापकः **पन्थाः** नातोऽन्यः कश्चिदस्तीत्यर्थः ॥ २२ ॥ युगपत् कथं लीयते इत्यत आह—**ज्ञेयेति** ॥ २३ ॥

[1] सर्व—अ, अ २, क.  [2] त्यागाद्वि—क, अ १, अ २.

योगज्ञानाभ्यां मनोलयः

द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं मुनीश्वर ।
योग[1]स्तु वृत्तिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥ २४ ॥
तस्मिन्निरोधिते नूनमुपशान्तं मनो भवेत् ।
मनःस्पन्दोपशान्त्यायां संसारः प्रविलीयते ॥ २५ ॥
सूर्या[2]लोकपरिस्पन्दशान्तौ व्यवहृतिर्यथा ।

कथं पुनः मानसं विलीयते इत्याशङ्क्य प्रत्यगभिन्नब्रह्मगोचरयोगज्ञानाभ्यां मानसं विलीयत इति सदृष्टान्तमाह—द्वाविति । योगस्तु स्वातिरिक्तास्तित्वगोचरतच्चित्तवृत्तिरोधः, ज्ञानं ब्रह्मातिरिक्तं न किञ्चिदस्तीति सम्यगवेक्षणम् ॥ २४ ॥ यः स्वातिरिक्तमस्तीति भ्रम उदेति तस्मिन् । संसारे सति कथं मनः शाम्यतीत्यत्र—मन इति । मनःस्पन्दोपशान्त्यायामित्यस्य मनःस्पन्दोपशान्तावित्यर्थः । "मनःस्पन्दोपशान्त्याऽयं" इत्येकं पाठान्तरमपि वर्तते । संसारः प्रविलीयते, संसारस्य मनःकल्पितत्वात् कल्पकाभावे कल्प्याभावो युज्यते इत्यर्थः ॥ २५ ॥ अत्र दृष्टान्तः—सूर्येति ॥

मनोलयात् प्राणस्पन्दनिरोधः

शास्त्रसज्जनसंपर्कवैराग्याभ्यासयोगतः ॥ २६ ॥
अनास्थायां कृतास्थायां पूर्वं संसारवृत्तिषु ।
यथाऽभिवाञ्छितध्यानाच्चिरमेकतयोदितात् ॥ २७ ॥
एकतत्त्वदृढाभ्यासात् प्राणस्पन्दो निरुध्यते ।

स्वाज्ञानविकल्पितमनःस्पन्दस्य प्राणस्पन्दनपूर्वकत्वात् । यत एवमतः तच्छान्तावुपाय उच्यते—शास्त्रेति ॥ २६ ॥ अनास्थायां निवृत्तिमार्गे

[1] स्तवृत्ति—क, अ १, अ २.  [2] लाके—क, अ २.

कृतास्थायां सत्यां ब्रह्म सत्यं जगत् मिथ्येति ज्ञानमुदेति । ततः यथेति ॥ २७ ॥

प्राणस्पन्दनिरोधात् मनःस्पन्दनिरोधः

पूरकाद्यनिलायामाद्दृढाभ्यासादखेदजात् ॥ २८ ॥
एकान्तध्यानयोगाच्च मनःस्पन्दो निरुध्यते ।

मनःस्पन्दशान्तिः कथमित्यत्र—पूरकेति ॥ २८ ॥ प्राणस्पन्दशान्तिसमकालं मन इति ॥

प्राणस्पन्दनिरोधविविधोपायाः

ओङ्कारोच्चारणप्रान्तशब्दतत्त्वानुभावनात् ।
सुषुप्ते [1]संविदो जाते प्राणस्पन्दो निरुध्यते ॥ २९ ॥
तालुमूलगतां यत्नाज्जिह्वयाऽऽक्रम्य घण्टिकाम् ।
ऊर्ध्वरन्ध्रं गते प्राणे प्राणस्पन्दो निरुध्यते ॥ ३० ॥
प्राणे गलितसंवित्तौ तालूर्ध्वद्वादशान्तगे ।
अभ्यासादूर्ध्वरन्ध्रेण प्राणस्पन्दो निरुध्यते ॥ ३१ ॥
द्वादशाङ्गुलपर्यन्ते नासाग्रे विमलाम्बरे ।
संविद्दृशि प्रशाम्यन्त्यां प्राणस्पन्दो निरुध्यते ॥ ३२ ॥
भ्रूमध्ये तारकालोकशान्तावन्तमुपागते ।
चेतनैकतने बद्धे प्राणस्पन्दो निरुध्यते ॥ ३३ ॥
ओमित्येव यदुद्भूतं [2]ज्ञानं ज्ञेयात्मकं शिवम् ।
असंस्पृष्ट[3]विकारांशं प्राणस्पन्दो निरुध्यते ॥ ३४ ॥

[1] स्सं—अ, अ १. [2] ज्ञानज्ञे—अ २. [3] विकल्पां—अ, अ १, अ २, क.

चिरकालं हृदेकान्तव्योमसंवेदना[1]न्मुने ।
अवासनमनोध्यानात् प्राणस्पन्दो निरुध्यते ॥ ३५ ॥
एभिः क्रमैस्तथान्यैश्च नानासंकल्पकल्पितैः ।
नानादेशिकवक्त्रस्थैः प्राणस्पन्दो निरुध्यते ॥ ३६ ॥

प्लुतप्रणवानुसन्धानेनापि प्राणस्पन्दो निरुध्यत इत्याह—ओङ्कारेति । ओंकार. . . भावनात् कांस्यघण्टानिनादवत् प्रणवनादानुसन्धानात् । बाह्यान्तर्भवसंविदो विषयज्ञाततेः सुषुप्ते जाते सति अथ प्राणेति ॥ २९ ॥ लम्बिकयाऽपि प्राणस्पन्दशान्तिः स्यादित्याह—तान्विति । तदुपायतः ऊर्ध्वरन्ध्रं गते ॥ ३० ॥ राजयोगाभ्यासपाटवतः प्राण इति । षण्मुखीमुद्रया गळितसंवित्तौ विगळितबाह्यान्तःसंवित्कलनायां सत्यां अभ्यासात् तालूर्ध्व-रन्ध्रेण प्राणे तालूर्ध्वविलसितद्वादशान्तं सहस्रारचक्रं गते सति अथ प्राणेति ॥ ३१ ॥ बहिःकुम्भकेनापि प्राणजयः स्यादित्याह—द्वादशेति । संविदृशि प्रशाम्यन्त्यां स्वातिरिक्तविषयवृत्तौ नष्टायाम् ॥ ३२ ॥ तारकानुसन्धा-नतोऽपि भ्रूमध्ये । तारकालोकनशान्तौ सत्याम् । तारकालोकनं कर्तव्यमिति सङ्कल्पे अन्तमुपागते अथ मनसि चेतनैकताने, चेतने प्रतीचि एकताने बद्धे एकतानतया बद्धे मनोन्मनीभावं गते सति, अथ प्राणेति ॥ ३३ ॥ ब्रह्मज्ञानेनापि प्राणस्पन्दशान्तिः स्यादित्याह—ओमिति । तदेव चाहं सकलं विमुक्त ओमिति ओङ्कारार्थविचारणसञ्जातासंस्पृष्टविकारांशज्ञानसमकालं प्राणेति ॥ ३४ ॥ ध्यानात् वासनाक्षयाच्च प्राणस्पन्दशान्तिः स्यादित्याह—चिरेति । हृदा एकान्तव्योमसंवेदनात् "चिद्व्योमातिरिक्तं न किञ्चिदस्ति" इति ज्ञानात् वासना क्षीयते । ततो ध्येयैकगोचरं मनो भवति । प्राणस्पन्दशान्तिः भवेदित्यर्थः ॥ ३५ ॥ उक्तैरनुक्तैर्वा उपायैः चिरानुष्ठितैः प्राणस्पन्दशान्तिः स्यादित्याह—एभिरिति ॥ ३६ ॥

[1] न्मुखे—क.

कुम्भकेन सुषुम्नाभेदनद्वारा परमपदगमनम्

आकुञ्चनेन कुण्डलिन्याः कवाटमुद्घाट्य मोक्षद्वारं विभेदयेत् ॥ ३६–१ ॥ येन मार्गेण गन्तव्यं तद्द्वारं मुखेनाच्छाद्य [1]प्रसुप्ता कुण्डलिनी कुटिलाकारा सर्पवद्वेष्टिता भवति ॥ ३६–२ ॥ सा शक्तिर्येन चालिता स्यात् स तु मुक्तो भवति । सा कुण्डलिनी कण्ठोर्ध्वभागे सुप्ता चेद्योगिनां मुक्तये भवति । बन्धनायाधो मूढानाम् ॥ ३६–३ ॥ इडादिमार्गद्वयं विहाय सुषुम्नामार्गेण गच्छेत्तद्विष्णोः परमं पदम् ॥ ३६–४ ॥

प्राणस्पन्दनिरोधलक्षणकेवलकुम्भकतो योगी कुण्डलिन्या सुषुम्नावदनं भेदयेदित्याह—आकुञ्चनेनेति । सुषुम्नाकवाटम् । मोक्षद्वारं ब्रह्मरन्ध्रं विभेदयेत् ॥ ३६–१ ॥ मोक्षद्वारभेदककुण्डलिनीस्वरूपं तच्चालनफलं चाह—येनेति ॥ ३६–२, ३ ॥ यत एवं अतः इडादीति । सुषुम्नायाः विष्णुपदाप्तिद्वारत्वात् ॥ ३६–४ ॥

मनोयुक्तप्राणस्य सुषुम्नाप्रवेशनविधिः

मरुदभ्यसनं सर्वं मनोयुक्तं समभ्यसेत् ।
इतरत्र न कर्तव्या मनोवृत्तिर्मनीषिणा ॥ ३७ ॥
दिवा न पूजयेद्विष्णुं रात्रौ नैव प्रपूजयेत् ।
सततं पूजयेद्विष्णुं दिवारात्रं न पूजयेत् ॥ ३८ ॥

मनोयोगाभ्यासः फलवानित्यर्थः ॥ ३७ ॥ मनोयुक्तप्राणं इडादिमार्गद्वयम-प्रापयित्वा महापथव्यापृतं कुर्यादित्याह—दिवेति । मनोयोगतो विष्णुं प्राणं

[1] सुप्तासुप्त—अ, अ १.

दिवा सूर्यनाड्यां न पूजयेत् न व्यापारयेत् । तथा चन्द्रनाड्यां रात्रौ नैव प्रपूजयेत् । ततः अव्याकृताकाशं तेन पूरितं सततं सुषुम्नाऽऽख्यं महापथं प्रति विष्णुं पूजयेत् । कदाऽपि दिवारात्रं न पूजयेदित्यर्थः ॥ ३८ ॥

खेचरीमुद्राप्राप्तिः

सुषिरो ज्ञानजनकः पञ्चस्रोतःसमन्वितः ।
तिष्ठते खेचरी मुद्रा त्वं हि शाण्डिल्य तां भज ॥ ३९ ॥
सव्यदक्षिण[1]नाडीस्थो मध्ये चरति मारुतः ।
तिष्ठते खेचरी मुद्रा तस्मिन् स्थाने न संशयः ॥ ४० ॥
इडापिङ्गलयोर्मध्ये शून्यं चैवानिलं ग्रसेत् ।
तिष्ठन्ती खेचरी मुद्रा तत्र सत्यं प्रतिष्ठितम् ॥ ४१ ॥
सोमसूर्यद्वयोर्मध्ये निरालम्बतले पुनः ।
संस्थिता व्योमचक्रे सा मुद्रा नाम च खेचरी ॥ ४२ ॥

सुषुम्नाप्रवेशतः किं स्यादित्याशङ्क्य तत्र खेचरीमुद्रा वर्तते तत्साक्षात्कारात् कृतकृत्यो भवसीत्याह—सुषिर इति । यत्र सुषुम्नामध्ये सुषिरः विराडादि-तुरीयातीतान्तपञ्चस्रोतस्समन्वितः सन् मूलाधारानाहताज्ञासहस्रारेषु योगिनः क्रमेण विराडादिज्ञानजनको भवति तत्रैव खेचरीमुद्रा निर्विकल्पकरूपिणी वर्तते । मत्प्रसादतः तां त्वं भजेत्यर्थः ॥ ३९ ॥ उक्तार्थमेव पुनः पुनः शब्दान्तरेण विशदयति—सव्येति ॥ ४० ॥ शून्यशब्देन अव्याकृतमाकाश-मुच्यते, आकाशस्य वायुग्रासत्वात् ॥ ४१ ॥ व्योमचक्रस्य निरालम्बत्वात् ॥ ४२ ॥

[1] नासि—अ.

बाह्यखेचरीसिद्ध्युपायः

छेदनचालनदोहैः [1]कलां परां जिह्वां कृत्वा दृष्टिं भ्रूमध्ये स्थाप्य कपालकुहरे जिह्वा विपरीतगा यदा भवति तदा खेचरी मुद्रा जायते । जिह्वा चित्तं च खे [2]चरति । तेनोर्ध्वजिह्वः पुमानमृतो भवति ॥ ४२–१ ॥

बाह्यखेचरीसिद्ध्युपायमाह—छेदनेति । प्रतिभानुवासरं षण्मासावधि स्नुहिपत्रनिभशस्त्रेण रोममात्रं जिह्वासिराच्छेदनेन प्रतिब्राह्मे मुहूर्ते जिह्वाचालनतः प्रातः सैन्धवपथ्याचूर्णतो दोहैः कलां परां सूक्ष्मां जिह्वां कृत्वा दृष्टियुग्मं भ्रूमध्ये स्थाप्य घण्टिकारन्ध्रेण कपालकुहरे जिह्वा विपरीतगा यदा भवति तदा खेचरीमुद्रा उदेति । सहस्रारजिह्वाप्रवेशतो योगी कृतकृत्यो भवतीत्यर्थः ॥ ४२–१ ॥

अभ्यासकाले प्राणजयोपायः

वामपादमूलेन योनिं संपीड्य दक्षिणपादं प्रसार्य तं कराभ्यां धृत्वा नासाभ्यां वायुमापूर्य कण्ठबन्धं समारोप्योर्ध्वतो वायुं धारयेत् । तेन सर्वक्लेशहानिः । ततः पीयूषमिव विषं जीर्यते । क्षयगुल्मगुदावर्तजीर्णत्वगादिदोषा नश्यन्ति । एष प्राणजयोपायः सर्वमृत्यूपघातकः ॥ ४२–२ ॥

अभ्यासकाले प्राणजयोपायमाह—वामेति । महामुद्राऽभ्यासेन तेन ॥ ४२–२ ॥

[1] फलां—मु. [2] चरी—अ २.

स्वात्मापरोक्षसिद्ध्युपायः

वामपादपार्ष्णिं योनिस्थाने नियोज्य दक्षिणचरणं वामोरूपरि संस्थाप्य वायुमापूर्य हृदये चुबुकं निधाय योनिमाकुञ्च्य मनोमध्ये यथाशक्ति धारयित्वा स्वात्मानं भावयेत्। तेनापरोक्षसिद्धिः ॥ ४२—३ ॥

स्वात्मापरोक्षसिद्ध्युपायमाह—वामेति । स्वात्मानं ब्रह्माहमस्मीति भावयेत्। सिद्धिः भवति ॥ ४२—३ ॥

सर्वरोगविनिर्मोकसाधनं धारणाविशेषः

बाह्यात् प्राणं समाकृष्य पूरयित्वोदरे स्थितम्।
नाभिमध्ये च नासाग्रे पादाङ्गुष्ठे च यत्नतः ॥ ४३ ॥
धारयेन्मनसा प्राणं सन्ध्याकालेषु वा सदा।
सर्वरोगविनिर्मुक्तो भवेद्योगी गतक्लमः ॥ ४४ ॥

धारणाविशेषमाह—बाह्यादिति ॥ ४३—४४ ॥

नासाग्रादिषु संयमेन विविधसिद्धयः

नासाग्रे वायुविजयं भवति। नाभिमध्ये सर्वरोगविनाशः। पादाङ्गुष्ठधारणाच्छरीरलघुता भवति ॥ ४४—१ ॥

रसनाद्वायुमाकृष्य यः पिबेत् सततं नरः।
श्रमदाहौ तु न स्यातां नश्यन्ति व्याधयस्तथा ॥ ४५ ॥
सन्ध्ययोर्ब्राह्मणः [1]काले वायुमाकृष्य यः पिबेत्।
त्रिमासात्तस्य कल्याणी जायते वाक् सरस्वती ॥ ४६ ॥

[1] काले—क.

एवं षण्मासाभ्यासात् सर्वरोगनिवृत्तिः ॥
जिह्वया वायुमानीय जिह्वामूले निरोधयेत् ।
यः पिबेदमृतं विद्वान् सकलं भद्रमश्नुते ॥ ४७ ॥
आत्मन्यात्मानमिडया धारयित्वा भ्रुवोऽन्तरे ।
विभेद्य त्रिदशाहारं व्याधिस्थोऽपि विमुच्यते ॥ ४८ ॥
[1]नाडीभ्यां वायुमारोप्य नाभौ तुन्दस्य पार्श्वयोः ।
घटिकैकां वहेद्यस्तु व्याधिभिः स विमुच्यते ॥ ४९ ॥
मासमेकं त्रिसन्ध्यं तु जिह्वयाऽऽरोप्य मारुतम् ।
विभेद्य त्रिदशाहारं धारयेत्तुन्दमध्यमे ॥ ५० ॥
ज्वराः सर्वे विनश्यन्ति विषाणि विविधानि च ।
मुहूर्तमपि यो नित्यं नासाग्रे मनसा सह ॥ ५१ ॥
सर्वं तरति पाप्मानं तस्य जन्मशतार्जितम् ।

[2]तारसंयमात् सकलविषयज्ञानं भवति । नासाग्रे चित्तसंयमादिन्द्रलोकज्ञानम् । तदधश्चित्तसंयमादग्निलोकज्ञानम् । चक्षुषि चित्तसंयमात् सर्वलोकज्ञानम् । श्रोत्रे चित्तस्य संयमाद्यमलोकज्ञानम् । तत्पार्श्वे संयमान्निर्ऋतिलोकज्ञानम् । पृष्ठभागे संयमाद्वरुणलोकज्ञानम् । वामकर्णे संयमाद्वायुलोकज्ञानम् । कण्ठे संयमात् सोमलोकज्ञानम् । वामचक्षुषि संयमाच्छिवलोकज्ञानम् । मूर्ध्नि संयमाद्ब्रह्मलोकज्ञानम् । पादाधोभागे संयमादतललोकज्ञानम् । पादे संयमाद्वितललोकज्ञानम् । पादसन्धौ संयमान्नितललोकज्ञानम् । जङ्घे संयमात्सुतललोकज्ञानम् । जानौ संयमान्महातललोकज्ञानम् । ऊरौ चित्तसंयमाद्रसातललो-

[1] नासीभ्यां—अ,

[2] तारचित्तसं—उ.

कज्ञानम् । कटौ चित्तसंयमात्तलातललोकज्ञानम् । नाभौ चित्तसं-यमाद्भूलोकज्ञानम् । कुक्षौ संयमाद्भुवर्लोकज्ञानम् । हृदि चित्तसंयमात् स्वर्लोकज्ञानम् । हृदयोर्ध्वभागे चित्तसंयमान्महर्लो-कज्ञानम् । कण्ठे चित्तसंयमाज्जनोलोकज्ञानम् । भ्रूमध्ये चित्तसंयमात्त-पोलोकज्ञानम् । मूर्ध्नि चित्तसंयमात् सत्यलोकज्ञानम् । धर्माधर्मसंयमाद-तीतानागतज्ञानम् । तत्तज्जन्तुध्वनौ चित्तसंयमात् सर्वजन्तुरुतज्ञानम् । संचितकर्मणि चित्तसंयमात् पूर्वजातिज्ञानम् । परचित्ते चित्तसंयमात् परचित्तज्ञानम् । कायरूपे चित्तसंयमादन्यादृश्यरूपम् । बले चित्त-संयमाद्धनुमदादिबलम् । सूर्ये चित्तसंयमाद्भुवनज्ञानम् । चन्द्रे चित्तसंयमात्तारव्यूहज्ञानम् । ध्रुवे तद्गतिदर्शनम् । [1]स्वार्थसंयमात् पुरुषज्ञानम् । नाभिचक्रे कायव्यूहज्ञानम् । कण्ठकूपे क्षुत्पिपासा-निवृत्तिः । कूर्मनाड्यां स्थैर्यम् । तारे सिद्धदर्शनम् । कायाकाशसंय-मादाकाशगमनम् । तत्तत्स्थाने संयमात्तत्तत्सिद्धयो भवन्ति ॥९२॥

नासाग्रादिकायाकाशान्तसंयमाद्विचित्रसिद्धयो भवन्तीत्याह—नासाग्र इति । नासाग्रे वायुधारणात् ॥ ४४–१ ॥ रसनात् रसनया ॥ ४६–४७ ॥ चन्द्रमण्डलं विभेद्य । त्रिदशाहारं अमृतं पीत्वा ॥ ४८–९० ॥ मनसा सह यो लक्ष्यं पश्यति ॥ ९१ ॥ तारसंयमात् तारकचित्तसंयमात् भवतीति सर्वत्रानुवर्तते । जंघे जंघायाम् । इत्थंभूतसिद्धिः पुरुषार्थसाधनमिति चेन्न, सिद्धेः पुरुषार्थपरिपन्थित्वात् । न हि स्वातिरेकेण स्वपरशरीरचतुर्दशलोकतद्वि-षयकज्ञानं वाऽस्ति । तस्मात् मुमुक्षुभिः सिद्धिमार्गो नादर्तव्यः इत्यर्थः ॥

इति सप्तमः खण्डः

---

[1] स्वार्थे—क, अ २.

पञ्चविधप्रत्याहारः

अथ प्रत्याहारः । स पञ्चविधः । विषयेषु विचरतामिन्द्रियाणां बलादाहरणं प्रत्याहारः । यद्यत्पश्यति [1]तत्सर्वमात्मेति प्रत्याहारः । नित्यविहितकर्मफलत्यागः प्रत्याहारः । सर्वविषयपराङ्मुखत्वं प्रत्याहारः । अष्टादशसु मर्मस्थानेषु क्रमाद्धारणं प्रत्याहारः ॥ १ ॥ पादाङ्गुष्ठगुल्फजङ्घाजानूरुपायुमेढ्रनाभिहृदयकण्ठकूपतालुनासाक्षिभ्रूमध्यललाटमूर्ध्नि स्थानानि । तेषु क्रमादारोहावरोहक्रमेण प्रत्याहरेत् ॥ २ ॥

यमनियमासनप्राणायामप्रासंगिकपरमार्थोपदेशतत्प्रतिपन्थिनानाविधसिद्धीः प्रतिपाद्य अथ योगांगप्रकृतप्रत्याहारमाचष्टे— अथेति । स्वस्वविषयतो बलात् । क्रमाद्धारणं, धारणं हारणं संक्रमणं प्रत्याहारः ॥ १ ॥ मर्मस्थानानि कानीत्यत्र पादेति ॥ २ ॥

इत्यष्टमः खण्डः

पञ्चविधाः धारणाः

अथ धारणाः । [2]स पञ्चविधः । आत्मनि मनोधारणं दहराकाशे बाह्याकाशधारणं पृथिव्यप्तेजोवाय्वाकाशेषु पञ्चमूर्तिधारणं चेति ॥

स पञ्चविधः ताः पञ्चविधाः । पञ्चब्रह्म-पञ्चमूर्तिधारणम् ॥

इति नवमः खण्डः

[1] तत्तत्स—अ. [2] सा त्रिविधा—मु.

द्विविधं ध्यानम्

अथ ध्यानम् । तद्द्विविधं सगुणं निर्गुणं चेति । सगुणं मूर्तिध्यानम् । निर्गुणमात्मयाथात्म्यम् ॥

अनात्मापह्नवसिद्धात्ममात्रावशेषो हि आत्मयाथात्म्यम् ॥

इति दशमः खण्डः

समाधिस्वरूपम्

अथ समाधिः । जीवात्मपरमात्मैक्यावस्था त्रिपुटीरहिता परमानन्दस्वरूपा शुद्धचैतन्यात्मिका भवति ॥

तूलाविद्योपाधिको जीवः मूलाविद्योपाधिकः परमात्मा तयोरौपाधिकविशेषांशापायात् प्रत्यक्परैक्यं यस्यामाभाति सेयं जीवात्मपरमात्मैक्यावस्था निर्विकल्पकरूपिणीत्यर्थः । त्रिपुट्यां सत्यां निर्विकल्पता कुत इत्यत आह—त्रिपुटीति । निर्निकल्पकप्रकृतेः त्रिपुट्यादिविकृतिग्रासत्वात् त्रिपुट्यभावे दुःखरूपा स्यादित्यत आह—परमानन्देति । त्रिपुटीदुःखग्रासनिर्विकल्पकस्थितेः परमानन्दस्वरूपत्वात् ऐक्यावस्थाया जडत्वं स्यादित्याशङ्क्य अस्य असंप्रज्ञातसमाधिरूपतया शुद्धचैतन्यतामाह—शुद्धेति । अत्र जीवात्मपरमात्मैक्यावस्थाशब्देन असंप्रज्ञातसमाधिरुच्यते इत्यर्थः ॥

इत्येकादशः खण्डः

इति प्रथमोऽध्यायः

# द्वितीयोऽध्यायः

## निर्विशेषब्रह्मस्वरूपम्

अथ ह शाण्डिल्यो ह वै ब्रह्मऋषिश्चतुर्षु वेदेषु ब्रह्मविद्यामलभमानः किं नामेत्यथर्वाणं भगवन्तमुपसन्नः पप्रच्छ अधीहि भगवन् ब्रह्मविद्यां येन श्रेयोऽवाप्स्यामीति ॥ १ ॥ स होवाचाथर्वा शाण्डिल्य सत्यं विज्ञानमनन्तं ब्रह्म ॥ २ ॥

अष्टांगयोगच्छलेन स्वात्मतत्त्वं श्रुत्वाऽपि यथावदनधिगततया निष्प्रतियोगिकनिर्विशेषब्रह्ममात्रज्ञानबुभुत्सया शाण्डिल्यः पुनः अथर्वाणं पृच्छतीत्याह—**अथेति**। **वेदेषु** अर्थतोऽवधारितेष्वपि निष्प्रतियोगिक**ब्रह्म**मात्र**विद्याम्**। **किंनाम ब्रह्म**। **प्रपच्छ**—किमिति? **अधीहि**। **येन** त्वदुपदेशेन ॥ १ ॥ शाण्डिल्येनैवं पृष्टः **स होवाच**। किं नाम ब्रह्मेति प्रश्नोत्तरं—**शाण्डिल्येति**। **सत्यं विज्ञानमनन्तं ब्रह्म** इति तैत्तिरीयके सम्यक् व्याख्यातमेतत् ॥ २ ॥

## ब्रह्मणः अनिर्देश्यत्वम्

यस्मिन्निदमोतं च प्रोतं च यस्मिन्निदं संच विचैति सर्वं यस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवति तदपाणिपादमचक्षुःश्रोत्रमजिह्वमशरीरमग्राह्यमनिर्देश्यम् ॥ ३ ॥

यत् सर्वाधिकरणं तदनिर्देश्यमित्याह—**यस्मिन्निति**। **इदं** अविद्यापदतत्कार्यजातं यत्र **ओतप्रोत**भावमेत्य **संच विचैति** सङ्कोचविकासतां भजति, यन्मात्रज्ञानतः **इदं** स्वातिरिक्तं नेति **विज्ञातं भवति**, तदेतत्पाणिपादादिमद्व्यष्टिसमष्ट्यात्मकशरीरापह्नवसिद्धं तत्त्वेन निर्देष्टुमशक्यत्वात् **अनिर्देश्यम्** ॥ ३ ॥

ब्रह्मणः अवाङ्मानसगोचरत्वम्

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । यत्केवलं ज्ञानगम्यम् । प्रज्ञा च यस्मात्प्रसृता पुराणी । यदेकमद्वितीयम् । आकाशवत् सर्वगतं सुसूक्ष्मं निरञ्जनं निष्क्रियं सन्मात्रं चिदानन्दैकरसं शिवं प्रशान्तममृतं तत् परं च ब्रह्म । तत्त्वमसि तज्ज्ञानेन हि विजानीहि ॥ ४ ॥

तस्यावाङ्मानसगोचरत्वं ज्ञानैकगम्यत्वं प्रज्ञाजनकत्वं अद्वितीयत्वं वस्तुतः सच्चिदानन्दमात्रत्वं चाह—यत इति । केवलं ज्ञानगम्यं ज्ञानेतरसाधनैरगम्यमित्यर्थः, "नान्यः पन्था: विद्यतेऽयनाय" इति श्रुतेः । "निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते" इति श्रुतिसिद्धा प्रज्ञा पुराणी, आकैवल्यभावस्थायित्वात् । सा यस्मात् प्रसृता विजृम्भिता । यच्चैतन्यमात्रं द्वैतादिविकृतिप्रसक्तौ अद्वितीयमित्यादिविशेषणवत् तदभावे "सन्मात्रं असदन्यत्" इति श्रुतेः यत्सर्वासदपह्नवसिद्धनिष्प्रतियोगिकसन्मात्रमवशिष्यते तत् । तदेव सर्वं तदतिरिक्तं नास्तीति बुध्यस्वेत्यर्थः ॥ ४ ॥

सर्वस्य परमात्मत्वम्

य एको देव आत्मशक्तिप्रधानः सर्वज्ञः सर्वेश्वरः सर्वभूतान्तरात्मा सर्वभूताधिवासः सर्वभूतनिगूढो भूतयोनिर्योगैकगम्यः । यश्च विश्वं सृजति विश्वं बिभर्ति विश्वं भुङ्क्ते स आत्मा । आत्मनि तं तं लोकं विजानीहि ॥ ५ ॥

कथं पुनस्तद्विया सर्वं ज्ञातुं शक्यते तद्ब्रह्मातिरेकेण विश्वकृदीश्वरसत्त्वादित्याशङ्क्य यः स्वाज्ञदृष्ट्या स्वातिरिक्तेश्वरवत् भातः स एव स्वज्ञदृष्ट्या परमात्मतया

अवशिष्यते इत्याह—य इति । यस्यानात्मापह्नवसिद्धात्ममात्रशक्तिः प्रकृतिः प्रधाना मुख्या भवति साक्षित्वेश्वरत्वादिशक्तिस्तु उपसर्जनभूता च भवति सोऽयं आत्मशक्तिप्रधानः । उपसर्जनशक्तिमवष्टभ्य सर्वज्ञ इत्यादि । ईश्वरसाक्षात्कारस्य योगैकसाध्यत्वात् ईश्वरसद्भावलिंगमाह—यश्चेति । "यस्य लिंगं प्रपञ्चं वा स म आत्मा न संशयः" इति श्रुतिसिद्धतटस्थलक्षणेनेश्वरास्तित्वमवगम्य तस्मिन् स्वाज्ञसमर्पितविशेषापाये यो य ईश्वरः साक्षी जीवो जगदिति च व्यपदिष्टः तं तं लोकं निष्प्रतियोगिकब्रह्ममात्रमिति विजानीहि ॥ ५ ॥

गुरूपदेशतः सर्वात्मत्वज्ञानप्राप्तिः

मा शोचीरात्मविज्ञानी शोकस्यान्तं गमिष्यसि ॥ ६ ॥

कथं एवं ज्ञातुं शक्यमिति मा शुचः मदुपदेशमहिम्ना स्वातिरिक्तास्तिताप्रभवशोकान्तब्रह्म भवसीत्याह—मा शोचीरिति ॥ ६ ॥

इति द्वितीयोऽध्यायः

# तृतीयोऽध्यायः

ब्रह्मणो वस्तुतः निष्प्रतियोगिकस्वमात्रत्वम्

अथ हैनं शाण्डिल्योऽथर्वाणं पप्रच्छ यदेकमक्षरं निष्क्रियं शिवं सन्मात्रं परं ब्रह्म । तस्मात् कथमिदं विश्वं जायते कथं स्थीयते कथमस्मिल्लीयते । तन्मे संशयं छेत्तुमर्हसीति ॥ १ ॥

स होवाचाथर्वा सत्यं शाण्डिल्य परब्रह्म निष्क्रियमक्षरमिति ॥ २ ॥

ब्रह्मणो निष्प्रतियोगिकस्वमात्रत्वमुक्तं, ततो विश्वं जायते इति च। निष्प्रतियोगिकस्वमात्रत्वे विश्वहेतुत्वं न सम्भवति, विश्वहेतुत्वे निष्प्रतियोगिकत्वं च न सम्भवतीति ब्रह्मातिरिक्तेयत्ताबुभुत्सया शाण्डिल्योऽथर्वाणं पृच्छतीत्याह— अथेति ॥ १ ॥ ब्रह्म तु सन्मात्रप्रकृतिकं तन्निष्प्रतियोगिकस्वप्रकृतिं विना जगज्जन्मस्थितिभंग[1]विकृतितां नैति । वस्तुयाथात्म्याज्ञानतो नितरां संशयाविष्टशाण्डिल्यप्रश्नोत्तरं स होवाच । हे शाण्डिल्य यन्मयोक्तं सन्मात्रं परं ब्रह्म निष्प्रतियोगिकं स्वातिरेकेण अस्तीति विश्वसनीयविश्वोत्पादस्थितिभंगकार्यकारणविक्रियाऽपह्नवसिद्धं परमाक्षरमिति तदेव सत्यम् । तस्य निष्प्रतियोगिकत्वे न हि संशयोऽस्ति स्वाज्ञादिदृष्टिमोहे सत्यसति स्वस्यैकरूपतया स्थितत्वात् ॥२॥

### ब्रह्मणो रूपत्रयम्

अथाप्यस्यारूपस्य ब्रह्मणस्त्रीणि रूपाणि भवन्ति निष्कलं सकलं सकलनिष्कलं चेति ॥ ३ ॥

तथा चेद्विश्वकारणता कुत इत्याशङ्क्य पारमार्थिकस्वज्ञस्वाज्ञदृष्टिवैचित्र्यात् निष्प्रतियोगिकनिष्कळमपि ब्रह्म सप्रतियोगिकनिष्कळवत् सकळवत् सकळनिष्कळवच्च भातीत्याह—अथेति ॥ ३ ॥

### निष्कलं ब्रह्म

यत्सत्यं विज्ञानमानन्दं निष्क्रियं निरञ्जनं सर्वगतं सुसूक्ष्मं सर्वतोमुखमनिर्देश्यममृतमस्ति तदिदं निष्कलं रूपम् ॥ ४ ॥

परमार्थदृष्ट्या यत् निष्प्रतियोगिकनिष्कळमित्युक्तं तत् तिष्ठतु, तदवगतेः सप्रतियोगिककलनाऽपह्नवपूर्वकत्वात् ,

चिन्मात्रमेव चिन्मात्रमखण्डैकरसं रसम् ।
सर्ववर्जितचिन्मात्रं ब्रह्ममात्रमसन्न हि ॥

[1] विकृतितामेति—उ.

इत्यादि श्रुतेः । तत्र आदौ स्वज्ञदृष्टिमवष्टभ्य सप्रतियोगिकनिष्कळस्वरूपं विशदयति—यदिति । सत्यज्ञानानन्दाद्युक्तविशेषणानामनृतजडदुःखादिप्रतिषेधकत्वेन सप्रतियोगिकत्वं युज्यते, निष्प्रतियोगिकपक्षे तु तद्दृष्ट्या अपह्नोतव्यविषयसामान्यमस्ति नास्तीति विभ्रमस्याप्यपह्नवं गतत्वात् ॥ ४ ॥

सकलं ब्रह्म

अथास्य या [1]सहजाऽस्ति विद्या मूलप्रकृतिर्माया लोहितशुक्लकृष्णा तया सहजवान् देवः कृष्णपिङ्गलो महेश्वर ईष्टे । तदिदमस्य [2]सकलं रूपम् ॥ ५ ॥

सप्रतियोगिकसकळरूपं स्पष्टयति—अथेति । य एष निष्प्रतियोगिकनिष्कळतया अवशिष्टः स एव स्वाज्ञदृष्ट्या सप्रतियोगिकनिष्कळ इति ख्यातः । स एवाथ स्वाज्ञ[3]दृष्ट्या विकल्पानन्तरं सर्वेश्वरो भवति । अस्येश्वरत्वहेतुः केत्यत आह—येति । स्वाज्ञदृष्टिसहजा या मूलप्रकृतित्वेन प्रकृता त्रिगुणात्मिका मायाऽस्ति तया सहजवान् देवः त्रिगुणयोगतः कृष्णपिङ्गळो महेश्वरः सर्वेश्वरत्वमवलम्ब्य स्वाज्ञदृष्टिप्रसक्तस्वाविद्यापदतत्कार्यजातं ईष्टे । तदिदमस्य सकळं रूपं, ईश्वरस्य निरावृतक्रियाज्ञानेच्छाशक्तिमत्त्वेन स्वदृष्टयेशितव्यस्वाविद्यापदतत्कार्यवैरळ्यात् स्वस्यैव निष्प्रतियोगिकनिष्कळत्वात् अस्य सकळत्वं स्वाज्ञदृष्टिनिष्ठमेवेत्यर्थः ॥ ५ ॥

सकलनिष्कलं ब्रह्म

अथैष ज्ञानमयेन तपसा चीयमानोऽकामयत बहु स्यां प्रजायेयेति । अथैतस्मात् तप्यमानात् सत्यकामात् त्रीण्यक्षराण्यजायन्त ।

[1] सहजाऽस्त्यविद्या—मु.

[2] सकलनिष्कल—अ २. सकलनिष्कलं—क. सकलं निष्कलं—अ, अ १.

[3] दृष्टिविकल्पान्तरं—उ.

तिस्रो व्याहृतयस्त्रिपदा गायत्री त्रयो वेदास्त्रयो देवास्त्रयो वर्णास्त्रयो-ऽग्नयश्च जायन्ते । योऽसौ देवो भगवान् सर्वैश्वर्यसंपन्नः सर्वव्यापी सर्वभूतानां हृदये संनिविष्टो मायावी मायया कृतिः स ब्रह्मा स विष्णुः स रुद्रः स इन्द्रः स सर्वे देवाः सर्वाणि भूतानि स एव पुरस्तात् स एव पश्चात् स एवोत्तरतः स एव दक्षिणतः स एवाधस्तात् स एवोपरिष्टात् स एव सर्वम् । अथास्य देवस्यात्मशक्तिक्रीडस्य भक्तानु-कम्पिनो दत्तात्रेयरूपा सुरूपा तनूरवासा इन्दीवरदलप्रख्या चतुर्बाहु-रघोरापापकाशिनी । तदिदमस्य सक[1]लनिष्कलं रूपम् ॥ ६ ॥

अर्धस्वज्ञदृष्टिमवष्टभ्य सकळस्वरूपप्रपञ्चनपूर्वकं सकळनिष्कळस्वरूपमाचष्टे त्रयेति । आद्यन्तयोः सकळं मध्ये निष्कळं यत्र दृश्यते तत् सकळनिष्कळस्वरूपम् । तत्रादौ ईश्वर एकोऽपि तपसा चीयमानो वर्धमानः सन् बहु स्यां प्रजायेय इति बहुभु[भ]वनसङ्कल्पं कृतवान् । एवं सत्यसङ्कल्पात्तस्मादीश्वरात् अकारोकारमकारभेदेन त्रीण्यक्षराण्यजायन्त— इति सर्वत्र वचनानुरोधेन ऊह्यम् । भूरादिभेदेन तिस्रो व्याहृतयः, पदत्रयात्मिका गायत्री, ऋगादिभेदेन त्रयो वेदाः, ब्रह्मादिभेदेन त्रयो देवाः, ब्राह्मणादिभेदेन त्रयो वर्णाः, गार्हपत्यादिभेदेन त्रयोऽग्नयश्च जायन्ते । सोऽयमीश्वरो निरवधिकविभूतिसम्पन्नः स्वेन अन्तर्यामिरूपेण सर्वव्यापी सर्वभूतहृदासनः । तस्याकृतिमत्वं मायया, न स्वतः, स्वतो निराकृतित्वात् । ब्रह्मादिरूपेणापि स एव वर्तते । दिग्विदिगधश्चोर्ध्वं चापि स एव । दत्तात्रेयरूपेणापि स एव वर्तते । सुरूपा तनूः अवासाः इति विशेषणतोऽस्या अवधूतत्वमवगम्यते, "जडभरतदत्तात्रेयरैवतक-ऋभुनिदाघ" इति श्रुतेः । एवं अर्धस्वज्ञदृष्ट्यनुरोधेन सकळनिष्कळस्वरूपं प्रतिपादितमित्यर्थः ॥

इति प्रथमः खण्डः

---

[1] सकलमकलं—अ २. सकलंक—अ, अ १, क.

सन्मात्रस्य परब्रह्मत्वनिर्वचनम्

अथ हैनमथर्वाणं शाण्डिल्यः पप्रच्छ भगवन् सन्मात्रं चिदानन्दैकरसं कस्मादुच्यते परं ब्रह्मेति ॥ १ ॥ स होवाचाथर्वा यस्माच्च बृहति बृंहयति च सर्वं तस्मादुच्यते परं ब्रह्मेति ॥ २ ॥

ब्रह्मणः सन्मात्रत्वं परब्रह्मत्वं आत्मत्वं महेश्वरत्वं च कथमिति शाण्डिल्योऽथर्वाणं पृच्छति, भगवानथर्वाऽपि तत्प्रश्नपूरणं कृतवानित्याह—अथेति । निष्प्रतियोगिकसच्चिदानन्दमात्रं कस्मात् ॥ १–८ ॥

सन्मात्रस्य आत्मत्वनिर्वचनम्

अथ कस्मादुच्यते आत्मेति ॥ ३ ॥ यस्मात् सर्वमाप्नोति सर्वमादत्ते सर्वमत्ति च तस्मादुच्यते आत्मेति ॥ ४ ॥

सन्मात्रस्य महेश्वरत्वनिर्वचनम्

अथ कस्मादुच्यते महेश्वर इति ॥ ५ ॥ यस्मान्महत ईशः शब्दध्वन्या चात्मशक्त्या [1]तस्मादुच्यते महेश्वर इति ॥ ६ ॥

सन्मात्रस्य दत्तात्रेयत्वनिर्वचनम्

[2]अथ कस्मादुच्यते दत्तात्रेय इति ॥ ७ ॥ यस्मात् सुदुश्चरं तपस्तप्यमानायात्रये पुत्रकामायातितरां तुष्टेन भगवता ज्योतिर्मये-

[1] सर्वमीष्टे तस्मा—क.

[2] ७, ८, ११, १२, १३,—एवमङ्कितवाक्यानि मुद्रित(क)कोशयोरेव दृश्यन्ते.

नात्मैव दत्तो यस्माद्धानसूयायामत्रेस्तनयोऽभवत्तस्मादुच्यते दत्तात्रेय इति ॥ ८ ॥

निरुक्तिवेदनफलम्

अथ योऽस्य निरुक्तानि वेद स सर्वं वेद ॥ ९ ॥ अथ यो ह वै विद्यैनं [1]परमुपास्ते सोऽहमिति स ब्रह्मविद्भवति ॥ १० ॥ अत्रैते श्लोका भवन्ति—

दत्तात्रेयं शिवं शान्तमिन्द्रनीलनिभं प्रभुम् ।
आत्ममायारतं देवमवधूतं दिगम्बरम् ॥ ११ ॥
भस्मोद्धूलितसर्वाङ्गं जटाजूटधरं विभुम् ।
चतुर्बाहुमुदाराङ्गं प्रफुल्लकमलेक्षणम् ॥ १२ ॥
ज्ञानयोगनिधिं विश्वगुरुं योगिजनप्रियम् ।
भक्तानुकम्पिनं सर्वसाक्षिणं सिद्धसेवितम् ॥ १३ ॥
एवं यः सततं ध्यायेद्देवदेवं सनातनम् ।
स मुक्तः सर्वपापेभ्यो निःश्रेयसमवाप्नुयात् ॥ १४ ॥
इत्यों सत्यमित्युपनिषत् ॥ १५ ॥

उक्तनिरुक्तत्रयवेदनफलमाह—अथेति । ब्रह्मणः सर्वव्यापकत्वेन ब्रह्मवेदनतः सर्ववित्त्वं स्यादित्यर्थः ॥ ९ ॥ य एतद्ब्रह्म विदित्वोपास्ते स तदेव भवतीत्याह—अथेति । विद्य विदित्वेत्यर्थः ॥ १०–१३ ॥ य एवमुक्तप्रकारेण सदा देवदेवं परमात्मानं अयमहमस्मीति विदित्वा ध्यायेत्

[1] दत्तमु—क.

स निःश्रेयसं तत्पदमाप्नुयात् ॥ १४ ॥ यत् सत्यमोङ्काराग्रविद्योतमानं तदेव भवतीत्यर्थः ॥ इत्युपनिषच्छब्दः शाण्डिल्योपनिषत्समाप्त्यर्थः ॥ १५ ॥

इति द्वितीयः खण्डः समाप्तः, तृतीयोऽध्यायश्च ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
शाण्डिल्योपनिषद्व्याख्या लिखिता ब्रह्मगोचरा ।
शाण्डिल्योपनिषद्व्याख्याग्रन्थस्तु त्रिशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे अष्टपञ्चाशत्संख्यापूरकं शाण्डिल्योपनिषद्विवरणं सम्पूर्णम्

# हंसोपनिषत्

पूर्णमदः—इति शान्तिः

ब्रह्मविद्यासाधनहंसविद्याया अतिगुह्यत्वम्

गौतम उवाच—

भगवन् सर्वधर्मज्ञ सर्वशास्त्रविशारद ।
ब्रह्मविद्याप्रबोधो हि [1]येनोपायेन जायते ॥ १ ॥

सनत्कुमार उवाच—

विचार्य सर्व[2]धर्मेषु मतं ज्ञात्वा पिनाकिनः ।
पार्वत्या कथितं तत्त्वं शृणु गौतम तन्मम ॥ २ ॥
अनाख्येयमिदं गुह्यं [3]योगिने कोशसंनिभम् ।
हंसस्याकृतिविस्तारं भुक्तिमुक्तिफलप्रदम् ॥ ३ ॥

हंसाख्योपनिषत्प्रोक्तनादालिर्यत्र विश्रमेत् ।
तदाधारं निराधारं ब्रह्ममात्रमहं महः ॥

इह खलु हंसोपनिषदः शुक्लयजुर्वेदप्रविभक्तत्वेन ईशावास्यबृहदारण्यकादौ य उपोद्घातः स एव अत्रापि द्रष्टव्यः । सनत्कुमारगौतमप्रश्नप्रतिवचनरूपेय-

[1] केनो—उ, मु.  [2] वेदे—उ, मु.  [3] योगिनां—उ, मु.

माख्यायिका विद्यास्तुत्यर्था । तत्रादौ गौतमः सनत्कुमारं ब्रह्मज्ञानं तदुपायं च पृच्छतीत्याह—भगवन्निति । हे भगवन् षड्गुणैश्वर्यसम्पन्न, सर्वधर्मज्ञ, सर्वशास्त्रविशारद, इति सम्बोधनत्रयेण त्वं सर्वज्ञोऽसि सर्वज्ञेश्वरभावारूढत्वात् येनोपायेन मे झटिति अनायासेन ब्रह्मविद्याप्रबोधो हि निर्विशेषब्रह्ममात्रज्ञानं जायते तदुपायं कृपया उपदिश ॥ १ ॥ इति गौतमेन पृष्टः सनत्कुमारो मुनिः श्रोतृबुद्धिप्ररोचनाय वक्ष्यमाणविद्यां स्तुवन्निदमुवाचेत्याह—सनत्कुमार उवाचेति । हे गौतम सर्वेशितुः पिनाकिनो यन्मतं स्वातिरिक्तसर्वकलनाविरळं ब्रह्म स्वमात्रमिति तदेव तन्मुखतो ज्ञात्वा तदनुरोधेन स्वातिरिक्तासदपह्नवसिद्धं ब्रह्म सन्मात्रमिति धारणार्हो धर्मो येषु वेदान्तेषु धार्यते तेषु सर्वधर्मेषु ईशाद्यष्टोत्तरशतवेदान्तेषु सम्यक् विचार्य निश्चित्य लोकमात्रा ब्रह्मविद्यारूपया पार्वत्या यत् ब्रह्मतत्त्वं मे केवलकृपया कथितं यत् पिनाकिनोऽभिमतं तन्मतं सावधानमना भूत्वा शृणु, श्रुत्वा सम्यगवधारयेत्यर्थः ॥ २ ॥ तत् कीदृशमित्यत आह—अनाख्येयमिति । यत् मया वक्ष्यमाणं ब्रह्मविज्ञानं तदिदं गुह्यं अयोगिषु गोपनीयमित्याह—अनाख्येयमिति । कदाऽपि न वक्तव्यमित्यर्थः । अनधिकारिषु ख्यापने महाननर्थो भवेदित्यत्र—

अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत् ।
महानरकसाम्राज्ये स तेन विनियोजयेत् ॥ इति,
न बुद्धिभेदं जनयेदज्ञानां ज्ञानसंगिनाम् ॥

इति च श्रुतिस्मृती मानम् । तर्हि इदं कस्मै आख्येयमित्यत आह—योगिन इति । स्वाश्रमाचारपुरस्सरं ब्रह्मविद्योपयोगसाधनयुक् योगी तस्मै योगिने देशिकेन इदं वक्तव्यमित्यर्थः । तत् कीदृशं किंफलदमित्यत्राह—हंसस्येति । स्वमात्रप्रबोधेन स्वातिरिक्तकलनां हन्ति अपह्नवं करोतीति हंसः परमात्मा तस्याकृतिविस्तारो विश्वविराडोत्रादिः तं तदेव ब्रह्म ज्ञानरत्नकोशसंनिभं स्वातिरिक्तमुक्तेः स्वाज्ञताया मुक्तिः अपह्नवः ततो यत् फलं स्वमात्रावस्थान-लक्षणकैवल्यमवशिष्यते तत्फलप्रदं, मया उच्यमानं ज्ञानयोगं शृण्विति पूर्वेण अन्वयः ॥ ३ ॥

हंसविद्याऽधिकारिस्वरूपम्

अथ हंसपरमहंसनिर्णयं व्याख्यास्यामो ब्रह्मचारिणे [1]दान्ताय गुरुभक्ताय हंसहंसेति सदा ध्यायन् ॥ ४ ॥

हंसस्य आकृतिविस्तारः तदधिकारी वा कीदृशः किं तद्विद्याफलं किं तत्साधनमित्याकांक्षायां योग्याधिकारिणमुपलभ्य मुनिः एतत् सर्वमाचष्टे—अथेति। अथ यथोक्ताधिकारसम्पत्त्यनन्तरं क्रमेण जाग्रदाद्यवस्थात्रयं हत्वा तुर्यपदं गच्छतीति हंसः व्यष्टितुर्यः प्रत्यगात्मा, स एव परमः सर्वोत्कृष्टः समष्ट्यवस्थात्रयं हत्वा तत्तुर्यपदं गच्छतीति परमहंसः तयोः हंसपरमहंसयोः प्रत्यक्परयोः निर्णयं याथात्म्यं प्रत्यक्परविभागैक्यासहब्रह्ममात्रज्ञानं विस्पष्टमाख्यास्यामः वक्ष्यामः। कस्मा अधिकारिणे वक्ष्यसीत्यत्र हंसः सोऽहमित्यर्थे हंसहंसेत्यावृत्तिः। यः सदैवं हंसः सोऽहमित्यनुसन्धानपूर्वकं तत्स्वरूपं ध्यायन् ब्रह्मणि चरति ब्रह्मनिष्ठामारोढुमिच्छति स ब्रह्मचारी तस्मै ब्रह्मचारिणे दान्ताय वशीकृतकरणग्रामाय परमार्थोपदेष्टृगुरुभक्ताय गुरूपदिष्टार्थश्रद्धाळवे तुभ्यं व्याख्यास्याम इति पूर्वेणान्वयः ॥ ४ ॥

हंसस्वरूपं तज्ज्ञानफलं च

सर्वेषु देहेषु व्याप्य वर्तते यथा ह्यग्निः काष्ठेषु तिलेषु तैलमिव। तं विदित्वा न मृत्युमेति ॥ ५ ॥

स हंसः किंपरिच्छिन्नः कुत्रासनमर्हतीत्यत्र सदृष्टान्तमाह—सर्वेष्विति। यथा ह्यग्निः काष्ठेषु स्वावारकेषु स्वदाह्येषु च व्याप्य वर्तते तिलेषु तैलमिव च तथा स्वाज्ञदृष्टिप्रसक्तसर्वेषु ब्रह्मादिस्तम्बान्तदेहेषु सत्सु तदारोपापवादाधिकरणजीवेशप्रत्यक्पररूपेण व्याप्य वर्तते, स्वज्ञानेन स्वाज्ञानहानौ सत्यां

[1] शान्ताय दा—उ, मु.

व्याप्यत्वसापेक्षव्यापकत्ववैरळ्यात् निष्प्रतियोगिकब्रह्ममात्रमवशिष्यते । तज्ज्ञान-फलमाह—तमिति । तमेवं विदित्वा वेदनसमकालं मृत्युं स्वातिरिक्तास्तितामोहं नैति विद्वान् । स्वातिरिक्तापह्नवसिद्धब्रह्ममात्रतया अवशिष्यते इत्यर्थः ॥ ५ ॥

हंसज्ञानोपायो योगः

गुदमवष्टभ्याधाराद्वायुमुत्थाप्य स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य मणिपूरकं गत्वा अनाहतमतिक्रम्य शिश्नाभे पार्श्वे भवतः । [1]विशुद्धौ प्राणान्निरुध्याज्ञामनुयायन् ब्रह्मरन्ध्रं ध्यायन् त्रिमात्रोऽह-मित्येवं सर्वदा पश्यत्यनाकारश्च भवति ॥ ६ ॥ एषोऽसौ परमहंसो भानुकोटिप्रतीकाशो येनेदं सर्वं व्याप्तम् ॥ ७ ॥

एवं सम्यज्ज्ञानावाप्तौ उपायः कः इत्याकांक्षायां तदुपायत्वेन योगमुपदि-शति—गुदमवष्टभ्येति । तं विदित्वा न मृत्युमेतीत्युक्तितो वेदनादेव मृत्यु-ग्रासब्रह्मप्राप्तिरवगम्यते । केषांचिन्मलिनचित्तानां मुमुक्षायां सत्यामपि केवलवेदान्तश्रवणतो मृत्युग्रासब्रह्मज्ञानं नोदेति । तत्रान्तरायो मलिनचित्तता । योगाख्यशुद्धवारिणा यदि सा शोधिता तदा पूर्वश्रुतज्ञानमेव स्वगताभासतां विहाय सम्यज्ज्ञानपदवीं भजति । ततः सम्यज्ज्ञानसमकालं मृत्युग्रास-ब्रह्मप्राप्तिरिष्यते । तस्मात् ब्रह्मप्राप्तिहेतुज्ञानसाधनत्वेन अष्टांगयोगोऽभ्यसनीयः । कोऽयमष्टांगयोगः? यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयः इत्यष्टां-गानि गुरुसंनिधौ यथावदभ्यस्य अथ समाध्यर्थं जनसम्बाधरहितगुहां प्रविश्य योगी सिद्धासनारूढः सन् वामगुल्फेन गुदमवष्टभ्य नासिकाभ्यां वक्त्रेण वा वायुमापूर्य कुम्भयित्वा सम्यगाकुञ्चनेन मूलाधाराद्वायुमुत्थाप्य प्राणापान-योरैक्यं कृत्वा अथ मूलाधारत्रिकोणगतवह्निप्राणापानान् मिळित्वा कुण्डलिनीं बोधयित्वा तया मूलाधारस्थसुषुम्नाकवाटब्रह्मग्रन्थिं विभिद्य चतुर्दळयुक्तं

[1] विशुद्धे—अ, अ १, अ २, क.

मूलाधारचक्रं प्रविश्य विराजं तत्तुर्यं वा ध्यात्वा अथ स्वाधिष्ठानं षड्दळशोभितं त्रिः प्रदक्षिणीकृत्य अथ दशारशोभितं मणिपूरकं गत्वा अनाहतचक्रं द्वादशदळं तन्मूलस्थविष्णुग्रन्थिं विभिद्य अनाहतचक्रमध्ये सूत्रं तत्तुर्यं वा ध्यात्वा तत्र निर्विकल्पसमाधिमेत्य, अथ अनाहतमतिक्रम्य, अथ विशुद्धिचक्रं षोडशदळं, तदधोभागे शिश्नाभे पार्श्वे भवतः विशुद्धचक्राधोभागे लम्बमानशिश्नतुल्यमांसखण्डे भवतः, "य एषः स्तन इवावलम्बते । सेन्द्रयोनिः" इति श्रुत्यन्तरात् । तत्पार्श्वस्थमार्गद्वयं विहाय तन्मांसखण्ड-मध्यमार्गेण विशुद्धिचक्रं प्रविश्य तत्र विशुद्धौ विशुद्धिचक्रे प्राणान्निरुध्य अथ भ्रूमध्ये द्विदळाढ्यं आज्ञाचक्रं तन्मूलस्थरुद्रग्रन्थिं विभिद्य आज्ञाचक्रं प्रविश्य तन्मध्ये बीजं तत्तुर्यं वा अनुयायन् ध्यायन् निर्विकल्पकसमाधिमेत्य, अथ चन्द्रसूर्याग्न्यैक्यसञ्जातामृतमास्वाद्य अजरामरपिण्डो योगी सहस्रारशोभि ब्रह्मरन्ध्रं प्रविश्य, तत्रत्यत्रिमात्रारोपाधिकरणतुर्यत्रिमात्रोऽहं, यद्वा त्रिपञ्चमात्रा यत्रापह्नवं भजति तत्तुर्यतुर्यं वाऽहमस्मीति यदि सर्वदा पश्यति तदा योगी त्रिमात्राधिकरणकिञ्चित्साकारवत् तुर्यो वा, अनाकारवत् तुर्यतुर्यो वा भवति । तुर्यतुर्यस्य निष्प्रतियोगिकत्वख्यापकः चशब्दः ॥ ६ ॥ यः तुर्यतुरीयत्वेन उक्तः एषोऽसौ परमहंसः परमात्मा स्वांशजतुर्याभेदेन भानुकोटिप्रतीकाशः- युगपदुदितानन्तकोटिभानुसदृशप्रकाशः येन तुर्यप्रकाशेन इदं सर्वं जगत् व्याप्तं कवळितम् ॥ ७ ॥

हृत्पद्मे हंसभावनया तुर्यात्मदर्शनम्

तस्याष्टधा वृत्तिर्भवति । पूर्वदले पुण्ये मतिः । आग्नेये निद्रालस्यादयो भवन्ति । याम्ये क्रौर्ये मतिः । नैरृते पापे मनीषा । वारुण्यां क्रीडा । वायव्यां गमनादौ बुद्धिः । सौम्ये रतिप्रीतिः । ईशान्ये द्रव्यादानम् । मध्ये वैराग्यम् । केसरे जाग्रदवस्था । कर्णिकायां स्वप्नम् । लिङ्गे सुषुप्तिः । पद्मत्यागे तुरीयम् ।

यदा[1] हंसे नादो विलीनो भवति तत् तुरीयातीतम् ॥ ८ ॥ अथो नाद आधाराद्ब्रह्मरन्ध्रपर्यन्तं शुद्धस्फटिकसंकाशः स वै ब्रह्म परमात्मेत्युच्यते ॥ ९ ॥

तस्यैव पुनर्व्यष्टिप्रपञ्चारोपाधिकरणजीवभावमापन्नस्य अष्टधा अष्टप्रकारा वृत्तिर्भवति । कथमित्यत्र—तदधिष्ठेयं हृत्पद्मं द्वादशदळयुक्तं इत्युक्तम् । तत्र दळचतुष्टयं हंसास्पृश्यं, शिष्टाष्टदळं व्यवहारयोग्यं भवतीति कृत्वा तत्प्रकार उच्यते । तत्र हंसः प्राणोपाधिकजीवः यदा पूर्वदळे प्रविशति तदा पुण्ये कर्मणि मतिः भवति । यदा आग्नेयदळे प्रविशति तदा निद्रालस्यादयो भवन्ति । यदा याम्यदळे प्रविशति तदा क्रौर्ये कर्मणि मतिर्जायते । यदा नैर्ऋते दळे प्रविशति तदा पापे कर्मणि कर्तुं मनीषा उदेति । यदा वारुण्यां दिशि विद्यमानदळे प्रविशति तदा क्रीडाविनोदमतिर्भवति । वायव्यां दिशि विद्यमानदळे यदा प्रविशति तदा चलनगमनादौ बुद्धिः उदेति । यदा सौम्ये दळे प्रविशति तदा विद्वदविदुषोः आत्मानात्मरतिप्रीतिः उदेति । यदा ईशान्ये दळे प्रविशति तदा इहामुत्रोपयोगिद्रव्यादानमतिः जायते । यदा दळानां मध्ये प्रविशति तदा स्वातिरिक्तविषये वैराग्यमुदेति । यदा तत्केसरे सञ्चरति तदा जाग्रदवस्था भवति । तदानीमहंकृतिः पूर्णविकासतामेति । यदा तत्कर्णिकायां सञ्चरति तदा स्वप्नं पश्यति । तदानीमहंकृतेः अर्धविकासो भवति । तदन्तः सुषिरं लिङ्गं तत्र यदा प्रविशति तदा सुषुप्तिः भवति । यथोक्तलक्षणपद्मत्यागे तुरीयं तत्साक्षात्कारो भवति । तदानीं हंसः प्रत्यगभिन्नपरमात्मतया अवशिष्यते । यदा हंसे प्रत्यगभिन्नपरमात्मनि नादोऽर्धमात्रात्मको विलीनो भवति तदा स्वाधिष्ठेयगुणसाम्यादिप्रपञ्चवैरळ्यात् तन्निरूपिताधिष्ठानताविरळं निरधिष्ठानं तुरीयातीतं निष्प्रतियोगिकब्रह्ममात्रं अवशिष्यते ॥ ८ ॥ एवं भावनाविशिष्टयोगिनः स्वदेहे तुर्यात्मा प्रकाशत इत्याह—अथो इति । अथो निर्विकल्पकसमाधिसिद्ध्यनन्तरं योगिनो हृदये नादो

[1] हंसो नादे—अ, अ १, उ.

गुणसाम्यासंगचिद्धातुः तुर्यः आधारात् मूलाधारमारभ्य ब्रह्मरन्ध्रपर्यन्तं तुर्यस्वरूपं शुद्धस्फटिकसङ्काशं निर्दुष्टस्फटिकाचलवत् शुक्लतेजोमयं ब्रह्म स वै नादावभासकपरमात्मेत्युच्यते ॥ ९ ॥

**अजपाहंसमन्त्रजपप्रकारः**

**अथ हंस ऋषिः । अव्यक्तगायत्री छन्दः । परमहंसो देवता । हं बीजम् । सः शक्तिः । सोऽहं कीलकम् ॥ १० ॥ षट्संख्यया अहोरात्रयोरेकविंशतिसहस्राणि षट्छतान्यधिकानि भवन्ति । सूर्याय सोमाय निरञ्जनाय निराभासयातनुसूक्ष्म प्रचोदयादिति ॥ ११ ॥ अग्नीषोमाभ्यां वौषट् हृदयाद्यङ्गन्यास-करन्यासौ भवतः ॥ १२ ॥ एवं कृत्वा हृदये हंसमात्मानं ध्यायेत् ॥ १३ ॥**

इत्थंविधतुर्यसाक्षात्कारात्ममन्त्रस्य ऋषिछन्दोदेवताऽगन्यासध्यानसहित-जपप्रकार उच्यते । अथ शयनादुत्थानानन्तरमहोरात्रगणनीयश्वाससंख्यया मुमुक्षुभिः अजपाऽनुसन्धानं कर्तव्यम् । तत उच्छ्वासनिश्वास एव आत्ममन्त्र उच्यते । निश्वास एव सकारस्त्वंपदार्थः । उच्छ्वास एव सबिन्दुकवियद्बीजं हमिति तत्पदार्थः । पुनःपुनः तयोर्योग एव असिपदार्थः ॥

सकारः खेचरी प्रोक्तस्त्वंपदं चेति निश्चितम् ।
हकारः परमेशः स्यात्तत्पदं चेति निश्चितम् ।
सकारो ध्यायते जन्तुः हकारो हि भवेत् ध्रुवम् ॥

इति श्रुतेः । **अथ** अजपाऽऽत्ममन्त्रस्य **हंसः** प्रत्यगात्मैव **ऋषिः** । **अव्यक्त-गायत्री छन्दः** । **परमहंसः** परमात्मा **देवता** । **हं बीजम्** । **सः**

शक्तिः । सोऽहं कीलकम् । हंसात्मसाक्षात्कारार्थे विनियोगः । हंसामित्यादि-षडंगन्यासः । ध्यानम्—

गमागमस्थं गमनादिशून्यं चिद्रूपमेकं परमाद्वितीयम् ।
ध्यायन्ति ये सर्वजनान्तरस्थं नमामि हंसं परमात्मरूपम् ॥

इति ॥

लमित्यादि पञ्चपूजा । सोऽहमिति मन्त्रः । निश्वासोच्छ्वासावर्तनमेव हि जपः ॥ १० ॥ षट्संख्याकाः षडाधारदेवता गणेशादयः जपसंख्याकर्तारो भवन्ति । अहोरात्रविभक्तश्वाससंख्या निगद्यते । अहोरात्रयोरेकविंशतिसहस्राणि षट्छतान्यधिकानि भवन्ति । दिने दिने षट्छताधिकैकविंशतिसहस्रसंख्यया निश्वासोच्छ्वासाः सोऽहं सोऽहमिति जपन्ति । अजपां विशिष्टां चतुर्धा विभज्य तत्राद्यो भागः विराडात्मने सूर्याय समर्पयेत् । द्वितीयो भागः सूत्रभावमापन्नाय सोमाय प्रचोदयात् समर्पयेत् । तथा तृतीयो भागः अतनुसूक्ष्माभिधविराट्सूत्रारोपाधिकरणतया स्वाधिष्ठेयनिरञ्जनाय सर्वेश्वराय प्रचोदयात् विनियोजयेत् । अवशिष्टतुर्यभागस्तु स्वातिरिक्तस्थूलसूक्ष्मबीजाभा-सतदध्यक्षविराडादिगतहेयांशापवादाधिकरणतया निराभासाय प्रत्यगभिन्न-परमात्मने अतनुसूक्ष्मादिप्रपञ्चं प्रचोदयात् विलापयेत् ॥ ११ ॥ अग्नीषोमाभ्यां वौषट् हृदयाद्यङ्गन्यासकरन्यासौ भवतः इति । हंसौं इति दीर्घभाक् षट्पर्यायेषु, हंसौं इति पञ्चमपर्यायस्थाने तदेव, नोचेदग्नीषोमाभ्यां वौषडिति वा कुर्यादित्यर्थः ॥ १२ ॥ एवमंगन्यासादिकं कृत्वैव हृदये हंसमात्मानं प्रत्यगभिन्नं ब्रह्मास्मीति ध्यायेत् ॥ १३ ॥

### सगुणहंसध्यानेन परमात्मदर्शनम्

अग्नीषोमौ पक्षावोंकारः शिर उकारो बिन्दुस्त्रिणेत्रं मुखं
रुद्रो रुद्राणी चरणौ द्विविधं कण्ठतः कुर्यादित्युन्मनाः

अजपोपसंहार[1]इत्यभिधीयते ॥ १४ ॥ एवं हंसवशान्मनो विचार्यते ॥ १५ ॥

एवं निर्गुणध्यानाशक्तस्य सगुणध्यानप्रकार उच्यते—**अग्नीषोमाविति** । वैराजभावमापन्नहंसस्य **अग्नीषोमौ** सूर्याचन्द्रमसौ **पक्षौ** बाहू भवतः । **अस्य शिरस्तु ओङ्कारः** । **अस्य त्रिणेत्रं** सबिन्दुकाकारोकारमकाराः । **अस्य मुखं रुद्रः** । **अस्य चरणौ** पादौ **रुद्राणी** गंगा च भवति । एवं सगुणनिर्गुणभेदात् **द्विविधं** हंसध्यानं **कण्ठतः** कण्ठरवेण मुमुक्षुः निश्शङ्कं **कुर्यात्** । इत्येवं प्रकारद्वयध्यानेन उद्गतं तिरस्कृतं मनः तत्कार्यं यस्य सोऽयमुन्मनाः मुनिः । अजपा हंसविद्या तस्या उपसंहारः विलापनं यत्र प्रत्यगभिन्नपरमात्मनि सोऽयं **अजपोपसंहारः** परमात्मेत्य**भिधीयते** ॥ १४ ॥ **एवं** सोऽहमिति **हंस**ध्यान**वशात्** हंसातिरेकेण **मनस्**तत्कार्यं नेति नेति इति **विचार्यते** निर्धार्यते ॥ १५ ॥

### अजपाजपेन दशनादानुभवः

[2]अस्यैव जपकोट्या नादमनुभवति । स च दशविधो जायते । चिणिति प्रथमः । चिणिचिणीति द्वितीयः । घण्टानादस्तृतीयः । शङ्खनादश्चतुर्थः । पञ्चमस्तन्त्रीनादः । षष्ठस्तालनादः । सप्तमो वेणुनादः । अष्टमो भेरीनादः । नवमो मृदङ्गनादः । दशमो मेघनादः ॥ १६ ॥

यदि मुमुक्षुः सगुणनिर्गुणध्यानाशक्तो भवति तदा तूष्णीमहोरात्रनिर्वर्त्यनिश्वासोच्छ्वासरूपेण केवलाजपात्महंसमन्त्रजपं कुर्वतः स्वानुभवजन्यनादेयत्तां तदनुसन्धानावान्तरफलं परमफलं चाह—**अस्यैवेति** । एवं यथोक्तस्य **अस्यैव**

[1] इत्याचक्षते—क, अ २.  [2] तस्यै—क. सएव—मु.

हंसमनोर्जपकोट्या कोटिसंख्याजपप्रभावेनाऽयं मुमुक्षुः अनाहतचक्रे नादब्रह्म अनुभवति स्वानुभूतिप्रमाणतो जानाति । योऽयमनुभूतो नादः स च दक्षिणकर्णे दशविध उपजायते अभिव्यज्यते । क्रमशः तत्प्रकारमाह— चिणितीति । प्राथमिको नादः चिणितिध्वन्यात्मको भवति । द्वितीयो नादः चिणिचिणीति ध्वन्यात्मकः । तृतीयो नादः घण्टानादसमो भवति । चतुर्थस्तु शङ्खनादवदभिव्यक्तो भवति । पञ्चमस्तु वीणातन्त्रीनादवद-भिव्यज्यते । षष्ठः ताळनादनिभो भवति । सप्तमनादस्तु मुरवेणुनादसमानो भवति । भेरीनादतुल्योऽयमष्टमः । मृदङ्गनादनिभोऽयं नवमः । दशमस्तु मेघनादसंनिभः ॥ १६ ॥

केवलदशमनादाभ्यासविधिः

नवमं परित्यज्य दशममेवाभ्यसेत् ॥ १७ ॥

एवं दशविधनादेषु प्रथमादिनवमान्तं परित्यज्य मुमुक्षुः दशममेव अभ्यसेत् ॥ १७ ॥

तत्तन्नादानुभवफलम्

प्रथमे चिञ्चिणीगात्रं द्वितीये गात्रभञ्जनम् ।
तृतीये भेदनं याति चतुर्थे कम्पते शिरः ॥ १८ ॥
पञ्चमे [1]स्रवती तालू षष्ठेऽमृतनिषेवणम् ।
सप्तमे गूढविज्ञानं परा[2]वाचा तथाऽष्टमे ॥ १९ ॥
अदृश्यं नवमे देहं दिव्यं चक्षुस्तथाऽमलम् ।
दशमं च परं ब्रह्म भवेद्ब्रह्मात्मसंनिधौ ॥ २० ॥

[1] स्रवते—अ, क.   [2] वाचां—अ.

चिणिति प्राथमिको नादो य उक्तः तस्मिन् प्रथमे नादे यथावदनुभूते तदा स्वस्य चिञ्चिणीगात्रं प्रतिभाति । तथा द्वितीये तद्गात्रभञ्जनं भवति। तृतीये तु हृदयं भेदनं याति हृत्पद्मं विकासमेति । चतुर्थे तु स्वशिरः कम्पते—षण्मुखीमुद्राऽऽरूढस्य कुम्भकावस्थायां वायावाज्ञाचक्रं प्रविष्टे शिरः कम्पयतीत्यर्थः ॥ १८ ॥ पञ्चमे तन्त्रिनादेऽभिव्यक्ते स्वतालु स्रवती । षष्ठाख्यतालनादाभिव्यक्तौ चन्द्रसूर्यमण्डलद्वयैक्यसञ्जातामृतनिषेवणममृतास्वादनं भवति। सप्तमवेणुनादाभिव्यक्तौ स्वातिरिक्तजनानां यत् गूढं ब्रह्म तद्विषयक-विज्ञानं जायते । अष्टमभेरीनादाभिव्यक्तौ सर्ववेदशास्त्ररूपिण्या परावाचा अयं योगी विजृम्भते, सकलविषयकशास्त्रविज्ञानी सर्वज्ञो भवति ॥ १९ ॥ नावमिकमृदंगनादाभिव्यक्तौ देहं पश्यतामदृश्यं भवति अन्तर्धानादिशक्तिमान् भवति। निर्मलदिव्यचक्षुः त्रिकालज्ञः ईश्वरो भवति। प्रथमादिनवमान्तनाद-तद्भवनानाविधसिद्ध्युपेक्षापूर्वकं दशममेघनादाभिव्यक्तौ ब्रह्मात्मसंनिधौ प्रत्यग-भिन्ने ब्रह्मणि स्वाज्ञादिदृष्टिप्रसक्ततद्गतभेदैक्यकलनापह्नवसिद्धब्रह्म भवेत्, तन्मात्रतया अवशिष्यत इत्यर्थः ॥ २० ॥

मनोलयात् ब्रह्मात्मत्वप्रकाशः

**तस्मान्मनो विलीने मनसि गते संकल्पविकल्पे दग्धे पुण्यपापे [1]सदाशिवः शक्त्यात्मा सर्वत्रावस्थितः स्वयंज्योतिः शुद्धो बुद्धो नित्यो निरञ्जनः शान्ततमः प्रकाशयतीति वेदानुवचनं भवतीत्युपनिषत् ॥ २१ ॥**

कथं पुनरेवं ब्रह्ममात्रमवशिष्यते स्वातिरिक्तमनस्तत्कार्यसङ्कल्प-पुण्यपापादिसत्त्वादित्यत आह—तस्मादिति । यस्मात् स्वाज्ञानविकल्पितोऽयं मनआदिविकारपूगः तस्मात् स्वज्ञानेन मनो मनसि विलीने निर्मूलभावं

[1] सदाशिवोंश—उ.

गते तत्कार्यसङ्कल्पविकल्पे तत्कार्यपुण्यपापादावपि दग्धे सम्यज्ज्ञानाग्निना भस्मीकृतेऽथ स्वातिरिक्तमनस्तत्कार्यारोपापवादाधिकरणतया (ब्रह्मप्रणवार्थतुर्यतुर्यतया) सदाशिवः परमेश्वरः तत्तत्पदार्थगतसर्वशक्त्यात्मा सर्वत्र व्यक्ताव्यक्तप्रपञ्चे सच्चिदानन्दात्मना अवस्थितः । जडप्रपञ्चानुयोगतो जडत्वं स्यादित्यत आह—स्वयंज्योतिरिति । स्वाज्ञदृष्टिप्रसक्तजडप्रपञ्चस्य स्वज्ञदृष्ट्या मिथ्यात्वेन तदनुयोगस्यापि तथात्वात् स्वयंज्योतिरात्मा ह्यजडात्मकः । अत एवायं शुद्धः अशुद्धमायावैरळ्यात् । मायाऽपाये तदनुगतस्यापि तथात्वं स्यादित्यत आह—नित्य इति । सत्तामात्रत्वात् । मात्रशब्दस्येतरव्यवच्छेदकत्वेन तत्राञ्जनता स्यादित्यत आह—निरञ्जन इति । सत्तामात्रस्य निष्प्रतियोगिकत्वेनेतररञ्जनता कथं सेद्धुं पारयति? स्वातिरिक्तास्तिताहेतुस्वाज्ञानहेतुतमस्सत्वे निष्प्रतियोगिकसत्तामात्रता कुत इत्यत आह—शान्ततमः प्रकाशयतीति । यदवगतिसमकालं स्वाज्ञानतत्कार्यं तमोऽपह्नवपदं भजति सोऽयं शान्ततमः अत एवायं निष्प्रतियोगिकतया प्रकाशयति । अस्मिन्नर्थे "पश्यतेहापि सन्मात्रमसदन्यत्," "ब्रह्मव्यतिरिक्तं न किञ्चिदस्ति," "अतोऽन्यदार्तं," "ब्रह्ममात्रमसन्न हि"

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्याऽस्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥

इत्यादिवेदानुवचनं भवति । इत्युपनिषच्छब्दौ उपनिषत्परिसमाप्त्यर्थौ ॥ २१ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं हंसोपनिषदः स्फुटम् ।
हंसोपनिषदो व्याख्या सप्तत्यधिशतं स्मृता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चदशसंख्यापूरकं
हंसोपनिषद्विवरणं सम्पूर्णम्

# विशेषपदसूची

[यत्र पुटसंख्यानन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या]

पदम् पुटसंख्या



पदम् पुटसंख्या

Printed by J. R. Aria at the Vasanta Press, Adyar, Madras.

# Publications of the Adyar Library

## (Theosophical Society, Adyar, Madras, S. India)

1. A Preliminary List of the Samskrit and Prakrit MSS. in the Adyar Library.

The list comprises 11,842 MSS. distributed among 5,270 titles (Dēvanāgari character). Demi 8vo., pp. 279.

Boards — Re. 1-8.
Cloth — Rs. 2.

2. A Descriptive Catalogue of the Samskrit MSS. in the Adyar Library, by F. O. Schrader, Ph. D. Vol. I—UPANISHADS.

The collection described in this volume comprises 1,322 MSS. distributed among 365 works. (Dēvanāgari and English.) Royal 8vo., pp. xi, 315.

Cloth — Rs. 7-8.

3. The Minor Upanishads, critically edited for the Adyar Library by F. O. Schrader, Ph. D. Vol. I—*Samnyāsa Upanishads.*

Texts in Dēvanāgari. Preface, critical notes, etc., in English. Royal 8vo., pp. liv, 501.

Cloth — Rs. 15.

4. Ahirbudhnya-Samhitā of the Pāncharātra Āgama, edited for the Adyar Library by Pandit M. D. Rāmānujāchārya, of the Adyar Library, under the supervision of F. Otto Schrader, Ph. D. 2 vols.

(Samskrit Text only, in Dēvanāgari.) Royal 8vo., pp. 59, 674.

Cloth — Rs. 15.

5. Introduction to the Pāncharātra and the Ahirbudhnya-Samhitā, by F. O. Schrader, Ph. D.

Part I. The literature of the Pāncharātras.
Part II. The philosophy of the Pâncharātras.
Part III. The Ahirbudhnya-Samhitā.

(English) Royal 8vo., pp. 178.

Cloth — Rs. 3.

6. The *Yoga Upanishads* with the Commentary of S'rī Upanishad-Brahma-Yogin, edited by Pandit A. Mahadeva Sastri, B.A., Director, Adyar Library.

(Samskrit, in Dēvanâgari). Demi 8vo., pp. 44, 586.

This Commentary extends to all the one-hundred-and-eight Upanishads.

Cloth — Rs. 6.

7. The *Sāmānya-Vedānta Upanishads* with the Commentary of Sri Upanishad-Brahma-Yogin, edited by Pandit A. Mahadeva Sastri, B. A., Director, Adyar Library. (*In the Press*)

# THE

# SĀMĀNYA VEDĀNTA UPANISHADS

WITH THE COMMENTARY OF

## SRI UPANISHAD-BRAHMA-YOGIN

EDITED BY

PANDIT A. MAHADEVA SASTRI, B.A.

DIRECTOR, ADYAR LIBRARY, ADYAR, MADRAS

PUBLISHED FOR THE ADYAR LIBRARY

(THEOSOPHICAL SOCIETY)

1921

ॐ नमो

ब्रह्मादिभ्यो

ब्रह्मविद्यासंप्रदायकर्तृभ्यो

वंशऋषिभ्यो

नमो गुरुभ्यः

DEDICATED TO

Brahma and the Rishis,

The Great Teachers

Who handed down Brahmavidya

through Generations

## THE EDITOR'S NOTE

The materials on which is based the edition of The Sāmānya Vedānta Upaniṣads comprised in this volume are the same as those described in the preceding volume treating of *The Yoga Upaniṣads*.

*16th Dec., 1921* A. M. S.

# अस्मिन् सम्पुटे अन्तर्गतानामुपनिषदां सूची



A B

# विषयसूचिका

## अक्ष्युपनिषत्

## अध्यात्मोपनिषत्



## अन्नपूर्णोपनिषत्

प्रथमाध्यायः

द्वितीयाध्यायः



तृतीयाध्यायः



चतुर्थाध्यायः

## आत्मोपनिषत्

## आत्मबोधोपनिषत्

प्रथमखण्डः



द्वितीयखण्डः



## एकाक्षरोपनिषत्



## कौषीतकिब्राह्मणोपनिषत्

प्रथमाध्यायः

## द्वितीयाध्यायः



## तृतीयाध्यायः

चतुर्थाध्यायः



## गर्भोपनिषत्

## निरालम्बोपनिषत्

## पैङ्गलोपनिषत्

प्रथमाध्यायः

द्वितीयाध्याय:



तृतीयाध्याय:

चतुर्थाध्यायः



## प्राणाग्निहोत्रोपनिषत्

## मन्त्रिकोपनिषत्



## महोपनिषत्

प्रथमाध्यायः



द्वितीयाध्यायः

**पञ्चमाध्यायः**

षष्ठाध्यायः

## मुक्तिकोपनिषत्

प्रथमाध्यायः—प्रथमखण्डः



द्वितीयखण्डः



द्वितीयाध्यायः

## मुद्गलोपनिषत्



## मैत्रायण्युपनिषत्

द्वितीयप्रपाठकः



तृतीयप्रपाठकः



चतुर्थप्रपाठकः



## वज्रसूचिकोपनिषत्

## शारीरकोपनिषत्



## शुकरहस्योपनिषत्

## सर्वसारोपनिषत्

## सावित्र्युपनिषत्



## सुबालोपनिषत्

दशमानुशासनम् — ब्रह्मविद्यासम्प्रदानम्

षोडशखण्डः



## सूर्योपनिषत्



## स्कन्दोपनिषत्



---



---

# अक्ष्युपनिषत्

## सह नाववतु—इति शान्तिः

चाक्षुष्मतीविद्या

अथ ह सांकृतिर्भगवानादित्यलोकं जगाम । तमादित्यं नत्वा चाक्षुष्मतीविद्यया तमस्तुवत् । ॐ नमो भगवते श्रीसूर्यायाक्षितेजसे नमः । ॐ खेचराय नमः । ॐ महासेनाय नमः । ॐ तमसे नमः । ॐ रजसे नमः । ॐ सत्त्वाय नमः । असतो मा सद्गमय । तमसो मा ज्योतिर्गमय । मृत्योर्माऽमृतं गमय । उष्णो भगवान् [1]शुचिरूपः हंसो भगवान् शुचिरूपः प्रतिरूपः ।

विश्वरूपं घृणिनं जातवेदसं इरामयं [2]ज्योतीरूपं तपन्तम् ।
सहस्ररश्मिः शतधा वर्तमानः [3]प्राणः प्रजानामुदयत्येष सूर्यः ॥

ॐ नमो भगवते श्रीसूर्यायादित्यायाक्षितेजसेऽहो[4]वाहिनी [5]वाहिनी वा स्वाहेति । एवं चाक्षुष्मतीविद्यया स्तुतः सूर्यनारायणः

[1] शुची—क, अ २, उ १.
[2] ज्योति—अ १, उ १.
[3] पुरुषः—अ, अ १, अ २, क.
[4] वाहिनि—क, अ १, उ.
[5] वाहिनि—उ, उ १.

सुप्रीतोऽब्रवीत् चाक्षुष्मतीविद्यां ब्राह्मणो यो नित्यमधीते न तस्याक्षिरोगो भवति । न तस्य कुलेऽन्धो भवति । अष्टौ ब्राह्मणान् ग्राहयित्वाऽथ विद्यासिद्धिर्भवति । य एवं वेद स महान् भवति ॥

यत्सप्तभूमिकाविद्यावेद्यानन्दकळेबरम् ।
विकळेबरकैवल्यरामचन्द्रपदं भजे ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं अक्ष्युपनिषत् चाक्षुष्मतीविद्याप्रकटनपूर्वकं सप्तभूमिकाविभातपरमाक्षरपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । सांकृत्यादित्यप्रश्नप्रतिवचनरूपेयं आख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—अथेति । अथ स्वातिरिक्तप्रपञ्चनैराश्यानन्तरं आदित्यमण्डलासनादित्यं प्रणिपत्य अथ **चाक्षुष्मतीविद्यया** स्तुतवानित्यर्थः । केयं चाक्षुष्मतीविद्येत्यत आह—**ओमिति** । हे आदित्य **अक्षितेजसे** तुभ्यं **नमोऽस्तु** । त्वं **मा** मां **असतः** स्वातिरिक्तात् उद्धृत्य स्वमात्रावस्थानलक्षणं **सद्गमय** । तथा **तमसः** स्वाज्ञानात् **मा** मां उद्धृत्य **ज्योतिः** स्वज्ञानं **गमय** । तथा स्वनिष्टप्रमादरूपात् **मृत्योः** मा मां उद्धृत्य स्वनिष्टाफलरूपं **अमृतं** विकळेबरकैवल्यं **गमय** । प्राणिसामान्यस्वातिरिक्ताज्ञानकर्दमशोषकोष्णकिरणत्वात् **उष्णो भगवान् शुचिरूपः** । **हंसः** प्रत्यगभिन्नपरमात्मरूपो **भगवान् शुचिरूपः** जीवात्मना **प्रतिरूपश्चासि** । यस्त्वं **सहस्ररश्मिः** स्वप्रकाश्यभेदानुरोधेन **शतधा** बहुधा **वर्तमानोऽसि** य एष भगवान् **प्रजानां प्राणो** भूत्वा अहन्यहनि **उदयति** तं त्वां **विश्वरूपधरं घृणिनं** दयावन्तं विराड्रूपेण **जातवेदसं इरामयं** अमृतमयं स्वेन तेजसा **तपन्तं ज्योतीरूपं** हंसः सोऽहमिति सदा अनुसंधानं करोमि । किंच—**ओं नमो भगवते श्रीसूर्याय आदित्याय** अदितिजाय **अक्षितेजसे** अक्ष्यालोकशक्तिदाय सदा नमोऽस्तु । तव किरणसेनाऽऽवृतत्वात् ते **अहोवाहिनी** किरणसेना दुस्सहा मम संतापं न करोतु । द्विरुक्तिरादरार्था । स्वातिरिक्तभ्रमं मे शान्तं कुरु स्वाहा, " नमः सम्पत्तिपूरणे स्वाहा शान्तौ " इति स्मृतेः । यद्वा—

स्वाहाशब्दः अक्षिविद्यासमाप्तिद्योतकः । अनया स्तुतः किं करोतीत्यत्र—**एवमिति** । किमब्रवीदित्यत्र—स्वविद्याफलं स्तौति—ॐनमइत्यादिस्वाहेत्यन्तकळेबरां **चाक्षुष्मतीविद्याम्** ॥

**इति प्रथमः खण्डः**

---

ब्रह्मविद्यास्वरूपम्

अथ ह सांकृतिरादित्यं पप्रच्छ भगवन् ब्रह्मविद्यां मे ब्रूहीति।

तमादित्यो होवाच ।

सांकृते शृणु वक्ष्यामि तत्त्वज्ञानं सुदुर्लभम् ।
येन विज्ञानमात्रेण जीवन्मुक्तो भविष्यसि ॥ १ ॥
सर्वमेकमजं शान्तमनन्तं ध्रुवमव्ययम् ।
पश्य भूतार्थचिद्रूपं शान्त आस्स्व यथासुखम् ॥ २ ॥

ततः किमित्यत्र चाक्षुष्मतीविद्यास्तुतितो भगवन्तं प्रसन्नं ब्रह्मविद्याऽर्थं पृच्छतीत्याह—**अथेति** । किमिति ? **भगवन्निति** । शिष्याभिमुख्याय वक्ष्यमाणविद्यां स्तौति—**सांकृत** इति ॥ १ ॥ आदौ ब्रह्मस्वरूपं प्रतिपाद्य शान्तस्वातिरिक्तभ्रमः सन् मदुक्तार्थे सुखं तिष्ठ इत्याह—**सर्वमिति** । ब्रह्माहमस्मीति **पश्यन्** ॥ २ ॥

ब्रह्मविद्योपायो योगः

अवेदनं विदुर्योगं चित्तक्षयमकृत्रिमम् ।
योगस्थः कुरु कर्माणि नीरसो वाऽथ मा कुरु ॥ ३ ॥

केनोपायेन सुखं तिष्ठेयमित्यत्राह—अवेदनमिति । इत्थंभूत-योगस्थः ॥ ३ ॥

योगस्य प्रथमभूमिका

विरागमुपयात्यन्तर्वासनास्वनुवासरम् ।
क्रियासूदाररूपासु क्रमते मोदतेऽन्वहम् ॥ ४ ॥
ग्राम्यासु जडचेष्टासु सततं विचिकित्सते ।
नोदाहरति मर्माणि पुण्यकर्माणि सेवते ॥ ५ ॥
अनन्योद्वेगकारीणि मृदुकर्माणि सेवते ।
पापाद्बिभेति सततं न च भोगमपेक्षते ॥ ६ ॥
स्नेहप्रणयगर्भाणि पेशलान्युचितानि च ।
देशकालोपपन्नानि वचनान्यभिभाषते ॥ ७ ॥
मनसा कर्मणा वाचा सज्जनानुपसेवते ।
यतः कुतश्चिदानीय नित्यं शास्त्राण्य[1]वेक्षते ॥ ८ ॥
तदाऽसौ प्रथमामेकां प्राप्तो भवति भूमिकाम् ।
एवं विचारवान् यः स्यात् संसारोत्तारणं प्रति ॥ ९ ॥
स भूमिकावानित्युक्तः शेषस्त्वार्य इति स्मृतः ।

कोऽयमवेदनयोगः तत्सोपानः कीदृशः इत्याशङ्क्य तूष्णींभावलक्षणविदेह-मुक्तिसौधसोपानरूपेयं सप्तभूमिकेत्यत्र प्रथमभूमिकां प्रकटयति—**विरागमिति** । अनन्तकोटिजन्मसुकृतपरिपाकलब्धसज्जनसंगत्यादिसुकृततो निष्कामधीः जायते, ततो ब्रह्म सत्यं ब्रह्मातिरिक्तं मिथ्या इत्यापाततो ज्ञानमुदेति, ततो ब्रह्मातिरिक्त-

[1] पेक्ष—अ १, क, उ १.

विषयवासनासु वान्ताशनमूत्रपुरीषादिष्विव विरागमुपयाति । ईश्वरार्पणधिया अनुष्ठेयक्रियासु ॥ ४ ॥ परेषां नोदाहरति ॥ ५–९ ॥

द्वितीयभूमिका

विचारनाम्नीमितरामागतो योगभूमिकाम् ॥ १० ॥
श्रुतिस्मृति[1]सदाचारधारणाध्यानकर्मणः ।
मुख्यया व्याख्यया ख्याताञ्छ्रयति श्रेष्ठपण्डितान् ॥ ११ ॥
पदार्थप्रविभागज्ञः कार्याकार्यविनिर्णयम् ।
जानात्यधिगतश्राव्यो गृहं गृहपतिर्यथा ॥ १२ ॥
मदाभिमानमात्सर्यलोभमोहातिशायिताम् ।
बहिरप्यास्थितामीषत्त्यजत्यहिरिव त्वचम् ॥ १३ ॥
इत्थंभूतमतिः शास्त्रगुरुसज्जनसेवया ।
सरहस्यमशेषेण यथावदधिगच्छति ॥ १४ ॥

मुमुक्षुः एवं प्रथमभूमिकामभ्यस्य अथ द्वितीयभूमिकां प्रविशतीत्याह—विचारेति ॥ १०–१४ ॥

तृतीयभूमिका

असंसर्गाभिधामन्यां तृतीयां योगभूमिकाम् ।
ततः पतत्यसौ कान्तः पुष्पशय्यामिवामलाम् ॥ १५ ॥
यथावच्छास्त्रवाक्या[2]र्थे मतिमाधाय निश्चलाम् ।
तापसाश्रमविश्रान्तैरध्यात्मकथनक्रमैः ॥ १६ ॥

[1] समा—अ २, क.

[2] र्थ—अ २, क.

शिलाशय्याऽऽसनासीनो जरयत्यायुराततम् ।
वनावनिविहारेण चित्तोपशमशोभिना ॥ १७ ॥
असङ्गसुखसौख्येन कालं नयति नीतिमान् ।
अभ्यासात् साधुशास्त्राणां करणात् पुण्यकर्मणाम् ॥ १८ ॥
जन्तोर्यथावदेवेयं वस्तुदृष्टिः प्रसीदति ।
तृतीयां भूमिकां प्राप्य बुद्धोऽनुभवति स्वयम् ॥ १९ ॥

द्वितीयभूमिकासिद्ध्यनन्तरं तृतीयभूमिकाऽभ्यासं कुर्यादित्याह—**असंसर्गेति** ॥ १६ ॥ तृतीयभूमिकाऽऽरूढः कया वृत्त्या कालं नयतीत्यत आह—**यथावदिति** ॥ १६–१९ ॥

द्विविधः असंसर्गः

द्विप्रकारमसंसर्गं तस्य भेदमिमं शृणु ।
द्विविधोऽयमसंसर्गः सामान्यः श्रेष्ठ एव च ॥ २० ॥
नाहं कर्ता न भोक्ता च न बाध्यो न च बाधकः ।
इत्यसञ्जनमर्थेषु सामान्यासङ्गनामकम् ॥ २१ ॥
प्राक्कर्मनिर्मितं सर्वमीश्वराधीनमेव [1]वा ।
सुखं वा यदि वा दुःखं [2]नैवात्र [3]मम कर्तृता ॥ २२ ॥
भोगाभोगा महारोगाः संपदः परमापदः ।
वियोगायैव संयोगा आधयो व्याधयो धियाम् ॥ २३ ॥

[1] च—अ, अ १. [2] कैवात्र—अ, अ १, क. [3] तव—मु.

कालश्च कलनोद्युक्तः सर्वभावान[1]नारतम् ।
अनास्थयेति भावानां यद्भावनमान्तरम् ।
वाक्यार्थलब्धमनसः सामान्योऽसावसङ्गमः ॥ २४ ॥
अनेन क्रमयोगेन संयोगेन महात्मनाम् ।
नाहं कर्तेश्वरः कर्ता कर्म वा प्राक्तनं मम ॥ २५ ॥
कृत्वा दूरतरे नूनमिति शब्दार्थभावनाम् ।
यन्मौनमासनं शान्तं तच्छ्रेष्ठासङ्ग उच्यते ॥ २६ ॥

सामान्यश्रेष्ठभेदेन अयमसंसर्गो द्विधा भिद्यत इत्याह—**द्विप्रकारमिति** । तत् कथं? **द्विविध इति** ॥ २० ॥ तत्र सामान्यासंसर्गमाह—**नाहमिति** । **नाहं कर्ता न भोक्ता च** अज्ञानकार्यविलक्षणत्वात् ॥ २१–२४ ॥ महतामेव श्रेष्ठासंसर्ग उदेतीत्याह—**अनेनेति** । विचारादियोगभूमिसंयोगेन द्वितीयासंसर्ग उदेति । स कीदृश इत्यत्र—**नाहमिति** । इन्द्रियैः इन्द्रियार्थाग्रहणं **मौनं**, प्रत्यग्रूपेणावस्थानं आसनं, परागभावास्मरणं शान्तमित्यर्थः ॥ २५–२६ ॥

प्रथमभूमिकास्तुतिः

संतोषामोदमधुरा प्रथमोदेति भूमिका ।
भूमिप्रोदितमात्रोऽन्तरमृतांकुरिकेव सा ॥ २७ ॥
एषा हि परिमृष्टाऽन्तरन्यासां प्रसवैकभूः ।
द्वितीयां च तृतीयां च भूमिकां प्राप्नुयात्ततः ॥ २८ ॥
श्रेष्ठा सर्वगता ह्येषा तृतीया भूमिकाऽत्र हि ।
भवति प्रोज्झिताशेषसंकल्पकलनः पुमान् ॥ २९ ॥

[1] नन्तरम्—उ, उ १.

प्रथमभूमिकाया अमृतांकुरतया तामेवं स्तौति—**सन्तोषेति** ॥२७–२८॥ द्वयोर्मध्ये श्रेष्ठा । श्रेष्ठत्वं कुत इत्यत्र—**भवतीति** ॥ २९ ॥

चतुर्थभूमिका

भूमिकात्रितयाभ्यासादज्ञाने क्षयमागते ।
समं सर्वत्र पश्यन्ति चतुर्थीं भूमिकां गताः ॥ ३० ॥
अद्वैते स्थैर्यमायाते द्वैते च प्रशमं गते ।
पश्यन्ति स्वप्नवल्लोकं चतुर्थीं भूमिकां गताः ॥ ३१ ॥

चतुर्थभूमिकामवतारयति—**भूमिकेति** ॥ ३० ॥ चतुर्थभूमिकाऽनुभवमाह—**अद्वैत** इति ॥ ३१ ॥

पञ्चमभूमिका

भूमिकात्रितयं जाग्रच्चतुर्थी स्वप्न उच्यते ।
चित्तं तु शरदभ्रांशविलयं प्रविलीयते ॥ ३२ ॥
सत्ताऽवशेष एवास्ते पञ्चमीं भूमिकां गतः ।
जगद्विकल्पो नोदेति चित्तस्यात्र विलापनात् ॥ ३३ ॥
पञ्चमीं भूमिकामेत्य सुषुप्तपदनामिकाम् ।
शान्ताशेषविशेषांशस्तिष्ठत्यद्वैतमात्रकः ॥ ३४ ॥
गलितद्वैतनिर्भासो मुदितोऽन्तःप्रबोधवान् ।
सुषुप्तघन एवास्ते पञ्चमीं भूमिकां [1]गतः ॥ ३५ ॥

[1] गताः—अ, अ १, अ २, क.

अन्तर्मुखतया तिष्ठन् बहिर्वृत्तिपरोऽपि सन् ।
परिश्रान्ततया नित्यं निद्रालुरिव लक्ष्यते ॥ ३६ ॥

पञ्चमभूमिकामवतारयति—भूमिकेति ॥ ३२ ॥ सत्ताऽवशेषता कुत इत्यत्र—जगद्विकल्प इति ॥ ३३–३६ ॥

षष्ठभूमिका

कुर्वन्नभ्यासमेतस्यां भूमिकायां विवासनः ।
षष्ठीं तुर्याभिधामन्यां क्रमात् पतति भूमिकाम् ॥ ३७ ॥
यत्र नासन्न सद्रूपो नाहं नाप्यनहंकृतिः ।
केवलं क्षीणमनन आस्तेऽद्वैतेऽतिनिर्भयः ॥ ३८ ॥
निर्ग्रन्थिः शान्तसंदेहो जीवन्मुक्तो विभावनः ।
अनिर्वाणोऽपि निर्वाणश्चित्रदीप इव स्थितः ॥ ३९ ॥

षष्ठभूमिकामवतारयति—कुर्वन्निति ॥ ३७–३९ ॥

सप्तमभूमिका

षष्ठ्यां भूमावसौ स्थित्वा सप्तमीं भूमिमाप्नुयात् ।
विदेह[1]मुक्तताऽत्रोक्ता सप्तमी योगभूमिका ॥ ४० ॥
अगम्या वचसां शान्ता सा सीमा सर्वभूमिषु ।
लोकानुवर्तनं त्यक्त्वा त्यक्त्वा देहानुवर्तनम् ॥ ४१ ॥
शास्त्रानुवर्तनं त्यक्त्वा स्वाध्यासापनयं कुरु ।

सप्तमीं भूमिकामनुक्रामति—षष्ठ्यामिति । प्रथमद्वितीयभूम्यारूढो मुमुक्षुः, तृतीयभूम्यारूढो ब्रह्मवित्, चतुर्थभूम्यारूढो ब्रह्मविद्वरः, पञ्चमभूम्यारूढो

[1] मुक्ति—उ.

ब्रह्मविद्वरीयान्, षष्ठभूमिकाऽऽरूढो ब्रह्मविद्वरिष्ठः, सप्तमभूमिकाऽऽरूढो विदेहमुक्तो ब्रह्मैवेत्यर्थः ॥ ४० ॥ लोकदेहशास्त्रानुवर्तिनां जीवन्मुक्तिर्विदेहमुक्तिर्वा कुत इत्याशङ्क्य यदि स्वातिरेकेण लोकादिकमस्तीति परिभ्रमसि तदा क्रमेण मयोक्तसप्तभूमिका अभ्यस्य ततः लोकानुवर्तनमिति। स्वाध्यस्तस्वातिरिक्तापवादापह्नवाभ्यां जीवन्मुक्तो विदेहमुक्तो वा भवसीत्यर्थः ॥ ४१ ॥

ओङ्कारब्रह्मनिष्ठाविधिः

ओंकारमात्रमखिलं विश्वप्राज्ञादिलक्षणम् ॥ ४२ ॥
वाच्यवाचकताऽभेदात् भेदेनानुपलब्धितः।
अकारमात्रं विश्वः स्यादुकारस्तैजसः स्मृतः ॥ ४३ ॥
प्राज्ञो मकार इत्येवं परिपश्येत् क्रमेण तु।
समाधिकालात् प्रागेव विचिन्त्यातिप्रयत्नतः ॥ ४४ ॥
स्थूलसूक्ष्मक्रमात् सर्वं चिदात्मनि विलापयेत्।
चिदात्मा[1]नं नित्यशुद्धबुद्धमुक्तसदद्वयः ॥ ४५ ॥
परमानन्दसंदेहो वासुदेवोऽहमोमिति।
आदिमध्यावसानेषु दुःखं सर्वमिदं यतः ॥ ४६ ॥
तस्मात् सर्वं परित्यज्य तत्त्वनिष्ठो भवानघ।
अविद्यातिमिरातीतं सर्वाभासविवर्जितम् ॥ ४७ ॥
आनन्दममलं शुद्धं मनोवाचामगोचरम्।
प्रज्ञानघनमानन्दं ब्रह्मास्मीति विभावयेत् ॥ ४८ ॥

इत्युपनिषत् ॥

[1] हं—अ.

यद्येवं स्वातिरिक्तविभ्रमं त्यक्तुं न पारयसि तदा ओङ्कार एवेदं सर्वं इति शब्दब्रह्म भावय । एवं त्वया शब्दब्रह्मण्योङ्कारे भाविते ततस्तदर्थरूपपरंब्रह्म प्राप्नोषि शब्दार्थयोः अविनाभूतत्वात् ।

द्वे ब्रह्मणीह मन्तव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

इति श्रुतेः । ओङ्कारस्य परापरब्रह्माभिधानतया प्रसिद्धत्वात् तदवष्टभ्य ब्रह्मतत्त्वनिष्ठो भवेत्याह—**ओङ्कारेति** ॥ ४२ ॥ वाच्यवाचकयोः भेदः स्यादित्यत आह—**वाच्यवाचकताऽभेदादिति** । भेदे का हानिरित्यत आह—**भेदेनानुपलब्धित** इति । वाच्यवाचकयोरेकत्वं कुत इत्यत आह—**अकारमात्रमिति** ॥४३॥ एवमभेदेन संभाव्य वाच्यवाचककलनां विलाप्य तद्विलापनाधिकरणं ब्रह्मास्मीति विभावयेदित्याह—**समाधीति** ॥ ४४ ॥ तद्विलापनाधारं **चिदात्मानम्** ॥ ४५ ॥ यः सर्वाधारः परमात्मा तं चिदात्मानमेव **ओमिति** नित्यशुद्धेत्यादिविशेषणविशिष्टतुरीयोङ्काराग्रविद्योततुर्यतुरीय एव **वासुदेवोऽहमिति** भावयेत् ॥ ४५ ॥ स्वातिरिक्तास्तित्वभ्रमस्य आदिमध्यावसानेष्वपि दुःखहेतुत्वात् तदुत्सृज्य स्वमात्रनिष्ठो भवेत्याह—**आदीति** ॥ ४६ ॥ मुमुक्षुः उक्तलक्षणलक्षितं ब्रह्माहमिति भावयेदित्याह—**अविद्येति** । स्वाविद्या अस्ति नास्तीति विभ्रमातीतब्रह्मभावनात् ब्रह्मैव भवतीत्यर्थः ॥ ४७–४८ ॥ इत्युपनिषच्छब्दः अक्ष्युपनिषत्परिसमाप्त्यर्थः ॥

इति द्वितीयः खण्डः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
सूर्याक्ष्युपनिषद्व्याख्या लिखिता ब्रह्ममात्रगा ।
सूर्याक्ष्युपनिषद्व्याख्याग्रन्थः स्यात् पञ्चसप्ततिः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे द्विसप्ततिसंख्यापूरकं
अक्ष्युपनिषद्विवरणं सम्पूर्णम्

---

# अध्यात्मोपनिषत्

पूर्णमदः—इति शान्तिः

सर्वभूतान्तरात्मनारायणस्वरूपम्

अन्तःशरीरे निहितो गुहायामज एको नित्यमस्य पृथिवी शरीरं यः पृथिवीमन्तरे संचरन् यं पृथिवी न वेद । यस्यापःशरीरं योऽपोऽन्तरे संचरन् यमापो न विदुः । यस्य तेजः शरीरं यस्तेजोऽन्तरे संचरन् यं तेजो न वेद । यस्य वायुः शरीरं यो वायुमन्तरे संचरन् यं वायुर्न वेद । यस्याकाशः शरीरं य आकाशमन्तरे संचरन् यमाकाशो न वेद । यस्य मनः शरीरं यो मनोऽन्तरे संचरन् यं मनो न वेद । यस्य बुद्धिः शरीरं यो बुद्धिमन्तरे संचरन् यं बुद्धिर्न वेद । यस्याहंकारः शरीरं योऽहंकारमन्तरे संचरन् यमहंकारो न वेद । यस्य चित्तं शरीरं यश्चित्तमन्तरे संचरन् यं चित्तं न वेद । यस्याव्यक्तं शरीरं योऽव्यक्तमन्तरे संचरन् यमव्यक्तं न वेद । यस्याक्षरं शरीरं योऽक्षरमन्तरे संचरन् यमक्षरं न वेद । यस्य मृत्युः

शरीरं यो मृत्युमन्तरे संचरन् यं मृत्युर्न वेद । स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः ॥१–१॥

यत्रान्तर्याम्यादिभेदस्तत्त्वतो न हि युज्यते ।
निर्भेदं परमाद्वैतं स्वमात्रमवशिष्यते ॥

इह खलु शुक्लयजुर्वेदप्रविभक्तेयं अध्यात्मोपनिषत् सर्वान्तरस्वरूपप्रकटनव्यग्रा नारायणतत्त्वपर्यवसन्ना विजयते । अस्याः श्रुतेः संक्षेपतो विवरणमारभ्यते । स्वाज्ञलोकोत्तारणाय क्वचिदवान्तररूपेण क्वचिच्छिष्योद्देशरूपेण प्रवृत्तेति यत् तत् विश्वास्तुत्यर्थम् । कथं पुनरवान्तररूपेण श्रुतिः प्रवृत्तेति तत्राह— **अन्तरिति** । यः सर्वप्राणिनामन्तः **शरीरे** या गुहा सर्वगूहनरूपा बुद्धिः तस्यां **गुहायां** तद्वृत्तिसहस्रप्रवृत्तिनिमित्ततया तद्भावाभावप्रकाशकतया तत्सर्वकलनासम्भवप्रबोधसिद्धनिष्प्रतियोगिकचिन्मात्रतया च वर्तते सोऽयमात्मा स्वातिरिक्तसर्वभूतेषु मायया जातेष्वपि स्वयं स्वतः परतो वा न जायत **इत्यजः एकः** परमात्मा अवशिष्यते । नित्यमस्य स्वाज्ञदृष्टिसमर्पितपृथिव्यादिमृत्युपर्यन्तं **शरीरं यः** पृथिव्यादिमृत्युपर्यन्तमन्तरे **सञ्चरन्** वर्तते यं पृथिव्यादिमृत्युपर्यन्तं **न वेद स एष सर्वभूतान्तरात्माऽपहतपाप्मा** । सर्वभूतेषु पापपुण्यकबळितेष्वपि तत्रासंगोदासीनपरमेश्वरतया अपहतपाप्मत्वं युज्यते । दिवि स्वे महिम्नि विराजत इति दिव्यः । स्वेन रूपेण प्रकाशत इति देवः । घटशरावादिस्थानीयस्वातिरिक्तभूतेषु अनेकेष्वपि तदनुगतव्योमवत् अयमेक एव अवशिष्यते । सः **नारायणः** परमात्मा भवतीत्यवान्तरवाक्यसमुदायार्थः ॥ १–१ ॥

ब्रह्मनिष्ठया स्वाध्यासापनयविधिः

अहं ममेति यो भावो देहाक्षादावनात्मनि ।
अध्यासोऽयं निरस्तव्यो विदुषा ब्रह्मनिष्ठया ॥ १ ॥

ज्ञात्वा स्वं प्रत्यगात्मानं बुद्धितद्वृत्तिसाक्षिणम् ।
सोऽहमित्येव तद्वृत्त्या स्वान्यत्रात्ममतिं त्यजेत् ॥ २ ॥
लोकानुवर्तनं त्यक्त्वा [1]त्यक्त्वा देहानुवर्तनम् ।
शास्त्रानुवर्तनं त्यक्त्वा स्वाध्यासापनयं कुरु ॥ ३ ॥

यस्मादपगतं अन्तरं अतिरिक्तं तमः सोऽयं अवान्तरवाक्यार्थतया प्रतिपादितोऽपान्तरतमो नारायणः स्वपुत्रं ब्रह्माणं व्याजीकृत्य स्वाज्ञबृन्दस्वपदप्राप्त्युपायतया यथायथा स्वातिरिक्तास्तित्वभ्रमो मार्जनीयः तथातथा स्वात्मयाथात्म्यं उपदिशति—अहंममेत्यादिना । तन्निष्ठ्या तत्प्रपञ्चात्मात्मीयदृष्टिः निराकर्तव्येत्यर्थः ॥ १ ॥ रूढमूलस्वातिरिक्तभ्रमत्यागः कथं उपपद्यत इत्यत्राह—ज्ञात्वेति ॥ २ ॥ स्वान्यत्र लोकदेहादिसत्त्वात् तन्मतिः कथं त्यक्तुं शक्यत इत्यत आह—लोकेति ॥ ३ ॥

अनात्मनिरसनपूर्वकं केवलात्मानुसन्धानम्

स्वात्मन्येव सदा स्थित्या मनो नश्यति योगिनः ।
युक्त्या श्रुत्या स्वानुभूत्या ज्ञात्वा सार्वात्म्यमात्मनः ॥ ४ ॥
निद्राया लोकवार्तायाः शब्दादेरात्मविस्मृतेः ।
क्वचिन्नावसरं दत्त्वा चिन्तयात्मानमात्मनि ॥ ५ ॥
मातापित्रोर्मलोद्भूतं मलमांसमयं वपुः ।
त्यक्त्वा चण्डालवद्दूरं ब्रह्मीभूय कृती भव ॥ ६ ॥
घटाकाशं महाकाश इवात्मानं परात्मनि ।
विलाप्याखण्डभावेन तूष्णीं भव सदा मुने ॥ ७ ॥

[1] तथा—उ, उ १.

स्वप्रकाशमधिष्ठानं स्वयंभूय सदात्मना ।
ब्रह्माण्डमपि पिण्डाण्डं [1]त्यज्यतां मलभाण्डवत् ॥ ८ ॥
चिदात्मनि सदानन्दे [2]देहरूढामहंधियम् ।
निवेश्य लिङ्गमुत्सृज्य केवलो भव सर्वदा ॥ ९ ॥
[3]यत्रैष जगदाभासो दर्पणान्तःपुरं यथा ।
तद्ब्रह्माहमिति ज्ञात्वा कृतकृत्यो भवानघ ॥ १० ॥
[4]अहंकारग्रहान्मुक्तः स्वरूपमुपपद्यते ।
चन्द्रवद्विमलः पूर्णः सदानन्दः स्वयंप्रभः ॥ ११ ॥

स्वाध्यासमूलमनोऽस्तीति यदि मन्यसे तदा **स्वात्मन्येव** । सकृदात्मनि ज्ञाते यथेच्छं विहरेदित्यत आह—**युक्त्येति** ॥ ४–५ ॥ सत्यनात्मनि आत्मचिन्तनं कथमिति यदि मन्यसे तदा **मातापित्रोरिति** ॥ ६ ॥ यदि जीवात्मपरमात्मनोः भेदं मन्यसे तदा **घटाकाशमिति** ॥ ७ ॥ तूष्णींभावावरणतया पिण्डब्रह्माण्डादिकमस्तीति यदि मन्यसे तदा **स्वप्रकाशमिति** ॥ ८ ॥ यदि ते देहादावहंधीः तां आत्मनि कृत्वा केवलो भवेत्याह—**चिदात्मनीति** । स्वज्ञान-**लिङ्गमुत्सृज्य** ॥ ९ ॥ यद्याभासतोऽपि जगदस्तीति मन्यसे तदा **यत्रैष** इति । यत्तदपवादाधिकरणं **तद्ब्रह्माहमिति** ॥ १० ॥ यदि देहादावहंभावस्त्वां आवृणोति तदा निरहम्भावमन्त्रेण **अहङ्कारग्रहान्मुक्तः** ॥ ११ ॥

वासनाक्षयोपायः

क्रियानाशाद्भवेच्चिन्तानाशोऽस्माद्वासनाक्षयः ।
वासनाप्रक्षयो मोक्षः स जीवन्मुक्तिरिष्यते ॥ १२ ॥

[1] त्यजतां—उ. [2] देहा—अ, अ १, क.
[3] यत्रैव—अ २. [4] अहंकारा—अ २.

सर्वत्र सर्वतः [1]सर्वब्रह्ममात्रावलोकनम् ।
सद्भावभावनादार्ढ्याद्वासनालयमश्नुते ॥ १३ ॥

तन्मुक्त्यावरणवासनाऽस्तीति यदि मन्यसे तदा क्रियानाशादिति ॥ १२ ॥ वासनाविलयोपायस्तु सर्वत्र सर्वत इति ॥ १३ ॥

ब्रह्मनिष्ठायां प्रमादनिरसनविधिः

प्रमादो ब्रह्मनिष्ठायां न कर्तव्यः कदाचन ।
प्रमादो मृत्युरित्याहुर्विद्यायां ब्रह्मवादिनः ॥ १४ ॥
यथाऽपकृष्टं शैवालं क्षणमात्रं न तिष्ठति ।
आवृणोति [2]तथा माया प्राज्ञं वाऽपि पराङ्मुखम् ॥ १५ ॥
जीवतो यस्य कैवल्यं विदेहोऽपि स केवलः ।
समाधिनिष्ठतामेत्य निर्विकल्पो भवानघ ॥ १६ ॥

सकृदात्मानमवगम्य संसारानुवर्तनेऽपि सकृदवगतज्ञानफलमाप्नोतीत्यत आह—**प्रमाद** इति । स्वात्मानुसन्धानमुत्सृज्य संसरणं **प्रमादः**, "प्रमादं वै मृत्युमहं ब्रवीमि" इति स्मृतेः ॥ १४ ॥ निष्ठाच्युतित आवृतो भवतीत्यत्र दृष्टान्तः—**यथापकृष्टमिति** ॥ १५ ॥ अतः सदाऽनुसन्धानतो विकल्पजालमुन्मूल्य निर्विकल्पो भवेत्याह—**जीवत** इति । **यस्यैवमनुसन्धानं** कुर्वन् **जीवतः** ते निर्विशेषब्रह्ममात्रज्ञानं जायते तत्समकालं **स** त्वं **केवलो विदेहोऽपि** देहो मे अस्ति नास्तीति विभ्रमविरळ एव भूत्वा **कैवल्यं** प्राप्नोषीत्यत्र न विवादः । अतस्त्वं निर्विशेषज्ञानहेतवे **समाधितः** स्वातिरिक्तविकल्पजालमुन्मूल्य **निर्विकल्पकज्ञानवान् भवे**त्यर्थः ॥ १६ ॥

[1] सर्वं—अ २, क.  [2] तथाविद्या—उ, उ १.

समाध्यभ्यासस्यावधिः

अज्ञानहृदयग्रन्थेर्निःशेषविलयस्तदा ।
समाधिनाऽविकल्पेन यदाऽद्वैतात्मदर्शनम् ॥ १७ ॥

किं यावदायुषं समाधिः कर्तव्यः इत्यत्रावधिमाह—**अज्ञानेति** ॥ १७ ॥

सर्वोपाधिमृषात्वानुसन्धानपूर्वकं केवलब्रह्मात्मदर्शनम्

[1]अत्रात्मत्वं दृढीकुर्वन्नहमादिषु संत्यजन् ।
उदासीनतया तेषु तिष्ठेद्घटपटादिवत् ॥ १८ ॥
ब्रह्मादिस्तम्ब[2]पर्यन्तं मृषामात्रा उपाधयः ।
ततः पूर्णं स्वमात्मानं पश्येदेकात्मना स्थितम् ॥ १९ ॥
स्वयं ब्रह्मा स्वयं विष्णुः स्वयमिन्द्रः स्वयं शिवः ।
स्वयं विश्वमिदं सर्वं स्वस्मादन्यन्न किंचन ॥ २० ॥
स्वात्मन्यारोपिताशेषाभासवस्तुनिरासतः ।
स्वयमेव परं ब्रह्म पूर्णमद्वयमक्रियम् ॥ २१ ॥

अद्वैतावगत्यनन्तरं कदाचित् द्वैतस्फूर्तावपि तत्र उदासीनभावमेत्य तिष्ठेदित्याह—**अत्रेति** ॥ १८ ॥ ब्रह्माद्युपाधिः सत्पदमर्हति, तत्रोदासीनता कथमित्यत आह—**ब्रह्मादीति** ॥ १९ ॥ यदि स्वातिरेकेण ब्रह्मादिरस्तीति मन्यसे तदा एवं निश्चिनु इत्याह **स्वयमिति** ॥ २० ॥ स्वस्य सर्वरूपत्वेऽपि ब्रह्मरूपत्वं कुतः इत्यत आह— **स्वात्मनीति** ॥ २१ ॥

द्वैतासम्भवनिरूपणम्

असत्कल्पो विकल्पोऽयं विश्वमि[3]त्येकवस्तुनि ।
निर्विकारे निराकारे निर्विशेषे भिदा कुतः ॥ २२ ॥

[1] यत्र—क.  [2] पर्यन्ता—उ, उ १.  [3] त्येव—अ, अ १.

द्रष्टृदर्शनदृश्यादिभावशून्ये निरामये ।
कल्पार्णव इवा[1]त्यन्तं [2]परिपूर्णे चिदात्मनि ॥ २३ ॥
तेजसीव तमो यत्र विलीनं भ्रान्तिकारणम् ।
अद्वितीये परे तत्त्वे निर्विशेषे भिदा कुतः ॥ २४ ॥
एकात्मके परे तत्त्वे भेदकर्ता कथं [3]वसेत् ।
सुषुप्तौ सुखमात्रायां भेदः केनावलोकितः ॥ २५ ॥

द्वैते सत्यद्वितीयत्वं कुत इत्याशङ्क्य आक्षेपतो द्वैतासम्भवमाचष्टे—असदिति ॥ २२–२४ ॥ भेदासम्भवमुक्त्वा भेदद्रष्टृसम्भवमाह—एकेति ॥२५॥

परात्मनि चित्तसमाधानविधिः

चित्तमूलो विकल्पोऽयं चित्ताभावे न कश्चन ।
अतश्चित्तं समाधेहि प्रत्यग्रूपे परात्मनि ॥ २६ ॥
अखण्डानन्दमात्मानं विज्ञाय स्वस्वरूपतः ।
बहिरन्तः सदानन्दरसास्वादनमात्मनि ॥ २७ ॥

यतः चित्तमूल इति ॥ २६ ॥ स्वावशेषधिया स्वानन्दात्मानं पश्यतः स्वानन्दाविर्भावो भवतीत्याह—अखण्डेति । बहिरन्तश्च सदा रसास्वादनं कुर्वन् स्वात्मन्येव अयं सदा मोदत इत्यर्थः ॥ २७ ॥

वैराग्यबोधोपरतिशान्तीनां मिथो हेतुफलत्वम्

वैराग्यस्य फलं बोधो बोधस्योपरतिः फलम् ।
स्वानन्दानुभवाच्छान्तिरेषैवोपरतेः फलम् ॥ २८ ॥

[1] त्यन्तः—अ, अ १. [2] भावशून्ये—उ, उ १. [3] भवेत्—अ, अ १.

यद्युत्तरोत्तराभावे पूर्वपूर्वं तु निष्फलम् ।
निवृत्तिः परमा तृप्तिरानन्दोऽनुपमः स्वतः ॥ २९ ॥

वैराग्यबोधोपरतिशान्तीनां मिथो हेतुफलतामाह—वैराग्यस्येति ॥ २८ ॥
उत्तरोत्तरसिद्धौ पूर्वपूर्वं तु फलवत् भवतीत्याह—निवृत्तिरिति ॥ २९ ॥

श्रवणमनननिदिध्यासनसमाधिलक्षणम्

मायोपाधिर्जगद्योनिः सर्वज्ञत्वादिलक्षणः ।
पारोक्ष्यशबलः सत्याद्यात्मकस्तत्पदाभिधः ॥ ३० ॥
आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयोः ।
अन्तःकरणसंभिन्नबोधः स त्वंपदाभिधः ॥ ३१ ॥
मायाऽविद्ये विहायैव उपाधी परजीवयोः ।
अखण्डं सच्चिदानन्दं परं ब्रह्म [1]विलक्ष्यते ॥ ३२ ॥
इत्थं वाक्यैस्तदर्थानुसंधानं श्रवणं भवेत् ।
युक्त्या संभावितत्वानुसंधानं मननं तु तत् ॥ ३३ ॥
ताभ्यां निर्विचिकित्सेऽर्थे चेतसः स्थापितस्य तत् ।
एकतानत्वमेतद्धि निदिध्यासनमुच्यते ॥ ३४ ॥
ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम् ।
निवातदीपवच्चित्तं समाधिरभिधीयते ॥ ३५ ॥
वृत्तयस्तु तदानीमप्यज्ञाता आत्मगोचराः ।
स्मरणादनुमीयन्ते व्युत्थितस्य [2]समुत्थिताः ॥ ३६ ॥

[1] विवक्ष्यते—उ १.
[2] समुज्झिताः—क.

जीवपरयोः भेदात् अखण्डार्थत्वं कुत इत्याशङ्क्य परजीवस्वरूपं तद्वाच्यार्थत्यागतो लक्ष्यैक्यमखण्डं ब्रह्मेत्याह—**मायेति** ॥ ३०–३१ ॥ **विलक्ष्यते**—तत्त्वमस्यादिमहावाक्यसमुदायार्थः ॥ ३२ ॥ एवं महावाक्यार्थ-श्रवणमनननिदिध्यासनसमाधिभिः अपरोक्षसाक्षात्कारो भवतीत्याह—**इत्थमिति** ॥ ३३–४० ॥

समाधेः धर्ममेघत्वम्

अनादाविह संसारे संचिताः कर्मकोटयः ।
अनेन विलयं यान्ति शुद्धो [1]धर्मोऽभिवर्धते ॥ ३७ ॥
धर्ममेघ[2]मिमं प्राहुः समाधिं योगवित्तमाः ।
वर्षत्येष यथा धर्मामृतधाराः सहस्रशः ॥ ३८ ॥

समाधिना अपरोक्षबोधसिद्धिः

अमुना वासनाजाले निःशेषं प्रविलापिते ।
समूलोन्मूलिते पुण्यपापाख्ये कर्मसंचये ॥ ३९ ॥
वाक्यमप्रतिबद्धं सत् प्राक् परोक्षाव[3]भासते ।
करामलकवद्बोधमपरोक्षं प्रसूयते ॥ ४० ॥

वैराग्यबोधोपरतीनां अवधिः

वासनाऽनु[4]दयो भोग्ये वैराग्यस्य तदाऽवधिः ।
अहंभावोदयाभावो बोधस्य परमावधिः ॥ ४१ ॥
लीनवृत्तेरनुत्पत्तिर्मर्यादोपरतेस्तु सा ।

[1] धर्मो वि—अ, अ १, अ २, क.　　[2] मिदं—उ, उ १.
[3] भासिते—अ १. भासितं—अ.　　[4] दये—अ १, अ २.

वासनाबोधोपरतीनां अवधिमाह —वासनेति ॥ ४१–४२ ॥

स्थितप्रज्ञलक्षणम्

स्थितप्रज्ञो यतिरयं यः सदानन्दमश्नुते ॥ ४२ ॥
ब्रह्मण्येव विलीनात्मा निर्विकारो विनिष्क्रियः ।
ब्रह्मात्मनोः शोधितयोरेकभावावगाहिनी ॥ ४३ ॥
निर्विकल्पा च चिन्मात्रा वृत्तिः प्रज्ञेति कथ्यते ।

प्रज्ञाप्रज्ञावज्जीवन्मुक्तलक्षणमाह —ब्रह्मेति । शोधिततत्त्वंपदैक्यब्रह्मगोचरा वृत्तिः प्रज्ञेत्युच्यते । तद्वान् जीवन्मुक्त इत्यर्थः ॥ ४३–४४ ॥

जीवन्मुक्तलक्षणम्

सा सर्वदा भवेद्यस्य स जीवन्मुक्त इष्यते ॥ ४४ ॥
देहेन्द्रियेष्वहंभाव इदंभावस्तदन्यके ।
यस्य नो भवतः क्वापि स जीवन्मुक्त इष्यते ॥ ४५ ॥
न प्रत्यग्ब्रह्मणोर्भेदं [1]कथाऽपि ब्रह्मसर्गयोः ।
प्रज्ञया यो विजानाति स जीवन्मुक्त इष्यते ॥ ४६ ॥
साधुभिः पूज्य[2]मानेऽस्मिन् पीड्यमानेऽपि दुर्जनैः ।
समभावो भवेद्यस्य स जीवन्मुक्त इष्यते ॥ ४७ ॥
विज्ञातब्रह्म[3]तत्त्वस्य यथापूर्वं न संसृतिः ।
अस्ति चेन्न स विज्ञातब्रह्मभावो बहिर्मुखः ॥ ४८ ॥

[1] कदा—अ. [2] मानोऽस्मिन्—अ २, क. मानोऽपि—अ.
[3] भावस्य—अ.

किञ्च---देहेन्द्रियेष्विति ॥ ४६–४७ ॥ ज्ञाततत्त्वस्यापि संसारानुवृत्तौ स बहिर्मुखो भवतीत्याह---विज्ञातेति । निवृत्तपराक्प्रवृत्तिः जीवन्मुक्तोऽन्तर्मुख इत्यर्थः ॥ ४८ ॥

जीवन्मुक्तस्य प्रारब्धसत्त्वं, सञ्चितक्षयः, आगाम्यश्लेषश्च

सुखाद्यनुभवो यावत् तावत् प्रारब्धमिष्यते ।
फलोदयः क्रियापूर्वो निष्क्रियो न हि कुत्रचित् ॥ ४९ ॥
अहं ब्रह्मेति विज्ञानात् कल्पकोटिशतार्जितम् ।
संचितं विलयं याति प्रबोधात् स्वप्नकर्मवत् ॥ ५० ॥
स्वमसङ्गमुदासीनं परिज्ञाय नभो यथा ।
न श्लिष्यते यतिः किंचित् कदाचिद्भाविकर्मभिः ॥ ५१ ॥
न नभो घटयोगेन सुरागन्धेन लिप्यते ।
तथाऽऽत्मोपाधियोगेन तद्धर्मैर्नैव लिप्यते ॥ ५२ ॥

तस्य प्रारब्धानुभवोऽस्ति न वा इत्यत्र---सुखादीति ॥ ४९ ॥ विज्ञानतोऽस्य सञ्चितकर्म क्षीयत इत्याह---अहमिति ॥ ५० ॥ आगामिकर्मणा ज्ञानिनोऽश्लेषमाह---स्वमिति ॥ ५१ ॥ आगामिकर्माश्लेषे दृष्टान्तमाह---नेति ॥ ५२ ॥

प्रारब्धसत्त्वासत्त्वपक्षयोः निरूपणम्

ज्ञानोदयात् पुराऽऽरब्धं कर्म ज्ञानान्न नश्यति ।
अदत्त्वा स्वफलं लक्ष्यमुद्दिश्योत्सृष्टबाणवत् ॥ ५३ ॥
व्याघ्रबुद्ध्या विनिर्मुक्तो बाणः पश्चात्तु गोमतौ ।
न तिष्ठति भिनत्त्येव लक्ष्यं वेगेन निर्भरम् ॥ ५४ ॥

अजरोऽस्म्यमरोऽस्मीति य आत्मानं प्रपद्यते ।

तदात्मना तिष्ठतोऽस्य कुतः प्रारब्धकल्पना ॥ ५५ ॥

प्रारब्धं सिध्यति तदा यदा देहात्मना स्थितिः ।

देहात्मभावो नैवेष्टः प्रारब्धं त्यज्यतामतः ॥ ५६ ॥

प्रारब्धकल्पनाऽप्यस्य देहस्य भ्रान्ति[1]रेष हि ॥ ५७ ॥

अध्यस्तस्य कुतस्त[स]त्त्व[2]मसत्यस्य कुतो जनिः ।

अजातस्य कुतो नाशः प्रारब्धमसतः कुतः ॥ ५८ ॥

ज्ञानेनाज्ञानकार्यस्य समूलस्य लयो यदि ।

तिष्ठत्ययं [3]कथं देह इति शङ्कावतो जडान् ॥ ५९ ॥

समाधातुं बाह्यदृष्ट्या प्रारब्धं वदति श्रुतिः ।

न तु देहादिसत्यत्वबोधनाय विपश्चिताम् ॥ ६० ॥

निर्विशेषब्रह्मज्ञाने जातेऽपि प्रारब्धं कर्म न नश्यतीति सदृष्टान्तं पूर्वपक्षयुक्तिं प्रतिपाद्याथ निर्विशेषब्रह्ममात्रभावारूढज्ञानिनः प्रारब्धासम्भवं प्रकटयति—**ज्ञानेति** ॥ ५३–५४ ॥ सिद्धान्तस्तु—**अजरोऽस्मीति** ॥ ५५ ॥ स्वात्मनः प्रारब्धाभावेऽपि देहस्य स्यादिति पूर्वपक्षीकृत्य तस्यापि न सम्भवतीति निराकरोति—**प्रारब्धमिति** ॥ ५६–५८ ॥ इयं प्रारब्धकल्पना स्वाज्ञसमाधानार्थं प्रवृत्ता न तु देहादेः ब्रह्मातिरेकेण सत्यत्वमंगीकृत्य प्रवृत्तेत्याह—**ज्ञानेनेति** ॥५९–६०॥

कर्मत्रयविरळब्रह्मस्वरूपम्

परिपूर्णमनाद्यन्तमप्रमेयमविक्रियम् ।

सद्घनं चिद्घनं नित्यमानन्दघनमव्ययम् ॥ ६१ ॥

[1] रेव—अ, क.  [2] मसत्वस्य—उ.  [3] कुतो—अ, अ १.

प्रत्यगेकरसं पूर्णमनन्तं सर्वतोमुखम् ।
अहेयमनुपादेयमनाधेयमनाश्रयम् ॥ ६२ ॥
निर्गुणं निष्क्रियं सूक्ष्मं निर्विकल्पं निरञ्जनम् ।
अनिरूप्यस्वरूपं यन्मनोवाचामगोचरम् ॥ ६३ ॥
सत्समृद्धं स्वतःसिद्धं शुद्धं बुद्धमनीदृशम् ।
एकमेवाद्वयं ब्रह्म नेह नानाऽस्ति किंचन ॥ ६४ ॥

कर्मत्रयकलनाविरळं ब्रह्म कीदृशमित्यत आह—परिपूर्णमिति ॥६१–६४॥

गुरवे स्वानुभवप्रकटनम्

स्वानुभूत्या स्वयं ज्ञात्वा स्वमात्मानमखण्डितम् ।
स सिद्धः सुसुखं तिष्ठन् निर्विकल्पात्मनाऽऽत्मनि ॥ ६५ ॥
क्व गतं केन वा नीतं कुत्र लीनमिदं जगत् ।
अधुनैव मया दृष्टं नास्ति किं महदद्भुतम् ॥ ६६ ॥
किं हेयं किमुपादेयं किमन्यत् किं विलक्षणम् ।
अखण्डानन्दपीयूषपूर्णब्रह्ममहार्णवे ॥ ६७ ॥
न किंचिदत्र पश्यामि न शृणोमि न वेद्म्यहम् ।
स्वात्मनैव सदानन्दरूपेणास्मि [1]स्वलक्षणः ॥ ६८ ॥
असङ्गोऽहमनङ्गोऽहमलिङ्गोऽहमहं हरिः ।
प्रशान्तोऽहमनन्तोऽहं परिपूर्णश्चिरन्तनः ॥ ६९ ॥
अकर्ताऽहमभोक्ताऽहमविकारोऽहमव्ययः ।
शुद्धबोधस्वरूपोऽहं केवलोऽहं सदाशिवः ॥ ७० ॥

[1] विल—अ, अ १.

परिपूर्णमित्यादिविशेषणविशिष्टं ब्रह्माहमस्मीति **स्वानुभूत्या** ॥ ६५ ॥ एवं स्वगुरोः सकाशात् परमं इमं उपदेशं लब्ध्वा गुर्वनुज्ञया निर्विकल्पसमाधौ चिरं स्थित्वा बहिष्ठप्राणिसंघातपुण्योद्रेकानुरोधेन समाधितो व्युत्थाय स्वान्तेवासिगोष्ठ्यां स्वानुभवसिद्धं अर्थं प्रकटयति—**क्व गतमिति** ॥ ६६–६७ ॥ **स्वातिरिक्तं न किञ्चिदत्र** ॥ ६८–६९ ॥ ब्रह्मैवं घोरांगिरसे स्वानुभवं प्रकटयित्वा उपररामेत्यर्थः ॥ ७० ॥

विद्यासम्प्रदायपरम्परा

[1]एतां विद्यामपान्तरतमाय ददौ । अपान्तरतमो ब्रह्मणे ददौ । ब्रह्मा घोराङ्गिरसे ददौ । घोराङ्गिरा रैक्काय ददौ । रैक्को रामाय ददौ । रामः सर्वेभ्यो भूतेभ्यो ददावित्येतन्निर्वाणानुशासनं वेदानुशासनं वेदानुशासनमित्युपनिषत् ॥ ७१ ॥

**रामाय** परशुरामायेत्यर्थः । अस्या विद्यायाः स्वातिरिक्तभ्रममोक्षप्रकाशकत्वात् **निर्वाणानुशासन**त्वं अस्याः समस्तवेदार्थत्वेन वेदानां अत्रैव पर्यवसन्नत्वात् **वेदानुशासन**त्वं च । आवृत्तिः अयमेव वेदार्थो नान्यः इति प्रकटनार्था, "वेदार्थः परमाद्वैतं नेतरत् सुरपुंगवाः" इति स्मृतेः । **इत्युपनिषच्छब्दः** अध्यात्मोपनिषत्परिसमाप्त्यर्थः ॥ ७१ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
अध्यात्मोपनिषद्व्याख्या लिखिता ब्रह्मबोधिनी ।
अध्यात्मोपनिषद्व्याख्याग्रन्थजातं शतं स्मृतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे त्रिसप्ततिसंख्यापूरकं
अध्यात्मोपनिषद्विवरणं सम्पूर्णम्

———

[1] सदाशिव एतां—उ, उ १.

# अन्नपूर्णोपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

## प्रथमोऽध्यायः

ब्रह्मविद्यातत्साधनजिज्ञासा

निदाघो नाम योगीन्द्रः ऋभुं ब्रह्मविदां वरम् ।
प्रणम्य दण्डवद्भूमावुत्थाय स पुनर्मुनिः ॥ १ ॥
आत्मतत्त्वमनुब्रूहीत्येवं पप्रच्छ सादरम् ।
कयोपासनया ब्रह्मन्नीदृशं प्राप्तवानसि ॥ २ ॥
तां मे ब्रूहि महाविद्यां मोक्षसाम्राज्यदायिनीम् ।

सर्वापह्नवसंसिद्धब्रह्ममात्रतयोज्ज्वलम् ।
त्रैपदश्रीरामतत्त्वं स्वमात्रमिति भावये ॥

इह खलु अथर्वणवेदप्रविभक्तेयं अन्नपूर्णोपनिषत् समस्तवेदान्तसिद्धान्तप्रकटनव्यग्रा स्वयं ब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । निदाघऋभुप्रश्नप्रतिवचनरूपेयं आख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—निदाघ इति ॥ १–२ ॥

अन्नपूर्णामन्त्रानुष्ठानेन आत्मज्ञानोदयः

निदाघ त्वं कृतार्थोऽसि शृणु विद्यां [1]सनातनाम् ॥ ३ ॥
यस्या विज्ञानमात्रेण जीवन्मुक्तो भविष्यसि ।
मूलशृङ्गाटमध्यस्था बिन्दुनादकलाऽऽश्रया ॥ ४ ॥
नित्यानन्दा निराधारा विख्याता विलसत्कचा ।
विष्टपेशी महालक्ष्मीः कामस्तारो नतिस्तथा ॥ ५ ॥
भगवत्यन्नपूर्णेति ममाभिलषितं ततः ।
अन्नं देहि ततः स्वाहा मन्त्रसारेति विश्रुता ॥ ६ ॥
सप्तविंशतिवर्णात्मा योगिनीगणसेविता ॥ ७ ॥
ऐं ह्रीं सौः श्रीं क्लीं ओं नमो भगवत्यन्नपूर्णे ममाभिलषितमन्नं
देहि स्वाहा ॥
इति पित्रोपदिष्टोऽस्मि तदादि नियमस्थितः ।
कृतवान् स्वाश्रमाचारो मन्त्रानुष्ठानमन्वहम् ॥ ८ ॥
एवं गते बहुदिने प्रादुरासीन्ममाग्रतः ।
अन्नपूर्णा विशालाक्षी स्मयमानमुखाम्बुजा ॥ ९ ॥
तां दृष्ट्वा दण्डवद्भूमौ नत्वा प्राञ्जलिरास्थितः ।
अहो वत्स कृतार्थोऽसि वरं वरय मा चिरम् ॥ १० ॥
एवमुक्तो विशालाक्ष्या मयोक्तं मुनिपुङ्गव ।
आत्मतत्त्वं मनसि मे प्रादुर्भवतु पार्वति ॥ ११ ॥

[1] सनातनीम्—अ, अ १.

तथैवास्त्विति मामुक्त्वा तत्रैवान्तरधीयत ।
तदा मे मतिरुत्पन्ना जगद्वैचित्र्यदर्शनात् ॥ १२ ॥

योग्याधिकारिणा निदाघेन एवं पृष्टो मुनिः यथावत् सोपायं कथयामासेत्याह—**निदाघेति** । ब्रह्मचर्यप्रळयकालाग्निना निर्दग्धाघोऽसि अतस्त्वं निदाघ इत्यन्वर्थनामा भवसीत्यर्थः ॥ ३ ॥ स्वेनोपासितमन्त्रमुद्धरति—**मूलेति** । सर्वाभिधेयमूलश्रृंगं ब्रह्म, तत्र मूलश्रृंगे अभिधानरूपेण अटति सोऽयं **मूलश्रृङ्गाटः** प्रणवः, तन्मध्ये तिष्ठतीति तन्मध्यस्था ऐ इति बिन्दुनादकळायोगात् ऐं इति वाग्भवबीजमुद्धृतम ॥ ४ ॥ तथा **नित्यानन्दा निराधारा** इति शब्दतः बिन्दुनादसहितेकाराद्यवियद्बीजमुद्धृतं भवति ह्रीं इति । **विलसत्कच**शब्देन सविसर्गौकाराढ्यसकार उच्यते सौः इति । तद्बीजशक्तिरेव विष्टपेशी भुवनेशीत्युच्यते **महालक्ष्मीः** श्रीं इति । **कामः** क्लीं इति । **तारो नतिः** इत्यादि विस्पष्टमवगम्यते । विशिष्टमूलमन्त्रस्तु—ऐं ह्रीं सौः इत्यादि ॥ ५–७ ॥ अयं मन्त्रः ते केनोपदिष्टः? त्वया किं कृतम्? ततः किं फलं प्राप्तवानसि? इति प्रष्टुकाममालक्ष्याह—**इतीति** ॥ ८–९ ॥ ततः प्रसन्ना भगवती एवमाह—**अहो** इति ॥ १० ॥ तदा त्वया किं कृतं? इत्यत्र—**एवमिति** ॥ ११ ॥ तया किं कृतं? इत्यत्र—**तथैवास्त्विति** । यदा एवं प्रसादो जातः **तदा मे मतिरुत्पन्ना** ॥ १२ ॥

### पञ्चविधभ्रमनिवृत्तिः

भ्रमः पञ्चविधो भाति तदेवेह समुच्यते ।
जीवेश्वरौ भिन्नरूपाविति प्राथमिको भ्रमः ॥ १३ ॥
आत्मनिष्ठं कर्तृगुणं वास्तवं वा द्वितीयकः ।
शरीरत्रयसंयुक्तजीवः सङ्गी तृतीयकः ॥ १४ ॥

जगत्कारणरूपस्य विकारित्वं चतुर्थकः ।
कारणाद्भिन्नजगतः सत्यत्वं पञ्चमो भ्रमः ।
पञ्चभ्रमनिवृत्तिश्च तदा स्फुरति चेतसि ॥ १५ ॥

बिम्बप्रतिबिम्बदर्शनेन भेदभ्रमो निवृत्तः । स्फटिकलोहितदर्शनेन पारमार्थिककर्तृत्वभ्रमो निवृत्तः । घटमठाकाशदर्शनेन सङ्गीति भ्रमो निवृत्तः । रज्जुसर्पदर्शनेन कारणाद्भिन्नजगतः सत्यत्वभ्रमो निवृत्तः । कनक[1]रुचकदर्शनेन विकारित्वभ्रमो निवृत्तः ॥ १५–१ ॥

तदा प्रभृति मच्चित्तं ब्रह्माकारमभूत् स्वयम् ।
निदाघ त्वमपीत्थं हि तत्त्वज्ञानमवाप्नुहि ॥ १६ ॥

तत्प्रकारस्तु—जीवेश्वराविति ॥ १३–१५ ॥ तन्निवृत्तिप्रकारः कः? इत्यत्र—बिम्बप्रतिबिम्बदर्शनेन जीवेशयोः मिथः भेदभ्रमो निवृत्तः ॥ १५–१, १६ ॥

## स्वस्वरूपानुसन्धानम्

निदाघः प्रणतो भूत्वा ऋभुं पप्रच्छ सादरम् ।
ब्रूहि मे श्रद्दधानाय ब्रह्मविद्यामनुत्तमाम् ॥ १७ ॥
तथेत्याह ऋभुः प्रीतस्तत्त्वज्ञानं वदामि ते ।
महाकर्ता महाभोक्ता महात्यागी भवानघ ।
स्वस्वरूपानुसंधानमेवं कृत्वा सुखी भव ॥ १८ ॥

[1] रुचिर—अ २, क, उ.

नित्योदितं विमलमाद्यमनन्तरूपं
ब्रह्मास्मि नेतरकलाकलनं हि किंचित् ।
इत्येव भावय निरञ्जनतामुपेतो
निर्वाणमेहि सकलामल[1]शान्तवृत्तिः ॥ १९ ॥
यदिदं दृश्यते किंचित् तत्तन्नास्तीति भावय ।
यथा गन्धर्वनगरं यथा वारि मरुस्थले ॥ २० ॥
यत्तु नो दृश्यते किंचिद्यत्तु किंचिदिव स्थितम् ।
मनःषष्ठेन्द्रियातीतं तन्मयो भव [2]वै मुने ॥ २१ ॥
अविनाशि चिदाकाशं सर्वात्मकमखण्डितम् ।
नीरन्ध्रं भूरिवाशेषं तदस्मीति विभावय ॥ २२ ॥

ततः किं इत्यत्र—निदाघः प्रणतो भूत्वा अन्नपूर्णाप्रसादतः कृतार्थमेव भुञ्जानं परमार्थसत्यवादिनं ऋभुं पप्रच्छ ॥ १७ ॥ निदाघप्रश्नमंगीकृत्य तथेत्याह ऋभुः । किं तद्वदसि? इत्यत्र—महाकर्तेति । चतुर्मुखात्मना स्वसृज्यमानप्रपञ्चकलनायां आत्मात्मीयाभिमतिवैकल्येन सृष्टिकाले सर्वं करोतीति महाकर्ता, तथा विष्ण्वात्मना स्थितिकाले "अहमेवेदं सर्वं", "सर्वं खल्विदं ब्रह्म", "मद्व्यतिरिक्तमणुमात्रं न विद्यते", इति श्रुत्यनुरोधेन यः सर्वं भुंक्ते स महाभोक्ता, तथा प्रळयकाले रुद्रात्मना "सर्ववर्जितचिन्मात्रोऽस्मि" इति श्रुत्यनुरोधेन स्वातिरिक्तसर्वत्यागमपह्नवीकरोतीति महात्यागी, वस्तुतः कर्तृभोक्तृत्यागकलनाविरळनिष्प्रतियोगिकब्रह्ममात्रावशेषरूपो भव । हे अनघ निदाघ स्वस्वरूपानुसन्धानतः कृतकृत्यो भवेत्यर्थः ॥ १८ ॥ किं तत्स्वरूपं? तत् किंप्रकारेण अनुसन्धेयं? किं तत्फलं? इत्यत आह—

[1] शान्ति—उ. [2] सर्वदा—उ.

**नित्येति** । अथ "तत ऊर्ध्वं उदेता नैवोदेता नास्तमेता" इति यत् **नित्योदितं** इत्यादिविशेषणविशिष्टं तत् **ब्रह्मास्मि** इति ज्ञानतो ब्रह्मातिरिक्तभ्रमविरळो भूत्वा मुक्तो भवसीत्यर्थः ॥ १९ ॥ दृश्यप्रपञ्चे सति कथं मुक्तो भवामि इत्यत्र दृश्यं मायामात्रं इंति विदित्वा तदतीतं ब्रह्म इति भावयेत्याह—**यदिदमिति** । दृश्यस्यासत्त्वं कुत इत्यत्र दृष्टान्तमाह—**यथेति** ॥ २० ॥ एवं **यत्तु नो दृश्यते** ॥ २१ ॥ यन्मयो भवामि तत् किं नश्वरं? इत्यत आह—**अविनाशीति** ॥ २२ ॥

सत्तासामान्यदृष्टिः

यदा संक्षीयते चित्तमभावात्यन्तभावनात् ।
चित्सामान्यस्वरूपस्य सत्तासामान्यता तदा ॥ २३ ॥
नूनं चैत्यांशरहिता चिद्यदाऽऽत्मनि लीयते ।
असद्रूपवदत्यच्छा सत्तासामान्यता तदा ॥ २४ ॥
दृष्टिरेषा हि परमा सदेहादेहयोः समा ।
मुक्तयोः संभवत्येव तुर्यातीतपदाभिधा ॥ २५ ॥
व्युत्थितस्य भवत्येषा समाधिस्थस्य चानघ ।
ज्ञस्य केवलमज्ञस्य न भवत्येव बोधजा ॥ २६ ॥
अनानन्दसमानन्द[1]मुग्धमुग्धमुखद्युतिः ।
चिरकालपरिक्षीणमननादिपरिभ्रमः ॥
पदमासाद्यते पुण्यं प्रज्ञयैवैकया तथा ॥ २७ ॥

अस्मीति ज्ञानस्य चित्सामान्यत्वेन सविशेषत्वमाशङ्क्य चित्तासंभवबोधेन चित्सामान्यमपि विलीयते, ततः सत्तासामान्यं तुर्यातीतभावमेत्य निर्विशेषं

[1] मुग्धा—उ.

भवतीत्याह—**यदेति** ॥ २३ ॥ कीदृशी सत्तासामान्यता इत्यत्राह—**नूनमिति** । यदा चित्तचैत्यांशकलनाविरळा प्रत्यक् चित् **स्वात्मनि लीयते** पराक्सापेक्ष-प्रत्यग्भावं त्यजति तदा **असद्रूपवदत्यच्छा** निष्प्रतियोगिकनिर्विशेषस्वरूपिणी **सत्तासामान्यता** स्वमात्रमवशिष्यते इति ॥ २४ ॥ इयं सत्तासामान्यदृष्टिः जीवन्मुक्तविदेहमुक्तयोः किं विषमा कीदृशी इत्यत आह—**दृष्टिरिति** । **एषा** सत्तासामान्यदृष्टिः सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमित्यखण्डनि-र्विकल्पमुपेयुषो विदेह**मुक्तस्य** स्वातिरिक्तप्रपञ्चाधिकरणं ब्रह्मास्मीति पुनर्व्युत्था-नार्हाखण्डनिर्विकल्पसमाधिभाजो जीवन्**मुक्तस्य च समा संभवति**, जीवन्मुक्त-स्यापि समाध्यवस्थायां स्वातिरिक्तमस्ति नास्तीति विभ्रमाभावस्य तुल्यत्वात् सत्तासामान्यदृष्टेः तुरीयातीततया समत्वमुपपद्यते ॥ २५ ॥ कथं अस्याः समता? इत्यत्र लोकदृष्ट्या व्युत्थिताव्युत्थितविदेहसदेहमुक्तयोः सत्तासामान्य-दृष्टिसमत्वं पुरस्तादेवोक्तम् । इयं दृष्टिः ज्ञस्यैव नाज्ञस्येत्याह—**ज्ञस्येति** । मुनेः यावद्यावत् निर्विशेषज्ञानमुदेति तावत्तावत् सत्तासामान्यदृष्टिः प्रसीदतीत्यत्र—

यावद्यावन्मुनिश्रेष्ठ स्वयं सन्त्यज्यतेऽखिलम् ।
तावत्तावत् परो लोकः परमात्मैव शिष्यते ॥

इति श्रुतेः । न हि केवलाज्ञस्य इयं दृष्टिः अस्ति नास्ति इति विभ्रमो वा भवति अस्य स्वाज्ञानावृतत्वात् इत्यर्थः ॥ २६ ॥ कोऽयं मुनिः? कस्य सत्तासामान्यदृष्टिः भवतीत्यत आह—**अनानन्देति** । "स एको ब्रह्मणः आनन्दः" इति श्रुत्यनुरोधेन अनस्य मुख्यप्राणस्य ब्रह्मणो योऽस्ति आनन्दः चित्तप्रसादरूपः तेन समानन्दः समानानन्दो यस्याकामहतस्य मुनेः सोऽयं **अनानन्दसमानन्दश्चासौ** तद्व्यञ्जकतया **मुग्धमुग्धमुखद्युतिः** अतीव प्रसन्न-मुखपङ्कजः ब्रह्मातिरिक्तं न किंचिदस्तीति चिरकालानुसन्धानबलेन **परिक्षीण-**स्वातिरिक्त**मननादिपरिभ्रमः** मुनिः यथा **प्रज्ञयैकया** यथावदेकविषयकप्रज्ञया ब्रह्ममात्रभावारूढया **पुण्यं** पावनं सत्तासामान्यं **पदं आसाद्यते** तन्मात्रज्ञानेन तद्भावमेतीत्यर्थः ॥ २७ ॥

वस्तुतत्त्वज्ञानार्था समाधिः

इमं गुणसमाहारमनात्मत्वेन पश्यतः ।
अन्तःशीतल[1]या याऽसौ समाधिरिति कथ्यते ॥ २८ ॥
अवासनं स्थिरं प्रोक्तं मनोध्यानं [2]तदेव च ।
तदेव केवलीभावं शान्ततैव च तत् सदा ॥ २९ ॥
तनुवासनमत्युच्चैः पदायोद्यतमुच्यते ।
अवासनं मनोऽकर्तृपदं तस्मादवाप्यते ॥ ३० ॥
घनवासनमेतत्तु चेतःकर्तृत्वभावनम् ।
सर्वदुःखप्रदं तस्माद्वासनां तनुतां नयेत् ॥ ३१ ॥
चेतसा संपरित्यज्य सर्वभावात्मभावनाम् ।
सर्वमाकाशतामेति नित्यमन्तर्मुखस्थितेः ॥ ३२ ॥
यथा विपणगा लोका विहरन्तोऽप्यसत्समाः ।
असंबन्धात्तथा ज्ञस्य ग्रामोऽपि विपिनोपमः ॥ ३३ ॥
अन्तर्मुखतया नित्यं सुप्तो बुद्धो व्रजन् पठन् ।
पुरं जनपदं ग्राममरण्यमिव पश्यति ॥ ३४ ॥
अन्तःशीतलतायां तु लब्धायां शीतलं जगत् ।
अन्तस्तृष्णोपतप्तानां दावदाहमयं जगत् ॥ ३५ ॥
भवत्यखिलजन्तूनां यदन्तस्तद्बहिः स्थितम् ॥ ३६ ॥
यस्त्वात्मरतिरेवान्तः कुर्वन् कर्मेन्द्रियैः क्रियाः ।
न वशो हर्षशोकाभ्यां स समाहित उच्यते ॥ ३७ ॥

[1] ता या सा—क.
[2] तथै—अ, अ १, उ.

आत्मवत् सर्वभूतानि परद्रव्याणि लोष्टवत् ।
स्वभावादेव न भयाद्यः पश्यति स पश्यति ॥ ३८ ॥
अद्यैव मृतिरायातु कल्पान्तनिचये[1]न वा ।
नासौ कलङ्कमाप्नोति हेम पङ्कगतं यथा ॥ ३९ ॥

तादृशपदाश्रितः पूर्वभाव्यवस्था कीदृशी ? इत्याशङ्क्य समाधिरूपिणीत्याह—**इममिति** । मायात्रिगुणसमाहारमिमं स्वातिरिक्ताविद्यापदं **अनात्मत्वेन** शशविषाणवत् अवस्तुत्वेन **पश्यतो मुनेः अन्तः** हृदि स्वातिरिक्तास्तित्वतापग्रासशीतलब्रह्माकारवृत्त्या प्रज्ञया या संविदुदेति **असौ** समाधिरित्यर्थः ॥ २८ ॥ समाधिविभातवस्तुस्वरूपं किं ? इत्यत आह—**अवासनमिति** । **केवलीभावं** ब्रह्ममात्रावस्थानरूपं स्वातिरिक्तशान्ततैव **च तत् सदा** ॥ २९ ॥ तत्सिद्ध्युपायस्तु—**तनुवासनमिति** । मुनेः मनो वासनाक्षयानुरूपं प्रत्यङ्मुखं भवति । स्वातिरिक्तं अस्ति नास्तीति वासनारहितं **अवासनं मनस्तु** तत्पदवीमेतीत्यर्थः ॥ ३० ॥ तद्विपर्यये यतो वासना बन्धहेतुः अतः तत्तानवं कुर्यादित्याह—**घनेति** ॥ ३१ ॥ कथं वासनाजालं तनुतामेतीत्यत्र सर्वत्रात्मात्मीयाभिमानत्यागतो वासनाजालं निर्वासनपदं भजतीत्याह—**चेतसेति** ॥ ३२ ॥ स्वातिरिक्तकलनासंगासंगतैव घनतनुवासनाहेतुरित्याह—**यथेति** । अस्मिन् वासरेऽत्र जनसंघो भूयात् इति साङ्केतिकस्थानं विपणं गच्छन्तो लोक्यन्त इति **विपणगाः लोकाः** बहवो जनाः स्वस्वव्यापारव्यग्रतया **विहरन्तोऽपि** तेषु असंगपथिकदृष्ट्या एते जनाः **असत्समा** भवन्ति **तथा ज्ञस्य कुत्राप्यसंबन्धात् ग्रामोऽपि विपिनतुल्यो** भवतीत्यर्थः ॥ ३३ ॥ किंच—**अन्तर्मुखतयेति** ॥३४॥ स्वज्ञो जगद्ब्रह्म पश्यति स्वाज्ञस्तु ब्रह्म जगत् पश्यतीत्याह—**अन्तरिति** । ब्रह्मदृष्टेः ब्रह्म विभाति स्वातिरिक्तदृष्टेः स्वयमेव स्वातिरिक्तवत् भातीयत एवोक्तं **यदन्तः तद्बहिः स्थितमिति** ॥ ३५–३६ ॥ असमाहितदृष्टिविकल्पितं जगत् समाहितदृष्टेः

[1] थवा—अ, अ १.

ब्रह्म भवतीत्युक्तम् । कोऽयं समाहितः ? इत्यत आह—यस्त्विति । उक्तलक्षण-लक्षित एव ब्रह्मातिरिक्तोपेक्षापूर्वकं ब्रह्मणि समाहितान्तर इत्यर्थः ॥ ३७–३९ ॥

विचारेण समाधिसिद्धिः

कोऽहं कथमिदं किं वा कथं मरणजन्मनी ।
विचारयान्तरे वेत्थं महत्तत्फलमेष्यसि ॥ ४० ॥
विचारेण परिज्ञातस्वभावस्य सतस्तव ।
मनः स्वरूपमुत्सृज्य [1]शममेष्यति विज्वरम् ॥ ४१ ॥
विज्वरत्वं गतं चेतस्तव संसारवृत्तिषु ।
न निमज्जति तद्ब्रह्मन् गोष्पदेष्विव वारणः ॥ ४२ ॥
कृपणं तु मनो ब्रह्मन् गोष्पदेऽपि निमज्जति ।
कार्ये गोष्पदतोयेऽपि विशीर्णो मशको यथा ॥ ४३ ॥
यावद्यावन्मुनिश्रेष्ठ स्वयं संत्यज्यतेऽखिलम् ।
तावत्तावत् परालोकः परमात्मैव शिष्यते ॥ ४४ ॥
यावत् सर्वं न संत्यक्तं तावदात्मा न लभ्यते ।
सर्ववस्तुपरित्यागे शेष आत्मेति कथ्यते ॥ ४५ ॥
आत्माव[2]लोकनार्थं तु तस्मात् सर्वं परित्यजेत् ।
सर्वं संत्यज्य दूरेण यच्छिष्टं तन्मयो भव ॥ ४६ ॥
सर्वं किंचिदिदं दृश्यं दृश्यते यज्जगद्गतम् ।
चिन्निष्पन्दांशमात्रं तन्नान्यत् किंचन शाश्वतम् ॥ ४७ ॥

[1] सम—अ. [2] बोध—अ २, क. लोकनार्थस्तु—उ १.

समाहिता नित्यतृप्ता यथाभूतार्थदर्शिनी ।
[1]ब्रह्मन् समाधिशब्देन परा प्रज्ञोच्यते बुधैः ॥ ४८ ॥
अक्षुब्धा निरहंकारा द्वन्द्वेष्वननुपातिनी ।
प्रोक्ता समाधिशब्देन मेरोः स्थिरतरा स्थितिः ॥ ४९ ॥
निश्चिता विगताभीष्टा हेयोपादेयवर्जिता ।
ब्रह्मन् समाधिशब्देन परिपूर्णा मनोगतिः ॥ ५० ॥
केवलं चित्प्रकाशांशकल्पिता स्थिरतां गता ।
तुर्या सा प्राप्यते दृष्टिर्महद्भिर्वेदवित्तमैः ॥ ५१ ॥
अदूरगतसादृश्या सुषुप्तस्योपलक्ष्यते ।
मनोऽहंकारविलये सर्वभावान्तरस्थिता ॥ ५२ ॥
समुदेति परानन्दा या तनुः पारमेश्वरी ।
मनसैव मनश्छित्त्वा सा स्वयं लभ्यते गतिः ॥ ५३ ॥
तदनु विषयवासनाविनाशस्तदनु शुभः परमस्फुटप्रकाशः ।
तदनु च समतावशात् स्वरूपे परिणमनं महतामचिन्त्यरूपम् ॥
अखिलमिदमनन्तमात्मतत्त्वं दृढपरिणामिनि चेतसि स्थितोऽन्तः ।
बहिरुपशमिते चराचरात्मा स्वयमनुभूयत एव देवदेवः ॥ ५५ ॥
असक्तं [2]निश्चलं चित्तं युक्तं संसार्यविस्फुटम् ।
सक्तं तु दीर्घतपसा युक्त[3]मप्यतिबद्धवत् ॥ ५६ ॥
अन्तःसंसक्तिनिर्मुक्तो जीवो मधुरवृत्तिमान् ।
बहिः कुर्वन्नकुर्वन् वा कर्ता भोक्ता न हि क्वचित् ॥ ५७ ॥

[1] प्रोक्ता स—अ, अ १. [2] निर्म—अ, अ १. [3] मित्यतिबन्ध—क.

समाहितत्वासमाहितत्वमूलं विचाराविचाराविल्यत्र ब्रह्मातिरिक्तयोः याथात्म्यविचारात् मुच्यते अविचारात् बद्धो भवतीत्याह—**कोऽहमिति** ॥ ४० ॥ **स्वरूपं** सङ्कल्पादिकम् ॥ ४१–४२ ॥ विचारणासमर्थं **कृपणम्** ॥ ४३ ॥ यावत्स्वातिरिक्ताशां त्यजति तावत् स्वयमेव अवशिष्यत इत्याह—**यावदिति** । **परालोकः** प्रकाशमात्रचिद्धातुः ॥ ४४ ॥ अन्यथा—**यावदिति** ॥ ४५ ॥ यस्मादेवं—**आत्मेति** । त्वं तु—**सर्वमिति** ॥ ४६ ॥ यत् दृश्यं तत् दृगतिरिक्तं नास्तीत्याह—**सर्वमिति** । **तत्** चिद्विकल्पितत्वात् चिदतिरिक्तं **नान्यत्** ॥ ४७ ॥ सर्वं चिदेव चिदतिरिक्तं नास्त्येवेति चिन्मात्रविश्रान्तिः प्रज्ञा समाधिशब्देनोच्यत इत्याह—**समाहितेति** ॥ ४८ ॥ **सुखादिद्वन्द्वेषु** ॥ ४९–५० ॥ सैव तुर्यदृष्टिरित्याह—**केवलमिति** ॥ ५१ ॥ **अदूरगतसादृश्या** सर्वात्मतया अदूरगतब्रह्मवस्तुगोचरा **सुषुप्तस्योपलक्ष्यते** स्वापे स्वपरवृत्त्यभावात् ॥ ५२ ॥ सा कदा प्रसीदतीत्यत्र—**मनसैवेति** । **मनश्छित्त्वा** तिष्ठतो मुनेः **सा स्वयं लभ्यते गतिः** ॥ ५३ ॥ स्वान्तर्बाह्यकलनाऽसंभवप्रबोधतोऽयमात्मा स्वयमेव अनुभूयत इत्याह—**तदन्विति** । यथायथा निर्विशेषबोधो जायते तथा तथा **तदन्विति** ॥५४॥ स्वान्तर्बाह्यवासनाक्षयानुरूपं मनो ब्रह्माकारपरिणतिमेत्य ब्रह्मात्मना अनुभूयते इत्याह—**अखिलमिति** । **चराचरात्मा** चराचरप्रपञ्चकलनां ग्रसित्वा **स्वयं अनुभूयत एव** ।

विषया बाह्यदेशस्था देहस्यान्तरहंकृतिः ।
स्वान्तर्बाह्योपरमतः स्वयमेवानुभूयते ॥

इति स्मृतेः ॥ ५५ ॥ यतः एवं अतः स्वान्तर्बाह्यविकल्पितपदार्थसंगासंगौ संसारित्वासंसारित्वहेतुरित्याह—**असक्तमिति** ॥ ५६ ॥ **मधुरं** ब्रह्म । न हि ध्यानं करोमीति वेषमात्रेण मुनिः ध्यानफलमेति । नाप्यन्तरात्मतत्त्वं ध्यायन् बाह्यव्यापारवत्संसारिवेषेण संसारफलमश्नुते । यतो बाह्यनटनं अकिञ्चित्करं अतः स्वान्तर्भावेनैव यथोक्तफलदेत्यत्र—

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याऽऽचारः स उच्यते ॥

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ।
कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥

इति स्मृतेः । इतिशब्दः अध्यायपरिसमाप्त्यर्थः ॥

इति प्रथमोऽध्यायः

---

# द्वितीयोऽध्यायः

बन्धहेतुसङ्गलक्षणम्

निदाघः—

सङ्गः कीदृश इत्युक्तः कश्च बन्धाय देहिनाम् ।
कश्च मोक्षाय कथितः कथं त्वेष [1]चिकित्स्यते ॥ १ ॥
देहदेहिविभागैकपरित्यागेन भावना ।
देहमात्रे हि विश्वासः सङ्गो बन्धाय [2]कथ्यते ॥ २ ॥

संगासंगावेव संसारित्वासंसारित्वफलदाविति प्रश्नबीजमवष्टभ्य तदियत्तां पृच्छतीत्याह—सङ्ग इति ॥ १ ॥ प्रश्नोत्तरं भगवानाह—देहेति ॥ २–३ ॥

असङ्गत्वं मोक्षसाधनम्

सर्वमात्मेदमत्राहं किं वाञ्छामि त्यजामि किम् ।
इत्यसङ्गस्थितिं विद्धि जीवन्मुक्ततनुस्थिताम् ॥ ३ ॥

[1] चिकित्सितः—उ.
[2] कल्प—अ २, क.

नाहमस्मि न चान्योऽ[1]स्ति न [2]चायं न च नेतरः ।
सोऽसङ्ग इति संप्रोक्तो ब्रह्मास्मीत्येव सर्वदा ॥ ४ ॥
नाभिनन्दति नैष्कर्म्यं न कर्मस्वनु[3]षज्यते ।
सुसमो यः [4]परित्यागी सोऽसंसक्त इति स्मृतः ॥ ५ ॥
सर्वकर्मफलादीनां मनसैव न कर्मणा ।
निपुणो यः परित्यागी सोऽसंसक्त इति स्मृतः ॥ ६ ॥

विशेषतोऽसंगलक्षणमाह—नाहमिति । यस्य ब्रह्मातिरेकेण नह्ययमहमित्यादिव्यवहारकलना स्फुरति **सोऽसङ्ग** इत्यर्थः ॥ ४ ॥ किंच—**नाभिनन्दति नैष्कर्म्यं** पारमहंस्यं, तदाश्रमविहितेषु **न कर्मस्वनुषज्यते** ॥ ५ ॥ नित्यादिकर्म नियमेन कृत्वा तत्फलं ईश्वरे योऽर्पयति सोऽपि असंसक्त इत्याह—**सर्वेति** ॥६॥

संकल्पवर्जनेन आत्मरतिप्राप्तिः

असंकल्पेन [5]संकल्पाश्चेष्टा नाना विजृम्भिताः ।
चिकित्सिता भवन्तीह श्रेयः संपादयन्ति हि ॥ ७ ॥
न सक्त[6]मिह चेष्टासु न चिन्तासु न वस्तुषु ।
न गमागमचेष्टासु न कालकलनासु च ॥ ८ ॥
केवलं चिति विश्रम्य किंचिच्चैत्यावलम्ब्यपि ।
सर्वत्र नीरसमिह तिष्ठत्यात्मरसं मनः ॥ ९ ॥

[1] स्मि—अ. [2] चाहं—उ, उ १. [3] षज्जते—अ.
[4] फल—अ, अ १, उ १. [5] सकला—अ, अ १, अ २, क.
[6] मिव—अ २.

व्यवहारमिदं सर्वं मा करोतु करोतु वा ।
अकुर्वन् वाऽपि कुर्वन् वा जीवः स्वात्मरतिक्रियः ॥ १० ॥

असङ्कल्पसंस्कृतसङ्कल्पजालं श्रेयःसम्पादकं भवतीत्याह—**असङ्कल्पेनेति** ॥ ७ ॥ एतत्कार्योद्देशेन इदं करोमीति सर्वत्रासक्तं मनः स्वात्माभिमुखं भवेदित्याह—**न सक्तमिति** ॥ ८ ॥ **किंचित्प्रसक्तचैत्यावलम्ब्यपि** इदं मे अस्तु माऽस्तु इत्यभिसन्धिविकलं मनः प्रत्यग्भावमेतीत्यर्थः ॥ ९ ॥ यच्चित्तमेवं जातं स कर्म कुर्वन् अकुर्वन् वाऽक्रिय एव स्यादित्याह—**व्यवहारमिति** । नित्यादिकर्म **अकुर्वन् वाऽपि कुर्वन् वा** ॥ १० ॥

जाग्रत्येव सुषुप्तता

अथवा तमपि त्यक्त्वा चैत्यांशं शान्तचिद्घनः ।
जीवस्तिष्ठति संशान्तो ज्वलन्मणिरिवात्मनि ॥ ११ ॥
चित्ते चैत्यदशाहीने या स्थितिः क्षीणचेतसाम् ।
सोच्यते शान्तकलना जाग्रत्येव सुषुप्तता ॥ १२ ॥

पुरा सर्वत्र निर्लेपत्वमुक्तं, यदि तद्रोचते तत्र तिष्ठतु, नो चेत् तदपि सन्त्यज्य तूष्णींभावेन तिष्ठेदित्याह—**अथवेति** ॥ ११ ॥ ज्वलन्मणिरिव यस्तिष्ठति तस्य स्थितिः कीदृशी? इति तत्राह—**चित्त** इति । **जाग्रत्येव सुषुप्तता** ग्राह्यग्राहककलनाऽस्फुरणात् ॥ १२ ॥

तुरीया स्थितिः जीवन्मुक्तिः

एषा निदाघ सौषुप्तस्थितिरभ्यासयोगतः ।
प्रौढा सती तुरीयेति कथिता तत्त्वकोविदैः ॥ १३ ॥

एवं तुरीयात्मतया स्थितिः जीवन्मुक्त इत्यर्थः ॥ १३ ॥

तुरीयातीता स्थितिः विदेहमुक्तिः

अस्यां तुरीयावस्थायां स्थितिं प्राप्याविनाशिनीम् ।
आनन्दैकान्तशीलत्वादनानन्दपदं गतः ॥ १४ ॥
अनानन्दमहानन्द[1]कालातीतस्ततोऽपि हि ।
मुक्त इत्युच्यते योगी तुर्यातीतपदं गतः ॥ १५ ॥
परिगलितसमस्तजन्मपाशः सकलविलीनतमोमयाभिमानः ।
परमरसमयीं परात्मसत्तां जलगतसैन्धवखण्डवन्महात्मा ॥१६॥

विदेहमुक्तस्थितिः कीदृशी? इत्यत आह—**अस्यामिति**। अयं मुनिः ब्रह्माहमस्मीत्यनुसन्धानतः तुर्यविश्रान्तिलक्षणां जीवन्मुक्तिमनुभूय जीवन्मुक्तेः [2]आनन्दाप्रधानत्वात् अकामहतत्वोत्कर्षतः **अनानन्दपदं** मुख्यप्राणात्मकचतुर्मुखानन्दपदं **गतः** चतुर्मुखसदृशानन्दो बभूव ॥ १४ ॥ एवं क्रमेण **अनानन्दं** तदपेक्षया उत्कृष्ट **महानन्दं** विष्णुरुद्रसेवितमेत्य **कालशब्देन** चित्सामान्यं सर्वसाक्षिनिष्ठानन्दं तदप्यतीत्य **तुर्यातीतपदं गतो योगी विदेहमुक्त इत्युच्यते** ॥ १५ ॥ सोऽयं निर्विशेषे ब्रह्मणि जलगतलवणवत्तन्मात्रपदवीं भजतीत्याह—**परिगळितेति** । अचित्प्रपञ्चापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रज्ञानसमकालमेव देहादावात्यन्तिकाभिमानासंभवलक्षणां **परात्मसत्तां** विकळेबरमुक्तिं विद्वानेत्य ब्रह्ममात्रतया अवशिष्यत इत्यर्थः ॥ १६ ॥

प्रत्यगभिन्नब्रह्मदृष्टिविधानम्

जडाजडदृशोर्मध्ये यत्तत्त्वं पारमार्थिकम् ।
अनुभूतिमयं तस्मात् सारं ब्रह्मेति कथ्यते ॥ १७ ॥

[1] कला—अ.    [2] आनन्दप्र—उ १.

दृश्यसंवलितो बन्धस्तन्मुक्तौ मुक्तिरुच्यते ।
द्रव्यदर्शनसंबन्धे याऽनुभूतिरनामया ॥ १८ ॥
तामवष्टभ्य तिष्ठ त्वं सौषुप्तीं भजते स्थितिम् ।
सैव तुर्यत्व[1]माप्नोति तस्यां दृष्टिं स्थिरां कुरु ॥ १९ ॥
आत्माऽस्थूलो न चैवाणुर्न प्रत्यक्षो न चेतरः ।
न चेतनो न च जडो न चैवासन्न सन्मयः ॥ २० ॥
नाहं नान्यो न चैवैको न चानेकोऽद्वयोऽव्ययः ।
यदिदं दृश्यतां प्राप्तं मनःसर्वेन्द्रियास्पदम् ॥ २१ ॥

विदेहमुक्तो ब्रह्मैव भवतीत्युक्तं, तद्ब्रह्म कीदृशं ? इत्यत आह—जडेति । **जडाजडदृशोः मध्ये** जडबाह्यान्तःकरणवृत्तिसहस्रभावाभावप्रकाशकप्रत्यक्चैतन्यं जडदृक्, अजडविश्वविराडोत्रादिद्रष्टा ह्यजडदृक् परः, तयोः **मध्यं** ऐक्यं, तत्र प्रत्यक्परभेदसापेक्षैक्यगतसविशेषापह्नवसिद्धं **यत् तत्त्वम्** ॥ १७ ॥ यदेवं ब्रह्मस्वरूपं अभिहितं स्वाज्ञस्तद्दृश्यं पश्यन् बध्यते, दृश्यासंभवबोधेन स्वज्ञो मुच्यत इत्याह—**दृश्येति** । त्वं तु प्रत्यगभिन्ने ब्रह्मणि दृष्टिं स्थिरीकुर्वित्याह—**द्रव्येति** । **द्रव्यं** घटादिः, तत्पदं **दर्शनं** ज्ञानं, त्वंपदं द्रव्यगतनामरूपापवादाधिष्ठानं, तत्पदलक्ष्यं ब्रह्मदर्शनगतवृत्त्यवभासकं त्वंपदलक्ष्यं प्रत्यक्चैतन्यं, तयोः ऐक्यं **संबन्धः**, तत्र प्रत्यगभिन्नं ब्रह्मास्मीति **या अनुभूतिः** उदेति ॥ १८ ॥ **तामवष्टभ्य तिष्ठसि** चेत् त्वन्मनः स्वान्तर्बाह्यास्फुरणलक्षणां निर्विकल्पकसमाधिरूपां **सौषुप्तिं स्थितिं भजति** । येवं स्थितिरुक्ता **सैव तुर्यत्वमेति** । तत्रैव **दृष्टिं** स्थिरीकुर्वित्यर्थः ॥ १९ ॥ यत्र मया दृष्टिः स्थिरीकर्तव्या सोऽयं तुर्यात्मा कीदृश इत्यत आह—**आत्मेति** । स्वमात्रत्वात् चेतनवाच्यविश्वविराडोत्रादिविलक्षणत्वात् **न चेतनः** । **न च जडः** मायातत्कार्यविलक्षणत्वात् । **न**

[1] मायाति—उ, उ १.

**चैवासन्न सन्मयः** करणद्वयाग्राह्यत्वात् ॥ २० ॥ स्वातिरिक्तस्थूलादिव्ययान्तमनात्मा, स यन्मात्रज्ञानतोऽपह्नवं भजति तदपह्नवसिद्धोऽयमात्मा स्वावशेषधिया त्वया ध्येय इत्यर्थः । मया अपह्नोतव्यं अनात्मरूपं किमित्यत आह—**यदिति** । मनःसर्वेन्द्रियाणां अनात्मकार्यत्वात् तदनात्मा त्वया अपह्नोतव्य इत्यर्थः ॥ २१ ॥

मोक्षलक्षणम्

दृश्यदर्शनसंबन्धे यत्सुखं पारमार्थिकम् ।
तदतीतं पदं [1]यस्मात्तन्न किंचिदि[2]वैव तत् ॥ २२ ॥
न मोक्षो नभसः पृष्ठे न पाताले न भूतले ।
सर्वाशासंक्षये चेतःक्षयो मोक्ष इतीष्यते ॥ २३ ॥
मोक्षो मेऽस्त्विति चिन्ताऽन्तर्जाता चेदुत्थितं मनः ।
मननोत्थे मनस्येष बन्धः सांसारिको दृढः ॥ २४ ॥
[3]तदमार्जनमात्रं हि महासंसारतां गतम् ।
तत्प्रमार्जनमात्रं तु मोक्ष इत्यभिधीयते ॥ २५ ॥

अनात्मविरळं पदं कीदृशं? इत्यत आह—**दृश्येति** । दृश्यदर्शनलक्ष्यप्रत्यगभिन्नब्रह्मसुखातीतं यद्ब्रह्ममात्रगोचरं परमसुखं तत् कदाऽपि तत्पदं सविशेषं न भवति, तस्य निष्प्रतियोगिकनिर्विशेषतया ब्रह्ममात्रत्वात् । तत्स्वरूपावस्थितिरेव विदेहमुक्तिरित्यर्थः ॥ २२ ॥ किं मोक्षः स्वाविद्याऽण्डोपरि विद्यते उत तदधो वेत्यत्राह—**नेति** ॥ २३ ॥ तत्रापि संगो बन्धहेतुरित्याह—**मोक्ष इति** ॥ २४ ॥ एवं—**तदमार्जनमात्रमिति** ॥ २५ ॥

[1] तस्मात्—उ. [2] हैव—उ.
[3] अयं २५ मः श्लोकः (उ, उ १) कोशयोरेव वर्तते.

जीवन्मुक्तसमाचारः

आत्मन्यतीते सर्वस्मात्सर्वरूपेऽथ वा तते ।
को बन्धः कश्च वा मोक्षो निर्मूलं मननं कुरु ॥ २६ ॥
अध्यात्मरतिराशान्तः पूर्णः पावनमानसः ।
प्राप्तानुत्तमविश्रान्तिर्न किंचिदिह वाञ्छति ॥ २७ ॥
सर्वाधिष्ठानसन्मात्रे निर्विकल्पे चिदात्मनि ।
यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते ॥ २८ ॥
नापेक्षते भविष्यच्च वर्तमाने न तिष्ठति ।
न संस्मरत्यतीतं च सर्वमेव करोति च ॥ २९ ॥
अनुबन्धपरे जन्तावसंसर्गमनाः सदा ।
भक्ते भक्तसमाचारः शठे शठ इव स्थितः ॥ ३० ॥
बालो बालेषु वृद्धेषु वृद्धो धीरेषु धैर्यवान् ।
युवा यौवनवृत्तेषु दुःखितेषु सुदुःखधीः ॥ ३१ ॥
धीरधीरुदितानन्दः पेशलः पुण्यकीर्तनः ।
प्राज्ञः प्रसन्नमधुरो दैन्यादपगताशयः ॥ ३२ ॥
अभ्यासेन परिस्पन्दे प्राणानां क्षयमागते ।
मनः प्रशममायाति निर्वाणमवशिष्यते ॥ ३३ ॥
यतो वाचो निवर्तन्ते विकल्पकलनान्विताः ।
विकल्पसंक्षयाज्जन्तोः पदं तदवशिष्यते ॥ ३४ ॥

निष्प्रतियोगिकब्रह्ममात्रे न हि बन्धमोक्षकलना अस्तीति चिन्तयेत्याह—आत्मनीति । एवं मननतो मुनिः जीवन्मुक्तो भवतीत्यर्थः ॥ २६ ॥

जीवन्मुक्तलक्षणं किं इत्यत आह—अध्यात्मेति । आशान्तः आशाया अन्तं ब्रह्म अधिगच्छतीति । प्राप्तानुत्तमविश्रान्तिः—यस्मादुत्तमं मध्यमं अधमं अधमाधमं वा न विद्यते तदनुत्तमम् । तस्य निष्प्रतियोगिकब्रह्ममात्रत्वात् तदतिरिक्तं न किंचिदिह वाञ्छति ॥ २७ ॥ किंच—सर्वेति । स्वातिरिक्तविषये गतस्नेहः सन् ॥ २८ ॥ किंच—नापेक्षत इति । परदृष्ट्या सर्वमेव करोति ॥ २९ ॥ दारपुत्राद्यनुबन्धपरे । भक्तादौ भक्तादिवृत्तिं भजन्निव विभाति न स्वदृष्ट्या स्वातिरिक्तास्फूर्तेः इत्याह—भक्त इति ॥ ३०–३१ ॥ पेशलः सर्वसम्मतशीलः, तत्तद्वृत्त्या तत्तत्तुल्यवद्भानात् ॥३२॥ प्राणादिविकल्पतानवानुरूपं निर्वाणपदमवशिष्यत इत्याह—अभ्यासेनेति । प्रसन्नमधुरस्यापरोक्षीकृत-ब्रह्मतत्त्वस्य दैन्यात् साध्वनुष्ठितज्ञानाभ्यासात् व्याविद्धस्वातिरिक्ताशयस्य जीवन्मुक्तस्य किं अवशिष्यते इत्यत्र—यतः प्राणस्पन्दनसापेक्षं मनःस्पन्दनं, "प्राणबन्धनं हि सोम्य मनः" इति श्रुतेः, अतः प्राणमनःस्पन्दनविलयात् तद्विकल्पितसर्वविकल्पप्रळयाच्च निर्वाणपदं विदेहकैवल्यस्वरूपं ब्रह्ममात्रा-वस्थानलक्षणं निष्प्रतियोगिकमवशिष्यते इत्यर्थः ॥ ३३–३४ ॥

कैवल्यलक्षणं सम्यग्दर्शनम्

अनाद्यन्तावभासात्मा परमात्मेह विद्यते ।
इत्येतन्निश्चयं स्फारं सम्यग्ज्ञानं विदुर्बुधाः ॥ ३५ ॥
यथाभूतात्मदर्शित्वमेतावद्भुवनत्रये ।
यदात्मैव जगत्सर्वमिति निश्चित्य पूर्णता ॥ ३६ ॥
सर्वमात्मैव कौ दृष्टौ भावाभावौ क्व वा [1]गतौ ।
क्व बन्धमोक्षकलने ब्रह्मैवेदं विजृम्भते ॥ ३७ ॥

[1] स्थितौ—अ, अ १, अ २, क.

सर्वमेकं परं व्योम को मोक्षः कस्य [1]बन्धता ।
ब्रह्मेदं बृंहिताकारं बृहद्बृह[2]दवस्थितम् ।
दूरादस्तमितद्वित्वं भवात्मैव त्वमात्मना ॥ ३८ ॥
सम्यगालोकिते रूपे काष्ठपाषाणवाससाम् ।
मनागपि न भेदोऽस्ति क्वासि संकल्पनोन्मुखः ॥ ३९ ॥
आदावन्ते च संशान्तस्वरूपमविनाशि यत् ।
वस्तूनामात्मन[3]श्चैतत्तन्मयो भव सर्वदा ॥ ४० ॥
द्वैताद्वैतसमुद्भेदैर्जरामरणविभ्रमैः ।
स्फुरत्यात्मभिरात्मैव चित्तैरब्धीव वीचिभिः ॥ ४१ ॥
आपत्करञ्जपरशुं पराया निर्वृतेः पदम् ।
शुद्धमात्मानमालिङ्ग्य नित्यमन्तःस्थया धिया ।
यः स्थितस्तं [4]क आत्मे[5]ह भोगो बाधयितुं क्षमः ॥ ४२ ॥
कृतस्फारविचारस्य मनोभोगादयोऽरयः ।
मनागपि न भिन्दन्ति शैलं मन्दानिला इव ॥ ४३ ॥
नानात्वमस्ति कलनासु न वस्तुतोऽन्त-
र्नानाविधासु सरसीव जलादिवान्यत् ।
इत्येकनिश्चयमयः पुरुषो विमुक्त
इत्युच्यते समवलोकितसम्यगर्थः ॥ इति ॥ ४४ ॥

[1] बद्धता—अ. [2] दिव—अ २, क. [3] श्चैव त—उ, उ १.
[4] कमात्मे—उ १. [5] हं—अ १, अ २, क, उ १. हा—अ.

येन कैवल्यं प्रसीदति तत् किं? इत्यत्र सम्यग्ज्ञानमित्याह—**अनादीति** । उत्पत्तिप्रळयवत् अनात्मप्रपञ्चापह्नवसिद्धपरमात्मातिरिक्तं न किंचिदस्तीति यत् तत् **इत्येतदिति** ॥ ३५ ॥ किं सम्यग्ज्ञानेन? इत्यत्र बन्धमोक्षकलनाविरळपरिपूर्णपरमात्मा निष्प्रतियोगिकं विजृंभत इत्याह—**यथेति** ॥ ३६ ॥ स्वज्ञदशाऽनुभूतौ जाग्रत्स्वापयोः स्वातिरिक्तप्रपञ्च**भावाभावौ क वा गतौ** तदस्ति नास्तीति ज्ञानायत्ते **क बन्धमोक्षकलने** ॥ ३७ ॥ यतः एवं अतः **सर्वमेकं परं व्योम** चिद्व्योम्नोः निष्प्रतियोगिकैकरूपत्वात् । **तत्र को मोक्षः कस्य बन्धता** । **सर्वं ब्रह्म** । यतः तन्निष्प्रतियोगिकाद्वैतं अतो हे निदाघ **भवात्मैव त्वमात्मना** ॥ ३८ ॥ अविचारितसिद्धोऽयं स्वातिरिक्तभ्रमः, विचार्यमाणे न हि तदस्ति, तथा सति किं संकल्पयसीत्याह—**सम्यगिति** ॥ ३९ ॥ काष्ठादिगतनामरूपापाये तद्गतसच्चिदानन्दस्य एकरूपत्वात् तन्मयो भवेत्याह—**आदाविति** । स्वातिरिक्तसामान्यस्य अदृष्टदृष्टनष्टस्वरूपत्वेन तदुत्पत्तिप्रळययोरपि यदविनाश्यवशिष्यते तदेव भवेत्यर्थः ॥ ४० ॥ द्वैतादिकलनासत्त्वे तन्मयत्वं मे कुतः इत्यत्र तद्रूपेणाप्यात्मैव विद्यत इत्याह—**द्वैतेति** । स्वातिरिक्तारोपसिद्धं **द्वैतं**, तथा तदपवादसिद्धं **अद्वैतं**, ताभ्यां सञ्जातजरामरणादिकं अस्ति नास्तीति विभ्रमैः विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तैः **स्फुरति** ॥ ४१ ॥ इत्थंभूतात्मावलोकनेच्छा विषयप्रवीणानां कुत इत्यत्र निर्विषयात्मावलम्बिनं विषयो न स्पृशतीत्याह—**आपदिति** । **आपत्करञ्जपरशुं** आर्द्रवृक्षोपमापत्कुठारम् ॥ ४२ ॥ किंच—**कृतेति** ॥ ४३ ॥ वस्तुतो नानात्वं नास्तीति विदित्वा तद्वेदनसमकालमनानात्वपदं कैवल्यं यास्यसीत्याह—**नानात्वमिति** । यावत्त्वां स्वाज्ञानं न मुञ्चति तावत्त्वद्दृष्ट्या स्वातिरेकेण **नानात्वमस्ति कलनासु** । श्रुत्याचार्यप्रसादतो यदि ते स्वज्ञानं जातं तदा **न वस्तुतः इति** । इतिशब्दोऽध्यायपरिसमाप्त्यर्थः ॥

इति द्वितीयोऽध्यायः

---

# तृतीयोऽध्यायः

विदेहमुक्तिस्वरूपजिज्ञासा

विदेहमुक्तेः किं रूपं तद्वान् को वा महामुनिः ।
कं योगं समुपास्थाय प्राप्तवान् परमं पदम् ॥ १ ॥

श्रुत्याचार्यप्रसादजनितसम्यग्ज्ञानसमकालं विदेहमुक्तो भवतीत्युक्तं यत् तदियत्ताबुभुत्सया पृच्छतीत्याह—विदेहेति ॥ १ ॥

जीवन्मुक्तस्य इन्द्रियमनोनिग्रहप्रकारः

सुमेरोर्वसुधापीठे माण्डव्यो नाम वै मुनिः ।
कौण्डिन्यात्तत्त्वमास्थाय जीवन्मुक्तो भवत्यसौ ॥ २ ॥
जीवन्मुक्तिदशां प्राप्य कदाचिद्ब्रह्मवित्तमः ।
सर्वेन्द्रियाणि संहर्तुं मनश्चक्रे महामुनिः ॥ ३ ॥
बद्धपद्मासनस्तिष्ठन्नर्धोन्मीलितलोचनः ।
बाह्यानाभ्यन्तरांश्चैव स्पर्शान् परिहरञ्छनैः ॥ ४ ॥
ततः स्वमनसः स्थैर्यं मनसा विगतैनसा ।
अहो नु चञ्चलमिदं प्रत्याहृतमपि स्फुटम् ॥ ५ ॥
पटाद्घटमुपायाति घटा[1]च्छकटमुत्कटम् ।
चित्तमर्थेषु चरति पादपेष्विव मर्कटः ॥ ६ ॥
पञ्च द्वाराणि मनसा चक्षुरादीन्यमून्यलम् ।
बुद्धीन्द्रियाभिधानानि तान्येवालोकयाम्यहम् ॥ ७ ॥

[1] च क—क.

[1]हन्तेन्द्रियगणा यूयं त्यजथाकुलतां शनैः ।
चिदात्मा भगवान् सर्वसाक्षित्वेन स्थितोऽस्म्यहम् ॥ ८ ॥

तदियत्तां ऋभुराह—सुमेरोरिति ॥ २ ॥ ततः किमित्यत्र—जीवन्मुक्तिदशामिति ॥ ३ ॥ केनोपायेन तदुपसंहरतीत्यत्र—बद्धेति । स्पृश्यन्त इति स्पर्शान् विषयान् ॥ ४ ॥ स्थैर्यं कर्तुं व्यवस्थितः तच्चाञ्चल्यं प्रकटयति—अहो इति ॥ ५–६ ॥ तन्निग्रहाय पञ्चद्वाराणीति ॥ ७ ॥ करणग्राममचेतनं चेतनवन्नियमयति—हन्तेति ॥ ८ ॥

तुरीयावस्थितिः

तेनात्मना बहुज्ञेन निर्ज्ञाताश्चक्षुरादयः ।
परिनिर्वामि शान्तोऽस्मि दिष्ट्याऽस्मि विगतज्वरः ॥ ९ ॥
स्वात्मन्येवावतिष्ठेऽहं तुर्यरूप[2]पदेऽनिशम् ।
अन्तरेव शशामास्य क्रमेण प्राणसन्ततिः ॥ १० ॥
ज्वालाजालपरिस्पन्दो दग्धेन्धन इवानलः ।
उदितोऽस्तं गत इव [3]ह्यस्तं गत इवोदितः ॥ ११ ॥
समः समरसाभासस्तिष्ठामि स्वच्छतां गतः ।
प्रबुद्धोऽपि सुषुप्तिस्थः सुषुप्तिस्थः प्रबुद्धवान् ॥ १२ ॥
तुर्यमालम्ब्य कायान्तस्तिष्ठामि स्तम्भितस्थितिः ।
सबाह्याभ्यन्तरान् भावान् स्थूलान् सूक्ष्मतरानपि ॥ १३ ॥
त्रैलोक्यसंभवांस्त्यक्त्वा संकल्पैक[4]विनिर्मितान् ।
सह प्रणवपर्यन्तदीर्घनिःस्वनतन्तुना ॥ १४ ॥

[1] हते—अ, अ १.
[2] पदेशिनि—अ.
[3] स्वस्तं—अ, अ १.
[4] विजृम्भि—उ.

जहावििन्द्रियतादात्म्यं [1]जालं खग इवानिलः ।
ततोऽङ्गसंविदं स्वच्छां प्रतिभासमुपागताम् ॥ १५ ॥
सद्योजातशिशुज्ञानं प्राप्तवान् मुनिपुङ्गवः ।
जहौ चितश्चैत्य[2]दशां स्पन्दशक्तिमिवानिलः ॥ १६ ॥
चित्सामान्यमथासाद्य सत्तामात्रात्मकं ततः ।
सुषुप्तपदमालम्ब्य तस्थौ गिरिरिवाचलः ॥ १७ ॥

**परिनिर्वामि** बाह्यप्रपञ्चव्यापृतिनिर्विण्णोऽस्मि । तदस्ति नास्तीति भ्रमतः **शान्तोस्मि** ॥ ९ ॥ ब्रह्मातिरेकेण प्राणबाह्यान्तःकरणजातं नास्तीति भावयत **अन्तरेवेति** ॥ १० ॥ देहेन्द्रियादिसत्त्वेऽपि लोकवद्व्यापाराभावात् **उदित इति** ॥ ११ ॥ **एवं सम इति** ॥ १२–१३ ॥ ततो वीणादिनादेन **सहेति** ॥ १४ ॥ षोडशमात्राकालब्रह्मप्रणवनादेन **जहाविति** । इन्द्रियतादात्म्यं विहाय **तत इति** ॥ १५ ॥ ब्रह्मातिरेकेण देहो नास्तीति देहसंविदमपि त्यक्त्वा ततः **सद्योजातेति** । सद्योजातशिशोः निर्विकल्पकं ज्ञानं भवति तथेत्यर्थः । ततस्तु **जहौ चितश्चैत्यदशां** प्रत्यक्चितः चित्तचैत्यावभासकत्वदशामपि जहौ ॥ १६ ॥ **चित्सामान्यं** गुणसाम्यसाक्षित्वम् । साक्ष्यसापेक्षसाक्षित्वमपि विहाय **सत्तामात्रात्मकं** सत्तासामान्यमित्यर्थः । तत् कीदृशमित्यत्र यत्र स्वातिरिक्तप्रपञ्चः सुषुप्तिमपह्नवं भजति तद्ब्रह्ममात्रं **सुषुप्तपदमालम्ब्येति** ॥ १७ ॥

तुरीयतुरीयावस्थितिः

सुषुप्तस्थैर्यमासाद्य तुर्यरूपमुपाययौ ।
निरानन्दोऽपि सानन्दः सच्चासच्च बभूव सः ॥ १८ ॥
ततस्तत्संबभूवासौ यद्गिरामप्यगोचरम् ।
यच्छून्यवादिनां शून्यं ब्रह्म ब्रह्मविदां च यत् ॥ १९ ॥

[1] तन्मात्र—अ, अ १, अ २, क.

[2] दशाः—उ १.

विज्ञानमात्रं विज्ञानविदां यदमलात्मकम् ।
पुरुषः सांख्यदृष्टीनामीश्वरो योगवादिनाम् ॥ २० ॥
शिवः शैवागमस्थानां कालः कालैकवादिनाम् ।
यत् सर्वशास्त्रसिद्धान्तं यत् सर्वहृदयानुगम् ॥ २१ ॥
यत् सर्वं सर्वगं वस्तु यत्त[1]त्त्वं तदसौ स्थितः ।
यदनुक्तमनिष्पन्दं दीपकं तेजसामपि ॥ २२ ॥
स्वानुभूत्येकमानं च यत्तत्त्वं तदसौ स्थितः ।
यदेकं चाप्यनेकं च साञ्जनं च निरञ्जनम् ।
यत् सर्वं चाप्यसर्वं च यत्तत्त्वं तदसौ स्थितः ॥ २३ ॥
अजममरमनाद्यमाद्यमेकं
पदममलं सकलं च निष्कलं च ।
स्थित इति स तदा नभःस्वरूपा-
दपि विमलस्थितिरीश्वरः क्षणेन ॥ इति ॥ २४ ॥

तुर्यप्रविभक्ततुर्यरूपं तुर्यतुर्यरूपमुपाययौ । ततो ब्रह्मैव भवतीत्यर्थः । कथं अयं ब्रह्म भवति ? इत्यत आह—निरानन्दोऽपीति । विषयविषयिसंयोगाभावतो निरानन्दोऽपि स्वाज्ञदृष्टिप्रसक्तोपाधियोगतः सानन्दः ॥ १८ ॥ यस्य यस्य यादृशं ज्ञानं तत्तदृष्ट्या तथातथैव विभाति, वस्तुतोऽयं निष्प्रतियोगिकब्रह्ममात्रमवशिष्यत इत्याह—तत इति । विदेहमुक्तो यदवाङ्मनसगोचरं ब्रह्मैव बभूव तत्स्वरूपं शून्यवादिनः शून्यं पश्यन्ति । यदेषां शून्यत्वेन विभातं तत् ब्रह्मविदो निष्प्रतियोगिकब्रह्ममात्रं स्वावशेषधिया मेनिरे ॥ १९ ॥ यदेभिः अवगतं तदेव विज्ञानवादिनो विज्ञानमात्रं जानन्ति । यत् एभिः बुद्धं तदेव पुरुषरूपं साङ्ख्याः पश्यन्ति । यदेभिः एवं दृष्टं तदेव ईश्वरतत्त्वं योगिनो वदन्ति ॥ २० ॥

[1] यत्सत्यं—अ, अ १.

यत् योगिभिः ज्ञातं तदेव शिवं शैवाः आहुः। यदेभिः निश्चितं तत् कालवादिनः कालात्मानमुद्घोषयन्ति । स्वस्वग्रहानुरोधेन शास्त्रमपि कल्पयन्ति । तत् कल्पनामात्रमेव। वास्तवं तु स्वाज्ञदृष्टिविकल्पितशून्यादिकालान्तमतसिद्धान्तमोहे सत्यसति यत् स्वातिरिक्तकलनापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रं अवशिष्यते तदेव हीशाद्यष्टोत्तरशतवेदान्तपरमाशयो नान्यः इत्यत्र—"पश्यतेहापि सन्मात्रमसदन्यत्", "ब्रह्मव्यतिरिक्तं न किंचिदस्ति", "मद्व्यतिरिक्तमणुमात्रं न विद्यते",

चिन्मात्रमेव चिन्मात्रमखण्डैकरसं रसम् ।
सर्ववर्जितचिन्मात्रं ब्रह्ममात्रमसन्न हि ॥
सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्याऽस्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥

इत्यादि,

सर्वापह्नवसंसिद्धपरमाक्षरवैभवम् ।
केचिद्देहादिरूपेण केचिज्जीवस्वरूपतः ॥
केचिदीश्वररूपेण केचित्तुर्यस्वरूपतः ।
अज्ञात्वा वस्तुयाथात्म्यं यथोलूका दिवानिशम् ॥
पश्यन्ति दृष्टिदोषेण निर्विकारमहत्पदम् ।
यस्मिन् यस्मिन् ग्रहे यस्य दृढावेशो भवेत्तराम् ॥
तत्तद्भ्रान्त्यनुरोधेन शास्त्रं भवति नान्यथा ।
भ्रान्तावस्तं गतायां तं नानाशास्त्रकदम्बकम् ॥
प्रकाशयति चिन्मात्रमचिन्मात्रस्य मृग्यतः ।
तस्मात् समस्तशास्त्राणि बोधयन्ति पराक्षरम् ॥
यतो मताभिमान्यात्मा चिन्मात्रान्नास्ति कोऽपि हि ।
अतश्चिन्मात्रमेवेदं चिन्मात्रान्नास्ति किञ्चन ॥

इत्यादिश्रुतयः स्मृतयश्च मानम् । यदेवं समस्तश्रुतिस्मृत्यभिमतं तदेवं परमोऽयं सिद्धान्तः इति श्रुतिराह—**यदिति** । प्रत्यग्रूपेण **यत्सर्वहृदयानुगम**

॥ २१ ॥ स्वाज्ञदृष्ट्या सर्वप्रसक्तौ—**यत्सर्वमिति** । **अनिष्पन्दं** स्तिमितगम्भीरं निस्तरंगचिदर्णवत्वात्,

ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् ।
अनाख्यमनभिव्यक्तं सत् किंचिदवशिष्यते ॥

इति श्रुतेः । **दीपकं सूर्यादितेजसामपि** ॥ २२ ॥ श्रुत्याचार्यप्रसादाविर्भूत-**स्वानुभूत्येकमानम्** । स्वज्ञादिदृष्ट्या **यदेकमिति** ॥ २३ ॥ निष्प्रतियोगिक-चिन्मात्ररूपोऽपि विदेहमुक्तः स्वाज्ञादिदृष्ट्या सकळनिष्कळस्वरूपेण विभाति । वस्तुतस्तु ब्रह्ममात्रज्ञानसमकालं अयं तन्मात्ररूपेण अवशिष्यते इत्याह—**अजमिति** । यत् स्वतः परतो वा कदाऽपि न जायते तत् **अजं**, आदौ भवं **आद्यं**, यस्मात् आद्यं न विद्यते तत् **अनाद्यम्** । शिष्टं स्पष्टं उक्तार्थं च । इतिशब्दोऽध्यायपरिसमाप्त्यर्थः ॥ २४ ॥

इति तृतीयोऽध्यायः

---

# चतुर्थोऽध्यायः

जीवन्मुक्तस्य सिद्धिषु उदासीनता

जीवन्मुक्तस्य किं लक्ष्म ह्याकाशगमनादिकम् ।
तथा चेन्मुनिशार्दूल तत्र नैव प्र[1]दृश्यते ॥ १ ॥
अनात्मविद्मुक्तोऽपि नभोविहरणादिकम् ।
द्रव्यमन्त्रक्रिया[2]कालशक्त्याऽऽप्नोत्येव स द्विज ॥ २ ॥

[1] लक्ष्य—अ, अ १, अ २, क.    [2] जाल—उ.

नात्मज्ञस्यैष विषय आत्मज्ञो ह्यात्ममात्रदृक् ।
आत्मनाऽऽत्मनि संतृप्तो नाविद्यामनुधावति ॥ ३ ॥
ये ये भावाः स्थिता लोके तानविद्यामयान् विदुः ।
त्यक्ताविद्यो महायोगी कथं तेषु निमज्जति ॥ ४ ॥
यस्तु मूढोऽल्पबुद्धिर्वा सिद्धिजालानि वाञ्छति ।
स सिद्धिसाधनैर्योगैस्तानि साधयति क्रमात् ॥ ५ ॥
द्रव्यमन्त्रक्रियाकालयुक्तयः साधुसिद्धिदाः ।
परमात्मपदप्राप्तौ नोपकुर्वन्ति [1]काश्चन ॥ ६ ॥
यस्येच्छा विद्यते काचित्स सिद्धिं साधयत्यहो ।
[2]निरिच्छोः परिपूर्णस्य नेच्छा संभवति क्वचित् ॥ ७ ॥
सर्वेच्छाजालसंशान्तावात्मलाभो भवेन्मुने ।
स कथं सिद्धिजालानि [3]कथं वाञ्छत्यचित्तकः ॥ ८ ॥
अपि शीतरुचावर्के सुतीक्ष्णेऽपीन्दुमण्डले ।
अप्यधः प्रसरत्यग्नौ जीवन्मुक्तो न विस्मयी ॥ ९ ॥
अधिष्ठाने परे तत्त्वे कल्पिता रज्जुसर्पवत् ।
कल्पिताश्चर्यजालेषु नाभ्युदेति कुतूहलम् ॥ १० ॥

विदेहमुक्तेयत्तामवगम्य जीवन्मुक्तलक्षणं किंसिद्धिनिमित्तं ? इति पृच्छति—जीवन्मुक्तस्येति । जीवन्मुक्तपटले कोऽप्येवंरूपो नैव प्रदृश्यते ॥ १ ॥ इत्येवं पृष्टो भगवान् जीवन्मुक्तिरन्या ज्ञानान्तरालिकफलरूपत्वात्, आकाशगमनादिनानाविधसिद्धयस्त्वन्याः द्रव्यमन्त्रक्रियायोगादिजन्यत्वात्, नह्यनयोः कार्य-

[1] किंचन—अ. [2] निरी—अ २, उ. [3] स्वयं—अ.

कारणता स्यादित्याह—**अनात्मेति** ॥ २ ॥ सिद्धिजालस्य अविद्याकार्यत्वेन नैतज्जीवन्मुक्तविषयो भवतीत्याह—**नात्मज्ञस्येति** ॥ ३ ॥ सिद्धीनामाविद्यकत्वं कुत इत्यत्र—**ये ये भावा इति** ॥ ४ ॥ **स्वाज्ञो यस्त्विति** ॥ ५ ॥ सिद्धयोऽपि ब्रह्मात्प्युपायाः स्युः इत्यत आह—**द्रव्येति** ॥६–८॥ किंच—**अपीति** ॥९–१०॥

### जीवन्मुक्तस्य नष्टचित्तता

ये हि विज्ञातविज्ञेया वीतरागा महाधियः ।
विच्छिन्नग्रन्थयः सर्वे ते स्वतन्त्रा[1]स्तनौ स्थिताः ॥ ११ ॥
सुखदुःखदशाधीरं साम्यान्न प्रोद्धरन्ति यम् ।
निश्वासा इव [2]शैलेन्द्रं चित्तं तस्य मृतं विदुः ॥ १२ ॥
आपत्कार्पण्यमुत्साहो मदो मान्द्यं महोत्सवः ।
यं नयन्ति न वैरूप्यं तस्य नष्टं मनो विदुः ॥ १३ ॥

सिद्धिजालोदासीना जीवन्मुक्ताः कीदृशाः ? इत्यत्र—**येहीति** । ज्ञेयं ब्रह्म यैः ज्ञातं ते विज्ञातविज्ञेयाः । स्वतन्त्राः उद्दामवृत्तय इत्यर्थः ॥ ११ ॥ चित्तवतां जीवन्मुक्तिः कुतः ? इत्यत्र—**सुखेति** । साम्यात् ब्रह्मात्मभावात् । सुखाद्यनुभूतिः चित्तसापेक्षा हि, चित्तं नास्तीति बोधेन चित्ताभावे जीवन्मुक्तिः स्यादेवेत्यर्थः ॥ १२ ॥ किंच—**आपदिति** ॥ १३ ॥

### सरूपारूपौ मनोनाशौ

द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च ।
जीव[3]न्मुक्तौ सरूपः स्यादरूपो देहमुक्तिगः ॥ १४ ॥

[1] तनौ—अ १, अ २, क, उ १.
[2] शैलेन्द्रश्चि—उ.
[3] न्मुक्तः—उ,

चित्तसत्तेह दुःखाय चित्तनाशः सुखाय च ।
चित्तसत्तां क्षयं नीत्वा चित्तं नाशमुपानयेत् ॥ १५ ॥
मनस्तां मूढतां विद्धि यदा नश्यति साऽनघ ।
चित्तनाशाभिधानं हि तत्स्वरूपमितीरितम् ॥ १६ ॥
मैत्र्यादिभिर्गुणैर्युक्तं भवत्युत्तमवासनम् ।
भूयोजन्मविनिर्मुक्तं जीवन्मुक्तस्य तन्मनः ॥ १७ ॥
सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य विद्यते ।
निदाघारूपनाशस्तु वर्ततेऽदेहमुक्तिके ॥ १८ ॥

सरूपारूपभेदेन चित्तनाशो द्विविधः इत्याह—द्विविध इति । बीजभावेन यच्चित्तं लीयते स सरूपविलयः । निर्बीजं सद्यच्चित्तं विलीयते सोऽयं अरूपलयः ॥ १४ ॥ यत एवं चित्तसत्तेति ॥ १५ ॥ मनोनाशाधिकरणं ब्रह्मेत्याह—मनस्तामिति ॥ १६–१७ ॥ मनसः सरूपनाशसिद्धा जीवन्मुक्तिः तद्विरूपनाशसिद्धा विदेहमुक्तिरित्याह—सरूप इति । खण्डाखण्डनिर्विकल्पकसमाधी जीवन्मुक्तिविदेहमुक्ती भवत इत्यर्थः ॥ १८ ॥

विदेहमुक्तस्थितिः

विदेहमुक्त एवासौ विद्यते निष्कलात्मकः ।
समग्राग्र्यगुणाधारमपि सत्त्वं प्रलीयते ॥ १९ ॥
विदेहमुक्तौ विमले पदे परमपावने ।
विदेहमुक्तिविषये तस्मिन् सत्त्वक्षया[1]त्मके ॥ २० ॥
चित्तनाशे विरूपाख्ये न किंचिदिह विद्यते ।
न गुणा नागुणास्तत्र न श्रीर्नाश्रीर्न लोकता ॥ २१ ॥

[1] त्मिके—अ २, क, उ.

न चोदयो नास्तमयो न हर्षामर्षसंविदः ।
न तेजो न तमः किंचिन्न संध्यादि न रात्रयः ।
न सत्ता नापिचासत्ता न च मध्यं हि तत् पदम् ॥ २२ ॥
ये हि पारं गता बुद्धेः संसाराडम्बरस्य च ।
तेषां तदास्पदं स्फारं पवनानामिवाम्बरम् ॥ २३ ॥
संशान्तदुःखमजडात्मकमेकसुप्त-
मानन्दमन्थरमपेतरजस्तमो यत् ।
आकाशकोशतनवोऽतनवो महान्त-
स्तस्मिन् पदे गलितचित्तलवा भवन्ति ॥ २४ ॥
हे निदाघ महाप्राज्ञ निर्वासनमना भव ।
बलाच्चेतः [1]समाधाय निर्विकल्पमना भव ॥ २५ ॥

तद्वान् विदेहमुक्तः कीदृशः इत्यत्र—**विदेहमुक्त** इति । यत्र जीवन्मुक्तत्वसूचकसत्त्ववृत्तिविलयो दृश्यते तद्वान् विदेहमुक्त इत्यर्थः ॥ १९ ॥ न हि तत्र स्वातिरिक्तगन्धोऽप्यस्तीत्याह—**विदेहमुक्ताविति** । स्वरूपे **तस्मिन्निति** ॥ २० ॥ तत्र सगुणाभावेऽपि निर्गुणादिकं स्यादित्याशङ्क्य तत्र सापेक्षसगुणनिर्गुणादिकं नास्तीत्याह—**न गुणा** इति । **श्रीः** ऐहिकसंपत् । **अश्रीः** तद्विपरीता । **लोकता** लोकव्यवहृतिः ॥ २१ ॥ किंच—**नचेति** । इदमस्तीति **सत्ता**, इदं नास्तीति **असत्ता**, तयोः **मध्यं** अस्तित्वनास्तित्वाधिकरणं आधेयत्वसापेक्षाधारत्वमपि न हि विदेहमुक्तिदशायां विद्यत इत्यर्थः ॥२२॥ तादृशी स्थितिरेव स्वातिरिक्तकलनापर्यवसानभूमिरित्याह—**ये हीति**॥२३॥ किंच—**संशान्तेति** । यत्पदं **संशान्तदुःखमि**त्यादिविशेषणबोधितं तत्र **आकाशकोशतनवो** जीवन्मुक्ताः निरवयवाकाशवत् कामादिवृत्तिविरळाः स्वात्ततत्त्वक्षयतः

[1] समादाय—अ १, अ २, क, उ.

यत्र गलितसत्वलवा भूत्वा अतनवो विदेहमुक्ता भवन्तीत्यर्थः ॥ २४ ॥ यतो विदेहमुक्तिहेतुः जीवन्मुक्तिः अतः तदर्थं जीवन्मुक्तिपदं भजेत्याह—**हे निदाघेति** ॥ २५ ॥

ब्रह्मविद्या तत्फलं च

यज्जगद्भासकं भानं नित्यं भाति स्वतः स्फुरत् ।
स एव जगतः साक्षी सर्वात्मा विमलाकृतिः ॥ २६ ॥
प्रतिष्ठा सर्वभूतानां प्रज्ञानघनलक्षणः ।
तद्विद्याविषयं ब्रह्म सत्यज्ञानसुखाद्वयम् ॥ २७ ॥
एकं ब्रह्माहमस्मीति कृतकृत्यो भवेन्मुनिः ॥ २८ ॥
सर्वाधिष्ठानमद्वन्द्वं परं ब्रह्म सनातनम् ।
सच्चिदानन्दरूपं तदवाङ्मनसगोचरम् ॥ २९ ॥
न तत्र चन्द्रार्कवपुः प्रकाशते न वान्ति वाताः सकला देवताश्च ।
स एष देवः कृतभावभूतः स्वयं विशुद्धो [1]विरजः प्रकाशते ॥३०॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ ३१ ॥
द्वा [2]सुपर्णौ शरीरेऽस्मिन् जीवेशाख्यौ सह स्थितौ ।
तयोर्जीवः फलं भुङ्क्ते कर्मणो न महेश्वरः ॥ ३२ ॥
केवलं साक्षिरूपेण विना [3]भोगो महेश्वरः ।
प्रकाशते स्वयं भेदः कल्पितो मायया तयोः ।
चिच्चिदाकारतो [4]भिन्ना न भिन्ना चित्त्वहानितः ॥ ३३ ॥

[1] विरजाः—अ.
[2] सुपर्णा—अ २, क.
[3] भोगं—अ.
[4] भिन्नो—अ १, उ, उ १.

तर्कतश्च प्रमाणाच्च चिदेकत्वव्यवस्थितेः ।
चिदेकत्वपरिज्ञाने न शोचति न मुह्यति ॥ ३४ ॥
अधिष्ठानं समस्तस्य जगतः सत्यचिद्घनम् ।
अहमस्मीति निश्चित्य वीतशोको भवेन्मुनिः ॥ ३५ ॥
स्वशरीरे स्वयंज्योतिःस्वरूपं सर्वसाक्षिणम् ।
क्षीणदोषाः प्रपश्यन्ति नेतरे मायया୨୨वृताः ॥ ३६ ॥

यद्याथात्म्यज्ञानतो मुनिः कृतकृत्यो भवति तत्स्वरूपं किं ? इत्यत आह— **यदिति** । प्रत्यग्रूपेण **यज्जगद्भासकम्** । स्वयंप्रकाशत्वात् य एवं प्रकाशते **स एव जगतः साक्षी** ॥ २६ ॥ यत्स्वरूपं विश्वाधिष्ठानं तद्विद्यैकवेद्यमित्याह— **तदिति** ॥ २७–२८ ॥ मौनिप्राप्यं निरधिष्ठानमपि स्वाज्ञदृष्ट्या अधिष्ठेयप्रसक्तौ **सर्वाधिष्ठानमिति** ॥ २९ ॥ तस्यावाङ्मनसगोचरत्वेन सन्दिग्धार्थत्वात् तदवभासकश्चन्द्रार्कादिः स्यादित्यत आह—**नेति** । तेषां तत्प्रकाशजडीभूतत्वात् तस्य निष्प्रतियोगिकप्रकाशमात्रत्वात् ॥३०॥ तज्ज्ञानं हृदयग्रन्थिसर्वसंशयागाम्यादिकर्मग्रासमित्याह—**भिद्यत** इति । इयं श्रुतिः मुण्डकोपनिषद्युक्तार्था ॥ ३१ ॥ निर्विशेषब्रह्ममात्रस्य परावर इत्याख्या कुतः समजनि इत्याशङ्क्य स्वाज्ञानादेवमाख्या युज्यते स्वज्ञानेन निराख्यं ब्रह्म विभातीत्याह—**द्वाविति** ॥ ३२ ॥ निरशनतः कथमीश्वरो जीवन् प्रकाशते, जीवेशभेदोऽपि वास्तव एव स्यादित्यत आह—**केवलमिति** । **विना भोगो** भोगं विना **महेश्वरः** प्रकाशते, ईश्वरस्य निरावृताजडक्रियाज्ञानेच्छाशक्तिमत्त्वेन निर्विशेषब्रह्ममात्रानन्दतृप्तत्वात् । जीवेशयोः **प्रकाशते स्वयं भेदः**, भेदाभेदौ कथं इत्याशङ्क्य व्यक्तितो भेदः, स्वरूपतस्त्वभेदोऽपि युज्यत इत्याह—**चिदिति** । चिच्चितोः जीवेशयोः **आकारतो** भेदः । स्वरूपतोऽपि तयोः भेदः स्यादित्यत्र—तदुपाधिभिन्नो भेदः, स्वरूपतः चित् **न भिन्ना**, कुतः ? **चित्त्वहानितः** । स्वरूपतोऽपि यदि भिन्ना चित् तदा चित्त्वहानिः स्यात् ॥ ३३ ॥ एवं जीवेशचितोरभेदे का युक्तिः ?

किं प्रमाणं ? तदेकत्वज्ञानफलं वा किं ? इत्याशङ्क्य घटशरावाद्यनुगतव्योमवत् सर्वोपाध्यनुगता चिदेकैवेति युक्तिः, तयोरभेदे "तत्त्वमसि" आदिवाक्यजातं प्रमाणं, तज्ज्ञानतः सर्वशोकात्ययलक्षणा तद्भावापत्तिः स्यादित्याह—**तर्कत** इति ॥ ३४ ॥ केन मुनिः वीतशोको भवेदित्यत आह—**अधिष्ठानमिति** ॥३५॥ एवं सर्वेऽपि किं निश्चयं न कुर्वन्तीत्यत्र—**स्वशरीर** इति ॥ ३६ ॥

ब्रह्मविद्यासाधनानि

तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद्बहून् शब्दान् वाचो विग्लापनं हि तत् ॥ ३७ ॥
बाल्येनैव हि तिष्ठासेन्निर्विद्य ब्रह्मवेदनम् ।
ब्रह्मविद्यां च बाल्यं च निर्विद्य मुनिरात्मवान् ॥ ३८ ॥

निष्कामकर्मानुष्ठानेन चित्तशुद्धिमेत्याथ **तमेव धीरो** यथावत् **विज्ञाय** तत्रैव "ब्रह्माहं, अहमेव ब्रह्म" इत्यनुसन्धानरूपिणीं **प्रज्ञाम्** । स्वातिरिक्त-पदार्थगोचरान् **बहून् शब्दान्** ॥ ३७ ॥ ज्ञातेऽपि ब्रह्मणि बाह्यान्तर्वृत्तिरुदेति, तच्छान्त्युपायः कः इत्यत आह—**बाल्येनेति** । संशयादिपञ्चदोषशान्त्यर्थमा-शाद्यष्टोत्तरशतवेदान्तश्रवणमनननिदिध्यासनानि **निर्विद्य** यथावदनुष्ठाय तद्यथा स्वान्तर्बाह्यवृत्तिभिः नार्व्रीयते तथा बालस्य भावो बाल्यं वैराग्यं तेनैव स्थातुमिच्छेत् । एवं **ब्रह्मविद्यां च बाल्यं च** यावन्निष्प्रतियोगिकब्रह्ममात्रज्ञानं निरावृतं सदुदेति तावत् **निर्विद्य** अथ **मुनिरात्मवान्** जीवन्मुक्तो विदेहमुक्तो वा भवेदित्यर्थः ॥ ३८ ॥

प्राणसंरोधनेन चित्तशमः

अन्तर्लीनसमारम्भशुभाशुभमहांकुरम् ।
संसृतिव्रततेर्बीजं शरीरं विद्धि भौतिकम् ॥ ३९ ॥

भावाभावदशाकोशं दुःखरत्नसमुद्गकम् ।
बीजमस्य शरीरस्य [1]चित्तमाशावशानुगम् ॥ ४० ॥

द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः ।
एकं प्राणपरिस्पन्दो [2]द्वितीयं दृढभावना ॥ ४१ ॥

[3]यदा प्रस्पन्दते प्राणो नाडीसंस्पर्शनोद्यतः ।
[4]तदा संवेदनमयं चित्तमाशु प्रजायते ॥ ४२ ॥

सा हि सर्वगता संवित् प्राणस्पन्देन बोध्यते ।
संवि[5]त्संरोधनं श्रेयः [6]प्राणादिस्पन्दनं वरम् ॥ ४३ ॥

योगिनश्चित्तशान्त्यर्थं कुर्वन्ति प्राणरोधनम् ।
प्राणायामैस्तथा ध्यानैः प्रयोगैर्युक्तिकल्पितैः ॥ ४४ ॥

चित्तोपशान्तिफलदं परमं विद्धि कारणम् ।
सुखदं संविदः स्वास्थ्यं प्राणसंरोधनं विदुः ॥ ४५ ॥

ब्रह्मज्ञानात् ब्रह्म भवति इत्युक्तं, तथा ब्रह्मातिरिक्तज्ञानतः सदा ब्रह्मातिरिक्तो भवतीत्यत्र न विवादः, तत्र ब्रह्मातिरिक्तज्ञानबीजं तद्बीजं वा किं ? इत्यत आह—अन्तरिति । शरीरस्य स्वान्तर्लीनशुभाशुभसङ्कल्पांकुरत्वेन स्वातिरिक्तकलनाबीजत्वं, चित्तस्य तु नानायोनिजनितवासनापुञ्जसञ्चितकर्मपेटिकात्वेन नानाशरीरबीजत्वं चोपपद्यत इत्यर्थः ॥ ३९–४० ॥ चित्तस्यापि प्राणस्पन्दनभावनाभेदेन बीजद्वयमस्तीत्याह—द्वे बीज इति । तत्र—एकमिति ॥ ४१ ॥ प्राणस्पन्दतः चित्तं जायते, तन्निरोधतः चित्तमपि निरुद्धं भवति, तथा

[1] दुःख—उ, उ १.
[2] द्वितीयो—अ १, अ २, क.
[3] यथा—क.
[4] तथा—क.
[5] संबो—अ, अ २.
[6] प्राणायस्प—उ, उ १.

चित्तनिरोधतः प्राणोऽपि निरुद्धो भवतीत्याह—यदेति ॥ ४२–४३ ॥ यत एवं अतः योगिन इति । प्रयोगैः युक्तिकल्पितैः सह प्राणरोधनम् ॥ ४४–४५ ॥

वासनारोधनेन चित्तजयः

दृढभावनया त्यक्तपूर्वापरविचारणम् ।
यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥ ४६ ॥
यदा न भाव्यते किंचिद्धेयोपादेयरूपि यत् ।
स्थीयते सकलं त्यक्त्वा तदा चित्तं न जायते ॥ ४७ ॥
अवासनत्वात्सततं यदा न मनुते मनः ।
अमनस्ता तदोदेति परमोपशमप्रदा ॥ ४८ ॥
यदा न भाव्यते भावः क्वचिज्जगति वस्तुनि ।
तदा हृदम्बरे शून्ये कथं चित्तं प्रजायते ॥ ४९ ॥
यदभावनमास्थाय [1]यदभावस्य भावनम् ।
यद्यथावस्तुदर्शित्वं तदचित्तत्वमुच्यते ॥ ५० ॥
सर्वमन्तः परित्यज्य शीतलाशयवर्ति यत् ।
वृत्तिस्थमपि तच्चित्तमसद्रूपमुदाहृतम् ॥ ५१ ॥
भ्रष्टबीजोपमा येषां पुनर्जननवर्जिता ।
वासना रस[2]नाहीना जीवन्मुक्ता हि ते स्मृताः ॥ ५२ ॥
सत्त्वरूपपरिप्राप्तचित्तास्ते ज्ञानपारगाः ।
अचित्ता इति कथ्यन्ते देहान्ते व्योमरूपिणः ॥ ५३ ॥

[1] यदा—उ १.  [2] निर्हीना—अ, अ १.

संवेद्यसंपरित्यागात् प्राणस्पन्दनवासने ।
समूलं नश्यतः क्षिप्रं मूलच्छेदादिव द्रुमः ॥ ५४ ॥
पूर्वदृष्टमदृष्टं वा यदस्याः प्रतिभासते ।
संविदस्तत् प्रयत्नेन मार्जनीयं विजानता ॥ ५५ ॥
तदमार्जनमात्रं हि महासंसारतां गतम् ।
तत्प्रमार्जनमात्रं तु मोक्ष इत्यभिधीयते ॥ ५६ ॥
अजडो गलितानन्दस्त्यक्तसंवेदनो भव ॥ ५७ ॥
संविद्वस्तुदशा[1]लम्बः सा यस्येह न विद्यते ।
सोऽसंविदजडः प्रोक्तः कुर्वन् कार्यशतान्यपि ॥ ५८ ॥
[2]संवेद्येन हृदाकाशे मनागपि न लिप्यते ।
यस्यासावजडा संविज्जीवन्मुक्तः स कथ्यते ॥ ५९ ॥
यदा न भाव्यते किंचिन्निर्वासनतयाऽऽत्मनि ।
बालमूकादिविज्ञानमिव च स्थीयते स्थिरम् ॥ ६० ॥
तदा जाड्यविनिर्मुक्तमसंवेदनमाततम् ।
आश्रितं भवति प्राज्ञो यस्माद्भूयो न लिप्यते ॥ ६१ ॥
समस्ता वासनास्त्यक्त्वा निर्विकल्पसमाधितः ।
तन्मयत्वादना[3]द्यन्तं तदप्यन्तर्विलीयते ॥ ६२ ॥
तिष्ठन् गच्छन् स्पृशन् जिघ्रन्नपि तल्लेपवर्जितः ।
अजडो गलितानन्दस्त्यक्तसंवेदनः सुखी ॥ ६३ ॥

[1] लम्बा—अ. [2] स वे—अ. [3] द्यन्तं—उ, उ १.

एतां दृष्टिमवष्टभ्य कष्टचेष्टायुतोऽपि सन् ।
तरेद्दुःखाम्बुधेः पारमपारगुण[1]सागरः ॥ ६४ ॥
विशेषं संपरित्यज्य सन्मात्रं यदलेपकम् ।
एकरूपं महारूपं सत्तायास्तत्पदं विदुः ॥ ६५ ॥
कालसत्ता कलासत्ता वस्तुसत्तेयमित्यपि ।
विभागकलनां त्यक्त्वा सन्मात्रैकपरो भव ॥ ६६ ॥
सत्तासामान्यमेवैकं भावयन् केवलं विभुः ।
परिपूर्णः परानन्दी तिष्ठापूरितदिग्भरः ॥ ६७ ॥
सत्तासामान्यपर्यन्ते यत्तत् कलनयोज्झितम् ।
पदमाद्यमनाद्यन्तं तस्य बीजं न विद्यते ॥ ६८ ॥
तत्र संलीयते संविन्निर्विकल्पं च तिष्ठति ।
भूयो न वर्तते दुःखे तत्र लब्धपदः पुमान् ॥ ६९ ॥
तद्धेतुः सर्वभूतानां तस्य हेतुर्न विद्यते ।
[2]स सारः सर्वसाराणां तस्मात् सारो न विद्यते ॥ ७० ॥
तस्मिंश्चिद्दर्पणे स्फारे समस्ता वस्तुदृष्टयः ।
इमास्ताः प्रतिबिम्बन्ति सरसीव तटद्रुमाः ॥ ७१ ॥
तदमलम[3]रजं तदात्मतत्त्वं तदवगतावुपशान्तिमेति चेतः ।
अवगतविगतैकतत्स्वरूपो भवभयमुक्तपदोऽसि सम्यगेव ॥ ७२ ॥

[1] सागरं—अ. [2] सं—अ, अ १.
[3] चरं—अ २, क.

एतेषां दुःखबीजानां प्रोक्तं यद्यन्मयोत्तरम् ।
तस्य तस्य प्रयोगेण शीघ्रं तत् प्राप्यते पदम् ॥ ७३ ॥
सत्तासामान्यकोटिस्थे द्रागित्येव पदे यदि ।
पौरुषेण प्रयत्नेन बलात् संत्यज्य वासनाम् ॥ ७४ ॥
स्थितिं बध्नासि तत्त्वज्ञ क्षणमप्यक्षयात्मिकाम् ।
क्षणेऽस्मिन्नेव तत् साधु पदमासादयस्यलम् ॥ ७५ ॥
सत्तासामान्यरूपे वा करोषि स्थितिमादरात् ।
तत्किंचिदधिकेनेह यत्नेनाप्नोषि तत् पदम् ॥ ७६ ॥
संवित्तत्त्वे कृतध्यानो निदाघ यदि तिष्ठसि ।
तद्यत्नेनाधिकेनोच्चैरासादयसि तत् पदम् ॥ ७७ ॥
वासनासंपरित्यागे यदि यत्नं करोषि भोः ।

प्राणसंरोधनवत् वासनारोधनतोऽपि चित्तं न जायते, तत्र वासना कीदृशी इत्यत आह—**दृढेति** । सर्वप्रकारेणापि इदं मे स्यात् अनेन इदानीं पश्चाद्वा महाननर्थो जायते इति **दृढभावनया . . .** ॥४६॥ सा(?)यदा ब्रह्मातिरिक्तं नास्तीति बोधेन इयं **वासना यदा न भाव्यते** ॥४७॥ पदार्थभावनाऽभावनातः चित्ताजनौ किं स्यादित्यत्र निर्विकल्पात्मावगतिरुदेतीत्याह—**अवासनत्वादिति** ॥ ४८ ॥ एवं किमप्य-भावयतः तूष्णीमवस्थितस्याचित्तं ब्रह्म प्रसीदतीत्याह—**यदेति** ॥ ४९–५० ॥ ब्रह्माकारचित्तवृत्तौ सत्यां अचित्तत्वं कुत इत्यत आह—**सर्वमिति** । तापः स्वातिरिक्तं, तद्ग्रासं ब्रह्म शीतळं, तदस्मीत्यखण्डाकारवृत्तिस्थमपि **चित्तं असद्रूपमुदाहृतमिति** ॥ ५१ ॥ स्वातिरिक्तवासनाविरळा जीवन्मुक्ता भूत्वाऽथ विदेहमुक्ता भवन्तीत्याह—**भ्रष्टेति** ॥ ५२ ॥ देहान्ते देहाद्यात्यन्तिकाभिमान-निवृत्तौ **चिद्व्योमरूपिणः** भवन्ति विदेहमुक्ता भवन्तीत्यर्थः ॥ ५३ ॥ प्राणस्पन्द-

वासनयोः सत्त्वे विदेहमुक्तता कुतः इत्यत आह—**संवेद्येति**। यद्यत् प्रसज्यते तत्तत्संवेद्येति । ततो विदेहकैवल्यं निरावृतमुदेतीत्यर्थः ॥ ५४ ॥ एवं विजानता स्वातिरिक्तविषयकसंवित्सामान्यं मार्जनीयमित्याह—**पूर्वेति** ॥ ५५–५६ ॥ त्वं तु **अजड** इति । जडदेहादिविलक्षणाजडब्रह्मानन्दावबोधनात् कादाचित्कप्रसक्तसंवेदनोन्मूलनकरो भवेत्यर्थः ॥ ५७ ॥ अजडसंवित्को जीवन्मुक्तो भवतीत्याह—**संविदिति** ॥ ५८–५९ ॥ किं बहुना, स्वातिरिक्तासंभवप्रबोधतोऽजडब्रह्मावगतिः स्यादित्याह—**यदेति** । स्वातिरिक्तापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति तन्मात्रवृत्तिरपि **विलीयते** अपह्नवं भजति, तस्या अपि स्वातिरिक्तत्वात्॥६०–६२॥ एवंविदमेव सत्तासामान्यं विदुरित्याह—**तिष्ठन्निति** ॥ ६३–६४ ॥ तद्गत**विशेषं संपरित्यज्य** स्वमात्रमिति यो वेद तं ब्रह्मविदः **सत्तायास्तत्पदं विदुः** ॥ ६५ ॥ त्वं तु स्वातिरिक्तकालादिसत्ताभ्रमं त्यक्त्वा स्वमात्रसत्तावान् भवेत्याह—**कालेति**। ब्रह्मणो निर्विभागत्वात् ॥ ६६ ॥ किंच—**सत्तेति** । स्वेतरासह**सत्तासामान्यमेवैकं** निष्प्रतियोगिकस्वमात्रमिति **भावयन्** ॥ ६७ ॥ यद्भावनया परिपूर्णो भवामीति यत् तत् सबीजमित्यत आह—**सत्तेति** । **सत्तासामान्यपर्यन्ते** सत्तासामान्यस्वरूपे **यत्तत्** देशकालादि**कलनयोज्झितम्** ॥ ६८ ॥ **संवित्** चित्तवृत्तिः । यत् **भूयो न वर्तते** ॥ ६९ ॥ भूतादिस्वातिरिक्तसत्वे **तद्धेतुः** ॥७०॥ यत्सत्तासामान्यं निष्प्रतियोगिकनिर्विशेषतया अवशिष्टं तदेव स्वाज्ञविकल्पिताधिष्ठेयप्रसक्तौ यतः स्वज्ञदृष्ट्या अधिष्ठानतां भजति अतः तत्र स्वातिरिक्तप्रपञ्चो विकल्पित इत्याह—**तस्मिन्निति** । **समस्ताः** घटपटादि**वस्तुदृष्टयः** ॥ ७१ ॥ यदेवं कल्पनाधिकरणं **तदमलमिति** । यत् सर्वाधिकरणं तदमलमित्यादिविशेषणविशिष्टम् । तदवगतिसमकालं विगतस्वातिरिक्तवत्स्वरूपो भूत्वा कृतकृत्यो भवसीत्यर्थः ॥ ७२ ॥ स्वतिरिक्तविभ्रमशान्त्यर्थं यद्यदुपायजातं प्रकटितं तत्तदनुष्ठानात् स्वातिरिक्तभ्रमविरळो भूत्वा स्वमात्रपदवीमेष्यसीत्याह—**एतेषामिति** । एतेषां दुःखबीजानां शान्तये ॥ ७३ ॥ **सत्तासामान्यकोटिस्थे** ईशतत्त्वे साक्षितत्त्वे वा । **संत्यज्य** तत्पूर्व**ग्रहवासनाम्** ॥७४–७५॥ यदीश्वरादितत्त्वे तव सविशेषधीः तदा **सत्तासामान्यरूपे** ॥ ७६ ॥ यद्येवं कर्तुं **अशक्तोऽसि**

तदा संवित्तत्त्वे प्रतीचि ॥ ७७ ॥ प्रत्यग्भावावरणवासनासंपरित्यागे । अभ्यासतः तदपि संत्यज्य निर्वासनपदं भजसीत्यर्थः ॥

तत्त्वज्ञानमनोनाशवासनाक्षयोपायानां युगपदनुष्ठेयता

यावद्विलीनं न मनो न तावद्वासनाक्षयः ॥ ७८ ॥
न क्षीणा वासना यावच्चित्तं तावन्न शाम्यति ।
यावन्न तत्त्वविज्ञानं तावच्चित्तशमः कुतः ॥ ७९ ॥
यावन्न चित्तोपशमो न तावत्तत्त्ववेदनम् ।
यावन्न वासनानाशस्तावत्तत्त्वागमः कुतः ।
यावन्न तत्त्वसंप्राप्तिर्न तावद्वासनाक्षयः ॥ ८० ॥
तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च ।
मिथः कारणतां गत्वा दुःसाधानि स्थितान्यतः ॥ ८१ ॥
भोगेच्छां दूरतस्त्यक्त्वा त्रयमेतत् समाचर ॥ ८२ ॥
वासनाक्षयविज्ञानमनोनाशा महामते ।
समकालं चिराभ्यस्ता भवन्ति फलदा मताः ॥ ८३ ॥
त्रिभिरेभिः समभ्यस्तैर्हृदयग्रन्थयो दृढाः ।
निःशेषमेव त्रुट्यन्ति बिसच्छेदाद्गुणा इव ॥ ८४ ॥
वासनासंपरित्यागसमं प्राणनिरोधनम् ।
विदुस्तत्त्वविदस्तस्मात्तदप्येवं समा[1]हरेत् ॥ ८५ ॥
वासनासंपरित्यागाच्चित्तं गच्छत्यचित्तताम् ।
प्राणस्पन्दनिरोधाच्च यथेच्छसि तथा कुरु ॥ ८६ ॥

[1] चरेत्—अ. हरेत्—अ १, क. रभेत्—उ.

प्राणायामदृढाभ्यासैर्युक्त्या च गुरुदत्तया ।
आसनाशनयोगेन प्राणस्पन्दो निरुध्यते ॥ ८७ ॥
निःसङ्गव्यवहारत्वाद्भवभावनवर्जनात् ।
शरीरनाशदर्शित्वाद्वासना न प्रवर्तते ॥ ८८ ॥
यः प्राणपवनस्पन्दश्चित्तस्पन्दः स एव हि ।
प्राणस्पन्दजये यत्नः कर्तव्यो धीमतोच्चकैः ॥ ८९ ॥
न शक्यते मनो जेतुं विना युक्तिमनिन्दिताम् ।
शुद्धां संविदमाश्रित्य वीतरागः स्थिरो भव ॥ ९० ॥
संवेद्यवर्जितमनुत्तममाद्यमेकं संवित्पदं विकलनं कलयन् महात्मन् ।
हृद्येव तिष्ठ कलनारहितः क्रियां तु कुर्वन्नकर्तृपदमेत्य शमोदितश्रीः ॥
मनागपि विचारेण चेतसः स्वस्य निग्रहः ।
[1]पुरुषेण कृतो येन तेनाप्तं जन्मनः फलम् ॥ ९२ ॥

तत्त्वज्ञानमनोनाशवासनाक्षयोपायो युगपदनुष्ठेयो नान्यथा सिद्धिमेष्यसीत्याह—**यावदिति** ॥ ७८–८० ॥ यत एवमतः **तत्त्वज्ञानमिति** ॥ ८१ ॥ तत्सिद्धये **भोगेच्छामिति** ॥ ८२ ॥ युगपदभ्यासतः को विशेष इत्यत्र—**वासनाक्षयेति** ॥ ८३–८४ ॥ प्राणनिरोधोऽपि वासनाक्षयतुल्य इत्याह—**वासनेति** ॥८५–८६॥ प्राणस्पन्दनिरोधोपायः क इत्यत्र—**प्राणायामेति** ॥८७॥ तथा वासनानिवृत्त्युपायमाह—**निस्सङ्गेति** ॥ ८८–८९ ॥ त्वमादौ **शुद्धां संविदमिति** ॥ ९० ॥ यत् **संवेद्यवर्जितं** इत्यादिविशेषणविशिष्टं तदहमस्मीति ध्यायन् कृतकृत्यो भवसीत्यर्थः ॥ ९१ ॥ निर्दयं चित्तनाशं यः करोति तज्जन्म सफलं इत्याह—**मनागपीति** ॥ ९२ ॥

इति चतुर्थोऽध्यायः

---

[1] पौरु— उ.

# पञ्चमोऽध्यायः

जीवन्मुक्तिसिद्धये सङ्गत्यागविधिः

गच्छतस्तिष्ठतो वाऽपि जाग्रतः स्वपतोऽपि वा ।
न विचारपरं चेतो यस्यासौ मृत उच्यते ॥ १ ॥
सम्यग्ज्ञानसमालोकः पुमान् [1]ज्ञेयः समः स्वयम् ।
न बिभेति न चादत्ते वैवश्यं न च दीनताम् ॥ २ ॥
अपवित्रमपथ्यं च विषसंसर्गदूषितम् ।
भुक्तं जरयति ज्ञानी क्लिन्नं नष्टं च मृष्टवत् ॥ ३ ॥
सङ्गत्यागं विदुर्मोक्षं सङ्गत्यागादजन्मता ।
सङ्गं त्यज त्वं भावानां जीवन्मुक्तो भवानघ ॥ ४ ॥
भावाभावे पदार्थानां हर्षामर्षविकार[2]दा ।
मलिना वासना यैषा सा सङ्ग इति कथ्यते ॥ ५ ॥
जीवन्मुक्तशरीराणामपुनर्जन्मकारिणी ।
मुक्ता हर्षविषादाभ्यां शुद्धा भवति वासना ॥ ६ ॥
दुःखैर्न ग्लानिमायासि हृदि हृष्यसि नो सुखैः ।
आशावैवश्यमुत्सृज्य निदाघासङ्गतां व्रज ॥ ७ ॥
दिक्कालाद्यनवच्छिन्नमदृष्टोभयकोटिकम् ।
चिन्मात्रमक्षयं शान्तमेकं ब्रह्मा[3]स्मि नेतरत् ॥ ८ ॥

[1] ज्ञेयस—अ, अ १, अ २.
[2] ता—अ, अ १.
[3] स्ति—उ.

इति मत्वाऽहमित्यन्तर्मुक्तामुक्तवपुः पुमान् ।
एकरूपः प्रशान्तात्मा मौनी स्वात्मसुखो भव ॥ ९ ॥
नास्ति चित्तं न चाविद्या न मनो न च जीवकः ।
ब्रह्मैवैकमनाद्यन्तमब्धिवत् प्रविजृम्भते ॥ १० ॥

चित्ते सति मोक्षः कथं? इत्यत आह—**गच्छत** इति । स्वातिरिक्तमस्ति नास्तीति न **विचारपरम्** ॥ १ ॥ सम्यज्ज्ञानतो यच्चित्तमचित्तपदं भजति स निर्भयो भूत्वा ब्रह्मैव भवतीत्याह—**सम्यगिति** । **सम्यज्ज्ञानसमालोकः** सम्यज्ज्ञानदृष्टिः । कुतश्चन न बिभेति, किमपि न **चादत्ते**, कदाऽपि कस्यचिदपि **वैवश्यम्** ॥ २ ॥ किंच—**अपवित्रमिति** । "अन्नं ब्रह्मा रसो विष्णुः भोक्ता देवो महेश्वरः" इति स्मृत्यनुरोधेन अपवित्रमित्यादिविशेषणविशिष्टान्नादौ अन्नादिदृष्ट्युपमर्दकब्रह्मदृष्टित्वात् भोक्तृभोज्यादिदृष्टिवैकल्याच्च अयमन्नकृतदोषैः न लिप्यते ॥ ३ ॥ अन्नादिसंगाभावतो यतो मुच्यते अतः त्वमपि सर्वत्र संगं त्यक्त्वा जीवन्मुक्तो भवेत्याह—**सङ्गेति** । सर्वत्र **सङ्गत्यागम्** ॥ ४ ॥ कोऽयं संग इत्यत्र वासनैव संग इत्याह—**भावेति** ॥ ५ ॥ असंगत्वहेतुसद्वासना केत्यत्र —**जीवन्मुक्तेति** ॥ ६ ॥ तामवष्टभ्य निःसंगो भवेत्याह—**दुःखैरिति** । स्वातिरिक्तपदार्थाशावैवश्यम् ॥ ७ ॥ सर्वाधिष्ठानं ब्रह्मास्मीति ज्ञात्वा सुखी भवेत्याह—**दिगिति** । यत्र स्वातिरिक्तमस्ति नास्तीत्येतदुभयमदृष्टं तत्तथोक्तम् ॥ ८ ॥ चिन्मात्रं ब्रह्माहं नेतरदहं इति मत्वा स्वपरदृष्टिभ्यां **मुक्तामुक्तवपुः** । "अशरीरं वाव सन्तम्" इति श्रुतेः स्वदृष्ट्या मुक्तदेहभ्रमोऽपि परदृष्ट्याऽमुक्तदेहभ्रमवद्भानात् मुक्तामुक्तवपुष्ट्वं युज्यते । तादृशः पुमानेकरूपः । मौनं तूष्णीभावोऽस्यास्तीति **मौनी** स्वात्ममात्रावशेषानन्दो भवेत्यर्थः ॥ ९ ॥ स्वातिरिक्तचित्तादौ सति कथं निष्प्रतियोगिकता? इत्यत्र—**नास्तीति** ॥ १० ॥

चित्तादिविभ्रमनिवृत्त्यर्थं आत्मदृष्टिविधिः

देहे यावदहंभावो दृश्येऽस्मिन् यावदात्मता ।
यावन्ममेदमित्यास्था तावच्चित्तादिविभ्रमः ॥ ११ ॥

अन्तर्मुखतया सर्वं चिद्वह्नौ त्रिजगत्तृणम् ।
जुह्वतोऽन्तर्निवर्तन्ते मुने [1]चित्तादिविभ्रमाः ॥ १२ ॥
[2]चिदात्माऽस्मि निरंशोऽस्मि परापरविवर्जितः ।
रूपं स्मर निजं स्फारं मा स्मृत्या संमितो भव ॥ १३ ॥

यावत्स्वातिरिक्तदृष्टिः तावच्चित्तादिविभ्रमः, स्वमात्रदृष्ट्या तन्निवृत्तिः स्यादित्याह—देह इति ॥ ११–१२ ॥ अतः स्वमात्रं चिन्तयन् स्वातिरिक्तमतिं त्यजेत्याह—चिदिति । परापरविवर्जितः विशेषसामान्यविलक्षणत्वात् । निर्विशेषं रूपं स्मर ॥ १३ ॥

ब्रह्मात्मबोधेन सर्ववासनानिवृत्तिः

अध्यात्मशास्त्र[3]मन्त्रेण तृष्णाविषविषूचिका ।
क्षीयते भावितेनान्तः शरदा मिहिका यथा ॥ १४ ॥
परिज्ञाय परित्यागो वासना[4]नां य उत्तमः ।
सत्तासामान्यरूपत्वात्तत् कैवल्यपदं विदुः ॥ १५ ॥
यत्रास्ति वासना [5]लीना तत् सुषुप्तं न सिद्धये ।
[6]निर्बीजा वासना यत्र तत्तुर्यं सिद्धिदं स्मृतम् ॥ १६ ॥
वासनायास्तथा वह्नेर्ऋणव्याधिद्विषामपि ।
स्नेहवैरविषाणां च शेषः स्वल्पोऽपि बाधते ॥ १७ ॥
निर्दग्धवासना[7]बीजः सत्तासामान्यरूपवान् ।
सदेहो वा विदेहो वा न भूयो दुःखभाग्भवेत् ॥ १८ ॥

[1] संसार—उ, उ १. [2] चिदेवास्मि—उ, उ १. [3] शस्त्रेण—अ.
[4] या—उ. [5] लीनं—उ, उ १. [6] निर्बीज—अ, क. [7] बीजस—उ.

एतावदेवाविद्यात्वं नेदं ब्रह्मेति निश्चयः ।
एष एव क्षय[1]स्तस्या ब्रह्मेदमिति निश्चयः ॥ १९ ॥
ब्रह्म चिद्ब्रह्म [2]भुवनं ब्रह्म भूतपरम्परा ।
ब्रह्माहं ब्रह्म [3]चिच्छत्रुर्ब्रह्म चिन्मित्रबान्धवाः ॥ २० ॥
ब्रह्मैव सर्वमित्येव भाविते ब्रह्म वै पुमान् ।
सर्वत्रावस्थितं शान्तं चिद्ब्रह्मेत्यनु[4]भूयते ॥ २१ ॥
असंस्कृताध्वगालोके मनस्यन्यत्र संस्थिते ।
या प्रतीतिरनागस्का तच्चिद्ब्रह्मास्मि सर्वगम् ॥ २२ ॥
प्रशान्तसर्वसंकल्पं विगता[5]खिलकौतुकम् ।
विगताशेषसंरम्भं चिदात्मानं समाश्रय ॥ २३ ॥
एवं पूर्णधियो धीराः समा नीरागचेतसः ।
न नन्दन्ति न निन्दन्ति जीवितं मरणं तथा ॥ २४ ॥

तृष्णा मां स्वातिरिक्तं स्मारयति किं करोमीत्यत आह—**अध्यात्मेति** । **तृष्णैव विषविपूचिका** विषवत् विष्वगञ्चनात् पराग्भावपिशाचात्मिका पराग्भावग्रासप्रत्यगभिन्नं ब्रह्मास्मीति बोधमन्त्रेण **क्षीयते** । **यथा शरदा मिहिका** अभ्रं क्षीयते तथा वितृष्णं ब्रह्मास्मीति ज्ञानेन तृष्णा क्षीयत इत्यर्थः ॥ १४ ॥ सर्वतृष्णावासनात्यागाधिकरणस्य त्यागसापेक्षाधिकरणताऽपाये निर्विशेषत्वेन सत्तासामान्यरूपत्वात् ब्रह्मविदः तदेव कैवल्यं वदन्तीत्याह—**परिज्ञायेति** । ब्रह्मातिरिक्तं शशविषाणवत् नास्तीति **परिज्ञाय** । स्वातिरिक्तापह्नवसिद्धस्य **सत्तासामान्यरूपत्वात्** ॥ १५ ॥ सबीजनिर्बीजवासनाविलयौ बन्धमोक्षहेतू भवत

[1] स्तस्य—उ. [2] भव—अ, अ १. [3] वि—अ, अ १, अ २.
[4] भूयताम्—उ, उ १. [5] शेष—उ, उ १.

इत्याह—**यत्रेति** ॥ १६ ॥ यतो वासनाशेषोऽप्यनर्थकरः अतो निःशेषीकृतवासनो योगी तद्बीजक्षयानुरोधेन जीवन्मुक्तो विदेहमुक्तो वा स्यादित्याह—**वासनाया इति** ॥ १७–१८ ॥ अन्यथा ग्रहणं आविद्यकं, यथावद्वेदनसिद्धं ब्रह्मेत्याह—**एतावदिति** ॥ १९ ॥ स्वाज्ञदशायां यन्नानात्वेन अभिमतं स्वज्ञदशायां तत्सर्वं ब्रह्मेत्याह—**ब्रह्मेति** ॥ २० ॥ ज्ञानफलमाह—**ब्रह्मैवेति** । अतः सर्वरूपेण **सर्वत्रावस्थितं** वस्तुतः सर्वकलनाशान्तम् ॥ २१ ॥ किमिति ? **असंस्कृतेति** । "पराञ्चि खानि व्यतृणत् स्वयंभूः" इति श्रुत्यनुरोधेन वेदान्तश्रवणाद्यसंस्कृताध्वानं पराग्भावं गच्छन्तीति **असंस्कृताध्वगानि** इन्द्रियाणि तेषामालोकदे **मनसि** पराग्भावात् **अन्यत्र** प्रत्यगभिन्नब्रह्मणि **संस्थिते** सति **या अनागस्का** निर्दुष्टा **प्रतीतिः** ज्ञप्तिः उदेति **तदेव सर्वगं ब्रह्मास्मीति** सूरिभिः अद्याप्यनुभूयत इत्यर्थः ॥ २२ ॥ त्वमपि तमेवाश्रयेत्याह—**प्रशान्तेति** । स्वावशेषधिया **समाश्रय** ॥ २३ ॥ न त्वमेव आश्रयसि, किंतु—**एवमिति** । स्वावशेषधिया चिदात्मानमाश्रित्य **न नन्दन्ति** ॥ २४ ॥

अनात्मभ्रमनिवृत्त्यर्थं सहजप्राणायामविधिः

प्राणोऽयमनिशं ब्रह्मन् स्पन्दशक्तिः सदागतिः ।
सबाह्याभ्यन्तरे देहे प्राणोऽसावूर्ध्वगः स्थितः ॥ २५ ॥
अपानोऽप्यनिशं ब्रह्मन् स्पन्दशक्तिः सदागतिः ।
सबाह्याभ्यन्तरे देहे अपानोऽयमवाक् स्थितः ॥ २६ ॥
जाग्रतः स्वपतश्चैव प्राणायामो य उत्तमः ।
प्रवर्तते ह्य[1]भिज्ञस्य तत्तावच्छ्रेयसे शृणु ॥ २७ ॥
द्वादशाङ्गुलपर्यन्तं बाह्यमाक्रमतां ततः ।
प्राणानामङ्गसंस्पर्शो यः स पूरक उच्यते ॥ २८ ॥

[1] भीक—उ.

अपानश्चन्द्रमा देहमाप्याययति सुव्रत ।
प्राणः सूर्योऽग्निरथ वा पचत्यन्त[1]रिदं वपुः ॥ २९ ॥
प्राणक्षयसमीपस्थमपानोदयकोटि[2]गम् ।
अपानप्राणयोरैक्यं चिदात्मानं समाश्रय ॥ ३० ॥
अपानोऽस्तंगतो यत्र प्राणो नाभ्युदितः क्षणम् ।
कलाकलङ्करहितं तच्चित्तत्त्वं समाश्रय ॥ ३१ ॥
नापानोऽस्तंगतो यत्र प्राणश्चास्तमुपागतः ।
नासाग्रगमनावर्तं तच्चित्तत्त्वमुपाश्रय ॥ ३२ ॥

यदि स्वातिरिक्तं अस्ति नास्तीति विभ्रमत्यागं दुष्करं मन्यसे तदा प्राणापानैयत्तापरिज्ञानपूर्वकं सहजप्राणायामं कुर्वन् प्राणापानैक्याविर्भूतं यच्चिन्मात्रमवशिष्यते तत् स्वावशेषधिया समाश्रयेत्याह—**प्राण** इति ॥२५–२६॥ जाग्रत्स्वप्नयोरपि सहजप्राणायामः श्रेष्ठः इत्याह—**जाग्रत** इति ॥ २७ ॥ पूरकादिप्रकारमाह—**द्वादशेति** । सहजोच्छ्वासरूपप्राणोऽयं नासापुटात् बाह्ये द्वादशांगुलावधि प्रसरतीति यत् तत् बाह्यपूरकमुच्यते । पुनः अपानव्यापारं विना क्षणमात्रावस्थानं बाह्यकुंभक उच्यते । ततः पुनः अपानव्यापारो बाह्यरेचकमुच्यते । एवमन्तः पूरकादिः योगशास्त्रप्रकाशकोपनिषत्सु बहुधा प्रपञ्चितः ॥ २८ ॥ अपानादिकार्यमाह—**अपान** इति ॥ २९ ॥ बाह्ये प्राणापानसन्ध्याधारमात्मानमाश्रयेत्याह—**प्राणेति** । यत्र नासापुटद्वादशांगुल-परिमितबाह्यप्रदेशे प्राणः क्षीयते तत्समीपे तल्लयाधारतया तिष्ठतीति **प्राणक्षयसमीपस्थं**, तत्रैव खल्वपान उदेति । प्राणापानयोः कोटिः सन्धिः, तदपानोत्पत्त्याधारतां गच्छतीति **अपानोदयकोटिगम्** । एवमपानप्राणयोः प्रत्यक्परयोः ऐक्यसिद्धं चिदात्मानं ध्यायस्वेत्यर्थः ॥ ३० ॥ यथा बाह्ये तथा

[1] रितं—अ, अ २, क. [2] कम्—उ, भम्—अ २.

अन्तः **अपान** इति । यत्र अन्तर्हृदये अपानोऽस्तं गतः क्षणं प्राणोऽपि **नाभ्युदितः** यत्तदन्तराळावस्थं प्राणादिनामान्तषोडशकलाकळङ्करहितं तत् **चित्तत्त्वं** भावयेत्यर्थः ॥ ३१ ॥ किंच—**नापान** इति । यत्र नासाग्रे **नापानोऽस्तं गतः** प्राणश्चास्तं गतो भवति यन्नासाग्रगमनावर्तम् । एवं सहजोच्छ्वासनिश्वाससन्धौ हृदये नासाग्रे बाह्ये च यदि योगी चित्तत्त्वानुसन्धानं करोति तदाऽचिरादेव बाह्यान्तर्नासापरिच्छेदविरळं सन्निष्प्रतियोगिकचिन्मात्रतया योगी अवशिष्यते । तस्मात् सहजयोगः सर्वयोगेभ्यो वरीयानित्यर्थः ॥ ३२ ॥

सर्वचैत्यकलनात्यागेन ब्रह्मज्ञानप्राप्तिः

आभासमात्रमेवेदं न सन्नासज्जगत्त्रयम् ।
इत्यन्यकलनात्यागं सम्यग्ज्ञानं विदुर्बुधाः ॥ ३३ ॥
आभासमात्रकं ब्रह्मन् चित्तादर्शकलङ्कितम् ।
ततस्तदपि संत्यज्य निराभासो भवोत्तम ॥ ३४ ॥
भयप्रदमकल्याणं धैर्यसर्वस्वहारिणम् ।
मनःपिशाचमुत्सार्य योऽसि सोऽसि स्थिरो भव ॥ ३५ ॥
चिद्व्योमेव किलास्तीह परापरविवर्जितम् ।
सर्वत्रासंभवच्चैत्यं यत् कल्पान्तेऽवशिष्यते ॥ ३६ ॥
वाञ्छाक्षणे तु या तुष्टिस्तत्र वाञ्छैव कारणम् ।
तुष्टिस्त्वतुष्टिपर्यन्ता तस्माद्वाञ्छां परित्यज ॥ ३७ ॥
आशा यातु निराशात्वमभावं यातु भावना ।
अमनस्त्वं मनो यातु [1]तवासङ्गेन जीवतः ॥ ३८ ॥

[1] तथा—अ २.

वासनारहितैरन्तरिन्द्रियैराहरन् क्रियाः ।
न विकारमवाप्नोषि खवत् क्षोभशतैरपि ॥ ३९ ॥
चित्तोन्मेषनिमेषाभ्यां संसारप्रलयोदयौ ।
वासनाप्राणसंरोधादनुन्मेषं मनः कुरु ॥ ४० ॥
प्राणोन्मेषनिमेषाभ्यां संसृतेः प्रलयोदयौ ।
तमभ्यासप्रयोगाभ्यामुन्मेषरहितं कुरु ॥ ४१ ॥
मौर्ख्योन्मेषनिमेषाभ्यां कर्मणां प्रलयोदयौ ।
तद्विलीनं कुरु बलाद्गुरुशास्त्रार्थसंगमैः ॥ ४२ ॥
असंवित्स्पन्द[1]मात्रेण याति चित्तमचित्तताम् ।
प्राणानां वा निरोधेन तदेव परमं पदम् ॥ ४३ ॥
दृश्यदर्शनसंबन्धे यत् सुखं पारमार्थिकम् ।
[2]तदन्तैकान्तसंवित्त्या ब्रह्मदृष्ट्याऽवलोकय । ४४ ॥
यत्र नाभ्युदितं चित्तं तद्वै सुखमकृत्रिमम् ।
क्षयातिशयनिर्मुक्तं नोदेति न च शाम्यति ॥ ४५ ॥
ज्ञस्य चित्तं न चित्ताख्यं चित्तं चित्तत्त्वमेव हि ।
तदेव तुर्यावस्थायां तुर्यातीतं भवत्यतः ॥ ४६ ॥
संन्यस्तसर्वसंकल्पः समः शान्तमना मुनिः ।
संन्यासयोगयुक्तात्मा ज्ञानवान् मोक्षवान् भव ॥ ४७ ॥
सर्वसंकल्पसंशान्तौ प्रशान्तघनवासनम् ।
न किंचिद्भावनाकारं यत्तद्ब्रह्म परं विदुः ॥ ४८ ॥

[1] रूपेण—अ. [2] तदेकान्तरसं—अ.

नामरूपवज्जगतः सत्त्वात् कथं चिन्मात्रसिद्धिः इत्यत्र जगतः स्वाज्ञविकल्पितत्वेनाभासमात्रत्वात् चिन्मात्रसिद्धिः निरंकुशेत्याह—**आभासेति** । आभासतोऽपि जगन्नास्तीति वृत्तिरेव सम्यज्ज्ञानमित्याह—इतीति ॥ ३३ ॥ त्वं सम्यज्ज्ञानमवष्टभ्य निराभासो भवेत्याह—आभासेति ॥ ३४ ॥ किं च—**भयप्रदमिति** । भीहेतुमनस्तत्कार्यापह्नवतो यदवशिष्यते तदेव त्वमसीत्यर्थः ॥ ३५ ॥ यद्भवाम्यहं तत् कीदृशमित्यत्र—**चिद्व्योमैवेति** । सामान्यविशेषवच्चैत्यासंभवप्रबोधसिद्धं यदवशिष्यते तदेव त्वमसीत्यर्थः । **कल्पान्ते** कल्पनावसान इत्यर्थः ॥ ३६ ॥ चैत्यासंभवः कथं? वान्छाभावनादीनां विद्यमानत्वं यदि मन्यसे—**वान्छेति** ॥ ३७ ॥ किं च—आशेति । स्वातिरिक्तविषयकाशा ॥ ३८ ॥ सर्वानर्थमूलवासनात्यागतः पूर्ववत् न विकारमवाप्नोषीत्याह—**वासनेति** । **पूर्ववत् न विकारमवाप्नोषि** ॥३९॥ स्वातिरिक्तसंसारास्तित्वनास्तित्वे चित्तसत्त्वासत्त्वायत्ते, तन्नाशतः तच्छान्तिः भवतीत्याह—**चित्तेति** ॥ ४० ॥ किमप्यवेदनतः चित्तनाशवत् प्राणं कामं च निर्मूलयेत्याह—**प्राणेति** । सुषुम्नायां विलयं कुरु ॥ ४१ ॥ इदं कामनीयं इदं अकामनीयं इति युक्तायुक्तविकलः काम एव मूर्खः, तत्क्षयतः कर्मक्षयं कुर्वित्याह—**मौर्ख्येति** । ब्रह्मातिरेकेण कामनीयविषयासंभवतः कामो नास्तीति **तद्विलीनं कुरु** ॥ ४२ ॥ चित्तप्राणनैश्चल्यतो यद्विभाति तदेव पदमित्याह—**असंविदिति** । अप्राणब्रह्मपदं प्राणो भजतीति यत् **तदेव परमं पदम्** ॥ ४३ ॥ तत्त्वंपदलक्ष्यैक्यजसुखं ब्रह्मेति पश्येत्याह—**दृश्येति** ॥ ४४ ॥ किं तत् प्रत्यग्ब्रह्मैक्यजं सुखं इत्यत्र—**यत्रेति** ॥ ४५ ॥ "ब्रह्मातिरिक्तं न किंचिदस्ति" इति यो जानाति तच्चित्तं ब्रह्मेत्याह—**ज्ञस्येति** ॥ ४६ ॥ स्वातिरिक्तसङ्कल्पसंन्यासतः कृतार्थो भवेत्याह—**संन्यस्तेति** ॥ ४७ ॥ यत्र सङ्कल्पप्रभवभावना समाप्यते तदेव ब्रह्मेत्याह—**सर्वेति** ॥ ४८ ॥

साङ्ख्ययोगाभ्यां परमपदप्राप्तिः

सम्यज्ज्ञानावरोधेन नित्यमेकसमाधिना ।
सांख्य एवावबुद्धा ये ते सांख्या योगिनः परे ॥ ४९ ॥

प्राणाद्यनिलसंशान्तौ युक्त्या ये पदमागताः ।
अनामयमनाद्यन्तं ते स्मृता योगयोगिनः ॥ ५० ॥
उपादेयं तु सर्वेषां शान्तं पदमकृत्रिमम् ।
एकार्थाभ्यसनं प्राणरोधश्चेतःपरिक्षयः ॥ ५१ ॥
एकस्मिन्नेव संसिद्धे संसिध्यन्ति परस्परम् ।
अविनाभाविनी नित्यं जन्तूनां प्राणचेतसी ॥ ५२ ॥
आधाराधेयवच्चैते एकभावे विनश्यतः ।
कुरुतः स्वविनाशेन कार्यं मोक्षाख्यमुत्तमम् ॥ ५३ ॥
सर्वमेतद्धिया त्यक्त्वा यदि तिष्ठसि निश्चलः ।
तदाऽहंकारविलये त्वमेव परमं पदम् ॥ ५४ ॥
महाचिदेकैवेहास्ति महासत्तेति योच्यते ।
निष्कलङ्का समा शुद्धा निरहंकाररूपिणी ॥ ५५ ॥
सकृद्विभाता विमला नित्योदयवती समा ।
सा ब्रह्म परमात्मेति नामभिः परिगीयते ॥ ५६ ॥

अभावनासिद्धं ब्रह्म केचन वेदान्तश्रवणादिना जानन्ति, ते साङ्ख्याः, केचन ज्ञानसहकृतयोगाभ्यासेन जानन्ति, ते योगिनो भवन्तीत्याह—**सम्यगिति** । स्वातिरिक्ताविद्यापदतत्कार्यजातापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति यत् सङ्ख्यातं गणितं स्मृतं अवगतं तत् सङ्ख्यं, तदेव साङ्ख्यं निष्प्रतियोगिकब्रह्ममात्रज्ञानं, **साङ्ख्य एवावबुद्धाः** ये ते साङ्ख्याः, **योगिनः परे** । सांख्ये इति सप्तमी तृतीयार्था । ये स्वात्मानं साङ्ख्येन जानन्ति ते साङ्ख्याः ज्ञानयोगिन इत्यर्थः ॥ ४१ ॥ **योगयोगिनस्तु** ज्ञानसहितयमाद्यष्टांगयोगोपायेन **प्राणाद्यनिलसंशान्तौ** सुषुम्नां प्रविश्य लयं गतेऽथ स्वातिरिक्तकलनाकल्पकमनसि सरूपविलयं

विरूपविलयं वा गतेऽथ मनःप्राणापह्नवसिद्धं ब्रह्म स्वमात्रमवशिष्यत इति युक्त्या ये **पदमागताः** ॥ ९० ॥ साङ्ख्ययोगिगम्यं भिद्यत इत्यत आह—**उपादेयमिति**। साङ्ख्यैः यत्पदमाप्यं तदेव योगिभिः आप्यते नेतरत् इत्यत्र—"यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते" इति स्मृतेः । योगसाङ्ख्ययोः एकार्थ-साधकत्वेन न तयोः भेदोऽस्तीत्यत्र—**एकार्थेति** ॥ ९१ ॥ तयोर्मध्ये—**एकस्मिन्नेवेति** । प्राणचेतसोरविनाभावं तयोः एकार्थलयतो मोक्षहेतुत्वं चाह—**अविनाभाविनीति** ॥ ९२–९३ ॥ स्वचित्तविकल्पितस्वातिरिक्तभ्रमं त्यजसि चेत् स्वयमेव अवशिष्यस इत्याह—**सर्वमिति** ॥ ९४ ॥ प्रत्यक्परचितोर्भेदः स्यादित्याशङ्क्य प्रत्यक्परादिशब्दैः महाचिदेकैव गीयते, न हि अनयोः भेदोऽस्तीत्याह—**महाचिदिति** ॥ ९५ ॥ स्वावृत्यसंभवात् **सकृद्विभाता** ॥९६॥

गुरोः स्वानुभवप्रकटनम्

सैवाहमिति निश्चित्य निदाघ कृतकृत्यवान् ।
न भूतं न भविष्यच्च चिन्तयामि कदाचन ॥ ९७ ॥
दृष्टिमालम्ब्य तिष्ठामि वर्तमानामिहात्मना ।
इदमद्य मया लब्धमिमं प्राप्स्यामि सुन्दरम् ॥ ९८ ॥
न स्तौमि न च निन्दामि [1]आत्मनोऽन्यन्नहि क्वचित् ।
न तुष्यामि शुभप्राप्तौ न खिद्याम्यशुभागमे ॥ ९९ ॥
प्रशान्तचापलं वीतशोकमस्तसमीहितम् ।
मनो मम मुने शान्तं तेन जीवाम्यनामयः ॥ ६० ॥
अयं बन्धुः परश्चायं ममायमयमन्यकः ।
इति ब्रह्मन् न जानामि संस्पर्शं न ददाम्यहम् ॥ ६१ ॥

[1] ह्यात्म—उ.

शिष्यप्रत्ययार्थं स्वानुभवं प्रकटयति—सैवेति । या प्रत्यक्परविभागासह-सत्तासामान्यरूपेण महाचिदवशिष्यते सैवाहम् ॥ ५७–६१ ॥

ब्रह्मभावाय चित्तनाशविधानम्

वासनामात्रसंत्यागाज्जरामरणवर्जितम् ।
सवासनं मनो ज्ञानं ज्ञेयं निर्वासनं मनः ॥ ६२ ॥
चित्ते त्यक्ते लयं याति द्वैतमेतच्च सर्वतः ।
शिष्यते परमं शान्तमेकमच्छमनामयम् ॥ ६३ ॥
अनन्तमजमव्यक्तमजरं शान्तमच्युतम् ।
अद्वितीयमनाद्यन्तं यदाद्यमुपलम्भनम् ॥ ६४ ॥
एकमाद्यन्तरहितं चिन्मात्रममलं ततम् ।
खादप्यतितरां सूक्ष्मं तद्ब्रह्मासि न संशयः ॥ ६५ ॥
दिक्कालाद्यनवच्छिन्नं स्वच्छं नित्योदितं ततम् ।
सर्वार्थमयमेकार्थं चिन्मात्रममलं भव ॥ ६६ ॥
सर्वमेकमिदं शान्तमादिमध्यान्तवर्जितम् ।
भावाभावमजं सर्वमिति मत्वा सुखी भव ॥ ६७ ॥
न बद्धोऽस्मि न मुक्तोऽस्मि ब्रह्मैवास्मि निरामयम् ।
द्वैतभावविमुक्तोऽस्मि सच्चिदानन्दलक्षणः ।
एवं भावय यत्नेन जीवन्मुक्तो भविष्यसि ॥ ६८ ॥
पदार्थवृन्दे देहादिधिया संत्यज्य दूरतः ।
आशीतलान्तःकरणो नित्यमात्मपरो भव ॥ ६९ ॥

इदं रम्यमिदं नेति बीजं ते दुःखसंततेः ।
तस्मिन् साम्याग्निना दग्धे दुःखस्यावसरः कुतः ॥ ७० ॥

स्वानुभवं प्रकटयित्वा हे निदाघ त्वमपि नानावासनाकलितं चित्तमुन्मूलयसि चेत् अचित्तचैत्यं ब्रह्मैव भवसीत्याह—वासनेति ॥ ६२ ॥ सशुभाशुभवासने चित्ते । द्वैतप्रळयान्निष्प्रतियोगिकं अद्वैतं शिष्यते ॥ ६३–६५ ॥ किं तद्ब्रह्म ? इत्यत्र—दिगिति । त्रिपरिच्छेदशून्यत्वात् दिक्कालाद्यनवच्छिन्नम् । तर्हि नानार्थं ब्रह्मेत्यत्र सर्वव्यक्तीनां भिन्नत्वेऽपि तदनुस्यूतप्रतीचो नानाघटशरावाद्यनुगतव्योमवत् ब्रह्म सर्वार्थमयमेकार्थम् ॥ ६६ ॥ किं च—सर्वमिति ॥ ६७ ॥ जीवन्मुक्तिलाभोपायमाह—नेति ॥ ६८ ॥ किं च—पदार्थेति ॥६९॥ दुःखे सति आत्मपरत्वं कुत इत्यत्र दुःखबीजाभावात् आत्मपरत्वमुपपद्यत इत्याह—इदमिति ॥ ७० ॥

शास्त्रार्थज्ञानध्यानादिभिः अद्वैतात्मलाभः

शास्त्रसज्जनसंपर्कैः प्रज्ञामादौ विवर्धयेत् ॥ ७१ ॥
ऋतं सत्यं परं ब्रह्म सर्वसंसारभेषजम् ।
अत्यर्थममलं नित्यमादिमध्यान्तवर्जितम् ॥ ७२ ॥
तथाऽस्थूलमनाकाशमसंस्पृश्यमचाक्षुषम् ।
न रसं न च गन्धाख्यमप्रमेयमनूपमम् ॥ ७३ ॥
आत्मानं सच्चिदानन्दमनन्तं ब्रह्म सुव्रत ।
अहमस्मीत्यभिध्यायेद्देहातीतं विमुक्तये ॥ ७४ ॥
समाधिः संविदुत्पत्तिः परजीवैकतां प्रति ।
नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः ॥ ७५ ॥
एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः ।
तस्मादद्वैत एवास्ति न प्रपञ्चो न संसृतिः ॥ ७६ ॥

यथाऽऽकाशो घटाकाशो महाकाश इतीरितः ।
तथा भ्रान्तेर्द्विधा प्रोक्तो ह्यात्मा जीवेश्वरात्मना ॥ ७७ ॥
यदा मनसि चैतन्यं भाति सर्वत्रगं सदा ।
योगिनोऽव्यवधानेन तदा संपद्यते स्वयम् ॥ ७८ ॥
यदा सर्वाणि भूतानि स्वात्मन्येव हि पश्यति ।
सर्वभूतेषु चात्मानं ब्रह्म संपद्यते तदा ॥ ७९ ॥
यदा सर्वाणि भूतानि समाधिस्थो न पश्यति ।
एकीभूतः परेणासौ तदा भवति केवलः ॥ ८० ॥

मुमुक्षुः स्वात्मलाभाय श्रुत्याचार्यप्रसादतः प्रज्ञां वर्धयन् "ऋतम्" इत्यादिविशेषणविशिष्टं ब्रह्मास्मीति ध्यायेत् इत्याह—**शास्त्रेति** ॥ ७१ ॥ तया किं ध्येयं? इत्यत्र व्यावहारिकं पारमार्थिकं च अपरं परं वा **ऋतमित्यादि** ॥ ७२–७४ ॥ एवं ध्यानेन किं स्यात् इत्यत्राद्वैतात्मा प्रसीदतीत्याह—**समाधिरिति** । एवं ध्याने कृतेऽथ समाधिः । ध्यानतः प्रत्यक्परैक्यविषयकज्ञान-मुदेति, ततः समाधिः, परमात्मा प्रादुर्भवतीत्याह—**नित्य इति** ॥ ७५ ॥ यस्मादेवं **तस्मात्** ॥ ७६ ॥ जीवेशभेदे सति अद्वैतसिद्धिः कुतः इत्यत आह—**यथेति** । परमार्थदृष्ट्या उपाधिविनिर्मुक्तमहाकाशवदात्मा एक एवेत्यर्थः ॥ ७७ ॥ यदैवं अद्वैतात्मानं योगी जानाति तदा निर्विशेषज्ञानसमकालं अयं केवलब्रह्मैव भवतीत्याह—**यदेति** । **तदा ब्रह्म संपद्यते स्वयम्** ॥ ७८ ॥ किं च—**यदेति** ॥ ७९ ॥ किं च—स्वातिरेकेण **यदा सर्वाणीति** ॥ ८० ॥

सप्तभूमिकाज्ञानतो मोक्षप्राप्तिः

शास्त्रसज्जनसंपर्कवैरा[1]ग्याभ्यासरूपिणी ।
प्रथमा भूमिकैषोक्ता मुमुक्षुत्वप्रदायिनी ॥ ८१ ॥

[1] ग्यरस—अ २, क.

विचारणा द्वितीया स्यात् तृतीया साङ्गभावना ।
विलायिनी चतुर्थी स्याद्वासनाविलयात्मिका ॥ ८२ ॥
शुद्धसंविन्मयाऽऽनन्दरूपा भवति पञ्चमी ।
अर्धसुप्तप्रबुद्धाभो जीवन्मुक्तोऽत्र तिष्ठति ॥ ८३ ॥
असंवेदनरूपा च षष्ठी भवति भूमिका ।
आनन्दैकघनाकारा सुषुप्तसदृशी स्थितिः ॥ ८४ ॥
तुर्यावस्थोपशान्ता सा मुक्तिरेव हि केवला ।
समता स्वच्छता सौम्या सप्तमी भूमिका भवेत् ॥ ८५ ॥
तुर्यातीता तु याऽऽवस्था परा निर्वाणरूपिणी ।
सप्तमी सा परा प्रौढा विषयो नैव जीवताम् ॥ ८६ ॥
पूर्वावस्थात्रयं तत्र जाग्रदित्येव संस्थितम् ।
चतुर्थी स्वप्न इत्युक्ता स्वप्नाभं यत्र वै जगत् ॥ ८७ ॥
आनन्दैकघनाकारा सुषुप्ताख्या तु पञ्चमी ।
असंवेदनरूपा तु षष्ठी तुर्यपदाभिधा ॥ ८८ ॥
तुर्यातीतपदावस्था सप्तमी भूमिकोत्तमा ।
मनोवचोभिरग्राह्या स्वप्रकाशसदात्मिका ॥ ८९ ॥
अन्तः प्रत्याहृतिवशाच्चैत्यं चेन्न विभावितम् ।
मुक्त एव न संदेहो महासमतया तया ॥ ९० ॥

निर्विशेषब्रह्मसौधविशालसोपानोपमसप्तभूमिकालक्षणं कीदृशं इत्यत आह—शास्त्रेति ॥ ८१–८३ ॥ सैव आनन्दैकघनाकारा ॥ ८४ ॥ इयं सप्तमी भूमिका जीवन्मुक्तानां विषयो न भवति, किंतु विदेहमुक्तात्मरूपेयमित्यर्थः

॥ ८५–८६ ॥ ज्ञानिजाग्रदादेः अज्ञानिजाग्रदादिवैलक्षण्यमाह—**पूर्वेति** । अभ्यासविचारणसांगभावनात्मकं **पूर्वावस्थात्रयम्** । या विलायिनी इति ख्याता **सेयं चतुर्थी** ॥ ८७ ॥ या संविदानन्दरूपिणी सेयं **आनन्दैकघनाकारेति** ॥ ८८–८९ ॥ अभ्यासादिसप्तभूमिका सम्यक् विवेचिता । एवं सप्तभूमिका-ज्ञानतो येन स्वातिरिक्तं न भावितं स मुक्तो भवतीत्याह—**अन्तरिति** ॥ ९० ॥

जीवन्मुक्तस्य शोकाभावः

न म्रिये न च जीवामि नाहं सन्नाप्यसन्मयः ।
[1]अहं न [2]किंचिच्चिदिति मत्वा धीरो न शोचति ॥ ९१ ॥
अलेपकोऽहमजरो नीरागः शान्तवासनः ।
निरंशोऽस्मि चिदाकाशमिति मत्वा न शोचति ॥ ९२ ॥
अहंमत्या विरहितः शुद्धो बुद्धोऽजरोऽमरः ।
शान्तः शमसमाभास इति मत्वा न शोचति ॥ ९३ ॥
तृणाग्रेष्वम्बरे भानौ नरनागामरेषु च ।
यस्तिष्ठति तदेवाहमिति मत्वा न शोचति ॥ ९४ ॥

एवंविदो जीवन्मुक्तस्यापि देहादिसत्त्वेन तद्विषयकशोकः स्यादित्यत आह—**नेति** ॥ ९१ ॥ किं च—**अलेपक** इति ॥ ९२–९३ ॥ **तदेव** स एव ॥ ९४ ॥

अनात्मभावनात्यागपुरस्सरं आत्ममात्रभावनाविधिः

भावनां सर्वभावेभ्यः समुत्सृज्य समुत्थितः ।
अवशिष्टं परं ब्रह्म केवलोऽ[3]स्मीति भावय ॥ ९५ ॥

[1] अहं तु—अ १. [2] त्वं च चि—अ. [3] स्तीति—उ.

वाचामतीतविषयो विषयाशादशोज्झितः ।
परानन्दरसाक्षुब्धो रमते स्वात्मनाऽऽत्मनि ॥ ९६ ॥
सर्वकर्मपरित्यागी नित्यतृप्तो निराश्रयः ।
न पुण्येन च पापेन नेतरेण च लिप्यते ॥ ९७ ॥
स्फटिकः प्रतिबिम्बेन यथा नायाति रञ्जनम् ।
तज्ज्ञः [1]कर्मफलेनान्तस्तथा नायाति रञ्जनम् ॥ ९८ ॥
विहरन् जनतावृन्दे देहकर्तनपूजनैः ।
खेदाह्लादौ न जानाति प्रतिबिम्बगतैरिव ॥ ९९ ॥
निस्स्तोत्रो निर्विकारश्च पूज्यपूजाविवर्जितः ।
संयुक्तश्च वियुक्तश्च सर्वाचारनयक्रमैः ॥ १०० ॥
तनुं त्यजतु वा तीर्थे श्वपचस्य गृहेऽथ वा ।
ज्ञानसंपत्तिसमये मुक्तोऽसौ विगताशयः ॥ १०१ ॥
संकल्पत्वं हि बन्धस्य कारणं तत् परित्यज ।
मोक्षो भवेदसंकल्पात् तदभ्यासं धिया कुरु ॥ १०२ ॥
सावधानो भव त्वं च ग्राह्यग्राहकसंगमे ।
अजस्रमेव संकल्पदशाः परिहरन् शनैः ॥ १०३ ॥
मा भव ग्राह्यभावात्मा ग्राहकात्मा च मा भव ।
भावनामखिलां त्यक्त्वा यच्छिष्टं तन्मयो भव ॥ १०४ ॥
किंचिच्चेद्रोचते तुभ्यं तद्बद्धोऽसि भवस्थितौ ।
न किंचिद्रोचते चेत्ते तन्मुक्तोऽसि भवस्थितौ ॥ १०५ ॥

[1] कथं—उ.

अस्मात् पदार्थनिचयाद्यावत् स्थावरजङ्गमात् ।
तृणादेर्देहपर्यन्तान्मा किंचित्तत्र रोचताम् ॥ १०६ ॥

त्वं तु स्वातिरिक्तभावनां विहाय स्वमात्रभावारूढो भवेत्याह—**भावनामिति** ॥ ९५ ॥ एवं केवलात्मदर्शी स्वात्ममात्ररतिः स्यादित्याह—**वाचामिति** ॥ ९६ ॥ स्वात्मरतेरप्यन्तःकरणयोगतः पुण्यपापलेपः स्यादित्यत आह—**सर्वेति** । कामसङ्कल्पादिना सह **सर्वकर्मेति** ॥ ९७ ॥ उक्तार्थमेव दृष्टान्तेन स्पष्टयति—**स्फटिक** इति ॥ ९८ ॥ इत्थंभूतो विद्वान् ब्रह्मभावनादृढिम्ना खेदादिकं न जानातीति सदृष्टान्तमाह—**विहरन्निति** ॥ ९९ ॥ एवं निष्प्रपञ्चदृष्टेरपि मुक्तिः पुण्यक्षेत्रमरणनिमित्ता इत्यत्राह—**निस्स्तोत्र** इति ॥ १०० ॥ "ज्ञानसमकालमेव मुक्तः" इति श्रुतेः ॥ १०१ ॥ त्वं आदौ बन्धहेतुसङ्कल्पं त्यजन् मुक्तिहेतुनिः-सङ्कल्पं भजेत्याह—**सङ्कल्पेति** ॥ १०२ ॥ किं च—**सावधान** इति ॥१०३॥ कदाऽपि **मा भव** ॥ १०४ ॥ शिष्टात्मभावापत्तौ उपायमाह—**किंचिदिति** ॥ १०५–१०६ ॥

तुरीयावस्था

अहंभावानहंभावौ त्यक्त्वा सदसती तथा ।
यदसक्तं समं स्वच्छं स्थितं तत्तुर्यमुच्यते ॥ १०७ ॥
या [1]स्वच्छा समता शान्ता जीवन्मुक्तव्यवस्थितिः ।
साक्ष्यवस्था व्यवहृतौ सा तुर्या कलनोच्यते ॥ १०८ ॥
नैतज्जाग्रन्न च स्वप्नः संकल्पाना[2]मसंभवात् ।
सुषुप्तभावो नोऽप्येतदभावाज्जडतास्थितेः ॥ १०९ ॥
शान्तसम्यक्प्रबुद्धानां यथास्थितमिदं जगत् ।
विलीनं तुर्यमित्याहुरबुद्धानां स्थितं स्थिरम् ॥ ११० ॥

[1] स्वस्था—अ.    [2] मभावनात्—उ.

अहंकारकलात्यागे समतायाः समुद्गमे ।
विशरारौ कृते चित्ते तुर्यावस्थोपतिष्ठते ॥ १११ ॥

स्वातिरिक्तसामान्यस्य शशविषाणवदवस्तुत्वेन रोचनानर्हत्वात् किं तत् रुच्यर्हमित्यत्र तुर्यमित्याह—**अहमिति** । देहादौ अहंभावेति । चाक्षुषाचाक्षुषवस्तुगोचरवृत्तिं च त्यक्त्वा **यदसक्तमिति** ॥ १०७ ॥ केयं तुर्यरूपिणी स्थितिरित्यत्र—**येति** ॥ १०८ ॥ तस्या जाग्रदादिभ्रमं वारयति—**नैतदिति** ॥ १०९ ॥ स्वज्ञानदशां जगद्ब्रह्मैव, स्वाज्ञदशां तु ब्रह्मैव जगदित्याह—**शान्तेति**। स्वातिरिक्तशान्तसम्यक्प्रबुद्धानां सम्यज्ज्ञानिनां **यथास्थितमिदं जगत्** स्वाज्ञगोचरमिदं जगत् यथास्थितं ब्रह्मैव जगद्विलयाधिष्ठानत्वात् ॥ ११० ॥ केयं तुर्यावस्था इत्यत आह—**अहङ्कारेति**। देहादौ **अहङ्कारेति** । सर्वसमब्रह्मगोचरेयं समता तस्याः समुद्गमे सम्यगुद्गमो लाभः तस्मिन् समतावृत्तिप्रादुर्भावे **विशरारौ कृते चित्ते**—"प्रणवो धनुः शरो ह्यात्मा" इति श्रुत्यनुरोधेन मनो हि शरः उच्यते, शरो यत्र विलीयते स विशरः अमनीभावः निर्विकल्पकसमाधिः, विशरे निर्विकल्पकसमाधौ[आ]रोहति प्रादुर्भवतीति विशरारुः प्रत्यगभिन्नपरमात्मा, तस्मिन् चित्ते तु लयं कृते सत्यथ तुर्यावस्थोपतिष्ठते ॥ १११ ॥

अध्यात्मशास्त्रसिद्धान्तः

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्याऽस्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥ ११२ ॥
शान्त एव चिदाकाशे स्वच्छे[1]शमसमात्मनि ।
[2]समस्तशक्तिखचिते ब्रह्मेति कलिताभिधे ॥ ११३ ॥
सर्वमेव परित्यज्य महामौनी भवानघ ।
निर्वाणवान् निर्मननः क्षीणचित्तः प्रशान्तधीः ॥ ११४ ॥

[1] दम—अ, अ १.    [2] समग्र—अ, अ १, क.

आत्मन्येवास्स्व शान्तात्मा मूकान्धबधिरोपमः ।
नित्यमन्त[1]र्मुखः स्वच्छः स्वात्मनाऽन्तः प्रपूर्णधीः ॥ ११५ ॥
जाग्रत्येव [2]सुषुप्तस्थः कुरु कर्माणि वै द्विज ।
अन्तः सर्वपरित्यागी बहिः कुरु यथाऽऽगतम् ॥ ११६ ॥
चित्तसत्ता परं दुःखं चित्तत्यागः परं सुखम् ।
अतश्चित्तं [3]चिदाकाशे नय क्षयमवेदनात् ॥ ११७ ॥
दृष्ट्वा रम्यमरम्यं वा स्थेयं पाषाणवत् [4]सदा ।
एतावताऽऽत्मयत्नेन जिता भवति संसृतिः ॥ ११८ ॥

ईशाद्यष्टोत्तरशतवेदान्तपरमसिद्धान्तः कीदृशः इत्यत आह—**सिद्धान्त-** इति । **सिद्धान्तोऽध्यात्मशास्त्राणां** ब्रह्मातिरिक्तस्य स्वाज्ञविकल्पितस्य **सर्वस्य** शशविषाणवत् अवस्तुतया **सर्वापह्नव एव हि** । मायातत्कार्ये सति कथं सर्वापह्नव उपपद्यते इत्यत्र **नाविद्याऽस्तीह नो माया** इति । कारणमायाऽभावे तत्कार्याविद्या कुत इत्यर्थः । यद्येवं तदा तदनुगतब्रह्माप्यपह्नवं भजतीत्यत आह— **शान्तं ब्रह्मेदमक्लममिति** । मायातत्कार्यशान्तं मायातत्कार्यापह्नवतो यन्न क्लमते न हीयते इत्यक्लमं निर्विशेषं ब्रह्म स्वमात्रमवशिष्यते इत्यर्थः ॥ ११२ ॥ एवं सर्वापह्नवसिद्धब्रह्ममात्रे स्वाज्ञदृष्टिप्रसक्तसर्वापह्नवं कृत्वा तूष्णींभावमेत्य मौनी भवेत्याह—**शान्त** इति । **समस्तस्वातिरिक्तग्रसनशक्तिखचिते** ॥ ११३ ॥ किं च—**निर्वाणवानिति** ॥११४॥ स्वातिरिक्तविषयग्रहणे **मूकान्धबधिरोपमः** । यदि रोचते तदा मनसा सर्वभावं त्यक्त्वा स्वाज्ञवत् वाह्यनटनं कुर्वित्याह— **नित्यमिति** ॥ ११५–११६ ॥ किमप्यवेदनात् सर्वानर्थकरं चित्तं विलाप्य तूष्णीं तिष्ठेत्याह—**चित्तेति** । यतः **चित्तसत्ता परं दुःखम्** ॥ ११७ ॥ एवं कृते त्वया स्वातिरिक्तभ्रान्तिः जिता भवतीत्युपसंहरति— **एतावतेति** ॥ ११८ ॥

[1] मुखे स्व—उ. मुखस्व—अ १, क. [2] सुपुप्ति—अ २, क.
[3] चिदेवात्मा—अ, अ १. [4] समम्—अ, अ २, क. समः—अ १.

वेदान्तसंप्रदायविधिः

वेदान्ते परमं गुह्यं पुराकल्पप्रचोदितम् ।
नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वै पुनः ॥ ११९ ॥
अन्नपूर्णोपनिषदं योऽधीते गुर्वनुग्रहात् ।
स जीवन्मुक्ततां प्राप्य ब्रह्मैव भवति स्वयम् ॥ १२० ॥

इत्युपनिषत् ॥

सर्ववेदान्तसम्प्रदायार्थं प्रकटयति—वेदान्त इति ॥ ११९ ॥ उपनिषत्पठनतदर्थवेदनफलमाह—अन्नपूर्णेति ॥ १२० ॥ इत्युपनिषच्छब्दः शास्त्रपरिसमाप्त्यर्थः ॥

इति पञ्चमोऽध्यायः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
अन्नपूर्णोपनिषदो व्याख्यानं लिखितं लघु ।
अन्नपूर्णोपनिषदो व्याख्याग्रन्थस्तु षट्छतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे सप्ततिसङ्ख्यापूरकं
अन्नपूर्णोपनिषद्विवरणं सम्पूर्णम्

# आत्मोपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

पुरुषत्रैविध्यम्

अथाङ्गिरास्त्रिविधः पुरुषोऽजायतात्माऽन्तरात्मा परमात्मा चेति ॥ १–१ ॥

यत्रानात्मप्रपञ्चोऽयमपह्नवपदं गतः ।
प्रतियोगिविनिर्मुक्तः परमात्माऽवशिष्यते ॥

इह खलु अथर्वणवेदप्रविभक्तेयं आत्मोपनिषत् स्वातिरिक्तेयत्ताप्रकटनव्यग्रा स्वमात्रपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । श्रुतिः अवान्तररूपेण आत्मान्तरात्मपरमात्मरूपं प्रकटयतीति यत् तद्विद्यास्तुत्यर्थम् । कदेयमवान्तररूपेण प्रवृत्तेत्यत्राह—अथेति । अथ यथोक्ताधिकारिसिद्ध्यनन्तरं अङ्गं स्वातिरिक्तं अङ्गि स्वमात्रं स्वाज्ञादिदृष्ट्यनुरोधेन त्रिधेव रातीत्यङ्गिराः परमात्मा त्रिविधः पुरुषोऽजायत ॥ १–१ ॥

आत्मस्वरूपम्

त्वक्चर्ममांसरोमाङ्गुष्ठाङ्गुल्यः पृष्ठवंशनखगुल्फोदरनाभिमेढ्रकट्यूरुकपोलश्रोत्रभ्रूललाटबाहुपार्श्वशिरोऽक्षीणि भवन्ति जायते म्रियत इत्येष आत्मा ॥ १–२ ॥

तत्र स्वाज्ञविकल्पितात्मा कीदृश इत्यत आह—त्वगिति । स्वाज्ञदृष्ट्या स्थूलशरीरस्य आत्मत्वं उपपद्यते इत्यर्थः ॥ १–२ ॥

अन्तरात्मस्वरूपम्

अथान्तरात्मा नाम पृथिव्यापस्तेजोवायुराकाशमिच्छाद्वेषसुखदुःखकाममोहविकल्पनादिस्मृति[1]लिङ्ग उदात्तानुदात्तह्रस्वदीर्घ[2]प्लुतःस्खलितगर्जितस्फुटितमुदितनृत्तगीतवादित्र[3]प्रलयाविजृंभितादिभिः श्रोता घ्राता रसयिता नेता कर्ता विज्ञानात्मा पुरुषः [4]पुराणः[5]न्यायमीमांसाधर्मशास्त्राणीति श्रवणघ्राणाकर्षणकर्म[6]विशेषणं करोत्येषोऽन्तरात्मा ॥

स्वाज्ञादिदृष्टिविकल्पितान्तरात्मा कीदृश इत्यत आह—अथेति । पृथिव्यादिव्यष्टिसमष्टिप्रपञ्चेषु जीवसूत्रान्तर्यामिरूपेण अततीत्यन्तरात्मा भवतीत्यर्थः ॥ १–३ ॥

परमात्मस्वरूपम्

अथ परमात्मा नाम यथाऽक्षर उपासनीयः स च प्राणायामप्रत्याहारधारणाध्यानसमाधियोगानुमानात्मचिन्तकवटकणिका वा श्यामाकतण्डुलो वा वालाग्रशतसहस्रविकल्पनादिभिः स लभ्यते [7]नोपलभ्यते न जायते न म्रियते न शुष्यति न क्लिद्यते न दह्यते न कम्पते न भिद्यते न [8]स्विद्यते निर्गुणः साक्षिभूतः शुद्धो

[1] लिङ्गोदा—अ २, क.
[2] प्लुतस्ख—उ.
[3] प्रलयवि—अ २, क.
[4] पुराणं—अ २, उ १, क.
[5] न्यायो—अ १, अ २, उ १, क.
[6] विशेषं—अ.
[7] सोप—अ १, अ २, उ १.
[8] स्थीयते—अ. छिद्यते—मु.

निरवयवात्मा केवलः सूक्ष्मो निर्ममो निरञ्जनो निर्विकारः शब्दस्पर्शरूपरसगन्धवर्जितो निर्विकल्पो निराकांक्षः सर्वव्यापी सोऽचिन्त्योऽ[1]निर्वर्ण्यश्च पुनात्यशुद्धान्यपूतानि निष्क्रियस्तस्य संसारो नास्ति ॥ १—४ ॥

स्वाज्ञदृष्ट्यनुभूयमानपरमात्मा कीदृशः इत्यत आह—अथेति । **परमात्मा नाम** कीदृश इत्यत्र **यथा** जीवकोटिभि**रक्षरो** बीजात्मा **ईश्वरः उपासनीयः सन्** उपलभ्यते तथा **स चैवं परमाक्षरः परमात्मा** ज्ञानसहित**प्राणायामादिषडंगयोगानुमानात्मचिन्तकैः वालाग्रशतसाहस्रैकभागादपि सुसूक्ष्मतया** सोऽहमिति चिन्त्यमानः सन्नुपलभ्यते । जन्मादिषड्भावविकारगुणत्रयादिविकल्पवैरळ्या**न्निर्गुण** इत्यादिविशेषणविशिष्टो**ऽनिर्वर्ण्यः** केनापि वर्णयितुमशक्यत्वात् "यतो वाचो निवर्तन्ते" इत्यादिश्रुतेः । इत्थंभूतोऽपि परमात्मा स्वाज्ञविकल्पितानन्तकोटिब्रह्माण्डानि **अपूतान्यपि** सच्चिदानन्दरूपेण तत् सर्वं व्याप्य **पुनाति** । तथा चेदयं सक्रियः संसारी स्यादित्यतः आह—**निष्क्रिय** इति । स्वाज्ञदृष्ट्या स्वातिरिक्तक्लेशाभावादद्वयः परमात्मेत्यर्थः ॥ १—४ ॥

वस्तुतो ब्रह्मणः अद्वयत्वनिरूपणम्

आत्मसंज्ञः शिवः शुद्ध एक एवाद्वयः सदा ।
ब्रह्मरूपतया ब्रह्म केवलं प्रतिभासते ॥ १ ॥
जगद्रूपतयाऽप्येतद्ब्रह्मैव प्रतिभासते ।
विद्याऽविद्यादिभेदेन भावाभावादिभेदतः ॥ २ ॥
गुरुशिष्यादिभेदेन ब्रह्मैव प्रतिभासते ।
ब्रह्मैव केवलं शुद्धं विद्यते तत्त्वदर्शने ॥ ३ ॥

[1] निर्वर्ण—अ, अ १.

न च विद्या न चाविद्या न जगच्च न चापरम् ।
सत्यत्वेन जगद्भानं संसारस्य प्रवर्तकम् ॥ ४ ॥
असत्यत्वेन भानं तु संसारस्य निवर्तकम् ।

आत्मान्तरात्मेत्यादिद्वैतस्य वर्णितत्वादद्वयत्वं कथं इत्यत आह—आत्मेति ॥ १ ॥ जगदादिरूपेण भानात् कथं ब्रह्मरूपतया भातीत्यत आह—जगदिति ॥ २ ॥ वस्तुतस्तु स्वाज्ञादिदृष्टिमोहे सत्यसति ब्रह्मैव केवलम् ॥ ३ ॥ अतस्मिन् तद्धीः संसारहेतुः अतस्मिन् अतद्धीः संसारनिवृत्तिहेतुः इत्याह—सत्यत्वेनेति ॥ ४ ॥

आत्मनः नित्यसिद्धत्वम्

घटोऽयमिति विज्ञातुं नियमः को न्वपेक्षते ॥ ५ ॥
विना प्रमाणसुष्ठुत्वं [1]यस्मिन् सति पदार्थधीः ।
अयमात्मा नित्यसिद्धः प्रमाणे सति भासते ॥ ६ ॥
न देशं नापि कालं वा न शुद्धिं वाऽप्यपेक्षते ।
देवदत्तोऽहमित्येतद्विज्ञानं निरपेक्षकम् ॥ ७ ॥
तद्वद्ब्रह्मविदोऽप्यस्य ब्रह्माहमिति वेदनम् ।
भानुनेव जगत् सर्वं भास्यते यस्य तेजसा ॥ ८ ॥
अनात्मकमसत्तुच्छं किं नु तस्यावभासकम् ।
वेदशास्त्रपुराणानि भूतानि सकलान्यपि ॥ ९ ॥
येनार्थवन्ति तं किं नु विज्ञातारं प्रकाशयेत् ।

[1] स्वस्मिन्—अ, अ १.

जगदपवादाधिकरणब्रह्मवेदने कोऽयं नियम इत्याकांक्षायां प्रमाणदृष्टिलाभे चित्तशुद्ध्यादिनियमसापेक्षेऽपि प्रमाणदृष्टौ सत्यां न कोऽपि नियमोऽस्तीति सदृष्टान्तमुपपादयति—घट इति ॥ ५–७ ॥ ब्रह्मदर्शनस्य प्रमाणसापेक्षकतया ब्रह्मावभासकं प्रमाणमित्यत आह—भानुनेति ॥ ८ ॥ यत् प्रमाणमिति मन्यसे तत् अनात्मकमिति ॥ ९ ॥

केवलात्मरतस्य कृतार्थत्वम्

क्षुधां देहव्यथां त्यक्त्वा बालः क्रीडति वस्तुनि ॥ १० ॥
तथैव विद्वान् रमते निर्ममो निरहं सुखी ।
कामान्निष्कामरूपी [1]संचरत्येकचरो मुनिः ॥ ११ ॥
स्वात्मनैव सदा तुष्टः स्वयं सर्वात्मना स्थितः ।
निर्धनोऽपि सदा तुष्टोऽप्यसहायो महाबलः ॥ १२ ॥
नित्यतृप्तोऽप्यभुञ्जानोऽप्यसमः समदर्शनः ।
कुर्वन्नपि न कुर्वाणश्चाभोक्ता फलभोग्यपि ॥ १३ ॥
शरीर्यप्यशरीर्येष परिच्छिन्नोऽपि सर्वगः ।
अशरीरं सदा सन्तमिमं ब्रह्मविदं क्वचित् ॥ १४ ॥
प्रियाप्रिये न स्पृशतस्तथैव च शुभाशुभे ।
तमसा ग्रस्तवद्भानादग्रस्तोऽपि रविर्जनैः ॥ १५ ॥
ग्रस्त इत्युच्यते भ्रान्त्या ह्यज्ञात्वा वस्तुलक्षणम् ।
तद्वद्देहादिबन्धेभ्यो विमुक्तं ब्रह्मवित्तमम् ॥ १६ ॥

[1] सन् चर—अ, अ १, अ २, क.

पश्यन्ति देहिवन्मूढाः शरीराभासदर्शनात् ।
अहिनिर्ल्वयनीवायं मुक्तदेहस्तु तिष्ठति ॥ १७ ॥
इतस्ततश्चाल्यमानो यत्किंचित्प्राणवायुना ।
स्रोतसा नीयते दारु यथा निम्नोन्नतस्थलम् ॥ १८ ॥
दैवेन नीयते देहो यथा कालोप[1]भुक्तिषु ।
लक्ष्यालक्ष्यगतिं त्यक्त्वा यस्तिष्ठेत् केवलात्मना ॥ १९ ॥
शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः ।
जीवन्नेव सदा मुक्तः कृतार्थो ब्रह्मवित्तमः ॥ २० ॥
उपाधिनाशाद्ब्रह्मैव सन् ब्रह्माप्येति निर्द्वयम् ।
शैलूषो वेषसद्भावाभावयोश्च यथा पुमान् ॥ २१ ॥
तथैव ब्रह्मविच्छ्रेष्ठः सदा ब्रह्मैव नापरः ।

प्रमाणेन स्वाज्ञानावृतिः भिद्यते, ब्रह्म स्वेनैव प्रकाशते, स्वाज्ञानावृतिभेदने प्रमाणमुपयुज्यते इत्यर्थः । एवं विद्वान् स्वातिरिक्तरतिं त्यक्त्वा स्वात्मरतिः जीवन्मुक्तो भवतीत्याह—क्षुधामिति ॥ १०–११ ॥ धनसहायभोजनादिविरलस्य बलतुष्ट्यादिकं कथं सम्भवतीत्यत आह—निर्धन इति ॥ १२–१३ ॥ स्वाज्ञदृष्ट्या अस्य प्रियाप्रियादिस्पर्शनं, न स्वज्ञदृष्ट्येत्याह—अशरीरमिति ॥ १४–१६ ॥ तस्यापि व्यापारवद्देहसत्त्वादज्ञवदयमपि बध्यत इत्यत्र स्वदृष्ट्या देहोऽस्ति नास्तीति विभ्रमाभावात् अयं ब्रह्मवित् ब्रह्मैवेत्याह—अहीति । अहिनिर्ल्वयनी सर्पत्वक् ॥ १७–१८ ॥ देहो मे अस्ति नास्तीति लक्ष्यालक्ष्यगतिम् ॥ १९ ॥ आभासतोऽपि स्वातिरिक्तदेहादिकमस्तीति यो मन्यते तदा अस्य जीवन्मुक्तिः, तन्नाशात् विदेहमुक्तिः स्यादित्याह—जीवन्निति ॥ २० ॥ उक्तार्थमेव दृष्टान्तेन स्पष्टयति —शैलूष इति ॥ २१ ॥

[1] पत्तिपु—क.

ब्रह्मविदो ब्रह्मत्वम्

घटे नष्टे यथा व्योम व्योमैव भवति स्वयम् ॥ २२ ॥
तथैवोपाधिविलये ब्रह्मैव ब्रह्मवित् स्वयम् ।
क्षीरं क्षीरे यथा क्षिप्तं तैलं तैले जलं जले ॥ २३ ॥
संयुक्तमेकतां याति तथाऽऽत्मन्यात्मविन्मुनिः ।

ब्रह्मविदो ब्रह्मत्वे उपपत्तिमाह—घट इति । घटे नष्टे स्थिते वा ॥२२॥ उपाधिविलये स्थिते वा । यदि प्रत्यक्परयोः भेददृष्टिः तदा—क्षीरमिति ॥२३॥

ब्रह्मविदः सर्वविकल्पासम्भवः

एवं विदेहकैवल्यं सन्मात्रत्वमखण्डितम् ॥ २४ ॥
ब्रह्मभावं प्रपद्यैष यतिर्नावर्तते पुनः ।
सदात्मकत्वविज्ञानदग्धाविद्यादिवर्ष्मणः ॥ २५ ॥
अमुष्य ब्रह्मभूतत्वाद्ब्रह्मणः कुत उद्भवः ।
मायाक्लृप्तौ बन्धमोक्षौ न स्तः स्वात्मनि वस्तुतः ॥ २६ ॥
यथा रज्जौ निष्क्रियायां सर्पाभासविनिर्गमौ ।
[1]आवृतः सदसत्त्वाभ्यां वक्तव्ये बन्धमोक्षणे ॥ २७ ॥
[2]नावृतिर्ब्रह्मणः काचिदन्याभावादनावृतम् ।
अस्तीति प्रत्ययो यश्च यश्च नास्तीति वस्तुनि ॥ २८ ॥
बुद्धेरेव गुणावेतौ न तु नित्यस्य वस्तुनः ।
अतस्तौ मायया क्लृप्तौ बन्धमोक्षौ न चात्मनि ॥ २९ ॥

[1] अवृतेः—अ१. [2] न वृतिः—अ २.

निष्कले निष्क्रिये शान्ते निरवद्ये निरञ्जने ।
अद्वितीये परे तत्त्वे व्योमवत् कल्पना कुतः ॥ ३० ॥
न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ३१ ॥

इत्युपनिषत् ॥

एकीकृतक्षीरादेः पृथक्करणवत् ब्रह्मण्येकीभावमापन्नविदेहमुक्तस्यापि पुनर्भवः स्यादित्यत आह—एवमिति ॥ २४–२५ ॥ ज्ञानाग्निदग्धशरीरस्य **अमुष्य** । ब्रह्मविदो ब्रह्मत्वे पुनः बन्धमोक्षादिव्यवस्था कुत इत्यत आह—**मायेति** ॥ २६–२८ ॥ यत एवं **अतस्ताविति** ॥ २९ ॥ निष्प्रतियोगिकाद्वितीयस्य तथा निर्विकल्पत्वात् विकल्पासम्भवोक्तिः युज्यत इत्यर्थः ॥३०॥ वस्तुतस्तु **न निरोध** इति । निष्प्रतियोगिकब्रह्ममात्रावगतेः मायातत्कार्यतदुत्पत्तिप्रलयबन्धमोक्षादिविभ्रमापह्नवपूर्वकत्वात् परमात्मा निष्प्रतियोगिकाद्वैत एवेति परमोऽयं सिद्धान्तः । इत्युपनिषच्छब्दः आत्मोपनिषत्परिसमाप्त्यर्थः ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणमात्मोपनिषदो लघु ।
आत्मोपनिषदो व्याख्याग्रन्थः पञ्चाशदीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे षट्सप्ततिसंख्यापूरकं
आत्मोपनिषद्विवरणं सम्पूर्णम्

# आत्मबोधोपनिषत्

## वाङ् मे मनसि—इति शान्तिः

प्रणवाष्टाक्षरीमन्त्रोपासना

प्रत्यगानन्दं ब्रह्म पुरुषं प्रणवस्वरूपं अकार उकारो मकार इति त्र्यक्षरं प्रणवं तदेतदोमिति यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् ॐ नमो नारायणाय शङ्खचक्रगदाधराय। तस्मात् ॐ नमो नारायणायेति मन्त्रोपासको वैकुण्ठभवनं गमिष्यति ॥१॥

श्रीमन्नारायणाकारमष्टाक्षरमहाशयम्।
स्वमात्रानुभवात् सिद्धमात्मबोधं हरिं भजे ॥

इह खलु ऋग्वेदप्रविभक्तेयं आत्मप्रबोधोपनिषत् प्रणवाष्टाक्षरजपफलप्रकटनपूर्वकं निर्विशेषब्रह्मयाथात्म्यं प्रकटयन्ती प्रवृत्ता। तस्याः स्वल्पग्रन्थतो विवरणमारभ्यते। आदौ तावत् प्रणवार्थप्रत्यगभिन्नब्रह्मस्वरूपमाचष्टे—**प्रत्यगानन्दमिति**। परात् दुःखप्रपञ्च[ञ्चात्]प्रातिलोम्येनाञ्चनात् **प्रत्यक् आनन्दं** आनन्दः तदभिन्नं **ब्रह्म**, स्वेन रूपेण सर्वपूरणात् **पुरुषं, प्रणवस्वरूपं** प्रत्यगभिन्नब्रह्मणः प्रणवार्थत्वात्। लिंगव्यत्ययः। किंविशेषणविशिष्टं प्रणवस्वरूपमित्यत आह—**अकार** इति। प्रणवाष्टाक्षरीमन्त्रोपासनया योगी भवबन्धात् विमुक्तः सन् तत्पदं प्राप्नोतीत्याह—**यमुक्त्वेति**। अष्टाक्षरविद्यमाननमःशब्देन

त्वंपदलक्ष्यमुच्यते, **नारायणशब्देन** तत्पदलक्ष्यम् । तदुपरि विद्यमानचतुर्थ्या तयोरेकत्वमवगम्यते । एवमुपासको **वैकुण्ठभवनं** ब्रह्मपदं प्राप्नोतीत्यर्थः ॥ १ ॥

प्रणवाभिन्नब्रह्मपदस्वरूपम्

अथ यदिदं ब्रह्मपुरं पुण्डरीकं तस्मात्तडिदाभमात्रं दीपवत्प्रकाशम् ॥ २ ॥

ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदनः ।
ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरच्युतः ॥ ३ ॥

सर्वभूतस्थमेकं नारायणं कारणपुरुषमकारणं परं ब्रह्मोम् ॥ ४ ॥

ब्रह्मपदं कीदृशं इत्यत आह—अथेति । **अथ** नारायणतारकोपासनानन्तरं यस्मात् कारणात् **यदिदं** हृत्पुण्डरीकमेव ब्रह्मोपलब्धिस्थानतया **ब्रह्मपुरं** भवति **तस्मात्** तदेव **तडिदाभमात्रं दीपवत्** प्रत्यक्प्रकाशात्मकं विज्ञेयम् ॥२॥ तदधिष्ठाता क इत्यत आह—**ब्रह्मण्य** इति । चतुश्चत्वारिंशत्संस्कारविशिष्टब्राह्मण-पटलमेव देवं स्वरूपं वा यस्य सोऽयं **ब्रह्मण्यः** । " देवकी ब्रह्मविद्या सा या वेदैरुपगीयते " इति श्रुत्यनुरोधेन **देवकीपुत्रः**, ब्रह्मविद्याप्रादुर्भूतस्वरूपत्वात् । स्वातिरिक्तप्रपञ्चात्मकं मधुं निश्शेषं सूदयतीति **मधुसूदनः** । स एव **पुण्डरीकाक्षो विष्णुः अच्युत** इत्यर्थः ॥ ३ ॥ प्रणवार्थं ब्रह्म तद्भिन्नमित्यत आह—**सर्वेति** । स्वाज्ञविकल्पितसर्वभूतेषु स्वज्ञदृष्ट्या प्रत्यगभिन्नब्रह्मरूपेण तिष्ठतीति **सर्वभूतस्थं एकं** अद्वितीयं, नरं स्वाविद्यापदं तदेव नारं तदयनं अधिष्ठानं **नारायणस्वरूपं**, सर्वकारणतया सर्वपूरणात् **कारणपुरुषरूपं**, यत्कार्यासम्भवप्रबोधसिद्धं तद**कारणं**, तदेव ओङ्कारार्थतुर्यतुरीयं **परं ब्रह्म ओमि**त्याख्यातम् ॥ ४ ॥

प्रणवज्ञानेन अमृतत्वप्राप्तिः

शोकमोहविनिर्मुक्तं विष्णुं ध्यायन् न सीदति द्वैताद्वैतमभयं भवति मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ ५ ॥

तद्याथात्म्यज्ञानाज्ञानाभ्यां अमृतत्वं तद्विपरीत्यं चाह—शोकेति । शोकमोहविनिर्मुक्तं, तद्धेत्वन्तःकरणाभावात् । विष्णुतत्त्वं स्वमात्रमिति ध्यायन् कदाऽपि स्वतिरिक्तभ्रमतो न सीदति न नश्यति । यज्ज्ञानतः स्वातिरिक्तद्वैतं अद्वैतभावमेत्य अभयं भवति तद्यदा यो नानेव पश्यति सोऽयं मृत्योः स मृत्युमाप्नोतीत्यर्थः ॥ ५ ॥

प्रत्यगभिन्नब्रह्मज्ञानं तत्फलं च

हृत्पद्ममध्ये सर्वं तत प्रज्ञानेत्रं प्रज्ञानेत्रे प्रतिष्ठितं प्रज्ञानेत्रो लोकः प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म ॥ ६ ॥ स एतेन [1]प्रज्ञेनात्मनाऽस्माल्लोकादुत्क्रम्यामुष्मिन् स्वर्गे लोके सर्वान् कामानाप्त्वाऽमृतः समभवदमृतः समभवत् ॥ ७ ॥ [2]यत्र ज्योतिरजस्रं यस्मिन् लोकेऽभ्यर्हितं तस्मिन् मा देही स्वमानमृते लोके अक्षते अच्युते [3]लोके अक्षते अमृतत्वं च गच्छन्त्यों नमः ॥ ८ ॥

शोकमोहविनिर्मुक्तं विष्णुं ध्यायतो हृत्पद्ममध्ये—इत्येतत् ऐतरेयषष्ठाध्याये सम्यक् व्याख्यातम् ॥ ६–७ ॥ प्रज्ञानं ब्रह्मेति प्रत्यगभिन्नब्रह्मज्ञानफलमाह—यत्रेति । यत्र यस्मिन् प्रत्यगभिन्ने ब्रह्मणि तद्रूपेण लोक्यत इति लोके स्वरूपभूतं ज्योतिरभ्यर्हितं सर्वप्राण्यात्मतया सेवितं अजस्रं विजृम्भते तद्गतपराङ्निरूपितप्रत्यगभिन्नब्रह्मविकल्पितविशेषमात्रापह्नवसिद्धं यत् तस्मिन् स्वमानमृते स्वयंभावविरळे अक्षते स्वाविद्याद्वयतत्कार्यक्षतरहिते स्वमात्रतोऽच्युते ब्रह्ममात्रलोके निष्प्रतियोगिकाखण्डानन्दविभवे । स्वज्ञानाग्निना "दह भस्मीकरणे" इति व्युत्पत्त्या देहः स्वाविद्यापादः । तदारोपापवादाधारतया तद्वान् देही विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तविभवः । जात्यभिमानयथोक्तदेह-

[1] प्रज्ञाना—अ १.
[2] यस्मिन्—अ १.
[3] "लोके अक्षते"—अयं भागो (अ १.) कोशे लुप्तः.

तन्निरूपितदेहिनो निष्प्रतियोगिकाभावरूपत्वात् कालत्रयेऽपि देहदेह्यस्ति नास्तीति वा विभ्रमो न विद्यते। यदेवं स्वातिरिक्तकलनापह्नवसिद्धं ओङ्कारार्थ-तुर्यतुर्याय नम इति तुर्यतुर्यैक्यानुसन्धानं ये कुर्वन्ति ते कंचित्कालं जीवन्मुक्ता भूत्वा अथ अमृतत्वं विदेहमुक्तकैवल्यं च गच्छन्ति। यद्वा—नमःशब्दो मन्त्र-परिसमाप्त्यर्थः ॥ ८ ॥

इति प्रथमः खण्डः

---

उत्तमाधिकारिब्रह्ममात्रानुभूतिप्रकाशः

प्रगलितनिजमायोऽहं निस्तुलदृशिरूपवस्तुमात्रोऽहम्।
अस्तमिताहंतोऽहं प्रगलितजगदीशजीवभेदोऽहम् ॥ १ ॥
प्रत्यगभिन्नपरोऽहं विध्वस्ताशेषविधिनिषेधोऽहम्।
समुदस्ताश्रमितोऽहं प्रविततसुखपूर्णसंविदेवाहम् ॥ २ ॥
साक्ष्यहमनपेक्षोऽहं निजमहिम्नि संस्थितोऽहमचलोऽहम्।
अजरोऽहमव्ययोऽहं पक्षविपक्षादिभेदविधुरोऽहम् ॥ ३ ॥
अवबोधैकरसोऽहं मोक्षानन्दैकसिन्धुरेवाहम्।
सूक्ष्मोऽहमक्षरोऽहं विगलितगुणजालकेवलात्माऽहम् ॥ ४ ॥
निस्त्रैगुण्यपदोऽहं कुक्षिस्थानेकलोककलनोऽहम्।
कूटस्थचेतनोऽहं निष्क्रियधामाहमप्रतर्क्योऽहम् ॥ ५ ॥
एकोऽहमविकलोऽहं निर्मलनिर्वाणमूर्तिरेवाहम्।
निरवयवोऽहमजोऽहं केवलसन्मात्रसारभूतोऽहम् ॥ ६ ॥

निरवधिनिजबोधोऽहं शुभतरभावोऽहमप्रमेयोऽहम् ।
विभुरहमनवद्योऽहं निरवधिनिःसीमसत्त्वमात्रोऽहम् ॥ ७ ॥
वेद्योऽहमागमान्तैराराध्योऽहं सकलभुवनहृद्योऽहम् ।
परमानन्दघनोऽहं परमानन्दैकभूमरूपोऽहम् ॥ ८ ॥
शुद्धोऽहमद्वयोऽहं संततभातोऽहमादिशून्योऽहम् ।
शमितान्तत्रितयोऽहं बुद्धो मुक्तोऽहमद्भुतात्माऽहम् ॥ ९ ॥
शुद्धोऽहमान्तरोऽहं शाश्वतविज्ञानसमरसात्माऽहम् ।
शोधितपरतत्त्वोऽहं बोधानन्दैकमूर्तिरेवाहम् ॥ १० ॥

परमदयावती आत्मप्रबोधोपनिषत् प्रणवाष्टाक्षरमुखेन निष्प्रतियोगिकब्रह्ममात्रस्वरूपमभिधाय अथ उत्तमाधिकारिणां ब्रह्ममात्रानुभूतिं मध्यमाधिकारिणां मननप्रकारं तत्फलं चोक्त्वोपररामेति श्रुतिराह—प्रगलितेति । अस्तमिताहन्तोऽहं, अहङ्कारास्पददेहाद्यभावात् ॥ १ ॥ वृत्त्याद्याश्रमो येन सम्यगुदस्तः निरस्तः सोऽहं समुदस्ताश्रमितः ॥ २ ॥ पक्षविपक्षादिभेदविधुरोऽहं, वादिप्रतिवादिकलनावैरळ्यात् ॥ ३–८ ॥ देशतः कालतो वस्तुतोऽन्तः परिच्छेदो येन शमितः सोऽहं शमितान्तत्रितयः,

न व्यापित्वाद्देशतोऽन्तः कारणत्वान्न कालतः ।
न वस्तुतोऽपि सार्वात्म्यादानन्त्यं ब्रह्मणि त्रिधा ॥

इति चन्द्रिकोक्तेः ॥ ९ ॥ इत्यादिस्वानुभूतिवाक्यानि वक्ष्यमाणमननवाक्यानि च प्रायशो महावाक्यरत्नावलीप्रभालोचने व्याख्यातानि ॥ १० ॥

मध्यमाधिकारिमननप्रकारः

विवेकयुक्तिबुद्ध्याऽहं जानाम्यात्मानमद्वयम् ।
तथाऽपि बन्धमोक्षादिव्यवहारः प्रतीयते ॥ ११ ॥

निवृत्तोऽपि प्रपञ्चो मे सत्यवद्भाति सर्वदा ।
सर्पादौ [1]रज्जुसत्तेव ब्रह्मसत्तैव केवलम् ॥ १२ ॥
प्रपञ्चाधाररूपेण वर्ततेऽतो जगन्नहि ।
यथेक्षुरससंव्याप्ता शर्करा वर्तते तथा ॥ १३ ॥
[2]अद्वयानन्दरूपेण व्याप्तोऽहं वै जगत् त्रयम् ।
ब्रह्मादिकीटपर्यन्ताः प्राणिनो मयि कल्पिताः ॥ १४ ॥
बुद्बुदादिविकारान्तस्तरङ्गः सागरे यथा ।
तरङ्गस्थं द्रवं सिन्धुर्न वाञ्छति यथा तथा ॥ १५ ॥
विषयानन्दवाञ्छा मे मा भूदानन्द[3]रूपतः ।
दारिद्र्याशा यथा नास्ति संपन्नस्य तथा मम ॥ १६ ॥
ब्रह्मानन्दे निमग्नस्य विषयाशा न तद्भवेत् ।
विषं दृष्ट्वाऽमृतं दृष्ट्वा विषं त्यजति बुद्धिमान् ॥ १७ ॥
आत्मानमपि दृष्ट्वाऽहमनात्मानं त्यजाम्यहम् ।
घटावभासको भानुर्घटनाशे न नश्यति ॥ १८ ॥
देहावभासकः साक्षी देहनाशे न नश्यति ।
न मे बन्धो न मे मुक्तिर्न मे शास्त्रं न मे गुरुः ॥ १९ ॥
मायामात्रविकासत्वान्मायातीतोऽहमद्वयः ।
प्राणाश्चलन्तु तद्धर्मैः कामैर्वा हन्यतां मनः ॥ २० ॥

[1] रज्जुसत्तैव—अ १, अ २. रज्जुसर्पैव—उ.
[2] अद्वयब्रह्म—क. अद्वयं ब्रह्म—अ १, अ २. [3] रूपकः—उ १.

आनन्दबुद्धिपूर्णस्य मम दुःखं कथं भवेत् ।
आत्मानमञ्जसा वेद्मि क्वाप्यज्ञानं पलायितम् ॥ २१ ॥
कर्तृत्वमद्य मे नष्टं कर्तव्यं वाऽपि न क्वचित् ।
ब्राह्मण्यं कुलगोत्रे च नामसौन्दर्यजातयः ॥ २२ ॥
स्थूलदेहगता एते स्थूलाद्भिन्नस्य मे न हि ।
क्षुत्पिपा[1]साऽऽन्ध्यबाधिर्यकामक्रोधादयोऽखिलाः ॥ २३ ॥
लिङ्गदेहगता एते ह्यलिङ्गस्य न विद्यते ।
जडत्वप्रियमोदत्वधर्माः कारणदेहगाः ॥ २४ ॥
न सन्ति मम नित्यस्य निर्विकारस्वरूपिणः ।
उलूकस्य यथा भानुरन्धकारः प्रतीयते ॥ २५ ॥
स्वप्रकाशे परानन्दे तमो मूढस्य जायते ।
चक्षुर्दृष्टिनिरोधेऽभ्रैः सूर्यो नास्तीति मन्यते ॥ २६ ॥
तथाऽज्ञानावृतो देही ब्रह्म नास्तीति मन्यते ।
यथाऽमृतं विषाद्भिन्नं विषदोषैर्न लिप्यते ॥ २७ ॥
न स्पृशामि जडाद्भिन्नो जडदोषान् प्रकाशतः ।
स्वल्पाऽपि दीपकणिका बहुलं नाशयेत्तमः ॥ २८ ॥
स्वल्पोऽपि बोधो [2]महतीमविद्यां नाशये[3]त्तथा ।
कालत्रये यथा सर्पो रज्जौ नास्ति तथा मयि ॥ २९ ॥

[1] सान्ध—क, अ १, अ २, उ १.

[2] महति बहुलं—क, अ २.

[3] ततः—उ.

अहंकारादिदेहान्तं जगन्नास्त्यहमद्वयः ।
चिद्रूपत्वान्न मे जाड्यं सत्यत्वान्नानृतं मम ॥ ३० ॥
आनन्दत्वान्न मे दुःखमज्ञानाद्भाति सत्यवत् ।

अथ मननप्रकारमाह—विवेकेति ॥ ११–१९ ॥ तद्धर्मैः उच्छ्वासनिश्वासैः ॥ २०–२१ ॥ मम देहत्रयविलक्षणतो देहत्रयधर्माः न मे सन्तीत्याह —ब्राह्मण्यमित्यादि ॥ २२–२५ ॥ यथा चक्षुर्दृष्टिनिरोधे ॥२६–३० ॥ एवं मननतः स्वानुभूतिः जायते । स्वानुभूतौ सिद्धायां सर्वापह्नवसिद्धब्रह्ममात्रज्ञानमुदेति । तज्ज्ञानसमकालं विद्वान् तन्मात्रेण अवशिष्यते । विदेहमुक्तो भवतीत्यर्थः ॥

उपनिषदभ्यासफलम्

आत्मप्रबोधोपनिषदं मुहूर्तमुपासित्वा न च पुनरावर्तते न च
पुनरावर्तत ॥ इत्युपनिषत् ॥ ३१ ॥

ग्रन्थतदर्थपठनश्रवणफलं वदन्नुपसंहरति—आत्मेति । यथोक्तामात्मप्रबोधोपनिषदं मुहूर्तमुपासित्वा ग्रन्थतोऽर्थतो वा यः पठति सोऽयं ब्रह्मलोकं कैवल्यं वा प्राप्य न च कदाऽपि पुनरावर्तते । आवृत्तिरादरार्था । इत्युपनिषच्छब्दः आत्मप्रबोधोपनिषत्समाप्त्यर्थः ॥

इति द्वितीयः खण्डः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
आत्मप्रबोधोपनिषद्व्याख्यानं लिखितं लघु ।
प्रकृतोपनिषद्व्याख्याग्रन्थो नवतिरीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे द्विचत्वारिंशत्संख्यापूरकं
आत्मप्रबोधोपनिषद्विवरणं सम्पूर्णम्

---

# एकाक्षरोपनिषत्

## सह नाववतु—इति शान्तिः

सर्वात्मकतया नारायणस्तुतिः

एकाक्षरं त्वक्षरे[1]तोऽसि [2]सोमे [3]सुषुम्नया चेह दृढी [4]न एकः ।
त्वं [5]विश्वभूर्भूतपतिः पुराणः पर्जन्य एको भुवनस्य गोप्ता ॥१॥
विश्वे निमग्नः पदवीः कवीनां त्वं जातवेदो भुवनस्य नाथः ।
अजातमग्रे स हिरण्यरेता यज्ञस्त्वमेवैकविभुः पुराणः ॥ २ ॥
प्राणः प्रसूतिर्भुवनस्य योनिर्व्याप्तं त्वया एकपदेन विश्वम् ।
त्वं [6]विश्वभूत्योनि[7]परा[8]सु गर्भे कुमार एको विशिखः सुधन्वा ॥
वितत्य बाणं [9]तरुणार्कवर्णं [10]व्योमान्तरे भासि हिरण्यगर्भः ।
भासा त्वया व्योम्नि कृतः सुताक्ष्यस्त्वं वै कुमारस्त्वमरिष्टनेमिः ॥
त्वं वज्रभृद्भूतपतिस्त्वमेव कामः प्रजानां निहितोऽसि [11]सोमे ।
स्वाहा स्वधा यच्च वषट् करोति रुद्रः पशूनां गुहया [12]निरुग्नः ॥५॥

[1] त्रास्ति—अ.
[2] सोम—अ १.
[3] सुषुम्नाया—अ.
[4] स—अ.
[5] विश्वभूभू—अ, अ १.
[6] विश्वभूर्यो—अ.
[7] परोसि—अ. परांसु—अ १.
[8] स्वग—क, अ २.
[9] तरुणाक्ष—अ १.
[10] योमा—अ १, क.
[11] सोम—उ.
[12] निमग्नः—क, अ, अ २.

धाता विधाता पवनः सुपर्णो विष्णुर्वराहो रजनी रहश्च ।
भूतं भविष्यत्प्र[1]भवः क्रियाश्च कालः क्रमस्त्वं परमाक्षरं च ॥६॥
ऋचो यजूंषि प्रसवन्ति वक्रात् सामानि सम्राड्वसुरन्तरिक्षम् ।
त्वं यज्ञनेता हुतभुग्विभुश्च [2]रुद्रास्तथा दैत्यगणा [3]वसुश्च ॥ ७ ॥
स एष देवोऽम्बरयानचक्रे [4]अन्येऽभ्यतिष्ठेत तमो [5]निरुन्ध्यः ।
हिरण्मयं यस्य विभाति सर्वं व्योमान्तरे रश्मिमिमं सुनाभिः ॥
स सर्ववेत्ता भुवनस्य गोप्ता नाभिः प्रजानां निहिता जनानाम् ।
प्रोता त्वमोता विचितिः क्रमाणां प्रजापतिश्छन्दमयो विगर्भः ॥
सामैश्चिदन्तो विरजश्च बाहुं हिरण्मयं वेदविदां वरिष्ठम् ।
यमध्वरे ब्रह्मविदः स्तुवन्ति सामैर्यजुर्भिः क्रतुभिस्त्वमेव ॥१०॥
त्वं स्त्री पुमांस्त्वं च कुमार एकस्त्वं वै कुमारी ह्यथ भूस्त्वमेव।
त्वमेव धाता वरुणश्च राजा त्वं [6]वत्सरोऽर्यम एव सर्वम् ॥११॥
मित्रः सुपर्णश्चन्द्र इन्द्रो वरुणो रुद्रस्त्वष्टा विष्णुः सविता गोपतिस्त्वम् ।
त्वं विष्णुर्भूतानि [7]तु त्रासि [8]दैत्यात्त्वयाऽऽवृतं [9]जगदुद्भवगर्भः ।
त्वं भूर्भुवः स्वस्त्वं हि स्वयंभूरथ विश्वतोमुखः ॥ १२ ॥

[1] सवः—अ.
[2] रुद्र—अ.
[3] विभुश्च—क, अ २.
[4] अन्यो—अ, अ १.
[5] निरुन्ध्य—अ, अ १.
[6] वत्सरोग्निर्यम—अ, अ १, अ २, क.
[7] कुत्रासि—अ १, अ २, क.
[8] दैत्यांस्त्वया—अ, अ १.
[9] न विदुर्भवगर्भम्—अ.

एकाक्षरपदारूढं सर्वात्मकमखण्डितम् ।
सर्ववर्जितचिन्मात्रं [1]त्रिपान्नारायणं भजे ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं एकाक्षरोपनिषत् सर्वात्मभावनाप्रकटनव्यग्रा वस्तुतो निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । श्रुतिर्नानादशामनानापदारोहाय सर्वात्मकतया भगवन्तं स्तौति—**एकाक्षरमि**त्यादिमन्त्रैः । क्षरप्रपञ्चारोपाधिकरणे **अक्षरे** उमया सहिते **सोमे** परमेश्वरे **सुषुम्नया** सुषुम्नामार्गेण च इह सहस्रारचक्रे प्रत्यगभेदेन ध्याते यतो **दृढीनः** सत्तामात्र एक एव परमात्मा अवशिष्यते **अतो** हे भगवन् यत् स्वाज्ञादिदृष्टिमोहे सत्यसति एकरूपेण न क्षरते तत्त्वे**काक्षरं** परमाक्षरं **त्वमसि**, परमार्थदृष्टेः सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रतया भातत्वात्, "यदक्षरं परं ब्रह्म" इति, "अक्षरं परमं ब्रह्म त्रिपरिच्छेदवर्जितं" इति श्रुतेः स्मृतेश्च । य एवं निर्विशेषचिन्मात्रतया भातः स त्वं यदि स्वाज्ञदृष्ट्या विश्वं विभाति तदा त्वं **विश्वभूः भूतपतिः पुराणः**, स्वकार्यापेक्षया विश्वसृजश्चिरन्तनत्वात् । **अयमेक एव पर्जन्यो** भूत्वा वृष्ट्यात्मना **भुवनस्य गोप्ता** भवति ॥ १ ॥ किञ्च—**विश्व** इति । **विश्वे** विश्वस्मिन् त्वं जीवरूपेण **मग्नोऽसि कवीनां पदवीः** दृष्टीः आश्रित्य **त्वं जातवेदो** विराट् भूत्वा निखिलभुवनस्य **नाथो** भवसि । **यस्त्वमजातं** ब्रह्मासि **स त्वं हिरण्यरेता** वह्निः **यज्ञश्च** भवसि । विश्वाधिकरणात्मना **त्वमेक एव विभुः** ॥ २ ॥ त्वं सूत्रात्मना जगत्प्रसूतिः मुख्यप्राणोऽसि "पादोऽस्य विश्वा भूतानि" इति । **येन त्वया एकपदेन विश्वं व्याप्तं स त्वं भुवनस्य योनिरसि** । किञ्च—**त्वमिति** । सूत्रात्मना त्वं **विश्वभूत्योनिरि**त्यत्र विसर्गलोपः । विश्वस्य भूतिः विश्वस्य योनिश्चेति विश्वभूत्योनिः स चासौ परासुः मुख्यप्राणश्चेति विश्वभूत्योनिपरासुः गर्भे यस्य सः **विश्वभूत्योनिपरासुगर्भो** विष्णुः तस्मिन् **कुमार एक एव जातोऽसि** जगच्चक्रनिर्वाहकत्वात् । किंविशेषणविशिष्ट इत्यत्र करधृतविशिखः **शिलीमुखः सुधन्वा च** ॥ ३ ॥ बाह्यन्तःकरणात्मकधनुर्बाण-

[1] नारायणपदं—क, अ २.

धरो भूत्वा तत्र **तरुणार्कवर्णं** बाणमन्तःकरणं वितत्य स्वसृष्टप्राणिपटलहृदयव्यापकं हत्वा यः सूत्रात्मना **व्योमान्तरे** मायाकार्यप्राणिपटलान्तरे **भासि स त्वं हिरण्यगर्भोऽसि** । किञ्च—**भासेति** । हे स्वामिन् त्वया अधिष्ठितेन **भासा** वेगनिर्जितः **सुताक्ष्यः** सूर्यो **व्योम्नि कृतः** सर्वप्राणिचक्षुरिन्द्रियानुग्राहको दृश्यते । स्कन्दात्मना **त्वं वै कुमारः**, वैनतेयात्मना **त्वमरिष्टनेमिः** ॥ ४ ॥ किञ्च—इन्द्रात्मना **त्वं वज्रभृत्** रुद्रात्मना **भूतपतिस्त्वमेव सोमे** स्वर्गादिवाच्यचन्द्रलोके **प्रजानां निहितः** सन्निहितः **कामः** कामफलरूपोऽसि । किञ्च—**स्वाहेति** । **यच्च** यदुद्दिश्याध्वरे ऋत्विग्गणो **वषट्करोति** स त्वं देवपितृतृप्तिहेतुः **स्वाहा स्वधाऽसि** । **यः पशूनां गुहया** गुहायां अन्तर्याम्यात्मना तद्वृत्तिसहस्रप्रवृत्तिनिवृत्तिकर्मणि **निरुग्नो** निरुद्विग्नो भवसि स त्वं भक्तभवरोगद्रावक**रुद्रो**ऽसि ॥ ५ ॥ किञ्च—**धातेति** । प्राणधारणजीवात्मना **धाताऽसि** विश्वसृगात्मना **विधाताऽसि** । **वराहो** भूवराहः । **क्रमः** गतिः । वस्तुतः **परमाक्षरं चासि** ॥ ६ ॥ किञ्च—**ऋच इति** । यस्य **वक्त्रात् ऋचो यजूंषि सामानि च प्रसवन्ति** प्रभवन्ति सः त्वं सम्यक् राजत इति **सम्राट्** । **रुद्रा** एकादशसंख्याकाः ॥ ७ ॥ किञ्च—**स एष इति** । यो दैत्यवस्वादिरूपी भवति **स एष देवो** भगवान् **अम्बरयानचक्रे** सूर्यमण्डले तदन्यप्रदेशे जीवकदम्बे च **तमो निरुन्ध्यः** स्वाज्ञानतज्जं तमो ग्रसन् **अभ्यतिष्ठत** अभितिष्ठसि, **यस्य** विराजो **हृदयव्योमान्तरे** ब्रह्माण्डगर्भिणी **सुनाभिः** माया विद्यते, सूर्यादिगतं **इमं रश्मिजालं** यदंशजमाहुः, यस्यांशजं जगत् **सर्वं हिरण्मयं विभाति** ॥ ८ ॥ यः **प्रजानां जनानां** चरस्थिराणां जीवाधाररूपिणी **नाभिर्भवति** विष्ण्वात्मना **स सर्ववेत्ता भुवनस्य गोप्ता** रक्षको भवति । किञ्च—**प्रोतेति** । अन्तर्याम्यात्मना त्वमेव **प्रोतोताच** भवसि । त्वमेव **क्रमाणां** नानागतीनां **विचितिः** विश्रान्तिः भवसि । यस्त्वं चतुर्मुखात्मना **विरगर्भो** विष्णुगर्भोऽसि स त्वं **छन्दोमयांगः प्रजापतिरसि** ॥ ९ ॥ **यस्य चित्ते विरजोऽन्तर्निश्चयः** ऋग्यजुस्सामैरपि ज्ञातुं न शक्यः तं त्वां **सहस्रबाहुं हिरण्मयं ज्योतिर्मयं वेदविदां वरिष्ठं** ब्रह्मविदो जानन्ति । किञ्च—**यमध्वर इति** । **यमध्वरे ब्रह्मविदो** वेदविदः ऋग्यजुःसामैः **स्तुवन्ति** स त्वं नानाक्रतुभिः

आराध्यो भवसि ॥ १० ॥ **स्त्रीपुरुषकुमारकुमारीभेदेन** त्वमेव वर्तसे **वरुणश्च** । **राजा** समुद्रराजः, **अर्यम** अर्यमा रविः ॥ ११ ॥ **त्वष्टा** प्रजापतिः, **गोपतिः** पशुपतिः । त्वं सदा दैत्यवर्गात् **भूतानि त्रासि** त्रायसे । यतः त्वं **जगदुद्भवगर्भो** विष्णुरसि अतः सच्चिदानन्दवपुषा **त्वया** अनृतजडदुःखात्मकं अविद्यापदतत्कार्यजातं **आवृतं** भूरादित्रैलोक्यम् । स्वयम्भूः विराट् च **त्वमेवासि** । न हि त्वत्तोऽन्यद्विश्वभूरित्यादिविश्वतोमुख इत्यन्तशब्दतद्वाच्यमस्ति । वस्तुतः परमार्थदृष्ट्या हे भगवन् त्वं स्वातिरिक्तकलनापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रतया अवशिष्यसे ॥ १२ ॥

सर्वात्मज्ञानफलम्

य एवं नित्यं वेदयते गुहाशयं प्रभुं पुराणं सर्वभूतं हिरण्मयम् ।
[1]हिरण्मयं बुद्धिमतां परां गतिं स बुद्धिमान् बुद्धिमतीत्य
तिष्ठति ॥ इत्युपनिषत् ॥ १३ ॥

एवं ज्ञानफलमाह—य एवमिति । एवं **यो** वेद **सः बुद्धिमान्** सम्यज्ज्ञानी बुद्ध्युपलक्षितस्वाविद्यापदतत्कार्यजातमस्ति नास्तीति विभ्रममतीत्य **तिष्ठति**, विदेहमुक्तो भवतीत्यर्थः ॥ इत्युपनिषच्छब्दः एकाक्षरोपनिषत्समाप्त्यर्थः ॥ १३ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणमेकार्णस्य स्फुटं लघु ।
एकार्णविवृतिग्रन्थश्चत्वारिंशत् प्रकीर्तितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकोनसप्ततिसंख्यापूरकं एकाक्षरोपनिषद्विवरणं सम्पूर्णम्

---

[1] द्वितीयं " हिरण्मयं " लुप्तम्—अ, अ १, अ २.

# कौषीतकिब्राह्मणोपनिषत्

वाङ् मे मनसि—इति शान्तिः

## प्रथमोऽध्यायः

क्रतुसामान्यस्य गौणमुख्यफलजिज्ञासा

चित्रो ह वै गार्ग्यायणिर्यक्ष्यमाण आरुणिं वव्रे । स ह पुत्रं श्वेतकेतुं प्रजिघाय याजयेति । तं हासीनं पप्रच्छ गौतमस्य पुत्रास्ति संवृतं लोके यस्मिन्नाधास्य[1]स्यहो बोद्धा लोके यास्यसीति । स होवाच नाहमेतद्वेद हन्ताचार्यं पृच्छानीति । स ह पितरमासाद्य पप्रच्छेति । मा प्राक्षीत् कथं [2]ब्रवाणीति स होवाचाहमप्येतन्न वेद सदस्येव वयं स्वाध्यायमधीत्य हरामहे यन्नः [3]परे ददत्येह्युभौ गमिष्याव इति ॥ १ ॥

[1] स्यमहो—अ १, अ २, क, उ १.

[2] ब्रुवा—अ, अ १, अ २, क.

[3] परो—क.

श्रीमत्कौषीतकीविद्यावेद्यप्रज्ञापराक्षरम् ।
प्रतियोगिविनिर्मुक्तब्रह्ममात्रं विचिन्तये ॥

इह खलु ऋग्वेदप्रविभक्तेयं भगवती कौषीतक्युपनिषत् । अस्याः तावदैतरेयोपनिषद्विवरणप्रकटितोपोद्घातादि समानम् । यथोक्ताधिकारिणामपरब्रह्मप्रकाशनद्वारा परब्रह्म प्रकाशयितुं प्रवृत्तेयं कौषीतक्युपनिषत् । अस्याः संक्षेपतो विवरणमारभ्यते । गार्ग्यायण्यारुणीन्द्रप्रतर्दनप्रश्नप्रतिवचनरूपेयमाख्यायिका वक्ष्यमाणापरपरब्रह्मविद्यास्तुत्यर्था । **चित्रो ह वा** इति । नामतः **चित्रः** गर्गप्रपौत्रो **गार्ग्यायणिः** इत्यत्र गर्गशब्दात् गोत्रे यञि ततो यूनि फक् ततोऽपत्ये इञ् । गार्ग्यायणिस्तु कर्मब्रह्मयाथात्म्यवित् स्वयं कृतार्थोऽपि लोकोन्मार्गनिरसनाय महाक्रतुना **यक्ष्यमाणः** सन् अरुणस्यापत्य**मारुणिं वव्रे** भवता अयं क्रतुवरो निर्वर्तितव्य इति । **स हारुणिः** स्वपुत्रं **श्वेतकेतुम**वलोक्य हे वत्स एतं क्रतुवरं **याजयेति प्रजिघाय** आज्ञापयित्वा स्वाश्रमं प्रति गतवान् । एवं पित्रा अनुज्ञातः क्रतुं निर्वर्तयामीति स्थितवान् । तदानीं गार्ग्यायणिस्तु तदियत्तापरिज्ञानाय हे **गौतमस्य पुत्रे**ति सम्बोध्य **तं हासीनं** श्वेतकेतुं पप्रच्छ । **हवा** इति वृत्तार्थस्मरणार्थौ । किमिति ? **लोके** तावत् क्रतुजातं सामान्यविशेषफल**संवृतमास्ते** । तत्र **यस्मिन्** सामान्यफलके विशेषफलके वा त्वं **आधास्यसि** आधातुं याजयितुं इच्छसि अहो श्वेतकेतो लोके तावन्महान्तः क्रतुसमुदायसामान्यविशेषफलेयत्तां—बोद्धेति वर्णव्यत्ययः छान्दसः—तदियत्तां बुद्ध्वा स्वयं यजन्ति, परान् याजयन्ति वा । तत्र किं त्वं क्रतुसामान्यफलेयत्तां पुनरावृत्तिलक्षणां जानासि, उत त्वं अं अकारार्थं अपुनरावृत्तिलक्षणफलविशेषं वैष्णवं पदं जानासि । एवं विभागशः क्रतुवरतत्फलेयत्तां बुद्ध्वा याजयिष्यसि चेत् तदनुरूपफलं **यास्यसि, नचेदेवं** विपरीतफलभागसीति गार्ग्यायणिनैवमाक्षिप्तः स्वेयत्तां **स होवाच** । किमिति ? **नाहं** त्वदुपन्यस्तमेतदर्थं **वेद** । ततः किं त्वया कर्तव्यमित्यत्र **हन्ताचार्यं पृच्छानीति** गार्ग्यायणिं प्रत्युक्त्वा स्वाश्रमस्थ**पितरमासाद्य** गार्ग्यायण्युक्तार्थं पप्रच्छेति । एवं पृष्टवन्तं प्रत्याह—**स होवाचे**ति । यदेतदर्थमहमपि न वेद तत्ते कथं **ब्रवाणि** अतो मामेवं **मा प्राक्षीत्**—मा प्राक्षीरिति पुरुषव्यत्ययः छान्दसः ।

तदुक्तार्थाज्ञाने हेतुमाह—**सदसीति** । स्वाचार्यपरिसरवर्त्यन्तेवासिसदस्येव वयं स्वाध्यायमधीत्य स्थितवन्तः । तदानीं नोऽस्मभ्यं परं स्वाचार्याः तत्तुल्या वा यद्रहस्यं ददति उपदिशन्ति तदेव हरामहे गृहीतवन्तः, नेतोऽधिकम्। अतो वत्स एहि उभावपि तन्निकटं गमिष्यावः इति पिता पुत्रमुवाचेत्यर्थः ॥ १ ॥

गौणफलं—स्वर्गप्राप्तिः पुनरावृत्तिश्च

स ह समित्पाणिश्चित्रं गार्ग्यायणिं प्रतिचक्राम उपायानीति । तं होवाच ब्रह्मार्घोऽसि गौतम यो मामुपागादेहि त्वा [1]ज्ञपयिष्यामीति । स होवाच ये वै के चास्माल्लोकात् प्र[2]यन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति । तेषां प्राणैः पूर्वपक्ष आप्यायते । अथापरपक्षे न प्रजनयति । एतद्वै स्वर्गस्य लोकस्य द्वारं यश्चन्द्रमास्तं यत् प्रत्याह[3]मति सृजते । य एनं प्रत्याहतमिह वृष्टिर्भूत्वा वर्षति । त इह कीटो वा पतङ्गो वा शकुनिर्वा शार्दूलो वा सिंहो वा मत्स्यो वा परश्वा वा पुरुषो वाऽन्यो वैतेषु स्थानेषु प्रत्याजायते यथाकर्म यथाविद्यम् । तमागतं पृच्छति कोऽसीति । तं प्रतिब्रूयात् ॥ २ ॥

ततः किं जातं इत्यत आह—**स** हेति । गौतमोऽयमारुणिः श्वेतकेतुना सह **समित्पाणिः** सन् सर्ववित्त्वेन विख्यातं **चित्रं गार्ग्यायणिं** मुनिवरं विधिवत् **प्रतिचक्राम** प्रतिगतवान् । किमिति ? क्रतुसामान्यगौणमुख्यफलेयत्ताप्रकाशकविद्यानिमित्तं भवन्निकटे ब्रह्मचर्यमुपायानीति । गौतमेन विज्ञापितो मुनिः तं

[1] ज्ञाप—अ २, क. [2] यान्ति—अ २, क. [3] मिति—अ, अ २, क.

**होवाच** । किमिति? हे **गौतम यो मां** विद्यार्थ**मुपागात्**—उपागाः, पुरुषव्यत्ययः—प्राप्तवान् स **त्वं ब्रह्मार्घोऽसि** ब्राह्मणश्रेष्ठोऽसि । यत एवं अतः त्वं **एहि** आस्व क्रतुगौणादिफलप्रकाशकविद्यां त्वां **ज्ञपयिष्यामीति** प्रतिज्ञापूर्वकं **स होवाच** । किमिति? गौणमुख्यफलयोः आदौ गौणफलप्रकाशकविद्यामाचष्टे —**ये वा** इति । लोकेऽस्मिन् **ये वै** केवलकर्मिणः, "कुर्वन्नेवेह कर्माणि जिजीविषेत्" इति श्रुत्यर्थपर्यालोचनया सकामाः सन्तः कर्म कृत्वा चरमदशायां **अस्मात् लोकात् प्रयन्ति ते सर्वे** सकामकर्मिणः **चन्द्रमसं** स्वर्गाख्यं धाम **गच्छन्ति** । यावत् कर्मफलक्षतिः तावत् तत्रोषित्वा ततः पुनः निवर्तन्त इत्याह—**तेषामिति** । **तेषां** स्वर्गिणां **प्राणैः** इन्द्रियव्यापारैः **पूर्वपक्षः** स्वर्गः तत्रत्यभोगो वा **आप्यायते** भुज्यते । **अथ** एवमुपभोगेन स्वर्गवासनिमित्त-क्षयानन्तरं तत् भुक्तशेषकर्मैव इतः परं मे क्षयिष्णु स्वर्गनरकहेतुनानाविध-कर्मकरणं माऽस्त्विति तीव्रतरसंवेगो ह्यपरपक्षः तस्मिन् **अपरपक्षे** गतागतहेतु-कुत्सितकर्मवैराग्ये मतिं **न** कदाऽपि **जनयति**, पुनःपुनः कर्मतत्फलवासनावासितो भवति, "यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते" इति, "गतागतं कामकामा लभन्ते" इति, "ततः शेषेण जायते" इति, श्रुतिस्मृतिभ्यः । यश्चन्द्रमाः देवान्नभूतः "तद्देवानामन्नं तं देवा भक्षयन्ति" इति श्रुतेः यच्चन्द्र-लोकप्रापकं कर्म चान्द्रमसं **एतद्वै स्वर्गस्य लोकस्य द्वारम्** । तत्र क्षीणकर्मा योऽर्वाक् पतनाभिमुखो भवति **तं यत्** यस्मात् **प्रत्याहतं** स्वर्गात् च्युतं तच्छे-षकर्मानुरोधेन विधिः अतीव **सृजते** सृजति । **यो** विधिरेनं प्रत्याहतमिह यथोक्तकाले **तेन** साकं स्वयं **वृष्टिर्भूत्वा वर्षति** । ते वर्षबिन्दवः **इह** भुवं प्रविश्य व्रीहियवाः ओषधयस्तिलमाषा इत्यादिभावभाविता भवन्ति । तेषां जातिः पुनः केन रूपेण स्यादित्यत्र तत्तज्जन्तुकर्मानुरोधेन **कीटो वा पतङ्गो वा** इत्याद्यन्यो वा इत्यन्तग्रहणं चतुरशीतिलक्षयोन्युपलक्षणार्थम् । अयं क्षीणकर्मा **यथाकर्म यथाविद्यं** एतेषु नानायोनिस्थानेषु अन्यतमे **प्रत्याजायते** । **तं** एव-मूर्ध्वादधःप्रदेशमागतं **कोऽसीति** यः कश्चन **पृच्छति** चेत् तं प्रत्ययं वक्ष्यमाण-प्रकारेण **ब्रूयात्** ॥ २ ॥

मुख्यफलं—ब्रह्मलोके ब्रह्मभावापत्तिः

विचक्षणादृतवो रेत आभृतं पञ्चदशात् प्रसूतात् पित्र्या पतत् ।
स्तनमा पुंसि कर्तर्येर[1]यध्वं पुंसा कर्त्रा मातरि [2]मा निषिक्तः ।
स जायमान उपजायमानो द्वादश त्रयोदश उपमासः ।
द्वादशत्रयोदशेन पित्रा संतद्विदेऽहम् ।
तव ऋतवो मर्त्यव [3]आरभध्वम् ।

तेन सत्येन तपसर्तुरस्म्या[4]र्तवोऽस्मि कोऽसि त्वमसीति [5]तमतिसृजते । तमेतं देवयजनं पन्थानमासाद्याग्निलोकमागच्छति । स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम् । तस्य ह वा एतस्य ब्रह्मलोकस्यारो ह्रदो मुहू[6]र्तोऽन्वेष्टिहा विरजा नदील्यो वृक्षः सालज्जं संस्थानमपराजितमायतनमिन्द्रप्रजापती द्वारगोपौ विभु प्रमितं विचक्षणसंध्यमितौजाः पर्यङ्कः प्रिया च मानसी प्रतिरूपा च चाक्षुषी पुष्पाण्यादायावयतौ [7]वै च जगन्यम्बा चाम्बावयवाश्चाप्सरसोऽम्बया नद्यः । तमित्थंविधा [8]गच्छन्ति । तं ब्रह्मा हाभिधावत मम यशसा विरजां पालयन्नदीं प्रापं न वाऽयं [9]जिगीष्यतीति ॥ ३ ॥

[1] युध्वं—अ, अ १, अ २, उ १.

[2] "मानिषिक्तः" इत्ययं व्याख्याऽनुसारी पाठः "मा सिषिक्तः" इति तु कोशेषु वर्तते.

[3] आभरध्वं—अ १, उ, उ १. [4] वर्तोऽस्मि—उ.

[5] तमिति—अ, अ १, उ १, क. [6] र्तान्ये—अ, अ १, क. र्तने—अ २.

[7] चैव—क. [8] गच्छति—अ १, उ. [9] जिगि—अ, उ १, क.

कस्तत्प्रकार इत्याशङ्क्य तदुत्तरच्छलेन महाक्रतुविशेषफलैयत्तां प्रकटयति— **विचक्षणादिति** । कर्मज्ञानाक्षान्तःकरणप्राणभेदेन **पञ्चदशसंख्याऽन्वितात्** स्वाज्ञानतः **प्रसूतात्** बन्धमोक्षसाधनानुष्ठानविचक्षणात् लिंगशरीरात् तत्स-मष्ट्युपाधिकहिरण्यगर्भात् **ऋतवः** संवत्सरावयवाः, ऋतूनां संवत्सराद्यमान-सामान्यात्, तत्तदृतुनिर्वर्त्यव्रीहियवौषधिवनस्पत्यादिभेदभिन्नं सर्वप्राण्यदनयोग्यं अन्नजातं भुवि सञ्जातम् । यदेवं सञ्जातं तदन्नं **पुंसा कर्त्रा, पित्र्येति** यकारः छान्दसः, तद्भाविपित्रा कालकर्मसंयोगात् अद्यमानं सत् **कर्तरि** कीटाद्या[चे] **पुंसि मातरि** योषिति, न ह्यूर्ध्वरेतसि बाले स्थविरे वा, यूनि पुंस्येव विद्यमान-स्तनोपलक्षितजठरप्रदेशं **प्रत्यापतन्** । ततः तज्जाठराग्निना पच्यमानं सत् **रेत आभृतं** रेतोरूपेण परिणतं अभूत् । ततः किमित्यत आह—**ईरयध्वमिति** ।

ऋतौ स्वभार्यागमनं चरध्वं वंशवृद्धये ।
न ब्रह्मचर्यहानिः स्यान्मद्वाक्यं श्रृणुत प्रजाः ॥

इति प्राजापत्यस्मृत्यनुरोधेन प्रजापतिनैवमाज्ञप्ताः प्रजाः । किमिति ? **स्वसन्तद्विदे** सन्ततिवृद्धये—विदेः वृद्ध्यर्थत्वात्—ऋतुमत्स्वभार्यायां मिथुनकर्म **ईरयध्वं** चरध्वं इति । एवं अद्यापि सन्तो गार्हस्थ्येऽपि ब्रह्मचर्यं चरन्ति । तथा च स्मर्यते—" ऋतौ भार्याऽभिगमनं ब्रह्मचर्यं विदुर्बुधाः " इति । यः पितृजठ-रस्थरेतउपाधिको विज्ञानात्मा स पित्रा ऋतुमत्यां स्वभार्यायां उचितकाले **निषिक्तः** सन् स्वमातृजठरे " त्रयोविंशत्यहोरात्रमार्षमासमुदाहृतम् " इति स्मृतिसिद्ध-**द्वादशत्रयोदशमासोपमास**पर्यन्तमुषित्वा अथ कश्चित् यथोक्तद्वादशमासेन निर्वर्तितेन **जायमानः** कश्चित् त्रयोदशमासेन **वोपजायमानो** विज्ञानात्मा क्रमेण गर्भाधानादिचतुश्चत्वारिंशत्संस्कारसंस्कृतो विवेक्यपि भवति । " तं आगतं पृच्छति कोऽसीति तं प्रतिब्रूयात् " इति पूर्वखण्डान्तसूत्रितवाक्योत्तरमाह । **कोऽसि त्वमसीति** यः कश्चित् यदि पृच्छति तदा **तं** प्रत्येवमुत्तरं **सृजते** कल्पयते वदति । किमिति ? यत् स्वेन आचरितं **तेन सत्येन तपसा** सम्यगा-लोच्य यतोऽहं वसन्ताद्यृतुनिर्वर्त्यान्नपरिणतकोशविशिष्टः अतोऽहं **ऋतुरस्मि**

**आर्तवोऽस्मि** इति स्थूलशरीरोपाधिको विज्ञानात्माऽस्मीत्यर्थः । एवं विज्ञानात्मानमुपलभ्य अपुनरावृत्तिलक्षणवैष्णवपदप्रापकक्रतुमुख्यफलेयत्ताप्रकाशकब्रह्मविद्या वक्तव्येति परमदयावती श्रुतिरेवमाह । किमिति ? हे स्वाज्ञलोकाः हन्तेदानीं यूयं ऋतुनिर्वर्त्यान्नपरिणतषड्भावविकृतिग्रस्तदेहविशिष्टत्वादृतवो **मर्त्यवो** मर्त्याः सञ्जाताः । यस्मात् एवं तस्मात् यूयं आर्तवमरणधर्मवद्देहदारादावात्मात्मीयाभिमतिमुत्सृज्य निष्कामधिया ज्ञानकर्मसमुच्चयानुष्ठानं, तत्रापि यद्यलंबुद्धिः तदा स्वातिरिक्ताविद्यापदतत्कार्यापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति ब्रह्ममात्रज्ञाननिष्ठां वा यूयं **आरभध्वं** झटिति यत्नं कुरुतेत्यत्र—" इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः " इति श्रुतेः । एवं असकृच्छ्रुत्वाऽपि केचित् उक्तार्थविमुखाः भवेयुः । तेषां दुर्भगत्वात् तत्र कश्चित् पुरुषधौरेयः साध्यसाधनेषणां विहाय केवलभगवदाराधनधिया ज्ञानकर्मसमुच्चयानुष्ठानं सर्वकर्मसंन्यासपूर्वकं संशयादिपञ्चदोषशान्तिपर्यन्तं यथावद्वेदान्तश्रवणादि वा कुर्वन् यावदायुषं धरण्यां स्थित्वा यदि समुच्चयानुष्ठाता तदा देहावसानसमये योऽर्चिरादिरिति सर्वत्र प्रसिद्धः **तमेतं देवयजनं** देवयानं **पन्थानमासाद्याथाग्निलोकमागच्छति** । क्रमादथ **स वायुलोकं स वरुणलोकं स आदित्यलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकं** गच्छति । किंविशेषणविशिष्टोऽयं ब्रह्मलोक इत्यत्र तदियत्तां वर्णयति—**तस्य ह वा एतस्य ब्रह्मलोकस्येति** । ह वा इति सर्वशास्त्रप्रसिद्धिद्योतकः । **तत्रारो** नाम महान् **ह्रदो** वर्तते । तद्दर्शनं आध्यात्मिकादितापत्रयं हरति, " तदैरम्मदीयं सरः " इति श्रुतेः । तत्र **मुहूर्तः** ब्रह्मानुसन्धानकालविशेषः, इष्टिः बाह्यसुखासक्तिः सैवे[वान्वे]ष्टिः तां हन्तीति **इ[अन्वे]ष्टिहा** । तत्र महावैकुण्ठ **नदी** तु **विरजा** । **इल्यो** नाम कांक्षितार्थप्रदः कल्पकवृक्षः, " तदश्वत्थः सोमसवनः " इति श्रुतेः । तत्र **संस्थानं** अवस्थानं तु ब्रह्मानुसन्धानेतरव्यापृतौ **सालज्जं** लज्जान्वितं ब्रह्मानुसन्धानेतरव्यापृतिशून्यं इत्यर्थः । तदा**यतनं** स्थानं तु परैः स्वच्छन्दवर्तिभिः केवलकर्मिभिर्वा कदाऽपि जेतुमशक्यमित्यपराजितमित्युक्तम् । सर्वत्र विख्यातेन्द्रप्रजापती तु **द्वारगोपौ** ब्रह्मलोकद्वारपालकौ भवतः । तत् केन निर्मितमित्यत्र **विभुना** व्यापकेन विष्णुना

प्रकर्षेण मितं सम्मितं निर्मितं वेत्यर्थः । तत्र **पर्यङ्कः** विश्रान्तिसीमा तु प्रत्यक्परचितोः **सन्धिः** ऐक्यं प्रत्यगभिन्नपरमात्मैवामितौजाः सर्वावभासकज्योतिरेव विश्रान्तिसीमेत्यर्थः । तत्र **प्रिया** जाया **मानस्येव** । न तु ग्राम्यभोगयोग्या जाया तत्रास्ति । **प्रतिरूपा** त्वलंकृतिः **चाक्षुषी,** तत्रत्यानां नित्यप्रत्यक्षस्वभासालंकृतत्वात् । **अम्बया** श्रुत्या **पुष्पाणि** स्वविभक्तमहावाक्यानि **आदाय** गृहीत्वा **अवयतिः** अन्तःकरणं तत्र युगपदर्थतः प्रकाशितानि भवन्ति । वैचशब्दतः तत्रत्यानां युगपन्महावाक्यार्थः स्फुरतीति द्योत्यते । ब्रह्मातिरेकेण जगत्तत्कार्यं नेतीति यया गीयते सेयं **जगनी** इत्यर्थाऽम्बा प्रणवात्मिका **चाम्बावयवाश्च** अकाराद्यर्धमात्रान्ता **अप्सरसः नद्यो** वा । य एवंविधज्ञानकर्मभ्यां ब्रह्मलोकं प्रविष्टः **तमेतं** ब्रह्मभावमापन्नमारो ह्रद इत्यादीत्थंविधा **गच्छन्ति** प्रणवमहावाक्यान्यपि सार्थतस्तं भजन्तीत्यर्थः । यः स्वभावमापन्नः तं अवलोक्य **ब्रह्मा** विष्णुः शिवो वा ह्यभिमुख्येन **धावत** प्रत्युद्गतवान् । किं कुर्वन् ? **मम** ब्रह्मणो **यशसा** निरावरणज्ञानेन **विरजानदीतुल्यं** तदखण्डाकारवृत्तिं परिपालयन् मत्कृपां विना **न** **वाऽयं** मद्धाम **जिगीष्यति** न हि जेतुं पारयतीति केवलकरुणया त्वद्भावं **प्रापं** प्राप्तवानस्मीत्यर्थः ॥ ३ ॥

ब्रह्मविदुषो ब्रह्मैश्वर्यप्राप्तिः

तं पञ्चशतान्यप्सरसां प्रतिधावन्ति शतं मालाहस्ताः शतमाञ्जनहस्ताः शतं चूर्णहस्ताः शतं वासोहस्ताः शतं [1]फणहस्ताः । तं ब्रह्मालंकारेणालंकुर्वन्ति । स ब्रह्मालंकारेणालंकृतो ब्रह्मविद्वान् ब्रह्मैवाभिप्रैति । स आगच्छत्यारं ह्रदं [2]तं मनसाऽत्येति । तमृत्वा संप्रतिविदो मज्जन्ति । स आगच्छति मुहूर्तान्विहेष्ठिहास्तेऽस्माद्पद्रवन्ति । स आगच्छति विरजां नदीं तां मनसैवात्येति ।

[1] फणा—अ २, क. कणा—मु. [2] तन्मन—अ, अ १, अ २.

तत्सुकृतदुष्कृते धूनुते तस्य प्रिया ज्ञातयः सुकृत[1]मुपयन्त्यप्रिया दुष्कृतम् । तद्यथा रथेन धावयन् रथचक्रे पर्यवे[2]क्षत एवमहोरात्रे पर्यवेक्षते । एवं सुकृतदुष्कृते [3]धूनुते सर्वाणि च द्वन्द्वानि । स एव विसुकृतो विदुष्कृतो ब्रह्मविद्वान् ब्रह्मैवाभिप्रैति ॥ ४ ॥

एवंविदो ब्रह्मैश्वर्यं सविशेषनिर्विशेषब्रह्मवेदनफलं च प्रकटयति—**तमिति**। य एवं विद्यया ब्रह्मलोकं प्रविश्य ब्रह्मभावमापन्नः **तं अप्सरसां पञ्चशतानि प्रतिधावन्ति** अहरहः उपासते । कथं? तत्राप्सरसां **शतं दिव्यमालाहस्ताः** सत्य उपचरन्ति । तथाऽपरं **शतं** अञ्जनं नेत्राकल्पसाधनं, तदेव आञ्जनं यासां हस्तभूषणं ता हि **आञ्जनहस्ताः** । तथा **शतं** परिमलगन्धचूर्णहस्ताः । तथा **शतं** दिव्यवासोहस्ताः । तथा **शतं**, फणशब्देन तदाकल्पयोग्याभरणजातं तत्स्मरणीयविविधभोज्यद्रव्यजातं वा, यासां हस्ते अनवरतं फणमस्ति ताः **फणहस्ताः** । एवंविधानि अप्सरसां पञ्चशतानि **ब्रह्मालङ्कारेण तं अलङ्कुर्वन्ति** । **सोऽयं ब्रह्मालङ्कारेण अलङ्कृतो ब्रह्मविद्वान्** यदि निर्विशेषब्रह्मवित् तदा निर्विशेषब्रह्मैव **अभिप्रैति**, यदि सविशेषब्रह्मवित् तदा तत्रत्यब्रह्मैव अभिप्रैति । अथ **सोऽयं** कदाचित् ब्रह्मस्थानात् बहिरागच्छति यदत्र **आरसंज्ञको ह्रदो** वर्तते **तं मनसा अत्येति** अतिशयेनैति अतिक्रामति वा । **तमृत्वा** तं ब्रह्माणं विना **सम्प्रतिविदो मज्जन्ति**, तेन विरजा भवन्ति । ततः **स** विद्वान् आगच्छति **मुहूर्तानुविद्धं** ब्रह्मानुसन्धानयुक्तचित्तमन्विहेष्टिहाः बाह्यतन्निरोध-वृत्तिव्यापाराः **ते अस्माद्विदुष अपद्रवन्ति** पलायितुमारभन्ते, विद्वान् निर्विकल्पसमाधिपरवशो भवतीत्यर्थः । **स** विद्वान् यदि कदाचित् बहिश्चित्तः तदा-[तं आ]गच्छति **मनसैव अतिशयेन विरजां नदीं तामेति** । यस्तां दृष्ट्वा स्नाति स्नानतो निर्धूतचित्तमलो भवति, तत्पुराकृतसुकृतदुष्कृते धूनुते दोधूयते ।

[1] मप—क. [2] क्षेतैव—क. क्षतैव—अ, अ १, अ २, उ.
[3] " धूनुते " इत्येतन्नास्ति—अ, अ १, अ २, क.

प्राणिमात्रस्य यदृच्छया पुण्यपापे सम्भवतः, तेनास्य ब्रह्मभावापत्तिः कुत इत्यत आह—तस्येति। **तस्य प्रिया ज्ञातयः** ईश्वरधिया समर्चयन्तः ते तत्कृत**सुकृत**-जात**मुपयन्ति** गृह्णन्ति। तदप्रियकारिणस्तु तद्देहकृत**दुष्कृत**मुपयन्तीत्यनुवर्तते। तेनायं व्याविद्धपुण्यपापो ब्रह्मभावापन्नो भवतीत्यत्र—

प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम्।
विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम्॥

इति श्रुतेः। कार्यात् कारणमनुमेयं इत्यत्र दृष्टान्तमाह—यथेति। **यथा रथेन धावयन्** गच्छन् **रथचक्रे** विद्येत इति **पर्यवेक्षते** निश्चिनोति **तथैवमहोरात्रे** संसृतिरथचक्रस्थानीये **पर्यवेक्षते**। अहोरात्रविभागहेतुस्वाज्ञानाधिकरणाभावे कुतोऽयमहोरात्रादिकल्पनेत्यर्थः। एवं स्वाज्ञानमूलसत्त्वे स्वाज्ञानकार्य**सुकृत-दुष्कृते सर्वाणि च** सुखदुःखादि**द्वन्द्वानि च** विलसन्ति। तद्धेतुस्वाज्ञानापाये यत्तदधिकरणं तन्निरधिकरणब्रह्ममात्रतया निष्प्रतियोगिकमवशिष्यत इति यो वेद **स एष** मुनिः **विसुकृतो विदुष्कृतो** भूत्वा यदि निष्प्रतियोगिकं **ब्रह्म** स्वमात्रमिति **विद्वान्** तदा तद्वेदनसमकालं **ब्रह्मैवाभिप्रैति** ॥ ४ ॥

सविशेषब्रह्मविदो विभूतिविशेषलाभः

स आगच्छतील्यं वृक्षं तं ब्रह्मगन्धः प्रविशति। स आगच्छति सालज्जं संस्थानं तं ब्रह्म स प्रविशति। स आगच्छत्य-पराजितमायतनं तं ब्रह्मतेजः प्रविशति। स आगच्छतीन्द्रप्रजापती द्वारगोपौ तावस्मादपद्रवतः। स आगच्छति विभुप्रमितं तं ब्रह्मयशः प्रविशति। स आगच्छति विचक्षणामासन्दीं सा प्रज्ञा प्रज्ञया हि विपश्यति। स आगच्छत्यमितौजसं पर्यङ्कं तं स प्राणः। तस्य भूतं च भविष्यच्च पूर्वौ पादौ श्रीश्चेरा चापरौ बृहद्रथन्तरे अनूच्ये

भद्रयज्ञायज्ञीये शीर्षण्यमृचश्च सामानि च प्राचीनातानं यजूंषि तिरश्चीनानि सोमांशव उपस्तरणमुद्गीथ उपश्रीः श्रीरुपबर्हणम् । तस्मिन् ब्रह्मास्ते । तमित्थंवित्पादेनैवाग्र आरोहति । तं ब्रह्माह कोऽसीति । तं प्रतिब्रूयात् ऋतुरस्म्यार्तवोऽस्म्याकाशाद्योनेः संभूतो हाव । एतत् संवत्सरस्य तेजोभूतस्य भूतस्य त्वमात्माऽसि यस्त्वमसि सोहमस्मीति । तमाह कोऽहमस्मीति ॥ ५ ॥

सविशेषब्रह्मविदः तत्रत्यविभूतिविशेषमाह—स आगच्छतीति । इल्यं कल्पकवृक्षं प्रति स विद्वानागच्छति । यः स्वनिकटमागतः तं प्रति ब्रह्मगन्धः प्रविशति । ततो यथाव्याख्यातं सालज्जं संस्थानं प्रति स विद्वानागच्छति । स्वनिकटमागतं स ब्रह्मबोधः प्रविशति । पुनरपराजितमायतनं प्रति स आगच्छति । स्वनिकटमागतं तं ब्रह्मतेजः प्रविशति । यत्रेन्द्रप्रजापती द्वारगोपौ तिष्ठतः तत्र स आगच्छति । अस्माद्दर्शनात् तावपद्रवतः प्रत्युत्थानादिभिः । यथाव्याख्यातविभुप्रमितं प्रति स आगच्छति । तं ब्रह्म यशः प्रविशति । स्वाज्ञानध्वान्तमोचनविचक्षणां समर्थां आसमन्तात् दीप्यमानामासन्दीं स्वज्ञानरूपिणीं विद्यां प्रति आभिमुख्येन स आगच्छति । सेयं प्रज्ञा, प्रज्ञया हि तमात्मतया पश्यति । यथाव्याख्यातं अमितौजसं पर्यङ्कं प्रति स आगच्छति । तं प्रति मुख्यः प्राणः प्रविशति । यद्वा—नवरत्नरचनात् अमितौजसं सुवर्णपर्यङ्कं पादचतुष्टयविशिष्टं सोपस्करं सः आगच्छति । स्वतल्पनिकटमागतं तं स प्राण आविशति । पर्यङ्कपादचतुष्टयं तत्सोपस्करं वा किमित्यत आह—तस्येति । तस्य पर्यङ्कस्य भूतं च भविष्यच्चेति भूत-भविष्यत्कालौ पूर्वौ पादौ भवतः । श्रीश्च संम्पत् , रलयोरभेदात् इरा इला धरणी चापरौ पादौ भवतः । बृहच्च रथन्तरं च बृहद्रथन्तरे अनूच्ये सुश्राव्यगीतिस्थानीये भवतः । पर्यङ्कस्य शीर्षण्यं शिरःप्रदेशः भद्रयज्ञायज्ञीये गीतिविषयसामनी । यद्वा—भद्रयज्ञो महाक्रतुनिचयश्च यज्ञीयं तत्सोपस्करं च

**भद्रयज्ञायज्ञीये** भवतः । यज्ञायज्ञीयेत्यत्र दीर्घः छान्दसः । पर्यङ्कस्य **प्राचीनातानं** प्राक्पश्चिमदण्डसूत्राणीत्यातानमुक्ति **ऋचश्च सामानि** चाशंसन्ति । पर्यङ्कतिरश्चीनदण्डसूत्राणि **यजूंषि** भवन्ति । **पर्यङ्कस्योपस्तरणं** मृद्वास्तरणं **सोमांशवः** सोमकिरणा भवन्ति । **पर्यङ्कोपश्रीः** शोभा तु सामावयवतया प्रसिद्ध **उद्गीथः**, **श्रीः** स्वानपायिनी लक्ष्मीस्तु **उपबर्हणं** शिरउपधानम् । योऽयमुक्तविशेषणसोपस्करः पर्यङ्कः **तस्मिन्नेव** सदा **ब्रह्मास्ते** । य एवंविधपर्यङ्कालङ्कारभूतो ब्रह्मा विराजते **तं इत्थंवित्** एवंविद्वान् प्राणो भूत्वा पर्यङ्कविलसद्भूतादिपादे**नैवाग्रे** पर्यङ्कोप**र्यारो**हति । य एवं स्वपर्यङ्कं प्रविष्टः **तं कोऽसीति ब्रह्माह** । **तं प्रत्ययमेवं ब्रूयात्** । किमिति ? पुरासंवत्सरावयव**ऋतुरस्मि**, तन्निर्वर्त्यान्नमयावष्टम्भत **आर्तवोऽस्मि, सर्वयोनेराकाशात्** ब्रह्मणः सकाशात् एवं **संभूतोऽस्मि** । हावेत्यवधारणार्थः । न त्वेवं ते संभूतिगस्ति, त्वमेव सर्वकारणमित्युपदिशति—**एतदिति** । यदेतज्जन्म त्वयोक्तं तन्न संगच्छते, स्वस्यैव सर्वात्मत्वात् । तत् कथं ? गुणसाम्यात्मकाव्यक्तकालतदवयव**संवत्सरस्य तेजोभूतस्य** महत्तत्त्वस्य **भूतस्य** पञ्चभूतभौतिकस्य च **त्वमेवात्माऽसि** । **यस्त्वं** सर्वभूतात्माऽसि **सोऽहमस्मीति** निश्चिनु । इति ब्रह्मणोक्तः पुनस्तं पृच्छति—**कोऽहमस्मीति** । न जाने, पुनः कृपयोपदिशेत्यर्थः ॥ ९ ॥

आत्मनः सत्यत्वं सर्वात्मत्वं ब्रह्ममात्रत्वं च

सत्यमिति ब्रूयात् । किं तत् सत्यमिति । यदन्यद्देवेभ्यश्च प्राणेभ्यश्च तत् सद्ध यद्देवाश्च प्राणाश्च [1]तद्यत्तदेतया वाचाऽभिव्याह्रियते सत्यमिति । एतावदिदं सर्वमिदं सर्वमसीत्येवैनं तदाह । तमाह केन [2]पौंसानि नामान्याप्नोतीति । प्राणेनेति ब्रूयात् । केन स्त्रीनामानीति । वाचेति । केन नपुंसकनामानीति । मनसेति ।

[1] तद्यंतदे—क, अ १, अ २. [2] पौंसानि—अ. पौंस्नानि—मु.

केन गन्धानिति । घ्राणेनेति ब्रूयात् । केन रूपाणीति । चक्षुषेति । केन शब्दानिति । श्रोत्रेणेति । केनान्नरसानिति । जिह्वयेति । केन कर्माणीति । हस्ताभ्यामिति । केन सुखदुःखे इति । शरीरेणेति । केनानन्दं रतिं प्रजातिमिति । उपस्थेनेति । केनेत्या इति । पादाभ्यामिति । केन धियो विज्ञातव्यं कामानिति । प्रज्ञयेति प्रब्रूयात् । तमाहापैव खलु मे ह्यसावयं ते लोक इति । सा या ब्रह्मणि चिति या व्यष्टिस्तां चितिं जयति तां व्यष्टिं व्यश्नुते य एवं वेद य एवं वेद ॥ ६ ॥

प्रश्नोत्तरं भगवानाह—सत्यमिति । कोऽहमस्मीति प्रश्नोत्तरं—कालत्रयाबाध्यं सत्यमिति ब्रूयात्, सत्तामात्रस्वरूपोऽसीत्यर्थः । सत्यशब्दार्थं पृच्छति—किं तत् सत्यमिति । प्रतिवचनं—यद्देवेभ्यो दिग्वातादिकरणाधिपेभ्यश्च प्राणेभ्यश्च करणेभ्योऽपि यदन्यत् भिन्नतयाऽवशिष्टं तदेव सद्ध सत्यं हि यदेव देवाश्च प्राणाश्च भवति स्वातिरिक्तानृतसामान्यस्य मृग्यत्वात् यत्तदेतया वाचा अभिव्याह्रियते । किमिति? सत्यमिति । एतावदिदं सर्वमिदं सर्वमसीत्येवैनं तदाह । तमुक्तवन्तमितर आह । किमिति? सर्वस्य सत्यात्मकत्वे केन पौंसानि नामान्याप्नोति? इति पृष्टः प्राणेनेति ब्रूयात् । तथा पुनः केन स्त्रीनामानीति नपुंसकनामानि चाप्नोतीति पृष्टो वाचा मनसा चेति, ब्रूयादिति सर्वत्र अनुवर्तते । केन केन करणेन तत्तत्करणार्थान् गन्धादीनाप्नोतीति पृष्टो घ्राणादिकरणजालेन गन्धादिविषयजालमाप्नोतीति ब्रूयात् । शिष्टं निगदार्थमेतत् । किं बहुना—केन धीविज्ञातव्यनानाकामानाप्नोतीति पृष्टः सर्वमिदमहमात्मेति प्रज्ञया ब्रह्मभावारूढया सर्वं खल्विदं ब्रह्मेति श्रुत्यर्थसंस्कृतया आप्नोतीति ब्रूयात् । पुनस्तमाह । किमिति? लोके तावदसावयं मे मम ते तवेत्यादिशब्दगोचरमर्थजातं सर्वं "सर्वं खल्विदं ब्रह्म,"

"ब्रह्मव्यतिरिक्तं न किञ्चिदस्ति," "मद्व्यतिरिक्तमणुमात्रं न विद्यते" इत्यादिश्रुत्याचार्यसंस्कृतब्रह्माकारप्रज्ञया मयेदं सर्वं "आत्ममात्रमिदं सर्वमात्मनोऽन्यन्न किञ्चन" इति श्रुत्यनुरोधेन आपैव प्राप्तमेव खलु। अस्मिन्नर्थे न हि संशयोऽस्तीति विद्याफलमाचष्टे—**य एवं वेदेति**। य एवं—या प्रज्ञा सा ब्रह्मणि चिति चिद्ब्रह्मणि चिन्मात्रे या व्यष्टिः समष्टिश्च स्वाज्ञविकल्पिता स्वज्ञानबाधिता, यत एवं अतो ब्रह्मातिरिक्तं न किञ्चिदिति—वेद सोऽयं मुनिः तां चितिं व्यष्टिसमष्ट्यात्मकस्वाविद्यापदतत्कार्यारोपापवादाधिकरणरूपां वस्तुतो निरधिकरणात्मिकां निष्प्रतियोगिकचिन्मात्रां स्वावशेषतया जयति आप्नोति। या चिन्मात्रविकल्पिता व्यष्टिः तदुपलक्षितस्वाविद्यापदतत्कार्यजातं तां व्यष्ट्यादिकलनां शशविषाणवदत्यन्तासत्तया व्यश्नुते। एवं ज्ञानसमकालं स्वयमेव ब्रह्ममात्रतया अवशिष्यत इति प्रकरणार्थः। आवृत्तिः प्रथमाध्यायपरिसमाप्त्यर्था॥ ६॥

इति प्रथमोऽध्यायः

---

# द्वितीयोऽध्यायः

प्राणब्रह्मोपासनं तत्फलं च

प्राणो ब्रह्मेति ह स्माह कौषीतकिः। तस्य ह वा एतस्य प्राणस्य ब्रह्मणो मनो [1]भूतं [2]वाक्यं[3]परिवेष्टृ चक्षुः श्रोत्रं [4]संश्रावयितृ। तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्ति। तथो एवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं

[1] भूता—क. [2] वाक्य—अ १, अ २, क. वाक्प—अ.
[3] परिवेष्ट्री—अ २. परिवेष्ट्य—क. [4] संश्रावयित्वा—क.

हरन्ति । य एवं वेद तस्योपनिषन्न याचेदिति तद्यथा ग्रामं भिक्षित्वा लब्ध्वोपविशेन्नाहमतो दत्तमश्नीयामिति । य एवैनं पुरस्तात् प्रत्याचक्षीरंस्त एवैनमुपमन्त्रयन्ते ददाम त इति । एष धर्मो [1]याचितो भवत्यन्यतर[2]स्त्वेवैनमुपमन्त्रयन्ते ददाम त इति । प्राणो ब्रह्मेति ह स्माह पैङ्ग्यः । तस्य ह वा एतस्य प्राणस्य ब्रह्मणो वाक्परस्ताच्चक्षुरारुन्धे चक्षुः परस्ताच्छ्रोत्रमारुन्धे श्रोत्रं परस्तान्मन आरुन्धे मनः परस्तात्प्राण आरुन्धे । तस्मै वा एतस्मै प्राणाय ब्रह्मण एताः सर्वा देवता अयाचमानाय बलिं हरन्ति । तथो एवास्मै सर्वाणि भूतान्ययाचमानाय बलिं हरन्ति । य एवं वेद तस्योपनिषन्न याचेदिति तद्यथा ग्रामं भिक्षित्वा लब्ध्वोप[3]विशेन्नाहमतो दत्तमश्नीयामिति । य एवैनं पुरस्तात् प्रत्याचक्षीरंस्त एवैनमुपमन्त्रयन्ते ददाम त इति । एष धर्मो [4]याचितो भवत्यन्यतरस्त्वेवैनमुपमन्त्रयन्ते ददाम त इति ॥ १ ॥

प्रथमाध्याये महाक्रतुसामान्यविशेषफलेयत्ताप्रदर्शनच्छलेन सविशेषनिर्विशेषब्रह्मविद्या तत्फलं च सम्यक् प्रकटितम् । एतत्प्रकरणार्थस्य सामान्यप्रज्ञदुरवगाह्यत्वादिति मन्दप्रतिपत्त्यर्थं पुनः सविशेषब्रह्मविद्या प्रकटयितव्येति द्वितीयाध्याय आरभ्यते—प्राणो ब्रह्मेत्यादि । कुषीतकस्यापत्यं कौषीतकिः नाम प्राणयाथात्म्यद्रष्टा मुनिरेवमाह स्म । किमिति ? यः पञ्चमे मासि योषिद्गर्भगतपिण्डं प्रपदाभ्यां प्रापद्यत सोऽयं प्राण एव ब्रह्मेति । तस्यानिच्छतोऽप्यन्तर्बाह्यकरणानि सङ्कल्पादिबलिं हरन्तीत्याह—तस्येति । तस्य ह वा एतस्य प्राणस्य

[1] याचतो—मु.
[2] स्यैवै—क.
[3] विवेशन्ना—उ.
[4] याचतो—मु.

ब्रह्मणः मनआद्यन्तःकरणचतुष्टयं, भूतग्रहणं भविष्यद्वर्तमानज्ञानोपलक्षणार्थं, भूतादित्रिकालज्ञानं सङ्कल्पादिबलिं प्राणाय हरति। सर्वाभिधेयमभिधानरूपेण परिवेष्टृ व्याप्य स्थितं वाक्यं—वागिन्द्रियग्रहणं कर्मेन्द्रियपञ्चकोपलक्षणार्थं—कर्मेन्द्रियपञ्चकं वचनादिबलिं समर्पयति। चक्षुःश्रोत्रग्रहणं शिष्टज्ञानेन्द्रियोपलक्षणार्थम्। ज्ञानेन्द्रियपञ्चकमपि शब्दादिबलिं हरति। एवं तस्मै वा एतस्मै व्यष्टिसमष्टिप्राणाय अयाचमानाय एताः सर्वाः देवताः मनःश्रोत्राद्यन्तर्बाह्यकरणानि सङ्कल्पशब्दादिबलिं हरन्ति। तथो एवास्मै सर्वाणि भूतान्ययाचमानायैव बलिं हरन्ति। एवं यो वेद तस्य विदुषः इयमेव हि उपनिषत् उपासना व्रतम्। किं तत्? यत्र कुत्रापि न याचेदिति। उक्तार्थे दृष्टान्तमाह—तद्यथेति। यथा कश्चिद्व्रती यथोक्तकाले ग्रामं प्रविश्य भिक्षाऽटनं कृत्वा नाहमतो दत्तमश्नीयामिति प्रतिज्ञां लब्ध्वोपविशेत् तथा प्राणवित् न याचेदित्यर्थः। ये पुनरेनं यत्किञ्चिद्याचमानं पुरस्तात् पूर्वं प्रत्याचक्षीरन् प्रत्याख्यानं कृतवन्तः त एवैनमुपमन्त्रयन्ते प्रार्थयन्ति। किमिति? ददाम त इति। एष धर्मो याचितो भवति। एवमन्यतरस्तु अन्यतरेऽपि एनमयाचितं ददाम त इत्युपमन्त्रयन्ते। तथा पिंगस्यापत्यं पैङ्ग्योऽपि प्राणो ब्रह्मेत्याह स्म। तत्रोपपत्तिः—तस्य हवेत्युक्तार्थम्। वाक्परस्तात् वागिन्द्रियात् परं चक्षुरारुन्धे दीप्यते। एवं चक्षुः श्रोत्रम्। मनःपरस्तात् प्राण आरुन्धे प्राण एव सम्राट्तया दीप्यते। तस्मै वा एतस्मा इत्याद्युक्तार्थम्॥ १॥

### दुर्लभार्थलाभकरं एकधनावरोधनकर्म

अथात एकधनावरोधनम्। यदेकधनमभिध्यायात् पौर्णमास्यां वाऽमावास्यां वा शुद्धपक्षे वा पुण्ये नक्षत्रेऽग्निमुपसमाधाय परिसमूह्य परिस्तीर्य पर्युक्ष्य पूर्वदक्षिणं [1]जान्वावाच्य स्रुवेण वा चमसेन वा कंसेन वैता आज्याहुतीर्जुहोति—वाङ्नामदेवताऽवरोधिनी सा

[1] जान्ववाच्य—क. जान्वाच्य—अ २.

[1]मे तस्मादिदमवरुन्धा तस्यै स्वाहा, प्राणो नाम देवताऽवरोधिनी सा मे तस्मादिदमवरुन्धा तस्यै स्वाहा, चक्षुर्नाम देवताऽवरोधिनी सा मे तस्मादिदमवरुन्धा तस्यै स्वाहा, श्रोत्रं नाम देवताऽवरोधिनी सा मे तस्मादिदमवरुन्धा तस्यै स्वाहा, मनो नाम देवताऽवरोधिनी सा मे तस्मादिदमवरुन्धा तस्यै स्वाहा, प्रज्ञा नाम देवताऽवरोधिनी सा मे तस्मादिदमवरुन्धा तस्यै स्वाहेति । अथ धूमगन्धं प्रजिघायाज्य-लेपेनाङ्गान्यनुविमृज्य [2]वाचंयतोऽभिप्रवृज्यार्थं ब्रवीत दूतं वा प्रहिणु-याल्लभेतैव ॥ २ ॥

एवं प्राणोपासनासामान्यफलं अयाचितत्वख्यातिः विशेषफलं तद्भावापत्तिः इत्यार्थिकतयाऽभिधाय अथ कामिनां कामपूरणाय काम्योपासनामाह—**अथेति** । **अथ** प्राणोपासनाऽनन्तरं यत एकधनावरोधनकर्म विना कांक्षितार्थो न सिध्यति **अत एकधनावरोधनं** कर्म **अभिध्यायात्** । सप्रकारकं तत् कर्म कीदृशं ? इत्यत्र **पौर्णमास्याद्युक्तविकल्पान्यतमे** यथाविधि **अग्निमुपसमाधाय स्रुवाद्यन्य-तमेन वाङ्नामदेवतावरोधिनीत्यादिमन्त्रषट्केन आज्याहुतीः** हुत्वा **अथ धूमगन्धमाघ्राय** होमसम्पाताज्यलेपेन अङ्गमार्जनं कृत्वा वाङ्नियममुत्सृज्य स्वाभिलषितार्थं **ब्रवीत** स्वाभिलषितार्थो यत्र वर्तते तदानयनार्थं **दूतं वा प्रहिणुयात्** प्रेरयेत् । **इहैव** तदर्थो लभ्यते । एकधनावरोधनकर्मानुष्ठानमहिम्ना दुर्लभार्थोऽपि लभ्यत एवेत्यर्थः ॥ २ ॥

सर्वार्थसिद्धिकरं दैवं कर्म

अथातो [3]दैवं स्म वो यस्य प्रियो बभूषे यस्यैव येषां वै तेषामेवैतस्मिन् पर्वण्यग्निमुपसमाधायैतयैवावृतैता आज्याहुतीर्जुहोति

[1] अत्र सर्वपर्यायेषु "मेतस्मा" इत्यस्य स्थाने "मेऽमुष्मा" इत्यपि पाठः कोशेषु दृश्यते. [2] वाचायमो—उ. वाचंयमो—अ, अ १. [3] दैवस्रवो—क.

—वाचं ते मयि जुहोम्यसौ स्वाहा, प्राणं ते मयि जुहोम्यसौ स्वाहा, चक्षुस्ते मयि जुहोम्यसौ स्वाहा, श्रोत्रं ते मयि जुहोम्यसौ स्वाहा, मनस्ते मयि जुहोम्यसौ स्वाहा, प्रज्ञानं ते मयि जुहोम्यसौ स्वाहेति। अथ धूमगन्धं प्रजिघ्रायाज्यलेपेनाङ्गान्यनुविमृज्य वाचंयतोऽभिप्रवृज्य संस्पर्शं जिगमिषेदपि वाताद्वाऽसंभाषणस्तिष्ठेत् प्रियो हैव भवति [1]स्मरन्तीहैव भवति स्मरन्तीहैव स्यात् ॥ ३ ॥

स्वपरयोः स्मरणतः सर्वार्थसिद्धिकरकर्मोपासनमुच्यते—अथेति। **अथ**-शब्दः उपासनाऽन्तरारम्भार्थः। यतो दैवं कर्म विना चिन्तितार्थसिद्धिः न स्यात् **अतो** यत् कर्म—देवः प्राणः—तदुद्देशेन क्रियत इति दैवं स्म कर्म। **यस्य वो** यस्य कस्यचित् **प्रियः** प्रेमास्पदोऽर्थः **बभूषे** तद्गताभिलाषो वर्धते, **येषां यस्यैव** विषये स्पृहा वर्धते **तेषां तानेवोद्दिश्य एतस्मिन्** पूर्वोक्तपौर्णमास्याद्यन्यतमपर्वणि **अग्निमुपसमाधायेत्यादि** पूर्ववत्। **एतया** पूर्वोक्तविधया **आवृता** संयुक्ता **एता आहुतीर्जुहोति**। कैः मन्त्रैः? इत्यत्र—**वाच ते मयि जुहोम्यसौ स्वाहेति** मन्त्रषट्केन हुत्वा **धूमगन्धं प्रजिघायेत्यादि** पूर्ववत्। यच्चित्तं यद्वस्तु स्पृहयति तद्वस्तु पाणिना स्पृशन् जिगमिषेत्। यद्वा—यस्य सख्यमिच्छति तं स्पृशन् **जिगमिषेत्**। यद्ययं स्प्रष्टुमशक्यः तदा वातो यां दिशमुद्दिश्य वाति तत्र स्वयं स्थित्वा स्वदेहस्पर्शि**वाताद्वाऽपि** तं स्पृशन् जिगमिषेत् इत्यनुवर्तते। ततो**ऽसम्भाषणस्तिष्ठेत्**। एतत्प्रयोगात् दुराराध्योऽपि **प्रियो हैव** हितकृदेव **भवति**। स्वानुग्रहभाजो यद्यत् **स्मरन्ति** तत्तदि**हैव भवति**। यदन्यद्वा **स्मरन्ति** तदि**हैव स्या**दित्यर्थः ॥ ३ ॥

प्राणब्रह्मप्रापकं अग्निहोत्रोपासनम्

अथातः सायमन्नं [2]प्रातर्दनमान्तरमग्निहोत्रमिति चाचक्षते। यावद्वै पुरुषो भासते न तावत् प्राणितुं शक्नोति प्राणं तदा वाचि

[1] अयं व्याख्यानुसारी पाठः, आकरकोशेषु तु "स्मरन्ति हैव" इत्येव वर्तते.
[2] अनन्तरमग्नि—क. अन्तरमग्नि—अ १, अ २.

जुहोति । यावद्वै पुरुषः प्राणिति न तावद्भातुं शक्नोति वाचं तदा प्राणे जुहोति । एतेऽनन्तेऽमृताहुती जाग्रच्च [1]स्वरूपं च संततमव्यवच्छिन्नं जुहोति । अथ या अन्या आहुतयोऽन्तवत्यस्ताः कर्ममय्यो भवन्ति । एतदु वै पूर्वे विद्वांसोऽग्निहोत्रं जुह्वांचक्रुः । अथ कथं ब्रह्मेति । शुष्कभृङ्गारमृगित्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्यायाभ्यर्च्यन्ते । तद्यजुरित्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्याय युज्यन्ते । तत् सामेत्युपासीत सर्वाणि हास्मै भूतानि श्रैष्ठ्याय संनमन्ते । [2]तच्छ्रीत्युपासीत तद्यश इत्युपासीत तत्तेज इत्युपासीत तद्यथैतच्छास्त्राणां श्रीमत्तमं यशस्वितमं तेजस्वितमं भवति । तथैवैवंविद्वान् सर्वेषां भूतानां श्रीमत्तमो यशस्वितमस्तेजस्वितमो भवति । तदेतदैष्टकं कर्म यमात्मानमध्वर्युः संस्करोति तस्मिन् यद्धर्ममयं [3]प्रभवति [4]तद्धर्ममयं [5]त्वम्मयं होतर्मयं साममयमुद्गाता स एष सर्वस्यै त्रयीविद्याया आत्मैष उत [6]एव स्यान्नैतदात्मा भवति य एवं वेद ॥ ४ ॥

विशिष्टफलमुपासनान्तरमाह—अथेति । उपासनान्तरारम्भार्थः अथशब्दः । अग्निहोत्रं यतो विशिष्टफलदं अत एव सायङ्कालनिर्वर्त्यमन्नं प्रतर्दनेन मुनिना भावितं प्रातर्दनमान्तरमग्निहोत्रमिति चाचक्षते शिष्टाः, सायंप्रातर्विहिताहुतिसामान्यात् । एवं अग्निहोत्रनिर्वर्तयिता पुरुषः आत्मा अहमेवेदं सर्वमिति

[1] स्वपंश्च सं—मु. [2] तद्भी—उ.
[3] प्रवयति—अ, अ १, उ. [4] यजुर्मयं—मु.
[5] ऋङ्मयं—क, मु. [6] एवास्या—अ, अ १, अ २, क, मु.

भासते तदतिरेकेण न तावत् प्राणितुं चेष्टितुं शक्नोति । तदानीं पुरुषः प्राणं वाचि जुहोति । यावद्वै पुरुषः प्राणिति प्राणावष्टम्भतः चेष्टाविशिष्टो भवति पुरुषातिरेकेण न तावद्वागादि भातुं शक्नोति समर्थं भवति । तदानीं प्राणी वाचं प्राणे जुहोति । जाग्रदवस्थाया वागादिनिर्वर्त्यत्वात् वागाद्यग्नौ प्राणाख्यं हविः जुहोति । तथा स्वापावस्थायाः प्राणनिर्वर्त्यत्वेन वागादिकरणजातं प्राणे जुहोति, वागादिकरणानामुपरमादिति भावः । अहरहः कर्तव्यतया एतेऽनन्तेऽमृताहुती जाग्रच्च स्वरूपं स्वापश्चाहरहः सन्ततमव्यवच्छिन्नं जुहोति । अथ शरीरस्थित्यनन्तरं याः अन्याः आहुतयः अन्तवत्यः ताः कर्ममय्यो भवन्ति चरमाहुतित्वात् । एतदु वै पूर्वे विद्वांसः अग्निहोत्रं जुह्वांचक्रुः, जाग्रत्स्वापयोः अग्निहोत्रदृष्टिं कुर्युरित्यर्थः । कथं एतावता पुरुषार्थसिद्धिः इत्याक्षिपति—अथ कथं ब्रह्मेति । एतावता ब्रह्मोपासनं किं जातमिति ? उत्तरमाह—शुष्कभृङ्गारमिति । जाग्रदादिव्यापृतिरिक्तं शुष्कं भृङ्गारं स्फटिककरकोपमं प्राणं ऋगादिवेदत्रयतया उपासीत, प्राणे क्रमात् ऋगादिवेदत्रयदृष्टिं कुर्यात् । पर्यायत्रयोपासनाफलमेतत् —सर्वाणि भूतानि अस्मा एवं विदुषे सर्वस्मात् श्रैष्ठ्यायाभ्यर्च्यन्ते युज्यन्ते सन्नमन्ते च । किंच—तत् पूर्वोक्तशुष्कभृंगारं प्राणं श्रीत्वेन यशस्त्वेनोपासीत । दृष्टान्तपूर्वकं उपासनाफलं प्रकटयति—तद्यथेति । यथा तदेतदध्यात्मशास्त्रं तदितरशास्त्राणां श्रीमत्तमं मोक्षसंपत्प्रापकत्वात्, यशस्वितमं यशस्वी ब्रह्मवित् तत्तरो ब्रह्मविद्वरः तत्तमो ब्रह्मविद्वरीयान् सम्यज्ज्ञानप्राप्यब्रह्मविद्वरीयस्त्वप्रापकत्वात्, तथा तेजस्वितमं तथा प्रत्यक्परैक्यगमकत्वात्, तथैवैवंविद्वान् सर्वेषां भूतानां श्रीमत्तमो यशस्वितमः तेजस्वितमश्च भवति । यं आत्मानं अध्वर्युः एवं संस्करोति तदेतदैष्टकं कर्माग्निहोत्रं इष्टकास्थानीयाहोरात्राहुतिनिर्वर्त्यत्वात् । तस्मिन् इत्थंभूताग्निहोत्रकर्मणि यद्धर्ममयं फलं प्रभवति तद्धर्ममयं अम्मयं अमृतमयं होतर्मयं साममयम् । य एवंविदुद्गाता स एषः सर्वस्यै सर्वस्याः त्रयीविद्यायाः प्रतिपाद्यं प्राणाख्यं ब्रह्म । य एवं वेद स एष आत्मा प्राण उतैव स्यात् । य एवं न वेद सोऽयमात्मा न भवति, सामान्यजनो भवतीत्यर्थः ॥ ४ ॥

सर्वजयप्रदं अमावास्योपासनम्

अथातः सर्वजितः कौषीतकेस्त्रीण्युपासनानि भवन्ति । यज्ञोपवीतं कृत्वाऽप आचम्य त्रिरुदपात्रं प्रसिच्योद्यन्तमादित्यमुपतिष्ठेत् वर्गोऽसि पाप्मानं मे वृङ्ग्धीति, एतयैवावृता मध्ये सन्तं उद्वर्गोऽसि पाप्मानं म उद्वृङ्ग्धीति, एतयैवावृताऽस्तं यन्तं संवर्गोऽसि पाप्मानं मे संवृङ्ग्धीति, यदहोरात्राभ्यां पापं करोति सं तद्वृङ्क्ते । अथ मासिमास्यमावास्यायां पश्चाच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवावर्ता हरिततृणाभ्यां वा वृत्तः स्यात् यत्ते स्वसीमं हृदयमसि चन्द्रमसि शृतं तेनामृतत्वमस्येशानं माऽहं पौत्रमघं रुदमिति । न हास्मात् पूर्वाः प्रजाः प्रयन्तीति । नजातपुत्रस्याथ जातपुत्रस्य ह [1]यं समेत्तातु सन्ते पयांसि सस्वयन्तु राजा यमात्या अंशुमाप्याययन्तीत्येतास्तिस्र ऋचो जपित्वा नास्माकं प्राणेन प्रजया पशुभिराप्याययिष्ठा योऽस्मान् द्वेष्टि यं च वयं द्विष्मः तस्य प्राणेन प्रजया पशुभिराप्याययस्वेति दैवीमावृतमावर्त आदित्यस्यावृतमन्वावर्तयति दक्षिणं बाहुमन्वावर्तते ॥ ९ ॥

अमावास्यानिर्वर्त्योपासनान्तरं विशिष्टफलमाह—अथेति । अथात इत्युक्तार्थम् । कौषीतकिः मन्त्रद्रष्टा ऋषिः एवमाह । किमिति ? सर्वं जेतुमिच्छोः **सर्वजितः त्रीण्युपासनानि भवन्तीति** । तानि कीदृशानि ? तत्क्रमः कीदृशः ?

[1] अत्र व्याख्याऽनुसारी मन्त्रपाठो निर्णेतुमशक्यः । मुद्रितपुस्तकपाठस्तु श्रेयान् भाति. स चैवं वर्तते—"आप्यायस्व समेतु ते . . . सं ते पयांसि समु यन्ति वाजाः . . . यमादित्या अंशुमाप्याययन्तीत्येतास्तिस्र ऋचो जपित्वा".

इत्यत आह—**यज्ञोपवीतमिति** । नवीनयज्ञोपवीतं कृत्वा धृत्वाऽप आचम्य त्रिरुदपात्रं विधिवत् प्रसिच्य संस्थाप्य उदपात्रत्रयं स्पृशन् वर्गोसि पाप्मानमित्यादिमन्त्रत्रयेण उद्यन्तमादित्यमुपतिष्ठेत् उपस्थानमन्त्रान् जपेत् । तेन कर्मणाऽयं यदहोरात्राभ्यां पापं कर्म करोति तत् सर्वं स्वोपास्यादित्यः सम्यक् वृङ्क्ते कबळयति । स्वगतदुरितक्षयेच्छुभिः कदा एवं कर्तव्यमित्यत आह—**मासीति** । मासिमासि प्रतिमासं सम्प्राप्तामावास्यायां पश्चात् दृश्यमानं चन्द्रमसमुपतिष्ठेत । एतया वक्ष्यमाणयैव "यत्ते स्वसीमं" इत्यृता ऋचा चकारस्थाने तकारः छान्दसः । हरिततृणमुष्टिभ्यां वा वृत्तो युक्तः स्यात् । य इमं मन्त्रं एवं जपति न हास्मात् पूर्वाः प्रजाः प्रयन्ति न म्रियन्त इत्यर्थः । नजातपुत्रस्याथ जातपुत्रस्य वा मे मम प्राणादीन् रक्षरक्षेति "सन्ते पयांसि" इति मन्त्रेण सवितारं चन्द्रमसं वा प्रार्थयेदित्याह—**नजातपुत्रस्येति** । अपुत्रस्य सपुत्रस्य वा मे मम दुरितस्य अत्ता तु आचार्यो देवः यं मनुमाह सोऽयं अनेन मन्त्रेण स्तुतः सन् मत्प्राणं प्रजां पशूंश्च सदा रक्षतु इत्यर्थः । किञ्च—यो निरपराधिनोऽस्मान् द्वेष्टि यं अपराधिनं वयं द्विष्मः हे सवितः त्वं तस्य मद्रिपोः प्राणेन प्रजया पशुभिश्चाप्यायस्व तृप्तिं गच्छेति दैवीमावृतमिति मन्त्रं जपेदित्यर्थः ॥ ९ ॥

प्रजामरणदुःखनिवारकं चन्द्रोपासनम्

अथ पौर्णमास्यां पुरस्ताच्चन्द्रमसं दृश्यमानमुपतिष्ठेतैतयैवावृता—सोमो राजाऽसि विचक्षणः पञ्चमुखोऽसि प्रजापतिर्ब्राह्मणस्त एकं मुखं तेन मुखेन राज्ञोत्थितेन मुखेन मामन्ववादं कुरु । राजा त एकं मुखं तेन मुखेन विशोत्थितेनैव मुखेन मामन्ववादं कुरु । श्येनस्त एकं मुखं तेन मुखेन पक्षिणोत्थितेन मुखेन मामन्ववादं कुरु । अग्निस्त एकं मुखं तेन मुखेनेमं लोक[1]मुत्थि

[1] मथितेन—उ, उ १, मथितेन—अ, अ १, अ २.

तेन मुखेन मामन्ववादं कुरु । सर्वाणि भूतानीत्येव पञ्चममुखं तेन मुखेन सर्वाणि भूतान्युत्थितेन मुखेन मामन्ववादं कुरु । माऽस्माकं प्राणेन प्रजया पशुभिररक्षिष्ठा योऽस्मान् द्वेष्टि यं च वयं द्विष्मस्तस्य प्राणेन प्रजया पशुभिरपक्षीयस्वेति स्थितिर्दैवीमावृतमावर्त आदित्यस्यावृतमन्वावर्तन्त इति दक्षिणं बाहुमन्वावर्तते । अथ संवेश्य नु जायायै हृदयमभिमृशेत्

यत्ते स्वसीमे [1]हृदयो हितमन्तः प्रजापतौ ।
मन्येऽहं मां तद्विद्वांसं माऽहं पौत्रमघं रुदम् ॥

इति । न हास्मात् पूर्वाः प्रजाः प्रैति [प्रयन्ति] ॥ ६ ॥

पुनर्विशिष्टफलमुपासनान्तरमाह—अथेति । अथ दर्शोपासनानन्तरं पौर्णमास्यां पुरस्तात् पूर्वस्यां दिशि दृश्यमानं उदितं चन्द्रमसं पञ्चप्राणवृत्तिस्तावकमन्त्रैः पञ्चभिः उपतिष्ठेत चन्द्रमसं पश्यन् जपेत् । एतयैवावृतेति पूर्ववत् । ऋचा ऋग्भिः यः प्रतिपाद्यः स सोमो राजाऽसि मदिष्टफलदाने विचक्षणोऽसि प्राणापानादिभेदेन पञ्चममुखोऽसि ब्रह्मैव ब्राह्मणः प्रजापतिरसि तवैकं मुखं यत् प्राणाख्यं तेन राज्ञा सूर्येण सहोत्थितमुखेन मामन्ववादं निर्विवादकुशलं कुरु । शिष्टं स्पष्टम् । माऽस्माकं प्राणेनेत्यादि समानम् । दैवीमावृतमिति मन्त्रेणात्तारमादित्यं संस्तुत्य अथ यत्ते स्वसीम इति मन्त्रेण जायायै जायाया जठरे हस्तं संवेश्य अभिमृशेत् । एवं यः करोति न हास्मात् पूर्वाः प्रजाः प्रैतीत्युक्तार्थम् ॥ ६ ॥

पुत्रदीर्घायुःसम्पादकं कर्म

अथ प्रोष्यायनः पुत्रस्य मूर्धानमभिमृशति—अङ्गादङ्गात् संभवसि हृदयादधि जायसे । आत्मा वै पुत्र [2]माविथ स जीव शरदः

[1] हृदये—क. [2] नामासि—क.

शतमसाविति नामास्य गृह्णाति । [1]मा छेत्ता मा [2]व्यथिष्ठाः शतं शरद आयुषो जीव पुत्र । ते नाम्ना मूर्धानमभिजिघ्राम्यसाविति त्रिर्मूर्धानमभिजिघ्रेत् । गवां त्वा हिंकारेणाभिहिंकरोमीति [3]त्रिर्मूर्धानमभिहिंकुर्यात् ॥ ७ ॥

अथ पुत्रस्य दीर्घायुःसम्पादनार्थेयं खण्डिका आरभ्यते—अथेति । चिरं प्रवास्य पुनरागतः **प्रोष्यायनः** चिरकालविरहजहर्षेण अङ्गादङ्गादिति मन्त्रद्वयार्थानुसन्धानपूर्वकं त्रिवारं **मूर्धानमभिजिघ्रन्** तथा त्रिवारं **हिंकुर्यात्** ॥ ७ ॥

परिमराख्यं अध्यात्माधिदैवोपासनम्

अथातो दैवः [4]परिसरः । एतद्वै ब्रह्म दीप्यते यदग्निर्ज्वलत्यथैतन्म्रियते यन्न ज्वलति तस्यादित्यमेव तेजो गच्छति वायुं प्राणः । एतद्वै ब्रह्म दीप्यते यथा मर्त्यो दृश्यतेऽथैतन्म्रियते यन्न दृश्यते तस्य चन्द्रमसमेव तेजो गच्छति वायुं प्राणः । एतद्वै ब्रह्म दीप्यते यद्विद्युद्विद्योततेऽथैतन्म्रियते यन्न विद्योतते तस्य वायुमेव तेजो गच्छति वायुं प्राणः । ता वा एताः सर्वा देवता वायुमेव प्रविश्य वायौ सृप्ता न मूर्च्छन्ते तस्माद्धैव पुनरुदीरत इत्यधिदैवतम् । अथाध्यात्मम् । एतद्वै ब्रह्म दीप्यते यद्वाचा वदत्यथैतन्म्रियते यन्न वदति तस्य चक्षुरेव तेजो गच्छति प्राणं प्राणः । एतद्वै

[1] मत चेत्ता—अ २, क. [2] व्यधिष्टते—क.

[3] व्याख्यानुसारीत्ययं पाठो धृतः. आकरपुस्तकपाठस्तु—" त्रिभिर्मूर्धानं " इति.

[4] यद्यपि " परिसरः " इत्याकरकोशगतः पाठः व्याख्याऽनुसारी स्यात् . तथाऽपि शाखाऽन्तरपाठस्य अत्रत्यफलवाक्यस्य चालोचने " परिमरः " इति पाठान्तरं युक्ततरं भाति.

ब्रह्म दीप्यते यच्चक्षुषा पश्यत्यथैतन्म्रियते यन्न पश्यति तस्य श्रोत्रमेव तेजो गच्छति प्राणं प्राणः । एतद्वै ब्रह्म दीप्यते यन्मनसा ध्यायत्यथैतन्म्रियते यन्न ध्यायति तस्य प्राणमेव तेजो गच्छति प्राणं प्राणः । ता वा एताः सर्वा देवताः प्राणमेव प्रविश्य प्राणे कृप्ता न मूर्च्छन्ते तस्माद्धैव पुनरुदीरते । तद्यदिह वा [1]एवं विद्वांस उभौ पर्वतावभिप्रवर्तयातां [2]तस्त्व[तौ त्व]र्षमाणौ दक्षिणश्चोत्तरश्च न हैवैनं [3]त्रीणि वीयाताम् । अथ य एनं द्विषन्ति यांश्च स्वयं द्वेष्टि त एनं सर्वे परितो म्रियन्ते ॥ ८ ॥

अधिदैवताध्यात्मपरिच्छिन्नोपासनं विशिष्टफलमाह—अथात इति । अथातःशब्दावुक्तार्थौ । दैवः आधिदैवतं परिसरः संनिहितत्वात् । एतद्वै सावित्रं ब्रह्म दीप्यते अहनि रात्रौ तु यदग्निर्ज्वलति । अथैतन् सावित्रं तेजो म्रियते अग्निं प्रविशति । पुनरहनि यदग्निः न ज्वलति तस्याग्नेस्तेज आदित्यमेव गच्छति, "उद्यन्तं वावादित्यमग्निरनु समारोहति तस्माद्धूम एवाग्नेर्दिवा ददृशे" इति श्रुतेः । तथा वायुं मुख्यप्राणं प्रति प्राणो गच्छति । एतद्वै वाय्वाख्यं ब्रह्म दीप्यते यथा मर्त्यो दृश्यते आध्यात्मिकप्राणोऽवगम्यते । अथैतन्म्रियते मुख्यः प्राणः तिरोधत्ते यन्न मार्त्यप्राणो दृश्यते । तस्य प्राणस्य तेजश्चन्द्रमसमेव गच्छति तथा वायुं प्राण इत्युक्तार्थम् । एतद्वै ब्रह्म दीप्यते यद्विद्युत् विद्योतते अथैतन्म्रियते विद्युत अन्धकारग्रासत्वात् यन्न विद्योतते । तस्य तेजो वायुं सूत्रात्मानमेव गच्छति । तथा वायुं प्राणः । ता वा एताः सर्वाः देवताः वायुमेव प्रविश्य वायौ सूत्रात्मनि तद्भावापत्त्या तृप्ताः सत्यो

[1] एतां विद्यां स—क. [2] तुस्तूर्ष—शंकरानन्ददीपिकाऽनुसारी पाठः.

[3] अयं पाठः व्याख्याऽनुसारीति धृतः "स्तृण्वीयातां" इति तु कोशगतः पाठः समीचीन एव स्यात्.

नहि मूर्च्छन्ते नात्यन्तिकमस्तं गच्छन्ति, बीजभावमेत्य वर्तन्ते । तस्मात् सूत्रात्मन एव पुनरुदीरते अभिव्यक्ता भवन्तीति यत्तदधिदैवतम् । अथाध्यात्ममुच्यते—एतद्वै प्रत्यग्ब्रह्म दीप्यते यद्वाचा वदति, बाह्यव्यापारात् । अथैतन्म्रियते प्रत्यग्भावस्तिरोहितो भवति वाक् यन्न वदति । तस्य वागिन्द्रियस्य तेजः चक्षुरेव गच्छति तथा मुख्यप्राणं वागादिप्राणः । एतद्वै ब्रह्म दीप्यते प्रत्यक् यच्चक्षुषा पश्यति । अथैतन्म्रियते रूपाद्यावृतं भवति यन्न पश्यति । तस्य चक्षुषः तेजः श्रोत्रमेव गच्छति । तथा प्राणं प्राण इत्युक्तार्थम् । एतद्वै ब्रह्म दीप्यते यन्मनसा ध्यायति । अथैतन्म्रियते यन्न ध्यायति । तस्य मनसस्तेजः प्राणमेव गच्छति । तथा प्राणं प्राणः । ता वा एताः सर्वाः वागाद्याः देवताः प्राणमेव प्रविश्य प्राणे क्लृप्ताः न मूर्च्छन्ते । तस्माद्धैव पुनरुदीरत इत्यादि समानम् । तद्यदिह वा एवं विद्वांसः अधिदैवताध्यात्मरूपौ ऋषमाणौ चरन्तौ पर्वतौ दक्षिणश्चोत्तरश्चति द्विप्रकारौ अभिप्रवर्तयातां तदियत्तां ज्ञात्वा प्रवर्तन्ते नहैवैनं एवंविदमधिदैवाध्यात्माधिभूतानि त्रीणि वीयातां न हि स्पृशन्ति । य एनं एवंविदं द्विषन्ति यांश्च स्वयं द्वेष्टि त एनं सर्वे परितो म्रियन्ते इत्युक्तार्थम् ॥ ८ ॥

### निःश्रेयसादानं नाम मुख्यप्राणविद्या

अथातो निःश्रेयसादानम् । सर्वा ह वै देवता अहंश्रेयसे विवदमाना अस्माच्छरीरादुच्चक्रमुः । तद्दारुभूतं शिष्ये । अथ हैनद्वाक्प्रविवेश तद्वाचा वदच्छिष्य एव । अथ हैनच्चक्षुः प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छिष्य एव । अथ हैनच्छ्रोत्रं प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वच्छिष्य एव । अथ हैनन्मनः प्रविवेश तद्वाचा वदच्चक्षुषा पश्यच्छ्रोत्रेण शृण्वन्मनसा ध्यायच्छिष्य एव । अथ हैनत् प्राणः प्रविवेश तत्तत एव

समुत्तस्थौ । तद्देवाः प्राणे निःश्रेयसं [1]विजित्य प्राणमेव प्रज्ञाऽऽत्मानमभिसंस्तूय सहैतैः सर्वैरस्माल्लोकादुच्चक्रमुः । ते वायु-प्रतिष्ठाकाशात्मानः स्वर्जयः । तथो एवैवं विद्वान् सर्वेषां भूतानां प्राणमेव प्रज्ञाऽऽत्मानमभिसंस्तूय सहैतैः सर्वैरस्माच्छरीरादुत्क्रामति स वायुप्रतिष्ठाकाशात्मा [2]स्वरेति सद्भवति यत्रैतद्देवास्तत् प्राप्य तदमृतो भवति यदमृतो देवाः ॥ ९ ॥

वागादिप्राणापेक्षया मुख्यप्राणस्य वैशिष्ट्यद्योतनाय इयं खण्डिका आरभ्यते—अथेति । अथात इत्युक्तार्थम् । निःश्रेयसादानं स्वकृतार्थताप्रकटनं कर्तुं सर्वा ह वै वागादिदेवता अहं श्रेयान् अहं श्रेयान् इत्यस्मिन्नर्थे मिथो विवदमानाः सत्यः अस्माच्छरीरादूर्ध्वं उच्चक्रुपुः उत्क्रमणं कृतवन्तः । तद्दारुभूतं शिष्ये शिश्ये । अथ हैनच्छरीरं वाक् प्रविवेश तच्छरीरं वाचा वदत् शिष्य एव । एवं चक्षुःश्रोत्रमनांसि तच्छरीरं प्रविश्य तद्वाचा वदत् चक्षुषा पश्यत् श्रोत्रेण शृण्वत् मनसा ध्यायत् शिष्य एव । अथ हैनच्छरीरं प्राणः प्रविवेश तत्तत एव समुत्तस्थौ उत्थितवत् । ते देवाः भग्नदर्पाः सन्तः प्राणस्य शरीरोत्थापयितृत्वसामर्थ्यमवगम्य अस्मदपेक्षया प्राण एव ज्येष्ठः श्रेष्ठो वरिष्ठश्चेति स्वानुभवप्रमाणेन यथोक्तमाहात्म्यवति प्राणे निःश्रेयसं कृतकृत्यत्वं विजित्य विचिन्त्य प्राणमेव प्रज्ञात्मानं स्वपरायणत्वेन अभिसंस्तूय सहैतैः सर्वैः एते सर्वे मिळित्वा अस्माल्लोकाच्छरीरात् उच्चक्रमुः । ये युगपदुत्क्रान्तास्ते वायु-प्रतिष्ठाः सूत्रात्मपर्यवसन्नाः आकाशो ब्रह्मैवात्मा येषां ते आकाशात्मानः स्वर्जयः स्वर्जया भवन्ति, तैः स्वात्मलोकस्य जितत्वात् । तथैवं विद्वान् सर्व-भूतात्मत्वेन प्रसिद्धं प्रज्ञाऽऽत्मानं प्राणमेवाभिसंस्तूय सर्वैरेतैः वागादिप्राणैः सह अस्माच्छरीरात् उत्क्रामति । स वायुप्रतिष्ठाकाशात्मा स्वः ब्रह्मलोकमेति ।

[1] विचिन्त्य—अ २, क. [2] न स्व—अ २. स स्व—क.

तत्र गत्वा सम्यज्ज्ञानमवाप्य सदेव भवति । यद्बोधतो देवाः अमृतत्वं गताः तथाविधं बोधमवाप्यामृतो भवति ॥ ९ ॥

पुत्राभ्युदयफलं सम्प्रदानाख्यं उपासनम्

अथातः पितापुत्रो यं संप्रदानमिति चाचक्षते । पिता पुत्रं प्रेष्याह्वयति । न नवैस्तृणैरागारं संस्तीर्याग्निमुपसमाधायोदकुम्भं सपात्रमुपनिधायाहतेन वाससा संप्रच्छन्नं ह्यत एत्य पुत्र उपरिष्टादभि-[1]निष्पद्येत इन्द्रियैरस्येन्द्रियाणि संस्पृश्यापि वाऽस्याभिमुखत एवासीत । अथास्मै संप्रयच्छति—वाचं मे त्वयि दधानीति पिता, वाचं ते मयि दध इति पुत्रः । चक्षुर्मे त्वयि दधानीति पिता, चक्षुस्ते मयि दध इति पुत्रः । श्रोत्रं मे त्वयि दधानीति पिता, श्रोत्रं ते मयि दध इति पुत्रः । मनो मे त्वयि दधानीति पिता, मनस्ते मयि दध इति पुत्रः । अन्नरसान् मे त्वयि दधानीति पिता, अन्नरसांस्ते मयि दध इति पुत्रः । कर्माणि मे त्वयि दधानीति पिता, कर्माणि ते मयि दध इति पुत्रः । सुखदुःखे मे त्वयि दधानीति पिता, सुखदुःखे ते मयि दध इति पुत्रः । आनन्दं रतिं प्रजातिं मे त्वयि दधानीति पिता, आनन्दं रतिं प्रजातिं ते मयि दध इति पुत्रः । इत्या मे त्वयि दधानीति पिता, इत्यास्ते मयि दध इति पुत्रः । धियो विज्ञातव्यं कामान् मे त्वयि दधानीति पिता, धियो विज्ञातव्यं कामांस्ते मयि दध इति पुत्रः । अथ दक्षिणाप्राक् प्राङ् परिक्रामति तं [2]पिता न मन्त्रयति—

[1] निपद्यत—अ, अ १, अ २, क.    [2] पिताऽनु—क, मु.

यशो ब्रह्मवर्चसमन्नाद्यं कीर्तिस्त्वा जुषतामिति । अ[1]थेतरः सव्यमंसमन्ववेक्षते पाणिनाऽन्तर्धाय [2]वसनात्तनु वा प्रच्छाद्य स्वर्गान् लोकान् कामानवाप्नुहीति स्वयं ह्येकतः स्यात् । पुत्रस्यैश्वर्ये पिता वसेत परि वा व्रजेयुः । यद्युवै प्रयुञ्ज्यादेवैनं समापयति तथा समापयितव्यो भवति ॥ १० ॥

स्वपुत्राभ्युदयहेतुतयेदमुपासनान्तरं प्रकटयन्नुपसंहरति—अथेति । अथात इत्युक्तार्थम् । पितापुत्रो यं सम्प्रदानमिति चाचक्षते—पित्रे हितकृत् पुत्रः, पुत्राय हितकृत् पितेति सम्प्रदानशब्दार्थः । पिता पुत्रं प्रेष्याह्वयति । नवीनतृणैरागारं कल्पयित्वा स्वगृह्योक्तविधानेन अग्निमुपसमाधाय अग्नेः पुरस्तादुदकुम्भमुपपात्रसहितं उपनिधाय धौतवाससा संप्रच्छन्नं कृत्वा ह्यतः कुम्भप्रदेशात् उपरिष्टात् उदक्प्रदेशे पिता पुत्रश्चाभिनिष्पद्येते निष्पन्नौ भवतः । ततः पितुः वागादीन्द्रियैः अस्य पुत्रस्य इन्द्रियाणि वक्ष्यमाणमन्त्रानुरोधेन संस्पृश्यापि वाऽस्य पितुरभिमुखत एव पुत्र आसीत । अथास्मै पुत्राय पिता स्ववागादिकरणग्रामं सम्प्रयच्छति । कथं? पिता मे वाचं त्वयि दधानीति वदति । पुत्रस्तु ते वाचं मयि दध इति प्रार्थयति । तथा चक्षुर्मे इत्यादि समानम् । एवं पिता पुत्रे स्वकरणजातं विन्यस्याथ अग्न्युदकुम्भदक्षिणभागस्थप्राग्भागं स्वयं प्रागेव परिक्रामति । तदा तं पुत्रं पिता नाभिमन्त्रयति न वाचा वदति, यशो ब्रह्मवर्चसमन्नाद्यं कीर्तिस्त्वा जुषतामिति मनसा ध्यायति । अथेतरः पुत्रः सव्यमंसं पाणिनाऽन्तर्धाय अन्ववेक्षते वसनाद्वाससा तनु वा तनुं वा प्रच्छाद्य स्वपितरमुद्दिश्य हे पितस्त्वं स्वर्गान् लोकान् स्वाभिलषित-

[1] थेतरः—अ १. अ २, क, उ.

[2] अयं पाठो व्याख्यामनुसृत्य धृतः. कोशपाठस्तु—"वसनान्तनुवा" इति उ, अ १, अ २. "वसनान्तनवा" इति अ, क. कोशयोः. "वसनान्तेनवा" इति मुद्रितकोशे.

कामानवाप्नुहीति पितरं प्रेषयित्वा स्वयं ह्येकतः एक एव स्यात् । पुत्रस्यैश्वर्ये पिता वसेत पितैव पुत्ररूपेण वर्तते, “ आत्मा वै पुत्रनामाऽसि ” इति श्रुतेः । एवं एतद्वंशीयाः स्वकरणजातं पुत्रे विन्यस्य परि वा परितो व्रजेयुः, सूत्रान्तर्यामिभावमेत्य व्यापकतां भजेयुः । यद्यु वै यद्वा तद्वंशीयः प्रकर्षेण स्वातिरिक्तापह्नवो यत्र युज्यते तत्प्रयुज्यं सम्यज्ज्ञानं तस्मात् प्रयुज्यादेव सम्यज्ज्ञानात् एनं स्वातिरिक्तं भ्रमं समापयति अपह्नवं करोति । परमपुरुषार्थेच्छुभिः तथा समापयितव्यो भवति स्वातिरिक्तास्तिताभ्रम इत्यर्थः ॥

इति द्वितीयोऽध्यायः

---

# तृतीयोऽध्यायः

मनुष्यहिततमं प्रज्ञाऽऽत्मप्राणोपासनम्

प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम युद्धेन पौरुषेण च । तं हेन्द्र उवाच प्रतर्दन वरं ते ददानीति । स होवाच प्रतर्दनस्त्वमेव वृणीष्व यं त्वं मनुष्याय हिततमं मन्यस इति । तं हेन्द्र उवाच न वै वरं परस्मै वृणीते त्वमेव वृणीष्वेति । अवरो वै तर्हि किल म इति होवाच प्रतर्दनः । अथो खल्विन्द्रः सत्या देवतेयाय सत्यं हीन्द्रः । स होवाच मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्ये यन्मां विजानीयां त्रिशीर्षाणं त्वाष्ट्रमहनमरुङ्मुखान् यतीन् सालावृकेभ्यः प्रायच्छं बह्वीः संधा अतिक्रम्य

दिवि प्रह्लादीनतृणमहमन्तरिक्षे पौलोमान् पृथिव्यां कालकाश्यां[1]तस्य मे तत्र न लोम च मीयते। स यो मां विजानीयान्नास्य केन च कर्मणा लोको मीयते न मातृवधेन पितृवधेन न स्तेयेन न भ्रूणहत्यया नास्य पापं च न चक्रुषो [2]मुखं नीलं वेत्तीति स होवाच प्राणोऽस्मि प्रज्ञाऽऽत्मा [3]तं मामायुरमृतमित्युपास्स्वायुः [4]प्राणः प्राणो वा आयुः प्राण [5]प्राण उवा अमृतं यावद्ध्यस्मिञ्छरीरे प्राणो वसति तावदायुः प्राणेन ह्येवामुष्मिल्लोकेऽमृतत्वमाप्नोति ॥१॥

द्वितीयाध्यायोक्तरीत्या निवृत्तकाम्यकर्मतत्फलेच्छानां सविशेषब्रह्मोपासनाद्वारा निर्विशेषं ब्रह्म प्रतिपादनीयमिति तृतीयाध्याय आरभ्यते। इन्द्रप्रतर्दनप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था। प्रतर्दन इति। नामतः प्रतर्दनः। ह वा इतिशब्दावैतिह्यार्थौ। दिवोदासस्यापत्यं दैवोदासिः। युद्धेन तत्साधनबलेन इक्ष्वाकुवत् पौरुषेण च इन्द्रस्य प्रियं धाम स्वर्गं जगाम। स तत्र गत्वा इन्द्रतुष्टये तदमित्रवर्गं जित्वा आवर्तमानं तं राजानं स्वारातिघातसन्तुष्टः सन् इन्द्र उवाच। किमिति? हे प्रतर्दन ते तुभ्यं वरं ददानीति। एवमुक्तवन्तं स प्रतर्दन उवाच ह। किमिति? हे भगवन् त्वमेव सर्वज्ञो यं वरं मनुष्याय हिततमं मन्यसे तं वरं त्वमेव मनुष्यस्य वृणीष्व। नह्यज्ञो मनुष्यः स्वात्यन्तिकहितं वेत्ति। तमित्येवमुक्तवन्तमिन्द्रः उवाच। किमिति? न वै कश्चिदपि लोके परस्मै वरं वृणीते, अतस्त्वमेवेष्टवरं मत्सकाशात् वृणीष्वेति। एवमुक्तः प्रतर्दन उवाच। किमिति? तर्हि किल मदर्थं त्वयैव वरावरणे मे ममावरो वै वराभाव एव प्राप्तः, स्वात्मतया वरणीयवस्त्वपरिज्ञानात्। एवमुक्तोऽथोऽनन्तरं

[1] स्तसंमे—उ.
[2] मुखान्नीलंवेदेति—उ, उ १.
[3] नं मा—क.
[4] प्रायुः प्राणो—अ १, अ २, उ १.
[5] प्राण इवा—अ, अ १. प्राणं व—अ २.

खल्विन्द्रः उवाचेत्यनुवर्तते । किमिति ? सत्या सत्यवाक्या परमार्थसत्या देवता त्वामियाय त्वदनुग्रहार्थं त्वां प्राप्तवती । सा च हि यस्मात्त्वामागतवती देवता सत्यं सत्यवाक्यं परमार्थतत्त्वं इन्द्रः यतः क्रियाज्ञानशक्तिमदात्मा अतो न वराभावस्ते भविष्यति, अतः सत्या देवताऽऽत्मा अहमेव त्वद्वरं वृण इति शेषः। एवमुक्त्वा स होवाच भगवानिन्द्रः । किमिति ? मामेव क्रियाज्ञानशक्तिविग्रहं सगुणोपासनद्वारा विजानीहि । एतन्मद्याथात्म्यपरिज्ञानमेव मनुष्याय हिततमं मन्ये । तत् कथमित्यत्र यत् यस्मात् मां सर्वारोपापवादाधिकरणतया विजानीयां सम्यक् जानामि तस्मादेवाहं निजोपग्रहैः राजभृत्यवत् अन्ततोऽयस्कान्तवद्वा प्रवर्त्यमानैः त्रिशीर्षाणं त्वष्टृपुत्रं त्वाष्ट्रमहनं—हन्तेर्लङुत्तमैकवचनं—हतवानस्मि । तत्कृतहत्यामपि निर्वर्तितवानस्मि । तथा अरुक् स्वाज्ञानमेव मुखं येषां तान् अरुङ्मुखान् यतीन् स्वाज्ञानपूर्वकं स्वाश्रमाचारबहिर्मुखान् वनश्वविशेषसालावृकेभ्यः खादनाय प्रायच्छम् । इदमपि ब्रह्महत्याऽन्तरम् । अथ बह्वीः सन्धाः कालकक्ष्याः पुरुषायुषलक्षणाः अतिक्रम्य दिवि स्थितान् प्रह्लादापत्यासुरान् प्रह्लादीनतृणं हिंसितवानस्मि । तथा अन्तरिक्षे पुलोमापत्यासुरान् पौलोमानतृणं, तथा पृथिव्यां कालकाश्यासुरानतृणम् । तस्यैवं हिंसितवतो मे मम तत्र तादृशदुष्कर्मणि मया अनुष्ठितेऽपि तेन कर्मणा न मे लोम च लोमापि मीयते नामीमिपत्—मिङ्हिंसायां, अस्मात् ण्यन्ताच्चङि—न हि पीडयति स्म । स्वतत्त्वनिष्ठामहिम्ना तद्दोषास्पर्शात् स्वाज्ञवन्न मे तज्जन्यसुखं दुःखं वाऽभूदित्यर्थः। तथा च स्मृतिः—

यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
हत्वाऽपि स इमान् लोकान् न हन्ति न निबध्यते ॥

इति । यथा मे स्वज्ञानमहिम्ना न कर्मलेपोऽस्ति एवमेव स यः कश्चित् मां सर्वप्रत्यगभिन्नं ब्रह्मास्मीति विजानीयात् अस्य विदुषो लोकः केन च केनापि पापकर्मणा न मीयते नहि हिंसितो भवति । उक्तार्थमेव विशदयति—नेत्यादिना । मातृवधपापेनापि लोको न मीयते, तथा न पितृवधेन, न स्तेयेन, न भ्रूण-

हत्यया लोको मीयते । अपि च पापं चक्षुषो यथाप्राप्तपापक्रियामपि करणैः पुण्यविशेषं प्रवर्तयते अस्य मुखमान्तरं बाह्यं च नीलं अज्ञानं न वेत्ति न प्राप्नोति । तथा च स्मृतिः—

प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ।
न द्वेष्टि संप्रवृत्तानि न निवृत्तानि कांक्षति ॥

इति । इतिशब्दो मानुषहितोपदेशसमाप्त्यर्थः । एवं स्वयाथात्म्यमेव मानुषहिततया उपदिश्य तत्सिद्धिहेतुस्वोपास्तिमुपदिशति भगवान्—स होवाचेति । प्राणवच्छरीरधात्री जीवप्रज्ञामयी ज्ञानशक्तिरात्मा स्वरूपं यस्य ममेन्द्रस्य सोऽहं प्राणोऽस्मि प्रज्ञाऽऽत्मा । तथा च श्रुतिः, "वरं ते ददामीति स होवाच त्वामेव विजानीयामिति तमिन्द्र उवाच प्राणो वा अहमस्म्यृषे" इत्यादि । यः प्रज्ञाविशिष्टप्राणोपाधिकः तं मां ज्ञानक्रियाशक्तिमूर्तिं तावकायुरमृतमिति च क्रमादुपास्स्व । एवमुपासनाफलमेतत्—आयुः प्राणः प्राणो वा आयुः, क्रियाशक्तिप्राधान्यात् । तथाऽमृतत्वोपास्तिः ज्ञानशक्तिप्रधानात् [प्राधान्यात्] । नानयोर्भिदाऽस्ति । सोऽसौ प्राण इति वै प्राण एवामृतं च । तत् कथं? यावद्ध यस्मिन् शरीरे प्राणो वसति तावदायुरुच्छ्वासनिःश्वासात्मा भवति । तथा प्राणेनैव हि यथावदुपास्यमानेन अमुष्मिन् परलोके उत्पत्तिविनाशराहित्यलक्षण-ममृतत्वमाप्नोति । अतः प्राण एवायुरमृतं च ॥ १ ॥

मुख्यप्राणस्य अमृतत्वोपासनम्

प्रज्ञया सत्यसंकल्पः स यो म आयुरमृतमित्युपास्ते सर्वमायुरस्मिंल्लोक आप्नोत्यमृतत्वमक्षितिं स्वर्गे लोके । तद्धैक आहुरेक[1]भूयं वै प्राणा गच्छन्तीति । न हि कश्चन शक्नुयात् सकृद्वाचा नाम प्रज्ञापयितुं चक्षुषा रूपं श्रोत्रेण शब्दं मनसा

[1] भूया—अ २, क.

ध्यातमिति एक[1]भूयं वै प्राणा एकैकं सर्वाण्येवैतानि प्रज्ञापयन्ति । वाचं वदन्तीं सर्वे प्राणा अनुवदन्ति चक्षुः पश्यत् सर्वे प्राणा अनुपश्यन्ति श्रोत्रं शृण्वत् सर्वे प्राणा अनुशृण्वन्ति मनो ध्यायत् सर्वे प्राणा अनुध्यायन्ति प्राणं प्राणन्तं सर्वे प्राणा अनुप्राणन्तीति । एवमु हैवैतदिति हेन्द्र उवाचास्तीत्येव प्राणानां [2]निःश्रेयसमिति । जीवति वागपेतो मूकान् विपश्यामो जीवति चक्षुरपेतोऽन्धान् विपश्यामो जीवति श्रोत्रापेतो बधिरान् विपश्यामो जीवति बाहुच्छिन्नो जीवत्यूरुच्छिन्न इत्येवं हि पश्याम इति प्राण एव प्रज्ञाऽऽत्मेदं शरीरं परिगृह्योत्थापयति ॥ २ ॥

एवं मद्याथात्म्यज्ञानमिहामुत्र विशिष्टफलदमित्याह—**प्रज्ञयेति** । यः **प्रज्ञया** विज्ञानशक्त्या **सत्यसङ्कल्पो** भूत्वा **माममृतमित्युपास्ते** सोऽयं मुनि**रस्मिंश्च लोके सर्वमायुरेति स्वर्गे लोके** अमुष्मिन् लोके **अक्षितिमक्षया-मृतत्वमपवर्गमाप्नोति** । अथ प्रज्ञाऽऽत्मनो मुख्यप्राणस्य विद्वदनुभवप्रकाशद्वारेणैकी-भावमुपदिशति—**तद्धेति** । **तद्ध** प्रसिद्धप्राणतत्त्वमुपदिश्य **एके** प्राणतत्त्वविद **एवमाहुः** । किमिति ? **एकभूयं वै**—भुवो भाव इति क्यप्—ऐक्यं वै तत्तत्प्रज्ञोन्मुखे मुख्यप्राणे अवर**प्राणाः गच्छन्तीति** । तथात्वमेव ते प्रतिपादयन्ति —**न हीति** । **न हि कश्चन** पुमान् **सकृद्युगपदेव** प्राणस्य प्रज्ञान्तरोन्मुखकाल एव **वाचा** वागिन्द्रियेण **स्वपरनाम प्रज्ञापयितुं शक्नुयादि**त्यनुकर्षः । एवं मुख्यप्राणे गौणप्राणा **एकभूयं** गच्छन्तीत्यनुकर्षः । यत एवमतः **एकैक-**प्रज्ञोन्मुखं प्राणं **सर्वा**णीतरप्राणाख्यानीन्द्रियाणि एकीभूय **प्रज्ञापयन्ति** । तथाहि—स्वाधिष्ठानप्राणसहितामभिवदनक्रियां कुर्वन्तीं **वाचं** वागिन्द्रियं **सर्वे** गौण**प्राणा अनुवदन्ति** वाचिकवदनक्रियामनुकुर्वाणा वदन्त इव वदन्ति, न

[1] भूया—क. [2] निःश्रेयसादानमिति—उ, उ १,

तु स्वव्यापारे प्रवर्तन्ते। तथा चक्षुः पश्यन् सर्वे प्राणा अनुपश्यन्ति। श्रोत्रं शृण्वदित्यादि समानम्। एवं विदुषां प्राणैकीभावसमर्थनावसाने स्वस्याप्ययमर्थः सम्मतः इति श्रुतिराह—एवमिति। एतद्यथोक्तप्राणैक्यं एवमु ह एवमेवेति भगवानिन्द्र उवाच। अन्यत्त्वोवाच—अस्तीत्येव प्राणानां निःश्रेयसमिति। यद्यप्येकैकव्यापारे वरगोष्ठिवदितराप्राधान्यमविशिष्टं, अथापि तु विशेषेण प्राणानां मध्ये निःश्रेयसं—अचतुरेत्यादिनिपातनादच् समासान्तः—नितरां श्रेयः अतितरां मुख्यमेवान्यत् प्राणतत्त्वमस्ति। तत् कथं? इन्द्रियान्तरनाशे तद्व्यापृतिमात्रोपरतिः, प्राणनाशे तु सर्वेन्द्रियतद्व्यापृतिनाशदर्शनात्। गौणप्राणापेक्षया मुख्यप्राणस्यैव प्राधान्यं वेदितव्यमित्याह—जीवतीति। सति प्राणे वागपेतोऽपि जीवति वदनव्यापृतिं विना सकलव्यापृतिमान् भवति, न हि म्रियते। तत् कथं? जीवन्मूकान्धादिदर्शनात्। तथा जीवति चक्षुरपेत इत्यादि समानम्। इत्येवं हि यस्मात् पश्यामः प्राणनाशे न कस्यापि जीवनं पश्यामः अतोऽखिलजीवनहेतुः क्रियाज्ञानशक्तिमान् प्राणः, अस्य सर्वप्राणमुख्यत्वात्। यत एवमतः प्रज्ञाऽऽत्मा प्राण एवेदं सकरणजातं शरीरमासीनं शयानं वा परिगृह्योत्थापयति ॥ २ ॥

### प्राणस्य उक्थत्वोपासने सर्वोज्जीवनहेतुत्वदर्शनम्

अथ खलु तस्मादेतमेवोक्थमुपासीत। यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः। सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः। तस्यैषैव दृष्टिरेतद्विज्ञानम्। यत्रैतत् पुरुषः सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन् प्राण एवैकधा भवति तदैनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यातैः सहाप्येति। स यदा प्रतिबुध्यते यथाऽग्नेर्विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथाऽऽयतनं

विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः । तस्यैवैष सिद्धिरेतद्विज्ञानम् । यत्रैतत् पुरुष आर्तो मरिष्य[1]न्नाबल्यं न्येत्य मोहं ने[न्ये]ति तदाऽऽहुरुदक्रमीच्चित्तं न शृणोति न पश्यति न [2]वाचं वदति । अथास्मिन् प्राण एवैकधा भवति [3]तदैनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यातैः सहाप्येति । स यदा प्रतिबुध्यते यथाऽग्नेर्विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथाऽऽयतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः ॥ ३ ॥

सर्वोज्जीवनहेतुमुख्यप्राणस्योक्थतयोपासनमादिशति—अथेति । अथशब्दः उपासनान्तरोपक्रमार्थः । यस्मात् प्राणः शरीरोत्थापनहेतुः तस्मादेव हेतोरेतमेव मुख्यप्राणमुक्थमित्युपासीत । कथं प्राणस्योक्थत्वं ? गौणप्राणविशिष्टशरीरोत्थापनहेतुत्वात् । तथा च श्रुतिः—"प्राणः प्राविशत्तत्प्राणे प्रपन्न उदतिष्ठत्तदुक्थमभवत्" इति । अथ यो वै प्रसिद्धः उक्थरूपतया प्राणः सा प्रज्ञा जीवज्योतिः । या वा प्रज्ञा उक्थरूपा स प्राणः । कथमनयोरेकत्वमित्यत आह—सह इत्यादि । यस्मादेतौ प्रज्ञाप्राणौ स्थूलशरीरेऽस्मिन् यावत् कर्म सहैव वसतः, तथा सहैवोत्क्रामतश्च । अस्मादेवमन्योन्यसापेक्षस्थित्युत्क्रान्तिमत्त्वात् नह्यनयोः भिदा भवतीत्यर्थः । तस्यास्योक्थप्राणस्यैषैव दृष्टिः । किं ? एतद्विज्ञानं यदस्यार्थाजीवरूपमुक्तं, एषैव क्रिया यः प्राण इति द्रष्टव्यः । एतौ किलान्धपंग्वादिन्यायेन संसरतः । अथ यथोक्तरीत्या अनयोस्तादात्म्यसिद्धये प्रथमं करणग्रामविलासप्रज्ञायाः प्राणैक्यं सुप्त्युत्क्रान्त्योः दृश्यते । तत् कथं ? यत्र सुप्तिधाम्न्येतत्पुरुषः प्रज्ञोपाधिकः कूटस्थात्मा करणग्रामोपरमलक्षणां सुप्तिं

[1] न्नावबल्यं—अ, अ १, अ २, क. [2] वाचा वदति—उ.
[3] तथैनं—उ.

यतः प्राप्तवानत एव न कञ्चनाभ्यन्तरंस्वप्नं पश्यति मुख्यप्राणेनैकीभूतत्वात् । यदा विज्ञानोपाधिः विलीयते, तदैनं प्राणं वागिन्द्रियं सर्वैः प्रज्ञानप्रभवनामभिः सहाप्येति । तथा चक्षुः सर्वैः रूपैः सहाप्येति । तथा श्रोत्रं सर्वैः शब्दैः सहाप्येति, मनः सर्वैः ध्यातैः ध्यातव्यवस्तुगतवृत्तिभिः सहाप्येति । स यदा भगवान् प्रतिबुध्यते प्रबुद्धजीवशक्तिको भवति तदा यथा अग्नेर्विस्फुलिङ्गा विप्रतिष्ठेरन् निर्गच्छेरन् एवमेवात्मनः सकाशात् एतस्मात् प्राणादेव च वागादयः सर्वे प्राणाः यथाऽऽयतनं मुखादिस्वस्वगोळकं विज्ञानसिद्ध्ये विप्रतिष्ठन्ते निर्गच्छन्ति । प्राणेभ्यस्तदधिष्टातारोऽग्न्यादिदेवा विप्रतिष्ठन्ते, देवेभ्यस्तद्विषयप्रकाश्या लोका विप्रतिष्ठन्ते । एवं करणग्रामोत्पत्तिलयाधिष्ठातुः प्राणस्य शरीरस्थितिसाधनं विज्ञानमुदेति । तदा अन्नादिप्राप्त्युपायचिन्तया प्राणः प्रतिष्ठाप्यते । अथोत्क्रान्तिदशायां पुरुषो रोगादिना खिन्नो मरिष्यन् प्रज्ञाविभ्रंशं गच्छति । तदा पार्श्वस्था आहुः अस्य प्रज्ञाभ्रंशो भवेत् अत एव अयं न शृणोति न पश्यति न वाचं वदति इति । अथैवं विज्ञानमयः प्राण एवैकधा भवति, तदोत्क्रामति, तदैनं प्राणं वाक् सर्वैः नामभिः सहाप्येति । तथा चक्षुः श्रोत्रं मनश्च स्वस्वविषयैः सहाप्येति । स यदा दैवात् मन्त्रौषधादिना जीवन् प्रतिबुध्यते तदा यथाऽग्नेः विस्फुलिङ्गा विप्रतिष्ठेरन् एवमेवैतस्मादात्मनः प्राणा यथाऽऽयतनं विप्रतिष्ठन्ते प्राणेभ्यो देवाः देवेभ्यो लोकाः इत्युक्तार्थम् ॥ ३ ॥

### पुरुषस्य उत्क्रमणानन्तरावस्था

स यदाऽऽस्माच्छरीरादुत्क्रामति वागस्मात् सर्वाणि नामान्यभिविसृजते वाचा सर्वाणि नामान्याप्नोति [1]प्राणोऽस्मात् सर्वान् गन्धानभिविसृजते [2]प्राणेन सर्वान् गन्धानाप्नोति चक्षुरस्मात् सर्वाणि रूपाण्यभिविसृजते चक्षुषा सर्वाणि रूपाण्याप्नोति श्रोत्रमस्मात् सर्वान्

[1] घ्राणो—क. [2] घ्राणे—क.

शब्दानभिविसृजते श्रोत्रेण सर्वान् शब्दानाप्नोति मनोऽस्मात् सर्वाणि ध्यातान्यभिविसृजते मनसा सर्वाणि ध्यातान्याप्नोति । सैषा प्राणे सर्वाप्तिः । यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः स ह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः । अथ खलु यथा प्रज्ञायां सर्वाणि भूतान्येकं भवन्ति तद्व्याख्यास्यामः ॥ ४ ॥

तस्योत्क्रमणानन्तरभाव्यवस्थां वर्णयति—**स यदेति । स मुमूर्षुः अस्मात् शरीरात्** स्वकर्मानुरूपं शरीरान्तरमुत्क्रामति । तथा च श्रुतिः— "तद्यथा तृणजलायुका तृणस्यान्तं गत्वा अन्यमाक्रममाक्रम्य आत्मानमुपसंहरत्येवमेवायमात्मा इदं शरीरं निहत्य अविद्यां गमयित्वा अन्यमाक्रममाक्रम्य आत्मानमुपसंहरति" इति । तदा तत्र पापपुण्यान्यतरातिवाहशरीरे **अस्मादेव प्राणात्** पुनः निर्गता **वाक् सर्वाणि नामानि अभिविसृजते वाचा सर्वाणि नामान्याप्नोति** जानाति यथापूर्वम् । तथा घ्राणाख्य**प्राणोऽस्मात्**—निर्गत इति सर्वत्र अनुषज्यते—**सर्वान् गन्धानभिविसृजते घ्राणेन सर्वान् गन्धानाप्नोति** इत्यादि समानम् । यैषा प्राणादुत्थितैः वागाद्यैः नामाद्यर्थाप्तिरुक्ता **सैषा प्राणे सर्वाप्ति**रुच्यते । एवं **यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः सह ह्येतावस्मिन् शरीरे वसतः सहोत्क्रामतः । अथ** प्राणे सर्वप्राणाप्तिकथनानन्तरं **यथा** येन प्रकारेण **खलु प्रज्ञायां** जीवज्योतिषि **सर्वाणि भूतानि** वागग्न्यादि-भूतमात्राण्यप्येकं **भवन्ति तद्व्याख्यास्यामः** ॥ ४ ॥

प्रज्ञायां सर्वभूतानां एकीभावः

वागेवास्या एकमङ्ग[1]मुदूढं तस्यै नाम परस्तात् प्रतिविहिता भूतमात्रा । घ्राणमेवास्या एकमङ्गमुदूढं तस्य गन्धः परस्तात् प्रतिविहि-

[1] "मदूहं" सर्वपर्यायेषु—अ, अ १, उ १.

ता भूतमात्रा । चक्षुरेवास्या एकमङ्गमुदूढं तस्य रूपं परस्तात् प्रतिविहिता भूतमात्रा । श्रोत्रमेवास्या एकमङ्गमुदूढं तस्य शब्दः परस्तात् प्रतिविहिता भूतमात्रा । जिह्वैवास्या एकमङ्गमुदूढं तस्यान्नरसः परस्तात् प्रतिविहिता भूतमात्रा । हस्तावेवास्या एकमङ्गमुदूढं तयोः कर्म परस्तात् प्रतिविहिता भूतमात्रा । शरीरमेवास्या एकमङ्गमुदूढं तस्य सुखदुःखे परस्तात् प्रतिविहिता भूतमात्रा । उपस्थ एवास्या एकमङ्गमुदूढं तस्यानन्दो रतिः प्रजातिः परस्तात् प्रतिविहिता भूतमात्रा । पादावेवास्या एकमङ्गमुदूढं तयोरित्या परस्तात् प्रतिविहिता भूतमात्रा । प्रज्ञैवास्या एकमङ्गमुदूढं तस्यै धियो विज्ञा[1]तव्यकामाः परस्तात् प्रतिविहिता भूतमात्रा ॥ ९ ॥

कथं व्याख्यास्यसि ? इत्यत आह— **वागेवेति** । **वागेवास्या** जीवप्रज्ञायाः स्वपरसर्वार्थप्रकाशिकायाः **एकमङ्गम्** । एकशब्देन प्रज्ञापनीयार्थविशेषप्रज्ञानपरिकर उच्यते । तच्चेदमंगं करचरणादि अङ्गिनि शरीर इव अङ्गिन्यां प्रज्ञायां उदूढं [2]उच्चैः धृतम् । **तस्यै** इति षष्ठ्यर्थे चतुर्थी । तथा अग्रेऽपि । **परस्तात्** ज्ञापिकायाः स्वस्या बहिर्भूता ज्ञाप्या **भूतमात्रा** सिद्धा अनात्मभूतपदार्थांशः नाम गृहीतशक्त्यैकशब्दविशेषः **प्रतिविहिता** प्रतिस्वतत्त्वविहिता क्लृप्ता । तथा **घ्राण एवास्या एकमङ्गमुदूढं तस्य गन्धः परस्तात् प्रतिविहिता भूतमात्रे**त्यादि समानम् । देहात् बहिः स्त्र्यन्नपानादिरूपे सुखदुःखे स्थूलसूक्ष्मशरीराश्रये इत्यर्थः । **आनन्दः** सिराविकासजविकारविशेषः, पुंस्त्रीकेळिः **रतिः**, **प्रजातिः** पुत्रोत्पत्तिः । **इत्या** गतिः । **प्रज्ञा**शब्देन प्रकृष्टात्मा जीवज्योतिरुच्यते ।

[1] तव्यं का—उ.

[2] अदूदुहदिति प्रायः पाठः तत्पक्षे अदूदुहत् पूरयामासेत्यर्थः । पक्षान्तरे वागेवास्या इत्यादि षष्ठी सप्तमीत्वेन विज्ञेया—इति टिप्पणं (उ १) कोशे अधिकं दृश्यते.

सैवास्याः प्रज्ञायाः एकमङ्गमुदूढम् । तस्यै तस्याः आन्तरतनोः धियः अपरोक्षशब्दादिनिश्चयवृत्तयः, तथा विज्ञातव्यकामाः ज्ञातव्यवस्तुगोचरवृत्तयश्च, एवं द्विप्रकाराः परस्तात् प्रतिविहिता भूतमात्राः ॥ ५ ॥

प्रज्ञाऽधिष्ठितैरेव वागादिभिः नामाद्याप्तिः

प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोति । प्रज्ञया [1]प्राणं समारुह्य [2]प्राणेन सर्वान् गन्धानाप्नोति । प्रज्ञया चक्षुः समारुह्य चक्षुषा सर्वाणि रूपाण्याप्नोति । प्रज्ञया श्रोत्रं समारुह्य श्रोत्रेण सर्वान् शब्दानाप्नोति । प्रज्ञया जिह्वां समारुह्य जिह्वया हि सर्वानन्नरसानाप्नोति । प्रज्ञया हस्तौ समारुह्य हस्ताभ्यां सर्वाणि कर्माण्याप्नोति । प्रज्ञया शरीरं समारुह्य शरीरेण सुखदुःखे आप्नोति । प्रज्ञयोपस्थं समारुह्योपस्थेनानन्दं रतिं प्रजातिमाप्नोति । प्रज्ञया पादौ समारुह्य पादाभ्यां सर्वा इत्या आप्नोति । प्रज्ञयैव धियं समारुह्य प्रज्ञयैव धियो विज्ञातव्यं कामानाप्नोति ॥ ६ ॥

एवं वागाद्यंगिप्रज्ञया पुरुषो वागाद्यधिष्ठाय वागादिना नामादीनाप्नोतीत्याह—**प्रज्ञयेति** । एवं वागाद्यंग[गि]भूतजीव**प्रज्ञया** युक्तः पुरुषो **वाचं समारुह्य** अधिष्ठाय स्वाधिष्ठितया **वाचा सर्वाणि नामान्याप्नोति** । **प्रज्ञया प्राणं समारुह्येत्यादि** समानमुक्तार्थं च ॥ ६ ॥

प्रज्ञाऽपेतानां वागादीनामसाधकत्वम्

न हि प्रज्ञाऽपेता वाङ्नाम किंचन [3]प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतन्नाम प्रज्ञासिषमिति । न हि प्रज्ञाऽपेतः प्राणो

[1] घ्राणं—क. [2] घ्राणेन—क. [3] प्रज्ञप—उ, उ १, अ, अ २.

गन्धं कंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतं गन्धं प्रज्ञासिषमिति। न हि प्रज्ञाऽपेतं चक्षू रूपं किंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतद्रूपं प्रज्ञासिषमिति। न हि प्रज्ञाऽपेतं श्रोत्रं शब्दं कंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतं शब्दं प्रज्ञासिषमिति। न हि प्रज्ञाऽपेता जिह्वाऽन्नरसं कंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतमन्नरसं प्रज्ञासिषमिति। न हि प्रज्ञाऽपेतौ हस्तौ कर्म किंचन प्रज्ञापयेतामन्यत्र मे मनोऽभूदित्याह नाहमेतत्कर्म प्रज्ञासिषमिति। न हि प्रज्ञाऽपेतं शरीरं सुखदुःखे किंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतत्सुखदुःखे प्रज्ञासिषमिति। न हि प्रज्ञाऽपेत उपस्थ आनन्दं रतिं प्रजातिं कंचन प्रज्ञापयेदन्यत्र मे मनोऽभूदित्याह नाहमेतमानन्दं रतिं प्रजातिं प्रज्ञासिषमिति। न हि प्रज्ञाऽपेतौ पादावित्यां कांचन प्रज्ञापयेतामन्यत्र मे मनोऽभूदित्याह नाहमेतामित्यां प्रज्ञासिषमिति। न हि प्रज्ञाऽपेता धीः काचन सिद्ध्येन्न प्रज्ञातव्यं प्रज्ञायेत ॥ ७ ॥

अन्वयमुक्त्वा व्यतिरेकमाह—नहीति। प्रज्ञापेता प्रज्ञाविरळा वाक् न हि किञ्चन नाम प्रज्ञापयेत्। कुतः? अन्यत्र मे मनः अन्तःकरणं प्रज्ञासंसर्गद्वारभूतं विषयान्तरे अभूत्, अतो नाहमेतन्नाम प्रज्ञासिषमित्याहेति। न हि प्रज्ञाऽपेतः प्राणः इत्यादि समानम् ॥ ७ ॥

वागादीनां मिथ्यात्वदृष्टिपूर्वकं केवलब्रह्मात्मप्रज्ञानविधिः

न वाचं विजिज्ञासीत वक्तारं विद्यात्। न गन्धं विजिज्ञासीत घ्रातारं विद्यात्। न रूपं विजिज्ञासीत रूपविदं विद्यात्। न शब्दं

विजिज्ञासीत श्रोतारं विद्यात् । नान्नरसं विजिज्ञासीतान्नरसविज्ञातारं विद्यात् । न कर्म विजिज्ञासीत कर्तारं विद्यात् । न सुखदुःखे विजिज्ञासीत सुखदुःखयोर्विज्ञातारं विद्यात् । नानन्दं रतिं प्रजातिं विजिज्ञासीतानन्दस्य रतेः प्रजातेर्विज्ञातारं विद्यात् । नेत्यां विजिज्ञासीतैतारं विद्यात् । न मनो विजिज्ञासीत मन्तारं विद्यात् । ता वा एता दशैव भूतमात्रा अधिप्रज्ञं दश प्रज्ञामात्रा अधिभूतम् । यद्धि भूतमात्रा न स्युर्न प्रज्ञामात्राः स्युर्यद्वा प्रज्ञामात्रा न स्युर्न भूतमात्राः स्युः ॥ ८ ॥

वागादिकरणानां मिथ्यात्वदृष्टिपूर्वकं तदारोपापवादाधिकरणं ब्रह्मास्मीति ज्ञातव्यमित्याह—**न वाचमिति** । **न वाचं** वचनं **विजिज्ञासीत, वक्तारं** वागादिकरणग्रामप्रवृत्तिनिमित्तं **विद्यात्** इत्यादि समानम् । एवं दशमात्राप्रज्ञानां स्वतः सिद्ध्यभावात् तदुदयस्थितिलयाधिकरणकूटस्थचिदात्मानं सर्वानुवृत्तं स्वव्यावृत्तप्रज्ञातत्कार्यकलनास्पृष्टं वस्तुतः तत्सर्वकलनापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति विद्यादित्यर्थः । तदुपायत्वेनाथ स्वविकल्पितमात्राणां प्रज्ञायाश्च प्राणप्रज्ञयोरिव नित्यान्वयात् नह्यतीव भेदोऽस्तीत्यत्र **ता वा एताः** वागाद्यन्तःकरणान्ताः **दशैव भूतमात्रा अधिप्रज्ञं** जीवप्रज्ञायामारूढं तत्सम्बन्धात् **दशप्रज्ञामात्राश्चाधिभूतम्** । कथमन्योन्यारोह इत्यत्र—**यद्धि** यदि हि **भूतमात्रा न स्युः** वचनादिविषयसंसृष्टवागादिप्राणमात्रा यदि प्रज्ञया न संसृज्येरन् तदा स्वतो **न प्रज्ञामात्राः स्युः**, प्रज्ञायाः निर्विकल्पत्वात् । तथा **यद्वा** वागादिसंसृष्टाः **प्रज्ञामात्राः न स्युः** तदा **भूतमात्राश्च न स्युः**, जडत्वेन स्वसत्तासाधकवैरळ्यादित्यर्थः ॥ ८ ॥

सर्वभेदरहितप्रज्ञाऽऽत्मवेदनविधिः

न ह्यन्यतरतो रूपं किंचन सिध्येत् । नो एतन्नाना । तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः

प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणे अर्पिताः । स वा एष प्राण एव प्रज्ञाऽऽत्माऽऽनन्दोऽजरोऽमृतो न साधुना कर्मणा भूयान् नो एवासाधुना कर्मणा कनीयान् । एष ह्येवैनं साधु कर्म कारयति तं [1]यमेभ्यो लोकेभ्य उन्निनीषते । एष उ एवैनमसाधु कर्म कारयति तं यमेभ्यो लोकेभ्यो [2]नुनुत्सते । एष लोकपाल एष लोकाधिपतिरेष [3]सर्वेश्वरः स म आत्मेति विद्यात् स म आत्मेति विद्यात् ॥ ९ ॥

उक्तार्थं विशदयन् उपसंहरति—**न** हीति । भूतमात्रामात्रेण वाऽसंसृष्टेन तथा प्रज्ञामात्रेण वा **न किञ्चन रूपं** भूतमात्रारूपं प्रज्ञामात्रारूपं वा सिध्येत् । तद्धेतुः प्रागेव उक्तः । हि यस्मादेवं तस्मान्नो एतद्भूतप्रज्ञामात्रास्वरूपं **नाना** भिन्नं नातिभेदवदित्यर्थः । तत्र दृष्टान्तमाह—तद्यथेति । **तद्यथा रथचक्रस्यारेषु नेमिः अर्पिता** । अन्तर्नेमिस्तु नाभिरित्यर्थः । तथा **नाभावराश्चार्पिताः** । **एवमेवैताः भूतमात्राः प्रज्ञामात्रास्वर्पिताः, प्रज्ञामात्रा** वागादिदशप्राणे**ष्वर्पिताः** । योऽस्मिन् प्रकरणे प्रज्ञातव्यतया प्रकटितः **स एषः प्रज्ञात्मा प्राण एव** कूटस्थो महेन्द्रः स्वगतसविशेषदुःखापाये स्वयमेवा**नन्दः** अखण्डानन्दस्वरूपत्वात्, **अजरः** षड्भावविकारापह्नवसिद्धत्वात्, अत **एवामृतः** परमामृतरूपत्वात् । तथाऽपि साध्वसाधुकर्मभिः वर्धते हीयत इत्याशङ्कायां—परमार्थदृष्ट्या साध्वसाधुकर्ममूलस्वाज्ञानापह्नवसिद्धं निर्विशेषं ब्रह्मेत्यत्र न विवादः । (यः) स्वाज्ञदृष्टिप्रसक्तमूलाविद्याबीजांशासंगचिद्धातोरपि साध्वसाधुकृत्यतो वृद्धिहानिप्रसक्तिरपि नास्तीत्याह—**नेति** । सोऽयमीश्वरः शताश्वमेधादिलक्षण**साधुकर्मणा न हि भूयान्** भवति । **नो एवासाधुना** ब्रह्महत्याऽऽदिनाऽपि **कनीयान्** भवति ।

[1] अत्र व्याख्याऽनुसारी पाठो धृतः । सर्वकोशपाठस्तु "यमन्वानुनेषति" इति.

[2] नदत्सते—उ, उ १.

[3] लोकेश्वरः—उ, उ १.

किंच—एष ह्येवेश्वरः स्वांशजप्राणिपटलकर्मसापेक्षमेनं स्वभक्तजनं साधुकर्म स्वयाथात्म्यदर्शनहेतुश्रवणादिलक्षणं कारयतीव कारयति। यं अनेकजन्मसिद्धं एभ्यो लोकेभ्यः ऊर्ध्वं ब्रह्मलोकं नेतुमिच्छति, तमेव तादृशसाधनानुष्ठाने नियोजयति। एष उ एष एवैनं प्राचीनवासनाऽनुरोधेन असाधु कर्म कारयति। तथा च स्मृतिः—

तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥

इति। यं ईश्वरः एभ्यो लोकेभ्यो नुनुत्सते—नुदेर्हलन्ताच्चेति सनः [कित्त्वम्]। एवमीश्वरस्य साध्वसाधुकारकत्वे वैषम्यादिदोषः स्यादिति चेन्न, जीवगतकर्तृतानिरसनहेतुत्वात्। जीवस्य, सर्वकर्ता ईश्वरः सोऽहमस्मीत्युपासनातः, ईश्वरज्ञानं जायते। एवं जाते निरावृतेश्वरज्ञाने स्वस्येश्वरस्य वा कर्तृत्वकारयितृत्वादिदोषो नहि सेद्धुं पारयति। यस्मादेवं तस्मात् ईश्वरे कारयितृत्वाद्यारोपो जीवगतकर्तृत्वादिनिरासहेतुरित्यर्थः। तथा च स्मृतिः—"न कर्तृत्वं न कर्माणि लोकस्य सृजति" इति। यः स्वाज्ञदृष्टिप्रसक्तेशितव्यसापेक्षेश्वरभावमापन्न एष एव प्रज्ञाऽऽत्मा लोकपालः, सर्वलोकपालकत्वात्। एष हि दिग्वातादिलोकपालानामप्यधिपतिः। एष एव सर्वेश्वरः। यः एतादृशः स भगवान् मनुष्यपरमहितरूपो म आत्मा वस्तुतः स्वज्ञदृष्ट्या स्वाज्ञदृष्टिप्रसक्तस्वाविद्याद्वयापाये तदधिकरणं कूटस्थचैतन्यं अधिष्ठेयनिरूपिताधिष्ठानत्वकलनाविरळं निरधिष्ठानं ब्रह्म निष्प्रतियोगिकस्वमात्रमवशिष्यत इति विद्यात्। आवृत्तिः तृतीयाध्यायपरिसमाप्त्यर्था॥

इति तृतीयोऽध्यायः

---

# चतुर्थोऽध्यायः

ब्रह्मोपदेशप्रतिज्ञा

गार्ग्यो ह वै बालाकिरनूचा[1]नः संस्पष्ट आस [2]सोऽयमुशीनरेषु सत्त्वमत्स्येषु कुरुपञ्चालेषु काशीविदेहेष्विति [3]स हाजातशत्रुं काश्यमेत्योवाच ब्रह्म ते ब्रवाणीति । तं होवाचाजातशत्रुः सहस्रं दद्म एतस्यां वाचि जनको जनक इति वा उ जना धावन्तीति ॥ १ ॥

परापरविद्याया दुरवगमत्वेन मन्दबुद्धिवैशद्यार्थं विद्याद्वयप्रकाशनपूर्वकमुपसंहर्तुं चतुर्थाध्याय आरभ्यते । गार्ग्याजातशत्रुसंवादरूपेयमाख्यायिका वक्ष्यमाणविद्यास्तुत्यर्था । बृहदारण्यगतचतुर्थाध्यायाद्यदृप्तबालाकिब्राह्मणव्याख्यानेनैव अयमध्यायो व्याख्यातप्राय एव, वक्तृश्रोतृप्रश्नप्रतिवचनयोरेकत्वात् । तथाऽपि वेदशाखोपनिषद्भेदात् संक्षेपतो व्याख्यायते । गर्गगोत्रजो गार्ग्यः । बलाकाया अपत्यं बालाकिः, हवा इति प्रसिद्धिद्योतकौ निपातौ, सद्वंश्योऽनूचानः अनुवचनसमर्थो वाग्मी वा । उशीनरसत्वमत्स्यकुरुपाञ्चालकाशीविदेहदेशेषु संस्पष्टो विख्यातः सन्नास स्थितवानिति यः श्रुतः सोऽयं गार्ग्योऽजातशत्रुं काश्यमेत्योवाच ह । किमिति? ब्रह्म ते ब्रवाणीति । एवमुक्तवन्तं तं होवाचाजातशत्रुः । किमिति? ब्रह्म ते ब्रवाणीति या वागेतस्यां वाचि गवां सहस्रं दद्मः । राजाभिप्रायं श्रुतिर्व्यनक्ति—जनको जनक इति वा उ जना धावन्तीति । जनकः स्वाभिलषितार्थदाता जनकः सारांशश्रोतेति पदमभ्यस्यते । अत एव हि जनाः स्वाभिलषितार्थलाभाय तं प्रति धावन्ति । वा उ इति निपातावधारणार्थौ ॥ १ ॥

[1] नसं—क.
[2] सभ्यो न तप उशी—अ, अ १.
[3] सदाहाजा—अ २, क. सदहा—अ, अ १.

आदित्यब्रह्मोपासनम्

स होवाच बालाकिर्य एवैष आदित्ये पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रु[1]र्मामैवं तस्मिन् [2]समवादयिष्ठा बृहन् पाण्डरवासाधिष्ठाः सर्वेषां भूतानां मूर्धेति [3]वा [4]अहमेतद्वा उपास इति । स यो हैतमेवमुपास्तेऽधिष्ठाः सर्वेषां भूतानां मूर्धा भवति ॥ २ ॥

सर्वज्ञकल्पमपि राजानं श्रोतारं मत्वा तमुद्दिश्य **स होवाच बालाकिः** । किमिति? **य एवैष आदित्ये** चक्षुषि च **पुरुषो** दृश्यते चक्षुर्द्वारा हृदय उपलभ्यते **तमेवाहमुपासे,** मदुपदेशतः त्वमपि तमुपास्स्व । इत्युक्तवन्तं **तं होवाचाजातशत्रुः** । किमिति? यन्ममोपदेशं कर्तुमिच्छसि तस्मिन् विषये—मामेति द्विरुक्तिः वक्तुरपेक्षया स्वस्य ज्ञानाधिक्यद्योतनार्था—**मामैवं [तस्मिन्] समवादयिष्ठाः** संवादं मा कार्षीः । यदि त्वं जानीषे सप्रकारं तद्वदेति तत्राह—**बृहन्निति** । **बृहन् पाण्डरवासाधिष्ठाः**—प्राणस्य सूत्रत्वेन व्यापकत्वात् बृहत्त्वं, अपां पाण्डरवर्णत्वेन तत्परिधानात् पाण्डरवासस्त्वं, सर्वभूताधिष्ठातृत्वात् [अधिष्ठात्वं], **सर्वेषां भूतानां मूर्धा** शिरः दीप्तिगुणकत्वात् । **अहमेतद्वा** एतदेव **ब्रह्मोपास इति** । एवमुपासनाफलमपि जानामि । कथं? **स यो हैतमेवमुपास्ते** सोऽयं **सर्वेषां भूतानामधिष्ठाः** अधिष्ठानं **मूर्धा** च **भवति** । यो यद्गुणमुपास्ते स तद्गुण एव भवति, “तं यथायथोपासते तथैव भवति” इति श्रुतेः ॥ २ ॥

[1] “मामैवं स” इति व्याख्याऽनुसारी पाठः स्यात्.

[2] समवादधिष्ठाः—अ १, क, उ १. संवदिष्ठाः—अ.

[3] “वा” इत्येतत् सर्वलिखितकोशेषु लुप्तः

[4] अत्र व्याख्याऽनुसारी पाठो धृतः. कोशगतपाठास्तु, अहमेतमुपासे—उ, उ १. अहमोमुपासे—अ, अ १. सर्वपर्यायेषु एवमेव पाठभेदाः.

चन्द्रब्रह्मोपासनम्

स होवाच बालाकिर्य एवैष चन्द्रमसि पुरुषस्तमेवाहं ब्रह्मोपास इति । तं होवाचाजातशत्रुर्मामैतस्मिन् समवादयिष्ठाः सोमो [1]राजन्नस्यात्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्तेऽन्नस्यात्मा भवति ॥ ३ ॥

एवमादित्यब्रह्मणि प्रत्याख्याते ब्रह्मान्तरमाह—स इति । स होवाच इत्यादि सर्वत्र समानम् । चन्द्रमसि मनसि चैकः पुरुषः तमेवाहं मामैतस्मिन्नित्यादि च समानम् । चन्द्रमनसोरन्नात्मत्वात् तद्भावापत्तिर्हि फलम् ॥ ३ ॥

विद्युद्ब्रह्मोपासनम्

स होवाच बालाकिर्य एवैष विद्युति पुरुष एतमेवाहं ब्रह्मोपास इति । तं होवाचाजातशत्रुर्मामैतस्मिन् समवादयिष्ठास्तेजस्यात्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते [2]तेजस्यात्मा भवति ॥ ४ ॥

किं च—स होवाचेति । विद्युति त्वचि देवतैका । तेजसि आत्मोपासनात् तेजस्यात्मा भवति ॥ ४ ॥

स्तनयित्नुब्रह्मोपासनम्

स होवाच बालाकिर्य एवैष स्तनयित्नौ पुरुष एतमेवाहं ब्रह्मोपास इति । तं होवाचाजातशत्रुर्मामैतस्मिन् समवादयिष्ठाः

[1] राजानन्न—अ २, उ.

[2] तेजस्व्यात्मा—उ १.

शब्दस्यात्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते शब्दस्यात्मा भवति ॥ ५ ॥

किं च—स होवाचेति । स्तनयित्नौ श्रवणे चैका देवता । शब्दात्मोपासनात् तथा भवतीत्यर्थः ॥ ५ ॥

आकाशब्रह्मोपासनम्

स होवाच बालाकिर्य एवैष आकाशे पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुर्मामैतस्मिन् समवादयिष्ठाः पूर्णमप्रवर्ति ब्रह्मेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते पूर्यते प्रजया पशुभिर्नो एव स्वयं नास्य प्रजा पुरा कालात्प्रवर्तते ॥ ६ ॥

किं च—स होवाचेति । बाह्यान्तराकाशयोः देवतैका । पूर्णमप्रवर्त्तीति विशेषणद्वयं विशिष्टफलद्योतनार्थम् । पूर्यते ह प्रजया पशुभिः । एवमुपासनं विना एतत् फलं स्वयं नो एव भवति । नास्य सन्ततिविच्छेदो भवतीत्यर्थः ॥ ६ ॥

वायुब्रह्मोपासनम्

स होवाच बालाकिर्य एवैष वायौ पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुर्मामैतस्मिन्समवादयिष्ठा इन्द्रो वैकुण्ठोऽपराजिता सेनेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते जिष्णु[1]र्ह वा पराजिष्णु[2]रन्यतस्त्यजाया भवति ॥ ७ ॥

किं च—स होवाचेति । वायौ प्राणे च देवतैका । इन्द्रः परमेश्वरः । वीतगतिकुण्ठनो वैकुण्ठः यस्य सेना परैः जेतुमशक्या सेयं तदीयाऽपराजिता सेनेति । फलं—जयशीलो जिष्णुः, परैः जेतुमशक्यः पराजिष्णुर्भवति अन्यतस्त्यानामरीणां जाया जायी जयशीलो भवति ॥ ७ ॥

[1] र्हि—अ, अ १, अ २, क, उ १. [2] रन्यतस्तज्ज्यायान्—मु.

अग्निब्रह्मोपासनम्

स होवाच बालाकिर्य एवैषोऽग्नौ पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मामैतस्मिन् समवादयिष्ठा विषासहिरिति वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते विषासहिर्वा एष भवति ॥ ८ ॥

किं च—स होवाचेति। अग्नौ वाच्यपि देवतैका। परान् मर्षयतीति विषासहिः ॥ ८ ॥

अब्ब्रह्मोपासनम्

स होवाच बालाकिर्य एवैषोऽप्सु पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मामैतस्मिन् समवादयिष्ठा नाम्नोऽस्यात्मेति वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते [1]नाम्नोऽस्यात्मा भवति। इत्यधिदैवतम्। अथाध्यात्मम् ॥ ९ ॥

किं च—स होवाचेति। अप्सु रेतस्येका देवता। नामात्मोपासनात् तदेव भवति। अधिदैवतोपासनमुक्तम्। अथाध्यात्ममुच्यते ॥ ९ ॥

प्रतिरूपपुरुषोपासनम्

स होवाच बालाकिर्य एवैष आदर्शे पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मामैतस्मिन् समवादयिष्ठाः प्रतिरूप इति वा अहमेतमुपास इति। स यो हैतमेवमुपास्ते प्रतिरूपो हैवास्य प्रजायामाजायते नाप्रतिरूपः ॥ १० ॥

[1] नाम्नस्या—अ १, अ २, क. नामास्य—अ.

स होवाचेति । स्वच्छादर्शे खड्गादौ हार्दे च देवतैका । **प्रतिरूपः** छायात्मा ॥ १० ॥

प्रतिध्वनिपुरुषोपासनम्

स होवाच बालाकिर्य एवैष प्रातिश्रुत्कायां पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा द्वितीयोऽनपग इति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते विन्दते द्वितीयं द्वितीयवान् भवति ॥ ११ ॥

किं च—सहोवाचेति । ध्वनौ प्रातिश्रुत्कायां प्रतिध्वनौ च देवतैका । सद्वितीयोपासनाफलं सद्वितीयत्वम् ॥ ११ ॥

शब्दपुरुषोपासनम्

स होवाच बालाकिर्य एवैष शब्दः पुरुषमन्वेति तमेवाहमुपास इति । तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा आयुरिति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुराकालात् संमोहमेति ॥ १२ ॥

य एवायं शब्दः पृष्ठतोऽनूदेति अध्यात्मायुश्च तयोरेका देवता । एवमायुःशब्दवाच्यप्राणोपासनात् उपासकस्य तत्कुलप्रसूतप्रजायाश्च दीर्घायुः सिध्यति ॥

तमःपुरुषोपासनम्

स होवाच बालाकिर्य एवैष छायायां पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुर्मा मैतस्मिन् समवादयिष्ठा मृत्युरिति वा

अहमेतमुपास इति । स यो हैतमेवमुपास्ते नो एव स्वयं नास्य प्रजा पुरा कालात् प्रमीयते ॥ १३ ॥

किं च—स होवाचेति । बाह्यतमोरूपच्छायायां स्वान्तः स्वाज्ञाने चैका देवता । सैव मृत्युः । तदतितरणं फलम् ॥ १३ ॥

शारीरपुरुषोपासनम्

स होवाच बालाकिर्य एवैष शारीरः पुरुषस्तमेवाहमुपास इति । तं होवाचाजातशत्रुर्मामैतस्मिन् समवादयिष्ठाः प्रजापतिरिति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते प्रजायते प्रजया पशुभिः ॥ १४ ॥

किं च—स होवाचेति । शारीरे विराजि चैका देवता । एवं प्रजापत्युपासनाफलं प्रजापशुवर्धकम् ॥ १४ ॥

सुप्तपुरुषोपासनम्

स होवाच बालाकिर्य एवैष प्राज्ञ आत्मा येनैतत् सुप्तः [1]स्वप्न्यया चरति तमेवाहमुपास इति । तं होवाचाजातशत्रुर्मामैतस्मिन् समवादयिष्ठा यमो राजेति वा अहमेतमुपास इति । स यो हैतमेवमुपास्ते सर्वं हास्मा इदं श्रैष्ठ्याय यम्यते ॥ १५ ॥

किं च—स होवाचेति । येनैतत् सुप्तः स्वप्न्यया चरति तस्मिन् प्राज्ञे ईश्वरे च आत्मा एकः । यमोपासनाफलं सर्वस्मादपि श्रैष्ठ्यापत्तिः ॥ १५ ॥

[1] स्वप्न—अ, अ १.

दक्षिणाक्षिपुरुषोपासनम्

स होवाच बालाकिर्य एवैष दक्षिणेऽक्षन् पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मामैतस्मिन् समवादयिष्ठा नाम्न आत्माऽग्नेरात्मा ज्योतिष आत्मेति वा अहमेतमुपास इति। स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवति ॥ १६ ॥

किं च—**स होवाचेति**। दक्षिणाक्षिणि मुखे चैका देवता। **नामाग्नि-ज्योतिष्ष्वात्मोपासनात्** सर्वभूतात्मा भवति ॥ १६ ॥

सव्याक्षिपुरुषोपासनम्

स होवाच बालाकिर्य एवैष सव्येक्षऽन् पुरुषस्तमेवाहमुपास इति। तं होवाचाजातशत्रुर्मामैतस्मिन् समवादयिष्ठाः सत्यस्यात्मा विद्युत आत्मा तेजस आत्मेति वा अहमेतमुपास इति। स यो हैतमेवमुपास्त एतेषां सर्वेषामात्मा भवति ॥ १७ ॥

किं च—**स होवाचेति**। **सव्येऽक्षन्** तैजसे चैका देवता। **सत्यविद्युत्तेज-स्स्वात्म**दर्शनादात्मैव भवतीत्यर्थः ॥ १७ ॥

अनात्मज्ञं प्रति आत्मबोधनप्रकारः

तत उ ह बालाकिस्तूष्णीमास। तं होवाचाजातशत्रुरेतावन्नु बालाका इति। एतावद्धीति होवाच बालाकिः। तं होवाचाजातशत्रुर्मृषा वै किल मा संवदिष्ठा ब्रह्म ते [1]ब्रवाणीति। स होवाच

[1] ब्रुवा—अ, अ २, क.

यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म [1]संवैर्वेदितव्य इति । तत उ ह बालाकिः समित्पाणिः प्रतिचक्रामोपायानीति । तं होवाचाजातशत्रुः प्रतिलोमरूपमेव स्याद्यत् क्षत्रियो ब्राह्मणमुपनयेदे[2]हि व्येव त्वा ज्ञपयिष्यामीति । तं ह पाणावभिपद्य प्रवव्राज । तौ ह सुप्तं पुरुषमीयतुः । तं हाजातशत्रुरामन्त्रयांचक्रे बृहन् पाण्डरवासः सोमराजन्निति । स उ ह तूष्णीमेव शिश्ये । तत उ हैनं यष्टया च चिक्षेप । स तत एव समुत्तस्थौ । तं होवाचाजातशत्रुः क्वैष एतद्बालाके पुरुषोऽशयिष्ट यक्वैतदभूद्यत एतदगादिति । [3]तदुभयं बालाकिर्न [4]विजिज्ञौ ॥ १८ ॥

यावच्छ्रुतं यावदधीतं तावत् सर्वमुपन्यस्य निःशेषितविद्यो बालाकिः उपररामेत्याह—तत इति । बालाकिः मुनिः स्वेन यावदधीतं तत् सर्वमाभासत उपन्यस्य ततः परं अमावास्याचन्द्रवत् निष्प्रभः तूष्णीमास । तं होवाचाजातशत्रुः एतावन्नु बालाका इति । राज्ञैवं पृष्टो बालाकिरेतावद्धीति होवाच । एवमुक्तवन्तं तं होवाचाजातशत्रुः—ब्रह्म ते ब्रवाणीति मां प्रति मृषा संवदिष्ठा उक्तवानसि, किमर्थमेवं गर्वितोऽसि इति । तं प्रति राजोवाच—अपरब्रह्मापि यथावत् त्वया न विदितम् । स्वयमजातशत्रुः परापरब्रह्मयाथात्म्यवित् । अनेनायं प्रतिषेधितुं युक्त एव । यद्यमुख्यब्रह्मविज्ञानमपि प्रत्याख्यायेत तदा नैतावतेति न हि ब्रूयात् । न किञ्चित् त्वया विज्ञातमिति नानेनोक्तम् । तस्मादपरब्रह्माप्यस्त्येव, तस्य परब्रह्माधिगमद्वारभूतत्वात् । हे बालाके यो वा एतेषां पुरुषाणां कर्ता वागादिकरणग्रामप्रवृत्तिनिमित्ततया अवति-

[1] सवैवे—अ, अ १.

[2] हीत्येव—उ. हिवत्येव—उ १. ह्व्येत्येव—अ १, अ २.

[3] तदुह बा—उ, उ १. [4] विजज्ञौ—उ.

ष्टते, **यस्य** करणग्रामप्रवृत्तिनिमित्तस्यैतत् **कर्म** तत्सर्वासंस्पृष्टतया स्वयं स्थित्वा तत्प्रवृत्तिनिवृत्तिनिर्वाहकत्वं, सोऽयमात्मा स्वोपलब्ध्युपायभूतैः वागादिकरण-सङ्घैः तत्प्रवृत्तिनिमित्ततया तद्वृत्तिसहस्रभावाभावप्रकाशकतया तदारोपापवादाधि-करणतया निरधिकरणनिष्प्रतियोगिकस्वमात्रतया च वेदितव्यः **इत्येवमभिहितस्तत उ ह** बालाकिः अपरविज्ञानोपायसिद्धपरब्रह्माधिगमाय **समित्पाणिः प्रतिचक्रामो-पायानीति** । एवं विधिवदुपसन्नं तं **होवाचाजातशत्रुः—क्षत्रियो ब्राह्मण-मुपनयेदिति यत्तत्प्रतिलोमरूपमेव स्यात्** । यतो मामेवं वृणीषे अतः त्वं एहीत्येव तं हर्षयन् **त्वा** त्वां एतत् **ज्ञपयिष्यामीति** यत्तद्विधिशास्त्रविरुद्धं, तस्मात् त्वमाचार्य एव सन् तिष्ठ, यद्वेदनात् मुख्यं ब्रह्म विदितं भवेत् तत् त्वां ब्रह्म ज्ञपयिष्यामि प्रतिपादयामीत्युक्त्वा सलज्जं **तं ह पाणावभिपद्य प्रवव्राज** । **तौ ह** बालाक्यजातशत्रू क्वचित् प्रदेशे **सुप्तं पुरुषमीयतुः** । ततः **तं ह सुप्तं अजातशत्रुः आमन्त्रयांचक्रे** । किमिति ? **बृहन् पाण्डरवासः सोमराजन्निति** नामभिराह्वानं कृतवानित्यर्थः । **स उ ह** सोऽयमेवमामन्त्रितोऽपि **तूष्णीमेव शिश्ये** । **तत उ हैनं** शयानं **यष्ट्या** दण्डेन **च चिक्षेप** । ततः क्षेपादेव **समुत्तस्थौ** समुत्थितवान् । **तं होवाचाजातशत्रुः** । किमिति ? हे **बालाके एतत्** पुरि शयनादेष **पुरुषः क्वाशयिष्ट यत्र** यस्मिन् **एतत्** स्वापकर्मकृद**भूत्** पुनः **यतः एतत्**कर्मकृद**गात्** आगतवान् । यत्स्वभावेऽयमभूत् पुनः यत्स्वभावात् प्रच्युतः संसारीत्येतदुभयं गार्ग्येण प्रष्टव्यं, तत्तेनापृष्टमपि ज्ञपयिष्यामीति प्रतिज्ञातत्वात् तत्राजातशत्रुः बोधयितव्योऽसाविति प्रवर्तते । एवं व्युत्पाद्यमानोऽपि गार्ग्य-**स्तदुभयं** प्रष्टुं अवगन्तुं **न मेने** न हि विज्ञातवान् **न विजिज्ञौ** ॥ १८ ॥

आत्मनः सर्वशरीरव्याप्तिः

तं होवाचाजातशत्रुर्यमेवैष एतद्बालाके पुरुषोऽशयिष्ट यत्रै-तदभूद्यत एतदगात् । हिता नाम हृदयस्य नाड्यो हृदयात् पुरीततमभि-प्रतन्वन्ति यथा सहस्रधा केशो विपतितस्तावदण्व्यः पिङ्गलस्याणिम्ना

तिष्ठन्ते शुक्लस्य कृष्णस्य पीतस्य लोहितस्येति । तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यति । अथास्मिन् प्राण एवैकधा भवति । तथैनं वाक् सर्वैर्नामभिः सहाप्येति चक्षुः सर्वै रूपैः सहाप्येति श्रोत्रं सर्वैः शब्दैः सहाप्येति मनः सर्वैर्ध्यातैः सहाप्येति । स यदा प्रतिबुध्यते यथाऽग्नेर्विस्फुलिङ्गा विप्रतिष्ठेरन्नेवमेवैतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः । तद्यथा क्षुरः क्षुरधावे ह्येतस्यास्स विश्वंभरो वा विश्वंभर[1]कुलाय एवमेवैष प्राज्ञ आत्मेदं शरीरमनुप्रविष्ट आ लोमभ्य आ नखेभ्यः ॥ १९ ॥

तथाऽपि स्वप्रतिज्ञापालनाय अजातशत्रुराह—तमिति । अजातशत्रुः तं होवाच । किमिति ? हे बालाके—यदित्यर्थे यमिति लिंगव्यत्ययः—यदेतच्छरीरमवष्टभ्य एष वै पुरुषोऽशयिष्ट पुरा यत्रैतदभूत् पुनर्यतः एतदगादित्युक्ते हृदयस्याश्रिताः हिता नाम नाड्यो भवन्ति । तास्तु हृदयात् पुरीततं स्थूलशरीरमभिप्रतन्वन्ति व्याप्नुवन्ति । शरीरापेक्षया नाडीनां सूक्ष्मत्वे दृष्टान्तमाह —यथेति । यथा केशः सहस्रधा विपतितो विदळितः सुसूक्ष्मतमो भवति तथा तावदण्व्यः नाड्यो भवन्ति । नाडीनां श्लेष्मपित्तादियोगतः शुक्लस्य कृष्णस्य पीतस्य लोहितस्य इत्यादिनानावर्णाः तासु नाडीषु भवति । यदा सुप्तो विज्ञानात्मा स्वप्नं न कञ्चन पश्यति अथास्मिन्नयं विज्ञानात्मा प्राण एवैकधा भवति एकत्वमुपैति । तथैनं वाक् सर्वैः नामभिः सहाप्येतीति वागादिकरणग्रामः स्वस्वविषयैः सहाप्येतीत्याद्युक्तार्थम् । अत्र दृष्टान्तमाह— यथेति । यथा क्षुरः क्षुरधावे नापितक्षुरादिविन्यासपेटिकायां निक्षिप्तो मग्नः पुनस्ततो विप्रतिष्ठते एवमेव वागादिकरणजालमित्यर्थः । यद्वा—यथा क्षुरः

[1] कुलायेव—अ, अ १, उ, उ १.

क्षुरधाने हि यथा **एतस्याः** पुरीततेः मध्ये विश्वं बिभर्ति धारयतीति विश्वंभरः प्राणः तेन सह वर्तत इति **स विश्वम्भरो** विज्ञानात्मा प्राणोपाधिकः **विश्वम्भर-कुलायं** शरीरं तत्र यथा अनुप्रविश्य तत् सर्वं व्याप्नोति विश्वस्य स्थूलशरीरमात्र-व्यापकत्वात्, **एवमेवैष प्राज्ञ आत्मा इदं** स्थूलसूक्ष्मकारणभेदभिन्नशरीरत्रयं **आलोमभ्यः आनखेभ्यः** इति सप्तदशकलिंगतद्धेतुकारणशरीरोपलक्षणार्थं, तत् सर्वं प्रविष्टो भवति ॥ १९ ॥

आत्मज्ञानेन विदेहमुक्तिप्राप्तिः

तमेतमात्मानमेतमात्मनोऽन्वपश्यन्ति । यथा वा श्रेष्ठिनं स्वास्तद्यथा श्रेष्ठैस्तैर्भुङ्क्ते तद्यथा वा श्रेष्ठिनं स्वा भुञ्जन्त[न्ति] एवं श्रेष्ठिनं [1]स्वास्त एवावर्धयाः । इन्द्र एतमात्मानं न विजज्ञौ तावदेनमसुरा अभिबभूवुः । स यदा विजिज्ञावथ हत्वाऽसुरान् विजित्य सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति । तथो एवैवं विद्वान् सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद य एवं वेद ॥ २० ॥

यत्क्रतुगौणमुख्यफलं यद्बोधाबोधतो जयाजयौ भवतः तदियत्तां विशदयन् उपसंहरति-- **तमिति** । यः शरीरत्रयमनुप्रविष्टः तं प्रज्ञाऽऽत्मानमेतं समष्टिशरीर-त्रयारोपापवादाधिष्ठानरूपमेतं प्रत्यगभिन्नपरमात्मनः स्वरूपमित्यन्वपश्यन्ति सूरयः, "जीवभावजगद्भावबाधे प्रत्यगभिन्नं ब्रह्मैव अवशिष्यते" इति श्रुतेः । कथं पुनरन्वपश्यन्तीत्यत्र दृष्टान्तमाह--**यथेति** । **यथा स्वाः** स्वकीयाः **श्रेष्ठिनं** गुणतः श्रेष्ठं राजानं स्वस्वामित्वेन अन्वपश्यन्ति **तद्यथा** लोके ये गुणतः शीलतो जातितश्च श्रैष्ठ्यमापन्नाः तैः **श्रेष्ठैः** सहानूचानो मुनिर्भुङ्क्ते नेतरैः असमैः

[1] स्वास्सए—उ, उ १. स्वास—अ २, क. स्वास्त—व्याख्यानुसारेण.

इत्यर्थः । **यथा वा श्रेष्ठिनं स्वाः भुञ्जन्ते[न्ति]**, स्वाः सन्तः स्वतुल्यमेव श्रेष्ठिनं भोजयन्ति । य एवं कुर्वन्ति **त एवावर्धयाः** सकलविषयकवृद्धिं यान्ति । तथैवं स्वातिरिक्तव्यष्टिसमष्टिप्रपञ्चारोपापवादाधिकरणतः श्रेष्ठिनं निरधिकरणं ब्रह्म स्वमात्रमिति सूरयोऽन्वपश्यन्ति । दर्शनसमकालं ते यत्क्रतुमुख्यफलं कैवल्यं तदेव प्रतिपद्यन्ते । **एतमेवात्मानं यदेन्द्रो** यथावत् क्रतुमुख्यफलत्वेन **न विजिज्ञौ यावदेवं तावदेनं** असुं स्वसत्तामात्रं पराग्वृत्तिभिः हरन्तीत्यसुराः स्वाज्ञानवृत्तयः **असुराः अभिबभूवुः** असुरा वा । **स यदा** श्रुत्याचार्यप्रसाद-लब्धसम्यज्ज्ञानेन क्रतुमुख्यफलं स्वातिरिक्ताविद्यापदतत्कार्यापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति **विजज्ञौ** विज्ञातवान् भवति **अथ** तत्क्षणानन्तर-मुत्तरक्षणं स्वज्ञानवृत्तितदारूढान् **असुरान् विजित्य** स्वातिरेकेण नेतिनेतीत्य-पह्नवं कृत्वा स्वाज्ञदृष्टिविकल्पितानां **सर्वेषां भूतानां** मध्ये स्वज्ञदृष्ट्या श्रेष्ठः सन् परमार्थदृष्ट्या यत् स्वमात्रतया राजते तत्स्वाराज्यमाधिपत्यं पारमैश्वर्यं विकळे-बरकैवल्यं **पर्येति** । यद्वा—विरोचनाद्यसुरान् विद्यायोगबलेन जित्वा स्वाराज्यं स्वर्गं क्रतुसामान्यफलं आधिपत्यं इन्द्रत्वं पर्येति । तथा क्रतुसामान्यमुख्यफल-मिन्द्रवद्य **एवं वेद** एवं विद्वान् **सर्वेषां** भूतानां यदिन्द्रादिभिः भुक्तपूर्वं क्रतु-सामान्यविशेषफलं स्वमात्रसिद्धितः श्रैष्ठ्यं स्वाराज्यमाधिपत्यं **पर्येती**त्युक्तार्थम् । आवृत्तिरुपनिषत्समाप्त्यर्था ॥

## इति चतुर्थोऽध्यायः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं कौषीतक्याः स्फुटं लघु ।
प्रकृतोपनिषद्व्याख्याग्रन्थस्त्वष्टशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चविंशतिसंख्यापूरकं
कौषीतक्युपनिषद्विवरणं सम्पूर्णम्

---

# गर्भोपनिषत्

## सह नाववतु—इति शान्तिः

शरीरलक्षणसूत्रम्

पञ्चात्मकं पञ्चसु वर्तमानं षडा[1]श्रयं षड्गुणयोगयुक्तम् ।
तं सप्तधातुं त्रिमलं [2]त्रियोनिं चतुर्विधाहारमयं शरीरम्[3] ॥ १ ॥

यद्गर्भोपनिषद्वेद्यं गर्भस्य स्वात्मबोधदम् ।
शरीरापह्नवात् सिद्धं स्वमात्रं कलये हरिम् ॥

इह खलु गर्भोपनिषदः कृष्णयजुर्वेदप्रविभक्तत्वात् उपोद्घातादिकं कठवल्ल्यादितुल्यतया चिन्त्यम् । मन्त्रब्राह्मणात्मिकेयं उपनिषत् गुरुशिष्याद्याख्यायिकां विना अवान्तररूपेण प्राण्यदृष्टवशात् स्वेनै[स्वयमे]व प्रवृत्ता हि । तत्राद्यः श्लोकः सूत्रभूतो मन्त्रो भवतीत्याह—पञ्चात्मकमिति । व्यष्टिशरीरोपलक्षितस्वाविद्यापदतत्कार्यजातं पञ्चात्मकमित्यादि ॥ १ ॥

शरीरस्य पञ्चभूतात्मकत्वम्

पञ्चात्मकमिति कस्मात्? पृथिव्यापस्तेजोवायुराकाशमिति ।
अस्मिन् पञ्चात्मके शरीरे का पृथिवी का आपः किं तेजः

[1] शयं—अ २. [2] द्वि—उ.
[3] ' भवति ' इत्यधिकः—अ १, अ २, क.

को वायुः किमाकाशमिति । अस्मिन् पञ्चात्मके शरीरे यत् कठिनं सा पृथिवी यद्द्रवं [1]तदापः यदुष्णं तत्तेजः यत् सञ्चरति स वायुः यत् सुषिरं तदाकाशमित्युच्यते ॥ २ ॥

मन्त्रार्थस्तिरोभूत इति मत्वा तदर्थं ब्राह्मणरूपश्रुतिरेव व्याचष्टे—**पञ्चात्मकमिति** । पञ्चभूतान्येवात्मा स्वरूपं यस्याविद्यापदस्य तदिदं पञ्चात्मकं पञ्चभूतविकारपुञ्जं इत्यर्थः । पञ्च भूतानि कानीत्यत आह—**पृथिव्यापस्तेजोवायुराकाशमिति** पञ्च भूतानि । तत्र प्रातिस्विकेन पञ्चभूतस्वरूपं किमित्याशङ्क्य तदियत्तां व्यनक्ति—**अस्मिन्निति** ॥ २ ॥

शरीरस्य पञ्चसु वर्तमानत्वम्

तत्र पृथिवी धारणे आपः पिण्डीकरणे [2]तेजो रूपदर्शने वायुर्गमने आकाशमवकाशप्रदाने ॥ ३ ॥

"पञ्चात्मकं" इत्यंशं व्याख्याय "पञ्चसु वर्तमानं" इति मन्त्रांशं व्याकरोति—**तत्रेति** । तत्र पञ्चभूतमध्ये पञ्चसु **धारणपिण्डीकरणरूपदर्शनगमनावकाशप्रदानकर्मसु** पृथिव्यप्तेजोवाय्वाकाशात्मकं शरीरं वर्तमानमिति विज्ञेयमित्यर्थः ॥ ३ ॥

करणजातस्य प्रातिस्विकविनियोगः

पृथक् [3]चक्षुःश्रोत्रे चक्षुषी रूपे जिह्वोपस्थश्चानन्दोऽपाने चोत्सर्गो बुद्ध्या बुध्यति मनसा सङ्कल्पयति वाचा वदति ॥ ४ ॥

[1] ता आपः—उ.

[2] तेजः प्रकाशने—मु.

[3] श्रोत्रं शब्दे त्वक् स्पर्शे चक्षूरूपे जिह्वा रसे घ्राणं गन्धे वाग्वचने पाणिरादाने पादो गमने पायुर्विसर्गे उपस्थ आनन्दे वर्तते । बुद्ध्या—अ.

पञ्चात्मकशरीरावयवचक्षुरादिकरणजातमपि रूपादिदर्शनादिकर्मणि पृथक् विनियुज्यते इत्याह—**पृथगिति**। चक्षुश्च श्रोत्रं च **चक्षुःश्रोत्रे** श्रोत्रचक्षुषी, श्रोत्रस्य ज्ञानेन्द्रियप्राथम्यात्। श्रोत्रं शब्ददर्शनकर्मणि विनियुज्यते। **चक्षू रूपे** रूपदर्शनकर्मणि **जिह्वा** रसास्वादनकर्मणि। श्रोत्रचक्षुर्जिह्वाग्रहणं त्वग्घ्राणेन्द्रियोपलक्षणार्थम्। **उपस्थश्चानन्दो** मिथुनभवानन्दपरवशो भवति। चशब्दः शिष्टकर्मेन्द्रियोपलक्षणार्थः। **अपाने कर्मोत्सर्गः**। चशब्दः प्राणपञ्चकोपलक्षणार्थः। करणग्रामाधिपो जीवो **बुद्ध्या** विषयजातं **बुध्यति**। तथा **मनसा सङ्कल्पयति**, तथा **वाचा वदति**। बुद्धिमनोग्रहणं चित्ताहङ्कारोपलक्षणार्थम्॥ ४॥

### शरीरस्य षडाश्रयत्वं षड्गुणयोगश्च

षडाश्रयमिति कस्मात्? मधुराम्ललवणतिक्तकटुकषा[1]यरसान् विन्दत इति॥ ५॥

मन्त्रसूत्रित "षडाश्रय" इत्यंशं व्याचष्टे—**षडाश्रयमिति**। **मधुरा**दिषड्रसा आश्रयो यस्य तत् शरीरं **षडाश्रयमिति विन्दते** ज्ञायते इत्यर्थः। कामाद्यरिषड्वर्ग एव **षड्गुणयोगाः**, तैर्युक्तम्॥ ५॥

### शरीरस्य सप्तधातुकत्वम्

षड्जर्षभगान्धारपञ्चममध्यमधैवतनिषादाश्चेतीष्टानिष्टशब्दसंज्ञाः [2]प्रतिविधाः सप्तविधा भवन्ति॥ ६॥ शुक्लो रक्तः कृष्णो धूम्रः पीतः कपिलः पाण्डरः सप्त धातव इति। कस्मात्? यदा देवदत्तस्य द्रव्यविषया जायन्ते परस्पर[3]रसोगुणत्वात्। षड्विधो रसः। रसाच्छोणितं शोणितान्मांसं मांसान्मेदो [4]मेदसोऽस्थीनि अस्थिभ्यो

[1] यान्—क. [2] प्रणिधानाद्दशविधा भवन्ति—मु. प्रतिविविधाः—क.
[3] सौम्य—मु. [4] मेदसः स्नायवः स्नायुभ्योऽस्थीनि—मु.

**मज्जा मज्जायाः शुक्रं शुक्रशोणितसंयोगादावर्तते गर्भो हृदि व्यवस्थां नयति हृदयेऽभ्यन्तराऽग्निः अग्निस्थाने पित्तं पित्तस्थाने वायुः वायुस्थाने हृदयं [1]प्राजापत्य ऋतुकाले संप्रयोगतः ॥ ७ ॥**

कण्ठादिस्थानाभिव्यक्तसप्तस्वरशोभितं भवतीत्याह—षड्जेति । जिह्वोष्ठादिस्थानाभिव्यक्तसरिगमपधनीति स्वराः । इष्टानिष्टशब्दराशीनां तत्प्रभवत्वात् त **एवेष्टानिष्टशब्दसंज्ञाः** सन्तः **प्रतिविधाः** बहुविधाः **सप्तविधाः** सप्तप्रकाराः **भवन्ति** ॥ ६ ॥ मन्त्रगत"सप्तधातुं"इत्यंशं व्याकरोति—शुक्ल इति । वातपित्तश्लेष्मादिनानानाडीप्रभवाः शुक्लादिसप्तधातवो यदायतनाः तत् सप्तधातुकं धातूनामभिवृद्धितः शुक्लशोणितसंयोगतश्च पुत्रादिगर्भोत्पत्तिः भवतीत्याह—**कस्मादिति** । धातुवृद्धिप्रभवशुक्लशोणितसंयोगतो गर्भोत्पत्तिर्भवतीत्युक्तम् । **कस्मात्** कथं एवं भवतीत्याकांक्षायां तत्प्रकार उच्यते । **यदा** यस्मिन् काले **देवदत्तस्य** एतद्द्रव्यजातं मया भोक्तव्यमिति **तद्विषयाः** स्पृहाः **जायन्ते** । कथमेवमित्यत्र **परस्परमन्योन्यं रसोगुणत्वात्** अयं मधुरादिरसो मया भोक्तव्य इति रसगुणबद्धत्वात् । **रसः** कतिविध इत्यत्र मधुरादिभेदेन **षड्विध** इत्यर्थः । स्वभुक्तषड्विधरसपरिणामतः किं भवतीत्यत आह—**शोणितमिति** । जाठराग्निपच्यमानषड्रसात् तच्छतैकांशभूतं **शोणितं** भवति । षड्रससारांश एव शोणिताकारेण परिणमत इत्यर्थः । तथा पच्यमान**शोणितात्** तच्छतैकांशमांसवृद्धिर्भवति । तथा **मांससारतः** तच्छतांशमेदोवृद्धिर्भवति । तथा पच्यमानमेदसः सारात् तथाऽ**स्थीन्यभिवर्धन्ते** । तथाऽस्थिचयसञ्जातसारात् दर्परूपेयं **मज्जा** भवति । तथा **मज्जायाः** पच्यमानायाः पुंस्त्रियोः **शुक्लं** शोणितं च भवति । एवं पुंस्त्रीनिष्ठ**शुक्लशोणितसंयोगा**दैक्यात् **गर्भो**ऽयं **आवर्तते** जठरप्रदेशे आ समन्ताद्वर्तते । **हृदि व्यवस्थां नयति** रूढमूलं भवति । आधारजठरहृदयेभ्योऽन्तरग्निरुज्वलति । **अग्निस्थाने** मूलाधारत्रिकोणे **पित्तजलं** भवति । **पित्तस्थाने** स्वाधिष्ठानप्रदेशे **वायुः** प्राणवायुः । **वायुस्थाने हृदयं** प्रतिष्ठितम् । एवमग्निपित्तवायुयोगतो गर्भो

[1] प्राजापत्यात् क्रमात् । ऋतु—मु.

हृदि व्यवस्थां नयति । कस्मादित्यत्र प्राजापत्ये प्रजापतिना व्यवस्थिते ऋतुकाले स्त्रीपुरुषसंप्रयोगतः समुत्पन्नगर्भो रूढमूलो भवति । तदितरकाले स्त्रीपुरुषयोगेऽपि गर्भो नावतरतीत्यर्थः ॥ ७ ॥

मासक्रमेण गर्भव्यक्तिभेदः

एकरात्रोषितं कलिलं भवति । सप्तरात्रोषितं बुद्बुदं भवति । अर्धमासाभ्यन्तरेण पिण्डो भवति । मासाभ्यन्तरेण कठिनो भवति । मासद्वयेन शिरः [1]कुरुते । मासत्रयेण पादप्रदेशो भवति । अथ चतुर्थे मासे जठरकटिप्रदेशो भवति । पञ्चमे मासे पृष्ठवंशो भवति । षष्ठे मासे नासाक्षिश्रोत्राणि भवन्ति । सप्तमे मासे जीवसंयुक्तो भवति । अष्टमे मासे सर्वसम्पूर्णो भवति ॥ ८ ॥

मुमुक्षूणां तीव्रतरवैराग्यहेतवे गर्भयत्तां विशदयति—एकरात्रेति । यस्मिन् काले पुंस्त्रीशुक्लशोणितयोगतः स्त्रीजठरे गर्भो वसति ततः प्रभृति क्रमशो वृद्धिमुपैति । तत् कथं? स्त्रीजठरे एकरात्रोषितं रेतः कलिलं स्वभावविपरीतं भवति । तथा सप्तरात्रोषितं रेतः बुद्बुदाकारतां इयात् । अर्धमासाभ्यन्तरेणायं गर्भः पिण्डो भवति । मासमात्रतः काठिन्यमुपैति । मासद्वयेन शिरःप्रदेशाभिव्यक्तिर्भवति । तथा मासत्रयमात्रतः पादाभिव्यक्तिः । अथ मासचतुष्टयेन जठरकटिप्रदेशाभिव्यक्तिः । पञ्चमे मासे पृष्ठविभागः । षष्ठे नासाक्षिश्रोत्राणि अभिव्यक्तानि भवन्ति । अयं पिण्डः सप्तमे मासे प्राप्ते जीवेन संयुक्तो भवति । तथाऽष्टमे सर्वावयवाभिव्यक्तिः ॥ ८ ॥

[1] संपद्यते—मु.

पुंस्त्र्यादिभेदनियामकः

पितुः रेतोऽतिरिक्तात् पुरुषो भवति । मातुः रेतोऽतिरिक्तात् स्त्रियो भवन्ति । उभयोः बीजतुल्यत्वात् नपुंसको भवति । व्याकुलितमनसोऽन्धाः खञ्जाः कुब्जा वामना भवन्ति । अन्योन्यवायुपरिपीडितानां शुक्लद्वैधे स्त्रियो [1]योन्यां युग्माः प्रजायन्ते ॥ ९ ॥

पितृवीर्याधिक्यात् पुरुषाकृतिः । तथा मातृवीर्याधिक्यात् स्त्र्याकृतिः । उभयोः बीजसाम्ये नपुंसकाकृतिः । बीजैक्यकाले यदि तौ व्याकुलितचित्तौ स्यातां तदा तयोः वीर्यजा अन्धाः दृष्टिविकलाः खञ्जाः पङ्गवः कुब्जाः उन्नतपृष्ठोरोभागाः वामनाः ह्रस्वा वा भवन्ति । बिन्दुपतनकाले यदि तौ अन्योन्यापानमरुता पीडितौ तदा बिन्दुः स्त्रियो योन्यां द्विधा पतति, ततो युग्माः प्रजाः प्रजायन्ते ॥ ९ ॥

अष्टममासे जीवस्य अतीतार्थवेदनसामर्थ्यम्

पञ्चात्मकसमर्थः पञ्चात्मकतेज[2]सेद्धरसश्च सम्यग्ज्ञानात् ध्यानादक्षरमोङ्कारं चिन्तयति । तदेतदेकाक्षरं ज्ञात्वा अष्टौ प्रकृतयः षोडश विकाराः शरीरे ॥ १० ॥

एवं अष्टमे मासे प्राप्ते तद्गर्भावच्छिन्नो जीवः पञ्चात्मकसमर्थः प्राणादिपञ्चवृत्त्यात्मकप्राणेन स्वोपाधिभूतेन मिळित्वा अतीतार्थवेदने समर्थो भवति । तथा पञ्चात्मकप्राणतेजसा इद्धो वृद्धिं गतो रसः सारो यस्य सोऽयं

[1] योन्या—अ, अ १, उ १.

[2] साधिगन्धर—अ, अ १. सोर—क. सर—अ २.

**पञ्चात्मकतेजसेद्धरसः** । चशब्दात् प्राणः क्रियाशक्तिः, प्राणारूढो जीवस्तु ज्ञानशक्तिः, ईश्वरभावापत्त्या इच्छाशक्तिरपि पिण्डपाती न स्यादिति द्योत्यते । य एवंभूतः स ह्यजडक्रियाज्ञानेच्छाशक्तिमानिव **सम्यज्ज्ञानात्** ध्यानाच्च कालत्रयेऽपि न क्षरतीत्यक्षरं **ओङ्कारं** आत्मानं अयमहमस्मीति **चिन्तयति** । एवं **तदेतदेकाक्षरं** आत्मतया **ज्ञात्वा** स्वातिरिक्ततया याः प्रकृता **अष्टौ प्रकृतयः**—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेवच ।
अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥

इति स्मृतेः, प्रश्नोपनिषत्पठितप्राणादिनामान्तषोडशकला एव **षोडश विकाराः**, **शरीरे** पश्यतीति वाक्यशेषः ॥ १० ॥

नवममासे जीवस्य पूर्वजातिस्मरणम्

तस्यै[1]व[2]देहिनोऽथ नवमे मासे सर्वलक्षणसम्पूर्णो भवति । पूर्वजातिं स्मरति । कृताकृतं कर्म विभाति । शुभाशुभं कर्म [3]विन्दति ॥ ११ ॥

य एवं द्रष्टा **तस्यैव** **देहिनोऽथ** देहः **नवमे मासे सर्वलक्षणसम्पूर्णो भवति** । तदा शरीरासङ्गोऽपि शरीरावच्छिन्नो जीवः स्वात्तपूर्वजातिपरम्परां **स्मरति** । तस्य पूर्वजनिपरम्पराकृत**कृताकृतं कर्म** पुण्यपापलक्षणकर्मजातं विस्पष्टं **भाति** भूत**शुभाशुभं कर्म विन्दति** ॥ ११ ॥

जीवस्य प्राक्तनकर्मवेदनपूर्वकं परिदेवनम्

नानायोनिसहस्राणि दृष्ट्वा चैव ततो मया ।
आहारा विविधा भुक्ताः पीताश्च विविधाः स्तनाः ॥ १२ ॥

[1] वं—अ, अ १. [2] देहिनामथ—अ, अ १, उ, उ १. [3] विभाति—क.

जातस्यैव मृतस्यैव जन्म चैव पुनः पुनः ।
अहो दुःखोदधौ मग्नो [1]न पश्यामि प्रतिक्रियाम् ॥ १३ ॥
यदि योन्यां प्रमुञ्चामि साङ्ख्यं योगं समाश्रये ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम् ॥ १४ ॥
यदि योन्यां प्रमुञ्चामि तं प्रपद्ये महेश्वरम् ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम् ॥ १५ ॥
यदि योन्यां प्रमुञ्चामि तं प्रपद्ये [2]भगवन्तं नारायणं देवम् ।
अशुभक्षयकर्तारं फलमुक्तिप्रदायिनम् ॥ १६ ॥
यन्मया परिजनस्यार्थे कृतं कर्म शुभाशुभम् ।
एकाकी तेन दह्यामि गतास्ते फलभागिनः ॥ १७ ॥

प्राक्तनशुभाशुभकर्मवेदनपूर्वकं परिदेवयतीत्याह—**नानेति** । अहो **मया नानायोनिसहस्राणि दृष्ट्वा** दृष्ट्वा अनेकजन्मस्वनुभूतानि । तत्तज्जन्मोचितविविधाहाराः मया **भुक्ताः** । तथा तत्तज्जन्मसु **विविधाः स्तनाश्च पीताः** ॥ १२ ॥ **जातस्यैव** पुनर्मृतिः **मृतस्यैव** पुनर्जन्म । एवं षड्भावविकारकवळितः सन् **अहो** बत कष्टं एवं **दुःखोदधौ** निमग्नः सन् एतन्निवृत्त्युपायात्मिकां प्रतिक्रियां **न पश्यामि** ॥ १३ ॥ **यदि** कदाचित् कृच्छ्रात् **योन्यां** योन्याः **प्रमुञ्चामि** तदा **साङ्ख्यं** कापिलं **योगं समाश्रये** । यद्वा—यत्र स्वाविद्यापदतत्कार्यजातं निष्प्रतियोगिकाभावरूपं तत्सर्वापह्नवसिद्धं ब्रह्मापि निष्प्रतियोगिकभावरूपं न तयोः भास्यभासकभावो व्याप्यव्यापकभावो वाऽऽधाराधेयभावो वा अस्ति नास्तीति विभ्रमोऽपि सेद्धुं पारयति स हि खलु **साङ्ख्ययोगः** निष्प्रतियोगिकब्रह्ममात्रप्रबोधः, तमेव **समाश्रये** ॥ १४ ॥ यदि

[1] ना—अ २, उ, उ १.    [2] जनार्दनम् ।—अ २.

मे तादृशाधिकारो न स्यात् तदा तदुपायतया **अशुभं** स्वाज्ञानं तत्क्षय**कर्तारं** अशुभफलसामान्यस्य **मुक्तिप्रदायिनं**—यद्वा, परमफलरूपेयं विकळेबरमुक्तिः ब्रह्ममात्रप्रबोधोपायतः तत्प्रदायिनं प्रदातारं—**महेश्वरं** देशिकधिया **शरणं प्रपद्ये** ॥ १५ ॥ यद्वा—षड्गुणैश्वर्यसम्पत्त्या **भगवन्तं**, यत्र सूरयो जात्वपि न रमन्ते तन्नरं स्वाज्ञानं तदेव नारं तस्यायनं अपवादाधिष्टानं **नारायणं** स्वाधिष्टेयसापेक्षाधिष्टानभावविरळनिरधिष्टानतया द्योतमानं **देवं** स्वमात्रमिति **प्रपद्ये** । अशुभक्षयमित्यादि सर्वत्र समानम् ॥ १६ ॥ एवं निश्चित्य पुनः परिदेवयन्निदमाह—**यन्मयेति** । दारपुत्रादि**परिजन**पोषणहेतोः **यद्यत् शुभाशुभं कर्म** नित्यकर्मवत् मया **कृतं** तत्फलं अनेककल्पकालं स्वर्गनरकादि भुक्तं ततोऽप्यधिकतरकष्टं कुम्भीपाकोपमगर्भनरकेऽहमे**काकी** शोचामि । यन्मया पालिताः दारपुत्रादयस्ते यथागतं स्वां स्वां गतिमवष्टभ्य **गतास्ते** केवल-**फलभागिनः** न हि मत्कृतदुष्कृतभोक्तारो भवन्ति ॥ १७ ॥

भूपतने पूर्ववृत्तविस्मरणम्

जन्तुः स्त्रीयोनिशतं योनिद्वारि सम्प्राप्तो यन्त्रेण परिपीड्य-
मानो महता दुःखेन जातमात्रस्तु वैष्णवेन वायुना संस्पृश्यते ।
तदा न स्मरति जन्ममरणादि कर्म शुभाशुभम् ॥ १८ ॥

इत्थं गर्भस्थो **जन्तुः** शोचन् एवं **स्त्रीयोनिशतं** प्राप्य निर्विण्णः सन् यथोक्तकालतः स्वपतनसमये नरकात् पातकिवत् अवाक्छिरा ऊर्ध्वपदो भूत्वा **योनिद्वारि संप्राप्तः** सन् योनियन्त्रेण **परिपीड्यमानो महता दुःखेन** जायते भूमौ पतति । भूपतनादर्वाक् शीर्षोदयवेळायां यदाऽयं जन्तुः **वैष्णवेन वायुना संस्पृश्यते** तदा स्वकृतशुभाशुभकर्मनिमित्तजातिस्मृतिविस्मरणपूर्वकं स **जन्ममरणादिमपि न स्मरति** ॥ १८ ॥

शरीरस्य त्रिमलत्वादिनिर्वचनम्

शरीरमिति कस्मात्? [1]ज्ञानाग्निः दर्शनाग्निः कोष्ठाग्निरिति । तत्र कोष्ठाग्निर्नामाशितपीतलेह्यचोष्यं पाचयति [2]रूपादीनां दर्शनं करोति[3] ॥ १९ ॥

सूत्रस्थ"त्रिमलं त्रियोनिं चतुर्विधाहारमयं शरीरं" इति पदचतुष्टयार्थ-प्रकाशनायोत्तरो ग्रन्थ आरभ्यते—**शरीरमिति** । बाल्याद्यवस्थाभिः शीर्यत इति व्युत्पत्त्या **शरीरमित्युच्यते** । कस्मात्? कथं? मलत्रयविशिष्टतया त्रियोनि-वत्त्वात् । कथं त्रिमलवत्त्वं? मलवत्स्त्रीपुरुषयोगशुक्लशोणितानि मलानि यस्य तत् त्रिमलम् । ओषधिपुरुषस्त्रीभेदेन तिस्रो योनयो यस्य तत् त्रियोनिम् । देहस्य यज्ञसम्पादनार्थं तत्रैवाग्नित्रयं विशिनष्टि—**ज्ञानाग्निः दर्शनाग्निः कोष्ठाग्निरिति** । स्वान्तःकरणेन तज्ज्ञाताज्ञाततया सर्वं ज्ञायत इति **ज्ञानाग्निः** अन्तःकरणं, अज्ञानकाष्ठचयदाहकत्वात् । बहिष्ठरूपादीन् यद्दर्श तद्दर्शनाग्नि-श्चक्षुरादीन्द्रियम् । **कोष्ठाग्निर्नाम** यस्त्वशितपीतलेह्यचोष्यजातं **पाचयति** स एव हि मूलाधारादिकोष्ठविलसिताग्निः, "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते" इति,

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥

इति श्रुतेः, स्मृतेश्च । दन्तैः अवखण्ड्यावखण्ड्य यत् भक्ष्यजातमद्यते **तदशितं**, यत् पायसादि जिह्वया आलोड्य पीयते तत् **पीतं**, यत् गुडादि जिह्वायां निक्षिप्य लेलिह्यते निगीर्यते तद्धि लेह्यं, यत्त्विक्षुखण्डादि दन्तैः निपीड्य

[1] "अग्नयोऽत्र श्रियन्ते" इत्यधिकः—मु.
[2] "दर्शनाग्निः" इत्यधिकः—मु.
[3] "ज्ञानाग्निः शुभाशुभं च कर्म विन्दति" इत्यधिकः—मु.

सारांशं स्वीकृत्यास्वाद्य तत्पिष्टांशः त्यज्यते तत्तु चोष्यमित्यभिधीयते । एवं कोष्टाग्निः चतुर्विधमन्नं पक्त्वा चक्षुरादीन्द्रियं द्वारीकृत्य रूपादीनां दर्शनं करोति ॥ १९ ॥

शरीरस्य यज्ञत्वसम्पादनम्

तत्र त्रीणि स्थानानि भवन्ति हृदये दक्षिणाग्निः उदरे गार्हपत्यं मुखमाहवनीयम् । यजमानाय बुद्धिं पत्नीं निधाय दीक्षा सन्तोषं बुद्धीन्द्रियाणि यज्ञपात्राणि शिरः कपालं केशाः दर्भाः मुखमन्तर्वेदिः षोडश पार्श्वदन्तपटलान्यष्टोत्तरमर्मशतमशीतिसन्धिशतं नवस्नायुशतमष्टसहस्ररोमकोट्यः ॥ २० ॥

तत्राग्न्याधारशरीरे तस्याग्नेः त्रीणि स्थानानि भवन्ति । कानि तानीत्यत्र हृदये दक्षिणाग्निः, दक्षिणाग्निस्थानं हृदयं, उदरे गार्हपत्यं, मुखं आहवनीयं, अग्नित्रयाकृतिसामान्यात् । यजमानाय यजमानस्य—षष्ठ्यर्थे चतुर्थी व्यत्ययः छान्दसः—हृदयोदरमुखानि त्रेताग्निस्थानानि भवन्ति । यजमानस्य बुद्धिं पत्नीं निधाय तद्बुद्धिं पत्नीत्वेन सम्भाव्य बुद्धौ पत्नीदृष्टिं कृत्वेत्यर्थः । यजमानस्येति सर्वत्र अनुषज्यते । सन्तोषं तत्सन्तोष एव दीक्षा । तद्बुद्धीन्द्रियाण्येव यज्ञपात्राणि स्रुवादीनि । तच्छिरो यज्ञोपयोगिकपालम् । तत्केशा एव दर्भाः । मुखमेवान्तर्वेदिः । यजमानस्य षोडशपार्श्वदन्तपटलानि अष्टोत्तरशतकपोलमूलादिमर्मस्थानानि च तथा अशीत्यधिकशतपर्वादिसन्धिस्थानानि नवाधिकशतपिङ्गळेडादिनाड्यन्तरितस्नायूनि च अष्टसहस्ररोमकोट्यश्च यजमानयज्ञस्य ऋत्विक्सदस्यस्थानीया इत्यनुसन्धानं यः करोति योगी मानसयज्ञानुष्टानसञ्जातचित्तशुद्धिप्राप्यज्ञानद्वारा मुक्तो भवतीत्यर्थात् लभ्यते ॥ २० ॥

शरीरमाननिरूपणम्

हृदयपलान्यष्टौ द्वादश[1]पला जिह्वा पित्तं प्रस्थं कफस्याढकं शुक्लं [2]कुडुपं मेदः प्रस्थौ द्वावेव हि तन्मूत्रपुरीषयोः अहरहः पानपरिमाणम् ॥ २१ ॥

तत्तदङ्गुल्या षण्णवत्यङ्गुलात्मकं शरीरं तत्तन्मानेन हृदयादिमानं पित्तादिमानं च मुमुक्षुविरागोत्पत्तये एतदेतावदिति निर्दिशति—हृदयेति । मांसखण्डात्मकहृदयपलान्यष्टावेव, द्वादशपलात्मिकेयं जिह्वा, तच्छरीरविद्यमानं पित्तं प्रस्थमेव, तत्रत्यकफस्य मानं आढकं, शुक्लमानं तु कुडुपं त्रिपादप्रस्थं, मेदस्तु प्रस्थौ प्रस्थद्वयपरिमितं, मूत्रपुरीषयोरपि मानं द्वावेव महाप्रस्थौ—प्रस्थद्वयं महाप्रस्थं,—स्वशरीरेण स्नानपानादिना पेयं पानपरिमाणं तत्तदाकृतिमानेन प्रस्थद्वयमेव । एतत्संघातं स्त्रीपुरुषयोगप्रभूतं सन्मूत्रद्वारेण निष्क्रान्तमिदं शरीरं पञ्चात्मकमित्यादिविशेषणविशिष्टम् । तत्र मुमुक्षुः जात्वपि न त्वात्मात्मीयभावारूढो भवेत् । तथा च श्रुतिः—" शरीरमिदं मैथुनादेवोद्भूतं संविध्यपेतं निरय एव मूत्रद्वारेण निष्क्रान्तं अस्थिभिः चितं मांसेनानुलिप्तं चर्मणा अवबद्धं विण्मूत्रवातपित्तकफमज्जामेदोवसाभिः अन्यैश्च मलैः बहुभिः सम्पूर्णं एतादृशे अस्मिन् शरीरे वर्तमानस्य किं कामोपभोगैः " इति,

सा कालसूत्रपदवी सा महावीचिवागुरा ।
सा त्याज्या सर्वयत्नेन या देहेऽहमिति स्थितिः ॥

इत्यादि । एवं विद्वान् उक्तशरीरोपलक्षितस्वाविद्यापदतत्कार्यजातारोपापवादाधिकरणगतहेयांशापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति ज्ञानसमकालं तन्मात्रेण अवशिष्यत इति ॥ २१ ॥

[1] पलानि—क. [2] कुडुवं—क. कुडुवं—अ २. गुडुपं—अ.

उपसंहारः

**पैप्पलादं मोक्षशास्त्रं परिसमाप्तं पैप्पलादं मोक्षशास्त्रं परिसमाप्तमित्युपनिषत् ॥ २२ ॥**

पिप्पलादापत्यपैप्पलादमुनेः मन्त्रदृशः परमाशय इति पैप्पलादेन दृष्टं **पैप्पलादं मोक्षशास्त्रं परिसमाप्तम्** । आवृत्तिरादरार्था । **इत्युपनिषच्छब्दो** गर्भोपनिषत्परिसमाप्त्यर्थो ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं गर्भोपनिषदः स्फुटम् ।
गर्भोपनिषदो व्याख्याग्रन्थः षष्ट्युत्तरं शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे सप्तदशसङ्ख्यापूरकं गर्भोपनिषद्विवरणं सम्पूर्णम्

# निरालम्बोपनिषत्

## पूर्णमदः—इति शान्तिः

एकचत्वारिंशत्प्रश्नाः

[1]एषामज्ञानजन्तूनां समस्तारिष्टशान्तये । यद्यद्बोद्धव्यमखिलं तदाशङ्क्य ब्रवीम्यहम् ॥ १ ॥ किं ब्रह्म क ईश्वरः को जीवः का प्रकृतिः कः परमात्मा को ब्रह्मा को विष्णुः को रुद्रः क इन्द्रः कः [2]शमनः कः सूर्यः कश्चन्द्रः के सुराः के असुराः के पिशाचाः के मनुष्याः काः स्त्रियः के [3]पश्वादयः किं स्थावरं के ब्राह्मणादयः का जातिः किं कर्म किमकर्म किं ज्ञानं किमज्ञानं किं सुखं किं दुःखं कः स्वर्गः को नरकः को बन्धः को मोक्षः क उपास्यः कः शिष्यः को विद्वान् को मूढः किमासुरं किं तपः किं परमं पदं किं ग्राह्यं किमग्राह्यं कः संन्यासीत्याशङ्क्याह ॥ २ ॥

[1] येषा—अ, अ १, अ २, उ.

[2] शमनकः—अ.

[3] पशवः—अ २, क.

यत्रालम्बालम्बिभावो विद्यते न कदाचन ।
ज्ञविज्ञसम्यज्ज्ञालम्बं निरालम्बं हरिं भजे ॥

इह खलु शुक्लयजुर्वेदप्रविभक्तेयं निरालम्बोपनिषत् निर्विशेषब्रह्मगोचरा। ईशावास्यादिवत् अस्याः उपोद्घातादिकमूह्यम् । सर्वसारश्रुतिवदियमपि निरालम्बोपनिषत् गुरुशिष्याद्याख्यायिकां विनाऽपि स्वयमेव गुरुशिष्याविव स्वाज्ञजनोत्तारणाय तैः यद्यत् बोद्धव्यं तत्तत् स्वयमेव गुरुशिष्याविव प्रश्नप्रतिवचनं व्याकुर्वती प्रवृत्ता । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । **एषामिति** ॥ १ ॥ एवं श्रुतिः प्रतिज्ञां कृत्वा एकचत्वारिंशत्प्रश्नान् पृच्छति—**किं ब्रह्मेत्यादिना** ॥ २ ॥

### ब्रह्मस्वरूपम्

ब्रह्मेति च महदहंकारपृथिव्यप्तेजोवाय्वाकाशत्वेन बृहद्रूपेणाण्डकोशेन कर्मज्ञानार्थरूपतया भासमानमद्वितीयमखिलोपाधिविनिर्मुक्तं तत्सकलशक्त्युपबृंहितमनाद्यनन्तं शुद्धं शिवं शान्तं निर्गुणमित्यादिवाच्यमनिर्वाच्यं चैतन्यं ब्रह्म ॥ ३ ॥

एवं स्वकृतशङ्काजातोत्तरमपि स्वयमेवाह—**ब्रह्मेति चेति** । किं ब्रह्मेत्यादि कः संन्यासी इत्यन्तं यद्यत् विकल्पितं तत्तत् सर्वं **ब्रह्मेति** ज्ञेयम् । किं ब्रह्मेति प्रश्नोत्तरप्रतीकं वा **ब्रह्मेति** चेति । कीदृशं ब्रह्मेत्यत्र यन्निष्प्रतियोगिकं ब्रह्म स्वमात्रमवशिष्यते तदेव स्वाज्ञदृष्ट्या अव्यक्तमहदहङ्कारादिविशिष्टपृथिव्यादिपञ्चभूतभौतिकजुष्टाविद्याऽण्डत्वेन कर्मज्ञानार्थज्ञानफलब्रह्मादिलोकतया च भासमानं भवति । तदेव स्वज्ञदृष्ट्या अद्वितीयं पृथिव्याद्यव्यक्तान्ताखिलोपाधिविरळमपि तत्तद्वस्तुशक्त्योपबृंहितं अव्यक्तादिवदुत्पत्तिप्रळयाभावादनाद्यनन्तं अशुद्धाविद्याण्डाश्रयसत्वादिगुणत्रयापह्नवात् शुद्धं शिवं शान्तं निर्गुणमित्यादिशब्दवाच्यमपि अनिर्वाच्यं यच्चैतन्यमवशिष्यते तदेव **ब्रह्मेत्यर्थः** ॥ ३ ॥

ईश्वरस्वरूपम्

ईश्वर इति च ब्रह्मैव स्वशक्तिं प्रकृत्यभि[1]धेयमाश्रित्य लोकान् सृष्ट्वा प्रविश्यान्तर्यामित्वेन ब्रह्मादीनां बुद्धीन्द्रियनियन्तृत्वादीश्वरः ॥

क ईश्वर इति प्रश्नोत्तरमाह—ईश्वर इति चेति । यत् निर्विशेषं ब्रह्म तदेव स्वाज्ञविकल्पितस्वशक्तिं मूलप्रकृत्यवच्छेदेन अभिधातुं शक्यं प्रकृत्यभिधेयमीश्वरत्वमाश्रित्य स्वातिरेकेण स्वाज्ञैः लोक्यन्त इति लोकाः तान् अनन्तकोटिब्रह्माण्डरूपान् स्वाव्यतिरेकेण सृष्ट्वा तत्रान्तर्यामित्वेन प्रविश्य वर्तमानस्य ब्रह्मादिस्तम्बान्तकरणग्रामनियामकत्वात् ईश्वरत्वं भवतीत्यर्थः ॥ ४ ॥

जीवस्वरूपम्

जीव इति च ब्रह्मविष्णवीशानेन्द्रादीनां नामरूपद्वारा स्थूलोऽहमिति मिथ्याऽध्यासवशाज्जीवः सोऽहमेकोऽपि देहारम्भक-भेदवशाद्बहुजीवः ॥ ५ ॥

को जीव इति प्रश्नोत्तरमाह—जीव इति । तत्तदण्डगतब्रह्म-विष्णवीशानेन्द्रादिजङ्गमविशिष्टनामरूपप्रपञ्चात्माध्यासवशात् सर्वस्थूला-भिमानी समष्टिजीवो विराट् यो विराडस्मीत्यभिमन्यते सोऽहमेकोऽपि व्यष्टि-देहारम्भकहेतुतूलान्तःकरणाविद्यावशात् बहुसङ्ख्याता जीवकोटिर्भवति ॥ ५ ॥

प्रकृतिस्वरूपम्

प्रकृतिरिति च ब्रह्मणः सकाशान्नानाविचित्रजगन्निर्माण-[2]सामर्थ्या बुद्धि[3]रूपा ब्रह्मशक्तिरेव प्रकृतिः ॥ ६ ॥

[1] धेया—अ, क. [2] सामर्थ्य—अ २, क. सामर्थ्यात्—अ, अ १.
[3] रूप—अ, अ १.

का प्रकृतिः इति प्रश्नोत्तरमाह—**प्रकृतिरिति**। अयस्कान्तसंनिहितलोहवत् या **ब्रह्मणः सकाशात्** जगद्धेतुतया प्रकृता सेयं **ब्रह्मशक्तिरेव प्रकृतिः** ॥ ६ ॥

परमात्मस्वरूपम्

परमात्मेति च देहादेः परतरत्वाद्ब्रह्मैव परमात्मा ॥ ७ ॥

कः परमात्मेत्यादि के ब्राह्मणादय इत्यन्तप्रश्नोत्तरमाह—**परमात्मेति**। व्यष्टिदेहाद्यव्यक्तान्तकलना यज्ज्ञानसमकालमपह्नवतां भजति तद्देहादेः **परतरं** तद्भावः तत्त्वं तस्मात् निष्प्रतियोगिकं बृंहयतीति **ब्रह्मैव परमात्मा** स्वमात्रमवशिष्यते ॥ ७ ॥

ब्रह्मादीनां ब्रह्ममात्रत्वम्

स ब्रह्मा स विष्णुः स इन्द्रः स शमनः स सूर्यः स चन्द्रस्ते सुरास्ते असुरास्ते पिशाचास्ते मनुष्यास्ताः स्त्रियस्ते पश्वादयस्तत्स्थावरं ते ब्राह्मणादयः ॥ ८ ॥ सर्वं खल्विदं ब्रह्म नेह नानाऽस्ति किंचन ॥ ९ ॥

यः परमार्थदृष्ट्या स्वमात्रमवशिष्टो भवति **स** एव स्वाज्ञादिदृष्ट्या **ब्रह्मेत्यादि** ॥ ८ ॥ स्वज्ञदृष्ट्या **सर्वं खल्विदं ब्रह्म** परमार्थदृष्ट्या **नेह** निष्प्रतियोगिक-चिन्मात्रे **किञ्चन** किञ्चिदपि ब्रह्मादिब्राह्मणान्त**नानाऽस्ति** ब्रह्मणो निष्प्रतियोगिकस्वमात्रत्वात् ॥ ९ ॥

जातिस्वरूपम्

जातिरिति च।
न चर्मणो न रक्तस्य न मांसस्य न चास्थिनः।
न जातिरात्मनो जातिर्व्यवहारप्रकल्पिता ॥ १० ॥

का जातिः इति प्रश्नोत्तरमाह—**जातिरिति**। स्पष्टोऽर्थः ॥ १० ॥

कर्माकर्मणोः स्वरूपम्

कर्मेति च क्रियमाणेन्द्रियैः कर्माण्यहं करोमीत्यध्यात्मनिष्ठतया कृतं कर्मैव कर्म ॥ ११ ॥ अकर्मेति च कर्तृत्वभोक्तृत्वाद्यहंकारतया बन्धरूपं जन्मादिकारणं नित्यनैमित्तिकयागव्रततपोदानादिषु [1]फलाभिसंधानं यत् तदकर्म ॥ १२ ॥

किं कर्म इति प्रश्नोत्तरमाह—कर्मेति । अकर्तृधिया अनुष्ठितं सत्कर्मेत्यर्थः ॥ ११ ॥ किं अकर्मेति प्रश्नोत्तरमाह—अकर्मेति । कर्मकर्तृत्वाद्यभिमानपुरस्सरं यथोक्तफलेच्छया कृतं अकर्म असत्कर्मेत्यर्थः ॥ १२ ॥

ज्ञानाज्ञानयोः स्वरूपम्

ज्ञानमिति च देहेन्द्रियनिग्रहसद्गुरूपासनश्रवणमनननिदिध्यासनैर्यद्यद्दृग्दृश्यस्वरूपं सर्वान्तरस्थं सर्वसमं घटपटादिपदा[2]र्थ इवाविकारं विकारेषु चैतन्यं विना किंचिन्नास्तीति साक्षात्कारानु[3]भवं ज्ञानम् ॥ १३ ॥ अज्ञानमिति च रज्जौ सर्पभ्रान्तिरिवाद्वितीये सर्वानुस्यूते सर्वमये ब्रह्मणि देवतिर्यङ्नरस्थावरस्त्रीपुरुषवर्णाश्रमबन्धमोक्षोपाधिनानात्मभेदकल्पितं ज्ञानमज्ञानम् ॥ १४ ॥

किं ज्ञानमिति प्रश्नोत्तरमाह—ज्ञानमिति । देहेन्द्रियनिग्रहग्रहणं साधनचतुष्टयसम्पत्त्युपलक्षणार्थम् । यत् सद्गुरुमुखतः कृतश्रवणादिनिष्पन्नं यद्यद्दृग्दृश्यतया विभाति चक्षुरादिकरणं तद्विषयजातं च तयोरपि स्वरूपभूतं

[1] फलानभि—अ, अ १. फलादिसं—अ २. फलाभिधेयसं—क.
[2] र्थमिवा—उ, मु.  [3] भवो—अ.

तत्तदन्तर्याम्यात्मना **सर्वान्तरस्थं सर्वसमं** मृद्विकारघटपटादिपदार्थ इव विकारं न भवतीत्यविकारं स्वाज्ञदृष्टिप्रसक्तमायातत्कार्यविकारेष्वपि **चैतन्यं** विना **न किञ्चिदस्तीति स्वानुभव एव ज्ञानमुच्यते** ॥ १३ ॥ किं अज्ञानं इति प्रश्नोत्तरमाह—**अज्ञानमिति** । अतस्मिंस्तद्भावनं तस्मिन्नतद्भावनं वस्तुयाथात्म्यावेदनं वा **अज्ञानमि**त्यर्थः ॥ १४ ॥

सुखदुःखयोः स्वरूपम्

**सुखमिति च सच्चिदानन्दस्वरूपं ज्ञात्वाऽऽनन्दरूपो यः [1]स्थितिः सैव सुखम्[2] ॥ १५ ॥**

किं सुखं इति प्रश्नोत्तरमाह—**सुखमिति** । **सच्चिदानन्दस्वरूप**महमस्मीति **ज्ञात्वा** तज्ज्ञानसमकालं तन्मात्रावस्थानं परमसुखमभिधीयत इत्यर्थः । यः स्थितिः स एव सुखं इत्यत्र लिङ्गव्यत्ययः छान्दसः । प्रश्ने किं दुःखं इत्यत्र प्रतिवचनादर्शनात् यथोक्तसुखविपरीतं दुःखं इति ज्ञेयम् ॥ १५ ॥

स्वर्गनरकयोः स्वरूपम्

**स्वर्ग इति च सत्संसर्गः स्वर्गः ॥ १६ ॥ नरक इति च असत्संसारविषय[3]जनसंसर्ग एव नरकः ॥ १७ ॥**

कः स्वर्गः इति प्रश्नोत्तरमाह—**स्वर्ग इति** । **सत्संसर्ग**स्य स्वर्गसुखतुल्यत्वात् ॥ १६ ॥ को नरकः इति प्रश्नोत्तरमाह—**नरक इति** । **असत्संसारविषयजनैः** [संसर्गस्य] नरकफलप्रापकत्वात् ॥ १७ ॥

[1] तिष्ठति—अ.

[2] "दुःखमिति च अनादिविषयसंकल्प एव दुःखं" इति नवीनपंक्तिरधिका—अ १. "अनात्मा सरूपविषयसंकल्प एव दुःखं" इत्यधिकः—अ.

[3] जननसं—अ १, उ, क. जसं—अ.

बन्धमोक्षयोः स्वरूपम्

बन्ध इति च अनाद्यविद्यावासनया जातोऽहमित्यादिसंकल्पो बन्धः ॥ १८ ॥ पितृमातृसहोदरदारापत्यगृहारामक्षेत्रममता-संसारावरणसंकल्पो बन्धः ॥ १९ ॥ कर्तृत्वाद्यहंकारसंकल्पो बन्धः ॥ २० ॥ अणिमाद्यष्टैश्वर्याशासिद्धसंकल्पो बन्धः ॥ २१ ॥ देवमनुष्याद्युपासनाकामसंकल्पो बन्धः ॥ २२ ॥ यमाद्यष्टाङ्गयोग-संकल्पो बन्धः ॥ २३ ॥ वर्णाश्रमधर्मकर्मसंकल्पो बन्धः ॥ २४ ॥ आज्ञाभयसंशयात्मगुणसंकल्पो बन्धः ॥ २५ ॥ यागव्रततपोदान-विधिविधानज्ञानसंकल्पो बन्धः ॥ २६ ॥ केवलमोक्षापेक्षासंकल्पो बन्धः ॥ २७ ॥ संकल्पमात्रसंभवो बन्धः ॥ २८ ॥ मोक्ष इति च नित्यानित्यवस्तुविचारादनित्यसंसारसुखदुःखविषयसमस्तक्षेत्रममता-बन्धक्षयो मोक्षः ॥ २९ ॥

को बन्धः इति प्रश्नोत्तरमाह—बन्ध इति ॥ १८–२६ ॥ मुक्तस्य मोक्षेच्छाऽनुपपत्तेः,

मोक्षो मेऽस्त्विति चिन्ताऽन्तर्जाता चेदुत्थितं मनः ।
मननोत्थे मनस्येष बन्धः सांसारिको मतः ॥

इति श्रुतेः ॥ २७ ॥ किं बहुना—सङ्कल्पमात्रसम्भवो बन्ध इति ॥ २८ ॥ को मोक्ष इति प्रश्नोत्तरमाह—मोक्ष इति । बन्धहेतुसङ्कल्पक्षयस्य मोक्षाविर्भावहेतुत्वात् ॥ २९ ॥

उपास्यशिष्ययोः स्वरूपम्

उपास्य इति च सर्वशरीरस्थचैतन्यब्रह्मप्रापको गुरुरुपास्यः ॥ ३० ॥ शिष्य इति च [1]विद्याध्वस्तप्रपञ्चावगाहितज्ञानावशिष्टं ब्रह्मैव [2]शिष्यः ॥ ३१ ॥

क उपास्यः इति प्रश्नोत्तरमाह—उपास्य इति । स्वाचार्यातिरिक्तोपास्याभावात् ॥ ३० ॥ कः शिष्यः इति प्रश्नोत्तरमाह—शिष्य इति । विद्यया स्वातिरिक्ते अपह्नवतां गते यो निष्प्रतियोगिकमवशिष्यते स एव शिष्यः, न तु ग्रन्थार्थावगाही, तस्य सविशेषब्रह्मवित्त्वात् ॥ ३१ ॥

विद्वन्मूढयोः स्वरूपम्

विद्वानिति च सर्वान्तरस्थस्वसंविद्रूप[3]विद्विद्वान् ॥ ३२ ॥ मूढ इति च कर्तृत्वाद्यहंकारभावनारूढो मूढः ॥ ३३ ॥

को विद्वानिति प्रश्नोत्तरमाह—विद्वानिति । ब्रह्मविदेव विद्वान्, न हि षड्दर्शनीवल्लभो विद्वान् भवति ॥ ३२ ॥ को मूढ इति प्रश्नोत्तरमाह—मूढ इति । अहं कर्तेत्याद्यभिमतिदृढपटावृतत्वात् ॥ ३३ ॥

आसुरस्वरूपम्

आसुरमिति च ब्रह्मविष्णवीशानेन्द्रादीनामैश्वर्यकामनया निरशनजपाग्निहोत्रादिष्वन्तरात्मानं संतापयति चात्युग्ररागद्वेषविहिंसादम्भाद्यपेक्षितं तप आसुरम् ॥ ३४ ॥

[1] अविद्याऽध्यस्त—अ, अ १. [2] शिष्यत इति—उ १.
[3] स्स विद्वान्—अ १. वद्विद्वान्—अ २.

किं आसुरं इति प्रश्नोत्तरमाह—**आसुरमिति । ब्रह्मविष्णवीशानेन्द्रवरुणादीनुद्दिश्य लौकिकैश्वर्यकामनया निरशनात्मकर्शनपूर्वकं बहिर्मुखेन कृतं तप आसुरं**, परमार्थफलवैरळ्यात् ॥ ३४ ॥

तपःस्वरूपम्

तप इति च ब्रह्म सत्यं जगन्मिथ्येत्यपरोक्षज्ञानाग्निना ब्रह्माद्यैश्वर्याशासिद्धसंकल्पबीज[1]संतापं तपः ॥ ३५ ॥

किं तपः इति प्रश्नोत्तरमाचष्टे—तप इति । असत्यजगदपह्नवसिद्धब्रह्ममात्रज्ञानाग्निना स्वाज्ञदृष्टिप्रसक्तस्वातिरिक्तास्तितातूलराशिसन्तापं भस्मीकरणमेव तप इत्यर्थः ॥ ३५ ॥

परमपदस्वरूपम्

परमपदमिति च प्राणेन्द्रि[2]याद्यन्तःकरणगुणादेः परतरं सच्चिदानन्दमयनित्यमुक्तब्रह्मस्थानं परमपदम् ॥ ३६ ॥

किं परमं पदं इति प्रश्नोत्तरमाह—**परमपदमिति** । अनृतजडदुःखात्मकप्राणाद्युपलक्षिताविद्यापदात् अपह्नवतां गतात् **परतरं सच्चिदानन्दमयं** तन्मात्रावस्थानं **परमपदम्** ॥ ३६ ॥

ग्राह्याग्राह्ययोः स्वरूपम्

ग्राह्यमिति च देशकालवस्तुपरिच्छेदराहित्यचिन्मात्रस्वरूपं ग्राह्यम् ॥ ३७ ॥ अग्राह्यमिति च स्वस्वरूपव्यतिरिक्तमायामयबुद्धीन्द्रियगोचरजगत्सत्यत्वचिन्तनमग्राह्यम् ॥ ३८ ॥

[1] संतापः—अ.  [2] यान्तः—उ १.

किं ग्राह्यं इति प्रश्नोत्तरमाह—**ग्राह्यमिति** । निष्प्रतियोगिकचिन्मात्रं स्वावशेषतया **ग्राह्यं**, अचिन्मात्रस्य परमार्थदृष्टिदुर्लभत्वात् ॥ ३७ ॥ किं अग्राह्यं इति प्रश्नोत्तरमाह—**अग्राह्यमिति** । स्वमात्रसिद्धे स्वातिरिक्तजगत्सत्यताऽपह्नवपूर्वकत्वात् स्वमात्रेच्छुभिः स्वातिरिक्तं अग्राह्यमेवेत्यर्थः ॥ ३८ ॥

संन्यासिस्वरूपम्

संन्यासीति च सर्वधर्मान् परित्यज्य निर्ममो निरहंकारो भूत्वा ब्रह्मेष्टं शरणमुपगम्य तत्त्वमसि सर्वं खल्विदं ब्रह्म नेह नानाऽस्ति किंचनेत्यादिमहावाक्यार्थानुभवज्ञानाद्ब्रह्मैवाहस्मीति निश्चित्य निर्विकल्पसमाधिना स्वतन्त्रो यतिश्चरति स संन्यासी स मुक्तः स [1]पूज्यः स योगी स परमहंसः सोऽवधूतः स ब्राह्मण इति ॥ ३९ ॥

कः संन्यासी इति प्रश्नोत्तरमाह—**संन्यासीति** । स्वातिरिक्त**सर्वधर्मा**शां **परित्यज्य** स्वात्मात्मीयकलनायां निर्गताहङ्कारममकारो **भूत्वा** यत् स्वातिरिक्तकलनापह्नवसिद्धं **ब्रह्म** सर्वावशिष्टं स्वमात्रतया **इष्ट**मिति **शरणं** तन्निष्ठामु**पगम्य** तत्समकालं कृतकृत्यो भवति । यदि कदाचित् आभासतोऽपि संसृतिकष्टप्रदस्वातिरिक्तभ्रम उदेति तदा पुनस्तन्निरसनोपायतया यद्यत् स्वाज्ञदृष्ट्या सत्यतया भातं यद्यत् स्वज्ञदृष्ट्या व्यावहारिकत्वेन प्रातिभासिकत्वेन वा भातं तत्समष्टिव्यष्ट्यपवादाधिकरणं **तत्त्वं**पदलक्ष्यं ब्रह्मैवाहं अहमेव ब्रह्म इत्य**सि**पदेन तत्त्वंपदलक्ष्यैक्यं कृत्वा यत् स्वाज्ञादिदृष्ट्या सत्यत्वादिना अनुभूतं तत् **सर्वं खल्विदं ब्रह्म नेह** सर्वापह्नवसिद्धब्रह्ममात्रे **किञ्चन** सर्वशब्दवाच्य**नानाऽस्तीति महावाक्यार्थानुभवज्ञानात्** **ब्रह्मैवाहमस्मीति** **निश्चित्य** आभासतोऽपि ब्रह्मातिरिक्तं न किञ्चिदस्ति इत्यखण्ड**निर्विकल्पकसमाधिना** सम्यग्ज्ञानमहिम्ना

[1] मुक्तपू—क.

स्वतन्त्रो यतिश्चरति । स हि स्वातिरिक्तसर्वस्वसंन्यासी, स हि तद्भमतो मुक्तः, स हि ब्रह्मविदादिभिरपि पूज्यः, स एव ब्रह्ममात्रज्ञानयोगी, स हि परमहंसः प्रत्यगभिन्नपरमात्मा, स एव मुख्यावधूतः,

अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबन्धनात् ।
तत्त्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते ॥

इति मुख्यावधूतप्रतिपादकश्रुतेः । स एव ब्राह्मणः ब्रह्मनिष्ठ इत्यर्थः ॥ ३९ ॥

विद्याफलम्

निरालम्बोपनिषदं योऽधीते गुर्वनुग्रहतः सोऽग्निपूतो भवति स वायुपूतो भवति न स पुनरावर्तते न स पुनरावर्तते पुनर्नाभिजायते पुनर्नाभिजायत इत्युपनिषत् ॥ ४० ॥

विद्यासामान्यविशेषफलमाह—निरालम्बेति । अग्निवाय्वादिवत् शुद्धान्तरो भवतीत्यान्तरालिकफलं, न स पुनरावर्तते इति मुख्यफलम् । आवृत्तिरादरार्था । इत्युपनिषच्छब्दः शास्त्रपरिसमाप्त्यर्थः ॥ ४० ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं निरालम्बस्य वै स्फुटम् ।
निरालम्बविवरणग्रन्थस्त्वष्टोत्तरं शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे चतुस्त्रिंशत्सङ्ख्यापूरकं निरालम्बोपनिषद्विवरणं सम्पूर्णम्

# पैङ्गलोपनिषत्

पूर्णमदः—इति शान्तिः

## प्रथमोऽध्यायः

परमरहस्यकैवल्यजिज्ञासा

अथ ह पैङ्गलो याज्ञवल्क्यमुपसमेत्य द्वादशवर्षशुश्रूषापूर्वकं परमरहस्यकैवल्यमनुब्रूहीति पप्रच्छ ॥ १ ॥

पैङ्गलोपनिषद्वेद्यं परमानन्दविग्रहम् ।
परितः कलये रामं परमाक्षरवैभवम् ॥

इह खलु शुक्लयजुर्वेदप्रविभक्तेयं पैङ्गलोपनिषत् स्वाज्ञादिदृष्टिमाश्रित्याध्यारोपापवादतदधिकरणप्रकाशनव्यग्रा निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । शिष्याचार्यपदंगतपैङ्गलयाज्ञवल्क्यप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—**अथेति** ॥ १ ॥

अद्वितीयब्रह्म

स होवाच याज्ञवल्क्यः—सदेव सोम्येदमग्र आसीत्। तन्नित्यमुक्तमविक्रियं सत्यज्ञाना[1]नन्दपरिपूर्णं सनातनमेकमेवाद्वितीयं ब्रह्म ॥ २ ॥

पैङ्गलप्रश्नोत्तरं **स होवाच याज्ञवल्क्यः** । किमिति ? **सदेवेति** । सृष्टेः पूर्वं **इदमविद्यापदतत्कार्यजातं** अनभिव्यक्तनामरूपात्मकं **सदेवासीत्** । यत् सत् सन्मात्रं तत् कालत्रयेऽपि स्वातिरिक्तकलनामुक्तं, अनित्यस्वातिरिक्तकार्यकारण-विक्रियाऽभावतो **नित्यमविक्रियं**, अनृतजडदुःखवैरळ्यात् **सत्यज्ञानानन्द-परिपूर्णं**, चिरन्तनत्वात् **सनातनं**, परमार्थदृष्ट्या सजातीयविजातीयस्वगतभेदा-सम्भवात् **एकमेवाद्वितीयं**, स्वमात्रतया निष्प्रतियोगिकं उपबृंहणात् **ब्रह्म** विजयत इत्यर्थः, " ब्रह्मैवैकमनाद्यन्तमब्धिवत् प्रविजृम्भते " इति श्रुतेः ॥ २ ॥

मूलप्रकृतिः, साक्षिचैतन्यं च

तस्मिन् मरुशुक्तिकास्थाणुस्फटिकादौ जलरौप्यपुरुषरेखा-ऽऽदिवल्लोहितशुक्लकृष्णा गुणमयी गुणसाम्यानिर्वाच्या मूलप्रकृति-रासीत् । तत्प्रतिबिम्बितं यत्तत् साक्षिचैतन्यमासीत् ॥ ३ ॥

यदुक्तं निष्प्रतियोगिकं ब्रह्ममात्रमिति न हि तत्राध्यारोपापवादकलना सेद्धुं पारयति । इदानीमनादिकालमारभ्याकैवल्यं स्वज्ञस्वाज्ञादिकलना विजृम्भते । तत्र परमार्थदृष्टिः सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति पश्यति । स्वज्ञः स्वातिरिक्ताविद्यापदतत्कार्यकलनाऽस्पृष्टं ब्रह्माहमस्मीति पश्यति । स्वाज्ञस्तु स्वं विस्मृत्य स्वातिरिक्तमोहार्णवे मज्जन् देहादिरहमस्मीति मन्यते । तन्मोहनिरा-करणस्य तदियत्तापरिज्ञानपूर्वकत्वात्, न हि तत्परिज्ञानं विना तदपह्नोतुं शक्यते,

[1] नन्दं—अ १.

अतः तन्मोहनिराकरणाय निरधिकरणेऽपि ब्रह्ममात्रे स्वाज्ञदृष्ट्याऽध्यारोपः, स्वज्ञदृष्ट्या स्वातिरिक्तापवादः, परमार्थदृष्ट्या निष्प्रतियोगिकब्रह्ममात्रं सेद्धुं पारयतीति ब्रह्मण्यध्यारोपादिश्रुतिभिः उच्यत इत्याह—**तस्मिन्नित्यादिना**। रजःसत्वतमोगुणमयी । सर्वानर्थमूलत्वेन प्रकृता **मूलप्रकृतिः** विकल्पिता **आसीत्**। बिम्बकलनाविरळं यन्निर्विशेषं ब्रह्म स्वकल्पितमूलप्रकृतितत्कार्यवारिबिम्बितसाक्षीशजीववत् भातीत्याह—तदिति । या स्वविकल्पिता मूलप्रकृतिः **तत्प्रतिबिम्बितं यत्** ॥ ३ ॥

अव्यक्तं, ईश्वरचैतन्यं च

सा पुनर्विकृतिं प्राप्य सत्त्वोद्रिक्ताऽव्यक्ताख्याऽऽवरणशक्तिरासीत् । तत्प्रति[1]बिम्बितं यत्तदीश्वरचैतन्यमासीत् । स स्वाधीनमायः सर्वज्ञः सृष्टिस्थितिलयानामादिकर्ता जगदङ्कुररूपो भवति । स्वस्मिन् विलीनं [2]सकलं जगदाविर्भावयति । प्राणिकर्मवशादेष पटो यद्वत् प्रसारितः प्राणिकर्मक्षयात् पुनस्तिरोभावयति । तस्मिन्नेवाखिलं विश्वं [3]संकोचितपटवद्वर्तते ॥ ४ ॥

या मूलप्रकृतिः **सा पुनर्विकृतिम्** ॥ ४–६ ॥

महत् , हिरण्यगर्भचैतन्यं च

ईशाधिष्ठितावरणशक्तितो रजोद्रिक्ता महदाख्या विक्षेपशक्तिरासीत् । तत्प्रतिबिम्बितं यत्तद्धिरण्यगर्भचैतन्यमासीत् । स महत्तत्त्वाभिमानी स्पष्टास्पष्टवपुर्भवति ॥ ५ ॥

[1] बिम्बं य—अ, अ १.
[2] 'सकलं' इत्येतन्नास्ति—उ.
[3] संकोचप—उ.

अहङ्कारः, विराट्चैतन्यं, तन्मात्रसम्भूतिश्च

हिरण्यगर्भाधिष्ठितविक्षेपशक्तितस्तमोद्रिक्ताहंकाराभिधा स्थूलशक्तिरासीत्। तत्प्रतिबिम्बितं यत्तद्विराट्चैतन्यमासीत्। स तदभिमानी स्पष्टवपुः सर्वस्थूलपालको विष्णुः प्रधानपुरुषो भवति। तस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। तानि पञ्च तन्मात्राणि [1]त्रिगुणानि भवन्ति ॥ ६ ॥

अण्डभुवनशरीराणां सृष्टिः

स्रष्टुकामो जगद्योनिस्तमोगुणमधिष्ठाय सूक्ष्मतन्मात्राणि भूतानि स्थूलीकर्तुं सोऽकामयत। सृष्टेः परिमितानि भूतान्येकमेकं द्विधा विधाय पुनश्चतुर्धा कृत्वा स्वस्वेतरद्वितीयांशैः पञ्च पञ्चधा संयोज्य पञ्चीकृतभूतैरनन्तकोटिब्रह्माण्डानि तत्तदण्डोचितचतुर्दशभुवनानि तत्तद्भुवनोचितगोलकस्थूलशरीराण्यसृजत् ॥ ७ ॥

केवलसूक्ष्मभूतसृष्ट्या किं स्यादित्याशङ्क्य तत्पञ्चीकरणतः सर्वसिद्धिः स्यादित्याह—स्रष्टुकाम इति ॥ ७ ॥

कर्मेन्द्रियसृष्टिः

स पञ्चभूतानां रजोऽ[2]शांश्चतुर्धा कृत्वा भागत्रयात् पञ्चवृत्त्यात्मकं प्राणमसृजत्। स तेषां तुर्यभागेन कर्मेन्द्रियाण्यसृजत् ॥ ८ ॥

ततः किमित्यत आह—स इति। तेषां पञ्चभूतानाम् ॥ ८–१० ॥

[1] त्रीणि गु—अ.

[2] शं च—अ, अ १.

ज्ञानेन्द्रियसृष्टिः

स तेषां सत्त्वांशं चतुर्धा कृत्वा भागत्रयसमष्टितः पञ्च-वृत्त्यात्मकमन्तःकरणमसृजत् । स तेषां सत्त्वतुरीयभागेन ज्ञानेन्द्रियाण्यसृजत् ॥ ९ ॥

इन्द्रियपालकसृष्टिः

सत्त्वसमष्टित इन्द्रियपालकानसृजत् । तानि सृष्टान्यण्डे [1]प्राक्षिपत् । तदाज्ञया समष्ट्यण्डं व्याप्य तान्यतिष्ठन् । तदाज्ञयाऽहंकारसमन्वितो विराट् स्थूलान्यरक्षत् । हिरण्यगर्भस्तदाज्ञया सूक्ष्माण्यपालयत् ॥ १० ॥

ईशस्य शरीरेन्द्रियप्रवेशः

अण्डस्थानि [2]तानि तेन विना स्पन्दितुं चेष्टितुं वा न शेकुः । तानि चेतनीकर्तुं सोऽकामयत । ब्रह्माण्डं ब्रह्मरन्ध्राणि व्यष्टिमस्तकान् विदार्य तदेवानुप्राविशत् । तदा जडान्यपि तानि चेतनवत् स्वस्वकर्माणि चक्रिरे ॥ ११ ॥

ईश्वरसृष्टानि कारणादीनि अण्डस्थानि । मस्तकान् मस्तकानि । स्वानुप्रविष्टचैतन्ययोगात् चेतनवत् ॥ ११ ॥

ईशस्य जीवत्वप्राप्तिः

सर्वज्ञेशो मायालेशसमन्वितो व्यष्टिदेहं प्रविश्य तया मोहितो जीवत्वमगमत् । शरीरत्रयतादात्म्यात् [3]कर्तृभोक्तृत्वतामगमत् ।

[1] प्राचिक्षि—अ, उ. प्रचिक्षि—क, अ १, अ २. [2] ‘तानि’ नास्ति—क, अ २.
[3] कर्तृभोक्तृता—अ. कर्तृत्वभो—क, अ २.

जाग्रत्स्वप्नसुषुप्तिमूर्च्छामरणधर्मसंयुक्तो घटीयन्त्रवदुद्विग्नो जातो मृत इव कुलालचक्रन्यायेन परिभ्रमतीति ॥ १२ ॥

**भोक्तृत्वतामगमत्**—भोक्तृताम् । निरावृतक्रियाज्ञानेच्छाशक्तेरीशितुः ईशत्वं जीवत्वं च स्वाज्ञदृष्टिनिमित्तं न स्वतः, स्वस्यैव निर्विशेषब्रह्मरूपत्वात् । निर्विशेषस्यापि विशेषयोगतो जीवत्वमुपपद्यते इत्यर्थः । इतिशब्दः प्रथमाध्यायपरिसमाप्त्यर्थः ॥ १२ ॥

इति प्रथमोऽध्यायः

---

# द्वितीयोऽध्यायः

ईशः कथं जीवत्वमगमत्?

अथ पैङ्गलो याज्ञवल्क्यमुवाच सर्वलोकानां सृष्टिस्थित्यन्तकृद्विभुरीशः कथं जीवत्वमगमदिति ॥ १ ॥

सर्वनियामकेशितुः नियम्यजीवता कथमिति पैङ्गलो याज्ञवल्क्यं पृच्छतीत्याह—**अथेति** ॥ १ ॥

स्थूलशरीरसृष्टिः

स होवाच याज्ञवल्क्यः—स्थूलसूक्ष्मकारणदेहोद्भवपूर्वकं जीवेश्वरस्वरूपं विविच्य कथयामीति सावधानेनै[1]काग्रतया श्रूयताम् । ईशः पञ्चीकृतमहाभूतलेशानादाय व्यष्टिसमष्ट्यात्मकस्थूलशरीराणि

[1] काग्रय—अ १, अ २, क.

यथाक्रममकरोत् । कपालचर्मान्त्रास्थिमांसनखानि पृथिव्यंशाः । रक्तमूत्रलालास्वेदादिका अबंशाः । क्षुत्तृष्णोष्णमोहमैथुनाद्या अग्न्यंशाः । प्रचारणोत्तारणश्वासादिका वाय्वंशाः । कामक्रोधादयो व्योमांशाः । एतत्संघातं कर्मसंचितं त्वगादियुक्तं बाल्याद्यवस्थाऽभिमानास्पदं बहुदोषाश्रयं स्थूलशरीरं भवति ॥ २ ॥

उवाच, किमिति ? व्यष्टिसमष्ट्यात्मकस्थूलसूक्ष्मेति । किं तद्वक्ष्यसीत्यत्र पञ्चभूततः स्थूलदेहरचनामाचष्टे—ईश इति । यथाक्रममकरोत्, तत्र ॥ २ ॥

सूक्ष्मशरीरसृष्टिः

अथापञ्चीकृतमहाभूतरजोंशभागत्रयसमष्टितः प्राणमसृजत् । प्राणापानव्यानोदानसमानाः प्राणवृत्तयः । नागकूर्मकृकरदेवदत्तधनंजया उपप्राणाः । हृदासननाभिकण्ठसर्वाङ्गं स्थानम् । आकाशादिरजोगुण[1]तुर्य[2]भागेन कर्मेन्द्रियमसृजत् । वाक्पाणिपादपायूपस्थास्तद्वृत्तयः । वचनादानगमनविसर्गानन्दास्त[3]द्विषयाः । एवं भूतसत्त्वांशभागत्रयसमष्टितोऽन्तःकरणमसृजत् । अन्तःकरणमनोबुद्धिचित्ताहंकारास्तद्वृत्तयः । संकल्पनिश्चयस्मरणाभिमानानुसंधानास्त[4]द्विषयाः । गलवदननाभिहृदयभ्रूमध्यं स्थानम् । भूतसत्वतुरीयभागेन ज्ञानेन्द्रियमसृजत् । श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणास्तद्वृत्तयः । शब्दस्पर्शरूपरसगन्धास्त[5]द्विषयाः ।

[1] समष्टितु—अ, अ १, अ २.
[2] भावेन—अ १.
[3] द्वृत्तिविष—अ, अ १.
[4] द्वृत्तयः—अ.
[5] द्वृत्तिविष—अ.

दिग्वातार्कप्रचेतोऽश्विवह्नीन्द्रोपेन्द्रमृत्युकाः ।
चन्द्रो विष्णुश्चतुर्वक्रः शंभुश्च करणाधिपाः ॥ ३ ॥

सूक्ष्मशरीरलक्षणमाह—अथेति । प्राणादिस्थानम् ॥ ३ ॥

पञ्चकोशात्मकं शरीरत्रयम्

अथान्नमयप्राणमयमनोमयविज्ञानमयानन्दमयाः पञ्च कोशाः । अन्नरसेनैव भूत्वाऽन्नरसेनाभिवृद्धिं प्राप्यान्नरसमयपृथिव्यां यद्विलीयते सोऽन्नमयकोशः । तदेव स्थूलशरीरम् । कर्मेन्द्रियैः सह प्राणादिपञ्चकं प्राणमयकोशः । ज्ञानेन्द्रियैः सह मनो मनोमयकोशः । ज्ञानेन्द्रियैः सह बुद्धिर्विज्ञानमयकोशः । एतत्कोशत्रयं लिङ्गशरीरम् । [1]स्वरूपाज्ञानमानन्दमयकोशः । तत् कारणशरीरम् ॥ ४ ॥

शरीरत्रयनिर्वचनाय पञ्चकोशस्वरूपमाचष्टे—अथेति । पञ्च कोशाः, तत्र अन्नरसेनेति । प्राणादिकोशत्रयं सूक्ष्मशरीरं भवतीत्याह—कर्मेति ॥ ४ ॥

पुर्यष्टकम्

अथ ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं प्राणादिपञ्चकं वियदादिपञ्चकमन्तःकरणचतुष्टयं कामकर्मतमांस्यष्टपुरम् ॥ ५ ॥

पुर्यष्टकस्वरूपमाह—अथेति । पुर्यष्टकशब्देन समष्टिलिंगशरीरमुच्यते ॥

विराजो विश्वत्वम्

ईशाज्ञया विराजो व्यष्टिदेहं प्रविश्य बुद्धिमधिष्ठाय विश्वत्वमगमत् । विज्ञानात्मा चिदाभासो विश्वो व्यावहा-

[1] स्वरूप—उ.

रिको जाग्रत्स्थूलदेहाभिमानी कर्मभूरिति च विश्वस्य नाम भवति ॥ ६ ॥

व्यष्टिसमष्ट्योरेकत्वविवक्षया विराडादिप्रविभक्तत्वं विश्वादेराह—ईशेति। ईशाज्ञया स्वेच्छाशक्त्या ॥ ६–८ ॥

सूत्रात्मनस्तैजसत्वम्

ईशाज्ञया सूत्रात्मा व्यष्टिसूक्ष्मशरीरं प्रविश्य मन अधिष्ठाय तैजसत्वमगमत्। तैजसः प्रातिभासिकः स्वप्नकल्पित इति तैजसस्य नाम भवति ॥ ७ ॥

मायोपाधेः प्राज्ञत्वम्

ईशाज्ञया मायोपाधिरव्यक्तसमन्वितो व्यष्टिकारणशरीरं प्रविश्य प्राज्ञत्वमगमत्। [1]प्राज्ञोऽविच्छिन्नः पारमार्थिकः सुषुप्त्यभिमानीति प्राज्ञस्य नाम भवति ॥ ८ ॥

प्राज्ञस्यैव श्रवणादिजन्यज्ञानफलम्

अव्यक्तलेशाज्ञानाच्छादितपारमार्थिकजीवस्य तत्त्वमस्यादिवाक्यानि ब्रह्मणैकतां जगुः नेतरयोर्व्यावहारिकप्रातिभासिकयोः ॥ ९ ॥

विश्वस्य श्रवणाधिकारित्वेन विश्वस्यैव ब्रह्मणैकत्वं न तैजसादेः इत्याशङ्क्य विश्वस्य श्रवणादिकर्तृत्वे व्यावहारिकत्वात् तैजसस्य प्रातिभासिकत्वात् तयोः ज्ञानफलभोगावसरे मिथ्याभूतत्वात् प्राज्ञस्य पारमार्थिकत्वेन स्वांशजविश्वकृतशास्त्रश्रवणजन्यज्ञानफलभाक्त्वं प्राज्ञस्येत्याह—अव्यक्तेति ॥ ९–१० ॥

[1] प्राज्ञवि—उ १. प्राज्ञोऽव—अ, क.

प्रतिबिम्बितचैतन्यस्यैवावस्थावत्त्वम्

अन्तःकरणप्रतिबिम्बितचैतन्यं यत् तदेवावस्थात्रयभाग्भवति। स जाग्रत्स्वप्नसुषुप्त्यवस्थाः प्राप्य घटीयन्त्रवदुद्विग्नो जातो मृत इव स्थितो भवति ॥ १० ॥

जाग्रदवस्था

अथ जाग्रत्स्वप्नसुषुप्तिमूर्च्छामरणावस्थाः पञ्च भवन्ति । तत्तद्देवताऽनुग्रहान्वितैः श्रोत्रादिज्ञानेन्द्रियैः शब्दाद्यर्थविषयग्रहणज्ञानं जाग्रदवस्था भवति । तत्र भ्रूमध्यं गतो जीव आपादमस्तकं व्याप्य कृषिश्रवणाद्यखिलक्रियाकर्ता भवति । तत्तत्फलभुक् च भवति । लोकान्तरं गतः कर्मार्जितफलं स एव भुङ्क्ते । स सार्वभौमवद्व्यवहाराच्छ्रान्त अन्तर्भवनं प्रवेष्टुं मार्गमाश्रित्य तिष्ठति ॥ ११ ॥

जाग्रदाद्यवस्थापञ्चकस्वरूपमाह—अथेति । तत्र क्रमेण जाग्रदाद्यवस्थास्वरूपमाह—तत्तदिति । य एवंविधो विश्वः स सार्वभौमवत् । अन्तर्भवनं स्थूलशरीरान्तः ॥ ११–१९ ॥

स्वप्नावस्था

करणोपरमे जाग्रत्सं[1]स्कारार्धप्रबोधवद्ग्राह्यग्राहकरूपस्फुरणं स्वप्नावस्था भवति । तत्र विश्व एव जाग्रद्व्यवहारलोपान्नाडीमध्यं चरंस्तैजसत्वमवाप्य वासनारूपकं जगद्वैचित्र्यं स्वभासा भासयन् यथेप्सितं स्वयं भुङ्क्ते ॥ १२ ॥

[1] स्कारार्थ—अ, क.

सुषुप्त्यवस्था

चित्तैककरणा सुषुप्त्यवस्था भवति । [1]भ्रमविश्रान्तशकुनिः पक्षौ संहृत्य नीडाभिमुखं यथा गच्छति तथा जीवोऽपि जाग्रत्स्वप्नप्रपञ्चे व्यवहृत्य श्रान्तोऽज्ञानं प्रविश्य स्वानन्दं भुङ्क्ते ॥ १३ ॥

मूर्च्छाऽवस्था

अकस्मान्मुद्गरदण्डाद्यैस्ताडितवद्भयाज्ञानाभ्यामिन्द्रियसंघातैः कम्पन्निव मृततुल्या मूर्च्छा भवति ॥ १४ ॥

मरणावस्था

जाग्रत्स्वप्नसुषुप्तिमूर्च्छाऽवस्थानामन्या ब्रह्मादिस्तम्बपर्यन्तं सर्वजीवभयप्रदा स्थूलदेहविसर्जनी मरणावस्था भवति ॥ १५ ॥

जीवस्य संसारगतावविश्रान्तिः

कर्मेन्द्रियाणि ज्ञानेन्द्रियाणि तत्तद्विषयान् प्राणान् संहृत्य कामकर्मान्वित अविद्याभूतवेष्टितो जीवो देहान्तरं प्राप्य लोकान्तरं गच्छति । प्राक्कर्मफलपाकेनावर्तान्तरकीटवद्विश्रान्तिं नैव गच्छति ॥१६॥

तस्य लोकान्तरगमनप्राप्तिप्रकारमाह—कर्मेति । वासनामयदेहान्तरम् ॥

सत्कर्मपरिपाकतो बन्धमोक्षजिज्ञासा

सत्कर्मपरिपाकतो बहूनां जन्मनामन्ते नृणां मोक्षेच्छा जायते । तदा सद्गुरुमाश्रित्य चिरकालसेवया [2]बन्धं मोक्षं [3]कश्चित् पृच्छति ॥ १७ ॥

[1] भ्रमणवि—अ, अ १. [2] बन्धमो—अ, अ २. बन्धान्मो—अ १.
[3] कश्चित्प्रयाति—मु. कश्चिद्गच्छति—अ, अ १.

एवमनन्तकोटिजीवेषु कल्पकोटिकालं संसरत्सु सत्सु तत्र केषांचित् **सत्कर्मपरिपाकत इत्यादि** ॥ १७ ॥

विचारस्य मोक्षसाधकत्वम्

**अविचारकृतो बन्धो विचारान्मोक्षो भवति । तस्मात् सदा विचारयेत् । अध्यारोपापवादतः स्वरूपं निश्चयीकर्तुं शक्यते । तस्मात् सदा विचारयेज्जगज्जीवपरमात्मनः । जीवभावजगद्भावबाधे प्रत्यगभिन्नं ब्रह्मैवावशिष्यत इति ॥ १८ ॥**

को बन्धः को मोक्ष इत्यत्र, देहेन्द्रियादिसंघाते ममकारास्पदे—ममेदं शरीरं ममेदं श्रोत्रादिज्ञानेन्द्रियं वागादिकर्मेन्द्रियं प्राणादिपञ्चकं मनआद्यन्तःकरण-चतुष्टयं इत्यादि तत्र—कस्याप्यहङ्कारास्पदाभावात् अत्रास्मत्प्रत्ययालम्बनभूतः प्रत्यगात्मा अहमस्मीति **अविचारकृतो बन्धः**, प्रत्यगभिन्नं ब्रह्मास्मीति श्रुत्याचार्य-मुखतो **विचारान्मोक्षः** स्वातिरिक्तास्तित्वभ्रममोक्षो **भवति** । यस्मादेवं **तस्मात् सदा विचारयेत्** । विचारतः कथं स्वयाथात्म्यं निर्धारयितुं शक्यमित्यत आह—**अध्यारोपेति** । स्वस्मिन् व्यष्टिसमष्ट्यात्मकस्वाविद्यापदतत्कार्यजातमात्मत्वेन सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेनाध्यस्य, "मद्व्यतिरिक्तमणुमात्रं न विद्यते", "सन्मात्रमसदन्यत्", "ब्रह्ममात्रमसन्नहि",

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
नाविद्याऽस्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥

इत्यादिश्रुत्यनुरोधेन स्वातिरिक्तापवादापह्नवतः तदपह्नवसिद्धब्रह्मस्वरूपं निष्प्रति-योगिकस्वमात्रमिति निश्चयीकर्तुं शक्यमित्यर्थः । यस्मादेवं **तस्मात्** तत्र स्वातिरिक्तं नेति **जीवभावजगद्भावबाधे** अपह्नवे सति यत्प्रसक्तप्रत्यगभिन्नं पराक्सापेक्ष-प्रत्यक्परभेदाभेदगतविशेषांशापाये निष्प्रतियोगिकनिर्विशेषं **ब्रह्मैव** स्वमात्रं **अवशिष्यते** । इतिशब्दो द्वितीयाध्यायपरिसमाप्त्यर्थः ॥ १८ ॥

**इति द्वितीयोऽध्यायः**

---

# तृतीयोऽध्यायः

महावाक्यजिज्ञासा

अथ हैनं पैङ्गलः पप्रच्छ याज्ञवल्क्यं महावाक्यविवरणमनुब्रूहीति ॥ १ ॥

जीवपरभेदस्य स्वानुभूतिप्रमाणसिद्धत्वात् तयोरैक्ये किं मानमित्याशङ्क्य समस्तश्रुतिमस्तकमहावाक्यं मानं यदि तदा तद्विवरणमनुब्रूहीति पैंगलो याज्ञवल्क्यं पृच्छतीत्याह—अथेति ॥ १ ॥

महावाक्यानुसन्धानविधिः

स होवाच याज्ञवल्क्यः—तत्त्वमसि, त्वं तदसि, [1]त्वं ब्रह्मास्यहं ब्रह्मास्मीत्यनुसंधानं कुर्यात् ॥ २ ॥

पृष्टः स होवाच याज्ञवल्क्यः। प्रत्यक्परैक्यावगतये यान्यनुसन्धेयानि तानि महावाक्यानि कानीत्यत आह—तदिति ॥ २ ॥

प्रत्यगभिन्नब्रह्मणः वाक्यार्थत्वम्

तत्र परोक्ष्यशबलः सर्वज्ञत्वादिलक्षणो मायोपाधिः सच्चिदानन्दलक्षणो जगद्योनिस्तत्पदवाच्यो भवति । स एवान्तःकरणसंभिन्नबोधोऽस्मत्प्रत्यया[2]लम्बनस्त्वंपदवाच्यो भवति । परजीवोपाधिमायाऽविद्ये विहाय तत्त्वंपदलक्ष्यं प्रत्यगभिन्नं ब्रह्म ॥ ३ ॥

[1] 'त्वं ब्रह्मासि' इत्येतन्नास्ति—अ २, क.

[2] वल—अ, अ १.

वाक्यार्थस्तु—तत्त्वंपदयोः वाच्यलक्ष्यभेदेन अर्थद्वयमस्ति । तत्र वाच्यार्थयोः ईशजीवयोः विषमोपाधित्वेन ऐक्यायोगात् तदपवादपूर्वकं तदधिकरणलक्ष्ययोः शुद्धत्वेनैक्यमिष्यते । तत्रापनोदयितव्यवाच्यार्थस्तु **परोक्ष्यशबळः** ईश्वरोऽस्ति किं तु सोपाधिक इति परोक्षत्वं शबळत्वम् । **सर्वज्ञत्वादिलक्षणः**—आदिशब्देन सर्वेश्वरत्व-सर्वकारणत्व सर्वान्तरत्वादयो गृह्यन्ते । **मायोपाधिः**—तत्सम्बन्धाभावात् **सच्चिदानन्दलक्षणः** । ततः त्वंपदवाच्यो भिद्यत इत्यत आह—**स एवेति** । योऽयमीश्वरः तस्यैव व्यष्टिदेहान्तरनुप्रवेशश्रवणात्—" व्यष्टिमस्तकान् विदार्य तदेवानुप्राविशत् " इति—अन्तःकरणप्रतिफलनत्वमीश्वरस्येत्यर्थः । **यः अस्मत्प्रत्ययालम्बनः** देहादिरहमस्मीति प्रतीतत्वात् त्वंपदवाच्यो **भवति** । तत्र वाच्यार्थपरित्यागपूर्वकं लक्ष्ययोरैक्यं सम्भावयति—**परेति** । तथा च श्रुतिः—

मायाऽविद्ये विहायैव उपाधी परजीवयोः ।
अखण्डं सच्चिदानन्दं परं ब्रह्म विलक्ष्यते ॥

इति ॥ ३ ॥

### श्रवणमनननिदिध्यासनसमाधीनां स्वरूपम्

**तत्त्वमसीत्यहं ब्रह्मास्मीति वाक्यार्थविचारः श्रवणं भवति । एकान्तेन श्रवणार्थानुसंधानं मननं भवति । श्रवणमनननिर्विचिकित्सेऽर्थे वस्तुन्येकतान[1]तया चेतःस्थापनं निदिध्यासनं भवति । ध्यातृध्याने विहाय निवातस्थितदीपवद्ध्येयैकगोचरं चित्तं समाधिर्भवति ॥ ४ ॥**

श्रवणादिलक्षणमाह—**तदिति** । तत्त्वमसि इत्येतदाचार्यानुभवोक्तिः । अहं ब्रह्मास्मि इति शिष्यानुमोदनानुभवोक्तिः । इत्थं **वाक्यार्थविचारः श्रवणं भवति** । **एकान्तेन** युक्तिभिः **श्रवणार्थानुसन्धानं मननं भवति** । निदिध्यासनं

[1] वत्तया—उ. त्वतया—क, उ १.

तु श्रवणेति। निदिध्यासनपाटवात् त्रिपुटीग्रासनिर्विकल्पकसमाधिरुदेतीत्याह—**ध्यातृध्यान** इति। तथा च श्रुतिः—

ध्यातृध्याने परित्यज्य क्रमाद्ध्येयैकगोचरम्।
निवातदीपवच्चित्तं समाधिरभिधीयते॥

इति॥ ४॥

निर्विकल्पसमाधिमहिमा

तदानीमात्मगोचरवृत्तयः समुत्थिता अज्ञाता भवन्ति। ताः स्मरणादनुमीयन्ते। इहानादिसंसारे संचिताः कर्मकोटयोऽनेनैव विलयं यान्ति। ततोऽभ्यासपाटवात् सहस्रशः सदाऽमृतधारा वर्षति। ततो योगवित्तमाः समाधिं धर्ममेघं प्राहुः। वासनाजाले निःशेषममुना प्रविलापिते कर्मसंचये पुण्यपापे समूलोन्मूलिते प्राक् परोक्षमपि करतलामलकवद्वाक्यमप्रतिबद्धापरोक्षसाक्षात्कारं प्रसूयते। तदा जीवन्मुक्तो भवति॥ ५॥

निर्विकल्पकसमाधिं स्तौति—तदानीमिति। वृत्तीनां साक्षिभास्यत्वेन समाधितो व्युत्थितस्य एतावन्तं कालं ब्रह्मानन्दपरवशोऽस्मीति स्मृतिः युज्यत इत्यर्थः। प्रतिबन्धकाभावात् करतलामलकवत्। तेन किं स्यादित्यत आह—तदा जीवन्मुक्तो भवतीति॥ ५॥

विराडादीनां परमात्मनि लयः

ईशः पञ्चीकृतभूतानामपञ्चीकरणं कर्तुं सोऽकामयत। [1]ब्रह्माण्डतद्गतलोकान् कार्यरूपांश्च कारणत्वं प्रापयित्वा ततः सूक्ष्माङ्गं

[1] ब्रह्माण्डं—अ, अ १, अ २, उ १.

कर्मेन्द्रियाणि प्राणांश्च ज्ञानेन्द्रियाण्यन्तःकरणचतुष्टयं चैकीकृत्य सर्वाणि भौतिकानि कारणे भूतपञ्चके संयोज्य भूमिं जले जलं वह्नौ वह्निं वायौ वायुमाकाशे चाकाशमहंकारे चाहंकारं महति महदव्यक्तेऽव्यक्तं पुरुषे क्रमेण विलीयते। विराड्ढिरण्यगर्भेश्वरा उपाधिविलयात् परमात्मनि लीयन्ते ॥ ६ ॥

एतावता ग्रन्थेन ब्रह्मण्यध्यारोप उक्तः। तदपवादोपायोऽपि प्रकटितः। इदानीं स्वारोपापवादो निगद्यते—ईश इति। परमात्मनि लीयन्ते, परमात्मावशिष्टा भवन्तीत्यर्थः ॥ ६ ॥

विश्वादीनां परमात्मनि लयः

पञ्चीकृतमहाभूतसंभवकर्मसंचितस्थूलदेहः कर्मक्षयात् सत्कर्मपरिपाकतोऽपञ्चीकरणं प्राप्य सूक्ष्मेणैकीभूत्वा [1]कारणरूपत्वमासाद्य तत्कारणं कूटस्थे प्रत्यगात्मनि विलीयते। विश्वतैजसप्राज्ञाः स्वस्वोपाधिलयात् प्रत्यगात्मनि लीयन्ते ॥ ७ ॥

स्थूलदेहादिलयप्रकारमाह—पञ्चीकृतेति। तदारोपाधारजीवलयमाह—विश्वेति ॥ ७ ॥

ऐक्यानुसन्धानेन आत्माविर्भावः

अण्डं ज्ञानाग्निना दग्धं कारणैः सह परमात्मनि लीनं भवति। ततो ब्राह्मणः समाहितो भूत्वा तत्त्वंपदैक्यमेव सदा कुर्यात्। ततो मेघापायेंऽशुमानिवात्माऽऽवि[2]र्भवति ॥ ८ ॥

[1] कारणत्व—उ, उ १.

[2] र्भावो भव—क, अ २.

ब्रह्माण्डलयमाह—अण्डमिति । यतः प्रत्यग्ब्रह्मैक्यज्ञानं स्वातिरिक्तकलनापवादहेतुः ततो ब्राह्मणः । तेन किं भवतीत्यत्र—ततो मेघापाय इति ॥८॥

ध्यानप्रकारः वेदनफलं च

ध्यात्वा मध्यस्थमात्मानं कलशान्तरदीपवत् ।
अङ्गुष्ठमात्रमात्मानमधूमज्योतिरूपकम् ॥ ९ ॥
प्रकाशयन्तमन्तःस्थं ध्यायेत् कूटस्थमव्ययम् ।
ध्यायन्नास्ते मुनिश्चैव चासुप्तेरामृतेस्तु यः ॥ १० ॥
जीवन्मुक्तः स विज्ञेयः स धन्यः कृतकृत्यवान् ।
जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ ११ ॥
अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं तदेव शिष्यत्यमलं निरामयम् ॥१२॥

इति ॥

आदौ संवेदितात्मध्यानप्रकारं वेदनसामान्यविशेषफलं चाह—ध्यात्वेति । हृदयकमलमध्यस्थम ॥ ९ ॥ नानाविधवृत्तिजातं प्रकाशयन्तम् । प्रत्यगभिन्नं ब्रह्मास्मीत्यनवरतध्यानतो मुनिः जीवन्मुक्तो भवतीत्याह—ध्यायन्निति ॥ १० ॥ विद्वद्ब्रह्मज्ञानविशेषफलमाह—जीवन्निति । स्वातिरिक्तकलनासंगलक्षणं जीवन्मुक्तत्वं विहाय स्वदेहे कालसात्कृते कालधर्मं गते परदृष्ट्या स्थिते वा निष्प्रतियोगिकब्रह्ममात्रज्ञानसमकालं विद्वान् अस्पन्दपवनव्योमभाववत् विदेहमुक्तो भवतीत्यर्थः ॥ ११ ॥ विदेहमुक्तः केन रूपेण अवशिष्यत इत्यत आह—अशब्दमिति । विद्वान् शब्दादिपञ्चतन्मात्रोपलक्षितव्ययाद्यन्तवदविद्यापदतत्कार्या-

पह्लवसिद्धं यदशब्दमित्यादिपदसमूहलक्षितं तदेव विकळेबरकैवल्यं भूत्वा अवशिष्यत इत्यर्थः । इतिशब्दः तृतीयाध्यायपरिसमाप्त्यर्थः ॥ १२ ॥

इति तृतीयोऽध्यायः

---

# चतुर्थोऽध्यायः

ज्ञानिमाहात्म्यजिज्ञासा

अथ ह पैङ्गलः पप्रच्छ याज्ञवल्क्यं ज्ञानिनः किं कर्म का च स्थितिरिति ॥ १ ॥

इत्थंभूतज्ञानिमाहात्म्यबुभुत्सया पैंगलो याज्ञवल्क्यं पृच्छतीत्याह— अथेति । **पप्रच्छ याज्ञवल्क्यं**, किमिति ? **ज्ञानिन** इति ॥ १ ॥

ज्ञानिनः कुलतारकत्वम्

स होवाच याज्ञवल्क्यः—अमानित्वादिसंपन्नो मुमुक्षुरेकविंशतिकुलं तारयति । ब्रह्मविन्मात्रेण कुलमेकोत्तरशतं तारयति ॥ २ ॥

प्रश्नोत्तरं **स होवाच याज्ञवल्क्यः** । प्रश्नोत्तरं पश्चाद्विवक्षन् आदौ मुमुक्षुत्वमेव दुर्लभं, ततोऽपि ब्रह्मवित्त्वमतिदुर्लभं, एकविंशत्येकशतसन्ततितारणादिति स्तौति—**अमानित्वादी**ति । **अमानित्वादि**सद्गुण**संपन्नः** ॥ २ ॥

नारायण एव शारीर आत्मा

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ ३ ॥

इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचारान् ।
जङ्गमानि विमानानि हृदयानि मनीषिणः ॥ ४ ॥
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहु[1]र्महर्षयः ।
ततो नारायणः साक्षाद्धृदये [2]सुप्रतिष्ठितः ॥ ५ ॥

मुमुक्ष्वधिष्ठितशरीरादिकं रथाद्युपकरणतया मुमुक्ष्वात्मानं रथस्वामितया च स्तौति—**आत्मानमिति** । कठवल्ल्यां व्याख्यातमेतत् ॥ ३–४ ॥ रथस्थानीयशरीरासनात्मा कीदृश इत्यत्र सर्वप्राणिहृदयासनो नारायण इत्याह—**तत इति** । मुमुक्षुः **नारायणो** भूत्वा सर्वभूतात्मा भवतीत्यर्थः ॥ ५ ॥

ज्ञानिनः शरीरपातपर्यन्तो व्यवहारविशेषः

प्रारब्धकर्मपर्यन्तमहिनिर्मोकवद्व्यवहरति ।
चन्द्रवच्चरते देही स मुक्तश्चानिकेतनः ॥ ६ ॥

किंकर्मेति प्रश्नोत्तरमाह—**प्रारब्धेति** । आप्रारब्धं मुनिः **अनिकेतनो** ग्रामैकरात्राटनशीलः व्योम्नि **चन्द्रवत्** सर्वत्र सञ्चरति ॥ ६ ॥

ज्ञानिनः शरीरपाते कैवल्यम्

तीर्थे श्वपचगृहे वा तनुं विहाय याति कैवल्यम् ।
प्राणानवकीर्य याति कैवल्यम् ॥ ७ ॥

एवं सञ्चरन् तीर्थे ॥ ७ ॥

ज्ञानिमरणे श्राद्धादि न कर्तव्यम्

तं पश्चाद्दिग्बलिं कुर्यादथवा खननं चरेत् ।
पुंसः प्रव्रजनं प्रोक्तं नेतराय कदाचन ॥ ८ ॥

[1] मनीषिणः—अ २. [2] पु—अ २. सं—अ, अ १.

नाशौचं नाग्निकार्यं च न पिण्डं नोदक[1]क्रिया ।
न कुर्यात् पार्वणादीनि ब्रह्मभूताय भिक्षवे ॥ ९ ॥
दग्धस्य दहनं नास्ति पक्कस्य पचनं यथा ।
ज्ञानाग्निदग्धदेहस्य न च श्राद्धं न च क्रिया ॥ १० ॥

यः शान्तासुः अवधूतदेहः सर्वोपकारकः पक्ष्यादितुष्टये **तम्** । कस्यैवं नियम इत्यत्र परिव्रजनाधिकारिणो नेतरस्येत्याह—**पुंस** इति । यस्य पुंसः प्रव्रजनं प्रोक्तं तस्यैव खननादिकं कार्यं नान्यस्मै कदाचन कार्यमित्यर्थः ॥ ८ ॥ यतेः देहसम्बन्धिनः सन्ति चेत् तैः आशौचादिकमाचरणीयमित्यत आह—**नेति** । तत्पारलौकिकहेतवे **नाशौचम्** । स्वाभ्युदयार्थं विना तत्परलोकाय **न कुर्यात्** ॥ ९ ॥ तदुद्दिश्याकर्तव्यत्वं सदृष्टान्तमाह—**दग्धस्येति** ॥ १० ॥

गुरुशुश्रूषायामनुसन्धानविशेषः

यावच्चोपाधिपर्यन्तं तावच्छुश्रूषयेद्गुरुम् ।
गुरुवद्गुरुभार्यायां तत्पुत्रेषु च वर्तनम् ॥ ११ ॥
शुद्धमानसः शुद्धचिद्रूपः सहिष्णुः सोऽहमस्मि सहिष्णुः सोऽहमस्मीति प्राप्ते ज्ञानेन विज्ञाने ज्ञेये परमात्मनि हृदि संस्थिते देहे लब्धशान्तिपदं गते तदा प्रभामनोबुद्धिशून्यं भवति ॥ १२ ॥

अभ्युदयार्थिना किं कर्तव्यमित्यत आह—**यावदिति** । यदि स्वगुरुर्यतिस्तदा **यावदित्यादि** । यावत्सोपाधिकदृष्टिः तावद्यथाविधि गुरुच्छन्दानुरोधेन शुश्रूषां कुर्यादित्यर्थः । यदि स्वाचार्यो गृही तदा **गुरुवदिति** । वर्तनं न्याय्यमित्यर्थः ॥११॥ मुमुक्षुः स्वाचार्यशुश्रूषां कुर्वन् एवं अनुसन्धानं कुर्यादित्याह—**शुद्धेति** । स्वाचा-

[1] क्रियां—उ.

र्योपासनया शुद्धमानसः, प्रत्यगभिन्नब्रह्मरूपेण शुद्धचिद्रूपः, सर्वात्मना यः साक्षित्वादिजीवत्वान्तकलनासहिष्णुः परमात्मा भवति सोऽहमस्मीति सदाऽनुसन्धानतः प्राप्ते ज्ञानेन विज्ञाने ज्ञेये परमात्मनि अयमहमस्मीति हृदि संस्थिते देहे स्वात्मात्मीयाभिमानाभावेन लब्धशान्तिपदं गते तदा प्रभामनोबुद्धिशून्यं भवति। प्रभामनोबुद्धिशब्देन जाग्रदाद्यवस्थात्रयोपलक्षितस्वाविद्यापदतत्कार्यमुच्यते। निष्प्रतियोगिकब्रह्ममात्रज्ञानसमकालं शून्यं अभावपदं भजतीत्यर्थः ॥ १२ ॥

ज्ञानिनो वेदादिना प्रयोजनाभावः

अमृतेन तृप्तस्य पयसा किं प्रयोजनम्? एवं स्वात्मानं ज्ञात्वा वेदैः प्रयोजनं किं भवति? ज्ञानामृततृप्तयोगिनो न किंचित् कर्तव्यमस्ति। तदस्ति चेन्न स तत्त्वविद्भवति। दूरस्थोऽपि न दूरस्थः पिण्डवर्जितः पिण्डस्थोऽपि प्रत्यगात्मा सर्वव्यापी भवति ॥ १३ ॥

वेदान्तश्रवणादिना एवंविधज्ञानमुत्पन्नं, अतो ज्ञातेऽप्यात्मनि वेदान्ताभ्यासः कर्तव्यः इत्यत आह—अमृतेनेति। दृष्टान्तोक्तिः अमृतेन। तेनापि किञ्चित् कर्तव्यं स्यादित्यत आह—ज्ञानेति। स्वाकर्तव्यताज्ञानी सर्वव्यापी भवतीत्याह—दूरस्थोऽपीति। दूरस्थोऽपि स्वाज्ञदृष्ट्या स्वज्ञदृष्ट्या न दूरस्थः ॥ १३ ॥

ब्रह्मदर्शनोपायो ध्यानयोगः

हृदयं निर्मलं कृत्वा चिन्तयित्वाऽप्यनामयम्।
अहमेव परं सर्वमिति पश्येत् परं सुखम् ॥ १४ ॥
यथा जले जलं क्षिप्तं क्षीरे क्षीरं घृते घृतम्।
अविशेषो भवेत्तद्वज्जीवात्मपरमात्मनोः ॥ १५ ॥

देहे ज्ञानेन दीपिते बुद्धिरखण्डाकाररूपा यदा भवति तदा
विद्वान् ब्रह्मज्ञानाग्निना कर्मबन्धं निर्दहेत् ॥ १६ ॥

ततः पवित्रं परमेश्वराख्यमद्वैतरूपं विमलाम्बराभम् ।
यथोदके तोयमनुप्रविष्टं तथाऽऽत्मरूपो निरुपाधिसंस्थितः ॥१७॥

आकाशवत् सूक्ष्मशरीर आत्मा न दृश्यते वायुवदन्तरात्मा ।
स बाह्यमभ्यन्तरनिश्चलात्मा ज्ञानोल्कया पश्यति चान्तरात्मा ॥

यत्रयत्र मृतो ज्ञानी येन वा केन मृत्युना ।
यथा सर्वगतं व्योम तत्रतत्र लयं [1]गतः ॥ १९ ॥

घटाकाशमिवात्मानं विलयं वेत्ति तत्त्वतः ।
स गच्छति निरालम्बं ज्ञानालोकं समन्ततः ॥ २० ॥

प्रत्यगभिन्नब्रह्मदर्शनोपायमाह—हृदयमिति ॥ १४ ॥ एवं पश्यतः किं स्यादित्याकांक्षायां तदाप्तिप्रतिबन्धकावरणनिवृत्तिपूर्वकं क्षीरादि क्षीरादियोगवत्तदैक्यं स्यादित्याह—यथेति ॥ १५–१६ ॥ कर्मबन्धदाहात् तद्रूपेणावस्थितः स्यादित्याह—तत इति ॥ १७ ॥ निरवयवात्मसाक्षात्कारः कथमित्यत्र तज्ज्ञानदृष्ट्या स्यादित्याह—आकाशवदिति । स्वज्ञानेन स्वस्वरूपं पश्यतीत्यर्थः ॥ १८ ॥ [2]स्वज्ञदृष्ट्या स्वात्मानं यः पश्यति सोऽयमुपाधिविनिर्मुक्तघटाकाशवत् स्वमात्रमवशिष्यत इत्याह—यत्रेति ॥ १९–२० ॥

ब्रह्मध्यानमहिमा

तपेद्वर्षसहस्राणि एकपादस्थितो नरः ।
एतस्य ध्यानयोगस्य कलां नार्हन्ति षोडशीम् ॥ २१ ॥

[1] गतम्—उ, उ १.

[2] स्वदृष्ट्या—उ १.

इदं ज्ञानमिदं ज्ञेयं तत् सर्वं ज्ञातुमिच्छति ।
अपि वर्षसहस्रायुः शास्त्रान्तं नाधिगच्छति ॥ २२ ॥
विज्ञेयोऽक्षरतन्मात्रो जीवितं वाऽपि चञ्चलम् ।
विहाय शास्त्रजालानि यत् सत्यं तदुपास्यताम् ॥ २३ ॥
अनन्तकर्म शौचं च जपो यज्ञस्तथैव च ।
तीर्थयात्राभिगमनं यावत्तत्त्वं न विन्दति ॥ २४ ॥
अहं ब्रह्मेति नियतं मोक्षहेतुर्महात्मनाम् ।
द्वे पदे बन्धमोक्षाय निर्ममेति ममेति च ॥ २५ ॥
ममेति बध्यते जन्तुर्निर्ममेति विमुच्यते ।
मनसो ह्युन्मनीभावे द्वैतं नैवोपलभ्यते ॥ २६ ॥
यदा यात्युन्मनीभावस्तदा तत् परमं पदम् ।
यत्रयत्र मनो याति तत्रतत्र परं पदम् ॥ २७ ॥
तत्रतत्र परं ब्रह्म सर्वत्र समवस्थितम् ।
हन्यान्मुष्टिभिराकाशं क्षुधाऽऽर्तः खण्डयेत्तुषम् ।
नाहं ब्रह्मेति जानाति तस्य मुक्तिर्न जायते ॥ २८ ॥

ज्ञानसहितध्यानयोगं सर्वोत्कृष्टतया स्तौति—तपेदिति ॥ २१ ॥ सर्वशास्त्राभ्यासतः सर्वात्मकं ब्रह्म जन्ममध्ये यदा कदा वा द्रष्टुं शक्यमित्यत्र जीवितस्याल्पतया प्राधान्यतो यत् ज्ञातव्यं तदेव ध्येयमित्याह—इदमिति ॥२२–२३॥ तत्त्वदर्शनानन्तरमपि कृत्स्नं कर्माद्यनुष्ठेयमित्यत आह—अनन्तेति । तावदेवानुष्ठेयं, ततः प्रयोजनाभावादित्यर्थः ॥ २४ ॥ देहादावात्मात्मीयाभिमानभावाभावौ बन्धमोक्षहेतू स्यातामित्याह—अहमिति ॥ २५ ॥ स्वातिरेकेण मनो नास्तीति

सिद्धोन्मनीभावतो द्वैतासम्भवाद्वैतभावः स्यादित्याह—मनस इति ॥ २६ ॥ योगिमनःसत्त्वासत्त्वाभ्यां तत्प्रवृत्तिनिमित्तेश्वरत्वं तद्वृत्तिसहस्रभावाभावसाक्षित्वं तदसम्भवप्रबोधतो निष्प्रतियोगिकब्रह्ममात्रतां च स्यादित्याह—यत्रेति ॥ २७ ॥ ज्ञानादेव मुक्तिः, अन्यथा नास्तीति शास्त्रार्थमुपसंहरति—हन्यादिति ॥ २८ ॥

विद्यापाठफलम्

य एतदुपनिषदं नित्यमधीते सोऽग्निपूतो भवति । स वायुपूतो भवति । स आदित्यपूतो भवति । स ब्रह्मपूतो भवति । स विष्णुपूतो भवति । स रुद्रपूतो भवति । स सर्वेषु तीर्थेषु स्नातो भवति । स सर्वेषु वेदेष्वधीतो भवति । स सर्ववेदव्रतचर्यासु चरितो भवति । तेनेतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि फलानि भवन्ति । प्रणवानामयुतं जप्तं भवति । दश पूर्वान् दशोत्तरान् पुनाति । स पङ्क्तिपावनो भवति । स महान् भवति । ब्रह्महत्यासुरापानस्वर्णस्तेयगुरुतल्पगमनतत्संयोगिपातकेभ्यः पूतो भवति ॥ २९ ॥

विद्यापाठज्ञानफलमाह—य इति । एतदुपनिषदं एतामुपनिषदम् ॥२९॥

विद्याज्ञानफलम्

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ ३० ॥
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत्परमं पदम् ॥ ३१ ॥

ज्ञानफलं तु—तद्विष्णोरिति । आरुणिकादावयं मन्त्रो व्याख्यातः ॥

उपसंहारः

ॐ सत्यमित्युपनिषत् ॥ ३२ ॥

"सदेव सोम्येदमग्र आसीत्" इत्यादिकृत्स्नशास्त्रप्रतिपाद्यं ब्रह्म ओङ्काराग्रविद्योततुर्यतुरीयं, तद्व्यतिरिक्तं असत्यं, तदेव सत्यं, निष्प्रतियोगिकसन्मात्ररूपत्वात् । इत्युपनिषच्छब्दः पैङ्गलोपनिषत्परिसमाप्त्यर्थः ॥ ३२ ॥

इति चतुर्थोऽध्यायः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
पैङ्गलोपनिषद्व्याख्या लिखिता ब्रह्ममात्रगा ।
पैङ्गलोपनिषद्व्याख्याग्रन्थस्तु द्विशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकोनषष्टिसंख्यापूरकं पैङ्गलोपनिषद्विवरणं सम्पूर्णम्

# प्राणाग्निहोत्रोपनिषत्

## सह नाववतु—इति शान्तिः

शारीरयज्ञाधिकारः

अथातः सर्वोपनिषत्सारं संसारज्ञानातीतमन्त्रसूक्तं शारीरयज्ञं व्याख्यास्यामो यस्मिन्नेव [1]पुरुषशारीरे विनाऽप्यग्निहोत्रेण विनाऽपि सांख्येन संसार[2]निवृत्तिर्भवतीति ॥ १ ॥

शारीरयज्ञसंशुद्धचित्तसञ्जातबोधतः ।
मुनयो यत् पदं यान्ति तद्रामपदमाश्रये ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं प्राणाग्निहोत्रोपनिषत् चित्तशुद्धिहेतुभावनामयशारीरयज्ञप्रकटनव्यग्रा चित्तशुद्धिप्राप्यज्ञानद्वारा निर्विशेषब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । श्रुतयः स्वाज्ञलोकमुपलभ्य तस्य ब्रह्मज्ञानहेतुचित्तशुद्धये शारीरयज्ञमुपन्यस्यन्ति—अथेति । अथ प्राणिकर्मपरिपाकानन्तरं यतः चित्तशुद्धिं विना स्वातिरिक्ताविद्यापदतत्कार्यजातासम्भवप्रबोधसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति ज्ञानं तन्मात्रावस्थानलक्षणकैवल्यं च न सिध्यति—न ह्यशुद्धचित्तं ब्रह्मज्ञानं स्प्रष्टुं पारयति—अतश्चित्तशुद्ध्यर्थं अपरब्रह्मगोचरसर्वोपनिषत्सारं संसारज्ञानातीतं शारीरयज्ञं कथयाम

[1] पुरुषश्श—अ, अ १, अ २, क.

[2] विमुक्ति—अ १, अ २, क. विमुक्तो—अ

इत्यर्थः । किमिति ? यस्मिन्निति । यस्मिन् पुरुषाधिष्ठितशरीरे विना बाह्याग्निहोत्रेण साङ्ख्ययोगेन केवलभावनामययज्ञेन चित्तमालिन्यापादकसंसारनिवृत्तिर्भवतीत्यर्थः ॥ १ ॥

बाह्यप्राणाग्निहोत्रप्रयोगः

स्वेन विधिनाऽन्नं भूमौ निक्षिप्य या ओषधयः सोमराज्ञीरिति तिसृभिरन्नपत इति द्वाभ्या[1]मभिमन्त्रयति ॥ २ ॥

या ओषधयः सोमराज्ञीर्बह्वीः शतविच[2]क्षणाः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ ३ ॥
याः फलिनीर्या अफला अपुष्पा याश्च पुष्पिणीः ।
बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥ ४ ॥
जीवला नघारिषां मा ते बध्ना[3]म्योषधीः ।
यातयायु रुपाहरादप रक्षांसि चातयात् ॥ ५ ॥
अन्नपतेऽन्नस्य नो धेह्यनमीवस्य शुष्मिणः ।
प्रप्रदातारं तारिष ऊर्जं नो धेहि द्विपदे चतुष्पदे ॥ ६ ॥
यदन्नमग्निर्बहुधा विरुद्धं रुद्रैः [4]प्रजार्धं यदि वा पिशाचैः ।
सर्वं तदीशानो अभयं कृणोतु शिवमीशानाय स्वाहा ॥ ७ ॥
अन्तश्चरसि भूतेषु गुहायां विश्वतोमुखः ।
त्वं यज्ञस्त्वं ब्रह्मा त्वं रुद्रस्त्वं विष्णुस्त्वं वषट्कार आपो
ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरों नमः ॥ ८ ॥

[1] मनु—अ, अ १, अ २, क. [2] क्षणैः—क.
[3] त्वोषधीः—अ. त्योषधीः—क. त्योषधीम्—अ १.
[4] प्रजार्द्धं—उ.

आपः पुनन्तु पृथिवीं पृथिवी पूता पुनातु माम् ।
पुनन्तु ब्रह्मणस्पतिर्ब्रह्म पूता पुनातु माम् ॥
यदुच्छिष्टमभोज्यं यद्वा दुश्चरितं मम ।
सर्वं पुनन्तु मामापोऽसतां च प्रतिग्रहं स्वाहा ॥ ९ ॥

अमृतम[1]स्त्वमृतोपस्तरणमस्यमृतं प्राणे [2]होम्यमाशिष्यन्तोऽसि ॐ प्राणाय स्वाहा ॐ अपानाय स्वाहा ॐ व्यानाय स्वाहा ॐ उदानाय स्वाहा ॐ समानाय स्वाहा [3]ॐ ब्रह्मणे स्वाहा ॐ ब्रह्मणि म आत्माऽमृतत्वायेति ॥ १० ॥ कनिष्ठिकाङ्गुल्याऽङ्गुष्ठेन प्राणे जुहोति अनामिकयाऽपाने मध्यमिकया व्याने सर्वाभिरुदाने प्रदेशिन्या समाने ॥ ११ ॥ तूष्णीमेकामेकऋचा जुहोति द्वे आहवनीये एकां दक्षिणाग्नौ एकां गार्हपत्ये एकां सर्वप्रायश्चित्तीये ॥ १२ ॥ अथापिधानमस्यमृतत्वायोपस्पृश्य पुनरादाय पुनः स्पृशेत् ॥ १३ ॥ सव्ये पाणावापो गृहीत्वा हृदय[4]मन्वालभ्य जपेत्—

प्राणोऽग्निः परमात्मा पञ्चवायुभिरावृतः ।
अभयं सर्वभूतेभ्यो न मे भीतिः कदाचन ॥ १४ ॥
विश्वोऽसि वैश्वानरो विश्वरूपं त्वया धार्यते जायमानम् ।
विश्वं त्वाहुतयः सर्वा यत्र ब्रह्माऽमृतोऽसि ॥ १५ ॥

[1] स्यमृ—अ. [2] जुहोम्य—क, अ १.
[3] एतद्वाक्यद्वयं नास्ति—अ, अ १, अ २, क.
[4] मुपलभ्य—उ, उ १. मनुलभ्य—अ, अ १, अ २, क.

महानवोऽयं पुरुषो योऽङ्गुष्ठाग्रे प्रतिष्ठितः ।

तमद्भिः परिषिञ्चामि सोऽस्यान्ते अमृताय च ॥ १६ ॥

अनावित्येष बाह्यात्मा ध्यायेताग्निहोत्रं जुहोति । सर्वेषामेव सूनुर्भवतु । अस्य यज्ञपरिवृता आहुतीर्होमयति ॥ १७ ॥

तदुपायत्वेनादौ बाह्यप्राणाग्निहोत्रलक्षणमाह—**स्वेनेति** । **स्वेन विधिना भूमौ** परिकल्पितामत्रे सव्यञ्जनम**न्नं निक्षिप्य** " या ओषधयः सोमराज्ञीः " इति तिसृभिः ऋग्भिः " अन्नपते " इति द्वाभ्यां ऋग्भ्यां **अभिमन्त्रयति** अभिमन्त्रयेदित्यर्थः ॥ २ ॥ कास्तास्तिस्र ऋचः ? द्वावृचौ के ? इत्यत्राह—**या** इति ॥ ३–७ ॥ एतैः मन्त्रैः अन्नं स्पृष्ट्वा अभिमन्त्र्य ततो दक्षिणहस्ते उदकं गृहीत्वा " अन्तश्चरसि " " आपः पुनन्तु " इति मन्त्राभ्यामभिमन्त्र्य अन्नं प्रोक्षयेत् ॥ ८–९ ॥ प्रोक्ष्य द्विवारं परिषिच्य वामहस्तेनामत्रं स्पृशन् दक्षिणहस्ते पूर्वापोशनं गृहीत्वा " अमृतमस्त्वमृतोपस्तरणमसि " इति पूर्वापोशनं पीत्वा " अमृतं प्राणे होम्यमाशिष्यन्तोसि " इत्यमृतोपमं **होम्यं आशिष्यन्तोऽसि** आस्वादितवानसि इति **प्राणे** स्वात्मानुसन्धानपूर्वकं पञ्च प्राणाहुतीः कुर्यादित्याह—**ओमिति** ॥ १० ॥ प्रातिस्विकेन प्राणाहुतिप्रकारमाह—**कनिष्ठिकेति** । **कनिष्ठिकाङ्गुल्या—अङ्गुष्ठेन** इति सर्वत्र समानं—**प्राणे** जुहोति ॥ ११ ॥ **तूष्णीमेकां** एकाहुतिं " प्राणाय स्वाहा " **इत्येकर्चा** " अपानाय स्वाहा " इति च **द्वे** आहुती **आहवनीये** जुहोति । **एकां दक्षिणाग्नौ एकां गार्हपत्ये एकां सर्वप्रायश्चित्तीये** ॥ १२ ॥ एवं पञ्चाहुतीः हुत्वा अथ यथानियमं भुक्त्वा " अथ पुरस्ताच्चोपरिष्टाच्च अद्भिः परिदधाति " इति श्रुत्यनुरोधेनापि **अथापिधानमिति** ॥ १३ ॥ मुख्यप्राण एवाग्निः, स्वगतविशेषांशापाये स एव **परमात्मा**, विराडादिस्थानीयपञ्चवायुभिः **आवृतो** भवति । तत्प्रसादतो मत्तः **सर्वभूतेभ्योऽभयमस्तु** । **कदाचन सर्वभूतेभ्यः न मे भीतिरस्तु** ॥ १४ ॥ किञ्च—**विश्व** इति । हे मुख्यप्राण व्यष्टिसमष्ट्युपाधियोगेन त्वमेव **विश्वो** व्यावहारिको **वैश्वानरो** विराडपि भूत्वा **विश्वरूपं** त्वया **धार्यते** । यत्र व्यष्टिसमष्ट्युपाधौ तदसंगविश्वविराडोत्रात्मना **ब्रह्माऽमृतोऽसि**, त्वत्तो **जायमानं विश्वं तु** तदपवा-

दाधिकरणतुरीयाग्नौ त्वयि सर्वा आहुतयो भवन्ति ॥ १५ ॥ "तं प्रपदाभ्यां प्रापद्यत ब्रह्मेमं पुरुषं" इति श्रुत्यनुरोधेन यः पादाङ्गुष्ठद्वयाग्रे प्राणात्मना प्रतिष्ठितः स त्वं प्रतिश्वासं महानवोऽभिनवोऽयं पुरुषो भवसि । अस्य भोजनस्यान्ते अमृताय च तं त्वां अद्भिः परिषिञ्चामि उच्छ्वासनिश्वासात्मना ॥ १६ ॥ अनौ चेष्टाविशिष्टाविति ध्यायेत ध्यायीत पुरुषः प्रत्यहं प्राणाग्निहोत्रं जुहोति । यतः सर्वे त्वां पुत्रवत् पोषयन्ति अतो भवान् सर्वेषामेव सूनुः पुत्रो भवतु भवति । इत्थंभूतस्यास्य ते स्वाङ्गलोकोऽयमाहुतीः होमयति ॥ १७ ॥

शारीराग्निदर्शनं नाम अपरब्रह्मविद्या

स्वे शरीरे यज्ञं परिवर्तयामीति । चत्वारोऽग्नयस्ते किं नारमर्थयाः ॥ १८ ॥ तत्र सूर्याग्निर्नाम सूर्यमण्डलाकृतिः सहस्ररश्मिपरिवृत एकऋषिर्भूत्वा मूर्धनि तिष्ठति । यस्मादुक्तो दर्शनाग्निर्नाम चतुराकृतिराहवनीयो भूत्वा मुखे तिष्ठति । शारीरोऽग्निर्नाम जराप्रणुदा हविरवस्कन्दति अर्धचन्द्राकृतिर्दक्षिणाग्निर्भूत्वा हृदये तिष्ठति । तत्र कोष्ठाग्निरिति—कोष्ठाग्निर्नामाशितपीतलीढ[1]स्वादितं सम्यग्व्यष्ट्यं विषयित्वा गार्हपत्यो भूत्वा नाभ्यां तिष्ठति ॥ १९ ॥ प्रायश्चित्तयस्त्वधस्तात्तिर्यक् तिस्रो हिमांशुः प्रभुः प्रजननकर्मा ॥ २० ॥

एवं स्वबाह्ये अग्निहोत्रकल्पनां किं करोषीत्यत आह—स्व इति । स्वे स्वीये शरीरे यज्ञं परिवर्तयामीति । शारीरनिर्वर्त्याग्नयः कति सङ्ख्याका इत्यत्र—तुर्यादिभेदेन ते चत्वारोऽग्नयो भवन्ति । शरीरे अग्निचतुष्टयादर्शनात् किं तत्स्वरूपं अरं अत्यल्पं ? इत्यत आह—नारमिति । तुरीयादेः स्वविकल्पितोपाधिग्रासत्वेन निष्प्रतियोगिकभूमरूपत्वात् । तुरीयाद्यग्निचतुष्टयोपाधयः ते

[1] खादितादिसम्यग्विषयं—अ.

**अर्धया:** अर्धमात्रादय: ॥ १८ ॥ के वा चतुरग्नय: ? तेषां स्थानानि कानीत्यत आह—**तत्रेति** । **तत्र सूर्याग्निर्नाम** कीदृश इत्यत्र—स्वातिरिक्तं नास्तीति प्रकाशका: सूरय: एव सूर्या: तेषां सहस्रारगताव्याकृताकाशवत् आकृति: यस्य स **सूर्यमण्डलाग्निरिति** । **सहस्रदलान्येव** यस्य **रश्मय:** ताभि: **परिवृत** एव सन् तत्रोपलभ्यमान एक एव स्वाविद्यापदतत्कार्यनामरूपजातं ऋषति गच्छति व्याप्नोतीति चित्तुर्यादित्य **एकर्षिर्भूत्वा मूर्ध्नि तिष्ठति,** "तुरीयं मूर्ध्नि संस्थितं" इति श्रुते: । यद्वा **सूर्यमण्डलाकृत्या सहस्ररश्मि**परिमितसूर्य एव भूताकाशे एक एव ऋषति गच्छतीत्येक**र्षिर्भूत्वा मूर्ध्नि तिष्ठती**त्यर्थ: । **यस्माद**यं बीजात्मा सर्वज्ञेश्वरतया दृश्यते तस्मादयं **दर्शनाग्नि:** तस्य ज्ञप्तिरूपत्वात् । **दर्शनाग्निर्नाम** चतुरश्राहवनीयवत् बीजविराडादि**चतुराकृति:** स्वातिरिक्तप्रपञ्चहोमाधिकरणतया **आहवनीयो भूत्वा** स्वाविद्यापदबीजांशस्थानीये **मुखे तिष्ठति** । **शारीरोऽग्निर्नाम** स्वोपाधिलिंगशरीरेतरस्थूलशरीरप्रपञ्चं निर्दहतीति शारीरोऽग्निर्नाम हिरण्यगर्भ: स्थूलशरीराश्रयजरादिषडूर्मिविक्रियया प्रणुद्यते क्षीयत इति **प्रणुदा** प्रणुदं **हवि:** स्थूलप्रपञ्चरूपं हिरण्यगर्भात्मना **अवस्कन्दति** ग्रसतीति सविशेषनिर्विशेष-रूपाभ्यां **अर्धचन्द्राकृति:** स्पष्टास्पष्टवपु: स्थूलप्रपञ्चदहनकर्मणि **दक्षिणाग्निर्भूत्वा सर्वप्राणिहृदये तिष्ठति** । तत्र **कोष्ठाग्निरिति** वैश्वानरो विराडुच्यते ।

> अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रित: ।
> प्राणापानसमायुक्त: पचाम्यन्नं चतुर्विधम् ॥

इति स्मृतिसिद्ध**कोष्ठाग्निर्नाम** "अयमग्निर्वैश्वानरो योऽयमन्त: पुरुषे येनेदमन्नं पच्यते" इति श्रुतिसिद्धवैश्वानरोऽग्नि: । दन्तैरवखण्डयावखण्डय यदद्यते भक्ष्यते तदपूपादि **अशितं** भक्ष्यं भवति । यत् पायसादि जिह्वया आलोडय निगीर्यते तत् **पीतं** भोज्यं भवति । यत्तु द्रवीभूतं गुडादि जिह्वायां निक्षिप्य निगीर्यते तत्तु लीढं लेह्यं भवति । यत्तु इक्षुखण्डादि दन्तै: निपीडय सारांशं स्वीकृत्य शिष्टं त्यज्यते तत् **खादितं** चोष्यं भवति । एवमशितपीतलीढखादितभेदेन चतुर्विधमन्नं **सम्यग्व्यष्टयं** व्यष्टिजीवजाताद्यमानं **विषयित्वा** स्वविषयीकृत्य यथायोगं पक्त्वा पचनं कुर्वन् **गार्हपत्यो भूत्वा** सर्वप्राणिनाभ्यां तिष्ठति ॥ १९ ॥ प्रायश:

चित्तोपाधयो विश्वतैजसप्राज्ञाः प्रायश्चित्तवृत्तयः । ते तु विराडादेरधस्तात् प्रतिष्ठिताः तिर्यक् तिस्रः पराग्वृत्तयः । तद्विशिष्टो व्यावहारिकजीवादिः प्रजननकर्मा । हि[तु ?]शब्दः प्रवृत्तिमार्गप्रवर्तकत्वद्योतकः । विश्वादितुरीयस्तु जाग्रदाद्यवस्थात्रयतमोभावाभावप्रकाशकहिमांशुः चिच्चन्द्रः सन् प्रत्यग्रूपेण प्रभवतीति प्रभुः भवतीत्यर्थः ॥ २० ॥

शारीराग्निविद्यायाः शारीरयज्ञत्वम्

अस्य शारीरयज्ञस्य यूपरशनाऽशोभितस्य को यजमानः का पत्नी के ऋत्विजः के सदस्याः कानि यज्ञपात्राणि कानि हवींषि का वेदिः काऽन्तर्वेदिः को द्रोणकलशः को रथः कः पशुः कोऽध्वर्युः को होता को ब्राह्मणाच्छंसी कः प्रतिप्रस्थाता कः प्रस्तोता को मैत्रावरुणः क उद्गाता का धारा कः पोता के दर्भाः कः स्रुवः काऽऽज्यस्थाली कावाघारौ कावाज्यभागौ के प्रयाजाः के अनुयाजाः केडा कः सूक्तवाकः कः शंयोर्वाकः के पत्नीसंयाजाः को यूपः का रशना का इष्टयः का दक्षिणा किमवभृथमिति ॥ २१ ॥ अस्य शारीरयज्ञस्य यूपरशनाऽशोभितस्यात्मा यजमानः बुद्धिः पत्नी वेदा महऋत्विजः अहंकारोऽध्वर्युः चित्तं होता प्राणो ब्राह्मणाच्छंसी अपानः प्रतिप्रस्थाता व्यानः प्रस्तोता उदान उद्गाता समानो मैत्रावरुणः शरीरं वेदिः नासिकाऽन्तर्वेदिः मूर्धा द्रोणकलशः पादो रथः दक्षिणहस्तः स्रुवः सव्य आज्यस्थाली श्रोत्रे [1]आघारौ

[1] आघ्वरौ—अ २, क. अध्वरौ—अ, अ १.

चक्षुषी आज्यभागौ ग्रीवा धारा पोता तन्मात्राणि सदस्याः महाभूतानि प्रयाजाः गुणा अनुयाजाः जिह्वेडा दन्तोष्ठौ सूक्तवाकः तालुः शंयोर्वाकः स्मृतिर्दया क्षान्तिरहिंसा पत्नीसंयाजाः ओंकारो यूपः आशा रशना मनो रथः कामः पशुः केशा दर्भाः इन्द्रियाणि यज्ञपात्राणि कर्मेन्द्रियाणि हवींषि अहिंसा इष्टयः त्यागो दक्षिणा अवभृथं मरणात् सर्वाण्यस्मिन् देवता शरीरेऽधिसमाहिताः ॥२२॥

इत्थंभूतविद्यायाः शारीरयज्ञत्वं कथमित्याक्षिप्य परिहरति—अस्येत्यादिना ॥ २१ ॥ एवमाशङ्क्य स्वकृताशङ्कां श्रुतिः स्वयमेवापाकरोति—अस्येति । आत्मा यजमान इत्यादीनि सर्वाणि सर्वा देवताश्च अस्मिन् शरीरे अधिसमाहिता भवन्ति ॥ २२ ॥

विद्यापठनफलम्

वाराणस्यां मृतो वाऽपि इदं वा ब्राह्मणः पठेत् ।
एकेन जन्मना जन्तुर्मोक्षं च प्राप्नुयादित्युपनिषत् ॥ २३ ॥

वाराणस्यां काश्यां मृतस्य जन्तोः जनिमृतिमुक्तिर्भवति । यद्वा—इदं वा शारीरयज्ञदर्शनं ब्राह्मणः पठेत् । एकेनैव जन्मना जन्तुः चित्तशुद्धिप्राप्यज्ञानं स्वातिरिक्तभ्रममोक्षं च प्राप्नुयात् । इतिशब्दः प्राणाग्निहोत्रोपनिषत्परिसमाप्त्यर्थः ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
प्राणाग्निहोत्रोपनिषद्व्याख्यानं लिखितं लघु ।
प्राणाग्निहोत्रोपनिषद्व्याख्यानं पञ्चसप्ततिः॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे चतुर्णवतिसङ्ख्यापूरकं प्राणाग्निहोत्रोपनिषद्विवरणं सम्पूर्णम्

# मन्त्रिकोपनिषत्

## पूर्णमदः—इति शान्तिः

परमात्मस्वरूपम्

अष्टपादं शुचिं हंसं त्रिसूत्रमणुम[1]व्ययम् ।
त्रिवर्त्मानं तेजसोऽहं सर्वतः पश्यन् न पश्यति ॥ १ ॥

स्वाविद्याद्वयतत्कार्यापह्नवज्ञानभासुरम् ।
मन्त्रिकोपनिषद्वेद्यं रामचन्द्रपदं भजे ॥

इह खलु शुक्लयजुर्वेदप्रविभक्तेयं मन्त्रिकोपनिषत् । अस्यास्तावत् उपोद्घातादिकं ईशावास्यादिवत् ऊह्यम् । सेयमुपनिषत् आख्यायिकां विना माण्डूक्यवत् अवान्तरतया प्रवृत्ता । "अष्टपादं" इत्याद्यस्याः संहितारूपमन्त्रोपनिषदः स्वल्पग्रन्थतो विवरणमारभ्यते । निराख्यायिकतया स्वच्छन्दप्रवृत्तिस्तु वक्ष्यमाणविद्यास्तुत्यर्था । यत्स्वरूपं चिन्मात्रमपि स्वाज्ञो न पश्यति स्वज्ञः पश्यति तत् किमित्याकाङ्क्षायां श्रुतिरेव तद्विशदयति—**अष्टपाद**मिति । स्वाज्ञदृष्ट्या व्यष्टिसमष्ट्यात्मकं स्वाविद्यापदतत्कार्यजातम् । तत्र व्यष्टिप्रपञ्चारोपापवादाधिकरणं विश्वतैजसप्राज्ञतुर्यात्मकं चतुष्पात्, समष्टिप्रपञ्चारोपापवादाधिकरणं विराट्-सूत्रबीजतुरीयात्मकं तदपि चतुष्पात्, आहत्य अष्टौ पादा यस्य तं **अष्टपादम्** । अशुचिव्यष्टिसमष्ट्ययोगात् **शुचिम्** । हंशब्दः परवाची, सशब्दः प्रत्यग्वाची, "हकारः परमेशः स्यात् सकारस्त्वंपदं" इत्यादि श्रुतेः । हंसशब्देन

[1] द्वयं—अ १.

प्रत्यगभिन्नपरमात्मोच्यते। तं **हंसं त्रिसूत्रं** व्यष्टिसमष्टितदुभयैक्यकलनारोपाधिकरणविश्वविराडोतृरूपेण त्रिधा सूचनात्। **अणुं** अत्यन्ताणुबुद्धिवृत्त्यवभासकत्वात्। **अव्ययं** व्ययभास्यविलक्षणत्वात्। यदधिगमोपायोपेयभेदेन कर्मोपासनाज्ञानाख्यं वर्त्मत्रयं दृश्यते सोऽयं **त्रिवर्त्मा** तम्। **तेजसः**—इत्यत्र कर्मणि षष्ठी—तेजः **अहम्** अस्मत्प्रत्ययवेद्यत्वात्। स्वाज्ञ एवं भेदेन **पश्यन्नपि** स्वात्मवस्तुयाथात्म्यं स्वमात्रमिति **न हि पश्यति**, स्वाज्ञानावृतत्वात्॥ १॥

परमात्मदर्शनोपायः

भूतसंमोहने काले भिन्ने तमसि वै खरे।
[1]अतः पश्यन्ति सत्त्वस्था निर्गुणं गुणगह्वरे॥ २॥
अशक्यः सोऽन्यथा द्रष्टुं ध्यायमानः कुमारकैः।

स्वज्ञास्तु **सत्त्वस्थाः** शुद्धसत्त्वान्तःकरणविशिष्टाः सन्तः **वै** स्वाज्ञदृष्टिप्रसिद्धे यथोक्तकाले **भूतस्य** प्राणिजातस्य **सम्मोहने** संवरणे विद्यमानात्मतिरस्करणात् **खरे** खले क्रूरे वा **तमसि** ईशाद्यष्टोत्तरशतवेदान्तार्थश्रवणमनननिदिध्यासनप्रभवसम्यज्ज्ञानसूर्योदयात् **भिन्ने** विलीने सति **अतः** परं **गुणगह्वरे** प्रपञ्चे सत्यसति **निर्गुणं** ब्रह्माऽहमस्मीति **पश्यन्ति**॥ २॥ उक्तोपायं विना स्वात्मा द्रष्टुं न शक्य इत्याह—**अशक्य** इति। **कुमारकैः** सनकादिभिः ब्रह्माहमस्मीति यो **ध्यायमानः** परमात्मा **सोऽयमन्यथा** वेदान्तश्रवणातिरिक्तसाधनेन **द्रष्टुमशक्यो** भवति॥

मायावशगतस्य अज्ञस्य संसारः

विकारजननी[2]मज्ञामष्टरूपामजां ध्रुवाम्॥ ३॥
ध्यायतेऽध्यासिता तेन तन्यते प्रेर्यते पुनः।
सूयते पुरुषार्थं च तेनैवाधिष्ठितं जगत्॥ ४॥

[1] अन्तः—उ.   [2] माज्ञा—अ, अ १, अ २, क.

[1]गौरवाद्यन्तवती [2]स्याज्जनित्री भूतभाविनी ।
सितासिता च रक्ता च सर्वकामदुघा विभोः ॥ ५ ॥
पिबत्येनामविषयामविज्ञाता कुमारकैः ।

स्वाज्ञः स्वविकल्पितमायां ध्यायन् तद्वशमेत्य बन्धमोक्षादिसंसारकलनाकलितो भवतीत्याह—**विकारेति** । **अध्यासिता** स्वाविद्यातत्कार्याध्यासकर्ता स्वाज्ञः विद्याप्रपञ्चविकारजननीं परमार्थदृष्टिभिः **अज्ञां** तद्दृष्ट्या शशविषाणवत् अवस्तुभूतां स्वाज्ञदृष्ट्या

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥

इति स्मृत्यनुरोधेन **अष्टरूपाम** । **अजा**मित्युपलक्षणार्थम्—परमार्थदृष्ट्या स्वस्यावस्तुत्वेन जन्मस्थितिभङ्गशून्याम् । स्वाज्ञदृष्ट्या वज्रादपि **ध्रुवां** दृढां

अविद्यमानैवाविद्या वस्तुतत्त्वविचारिणाम् ।
अविचारेण मूढानां वज्रादपि दृढायते ॥

इति स्मृतेः ॥ ३ ॥ एवमुक्तलक्षणां स्वाज्ञततिः **ध्यायते** ध्यायति । **तेन** स्वावारकाविद्याऽस्तीति ध्यानेन **तन्यते** तन्यति तानवं याति । विद्याऽविद्यारूपया तया अध्यासिता जीवः स्वबन्धमोक्षोपायकर्मणि **प्रेर्यते पुनः पुनः** चोद्यते । सेयं माया स्वाज्ञदृष्ट्या धर्मादिपुरुषार्थं, चशब्दादपुरुषार्थमपि, **सूयते** जनयति **इदं जगत्** **तेनैव पुरुषार्थेन अधिष्ठितं** भवति ॥ ४ ॥ स्वाज्ञदृष्ट्या **गौरवा** सर्वलोक**जनित्री** सर्व**भूतभाविनी** च, स्वज्ञदृष्ट्या **आद्यन्तवती** सम्भूतिप्रळयवती **स्यात्** । किञ्च—कार्यरूपेण **सितासिता च रक्ता च** सत्त्वतमोरजोगुणात्मिका स्वकल्पकस्य **विभो**र्जीवस्य सर्वकामान् दोग्धीति **सर्वकामदुघा** पयःस्थानीयसर्वकामप्रदाने इयं कामधुक् ॥ ५ ॥

[1] गौरना—मु.  [2] सा ज—मु.

प्रभुः तामेनां कारणात्मना स्वाविषयां कार्यात्मना विषयभूतां पिबति इयमस्तीत्यनुभवति । सर्वैरप्येवमनुभूयत इत्यत आह—अविज्ञातेति । कुमारकैः सनकादिमुनिप्रवरैः इयमविद्या सत्यत्वेव व्यावहारिकत्वेन प्रातिभासिकत्वेन वाऽस्ति नास्तीत्यविज्ञाता भवति, तेषां स्वातिरिक्तस्वाविद्याद्वयतत्कार्यापह्नवसिद्ध-निष्प्रतियोगिकब्रह्ममात्रभावारूढत्वात् ॥

जीवेशयोः लक्षणम्

एकस्तु पिबते देवः स्वच्छन्दोऽत्र वशानुगः ॥ ६ ॥
ध्यानक्रियाभ्यां भगवान् भुङ्क्तेऽसौ प्रसहद्विभुः ।
सर्वसाधारणीं दोग्ध्रीं पीयमानां तु यज्वभिः ॥ ७ ॥
पश्यन्त्यस्यां महात्मानः सुपर्णं पिप्पलाशनम् ।
उदासीनं [1]परं हंसं स्नातकाध्वर्यवो जगुः ॥ ८ ॥
शंसन्तमनुशंसन्ति बह्वृचाः शास्त्रकोविदाः ।
रथन्तरं बृहत्साम सप्तवैधैस्तु गीयते ॥ ९ ॥
मन्त्रोपनिषदं ब्रह्म पदक्रमसमन्वितम् ।
पठन्ति भार्गवा ह्येते ह्यथर्वाणो भृगूत्तमाः ॥ १० ॥

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ॥

इति श्रुत्यनुरोधेन स्वाज्ञप्रमाणसिद्धौ शरीरवृक्षारूढौ जीवेशपक्षिणौ स्तः, तत्रैकः तदाविद्यकफलमनुभवति, तदितरस्तन्नानुभवन्नुदासीनो भवति, इत्यृगादिचतुर्वेदिनो जगुरित्याह—एकस्त्विति । स्वाज्ञदृष्ट्या कार्यकारणमायोपाधिकौ जीवेशौ स्तः । तत्रैकस्तु भगवानसौ जीवो विभुः अत्रास्मिन् देहे इयमविद्या अस्तीति

[1] ध्रुवं—अ, अ १, अ २, क.

ध्यानक्रियाभ्यामवगम्य विभुरात्मा प्रसहद्वशात् **भुङ्क्ते** अनुभवतीत्यर्थः । **स्वच्छन्दोऽपि** तद्वशानुगो भूत्वा स्वाविद्यानिष्पन्नं पिप्पलरसं **पिबते** पिबति । एवं **अस्यां** अविद्यायां **महात्मानः** चतुर्वेदिनः **सर्वाङ्गजनसाधारणीं** तत्सर्वकामफलदोग्ध्रीं **यज्वभिस्तु** कर्मभिरेव **पीयमानां** स्वाविद्यां तज्जं पिप्पलं कर्मफलमश्नातीति पिप्पलाशनं सुपर्णमेकं पक्षिणं च तदज्ञानानुगुणं **पश्यन्ति** । तत्र केचित् यजुर्वेदोक्तकर्मानुष्ठायिनः **स्नातका अध्वर्यवः** जीवापेक्षया **परं** स्वज्ञानेन कर्मफलभोक्तृत्वादिसंसारं हन्तीति **हंसं** ईश्वरं अध्रुवशरीरत्रयवैलक्षण्यात् ध्रुवं स्वाविद्यापिप्पलासङ्गोदासीनं **जगुः** कथयन्ति ॥ ६–८ ॥ तथा **सर्वशास्त्रकोविदाः** पारीणाः **बह्वृचाः** ऋग्वेदिनः एवं **शंसन्तं** यजुर्वेदिनिचयं **अनुशंसन्ति** तदनुसारेण वदन्ति । तथा "अभि त्वा शूर नोनुमः" इत्यादिरथन्तरं साम, "त्वामिद्धि हवामहे" इत्यादि**बृहत्साम**, सप्तगानाष्टब्राह्मणात्मकसामवेदो यैर्विशेषेण ध्रीयते ते सामगाः **सप्तवैध्राः** तैरप्ययमर्थो **गीयते** ॥ ९ ॥ एतमेवार्थमथर्वाणोऽपि पठन्तीत्याह—**मन्त्रेति** । भृगुरेव उत्तमो येषां ते **भृगूत्तमाः भार्गवाश्च** शुक्राचार्यप्रमुखाः **अथर्वाणः पदक्रमसमन्वितं ब्रह्म** वेदं, जीवो भोक्ता, ईश्वरस्त्वभोक्ता, परमात्मा तु भोक्तृभोक्तृकलनाविशिष्टजीवेशादिभेदाभेदकलनापह्नवसिद्ध इति यस्यां प्रतिपाद्यते तां **मन्त्रोपनिषदं** कदाचित् यथाश्रुतं कदाचित् पदं कदाचित् क्रमं च पठन्ति । हिशब्दद्वयं निःसंशयार्थम् ॥ १० ॥

परमात्मन एव कालादिबहुरूपत्वम्

सब्रह्मचारी व्रात्यश्च स्तम्भोऽथ फलितस्तथा ।
अनड्वान्रोहितोच्छिष्टः पश्यन्तो बहुविस्तरम् ॥ ११ ॥
कालः प्राणश्च भगवान्[1]मन्युः [2]शर्वो
भवश्च रुद्रश्च शरावान् साधुरस्तथा ॥ १२ ॥

[1] मृत्युः—अ.    [2] शर्वो महेश्वरः । उग्रोभ—मु.

प्रजापतिर्विराट् चैव पूष्णः सलिल एव च ।
स्तूयते मन्त्रसंस्तुत्यैरथर्वविदितैर्विभुः ॥ १३ ॥

अष्टपादमित्याद्येतावता ग्रन्थेन यदुक्तं ब्रह्म तद्ब्रह्मचारिणो मुनयो जानन्तीत्याह—**सेति** । ब्रह्मव्रतधारणात् व्रत्यो नाम भृगोः **सब्रह्मचारी**, स्वात्मन्येव निरुच्छ्वासं मनसा सह प्राणवृत्तिं स्तम्भयतीति **स्तम्भो** नाम मुनिश्च, **तथा फलितो** नाम मुनिः साक्षात्कृतज्ञानफलत्वात्, तथा **अनड्वान्नाम** ऋषिः अनड्वाहवदवधूतत्वात्, तथा नामतो **रोहितः तथोच्छिष्टः** सर्वोत्कृष्टशिष्ट-ब्रह्मदृष्टित्वात्, एते व्रत्यादयो **बहुविस्तरं** ब्रह्माहमस्मीति **पश्यन्तः** पश्यन्ति ॥ ११ ॥ ब्रह्मणो विस्तरत्वं कथमित्यत आह—**काल इति** । प्रळयकाले कालाग्निरुद्रात्मना सर्वं काळयतीति **कालः** । **प्राणः** मुख्यप्राणत्वात् । **भगवान्** षड्गुणैश्वर्यसम्पन्नत्वात् । **मन्युः** स्वातिरिक्तासहत्वात् । **शर्वः** शमादिमुनिवन्द्यत्वात् । **भवः** सदा भवतीति । तथा च **रुद्रः** संसाररुग्द्रावकत्वात् । शरान् जीवान् अवतीति **शरावान्**, तथाच श्रुतिः "शरा जीवाः" इति । **तथा** साधून् रातीति **साधुरः** ॥ १२ ॥ **प्रजापतिः** प्रजापालकत्वात् । तथा च स्वेन रूपेण विराजत इति **विराट्** । तथा च **पूष्णः**—प्रथमार्थे षष्ठी—पूषा सर्वपोषकत्वात् । तथा **सलिलः** सलिलं सर्वजीवनहेतुत्वात् । काल इत्यादिविभ्वन्तविशेषणविशिष्टो यः परमात्मा स एव बहुविस्तरं ब्रह्मेति सप्तकोटिमहामन्त्रस्तुत्यैः अथर्ववेदविदितैः देवैः स्तूयते स्तुतो भवति ॥ १३ ॥

परमात्मनो नानादर्शनविकल्पितत्वम्

तं षड्विंशक इत्येके सप्तविंशं तथाऽपरे ।
पुरुषं निर्गुणं सांख्यमथर्वशिरसो विदुः ॥ १४ ॥
चतुर्विंशतिसंख्यातं व्यक्तमव्यक्तमेव च ।
अद्वैतं द्वैतमित्याहु[1]स्त्रिधा तं पञ्चधा तथा ॥ १५ ॥

[1] ह्ये—क.

ब्रह्माद्यं स्थावरान्तं च पश्यन्ति ज्ञानचक्षुषः ।
तमेकमेव पश्यन्ति परिशुभ्रं विभुं द्विजाः ॥ १६ ॥

य एवं स्तुतः तं जीवत्वेन केचिदामनन्ति केचिदीश्वरत्वेन केचिज्जीवेश्वरकलनाविरळब्रह्मतया विदुरित्याह—तमिति । योऽनात्मापह्नवसिद्धः परमात्मा **तं** केचित् बुधाः वियदादिभूतपञ्चकं प्राणादिवायुपञ्चकं श्रोत्रादिज्ञानेन्द्रियपञ्चकं वागादिकर्मेन्द्रियपञ्चकं मनआद्यन्तःकरणचतुष्टयं, एवं चतुर्विंशतिसङ्ख्यातं चतुर्विंशतितत्त्वमुच्यते । व्यक्तं तूलाविद्यारूपमेकम् । आहत्य पञ्चविंशतितत्त्वं तदुपाधिकं जीवं विदुः, "जीवः पञ्चविंशकः" इति श्रुतेः । केचन मूलाविद्यात्मकं अव्यक्तं पूर्वोक्ततत्त्वैः साकं षड्विंशतत्त्वमूचिरे, **षड्विंशक** ईश्वर इत्याहुः, "षड्विंशक आत्मा भवति" इति श्रुतेः । केचित् गुणसाम्यं सप्तविंशतिसङ्ख्यापूरकं तदुपाधिकः साक्षीति विदुः । अपरे केचित् अथर्वशिरःपारीणा **अथर्वशिरसः** स्वातिरिक्तप्रपञ्चपूरणात् **पुरुषं** गुणसाम्यादितमोगुणान्तकलनाभावं **निर्गुणं** यस्मिन् सति तत्त्वानि सङ्ख्यायन्ते तं **साङ्ख्यमिति** विदुः ॥ १४ ॥ केचन **अद्वैतं** जीवब्रह्मैक्यं परमार्थमाहुः केचित् तद्विपरीतं **द्वैतम्** । केचित् ब्रह्मविष्णुरुद्रभेदेन **तं त्रिधा** आहुः । केचित् पञ्चब्रह्मात्मना **पञ्चधा** आहुः ॥ १५ ॥ स्वाज्ञदृष्टिप्रसक्त**ब्रह्मादिस्थावरान्त**प्रपञ्चेषु नामरूपवृत्तिवैचित्र्यादनेकविधेष्वपि तदारोपापवादाधिकरणतया य आस्ते तं **विभुं** भूमात्मानं **ज्ञानचक्षुषो द्विजा** ब्रह्मविद्वराः स्वाधिष्ठेयसापेक्षाधिष्ठानताऽपह्नवसिद्धमात्मानं शुभ्रं निष्प्रतियोगिकस्वमात्रं **पश्यन्ति** ॥ १६ ॥

सर्वलयाश्रयब्रह्मज्ञानेन ब्रह्मभावापत्तिः

यस्मिन् सर्वमिदं प्रोतं ब्रह्म स्थावरजंगमम् ।
तस्मिन्नेव लयं [1]याति स्रवन्त्यः सागरे यथा ॥ १७ ॥

[1] यान्ति—उ.

यस्मिन् भावाः प्रलीयन्ते लीनाश्चाव्यक्ततां ययुः ।
पश्यन्ति व्यक्ततां भूयो जायन्ते बुद्बुदा इव ॥ १८ ॥
क्षेत्रज्ञाधिष्ठितं चैव कारणैर्विद्यते पुनः ।
एवं स भगवान् देवः पश्यन्त्यन्ये पुनः पुनः ॥ १९ ॥
ब्रह्म ब्रह्मेत्यथायान्ति ये विदुर्ब्राह्मणास्तथा ।
अत्रैव ते लयं यान्ति लीनाश्चाव्यक्तशालिनः ॥
लीनाश्चाव्यक्तशालिन इत्युपनिषत् ॥ २० ॥

अपह्नोतव्यमिदं जगत् कस्मिन्नुदयस्थित्यवसानं भजतीत्यत आह— **यस्मिन्निति** । यस्मिन्नारोपाधिकरणे परमेश्वरे **सर्वमिदं** आब्रह्मस्थावरजङ्गमं विकल्पितं **प्रोतं** स्थितं च **स्रवन्त्यः सागरे यथा तस्मिन्नेव लयं याति** ॥ १७ ॥ नित्यादिप्रळयाधारे **यस्मिन्** स्वस्वकर्मानुरोधेन भवन्तीति **भावाः** जीवाः कर्मक्षयात् **प्रलीयन्ते** । ततः किमित्यत आह—**लीनाश्चेति** । मधूच्छिष्टपिण्डे स्वर्णादिरेणव इव ये **लीनास्ते अव्यक्ततां ययुः** । ते पुनः सृष्टिकाले बुद्बुदा इव जले **भूयो** व्यक्ततामेत्य **जायन्ते** ॥ १८ ॥ किञ्च—एतत् सर्वं पुनः पुनः घटीयन्त्रवत् जन्मस्थितिभङ्गं भजतीति **कारणै**रनेकहेतुभिः एतत् सर्वं क्षेत्रं तत् स्वातिरिक्तं नास्तीति यो जानाति स हि क्षेत्रज्ञः परमात्मा तेनाधिष्ठितं सदिदं सर्वं **विद्यते** न स्वत इति सन्तो यं **पश्यन्ति सोऽयं भगवान् देवः** परमात्मा ॥ १९ ॥ स्वाज्ञविकल्पित-स्वातिरिक्तकलापह्नवप्रबोधसमकालं स्वमात्रमवशिष्यते इत्यन्ये ये **विदुः ब्राह्मणाः** ब्रह्मविद्वरीयांसः ते कृतकृत्याः, ब्रह्मैव भवन्तीति वाक्यशेषः । तदपेक्षया ये मन्दाधिकारिणो यद्यत् करणग्रामग्राह्यं तत् सर्वमिदं **ब्रह्म** इदं **ब्रह्मेति पुनः** पुनरभ्यासं कुर्वन्ति ते ब्रह्मविदः । **अथानन्तरं** क्रमेण सम्यज्ज्ञानिनो भूत्वा तन्मात्रतां **यान्ति** पुरा स्वात्तोपाधयः **त्वत्रैव लयं** विरूपविलयं

यान्ति । ते स्वोपाधिविकाराः एवं लीनाश्च सन्तः अव्यक्तरूपं ब्रह्म तच्छालिनस्तद्रूपा भवन्ति । अभ्यासतो नेह पुनः संसरन्तीत्यर्थः । इत्युपनिषच्छब्दः प्रकृतोपनिषत्परिसमाप्त्यर्थः ॥ २० ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
मन्त्रिकोपनिषट्टीका लिखिता स्याद्यथा स्फुटम् ।
मन्त्रिकोपनिषद्व्याख्याग्रन्थस्त्वष्टोत्तरं शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे द्वात्रिंशत्सङ्ख्यापूरकं
मन्त्रिकोपनिषद्विवरणं सम्पूर्णम्

---

# महोपनिषत्

आप्यायन्तु—इति शान्तिः

## प्रथमोऽध्यायः

उपनिषदधिकारः

अथातो महोपनिषदं व्याख्यास्यामः ॥ १ ॥

यन्महोपनिषद्वेद्यचिदाकाशतया स्थितम् ।
परमाद्वैतसाम्राज्यं तद्रामब्रह्म मे गतिः ॥

इह खलु सामवेदप्रविभक्तेयं महोपनिषत् श्रीशुकजनक-ऋभुनिदाघ-प्रश्नप्रतिवचनमुखेन परमतत्त्वरहस्यभूतनिष्प्रतियोगिकब्रह्ममात्रसिद्धान्तं सोपायं प्रकटयन्ती विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । आदौ तावत् मुमुक्षूनुपलभ्य श्रुतयः परमतत्त्वमुपदिशन्तीत्याह—**अथेति** । **अथ** साधन-चतुष्टयसम्पत्त्यनन्तरं यतो मुमुक्षूणां ब्रह्ममात्रप्रबोधं विना न हि पुरुषार्थो भवति **अतः** कारणात् मुमुक्षूणां परमपुरुषार्थसिद्धये श्रुतयो वयं—उपनिपूर्वस्य सद्धातोः (षद्‌लृ धातोः) अर्थानुगमात् यथोक्तसाधनसम्पन्नान् मुमुक्षून् ब्रह्मोप-सामीप्यं ब्रह्मस्वरूपं निषीदति प्रापयतीति ब्रह्मविद्योपनिषत्—उपनिषण्णं वाऽस्यां कैवल्यमिति वा उपनिषत्—ब्रह्ममात्रप्रकाशकतया इयं महती च

सोपनिषच्चेति—**महोपनिषत्** तां विशेषेण **आख्यास्यामः**, विस्पष्टं प्रतिपादयिष्याम इत्यर्थः ॥ १ ॥

नारायणस्य अद्वितीयत्वं ईशत्वं च

**तदाहुः—एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नापो नाग्नीषोमौ नेमे द्यावापृथिवी न नक्षत्राणि न सूर्यो न चन्द्रमाः ॥ २ ॥ स एकाकी न रमेत ॥ ३ ॥**

यद्वयं वक्तुमुद्युक्ताः तदेव पुरा ब्रह्मवादिनोऽपि वदन्तीत्याह—**तदाहुरिति** । किमित्यत आह—**एक** इति । ह वा इति वृत्तस्मरणार्थौ । स्वप्रतियोगिद्वित्वासम्भवात् **एकः** । स चासौ स्वातिरेकेण नास्त्यरं अल्पं अविद्यापदतत्कार्यजातमिति नारं विकलेवरकैवल्यं अयनं धाम स्वरूपं यस्य सोऽयं **नारायणः** परमात्मा । स्वाज्ञादिदृष्टिर्मोहे सत्यसति स्वयं एक एव **आसीत्** स्थितवानित्यर्थः । कथं अस्यैकत्वं तदतिरेकेण ब्रह्मादिचन्द्रान्तसत्त्वादित्यत आह—**नेति** । तदतिरेकेण **न ब्रह्मा** ॥ २ ॥ परमार्थदृष्ट्या नारायणो निष्प्रतियोगिकाद्वितीयोऽपि स्वाज्ञदृष्ट्येशत्वमवलम्ब्यैव स्थितवानित्याह—**स एकाकीति** । यो निर्विशेषतया अवशिष्टः **स** एव स्वाज्ञदृष्टिविकल्पितमूलाविद्यामधिष्ठाय **एकाकी** ईश्वरः स्वातिरिक्तप्रपञ्चसिसृक्षया स्वात्ममात्रे **न रमते** इत्यर्थः ॥ ३ ॥

यज्ञस्तोमोत्पत्तिः

**तस्य ध्यानान्तःस्थस्य यज्ञस्तोममुच्यते ॥ ४ ॥**

ततः किमित्यत आह—**तस्येति** । एकाकिना मया किं कर्तव्यमिति ध्यानाविष्टस्य, तस्य एवं ध्यायन् स्वान्तरेव तिष्ठतीति ध्यानान्तःस्थः तस्य **ध्यानान्तःस्थस्य** स्वेच्छामात्रेण सिसृक्षमाणसृष्टियज्ञसाधनं महा**यज्ञस्तोमं** अव्यक्ताख्यं सर्वानर्थकलनानिर्वाहकं प्रादुर्भूत**मुच्यते** ॥ ४ ॥

चतुर्दशपुरुषाणां पञ्चविंशतितत्त्वात्मकपुरुषस्य चोत्पत्तिः

तस्मिन् पुरुषाश्चतु[1]र्दश जायन्ते एका कन्या दशेन्द्रियाणि मन एकादशं तेजो द्वा[2]दशमहंकारस्त्रयोदश प्राणश्चतुर्दश आत्मा पञ्चदश बुद्धि [3]र्भूतानि पञ्च तन्मात्राणि पञ्च महाभूतानि स एकः पञ्चविंशतिः पुरुषः ॥ ५ ॥ तत्पुरुषं पुरुषो निवेश्य नास्य प्रधानसंवत्सरा जायन्ते संवत्सरादधिजायन्ते ॥ ६ ॥

**तस्मिन्** यज्ञस्तोमे सृष्टिकर्मनिर्वाहकाः **चतुर्दश पुरुषाः जायन्ते** । पञ्चब्रह्माणो ब्रह्मादिसदाशिवान्ताः दक्षादिनवप्रजापतयश्च चतुर्दशसङ्ख्यापूरकाः । **एका कन्या** सर्वानर्थमूलत्वेन प्रकृता मूलप्रकृतिः । एते ब्रह्मादयः सृष्टिकर्मप्रवर्तकाः । तत्साधनत्वेन लिंगशरीरं सहजतादात्म्यास्पदमात्मना पञ्चदशावयवकलनान्वितं जातमित्यत्र वाक्श्रोत्रादिभेदेन कर्मज्ञानेन्द्रियाणि **दश, एकादश**सङ्ख्यापूरकं **मनः, तेजः** द्वादशसङ्ख्यापूरकं बुद्धितत्त्वं बुद्धेः तैजसत्वात्, **त्रयोदश**सङ्ख्यापूरकोऽयम**हङ्कारः, चतुर्दश**सङ्ख्यापूरकः **प्राणः,** स्वयमात्मेश्वरः **पञ्चदश**सङ्ख्यापूरकः यया बुध्यते निखिलं सेयं **बुद्धिः** विद्याऽविद्या वा, एतत्सर्वाधारतया भवन्तीति **भूतानि** कामकर्मतमांसि त्रीणि, **पञ्च तन्मात्राणि पञ्चमहाभूतानि** चतुर्विंशतिसङ्ख्यापूरकाणि, तदुपाधिकः **स एको** जीवः, तेन साकं **पञ्चविंशतिः** तत्समष्ट्यभिमानी **पुरुषो** विराट् सूत्रात्मा वा ॥ ५ ॥ **तत्पुरुषं** स्थूलादिसृष्टिकर्मणि तदधिष्ठाता **पुरुषः** परमेश्वरः **निवेश्य** स्थापयित्वा स्वयं असंगोदासीनतया उदास्ते । एतावन्तं कालं अयं तिष्ठतीति शतादिसङ्ख्यया परिच्छिन्नाः **प्रधानसंवत्सरा नास्य जायन्ते,** स्वयमेव संवत्सरात्मा, "स एष कालो भुवनस्य गोप्ता" इति श्रुतेः । स्वस्मात् **संवत्सरात्** कालात्मनः सकाशात् सर्वे **अधिजायन्त** इत्यर्थः ॥ ६ ॥

[1] र्दशा—अ १, अ २, क. [2] दशाहं—अ १.

[3] भूता—अ १, अ २.

रुद्रोत्पत्तिः

अथ पुनरेव नारायणः सोऽन्यत्कामो मनसा ध्यायत। तस्य ध्यानान्तःस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषो जायते बिभ्रच्छ्रियं यशः सत्यं ब्रह्मचर्यं तपो वैराग्यं मन ऐश्वर्यं सप्रणवा व्याहृतय ऋग्यजुःसामाथर्वाङ्गिरसः सर्वाणि छन्दांसि तान्यङ्गे [1]समाश्रितानि तस्मादीशानो महादेवो महादेवः ॥ ७ ॥

यज्ञस्तोमादिसृष्टिमुक्त्वा छन्दोमयांगरौद्रसृष्टिमाह — अथेति । यो नारायण इति ख्यातः सोऽयं ऋगादिचतुर्वेदांगरौद्रप्रपञ्चं स्रष्टुकामः यज्ञस्तोमादि-सृष्ट्यपेक्षया अन्यत्कामोऽन्यकामः सन् मनसैवं ध्यायत। तस्य ध्यानान्त-स्स्थस्य नारायणस्य ललाटात् यः सर्वातिशायिनीं श्रियं यशः सत्यं ब्रह्मचर्यं तपो वैराग्यं सत्यकामादिलक्षणं मनः निरवधिकैश्वर्यं च बिभ्रन् यस्याङ्गे ॐ भूः इत्यादिसप्रणवाः सप्तव्याहृतयः ऋग्यजुःसामाथर्वाङ्गिरसश्च तानि सर्वाणि छन्दांसि चानवरतं समाश्रितानि भवन्ति सोऽयं त्र्यक्षः शूलपाणिः पुरुषो जायते। नारायण एव रुद्ररूपेण आविरासीत् इत्यर्थः। यस्मात् एवं कर्तुं समर्थो भवति तस्मादीशानो नारायण एव महादेवः, महादेव एव नारायणः, नह्यनयोर्भेदो विद्यते इत्यत्र—“ शिवाय विष्णुरूपाय शिवरूपाय विष्णवे ” इत्यादि श्रुतेः ॥ ७ ॥

चतुर्मुखब्रह्मोत्पत्तिः

अथ पुनरेव नारायणः सोऽन्यत्कामो मनसा ध्यायत। तस्य ध्यानान्तःस्थस्य ललाटात् स्वेदोऽपतत्। ता इमाः प्रतता आपः। ततस्तेजो हिरण्मयमण्डम्। तत्र ब्रह्मा चतुर्मुखोऽजायत ॥ ८ ॥

[1] समश्रि—अ १.

छन्दोमयाङ्गरुद्रसृष्ट्यनन्तरं ब्रह्मसृष्टिमाचष्टे—**अथेति । मनसा ध्यायत** ब्रह्मसृष्टिं करवाणीति । **प्रतता आपः**, विस्तारं गता इत्यर्थः । **अण्डं** सञ्जातम् ॥ ८ ॥

व्याहृतिछन्दोवेददेवतानामुत्पत्तिः

सोऽध्यायत् । पूर्वाभिमुखो भूत्वा भूरिति व्याहृति[1]र्गायत्रं छन्द ऋग्वेदोऽग्निर्देवता । पश्चिमाभिमुखो भूत्वा भुव इति व्याहृतिस्त्रैष्टुभं छन्दो यजुर्वेदो वायुर्देवता । उत्तराभिमुखो भूत्वा स्वरिति व्याहृतिर्जागतं छन्दः सामवेदः सूर्यो देवता । दक्षिणाभिमुखो भूत्वा मह इति व्याहृतिरानुष्टुभं छन्दोऽथर्ववेदः सोमो देवता ॥ ९ ॥

स भूत्वा किं कृतवानित्यत आह—**सोऽध्यायदिति** । कथमध्यायत् तेन किं जायत इत्याशङ्क्य स पूर्वादिचतुर्मुखो भूत्वा व्याहृतिछन्दोवेददेवता भवतीत्याह—**पूर्वेति** ॥ ९ ॥

नारायणस्य विराड्रूपत्वम्

सहस्रशीर्षं देवं सहस्राक्षं विश्वशंभुवम् ।
विश्वतः परमं नित्यं विश्वं नारायणं हरिम् ॥ १० ॥
विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवति ।
पतिं विश्वेश्वरं देवं समुद्रे[2]कं विश्वरूपिणम् ॥ ११ ॥

नारायण एव ब्रह्मात्मना भूरादिसोमान्तदेवताभावमेत्य विराड्रूपो बभूवेत्याह—**सहस्रशीर्षमिति** । श्रुतयः स्वाङ्गलोककृपया सविशेषं वैराजमात्मानं

[1] गायत्री—अ, अ १, क.  [2] कविं वि—**अ.**

दर्शयित्वा हे स्वाज्ञलोकाः यूयं स्वहृदयमध्ये वैराजं स्वात्मेति ध्यायतेत्याह—**सहस्रेति**। सर्वप्राण्यात्मना सहस्राणि शिरांसि अस्यैवेति तथोक्तं **सहस्रशीर्षं**, देदीप्यमानरूपत्वात् देवं, तथा **सहस्राक्षं**, यतः स्वविभक्तविश्वानां व्यावहारिकाणां शं सुखं भवतीति तं **विश्वशंभुवं**, विश्वापेक्षया परमं **विश्वतःपरमं**, अनित्यविश्वविलक्षणत्वात् **नित्यं**, विश्वरूपत्वात् **विश्वं**, सूरयो यत्र न रमन्ते तन्नरं तदेव नारं अविद्यापदतत्कार्यजातं यः तदयनं आरोपापवादाधिकरणं तं **नारायणं**, वस्तुतः स्वाधेयनिरूपिताधारताप्रभवसविशेषतां स्वावशेषतया हरतीति **हरिम्** ॥ १० ॥ जगतः पतिं पालकं **विश्वेश्वरं** विश्वनियन्तारं, **देवं** द्योतनात्मकं, प्रत्यगभिन्नब्रह्मात्मना सम्यक् उद्रेकं अतिरिक्तं, **विश्वरूपिणं** विराडात्मानं अयमहमस्मीति ध्यायत। विश्वरूपत्वं कथमित्यत्र—यमाश्रित्य **तद्विश्वमुपजीवति** चेतनभावमेति। यत एवं अतः इदं विश्वं पुरुष एव ॥ ११ ॥

नारायणोपलब्धिस्थानं हृदयम्

पद्मकोशप्रतीकाशं लम्बत्याकोशसंनिभम्।
हृदयं चाप्यधोमुखं संतत्यै [1]सीत्कराभिश्च ॥ १२ ॥
तस्य मध्ये महानर्चिर्विश्वार्चिर्विश्वतो[2]मुखम्।
तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यव[3]स्थिता ॥ १३ ॥
तस्याः शिखाया मध्ये पुरुषः परमात्मा व्यवस्थितः।
स ब्रह्मा स ईशानः सेन्द्रः सोऽक्षरः परमः स्वराट् ॥

इति महोपनिषत् ॥ १४ ॥

तदुपलब्धिस्थानं किमित्यत्र हृदयमित्याह—पद्मेति। **पद्मकोशप्रतीकाशं अधोमुखं** उरोभागे यत् **लम्बति** जीवनसन्तत्यै **सीत्कराभिः** शीतलोदककणैश्च

[1] सत्क—अ. सीत्का—अ १, अ २, क. [2] मुखः—अ, अ १, अ २.
[3] स्थितः—अ, अ १.

स्रवत् **आकोशसन्निभं** सर्वप्राणिनां हृदयं चकास्ति । **चशब्दात्** प्रणवेन प्राणायामेन वा हृदयमूर्ध्वमुखं कुर्यादिति द्योत्यते ॥ १२ ॥ यदेवं हृदयं प्रतिभाति **तस्य** हृदयस्य **मध्ये महान्** महत् **अर्चिः** । तस्य परिच्छिन्नशङ्कां शातयति—**विश्वार्चिः विश्वतोमुखमिति** च । प्रकाशवदव्याकृताकाशज्योतिः दीप्यत इत्यर्थः । **तस्य** अव्याकृताकाशस्य **मध्ये** योगकालीनमूलाधारत्रि-कोणोत्थितवह्निशिखा **अणीयोर्ध्वा** अणीयसी स्वस्थानादूर्ध्वगामिनी **व्यवस्थिता** वर्तते ॥ १३ ॥ **तस्याः शिखायाः मध्ये** सच्चिदानन्दवपुषा स्वाविद्यापद-तत्कार्यजातपूरणात् **पुरुषः परमात्मा** सर्वप्रत्यगभेदेन यो **व्यवस्थितः सोऽयं** नारायण एव **ब्रह्मा स ईशानः सेन्द्रः सोऽक्षरः** वस्तुतः **परमः** सर्वस्मात् परतरत्वात् । (यद्वा—) निष्प्रतियोगिकस्वमात्रतया राजत इति **स्वराट्** । **इतिमहोपनिष**च्छब्दौ विराट्तत्वप्रथमाध्यायपरिसमाप्त्यर्थौ ॥ १४ ॥

इति प्रथमोऽध्यायः

---

# द्वितीयोऽध्यायः

शुकस्य स्वयमुद्भूतं पारमार्थिकज्ञानम्

शुको नाम महातेजाः स्वरूपानन्दतत्परः ।
जातमात्रेण मुनिराड् यत् सत्यं तदवाप्तवान् ॥ १ ॥
तेनासौ स्वविवेकेन स्वयमेव महामनाः ।
प्रविचार्य चिरं साधु स्वात्मनिश्चयमाप्नुयात् ॥ २ ॥
अनाख्यत्वादगम्यत्वान्मनःषष्ठेन्द्रियस्थितेः ।
चिन्मात्र[1]मेवायमणुराकाशादपि सूक्ष्मकः ॥ ३ ॥

[1] अयं व्याख्याऽनुसारी पाठः. आकरपाठस्तु "मेवमात्माणु" इत्येव.

चिदणोः परमस्यान्तः कोटिब्रह्माण्डरेणवः ।
उत्पत्तिस्थितिमभ्येत्य [1]लीयन्ते शक्तिपर्ययात् ॥ ४ ॥
आकाशं बाह्यशून्यत्वादनाकाशं तु चित्त्वतः ।
न किंचिद्यदनिर्देश्यं वस्तु सत्तेति [2]किंचन ॥ ५ ॥
चेतनोऽसौ प्रकाशत्वाद्वेद्याभावाच्छिलोपमः ।
स्वात्मनि व्योमनि स्वच्छे जगदुन्मेषचित्रकृत् ॥ ६ ॥
तद्भामात्रमिदं विश्वमिति न स्यात्ततः पृथक् ।
जगद्भेदोऽपि तद्भानमिति भेदोऽपि तन्मयः ॥ ७ ॥
सर्वगः सर्वसंबन्धो गत्यभावान्न गच्छति ।
नास्त्यसावाश्रयाभावात् सद्रूपत्वादथास्ति च ॥ ८ ॥
विज्ञानमानन्दं ब्रह्म रातेर्दातुः परायणम् ।
सर्वसंकल्पसंन्यासश्चेतसा [3]यत्परिग्रहः ॥ ९ ॥
जाग्रतः प्रत्यया[4]भावं यस्याहुः प्रत्ययं बुधाः ।
यत्संकोचविकासाभ्यां जगत्प्रलयसृष्टयः ॥ १० ॥
निष्ठा वेदान्तवाक्यानामथ वाचामगोचरः ।
अहं सच्चित्परानन्दब्रह्मैवास्मि न चेतरः ॥ ११ ॥

स्वोद्भूतपारमार्थिकज्ञानश्रीशुकजनकप्रश्नप्रतिवचनरूपाख्यायिकामवतार्य व्याकरोति—शुको नामेत्यादिना । अवाप्तवान् उपदेशमन्तरेणेत्यर्थः ॥ १ ॥ कथमुपदेशं विना ज्ञानमुदेतीत्यत आह—तेनेति । कीदृशोऽस्मीति प्रविचार्य

[1] जायन्ते—उ, उ १.
[2] कंचन—उ.
[3] यः परि—अ १.
[4] भावे—अ.

॥ २ ॥ विचारतः स्वात्मनिश्चयप्रकारमाह—**अनाख्यत्वादिति**। कथं पुनः श्रीशुक उपदेशमन्तरा स्वात्मनिश्चयमाप्तवानित्यत्र—स्वात्मन **अनाख्यत्वात्**। यदभिधेयं तदाख्यागोचरं, यत्तद्विरळं तदनाख्यं, अशब्दत्वात् "यतो वाचो निवर्तन्ते" इति श्रुतेः। मानसधीन्द्रियगोचरस्यानभिधेयत्वं कुत इत्यत्राह—**अगम्यत्वादिति**। मनसा सह षडिन्द्रियाणि श्रोत्रादिज्ञानेन्द्रियाणि। स्वस्वविषयज्ञानं तेषां स्थितिः। तदगम्यत्वे हेतुः स्वात्मनो निर्विषयत्वं, "अविषयं अनिन्द्रियं" इति श्रुतेः। निर्विषयत्वे स्वात्मा कीदृश इत्यत्र—**चिन्मात्रमेव** निष्प्रतियोगिकं, अचिन्मात्रासम्भवप्रबोधसिद्धत्वात्। अत एव **अयमणुः**, सूक्ष्मत्वात्, "एषोऽणुरात्मा" इति श्रुतेः। अणुत्वे परिच्छिन्नता स्यादित्यत आह—**आकाशादपि सूक्ष्मक इति**। वाय्वादिस्वकार्यापेक्षया आकाशस्य सूक्ष्मत्वेन विभुत्वात् आकाशादपि सूक्ष्मत्वं ततोऽपि व्यापकत्वख्यापकं, स्वकार्यापेक्षया तत्कारणस्य व्यापकत्वप्रसिद्धेः, यदि कारणब्रह्मणोऽणुत्वं अल्पत्वं स्यात् तदा तत्र स्वकार्यसम्भूतिस्थितिभङ्गासम्भवात्। श्रूयते हि—निरङ्कुशपरमस्य चिदणोरन्तः अनन्तकोटिब्रह्माण्डरेणवो जलाशयबुद्बुदपरम्परेवोत्पत्तिस्थितिभङ्गं मुहुर्मुहुर्भजन्ति। अतश्चिदणुरात्मा सर्वव्यापक इत्यर्थः ॥ ४ ॥ तत्स्वरूपं किमित्यत्र सत्तामात्रमित्याह—**आकाशमिति**। स्वातिरिक्तं ग्रसित्वा स्वेन रूपेणासमन्तात् काशत इत्याकाशं ब्रह्म स्वबाह्यशून्यत्वात्। स्वबाह्यं स्वातिरिक्तमित्यर्थः। आकाशत्वे भासकता स्यादित्यत आह—**अनाकाशमिति**। स्वस्य निष्प्रतियोगिकचिन्मात्रत्वात् भास्यसापेक्षभासकताऽनुपपत्तेरनाकाशत्वं निरङ्कुशमित्यर्थः। तुशब्दार्थमाह—**न किंचनेति**। यदनिर्देश्यमनिदं वस्तु **न हि किंचित्** सप्रतियोगिकं भवति। किं तदित्यत्र—**किंचन वस्तु सत्तेति** निष्प्रतियोगिकसन्मात्रमुच्यते, "पश्यतेहापि सन्मात्रमसदन्यत्" इति श्रुतेः ॥ ५ ॥ सन्मात्रात्मा किं अचेतन इत्यत आह—**चेतनोऽसाविति**। तत्र हेतुः—**प्रकाशमात्रत्वात्**। तथात्वेऽवेद्यत्वं, वेदनसापेक्षवेद्याभावात्। **शिलोपमः** शिलावदप्रकम्प्य इत्यर्थः। शिलात्वे जडत्वं स्यादिति शङ्कायां—**स्वच्छे स्वात्मनि चिद्व्योम्नि जगदुन्मेषचित्रकृदात्मा** न हि जडो भवति ॥ ६ ॥

चित्रस्थानीयं विश्वं तद्भिन्नमित्यत्र—**इदं विश्वमिति** यद्व्यवहारास्पदं **तद्भामात्रं, ततो** भामात्राद्विश्वं **पृथक् न स्यात्**। इदंकारयोग्यस्य भामात्रत्वं कुत इत्यत्र—**जगद्भेदोऽपि तद्भानमिति**, नह्यभामात्रमिदमिति भेदविषयतामर्हति । यत एवमतो **भेदोऽपि तन्मयः** तन्मात्रपर्यवसन्नत्वात् ॥ ७ ॥ स्वाज्ञविकल्पितसर्वस्य सत्त्वे **सर्वगः सर्वसम्बन्धवत्** भवति । वस्तुतो **गत्यभावात् न गच्छति। स्वाश्रयाभावात् असौ नास्त्येवेति** प्रसक्तौ **सद्रूपत्वात्** सन्मात्रत्वात् **अथास्ति च**, न हि सन्मात्रमसत्पदं भजति ।

ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् ।
अनाख्यमनभिव्यक्तं सत् किंचिदवशिष्यते ॥

इति श्रुतेः ॥ ८ ॥ घटादिवत् सद्रूपत्वमस्तु, चित्त्वं प्रेमास्पदत्वं व्यापकत्वं कुत इत्यत्र—यत् सन्मात्रं तदेव **विज्ञानं** चिन्मात्रं अजडमित्यर्थः । नह्यसतोऽजडता उपपद्यते, स्वरूपशून्यत्वात् । यद्विज्ञानं तदे**वानन्द**रूपं, प्रकाशवतः प्रेमास्पदत्वात्, नह्यप्रकाशं वस्तु प्रेमास्पदं भवति । एवं सच्चिदानन्दमात्रतया यत् बृंहयति तत् **ब्रह्म**, प्रेमास्पदस्य भूमत्वप्रसिद्धेः "यो वै भूमा तत् सुखं नाल्पे सुखमस्ति" इति श्रुतेः । सच्चिदानन्दब्रह्मरूपेण राजत इति रातिः जीवन्मुक्ततितिः तस्याः **रातेः**, यथोक्ताधिकारिणे ब्रह्मविद्यां ददातीति **दाता** ब्रह्मभावापन्नो देशिकः "ब्रह्मविद्योपदेशं यन्मुमुक्षोर्दानमीरितम्" इति श्रुतेः, तस्यापि **परायणं** ब्रह्म, मुक्तबृन्दात्मत्वेन प्राप्यत्वात् । न हि तत् ग्रामादिवत् आप्यं, "आप्तिः स्वमात्रावशेषो नहि ग्रामान्तराप्तिवत्" इति नामार्थविवेकोक्तेः । इत्थंभूतब्रह्माप्त्युपायमाचष्टे—**सर्वेति** । इदं कर्तव्यं इदं अकर्तव्यं इदं मे स्यात् इदं मा भूत् इति चेतसा **यद्यः परिग्रहः तत्सर्वसङ्कल्पसंन्यासो** ब्रह्माप्तिहेतुः, ब्रह्ममात्रज्ञानान्तरङ्गसाधनमित्यर्थः ॥ ९ ॥ ब्रह्ममात्रज्ञानं कीदृशमित्यत्र—**जाग्रतः** पुरुषस्य स्वातिरिक्तमस्ति नास्तीति **प्रत्ययाभावमेव बुधाः यस्याप्तिहेतुप्रत्ययमाहुः** । सर्वसङ्कल्पसंन्यासनिष्पन्नज्ञानमेव स्वातिरिक्तविभ्रममुक्तिजनकमित्यर्थः । यत्सङ्कोचादि स्वातिरिक्तप्रळयादिहेतुः, यन्महावाक्य-

सिद्धार्थं, यदवाङ्मनसगोचरं, तदेवास्मीत्याह—यदिति । **जगत्प्रळयसृष्टयः** भवन्ति ॥ १०–११ ॥

ज्ञाततत्त्वस्यापि शुकस्याविश्रान्तिः

स्वयैव सूक्ष्मया बुद्ध्या सर्वं विज्ञातवान् शुकः ।
स्वयं प्राप्ते परे वस्तुन्यविश्रान्तमनाः स्थितः ॥ १२ ॥
इदं वस्त्विति विश्वासं नासावात्मन्युपाययौ ।
केवलं विररामास्य चेतो विषयचापलम् ।
भोगेभ्यो भूरि[1]भङ्गेभ्यो धाराभ्य इव चातकः ॥ १३ ॥

उक्तप्रकारेण **स्वयैव** । एवमुपदेशमन्तरा विज्ञातपरमार्थतत्त्वोऽपि वेदान्तसम्प्रदायमाननार्थमेव—न तस्याज्ञातं किंचिदस्ति, तस्य ज्ञानफलनारायणावतारत्वात्, तथाऽपि सम्प्रदायं मानयतीत्याह—स्वयमिति । यथावत् आत्मतत्त्वं बुद्ध्वाऽपि तत्र विश्रान्तिमलब्धवानिव धाराभ्यश्चातक इवास्य मानसं **भोगेभ्यो विरराम** ॥ १२–१३ ॥

व्यासोपदेशेऽप्यनादरः

एकदा सोऽमलप्रज्ञो मेरावेकान्तसंस्थितम् ।
पप्रच्छ पितरं भक्त्या कृष्णद्वैपायनं मुनिम् ॥ १४ ॥
संसाराडम्बरमिदं कथमभ्युत्थितं मुने ।
कथं च प्रशमं याति कियत् कस्य कदा वद ॥ १५ ॥
एवं पृष्टेन मुनिना व्यासेनाखिलमात्म[2]जे ।
यथावदखिलं प्रोक्तं वक्तव्यं विदितात्मना ॥ १६ ॥

[1] तुंगे—अ. [2] जा—अ २. के—अ १.

अज्ञासिषं पूर्वमेवमहमित्यथ तत्पितुः ।
स शुकः स्वकया बुद्ध्या न वाक्यं बहु मन्यत ॥ १७ ॥

एवंभूतः शुकः कदाचित् पितरं दृष्ट्वा स्वात्मतत्त्वमनुब्रूहि इति पृष्टमुद्दिश्य यथावत् कथयामास । स्वेनैव मया यथाबुद्धं तथोक्तवान् । तस्मात् अयं यथावन्न जानातीति स्मरन्तमालक्ष्य नाहं जानामि जनकः सम्यक् जानाति तं गच्छ इति पित्रा आज्ञप्तः तं प्रति गत्वा स्थितं शास्त्रार्थमाननाय सम्यक् परीक्ष्य तच्छीलतुष्टेन यथावदुक्तमवगम्य एतावानेव शास्त्रार्थ इति निश्चित्य विश्रान्तिमापन्न इव मेरुशृङ्गमासाद्य दीर्घनिर्विकल्पसमाधिमासाद्य तत्रैव शशामेत्याह—एकदेति ॥ १४—३६ ॥

शुकस्य जनकं प्रति गमनम्

व्यासोऽपि भगवान् बुद्ध्वा पुत्राभिप्रायमीदृशम् ।
प्रत्युवाच पुनः पुत्रं नाहं जानामि तत्त्वतः ॥ १८ ॥
जनको नाम भूपालो विद्यते मिथिलापुरे ।
यथावद्वेत्त्यसौ वेद्यं तस्मात् सर्वमवाप्स्यसि ॥ १९ ॥
पित्रेत्युक्तः शुकः प्रायात् सुमेरोर्वसुधातलम् ।
विदेहनगरीं प्राप जनकेनाभिपालिताम् ॥ २० ॥

जनककृता शुकपरीक्षा

आवेदितोऽसौ याष्टीकैर्जनकाय महात्मने ।
द्वारि व्यासस्रुतो राजन् शुकोऽत्र स्थितवानिति ॥ २१ ॥
जिज्ञासार्थं शुकस्यासावास्तामेवेत्यवज्ञया ।
उक्त्वा बभूव जनकस्तूष्णीं सप्त दिनान्यथ ॥ २२ ॥

ततः प्रवेशयामास जनकः शुकमङ्गणे ।
तत्राहानि [1]स सप्तैव तथैवावसदुन्मनाः ॥ २३ ॥
ततः प्रवेशयामास जनकोऽन्तःपुराजिरे ।
राजा न दृश्यते तावदिति सप्त दिनानि तम् ॥ २४ ॥
तत्रोन्मदाभिः कान्ताभिर्भोजनैर्भोगसंचयैः ।
[2]जनको लालयामास शुकं शशिनिभाननम् ॥ २५ ॥
ते भोगास्तानि भोज्यानि व्यासपुत्रस्य तन्मनः ।
[3]नाजह्रुर्मन्दपवनो बद्धपीठमिवाचलम् ॥ २६ ॥
केवलं सुसमः स्वच्छो मौनी मुदितमानसः ।
संपूर्ण इव शीतांशुरतिष्ठदमलः शुकः ॥ २७ ॥

शुकजनकसंवादः

परिज्ञातस्वभावं तं शुकं स जनको नृपः ।
आनीय मुदितात्मानमवलोक्य ननाम ह ॥ २८ ॥
निःशेषितजगत्कार्यः प्राप्ताखिलमनोरथः ।
किमीप्सितं तवेत्याह कृतस्वागत[4]माह तम् ॥ २९ ॥
संसाराडम्बरमिदं कथमभ्युत्थितं गुरो ।
कथं प्रशममायाति यथावत् कथयाशु मे ॥ ३० ॥
यथावदखिलं प्रोक्तं जनकेन महात्मना ।
तदेव यत् पुरा प्रोक्तं तस्य पित्रा महाधिया ॥ ३१ ॥

[1] च—अ.
[2] जनकः का—अ.
[3] न ज—अ, अ १.
[4] मागतं—अ, अ १.

स्वयमेव मया पूर्वमभिज्ञातं विशेषतः ।
एतदेव हि पृष्टेन पित्रा मे समुदाहृतम् ॥ ३२ ॥
भवताऽप्येष एवार्थः कथितो वाग्विदां वर ।
एष एव हि वाक्यार्थः शास्त्रेषु परिदृश्यते ॥ ३३ ॥
मनोविकल्पसंजातं तद्विकल्पपरिक्षयात् ।
क्षीयते दग्धसंसारो निःसार इति निश्चितः ॥ ३४ ॥
तत् किमेतन्महाबाहो सत्यं ब्रूहि ममाचलम् ।
त्वत्तो विश्रम[1]माप्नोति चेतसा भ्रमता जगत् ॥ ३५ ॥
शृणु तावदिदानीं त्वं कथ्यमानमिदं मया ।
श्रीशुक ज्ञान[2]विस्तारं बुद्धिसारान्तरान्तरम् ॥ ३६ ॥
यद्विज्ञानात् पुमान् सद्यो जीवन्मुक्तत्वमाप्नुयात् ॥ ३७ ॥

विज्ञातसम्यज्ज्ञान इत्यर्थः ॥ ३७ ॥

बन्धमोक्षविवेकः

दृश्यं नास्तीति बोधेन मनसो दृश्यमार्जनम् ।
संपन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृतिः ॥ ३८ ॥
अशेषेण परित्यागो वासनाया य उत्तमः ।
मोक्ष इत्युच्यते सद्भिः स एव विमलक्रमः ॥ ३९ ॥
ये शुद्धवासना भूयो न जन्मानर्थभागिनः ।
ज्ञातज्ञेयास्त उच्यन्ते जीवन्मुक्ता महाधियः ॥ ४० ॥

[1] माप्नोमि—अ १, अ २, क. [2] विस्तारः—अ, अ १.

पदार्थभावनादार्ढ्यं बन्ध इत्यभिधीयते ।
वासनातानवं ब्रह्मन् मोक्ष इत्यभिधीयते ॥ ४१ ॥

**दृश्यं नास्तीति बोधेन** दृश्यासंभवप्रबोधेन ॥ ३८–३९ ॥ **ज्ञातज्ञेयाः** ज्ञातं ज्ञेयं यैस्ते ज्ञातज्ञेयाः विदितात्मतत्त्वाः इत्यर्थः ॥ ४ ॥ स्वशरीरादिस्वातिरिक्तपदार्थेषु आत्मात्मीयाभिमतिरेव बन्धः । तद्वासनातानवं मोक्षः ॥ ४१ ॥

जीवन्मुक्तस्थितिः

तपःप्रभृतिना यस्मै हेतुनैव विना पुनः ।
भोगा इह न रोचन्ते स जीवन्मुक्त उच्यते ॥ ४२ ॥
आपतत्सु यथाकालं सुखदुःखेष्वनारतः ।
न हृष्यति ग्लायति यः स जीवन्मुक्त उच्यते ॥ ४३ ॥
हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः ।
न परामृश्यते योऽन्तः स जीवन्मुक्त उच्यते ॥ ४४ ॥
अहंकारमयीं त्यक्त्वा वासनां लीलयैव यः ।
तिष्ठति ध्येयसंत्यागी स जीवन्मुक्त उच्यते ॥ ४५ ॥
ईप्सितानीप्सिते न स्तो यस्यान्त[1]र्वर्तिदृष्टिषु ।
[2]सुषुप्तिवद्यश्चरति स जीवन्मुक्त उच्यते ॥ ४६ ॥
अध्यात्मरतिरासीनः पूर्णः पावनमानसः ।
प्राप्तानुत्तमविश्रान्तिर्न किंचिदिह वाञ्छति ।
यो जीवति गतस्नेहः स जीवन्मुक्त उच्यते ॥ ४७ ॥

[1] वृत्ति—उ. [2] सुषुप्त—अ, क.

संवेद्येन हृदाकाशो मनागपि न लिप्यते ।
यस्यासावजडा संवित् स जीवन्मुक्त उच्यते ॥ ४८ ॥
रागद्वेषौ सुखं दुःखं धर्माधर्मौ फलाफले ।
यः करोत्य[1]नपेक्ष्यैव स जीवन्मुक्त उच्यते ॥ ४९ ॥
मौनवान् निरहंभावो निर्मानो मुक्तमत्सरः ।
यः करोति गतोद्वेगः स जीवन्मुक्त उच्यते ॥ ५० ॥
सर्वत्र विगतस्नेहो यः साक्षिवदवस्थितः ।
निरिच्छो वर्तते कार्ये स जीवन्मुक्त उच्यते ॥ ५१ ॥
येन धर्ममधर्मं च मनोमननमीहितम् ।
सर्वमन्तः परित्यक्तं स जीवन्मुक्त उच्यते ॥ ५२ ॥
यावती दृश्यकलना सकलेयं विलोक्यते ।
सा [2]येन सुष्ठु संत्यक्ता स जीवन्मुक्त उच्यते ॥ ५३ ॥
कट्वम्ललवणं तिक्तममृष्टं मृष्टमेव च ।
सममेव च यो भुङ्क्ते स जीवन्मुक्त उच्यते ॥ ५४ ॥
जरा मरणमापच्च राज्यं दारिद्र्यमेव च ।
रम्यमित्येव यो भुङ्क्ते स जीवन्मुक्त उच्यते ॥ ५५ ॥
धर्माधर्मौ सुखं दुःखं तथा मरणजन्मनी ।
धिया येन सुसंत्यक्तं स जीवन्मुक्त उच्यते ॥ ५६ ॥
उद्वेगानन्दरहितः समया स्वच्छया धिया ।
न शोचते न चोदेति स जीवन्मुक्त उच्यते ॥ ५७ ॥

[1] नुपे—अ, अ १.
[2] सदा येन सं—अ.

[1]सर्वेच्छाः सकलाः शङ्काः सर्वेहाः सर्वनिश्चयाः ।
धिया येन परित्यक्ताः स जीवन्मुक्त उच्यते ॥ ५८ ॥
जन्मस्थितिविनाशेषु सोदयास्तमयेषु च ।
सममेव मनो यस्य स जीवन्मुक्त उच्यते ॥ ५९ ॥
न किंचन द्वेष्टि तथा न किंचिदपि काङ्क्षति ।
भुङ्क्ते यः प्रकृतान् भोगान् स जीवन्मुक्त उच्यते ॥ ६० ॥
शान्तसंसारकलनः कलावानपि निष्कलः ।
यः सचित्तोऽपि निश्चित्तः स जीवन्मुक्त उच्यते ॥ ६१ ॥
यः समस्तार्थजालेषु व्यवहार्य[2]पि निःस्पृहः ।
परार्थेष्विव पूर्णात्मा स जीवन्मुक्त उच्यते ॥ ६२ ॥

ब्रह्मविदादिचतुर्विधजीवन्मुक्तलक्षणं तद्धर्मांश्चाह—**तप** इत्यादि । **यस्मै**—चतुर्थी षष्ठ्यर्था—यस्येत्यर्थः ॥ ४२ ॥ सुखदुःखेष्वनारतः प्रवृत्तिनिवृत्तिशून्यः ॥ ४३–४७ ॥ यस्यासावजडा संवित् अजडब्रह्मगोचरवृत्तिर्भवति ॥ ४८ ॥ तत्तत्फलं अनपेक्ष्यैव ॥ ४९ ॥ सर्वेन्द्रियार्थेषु **मौनवान्** । **गतोद्वेगः** विगताभिसन्धिः ॥ ५०–५३ ॥ यथाप्राप्तं **सममेव** ॥ ५४–५६ ॥ **यत्र** कुत्रापि उद्वेगानन्दरहितः ॥ ५७ ॥ स्वातिरिक्तविषये **सर्वेच्छा** इति ॥ ५८ ॥ आत्मात्मीयविषयकजन्मस्थितिविनाशेषु ॥ ५९–६२ ॥

विदेहमुक्तस्थितिः

जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ ६३ ॥

[1] सर्वेच्छाकलनाः शंकाः—अ.  [2] परिस्पृहः—अ १.

विदेहमुक्तो नोदेति नास्तमेति न शाम्यति ।
न सन्नासन्न दूरस्थो न चाहं न च नेतरः ॥ ६४ ॥
ततः स्तिमितगम्भीरं न तेजो न तमस्ततम् ।
अनाख्यमनभिव्यक्तं सत् किंचिदवशिष्यते ॥ ६५ ॥
न शून्यं नापि चाकारि न दृश्यं नापि दर्शनम् ।
न च भूतपदार्थौघसदनन्ततया स्थितम् ॥ ६६ ॥
किमप्यव्यप[1]देशात्मा पूर्णात् पूर्णतराकृतिः ।
न सन्नासन्न सद्[2]सन्न भावो भावनं न च ॥ ६७ ॥
चिन्मात्रं चैत्यरहितमनन्तमजरं शिवम् ।
अनादिमध्यपर्यन्तं [3]यदनाधि निरामयम् ॥ ६८ ॥
द्रष्टृदर्शनदृश्यानां मध्ये यद्दर्शनं स्मृतम् ।
नातः परतरं किंचिन्निश्चयोऽस्त्यपरो मुने ॥ ६९ ॥

ब्रह्मज्ञानान्तराळफलजीवन्मुक्तस्थितिमुक्त्वा ब्रह्मज्ञानमुख्यफलविदेहमुक्तस्थितिमाह—जीवन्मुक्तेति । स्वदेहे कालसात्कृते, स्थिते वा तत्राभिमत्यभावात्, विशत्यदेहमुक्तत्वम् ॥ ६३ ॥ विदेहमुक्तस्य स्वातिरिक्तविषयकवृत्तिसामान्याभावमाह—विदेहेति । स्वमात्रावस्थितेः सदोदितत्वेन सप्रतियोगिकोदयास्तमनाभावात् । न सन् नेतरः, न हि तस्य सदसद्दूरान्तिकस्वपरवृत्तिरुदेति, विदेहमुक्तस्य निष्प्रतियोगिकब्रह्ममात्रत्वात् ॥ ६४ ॥ ततः किमित्यत आह—**तत इति ।** ततः ब्रह्ममात्रप्रबोधानन्तरं स्तिमितगम्भीरं, निस्तरङ्गपूर्णानन्दसमुद्रत्वात् । न भौतिकं तेजः तमो वा विद्यते । यत एवमतः स्वेन रूपेण

[1] देश्या—अ. [2] सन्ना—अ २, क.
[3] यदनादि—अ, अ २, क.

**ततम्** । नामरूपाभावात् **अनाख्यमनभिव्यक्तं सदेवावशिष्यते** । **किंचिच्छब्दो** निष्प्रतियोगिकत्वख्यापक (इत्यर्थः) ॥ ६५ ॥ यत् एवमवशिष्टं तत् किं शून्यं अशून्यं दृश्यं अदृश्यं वा इत्यत आह—**नेति** । स्वातिरेकेण **भूतपदार्थौघसत्त्व-पुरस्सरं न ह्यनन्ततया** स्थितम्, परिच्छेदापरिच्छेदकलनाऽसंभवात् ॥ ६६ ॥ केन रूपेण अयं विदेहमुक्तो निर्देष्टव्य इत्यत आह—**किमपीति** । केन प्रमाणेनापि व्यपदेष्टुमशक्यत्वात् । **पूर्णात् पूर्णतराकृतिः** "पूर्णमेवावशिष्यते" इति । यत्स्वरूपं सदसदादिकलनाविरळं नातः परं किंचिदस्तीत्याह—' **न सदिति** । **न सत्** अचाक्षुषत्वात् । **नासत्** सद्रूपत्वात् । **न सदसत्** तेजस्तिमिरवद्विरोधात् । **न भावः**—अभूत्वा भवतीति भावो घटादिः, तद्विलक्षणत्वात् । **न च भावनं** अन्तःकरणवैरळ्यात् ॥ ६७ ॥ **चिन्मात्रं** **अचिन्मात्रापह्नवतो** निष्प्रतियोगिकत्वात् । चेतोभवं **चैत्यं** विश्वं, तदपवादाधिकरणत्वात् **तद्रहितम्** । **अनन्तं** त्रिविधपरिच्छेदशून्यत्वात् । **अजरं** षडूर्मिवर्जितत्वात् । **शिवं** स्वातिरिक्ताशिवग्रासत्वात् । स्वोत्पत्तिस्थितिप्रळयाभावात् **अनादिमध्यपर्यन्तम्** । **यदनाधि** तापत्रयाभावात् । **निरामयं** आमयास्पदशरीरवैरळ्यात् । चिन्मात्रमेव विदेहमुक्तरूपमित्यर्थः ॥ ६७ ॥ चिन्मात्रत्वं कथमित्यत आह—**द्रष्ट्रिति** । स्वविकल्पितद्रष्टृदर्शनदृश्यानां **मध्ये यद्दर्शनं** त्रिपुट्यवभासकं ज्ञानस्वरूपं तदेव चिन्मात्रमिति सर्ववेदान्तनिश्चितोऽर्थः । **नातः परतरं अपरः** किंचिन्निश्चयोऽस्तीत्यर्थः ॥ ६९ ॥

शुकभ्रमनिवृत्तिः

स्वयमेव त्वया ज्ञातं गुरुतश्च पुनः श्रुतम् ।
स्वसंकल्पवशाद्बद्धो निःसंकल्पाद्विमुच्यते ॥ ७० ॥
तेन स्वयं त्वया ज्ञातं ज्ञेयं यस्य महात्मनः ।
भोगेभ्यो ह्यरतिर्जाता दृश्याद्वा सकला[1]दिह ॥ ७१ ॥

[1] दपि—उ.

प्राप्तं प्राप्तव्यमखिलं भवता पूर्णचेतसा ।
स्वरूपे [1]पतसि ब्रह्मन् मुक्तस्त्वं भ्रान्तिमुत्सृज ॥ ७२ ॥
अतिबाह्यं तथा बाह्यमन्तराभ्यन्तरं धियः ।
शुक पश्यन्न पश्येस्त्वं साक्षी संपूर्णकेवलः ॥ ७३ ॥

एवं **स्वयमेव** । स्वातिरिक्तसङ्कल्पभावाभावौ बन्धमोक्षहेतू भवत इत्याह—**स्वेति** ॥ ७० ॥ श्रीशुकं स्तुवन् प्रकरणार्थमुपसंहरति—**तेनेति** । य एवं जातमात्रेण परमार्थतत्त्ववित् तेन त्वया स्वयमेव आचार्योपदेशमन्तरा यत् स्वावशेषतया ज्ञेयं तत् स्वमात्रमिति **ज्ञातं, यस्य महात्मनः** तव **भोगेभ्यः सकलदृश्यवर्गादिहारतिः** जाता देहभूता(?) ॥ ७१ ॥ यत्प्राप्तव्यं तदखिलं अक्षतं ब्रह्म स्वमात्रमिति **प्राप्तं** हे **ब्रह्मन्** । यतः **स्वरूपे पतसि** अतः स्वातिरिक्तास्तित्वभ्रमतो **मुक्तोऽसि,** अमुक्तत्व**भ्रान्तिमुत्सृज** ॥ ७२ ॥ बाह्यान्तःकलनाविरळं ब्रह्म स्वमात्रमिति पश्यसि स्वातिरिक्तधिया न पश्यसि, अतस्त्वं ब्रह्मैव भवसीत्याह—**अतीति** । स्वातिरिक्तं न किंचिदस्तीति साक्षादीक्षत इति **साक्षी** ॥ ७३ ॥

शुकविश्रान्तिः

विशश्राम शुकस्तूष्णीं स्वस्थे परमवस्तुनि ।
वीतशोकभयायासो निरीहश्छिन्नसंशयः ॥ ७४ ॥
जगाम शिखरं मेरोः समाध्यर्थमखण्डितम् ॥ ७५ ॥
तत्र वर्षसहस्राणि निर्विकल्पसमाधिना ।
देशे स्थित्वा शशामासावात्मन्यस्नेहदीपवत् ॥ ७६ ॥

[1] तपसि—अ २.

व्यपगतकलनाकलङ्कशुद्धः स्वयममलात्मनि पावने पदेऽसौ ।
सलिलकण इवाम्बुधौ महात्मा विगलितवासनमेकतां जगाम ॥

इति महोपनिषत् ॥

केवलब्रह्ममात्रोऽसीति जनकेनैवमुक्तो विशश्राम ॥ ७४–७७ ॥ इति-महोपनिषच्छब्दौ श्रीशुकजनकाख्यायिकाद्वितीयाध्यायपरिसमाप्त्यर्थौ ॥

इति द्वितीयोऽध्यायः

---

# तृतीयोऽध्यायः

निदाघस्य विचारः

निदाघो नाम मुनिराट् प्राप्तविद्यश्च बालकः ।
विहृतस्तीर्थयात्रार्थं पित्राऽनुज्ञातवान् स्वयम् ॥ १ ॥
सार्धत्रिकोटितीर्थेषु स्नात्वा गृहमुपागतः ।
स्वोदन्तं कथयामास ऋभुं नत्वा महायशाः ॥ २ ॥
सार्धत्रिकोटितीर्थेषु स्नानपुण्यप्रभावतः ।
प्रादुर्भूतो मनसि मे विचारः सोऽयमीदृशः ॥ ३ ॥

ऋभुनिदाघाख्यायिकामवतारयन् तीर्थयात्रा सत्वशुद्धिद्वारा ज्ञानहेतुरिति प्रकटनपूर्वकं निदाघतीर्थयात्राप्रभववैराग्यप्रकटनार्थं तृतीयाध्याय आरभ्यते— निदाघ इत्यादिना ॥ १–३ ॥

प्रपञ्चस्य अनित्यत्वम्

जायते मृतये लोको म्रियते जननाय च ।
अस्थिराः सर्व एवेमे सचराचरचेष्टिताः ॥ ४ ॥
सर्वापदां पदं पापा भावा विभवभूमयः ।
अयःशलाकासदृशाः परस्परमसङ्गिनः ।
[1]श्लिष्यन्ते केवला भावा मनःकल्पनयाऽनया ॥ ५ ॥
भावेष्वरतिरा[2]याता पथिकस्य मरुष्विव ।
शाम्यतीदं कथं दुःखमिति तप्तोऽस्मि चेतसा ॥ ६ ॥
चिन्तानिचयचक्राणि नानन्दाय धनानि मे ।
संप्रसूतकलत्राणि गृहाण्युग्रापदामिव ॥ ७ ॥
इयमस्मिन् स्थितोदारा संसारे परिपेलवा ।
श्रीर्मुने परिमोहाय साऽपि नूनं न शर्मदा ॥ ८ ॥
आयुः पल्लवकोणाग्रलम्बाम्बुकण[3]भङ्गुरम् ।
उन्मत्त इव संत्यज्य यात्यकाण्डे शरीरकम् ॥ ९ ॥
विषयाशीविषासङ्गपरिजर्झरचेतसाम् ।
अप्रौढात्मविवेकानामायुरायासकारणम् ॥ १० ॥
युज्यते वेष्टनं वायोराकाशस्य च खण्डनम् ।
ग्रथनं च तरङ्गाणामास्था नायुषि युज्यते ॥ ११ ॥

[1] शिष्य—अ, अ १. शुष्य—मु. [2] याति—उ, उ १.
[3] संनिभं—उ, उ १.

[1]प्राप्यं संप्राप्यते येन भूयो येन न शोच्यते ।
पराया निर्वृतेः स्थानं यत्तज्जीवितमुच्यते ॥ १२ ॥
तरवोऽपि हि जीवन्ति जीवन्ति मृगपक्षिणः ।
स जीवति मनो यस्य मननेनोपजीवति ॥ १३ ॥
जातास्त एव जगति जन्तवः साधुजीविताः ।
ये पुनर्नेह जायन्ते शेषा जरठगर्दभाः ॥ १४ ॥
भारो विवेकिनः शास्त्रं भारो ज्ञानं च रागिणः ।
अशान्तस्य मनो भारं भारोऽनात्मविदो वपुः ॥ १५ ॥

कोऽयं विचार इत्यत्र स्वातिरिक्तप्रपञ्चस्य अनित्यत्वं प्रकटयति—**जायत इति** । अयं लोको घटीयन्त्रवत् जन्ममरणे प्राप्नोति । अतोऽयमस्थिर इत्यर्थः ॥ ४ ॥ मनःकल्पितदेहादिभावा अयश्शलाकापुञ्जवत् असङ्गिनो भूत्वा श्लिष्यन्त इत्याह—**सर्वापदामिति** । **भावाः** चक्षुरादयः । एते भावाः **मनःकल्पनया** पेटिकायां अयश्शलाकापुञ्जवत् एकत्र **श्लिष्यन्ते,** संहता भवन्तीत्यर्थः ॥ ५ ॥ मम तु **भावेष्विति** । स्वातिरिक्तस्फुरणप्रभवं **इदम्** ॥ ६ ॥ दारपुत्रगृहधनादिषु सत्सु दुःखस्यावसरस्ते कथमित्यत आह—**चिन्तेति** ॥ ७ ॥ ऐहिकश्रीरपि मे न हि सुखदेत्याह—**इयमिति** । क्षणिकविभवा **श्रीः** ॥ ८ ॥ दीर्घमायुरवाप्य सुखं तिष्ठेत्यत्र अतिचञ्चलं आयासकारणं भातीत्याह—**आयुरिति** ॥ ९–१० ॥ एतावन्तं कालं देहप्राणसंयोगो भवतीत्यत्र—**युज्यत इति** ॥ ११ ॥ एवं चेत् जीवितं सफलमित्याह—**प्राप्यमिति** । **पराया निर्वृतेः स्थानं** परनिर्वृतिस्थानं ब्रह्मेति प्राप्यविशेषणम् ॥ १२ ॥ चिदस्मीति यन्मनो मननकृत् तज्जीवनं सार्थकमित्याह—**तरवोऽपीति** ॥ १३ ॥ ये न पुनः जायन्ते त एव जाताः तदितरे वृद्धखरोपमा भवेयुरित्याह—**जाता इति** ॥ १४ ॥ स्वाङ्गदेहधारणं अनर्थकारणमित्याह—**भार इति** ॥ १५ ॥

[1] प्राप्य—उ, अ २.

अहंकारमनस्तृष्णानामनर्थकरत्वम्

अहंकारवशादापदहंकाराद्दुराधयः ।
अहंकारवशादीहा नाहंकारात् परो रिपुः ॥ १६ ॥
अहंकारवशाद्यद्यन्मया भुक्तं चराचरम् ।
तत्तत् सर्वमवस्त्वेव वस्त्वहंकाररिक्तता ॥ १७ ॥
इतश्चेतश्च सुव्यग्रं व्यर्थमेवा[1]भिधावति ।
मनो दूरतरं याति ग्रामे [2]कौलेयको यथा ॥ १८ ॥
क्रूरेण जडतां याता[तः] तृष्णाभार्याऽनुगामिना ।
[3]वशः [2]कौलेयकेनैव ब्रह्मन् मुक्तोऽस्मि चेतसा ॥ १९ ॥
अप्यब्धिपानान्महतः सुमेरून्मूलनादपि ।
अपि वह्न्यशनाद्ब्रह्मन् विषमश्चित्तनिग्रहः ॥ २० ॥
चित्तं कारणमर्थानां तस्मिन् सति जगत्त्रयम् ।
तस्मिन् क्षीणे जगत् क्षीणं तच्चिकित्स्यं प्रयत्नतः ॥ २१ ॥
यां यामहं मुनिश्रेष्ठ संश्रयामि गुणश्रियम् ।
तां तां कृन्तति मे तृष्णा तन्त्रीमिव कुमूषिका ॥ २२ ॥
पदं करोत्यलङ्घ्येऽपि [4]तृप्ताऽपि फलमीहते ।
चिरं तिष्ठति नैकत्र तृष्णा चपलमर्कटी ॥ २३ ॥
क्षणमायाति पातालं क्षणं याति नभस्स्थलम् ।
क्षणं भ्रमति दिक्कुञ्जे तृष्णा हृत्पद्मषट्पदी ॥ २४ ॥

[1] नु—उ.
[2] कौशे—अ, अ १.
[3] यशः—क.
[4] तृप्तो—उ १. तृष्णा—अ १.

सर्वसंसारदुःखानां तृष्णैका दीर्घदुःखदा ।
अन्तःपुरस्थमपि या योजयत्यतिसंकटे ॥ २५ ॥
तृष्णाविषूचिकामन्त्रश्चिन्तात्यागो हि स द्विज ॥ २६ ॥

अतदहंभावोऽस्य रिपुः, तद्विपरीतं वस्त्वित्याह—**अहङ्कारेति** ॥१६–१७॥ स्वातिरिक्तमनःप्रचारो व्यर्थ इत्याह—**इत इति** । **कौलेयकः** श्वा ॥ १८ ॥ तृष्णाविशिष्टचेतसा भुक्तोऽस्मीत्याह—**क्रूरेणेति** ॥ १९ ॥ तथा चेच्चेतोनिग्रहः कार्य इत्यत आह—**अपीति** ॥ २० ॥ उपायतः चेतो निगृहीतव्यमित्याह—**चित्तमिति** । ब्रह्मातिरेकेण चित्तं नास्तीत्युपायेन **तस्मिन् क्षीणे** ॥ २१ ॥ सर्वानर्थकरी स्वातिरिक्तवस्तुगोचरतृष्णा, चिन्तात्यागतः सा शुष्यतीत्याह—**यामिति** ॥ २२–२५ ॥ तृष्णापिशाचोत्सारणमन्त्रः ॥ २६ ॥

देहतदवस्थाकुत्सनम्

स्तोकेनानन्दमायाति स्तोकेनायाति खेदताम् ।
नास्ति देहसमः शोच्यो नीचो गुणविवर्जितः ॥ २७ ॥
कलेबरमहंकारगृहस्थस्य महागृहम् ।
लुठत्वभ्येतु वा स्थैर्यं किमनेन गुरो मम ॥ २८ ॥
पङ्क्ति[1]बद्धेन्द्रियपशुं वल्गत्तृष्णागृहाङ्ग[2]णम् ।
चित्तभृत्यजनाकीर्णं नेष्टं देहगृहं मम ॥ २९ ॥
जिह्वामर्कटिकाक्रान्तवदनद्वारभीषणम् ।
[3]दृष्टदन्तास्थिशकलं नेष्टं देहगृहं मम ॥ ३० ॥

[1] पङ्क्ते—अ. [2] नम्—अ १, क.
[3] दृष्टम—उ. दृष्टं—अ १.

रक्तमांसमयस्यास्य [1]सबाह्याभ्यन्तरे मुने ।
नाशैकधर्मिणो ब्रूहि कैव कायस्य रम्यता ॥ ३१ ॥
तटित्सु शरदभ्रेषु गन्धर्वनगरेषु च ।
स्थैर्यं येन विनिर्णीतं स विश्वसितु विग्रहे ॥ ३२ ॥
शैशवे गुरुतो भीतिर्मातृतः पितृतस्तथा ।
जनतो ज्येष्ठबालाच्च शैशवं भयमन्दिरम् ॥ ३३ ॥
स्वचित्तबिलसंस्थेन नानाविभ्रमकारिणा ।
बलात् कामपिशाचेन विवशः परिभूयते ॥ ३४ ॥
दासाः [2]पुत्राः स्त्रियश्चैव बान्धवाः सुहृदस्तथा ।
हसन्त्युन्मत्तकमिव नरं वार्धककम्पितम् ॥ ३५ ॥
दैन्यदोषमयी दीर्घा वर्धते वार्धके स्पृहा ।
सर्वापदामेकसखी हृदि दाहप्रदायिनी ॥ ३६ ॥

नानादुःखास्पदशरीरेण किं मे स्यात्? तत्तिष्ठतु गच्छतु वेत्याह—**स्तोकेनेति** ॥ २७–२८ ॥ कदाऽपि न मे बहुदोषास्पदशरीरमिष्टमित्याह—**पङ्क्तीति** ॥ २९–३२ ॥ तत्प्रविभक्तशैशवाद्यवस्थां कुत्सयति—**शैशव इति** ॥ ३३–३६ ॥

संसारस्य दुःखमयत्वम्

क्वचिद्वा विद्यते यैषा संसारे सुखभावना ।
[3]आखुः स्तम्बमिवासाद्य कालस्तामपि कृन्तति ॥ ३७ ॥

[1] न बा—क. [2] पुत्रास्य—उ. [3] आयु—अ २, उ.

तृणं पांसुं महेन्द्रं च सुवर्णं मेरुसर्षपम् ।
आत्मंभरितया सर्वमात्मसात्कर्तुमुद्यतः ।
कालोऽयं सर्वसंहारी तेनाक्रान्तं जगत्त्रयम् ॥ ३८ ॥

यद्यपि जीवतः संसारे सुखभावना स्यात्, तदा कालः तदायुरपहरति, ततः संसारे सुखलेशोऽपि नास्तीत्याह—कचिदिति ॥ ३७ ॥ मृत्युना सर्वं कबळितं भवतीत्याह—तृणमिति ॥ ३८ ॥

स्त्रीजनकुत्सनम्

मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे ।
स्नाय्वस्थिग्रन्थि[1]शालिन्याः स्त्रियः किमिव शोभनम् ॥ ३९ ॥
त्वङ्मांसरक्तबाष्पाम्बु पृथक्कृत्वा विलोच[क]ने ।
समालोक[च]य रम्यं चेत् किं मुधा परिमुह्यसि ॥ ४० ॥
मेरुशृङ्गतटोल्लासिगङ्गाजलरयोपमा ।
दृष्टा यस्मिन् मुने मुक्ताहारस्योल्लासशालिता ॥ ४१ ॥
श्मशानेषु दिगन्तेषु स एव ललनास्तनः ।
श्वभिरास्वाद्यते काले लघुपिण्डमिवान्धसः ॥ ४२ ॥
केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः ।
दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरम् ॥ ४३ ॥
ज्वलतामतिदूरेऽपि सरसा अपि नीरसाः ।
स्त्रियो हि नरकाग्नीनामिन्धनं चारु दारुणम् ॥ ४४ ॥

[1] शालिन्यः—उ १.

कामनाम्ना किरातेन विकीर्णा मुग्धचेतसः ।
नार्यो नरविहङ्गानामङ्गबन्धनवागुराः ॥ ४५ ॥
जन्म[1]पल्वलमत्स्यानां चित्तकर्दमचारिणाम् ।
पुंसां दुर्वासनारज्जुर्नारी बडिशपिण्डिका ॥ ४६ ॥
सर्वेषां दोषरत्नानां सुसमुद्गिकयाऽनया ।
दुःखशृङ्खलया नित्यमलमस्तु मम स्त्रिया ॥ ४७ ॥
यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क्व भोगभूः ।
स्त्रियं त्यक्त्वा जगत् त्यक्तं जगत् त्यक्त्वा सुखी भवेत् ॥४८॥
दिशोऽपि न हि दृश्यन्ते देशोऽप्यन्योपदेशकृत् ।
शैला अपि विशीर्यन्ते शीर्यन्ते तारका अपि ॥ ४९ ॥

सर्वानर्थमूलस्त्रीजनं कुत्सयन् तद्भ्रमत्यागिनः परमसुखिनो भवन्तीत्याह—**मांसेति । यन्त्रलोलेऽङ्गपञ्जरे** अवाच्यप्रदेशे शरीरे वा ॥ ३९ ॥ हे चेतः एवंरूपां स्त्रियं दृष्ट्वा वृथा मुह्यसीत्याह—त्वगिति । स्त्र्यङ्गवैशिष्ट्यं मोहहेतुः तदङ्गविश्लेषो हेयधीहेतुः इत्यर्थः ॥ ४० ॥ किंच—मेर्विति । **यस्मिन् योषित्स्तनमण्डले** विराजमानमुक्ताहारस्य **मेरुशृङ्गतटोल्लासिगङ्गाजलरयोपमा दृष्टा तादृशयोषित्स्तनः** कालान्तरे **श्वभिः** आस्वादनीयो भवति ॥ ४१–४२ ॥ किंच—**केशेति । केशकज्जलाद्याकल्पतो लोचनप्रियाः** "स्त्रियं नपुंसकं गृध्रं" इति श्रुतितो **दुःस्पर्शाः पुरुषकृतदुष्कृताग्निशिखा नार्यः पुरुषतृणकूटं दहन्तीत्यर्थः** ॥ ४३ ॥ नरकाग्नीन्धनराशिः स्त्रीजन इत्याह—**ज्वलतामिति** ॥ ४४ ॥ किंच—**कामेति** ॥ ४५–४६ ॥ पुरुषवीर्यायुःक्षपणहेतुत्वात् एतादृशस्त्रिया **मेऽलमिति** प्राह—**सर्वेषामिति** । नानादोषरत्ननिक्षेपपेटिकया **कुस्त्रिया** इतो **मेऽलं**, अस्याः पादशृङ्खलात्वप्रसिद्धेरित्यर्थः ॥ ४७ ॥ विवेकी सर्वानर्थमूलभूतां स्त्रियं त्यक्त्वा स्वश्रेयः सम्पादयेदित्याह—**यस्येति** ॥ ४८ ॥

[1] पल्लव—उ.

स्वातिरिक्तदिगादिविश्वतदध्यक्षादिकलनायाः क्षणभङ्गुरत्वेन यन्नित्यं तदेव संश्रयणीयमित्याह—दिशोऽपीति ॥ ४९–५२ ॥

दिगादीनां क्षणभङ्गुरत्वम्

शुष्यन्त्यपि समुद्राश्च ध्रुवोऽप्यध्रुवजीवनः ।
सिद्धा अपि विनश्यन्ति जीर्यन्ते दानवादयः ॥ ५० ॥
परमेष्ठ्यपि निष्ठावान् हीयते हरिरप्यजः ।
भवोऽप्यभावमायाति जीर्यन्ते वै दिगीश्वराः ॥ ५१ ॥
ब्रह्मा विष्णुश्च रुद्रश्च सर्वा वा भूतजातयः ।
नाशमेवानुधावन्ति सलिलानीव बाडबम् ॥ ५२ ॥
आपदः क्षणमायान्ति क्षणमायान्ति संपदः ।
क्षणं जन्माथ मरणं सर्वं नश्वरमेव तत् ॥ ५३ ॥
अशूरेण हताः शूरा एकेनापि शतं हतम् ।
विषं विषयवैषम्यं न विषं विषमुच्यते ॥ ५४ ॥
जन्मान्तरघ्ना विषया एकजन्महरं विषम् ।
इति मे दोष[1]दावाग्निदग्धे संप्रति चेतसि ॥ ५५ ॥

यदुक्तमनुक्तं वा सर्वम ॥ ५३ ॥ विषतो विषयाधिक्यमाह—विषमिति ॥ ५४–५५ ॥

वैराग्यात् तत्त्वजिज्ञासा

स्फुर[2]न्ति हि न भोगाशा मृगतृष्णासरःस्वपि ।
अतो मां बोधयाशु त्वं तत्त्वज्ञानेन वै गुरो ॥ ५६ ॥

[1] वार्ता—अ. [2] न्तीह—उ.

नो चेन्मौनं समास्थाय निर्मानो गतमत्सरः ।

भावयन् मनसा विष्णुं लिपिकर्मार्पितोपमः ॥ ९७ ॥

इति महोपनिषत् ॥

यत एवं जातं अतः ॥ ९६ ॥ यद्युपेक्षां करोषि तदा **मौनम्** । ततः किं करोषीत्यत्र—**भावयन्निति** ॥ ९७ ॥ इत्यादिशब्दो निदाघपरिदेवनासमाप्त्यर्थः ॥

इति तृतीयोऽध्यायः

---

# चतुर्थोऽध्यायः

मोक्षोपायचतुष्टयम्

निदाघ तव नास्त्यन्यज्ज्ञेयं ज्ञानवतां वर ।

प्रज्ञया त्वं विजानासि ईश्वरानुगृहीतया ।

चित्तमालिन्यसंजातं मार्जयामि भ्रमं मुने ॥ १ ॥

मोक्षद्वारे द्वारपालाश्चत्वारः परिकीर्तिताः ।

शमो विचारः संतोषश्चतुर्थः साधुसङ्गमः ॥ २ ॥

एकं वा सर्वयत्नेन सर्वमुत्सृज्य संश्रयेत् ।

एकस्मिन् वशगे यान्ति चत्वारोऽपि वशं गताः ॥ ३ ॥

एवं स्वातिरिक्तकलनास्थितिमवगम्य परिदेवयन्तं स्वाभिमुखीकरणाय स्तुवन् भगवान् ऋभुः सोपायं परमार्थमुपदिशतीत्याह—निदाघेत्यादिना । अकृतार्थोऽस्मीति चित्तमालिन्यसञ्जातं भ्रमम् ॥ १ ॥ इदानीं मोक्षहेतु-

ज्ञानसाधनशमादिसाधुसङ्गमान्तेष्वेकस्मिन् साधिते तच्चतुष्टयमपि साधितं स्यादित्याह—**मोक्षेति** । शमः अन्तर्बाह्येन्द्रियनिग्रहः । कार्यकारणसङ्घाते कोऽहमित्यादिर्विचारः । प्राप्ताप्राप्तवस्तुषु अदृष्टखेदाखेदत्वं **सन्तोषः** । तथा च—

अप्राप्तं हि परित्यज्य सम्प्राप्ते समतां गतः ।
अदृष्टखेदाखेदो यः सन्तुष्ट इति कथ्यते ॥

इति श्रुतेः । ब्रह्मविदादिसमायोगः साधुसङ्गमः ॥ १–३ ॥

शास्त्रादिद्वारा आत्मावलोकनविधिः

शास्त्रैः सज्जनसंपर्कपूर्वकैश्च तपोदमैः ।
आदौ संसारमुक्त्यर्थं प्रज्ञामेवाभिवर्धयेत् ॥ ४ ॥
स्वानुभूतेश्च शास्त्रस्य गुरोश्चैवैक[1]वाक्यता ।
यस्याभ्यासेन तेनात्मा सततं चावलोक्यते ॥ ५ ॥

आदौ भवमुक्त्यनुकूलप्रज्ञावृद्धिः कार्येत्याह—**शास्त्रैरिति** ॥ ४ ॥ वेदान्तश्रवणप्रज्ञाऽभिवर्धनतः किं स्यादित्याशङ्क्य श्रुत्याचार्याभिमतस्वानुभूतिरुदेति, तया स्वात्मा अवलोक्यत इत्याह—**स्वानुभूतेरिति** ॥ ५ ॥

समाधिस्वरूपम्

संकल्पाशाऽनुसंधानवर्जनं चेत् प्रतिक्षणम् ।
करोषि तदचित्तत्वं प्राप्त एवासि पावनम् ॥ ६ ॥
चेतसो यदकर्तृत्वं तत् समाधानमीरितम् ।
तदेव केवलीभावं सा शुभा निर्वृतिः परा ॥ ७ ॥

[1] वाक्यतः—अ २, उ.

चेतसा संपरित्यज्य सर्वभावात्मभावनाम् ।
यथा तिष्ठसि तिष्ठ त्वं मूकान्धबधिरोपमः ॥ ८ ॥
सर्वं प्रशान्तमजमेकमनादिमध्यमाभास्वरं स्वदनमात्रमचैत्यचिह्नम् ।
सर्वं प्रशान्तमिति शब्दमयी च दृष्टिर्बोधार्थमेव हि मुधैव तदोमितीदम् ॥ ९ ॥
सर्वं किंचिदिदं दृश्यं दृश्यते [1]चेज्जगद्गतम् ।
चिन्निष्पन्दांशमात्रं तन्नान्यदस्तीति भावय ॥ १० ॥
नित्यप्रबुद्धचित्तस्त्वं कुर्वन् वाऽपि जगत्क्रियाम् ।
आत्मैकत्वं विदित्वा त्वं तिष्ठाक्षुब्धमहाब्धिवत् ॥ ११ ॥
तत्त्वावबोध एवासौ वासनातृणपावकः ।
प्रोक्तः समाधिशब्देन न तु तूष्णीमवस्थितिः ॥ १२ ॥
निरिच्छे संस्थिते रत्ने यथा लोकः प्रवर्तते ।
सत्तामात्रे परे तत्त्वे तथैवायं जग[2]द्गणः ॥ १३ ॥
अतश्चात्मनि कर्तृत्वमकर्तृत्वं च वै मुने ।
निरिच्छत्वादकर्ताऽसौ कर्ता संनिधिमात्रतः ॥ १४ ॥
ते द्वे ब्रह्मणि विन्देते कर्तृताऽकर्तृते मुने ।
यत्रैवैष चमत्कारस्तमाश्रित्य स्थिरो भव ॥ १५ ॥
तस्मान्नित्यमकर्ताऽहमिति भावनयेद्धया ।
परमामृतनाम्नी सा समतैवावशिष्यते ॥ १६ ॥

[1] च ज—क. यज्ञ—अ, अ १. चिज्ञ—मु. [2] द्रुणः—क, अ २.

स्वात्मावलोकनोपायः क इत्यत आह—**सङ्कल्पेति**। इदं मे स्यात् इदं मा भूत् इति सदा सङ्कल्पक्षयं करोषि चेत् तदधिकरणं **अचित्तत्वं** ब्रह्म प्राप्तोर्षीत्यर्थः ॥ ६ ॥ स्वातिरिक्तविलापनं करोमीत्यनभिसन्धिरेव स्वरूपमित्याह—**चेतस इति** । सर्वारम्भपरित्यागसिद्धः समाधिः । तत्रत्यसत्त्ववृत्तिक्षयात् यदवशिष्यते **तदेव केवलीभावं** अशेषविशेषासम्भवसिद्धब्रह्ममात्रम् । **सा शुभा परा निर्वृतिः** परमेयं तृप्तिरित्यर्थः ॥ ७ ॥ तत्रोपायमाचष्टे—**चेतसेति** । देहादिसर्वभावेषु आत्मात्मीयभावनां विहाय मूकान्धबधिरवत् तूष्णींभावलक्षण-ब्रह्मात्मना **तिष्ठे**त्यर्थः ॥ ८ ॥ कथं पुनः तूष्णीमवस्थातुं शक्यं ब्रह्मणः प्रशान्तमित्यादिशब्दवाच्यत्वादित्यत आह—**सर्वमिति** । स्वातिरिक्तं **सर्वं** प्रकर्षेण **शान्तं** अपह्नवं गतं, स्वतः परतो वा न जायते इत्यजं, **एकं** निष्प्रतियोगिकैक-रूपत्वात्, **अनादिमध्यं** संभूत्यादिकलनाविरळं, **आ** समन्तात् **भास्वरं** स्वयं-प्रकाशं, **स्वदनं** ज्ञानं तन्मात्रं चिन्मात्रमित्यर्थः । चैत्यावष्टम्भतः तदधिगमः स्यादित्यत आह—**अचैत्यचिह्नमिति** । स्वसिद्धेः चैत्यापह्नवपूर्वकत्वात् । **सर्वं प्रशान्तमित्यादि** या शब्दमयी दृष्टिः तद्बोधार्थमेव ओमित्यादिशब्दः । वस्तुतो नात्र शब्दप्रवृत्तिरस्ति, अशब्दत्वात्, "यतो वाचो निवर्तन्ते" इति श्रुतेः ॥ ९ ॥ स्वातिरेकेण यद्यत् दृश्यते तच्चिन्मात्रादतिरिक्तं नास्तीति भावयेत्याह—**सर्वमिति** । **चिन्निष्पन्दांशमात्रं तत्** चिद्विकल्पनामात्रं, **चितो** व्यतिरिक्तं **नान्यदस्तीति भावय** ॥ १० ॥ देहेन्द्रियादिव्यापृतस्य चिन्मात्रभावना कुत इत्यत आह—**नित्येति** । **जगत्क्रियां** लोकव्यापृतिम् । **तत्** स्वातिरिक्तं **नेति आत्मैकत्वं विदित्वा** । निस्तरंगाब्धिवत् आत्ममात्रमिदं सर्वं इति तूष्णीमा-स्स्वेत्यर्थः ॥ ११ ॥ जडोपि तूष्णीं तिष्टति, अस्य को विशेषः इत्याशङ्क्य, तूष्णीमवस्थानं निर्विकल्पसमाधिः न तु जडवदवस्थितिरित्याह—**तत्त्वेति** ॥ १२ ॥ व्युत्थितसमाधेः लोकप्रवृत्तिहेतुः क इत्यत आह—**निरिच्छ इति** । यथा **निरिच्छे** अप्रार्थिते नातिदूरे **रत्ने संस्थिते** सति **आलोकः प्रवर्तते** । यद्वा—**निरिच्छे** नितरां प्रार्थनीये **रत्ने** दिनमणौ **संस्थिते** उदिते सति **यथा लोकः** स्वे स्वे स्वकर्मणि **प्रवर्तते** । **तथा सत्तामात्रे परे तत्त्वे** करणग्रामप्रवृत्ति-

निमित्ते सति समाधितो व्युत्थितोऽयं जगद्गणः कर्ताऽहं अकर्ताऽहं इति वा प्रवर्तते ॥ १३ ॥ यत एवं स्वाज्ञादिदृष्टिमाश्रित्य कर्तृत्वाकर्तृत्वे भवतः, **अतश्चात्मनि कर्तृत्वाकर्तृत्वे** विहाय निर्विकल्पात्मना तिष्ठेति वाक्यशेषः । अकर्तृत्वादिकं कथमित्यत्र एवं कर्तव्यमिति निरिच्छत्वात् सङ्कल्पाभावात् **अकर्ताऽसौ** । **सन्निधिमात्रतः कर्ता** च भवति, करणग्रामप्रवृत्तिनिमित्तत्वात् ॥ १४ ॥ **ब्रह्मणि** एवं **कर्तृत्वाकर्तृत्वे विन्देते** । **यत्रैष चमत्कारः** कर्तृत्वाकर्तृत्वहेतुः तमात्मानमाश्रित्य **स्थिरो भवे**त्यर्थः ॥ १५ ॥ यस्मात् निष्प्रतियोगिकाकर्तृताधीः स्थिरीभावहेतुः **तस्मात्** । अकर्तृब्रह्माहमिति धिया सत्तास्वरूपेण परमामृतं सन्मात्रं नामाभिधानं यस्याः सा **परमामृतनाम्नी सा समतैवावशिष्यत** इति ॥ १६ ॥

जीवन्मुक्तस्थितिः

निदाघ शृणु [1]सत्त्वस्था जाता भुवि महागुणाः ।
ते नित्यमेवाभ्युदिताः मुदिताः ख इवेन्दवः ॥ १७ ॥
नापदि ग्लानिमायान्ति निशि हेमाम्बुजं यथा ।
नेहन्ते प्रकृतादन्यद्रमन्ते शिष्टवर्त्मनि ॥ १८ ॥
आकृत्यैव विराजन्ते मैत्र्यादिगुणवृत्तिभिः ।
समाः समरसाः सौम्याः सततं साधुवृत्तयः ॥ १९ ॥
अब्धिवद्धृतमर्यादा भवन्ति विशदाशयाः ।
नियतिं न विमुञ्चन्ति महान्तो भास्करा इव ॥ २० ॥

यद्दृष्ट्या समता अवशिष्यते तेषां जीवन्मुक्तानां स्थितिमाचष्टे— **निदाघे**ति । **सत्त्वस्था** निर्विकल्पसमाधिनिष्ठा **जाता भुवि महागुणाः**,

[1] तत्त्व—क.

विद्वच्छ्लाघनीयचरितत्वात् । ते नित्यमेवाभ्युदिता मुदिताः ख इवेन्दवः शरच्चन्द्रवत् प्रसन्नचित्ताः ॥ १७–१८ ॥ मैत्री करुणा मुदितोपेक्षेति जीवन्मुक्तत्वसूचकगुणाश्चत्वारः । सर्वत्र समाः ॥ १९ ॥ पुरस्तादुदितसूर्यो न पश्चादुदेतीतिवत् नियतिम् ॥ २० ॥

विचारस्वरूपम्

कोऽहं कथमिदं चेति संसारमलमाततम् ।
प्रविचार्यं प्रयत्नेन प्राज्ञेन सह साधुना ॥ २१ ॥
नाकर्मसु नियोक्तव्यं नानार्येण सहावसेत् ।
द्रष्टव्यः सर्वसंहर्ता न मृत्युरवहेलया ॥ २२ ॥
शरीरमस्थि मांसं च त्यक्त्वा रक्ताद्यशोभनम् ।
भूतमुक्तावली[1]तन्तुं चिन्मात्रमवलोकयेत् ॥ २३ ॥
उपादेयानुपतनं हेयैकान्त[2]विसर्जनम् ।
यदेतन्मनसो रूपं [3]तद्बाह्यं विद्धि नेतरत् ॥ २४ ॥
गुरुशास्त्रोक्तमार्गेण स्वानुभूत्या च चिद्घने ।
ब्रह्मैवाहमिति ज्ञात्वा वीतशोको भवेन्मुनिः ॥ २५ ॥

यत्र निशितासिशतपातनमुत्पलताडनवत्सोढव्यं, अग्निदाहो हिमसेचनमिव, अङ्गारावर्तनं चन्दनचर्चेव, निरवधिनाराच[4]विकिरपातो निदाघविनो[5]दनधारागृहशीकरवर्षणमिव, स्व[6]शिरश्छेदः सुख-

[1] तन्तु—अ, अ १.
[2] विव—अ, अ १.
[3] तद्बद्धं—अ, अ १.
[4] निकिर—उ. निकर—उ १.
[5] दधा—अ, अ १. दनोधा—उ.
[6] शरीरछे—क.

निद्रेव, मूकीकरणमाननमुद्रेव, बाधिर्यं महानुपचय इव, इदं नावहेलनया भवितव्यं, एवं दृढवैराग्याद्बोधो भवति ॥ २९-१ ॥

गुरुवाक्यसमुद्भूतस्वानुभूत्याऽतिशुद्धया ।
यस्याभ्यासेन तेनात्मा सततं चावलोक्यते ॥ २६ ॥
विनष्टदिग्भ्रमस्यापि यथापूर्वं विभाति दिक् ।
तथा विज्ञानविध्वस्तं जगन्नास्तीति भावय ॥ २७ ॥
न धनान्युपकुर्वन्ति न मित्राणि न बान्धवाः ।
न कायक्लेशवैधुर्यं न तीर्थायतनाश्रयः ।
केवलं तन्मनोमात्रजये[1]नासाद्यते पदम् ॥ २८ ॥

जीवन्मुक्तताहेतवे कोऽहमिति । गुरुणा साकं विचार्णीयं स्वात्मतत्त्वमित्यर्थः ॥ २१ ॥ स्वमनः नाकर्मसु नियोक्तव्यं, स्वयं नानार्येण सहावसेत् । धीमता द्रष्टव्यः । स्वातिरिक्तं मृतिं नयतीति मृत्युः सर्वोपसंहर्ता साक्षी स्वात्मतया द्रष्टव्यः नावहेळया पृथग्दृष्टव्येत्यर्थः ॥ २२ ॥ तद्दर्शनोपायमाह— शरीरमिति । भूतमुक्तावलीतन्तुं सूत्रात्मानं तद्गतहेयांशापायसिद्धं चिन्मात्रमवलोकयेत् ॥ २३ ॥ किं तत् चिन्मात्रमित्यत्र, मनस्तत्कार्यबाह्यमिति जानीहीत्याह—उपादेयेति । यदेतन्मनसो रूपं तदपह्नवसिद्धं चिन्मात्रं तु तद्बाह्यं विद्धि, नेतरत् ॥ २४ ॥ तद्वेदनोपायमाह—गुर्विति । प्रतीचि ब्रह्मैवाहमिति ज्ञात्वा ज्ञानसमकालं वीतशोको भवेन्मुनिः, "तरति शोकमात्मवित्" इति श्रुतेः ॥ २९ ॥ एवं बोधोपायो देहनैराश्यमित्याह— यत्रेति । निर्विशेषब्रह्मबोधो भवति ॥ २९-१ ॥ विज्ञानेन आत्मसाक्षात्कारो भवतीत्याह—गुर्विति ॥ २६ ॥ स्वातिरिक्तप्रपञ्चे सति कथमात्मा द्रष्टुं शक्य इत्यत्र सदृष्टान्तमाह—विनष्टेति । स्वात्मावरणरूपं जगत् ॥ २७ ॥

[1] न व्याप्नु—अ.

विज्ञानातिरिक्तसाधनैरप्यात्मा द्रष्टुं शक्य इत्यत्र विज्ञानातिरिक्तसाधनादेः मनःकल्पितत्वेन न कार्यकारित्वं, सर्वानर्थकल्पकमानसासम्भवविज्ञाने तु स्वात्मा ज्ञातुं शक्यत इत्याह—न धनानीति ॥ २८ ॥

शमस्वरूपं, तत्फलं च

यानि दुःखानि या तृष्णा दुःसहा ये दुराधयः ।
शान्तचेतःसु तत् सर्वं तमोऽर्केष्विव नश्यति ॥ २९ ॥
मातरीव परं [1]यान्ति विषमाणि मृदूनि च ।
विश्वासमिह भूतानि सर्वाणि शमशालिनि ॥ ३० ॥
न रसायनपानेन न [2]लक्ष्म्यालिङ्गितेन च ।
न तथा सुखमाप्नोति शमेनान्तर्यथा जनः ॥ ३१ ॥
श्रुत्वा स्पृष्ट्वा च भुक्त्वा च दृष्ट्वा ज्ञात्वा शुभाशुभम् ।
न हृष्यति [3]ग्लायति यः स शान्त इति कथ्यते ॥ ३२ ॥
तुषारकरबिम्बाच्छं मनो यस्य निराकुलम् ।
मरणोत्सवयुद्धेषु स शान्त इति कथ्यते ॥ ३३ ॥
तपस्विषु बहुज्ञेषु याजकेषु नृपेषु च ।
बलवत्सु गुणाढ्येषु शमवानेव राजते ॥ ३४ ॥

तृष्णादुःखादौ सति कथं तत्पदं आसादितुं शक्यमित्यत्र सूर्ये ध्वान्तवत् संशान्तमानसे तृष्णादुःखादिकं सर्वं विलीयत इत्याह—यानीति ॥ २९ ॥ शमवति योगिनि सर्वं समतां भजतीत्याह—मातरीति । यथा इह मातरं

[1] याति—क.
[2] लक्ष्म्या—अ २, उ.
[3] श्लघयति—अ.

विश्वासपूर्वकं दुष्टादुष्टपुत्रजातं भजति तथा शमवति योगिनि दुष्टादुष्टभूतजातं समभावं भजतीत्यर्थः ॥ ३० ॥ शमादृते सुखहेतुर्नास्तीत्याह—**नेति** ॥ ३१ ॥ शान्तलक्षणमाह—**श्रुत्वेति** । इष्टानिष्टविषयकहर्षामर्षशून्यः शान्त इत्यर्थः ॥ ३२ ॥ किंच—**तुषारेति** ॥ ३३ ॥ तपस्व्यादिषु शमवतः श्रैष्ठ्यमाह—**तपस्विष्विति** ॥ ३४ ॥

सन्तोषः

संतोषामृतपानेन ये शान्तास्तृप्तिमागताः ।
आत्मारामा महात्मानस्ते महापदमागताः ॥ ३५ ॥
अप्राप्तं हि परित्यज्य संप्राप्ते समतां गतः ।
अदृष्टखेदाखेदो यः संतुष्ट इति कथ्यते ॥ ३६ ॥
नाभिनन्दत्यसंप्राप्तं प्राप्तं भुङ्क्ते यथेप्सितम् ।
यः स सौम्यसमाचारः संतुष्ट इति कथ्यते ॥ ३७ ॥
रमते धीर्यथाप्राप्ते साध्वीवान्तःपुराजिरे ।
सा जीवन्मुक्ततोदेति स्वरूपानन्ददायिनी ॥ ३८ ॥

शान्तस्वातिरिक्तविभ्रमा एव महत्पदं आत्मधिया भजन्तीत्याह—**सन्तोषेति** ॥ ३५ ॥ ब्रह्ममात्रसन्तुष्टलक्षणमाह—**अप्राप्तमिति** । **अप्राप्तं** स्वातिरिक्तभ्रमं, परमार्थदृष्टेरसंभवात् ॥ ३६–३७ ॥ यथासंप्राप्तवस्तुरतिरेव जीवन्मुक्त्युदयहेतुरित्याह—**रमत इति** । स्वान्तःपुरे **साध्वीव यथाप्राप्ते** वस्तुनि यस्य **धीः रमते** तस्य ब्रह्मानन्दकरी **जीवन्मुक्तता** उदेति आविर्भवतीत्यर्थः ॥३८॥

आत्मविश्रान्तस्य कृतकृत्यता

यथाक्षणं यथाशास्त्रं यथादेशं यथासुखम् ।
यथासंभवसत्सङ्गमिमं मोक्षपथक्रमम् ।
तावद्विचारयेत् प्राज्ञो यावद्विश्रान्तमात्मनि ॥ ३९ ॥

तुर्यविश्रान्तियुक्तस्य [1]निवृत्तस्य भवार्णवात् ।
जीवतोऽजीवतश्चैव गृहस्थस्याथवा यतेः ॥ ४० ॥
नाकृतेन कृतेनार्थो न श्रुतिस्मृतिविभ्रमैः ।
निर्मन्थर इवाम्भोधिः स तिष्ठति यथास्थितः ॥ ४१ ॥
सर्वात्मवेदनं शुद्धं यदोदेति तदात्मकम् ।
भाति [2]प्रसृतिदिक्कालबाह्यं चिद्रूपदेहकम् ॥ ४२ ॥
एवामात्मा यथा यत्र समुल्लासमुपागतः ।
तिष्ठत्याशु तथा तत्र तद्रूपश्च विराजते ॥ ४३ ॥

यावद्वस्तुमात्रविश्रान्तिः तावद्यथासंभवं ब्रह्म विचारयेत्, तेन जीवन्मुक्तिर्भवतीत्याह—**यथेति** । यावत् स्वचित्तं ब्रह्मविश्रान्तं भवति तावत् **यथाक्षणमि**त्यादिना "आ सुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया" इति श्रुत्यनुरोधेन सदा ब्रह्म **विचारयेदि**त्यर्थः ॥ ३९ ॥ तुर्यपादप्रविभक्ततुरीयं ब्रह्म स्वमात्रमिति तन्मात्रविश्रान्तमतेः कृतकृत्यतामाचष्टे—**तुर्येति** । व्रत्यादियत्यन्तेषु स्वातिरिक्तापह्नवसिद्धब्रह्मणि यः कोऽपि स्वमात्रधिया विश्राम्यति न तस्य कर्मकरणाकरणतः प्रयोजनमस्ति । अस्यां श्रुतौ स्मृतौ वा एवमभिहितं अन्यत्र अन्यथा अभिहितमिति च नह्यस्य **श्रुतिस्मृति**विरोध**विभ्रमो**ऽस्ति, निष्प्रतियोगिकब्रह्ममात्रावगतेः व्रत्याद्याश्रमचतुष्टयकर्मकरणाकरण-श्रुतिस्मृतिविरोधाविरोधविभ्रमापह्नवपूर्वकत्वात्, विद्वान् स्वमात्रमवशिष्यत इत्यर्थः ॥ ४०–४१ ॥ यदेवं ब्रह्म स्वमात्रमिति जानाति तदाऽयं तन्मात्रमवशिष्यते इत्युक्तार्थमेव पुनः दृढयति—**सर्वेति** । सर्ववर्जित**सर्वात्मवेदनं** निष्प्रतियोगिकब्रह्ममात्रज्ञानं **यदोदेति** तदा **तद्रूपो** भवतीत्यर्थः ॥ ४२–४३ ॥

[1] निर्वृत—अ २.
[2] प्रसृत—उ १.

दृश्यस्य मिथ्यात्वम्

यदिदं दृश्यते सर्वं जगत् स्थावरजङ्गमम् ।
तत् सुषुप्ताविव स्वप्नः कल्पान्ते प्रविनश्यति ॥ ४४ ॥
ऋतमात्मा परं ब्रह्म सत्यमित्यादिका बुधैः ।
कल्पिता व्यवहारार्थं यस्य संज्ञा महात्मनः ॥ ४५ ॥
यथा कटकशब्दार्थः पृथग्भावो न काञ्चनात् ।
न हेम कटकात्तद्वज्जगच्छब्दार्थता परा ॥ ४६ ॥
तेनेयमिन्द्रजाल[1]श्रीर्जागती प्रवितन्यते ।

दृश्यवस्तुनः सत्त्वे कथं विद्वान् स्वमात्रमवशिष्यते इत्यत आह—**यदिदमिति** । यथा स्वप्नः स्वापे विलीयते तथेदं **जगत्** स्वाज्ञदृष्ट्या **कल्पान्ते** नित्यादिप्रळयचतुष्टये विलीयते, परमार्थदृष्ट्या **कल्पान्ते** "ब्रह्ममात्रमसन्न हि" इति श्रुतिसिद्धब्रह्ममात्रज्ञानसमकालं विलीयते । अतो विद्वान् ब्रह्ममात्रमवशिष्यत इत्यर्थः ॥ ४४ ॥ ऋतमित्यादिशब्दानुविद्धं ब्रह्मेत्यत आह—**ऋतमिति** ॥ ४५ ॥ अभिधानं अभिधेयात् भिद्यते इत्यत्र तयोरेकत्वे दृष्टान्तमाचष्टे—**यथेति** । यथा कटकादयो विचार्यमाणे न हि सुवर्णादतिरिच्यन्ते, तथा अनृतानात्मजगच्छब्दार्थता, अनृतानात्मादिसापेक्ष-ऋतात्मेत्यभिधानजातमपि न ह्यभिधेयब्रह्मातिरिक्तं भवतीत्यर्थः, "पादा मात्रा मात्राश्च पादाः" इत्यभिधानाभिधेययोरैक्यश्रुतेः ॥ ४६ ॥ यदि ब्रह्मातिरेकेण विश्वमस्तीति मन्यसे तदा तत् मिथ्येति निश्चिन्वित्याह—**तेनेति** । येन हेतुना इयं ब्रह्मातिरिक्ता तेनेत्यर्थः ॥

दृश्यसञ्ज्ञासञ्ज्ञाभ्यां बन्धमोक्षौ

द्रष्टुर्दृश्यस्य सत्ताऽन्तर्बन्ध इत्यभिधीयते ॥ ४७ ॥

[1] श्रीजा—अ, अ २, उ १.

द्रष्टा दृश्यवशाद्बद्धो दृश्याभावे विमुच्यते ।
जगत्त्वमहमित्यादिसर्गात्मा दृश्यमुच्यते ॥ ४८ ॥
मनसैवेन्द्रजालश्रीर्जागती प्रवितन्यते ।
यावदेतत् संभवति तावन्मोक्षो न विद्यते ॥ ४९ ॥

दृश्यसङ्गासङ्गौ बन्धमोक्षहेतू भवत इत्याह—**द्रष्टुरिति** । **द्रष्टृदृश्ययोः योग एवान्तः सत्ता बन्धः** । दृश्यसत्त्वासत्त्वधीः बन्धमोक्षकलनाहेतुरित्यर्थः ॥ ४७ ॥ यदस्तित्वाभिमत्या बध्यते तद्दृश्यस्वरूपं किमित्यत्र—**जगत्त्वमिति** । **त्वमहमित्यादिसर्गात्मा** प्रपञ्च एव दृश्यमित्यर्थः, दृश्यस्य मनःकल्पितत्वात् ॥ ४८ ॥ तदेव स्फोरयति—**मनसैवेति** । यावत् स्वातिरिक्तधीस्तावत् स्वमात्रावस्थानलक्षणमोक्षो नोदेतीत्याह—**यावदिति** ॥ ४९ ॥

प्रपञ्चस्य मनोमयत्वम्

ब्रह्मणा तन्यते विश्वं मनसैव स्वयंभुवा ।
मनोमयमतो विश्वं यन्नाम परिदृश्यते ॥ ५० ॥
न बाह्ये नापि हृदये सद्रूपं विद्यते मनः ।
यदर्थप्रतिभानं तन्मन इत्यभिधीयते ॥ ५१ ॥
संकल्पनं मनो विद्धि संकल्पस्तत्र विद्यते ।
यत्र संकल्पनं तत्र मनोऽस्तीत्यवगम्यताम् ॥ ५२ ॥
संकल्पमनसी भिन्ने न कदाचन केन चित् ।
संकल्पजाते गलिते स्वरूपमवशिष्यते ॥ ५३ ॥

स्वातिरिक्तप्रपञ्चस्य मनोमयत्वं कथमित्यत आह—**ब्रह्मणेति** । यत एवं **मनोमयम्** ॥ ५० ॥ मनसः प्रपञ्चहेतुत्वेन सत्त्वं स्यादित्यत आह—

नेति । किं तत्? यदर्थवत् प्रतिभानम् ॥ ९१ ॥ वस्तुतः सङ्कल्पस्तन्न विद्यते ॥ ९२ ॥ सङ्कल्पनीयस्वातिरिक्तासम्भवप्रबोधतः सङ्कल्पजाते गळिते अपह्नवं गते ॥ ९३ ॥

दृश्यासंभवज्ञाने ब्रह्मताऽवशेषः

अहं त्वं जगदित्यादौ प्रशान्ते दृश्यसंभ्रमे ।
स्यात्तादृशी केवलता दृश्ये सत्तामुपा[1]गते ॥ ९४ ॥

महाप्रलयसंपत्तौ ह्यसत्तां समुपागते ।
अशेषदृश्ये सर्गादौ शान्तमेवावशिष्यते ॥ ९५ ॥

अस्त्यनस्तमितो भास्वानजो देवो निरामयः ।
सर्वदा सर्वकृत् सर्वः परमात्मेत्युदाहृतः ॥ ९६ ॥

यतो वाचो निवर्तन्ते यो मुक्तैरवगम्यते ।
यस्य चात्मादिकाः संज्ञाः कल्पिता न स्वभावतः ॥ ९७ ॥

दृश्यासम्भवप्रबोधसमकालं संशान्तस्वातिरिक्तं ब्रह्मावशिष्यत इत्याह—अहमिति । दृश्ये सत्तामात्रपदवीं गते केवलीभाव उदेति ॥ ९४ ॥ सर्गादावशेषदृश्ये तन्महाप्रळयसम्पत्तौ च ब्रह्मातिरिक्तहेतोरसत्तां असद्भावं समुपागते सदा शान्तस्वातिरिक्तं ब्रह्मैव अवशिष्यते इत्यर्थः ॥ ९५ ॥ यदि शान्तमवशिष्टं तदा किमपि नास्तीति प्रसक्तौ—अस्तीति । स कीदृश इत्यत्र—ईश्वरात्मना सर्वदा सर्वकृत् सर्वः । ईशनीयसापेक्षेश्वरताऽपाये स एव परमात्मेत्युदाहृतः ॥ ९६ ॥ तस्य परमात्मादिसंज्ञा वास्तवीत्यत आह—यत इति । स्वावशेषधिया अवगम्यते ॥ ९७ ॥

[1] सते—अ, अ १.

चिदात्मावस्थितिरूपः समाधिः

चित्ताकाशं चिदाकाशमाकाशं च तृतीयकम् ।
द्वाभ्यां शून्यतरं विद्धि चिदाकाशं महामुने ॥ ५८ ॥
देशाद्देशान्तरप्राप्तौ संविदो मध्यमेव यत् ।
निमेषेण चिदाकाशं तद्विद्धि मुनिपुङ्गव ॥ ५९ ॥
तस्मिन् निरस्तनिःशेषसंकल्पस्थितिमेषि चेत् ।
सर्वात्मकं पदं शान्तं तदा प्राप्नोष्यसंशयः ॥ ६० ॥
[1]उदितौदार्यसौन्दर्यवैराग्यरसगर्भिणी ।
आनन्दस्यन्दिनी यैषा समाधिरभिधीयते ॥ ६१ ॥
दृश्यासंभवबोधेन रागद्वेषादितानवे ।
रतिर्बलोदिता याऽसौ समाधिरभिधीयते ॥ ६२ ॥
दृश्यासंभवबोधो हि ज्ञानं ज्ञेयं [2]चिदात्मकम् ।
तदेव केवलीभावं ततोऽन्यत् सकलं मृषा ॥ ६३ ॥

कीदृशोऽयं स्वभावः इत्यत्र चित्तचैत्यासम्भवज्ञानसिद्धचिदाकाश इत्याह— **चित्तेति** । चेतोरूपेण आकाशत इति चित्ताकाशं, तद्विकल्पितं भूताकाशादि, तत्कल्पककल्पनापह्नवसिद्धं चिदाकाशं विद्धीत्यर्थः ॥ ५८ ॥ चिदाकाशाधिगमः कथमित्यत्र—देशादिति । मनः पूर्वविषयदेशं विहाय विषयदेशान्तरं यदा गच्छति तदन्तरालावस्था तन्मध्यमुच्यते । तत्र स्वातिरिक्तास्तित्वख्यापकवृत्त्यसम्भवात् तदन्तरावस्थाविभातं चिदाकाशमिति जानीहीत्यर्थः । तथा च—

[1] उदितोदार्य—उ, क. उदितोदर—अ, अ २.
[2] शिवा—उ, उ १.

पूर्वं रूपमपास्य रूपमपरं चित्ते गते स्वेच्छया
तद्रूपद्वयमध्यमेऽस्य मनसो वृत्तेरभावात्तदा ।
सूक्ष्मात् सूक्ष्मधियो विदुर्यमजडानन्दं ततं निष्कळं
दद्यान्मानसवृत्तिशून्यविभवां मुक्तिं स रामोऽद्य मे ॥

इति मुक्तिशतकोक्तेः ॥ ५९ ॥ यदि चिदाकाशदृष्टिर्भवसि तदा तदेव भवसीत्याह —**तस्मिन्निति** ॥ ६० ॥ तद्रूपावस्थितिः कीदृशीत्यत्र समाधिरित्याह—**उदितेति** । **समाधिः** सम्प्रज्ञातसमाधिः, स्वानन्दस्यन्दनवृत्तिविशिष्टत्वात् ॥ ६१ ॥ असंप्रज्ञातस्तु—दृश्येति । स्वातिरिक्तदृश्यासंभवप्रबोधसिद्धब्रह्ममात्रावस्थितिः असंप्रज्ञातसमाधिरित्यर्थः ॥ ६२ ॥ कथं पुनः असंप्रज्ञातसमाधिः ब्रह्म भवतीत्यत्र —स एव परमात्मा, तदतिरिक्तं मृषेत्याह— दृश्येति ॥ ६३ ॥

जगतो मृषात्वम्

मत्त ऐरावतो बद्धः सर्षपीकोणकोटरे ।
मशकेन कृतं युद्धं सिंहौघैरणुकोटरे ॥ ६४ ॥
पद्माक्षे स्थापितो मेरुर्निगीर्णो भृङ्गसूनुना ।
निदाघ विद्धि तादृक् त्वं जगदेतद्भ्रमात्मकम् ॥ ६५ ॥

तदन्यस्य मृषात्वं कुत इत्यत्र— असंभवकल्पनातः तत्सिद्धिर्निरङ्कुशेत्याह —**मत्तेति** ॥ ६४–६५ ॥

संसारस्य मनोविलासत्वम्

चित्तमेव हि संसारो रागादिक्लेशदूषितम् ।
तदेव तैर्विनिर्मुक्तं भवान्त इति कथ्यते ॥ ६६ ॥
मनसा भाव्यमानो हि देहतां याति देहकः ।
देहवासनया मुक्तो देहधर्मैर्न लिप्यते ॥ ६७ ॥

कल्पं क्षणीकरोत्यन्तः क्षणं नयति कल्पताम् ।
मनोविलासः संसार इति मे निश्चिता मतिः ॥ ६८ ॥
नाविरतो दुश्चरितान्नाशान्तो नासमाहितः ।
नाशान्तमानसो वाऽपि प्रज्ञानेनैनमाप्नुयात् ॥ ६९ ॥

एवं असंभवरचनामूलं चित्तं, तदसंभवज्ञानसिद्धं स्वरूपमित्याह—**चित्तमिति** ॥ ६६ ॥ मनोऽस्ति नास्तीति ज्ञानं बन्धमोक्षमूलमित्याह—**मनसेति** ॥ ६७ ॥ आविद्यकत्वेन मनसः अघटितघटनाघटनपटीयस्त्वमाह—**कल्पमिति** ॥ ६८ ॥ मनस्तत्कार्यव्यापृतोऽपि प्रज्ञानतः पदमाप्नुयादित्यत आह—**नेति** । दुश्चरिताशान्तादिमनस्तमोवृत्तिभिः यदि **नाविरतः** स्वातिरिक्तकलनातो **नाशान्तश्च** भवति तदाऽस्य प्रज्ञानमेव न जायते । यदि प्रमादतो जायेत तदा तदाभासज्ञानमेव भवति । नह्याभासज्ञानं पारमार्थिकसद्वस्तु स्प्रष्टुं पारयति । यत एवं अतः आभासज्ञानी दुश्चरितादिवृत्तिकबळितः सन्नैनं परमात्मानं प्रत्यगभेदेन आप्नुयात ॥ ६९ ॥

शान्तमनसो ब्रह्मप्राप्तिः

तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ।
विदित्वा स्वात्मनो रूपं न बिभेति [1]कदाचन ॥ ७० ॥
परात् परं यन्महतो महान्तं स्वरूपतेजोमयशाश्वतं शिवम् ।
कविं पुराणं पुरुषं सनातनं सर्वेश्वरं सर्वदेवैरुपास्यम् ॥ ७१ ॥
अहं ब्रह्मेति नियतं मोक्षहेतुर्महात्मनाम् ।
द्वे पदे बन्धमोक्षाय निर्ममेति ममेति च ।
ममेति बध्यते जन्तुर्निर्ममेति विमुच्यते ॥ ७२ ॥

[1] कुतश्चन—उ, उ १.

तद्विपरीतो निर्भयं ब्रह्म आप्नुयादित्याह—तदिति। यत् नित्यतृप्त्यात्मकं तत् ब्रह्मानन्दरूपं, सुखदुःखादिद्वन्द्वाभावात् अद्वन्द्वं, तमआदिगुणत्रयासंभवात् निर्गुणं, अनृतजडप्रपञ्चाभावात् सत्यचिद्घनं, स्वात्मनो रूपं ब्रह्माहमस्मीति विदित्वा वेदनसमकालं कदाचन स्वातिरिक्तास्तित्वभ्रमतो न बिभेति। न हि स्वमात्रे निष्प्रतियोगिके स्वातिरिक्तप्रसक्तिरस्ति, "ब्रह्मव्यतिरिक्तं न किंचिदस्ति," "ब्रह्ममात्रमसन्नहि," इति श्रुतेः ॥ ७ ॥ यद्विदित्वा तदेव भवति तत्स्वरूपं किं? इत्यत आह—परात्परमिति। परात्परमित्यादिविशेषणविशिष्टं ब्रह्माहमस्मीति ज्ञानतः तदेव भवतीति वाक्यशेषः ॥ ७१ ॥ ब्रह्ममात्रज्ञानं तन्मात्रावशेषहेतुः, ममेति निर्ममेति ज्ञानं तु सापेक्षबन्धमोक्षहेतुरित्याह—अहमिति ॥ ७२ ॥

जीवेशवादत्यागपूर्वकब्रह्मविचारस्य कर्तव्यता

जीवेश्वरादिरूपेण चेतनाचेतनात्मकम्।
ईक्षणादिप्रवेशान्ता सृष्टिरीशेन कल्पिता।
जाग्रदादिविमोक्षान्तः संसारो जीवकल्पितः ॥ ७३ ॥
त्रिणाचिकादियोगान्ता ईश्वरभ्रान्तिमाश्रिताः।
लोकायतादिसांख्यान्ता जीव[1]विभ्रान्तिमाश्रिताः ॥ ७४ ॥
तस्मान्मुमुक्षुभिर्नैव मतिर्जीवेशवादयोः।
कार्या किंतु ब्रह्मतत्त्वं निश्चलेन विचार्यताम् ॥ ७५ ॥

स्वाज्ञादिदृष्टिमोहे सत्यसति ब्रह्म निष्प्रतियोगिकं स्वमात्रमवशिष्यत इत्यत्र न विवादः, तथाऽप्यत्र स्वाज्ञाळिः तदेव ब्रह्म जीवेश्वरजगद्विशिष्टं पश्यतीत्याह—जीवेति। चेतनाचेतनात्मकं स्वाज्ञः पश्यति। तत्र ईशजीवसृष्टिः केत्यत

[1] विभ्रा—अ १, अ २, क.

आह—**ईक्षणादीति**। "स ऐक्षत लोकान्नु सृजै" इत्यादि "स एतमेव सीमानं विदार्यैतया द्वारा प्रापद्यत" इति श्रुत्यनुरोधेन **ईक्षणादिप्रवेशान्ता**। इयमीशसृष्टिः इयं जीवसृष्टिः इति विभागशः कल्पको जीव एव नेश्वरः, तस्य एवं कल्पनाहेतुस्वाज्ञानाभावात्। जीवस्य तत्सत्त्वात् अयमेव कल्पक इत्यर्थः ॥ ७३ ॥ अत्र केचन भ्रान्ताः स्वातिरेकेण शिवजीवौ पश्यन्तीत्याह—**त्रिणाचिकेति**। त्रिःकृत्वो नाचिकेतो यैः कृतः ते **त्रिणाचिकेताः** कर्मिणो **योगिनश्च**। आदिशब्देन सौरशाक्तवैष्णवगाणपत्यशैवादिद्वैतिनो विशिष्टाद्वैतिनश्च गृह्यन्ते। ते स्वातिरेकेण ईश्वरोऽस्तीति ईश्वरभ्रान्त्यारूढा भवन्ति। **लोकायतादिसाङ्ख्यपर्यन्ता** वादिनो **जीवविश्रान्तिमाश्रिता** भवन्ति ॥ ७४ ॥ यस्मादेते भ्रान्तग्रहाः तस्मात्। किंतु सर्वापह्नवसिद्धं ब्रह्म स्वमात्रमिति **ब्रह्मतत्त्वम्** ॥ ७५ ॥

निर्विशेषब्रह्मज्ञानमहिमा

अविशेषेण सर्वं तु यः पश्यति चिदन्वयात्।
स एव साक्षाद्विज्ञानी स शिवः स हरिर्विधिः ॥ ७६ ॥
दुर्लभो विषयत्यागो दुर्लभं तत्त्वदर्शनम्।
दुर्लभा सहजावस्था सद्गुरोः करुणां विना ॥ ७७ ॥
उत्पन्नशक्तिबोधस्य त्यक्तनिःशेषकर्मणः।
योगिनः सहजावस्था स्वयमेवोपजायते ॥ ७८ ॥
यदा ह्येवैष एतस्मिन्नल्पमप्यन्तरं नरः।
विजानाति तदा तस्य भयं स्यान्नात्र संशयः ॥ ७९ ॥
सर्वगं सच्चिदानन्दं ज्ञानचक्षुर्निरीक्षते।
अज्ञानचक्षुर्नेक्षेत भास्वन्तं भानुमन्धवत् ॥ ८० ॥

प्रज्ञानमेव तद्ब्रह्म सत्यप्रज्ञानलक्षणम् ।
एवं ब्रह्मपरिज्ञानादेव मर्त्योऽमृतो भवेत् ॥ ८१ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ ८२ ॥

एवं निर्विशेषज्ञानी तदेव भवतीत्याह—**अविशेषेणेति** । चितः सर्वानुस्यूतत्वेन सर्वं चिन्मात्रमेवेति यः पश्यति स एव ॥ ७६ ॥ गुरुप्रसादं विना स्वातिरिक्तमतित्यागः स्वमात्रज्ञानं स्वावशेषतया स्थितिरपि दुर्लभेत्याह—**दुर्लभ इति** ॥ ७७ ॥ कस्येयं सहजावस्था जायते इत्यत आह—**उत्पन्नेति** । सुषुम्नां प्रविष्टकुण्डलिनीशक्तेः यतेः स्वरूपावस्थितिः स्वयमेवोपजायते ॥ ७८ ॥ अत्रापि किंचित् सविशेषं पश्यतो भयं भवतीत्याह—**यदेति** ॥ ७९ ॥ यदि निर्भयं ब्रह्म सर्वगं तदा सर्वैरपि द्रष्टुं शक्यमित्यत आह—**सर्वगमिति** ॥ ८० ॥ यादृशं वस्तु जानाति तादृगेव अयं भवतीत्याह—**प्रज्ञानमिति** ॥ ८१ ॥ ग्रन्थिसंशयकर्मसु सत्सु तद्वेदनं तदाप्तिः कथमित्यत आह—**भिद्यत इति** । इयं श्रुतिः मुण्डकोपनिषदि व्याख्याता ॥ ८२ ॥

संविन्मात्रपरत्वविधिः

अनात्मतां परित्यज्य निर्विकारो जगत्स्थितौ ।
एकनिष्ठतयाऽन्तःस्थसंविन्मात्रपरो भव ॥ ८३ ॥
मरुभूमौ जलं सर्वं मरुभूमात्रमेव तत् ।
जगत्त्रयमिदं सर्वं चिन्मात्रं स्वविचारतः ॥ ८४ ॥
लक्ष्यालक्ष्यगतिं त्यक्त्वा यस्तिष्ठेत् केवलात्मना ।
शिव एव स्वयं साक्षादयं ब्रह्मविदुत्तमः ॥ ८५ ॥

अधिष्ठानमनौपम्यमवाङ्मनसगोचरम् ।
नित्यं विभुं सर्वगतं सुसूक्ष्मं च तदव्ययम् ॥ ८६ ॥
सर्वशक्ते[1]र्महेशस्य विलासो हि मनो जगत् ।
संयमासंयमाभ्यां च संसारं शान्तिमन्वगात् ॥ ८७ ॥

यदि ज्ञानात् ग्रन्थिसंशयकर्माणि क्षीयन्ते स्वाज्ञदृष्ट्या सति जगति कथं ब्रह्ममात्रावस्थितिरित्यत आह—**अनात्मतामिति** । स्वाज्ञदृष्टिप्रसक्तां **अनात्मताम्** । **जगत्स्थितौ**, स्वज्ञदृष्ट्या लयं गते वा ॥ ८३ ॥ संविन्मात्रपरत्वं कुतः संभवति जगत्त्रयभानादित्यत्र—विचारतो जगत्त्रयं चिन्मात्रमेवेति सदृष्टान्तमुपपादयति—**मर्विति** ॥ ८४ ॥ यदि चिन्मात्रमिति लक्षितं तदा लक्ष्यस्य लक्षणसापेक्षतया सविशेषज्ञानफलभागयं भवतीत्यत आह—**लक्ष्येति** । लक्षणया बोधितं लक्ष्यं, अलक्ष्यं वाच्यं, तयोः **गतिं** त्यक्त्वेत्यर्थः ॥ ८५ ॥ स्वातिरिक्तलक्ष्याद्यपवादस्य **अधिष्ठानम्** । अधिष्ठेयसापेक्षाधिष्ठानादिविशेषणगतविशेषापायसिद्धनिर्विशेषब्रह्मवित् भवतीति पूर्वेणान्वयः ॥ ८६ ॥ संसारिणो वेदनं तत्फलं वा कुत इत्यत आह—**सर्वेति** । यतः स्वविकल्पितमनस्तत्कार्यं **जगत्** स्वातिरेकेण अस्ति नास्तीति **संयमासंयमाभ्यां** संसारः तच्छान्तिः भवति अतो ब्रह्मविदसंसारी ज्ञानफलमश्नुत इत्यर्थः ॥ ८७ ॥

मनःप्रशमनेन ब्रह्मसम्पत्तिः

मनोव्याधेश्चिकित्सार्थमुपायं कथयामि ते ।
[2]यद्यत् स्वाभिमतं वस्तु तत्त्यजन् मोक्षमश्नुते ॥ ८८ ॥
स्वायत्तमेकान्तहितं स्वेप्सितत्यागवेदनम् ।
यस्य दुष्करतां यातं धिक् तं पुरुषकीटकम् ॥ ८९ ॥

[1] रनन्तस्य—उ, उ १.   [2] यत्त—अ, अ १, अ २, क.

स्वपौरुषैकसाध्येन स्वेप्सिततत्यागरूपिणा ।
मनःप्रशममात्रेण विना नास्ति शुभा गतिः ॥ ९० ॥
असंकल्पनशस्त्रेण छिन्नं चित्तमिदं यदा ।
सर्वं सर्वगतं शान्तं ब्रह्म संपद्यते तदा ॥ ९१ ॥
भवभावनया मुक्तो युक्तः परमया धिया ।
धारयात्मानमव्यग्रो ग्रस्तचित्तं चितः पदम् ॥ ९२ ॥
परं पौरुषमाश्रित्य नीत्वा चित्तमचित्तताम् ।
ध्यानतो हृदयाकाशे चिति चिच्चक्रधारया ।
मनो मारय निःशङ्कं त्वां प्रबध्नन्ति नारयः ॥ ९३ ॥
अयं सोऽहमिदं तन्मे एतावन्मात्रकं मनः ।
तदभावनमात्रेण दात्रेणेव विलूयते ॥ ९४ ॥
छिन्नाभ्रमण्डलं व्योम्नि यथा शरदि धूयते ।
वातेनाकल्पकेनैव तथाऽन्तर्धूयते मनः ॥ ९५ ॥
कल्पान्तपवना वान्तु यान्तु चैकत्वमर्णवाः ।
तपन्तु द्वादशादित्या नास्ति निर्मनसः क्षतिः ॥ ९६ ॥
असंकल्पनमात्रैकसाध्ये सकलसिद्धिदे ।
असंकल्पातिसाम्राज्ये तिष्ठावष्टब्धतत्पदः ॥ ९७ ॥
न हि चञ्चलताहीनं मनः क्वचन दृश्यते ।
चञ्चलत्वं मनोधर्मो वह्नेर्धर्मो यथोष्णता ॥ ९८ ॥
एषा हि चञ्चला स्पन्दशक्तिश्चित्तत्वसंस्थिता ।
तां विद्धि मानसीं शक्तिं जगदाडम्बरात्मिकाम् ॥ ९९ ॥

यत्तु चञ्चलताहीनं तन्मनोऽमृतमुच्यते ।
तदेव च तपः शास्त्रसिद्धान्ते मोक्ष उच्यते ॥ १०० ॥
तस्य चञ्चलता यैषा त्वविद्या वासनात्मिका ।
वासनाऽपरनाम्नीं तां विचारेण विनाशय ॥ १०१ ॥
पौरुषेण प्रयत्नेन यस्मिन्नेव पदे मनः ।
योज्यते तत् पदं प्राप्य निर्विकल्पो भवानघ ॥ १०२ ॥
अतः पौरुषमाश्रित्य चित्तमाक्रम्य चेतसा ।
विशोकं पदमालम्ब्य निरातङ्कः स्थिरो भव ॥ १०३ ॥
मन एव समर्थं हि मनसो दृढनिग्रहे ।
अराज्ञा कः समर्थः स्याद्राज्ञो निग्रहकर्मणि ॥ १०४ ॥
तृष्णाग्राहगृहीतानां संसारार्णवपातिनाम् ।
आवर्तैरूह्यमानानां दूरं स्वमन एव नौः ॥ १०५ ॥
मनसैव मनश्छित्त्वा पाशं परमबन्धनम् ।
भवादुत्तारयात्मानं नासावन्येन तार्यते ॥ १०६ ॥

मनस्सत्त्वपक्षमवष्टभ्य तत्त्यागोपायं तत्फलं चाह—**मन इति**। स्वातिरिक्ततया यद्यत् स्वाभिमतं तत्तत्त्यागतः तन्मोक्षमश्नुत इत्यर्थः ॥ ८८ ॥ एवं कर्तुं अशक्यं मन्यमानो यस्तत्रोपरमते तज्जन्म धिगिति तं कुत्सयति—**स्वायत्तमिति**। **स्वायत्तं** स्वेतरसाधनानपेक्षम् ॥ ८९ ॥ स्वेप्सितत्यागं विना उपायान्तरेणापि ज्ञानफलमाप्तुं शक्यमित्यत आह—**स्वेति** ॥ ९० ॥ तदाप्त्युपायः क इत्यत आह—**असङ्कल्पनेति** ॥ ९१ ॥ भवभावनावतः तत्सिद्धिः कुत इत्यत आह—**भवेति**। येन चिद्वत् अवभातं चित्तं ग्रस्तं तं **ग्रस्तचित्तं आत्मानं** उक्तसाधनसम्पन्नो

धारयेत्यर्थः ॥ ९२ ॥ स्वातिरेकेण मनःप्रसक्तौ यदि प्रयत्नात्तद्विलापनं करोषि तदा निस्सपत्नं ज्ञानफलं प्राप्नोषीत्याह—**परमिति** ॥ ९३ ॥ मनसोऽन्तर्बाह्यवृत्तिरूपेण भावनामात्रत्वात् तदभावनशस्त्रेण तच्छिद्यत इत्याह—**तदिति** ॥९४॥ किंच—**छिन्नेति** । पराक्पुरोवाततो मनोमेघ उदेति, पराक्कल्पनाविरळनैर्ऋत्यप्रत्यग्वातेन मनस्तत्कार्यमेघो विलीयत इत्यर्थः ॥ ९५ ॥ यन्मनो म्रियते न तस्य केनापि क्षतिरस्तीत्याह—**कल्पान्तेति** ॥ ९६ ॥ यदि निर्मनस्त्वमिच्छसि तदा तत्पदलक्ष्यमवष्टभ्य निर्विकल्पात्मना तिष्ठेत्याह—**असङ्कल्पनेति** ॥ ९७ ॥ शोधितपारदवच्चञ्चलं मनो यदा न चलति तदा अमनस्कं ब्रह्म भवतीत्याह—**न हीति** ॥ ९८ ॥ **चित्तत्त्वसंस्थिता** चिति विकल्पितेत्यर्थः । **जगदाडम्बरात्मिकां**, मन एव जगदित्यर्थः ॥ ९९ ॥ निष्पन्दवायुः आकाशवत् निष्पन्दं मनो ब्रह्मेत्यर्थः ॥ १०० ॥ मनश्चञ्चलत्वं विचारेण शाम्यतीत्याह—**तस्येति** ॥ १०१ ॥ यत्नतो मनोऽवसानपदमवलम्ब्य निर्विकल्पो भवेत्याह—**पौरुषेणेति** ॥ १०२ ॥ यतः प्रयत्नतो मनोविलापनं निर्विकल्पहेतुः अतः **चित्तमाक्रम्य चेतसा** तमोरजोवृत्तिमच्चित्तं सत्त्ववृत्तिमच्चेतसा कबळीकृत्वेत्यर्थः ॥ १०३ ॥ कथं पुनः चित्तं चेतसाऽऽक्रामितुं शक्यत इत्यत्र सदृष्टान्तमुत्तरमाह—**मन इति** ॥ १०४ ॥ तृष्णाऽऽदितमोवृत्तिग्रस्तानां सत्त्ववृत्तिः नोदेति, सत्कर्मोपासनाश्रवणादिसाधनसञ्जातसत्त्ववृत्तिमन्मनसा स्वात्मानं उद्धरेदित्याह — **तृष्णेति** ॥ १०५–१०६ ॥

वासनापरिहारेण मोक्षसिद्धिः

[1]या योदेति मनोनाम्नी वासना वासितान्तरा ।
तां तां परिहरेत् प्राज्ञस्ततोऽविद्याक्षयो भवेत् ॥ १०७ ॥
भोगैकवासनां त्यक्त्वा त्यज त्वं भेदवासनाम् ।
भावाभावौ ततस्त्यक्त्वा निर्विकल्पः [2]सुखी भव ॥ १०८ ॥

[1] यथो—ड, ड १. [2] स्थिरो—अ, अ १.

एष एव मनोनाशस्त्वविद्यानाश एव च ।
[1]यत्तत् संवेद्यते किंचित् तत्रास्थापरिवर्जनम् ।
अनास्थैव हि निर्वाणं दुःखमास्थापरिग्रहः ॥ १०९ ॥
अविद्या विद्यमानैव नष्टप्रज्ञेषु दृश्यते ।
नाम्नैवाङ्गीकृताकारा सम्यक्प्रज्ञस्य सा कुतः ॥ ११० ॥
तावत् संसारभृगुषु स्वात्मना सह देहिनम् ।
आन्दोलयति नीरन्ध्रदुःखकण्टक[2]शालिषु ॥ १११ ॥
अविद्या यावदस्या[3]स्तु नोत्पन्ना क्षयकारिणी ।
स्वयमात्मावलोकेच्छा मोहसंक्षयकारिणी ॥ ११२ ॥
अस्याः परं प्रपश्यन्त्याः स्वात्मनाशः प्रजायते ।
[4]दृष्टे सर्वगते बोधे स्वयं ह्येषा विलीयते ॥ ११३ ॥
इच्छामात्रमविद्येयं तन्नाशो मोक्ष उच्यते ।
स चासंकल्पमात्रेण सिद्धो भवति वै मुने ॥ ११४ ॥
मनागपि मनोव्योम्नि वासनारजनीक्षये ।
कालिका तनुतामेति चिदादित्यावलोकनात् ॥ ११५ ॥

यद्यद्वस्तुविषयकवासना उदेति तां तां उन्मूल्य कृतकृत्यो भवेत्याह—**यायेति** । स्वातिरेकेण वासना अस्ति नास्तीति तद्भावाभावौ ॥१०७–१०८॥ वासनानाशतोऽविद्याद्वयमपि नश्यतीत्याह—**एष इति** । स्वातिरिक्तविषयकास्थाऽनास्थे बन्धमोक्षहेतू स्यातामित्यत आह—**यदिति** ॥ १०९ ॥ स्वाविद्या स्वाज्ञस्वज्ञदृष्टेः सदसत्पदं भजतीत्याह—**अविद्येति** ।

[1] यद्य—उ, उ १. [2] शाखिषु—अ २. [3] स्ति—अ. [4] दृष्टेः—उ.

अविद्यमानैवाविद्या वस्तुतत्त्वविचारिणाम् ।
अविचारेण मूढानां वज्रादपि दृढायते ॥

इति स्मृतेः ॥ ११० ॥ यावद्यावदविद्या तनुतामेति तावत्तावद्विद्या उत्कर्षतीत्याह—**तावदिति** ॥ १११ ॥ ब्रह्मविद्या उदेतीत्यर्थः ॥ ११२ ॥ विद्याऽपि स्वफलसाक्षात्कारतो विलीयते इत्याह—**अस्या इति** । **दृष्टे सर्वगते बोधे** परमात्मनि विद्याऽपि **स्वयं ह्येषा विलीयते** ॥ ११३ ॥ स्वाविद्या बन्धहेतुः, तन्नाशो मोक्षहेतुः इत्याह—**इच्छेति** । स्वाविद्यालयाधारस्य स्वाधेयसापेक्षाधारताऽपाये निष्प्रतियोगिकब्रह्ममात्रत्वात तत्सिद्धिः केनेत्यत आह—**स चेति** । निःशेषसङ्कल्पापाये परमात्मा आविर्भवतीत्यर्थः ॥ ११४ ॥ स्वाज्ञानध्वान्ते सति स्वात्मार्कोदयः कुत इत्यत आह—**मनागपीति** । **कालिका** स्वाज्ञानध्वान्तरूपिणी स्वोद्भूतिहेतुवासनागात्रिक्षयतः **तनुतामेति** ॥ ११५ ॥

चैत्यासंभवज्ञानेन चित्तत्वसाक्षात्कारः

चैत्यानुपातरहितं सामान्येन च सर्वगम् ।
यच्चित्तत्त्वमनाख्येयं स आत्मा परमेश्वरः ॥ ११६ ॥
सर्वं च खल्विदं ब्रह्म नित्यचिद्घन[1]मक्षतम् ।
कल्पनाऽन्या मनोनाम्नी विद्यते न हि काचन ॥ ११७ ॥
न जायते न म्रियते किंचिदत्र जगत्त्रये ।
न च भावविकाराणां सत्ता क्वचन विद्यते ॥ ११८ ॥
केवलं केवलाभासं सर्वसामान्यमक्षतम् ।
चैत्यानुपातरहितं चिन्मात्रमिह विद्यते ॥ ११९ ॥
तस्मिन् नित्ये तते शुद्धे चिन्मात्रे निरुपद्रवे ।
शान्ते शमसमाभोगे निर्विकारे चिदात्मनि ॥ १२० ॥

[1] मक्षरं—क.

यैषा स्वभावाभिमतं स्वयं संकल्प्य धावति ।
चिच्चैत्यं स्वयमम्लानं मननान्मन उच्यते ॥ १२१

सति चैत्ये चित्तत्त्वानुभवः कथमित्यत्र चैत्यासम्भवप्रबोधतः चित्तत्व-साक्षात्कारो भवतीत्याह—चैत्येति । अयमहमस्मीति साक्षात्कृतो भवतीत्यर्थः ॥ ११६ ॥ चिन्मात्रविकल्पितं सर्वं अतद्विकल्पक्षयतः चिन्मात्रमेवेत्याह—**सर्वमिति** । तत्र या स्वातिरेकेण विकल्पिता तादृशकल्पना**ऽन्या** ॥ ११७ ॥ स्वातिरेकेण **न जायते** ॥ ११८ ॥ **चिन्मात्रमिह** निष्प्रतियोगिकं **विद्यते** ॥ ११९ ॥ तत्र तदतिरिक्तमस्तीति मननान्मन उत्थितं भवतीत्याह—**तस्मिन्निति** ॥ १२० ॥ **यैषा स्वभावाभिमतं** स्वातिरिक्तमस्तीत्येवंरूपम् । चिति विकल्पितं **चिच्चैत्यम्** । सत्यमिति **मननात्** ॥ १२१ ॥

सङ्कल्पस्य बन्धमोक्षमूलत्वम्

अतः संकल्पसिद्धेयं संकल्पेनैव नश्यति ।
नाहं ब्रह्मेति संकल्पात् सुदृढाद्बध्यते मनः ।
सर्वं ब्रह्मेति संकल्पात् सुदृढान्मुच्यते मनः ॥ १२२ ॥
कृशोऽहं दुःखबद्धोऽहं हस्तपादादिमानहम् ।
इति भावानुरूपेण व्यवहारेण बध्यते ॥ १२३ ॥
नाहं दुःखी न मे देहो बन्धः को[1]ऽस्यात्मनि स्थितः ।
इति भावानुरूपेण व्यवहारेण मुच्यते ॥ १२४ ॥
नाहं मांसं न चास्थीनि देहादन्यः परोऽस्म्यहम् ।
इति निश्चितवानन्तः क्षीणाविद्यो विमुच्यते ॥ १२५ ॥

[1] वाऽऽत्मनि—उ, उ १.

मनसः स्वोत्पत्तिप्रळयमूलं सङ्कल्प एवेत्याह—**अत इति** । यतो माया स्वातिरिक्तसङ्कल्पभूः अतः । नाहं ब्रह्म, ब्रह्माहं, इति सङ्कल्पतो मनो बध्यते मुच्यते चेत्याह—**नाहमिति** ॥ १२२ ॥ कथं पुनः सङ्कल्पतो बध्यते मुच्यते इत्यत्र—**कृशोऽहमिति** ॥ १२३–१२५ ॥

अनात्माभिमानत्यागविधिः

कल्पितेयमविद्येयमनात्मन्यात्मभावनात् ।
परं पौरुषमाश्रित्य यत्नात् परमया धिया ।
भोगेच्छां दूरतस्त्यक्त्वा निर्विकल्पः सुखी भव ॥ १२६ ॥
मम पुत्रो मम धनमहं सोऽयमिदं मम ।
इतीयमिन्द्रजालेन वासनैव विवल्गति ॥ १२७ ॥
मा भवाज्ञो भव ज्ञस्त्वं जहि संसारभावनाम् ।
अनात्मन्यात्मभावेन किमज्ञ इव रोदिषि ॥ १२८ ॥
कस्तवायं जडो मूको देहो मांसमयोऽशुचिः ।
यदर्थं सुखदुःखाभ्यामवशः परिभूयसे ॥ १२९ ॥
अहो नु चित्रं यत् सत्यं ब्रह्म तद्विस्मृतं नृणाम् ।
तिष्ठतस्तव कार्येषु माऽस्तु रागानुरञ्जनम् ॥ १३० ॥
अहो नु चित्रं पद्मोत्थैर्बद्धास्तन्तुभिरद्रयः ।
अविद्यमाना याऽविद्या तया विश्वं खिलीकृतम् ।
इदं तद्वज्रतां यातं तृणमात्रं जगत्त्रयम् ॥ १३१ ॥

इत्युपनिषत् ॥

अतस्मिन् तद्भावनेयं माया विकल्पिता, यत्नतः तद्विकल्पसर्वस्वमुन्मूल्य निर्विकल्पो भवेत्याह—**कल्पितेति** ॥ १२६ ॥ विकल्पहेतुः केत्यत्र—नानावस्तुगतवासना, तामवष्टभ्य स्वविकल्पितस्वपरे स्वात्मात्मीयाभिमत्या किं मुह्यसि, तेन त्वं परिभवं प्राप्नोषीत्याह—**ममेति** । **वासनैव विवल्गति,** **नेतरत्** विजृम्भते वस्तुनो निर्विकल्पत्वात् ॥ १२७ ॥ तदवष्टभ्य **मा भवाज्ञः** ॥ १२८–१२९ ॥ अहोऽयं लोकः सम्भवार्थमनादृत्य असम्भवार्थे मुह्यति, न त्वं तत्परमो भवेत्याह—**अहो इति** । **नृणां** मध्ये **तिष्ठतस्तव** ॥ १३० ॥ स्वातिरिक्तकलनाया असम्भवार्थत्वं कुत इत्यत्र सदृष्टान्तमाह—**अहो इति** । **खिलीकृतं** नानात्वं प्रापितमित्यर्थः ॥ १३१ ॥

इति चतुर्थोऽध्यायः

---

## पञ्चमाध्यायः

अज्ञानज्ञानयोः भूमिकासंख्या

[1]अथापरं प्रवक्ष्यामि शृणु तात यथातथम् ।
अज्ञानभूः सप्तपदा ज्ञभूः सप्तपदैव हि ॥ १ ॥
पदान्तराण्यसंख्यानि प्रभवन्त्यन्य[2]थैतयोः ।

नाहं ब्रह्मेति सङ्कल्पनं अज्ञानं, सर्वं ब्रह्मेति सङ्कल्पनं ज्ञानमित्युक्तम् । तत्राज्ञानभूः ज्ञानभूश्च कतिविधेत्याशङ्कमानमालक्ष्य तदियत्ताप्रपञ्चनाय पञ्चमाध्यायः आरभ्यते—**अथेति** ॥ १ ॥ अज्ञानज्ञानप्रविभक्तसप्तविधभूम्योः स्वाज्ञस्वज्ञदृष्ट्यनुरोधेन पदानि बहुधा भिद्यन्त इत्याह—**पदान्तराणीति** ।

[1] ऋभुः । अथा—अ १, अ २, क.  [2] दै—क.

स्वरूपस्थितिर्मोक्षः, स्वरूपभ्रंशो बन्धः

स्वरूपावस्थितिर्मुक्तिस्तद्भ्रंशोऽहंत्ववेदनम् ॥ २ ॥

शुद्धसन्मात्रसंवित्तेः स्वरूपान्न चलन्ति ये ।
रागद्वेषादयो भावास्तेषां नाज्ञत्वसंभवाः ॥ ३ ॥

यः स्वरूपपरिभ्रंशश्चैत्यार्थे चितिमज्जनम् ।
एतस्मादपरो मोहो न भूतो न भविष्यति ॥ ४ ॥

अर्थादर्थान्तरं [1]चित्ते याति मध्ये तु या स्थितिः ।
सा ध्वस्तमननाकारा स्वरूपस्थितिरुच्यते ॥ ५ ॥

संशान्तसर्वसंकल्पा या शिलावदवस्थितिः ।
जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपस्थितिः परा ॥ ६ ॥

[2]अहन्तांऽशे क्षते शान्ते भेद[3]निष्पन्दचित्तता ।
अजडा या [4]प्रचकति तत्स्वरूपमितीरितम् ॥ ७ ॥

तत्र ज्ञानादिभूमिफलं मुक्त्यादिस्वरूपमाचष्टे—**स्वरूपेति** । अज्ञानफलं बन्ध इत्यर्थः ॥ २ ॥ ब्रह्मनिष्ठस्यापि यदि रागादिः तदा स्वरूपात् च्युतिः स्यादित्यत आह—**शुद्धेति** । प्रमादतः प्रसक्त**रागद्वेषादयो दोषास्तेषां नाज्ञत्वसंभवाः**, किं तु बहिष्ठप्राण्यदृष्टायत्ता इत्यर्थः ॥ ३ ॥ स्वरूपच्युतिरेव महामोह इत्याह—**य इति** । चेतोविकल्पितोऽर्थः **चैत्यार्थः** स्वातिरिक्तप्रपञ्चः तत्र **चितिमज्जनं** अन्तःकरणपतनमेव **स्वरूपपरिभ्रंशः** ॥ ४ ॥ स्वरूपस्थितिः कीदृशीत्यत आह—**अर्थादिति** । विषयात् विषयान्तरं मनसि गच्छति सति तदा विषयद्वयमध्यस्थितेः अवृत्तिकत्वात् सैव **स्वरूपस्थितिरि**त्यर्थः ॥ ५ ॥ सति सङ्कल्पप्रभवावस्थाऽन्तरे स्वरूपस्थितिः कुत इत्यत आह—**संशान्तेति**

[1] चित्तैर्यात्र—क.
[2] अहंत्वेऽशेषतः शा—अ.
[3] निष्पत्ति—अ १.
[4] प्रचरति—अ. प्रकचति—अ १.

॥ ६ ॥ स्वरूपस्थितेः अवस्थाचतुष्टयापह्नवपूर्वकत्वात् किं तत्स्वरूपमित्यत आह—अहन्तांऽश इति । अहन्तांऽशे देहादावहंभावे ब्रह्माहमिति ज्ञानात् क्षते शान्ते अपह्नवं गते ततो भेदनिष्पन्दचित्तता भेदासंभवप्रबोधसिद्धचिन्मात्ररूपिणी या इयं अजडा चित् प्रचकति निष्प्रतियोगिकस्वमात्रतया चकास्ति तत्स्वरूपमितीरितम ॥ ७ ॥

अज्ञानभूमिकासप्तकविवरणम्

बीजजाग्रत् तथा जाग्रन्महाजाग्रत् तथैव च ।
जाग्रत्स्वप्नस्तथा स्वप्नः स्वप्नजाग्रत् सुषुप्तिकम् ॥ ८ ॥
इति सप्तविधो मोहः पुनरेष परस्परम् ।
[1]श्लिष्टो भवत्यनेकाग्र्यं शृणु लक्षणमस्य तु ॥ ९ ॥
प्रथमं चेतनं यत् स्यादनाख्यं निर्मलं चितः ।
भविष्यच्चित्तजीवादिनामशब्दार्थभाजनम् ॥ १० ॥
बीजरूपं स्थितं जाग्रद् बीजजाग्रत् तदुच्यते ।
एषा ज्ञप्तेर्नवावस्था त्वं जाग्रत्संस्थितिं शृणु ॥ ११ ॥
नवप्रसूतस्य परादयं चाहमिदं मम ।
इति यः प्रत्ययः स्वच्छस्तज्जाग्रत् प्रागभावनात् ॥ १२ ॥
अयं सोऽहमिदं तन्म इति जन्मान्तरोदितः ।
पीवरः प्रत्ययः प्रोक्तो महाजाग्रदिति स्फुटम् ॥ १३ ॥
अरूढमथवा रूढं सर्वथा तन्मयात्मकम् ।
यज्जाग्रतो मनोराज्यं तज्जाग्रत्स्वप्न उच्यते ॥ १४ ॥

1 शि—क.

द्विचन्द्रशुक्तिकारूप्यमृगतृष्णाऽऽदिभेदतः ।
अभ्यासं प्राप्य जाग्रत् तत् स्वप्नो नानाविधो भवेत ॥ १५ ॥
अल्पकालं मया दृष्टमेतन्नोदेति यत्र हि ।
परामर्शः प्रबुद्धस्य स स्वप्न इति कथ्यते ॥ १६ ॥
चिरसंदर्शनाभावादप्रफुल्लं बृहद्वचः ।
चिरकालानु[1]वृत्तिस्तु स्वप्नो जाग्रदिवोदितः ॥ १७ ॥
स्वप्नजाग्रदिति प्रोक्तं जाग्रत्यपि परिस्फुरत् ।
षडवस्थापरित्यागे [2]जडा जीवस्य या स्थितिः ॥ १८ ॥
भविष्यद्दुःखबोधाढ्या सौषुप्तिः सोच्यते गतिः ।
जगत् तस्यामवस्थायामन्तस्तमसि लीयते ॥ १९ ॥
सप्तावस्था इमाः प्रोक्ता मयाऽज्ञानस्य वै द्विज ।
एकैका [3]शतसंख्याऽत्र नानाविभवरूपिणी ॥ २० ॥

एवं परमार्थदृष्ट्यभिमतचिन्मात्रस्वरूपं प्रतिपाद्य स्वाज्ञानुभूतिसिद्धाज्ञानभूमिकेयत्तां प्रपञ्चयति—**बीजजाग्रदिति** ॥ ८–९ ॥ तत्र प्राथमिकं बीजजाग्रत्स्वरूपमाह—**प्रथममिति** । "सदेव सोम्येदमग्र आसीत्" इति श्रुतिसिद्धं **प्रथमं चेतनं यत् स्यात्** तद्गतविशेषापाये तदनाख्यं निर्मलं, वस्तुतो निर्विशेषत्वात् । तथाऽपि स्वाज्ञदृष्ट्या चितः सकाशात् **भविष्यच्चित्तजीवादिनामशब्दार्थभाजनं** प्राज्ञावस्थां प्राप्तवत् भातम् ॥ १० ॥ तदेव **बीजरूपं स्थितं जाग्रत्** प्राज्ञप्रविभक्तविश्वाधिष्ठितत्वात् तदेव **बीजजाग्रदि**त्युच्यते । द्वितीयं जाग्रत्स्वरूपमाह—**एषेति** । एषा **ज्ञप्तेः नवावस्था,**

[1] वृत्तस्तु—अ १. वृत्तस्य—अ.
[2] हठाज्जी—अ.
[3] दश—अ.

स्थूलप्रज्ञायाः प्राथम्यात् ॥ ११ ॥ **नवप्रसूतस्य** बीजरूपस्य **परात्** कार्यरूपात् विश्वविश्वात्मनः **अयं चाऽहमिदं ममेति** यः स्थूलप्रत्ययः उदेति यदेवं **प्राक्** बीजावस्थायाम**भावनात् सेयं जाग्रदवस्थे**त्युच्यते ॥ १२ ॥ महाजाग्रत्स्वरूपं विशदयति—**अयमिति** । **अयमि**त्यादि यन्मे **जन्मान्तरे** विराड्भावे **उदितः** विराजो ब्रह्माण्डशरीरतया यः **पीवरः प्रत्ययः प्रोक्तः** सोऽयं वैराजकलनात्मको **महाजाग्रदिति स्फुटमि**त्युच्यते ॥ १३ ॥ जाग्रत्प्रविभक्तस्वप्नकलनां प्रपञ्चयति—**अरूढमिति** । **अरूढं** मूलस्य मृग्यत्वात्, अथवा **रूढं** प्रतीतिकालमात्रप्ररूढत्वात्, **सर्वथा तन्मयात्मकं** मनोराज्याधिपतेः तन्मयत्वात्, **जाग्रदवस्थायां यन्मनोराज्यं** विकल्पितं **तदेव जाग्रत्स्वप्न उच्यते** ॥१४॥ स्वप्नस्वप्नस्वरूपमाह—**द्विचन्द्रेति** । **द्विचन्द्रे**त्यादिना प्रातिभासिककलनोच्यते । एवं **अभ्यास**बलात् **जाग्रत्संस्कारजस्वप्नो नानाविधो भवेत्** ॥ १५ ॥ तत्प्रविभक्तस्तु **अल्पकालमिति** । परामर्शं विना **यत्र** कालेयत्ता न स्फुरति स **स्वप्नस्वप्नः** प्रातिभासिकप्रातिभासिकनिर्वर्त्यत्वात् । तथा स्वप्न इत्युद्देशतः स्वप्नस्वप्नः उच्यते इति वेदितव्यम् ॥ १६ ॥ प्रातिभासिकविश्वनिर्वर्त्यस्वप्नजाग्रत्स्वरूपमाह—**चिरेति** । जागरितवत् **चिरसन्दर्शनाभावात् बृहद्वचो** बहिःप्रज्ञानिर्वर्त्य**मप्रफुल्लम्** । **चिरकालानुवृत्तिस्तु** जागरणवत् भानात् एतत् **स्वप्नजाग्रदिति प्रोक्तम्** ॥ १७ ॥ सौषुप्तिगतिं प्रकटयति—**षडिति** । यत्रोक्तबीजजाग्रदित्यादि**षडवस्था न दृश्यते** सेयं **जडात्मिका स्थितिः सुषुप्तसुषुप्तिः**, प्राज्ञप्राज्ञनिर्वर्त्यत्वात् ॥ १८–१९ ॥ एवं **सप्तावस्थाः** । बीजजाग्रदित्याद्यज्ञानभूमिकाः सप्तधा उक्ताः, तासु **एकैका** वादिभ्रान्त्यनुरूपं **शतधा** विकल्पिता भवति, वादिस्वाज्ञानस्यानन्तत्वात् तदियत्ता नहि विज्ञातुं शक्येत्यर्थः ॥ २० ॥

ज्ञानभूमिकासप्तकविवरणम्

इमां सप्तपदां ज्ञानभूमिमाकर्णयानघ ।
नानया ज्ञातया भूयो मोहपङ्के निमज्जति ॥ २१ ॥

वदन्ति बहुभेदेन वादिनो योगभूमिकाः ।
मम त्वभिमता नूनमिमा एव शुभप्रदाः ॥ २२ ॥
अवबोधं विदुर्ज्ञानं तदिदं साप्तभूमिकम् ।
[1]मुक्तिस्तु ज्ञेयमित्युक्ता भूमिका[2]सप्तकात्परम् ॥ २३ ॥
ज्ञानभूमिः शुभेच्छाऽऽख्या प्रथमा समुदाहृता ।
विचारणा द्वितीया तु तृतीया तनुमानसी ॥ २४ ॥
सत्त्वापत्तिश्चतुर्थी स्यात् ततोऽसंसक्तिनामिका ।
पदार्थभावना षष्ठी सप्तमी तुर्यगा स्मृता ॥ २५ ॥
आसामन्तः स्थिता मुक्तिर्यस्यां भूयो न शोचति ।
एतासां भूमिकानां त्वमिदं निर्वचनं शृणु ॥ २६ ॥
स्थितः किं मूढ एवास्मि प्रेक्षेऽहं शास्त्रसज्जनैः ।
वैराग्यपूर्वमिच्छेति शुभेच्छेत्युच्यते बुधैः ॥ २७ ॥
शास्त्रसज्जनसंपर्कवैराग्याभ्यासपूर्वकम् ।
सदाचारप्रवृत्तिर्या प्रोच्यते सा विचारणा ॥ २८ ॥
विचारणाशुभेच्छाभ्यामिन्द्रियार्थेषु रक्तता ।
यत्र सा तनुतामेति प्रोच्यते तनुमानसी ॥ २९ ॥
भूमिकात्रितयाभ्यासाच्चित्ते [3]तु विरतेर्वशात् ।
सत्त्वात्मनि स्थिते शुद्धे सत्त्वापत्तिरुदाहृता ॥ ३० ॥
दशाचतुष्टयाभ्यासादसंसर्गकला तु या ।

[1] मूर्ति—अ १. [2] सप्तमा—अ २. [3] र्थवि—अ.

रूढसत्त्वचमत्कारा प्रोक्ताऽसंसक्तिनामिका ॥ ३१ ॥
भूमिकापञ्चकाभ्यासात् स्वात्मारामतया [1]दृढम् ।
आभ्यन्तराणां बाह्यानां पदर्थानामभावनात् ॥३२ ॥
परप्रयुक्तेन चिरं प्रयत्नेनावबोधनम् ।
पदार्थभावना नाम षष्ठी भवति भूमिका ॥ ३३ ॥
भूमिषट्कचिराभ्यासाद्भेदस्यानुपलम्भनात् ।
यत् स्वभावैकनिष्ठत्वं सा ज्ञेया तुर्यगा गतिः ॥ ३४ ॥
एषा हि जीवन्मुक्तेषु तुर्यावस्थेति विद्यते ।
विदेहमुक्तिविषयं तुर्यातीतमतः परम् ॥ ३५ ॥

एवं स्वरूपावारकस्वाज्ञानावस्थात्यागपूर्वकं वक्ष्यमाणां सप्तधा भिन्नस्वज्ञानावस्थां श्रृण्वित्याह—इमामिति । **नानया ज्ञातया भूयो मुमुक्षुः मोहपङ्के निमज्जति** ॥ २१–२२ ॥ भूमिसप्तकार्थवेदनं ज्ञानं, वेद्यं कैवल्यमेवेत्याह—**अवबोधमिति** ॥ २३ ॥ शुभेच्छाऽऽदिसप्तज्ञानभूमिनामान्युद्दिशति—**ज्ञानेति** ॥ २४–२५ ॥ शुभेच्छाऽऽदिभूमिकानिर्वचनं श्रृण्वित्याह—**एतासामिति** ॥ २६ ॥ प्रथमभूमिकां विवृणोति—**स्थित इति** । वस्तुतत्त्वमज्ञात्वा **मूढ एव सन्** तूष्णीं **स्थितोऽस्मि** । ततः किं करोषीत्यत्र—श्रुत्याचार्यैः शासनीयोऽस्मीति **प्रेक्षेऽहं प्रतीक्षामीति वैराग्यपूर्वकं** या इच्छा उदेति सेयं बुधैः शुभेच्छेत्युच्यते ॥ २७ ॥ विचारणाऽऽख्यां द्वितीयां भूमिकामाह—**शास्त्रेति** ॥ २८ ॥ तृतीयभूमिं विवृणोति—**विचारणेति** । यत्र यस्यां भूमिकायां **विचारणाशुभेच्छाभ्यां** सह **दशेन्द्रियतदर्थेष्वनुरक्तता** अभिनिविष्टा मानसी वृत्तिः **तनुतामेति** सेयं भूमिः **तनुमानसीति प्रोच्यते** ॥ २९ ॥ चतुर्थभूमिकां विशदयति—**भूमिकेति** । **भूमित्रयाभ्यासतो** विराग उदेति ततः स्वातिरिक्तविरक्तितः **चित्ते**

[1] भृशं—अ.

विशुद्धसत्त्वमात्मोपाधिः यस्मिन् तस्मिन् ईश्वरे **स्थिते** सति सेयमवस्था **सत्त्वापत्तिरित्युदाहृता** ॥ ३० ॥ पञ्चमभूमिकां व्याचष्टे—**दशेति** । योगफलेशाभावसंसर्गविरळा **रूढसत्त्वचमत्कारा** रूढसत्त्वं ईश्वरतत्त्वं तदवष्टभ्य तत्र संसर्गतया चिन्मये साक्षिणि स्थितिं कारयति **प्रोक्ताऽसंसक्तिनामिका** पञ्चमभूमिकोच्यत इत्यर्थः ॥ ३१ ॥ षष्ठभूमिकां प्रपञ्चयति—**भूमिकेति** । पूर्वोक्त**भूमिकापञ्चकाभ्यासात्** स्वातिरिक्तरतिं विस्मृत्य केवलस्वात्मारामतया **दृढम्** । तत्र हेतुः **आभ्यन्तराणामिति** । स्वान्तर्बाह्यपदार्थतः यः **परो** व्यतिरिक्तः साक्षी तत्**प्रयुक्तेन** तद्भावापन्नेन **चेतसा प्रयत्नेन** यदवबोधनं ब्रह्मास्मीति ज्ञानं अवगतिः सैव **पदार्थभावना** ॥ ३२–३३ ॥ सप्तमभूमिकां व्यक्तीकरोति—**भूमीति** । स्वातिरिक्त**भेदस्य** ॥ ३४ ॥ सेयं तुर्यावस्था क्वासनमर्हतीत्यत आह—**एषेति** । ततः किमित्यत आह—**विदेहेति** ॥ ३५ ॥

जीवन्मुक्तस्वरूपचर्ये

ये निदाघ महाभागाः सप्तमीं भूमिमा[1]श्रिताः ।
आत्माऽऽरामा महात्मानस्ते महापदमागताः ॥ ३६ ॥
जीवन्मुक्ता न मज्जन्ति सुखदुःखरसस्थिते ।
प्रकृतेनाथ कार्येण किंचित् कुर्वन्ति वा न वा ॥ ३७ ॥
पार्श्वस्थबोधिताः सन्तः पूर्वाचारक्रमागतम् ।
आचारमाचरन्त्येव सुप्तबुद्धवदुत्थिताः ॥ ३८ ॥

चतुर्थादिसप्तमभूमिकाऽन्तारूढब्रह्मविदादिजीवन्मुक्तगणचर्यां स्वरूपं च प्रकटयति—**य इति** । बाह्यनैरपेक्ष्येण **आत्मारामाः** । महद्भिः प्रत्यगभेदेन पद्यत इति **महापदं** प्रत्यगभिन्नं ब्रह्म तद्गताः तद्भावारूढाः इत्यर्थः ॥ ३६ ॥

[1] गताः—अ २, क.

स्वाज्ञवत् देहयोगतः तेऽपि सुखदुःखकलनामागरे मज्जन्तीत्यत आह—**जीवन्मुक्ता इति**। सुखदुःखरसतया स्थिते संसारसागरे इत्यर्थः। ते किं कुर्वन्तीत्यत्र—निर्विकल्पचित्ताः सन्तः **प्रकृतेनेति** ॥ ३७ ॥ तेषां देहस्थितिनिमित्तक्रियाऽऽदिकं कथमित्यत्र समाधितो व्युत्थानसमये **पार्श्वस्थबोधिताः सन्तः** ॥ ३८ ॥

ज्ञानभूमिकाऽधिकारी

भूमिकासप्तकं चैतद्धीमतामेव गोचरम्।
प्राप्य ज्ञानदशामेतां पशुम्लेच्छाऽऽदयोऽपि ये ॥ ३९ ॥
सदेहा वाऽप्यदेहा वा ते मुक्ता नात्र संशयः।
ज्ञप्तिर्हि ग्रन्थिविच्छेदस्तस्मिन् सति विमुक्तता ॥ ४० ॥
मृगतृष्णाऽम्बुबुद्ध्यादिशान्तिमात्रात्मकस्त्वसौ।
ये तु मोहार्णवात्तीर्णास्तैः प्राप्तं परमं पदम् ॥ ४१ ॥
ते स्थिता भूमिकास्वासु स्वात्मलाभपरायणाः।

मयोक्तसोपानभूमिकासप्तकाधिकारिणः के इत्यत आह—**भूमिकेति**। भूमिकाज्ञानफलमाचष्टे—**प्राप्येति**। अनन्तकोटिजन्मसुकृतमहिम्ना कर्मवैचित्र्यतो ज्ञानानधिकारजन्मवन्तोऽपि भुसुण्डादयः **पशवः** अजामिळादयो **म्लेच्छादयोऽपि** ज्ञानाधिकारजन्मानुष्ठितश्रवणादिसिद्धामेतां **ज्ञानदशां प्राप्य** स्वात्तसविशेषनिर्विशेषज्ञानाभ्यां प्रातिभासिकतया देहादिकमस्तीति ज्ञानं येषां ते **सदेहा** जीवन्मुक्ताः, स्वातिरिक्तदेहोपलक्षिताविद्यापदतत्कार्यजातापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति ज्ञानं यदि सञ्जातं तदा ते विदेहमुक्ता भवन्तीत्यत्र **न हि संशयोऽस्तीत्यर्थः**। यत एवं अतः स्वातिरिक्तमोहग्रासस्वज्ञानं मुक्तिसाधनमित्याह—**ज्ञप्तिरिति**। ज्ञप्तिः प्रत्यगभिन्नब्रह्मज्ञानं, तेन **हृदयग्रन्थि-**

विच्छेदः अतस्मिन् तद्भावनिरासः, तस्मिन सति विदेहमुक्तता उदेतीत्यर्थः ॥ ३९–४० ॥ स्वमात्रज्ञानप्लवेन ये स्वातिरिक्तमोहार्णवं तरन्ति तैः सप्तभूमिकाऽऽरूढैः ब्रह्मपदं प्राप्तमेवेत्याह—ये त्विति ॥ ४१ ॥

ज्ञानगम्यं ब्रह्मपदम्

मनःप्रशमनोपायो योग इत्यभिधीयते ॥ ४२ ॥
सप्तभूमिः स विज्ञेयः कथितास्ताश्च भूमिकाः ।
एतासां भूमिकानां तु गम्यं ब्रह्माभिधं पदम् ॥ ४३ ॥
त्वत्ताऽहन्ताऽऽत्मता यत्र परता नास्ति काचन ।
न क्वचिद्भावकलना न भावाभाव[1]गोचरा ॥ ४४ ॥
सर्वं शान्तं निरालम्बं व्योमस्थं शाश्वतं शिवम् ।
अनामयमनाभासमनामकमकारणम् ॥ ४५ ॥
न सन्नासन्न [2]मध्यं तन्न सर्वं सर्वमेव च ।
मनोवचोभिरग्राह्यं पूर्णात् पूर्णं सुखात् सुखम् ॥ ४६ ॥

स्वातिरिक्तग्रासयोगस्ते अभिहितः, तद्गम्यं ब्रह्मेत्याह—मन इति ॥ ४२–४३ ॥ ज्ञानैकगम्यं ब्रह्म किंविशेषणबोधितं भवतीत्यत आह—त्वत्तेति । यत्र धर्मधर्मिविभागो न विद्यते स्वातिरेकेण न क्वचिद्भावकलना ॥ ४४ ॥ व्योमस्थं प्रत्यग्रूपेण हृद्व्योमासनम् । कारणस्य कार्यसापेक्षतया कार्याभावात् कारणत्वं न युज्यत इत्यत्र—"कार्यं चेत् कारणं किंचित् कार्याभावे न कारणम्" इति श्रुतेः ॥ ४५ ॥ करणग्रामाग्राह्यतया न सदिति ॥ ४६ ॥

[1] गोचरं—अ १, उ, उ १.

[2] मध्यां—अ, अ १.

ब्रह्मवेदनमेव ब्रह्माधिगमोपायः

असंवेदनमाशान्तमात्मवेदनमाततम् ।
सत्ता सर्वपदार्थानां नान्या संवेदनादृते ॥ ४७ ॥
संबन्धे द्रष्टृदृश्यानां मध्ये [1]दृष्टिर्हि यद्वपुः ।
द्रष्टृदर्शनदृश्यादिवर्जितं तदिदं पदम् ॥ ४८ ॥
देशाद्देशं गते चित्ते मध्ये यच्चेतसो वपुः ।
अजाड्यसंविन्मननं तन्मयो भव सर्वदा ॥ ४९ ॥
अजाग्रत्स्वप्ननिद्रस्य यत्ते रूपं सनातनम् ।
अचेतनं चा[2]जडत्वं तन्मयो भव सर्वदा ॥ ५० ॥
जडतां वर्जयित्वैकां शिलाया हृदयं हि तत् ।
अमनस्कस्वरूपं [3]तत् तन्मयो भव सर्वदा ।
चित्तं दूरे परित्यज्य योऽसि सोऽसि स्थिरो भव ॥ ५१ ॥

स्वातिरेकेण नास्तीत्यसंवेदनम । सत्ता सर्वपदार्थानां सत्ताऽतिरेकेण इयं चित् **नाऽन्या** । तदधिगमोपायः तद्वेदनादृते न विद्यते ॥ ४७ ॥ कथं पुनः स्वरूपं? इत्यत्र वृत्तिरहिता दृष्टिः स्वरूपमित्याह—**सम्बन्ध इति** । विज्ञानात्मा **द्रष्टा**, दृश्यं घटादिप्रपञ्चः, तयोः आध्यासिक**सम्बन्धे** यन्मध्यं हृदयं तत्र या प्रत्यग्**दृष्टिः** प्रतिभाति सैव यस्य परमात्मनो वपुः तस्य प्रत्यगभिन्नत्वात् तदेतत्पदं **द्रष्टृदर्शनसम्बन्धवर्जितं** ज्ञप्तिमात्रस्वरूपत्वात् ॥ ४८ ॥ किंच—**देशाद्देशमिति** । वपुः निर्वृत्तिकं दृश्यते यत् **अजाड्यसंविन्मननं**—अजाड्या संवित् प्रत्यक् चित् ॥ ४९ ॥ किंच—**अजाग्रदिति** । **सनातनं,**

[1] दृष्टे—अ.
[2] जडं त्वं—अ २, क. जडं च—अ.
[3] यत्—अ.

जाग्रदाद्यवस्थात्रयकलनाविरळतुरीयरूपस्य चिरन्तनत्वात् । देहिदेहसम्बन्धाभावेन **अचेतनम्** ॥ ५० ॥ किंच—**जडतामिति** । स्वाविद्याद्वयतत्कार्ये नामरूपाकारेण या जडता विद्यते—स्वाज्ञदृष्टिशिलावत् दृढीभूताया मायाया **हृदयं हि तत्**—तामेकां जडतां वर्जयित्वा ततो नामरूपापवादाधिकरणतया सच्चिदानन्दरूपं यच्चैतन्यं चकास्ति **तद्धयमनस्कस्वरूपं, तन्मयो भव** तदेव भवेत्यर्थः । सर्वानर्थमूलचित्तापाये यदसि तदेव भवेत्याह—**चित्तमिति** ॥ ५१ ॥

मनोलयात् चिन्मात्रस्फुरणम्

पूर्वं मनः समुदितं [1]परमात्मतत्त्वात्
तेनाततं जगदिदं सविकल्पजालम् ।
शून्येन शून्यमपि विप्र यथाऽम्बरेण
नीलत्वमुल्लसति चारुतराभिधानम् ॥ ५२ ॥
संकल्पसंक्षयवशाद्गलिते तु चित्ते
संसारमोहमिहिका गलिता भवन्ति ।
स्वच्छं विभाति शरदीव खमागतायां
चिन्मात्रमेकमजमाद्यमनन्तमन्तः ॥ ५३ ॥

मनस्तत्कार्ये सति स्थिरीभावः कथमित्यत्र—गगननैल्यवत् स्वविकल्पितं मनः, तेन जगद्विकल्पितं, सङ्कल्पक्षयतो मनसि शान्ते तत्कार्यं विश्वमपि विलीयते, ततो निष्प्रतियोगिकचिन्मात्रतया स्वयमेव अवशिष्यस इत्याह—**पूर्वमिति** । यथा शून्याम्बरेण स्वरूपशून्यर्नीलत्वादिः विकल्पितः तथा निर्विशेषात्मतत्त्वे स्वरूपशून्यं मनस्तत्कार्यं विश्वं विकल्पितमित्यर्थः ॥ ५२ ॥ तच्छान्त्युपायः कथमित्यत्र—**सङ्कल्पेति** । ब्रह्मातिरिक्तास्तित्व**सङ्कल्पक्षयतः**

[1] परमार्थ—उ.

चित्तं विलीयते चिदाकाशे, ततश्चित्तकार्यसंसारमोहमिहिकाः हिमोपमस्वाज्ञानवृत्तयो विलीयन्ते, ततः सर्वविलयाधिकरणं स्वाधिष्ठेयापह्नवतो निरधिष्ठानं सच्चिन्मात्रमवशिष्यते इत्यर्थः ॥ ९३ ॥

जगद्भ्रमशमनोपायः

अकर्तृक[1]मरङ्गं च गगने चित्र[2]मुत्थितम् ।
अद्रष्टृकं स्वानुभवमनिद्रस्वप्नदर्शनम् ॥ ९४ ॥
साक्षिभूते समे स्वच्छे निर्विकल्पे चिदात्मनि ।
निरिच्छं प्रतिबिम्बन्ति जगन्ति मुकुरे यथा ॥ ९५ ॥
एकं ब्रह्म चिदाकाशं सर्वात्मकमखण्डितम् ।
इति भावय यत्नेन चेतश्चाञ्चल्यशान्तये ॥ ९६ ॥
रेखोपरेखावलिता यथैका पीवरी शिला ।
तथा त्रैलोक्यवलितं ब्रह्मैकमिह दृश्यताम् ॥ ९७ ॥
द्वितीयकारणाभावादनुत्पन्नमिदं जगत् ।
ज्ञातं ज्ञातव्यमधुना दृष्टं द्रष्टव्यमद्भुतम् ॥ ९८ ॥
विश्रान्तोऽस्मि चिरं श्रान्तश्चिन्मात्रान्नास्ति किंचन ।
पश्य विश्रान्तसंदेहं विगताशेषकौतुकम् ॥ ९९ ॥
निरस्तकल्पनाजालमचित्तत्वं परं पदम् ।

कथं पुनः एतच्चिदाकाशे विकल्पितं? कोऽयं तच्छमनोपायः? इत्यत आह—अकर्तृकमिति । स्वातिरिक्तकलना कदाऽपि नास्तीति साक्षात् ईक्षितृ-

[1] मरागं—अ, अ १.   [2] मुज्झि—अ, अ १.

**साक्षिभूते समे** इत्यादिविशेषणबोधिते चिदाकाशे चित्रकृद्रञ्जनद्रव्याभावेऽप्यकस्माच्चित्रमुत्थितं **अनिद्रस्वप्नदर्शनं अद्रष्टृकं**, स्वातिरिक्तद्रष्टृदर्शनवैरल्यात्, तथाऽपि स्वाज्ञानुभूतिसिद्धम्। यथा दर्पणे जगन्ति निरिच्छं प्रतिबिम्बन्ति तथा स्वाविद्यापदतत्कार्यचित्रं दृश्यत इत्यर्थः ॥ ९४–९५ ॥ यद्येवं विद्यते इति ते भ्रान्तिस्तदा तन्निरसनाय एवं भावयेत्याह—**एक**मिति ॥ ९६ ॥ किंच—**रेखे**ति ॥ ९७ ॥ यद्ब्रह्मेति सम्भाव्यं त्रैलोक्योपलक्षितं अविद्यापदतत्कार्यजातं जगत् ब्रह्मातिरेकेण किमुत्पन्नमित्यत्राह—**द्वितीये**ति। घटोत्पत्तौ मृत्पिण्डकुलालदण्डादिवत् कारणान्तराभावात् स्वस्यैवाभिन्ननिमित्तोपादानकारणत्वात्, यद्वा स्वातिरिक्तकार्यसत्त्वे तदपेक्षया कारणस्य द्वितीयत्वं तदभावे तन्निरूपितद्वितीयकारणताया **अप्यभावात्**, तदतिरेकेण **इदं जगत्** जात्वपि **नोत्पन्नं** तस्यावस्तुत्वेन शशविषाणतुल्यत्वात् इत्यत्र—

इदं प्रपञ्चं नास्त्येव नोत्पन्नं नो स्थितं क्वचित्।
दृश्यरूपं च दृग्रूपं सर्वं शशविषाणवत् ॥

इति श्रुतेः। एवं ब्रह्म निष्प्रतियोगिकतया स्वमात्रमवशिष्यत इति को वा जानातीत्याशङ्कमानमालक्ष्य ऋभुः स्वानुभवं प्रकटयति—**ज्ञात**मिति ॥ ९८ ॥ यथा मया अनुभूतं तथा त्वमपि पश्येत्याह—**पश्ये**ति। **विश्रान्तसन्देहं** निस्संशयार्थम् ॥ ९९ ॥ **अचित्तत्त्वं** चित्तापह्नवसिद्धमित्यर्थः ॥

अमनस्कब्रह्माधिगमनम्

त एव भूमतां प्राप्ताः संशान्ताशेषकिल्बिषाः ॥ ६० ॥
महाधियः शान्तधियो ये याता विमनस्कताम्।
जन्तोः कृतविचारस्य विगलद्वृत्तिचेतसः ॥ ६१ ॥
मननं त्यजतो नित्यं किंचित् परिणतं मनः।
दृश्यं संत्यजतो हेयमुपादेयमुपेयुषः ॥ ६२ ॥

द्रष्टारं पश्यतो नित्यमद्रष्टारमपश्यतः ।
विज्ञातव्ये परे तत्त्वे जागरूकस्य जीवतः ॥ ६३ ॥
सुप्तस्य घनसंमोहमये संसारवर्त्मनि ।
अत्यन्तपक्ववैराग्यादरसेषु रसेष्वपि ॥ ६४ ॥
संसारवासनाजाले खगजाल इवाखुना ।
त्रोटिते हृदयग्रन्थौ श्लथे वैराग्यरंहसा ॥ ६५ ॥
[1]कातकं फलमासाद्य यथा वारि प्रसीदति ।
तथा विज्ञानवशतः स्वभावः संप्रसीदति ॥ ६६ ॥
नीरागं निरुपासङ्गं निर्द्वन्द्वं निरुपाश्रयम् ।
विनिर्याति मनो मोहाद्विहगः पञ्जरादिव ॥ ६७ ॥
शान्तसंदेहदौरात्म्यं गतकौतुकविभ्रमम् ।
परिपूर्णान्तरं चेतः पूर्णेन्दुरिव [2]राजते ॥ ६८ ॥
नाहं न चान्यदस्तीह ब्रह्मैवास्मि निरामयम् ।
इत्थं सदसतो[3]र्मध्यं यः पश्यति स पश्यति ॥ ६९ ॥

ये अचित्तभावं गताः ते कृतकृत्या इत्याह—**त एवेति** ॥६०॥ अमनस्कब्रह्माभ्युपायः क इत्यत्र वेदान्तश्रवणादिसाधनसम्पन्नस्यामनस्कं ब्रह्म प्रसीदतीत्याह—**जन्तोरिति**। स्वातिरिक्तविषये **विगलद्वृत्तिचेतसः** ॥६१॥ स्वातिरिक्त**मननम्**। **परिणतं** ब्रह्माकारेणेत्यर्थः। यत् उपादेयं तत् **उपेयुषः** ॥ ६२ ॥ सोऽहमिति सर्व**द्रष्टारम्**। **अद्रष्टारं** स्वातिरिक्तदेहादिकम्। ब्रह्माहमस्मीति **विज्ञातव्ये** ॥६३॥

[1] कातरं—अ २, उ, क.
[2] जायते—अ, अ १.
[3] र्मध्ये—अ, अ १.

संसारकलनामजानतः **अत्यन्तपक्ववैराग्यान्** ॥ ६४ ॥ **वैराग्यरंहसा** प्रवाहेण **श्लथे** विश्लेषिते ॥ ६५ ॥ अमनस्कब्रह्माहमस्मीति स्वात्मा प्रसन्नो भवतीत्यर्थः ॥ ६६ ॥ एवं साधनविकलाः स्वभावच्युता भवन्तीत्याह—**नीरागमिति** । ब्रह्म स्वात्मेत्यप्राप्य ततो **विनिर्याति** ॥ ६७ ॥ जीवन्मुक्तस्य तु—**शान्तेति** । स्वातिरिक्तं अस्ति नास्तीति **गतकौतुकविभ्रमं** ब्रह्म स्वात्मेति विदित्वा **परिपूर्णान्तरं चेतः** ब्रह्माकारेण **पूर्णेन्दुरिव राजते** ॥ ६८ ॥ को वा आत्मानं पश्यतीत्यत आह—**नाहमिति** । अतत् देहादिकं **नाहम्** । **सदसतोर्मध्यं** व्यक्ताव्यक्तप्रपञ्चाधिकरणं स्वात्मतया यः **पश्यति** स एव **पश्यति** ॥ ६९ ॥

विषयेषु नीरागप्रवृत्तिः

अयत्नोपनतेष्वक्षिदृग्द्रव्येषु यथा मनः ।
नीरागमेव पतति तद्वत् कार्येषु धीरधीः ॥ ७० ॥
परिज्ञायोपभुक्तो हि भोगो भवति तुष्टये ।
विज्ञाय सेवितश्चोरो मैत्रीमेति न चोरताम् ॥ ७१ ॥
अशङ्किताऽपि संप्राप्ता ग्रामयात्रा यथाऽध्वगैः ।
प्रेक्ष्यते तद्वदेव ज्ञैर्भोगश्रीरवलोक्यते ॥ ७२ ॥
मनसो निगृहीतस्य लीलाभोगोऽल्पकोऽपि यः ।
तमेवालब्धविस्तारं क्लिष्टत्वाद्बहुमन्यते ॥ ७३ ॥
[1]बन्धमुक्तो महीपालो ग्रासमात्रेण तुष्यति ।
परैरबद्धो नाक्रान्तो न राष्ट्रं बहु मन्यते ॥ ७४ ॥

एवं पश्यतः करणग्रामोऽविदुष इव सरागं स्वस्वविषये पततीत्यत आह—**अयत्नेति** । यथा सामान्यजनदृष्टिः पथिगततृणादिषु **नीरागमेव**

[1] बद्ध—अ, अ १, उ १.

**पतति** तथा धीरधीः सर्वत्रेत्यर्थः ॥ ७० ॥ भोगसेवया धीरोऽपि बध्यत इत्यत्र सदृष्टान्तं निराकरोति—**परिज्ञायेति**। ब्रह्मातिरेकेण भोक्तृभोज्यादिकं नास्तीति **परिज्ञाय** । **तुष्टये** न बन्धाय ॥ ७१ ॥ किंच—**अशङ्किताऽपि** हानिवृद्धिरस्तिनास्तीत्यस्मरणपूर्वकं **संप्राप्ता ग्रामयात्रा यथाऽध्वगैः** यथा तत्रत्यतृणवृक्षादिकमिदं ममास्त्विति माऽस्त्विति अभिसन्धिवैकल्येन **प्रेक्ष्यते तद्वदेव ज्ञैः भोगश्रीरवलोक्यते** नीरागमेव दृश्यत इत्यर्थः ॥ ७२ ॥ तदवलोकनतः तत्तृष्णा स्यादित्यत आह—**मनस इति** । यमी यदृच्छया प्राप्तप्राणधारणमात्रोपयोगिभिक्षादिकमपि बहुमन्यते तेनैव तृप्तो भवति, तदस्तु माऽस्त्विति सङ्कल्पाभावात् ॥ ७३ ॥ उक्तार्थे दृष्टान्तमाह—**बन्धेति** ॥ ७४ ॥

मनोजयस्य कर्तव्यता

हस्तं हस्तेन संपीड्य दन्तैर्दन्तान् विचूर्ण्य च ।
अङ्गान्यङ्गै[1]रिवाक्रम्य जयेदादौ स्वकं मनः ॥ ७५ ॥
मनसो विजयान्नान्या गतिरस्ति भवार्णवे ।
महानरकसाम्राज्ये मत्तदुष्कृतवारणाः ।
आशाशरशलाका[2]ढ्या दुर्जया हीन्द्रियारयः ॥ ७६ ॥
प्रक्षीणचित्तदर्पस्य निगृहीतेन्द्रियद्विषः ।
पद्मिन्य इव हेमन्ते क्षीयन्ते भोगवासनाः ॥ ७७ ॥
तावन्निशीव वेताला वल्गन्ति हृदि वासनाः ।
एकतत्त्वदृढाभ्यासाद्यावन्न विजितं मनः ॥ ७८ ॥

राजा भटो ज्ञान्यज्ञान्यहमित्यादिविभ्रमहेतुः यतो मनः अतस्तज्जेतव्यमित्याह—**हस्तमिति** ॥ ७५ ॥ एवं जेतव्यमनसः सत्त्वे **मनसो विजयात्** । मनसा

[1] स्समाक्र—अ, उ, उ १. [2] स्स्युः—अ.

सह इन्द्रियाण्यपि जेतव्यानीत्याह—महानरकेति । वागणादीनां साम्राज्याङ्गत्वात् । जेतव्यारयस्तु आशाशरशलाकाढ्याः आशैव शरशलाकाः कुन्ता येषां ते तथोक्ताः दुर्जया हीन्द्रियारयः स्वस्वविषयव्यावृत्तिखड्गेन जेतव्या इत्यर्थः ॥ ७६ ॥ सर्वानर्थकारिण्याः वासनायाः सत्त्वात् किं मानसेन्द्रियजयेनेत्यत आह—प्रक्षीणेति । वासनाक्षयस्य—न हि ब्रह्मातिरेकेण मनः इन्द्रियं वाऽस्तीति—मानसेन्द्रियविजयपूर्वकत्वात् । मूलच्छेदतो वासनाः नश्यन्तीत्यर्थः ॥ ७७–७८ ॥

मनसः सर्वार्थसाधकत्वम्

भृत्योऽभिमतकर्तृत्वान्मन्त्री सर्वार्थकारणात् ।
सामन्तश्चेन्द्रियाक्रान्तेर्मनो मन्ये विवेकिनः ॥ ७९ ॥
लालनात् स्निग्धललना पालनात् पालकः पिता ।
सुहृदुत्तमविन्यासान्मनो मन्ये मनीषिणः ॥ ८० ॥
स्वालोकितः शास्त्रदृशा स्वबुद्ध्या [1]स्वानुभावितः ।
प्रयच्छति परां सिद्धिं त्यक्त्वाऽऽत्मानं मनःपिता ॥ ८१ ॥
सुदृष्टः सुदृढः स्वच्छः सुक्रान्तः सुप्रबोधितः ।
स्वगुणेनार्जितो भाति हृदि हृद्यो मनोमणिः ॥ ८२ ॥
एनं मनोमणिं ब्रह्मन् बहु[2]पङ्ककलङ्कितम् ।
विवेकवारिणा सिद्ध्यै प्रक्षाल्यालोकवान् भव ॥ ८३ ॥

भृत्यमन्त्र्यादिवत् सर्वार्थसाधकं मन एवेत्याह—भृत्य इति । मन एव सङ्कल्पतो यदि निगृहीतं तदा भृत्योऽभिमतकर्तृत्वात्, मन्त्री सर्वार्थसिद्धौ

[1] स्वनु—अ १, क.    [2] दोष—उ, उ १.

कारणत्वात्, सामन्तश्चेन्द्रियाक्रान्तेः यदीन्द्रियमुषितं तदा शत्रुरपि **मनो मन्ये** ॥ ७९–८० ॥ मनसः पित्रादित्वं कथमित्यत्र—स्वेति । शास्त्रदृष्ट्या स्वानुभवबलादपि ब्रह्मातिरेकेण मनो नास्तीति स्वेनालोकितोऽनुभावितश्च भवति। तदा **प्रयच्छति** ॥ ८१ ॥ बन्धमोक्षहेतुः मन एवेत्याह—**सुदुष्ट इति** । स्वाज्ञानप्रभवपराग्वनितालम्पटत्वात् **सुदुष्टः** आभासतोऽपि मनोऽस्तीति भ्रमात् **सुदृढः** सङ्कल्पक्षयतः **स्वच्छः** ब्रह्मात्मना **सुक्रान्तः** ब्रह्मातिरेकेण नास्तीति **सुप्रबोधितः** । एवं **मनोमणिरूर्जितो भाति** ॥ ८२ ॥ अनेन बन्धमोक्षहेतुः मनोमणिरिति विदित्वा तद्गतबन्धहेत्वंशमपोह्य सारांशं गृहीत्वा सुखी भवेत्याह—एनमिति । ब्रह्मातिरिक्तं नेति **विवेकवारिणा** ॥ ८३ ॥

तृष्णाछेदनसाधनं अहंभावत्यागः

विवेकं परमाश्रित्य बुद्ध्या सत्यमवेक्ष्य च ।
इन्द्रियारीनलं छित्त्वा तीर्णो भव भवार्णवात् ॥ ८४ ॥
आस्थामात्रमनन्तानां दुःखानामाकरं विदुः ।
अनास्थामात्रमभितः सुखानामालयं विदुः ॥ ८५ ॥
वासनातन्तुबद्धोऽयं लोको विपरिवर्तते ।
सा प्रसिद्धाऽतिदुःखाय सुखायोच्छेदमागता ॥ ८६ ॥
धीरोऽप्यतिबहुज्ञोऽपि कुलजोऽपि महानपि ।
तृष्णया बध्यते जन्तुः सिंहः शृङ्खलया यथा ॥ ८७ ॥
परमं पौरुषं यत्नमास्थायादाय सूद्यमम् ।
यथाशास्त्रमनुद्वेगमाचरन् को न सिद्धिभाक् ॥ ८८ ॥
अहं सर्वमिदं विश्वं परमात्माऽहमच्युतः ।
नान्यदस्तीति [1]संविद्या पर[प्रथ]मा सा ह्यहंकृतिः ॥ ८९ ॥

[1] संवित्त्या—उ.

सर्वस्माद्व्यतिरिक्तोऽहं वालाग्रादप्यहं तनुः ।
इति या संविदो ब्रह्मन् द्वितीयाऽहंकृतिः शुभा ॥ ९० ॥
मोक्षायैषा न बन्धाय जीवन्मुक्तस्य विद्यते ॥ ९१ ॥
पाणिपादादिमात्रोऽयमहमित्येष निश्चयः ।
अहंकारस्तृतीयोऽसौ लौकिकस्तुच्छ एव सः ॥ ९२ ॥
वर्ज्य एव दुरात्माऽसौ कन्दः संसारदुस्तरोः ।
अनेनाभिहतो जन्तुरधोऽधः परिधावति ॥ ९३ ॥
अनया दुरहंकृत्या भावात् संत्यक्तया चिरम् ।
शिष्टाहंकारवान् जन्तुः शमवान् याति मुक्तताम् ॥ ९४ ॥
प्रथमौ द्वावहंकारावङ्गीकृत्य त्वलौकिकौ ।
तृतीयाऽहंकृतिस्त्याज्या लौकिकी दुःखदायिनी ॥ ९५ ॥
अथ ते अपि संत्यज्य सर्वाहंकृतिवर्जितः ।
[1]स तिष्ठते तथाऽत्युच्चैः [2]परमेवाधिरोहति ॥ ९६ ॥

तन्मूलच्छेदं कृत्वा सुखी भवेत्याह—विवेकमिति । ब्रह्मातिरिक्तं न किंचिदस्तीति विवेकम् ॥ ८४ ॥ स्वातिरिक्तमनोमूलं किमित्यत्र तदस्ति नास्तीत्यास्थाऽनास्थारूपाविद्याविद्यात्मिका मायेत्याह—आस्थेति ॥ ८५ ॥ एवमविदित्वा वासनातन्तुबद्धोऽयम् । वासनाऽस्ति नास्तीति ज्ञानं बन्धमोक्षहेतुरित्यर्थः ॥ ८६ ॥ तृष्णैव बन्धकर्त्रीत्याह—धीरोऽपीति ॥ ८७ ॥ सर्वेषां दुःखहेतूनामपि तृष्णैव दीर्घदुःखदा, तन्मूलं स्वातिरिक्तं, स्वमात्रज्ञानतः तन्मूलोच्छेदकृत्सिद्धो भवतीत्याह—परममिति ॥ ८८ ॥ तृष्णोच्छेदनोपायस्तु तदहम्भावमवष्टभ्य अतदहंभावत्याग एवेत्याह—अहमिति । स्वातिरेकेण

[1] संति—अ २. [2] पर—उ.

**नान्यदस्तीति** ॥ ८९ ॥ **तनु:** निर्विशेषत्वात् । **संविदो** वृत्तिः ॥ ९०–९२ ॥ तृष्णाविजृम्भितसंसारदुस्तरो: ॥ ९३–९५ ॥ यद्यसल्लौकिकगृहदेहात्मर्धात्याग- पूर्वकं ब्रह्माहमस्मीति ज्ञानमुदितं तदा तमोरजोवृत्तिमत्स्वातिरिक्तदेहाद्यहंभावं सत्ववृत्तिमद्ब्रह्माहंभावं च त्यक्त्वा यः केवलरूपेण आस्ते स ब्रह्मैव भवतीत्याह —**अथेति** । **अथ**शब्दो विकल्पार्थः । तानपि पूर्वोक्तत्रिविधाहंभावानिति वक्तव्ये **ते अपि** इति विभक्तिव्यत्ययः । देहादिरस्मि, ब्रह्मास्मि, इति **सर्वाहङ्कृतिविरळो** य आस्ते **सोऽयं** मुनिः **उच्चैः पर**ं सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमित्येव **अधिरोहति** तन्मात्रमवशिष्यते इत्यर्थः ॥ ९६ ॥

मनोऽभ्युदयनाशावेव बन्धमुक्ती

भोगेच्छामात्रको बन्धस्तत्त्यागो मोक्ष उच्यते ।
मनसोऽभ्युदयो नाशो मनोनाशो महोदयः ।
ज्ञमनो नाशमभ्येति मनोऽज्ञस्य हि शृङ्खला ॥ ९७ ॥
नानन्दं ननिरानन्दं नचलं नाचलं स्थिरम् ।
नसन्नासन्न चैतेषां मध्यं ज्ञानिमनो विदुः ॥ ९८ ॥
यथा सौक्ष्म्याच्चिदाभास्य आकाशो नोपलक्ष्यते ।
तथा निरंशश्चिद्भावः सर्वगोऽपि न लक्ष्यते ॥ ९९ ॥
सर्वसंकल्परहिता सर्वसंज्ञाविवर्जिता ।
सैषा चिदविनाशात्मा स्वात्मेत्यादिकृताभिधा ॥ १०० ॥
आकाशशतभागाच्छा ज्ञेषु निष्कलरूपिणी ।
सकलाऽमलसंसारस्वरूपैकात्मदर्शिनी ॥ १०१ ॥
नास्तमेति न चोदेति नोत्तिष्ठति न तिष्ठति ।
न च याति न चायाति न च नेह न चेह चित् ॥ १०२ ॥

सैषा चिदमलाकारा निर्विकल्पा निरास्पदा ॥ १०३ ॥

भङ्ग्यन्तरेण बन्धमोक्षस्थितिमाह —**भोगेति** । मनःसत्त्वासत्त्वे प्रेयःश्रेयोहेतू भवत इत्याह—**मनस इति** ॥ ९७ ॥ स्वाज्ञमनो मन एव, स्वज्ञमनस्तु ब्रह्मैव, इत्याह—**नानन्दमिति** । स्वातिरिक्तं सङ्कल्प्य न हि नन्दतीति **नानन्दं**, ब्रह्माकारेण परिणतं सत् **ननिरानन्दं**, न हि विषयात् विषयान्तरं प्रति चलतीति **नचलं**, स्वातिरिक्तसत्ताऽभावात् **नाचलं**, ब्रह्माकारेण **स्थिरं**, व्यक्ताव्यक्तकलनावैरळ्यात् **नसत् नासत्**, किंतु एतेषां मध्यं सर्वाधिकरणं ब्रह्मैव **ज्ञानिमनो विदुः** ब्रह्मविद इत्यर्थः ॥ ९८ ॥ ब्रह्माकारपरिणतं मनो न लक्ष्यते इत्यत्र सदृष्टान्तमाह—**यथेति** । **चिद्भावो** ब्रह्माकारवृत्तिरित्यर्थः ॥ ९९ ॥ चित्स्वरूपं कथं? इत्यत आह—**सर्वेति** । या **सर्वसङ्कल्परहिता** मनोविलक्षणत्वात् **सर्वसंज्ञाविवर्जिता** निर्विशेषत्वात् **सैषा** ॥ १०० ॥ स्वाज्ञदृष्ट्या **सकळा**, स्वज्ञदृष्ट्या **अमलसंसारस्वरूपा** **एकात्मदर्शिनी** जीवन्मुक्तात्मप्रकाशिनी ॥ १०१ ॥ चितो निर्विशेषतया उदयादिविकृत्यभावात् ॥ १०२ ॥ **निरास्पदा**, चितः स्वमात्रतया निरधिष्ठानत्वात् ॥ १०३ ॥

### चिद्विद्याऽधिकारिनिरूपणम्

आदौ शमदमप्रायैर्गुणैः शिष्यं विशोधयेत् ।
पश्चात् सर्वमिदं ब्रह्म शुद्धस्त्वमिति बोधयेत् ॥ १०४ ॥
अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत् ।
महानरकजालेषु स तेन विनियोजितः ॥ १०५ ॥
प्रबुद्धबुद्धेः प्रक्षीणभोगेच्छस्य निराशिषः ।
नास्त्यविद्या[1]मलमिति प्राज्ञस्तूपदिशेद्गुरुः ॥ १०६ ॥

[1] मलातीतः प्राज्ञस्योप—अ.

इत्थंभूतचिद्विद्या यथोक्ताधिकारिणे देया, निरधिकारिणे न देया इत्याह— **आदाविति** ॥ १०४ ॥ उपदेशमहिम्ना निरधिकार्यपि कृतार्थो भवतीत्यत्र— चित्तशुद्ध्यभावात् यथावत् ज्ञानं नोदेति, आभासज्ञानतः चित्तशुद्धिसाधनानुष्ठानश्रद्धा निवर्तते, तेनायं नारकी भवेदित्याह—**अज्ञस्येति**। तेन गुरुणा ॥ १०५ ॥ उपदेशाधिकारी कीदृश इत्यत्र— **प्रबुद्धेति** ॥ १०६ ॥

मायाहननेन ब्रह्मप्राप्तिः

सति दीप इवालोकः सत्यर्क इव वासरः ।
सति पुष्प इवामोदश्चिति सत्यां जगत्तथा ॥ १०७ ॥
प्रतिभासत एवेदं न जगत् परमार्थतः ।
ज्ञानदृष्टौ प्रसन्नायां [1]प्रबोधे विततोदये ॥ १०८ ॥
यथावज्ज्ञास्यसि स्वस्थो मद्वा[2]ग्वृष्टिबलाबलम् ।
अविद्ययैवोत्तमया स्वार्थनाशोद्यमार्थया ॥ १०९ ॥
विद्या संप्राप्यते ब्रह्मन् सर्वदोषापहारिणी ।
शाम्यति ह्यस्त्रमस्त्रेण मलेन क्षाल्यते मलम् ॥ ११० ॥
शमं विषं विषेणैति रिपुणा हन्यते रिपुः ।
ईदृशी भूतमायेयं या स्वनाशेन हर्षदा ॥ १११ ॥
न लक्ष्यते स्वभावोऽस्या वीक्ष्य[3]माणैव नश्यति ।
नास्त्येषा परमार्थेनेत्येवं भावनयेद्धया ॥ ११२ ॥
सर्वं ब्रह्मेति यस्यान्तर्भावना सा हि मुक्तिदा ।
भेददृष्टिरविद्येयं सर्वथा तां विसर्जयेत् ॥ ११३ ॥

[1] प्रबोध—अ २, क. [2] ग्दृष्टि—अ, अ १. [3] माणे विन—उ, उ १.

मुने नासाद्यते तद्धि पदमक्षयमुच्यते ।
कुतो जातेयमिति ते द्विज माऽस्तु विचारणा ॥ ११४ ॥
इमां कथमहं हन्मीत्येषा तेऽस्तु विचारणा ।
अस्तं गतायां क्षीणायामस्यां ज्ञास्यसि तत् पदम् ॥ ११५ ॥
यत एषा यथा चैषा यथा नष्टेत्यखण्डितम् ।
तदस्या रोगशालाया यत्नं कुरु चिकित्सने ॥ ११६ ॥
यथैषा जन्मदुःखेषु न भूयस्त्वां नियोक्ष्यति ।
स्वात्मनि स्वपरिस्पन्दैः स्फुरत्यच्छैश्चिदर्णवः ॥ ११७ ॥
एकात्मकमखण्डं तदित्यन्तर्भाव्यतां दृढम् ।

इदं जगदवभासते न हि त्वदुपदिष्टं ब्रह्मेत्याशङ्कमानमालक्ष्य सदृष्टान्तं जगन्मूलं प्रतिपादयति—**सतीति** । न हि निरास्पदं जगदुदेति जगतो दृश्यमानत्वात्, तदधिष्ठानं ब्रह्म स्वयमेवेति निश्चिन्विव्यर्थः ॥ १०७ ॥ सद्वितीयं ब्रह्मेत्यत आह—**प्रतीति** । जगतः प्रतीतिकालीनत्वेन मिथ्यात्वात् तदधिष्ठानं अद्वितीयमेवेत्यर्थः । एवं व्यवसायं करोषि चेत् सम्यज्ज्ञानदृष्टिरुदेति, ततो निरधिष्ठानं ब्रह्म स्वमात्रधिया जानासीत्याह—**ज्ञानेति** ॥ १०८ ॥ यदा निरधिष्ठानं ब्रह्म साक्षात्करोषि तदा मदुपदेशसुखं वेत्सीत्यर्थः । श्रवणादेः अविद्याकार्यत्वेन तेन विद्यातत्फलसिद्धिः कुत इत्यत आह—**अविद्ययेति** । **अविद्ययैवोत्तमया** श्रवणादिरूपया ॥ १०९ ॥ त्वदाशङ्कितसर्वदोषापहारिणी । **मलं** दर्पणादेः ॥ ११०–१११ ॥ तदसंभवज्ञानमेव मुक्तिसाधनमित्याह—**नास्त्येषेति** ॥ ११२ ॥ सर्ववर्जितसर्वम् । एवं **भेददृष्टिरविद्येयम्** ॥ ११३ ॥ यद्भेददर्शनागम्यं तदेव स्वरूपमित्याह—**मुन इति** । यत् **मुने नासाद्यते** । मायामूलमविचार्य तदुन्मूलनयत्नवान् भवेत्याह—**कुत इति** ॥ ११४–११५ ॥ शशविषाणवत् माया नास्तीति तावन्मायारोगचिकित्सां कुर्वित्याह—**यत इति** ।

**यत एषा** जाता **यथा चैषा** ब्रह्मण्येव स्थिता ॥ ११६ ॥ तथा निर्मूलनं कुर्वित्यर्थः । ततः किमित्यत आह—**स्वात्मनीति** । यदोन्मीलिता माया तदैव **स्वात्मनि** प्रतीचि **स्वपरिस्पन्दैः अच्छैः** विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तैः **चिदर्णवः** तुर्यतुर्यः स्फुरति विजृम्भत इत्यर्थः ॥ ११७ ॥ तस्य नानाऽऽत्मत्वं मन्यमानमालक्ष्य अखण्डतामाह—**एकेति** । तुर्यतुर्यविकल्पितविश्वविश्वादीनां तुर्यतुर्यानतिरेकात् सर्वमेकात्मकमखण्डैकरसमिति चिन्त्यतामित्यर्थः ।

ब्रह्मचिच्छक्तेः संसारिजीवत्वम्

किंचित्क्षुभितरूपा सा चिच्छक्तिश्चिन्महार्णवे ॥ ११८ ॥
[1]तन्मयैव स्फुरत्यच्छा तत्रैवोर्मिरिवार्णवे ।
आत्मन्येवात्मना व्योम्नि यथा सरति मारुतः ॥ ११९ ॥
तथैवात्माऽऽत्मशक्त्यैव स्वात्मन्येवैति लोलताम् ।
क्षणं स्फुरति सा देवी सर्वशक्तितया तथा ॥ १२० ॥
देशकालक्रियाशक्तिर्न यस्याः [2]संप्रकर्षति ।
स्वस्वभावं विदित्वोच्चैरप्यनन्तपदे स्थिता ॥ १२१ ॥
रूपं परिमितेनासौ भावयत्यविभाविता ।
यदैवं भावितं रूपं तया परमकान्तया ॥ १२२ ॥
तदैवैनामनुगता नामसंख्यादिका दृशः ।
विकल्पकलिताकारं देशकालक्रियाऽऽस्पदम् ॥ १२३ ॥
चितो रूपमिदं ब्रह्मन् क्षेत्रज्ञ इति कथ्यते ।
वासनाः कल्पयन् सोऽपि यात्यहंकारतां पुनः ॥ १२४ ॥

[1] तन्मयेव—अ, अ १, अ २, क. [2] संप्रकर्षणे—अ.

अहंकारो विनिर्णेता कलङ्की बुद्धिरुच्यते ।
बुद्धिः संकल्पिताकारा प्रयाति मननास्पदम् ॥ १२५ ॥
मनो घनविकल्पं तु [1]गच्छतीन्द्रियतां शनैः ।
पाणिपादमयं देहमिन्द्रियाणि विदुर्बुधाः ॥ १२६ ॥
एवं जीवो हि संकल्पवासनारज्जुवेष्टितः ।
दुःखजालपरीतात्मा क्रमादायाति नीचताम् ॥ १२७ ॥
इति शक्तिमयं चेतो घनाहंकारतां [2]गतम् ।
कोशकारक्रिमिरिव स्वेच्छया याति बन्धनम् ॥ १२८ ॥
स्वसंकल्पिततन्मात्रजालाभ्यन्तरवर्ति च ।
परां विवशतामेति शृङ्खलाबद्धसिंहवत् ॥ १२९ ॥
क्वचिन्मनः क्वचिद्बुद्धिः क्वचिज्ज्ञानं क्वचित् क्रिया ।
क्वचिदेतदहंकारः क्वचिच्चित्तमिति स्मृतम् ॥ १३० ॥
क्वचित् प्रकृतिरित्युक्तं क्वचिन्मायेति कल्पितम् ।
क्वचिन्मलमिति प्रोक्तं क्वचित् कर्मेति संस्मृतम् ॥ १३१ ॥
क्वचिद्बन्ध इति ख्यातं क्वचित् पुर्यष्टकं स्मृतम् ।
प्रोक्तं क्वचिदविद्येति क्वचिदिच्छेति संमतम् ॥ १३२ ॥
इमं संसारमखिलमाशापाशविधायकम् ।
दधदन्तःफलैर्हीनं वटधाना वटं यथा ॥ १३३ ॥

[1] गच्छन्ती—अ २, क.

[2] गतः–अ, अ १, अ २, क.

चिन्ताऽनलशिखादग्धं कोपाजगर[1]चर्वितम् ।
कामाब्धिकल्लोलरतं विस्मृतात्मपितामहम् ॥ १३४ ॥
समुद्धर मनो ब्रह्मन् मातङ्गमिव कर्दमात् ।
एवं जीवाश्रितो भावा भवभावनयाऽऽहिताः ॥ १३५ ॥
ब्रह्मणा [2]कल्पिताकारा लक्षशोऽप्यथ कोटिशः ।
संख्याऽतीताः पुरा जाता जायन्तेऽद्यापि चाभितः ॥ १३६ ॥
उत्पतस्यन्तेऽपि चैवान्ये कणौघा इव निर्झरात् ।
केचित् प्रथमजन्मानः केचिज्जन्मशताधिकाः ॥ १३७ ॥
केचिच्चासंख्यजन्मानः केचिद्द्वित्रिभवान्तराः ।
केचित् किन्नरगन्धर्वविद्याधरमहोरगाः ॥ १३८ ॥
केचिदर्केन्दुवरुणाख्यक्षाधोक्षजपद्मजाः ।
केचिद्ब्राह्मणभूपालवैश्यशूद्रगणाः स्थिताः ॥ १३९ ॥
केचित्तृणौषधीवृक्षफलमूलपतङ्गकाः ।
केचित् कदम्बजम्बीरसालतालतमालकाः ॥ १४० ॥
केचिन्महेन्द्रमलयसह्यमन्दरमेरवः ।
केचित् क्षारोदधिक्षीरघृतेक्षुजलराशयः ॥ १४१ ॥
केचिद्विशालाः ककुभः केचिन्नद्यो महारयाः ।
विहरन्त्युच्चकैः केचिन्निपतन्त्युत्पतन्ति च ॥ १४२ ॥

[1] गर्वि—अ, अ १, अ २, उ. निर्मि—क.
[2] कलिता—अ, अ १, उ, उ १.

कन्तुका इव हस्तेन मृत्युनाऽविरतं हताः ।
भुक्त्वा जन्मसहस्राणि भूयः संसारसंकटे ॥ १४३ ॥
पतन्ति केचिदबुधाः संप्राप्या[1]पि [2]विवेकिताम् ।

चिच्छक्तिः क्व विकल्पिता? तदियत्ता कीदृशी? इत्यत आह— **किंचिदिति**। अक्षुभितात्मनि **किंचित्क्षुभितरूपा सा चिच्छक्तिः** चित्सामान्यं साक्षिरूपिणी **चिन्महार्णवे** ॥ ११८–१२० ॥ देशकालक्रियाशक्तिर्न साक्षीश-सूत्रादिरूपिणी **यस्याः** चिच्छक्तेः स्वरूपं अविकल्पानुङ्गैकरसादिविश्वविश्रान्तं **संप्रकर्षति** पर्यवसाने तत् सर्वं उपसंहृत्य **स्वस्वभावं** निष्प्रतियोगिकचिन्मात्रमिति **विदित्वोच्चैरप्यनन्तपदे स्थिता** ॥ १२१ ॥ सैवानादिसिद्धस्वाज्ञादिदृष्ट्या स्वात्मरूपं **परिमितेनासौ भावयति** वस्तुतस्तु **अविभाविता**। यदैवं **भावितं रूपं तया परमकान्तया** स्वाधिष्ठेयमायया ॥ १२२ ॥ तदैवैनां चिच्छक्तिं **अनुगता** विश्वविश्वादिनामसङ्ख्यादिका **दृशः** तदा **विकल्पकलिताकारं देशकालक्रियाऽऽस्पदं** साक्षीशादिकल्पनास्पदम् ॥ १२३ ॥ **चितो रूपमिदं ब्रह्मन् क्षेत्रज्ञ इति कथ्यते**, क्षेत्रज्ञस्यैव स्वाज्ञानसम्पत्त्या साक्ष्यादिसर्वकल्पकत्वात्। विराडादीनामेवं स्वाज्ञानाभावात् न हि कल्पकत्वमस्ति। यत एवं अतः क्षेत्रज्ञ एव स्वातिरिक्तमस्ति नास्तीति विकल्पकः, तस्य बन्धमोक्षाधिकारित्वात्। तस्यैवं कल्पनासाधनं किं इत्यत्र स्वातिरिक्तनानावासनात्मिका बुद्धिरित्याह— **वासना इति** ॥ १२४ ॥ कीदृशोऽयमहंकार इत्यत्र—**अहङ्कार इति**। ततः **बुद्धिरिति** ॥ १२५ ॥ ततः **मन इति** ॥ १२६–१२८ ॥ अयं जीवः **परां विवशतामेति** ॥ १२९ ॥ तद्बन्धनहेतुस्वाविद्यातत्त्वं बहुधा विकल्पयति —**क्वचिदिति**। पुर्यष्टकशब्देन व्यष्टिसमष्ट्यात्मकं लिङ्गशरीरमुच्यते ॥ १३०–१३२ ॥ इत्थंभूतं स्वाविद्यातत्त्वं मनः तद्गतस्वातिरिक्तास्तित्व-भ्रमार्णवात् समुद्धरेत्याह—**इममिति** ॥ १३३–१३४ ॥ इत्थंभूतो जीवः किं एकरूपः उत अनेकरूपः? इत्यत्र—एकजीवपक्षे लिङ्गोपाधिको जीवः

[1] प्यवि—अ २.    [2] विवेक—अ १, अ २, क.

स्वयमेक एव स्थावरजङ्गमात्मकं जगत् तच्चित्तकल्पितं तद्दृष्ट्या एवंकल्पक-स्वाज्ञानक्षयतः स्वज्ञानं प्रादुर्भूतं स्वातिरिक्तकलनासंभवप्रबोधसमकालं ब्रह्मैव यत् पुरा नानात्वेन विभातं तन्निष्प्रतियोगिकं सत् स्वमात्रमवशिष्यते । नानाजीवसद्भावपक्षे तु मूलाविद्याया एकत्वेऽपि तत्प्रविभक्ततूलान्तःकरणाविद्याया बहुत्वात् तदुपाधिकजीवस्यापि बहुत्वं, तत्रैकस्य ज्ञानान्मुक्तिः इतरस्याज्ञानात् बन्ध इति च शास्त्रव्यवस्थासिद्धिः युज्यत इति मनसि निधाय जीवानेकत्वं प्रपञ्चयति—एवमिति ॥ १३९–१४३ ॥

मायाऽधीना ब्रह्मणः सृष्टिः

दिक्कालाद्यनवच्छिन्नमात्मतत्त्वं स्वशक्तितः ॥ १४४ ॥
लीलयैव यदादत्ते दिक्कालकलितं वपुः ।
[1]तदेव जीवपर्यायवासनावेशतः परम् ॥ १४५ ॥
मनःसंपद्यते [2]लोलं कलनाकलनोन्मुखम् ।
[3]कलयन्ती मनःशक्तिरादौ भावयति क्षणात् ॥ १४६ ॥
आकाशभावनामच्छां शब्दबीजरसोन्मुखीम् ।
ततस्तद्घनतां यातं घनस्पन्दक्रमान्मनः ॥ १४७ ॥
भावयत्यनिलस्पन्दं स्पर्शबीजरसोन्मुखम् ।
ताभ्यामाकाशवाताभ्यां दृढाभ्यामवशात्ततः ॥ १४८ ॥
शब्दस्पर्शस्वरूपाभ्यां संघर्षाज्जन्यतेऽनलः ।
रूपतन्मात्रसहितं त्रिभिस्तैः सह संमितम् ॥ १४९ ॥

[1] तदैव—उ. [2] लोकं—क.
[3] कलयन्ति—अ, अ १, अ २, क.

मनस्तादृग्गुणगतं रसतन्मात्रवेदनम् ।
क्षणाच्चेतत्यपां शैत्यं जलसंवित्ततो भवेत् ॥ १५० ॥
ततस्तादृग्गुणगतं मनो भावयति क्षणात् ।
गन्धतन्मात्रमेतस्माद्भूमिसंवित्ततो भवेत् ॥ १५१ ॥
अथेत्थंभूततन्मात्रवेष्टितं तनुतां जहत् ।
वपुर्वह्निकणाकारं स्फुरितं व्योम्नि पश्यति ॥ १५२ ॥
अहंकारकलायुक्तं बुद्धिबीजसमन्वितम् ।
तत्पुर्यष्टकमित्युक्तं भूतहृत्पद्मषट्पदम् ॥ १५३ ॥
तस्मिंस्तु तीव्रसंवेगाद्भावयद्भासुरं वपुः ।
स्थूलतामेति पाकेन मनो बिल्वफलं यथा ॥ १५४ ॥
मूषास्थद्रुतहेमाभं स्फुरितं विमलाम्बरे ।
संनिवेशमथादत्ते तत्तेजः स्वस्वभावतः ॥ १५५ ॥
ऊर्ध्वं शिरःपिण्डमयमधः पादमयं तथा ।
पार्श्वयोर्हस्तसंस्थानं मध्ये चोदरधर्मिणम् ॥ १५६ ॥
कालेन स्फुटतामेत्य भवत्यमलविग्रहम् ।

एवं जीवानां नानाविधत्वमभिधाय पुनर्जीवानां ब्रह्मानन्यत्वं प्रकटयितुं निर्विशेषं ब्रह्मैव सविशेषभावमेत्य मायामधिष्ठाय वियदादिपञ्चभूततत्कार्याविद्याऽण्डं ससर्जेत्याह— दिक्कालेति । स्वात्मतत्त्वस्य स्वातिरिक्तदिक्कालाद्यसंभवप्रबोधसिद्ध-त्वात् निष्प्रतियोगिकब्रह्ममात्रमवशिष्यत इत्यत्र न विवादः । तदेव निर्विशेषं ब्रह्म स्वाज्ञदृष्ट्या **स्वशक्तितः** ॥ १४४ ॥ यदेतन्निर्विशेषं ब्रह्म **लीलया** दिक्कालादि कल्पयित्वा तत्कलनाकलितेशादिभावनाऽऽस्पदं वपुः सविशेषभाव**मादत्ते** **तदेव परमीश्वरतत्त्वं** नानाविधजीवपर्यायवासनाऽभिनिवेशतः सर्वकलनानिर्वाहकं

**मनः** संपद्यत इत्याह—**मन** इति । आदावीश्वरतत्त्वं प्रपञ्चरचनानिर्वाहाय स्वाभिन्नं शोधितपारदवत् लोलं चञ्चलं भवितव्यकलनाकलनोन्मुखं **मनः संपद्यते** ॥ १४५ ॥ ततः किमित्यत्र—ईश्वरेच्छाशक्तिरूपिणी मनश्शक्तिः आकाशादिक्रमेण पञ्चतन्मात्राणि भावयतीत्याह—**कलयन्तीति** । ईशाधिष्ठितेयं मानसी शक्तिः विश्वकलनां **कलयन्ती** सत्यादौ क्षणमात्रतः **शब्दबीजरसविषयां अच्छां** आकाशभावनां भावयति ॥ १४६ ॥ ततः किमित्यत आह—**तत इति** । ततः आकाशसृष्ट्यनन्तरं पूर्वपूर्वभूतापेक्षया उत्तरोत्तरभूतानां **घनस्पन्दक्रमात् तन्मनोघनतां यातं** सत् **अनिलस्पन्दं भावयतीत्युक्तार्थम्** ॥ १४७ ॥ मनः परिणतभूतद्वयाभ्यां अनलो जायत इत्याह—**ताभ्यामिति** ॥ १४८ ॥ ततस्तु **रूपतन्मात्रसहितं** आकाशादिभिः **त्रिभिः** ॥ १४९ ॥ **रसतन्मात्रवेदनं** भवति । ततः **क्षणात्** ॥ १५० ॥ **तादृग्गुणगतं** शब्दादिगुणचतुष्टययुक्तं **मनो भावयति** ॥ १५१ ॥ एवं पञ्चभूतभावनाभावितं मनस्तनुतां विहाय पुर्यष्टकरूपं भजतीत्याह—**अथेति** । स्वीयं **वपुः** ॥ १५२ ॥ ततः—**अहङ्कारेति** । **पुर्यष्टकं** तु वियदादिपञ्चभूतकामकर्मतमांसीति—

> खवाय्वग्न्यम्बुक्षितयो भूतसूक्ष्माणि पञ्च च ।
> अविद्याकामकर्माणि लिङ्गं पुर्यष्टकं विदुः ॥

इति वार्तिककारोक्तेः ॥ १५३ ॥ यन्मनः पुर्यष्टकाकारेण परिणतं तदेव स्थूलशरीराकारेण परिणमत इत्याह—**तस्मिन्निति** । **तस्मिंस्तु** पुर्यष्टके **तीव्रसंवेगात्** सुदृढाभिमानात् **भावयद्भासुरं** वपुः शिरःपाण्यादिमत् स्थूलं शरीरं भावयत् सत् **स्थूलतामिति** ॥ १५४–१५५ ॥ मनो यत्राभिनिविष्टं तत्स्थूलशरीरं प्रपञ्चयति—**ऊर्ध्वमिति** ॥ १५६ ॥

प्रजासृष्टिः अनन्तशास्त्रकल्पनं च

बुद्धिसत्त्वबलोत्साहविज्ञानैश्वर्यसंस्थि[1]तः ॥ १५७ ॥

[1] तम्—अ २, क.

स एव भगवान् ब्रह्मा सर्वलोकपितामहः ।
अवलोक्य वपुर्ब्रह्मा कान्तमात्मीयमुत्तमम् ॥ १५८ ॥
चिन्तामभ्येत्य भगवांस्त्रिकालामल[1]दर्शनः ।
एतस्मिन् परमाकाशे चिन्मात्रैकात्म[2]रूपिणि ॥ १५९ ॥
अदृष्टपारपर्यन्ते प्रथमं किं भवेदिति ।
इति चिन्तितवान् ब्रह्मा सद्योजातामलात्मदृक् ॥ १६० ॥
अपश्यत् सर्गवृन्दानि समतीतान्यनेकशः ।
स्मरत्यथो स सकलान् सर्वधर्मगुणक्रमात् ॥ १६१ ॥
लीलया कल्पयामास चित्राः संकल्पतः प्रजाः ।
नानाऽऽचारसमारम्भा गन्धर्वनगरं यथा ॥ १६२ ॥
[3]तासां स्वर्गापवर्गार्थं धर्मकामार्थसिद्धये ।
अनन्तानि विचित्राणि शास्त्राणि समकल्पयत् ॥ १६३ ॥

स्वीयं हिरण्यगर्भोऽवलोक्य इतः किं कर्तव्यमिति सञ्चिन्त्य स्वसङ्कल्पतः प्रजाः सृष्ट्वा तासां अभ्युदयाद्यर्थं अनन्तशास्त्राणि च कल्पयामासेत्याह—बुद्धीति ॥ १५७ ॥ य एवं प्रादुर्बभूव स एव । "ऊर्ध्वं शिरःपिण्डमयं" इत्यादिविशेषणविशिष्टं अवलोक्य ॥ १५८ ॥ त्रिकालामलदर्शनः सर्वज्ञत्वात् । तच्चिन्ताप्रकारमाह—एतस्मिन्निति । यन्मुमुक्षुभिः आत्मतया ध्येयं एतस्मिन् ॥ १५९ ॥ अदृष्टपारपर्यन्ते अपरिच्छिन्नस्वरूपे । सद्योजातामलात्मदृक् सदा प्रत्यग्दृष्टिः ॥ १६० ॥ ततः किं करोतीत्यत्र --अपश्यदिति ॥ १६१–१६३ ॥

[1] विग्रहः—उ, उ १.
[2] रूपिणी—उ, उ १.
[3] तेषां—उ, उ १.

विकल्पितस्य असत्यत्वेनोपेक्षार्हत्वम्

विरिञ्चिरूपान्मनसः कल्पितत्वाज्जगत्स्थितेः ।
तावत्स्थितिरियं प्रोक्ता तन्नाशे नाशमाप्नुयात् ॥ १६४ ॥
न जायते न म्रियते क्वचित् किंचित् कदाचन ।
परमार्थेन विप्रेन्द्र मिथ्या सर्वं तु दृश्यते ॥ १६५ ॥
कोशमाशाभुजङ्गानां संसाराडम्बरं त्यज ।
असदेतदिति ज्ञात्वा [1]मातृभावं निवेशय ॥ १६६ ॥
गन्धर्वनगरस्यार्थे भूषितेऽभूषिते तथा ।
अविद्यांशे सुतादौ वा कः क्रमः सुखदुःखयोः ॥ १६७ ॥
धनदारेषु वृद्धेषु दुःखं युक्तं न तुष्टता ।
[2]वृद्धायां मोहमायायां कः समाश्वासवानिह ॥ १६८ ॥
यैरेव जायते रागो मूर्खस्याधिकतां गतैः ।
तैरेव भोगैः प्राज्ञस्य विराग उपजायते ॥ १६९ ॥
अतो निदाघ तत्त्वज्ञ व्यवहारेषु [3]संसृतेः ।
नष्टं नष्टमुपेक्षस्व प्राप्तं प्राप्तमुपाहर ॥ १७० ॥
अनागतानां भोगानामवाञ्छनमकृत्रिमम् ।
आगतानां च संभोग इति पण्डितलक्षणम् ॥ १७१ ॥
शुद्धं सदसतोर्मध्यं पदं [4]बुद्ध्वाऽवलम्ब्य च ।
सबाह्याभ्यन्तरं दृश्यं मा गृहाण विमुञ्च [5]मा ॥ १७२ ॥

[1] मात्र—अ १. मात्रा—अ. [2] दृढायां—अ.
[3] संहतेः—उ. [4] बुद्धया—अ १, अ २, क. [5] न—उ १.

यस्य नेच्छा तथाऽनिच्छा ज्ञस्य कर्मणि तिष्ठतः ।
न तस्य लिप्यते प्रज्ञा पद्मपत्रमिवाम्बुभिः ॥ १७३ ॥
यदि ते नेन्द्रियार्थश्रीः [1]स्वदन्ते हृदि वै द्विज ।
तदा विज्ञातविज्ञेयः समुत्तीर्णो भवार्णवात् ॥ १७४ ॥
उच्चैःपदाय परया प्रज्ञया वासनागणात् ।
पुष्पाद्गन्ध[2]मिवोदारं चेतोवृत्तिं पृथक्कुरु ॥ १७५ ॥
संसाराम्बुनिधावस्मिन् वासनाऽम्बुपरिप्लुते ।
ये प्रज्ञानावमारूढास्ते तीर्णाः पण्डिताः परे ॥ १७६ ॥
न त्यजन्ति न वाञ्छन्ति व्यवहारं जगद्गतम् ।
सर्वमेवानुवर्तन्ते [3]पारावारविदो जनाः ॥ १७७ ॥

ब्रह्मविकल्पितं ब्रह्मवत् सत्यमित्यत्र—यावत्तन्मनः तावत्तिष्ठति, तन्नाशे नश्यतीत्याह—**विरिञ्चेति** ॥ १६४ ॥ वस्तुमात्रदृष्ट्या **इदं न जायते** ॥ १६५॥ तत्र मया किं कर्तव्यमित्यत्र—**कोशमिति** । शशविषाणवत् **असदेतदिति ज्ञात्वा** पुनस्तदस्ति नास्तीति वा **मातृभावं निवेशय** ॥ १६६ ॥ कथं पुनः एतदसत्पदमर्हति? सत्त्वेन प्रतीयमानत्वात् नासत् इत्याशङ्क्य, परमार्थदृष्टेः निष्प्रतियोगिकब्रह्मात्मभावारूढत्वात् तद्दृष्ट्या ब्रह्मातिरिक्तं शशविषाणादप्यसदेव, स्वप्नदृष्ट्या प्रातिभासिकतामर्हतीत्याह—**गन्धर्वेति** ॥ १६७ ॥ प्रातिभासिकेष्वपि **धनदारेषु** । **वृद्धायां मोहमायायां** चरमविक्रियाऽभिमुखायां कः **समाश्वासवानिह** को वा विवेकी स्वातिरेकेण मायातत्कार्यमस्ति नास्तीति तत्प्रवृत्तौ निवृत्तौ वा समाश्वासवानिह विश्रान्तचित्तो भवति? न कोऽपीत्यर्थः ॥ १६८ ॥ यत्र स्वाज्ञानां राग उदेति तत्र स्वज्ञानां विरागो भवतीत्याह—**यैरिति** ॥ १६९ ॥

[1] स्पन्दते—अ. [2] मपो—अ १, अ २, क. [3] परापर—अ.

यत एवं **अतः** । विधिवशात् **नष्टम्** ॥ १७० ॥ यादृच्छिकलाभालाभाकृत्रिमसमत्वं हि पण्डितलक्षणमित्याह—**अनागतानामिति** ।

पण्डा परात्मविज्ञानं सञ्जाता यस्य धीमतः ।
स मुनिः पण्डितो विद्वान् जीवन्मुक्त इति स्मृतः ॥ १७१ ॥

यदि त्वं पण्डितोऽसि तदा सदसत्प्रपञ्चाधिकरणं ब्रह्माहमिति विदित्वा स्वान्तर्बाह्यकलना अस्ति नास्तीति विभ्रमं मुञ्चेत्याह—**शुद्धमिति** ॥ १७२ ॥ विदुषोऽपि कर्मलेपः स्यादित्यत आह—**यस्येति** । कर्मफले **यस्य नेच्छा** । सर्वत्र इच्छाऽनिच्छे कर्मलेपालेपहेतू भवत इत्यर्थः ॥ १७३ ॥ यस्य मनः इन्द्रियार्थे न प्रसरति स संसृतिसागरं तरतीत्याह—**यदीति** । हे **द्विज ते** तव **स्वदन्ते** स्वभावतो दान्ते **हृदि यदि इन्द्रियार्थश्रीः** विषयग्रामसम्पत् **नोदेति** तदा त्वं **विज्ञातविज्ञेयो** विदितवेद्यः सन् **भवार्णवात् समुत्तीर्णो** भवसीत्यर्थः ॥ १७४ ॥ वासनावलितचित्तानां भवार्णवतरणं कुत इत्यत्र वासनाचित्त-पृथक्करणोपायतो भवाब्धिः तरितुं शक्य इत्याह—**उच्चैरिति** ॥ १७५ ॥ एवं पृथक्करणतः प्रज्ञा उदेति, तन्नौकारूढाः भवाब्धिं तरन्तीत्याह—**संसारेति** ॥ १७६–१७७ ॥

संकल्पच्छेदनेन संसारमूलोच्छेदः

अनन्तस्यात्मतत्त्वस्य सत्तासामान्यरूपिणः ।
[1]चितश्चेत्योन्मुखत्वं यत्तत् संकल्पाङ्कुरं विदुः ॥ १७८ ॥
लेशतः प्राप्तसत्ताकः स एव घनतां शनैः ।
याति चित्तत्वमापूर्य दृढं [2]जाळ्यायमेघवत् ॥ १७९ ॥
भावयन्ति[न्ती] चितिश्चैत्यं व्यतिरिक्तमिवात्मनः ।
संकल्पतामिवायाति बीजमङ्कुरतामिव ॥ १८० ॥

[1] चित्तश्चैत्यो—उ, उ १. [2] जाड्याय—अ.

संकल्पनं हि संकल्पः स्वयमेव प्रजायते ।
वर्धते स्वयमेवाशु दुःखाय न सुखाय [1]यत् ॥ १८१ ॥
मा संकल्पय संकल्पं मा भावं भावय स्थितौ ।
संकल्पनाशने यत्तो न भूयोऽननुगच्छति ॥ १८२ ॥
भावनाऽभावमात्रेण संकल्पः क्षीयते स्वयम् ।
संकल्पेनैव संकल्पं मनसैव मनो मुने ॥ १८३ ॥
[2]छित्त्वा स्वात्मनि तिष्ठ त्वं किमेतावति दुष्करम् ।
यथैवेदं नभः शून्यं जगच्छून्यं तथैव हि ॥ १८४ ॥
तण्डुलस्य यथा चर्म यथा ताम्रस्य कालिमा ।
नश्यति क्रियया विप्र पुरुषस्य तथा मलम् ॥ १८५ ॥
जीवस्य तण्डुलस्येव मलं सहजमप्यलम् ।
नश्यत्येव न संदेहस्तस्मादुद्योगवान् [3]भव ॥ १८६ ॥

इति महोपनिषत् ॥

यतः संसारित्वासंसारित्वहेतुः सङ्कल्पः अतः सङ्कल्पं मा कुर्वित्याह— **अनन्तस्येति** ॥ १७८ ॥ यच्चितः चैत्याभिमुख्यं सङ्कल्पाङ्कुरं तदेव कालान्तरे जलस्य भवो जाळ्यं यदायतनं सोऽयं जाळ्यायः सचासौ मेघश्चेति **जाळ्यायमेघ इव** मेघवत् दृढं चित्तत्वमापूर्य घनतां याति ॥ १७९ ॥ ततः सङ्कल्पबीज-पूरितेयं चितिः स्वातिरिक्तं चैत्यं भावयन्तीव लक्ष्यते । ततः इयं चितिः **बीजाङ्कुरवत्** सङ्कल्पतामिवायाति ॥ १८० ॥ ततः सङ्कल्परूपेण **जायते वर्धते** इति यत् तदनर्थाय भवति ॥ १८१ ॥ यत एवं अतः त्वं कदाऽपि **मा सङ्कल्पय** । यदि प्रमादतः सङ्कल्प उदेति तदा सङ्कल्पोन्मूलने

[1] च—अ. [2] जित्वा—उ, उ १. [3] भवेत्—अ, अ १.

जागरूको भवेत्यर्थः ॥ १८२ ॥ सङ्कल्पनाशनोपायः क इत्यत आह—**भावनेति** ॥ १८३ ॥ सङ्कल्पाभावेऽपि तदाश्रयं जगत् स्यादित्यत आह—**यथेति** ॥ १७४ ॥ स्वातिरिक्तसङ्कल्पोन्मूलनयत्नः किंफलवानित्यत आह—**तण्डुलस्येति** ॥ १८५ ॥ सङ्कल्पादिमलस्य जीवसहजत्वात् तन्नाशः कथं इत्याशङ्क्याह—**जीवस्येति**। तस्मात् सङ्कल्पोन्मूलनयत्नः सफल एव। यस्मादेवं **नश्यत्येव न सन्देहः तस्मादुद्योगवान् भव** ॥ १८६ ॥ **इतिमहोपनिषच्छब्दौ** पञ्चमाध्यायपरिसमाप्त्यर्थौ ॥

इति पञ्चमोऽध्यायः

---

# षष्ठोऽध्यायः

समाध्यभ्यासेन परमेश्वरभावापत्तिः

अन्तरास्थां परित्यज्य भावश्रीं भावनामयीम्।
योऽसि सोऽसि जगत्यस्मिन् लीलया विहरानघ ॥ १ ॥
सर्वत्राहमकर्तेति दृढभावन[1]याऽनया।
परमामृतनाम्नी सा समतैवावशिष्यते ॥ २ ॥
खेदोल्लास[2]विलासेषु स्वात्मकर्तृतयैकया।
स्वसंकल्पे क्षयं याते समतैवावशिष्यते ॥ ३ ॥
समता सर्वभावेषु याऽसौ सत्यपरा स्थितिः।
तस्यामवस्थितं चित्तं न भूयो जन्मभाग्भवेत् ॥ ४ ॥

[1] याऽनघ—उ. [2] विशेषे—अ.

अथवा सर्वकर्तृत्वमकर्तृत्वं च वै मुने ।
सर्वं त्यक्त्वा मनः पीत्वा योऽसि सोऽसि स्थिरो भव ॥ ५ ॥
शेषस्थिरसमाधानो येन त्यजसि तत्त्यज ।
चिन्मनःकलनाऽऽकारं प्रकाशतिमिरादिकम् ॥ ६ ॥
[1]वासनां वासितारं च प्राणस्पन्दनपूर्वकम् ।
समूलमखिलं त्यक्त्वा व्योमसाम्यः प्रशान्तधीः ॥ ७ ॥
हृदयात् संपरित्यज्य सर्वा[र्वां]वासनपङ्क्तयः [ङ्क्तिकाम्] ।
यस्तिष्ठति गतव्यग्रः स मुक्तः परमेश्वरः ॥ ८ ॥

पञ्चमाध्यायावसाने "उद्योगवान् भव" इत्यभिहितं बहूपायसहितम् । उद्योगलक्षणतत्सामान्यविशेषफलप्रकटनार्थं षष्ठाध्यायारम्भः—**अन्तरास्थामिति**। एतत्कृतिफलमिदं मेऽस्तु माऽस्त्विति **अन्तरास्थाम्** । अतस्मिंस्तद्भावनां विहाय स्वभावमवलम्ब्य यदि शिष्टरूपेण **योऽसि** तदा **सोऽसि**, आप्रारब्धं देहधारणमात्रोपयोगिकर्मसु **लीलया विहर**, न तल्लिप्तो भवसीत्यर्थः ॥ १ ॥ एवं उद्योगवतः काऽवशिष्यत इत्यत आह—**सर्वत्रेति** । कर्तृत्वादिवैषम्यासम्भवप्रबोधतः निष्प्रतियोगिकनिर्विकल्परूपिणी महासमतेयं स्वमात्रम**वशिष्यते** इत्यर्थः ॥ २–३ ॥ केयं समतेत्यत आह—**समतेति** । स्वाज्ञदृष्टिविकल्पित**सर्वभावेषु** विषमेष्वपि स्वज्ञदृष्ट्या **याऽसौ** चित्**सत्यपरा स्थितिः** निष्प्रतियोगिकसन्मात्रतया अवस्थितिः सा हि समता । तद्भावभावितं चित्तं न पुनस्तद्भावं मुञ्चतीत्यर्थः । कर्तृत्वाकर्तृत्वकलनाहेतुमनो ग्रसित्वा तद्ग्रासवृत्तेरप्यपह्नवं कृत्वाऽथ यदवशिष्यते तन्मात्रपदवीं भज ॥ ४ ॥ एवं यस्तिष्ठति स एव मुक्त इत्याह—**अथवेति** । "तस्यामवस्थितं चित्तं" इति समाधिकर्तृत्वमुक्तं, **अथवेति** पक्षान्तरोक्तिः । "विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः"

[1] वासनावा—अ, अ १.

इति, "विक्षेपवृत्तिं च समाधिवृत्तिं मत्वा समं मानसवृत्तिसाम्यात्" इति श्रुतियामळोक्त्यनुरोधेन समाध्यादिव्यापृतिकर्तृत्वाकर्तृत्वे तदनुग्राहकमनोवृत्तिं च ग्रसित्वा—**योऽसी**त्याद्युक्तार्थे—यत् स्वमात्रमवशेषितं तत्पर्यवसन्नो भव ॥ ५ ॥ पर्यवसानवृत्तिमपि परित्यज। यदि मनोवासनाऽऽदिकमस्तीति मन्यसे तदा **चिन्मनः** चिच्छक्तिरूपं **कलनाऽऽकारं**—चिन्मनसोः विशेषणं प्रकाशतिमिरादिकमिति—उक्तविशेषणविशिष्टम् ॥ ६ ॥ **वासितारं** चिदाभासं **च** तद्विकल्पितां स्वातिरिक्तविषयपटलारूढां **वासनां च** ॥ ७ ॥ **योऽवतिष्ठति स मुनिः** स्वातिरिक्तभ्रमतो **विमुक्तो** भवतीत्यर्थः ॥ ८ ॥

व्युत्थानकालीनो मुक्तव्यवहारः

दृष्टं द्रष्टव्यमखिलं भ्रान्तं भ्रान्त्या दिशो दश ।
[1]युक्त्या वै चरतोऽज्ञस्य संसारो गोष्पदाकृतिः ॥ ९ ॥
सबाह्याभ्यन्तरे देहे ह्यध ऊर्ध्वं च दिक्षु च ।
इत आत्मा ततोऽप्यात्मा नास्त्यनात्ममयं जगत् ॥ १० ॥
न तदस्ति न यत्राहं न तदस्ति न तन्मयम् ।
किमन्यदभिवाञ्छामि सर्वं सच्चिन्मयं ततम् ॥ ११ ॥
समस्तं खल्विदं ब्रह्म सर्वमात्मेदमाततम् ।
अहमन्य इदं चान्यदिति भ्रान्तिं त्यजानघ ॥ १२ ॥
[2]तते ब्रह्मघने नित्ये संभवन्ति न कल्पिताः ।
न शोकोऽस्ति न मोहोऽस्ति न जराऽस्ति न जन्म वा ॥१३॥

[1] युक्त्वा—क.
[2] ततो—उ.

यदस्तीह तदेवास्ति विज्वरो भव सर्वदा ।
यथाप्राप्तानुभवतः सर्वत्रानभिवाञ्छनात् ॥ १४ ॥
त्यागादानपरित्यागी विज्वरो भव सर्वदा ।

एवं परमेश्वरभावमापन्नो योगी समाधितो व्युत्थानदशायां किं मन्यत इत्यत्राह—**दृष्टमिति** । इदानीं श्रुत्याचार्यप्रसादतः **दृष्टं द्रष्टव्यमखिलम्** । पुरा स्वात्मानमलब्ध्वा **भ्रान्तं भ्रान्त्या दिशो दश** । एवं युक्त्या । **गोष्पदाकृतिः** मन्यते इत्यर्थः ॥ ९ ॥ आत्मैव सर्वं, आत्मातिरिक्तं नास्तीत्याह—**सबाह्येति** ॥ १० ॥ इदं जगदित्यनुभूतिसिद्धं कथं अभावपदं भजतीत्यत आह—**न तदिति** । **यत्राहमात्मा न विद्यते तदेव नास्ति** । तथा सति किमन्यदस्तीति वाञ्छामि, सर्वस्य ब्रह्मात्मरूपत्वात् ॥ ११ ॥ यथा मया स्वातिरिक्तविभ्रमस्त्यक्तः तथा त्वमपि त्यक्त्वा विज्वरो भवेत्याह—**अहमिति** ॥ १२ ॥ स्वाज्ञदृष्ट्या एते सर्वविकाराः ततं ब्रह्मघनं । स्वज्ञदृष्टेस्तु कल्पिताकल्पितरूपेण स्वातिरिक्तमस्ति नास्तीति विभ्रमो नोदेतीत्याह—**नेति** । स्वपरदेहाद्यभावात् **न जराऽस्ति** ॥ १३ ॥ हेतुद्वयाभ्यां विज्वरत्वसिद्ध्युपायमाह—**यथेति** ॥ १४ ॥ **त्यागादान**-वृत्तिजात**परित्यागी** ॥

चरमजन्मनि ज्ञानाधिकारः

यस्येदं जन्म पाश्चात्यं [1]तमाश्वेव महामते ॥ १५ ॥
विशन्ति विद्या विमला मुक्ता वेणुमिवोत्तमम् ।
विरक्तमनसां सम्यक् स्वप्रसङ्गादुदाहृतम् ॥ १६ ॥

एवं ज्ञानाधिकारी चरमजन्मेत्याह—**यस्येति** । **पाश्चात्यं** चरमं भवति ॥ १५ ॥ **विद्या विमला** निर्विशेषब्रह्ममात्रगोचरा । यत एवं अतः **विरक्तमनसाम्** ॥ १६ ॥

[1] तदा—अ.

ज्ञानिनां आत्मोपासनाप्रकारः

द्रष्टुर्दृश्यसमायोगात् प्रत्ययानन्दनिश्चयः ।
[1]यस्तं स्वमात्मतत्त्वोत्थं निष्पन्दं समुपास्महे ॥ १७ ॥
द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह ।
दर्शनप्रथमाभासमात्मानं [2]समुपास्महे ॥ १८ ॥
द्वयोर्मध्यगतं नित्यमस्तिनास्तीति पक्षयोः ।
प्रकाशनं प्रकाशानामात्मानं समुपास्महे ॥ १९ ॥

वयं तु स्वातिरिक्तानात्मापह्नवसिद्धमात्मानं स्वावशेषधिया सोपायमुपास्महे इत्यादि ऋभूक्तिं श्रुतिः अनुवदति—द्रष्टुरिति । द्रष्टुः **दृश्यसमायोगात्** द्रष्टरि दृश्यजातं विकल्पितमित्याध्यासिकसम्बन्धात् द्रष्टा साक्ष्येव नित्यः तद्विकल्पितं दृश्यजातं मिथ्येति **प्रत्ययानन्दनिश्चयः** "विज्ञानमानन्दं ब्रह्म" इति श्रुतिसिद्धो **यस्तं स्वमात्मतत्त्वोत्थं** आत्मतत्त्वत्वेन प्रादुर्भूतं **निष्पन्दं** अचलं ब्रह्मास्मीति **समुपास्महे** ॥ १७ ॥ किंच—द्रष्टृदर्शनेति । **आत्मानं** प्रत्यञ्चं पराभेदेन **समुपास्महे** ॥ १८ ॥ किं च—द्वयोरिति ॥ १९ ॥

अनात्मभावनात्यागविधिः

संत्यज्य हृद्गुहेशानं देवमन्यं प्रयान्ति ये ।
ते रत्नमभिवाञ्छन्ति त्यक्तहस्तस्थकौस्तुभाः ॥ २० ॥
उत्थितानुत्थितानेतानिन्द्रियारीन् पुनः पुनः ।
हन्याद्विवेकदण्डेन वज्रेणेव हरिर्गिरीन् ॥ २१ ॥

स्वं विस्मृत्य स्वातिरिक्तं ये भजन्ति ते स्वार्थाच्चुता इत्याह—**सन्त्यज्येति** ॥ २० ॥ यतः स्वातिरिक्तविषयोपासना निष्फला अतस्तद्विषयां जातां जायमानां वृत्तिं निर्मूलयेदित्याह—**उत्थितेति** ॥ २१ ॥

[1] यस्त्वं—अ २, क.  [2] केवलं भज—उ १.

अज्ञानिपरिदेवनम्

संसाररात्रिदुःस्वप्ने शून्ये देहमये [1]भ्रमे ।
सर्वमेवापवित्रं [2]तद्दृष्टं संसृतिविभ्रमम् ॥ २२ ॥
अज्ञानोपहतो बाल्ये यौवने वनिताहतः ।
शेषे कलत्र[3]चिन्ताऽऽर्तः किं करोति नराधमः ॥ २३ ॥
सतोऽसत्ता स्थिता मूर्ध्नि रम्याणां मूर्ध्न्यरम्यता ।
सुखानां मूर्ध्नि दुःखानि किमेकं संश्रयाम्यहम् ॥ २४ ॥
येषां निमेषणोन्मेषौ जगतः प्रलयोदयौ ।
तादृशाः पुरुषा यान्ति मादृशां गणनैव का ॥ २५ ॥
संसार [4]एव दुःखानां सीमान्त इति कथ्यते ।
तन्मध्ये पतिते देहे सुखमासाद्यते कथम् ॥ २६ ॥

प्रबोधात् पुरा संसृतिविभ्रमोऽनुभूत इत्याह—**संसारेति** । इदानीं ब्रह्मेति सर्वं **दृष्टमि**त्यर्थः ॥ २२ ॥ श्रुत्याचार्यप्रसादविरळस्वाज्ञलोकस्तु **अज्ञानोपहत इति** ॥ २३ ॥ स्वाज्ञस्तु एवं प्रलपति—**सत इति** । अनियतत्वात् इत्यर्थः ॥ २४ ॥ देहात्मदृष्ट्या स्वस्य नश्वरत्वमाचष्टे—**येषामिति** । **तादृशाः पुरुषाः** ब्रह्मादयः स्वां स्वां श्रियं त्यक्त्वा परां **यान्ति** ॥ २५ ॥ एवं दुःखहेतुसंसृतिबद्धानां कदाऽपि सुखं नास्तीत्याह—**संसार इति** ॥ २६ ॥

मनोनाशप्रकारः

प्रबुद्धोऽस्मि प्रबुद्धोऽस्मि दुष्टश्चोरोऽयमात्मनः ।
मनो नाम निहन्म्येनं मनसाऽस्मि चिरं हतः ॥ २७ ॥

[1] गृहे—अ. [2] तं दृ—अ. [3] चित्ता—उ. [4] एवं—उ १.

मा खेदं भज हेयेषु नोपादेयपरो भव ।
हेयादेयदृशौ त्यक्त्वा शेषस्थः सुस्थिरो भव ॥ २८ ॥

एवं परिदेवयित्वा श्रुत्याचार्यप्रसादतो यदि विवेक उदेति तदा स्वाज्ञानवृत्तिमन्मन उन्मूलयितुमिच्छतीत्याह—प्रबुद्ध इति ॥ २७ ॥ एवं हेयोपादेयात्मकदेहतत्सापेक्षात्मधियं त्यक्त्वा अथ यदवशिष्यते तन्मयो भवेत्याह—मेति ॥ २८ ॥

वासनात्यागोपायः

निराशता निर्भयता नित्यता समता ज्ञता ।
निरीहता निष्क्रियता सौम्यता निर्विकल्पता ॥ २९ ॥
धृतिर्मैत्री मनस्तुष्टिर्मृदुता मृदुभाषता ।
हेयोपादेयनिर्मुक्ते ज्ञे तिष्ठन्त्यपवासनम् ॥ ३० ॥
गृहीततृष्णाशबरीवासनाजालमाततम् ।
संसारवारिप्रसृतं चिन्तातन्तुभिराततम् ॥ ३१ ॥
अनया तीक्ष्णया तात छिन्धि बुद्धिशलाकया ।
वात्ययेवाम्बुदं जालं छित्त्वा तिष्ठ तते पदे ॥ ३२ ॥
मनसैव मनश्छित्त्वा कुठारेणेव पादपम् ।
पदं पावनमासाद्य सद्य एव स्थिरो भव ॥ ३३ ॥
तिष्ठन् गच्छन् स्वपन् जाग्रन्निवसन्नुत्पतन् पतन् ।
असदेवेदमित्यन्तर्निश्चित्यास्थां परित्यज्य ॥ ३४ ॥

दृश्यमाश्रयसीदं चेत् तत् सचित्तोऽसि बन्धवान् ।
दृश्यं संत्यजसीदं चेत् तदचित्तोऽसि मोक्षवान् ॥ ३५ ॥

नाहं नेदमिति ध्यायंस्तिष्ठ त्वमचलाचलः ।
आत्मनो जगतश्चान्तर्द्रष्टृदृश्यदशाऽन्तरे ॥३६ ॥

दर्शनाख्यं स्वमात्मानं सर्वदा भावयन् भव ।
स्वाद्यस्वादकसंत्यक्तं स्वाद्यस्वादकमध्यगम् ॥ ३७ ॥

स्वदनं केवलं ध्यायन् परमात्ममयो भव ।
अवलम्ब्य निरालम्बं मध्येमध्ये स्थिरो भव ॥ ३८ ॥

रज्जुबद्धा विमुच्यन्ते तृष्णाबद्धा न केनचित् ।
तस्मान्निदाघ तृष्णां त्वं त्यज संकल्पवर्जनात् ॥ ३९ ॥

एतामहंभावमयीमपुण्यां [1]छित्त्वाऽनहंभावशलाकयैव ।
स्वभावजां भव्यभवान्तभूमौ भव प्रशान्ताखिलभूत[2]भीतिः॥४०॥

अहमेषां पदार्थानामेते च मम जीवितम् ।
[3]नाहमेभिर्विना कश्चिन्न मयैते विना किल ॥ ४१ ॥

इत्यन्तर्निश्चयं त्यक्त्वा विचार्य मनसा सह ।
नाहं पदार्थस्य न मे पदार्थ इति [4]भाविते ॥ ४२ ॥

अन्तःशीतलया बुद्ध्या कुर्वतो लीलया क्रियाम् ।
यो नूनं वासनात्यागो ध्येयो ब्रह्मन् प्रकीर्तितः ॥ ४३ ॥

[1] त्यक्त्वा—अ २, क.
[2] भूतिः—उ.
[3] अह—उ, उ १.
[4] भाव्यते—उ.

सर्वं समतया बुद्ध्या यः कृत्वा वासनाक्षयम् ।
जहाति निर्ममो देहं नेयोऽ[1]सौ वासना[2]क्षयः ॥ ४४ ॥
अहंकारमयीं त्यक्त्वा वासनां लीलयैव यः ।
तिष्ठति ध्येयसंत्यागी स जीवन्मुक्त उच्यते ॥ ४५ ॥

निरीहताऽऽदिगुणगणो यत्र विश्राम्यति स जीवन्मुक्त इत्याह—**निराशतेति** । ज्ञस्य निर्मुक्तवासनाजालत्वात् एते गुणाः अस्य सहजा भवन्तीत्यर्थः ॥ २९–३० ॥ वासनाजालस्यापि सहजतया विद्यमानत्वात् निराशताऽऽदिगुणावसरः कुतः ? इत्यत्र—यदि तदस्तीति मन्यसे तदा निर्वासन-ब्रह्मज्ञानखड्गेन वासनाजालं छित्त्वा निराशताद्याश्रयपदे तिष्ठेत्याह—**गृहीतेति** । **तृष्णैव शबरी** भूजलचरजन्तुघातिनी तया **गृहीतं वासनाजालं आततं** संसृतिजलाशयप्रसरितं, नानाविध**चिन्ता** एव दृढतन्तवः तैराततं वासनाजालं वायुः मेघजालमिव निर्वासनब्रह्मज्ञानखड्गेन छित्त्वा निर्भयपदे **तिष्ठ** ॥३१–३२॥ मनसि सति कथं एवं स्थातुं शक्यते ? इत्यत्र—**कुठारेण पादपमिव** सत्वाकारपरिणत**मनसा** रजआदिपरिणतं **मनः छित्त्वा सद्य एव** ब्रह्मातिरिक्तं न किञ्चिदस्तीति ज्ञानसमकालमेव स्वे महिम्नि **स्थिरो भवे**त्यर्थः ॥ ३३ ॥ यदि पुनः स्वातिरिक्तं स्फुरति तदा त्वं स्वमात्रं तत् चिन्तयेत्याह—**तिष्ठन्निति** ॥३४॥ बन्धमोक्षकलना किंनिमित्तेत्यत्र स्वातिरिक्तमस्तिनास्तीतिवृत्त्यायत्तेत्याह—**दृश्यमिति** ॥ ३५ ॥ द्रष्टृदृश्यमध्यं दर्शनं ज्ञप्तिमात्रं स्वयमेवेति चिन्तयेत्याह—**आत्मन इति** ॥ ३६ ॥ उक्तार्थमेव भङ्गयन्तरेण दृढयति—**स्वाद्येति** । स्वाद्यं गुडादि, स्वादकं जिह्वादि, स्वदनं तत्सर्वावभासकं ज्ञानं, केवलशब्दतः चिन्मात्रमेव तदित्यर्थः ॥ ३७ ॥ किंच—**अवलम्ब्येति** ॥ ३८ ॥ तृष्णायां सत्यां स्थिरता मे कुतः इत्यत्र तां उन्मूलयेत्याह—**रज्ज्विति** । यस्मादेवं **तस्मात** ॥ ३९ ॥ अतदहंभावे सति तृष्णात्यागः कथमित्यत्र यद्यतदहंभावः

[1] तो—अ. [2] क्षयं—अ.

त्वां स्पृशति तदा तं अनहंभावेन छित्त्वा वितृष्णपदं प्राप्य स्थिरीभवेत्याह—**एतामिति** ॥ ४० ॥ स्वातिरिक्तयोः अविनाभावमाशङ्क्य स्वातिरिक्तासम्भव-प्रबोधतः स्वयमेव अवशिष्यत इत्याह—अहमिति । **एते च मम जीवितं** एते पदार्थाः मम जीवनहेतवः ॥ ४१–४२ ॥ **अन्तःशीतळया** अन्तर्विलसित-प्रत्यग्भावापन्नया **बुद्धया** । न तस्य कदाऽपि क्रियालेपोऽस्ति अक्रियात्मदृष्टित्वात् । वासनावासितस्य अक्रियत्वं कुत इत्यत्र वासनात्यागाधारः परमात्मेत्याह—य इति । **यो नूनं वासनात्यागः** सोऽयं तदाधारः परमात्मेति **ध्येयो ब्रह्मन्**—आधाराधेययोः कार्यकारणयोश्च एकीभावस्तु चिद्विवर्तजगतोऽस्य कारणमिति—"मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम्" इत्यादिश्रुतिभिः **प्रकीर्तितः** ॥४३॥ वासनात्यागोपायमाह—**सर्वमिति** । साम्यब्रह्मातिरेकेण वासनावैषम्यं नास्तीति निश्चित्य **निर्ममो** यो योगी देहोपलक्षिताविद्यापदतत्कार्यजातमस्ति नास्तीति विभ्रमं **जहाति** सोऽयं मुनिः निर्वासनं ब्रह्मैति । यत एवं अतोऽसौ **वासनाक्षयो** ब्रह्माभ्यन्तरङ्गसाधनतया **नेय** इत्यर्थः ॥ ४४ ॥ जीवन्मुक्तिलाभोऽपि वासनाक्षयनिमित्त इत्याह—**अहङ्कारेति** । यत् स्वातिरिक्ततया ध्येयं **तत्सर्वत्यागी सः जीवन्मुक्त उच्यते** ॥ ४५ ॥

जीवन्मुक्तमहिमा

निर्मूलं कलनां त्यक्त्वा वासनां यः शमं गतः ।
ज्ञेयत्यागमिमं विद्धि मुक्तं तं ब्राह्मणोत्तमम् ॥ ४६ ॥
द्वावेतौ ब्रह्मतां यातौ द्वावेतौ विगतज्वरौ ।
आपतत्सु यथाकालं सुखदुःखेष्वनारतौ ॥ ४७ ॥
संन्यासियोगिनौ दान्तौ विद्धि शान्तौ मुनीश्वर ।
ईप्सितानीप्सिते न स्तो यस्यान्तर्वर्तिवृत्तिषु ॥ ४८ ॥

सुषुप्तवद्यश्चरति स जीवन्मुक्त उच्यते ।
हर्षामर्षभयक्रोधकामकार्पण्यदृष्टिभिः ॥ ४९ ॥
न हृष्यति ग्लायति यः परामर्शविवर्जितः ।

तमेव ब्राह्मणतया स्तौति—निर्मूलमिति । **वासनामूलकलनानिःशेषत्यागतोऽपि यः शमं व्रजति** । स्वातिरिक्तकलनायाः त्यागाविषयत्वेन अवस्तुत्वात् वासनाक्षयो नेय इति यदुक्तं तन्न संभवति, तस्य वासनासत्त्वसापेक्षत्वात् । वासना अस्तिनास्तीतिविभ्रमापह्नवसिद्धब्रह्मविद्वरिष्ठं **इमं नेयत्यागं मुक्तं तं ब्राह्मणं** विद्धि, ब्रह्मविद्वरिष्ठस्य ब्रह्मत्वात् ,

दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
य आस्ते कपिशार्दूल ब्रह्म न ब्रह्मवित् स्वयम् ॥

इति श्रुतेः ॥ ४६ ॥ एवं साधनसंन्यासयोगवन्तौ कृतकृत्यौ स्यातामित्याह—द्वाविति । यथाकालं **सुखदुःखेष्वापतत्सु तत्रानारतौ** हर्षविषादरहितौ ॥ ४७ ॥ कौ तावित्यत्र—**संन्यासीति** । ईहाविशिष्टानां शान्त्यादि कुत इत्यत्र ईहानीहापोहज्ञानतः कृतकृत्यो भवतीत्याह—**ईप्सितेति** । यथा सुषुप्तावीहानीहादिमान् न भवति तथा जाग्रत्यपि **यस्य** स्वान्तर्बाह्यविषयेषु सत्त्वासत्त्वधिया **ईप्सितानीप्सिते न** भवतः सोऽयं जीवन्मुक्त उच्यते ॥ ४८ ॥ रागिणो जीवन्मुक्तता कुत इत्यत्र—हर्षेति ॥ ४९ ॥ **न हृष्यति ग्लायति यः** सोऽयं रागद्वेषमूलपदार्थाः सन्ति न सन्तीति **परामर्शविवर्जितः** । तस्य जीवन्मुक्तत्वं निरङ्कुशमित्यर्थः ॥

तृष्णात्यागविधिः

बाह्यार्थवासनोद्भूता तृष्णा बद्धेति कथ्यते ॥ ५० ॥
सर्वार्थवासनोन्मुक्ता तृष्णा मुक्तेति भण्यते ।
इदमस्तु ममेत्यन्तमिच्छां प्रार्थनयाऽन्विताम् ॥ ५१ ॥

तां तीक्ष्णां शृङ्खलां विद्धि दुःखजन्मभयप्रदाम् ।
तामेतां सर्वभावेषु सत्स्वसत्सु च सर्वदा ॥ ९२ ॥
संत्यज्य परमोदारं पदमेति महामनाः ।
बन्धास्थामथ मोक्षास्थां सुखदुःखदशामपि ॥ ९३ ॥
त्यक्त्वा सदसदास्थां त्वं तिष्ठाक्षुब्धमहाब्धिवत् ।

बन्धमोक्षहेतू बाह्यार्थतृष्णाऽतृष्णे इत्याह—बाह्येति ॥ ९० ॥ " तृष्णां छित्त्वा हेतुजालस्य मूलं " इति श्रुत्यनुरोधेन सर्वार्थविषयतृष्णात्यागी कृतकृत्यो भवतीत्याह—इदमिति । इच्छाऽऽस्थाऽऽदिशब्दः तृष्णापर्यायः । सतृष्णो बद्धः वितृष्णो मुक्तो भवतीत्यर्थः ॥ ९१–९३ ॥

चतुर्विधो निश्चयः

जायते निश्चयः साधो पुरुषस्य चतुर्विधः ॥ ९४ ॥
आपादमस्तकमहं मातापितृविनिर्मितः ।
इत्येको निश्चयो ब्रह्मन् बन्धायासविलोकनात् ॥ ९५ ॥
अतीतः सर्वभावेभ्यो वालाग्रादप्यहं तनुः ।
इति द्वितीयो मोक्षाय निश्चयो जायते सताम् ॥ ९६ ॥
जगज्जालपदार्थात्मा सर्व एवाहमक्षयः ।
तृतीयो निश्चयश्चोक्तो मोक्षायैव द्विजोत्तम ॥ ९७ ॥
अहं जगद्वा सकलं शून्यं व्योम समं सदा ।
एवमेष चतुर्थोऽपि निश्चयो मोक्षसिद्धिदः ॥ ९८ ॥

एतेषां प्रथमः प्रोक्तस्तृष्णया बन्धयोग्यया ।
शुद्धतृष्णास्त्रयः स्वच्छा जीवन्मुक्ता विलासिनः ॥ ५९ ॥
सर्वं चाप्यहमेवेति निश्चयो यो महामते ।
तमादाय विषादाय न भूयो जायते मतिः ॥ ६० ॥

स्वाज्ञस्वज्ञनिश्चयः कतिविधः इत्यत्र चतुर्विध इत्याह—**जायत इति** ॥ ५४ ॥ तत्र स्वाज्ञनिश्चयमाह—**आपादेति** । देहादावात्मात्मीयाभिमतेः बन्धायासादिबहुदोषदुष्टत्वं दृष्टमेवेत्यर्थः ॥ ५५ ॥ स्वज्ञनिश्चयः त्रिविधः, तत्राद्यमाह—**अतीत इति** ॥ ५६ ॥ अथ द्वितीयनिश्चयमाह—**जगदिति** ॥५७॥ स्वज्ञतृतीयनिश्चयमाह—**अहमिति** ॥ ५८ ॥ चतुर्णां **एतेषां** आद्यस्तु बद्धः स्वाज्ञानावृतत्वात्, परे त्रयस्तु जीवन्मुक्ताः निरावृतत्वात् ॥ ५९ ॥ चतुर्णां मध्ये **सर्वमिति** ॥ ६० ॥

ब्रह्मणो लोकायतिकादिभिः बहुधा विकल्पनम्

शून्यं तत् प्रकृतिर्माया ब्रह्म विज्ञानमित्यपि ।
शिवः पुरुष ईशानो नित्यमात्मेति कथ्यते ॥ ६१ ॥

एवं स्वज्ञधीनिश्चितं निर्विशेषं ब्रह्म लोकायतिकादयः शून्यादित्वेन भावयन्तीत्याह—**शून्यमिति** । यद्ब्रह्मेत्यद्वैतिभिः निश्चितं तदेव बौद्धप्राकृतशैवसाङ्ख्ययोगिनः **शून्यं प्रकृतिः विज्ञानं शिवः पुरुषः ईशान** इति मेनिरे । पुनरद्वैतिनस्तु तदात्मत्वेन यद्यन्निर्णीतं तत्सर्वं अनात्मा मायेति वदन्ति, ब्रह्मातिरिक्तसामान्यस्य अनित्यत्वात् । वस्तुतः तैः गृहीतानात्मापह्नवसिद्धात्मा तु **नित्यमिति** सर्ववेदान्तेषु **कथ्यते** । स्वात्मनो निष्प्रतियोगिकत्वात् सत्यत्वं निरङ्कुशमित्यर्थः ॥ ६१ ॥

अद्वैतनिष्ठस्य संसाराभावः

द्वैताद्वैतसमुद्भूतैर्जगन्निर्माणलीलया ।
परमात्ममयी शक्तिरद्वैतैव विजृम्भते ॥ ६२ ॥
सर्वातीतपदालम्बी परिपूर्णैकचिन्मयः ।
नोद्वेगी न च तुष्टात्मा संसारे नावसीदति ॥ ६३ ॥
प्राप्तकर्मकरो नित्यं शत्रुमित्रसमानदृक् ।
ईहितानीहितैर्मुक्तो न शोचति न काङ्क्षति ॥ ६४ ॥
सर्वस्याभिमतं वक्ता चोदितः पेशलोक्तिमान् ।
आशयज्ञश्च भूतानां संसारे नावसीदति ॥ ६५ ॥

वस्तुतस्तु **द्वैताद्वैतसमुद्भूतैः** । स्वाज्ञादिदृष्ट्यनुरोधेन स्वातिरिक्तं **जगद**स्ति नास्तीति त**न्निर्मा**णग्रसन**लीलया** स्वातिरिक्तप्रपञ्चारोपाधिकरणं **द्वैतं** तदपवादाधिकरणं **अद्वैतं** इति च द्वैताद्वैततत्कार्यरूपैरपि निष्प्रतियोगिका**द्वैत**रूपिणी **परमात्ममयी** काचन **शक्तिः विजृम्भते** ॥ ६२ ॥ एतन्मार्गावलम्बी न कदाऽपि स्वातिरिक्तमोहसंसारे मुह्यतीत्याह—**सर्वे**ति । स्वातिरिक्तकलनाऽस्ति नास्तीत्यर्थे **नोद्वेगी** ॥ ६३ ॥ सोऽयं मुनिः आप्रारब्धं किं कुर्वन् वर्तत इत्याह—**प्राप्ते**ति ॥ ६४ ॥ यदि हितादिकलनाविरळः तदा युक्तायुक्तानभिज्ञो भवतीत्यत्राह—**सर्वस्ये**ति । यन्मे श्रेयःसाधनं तद्वदेति **चोदितः** । यदि भूतग्रामाशयलम्पटस्तदा संसारी स्यादित्यत्र सर्वत्राभिमानाभावात् **संसारे नावसीदति** ॥ ६५ ॥

मुमुक्षोः ब्रह्मनिष्ठाविधिः

पूर्वां दृष्टिमवष्टभ्य ध्येयत्यागविलासिनीम् ।
जीवन्मुक्ततया स्वस्थो लोके विहर विज्वरः ॥ ६६ ॥

अन्तः संत्यक्तसर्वाशो वीतरागो विवासनः ।
बहिः सर्वसमाचारो लोके विहर विज्वरः ॥ ६७ ॥
बहिः कृत्रिमसंरम्भो [1]हृदि संरम्भवर्जितः ।
कर्ता बहिरकर्ताऽन्तर्लोके विहर शुद्धधीः ॥ ६८ ॥
त्यक्ताहंकृतिराश्वस्तमतिराकाशशोभनः ।
अगृहीतकलङ्काङ्को लोके विहर शुद्धधीः ॥ ६९ ॥
उदारः पेशलाचारः स[पू]र्वाचारानुवृत्तिमान् ।
अन्तः सङ्गपरित्यागी बहिः संसारवानिव ॥ ७० ॥
अन्तर्वैराग्यमादाय बहिराशोन्मुखेहितः ।
अयं बन्धुरयं नेति [2]कलना लघुचेतसाम् ॥ ७१ ॥
उदारचरितानां तु वसुधैव कुटुम्बकम् ।
[3]भवभावनया मुक्तं जरामरणवर्जितम् ॥ ७२ ॥
प्रशान्तकलनाऽऽरम्भं नीरागं पदमाश्रय ।
एषा ब्राह्मी स्थितिः स्वच्छा निष्कामा विगतामया ॥ ७३ ॥
आदाय विहरन्नेवं संकटेषु विमुह्यति ।
वैराग्येणाथ शास्त्रेण महत्त्वादिगुणैरपि ॥ ७४ ॥
[4]यत्नोपविहरार्थं तत् स्वयमेवोन्नयेन्मनः ।
वैराग्यात् पूर्णतामेति मनोनाशवशानुगम् ॥ ७५ ॥

[1] दृष्टि—अ. सृष्टि—अ १. [2] गणना—अ, अ १, अ २, क
[3] भावाभावविनिर्मुक्तं—अ, अ १, अ २, क.
[4] यत्नेन चिद्विहारार्थं—अ. यत्नोपद्विह—अ १, अ २, क.

आशया रिक्ततामेति शरदीव सरोऽमलम् ।
तमेव मुक्तविरसं व्यापारौघं पुनः पुनः ॥ ७६ ॥
दिवसे दिवसे कुर्वन् प्राज्ञः कस्मान्न लज्जते ।
चिच्चैत्यकलितो बन्धस्तन्मु[1]क्तौ मुक्तिरुच्यते ॥ ७७ ॥
चिदचैत्याऽखिलात्मेति सर्वसिद्धान्तसंग्रहः ।
एतं निश्चयमादाय विलोकय धियेच्छया ॥ ७८ ॥
स्वयमेवात्मनाऽऽत्मानमानन्दं पदमाप्स्यसि ।
चिदहं चिदिमे लोकाश्चिदाशाश्चिदिमाः प्रजाः ॥ ७९ ॥
दृश्यदर्शननिर्मुक्तः केवलामलरूपवान् ।
नित्योदितो निराभासो द्रष्टा साक्षी चिदात्मकः ॥ ८० ॥
चैत्यनिर्मुक्तचिद्रूपं पूर्णज्योतिःस्वरूपकम् ।
संशान्तसर्वसंवेद्यं संविन्मात्रमहं [2]महत् ॥ ८१ ॥
संशान्तसर्वसंकल्पः प्रशान्तसकलैषणः ।
निर्विकल्पपदं गत्वा स्वस्थो भव मुनीश्वर ॥ ८२ ॥

यदि जीवन्मुक्तिमिच्छसि तदा पराग्दृष्टिग्रासप्रत्यगभिन्नब्रह्मदृष्टिमवलम्ब्य लोके विहरेत्याह—पूर्वामिति ॥ ६६ ॥ किंच—अन्तरिति ॥ ६७ ॥ बहिः **कृत्रिमसंरम्भः** गोपुरधारिप्रतिमावत् संसारभारवाहाभिनयः ॥ ६८ ॥ किंच— देहादौ **त्यक्ताहङ्कृतिः**, **ब्रह्मणि आश्वस्तमतिः**, **आकाशशोभनः** निर्मलाशयत्वात्, **अगृहीतस्वाज्ञानकलङ्काङ्कः** ॥ ६९ ॥ बहिर्मुखदशायां यत् पूर्वैराचरितं तत्समग्रानुवर्ती भवेत्यर्थः ॥ ७० ॥ सर्वाचारानुवर्तिनः रागसङ्गः स्यादित्यत्र—

[1] क्तिर्मु—उ, उ १.
[2] महः—उ.

**अन्तरि**ति। न हि स्त्र्यादिवेषधारी कृत्रिमस्त्रीत्वसङ्गी रागी वा भवति, पुरुषोऽस्मीति निश्चयाबाधितत्वात्, तथाऽयं लोकानुग्रहकारी न तत्र सङ्गी भवतीत्यर्थः। किमर्थं लोकानुग्रहं कुर्वन्तीत्यत्र—**अयमि**ति ॥ ७१ ॥ वसुधाग्रहणं सर्वलोकोपलक्षणार्थम्। विराडात्मना अस्य लोकानुग्रहो युज्यत इत्यर्थः। यदि लोकानुग्रहकृत् विराडहं तदा ब्रह्माण्डसंसारी स्यामित्यत्र वस्तुतो वैराजं पदं निर्विशेषमिति भजेत्याह—**भवे**ति। स्वावशेषधियेत्यर्थः ॥७२॥ तन्मात्रस्थितिः पुनः अतन्मात्रं न स्पृशतीत्याह—**एपे**ति ॥ ७३ ॥ तामात्मधिया **आदाय**। उपायतो ब्राह्मीस्थित्यभिमुखं मनः कुर्यादित्याह—**वैराग्येणे**ति। **वैराग्यशस्त्रेण** स्वातिरिक्तपाशं छित्त्वा जीवन्मुक्ताळिसेवितमहत्त्वादि**गुणैः** अमानित्वादिभि**रपि** ॥ ७४ ॥ महता **यत्नेन** ब्राह्मीस्थित्युपविहारार्थं यत्साधनत्वेन अभिमतं **तन्मनः** स्वातिरिक्तभ्रमतः **स्वयमेव उन्नयेत्** उद्धरेत्। तदेतद्ब्राह्मीस्थितिसाधनं ज्ञानं स्वेतरप्रपञ्च**वैराग्यतः पूर्णतां** प्राप्य **मनोनाशवशानुगं** मनस्तत्कार्यनाशाधिकरणं प्रत्यगभिन्नब्रह्मपदवीं प्रापयति। तदवष्टभ्य तन्मात्रपदवीं भजेत्यर्थः ॥ ७५ ॥ अनेकवृत्तिमन्मनोनाशः कथमित्यत्र—ब्रह्ममात्रावशेष [षं?] **आशये**ति। ब्रह्मातिरिक्तं नेति ज्ञानतो मनः स्ववृत्तिभिः सह तनुतामेत्य तन्मात्रमवशिष्यत इत्यर्थः। एवं ब्राह्मीस्थित्युपाय-पराङ्मुखं लोकं कुत्सयति—**तमि**ति। यदहन्यहनि स्वाज्ञजनानुभूतं स्वातिरिक्त-भ्रमं तमेव अनन्तकोटिजन्मसु **भुक्तविरसं**—किं तदिति—**व्यापारौघम** ॥ ७६ ॥ **कस्मादयं** लोको **न लज्जते**। अनित्यदेहादावात्मात्मीयाभिमतिमात्रान्नित्यात्म-विस्मरणं भवति। यस्यैवमनुभवो जायते सोऽयं आत्मापहारी भवति। तथा श्रुतिः—

> योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते।
> किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥

इति। स्वातिरिक्तयोगायोगाभ्यां बन्धमोक्षौ, तदसंभवप्रबोधसिद्धः स्वात्मेति सर्ववेदान्तसिद्धान्तोऽयं इत्याह—**चिदि**ति ॥ ७७ ॥ यन्मया सर्ववेदान्तसिद्धान्तः उक्तः **एतं निश्चयमादाय** ॥ ७८ ॥ शास्त्रप्रतिपाद्यपरमार्थस्वरूपं प्रतिपादयन्

शास्त्रार्थमुपसंहरति—**चिदहमिति** ॥ ७९ ॥ योऽयमात्मा चिन्मात्रतया निर्दिष्टः सोऽयं **दृश्यदर्शननिर्मुक्तः** ॥ ८० ॥ "चित्" इति स्त्रीलिङ्गतया या निर्दिष्टा तस्या एव "दृश्यदर्शननिर्मुक्तः" इत्यादिना पुल्लिङ्गतया निर्देशः कृतः, पुनस्तस्यैव नपुंसकलिङ्गतयाऽपि निर्देशः क्रियते—**चैत्येति** ॥ ८१ ॥ स्वानुभवं प्रकटयित्वा शिष्यमनुशास्तीत्याह—**संशान्तेति** । स्वातिरिक्तमस्ति-नास्तीतिसंशान्तसर्वसङ्कल्पः निर्विकल्पपदं गत्वा निष्प्रतियोगिकनिर्विकल्पं ब्रह्म स्वमात्रमिति निश्चित्य स्वस्थो भव मुनीश्वर स्वे महिम्नि स्थिरासनो भव इत्यर्थः ॥ ८२ ॥

शास्त्रार्थपठनपाठनफलम्

य इमां महोपनिषदं ब्राह्मणो नित्यमधीते अश्रोत्रियः श्रोत्रियो भवति । अनुपनीत उपनीतो भवति । सोऽग्निपूतो भवति । स वायुपूतो भवति । स सूर्यपूतो भवति । स सोमपूतो भवति । स सत्यपूतो भवति । स सर्वपूतो भवति । स सर्वैर्देवैर्ज्ञातो भवति । स सर्वेषु तीर्थेषु स्नातो भवति । स सर्वैर्देवैरनुध्यातो भवति । स सर्वक्रतुभिरिष्टवान् भवति । गायत्र्याः षष्टिसहस्राणि जप्तानि फलानि भवन्ति । इतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि फलानि भवन्ति । प्रणवानामयुतं जप्तं भवति । आचक्षुषः पङ्क्तिं पुनाति । आसप्तमान् पुरुषयुगान् पुनाति । इत्याह भगवान् हिरण्यगर्भः । [1]जाप्येनामृतत्वं च गच्छतीति महोपनिषत् ॥ ८३ ॥

शास्त्रार्थपठनपाठनफलमाह—**य इति** । **अनुपनीतः उपनीतो भवति** इत्यत्र—अनुपनीतस्य विद्याग्रहणायोगात् अत्रानुपनीतशब्देनाज्ञत्वमुच्यते ।

[1] जप्ये—अ.

केवलपठनमात्रतः आपेक्षिकामृतत्वं अर्थज्ञानतो मुख्यामृतत्वं च गच्छति । **इतिमहोपनिषच्छब्दः** उपनिषत्समाप्त्यर्थः ॥ ८३ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं महोपनिषदः स्फुटम् ।
महोपनिषदो व्याख्याग्रन्थजातं सहस्रकम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकषष्टिसङ्ख्यापूरकं महोपनिषद्विवरणं सम्पूर्णम्

---

# मुक्तिकोपनिषत्

पूर्णमदः—इति शान्तिः

## प्रथमोऽध्यायः

परमात्मस्वरूपजिज्ञासा

अयोध्यानगरे रम्ये रत्नमण्टपमध्यमे ।
सीताभरतसौमित्रिशत्रुघ्नाद्यैः समन्वितम् ॥ १ ॥
सनकाद्यैर्मुनिगणैर्वसिष्ठाद्यैः शुकादिभिः ।
अन्यैर्भागवतैश्चापि स्तूयमानमहर्निशम् ॥ २ ॥
धीविक्रियासहस्राणां साक्षिणं निर्विकारिणम् ।
स्वरूपध्याननिरतं समाधिविरमे हरिम् ॥ ३ ॥
भक्त्या शुश्रूषया रामं स्तुवन् पप्रच्छ मारुतिः ।
राम त्वं परमात्माऽसि सच्चिदानन्दलक्षणः ॥ ४ ॥
इदानीं त्वां रघुश्रेष्ठ प्रणमामि मुहुर्मुहुः ।
त्वद्रूपं ज्ञातुमिच्छामि तत्त्वतो राम मुक्तये ॥ ५ ॥

अनायासेन येनाहं मुच्येयं भवबन्धनात् ।
कृपया वद मे राम येन मुक्तो भवाम्यहम् ॥ ६ ॥

ईशाद्यष्टोत्तरशतवेदान्तपटलाशयम् ।
मुक्तिकोपनिषद्वेद्यं रामचन्द्रपदं भजे ॥

इह खलु शुक्लयजुर्वेदप्रविभक्तेयं मुक्तिकोपनिषत् चतुर्वेदप्रविभक्तशाखातन्मस्तकेयत्ताप्रकटनपूर्वकं अवान्तरमुक्तिभेदप्रकटनव्यग्रा सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रावशेषलक्षणविकळेबरकैवल्यपर्यवसन्ना विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । श्रीरामदूतश्रीरामचन्द्रप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—अयोध्येत्यादिना ॥ १–३ ॥ केन रूपेण स्तुत्वा किं पृष्टवानित्यत आह—रामेति ॥४॥ वास्तवं त्वद्रूपम् ॥५–६॥

वेदान्तज्ञानेन सायुज्यप्राप्तिः

साधु पृष्टं महाबाहो वदामि शृणु तत्त्वतः ।
वेदान्ते सुप्रतिष्ठोऽहं वेदान्तं समुपाश्रय ॥ ७ ॥
वेदान्ताः के रघुश्रेष्ठ वर्तन्ते कुत्र ते वद ।
हनूमञ्छृणु वक्ष्यामि वेदान्तस्थितिमञ्जसा ॥ ८ ॥
निश्वासभूता मे विष्णोर्वेदा जाताः सुविस्तराः ।
तिलेषु तैलवद्वेदे वेदान्तः सुप्रतिष्ठितः ॥ ९ ॥
राम वेदाः कतिविधास्तेषां शाखाश्च राघव ।
तासूपनिषदः काः स्युः कृपया वद तत्त्वतः ॥ १० ॥
ऋग्वेदादिविभागेन वेदाश्चत्वार ईरिताः ।
तेषां शाखा ह्यनेकाः स्युस्तासूपनिषदस्तथा ॥ ११ ॥

ऋग्वेदस्य तु शाखाः स्युरेकविंशतिसंख्यया ।
नवाधिकशतं शाखा यजुषो मारुतात्मज ॥ १२ ॥
सहस्रसंख्यया जाताः शाखाः साम्नः परन्तप ।
अथर्वणस्य शाखाः स्युः पञ्चाशद्भेदतो हरे ॥ १३ ॥
एकैकस्यास्तु शाखाया एकैकोपनिषन्मता ।
तासामेकामृचं [मृगेकाऽपि]येन पठ्यते भक्तितो मयि ॥ १४ ॥
स मत्सायुज्यपदवीं प्राप्नोति मुनिदुर्लभाम् ।

वायुसूनुना एवं पृष्टो भगवान् तत्कृतप्रश्नमङ्गीकृत्य तं प्रोत्साहयन् तत्प्रश्नोत्तरमाह—साध्विति । किं वदसीत्यत्र—वेदान्त इति ॥ ७ ॥ वेदान्तेयत्तां पृच्छति—वेदान्ता इति । प्रश्नोत्तरं भगवानाह—हनूमन्निति ॥ ८–९ ॥ तदियत्ताबुभुत्सया श्रीरामं मारुतिः पृच्छति—रामेति ॥ १० ॥ श्रीरामः तत्प्रश्नोत्तरमाह—ऋगिति ॥ ११–१३ ॥ तदेकदेशपारायणफलमाह—तासामिति ॥ १४ ॥

मुक्तिभेदतत्साधनजिज्ञासा

राम केचिन्मुनि[1]श्रेष्ठा मुक्तिरेकेति चक्षिरे ॥ १५ ॥
केचित्त्वन्नामभजनात् काश्यां तारोपदेशतः ।
अन्ये तु सांख्ययोगेन भक्तियोगेन चापरे ॥ १६ ॥
अन्ये वेदान्तवाक्यार्थविचारात् परमर्षयः ।
सालोक्यादिविभागेन चतुर्धा मुक्तिरीरिता ॥ १७ ॥

मुक्तिभेदं हनूमान् पृच्छति—रामेति ॥ १५–१७ ॥

[1] श्रेष्ठ—अ २, उ.

सालोक्यादिमुक्तिसाधनं उपासनम्

स होवाच श्रीरामः—

कैवल्यमुक्तिरेकैव पारमार्थिकरूपिणी ।
दुराचाररतो वाऽपि मन्नामभजनात् कपे ॥ १८ ॥
सालोक्यमुक्तिमाप्नोति न तु लोकान्तरादिकम् ।
काश्यां तु ब्रह्मनालेऽस्मिन् मृतो मत्तारमाप्नुयात् ॥ १९ ॥
पुनरावृत्तिरहितां मुक्तिं प्राप्नोति मानवः ।
यत्र कुत्रापि वा काश्यां मरणे स महेश्वरः ॥ २० ॥
जन्तोर्दक्षिणकर्णे तु मत्तारं समुपादिशेत् ।
निर्धूताशेषपापौघो मत्सारूप्यं भजत्ययम् ॥ २१ ॥
सैव सालोक्यसारूप्यमुक्तिरित्यभिधीयते ।
सदाचाररतो भूत्वा द्विजो नित्यमनन्यधीः ॥ २२ ॥
मयि सर्वात्मके भावो मत्सामीप्यं भजत्ययम् ।
सैव सालोक्यसारूप्यसामीप्या मुक्तिरिष्यते ॥ २३ ॥
गुरूपदिष्टमार्गेण ध्यायन् मद्रूपमव्ययम् ।
मत्सायुज्यं द्विजः [1]सम्यग्भजेद्भ्रमरकीटवत् ॥ २४ ॥
सैव सायुज्यमुक्तिः स्याद्ब्रह्मानन्दकरी शिवा ।
चतुर्विधा [2]च या मुक्तिर्मदुपासनया भवेत् ॥ २५ ॥

मारुतिप्रश्नोत्तरं श्रीभगवानाह—स होवाच श्रीराम इति ॥ १८–२४ ॥ सालोक्यादिचतुर्विधा तु या मुक्तिः ॥ २५ ॥

[1] सम्यग्भजे भ्र—उ, उ १.  [2] तु—उ.

केवल्यमुक्तिसाधनं औपनिषदं ज्ञानम्

इयं कैवल्यमुक्तिस्तु केनोपायेन सिध्यति ।
माण्डूक्यमेकमेवालं मुमुक्षूणां विमुक्तये ॥ २६ ॥
तथाऽप्यसिद्धं चेज्ज्ञानं दशोपनिषदं पठ ।
ज्ञानं लब्ध्वाऽचिरादेव मामकं धाम यास्यसि ॥ २७ ॥
तथाऽपि दृढता नो चेद्विज्ञानस्याञ्जनासुत ।
द्वात्रिंशाख्योपनिषदं समभ्यस्य निवर्तय ॥ २८ ॥
विदेहमुक्ताविच्छा चेदष्टोत्तरशतं पठ ।
तासां क्रमं सशान्तिं च शृणु वक्ष्यामि तत्त्वतः ॥ २९ ॥

उपासनाजन्या चतुर्विधमुक्तिरिति श्रवणात् कैवल्यसिद्धिः केनेति पृच्छति —इयमिति । तदाशङ्कामपाकरोति—माण्डूक्यमिति । यत् ब्रह्मप्रणवार्थतुर्यतुरीययाथात्म्यप्रकाशकं तत् माण्डूक्यम् ॥ २६ ॥ तेनैव ज्ञानम् ॥ २७–२८॥ यदि ते देहे सत्यपि विदेहमुक्तौ । तत् कथमित्याशङ्कमानमालक्ष्य तासाम् ॥ २९–३९ ॥

अष्टोत्तरशतोपनिषदां क्रमः

ईशकेनकठप्रश्नमुण्डमाण्डूक्यतित्तिरिः ।
ऐतरेयं च छान्दोग्यं बृहदारण्यकं तथा ॥ ३० ॥
ब्रह्मकैवल्यजाबालश्वेताश्वो हंस आरुणिः ।
गर्भो नारायणो हंसो बिन्दुनादशिरःशिखा ॥ ३१ ॥
मैत्रायणी कौषितकी बृहज्जाबालतापनी ।
कालाग्निरुद्रमैत्रेयी सुबालक्षुरिमन्त्रिका ।

सर्वसारं निरालम्बं रहस्यं वज्रसूचिकम् ।
तेजोनादध्यानविद्यायोगतत्त्वात्मबोधकम् ॥ ३३ ॥
परिव्राट् त्रिशिखी सीता चूडा निर्वाणमण्डलम् ।
दक्षिणा शरभं स्कन्दं महानारायणाद्वयम् ॥ ३४ ॥
रहस्यं रामतपनं वासुदेवं च मुद्गलम् ।
शाण्डिल्यं पैङ्गलं भिक्षुमहच्छारीरकं शिखा ॥ ३५ ॥
तुरीयातीतसंन्यासपरिव्राजाक्षमालिका ।
अव्यक्तैकाक्षरं पूर्णा सूर्याक्ष्यध्यात्मकुण्डिका ॥ ३६ ॥
सावित्र्यात्मा पाशुपतं परं ब्रह्मावधूतकम् ।
त्रिपुरातपनं देवी त्रिपुरा कठभावना ।
हृदयं कुण्डली भस्म रुद्राक्षगणदर्शनम् ॥ ३७ ॥
तारसारमहावाक्यपञ्चब्रह्माग्निहोत्रकम् ।
गोपालतपनं कृष्णं याज्ञवल्क्यं वराहकम् ॥ ३८ ॥
शाट्यायनी हयग्रीवं दत्तात्रेयं च गारुडम् ।
कलिजाबालिसौभाग्यरहस्यऋचमुक्तिका ॥ ३९ ॥

उपनिषदर्थज्ञानात् मुक्तिलाभः

एवमष्टोत्तरशतं भावनात्रयनाशनम् ।
ज्ञानवैराग्यदं पुंसां वासनात्रयनाशनम् ॥ ४० ॥
पूर्वोत्तरेषु विहिततत्तच्छान्तिपुरःसरम् ।
वेदविद्याव्रतस्नातदेशिकस्य मुखात् स्वयम् ॥ ४१ ॥

गृहीत्वाऽष्टोत्तरशतं ये पठन्ति द्विजोत्तमाः ।
प्रारब्धक्षयपर्यन्तं जीवन्मुक्ता भवन्ति ते ॥ ४२ ॥
ततः कालवशादेव प्रारब्धे तु क्षयं गते ।
वैदेहीं मामकीं मुक्तिं यान्ति नास्त्यत्र संशयः ॥ ४३ ॥

विशिष्टविद्यासामान्यविशेषफलमाह—एवमिति । असम्भावनाऽऽदिभावनात्रयनाशनम् । देहवासनाऽऽदिवासनात्रयनाशनम ॥ ४० ॥ किंच—पूर्वेति ॥ ४१–४३ ॥

उपनिषत्संप्रदानविधिः

सर्वोपनिषदां मध्ये सारमष्टोत्तरं शतम् ।
सकृच्छ्रवणमात्रेण सर्वाघौघनिकृन्तनम् ॥ ४४ ॥
मयोपदिष्टं शिष्याय तुभ्यं पवननन्दन ।
इदं शास्त्रं मयाऽऽदिष्टं गुह्यमष्टोत्तरं शतम् ॥ ४५ ॥
ज्ञानतोऽज्ञानतो वाऽपि पठतां बन्धमोचकम् ।
राज्यं देयं धनं देयं याचतः कामपूरणम् ॥ ४६ ॥
इदमष्टोत्तरशतं न देयं यस्य कस्यचित् ।
नास्तिकाय कृतघ्नाय दुराचाररताय वै ॥ ४७ ॥
मद्भक्तिविमुखायासच्छास्त्रगर्तेषु मुह्यते ।
गुरुभक्तिविहीनाय दातव्यं न कदाचन ॥ ४८ ॥
सेवापराय शिष्याय हितपुत्राय मारुते ।
मद्भक्ताय सुशीलाय कुलीनाय सुमेधसे ॥ ४९ ॥

सम्यक् परीक्ष्य दातव्यमेवमष्टोत्तरं शतम् ।
यः पठेच्छृणुयाद्वाऽपि स मामेति न संशयः ॥ ५० ॥

तदेतदृचाऽभ्युक्तम्—

विद्या ह वै ब्राह्मणमाजगाम
गोपाय मां शेवधिष्टेऽहमस्मि ।
असूयकायानृजवे शठाय
मा मा ब्रूया वीर्यवती तथा स्याम् ॥ ५१ ॥
यमेव विद्याश्रुतमप्रमत्तं मेधाविनं ब्रह्मचर्योपपन्नम् ।
अस्मा इमामुपसन्नाय सम्यक् परीक्ष्य दद्याद्वैष्णवीमात्मनिष्ठाम् ॥

अशीत्यधिकशतोत्तरसहस्रसङ्ख्याकानां **सर्वोपनिषदाम्** ॥ ४४–४५ ॥ केवलकृपया यद्यनधिकारिणि तुष्टोऽसि तदा तस्मै **राज्यं देयम्** ॥ ४६ ॥ किंगुणविशिष्टाय न देयमित्यत्र—**नास्तिकायेति** ॥ ४७–४८ ॥ न कस्यापि प्रशंसने विद्यासम्प्रदायविच्छित्तिः स्यादित्यत्र यथोक्ताधिकारिणे दातव्यं, तेन विद्यासम्प्रदायाविच्छित्तिः स्यादित्याह—**सेवेति** ॥ ४९–५० ॥ अनधिकारिणे न वक्तव्यं, अधिकारिणे वक्तव्यं, इत्येषोऽर्थो मन्त्राभ्यामभ्युक्तो भवतीत्याह—**तदेतदृचाऽभ्युक्तमिति** । हवा इति वृत्तार्थस्मरणार्थौ । ब्रह्मविद्या पुरा **ब्राह्मणं** ब्रह्माणं **आजगाम** । ब्रह्माणमुपसङ्गम्य किं उक्तवतीत्यत्र—तवाहं **शेवधिष्टे** निक्षेपस्थाने **अस्मि** । तव निक्षेपभूतां **मां गोपाय** रक्षस्व । केन त्वं मया रक्षिताऽसीत्यत्र अनधिकार्यप्रदानपूर्वकं यथोक्ताधिकारिभ्यः प्रदानमित्याह—**असूयकायेति** । अनधिकार्यप्रदानतोऽहं **वीर्यवती स्यामि**त्यर्थः ॥ ५१ ॥ सम्यक्परीक्षया विदितवृत्ताय वैष्णवीं निष्ठां दद्यादित्यर्थः ॥ ५२ ॥

इति प्रथमः खण्डः

---

अष्टोत्तरशतोपनिषदां पृथक् शान्तिः

अथ हैनं श्रीरामचन्द्रं मारुतिः पप्रच्छ ऋग्वेदादिविभागेन पृथक् शान्तिमनुब्रूहीति । स होवाच श्रीरामः—

ऐतरेयकौषीतकिनादबिन्द्वात्मप्रबोधनिर्वाणमुद्गलाक्षमालिका-त्रिपुरासौभाग्यबह्वृचानामृग्वेदगतानां दशसंख्याकानामुपनिषदां वाङ्मे मनसीति शान्तिः ॥ १ ॥

ईशावास्यबृहदारण्यजाबालहंसपरमहंससुबालमन्त्रिकानिरा-लम्बत्रिशिखीब्राह्मणमण्डलब्राह्मणाद्वयतारकपैङ्गलभिक्षुतुरीयातीता-ध्यात्मतारसारयाज्ञवल्क्यशाट्यायनीमुक्तिकानां शुक्लयजुर्वेदगतानामेकोनविंशतिसंख्याकानामुपनिषदां पूर्णमद इति शान्तिः ॥ २ ॥

कठवल्लीतैत्तिरीयकब्रह्मकैवल्यश्वेताश्वतरगर्भनारायणामृतबिन्द्वमृतनादकालाग्निरुद्रक्षुरिकासर्वसारशुकरहस्यतेजोबिन्दुध्यानबिन्दुब्रह्मविद्यायोगतत्त्वदक्षिणामूर्तिस्कन्दशारीरकयोगशिखैकाक्षराक्ष्यवधूत-कठरुद्रहृदययोगकुण्डलिनीपञ्चब्रह्मप्राणाग्निहोत्रवराहकलिसंतारणसर-स्वतीरहस्यानां कृष्णयजुर्वेदगतानां द्वात्रिंशत्संख्याकानामुपनिषदां सह नाववत्विति शान्तिः ॥ ३ ॥

केनच्छान्दोग्यारुणिमैत्रायणिमैत्रेयीवज्रसूचिकायोगचूडा-मणिवासुदेवमहत्संन्यासाव्यक्तकुण्डिकासावित्रीरुद्राक्षजाबालदर्शन-जाबालीनां सामवेदगतानां षोडशसंख्याकानामुपनिषदामाप्यायन्त्विति शान्तिः ॥ ४ ॥

प्रश्नमुण्डकमाण्डूक्याथर्वशिरोऽथर्वशिखाबृहज्जाबालनृसिंहतापनीनारदपरिव्राजकसीताशरभमहानारायणरामरहस्यरामतापनीशाण्डिल्यपरमहंसपरिव्राजकान्नपूर्णासूर्यात्मपाशुपतपरब्रह्मत्रिपुरातपनदेवीभावनाभस्मजाबालगणपतिमहावाक्यगोपालतपनकृष्णहयग्रीवदत्तात्रेयगारुडानामथर्ववेदगतानामेकत्रिंशत्संख्याकानामुपनिषदां भद्रं कर्णेभिरिति शान्तिः ॥ ५ ॥

ऋगादिचतुर्वेदप्रविभक्तैतरेयाद्युपनिषदां शान्तिभेदं पृच्छतीत्याह— अथेति। किमिति? ऋग्वेदादीति ॥ १–५ ॥

औपनिषदज्ञानादेव कैवल्यमुक्तिः

मुमुक्षवः पुरुषाः साधनचतुष्टयसंपन्नाः श्रद्धावन्तं सत्कुलभवं श्रोत्रियं शास्त्रवात्सल्यं गुणवन्तमकुटिलं सर्वभूतहिते रतं दयासमुद्रं सद्गुरुं विधिवदुपसंगम्योपहारपाणयोऽष्टोत्तरशतोपनिषदं विधिवदधीत्य श्रवणमनननिदिध्यासनानि नैरन्तर्येण कृत्वा प्रारब्धक्षयाद्देहत्रयभङ्गं प्राप्योपाधिविनिर्मुक्तघटाकाशवत् परिपूर्णता विदेहमुक्तिः । सैव कैवल्यमुक्तिरिति ॥ ६ ॥ अत एव ब्रह्मलोकस्था अपि ब्रह्ममुखाद्वेदान्तश्रवणादि कृत्वा तेन सह कैवल्यं लभन्ते। अतः सर्वेषां कैवल्यमुक्तिर्ज्ञान[1]मात्रेणोक्ता न कर्मसांख्ययोगोपासनादिभिरित्युपनिषत् ॥ ७ ॥

देशिकमुखात् अष्टोत्तरशताद्युपनिषदो विधिवत् अधीत्य तदर्थश्रवणादिनिष्पन्ननिष्प्रतियोगिकब्रह्ममात्रज्ञानसमकालं मुनयो विदेहमुक्ता भवन्तीत्याह—

[1] मार्गे—क.

**मुमुक्षव इति** । मुमुक्षवो यथोक्तसाधनसम्पन्ना भूत्वा, " आचार्यो वेदसम्पन्नो विष्णुभक्तो विमत्सरः " इत्यादिश्रुतिप्रकटितजीवन्मुक्तलक्षणसम्पन्नं **विधिवत्** प्रणम्य, तन्मुखात् ईशाद्य**ष्टोत्तरशतोपनिषदो** विधिवदधीत्य, तत्सम**प्रश्रवण-मनननिदिध्यासनतः** सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति सम्यज्ज्ञानं जायते । तत्समकालमेव आगाम्यादिकर्मत्रयं कारणदेहादिगतभ्रान्तिजादिता-दात्म्यादित्रयं च विलीयते । तदानीमुपाधिविनिर्मुक्तघटाकाशवत् **परिपूर्ण**भावो **विदेहमुक्तिः** । तद्वन्तो विदेहमुक्ता भवन्ति । येयं विदेहमुक्तिरभिहिता **सैव कैवल्यमुक्तिरिति** ज्ञातव्येत्यर्थः ॥ ६ ॥ सालोक्यादिमुक्तिभाजां ज्ञाननैरपेक्ष्येण ब्रह्मणा सह कैवल्यसम्भवात् किं ज्ञानेनेत्याशङ्क्य—स्वातिरिक्तभ्रमस्य स्वाज्ञान-विकल्पितत्वेन स्वज्ञानेतरानाश्यत्वात्, केवलोपासनया सालोक्यादिः सिध्यति, यतः तस्याऽपि स्वाज्ञानकार्यत्वेन स्वज्ञाननाश्यत्वं **अत एव** । **वेदान्तश्रवणादि कृत्वा** तन्निष्पन्ननिर्विशेषब्रह्मज्ञानादेव **तेन ब्रह्मणा** । **न कर्मसांख्ययोगोपास-नादिभिः**, " नान्यः पन्था अयनाय विद्यते " इति श्रुतेः । इत्युपनिषच्छब्दः प्रथमाध्यायपरिसमाप्त्यर्थः ॥

इति द्वितीयः खण्डः

## इति प्रथमोऽध्यायः

---

# द्वितीयोऽध्यायः

जीवन्मुक्तिविदेहमुक्त्योः स्वरूपप्रमाणसाधनप्रयोजननिरूपणम्

तथा हैनं श्रीरामचन्द्रं मारुतिः पप्रच्छ । केयं जीवन्मुक्तिः विदेहमुक्तिः किं वा तत्र प्रमाणं कथं वा तत्सिद्धिः सिद्ध्या वा किं प्रयोजनमिति । स होवाच श्रीरामः । पुरुषस्य कर्तृत्वभोक्तृत्वसुखदुः-

त्वादिलक्षणश्चित्तधर्मः क्लेशरूपत्वाद्बन्धो भवति । तन्निरोधनं जीवन्मुक्तिः। उपाधिविनिर्मुक्तघटाकाशवत् प्रारब्धक्षयाद्विदेहमुक्तिः। जीवन्मुक्तिविदेहमुक्त्योरष्टोत्तरशतोपनिषदः प्रमाणम् । कर्तृत्वादिदुःखनिवृत्तिद्वारा नित्यानन्दावाप्तिः प्रयोजनं भवति। तत् पुरुषप्रयत्न[1]साध्यं भवति। यथा पुत्रकामेष्टिना पुत्रं वाणिज्यादिना वित्तं ज्योतिष्टोमेन स्वर्गं तथा पुरुषप्रयत्नसाध्यवेदान्तश्रवणादिजनितसमाधिना जीवन्मुक्त्यादिलाभो भवति। सर्ववासनाक्षयात्तल्लाभः ॥१—१॥

एवं श्रीराममुखतः स्वस्वरूपबोधकं ईशाद्यष्टोत्तरशतवेदान्तरहस्यमवगम्य उपायोपेयात्मकपञ्चविधमुक्तिस्वरूपमपि विदित्वा निर्विशेषब्रह्मज्ञानान्तरकालिकमुख्यफलात्मकजीवन्मुक्तिविदेहमुक्तिस्वरूपं तत्प्रमाणं तत्प्रयोजनं च विशेषतो ज्ञातव्यमिति श्रीरामचन्द्रं रामदूतः पृच्छतीत्याह—**अथेति** । किमिति—केयमिति । मारुतिकृतप्रश्नोत्तरं—**स होवाच श्रीराम** इति। किमुवाचेत्यत्र जीवन्मुक्तेः बन्धनिरासकतया जीवन्मुक्तिनिरसनीयबन्धस्वरूपमाह—**पुरुषस्येति**। **चित्तधर्मः** सहजो भवति। तस्य जनिमृतिपरम्पराहेतुत्वेन **क्लेशरूपत्वात्** तथाविधचित्तधर्म एव स्वाज्ञदृष्टेः **बन्धो भवति । तन्निरोधनं जीवन्मुक्तिः**। तस्य चित्तस्य कर्तृत्वादिपराग्भावतो निरोधनपूर्वकं प्रत्यगभिन्नं ब्रह्मास्मीति तावन्मात्रस्थितिः जीवन्मुक्तिः ।

देहत्रयातिरिक्तोऽहं शुद्धचैतन्यमस्म्यहम् ।
ब्रह्माहमिति यस्यान्तः स जीवन्मुक्त उच्यते ॥

इति श्रुतेः। केयं जीवन्मुक्तिरिति प्रश्नोत्तरमभिधाय केयं विदेहमुक्तिरिति प्रश्नोत्तरमाचष्टे—**उपाधीति** । घटशरावाद्युपाधिसत्त्वासत्त्वाभ्यां यथा व्योम व्योममात्रं न

[1] साध्यो—उ.

कदाचित् घटतां भजतीति ज्ञानमात्रेण व्योम घटोपाधिविनिर्मुक्तं भवति तथा प्रारब्धादिकर्मत्रयाश्रयशरीरत्रयोपलक्षितस्वाविद्यापदतत्कार्यसत्त्वासत्त्वाभ्यां स्वातिरिक्तकल्पनाऽपह्नवसिद्धं वस्तु निष्प्रतियोगिकब्रह्ममात्रमेवेति तावन्मात्रावशेषतया अवस्थितिः विदेहमुक्तिरित्यर्थः । किं वा तत्र प्रमाणमिति प्रश्नोत्तरमाह—**जीवन्मुक्तीति** । ईशाद्यष्टोत्तरशतोपनिषदां निष्प्रतियोगिकनिर्विशेषब्रह्ममात्रपर्यवसन्नत्वात् तज्ज्ञानान्तरालिकफलं हि जीवन्मुक्तिः तन्मात्रावशेषलक्षणं विदेहमुक्तिरिति ।

यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः ।
तत्र को मोहः कः शोकः एकत्वमनुपश्यतः ॥
अन्यदेव तद्विदितादथो अविदितादधि ॥
प्रतिबोधविदितं मतममृतत्वं हि विन्दते ॥
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥
स एषोऽकलोऽमृतो भवति नातः परमस्तीति च ॥
अप्राणो ह्यमनाः शुभ्रः ॥
यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥
शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥
अभयं प्रतिष्ठां विन्दते । अथ सोऽभयं गतो भवति ॥
प्रज्ञा प्रतिष्ठा । प्रज्ञानं ब्रह्म ॥
तरति शोकमात्मवित् ॥
तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः ॥

इत्यादिश्रुतिसहस्रं निष्प्रतियोगिकब्रह्ममात्रबोधकं सत् तत्रैव पर्यवस्यति । तदस्मीत्यनुसन्धानलक्षणा जीवन्मुक्तिः, तदनुसन्धानादिसर्वव्यापृतिविरळा विदेहमुक्तिः इत्यत्र सर्वे वेदान्ताः प्रमाणपदं भजन्त इत्यर्थः । कथं वा तत्सिद्धिः इति प्रश्नं पश्चाद्विवक्ष्यन् सिद्ध्या वा किं प्रयोजनं इति प्रश्नमपाकरोति—**कर्तृत्वादीति** ।

कथं तत्सिद्धिः इति प्रश्नमपाकरोति—**तत्पुरुषेति** । सदृष्टान्तं तदेव विशदयति—**यथेति** । **पुत्रकामेष्टिना** इष्ट्या । **पुरुषप्रयत्नसाध्य**वेदान्तश्रवणादिजनितनिर्विशेषब्रह्मज्ञानसमाधिना । निर्विकल्पकज्ञानं केन जायते इत्यत्र—**सर्ववासनाक्षयात्तल्लाभ** इति ॥ १–१ ॥

शुभाशुभवासनाविषये पुरुषकर्तव्यता

अत्र श्लोका भवन्ति—

उच्छास्त्रं शास्त्रितं चेति पौरुषं द्विविधं मतम् ।
तत्रोच्छास्त्रमनर्थाय परमार्थाय शास्त्रितम् ॥ १ ॥
लोकवासनया जन्तोः शास्त्रवासनयाऽपि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ॥ २ ॥
द्विविधो वासनाव्यूहः शुभश्चैवाशुभश्च [1]सः ।
वासनौघेन शुद्धेन तत्र चेदनु[2]नीयसे ॥ ३ ॥
तत्क्रमेणाशु तेनैव मामकं पदमाप्नुहि ।
अथ चेदशुभो भावस्त्वां योजयति संकटे ॥ ४ ॥
प्राक्तनस्तदसौ यत्नाज्जेतव्यो भवता कपे ।
शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ॥ ५ ॥
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ।
अशुभेषु समाविष्टं शुभेष्वेवावतारयेत् ॥ ६ ॥
अशुभाच्चालितं याति शुभं तस्मादपीतरत् ।
पौरुषेण प्रयत्नेन लालयेच्चित्तबालकम् ॥ ७ ॥

[1] ते—अ, अ १, अ २, क.    [2] लीय—क.

द्रागभ्यासवशाद्याति यदा ते वासनो[1]दयम् ।
तदाऽभ्यासस्य साफल्यं विद्धि त्वमरिमर्दन ॥ ८ ॥
संदिग्धायामपि भृशं शुभामेव समाचर ।
शुभायां वासनावृद्धौ न दोषाय मरुत्सुत ॥ ९ ॥

उक्तार्थप्रकाशकाः मन्त्राः सन्तीत्याह—अत्र **श्लोका भवन्तीति**। वेदान्तश्रवणादिः पुरुषप्रयत्नसाध्य इत्युक्तं तत्र उच्छास्त्रादिभेदेन पौरुषं द्विधा भिद्यत इत्याह—उदिति । श्रुतिस्मृतिवर्त्मातिक्रमणपूर्वकं स्वच्छन्दानुवर्तित्वं **उच्छास्त्र**मुच्यते, तस्य स्वपुरुषार्थच्युतिहेतुतया अनर्थरूपत्वात् । तद्वैपरीत्येन श्रुतिस्मृत्यनुग्राहकभगवदाज्ञाऽनुकारित्वं **शास्त्रितं**, तस्य लोकोच्छास्त्रप्रवृत्तिनिरसनपूर्वकं स्वार्थप्रापकत्वात् । ततो मुमुक्षुः उच्छास्त्रवृत्तिं विहाय भगवदाज्ञाऽनुवर्ती भवेदित्यर्थः ।

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ इति ॥
श्रुतिः स्मृतिर्ममैवाज्ञा यस्तामुल्लंघ्य वर्तते ।
आज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥

इति च स्मृतेः ॥ १ ॥ उन्मार्गप्रवृत्तिहेतुः लोकादिवासनात्रयमित्याह—**लोके**ति । यथा लोका मां सन्मार्गानुवर्तिनं वदन्ति तथा मया आचरणीयमिति धीरेव **लोकवासना** भवतीत्यत्र

यथा वदन्ति लोका मामदुष्टं शिष्टभूषणम् ।
तथा मयेह स्थातव्यमिति धीर्लोकवासना ॥

इति चन्द्रिकोक्तेः । मया शास्त्रमभ्यस्य तदर्थानुष्ठानं कार्यं इत्यादि **शास्त्रवासना** भवतीत्यत्र—

अन्यस्मादधिकं शास्त्रमध्येतव्यं मयेति च ।
यथाशास्त्रं चराम्यद्य कोऽपि मत्सदृशो न हि ।

[1] दयः—अ.

अतिलंघयेह शास्त्रोक्ताचारमन्यस्तु वर्तते ।
यथाशास्त्रं चरत्येष मया तुल्यो न संशयः ।
एवंरूपा यस्य मतिः वासना शास्त्रगेरिता ॥

इति चन्द्रिकोक्तेः । गच्छामि तिष्ठाम्यमुष्य पुत्रोऽहं इत्यादि देहवासना भवति, " देहाश्रया व्यवहृतिर्वासना देहगेरिता " इति स्मृतेः । एवं लोकादिवासनावासितचित्तानां **यथावदात्मज्ञानं न जायते** । यत एवं अतः वासनात्रय न कर्तव्यं इत्यत्र श्रुतिः—

लोकानुवर्तनं त्यक्त्वा तथा देहानुवर्तनम् ।
शास्त्रानुवर्तनं त्यक्त्वा स्वाध्यासापनयं कुरु ॥

इति ॥ २ ॥ शुभाशुभभेदेन वासनापूगो द्विधा भवतीत्याह—**द्विविध इति** । तत्र शुभवासनावान् मामेतीत्याह—**वासनेति** ॥ ३ ॥ यद्यशुभवासना त्वां स्पृशति सा त्वया त्याज्येत्याह—अथेति ॥ ४ ॥ शुभाशुभमार्गस्वभावप्रवृत्तो वासनाप्रवाहमशुभमार्गनिरोधनपूर्वकं शुभमार्गे प्रवर्तयेदित्याह—**शुभेति** ॥ ५ ॥ उक्तार्थमेव पुनः द्रढयति—**अशुभेष्विति** ॥ ६–७ ॥ यदि तेऽभ्यासपाटवेन शुभवासनैवोदेति तदा त्वदभ्यासः फलवानित्याह—**द्रागिति** ॥ ८ ॥ शुभवासना जाता न वेति संशये शुभवासनावृद्धौ न हि दोषोऽस्तीत्याह—**सन्दिग्धायामिति** ॥ ९ ॥

वासनाक्षयविज्ञानमनोनाशानां युगपदभ्यसनीयत्वम्

वासनाक्षयविज्ञानमनोनाशा महामते ।
समकालं चिराभ्यस्ता भवन्ति फलदा मताः ॥ १० ॥
[1]त्रयमेत [एते] समं यावन्नाभ्य[2]स्ताश्च पुनः पुनः ।
तावन्न पदसंप्राप्तिर्भवत्यपि समाशतैः ॥ ११ ॥

[1] त्रय एते समा—अ. [2] स्ता च—अ १, अ २, क, उ, उ १.

एकैकशो निषेव्यन्ते यद्येते चिरमप्यलम् ।
तन्न सिद्धिं प्रयच्छन्ति मन्त्राः संकीर्ण[र्णि]ता इव ॥ १२ ॥
त्रिभिरेतैश्चिराभ्यस्तैर्हृदयग्रन्थयो दृढाः ।
निःशङ्कमेव त्रुट्यन्ति बिसच्छेदाद्गुणा इव ॥ १३ ॥
जन्मान्तरशताभ्यस्ता मिथ्या संसारवासना ।
सा चिराभ्यासयोगेन विना न क्षीयते क्वचित् ॥ १४ ॥
तस्मात् सोम्य प्रयत्नेन पौरुषेण विवेकिना ।
भोगेच्छां दूरतस्त्यक्त्वा त्रयमेव समाश्रय ॥ १५ ॥

वासनाक्षयविज्ञानमनोनाशा युगपदभ्यस्ताश्चेत् यथोक्तफलदा भवन्ति न प्रातिस्विकेनाभ्यासत इत्याह—**वासनेति** ॥ १० ॥ विपर्यये—**त्रयमेते** ॥ ११ ॥ यथा विशिष्टाक्षरमन्त्रजपः फलवान् न तत्रैकैकाक्षरजपः फलवान् भवति तथा वासनाक्षयादित्रयं समकालाभ्यस्तं सत् फलवत् भवति । प्रातिस्विकेन वासनाक्षयकरणे विज्ञानाभावे वासना न क्षीयते । वासनाक्षयार्थं विज्ञानमेव आश्रयणीयमित्युक्ते मनसि सति विज्ञानं नोदेति । विज्ञानसिद्ध्ये मनोनाशः कर्तव्य इत्युक्ते वासनासु सतीषु मनो न नश्यति । यत एवं अतः वासनाक्षयविज्ञानमनोनाशा युगपदनुष्ठेयाः । तत् कथं यौगपद्येन अनुष्ठातुं शक्यं इत्युक्ते ब्रह्मातिरेकेण सवासनं मनो नास्तीति विज्ञानमेव समकालाभ्यासः, तेन स्वातिरिक्तग्रासब्रह्मभावापत्तिः स्यादित्यर्थः ॥ १२–१३ ॥ एवं सकृदभ्यासतः सवासनं मनो विलीयत इत्यत आह—**जन्मेति** ॥ १४ ॥ यस्मादेवं **तस्मात्** । भोगेच्छात्यागपूर्वकं ब्रह्मातिरेकेण न किञ्चिदस्तीति चिरकालाभ्यासतः सवासनं मनो विलीयते । ततो विद्वान् कृतकृत्यो भवतीत्यर्थः ॥ १५ ॥

वासनाक्षयप्रकारः तत्प्रयोजनं च

तस्माद्वासनया युक्तं मनो बद्धं विदुर्बुधाः ।

सम्यग्वासनया त्यक्तं मुक्तमित्यभिधीयते ।
मनोनिर्वासनीभावमाचराशु महाकपे ॥ १६ ॥
सम्यगालोकनात् सत्याद्वासना प्रविलीयते ।
वासनाविलये चेतः शममायाति दीपवत् ॥ १७ ॥
वासनां संपरित्यज्य मयि चिन्मात्रविग्रहे ।
यस्तिष्ठति गत[1]व्यग्रः [2]सोऽहं सच्चित्सुखात्मकः ॥ १८ ॥
समाधिमथ कर्माणि मा करोतु करोतु वा ।
हृदयेनात्तसर्वेहो मुक्त एवोत्तमाशयः ॥ १९ ॥
नैष्कर्म्येण न तस्यार्थस्तस्यार्थोऽस्ति न कर्मभिः ।
न समाधानजाप्याभ्यां यस्य निर्वासनं मनः ॥ २० ॥
संत्यक्तवासनान्मौनादृते नास्त्युत्तमं पदम् ॥ २१ ॥
वासनाहीनमप्येतच्चक्षुरादीन्द्रियं स्वतः ।
प्रवर्तते बहिः स्वार्थे वासनामात्रकारणम् ॥ २२ ॥
अयत्नोपनतेष्वक्षि दृग्द्रव्येषु यथा पुनः ।
नीरागमेव पतति तद्वत् कार्येषु धीरधीः ॥ २३ ॥

सवासनं मनो बद्धं मत् पराक्प्रवृत्तं भवति, निर्वासनं मनः प्रत्यग्भावमेतीत्याह—**तस्मादिति** । यस्माद्वासनावान हीयते **तस्मात्** । यत एवमतो **मनोनिर्वासनीभावमिति** ॥१६॥ कथं मनो निर्वासनीभावमेतीत्यत्र ब्रह्मातिरेकेण न किञ्चिदस्तीति **सम्यगालोकनात्** । निःस्नेहदीपवत् निर्वासनं मनो **विलीयत** इत्यर्थः ॥ १७ ॥ वासनात्यागी कृतकृत्यो भवतीत्याह—**वासनामिति** ॥ १८ ॥

[1] स्नेहः—अ, अ १. [2] सोऽयं—उ.

निर्वासनमना मुनिः समाध्यादिकरणाकरणतो न वर्धते न हीयते वृद्धिहानितोऽपि मुक्तो भवतीत्याह— **समाधिमिति** । सत्वगुणात्मकः **समाधिः** । रजोगुणात्मकं **कर्म** । निर्गुणं ब्रह्मास्मीति तद्भावापन्नो मुनिः । तस्य स्वातिरिक्तभ्रमतो मुक्तत्वात् समाध्यादिकरणाकरणयोः न का चिद्विकृतिरस्तीत्यर्थः ॥ १९ ॥ किंच—**नैष्कर्म्येणेति** । कर्मसामान्यं यतो निर्गतं तन्निष्कर्म तदेव **नैष्कर्म्यं** पारिव्राज्यं तेन कर्मणा वा मन्त्राभ्यासतः समाधितो वाऽपि न हि तस्य प्रयोजनमस्ति **यस्य मनो निर्वासनं** भवति ॥ २० ॥ तस्य देहत्रयविलक्षणत्वेन तन्निर्वर्त्यकर्ममन्त्रसंन्याससमाध्यपेक्षाऽसम्भवात् तूर्ष्णीभावादृते न किंचित् कर्तव्यमस्तीत्याह— **सन्त्यक्तेति** ॥ २१ ॥ विदुषो निर्वासनतया कादाचित्कबाह्यान्तर्व्यापारो न दोषाय भवतीत्याह—**वासनेति** । विदुषो मनः **वासनाहीनमपि** । सवासनाप्रवृत्तिः बन्धहेतुः निर्वासना प्रवृत्तिः मुक्तये भवतीत्यत्र वासनाभावाभावौ प्रयोजकावित्यर्थः ॥ २२ ॥ उक्तार्थं सदृष्टान्तमुपपादयति—**अयत्नेति** । यथा पथिगततृणादिषु दृष्टिः **नीरागमेव पतति** न हि तत्र लिप्यते, तथा **धीरधीः** बाह्यान्तर्व्यापृतोऽपि बाह्यान्तःकलनासु न लिप्यते इत्यर्थः ॥ २३ ॥

चित्तनाशप्रकारः तत्फलं च

भावसंवित्प्रकटितामनुरूपां च मारुते ।
चित्तस्योत्पत्त्युपरमां वासनां मुनयो विदुः ॥ २४ ॥

दृढाभ्यस्तपदार्थैकभावनादतिचञ्चलम् ।
चित्तं संजायते जन्मजरामरणकारणम् ॥ २५ ॥

[1]वासनाऽऽवेशतः प्राणस्पन्दस्तेन च वासना ।
क्रियते चित्तबीजस्य तेन बीजाङ्कुरक्रमः ॥ २६ ॥

[1] वासनावश—अ, अ १, अ २, क.

द्वे बीजे चित्तवृक्षस्य प्राणस्पन्दनवासने ।
एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥ २७ ॥
असङ्गव्यवहारत्वाद्भवभावनवर्जनात् ।
शरीरनाशदर्शित्वाद्वासना न प्रवर्तते ।
वासनासंपरित्यागाच्चित्तं गच्छत्यचित्तताम् ॥ २८ ॥
अवासनत्वात् सततं यदा न मनुते मनः ।
अमनस्ता तदोदेति परमोपशमप्रदा ॥ २९ ॥
अव्युत्पन्नमना यावद्भवानज्ञाततत्पदः ।
गुरुशास्त्रप्रमाणैस्तु निर्णीतं तावदाचर ॥ ३० ॥
ततः पक्वकषायेण नूनं विज्ञातवस्तुना ।
शुभोऽप्यसौ त्वया त्याज्यो वासनौघो निराधिना ॥ ३१ ॥

केयं वासनेत्यत आह—भावेति । इदमस्तीदमस्तीति **भावसंवित्प्रकटितां** भावपदार्थगोचरां तत्पदार्थानुरूपां स्वाभिलषितविषये चित्तोत्पत्तिप्रयोजनां **वासनामिति मुनयो विदुः** ॥ २४ ॥ कथं पुनः विषयवासनया चित्तं जायते इत्यत आह—**दृढेति** । इदं मे स्यादिति दृढाभिमानतो जन्मादिकारणं चित्तं जायते । विषयाभिनिवेश एव चित्तोत्पत्तिहेतुः इत्यर्थः ॥२५॥ किंच चित्तोत्पत्तिबीजं वासनाप्राणस्पन्दावित्याह—**वासनेति** । विषयेषु **वासनाऽऽवेशतः** । विषयवासनाऽभिनिवेशात् प्राणः स्पन्दते, प्राणस्पन्देन वासनोदेति, वासनया प्राणस्पन्दः क्रियते, प्राणस्पन्देनापि वासना क्रियते, तावेव चित्तबीजस्य चित्तांकुरस्य हेतू भवतः, तयोः वासनाप्राणस्पन्दक्रमो बीजांकुरवत् दुर्विज्ञेयः इत्यर्थः ॥ २६ ॥ चित्तबीजयोः एकक्षयादपरमपि नश्यतीत्याह—**द्वे इति** ॥ २७ ॥ तत्र वासनाक्षयोपायमाह—**असङ्गेति** । स्वातिरिक्तपदार्थासङ्गरूपं ब्रह्मास्मीति भावनात् स्वातिरिक्तसंसार**भावनवर्जनात्** स्वाज्ञान-

विकल्पितशरीरोपलक्षितस्वाविद्यापदतत्कार्यनाशदर्शित्वाच्च यत्र कुत्रापि वासना नोदेतीत्यर्थः । वासनाऽनुदयात् प्राणोऽपि स्थिरपदं भजति ततश्चित्तं चिन्मात्रपर्यवसन्नं भवतीत्याह—**वासनेति** । **चित्तं गच्छत्यचित्ततां** ब्रह्मभावमेतीत्यर्थः ॥ २८ ॥ चित्ताभावे मनसः सत्त्वात् तेन संसारानिवृत्तिरित्यत आह—**अवासनत्वादिति** । सदा स्वात्मनो निर्वासनत्वेन **यदा मनः** स्वातिरिक्तं **न मनुते तदा** स्वातिरिक्तपरमोपशमप्रदा **अमनस्ता** तत **उदेति** सैव अचित्ततेत्यर्थः ॥ २९ ॥ यावदेवं न जानासि तावद्गुरुवाक्यैकशरणो भव । यदैवं जानासि तदा गुरूपसदनादिशुभवासनाऽपि त्वया त्याज्येत्याह—**अव्युत्पन्नेति** । यावत् स्वाज्ञानावृतो भवसि तावत् श्रुत्याचार्योक्तमार्गानुवर्तनं कुरु ॥ ३० ॥ यदि तेन ते सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति तन्मात्रज्ञानमुदेति ततः ॥३१॥

सरूपारूपभेदेन द्विविधश्चित्तनाशः

द्विविधश्चित्तनाशोऽस्ति सरूपोऽरूप एव च ।
[1]जीवन्मुक्तौ सरूपः स्यादरूपो देहमुक्तिगः ॥ ३२ ॥
अस्य नाशमिदानीं त्वं पावने शृणु सादरम् ।
चित्तनाशाभिधानं हि यदा ते विद्यते पुनः ॥ ३३ ॥
मैत्र्यादिभिर्गुणैर्युक्तं शान्तिमेति न संशयः ।
भूयोजन्मविनिर्मुक्तं जीवन्मुक्तस्य तन्मनः ॥ ३४ ॥
सरूपोऽसौ मनोनाशो जीवन्मुक्तस्य विद्यते ।
अरूपस्तु मनोनाशो वैदेहीमुक्तिगो भवेत् ॥ ३५ ॥
सहस्राङ्कुरशाखात्मफलपल्लवशालिनः ।
अस्य संसारवृक्षस्य मनो मूलमिदं स्थितम् ॥ ३६ ॥

[1]जीवन्मुक्तः—उ

बोधेन **प्रक्षीणचित्तदर्पस्य** ॥ ४१ ॥ वासनाक्षयार्थमादौ हठान्मनोनिग्रहं कुर्यादित्याह—**हस्तमिति** ॥ ४२ ॥ युक्तिं विना मनो जेतुं न शक्यमिति सदृष्टान्तमाह—**उपविश्येति** ॥ ४३ ॥ चित्तनिग्रहोपायभूता युक्तयः का इत्यत आह—**अध्यात्मेति** ॥ ४४–४६ ॥ हठाच्चित्तनिग्रहोद्युक्ताः साहसिकाः इत्याह—**विमूढा इति** ॥ ४७ ॥

चित्तनिग्रहोपायो ध्यानम्

द्वे बीजे चित्तवृक्षस्य वृत्तिव्रततिधारिणः ।
एकं प्राणपरिस्पन्दो द्वितीयं दृढभावना ॥ ४८ ॥
सा हि सर्वगता संवित् प्राणस्पन्देन चाल्यते ।
चित्तैकाग्र्याद्यतो ज्ञानमुक्तं समुपजायते ॥ ४९ ॥
तत्साधनमथो ध्यानं यथावदुपदिश्यते ।
विलाप्य विकृतिं कृत्स्नां संभवव्यत्ययक्रमात् ।
परिशिष्टं च चिन्मात्रं चिदानन्दं विचिन्तय ॥ ५० ॥

चित्तवृक्षबीजे द्वे इत्याह—द्वे इति । तत्र एकम् ॥ ४८ ॥ प्राणस्पन्दास्पन्दतः किं स्यादित्यत आह—सा हीति । प्राणचलनं चित्तचलनहेतुः, प्राणायामतः चित्तचलनशान्तिः भवति, चित्तैकाग्र्यात् ब्रह्मज्ञानं जायते ॥४९॥ चित्तैकाग्र्यसाधनं ध्यानमित्याह—तदिति । किं तदित्यत्र—विलाप्येति । सृष्टिवैपरीत्येन सर्वा विकृतीः विलाप्य यत्तद्विलापनाधिकरणं सच्चिदानन्दमात्रं स्वावशेषधिया विचिन्तय ध्यायस्वेत्यर्थः ॥ ५० ॥

सहजकुंभकाभ्यासात् समाधिसिद्धिः

अपानेऽस्तंगते प्राणो यावन्नाभ्युदितो हृदि ।
तावत् सा कुम्भकावस्था योगिभिर्याऽनुभूयते ॥ ५१ ॥

बहिरस्तंगते प्राणे यावन्नापान उद्गतः ।
तावत्पूर्णां समावस्थां बहिष्ठं कुम्भकं विदुः ॥ ९२ ॥
ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना ।
संप्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः ॥ ९३ ॥
प्रशान्तवृत्तिकं चित्तं परमानन्ददायकम् ।
असंप्रज्ञातनामाऽयं समाधिर्योगिनां प्रियः ॥ ९४ ॥
प्रभाशून्यं मनःशून्यं बुद्धिशून्यं चिदात्मकम् ।
अतद्व्यावृत्तिरूपोऽसौ समाधिर्मुनिभावितः ॥ ९५ ॥
ऊर्ध्वपूर्णमधःपूर्णं मध्यपूर्णं शिवात्मकम् ।
साक्षाद्विधिमुखो ह्येष समाधिः पारमार्थिकः ॥ ९६ ॥

उक्तध्यानसाधनत्वेन स्वान्तर्बाह्यसहजकुम्भकमाह—**अपान इति** । यदा हृदयाकाशे अपानः अस्तं गच्छति प्राणोऽपि नोदेति तदा तद्वीस्थैर्यमेव अन्तः-कुम्भकं विद्धि ॥ ९१ ॥ नासाबहिर्द्वादशांगुलपरिमितबाह्याकाशे यदा **प्राणोऽस्तं** गच्छति **यावदपानो** नोदेति तावत्तत्सन्धिं बाह्यकुम्भकं विदुरित्यर्थः ॥९२॥ एवं स्वान्तर्बाह्यकुम्भकावस्थायां ब्रह्माहं अहमेव ब्रह्मेति निर्विशेषं ब्रह्म भावयतः सम्प्रज्ञातसमाधिः उदेतीत्याह—**ब्रह्मेति** ॥ ९३ ॥ सम्प्रज्ञातसमाधितः असम्प्रज्ञातसमाधिः उदेतीत्याह—**प्रशान्तेति** । असम्प्रज्ञातसमाधिः केवलनिर्विकल्प इत्यर्थः ॥ ९४ ॥ प्रभाऽदिविकल्पे सति निर्विकल्पः कथमुदेतीत्यत्र प्रभाद्य-तद्व्यावृत्तितो निर्विकल्पो भवतीत्याह—**प्रभेति** । अहङ्कृतिपूर्णविकासरूपेयं जाग्रदवस्था **प्रभाशब्देनोच्यते** । मनःशब्देन अहंकृत्यर्धविकासरूपेयं स्वप्नावस्था भवति । **बुद्धिशब्देन** अहंकृतिमुकुळीभावरूपेयं स्वापावस्था स्यात् । जाग्रदाद्य-वस्थात्रयस्यातद्रूपत्वात् तद्ब्रह्मातिरेकेण तदवस्थात्रयं कालत्रयेऽपि शून्यं भवतीति भावनं **अतद्व्यावृत्तिः**, तस्यातद्व्यावृत्तिपूर्वकत्वात् । अतद्व्यावृत्तिरूपेयं **समाधि-**

रित्यर्थः ॥ ५५ ॥ पारमार्थिकसमाधिमाह—ऊर्ध्वेति । ऊर्ध्वादिपरिच्छेदासम्भवप्रबोधसिद्धं ब्रह्म निष्प्रतियोगिकपूर्णं सत् स्वमात्रमवशिष्यत इत्यत्र—"पूर्णमेवावशिष्यते" इति श्रुतिसिद्धो **विधिमुख** इत्युच्यते । सोऽयं **समाधिः पारमार्थिकः** निर्विशेषब्रह्ममात्रपर्यवसन्नत्वात् ॥ ५६ ॥

वासनासामान्यं स्वरूपावरणम्

दृढभावनया त्यक्तपूर्वापरविचारणम् ।
यदादानं पदार्थस्य वासना सा प्रकीर्तिता ॥ ५७ ॥
भावितं तीव्रसंवेगादात्मना यत्तदेव सः ।
भवत्याशु कपिश्रेष्ठ विगतेतरवासनः ॥ ५८ ॥
तादृग्रूपो हि पुरुषो वासनाविवशीकृतः ।
संपश्यति यदैवैतत् सद्वस्त्विति विमुह्यति ॥ ५९ ॥
वासनावेगवैचित्र्यात् स्वरूपं [1]न जहाति तत् ।
भ्रान्तं पश्यति [2]दुर्दृष्टिः सर्वं मदवशादिव ॥ ६० ॥

इत्थंभूतस्वरूपावरणं किं इत्याशङ्क्य वासनासामान्यमित्याह—दृढेति । इदं स्वातिरिक्तमस्तीति **दृढभावनया** सन्त्यक्ततत्पूर्वापरविचारणं स्वातिरिक्तसामान्यस्य स्वाज्ञानकालमारभ्य स्वज्ञानावधिकत्वात् तत्पूर्वं तदपरं च निष्प्रतियोगिकब्रह्ममात्रमित्यज्ञानपुरस्सरं स्वातिरिक्तपदार्थस्य यदादानं तदेव वासनेति भण्यते । स्वातिरिक्तगोचरवासनैव स्वमात्रावरणमित्यर्थः । स्वमात्रवत् तदावरणमपि सत्यमिति चेन्न; आदिमध्यान्तालब्धात्मकत्वात्, "यन्नादौ यच्च नास्त्यन्ते तन्मध्ये भातमप्यसत्" इति स्मृतेः ॥ ५७ ॥ स्वमात्रावरणस्य स्वाज्ञानविजृम्भितत्वेन स्वज्ञाननाश्यत्वमाह—**भावितमिति** । स्वातिरिक्तापह्नव-

[1] यन्नहा—उ, उ १.　　[2] तद्दृष्टिः—उ.

सिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति तीव्रतरसंवेगसहकृतज्ञानेन **स्वात्मना यत् भावितं हे कपिश्रेष्ठ विगतेतरवासनोऽयं स विद्वान् तदेव भवति**, स्वज्ञानेन स्वावरणे नष्टे स्वयं स्वयमेव भवतीत्यर्थः ॥ ५८ ॥ तादृशोऽपि स्वाज्ञानमहिम्ना तद्वशमेत्य स्वात्मानं विपरीतं पश्यतीत्याह—**तादृगिति** ॥ ५९ ॥ तत्र स्वातिरिक्तवासनैव हेतुरित्याह—**वासनेति** ॥ ६० ॥

शुद्धमलिनवासनयोः मोक्षबन्धहेतुत्वम्

वासना द्विविधा प्रोक्ता शुद्धा च मलिना तथा ।
मलिना जन्महेतुः स्याच्छुद्धा जन्मविनाशिनी ॥ ६१ ॥
अज्ञानसुघनाकारा घनाहंकारशालिनी ।
पुनर्जन्मकरी प्रोक्ता मलिना वासना बुधैः ॥ ६२ ॥
पुनर्जन्माङ्कुरं त्यक्त्वा स्थितिः संभृष्टबीजवत् ।
बहुशास्त्रकथाकन्थारोमन्थेन वृथैव किम् ।
अन्वेष्टव्यं प्रयत्नेन मारुते ज्योतिरान्तरम् ॥ ६३ ॥
दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
य आस्ते कपिशार्दूल ब्रह्म स ब्रह्मवित् स्वयम् ॥ ६४ ॥
अधीत्य चतुरो वेदान् सर्वशास्त्राण्यनेकशः ।
ब्रह्मतत्त्वं न जानाति दर्वी पाकरसं यथा ॥ ६५ ॥
स्वदेहाशुचिगन्धेन न विरज्येत यः पुमान् ।
विरागकारणं तस्य किमन्यदुपदिश्यते ॥ ६६ ॥
अत्यन्तमलिनो देहो देही चात्यन्तनिर्मलः ।
उभयोरन्तरं ज्ञात्वा कस्य शौचं विधीयते ॥ ६७ ॥

बद्धो हि वासनाबद्धो मोक्षः स्याद्वासनाक्षयः ।
वासनास्त्वं परित्यज्य मोक्षार्थित्वमपि त्यज ॥ ६८ ॥
मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः ।
मैत्र्यादिवासनानाम्नीर्गृहाणामलवासनाः ॥ ६९ ॥
ता अप्यतः परित्यज्य ताभिर्व्यवहरन्नपि ।
[1]अन्तःशान्तसमस्तेहो भव चिन्मात्रवासनः ॥ ७० ॥
तामप्यथ परित्यज्य मनोबुद्धिसमन्विताम् ।
शेषस्थिरसमाधानो मयि त्वं भव मारुते ॥ ७१ ॥

मलिनशुद्धवासने बन्धमोक्षहेतू स्यातां इत्याह—**वासनेति** ॥ ६१ ॥ तत्र मलिनवासनास्वरूपमाह—**अज्ञानेति** ॥ ६२ ॥ शुद्धवासनासंस्कृतेन विदुषा स्वायुर्वासनानाशास्त्रजालेन सार्कं पुनर्जन्मांकुरमलिनवासनात्यागसिद्धं ब्रह्मैव अन्वेष्टव्यमित्याह—**पुनरिति** ॥ ६३ ॥ किमित्यन्वेष्टव्यमित्यत आह—**दर्शनेति** । कं निर्विशेषब्रह्मसुखं पिबन्ति साक्षादनुभवन्तीति कपयः कवयः ब्रह्मविद्वरीयांसः तेषामपि यतो वरिष्ठोऽसि अतो हे **कपिशार्दूल** ब्रह्मविद्वरिष्ठ स्वातिरिक्ततया स्वाज्ञदृष्टिप्रसक्ताविद्यापदतत्कार्यजातारोपो दर्शनशब्देनोच्यते । अदर्शनशब्देन तत्सर्वापवाद उच्यते । एवं दर्शनं चादर्शनं चेति **दर्शनादर्शने** स्वातिरिक्ताध्यारोपापवादकलने **हित्वा** शशविषाणवत् अपह्नवं कृत्वा अथ **स्वयं केवलरूपतो** निष्प्रतियोगिकब्रह्ममात्रभावरूपतो **य आस्ते** सोऽयं विद्वान् ब्रह्मभूतो मुनिः न **ब्रह्मवित्** भवितुमर्हति, किन्तु यत् स्वातिरिक्तसामान्यापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति ज्ञातं तत् ब्रह्ममात्रतया अवशिष्यत इत्यत्र—"स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति" इति, "य एवं निर्बीजं वेद निर्बीज एव स भवति" इत्यादि निर्विशेषब्रह्ममात्रज्ञानसमकालं तद्भावापत्तिश्रुतेः । विद्वान

[1] अन्तःशान्तः समस्नेहो—मु.

निर्विशेषब्रह्मज्ञानसमकालं निष्प्रतियोगिकब्रह्ममात्रं अवशिष्यत इति भावः। अत्रैतच्चिन्त्यं --स्वाज्ञानकालमारभ्य स्वज्ञानफलविदेहकैवल्यावधि प्रवृत्तस्वाविद्यापदतत्कार्यविजृम्भितबन्धमोक्षादिव्यवस्थाजातस्य ब्रह्मातिरिक्तत्वेन अपह्नोतव्यत्वे तत्प्रतिपादकश्रुतिस्मृतीनां वैयर्थ्यतः तन्निबन्धनवर्णाश्रमाचारव्यवस्थावैरळ्यात् जगदान्ध्यप्रसङ्गस्स्यादिति चेन्न; ब्रह्मणो निष्प्रतियोगिकाद्वितीयत्वात्। तत्रापि पूर्वोक्तदोषापत्तेः तन्निवृत्तये त्वया स्वातिरिक्तसद्वितीयं ब्रह्म अङ्गीकार्यमिति चेन्न, ब्रह्मणः स्वातिरिक्तापह्नवसिद्धनिष्प्रतियोगिकसन्मात्रप्रकृतिकत्वात् तत् कथं स्वप्रकृतिमुत्सृज्य अन्यथा भवितुमर्हति कदाऽपि स्वातिरिक्तसद्वितीयतया

अजातं जायते यस्मादजातिः प्रकृतिस्ततः।
प्रकृतेरन्यथाभावो न कथंचित् भविष्यति॥

इति सर्वज्ञगौडपादाचार्योक्तेः। निष्प्रतियोगिकब्रह्ममात्रावस्थायां स्वातिरिक्तस्याप्रसक्तत्वेन न तयोः ब्रह्मातिरिक्तयोः आधाराधेयता भासकभास्यता वा सेद्धुं पारयति। तथाऽपि जगदान्ध्यनिवृत्तये यत्किञ्चित स्वातिरिक्तमङ्गीकर्तव्यमिति यदि त्वं स्वातिरिक्तग्रहाविष्टोऽसि तदा स्वाज्ञानतारतम्यप्रभवसोपानायमानासल्लौकिकाद्यष्टदृष्टिषु स्वातिरिक्तस्य पारमार्थिकव्यावहारिकप्रातिभासिकरूपेणैव भासमानत्वात् तावत्ते बन्धमोक्षादिसर्वव्यवस्थाव्यवहारसिद्धिः। यदि ते तद्रोचते तत्रैव व्यवहरन् तिष्ठ। यदि तदपहाय निष्प्रतियोगिकब्रह्मभावापत्तिमीहसे तदा तस्याव्यवहार्यत्वात् कथं निष्प्रतियोगिकतया व्यवहार्यमद्वैतं व्यवहारीकर्तुमिच्छसि। अद्वैतं व्यवहार्यमिति वदन् विरुद्धधर्माभिधायी स्याः। निष्प्रतियोगिकाद्वैतदशायामपि व्यवहारः स्यादिति चेन्न; निर्विशेषब्रह्ममात्रगोचराद्वैतशास्त्रजन्यसमकालमेव स्वाज्ञबृन्दकल्पिताविद्यापदतत्कार्यव्यष्टिसमष्ट्यात्मकजाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तचतुष्पञ्चदशकलनातत्प्रभवबन्धमोक्षादिकलनातत्प्रमाणश्रुतिस्मृतितज्जवर्णाश्रमाचारव्यवस्थानां प्रळयं गतत्वात्। न हि पुनः स्वातिरिक्तगन्धावकाशोऽस्ति। किं तत्स्वातिरिक्तं पारमार्थिकसत्यं, उत व्यावहारिकं, आहोस्वित् प्रातिभासिकम्। नाद्यः, स्वाज्ञविकल्पितस्वेतरपारमार्थिकसत्यतायाः सुषुप्तिमूर्च्छामरणादौ वेदान्तशास्त्रज्ञानदृष्ट्या वा प्रळयं गतत्वान्न स्वातिरिक्तस्य

पारमार्थिकसत्यत्वम् । न द्वितीयः, वेदान्तशास्त्रज्ञदृग्विभातव्यावहारिकसत्यताया विज्ञानिदृष्टिपरिसमाप्तत्वात् न हि व्यावहारिकसत्यत्वम् । न तृतीयः, विज्ञानिदृग्विभातप्रातिभासिकसत्यताया अपि सम्यग्ज्ञानसमकालमभातत्वात् न हि प्रातिभासिकसत्यत्वम् । वस्तुतस्तु अज्ञविज्ञसम्यग्ज्ञदृग्विलसितपारमार्थिकव्यावहारिकप्रातिभासिकसत्त्वाऽसत्त्वविभ्रमाऽसम्भवसिद्धतत्त्वज्ञदृष्ट्या सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमित्यत्र न हि विवादोऽस्तीत्यर्थः । तथा च श्रुतयः स्मृतयश्च—"पश्यतेहापि सन्मात्रमसदन्यत्." "मद्व्यतिरिक्तमणुमात्रं न विद्यते,"

चिन्मात्रमेव चिन्मात्रमखण्डैकरसं रसम ।
सर्ववर्जितचिन्मात्रं ब्रह्ममात्रमसन्नहि ॥ इति.
सच्चिदानन्दमात्रोऽहमनुत्पन्नमिदं जगत् ॥
सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ॥
नाविद्याऽस्तीह नो माया शान्तं ब्रह्मेदमक्लमम ॥ इति,
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ॥ इत्यादि ॥ ६४ ॥

सर्ववेदशास्त्रसम्पन्नोऽपि एवं स्वातिरिक्तसर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति न जानाति चेत् तज्जन्म व्यर्थमित्याह— अधीत्येति । स्वातिरिक्त विषयवैराग्याभावादयं **ब्रह्मतत्त्वं न जानातीत्यर्थः** ॥ ६५ ॥ तथाविधस्य वैराग्योपदेशः कर्तव्य इत्यत आह— स्वेति ॥ ६६ ॥ ब्रह्ममात्रपदमारूढेनापि स्वाश्रमोक्तानुष्ठानं कर्तव्यमेवेत्याशङ्क्य—तस्य ब्रह्ममात्रदृष्टित्वात् न तेन किञ्चिदनुष्ठेयमननुष्ठेयं वा विद्यते तस्य स्वातिरिक्तयोः याथात्म्यज्ञत्वात् । यद्ययं लोकवदाचरति तल्लोकोन्मार्गनिवृत्तये भवति । यदि स्वातिरिक्तेयत्ताज्ञानतः तूष्णीमास्ते तदा त्वयेदं कर्तव्यमिति को वा विधातुमर्हति इत्याह—अत्यन्तेति ॥ ६७ ॥ स्वाज्ञलोकोऽयं वासनया बध्यते तत्क्षयतो मुच्यते । यत एवं अतस्त्वं वासनाजालं निःशेषं त्यक्त्वा मद्भावमाप्नुहीत्याह—बद्धो हीति । सर्ववासनाऽसम्भवप्रबोधसिद्धे मयि विश्रान्तभावो भवेत्यर्थः ॥ ६८–७१ ॥

सर्ववासनात्यागपूर्वकं परमात्मभजनम्

अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् ।
अनामगोत्रं मम रूपमीदृशं भजस्व नित्यं पवनात्मजार्तिहम् ॥
दृशिस्वरूपं गगनोपमं परं सकृद्विभातं त्वजमेकमक्षरम् ।
अलेपकं सर्वगतं यदद्वयं तदेव चाहं सकलं विमुक्तॐ ॥ ७३ ॥
दृशिस्तु शुद्धोऽहमविक्रियात्मको न मेऽस्ति कश्चिद्विषयः स्वभावतः ।
पुरस्तिरश्चोर्ध्वमधश्च सर्वतः सुपूर्णभूमाऽहमितीह भावय ॥ ७४ ॥
अजोऽमरश्चैव तथाऽजरोऽमृतः स्वयंप्रभः सर्वगतोऽहमव्ययः ।
न कारणं कार्यमतीत्य निर्मलः सदैव तृप्तोऽहमितीह भावय ॥ ७५ ॥
जीवन्मुक्तपदं त्यक्त्वा स्वदेहे कालसात्कृते ।
विशत्यदेहमुक्तत्वं पवनोऽस्पन्दतामिव ॥ ७६ ॥

तदेतदृचाभ्युक्तम्—

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ तद्विप्रासो विप[म]न्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ ७७ ॥

ॐसत्यमित्युपनिषत् ॥

"त्वद्रूपं ज्ञातुमिच्छामि तत्त्वतः" इति यत् त्वया प्रार्थितं तदिदानीं भजस्वेत्याह—अशब्दमिति । यदाकाशादिभूतभौतिकशब्दाद्यपह्नवसिद्धं तथा व्याविद्धनामरूपकुलगोत्रं मद्भावं भजस्वेत्यर्थः ॥ ७२ ॥ त्वद्रूपं कीदृशं इत्यत आह—**दृशीति** । निर्विशेषं ब्रह्म स्वाज्ञविकल्पितदृश्यग्रामसत्त्वे **दृशिस्वरूपं**,

**गगनोपमं** भूमरूपत्वात्, **परं** स्वातिरिक्तात्, **सकृद्विभातं** निरावृततया सदा विभातं, स्वतः परतो वा न जायत इत्यजं, निष्प्रतियोगिकैकं, केनापि न क्षरतीत्यक्षरं, निर्लेपत्वादलेपकं, स्वातिरिक्तसर्वसत्त्वे **सर्वगतं**, यदेवमद्वयतया अवशिष्टं **तदेव चाहम्**। अहं कीदृशः इत्यत्र **सकलं विमुक्तः** स्वातिरिक्तसकलविमुक्तः, अतोऽहं **ओं** ओङ्कारार्थतुर्यतुर्यत्वात् ॥ ७३ ॥ त्वमप्येवं भावयेत्याह—**दृशिस्त्विति**। पूर्वाग्नेयादिदिक्षु विदिक्षु ऊर्ध्वमधश्च सर्वत्र परिपूर्णभूमब्रह्मास्मीति भावय ॥ ७४ ॥ किञ्च—**अज इति**। एवं भावनाविशिष्टो जीवन्मुक्तो भवतीत्यर्थः ॥ ७५ ॥ यः कोऽप्येवं त्वमिव मद्वाक्यारूढश्चेत् सोऽपि जीवन्मुक्तभावं विहाय विदेहमुक्तो भवतीत्याह—**जीवन्मुक्तेति**। **स्वदेहो**पलक्षितस्वातिरिक्तप्रपञ्चे ब्रह्ममात्रबोधेन **कालसात्कृते** अपह्नवभावं गते सति अथ यथा **पवनो**-स्पन्दतो गगनस्वरूपं विशति तथा स्वदेहाद्यभिमत्या साकं जीवन्मुक्ततामपि हित्वा विकळेबरकैवल्यं विशति, विदेहमुक्तो भवतीत्यर्थः ॥ ७६ ॥ उक्तार्थानुवादको मन्त्रो भवतीत्याह—**तदिति**। यत् निष्प्रतियोगिकनिर्विशेषतया अवशिष्यते **तत्** तादृशं ब्रह्म स्वाज्ञदृष्टिविकल्पितस्वाविद्यापदतत्कार्यसम्प्रसक्तौ तदारोपापवादाधारतया भातस्य **विष्णोः** व्यापकस्य स्वाधिष्ठेयसापेक्षाधिष्ठानताऽसम्भवप्रबोधसिद्धत्वेन निरधिष्ठानतया सर्वोत्तमत्वात् **परमं** सूरिभिः स्वमात्रतया पद्यत इति **पदं**, तत् विष्णोः परमं पदं "राहोः शिरः" इतिवत् विष्णुस्वरूपं **सूरयो** ब्रह्मविद्वरीयांसः स्वावशेषधिया **पश्यन्ति**। पश्यन्तीति व्यपदेशतो विष्णुपदस्य दृश्यत्वेन परिच्छिन्नता स्यादित्यत आह—**दिवीति**। **दिवि** द्योतनात्मके ब्रह्मणीव **चक्षुर्दर्शनं** तद्गोचरज्ञान**मातत**मपरिच्छिन्नम्। सूरयो विष्णुपदं स्वभेदेन पश्यन्ति चेत् तत्परिच्छेदतामर्हति। नहि तथा ते पश्यन्ति। किं तु स्वमात्रमिति पश्यन्ति। सूरयः किंविशेषणविशिष्टा इत्यत्र **तद्विप्रासः** विप्राः ब्रह्मविद्वरिष्ठाः **विमन्यवो** विगतस्वकामापूरणसञ्जातमन्यवः स्वातिरिक्तकामानां स्वमात्रतया लब्धत्वात्, अत एव ते **जागृवांसः** स्वाज्ञाननिद्रावैरळ्यात् नित्यं जागरूकाः। विष्णोः यत् परमं पदं स्वमात्रतया पश्यन्ति तद्दर्शनसमकालमेव ते तन्मात्रावशेषतया तद्विष्णुपदं **समिन्धते** तन्मात्रमवशिष्यते इत्यर्थः ॥७७॥

यद्विष्णुपदमिति ख्यातं तदेव ओमित्योङ्कारार्थतुरीयतुरीयम् । तदतिरिक्तजाग्रज्जाग्रदादिचतुष्पञ्चदशभेदजातमनित्यं, यदपह्नवसिद्धं यत् तुर्यतुरीयं तदेव **सत्यं** निष्प्रतियोगिकसन्मात्रत्वात् , "पश्यतेहापि सन्मात्रमसदन्यत्" इति श्रुतेः । इतिशब्दो द्वितीयाध्यायपरिसमाप्त्यर्थः । उपनिषच्छब्दस्तु मुक्तिकोपनिषत्समाप्त्यर्थः ॥

**इति द्वितीयोऽध्यायः**

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
मुक्तिकोपनिषद्व्याख्या लिखिता ब्रह्ममात्रगा ॥
ईशाद्यष्टोत्तरशतवेदान्तविवृतेरिह ।
वक्ता निरावृतज्ञानरामचन्द्रोऽखिलेश्वरः ॥
पित्रा मे शिवकामीशेनेशाद्यष्टोत्तरं शतम् ।
व्याकुर्व इति यत् पूर्वं प्रतिज्ञातं तथा कृतम् ॥
लेखिनीदण्डरूपोऽहं लेखकोऽपि स एव हि ।
कृष्णसूरिरुपद्रष्टा स्वांशजोऽस्य प्रवर्तकः ॥
रामानन्देश्वरहरिकृष्णदासा हि चोदकाः ।
भक्तेषु तेषु कृपया श्रीरामेणाखिलं कृतम् ॥
येषु श्रीरामचन्द्रीयकटाक्षः प्रसरेदिह ।
श्रीरामफणितेऽध्यात्मशास्त्रे तेषां मतिर्भवेत् ॥
ये देशिकमुखात् कृत्स्नं कुर्वन्ति श्रवणं बुधाः ।
तेषां करस्थं कैवल्यं रामचन्द्रानुशासनात् ॥
मुक्तिकोपनिषद्व्याख्याग्रन्थजातं शतत्रयम् ।
प्रजोत्पत्त्यब्दचापैकादशवस्रे शुभे दिने ॥
भौमाश्विन्यामिदं शास्त्रं सम्पूर्णपदवीं गतम् ।
य एतच्छास्त्रमखिलं शृण्वन्ति गुरुवक्त्रतः ॥
तानैहिकामुष्मिकश्रीः न विमुञ्चति विष्णुना ।
ईशाद्यष्टोत्तरशतवेदान्तविवृतेस्ततिः ॥
स्वात्मारामप्रणीतेन मयेयं लिखिता स्फुटम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे अष्टोत्तरशतसङ्ख्यापूरकं
मुक्तिकोपनिषद्विवरणं सम्पूर्णम्

---

# मुद्गलोपनिषत्

वाङ्मे मनसि—इति शान्तिः

## प्रथमः खण्डः

पुरुषसूक्तार्थसंग्रहः

पुरुषसूक्तार्थनिर्णयं व्याख्यास्यामः । पुरुषसंहितायां पुरुषसूक्तार्थः संग्रहेण प्रोच्यते ।

सहस्रशीर्षा इत्यत्र सशब्दो[ह्स्रो]ऽनन्तवाचकः ।
अनन्तयोजनं प्राह दशाङ्गुलवचस्तथा ॥ १ ॥
तस्य प्रथमया विष्णोर्देशतो व्याप्तिरीरिता ।
द्वितीयया चास्य विष्णोः कालतो व्याप्तिरुच्यते ॥ २ ॥
विष्णोर्मोक्षप्रदत्वं च कथितं तु तृतीयया ।
एतावानिति मन्त्रेण वैभवं कथितं हरेः ॥ ३ ॥
एतेनैव च मन्त्रेण चतुर्व्यूहो विभावितः ।
त्रिपादित्यनया प्रोक्तमनिरुद्धस्य वैभवम् ॥ ४ ॥

तस्माद्विराडित्यनया पादनारायणाद्धरेः ।
प्रकृतेः पुरुषस्यापि समुत्पत्तिः प्रदर्शिता ॥ ५ ॥
यत्पुरुषेणेत्यनया सृष्टियज्ञः समीरितः ।
सप्तास्यासन्परिधयः समिधश्च समीरिताः ॥ ६ ॥
तं यज्ञमिति मन्त्रेण सृष्टियज्ञः समीरितः ।
अनेनैव च मन्त्रेण मोक्षश्च समुदीरितः ॥ ७ ॥
तस्मादिति च मन्त्रेण जगत्सृष्टिः समीरिता ।
वेदाहमिति मन्त्राभ्यां वैभवं कथितं हरेः ॥ ८ ॥
यज्ञेनेत्युपसंहारः सृष्टेर्मोक्षस्य चेरितः ।
य एवमेतज्जानाति स हि मुक्तो भवेदिति ॥ ९ ॥

श्रीमत्पुरुषसूक्तार्थं पूर्णानन्दकलेवरम् ।
पुरुषोत्तमविख्यातं पूर्णं ब्रह्म भवाम्यहम् ॥

इह खलु ऋग्वेदप्रविभक्तेयं मुद्गलोपनिषत् पुरुषसूक्तार्थप्रकटनपूर्वकं तदर्थमहापुरुषपर्यवसन्ना विजयते । अस्याः सङ्क्षेपतो विवरणमारभ्यते । परमपुरुषार्थदर्शीनधिकारिण उपलभ्य श्रुतयः पुरुषसूक्तार्थं प्रकाशयन्तीत्याह—**पुरुषेति** । आदौ प्रथमखण्डेन पुरुषसूक्तगतमन्त्राणां विनियोग उच्यते—**पुरुषसूक्तेति** । कुत्रैष प्रतिपादित इत्यत आह—**पुरुषसंहितायामिति** । “ सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्वा । अत्यतिष्ठद्दशाङ्गुलम् । ” इत्याद्यऋचा विष्णोरनन्तत्वं अभिधीयते । यस्यान्तः परिच्छेदो न विद्यते सोऽनन्त इत्यर्थः ॥ १ ॥ प्रथमया कस्मादस्यानन्त्यमित्यत आह—**तस्येति** । “ पुरुष एवेदꣳ सर्वम् । यद्भूतं यच्च भव्यम् । उतामृतत्वस्येशानः । यदन्नेनातिरोहति । ” इति **द्वितीयया** ॥ २ ॥ “ एतावानस्य महिमा । अतो ज्यायाꣳश्च

पूरुषः । पादोऽस्य विश्वा भूतानि । त्रिपादस्यामृतं दिवि । " इति **विष्णोर्मोक्षप्रदत्वं च कथितम्** ॥ ३ ॥ "त्रिपादूर्ध्व उदैत्पुरुषः । पादोऽस्येहाभवात् पुनः । ततो विष्वङ् व्यक्रामत् । साशनानशने अभि ।" इति **त्रिपादित्यनया प्रोक्तम्** ॥ ४ ॥ "तस्माद्विराडजायत । विराजो अधि पूरुषः । स जातो अत्यरिच्यत । पश्चाद्भूमिमथो पुरः ।" इति **तस्माद्विराडित्यनया** ॥ ५ ॥ "यत्पुरुषेण हविषा । देवा यज्ञमतन्वत । वसन्तो अस्यासीदाज्यम् । ग्रीष्म इध्मः शरद्धविः ।" इति **यत्पुरुषेणेत्यनया** । "सप्तास्यासन् परिधयः । त्रिः सप्त समिधः कृताः । देवा यद्यज्ञं तन्वानाः । अबध्नन् पुरुषं पशुम् ।" इति **सप्तास्यासन् परिधयः** ॥ ६ ॥ यज्ञद्रव्यसृष्टिः—"तं यज्ञं बर्हिषि प्रौक्षन् । पुरुषं जातमग्रतः । तेन देवा अयजन्त । साध्या ऋषयश्च ये ।" इति **तं यज्ञमिति मन्त्रेण** ॥ ७ ॥ "तस्माद्यज्ञात् सर्वहुतः" इत्यादिमन्त्रषट्केन **तस्मादिति च मन्त्रेण** ॥ ८ ॥ **यज्ञेनेति मन्त्रेण** स्वातिरिक्त**सृष्ट्यादिसर्वप्रपञ्चोपसंहारः** अपवादः तदपवादाधारस्य **मोक्षस्य** आधेयनिरूपिताधारताऽपाये मोक्षरूपेण परमात्मा अवशिष्यत इतीरितः । **चशब्दो** निष्प्रतियोगिकप्रदर्शनार्थः । एवं जानतः फलमाह—**य एवमिति** । निर्विशेषज्ञानतो निर्विशेषं ब्रह्मैव भवतीत्यर्थः, ब्रह्म वेद ब्रह्मैव भवति " इति श्रुतेः ॥ ९ ॥

इति प्रथमः खण्डः

---

# द्वितीयः खण्डः

परमरहस्योपदेशः

अथ तथा मुद्गलोपनिषदि पुरुषसूक्तस्य वैभवं विस्तरेण प्रतिपादितं वासुदेव इन्द्राय भगवज्ज्ञानमुपदिश्य पुनरपि सूक्ष्मश्रवणाय

प्रणतायेन्द्राय परमरहस्यभूतं पुरुषसूक्ताभ्यां खण्डद्वयाभ्या-मुपादिशत् ॥ १ ॥

पूर्वखण्डोक्तार्थमेव विस्तरेण प्रतिपादयितुं उत्तरखण्ड आरभ्यते—अथेति। प्रतिपादितं यत् तदेवार्थं परमात्मा वासुदेव इन्द्राय भगवद्याथात्म्य-ज्ञानमुपदिश्य ॥ १ ॥

महापुरुषस्य रूपस्वीकरणम्

द्वौ खण्डा[1]वुच्येते। योऽयमुक्तः स पुरुषो नामरूपज्ञानागोचरं संसारिणामतिदुर्ज्ञेयं विषयं विहाय क्लेशादिभिः संक्लिष्टदेवादिसंजिहीर्षया सहस्रकलावयवकल्याणं दृष्टमात्रेण मोक्षदं वेषमाददे। तेन वेषेण भूम्यादिलोकं व्याप्यानन्तयोजनमत्यतिष्ठत् ॥ २ ॥ पुरुषो नारायणो भूतं भव्यं भविष्यच्चासीत्। स एष सर्वेषां मोक्षदश्चासीत्। स च सर्वस्मान्महिम्नो ज्यायान्। तस्मान्न कोऽपि ज्यायान् ॥ ३ ॥

पूर्वोत्तरभेदेन द्वौ खण्डावुच्येते। तत्प्रतिपाद्यतया योऽयमुक्तः स पुरुषः नामरूपज्ञानागोचरं निर्विशेषब्रह्ममात्रभावं संसारिणां अतिदुर्ज्ञेयं विषयं विहाय तद्दृष्ट्यावरणं कृत्वा "क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्" इति स्मृत्यनुरोधेन निर्विशेषब्रह्मावगमक्लेशादिभिः सङ्क्लिष्टदेवादिसञ्जिहीर्षया देवादयो मयोद्धर्तव्या इति मनीषया। मोक्षदं ऐश्वरं वेषमाददे। अत्यतिष्ठत् अन्तर्याम्यात्मना अनन्तकोटिब्रह्माण्डगर्भितस्वाविद्यापदं व्याप्तवानित्यर्थः ॥ २ ॥ कालत्रयात्मना स्वयमेव स्थितवानित्याह—पुरुष इति। देशिकरूपेण स एष सर्वेषां मोक्षदश्चासीत्। स एव ज्यायसो विराडादेरपि ज्यायानित्याह—स च सर्वस्मादिति ॥ ३ ॥

[1] वद्योत्त्ये—अ.

### महापुरुषस्य चतुर्धा भवनम्

महापुरुष आत्मानं चतुर्धा कृत्वा त्रिपादेन परमे व्योम्नि [1]हासीते । इतरेण चतुर्थेनानिरुद्धनारायणेन विश्वान्यासन् ॥ ४ ॥

सोऽयं विराडादिभेदेन आत्मानं चतुर्धा कृत्वा त्रिपादरूपेण स्वभावे वर्तत इत्याह—**महापुरुष इति** । प्रपञ्चकलनाऽऽरोपापवादाधिकरणरूपं विश्व-विराडोत्रादिभेदेन त्रिचतुर्धा विधाय इत्थंभूतकलनाऽसम्भवप्रबोधसिद्धनिर्विभाग-त्रिपादेन महापुरूषः परमात्मा स्वाज्ञादिदृष्टिमोहे सत्यसति परमे व्योम्नि स्वे महिम्नि हासीते आस्ते इत्यर्थः । अयं प्रपञ्चः केनोत्पन्न इत्यत आह—**इतरेणेति** । स्वाज्ञदृष्ट्येतरेण चतुर्थेन विश्वविराडोत्रादिभेदेन त्रिचतुर्धा भिन्नेन वस्तुतस्तत्र **अनिरुद्धनारायणेन** निरावृताजडक्रियाज्ञानेच्छाशक्तिमता स्वातिरेकेण नास्तीति विश्वसनीय**विश्वान्यासन्** बभूवुरित्यर्थः ॥ ४ ॥

### चतुर्मुखब्रह्मणे सृष्टियज्ञोपदेशः

स च पादनारायणो जगत्स्रष्टुं प्रकृतिमजनयत् । स समृद्धकायः सन् सृष्टिकर्म न जज्ञिवान् । सोऽनिरुद्धनारायणस्तस्मै सृष्टिमुपादिशत् । ब्रह्मंस्तवेन्द्रियाणि याजकानि ध्यात्वा कोशभूतं दृढग्रन्थि कलेवरं हविर्ध्यात्वा मां हविर्भुजं ध्यात्वा वसन्तकालमाज्यं ध्यात्वा ग्रीष्ममिध्मं ध्यात्वा शरदृतुं रसं ध्यात्वैवमग्नौ हुत्वाऽङ्ग-स्पर्शात् कलेवरो वज्रं हीष्यते । ततः स्वकार्यान् सर्वप्राणिजीवान् पश्चाग्राः प्रादुर्भविष्यन्ति । ततः स्थावरजङ्गमात्मकं जगद्भविष्यति ॥ ५ ॥ एतेन जीवात्मनोर्योगेन मोक्षप्रकारश्च कथित इत्यनु-

[1] भासते—अ.

संधेयम् ॥ ६ ॥ य इमं सृष्टियज्ञं जानाति मोक्षप्रकारं च सर्वमायुरेति ॥ ७ ॥

जगत्सृष्टिनिर्वाहकतया किमादौ सृष्टवानित्यत आह—स चेति। प्रकृतिशब्देन चतुर्मुखब्रह्मोच्यते, उत्तरत्र चतुर्मुखविशेषणसत्त्वात्। एवं पादनारायणसृष्टश्चतुर्मुखः स्वावृत्यावृतः सन् प्रकृतिसृष्टिकर्म न ज्ञातवानित्याह—स्वावृत्या स समृद्धकायः सन् सृष्टिकर्म न जज्ञिवान्। स्वहेतुः भगवान् सृष्ट्यावरणभेदिनीं विद्यामुपादिशदित्याह—स इति। केयं सृष्टिविद्येत्यत्र तत्प्रकारमाह—ब्रह्मन्निति। ब्रह्मन् तवेन्द्रियाणि याजकानि ऋत्विग्रूपाणि ध्यात्वा पञ्चकोशभूतम्। मां अनिरुद्धनारायणम्। ग्रीष्मं इध्मं अग्न्याश्रयं समिद्भारं ध्यात्वा, शरदृतुं रसं षड्रसं ध्यात्वा, "षड्रसैः हुत्वा परमानन्दरसनिर्भरो भवति" इति श्रुतेः। एवमग्नौ हुत्वा तत्सम्पातेन अङ्गस्पर्शात् कळेबरो वज्रं हीष्यते—कळेबरं वज्रवत् दृढत्वं सृष्टिकर्मकरणपटुत्वं इष्यते। हिशब्दो निःसंशयार्थः। ततः किमित्यत आह—तत इति। ततः स्वकार्यान् कार्यभूतान् सर्वप्राणिनो जीवान् जीवाः पश्वाद्याः प्रादुर्भविष्यन्ति। ततः किमित्यत्र— तत इति। "तत् सृष्ट्वा। तदेवानुप्राविशत्।" इति, "स्वयमेव जगद्भूत्वा प्राविशत् जीवरूपतः" इति, सृष्टिप्रतिपादकश्रुतिस्मृतिप्रमाणतो जीवात्मपरमात्मनोरेकत्वमवगम्यते सृष्टिप्रवेशकर्त्रोरेकत्वात्, "सदेव सोम्येदमग्र आसीत्," "अनेन जीवेनात्मना अनुप्रविश्य," "तत् सत्यं स आत्मा तत् त्वमसि" इत्युपसंहाराच्च ॥ ५ ॥ अनुसन्धेयं, मुमुक्षुभिः इत्यर्थः ॥ ६ ॥ सृष्टिविद्यातत्पर्यवसानज्ञानफलमाह— य इति ॥ ७ ॥

इति द्वितीयः खण्डः

---

## तृतीयः खण्डः

उपासकैरनेकधा दृष्टस्य महापुरुषस्य वस्तुत एकत्वम्

एको देवो बहुधा निविष्ट अजायमानो बहुधा विजायते ॥ १ ॥ तमेतमग्निरित्यध्वर्यव उपासते । यजुरित्येष हीदं सर्वं युनक्ति । सामेति छन्दोगाः । एतस्मिन्हीदं सर्वं प्रतिष्ठितम् । विषमिति सर्पाः । सर्प इति सर्पविदः । ऊर्गिति देवाः । रयिरिति मनुष्याः । मायेत्यसुराः । स्वधेति पितरः । देवजन इति देवजनविदः । रूप इति गन्धर्वाः । गन्ध इत्यप्सरसः ॥ २ ॥ तं यथायथोपासते तथैव भवति । तस्माद्ब्राह्मणः पुरुषरूपं परंब्रह्मैवाहमिति भावयेत् । तद्रूपो भवति । य एवं वेद ॥ ३ ॥

वस्तुतः परमपुरुष एकानेककलनाविरळनिष्प्रतियोगिकाजोऽपि स्वज्ञादिदृष्ट्या **एको देवो बहुधा निविष्टः** ॥ १ ॥ एकस्य बहुधा निविष्टत्वं तत्तद्दृष्टिसापेक्षं, वस्तुतोऽयं महापुरुषो निष्प्रतियोगिकैक इति ज्ञानफलं तद्भावापत्तिरित्याह— **तमिति** । तं महापुरुषं अध्वर्यवो याजका एतमनिरुद्धनारायणभावमापन्नं त्रेताग्निरित्युपासते । तथा याजुषा **यजुरित्येष हीदं सर्वं युनक्ति** योजयन्ति । **सामेति छन्दोगाः** । किमिति? **एतस्मिन् हीदं सर्वं प्रतिष्ठितम्** । **ऊर्गिति देवाः**, "ऊर्ग् देवान्नममृतम्", "ऊर्वा अन्नम्", इति श्रुतेः । मानुषान्नं **रयिरिति मनुष्याः** । देवजनो देवतासमूहः ॥ २ ॥ स्वस्वदृष्ट्यनुरोधेन अध्वर्य्वादयः **तं यथायथोपासते तथैव भवति** । यस्मादेवं **तस्मान् ब्राह्मणो** ब्रह्मविद्वरीयान् ॥ ३ ॥

इति तृतीयः खण्डः

---

# चतुर्थः खण्डः

ब्रह्मण एव तापत्रयादियोगेन जीवत्वम्

तद्ब्रह्म तापत्रयातीतं षट्कोशविनिर्मुक्तं षडूर्मिवर्जितं पञ्चकोशातीतं षड्भावविकारशून्यमेवमादिसर्वविलक्षणं भवति ॥ १ ॥ तापत्रयं त्वाध्यात्मिकाधिभौतिकाधिदैविकं कर्तृकर्मकार्यज्ञातृज्ञानज्ञेयभोक्तृभोगभोग्यमिति त्रिविधम् ॥ २ ॥ त्वङ्मांसशोणितास्थिस्नायुमज्जाः षट्कोशाः ॥ ३ ॥ कामक्रोधलोभमोहमदमात्सर्यमित्यरिषड्वर्गः ॥ ४ ॥ अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमया इति पञ्चकोशाः ॥ ५ ॥ [1]प्रियत्वजननवर्धनपरिणामक्षयनाशाः षड्भावाः ॥ ६ ॥ अशनायापिपासाशोकमोहजरामरणानीति षडूर्मयः ॥ ७ ॥ कुलगोत्रजातिवर्णाश्रमरूपाणि षड्भ्रमाः ॥ ८ ॥ एतद्योगेन परमपुरुषो जीवो भवति नान्यः ॥ ९ ॥

यद्ब्रह्मज्ञानात् ब्रह्मैव भवति तद्ब्रह्म कीदृशमित्याशङ्क्य यद्यद्द्वैततया प्रतीयते तत्सर्वातीतमित्याह—तदिति ॥ १ ॥ स्वापनोद्यतापत्रयादिकं श्रुतिः स्वयमेव व्याकरोति—तापत्रयं त्विति। आत्मानं देहमधिकृत्य भवतीत्यध्यात्मं शिरोरोगादिः। भूतमधिकृत्य भवतीत्याधिभौतिकं चोरव्याघ्रादिबाधा। अक्षाधिदेवमधिकृत्य भवतीत्याधिदैविकं वर्षवातादिप्रभवपीडा। त्रिपुटीविकारोऽपि तदन्तर्गत एवेत्याह—कर्त्रेति। सर्वत्रैवं त्रिविधम् ॥ २ ॥ षट्कोशास्तु त्वगिति ॥ ३ ॥ षड्वर्गस्तु कामेति। प्राण्यङ्गत्वादेकवद्भावः ॥ ४ ॥ पञ्चकोशास्तु अन्नेति ॥ ५ ॥ भावविकारास्तु प्रियत्वेति ॥ ६ ॥ प्रीतेरस्तिवस्तुनिष्ठत्वात् प्रियत्वमस्तिवस्तुवाचकम्। षडूर्मयस्तु अशनेति ॥ ७ ॥ एवमादीत्यादिशब्दतः

[1] अस्तित्व—अ.

कुलेति ॥ ८ ॥ परमपुरुषात् जीवो भिद्यत इत्यत आह—एतदिति । तापत्रयादिषड्भ्रमान्तकलनावैरळ्यात् जीव एव परमपुरुषो भवतीत्यर्थः ॥ ९ ॥

एतदुपनिषदध्ययनफलम्

य [1]एतदुपनिषदं नित्यमधीते सोऽग्निपूतो भवति । स वायुपूतो भवति । स आदित्यपूतो भवति । अरोगी भवति । श्रीमांश्च भवति । पुत्रपौत्रादिभिः समृद्धो भवति । विद्वांश्च भवति । महापातकात् पूतो भवति । सुरापानात् पूतो भवति । अगम्यागमनात् पूतो भवति । मातृगमनात् पूतो भवति । दुहितृस्नुषाभिगमनात् पूतो भवति । स्वर्णस्तेयात् पूतो भवति । वेदोजन्महानात् पूतो भवति । गुरोरशुश्रूषणात् पूतो भवति । अयाज्ययाजनात् पूतो भवति । अभक्ष्यभक्षणात् पूतो भवति । उग्रप्रतिग्रहात् पूतो भवति । परदारगमनात् पूतो भवति । कामक्रोधलोभमोहेर्ष्यादिभिरबाधितो भवति । सर्वेभ्यः पापेभ्यो मुक्तो भवति । इहजन्मनि [2]पुरुषो भवति ॥१०॥

ग्रन्थतोऽर्थतः पारायणानुसन्धानफलं प्रकाशयन् विद्यामुपसंहरति—य इति । एतदुपनिषदं एतामुपनिषदम् । वेदोजन्महानात् वेदमधीत्य विस्मरणपातकात् । तुलापुरुषकालमृत्युमहिषादि-उग्रप्रतिग्रहात् । निर्विशेषब्रह्मज्ञानतः इह जन्मनि पुरुषो भवति ॥ १० ॥

पुरुषसूक्तार्थोपदेशविधानम्

तस्मादेतत्पुरुषसूक्तार्थमतिरहस्यं राजगुह्यं देवगुह्यं गुह्यादपि गुह्यतरं नादीक्षितायोपदिशेत् । नानूचानाय । नायज्ञशीलाय ।

[1] एतामुप—अ.

[2] पूतो भ—अ १.

नावैष्णवाय । नायोगिने । न बहुभाषिणे । नाप्रियवादिने । नासंवत्सरवेदिने । नातुष्टाय । नानधीतवेदायोपदिशेत् । गुरुरप्येवं-विच्छुचौ देशे पुण्यनक्षत्रे प्राणानायम्य पुरुषं ध्यायन्नुपसन्नाय शिष्याय दक्षिणकर्णे पुरुषसूक्तार्थमुपदिशेद्विद्वान् । न बहुशो वदेत् । यातयामो भवति । असकृत्कर्णमुपदिशेत् । एतत्कुर्वाणोऽध्येता-ऽध्यापकश्च इह जन्मनि पुरुषो भवतीत्युपनिषत् ॥ ११ ॥

यस्मादेवं तस्मात् । पुरुषसूक्तकल्परीत्या **नादीक्षितायोपदिशेत्** । **नावैष्णवाय** विष्ण्वनन्यभक्ताय । पुरुषसूक्तार्थोपदेशक्रममाह—**गुरु**रिति । विधि-वत् **उपसन्नाय शिष्याय** तन्मस्तकहस्तसमर्पणपूर्वकं **दक्षिणकर्णे पुरुषसूक्तार्थ-मुपदिशेत्** । मुहुर्मुहुः एवमुपदेशः कार्यः इत्यत आह—**विद्वा**निति । तदर्थरहस्य-ज्ञानं यथा यथा हृदयारूढं भवेत् तथा तथा **असकृत् कर्णमुपदिशेत्** अहं ब्रह्मेति वाक्यार्थबोधो यावत् दृढीभवेत्, "शमादिसहितस्तावदभ्यसेत् श्रव-णादिकम्" इति भगवत्पादोक्तेः । एवंविधशिष्याचार्ययोः परमपुरुषाप्ति वदन्नुपसंहरति—**एत**दिति । स्वातिरिक्तस्त्रीपुंभावापह्नवसिद्धपरमपुरुषः स्वमात्र-मिति प्रबोधसमकालं विद्वान् तन्मात्रमवशिष्यते इत्यर्थः । इत्युपनिषच्छब्दो मुद्गलोपनिषत्परिसमाप्त्यर्थः ॥ ११ ॥

इति चतुर्थः खण्डः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
मुद्गलोपनिषद्व्याख्या लिखिता पुरुषार्थदा ॥
मुद्गलोपनिषद्व्याख्याग्रन्थजातं शतं भवेत् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे सप्तपञ्चाशत्सङ्ख्यापूरकं मुद्गलोपनिषद्विवरणं सम्पूर्णम्

# मैत्रायण्युपनिषत्

आप्यायन्तु—इति शान्तिः

## प्रथमः प्रपाठकः

संसारविरक्तस्य आत्मजिज्ञासा

बृहद्रथो वै नाम राजा राज्ये ज्येष्ठं पुत्रं निधापयित्वेदमशाश्वतं मन्यमानः शरीरं वैराग्यमुपेतोऽरण्यं निर्जगाम। स तत्र परमं तप आस्थायादित्यमीक्षमाण ऊर्ध्वबाहुस्तिष्ठति। अन्ते सहस्रस्य [1]मुनिरन्तिकमाजगामाग्निरिवाधूमकस्तेजसा निर्दहन्निवात्मविद्भगवान् शाकायन्यः। उत्तिष्ठोत्तिष्ठ वरं वृणीष्वेति राजानमब्रवीत्। स तस्मै नमस्कृत्योवाच भगवन् नाहमात्मवित् त्वं तत्त्वविच्छृणुमो वयं स त्वं नो ब्रूहीति। एतद्वृत्तं पुरस्तादशक्यं मा पृच्छ प्रश्नमैक्ष्वाकान्यान् कामान् वृणीष्वेति। शाकायन्यस्य चरणावभिमृशमानो राजेमां गाथां जगाद॥ १॥

[1] मुने—अ, अ १.

वैराग्येद्धभक्तियुक्तब्रह्ममात्रप्रबोधतः ।
यत्पदं मुनयो यान्ति तत्त्रैपदमहं महः ॥

इह खलु मैत्रायण्युपनिषदः सामवेदप्रविभक्तत्वेन केन-छान्दोग्य-विवरण-विभातोपोद्घातादिकं अत्रापि समानम् । बृहद्रथशाकायन्यप्रश्नप्रतिवचनरूपाख्यायिका तपोवैराग्यभक्त्यादिसाधननिष्पन्नेयमुपनिषदिति विद्यास्तुत्यर्था । एवंविधमैत्रायण्युपनिषदोऽल्पग्रन्थतो विवरणमारभ्यते—**बृहद्रथ** इति । कस्य चिद्राज्ञो **बृहद्रथ** इति नाम । वा इत्यैतिह्ये । स हि **राजा राज्ये ज्येष्ठं पुत्रं निधापयित्वा इदं शरीरं अशाश्वतं** नश्वरं **मन्यमानः** तीव्रतर**वैराग्य**युतः सन् **अरण्यं** प्रति **निर्जगाम । स** गत्वा तत्रारण्ये **परममुत्कृष्टं तप आस्थाय आदित्यं उदीक्षमाणः ऊर्ध्वबाहुः** पदैकेन भुवमवष्टभ्य सहस्रं समाः **तिष्ठति** स्म । अथ **सहस्रसंवत्सरान्ते मुनिः** वालखिल्यः कश्चित् **अधूमकोऽग्निरिव स्वतेजसाऽस्य** स्वाज्ञानं **निर्दहन्निव** अनात्मापह्नवसिद्धात्ममात्रवित् **भगवान् अस्यान्तिकमाजगाम** । तन्निकटं गत्वाऽथ भगवान् मुनिः शाकायनस्यापत्यं, गर्गादि यञ्, **शाकायन्यः** हे राजन् **उत्तिष्ठोत्तिष्ठ वरं** वृणीष्व **इति राजानमब्रवीत्** । **स** राजा **तस्मै नमस्कृत्योवाच** । किमिति ? हे **भगवन् नाहमात्मवित्, त्वं** तु **ब्रह्मतत्त्ववित्** । अतो **वयं** त्वत्तः ब्रह्मयाथात्म्यं **शृणुमः** शुश्रुमः । “ छन्दसि लुङ्लङ्लिटः ” इति वर्तमानार्थे लिट् (?) । स्वकुलापेक्षया वयमिति बहुवचनम् । यतः सर्वज्ञोऽसि अतो **नो** अस्मभ्यं स्वात्मतत्त्वं **ब्रूहीत्यर्थः** । राज्ञा एवं पृष्टो मुनिराह—**एतदिति** । हे **ऐक्ष्वाक एतदात्मवृत्तं पुरस्तात्** प्रथमं **मा पृच्छ,** एतस्य प्रश्नानर्हत्वात् भवद्दुर्लभानपि **अन्यानेव कामान्** वृणीष्वेति मुनिनोक्तो राजा **शाकायन्यस्य चरणावभिमृशमानः**—इत्यात्मनेपदं छान्दसम्—तत्पादयोः प्रणिपत्य **राजा इमां** वक्ष्यमाणां **गाथां जगाद** ॥ १ ॥

संसारनिर्वेदगाथा

**भगवन्नस्थिचर्मस्नायुमज्जामांसशुक्रशोणितश्लेष्माश्रुदूषिकाविण्मूत्रवातपित्तकफसंघाते दुर्गन्धे निःसारेऽस्मिन् शरीरे किं कामोपभोगैः ॥ २ ॥**

कामक्रोधलोभमोहभयविषादेर्ष्येष्टवियोगानिष्टसंप्रयोगक्षुत्पि-पासाजरामृत्युरोगशोकाद्यैरभिहतेऽस्मिन् शरीरे किं कामोपभोगैः ॥३॥

सर्वं चेदं क्षयिष्णु पश्यामो यथेमे दंशमशकादयस्तृणवन्नश्यतयोद्भूतप्रध्वंसिनः ॥ ४ ॥

अथ किमेतैर्वा परेऽन्ये महाधनुर्धराश्चक्रवर्तिनः केचित् सुद्युम्नभूरिद्युम्नेन्द्रद्युम्नकुवलयाश्वयौवनाश्ववध्रियाश्वाश्वपतिः शशबिन्दुर्हरिश्चन्द्रोऽम्बरीषोऽननूक्तः स्वयातिर्ययातिरनरण्योक्ष[1]सेनोत्थमरुत्तभरतप्रभृतयो राजानो मिषतो बन्धुवर्गस्य महतीं श्रियं त्यक्त्वाऽस्माल्लोकादमुं लोकं प्रयान्ति ॥ ५ ॥

अथ किमेतैर्वा परेऽन्ये गन्धर्वासुरयक्षराक्षसभूतगणपिशाचोरगग्रहादीनां निरोधनं पश्यामः ॥ ६ ॥

अथ किमेतैर्वाऽन्यानां शोषणं महार्णवानां शिखरिणां प्रपतनं ध्रुवस्य प्रचल[2]नमस्थानं वा तरूणां निमज्जनं पृथिव्याः [3]स्थानादपसरणं सुराणां सोऽहमित्येतद्विधेऽस्मिन् संसारे किं कामोपभोगैर्यैरेवाश्रितस्यासकृ[4]दिहावर्तनं दृश्यत इत्युद्धर्तुमर्हसी[5]त्यन्धूदपानस्थो भेक इवाहमस्मिन् संसारे भगवंस्त्वं नो गतिस्त्वं नो गतिः ॥ ७ ॥

केयं गाथेत्यत आह—भगवन्निति । अस्थ्यादिकफान्तसङ्घाते दुर्गन्धे निःसारे, दुर्गन्धराशित्वेन सारलेशवैरळ्यात्, एतादृशे अस्मिन् शरीरे किं वा कामोपभोगैः प्रयोजनं मेऽस्ति । विवेकी रौरवादिपरिभवदे शरीरे अहं ममाभिमतिमेत्य कं कामं साधयेत् । न हि कदाऽपि मे तत्र रतिरस्तीत्यर्थः ॥ २ ॥

[1] सेनोथ—अ २, क. सेनादयोथ—अ, अ १.
[2] नं स्थानं—अ, अ १, अ २, क.
[3] अन्धीनामपसरं—अ २.
[4] दुपाव—अ २, क.
[5] त्यन्धोद—अ, अ १, अ २, क.

किंच—**कामेति** । कामादिशोकाद्यैरभिहते पीड्यमाने किं **कामोपभोगैरिति** समानम् ॥ ३ ॥ किंच—**सर्वमिति** । यद्यन्मार्त्यभोज्यजातं तत्तत् **सर्वं क्षयिष्णु पश्यामः** । तत्रायं दृष्टान्तः—**यथेमे तृणवन्नश्यतयोद्भूतप्रध्वंसिनः दंशमशकादयः** तेषां क्षुद्रजन्तुत्वात् तद्वदित्यर्थः ॥ ४ ॥ किंच—**अथेति** । **अथ किमेतैः** महाराजैश्वर्यैर्वा सर्वस्य विनाशित्वात् किं प्रयोजनमस्ति । **परे** श्रेष्ठा **अन्ये** मद्व्यतिरिक्ता **महाधनुर्धराः** शूराग्रगण्यत्वात् **चक्रवर्तिनः** एकद्वीपाधिपत्यात् **केचित्** सार्वभौमाश्च भवन्ति **सुद्युम्नप्रभृतयः** सूर्यवंशराजानः अथ **मरुत्तप्रभृतयः** सोमवंशराजानः सन्ति सर्व एते **मिषतो बन्धुवर्गस्य महतीं श्रियं** देवराजतुल्यश्रियं अपि **त्यक्त्वा अस्मात्** लोकात् **अमुं** परलोकं **प्रयान्ति** । यत एवमतः किं कामोपभोगैः इति पूर्वेण सम्बन्धः ॥ ५ ॥ किंच—**अथेति** । मानुषैश्वर्यमेतत्तिष्ठतु । अपि तु **अथ किमेतैः** देवयोन्यैश्वर्यैर्वा किम् । तथा हि—**परे** विशिष्टैश्वर्यसम्पन्ना **गन्धर्वासुरयक्षराक्षसभूतगणपिशाचोरगग्रहादयः** सन्ति तेषां **निरोधनं** प्रळयं **पश्यामः** । तथा सति मानुषदेहमाश्रित्य किं कामोपभोगैरित्यर्थः ॥ ६ ॥ किं च—**अथेति** । **अथ अन्यानामिति** सुडाद्यभावः छान्दसः । अन्येषामैश्वर्यवद्दिक्पालानामैश्वर्यैर्वा किं, न किमपीत्यर्थः, तेषामपि विनाशित्वात्, "विनाशं कालतो याति ततोऽन्यत् सकलं मृषा" इति श्रुतेः । **महार्णवादीनां शोषणं** संवर्ते भवतीति शुश्रुमः हिमवदादिशिखरिणां **प्रपतनं, ध्रुवस्यापि प्रचलनं** चलितस्य पुनरस्थानं ध्रुवपदभ्रंशनं वा, तथा **तरूणां पृथिव्याश्च महार्णवे निमज्जनं, सुराणां** स्वर्गस्थानादपसरणं अपगमनं, इत्येवमाब्रह्मलोकसंसारी तद्याथात्म्यं विद्वान् **सोऽहमस्मीत्येवंविधे अस्मिन् संसारे किं कामोपभोगैः** यान् कामोपभोगानाश्रित्य **यैरेव** कामभोगैः **असकृदिहावर्तनं दृश्यत इति** यतः एवं अतः सर्वथैव तद्विमुखं **मामुद्धर्तुमर्हसि अन्धुः** कूपः तद्रूपमुदपानं जलाशयः अन्धूदपाने तिष्ठतीत्यन्धूदपानस्थः **भेको** मण्डूकः कूपस्थमण्डूक इव **अस्मिन् संसारे** पतितानां मादृशानां **नोऽ**स्माकं **त्वमेव गतिः** । आवृत्तिः प्रथमप्रपाठकसमाप्त्यर्था ॥

इति प्रथमः प्रपाठकः

---

# द्वितीयः प्रपाठकः

संसारनिर्विण्णाय परापरब्रह्मोपदेशः

अथ भगवान् शाकायन्यः सुप्रीतोऽब्रवीद्राजानं महाराज बृहद्रथेक्ष्वाकुवंशध्वजशीर्षात्मज्ञः कृतकृत्यस्त्वं मरुन्नाम्नो विश्रुतोऽसीत्ययं वाव खल्वात्मा ते कतमो भगवान्[वा ३]वर्ण्य [1]इति तं होवाच ॥ १ ॥ य एषो बाह्यावष्टम्भनेनोर्ध्वमुत्क्रा[2]न्तो व्यथमानोऽव्यथमानस्तमः प्रणुदत्येष आत्मेत्याह भगवानथ य एष संप्रसादोऽस्माच्छरीरात् समुत्थाय परं ज्योति[3]रुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति ॥ २ ॥

अथ एवं संसारनिर्विण्णचित्तं राजानं प्रति आदौ मुनिः अपरब्रह्मविद्यामुपदिशति—**अथे**ति । **अथ** राज्ञः साधनचतुष्टयसम्पद्वेदनानन्तरं **भगवान शाकायन्यः** तत्तीव्रतरवैराग्यतः **सुप्रीतो राजानमब्रवीत्**। किमिति ? हे **महाराजे**ति सम्बोधनत्रयतः सम्बोध्य स **त्वं मरुद्राज्ञो**ऽपत्यत्वेन **विश्रुतो**ऽसि । त्वद्ब्रह्मविद्यासाधनपौष्कल्यदर्शनात् आत्मज्ञप्रायः **कृतकृत्य**श्चासि । इत्येवमुक्त्वा वक्ष्यमाणोऽ**यं वाव** खलु **भगवान्** तव **आत्मा ते कतमो भगवान्** [वा ३] **वर्ण्य इति तं** राजानं प्रति **उवाच ह** । अभिपूजिते प्लुतिः ॥ १ ॥ मदात्मा कीदृश इति प्रष्टुकाममालक्ष्याह—**य** इति । **य एषो**ऽपरोक्षो भगवान् **बाह्यावष्टम्भनेन** रथेन **ऊर्ध्वमुत्क्रान्तः** उद्गच्छन् **व्यथमानः** जलशैत्याग्न्युष्णादिवत् कालात्मत्वेन क्रियास्वाभाव्यात् सततसञ्चारेऽपि सञ्चरणायासेन **अव्यथमानः** सन् शार्वरं **तमः प्रणुदति** यथा सविता तथा अयमात्मा स्वाज्ञानं प्रणुदति नाशयति । य

[1] त इ—अ २.
[2] मन्तो—अ, अ १, अ २, क.
[3] स्स्वरूपं सं—क.

**एष भगवान्** ते तवात्मा तवात्मभूत इत्याह । **अथेति** सविशेषकथनानन्तर्यार्थः । **यः एषोऽपरोक्षः सम्प्रसादः**—स्वविकल्पितकरणग्रामोपरमात् तदधिकरणतया प्रसीदतीति कूटस्थः सम्प्रसादशब्दार्थः—**अस्माच्छरीरात्** मूर्धन्यया नाड्या **समुत्थाय** अर्चिरादिना विरजां प्राप्य तद्दर्शनस्नानतः प्रसन्न**परंज्योतिरुप-सम्पद्य** तदुपसम्पत्तितः **स्वेन रूपेण** योऽभि**निष्पद्यते** अभिव्यज्यते **स एष आत्मेति होवाच** । न हि घटशरावादिः कालत्रयेऽपि मृत्त्वं व्यभिचरति । एवं यत् कारणभावमापन्नं **एतदेव** परंज्योतिः **अमृतं** स्वमृत्युवैरळ्यात् अत एव **अभयं** निर्भयत्वात्, **एतदेव** हि **ब्रह्म**, "ब्रह्माभयं वै ब्रह्म" इति श्रुतेः ॥ २ ॥

आत्मनः शरीरप्रवर्तकत्वम्

अथ खल्वियं ब्रह्मविद्या सर्वोपनिषद्विद्या वा राजन्नस्माकं भगवता मैत्रेयेण व्याख्याताऽहं ते कथयिष्यामीत्यथापहतपाप्मानस्तिग्मतेजस ऊर्ध्वरेतसो वालखिल्या इति श्रूयन्तेऽथ ते प्रजापतिमब्रुवन् भगवन् शकटमिवाचेतनमिदं शरीरं कस्यैष खल्वीदृशो महिमाऽतीन्द्रियभूतस्य येनैतद्विधमिदं चेतनवत् प्रतिष्ठापितं प्रचोदयिताऽस्य को भगवन्नेतदस्माकं ब्रूहीति तान् होवाच ॥ ३ ॥ यो ह खलु वाचोपरिस्थः श्रूयते स वा एष शुद्धः पूतः शून्यः शान्तोऽप्राणोऽनीशात्माऽनन्तोऽक्षय्यः स्थिरः शाश्वतोऽजः स्वतन्त्रः स्वे महिम्नि तिष्ठत्यनेनेदं शरीरं चेतनवत्प्रतिष्ठापितं प्रचोदयिता चैषोऽस्येति ते होचुर्भगवन् कथमनेनेदृशेनानिच्छेनैतद्विधमिदं चेतनवत् प्रतिष्ठापितं प्रचोदयिता चैषोऽस्येति कथमिति तान् होवाच ॥ ४ ॥

एवं वक्ष्यमाणवालखिल्याख्यायिकया सविशेषं निर्विशेषं च ब्रह्म प्रतिपाद्यते । तत्र ब्रह्मणः कार्यकारणात्मकविश्वतद्धेतुत्वं च प्रतिपाद्यते— **अथेति** । **अथ** एवं तदात्मोपदेशानन्तरं तदकृत्रिमत्वसिद्धये **खलु येयं** ब्रह्ममात्रविद्या **ब्रह्मविद्या सर्वोपनिषद्विद्या** कर्मोपासनाविशिष्टा **वा हे राजन् अस्माकं** ऊर्ध्वरेतसां वालखिल्यानां **भगवता मैत्रेयेण** व्याख्याता तां सर्वोपनिषद्विद्यां ब्रह्मविद्यां च **अहं ते कथयिष्यामीति** प्रतिज्ञाय स्वप्रतिज्ञाऽर्थं प्रतिपादयति—**अपहतेति** । स्वकृततपसा **अपहतपाप्मानः** कल्मषघ्नतपःपरायणत्वात्, **तिग्मतेजसः** सदा सूर्यमण्डलसञ्चारात्, **ऊर्ध्वरेतसः** योगोर्ध्वीकृतरेतस्त्रयवत्परमहंसत्वात् । वाग्दृष्टिमनांसि रेतस्त्रयम् । तथा च स्मृतिः—

> मनोवाग्दृष्टिरेतः स्यादयमात्माऽक्षरः परः ।
> बद्धरेता विमुच्येत मुक्तरेतास्तु बध्यते ॥ इति ॥

एवंधर्मविशिष्टा **वालखिल्या इति** अङ्गुष्ठसन्निभगात्राः मुनयः श्रूयन्ते । ते वालखिल्याः **प्रजापतिमब्रुवन्** । किमिति ? हे **भगवन् इदं शरीरं शकटमिव अचेतनमिति** सर्वानुभवसिद्धं स्वापादौ दर्शनात् । तदेतच्छरीरं येन चेतनेन अनुविद्धं सत् चेतनवत् प्रतिष्ठापितं **कस्यैष** चेतनस्य **अतीन्द्रियभूतस्य** अचेतनचेतनीकरणसमर्थोऽयं **महिमा**, करणानां जडत्वेन अकिञ्चित्करत्वात् । **येनेदं** शरीरं **चेतनवन् प्रतिष्ठापितं अस्य** स्वव्यापृतौ **प्रचोदयिता कोऽयं** प्रवर्तकः स्यादित्येतत् हे **भगवन् अस्माकं ब्रूहि इति** वालखिल्यैः पृष्टः **तान् प्रत्युवाच ह** किल ॥ ३ ॥ किं उवाचेत्यत आह— **यो हेति** । **यो ह** खलु प्रसिद्धः । वाचा उपनिषदा "सर्वस्मादन्यो विलक्षणः" इति [1]श्रुत्यनुरोधेन सर्वस्मादुपरि प्रतिष्ठित इति **वाचोपरिस्थः** श्रूयते । यो वाचोपरिस्थः श्रूयते **सोऽयं शुद्धः** अशुचिर्वैरळ्यतः तमोगुणातीतत्वात्, **पूतः** अपूतरजोऽतीतत्वात्, **शून्यः** तमआदिगुणत्रयमस्तिनास्तीतिविभ्रमशून्यत्वात्, **शान्तः** संशान्तमायातत्कार्यत्वात्, **अप्राणः** जडक्रियाशक्त्यभावात्, **अनीशात्मा** स्वेशितव्यकलनाऽसहत्वात्, **अनन्तः** देशकालवस्तुपरिच्छेदशून्यत्वात्, **अक्षय्यः** निर-

[1] श्रुत्य स—उ १.

वयवत्वात्, **स्थिरः** अचलत्वात्, अत एव **शाश्वतः** सनातनत्वात्, **अजः** स्वोत्पन्नोत्पादककार्यकारणवैरळ्यात्, **स्वतन्त्रः** कर्तुमकर्तुमन्यथा कर्तुं शक्तत्वात्, यः एवंविशेषणविशिष्टो भगवान् सर्वविशेषापह्नवसिद्धे **स्वे महिम्नि** स्वयमेव **तिष्ठति** । **अनेनेदं शरीरं चेतनवत् प्रतिष्ठापितं एष एवास्य** शरीरादेः **प्रचोदयिता चेति** भगवदुक्तमाकर्ण्य **ते होचुः** । किमिति? **हे भगवन् ईदृशेन** स्वे महिम्नि संस्थितेन स्वातिरिक्तासहेन **कथमेतत्** स्वातिरिक्तशरीरं शशविषाणकल्पं **चेतनवत्** प्रतिष्ठितं स्यात्, कथं स्वातिरिक्तशरीरमस्तिनास्तीतिविभ्रमापह्नवसिद्धोऽस्य **प्रचोदयिता** स्यात्, इत्येवमाशङ्कमानान् **तान्** प्रति निष्प्रतियोगिकब्रह्ममात्रदृष्टेः प्रेर्यप्रेरककलना अस्तिनास्तीतिविभ्रमोऽपि न हि सेद्धुं पारयति, व्यावहारिकत्वेन प्रातिभासिकत्वेन वा स्वातिरिक्तशरीरादिकमस्तीति ये मन्यन्ते तेषां ब्रह्ममात्राज्ञानावृतदृष्टित्वात् तदवलम्बनस्वाज्ञानव्यवधानेन सर्वमुपपद्यत इति भगवान् प्रजापतिः **होवाच** ॥ ४ ॥

आत्मनः सर्वाधिष्ठातृपुरुषत्वम्

स वा एष सूक्ष्मोऽग्राह्योऽदृश्यः पुरुषसंज्ञको बुद्धिपूर्वमिहैवावर्ततेंऽशेन सुषुप्तस्यैव बुद्धिपूर्वं निबोधयत्यथ यो ह खलु वावैतस्यांशोऽयं यश्चेतनमात्रः प्रति[1]पूरुषं क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिङ्गः प्रजापतिर्विश्वाक्षस्तेन चेतनेनेदं शरीरं चेतनवत् प्रतिष्ठापितं प्रचोदयिता चैषोऽस्येति ते होचुर्भगवन्नीदृशस्य कथमंशेन वर्तनमिति तान् होवाच ॥ ५ ॥

किमुवाचेत्यत आह—**स वा** इति । यः शुद्धः पूतः इत्यादिविशेषणविशिष्टः **स वा एषः** परमात्मा **सूक्ष्मः** बुद्ध्यादेरपि सुसूक्ष्मत्वात्, अत एव **अग्राह्यः** सर्वग्राहकत्वात्, **अदृश्यः** अमात्रत्वात्, **पुरुषसंज्ञकः** स्वज्ञदृष्टिप्रसक्त-

[1] पूरुषः—उ, उ १.

स्वातिरिक्तपिण्डाण्डब्रह्माण्डानि जीवेशात्मना पूरणात् पुरुष इति संज्ञा न वस्तुतः, निरंशत्वात्, निरंशोऽपि तुर्यत्वमवलम्ब्य सर्वाधिष्ठाता भूत्वा स्वविकल्पितनिजांशेन **बुद्धिपूर्वमिव** स्वप्रयोजनाभावात् तथाऽपि वक्ष्यमाणानुरोधेनानुप्रवेशचिन्तापूर्वकं **इह** शरीर **आवर्तते** आ समन्ताद्वर्तमान इव भातत्वात्। एवं **सुप्तस्येव बुद्धिपूर्वं निबोधयति** नितरां चेतनवत् प्रतिष्ठापयति। यत एवं अतः **प्रचोदयति च**। निरंशे अंशारोपणपूर्वकं उक्तार्थः प्रपञ्च्यते—**अथेति**। **अथ**शब्दः क्रमार्थः। **असौ खलु वाव** प्रसिद्धः निरंशः चिद्धातुः तदज्ञानविकल्पितः **तदंशः**। कोऽसौ? यः **प्रतिपुरुषं** प्रतिप्राणिशरीरं क्षेत्रं तत् स्वोपाधित्वेन जानातीति **क्षेत्रज्ञः**, स हि **चेतनमात्रः** चिदंशत्वात्, स ह्यात्मनोंऽशः। देहातिरेकेण क्षेत्रज्ञोऽस्तीत्यत्र किं लिङ्गमित्यत आह—**सङ्कल्पाध्यवसायाभिमानलिङ्ग इति**। इदं मे भूयात् इति सङ्कल्पः, एवमेव भवितव्यं भवति इत्यध्यवसायः, साधयाम्येतदिति दृढाभिनिवेशोऽभिमानः, एतत्त्रयं क्षेत्रातिरिक्तक्षेत्रज्ञसद्भावे लिङ्गं, ततः कदाचित् कार्यं कारणं अनुमापयति इत्येवं प्रमाणसिद्धश्चेतनमात्र एव **प्रजापतिः**, स च **विश्वाक्षः** विश्वेयत्ताद्रष्टृत्वात्। **तेनैव** भगवता **चेतनेन इदं शरीरं चेतनवत् प्रतिष्ठापितं**, क्रियाऽऽदिशक्तित्रयमवष्टभ्य **एष एवास्य** शरीरादेः **प्रचोदयिता चे**त्युक्तवन्तः ते पुनः वालखिल्याः होचुः। किमिति? हे **भगवन्** निरंशस्य **ईदृशस्य** स्वविभक्तांशक्षेत्रज्ञतया **वर्तनं कथं** सेद्धुं पारयति ब्रह्मणो निष्प्रतियोगिकनिर्विशेषत्वात् **इति** एवमसंभावयतः तान् प्रति तादृशाधिकारिदृष्ट्या तथात्वेऽपि मध्यममन्दाधिकारिणां ब्रह्ममात्रसिद्धान्तावगत्युपायतया निरंशेऽप्यंशारोपो युज्यत इति **प्रत्युवाच ह**॥ ९॥

आत्मनः प्रजासु प्राणात्मना प्रवेशः

प्रजापतिर्वा एषोऽग्रेऽतिष्ठत् स नारमतैकः स आत्मानमभिध्यायद्बह्वीः प्रजा असृजत्ता अस्मै वा अप्रबुद्धा अप्राणा स्थाणुरिव तिष्ठमाना अपश्यत् स नारमत सोऽमन्यतैतासां प्रतिबोधनायाभ्यन्तरं

प्राविशानीत्यथ स वायुमिवात्मानं कृत्वाऽभ्यन्तरं प्राविशत् स एको नाविशत् स पञ्चधाऽऽत्मानं प्रविभज्योच्यते यः प्राणोऽपानः समान उदानो व्यान इति ॥ ६ ॥

तत् कथमित्यत आह—**प्रजापतिरि**ति । यः शुद्धः पूत इत्यादिपदार्थः **सोऽयं प्रजापतिः** प्रजापतिरेव **अग्रे** सृष्टेः प्राक् निष्प्रतियोगिकाद्वितीयः स्वेतरचेतनान्तरवैरळ्यात् स्वाज्ञदृष्ट्या लोकवदेकाकी **नारमत,** "तस्मादेकाकी न रमते" इति श्रुतेः । य एकः **स आत्मानं** बहु भविष्यामि इत्य**भिध्यायत्** । निरङ्कुशसर्वज्ञेश्वरो बुद्धिपूर्वं लीलया वा **बह्वीः प्रजाः असृजत्** । एवमीश्वरेण याः प्रजाः सृष्टाः **ता अस्मै** स्वस्रष्ट्रे अयमस्मज्जनक इति **अप्रबुद्धाः** वटाङ्कुरादिवत् प्रबोधरहिता **अप्राणाः** स्पन्दनप्रज्ञाशक्तिभ्यां विरळाः, "यो वै प्राणः सा प्रज्ञा या वा प्रज्ञा स प्राणः" इति श्रुतेः । एवं क्रियाज्ञानशक्त्योरभावात् केवलं **स्थाणुरिव तिष्ठमानाः** प्रजा **अपश्यत्** प्रजापतिः । तासु **नारमत । सोऽमन्यत**—**एतासां** प्रजानां **प्रतिबोधनाय** तासु **अभ्यन्तरं प्राविशानि इति** आलोच्य **अथ स** प्रजापतिः **वायुमिव आत्मानं कृत्वा** प्रजासु **अभ्यन्तरं प्राविशत्** । तत्तच्छरीरोचितैकैकज्ञानक्रियाशक्त्यात्मना प्रविष्ट **एको**ऽपि यथावत् **नाविशत् स पञ्चधा आत्मानं प्रविभज्योच्यते यः प्राणोऽपानः समान उदानो व्यान इति** ॥ ६ ॥

पञ्चप्राणस्वरूपम्

अथ योऽयमूर्ध्वमुत्क्रामतीत्येष वाव स प्राणोऽथ योयमवाञ्चं संक्रामत्येष वाव सोऽपानोऽथ योऽयं स्थविष्ठमन्नधातुमपाने स्थापयत्यणिष्ठं चाङ्गेऽङ्गे समं नयत्येष वाव स समानोऽथ योऽयं पीताशितमुद्गिरति निगिरतीति चैष वाव स उदानोऽथ येनैताः सिरा अनुव्याप्ता एष वाव स व्यानः ॥ ७ ॥

कीदृशः प्राणादिः इत्यत आह—अथेति। **अथ योऽयं** वायुः नासात **ऊर्ध्वमुत्क्रामत्येष वाव स प्राणः**। **अथ योऽयं** बाह्यनासिकारन्ध्रात् **अवाञ्चं संक्रामति एष वाव सोऽपानः**। **अथ योऽयं स्थविष्ठं** अतिस्थूलं **अन्नधातुं** भुक्तान्नस्वरूपं **अपाने** तदुपरि पाचनार्थं **स्थापयति अणिष्ठन्त्वङ्गे** अङ्ग-सम्बन्धिलिङ्गे अभिनयति, तथा च श्रुतिः—"योऽणिष्ठस्तन्मनः" इति, **एष वाव स समानः**। **अथ योऽयं पीताशितं** —द्वन्द्वैकवद्भावः— **तदुद्गिरति** धातुवैषम्ये साम्ये **निगिरति** ग्रसति च **एष वाव स उदानः**। अथ य एताः **सिराः** द्वासप्ततिसहस्रसङ्ख्याकाः अनुव्याप्ताः **एष वाव स व्यानः**, "एकैकस्यां द्वासप्ततिर्द्वासप्ततिः प्रतिशाखानाडीसहस्राणि भवन्ति आसु व्यानश्चरति" इति श्रुतेः। इत्थं क्रियाशक्त्यनुप्रवेशेन स्वसृष्टं सकलं चेष्टावत् भवतीत्यर्थः ॥७॥

वैश्वानरस्वरूपम्

अथोपांशुरन्तर्याम्य[मम]भिभवत्यन्तर्याममु[म उ]पांशुमेतयोरन्तराले चौष्ण्यं प्रास्रवद्यदौष्ण्यं स पुरुषोऽथ यः पुरुषः सोऽग्निर्वैश्वानरोऽप्यन्यत्राप्युक्तमयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते यदिदमद्यते तस्यैष घोषो भवति यदेतत् कर्णावपिधाय शृणोति स यदोत्क्रमिष्यन् भवति नैनं घोषं शृणोति ॥ ८ ॥

वैश्वानरोत्पत्तिरुपदिश्यते—अथेति। **अथोपांशुः** तदाख्यो वायुः **अन्तर्यामी** तदाख्यं वायुम**भिभवति**। तथा **अन्तर्यामश्चोपांशुमभिभवति** क्रमात्। तावेतौ पाणिपादेन्द्रियगतप्राणौ। तथा सुबालोपनिषदि—"हस्तमेवाप्येति मुख्यमेवाप्येति पादमेवाप्येति अन्तर्याममेवाप्येति" इति। तत्र मुख्यस्यैव उपांशुपर्यायत्वम्। **एतयोः** प्राणापानवत् परस्परमभिभवतोः उपांश्वन्तर्यामयोः **अन्तराले** आकर्णनाडीमध्यदेशे घृष्यमाणवेणुदलान्तराळ इव **औष्ण्यं** च शारीरं **प्रास्रवत्** प्रसृतं उत्पन्नं भवति। **यदौष्ण्यं स पुरुषः** स्थूलशरीररूपः। **अथ**

यः **पुरुषः** इत्युक्तः **स** एव **वैश्वानरः** कौक्षेयोऽग्निः । अनयोः पुरुषाग्न्योरपि ज्ञानक्रियाशक्तिवत्तादात्म्यं **अन्यत्र** श्रुत्यन्तरेऽप्युक्तं, “**अयमग्निर्वैश्वानरः**” इति । कोऽयमिति ? **योऽयमन्तः पुरुषे** स्थूलशरीरान्तरुपलभ्यते । औष्ण्यानुभवतो यद्यप्यसौ गम्यते, तथाऽपि बाह्याग्निवदनुभवतो विप्रतिपद्यमानं प्रति कार्यलिङ्गेनैव तत्सत्त्वं बोध्यते—**येनेति** । यदिदं व्रीहियवादि **अद्यते** तदिदं **अन्नं** जग्धं स्थालीतण्डुलवत् । तत्कालपाचकाग्निरेव वैश्वानरः इत्यर्थः, भुक्तान्नपाचकाग्नेः स्वानुभवसिद्धत्वात् । लिङ्गान्तरमेतत्—**तस्य** कौक्षेयाग्नेः **एष घोषः** शब्दो **भवति यं**—इति लिङ्गव्यत्ययः—यः एष पुरुषः **कर्णावपिधाय शृणोति** आन्तरं, तस्य कार्यत्वेन हेतुसापेक्षत्वात्, “ आपोमयः प्राणः तेजोमयी वाक् ” इति, “ अग्निर्वाग्भूत्वा मुखं प्राविशत् ” इत्यादिश्रुतितः शब्दस्य तेजःकारणत्वाविवादादान्तरं तेजस्सिद्धम् । अन्तस्तेजोमयोऽध्यक्षः **पुरुषो यदा** अस्मात् स्थूलपुरुषादुत्क्रमिष्यन् **भवति** तदा **नैनं** आन्तरं घोषं शृणोति । तथाचोत्क्रान्तिकाले स्थूलपुरुषस्य नाशे तद्गताग्नेरपि नाशात् तत्प्रभवघोषोऽपि नश्यतीत्युक्तं भवति । स्थूलशरीराग्न्युदयस्थितिनाशस्य चोपदिष्टप्रायत्वात् क्रियाज्ञानशक्तिवत्तादात्म्यमनयोः सिद्धमित्यर्थः ॥ ८ ॥

### परमात्मनः शारीरात्मत्वम्

स वा एष पञ्चधाऽऽत्मानं प्रविभज्य निहितो गुहायां **मनोमयः** प्राणशरीरो [1]बहुरूपः सत्यसंकल्प आत्मेति स वा एषोऽस्य हृदन्तरे तिष्ठन्नकृतार्थोऽमन्यतार्था[2]नसानि तत्स्वानीमानि भित्त्वोदितः **पञ्चभी** रश्मिभिर्विषयानत्तीति बुद्धीन्द्रियाणि यानीमान्येतान्यस्य **रश्मयः** कर्मेन्द्रियाण्यस्य हया रथः शरीरं **मनो** नियन्ता

[1] भारु—अ, अ १.

[2] नश्नामीत्यतः—अ, अ १. नसामीति तत्—अ २. नसानीत्यतः—उ.

प्रकृतिमयोऽस्य प्रतोदनेन[स्तेन] खल्वीरितं परिभ्रमतीदं शरीरं [1]चक्रमिवानेनैवेदं शरीरं चेतनवत् प्रतिष्ठापितं प्रचोदयिता चैषोऽस्येति ॥ ९ ॥

उक्तस्थूलपुरुषादिप्रचोदयिता क इत्यत आह—स वा इति । एवं शरीराभ्यन्तरं प्रविश्य यः **पञ्चधा** प्राणादिभेदेन **आत्मानं विभज्य** स्थूलशरीरानुग्रहायैव वैश्वानरस्या[म]प्युपपादितवान् **स एष** ज्ञानक्रियाशक्त्यात्मा भगवान् तद्धृदयगुहायां निहितः निधिवत् प्रतिष्ठितत्वात् । **सोऽसौ मनोमयः** ज्ञानशक्तिप्रधानत्वात् **प्राणशरीरः** क्रियाशक्त्युपाधिकत्वात् **बहुरूपः** नानोपाधिकत्वात् **सत्यसङ्कल्पः** अवितथसङ्कल्पत्वात् **य आत्मेति** प्रसिद्धः । **स वा एष** भगवान् **अस्य हृद(या)न्तरे तिष्ठन्** वाञ्छितार्थालाभात् **अकृतार्थो** भूत्वा **अमन्यत** । किमिति? शब्दाद्यर्थानसानि प्राप्नुवानीति तत् **स्वानीमानि** व्यष्टिस्थूलशरीराणि तानि **पञ्चभिः रश्मिभिः** स्वीयज्योतिर्मयकिरणैः **भित्त्वा उदितः** तन्निर्भिद्य बहिर्गतो **विषयान् अत्तीति** । ताश्च **रश्मयो यानीमानि** प्रसिद्धानि **अस्यात्मनः** श्रोत्रादिबुद्धीन्द्रियाणि रश्मिस्थानीयानि । सोऽसौ पञ्चरश्मिमाली मनोमयः प्राणशरीरो भगवान् रथी, वक्ष्यमाणरथाधिष्ठातृत्वात् । **अस्य** वागादिकर्मेन्द्रियाणि **हयाः, अस्य शरीरमेव रथः** इन्द्रियाश्ववाह्यत्वात्, **मनो नियन्ता** मनसः सारथित्वेन शरीररथवाहकाश्वस्थानीयेन्द्रियनियन्तृत्वात्, **प्रतोदः** तीव्रं **प्रकृतिमयः** नानाविधवासनास्वरूपत्वात् । **तेन** हि ते हयाः प्रतुद्यन्ते । पुनः पुनः यथोक्तरथिना खलु हययन्त्रद्वारेरितं सत् **इदं शरीरं परिभ्रमति** । यत एवमतः शकटमिव अचेतनमिदं **शरीरं, अनेनैव** निजरश्मिभिः **चेतनवत् प्रतिष्ठापितं, एष एव अस्य प्रचोदयिता** । एवं भगवत एव सर्वशरीरेष्वंशेन वर्तनमुक्तं भवतीत्यर्थः ॥ ९ ॥

[1] अयं व्याख्याऽनुसारी पाठः कोशगतपाठस्तु, 'चक्रमिव मृतचनेदं' इति वर्तते 'चक्रमिव मृत्पचेनेदं' इति रामतीर्थाभिमतपाठस्तु युक्ततरो भाति.

परमात्मनः आभासत एव संसारित्वम्

स वा एष आत्मे[1]त्यदोवशं नीत इव सितासितैः कर्मफलै-रभिभूयमान इव प्रतिशरीरेषु चरत्यव्यक्तत्वात् सूक्ष्मत्वाददृश्यत्वाद-ग्राह्यत्वान्निर्ममत्वाच्चानवस्थोऽकर्ता कर्तैवावस्थितः ॥ १० ॥

अंशवदंशिनः संसारित्वं वास्तवमित्यत आह—**स वा इति**। य एवं स्वसृष्टव्यष्ट्यादिशरीरेषु अंशेन अवतीर्य वर्तते **स वा एष** भगवान् परमा**त्मेति** विख्यातः स हि **अदो**रथस्थानीयशरीर**वशं नीत इव** अतस्मिंस्तद्भावसिद्ध-**सितासितैः** शुभाशुभैः पुण्यपाप**कर्मफलैः अभिभूयमान इव** अस्वतन्त्रतया **प्रतिशरीरेषु** चरतीव **चरति** न वस्तुतः। स्वावृत्यपाये निष्प्रतियोगिकब्रह्ममात्र-त्वद्योतकस्त्विवशब्दः। इवशब्दार्थसाधका हि वक्ष्यमाणहेतवः। **अव्यक्तत्वात् सूक्ष्मत्वात् अदृश्यत्वात् अग्राह्यत्वात् निर्ममत्वाच्च**, मिथोहेतुहेतुमद्धेतुपञ्चक-मित्यर्थः। **अनवस्थः** सर्वावस्थाऽपह्नवसिद्धत्वात्। तथाऽपि स्वाज्ञादिदृष्टि-प्रसक्तकर्तृत्वादिवैरळ्यात्, यत एवं अतो**ऽकर्तैव** सन् शुभाशुभकर्म**कर्तेव अवस्थितो** भवति ॥ १० ॥

आत्मनः शुद्धस्वरूपम्

स वा एष शुद्धः स्थिरोऽचलश्चालेपोऽव्यग्रो निःस्पृहः प्रेक्षकवदवस्थितः स्वस्य चरितभुग्गुणमयेन पटेनात्मानमन्तर्धाया-वस्थित इत्यवस्थित इति ॥ ११ ॥

कर्तैवेति इवशब्दार्थः कथमित्याशङ्क्य शुद्धादिविशेषणविशिष्टत्वात् इवशब्दः सङ्गच्छत इत्याह—**स वा इति**। **स वा एष** आत्मा **शुद्धः** तमोऽतीतत्वात् **स्थिरः** पूर्णत्वात् अत एव **अचलः** बद्धपीठाचलवत् अप्रकम्प्यत्वात् **अलेपः**

[1] ति होशन्निव—अ, अ १.

पापादिलेपरहितत्वात् **अव्यग्रः** निष्क्रियत्वात् **निःस्पृहः** स्पृहणीयस्वातिरिक्त-मृग्यत्वात् **प्रेक्षकवत् अवस्थितः** साक्षिवत् सर्वत्रोदासीनतया स्थितत्वात् तथाऽपि स्वाज्ञानतः **स्वस्य चरितभुक्** स्वकृतकर्मफलानुभवव्यग्रत्वात् । कथमिह प्रेक्षकवत् अवस्थितस्य स्वकृतचरितभुक्त्वं तत्राह—**गुणेति** । त्रिगुणतत्कार्य-नामरूपकर्मकर्तृत्वादिमय**दृढपटेन** स्वाज्ञदृष्टेः **स्वात्मानमन्तर्धाय अवस्थितः** पश्यत्कर्तेव भोक्तेव सर्वत्र आत्मात्मीयाभिमानारूढ इव आत्मानं मत्वा अवस्थितवद्भातत्वात् । वस्तुतः त्रिगुणतत्कार्यापाये निष्प्रतियोगिकब्रह्ममात्रमव-शिष्यत इत्यर्थः । आवृत्तिः अवधारणार्था अध्यायपरिसमाप्त्यर्था च भवति ॥११॥

इति द्वितीयः प्रपाठकः

---

# तृतीयः प्रपाठकः

संसारिणो भूतात्मनः स्वरूपम्

ते होचुर्भगवन् [1]यद्येवमस्यात्मनो महिमानं सूचयसीत्यन्यो वा परः कोऽयमात्मा [2]योऽयं सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिमापद्यत इत्यवाचीं वोर्ध्वां गतिं द्वन्द्वैरभिभूयमानः परिभ्रमतीति कतम एष इति तान् होवाच ॥ १ ॥ अस्ति खल्वन्योऽपरो भूतात्माऽऽख्यो योऽयं सितासितैः कर्मफलैरभिभूयमानः सदसद्योनिमापद्यत इत्यवाचीं वोर्ध्वां गतिं द्वन्द्वैरभिभूयमानः परिभ्रमतीत्यस्योपव्याख्यानं पञ्च तन्मात्राणि भूतशब्देनोच्यन्ते पञ्च महाभूतानि भूतशब्देनोच्यन्तेऽथ तेषां यः समुदायः

[1] यदेव—इति लिखितकोशेषु. [2] कोयं—इति लिखितकोशेषु.

शरीरमित्युक्तमथ यो ह खलु वाव शरीरमित्युक्तं स भूतात्मेत्युक्तमथास्ति तस्यात्मा बिन्दुरिव पुष्कर इति स वा एषोऽभिभूतः प्राकृतैर्गुणैरित्यतोऽभिभूतत्वात् संमूढत्वं प्रयात्यसंमूढत्वादात्मस्थं प्रभुं भगवन्तं कारयितारं नापश्यद्गुणौघैस्तृप्यमानः कलुषीकृतश्चास्थिरश्चञ्चलो लोलुप्यमानः सस्पृहो व्यग्रश्चाभि[1]मानित्वं प्रयात इत्यहं सो ममेदमित्येवं मन्यमानो निबध्नात्यात्मनाऽऽत्मानं जालेनेव कृतस्यानुफलैरभिभूयमानः परिभ्रमतीति ॥ २ ॥

यस्त्वयोक्त आत्मा संसारी उत असंसारी वा इति स्वात्मयाथात्म्यबुभुत्सया पुनः प्रश्नप्रतिवचनमुखेन तृतीयः प्रपाठक आरभ्यते—**ते होचुरिति** । स्वात्मनः संसारानुवृत्त्याशङ्कया ऋषयो वालखिल्याः ते होचुः हे **भगवन्** इत्येवं प्रकारेण **अस्यात्मनः** व्यष्टिसमष्ट्युपाधेः वा **महिमानं** सर्वसंसारनिर्वाहकत्वेऽपि तदस्पर्शित्वलक्षणं **सूचयसि** यद्येवमात्मनः संसारास्पर्शस्तदा **परः** परमात्मा **अन्यो वा अस्तु कोऽयमात्मा योऽयं सितासितैः कर्मफलैः अभिभूयमानः सदसद्योनिमापद्यत** इत्यनुभवतः अवाचीं सांसारिकीं **वा ऊर्ध्वां** अपवर्गलक्षणां **वाऽऽपद्यत** इत्यनुकर्षः । एवमनुभूत्या द्वन्द्वै**रभिभूयमानः परिभ्रमति** । **तत्र कतम एषः**—किं व्यष्टिसमष्टिसंसारातीतः परमात्मनोऽन्यः, उत तस्यैव कया च न विधया संसारोऽपीति प्रश्नः, अचेतनस्य अर्थानर्थायोगात् कः संसार्यात्मेति । एवं पृष्टो भगवान् उपाधिकृतं अस्य संसारित्वं न वस्तुतः इति **तान् होवाचेति** ॥ १ ॥ किं उवाचेत्यत आह—**अस्तीति** । तैरेवं पृष्टो भगवान्—संसार्यात्मा सर्वथैव नाचेतनो नापि चेतनः, अपि तु तप्तायःपिण्डवत् उभयात्मा, तस्यैव साक्षात् संसारः, तद्द्वारा आत्मनः संसार इत्युपचर्यते न स्वतः, इत्येतदर्थं मनसि निधाय अस्तीत्याद्युक्तिः युक्ता । **अस्ति खलु** प्रसिद्धः **अन्यः** परमात्मनो भिन्नः **अपरोऽश्रेष्ठः** संसारी **भूतात्माऽऽख्यः** । **योऽयं—सितासितैः**

[1] मान—अ१, अ२, उ.

इत्याद्युक्तार्थं—एवं **परिभ्रमतीति** पृष्टः सोऽन्योऽस्तीति पूर्वेण सम्बन्धः । **अस्य संसारिणः उपव्याख्यानं** क्रियत इति शेषः । तत् कथं इत्यत्र—**पञ्चतन्मात्राणि** अपञ्चीकृतसूक्ष्मभूतानि **भूतशब्देनोच्यन्ते,** पञ्चीकृत**पञ्चमहाभूतानि** च **भूतशब्देनोच्यन्ते । अथ** तेषां स्थूलसूक्ष्मभूतानां **समुदायः** सङ्घातः **शरीर-मित्युक्तम्** । तत्र भूतत्रयसङ्घातप्रधानं स्थूलशरीरं, सूक्ष्मं वायुप्रधानं, आन्तरं व्योमप्रधानं, तथा मात्राप्रधानम् । **अथ खलु** वाव प्रसिद्धः **योऽयं** शारीरः श्रुतिषु **शरीर**सम्बन्धी आत्मेत्युक्तः स एवं **भूतात्मेत्युक्तं** उपदिष्टम् । **अथ** भूतमयशरीरनिरूपणानन्तरं तत्स्वरूपं निरूप्यत इत्यर्थः । तदेव क्रियते—**तस्येति । तस्य** भूतसमुदायशरीरस्य **बिन्दुः पुष्कर इव** तैलबिन्दुलव इवेति वा इत्यनुभूतितो व्यापक **आत्मा** चेतनः **अस्त्येव । स वा एष** शारीरो यथोक्तभूतात्मा आन्तरो लैङ्ग्यज्योतिर्मयः पुरुषः **प्राकृतैः गुणैः** नानावासना-विजृंभितैः **इत्यतोऽभिभूतत्वात्** नीलपीतादिगुणकलितनैर्मल्यस्फटिकवत् **सम्मूढ-त्वं प्रयाति** । वस्तुतः स्वात्मनः स्वावारकदेहसम्बन्धाभावेन **असम्मूढत्वात्** सूत्रान्तर्यामिप्रत्यगादिरूपेण आत्मनि शरीरे तिष्ठतीति **आत्मस्थं प्रभुं भगवन्तं** कूटस्थात्मानं अनापन्नविकारतया सङ्घातप्रेरयितारं **नापश्यन्** गुणत्रयावृतत्वेन बहिर्मुखत्वात् । तथा च स्मृतिः—

> त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ।
> मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ इति ॥

सोऽसौ भूतात्मा शब्दादिसत्वादिगुणौघैः **तृप्यमानः** तुप्यमाणः तद्वासनया **कलुषीकृतश्च** भवति, **अस्थिरः** बहिःप्रतिष्ठाराहित्यात्, **चञ्चलः** मानसोपाधि-योगात्, **लोलुप्यमानः**—लुपेः यङन्ताच्छानच्—लोलुपतां प्राप्तः, अप्राप्तविषये स्पृहया अन्वितः **सस्पृहः**, अतत्कर्मणि **व्यग्रश्चाभिमानित्वं प्रयात इति** । यतः एवं अतः **अहं स** इति स्वपरशरीरात्माभिमानं **ममेदमिति** दारपुत्रधनक्षेत्रादिषु स्वीयबुद्धिं **मन्यमानोऽ**भिमतिं कुर्वन् **आत्मना** मनसा **स्वात्मानं** प्रत्यञ्चं **जालेन खचरमिव बध्नाति** स्वकृतस्य पुण्यपापरूपस्य स्वर्गनरकादिफलैः **अभिभूयमानः** यावत्स्वाज्ञानं **परिभ्रमतीति** ॥ २ ॥

भूतात्मसत्त्वे प्रमाणान्तरम्

अथान्यत्राप्युक्तं यः कर्ता सोऽयं वै भूतात्मा करणैः कारयिताऽन्तःपुरुषोऽथ यथाऽग्निनाऽयःपिण्डो वाऽभिभूतः कर्तृभिर्हन्यमानो नानात्वमुपैत्येवं वाव खल्वसौ भूतात्माऽन्तःपुरुषेणाभिभूतो गुणैर्हन्यमानो नानात्वमुपैत्यथ यत्त्रिगुणं चतुरशीतिलक्षयोनिपरिणतं भूतत्रिगुणमेतद्वै नानात्वस्य रूपं तानि ह वा इमानि गुणानि पुरुषेणेरितानि चक्रमिव चक्रिणेत्यथ यथाऽयःपिण्डे हन्यमाने नाग्निरभिभूयत्येवं नाभिभूयत्यसौ पुरुषोऽभिभूयत्ययं भूतात्मोपसंश्लिष्टत्वात् ॥ ३ ॥

स्वोक्तार्थे श्रुतिः श्रुत्यन्तरमपि प्रमाणयति—अथेति। अथ भूतात्मस्वरूपनिरूपणानन्तरं स्वोक्तार्थजातं अन्यत्र श्रुत्यन्तरेऽप्युक्तम्। तत् कथं? **यः कर्मकर्ता सोऽयं वै भूतात्मा** स्वीयकरणैः **कारयिता अन्तःपुरुषः** अन्तर्याम्यात्मना शरीरपूरणात् अयस्कान्तवत् कारयिता। श्रुतौ कर्तृस्वरूपतन्त्रता निरूप्यते—अथेत्यादिना। **यथा अग्निना अयःपिण्डः** शैत्यकाठिन्यविशिष्टो**ऽभिभूतः** खनित्रादिकर्तृभिः **हन्यमानो नानात्वमुपैति एवं वाव खल्वसौ भूतात्मा** स्वान्तःपुरुषेण अग्निस्थानीयेन **अभिभूतो गुणैः हन्यमानः** सन् **नानात्वमुपैति**। तत् कथं कीदृशं? **अथ यत् त्रिगुणं** सत्वादिगुणत्रयपरिणामरूपं **चतुरशीतिलक्ष**सङ्ख्याक**योनि**त्वेन त्रिस्रोतोऽवान्तरजातत्वेन च **परिणतं भूतत्रिगुणं**—लिङ्गव्यत्ययः—प्राणिसमूहः। **एतद्वै नानात्वस्य रूपं**—जातित्वे अवान्तरप्रवाहनित्यत्वेन त्रिसङ्ख्याकयोनिलक्षचतुरशीतिभूतात्मानः। **तानि ह वा इमानि गुणानि** चतुरशीतिलक्षयोनिपरिणतभूतरूपाणि **पुरुषेण** अन्तर्यामिणा **चक्रिणा** कुलालेन तच्च**क्रमिव ईरितानि** प्रेरितानि भवन्ति। यथोक्तयोनिप्राप्तिः भूतात्मन एव नान्तर्यामिण इत्यत्रायं दृष्टान्तः—**अथ यथा अयःपिण्डे हन्यमाने** नानात्वं गते सति **न**ह्य**ग्निः अभिभूयति**—इति छान्दसं

परस्मैपदं—अभिभूयते अग्नेरय:सम्बन्धवैरळ्यात्, एवं **नाभिभूयति असौ पुरुषोऽन्तर्यामी** । **भूतात्मा अभिभूयत्येव** । कुतो वैषम्यमित्यत्र हेतुः—**उपसंश्लिष्टत्वादिति** ॥ ३ ॥

भूतात्मनानात्वे प्रमाणान्तरम्

अथान्यत्राप्युक्तं शरीरमिदं मैथुनादेवोद्भूतं संविद्व्यपेतं निरय एव मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चितं मांसेनानुलिप्तं चर्मणाऽवबद्धं विण्मूत्र[1]पित्तकफमज्जामेदोवसाभिरन्यैश्च मलैर्बहुभिः परिपूर्णं कोश [2]इवावसन्नेति ॥ ४ ॥

भूतात्मन एव नानात्वापत्तौ श्रुत्यन्तरं प्रमाणयति—**अथेति** । किं तदन्यत्राप्युक्तम्? **इदं शरीरं** परमकुत्सितशुक्लशोणितयोगलक्षणं **मैथुनादेवोद्भूतं संविदा** शरीरात्मना **व्यपेतं** विसृष्टं विचार्यमाणे **निरय एव** । शिष्टं स्पष्टम् । इत्यादिमलपूरितं शरीरं स्वबन्धहेतु**कोश इवावसन्नेति** ॥ ४ ॥

भूतात्मैव शरीरमित्यत्र प्रमाणान्तरम्

अथान्यत्राप्युक्तं संमोहो भयं विषादो निद्रा तन्द्री व्रणो जरा शोकः क्षुत् पिपासा कार्पण्यं क्रोधो नास्तिक्यमज्ञानं मात्सर्यं [3]वैकारिण्यं मूढत्वं निर्व्रीडत्वं निकृतत्वमुद्धतत्वमसमत्वमिति तामसान्वितस्तृष्णा स्नेहो रागो लोभो हिंसा रतिर्दृष्टिर्व्यावृतत्वमीर्ष्या-काममस्थिरत्वं चञ्चलत्वं जिहीर्षाऽर्थोपार्जनं मित्रानुग्रहणं परिग्रहावलम्बोऽनिष्टेष्विन्द्रियार्थेषु द्विष्टिरिष्टेष्वभिष्वङ्ग इति राजसान्वितैः परिपूर्ण एतैरभिभूत इत्ययं भूतात्मा तस्मान्नानारूपाण्याप्नोतीत्याप्नोतीति ॥५॥

[1] वातपि—अ, अ १, क.
[2] इव वसुनेति—रामतीर्थपाठः
[3] वैकारुण्यं—अ, अ १, उ १.

भूतात्मैव शरीरमित्यत्र श्रुत्यन्तरं प्रमाणयति—अथेति । भूतात्मा शरीरत्रयमिति यदुक्तं तदन्यत्राप्युक्तं भवति । अस्य शारीरस्य भूतात्मनः संमोहादयः स्वप्रधानधर्माः व्रणादयः स्वोपाधिप्रधानाः, कार्पण्यादयोऽपि स्वप्रधानधर्माः । वैकारिण्यं विकारिसंश्रितत्वम् । निकृतत्वं शठत्वम् । शिष्टं स्पष्टम् । अन्नपानादिविषयेच्छा तृष्णा, पुत्राद्यासक्तिः स्नेहः, स्त्रीविषयेच्छा रागः, स्वद्रव्यत्यागानिच्छा लोभः, प्राणिमात्रपीडा हिंसा, रतिः क्रीडा, ईर्ष्या असूया, स्त्रीमोहः कामः, स्थिरप्रतिष्ठाराहित्यं अस्थिरत्वम्, प्रतिक्षणविकारित्वं चञ्चलत्वम, अर्थादिहरणेच्छा जिहीर्षा, अर्थोपार्जनं, मित्रानुग्रहणं, स्त्र्यादिपरिग्रहावलम्बः, अनिष्टेन्द्रियार्थेषु द्विष्टिः, इष्टेषु अभिष्वङ्गः सक्तिरिति राजसैः गुणैः परिपूर्णः एतैः अभिभूतः इत्येवंप्रकारोऽयं भूतात्मा शारीरः । यस्मात् एवं तस्मात् नानारूपाण्याप्नोति पुरोक्तनानायोनीः प्राप्नोति । आवृत्तिस्तु तृतीयप्रपाठकसमाप्त्यर्था ॥ ५ ॥

इति तृतीयः प्रपाठकः

---

# चतुर्थः प्रपाठकः

धर्मानुष्ठानेन विना संसारानिवृत्तिः

[1]अथान्यत्राप्युक्तं महानदीषूर्मय इव निवर्तकमस्य यत् पुराकृतं समुद्रवेलेव दुर्निवार्यमस्य मृत्योरागमनं सदसत्फलमयैर्हि पाशैः

[1] अत्र (अ) कोशे (मु) कोशे च अयमधिकः पाठो वर्तते—"ते ह खल्वथोर्ध्वरेतसोऽतिविस्मिता अतिसमेत्योचुर्भगवन्नमस्ते त्वं नः शाधि त्वमस्माकं गतिरन्या न विद्यत इत्यस्य कोऽतिथिर्भूतात्मनो येनेदं हित्वात्मन्येव सायुज्यमुपैति तान् होवाच ॥"

पशुरिव बद्धं बन्धनस्थ इवास्वतन्त्रं यमविषयस्थ इव बहुभयावस्थं मदिरोन्मत्त इवामोदमदिरोन्मत्तं पाप्मना गृहीत इव भ्राम्यमाणं महोरगदष्ट इव विषदष्टं महान्धकार इव रागान्धमिन्द्रजाल [1]इव मायामयं स्वप्न इव मिथ्यादर्शनं कदलीगर्भ इवासारं नट इव क्षणवेषं चित्रभित्तिरिव मिथ्यामनोरममित्यथोक्तम् ॥

शब्दस्पर्शादयो येऽर्था अनर्था इव ते स्थिताः ।
येषां सक्तस्तु भूतात्मा न स्मरेच्च परं पदम् ॥ १ ॥

पूर्वस्मिन् प्रपाठके संसारियत्तां प्रतिपाद्य तदसम्भवप्रबोधप्रदर्शनाय चतुर्थः प्रपाठकः आरभ्यते—अथेति । अथ संसारप्रवृत्तिप्रदर्शनानन्तरं अस्माभिः यत् व्याचिख्यासितं तत् अन्यत्राप्युक्तम् । किं तत्? कैवल्यहेतुतत्त्वज्ञानम् । **महानदीषु ऊर्मय इव भूतात्मनः** संसारात् **निवर्तकमस्य समुद्रवेलेव** अस्य भूतात्मनः ऊर्मितुल्यप्रवृत्तिसंसारस्य समुद्रोर्मीणां समुद्रवेलेव निवर्तकं निवारकं तु **यदस्य पुराकृतं** जन्मान्तरकृतस्वधर्मानुष्ठानं एतदेव, अन्यथा **दुर्निवार्य अस्य मृत्योः** संसारस्य पुनः पुनः ऊर्मिवत् **आगमनं** प्राप्तम् । **यत्** यस्मात् शुभकर्मरहितः **असत्फलमयैः** असन्ति अशुभानि दुष्कृतानि तन्मयैः **पाशैः पशुरिव बद्धं** प्राचीनसुकृतराहित्यात् । तं मृत्युः न मुञ्चतीति शेषः । कारागृहबन्धनस्थ इव **अस्वतन्त्रं** स्वार्थस्वातन्त्र्यरहितं, **यमविषयस्थो** नारकीव **बहुभयावस्थं, मदिरोन्मत्त इव आमोदमदिरोन्मत्तं**—दारपुत्रादौ न्यस्तप्रीतिः आमोदः, पिशाचोपमपाप्मना **गृहीत इव भ्राम्यमाणं** व्याघूर्णमानचित्तत्वात्, **महोरगदष्ट इव विषदष्टं, महान्धकार इव रागान्धं** कृत्याकृत्यविवेकवैकल्यात्, **इन्द्रजाल इव मायामयं** परवञ्चनानिरतत्वात्, **स्वप्न इव मिथ्यादर्शनं** अदृष्टदृष्टनष्टाभिरामत्वात्, **कदलीगर्भ इव असारं, नट इव**

[1] मिव—मु.

क्षणवेषं प्रतिक्षणविकृतवेषत्वात्, नानाविधविचित्रचित्रभित्तिरिव मिथ्यामनोरमं मृत्युः न कदाऽपि मुञ्चति । इत्युक्तेऽर्थे अथोक्तं श्लोकान्तरं—शब्देति । भूतात्मनो ये शब्दस्पर्शादयोऽर्थाः ते अनर्था इव स्थिताः । येषां येषु सक्तो भूतात्मा न हि जात्वपि परं पदं स्वातिरिक्तसर्वापह्नवमुखेन ब्रह्ममात्रतया यत् पद्यते तत् पदं स्वमात्रमिति न कदाऽपि स्मरेत् ॥ १ ॥

संसारप्रतिक्रियारूपं स्वधर्मानुष्ठानम्

अयं वाव खल्वस्य प्रतिविधिर्भूतात्मनो यदेव विद्याऽधिगमं स्वधर्मस्यानुचरणं स्वाश्रमेष्वेवानुक्रमणं स्वधर्म एव सर्वं धत्ते स्तम्भ-शाखे[1]वेतराण्यनेनोर्ध्वभाग्भवत्यन्यथाऽधः पतत्येष स्वधर्मोऽभिहितो यो वेदेषु न स्वधर्मातिक्रमेणाश्रमी भवत्याश्रमेष्वेवावस्थितस्तपस्वी चेत्युच्यत एतदप्युक्तं नातपस्कस्यात्म[2]ज्ञानेऽधिगमः कर्मशुद्धिर्वेत्येवं ह्याह ॥

तपसा प्राप्यते सत्त्वं सत्त्वात् संप्राप्यते मनः ।
मनसा प्राप्यते त्वात्मा ह्यात्मापत्त्या निवर्तते ॥ २ ॥

स्वमुखेनैव भगवान् ब्रह्ममात्रावस्थानलक्षणकैवल्यहेतुं ससाधनं ज्ञानमुपदिशति—अयमिति । अयं वाव वक्ष्यमाणरूपः खलु अस्य भूतात्मनः प्रतिविधिः संसारानर्थप्रतिक्रिया । कोऽयं? यदेव विद्याऽधिगमः, यदित्यव्ययं, योऽयं विद्याऽधिगमः स्वतत्त्वविद्याप्राप्तिः सैव प्रतिविधिः । तत्प्राप्तौ चोपायः स्वाश्रमेष्वेव अनुक्रमणं स्वाश्रमविहितब्रह्मचर्याद्याश्रमेषु अनुप्रवेशनं यथाशास्त्रं प्राप्य ततः स्वधर्मस्य नित्यादिकर्मणोऽनुचरणं अनुष्ठानम् । स्वधर्म एव यथोक्तलक्षणः सर्वं आत्मवर्गं धत्ते । इहामुत्र स्तम्भशाखेव छदिषः

[1] चेत—अ, अ १, अ २, क. [2] ध्याने—अ, अ १, अ २, क.

उभयपार्श्वशाखाधारशाखामध्यस्था स्तम्भशाखा सा यथा **इतराणि** शाखाऽन्तराणि धत्ते तथा **अनेन** धारणात् धर्मसंज्ञकेन धृतं **ऊर्ध्वभाक्** ऊर्ध्वगतिभाक् **भवति**। **अन्यथा** आधारकर्माभावे **अधः पतति**। **एष एव हि स्वधर्मो** यो वेदेषु साङ्गोपाङ्गेषु **अभिहितः**। तत्तद्वर्णाश्रमानुष्ठेयविहितस्वधर्मातिक्रमेण कश्चिदपि **आश्रमी न** भवति, न हि सिद्धो भवति। यतः एवं अतः **आश्रमधर्मेष्वेव अवस्थितः तपस्वीत्युच्यते**। इत्येतदप्युक्तं तदेतदन्यत्राप्युक्तमित्यर्थः। **अतपस्कस्य** यथोक्ततपोरहितस्य **आत्मज्ञानाधिगमो न, कर्मशुद्धिर्वा** पापकर्मसंशुद्धिरपि न भवति **इत्येवं ह्याह** श्रुतिः। यतः एवं अतः **तपसा प्राप्यते सत्वं** ज्ञानवैराग्यादिहेतुसत्वगुणप्राधान्यं, **सत्वात् संप्राप्यते मनः** ब्रह्माकारवृत्तिमन्मनः संप्राप्यते, तादृशेन **मनसा आत्मा प्राप्यते, आत्मापत्त्या निवर्तते**, "न च पुनरावर्तते" इति श्रुतेः। निवर्तत इति शब्दतो न पुनः संसारी भवतीति द्योत्यते॥ २॥

प्रसन्नचित्तस्यैव मोक्षः

अत्रैते श्लोका भवन्ति—

यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति।
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति॥ १॥

स्वयोनावुपशान्तस्य मनसः सत्यकामिनः।
इन्द्रियार्थविमूढस्यानृताः कर्मवशानुगाः॥ २॥

चित्तमेव हि संसारस्तत् प्रयत्नेन शोधयेत्।
यच्चित्तस्तन्मयो भवति गुह्यमेतत् सनातनम्॥ ३॥

चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम्।
प्रसन्नात्माऽऽत्मनि स्थित्वा सुखमव्ययमश्नुते॥ ४॥

समासक्तं [1]यदा चित्तं जन्तोर्विषयगोचरे ।
यद्येवं ब्रह्मणि स्यात्तत् को न मुच्येत बन्धनात् ॥ ५ ॥
मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥ ६ ॥
लयविक्षेपरहितं मनः कृत्वा [2]सुनिश्चलम् ।
यदा यात्यमनीभावं तदा तत् परमं पदम् ॥ ७ ॥
तावदेव निरोद्धव्यं हृदि यावत् क्षयं गतम् ।
एतज्ज्ञानं च मोक्षश्च शेषास्तु ग्रन्थविस्तराः ॥ ८ ॥
समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत् सुखं लभेत् ।
न शक्यते वर्णयितुं गिरा तदा स्वयं तदन्तःकरणेन गृह्यते ॥९॥
अपामपोऽग्निरग्नौ वा व्योम्नि व्योम न लक्षयेत् ।
एवमन्तर्गतं चित्तं पुरुषः प्रतिमुच्यते ॥ १० ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ॥
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ ११ ॥ ३ ॥

"मनसा प्राप्यते" इत्यादिना योऽर्थोऽभिहितः तस्मिन् उक्तार्थे इमे वक्ष्यमाणाः श्लोकाः मन्त्राः भवन्तीत्याह—यथेत्यादि । यथा स्वदाह्येन्धनरहितो वह्निः स्वयोनौ स्वाश्रयभूताङ्गारशकल एवोपशाम्यति तथा चित्तं तत्संवलितचैतन्यं स्वातिरिक्तविषयकवृत्तिक्षयात् स्वयोनौ कूटस्थे उपशाम्यति ॥ १ ॥ एवं स्वयोनावुपशान्तस्य सत्यकामिनः सत्तामात्रमहमस्मीति कामनावतः श्रोत्रादीन्द्रियार्थशब्दादौ अविमूढस्य तदावृतिमोहरहितस्य यावत् सम्यज्ज्ञानं

[1] यथा—क. [2] सुनिश्चितम्—क.

नोदेति तावत् आरब्धादिकर्मवशानुगा अत्यन्तानृताः स्वातिरिक्तदेहाद्यस्तिताऽऽभासा मरुमरीचिकादिवत् मिथ्यात्वेन भान्ति । उदिते तु सम्यज्ज्ञानसूर्ये स्वातिरिक्तदेहाद्याभासोऽस्ति नास्तीति प्रतीतिध्वान्तः कथं स्थातुं पारयति ब्रह्ममात्रस्य निष्प्रतियोगिकत्वात् ॥ २ ॥ तादृशसम्यज्ज्ञानोदयोपायमाह—**चित्तमेवेति** । **चित्तं तदेव** हि सम्यज्ज्ञानावृति**संसारः** । यावत् चित्तं अस्ति नास्तीति भ्रान्तिः नोदेति तदानीमेव सम्यज्ज्ञानं जातमिति मन्तव्यम् । यतः एवं अतः वेदान्तश्रवणादिना महता **प्रयत्नेन** ब्रह्मातिरिक्तचित्तं नास्तीति **शोधयेत्** निर्मूलीकुर्यादित्यर्थः । यच्चित्तः पुरुषः **तन्मयो भवति** तन्मात्रमवशिष्यते इति यत् **तदेतत् सनातनं गुह्यं** परमसिद्धान्तत्वेन गोपनीयत्वात् ॥ ३ ॥ **चित्तप्रसादेन** हि **योगी** शुभाशुभकर्मजातं **हन्ति** "ज्ञानप्रसादेन विशुद्धसत्वः" इति श्रुतेः । तस्मात् **प्रसन्नात्माऽऽत्मनि स्थित्वा अव्ययं परमसुखं अश्नुते** ॥ ४ ॥ यच्चित्तं विषयवत् ब्रह्मसंसक्तं स मुनिः नेच्छन्नपि मुच्यते इत्याह—**समासक्तमिति** । **यस्य जन्तोः चित्तं** विषयासक्तं सत् **विषये** निमज्जति **यद्येवं ब्रह्मणि समासक्तं** चित्तं **तदा बन्धनात् को वा न मुच्येत** । बन्धनस्य बहिश्चित्तमूलत्वात् चित्तापाये कुतो बन्धनमित्यर्थः ॥ ५ ॥ **शुद्धाशुद्धभेदेन मनो द्विविधं** हि । तत्र **अशुद्धं कामसङ्कल्पादि**मत् । **शुद्धं** तु **तद्विवर्जितम्** ॥ ६ ॥ किं च—**यदा** योगबलात् **मनो लयविक्षेपादिदोषरहितं निश्चलं मनः कृत्वा** योगिमनः **अमनीभावमायाति तदा तत्परमं पदं** ब्रह्म **याति** ॥ ७ ॥ **यावत् हृदि** तदवभासकप्रत्यगभिन्ने ब्रह्मणि मनउपलक्षितस्वाविद्यापदतत्कार्यजातं **क्षयं गतं** विरूपविलयं गतं **तावदेव मनो निरोद्धव्यम्** । एतदेव हि स्वातिरिक्तवृत्तिरहितं **ज्ञानं च मोक्षश्च** मोक्षस्य परा काष्ठाऽप्येतदेव **शेषास्तु** बन्धमोक्षप्रतिपादकाः **ग्रन्थविस्तराः** मोक्षशास्त्रबोधितार्थः नातः परमस्तीत्यर्थः, "नातः परं वेदितव्यं हि किञ्चित्" इति मन्त्रवर्णात् ॥ ८ ॥ मलशब्देन शब्दादिविषयसंसृष्टिः उच्यते । निर्विकल्पक**समाधिना निर्धूतमलस्य** स्वात्ममात्रनिवेशि**तस्य चेतसः** स्वावशेषतया **यत्** परमसुखं लभेत् भवेत् **तद्गिरा** वाचा **वर्णयितुं न शक्यते** निरुपमत्वात् । **तत्** सुखं तावत् **स्वयं** ब्रह्माकारपरिणत**अन्तःकरणेन**

गृह्यते, स्वानुभवैकवेद्यमिति यावत् । तथा च श्रुतिस्मृती—"दृश्यते त्वग्र्यया बुद्ध्या" इति, "सुखमात्यन्तिकं यत्तत् बुद्धिग्राह्यमतीन्द्रियम्" इति च ॥ ९ ॥ लययोगरहस्यमुपदिश्यते—अपामिति । अपां मध्ये निवेशिता आपो वा अग्नौ निक्षिप्तोऽग्निर्वा व्योम्नि महाकाशे निक्षिप्तघटाद्यनुगतव्योम वा मिथो भेदेन यथा न लक्ष्यते एवमन्तर्गतं चित्तं तत्कार्यदेहात्मानं वा यदा न लक्षयेत् स्वभिन्नं न पश्यति, "यथैव मृन्मयः कुंभः तद्वद्देहोऽपि चिन्मयः" इति श्रुतेः । तदा पुरुषः संप्रसादः परिमुच्यते स्वातिरिक्तास्तिताभ्रमात् विमुक्तो भवति ॥१०॥ यतः एवं अतो मनुष्याणां बन्धमोक्षहेतुः मन एव । तत्र विषयासक्तं मनो बन्धसाधनम् । निर्विषयं मनस्तु मुक्तिसाधनं स्मृतम् ॥ ११ ॥ ३ ॥

चित्तप्रशमनार्थं भगवदुपासनम्

अथ यथेयं कौत्सायनिस्तुतिः—

त्वं च ब्रह्मा त्वं च वै विष्णुस्त्वं रुद्रस्त्वं प्रजापतिः ।
त्वमग्निर्वरुणो वायुस्त्वमिन्द्रस्त्वं निशाकरः ॥ १ ॥
त्वं मनुस्त्वं यमश्च त्वं पृथिवी त्वमथाच्युतः ।
स्वार्थे स्वाभाविकेऽर्थे च बहुधा तिष्ठसे दिवि ॥ २ ॥
विश्वेश्वर नमस्तुभ्यं विश्वात्मा विश्वकर्मकृत् ।
विश्वभुग्विश्वमायस्त्वं विश्वक्रीडारतिः प्रभुः ॥ ३ ॥
नमः शान्तात्मने तुभ्यं नमो गुह्यतमाय च ।
अचिन्त्यायाप्रमेयाय अनादिनिधनाय चेति ॥ ४ ॥ ४ ॥

अथ यथोपदिष्टार्थहेतुचित्तप्रसादसिद्ध्यै चित्तात्मभगवदुपासनमुपदिश्यते—अथेति । अथ यथेयं कौत्सायनिस्तुतिः तदृषिकोऽयं मन्त्रग्रामः । हे भगवन पुरुष त्वं ब्रह्मा चतुराननः त्वं च विष्णुः त्वं रुद्रः इत्यादेः प्रसिद्धार्थत्वात् ॥ १ ॥ स्वार्थे ब्रह्ममात्रावशेषार्थे सांसारिकत्वेन स्वाभाविके

**अर्थे च बहुधा तिष्ठसे ॥ २–३ ॥ शान्तात्मने** स्वातिरिक्तशान्तवपुषे **नमः ।** इतिशब्दो मन्त्रग्रामपरिसमाप्त्यर्थः ॥ ४ ॥ ४ ॥

उपाधिवशात् आत्मनो जगद्रूपत्वम्

तमो वा इदमेकमास तत् पश्चात्तत् परेणेरितं विषमत्वं प्रयात्येतद्वै रजसो रूपं तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद्वै तमसो रूपं तत्तमः खल्वीरितं तमसः संप्रास्रवत्येतद्वै सत्त्वस्य रूपं तत् सत्त्वमेवेरितं तत् सत्त्वात् संप्रास्रवत् सोंऽशोऽयं यश्चेतनमात्रः प्रतिपुरुषं क्षेत्रज्ञः संकल्पाध्यवसायाभिमानलिङ्गः प्रजापतिस्तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरित्यथ यो ह खलु वावास्य राजसोंऽशोऽसौ स योऽयं ब्रह्माऽथ यो ह खलु वावास्य तामसोंऽशोऽसौ स योऽयं रुद्रोऽथ यो ह खलु वावास्य सात्त्विकोंऽशोऽसौ स योऽयं विष्णुः स वा एष एकस्त्रिधाभूतोऽष्टधैकादशधा द्वादशधाऽपरिमितधा चोद्भूत उद्भूतत्वाद्भूतेषु चरति प्रतिष्ठा सर्वभूतानामधिपतिर्बभूवेत्यसावात्माऽन्तर्बहिश्चान्तर्बहिश्च ॥ ५ ॥

अथ प्रक्रमे असौ खलु वावैतस्यांशो यश्चेतनमात्र इत्युक्तम् । कथं पुनः निरंशस्य अंशसंभव इति? निरुपाधिकसोपाधिकाभ्यां उभयमपि संगच्छत इति प्रकटनाय इदमाम्नायते—तम इति । इदं कृत्स्नं कार्यजातं एकं अखण्डं **तमो** वै तम एव **आस** अवस्थितमभूत् । **तत्** तमः सर्गात् प्राक् **पश्चाच्च** तमसः **परेण** साक्षिणा **ईरितं** कार्योन्मुखीकृतं सत् **विषमत्वं** वैषम्यं **प्रयातीति** वर्तमानत्वप्रयोगः सनातनत्वद्योतकः । **एतद्वै** क्षीणतमस्कप्रकृतिस्वरूपमेव **रजसो रूपम्** । तद्रजः खलु ईरितं विषमत्वं प्रयाति । एतद्वै क्षीणतमोरजस्कं प्रकृतिस्वरूपमेव सत्वस्य रूपं तत्सत्वमेव ईरितमभूत् । ततो रजसः सत्वस्य सारांशो भूमलिङ्गरूपः संप्रास्रवत् निर्गतोऽभूत् । **सोऽयमंशो** विद्याकोशोपाधेः

ब्रह्मणः साक्षात्कार्यभूतत्वात् । कोऽयं तत्कारणभूतः इत्यत्र—चेतनमात्रः कूटस्थांशत्वात् प्रतिपुरुषं क्षेत्रज्ञः सङ्कल्पाध्यवसायाभिमानलिङ्गः प्रजापतिरिति व्याख्यातम् । तस्य भूमलिङ्गज्योतिर्मयस्य भगवतो ब्रह्मा स्वराट्, रुद्रः सम्राट्, विष्णुः विराट्, इत्येताः अग्रे ह वा अग्र्याः तनवः । कथमित्यत आह—अथेति । अथ यो ह खलु वावास्य भूमलिङ्गज्योतिषः राजसोंऽशः असावेव स यः प्रसिद्धोऽयं भगवान् ब्रह्मा चतुराननः । अथ यो ह खलु वावास्य तामसोंऽशोऽसौ स योऽयं रुद्रोऽथ यो ह खलु वावास्य सात्विकोंऽशोऽसौ स योऽयं विष्णुः । तत्र अन्तर्मध्यबहिःसत्वरजस्तमस्को ब्रह्मा ऊर्ध्वमध्याधःसत्वरजस्तमस्कः, अयं रुद्रः बहिर्मध्यान्तारजस्तमस्सत्वः तथा अधोमध्योर्ध्वेषु च, विष्णुः बहिर्मध्यान्तस्तमस्सत्वरजस्कः तथा अधोमध्योर्ध्वेषु चेति । स वा एष भूमलिङ्गज्योतिर्मयः कारणात्मा एक एव सन् उक्ततनुत्रयोपाधितः त्रिधाभूतो भवति । पश्चात् वसुरूपेण अष्टधा पश्चात् रुद्रादित्यरूपेण एकादशधा द्वादशधा च प्रागुक्तरीत्या अनन्तव्यष्टिसंसारिरूपेण अपरिमितधा च उद्भूतः । एवमुद्भूतत्वात् असावेव सर्वप्राण्यन्तर्बहिश्च चरति । अतः सर्वभूतानां अयमेव प्रतिष्ठा । एवं स एव अधिपतिः स्वामी बभूव । असावात्मा स्वाज्ञविकल्पितस्वाविद्यापदतत्कार्यारोपापवादाधिकरणतया तदन्तर्बहिश्च स्थितः, "अन्तर्बहिश्च तत् सर्वं व्याप्य नारायणः स्थितः" इति श्रुतेः । उपाधिनिमित्तोऽयं अंशांशिभावः, वस्तुतो निरंशं ब्रह्ममात्रमवशिष्यते । आवृत्तिः उपनिषत्समाप्त्यर्था ॥ ९ ॥

इति चतुर्थः प्रपाठकः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं प्रकृतोपनिषत्स्फुटम् ॥
मैत्रायणीविवरणग्रन्थसङ्ख्या निगद्यते ।
चतुश्चत्वारिंशदधिचतुःशतमुदीरिता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे चतुर्विंशतिसङ्ख्यापूरकं मैत्रायणीयोपनिषद्विवरणं संपूर्णम्

---

# वज्रसूचिकोपनिषत्

## आप्यायन्तु—इति शान्तिः

वज्रसूचीप्रस्तावः

वज्र[1]सूचीं प्रवक्ष्यामि शास्त्रमज्ञानभेदनम् ।
दूषणं ज्ञानहीनानां भूषणं ज्ञानचक्षुषाम् ॥ १ ॥

यज्ज्ञानाद्यान्ति मुनयो ब्राह्मण्यं परमाद्भुतम् ।
तत्त्रैपदब्रह्मतत्त्वमहमस्मीति चिन्तये ॥

इह खलु सामवेदप्रविभक्तेयं वज्रसूचिकोपनिषत् ब्राह्मण्यनिर्धारणच्छलेन निर्विशेषब्रह्ममात्रपर्यवसानार्थप्रकाशकतया प्रवृत्ता । तस्याः स्वल्पग्रन्थतो विवरणमारभ्यते—**वज्रसूचीमिति** ॥ १ ॥

को वा ब्राह्मणो नाम

[2]ब्रह्मक्षत्रियवैश्यशूद्रा इति चत्वारो वर्णास्तेषां वर्णानां ब्राह्मण एव प्रधान इति वेदवचनानुरूपं स्मृतिभिरप्युक्तम् । तत्र चोद्यमस्ति को वा ब्राह्मणो नाम किं जीवः किं देहः किं जातिः किं ज्ञानं किं कर्म किं [3]धार्मिक इति ॥ २ ॥

[1] सूचिं—अ. [2] ब्राह्मण—अ.

[3] धार्मिकं किं वर्णः, किं पाण्डित्यं इत्यष्टौ प्रश्नाः—अ.

इत्थं प्रतिज्ञाय प्रतिज्ञातार्थं प्रकटयति—ब्रह्मेति । ब्रह्मणा सृष्टचातुर्वर्ण्यं "ब्राह्मणोऽस्य मुखमासीत्" इति, "मुखदेशात् द्विजो जज्ञे क्षत्रियो बाहुदेशतः" इति च, श्रुतिस्मृत्यनुरोधेन ब्राह्मणजातेः प्राधान्यमुक्तं ब्रह्ममात्रज्ञानप्रशंसाऽर्थम् । तत्र चोद्यमस्तीति विकल्पोक्तिः । जीवदेहादिषट्प्रकारेषु को वा स्वाभिमतब्राह्मणपदमर्हतीति विकल्पयति—क इति ॥ २ ॥

न जीवो ब्राह्मणः

तत्र प्रथमो जीवो ब्राह्मण इति चेत्तन्न । अतीतानाग[1]तानेकदेहानां जीवस्यैकरूपत्वात् एकस्यापि कर्मवशादनेकदेहसंभवात् सर्वशरीराणां जीवस्यैकरूपत्वाच्च । तस्मान्न जीवो ब्राह्मण इति ॥३॥

तत्र आद्यविकल्पो जीवो ब्राह्मण्यमर्हतीत्याशङ्क्य तत्पक्षं शिथिलयति—तत्रेति । तत् कथमित्यत्र हेतुत्रयेण जीवस्य ब्राह्मण्यं निराकरोति—अतीतेति । भूतादिकालपरिच्छिन्नदेहानां नानाजातिभवानां नानात्वेऽपि तदारोपाधिकरणजीवस्यैकरूपत्वात् । शिष्टं स्पष्टम् । यस्मात् एवं तस्मात् ॥ ३ ॥

न देहो ब्राह्मणः

तर्हि देहो ब्राह्मण इति चेत्तन्न । आचाण्डालादिपर्यन्तानां मनुष्याणां [2]पाञ्चभौतिकत्वेन देहस्यैकरूपत्वात् जरामरणधर्माधर्मादिसाम्यदर्शनात् । [3]ब्राह्मणः श्वेतवर्णः क्षत्रियो रक्तवर्णो वैश्यः पीतवर्णः शूद्रः कृष्णवर्ण इति नियमाभावात् पित्रादिशरीरदहने पुत्रादीनां ब्रह्महत्यादिदोषसंभवाच्च । तस्मान्न देहो ब्राह्मण इति ॥४॥

[1] तद—उ. तवर्तमानाने—अ.
[2] पशुपक्षिक्रिमिकीटपतङ्गादीनां पा—अ.
[3] तर्हि वर्णो ब्राह्मण इति चेन्न, ब्रा—अ.

जीवस्य ब्राह्मण्याभावेऽपि जीवाधिष्ठेयदेहस्य ब्राह्मण्यं स्यादित्याशङ्क्य हेतुचतुष्टयेन देहस्य ब्राह्मण्याभावमाचष्टे—तर्हीति ॥ ४ ॥

न जातिर्ब्राह्मणः

तर्हि जातिर्ब्राह्मण इति चेत्तन्न । तत्र जात्यन्त[1]रजन्तुष्वनेकजातिसंभवात् । महर्षयो बहवः सन्ति । ऋष्यशृङ्गो [2]मृग्यः, कौशिकः कुशात्, जाम्बूको जम्बूकात्, वाल्मीको वल्मीकात्, व्यासः कैवर्त[3]कन्यकायाम्, शशपृष्ठात् गौतमः, वसिष्ठ [4]उर्वश्याम्, [5]अगस्त्यः कलशे जात इति श्रुतत्वात् । एतेषां जात्या विनाऽप्य[6]ग्रे ज्ञानप्रतिपादिता ऋषयो बहवः सन्ति । तस्मा[7]न्न जातिर्ब्राह्मण इति ॥ ५ ॥

जीवदेहयोः ब्राह्मण्यासम्भवेऽपि जातेः ब्राह्मण्यं स्यादित्याशङ्क्य नियमाभावादिति हेतुना ब्राह्मण्याभावं व्यक्तीकरोति—तर्हीति ॥ ५ ॥

न ज्ञानं ब्राह्मणः

तर्हि ज्ञानं ब्राह्मण इति चेत्तन्न । क्षत्रियादयोऽपि परमार्थदर्शिनोऽभिज्ञा बहवः सन्ति । तस्मान्न ज्ञानं ब्राह्मण इति ॥ ६ ॥

जातेः ब्राह्मण्याभावेऽपि ज्ञानस्य ब्राह्मणत्वं स्यादित्याशङ्क्य क्षत्रियादेरपि ज्ञानसम्भवादिति हेतुना ज्ञानस्यापि ब्राह्मण्याभावमाह—तर्हीति ॥ ६ ॥

[1] रेण्व—अ २, क.
[2] मृग्याः—क.
[3] कन्यायाः—अ. कन्यायां—अ १, अ २, क.
[4] ऊ—अ, क. ऊर्वश्याः—अ.
[5] 'विश्वामित्रः क्षत्रियः, नारदो दासीपुत्रः', इत्यधिकः—अ.
[6] न्ये—अ १.
[7] च न—अ.

न कर्म ब्राह्मणः

तर्हि कर्म ब्राह्मण इति चेत्तन्न । सर्वेषां प्राणिनां प्रारब्ध-संचितागामिकर्मसाधर्म्यदर्शनात् कर्माभिप्रेरिताः सन्तो जनाः क्रियाः कुर्वन्तीति । तस्मान्न कर्म ब्राह्मण इति ॥ ७ ॥

"कर्मणा जायते द्विजः" इति स्मृत्यनुरोधेन कर्मैव ब्राह्मणः स्यादित्याशङ्क्य तत्प्राणिसामान्यसाधारणहेतुना ब्राह्मण्याभावं प्रकटयति—तर्हीति ॥ ७ ॥

न धार्मिको ब्राह्मणः

तर्हि धार्मिको ब्राह्मण इति चेत्तन्न । क्षत्रियादयो हिरण्य-दातारो बहवः सन्ति । तस्मान्न धार्मिको ब्राह्मण इति ॥ ८ ॥

अद्वितीयात्मसाक्षात्कारवानेव ब्राह्मणः

[1]तर्हि को वा ब्राह्मणो [2]नाम । यः कश्चिदात्मानमद्वितीयं जातिगुणक्रियाहीनं षडूर्मिषड्भावेत्यादिसर्वदोषरहितं सत्यज्ञानानन्दानन्तस्वरूपं स्वयं निर्विकल्पमशेष[3]कल्पाधारमशेषभूतान्तर्यामित्वेन वर्तमानमन्तर्बहिश्चाकाशवदनुस्यूतमखण्डानन्दस्वभावमप्रमेयमनुभवैकवेद्यमपरोक्षतया भासमानं करतलामलकवत् साक्षादपरोक्षीकृत्य कृतार्थतया कामरागादिदोषरहितः शमदमादि[4]संपन्नो [5]भावमात्सर्य-तृष्णाऽऽशामोहादिरहितो दम्भाहंकारादिभिरसंस्पृ[6]ष्टचेता वर्तत एव-

[1] "तर्हि पाण्डित्यं ब्राह्मण इति चेत्तन्न, क्षत्रियादयोऽपि पण्डिता बहवः सन्ति, तस्मान्न पाण्डित्यं ब्राह्मण इति" इत्यधिकः—अ.

[2] नाम भवति—उ, उ १.

[3] विकल्पा—अ.

[4] साधनसं—उ.

[5] लोभमदमा—अ, अ १.

[6] ष्टो वेत्ता—अ, अ १.

मुक्तलक्षणो यः स एव ब्राह्मण इति श्रुतिस्मृतिपुराणेतिहासानामभिप्रायः । अन्यथा हि ब्राह्मणत्वसिद्धिर्नास्त्येव । सच्चिदानन्दमात्मानमद्वितीयं ब्रह्म भावयेदात्मानं सच्चिदानन्दं ब्रह्म भावयेदित्युपनिषत् ॥ ९ ॥

तर्हि को वा ब्राह्मणो नाम भवति इत्याशङ्क्य स्वातिरिक्तसर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति यः कोऽपि वा जानाति स एव ब्राह्मणो नेतर इत्याह—**यः कश्चिदिति** । ब्रह्मादिस्तम्बान्तभूतेषु **यः कश्चित्** पुमान् स्वान्तस्थपराक्करणग्रामप्रातिलोम्येन भासमानं प्रत्यञ्चं **आत्मानं** स्वातिरिक्तकरणग्रामाभावात् **अद्वितीयं** यत्र गोत्वादिजातिः शुक्लत्वादिगुणः पाकादिक्रिया च न विद्यते तं **जातिगुणक्रियाहीनं** अशनायादिः **षडूर्मिः** जायते अस्तीत्यादिषड्**भावविकारः** आदिशब्देन कामाद्यरिषड्वर्गत्वगादिषट्कोशादयो गृह्यन्ते । एवमादि**सर्वदोषरहितं सत्यज्ञानानन्दानन्तस्वरूपं** असत्याज्ञानदुःखपरिच्छेदत्रयवैरळ्यात् **स्वयं निर्विकल्पं** सर्वविकल्पासहत्वात् **अशेषकल्पाधारं** सर्वाधारत्वात् ईश्वरात्मना **अशेषभूतान्तर्यामित्वेन वर्तमानं** "एष त आत्मा सर्वान्तरः" इत्यादिश्रुतेः प्रत्यगभिन्नब्रह्मात्मना **अन्तर्बहिश्चाकाशवदनुस्यूतं** स्वव्याप्यान्तर्बाह्यापह्नवात् **निष्प्रतियोगिकाखण्डानन्दस्वभावं** स्वमात्रमिति विना प्रमातुमशक्यत्वात् **अप्रमेयं स्वानुभवैकवेद्यं अपरोक्षतया भासमानं** ब्रह्मात्मानं **करतलविन्यस्तामलकवत् साक्षादपरोक्षीकृत्य कृतार्थतया** यो वर्तते तस्य प्रकृतिं विशिनष्टि — **कामेति** । **कामसङ्कल्परागद्वेषादिदोषरहितः शमदमादिसम्पन्नः** । **भावः** षड्भावः । **मात्सर्य**ग्रहणमरिषड्वर्गोपलक्षणार्थम् । अलब्धव्येच्छा **तृष्णा, आशा** तु लब्धव्येच्छा । **स्वभावतः** इत्यादि**महामोहरहितः** । **दम्भाहङ्कारममकारादिभिः असंस्पृष्टचेताः** । **एवमुक्तलक्षणो यः स एव ब्राह्मणः** इति । "एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च," इत्यारभ्य, "स ब्राह्मणः" इत्यन्तं, "य एतदक्षरं गार्गि विदित्वा अस्मात् लोकात् प्रैति स ब्राह्मणः" "एष नित्यो महिमा ब्राह्मणस्य" इत्यारभ्य "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्यति" इत्यन्तम्,

" शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ॥

इत्यादि,

ये स्वात्महितमिच्छन्ति तैः पूज्योऽयं द्विजोत्तमः । इत्यादि,
मोक्तुमिच्छसि चेद्राजन् ब्राह्मणान् भज सन्ततम् । इति,
ब्राह्मणान् भज कौन्तेय पुनश्च ब्राह्मणान् भज ।

इत्यादिश्रुतिस्मृतिपुराणेतिहासानां परमोऽयमभिप्रायः । अन्यथा एतद्विपर्यये **ब्राह्मणत्वसिद्धिः नास्त्येव** । यस्मादेवं श्रुतिस्मृत्यादिप्रकटितेयं ब्राह्मण्यसिद्धिः तस्मात् द्विजातिसंस्कारालङ्कृतः सन् ब्रह्म जानाति इति ब्राह्मणो भूत्वा स्वातिरिक्तानृतजडदुःखप्रपञ्चापह्नवसिद्धं **सच्चिदानन्दमात्मानमद्वितीयं** निष्प्रतियोगिक**ब्रह्ममात्रं भावयेदात्मानं** सच्चिदानन्दमद्वितीयं **ब्रह्म भावयेदिति** । द्विरुक्तिरादरार्था ॥

अत्रैतद्विचार्यते । यः कश्चिदात्मानं ब्रह्मेति वेद स वै ब्राह्मण इत्युक्तम् । तत्र ब्रह्म जानातीति ब्राह्मण इत्युक्तिः ज्ञानस्तुत्यर्था । वस्तुतो न हि सर्वेषां निर्विशेषब्रह्मवेदनमात्रतो ब्रह्मवित्त्वं विना ब्राह्मणत्वमस्ति मुख्यब्राह्मणशब्दस्य परिव्राजकवाचित्वात्, " एतं वै तमात्मानं विदित्वा ब्राह्मणाः (पुत्राद्येषणात्रयतो) व्युत्थाय भिक्षाचर्यं चरन्ति । " " यो वा एतदक्षरं गार्गि विदित्वा अस्मात् लोकात् प्रैति (कर्मसामान्यं त्यजति) स ब्राह्मणः " इति च त्यजामेव मुख्यब्राह्मणशब्दप्रयोगो दृश्यते । न हि द्विजेतरेषां ब्राह्मणत्वहेतुपारिव्राज्यमस्ति । किञ्च—कामरागादिदोषरहितः शमदमादिसम्पन्नः शान्तो दान्त इत्यादिविशेषणपूगस्तु न हि द्विजेतरेषु समग्रो भवति, द्विजानां सोपरतिशमप्रकृतिकत्वात् । तथा च सर्वज्ञगौडपादाचार्यैरुक्तम्—

विप्राणां विनयो ह्येष शमः प्राकृत उच्यते ।
दमः प्रकृतिदान्तत्वादेवं विद्वान् शमं व्रजेत् ॥ इति ॥

अतो द्विजातिसंस्कारालङ्कृतस्य केवलस्य गौणब्राह्मणत्वं, तस्यैव त्यक्पदं प्रपन्नस्य सर्वापह्नवसिद्धब्रह्ममात्रज्ञानतो मुख्यब्राह्मणत्वम् । मुचुकुन्दं

प्रति भगवानेवमाह—" भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलम् " इति। क्षत्रियादीनां ब्रह्मज्ञानतो ब्रह्मवित्त्वं द्विजत्वे सति ब्रह्मविदां मुख्यब्राह्मणत्वं सिद्धमित्यवधृतम् ॥

इत्युपनिषच्छब्दः प्रकरणसमाप्त्यर्थः ॥ ९ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
वज्रसूच्याख्योपनिषद्व्याख्येयं लिखिता स्फुटम् ।
प्रकृतोपनिषद्व्याख्याग्रन्थोऽशीतिपदं गतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे षट्त्रिंशत्सङ्ख्यापूरकं
वज्रसूचिकोपनिषद्विवरणं सम्पूर्णम्

---

# शारीरकोपनिषत्

## सह नाववतु—इति शान्तिः

### पञ्चभूतात्मकं शरीरम्

अथातः पृथिव्यादिमहाभूतानां समवायं शरीरम्। यत् कठिनं सा पृथिवी यद्द्रवं तदापो यदुष्णं तत्तेजो यत् संचरति स वायुर्यत् सुषिरं तदाकाशम् ॥ १ ॥

तत्त्वग्रामोपायसिद्धं परतत्त्वस्वरूपकम्।
शारीरोपनिषद्वेद्यं श्रीरामब्रह्म मे गतिः ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं शारीरकोपनिषत् चतुर्विंशतितत्त्वेयत्ताप्रकटनपूर्वकं स्वातिरिक्ततत्त्वग्रामासंभवप्रबोधसिद्धब्रह्ममात्रपर्यवसन्ना विजृंभते। अस्याः श्रुतेः संक्षेपतो विवरणमारभ्यते। यथोक्ताधिकारिण उपलभ्य श्रुतिरादौ शरीरेयत्तां प्रकाशयति—अथेति। अथ यथोक्ताधिकारिलाभानन्तरं तस्य परमार्थोपदेशः कर्तव्यः। परमार्थवस्तु ब्रह्ममात्रं, तत्सिद्धेः तदतिरिक्तापह्नवपूर्वकत्वात्, यतः तदियत्तापरिज्ञानं विना न हि तदपह्नोतुं शक्यं, अतः तदियत्ताप्रपञ्चनं न्याय्यमिति। पृथिव्यादिपञ्चभूतोपादानं शरीरमित्यर्थः। कथं तत्पञ्चभूतोपादानं शरीरमित्यत्र विभागशः तन्निदर्शयति—यदिति। शरीरे यत् कठिनम् ॥ १ ॥

ज्ञानेन्द्रियतद्विषयाणां भौतिकत्वम्

श्रोत्रादीनि ज्ञानेन्द्रियाणि । श्रोत्रमाकाशे वायौ त्वगग्नौ चक्षुरप्सु जिह्वा पृथिव्यां घ्राणमिति । एवमिन्द्रियाणां यथाक्रमेण शब्दस्पर्शरूपरसगन्धाश्चैते विषयाः पृथिव्यादिमहाभूतेषु क्रमेणोत्पन्नाः ॥ २ ॥

करणेष्वपि भूतविभाग उच्यते । श्रोत्रादीनि ज्ञानेन्द्रियाणि । तत्र श्रोत्रं आकाशे ॥ २–३ ॥

कर्मेन्द्रियतद्विषयाणां भौतिकत्वम्

वाक्पाणिपादपायूपस्थाख्यानि कर्मेन्द्रियाणि । तेषां क्रमेण वचनादानगमनविसर्गानन्दाश्चैते विषयाः पृथिव्यादिमहाभूतेषु क्रमेणोत्पन्नाः ॥ ३ ॥

अन्तःकरणचतुष्टयम्

मनोबुद्धिरहंकारश्चित्तमित्यन्तःकरणचतुष्टयम् । तेषां क्रमेण संकल्पविकल्पाध्यवसायाभिमानावधारणास्वरूपाश्चैते विषयाः । मनःस्थानं गलान्तं बुद्धेर्वदनमहंकारस्य हृदयं चित्तस्य नाभिरिति ॥ ४ ॥

मनआदेः गोळकस्थानं निर्दिशति—मनःस्थानमिति ॥ ४ ॥

शरीरावयवानां भौतिकत्वप्रपञ्चनम्

अस्थिचर्मनाडीरोममांसाश्चेति पृथिव्यंशाः । मूत्रश्लेष्मरक्तशुक्रस्वेदा अबंशाः । क्षुत्तृष्णाऽऽलस्यमोहमैथुनान्यग्नेः । प्रचारण-

विलेखनस्थूलाक्ष्युन्मेषनिमेषादि वायोः । कामक्रोधलोभमोहभयान्याकाश[1]स्य ॥ ५ ॥

"यत् कठिनं सा पृथिवी" इति शरीर सङ्क्षेपतः पृथिव्यादिभूतविकृतिरुक्ता, इदानीं तदेव विस्तरेण प्रपञ्चयति—अस्थीति ॥ ५ ॥

भूतगुणाः

शब्दस्पर्शरूपरसगन्धाः पृथिवीगुणाः । शब्दस्पर्शरूपरसाश्चापां गुणाः । शब्दस्पर्शरूपाण्यग्निगुणाः । शब्दस्पर्शाविति वायुगुणौ । शब्द एक आकाशस्य ॥ ६ ॥

पूर्वपूर्वपृथिव्यादिकार्यापेक्षया उत्तरोत्तरस्य गुणापकर्षमाचष्टे—शब्देति॥६॥

सत्वादिगुणत्रयकार्याणि

सात्त्विकराजसतामसलक्षणानि त्रयो गुणाः ॥ ७ ॥
अहिंसा सत्यमस्तेयब्रह्मचर्यापरिग्रहाः ।
अक्रोधो गुरुशुश्रूषा शौचं संतोष आर्जवम् ॥ ८ ॥
अमानित्वमदम्भित्वमास्तिकत्वमहिंसता ।
एते सर्वे गुणा ज्ञेयाः सात्विकस्य विशेषतः ॥ ९ ॥
अहं कर्ताऽस्म्यहं भोक्ताऽस्म्यहं वक्ताऽभिमानवान् ।
एते गुणा राजसस्य प्रोच्यन्ते ब्रह्मवित्तमैः ॥ १० ॥
निद्राऽऽलस्ये मोहरागौ मैथुनं चौर्यमेव च ।
एते गुणास्तामसस्य प्रोच्यन्ते ब्रह्मवादिभिः ॥ ११ ॥

[1] स्यांशाः—अ २.

ऊर्ध्वे सात्त्विको मध्ये राजसोऽधस्तामस इति ॥ १२ ॥ सम्यग्ज्ञानं सात्त्विकम् । धर्मज्ञानं राजसम् । तिमिरान्धं तामसमिति ॥ १३ ॥

सत्त्वादिभेदेन गुणानां त्रैविध्यमाह—**सात्त्विकेति** ॥ ७ ॥ तत्र सात्विककार्याण्याह—**अहिंसेति** । अहिंसाद्वयशब्दार्थस्तु—आद्यस्तु प्राण्यहिंसा, द्वितीयस्तु यथावत् आत्मानवलोकनं, देहादावात्मबुद्धेः आत्महिंसारूपत्वात् ;

अखण्डमात्मचैतन्यं देहादित्वेन खण्डनम् ।
आत्महिंसनमाख्यातं तन्न कुर्यात् कदाचन ॥

इति स्मृतेः ॥ ८–९ ॥ राजसकार्याण्याह—**अहमिति** ॥ १० ॥ तामसकार्याण्याह—**निद्रेति** ॥ ११ ॥ सत्वादय ऊर्ध्वादिलोकप्रापका इत्याह—**ऊर्ध्वे इति** । अत्र

ऊर्ध्वं गच्छन्ति सत्वस्था मध्ये तिष्ठन्ति राजसाः ।
जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥

इति स्मृतेः ॥ १२ ॥ सत्वादिकार्यं ज्ञानादिकमित्याह—**सम्यगिति** । "सत्वात् सञ्जायते ज्ञानं" इत्यादि स्मृतेः ॥ १३ ॥

### अवस्थाचतुष्टयम्

जाग्रत्स्वप्नसुषुप्तितुरीयमिति चतुर्विधा अवस्थाः । ज्ञानेन्द्रियकर्मेन्द्रियान्तःकरणचतुष्टयं चतुर्दशकरणयुक्तं जाग्रत् । अन्तःकरणचतुष्टयैरेव संयुक्तः स्वप्नः । चित्तैककरणा सुषुप्तिः । केवलजीवसंयुक्तमेव तुरीयमिति ॥ १४ ॥

व्यष्टयादिप्रपञ्चारोपापवादाधारविश्वादिनिर्वर्त्यजाग्रदाद्यवस्थाचतुष्टयस्वरूपमाह—**जाग्रदिति** । तत्र जाग्रदादिस्वरूपमाह—**ज्ञानेति** । तत्र व्यवहृतेः स्फुट-

त्वात् । अन्तःकरणचतुष्टयैरेव चतुष्टयेनैव संयुक्तः स्वप्नः, तत्रत्यव्यवहृतेर-स्फुटत्वात् । चित्तैककरणा सुषुप्तिः, विषयाभावेपि " सुखमहमस्वाप्सं " इति स्मृतिमात्रपर्यवसन्नत्वात् । केवलजीवसंयुक्तमेव तुरीयमिति केवलजीवस्तुरीय इत्यर्थः ॥ १४ ॥

क्षेत्रज्ञस्वरूपम्

उन्मीलितनिमीलितमध्यस्थजीवपरमात्मनोर्मध्ये जीवात्मा क्षेत्रज्ञ इति विज्ञायते ॥ १५ ॥

क्षेत्रज्ञस्वरूपमाह—उन्मीलितेति । स्वातिरिक्तविषये उन्मीलितदृष्टिः अविद्या, तत्र निमीलितदृष्टिः विद्या, तन्मध्यस्थितौ जीवात्मपरमात्मानौ, तयोर्मध्ये जीवात्मा क्षेत्रज्ञः तत्रात्मात्मीयाभिमतिदर्शनात् ॥ १५ ॥

क्षेत्रस्वरूपम्

बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया ।
शरीरं सप्तदशभिःसूक्ष्मं तल्लिङ्गमुच्यते ॥ १६ ॥
मनो बुद्धिरहंकारः खानिलाग्निजलानि भूः ।
एताः प्रकृतयस्त्वष्टौ विकाराः षोडशापरे ॥ १७ ॥
श्रोत्रं त्वक्चक्षुषी जिह्वा घ्राणं चैव तु पञ्चमम् ।
पायूपस्थौ करौ पादौ वाक्चैव दशमी मता ॥ १८ ॥
शब्दः स्पर्शश्च रूपं च रसो गन्धस्तथैव च ।
त्रयोविंशतिरेतानि तत्त्वानि प्र[प्रा]कृतानि तु ॥ १९ ॥

तद्विषयभूतं क्षेत्रं किमित्यत्र लिङ्गमित्याह—बुद्धीति ॥ १६ ॥ तत्तदभिधानपूर्वकं चतुर्विंशतितत्त्वानि दर्शयति—मन इति ॥ १७ ॥ के प्रकृत्यष्टकविकारा इत्यत्र—श्रोत्रमिति ॥ १८–१९ ॥

प्रकृतिपुरुषौ

चतुर्विंशतिरव्यक्तं प्रधानं पुरुषः परः ॥ इत्युपनिषत् ॥ २० ॥

**अव्यक्तं प्रधानं,** अव्यक्तस्य सर्वानर्थकल्पनाप्रधानत्वात् । एतत्तत्त्वग्रामं स्वेन रूपेण पूरयतीति **पुरुषः** परमात्मा स्वपूर्यसापेक्षपूरकताऽपाये स एव **परो** निष्प्रतियोगिकस्वमात्रमवशिष्यत इत्यर्थः । **इत्युपनिषच्छब्दः** प्रकृतोपनिषत्-समाप्त्यर्थः ॥ २० ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
शारीरकोपनिषदो व्याख्यानं लिखितं लघु ।
शारीरविवृतिग्रन्थः चत्वारिंशदितीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे द्विषष्टिसङ्ख्यापूरकं
शारीरकोपनिषद्विवरणं सम्पूर्णम्

---

# शुकरहस्योपनिषत्

## सह नाववतु—इति शान्तिः

रहस्योपनिषत्प्रस्तावः

अथातो रहस्योपनिषदं व्याख्यास्यामः ॥ १ ॥ देवर्षयो ब्रह्माणं संपूज्य प्रणिपत्य पप्रच्छुर्भगवन्नस्माकं रहस्योपनिषदं ब्रूहीति ॥ २ ॥

प्रज्ञानादिमहावाक्यरहस्यार्थकळेवरम् ।
विकळेबरनिर्वाणत्रिपाद्रामपदं भजे ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं शुकरहस्योपनिषत् प्रणवमहावाक्यार्थप्रकाशकतया निर्विशेषब्रह्ममात्रपर्यवसन्ना प्रसक्तप्रत्यक्परयोरैक्यप्रबोधिनी विजृम्भते । अस्या उपोद्घातादि कठवल्लीवत् ऊह्यम । अस्याः शुकरहस्योपनिषदः सङ्क्षेपतो विवरणमारभ्यते । वक्ष्यमाणाख्यायिकाद्वयमपि विद्यास्तुत्यर्थम् । अत्रादौ यथोक्तसाधनसम्पन्नानुद्दिश्याख्यायिकाद्वयप्रकटनपूर्वकं रहस्यार्थं श्रुतिः प्रकाशयति—अथेति । अथ यथोक्ताधिकारिलाभानन्तरं सर्वश्रुतयो मिळित्वा यतः स्वाज्ञानेन संसारभ्रम उदेति स्वज्ञानादस्तं गच्छति अतः सर्वेषां स्वातिरिक्तभ्रमनिरसनाय सर्वोपनिषदामपि रहस्योपनिषदं यथा सकृच्छ्रवणतः स्वाज्ञलोकाः कृतकृत्या भवेयुः तथा विस्पष्टमाख्यास्याम इति प्रतिज्ञापूर्वकं भाव्याख्यायि-

काद्वयमवतारयति ॥ १ ॥ केयमाख्यायिकेत्यत आह—देवेति । पप्रच्छुः—किमिति? भगवन्निति ॥ २ ॥

शुकाय शिवकृतप्रणवब्रह्मोपदेशः

सोऽब्रवीत्—

पुरा व्यासो महातेजाः सर्ववेदतपोनिधिः ।
प्रणिपत्य शिवं साम्बं कृताञ्जलिरुवाच ह ॥ ३ ॥

श्रीवेदव्यास उवाच—

देवदेव महाप्राज्ञ पाशच्छेददृढव्रत ।
शुकस्य मम पुत्रस्य वेदसंस्कारकर्मणि ॥ ४ ॥
ब्रह्मोपदेशकालोऽयमिदानीं समुपस्थितः ।
ब्रह्मोपदेशः कर्तव्यो भवताऽद्य जगद्गुरो ॥ ५ ॥

ईश्वर उवाच—

मयोपदिष्टे कैवल्ये साक्षाद्ब्रह्मणि शाश्वते ।
विहाय पुत्रो निर्वेदात् प्रकाशं यास्यति स्वयम् ॥ ६ ॥

श्रीवेदव्यास उवाच—

यथा तथा वा भवतु ह्युपनायनकर्मणि ।
उपदिष्टे मम सुते ब्रह्मणि त्वत्प्रसादतः ॥ ७ ॥
[1]सर्वज्ञो भवतु क्षिप्रं मम पुत्रो महेश्वर ।
तव प्रसादसंपन्नो लभेन्मुक्तिं चतुर्विधाम् ॥ ८ ॥

[1] अयं श्लोको नास्ति—उ.

तच्छ्रुत्वा व्यासवचनं सर्वदेवर्षिसंसदि ।
उपदेष्टुं स्थितः शम्भुः साम्बो दिव्यासने मुदा ॥ ९ ॥
कृतकृत्यः शुकस्तत्र समागम्य सुभक्तिमान् ।
तस्मात् स प्रणवं लब्ध्वा [1]पुनरेत्याब्रवीच्छिवम् ॥ १० ॥

तथेति तेषां प्रश्नमङ्गीकृत्य तत्पृष्टार्थे पुरावृत्तमितिहासं **सोऽयं ब्रह्माऽब्रवीदित्याह—पुरेति** ॥ ३ ॥ किं तत् इत्याकाङ्क्षायां मत्पुत्रस्य भवता ब्रह्मोपदेशः कर्तव्यः इत्याह—**देवेति** । ये मां सकृत भजन्ति तेषां स्वमात्रात् च्युतिहेतुस्वातिरिक्तास्तितापाशं छेदयामीति दृढं व्रतं यस्य तस्य सम्बुद्धिः ॥४–५॥ एवं व्यासेन प्रार्थित **ईश्वर उवाच** । किमिति? **मयेति** । **मया** निरावृतेश्वरेण **साक्षात्** मद्याथात्म्यस्वरूपावस्थानलक्षणे शाश्वते कैवल्ये **ब्रह्मणि उपदिष्टे** सति मदुपदेशसमकालं त्वत्पुत्रः स्वातिरिक्तवस्तुसामान्यनिर्वेदात् तीव्रतमवैराग्यात् स्वातिरिक्तास्तिताभ्रमं **विहाय** अपह्नवं कृत्वा तदपह्नवसिद्धं ब्रह्ममात्रप्रकाशं **स्वयं** स्वावशेषधिया **यास्यति** ॥ ६ ॥ एवं ईश्वरसूक्तिमवगम्य **श्रीवेदव्यास उवाच** । किमिति? **यथेति** । परे **ब्रह्मणि** अभेदमापन्नेन भवता मम **सुते** साक्षात् **उपदिष्टे** सति **अयं त्वत्प्रसादतः** कृतकृत्यो भवेत् । तस्मात् भवान् तदुपनायनकर्मणि प्रार्थितः त्वदुपदेशानन्तरं अयं **शुकः यथा तथा वा भवतु** संसरतु परिव्रजतु वेत्यर्थः ॥ ७–८ ॥ एवं व्यासवचनमाकर्ण्य शुकस्य ब्रह्मविद्यामुपदेष्टुमीश्वरः सन्नद्धो भवतीति श्रुतिराह—**तदिति** ॥ ९ ॥ ततः किमित्यत आह—**कृतकृत्य इति** । **शुकस्तु** जातमात्रेण परमेश्वरानन्य**भक्तिमान्** विदितवेद्यतया **कृतकृत्योऽपि** पारमहंस्यधर्मानुकम्पया "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः" इति श्रुत्यनुरोधेन **तत्र** शिवपदसमीपे यथाविधि **समागम्य तस्मात्** प्रणिपातादिना प्रसन्नपरमेश्वरसकाशात् **सोऽयमादौ** तुर्यतुर्यगोचरब्रह्म**प्रणवं लब्ध्वा** दक्षिणामूर्तिमुखतो यथासम्प्रदायमवगम्य महावाक्योपदेशबुभुत्सया **पुनः शिवमेत्याब्रवीत्** ॥ १० ॥

[1] पुनरित्य—उ. पुनरे—अ १, क, उ १.

रहस्योपनिषन्महिमा

श्रीशुक उवाच—

देवादिदेव सर्वज्ञ सच्चिदानन्दलक्षण ।
उमारमण भूतेश प्रसीद करुणानिधे ॥ ११ ॥
उपदिष्टं परं ब्रह्म प्रणवान्तर्गतं परम् ।
तत्त्वमस्यादिवाक्यानां प्रज्ञाऽऽदीनां विशेषतः ॥ १२ ॥
श्रोतुमिच्छामि तत्त्वेन षडङ्गेन यथाक्रमम् ।
वक्तव्यानि रहस्यानि कृपयाऽद्य सदाशिव ॥ १३ ॥

श्रीसदाशिव उवाच—

साधु साधु महाप्राज्ञ शुक ज्ञाननिधे मुने ।
प्रष्टव्यं तु त्वया पृष्टं रहस्यं वेदगर्भितम् ॥ १४ ॥
रहस्योपनिषन्नाम्ना सषडङ्गमिहोच्यते ।
यस्य विज्ञानमात्रेण मोक्षः साक्षान्न संशयः ॥ १५ ॥
अङ्गहीनानि वाक्यानि गुरुर्नोपदिशेत् पुनः ।
सषडङ्गान्युपदिशेन्महावाक्यानि कृत्स्नशः ॥ १६ ॥
चतुर्णामपि वेदानां यथोपनिषदःशिरः ।
इयं रहस्योपनिषत्तथोपनिषदां शिरः ॥ १७ ॥
रहस्योपनिषद्ब्रह्म ध्यातं येन विपश्चिता ।
तीर्थैर्मन्त्रैः श्रुतैर्जप्यैस्तस्य किं पुण्यहेतुभिः ॥ १८ ॥
वाक्यार्थस्य विचारेण यदाप्नोति शरच्छतम् ।
एकवारजपेनैव ऋष्यादिन्यासतश्च तत् ॥ १९ ॥

श्रीशुक उवाच—किमिति? देवादिदेवेति। हे देवादिदेवेति सप्तधा सम्बोध्य स्वामिन् परं ब्रह्म प्रणवान्तर्गतं जाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तकलनायाः परं तुर्यतुर्यब्रह्मयाथात्म्यं उपदिष्टं, तेनैव मे कृतकृत्यता स्यादित्यत्र न हि संशयोऽस्ति, तुर्यातीतावधूतयोः महावाक्योपदेशाधिकारः परमहंसस्यापीति श्रुत्यर्थमाननाय पारिव्राज्यसम्प्रदायप्रवृत्तये च प्रणवाद्यवयवसञ्जातं तत्त्वमस्यादिमहावाक्यजातं षडङ्गेन साकं श्रोतुमिच्छामि, केवलकृपयोपदिशेति ॥ ११–१३॥ श्रीशुकेनैवं पृष्टो भगवान् श्रीसदाशिव उवाच। किमिति—साधु साध्विति। यत् त्वया पृष्टं तत् साधु साध्विति श्रीशुकं श्लाघयन् यद्विज्ञानतः साक्षान्मोक्षो भवति तत्ते सषडङ्गं प्रवक्ष्यामीति प्रतिज्ञायाथ रहस्योपनिषदः सर्वोपनिषन्मस्तकत्वं तन्मुखात् ब्रह्म ध्यायतां कृतकृत्यतां वाक्यार्थविचारापेक्षया वक्ष्यमाणऋष्यादिषडङ्गसहितैकवारजपस्य फलाधिक्यं च भवतीत्युक्त्वा ॥ १४–१९ ॥

साङ्गो महावाक्यजपः

ॐ अस्य श्रीमहावाक्यमहामन्त्रस्य हंस ऋषिः। अव्यक्तगायत्री छन्दः। परमहंसो देवता। हं बीजम्। सः शक्तिः। सोऽहं कीलकम्। मम परमहंसप्रीत्यर्थे महावाक्यजपे विनियोगः। सत्यं ज्ञानमनन्तं ब्रह्म अङ्गुष्ठाभ्यां नमः। नित्यानन्दो ब्रह्म तर्जनीभ्यां स्वाहा। नित्यानन्दमयं ब्रह्म मध्यमाभ्यां वषट्। यो वै भूमा अनामिकाभ्यां हुम्। यो वै भूमाधिपतिः कनिष्ठिकाभ्यां वौषट्। एकमेवाद्वितीयं ब्रह्म करतलकरपृष्ठाभ्यां फट्। सत्यं ज्ञानमनन्तं ब्रह्म हृदयाय नमः। नित्यानन्दो ब्रह्म शिरसे स्वाहा। नित्यानन्दमयं ब्रह्म शिखायै वषट्। यो वै भूमा कवचाय हुम्। यो वै भूमाधिपतिः नेत्रत्रयाय वौषट्। एकमेवाद्वितीयं ब्रह्म अस्त्राय फट्। भूर्भुवः सुवरोमिति दिग्बन्धः ॥ २० ॥

ध्यानम्—

नित्यानन्दं परमसुखदं केवलं ज्ञानमूर्तिं
विश्वातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम् ।
एकं नित्यं विमलमचलं सर्वधीसाक्षिभूतं
भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि ॥ २१ ॥

अथ महावाक्यानि चत्वारि । यथा—प्रज्ञानं ब्रह्म । अहं ब्रह्मास्मि । तत्त्वमसि । अयमात्मा ब्रह्म । तत्त्वमसीत्यभेदवाचकं ये जपन्ति ते शिवसायुज्यमुक्तिभाजो भवन्ति ॥ २२ ॥

अथ चतुर्वेदगतमहावाक्यचतुष्टयस्य षडङ्गमुपदिशति—ओमिति ॥२०॥ **नित्यानन्दं** अनित्यविषयानन्दविलक्षणत्वात्, **परमसुखदं** भजत्स्वानन्दप्रदत्वात्, **केवलं** अशेषविशेषाभावात्, **ज्ञानमूर्तिं** भौतिकदेहवैरल्यात्, **विश्वातीतं** विश्वाधिकत्वात्, **गगनसदृशं** निरवयवत्वात्, **तत्त्वमस्यादिलक्ष्यं** प्रत्यगभिन्नब्रह्मरूपत्वात्, "तत्त्वंपदलक्ष्यं प्रत्यगभिन्नं ब्रह्म" इति श्रुतेः, **एकं** अनेकस्य मृग्यत्वात्, **नित्यं** अनित्याभावात्, **विमलं** मलवदज्ञानासम्भवात्, **अचलं** अन्तःकरणबाह्यत्वात्, **सर्वधीसाक्षिभूतं** स्वसाक्ष्यधीवृत्तिसहस्रसत्त्वे तद्भावाभावप्रकाशकतया तत्साक्षित्वात्, **भावातीतं** भावनाऽगम्यत्वात्, **त्रिगुणरहितं** निर्गुणत्वात्, उक्तविशेषणविशिष्टं **सद्गुरुं** यः स्वाज्ञानमोचकः **तं नमामि** तदस्मीति तत्पदं यामीत्यर्थः ॥ २१–२३ ॥

साङ्गस्तत्पदजपः

तत्पदमहामन्त्रस्य । हंस ऋषिः । अव्यक्तगायत्री छन्दः । परमहंसो देवता । हं बीजम् । सः शक्तिः । सोऽहं कीलकम् । मम सायुज्यमुक्त्यर्थे जपे विनियोगः । तत्पुरुषाय अङ्गुष्ठाभ्यां नमः ।

ईशानाय तर्जनीभ्यां स्वाहा । अघोराय मध्यमाभ्यां वषट् । सद्योजाताय अनामिकाभ्यां हुम् । वामदेवाय कनिष्ठिकाभ्यां वौषट् । तत्पुरुषेशानाघोरसद्योजातवामदेवेभ्यः करतलकरपृष्ठाभ्यां फट् ॥ एवं हृदयादिन्यासः ॥ भूर्भुवःसुवरोमिति दिग्बन्धः ॥ २३ ॥

ध्यानम्—

ज्ञानं ज्ञेयं ज्ञानगम्यादतीतं शुद्धं बुद्धं मुक्तमप्यव्ययं च ।
सत्यं ज्ञानं सच्चिदानन्दरूपं ध्यायेदेवं तन्महो भ्राजमानम् ॥

ज्ञानं सत्ववृत्तित्वात्, ज्ञेयं शबळब्रह्मरूपं, ज्ञानगम्यादतीतं ज्ञानगम्यं शबळं तस्मादप्यतीतं निर्विशेषत्वात्, अत एव शुद्धं शुद्धचैतन्यरूपत्वात्, बुद्धं चिन्मात्रतया बुद्धत्वात्, स्वातिरिक्तभ्रमतो मुक्तं, स्वातिरिक्तमुक्तत्वे स्वयमपि व्येतीत्यत आह—मुक्तमप्यव्ययम् । चशब्दान्निष्प्रतियोगिकाव्ययत्वं द्योत्यते । सत्यं असत्यप्रपञ्चविलक्षणत्वात्, ज्ञानं अजडत्वात्, सच्चिदानन्दरूपं अनृतजडदुःखग्रासत्वात्, यत् एवंविशेषणविशिष्टं महो भ्राजमानं अवशिष्यते तत् स्वयमेवेति ध्यायेदित्यर्थः ॥ २४–२५ ॥

साङ्गस्त्वंपदजपः

त्वंपदमहामन्त्रस्य विष्णुर्ऋषिः । गायत्री छन्दः । परमात्मा देवता । ऐं बीजम् । क्लीं शक्तिः । सौः कीलकम् । मम मुक्त्यर्थे जपे विनियोगः । वासुदेवाय अङ्गुष्ठाभ्यां नमः । संकर्षणाय तर्जनीभ्यां स्वाहा । प्रद्युम्नाय मध्यमाभ्यां वषट् । अनिरुद्धाय अनामिकाभ्यां हुम् । वासुदेवाय कनिष्ठिकाभ्यां वौषट् । वासुदेव-संकर्षणप्रद्युम्नानिरुद्धेभ्यः करतलकरपृष्ठाभ्यां फट् ॥ एवं हृदयादि-न्यासः ॥ भूर्भुवः सुवरोमिति दिग्बन्धः ॥ २६ ॥

ध्यानम्—

जीवत्वं सर्वभूतानां सर्वत्राखण्डविग्रहम् ।
चित्ताहंकारयन्तारं जीवाख्यं त्वंपदं भजे ॥ २६ ॥

ब्रह्मादिस्तम्बान्तानां सर्वभूतानां यज्जीवनहेतुजीवत्वं सर्वत्र पराग्भावापाये अखण्डानन्दविग्रहं चित्ताहङ्कारादिपराग्भावप्रसक्तौ तत्प्रवृत्तिनिमित्ततया यन्तारं तद्भावाभावप्रकाशकं च जीवाख्यं प्रत्यञ्चमात्मानं त्वंपदलक्ष्यं भजे ॥ २६–२७ ॥

साङ्गः असिपदजपः

असिपदमहामन्त्रस्य मन ऋषिः । गायत्री छन्दः । अर्धनारीश्वरो देवता । अव्यक्तादिर्बीजम् । नृसिंहः शक्तिः । परमात्मा कीलकम् । जीवब्रह्मैक्यार्थे जपे विनियोगः । पृथ्वीद्व्यणुकाय अङ्गुष्ठाभ्यां नमः । अब्द्व्यणुकाय तर्जनीभ्यां स्वाहा । तेजोद्व्यणुकाय मध्यमाभ्यां वषट् । वायुद्व्यणुकाय अनामिकाभ्यां हुम् । आकाशद्व्यणुकाय कनिष्ठिकाभ्यां वौषट् । पृथिव्यप्तेजोवाय्वाकाशद्व्यणुकेभ्यः करतलकरपृष्ठाभ्यां फट् ॥ एवं हृदयादिन्यासः ॥ भूर्भुवः सुवरोमिति दिग्बन्धः ॥ २७ ॥

ध्यानम्—

जीवो ब्रह्मेति वाक्यार्थं यावदस्ति मनःस्थितिः ।
[1]ऐक्यत्वं तल्लये कुर्वन् ध्यायेदसिपदं सदा ॥ २८ ॥

एवं महावाक्यषडङ्गान्युक्तानि ॥ २९ ॥

[1] ऐक्यं तत्त्वं लये—मु. ऐक्यं तावत्तयोः—अ.

यो जीवत्वेन अभिमतः वेदान्तश्रवणजनितबोधेन स्वगतजीवत्वापाये स एव ब्रह्मेति वाक्यार्थे यावन्मनस्स्थितिः अस्ति तावत् जीवोऽयं परोऽयमिति यो भेदः तल्लये तत्त्वंपदलक्ष्ययोः ऐक्यं कुर्वन् तथाऽसिपदार्थं सदा ध्यायेत् ॥ २८–३० ॥

महावाक्यानामर्थः

अथ रहस्योपनिषद्विभागशो वाक्यार्थश्लोकाः प्रोच्यन्ते ॥३०॥
येनेक्षते शृणोतीदं जिघ्रति व्याकरोति च ।
स्वाद्वस्वादु विजानाति तत् प्रज्ञानमुदीरितम् ॥ ३१ ॥
चतुर्मुखेन्द्रदेवेषु मनुष्याश्वगवादिषु ।
चैतन्यमेकं ब्रह्मातः प्रज्ञानं ब्रह्म मय्यपि ॥ ३२ ॥
परिपूर्णः परात्माऽस्मिन् देहे विद्याऽधिकारिणि ।
बुद्धेः साक्षितया स्थित्वा स्फुरन्नहमितीर्यते ॥ ३३ ॥
स्वतः पूर्णः परात्माऽत्र ब्रह्मशब्देन वर्णितः ।
अस्मीत्यैक्यपरामर्शात् तेन ब्रह्म भवाम्यहम् ॥ ३४ ॥
एकमेवाद्वितीयं सन्नामरूपविवर्जितम् ।
सृष्टेः पुराऽधुनाऽप्यस्य तादृक्त्वं तदितीर्यते ॥ ३५ ॥
श्रोतुर्देहेन्द्रियातीतं वस्त्वत्र त्वंपदेरितम् ।
एकता ग्राह्यतेऽसीति तदैक्यमनुभूयताम् ॥ ३६ ॥
स्वप्रकाशापरोक्षत्वमयमित्युक्तितो मतम् ।
अहंकारादिदेहान्तात् प्रत्यगात्मेति गीयते ॥ ३७ ॥
दृश्यमानस्य सर्वस्य जगतस्तत्त्वमीर्यते ।
ब्रह्मशब्देन तद्ब्रह्म स्वप्रकाशात्मरूपकम् ॥ ३८ ॥

तत्र प्रज्ञानशब्दार्थमाह—**येनेति**। **येन** प्रकाशितकरणेनायं **ईक्षते इदं** शब्दजातं **शृणोति जिघ्रति व्याकरोति** वाग्व्यापारं करोति। शिष्टकरणोपलक्षणार्थः **चशब्दः**। **इदं स्वादु इदं अस्वादु** इति **विजानाति तदेव प्रज्ञानमित्युदीरितम्**। उक्तार्थे "कोऽयमात्मेति वयमुपास्महे" इत्यारभ्य "सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति" इत्यन्तश्रुतेः॥ ३१॥ "प्रज्ञानं ब्रह्म" इत्यत्र श्रुतिः प्रज्ञानशब्दार्थं व्याख्याय ब्रह्मशब्दार्थं व्याचष्टे—**चतुर्मुख इति**। **चतुर्मुखेन्द्रादिदेवेषु मनुष्याश्वगवादिषु**, आदिशब्देन स्तम्बान्तभूतानि गृह्यन्ते। तेषु व्यक्तितो भिन्नेष्वपि घटशरावाद्यनुस्यूतव्योमवत् सर्वभूतानुस्यूत**चैतन्यं ब्रह्मैकमेव**। यत एवं **अतः प्रज्ञानं ब्रह्म मय्यपि**। प्रज्ञानशब्देन प्रत्यगुच्यते, ब्रह्मशब्देन प्रत्यगभिन्नपरमात्मोच्यते, "एष ब्रह्म एष इन्द्रः" इत्यादि "प्रज्ञा प्रतिष्ठा प्रज्ञानं ब्रह्म" इत्यन्तश्रुतेः॥ ३२॥ ऋग्वेदप्रविभक्तैतरेयगतं "प्रज्ञानं ब्रह्म" इति महावाक्यं व्याख्याय, अथ शुक्लयजुर्वेदप्रविभक्तबृहदारण्यकगतं "अहं ब्रह्मास्मि" इति वाक्यं इमौ मन्त्रौ व्याकुरुतः। तत्र अहंशब्दार्थमाह—**परिपूर्ण इति**। यः प्रसक्ताविद्यापदतत्कार्यारोपापवादाधारतया **परिपूर्णो** भवति सोऽयं परमात्मा ससाधनब्रह्म**विद्याधिकारिणि देहे** विद्यमानबुद्धेः अनेकवृत्तिरूपाया भावाभाव**साक्षितया स्थित्वा** प्रत्यग्रूपेण **स्फुरन्नहमितीर्यते**॥ ३३॥ ब्रह्मशब्दार्थमाह—**स्वत इति**। व्याप्य नैरपेक्ष्येण **स्वत** एव यः परिपूर्णः सोऽयमात्मा **अत्र** अस्मिन् प्रकरणे **ब्रह्मशब्देन वर्णितः**। अस्मिशब्दार्थमाह—**अस्मीति**। अहं ब्रह्मास्मि, ब्रह्मैवाहमस्मि, **इत्यैक्यपरामर्शात् तेन** व्यतिहारानुसन्धानेन **ब्रह्म भवाम्यहम्**। अस्मिशब्दः प्रत्यक्परचितोरैक्यघटकार्थः॥ ३४॥ ऋगादिवेदद्वयगतवाक्यद्वयं व्याख्याय सामवेदप्रविभक्तछान्दोग्योपनिषन्निष्ठतत्त्वमसीति वाक्ये तत्पदार्थं स्फुटयति—**एकमिति**। **यन्नामरूपविवर्जितं** सत् **एकमेवाद्वितीयं** सजातीयविजातीयस्वगतभेदकलनाविरळं स्वातिरिक्तविश्व**सृष्टेः पुरा अधुना** स्थितिकाले, **अपि**शब्दात् प्रळयानन्तरे च, अस्य सतः **तादृक्त्वं** नामरूपकलनावैरळ्येन सजातीयादिभेदत्रयराहित्यं **तत्पदलक्ष्यं इतीर्यते**॥ ३५॥ त्वंपदार्थमाह—**श्रोतुरिति**।

श्रोतुः जीवस्य देहेन्द्रियोपलक्षितदेहत्रयातीतं यत् वस्तु अस्ति प्रत्यगर्थं तद्धि त्वंपदेनेरितं प्रोक्तमित्यर्थः। असिपदार्थमाह—एकतेति। तत् त्वमसि, त्वं तदसि, इति तत्त्वंपदलक्ष्ययोर्यत् एकता एकत्वं ग्राह्यते गृह्यते तदैक्यं विद्वद्भिः अनुभूयताम् ॥ ३६ ॥ वेदत्रयगतवाक्यत्रयं व्याख्याय अथर्वणवेदप्रविभक्त-माण्डूक्योपनिषन्निष्ठायमात्माब्रह्मेत्यत्र अयंशब्दार्थमाह—स्वेति। अयमहमस्मीत्युक्तितः साधनान्तरनैरपेक्ष्येण स्वयंप्रकाशकतया इतरपदार्थावभासकत्वं अपरोक्षत्वं च मतं अभिप्रेतमित्यर्थः। आत्मशब्दार्थमाह—अहङ्कारादीति। अहङ्कारादिदेहान्तात् पराग्भावात् प्रातिलोम्येन अञ्चतीति प्रत्यक् स चासौ तत् सर्वं अततीति प्रत्यगात्मेति गीयते ॥ ३७ ॥ ब्रह्मशब्दार्थमाह—दृश्यमानस्येति। यत् ब्रह्मशब्देन दृश्यमानस्य सर्वस्य जगतः तत्त्वमीर्यते जगतो ब्रह्मसत्ताऽतिरिक्तसत्तावैरल्यात् तद्ब्रह्म स्वप्रकाशात्मरूपकं अनृतजडदुःखात्मकप्रपञ्चवैलक्षण्येन सच्चिदानन्दमात्रं ब्रह्मेत्यर्थः, "सच्चिदानन्दमात्रोऽहं" इति श्रुतेः। ऋगादिचतुर्वेदेषु प्रातिस्विकेनैकैकं महावाक्यं वर्तते। अस्यां तु रहस्योपनिषदि चत्वारि महावाक्यानि विद्यन्ते। अत इयमुपनिषत् वेदमस्तक-मस्तकतया परमरहस्यतां भजतीति भावः ॥ ३८ ॥

शुकस्य स्वानुभवप्रकटनम्

अनात्मदृष्टेरविवेकनिद्रामहंममस्वप्नगतिं गतोऽहम्।
स्वरूपसूर्येऽभ्युदिते स्फुटोक्तैर्गुरोर्महावाक्यपदैः प्रबुद्धः ॥ ३९ ॥

श्रीशुकः एवं परमेश्वरसकाशात् ब्रह्मप्रणवमहावाक्यचतुष्टयं सार्थं गृहीत्वा भूयोऽपि कृतार्थतां प्राप्त इव लोकानुग्रहधिया स्वानुभवं प्रकटयति—अनात्मेति। भवदुपदेशात् पुरा अनात्मदृष्टेः मम सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्व-मात्रमिति अविवेकनिद्रा ब्रह्ममात्रावरणरूपिणी स्थिता। तस्यां महानिद्रायां स्वान्यत्राहंममत्वाभिमानलक्षणस्वप्नगतिं गतवानस्मि। इदानीं तु भगवत्कटाक्षतः ब्रह्ममात्रस्वरूपसूर्ये श्रीगुरोः स्फुटोक्तैः महावाक्यपदैः उदिते सति अथ हे

स्वामिन् स्वाज्ञाननिद्रातः प्रबुद्धोऽस्मि सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रभावं गतोऽस्मीत्यर्थः ॥ ३९ ॥

जीवेशयोः ऐक्योपपत्तिः

वाच्यं लक्ष्यमिति द्विधाऽर्थसरणी वाच्य[क्य]स्य हि त्वंपदे
वाच्यं भौतिकमिन्द्रियादिरपि यल्लक्ष्यं त्वमर्थश्च सः ।
वाच्यं तत्पद ईशताकृतमतिर्लक्ष्यं तु सच्चित्सुखा-
नन्दब्रह्म तदर्थ एष च तयोरैक्यं त्वसीदं पदम् ॥ ४० ॥
त्वमिति तदिति कार्ये कारणे सत्युपाधौ
द्वितयमितरथैकं सच्चिदानन्दरूपम् ।
उभयवचनहेतू देशकालौ च हित्वा
जगति भवति सोऽयं देवदत्तो यथैकः ॥ ४१ ॥
कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।
कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते ॥ ४२ ॥

तत्त्वंपदार्थेशजीवयोः कारणाद्युपाधिकत्वेन तेजस्तिमिरयोरिव तयोरैक्यासंभवं स्वाज्ञाः मन्येरन्निति तेषां तद्भ्रमं मार्ष्टुं निरपेक्षं श्रीशुकं व्याजीकृत्य सोपायं प्रत्यक्परचितोरैक्योपपत्तिमाचष्टे—वाच्यमिति । तत्त्वंपदयोः **वाच्यं लक्ष्यमिति द्विधा अर्थसरणी** विद्येते । तत्र त्वंपदे विकल्पितवाच्यस्य स्वरूपमाह— **भौतिकमिन्द्रियादिरपीति** । शरीरत्रयतदभिमतिः त्वंपदवाच्यमित्यर्थः । यः शरीरत्रयावभासकः प्रत्यगात्मा त्वंपदार्थः सोऽयं त्वंपदलक्ष्यमिति विज्ञेयः । **तत्पदे** या **ईशताकृतमतिः** सर्वज्ञत्वसर्वेश्वरत्वादिः सेयं तत्पद**वाच्यं**, तत्पद**लक्ष्यं तु** तदर्थभूतसच्चिदानन्दब्रह्म । **तयोरैक्य**घटकं **त्वसीदं पदम्** ॥४०॥ **त्वमिति तदिति कार्ये कारणे सत्युपाधौ** स्वाज्ञदृष्टिप्रसक्तं तत् **द्वितयं** द्वैतं

भवति । अतस्तत् इतरथा कार्यकारणमात्रोपाधिपरित्यागेन कार्यकारणोपाध्यसंस्पृष्टं तत्त्वंपदलक्ष्यं **सच्चिदानन्दरूपं** ब्रह्म एकमेव । तत्र दृष्टान्तमाह—**उभयेति** । **यथा** एको देवदत्तः पुरा काश्मीरदेशे प्रातःकाले राजाङ्गसम्पदा जुष्टो मण्डलेश्वरो दृष्टः क्वचिद्देशकालवैपरीत्यात् केरळदेशे भिक्षुपरिकरकौपीनावशिष्टोऽयमपराह्णकाले दृष्टः तत्र राजभिक्षुकोभयवचनहेतू तद्देशतत्कालौ एतद्देशैतत्कालौ च हित्वा योऽयं तद्देशतत्काले मण्डलेश्वरो दृष्टः सोऽयमेतद्देश एतत्काले भिक्षुः दृष्टः उभयपरित्यागात् देवदत्तमात्रो लक्ष्यते ॥ ४१ ॥ तथा ईश्वरत्वजीवत्वे विहाय चिन्मात्रमवशिष्टं लक्ष्यत इत्याह—**कार्येति** । **कार्यकारणोपाधिपरित्यागादपह्नवात् निष्प्रतियोगिकपूर्णबोध एव अवशिष्यते** ॥ ४२ ॥

कैवल्यसाधनज्ञानोपायः

श्रवणं तु गुरोः पूर्वं मननं तदनन्तरम् ।
निदिध्यासनमित्येतत् पूर्णबोधस्य कारणम् ॥ ४३ ॥
अन्यविद्यापरिज्ञानमवश्यं नश्वरं भवेत् ।
ब्रह्मविद्यापरिज्ञानं ब्रह्मप्राप्तिकरं स्थितम् ॥ ४४ ॥
रहोवाक्यान्युपदिशेत् सषडङ्गानि देशिकः ।
केवलं न हि वाक्यानि ब्रह्मणो वचनं यथा ॥ ४५ ॥

पूर्णबोधतया अवस्थानलक्षणकैवल्यसाधनज्ञानोपायमाह—**श्रवणं त्विति** । वेदान्तश्रवणादिनिष्पन्नज्ञानमेव पूर्णबोधाप्तिकारणं साधनमित्यर्थः ॥ ४३ ॥ ज्ञानेतरसाधनेनापि तत्पदमाप्तुं शक्यमित्यत आह—**अन्येति** । ज्ञानेतरकर्मादिसाधनं नश्वरस्वर्गादिफलदं, ज्ञानमेव नित्यकैवल्यसाधनमित्यत्र—"नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेः ॥ ४४ ॥ देवर्षीन् ब्रह्मेदमाह—**रह इति** । यथा पारमहंस्यधर्मालङ्कारं श्रीशुकं प्रति परमेश्वरेण सषडङ्गानि महावाक्यान्युपदिष्टानि तथेतरोऽपि परमेश्वरभावमापन्नो **देशिकः** श्रीशुकवद्योग्याधिकारिणे संसार-

निरपेक्षाय रहोवाक्यानि रहस्यानामपि परमरहस्यभूतमहावाक्यानि सषडङ्गानि उपदिशेत्, न हि केवलमहावाक्यान्युपदिशेदिति देवर्षीन् प्रति ब्रह्मणो वचनमेतदित्यर्थः ॥ ४५ ॥

ब्रह्मज्ञानेन सर्वात्मभावप्राप्तिः

ईश्वर उवाच—

एवमुक्त्वा मुनिश्रेष्ठ रहस्योपनिषच्छुक ।
मया पित्राऽनुनीतेन व्यासेन ब्रह्मवादिना ॥ ४६ ॥
ततो ब्रह्मोपदिष्टं वै सच्चिदानन्दलक्षणम् ।
जीवन्मुक्तः सदा ध्यायन् नित्यस्त्वं विहरिष्यसि ॥ ४७ ॥
यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।
तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥ ४८ ॥
उपदिष्टः शिवेनेति जगत्तन्मयतां गतः ।
उत्थाय प्रणिपत्येशं त्यक्ताशेषपरिग्रहः ॥ ४९ ॥
परब्रह्मपयोराशौ प्लवन्निव ययौ तदा ।
प्रव्रजन्तं तमालोक्य कृष्णद्वैपायनो मुनिः ॥ ५० ॥
अनुव्रजन्नाजुहाव पुत्रविश्लेषकातरः ।
प्रतिनेदु[1]स्तदा [2]सर्वं जगत् स्थावरजङ्गमम् ॥ ५१ ॥
तच्छ्रुत्वा सकलाकारं व्यासः सत्यवतीसुतः ।
पुत्रेण सहितः प्रीत्या परानन्दमुपेयिवान् ॥ ५२ ॥

[1] स्तथा—अ, अ १, उ. [2] सर्वे—अ, अ १, अ २, क.

योरहस्योपनिषदमधीते गुर्वनुग्रहात् ।
सर्वपापविनिर्मुक्तः साक्षात् कैवल्यमश्नुते ॥ साक्षात्
कैवल्यमश्नुते ॥ इत्युपनिषत् ॥ ५३ ॥

ततः ईश्वरोक्तिमनुक्रामति—**ईश्वर** उवाचेति ॥ ४६–४७ ॥ एवं मयोपदिष्टो मद्याथात्म्यं भजतीत्याह—**य** इति । ॐ इति **यः स्वरः** प्रणवाख्यो **वेदादौ प्रोक्तः** तथा **च** वेदान्ते वेदपाठावसानेऽपि प्रतिष्ठितः, ओमिति हि वेदः समाप्यते, **तस्य प्रकृतिलीनस्य** स्वभावं भजतो **यः परः सोऽयं** मच्छिष्यो मुनिः **महेश्वरः** परमात्मैव भवति ॥ ४८ ॥ तदेव प्रपञ्चयति—**उपदिष्ट** इति । शिवोपदेशमहिम्ना सर्वात्माऽयं भवतीत्यर्थः । ततः किमित्यत आह—**उत्थायेति** । परमेश्वरप्रसादतश्चिरं समाधिमनुभूय ततः कदाचित् समुत्थाय **त्यक्ताशेषपरिग्रहः** सन् परमेश्वरमनेकशः प्रणिपत्य तत्प्रसादतः तत्सर्वात्मभावमेत्य यथेच्छं प्रवव्राज ॥ ४९ ॥ ज्ञानफलं निदर्शयति—**प्रव्रजन्तमिति** । एवं प्रत्यक्षीकृत-सर्वात्मभावेन आत्मजेन सहितो व्यासः परमानन्दं जगामेत्यर्थः ॥ ५०–५२ ॥ यथावच्छास्त्राध्ययनसामान्यविशेषफलमाह—**य** इति । आवृत्तिरादरार्था । **इत्युपनिषच्छब्दः** रहस्योपनिषत्समाप्त्यर्थः ॥ ५३ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
रहस्योपनिषद्व्याख्या लिखिता हरितुष्टये ।
रहस्योपनिषद्व्याख्याग्रन्थोऽशीत्यधिकं शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चत्रिंशत्सङ्ख्यापूरकं
शुकरहस्योपनिषद्विवरणं सम्पूर्णम्

# सर्वसारोपनिषत्

## सह नाववतु—इति शान्तिः

बन्धादिविषयाः प्रश्नाः

कथं बन्धः कथं मोक्षः का विद्या काऽविद्येति । जाग्रत्स्वप्नसुषुप्तितुरीयं च कथम् । अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयकोशाः कथम् । कर्ता जीवः पञ्चवर्गः क्षेत्रज्ञः साक्षी कूटस्थोऽन्तर्यामी कथम् । प्रत्यगात्मा परमात्मा माया चेति कथम् ॥ १ ॥

समस्तवेदान्तसारसिद्धान्तार्थकळेबरम् ।
विकळेबरकैवल्यरामचन्द्रपदं भजे ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं सर्वसारोपनिषत् । उपोद्घातादिकमस्याः कठवल्ल्यादिवत् ऊह्यम् । सेयमुपनिषत् गुरुशिष्याविव आक्षेपसमाधानपूर्वकं स्वयमेव प्रवृत्ता । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । अत्रादौ तावत् बन्धमोक्ष - तद्धेतुविद्याऽविद्या-तत्कार्यावस्थाकोश - तद्व्यष्टिसमष्ट्यारोपापवादाधिकरण - स्वरूपं किमिति पृथक् पृथगाक्षिपति—कथमित्यादिना ॥ १ ॥

बन्धमोक्षयोः स्वरूपम्

आत्मेश्वरजीवोऽनात्मनां देहादीनामात्मत्वेनाभिमन्यते सोऽभिमान आत्मनो बन्धः । तन्निवृत्तिर्मोक्षः ॥ २ ॥

एवमाशङ्क्य श्रुतिः क्रमेण समाधत्ते । तत्र कथं बन्धः इति प्रश्नोत्तरमाह— **आत्मेश्वर** इति ।

यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह ।
यच्चास्य सन्ततो भावः तस्मादात्मेति गीयते ॥

इति स्मृत्युक्तात्मशब्देन आत्माविद्यापदचतुरंशापह्नवसिद्धपरमात्मोच्यते । स एव समष्टिमूलाविद्यायोगतः ईश्वर इव भवति । तद्व्यष्टितूलान्तःकरणाविद्यायोगतो जीव इव भवति । सोऽयं जीवः स्वविकल्पितानात्मनां स्थूलादिदेहानामिति कर्मणि षष्ठी, देहान् **आत्मत्वेनाभिमन्यते सोऽभिमान** एव स्वात्मनो **बन्धः** । कथं मोक्षः इति प्रश्नोत्तरमाह—**तन्निवृत्तिर्मोक्ष** इति । अनात्मनि आत्माभिमानस्य मोक्षावरणत्वात् स्वावरणापाये मोक्षः प्रकाशत इत्यर्थः ॥ २ ॥

### विद्याऽविद्ययोः स्वरूपम्

**या तदभिमानं कारयति सा अविद्या । सोऽभिमानो यया निवर्तते सा विद्या ॥ ३ ॥**

काऽविद्येति प्रश्नोत्तरमाह—**येति** । अनात्मनि आत्माभिमानप्रयोजिका अविद्येत्यर्थः । का विद्येति प्रश्नोत्तरमाह—**स** इति । स्वाविद्यातत्कार्याभिमाननिवर्तिकेयं विद्येत्यर्थः ॥ ३ ॥

### अवस्थाचतुष्टयनिरूपणम्

**मनआदिचतुर्दशकरणैः पुष्कलैरादित्याद्यनुगृहीतैः शब्दादीन् विषयान् स्थूलान् यदोपलभते तदाऽऽत्मनो जागरणम् । तद्वासनासहितैश्चतुर्दशकरणैः शब्दाद्यभावेऽपि वासनामयाञ्छब्दादीन् यदोपलभते तदाऽऽत्मनः स्वप्नम् । चतुर्दशकरणोपरमाद्विशेषविज्ञानाभावाद्यदा**

शब्दादीन्नोपलभते तदाऽऽत्मनः सुषुप्तम् । अवस्थात्रयभावाभावसाक्षी [1]स्वयं भावरहितं नैरन्तर्यं चैतन्यं यदा तदा तत्तुरीयं चैतन्यमित्युच्यते ॥ ४ ॥

जाग्रत्स्वप्नसुषुप्तितुरीयं च कथमिति प्रश्नोत्तरे जाग्रत्स्वरूपमाह—**मन इति**। ज्ञानकर्मेन्द्रियान्तःकरणचतुष्टयैः स्थूलशब्दादिचतुर्दशविषयोपलब्धिः जाग्रदवस्थेत्युच्यते । अथ स्वप्नस्वरूपमाह—**तदिति**। स्वप्नावस्थायां विषयसामान्याभावेऽपि जाग्रद्वासनावासितशब्दाद्युपलब्धिः स्वप्न इत्यर्थः । स्वापस्वरूपमाचष्टे—**चतुर्दशेति**। सर्वप्रकारज्ञानोपसंहारकावस्था सुषुप्तिरित्यर्थः । तुर्यस्वरूपं विशदयति—**अवस्थेति** । जाग्रदाद्यवस्थात्रयभावाभावप्रकाशकं तुर्यावस्थासंज्ञं तुर्यमित्यर्थः ॥ ४ ॥

पञ्चकोशनिरूपणम्

अन्नकार्याणां कोशानां समूहोऽन्नमयकोश इत्युच्यते । प्राणादिचतुर्दशवायुभेदा अन्नमयकोशे यदा वर्तन्ते तदा प्राणमयकोश इत्युच्यते । एतत्कोशद्वयसंसक्तं मनआदिचतुर्दशकरणैरात्मा शब्दादिविषयसंकल्पादिधर्मान् यदा करोति तदा मनोमयकोश इत्युच्यते । एतत्कोशत्रयसंसक्तं तद्गतविशेषज्ञो यदा भासते तदा विज्ञानमयकोश इत्युच्यते । एतत्कोशचतुष्टयसंसक्तं स्वकारणाज्ञाने वटकणिकायामिव वृक्षो यदा वर्तते तदा आनन्दमयकोश इत्युच्यते ॥ ५ ॥

अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयकोशाः कथमिति प्रश्नोत्तरे अन्नमयकोशं विवृणोति—**अन्नेति** । यः अन्ने उत्पत्तिस्थितिभङ्गं भजति सोऽन्नमय-

[1] स्वयमाविर्भावतिरोभावरहितं—अ, अ १.

**कोश** इत्यर्थः । प्राणकोशस्वरूपमाह—**प्राणादीति** । सुबालोपनिषदुक्तप्राणादिनागान्ताश्चतुर्दशवायवो यदा अन्नमयकोशान्तर्विलसन्ति तदा **प्राणमयकोशः** । यद्वा—वागादिकर्मेन्द्रियैः साकं प्राणादिपञ्चकं प्राणमयकोशः । मनोमयकोशं स्पष्टयति—**एतदिति** । एतदन्नप्राणकोशद्वयमिळित आत्मा मनआदिचतुर्दशकरणोपाधिकः सन् यदा चतुर्दशकरणैः तत्तद्विषयं सङ्कल्पयति तदा मनोमयकोशः । यद्वा—मनश्च ज्ञानेन्द्रियपञ्चकं च मनोमयकोशः । विज्ञानमयकोशं प्रपञ्चयति—**एतदिति** । अन्नादिकोशत्रयमिळित आत्मा यदि कोशत्रयगतविशेषज्ञः तदा **विज्ञानमयकोश** उच्यते । यद्वा—बुद्धिश्च ज्ञानेन्द्रियपञ्चकं विज्ञानमयकोशः । स्थूलदेहोऽयमन्नमयकोशः, प्राणादिकोशत्रयं सूक्ष्मशरीरम् । आनन्दमयकोशं वर्णयति—**एतदिति** । स्वपरप्रपञ्चाज्ञानं **आनन्दमयकोशः** । अयमेव हि बीजकारणदेहः ॥ ५ ॥

उपहितजीवस्वरूपम्

सुखदुःखबुद्ध्याश्रयोऽन्तः कर्ता यदा तदा इष्टविषये बुद्धिः सुखबुद्धिरनिष्टविषये बुद्धिर्दुःखबुद्धिः । शब्दस्पर्शरूपरसगन्धाः सुखदुःखहेतवः । पुण्यपापकर्मानुसारी भूत्वा प्राप्तशरीरसंयोगमप्राप्तशरीरसंयोगमिव कुर्वाणो यदा दृश्यते तदोपहितजीव इत्युच्यते ॥ ६ ॥

कर्ता जीवः पञ्चवर्गः क्षेत्रज्ञः साक्षी कूटस्थः अन्तर्यामी कथमिति प्रश्नोत्तरावसरे कर्ता जीव इत्यंशं विवृणोति—**सुखेति** । यदा अयं कर्ता जीवः सुखदुःखबुद्ध्यादिकमाश्रयति तदाऽस्य स्वेष्टानिष्टफल्गुविषये सुखदुःखबुद्धी भवतः । तद्धेतवः के इत्यत्र शब्दादयः परमार्थसुखावारकसुखदुःखहेतवः,

शब्दस्पर्शादयो येऽर्था अनर्था इव ते स्थिताः ।
येषां सक्तस्तु भूतात्मा न स्मरेत् परमं पदम् ॥

इति श्रुतेः । तत्रासक्तोऽयं स्वकृतपुण्यपापकर्मानुसारेण सम्प्राप्तशरीरसंयोगभ्रममीषद्विवेकेनासम्प्राप्तशरीरसंयोगमिव यदाऽऽत्मानं भावयति तदाऽयं **उपहितः** सोपाधिको जीव इत्यभिधीयते ॥ ६ ॥

जीवोपाधिस्वरूपम्

**मनआदिश्च प्राणादिश्चेच्छादिश्च सत्त्वादिश्च पुण्यादिश्चैते पञ्चवर्गा इत्येषां पञ्चवर्गाणां [1]धर्मीभूतात्मज्ञानादृते न नश्यत्यात्मसन्निधौ नित्यत्वेन प्रतीयमान आत्मोपाधिर्यस्तल्लिङ्गशरीरं हृद्ग्रन्थिरित्युच्यते ॥ ७ ॥**

पञ्चवर्गस्वरूपं जीवोपाधिं प्रकटयति—**मन इति । मनआ**द्यन्तःकरणचतुष्टयं च **प्राणादि**नागान्तचतुर्दशवायुभेदश्च **इच्छा**द्वेषादिश्च **सत्वादि**गुणत्रयं च **पुण्य**पापा**दिश्च एते** ह्युपहिताधिष्ठेयपञ्चवर्गा इति । एषां पञ्चवर्गाणामध्यासः तद्धर्मी जीवात्मा प्रत्यगात्मा वा तत्सम्बन्धरहित इति ज्ञानं विना **न नश्यति** । योऽयं स्वाज्ञानप्रभवोऽध्यासः **स्वात्मसन्निधौ** स्वाज्ञानात् **नित्यत्वेन प्रतीयमानः स्वात्मोपाधिः लिङ्गशरीर**मिति ख्यातः । स एव **हृ**दिति । लिङ्गशरीर-[2]द्वयमिति(?)साक्षी । तयोः तप्तायःपिण्डवत् तादात्म्यं **हृदयग्रन्थिः** जीवतेत्यभिधीयते ॥ ७ ॥

क्षेत्रज्ञस्वरूपम्

**तत्र यत्प्रकाशते चैतन्यं स क्षेत्रज्ञ इत्युच्यते ॥ ८ ॥**

क्षेत्रज्ञस्वरूपमाह—**तत्रे**ति । तत्र लिङ्गशरीरे जडे यच्चैतन्यं तदियत्तां ज्ञात्वा स्वयमपि प्रकाशते सोऽयं क्षेत्रज्ञः परमेश्वरः उच्यते, "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु" इति स्मृतेः ॥ ८ ॥

[1] धर्मि—अ, अ १, अ २. [2] मय—उ १.

साक्षिस्वरूपम्

ज्ञातृज्ञानज्ञेयानामाविर्भावतिरोभावज्ञाता स्वयमाविर्भावतिरोभावरहितः स्वयंज्योतिः साक्षीत्युच्यते ॥ ९ ॥

साक्षिस्वरूपं व्यनक्ति—ज्ञातृज्ञानेति । ज्ञात्रादित्रिपुटीनां स्वाज्ञानस्वज्ञानाभ्यां आविर्भावतिरोभावौ भवतः । ज्ञानज्ञेयापेक्षया ज्ञाता स्वयमाविर्भावतिरोभावविरळः, साधनान्तरनैरपेक्ष्येण स्वयंज्योतिः साक्षीत्युच्यते ॥ ९ ॥

कूटस्थस्वरूपम्

ब्रह्मादिपिपीलिकापर्यन्तं सर्वप्राणिबुद्धिष्ववशिष्टतयोपलभ्यमानः सर्वप्राणिबुद्धिस्थो यदा तदा कूटस्थ इत्युच्यते ॥ १० ॥

कूटस्थस्वरूपं प्रतिपादयति—ब्रह्मादीति । ब्रह्मादिस्तम्बान्तप्राणिपटलान्तःकरणविकारास्पृष्टात्मा निर्विकारोऽयं कूटस्थ इत्यर्थः ॥ १० ॥

अन्तर्यामिस्वरूपम्

कूटस्थोपहितभेदानां स्वरूपलाभहेतुर्भूत्वा मणिगणे सूत्रमिव सर्वक्षेत्रेष्वनुस्यूतत्वेन यदा काशते आत्मा तदाऽन्तर्यामीत्युच्यते ॥ ११ ॥

अन्तर्यामिस्वरूपं प्रकाशयति—कूटस्थेति । भेदानामित्यत्र प्रथमार्थे षष्ठी । निर्विकारकूटस्थविकल्पितोपाधिभेदा अन्तःकरणादय अन्तर्याम्यादिस्वरूपलाभहेतवो भूत्वा वर्तन्ते । तेषु सर्वक्षेत्रेषु मणिगणे सूत्रमिव तत्करणग्रामप्रवृत्तिनिमित्ततया यदा प्रकाशते तदाऽयमात्मा अन्तर्यामीत्युच्यते ॥ ११ ॥

प्रत्यगात्मस्वरूपम्

सत्यं ज्ञानमनन्तमानन्दं सर्वोपाधिविनिर्मुक्तं कटकमुकुटाद्युपाधिरहितसुवर्णघनवद्विज्ञानचिन्मात्रस्वभावात्मा यदा भासते तदा त्वंपदार्थः प्रत्यगात्मेत्युच्यते। सत्यं ज्ञानमनन्तं ब्रह्म। सत्यमविनाशि। अविनाशि नाम देशकालवस्तुनिमित्तेषु विनश्यत्सु यन्न विनश्यति तदविनाशि। ज्ञानं नामोत्पत्तिविनाशरहितं नैरन्तर्यं चैतन्यं ज्ञानमित्युच्यते। अनन्तं नाम मृद्विकारेषु मृदिव स्वर्णविकारेषु स्वर्णमिव तन्तुविकारेषु तन्तुरिवाव्यक्तादिसृष्टिप्रपञ्चेषु पूर्णं व्यापकं चैतन्यमनन्तमित्युच्यते। आनन्दं नाम सुखचैतन्यस्वरूपोऽपरिमितानन्दसमुद्रोऽवशिष्टसुखस्वरूपश्चानन्द इत्युच्यते ॥ १२ ॥

प्रत्यगात्मा परमात्मा माया चेति कथमिति प्रश्नोत्तरे प्रत्यगात्मस्वरूपं प्रकटयति—सत्यमिति। पराक्प्रपञ्चप्रातिलोम्येन अञ्चतीति प्रत्यक् स चासावात्मा चेति प्रत्यगात्मोच्यते। सत्यं ज्ञानमनन्तमानन्दमिति पदचतुष्टयबोध्यं यत् ब्रह्म तत् स्वज्ञदृष्ट्या स्वाज्ञविकल्पितसर्वोपाधिविरळम्। उक्तार्थे दृष्टान्तमाह—कटकेति। कटकमकुटाद्युपाधिरहितसुवर्णघनवत् अखण्डरूपमित्यर्थः। तथा चेदस्य जडत्वं स्यादित्यत आह—विज्ञानेति। विज्ञानचिन्मात्रस्वभावात्मा तद्रूपेण यदा भासते तदा त्वंपदार्थः प्रत्यगात्मा भवति। सत्यं ज्ञानमनन्तं किमित्याशङ्क्य ब्रह्मेत्याह—सत्यं ज्ञानमनन्तं ब्रह्मेति। स्वयमेव श्रुतिः सत्यादिपदचतुष्टयं व्याचष्टे—सत्यमविनाशीति। अविनाशिपदार्थमाह—अविनाशि नामेति। स्वाज्ञविकल्पितस्वातिरिक्तापायेऽपि स्वयं सन्मात्रतया अवशिष्यते इत्यर्थः। ज्ञानपदं व्याचष्टे—ज्ञानं नामेति। स्वरूपज्ञानस्य सत्तामात्रतया जन्मस्थितिभङ्गाभावात् अजडं ब्रह्मेत्यर्थः। अनन्तपदार्थमाह—अनन्तं नामेति। कारणात्मना स्वकार्यव्यापकचैतन्यमनन्तं त्रिविधपरिच्छेदशून्यं,

“देशतः कालतो वस्तुतः परिच्छेदरहितं ब्रह्म” इति श्रुतेः। आनन्दपदार्थमाह—**आनन्दं नामेति**। आनन्दमिति लिङ्गव्यत्ययः छान्दसः। शिष्टं स्पष्टम् ॥ १२ ॥

परमात्मस्वरूपम्

एतद्वस्तुचतुष्टयं यस्य लक्षणं देशकालवस्तुनिमित्तेष्वव्यभिचारी तत्पदार्थः परमात्मेत्युच्यते ॥ १३ ॥

परमात्मस्वरूपमाह—**एतदिति**। सत्यं ज्ञानमनन्तमानन्द इति वस्तुबोधकपदचतुष्टयं यस्य लक्षणं लक्ष्यमात्रपर्यवसन्नत्वात् सोयं व्यभिचारिदेशकालवस्तुनिमित्तेषु अव्यभिचारी तत्पदार्थः परमात्मा भवतीत्यर्थः ॥ १३ ॥

परब्रह्मस्वरूपम्

त्वंपदार्थादौपाधिकात् तत्पदार्थादौपाधिकभेदाद्विलक्षणमाकाशवत् सूक्ष्मं केवलं सत्तामात्रस्वभावं परं ब्रह्मेत्युच्यते ॥ १४ ॥

प्रत्यक्परैक्यं किमित्याशङ्क्याह—**त्वंपदार्थादिति**। त्वंपदार्थोपाधिभेदः जीवत्वं तस्मात् तत्पदार्थोपाधिकभेदस्त्वीश्वरत्वं तस्मादपि **विलक्षणं** अत एव **आकाशवत् सूक्ष्मं** आकाशव्यापकत्वात् यत् **केवलं** प्रत्यक्परविभागैक्यकलनाऽसम्भवप्रबोधसिद्धं **सत्तामात्रस्वभावं**, “ब्रह्ममात्रमसन्न हि” इति निष्प्रतियोगिकब्रह्ममात्रावशेषश्रुतेः, तदेव हि **परं ब्रह्मे**त्यर्थः ॥ १४ ॥

मायास्वरूपम्

माया नाम—अनादिरन्तवती प्रमाणाऽप्रमाणसाधारणा न सती नासती न सदसती स्वयमधिका विकाररहिता निरूप्यमाणा

**सतीतरलक्षणशून्या सा मायेत्युच्यते । अज्ञानं तुच्छाऽप्यसती कालत्रयेऽपि पामराणां वास्तवी च सत्त्वबुद्धिर्लौकिकानामिदमित्यनिर्वचनीया वक्तुं न शक्यते ॥ १९ ॥**

मायास्वरूपं व्यनक्ति—**माया नामेति**। यावत् ब्रह्मज्ञानं नोदेति तावदियं माया **अनादिः** शास्त्रजन्यज्ञानिदृष्ट्या **अन्तवती** स्वसत्त्वे स्वासत्त्वे च स्वाज्ञस्वज्ञदृष्टी यस्याः प्रमाणभूते भवतः सेयं **प्रमाणा**, "नाविद्याऽस्तीह नो माया" इति,

> या च प्रागात्मनो मे मा तथाऽन्ते च तिरस्कृता ।
> ब्रह्मवादिभिरुद्गीता सा मायेति विवेकतः ॥

इति च, श्रुत्यर्थसंस्कृतपरमार्थदृष्ट्या शशविषाणवत् अवस्तुभूतमायातत्कार्यसद्भावप्रमाणवैरळ्यात् **अप्रमाणसाधारणा** व्यावहारिकदृष्ट्या कारणदृष्ट्या वा **न सती** बाधदर्शनात्, अचाक्षुषत्वाद्वा, कार्यात्मना **नासती** तत्कार्योपलब्धेः, **न सदसती** तेजस्तिमिरवदेकस्याः सत्त्वासत्त्वासंभवात्, स्वाज्ञदृष्ट्या सर्वस्मात् **स्वयमधिका** स्वाज्ञस्य स्थावराद्यव्यक्तान्तवास्तवदृष्टित्वात्, वस्तुदृष्ट्या **निरूप्यमाणा सती** पृथिव्याद्यव्यक्तान्तविकाररहिता सर्वविकारयोनेः स्वस्याः शशविषाणवदवस्तुत्वात् अत एव या ब्रह्मातिरिक्तलक्षणशून्या **सा मायेत्युच्यते**। **कालत्रयेऽप्यसती** एवमज्ञानतया **तुच्छाऽपि** सेयं **पामराणां वास्तवी** च भवति,

> अविद्यमानैवाविद्या वस्तुतत्त्वविचारिणाम् ।
> इतरेषां तु मूढानां वज्रादपि दृढायते ॥

इति स्मृत्यनुरोधेन अस्यां **लौकिकानां सत्त्वबुद्धिर्भवति** । अलौकिकानां तु **इदमित्थमिति अनिर्वचनीया** अस्याः सत्त्वं **वक्तुं न शक्यते** । ब्रह्मातिरिक्तसामान्यापह्नवतावादिश्रुतिरत्र मानम्—

> सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि ।
> नाविद्याऽस्तीह नो माया शान्तं ब्रह्मेदमक्लमम् ॥ इति ॥ १९ ॥

ब्रह्मात्मानुभवप्रकटनम्

नैवं भवाम्यहं देहो नेन्द्रियाणि दशैव तु ।
न बुद्धिर्न मनः शश्वन्नाहंकारस्तथैव च ॥ १६ ॥
अप्राणो ह्यमनाः शुभ्रो बुद्ध्यादीनां हि सर्वदा ।
साक्ष्यहं सर्वदा नित्यश्चिन्मात्रोऽहं न संशयः ॥ १७ ॥
नाहं कर्ता नैव भोक्ता प्रकृतेः साक्षिरूपकः ।
मत्सान्निध्यात् प्रवर्तन्ते देहाद्या अजडा इव ॥ १८ ॥
स्थाणुर्नित्यः सदानन्दः शुद्धो ज्ञानमयोऽमलः ।
आत्माऽहं सर्वभूतानां विभुः साक्षी न संशयः ॥ १९ ॥
ब्रह्मैवाहं सर्ववेदान्तवेद्यं नाहं वेद्यं व्योमवातादिरूपम् ।
रूपं नाहं नाम नाहं न कर्म ब्रह्मैवाहं सच्चिदानन्दरूपम् ॥२०॥
नाहं देहो जन्ममृत्यू कुतो मे नाहं प्राणः क्षुत्पिपासे कुतो मे ।
नाहं चेतः शोकमोहौ कुतो मे नाहं कर्ता बन्धमोक्षौ कुतो मे ॥

इत्युपनिषत् ॥ २१ ॥

"कथं बन्धः" इत्यादिप्रश्नोत्तरमभिधाय स्वाज्ञसमर्पितस्वातिरिक्तदेहादिकलनाऽपह्नवमुखेन निष्प्रतियोगिकस्वमात्रानुभवं श्रुतिः स्वयमेव व्यक्तीकरोति—**नैवमिति** । शरीरत्रयापह्नवसिद्धं ब्रह्म स्वमात्रमित्यर्थः ॥ १६ ॥ स्वाज्ञदृष्ट्या बुद्ध्यादिप्रसक्तौ सर्वदा तेषां स्वज्ञदृष्ट्या **साक्ष्यहं** परमार्थदृष्ट्या निष्प्रतियोगिक**चिन्मात्रोऽह**मित्यत्र **न** हि **संशयो**ऽस्तीत्यर्थः ॥ १७ ॥

किञ्च—**नाहमिति** । कर्तृत्वादिप्रकृतिप्रसक्तौ तत्साक्ष्यहं देहेन्द्रियादिप्रवृत्तिनिमित्तमहमित्याह—**मदिति** ॥ १८ ॥ अनित्यदुःखादिप्रसक्तौ कस्त्वमसि

इत्यत आह—**स्थाणुरिति** ॥ १९ ॥ वेदान्तवेद्यसच्चिदानन्दोऽहमस्मि इत्याह—**ब्रह्मैवाहमिति**। नामरूपकर्मापह्नवसिद्धसच्चिदानन्दरूपोऽस्मीत्यर्थः, "सच्चिदानन्दमात्रोऽहमनुत्पन्नमिदं जगत्" इति श्रुतेः ॥ २० ॥ देहासुचित्ताभिमतिवैरळ्यान्न मे देहादिः स्यादित्याह—**नाहमिति** ॥ इत्युपनिषच्छब्दौ प्रकृतोपनिषत्समाप्त्यर्थौ ॥ २१ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं सर्वसारस्य साम्प्रतम् ।
प्रकृतोपनिषद्व्याख्याग्रन्थस्त्रिंशोत्तरं शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे त्रयस्त्रिंशत्सङ्ख्यापूरकं सर्वसारोपनिषद्विवरणं सम्पूर्णम्

---

# सावित्र्युपनिषत्

## आप्यायन्तु—इति शान्तिः

सवितृसावित्र्योः मिथः कार्यकारणत्वादि

कः सविता का सावित्री? अग्निरेव सविता पृथिवी सावित्री स यत्राग्निस्तत् पृथिवी यत्र वा पृथिवी तत्राग्निस्ते द्वे [1]योनिस्तदेकं मिथुनम् ॥ १ ॥कः सविता का सावित्री? वरुण एव सविताऽऽपः सावित्री स यत्र वरुणस्तदापो यत्र वा आपस्तद्वरुणस्ते द्वे योनिस्तदेकं मिथुनम् ॥ २ ॥ कः सविता का सावित्री? वायुरेव सविताऽऽकाशः सावित्री स यत्र वायुस्तदाकाशो यत्र वा आकाशस्तद्वायुस्ते द्वे योनिस्तदेकं मिथुनम् ॥ ३ ॥ कः सविता का सावित्री? यज्ञ एव सविता छन्दांसि सावित्री स यत्र यज्ञस्तच्छन्दांसि यत्र वा छन्दांसि स यज्ञस्ते द्वे योनिस्तदेकं मिथुनम् ॥ ४ ॥ कः सविता का सावित्री? स्तनयित्नुरेव सविता विद्युत् सावित्री स यत्र स्तनयित्नुस्तद्विद्युत् यत्र वा विद्युत्त [2]त्स्तनयित्नुस्ते द्वे योनिस्तदेकं

[1] योनी त—क, अ २. (एवं सर्वपर्यायेषु).

[2] त्र स्त—अ, अ १, अ २, क.

मिथुनम् ॥ ५ ॥ कः सविता का सावित्री? आदित्य एव सविता द्यौः सावित्री स यत्रादित्यस्तद्द्यौर्यत्र वा द्यौस्तदादित्यस्ते द्वे योनिस्तदेकं मिथुनम् ॥ ६ ॥ कः सविता का सावित्री? चन्द्र एव सविता नक्षत्राणि सावित्री स यत्र चन्द्रस्तन्नक्षत्राणि यत्र वा नक्षत्राणि स चन्द्रमास्ते द्वे योनिस्तदेकं मिथुनम् ॥ ७ ॥ कः सविता का सावित्री? मन एव सविता वाक् सावित्री स यत्र वा मनस्तद्वाक् यत्र वा वाक् तन्मनस्ते द्वे योनिस्तदेकं मिथुनम् ॥ ८ ॥ कः सविता का सावित्री? पुरुष एव सविता स्त्री सावित्री स यत्र पुरुषस्तत् स्त्री यत्र वा स्त्री तत् पुरुषस्ते द्वे योनिस्तदेकं मिथुनम् ॥ ९ ॥

सावित्र्युपनिषद्वेद्यचित्सावित्रपदोज्ज्वलम् ।
प्रतियोगिविनिर्मुक्तरामचन्द्रपदं भजे ॥

इह खलु सामवेदप्रविभक्तेयं सावित्र्युपनिषत् सवितृसावित्रीनवमिथुनबलातिबलामहामनुप्रकटनव्यग्रा तद्गतहेयांशापायसिद्धनिर्विशेषब्रह्मणि पर्यवसन्ना विजयते । अस्याः श्रुतेः संक्षेपतो विवरणमारभ्यते । श्रुतिरेव शिवशक्तिस्वरूपं किमित्याशङ्क्य अवान्तररूपेण स्वयमेव प्रकाशयति—क इति । "सविता प्राणिनः सूते" इति श्रुत्यनुरोधेन यदज्ञानतः स्वाज्ञदृष्ट्या स्वाविद्यापदतत्कार्यजातं सूतं प्रसूतमाविर्भूतं तत्रैव स्थितं तिरोभूतं च भवति, यः स्वज्ञदृष्ट्या स्वाज्ञविकल्पितप्रपञ्चारोपापवादाधारो भवति, यः परमार्थदृष्ट्या स्वाज्ञस्वज्ञविकल्पितारोपापवादापह्नवसिद्धः सन् निष्प्रतियोगिकतया स्वमात्रमवशिष्यते, सोऽयं सविता परमेश्वरः परमात्मा कीदृशः, यया विद्यया सविता प्रकाशते सेयं सावित्री कीदृशीति श्रुतिः स्वयमेवाशङ्क्य स्वाज्ञबुद्ध्यारोहाय तयोः स्वरूपं प्रकटयति—अग्निरिति । अग्न्यादिपुरुषान्तमेव सविता, अग्न्यादिपुरुषान्तगत-

नामरूपादिविशेषांशापाये तत्रत्यसच्चिदानन्दस्वरूपस्य निष्प्रतियोगिकचिन्मात्रसवितृरूपत्वात् । **पृथिव्यादिस्त्र्यन्तं सावित्री**, तत्रत्यजडाविद्यांऽशापायसिद्धाजडविद्यायाः स्वाज्ञविकल्पितस्वातिरिक्तकलनाऽपह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति बोधकत्वात् । तयोः वाच्यवाचकलक्ष्यलक्षणबोध्यबोधकभावं कथमित्यत्राह—**स इति** । **स** यत्राग्न्यादिपुरुषान्तानुस्यूतः सविता विराजते **तत्र पृथिव्यादिस्त्र्यन्तानुस्यूतरूपिणी सावित्री**, पुनर्व्यतिहारेण **यत्र पृथिव्यादिः तत्राग्न्यादिः** । **ते द्वे योनिः तदेकं मिथुनं** इति नवकृत्वोपदेशः, तयोः सवितृसावित्र्योः मिथः कार्यकारणत्वं वाच्यवाचकत्वं लक्ष्यलक्षणत्वं बोध्यबोधकत्वं चोपपद्यते इत्यर्थः ॥ १–९ ॥

सावित्र्याः पादत्रयम्

**तस्या एव[ष]प्रथमः पादो भूस्तत्सवितुर्वरेण्यमित्यग्निर्वै वरेण्यमापो वरेण्यं चन्द्रमा वरेण्यम् ॥ १० ॥ तस्या एव[ष]-द्वितीयः पादो भर्गमयो भुवो भर्गो देवस्य धीमहीत्यग्निर्वै भर्ग आदित्यो वै भर्गश्चन्द्रमा वै भर्गः ॥ ११ ॥ तस्या एष तृतीयः पादः स्वर्धियो यो नः प्रचोदयादिति स्त्री चैव पुरुषश्च प्रजनयतः ॥ १२ ॥**

उक्तनवकृत्वोपदेशः सावित्र्याः प्रथमः पादो भवतीत्याह—**तस्या इति** । कः सवितेत्यादिनवकृत्वोपदेशः सावित्र्याः **प्रथमः पादो** विज्ञेयः । तत्सवितुः यद्वरेण्यं तदग्न्यापश्चन्द्रादिगतहेयांशापायसिद्धं तत् सावित्र्याः द्वितीयः [प्रथमः] पादो भवति ॥ १० ॥ भूरित्याद्यव्याहृतिस्वरूपमुक्त्वा अथ **भर्गमयो भुवो भर्गो देवस्य धीमहि इति** भुवइति व्याहृत्यात्मकं देवस्य यद्भर्गः तेजः चिन्मात्रज्योतिः स्वमात्रमिति धीमहि, तदग्न्यादित्यचन्द्रगतहेयांशापायसिद्धं भर्गः ॥ ११ ॥ **तस्या एष तृतीयः पादः** स्वरिति व्याहृत्यात्मकं सावित्रं ब्रह्म

**यन्नो** अस्माकं धियः सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति सम्यज्ज्ञाने **प्रचोदयात्**। तदतिरेकेण स्त्रीपुंरूपेण प्रविभक्तप्रपञ्चो नास्त्येव। यद्यस्तीति भ्रान्तिः तदा सर्वत्र [सवितृ] सावित्र्यौ स्त्रीपुमादिविशिष्टप्रपञ्चं जनयतः उत्पादयतः। यत एवं अतः तयोः सवितृप्रपञ्चयोः कार्यकारणभावः सम्पद्यते, कारणातिरेकेण कार्याभावात् कार्यापाये कारणस्य कार्यकारणकलनाविरळ-ब्रह्ममात्रत्वात् ॥ १२ ॥

सावित्रीवेदनफलं पुनर्मृत्युजयः

योे वा एतां सावित्रीमेवं वेद स पुनर्मृत्युं जयति ॥ १३ ॥

एवं वेदनफलमाह—य इति। यो वै मुनिः एतां चिन्मात्रसवितृबोधिनीं **सावित्रीं** विद्यां जानाति **सो**ऽयं मुनिः ब्रह्मनिष्ठाप्रमादरूपमृत्युं जयति अप्रमादेन ब्रह्मनिष्ठामर्हतीत्यर्थः ॥ १३ ॥

बलाऽतिबलामन्त्रौ

बलातिबलयोर्विराट् पुरुष ऋषिः। गायत्री छन्दः। गायत्री देवता। अकारोकारमकारा बीजाद्याः। क्षुधाऽऽदिनिरसने विनियोगः। क्लामित्यादि[1]षडङ्गम्। ध्यानम्—

अमृतकर[2]तलाग्रौ सर्वसंजीवनाढ्या-
वघहरणसुदक्षौ वेदसारे मयूखे।
प्रणवमयविकारौ भास्कराकारदेहौ
सततमनुभवेऽहं तौ [3]बलातिबलान्तौ ॥

[1] षडंगन्यासः—क. [2] तलार्द्रौ—मु.
[3] बलाती—अ, अ १, क.

ॐ ह्रीं बले महादेवि ह्रीं महाबले क्लीं चतुर्विधपुरुषार्थसिद्धिप्रदे तत्सवितुर्वरदात्मिके ह्रीं वरेण्यं भर्गो देवस्य वरदात्मिके अतिबले सर्वदयामूर्ते बले सर्वक्षु[1]च्छ्रमोप[2]नाशिनी धीमहि धियो यो नर्जाते [3]प्रचुर्या या प्रचोदयात्मिके प्रणवशिरस्कात्मिके हुं फट् स्वाहा ॥ १४ ॥

श्रुतिरियं क्षुत्पिपासापीडितानां ब्रह्मनिष्ठासङ्कोचो भवेदिति क्षुत्पिपासानिरासकौ बलाऽतिबलाऽभिधानौ महामन्त्रौ प्रकाशयति---बलेति । वर्णसहस्रपुरश्चरणतो विद्यासिद्धिर्भवति । तया क्षुत्पिपासाविरळो भूत्वाऽस्खलितब्रह्मनिष्ठो भवति ॥ १४ ॥

विद्याफलम्

एवं विद्वान् कृतकृत्यो भवति सावित्र्या एव सलोकतां जयतीत्युपनिषत् ॥ १५ ॥

विद्याफलमाह—एवमिति । मुख्यफलं कृतकृत्यत्वं, आन्तराळिकफलं अपरब्रह्मपदावाप्तिरित्यर्थः । इत्युपनिषच्छब्दः सावित्र्युपनिषत्परिसमाप्त्यर्थः ॥ १५ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
सावित्र्युपनिषद्व्याख्या लिखिता ब्रह्मबोधिनी ।
सावित्र्युपनिषद्व्याख्या पञ्चत्रिंशत् प्रकीर्तिता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चसप्ततिसङ्ख्यापूरकं सावित्र्याख्योपनिषद्विवरणं सम्पूर्णम्

---

[1] च्छ्रमो—मु.
[2] नाशिनि—क, मु.
[3] प्रचुर्यः—मु.

# सुबालोपनिषत्

पूर्णमदः—इति शान्तिः

## प्रथमानुशासनम्—सर्वप्रपञ्चलयस्थितिप्रकारः

निर्विकल्पकब्रह्मावस्थितिः

तदाहुः । किं तदासीत्? तस्मै स होवाच न सन्नासन्न सदसदिति ॥ १ ॥

बीजाज्ञानमहामोहापह्नवाद्यद्विशिष्यते ।
निर्बीजं त्रैपदं तत्त्वं तदस्मीति विचिन्तये ॥

इह खलु शुक्लयजुर्वेदप्रविभक्तेयं सुबालोपनिषत् सोपायनिर्विशेषब्रह्ममात्रगोचरतया विजृंभते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । ईशावास्यादिवत् उपोद्घातादिकं ऊह्यम् । सुबालब्रह्मप्रश्नप्रतिवचनरूपेयं आख्यायिका वक्ष्यमाणविद्यास्तुत्यर्था । केयं उपनिषत् इत्युपनिषदारभ्यते—तदाहुरित्यादि । तत् प्रसिद्धब्रह्मज्ञानमुद्दिश्य ब्रह्मवादिनो मिथो गुरुशिष्यभावमेत्य आहुः मीमांसां कुर्वन्ति । तत्र सुबालो नाम मुनिः निष्प्रतियोगिकब्रह्ममात्रज्ञानबुभुत्सया ब्रह्माणं विधिवत् उपसङ्गम्य पृच्छति—किं तदासीदिति । तदा पृथिव्याद्यव्यक्तान्तोपसंहारदशायां किमात्मकं ब्रह्म आसीत् इत्येवं पृष्टवते **तस्मै स** ब्रह्मा **होवाच** । किमिति? **न सन्नासन्न सदसदिति** । तदानीं तत्परमकारणं ब्रह्म सद्व्यवहारवदपि

नाभूत्, नासदपि असद्व्यवहारवदभूत्, नापि सदसदात्मकतया अनिर्वचनीयव्यवहारवद्वा अभूत्। एतावता किं अवधृतम्? निष्प्रतियोगिकनिर्विकल्पमेव अभूत् इत्युक्तं भवतीत्यर्थः ॥ १ ॥

तमआदिपृथिव्यन्तजननम्

तस्मात्तमः संजायते तमसो भूतादिर्भूतादेराकाशमाकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी ॥ २ ॥

ततः किं जातं इत्यत आह—तस्मादिति। तस्मात् बीजभावमापन्नात् अविकल्पात् तमः स्वाविद्यापेशी सञ्जायते। सञ्जायत इति वर्तमानप्रयोगतो बीजात्मा पञ्चकृत्यकारीति द्योत्यते। तस्मात् तमसः अज्ञानात् भूतादिः अक्षराव्यक्तमहत्तत्त्वाहङ्कारादिः, सञ्जायत इति सर्वत्र अनुवर्तते। भूतादेः आकाशादिपृथिव्यन्तं क्रमेण सञ्जायते ॥ २ ॥

विराट्पुरुषोत्पत्तिः

तदण्डं समभवत्तत् संवत्सरमात्रमुषित्वा द्विधाऽकरोदधस्ताद्भूमिमुपरिष्टाद्याकाशं मध्ये पुरुषो दिव्यः सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् सहस्रबाहुरिति ॥ ३ ॥

तत् इत्यव्ययम्। तत् तैः आकाशादिभूतैः पञ्चीकृतैः हिरण्मयं अविद्याऽण्डं महाविराण्णिकेतनं समभवत्। ततः तत् किमासीदित्यत आह—तदिति। तत् अविद्याऽण्डं संवत्सरमात्रं अच्छिद्रकुक्कुटाण्डवत् उषित्वा अथ तदण्डं द्विधा अकरोत् ऊर्ध्वाधोविभागेनेत्यर्थः। तदधस्तात् भूमिः तदुपरिष्टाद्भागे आकाशं, तन्मध्ये किं अभूदित्यत आह—मध्य इति। कपालद्वयमध्ये दिवि भवो दिव्यः पुरुषो विराट् सहस्रशीर्षेत्यादिविशेषणविशिष्टः सम्राट् चतुराननो जायते ॥ ३ ॥

मृत्युसृष्टिः

सोऽग्रे भूतानां मृत्युमसृजत् । [1]त्र्यक्षं त्रिशिरस्कं त्रिपादं खण्डपरशुम् ॥ ४ ॥

सः किं कृतवान् इत्यत आह—**स** इति । **स** भगवान् ब्रह्मा **भूतानां अग्रे मृत्युं** तमःपेशीप्रधानं रुद्रं **त्र्यक्षं त्रिशिरस्कं त्रिपादं खण्डपरशुं असृजत्** ॥ ४ ॥

सप्तमानसप्रजापतिसृष्टिः

[2]तस्य ब्रह्मा बिभेति [3]स ब्रह्माणमेव विवेश । स मानसान् सप्त [4]पुत्रानसृजत् । ते ह विराजः सप्त मानसानसृजन् । ते ह प्रजापतयः ॥ ५ ॥

तं सृष्ट्वा किं कृतवान् इत्यतः आह—**तस्येति** । स्वसृष्टस्य **तस्य** रूपं दृष्ट्वा चतुर्मुखो भीतो जायते । स जनकभीहेतुः किं कृतवान् इत्यत आह—**स इति** । भीतं रक्ष इव **स** रुद्रो जनकं **ब्रह्माणमेव** आविवेश । तेनाविष्टः किं कृतवान् इत्यत आह—**स इति** । यः एवं रुद्रावेशक्षुब्धः **सः** ब्रह्मा **मानसान्** मनोमात्रोपादानान् **सप्त पुत्रान्** असृजत् । ते किं कृतवन्तः इत्यत आह—**त इति** । **ते ह** सप्त पुत्रा **विराजः सप्त** पुत्रान् मानसान् असृजन् । ते किमर्थं सृष्टाः इत्यत आह—**ते ह प्रजापतय इति** । बहुधा प्रजासर्जनार्थं सृष्टा इत्यर्थः ॥ ५ ॥

[1] त्र्यक्षरं—अ, अ १, अ २, क.

[2] न तस्य—अ, अ १, अ २, क

[3] सो ब्र—अ, अ १, अ २, क.

[4] पुरुषान—अ २.

पुरुषात् ब्राह्मणादिसृष्टिः

ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥
श्रोत्राद्वायुश्च प्राणश्च हृदयात् सर्वमिदं जायते ॥ ६ ॥

एवं सप्त पुत्रान् सृष्ट्वा किंविशेषणविशिष्टान् पुनरसृजत् इत्यत आह— **ब्राह्मणोऽस्येति**। **अस्य** चतुर्मुखस्य **ब्राह्मणो मुखमासीत्** मुखात् सृष्टोऽभूत् इत्यर्थः। तथा **बाहू राजन्यः** क्षत्रियः **कृतः** क्षत्रियस्य बाहुत्वेन कृतसन्निवेशात् बाहुभ्यां अजायत इति यावत्। **यत्तत्** अव्ययम। यावस्य **ऊरू** तौ **वैश्यः** तदात्मकः ततोऽजायत इति यावत्। **पद्भ्यां शूद्रो अजायत**। ब्राह्मणादीनां मुखमासीदिति ब्रह्माङ्गता उक्ता, शूद्रस्य तदनर्हत्वात् नीचाङ्गजातिरुक्ता निर्विद्यत्वात्, "तस्माच्छूद्रो निर्विद्योऽभवत्" इति श्रुतेः। **श्रोत्राद्वायुश्च प्राणश्च,** च शब्दात् मनश्चक्षुर्भ्यां चन्द्रसूर्यौ जाताविति द्योत्यते। चतुर्मुखस्य **हृदयात् सर्वमिदं** चराचरात्मकं जगत् **जायते** ॥ ६ ॥

इति प्रथमः खण्डः

---

पुरुषात् निषादादिसृष्टिः

अपानान्निषादा यक्षराक्षसगन्धर्वाश्चास्थिभ्यः पर्वता लोमभ्य
ओषधिवनस्पतयो ललाटात् क्रोधजो रुद्रो जायते ॥ १ ॥

पुनरङ्गान्तरेभ्यः के जायन्ते इत्यत आह—**अपानादिति**। तस्य ब्रह्मणः अपानस्थानात् **निषादाः** म्लेच्छादिजातिविशेषाः बहवो जायन्ते **यक्षराक्षसगन्धर्वाश्च**। **अस्थिभ्यः पर्वता** इत्यादि—स्पष्टोऽर्थः। **अस्य ललाटात्**

क्रोधजः क्रोधमूर्तिः कालाग्निरूपो रुद्रो जायते, छन्दोगानामुपस्थाने "ब्रह्मणः पुत्राय विरूपाक्षाय नमः" इत्युक्तम् ॥ १ ॥

वेदादिशास्त्राविर्भावः

तस्यैतस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः [1]शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषामयनं न्यायो मीमांसा धर्मशास्त्राणि व्याख्यानान्युपव्याख्यानानि च सर्वाणि च भूतानि ॥ २ ॥

तत एव निश्वासवद्वेदाद्याविर्भावमाह—तस्येति। **तस्यैतस्य महतो भूतस्य** ब्रह्मणो **निश्वसितो** निश्वासवत् अप्रयत्नेन आविर्भूतः ऋगादिचतुर्वेदः **शिक्षा** स्वरमात्राविभागहेतुः **कल्पः** कल्पसूत्राणि **व्याकरणं** शब्दराशिशोधनं **निरुक्तं** मन्त्रार्थनिर्वचनं **छन्दः** नानावृत्तलक्षणं **ज्योतिषां** सूर्यादीनां **अयनं** गतिनिरूपकं ज्योतिःशास्त्रं **न्यायः** तर्कः पूर्वोत्तरा च **मीमांसा**, पूर्वा तु धर्मविचारः उत्तरा तु ब्रह्मविचारः, **धर्मशास्त्राणि** मन्वादिस्मृतयः **व्याख्यानानि** शाबरमहाभाष्यरूपाणि **उपव्याख्यानानि** प्रकरणानि **सर्वाणि च भूतानि** शब्दप्रकरणात् सर्वप्राणिभाषाश्च, सर्वाणि निश्वसितानि इति पूर्वेण संबन्धः ॥ २ ॥

स्त्रीपुंरूपसृष्टिः

हिरण्यज्योतिर्यस्मिन्नयमात्माऽधि[2]क्षियन्ति भुवनानि विश्वा आत्मानं द्विधाऽकरोदर्धेन स्त्री अर्धेन पुरुषो देवो भूत्वा देवानसृजदृषिर्भूत्वा ऋषीन् यक्षराक्षसगन्धर्वान् ग्राम्यानारण्यांश्च पशूनसृजदितरा गौरितरोऽनड्वानितरा वडवेतरोऽश्व इतरा गर्दभीतरो गर्दभ इतरा विश्वंभरीतरो विश्वंभरः ॥ ३ ॥

[1] शीक्षा—अ, अ १, अ २, क.  [2] क्षय—अ, अ १, अ २, क.

अथ **यस्मिन् अयमात्मा** प्रत्यक् **विश्वा** विश्वानि **भुवनानि** लोकाश्च **अधिक्षियन्ति** अधिक्षेपवत् भवन्ति सोऽसौ भगवान् **हिरण्यज्योतिः** कला[नक]वर्णस्वरूपो भगवान् **स्वात्मानं द्विधा** विभागं **अकरोत्**। कथं ? **वामार्धेन स्त्री** दक्षिणार्धेन **पुरुषो** बभूव। तथा च बृहदारण्यके "स यथा स्त्रीपुमांसौ संपरिष्वक्ताविममेवात्मानं द्वेधाऽपातयत् ततः पतिश्च पत्नी चाभवतां तस्मादिदमर्धबृगलमिव" इति। तथा उभाभ्यामादिमातापितृभ्यां स्त्रीपुरुषसृष्टिः अद्याप्यनुवर्तते। अथ सपत्नीकः स पुरुषो **देवो भूत्वा** सपत्नीकान् **देवानसृजत्** तथा **ऋषिर्भूत्वा ऋषीन्** तथा **यक्षराक्षसगन्धर्वान् ग्राम्यान् आरण्यांश्च पशून्** तत्तद्द्वन्द्वरूपो भूत्वा **असृजत्**। अयमेवार्थो विशिष्टः प्रदर्श्यते **इतरा** इत्यादि। **इतरा** करेणुः **इतरो** गजो बभूव। तथा **इतरोऽनड्वान् इतरा गौः इतराऽश्वबडबा इतरोऽश्वः** इतरोऽश्वतरः तथेतराऽश्वतरी **इतरा गर्दभी इतरो गर्दभः इतरा विश्वंभरी** धरणी **इतरो विश्वंभरो** भूवराहरूपः। उक्तार्थे बृहदारण्यकवाक्यशेषोऽप्यनुसन्धेयः "सा गौः अभवत् ऋषभः इतरः तां समेवाभवत् ततो गावोऽजायन्त" इत्यादि। एवं स भगवान् स्वमूर्तिभ्यामेव तत्तद्योनिकारणकूटस्थमातापितृरूपो भूत्वा सृष्टिपरम्परां अद्यापि करोति ॥ ३ ॥

प्रपञ्चोपसंहारक्रमः

सोऽन्ते वैश्वानरो भूत्वा [1]सं दग्ध्वा सर्वाणि भूतानि पृथिव्यप्सु प्रलीयत आपस्तेजसि लीयन्ते तेजो वायौ विलीयते वायुराकाशे विलीयत आकाशमिन्द्रियेष्विन्द्रियाणि तन्मात्रेषु तन्मात्राणि भूतादौ विलीयन्ते भूतादिर्महति विलीयते महानव्यक्ते विलीयतेऽव्यक्तमक्षरे विलीयते अक्षरं तमसि विलीयते तमः परे देव एकीभवति परस्तान्न सन्नासन्न सदसदित्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥ ४ ॥

[1] स द—अ, अ १, अ २, क

स्वज्ञानिदृष्ट्या उपसंहारक्रम उच्यते—**सोऽन्त इति**। अन्ते प्रळये आत्यन्तिकप्रळये वा यः चतुराननरूपेण स्रष्टा विष्णुरूपेण पालयिता **स एव वैश्वानरः** सर्वोपसंहारपण्डितो भूत्वा, समिति पृथक्पदं, **दग्ध्वा सर्वाणि भूतानि** भस्मीकृत्य, उपसंहरतीति शेषः। संभूतिवैपरीत्येनोपसंहारक्रमः। तथा हि प्रसिद्धा इयं **पृथिवी अप्सु प्रलीयत** इत्यादि समानम्। **आकाशं** इन्द्रियेषु सत्वादिगुणेषु। गुणभूतेन्द्रियाणि **भूतादौ** तत्तल्लिङ्गे विलीयन्ते। **भूतादिः महति** जीवघने। **महान् अव्यक्ते** अव्याकृते। **अव्यक्तं** स्वारोपाधिकरणे **अक्षरे** ईश्वरे। **अक्षरं तमसि** पेशिस्थानीये साक्षिणि **विलीयते**। **तमः** साक्षी तु **परे देवे** ब्रह्मणि **एकीभवति**। ततो ब्रह्मणः **परस्तात् न सत् नासत् न सदसत्** इत्युक्तार्थम्। **इत्येतत्** उपदिष्टं तत्त्वं **निर्वाणानुशासनं** सर्वोपसंहारोपदेशः **इति एवमेव सर्ववेदानुशासनं** सर्ववेदान्तेषु मोक्षोपदेशः। आवृत्तिः प्रथमानुशासनसमाप्त्यर्था ॥ ४ ॥

इति द्वितीयः खण्डः

---

# द्वितीयानुशासनम्—तुरीयतत्त्वम्

निर्विकल्पकब्रह्ममन्तुः शोकाभावः

असद्वा इदमग्र आसीदजातमभूतमप्रतिष्ठितमशब्दमस्पर्शमरूपमरसमगन्धमव्ययममहान्तमबृहन्तमजमात्मानं मत्वा धीरो न शोचति ॥ १ ॥

एवं प्रथमानुशासनेन तमःशब्दवाच्यसाक्ष्यादिसर्वप्रपञ्चस्थितिलयप्रकारः उक्तः। अथ साक्ष्यादिप्रपञ्चो यत्र समाप्यते तद्याथात्म्यविवक्षया द्वितीयानुशासनमारभ्यते—असदित्यादिना। इदं तमआदि पृथिव्यन्तं कार्यजातं अग्रे पूर्वकाले

**असद्वै** गुणसाम्यावच्छिन्नसाक्षितत्वमेव **आसीत्** । तमआदिपृथिव्यन्तापह्नवसिद्धं ब्रह्म तमआदिप्रपञ्चजन्मस्थितिभङ्गकालेऽपि स्वयं **अजातं** जन्मरहितमेव भवति । यतोऽजातं अत एव **अभूतं** उदयास्तमनकलनाविरळचिदाकाशस्वरूपत्वात् । तथा **अप्रतिष्ठितं** निरवयवत्वेन निर्विशेषत्वात् । स्वाज्ञदृष्टिविकल्पितप्रपञ्चप्रसक्तौ स्वज्ञदृष्ट्या तदारोपापवादाधिकरणत्वेऽपि परमार्थदृष्ट्या निरधिकरणं ब्रह्मेत्यर्थः । शब्दादिप्रपञ्चे सति कथं निरधिकरणतेत्यत आह—**अशब्दमित्यादि** । शब्दाद्याश्रयवियदादिपञ्चभूतापह्नवसिद्धत्वात् **अशब्दं अस्पर्शं अरूपं अरसं अगन्धं** अत एव **अव्ययं** निरवयवत्वात् **अमहान्तं** महत्तत्त्वाभावात् **अबृहन्तं** बृहत्तत्त्वाव्यक्ताभावात्, **अजं** स्वस्मात् अन्यानुत्पत्तेः अन्यस्माद्वा स्वस्यानुत्पत्तेः "स बाह्याभ्यन्तरो ह्यजः," "न जायते म्रियते वा" इति, "स्वतो वा परतो वाऽपि न किञ्चिद्वस्तु जायते" इत्यादि श्रुतेः, गौडपादाचार्योक्तेश्च । एवं अनात्मापह्नवसिद्धं परमात्मानं स्वमात्रमिति **मत्वा धीरो** ब्रह्मविद्वरीयान् **न शोचति** शोचनीयप्रसक्तेः दुर्लभत्वात् ॥ १ ॥

निर्विकल्पकब्रह्मणि प्राणाद्यभावः

**अप्राणममुखमश्रोत्रमवागमनोऽतेजस्कमचक्षुष्कमनामगोत्रमशिरस्कमपाणिपादमस्निग्धमलोहितमप्रमेयमह्रस्वमदीर्घमस्थूलमनण्वनल्पमपारमनिर्देश्यमनपावृतमप्रकाश्यमसंवृतमनन्तरमबाह्यं न तदश्नाति किंचन न तदश्नाति कश्चन ॥ २ ॥**

शोचनीयप्राणादिकलनासत्त्वात् कथं न शोचतीत्यत आह—**अप्राणमित्यादि** । प्राणादिपञ्चवृत्त्यपह्नवसिद्धत्वात् स्वमात्रतया मन्तव्यब्रह्मणः । अतोऽयं विद्वान् न शोचतीत्यर्थः । तथा **अमुखं** मुखाद्यवयववैरळ्यात्, तथा **अश्रोत्रं अवाक्** तथा **अमनः** अमनस्कत्वात् तथा **अतेजस्कं अचक्षुष्कं अनामगोत्रं अशिरस्कं अपाणिपादं** सर्वावयवशून्यमित्यर्थः । **अस्निग्धं** स्नेहगुणविरळं **अलोहितं** रजआदिगुणत्रयातीतं **अप्रमेयं** चक्षुरादिप्रमेयाभावात्

**अह्रस्वं अदीर्घं अस्थूलं अनणु,** ह्रस्वादीनां सावयवधर्मत्वात् निरवयवस्य ह्रस्वादिकलना कथं सेद्धुं पारयतीत्यर्थः । **अनल्पं** भूमरूपत्वात् **अपारं** कालाद्यपरिच्छिन्नत्वात् अत एव **अनिर्देश्यं** अनिदंस्वरूपत्वात् **अनपावृतं** निरावृतत्वात् **अप्रकाश्यं** स्वप्रकाशकवैरळ्यात् **असंवृतं** स्वसंवरणाविद्याद्यभावात् **अनन्तरं अबाह्यं** अन्तर्बाह्यविभागहेतुशरीराभावात् । एतादृशं ब्रह्म **न किञ्चन** विषयजातं **अश्नाति** तथा नापि **कश्चन तद्ब्रह्म अश्नाति** स्वातिरिक्तान्नात्त्रोरसंभवात् ॥ २ ॥

ब्रह्मावगत्युपायः फलं च

एतद्वै सत्येन दानेन तपसाऽनाशकेन ब्रह्मचर्येण निर्वेदनेनानाशकेन षडङ्गेनैव साधयेदेतत्त्रयं [1]वीक्षेत दमं दानं दयामिति न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद ॥ ३ ॥

यद्येवं निर्विशेषं तदवगत्युपायः कः इत्यत आह—**एतद्वा इति** । **एतद्वै** स्वे महिम्नि प्रतिष्ठितं ब्रह्ममात्रं लौकिकालौकिक**सत्येन** तथा लौकिकवैदिकवित्तविद्या**दानेन** तथा **अनाशकेन** अनशनप्रधानेन **तपसा** तथा द्विविध**ब्रह्मचर्येण** स्वातिरिक्तपदार्थ**निर्वेदनेन** तीव्रतमवैराग्येण **अनाशकेन** स्त्र्यादिविषयभोगप्रसक्तिरहितेन स्वातिरिक्तसामान्यसंन्यासेनेति यावत् । एवं सत्यादिलक्षणेन **षडङ्गेन** साधनेनैव **साधयेत्** । तथा **दमं दानं दयां** इत्येतत्त्रयं च ब्रह्मप्राप्तिसाधनमिति **वीक्षेत** । तथा च बृहदारण्यके आम्नातं—"एतत्त्रयं शिक्षेद्दमं दानं दयामिति" । एवं यथोक्तसाधनेन ब्रह्ममात्रविद्यां साधयतः निष्प्रतियोगिकब्रह्ममात्रज्ञाने जातेऽपि प्रातिभासिकरूपेण वा प्राणाः सन्तीति यस्य भ्रान्तिः **तस्यापि** निर्विशेषज्ञानमहिम्ना **प्राणाः** स्वाज्ञानिन इव **नोत्क्रमन्ति** नह्युत्क्रमणं

[1] वीक्षणं—अ १, उ १.

भजन्ति । अपि तु अत्र ब्रह्मण्येव समवलीयन्ते जले जलवत् अविशेषतां प्रपद्यन्ते । य एवं विद्वान् सोऽपि ब्रह्मैव सन् ब्रह्माप्येति ब्रह्मैव भवतीत्यर्थः ॥ ३ ॥

इति तृतीयः खण्डः

---

हृदयस्थनाडीस्वरूपम्

हृदयस्य मध्ये लोहितं मांसपिण्डं यस्मिंस्तद्दहरं पौण्डरीकं कुमुदमिवानेकधा विकसितं हृदयस्य दश छिद्राणि भवन्ति येषु प्राणाः प्रतिष्ठिताः ॥ १ ॥

उत्तमाधिकारिणां ब्रह्ममात्रज्ञानसमकालं ब्रह्मभावापत्तिमुक्त्वा मन्दाधिकारिणां स्वातिरिक्तानात्मप्रपञ्चवैराग्यहेतवे त्रिधामसंसारगतिनिरूपणशेषतया आदौ नाडीस्वरूपं निरूपयति—हृदयस्येति । वक्षोऽभ्यन्तरविलसद्धृदयस्य मध्ये लोहितं मांसपिण्डमिति—लिङ्गस्य लोकाश्रयत्वात् नपुंसकोऽपि पिण्डशब्दः—पिण्डसंस्थानो मांसोऽधिदैवं ब्रह्मपुरस्थानीयोऽस्ति, यस्मिन् हृदयाकारमांसपिण्डे तत् प्रसिद्धं दहरं दग्ध्वा रमते अत्र सर्वानर्थमिति दहराख्यं पौण्डरीकं ईषत्पुण्डरीकं सितपद्मं तत्सम्बन्धि पौण्डरीकं पुण्डरीकसंस्थानतुल्यसंस्थानं अधिदैवं हिरण्मयकमलकोशस्थानीयमिति यावत् । वस्तुतः प्रत्यक्पुरे तु कुमुदमिव अनेकधा अनेकदळभेदेन विकसितं भवति । तस्य हृदयस्य दश छिद्राणि रन्ध्राणि भवन्ति येषु रन्ध्रेषु दश दश वागादयः प्राणाः मुख्यप्राणादयः नागाद्याश्च प्रतिष्ठिताः त इमाः दशनाड्यः प्रथमः कोशः ॥ १ ॥

स्थूलकोशे जाग्रदनुभवः

स यदा प्राणेन सह संयुज्यते तदा पश्यति [1]नद्यो नगराणि बहूनि विविधानि च यदा व्यानेन सह संयुज्यते तदा पश्यति

[1] सद्यो—क.

देवांश्च ऋषींश्च यदाऽपानेन सह संयुज्यते तदा पश्यति यक्षराक्षसगन्धर्वान् यदोदानेन सह संयुज्यते तदा पश्यति देवलोकान् देवान् स्कन्दं जयन्तं चेति यदा समानेन सह संयुज्यते तदा पश्यति देवलोकान् धनानि च यदा वैरम्भेण सह संयुज्यते तदा पश्यति दृष्टं च श्रुतं च भुक्तं चाभुक्तं च सच्चासच्च सर्वं पश्यति ॥ २ ॥

तत्र योऽवरमुख्यप्राणाधारः सोऽयं जीवो जाग्रदवस्थायां यदा प्राणेन सह संयुज्यते सम्बध्यते तदा नद्यो नगराणि बहूनि अनेकानि विविधानि पश्यति । यदा व्यानेन सह संयुज्यते तदा देवांश्च ऋषींश्च पश्यति । यदा अपानेन सह संयुज्यते तदा यक्षराक्षसगन्धर्वान् पश्यति । यदा अत्र उदानेन सह संयुज्यते तदा देवलोकान् देवान् स्कन्दं जयन्तं च पश्यति । यदा समानेन सह संयुज्यते तदा देवलोकान् धनानि च पश्यति । यदा वैरम्भेण प्राणविशेषेण सह संयुज्यते तदा स्वप्नसर्गे जागरणे दृष्टं चादृष्टं च श्रुतं चाश्रुतं च स्त्र्यादिकं भुक्तमभुक्तं च सच्च चाक्षुषं असच्च अचाक्षुषं पश्यति । एवं जागरितवत्प्रथमकोशे पूर्णानुभवः उक्तः ॥ २ ॥

सूक्ष्मकोशे स्वप्नानुभवः

अथेमा दश दश नाड्यो भवन्ति तासामेकै[1]कस्या द्वासप्ततिर्द्वासप्ततिः शाखानाडीसहस्राणि भवन्ति यस्मिन्नयमात्मा स्वपिति शब्दानां च करोत्यथ [2]द्वितीये सं कोशे स्वपिति तदेमं च लोकं परं च लोकं पश्यति सर्वाञ्छब्दान् विजानाति स संप्रसाद इत्याचक्षते प्राणः शरीरं परिरक्षति । हरितस्य नीलस्य पीतस्य लोहितस्य श्वेतस्य नाड्यो रुधिरस्य पूर्णाः ॥ ३ ॥

[1] कस्यां—अ, अ १, अ २, क. [2] यद्वितीये—अ २. सद्वितीये—क.

अथेति प्रथमकोशानन्तर्यार्थः । अथेमाः प्रागुक्ताः महानाड्यो दशदश शतं भवन्ति वृक्षे उपशाखाभिरिव । तासां शतानां नाडीनां एकैकस्याः नाड्याः द्वासप्ततिर्द्वासप्ततिसङ्ख्याकानि शाखानाडीनां सहस्राणि भवन्ति, यस्मिन् सूक्ष्मनाडीसहस्रस्थाने अयमात्मा जीवः स्वपिति स्वप्नदर्शनमनुभवति शब्दानां च दर्शनं करोति । अथ तत्र सूक्ष्मस्वापस्थाने द्वितीये सं कोशे—समिति पृथक्पदं—द्वितीयकोशसंसृष्टः सन् यदा स्वपिति स्वप्नानुभवं करोति तदा इमं च लोकं परं च लोकं—चशब्दद्वयतः तत्तल्लोकार्थानुष्ठेयं च—पश्यति । सर्वान् शब्दान् विजानाति । एवं अल्पल्प इहार्थानुभवः । तमेतं द्वितीयादि-कोशस्थं संप्रसाद इत्याचक्षते । वक्ष्यमाणतृतीयकोशे करणोपरमात् विषय-कालुष्यरहितः प्रसन्न एव भवति । द्वितीयेऽपि कोशे करणानामुपरतकल्पत्वात् संप्रसादत्वम् । अस्यामुपरतकल्पावस्थायां प्राण एव केवलं निजकर्मनियुक्तः प्रोषितयजमानगृहदासीदासादिरिव स्थूलशरीरं परिरक्षति निजवृत्तिभिः सुप्त-जनकग्रामं पालका इव । ताः इमाः शाखानाड्यो हरितस्य नीलस्य पीतस्य लोहितस्य श्वेतस्य रुधिरस्य वातपित्तादिरसस्य पूर्णः । पूर्णयोगे छन्दसि तृतीयायां षष्ठी दृश्यते । हरितादिवर्णेन पूर्णा इत्यर्थः ॥ ३ ॥

हृदयाकाशे सुषुप्त्यनुभवः

अथ यत्रैतद्दहरं पुण्डरीकं कुमुदमिवानेकधा विकसितं यथा केशः सहस्रधा भिन्नस्तथा हिता नाम नाड्यो भवन्ति हृद्याकाशे परे कोशे दिव्योऽयमात्मा स्वपिति यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति न तत्र देवा न देवलोका यज्ञा न यज्ञा वा न माता न पिता न बन्धुर्न बान्धवो न स्तेनो न ब्रह्महा तेजस्कायममृतं सलिल एवेदं सलिलं वनं[मग्नं] भूयस्तेनैव मार्गेण जाग्राय धावति सम्राडिति होवाच ॥ ४ ॥

बुद्धिरध्यात्मं बोद्धव्यमधिभूतं ब्रह्मा तत्राधिदैवतं नाडी तेषां निबन्धनं यो बुद्धौ यो बोद्धव्ये यो ब्रह्मणि यो नाड्यां . . . नन्तम् ॥ ७ ॥

अहंकारोऽध्यात्ममहंकर्तव्यमधिभूतं रुद्रस्तत्राधिदैवतं नाडी तेषां निबन्धनं योऽहंकारे योऽहंकर्तव्ये यो रुद्रे यो नाड्यां . . . नन्तम् ॥ ८ ॥

चित्तमध्यात्मं चेतयितव्यमधिभूतं क्षेत्रज्ञस्तत्राधिदैवतं नाडी तेषां निबन्धनं यश्चित्ते यश्चेतयितव्ये यः क्षेत्रज्ञे यो नाड्यां . . . नन्तम् ॥ ९ ॥

वागध्यात्मं वक्तव्यमधिभूतमग्निस्तत्राधिदैवतं नाडी तेषां निबन्धनं यो वाचि यो वक्तव्ये योऽग्नौ यो नाड्यां . . . नन्तम् ॥ १० ॥

हस्तावध्यात्ममादातव्यमधिभूतमिन्द्रस्तत्राधिदैवतं नाडी तेषां निबन्धनं यो हस्ते य आदातव्ये य इन्द्रे यो नाड्यां . . . नन्तम् ॥ ११ ॥

पादावध्यात्मं गन्तव्यमधिभूतं विष्णुस्तत्राधिदैवतं नाडी तेषां निबन्धनं यः पादे यो गन्तव्ये यो विष्णौ यो नाड्यां . . . नन्तम् ॥ १२ ॥

पायुरध्यात्मं विसर्जयितव्यमधिभूतं मृत्युस्तत्राधिदैवतं नाडी तेषां निबन्धनं यः पायौ यो विसर्जयितव्ये यो मृत्यौ यो नाड्यां . . . नन्तम् ॥ १३ ॥

उपस्थोऽध्यात्ममानन्दयितव्यमधिभूतं प्रजापतिस्तत्राधिदैवतं नाडी तेषां निबन्धनं य उपस्थे य आनन्दयितव्ये यः प्रजापतौ यो नाड्यां यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे संचरति सोऽयमात्मा तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम् ॥ १४ ॥

एवं जाग्रदादिकोशत्रयगतात्मनः तुर्यब्रह्मतया उपासनाया जरामृतत्वादिस्वरूपप्रकटनाय खण्डिकेयमारभ्यते—**स्थानानीति**। चक्षुःकनीनिकादिस्थानविशेषवद्भ्यो **स्थानिभ्यः स्थानानि** चक्षुःकनीनिकाऽऽदितत्तद्गोळकलक्षणानि **यच्छति** प्रयच्छति। एवं स्थानिनां स्थानप्रदाने कूटस्थात्मनो **नाड्येव निबन्धनं** साधनम्। के ते स्थानिनः इत्यत्र—कनीनिकास्थानिनो रूपग्राहकं **चक्षुरध्यात्मं**, रूपलक्षणस्थानं **द्रष्टव्यमधिभूतं** प्रतिष्ठा। तत्र द्रष्टव्ये प्रतिष्ठितस्य तस्य **आदित्योऽधिदैवतं** अनुग्राहकस्थानम्। एवं त्रिस्थानस्थानिनश्चक्षुषः स्थानसम्बन्धेऽपि **नाड्येव** चाक्षुषो नाडीसम्बन्ध एव **निबन्धनं** कारणम्। **य** आत्मा **चक्षुषि** संचरति **यो द्रष्टव्ये य आदित्ये यः** त्रिस्थानसंसर्गहेतौ **नाड्यां यः प्राणे** नाड्यवच्छिन्ने चक्षुःशक्तिप्रापके **यो विज्ञाने** चक्षुःशक्तिद्वारा प्रकाशके बुद्धिमये जीवे **य आनन्दे** रूपज्ञानजानन्दवृत्तौ तत्स्मृतौ च **यो हृद्याकाशे** रूपज्ञानतत्फलानन्दस्वीयाभिमानलक्षणहार्दवृत्तौ **य एतस्मिन् सर्वस्मिन्नन्तरे** अन्तर्यामी भूत्वा **संचरति सोऽयं** सर्वानुस्यूततुर्या**त्मा तमिममात्मानं** अन्तर्यामिणं **अजरं** जराऽऽदिविकारातीतं **अमृतं** मृत्यादिविक्रियारहितं **अभयं** भयहेतुद्वैतशून्यं **अशोकं** कालत्रयेऽपि सांसारिकशोकविरळं **अनन्तं** त्रिविधपरिच्छेदशून्यं तुर्यात्मानं **उपासीत** तुरीयं ब्रह्मास्मीत्यनुसन्धानं कुर्यात् ॥ १ ॥ तथा **श्रोत्रं अध्यात्मं श्रोतव्यं** शब्दलक्षणं **अधिभूतम्**। **यः प्राणे** इत्यादि सर्वपर्यायेषु समानम् ॥ २–७ ॥ **अहंकर्तव्यं** स्वात्मात्मीयतया अभिमन्तव्यम् ॥ ८ ॥ **चित्तं** नाम कारणशरीरात्मकं **चेतयितव्यं** स्वापवृत्त्यादिकं **अधिभूतं** कारणक्षेत्रज्ञोऽत्राधिदैवतम् ॥ ९–१४ ॥

ईश्वरस्य तुर्यानतिरेकः

एष सर्वज्ञ एष सर्वेश्वर एष सर्वाधिपतिरेषोऽन्तर्याम्येष योनिः सर्वस्य सर्वसौख्यैरुपास्यमानो न च सर्वसौख्या[1]नुपास्यति वेदशास्त्रैरुपास्यमानो न च वेदशास्त्रा[2]नुपास्यति यस्यान्नमिदं सर्वं [3]न च योऽन्नं भवत्यतः परं सर्वनयनप्रशास्ताऽन्नमयो भूतात्मा प्राणमय इन्द्रियात्मा मनोमयः संकल्पात्मा विज्ञानमयः कालात्माऽऽनन्दमयो लयात्मैकत्वं नास्ति द्वैतं कुतो मर्त्यं नास्त्यमृतं कुतो नान्तःप्रज्ञो न बहिःप्रज्ञो नोभयतःप्रज्ञो न प्रज्ञानघनो न प्रज्ञो नाप्रज्ञोऽपि नो विदितं वेद्यं नास्तीत्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥ १९ ॥

तुर्यातिरिक्तोऽयमीश्वर इत्यत आह— **एष सर्वज्ञ इति** । योऽजरामृताभयत्वेनोक्तः **एष** एव मूलाविद्याबीजांशयोगतः **सर्वज्ञः** सर्वविदित्यर्थः । किंच— एष इति । **एष सर्वेश्वरः** सर्वनियन्तृत्वात्, **एष सर्वाधिपतिः** सर्वमधिष्ठाय पालयितृत्वात्, **एषोऽन्तर्यामी** सर्वान्तरत्वात्, **एष योनिः सर्वस्य** कार्यसामान्यस्य योनिः कारणरूपत्वात् । किंच— **सर्वसौख्यैरिति** । लौकिकालौकिक**सर्वसौख्यैः** हेतुभिः तत्सिद्ध्ये स्वांशजजीवकोटिभिः **उपास्यमानो** भवति स्वस्यैव सर्वसौख्यफलप्रदत्वात्, सोऽसौ भगवान् सर्वसौख्यान्— सौख्यानीति लिङ्गव्यत्ययः— तान्युद्दिश्य **न** किंचनोपास्यति । तथा प्रागुक्तफलाय **वेदशास्त्रैः** तदुपदिष्टसाधनैः अयमुपास्यो भवति **न चासौ वेदशास्त्रान्** शास्त्राणि तत्प्रभवसाधनानि **उपास्यति** स्वयं नानुतिष्ठतीत्यर्थः, स्वस्यैव फलरूपत्वात् । **यस्येदं** स्वाविद्यापदतत्कार्यजातं **अन्नं** भोज्यं भवति, **यो न** कस्यचिदप्यन्नं भोग्यं **भवति** स्वातिरिक्तात्तान्नादाभावात् । यत एवं **अतः**

[1] न्युपा—अ २, क. [2] ण्युपा—अ २, क. [3] तच—अ, अ १.

**सर्वनयनप्रशास्ता** स्वातिरिक्तप्रपञ्चपञ्चकृत्यप्रवर्तकत्वात् प्रशास्तृत्वं तस्यास्य, अतः कार्यप्रपञ्चात् **परं** तत्त्वं ब्रह्म पञ्चधा उपदिश्यते **अन्नेति** । स्थूलप्रपञ्चमयत्वात् **अन्नमयः**, **भूतात्मा** विराट् **प्राणमयः** सूक्ष्मशरीरमयः, **इन्द्रियात्मा** हिरण्यगर्भ उच्यते, **मनोमयः** अन्तरशरीरमयः, **सङ्कल्पात्मा** बीजात्मेत्युच्यते बीजात्मनः सत्यसङ्कल्पत्वात् । **विज्ञानमयः** "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह" इति श्रुत्यनुरोधेन समाधिनिष्पन्नो विज्ञानमयः, **कालात्मा** कालरूपगुणसाम्यावभासकसाक्ष्यात्मा, "सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियं," "यस्मिन् स्थितो न दुःखेन गुरुणाऽपि विचाल्यते" इति स्मृत्यनुरोधेन, **आनन्दमयः** प्रत्यगानन्दाभिन्नपरमानन्दस्वरूपः, **लयात्मा** स्वातिरिक्तप्रपञ्चविलयाधिकरणत्वात् । उक्तविशेषणविशिष्टे परमात्मनि **सापेक्षैकत्वमपि नास्ति कुतो द्वैतं**, "एकाभावे द्वितीयं न" इति श्रुतेः । **न कुतोऽपि मर्त्यं** न हि मर्त्यशरीरादिविकल्पोऽस्ति, **अमृत**विकल्पोऽपि **कुतः** संभवति, "मरणं यदि चेज्जन्म जन्माभावे मृतिर्न च" इति श्रुतेः, निष्प्रतियोगिकब्रह्ममात्रावगतेः एकानेकादिविकल्पापह्नवपूर्वकत्वात् । अन्तर्बाह्यादिप्रज्ञाविकल्पतया वेद्यस्य कुतो ब्रह्ममात्रतेत्यत आह---**नान्तःप्रज्ञ** इति । स्वान्तः स्वाज्ञविकल्पितकामसङ्कल्पादिवृत्तिविकल्पवृत्त्यारोपापवादाधिकरणतैजसतुर्यकलनाबाह्यत्वात् । तथा अयं **न बहिःप्रज्ञः** बहिःप्रज्ञाऽऽरोपापवादाधिकरणविश्वतुर्यकलनाविरळत्वात् । तथा **नोभयतःप्रज्ञः** स्वस्मिन् स्वातिरिक्ते वा प्रज्ञाविरळप्राज्ञतुर्यविकल्पासहत्वात् । अत एव **न प्रज्ञानघनः** जाग्रदादिप्रज्ञानैः घनो निबिडः, विराडादितत्कलनाभावात् । तथा **न प्रज्ञः** विषयप्रज्ञाविरळत्वात् । **नाप्रज्ञोऽपि** स्वाज्ञानविषयक प्रज्ञाभावात्, भूमानन्दमात्रप्रज्ञत्वाच्च । कस्मादेवं न प्रतीयत इत्यत्र --**नो विदितं वेद्यं नास्तीति**, स्वातिरिक्तं विदितं न भवति, निष्प्रतियोगिकस्वमात्रत्वात् । **एतत्** यथोपदिष्टं **निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनमि**त्युक्तार्थम् ॥ १९ ॥

इति पञ्चमः खण्डः

---

# तृतीयानुशासनम्—स्वमात्रतत्त्वम्

ब्रह्मण एव सर्वसृष्टिः

नैवेह किंचनाग्र आसीदमूलमनाधारा इमाः प्रजाः प्रजायन्ते ॥ १ ॥

एवं प्रथमद्वितीयानुशासनाभ्यां बहूपायपूर्वकं तुर्यतत्त्वं निर्धारितम् । इदानीं स्वातिरिक्तप्रपञ्चयाथात्म्यप्रतिपादनद्वारा तृतीयानुशासनेन स्वमात्रतत्त्वं निर्धार्यते—नैवेहेत्यादिना । इहेदानीं परिदृश्यमानकार्यजातं किंचनाप्यग्रे प्रागुत्पत्तेः नैवासीत्, अपि तु अमूलमेवासीत्, नत्वर्थान्तरम् । तस्मात् कारणात् तमोभूतादिक्रमेण प्रक्रमोक्तरीत्या इमाः प्रजाः अनाधाराः भगवदतिरिक्ताधाराधेयवैरळ्यात् भगवदाधाराः रज्जुसर्पवत् जायन्ते । सोऽसौ स्वाज्ञविकल्पितप्रजाऽऽधारभूतो नारायण एक एव ॥ १ ॥

सर्वप्रपञ्चस्य नारायणानतिरेकः

चक्षुश्च द्रष्टव्यं च नारायणः श्रोत्रं च श्रोतव्यं च नारायणो घ्राणं च घ्रातव्यं च नारायणो जिह्वा च रसयितव्यं च नारायणस्त्वक् च स्पर्शयितव्यं च नारायणो मनश्च मन्तव्यं च नारायणो बुद्धिश्च बोद्धव्यं च नारायणोऽहंकारश्चाहंकर्तव्यं च नारायणश्चित्तं च चेतयितव्यं च नारायणो वाक् च वक्तव्यं च नारायणो हस्तौ चादातव्यं च नारायणः पादौ च गन्तव्यं च नारायणः पायुश्च विसर्जयितव्यं च नारायण उपस्थश्चानन्दयितव्यं च नारायणो धाता [1]विधाता कर्ता विकर्ता दिव्यो देव एको नारायणः ॥ २ ॥

[1] विधर्ता—क.

आदित्या रुद्रा मरुतो वसवोऽश्विनावृचो यजूंषि सामानि मन्त्राग्निराज्याहुति [1]संभवो दिव्यो देव एको नारायणः ॥ ३ ॥

माता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायणः ॥ ४ ॥

कथं पुनः नारायणस्यैकत्वं इत्याशङ्क्य, स्वाज्ञदृष्टिविकल्पितचक्षुरादि दिश इत्यन्तं तद्दृष्ट्या मिथो भिन्नमपि स्वज्ञदृष्ट्या सर्वं नारायण एव परमार्थदृष्ट्या नारायणादतिरिक्तं न किंचिदस्तीत्याह—**चक्षुश्चेति** । चक्षुरिन्द्रियं **द्रष्टव्यं** रूपजातं, चशब्दद्वयतो द्रष्टा च । स्वाज्ञदृष्ट्या मिथो भेदेऽपि स्वज्ञदशायां एतत्त्रयं नारायण एव । तथा **श्रोत्रं चे**त्यादि समानम् । **धाता** विराट् स्वाविद्याऽण्डस्थूलांशधारकत्वात् । **विधाता** हिरण्यगर्भात्मना तत्सूक्ष्मांशधारकत्वात् । **कर्ता** ईश्वरात्मना तद्बीजांशमवष्टभ्य स्वातिरिक्तप्रपञ्चसर्गस्थितिसंहारकर्तृत्वात् । **विकर्ता** तुर्यात्मना तत्तुर्यांशासङ्गतया च विगतकर्तृत्वात् । स्वेन रूपेण **दिव्यो देव एको नारायणः** स्वे महिम्नि विद्योतमानपरमात्मरूपत्वात् ॥ २ ॥ तथा द्वादशादित्याः एकादश **रुद्राः** सप्त **मरुतः** अष्टौ **वसवः अश्विनौ** ऋगादिवेदचतुष्टयं **मन्त्रो** याज्यापुरोनुवाक्यादिः होममन्त्रः तदाधारः त्रेताग्निः तत्साधनं **आज्यं** तदुपलक्षितं होमद्रव्यं **आहुतिः** हवनक्रिया च **संभवः** जन्म च **दिव्यो देव एको नारायणः** ॥ ३ ॥ मात्रादिसुहृदन्तं परलोकगतिश्च **नारायणः** ॥ ४ ॥

परागतिप्रापकसुषुम्नानामानि

विराजा सुदर्शनाजितासोम्यामोघाकुमारामृतासत्यामध्यमा-[2]नासीराशिशुरासुरासूर्या[3]भास्वतीविज्ञेयानि नाडीनामानि दिव्यानि ॥५॥

तस्य परागतिरूपस्य नारायणस्य प्राप्तिद्वारसुषुम्नानामानि कानीत्यत आह—**विराजेति** तत्प्राप्तिहेतुत्वात्, **सुदर्शना** ज्ञानिदर्शनीयत्वात्, **जिता**

[1] संभवादिति दि—अ २, क. [2] नासिम—अ. नासीना—अ १.
[3] भास्वरा—अ २, क

अपराजितब्रह्माप्तिहेतुत्वात्, **सौम्या** सुखमार्गत्वात्, **अमोघा** अप्रच्युतिहेतुत्वात्, **कुमारा** बाल्यपदप्रापकत्वात्, **अमृता** अमृतत्वहेतुत्वात्, "तयोर्ध्वमायन्नमृतत्वमेति" इति श्रुतेः, **सत्या** सत्यब्रह्मलोकाप्तिहेतुत्वात्, **मध्यमा** इडाऽऽदिदशनाडीमध्यगत्वात्, **नासीरा** नाडीनां प्रधानत्वात्, शिशून् प्राणान् रातीति **शिशुरा** प्राणविश्रान्तिस्थानत्वात्, अमुं मुख्यं प्राणं रातीत्यसुरा हिरण्यगर्भपदप्रापकत्वात्, सूर्या सूर्यगतिप्रदत्वात्, **भास्वती** अर्चिर्मार्गत्वात्; इत्येवं नारायणाप्तिहेतुसुषुम्नानाडीनामानि दिव्यानि अप्राकृतानि ॥ ५ ॥

नारायणस्यैव सर्वत्र कर्तृत्वम्

[1]गर्जति गायति वाति वर्षति वरुणोऽर्यमा चन्द्रमा [2]कालः कविर्धाता [3]ब्रह्मा मघवा दिवसाश्चार्धदिवसाश्च कलाः कल्पाश्चोर्ध्वं च दिशश्च सर्वं नारायणः ॥ ६ ॥

पुरुष एवेदं सर्वं यद्भूतं यच्च भव्यम् ॥
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदम् ॥

तदेतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥ ७ ॥

[1] गच्छति —अ, अ १, उ १.

[2] कलाकलि—अ, अ १, अ २, क, मु. व्याख्यानुसारी पाठस्तु "कालः कविः" इति.

[3] ब्रह्मा प्रजापतिर्मघवा—मु.

एवं नाडीगन्तर्व्योऽयमात्मा यः स एव पर्जन्यो भूत्वा **गर्जति**, गन्धर्वो भूत्वा **गायति**, वायुः भूत्वा **वाति**, मेघो भूत्वा **वर्षति** । स एव **वरुणो** जलेश्वरः, स एव **अर्यमा** सूर्यः **चन्द्रमाः काल**: निमेषादिः **कविः** शुक्रः **धाता ब्रह्मा मघवा** मघवान् इन्द्रः । **दिवसाः** षष्टिघटिकामात्राः, निशामात्रं अहर्मात्रं वा अर्धदिवसाः, चशब्दो यामोपलक्षणार्थः । **कलाः** विकला घटिकामात्रपूरकषष्टिविघटिकाः, **कल्पाश्च** मानवाहोरात्ररूपाः महाकल्पाः वैराजाहोरात्ररूपाः, **अधश्चोर्ध्वं च**, **दिशश्च** प्रागाद्याः, चशब्दात् आग्नेयादि-विदिशोऽपि गृह्यन्ते । यदुक्तं चक्षुरित्यादि दिशइत्यन्तं अनुक्तं वा **सर्वं नारायणः** ॥ ६ ॥ **पुरुष एवेदं सर्वं यद्भूतं** अतीतं **यच्च भव्यं** वर्तमानं भविष्यच्च, एवमुक्तं अनुक्तं सर्वं नारायण एवेत्यर्थः । **तद्विष्णोः** व्यापनशीलस्य **परमं** उत्कृष्टं व्याप्यसापेक्षव्यापकताऽपह्नवसिद्धब्रह्ममात्रतया पद्यत इति **पदं सूरयः** ब्रह्मविद्वरीयांसः स्वमात्रतया **सदा पश्यन्ति** । पश्यन्तीति व्यपदेशतः परिच्छेदप्रसक्तौ **दिवि चक्षुरिव आततं** अपरिच्छिन्नमित्यर्थः । सूरयः कीदृशाः? **विप्रासो** विप्राः **विपन्यवो** गतमन्यवः **जागृवांसः** स्वाज्ञाननिद्राविरळा इत्यर्थः । उक्तविशेषणविशिष्टाः सूरयो **यत् समिन्धते यद्विष्णोः परमं पदं** सदा अनुसन्दधते तदेव निष्प्रतियोगिकब्रह्ममात्रतया अवशिष्यते । **इति**शब्दो मन्त्रपरिसमाप्त्यर्थः ॥ ७ ॥

इति षष्ठः खण्डः

---

# चतुर्थानुशासनम्—अन्तर्यामिस्वरूपम्

नारायणस्य सर्वान्तर्यामित्वम्

अन्तःशरीरे निहितो गुहायामज एको नित्यो यस्य पृथिवी शरीरं यः पृथिवीमन्तरे संचरन् यं पृथिवी न वेद यस्यापः

शरीरं योऽपोऽन्तरे संचरन् यमापो न विदुः यस्य तेजः शरीरं यस्तेजोऽन्तरे संचरन् यं तेजो न वेद यस्य वायुः शरीरं यो वायुमन्तरे संचरन् यं वायुर्न वेद यस्याकाशः शरीरं य आकाशमन्तरे संचरन् यमाकाशो न वेद यस्य मनः शरीरं यो मनोऽन्तरे संचरन् यं मनो न वेद यस्य बुद्धिः शरीरं यो बुद्धिमन्तरे संचरन् यं बुद्धिर्न वेद यस्याहंकारः शरीरं योऽहंकारमन्तरे संचरन् यमहंकारो न वेद यस्य चित्तं शरीरं यश्चित्तमन्तरे संचरन् यं चित्तं न वेद यस्याव्यक्तं शरीरं योऽव्यक्तमन्तरे संचरन् यमव्यक्तं न वेद यस्याक्षरं शरीरं योऽक्षरमन्तरे संचरन् यमक्षरं न वेद यस्य मृत्युः शरीरं यो मृत्युमन्तरे संचरन् यं मृत्युर्न वेद स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः ॥ १ ॥

उक्तार्थमेव अन्तर्यामिनिरूपणद्वारा प्रकटयितुं चतुर्थानुशासनमारभ्यते—**अन्तरिति** । परावरान्तःशरीरमध्ये व्यष्टिसमष्टिहृदयगुहायां निहितः प्रत्यगादिरूपेण निक्षेपवत् प्रतिष्ठितः । शरीरासनतो जन्मादित्वं स्यादित्यत आह—**अज इति** । घटाद्यसङ्गाकाशवत् देहाद्यसङ्गात्मनो जन्माद्यभावात् । अत एव **नित्यः** । स्वविकल्पोपाधिषु अनेकेष्वपि स्वयं नित्य एक एव, द्वित्वाभावात् । **यस्याद्वयात्मनः पृथिवी शरीरं** स्वनियम्यत्वात्, **यः पृथिवीमन्तरे संचरन्** तदात्मतया वर्तमानो भवति, अत एव जडात्मिकेयं **पृथिवी यं** स्वान्तरात्मभूतं **न वेद, स एषः** इत्यग्रेण सम्बन्धः । **यस्याप** इत्यादि समानम् । **अक्षरम्**ीश्वरतत्त्वम् । स्वातिरिक्तं मारयतीति **मृत्युः** साक्षी **यं** परमात्मानं **न वेद स एष** स्वाज्ञदृष्टिप्रसक्तसर्वभूतेषु स्वज्ञदृष्ट्या **अन्तरात्मा अपहतपाप्मा** व्याविद्धपापपुण्यत्वात्, **दिव्यो देव एको नारायणः** उक्तार्थः ॥ १ ॥

एतद्विद्यावंशः

एतां विद्यामपान्तरतमाय ददावपान्तरतमो ब्रह्मणे ददौ ब्रह्मा घोराङ्गिरसे ददौ घोराङ्गिरा रैक्काय ददौ रैक्को रामाय ददौ रामः सर्वेभ्यो भूतेभ्यो ददावित्येवं निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥ २ ॥

स्वाज्ञसमर्पितसविशेषताऽपाये निष्प्रतियोगिकब्रह्ममात्रमवशिष्यते इत्येतां विद्यां आदिब्रह्मा यस्मात् अपान्तरमपगतं तमः सोऽयं अपान्तरतमः तस्मै अपान्तरतमाय ददौ । सोऽसौ अपान्तरतमो विष्णुः ब्रह्मणे चतुर्मुखाय ददौ । सोऽसौ ब्रह्मा घोराङ्गिरसे ददौ । घोराङ्गिराः रैक्काय ददौ, रैक्कः परशुरामाय ददौ । रामः सर्वेभ्यो भूतेभ्यो ददौ ॥ २ ॥

इति सप्तमः खण्डः

---

# पञ्चमानुशासनम्—शरीरस्थात्मतत्त्वम्

शरीरस्थस्याप्यात्मनः शुद्धत्वम्

अन्तःशरीरे निहितो गुहायां शुद्धः सोऽयमात्मा सर्वस्य मेदोमांसक्लेदावकीर्णे शरीरमध्येऽत्यन्तोपहिते चित्रभित्तिप्रतीकाशे गन्धर्वनगरोपमे कदलीगर्भवन्निःसारे जलबुद्बुदवच्चञ्चले निःसृतमात्मानमचिन्त्यरूपं दिव्यं देवमसङ्गं शुद्धं तेजस्का[1]यमरूपं सर्वेश्वरमचिन्त्यमशरीरं निहितं गुहायाममृतं विभ्राजमानमानन्दं तं पश्यन्ति विद्वांसस्तेन लयेन पश्यन्ति ॥ १ ॥

वैराग्यहेतोः शरीरयाथात्म्यप्रकटनपूर्वकं तन्निःसृतात्मयाथात्म्यं प्रपञ्चयितुं पञ्चमानुशासनमारभ्यते—अन्तरिति । अन्तःशरीरे निहितो गुहायां

[1] यं सर्वरूपं—उ, उ १.

इत्युक्तार्थम् । यः सर्वप्राणिगुहागतः शुद्धः **सोऽयमात्मा** । सर्वस्य ब्रह्मादिस्तम्बान्तस्य शरीरत्रये अशुद्धेऽपि तद्गतविकारास्पृष्टप्रत्यगात्मा शुद्ध एव स्थूलदेहमध्यगतोऽपीत्याह—**सर्वस्येति** । सर्वस्य स्थूलशरीरजातस्य **मेदोमांसक्लेदावकीर्णे** मेदोमांससम्बन्धिक्लेदेन द्रवेण अवकीर्णे विलिप्ते दुर्गन्धे आधिव्याधिजरामृत्युभिः **अत्यन्तोपहिते चित्रभित्तिप्रतीकाशे** । अत्रास्पन्दजाड्यदृष्टान्तमाह—**गन्धर्वनगरोपम** इति । मुमूर्षुमरणकालविभातभाविजन्मानुकूलनानारत्नखचितपक्षिपन्नगादिसदृशे **कदळीगर्भवत् निःसारे जलबुद्बुदवत् चञ्चले** क्षणविनाशिनि एवंरूपे **शरीरे** तस्यापि मध्ये, वर्तमानोऽप्ययमात्मा शुद्ध एवेति पूर्वेणान्वयः । तमिमं शरीरात् **निःसृतं आत्मानं** अशुचिदुःखदोषविरळं **अचिन्त्यरूपं** अनिदंवस्तुत्वेन निर्विषयत्वात् **दिव्यं** अप्राकृतं **देवं** द्योतनात्मकं **असङ्गं** वस्त्वन्तरप्रसक्तावपि तत्सङ्गरहितमेव **शुद्धं तेजस्कायं** शक्तित्रयात्मकतेजःशरीरं अत एव **सर्वमयं** सर्वस्वरूपं **अरूपं** रूपादिमात्राऽतीतं **सर्वेश्वरं** कारणोपाधितया सर्वनियामकं **अचिन्त्यं** केनापि चिन्तितुमशक्यं **अशरीरं** शरीरत्रयविरळं **गुहायां** बुद्धौ **निहितं** तद्वृत्तिसहस्रभावाभावप्रकाशकत्वेन **अमृतं** स्वाज्ञादिसमर्पितसर्वविशेषारोपापवादापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रतया **विभ्राजमानमानन्दं** निरतिशयानन्दरूपं **विद्वांसो** ब्रह्मविद्वरीयांसः तेन स्वातिरिक्तलयेन अपह्नवेन **पश्यन्ति** । तमिमं परमात्मानं स्वमात्रमिति विद्यादिति शेषः ॥ १ ॥

**इति अष्टमः खण्डः**

---

निर्बीजब्रह्मणः सर्वाप्ययाश्रयत्वम्

**अथ हैनं रैक्कः पप्रच्छ भगवन् कस्मिन् सर्वेऽस्तं गच्छन्तीति । तस्मै स होवाच । चक्षुरेवाप्येति यश्चक्षुरेवास्तमेति द्रष्टव्यमेवाप्येति यो द्रष्टव्यमेवास्तमेत्यादित्यमेवाप्येति य आदित्यमेवास्तमेति[1]विराजामे-**

[1] विराजमे—अ, अ १.

वाप्येति यो विराजामेवास्तमेति प्राणमेवाप्येति यः प्राणमेवास्तमेति विज्ञानमेवाप्येति यो विज्ञानमेवास्तमेत्यानन्दमेवाप्येति य आनन्दमेवास्तमेति तुरीयमेवाप्येति यस्तुरीयमेवास्तमेति तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥ १ ॥

श्रोत्रमेवाप्येति यः श्रोत्रमेवास्तमेति श्रोतव्यमेवाप्येति यः श्रोतव्यमेवास्तमेति दिशमेवाप्येति यो दिशमेवास्तमेति[1]सुदर्शनामेवाप्येति यः सुदर्शनामेवास्तमेत्यपानमेवाप्येति योऽपानमेवास्तमेति विज्ञानमेवाप्येति यो विज्ञानमेवास्तमेति तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येतीति होवाच ॥ २ ॥

नासामेवाप्येति यो नासामेवास्तमेति घ्रातव्यमेवाप्येति यो घ्रातव्यमेवास्तमेति पृथिवीमेवाप्येति यः पृथिवीमेवास्तमेति जितामेवाप्येति यो जितामेवास्तमेति व्यानमेवाप्येति यो व्यानमेवास्तमेति विज्ञानमेवाप्येति तद . . . होवाच ॥ ३ ॥

जिह्वामेवाप्येति यो जिह्वामेवास्तमेति रसयितव्यमेवाप्येति यो रसयितव्यमेवास्तमेति वरुणमेवाप्येति यो वरुणमेवास्तमेति [2]सौम्यामेवाप्येति यः सौम्यामेवास्तमेत्युदानमेवाप्येति य उदानमेवास्तमेति विज्ञानमेवाप्येति तद . . . होवाच ॥ ४ ॥

त्वचमेवाप्येति यस्त्वचमेवास्तमेति स्पर्शयितव्यमेवाप्येति यः स्पर्शयितव्यमेवास्तमेति वायुमेवाप्येति यो वायुमेवास्तमेति

[1] सुदर्शन—अ, अ १.    [2] सौम्यमे—अ, अ १.

मोक्षामेवाप्येति यो मोक्षामेवास्तमेति समानमेवाप्येति यः समानमेवास्तमेति विज्ञानमेवाप्येति तद् . . . होवाच ॥ ५ ॥

वाचमेवाप्येति यो वाचमेवास्तमेति वक्तव्यमेवाप्येति यो वक्तव्यमेवास्तमेत्यग्निमेवाप्येति योऽग्निमेवास्तमेति[1]कुमारामेवाप्येति यः कुमारामेवास्तमेति वैरम्भमेवाप्येति यो वैरम्भमेवास्तमेति विज्ञानमेवाप्येति तद् . . . होवाच ॥ ६ ॥

हस्तमेवाप्येति यो हस्तमेवास्तमेत्यादातव्यमेवाप्येति य आदातव्यमेवास्तमेतीन्द्रमेवाप्येति य इन्द्रमेवास्तमेत्य[2]मृतामेवाप्येति योऽमृतामेवास्तमेति मुख्यमेवाप्येति यो मुख्यमेवास्तमेति विज्ञानमेवाप्येति तद् . . . होवाच ॥ ७ ॥

पादमेवाप्येति यः पादमेवास्तमेति गन्तव्यमेवाप्येति यो गन्तव्यमेवास्तमेति विष्णुमेवाप्येति यो विष्णुमेवास्तमेति[3]सत्यामेवाप्येति यः सत्यामेवास्तमेत्यन्तर्याममेवाप्येति योऽन्तर्याममेवास्तमेति विज्ञानमेवाप्येति तद् . . . होवाच ॥ ८ ॥

पायुमेवाप्येति यः पायुमेवास्तमेति विसर्जयितव्यमेवाप्येति यो विसर्जयितव्यमेवास्तमेति मृत्युमेवाप्येति यो मृत्युमेवास्तमेति मध्यमामेवाप्येति यो मध्यमामेवास्तमेति प्रभञ्जनमेवाप्येति यः प्रभञ्जनमेवास्तमेति विज्ञानमेवाप्येति तद् . . . होवाच ॥ ९ ॥

[1] कुमार—अ, अ १, मु. कुमारा—उ. [2] मृतमे—अ, अ १.
[3] सत्यमे—अ, अ १.

उपस्थमेवाप्येति य उपस्थमेवास्तमेत्यानन्दयितव्यमेवाप्येति य आनन्दयितव्यमेवास्तमेति प्रजापतिमेवाप्येति यः प्रजापतिमेवास्तमेति[1]नासीराममेवाप्येति यो नासीराममेवास्तमेति कूर्मिरमेवाप्येति यः कूर्मिरमेवास्तमेति विज्ञानमेवाप्येति तद् . . . होवाच ॥ १० ॥

मन एवाप्येति यो मन एवास्तमेति मन्तव्यमेवाप्येति यो मन्तव्यमेवास्तमेति चन्द्रमेवाप्येति यश्चन्द्रमेवास्तमेति शिशुमेवाप्येति यः शिशुमेवास्तमेति श्येनमेवाप्येति यः श्येनमेवास्तमेति विज्ञानमेवाप्येति तद् . . . होवाच ॥ ११ ॥

बुद्धिमेवाप्येति यो बुद्धिमेवास्तमेति बोद्धव्यमेवाप्येति यो बोद्धव्यमेवास्तमेति ब्रह्माणमेवाप्येति यो ब्रह्माणमेवास्तमेति [2]सूर्यामेवाप्येति यः सूर्यामेवास्तमेति कृष्णमेवाप्येति यः कृष्णमेवास्तमेति विज्ञानमेवाप्येति तद् . . . होवाच ॥ १२ ॥

अहंकारमेवाप्येति योऽहंकारमेवास्तमेत्यहंकर्तव्यमेवाप्येति योऽहंकर्तव्यमेवास्तमेति रुद्रमेवाप्येति यो रुद्रमेवास्तमेत्य[3]सुराममेवाप्येति योऽसुराममेवास्तमेति श्वेतमेवाप्येति यः श्वेतमेवास्तमेति विज्ञानमेवाप्येति तद् . . . होवाच ॥ १३ ॥

चित्तमेवाप्येति यश्चित्तमेवास्तमेति चेतयितव्यमेवाप्येति यश्चेतयितव्यमेवास्तमेति क्षेत्रज्ञमेवाप्येति यः क्षेत्रज्ञमेवास्तमेति

[1] नासीना—अ, अ १.
[2] सूर्य—अ, अ १.
[3] सूर—अ, अ १.

[1]भास्वतीमेवाप्येति यो भास्वतीमेवास्तमेति नागमेवाप्येति यो नागमेवास्तमेति विज्ञानमेवाप्येति यो विज्ञानमेवास्तमेत्यानन्दमेवाप्येति य आनन्दमेवास्तमेति तुरीयमेवाप्येति यस्तुरीयमेवास्तमेति तदमृतमभयमशोकमनन्तं निर्बीजमेवाप्येति तद . . . होवाच ॥ १४ ॥

एवं सर्वापह्नवेन किमवशिष्यते ? तद्याथात्म्यं कथयेति रैक्कः पृच्छतीत्याह —**अथेति**। **अथ** **हैतामुपनिषदं** अपान्तरतमादिक्रमात् प्राप्तवन्तं निजाचार्यं घोराङ्गिरसं **रैक्कः** तच्छिष्यः **प्रपच्छ हे भगवन् कस्मिन्नु** तत्त्वे **सर्वे** लयं **अस्तं गच्छन्ति इति**। एवं पृष्टवते **तस्मै स होवाच**। किमिति ? चक्षुराद्येकैककरणगतविशेषांशसप्रतियोगिकनिष्प्रतियोगिकलयात् निर्बीजं ब्रह्म अवशिष्यत इत्युच्यते **चक्षुरेवाप्येति यश्चक्षुरेव अस्तमेति** इति। **चक्षुरेव** चक्षुरन्तर्याम्यात्मानमेव नद्यः समुद्र इव रूपादिकं नित्यादिप्रळये **अप्येति** सरूपविलयं भजति। कैवल्यदशायां चक्षुःपदार्थः **अस्तमेति** स्वात्मनि विरूपविलयं अपह्नवं भजति। तथा **द्रष्टव्यं** रूपं नित्यप्रळयादौ रूपान्तर्यामिणमेवाप्येति। **अप्येति**शब्दः सर्वत्र सरूपलयार्थः, तथा **अस्तमेति**शब्दस्तु सर्वत्र विरूपविलयार्थः। **यो द्रष्टव्यमेव** नीलादिपदार्थ एव **अस्तमेति** दृष्टिद्रष्टव्यानुग्राहकादित्यमेव आदित्यान्तर्यामिणमप्येति। तथा **य आदित्यमेव** आदित्यपदार्थ एव **अस्तमेति** आदित्यानुग्राहिकेयं विराजा सुषुम्ना नाडी तां **विराजामेवाप्येति। यो विराजामेवास्तमेति** प्राणनव्यापारादिकं **प्राणान्तर्यामिणमप्येति**। यः प्राणानुग्राहकं **विज्ञानं** अन्तःकरणमेव **अस्तमेति** विज्ञेयं विज्ञानान्तर्यामिणमेवाप्येति तदनुग्राहक**मानन्दमेवाप्येति**। **य आनन्दमेवास्तमेति तुरीयं** शुद्धात्मानमप्येति। सोऽयं शुद्धात्मा तत्त्वं तुर्यं **अमृतं** स्वातिरिक्तमार्त्यवैरळ्यात् अत एव **अभयं** भयहेतुद्वैताभावात् अत एव **अशोकं** शोचनीयविषयाभावात् **अनन्तं** अपरिच्छिन्नत्वात्। यत्सापेक्षामृतादिशब्दबोध्यं तुर्यतत्त्वं सबीजं **निर्बीजं**

[1] भास्वति—अ, अ १.

ब्रह्मैवाप्येतीति होवाच, स्वाज्ञविकल्पितं सर्वं परमार्थदृष्ट्या अपह्नवमेत्य निर्बीजब्रह्मभावमापद्यते इत्युक्तवान् । तथा **श्रोत्रमेवाप्येति** इत्यादि सर्वत्र समानम् । यद्वा—चक्षुरेवाप्येति इत्यत्र द्वितीयायाः प्रथमार्थः । यश्चक्षुरेवेत्यत्र यच्छब्दप्रथमायाः सप्तम्यर्थः । स्वाधिष्ठेयचक्षुरादिविलये तदधिष्ठानस्यापि विलयो भवतीत्याशङ्क्य तन्निरसनाय चक्षुरेवाप्येति नाधिष्ठानमित्यवधारणार्थः । अप्येत्यस्तमेत्योः एकार्थत्वेन न पुनर्वचो मन्तव्यम्, शब्दभेदवत् अर्थभेदसंभवात् । स्वाज्ञस्वज्ञदृष्ट्या नित्यादिप्रळयप्रत्यगभिन्नब्रह्मस्वरूपे व्यष्टिसमष्ट्यात्मकचक्षुरादिचतुर्दशकरणं द्रष्टव्यादिचतुर्दशविषयजातं आदित्यादिकरणाधिपजातं सुदर्शनेत्यादिचतुर्दशविशेषणविशिष्टसुषुम्नानाडीप्राणादिचतुर्दशवायुजातं चैवाप्येतीत्यत्र सरूपविलयो विज्ञेयः, सप्रतियोगिकतया सविशेषत्वात् । सम्यज्ज्ञदृष्ट्या चक्षुरेव अस्तमेतीति विरूपविलयः, निष्प्रतियोगिकतया निर्विशेषत्वात् । छन्दस्सु व्यत्ययः कथमित्यत्र "छन्दसि व्यत्ययानुशासनात्" इति सूत्रम् । व्यष्टिप्रपञ्चारोपाधारो विज्ञानात्मा जीवः "जाग्रदादिविमोक्षान्तः संसारो जीवकल्पितः" इति श्रुतेः । समष्टिप्रपञ्चारोपाधिष्ठानं आनन्दात्मेश्वरः "ईक्षणादिप्रवेशान्ता सृष्टिरीशेन कल्पिता" इति श्रुतेः । सर्वप्रपञ्चापवादाधिकरणं तुर्यतुरीयात्मा प्रत्यगभिन्नपरमात्मा, "तत्त्वंपदलक्ष्यं प्रत्यगभिन्नं ब्रह्म" इति श्रुतेः । सप्रतियोगिकारोपापवादाधिष्ठानं सबीजं तदमृतमभयमशोकमनन्तं इति विशेषणविशिष्टं, तद्गतसापेक्षप्रभवसविशेषजातापह्नवसिद्धं तु निर्बीजं निष्प्रतियोगिकब्रह्ममात्रम् । शिष्टमुक्तार्थम् ॥ १–१४ ॥

निर्बीजब्रह्मवेदनफलम्

य एवं निर्बीजं वेद निर्बीज एव स भवति न जायते न म्रियते न मुह्यते न भिद्यते न दह्यते न छिद्यते न कम्पते न कुप्यते सर्वदहनोऽयमात्मेत्याचक्षते ॥ १५ ॥

"ब्रह्ममात्रमसन्न हि" इति ब्रह्म निर्बीजं, निष्प्रतियोगिकत्वात्, यन्नैवं तन्नैवं, यथा तरुः—इति श्रुतेरनुमानाच्च यन्निर्बीजब्रह्ममात्रमवशिष्यते तद्विशेष-

सामान्यफलमाह—य इति । यः "सन्मात्रमसन्न हि" इति श्रुत्यनुरोधेन **एवं निर्बीजं** ब्रह्म निष्प्रतियोगिकस्वमात्रमिति **वेद** तद्वेदनसमकालं **स मुनिः निर्बीज एव भवति** "ज्ञानसमकालमेव मुक्तः" इति श्रुतेः । निर्बीजब्रह्मसम्पत्त्याऽपि पुनर्जायते म्रियते चेत्यत आह—**न जायते न म्रियते** इति । जनिमृत्योराविद्यकत्वेन कारणतुल्यत्वात् आन्तरालिकफललक्षणजीवन्मुक्तिदशायामपि **न मुह्यते** इत्यात्मनेपदं छान्दसम्, न मुह्यतीत्यर्थः, नहि स्वाज्ञवत् मोहमेति । **न भिद्यते न दह्यते** भेदमोहग्रासब्रह्मीभूतत्वात् । अत एव **न कम्पते न कुप्यते** कम्पकोपहेतुस्वाज्ञानाभावात् । अत एव जीवन्मुक्तप्राप्यात्मा स्वातिरिक्तकलनां दहतीति **सर्वदहनोऽयमात्मेत्याचक्षते** ब्रह्मविदः ॥ १९ ॥

ब्रह्मात्मलाभोपायः

नैवमात्मा प्रवचनशतेनापि लभ्यते न बहुश्रुतेन न बुद्धिज्ञानाश्रितेन न मेधया न वेदैर्न यज्ञैर्न तपोभिरुग्रैर्न सांख्यैर्न योगैर्नाश्रमैर्नान्यैरात्मानमुपलभन्ते प्रवचनेन प्रशंसया व्युत्थानेन तमेतं ब्राह्मणाः शुश्रुवांसोऽनूचाना उपलभन्ते शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति सर्वस्यात्मा भवति य एवं वेद ॥ १६ ॥

यथोक्तात्मा प्रवचनादिभिः लभ्यत इत्यत आह—**नैवमिति** । नह्येवमय**मात्मा प्रवचनशतेनापि** वेदजाताध्ययनमात्रेणापि **लभ्यते**, न च **बहुश्रुतेन** बहुशास्त्रश्रवणेनापि लभ्यते, न च बुद्धिबलसाध्य**ज्ञानाश्रयेणा**पि लभ्यते, नापि धारणाशक्तिमन्**मेधया**, तथा **न वेदैः न यज्ञैः न उग्रैस्तपोभिः न साङ्ख्यैः न योगैः नाश्रमैः** अनुक्तैरपि लौकिकालौकिकोपायैरप्यात्मानं **न लभन्ते** । कथं लभ्यत इत्यत आह—**प्रवचनेनेति** । तमेतमात्मानमनूचानाः शिष्टाः यथोक्तसाधनसम्पन्नाः **प्रवचनेन** यथोक्तब्रह्मचर्येण श्रुतवेदान्तश्रवणेन, स्वगुरोः

प्रशंसया शुश्रूषया, व्युत्थानेन सर्वकर्मपरित्यागलक्षणसंन्यासेन, ईशाद्यष्टोत्तरशतवेदान्तार्थं यथाविधि शुश्रुवांसः उपलभन्ते। एवं श्रुत्वाऽथ स्वान्तःकरणव्यापृतेः शान्तः बहिःकरणव्यापृतेरपि दान्तः अत एव बाह्यान्तर्व्यापृतेरुपरतः शीतोष्णादितितिक्षुः सहिष्णुः समाहितो भूत्वा बाल्येन तिष्ठासेदिति निर्विकल्पसमाधिनिष्ठो भूत्वा स्वात्मन्येव स्वात्मानं पश्यति स्वातिरिक्तानात्मापह्नवसिद्धपरमात्मानं निष्प्रतियोगिकस्वमात्रमिति पश्यति। एवमात्ममात्रं **यो वेद** स मुनिः **सर्वस्यात्मा** भवति सर्वापह्नवसिद्धब्रह्मैव भवतीत्यर्थः ॥ १६ ॥

**इति नवमः खण्डः**

---

सर्वलोकानां ब्रह्मात्मनि प्रतिष्ठितत्वम्

अथ हैनं रैक्वः प्रपच्छ भगवन् कस्मिन् सर्वे संप्रतिष्ठिता भवन्तीति रसातललोकेष्विति होवाच कस्मिन् रसातललोका ओताश्च प्रोताश्चेति भूर्लोकेष्विति होवाच कस्मिन् भूर्लोका ओताश्च प्रोताश्चेति भुवर्लोकेष्विति होवाच कस्मिन् भुवर्लोका ओताश्च प्रोताश्चेति सुवर्लोकेष्विति होवाच कस्मिन् सुवर्लोका ओताश्च प्रोताश्चेति महर्लोकेष्विति होवाच कस्मिन् महर्लोका ओताश्च प्रोताश्चेति जनोलोकेष्विति होवाच कस्मिन् जनोलोका ओताश्च प्रोताश्चेति तपोलोकेष्विति होवाच कस्मिंस्तपोलोका ओताश्च प्रोताश्चेति सत्यलोकेष्विति होवाच कस्मिन् सत्यलोका ओताश्च प्रोताश्चेति प्रजापतिलोकेष्विति होवाच कस्मिन् प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेष्विति होवाच कस्मिन् ब्रह्मलोका

ओताश्च प्रोताश्चेति सर्वलोका आत्मनि ब्रह्मणि मणय इवौताश्च प्रोताश्चेति स होवाच ॥ १ ॥

रैक्वप्रश्नानुरोधेन सर्वाप्ययप्राधान्येन ब्रह्मयाथात्म्यमुपदिश्य पुनः पृच्छते ब्रह्मयाथात्म्यप्राधान्येन प्रतिष्ठां प्रकटयति—**अथेत्यादिना** । **अथ ह** स्वातिरिक्ता-प्ययप्रश्नानन्तरं **एनं** घोराङ्गिरसं **रैक्वः पप्रच्छ** हे भगवन् **कस्मिन्नु सर्वे** सलोकिलोकाः **संप्रतिष्ठिताः भवन्तीति** । एवं पृष्टवते तस्मै **स होवाच** । किमिति? **रसातललोकेष्विति होवाच** । तद्गतावान्तरभेदविवक्षया बहुवचनम् । रसातलाधस्तनलोकाभावात् प्रथमं तत्रैव सर्वप्रतिष्ठोपदेशो युज्यते । जडस्य निराधारतया स्थित्ययोगात् तदाधारं पृच्छति—**कस्मिन्नित्यादि** । **कस्मिन्नु लोके** पटगततिर्यगूर्ध्वतन्तुवत् **रसातललोका ओताश्च प्रोताश्चेति? भूर्लोकेष्विति होवाच** इत्यादि समानम । **कस्मिन् प्रजापतिलोका ओताश्च प्रोताश्चेति ब्रह्मलोकेष्विति होवाच** । एवमुक्ते तत्रापि जडत्वमूर्तत्वधिया पृच्छति—**कस्मिन् ब्रह्मलोका ओताश्च प्रोताश्चेति** । तत्र मूर्तत्वादिप्रतीत्यभावात तस्यैव सर्वलोकाधिकरणत्वमाह—**सर्वलोका इति** । रसातलादिप्रजापतिलोका-न्तानां पटे तन्तव इव ब्रह्मलोकाश्रयत्वात्, स्वातिरिक्ताश्रयाभावाच्च । यस्मादेवं तस्मात् सर्वलोका मणय इव ओताश्च प्रोताश्चेति । यः सर्वलोकाधारो ब्रह्मलोकः सोऽयमात्मैवेति **स होवाच** ॥ १ ॥

तादृशब्रह्मवेदनफलम्

एवमेतान् लोकानात्मनि प्रतिष्ठितान् वेदात्मैव स भवतीत्ये-तन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥ २ ॥

**एवमेतान्** रसातलादिप्रजापतिलोकान्तान् **आत्मनि प्रतिष्ठितान्** यो **वेद सोऽयं** मुनिः आधेयत्वसापेक्षाधारतापाये **आत्मैव** आत्ममात्रमेव **भवति** ॥

इति दशमः खण्डः

# षष्ठानुशासनम्—उत्क्रान्तिमार्गः

हृदयनाड्याः उत्क्रान्तिप्रकारः

अथ हैनं रैक्कः पप्रच्छ भगवन् योऽयं विज्ञानघन उत्क्रामन् स केन कतरद्वाव स्थानमुत्सृज्यापक्रामतीति तस्मै स होवाच हृदयस्य मध्ये लोहितं मांसपिण्डं यस्मिंस्तद्दहरं पुण्डरीकं कुमुदमिवानेकधा विकसितं तस्य मध्ये समुद्रः समुद्रस्य [1]मध्ये काशस्तस्मिन्नाड्यश्चतस्रो भवन्ति तत्र रमाऽरमेच्छाऽपुनर्भवेति तत्र रमा पुण्येन पुण्यं लोकं नयत्यरमा पापेन पापमिच्छया यत् स्मरति तदभिसंपद्यते अपुनर्भवा[व]या कोशं भिनत्ति कोशं भित्त्वा शीर्षकपालं भिनत्ति शीर्षकपालं भित्त्वा पृथिवीं भिनत्ति पृथिवीं भित्त्वाऽपो भिनत्त्यपो भित्त्वा तेजो भिनत्ति तेजो भित्त्वा वायुं भिनत्ति वायुं भित्त्वाऽऽकाशं भिनत्त्याकाशं भित्त्वा मनो भिनत्ति मनो भित्त्वा भूतादिं भिनत्ति भूतादिं भित्त्वा महान्तं भिनत्ति महान्तं भित्त्वाऽव्यक्तं भिनत्त्यव्यक्तं भित्त्वाऽक्षरं भिनत्त्यक्षरं भित्त्वा मृत्युं भिनत्ति मृत्युर्वै परे देव एकीभवतीति परस्तान्न सन्नासन्न सदसदित्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥ १ ॥

सविशेषनिर्विशेषब्रह्मलोकाप्तिसाधनसुषुम्नाकैवल्यनाड्युत्क्रान्त्यनुत्क्रान्ति - निरूपणार्थं षष्ठानुशासनमारभ्यते—अथेत्यादि । अथ ब्रह्मलोकावगत्यनन्तरं रैक्कः पप्रच्छ । किमिति? योऽयं विज्ञानमयः अन्तःकरणोपाधिको जीवः सोऽयं स्वाज्ञादिदृष्ट्या केन मार्गेण उत्क्रामति किं वा उत्सृज्य उत्क्रामति इत्येवं पृष्टवते तस्मै स होवाच । हृदयस्य मध्य इत्यादि व्याख्यातम् । तस्य

[1] मध्ये आकाशः—अ २.

हृदयस्य **मध्ये** सम्यगुद्रवतीति **समुद्रः** जीवद्धृदयस्य सद्रवत्वात् । तस्य **समुद्रस्य मध्ये** आकाशः तत्सुषिरपरिमिताव्याकृताकाशः । **समुद्रः** सम्पुटः **समुद्रस्य मध्ये** यः **कोशः** पुण्डरीकान्तःकोशः इति पाठान्तरम् । **तस्मिन्नाकाशे कोशे** वा उत्क्रान्तिसाधननाड्यः **चतस्रो भवन्ति** । कास्ता इत्यत आह— **रमाऽरमेच्छाऽपुनर्भवेति** । तत्र **सुरमा पुण्येन** साधनेन साधकं **पुण्यफलस्वर्गलोकं** नयति, **अरमा पापेन** साधनेन साधकं **पापं** लोकं रौरवादिनरकं नयति, **इच्छया** काले यत् **स्मरति** स्त्र्यादिकमन्यद्वा **तदभिसम्पद्यते**, अन्तकालस्मरणस्य तथाविधत्वादित्यत्र

अन्तकाले च मामेव स्मरन् मुक्त्वा कळेबरम् ॥
यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कळेबरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥

इत्यादिस्मृतेः । तथा **अपुनर्भवाया कोशमिति** । अत्र विसर्गलोपः छान्दसः । **अपुनर्भवायाः** सुषुम्नायाः **कोशं** सुषिरं मूलाधारविद्यमानवक्त्रं कुण्डलिनीशक्त्या योगाभ्यासवशीकृतया **भिनत्ति** । **कोशं भित्त्वा** सुषुम्नामार्गतो मूर्धप्रदेशं प्राप्य तत्रत्यं **शीर्षकपालं** भिनत्ति । सुषुम्नाद्वारेण निर्गत्य स्वतनुं त्यजति । अथ **शीर्षकपालं भित्त्वा** अर्चिरादिना ब्रह्मलोकं प्राप्य अथ निर्बीजसम्पत्तये **पृथिवीं** पृथिवीतत्त्वं **भिनत्ति** । एवं क्रमेण आकाशान्तं भित्त्वा मनस्तत्त्वं भिनत्ति । **मनो भित्त्वा** भूतादिं लिङ्गतत्त्वं **भिनत्ति** । **भूतादिं भित्त्वा महान्तं** जीवतत्त्वं **भिनत्ति** । **महान्तं भित्त्वा अव्यक्तं** स्थूलादित्रिशक्त्यात्मकं कारणभावं **भिनत्ति** । **अव्यक्तं भित्त्वा अक्षरं** ईश्वरतत्त्वं यावद्विजयते तावत्तद्भावमेत्य तत्प्रळयकाले तदपि **भिनत्ति** । **अक्षरं भित्त्वा मृत्युं** साक्षितत्त्वं **भिनत्ति** । साक्षिणः स्वविकल्पितसर्वग्रासत्वात् मृत्युत्वम् । यदि कदाचित् ईश्वरप्रसादात् सुषुम्नानाड्यन्तर्विलसितकैवल्यसिरावक्त्रं प्रविशति तदा **मृत्युर्वै परे** सर्वापह्नवसिद्धे **देवे** स्वावशेषतया दीप्यमाने **एकीभवति** तन्मात्रं अवशिष्यते विद्वान् । ततः **परस्तात् न सत् नासत् न सदसत्** ॥ १ ॥

इति एकादशः खण्डः

---

# सप्तमानुशासनम्—समाधिविधिः

आहारशुद्धिः

नारायणाद्वा अन्न[1]मागतमपक्वं ब्रह्मलोके महासंवर्तके पुनः पक्वमादित्ये पुनः पक्वं क्रव्यादि पुनः पक्वं [2]जाठरेण क्लिन्नं पर्युषि[3]तं पूतमन्नमयाचितमसंक्लृप्तमश्नीयान्न कंचन याचेत ॥ १ ॥

पुरोक्तनिर्बीजब्रह्मभावापत्तिसाधनसमाधिप्रकटनाय इदं सप्तमानुशासनमारभ्यते। तस्यान्तरङ्गसाधनमादौ आहारशुद्धिमुपदिशति— **नारायणादिति**। **नारायणा**दीश्वराद्वै प्रसिद्धात् स्वाविद्यापदतत्कार्यलक्षणं **अन्नं आगतं** अहरादावुत्पन्नं, तदहरन्ते **महासंवर्ते** महाप्रळयकाले **ब्रह्मलोके** उपसंहृतं, "सर्वाः प्रजाः अहरहः ब्रह्म गच्छन्ति एतं ब्रह्मलोकम्" इति श्रुतेः। तत्र ब्रह्मलोकात् यदागतं तदन्नं अपक्वं [पक्वं] भवति। पुनरहरादावुत्पन्नं **आदित्ये** कालाग्नौ वर्षादिद्वारा परिपक्वं भवति। **पुनः क्रव्यादि** काल्याणावसथ्याग्नौ **पक्वं** भवति। **पुनः** प्राणिभुक्तं **जाठरेण पक्वं** भवति। एवं चतुर्विधपाकोपदेशः तज्ज्ञानपूर्वकभुक्तौ चतुर्विधदिव्यादिव्यसंस्कारवदिदमन्नं प्रसिद्धोदनादिरूपम्(?)। **क्लिन्नं** यातयामादिदोषदुष्टं स्रवज्जलं, तथा **पर्युषितं** निशि जलाधिवासितमित्युपलक्षणं शूद्रादिशेषस्य, एतादृशमन्नं मुमुक्षुः न कदाऽप्यश्नीयात्। **पूतं** यातयामत्वादिदोषविरळं भगवन्निवेदनतुळसीतीर्थादिमिश्रं **अन्नं अयाचितं** यदृच्छया शिष्यजनोपहृतं तथा **असंक्लृप्तं** अद्यास्य गेह इत्यादिसङ्कल्परहितं, अपितु माधूकरान्नं, **अश्नीयात्** यतिः। **न कञ्चनान्नं याचेत**। इयमेव ह्याहारशुद्धिः। तया चित्तशुद्धिः। शुद्धे चित्ते तच्छुद्धिसापेक्षं ज्ञानं विज्ञानं सम्यज्ज्ञानं तत्त्वज्ञानं वा जायते।

[1] मागतं पक्वं—अ, अ १, अ २, क.

[2] जालकिलक्लि—अ, अ १, अ २, क, उ. जालकीलक्लि—उ १. "जाठरेण" इति पाठः व्याख्यानुसारी.

[3] तापू—अ २. तपू—अ, अ १.

यस्य यादृशं ज्ञानं उदेति स तादृशं फलमश्नुते इत्यत्र—" आहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ ध्रुवा स्मृतिः स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः " इत्यादिश्रुतेः । एवं शुद्धान्नभुग्यतेरेव ज्ञानाधिकारो नेतरस्येत्यर्थः ॥ १ ॥

इति द्वादशः खण्डः

---

ब्रह्मज्ञानसाधनं सपरिकरसमाधिः

बाल्येन तिष्ठासेद्बालस्वभावोऽसङ्गो निरवद्यो मौनेन पाण्डित्येन निरवधिकारतयोपलभ्यते कैवल्यमुक्तं [1]निगमनः प्रजापतिरुवाच महत्पदं ज्ञात्वा वृक्षमूले वसेत कुचेलोऽसहाय एकाकी समाधिस्थ आत्मकाम [2]आप्तकामो निष्कामो जीर्णकामो हस्तिनि सिंहे दंशे मशके नकुले सर्पराक्षसगन्धर्वे मृत्यो रूपाणि विदित्वा न बिभेति कुतश्चनेति वृक्षमिव तिष्ठासेच्छिद्यमानोऽपि न कुप्येत न कम्पे[3]तोपलमिव तिष्ठासेच्छिद्यमानोऽपि न कुप्येत न कम्पेताकाशमिव तिष्ठासेच्छिद्यमानोऽपि न कुप्येत न कम्पेत सत्येन तिष्ठासेत् सत्योऽयमात्मा ॥ १ ॥

एवं अयाचितभिक्षान्नमश्नतः तीव्रतरवैराग्यपूर्वकं ब्रह्मज्ञानं तत्फलं च स्यादित्याह—बाल्येनेति । यः सत्वान्नाशी सोऽयं मुनिः बाल्येन तिष्ठासेत् । बाल्यशब्दार्थमाह—बालस्वभाव इति । कोऽयं बालस्वभावः? असङ्ग इति, बालस्य स्वान्यत्वात्मात्मीयाभिमानाभावेनासङ्गत्वात्, अत एव निरवद्यः

[1] निगमनप्र—अ, अ १, अ २, क [2] आत्त—क.

[3] तोत्पल—अ, अ १.

पुण्यपापावद्यराहित्यात् । **मौनेन** अवचनेन, पण्डा बोधोऽस्य सञ्जातेति पण्डितः तद्भावः पाण्डित्यं तेन **पाण्डित्येन, निरवधिकारतया** वर्णाश्रमानुष्ठानराहित्येन च मुनिः अधिकारमुपलभ्यते नेतरः इत्यर्थः । तत्राधिकारस्य देहाभिमाननिमित्तत्वात् यथा बालः स्तनंधयः कर्तव्याकर्तव्यप्रयोजनरहितः तथा एवं योगी निर्विशेषब्रह्मज्ञानमहिम्ना स्वातिरिक्तभ्रमविरळो भवति । तस्यैवं बाल्यमौनपाण्डित्यमुपेयुषो मुनेरेव केवलनिष्प्रतियोगिकनिर्विशेषब्रह्ममात्रभावः **कैवल्यं** तन्मात्रतया अवस्थानं स्यादिति सर्ववेदान्तैः **उक्तं** नेतरस्येति **निगमनो** निगमान्तार्थतत्त्वज्ञः **प्रजापतिरुवाच** । विदिततत्त्वस्य यथावत् संसरणं स्यादित्यत आह—**महदिति**। सर्वमहत्तया निष्प्रतियोगिकब्रह्ममात्रं पद्यत इति **महत्पदं** स्वमात्रमिति **ज्ञात्वा** ग्रामात् बहिष्ठ**वृक्षमूले वसेत** समाधिं कुर्वन् तत्रैव तिष्ठेत्,

> विज्ञातब्रह्मतत्त्वस्य यथापूर्वं न संसृतिः ।
> अस्ति चेन्न स विज्ञातब्रह्मभूतो बहिर्मुखः ॥

इति श्रुतेः । यत एवमतो विदिततत्त्वज्ञोऽयाचितवृत्त्या यदृच्छालाभसन्तुष्टः सन् कालं नयेत् । यद्यप्राप्तं तदा न यत्नं कुर्यात् । भिक्षाऽलाभे नश्यतु तिष्ठतु वा इत्युपेक्षामेव कुर्यादित्यर्थः । अपि च **कुचेलः** जीर्णकन्थाकौपीनमात्रालङ्कृतः **असहायः** परिचारकान्तरराहित्यात् अत एव **एकाकी समाधिस्थः स्वात्ममात्रकामः आप्तकामः** सम्प्राप्तसमस्तकामत्वात् अत एव **निष्कामः** पृथिव्याद्यव्यक्तान्ताभिलाषरहितः निर्विकल्पसमाधिना **जीर्णकामः** ग्रामात् बहिः वृक्षमूलवासकाले यदृच्छया संप्राप्ते व्याघ्रे **हस्तिनि सिंहे दंशे मशके नकुले सर्पराक्षसगन्धर्वे मृत्योः** सर्वहरस्य **रूपाणि**, यद्वा मृत्योः सर्वग्रासस्य रूपाणि सच्चिदानन्दात्मकानि, **विदित्वा** मुनिः **कुतश्चन** कारणादपि **न बिभेति** केवलनिर्भयतया आस्ते । **इतिशब्दः** सम्मतिवचनसमाप्त्यर्थः । एवं लयसमाधेः प्रथमद्वितीयभूमी उक्ते । तृतीयभूमिस्तु—**वृक्षमिव तिष्ठासेत्** स्थातुमिच्छेत् । तदवस्थानं कीदृशमित्यत्र—**छिद्यमानो न कुप्येत**, यथा वृक्षः परेण छिद्यमानोऽपि अचित्तत्वान्न कुप्यति तथा सचित्तोऽप्ययं परैरवयवशः छिद्यमानोऽपि न

कुप्येत। स्वागाम्यादिकर्मभिः **न कम्पेत** स्वाविद्यापदतत्कार्यस्थूलांशासंभव-प्रबोधेन ब्रह्मवित्त्वमवलम्ब्य तिष्ठेत्। तथा **उपलमिव** पाषाणमिव **तिष्ठासेत्**—उत्पलमिव तिष्ठासेदिति वा—कथं? **छिद्यमानो न कुप्येत न कम्पेत** तत्सूक्ष्मांशासंभवज्ञानेन ब्रह्मविद्वरत्वमवलम्ब्य तिष्ठेत्। तथा **आकाशमिव तिष्ठासेत् छिद्यमानोऽपि न कुप्येत न कम्पेत** तद्बीजांशासंभवज्ञानेन ब्रह्मविद्वरीयान् भूयात्। अथ **सत्येन तिष्ठासेत्** स्वातिरिक्तासत्यतदर्धमात्रासंभवप्रबोधसिद्धं सत्यं तद्भावमेत्य तिष्ठेत्। एवं प्रबोधतो ब्रह्मविद्वरिष्ठो भवेत्। **सत्यो नामायमात्मा,** "सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेव सत्यम्," "पश्यतेहापि सन्मात्रमसदन्यत्," "ब्रह्ममात्रमसन्न हि" इत्यादिश्रुतेः ॥ १ ॥

सन्मात्रावगत्युपायः सप्तभूमिका

सर्वेषामेव गन्धानां पृथिवी हृदयं सर्वेषामेव रसानामापो हृदयं सर्वेषामेव रूपाणां तेजो हृदयं सर्वेषामेव स्पर्शानां वायुर्हृदयं सर्वेषामेव शब्दानामाकाशं हृदयं सर्वेषामेव गतीनामव्यक्तं हृदयं सर्वेषामेव सत्त्वानां मृत्युर्हृदयं मृत्युर्वै परे देव एकीभवतीति परस्तान्न सन्नासन्न सदसदित्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥ २ ॥

कथं सन्मात्रावगतिः इत्यत्र तदवगत्युपायसप्तभूमिकां प्रकटयति—**सर्वेषामिति**। **सर्वेषामेव गन्धानां पृथिवी हृदयं,** गन्धजातोत्पादस्थिति-भङ्गभूमित्वात्। तथा **सर्वेषामेव रसानां आपो हृदयं** इत्यादि समानम्। **सर्वेषामेव सत्वानां** पृथिव्याद्यव्यक्तान्तानां स्वातिरिक्तोपसंहर्ता सर्वसाक्षी **मृत्युः हृदयम्**। एवं पृथिव्यादिमृत्युपर्यन्तं सबीजं तत्सर्वं **परे देवे** निष्प्रति-योगिकनिर्बीजब्रह्ममात्रे **एकीभवति** तन्मात्रमवशिष्यते। **परस्तात् न सन् नासन् न सदसत्** इत्युक्तार्थम् ॥ २ ॥

इति त्रयोदशः खण्डः

---

# अष्टमानुशासनम्—सर्वात्त्वधिष्ठानं ब्रह्म

सर्वात्त्वधिष्ठानं ब्रह्म

पृथिवी वा अन्नमापोऽन्नादा आपो वा अन्नं ज्योतिरन्नादं ज्योतिर्वा अन्नं वायुरन्नादो वायुर्वा अन्नमाकाशोऽन्नाद आकाशो वा अन्नमिन्द्रियाण्यन्नादानीन्द्रियाणि वा अन्नं मनोऽन्नादं मनो वा अन्नं बुद्धिरन्नादा बुद्धिर्वा अन्नमव्यक्तमन्नादमव्यक्तं वा अन्नमक्षरमन्नादमक्षरं वा अन्नं मृत्युरन्नादो मृत्युर्वै परे देव एकीभवतीति परस्तान्न सन्नासन्न सदसदित्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥ १ ॥

अन्नात्तृद्वारा ब्रह्मयाथात्म्यप्रकटनायेदमष्टमानुशासनमारभ्यते—पृथिवीति। या **पृथिवी वै** प्रसिद्धा सैव प्रथमम**न्नं** ग्रसनीयवस्त्विति यावत्। तदपेक्षया **आपोऽन्नादाः** कारणत्वात्। **आपो वा अन्नं** इत्यादि समानम्। **आकाशो वा अन्नं इन्द्रियाण्यन्नादानि**, आकाशादिस्थूलभूतापेक्षया अपञ्चीकृतभूतकार्येन्द्रियाणां सूक्ष्मत्वात्। पूर्वपूर्वं कार्यं उत्तरोत्तरं कारणं इति मन्तव्यम्। **मृत्युर्वै परे देवे एकीभवति** इत्यादि समानम् ॥ १ ॥

इति चतुर्दशः खण्डः

---

# नवमानुशासनम्—तत्त्वदहनम्

उत्क्रान्तस्य ब्रह्मसमापत्तौ तत्त्वदहनक्रमः

अथ हैनं रैक्वः पप्रच्छ भगवन् योऽयं विज्ञानघन उत्क्रामन् स केन कतरद्वाव स्थानं दहतीति तस्मै स होवाच योऽयं विज्ञानघन

उत्क्रामन् प्राणं दहत्यपानं व्यानमुदानं समानं वैरम्भं मुख्यमन्तर्यामं प्रभञ्जनं कुमारं श्येनं श्वेतं कृष्णं नागं दहति पृथिव्यापस्तेजोवायुराकाशं दहति जागरितं स्वप्नं सुषुप्तं च तुरीयं च महतीं च लोकं परं च लोकं दहति लोकालोकं दहति धर्माधर्मं दहत्यभास्करममर्यादं निरालोकमतः परं दहति महान्तं दहत्यव्यक्तं दहत्यक्षरं दहति मृत्युं दहति मृत्युर्वै परे देव एकीभवतीति परस्तान्न सन्नासन्न सदसदित्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥ १ ॥

षष्ठानुशासने अपुनर्भवाया उत्क्रान्तस्य क्रमेण ब्रह्मसम्पत्तिरभिहिता। अत्र तु कति तत्त्वानि दग्ध्वा मुनिः ब्रह्म संपद्यत इति पृच्छति—अथेति। **अथ हैनं रैक्वः पप्रच्छ। भगवन् योऽयं विज्ञानघनः उत्क्रामन् स केन** मार्गेण **कतरद्वाव स्थानं** तत्त्वं दहति बीजानर्हं करोति इति एवं पृष्टवते **तस्मै स होवाच। योऽयं विज्ञानघन उत्क्रामन्** ब्रह्मलोकं प्राप्तो निर्बीजसम्पदिच्छया निजपरिकरभूतं **प्राणं दहति** निर्बीजं प्राणं दहति। तथा **अपानं दहतीत्यादि** समानम्। पृथिव्यादीन् जाग्रदादीन् दहति निर्बीजं करोति। **महतीं इमं च लोकं परं च लोकं दहति** तत्साधनधर्माधर्मं दहति अतः परम**मभास्करं अमर्यादं निरालोकं** तमोलोकमित्यर्थः। **मृत्युर्वै** सर्वग्रासः साक्षी परे देवे एकीभवति। **परस्तादि**त्याद्युक्तार्थम् ॥ १ ॥

इति पञ्चदशः खण्डः

---

## दशमानुशासनम्—ब्रह्मविद्यासंप्रदानम्

ब्रह्मविद्यासंप्रदानविधिः

सौबालबीजब्रह्मोपनिषन्नाप्रशान्ताय दातव्या नापुत्राय नाशिष्याय नासंवत्सररात्रोषिताय नापरिज्ञातकुलशीलाय दातव्या नैव च प्रवक्तव्या।

यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥
इत्येतन्निर्वाणानुशासनमिति वेदानुशासनमिति वेदानुशासनम् ॥ १ ॥

ब्रह्मविद्यासंप्रदायप्रकटनपूर्वकं शास्त्रमुपसंहरति—**सौबालेति** । सुबालसम्बन्धि सौबालं बीजं यस्य तत् **सौबालबीजं ब्रह्मोपनिषत्** निर्बीजब्रह्मविद्येयं **नाप्रशान्ताय दातव्या** । तथा **नापुत्राय इत्यादि** । "यस्य देवे" इति मन्त्रोऽयं श्वेताश्वतरसमाप्तौ व्याख्यातः । इत्येतन्निर्वाणानुशासनमित्याद्युक्तार्थम् ॥

**इति षोडशः खण्डः**

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
सुबालोपनिषद्व्याख्या लिखिता जयताच्चिरम् ॥
सुबालोपनिषद्व्याख्याग्रन्थसङ्ख्या निगद्यते ।
पञ्चचत्वारिंशदधिशतानां पञ्च विश्रुता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे त्रिंशत्सङ्ख्यापूरकं
सुबालोपनिषद्विवरणं सम्पूर्णम्

---

# सूर्योपनिषत्

## भद्रं कर्णेभिः—इति शान्तिः

सूर्योपनिषदः ऋष्यादिध्यानान्तम्

अथ सूर्याथर्वाङ्गिरसं व्याख्यास्यामः । ब्रह्मा ऋषिः । गायत्री छन्दः । आदित्यो देवता । हंसः सोऽहमग्निनारायणयुक्तं बीजम् । हृल्लेखा शक्तिः । वियदादिसर्गसंयुक्तं कीलकम् । चतुर्विधपुरुषार्थसिद्ध्यर्थे जपे विनियोगः । षट्स्वरारूढेन बीजेन षडङ्गम् । रक्ताम्बुजसंस्थितं सप्ताश्वरथिनं हिरण्यवर्णं चतुर्भुजं पद्मद्वयाभयवरदहस्तं कालचक्रप्रणेतारं श्रीसूर्यनारायणं य एवं वेद स वै ब्राह्मणः ॥ १ ॥

सूदितस्वातिरिक्तारिं सूरिबृन्दात्मभावितम् ।
सूर्यनारायणाकारं नौमि चित्सूर्यवैभवम् ॥

इह खलु अथर्वणवेदप्रविभक्तेयं सूर्योपनिषत् सर्वकारणत्वसार्वात्म्यकलनाप्रकटनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजृम्भते। अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते। स्वाज्ञलोकानुकम्पया सौरविद्यां श्रुतिः स्वयमुपन्यस्यति—अथेति । **अथ** यथोक्ताधिकारिसम्पत्त्यनन्तरं सूर्यप्रतिपादकाथर्वाङ्गिरसं श्रुतयो वयं व्याख्या-

स्यामः कथयामः इत्यर्थः । सूर्योपनिषदो मन्त्ररूपत्वेन ऋष्यादिध्यानान्तमुच्यते —**ब्रह्मे**ति । **हंसः सोऽहं** रामिति **बीजम्** । ह्रीमिति **हृल्लेखा शक्तिः** । हयरवलेति **वियदादिसर्गसंयुक्तं कीलकम्** । हंसामित्यादि **षट्स्वरारूढेन बीजेन** । **सप्ताश्वरथिनं** "सप्त युञ्जन्ति रथमेकचक्रम् । एको अश्वो वहति सप्तनामा ।" इति श्रुतेः । निमिषादिब्रह्मकल्पान्त**कालचक्रप्रणेतारम्** । श्रीः प्रकाशरूपिणी दीप्तिः, तद्विशिष्टः **श्रीसूर्यः** परमेश्वरः, स एव **नारायणः** परमात्मा, तं एवं प्रत्यगभेदेन **यो वेद स ब्राह्मणो** ब्रह्मनिष्ठो भवतीत्यर्थः ॥

सूर्यप्रत्यगभेदः

**ॐ भूर्भुवः सुवः । तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।**
**धियो यो नः प्रचोदयात् ॥ २ ॥**

सूर्यस्य प्रत्यगभिन्नब्रह्मता कुत इत्यत आह—**ओ**मिति । ओमित्येतदक्षरं परं ब्रह्मेति परापरब्रह्माभिधानम् । तदवयवा अकारोकारमकाराः **भूर्भुवःसुव**रिति व्याहृतित्रयरूपेण परिणता भवन्ति । व्याहृतित्रयपरिणमनं ह्यविद्याद्वयतत्कार्यजातम् । तद्व्यष्टिसमष्ट्यारोपापवादाधारा विश्वविराडोत्रादयो द्वितुर्याविकल्पान्ताः । तत्र यत्स्वातिरिक्तसर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रज्ञानप्रसवितृजनकं, **य** ईश्वरो **नो**ऽस्माकं **धियो** ब्रह्ममात्रसाम्राज्ये **प्रचोदयात्** सोऽयं सविता परमेश्वरः **तस्य सवितुः देवस्य** यत् निर्विशेषतया **वरेण्यं भर्गो** निष्प्रतियोगिकचिन्मात्रं अवशिष्यते, तत् स्वमात्रमिति वयं **धीमहि** ध्यायामः । एवं ध्याता ब्राह्मणो ब्रह्मनिष्ठो विदेहमुक्तो भवति ॥ २ ॥

सूर्यभर्गस्य जगत्कारणत्वम्

**सूर्य आत्मा जगतस्तस्थुषश्च । सूर्याद्वै खल्विमानि भूतानि**
**जायन्ते । सूर्याद्यज्ञः पर्जन्योऽन्नमात्मा ॥ ३ ॥**

यन्निर्विशेषं भर्गः तदेव स्वाज्ञदृष्ट्या परमेश्वरात्मना विश्वारोपाधिकरणतया तदुत्पत्तिस्थितिलयकारणं भवतीत्याह—**सूर्य आत्मेति** । सूत्रान्तर्यामिप्रत्यग्रूपेण स्थिरचरात्मकजगत आत्मा भवति । वियदादिभूततत्कार्यभौतिकानि च ततः संभूतानीत्याह—**सूर्यादिति** । **यज्ञः** अग्निष्टोमादिः, प्रपञ्चजीवनहेतुः **पर्जन्यः**, तज्जं **अन्नं**, तदत्ता **आत्मा** जीवपूगः तत्सर्वं सूर्यादेव जातमित्यर्थः ॥ ३ ॥

आदित्यस्तुतिः

**नमस्त आदित्य । त्वमेव प्रत्यक्षं कर्मकर्ताऽसि । त्वमेव प्रत्यक्षं ब्रह्माऽसि । त्वमेव प्रत्यक्षं विष्णुरसि । त्वमेव प्रत्यक्षं रुद्रोऽसि । त्वमेव प्रत्यक्षमृगसि । त्वमेव प्रत्यक्षं यजुरसि । त्वमेव प्रत्यक्षं सामासि । त्वमेव प्रत्यक्षमथर्वाऽसि । त्वमेव [1]सर्वं छन्दोऽसि ॥ ४ ॥**

एवं जगत्कारणात्मना यस्त्वं स्थितः **नमस्ते आदित्य** । एवं सर्वेश्वरं आदित्यं नमस्कृत्य सर्वात्मकतया स्तौति—**त्वमेवेति** । जीवात्मना **त्वमेव प्रत्यक्षं कर्मकर्ताऽसि** । त्रिमूर्त्यात्मना **त्वमेवेति** । वेदात्मना **त्वमेवेति** ॥ ४ ॥

आदित्यस्य सर्वात्मकब्रह्मत्वम्

**आदित्याद्वायुर्जायते । आदित्याद्भूमिर्जायते । आदित्यादापो जायन्ते । आदित्याज्ज्योतिर्जायते । आदित्याद्व्योम दिशो जायन्ते । आदित्याद्देवा जायन्ते । आदित्याद्वेदा जायन्ते । आदित्यो वा एष [2]एतन्मण्डलं तपति । असावादित्यो ब्रह्म । आदित्योऽन्तःकरणमनोबुद्धिचित्ताहंकाराः । आदित्यो वै व्यानः**

[1] प्रत्यक्षं सर्वं—अ. [2] एतस्मिन्म—उ १.

समानोदानोऽपानः प्राणः । आदित्यो वै श्रोत्रत्वक्चक्षूरसनघ्राणाः । आदित्यो वै वाक्पाणिपादपायूपस्थाः । आदित्यो वै शब्दस्पर्शरूपरसगन्धाः । आदित्यो वै वचनादानागमनविसर्गानन्दाः । आनन्द[1]मयो विज्ञानमयो विज्ञानमय आदित्यः ॥ ९ ॥

पुरा सङ्क्षिप्तार्थं विस्तरयति—आदित्यादिति । य एवं जगत्कारणतयोक्तः असावादित्यो ब्रह्म तत्रत्यकार्यसापेक्षकारणताऽपाये तस्यैव ब्रह्मत्वं युज्यत इत्यर्थः । अन्तःकरणादयस्तद्भिन्ना इत्यत आह—आदित्य इति । आनन्दमयविज्ञानमयशब्दौ पञ्चकोशोपलक्षणार्थौ । अपरो विज्ञानमयशब्दस्तु जीववाचीत्यर्थः ॥ ९ ॥

सूर्यं प्रति प्रार्थना

नमो मित्राय भानवे मृत्योर्मा पाहि । भ्राजिष्णवे विश्वहेतवे
  नमः ।
सूर्याद्भवन्ति भूतानि सूर्येण पालितानि तु ।
सूर्ये लयं प्राप्नुवन्ति यः सूर्यः सोऽहमेव च ॥
चक्षुर्नो देवः सविता चक्षुर्न उत पर्वतः ।
चक्षुर्धाता दधातु नः ॥
आदित्याय विद्महे सहस्रकिरणाय धीमहि ।
तन्नः सूर्यः प्रचोदयात् ॥
सविता पुरस्तात् सविता पश्चात्तात्
  सवितोत्तरात्तात् सविताऽधरात्तात् ।

[1] मयो ज्ञा—अ, अ १, अ २, क.

सविता नः सुवतु सर्वतातिं

सविता नो रासतां दीर्घमायुः ॥ ६ ॥

हे मित्र तुभ्यं नमोऽस्तु स्वातिरिक्तमृत्योः सकाशात् मां पाहीत्याह—**नम** इति । यः सर्वहेतुः सोऽहमित्याह—**सूर्या**दिति । त्रिमूर्तिभावापन्नात् **सूर्यात्** । एवं जगत्कारणरूपो यः सोऽयं मे ज्ञानचक्षुः ददात्वित्याह—**चक्षु**रिति । **चक्षुर्नो देवः सविता** तस्य नोऽस्माकं आलोकप्रदत्वात् **चक्षुर्न उत पर्वतः** उतायं सविता नोऽस्माकं भूतादिकालज्ञानचक्षुः ददातु । तद्दापनशक्तिः अस्यास्तीत्यत्र को हेतुरित्यत्राह—**पर्वत इति** । पर्वणो गणनात्मकतया पर्वशब्देन काल उच्यते । निमेषादिः कालपर्वः, तस्य पर्वतः, कालस्वरूपत्वात् "स एष कालो भुवनस्य गोप्ता" इति, "कालः कलयतामहम्", इति श्रुतेः, स्मृतेश्च । किंच—**चक्षु**रिति । **धाता** परमेश्वरो **नो** अस्माकं **चक्षुः** निर्विशेषब्रह्ममात्रदृष्टिं **दधातु** ददात्वित्यर्थः । अथ सौरगायत्रीमाह—आदित्यायेति । यो **नः** सन्मार्गे **प्रचोदयात्** तस्मै **धीमहि** तं ब्रह्मास्मीति ध्यायामीत्यर्थः । सर्वत्र पूर्णरूपः सविता अस्माकं स्वनिर्विशेषध्याननिर्वर्तकदीर्घायुः दद्यादिति प्रार्थयति—**सविते**ति । यः **सविता** दिगन्तविश्रान्तशरीरी स्यात् सोऽयं सविता **नो**ऽस्माकं पुरस्तादित्यादिदशदिग्विश्रान्तां सर्वततिमेव **सर्वतातिं** सर्वाधिष्ठानतया सर्वव्यापकतां **सुवतु** तनोतु । किं च—**नो**ऽस्माकं **सविता** निर्विशेषब्रह्मभावापत्तये **दीर्घमायुः रासतां** दीयतां इति प्रार्थितः तथा दद्यादित्यर्थः । सर्वत्र तादित्यनर्थको निपातः । यद्वा—**पश्चा**दित्यादि । स्वेनात्तात पूर्णभावात् हेतोः नः पूर्णतां सुवत्वित्यर्थः ॥ ६ ॥

सूर्याष्टाक्षरी

ॐ इत्येकाक्षरं ब्रह्म । घृणिरिति द्वे अक्षरे । सूर्य इत्यक्षरद्वयम् । आदित्य इति त्रीण्यक्षराणि । [1]एतस्यैव सूर्यस्याष्टाक्षरो मनुः ॥ ७ ॥

[1] एतद्वै सू—अ, अ १.

सौरमन्त्रराजमष्टाक्षरमुद्गिरति —ओमिति । ओमित्येकाक्षरं ब्रह्म निर्विशेषमित्यर्थः । घृणा दया अस्य अस्तीति घृणिः ॥ ७ ॥

मन्त्रजपफलम्

यः सदाऽहरहर्जपति स वै ब्राह्मणो भवति स वै ब्राह्मणो भवति । सूर्याभिमुखो जप्त्वा महाव्याधिभयात् प्रमुच्यते । अलक्ष्मीर्नश्यति । अभक्ष्यभक्षणात् पूतो भवति । अगम्यागमनात् पूतो भवति । पतितसंभाषणात् पूतो भवति । असत्संभाषणात् पूतो भवति । मध्याह्ने सूर्याभिमुखः पठेत् । सद्योत्पन्न-पञ्चमहापातकात् प्रमुच्यते । सैषा सावित्री विद्यां[द्या]न किंचिदपि न कस्मैचित् प्रशंसयेत् । य एतां महाभागः प्रातः पठति स भाग्यवान् जायते । पशून् विन्दति । वेदार्थं लभते । त्रिकाल-मेतज्जप्त्वा क्रतुशतफलमवाप्नोति । हस्तादित्ये जपति स महामृत्युं तरति स महामृत्युं तरति य एवं वेद ॥ इत्युपनिषत् ॥ ८ ॥

मन्त्रार्थानुसन्धानपूर्वकं जपफलमाह—य इति । स वै ब्राह्मणो भवति, आवृत्तिः निःसंशयार्था । इतिशब्दः सौरविद्यासमाप्तिद्योतकः ॥ ८ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं सूर्योपनिषदः स्फुटम् ।
सूर्यव्याख्याग्रन्थजातं चत्वारिंशत् समीरितम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकसप्ततिसङ्ख्यापूरकं सूर्योपनिषद्विवरणं सम्पूर्णम्

---

# स्कन्दोपनिषत्

## सह नाववतु—इति शान्तिः

ब्रह्मात्मैक्यं विद्वदनुभवः

अच्युतोऽस्मि महादेव तव कारुण्यलेशतः ।
विज्ञानघन एवास्मि शिवोऽस्मि किमतः परम् ॥ १ ॥
ननिजं निजवद्भात्यन्तःकरणजृम्भणात् ।
अन्तःकरणनाशेन संविन्मात्रस्थितो हरिः ॥ २ ॥
संविन्मात्रस्थितश्चाह[1]मजोऽस्मि किमतः परम् ।
व्यतिरिक्तं जडं सर्वं स्वप्नवच्च विनश्यति ॥ ३ ॥
चिज्जडानां तु यो द्रष्टा सोऽच्युतो ज्ञानविग्रहः ।
स एव हि महादेवः स एव हि महाहरिः ॥ ४ ॥
स एव ज्योतिषां ज्योतिः स एव परमेश्वरः ।
स एव हि परं ब्रह्म तद्ब्रह्माहं न संशयः ॥ ५ ॥

यत्रासंभवतां याति स्वातिरिक्तभिदाततिः ।
संविन्मात्रं परं ब्रह्म तत्स्वमात्रं विजृम्भते ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं स्कन्दोपनिषत् क्रमेण निर्विशेष-ब्रह्ममात्रानुभूतिं प्रकटयन्ती प्रवृत्ता । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते ।

[1] मेकोऽस्मि—अ.

स्कन्दः परमेश्वरात् परमतत्त्वमवगम्य तत्सन्निधौ विद्वदनुभव एवमेव भूयादिति स्वानुभवं प्रकटयति—**अच्युत इति**। हे **महादेव** सर्वदेवोत्तम भवत्करुणया स्वस्वरूपात् **अच्युतोऽस्मि** प्रत्यगभिन्नब्रह्मरूपेण **विज्ञानघनलक्षणशिव एवास्मि**। **अतः परं किं** अवशिष्यते, न किमपीत्यर्थः ॥ १ ॥ पुरा स्वाज्ञदशायां शरीराद्युपलक्षणस्वाविद्यापदतत्कार्यजातं **ननिजमित्यादि**। इदानीं तु **अन्तः-करणनाशेन** ॥ २ ॥ स्वस्य संविन्मात्रत्वे स्वव्यतिरिक्तस्य का गतिरित्यत आह—**व्यतिरिक्तमिति** ॥ ३ ॥ स्वव्यतिरिक्तचरस्थिरप्रपञ्चे जीवजगद्रूपेण चित्त्वं जडत्वं च प्रतिभाति, तुर्यरूपेण तत्सर्वसाक्ष्यस्मीत्याह—**चिज्जडानामिति**। यः प्रसक्तसाक्ष्यसापेक्षसाक्षी **स एव हि** ॥ ४–५ ॥

जीवपरयोरभेदः

जीवः शिवः शिवो जीवः स जीवः केवलः शिवः ।
तुषेण बद्धो व्रीहिः स्यात् तुषाभावेन तण्डुलः ॥ ६ ॥
एवं बद्धस्तथा जीवः कर्मनाशे सदाशिवः ।
पाशबद्धस्तथा जीवः पाशमुक्तः सदाशिवः ॥ ७ ॥

जीवपरयोः भेदप्रसक्तौ सदृष्टान्तं तं निराकरोति—**जीव इति** ॥ ६ ॥ स्वातिरिक्ताशया पाश्यते बध्यते इति **पाशः** स्वातिरिक्तास्तित्वविभ्रमः, तद्योगात् पर एव **जीवोऽस्मी**त्यात्मानं मन्यते, तद्वियोगतः जीवोऽपि **सदाशिवोऽस्मी**त्यात्मानं मन्यते। यत एवं अतः स्वातिरिक्तास्तित्वपाशं निष्प्रतियोगिकस्वमात्रज्ञानप्रळयकालाग्निना निर्दहेदित्यर्थः ॥ ७ ॥

शिवकेशवयोरभेदः

शिवाय विष्णुरूपाय शिवरूपाय विष्णवे ।
शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः ॥ ८ ॥

यथा शिवमयो विष्णुरेवं विष्णुमयः शिवः ।
यथाऽन्तरं न पश्यामि तथा मे [1]स्वस्तिरायुषि ।
यथाऽन्तरं न भेदाः स्युः शिवकेशवयोस्तथा ॥ ९ ॥

शिवकेशवयोः प्रसक्तभेदं परिहरति—शिवायेति ॥ ८ ॥ **यथाऽन्तरं** शिवकेशवयोः भेदम् । स्वस्तिरस्तु स्वस्त्यस्तु । न कदाऽपि तयोः भेदः स्फुरत्वित्याह—**यथान्तरमिति** । यथा ब्रह्मात्मैक्यज्ञानेन प्रत्यक्परात्मनोः विश्वतैजसाद्यवान्तरभेदाः न स्युः तथा शिवकेशवयोः भेदादर्शनेन स्वस्त्यस्त्विति पूर्वेणान्वयः ॥ ९ ॥

आत्मज्ञानान्तरङ्गसाधनं मानसिकपूजा

देहो देवालयः प्रोक्तः स जीवः केवलः शिवः ।
त्यजेदज्ञाननिर्माल्यं सोऽहंभावेन पूजयेत् ॥ १० ॥
अभेददर्शनं ज्ञानं ध्यानं निर्विषयं मनः ।
स्नानं मनोमलत्यागः शौचमिन्द्रियनिग्रहः ॥ ११ ॥
ब्रह्मामृतं पिबेद्भैक्षमाचरेद्देहरक्षणे ।
वसेदेकान्तिको भूत्वा चैकान्ते द्वैतवर्जिते ॥
इत्येवमाचरेद्धीमान् स [2]एवं मुक्तिमाप्नुयात् ॥ १२ ॥

स्वाज्ञलोकानां स्वज्ञानजननान्तरङ्गसाधनमानसिकपूजाविधिमाचष्टे—**देह इति** ॥ १० ॥ प्रत्यक्परयोः **अभेददर्शनम्** ॥ ११ ॥ **भैक्षमाचरेद्देहरक्षणे** देहमात्ररक्षणे तु यथोक्तकाले भैक्षमाचरेदित्यर्थः । पूजाफलमाह—**इत्येवमिति** ॥ १२ ॥

[1] यावदायुषि—उ. [2] एव—उ.

स्वस्त्यायुःप्रार्थनापुरस्सरं परमपदानुसंधानम्

श्रीपरमधाम्ने स्वस्ति चिरायुष्योन्नम इति ॥

[1]विरिञ्चिनारायणशंकरा[2]त्मकं नृसिंह देवेश तव प्रसादतः ।
अचिन्त्यमव्यक्तमनन्तमव्ययं वेदात्मकं ब्रह्म निजं विजानते ॥ १३ ॥

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ १४ ॥

तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदम् ॥

इत्येतन्निर्वाणानुशासनमिति वेदानुशासनमित्युपनिषत् ॥ १५ ॥

चिरं ब्रह्मानुसन्धानानुकूलायुःस्थैर्यं बुधाः प्रार्थयन्तीत्याह—**श्रीति** । श्रीमत् परमं उत्कृष्टं ब्रह्मलोकं वैकुण्ठं कैलासं च धाम स्थानं यस्य त्रिमूर्त्तिरूपिणः तस्मै **श्रीपरमधाम्ने** त्रिमूर्त्यात्मकाय नमोऽस्तु । इतिशब्देन त्रिमूर्त्यैक्यानुसन्धानं द्योत्यते । यतो वयं तावदैक्यानुसन्धानेन तृप्ताः स्मः अतोऽस्माकं **स्वस्ति** स्वस्त्यस्तु । भवच्चिरानुसन्धानानुकूलदीर्घायुष्यमस्त्विति संप्रार्थ्य किं कृतवन्त इत्यत्राह—**विरिञ्चिनारायणे**ति । चतुराननस्य समष्टिजीवत्वेन नृशब्दः चतुराननवाचकः, सिंहशब्देन विष्णुः, देवेशशब्देन शिवः, विशिष्टसम्बोधनमेतत्—हे **नृसिंह देवेश** ब्रह्मविष्णुमहेश्वरात्मकत्रिमूर्ते **तव प्रसादतो** मुनयो यद्विरिञ्चिनारायणशङ्करात्मकं ब्रह्मविष्ण्वादिविभागकलनाविरळं स्वातिरेकेण **अचिन्त्यं** मूर्तामूर्तकलनावैरळ्यात् **अव्यक्तं** देशादिपरिच्छेदत्रयाभावात् **अनन्तं** पारमार्थिकसत्यत्वात् **अव्ययं** समस्तवेदमुख्यार्थत्वात् **वेदात्मकं** स्वातिरिक्ताविद्यापदतत्कार्यापह्नवसिद्धं **ब्रह्म निजं** निष्प्रतियोगिकत्वात् स्वमात्रमिति

[1] विरिञ्च—अ, अ १, अ २.     [2] त्मनो—अ.

**विजानते** ॥ १३ ॥ तत् किमित्यत आह—**तदिति** । "**तद्विष्णोः परमं पदम्**" इति श्रुतिः आरुणिकादौ सम्यक् व्याख्यातेति अत्र न व्याख्यायते । निष्प्रतियोगिकब्रह्ममात्रावस्थानमेव विष्णुपरमपदमित्यर्थः ॥ १४ ॥ इत्युपनिषच्छब्दः स्कन्दोपनिषत्समाप्त्यर्थः ॥ १५ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं स्कन्दोपनिषदः स्फुटम् ।
स्कन्दोपनिषदो व्याख्याग्रन्थः पञ्चाशदीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकपञ्चाशत्सङ्ख्यापूरकं
स्कन्दोपनिषद्विवरणं सम्पूर्णम्

---

# नामधेयपदसूची

**यत्र पुटसंख्याऽनन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या**

# विशेषपदसूची

यत्र पुटसंख्याऽनन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या

# THE VAISHNAVA-UPANISHADS

WITH THE COMMENTARY OF

## SRI UPANISHAD-BRAHMA-YOGIN

EDITED BY

PANDIT A. MAHADEVA SASTRI, B.A.
DIRECTOR, ADYAR LIBRARY, ADYAR, MADRAS

PUBLISHED FOR THE ADYAR LIBRARY
(THEOSOPHICAL SOCIETY)
1923

अष्टोत्तरशतोपनिषत्सु

# वैष्णव-उपनिषदः

श्री उपनिषद्ब्रह्मयोगिविरचितव्याख्यायुता:

अडयार्—पुस्तकालयाध्यक्षेण

अ. महादेवशास्त्रिणा

संपादिता:

अडयार्—पुस्तकालयार्थे

प्रकटीकृताश्च

१९२३

ॐ नमो
ब्रह्मादिभ्यो
ब्रह्मविद्यासंप्रदायकर्तृभ्यो
वंशऋषिभ्यो
नमो गुरुभ्यः

DEDICATED TO
Brahma and the Rishis,
The Great Teachers
Who handed down Brahmavidya
through Generations

## THE EDITOR'S NOTE

The materials on which is based this edition of The Vaishnava Upanishads comprised in this volume are the same as those described in the volume of *The Yoga Upanishads.*

*20th July, 1923* A. M. S.

# अस्मिन् सम्पुटे अन्तर्गतानामुपनिषदां सूची

# विषयसूचिका

## १. अव्यक्तोपनिषत्

## २. कलिसन्तरणोपनिषत्



## ३. कृष्णोपनिषत्

## ४. गरुडोपनिषत्



## ५. गोपालपूर्वतापिन्युपनिषत्

षष्ठोपनिषत्



## गोपालोत्तरतापिन्युपनिषत्



## ६. तारसारोपनिषत्

प्रथमः खण्डः

द्वितीयः खण्डः



तृतीयः खण्डः



## ७. त्रिपाद्विभूतिमहानारायणोपनिषत्

प्रथमोऽध्यायः



द्वितीयोऽध्यायः

### तृतीयोऽध्यायः



### चतुर्थोऽध्यायः



### पञ्चमोऽध्यायः

षष्ठोऽध्यायः



सप्तमोऽध्यायः

अष्टमोऽध्यायः



## ८. दत्तात्रेयोपनिषत्

प्रथमः खण्डः

## ९. नारायणोपनिषत्



## १०. नृसिंहपूर्वतापिन्युपनिषत्

## द्वितीयोपनिषत्

पञ्चमोपनिषत्



## नृसिंहोत्तरतापिन्युपनिषत्

प्रथमः खण्डः

द्वितीयः खण्डः



तृतीयः खण्डः

अष्टमः खण्डः



नवमः खण्डः

## ११. रामपूर्वतापिन्युपनिषत्

## रामोत्तरतापिन्युपनिषत्

# १२. रामरहस्योपनिषत्

*प्रथमोऽध्याय:*



द्वितीयोऽध्यायः

तृतीयोऽध्यायः



चतुर्थोऽध्यायः



पञ्चमोऽध्यायः

## १३. वासुदेवोपनिषत्



## १४. हयग्रीवोपनिषत्

# अव्यक्तोपनिषत्

आप्यायन्तु—इति शान्तिः

सृष्टेः पुरा निर्विशेषब्रह्मस्थितिः

पुरा किलेदं न किञ्चनासीन्न द्यौर्नान्तरिक्षं न पृथिवी केवलज्योतीरूपमनाद्यनन्तमनणवस्थूलरूपमरूपं रूपवदविज्ञे[1]यमानन्दमयमासीत् ॥ १ ॥

स्वाज्ञानासुरराड्ग्रासस्वज्ञाननरकेसरी ।
प्रतियोगिविनिर्मुक्तं ब्रह्ममात्रं करोतु माम् ॥

इह खलु सामवेदप्रविभक्तेयं अव्यक्तोपनिषत् सोपायमन्त्रराजयाथात्म्यप्रकटनपूर्वकं निर्विशेषब्रह्ममात्रपर्यवसन्ना विजृंभते । अस्याः संक्षेपतो विवरणमारभ्यते । अशरीरवागाविर्भावपूर्वकं इन्द्रप्रजापतिसंवादरूपेयमाख्यायिका विद्यास्तुत्यर्था । अत्रादौ श्रुतिः परमार्थार्थप्रकटनपूर्वकं स्वाज्ञदृष्टिमवष्टभ्य प्रपञ्चसृष्टिक्रमं प्रकटयति—पुरेति । स्वाज्ञदृष्टेः पुरा स्वज्ञदृष्ट्या इदं जगत् न किंचन आसीत् । किं तदासीत् इत्यत्र केवलज्योतीरूपं इत्यादिविशेषणबोधितं यत् तत् स्वाज्ञादिदृष्टिमोहे सत्यसति निष्प्रतियोगिकनिर्विशेषब्रह्ममात्रं आसीदित्यर्थः ॥ १ ॥

[1] यं ज्ञानमयमा—अ, अ १, अ २, क.

### परमेष्ठिप्रादुर्भावः

[1]तदन्यऽत्तद्द्वेधाऽभूद्धरितमेकं रक्तमपरम् । तत्र यद्रक्तं तत् पुंसो रूपमभूत् यद्धरितं तन्मायायाः । तौ समागच्छतः । तयोर्वीर्यमेवमनन्दत् । तदवर्धत । तदण्डमभूद्धैमम् । तत् परिणममानमभूत् । ततः परमेष्ठी व्यजायत ॥ २ ॥

ब्रह्मणो निष्प्रतियोगिकत्वेन ब्रह्मातिरिक्तप्रसक्तिरेव नास्ति ; यदि स्वाज्ञदृष्ट्या स्यात् तदा तदन्यदिति । कालकर्मयोगतः तौ समागच्छतः । तयोः वीर्यमेवमनन्दत् प्रकृतिपुरुषवीर्ययोगस्तुष्टिमगमत् । कालवशात् दिने दिने तदवर्धत । यदेवं वृद्धिं गतं तदण्डमभूत् कालान्तरे हैमम् । तत् परिणममानमभूत् । यदाऽविद्याऽण्डं घनीभूय सुवर्णरूपेण परिणतं तदा ततः अविद्याऽण्डाधिकरणभगवन्नाभिकमलात् परमेष्ठी व्यजायत ॥ २ ॥

### परमेष्ठिनः स्वकृत्यजिज्ञासा

सोऽभिजिज्ञासत किं मे कुलं किं मे कृत्यमिति । तं ह वागदृश्यमानाऽभ्युवाच भो भो प्रजापते त्वमव्यक्तादुत्पन्नोऽसि व्यक्तं ते कृत्यमिति । किमव्यक्तं यस्मादहमासिषम् । किं तद्व्यक्तं यन्मे कृत्यमिति । [2]साऽब्रवीदविज्ञेयं हि तत् सौम्य तेजः । यदविज्ञेयं तदव्यक्तम् । तच्चेज्जिज्ञाससि मामवगच्छेति । स होवाच कैषा त्वं ब्रह्मवाग्वदसि शंसात्मानमिति । सा त्वब्रवीत्तपसा मां जिज्ञासस्वेति । [3]स ह सहस्रं समा ब्रह्मचर्यमध्युवासाध्युवास ॥ ३ ॥

[1] तदनन्य—अ, अ १, अ २। [2] सो—अ १, अ २, उ, क. सा—अ.
[3] 'सह' इति लुप्तः—अ, अ १, अ २, क, उ १.

य एवमाविर्भूतः **सोऽभिजिज्ञासत**। किमिति? **किं मे कुलं किं मे कृत्यमिति**। य एवं जिज्ञासुरास्ते **तं ह वागदृश्यमाना** अशरीरवाणी **अभ्युवाच**। किमिति? **भो भो** प्रजापते त्वं **अव्यक्तात्** अव्यक्तभावमापन्ननारायणात् **उत्पन्नोऽसि व्यक्तं ते कृत्यमिति**, कर्तव्यार्थस्य प्रपञ्चरूपत्वेन व्यक्तत्वात्। भगवत्संकल्पाशरीरवाण्यैवमुक्तः पुनस्तामुद्दिश्योर्ध्वदृष्टिः **पृच्छति**—**किमव्यक्तमिति**। तमुद्दिश्य पुनः **साऽब्रवीत्**। किमिति? **अविज्ञेयं हि तदिति**, अव्यक्तत्वात्। तदेव विशदयति—यत्तव आविर्भावनिदानं **सोम्य तेजः**। पुनस्तत् ज्ञातव्यमिति मन्यमानमालक्ष्याह—**तच्चेदिति**। **जिज्ञाससि** ज्ञातुमिच्छसि। **ब्रह्मविद्यारूपिणीं मामवगच्छेति**। अशरीरवाणीवाचं श्रुत्वा परमेष्ठी **स होवाच**। किमिति? **कथेति**। तद्वाक्यमाकर्ण्य **सा त्वब्रवीत्**। किमिति? **तपसेति**। "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः। तपसा प्राप्यते विद्या" इति स्मृतितः विद्यासिद्धिः तपोनिमित्तेत्यर्थः। एवं दैवीवाक्श्रवणानन्तरं **असौ** परमेष्ठी **स ह सहस्रमिति**। आवृत्तिः अनेकसंवत्सरावधिब्रह्मचर्याचरणोपलक्षणार्था ॥ ३ ॥

इति प्रथमः खण्डः

परमेष्ठिनः आनुष्टुभीविद्यादर्शनम्

अथापश्यदृचमानुष्टुभीं परमां विद्यां यस्याङ्गान्यन्ये मन्त्राः यत्र ब्रह्म प्रतिष्ठितं विश्वेदेवाः [वेदाः ?] प्रतिष्ठिताः। यस्तां न वेद किमन्यैर्वेदैः करिष्यति ॥ १ ॥

ततः किं जातं इत्यत आह—**अथेति**। **अथ** तपश्चर्यानन्तरं **आनुष्टुभीं विद्यामपश्यत्**। तपसा विशुद्धचित्तस्य विद्या प्रादुरभूदित्यर्थः। प्रकृतविद्यां सर्वाधिकरणतया स्तौति—**यस्येति**। एवं सर्वाधारतया **य इति** ॥ १ ॥

आनुष्टुभीविद्यया नृसिंहदर्शनम्

तां विदित्वा स च रक्तं जिज्ञासयामास। तामेवमनूचानां गायन्नासिष्ट। सहस्रं समा आद्यन्तनिहितोङ्कारेण पदान्यगायत्। सहस्रं समास्तथैवाक्षरशः। ततोऽपश्यज्ज्योतिर्मयं श्रियाऽऽलिङ्गितं सुपर्णरथं शेषफणाच्छादितमौलिं मृगमुखं नरवपुषं शशिसूर्यहव्यवाहनात्मकनयनत्रयम् ॥ २ ॥

प्रकृतविद्याया मन्त्रराजत्वेन सर्ववेदान्तसिद्धान्तार्थत्वेन च तां विदित्वा स च परमेष्ठी स्वाविर्भावहेतुं रक्तं परमपुरुषं जिज्ञासयामास ज्ञातुमुद्युक्तो बभूव। ततः किं कृतवानित्यत आह—तामिति। तपसा प्रादुर्भूतां आनुष्टुभीं विद्यां गायन्नासिष्ट गानं कुर्वन् स्थितवान्। कियन्तं कालं केन प्रकारेण गायन्नास्त गानफलं किं लब्धवान् इत्यत आह—सहस्रमिति। आदौ सहस्रं समाः। आद्यन्तप्रणवसंपुटितमन्त्रराजपदानि तद्वर्णांश्च गायन्नूर्ध्वाभिमुखः तस्थौ। ततः किं दृष्टवान् इत्यत्र—तत इति। परमेष्ठितपःफलदित्सया स्वाव्यक्ततामाच्छाद्य दिव्यमङ्गळविग्रहनृसिंहरूपेण व्यक्तत्वमेत्य प्रसन्नो बभूवेत्यर्थः ॥ २ ॥

नृसिंहस्तुतिः

ततः प्रजापतिः प्रणिपपात नमो नम इति। [1]तयैवर्चाऽथ तमस्तौत्। उग्रमित्याह उग्रः खलु वा एष मृगरूपत्वात्। वीरमित्याह वीरो वा एष वीर्यवत्त्वात्। महाविष्णुमित्याह महतां वा अयं महान्रोदसी व्याप्य स्थितः। ज्वलन्तमित्याह ज्वलन्निव खल्वसाववस्थितः। सर्वतोमुखमित्याह सर्वतः खल्वयं मुखवान् विश्वरूपत्वात्।

[1] तयैव—अ १, अ २, क, उ. तयेव—अ.

**नृसिंहमित्याह यथा यजुरेवैतत्। भीषणमित्याह भीषो वा अस्मादादित्य उदेति भीतश्चन्द्रमा भीतो वायुर्वाति भीतोऽग्निर्दहति भीतः पर्जन्यो वर्षति। भद्रमित्याह भद्रः खल्वयं श्रिया जुष्टः। मृत्युमृत्युमित्याह मृत्योर्वा अयं मृत्युरमृतत्वं प्रजानामन्नादानाम्। नमामीत्याह यथा यजुरेवैतत्। [1]अहमित्याह यथा यजुरेवैतत्॥ ३॥**

प्रसन्नं भगवन्तं दृष्ट्वा अयं किमकुरुत इत्यत्र—**तत इति**। सार्थया विद्यया स्तुतवानित्यर्थः। तत्प्रकारः कथमित्यत्र—**उग्रमिति**। कथमुग्रत्वमित्यत्र—**उग्रः खलु वा एषः**। तस्योग्रत्वे को हेतुरित्यत्र—**मृगरूपत्वात्**। मृगराजस्योग्रत्वप्रसिद्धेः, "मृगं न भीममुपहत्नुमुग्रम्" इति श्रुतेः। तथा **वीरमित्याह वीरो वा एषः**—इत्यादि समानम्। कुतः? **वीर्यवत्त्वात्** "यतो वीरः" इति श्रुतेः। महतामप्ययं **महान्** **रोदसी** द्यावापृथिव्यौ व्याप्य स्थितत्वात्, "य आविवेश भुवनानि विश्वा" इति श्रुतेः। **ज्वलन्तमित्यादि**, ज्योतिषामपि ज्योतीरूपत्वात् "ज्वलन् ज्वलिता तपन् वितपन् संतपन्" इति श्रुतेः। **विश्वरूपत्वात्**, "विश्वतश्चक्षुरुत विश्वतोमुखः" इति श्रुतेः। **नृसिंहमिति**, सर्वेषां भूतानां ना वीर्यतमः श्रेष्ठतमश्च, सिंहो वीर्यतमः श्रेष्ठतमश्च, "प्रतद्विष्णुस्तवते वीर्याय मृगः" इति श्रुतेः। **भद्रमिति**, "भद्रं कर्णेभिः श्रृणुयाम देवाः" इत्यादिश्रुतेः। **मृत्युमृत्युमिति**, स्वमात्रस्य स्वातिरिक्तमृत्युमृत्युत्वात्, "यस्य छायामृतं यस्य मृत्युः" इति श्रुतेः। **नमामीति** "यस्माद्यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च" इति श्रुतेः। **अहमिति** "वेदैश्च सर्वैरहमेव वेद्यः" इति श्रुतेः॥

**इति द्वितीयः खण्डः**

[1] अहमित्यादि वाक्यं नास्ति (अ, अ १) कोशयोः.

### व्यक्तस्वरूपम्

अथ भगवांस्तमब्रवीत् प्रजापते प्रीतोऽहं किं तवेप्सितं तद्ददामि शंसेति। स होवाच भगवन्नव्यक्तादुत्पन्नोऽ[1]स्मि व्यक्तं मम कृत्यमिति पुराऽश्रावि। तत्राव्यक्तं [2]भवानित्य[3]ज्ञायि। व्यक्तं मे कथयेति। व्यक्तं वै विश्वं चराचरात्मकम्। यद्व्यज्यते तद्व्यक्तस्य व्यक्तत्वमिति ॥ १ ॥

एवं मन्त्रराजस्तवेन स्तुतः परमेश्वरः परमेष्ठीप्सितवरं ददावित्याह—**अथेति**। अथ तत्कृतस्तुत्यनन्तरम्। एवं भगवदनुज्ञां लब्ध्वा **स होवाच**। **पुरा** दैव्या वाचा। परमेष्ठिना एवं पृष्टो भगवानाह—**व्यक्तमिति** ॥ १ ॥

### जगत्सृष्ट्युपायो ध्यानयज्ञः

स होवाच न शक्नोमि जगत् स्रष्टुमुपायं मे कथयेति। तमुवाच पुरुषः प्रजापते शृणु सृष्टेरुपायं परमं यं विदित्वा सर्वं ज्ञास्यसि सर्वत्र शक्ष्यसि सर्वं करिष्यसि मय्यग्नौ स्वात्मानं हविर्ध्यात्वा तयैवानुष्टुभर्चा। ध्यानयज्ञोऽयमेव ॥ २ ॥

भगवदुक्तं अवगम्य **स होवाच**। किमिति? **न शक्नोमीति**। तेन पृष्टः **तमुवाच पुरुषः**। किमिति? **प्रजापते इति**। वक्ष्यमाणं **यं विदित्वा**। तमुपायमाचष्टे—**मयीति**। स्वातिरिक्तभ्रमतूलाचलाग्नौ परस्मिन् ब्रह्मणि **मयि स्वात्मानं** प्रत्यञ्चं **हविः** ध्यात्वा **तयैवानुष्टुभर्चा**। प्रत्यगभिन्नं ब्रह्मास्मीत्यनुसन्धानमेव **ध्यानयज्ञः** ॥ २ ॥

[1] सि—अ, अ १, अ २, क. स्मि—मु. [2] भगवा—अ १,
[3] ज्ञायि—अ, अ २, क. [त्या] ज्ञाय—उ, उ १, अ १.

ध्यानयज्ञमहिमा

एतद्वै महोपनिषद्देवानां गुह्यम्। न ह वा एतस्य साम्ना नर्चा न यजुषाऽर्थोऽनुविद्यते। य इमां वेद स सर्वान् कामानवाप्य सर्वान् लोकान् जित्वा मामेवाभ्युपैति। न च पुनरावर्तते य एवं वेदेति ॥ ३ ॥

यत्प्रत्यगभिन्नब्रह्मानुसन्धानं एतदिति। यत्प्रत्यग्ब्रह्मैक्यानुसंधानं तदेतदेव महती च सा उपनिषत् प्रत्यगभिन्नब्रह्मविद्या **महोपनिषत्** देवानामपि **गुह्यं,** परमरहस्यत्वात्। **एतस्य** एतेन ध्यानयज्ञेन यो**ऽर्थोऽनुविद्यते** सोऽयमर्थो **न हि** वेदत्रयेणाप्यनुविद्यते। **हवा** इत्यवधारणार्थौ। ध्यानयज्ञस्य निर्विशेषब्रह्ममात्रपर्यवसन्नत्वात्, वेदत्रयस्य प्रायशः कर्मोपासनाकाण्डव्यग्रत्वेन सविशेषब्रह्मगोचरत्वात्, ध्यानयज्ञेन यदुपलभ्यते तद्वेदत्रयगोचरकर्मोपासनाभ्यां नैव लभ्यते। यस्मादेवं तस्मात् ध्यानयज्ञोऽयमेव वरिष्ठ इत्यर्थः। विद्याफलमाह— **य इति। यो** मयोक्तां निर्विशेषब्रह्मोपनिषदं **वेद सोऽयं** मुनिः स्वातिरेकेण कामा लोका वा न सन्तीति **सर्वकामानवाप्य सर्वलोकान्** जित्वा मद्भावमेत्य **न** हि **पुनरावर्तते,** "मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते" इति स्मृतेः ॥

इति तृतीयः खण्डः

---

ध्यानयज्ञेन परमेष्ठिनः सर्वज्ञत्वादिलाभः

प्रजापतिस्तं यज्ञाय वसीयांसमात्मानं मन्यमानो मनोयज्ञेनेजे सप्रणवया तयैवर्चा हविर्ध्यात्वाऽऽत्मानमात्मन्यग्नौ जुहुयात्। सर्वमजानत् सर्वत्राशकत् सर्वमकरोत् ॥ १ ॥

ततः किं कृतवानित्यत्र भगवदुपदिष्टध्यानयज्ञानुष्ठानतः सर्वज्ञः सर्वशक्तिः सर्वकर्ता च भवतीत्याह—**प्रजापतिरिति** । परब्रह्माग्नौ स्वात्महोमेन स्वनाशशङ्कां विहाय यः पुरा विष्णुनाभिपद्मादाविर्भूतः **तं आत्मानं यज्ञाय यज्ञार्थं वसीयांसं मन्यमानः** सन् महता धैर्येण मानसिकयज्ञेनेजे यागं कृतवान् । **कया** तत् कथं कृतवानित्यत्र **सप्रणवया तयैवर्चा** उग्रं वीरमित्याद्येकादशपदोज्ज्वलया अनुष्टुभा । प्रत्यगभिन्नब्रह्मैक्यानुसन्धानं कृतवान् तस्यैव ब्रह्मयज्ञत्वात्,

*ब्रह्मार्पणं ब्रह्म हविः ब्रह्माग्नौ ब्रह्मणा हुतम् ।*
*ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥*

इति स्मृतेः । *ब्रह्मयज्ञफलं किमवाप्तवानित्यत्र प्रत्यगभिन्नब्रह्मानुसन्धानमहिम्ना* ब्रह्मातिरेकेण न किंचिदस्तीति सर्वत्र आत्मात्मीयाभिमतिं विहाय यत् भवितव्यं तत् **सर्वम्** । सर्वज्ञः सर्वशक्तिः सर्वकर्ता च भवतीत्यर्थः ॥ १ ॥

अन्यस्यापि ध्यानयज्ञेन सर्वज्ञत्वादिलाभः

य एवं विद्वानिमं ध्यानयज्ञमनुतिष्ठेत् स सर्वज्ञोऽनन्तशक्तिः सर्वकर्ता भवति । स सर्वान् लोकान् जित्वा ब्रह्म परं प्राप्नोति ॥ २ ॥

य एवं वेद सोऽपि यथोक्तफलं अश्नुत इत्याह—**य इति** । यथा ब्रह्मा तथा स **सर्वान्** ॥

**इति चतुर्थः खण्डः**

---

लोकत्रयादिसृष्टिः

अथ प्रजापतिर्लोकान् सिसृक्षमाणस्तस्या एव विद्याया यानि त्रिंशदक्षराणि तेभ्यस्त्रीन् लोकान् । अथ द्वे द्वे अक्षरे ताभ्यामुभयतो

दधार। तस्या एवर्चो द्वात्रिंशद्भि[1]रक्षरैस्तान् देवान् निर्ममे। सर्वै रेव स इन्द्रोऽभवत्। तस्मादिन्द्रो देवानामधिकोऽभवत्। य एवं वेद समानानामधिको भवेत्॥ १॥

किमुपादाय अयं जगत् ससर्जेत्यत आह—अथेति। अथ भगवदुक्तरीत्या स्वकृतयज्ञफलसम्पत्त्यनन्तरं प्रजापतिः लोकान् सिसृक्षमाणः स्रष्टुं व्यवसितः सन् तपस्तप्यतोऽस्य या आनुष्टुभी विद्या प्रादुर्बभूव तस्या एव विद्यायाः अक्षरेषु यानि। त्रीन् लोकान् भूरादीन्—निर्ममे इत्युत्तरेणान्वयः। लोकत्रयं सृष्ट्वा पुनरक्षरद्वयतः तत् दधार। ततः किमित्यत्र—तस्या एवेति। यस्मादेवं तस्मात्। एवंविदः फलमाह—य इति॥ १–२॥

वसुरुद्रादित्यसृष्टिः

तस्या एकादशभिः पा[प]दैरेकादश रुद्रान् निर्ममे। तस्या एकादशभिरेकादशादित्यान् निर्ममे। सर्वै रेव स विष्णुरभवत्। तस्माद्विष्णुरादित्यानामधिकोऽभवत्। य एवं वेद समानानामधिको भवेत्। स चतुर्भिश्चतुर्भिरक्षरैरष्टौ वसूनजनयत्॥ २॥

चातुर्वर्ण्यसृष्टिः

स तस्या आद्यैर्द्वादशभिरक्षरैर्ब्राह्मणमजनयत्। दशभिर्दशभिर्विट्क्षत्रे। तस्माद्ब्राह्मणो मुख्यो भवति। एवं तन्मुख्यो भवति य एवं वेद। तूष्णीं शूद्रमजनयत् तस्माच्छूद्रो [2]निर्विद्योऽभवत्॥ ३॥

[1] रेवाक्ष—अ १, क.
[2] निर्विद्यो भवति—अ, क.

अहोरात्रसृष्टिः

न वा इदं दिवा न नक्तमासीदव्यावृत्तम् । स प्रजापतिरानुष्टुभाभ्यामर्धर्चाभ्यामहोरात्रावकल्पयत् ॥ ४ ॥

इत्थंभूतविचित्रसृष्टेः अधिकरणसापेक्षत्वात् चित्रभित्तिवत् तदधिकरणं किं दिवा उत नक्तं इत्यत आह—नेति । सृष्टेः पुरा अधिकरणे न हि दिवानक्तकल्पनाऽस्ति, तदधिकरणं कल्पनाव्यावृत्तं कल्पनाविरळं सत् निरधिकरणमेवासीत् । तदेव ब्रह्मेत्यर्थः । स्वाज्ञदृष्टिविकल्पितसृष्टिप्रसक्तौ यन्निरधिकरणं तदधिकरणभावमेति, तदवष्टभ्य खलु स प्रजापतिः ॥ ४ ॥

वेदछन्दस्सृष्टिः

ततो व्यैच्छत् । व्येवास्मा उच्छति । अथो तम एवापहते । ऋग्वेदमस्या आद्यात् पादादकल्पयत् । यजुर्द्वितीयात् । साम तृतीयात् । अथर्वाङ्गिरसश्चतुर्थात् । यदष्टाक्षरपदा तेन गायत्री । यदेकादशपदा तेन त्रिष्टुप् । यच्चतुष्पदा तेन जगती । यद्द्वात्रिंशदक्षरा तेनानुष्टुप् । [1]सा वा एषा सर्वाणि छन्दांसि य इमां सर्वाणि छन्दांसि वेद । सर्वं जगदानुष्टुभ एवोत्पन्नमनुष्टुप्प्रतिष्ठितं प्रतितिष्ठति यश्चैवं वेद ॥ ९ ॥

एवं कल्पयित्वा इतः किं कल्पनीयमिति ततो व्यैच्छत् विशेषेण इच्छां कृतवान् । व्येवास्मा उच्छति अस्मा एवं चिन्तां उपेयुषे या उच्छेत्तव्या सृष्ट्यावृतिरेव तदिच्छामात्रेण उच्छति भिद्यते । अथो तम एवापहते अथ सृष्ट्यावृतिभेदनानन्तरं इतः कर्तव्यावृतिरूपं तम एवापहते नश्यति, न तु

[1] स वा—अ, अ १, अ २, क.

सृष्टिकर्तव्यताज्ञानम् । पुनः निरावृतः किं कृतवानित्यत्र स्वसृष्टप्राणिपटलाभ्युदयनिःश्रेयसार्थं ऋग्वेदमिति । ततः छन्दांसि सृजति—यदष्टाक्षरपदेति । एवं वेदनफलमाह—सेति । या अनुष्टुबिति ख्याता सा वा एषा सर्वाणि छन्दांसि, छन्दसामनुष्टुप्कार्यत्वात् । य इमां आनुष्टुभीम् । वेदनफलं तु प्रतितिष्ठतीति ॥ ९ ॥

इति पञ्चमः खण्डः

स्त्रीपुरुषमिथुनसृष्टिः

अथ यदा प्रजाः सृष्टा न जायन्ते प्रजापतिः कथंन्विमाः प्रजाः सृजेयमिति चिन्तयन्नुग्रमितीमामृचं गातुमु[1]पाक्रामत् । ततः प्रथमपादादुग्ररूपो देवः प्रादुरभूत् एकः श्यामः पुरतो रक्तः पिनाकी स्त्रीपुंसरूपस्तं विभज्य स्त्रीषु तस्य स्त्रीरूपं पुंसि च पुंरूपं व्यधात् । स उभाभ्यामाशाभ्यां सर्वमादि[वि]ष्टः । ततः प्रजाः प्रजायन्ते । य एवं [2]वेद सोऽपि त्र्यम्बक इमामृचमुद्गायन्नुद्ग्रथितजटाकलापः प्रत्यग्ज्योतिष्यात्मन्येव [3]रन्ता रमति ॥ १ ॥

एवं स्वसृष्टप्राणिपटलं निर्व्यापारमुपलभ्य कथमहं व्यापारवत्प्रजाः सृजेयमिति चिन्तयतः पूर्वलब्धविद्या प्रादुर्बभूव । तां गातुमुपक्रमतः उपक्रमं

[1] पक्रामन्—अ १, अ २, क. पक्रामत्—अ.

[2] वेद प्रजापतेः सो—अ, अ १, अ २, क.

[3] रन्तारमिति—अ, अ १, अ २, क, उ. रन्ता रमति—उ १.

कुर्वतः विद्याऽर्थरूपी भगवानर्धनारीश्वरो भूत्वा प्रादुर्बभूव। न हि निराशाः प्रजाः **सृष्टिचक्रे प्रवर्तन्ते** इत्यालोच्य परस्पराशाबद्धं **स्त्रीपुरुषमिथुनं ससर्ज** । ततः प्रभृति सृष्टिचक्रं यथापूर्वकल्पं चलतीत्याह—**अथेति** । ततः अनुष्टुभः **प्रथमपादादुग्ररूपो देवो** नृसिंहः **प्रादुरभूत् पृष्ठतः एकः श्यामः** स्त्रीलिङ्गचिह्नितः, **पुरतो रक्तपिनाकी** रक्तशब्देन पुमांश्चासौ पिनाकपाणिश्चेति रक्तपिनाकी पुल्लिङ्गचिह्नितः, एवं **स्त्रीपुंसरूपः** । **य इत्थंभूतकलेबरः तं विभज्य** । य एवं कृतवान् **सः** स्वसृष्टप्राणिपटलमाविष्टः । **ततः** प्रभृति **प्रजाः** सृष्ट्यनुकूलव्यापारवत्यः **प्रजायन्ते** । वेदनफलं—**य एवं वेद सोऽप्येवं प्रजायते** । य एवं स्त्रीपुरुषसृष्टिं कृतवान् **सोऽपि त्र्यम्बकः** त्र्यक्षः पिनाकी भूरादित्रिपुरोपलक्षिताविद्यापदतत्कार्यानन्तकोटिब्रह्माण्डाम्बकस्वामी वा नृसिंहः **इमामृचं** स्वात्मानुसन्धानरूपिणीं **उद्गायन्** **उद्ग्रथितजटाकलापः** ऊर्ध्वीकृतसटाकलापो वा **प्रत्यग्ज्योतिष्यात्मन्येव रन्ता रमति** रमते । स्वातिरिक्तबाह्यरत्यनुकूलवस्तुनोऽवस्तुत्वात् स्वस्य स्वस्मिन्नेव रतिरुपपद्यत इत्यर्थः ॥

इन्द्राख्यायिका

इन्द्रो वै किल देवानामानुजावर आसीत्। तं प्रजापतिरब्रवीद्गच्छ देवानामधिपतिर्भवेति। सोऽगच्छत्। तं देवा ऊचुरानुजावरोऽसि त्वमस्माकं कुतस्तवाधिपत्यमिति। स प्रजापतिमभ्येत्योवाचेमं देवा ऊचुरानुजावरस्य कुतस्तवाधिपत्यमिति। तं प्रजापतिरिन्द्रं त्रिकलशैरमृतपूर्णैरानुष्टुभाभिमन्त्रितैरभिषिच्य तं सुदर्शनेन दक्षिणतो ररक्ष पाञ्चजन्येन वामतो द्वयेनैव सुरक्षितोऽभवत्। रौक्मे फलके सूर्यवर्चसि मन्त्रमानुष्टुभं विन्यस्य तदस्य कण्ठे प्रत्यमुञ्चत्। ततः सुदुर्निरीक्षोऽभवत्। तस्मै विद्यामानुष्टुभीं प्रादात्। ततो देवास्त-

माधिपत्यायानुमेनिरे । स स्वराडभूत् । य एवं वेद स्वराड् भवेत् । सोऽमन्यत [1]पृथिवीमिमां कथं जयेयमिति । स प्रजापतिमुपाधावत् । तस्मात् प्रजापतिः कमठाकारमिन्द्रनागभुजगेन्द्राधारं भद्रासनं प्रादात् । स पृथिवीमभ्यजयत् । ततः स उभयोर्लोकयोरधिपतिरभूत् । य एवं वेदोभयोर्लोकयोरधिपतिर्भवति । स पृथिवीं जयति ॥ २ ॥

इन्द्राख्यायिकामवतारयति—इन्द्र इति । **आनुजावरः अधिपतिः** आसीत् । यः स्वनिकटमेत्य शरणं गतः **तं प्रजापतिः अब्रवीत्** । किमिति? **गच्छेति** । तदाज्ञां शिरसा धृत्वा देवानां निकटं **सोऽगच्छत्** । **तं देवा ऊचुः** । किमिति? किं **आनुजावरोऽसि**? । देवैः एवमधिक्षिप्तः **सः** । एवमुक्तवन्तं **तम्** । पुनः **तम्** । **वामतो** ररक्षेत्यर्थः । एवं मूर्तिभूतसुदर्शनपाञ्चजन्यतेजसा **द्वयेनैव सुरक्षितोऽभवत्** । पुनः प्रजापतिः तत्कृते किं कृतवानित्यत्र—**रौक्मे फलके** सौवर्णपीठे **सूर्यवर्चसि** । यत एवं दिव्यतेजसा बभौ **ततो देवाः** । एवं जानतः फलमाह—**स स्वराडभूत्** इति । य एवं देवराज्ये अभिषेचितः **सोऽमन्यत** । किमिति? **पृथिवीमिति** । **तस्मात् . . . प्रादात्**, इन्द्राद्यष्टदिक्पालैः अष्टदिङ्नागैः गजैः अष्टदिक्फणीन्द्रैः अलङ्कृतं **कूर्माकारं भद्रासनं** दत्तवानित्यर्थः । भद्रासनयोगतः अयं **स पृथिवीमभ्यजयत्** । **य एवं वेद** स **उभयोः** ॥ २ ॥

परमात्मप्रतिष्ठासाधनम्

यो वा अप्रतिष्ठितं शिथिलं भ्रातृव्येभ्यः परमात्मानं मन्यते स एतमासीनमभितिष्ठेत् । प्रतिष्ठितोऽशिथिलो भ्रातृव्येभ्यो वसीयान् भवति यश्चैवं वेद यश्चैवं वेद ॥ ३ ॥

[1] पृथिवीमपि कथमपां ज—अ, अ १, अ २, क, मु.

यस्तु स्वप्रतिकूलभावमापन्नबाह्यान्तःकरणरूपभ्रातृव्येभ्यः शत्रुभ्यः प्रत्यगभिन्नपरमात्मानं स्वपदे अप्रतिष्ठितं देहादावात्मात्मीयाभिमानतः शिथिलं जीवभावमापन्नं मन्यते सोऽयं विद्वान् स्वातिरिक्तप्रपञ्चारोपापवादाधिष्ठानतया स्वे महिम्नि आसीनं परमात्मानं निष्प्रतियोगिकाद्वैतभावेन अधितिष्ठेत् प्रत्यगभिन्नं ब्रह्मास्मीति स्थिरासनो भवेत्। एवं भावनया अयं स्वे महिम्नि प्रतिष्ठितः। एवं वेदनसमकालं स्वातिरिक्तकरणग्रामतत्कार्यकलनापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्र-भावेन स्वे महिम्नि स्वयमेव वसीयान् भवति विदेहमुक्तो भवतीत्यर्थः। आवृत्तिः परापरब्रह्मविद्यासमाप्त्यर्था ॥ ३ ॥

इति षष्ठः खण्डः

एतद्विद्याऽध्ययनफलम्

य इमां विद्यामधीते स सर्वान् वेदानधीते। स सर्वैः क्रतुभिर्यजते। स सर्वतीर्थेषु स्नाति। स महापातकोपपातकैः प्रमुच्यते। स ब्रह्मवर्चसं महदाप्नुयात्। आब्रह्मणः पूर्वानाकल्पांश्चोत्तरांश्च वंश्यान् पुनीते। नैनमपस्मारादयो रोगा अभिदेयुः। सयक्षाः सप्रेतपिशाचा अप्येनं स्पृष्ट्वा दृष्ट्वा श्रुत्वा वा पापिनः पुण्यलोकानवाप्नुयुः। चिन्तितमात्रादस्य सर्वेऽर्थाः [1]सिध्येयुः। पितरमिवैनं सर्वे मन्यन्ते। राजानश्चास्या[2]देशकारिणो भवन्ति। न चाचार्यव्यतिरिक्तं श्रेयांसं दृष्ट्वा नमस्कुर्यात्। न चास्मादुपावरोहेत्। जीवन्मुक्तश्च भवति।

[1] अध्येयुः—अ, अ १, क. [2] देशाधिका—अ, अ २, क.

देहान्ते तमसः परं धाम प्राप्नुयात् । यत्र विराण् नृसिंहोऽवभासते तत्र खलूपासते । तत्स्वरूपध्यानपरा मुनय आकल्पान्ते तस्मिन्नेवात्मनि लीयन्ते । न च पुनरावर्तन्ते ॥ १ ॥

एतच्छास्त्रपठनपाठनवेदनफलप्रकटनार्थं सप्तमखण्डिका आरभ्यते—य इति । न चास्मादुपावरोहेत्, एतस्मादन्याश्रयणं न कुर्यात् । एतावन्मात्रानुष्ठानतो जीवन्मुक्तश्च भवति ॥ १ ॥

एतद्विद्यासंप्रदानविधिः

न चेमां विद्यामश्रद्दधानाय ब्रूयान्नासूयावते ना[न]नूचानाय नाविष्णुभक्ताय [1]नानृतिने नातपसे नादान्ताय नाशान्ताय नादीक्षिताय नाधर्मशीलाय न हिंसकाय नाब्रह्मचारिण इत्येषोपनिषत् ॥ २ ॥

शास्त्रसंप्रदायमाह—न चेमामिति ॥ २ ॥

इति सप्तमः खण्डः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
अव्यक्तोपनिषद्व्याख्या लिखिता नरसिंहगा ।
अव्यक्तविवृतिग्रन्थः पञ्चाशदधिकं शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे अष्टषष्टिसङ्ख्यापूरकं अव्यक्तनृसिंहोपनिषद्विवरणं संपूर्णम् ॥

---

[1] नाव्रतिने—उ १.

# कलिसंतरणोपनिषत्

## सह नाववतु—इति शान्तिः

### भगवन्नामस्मरणमात्रेण कलिसंतरणम्

द्वापरान्ते नारदो ब्रह्माणं जगाम कथं भगवन् गां पर्यटन् कलिं संतरेयमिति । स होवाच ब्रह्मा साधु पृष्टोऽस्मि सर्वश्रुतिरहस्यं गोप्यं तच्छृणु येन कलिसंसारं तरिष्यसि । भगवत आदिपुरुषस्य नारायणस्य नामोच्चारणमात्रेण निर्धूतकलिर्भवतीति ॥ १ ॥

यद्दिव्यनाम स्मरतां संसारो गोष्पदायते ।
स्वानन्यभक्तिर्भवति तद्रामपदमाश्रये ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं कलिसन्तरणोपनिषत् स्वातिरिक्तास्तित्वभ्रमनिरासकनाममाहात्म्यप्रकटनव्यग्रा निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । नारदब्रह्मप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—**द्वापरान्त इति** । नारदेनैवं पृष्टः **स होवाच ब्रह्मा** । किमुवाचेत्यत्र—**साध्विति** । **येन** भगवन्नामोच्चारणमात्रेण ब्रह्महत्याऽऽदिपञ्चमहापातकपरद्रव्यपरदाराभिमर्शनपरश्रेयोऽसहिष्णुताऽऽद्यलंकृत - **कलिसंसारं तरिष्यसि,** यदित्थंभूतकलिसन्तरणोपायभूतमभक्ताय कदाऽप्यप्रकट-

नीयत्वात् गोप्यं, किं तत्प्रमाणविरळं केवलमुपदिश्यत इत्यत्र सर्वश्रुतिस्मृतिषु पञ्चमहापातकादिकोटिदोषनिरसनपूर्वं भगवत्पदप्रापकत्वेन प्रसिद्धं तद्रहस्यार्थमपि केवलकृपयोपदिश्यते तच्छृणु । कास्तास्तत्प्रशंसापराः श्रुतयः स्मृतयश्च इत्यत्र—

कृतं दिने यद्दुरितं पक्षमासर्तुवर्षजम् ।
सर्वं दहति निःशेषं तूलाचलमिवानलः ॥
ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च ।
स्वर्णस्तेयसुरापानगुरुतल्पायुतानि च ॥
कोटिकोटिसहस्राणि उपपातकजान्यपि ।
सर्वाण्यपि प्रणश्यन्ति रामनामानुकीर्तनात् ॥
यत्प्रयागादितीर्थोक्तप्रायश्चित्तशतैरपि ।
नैवापनोद्यते पापं तदप्याशु विनाशयेत् ॥
पुण्यक्षेत्रेषु सर्वेषु कुरुक्षेत्रादिषु स्वयम् ।
बुद्धिपूर्वमघं कृत्वा तदप्याशु विनाशयेत् ॥
कृच्छ्रैस्तप्तपराकाद्यैर्नानाचान्द्रायणैरपि ।
पापं च नापनोद्यं यत्तदप्याशु विनाशयेत् ॥
आत्मतुल्यसुवर्णादिदानैर्बहुविधैरपि ।
किंचिदप्यपरिक्षीणं तदप्याशु विनाशयेत् ॥
सदा रामोऽहमस्मीति तत्त्वतः प्रवदन्ति ये ।
न ते संसारिणो नूनं राम एव न संशयः ॥

इत्याद्याः श्रुतयः,

चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ॥
ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥
सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥

विवशेन प्रयत्नेन ज्ञानेनाज्ञानतोऽपि वा ।
नामस्मरणतोऽपापो विद्वानमृतमश्नुते ॥

इत्याद्याः स्मृतयश्च । एवं नामस्मरणतः कलिः नश्यतीत्याह—**भगवत इति** ॥ १ ॥

### परब्रह्मावरणावनाशकषोडशनामानि

**नारदः पुनः पप्रच्छ तन्नाम किमिति । स होवाच हिरण्यगर्भः ।**

**हरे राम हरे राम राम राम हरे हरे ।**
**हरे कृष्ण हरे कृष्ण कृष्ण कृष्ण हरे हरे ॥**
**इति षोडशकं नाम्नां कलिकल्मषनाशनम् ।**
**नातः परतरोपायः सर्ववेदेषु दृश्यते ॥**

**षोडशकलाऽऽवृतस्य जीवस्यावरणविनाशनम् । ततः प्रकाशते परं ब्रह्म मेघापाये रविरश्मिमण्डलीवेति ॥ २ ॥**

एवं श्रुतिस्मृतिप्रमाणसिद्धभगवन्नामस्मृतितो निःशेषकलिहानिं श्रुत्वा तन्नामेदमिति बुभुत्सया **नारदः पुनः पप्रच्छ** । नारदप्रश्नोत्तरं **स होवाच हिरण्यगर्भः** । किं तदित्यत्र—**हरे रामेति** । स्वातिरिक्ताविद्यापदतत्कार्यजातं स्वावशेषतया हरतीति **हरिः** । निष्प्रतियोगिकब्रह्ममात्रतया राजते महीयत इति **रामः** । कृष्यते क्लिश्यते इति कृषिशब्देन कलिरुच्यते, तं कलिं स्वभक्तकृत-संकृत्स्मरणमात्रेण निःशेषं मुष्णाति ग्रसति निःशेषीकरोतीति **कृष्णः**, तस्य संबुद्धिः **हरे राम कृष्ण इति** । रामकृष्णनाम्नोः मिथः हरिनामसमन्वयतः **नाम्नां षोडशकं** भवति । षोडशनाम सकृदुच्चारितं सत् **कलिकल्मषमुन्मूलयति** । सर्वश्रुतिस्मृतिपुराणेषु **नातः परतरोपायो दृश्यते** । अयमेव परमोपाय इत्यर्थः ।

एवं नामस्मृतितो जीवावृतौ भिन्नायां अथ निर्विशेषं ब्रह्म प्रकाशत इत्याह—षोडशेति। प्राणादिनामान्तषोडशकलाभिः आवृतस्य जीवस्य एतत्षोडशकं नाम जीवावरणविनाशकं भवति। एवं भगवन्नामस्मृतिखड्गेन स्वावरणे भिन्ने मेघापाये अंशुमानिव ततः प्रकाशते परं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति ॥ २ ॥

नामजपमहिमा

पुनर्नारदः पप्रच्छ भगवन् कोऽस्य विधिरिति। तं होवाच नास्य विधिरिति। सर्वदा शुचिरशुचिर्वा पठन् ब्राह्मणः सलोकतां समीपतां [1]सरूपतां [2]सायुज्यतामेति। यदाऽस्य [3]षोडशीकस्य सार्धत्रिकोटीर्जपति तदा ब्रह्महत्यां तरति। तरति वीरहत्याम्। स्वर्णस्तेयात् पूतो भवति। वृषलीगमनात् पूतो भवति। पितृदेवमनुष्याणामपकारात् पूतो भवति। सर्वधर्मपरित्यागपापात् सद्यः शुचितामाप्नुयात्। सद्यो मुच्यते सद्यो मुच्यते इत्युपनिषत् ॥ ३ ॥

इत्थंप्रभाववन्नामस्मरणविधिबुभुत्सया पुनः मुनिः भगवन्तं पृच्छतीत्याह—पुनरिति। पुनः नारदः पप्रच्छ—किमिति? भगवन् कोऽस्य नामस्मरणस्य विधिरिति। उत्तरं भगवानाचष्टे—तमिति। तत् कथमित्यत्र—सर्वदेति। षोडशनामात्मकविद्यायाः श्रौतत्वेन द्विजातिरेव सर्वदा शुचिरशुचिर्वाऽपि पठन् स्मरन् सालोक्यादिचतुर्विधमुक्तिमेति, श्रौतेतरनामसु स्त्रीशूद्राणामधिकारः इत्यत्र—

सदा रामेति नामैव स्मरतामघशान्तये।
निःशेषं नाशयित्वाऽथ क्रममुक्तिं विधास्यति ॥
स्वान्तःकरणसंभूतसञ्चिताघनिवृत्तये।
सर्ववर्णैराश्रमिभिः स्मर्तव्यं नाम सर्वदा ॥

[1] 'सरूपतां' इति (अ, अ १.) कोशयोः नास्ति. [2] सायुज्यमे—अ.
[3] षोडशि—अ १, अ २, उ १, क. षोडश—अ.

नाम कीर्तयतो नास्ति पातकमित्यत्र शपथयति—

नाम कीर्तयतः पुंसो नास्ति पातकमण्वपि ।
गृह्णामि तप्तायःपिण्डमहिभाण्डे करं क्षिपे ॥
नाम स्मर्तुरपापित्वादकार्ये न भवेन्मतिः ॥

इत्यादिनामार्थविवेकोक्तेः । ब्रह्महत्याऽऽदिपातकनिवृत्तये कियत् स्मर्तव्यमित्यत्र, अनधिकारिभिः यथोक्तसङ्ख्यया नाम स्मर्तव्यं, अधिकारिणा तु नामार्थानुसन्धानपूर्वकं सर्वदा सकृद्वा स्मर्तव्यं, तेन स्वाज्ञः स्वावतो मुच्यते, स्वज्ञस्तु स्वातिरिक्तभ्रमतो मुच्यत इत्याह—यदेति । स्वातिरिक्ताविद्यापदतत्कार्यासंभवप्रबोधसिद्धनिष्प्रतियोगिकब्रह्ममात्रतया राजते महीयत इति रामनामसकृत्स्मरणात् सद्यः स्मरणसमकालमेव स्वातिरिक्तभ्रमतो मुच्यते ब्रह्मैव भवतीत्यर्थः । इत्युपनिषच्छब्दः कलिसन्तरणोपनिषत्समाप्त्यर्थः ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
कलिसन्तारविवृतिः लिखिता हरिगोचरा ।
कलिसन्तारविवृतिः चत्वारिंशदितीरिता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छाखविवरणे त्रिसङ्ख्योत्तरशतसङ्ख्यापूरकं कलिसन्तरणोपनिषद्विवरणं सम्पूर्णम् ॥

---

# कृष्णोपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

रामचन्द्रस्य कृष्णावतारप्रतिज्ञा

श्रीमहाविष्णुं सच्चिदानन्दलक्षणं रामचन्द्रं दृष्ट्वा सर्वाङ्गसुन्दरं मुनयो वनवासिनो विस्मिता बभूवुः । तं होचुर्नोऽवद्यमवतारान् वै गण्यन्ते आलिङ्गामो [1]भवन्तमिति । भवान्तरे कृष्णावतारे यूयं गोपिका भूत्वा मामालिङ्गथ । अन्ये येऽव[2]तारास्ते हि गोपा नः स्त्रीश्च (नो) कुरु ।

अन्योन्यविग्रहं धार्यं तवाङ्गस्पर्शनादिह ।
शश्वत् स्पर्शयिताऽस्माकं गृह्णामोऽवतरा वयम् ॥ १ ॥
रुद्रादीनां वचः श्रुत्वा प्रोवाच भगवान् स्वयम् ।
अङ्गसङ्गं करिष्यामि भवद्वाक्यं करोम्यहम् ॥ २ ॥

यो रामः कृष्णतामेत्य सार्वात्म्यं प्राप्य लीलया ।
अतोषयद्देवमौनिपटलं तं नतोऽस्म्यहम् ॥

इह खलु अथर्वणवेदप्रविभक्तेयं श्रीकृष्णोपनिषत् सार्वात्म्यप्रकटनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः संक्षेपतो विवरणमारभ्यते । मौनिमण्डल-

[1] भगव—अ २.

[2] तरा—अ १.

भगवत्प्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था। आख्यायिकामवतारयति—**श्रीति** । तं **होचुः**—किमिति? **नोऽवद्यमिति** । हे रामचन्द्र त्वद्रूपं **नोऽवद्यं** स्वेतरकलनाऽसहसत्तासामान्यरूपं, निष्प्रतियोगिकसन्मात्रत्वात्, "पश्यतेहापि सन्मात्रमसदन्यत्", "ब्रह्ममात्रमसन्न हि" इत्यादिश्रुतेः । स्वाङ्गलोकस्वपदाप्ति-हेतवे भगवत्कृतमत्स्याद्य**वतारान् वै** मुनयो वयं मन्यामहे । ब्रह्मादिभिरपि एवमेव भगवदवताराः स्वाङ्गस्वपदाप्तिहेतव इति **गण्यन्ते** चिन्त्यन्ते इत्यर्थः । यत एवं अतो **भवन्तं** व्यष्टिसमष्टिप्रपञ्चोपाधितः तदारोपापवादाधारस्वरूपतश्च **आलिङ्गामः** आलिङ्गनं कुर्मः । **इति** देवर्षिपटलवचनमाकर्ण्य, पुंभिः पुंसामा-लिङ्गनस्यारमणीयत्वात्, यदि यूयं योगशक्त्या स्त्रीत्वं भजन्तः तदाऽपि मम सत्यवाक्सत्यप्रतिज्ञापूर्वकमेकदारव्रतत्वात् अतः **भवान्तरे** इति । इत्थं भगव-द्वाक्यमाकर्ण्य देवा ऋषयश्च तुष्टा आहुरित्याह—**अन्य इति** । कृष्णावतारं कुर्वतस्ते **अन्ये ये अवताराः** बलगोपबृन्दरूपेण ये अन्ये पुंभावापन्ना अवतारा भविष्यन्ति हे भगवन् तत्र तदा **नः** अस्मान् **स्त्रीश्च** स्त्रियः **कुरु**, तत्राप्यस्माकं अस्वतन्त्रत्वात् । हिशब्दोऽस्माकं अनीश्वरत्वख्यापनार्थः । तदेवाधुना—सर्वेश्वरस्य **तव** सदा **अङ्गस्पर्शनात्** स्पर्शनार्थं त्वयेश्वरेण त्वत्प्रसादतोऽस्माभिश्च रासक्रीडाऽनुकूलतया **अन्योन्यानुकूलविग्रहं धार्यं** यथा अस्माकं त्वद्भावपर-तन्त्राणां गात्राणि भवान् **शश्वत्** मुहुर्मुहुः **स्पर्शयिता** भवति तथा **वयं अवतरा** अवतारान् **गृह्णामो** गृह्णीमः कुर्मः ॥ १ ॥ इत्येवंरूपं **रुद्रादीनां**, आदिशब्द-वाच्यवस्वादित्यादिदेवानां, तथा ऋषीणां च **वचः श्रुत्वा प्रोवाच** । किमिति? भवतां **अङ्गसङ्गं करिष्यामि** ॥ २ ॥

भगवतः सार्वात्म्यवर्णनम्

मोदितास्ते [1]सुराः सर्वे कृतकृत्याऽधुना वयम् ।
यो नन्दः परमानन्दो यशोदा मौक्तिगेहिनी ॥ ३ ॥

[1] नराः—अ, अ १

माया सा त्रिविधा प्रोक्ता सत्त्वराजसतामसी ।
प्रोक्ता च सात्त्विकी [1]रुद्रे भक्ते ब्रह्मणि राजसी ॥ ४ ॥
तामसी दैत्यपक्षेषु माया त्रेधा ह्युदाहृता ।
[2]अजया वैष्णवी माया जप्येन च सुता [3]पुरा ॥ ५ ॥
देवकी [4]ब्रह्मपुत्रा सा या वेदैरुपगीयते ।
निगमो [5]वसुदेवो यो वेदार्थः कृष्णरामयोः ॥ ६ ॥
स्तुवन्ति सततं [6]यस्तु सोऽवतीर्णो महीतले ।
वने बृन्दावने क्रीडन् गोपगोपीसुरैः सह ॥ ७ ॥
गोप्यो गाव ऋचस्तस्य यष्टिका कमलासनः ।
वंशस्तु भगवान् रुद्रः शृङ्गमिन्द्रः [7]स्वघोऽसुरः ॥ ८ ॥
गोकुलं वनवैकुण्ठं तापसास्तत्र ते द्रुमाः ।
लोभ[8]क्रोधादयो दैत्याः कलिकालस्तिरस्कृतः ॥ ९ ॥
गोपरूपो हरिः साक्षान्मायाविग्रहधारणः ।
दुर्बोधं कुहकं तस्य मायया मोहितं जगत् ॥ १० ॥
दुर्जया सा सुरैः सर्वैर्धृष्टिरूपो भवेद्द्विजः ।
रुद्रो येन कृतो वंशस्तस्य माया जगत् कथम् ॥ ११ ॥
बलं ज्ञानं सुराणां वै तेषां ज्ञानं हृतं क्षणात् ।
शेषनागो भवेद्रामः कृष्णो ब्रह्मैव शाश्वतम् ॥ १२ ॥

[1] रुद्रम—अ १.   [2] अजेया—अ १, अ २, क.   [3] सुरो—अ, अ १.
[4] ब्रह्मपुत्री—अ २.   [5] वासु—अ १.   [6] यम्तु—अ, अ १.
[7] सखा—अ.   सघा—अ १.   सघो—अ २, क.
[8] लोभक्रोधभया—अ, क.

अष्टावष्टसहस्रे द्वे शताधिक्याः स्त्रियस्तथा ।
ऋचोपनिषदस्ता वै ब्रह्मरूपा ऋचः स्त्रियः ॥ १३ ॥
द्वेषश्चाणूरमल्लोऽयं मत्सरो मुष्टिको जयः ।
दर्पः कुवलयापीडो गर्वो रक्षः खगो बकः ॥ १४ ॥
दया सा रोहिणी माता सत्यभामा धरेति वै ।
अघासुरो महाव्याधिः कलिः कंसः स भूपतिः ॥ १५ ॥
शमो मित्रः सुदामा च सत्याऽक्रूरोद्धवो दमः ।
यः शङ्खः स स्वयं विष्णुर्लक्ष्मीरूपो व्यवस्थितः ॥ १६ ॥
दुग्धसिन्धौ समुत्पन्नो मेघघोषस्तु [1]स स्मृतः ।
दुग्धोदधिः कृतस्तेन भग्नभाण्डो दधिग्रहे ॥ १७ ॥
क्रीडते बालको भूत्वा पूर्ववत् सुमहोदधौ ।
संहारार्थं च शत्रूणां रक्षणाय च संस्थितः ॥ १८ ॥
कृपार्थे सर्वभूतानां गोप्तारं धर्ममात्मजम् ।
यत् सृष्टमीश्वरेणासीत् तच्चक्रं ब्रह्मरूपधृक् ॥ १९ ॥
जयन्तीसंभवो वायुश्चमरो धर्मसंज्ञितः ।
यस्यासौ ज्वलनाभासः खड्गरूपो महेश्वरः ॥ २० ॥
[2]कश्यपोलूखलः ख्यातो रज्जुर्माताऽदितिस्तथा ।
चक्रं शङ्खं च [3]संसिद्धिं बिन्दुं च सर्वमूर्धनि ॥ २१ ॥
यावन्ति देवरूपाणि वदन्ति विबुधा जनाः ।
नमन्ति देवरूपेभ्य एवमादि न संशयः ॥ २२ ॥

[1] संस्मृतः—अ, अ २. [2] का—अ, अ १. [3] संसिद्धं-

गदा च कालिका साक्षात् सर्वशत्रुनिबर्हिणी ।
धनुः शार्ङ्गं स्वमाया च शरत्कालः सुभोजनः ॥ २३ ॥
अब्जकाण्डं जगद्बीजं धृतं पाणौ स्वलीलया ।
गरुडो वटभाण्डीरः सुदामा नारदो मुनिः ॥ २४ ॥
वृन्दा भक्तिः क्रिया बुद्धिः सर्वजन्तुप्रकाशिनी ।
तस्मान्न भिन्नं नाभिन्नमाभिर्भिन्नो न वै विभुः ॥ २५ ॥
भूमावुत्तारितं सर्वं वैकुण्ठं स्वर्गवासिनाम् ॥ २६ ॥ इत्युपनिषत् ॥

सत्यवाग्भिरुदञ्चितश्रीरामचन्द्रसूक्तिमाकर्ण्य **मोदितास्ते सुराः सर्वे ऋषयश्च कृतकृत्योऽधुना वयमिति** । देवर्षिबृन्दकृते यत्प्रतिज्ञातं तत्परिपालनाय रामावतारमुपसंहृत्य स्वयमेव साङ्गसावरणसपरिवारसशक्तिकः श्रीकृष्णो बभूव । तत्र नन्दयशोदाऽऽदिपरिवारसहितं भगवतः सार्वात्म्यमवतारयति —**यो नन्द इति** । भगवतः स्वरूपभूत**परमानन्द एव नन्दो** बभूव । परमानन्दं भगवन्तं पुत्रभावेन आप्य सदा अभिनन्दितत्वात् अस्य नन्दत्वम् । स्वभक्तानां यशः ख्यातिं ज्ञानं ददातीति **यशोदा** निर्विशेषब्रह्मविद्या स्वनिष्ठानां स्वातिरिक्तास्तित्वभ्रममुक्तेरावासगेहरूपेयमिति मुक्तिगेहवती, मुक्तिगेहिन्येव **मौक्तिगेहिनी भवति,** विद्याया मुक्तप्राप्यसीमत्वात् ॥ ३ ॥ स्वाज्ञविकल्पितमायायाः गुणतस्त्रैविध्यमाह —**मायेति** । रुद्रस्य रजस्तमस्तत्कार्यग्रासत्वेन सत्वमयत्वं, ब्रह्मणः सृष्टिकर्मव्यग्रत्वेन रजोमयत्वं, दैत्यानां प्राणिसामान्यपीडनप्रकृतित्वेन तमोमयत्वं, एवं मायायास्त्रैविध्यमुक्तं भवतीत्यर्थः ॥ ४ ॥ तस्याः "ब्रह्मातिरिक्तं न किञ्चिदस्ति" इति निर्विशेषब्रह्मज्ञानेतरसाधनशतेनापि दुर्जयत्वमाह—**अजयेति** । **अजया** अजेया **वैष्णवी माया** । या मा सा मायेति या **पुरा** स्वाज्ञानात् **प्रसूतेति स्वसुतेव** भाता । सेयं वैष्णवी माया ब्रह्मज्ञानेतरमन्त्रादिजप्येन **चशब्दात्** कर्मयोगादिसाधनेनाप्यजेया ब्रह्मज्ञानेन जेतुं शक्येत्यत्र—

या च प्रागात्मनो मे मा तथाऽन्ते च तिरस्कृता ॥
दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥

इति श्रुतिः स्मृतिश्च मानं भवति ॥ ५ ॥ देवकी वसुदेवश्च कीदृशः इत्यत आह —**देवकीति**। "ओमित्येतदक्षरमिदं सर्वं," "सर्वे वेदा यत्पदमामनन्ति" इत्यादिवेदैः तुरीयोङ्काररूपेण या उपगीयते सेयं ब्रह्मपुत्रा पुत्री ब्रह्मप्रणवविद्या देवकी भवति। प्रणवविद्याया ब्रह्मपुत्रिकात्वं कथमित्यत्र—

ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठं भित्त्वा विनिर्यातौ तस्मान्माङ्गळिकावुभौ ॥

इति स्मृतिर्मानम्। **निगमः** ऋगादिचतुर्वेद एव **वसुदेवः** "तत्त्वमसि" इति श्रुतिप्रकटित "तत्त्वं" पदलक्ष्ययोः कृष्णरामयोः एकीभावो हि वेदार्थः, "तत्त्वंपदलक्ष्यं प्रत्यगभिन्नं ब्रह्म" इति श्रुतेः, पराक्सापेक्षप्रत्यग्ब्रह्मैक्यगत-विशेषांशापायसिद्धनिष्प्रतियोगिकब्रह्ममात्रस्य कृत्स्नवेदार्थत्वेन परमाद्वैतरूपत्वात्, "वेदार्थः परमाद्वैतं नेतरत् सुरपुङ्गवाः" इति स्मृतेः ॥ ६ ॥ वेदार्थत्त्वेन तं के वदन्ति, स कुत्रोपलभ्यते इत्यत आह—**स्तुवन्तीति**। यस्तु भगवान् **वने** **बृन्दावने च गोपैः गोपीभिः सुरैश्च** सह क्रीडन् आस्ते सोऽयं ब्रह्मादि-पिपीलिकाप्राणिपटलमहीतले स्वोपलब्धिहेतुतया महनीयतले **हृदयकमले** अन्तर्यामिरूपेण प्रत्यगभिन्नब्रह्मरूपेण **अवतीर्णो** भवति, तमेव सततं निष्प्रति-योगिकब्रह्ममात्रतया वेदा ब्रह्मरुद्रादयो देवाः सनकादिमुनयश्च **स्तुवन्ति** स्वमात्रावशेषतया विस्पष्टं वदन्तीत्यर्थः ॥ ७ ॥ गोप्यादयः काः इत्यत आह—**गोप्य इति**। नानाविधाः **ऋचो** मन्त्रा एव **गोप्यो गावश्च भवन्ति**। **तस्य** भगवतः **कमलासनो** ब्रह्मा गोपालनसाधनयष्टिका भवति। **भगवान् रुद्रस्तु** सप्तस्वरानुवादिवंशो **वेणुर्भवति**। **इन्द्रस्तु** गवयशृङ्गं भूत्वा भगवत्करतले विलसति। **असुरः** भगवद्भाववैरळ्यात् **अघो** भवति, भगवन्नामस्मृतितो विनश्यतीत्यर्थः ॥ ८ ॥ किं बहुना—**गोकुलमिति**। किंच **लोभक्रोधादयो**

दैत्याः भवन्ति । भगवद्दर्शनतन्नामस्मृतिमात्रेण लोभाद्यरिषड्वर्गोजीवककलिकाल-स्तिरस्कृतो भवति ॥ ९ ॥ तत्र गोकुलवैकुण्ठे मायाविग्रहधारणः विजयते । मायया अस्य विग्रहधारणा, वस्तुतो भगवान् निर्विशेषं ब्रह्मेत्यर्थः । तथाऽपि गोपरूपतया निष्कुहकगोपतुल्यो भवतीत्यत आह—दुर्बोधमिति । यन्मायया यदज्ञानेन इदं जगत् स्वाविद्यापदतत्कार्यं स्वातिरिक्तमिति मोहितं भवति तस्य भगवतः कुहकं अध्यवसायं तद्भावापन्नमुनिं विना सुरासुरैरपि दुर्बोधम् ॥ १० ॥ तत्र हेतुमाह—दुर्जयेति । तदीयाघटितघटनापटीयसी शक्तिः या विजृंभते सेयं सर्वैरपि दुर्जया दुर्विज्ञेयेत्यर्थः । द्विजो द्विजराजश्च चन्द्रः धृष्टिरूपो धैर्यरूपो भवेदित्यर्थः । मायाशक्तेः दुर्जयत्वेन तया भगवानपि मुह्यतीत्यत आह—रुद्र इति ॥ ११ ॥ ये देवाः तद्भावविकलाः तेषां सुराणां बलं ज्ञानं विज्ञानं च यया क्षणादपहृतं, येन रुद्रोऽपि वेणुभावं नीतः, तस्य निर्मायस्य भगवतः माया वा तत्कार्यं जगद्वा कथं स्वावारकं भवति, भगवतो निरावृताजडक्रिया-ज्ञानेच्छाशक्तिमत्त्वेन निर्मायत्वात् । को वा रामः कः कृष्णः तज्जायाग्रामः कीदृशः इत्यत आह—शेषनाग इति । आदिशेषो बलरामः, निर्विशेषं ब्रह्मैव कृष्णः ॥ १२ ॥ अष्टोत्तरशताधिकषोडशसहस्रस्त्रियस्तु ऋचोपनिषदः—इत्यत्र विसर्गलोपः—ऋचः ऋगादिचतुर्वेदप्रविभक्ताः ऋचो मन्त्राः उपनिषदश्च भवन्ति । किं बहुना—ता वै स्त्रियो ब्रह्मरूपा एव भवन्तीत्यर्थः ॥ १३ ॥ किंच—द्वेष इति । कुवलयापीडः गजविशेषः ॥ १४–१५ ॥ सत्या सत्यम् । यः शङ्खो दुग्धसिन्धौ समुत्पन्नः लक्ष्मीसोदरत्वात् लक्ष्मीरूपो व्यवस्थितः, मेघघोषश्च सोऽयं पाञ्चजन्य इति स्मृतः, य एवंरूपः शङ्खः स स्वयं विष्णुरेव भवति । किंच—दुग्धोदधिरिति । गोपीनां गृहे येन क्षीरदधि-भाण्डसहस्रं भग्नं भवति तेनैव तत्प्रवाहतो दुग्धोदधिरपरः क्षीरसमुद्रः कृतो भवति ॥ १६–१७ ॥ किंच—प्रतिगोपीगृहं क्रीडते बालको भूत्वा पूर्ववत् श्वेतद्वीपालङ्कारसुमहोदधौ क्षीरसमुद्रे च क्रीडत इत्यर्थः । किमर्थं एवं अवतारः कृतः इत्यत्र—

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगेयुगे ॥

इति स्मृत्यनुरोधेन भगवदवतारप्रयोजनमाह—**संहारार्थमिति** ॥ १८ ॥ श्रीकृष्णं विद्यादित्यर्थः । **ईश्वरेण यत् सृष्टमासीत्** तत् जगच्चक्रं ब्रह्मैव, कारणातिरेकेण कार्याभावात्, कार्यं कारणमेवेत्यर्थः ॥ १९ ॥ जयन्तीशब्देन भगवदाविर्भावकाल उच्यते । तत्काले भवतीति **जयन्तीसंभवो वायुः** मुख्यप्राणः, तस्य कालोपाधेः भगवतो निष्पन्नत्वात् । स एव **धर्मसंज्ञकः चमरः** चामरो भवतीत्यर्थः । किंच—**यस्यांशभूतोऽसौ ज्वलनाभासोऽग्निः** भवति, यस्य **खड्गरूपो महेश्वरो रुद्र** आसीत् ॥ २० ॥ भगवत्संबन्धवाञ्छया देवपिता **कश्यपप्रजापतिः उलूखलतां** गतः, देवमाता **अदितिः रज्जुतां** गता भवति, मात्रा बालचेष्टा-निरसनकामया यदाऽयमुलूखले बद्धः तदेत्यर्थः । **शङ्खचक्रे** यस्यायुधविशेषौ भवतः, **सर्वप्राणिमूर्धनि** सहस्रारचक्रे निर्विकल्परूपिणीं **सिद्धिं बिन्दुं** तुरीयसाक्षात्कारं च योगिनो लभन्ते, स भगवान् सर्वात्मना अवतिष्ठते ॥ २१ ॥ एक एव भगवान् सर्वात्मा भवतीति **विबुधा** योगिनश्च विदित्वा **नमन्तीत्यत्र नहि संशयोऽस्ति**,निःसंशयं नमन्तीत्यर्थः,

ईश्वरो जीवकलया प्रविष्टो भगवानिति ।
प्रणमेद्दण्डवद्भूमावाश्वचण्डाळगोखरम् ॥

इति श्रुतेः ॥ २२ ॥ किंच—**गदेति** । यस्य धनुः **शार्ङ्गं** भवति, यस्य **मायाऽविद्या** च **शरदादिषडृतुकालश्च सुभोजनो** भोजनं भवति, भगवतो निर्मायत्वेन मायातत्कार्यग्रासत्वात् ॥ २३ ॥ ब्रह्माण्डस्य पार्थिवत्वेनाद्भ्यो जातत्वात् **अब्जकाण्डं** अविद्याऽण्डं, तस्यानन्तकोटिब्रह्माण्डबीजत्वात् **तदेव जगद्बीजं** येन **लीलया स्वपाणौ** धृतं स भगवान् आदिविराट् भवतीत्यर्थः, "घटीयन्त्रस्थघटमालिकाजालवत् महाविष्णोः करतले विलसन्त्यनन्तकोटि-ब्रह्माण्डानि" इति श्रुतिः । किंच—**गरुड इति** । **सुदामा कुचेलः** ॥ २४ ॥

भगवद्भक्तिरेव **वृन्दालक्ष्मीर्भूत्वा** भगवन्निकटे वसति । भगवतोऽस्य **क्रियाज्ञाने-च्छाशक्तिस्तु** भगवदतिरेकेण **सर्वजन्तुः** नास्तीति **प्रकाशिनी बुद्धिः ज्ञान-विज्ञानसम्यज्ज्ञानरूपिणी** भवति । यद्यद्भगवत्सार्वात्म्यमुक्तं तत्तद्भगवतो न भिन्नमित्याह—**तस्मादिति** । य एवं सर्वात्मभावमापन्नः **तस्मादिदं सर्वं न भिन्नम्** । सर्वाभिन्नत्वे भगवतो नश्वरत्वं स्यादित्यत आह—**नाभिन्नमिति** । स्वातिरिक्तस्य अवस्तुत्वेन भिन्नाभिन्नव्यवहारानर्हत्वात् । स्वातिरिक्तसर्वभिन्नो वा स्यादित्यत आह—**आभिरिति** । निष्प्रतियोगिकविभुः भूमा नारायणः **आभिः** शशविषाणतुल्यस्वातिरिक्तकलनाभिः न वै भिन्नोऽभिन्नो वा भवितुमर्हति । स्वातिरिक्तसामान्यस्य निष्प्रतियोगिकाभावरूपत्वेन च नानयोः ब्रह्मातिरिक्तयोः भिन्नाभिन्नकथा भवितुमर्हतीति भावः ॥ २५ ॥ किं बहुना—**भूमाविति** । भगवदाविर्भावसमकालमेव **स्वर्गवासिदृष्ट्याऽपि वैकुण्ठं** विष्ण्वाख्यं ब्रह्म **भूमावे-वोत्तारितं** आविर्भूतं विभाति । इत्युपनिषच्छब्दः कृष्णोपनिषत्समाप्त्यर्थः ॥ २६ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं कृष्णोपनिषदः स्फुटम् ।
कृष्णोपनिषदो व्याख्याग्रन्थोऽशीतिरितीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे षण्णवतिसङ्ख्यापूरकं
कृष्णोपनिषद्विवरणं सम्पूर्णम् ॥

---

[1]शेषो ह वै वासुदेवात् सङ्कर्षणो नाम जीव आसीत् । सोऽकामयत प्रजाः सृजेयेति । ततः प्रद्युम्नसंज्ञक आसीत् । तस्मात् अहंकारनामाऽनिरुद्धो हिरण्यगर्भोऽजायत । तस्मात् दश प्रजापतयो

[1] अयं द्वितीयः खण्डः (अ, अ१) कोशयोरेवोपलब्धोऽत्र संयोजितः.

मरीच्याद्याः स्थाणुदक्षकर्दमप्रियव्रतोत्तानपादवायवो व्यजायन्त । तेभ्यः सर्वाणि भूतानि च । तस्माच्छेषादेव सर्वाणि च भूतानि समुत्पद्यन्ते । तस्मिन्नेव प्रलीयन्ते । स एव बहुधा जायमानः सर्वान् परिपाति । स एव काद्रवेयो व्याकरणज्योतिषादिशास्त्राणि निर्मिमाणो बहुभिर्मुमुक्षुभिरुपास्यमानोऽखिलां भुवमेकस्मिन् शीर्ष्णि [1]सिद्धार्थ-वद्धीयमाणः सर्वैर्मुनिभिः संप्रार्थ्यमानः सहस्रशिखराणि मेरोः शिरोभिरावार्यमाणो महावाय्वहंकारं निराचकार । स एव भगवान् भगवन्तं [2]बहुधा विप्रीयमाणः अखिलेन स्वेन रूपेण युगे युगे तेनैव जायमानः स एव सौमित्रिरैक्ष्वाकः सर्वाणि धानुषशास्त्राणि सर्वाण्यस्त्रशास्त्राणि बहुधा विप्रीयमाणो रक्षांसि सर्वाणि विनिघ्नं-श्चातुर्वर्ण्यधर्मान् प्रवर्तयामास । स एव भगवान् युगसन्धिकाले शारदाभ्रसन्निकाशो रौहिणेयो वासुदेवः सर्वाणि गदाद्यायुधशास्त्राणि व्याचक्षाणो नैकान् राजन्यमण्डलान्निराचिकीर्षुः भूभारमखिलं निचखान । स एव भगवान् युगे तुरीयेऽपि [3]ब्रह्मकुले जायमानः सर्वा उपनिषदः उद्दिधीर्षुः सर्वाणि धर्मशास्त्राणि विस्तारयिष्णुः सर्वानपि जनान् सन्तारयिष्णुः सर्वानपि वैष्णवान् धर्मान् विजृम्भयन् सर्वानपि पाषण्डान् निचखान । स एष जगदन्त-र्यामी । स एष सर्वात्मकः । स एव मुमुक्षुभिर्ध्येयः । स एव मोक्षप्रदः । एतं स्मृत्वा सर्वेभ्यः [4]पापेभ्यो मुच्यते । तन्नाम

[1] सिद्धार्थं ध्री—अ१.
[2] बहुधाऽपि प्री—अ१, (एवमुत्तरत्र).
[3] ब्राह्मण्यां परमहंसो जा—अ१.
[4] प्मभ्यो—अ१.

संकीर्तयन् विष्णुसायुज्यं गच्छति । तदेतत् दिवा अधीयानः रात्रिकृतं पापं नाशयति । नक्तमधीयानो दिवसकृतं पापं नाशयति । तदेतद्वेदानां रहस्यं, तदेतदुपनिषदां रहस्यं, एतदधीयानः सर्वक्रतुफलं लभते, शान्तिमेति, मनश्शुद्धिमेति, सर्वतीर्थफलं लभते, य एवं वेद देहबन्धाद्विमुच्यते इत्युपनिषत् ॥

इति द्वितीयः खण्डः

---

# गरुडोपनिषत्

## भद्रं कर्णेभिः—इति शान्तिः

गारुडविद्यासंप्रदायः

ॐ गारुडब्रह्मविद्यां प्रवक्ष्यामि यां [1]ब्रह्मा विद्यां नारदाय प्रोवाच नारदो बृहत्सेनाय बृहत्सेन इन्द्राय इन्द्रो भरद्वाजाय भरद्वाजो जीवत्कामेभ्यः शिष्येभ्यः प्रायच्छत् ॥ १ ॥

विषं ब्रह्मातिरिक्तं स्यादमृतं ब्रह्ममात्रकम् ।
ब्रह्मातिरिक्तविषहृद्ब्रह्ममात्रखगेऽहम् ॥

इह खलु अथर्वणवेदप्रविभक्तेयं स्वाज्ञानपन्नगगारुडोपनिषत् निर्विशेषब्रह्मज्ञानसाधनकळेबरप्राणपवनवियोगहेतुपन्नगादिनानाविषजातप्रशमननिपुणगारुडविद्याप्रकटनव्यग्रा परमार्थदृष्ट्या ब्रह्मातिरिक्तविषजातनिर्विषीकरणनिष्प्रतियोगिकब्रह्ममात्रगरुडपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । इयं विद्या ब्रह्मादिभरद्वाजान्तपारंपर्येणागतेति सूक्तिः विद्यास्तुत्यर्था । तत्परंपरामनुक्रामति—ओमिति । ओङ्कारलक्ष्यार्थनिष्पन्नं परं ब्रह्म स्वाज्ञादिदृष्टिमोहे सत्यसति निष्प्रतियोगिकस्वमात्रमवशिष्यत इत्यत्र न हि संशयोऽस्ति । ओङ्कारवाच्यार्थनिष्पन्नं अपरं ब्रह्म "सुपर्णोऽसि गरुत्मान् त्रिवृत्ते

[1] ब्रह्म—अ, अ १, क.

शिरः” इति वक्ष्यमाणश्रुतिसिद्धं वैराजतत्त्वमित्यर्थः । तादृशापरब्रह्मगोचरां गारुडाख्यापरब्रह्मविद्यां **प्रवक्ष्यामीति** श्रुतेर्वचः । सेयं विद्या कीदृशी? इत्यत्र **यां इह गारुडापरब्रह्मविद्यां ब्रह्मा नारदाय प्रोवाच** इत्यादिपरंपरागतां विद्यां **भरद्वाजो** मुनिः, “देहे नष्टे कुतो बुद्धिः बुद्धिनाशे कुतो ज्ञता” इति स्मृत्यनुरोधेन निर्विशेषब्रह्मज्ञानोपयोगितया जीवत्कामेभ्यः **शिष्येभ्यः प्रायच्छत्** इति । अपरब्रह्मविद्यायाः परब्रह्माभ्युपायत्वे “शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति” इति श्रुतेः ॥ १ ॥

गारुडविद्यायाः ऋष्यादि

अस्याः [1]श्रीमहागरुडब्रह्मविद्याया ब्रह्मा ऋषिः । गायत्री छन्दः । श्रीभगवान् महागरुडो देवता । श्रीमहागरुडप्रीत्यर्थे मम सकलविषविनाशनार्थे जपे विनियोगः ॥ २ ॥

ॐ नमो भगवते अङ्गुष्ठाभ्यां नमः । श्रीमहागरुडाय तर्जनीभ्यां स्वाहा । पक्षीन्द्राय मध्यमाभ्यां वषट् । श्रीविष्णुवल्लभाय अनामिकाभ्यां हुम् । त्रैलोक्यपरिपूजिताय कनिष्ठिकाभ्यां वौषट् । उग्रभयंकरकालानलरूपाय करतलकरपृष्ठाभ्यां फट् ॥ एवं हृदयादिन्यासः ॥ ३ ॥

भूर्भुवः सुवरोमिति दिग्बन्धः ॥ ४ ॥

ध्यानम्—

[2]स्वस्तिको दक्षिणं पादं वामपादं तु कुञ्चितम् ।
प्राञ्जलीकृतदोर्युग्मं गरुडं हरिवल्लभम् ॥

[1] श्रीगारु—उ. [2] स्वस्तिकं—क

अनन्तो वामकटको यज्ञसूत्रं तु वासुकिः ।
तक्षकः कटिसूत्रं तु हारः कार्कोट उच्यते ॥
पद्मो दक्षिणकर्णे तु महापद्मस्तु वामके ।
शङ्खः शिरःप्रदेशे तु गुलिकस्तु भुजान्तरे ॥
पाण्ड्रकालिकनागाभ्यां चामराभ्यां सुवीजितम् ।
एलापुत्रकनागाद्यैः सेव्यमानं मुदाऽन्वितम् ॥
कपिलाक्षं गरुत्मन्तं सुवर्णसदृशप्रभम् ।
दीर्घबाहुं बृहत्स्कन्धं नागाभरणभूषितम् ॥
आजानुतः सुवर्णाभमाकट्योस्तुहिनप्रभम् ।
कुङ्कुमारुणमा[1]कन्थं शतचन्द्रनिभाननम् ॥
नीलाग्रनासिकावक्त्रं सुमहच्चारुकुण्डलम् ।
दंष्ट्राकरालवदनं किरीटमुकुटोज्ज्वलम् ॥
कुङ्कुमारुणसर्वा[2]ङ्गं कुन्देन्दुधवला[3]ननम् ।
विष्णुवाह नमस्तुभ्यं क्षेमं कुरु सदा मम ॥
एवं ध्यायेत्त्रिसंध्यासु गरुडं नागभूषणम् ।
विषं नाशयते शीघ्रं तूलराशिमिवानलः ॥ ५ ॥

गारुडापरब्रह्मविद्यायाः ऋषिच्छन्दोदेवताऽऽदिकमाह—**अस्या इति**॥२–४॥ **हरिवल्लभं** हरिरेव वल्लभः स्वामी यस्य तं हरिवल्लभम् । अधिकारिभावनानुरोधेन सर्पादेः स्वातिरिक्तस्य च विषं नाशयते ॥ ५ ॥

[1] कन्धं—अ २, स्कन्धं—अ, अ १. [2] ङ्गकु—अ १, उ, क.
[3] नन—अ १, उ, क.

गरुडमालामन्त्रादि

[1]ओमीमों नमो भगवते श्रीमहागरुडाय पक्षीन्द्राय विष्णुवल्लभाय त्रैलोक्यपरिपूजिताय उग्रभयंकरकालानलरूपाय वज्रनखाय वज्रतुण्डाय वज्रदन्ताय वज्रदंष्ट्राय वज्रपुच्छाय वज्रपक्षालक्षितशरीराय ओमीमेह्येहि श्रीमहागरुडाप्रतिशासनास्मिन्नाविशाविश दुष्टानां विषं दूषय दूषय स्पृष्टानां विषं नाशय नाशय दन्दशूकानां विषं दारय दारय प्रलीनं विषं प्रणाशय प्रणाशय सर्वविषं नाशय नाशय हन हन दह दह पच पच भस्मीकुरु भस्मीकुरु हुं फट् स्वाहा ॥ ६ ॥

चन्द्रमण्डलसंकाश सूर्यमण्डलमुष्टिक । पृथ्वीमण्डलमुद्राङ्ग श्रीमहागरुड विषं हर हर हुं फट् स्वाहा ॥ ७ ॥

ॐ क्षिप स्वाहा ॥ ८ ॥

ओमीं स चरति स चरति [2]तत्कारि मत्कारि विषाणां च विषरूपिणी विषदूषिणी विष[3]शोषणी विषनाशिनी विषहारिणी हतं विषं नष्टं विषमन्तः प्रलीनं विषं प्रनष्टं विषं हतं ते ब्रह्मणा विषं हतमिन्द्रस्य वज्रेण स्वाहा ॥ ९ ॥

ॐ नमो भगवते महागरुडाय विष्णुवाहनाय त्रैलोक्यपरिपूजिताय वज्रनखवज्रतुण्डाय वज्रपक्षालंकृतशरीराय एह्येहि महागरुड विषं छिन्धि छिन्धि आवेशयावेशय हुं फट् स्वाहा ॥ १० ॥

[1] ओं रं ओं—अ १. ओं रां ओं—क.

[2] तत्कारी मत्कारी—मु. (एवमुत्तरत्र).

[3] शोषिणी—अ २, उ. (एवमुत्तरत्र).

सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुः स्तोम आत्मा साम ते तनूर्वामदेव्यं बृहद्रथन्तरे पक्षौ यज्ञायज्ञियं पुच्छं छन्दांस्यङ्गानि धिष्णियाः शफा यजूंषि नाम। सुपर्णोऽसि गरुत्मान् दिवं गच्छ सुवः पत ॥ ११ ॥

ओमीं ब्रह्मविद्याममावा[1]स्यायां पुरोवाच स चरति स चरति तत्कारि मत्कारि विषनाशिनी विष[2]दूषिणी विषहारिणी हतं विषं नष्टं विषं प्रणष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १२ ॥

[3]तत्क्ष्यम् । यद्यनन्तकदूतोऽसि यदि वाऽनन्तकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १३ ॥

यदि वासुकिदूतोऽसि यदि वा वासुकिः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १४ ॥

यदि तक्षकदूतोऽसि यदि वा तक्षकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं

[1] स्यां—अ १, अ २, क. [2] दूषणी—उ. (एवमुत्तरत्र).
[3] 'तत्' इति (उ) कोशे नास्ति.

हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १५ ॥

यदि कर्कोटकदूतोऽसि यदि वा कर्कोटकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १६ ॥

यदि पद्मकदूतोऽसि यदि वा पद्मकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १७ ॥

यदि महापद्मकदूतोऽसि यदि वा महापद्मकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १८ ॥

यदि शङ्खकदूतोऽसि यदि वा शङ्खकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ १९ ॥

यदि गुलिकदूतोऽसि यदि वा गुलिकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी विषहारिणी हतं विषं

नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ २० ॥

यदि पौण्ड्रकालिकदूतोसि यदि वा पौण्ड्रकालिकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ २१ ॥

[1]यदि नागकदूतोऽसि यदि वा नागकः स्वयं स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ २२ ॥

यदि लूतानां प्रलूतानां यदि वृश्चिकानां यदि घोटकानां यदि स्थावरजङ्गमानां स चरति स चरति तत्कारि मत्कारि विषनाशिनी विषदूषिणी विषहारिणी हतं विषं नष्टं विषं हतमिन्द्रस्य वज्रेण विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ २३ ॥

अनन्तवासुकितक्षककर्कोटकपद्मकमहापद्मकशङ्खकगुलिकपौण्ड्रकालिकनागक इत्येषां दिव्यानां महानागानां महानागादिरूपाणां विषतुण्डानां विषदन्तानां विषदंष्ट्राणां विषाङ्गानां विषपुच्छानां विश्वचाराणां वृश्चिकानां लूतानां प्रलूतानां मूषिकाणां गृहगौलिकानां गृहगोधिकानां घ्रणासानां गृहगिरिगह्वरकालानलवल्मीकोद्भूतानां

[1] अयं (२२) पर्यायः मुद्रितकोश एव दृश्यते.

तार्णानां पार्णानां काष्ठदारुवृक्षकोटररतानां मूलत्वग्दारुनिर्यासपत्रपुष्प-फलोद्भूतानां दुष्टकीटकपिश्वानमार्जारजम्बूकव्याघ्रवराहाणां जरायु-जाण्डजोद्भिज्जस्वेदजानां शस्त्रबाणक्षतस्फोटव्रणमहाव्रणकृतानां कृत्रि-माणामन्येषां भूतवेतालकूष्माण्डपिशाचप्रेतराक्षसयक्षभयप्रदानां विषतुण्डदंष्ट्राणां विषाङ्गानां विषपुच्छानां विषाणां विषरूपिणी विषदूषिणी विषशोषिणी विषनाशिनी विषहारिणी हतं विषं नष्टं विषमन्तःप्रलीनं विषं प्रणष्टं विषं हतं ते ब्रह्मणा विषमिन्द्रस्य वज्रेण स्वाहा ॥ २४ ॥

गरुडमालामन्त्रमूलमन्त्रादिकमाह—ओमिति ॥ ६ ॥ वर्णतः चन्द्रमण्डलसंकाश। विराडात्मना यस्य मुष्टौ सूर्यमण्डलं विद्यते तस्य सम्बुद्धिः सूर्यमण्डलमुष्टिक ॥ ७–१० ॥ छन्दोमयाङ्गविराडादिरूपेण गरुडं स्तौति सुपर्णोऽसीति। गरं नानाविषजातं उन्मूल्य आत्मसात्करोतीति गरुत्मान् गरुत्मन् सुष्ठु शोभनौ पर्णौ पक्षौ यस्य स त्वं सुपर्णोऽसि विराडादिभावमा-पन्नस्य ते तव त्रिवृत् स्तोत्रीयानवकं शिरो भवति। गायत्रं सामैव ते चक्षुः भवति। तव आत्मा मध्यशरीरं अवशिष्टस्तोमसहस्रं भवति। वामदेव्यं साम ते तनूः भवति। बृहच्च रथन्तरं च बृहद्रथन्तरे सामनी ते पक्षौ भवतः। ते पुच्छं यज्ञायज्ञियं साम भवति। नानाछन्दांसि तव अङ्गानि भवन्ति। तव विश्रमणहेतुधिष्णिया अपि छन्दांस्येव भवन्तीत्यर्थः। तव शफाः खुरा यजूंषि ऋचश्च भवन्ति। अनुक्ताङ्गमथर्वणवेदो भवतीति वेदितव्यम्। यतस्त्वं गरुत्मान् सुपर्णोऽसि अतः त्वं दिवं गच्छ सुवः पत इति सुवर्ग्रहणं चतुर्दशभुवनस्यो-पलक्षणार्थं, विराट्सूत्रेश्वरात्मना सर्वव्यापको भवेत्यर्थः। सुपर्णगतविशेषांशापाये सुपर्णस्य निर्विशेषब्रह्मरूपत्वं सिद्धमित्यर्थः ॥ ११–१२ ॥ तत् स्त्र्यं विषहरबीजम् ॥ १३–२३ ॥ किं बहुना—अनन्तेति ॥ २४ ॥

य इमां ब्रह्मविद्याममावा[1]स्यायां पठेच्छृणुयाद्वा यावज्जीवं न हिंसन्ति सर्पाः । अष्टौ ब्राह्मणान् ग्राहयित्वा तृणेन मोचयेत् । शतं ब्राह्मणान् ग्राहयित्वा चक्षुषा मोचयेत् । सहस्रं ब्राह्मणान् ग्राहयित्वा मनसा मोचयेत् । सर्पान् जले न मुञ्चन्ति । तृणे न मुञ्चन्ति । काष्ठान् मुञ्चन्तीत्याह भगवान् ब्रह्मेत्युपनिषत् ॥ २९ ॥

एवं अपरब्रह्मविद्यया सर्पादिविषतो भीतिमुत्सृज्य निर्विशेषब्रह्मज्ञानसाधनानुष्ठाननिष्पन्नब्रह्मविद्याप्रादुर्भावसमकालं विद्वान् ब्रह्मातिरिक्तसामान्यविषग्रासनिष्प्रतियोगिकब्रह्ममात्रामृतरूपेण अवशिष्यत इत्यर्थः । इत्युपनिषच्छब्दः गरुडोपनिषत्परिसमाप्त्यर्थः ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
गरुडोपनिषद्व्याख्या लिखितेश्वरगोचरा ।
गरुडोपनिषद्व्याख्याग्रन्थोऽशीतिरितीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे द्व्यधिकशतसङ्ख्यापूरकं गरुडोपनिषद्विवरणं सम्पूर्णम् ॥

---

[1] स्यां—अ १, अ २, क, उ.

# गोपालतापिन्युपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

## गोपालपूर्वतापिनी

### प्रथमोपनिषत्

मङ्गलाचरणम्

सच्चिदानन्दरूपाय कृष्णायाक्लिष्ट[1]कारिणे ।
नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे ॥ १ ॥

श्रीमत्पञ्चपदागारं सविशेषतयोज्ज्वलम् ।
प्रतियोगिविनिर्मुक्तं निर्विशेषं हरिं भजे ॥

इह खलु अथर्वणवेदप्रविभक्तेयं गोपालतापिन्युपनिषत् सविशेषब्रह्मसाम्राज्यप्रकटनव्यग्रा निष्प्रतियोगिकनिर्विशेषब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । मौनिमण्डलब्रह्मणोः गोपीमण्डलदुर्वाससोः ब्रह्मनारायणयोश्च प्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । विद्याऽऽदौ मङ्गळं कुर्वन्त्याख्यायिकामवतारयति—सच्चिदानन्देति । अनृतजडदुःखप्रपञ्चग्रासः सच्चिदानन्दः । स एव कृषिशब्दवाच्यस्वातिरिक्तप्रपञ्चजातं

[1] कर्मणे—अ.

मुष्णाति स्वावशेषतया प्रसतीति **कृष्णः** । स्वभक्तजनं आ[अ]क्लिष्टं आविद्यकदुःखविरळं करोतीति **आ[अ]क्लिष्टकारी** । वेदान्ता उपनिषदः तत्प्रमाणसिद्धत्वात् **वेदान्तवेद्यः** । सर्वप्राणिहितोपदेष्टृत्वात् **गुरुः** । बुद्धिवृत्तिसहस्रभावाभावेक्षितृत्वात् सर्वप्रत्यगात्मतया **बुद्धिसाक्षी** । तस्मै उक्तविशेषणविशिष्टाय **कृष्णाय नमः** । नमःशब्दः कृष्णात्मनोरभेदद्योतकः, "नमस्त्वैक्यं प्रवदेत्" इति श्रुतेः ॥ १ ॥

### गोपालकृष्णस्य परमदेवत्वम्

ॐ मुनयो ह वै ब्राह्मणमूचुः—कः परमो देवः । कुतो मृत्युर्बिभेति । कस्य विज्ञानेनाखिलं विज्ञातं भवति । केनेदं विश्वं संसरतीति ॥ २ ॥

तदु होवाच ब्राह्मणः—कृष्णो वै परमं दैवतम् । गोविन्दान्मृत्युर्बिभेति । गोपीजनवल्लभज्ञानेनैतद्विज्ञातं भवति । स्वाहेदं विश्वं संसरतीति ॥ ३ ॥

एवं प्रत्यग्ब्रह्मैक्यलक्षणं मङ्गळं कृत्वा आख्यायिकां गोपालब्रह्मविद्यामवतारयति—**ओमिति** । ओं ओङ्कारार्थं ब्रह्म तदतिरिक्तं न किंचिदस्ति इति मननशीलाः **मुनयः** नारदादयः विदितब्रह्मतत्त्वा अपि स्वाङ्गलोकोद्धरणं कर्तव्यमिति मनीषया **ब्राह्मणं** ब्रह्माणं प्रत्येवमूचुः । किमिति ? **कः परमो देव** इति ॥ २ ॥ नारदादिमुनिभिः एवं पृष्टो ब्रह्मा गोपालमन्त्रराजविद्यया उत्तरमाचष्टे—**तदु होवाच ब्राह्मण** इति । किमिति ? **कृष्ण** इति । स्वभक्तपटलस्वातिरिक्तास्तित्वविभ्रमकर्षणात् **कृष्णो वै** प्रसिद्धः **परमं दैवतं**, "तं देवतानां परमं च दैवतं" इति श्रुतेः । 'कः परमो देवः' इति प्रश्नमपाकृत्य 'कुतो मृत्युः बिभेति' इति प्रश्नमपाकरोति—**गोविन्दादिति** । गोभिः गीर्भिः तत्त्वमस्यादिमहावाक्यततिभिः स्वातिरिक्ताविद्यापदतत्कार्यजातासंभवप्रबोधसिद्धं ब्रह्म निष्प्रति-

योगिकस्वमात्रमिति विन्दते उपलभ्यते इति गोविन्दः तस्मात् **गोविन्दात्** स्वासक्तं मृतिं नयतीति **मृत्युः** स्वातिरिक्तास्तित्वविभ्रमः **बिभेति** । गोविन्दस्य निष्प्रतियोगिकाद्वितीयत्वं मृत्योः भीहेतुरित्यर्थः, "भीषाऽस्माद्वातः पवते" इत्यादिश्रुतेः । कस्य विज्ञानेन अखिलं विज्ञातं भवतीति प्रश्नोत्तरमाह—**गोपीति** । स्वातिरिक्तास्तित्वभ्रमं नामरूपाभ्यां गोपायतीति **गोपी**, यद्वा—स्वमात्रं ब्रह्म गोपायति आवृणोतीति **गोपी** माया । तदविद्यांऽशतो जनित्वा तद्विद्यांऽशतो नश्यतीति स्वातिरिक्तास्तित्वविभ्रमरूढमूलस्वातिरिक्तप्रपञ्चो गोपीजन इत्युच्यते । तद्भावाभावावभासकप्रत्यगभिन्नब्रह्मात्मना तल्लयाधिकरणतया भातीति **गोपीजनवल्लभः** परमात्मा स्वाधिष्ठेयप्रपञ्चविलयसापेक्षप्रसक्ताधिष्ठानत्वासंभवप्रबोधसिद्धो निष्प्रतियोगिकस्वमात्रमिति त**ज्ज्ञानेन एतत्** सर्वमाविद्यकं जगन्निष्प्रतियोगिकाभावरूपतया **विज्ञातं भवति**, निष्प्रतियोगिकब्रह्ममात्रमवशिष्टं भवतीत्यर्थः । **केनेदं विश्वं** संसरतीति प्रश्नोत्तरं तु—

> या च प्रागात्मनो मे मा तथाऽन्ते च तिरस्कृता ।
> ब्रह्मवादिभिरुद्गीता सा मायेति विवेकतः ॥

इति श्रुतिः निष्प्रतियोगिकभावरूपब्रह्ममात्रातिरेकेण कालत्रयेऽपि नास्त्येवेति यां सुष्ठ्वाह सेयं **स्वाहा** माया तया **इदं विश्वं** जीवजातं **संसरति** संसारवत् भवतीत्यर्थः ॥ ३ ॥

### गोपालकृष्णस्वरूपनिरूपणम्

**तदु होचुः—कः कृष्णः । गोविन्दश्च कोऽसाविति । गोपीजनवल्लभश्च कः । का स्वाहेति ॥ ४ ॥**

**तानुवाच ब्राह्मणः—पापकर्षणो गोभूमिवेदविदितो गोपीजनविद्याकला[1]पीप्रेरकः । तन्माया चेति सकलं परं ब्रह्मैव तत् । यो ध्यायति रसति भजति सोऽमृतो भवतीति ॥ ५ ॥**

[1] पिप्रे—अ १, क. भिप्रे—अ.

एवं ब्रह्मोक्तार्थं निशम्य विशेषार्थबुभुत्सया मुनयः पृच्छन्तीत्याह—**तदु होचुरिति**। **तदु** तदुक्तार्थे उ ह पूर्ववत् ऊचुः। किमिति? **कः कृष्ण इति** ॥ ४ ॥ एवं मुनिभिः पृष्टः **तानुवाच ब्राह्मणः** । किमिति? **पापकर्षणः** इति । सच्चिदानन्दात्मना अनृतजडदुःखात्मकपापकर्षणात् **पापकर्षणः** कृष्णशब्दार्थः । गोविन्दशब्दार्थस्तु **गोभूमिवेदविदित** इति । गोभिः वेदैः विदितत्वात् गोविन्द इत्यर्थः । गोपीजनवल्लभशब्दार्थमाह—**गोपीति** । गोपायन्तीति गोप्यः पालनशक्तयः तासां जनः समूहः । स्वातिरिक्तविद्याऽविद्याकलाजातं पिबति **ग्रसतीति गोपीजनविद्याकलापी**, विद्याकलापः अस्यास्तीति वा, **प्रेरकः** सर्वान्तर्यामित्वात् । स्वाहास्वरूपमाह—**तन्माया चेति** । तया हि स्वाज्ञलोकः संसरति । कलया सहितं **सकलं** शबळमीश्वराख्यं वस्तु स्वगतविशेषांशापाये **परं ब्रह्मैव तत्** । तद्ध्यानादिफलमाह—**यो ध्यायतीति** ॥ ५ ॥

गोपालकृष्णरूपविशेषध्यानम्

ते होचुः—किं तद्रूपं किं रसनं किमाहो तद्भजनं तत्सर्वं विविदिषतामाख्याहीति ॥ ६ ॥

तदु होवाच हैरण्यो गोपवेषमभ्राभं कल्पद्रुमाश्रितम् ॥ ७ ॥

तदिह श्लोका भवन्ति—

सत्पुण्डरीकनयनं मेघाभं वैद्युताम्बरम् ।
द्विभुजं ज्ञानमुद्राऽऽढ्यं वनमालिनमीश्वरम् ॥ ८ ॥
गोपगोपीगवावीतं सुरद्रुमतलाश्रयम् ।
दिव्यालंकरणोपेतं रत्नपङ्कजमध्यगम् ॥ ९ ॥
कालिन्दीजलकल्लोलसङ्गिमारुतसेवितम् ।
[1]चिन्तयन् चेतसा कृष्णं मुक्तो भवति संसृतेः ॥ १० ॥ इति ॥

[1] चिन्तयेत् चे—अ.

ध्यानादिबुभुत्सया पुनस्ते पृच्छन्तीत्याह—ते **होचुरिति** ॥ ६ ॥ तत्र ध्येयस्वरूपमाह—**तदु होवाचेति** । तत् तत्र प्रश्नत्रये हिरण्यगर्भस्य विष्णोरपत्यं **हैरण्यो** ब्रह्मा ध्येयरूपं उवाचेत्यर्थः । वेषमात्रेण गोपी न कृत्यत इति **गोपवेषं**, अपो बिभर्तीत्यभ्रः समुद्रः तद्वदाभा यस्येति **अभ्राभं** समुद्रवत् गंभीरमित्यर्थः । **कल्पद्रुमाश्रितं** स्वे[सर्वे] प्सितार्थदवेदान्तवेद्यच[श]रणत्वात्, स्वस्य कर्माध्यक्षत्वेन भक्तस्येप्सितार्थ[द]त्वादित्यत्र—"सर्वभूतान्तरात्मा कर्माध्यक्षः" इति श्रुतेः, "फलमत उपपत्तेः" इति न्यायात्, "लभते च ततः कामान् मयैव विहितान् हितान्" इति स्मृतेश्च ॥ ७ ॥ ब्राह्मणोक्तार्थं मन्त्रा अप्यनुवदन्तीत्याह—**तदिहेति** ॥ ८ ॥ गोपायतीति **गोपो** जीवः, **गोपी** माया, **गावो** वेदाश्च, तैः **आवीतं** आश्रितम् ॥ ९ ॥ इतिशब्दो ध्यानसमाप्त्यर्थः ॥ १० ॥

गोपालकृष्णमन्त्रजपः

तस्य पुना रसनमिति—जलभूमीन्दु [1]संपातकामादिकृष्णायेत्येकं पदम् । गोविन्दायेति द्वितीयम् । गोपीजनेति तृतीयम् । वल्लभायेति तुरीयम् । स्वाहेति पञ्चममिति ॥ ११ ॥ पञ्चपदं जपन् पञ्चाङ्गं द्यावाभूमिसूर्याचन्द्रम[2]साग्निस्तद्रूपतया ब्रह्म संपद्यते ब्रह्म संपद्यत इति ॥ १२ ॥

तदेष श्लोकः—क्लीमित्येतदादावादाय कृष्णाय गोविन्दाय गोपीजनवल्लभायेति [3]बृहन् भानव्यासकृदुच्चरेद्योऽसौ गतिस्तस्यास्ति मङ्क्षु नान्या गतिः स्यादिति ॥ १३ ॥

द्वितीयप्रश्नार्थमाह—**तस्येति** । तस्य कृष्णाख्यब्रह्मणः **रसनं** पञ्चपदजपनमिति । जलं ककारः भूमिः लकारः ईकारः इन्दुः अनुस्वारः तं **संपातरूपं**

[1] संपातार्काय कृ—अ.

[2] साग्नितद्रू—अ १, अ २, क.

[3] ब्रह्मन्—अ, अ २, क, उ १.

कामबीजं "क्लीं" इति बीजेन साकं कृष्णाय इत्यादि पञ्चपदं भवति ॥ ११ ॥ मन्त्रजपात्मकोक्तरसनस्य फलमाह—पञ्चपदमिति । पञ्चपदं जपन् मुमुक्षुः द्यावाभूम्यादिपञ्चाङ्गविशिष्टं वैराजरूपं तद्रूपतया संपद्यते । आवृत्तिः प्रथमोपनिषत्समाप्त्यर्था ॥ १२ ॥ उक्तरसने मन्त्रसंवादमाह—तदेष श्लोक इति । "क्लीं" इत्येतत् आदावादाय ततः कृष्णायेत्यादिपदचतुष्टयं, स्वाहेत्यर्थे बृहन् भानव्य इति, आहत्य पञ्चपदं यः [अ]सकृदुच्चरेत् तस्य मङ्क्षु शीघ्रं पञ्चाङ्गब्रह्मरूपा गतिः भवतीति सामान्यफलमेतत् । मन्त्रोक्तार्थानुसन्धानपूर्वकं जपतः निर्विशेषब्रह्मभावापत्तिः मुख्यफलम् । न कदाऽपि अन्या गतिः तस्य स्यात् । इतिशब्दो रसनसमाप्त्यर्थः ॥ १३ ॥

### गोपालकृष्णभजनम्

भक्तिरस्य भजनम् । तदिहामुत्रोपाधिनैराश्येनामुष्मिन् मनः-[1]कल्पनम् । एतदेव च नैष्कर्म्यम् ॥ १४ ॥

कृष्णं तं विप्रा बहुधा यजन्ति गोविन्दं सन्तं बहुधाऽऽराधयन्ति ।
गोपीजनवल्लभो भुवनानि दध्रे स्वाहाश्रितो [2]जगदैजत्सुरेताः ॥
वायुर्यथैको भुवनं प्रविष्टो जन्येजन्ये पञ्चरूपो बभूव ।
कृष्णस्तथैकोऽपि जगद्धितार्थं शब्देनासौ
पञ्चपदो विभाति ॥ इति ॥ १६ ॥

किमाहो तद्भजनं इति प्रश्नोत्तरमाह—भक्तिरस्येति । दासोऽहं सोऽहं इति वा अनन्यभावापन्नेयं भक्तिः, "स्वस्वरूपानुसंधानं भक्तिरित्यभिधीयते" इति स्मृतेः । भजनसाधनमाह—तदिति । एवं भजनमेव नैष्कर्म्यं ज्ञानमित्यर्थः ॥ १४ ॥ भजनोपायमाह—कृष्णमिति । यः सर्वात्मतया प्रसिद्धः तं

[1] कल्पितम्—अ २. [2] जगदेतत्—अ, अ १, मु.

**कृष्णं विपश्चितो विप्राः बहुधा** द्रव्ययज्ञादिज्ञानयज्ञान्तैः **यजन्ति गोविन्दं सन्तं बहुधा** श्रवणादिभिः **आराधयन्ति** महामण्डूकादिकूर्मादिशेषात्मना। **गोपीजनवल्लभो भुवनानि दध्रे**। यद्वा—सर्वारोपाधिकरणविश्वविराडोत्राद्यात्मना भुवनोपलक्षिताविद्यापदतत्कार्यानन्तकोटिब्रह्माण्डानि दध्रे धृतवानित्यर्थः। किंच—**स्वाहेति**। **स्वाहा**शब्दवाच्यमायाश्रितः सन् जगत् स्वाविद्यापदं **ऐजत्** अचालयत् सृष्टिकाले मायायां सुष्ठु रेतोबीजं यस्य सोऽयं सुरेताः, "इन्द्रो मायाभिः पुरुरूप ईयते", "रूपं रूपं प्रतिरूपो बभूव", "मम योनिर्महद्ब्रह्म तस्मिन् भर्गं दधाम्यहम्" इति श्रुतेः, स्मृतेश्च ॥ १९ ॥ स्वभक्तभजनाय भगवान् पञ्चपदात्मना भवतीति सदृष्टान्तमाह—**वायुरिति**। **यथा** मुख्यप्राणात्मको **वायुरेकोऽपि भुवनं** अविद्यापदप्रविभक्तब्रह्माण्डपटलं **प्रविष्टः** सन् **जन्येजन्ये** प्रतिशरीरं प्राणापानादिभेदेन **पञ्चरूपो बभूव तथैवैकोऽप्यसौ कृष्णो** जगद्धितार्थं गोपालविद्याऽऽत्मकशब्देन पञ्च पदानि यस्य **पञ्चपदो विविधं भाति** प्रकाशते। इतिशब्दो मन्त्रपरिसमाप्त्यर्थः ॥ १६ ॥

## द्वितीयोपनिषत्

### गोविन्दपूजाप्रकारः

ते होचुः—उपासनमेतस्य परमात्मनो गोविन्दस्याखि[1]लाधारिणो ब्रूहीति ॥ १७ ॥

तानुवाच—यत्तस्य पीठं हैरण्याष्टपलाशमम्बुजं तदन्तरालिका[2]नलास्त्रयुगं तदन्तरालाद्यर्णाखिलबीजं कृष्णाय नम इति बीजाढ्यं सब्रह्माणमादायानङ्गगायत्रीं यथावद्व्या[3]लिख्या भूमण्डलं शूलवेष्टितं कृत्वाऽङ्गवासुदेवादिरुक्मिण्यादि[4]स्वशक्तीन्द्रादिवसुदेवादिपार्थादिनि-

[1] लधा—अ, अ १.   [2] नलकास्र—अ २, क, उ, मु.   नलकास्र—अ.

[3] लिख्य भू—अ २, क.   [4] स्वशक्तिं नन्दादि—अ, अ १, अ २, क, उ.

ध्यावीतं यजेत् सन्ध्यासु प्रतिपत्तिभिरुपचारैः । तेनास्याखिलं भवत्यखिलं भवतीति ॥ १८ ॥

तदिह श्लोका भवन्ति—

एको वशी सर्वगः कृष्ण ईड्यः एकोऽपि सन् बहुधा यो विभाति ।
तं पीठगं येऽनुभजन्ति धीरास्तेषां सिद्धिः शाश्वती नेतरेषाम् ॥
नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।
तं पीठगं येऽनुभजन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥२०॥
एतद्विष्णोः परमं पदं ये नित्योद्युक्तास्तं यजन्ते न [1]कामात् ।
तेषामसौ [2]गोपरूपः प्रयत्नात् प्रकाशयेदात्मपदं तदेव ॥ २१ ॥
यो ब्रह्माणं विदधाति पूर्वं यो [3]विद्यास्तस्मै गोपायति स्म कृष्णः ।
तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुः शरणं व्रजेत् ॥ २२ ॥
ओङ्कारेणान्तरितं ये जपन्ति गोविन्दस्य पञ्चपदं मनुम् ।
तेषामसौ दर्शयेदात्मरूपं तस्मान्मुमुक्षुरभ्यसेन्नित्यशान्त्यै ॥२३॥
[4]एतस्मादेव [5]पञ्चपदादभूवन् गोविन्दस्य मनवो मानवानाम् ।
दशार्णाद्यास्तेऽपि संक्रन्दनाद्यैरभ्यस्यन्ते भूतिकामैर्यथावत् ॥

"गोविन्दं सन्तं बहुधाऽऽराधयन्ति" इत्युक्तं, तत्प्रकारं पृच्छन्तीत्याह—त इति ॥ १७ ॥ एवं नारदादिमुनिभिः पृष्टः तत्पूजापीठं प्रकटयति—तानुवाचेति । तान् प्रति ब्रह्मा उवाच । किमिति ? यत्तस्य गृहे क्षाळितं पीठं

[1] कामान्—अ २.
[2] गोपरूपोप्र—अ, अ २, क.
[3] विद्यां त—अ, अ २, क.
[4] एतस्मा एव—अ, अ १, क.
[5] पञ्चपदा अ—अ.

**स्थापयित्वा हैरण्याष्टपलाशं** सौवर्णाष्टदळं **अम्बुजं** स्थापयेत् सुगन्धचन्दनेन लिखेत् । **तदन्तराळिके** तस्य कमलस्यान्तराळिके अन्तराळप्रदेशे **अनलास्रयुगं** त्रिकोणद्वयं संपुटितं षट्कोणं लिखेदित्यर्थः । **तदन्तराळाद्यर्णेति** तस्य षट्कोणस्य अन्तराळमध्ये कामबीजं साधकनाम च लिखेदिति शेषः । तदुक्तं सनत्कुमार-संहितायां—

कर्णिकायां लिखेद्वह्निपुटितं मङ्गळद्वयम् ।
तन्मध्ये विलिखेत् बीजं साध्याख्यं कर्म[काम]संयुतम् ॥ इति ॥

**कृष्णाय नम** इति **बीजेन** कामबीजेन च **आढ्यं** षडश्रसन्धिषु षडक्षरं लिखेत्, "षडश्रसन्धिषु" इति क्रमदीपिकोक्तेः । **सब्रह्माणमिति**—पूर्वलिखितकर्णिकास्थमनङ्गबीजं सब्रह्माणं षट्कोणस्य पूर्वनैर्ऋत्यवायव्यकोणेषु "श्रीं" इति बीजमष्टादशाक्षरमन्त्रोपेतं आदायेत्यर्थः । मन्त्रद्रष्टोरभेदात् मन्त्रो ब्रह्मा । तदुक्तं संहितायां "ततः शिष्टार्णैः सकामं वेष्टयेत् विधिरिति षट्कोणस्य पूर्वनैर्ऋत्यवायव्यकोणेषु श्रीं इति बीजं लिखेत् आग्नेयपश्चिमेशानकोणेषु ह्रीं इति बीजम्" लिखेदिति शेषः, "श्रियं षट्कोणेषु इन्द्रनिर्ऋतिवायुषु । आलिख्य विलिखेन्मायां वह्निवारुणशूलिषु" इति संहितोक्तेः । **अनङ्गगायत्रीमिति** अष्टदळकेसरेषु दळं प्रति वर्णत्रयं विलिखेत् । अनङ्गगायत्री तु—"कामदेवाय विद्महे पुष्पबाणाय धीमहि । तन्नोऽनङ्गः प्रचोदयात्" इति । पुनस्तत्रैवाष्टदळेषु अष्टाचत्वारिंशदक्षरं काममालामन्त्रं प्रतिदळं षट्षडक्षरं क्रमेण विलिखेत् । मालामन्त्रस्तु "नमः कामदेवाय सर्वजनप्रियाय सर्वजनसंमोहनाय ज्वल ज्वल प्रज्वल प्रज्वल सर्वजनस्य हृदयं मे वशं कुरु स्वाहा" इति । अष्टदळोपरि वृत्तं कृत्वा मातृकाऽक्षरैः वेष्टयेत् । तथा च संहितायां—

अक्षरैः कामगायत्र्या वेष्टयेत् केसरे सुधीः ।
काममालामनोर्वर्णैः दळेष्वष्टसु मन्त्रवित् ।
लिखेत् गुहाननैर्मुक्तिः मातृकां तद्बहिर्लिखेत् ॥

इति । आभूमण्डलं शूलवेष्टितं कृत्वेति, "भूगृहं चतुरश्रं स्यादष्टवज्रयुतं मुने" इति संहितोक्तेः । अस्य धारणायन्त्रत्वात् साध्यादिलेखनमप्यादावसूचयत् । अत एव धारणाविधानं तत्फलं च संहितायामुक्तम्—

हुत्वा सहस्रमाज्येन यन्त्रे सम्पातपूर्वकम् ।
मार्जयित्वाऽयुतं जप्त्वा धारयेद्यन्त्रमुत्तमम् ।
त्रैलोक्यैश्वर्यमाप्नोति देवैरपि सुपूजितः ॥

इत्यादि । यदा तु पूजाऽर्थं यन्त्रं क्रियते तदा तु पूर्वं मण्टपादिपृथिव्यन्तं पूजयेत् । कर्णिकोपरि—

अग्न्यादिपीठपादेषु धर्मादींश्चतुरो यजेत् ।
चतुर्षु पीठगात्रेषु धर्मादींश्चतुरो यजेत् ॥
कर्णिकायां ततोऽनन्तं पद्मान्ते च ततो यजेत् ।
तारवर्णप्रभिन्नानि मण्डलानि क्रमात्ततः ॥
सत्वं रजस्तम इति यजेदात्मचतुष्टयम् ।
आत्माऽन्तरात्मा परमात्मा ज्ञानात्मेति ते क्रमात् ॥
विमलोत्कर्षिणी ज्ञानक्रियायोगेति पञ्चमी ।
प्रह्वी सत्या तथेशानाऽनुग्रहा नवमी स्मृता ॥
प्रागाद्यष्टसु पत्रेषु कर्णिकायां यजेन्मुने ॥

ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगपीठात्मने नम इति पीठमन्त्रं पद्मस्योपरि विन्यस्य—

ततः पीठं समभ्यर्च्य देवमावाह्य नारद ।
अर्घ्यादिधूपदीपादीन् उपचारान् प्रकल्पयेत् ॥ इति ॥

अथावरणपूजां कुर्यात् । तत्र प्रथमावृतिस्तु—अग्नीशासुरवायव्यपुरःपृष्ठेषु क्लां हृदयाय नम इत्यादिषडङ्गानि पूजयेत् । एवमङ्गावरणं संपूज्य द्वितीयावरणं संपूजयेत् । अष्टपत्रेषु पूर्वादिचतुर्दिक्षु वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धान् पूजयेत् ।

आग्नेयादिचतुर्विदिक्षु शान्तिश्रीसरस्वतीरतीः पूजयेत् । तृतीयावृतिस्तु अष्टदळे पूर्वादिक्रमेण रुक्मिण्यादिस्वशक्तीः पूजयेत् । रुक्मिणी सत्यभामा जाम्बवती नाग्नजिती मित्रविन्दा कालिन्दी लक्ष्मणा सुशीला चेति श्रीकृष्णशक्तयः । चतुर्थपञ्चमाद्यावरणमाह—इन्द्रादिवसुदेवादिपार्थादीति । अत्र वसुदेवाद्यावरणमेव चतुर्थं बोध्यम् । पूर्वदळे ॐ पीतवर्णाय वसुदेवाय नमः, आग्नेयदळे यशोदायै कनकाभायै, दक्षिणदळे नन्दाय कर्पूरगौरवर्णाय, नैर्ऋतदळे राधायै कुङ्कुमगौरवर्णायै, पश्चिमदळे देवाय शङ्खकुन्दधवळाय, वायव्यदळे कलापश्यामायै सुभद्रायै, उत्तरदळे गोपेभ्यः, ईशानदळे गोपीभ्यः । पञ्चमपार्थाद्यावृतिस्तु—अर्जुनदारुकविष्वक्सेनसात्यकिगरुडनारदपर्वतान् पूजयेत् । षष्ठनिध्याद्यावृतिस्तु—पूर्वादिक्रमेण इन्द्रनिधये नीलनिधये मुकुन्दनिधये मकरनिधये पश्चिमे अनन्तनिधये कच्छपनिधये विद्यानिधये ईशाने पद्मपरमानन्दमोक्षनिधये नमः । सप्तमेन्द्रावृतिस्तु—पूर्वादिक्रमेण इन्द्राद्यष्टदिक्पालकेभ्यो नमः, पूर्वेशानमध्ये ब्रह्मणे, निर्ऋतिपश्चिममध्ये आदिशेषाय । अष्टमवज्राद्यावृतिस्तु—पूर्वादिक्रमेण वज्राद्यायुधेभ्यः । एतैरङ्गावरणादिवज्रावरणान्तैः आवीतं भगवन्तं यजेत् । एवं देवं त्रिसन्ध्यासु षोडशोपचारैः पूजयेत् । तेन आराधनेन अस्य पुरुषार्थचतुष्टयं अखिलं भवति । आवृत्तिः द्वितीयोपनिषत्समाप्त्यर्था ॥ १८ ॥ उक्तोपासनानुकूलमन्त्रा अपि भवन्तीत्याह—तदिह श्लोका भवन्तीति । यस्य वशे निखिलं वर्तते स वशी । शिष्टं कठवल्ल्यां व्याख्यातम् ॥ १९–२० ॥ पूर्ववन्मन्त्रान्तरमाह—एतदिति । ये साधकाः एतद्विष्णोः यन्त्रात्मकं परमं पदं नित्योद्युक्ताः सन्ततश्रद्धाभक्तिविशिष्टाः सन्तस्तं यजन्ते निष्कामधिया सम्यगाराधयन्ति न तु तस्मात् कामात् कामान् कामयन्ते तेषामसौ गोपरूपो हरिः स्वस्वरूपं प्रकाशयेदित्यर्थः ॥ २१ ॥ स्वात्मपदप्रदर्शनतः किं स्यादित्यत्र तद्भावापत्तिः स्यादित्याह—य इति । यः कृष्णः पूर्वं सृष्टिसमये ब्रह्माणं विदधाति यस्तस्मै वेदान् धारयति यः प्रळये विद्या वेदान् पयोधौ मत्स्याद्यवतारेण गोपायति पुनस्तस्मा उपदिशति तं ह देवमात्मबुद्धिप्रकाशं प्रत्यञ्चं मुमुक्षुः शरणं व्रजेत् । तच्छरणतः स एव तं मोचयतीत्यत्र—

सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ।
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ॥

इति भगवद्वाक्यं मानम् ॥ २२ ॥ प्रकृतपञ्चपदस्य प्रणवयोगतो रसनफलमाह— **ओमिति । गोविन्दस्य पञ्चपदं ओङ्कारेणान्तरितं** संपुटितं कृत्वा **ये जपन्ति तेषां असौ भगवान् स्वात्मरूपं दर्शयेत्** । यस्मादेवं **तस्मात् मुमुक्षुः नित्यशान्त्यै** गोविन्दस्य पञ्चपदं **मनुं** नित्यमभ्यसेत् जपेदित्यर्थः ॥ २३ ॥ एतस्मात् अन्ये मन्त्राः बभूवुरित्याह—**एतस्मादिति । एतस्मात्** गोविन्दस्य पञ्चपदमन्त्रात् **अन्ये** दशाक्षराद्या **मनवो मानवानां** सनकादीनां स्फुरिता **बभूवुः** । "संक्रन्दनोऽनिमिष एकवीरः शतं सेना अजयत् साकमिन्द्रः" इति श्रुतिसिद्धसंक्रन्दनाद्यैः इन्द्रादिदेवैः **भूतिकामैः यथावत् अभ्यस्यन्ते । ते मन्त्रा** अपि कृष्णपदप्रापका एवेत्यर्थः ॥ २४ ॥

## तृतीयोपनिषत्

### सृष्टिसाधनभूतोऽष्टादशार्णमन्त्रः

**ते पप्रच्छुः । तदु होवाच—ब्रह्मसवनं चरतो मे ध्यातः स्तुतः परमेश्वरः परार्धान्ते सोऽबुध्यत । कोपदेष्टा मे पुरुषः पुरस्तादाविर्बभूव । ततः प्रणतो मयाऽनुकूलेन हृदा मह्यमष्टादशार्णस्वरूपं सृष्टये दत्त्वाऽन्तर्हितः । पुनस्ते सिसृक्षतो मे प्रादुर्भूतेष्वक्षरेषु विभज्य भविष्यज्जगद्रूपं प्रकाशयन् तदिह कादापो लात् पृथिवीतोऽग्निर्बिन्दोरिन्दुस्तत्संपातात्तदर्क इति क्लींकारादसृजं कृष्णादाकाशं खाद्वायुरुत्तरात् सुरभिविद्याः प्रादुरकार्षमकार्षमिति तदुत्तरात् स्त्रीपुमादिभेदं सकलमिदं सकलमिदमिति ॥ २५ ॥**

पुनर्मुनयः पञ्चपदस्वरूपमेव पृच्छन्ति—ते पप्रच्छुरिति । तैः पृष्टः तदु होवाच । परार्धान्ते रात्र्यन्ते । ब्रह्मणः सवनं समयं चरतो मे ध्यातः स्तुतः परमेश्वरः परार्धान्ते रात्र्यन्ते स भगवान् अबुध्यत । कोऽयं मे मम उपदेष्टा पुरुषः पुरस्तादाविर्बभूव । एवमाविर्भूय किं कृतवानित्यत आह—तत इति । य एवं मत्पुरत आविर्बभूव स पुरुषः ततः तदनन्तरं मया अनुकूलेन हृदा प्रणतः सन् मह्यं अष्टादशार्णं मन्त्रं स्वस्वरूपभूतं सृष्ट्यर्थं दत्त्वा अन्तर्हितोऽभवदित्यर्थः । ततः किं इत्यत आह—पुनरिति । पुनः विश्वं सिसृक्षतो मे प्रादुर्भूतेष्वक्षरेषु भविष्यज्जगद्रूपं प्रकाशयन् गोपवेषधरो भगवान् पुरस्तात् प्रादुरभूत् । किं कुर्वन्नित्यत्र अष्टादशाक्षरेषु भविष्यज्जगत् प्रकाशयन् मनोगोचरं कुर्वन् तत् तत्र जगद्रूपे प्रकाशिते सति इह अष्टादशाक्षरेषु कात् ककारात् आपो जलं, लकारात् पृथिवी, ईत ईकारात् अग्निः, बिन्दोः अनुस्वारात् इन्दुः चन्द्रः, तेषां कादीनां संपातात् संश्लेषरूपात् क्लींकारात् प्रसिद्धः अर्कः सूर्यः इत्येतान् पञ्च असृजं, कृष्णायेति पदात् आकाशमसृजं, खाद्वायुरिति—खात् चिदाकाशात् शब्दराशिः वेदः, गोविन्दायेति पदात् वायुरित्यसृजं, उत्तरात् पदद्वयात्मकात् गोपीजनवल्लभायेति पदात् सुरभिः कामधेनुः विद्याः चतुर्दशेति प्रादुरकार्षं, तदुत्तरात् स्वाहेति पदात् स्त्रीपुरुषक्लीबं च सकलं स्थावरजङ्गमं प्रादुरकार्षम् । अभ्यासः तृतीयोपनिषत्समाप्त्यर्थः । इतिशब्दः पञ्चपदार्थसृष्टिसमाप्त्यर्थः ॥ २५ ॥

## चतुर्थोपनिषत्

स एव आत्मज्ञानसाधनभूतः

एतस्यैव यजने चन्द्रध्वजो गतमोहमात्मानं [1]वेदेत्योंकारा-
[2]लिकं मनुमावर्तयेत् सङ्गरहितोऽभ्यानत् ॥ २६ ॥

[1] वेदयत्यों—अ, अ १, अ २, क.

[2] ळीकं—अ, अ १.

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।

दिवीव चक्षुराततम् ॥ २७ ॥

तस्मादेनं नित्यमावर्तयेन्नित्यमावर्तयेदिति ॥ २८ ॥

न केवलं सृष्टिसाधनभूतोऽयं मन्त्रः, किंतु महेश्वरस्य आत्मज्ञानप्रदोऽप्मीत्याह—एतस्येति । एतत्पञ्चपदयजनतो हि चन्द्रध्वजः चन्द्रमौलीश्वरः विगळितस्वातिरिक्तमोहमात्मानं वेद बुबुधे इति कारणात् इदानीन्तनोऽपि ओङ्कारात्मिकं प्रणवसंपुटितं अष्टादशाक्षरमनुं फलासङ्गरहितः सन् आवर्तयेत् तेन चावर्तनेन अभि प्रत्यक्षं परमात्मानं आनत् आनयादित्यर्थः ॥ २६ ॥ तत्स्वरूपं विशदयति—तद्विष्णोरिति । यत्पदं सदा सूरयः स्वावशेषधिया पश्यन्ति तद्विष्णोः परमं पदं निष्प्रतियोगिकब्रह्ममात्रं व्याप्य सत्वे दिवीव स्वे महिम्नि चक्षुः प्रकाशमात्रं आततं व्यापकं भवति ॥ २७ ॥ यस्मादेवं तस्मात् विष्णुपदाप्तिहेतोः अष्टादशाक्षरमन्त्रं नित्यमभ्यसेत् । आवृत्तिः चतुर्थोपनिषत्समाप्त्यर्था ॥ २८ ॥

## पञ्चमोपनिषत्

### मन्त्रगतपञ्चपदेभ्यो जगत्सृष्टिः

तदाहुरेके यस्य प्रथमपदाद्भूमिर्द्वितीयपदाज्जलं तृतीयपदात्तेजश्चतुर्थपदाद्वायुश्चरमपदाद्व्योमेति वैष्णवं पञ्चव्याहृतिमयं मन्त्रं कृष्णावभासकं कैवल्यस्य [1]सृत्यै सततमावर्तयेत् सततमावर्तयेदिति ॥२९॥

तदत्र गाथाः—

यस्य प्रथमपादाद्भूः द्वितीयात् सलिलोद्भवः ।

तृतीयात्तेज उद्भूतं चतुर्थाद्गन्धवाहनः ॥ ३० ॥

[1] सिद्ध्यै—अ.

पञ्चमाद्दम्बरोत्पत्तिस्तमेवैकं समभ्यसेत् ।
चन्द्रध्वजोऽगमद्विष्णोः परमं पदमव्ययम् ॥ ३१ ॥
ततो विशुद्धं विमलं विशोकमशेषलोभादिनिरस्तसङ्गम् ।
यत्तत्पदं पञ्चपदं तदेव स वासुदेवो न यतोऽन्यदस्ति ॥ ३२ ॥

अथ मन्त्रान्तरेण पञ्चपदेभ्यो जगत्सृष्टिं निरूपयति—**तदाहुरिति** । **तत्** तत्र अष्टादशाक्षरेषु एके मुनय आहुः । **यस्य** पञ्चपदात्मकमनोः पञ्चपदात् पञ्चभूतसृष्टिः स्यात् तं **वैष्णवं** पञ्चव्याहृत्यात्मकपञ्चपादमयं **कृष्णावभासकं मन्त्रं कैवल्यस्य सृत्यै सततमावर्तयेत्** अभ्यसेत् । आवृत्तिः पञ्चमोपनिषत्समाप्त्यर्था ॥ २९ ॥ पूर्वोपनिषदुक्तसृष्टौ गाथाः श्लोकाः भवन्तीत्याह—**तदत्र गाथा इति** । इत्येते गाथा भवन्तीत्यर्थः ॥ ३०–३१ ॥ पञ्चपदस्य जगद्धेतुत्वान्मुक्तिदायकत्वात् वस्तुतो निष्प्रतियोगिकचिन्मात्रपर्यवसन्नत्वाच्च पञ्चपदात्मकोऽयं मनुः वासुदेव एवेत्याह—**तत इति** । **यत्तत्पद**त्वेन चिन्मात्रमिति प्रसिद्धं **तदेव पञ्चपदं स** हि तदर्थरूपो **वासुदेवः** परमात्मा तदतिरिक्तं न किंचिदस्तीत्यर्थः ॥ ३२ ॥

पञ्चपदात्मकगोविन्दस्तुतिः

तमेकं गोविन्दं सच्चिदानन्दविग्रहं पञ्चपदं बृन्दावनसुरभूरुहतलासीनं [1]सततं समरुद्गणोऽहं परमया स्तुत्या स्तोष्यामि ॥ ३३ ॥

ॐ नमो विश्वरूपाय विश्वस्थित्यन्तहेतवे ।
विश्वेश्वराय विश्वाय गोविन्दाय नमो नमः ॥ ३४ ॥
नमो विज्ञानरूपाय परमानन्दरूपिणे ।
कृष्णाय गोपीनाथाय गोविन्दाय नमो नमः ॥ ३५ ॥

[1] सततम—अ.

नमः कमलनेत्राय नमः कमलमालिने ।
नमः कमलनाभाय कमलापतये नमः ॥ ३६ ॥
बर्हापीडाभिरामाय रामायाकुण्ठमेधसे ।
रमामानसहंसाय गोविन्दाय नमो नमः ॥ ३७ ॥
कंसवंशविनाशाय केशिचाणूरघातिने ।
वृषभध्वजवन्द्याय पार्थसारथये नमः ॥ ३८ ॥
वेणुनादविनोदाय गोपालायाहिमर्दिने ।
कालिन्दीकूललोलाय लोलकुण्डलधारिणे ॥ ३९ ॥
वल्लवीवदनाम्भोजमालिने नृत्तशालिने ।
नमः प्रणतपालाय श्रीकृष्णाय नमो नमः ॥ ४० ॥
नमः पापप्रणाशाय गोवर्धनधराय च ।
पूतनाजीवितान्ताय तृणावर्तासुहारिणे ॥ ४१ ॥
निष्कलाय विमोहाय शुद्धायाशुद्धवैरिणे ।
अद्वितीयाय महते श्रीकृष्णाय नमो नमः ॥ ४२ ॥
प्रसीद परमानन्द प्रसीद परमेश्वर ।
आधिव्याधिभुजङ्गेन दष्टं मामुद्धर प्रभो ॥ ४३ ॥
श्रीकृष्ण रुक्मिणीकान्त गोपीजनमनोहर ।
संसारसागरे मग्नं मामुद्धर जगद्गुरो ॥ ४४ ॥
केशव क्लेशहरण नारायण जनार्दन ।
गोविन्द परमानन्द मां समुद्धर माधव ॥ ४५ ॥

अतः पञ्चपदात्मकं वासुदेवं स्तौमीत्याह—**तमिति** ॥ ३३ ॥ कथं स्तोष्यसीत्यत आह—**ओमिति** ॥ ३४–४५ ॥

## षष्ठोपनिषत्

### गोपालकृष्णध्यानजपभजनविधिः

अथैवं स्तुतिभिराराधयामि तथा यूयं पञ्चपदं जपन्तः श्रीकृष्णं ध्यायन्तः संसृतिं तरिष्यथेति होवाच हैरण्यगर्भः ॥ ४६ ॥

अमुं पञ्चपदं मनुमावर्तयेद्यः

स यात्यनायासतः केवलं तत्पदं तत् ॥ ४७ ॥

अनेजदेकं मनसो जवीयो

नैनद्देवा आप्नुवन् पूर्वमर्षदिति ॥ ४८ ॥

तस्मात् कृष्ण एव परमो देवस्तं ध्यायेत् तं रसयेत् तं यजेत् तं भजेत् ॐ तत्सदित्युपनिषत् ॥ ४९ ॥

**एवं हिरण्यगर्भजो** ब्रह्मा मुनीन् प्रति **उवाचे**त्यर्थः ॥ ४६ ॥ **अमुं पञ्चपदं** वासुदेवात्मकं मन्त्रं **आवर्तयेत् यः** पुमान् **सो**ऽयं **अनायासतः केवलं** वासुदेवाख्यं **पदं याति** ॥ ४७ ॥ यद्वासुदेवपदमुक्तं तदेव मन्त्रोऽप्यनुवदति—**अनेजदिति** । **अनेजत्** व्योमवदचलं सर्वत्र **एकं मनसो**ऽपि **जवीयो** वेगवत्तरं **तदेतत्** पदं **देवाः** चक्षुरादीन्द्रियाणि **नाप्नुवन्** चक्षुरादिव्यापारस्य मनोव्यापारपूर्वकत्वात् । चक्षुराद्यपेक्षया मनो जविष्ठं, मनसोऽप्येतत्पदं जववत्तरं, इत्यत्र हेतुः—**पूर्वमर्षत्** इति, वासुदेवपदस्य बाह्यान्तःकरणवृत्तिसहस्रभावाभावप्रकाशकतया तत्प्रवृत्तिनिवृत्तिनिमित्तत्वात् । **इति**शब्दो मन्त्रसमाप्त्यर्थः ॥ ४८ ॥ यस्मात् एतत्पदं निष्प्रतियोगिकचिन्मात्रपर्यवसन्नं भवति **तस्मात्** तत्पदाख्यः

**कृष्ण एव परमो देवः** प्रकाशमात्रत्वात् । तत्स्वरूपं **ध्यायेत्** सदा तन्मन्त्रं **रसयेत्** जपेत्, तमेव भजेत् प्रेमपूर्वकमाराधयेत् । किं तत्पदं इत्यत्र ॐ तत् **सत्** इति शब्दत्रयप्रतिपाद्यमित्यर्थः । **इति**शब्दः षष्ठोपनिषत्समाप्त्यर्थः । **उपनिषच्छब्दः** पूर्वतापिनीसमाप्त्यर्थः ॥ ४९ ॥

---

# गोपालोत्तरतापिनी

दुर्वाससो व्रजस्त्रीभिक्षार्हत्वम्

एकदा हि व्रजस्त्रियः सकामाः शर्वरीमुषित्वा सर्वेश्वरं गोपालं कृष्णमूचिरे । उवाच ताः कृष्णः । अमुकस्मै ब्राह्मणाय भैक्षं दातव्यमिति । [1]दुर्वासस इति ॥ १ ॥

पूर्वतापिनीप्रकटितमन्त्रराजपञ्चपदध्यानरसनविशुद्धान्तरस्य निर्विशेषब्रह्माप्तिर्भवेदिति प्रकटयितुं उत्तरतापिनीमवतारयति । गोपीगणमौन्याद्याख्यायिका तु विद्यास्तुत्यर्था । आख्यायिकामवतारयति—**एकदा हीति** । ताभिः एवमुक्तो भगवानाह—**उवाच ताः कृष्ण** इति । सामान्यत आख्यायिका सूचिता । विशेषतस्तामेव विशदयन् आदौ स्त्रीणां वचनमाह—**अमुकस्मा इति** । कस्मा इत्यत्र—**दुर्वासस** इति छान्दसः **दुर्वाससे** दूर्वाशिन इत्यर्थः ॥ १ ॥

कृष्णस्य अस्खलितब्रह्मचारित्वस्मरणेन तासां यमुनातरणम्

कथं यास्यामो जलं तीर्त्वा यमुनायाः यतः श्रेयो भवति । कृष्णेति ब्रह्मचारीत्युक्त्वा मार्गं वो दास्यति यं मां स्मृत्वाऽगाधा

[1] 'ता उवाच श्रीकृष्णः' इत्यधिकः (अ) कोशे.

गाधा भवति यं मां स्मृत्वाऽपूतः पूतो भवति यं मां स्मृत्वाऽव्रती व्रती भवति यं मां स्मृत्वा सकामो निष्कामो भवति यं मां स्मृत्वाऽश्रोत्रियः श्रोत्रियो भवति यं मां स्मृत्वाऽगाधतलस्पर्शा[1]रहिता अपि सर्वा सरिद्गाधा [2]भवन्ति ॥ २ ॥

श्रुत्वा तद्वाक्यं हि वै रौद्रं स्मृत्वा तद्वाक्येन तीर्त्वा तत्सौर्यां हि वै गत्वाऽऽश्रमं पुण्यतमं हि वै नत्वा मुनिं श्रेष्ठतमं हि वै रौद्रं चेति दत्त्वाऽस्मै ब्राह्मणाय क्षीरमयं घृतमयमिष्टतमं हि वै मृष्टतमं हि तुष्टः स्नात्वा भुक्त्वा हित्वाऽऽशिषं [3]प्रयुज्यानुज्ञां त्वदात् ॥ ३ ॥

पुनः स्त्रीणां वाक्यं **कथमिति** । **कथं वयं यमुनाजलं** अगाधं **तीर्त्वा मुनिं यास्याम** इति । तासां वाक्यमाकर्ण्य भगवानाह—**कृष्णेति** । श्री**कृष्णोऽस्खलितब्रह्मचारी**ति सकृत् उक्त्वा व्रजत, युष्माकं यमुना **मार्गं दास्यति** । **कृष्णेति** छान्दसः । कृष्णेत्युक्तितः कथं यमुना मार्गं दास्यति, कथमनेकाङ्गनामदनलीलाशाली ब्रह्मचारी भवितुमर्हतीति शङ्कामुन्मूलयन्नाह—**यं मामिति** । **सर्वा सरित्** सर्वाः सरितः ॥ २ ॥ यं मां स्मृत्वा अपूतः पूतो भवतीति **श्रुत्वा तद्वाक्यम्** । हि निश्चितं वै स्मर्यते । तास्तु गोप्यः श्रीकृष्णवाक्यं श्रुत्वा सामर्थ्यप्रकटन**वाक्येन** भीताः सत्यः **रौद्रं** रुद्रांशजं दूर्वाससं **स्मृत्वा** कृष्णोऽस्खलितब्रह्मचारीति स्मरणमात्रेण अगाधामपि गाधीभूतां सूर्यजत्वात् **सौर्यां** यमुनां **तीर्त्वा पुण्यतमं** तदा**श्रमं गत्वा श्रेष्ठतमं** दूर्वाससं **रौद्रं नत्वा** । **इति**शब्दो भोजनपूर्वचरणपरिसमाप्त्यर्थः । **अस्मै ब्राह्मणाय क्षीरमय**मित्यादि-विशेषणविशिष्टमन्नं **दत्त्वा** आराधयामासुः इत्यर्थः । सोऽयं मुनिः आभिः दत्तमन्नं

[1] रहितापि—अ, अ १. [2] भवति—अ, अ २, क.

[3] "प्रयुज्यान्नं ज्ञात्वादात्" इति पाठः आकरेषु सर्वेषु दृष्टोपि व्याख्यानुसारेणैवं व्यत्यस्तः ।

भुक्त्वा स्वभुक्तावशेषमुच्छिष्टभाग्भ्यो दत्वा तासां आशिषं कृत्वाऽथ गमनानुज्ञामदात् दत्तवानित्यर्थः ॥ ३ ॥

दुर्वाससो निराहारत्वस्मरणेन तासां यमुनातरणम्

ता ऊचुः—कथं यास्यामो वयं सौर्यां तीर्त्वा । स होवाच मुनिः—दूर्वा[1]शिनं मां स्मृत्वा वो दास्यतीति मार्गम् ॥ ४ ॥

तेनैवमाज्ञप्ताः तं प्रति ता ऊचुः । किमिति? कथमिति। तासां वाचमाकर्ण्य स होवाच मुनिः । किमिति? दूर्वाशिनमिति । मां दूर्वाशिनं निराहारं वा स्मरत, ततो युष्माकं यमुना मार्गं दास्यति ॥ ४ ॥

कृष्णदूर्वाससोर्विषये गान्धर्वीशङ्का

तासां मध्ये हि श्रेष्ठा गान्धर्वी ह्युवाच तं हि वै ताभिरेवं कथं कृष्णो ब्रह्मचारी कथं दूर्वाशनो मुनिः । तां हि मुख्यां विधाय पूर्वमनुकृत्वा तूष्णीमासुः ॥ ५ ॥

तासां मध्ये हि श्रेष्ठा गान्धर्वी कदाचित् तं हि वै मुनिं एवं उवाच । अन्याः स्त्रियस्तु तूष्णीमासुः । एवं विचार्य । कथमिति—भूतभौतिकान्तर्याम्यात्मनो विक्रियत्वात् कृष्णो ब्रह्मचारीत्यादि कथं युज्यते ॥ ५ ॥

ब्रह्मज्ञानिनः अभोक्तृत्वम्

शब्दवानाकाशः । शब्दाकाशाभ्यां भिन्नः । तस्मिन्नाकाशस्तिष्ठति । आकाशे [2]तिष्ठति । स ह्याकाशस्तं न वेद । स ह्यात्माऽहं कथं भोक्ता भवामि ॥ ६ ॥

[1] सिनं—अ, अ १, क.

[2] तिष्ठत्याका —उ.

स्पर्शवान् वायुः। स्पर्शवायुभ्यां भिन्नः। तस्मिन्वायुस्तिष्ठति। वायौ तिष्ठति। वायुस्तं न वेद। स ह्यात्माऽहं कथं भोक्ता भवामि ॥ ७ ॥

रूपवदिदं तेजः। रूपाग्निभ्यां भिन्नः। तस्मिन्नग्निस्तिष्ठति। अग्नौ तिष्ठति। अग्निस्तं न वेद। स ह्यात्माऽहं कथं भोक्ता भवामि ॥ ८ ॥

रसवत्य आपः। रसाद्भ्यो भिन्नः। तस्मिन्नापस्तिष्ठन्ति। अप्सु तिष्ठति। आपस्तं न विदुः। स ह्यात्माऽहं कथं भोक्ता भवामि ॥ ९ ॥

गन्धवतीयं भूमिः गन्धभूमिभ्यां भिन्नः। तस्मिन् भूमिस्तिष्ठति। भूमौ तिष्ठति। भूमिस्तं न वेद। स ह्यात्माऽहं कथं भोक्ता भवामि ॥ १० ॥

इदं हि मन एवेदं मनुते। तानीदं हि गृह्णाति। यत्र सर्वमात्मैवाभूत्तत्र वा कुत्र मनुते [1]क वा गच्छतीति। स ह्यात्माऽहं कथं भोक्ता भवामि ॥ ११ ॥

एवमाशङ्कां परिहरन् मुनिराह— **शब्दवानिति**। शब्दगुणयुक्तोऽयमाकाशो वर्तते। तदुभयभिन्नो विलक्षणः प्रत्यगात्मा। **तस्मिन्** प्रतीचि सर्वारोपापवादाधारे **आकाशस्तिष्ठति**। अन्तर्याम्यात्मना अयं प्रत्यक् **आकाशे तिष्ठति**। **स हीति** शब्दवान् **आकाशः** स्वाधारं प्रत्यञ्चं स्वान्तर्यामिणं वा जात्वपि **न वेद**। मया प्रतीचा साकं परमात्मैव तिष्ठति। **स हि** प्रत्यगभिन्नपरमात्माऽहं कथं भोक्ता

[1] कथं वा—अ, अ १, क.

भवामि ॥ ६ ॥ एवं वाय्वादयो व्याख्येयाः ॥ ७ ॥ किं भोक्ताऽहमिति मनुत इत्यत आह—इदमिति । आकाशादिपञ्चभूतभौतिकेषु वर्तमानं **इदं मन एव हि** भोक्ताऽहमिति **मनुते** । मनसो जडत्वेऽपि चैतनसंनिधानात् मननादिशक्तिः, यस्मात् यदिदं मन एव तत्तदिन्द्रियाविष्टं सत् पूर्वं शब्दादीनि गृह्णाति । तव अन्तःकरणावच्छिन्नतया भोक्ताऽहमित्यध्यासः स्यादित्यत आह—यत्रेति । **यत्र** यस्मिन् ब्रह्मणि कार्यकारणकलनासंभवात् एवंविदुषः **सर्वमात्मैवाभूत् तत्र** निष्प्रतियोगिकब्रह्ममात्रे तज्ज्ञानदशायां **वा यत्र** कुत्र वा धर्मिणि **केन करणेन** धर्मिणं मन्तारं **मनुते** । **क्व वा** अपि केन कारणेन को वा **गच्छति** । एवं वागादिपर्याया अप्यूह्याः । निष्प्रतियोगिकब्रह्ममात्रावगतेः अध्यारोपापवादापह्नवपूर्वकत्वात् ज्ञानिनो भोक्तृत्वाध्यासः कुत इति भावः ॥ ११ ॥

### कृष्णस्य अभोक्तृत्वम्

अयं हि कृष्णो यो वो हि प्रेष्ठः शरीर[1]द्वयकारणं भवति ॥ १२ ॥

द्वा सुपर्णौ भवतो ब्रह्मणोऽहं संभूतस्तथैतरो भोक्ता भवति । अन्यो हि साक्षी भवतीति । [2]वृक्षधर्मे तौ तिष्ठतः । अतो भोक्त्रभोक्तारौ । पूर्वो हि भोक्ता भवति । तथेतरोऽभोक्ता कृष्णो भवतीति ॥ १३ ॥

यत्र विद्याऽविद्ये न विदामो विद्याऽविद्याभ्यां भिन्नो विद्यामयो हि [3]यः स कथं [4]विषयो भवति ॥ १४ ॥

यो ह वै कामेन कामान् कामयते स कामी भवति । यो ह वै त्वकामेन कामान् कामयते सोऽकामी भवति । जन्मजराभ्यां

[1] त्रय—अ.
[2] वृक्षधर्मेण ति—अ, अ १.
[3] यस्य—अ १, अ २, क, उ.
[4] विषयी—उ.

भिन्नः स्थाणुरयमच्छेद्योऽयम् । योऽसौ सूर्ये तिष्ठति योऽसौ गोषु तिष्ठति योऽसौ गोपान् पालयति योऽसौ सर्वेषु [1]देवेषु तिष्ठति योऽसौ सर्वैः[2]र्वेदैर्गीयते योऽसौ सर्वेषु भूतेष्वाविश्य भूतानि विदधाति स वो हि स्वामी भवति ॥ १९ ॥

अस्तु तव ब्रह्मज्ञानित्वात् अभोक्तृत्वं, किं कृष्णोऽपि तथेत्यतः आह—**अयं हीति** । कृष्णस्य सर्वप्रेमास्पदत्वेन व्यष्टिसमष्टिशरीरद्वयकारणतया चेश्वरत्वात् **अयमपि न भोक्तेत्यर्थः** ॥ १२ ॥ कृष्णस्य सर्वाधिष्ठानत्वेन अभोक्तृत्वमुक्तं, इदानीमन्तर्यामितयाऽप्यभोक्तृत्वं स्यादित्याह—**द्वेति** । **ब्रह्मणः** चिन्मात्रात् **द्वौ सुपर्णाविव सहचरौ जीवेश्वरौ भवतः** । तन्मध्ये **इतरः अहंसंभूतः जीवो भोक्ता भवति । अन्यस्तु ईश्वरः साक्षी** अभोक्ता **भवति** । इतिशब्दो मन्त्रसमाप्त्यर्थः । तयोः सुपर्णत्वं कुत इत्यत्र व्रश्चवात्मको हि **वृक्षधर्मः** तत्र संसारे **तौ तिष्ठतः** । तयोः अनीश्वरेश्वरत्वात् भोक्तृत्वाभोक्तृत्वे स्याताम् । तत्र पूर्वस्य भोक्तृत्वं अपरस्य अभोक्तृत्वं इति सिद्धम् ॥ १३ ॥ तयोः भोक्तृत्वाभोक्तृत्वहेतुमाह—**यत्रेति** । **यत्र ईश्वरे** विद्याऽविद्याभ्यां भिन्ने **विद्याऽविद्ये न विदामः** । तत्र हेतुः **विद्यामय इति** । विद्या नाम "ब्रह्मातिरिक्तं न किञ्चिदस्ति" इति ब्रह्ममात्रवृत्तिः, तत्प्रकाशकत्वात् न हि तद्विषयो भवति । न हि घटाद्यवभासकः सविता घटो भवति, तथेत्यर्थः ॥ १४ ॥ एवं विद्याऽविद्यारहितत्वात् अभोक्तृत्वं उक्तं, अकामत्वादप्यभोक्तृत्वमाह—**यो हेति** । **यः** काम्यकामिजीवेश्वरविलक्षणतया स्वातिरिक्तषड्भावविकारास्पदशरीरोपलक्षिताविद्यापदतत्कार्यजातासंभवनिष्प्रतियोगिकब्रह्ममात्रतया चावशिष्यते **स वो** युष्माकं सर्वेषामपि **स्वामी** आत्मा **भवतीत्यर्थः** ॥ १९ ॥

### गोपालकृष्णजन्मादीन्यधिकृत्य गान्धर्वीप्रश्नाः

सा होवाच गान्धर्वी—कथं वा स्वस्मासु जातो गोपालः । कथं [3]वा ज्ञातोऽसौ त्वया मुने कृष्णः । को वाऽस्य मन्त्रः । किं

[1] भूतेषु—उ. वेदेषु—अ, अ १. [2] वेदैः—उ. [3] विज्ञा—अ, अ १.

स्थानम् । कथं वा देवक्यां जातः । को वाऽस्य जायाग्रामो भवति । कीदृशी पूजाऽस्य गोपालस्य भवति । साक्षात्प्रकृतिपरोऽयमात्मा गोपालः कथं त्ववतीर्णो भूम्याम् । सा गान्धर्वी हि वै मुनिमुवाच ॥ १६ ॥

एवं मुनिमुखात् विदितभगवद्वृत्तान्ता गान्धर्वी पृच्छतीत्याह—**सा हेति**। एवमादिप्रश्नान् पृच्छति—**सेति** ॥ १६ ॥

नारायणं प्रति अवतारविषये ब्रह्मप्रश्नः

स होवाच तां हि वै—पूर्वं नारायणो यस्मिंल्लोका ओताश्च प्रोताश्च तस्य हृत्पद्माज्जातोऽब्जयोनिस्तपस्तप्त्वा तस्मै ह वरं ददौ । सा कामप्रश्नमेव वव्रे । तं हास्मै ददौ ॥ १७ ॥

स होवाचाब्जयोनिः—यो वाऽवताराणां मध्ये श्रेष्ठोऽवतारः को भवति येन लोकास्तुष्टा भवन्ति यं स्मृत्वा मुक्ता अस्मात् संसाराद्भवन्ति कथं वाऽस्यावतारस्य ब्रह्मता भवति ॥ १८ ॥

एवं गान्धर्वीप्रश्नानुरोधेन भगवान् मुनिराह—**स हेति** ॥ १७ ॥ एवं भगवता दत्तवरः **स होवाचेति** । किमिति ? **यो वेति** ॥ १८ ॥

भूचक्रस्थसप्तपुरीमध्ये मधुरा नाम गोपालपुरी

स होवाच तं हि वै नारायणो देवः—सकाम्या मेरोः शृङ्गे यथा सप्तपुर्यो भवन्ति तथा निष्काम्याः सकाम्या भूगोळचक्रे सप्तपुर्यो भवन्ति । तासां मध्ये साक्षाद्ब्रह्म गोपाळपुरी भवति ॥ १९ ॥

सकाम्या निष्काम्या देवानां सर्वेषां भूतानां भवति। अथास्य भजनं भवति। यथा हि वै सरसि पद्मं तिष्ठति तथा भूम्यां तिष्ठति चक्रेण रक्षिता मथुरा तस्माद्गोपालपुरी भवति ॥ २० ॥

एवं ब्रह्मणा पृष्टः स होवाच। यथा मेरोः शृङ्गे कामफलेन सहिताः सकाम्याः स्वर्गादयः सप्तपुर्यो भवन्ति—यमनिर्ऋत्यधिष्ठितलोकावेकीकृत्येत्यर्थः—तथा अधिकारितारतम्येन निष्काम्याः सकाम्याश्च भूगोळचक्रे—

अयोध्या मथुरा माया काशी काञ्ची अवन्तिका।
पुरी द्वारावती चैव सप्तैता मोक्षदायिकाः॥

इति सप्तपुर्यो भवन्ति। तन्मध्ये गोपालपुरी साक्षाद्ब्रह्मैव भवतीत्यर्थः ॥ १९ ॥ किंच—सकाम्येति ॥ २० ॥

मधुरावरणवनेषु देवादीनां वासः

[1]बृहद्बृहद्वनं मधोर्मधुवनं तालस्तालवनं काम्यं काम्यवनं बहुला बहुलवनं [2]कुमुदः कुमुदवनं खदिरः खदिरवनं भद्रो भद्रवनं भाण्डीर इति भाण्डीरवनं श्रीवनं लोहवनं बृन्दावनमेतैरावृता पुरी भवति ॥ २१ ॥

तत्र तेष्वेव गगनेष्वेवं देवा मनुष्या गन्धर्वा नागाः किंनरा गायन्ति नृत्यन्तीति ॥ २२ ॥

तत्र द्वादशादित्या एकादश रुद्रा अष्टौ वसवः सप्त मुनयो ब्रह्मा नारदश्च पञ्च विनायका [3]विश्वेश्वरो रुद्रेश्वरोऽम्बिकेश्वरो [4]गणेश्वरो

[1] ब्रह्मन् बृ—अ २, क.
[2] कुमुदं—अ २, क.
[3] वीरेश्वरो—उ, अ, अ १, अ २, क.
[4] 'गणेश्वरः' इति न (अ, अ १, अ २, क) कोशेषु.

**नीलकण्ठेश्वरो [1]वीरेश्वरो गोपालेश्वरो भद्रेश्वर इत्यष्टावन्यानि लिङ्गानि चतुर्विंशतिर्भवन्ति ॥ २३ ॥**

**द्वे वने स्तः कृष्णवनं भद्रवनम् । तयोरन्तर्द्वादश वनानि पुण्यानि पुण्यतमानि । तेष्वेव देवास्तिष्ठन्ति सिद्धाः सिद्धिं प्राप्ताः ॥ २४ ॥**

सेयं मथुरा द्वादशवनैरावृता भवतीत्याह—**बृहदिति । बृहत्** महद्भूतलं **बृहद्वनं** प्रथमम्, **मधोः** दैत्यस्याश्रयं **मधुवनं** द्वितीयम्, यत्र **ताळो** वर्तते तत् **ताळवनं** तृतीयम्, यत्र **काम्यं** कामदो देवो वर्तत इति **काम्यवनं** चतुर्थम्, **बहुळा** वर्तत इति **बहुळवनं** पञ्चमम्, **कुमुदो** वर्तत इति **कुमुदवनं** षष्ठम्, **खदिरो** वर्तत इति **खदिरवनं** सप्तमम्, **भद्रो** वृक्षविशेषो वर्तत इति **भद्रवनं** अष्टमम्, **भाण्डीरवटो** वर्तत इति **भाण्डीरवनं** नवमम्, यत्र तप्यतः **श्रीः** प्रसीदति तत् **श्रीवनं** दशमम्, **यत्र** लोहनामकोऽसुरः तपस्सिद्धिं गतः तत् **लोहवनं** एकादशम्, बृन्दाया वनं **बृन्दावनं** द्वादशम्, **एतैरावृता** इयं **पुरी भवतीत्यर्थः** ॥ २१ ॥ किंच तेषु वनेषु देवादयो वर्तन्त इत्याह—**तत्रेति । तत्र** बृहद्वनादिद्वादशवनेषु ॥ २२ ॥ उक्तद्वादशवनेषु वरुणादिद्वादशादित्या वसन्ति । वरुणः सूर्यो यमो वेदाङ्गो भानुः इन्द्रो रविः गभस्तिः हिरण्यरेताः दिवाकरो मित्रो विष्णुः इति द्वादशादित्यनामानि भवन्ति ।

वीरभद्रश्च शम्भुश्च गिरीशश्च तृतीयकः ।
अजैकपादहिर्बुध्न्यः पिनाकी च तथाऽपरः ॥
भुवनाधीश्वरश्चैव कपाली च दिशां पतिः ।
स्थाणुर्भु[र्भ]व इति प्रोक्ता रुद्रा एकादश स्मृताः ॥

**इति एकादश रुद्राः ।**

[1] 'वीरेश्वरो' इति न (अ, अ १, अ २, क) कोशेषु.

ध्रुवो धरश्च सोमश्च आपश्चैवानलोऽनिलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टावितीरिताः ॥

इति **अष्ट वसवः** ।

कश्यपोऽत्रिर्भरद्वाजो विश्वामित्रोऽथ गौतमः ।
जामदग्न्यो [जमदग्निः] वसिष्ठश्च सप्तैते मुनयः स्मृताः ॥

इति **सप्त मुनयः** ।

मोदः प्रमोद आमोदः सुमुखो दुर्मुखस्तथा ।

इति **पञ्च विनायकाः** ।

**विश्वेश्वरादिभद्रेश्वरान्तं अष्टौ लिङ्गानि** तथा **अन्यानि** च **चतुर्विंशतिलिङ्गानि भवन्ति** ॥ २३ ॥ कृष्णादिवनान्तराळे **द्वादश वनानि** सन्ति । **तत्र** कानि चित् **पुण्यानि** कानि चित् **पुण्यतमानि** । शिष्टं स्पष्टम् ॥ २४ ॥

रुद्रादिपूज्याः मथुरास्थाः कृष्णमूर्तयः

तत्र हि रामस्य राममूर्तिः प्रद्युम्नस्य प्रद्युम्नमूर्तिरनिरुद्धस्यानिरुद्धमूर्तिः कृष्णस्य कृष्णमूर्तिः ॥ २५ ॥

**वनेष्वेवं मथुरास्वेवं द्वादश मूर्तयो भवन्ति । एकां हि रुद्रा यजन्ति द्वितीयां हि ब्रह्मा यजति तृतीयां ब्रह्मजा यजन्ति चतुर्थीं मरुतो यजन्ति पञ्चमीं विनायका यजन्ति षष्ठीं च वसवो यजन्ति सप्तमीमृषयो यजन्ति अष्टमीं गन्धर्वा यजन्ति नवमीमप्सरसो यजन्ति दशमी वै ह्यन्तर्धाने तिष्ठति एकादशमिति स्वपदानुगा द्वादशमिति भूम्यां तिष्ठति । तां हि ये यजन्ति ते मृत्युं तरन्ति मुक्तिं लभन्ते गर्भजन्मजरामरणतापत्रयात्मकदुःखं तरन्ति** ॥ २६ ॥

तदप्येते श्लोका भवन्ति—

संप्राप्य मथुरां रम्यां [1]ब्रह्मरुद्रादिवन्दिताम् ।
शङ्खचक्रगदाशार्ङ्गरक्षितां मुसलादिभिः ॥ २७ ॥
यत्रासौ संस्थितः कृष्णः स्त्रीभिः शक्त्या समाहितः ।
[2]रामानिरुद्धप्रद्युम्नै रुक्मिण्या सहितो विभुः ॥ २८ ॥
चतुःशब्दो भवेदेको ह्यों[3]कारस्य उदाहृतः ॥ २९ ॥

सिद्धादिसिद्धिप्रदत्वे हेतुमाह—तत्र हीति । रामादेः रामाद्याख्या मूर्तिरस्तीत्यर्थः ॥ २५ ॥ कास्ताः द्वादश मूर्तयः इत्यत्र—रौद्री ब्राह्मी दैवी मानवी विघ्नविनाशिनी काम्या आर्षा गान्धर्वी गौरन्तर्धानस्था स्वस्वपदं गता भूमिष्ठा औदका चेति द्वादशमूर्तीनां नामानि भवन्ति । तासां प्रत्येकमुपासनमाह—एकां हीति । ब्रह्मजाः सनकादयः । मरुतो मरुद्गणाः । अन्तर्धाने गुप्ता तिष्ठति एकादशमिति स्वपदानुगा विष्णुपदं गतेत्यर्थः निर्विशेषत्वात् । द्वादशधामेति या प्रसिद्धा सा भूम्यां तिष्ठति । तत्पूजकानां परमफलमाह—तां हीति । दुःखहेतुत्वाज्ञानस्य निवृत्तत्वात् ॥ २६ ॥ ब्राह्मणोक्तेऽर्थे मन्त्राः भवन्तीत्याह—तदप्येते श्लोका भवन्तीति । मथुरापुरीं प्राप्य देवमनुष्यादयः तिष्ठन्ति श्रीकृष्णबलदेवायुधैः गुप्तां यत्र बलरामादिभिः रुक्मिण्यादिस्वशक्तिभिश्च कृष्णो विजयते तामधिष्ठाय देवाः तिष्ठन्तीति संबन्धः । कृष्णावतारो ह्यवताराणां श्रेष्ठः, मथुरायामस्य स्थानमित्युक्तं भवति ॥ २७–२८ ॥ प्रणवार्थत्वादस्य ब्रह्मत्वं निरङ्कुशमित्याह—चतुरिति । रामादिभेदेन चतुश्शब्दः चतुर्व्यूहः एक ईश्वरो भवेत् भवति । तत्र हेतुमाह—ओङ्कारस्येति । अकारादिमात्राचतुष्टयं ओङ्कारार्थः । तन्मात्राचतुष्टयवाच्या रामादिचतुर्व्यूहा इति समुदायार्थः ॥ २९ ॥

[1] सदा ब्रह्मादि—क, अ, अ १, अ २.

[2] रमाऽनिरुद्धः प्रद्युम्नो रु—अ, अ १, क, उ.

[3] कारश्च—अ, अ १, उ.

मुमुक्षुभिः गोपालात्मत्वं स्मरणीयम्

[1]तस्मादेव परो रजसेति सोऽहमित्यवधार्यात्मानं गोपालोऽहमिति भावयेत्। स मोक्षमश्नुते। स ब्रह्मत्वमधिगच्छति। स ब्रह्मविद्भवति। स गोपान् जीवानात्मत्वेन सृष्टिपर्यन्तमालाति। स गोपालो भवति ओं तत् सत् सोऽहम्। परं ब्रह्म कृष्णात्मको नित्यानन्दैकस्वरूपः सोऽहम्। ओं तत् सद्गोपालोऽहमेव। परं सत्यमबाधितं सोऽहमित्यात्मानमादाय मनसैक्यं कुर्यात्। आत्मानं गोपालोऽहमिति भावयेत्। स एवाव्यक्तोऽनन्तो नित्यो गोपालः॥ ३०॥

"यं स्मृत्वा मुक्ता अस्मात् संसारात्" इत्यस्योत्तरमाह—तस्मादिति। तस्मात् प्रणवाभिधेयत्वात् रजस इत्युपलक्षितगुणत्रयात् यः परः सोऽहमित्यवधार्य गोपालोऽहमिति भावयेत्। रजसेति छान्दसः। विशिष्टोपास्तेः फलं दर्शयति—स मोक्षमिति। आलाति आदत्ते स्वीकरोतीत्यर्थः। ॐ तत् सत् सोऽहं इत्यत्र ओंतच्छब्दाभ्यां यद्वाच्यं सत् परं ब्रह्म सोऽहमिति भावयेत्। ओंतत्सत्पदवाच्यं लक्ष्यं वा परं सत्यं अबाधितं ब्रह्म स एव गोपाल इत्यर्थः॥ ३०॥

मथुरावासिगोपालकृष्णभवनमहिमा

मथुरायां स्थितिर्ब्रह्मन् सर्वदा मे भविष्यति।
शङ्खचक्रगदापद्मवनमालाधरस्य वै॥ ३१॥
विश्वरूपं परं ज्योतिः स्वरूपं रूपवर्जितम्।
मथुरामण्डले यस्तु जम्बूद्वीपस्थितोऽपि वा।
योऽर्चयेत् प्रतिमां मां च स मे प्रियतरो भुवि॥ ३२॥

[1] "चतुर्भिश्च यथा देवैरेको देवः प्रकीर्तितः" इत्यधिकः (अ) कोशे.

तस्यामधिष्ठितः कृष्णरूपी पूज्यस्त्वया सदा ।
चतुर्धा चास्यावता[1]रा भेदत्वेन यजन्ति माम् ॥ ३३ ॥
युगानुवर्तिनो लोका यजन्तीह सुमेधसः ।
गोपालं सानुजं कृष्णं रुक्मिण्या सह तत्परम् ॥ ३४ ॥
गोपालोऽहमजो नित्यः प्रद्युम्नोऽहं सनातनः ।
रामोऽहमनिरुद्धोऽहमात्मानं ह्यर्चयेद्बुधः ॥ ३५ ॥
मयोक्तेन स धर्मेण निष्कामेन विभागशः ।
तैरहं पूजनीयो वै भद्रकृष्णनिवासिभिः ॥ ३६ ॥
तद्धर्मगतिहीना ये तस्यां मयि परायणाः ।
कलिना ग्रसिता ये वै तेषां तस्यामवस्थितिः ॥ ३७ ॥
यथा त्वं सह पुत्रैस्तु यथा रुद्रो गणैः सह ।
यथा श्रियाऽभियुक्तोऽहं तथा भक्तो मम प्रियः ॥ ३८ ॥

या पुरी गोपालाधिष्ठिता भवेत् तस्यां मथुरायां स्थितिः ॥ ३१–३३ ॥ इदमेव विवृणोति—युगानुवर्तिन इति ॥ ३४–३५ ॥ **भद्रकृष्णनिवासिभिः** भद्रकृष्णवनयोः निवासिभिः ॥ ३६ ॥ स्वाश्रमाचारहीना अपि मद्भक्ताश्चेत् मत्पुर्यामवस्थितिः युज्यते न त्वभक्तानामित्याह—तद्धर्मेति ॥ ३७ ॥ **पुत्रैस्तु** सनकादिभिः ॥ ३८–३९ ॥

एकस्य भगवतः चतुर्विधत्वोपपादनम्

स होवाचाब्जयोनिश्चतुर्भिर्देवैः कथमेको देवः स्यात् ।
एकमक्षरं यद्विश्रुतमनेकाक्षरं कथं संभूतम् ॥ ३९ ॥

[1] रभे—उ, मु.

स होवाच तं हि—पूर्वमेकमेवाद्वितीयं ब्रह्मासीत् । तस्माद-व्यक्तमेकाक्षरम् । तस्मादक्षरान्महत् । महतोऽहंकारः । तस्माद-हंकारात् पञ्च तन्मात्राणि । तेभ्यो भूतानि । तैरावृतमक्षरम् । अक्षरोऽहमोंकारोऽहमजरोऽमरोऽभयोऽमृतो ब्रह्माभयं हि वै । स मुक्तोऽहमस्मि । अक्षरोऽहमस्मि ॥ ४० ॥

सत्तामात्रं चित्स्वरूपं प्रकाशं व्यापकं तथा ।
एकमेवाद्वयं ब्रह्म मायया च चतुष्टयम् ॥ ४१ ॥
रोहिणीतनयो विश्व अकाराक्षरसंभवः ।
तैजसात्मकः प्रद्युम्न उकाराक्षरसंभवः ॥ ४२ ॥
प्राज्ञात्मकोऽनिरुद्धोऽसौ मकाराक्षरसंभवः ।
अर्धमात्रात्मकः कृष्णो यस्मिन् विश्वं प्रतिष्ठितम् ॥ ४३ ॥
कृष्णात्मिका जगत्कर्त्री मूलप्रकृति रुक्मिणी ॥
व्रजस्त्रीजन[1]संभूतश्रुतिभ्यो [2]ब्रह्मसंगतः ।
प्रणवत्वेन प्रकृतित्वं वदन्ति ब्रह्मवादिनः ॥ ४४ ॥
तस्मादोंकारसंभूतो गोपालो विश्वसंस्थितः ।
क्लीमोंकार[3]स्य चैकत्वं वदन्ति ब्रह्मवादिनः ।
मथुरायां विशेषेण मां ध्यायन् मोक्षमश्नुते ॥ ४५ ॥

ब्रह्मणा पृष्टः स होवाच । स्वाज्ञदृष्ट्या तस्मादव्यक्तमेकाक्षरम् । तेभ्यः पञ्चीकृतभूतानि तैः आवृतमक्षरं घटशरावाद्यावृतमृत्पिण्डवदित्यर्थः ॥४०–४१॥

[1] संभूतः श्रु—उ, मु. [2] ज्ञानसं—अ, अ १, मु.
[3] स्यैकत्वं—अ, अ २, क. स्येकतत्वं—मु.

कथं एकस्य चातुर्विध्यमित्यत्र—**रोहिणीतनय इति**। कृष्णस्य अवस्थात्रयतदध्यक्षातीतत्वेन तुर्यरूपत्वात् कृष्णो ब्रह्मैवेत्यर्थः॥ ४२–४३॥ बिन्दुप्रतिपाद्यरुक्मिणीस्वरूपमाह—**कृष्णेति**। शक्तिशक्तिमतोरभेदात् कृष्णात्मिका **रुक्मिणी जगत्कर्त्री मूलप्रकृतिः** सैव व्रजस्त्री राधारूपिणी प्रकृतिः। **व्रजस्त्रीजनेषु संभूताः श्रुतयः** ताभ्यो **ब्रह्मसङ्गतः प्रणवत्वं** तस्या **ब्रह्मवादिनः प्रकृतित्वं वदन्ति**॥ ४४॥ यस्मादेवं **तस्मात्** अस्य ब्रह्मरूपत्वात् **ओङ्कारसंभूतः** ओङ्कारार्थतया तत्प्रतिपाद्यत्वात्, विश्वाधारान्तर्यामितया स्थितत्वात् **विश्वसंस्थितः**, किं वक्तव्यं चतुर्धा संस्थितः इति। **क्लीमोङ्कारयोरेकत्वं ब्रह्मवादिनो वदन्ति** बीजद्वयस्यैकार्थपर्यवसायित्वात्। मथुरायां मद्भजनं शीघ्रफलदमित्याह—**मथुरायामिति**॥ ४५॥

हृदि ध्येयभगवद्रूपवर्णनम्

अष्टपत्रं विकसितं हृत्पद्मं तत्र संस्थितम्।
दिव्यध्वजातपत्रैस्तु चिह्नितं चरणद्वयम्॥ ४६॥
श्रीवत्सलाञ्छनं हृत्स्थं [1]कौस्तुभप्रभया युतम्।
चतुर्भुजं शङ्खचक्रशार्ङ्गपद्मगदाऽन्वितम्॥ ४७॥
सुकेयूरान्वितं बाहुं कण्ठमालासुशोभितम्।
द्युमत्किरीटमभयं स्फुरन्मकरकुण्डलम्॥ ४८॥
हिरण्मयं सौम्यतनुं स्वभक्तायाभयप्रदम्।
ध्यायेन्मनसि मां नित्यं वेणुशृङ्गधरं तु वा॥ ४९॥
मथ्यते तु जगत्सर्वं ब्रह्मज्ञानेन येन वा।
मत्सारभूतं यद्यत्स्यान्मथुरा सा निगद्यते॥ ५०॥

[1] कौस्तुभं प्र—अ २, क.

अष्टदिक्पा[1]लभिर्भूमिपद्मं विकसितं जगत् ।
संसारार्णवसंजातं सेवितं मम मानसे ॥ ९१ ॥
चन्द्रसूर्यत्विषो दिव्या ध्वजा मेरुर्हिरण्मयः ।
आतपत्रं ब्रह्मलोकमथोर्ध्वं [2]चरणं स्मृतम् ॥ ९२ ॥
[3]श्रीवत्सं च स्वरूपं च वर्तते लाञ्छनैः सह ।
श्रीवत्सलक्षणं तस्मात् कथ्यते ब्रह्मवादिभिः ॥ ९३ ॥
येन सूर्याग्निवाक्चन्द्रतेजसा स्वस्वरूपिणा ।
वर्तते कौस्तु[4]भाख्यं मणिं वदन्तीशमानिनः ॥ ९४ ॥
सत्त्वं रजस्तम इति अहंकारश्चतुर्भुजः ।
पञ्चभूतात्मकं शङ्खं करे रजसि संस्थितम् ॥ ९५ ॥
बालस्वरूप[5]मित्यन्तं मनश्चक्रं निगद्यते ।
आद्या माया भवेच्छार्ङ्गं पद्मं [6]विश्वकरे स्थितम् ॥ ९६ ॥
आद्या विद्या गदा वेद्या सर्वदा मे करे स्थिता ।
धर्मार्थकामकेयूरैर्दिव्यैर्दिव्य[7]मयीरितैः ॥ ९७ ॥
कण्ठं तु निर्गुणं प्रोक्तं माल्यते आद्ययाऽजया ।
माला निगद्यते ब्रह्मंस्तव पुत्रैस्तु मानसैः ॥ ९८ ॥
कूटस्थं [8]सत्त्वरूपं च किरीटं प्रवदन्ति माम् ।
क्षीरोत्तरं प्रस्फुरन्तं कुण्डलं युगलं स्मृतम् ॥ ९९ ॥

[1] लके—मु. [2] चार्णवं—अ, अ १. [3] श्रीवत्सस्य स्वरूपं तु—मु.
[4] भाख्यं तं वदन्ति शमभानिनः—अ. [5] मत्यंतं—अ.
[6] दिश्वं क—मु. [7] मयेरि—मु. मयैरि—अ, अ १. [8] सत्य—अ.

ध्यायेन्मम प्रियं नित्यं स मोक्षमधिगच्छति ।
स मुक्तो भवति तस्मै स्वात्मानं तु ददामि वै ॥ ६० ॥
एतत्सर्वं [1]भविष्यद्वै मया प्रोक्तं विधे तव ।
स्वरूपं द्विविधं चैव सगुणं निर्गुणात्मकम् ॥ ६१ ॥

हृत्स्थं श्रीवत्सलाञ्छनं मां ध्यायेदित्यर्थः ॥ ४६–४९ ॥ मथुराशब्दार्थमाह—मथ्यत इति । अनेनेदं सर्वं जगत् मथ्यत इति मथनं ब्रह्मज्ञानं मत्स्वरूपं वा अधिष्ठानस्यारोपभ्रमनिरासकत्वात् । मत्सारभूतं स्वरूपं यस्यां निषण्णं सा मथुरापुरीत्यर्थः ॥ ५०–५१ ॥ चन्द्रसूर्यत्विष एव दिव्यध्वजाः छत्रदण्डो मेरुः ब्रह्मलोकः आतपत्रम् ॥ ५२–५३ ॥ कौस्तुभशब्दार्थमाह—येनेति । सूर्यादयः परतन्त्रतया येन स्वरूपिणा तेजसा प्रवर्तन्ते ते तच्चित्स्वरूपमहेशमानिनः ईश्वराराधकाः कौस्तुभाख्यं मणिं प्रवदन्ति ॥ ५४ ॥ चतुर्गुणितभुजं विवृणोति—सत्वमिति । सत्वादित्रिगुणेन अहङ्कारश्चेति चतुर्भुजः । रजोगुणविशिष्टं शङ्खं करे स्थितं बुधाः विदुः इत्यर्थः ॥ ५५ ॥ विशुद्धं मन एव सत्वाख्यं करे स्थितं चक्रं निगद्यते ॥ ५६ ॥ अहं ब्रह्मास्मीति वृत्तिरेव आद्या विद्या सैव मत्करगतगदेति वेद्या भवति ॥ ५७–६१ ॥

देवादिभिः भजनीयाः मूर्तयः

स होवाचाब्जयोनिः—व्यक्तीनां मूर्तीनां प्रोक्तानां कथं त्वाभरणानि भवन्ति कथं वा देवा यजन्ति रुद्रा यजन्ति ब्रह्मा यजति ब्रह्मजा यजन्ति विनायका यजन्ति द्वादशादित्या यजन्ति वसवो यजन्ति गन्धर्वा यजन्ति [2]सपदानुगा अन्तर्धाने तिष्ठन्ति कां मनुष्या यजन्ति ॥ ६२ ॥

[1] भविष्यन्वै—उ, क, अ २, अ १.
[2] स्वपदा—उ.

स होवाच तं हि वै नारायणो देवः—आद्या व्यक्ता द्वादश मूर्तयः सर्वेषु लोकेषु सर्वेषु [1]देवेषु सर्वेषु मनुष्येषु [2]तिष्ठति रुद्रेषु रौद्री ब्रह्मणीयेषु ब्राह्मी देवेषु दैवी मनुष्येषु मानवी विनायकेषु विघ्नविनाशिनी आदित्येषु ज्योतिर्गन्धर्वेषु [3]गान्धर्वी अप्सरःस्वेवं गौर्वसुष्वेवं काम्या अन्तर्धानेष्वप्रकाशिनी आविर्भावतिरोभावा स्वपदे तिष्ठति तामसी राजसी सात्विकी मानुषी विज्ञानघन आनन्द[4]घनः सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति ॥ ६२ ॥

ॐ प्राणात्मने ॐ तत्सद्भूर्भुवः सुवस्तस्मै वै प्राणात्मने नमो नमः। ॐ श्रीकृष्णाय गोविन्दाय गोपीजनवल्लभाय ॐ तत्सद्भूर्भुवः सुवस्तस्मै वै नमो नमः। ॐ अपानात्मने ॐ तत्सद्भूर्भुवः सुवस्तस्मै वा अपानात्मने नमो नमः। ॐ श्रीकृष्णायानिरुद्धाय ॐ तत्सद्भूर्भुवः सुवस्तस्मै वै नमो नमः। ॐ व्यानात्मने ॐ तत्सद्भूर्भुवः सुवस्तस्मै वै व्यानात्मने नमो नमः। ॐ श्रीकृष्णाय रामाय ॐ तत्सद्भूर्भुवः सुवस्तस्मै वै नमो नमः। ॐ उदानात्मने ॐ तत्सद्भूर्भुवः सुवस्तस्मै वा उदानात्मने नमो नमः। ॐ श्रीकृष्णाय देवकीनन्दनाय ॐ तत्सद्भूर्भुवः सुवस्तस्मै वै नमो नमः। ॐ समानात्मने ॐ तत्सद्भूर्भुवः सुवस्तस्मै वै समानात्मने नमो नमः। ॐ श्रीगोपालाय निजस्वरूपाय ॐ तत्सद्भूर्भुवः सुवस्तस्मै वै नमो नमः। ॐ योऽसौ प्रधानात्मा गोपाल ॐ तत्सद्भूर्भुवः

[1] वेदेषु—अ १, अ २, क.
[2] तिष्ठन्तीति—अ, अ १, मु.
[3] गन्ध—अ, अ १, अ २, क.
[4] घनस—अ, अ १, अ २, उ.

सुवस्तस्मै वै नमो नमः । ॐ योऽसाविन्द्रियात्मा गोपाल ॐ तत्सद्भूर्भुवः सुवस्तस्मै वै नमो नमः । ॐ योऽसौ भूतात्मा गोपाल ॐ तत्सद्भूर्भुवः सुवस्तस्मै वै नमो नमः । ॐ योऽसावुत्तमपुरुषो गोपाल ॐ तत्सद्भूर्भुवः सुवस्तस्मै वै नमो नमः । ॐ योऽसौ ब्रह्मापरं वै ब्रह्म ॐ तत्सद्भूर्भुवः सुवस्तस्मै वै नमो नमः । ॐ योऽसौ सर्वभूतात्मा गोपाल ॐ तत्सद्भूर्भुवः सुवस्तस्मै वै नमो नमः । ॐ जाग्रत्स्वप्नसुषुप्तितुरीयतुरीयातीतोऽन्तर्यामी गोपाल ॐ तत्सद्भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ ६४ ॥

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥६५॥

रुद्राय नमः । आदित्याय नमः । विनायकाय नमः । सूर्याय नमः । विद्यायै नमः । इन्द्राय नमः । अग्नये नमः । यमाय नमः । निर्ऋतये नमः । वरुणाय नमः । वायवे नमः । कुबेराय नमः । ईशानाय नमः । सर्वेभ्यो देवेभ्यो नमः ॥ ६६ ॥

एवं भगवत्सूक्तिमाकर्ण्य स होवाच । किमिति? व्यक्तीनामिति ॥६२॥ कथं मनुष्याः यजन्तीति ब्रह्मणा पृष्टः स होवाच । आविर्भावतिरोभावात्मिका मूर्तिः स्वपदे कैलाससत्यलोकवैकुण्ठाख्ये तिष्ठतीत्यर्थः । तस्यास्त्रैविध्यमाह—तामसीत्यादि । मानुषी कुत्र तिष्ठतीत्यस्योत्तरमाह—मानुषीति । विज्ञानघनानन्दघननाम्नी मानुषी मनुष्यप्रसिद्धा मूर्तिः सच्चिदानन्दैकरसो यो भक्तियोगः तत्र तिष्ठतीत्यर्थः ॥ ६३ ॥ कथं ब्रह्मा ब्रह्मजा यजन्ति इति प्रश्नोत्तरमन्त्रानाह—ओमिति ॥ ६४ ॥ एकस्यैवं कथमनेकत्वं स्यात् इत्याशङ्क्य तस्यैव स्वाङ्गदृष्ट्या सर्वत्र प्रविष्टवत् भानादित्याह—एक इति । अयं मन्त्रः श्वेताश्वतरोपनिषदि

पदशो व्याख्यातः ॥ ६९ ॥ कथं रुद्रा यजन्ति इत्यस्योत्तरमाह—**रुद्रायेति**। कृष्णाख्यं ब्रह्म स्वाज्ञदृष्टया स्वाविद्यापदतत्कार्यतत्प्रविभक्तद्वादशमूर्त्यात्मना स्थितं स्वज्ञदृष्टया तत्सर्वापवादाधिकरणतया भातं परमार्थदृष्टया तु स्वाज्ञादिदृष्टिमोहे सत्यसति निष्प्रतियोगिकब्रह्ममात्रमवशिष्यते इति फलितोऽर्थः ॥ ६६ ॥

विद्यासंप्रदायः

दत्त्वा स्तुतिं पुण्यतमां ब्रह्मणे स्वस्वरूपिणे ।
कर्तृत्वं सर्वभूतानामन्तर्धाने बभूव सः ॥ ६७ ॥
ब्रह्मणो ब्रह्मपुत्रेभ्यो नारदात्तु श्रुतं [1]मुनेः ।
तथा प्रोक्तं तु [2]गान्धर्वि गच्छध्वं स्वालयान्तिकम् ॥ इति ॥ ६८ ॥

मुनिः गान्धर्वीप्रश्नोत्तरमवतारयति—**दत्त्वेति**। सोऽयं भगवान् नारायणो **ब्रह्मणे** स्वपुत्राय प्रागुक्तां **पुण्यतमां स्तुतिं** सर्वलोकसृष्टि**कर्तृत्वं** च **दत्वा अन्तर्धाने** अदृश्यो **बभूव** ॥ ६७ ॥ मया चेदं तत्संप्रदायतो यथा श्रुतं तथा युष्मान् प्रति प्रोक्तमित्याह—**ब्रह्मणे** इति। हे **गान्धर्वि** इदं शास्त्रं आदौ नारायणेन स्वपुत्राय **ब्रह्मण** उक्तम्। ब्रह्मणा तु स्वपुत्रेभ्यः सनकादिभ्यो नारदादिभ्यश्च प्रतिपादितम्। मया एतत् सनकादिभ्यो **नारदाच्च श्रुतं तथा** मया इदं युष्मान् प्रति **प्रोक्तम्**। हे गान्धर्वीप्रमुखाः सर्वाः यूयं **स्वालयान्तिकं** स्वाश्रयप्रदेशं प्रति **गच्छध्वम्**। **इति**शब्दः गोपालोत्तरतापिन्युपनिषत्समाप्त्यर्थः ॥ ६८ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
गोपालतापिनीव्याख्या लिखिता कृष्णगोचरा ।
गोपालतापिनीव्याख्या द्वाविंशाधिशतत्रयम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चनवतिसङ्ख्यापूरकं गोपालपूर्वोत्तरतापिन्युपनिषद्विवरणं सम्पूर्णम् ॥

---

[1] यथा—उ, मु.  [2] गान्धर्वी गच्छ त्वं—अ, अ १, अ २, क.

# तारसारोपनिषत्

## पूर्णमदः—इति शान्तिः

अविमुक्तोपासनोपदेशः

बृहस्पतिरुवाच याज्ञवल्क्यं यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । [1]अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् ॥ १ ॥

तस्माद्यत्र क्वचन गच्छेत्तदेव मन्येतेतीदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतो भूत्वा मोक्षी भवति तस्मादविमुक्तमेव निषेवेताविमुक्तं न विमुञ्चेत् ॥ २ ॥

एवमेवैष भगवन्निति वै याज्ञवल्क्यः ॥ ३ ॥

यन्नारायणतारार्थसत्यज्ञानसुखाकृति ।
त्रिपान्नारायणाकारं तद्ब्रह्मैवास्मि केवलम् ॥

इह खलु शुक्लयजुर्वेदप्रविभक्तेयं तारसारोपनिषत् स्थूलसूक्ष्माविमुक्तनारायणाष्टाक्षराष्टतनुमन्त्रप्रकटनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः

[1] 'अविमुक्तं' इत्यादि 'तस्मात्' इत्यतः प्राक्तनं वाक्यं व्याख्याऽनुसारेणात्र संयोजितम् । आकरेषु तु "अत्र हि" इत्यतः प्राक् संयोजितमस्ति.

स्वल्पग्रन्थतो विवरणमारभ्यते । बृहस्पतिर्भारद्वाजयाज्ञवल्क्यप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—**बृहस्पतिरिति** । अयं खण्डो जाबालोपनिषदि पदशो व्याख्यातः ॥ १–३ ॥

[सा च व्याख्या झटिति प्रबोधनार्थं अत्र संयोज्यते—

मिथिलोपवनप्रान्ते वादेन ब्राह्मणान् जित्वा स्वात्तपरब्रह्मविद्यया जनकं बोधयित्वा स्वशिष्यगणेन सह याज्ञवल्क्यः पुनः मिथिलोपवने कंचित्कालमासांचक्रे । यः सर्वज्ञकल्पः तं **याज्ञवल्क्यं** अविमुक्तेयत्तां जिज्ञासुः **बृहस्पतिरुवाच** । सर्वक्षेत्रादपि **यदनु** प्रसिद्धं कुत्सितं पापकर्म रौतीति कुरुः तस्य क्षेपणपूर्वकं स्वगतजनत्राणनात् **कुरुक्षेत्रम्** । यद्वा—कुः पृथिवी तस्यां रौति शब्दं करोतीति कुरुः प्राणः तदावासहेतुशरीरं **कुरुक्षेत्रं** तत्रत्य**देवानां** इन्द्रियाणां प्रवृत्तिनिमित्तदेवस्य प्रत्यक्चिद्धातोः **यजनं** पूजाकरणम् । अत्र हीन्द्रियाणि स्वोचितविषयोपहारैरात्मानं यजन्ति । **सर्वेषां भूतानां** इन्द्रियाधिष्ठातॄणां वा **ब्रह्मसदनं** ब्रह्मात्तिस्थानम् ॥ १ ॥ यथा देवयजनसाधनं कुरुक्षेत्रं तथा विशेषणद्वयविशिष्टमान्तरं कुरुक्षेत्रमिति बृहस्पतिप्रश्नानुरोधं मुनिराह—**अविमुक्तमिति** । यत्स्वरूपं स्वाविद्याकामकर्मविमुक्तं तत् **अविमुक्तं** ब्रह्म यत्रोपलभ्यते भ्रूमध्यगताज्ञाचक्रं **कुरुक्षेत्रं देवानामि**त्याद्युक्तार्थम् । यस्मादेवं **तस्मात् यत्र क्वचन** गङ्गाप्रयागादिस्थले तद्विपरीते वा **गच्छति तदेव** अविमुक्तमिति **मन्येत** जानीयात् इति अनेन प्रकारेण **इदं वै** मया प्राप्तमेव ब्रह्म कुरुक्षेत्रमित्याद्युक्तार्थम् । क्षेत्रसामान्यस्य क्षेत्रज्ञविकल्पितत्वात् तदतिरेकेण न किंचिदस्तीत्यर्थः । **अत्र** अविमुक्तरूपे कुरुक्षेत्रे ब्रह्मेति विज्ञाते तद्विज्ञानानुरोधेन **जन्तोः** प्राणिमात्रस्य **प्राणेषूत्क्रममाणेषु** स्वाज्ञानरुजं द्रावयति नाशयतीति **रुद्रः** परमेश्वरः संसारतारकं **ब्रह्म** सच्चिदानन्दलक्षणं **व्याचष्टे** कथयति **येन** "तत्त्वमसि" "अहं ब्रह्माऽस्मि" इत्युपदेशेन **असौ** जीवः **अमृतो भूत्वा** स्वातिरिक्तभ्रमतः **मोक्षी भवति** स्वातिरिक्तापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रतया अवशिष्यते । यस्मादेवं **तस्मात्** ब्रह्ममात्रज्ञानोत्पत्तेः प्राक् **अविमुक्तं** भ्रूमध्यगत-

ज्योतिर्लिङ्गमेव निषेवेत ज्योतिर्लिङ्गमस्मीत्यनुसंधानं कुर्यात्, "ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत् सदा यतिः" इति श्रुतेः। यावद्ब्रह्ममात्रज्ञानं नोदेति तावत् अविमुक्तं प्रत्यञ्चमात्मानमीश्वरं वा न विमुञ्चेत् ॥ २ ॥ याज्ञवल्क्ये नैवमुक्तो बृहस्पतिः तदुक्तमङ्गीचकारेत्याह—एवमेवेति ॥ ३ ॥]

## नारायणस्थूलाष्टाक्षरतारकम्

अथ हैनं भारद्वाजः पप्रच्छ याज्ञवल्क्यं किं तारकं किं तारयतीति ॥ ४ ॥ स होवाच याज्ञवल्क्यः—ॐ नमो नारायणायेति तारकं चिदात्मकमित्युपासितव्यम् । ओमित्येकाक्षरमात्मस्वरूपम्। नम इति द्व्यक्षरं प्रकृतिस्वरूपम्। नारायणायेति पञ्चाक्षरं [1]परब्रह्मस्वरूपम्। इति य एवं वेद सोऽमृतो भवति। ओमिति ब्रह्मा भवति नकारो विष्णुर्भवति मकारो रुद्रो भवति नकार ईश्वरो भवति रकारोऽण्डविराड् भवति यकारः पुरुषो भवति णकारो भगवान् भवति यकारः परमात्मा [2]भवति। एतद्वै नारायणस्याष्टाक्षरं परमपुरुषो भवति ॥ ५ ॥

अयमृग्वेदः प्रथमः ॥ ६ ॥

श्रीमन्नारायणतारकबुभुत्सया भारद्वाजो याज्ञवल्क्यं पृच्छतीत्याह—**अथेति** ॥ ४ ॥ भारद्वाजप्रश्नोत्तरं **स होवाच**। किं तत्? इत्यत्र— **ॐ नमो नारायणायेति** । ॐ नमो नारायणायेत्यत्र नमःशब्दवाच्यजीवताप्रासप्रत्यक्चैतन्यं त्वंपदलक्ष्यमुच्यते, नारायणशब्दवाच्येश्वरताप्रासपरचैतन्यं तत्पदलक्ष्यमुच्यते, अयेति चतुर्थी लक्ष्यद्वयस्यैकत्वख्यापनार्थेत्यत्र—

[1] 'पर' इति (अ, क) कोशयोः नास्ति. परं—अ १, अ २, मु. [2] भवतीति—अ.

नमस्त्वमर्थो विज्ञेयो रामस्तत्पदमुच्यते ।
असीत्यर्थे चतुर्थी स्यादेवं मन्त्रेषु योजयेत् ॥

इति श्रुतेः। पराक्सापेक्षप्रत्यगभिन्नब्रह्मगतसविशेषापह्नवसिद्धं निष्प्रतियोगिकब्रह्ममात्रं ओमित्युक्तं तुरीयोङ्काराग्रविद्योततुरीयतुरीयस्य व्यष्टिसमष्ट्यात्मकजाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तभेदगतविशेषापह्नवसिद्धत्वात् । ओमित्येकाक्षरमेव स्वातिरिक्तास्तित्वभ्रमसन्तारणात् **तारकं चिदात्मकं** निष्प्रतियोगिकचिन्मात्रमिति **उपासितव्यं** चिन्त्यमित्यर्थः । उक्तार्थं तद्वेदनफलं चाह—**ओमिति** । **ओमित्येकाक्षरमात्मस्वरूपं** तस्यानात्मापह्नवसिद्धत्वात् "जीवभूतां महाबाहो ययेदं धार्यते जगत्" इति स्मृत्यनुरोधेन । **नम इति द्व्यक्षरं प्रकृतिस्वरूपं**; जीवप्रकृतिगतहेयांशापवादाधिष्ठानं प्रत्यक्चैतन्यमित्यर्थः । अष्टाक्षरप्रतिपाद्यं ब्रह्माहमस्मीति वेदनसमकालं **सोऽमृतो** विदेहमुक्तो **भवति** इत्यर्थः । प्रातिस्विकेन अष्टाक्षराक्षरार्थमाह—**ओमितीति** । अष्टाक्षरदेवताभेदगतहेयांशासंभवप्रबोधसिद्धस्य निष्प्रतियोगिकब्रह्ममात्रतया परमपुरुषत्वात् अष्टाक्षरविशिष्टार्थस्तु ब्रह्मैवेत्यर्थः ॥ ९ ॥ **अयं ऋग्वेदः प्रथमः**, अस्य खण्डस्य ऋग्वेदमस्तकसारत्वात् ॥६॥

इति प्रथमः खण्डः

नारायणसूक्ष्माष्टाक्षरतारकम्

ॐ इत्येतदक्षरं परं ब्रह्म । तदेवोपासितव्यम् । एतदेव सूक्ष्माष्टाक्षरं भवति । तदेतदष्टात्मकोऽष्टधा भवति । अकारः प्रथमाक्षरो भवति । उकारो द्वितीयाक्षरो भवति । मकारस्तृतीयाक्षरो भवति । बिन्दुस्तुरीयाक्षरो भवति । नादः पञ्चमाक्षरो भवति । कला षष्ठाक्षरो भवति । कलातीता सप्तमाक्षरो भवति । तत्परश्चाष्टमाक्षरो भवति । तारकत्वात्तारको भवति । तदेव तारकं ब्रह्म त्वं विद्धि । तदेवोपासितव्यम् ॥ १ ॥

एवं स्थूलाष्टाक्षरमुक्त्वा सूक्ष्माष्टाक्षरमाह—ओमिति ॥ १ ॥

प्रणवावयवदेवताः

अत्रैते श्लोका भवन्ति—

अकारादभवद्ब्रह्मा जाम्बवानितिसंज्ञकः ।
उकाराक्षरसंभूत उपेन्द्रो हरिनायकः ॥ २ ॥
मकाराक्षरसंभूतः शिवस्तु हनुमान् स्मृतः ।
बिन्दुरीश्वरसंज्ञस्तु शत्रुघ्न[1]श्चक्रराट् स्वयम् ॥ ३ ॥
नादो महाप्रभुर्ज्ञेयो भरतः शङ्खनामकः ।
कलायाः पुरुषः साक्षाल्लक्ष्मणो धरणीधरः ॥ ४ ॥
कलाऽतीता भगवती स्वयं सीतेति संज्ञिता ।
तत्परः परमात्मा च श्रीरामः पुरुषोत्तमः ॥ ५ ॥

एवं अकारादिप्रणवावयवदेवताप्रतिपादकाः मन्त्राः भवन्तीत्याह—अत्रेति । जाम्बवतो ब्रह्मांऽशत्वेन ब्रह्मत्वं, अंशांशिनोरभेदात् । तथा सर्वत्रैवमूह्यम् ॥ २–४ ॥ कैवल्यश्रीस्वरूपेण सर्वत्र राजते स्वे महिम्नि महीयते इति श्रीरामः, तस्य परमात्मतया पुरुषोत्तमत्वात् ॥ ५ ॥

श्रीरामस्य सर्वात्मकत्वम्

ओमित्येतदक्षरमिदं सर्वम् । तस्योपव्याख्यानं भूतं भव्यं भविष्यद्यच्चान्यत् तत्त्वमन्त्रवर्णदेवताछन्दो[2]ऋक्कलाशक्तिसृष्ट्यात्मकमिति । य एवं वेद ॥ ६ ॥

यजुर्वेदो द्वितीयः ॥ ७ ॥

[1] ह्शत्रुरा—क.  [2] ऋषिकला—उ १.

तस्योङ्कारार्थत्वेन स एव सर्वं, तदतिरिक्तं नास्ति, इत्याह—**ओमिति**। कालत्रयपरिच्छेद्यं यद्यद्वस्त्वस्ति तत्सर्वं ओङ्कारार्थः श्रीराम एव, रामादतिरिक्तं न किञ्चिदस्ति इत्यत्र—

इदं सत्यमिदं सत्यं सत्यमेतदिहोच्यते ।
रामः सत्यं परं ब्रह्म रामात् किंचिन्न विद्यते ॥

इति स्मृतेः। किंच—**यच्चेति**। **यच्चान्यत्** कालत्रयापरिच्छेद्यं अव्यक्तादिकं श्रोत्रादीश्वरा[1]त्मकं षण्णवतितत्त्वजातं च नादप्रभवसप्तकोटिमहामन्त्रजातं च अकारादिवर्णजातं च ब्रह्मादिदेवताजातं च गायत्र्यादिछन्दोजातं च ऋगादिवेद-जातं च प्राणादिकलाजातं च तत्तत्पदार्थगतकाठिन्यादिशक्तिजातं च क्रियाऽऽदि-शक्तित्रयं वा सृष्ट्यात्मकमिति सृष्ट्यादिपञ्चकृत्योपलक्षणार्थं एतत्सर्वं श्रीराम एव। रामादतिरिक्तं न किंचिदस्ति इति यो वेद स एवंरूपराम एव भवतीत्यर्थः ॥ ६ ॥ **यजुर्वेदो द्वितीयः**, द्वितीयखण्डस्य यजुर्वेदमस्तकसारार्थत्वात् ॥ ७ ॥

इति द्वितीयः खण्डः

जाम्बवदाद्यष्टतनुमन्त्राः

अथ हैनं भारद्वाजो याज्ञवल्क्यमुवाच—अथ कैर्मन्त्रैः परमात्मा प्रीतो भवति स्वात्मानं दर्शयति [2]तान्नो ब्रूहि भगव इति ॥ १ ॥

स होवाच याज्ञवल्क्यः—

ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवानकारवाच्यो [3]जाम्बवान् भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ २ ॥ ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवानुकारवाच्य उपेन्द्रस्वरूपो हरि-

[1] रान्तं—उ। १. 	[2] तन्नो—अ, मु. 	[3] ब्रह्मस्वरूपो जा—अ.

नायको भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ ३ ॥ ॐ यो ह वै परमात्मा नारायणः स भगवान् मकारवाच्यः शिवस्वरूपो हनूमान् भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ ४ ॥ ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवान् बिन्दुस्वरूपः शत्रुघ्नो भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ ५ ॥ ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवान् नादस्वरूपो भरतो भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ ६ ॥ ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवान् कलास्वरूपो लक्ष्मणो भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ ७ ॥ ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवान् कलाऽतीता भगवती सीता चित्स्वरूपा भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ ८ ॥ ॐ यो ह वै श्रीपरमात्मा नारायणः स भगवान् तत्परः परमपुरुषः पुराणपुरुषोत्तमो नित्यशुद्ध-बुद्धमुक्तसत्यपरमानन्दानन्ताद्वयपरिपूर्णः परमात्मा ब्रह्मैवाहं रामोऽस्मि भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ ९ ॥

जाम्बवदादितनुमन्त्रबुभुत्सया भारद्वाजो याज्ञवल्क्यं पृच्छतीत्याह— **अथेति** । किमिति? **अथेति** ॥ १ ॥ यथा प्रथममन्त्रोक्तावाद्यन्तौ तथा सर्वमन्त्रेषु द्रष्टव्यौ । यो ह वै कैवल्यश्रीस्वरूपेण परमात्माऽवशिष्यते स भगवान् अकारादिवाच्यो जाम्बवदादिरूपी भवति **भूर्भुवः सुवस्तस्मै वै नमो नमः** । वस्तुतः श्रीरामरूपेण यो निर्विशेषात्मा तस्मै वै नमो नमः स एवाहमस्मीति भावयेत्यर्थः ॥ २–८ ॥ यदकारादिमात्रातद्वाच्यभेदभिन्नं **तत्परः** तस्मात् परः क्षराक्षरकलनावैरळ्यात् **परमपुरुषः** चिरन्तनत्वात् **पुराणपुरुषोत्तमः** परमात्मरूपत्वात् अनित्याशुद्धाज्ञानबन्धवैरळ्यात् **नित्यशुद्धबुद्धमुक्तः** सत्तामात्रत्वात् **सत्यः** आनन्दघनत्वात् **परमानन्दः** परिच्छिन्नद्वैताभावात् **अनन्ताद्वयपरिपूर्णः परमात्मा ब्रह्मैवाहं रामोऽस्मी**त्यर्थः ॥ ९ ॥

विद्यापठनमन्त्रार्थज्ञानयोः फलम्

[1]एतदष्टविधमन्त्रं योऽधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स स्थाणुपूतो भवति स सर्वैर्देवैर्ज्ञातो भवति तेनेतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि फलानि भवन्ति श्रीमन्नारायणाष्टाक्षरानुस्मरणेन गायत्र्याः शतसहस्रं जप्तं भवति प्रणवानामयुतं जप्तं भवति दशपूर्वान् दशोत्तरान् पुनाति । नारायणपदमवाप्नोति य एवं वेद ॥ १० ॥

विद्यापठनफलमुक्त्वा मन्त्रार्थज्ञानफलमाह— **नारायणपदमिति** ॥ १० ॥

ज्ञानिप्राप्यपरमपदम्

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् ॥ ११ ॥ तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥ १२ ॥ इत्युपनिषत् सामवेदस्तृतीयः पादः ॥ १३ ॥

तद्विष्णोरिति मन्त्रस्तु आरुणिकोपनिषदि व्याख्यातः ॥ ११–१२ ॥ **उपनिषच्छब्दः** तारसारोपनिषत्परिसमाप्त्यर्थः । **सामवेदः तृतीयः**, तृतीयखण्डस्य सामवेदमस्तकसारत्वात् ॥ १३ ॥

**इति तृतीयः खण्डः**

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
तारसारोपनिषदो व्याख्यानं लिखितं स्फुटम् ।
तारसारोपनिषदो व्याख्या पञ्चाशदीरिता ॥

**इति श्रीमदीश.द्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकनवतिसङ्ख्यापूरकं तारसारोपनिषद्विवरणं सम्पूर्णम् ॥**

---

[1] एतमष्ट—अ.

# त्रिपाद्विभूति-महानारायणोपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

## प्रथमोऽध्यायः

परमेष्ठिनः परमरहस्यजिज्ञासा

अथ परमतत्त्वरहस्यं जिज्ञासुः परमेष्ठी देवमानेन सहस्र-संवत्सरं तपश्चचार। सहस्रवर्षेऽतीतेऽत्युग्रतीव्रतपसा प्रसन्नं भगवन्तं महाविष्णुं ब्रह्मा परिपृच्छति भगवन् परमतत्त्वरहस्यं मे ब्रूहीति। परमतत्त्वरहस्यवक्ता त्वमेव नान्यः कश्चिदस्ति। तत् कथमिति। तदेवोच्यते। त्वमेव सर्वज्ञः। त्वमेव सर्वशक्तिः। त्वमेव सर्वाधारः। त्वमेव सर्वस्वरूपः। त्वमेव सर्वेश्वरः। त्वमेव सर्वप्रवर्तकः। त्वमेव सर्वपालकः। त्वमेव सर्वनिवर्तकः। त्वमेव सर्वनिर्वर्तकः। त्वमेव सदसदात्मकः। त्वमेव सदसद्विलक्षणः। त्वमेवान्तर्बहिर्व्यापकः। त्वमेवातिसूक्ष्मतरः। त्वमेवातिमहतो महीयान्। त्वमेव महामूला-

विद्या[1]विरहः । त्वमेव महामूलाविद्याविवर्तकः । त्वमेव सर्वमूला-विद्यानिवर्तकः । त्वमेवाविद्याविहारः । त्वमेवाविद्याधारकः । त्वमेव विद्यावेद्यः । त्वमेव विद्यास्वरूपः । त्वमेव विद्याऽतीतः । त्वमेव सर्वकारणहेतुः । त्वमेव सर्वकारणसमष्टिः । त्वमेव सर्वकारणव्यष्टिः । त्वमेवाखण्डानन्दः । त्वमेव परिपूर्णानन्दः । त्वमेव निरतिशयानन्दः । त्वमेव तुरीयतुरीयः । त्वमेव तुरीयातीतः । त्वमेवानन्तोपनिषद्विमृग्यः । त्वमेवाखिलशास्त्रैर्विमृग्यः । त्वमेव ब्रह्मेशानपुरन्दरपुरोगमैरखिलामरैर-खिलागमैर्विमृग्यः । त्वमेव सर्वमुमुक्षुभिर्विमृग्यः । त्वमेवामृतमयैर्वि-मृग्यः । त्वमेवामृतमयस्त्वमेवामृतमयस्त्वमेवामृतमयः । त्वमेव सर्वं त्वमेव सर्वं त्वमेव सर्वम् । त्वमेव मोक्षस्त्वमेव मोक्षदस्त्वमेवाखिलमोक्ष-साधनम् । न किंचिदस्ति त्वद्व्यतिरिक्तम् । त्वद्व्यतिरिक्तं यत् किं चित् प्रतीयते तत् सर्वं बाधितमिति निश्चितम् । तस्मात्त्वमेव वक्ता त्वमेव गुरुस्त्वमेव पिता त्वमेव सर्वनियन्ता त्वमेव सर्वं त्वमेव सदा ध्येय इति सुनिश्चितः ॥ १ ॥

यत्रापह्नवतां याति स्वाविद्यापदविभ्रमः ।
त्रिपान्नारायणाख्यं तत् स्वमात्रमवशिष्यते ॥

इह खलु अथर्वणवेदप्रविभक्तदेवदर्शिशाखामस्तकरूपेयं त्रिपाद्विभूतिमहा-नारायणोपनिषत् पूर्वोत्तरकाण्डाभ्यामलंकृता स्वाविद्यापादप्रविभक्तस्वाविद्यापादा-दिपादचतुष्टयप्रकाशिका साकारनिराकारेयत्तां प्रकटयन्ती मूलाविद्यासंभूतिप्रळय-प्रकाशनव्यग्रा सम्यङ्निरूपितपरमरहस्या संसारतरणोपायपूर्वकमोक्षमार्गदर्शिनी

[1] विहारः—उ, उ १.

त्रिपाद्विभूतिपरमवैकुण्ठमहानारायणचक्रस्वरूपप्रकटनपूर्वकं सर्वापह्नवसिद्धनिष्प्रतियोगिकत्रैपदब्रह्ममात्रप्रकटनपर्यवसन्ना विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । परमेष्ठिनारायणप्रश्नप्रतिवचनपुरातनगुरुशिष्यसंवादरूपाख्यायिका वक्ष्यमाणविद्यास्तुत्यर्था, यदर्थं परमेष्ठ्यपि देवमानतः सहस्रसंवत्सरं तपश्चरित्वा परमतत्त्वरहस्यं नारायणमुखतो विज्ञातवानिति । प्रकृताख्यायिकामवतारयति— **अथेति** । **तपश्चचार** खलु । ततः **सहस्रवर्षे अतीतेऽत्युग्रतीव्रतपसा** केवलकुंभकेन तत्तपःफलं दातव्यमिति **प्रसन्नं भगवन्तम्** । **परिपृच्छति**—किमिति ? **भगवन्निति** । परमतत्त्वरहस्यज्ञा विराडादयः सन्ति तन्निकटे ज्ञातुमर्हसीति यदि वदसि तदा **परमेति** । तव समस्तवेदान्तसिद्धान्तपरिशिष्टपरमतत्त्वरूपत्वात् न हि त्वदतिरेकेण परमतत्त्वज्ञः कोऽप्यस्ति । तत्राक्षिपति—**तत् कथमिति** । त्वदतिरेकेण न कोऽप्यस्तीति यन्मयोक्तं प्रमाणतः **तदेवोच्यते** । किं तत् इत्यत्र युगपच्चतुर्मुखतः ऊर्ध्वबाहुः एवमुपन्यस्यति, तत्प्रकारमाचष्टे—**त्वमेव सर्वज्ञ** इत्यादि । **त्वमेव सर्वप्रवर्तकः**, हृषीकेशतया करणग्रामप्रवृत्तिनिमित्तत्वात् । **त्वमेव सर्वकारणहेतुः**, स्वस्वकार्यापेक्षया कारणभावमापन्नानामपि हेतुत्वात् । **त्वमेव तुरीयतुरीयः**, तुरीयोङ्काराग्रविद्योतमानत्वात् । **त्वमेव अमृतमयैः** नित्यमुक्तैः सनकादिभिरपि स्वात्मतया **विमृग्यः** ॥ १ ॥

सर्वरहस्यबोधको गुरुशिष्यसंवादः

**परमतत्त्वज्ञस्तमुवाच महाविष्णुरतिप्रसन्नो भूत्वा साधुसाध्विति साधुप्रशंसापूर्वकं—सर्वं परमतत्त्वरहस्यं ते कथयामि । सावधानेन शृणु । ब्रह्मन् देवदर्शीत्याख्याथर्वणशाखायां परमतत्त्वरहस्याख्याथर्वणमहानारायणोपनिषदि गुरुशिष्यसंवादः पुरातनः प्रसिद्धतया जागर्ति । पुरा तत्स्वरूपज्ञानेन महान्तः सर्वे ब्रह्मभावं गताः यस्य श्रवणेन सर्वबन्धाः प्रविनश्यन्ति यस्य ज्ञानेन सर्वरहस्यं विदितं भवति ॥ २ ॥**

परमेष्ठिना एवं सर्वरूपेण सर्वग्रासचिन्मात्ररूपेण च संस्तुतोऽयं नारायणः परमतत्त्वज्ञः तमुवाच । यत् त्वयोक्तं तत् साधु साध्विति साधुप्रशंसापूर्वकं परमेष्ठिकृतस्तुतिमङ्गीकृत्य सर्वमिति । तं स्वाभिमुखीकृत्य पुरा स्वनिश्वासवदप्रयत्नतः स्वाविर्भूतऋगादिचतुर्वेदप्रविभक्तदेवदर्शीति । इत्युक्त्वा तत्संवादनिर्वृत्तार्थं स्तौति—पुरेति ॥ २ ॥

शिष्यप्रश्नः

**तत्स्वरूपं कथमिति ॥ ३ ॥**

**शान्तो दान्तोऽतिविरक्तः सुशुद्धो गुरुभक्तस्तपोनिष्ठः शिष्यो ब्रह्मनिष्ठं गुरुमासाद्य प्रदक्षिणपूर्वकं दण्डवत् प्रणम्य प्राञ्जलिर्भूत्वा विनयेनोपसङ्गम्य भगवन् गुरो मे परमतत्त्वरहस्यं विविच्य वक्तव्यमिति ॥ ४ ॥**

इति भगवन्मुखादवगम्य तद्बुभुत्सया तदियत्तां पृच्छति—तत्स्वरूपं कथमिति ॥ ३ ॥ वक्ष्यमाणाख्यायिकामवतार्य गुरुशिष्यलक्षणप्रकटनपूर्वकं तत्प्रश्नप्रतिवचनसर्वस्वमुपन्यस्यति—शान्त इत्यादिना ॥ ४ ॥

गुरुणा ब्रह्मस्वरूपप्रतिपादनम्

**अत्यादरपूर्वकमतिहर्षेण शिष्यं [1]बहूकृत्य गुरुर्वदति—परमतत्त्वरहस्योपनिषत्क्रमः कथ्यते । सावधानेन श्रूयताम् । कथं ब्रह्म । कालत्रयाबाधितं ब्रह्म । सर्वकालाबाधितं ब्रह्म । सगुणनिर्गुणस्वरूपं ब्रह्म । आदिमध्यान्तशून्यं ब्रह्म । सर्वं खल्विदं ब्रह्म । मायाऽतीतगुणातीतं ब्रह्म । अनन्तमप्रमेयाखण्डपरिपूर्णं ब्रह्म । अद्वितीयपरमा-**

[1] बहु—क, अ २.

नन्दशुद्धबुद्धमुक्तसत्यस्वरूपव्यापकाभिन्नापरिच्छिन्नं ब्रह्म । सच्चिदानन्दस्वप्रकाशं ब्रह्म । मनोवाचामगोचरं ब्रह्म । अखिलप्रमाणागोचरं ब्रह्म । अमितवेदान्तवेद्यं ब्रह्म । देशतः कालतो वस्तुतः परिच्छेदरहितं ब्रह्म । सर्वपरिपूर्णं ब्रह्म । तुरीयं निराकारमेकं ब्रह्म । अद्वैतमनिर्वाच्यं ब्रह्म । प्रणवात्मकं ब्रह्म । प्रणवात्मकत्वेनोक्तं ब्रह्म । प्रणवाद्यखिलमन्त्रात्मकं ब्रह्म । पादचतुष्टयात्मकं ब्रह्म ॥ ५ ॥

**गुरुर्वदति**—किं तत्? इत्यत्र **परमेति** । कथ्यमानं वस्तु कीदृशं? इत्यत्र—**कथमिति** । **सर्वकालाबाधितं ब्रह्म** कालस्यापि कारणत्वात् । स्वाज्ञस्वज्ञदृष्ट्या **सगुणेति** । आदिमध्यान्तशून्यं आदिमध्यान्तवद्विश्वापवादसिद्धत्वात् । **सर्वं खल्विदं ब्रह्म** स्वातिरिक्तसर्वाभावात् । **मायाऽतीतगुणातीतं** मायातत्कार्यवैरळ्यात् । **अनन्तमप्रमेयाखण्डपरिपूर्णं**—यस्यान्तो न विद्यते तदनन्तं, यत् प्रत्यक्षादिप्रमाणामेयं तदप्रमेयं, अत एव सर्वत्र अखण्डतया परिपूर्णम् । **अद्वितीयपरमानन्दशुद्धबुद्धमुक्तसत्यस्वरूपव्यापकाभिन्नापरिच्छिन्नं**—द्वैतदुःखाभावात् अद्वितीयानन्दत्वं, अशुद्धाज्ञानबन्धवैरळ्यात् शुद्धबुद्धमुक्तत्वं, असत्यव्याप्याभावात् सत्यस्वरूपतया व्यापकं, सर्वाभिन्नत्वात् अभिन्नं, तस्मात् अपरिच्छिन्नम् । प्रमाणाविषयत्वे तत्सिद्धिप्रमाणाभावात् इत्यत्र **अमितवेदान्तवेद्यं ब्रह्म** । वेद्यतया परिच्छिन्नत्वशङ्कायां **देशत** इति । ब्रह्मवाक्यानां महावाक्यरत्नावलीप्रविभक्तब्रह्मस्वरूपमहावाक्यरत्नावळीप्रभालोचने प्रायशो व्याख्यातत्वात् [अत्रत्यवाक्यानां न व्याख्यापेक्षा] ॥ ५ ॥

पादचतुष्टयात्मकं ब्रह्म

किं तत् पादचतुष्टयं भवति ॥ ६ ॥

अविद्यापादः सुविद्यापादश्चानन्दपादस्तुरीयपादश्चेति । तुरीयपाद[1]स्तुरीयतुरीयं तुरीयातीतं च ॥ ७ ॥

[1] स्तु तुरी—अ १, अ २.

ब्रह्मणः पादचतुष्टयात्मकत्वं कथमित्याक्षिपति—**किं तत् पादचतुष्टयं भवतीति** ॥ ६ ॥ स्वाज्ञादिदृष्टिविकल्पितब्रह्मातिरिक्तयोः स्वं ब्रह्म त्रिपात् स्वातिरिक्तापह्नवसिद्धनिष्प्रतियोगिकपरमात्मा स्वातिरिक्ताविद्यापद्मोहे सत्यसति स्वमात्रमवशिष्यते । व्यष्टिसमष्टिचतुरंशकलनाकलितस्वातिरिक्तोऽयं अविद्यापादः । तत्प्रविभक्तस्थूलादिचतुरंशानामविद्याविद्याऽऽनन्दतुर्यभेदेन नाम निर्दिशति—**अविद्येति** । अविद्यापादस्थूलादिक्रमेण **अविद्यापाद** इत्यादि । तत्र—**तुर्यपादस्तुर्यतुरीयं तुरीयातीतं च भवति** । तुर्यपादप्रविभक्तचतुरंशेषु स्वात्मावरणभेदप्रतीत्यवास्तवत्वकलनाकलितस्थूलादिभागत्रयापह्नवसिद्धं तुर्यतुरीयपदं पराभूमिसंज्ञितं तुर्यतुरीयं त्रैपदं ब्रह्ममात्रं यदवशिष्यते तदेव तुर्यातीतं च भवति । तुर्यतुर्यपादस्य निष्प्रतियोगिकनिर्विशेषब्रह्ममात्रतया तुर्यतुर्यत्वं सिद्धमेव, तुरीयोङ्काराप्रविद्योतत्वात्, "तुरीयोङ्काराप्रविद्योतं तुर्यतुर्यं" इति श्रुतेः ॥ ७ ॥

पादचतुष्टयभेदः

**कथं पादचतुष्टयस्य भेदः ॥ ८ ॥**

**अविद्यापादः प्रथमः पादो विद्यापादो द्वितीयः आनन्दपादस्तृतीयस्तुरीयपादस्तुरीय इति । मूलाविद्या प्रथमपादे नान्यत्र । विद्याऽऽनन्दतुरीयांशाः सर्वेषु पादेषु व्याप्य तिष्ठन्ति ॥ ९ ॥**

प्रकृते तु—**कथमिति** ॥ ८ ॥ तदेव विवृणोति—**अविद्यापाद इति** । स्वाविद्यापदस्थूलांशः **अविद्यापादः प्रथमः पादः** स्थूलांशस्य प्राथम्यात् । **विद्यापादो द्वितीयः**, द्वितीयादिपादानां प्रथमपादापेक्षया सूक्ष्मत्वेन विद्यात्वं, बीजत्वेन आनन्दत्वं, चतुर्थांशत्वेन तुर्यत्वं चोपपद्यते । प्राथमिकपाद एव अविद्यापादः विद्याऽऽनन्दादिपादत्रयं त्रिपादिति चेत्—न, त्रिपाच्चैतन्यस्य निर्विशेषतया विद्याऽऽनन्दादिविभागकलनासंभवात् । त्रिपादिति सङ्ख्यावाचित्वेन निर्विभागता कुत इति चेत्—न, अन्यार्थस्य युक्तत्वात् । कथमन्यार्थो युज्यत

इत्यत्र त्र्यन्ते स्वावशेषतया पद्यते ज्ञायते इति व्युत्पत्तियोगात् त्रिपाच्छब्देन निर्विशेषं ब्रह्म उच्यते । तथाच स्मृतिः—

त्र्यन्ते स्वावशेषेण पद्यते ज्ञायते च यत् ।
तदेव हि त्रिपाद्ब्रह्म स्वमात्रमवशिष्यते ॥ इति ॥

व्यावहारिकी मूलाविद्या प्रथमपादे स्वाविद्यापदप्रविभक्तस्थूलांशे, तस्य पञ्चीकृतपञ्चमहाभूतविकारत्वेन व्यवहारक्षमत्वात् । अत्रैव व्यावहारिकी मूलाविद्या युज्यते नान्यत्र द्वितीयादिपादेषु, तेषां अपञ्चीकृतपञ्चभूतमहदव्यक्तविकृतितया स्फुटं व्यवहर्तुमशक्यत्वात् । स्वाविद्यापदसूक्ष्मबीजादिकलनाकलितविद्याऽऽनन्दतुरीयांशाः सर्वेषु पादेषु स्थूलादिषु व्याप्य तिष्ठन्ति । तत्र प्रकृताविद्यापादे तत्सूक्ष्मांशविद्यापादो व्याप्य वर्तते नानन्दादिपादयोः । आनन्दपादस्तु विद्याऽविद्यापादयोः व्याप्य वर्तते न तुर्यपादे । तुर्यपादस्तु स्वार्वाक्पादत्रयं व्याप्य वर्तते तत्तत्कारणस्य स्वस्वकार्यव्यापकत्वप्रसिद्धेः ॥ ९ ॥

### विद्याऽऽनन्दतुरीयाणां भेदः

एवं तर्हि विद्याऽऽदीनां भेदः कथमिति ॥ १० ॥

तत्तत्प्राधान्येन तत्तद्व्यपदेशः । वस्तुतस्त्वभेद एव । तत्राधस्तनमेकं पादमविद्याशबलं भवति । उपरितनपादत्रयं शुद्धबोधानन्दलक्षणममृतं भवति । तच्चालौकिकपरमानन्दलक्षणाखण्डामिततेजोराशिर्ज्वलति । तच्चानिर्वाच्यमनिर्देश्यमखण्डानन्दैकरसात्मकं भवति । तत्र मध्यमपादमध्यप्रदेशेऽमिततेजःप्रवाहाकारतया नित्यवैकुण्ठं विभाति । तच्च निरतिशयानन्दाखण्डब्रह्मानन्दनिजमूर्त्याकारेण ज्वलति । अपरिच्छिन्नमण्डलानि यथा दृश्यन्ते तद्वदखण्डानन्दामितवैष्णवदिव्यतेजोराश्यन्तर्गतविलसन्महाविष्णोः परम-

पदं विराजते । दुग्धोदधिमध्य[1]स्थितामृतामृतकलशवद्वैष्णवं धाम परमं संदृश्यते । सुदर्शनदिव्यतेजोऽन्तर्गतः सुदर्शनपुरुषो यथा सूर्यमण्डलान्तर्गतः सूर्यनारायणोऽमितापरिच्छिन्नाद्वैतपरमानन्दलक्षण-तेजोराश्यन्तर्गत आदिनारायणस्तथा संदृश्यते । स एव तुरीयं ब्रह्म स एव तुरीयातीतः स एव विष्णुः स एव समस्तब्रह्मवाचकवाच्यः स एव परं ज्योतिः स एव मायाऽतीतः स एव गुणातीतः स एव कालातीतः स एवाखिलकर्मातीतः स एव सत्योपाधिरहितः स एव परमेश्वरः स एव चिरंतनः पुरुषः प्रणवाद्यखिलमन्त्रवाचकवाच्य आद्यन्तशून्य आदिदेशकालवस्तुतुरीयसंज्ञानित्यपरिपूर्णः पूर्णः सत्य-संकल्प आत्मारामः कालत्रयाबाधितनिजस्वरूपः स्वयंज्योतिः स्वयंप्रकाशमयः स्वसमानाधिकरणशून्यः स्वसमानाधिकशून्यो नदिवारात्रिविभागो नसंवत्सरादिकालविभागः स्वानन्दमयानन्ता-चिन्त्यविभव आत्माऽन्तरात्मा परमात्मा ज्ञानात्मा तुरीयात्मेत्यादि-वाचकवाच्योऽद्वैतपरमानन्दो विभुर्नित्यो निष्कलङ्को निर्विकल्पो निरञ्जनो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चिदिति ॥ ११ ॥

तथा सति विद्याऽऽदीनां भेदः कथमित्याक्षिप्य तत्तत्प्राधान्येन तत्तद्व्यपदेशः । वस्तुतस्तु स्वाविद्यातदधिष्ठानचैतन्यव्याप्तेः समत्वेन अभेद एव युज्यते । पूर्वोक्तपादचतुष्टयेषु स्वाविद्यातदधिष्ठानस्फूर्तिः कुत्रेत्यत आह—

[1] स्थितामृतक—अ १.

**तत्रेति** । प्राथमिकपादस्याविद्याप्रविभक्ताविद्यांऽशत्वेन अविद्याशबळत्वम् । तत्राविद्यायाः प्राधान्यम् । अधिष्ठानचैतन्यं प्रधानमप्युपसर्जनवत् भासते । उपरितनपादत्रये तु चैतन्यमेव प्रधानं, स्वाविद्या तूपसर्जनम् । अत्र स्वाविद्यांऽशतानवतः चैतन्यांशस्फूर्तिबाहुळ्यसिद्धिः स्यात् इत्यत एवोच्यते--**उपरितनेति** । स्वाविद्यातदधिष्ठानप्राधान्योपसर्जनकलना माऽस्तु, आद्यं पदं आविद्यकं विद्याऽऽदिपादत्रयं निर्विशेषत्रिपाद्ब्रह्मेति चेत्—न, सर्वापह्नवसिद्धत्रिपाद्ब्रह्ममात्रस्य निष्प्रतियोगिकतया विद्याऽऽनन्देत्यादिव्यपदेशासंभवात् । न हि निर्विशेषत्रैपदे विष्वक्सेनादिवैकुण्ठकल्पना उपपद्यते, नापि गत्यागतिरपि संभवति । श्रूयते ह्यग्रे अविद्यापादमुल्लङ्घ्य विद्याऽविद्ययोः सन्धौ विष्वक्सेनवैकुण्ठपुरमाभाति, विद्यानन्दमययोः सन्धिः, तत्र आनन्दतरङ्गिण्याः प्रवाहेषु स्नात्वेत्यादि । यस्मादेवं तस्मात् अविद्यातत्कार्यारोपप्रधानोऽयमविद्यापादप्रविभक्ताविद्यापादः, अविद्यापादप्रविभक्तविद्याऽऽनन्दादिपादत्रयं तु अविद्यातत्कार्यापवादप्रधानं स्वाधिकरणचैतन्यदीप्तं सत् तद्भावापन्नतया चकास्तीत्याह--**तच्चालौकिकेति** । यत् पादचतुष्टयारोपापवादाधिकरणं **तच्च अनिर्वाच्यम्** । **तत्र** पादचतुष्टये विद्याऽऽनन्दाख्यौ **मध्यमपादौ** तयोः विद्याऽऽनन्दपादयोः **मध्यप्रदेशे** उक्तविशेषणविशिष्टं **नित्यवैकुण्ठं** विभाति । यत् नित्यवैकुण्ठमित्युक्तं वस्तुतः **तच्च निरतिशयेति** । तत्रत्यविशेषांशापाये तदेव निर्विशेषत्रैपदं ब्रह्म स्वाज्ञादिदृष्ट्यनुरोधेन नानाव्यपदेशार्हवत् [र्हं सत्] वस्तुतः स्वेन रूपेण भातीत्याह—**स एवेत्यादिना** ॥ ११ ॥

एतद्वेदनफलम्

**य एवं वेद स पुरुषस्तदीयोपासनया तस्य सायुज्यमेत्यसंशयमित्युपनिषत् ॥ १२ ॥**

"एको नारायणो न द्वितीयोऽस्ति कश्चित्" इति वेदनसमकालं निष्प्रतियोगिकब्रह्ममात्रावस्थानलक्षणविकळेबरकैवल्यमेति । **तदीयं** शबळं ब्रह्म

तदुपासनातारतम्यानुरोधेन सालोक्यादिसायुज्यान्तमुक्तिमेतीत्यत्र—“सालोक्यादिचतुर्मुक्तिः मदुपासनया भवेत्” इति श्रुतेः । इत्युपनिषच्छन्दः प्रथमाध्यायसमाप्त्यर्थः ॥ १२ ॥

इत्यथर्वणमहानारायणोपनिषदि पादचतुष्टयस्वरूपनिरूपणं नाम प्रथमोऽध्यायः

# द्वितीयोऽध्यायः

### साकारनारायणस्य नित्यत्वविरोधशङ्का

अथेति होवाच छात्रो गुरुं भगवन्तम्—भगवन् वैकुण्ठस्य नारायणस्य च नित्यत्वमुक्तम् । स एव तुरीयमित्युक्तमेव । वैकुण्ठः साकारो नारायणः साकारश्च । तुरीयं तु निराकारम् । साकारः सावयवो निरवयवं निराकारम् । तस्मात् साकारमनित्यं नित्यं निराकारमिति श्रुतेः । यद्यत् सावयवं तत्तदनित्यमित्यनुमानाच्चेति प्रत्यक्षेण दृष्टत्वाच्च । अतस्तयोरनित्यत्वमेव वक्तुमुचितं भवति । कथमुक्तं नित्यत्वमिति । तुरीयमक्षरमिति श्रुतेः तुरीयस्य नित्यत्वं प्रसिद्धम् । नित्यत्वानित्यत्वे परस्परविरुद्धधर्मौ । तयोरेकस्मिन् ब्रह्मण्यत्यन्तविरुद्धं भवति । तस्माद्वैकुण्ठस्य च नारायणस्य चानित्यत्वमेव वक्तुमुचितं भवति ॥ १ ॥

"आदिनारायण एव तुरीयं ब्रह्म" इत्युक्तम्; तस्य साकारनिराकारताऽसंभवं मन्यमानः पृच्छति—अथेति। नित्यस्वमुक्तं नित्यवैकुण्ठं विभातीति ॥ १ ॥

साकारस्य सोपाधिकनिरुपाधिकभेदः

**सत्यमेव भवतीति देशिकः परिहरति। साकारस्तु द्विविधः सोपाधिको निरुपाधिकश्च ॥ २ ॥**

यत् त्वयोक्तं तत् **सत्यमेव**। अर्धाङ्गीकारे सत्यमित्युक्तिः। परिहारक्रममाह—**साकारस्त्विति**। "ब्रह्मव्यतिरिक्तं न किंचिदस्ति", "एको नारायणो न द्वितीयोऽस्ति कश्चित्", "पश्यतेहापि सन्मात्रमसदन्यत्",

चिन्मात्रमेव चिन्मात्रमखण्डैकरसं रसम्।
सर्ववर्जितचिन्मात्रं ब्रह्ममात्रमसन्न हि ॥

इत्यादिश्रुतिसिद्धनिष्प्रतियोगिकसदसद्रूपब्रह्मातिरिक्तयोः मध्ये ब्रह्म तावत् त्रैपदं स्वाज्ञादिदृष्टिविकल्पितस्वातिरिक्ताविद्यापदमोहे सत्यसति अव्यवहार्यतया स्वमात्रमवशिष्यत इत्यत्र ईशाद्यष्टोत्तरशतवेदान्ताः प्रमाणम्। न हि तत्र विवादोऽस्ति। स्वाज्ञदृष्टिविकल्पितस्वातिरिक्तस्तु व्यष्टिसमष्ट्यात्मकचतुश्चतुरंशविशिष्टस्वाविद्यापादाकारेण तत्तदंशारोपापवादाधिकरणाकारेण साकं वर्तत इति साकार इत्युच्यते। सोऽयं **साकारस्तु द्विविधः**। द्वैविध्यं कथं? इत्यत्र **सोपाधिकनिरुपाधिकभेदात्** द्वैविध्यमिष्यते। साकाराविद्यापदस्थूलादिभागत्रयस्य स्वारोपाधिकरणविश्वविराडोत्रादिप्राज्ञबीजानुज्ञैकरसान्तचैतन्योपाधित्वात् उपाधित्वम्। साकाराविद्यापदतुर्यांशभागत्रयस्य तु पूर्वोक्तभागत्रयापवादाधिकरणद्वितुर्याविकल्पचैतन्योपाधित्वेऽपि विश्वविराडाद्यधिष्ठितभागत्रयवत् बन्धकाभावात् निरुपाधिकत्वमुपचर्यते ॥ २ ॥

सोपाधिकसाकारनिरूपणम्

**तत्र सोपाधिकसाकारः कथमिति ॥ ३ ॥**

**आविद्यकमखिलकार्यकारणजालमविद्यापाद एव नान्यत्र । तस्मात् समस्ताविद्योपाधिः साकारः सावयव एव। सावयवत्वादवश्यमनित्यं भवत्येव ॥ ४ ॥**

तत्र सोपाधिकः साकारः कथं? इति पृष्ट आह—**आविद्यकमिति**। स्वाविद्याद्वयतत्कार्यकारणजालं **आविद्यकं** बाहुळ्येन **अविद्यापाद**प्रविभक्तस्थूलादिभागत्रय **एवो**पलभ्यते **नान्यत्र**। न हि तत्तुर्यभाग एवमुपलभ्यते। यस्मादेवं **तस्मात्** अस्य भागत्रयस्य सोपाधिकसाकारत्वेन सावयवत्वं ततोऽनित्यत्वं च स्यादिति ॥ ३–४ ॥

निरुपाधिकसाकारनिरूपणम्

**सोपाधिकसाकारो वर्णितः । तर्हि निरुपाधिकसाकारः कथमिति ॥ ५ ॥**

**निरुपाधिकसाकारस्त्रिविधः ब्रह्मविद्यासाकारश्चानन्दसाकार उभयात्मकसाकारश्चेति । त्रिविधसाकारोऽपि पुनर्द्विविधो भवति नित्यसाकारो मुक्तसाकारश्चेति। नित्यसाकारस्त्वाद्यन्तशून्यः शाश्वतः। उपासनया ये मुक्तिं गतास्तेषां साकारो मुक्तसाकारः। तस्याखण्डज्ञानेनाविर्भावो भवति। सोऽपि शाश्वतः ॥ ६ ॥**

**सोपाधिकसाकारः** उक्तः, तिष्ठतु एवं, तर्हि **निरुपाधिकसाकारः कथं**? इत्यत्र साकारः स्वाविद्यापदतुर्यांशो हि **निरुपाधिकसाकारः**। विद्याऽऽनन्दादिभेदेन स **त्रिविधः**। तत्र तत्तुर्यांशप्रविभक्तस्थूलभागोऽयं **ब्रह्मविद्यासाकारः**, तत्सूक्ष्मांशस्तु **आनन्दसाकारः**, तद्बीजांशस्तु **उभयात्मकसाकारश्चेति** तुर्यपादस्य

त्रैविध्यमुक्तम् । व्यष्टिसमष्टिविभागतः **त्रिविधसाकारोऽपि पुनर्द्विविधो भवति** । तत्र **समष्टिस्तु नित्यसाकारः**, व्यष्टिस्तु **मुक्तसाकारश्चेति** । तत्र कीदृशोऽयं नित्यसाकार इत्यत्र **आद्यन्तशून्यः शाश्वतः** । तुर्यविराट्सूत्रबीजचैतन्यस्य निरावृतब्रह्ममात्रदृष्टित्वेन संभूतिप्रळयाभावात् आद्यन्तशून्यत्वं, तुर्यतुर्यदृष्ट्या शाश्वतत्वं च सिद्धमेव । व्यष्ट्यात्मकमुक्तसाकारस्वरूपं वर्णयति—**उपासनयेति** । इह लोके श्रवणादिनैरपेक्ष्येण केवलभगवदुपासनया ये सालोक्यादिमुक्तिं भजन्ते **तेषां साकारो मुक्तसाकारः** । **तस्य मुक्तसाकारस्य** भगवदुपदिष्टवेदान्तश्रवणजनिता**खण्डज्ञानेन** ब्रह्मभावा**विर्भावो भवति** । ब्रह्मभावापत्तितः **सोऽपि शाश्वत** इत्यर्थः ॥ ६ ॥

मुक्तसाकारस्य शाश्वतत्वनिरूपणम्

मुक्तसाकारस्त्वैच्छिक इति अन्ये वदन्ति । शाश्वतत्वं कथमिति ॥ ७ ॥

अद्वैताखण्डपरिपूर्णनिरतिशयपरमानन्दशुद्धबुद्धमुक्तसत्यात्मकब्रह्मचैतन्यसाकारत्वात् निरुपाधिकसाकारस्य नित्यत्वं सिद्धमेव । तस्मादेव निरुपाधिकसाकारस्य निरवयवत्वात् स्वाधिकमपि दूरतो निरस्तमेव । निरवयवं ब्रह्मचैतन्यमिति सर्वोपनिषत्सु सर्वशास्त्रसिद्धान्तेषु श्रूयते ॥

**कथं पुनः मुक्तसाकारस्य शाश्वतत्वं**? इत्याक्षिप्य परिहरति—**मुक्तेति** ॥ ७ ॥ भगवदुपदिष्टज्ञानमहिम्ना **अद्वैतेति** । ब्रह्माकाराकारितत्वात् सोपाधिकसाकारापेक्षया **निरुपाधिकसाकारस्येति** । यस्मादेवं **तस्मात्** । सप्रतियोगिकमपि **निरवयवम्** ॥ ८–१० ॥

विद्याऽऽनन्दतुरीयसाकाराणां भेदः

अथ च विद्याऽऽनन्दतुरीयाणामभेद एव श्रूयते सर्वत्र । विद्याऽऽदिसाकारभेदः कथमिति ॥ ९ ॥

सत्यमेवोक्तमिति देशिकः परिहरति । विद्याप्राधान्येन विद्यासाकारः । आनन्दप्राधान्येनानन्दसाकारः । उभयप्राधान्येनोभयात्मक[1]साकारो भवति । प्राधान्येनात्र भेद एव भेदो वस्तुतस्त्वभेद एव ॥ १० ॥

परब्रह्मणः साकारनिराकारभेदविरोधपरिहारः

भगवन्नखण्डाद्वैतपरमानन्दलक्षणपरंब्रह्मणः साकारनिराकारौ विरुद्धधर्मौ । विरुद्धोभयात्मकत्वं कथमिति ॥ ११ ॥

सत्यमेवेति गुरुः परिहरति । यथा सर्वगतस्य निराकारस्य महावायोश्च तदात्मकस्य त्वक्पतित्वेन प्रसिद्धस्य साकारस्य महावायुदेवस्य चाभेद एव श्रूयते सर्वत्र यथा पृथिव्यादीनां व्यापक[2]शरीराणां [3]देवशेषाणां च तद्विलक्षणतदभिन्नव्यापकापरिच्छिन्ननिजमूर्त्याकारदेवताः श्रूयन्ते सर्वत्र तद्वत् परब्रह्मणः सार्वात्मिकस्य साकारनिराकारभेदविरोधो नास्त्येव । विविधविचित्रानन्तशक्तेः परब्रह्मणः स्वरूपज्ञानेन विरोधो न विद्यते । तदभावे सत्यनन्तविरोधो विभाति ॥ १२ ॥

अथ च रामकृष्णाद्यवतारेष्वप्यद्वैतपरमानन्दलक्षणपरंब्रह्मणः परमतत्त्वपरमविभवानुसंधानं स्वीयत्वेन श्रूयते सर्वत्र । सर्वपरिपूर्णस्याद्वैतपरमानन्दलक्षणपरब्रह्मणस्तु किं वक्तव्यम् । अन्यथा सर्वपरिपूर्णस्य परंब्रह्मणः परमार्थतः साकारं विना केवलनिराकारत्वं यद्यभिमतं

[1] साकारश्चेति—मु.   [2] शरीरिणां—अ २.   [3] देवविशे—मु.

**तर्हि केवलनिराकारस्य गगनस्येव परंब्रह्मणोऽपि जडत्वमा[1]पाद्यते ।**
**तस्मात् परंब्रह्मणः परमार्थतः साकारनिराकारौ स्वभावसिद्धौ ॥ १३ ॥**

साकारत्रयभेदस्य तत्प्रविभक्तस्थूलाद्यंशनिमित्तत्वात् ब्रह्मणो विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तभेदेन साकारनिराकारत्वप्रसक्तौ विरोधं मत्वा पृच्छति—**भगवन्निति** ॥ ११ ॥ तत्र विरोधाभावे दृष्टान्तद्वयमाचष्टे—**यथेति** । विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तरूपेण **सार्वात्मिकस्येति** । स्वारोपित**विविधविचित्रानन्तशक्तेः परब्रह्मणः** साकारसापेक्षनिराकारगतविशेषांशापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्र**स्वरूपज्ञानेन** साकारनिराकार**विरोधो न विद्यते** ब्रह्ममात्रस्य निष्प्रतियोगिकनिराकारत्वेन विरोधस्फूर्त्यनवकाशात् ॥ १२ ॥

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम ॥ इति ॥
मत्तः परतरं नान्यत् किंचिदस्ति धनञ्जय ॥

इत्यादिपरमतत्त्वविभवानुसन्धानं **रामकृष्णाद्यवतारेष्वपि श्रूयते** । निष्प्रतियोगिकपूर्णभावमापन्नब्रह्ममात्रस्य **किं वक्तव्यं** यद्भावापत्तितोऽप्यंशावतारा अपि निर्विशेषब्रह्मभावनया अंशांशिभावविकला बभूवुः । साक्षाद्ब्रह्ममात्रस्य निष्प्रतियोगिकत्वेन साकारः तत्सापेक्षनिराकारो वा कथं सेद्धुं पारयति । एवं सर्ववेदान्तसिद्धान्तार्थे केचन स्वाज्ञाः रामकृष्णादीनां साकारतया परमतत्त्वविभवानुसंधानं श्रूयते अंशस्य साकृतित्वेन अंशिब्रह्मणोऽपि साकृतित्वेन अद्वैतपरमानन्दलक्षणब्रह्मत्वमस्तीति किं चित्रमिति मेनिरे । तदानुकूल्येन युक्त्याभासमपि दर्शयन्ति । तथा च स्मृतिः—

यस्य यस्य गृ[ग्र]हे यस्मिन् दृढावेशो भवेत्तराम् ।
तत्तद्भ्रान्त्यनुरोधेन शास्त्रं भवति नान्यथा ॥ इति ॥

[1] पद्यते—अ १, क.

साकृतित्वेन ब्रह्मणो ब्रह्मत्वं, अन्यथा सर्वपरिपूर्णब्रह्मणः परमार्थतः साकारं विना केवलनिराकारत्वं यद्यभिमतं तदा केवलनिराकारगगनवत् परं ब्रह्मापि जडतामियात् । न हि ब्रह्म जडभावं स्पृशति । शिरःप्राण्यादियोगतः साकृतित्वं सच्चिदानन्दानुवृत्त्या निराकृतित्वं च युज्यतं इति केचित् । यस्मादेवं तस्मात् परब्रह्मणः परमार्थतः साकारनिराकारौ स्वभावसिद्धाविति मेनिरे ॥ १३ ॥

आदिनारायणादविद्योदयः

तथाविधस्याद्वैतपरमानन्दलक्षणस्यादिनारायणस्योन्मेषनिमेषाभ्यां मूलाविद्योदयस्थितिलया जायन्ते । कदाचिदात्मारामस्याखिलपरिपूर्णस्यादिनारायणस्य स्वेच्छानुसारेणोन्मेषो जायते । तस्मात् परंब्रह्मणोऽधस्तनपादे सर्वकारणे मूलकारणाव्यक्ताविर्भावो भवति । अव्यक्तान्मूलाऽऽविर्भावो मूलाविद्याऽऽविर्भावश्च । तस्मादेव सच्छब्दवाच्यं ब्रह्माविद्याशबलं भवति । ततो महत् । महतोऽहंकारः । अहंकारात् पञ्चतन्मात्राणि । पञ्चतन्मात्रेभ्यः पञ्चमहाभूतानि । पञ्चमहाभूतेभ्यो ब्रह्मैकपादं व्याप्तमेकमविद्याऽण्डं जायते ॥ १४ ॥

तथा च आकृतिद्वयविशिष्टब्रह्मणः सकाशादेव अव्यक्तादिस्थावरान्तसृष्टिः स्यादित्याह—तथाविधस्येति । तथाविधस्य साकृतेः । तत्रोन्मेषतः सृष्टिमाचष्टे कदाचिदिति । मूलाशब्देन माया । मूलाविद्याशब्देन तत्कार्यमित्यर्थः । यन्मायातत्कार्याविर्भावहेतुः अक्षराख्यं कूटस्थं वा तस्मादेव ॥ १४ ॥

अविद्याऽण्डस्थनारायणमहिमा

तत्र तत्त्वतो गुणातीतशुद्धसत्त्वमयो लीलागृहीतनिरतिशयानन्दलक्षणो मायोपाधिको नारायण आसीत् । स एव नित्यपरिपूर्णः

पादविभूतिवैकुण्ठनारायणः। स चानन्तकोटिब्रह्माण्डानामुदयस्थितिलयाद्यखिलकार्यकारणजालपरमकारणभूतो महामायाऽतीतस्तुरीयः परमेश्वरो जयति। तस्मात् स्थूलविराट्स्वरूपो जायते। स सर्वकारणमूल विराट्स्वरूपो भवति। स चानन्तशीर्षा पुरुष अनन्ताक्षिपाणिपादो भवति। अनन्तश्रवणः सर्वमावृत्य तिष्ठति। सर्वव्यापको भवति। सगुणनिर्गुणस्वरूपो भवति। ज्ञानबलैश्वर्यशक्तितेजःस्वरूपो भवति। विविधविचित्रानन्तजगदाकारो भवति। निरतिशयानन्दमयानन्तपरमविभूतिसमष्ट्या [1]विभ्वाकारो भवति। निरतिशयनिरङ्कुशसर्वज्ञसर्वशक्तिसर्वनियन्तृत्वाद्यनन्तकल्याणगुणाकारो भवति। वाचामगोचरानन्तदिव्यतेजोराश्याकारो भवति। समस्ताविद्याऽण्डव्यापको भवति। स चानन्तमहामायाविलासानामधिष्ठा[2]नविशेषनिरतिशयाद्वैतपरमानन्दलक्षणपरंब्रह्मविलासविग्रहो भवति ॥ १९ ॥

अस्यैकैकरोमकूपान्तरेष्वनन्तकोटिब्रह्माण्डानि [3]स्वावरणानि च जायन्ते। तेष्वण्डेषु सर्वेष्वेकैकनारायणावतारो जायते। नारायणाद्धिरण्यगर्भो जायते। नारायणादण्डविराट्स्वरूपो जायते। नारायणादखिललोकस्रष्टृप्रजापतयो जायन्ते। नारायणादेकादशरुद्राश्च जायन्ते। नारायणादखिललोकाश्च जायन्ते। नारायणादिन्द्रो जायते। नारायणात् सर्वे देवाश्च जायन्ते। नारायणाद्द्वादशादित्याः सर्वे वसवः सर्वे ऋषयः सर्वाणि भूतानि सर्वाणि छन्दांसि नारायणादेव

[1] विभवाका—अ २, क. विश्वाका—उ, मु. [2] नावि—अ२. [3] स्थावराणि—उ, मु.

समुत्पद्यन्ते । नारायणात् प्रवर्तन्ते । नारायणे प्रलीयन्ते । अथ नित्योऽक्षरः परमः स्वराट् । ब्रह्मा नारायणः । शिवश्च नारायणः । शक्रश्च नारायणः । दिशश्च नारायणः । विदिशश्च नारायणः । कालश्च नारायणः । कर्माखिलं च नारायणः । मूर्तामूर्तं च नारायणः । कारणात्मकं सर्वं कार्यात्मकं सकलं नारायणः । तदुभयविलक्षणो नारायणः । परंज्योतिः स्वप्रकाशमयो ब्रह्मानन्दमयो नित्यो निर्विकल्पो निरञ्जनो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् न समोनाधिक इत्यसंशयम् ॥ १६ ॥

स्वोपाधिसत्त्वासत्त्वाभ्यां सगुणनिर्गुणस्वरूपो भवति । नारायणस्य स्वाज्ञविकल्पितोपाधियोगायोगतः सर्वज्ञत्वसर्वशक्तिसर्वनियन्तृत्वाद्यनन्तकल्याण-गुणवत्त्वं निरतिशयाद्वैतपरमानन्दलक्षणलक्षितत्वं वस्तुतो निष्प्रतियोगिक-ब्रह्ममात्रत्वं च युज्यत इत्यस्यामुपनिषदि सर्वत्र एवं द्रष्टव्यमित्यर्थः ॥ १५ ॥ य एवंविधो नारायणः अस्येत्यादि । स्वेन रूपेण नित्यः । न हि नारायणाधिकः समो न्यूनो वाऽस्ति, वस्तुतो नारायणस्य निष्प्रतियोगिकब्रह्ममात्रत्वात् ॥ १६ ॥

एतद्वेदनफलम्

परमार्थतो य एवं वेद सकलबन्धांश्छित्त्वा मृत्युं तीर्त्वा स मुक्तो भवति स मुक्तो भवति । य एवं विदित्वा सदा तमुपास्ते पुरुषः स नारायणो भवति स नारायणो भवतीत्युपनिषत् ॥ १७ ॥

वेदनफलमाह—य इति । आवृत्तिः आदरार्था । इत्युपनिषच्छब्दः द्वितीयाध्यायसमाप्त्यर्थः ॥

इत्यथर्वणमहानारायणोपनिषदि परंब्रह्मणः साकारनिराकारस्वरूपनिरूपणं नाम द्वितीयोऽध्यायः

# तृतीयोऽध्यायः

अविद्याप्रपञ्चो महामायाविलासः

अथ छात्रस्तथेतिहोवाच—भगवन् देशिक परमतत्त्वज्ञ सविलासमहामूलाविद्योदयक्रमः कथितः । तदु प्रपञ्चोत्पत्तिक्रमः कीदृशो भवति विशेषेण कथनीयः । तस्य तत्त्वं वेदितुमिच्छामि ॥ १ ॥

तथेत्युक्त्वा गुरुरित्युवाच—तथाऽनादिसर्वप्रपञ्चो दृश्यते । नित्योऽनित्यो वेति [1]संशयते । प्रपञ्चोऽपि द्विविधः विद्याप्रपञ्चश्चाविद्याप्रपञ्चश्चेति । विद्याप्रपञ्चस्य नित्यत्वं सिद्धमेव नित्यानन्दचिद्विलासात्मकत्वात् अथ च शुद्धबुद्धमुक्तसत्यानन्दस्व[2]रूपत्वाच्च । अविद्याप्रपञ्चस्य [3]नित्यत्वमनित्यत्वं वा कथमिति । [4]प्रवाहतानित्यत्वं वदन्ति केचन । प्रलयादिकं [कस्य] श्रूयमाणत्वादनित्यत्वं वदन्त्यन्ये । उभयं न भवति । पुनः कथमिति । संकोचविकासात्मकमहामाया[5]विलासात्मक एव सर्वोऽप्यविद्याप्रपञ्चः । परमार्थतो न किंचिदस्ति क्षणशून्यानादिमूलाविद्याविलासत्वात् । तत् कथमिति । एकमेवाद्वितीयं ब्रह्म । नेह नानाऽस्ति किंचन । तस्माद्ब्रह्मव्यतिरिक्तं सर्वं बाधितमेव । सत्यमेव परं ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेति ॥ २ ॥

शिष्यो गुरुमुखतो मूलाविद्योत्पत्तिक्रमं बुद्ध्वा तत्कार्यप्रपञ्चोत्पत्तिक्रमबुभुत्सया पृच्छतीत्याह—अथेति । किमिति? तथेति ॥ १ ॥ स्वाज्ञानकालमारभ्य

[1] संशय्यते—मु. [2] रूपाच्च—अ २. रूपत्वात्—उ.
[3] नित्यत्वं वा अनित्यत्वं वा—क. [4] प्रवाहतो—मु. [5] विलास एव—अ २, क.

स्वज्ञानावधिकत्वमनादित्वम् । सोऽयमनादिप्रपञ्चः । "विद्यया देवलोकः" इति श्रुत्यनुरोधेन विद्यया प्रकर्षेण योऽश्नुते प्रकाशते सोऽयं वैकुण्ठादिविद्याप्रपञ्चः विष्ण्वादेः यावदुपाधिस्थायित्वात् स्वाविद्याविजृंभितमार्त्यप्रपञ्चापेक्षया **विद्याप्रपञ्चस्य नित्यत्वं सिद्धमेव** विष्णोः नित्यानन्दचिद्विलासात्मकत्वात् लीलाऽर्थं विष्णुना निर्मितत्वात् **अथ च** परमार्थदृष्ट्या **शुद्धरूपत्वाच्च** । अविद्याप्रपञ्चे- यत्तामाह—**अविद्येति** । चित्रपटवत् **संकोचेत्यादि** । ब्रह्मातिरेकेण **परमार्थत** इति । यस्मादेवं **तस्मात्** । यत्तदपवादाधिष्ठानं तत् **सत्यमेव** ॥ २ ॥

ब्रह्मणः अण्डपरिपालकमहाविष्णौ लयः

ततः सविलासमूलाविद्योपसंहारक्रमः कथमिति ॥ ३ ॥

अत्यादरपूर्वकमतिहर्षेण [1]देशिक उपदिशति—चतुर्युग- सहस्राणि ब्रह्मणो दिवा भवति । तावता कालेन पुनस्तस्य रात्रिर्भवति । द्वे अहोरात्रे एकं दिनं भवति । तस्मिन्नेकस्मिन् दिने आसत्य[2]लोका- नामुदयस्थितिलया जायन्ते । पञ्चदशदिनानि पक्षो भवति । पक्षद्वयं मासो भवति । मासद्वयमृतुर्भवति । ऋतुत्रयमयनं भवति । अयनद्वयं वत्सरो भवति । वत्सरशतं ब्रह्ममानेन ब्रह्मणः परमायुःप्रमाणम् । तावत्कालस्तस्य स्थितिरुच्यते । स्थित्यन्तेऽण्डविराट्पुरुषः स्वांशं हिरण्यगर्भमभ्येति । हिरण्यगर्भः स्वकारणं परमात्मानमण्डपरिपालक- नारायणमभ्येति । पुनर्वत्सरशतं तस्य प्रलयो भवति । [3]तथा जीवाः सर्वे प्रकृतौ प्रलीयन्ते । प्रलये सर्वशून्यं भवति ॥ ४ ॥

[1] देशिकोप—अ १, अ २, क.

[2] लोकान्त—मु.

[3] तदा—मु.

मूलाविद्योपसंहारक्रमबुभुत्सया पृच्छति—तत इति ॥ ३ ॥ पृष्टो गुरुः **अत्यादरपूर्वकम् . . . उपदिशति**—किं तत्? चतुर्युगेति। **पुनर्वत्सरशतं तस्य चतुर्मुखस्य प्रलयो भवति** ॥ ४ ॥

महाविष्णोः आदिविराट्पुरुषे लयः

**तस्य ब्रह्मणः स्थितिप्रलयावादिनारायणस्यांशेनावतीर्णस्याण्डपरिपालकस्य महाविष्णोरहोरात्रिसंज्ञिकौ। ते अहोरात्रे एकं दिनं भवति। एवं दिनपक्षमाससंवत्सरादिभेदाच्च तदीयमानेन शतकोटिवत्सरकालस्तस्य स्थितिरुच्यते। स्थित्यन्ते स्वांशं [1]महाविराट्पुरुषमभ्येति। ततः सावरणं ब्रह्माण्डं विनाशमेति। ब्रह्माण्डावरणं विनश्यति [2]तद्धि विष्णोः स्वरूपम्। तस्य तावत्प्रलयो भवति। प्रलये सर्वशून्यं भवति** ॥ ५ ॥

**शतकोटिवत्सरकालः**—शतकोटिवत्सरपरिमितः कालः, शतसंवत्सरः कालो यस्य कोटाविति वेत्यर्थः ॥ ५–६ ॥

आदिविराट्पुरुषस्य आदिनारायणे लयः

**अण्डपरिपालकमहाविष्णोः स्थितिप्रलयावादिविराट्पुरुषस्याहोरात्रि[3]संज्ञिकौ। ते अहोरात्रे एकं दिनं भवति। एवं दिनपक्षमाससंवत्सरादिभेदाच्च तदीयमानेन शतकोटिवत्सरकालस्तस्य स्थितिरुच्यते। स्थित्यन्ते आदिविराट्पुरुषः स्वांशं मायोपाधिक-**

[1] 'महा' इति (क) कोशे नास्ति.

[2] तस्य—उ.

[3] संज्ञितौ—उ, उ १.

नारायणमभ्येति । तस्य विराट्पुरुषस्य यावत्स्थितिकालस्तावत्प्रलयो भवति । प्रलये सर्वशून्यं भवति ॥ ६ ॥

मायाविलये जीवेशयोः स्वरूपभजनम्

विराट्स्थितिप्रलयौ मूलाविद्याऽण्डपरिपालकस्यादिनारायणस्याहोरात्रिसंज्ञिकौ । ते अहोरात्रे एकं दिनं भवति । एवं दिनपक्षमाससंवत्सरादिभेदाच्च तदीयमानेन शतकोटिवत्सरकालस्तस्य स्थितिरुच्यते । स्थित्यन्ते त्रिपाद्विभूतिनारायणस्येच्छावशान्निमेषो जायते । तस्मान्मूलाविद्याऽण्डस्य सावरणस्य विलयो भवति । ततः सविलासा मूलाविद्या सर्वकार्योपाधिसमन्विता सदसद्विलक्षणाऽनिर्वाच्या लक्षणशून्याऽऽविर्भावतिरोधानात्मिकाऽनाद्यखिलकारणकारणाऽनन्तमहामायाविशेषणविशेषिता परमसूक्ष्ममूलकारणमव्यक्तं विशति । अव्यक्तं विशेद्ब्रह्मणि निरिन्धनो वैश्वानरो यथा । तस्मान्मायोपाधिक आदिनारायणस्तथा स्वस्वरूपं भजति । सर्वे जीवाश्च स्वस्वरूपं भजन्ते । यथा जपाकुसुमसान्निध्याद्रक्तस्फटिकप्रतीतिस्तदभावे शुद्धस्फटिकप्रतीतिः ब्रह्मणोऽपि मायोपाधिवशात् सगुणपरिच्छिन्नादिप्रतीतिरुपाधिविलयान्निर्गुणनिरवयवादिप्रतीतिरित्युपनिषत् ॥ ७ ॥

यस्मादेवं तस्मात् मायोपाधिक इत्यादि । त्र्यन्तैः यत्स्वमात्रमिति पद्यते तत् त्रिपादिति यदुक्तं न संगच्छते, तस्य स्वेच्छावशात् निमेषो जायते इतीच्छानिमेषा[दि]विकारकलनाविशिष्टत्वात् सविशेषं त्रिपादिति चेत्— न, तदिच्छानिमेषादेः तदाप्तावुपायत्वात् । यथा आनन्दवल्ल्यां भूमानन्दावताराय

सोपानरीत्या सार्वभौमाद्यानन्दतारतम्यं श्रूयते तथा अत्रापि सोपानरीत्या चतुर्मुखाद्यादिनारायणान्तचेतनविशिष्टप्रपञ्चापवादाधिकरणत्वमवगम्यते। वस्तुतः शशविषाणकल्पप्रपञ्चस्य निष्प्रतियोगिकाभावरूपतया आधेयत्वासंभवात् आधेयत्वाभावतः तन्निरूपिताधारत्वासंभवात् त्रिपात् निष्प्रतियोगिकब्रह्ममात्रतया स्वाज्ञादिदृष्टिमोहे सत्यसति सदा अवशिष्यत इति सिद्धम्। इत्युपनिषच्छब्दः तृतीयाध्यायसमाप्त्यर्थः ॥ ७ ॥

इत्यथर्वणमहानारायणोपनिषदि मूलाविद्याप्रळयस्वरूपनिरूपणं नाम तृतीयोऽध्यायः

# चतुर्थोऽध्यायः

## त्रैपदचैतन्यस्वरूपम्

ॐ ततस्तस्मान्निर्विशेषमतिनिर्मलं भवति। अविद्या[1]पादमतिशुद्धं भवति। शुद्धबोधानन्दलक्षणकैवल्यं भवति। ब्रह्मणः पादचतुष्टयं निर्विशेषं भवति। अखण्डलक्षणाखण्डपरिपूर्णसच्चिदानन्दस्वप्रकाशं भवति। अद्वितीयमनीश्वरं भवति। अखिलकार्यकारणस्वरूपमखण्डचिद्घनानन्दस्वरूपमतिदिव्यमङ्गलाकारं निरतिशयानन्दतेजोराशिविशेषं सर्वपरिपूर्णानन्तचिन्मयस्तम्भाकारं शुद्धबोधानन्दविशेषाकारमनन्तचिद्विलासविभूतिसमष्ट्याकारमद्भुतानन्दाश्चर्यविभूतिविशेषाकारमनन्तपरिपूर्णानन्ददिव्यसौदामिनीनिचयाकारम्। एवमाकारमद्वितीयाखण्डानन्दब्रह्मस्वरूपं निरूपितम् ॥ १ ॥

[1] पार—अ १, अ २.

स्वातिरिक्तसर्वप्रपञ्चापवादाधारतया वस्तुतो निराधारतया च यत्त्रैपदचै-तन्यमवशिष्यते तत्स्वरूपं विशदयति **ओमिति**। ॐ ओङ्काराग्रविद्योतं तुर्यतुर्यात्मकं त्रैपदं **ततः तस्मात्** स्वाविद्यापादप्रविभक्तस्वाविद्यापादादिपादचतुष्टयापह्नवात् निष्प्रतियोगिका**निर्विशेषं** तथा **अतिनिर्मलं** तदा भवतीव भवति। स्वाज्ञविकल्पि-तस्वाविद्यापदविभ्रमे सत्यसति निष्प्रतियोगिकनिर्विशेषतया स्वयमवशिष्यत इत्यर्थः । बोधार्थं तदेव विशेषणान्तरेण प्रपञ्चयति—**अविद्ये**त्यादिना । यत्र सद्वितीयेश्वरादिकलना न विद्यते तन्निष्प्रतियोगिका**द्वितीयमि**त्यर्थः । यत् स्वाज्ञदशायां **अखिलकार्यकारणस्वरूपं** अनुभूतं तदेव स्वज्ञदशायां **अखण्डेति**। **स्तम्भाकारं** स्तम्भवदचलमित्यर्थः। **एवं . . . निरूपितं**, नातः परं वक्तव्यमव-शिष्यते ॥ १ ॥

पादभेदादिकथनं ब्रह्मस्वरूपकथनमेव

अथ छात्रो वदति—भगवन् पादभेदादिकं कथं कथमद्वैत-स्वरूपमिति निरूपितम् ॥ २ ॥

देशिकः परिहरति—विरोधो न विद्यते । ब्रह्माद्वैतमेव सत्यम्। तथैवोक्तं च । ब्रह्मभेदो न कथितो ब्रह्मव्यतिरिक्तं न किंचिदस्ति । पादभेदादिकथनं तु ब्रह्मस्वरूपकथनमेव । तदेवोच्यते । पादचतुष्ट-यात्मकं [1]ब्रह्म तत्रैकमविद्यापादं पादत्रयममृतं भवति । शाखाऽन्तरो-पनिषत्स्वरूपमेव निरूपितमेव ॥ ३ ॥

एवं स्थितेऽपि ब्रह्मणोऽद्वितीयत्वासंभवमाशंक्य शिष्यः पृच्छति—**अथेति** ॥ २ ॥ शिष्यकृताशङ्कां **देशिकः परिहरति** । **तत्रैकमविद्यापादं**, तदपेक्षया तत्तुर्यभागप्रविभक्तपादत्रयममृतं **भवति** । यत्त्वयोक्तं तच्छाखान्तरे नास्तीत्यत्राह—**शाखान्तरेति** ॥ ३ ॥

[1] ब्रह्मेति त—उ.

उक्तार्थे शाखाऽन्तरसंवादः

तमसस्तु परं ज्योतिः परमानन्दलक्षणम् ।
पादत्रयात्मकं ब्रह्म कैवल्यं परमं शाश्वतमिति ॥ ४ ॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात् ।
तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय ॥ ५ ॥
सर्वेषां ज्योतिषां ज्योतिस्तमसः परमुच्यते ।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं परंज्योतिस्तमस उपरि
विभाति ॥ ६ ॥
यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ।
तदेवर्तं तदु सत्यमाहुस्तदेव सत्यं तदेव ब्रह्म परमं विशुद्धम् ॥ ७ ॥
कथ्यते तमश्शब्देनाविद्या ॥ ८ ॥
पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि ।
त्रिपादूर्ध्व उदैत् पुरुषः पादोऽस्येहाभवात् पुनः ।
ततो विष्वङ् व्यक्रामत् साशनानशने अभि ॥ ९ ॥
विद्याऽऽनन्दतुरीयाख्यपादत्रयममृतं भवति ।
[1]अवशिष्टमविद्याश्रयमिति ॥ १० ॥

तत् कथमित्यत्र—**तमसस्त्विति** । **तमसः** चतुश्चतुरंशाढ्यस्याविद्यापदतत्कार्यात् यत् **परं ज्योतिः** तदेव **परमानन्दलक्षणं पादत्रयात्मकं** तुर्यपादगपादत्रयगतहेयांशापह्नवसिद्धं त्रैपदं **ब्रह्म** ॥ ४ ॥ तद्वेदनोपायं वेदनफलं चाह—

[1] अविशि—उ.

**वेदाहमिति** ॥ ५ ॥ तमसः परस्तात् इत्यंशं विवृणोति—**सर्वेषामिति** । सूर्यादीनां —विश्वविराडोत्रादीनां वा **सर्वेषां**—**ज्योतिषां परं ज्योतिः** । स्वातिरिक्ताविद्यापद-तत्कार्यस्य **तमसः** । स्वातिरिक्तप्रपञ्चस्य **सर्वस्य धातारं** आधारभूतं पोषयितारं वा आधारपोषयितृत्वेनापि **अचिन्त्यरूपं आदित्यवर्णवत् परं ज्योतिः तमसः उपरि विभातीति** विद्यात् ॥ ६ ॥ यत् तमसः परं तदेव ब्रह्मेत्याह—**यदिति** । **ऋत**शब्देन काम्यकर्मफलस्वर्गादिरुच्यते । प्राथमिकसत्यशब्देन समुच्चयानुष्ठान-फलमपरं ब्रह्मोच्यते । द्वितीयसत्यशब्देन निर्विशेषज्ञानफलं परं ब्रह्मोच्यते ॥ ७ ॥ तमःशब्दार्थमाह—**कथ्यत** इति ॥ ८ ॥ पादचतुष्टयसिद्धौ श्रुत्यन्तरसम्मतिमाचष्टे —**पाद** इति । **अस्य** निर्विशेषब्रह्मणः चतुरंशात्मक**विश्वा भूतानि** आद्यः **पादः** स्वाविद्यापाद इत्यर्थः । विश्वशब्देन स्थावरप्रपञ्च उच्यते । भूतशब्देन तदारो-पाद्यधिष्ठानविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तजङ्गमप्रपञ्च उच्यते । **अस्य** निर्विशेष-ब्रह्मणः **दिवि** द्योतनात्मके स्वे महिम्नि यत् **त्रिपात्** चैतन्यं स्वमात्रमवशिष्यते तत् **अमृतं** सन्मात्रमित्यर्थः । त्र्यंशैः स्वमात्रतया पद्यमानत्वात् अस्यामृतत्वं युज्यते । सोऽयं **त्रिपात्पुरुषः** सर्वस्मात् **ऊर्ध्वं उदैत्** उदेति, "अथ तत ऊर्ध्व उदेत्य" इति श्रुतेः । **पुनः अस्य ब्रह्मणः इह** विद्यमानाविद्यापादं स्वाप्त्युपायतया **अभवात्** अभवत् । स्वाप्त्युपायत्वेन यत्पदं कल्पितं **ततः** तस्मात् **अभि** अभितः अशनेन सह प्राणान् धारयतीति **साशनं** जीवजातं च तद्विपरीतं **अनशनं** ईश्वरचैतन्यं च **साशनानशने** "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" इति श्रुत्यनुरोधेन जीवेश्वरौ भूत्वा स्वाविद्यापदस्य **विष्वक्**ति-र्यक्पराक्प्रत्यग्रूपेण **व्यक्रामत्** विशेषेण आक्रान्तवत् । तत्र साशनो जीवो निरशनेश्वरप्रसादतो जीवेशादिकलनां विहाय सर्वावभासकप्रत्यगभिन्नं ब्रह्मास्मीति श्रुत्याचार्यप्रसादतो ज्ञात्वा तज्ज्ञानसमकालं पराक्सापेक्षप्रत्यक्परभेदैक्यकलना-संभवप्रबोधसिद्धं निष्प्रतियोगिकत्रैपदं ब्रह्म स्वावशेषधिया प्रतिपद्यत इत्यर्थः । यस्मादेवं तस्मात् स्वाविद्यापदकल्पना त्रैपदब्रह्माप्त्युपायभूतेति भावः ॥ ९ ॥ कथं पुनः स्वाविद्यापादः स्वाप्त्युपायपदं भजतीत्याशङ्क्य स्वाविद्यापादप्रविभक्तस्वा-

विद्यापादः संसारहेतुः तत्र विरक्तस्य तत्प्रविभक्तविद्याऽऽदिपदत्रयज्ञानममृतत्वसाधनं भवतीत्याह --**विद्येति** ॥ १० ॥

आदिनारायणस्य कीदृशौ उन्मेषनिमेषौ

आत्मारामस्यादिनारायणस्य कीदृशावुन्मेषनिमेषौ तयोः स्वरूपं कथमिति ॥ ११ ॥

गुरुर्वदति—पराग्दृष्टिरुन्मेषः। प्रत्यग्दृष्टिर्निमेषः। प्रत्यग्दृष्ट्या स्वस्वरूपचिन्तनमेव निमेषः। पराग्दृष्ट्या स्वस्वरूपचिन्तनमेवोन्मेषः। यावदुन्मेषकालस्तावन्निमेषकालो भवति। अविद्यायाः स्थितिरुन्मेषकाले। निमेषकाले तस्याः प्रलयो भवति। यथा उन्मेषो जायते तथा चिरंतनातिसूक्ष्मवासनाबलात् पुनरविद्याया उदयो भवति। यथापूर्वमविद्याकार्याणि जायन्ते। कार्यकारणोपाधिभेदाज्जीवेश्वरभेदोऽपि दृश्यते।

कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः।
ईश्वरस्य महामाया तदाज्ञावशवर्तिनी ॥ १२ ॥

यदुन्मेषनिमेषतः स्वाविद्यापदतत्कार्यजातमुत्पादप्रळयौ भजति तदुन्मेषनिमेषकलनां कलयितुं पृच्छतीत्याह—**आत्मारामस्येति** ॥ ११ ॥ शिष्यप्रश्नोत्तरं **गुरुर्वदति**। किमिति? **पराग्दृष्टिरिति**। तूलान्तःकरणवृत्तीनां अनन्तत्वात् मायाया विविधत्वं अनन्तत्वम् ॥ १२ ॥

महामायास्वरूपं तत्तरणोपायश्च

तत्संकल्पानुसारिणी विविधानन्तमहामाया[1]शक्तिसुसेविता अनन्तमहामायाजाल[2]जननमन्दिरा महाविष्णोः क्रीडाशरीररूपिणी

[1] शक्तिः सु—क. [2] जननवन्दिता—उ, अ १; जनमन्दिरा—अ २,

**ब्रह्मादीनामगोचरा । एतां महामायां तरन्त्येव ये विष्णुमेव भजन्ति । नान्ये तरन्ति कदाचन विविधोपायैरपि ॥ १३ ॥**

तत्तरणोपायवैरळ्यात् संसारोऽनन्तो भवेदित्यत्र—**एतामिति** । **ये विष्णुमेव** सोऽहमिति **भजन्ति** । तथा च स्मृतिः—

दैवी ह्येषा गुणमयी मम माया दुरत्यया ।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥

इति ॥ १३ ॥

जीवस्य कार्योपाधित्वम्

**अविद्याकार्याण्यन्तःकरणान्यतीत्य कालान्यनन्तानि जायन्ते । ब्रह्मचैतन्यं तेषु प्रतिबिम्बितं भवति । प्रतिबिम्बा एव जीवा इति कथ्यन्ते । अन्तःकरणोपाधिकाः सर्वे जीवा इत्येवं वदन्ति । महाभूतोत्थसूक्ष्माङ्गोपाधिकाः सर्वे जीवा इत्येके वदन्ति । बुद्धिप्रतिबिम्बितचैतन्यं जीवा इत्यपरे मन्यन्ते । एतेषामुपा[1]धीनामत्यन्तभेदो न विद्यते । सर्वपरिपूर्णो नारायणस्त्वनया निजया क्रीडति स्वेच्छया सदा । तद्वदविद्यमानफल्गुविषयसुखाशयाः सर्वे जीवाः प्रधावन्त्यसारसंसारचक्रे । एवमनादिपरम्परा वर्ततेऽनादिसंसारविपरीतभ्रमादित्युपनिषत् ॥ १४ ॥**

जीवस्य कार्योपाधित्वं कथमित्यत्र—**अविद्येति** । **अविद्याकार्याणि** अनन्तकोटिवृत्तिविशिष्टतूलान्तः**करणानि अतीत्य** अधिकृत्य स्वातिरिक्तकलनां

[1] धिनात्यन्त—क, अ २,

कलयन्तीति कलाः वासनाः ताः एव कालाः विविधवासनाः भवन्ति । काला इत्यत्र **कालानीति** लिङ्गव्यत्ययः । **अत्यन्तभेदो न विद्यते**—कथं ? **सर्वपरिपूर्ण** इति । विविधविषयतृष्णाऽतृष्णे जीवजातबन्धमोक्षहेतू भवतः । यथा **नारायणः स्वेच्छया क्रीडति**, नारायणेच्छाया अजडात्मगोचरत्वात्, न हि सा तं पराग्भावे योजयितुं पारयति, **तद्वत्** जीवोऽपि इच्छयैव संसरति । तदिच्छाया जडविषयगोचरत्वात् तयाऽऽवृत आभूतसंप्लवं संसरतीत्यर्थः । **इति** शब्दश्चतुर्थाध्यायसमाप्त्यर्थः । **उपनिषच्छब्दः** पूर्वकाण्डसमाप्त्यर्थश्च ॥ १४ ॥

**इति अथर्वणमहानारायणमहोपनिषदि महामायाऽतीताखण्डाद्वैतपरमानन्दलक्षणपरब्रह्मणः परमतत्त्वस्वरूपनिरूपणं नाम चतुर्थोऽध्यायः**

**पूर्वकाण्डः समाप्तः**

# पञ्चमोऽध्यायः

नष्टाविद्यायाः पुनरुदयः

**अथ शिष्यो वदति गुरुं भगवन्तं नमस्कृत्य——भगवन् सर्वात्मना नष्टाया अविद्यायाः पुनरुदयः कथम् ॥ १ ॥**

**सत्यमेवेति गुरुरिति होवाच । प्रावृट्कालप्रारम्भे यथा मण्डूकादीनां प्रादुर्भावः तद्वत् सर्वात्मना नष्टाया अविद्याया उन्मेषकाले पुनरुदयो भवति ॥ २ ॥**

नष्टाविद्यायाः पुनरुदयः कथमिति देशिकं शिष्यः पृच्छतीत्याह-**अथेति** ॥ १–२ ॥

संसारमोक्षोपायजिज्ञासा

भगवन् कथं जीवानामनादिसंसारभ्रमः । तन्निवृत्तिर्वा कथमिति । कथं मोक्षमार्गस्वरूपं च । मोक्षसाधनं कथमिति । को वा मोक्षोपायः । कीदृशं मोक्षस्वरूपम् । का वा सायुज्यमुक्तिः । एतत् सर्वं तत्त्वतः कथनीयमिति ॥ ३ ॥

पुनः शिष्यो गुरुं जीवानां संसारतन्मोक्षौ कथं? इत्याशङ्क्य पृच्छतीत्याह—भगवन्निति ॥ ३ ॥

संसारस्वरूपतत्कारणनिरूपणम्

अत्यादरपूर्वकमतिहर्षेण शिष्यं बहूकृत्य गुरुर्वदति—श्रूयतां सावधानेन । कुत्सितानन्तजन्माभ्यस्तात्यन्तोत्कृष्टविविधविचित्रानन्तदुष्कर्मवासनाजालविशेषैर्देहात्मविवेको न जायते । तस्मादेव दृढतरदेहात्मभ्रमो भवति । अहमज्ञः किंचिज्ज्ञोऽहमहं जीवोऽहमत्यन्त[1]दुःखाकरोऽहमनादिसंसारीति भ्रमवासनाबलात् संसार एव प्रवृत्तिः । तन्निवृत्त्युपायः कदाऽपि न विद्यते । मिथ्याभूतान् स्वप्नतुल्यान् विषयभोगाननुभूय विविधानसंख्यानतिदुर्लभान् मनोरथाननवरतमाशास्यमान अतृप्तः सदा परिधावति । विविधविचित्रस्थूलसूक्ष्मोत्कृष्टनिकृष्टानन्तदेहान् परिगृह्य तत्तद्देहविहितविविधविचित्रानेकशुभाशुभप्रारब्धकर्माण्यनुभूय तत्तत्कर्मफलवासनाजालवासितान्तःकरणानां पुनःपुनस्तत्तत्कर्मफलविषयप्रवृत्तिरेव जायते ।

[1] दुःखाकारो—क, मु.

संसारनिवृत्तिमार्ग[1]प्रवृत्तिरपि न जायते। तस्मादनिष्टमेवेष्टमिव भाति। इष्टमेवानिष्टमिव भात्यनादिसंसारविपरीतभ्रमात्। तस्मात् सर्वेषां जीवानामिष्टविषये बुद्धिः सुखबुद्धिर्दुःखबुद्धिर्भवति। परमार्थतस्त्व-बाधितब्रह्मसुखविषये प्रवृत्तिरेव न जायते तत्स्वरूपज्ञानाभावात्। तत्किमिति न विद्यते। कथं बन्धः कथं मोक्ष इति विचाराभावाच्च। तत्कथमिति। अज्ञानप्राबल्यात्। कस्मादज्ञानप्राबल्यमिति। भक्तिज्ञानवैराग्यवासनाऽभावाच्च। तदभावः कथमिति। अत्यन्तान्तः-करण[2]मालिन्यविशेषात्॥ ४॥

शिष्यं स्वाभिमुखीकृत्य वक्तुमुपक्रमते। किं तत्? **कुत्सितेति**। **असल्लौ-किकवत्** **देहात्मेति**। **इष्टमेवानिष्टमिव भाति** कुतः? **अनादीति**। **ब्रह्मसुखविषये प्रवृत्तिरेव न जायते**—कुतः? **तत्स्वरूपेति**। भगवदनन्यभक्तीति॥ ४॥

सत्सङ्गादन्तःकरणशुद्धिः

अतः संसारतरणोपायः कथमिति॥ ५॥

देशिकस्तमेव कथयति। सकलवेदशास्त्रसिद्धान्तरहस्यजन्म-जन्माभ्यस्तात्यन्तोत्कृष्टसुकृतपरिपाकवशात् सद्भिः सङ्गो जायते। तस्माद्विधिनिषेधविवेको भवति। ततः सदाचारप्रवृत्तिर्जायते। सदाचारादखिलदुरितक्षयो भवति। तस्मादन्तःकरणमतिविमलं भवति॥ ६॥

यत एवं **अतः**॥ ५॥ **देशिकस्तमेव कथयति**—किं तत्? **सकलेति**॥ ६–११॥

[1] प्रवृत्तिः कदाऽपि—अ १, मु.   [2] मलिनवि—मु, क, अ १, अ २.

सद्गुरुकटाक्षात् तत्त्वज्ञानलाभः

ततः सद्गुरुकटाक्षमन्तःकरणमाकाङ्क्षति। तस्मात् सद्गुरुकटाक्षलेशविशेषेण सर्वसिद्धयः सिध्यन्ति। सर्वबन्धाः प्रविनश्यन्ति। श्रेयोविघ्नाः सर्वे प्रलयं यान्ति। सर्वाणि श्रेयांसि स्वयमेवायान्ति। यथा जात्यन्धस्य रूपज्ञानं न विद्यते तथा गुरूपदेशेन विना कल्पकोटिभिस्तत्त्वज्ञानं न विद्यते। तस्मात् सद्गुरुकटाक्षलेशविशेषेणाचिरादेव तत्त्वज्ञानं भवति ॥ ७ ॥

भगवत्कथाश्रवणध्यानादिभिः हृदये परमात्माविर्भावः

यदा सद्गुरुकटाक्षो भवति तदा भगवत्कथाश्रवणध्यानादौ श्रद्धा जायते। तस्माद्धृदयस्थितानादिदुर्वासनाग्रन्थिविनाशो भवति। ततो हृदयस्थिताः कामाः सर्वे विनश्यन्ति। तस्माद्धृदयपुण्डरीककर्णिकायां परमात्माविर्भावो भवति ॥ ८ ॥

भक्तिवैराग्याभ्यां ज्ञानपरिपाकः

ततो दृढतरा वैष्णवी भक्तिर्जायते। ततो वैराग्यमुदेति। वैराग्याद्बुद्धिविज्ञानाविर्भावो भवति। अभ्यासात्तज्ज्ञानं क्रमेण परिपक्वं भवति ॥ ९ ॥

जीवन्मुक्तदशा

पक्वविज्ञानाज्जीवन्मुक्तो भवति। ततः शुभाशुभकर्माणि सर्वाणि सवासनानि नश्यन्ति। ततो दृढतरशुद्धसात्त्विकवासनया भक्त्यतिशयो

भवति । भक्त्यतिशयेन नारायणः सर्वमयः सर्वावस्थासु प्रविभाति । सर्वाणि जगन्ति नारायणमयानि प्रविभान्ति । नारायणव्यतिरिक्तं न किंचिदस्ति । इत्येतद्बुद्ध्या विहरत्युपासकः सर्वत्र ॥ १० ॥

निरन्तरसमाधिपरंपराभिर्जगदीश्वराकाराः सर्वत्र सर्वावस्थासु प्रविभान्ति । अस्य महापुरुषस्य क्वचित्क्वचिदीश्वरसाक्षात्कारो भवति ॥ ११ ॥

देहत्यागानन्तरं उपर्युपरि गमनेन परमानन्दप्राप्तिः

अस्य देहत्यागेच्छा यदा भवति तदा वैकुण्ठपार्षदाः सर्वे समायान्ति । ततो भगवद्ध्यानपूर्वकं हृदयकमले व्यवस्थितमात्मानं स्वमन्तरात्मानं संचिन्त्य सम्यगुपचारैरभ्यर्च्य हंसमन्त्रमुच्चरन् सर्वाणि द्वाराणि संयम्य सम्यङ् मनो निरुध्य चोर्ध्वगेन वायुना सह प्रणवेन प्रणवानुसंधानपूर्वकं शनैः शनैराब्रह्मरन्ध्राद्विनिर्गत्य सोऽहमिति मन्त्रेण द्वादशान्तस्थितपरमात्मानमेकीकृत्य पञ्चोपचारैरभ्यर्च्य पुनः सोऽहमिति मन्त्रेण षोडशान्तस्थितज्ञानात्मानमेकीकृत्य सम्यगुपचारैरभ्यर्च्य प्राकृतपूर्वदेहं परित्यज्य [1]पुरःकल्पितमन्त्रमयशुद्धब्रह्मतेजोमयनिरतिशयानन्दमयमहाविष्णुसारूप्यविग्रहं परिगृह्य सूर्यमण्डला[2]न्तर्गतानन्तदिव्यचरणारविन्दाङ्गुष्ठनिर्गतनिरतिशयानन्दमयामरनदीप्रवाहमाकृष्य भावनयाऽत्र स्नात्वा वस्त्राभरणाद्युपचारैरात्मपूजां विधाय साक्षान्नारायणो भूत्वा ततो गुरुनमस्कारपूर्वकं प्रणवगरुडं

[1] पुनः—अ १, मु.  [2] नन्तर्ग—क, अ २.

ध्यात्वा ध्यानेनाविर्भूतमहाप्रणवगरुडं पञ्चोपचारैराराध्य गुर्वनुज्ञया प्रदक्षिणनमस्कारपूर्वकं प्रणवगरुडमारुह्य महाविष्णोः समस्तासाधारण-चिह्नचिह्नितो महाविष्णोः समस्तासाधारणदिव्यभूषणैर्भूषितः सुदर्शन-पुरुषं पुरस्कृत्य विष्वक्सेनपरिपालितो वैकुण्ठपार्षदैः परिवेष्टितो नभोमार्गमाविश्य पार्श्वद्वयस्थितानेकपुण्यलोकानतिक्रम्य तत्रत्यैः पुण्यपुरुषैरभिपूजितः सत्यलोकमाविश्य ब्रह्माणमभ्यर्च्य ब्रह्मणा च सत्यलोकवासिभिः सर्वैरभिपूजितः शैवमीशानकैवल्यमासाद्य शिवं ध्यात्वा शिवमभ्यर्च्य शिवगणैः सर्वैः शिवेन चाभिपूजितो ग्रहर्षि-मण्डलानतिक्रम्य सूर्यसोममण्डले भित्त्वा कीलकनारायणं ध्यात्वा ध्रुवमण्डलस्य दर्शनं कृत्वा भगवन्तं ध्रुवमभिपूज्य ततः शिंशुमारचक्रं विभिद्य शिंशुमारप्रजापतिमभ्यर्च्य चक्रमध्यगतं सर्वाधारं सनातनं महाविष्णुमाराध्य तेन पूजितस्तत उपर्युपरि गत्वा परमानन्दं प्राप ॥ १२ ॥

ततो वैकुण्ठवासिनः सर्वे समायान्ति । तान् सर्वान् सुसंपूज्य तैः सर्वैरभिपूजितश्चोपर्युपरि गत्वा विरजानदीं प्राप्य तत्र स्नात्वा भग-वद्ध्यानपूर्वकं पुनर्निमज्ज्य तत्रापञ्चीकृतभूतोत्थसूक्ष्माङ्गं भोगसाधनं सूक्ष्मशरीरमुत्सृज्य केवलमन्त्रमयदिव्यतेजोमयनिरतिशयानन्दमय-महाविष्णुसारूप्यविग्रहं परिगृह्य तत उन्मज्ज्यात्मपूजां विधाय प्रदक्षिणनमस्कारपूर्वकं ब्रह्ममयवैकुण्ठमाविश्य तत्रत्यान् विशेषेण संपूज्य तन्मध्ये च ब्रह्मानन्दमयानन्तप्राकारप्रासादतोरणविमानोपवनाव-

लिभिर्ज्वलच्छिखरैरुपलक्षितो निरुपमनित्यनिरवद्यनिरतिशयनिरवधिक-ब्रह्मानन्दाचलो विराजते ॥ १३ ॥

तदुपरि ज्वलति निरतिशयानन्ददिव्यतेजोराशिः। तदभ्यन्तर-संस्थाने शुद्धबोधानन्दलक्षणं विभाति। तदन्तराले चिन्मयवेदिका आनन्दवेदिका आनन्दवनविभूषिता। तदभ्यन्तरे अमिततेजोराशिस्त-दुपरि ज्वलति। परममङ्गलासनं विराजते। तत्पद्मकर्णिकायां शुद्धशेषो भोगासनं विराजते। तस्योपरि समासीनमानन्दपरिपालक-मादिनारायणं ध्यात्वा तमीश्वरं विविधोपचारैराराध्य प्रदक्षिण-नमस्कारान् विधाय तदनुज्ञातश्चोपर्युपरि गत्वा पञ्चवैकुण्ठानतीत्याण्ड-विराट्कैवल्यं प्राप्य तं समाराध्योपासकः परमानन्दं प्रापेत्यु-पनिषत् ॥ १४ ॥

यदि स्वातिरिक्तकलनामुमुक्षुः तदा भगवद्भावापत्तिसाधनवेदान्तश्रवणमनन-निदिध्यासनाविर्भूतसम्यज्ज्ञानेन स्वातिरिक्ताविद्यापदतत्कार्यजातमस्ति नास्तीति विभ्रमापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति तन्मात्रावस्थानलक्षणविकळे-बरकैवल्यरूपेण विद्वानवशिष्यते। यद्येवमधिकारी न भवति तदा स्वातिरेकेण देहादिकं परिकल्प्य तदुपाधिकजीवोऽस्मीत्यात्मानं ज्ञात्वा तदनुरोधेन अस्मात् लोकात् सर्वोर्ध्वप्रदेशे वैकुण्ठासनं ब्रह्म विजयते, स्वोपासनातारतम्येण तत्रैव गत्वा सालोक्यादिचतुर्विधमुक्तिषु स्वाभिमतमुक्तिरेव परमपुरुषार्थः इति यो मन्यते सोऽयं विद्वान् क्रमेण तत्पदमेत्य तत्रत्यवैकुण्ठासननारायणमुखतो निखिलवेदान्त-श्रवणं कृत्वा मननादिप्रादुर्भूतसम्यज्ज्ञानालङ्काराद्वैती भूत्वाऽऽचतुष्पदलय-मत्रोषित्वा अथ चतुष्पदैक्यसमयेऽस्य निर्वासनतया पुनर्भवबीजवैरळ्यात् निष्प्रति-योगिकत्रैपदब्रह्ममात्रावस्थानलक्षणविकळेबरकैवल्यं विद्वान् उपैतीत्याह—**अस्ये-**

त्यादिना । य एवमुपासको भवति अस्येति । ईशानः केवलरूपेण यत्रास्ते तत् ईशानकैवल्यं कैलास इत्यर्थः । तत्रत्यं शिवम् ॥ १२ ॥ ब्रह्मानन्दाचलो विराजते—तत्र प्रविष्टानामचलनदीविमानादिकं सर्वं परोक्षतया निरतिशयनिरवधिकसच्चिदानन्दघनवत् भासत इति । सर्वत्र एवं वेदितव्यम् ॥ १३ ॥ यद्ब्रह्ममयवैकुण्ठं विराजत इत्युक्तं तदुपरि ज्वलति । आनन्दपरिपालकं आनन्दरूपेण सर्वपरिपालकमित्यर्थः । तत्परितोऽवस्थितान् पञ्चवैकुण्ठान् । अण्डोपाधितया विराजत इति अण्डविराट् यद्वैकुण्ठे केवलमास्ते तत् अण्डविराट्कैवल्यम् । अर्वाग्गतवैकुण्ठापेक्षया एतस्य परमानन्दत्वं, सातिशयमित्यर्थः, पुनर्गमनदर्शनात् । इत्युपनिषच्छब्दः पञ्चमाध्यायसमाप्त्यर्थः ॥ १४ ॥

इत्यथर्वणमहानारायणोपनिषदि संसारतरणोपायकथनद्वारा परममोक्षमार्गस्वरूपनिरूपणं नाम पञ्चमोऽध्यायः

---

## षष्ठोऽध्यायः

ब्रह्माण्डस्वरूपावबोधः

तत उपासकः परंमानन्दं प्राप । सावरणं ब्रह्माण्डं च भित्त्वा परितः समवलोक्य ब्रह्माण्डस्वरूपं निरीक्ष्य परमार्थतस्तत्स्वरूपं ब्रह्मज्ञानेनावबुध्य समस्तवेदशास्त्रेतिहासपुराणानि [1]समस्तविद्याजालानि ब्रह्मादयः सुराः सर्वे समस्ताः परमर्षयश्चाण्डाभ्यन्तरप्रपञ्चैकदेशमेव वर्णयन्ति । अण्डस्वरूपं न जानन्ति । ब्रह्माण्डाद्बहिः प्रपञ्चज्ञानं न

[1] समस्तावि—उ.

जानन्त्येव । कुतोऽण्डान्तरान्तर्बहिःप्रपञ्चज्ञानं दूरतो मोक्षप्रपञ्चज्ञानमविद्याप्रपञ्चज्ञानं चेति ॥ १ ॥

कथं ब्रह्माण्डस्वरूपमिति ॥ २ ॥

कुक्कुटाण्डाकारं महदादिसमष्ट्याकारमण्डं तपनीयमयं तप्तजाम्बूनदप्रभमुद्यत्कोटिदिवाकराभं चतुर्विधसृष्ट्युपलक्षितं महाभूतैः पञ्चभिरावृतं महदहंकृतितमोभिश्च मूलप्रकृत्या परिवेष्टितम् ॥ ३ ॥

अण्डभित्तिविशालं सपादकोटियोजनप्रमाणम् । एकैकावरणं तथैव ॥ ४ ॥

अण्डप्रमाणं परितोऽयुतद्वयकोटियोजनप्रमाणं महामण्डूकाद्यनन्तशक्तिभिरधिष्ठितं नारायणक्रीडाकन्तुकं परमाणुवद्विष्णुलोमसुसंलग्नमदृष्टाश्रुतविविधविचित्रानन्तविशेषैरुपलक्षितम् ॥ ९ ॥

ततः किमित्याशङ्क्य इतोऽप्यतिशयानन्दाप्तिद्वारा वक्ष्यमाणलक्षणब्रह्माण्डभेदनपूर्वकमूर्ध्वगमनं ब्रह्माण्डयाथात्म्यविवेचनं अविद्यालक्ष्मीदर्शनं विराट्पदप्राप्त्यादिकं भवेदित्याह—तत इति । अविद्याप्रपञ्चज्ञानं चेति—अण्डाज्ञाने अण्डबाह्यब्रह्मज्ञानं कुत इत्यर्थः ॥ १ ॥ ब्रह्माण्डेयत्तापरिज्ञानाय पृच्छति—कथमिति ॥ २–९ ॥

### अनन्तकोटिब्रह्माण्डस्वरूपावबोधः

अस्य ब्रह्माण्डस्य समन्ततः स्थितान्येतादृशान्यनन्तकोटिब्रह्माण्डानि सावरणानि ज्वलन्ति ॥ ६ ॥

चतुर्मुखपञ्चमुखषण्मुखसप्तमुखाष्टमुखादिसंख्याक्रमेण सहस्रावधिमुखान्तैर्नारायणांशैः रजोगुणप्रधानैरेकैकसृष्टिकर्तृभिरधिष्ठितानि

विष्णुमहेश्वराख्यैर्नारायणांशैः सत्त्वतमोगुणप्रधानैरेकैकस्थितिसंहार-कर्तृभिरधिष्ठितानि महाजलौघमत्स्यबुद्बुदानन्तसङ्घवद्भ्रमन्ति ॥ ७ ॥

क्रीडासक्तजालककरतलामलकबृन्दवन्महाविष्णोः करतले विलसन्त्यनन्तकोटिब्रह्माण्डानि ॥ ८ ॥

जलयन्त्रस्थघटमालिकाजालवन्महाविष्णोरेकैकरोमकूपान्तरेष्वनन्तकोटिब्रह्माण्डानि सावरणानि भ्रमन्ति ॥ ९ ॥

महाविराट्पदप्राप्तिः

समस्तब्रह्माण्डान्तर्बहिःप्रपञ्चरहस्यं ब्रह्मज्ञानेनावबुध्य विविधविचित्रानन्तपरमविभूतिसमष्टिविशेषान् समवलोक्यात्याश्चर्यामृतसागरे निमज्ज्य निरतिशयानन्दपारावारो भूत्वा समस्तब्रह्माण्डजालानि समुल्लङ्घ्यामितापरिच्छिन्नानन्ततमःसागरमुत्तीर्य मूलाविद्यापुरं दृष्ट्वा विविधविचित्रानन्तमहामायाविशेषैः परिवेष्टितां अनन्तमहामायाशक्तिसमष्ट्याकारां अनन्तदिव्यतेजोज्वालाजालैरलंकृतां अनन्तमहामायाविलासानां परमाधिष्ठानविशेषाकारां शश्वदमितानन्दाचलोपरिविहारिणीं मूलप्रकृतिजननीं अविद्यालक्ष्मीमेवं ध्यात्वा विविधोपचारैराराध्य समस्तब्रह्माण्डसमष्टिजननीं वैष्णवीं महामायां नमस्कृत्य तया चानुज्ञातश्चोपर्युपरि गत्वा महाविराट्पदं प्राप ॥ १० ॥

"ब्रह्मातिरिक्तं न किञ्चिदस्ति" इति ब्रह्मज्ञानेनावबुध्य ॥ १०–११ ॥

महाविराट्स्वरूपं तज्ज्ञानफलं च

महाविराट्स्वरूपं कथमिति ॥ ११ ॥

समस्ताविद्यापादको विराट् ॥ १२ ॥

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोहस्त उत विश्वतस्पात् ।
सं बाहुभ्यां नमति सं पतत्रैर्द्यावापृथिवी जनयन् देव एकः ॥१३॥
न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥ १४ ॥

मनोवाचामगोचरमादिविराट्स्वरूपं ध्यात्वा विविधोपचारैराराध्य तदनुज्ञातश्चोपर्युपरि गत्वा विविधविचित्रानन्तमूलाविद्याविलासानवलोक्योपासकः परमकौतुकं प्राप ॥ १५ ॥

समस्तशब्देन अविद्यापादप्रविभक्ताविद्यापादादिचतुरंशो गृह्यते, स एवोपाधिः यस्य सोऽयं **समस्ताविद्यापादकः** तद्रूपेण विराजत इति **विराट्** ॥ १२ ॥ तत्स्वरूपं तज्ज्ञानफलं चाह—**विश्वत** इति । मन्त्रद्वयं श्वेताश्वतरोपनिषदि पदशो व्याख्यातम् ॥ १३–१४ ॥ स्वाज्ञदृष्ट्या विश्वरूपं, स्वज्ञदृष्ट्या विश्वातीतत्वेन **मनोवाचामगोचरम्** ॥ १५ ॥

### महायोगमायाविलासावलोकनम्

अखण्डपरिपूर्णपरमानन्दलक्षणपरब्रह्मणः समस्तस्वरूपविरोधकारिणी अपरिच्छिन्नतिरस्करिण्याकारा वैष्णवी महायोगमाया मूर्तिमद्भिरनन्तमहामायाजालविशेषैः परिषेविता । तस्याः पुरमतिकौतुकमत्याश्चर्यसागरानन्दलक्षणममृतं भवति । अविद्यासागरप्रतिबिम्बितनित्यवैकुण्ठप्रतिवैकुण्ठमिव विभाति ॥ १६ ॥

उपासकस्तत्पुरं प्राप्य योगमायालक्ष्मीं ध्यात्वा विविधोपचारैराराध्य तया संपूजितश्चानुज्ञातश्चोपर्युपरि गत्वा अनन्तयोगमायाविलासानवलोक्योपासकः परमकौतुकं प्राप ॥ १७ ॥

मूलाविद्या कीदृशी ? तदावासस्थानं कीदृशं ? इत्यत आह—**अखण्डेति** । स्वाज्ञानकालस्थायित्वात् अविद्यासागरेत्यादि ॥ १६–२३ ॥

पादविभूतिवैकुण्ठे नारायणाराधनम्

तत उपरि पादविभूतिवैकुण्ठपुरमाभाति । अत्याश्चर्या[1]नन्तविभूतिसमष्ट्याकारं आनन्दरसप्रवाहैरलंकृतं अमिततरङ्गिण्याः प्रावाहैरतिमङ्गलं ब्रह्मतेजोविशेषाकारैः अनन्तब्रह्मवनैः अभितस्ततं अनन्तनित्यमुक्तैः अभिव्याप्तं अनन्तचिन्मयप्रासादजालसंकुलं अनादिपादविभूतिवैकुण्ठमेवमाभाति । तन्मध्ये च चिदानन्दाचलो विभाति ॥

तदुपरि ज्वलति निरतिशयानन्ददिव्यतेजोराशिः । तदभ्यन्तरे परमानन्दविमानं विभाति । तदभ्यन्तरसंस्थाने चिन्मयासनं विराजते । तत्पद्मकर्णिकायां निरतिशयदिव्यतेजोराश्यन्तरसमासीनं आदिनारायणं ध्यात्वा विविधोपचारैस्तं समाराध्य तेनाभिपूजितस्तदनुज्ञातश्चोपर्युपरि गत्वा सावरणमविद्याऽण्डं च भित्त्वाऽविद्यापादमुल्लङ्घ्य विद्याऽविद्ययोः सन्धौ विष्वक्सेनवैकुण्ठपुरमाभाति ॥ १९ ॥

विष्वक्सेनप्रसादेन विद्यामयवैकुण्ठावलोकनम्

अनन्तदिव्यतेजोज्वालाजालैरभितोऽनिशं प्रज्वलन्तं अनन्तबोधानन्दव्यूहैरभितस्ततं शुद्धबोधविमानावलिभिर्विराजितं अनन्ता-

[1] नन्द—अ १.

नन्दपर्वतैः परमकौतुकमाभाति । तन्मध्ये च कल्याणाचलोपरि शुद्धानन्दविमानं विभाति । तदभ्यन्तरे दिव्यमङ्गलासनं विराजते । तत्पद्मकर्णिकायां ब्रह्मतेजोराश्यभ्यन्तरसमासीनं भगवदनन्तविभूतिविधिनिषेधपरिपालकं सर्वप्रवृत्तिसर्वहेतुनिमित्तकं निरतिशयानन्दलक्षणमहाविष्णुस्वरूपं अखिलापवर्गपरिपालकं अमितविक्रमं एवंविधं विष्वक्सेनं ध्यात्वा प्रदक्षिणनमस्कारान् विधाय विविधोपचारैराराध्य तदनुज्ञातश्चोपर्युपरि गत्वा विद्याविभूतिं प्राप्य विद्यामयान् अनन्तवैकुण्ठान् परितोऽवस्थितान् ब्रह्मतेजोमयानवलोक्योपासकः परमानन्दं प्राप ॥ २० ॥

ब्रह्मविद्यावैकुण्ठद्वारा बोधानन्दविमानप्राप्तिः

विद्यामयान् अनन्तसमुद्रान् अतिक्रम्य ब्रह्मविद्यातरङ्गिणीमासाद्य तत्र स्नात्वा भगवद्ध्यानपूर्वकं पुनर्निमज्ज्य मन्त्रमयशरीरमुत्सृज्य विद्याऽऽनन्दमयामृतदिव्यशरीरं परिगृह्य नारायणसारूप्यं प्राप्य आत्मपूजां विधाय ब्रह्ममयवैकुण्ठवासिभिः सर्वैर्नित्यमुक्तैः सुपूजितस्ततो ब्रह्मविद्याप्रवाहैः आनन्दरसनिर्भरैः क्रीडानन्तपर्वतैरनन्तैः अभिव्याप्तं ब्रह्मविद्यामयैः सहस्र[1]प्राकारैः आनन्दामृतमयैः दिव्यगन्धस्वभावैः चिन्मयैः अनन्तब्रह्मवनैः अतिशोभितमुपासकस्त्वेवंविधं ब्रह्मविद्यावैकुण्ठमाविश्य तदभ्यन्तरस्थितात्यन्तोन्नतबोधानन्दप्रासादाग्रस्थितप्रणवविमानोपरिस्थितां अपारब्रह्मविद्यासाम्राज्याधिदेवतां

[1] प्रका—उ.

अमोघनिजमन्दकटाक्षेण अनादिमूलाविद्याप्रलयकरीं अद्वितीयामेकां अनन्तमोक्षसाम्राज्यलक्ष्मीमेवं ध्यात्वा प्रदक्षिणनमस्कारान् विधाय विविधोपचारैराराध्य पुष्पाञ्जलिं समर्प्य स्तुत्वा स्तोत्रविशेषैः तयाऽभिपूजितः तदनुज्ञातश्चोपर्युपरि गत्वा ब्रह्मविद्यातीरे गत्वा बोधानन्दमयाननन्तवैकुण्ठानवलोक्य निरतिशयानन्दं प्राप्य बोधानन्दमयाननन्तसमुद्रानतिक्रम्य गत्वागत्वा ब्रह्मवनेषु परममङ्गलाचलश्रेणिषु ततो बोधानन्दविमानपरंपरासु उपासकः परमानन्दं प्राप ॥ २१ ॥

तुलसीवैकुण्ठप्राप्तिः

ततः श्रीतुलसीवैकुण्ठपुरमाभाति परमकल्याणं अनन्तविभवं अमिततेजोराश्याकारं अनन्तब्रह्मतेजोराशिसमष्ट्याकारं चिदानन्दमयानेकप्राकारविशेषैः परिवेष्टितं अमितबोधानन्दाचलोपरिस्थितं बोधानन्दतरङ्गिण्याः प्रवाहैरतिमङ्गलं निरतिशयानन्दैः अनन्तबृन्दावनैः अतिशोभितं अखिलपवित्राणां परमपवित्रं चिद्रूपैः अनन्तनित्यमुक्तैः अत्यभिव्याप्तं आनन्दमयानन्तविमानजालैः अलंकृतं अमिततेजोराश्यन्तर्गतदिव्यतेजोविशेषम् ॥ २२ ॥

शुद्धबोधानन्दवैकुण्ठप्राप्तिः

उपासकस्त्वेवमाकारं तुलसीवैकुण्ठं प्रविश्य तदन्तर्गतदिव्यविमानोपरिस्थितां सर्वपरिपूर्णस्य महाविष्णोः सर्वाङ्गेषु विहारिणीं निरतिशयसौन्दर्यलावण्याधिदेवतां बोधानन्दमयैरनन्तनित्यपरिजनैः परिषेवितां श्रीसखीं तुलसीमेवं लक्ष्मीं ध्यात्वा प्रदक्षिण-

नमस्कारान् विधाय विविधोपचारैराराध्य स्तुत्वा स्तोत्रविशेषैः तयाऽभिपूजितः तत्रत्यैश्चाभिपूजितः तदनुज्ञातश्चोपर्युपरि गत्वा परमानन्दतरङ्गिण्यास्तीरे गत्वा तत्र परितोऽवस्थितान् शुद्धबोधानन्दमयान् अनन्तवैकुण्ठानवलोक्य निरतिशयानन्दं प्राप्य तत्रत्यैश्चिद्रूपैः पुराणपुरुषैश्चाभिपूजितः ततो गत्वागत्वा ब्रह्मवनेषु दिव्यगन्धानन्दपुष्पवृष्टिभिः समन्वितेषु दिव्यमङ्गलालयेषु निरतिशयानन्दामृतसागरेषु अमिततेजोराश्याकारेषु कल्लोलवनसंकुलेषु ततोऽनन्तशुद्धबोधविमानजालसंकुलानन्दाचलश्रेणिषु उपासकस्तत उपर्युपरि गत्वा विमानपरम्परास्वनन्ततेजःपर्वतराजिष्वेवं क्रमेण प्राप्य विद्याऽऽनन्दमययोः सन्धि तत्र आनन्दतरङ्गिण्याः प्रवाहेषु स्नात्वा बोधानन्दवनं प्राप्य शुद्धबोधपरमानन्दाकारवनं संततामृतपुष्पवृष्टिभिः परिवेष्टितं परमानन्दप्रवाहैरभिव्याप्तं मूर्तिमद्भिः परममङ्गलैः परमकौतुकं अपरिच्छिन्नानन्दसागराकारं क्रीडाऽऽनन्दपर्वतैरभिशोभितं तन्मध्ये च शुद्धबोधानन्दवैकुण्ठं—यदेव ब्रह्मविद्यापादवैकुण्ठं सहस्रानन्दप्राकारैः समुज्ज्वलति—अनन्तानन्दविमानजालसंकुलं अनन्तबोधसौधविशेषैरभितोऽनिशं प्रज्वलन्तं क्रीडाऽनन्तमण्डपविशेषैर्विशेषितं बोधानन्दमयानन्तपरमच्छत्रध्वजचामरवितानतोरणैरलंकृतं परमानन्दव्यूहैर्नित्यमुक्तैरभितस्ततं अनन्तदिव्यतेजःपर्वतसमष्ट्याकारं अपरिच्छिन्नानन्तशुद्धबोधानन्दमण्डलं वाचामगोचरानन्दब्रह्मतेजोराशिमण्डलं अखण्डतेजोमण्डलविशेषं [1]शुद्धानन्दविशेषसमष्टिमण्डलविशेषं अखण्डचिद्घनानन्दविशेषम् ॥

[1] शुद्धविद्यान—अ

अखण्डबोधविमाने समस्तमोक्षसाम्राज्यपट्टाभिषेकः

एवंविधं बोधानन्दवैकुण्ठमुपासकः प्रविश्य तत्रत्यैः सर्वैरभिपूजितः । परमानन्दाचलोपर्यखण्डबोधविमानं प्रज्वलति । तदभ्यन्तरे चिन्मयासनं विराजते ॥ २४ ॥

तदुपरि विभात्यखण्डानन्दतेजोमण्डलम् । तदभ्यन्तरसमासीनं आदिनारायणं ध्यात्वा प्रदक्षिणनमस्कारान् विधाय विविधोपचारैः सुसंपूज्य पुष्पाञ्जलिं समर्प्य स्तुत्वा स्तोत्रविशेषैः स्वरूपेणावस्थितमुपासकमवलोक्य तमुपासकं आदिनारायणः स्वसिंहासने सुसंस्थाप्य तद्वैकुण्ठवासिभिः सर्वैः समन्वितः समस्तमोक्षसाम्राज्यपट्टाभिषेकमुद्दिश्य मन्त्रपूतैः उपासकं आनन्दकलशैरभिषिच्य दिव्यमङ्गलमहावाद्यपुरःसरं विविधोपचारैरभ्यर्च्य मूर्तिमद्भिः सर्वैः स्वचिह्नैरलंकृत्य प्रदक्षिणनमस्कारान् विधाय त्वं ब्रह्मासि अहं ब्रह्मास्मि आवयोरन्तरं न विद्यते त्वमेवाहम् अहमेव त्वम् इत्यभिधाय इत्युक्त्वा अदिनारायणस्तिरोदधे तदेत्युपनिषत् ॥ २९ ॥

**एवंविधं** आनन्दपादालङ्कारभूतं **बोधानन्दवैकुण्ठम्** ॥ २४ ॥ **प्रदक्षिणनमस्कारान् विधाय**—ततो दक्षिणकर्णे प्रत्यक्परचितोरैक्यबोधकं परमार्थतत्त्वमुपदिशति । किं तत् ? **त्वं ब्रह्मासीत्यादि** । मदुपासनया यस्त्वं मत्सारूप्यं गतोऽसि स "**त्वं ब्रह्मासि**" इति भगवदुक्तिः । "**अहं ब्रह्मास्मि**" इति शिष्योक्तिः । **आवयोरित्यादि** भगवदुक्तिः । एवं शिष्यमुपदिश्य भगवान् **तिरोदधे** निर्विशेषतां गतवानित्यर्थः । **इत्युपनिषच्छब्दः** षष्ठाध्यायसमाप्त्यर्थः ॥ २९ ॥

इत्यथर्वणमहानारायणोपनिषदि परममोक्षमार्गस्वरूपनिरूपणं नाम षष्ठोऽध्यायः

# सप्तमोऽध्यायः

### नित्यगरुडारूढस्य ब्रह्मानन्दविभूतिप्राप्तिः

अथोपासकः तदाज्ञया नित्यगरुडमारुह्य वैकुण्ठवासिभिः सर्वैः परिवेष्टितो महासुदर्शनं पुरस्कृत्य विष्वक्सेनपरिपालितश्चोपर्युपरि गत्वा ब्रह्मानन्दविभूतिं प्राप्य सर्वत्रावस्थितान् ब्रह्मानन्दमयान् अनन्तवैकुण्ठान् अवलोक्य निरतिशयानन्दसागरो भूत्वा आत्मारामान् आनन्दविभूतिपुरुषान् अनन्तान् अवलोक्य तान् सर्वानुपचारैः समभ्यर्च्य तैः सर्वैरभिपूजितश्च उपासकस्तत उपर्युपरि गत्वा ब्रह्मानन्दविभूतिं प्राप्य अनन्तदिव्यतेजःपर्वतैरलंकृतान् परमानन्दलहरीवनशोभितान् असंख्याकान् आनन्दसमुद्रान् अतिक्रम्य विविधविचित्रानन्तपरमतत्त्वविभूतिसमष्टिविशेषान् परम[1]कौतुकान् ब्रह्मानन्दविभूतिविशेषानतिक्रम्य उपासकः परमकौतुकं प्राप ॥ १ ॥

शिष्यो भगवतः परमतत्त्वोपदेशं लब्ध्वा तद्रूपसाक्षात्करणाय तुर्यपादमारोहतीत्याह—अथेति ॥ १ ॥

### सुदर्शनपुरवर्णनम्

ततः सुदर्शनवैकुण्ठपुरमाभाति नित्यमङ्गलं अनन्तविभवं सहस्रानन्दप्राकारपरिवेष्टितं अयुतकुक्ष्युपलक्षितं अनन्तोत्कटज्वलदर-

[1] कौतुकात्—अ १

मण्डलं निरतिशयदिव्यतेजोमण्डलं [1]वृन्दारकपरमानन्दं शुद्धबुद्ध-स्वरूपं अनन्तानन्दसौदामिनीपरमविलासं निरतिशयपरमानन्दपारावारं अनन्तैरानन्दपुरुषैश्चिद्रूपैरधिष्ठितम् ॥ २ ॥

स्वाविद्यापादप्रविभक्ताविद्याविद्याऽऽनन्दपादानभिधाय तुर्यपादस्वरूपं प्रकट-यति—तत इति । ततः पादत्रयनिरूपणानन्तरं यत्र तुर्यचैतन्यं सुष्ठु दृश्यते तत् सुदर्शनं, तस्य पादत्रयवत् स्वाविद्यावृत्तिभिः कुण्ठनं न भवतीति विकुण्ठः, विकुण्ठ एव वैकुण्ठः, तस्य मुक्तप्राप्यत्वात् पुरमिति व्यपदेश इत्यर्थः । तत्स्वरूपं तु नित्यमङ्गलम् ॥ २ ॥

सुदर्शनमहाचक्रवर्णनम्

तन्मध्ये च सुदर्शनं महाचक्रम् ॥ ३ ॥

चरणं पवित्रं विततं पुराणं येन पूतस्तरति दुष्कृतानि ।
तेन पवित्रेण शुद्धेन पूता अतिपाप्मानमरातिं तरेम ॥ ४ ॥
लोकस्य द्वारमर्चिमत् पवित्रं ज्योतिष्मद्भ्राजमानं महस्वत् ।
अमृतस्य धारा बहुधा दोहमानं चरणं नो लोके सुधितां दधातु ॥ ५ ॥

अयुतारज्वलन्तं अयुतारसमष्ट्याकारं निरतिशयविक्रम-विलासं अनन्तदिव्यायुधदिव्यशक्तिसमष्टिरूपं महाविष्णोः अनर्गल-प्रवाहविग्रहं अयुतायुतकोटियोजनविशालं अनन्तज्वालाजालैरलंकृतं समस्तदिव्यमङ्गलनिदानं अनन्तदिव्यतीर्थानां निजमन्दिरमेवं सुदर्शनं महाचक्रं प्रज्वलति ॥ ६ ॥

[1] ब्रह्माकार—क. वृन्दाकार—उ.

तस्य नाभिमण्डलसंस्थाने उपलक्ष्यते निरतिशयानन्ददिव्यतेजोराशिः । तन्मध्ये च सहस्रारचक्रं प्रज्वलति । तदखण्डदिव्यतेजोमण्डलाकारं परमानन्दसौदामिनीनिचयोज्ज्वलम् ॥ ७ ॥

तदभ्यन्तरसंस्थाने षट्छतारचक्रं प्रज्वलति । तच्चामितपरमतेजःपरमविहारसंस्थानविशेषं विज्ञानघनस्वरूपम् ॥ ८ ॥

तदन्तराले त्रिशतारचक्रं विभाति । तच्च परमकल्याणविलासविशेषं अनन्तचिदादित्यसमष्ट्याकारम् ॥ ९ ॥

तदभ्यन्तरे शतारचक्रमाभाति । तच्च परमतेजोमण्डलविशेषम् ॥ १० ॥

तन्मध्ये [1]षष्ट्यरचक्रमाभाति । तच्च ब्रह्मतेजःपरमविलासविशेषम् ॥ ११ ॥

तदभ्यन्तरसंस्थाने षट्कोणचक्रं प्रज्वलति । तच्चापरिच्छिन्नानन्तदिव्यतेजोराश्याकारम् ॥ १२ ॥

"अहं ब्रह्मास्मि", "ब्रह्माहमस्मि", इति यत् स्वात्मतया दर्शनीयं तत् सुदर्शनं, तस्य चण्डाविद्याद्वयतत्कार्यासुरजातशिरःकृन्तनशक्तिमत्त्वात् तुरीयं ब्रह्मैव सुदर्शनं महाचक्रमुच्यते । यद्वा—तुरीयोपलब्धिसाधनवक्ष्यमाणसुदर्शनमहानारायणम (य ?)न्त्रं सुदर्शनचक्रमुच्यते ॥ ३ ॥ सुदर्शनाख्यं तुरीयं, तदधिगमसाधनत्रिपाद्विभूतिमहानारायणसमष्टिव्यष्टिचक्रं चाह—**चरण**मित्यादिना । स्वातिरिक्तस्वाविद्यापदप्रविभक्तापवित्रपरिच्छिन्नस्वाज्ञानकालप्रभवाविद्याविद्याऽऽनन्दपादापवादाधिकरणं तुर्य**चरणं** व्यष्टिसमष्टितुर्यैकरूपं अपवित्रपरिच्छिन्नाविद्याद्वयासंसृष्टत्वात् **पवित्रं विततं**, चिरन्तनत्वात् **पुराणं**, **येन** तुरीयोऽस्मीति

[1] चतुष—उ.

ज्ञानेन स्वाज्ञानाघतः **पूतो** मुमुक्षुः **दुष्कृतानि** आगाम्यादिकर्मस्रोतांसि लीलया **तरति** तथा **तेन पवित्रेण शुद्धेन** तुरीयोऽस्मीति ज्ञानविज्ञानसम्यग्ज्ञानात्मना वयं मुनयः **पूताः** सन्तः **अतिपाप्मानं** अतिपापरूपं **अरातिं** स्वाज्ञानतत्कार्यास्तित्व-भ्रमं **तरेम** ॥ ४ ॥ तत्तुर्यज्ञानं कीदृशं ? इत्यत्र स्वात्मलोकस्य **द्वारभूतं**, "नान्यः पन्था अयनाय विद्यते" इति श्रुतेः । प्रत्यग्रूपेण **अर्चिमत् पवित्रं** पररूपेण **ज्योतिष्मद्भ्राजमानं** प्रत्यगभिन्नब्रह्मात्मना **महस्वत्** प्रत्यगभिन्नं ब्रह्मास्मीति निर्विकल्पावस्थायां **अमृतस्य** प्रत्यगभिन्नब्रह्मानन्दरसस्य **धारा** धारां **बहुधा दोहमानं** एवं उक्तलक्षणलक्षितं **तुर्यचरणं नो** अस्माकं अस्मिन् **लोके सुधितां** जीवन्मुक्तत्वं **दधातु** ददात्वित्यर्थः ॥ ५ ॥ तुर्यस्वरूपमुक्त्वा समष्टिव्यष्टिचक्र-स्वरूपमाह—**अयुतेति** । **अयुतारज्वलन्तं** अयुतारगर्भितं सत् ज्वलन्तं इति प्रथमार्थे द्वितीया लिङ्गव्यत्ययश्च । अपारस्वरूपानन्दानर्गळप्रवाहविग्रहम् । **एवं** समष्ट्यात्मकं **सुदर्शनम्** ॥ ६–१२ ॥

चक्राभ्यन्तरस्थसुदर्शनपुरुषाराधनम्

तदभ्यन्तरे महानन्दपदं विभाति । तत्कर्णिकायां सूर्येन्दु-वह्निमण्डलानि चिन्मयानि ज्वलन्ति । तत्रोपलक्ष्यते निरतिशयदिव्य-तेजोराशिः ॥ १३ ॥

तदभ्यन्तरसंस्थाने युगपदुदितानन्तकोटिरविप्रकाशः सुदर्शन-पुरुषो विराजते । सुदर्शनपुरुषो महाविष्णुरेव ॥ १४ ॥

महाविष्णोः समस्तासाधारणचिह्नचिह्नितः एवमुपासकः सुदर्शनपुरुषं ध्यात्वा विविधोपचारैराराध्य प्रदक्षिणनमस्कारान् विधाय उपासकस्तेनाभिपूजितः तदनुज्ञातश्च उपर्युपरि गत्वा

परमानन्दमयान् अनन्तवैकुण्ठान् अवलोक्य उपासकः परमानन्दं प्राप ॥ १९ ॥

कोऽयं सुदर्शनपुरुषः इत्यत्र —सुदर्शनपुरुषो महाविष्णुरेव ॥ १४–१९ ॥

### क्रमेणाद्वैतसंस्थानप्राप्तिः

तत उपरि विविधविचित्रानन्तचिद्विलासविभूतिविशेषानतिक्रम्य अनन्तपरमानन्दविभूतिसमष्टिविशेषान् अनन्तनिरतिशयानन्दसमुद्रानतीत्य उपासकः क्रमेणाद्वैतसंस्थानं प्राप ॥ १६ ॥

कथमद्वैतसंस्थानम् । अखण्डानन्दस्वरूपं अनिर्वाच्यं अमितबोधसागरं अमितानन्दसमुद्रं विजातीयविशेषविवर्जितं सजातीयविशेषविशेषितं निरवयवं निराधारं निर्विकारं निरञ्जनं अनन्तब्रह्मानन्दसमष्टिकन्दं परमचिद्विलाससमष्ट्याकारं निर्मलं निरवद्यं निराश्रयं अतिनिर्मलानन्तकोटिरविप्रकाशैकस्फुलिङ्गं अनन्तोपनिषदर्थस्वरूपं अखिलप्रमाणातीतं मनोवाचामगोचरं नित्यमुक्तस्वरूपं अनाधारं आदिमध्यान्तशून्यं कैवल्यं परमं शान्तं सूक्ष्मात् सूक्ष्मतरं महतो महत्तरं अमितानन्दविशेषं शुद्धबोधानन्दविभूतिविशेषं अनन्तानन्दविभूतिविशेषसमष्टिरूपं अक्षरं अनिर्देश्यं कूटस्थं अचलं ध्रुवं अदिग्देशकालं अन्तर्बहिश्च तत् सर्वं व्याप्य परिपूर्णं परमयोगिभिर्विमृग्यं देशतः कालतो वस्तुतः परिच्छेदरहितं निरन्तराभिनवं नित्यपरिपूर्णं अखण्डानन्दामृतविशेषं शाश्वतं परमं पदं निरतिशयानन्दानन्ततटित्पर्वताकारं अद्वितीयं स्वयंप्रकाशं अनिशं ज्वलति ॥ १७ ॥

परमानन्दलक्षणापरिच्छिन्नानन्तपरंज्योतिः शाश्वतं शश्वद्विभाति ॥

तदभ्यन्तरसंस्थाने अमितानन्दचिद्रूपाचलं अखण्डपरमानन्दविशेषं बोधानन्दमहोज्ज्वलं नित्यमङ्गलमन्दिरं चिन्मथनाविर्भूत-[1]चित्सारं अनन्ताश्चर्यसागरं अमिततेजोराश्यन्तर्गततेजोविशेषं अनन्तानन्दप्रवाहैरलंकृतं निरतिशयानन्दपारावाराकारं निरुपमनित्यनिरवद्यनिरतिशयनिरवधिकतेजोराशिविशेषं निरतिशयानन्दसहस्रप्राकारैरलंकृतं शुद्धबोधसौधावलिविशेषैरलंकृतं चिदानन्दमयानन्तदिव्यारामैः सुशोभितं शश्वदमितपुष्पवृष्टिभिः समन्ततः संततम् ॥ १९ ॥

तदेव त्रिपाद्विभूतिवैकुण्ठस्थानम् । तदेव परमकैवल्यम् । तदेव अबाधितपरमतत्वम् । तदेव अनन्तोपनिषद्विमृग्यम् । तदेव परमयोगिभिर्मुमुक्षुभिः सर्वैराशास्यमानम् । तदेव सद्घनम् । तदेव चिद्घनम् । तदेवानन्दघनम् । तदेव शुद्धबोधघनविशेषं अखण्डानन्दब्रह्मचैतन्याधिदेवतास्वरूपम् । सर्वाधिष्ठानं अद्वयपरंब्रह्मविहारमण्डलं निरतिशयानन्दतेजोमण्डलं अद्वैतपरमानन्दलक्षणपरंब्रह्मणः परमाधिष्ठानमण्डलं निरतिशयपरमानन्दपरममूर्तिविशेषमण्डलं अनन्तपरममूर्तिसमष्टिमण्डलं निरतिशयपरमानन्दलक्षणपरंब्रह्मणः परममूर्तिपरमतत्त्वविलासविशेषमण्डलं बोधानन्दमयानन्तपरमविलासविभूतिविशेषसमष्टिमण्डलं अनन्तचिद्विलासविभूतिविशेषसमष्टिमण्डलं अखण्डशुद्धचैतन्यनिजमूर्तिविशेषविग्रहं वाचामगोचरानन्तशुद्धबोधविशेषविग्रहं

[1] सत्सागरं—उ.

**अनन्तानन्दसमुद्रसमष्ट्याकारं अनन्तबोधाचलैरनन्तबोधानन्दाचलैरधिष्ठितं निरतिशयानन्दपरममङ्गलविशेषसमष्ट्याकारं अखण्डाद्वैतपरमानन्दलक्षणपरंब्रह्मणः परममूर्तिपरमतेजःपुञ्जपिण्डविशेषं चिद्रूपादित्यमण्डलं द्वात्रिंशद्व्यूहभेदैरधिष्ठितम् । व्यूहभेदाश्च केशवादिचतुर्विंशतिः सुदर्शनादिन्यासमन्त्राः सुदर्शनादियन्त्रोद्धारः अनन्तगरुडविष्वक्सेनाश्च निरतिशयानन्दश्च ॥ २० ॥**

गमनागमनादिहेतुस्वातिरिक्तास्तित्वभ्रमो यत्र न विद्यते तदेव **अद्वैतसंस्थानम्** ॥ १६ ॥ **कथं अद्वैतसंस्थानं** स्वरूपमित्यर्थः । **निष्प्रतियोगिकाखण्डानन्दस्वरूपम्** । **अखिलप्रमाणातीतं** वेदान्तेतरप्रमाणागम्यत्वात् । **मनोवाचामगोचरं** अमनस्कतया अशब्दत्वात् । **नित्यमुक्तस्वरूपं** मुक्तात्मतया अवशिष्टत्वात् । **अनाधारं** आधेयाभावात् । **आदिमध्यान्तशून्यं** जन्मस्थितिभङ्गवैरळ्यात् । **कैवल्यं** निष्प्रतियोगिकब्रह्ममात्रतया अवस्थितत्वात् ॥ १७–१८ ॥ **चिन्मथनाविर्भूतचित्सारं**—विश्वविराडोत्रादिचिद्विकल्पितविशेषजातमथनात् विशेषभावविलापनात् तदधिकरणतया यदाविर्भूतं तत् चित्सारं स्वाधेयसापेक्षाधारताऽपह्नवसिद्धं निष्प्रतियोगिकचिन्मात्रमित्यर्थः । निष्प्रतियोगिक**निरुपमेत्यादि** । प्राकारसौधारामपुष्पवृष्ट्यादिविशेषणं सुखप्रतिपत्त्यर्थं, अन्यथा निष्प्रतियोगिकब्रह्ममात्रे प्राकारादिकल्पना अस्ति नास्तीति विभ्रमो वा कथं सेद्धुं पारयति ॥ १९ ॥ यत् स्वाज्ञादिदृष्टिर्मोहे सत्यसति स्वयं निष्प्रतियोगिकमवशिष्यते **तदेव त्रिपाद्विभूतिवैकुण्ठस्थानम्** । त्रय्यन्तैः निष्प्रतियोगिकब्रह्ममात्रावशेषतया यत् पद्यते ज्ञायते तद्वस्तु त्रिपात् तद्भावापत्तिः विभूतिः त्रिपाद्विभूतिः तस्याः कालत्रयेऽपि अकुण्ठितस्वरूपत्वात् **त्रिपाद्विभूतिवैकुण्ठस्थानं**, यज्जाग्रज्जाग्रदादिचतुष्पञ्चदशकलनाऽपह्नवसिद्धतुर्यतुर्यमिति विख्यातं यदसल्लौकिकाद्यष्टदृष्टिकलनाऽस्पृष्टसत्तासामान्यं यज्जडभूत्यादिभूतिचतुष्टयहेयांशापह्नवसिद्धतुर्यातीतत्रैपदमिति श्रुतं यत् क्षराक्षरकलनाविरळं परमाक्षरमिति ख्यातं यत् सापेक्षद्वैताद्वैतकलना-

विरळं परमाद्वैतविभवं तदेव त्रिपाद्विभूतिवैकुण्ठस्थानम् । स्वाज्ञविकल्पितद्वात्रिंशद्व्यूहभेदा वक्ष्यमाणसुदर्शनं महानारायणयन्त्रं स्वाविद्यापदप्रविभक्ताविद्याऽऽदिपादचतुष्टयं तद्विभातकलनासर्वस्वं च किमाश्रित्य वर्तते इत्यत्र परमार्थदृष्ट्या तन्निष्प्रतियोगिकमपि स्वज्ञदृष्ट्या सर्वं तदाश्रित्य वर्तत इत्याह—**द्वात्रिंशद्व्यूहभेदैरधिष्ठितम्** ॥ २०–२८ ॥

आनन्दव्यूहमध्यस्थं प्रणवविमानम्

आनन्दव्यूहमध्ये सहस्रकोटियोजनायतोन्नतचिन्मयप्रासादं ब्रह्मानन्दमयविमानकोटिभिरतिमङ्गलं अनन्तोपनिषदर्थारामजालसंकुलं सामहंसकूजितैरतिशोभितं आनन्दमयानन्तशिखरैरलंकृतं चिदानन्दरस[1]निर्झरैरभिव्याप्तं अखण्डानन्दतेजोराश्यन्तरस्थितं अनन्तानन्दाश्चर्यसागरम् ॥ २१ ॥

तदभ्यन्तरसंस्थाने अनन्तकोटिरविप्रकाशातिशयप्रकाशं निरतिशयानन्दलक्षणं प्रणवाख्यं विमानं विराजते । शतकोटिशिखरैरानन्दमयैः समुज्ज्वलति ॥ २२ ॥

तदन्तराले बोधानन्दाचलोपर्यष्टाक्षरीमण्टपो विभाति ॥ २३ ॥

तन्मध्ये च चिदानन्दमयवेदिका आनन्दवनविभूषिता ॥ २४ ॥

तदुपरि ज्वलति निरतिशयानन्दतेजोराशिः ॥ २५ ॥

तदभ्यन्तरसंस्थाने अष्टाक्षरीपद्मविभूषितं चिन्मयासनं विराजते ॥ २६ ॥

प्रणवकर्णिकायां सूर्येन्दुवह्निमण्डलानि चिन्मयानि ज्वलन्ति ॥

[1] निर्भरै—क, ङ.

### अनन्तासनोपरिस्थं समष्टिमहायन्त्रम्

तत्राखण्डानन्दतेजोराश्यन्तर्गतं परममङ्गलाकारमनन्तासनं विराजते ॥ २८ ॥

तस्योपरि च महायन्त्रं प्रज्वलति । निरतिशयब्रह्मानन्दपरममूर्तिमहायन्त्रं समस्तब्रह्मतेजोराशिसमष्टिरूपं चित्स्वरूपं निरञ्जनं परंब्रह्मस्वरूपं परंब्रह्मणः परमरहस्यकैवल्यं महायन्त्रमयपरमवैकुण्ठनारायणयन्त्रं विजयति ॥ २९ ॥

**समस्तब्रह्मतेजोराशिसमष्टिरूपं** सप्तकोटिमहामन्त्रतदभिमानिदेवतासमष्टिरूपमित्यर्थः । सर्वमन्त्रप्रतिपाद्यदेवतागतनानात्वापाये तद्यन्त्रमेव **चित्स्वरूपम्** । **विजयति** विजयते उपग्रहव्यत्ययः ॥ २९ ॥

### व्यष्टियन्त्रस्वरूपम्

तत्स्वरूपं कथमिति । देशिकस्तथेति होवाच—

आदौ षट्कोणचक्रम् । तन्मध्ये षड्दलपद्मम् । तत्कर्णिकायां प्रणव ॐ इति । प्रणवमध्ये नारायणबीजममिति । तत्साध्यगर्भितं —मम सर्वाभीष्टसिद्धिं कुरुकुरु स्वाहेति । तत्पद्मदलेषु विष्णुनृसिंहषडक्षरमन्त्रौ—ॐ नमो विष्णवे, ऐं क्लीं श्रीं ह्रीं [1]क्ष्म्र्यौं फट् । तद्दलकपोलेषु रामकृष्णषडक्षरमन्त्रौ—रां रामाय नमः, क्लीं कृष्णाय नमः । षट्कोणेषु सुदर्शनषडक्षरमन्त्रः—सह[2]स्रार हुं फडिति । षट्कोणकपोलेषु प्रणवयुक्तशिवपञ्चाक्षरमन्त्रः—ॐ नमः शिवायेति ॥३०॥

[1] क्ष्रौं—क, अ १. [1] क्ष्म्रौं—अ २, उ १. क्ष्म्यौं—उ. [2] स्रारे—क.

तद्बहिः प्रणवमालायुक्तं वृत्तम् । वृत्ताद्बहिरष्टदलपद्मम् । तेषु दलेषु नारायणनृसिंहाष्टाक्षरमन्त्रौ—ॐ नमो नारायणाय, जयजय नरसिंह । तद्दलसन्धिषु रामकृष्णश्रीकराष्टाक्षरमन्त्राः—ॐ रामाय हुं फट् स्वाहा, क्लीं दामोदराय नमः, उत्तिष्ठ श्रीकर स्वाहा ॥ ३१ ॥

तद्बहिः प्रणवमालायुक्तं वृत्तम् । वृत्ताद्बहिर्नवदलपद्मम् । तेषु दलेषु रामकृष्णहयग्रीवनवाक्षरमन्त्राः—ॐ रामचन्द्राय नम ओम्, क्लीं कृष्णाय गोविन्दाय क्लीम्, [1]ह्सौं हयग्रीवाय नमो [1]ह्सौम् । तद्दलकपोलेषु दक्षिणामूर्तिनवाक्षरमन्त्रः—ॐ दक्षिणामूर्ति-[2]रतरोम् ॥ ३२ ॥

तद्बहिर्नारायणबीजयुक्तं वृत्तम् । वृत्ताद्बहिर्दशदलपद्मम् । तेषु दलेषु रामकृष्णदशाक्षरमन्त्रौ—हुं जानकीवल्लभाय स्वाहा, गोपीजन-वल्लभाय स्वाहा । तद्दलसन्धिषु नृसिंहमालामन्त्रः—ॐ नमो भगवते श्रीमहानृसिंहाय करालदंष्ट्रवदनाय मम विघ्नान् पचपच स्वाहा ॥ ३३ ॥

तद्बहिर्नृसिंहैकाक्षरयुक्तं वृत्तम्—[3]क्ष्म्रयौं इत्येकाक्षरम् । वृत्ताद्बहिर्द्वादशदलपद्मम् । तेषु दलेषु नारायणवासुदेवद्वादशाक्षरमन्त्रौ—ॐ नमो भगवते नारायणाय, ॐ नमो भगवते वासुदेवाय ।

१. ह्रौं—अ १, अ २. ल्हौं—मु.
रीश्वरोम्—मु. [3] क्ष्म्यौं—अ १.

तद्दलकपोलेषु महाविष्णुरामकृष्णद्वादशाक्षरमन्त्राश्च—ॐ नमो भगवते महाविष्णवे, ॐ ह्रीं भरताग्रज राम क्लीं स्वाहा, श्रीं ह्रीं क्लीं कृष्णाय गोविन्दाय नमः ॥ ३४ ॥

तद्बहिर्जगन्मोहनबीजयुक्तं वृत्तं—क्लीमिति। वृत्ताद्बहिश्चतुर्दशदलपद्मम् । तेषु दलेषु लक्ष्मीनारायणहयग्रीवगोपालदधिवामनमन्त्राश्च—ॐ ह्रीं ह्रीं श्रीं श्रीं लक्ष्मीवासुदेवाय नमः, ॐ नमः सर्वकोटिसर्वविद्याराजाय, क्लीं कृष्णाय गोपालचूडामणये स्वाहा, ॐ नमो भगवते दधिवामनाय । तद्दलसंधिष्वन्नपूर्णेश्वरीमन्त्रः—ह्रीं पद्मावत्यन्नपूर्णे [1]माहेश्वरि स्वाहा ॥ ३५ ॥

तद्बहिः प्रणवमालायुक्तं वृत्तम् । वृत्ताद्बहिः षोडशदलपद्मम् । तेषु दलेषु श्रीकृष्णसुदर्शनषोडशाक्षरमन्त्रौ च—ॐ नमो भगवते रुक्मिणीवल्लभाय स्वाहा, ॐ नमो भगवते महासुदर्शनाय हुं फट् । तद्दलसंधिषु स्वराः सुदर्शनमालामन्त्रश्च—[2]अंआंइंईंउंऊंऋंॠंऌंॡंएंऐंओंऔंअंअः, सुदर्शनमहाचक्राय दीप्तरूपाय सर्वतो मां रक्षरक्ष सहस्रार हुं फट् स्वाहा ॥ ३६ ॥

तद्बहिर्वराहबीजयुक्तं वृत्तं—तद्भुमिति। वृत्ताद्बहिरष्टादशदलपद्मम् । तेषु दलेषु श्रीकृष्णवामनाष्टादशाक्षरमन्त्रौ—क्लीं कृष्णाय गोविन्दाय गोपीजनवल्लभाय स्वाहा, ॐ नमो विष्णवे सुरपतये महाबलाय स्वाहा। तद्दलकपोलेषु गरुडपञ्चाक्षरमन्त्रो गरुडमालामन्त्रश्च

[1] माहेश्वरी—अ १, उ १, क. [2] बिन्दुरहिताः (अ १, अ २, क) कोशेषु.

—क्षिप ॐ स्वाहा, ॐ नमः पक्षिराजाय सर्वविषभूतरक्षःकृत्याऽऽदि-भेदनाय सर्वेष्टसाधकाय स्वाहा ॥ ३७ ॥

तद्बहिर्मायाबीजयुक्तं वृत्तं—ह्रीमिति । वृत्ताद्बहिः पुनरष्ट-दलपद्मम् । तेषु दलेषु श्रीकृष्णवामनाष्टाक्षरमन्त्रौ—ॐ नमो दामोदराय, ॐ [1]वामनाय नमः ॐम् । तद्दलकपोलेषु नीलकण्ठ-त्र्यक्षरीगरुडपञ्चाक्षरीमन्त्रौ च—[2]प्रें रीं ठः, नमोऽण्डजाय ॥३८॥

तद्बहिर्मन्मथबीजयुक्तं वृत्तम् । वृत्ताद्बहिश्चतुर्विंशतिदलपद्मम् । तेषु दलेषु शरणागतनारायणमन्त्रौ नारायणहयग्रीवगायत्रीमन्त्रौ च —श्रीमन्नारायणचरणौ शरणं प्रपद्ये, श्रीमते नारायणाय नमः, नारायणाय विद्महे वासुदेवाय धीमहि तन्नो विष्णुः प्रचोदयात्, वागीश्वराय विद्महे हयग्रीवाय धीमहि तन्नो हंसः प्रचोदयात् । तद्दलकपोलेषु नृसिंहसुदर्शनब्रह्मगायत्रीमन्त्राश्च—वज्रनखाय विद्महे तीक्ष्णदंष्ट्राय धीमहि [3]तन्नः सिंहः प्रचोदयात्, सुदर्शनाय विद्महे हेतिराजाय धीमहि तन्नश्चक्रः प्रचोदयात्, तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॥ ३९ ॥

तद्बहिर्हयग्रीवैकाक्षरयुक्तं वृत्तं—ह्सौमिति । वृत्ताद्बहिर्द्वा-त्रिंशद्दलपद्मम् । तेषु दलेषु नृसिंहहयग्रीवानुष्टुभमन्त्रौ—

उग्रं वीरं महाविष्णुं ज्वलन्तं सर्वतोमुखम् ।
नृसिंहं भीषणं भद्रं मृत्युमृत्युं नमाम्यहम् ॥

[1] वां वा—अ १, उ. [2] प्रं—अ २, उ. [3] तन्नो नारसिं—अ २. तन्नो नृसिं—मु.

ऋग्यजुःसामरूपाय वेदाहरणकर्मणे ।
प्रणवोद्गीथवपुषे महाश्वशिरसे नमः ॥

तद्दलकपोलेषु रामकृष्णानुष्टुभमन्त्रौ—

रामभद्र महेष्वास रघुवीर नृपोत्तम ।
भो दशास्यान्तकास्माकं रक्षां देहि श्रियं च [1]ते ॥
देवकीसुत गोविन्द वासुदेव जगत्पते ।
देहि मे तनयं कृष्ण त्वामहं शरणं गतः ॥ ४० ॥

तद्बहिः प्रणवसंपुटिताग्निबीजयुक्तं वृत्तम्—ॐ रं ॐ इति । वृत्ताद्बहिः षट्त्रिंशद्दलपद्मम् । तेषु दलेषु हयग्रीवषट्त्रिंशदक्षरमन्त्रः पुनरष्टत्रिंशदक्षरमन्त्रश्च—

हंसः—विश्वोत्तीर्णस्वरूपाय चिन्मयानन्दरूपिणे ।
तुभ्यं नमो हयग्रीव विद्याराजाय विष्णवे—सोहम् ॥

हूसौं ॐ नमो भगवते हयग्रीवाय सर्ववागीश्वरेश्वराय सर्ववेदमयाय सर्वविद्यां मे देहि स्वाहा । तद्दलकपोलेषु प्रणवादिनमोऽन्ताश्चतुर्थ्यन्ताः केशवादिचतुर्विंशतिमन्त्राश्च । अवशिष्टद्वादशस्थानेषु रामकृष्णगायत्रीद्वयवर्णचतुष्टयमेकैकस्थले—ॐ केशवाय नमः ॐ नारायणाय नमः ॐ माधवाय नमः ॐ गोविन्दाय नमः ॐ विष्णवे नमः ॐ मधुसूदनाय नमः ॐ त्रिविक्रमाय नमः

[1] मे—अ २, मु.

ॐ वामनाय नमः ॐ श्रीधराय नमः ॐ हृषीकेशाय नमः ॐ पद्मनाभाय नमः ॐ दामोदराय नमः ॐ संकर्षणाय नमः ॐ वासुदेवाय नमः ॐ प्रद्युम्नाय नमः ॐ अनिरुद्धाय नमः ॐ पुरुषोत्तमाय नमः ॐ अधोक्षजाय नमः ॐ नरसिंहाय नमः ॐ अच्युताय नमः ॐ जनार्दनाय नमः ॐ उपेन्द्राय नमः ॐ हरये नमः ॐ श्रीकृष्णाय नमः, दाशरथाय विद्महे सीतावल्लभाय धीमहि तन्नो रामः प्रचोदयात्, दामोदराय विद्महे वासुदेवाय धीमहि तन्नः कृष्णः प्रचोदयात् ॥ ४१ ॥

तद्बहिः प्रणवसंपुटिताङ्कुशबीजयुक्तं वृत्तम्—ॐ क्रों ॐ इति । तद्बहिः पुनर्वृत्तम् । तन्मध्ये द्वादशकुक्षिस्थानानि सान्तरालानि । तेषु कौस्तुभवनमालाश्रीवत्ससुदर्शनगरुडपद्मध्वजानन्तशार्ङ्गगदाशङ्ख-नन्दकमन्त्राः प्रणवादिनमोऽन्ताश्चतुर्थ्यन्ताः क्रमेण—ॐ कौस्तुभाय नमः ॐ वनमालायै नमः ॐ श्रीवत्साय नमः ॐ सुदर्शनाय नमः ॐ गरुडाय नमः ॐ पद्माय नमः ॐ ध्वजाय नमः ॐ अनन्ताय नमः ॐ शार्ङ्गाय नमः ॐ गदायै नमः ॐ शङ्खाय नमः ॐ नन्दकाय नमः । तदन्तरालेषु—ॐ विष्वक्सेनाय नमः ॐ आचक्राय स्वाहा ॐ विचक्राय स्वाहा ॐ सुचक्राय स्वाहा ॐ धीचक्राय स्वाहा ॐ [1]संचक्राय स्वाहा ॐ ज्वालाचक्राय स्वाहा ॐ क्रुद्धोल्काय स्वाहा ॐ महोल्काय स्वाहा ॐ वीर्योल्काय स्वाहा

[1] सच्च—क.

ॐ [1]विद्योल्काय स्वाहा ॐ सहस्रोल्काय स्वाहा इति प्रणवादिमन्त्राः ॥ ४२ ॥

तद्बहिः प्रणवसंपुटितगरुडपञ्चाक्षरयुक्तं वृत्तम्—ॐ क्षिप ॐ स्वाहा ओम् । तच्च द्वादशवज्रैः सान्तरालैरलंकृतम् । तेषु वज्रेषु—ॐ पद्मनिधये नमः ॐ महापद्मनिधये नमः ॐ गरुडनिधये नमः ॐ शङ्खनिधये नमः ॐ मकरनिधये नमः ॐ कच्छपनिधये नमः ॐ विद्यानिधये नमः ॐ परमानन्दनिधये नमः ॐ मोक्षनिधये नमः ॐ लक्ष्मीनिधये नमः ॐ ब्रह्मनिधये नमः ॐ श्रीमुकुन्दनिधये नमः । तत्संधिस्थानेषु—ॐ विद्याकल्पकतरवे नमः ॐ आनन्दकल्पकतरवे नमः ॐ ब्रह्मकल्पकतरवे नमः ॐ मुक्तिकल्पकतरवे नमः ओममृतकल्पकतरवे नमः ॐ बोधकल्पकतरवे नमः ॐ विभूतिकल्पकतरवे नमः ॐ वैकुण्ठकल्पकतरवे नमः ॐ वेदकल्पकतरवे नमः ॐ योगकल्पकतरवे नमः ॐ यज्ञकल्पकतरवे नमः ॐ पद्मकल्पकतरवे नमः । तच्च शिवगायत्रीपरब्रह्ममन्त्राणां वर्णैर्वृत्ताकारेण संवेष्टय—तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात्,

श्रीमन्नारायणो ज्योतिरात्मा नारायणः परः ।
नारायणपरं ब्रह्म नारायण नमोऽस्तु ते ॥ ४३ ॥

तद्बहिः प्रणवसंपुटितश्रीबीजयुक्तं वृत्तम्—ॐ श्रीमोमिति । वृत्ताद्बहिश्चत्वारिंशद्दलपद्मम् । तेषु दलेषु व्याहृतिशिरस्संपुटितवेद-

[1] विद्युल्का—अ १, अ २, द्युल्का—मु.

गायत्रीपादचतुष्टयसूर्याष्टाक्षरीमन्त्रौ—ॐ भूः ॐ भुवः ॐ सुवः ॐ महः ॐ जनः ॐ तपः ॐ सत्यम् ॐ तत्सवितुर्वरेण्यम् ॐ भर्गो देवस्य धीमहि ॐ धियो यो नः प्रचोदयात् ॐ परोरजसे सावदोम् ॐमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः सुवरोम्, ॐ घृणिः सूर्य आदित्यः। तद्दलसंधिषु प्रणवश्रीबीजसंपुटितनारायणबीजं सर्वत्र—ॐ श्रीमं श्रीमोम् ॥ ४४ ॥

तद्बहिरष्टशूलाङ्कितभूचक्रम्। चक्रान्तश्चतुर्दिक्षु हंसःसोहंमन्त्रौ प्रणवसंपुटितौ नारायणास्त्रमन्त्रश्च—ॐ हंसः सोहम्, ॐ [1]नमो नारायणाय हुं फट् ॥ ४५ ॥

तद्बहिः प्रणवमालासंयुक्तं वृत्तम्। वृत्ताद्बहिः पञ्चाशद्दल-पद्मम्। तेषु दलेषु मातृकापञ्चाशदक्षरमाला ळकारवर्जा। तद्दलसंधिषु प्रणवश्रीबीजसंपुटितरामकृष्णमालामन्त्रौ—ॐ श्रीमों नमो भगवते रघुनन्दनाय रक्षोघ्नविशदाय मधुरप्रसन्नवदनायामिततेजसे बलाय रामाय विष्णवे नमः श्रीमों, ॐ श्रीं ॐ नमः कृष्णाय देवकीपुत्राय वासुदेवाय निगलच्छेदनाय सर्वलोकाधिपतये सर्वजगन्मोहनाय विष्णवे कामितार्थदाय स्वाहा श्रीमोम् ॥ ४६ ॥

तद्बहिरष्टशूलाङ्कितभूचक्रम्। तेषु प्रणवसंपुटितमहानीलकण्ठ-मन्त्रवर्णानि—ॐमों नमो नीलकण्ठाय ॐ। शूलाग्रेषु लोकपालमन्त्राः प्रणवादिनमोऽन्ताश्चतुर्थ्यन्ताः क्रमेण—ॐमिन्द्राय नमः ॐमग्नये

[1] नं नमो—क, अ २.

नमः ॐ यमाय नमः ॐ निर्ऋतये नमः ॐ वरुणाय नमः ॐ वायवे नमः ॐ सोमाय नमः ॐमीशानाय नमः ॥ ४७ ॥

तद्बहिः प्रणवमालायुक्तं वृत्तत्रयम् । तद्बहिर्भूपुरचतुष्टयं चतुर्द्वारयुतं चक्रकोणच[1]तुष्टयमहावज्रविभूषितम् । तेषु वज्रेषु प्रणवश्रीबीजसंपुटितामृतबीजद्वयम्—ॐ श्रीं [2]ठं वं श्रीमोमिति । बहिर्भूपुरवीथ्याम्—ॐमाधारशक्त्यै नमः ॐ मूलप्रकृत्यै नमः ॐमादिकूर्माय नमः ॐमनन्ताय नमः ॐ पृथिव्यै नमः । मध्यभूपुरवीथ्याम्—ॐ क्षीरसमुद्राय नमः ॐ रत्नद्वीपाय नमः ॐ रत्नमण्डपाय नमः ॐ श्वेतच्छत्राय नमः ॐ कल्पकवृक्षाय नमः ॐ [3]रत्नसिंहासनाय नमः । प्रथमभूपुरवीथ्यां धर्मज्ञानवैराग्यैश्वर्याधर्माज्ञानावैराग्यानैश्वर्यसत्त्वरजस्तमोमायाविद्याऽनन्तपद्माः प्रणवादिनमोन्ताश्चतुर्थ्यन्ताः क्रमेण । बाह्यवृत्तवीथ्यां विमलोत्कर्षिणी[4]ज्ञानाक्रिया[5]योगाप्रह्वीसत्येशानाः प्रणवादिनमोऽन्ताश्चतुर्थ्यन्ताः क्रमेण । अन्तर्वृत्तवीथ्यां—ओमनुग्रहायै नमः, ॐ नमो भगवते विष्णवे सर्वभूतात्मने वासुदेवाय सर्वात्मसंयोगयोगपीठात्मने नमः । वृत्तावकाशेषु—

बीजं प्राणं च शक्तिं च दृष्टिं वश्यादिकं तथा ।
मन्त्रयन्त्राख्यगायत्रीप्राणस्थापनमेव च ।
भूतदिक्पालबीजानि यन्त्रस्याङ्गानि वै दश ॥

मूलमन्त्रमालामन्त्रकवचदिग्बन्धनमन्त्राश्च ॥ ४८ ॥

[1] तुष्टयं म—उ. तुष्टयमष्टवज्र—अ १. [2] वं वं—क. [3] रक्त—अ १, अ २.
[4] ज्ञान—अ २, उ १. [5] योग—अ २. योगाबह्वी—अ १.

भावनामयसमष्टियन्त्रेयत्तां बुद्ध्वा व्यष्टियन्त्रेयत्तां पृच्छति—तत्स्वरूप-मिति । मम . . . कुरु स्वाहेति साध्यनामानि ॥ ३०–४८ ॥

### महायन्त्रमहिमा

एवंविधमेतद्यन्त्रं महामन्त्रमयं योगधीरान्तैः परममन्त्रैरलंकृतं षोडशोपचारैरभ्यर्चितं जपहोमादिना साधितमेतद्यन्त्रं शुद्धब्रह्मतेजोमयं सर्वाभयंकरं समस्तदुरितक्षयकरं सर्वाभीष्टसंपादकं सायुज्यमुक्तिप्रदं एतत् परमवैकुण्ठमहानारायणयन्त्रं प्रज्वलति ॥ ४९ ॥

एतद्यन्त्रं तद्गतनानात्वकलनापाये शुद्धब्रह्मतेजोमयं सर्वाभयंकरं सर्वात्म-रूपत्वात् स्वभक्तपटलस्य समस्तदुरितक्षयकरम् ॥ ४९ ॥

### महायन्त्रोपरिस्थस्य आदिनारायणस्य स्वरूपम्

तस्योपरि च निरतिशयानन्दतेजोराश्यभ्यन्तरसमासीनं वाचामगोचरानन्दतेजोराश्याकारं चित्साराविर्भूतानन्दविग्रहं बोधानन्दस्वरूपं निरतिशयसौन्दर्यपारावारं तुरीयस्वरूपं तुरीयातीतं चाद्वैतपरमानन्दं निरन्तरातितुरीयनिरतिशयसौन्दर्यानन्दपारावारं लावण्यवाहिनीकल्लोलतटिद्भासुरं दिव्यमङ्गलविग्रहं मूर्तिमद्भिः परम-मङ्गलैरुपसेव्यमानं चिदानन्दमयैरनन्तकोटिरविप्रकाशैरनन्तभूषणैरलं-कृतं सुदर्शनपाञ्चजन्यपद्मगदाऽसिशार्ङ्गमुसलपरिघाद्यैश्चिन्मयैरनेकायुध-गणैर्मूर्तिमद्भिः सुसेवितं श्रीवत्सकौस्तुभवनमालाऽङ्कितवक्षसं ब्रह्मकल्प-वनामृतपुष्पवृष्टिभिः सन्ततमानन्दं ब्रह्मानन्दरसनिर्भरैरसंख्यैरतिमङ्गलं शेषायुतफणाजालविपुलच्छत्रशोभितं तत्फणामण्डलोदर्चिर्मणिद्योति-

तद्विग्रहं तदङ्गकान्तिनिर्झरैस्ततं निरतिशयब्रह्मगन्धस्वरूपं निरतिशयानन्दब्रह्मगन्धविशेषाकारं अनन्तब्रह्मगन्धाकारसमष्टिविशेषं अनन्तानन्दतुलसीमाल्यैरभिनवं चिदानन्दमयानन्तपुष्पमाल्यैर्विराजमानं तेजःप्रवाहतरङ्गतत्परम्पराभिर्ज्वलन्तं निरतिशयानन्तकान्तिविशेषावर्तैरभितोऽनिशं प्रज्वलन्तं बोधानन्दमयानन्तधूपदीपावलिभिरतिशोभितं निरतिशयानन्दचामरविशेषैः परिसेवितं निरन्तरनिरुपमनिरतिशयोत्कटज्ञानानन्दानन्तगुच्छफलैरलंकृतं चिन्मयानन्ददिव्यविमानच्छत्रध्वजराजिभिर्विराजमानं परममङ्गलानन्तदिव्यतेजोभिर्ज्वलन्तं अनिशं वाचामगोचरानन्ततेजोराश्यन्तर्गतं अर्धमात्रात्मकं तुर्यं ध्वन्यात्मकं तुरीयातीतं अवाच्यं नादबिन्दुकलाऽध्यात्मस्वरूपं चैत्याद्यनन्ताकारेणावस्थितं निर्गुणं निष्क्रियं निर्मलं निरवद्यं निरञ्जनं निराकारं निराश्रयं निरतिशयाद्वैतपरमानन्दलक्षणं आदिनारायणं ध्यायेदित्युपनिषत् ॥ ९० ॥

एवंविधयन्त्राधिकरणचैतन्यस्वरूपमाह—तस्येति। **चित्साराविर्भूतानन्दविग्रहं**—चिच्छब्देन चेतनप्रपञ्च उच्यते। तत्सारस्तु तद्गतहेयांशापायसिद्धप्रत्यगभिन्नपरमात्मोच्यते। तन्मात्रतया आविर्भूतानन्द एव विग्रहो यस्य तत् तथोक्तम्। **निरतिशयसौन्दर्यपारावारं** विष्ण्वात्मना स्वोपासकभक्तपटलमनोहरदिव्यमङ्गळविग्रहत्वात् स्वोपासकस्वाज्ञानक्षयानुरोधेन **तुरीयस्वरूपं तुरीयातीतं च**। निर्विशेषतुर्यतुर्यातीतस्वरूपे निर्विशेषब्रह्मबोधकवाक्यानामद्वैतपरमानन्दादीनां समन्वयः। भक्तेच्छया स्वीकृतमूर्तिमद्विष्णौ दिव्यमङ्गळविग्रहमित्यादिसविशेषवाक्यानां समन्वयः सर्वत्र द्रष्टव्यः। **उदर्चिः** निरुपमकान्तिः। प्रथमाध्याये पादचतुष्टयात्मकं ब्रह्म प्रतिज्ञातम्—अविद्यापादः सुविद्यापादः आनन्द-

पादः तुर्यपादश्चेति । तत्र तुर्यपादप्रविभक्ततुर्यपादस्तु तुर्यतुरीयं तुर्यातीतं चेति प्रतिपादितं यत् तदेव "चरणं पवित्रं" इत्युपक्रम्य त्रिपाद्विभूतिमहानारायणयन्त्रतदध्यक्षदेवताजाततद्गतविशेषांशापवादाधिकरणं तुर्यचैतन्यं तद्गतविशेषसामान्यासंभवप्रबोधसिद्धं तुर्यातीततया प्रथिततुर्यतुर्यं त्रैपदं ब्रह्ममात्रमवशिष्यते इत्युपसंहरति—**अर्धमात्रात्मकमिति** । तुरीयस्य अर्धमात्रातत्कार्यनादावभासकतया अर्धमात्रात्मकत्वम् । **ध्वन्यात्मकमिति** यदर्धमात्राद्यवाच्यं तदेव तुरीयातीतं तुर्यतुर्यतया लक्षितत्वात् । नादबिन्द्वादिकं तस्मात् भिद्यत इत्यत्र तदतिरेकेण नादादेरभावात् तदेव सर्वमित्याह—**नादबिन्दुकलाऽध्यात्मस्वरूपं चेति** । अनन्ताकारत्वे त्रिगुणत्वं सक्रियत्वं मलवत्त्वं साश्रयत्वं च स्यादित्यत आह—**निर्गुणमिति** । यन्निर्गुणमित्यादिविशेषणबोधितं तदेवादिसर्वकारणत्वात् कार्यसापेक्षकारणतायाः विशेषत्वप्रसक्तौ वस्तुतो यत्र कार्यकारणकलनाजातं नास्त्यरमिति नारं कार्यकारणकलनापह्नवसिद्धौ त्रैपदं अयनं धाम स्वरूपं यस्य सोऽयं **आदिनारायणः** तं परमात्मानं स्वावशेषधिया **ध्यायेत्** । इत्युपनिषच्छब्दः सप्तमाध्यायपरिसमाप्त्यर्थः ॥ ९० ॥

इत्यथर्वणमहानारायणोपनिषदि परममोक्षस्वरूपप्रकटनपूर्वकं त्रिपाद्विभूतिपरमवैकुण्ठमहानारायणयन्त्रस्वरूपनिरूपणं नाम सप्तमोऽध्यायः

# अष्टमोऽध्यायः

अद्वैते ब्रह्मणि वैकुण्ठादिभेदसत्त्वोपपादनम्

ततः पितामहः परिपृच्छति भगवन्तं महाविष्णुं—भगवन् शुद्धाद्वैतपरमानन्दलक्षणपरब्रह्मणस्तव कथं विरुद्धवैकुण्ठप्रासादप्राकारविमानाद्यनन्तवस्तुभेदः ॥ १ ॥

सत्यमेवोक्तमिति भगवान् महाविष्णुः परिहरति । यथा शुद्धसुवर्णस्य कटकमकुटाङ्गदादिभेदः, यथा समुद्रसलिलस्य स्थूलसूक्ष्मतरङ्गफेनबुद्बुदकरकलवणपाषाणाद्यनन्तवस्तुभेदः, यथा भूमेः पर्वतवृक्षतृणगुल्मलताऽऽद्यनन्तवस्तुभेदः, तथैवाद्वैतपरमानन्दलक्षणपरब्रह्मणो मम सर्वाद्वैतमुपपन्नं भवत्येव । मत्स्वरूपमेव सर्वं मद्व्यतिरिक्तमणुमात्रं न विद्यते ॥ २ ॥

यद्यद्वैतोऽसि त्वं तदा वैकुण्ठादिभेदः कथमिति पृच्छतीत्याह—**तत इति** ॥ १ ॥ तत्र दृष्टान्तत्रयमाचष्टे—**यथेति** । तत् कथं? **मत्स्वरूपमेवेति** ॥ २ ॥

अनन्तवैकुण्ठसत्त्वोपपादनम्

पुनः पितामहः परिपृच्छति—भगवन् परमवैकुण्ठ एव परममोक्षः । परममोक्षस्त्वेक एव श्रूयते सर्वत्र । कथमनन्तवैकुण्ठाश्च अनन्तानन्दसमुद्रादयश्च अनन्तमूर्तयः सन्तीति ॥ ३ ॥

तथेति होवाच भगवान् महाविष्णुः—एकस्मिन्नविद्यापादेऽनन्तकोटिब्रह्माण्डानि सावरणानि श्रूयन्ते । तस्मिन्नेकस्मिन्नण्डे बहवो लोकाश्च बहवो वैकुण्ठाश्चानन्तविभूतयश्च सन्त्येव । सर्वाण्डेष्वनन्तलोकाश्चानन्तवैकुण्ठाः सन्तीति सर्वेषां खल्वभिमतम् । पादत्रयेऽपि किं वक्तव्यम् । निरतिशयानन्दाविर्भावो मोक्ष इति मोक्षलक्षणं पादत्रये वर्तते । तस्मात् पादत्रयं परममोक्षः । पादत्रयं परमवैकुण्ठः । पादत्रयं परमकैवल्यमिति । ततः शुद्धचिदानन्दब्रह्मविलासानन्दा-

**श्चानन्तपरमानन्दविभूतयश्चानन्तवैकुण्ठाश्चानन्तपरमानन्दसमुद्रादयः सन्त्येव ॥ ४ ॥**

श्रुत्वाऽपि तत्रासंभवमाशंक्य पृच्छतीत्याह —**पुनरिति** ॥ ३ ॥ तत्प्रश्नमङ्गीकृत्य परिहरति—**तथेति** । स्वाविद्यापादप्रविभक्तस्वा**विद्यापादे** । एवमनन्तकोटिवैकुण्ठालंकृते तत्सूक्ष्मबीजतुर्यांशात्मकविद्यादि**पादत्रयेऽपि किं वक्तव्यं** अनन्तवैकुण्ठादयः सन्तीति। अविद्यापादगाविद्यापादस्य बंन्धहेतुप्रवृत्तिसाधकत्वं, तदपेक्षया विद्याऽऽदिपादत्रयस्य [illegible]तिरिक्तप्रपञ्चनिवृत्तिप्रधानत्वेन मोक्षसाधनज्ञानजनकत्वं स्यादित्याह —**निरतिशयेति** । यस्मात् [अ]विद्याऽऽदिपादत्रयगतविकाराभावतः पादत्रयस्य अजडक्रियाज्ञानेच्छाशक्यात्मकज्ञानविज्ञानसम्यज्ज्ञानरूपत्वं [त्वात्] युज्यते ज्ञानादेः मोक्षादिफलकत्वं **तस्मात्** । **पादत्रयं परमकैवल्यमिति** —सन्निहितसाधनस्य फलपर्यवसायित्वेन फलवत्त्वोक्तिः । **अनन्तानन्दसमुद्रादयः सन्त्येवेति** यत्तत्पादचतुष्टयेऽपि समानम्। यत एवं अतः पादचतुष्टयमपि सविशेषमेव । पादचतुष्टयतत्कार्यकलनाऽसंभवप्रबोधसिद्धनिष्प्रतियोगिकब्रह्ममात्रावस्थानलक्षणविकळेबरकैवल्यमेव निष्प्रतियोगिकनिर्विशेषत्रैपदमित्यत्र—

महाप्रळयसंपत्तौ ह्यसत्तां समुपागते ।
अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत् ॥

इति श्रुतेः ॥ ४ ॥

परमतत्त्वावबोधेन ब्रह्ममात्रावशेषः

**उपासकस्ततोऽभ्येत्यैवंविधं नारायणं ध्यात्वा प्रदक्षिणनमस्कारान् विधाय विविधोपचारैरभ्यर्च्य निरतिशयाद्वैतपरमानन्दलक्षणो भूत्वा तदग्रे सावधानेनोपविश्य अद्वैतयोगमास्थाय सर्वाद्वैतपरमानन्दलक्षणाखण्डामिततेजोराश्याकारं विभाव्योपासकः**

स्वयं शुद्धबोधानन्दमयामृतनिरतिशयानन्दतेजोराश्याकारो भूत्वा महावाक्यार्थमनुस्मरन् ब्रह्माहमस्मि अहमस्मि ब्रह्माहमस्मि योऽहमस्मि ब्रह्माहमस्मि अहमेवाहं मां जुहोमि स्वाहा अहं ब्रह्मेति भावनया यथा परमतेजोमहानदीप्रवाहः परमतेजःपारावारे प्रविशति यथा परमतेजःपारावारतरङ्गाः परमतेजःपारावारे प्रविशन्ति तथैव सच्चिदानन्दात्मोपासकः सर्वपरिपूर्णाद्वैतपरमानन्दलक्षणपरब्रह्मणि नारायणे मयि सच्चिदानन्दात्मकोऽहमजोऽहं परिपूर्णोऽहमस्मीति प्रविवेश तत उपासको निस्तरङ्गाद्वैतापारनिरतिशयसच्चिदानन्दसमुद्रो बभूव ॥ ५ ॥

यस्त्वनेन मार्गेण सम्यगाचरति स नारायणो भवत्यसंशयमेव। अनेन मार्गेण सर्वे मुनयः सिद्धिं गताः। असंख्याताः परमयोगिनश्च सिद्धिं गताः ॥ ६ ॥

एवं देशिकमुखतः परमतत्त्वरहस्यमवबुध्य शिष्यः निर्विशेषब्रह्ममात्रप्रबोधसमकालं तन्मात्रमवशिष्यत इत्याह––**उपासक इति**। "ब्रह्माहमस्मि" इत्याद्यं वाक्यं ब्रह्मण्यनात्मताभ्रान्तिवारकम्। "अहमस्मि ब्रह्माहमस्मि" इति वाक्यं तु आत्मन्यब्रह्मत्वभ्रमवारकम्। "योऽहमस्मि ब्रह्माहमस्मि" इति वाक्यं तु प्रत्यक्परचितोर्भेदः स्वाज्ञविकल्पितः योऽहं जीवोऽस्मीति, स्वज्ञदृष्ट्या ब्रह्माहमस्मीति, परमार्थदृष्ट्या तयोः प्रसक्तभेदैक्यभ्रमो नास्तीति। "अहमेवाहं मां जुहोमि स्वाहा" इति मन्त्रस्तु––**अहमेव** परमात्मा निष्प्रतियोगिको**ऽहं**, ममानात्मापह्नवसिद्धत्वात्। अत एव ब्रह्ममात्राग्नौ प्रत्यक्परविभागैक्यहेतुभूतां अविद्याविद्यारूपां **मां** मायां **जुहोमि** अपह्नवं कृत्वा तदपह्नवसिद्धं ब्रह्म स्वमात्रमिति तन्मात्रतया अवशिष्यत इत्यर्थः। एवं **अहं ब्रह्मेति भावनया**। उपदेशार्थः

प्रवेशशब्दः, न तु ग्रामप्रवेशवत् इत्यत्र—"आप्तिः स्वमात्रावशेषो न हि ग्रामान्तराप्तिवत्" इति नामार्थविवेकोक्तेः । ततः किमित्यत आह—**तत इति** ॥ ५ ॥ मदुक्तार्थं यथावत् यो वेद सोऽपि कृतकृत्यो भवतीत्याह—**यस्त्विति** । भवन्तं प्रति यो मया दर्शितः **अनेनेति** । तस्मात् मदुक्तमार्ग एव श्रेयानित्यर्थः ॥ ६ ॥

सालम्बनिरालम्बयोगभेदः

ततः शिष्यो गुरुं परिपृच्छति—भगवन् सालम्बनिरालम्बयोगौ कथमिति ॥ ७ ॥

सालम्बस्तु करचरणादिमूर्तिविशिष्टं मण्डलाद्यालम्बनं सालम्बयोगः । निरालम्बस्तु समस्तनामरूपकर्मातिदूरतया सर्वकामाद्यन्तःकरणवृत्तिसाक्षितया तदालम्बनशून्यतया च भावनं निरालम्बयोगः ॥ ८ ॥

सालम्बनिरालम्बयोगेयत्तां पृच्छति—**भगवन्निति** ॥ ७ ॥ पृष्टो भगवानेवमाह—**सालम्बस्त्विति** ॥ ८ ॥

निरालम्बयोगाधिकारिलक्षणम्

अथ च निरालम्बयोगाधिकारी कीदृशो भवति ॥ ९ ॥

अमानित्वादिलक्षणोपलक्षितो यः पुरुषः स एव निरालम्बयोगाधिकारी ॥ १० ॥

तत्रान्यतराधिकारी कीदृशः ? इति पृच्छति—**अथेति** ॥ ९ ॥ उत्तरमाह—**अमानित्वादीति** ॥ १० ॥

सर्वाधिकारिको भक्तियोगः

कार्यः कश्चिदस्ति । तस्मात् सर्वेषामधिकारिणामनधिकारिणां च भक्तियोग एव प्रशस्यते । भक्तियोगो निरुपद्रवः ।

भक्तियोगान्मुक्तिः । [1]भक्तिमतामनायासेनाचिरादेव तत्त्वज्ञानं भवति ॥ ११ ॥

तत् कथमिति । भक्तवत्सलः स्वयमेव सर्वेभ्यो मोक्षविघ्नेभ्यो भक्तिनिष्ठान् सर्वान् परिपालयति सर्वाभीष्टान् प्रयच्छति मोक्षं दापयति चतुर्मुखादीनाम् । सर्वेषामपि विना विष्णुभक्त्या कल्पकोटिभिर्मोक्षो न विद्यते । कारणेन विना कार्यं नोदेति । भक्त्या विना ब्रह्मज्ञानं कदाऽपि न जायते । तस्मात्त्वमपि सर्वोपायान् परित्यज्य भक्तिमाश्रय । भक्तिनिष्ठो भव । भक्तिनिष्ठो भव । भक्त्या सर्वसिद्धयः सिध्यन्ति । भक्त्यसाध्यं न किंचिदस्ति ॥ १२ ॥

निरालम्बयोगस्त्वधिकारिविषयः न हि सर्वसाधारणो भवति, तथा चेदनधिकारिणां का गतिः इत्यत्र अधिकार्यनधिकारिणोरपि साधारणोपायभूत-भक्तियोगमेव स्तौति—**कार्य इति** । यस्मात् अधिकार्यनधिकारिणोरपि परम-सुलभोपायतया **कार्यः कश्चिदस्तीति** । किं तत् ? इत्यत्र—**तस्मादिति** । स्वाधिकारानुगुण्येन सोऽहं दासोऽहं इति भजनं भक्तिः "स्वस्वरूपानुसंधानं भक्तिरित्यभिधीयते" इति भाष्यकारोक्तेः, सैव योगः । तस्यायासाल्पत्वं फलानल्पत्वं चाह—**भक्तियोग इति** ॥ ११ ॥ **सर्वान् पालयति**—स्वाप्रबोधो हि मोक्षविघ्न इत्यर्थः । **चतुर्मुखादीनां** स्वप्रतिपत्त्येत्यर्थः । **सर्वेषामपि विना विष्णुभक्त्या** ब्रह्मज्ञानानुदयात् तदितरसाधनैः **कल्पकोटिभिः मोक्षो न विद्यते** ॥ १२ ॥

भक्तियोगादनायासेन नारायणभावप्राप्तिः

एवंविधं गुरूपदेशमाकर्ण्य सर्वं परमतत्त्वरहस्यमवबुध्य सर्वसंशयान् विधूय क्षिप्रमेव मोक्षं साधयामीति निश्चित्य ततः

[1] बुद्धिमता—उ, मु.

शिष्यः समुत्थाय प्रदक्षिण[1]नमस्कारं कृत्वा गुरुभ्यो गुरुपूजां विधाय गुर्वनुज्ञया क्रमेण भक्तिनिष्ठो भूत्वा भक्त्यतिशयेन पक्वविज्ञानं प्राप्य तस्मादनायासेन शिष्यः क्षिप्रमेव साक्षान्नारायणो बभूवेत्युपनिषत् ॥ १३ ॥

नारायणयाथात्म्यज्ञानात् नारायण एव भवति । इत्युपनिषच्छब्दः गुरुशिष्याख्यायिकासमाप्त्यर्थः ॥ १३ ॥

परमरहस्यस्मरणादेर्महिमा

ततः प्रोवाच भगवान् महाविष्णुः चतुर्मुखमवलोक्य—ब्रह्मन् परमतत्त्वरहस्यं ते सर्वं कथितम् । तत्स्मरणमात्रेण मोक्षो भवति । तदनुष्ठानेन सर्वमविदितं विदितं भवति । यत्स्वरूपज्ञानिनः सर्वमविदितं विदितं भवति तत् सर्वं परमरहस्यं कथितम् ॥ १४ ॥

ततः किमित्यत आह—तत इति । नातः परं ते वक्तव्यं विद्यते, यद्वक्तव्यं परमतत्त्वरहस्यं तस्य साकल्येनोक्तत्वात् "नातः परं हि वेदितव्यमिति किंचित्" इति हि श्रुतेः ॥ १४ ॥

आदिनारायणैकनिष्ठाविधिः

गुरुः क इति । गुरुः साक्षादादिनारायणः पुरुषः । स आदिनारायणोऽहमेव । तस्मान्मामेकं शरणं व्रज । मद्भक्तिनिष्ठो भव । मदीयोपासनां कुरु । मामेव प्राप्स्यसि । मद्व्यतिरिक्तं सर्वं बाधितम् । मद्व्यतिरिक्तमबाधितं न किंचिदस्ति । निरतिशयानन्दा-

[1] नमस्कारान्—अ २.

द्वितीयोऽहमेव । सर्वपरिपूर्णोऽहमेव । सर्वाश्रयोऽहमेव । वाचामगोचरनिराकारपरब्रह्मस्वरूपोऽहमेव । मद्व्यतिरिक्तमणुमात्रं न विद्यते ॥ १५ ॥

येनेदं कथितं स कीदृश इत्याक्षिपति—गुरुः क इति । यस्मादेवं तस्मात् मां निष्प्रतियोगिकैकं ब्रह्मास्मीति शरणं व्रज प्रपत्तिं कुर्वित्यर्थः । यद्येवमधिकारी न भवसि तदा मद्भक्तिनिष्ठो भव । त्वद्व्यतिरिक्ताश्रयणे का हानिरित्यत आह—मद्व्यतिरिक्तमिति । तथा चेत् त्वं कीदृशः इत्यत्र—निरतिशयेति । स्वातिरिक्तसर्वप्रसक्तौ तदाश्रयत्वं, वस्तुतो निराश्रयोऽस्मीत्यर्थः ॥ १५–१६ ॥

महाविष्णुभक्तितः सकलश्रेयःप्राप्तिः

इत्येवं महाविष्णोः परमिममुपदेशं लब्ध्वा पितामहः परमानन्दं प्राप ॥ १६ ॥

विष्णोः कराभिमर्शनेन दिव्यज्ञानं प्राप्य पितामहस्ततः समुत्थाय प्रदक्षिणनमस्कारान् विधाय विविधोपचारैर्महाविष्णुं प्रपूज्य प्राञ्जलिर्भूत्वा विनयेनोपसंगम्य भगवन् भक्तिनिष्ठां मे प्रयच्छ । त्वदभिन्नं मां परिपालय कृपालय ॥ १७ ॥

तथैव साधु साध्विति साधुप्रशंसापूर्वकं महाविष्णुः प्रोवाच—मदुपासकः सर्वोत्कृष्टः [1]स भवति । मदुपासनया सर्वमङ्गलानि भवन्ति । मदुपासनया सर्वं जयति । मदुपासकः सर्ववन्द्यो भवति । मदीयोपासकस्यासाध्यं न किंचिदस्ति । सर्वबन्धाः प्रविनश्यन्ति ।

[1] संभ—अ १, अ २

सद्वृत्तमिव सर्वे देवास्तं सेवन्ते । महाश्रेयांसि च सेवन्ते । मदु-पासकस्तस्मान्निरतिशयाद्वैतपरमानन्दलक्षणपरब्रह्म भवति । यो वै मुमुक्षुरनेन मार्गेण सम्यगाचरति स परमानन्दलक्षणपरब्रह्म भवति ॥ १८ ॥

ततः किमित्यत आह—**विष्णोरिति** ॥ १७ ॥ मदुक्तमार्गानुसरणफल-माह—**य इति** ॥ १८ ॥

एतदुपनिषदध्ययनादेर्महिमा

यस्तु परमतत्त्वरहस्याथर्वणमहानारायणोपनिषदमधीते स सर्वेभ्यः पापेभ्यो मुक्तो भवति ज्ञानाज्ञानकृतेभ्यः पातकेभ्यो मुक्तो भवति महापातकेभ्यः पूतो भवति रहस्यकृतप्रकाशकृतचिरकालात्यन्त-कृतेभ्यः सर्वेभ्यः पापेभ्यो मुक्तो भवति । स सकललोकान् जयति । स सकलमन्त्रजपनिष्ठो भवति । स सकलवेदान्तरहस्याधिगत-परमार्थज्ञो भवति । स सकलभोगभुग्भवति । स सकलयोगविद्भवति । स सकलजगत्परिपालको भवति । सोऽद्वैतपरमानन्दलक्षणपरब्रह्म भवति ॥ १९ ॥

इदं परमतत्त्वरहस्यं न वाच्यं गुरुभक्तिविहीनाय । न चाशुश्रूषवे वाच्यं न तपोविहीनाय नास्तिकाय न डाम्भिकाय मद्भक्तिविहीनाय । मात्सर्याङ्कितनवे न वाच्यम् । न वाच्यं मदसूयापराय कृतघ्नाय ॥ २० ॥

इदं परमरहस्यं मद्भक्तेष्वभिधास्यति मद्भक्तिनिष्ठो भूत्वा मामेव प्राप्स्यति ॥ २१ ॥

आवयोर्य इमं संवादमध्येष्यति स नरो ब्रह्मनिष्ठो भवति ॥ २२ ॥

श्रद्धावाननसूयुः श्रृणुयात् पठति वा य इमं संवादमावयोः स पुरुषो मत्सायुज्यमेति ॥ २३ ॥

ततो महाविष्णुस्तिरोदधे । ततो ब्रह्मा स्वस्थानं जगामेत्युपनिषत् ॥ २४ ॥

एतद्ग्रन्थमर्थतो यः पठति तस्य सा[illegible]विशेषफलमाह—**यस्त्विति** । किं बहुना—**सोऽद्वैतेति** ॥ १९ ॥ शास्त्रसम्प्रदायमाह—**इदमिति** ॥ २०–२१ ॥ **आवयोः** संवादनिर्वृत्तशास्त्रजन्यज्ञानविज्ञानसम्यग्ज्ञानसमकालं **मत्सायुज्यं** मद्भावं विकळेबरकैवल्य**मेति** ॥ २२–२३ ॥ ततः किमित्यत्र शास्त्रार्थमुपसंहरति—**तत इति** । उपदेशकार्ये निर्वृत्ते **महाविष्णुस्तिरोदधे** स्वान्वर्थनामा भवति व्यापक एव भवतीत्यर्थः । **ततो ब्रह्मा** कृतकृत्यो भूत्वा **स्वस्थानं जगाम** । **इत्युपनिषच्छब्दौ** अष्टमाध्यायकृत्स्नशास्त्रसमाप्त्यर्थौ ॥ २४ ॥

इत्यथर्वणमहानारायणोपनिषदि परमसायुज्यमुक्तिस्वरूपनिरूपणं नाम अष्टमोऽध्यायः

**उत्तरकाण्डः समाप्तः**

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
महानारायणव्याख्या लिखिता ब्रह्मगोचरा ।
महानारायणव्याख्याग्रन्थस्त्वष्टशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे द्विपञ्चाशत्सङ्ख्यापूरकं त्रिपाद्विभूतिमहानारायणोपनिषद्विवरणं संपूर्णम् ॥

---

# दत्तात्रेयोपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

## प्रथमः खण्डः

दत्तात्रेयध्यानम्

ॐ सत्यक्षेत्रे ब्रह्मा नारायणं महासाम्राज्यं किं तारकं तन्नो ब्रूहि भगवन्नित्युक्तः सत्यानन्दचिदात्मकं सात्त्विकं मामकं धामोपास्स्वेत्याह । सदा दत्तोऽहमस्मीति प्रत्येतत्संवदन्ति ये न ते संसारिणो भवन्ति । नारायणेनैवं विवक्षितो ब्रह्मा विश्वरूपधरं विष्णुं नारायणं दत्तात्रेयं ध्यात्वा सद्वदति ॥ १ ॥

दत्तात्रेयब्रह्मविद्यासंवेद्यानन्दविग्रहम् ।<br>
त्रिपान्नारायणाकारं दत्तात्रेयमुपास्महे ॥

इह खलु अथर्वणवेदप्रविभक्तेयं दत्तात्रेयोपनिषत् एकाक्षरादिदत्तात्रेयमन्त्रग्रामप्रकटनव्यग्रा निर्विशेषब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । ब्रह्मनारायणसंवादरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—ॐ सत्यक्षेत्र इति । आदौ ओमिति सविशेषं निर्विशेषं वा ब्रह्मोच्यते, "प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः श्रुतः" इति खिलश्रुतेः ।

गङ्गायमुनयोः मध्यविलसितं सत्यक्षेत्रं तत्र **सत्यक्षेत्रे ब्रह्मा** तपः चचार । तपःफलदित्सया प्रसन्नं स्वातिरिक्तं नास्त्यरमपीति ये मन्यन्ते ते नाराः तेषां अयनं विश्रान्तिस्थानभूतं **नारायणं** महांश्वासौ सम्यग्राजत इति सम्राट् च महासम्राट् तद्भावो **महासाम्राज्यस्वरूपं** विधिवत् प्रणम्य हे **भगवन् ततो** गर्भजन्मजरामरणात् **किं तारकं** भवसागरतो भक्तकोटिसन्तारकं **मे ब्रूहीति** ब्रह्मणैवमुक्तो नारायण अनृतदुःखजाड्यग्रासतया **सत्यानन्दचिदात्मकं** विशुद्ध-सत्वसत्वसत्वोपाधिकतया **सात्विकं मामकं धामोपास्स्वेत्याह** । स्वधामोपासना-प्रकारं तत्फलं चाह—**सदेति** । स्वभक्तपटलेभ्यः स्वपदप्राप्त्युपायनिष्प्रतियोगिक-ब्रह्ममात्रप्रबोधो येन **दत्तः** सोऽयं निर्विशेषपरमात्मा दत्त इत्युच्यते । **सदा** प्रत्यहं **दत्तोऽहमस्मीति य एतत् संवदन्ति न** हि **ते** संसारिणो **भवन्ति** परमात्मैव भवन्तीत्यत्र—

सदा रामोऽहमस्मीति तत्त्वतः प्रवदन्ति ये ।
न ते संसारिणो नूनं राम एव न संशयः ॥

इति श्रुतेः । **नारायणेनैवं विवक्षितो ब्रह्मा** विराडात्मना **विश्वरूपधरं** स्वाज्ञविकल्पितप्रपञ्चसूत्रान्तर्याम्यात्मना **विष्णुं** व्यापनशीलं मुक्तालिविश्रान्तिसीमतया **नारायणं दत्तात्रेयं** अत्रिमुनितपःफलं भगवन्तं निष्प्रतियोगिकब्रह्ममात्रतया **ध्यात्वा** तद्याथात्म्यं स्वमात्रमित्यवगम्य स्वानुभूतार्थं प्रकटयतीत्याह—**विश्वेति** । यत्स्वातिरिक्तासत्प्रपञ्चतत्कार्यापह्नवसिद्धं ब्रह्म तदेव **सत्** निष्प्रतियोगिकसन्मात्र-मिति **वदति**, "पश्यतेहापि सन्मात्रमसदन्यत्", "ब्रह्ममात्रमसदन्यत्" इत्यादिश्रुतेः ॥ १ ॥

दत्तात्रेयतारकैकाक्षरमन्त्रः

**दमिति** [1]**हंसः । दामिति दीर्घम् । तद्बीजं नाम बीजस्थम् । दामित्येकाक्षरं भवति । तदेतत्तारकं भवति । तदेवोपासितव्यं विज्ञेयं**

[1] **ह्रस्वं—क (पाठान्तरम्).**

**गर्भादितारणम् । गायत्री छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता । वटबीजस्थमिव दत्तबीजस्थं सर्वं जगत् । एतदेवैकाक्षरं व्याख्यातम् ॥ २ ॥**

एवं ब्रह्मणो दृढानुभवसन्तुष्टो भगवान् दत्तात्रेयः तारकादिमन्त्रग्राममाचष्टे—**दमित्यादि** । **दमिति** हंसः प्रत्यक् । तद्विश्रान्तिस्थानं **दीर्घं** परं ब्रह्म । तयोरैक्यं **दामिति** प्रत्यगभिन्नपरमात्मोच्यते । यत् **दामित्येकाक्षरं भवति तद्बीजं नाम** बीजावभासकतया **बीजस्थं** ब्रह्मोच्यते । यद्ब्रह्म दामित्युक्तं तत्तारकतया ज्ञेयमित्याह—**तदेतदिति** । तारकस्य छन्दऋषिदेवता आह—**गायत्रीति** । दत्तबीजस्य जगत्कारणतामाह—**वटबीजस्थमिति** ॥ २ ॥

दत्तात्रेयषडक्षरमन्त्रः

**व्याख्यास्ये षडक्षरम् । ओमिति प्रथमम् । श्रीमिति द्वितीयम् । [1]ह्रीमिति तृतीयम् । क्लीमिति चतुर्थम् । [2]ग्लौमिति पञ्चमम् । द्रामिति षट्क[ष्ठ]म् । षडक्षरोऽयं भवति । सर्वसंपद्वृद्धिकरी भवति । योगानुभवो भवति । गायत्री छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता ॥ ३ ॥**

ॐ श्रीं ह्रीं क्लीं ग्लौं द्रां इति **षडक्षरोऽयं भवति** ॥ ३ ॥

दत्तात्रेयाष्टाक्षरमन्त्रः

**द्रमित्युक्त्वा द्रामित्युक्त्वा वा दत्तात्रेयाय नम इत्यष्टाक्षरः । दत्तात्रेयायेति सत्यानन्दचिदात्मकम् । नम इति पूर्णानन्दैकविग्रहम् ।**

[1] ह्रा—अ, अ १, अ २, क. [2] ग्ला—क. ग्लो—अ १.

**गायत्री छन्दः। सदाशिव ऋषिः। दत्तात्रेयो देवता। दत्तात्रेयायेति कीलकम्। तदेव बीजम्। नमः शक्तिर्भवति॥ ४॥**

अष्टाक्षरमनुमुद्धरति—**द्रमिति**। द्रां दत्तात्रेयाय नमः। ध्यानं तु—**दत्तात्रेयायेति। दत्तात्रेयाय सत्यानन्दचिदात्मकं नमः पूर्णानन्दैकविग्रहं** इति त्रयोविंशाक्षरमनुर्वाऽयं भवति॥ ४॥

दत्तात्रेयद्वादशाक्षर[illegible]

**ओमिति प्रथमम्। आमिति द्वितीयम्। ह्रीमिति तृतीयम्। क्रोमिति चतुर्थम्। एहीति तदेव वदेत्। दत्तात्रेयेति स्वाहेति मन्त्रराजोऽयं द्वादशाक्षरः। जगती छन्दः। सदाशिव ऋषिः। दत्तात्रेयो देवता। ओमिति बीजम्। स्वाहेति शक्तिः। संबुद्धिरिति कीलकम्। द्रमिति हृदये। ह्रीं क्रीमिति शीर्षे। एहीति शिखायाम्। दत्तेति कवचे। आत्रेयेति चक्षुषि। स्वाहेत्यस्त्रे। तन्मयो भवति। य एवं वेद॥ ५॥**

द्वादशाक्षरमनुमुद्धरति—**ओमिति**। ॐ आं ह्रीं क्रों एहि दत्तात्रेय स्वाहेति **मन्त्रराजोऽयं द्वादशाक्षरः**॥ ५॥

दत्तात्रेयषोडशाक्षरमन्त्रः

**षोडशाक्षरं व्याख्यास्ये। प्राणं देयम्। मानं देयम्। चक्षुर्देयम्। श्रोत्रं देयम्। षड्दशशिरश्छिनत्ति। षोडशाक्षरमन्त्रो न देयो भवति। अतिसेवापरभक्तगुणवच्छिष्याय वदेत्। ओमिति प्रथमं भवति। ऐमिति द्वितीयम्। क्रोमिति तृतीयम्। क्लीमिति चतुर्थम्।**

[1]क्लूमिति पञ्चमम् । ह्रामिति षष्ठम् । ह्रीमिति सप्तमम् । ह्रूमित्य-ष्टमम् । सौरिति नवमम् । दत्तात्रेयायेति चतुर्दशम् । स्वाहेति षोडशम् । गायत्री छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता । ॐ बीजम् । स्वाहा शक्तिः । चतुर्थ्यन्तं कीलकम् । ओमिति हृदये । क्लां क्लीं क्लूमिति शिखायाम् । सौरिति कवचे । चतुर्थ्यन्तं चक्षुषि । स्वाहेत्यस्त्रे । यो नित्यमधीयानः सच्चिदानन्दसुखी मोक्षी भवति । सौरित्यन्ते श्रीवैष्णव इत्युच्यते । तज्जापी विष्णुरूपी भवति ॥ ६ ॥

षोडशाक्षरस्य मन्त्रराजत्वेन अनधिकारिणि अदेयतां अधिकारिणि देयतां वदन् मन्त्रराजमुद्धरति—**षोडशाक्षरमिति** । अनधिकारिणि यदि ते अनुकम्पा तदा तस्मै **प्राणं देयम्** । तत्कृतेऽन्यत्र **षड्दशशिरश्छिनत्ति** तदुपकाराय तच्छत्रूणां शिरश्छेदनं वा कर्तव्यम् । जात्वप्ययं **षोडशाक्षरमन्त्रो न देयो भवति** । पुनः कस्मै वक्तव्येत्यत्र—**अतिसेवापरेति** । अथ षोडशाक्षरमुद्धरति—**ओमिति** । ॐ ऐं क्रों क्लीं क्लूं ह्रां ह्रीं ह्रूं सौः दत्तात्रेयाय स्वाहेति षोडशाक्षरः । दत्तात्रेयायेति **चतुर्थ्यन्तं कीलकम्** । **यो नित्यमधीयानः** सोऽयं **सच्चिदानन्दसुखी** ॥ ६ ॥

दत्तात्रेयानुष्टुभमन्त्रः

अनुष्टुप्छन्दो व्याख्यास्ये । सर्वत्र संबुद्धिरिमानीत्युच्यन्ते—

दत्तात्रेय हरे कृष्ण उन्मत्तानन्ददायक ।
दिगम्बर मुने बाल पिशाच ज्ञानसागर ॥

इत्युपनिषत् । अनुष्टुप् छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता । दत्तात्रेयेति हृदये । हरे कृष्णेति शीर्षे । उन्मत्तानन्देति शिखायाम् ।

[1] क्रू—अ १.

दायक मुन इति कवचे। दिगम्बरेति चक्षुषि। पिशाचज्ञानसागरेत्यस्त्रे। आनुष्टुभोऽयं मयाऽधीतः। अब्रह्मजन्मदोषाश्च प्रणश्यन्ति। सर्वोपकारी मोक्षी भवति। य एवं वेदेत्युपनिषत्॥ ७॥

अनुष्टुभमुद्धरति—अनुष्टुबिति। एतदनुष्टुम्मूलमन्त्रजपतः सर्वपापनिवृत्तो भूत्वा स्वाज्ञजनस्वपदप्राप्त्युपायदानेन सर्वोपकारी सन् स्वातिरिक्तभ्रमतो मोक्षी भवति। य एवं वेद स मुक्तो भवतीत्यर्थः। इत्युपनिषच्छब्दः पूर्व[प्रथम]खण्डपरिसमाप्त्यर्थः॥ ७॥

इति पूर्वः [प्रथमः] खण्डः

---

## द्वितीयः खण्डः

दत्तात्रेयमालामन्त्रः

ओमिति व्याहरेत्। ॐ नमो भगवते दत्तात्रेयाय स्मरणमात्रसंतुष्टाय महाभयनिवारणाय महाज्ञानप्रदाय चिदानन्दात्मने बालोन्मत्तपिशाचवेषायेति महायोगिनेऽवधूतायेति अनसूयाऽऽनन्दवर्धनायात्रिपुत्रायेति सर्वकामफलप्रदाय ओमिति व्याहरेत्। भवबन्धमोचनायेति ह्रीमिति व्याहरेत्। सकलविभूतिदायेति क्रोमिति व्याहरेत्। साध्याकर्षणायेति सौरिति व्याहरेत्। सर्वमनःक्षोभणायेति श्रीमिति व्याहरेत्। महोमिति व्याहरेत्। चिरंजीविने वषडिति

व्याहरेत् । वशीकुरु वशीकुरु वौषडिति व्याहरेत् । आकर्षयाकर्षय हुमिति व्याहरेत्। विद्वेषय विद्वेषय फडिति व्याहरेत्। उच्चाटयोच्चाटय ठ ठेति व्याहरेत्। स्तम्भय स्तम्भय [1]ख खेति व्याहरेत्। मारय मारय नमः संपन्नाय नमः संपन्नाय स्वाहा पोषय पोषय परमन्त्रपरयन्त्र-परतन्त्रांश्छिन्धि च्छिन्धि ग्रहान्निवारय निवारय व्या[2]धीन्निवारय निवारय दुःखं हरय हरय दारिद्र्यं विद्रावय विद्रावय देहं पोषय पोषय चित्तं तोषय तोष[3]य सर्वमन्त्रसर्वयन्त्रसर्वतन्त्रसर्वपल्लवस्वरूपायेति ॐ नमः शिवायेत्युपनिषत् ॥

मालामनुप्रकटनार्थमुत्तरखण्डः आरभ्यते—ओमिति ।

इति द्वितीयः खण्डः

---

# तृतीयः खण्डः

दत्तात्रेयविद्याफलम्

य एवं वेद । अनुष्टुप् छन्दः । सदाशिव ऋषिः । दत्तात्रेयो देवता । ओमिति बीजम् । स्वाहेति शक्तिः । द्रामिति कीलकम् । अष्टमूर्त्यष्टमन्त्रा भवन्ति । यो नित्यमधीते [4]वाय्वग्निसोमादित्य-ब्रह्मविष्णुरुद्रैः पूतो भवति । गायत्र्याः शतसहस्रं [5]जप्तो भवति ।

[1] खेखे—अ १, क.
[2] व्याधिं नि—अ १.
[3] येति—अ १, मु.
[4] स वा—अ, अ १.
[5] जप्तं—मु.

महारुद्रशतसहस्रजापी भवति । प्रणवायुतकोटिजप्तो भवति । शतपूर्वान् [1]शतापरान् पुनाति । स पङ्क्तिपावनो भवति । ब्रह्महत्याऽऽदिपातकैर्मुक्तो भवति । गोहत्यादिपातकैर्मुक्तो भवति । तुलापुरुषादिदानैः प्रपापानतः पूतो भवति । अशेषपापान्मुक्तो भवति । [2]अभक्ष्यभक्ष्यपापैर्मुक्तो भवति । सर्वमन्त्रयोगपारीणो भवति । स एव ब्राह्मणो भवति । तस्माच्छिष्यं भक्तं प्रतिगृह्णीयात् । सोऽनन्तफलमश्नुते । स जीवन्मुक्तो भवतीत्याह भगवान्नारायणो ब्रह्माणमित्युपनिषत् ॥

विद्याफलं प्रकटयितुं तृतीयः खण्डः आरभ्यते—**य इति** । किं बहुना, **स एव ब्राह्मणो** ब्रह्मनिष्ठो जीवन्मुक्तो **भवति** । यस्मादेवं **तस्मात्** । यस्मात् इयं ब्रह्मविद्या जीवन्मुक्तत्वहेतुः **तस्मात्** विद्वान् एतामुपनिषदं शासनार्हं **शिष्यं** स्वभजनशीलं **भक्तं** च **प्रतिगृह्णीयात्** ग्रहयेत् । य एवं ग्रहीता ग्राहयिता च **सोऽनन्तफलं** मोक्षमश्नुते । आप्रारब्धक्षयं **स जीवन्मुक्तो भवतीति** नारायणो ब्रह्माणं प्रत्याहेत्यर्थः । **इत्युपनिषच्छब्दः** दत्तात्रेयोपनिषत्समाप्त्यर्थः ।

**इति तृतीयः खण्डः**

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
दत्तात्रेयोपनिषदो व्याख्यानं लिखितं लघु ।
दत्तविद्यावृत्तिसङ्ख्या पञ्चपञ्चाशदीरिता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकोत्तरशतसङ्ख्यापूरकं दत्तात्रेयोपनिषद्विवरणं सम्पूर्णम् ॥

[1] शतोत्तरान्—अ २, क.   [2] भक्ष्याभ—अ, मु.  अभक्ष्याभ—अ १, क.

# नारायणोपनिषत्

सह नाववतु—इति शान्तिः

## प्रथमः खण्डः

नारायणात् सर्वचेतनाचेतनजन्म

अथ पुरुषो ह वै नारायणोऽकामयत प्रजाः सृजेयेति। नारायणात् प्राणो जायते मनः सर्वेन्द्रियाणि च खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी। नारायणाद्ब्रह्मा जायते। नारायणाद्रुद्रो जायते। नारायणादिन्द्रो जायते। नारायणात् प्रजापतिः प्रजायते। नारायणाद्द्वादशादित्या रुद्रा वसवः सर्वाणि छन्दांसि नारायणादेव समुत्पद्यन्ते नारायणात् प्रवर्तन्ते नारायणे प्रलीयन्ते। एतदृग्वेद-शिरोऽधीते ॥

मायातत्कार्यमखिलं यद्बोधाद्यात्यपह्नवम्।
त्रिपान्नारायणाख्यं तत् कलये स्वात्ममात्रतः ॥

अथ खलु नारायणोपनिषदः कृष्णयजुर्वेदप्रविभक्तत्वेन वक्तव्योपोद्घातादिकं कठवल्ल्यादितुल्यं विज्ञेयम्। ऋगादिचतुर्वेदशिरोरूपेयं नारायणोपनिषत् गुरुशिष्यसंवादाद्याख्यायिकां विना स्वेनैव प्रवृत्तेति यत् तत् विद्यास्तुत्यर्थम्।

कथं प्रवृत्तेयमुपनिषदित्याकाङ्क्षायामाह—**अथेति** । स्वाविद्यापदतत्कार्यपूरणात् **पुरुषः** । यत्र सूरयो न रमन्ते तत् नरं स्वाविद्यापदतत्कार्यजातं, तदेव नारं, तत् यत्र पर्यवस्यति तद्धि तस्यायनमधिकरणं **नारायणशब्दार्थः** । यद्वा—नास्त्यरमपि अविद्यापदतत्कार्यजातमिति नारं अपह्नवात्मकं, तदपह्नवसिद्धं यद्रूपं सोऽयं **नारायणः** । **हवा** इति निपातौ निष्प्रतियोगिकप्रसिद्धिद्योतकौ भवतः । यः एवं स्वमात्रमवशिष्यते सोऽयं **अथ** स्वाज्ञदृष्टिप्रसक्त्यनन्तरं मूलाबीजांशयोगतः ईश्वरभावमापन्न इव **अकामयत** कामितवान् । किमिति ? **प्रजाः सृजेय** उत्पादयेयं इति । आदौ ईश्वरभावमापन्ननारायणात् मुख्य**प्राणो** हिरण्यगर्भो जायते । ततो **मनः** महत्तत्त्वं **सर्वेन्द्रियाणि च** अहङ्कारतत्त्वात्मकानि । च-शब्दात् सत्वादित्रिगुणं मनःश्रोत्राद्यन्तर्बाह्यकरणानि च जायन्ते । ततो नारायणात् **खं वायुः ज्योतिरापः पृथिवी विश्वस्य धारिणी** इति तन्मात्रभूतानि जायन्ते । ततः पञ्चीकृतपञ्चमहाभूतानि च । **नारायणात् ब्रह्मा** चतुराननः सृष्टिकर्ता **जायते** । नारायणात् स्थितिकर्ता विष्णुर्जायते इत्यध्याहार्यम्, सृष्टिसंहारकर्त्रोः सृष्ट्यनुरोधेन स्थितिकर्तुरपि वक्तुं उचितत्वात् । **नारायणाद्रुद्रः** सर्वोपसंहर्ताऽपि **जायते** । **नारायणादिन्द्रो जायते** त्रैलोक्याधिपतिः मघवान् । नारायणात् जायत इति सर्वत्र अनुषज्यते । **प्रजापतिः** दक्षादिनवप्रजापतयः, तथा मित्रादिद्वादशादित्याः भवाद्येकादश**रुद्राः** धराद्यष्टौ **वसवः** गायत्र्यादि-**सर्वाणि छन्दांसि** च । स्वातिरिक्ततया यद्यत् भाव्यं तत्तत् सर्वं **नारायणादेव समुत्पद्यते** । सृष्टि[स्थिति]काले तस्मादेव स्वे स्वे वर्त्मनि **प्रवर्तन्ते** । एतत्सर्वाणि उक्तानुक्तानि **नारायणे प्रलीयन्ते** । यतः एवं अतः स्वातिरिक्तसर्वारोपापवादाधिकरणं नारायण एव, नारायणादतिरिक्तं न किंचिदस्ति इत्यत्र—"ब्रह्मैवेदं सर्वं", "सत्तामात्रं हीदं सर्वं", "मद्व्यतिरिक्तमणुमात्रं न विद्यते", इति श्रुतेः । यः **एतदृग्वेदशिरोऽधीते** स सर्वेश्वरो नारायणो भवति इति ऋग्वेदमस्तकाभिप्रायः ॥

इति प्रथमः खण्डः

# द्वितीयः खण्डः

नारायणस्य सर्वात्मत्वम्

अथ नित्यो नारायणः । ब्रह्मा नारायणः । शिवश्च नारायणः । शक्रश्च नारायणः । कालश्च नारायणः । दिशश्च नारायणः । विदिशश्च नारायणः । ऊर्ध्वं च नारायणः । अधश्च नारायणः । अन्तर्बहिश्च नारायणः । नारायण एवेदं सर्वं यद्भूतं यच्च भव्यम् । निष्कलङ्को निरञ्जनो निर्विकल्पो निराख्यातः शुद्धो देव एको नारायणो न द्वितीयोऽस्ति कश्चित् । य एवं वेद स विष्णुरेव भवति स विष्णुरेव भवति । एतद्यजुर्वेदशिरोऽधीते ॥

कार्यकारणयोरेकत्वाभिप्रायेण शास्त्रतो यद्यत् स्वविकल्पितं तत्तत्कल्पना-हेतुस्वाज्ञानापाये स्वयमेवैतत् सर्वं, स्वव्यतिरिक्तं न किंचिदस्ति, इति ज्ञानसमकालं स्वयमेव अवशिष्यत इति प्रकटनाय इदं यजुर्वेदशिरः प्रवृत्तमित्याह—**अथेति** । ऋग्वेदशिर उक्त्वा **अथ** यजुर्वेदशिर आरभ्यते । अथशब्दस्य आरंभार्थयोगात् स्वकार्यापेक्षया तन्निरूपितकारणभावारूढो **नित्यो नारायणः ब्रह्मा** चतुराननोऽपि **नारायणः** कार्यमात्रस्य कारणानन्यत्वात् । **शिवशक्रादि**ग्रहणं निखिलचेतन-वर्गोपलक्षणार्थम् । अचेतनकालादिग्रहणं अव्यक्तादिस्थावरान्तोपलक्षणार्थम् । चेतनाचेतनप्रपञ्चोऽयं नारायण एवेत्यर्थः । एवं चेतनाचेतनात्मकस्वाविद्यापद-तत्कार्यजातान्तर्बहिरन्तराळं च नारायण एव । किं बहुना—यद्यत् भूतादि-कालत्रयपरिच्छेद्यं तत् सर्वमिदं नारायण एव, तदतिरिक्तमणुमात्रं न विद्यते इत्यर्थः । सकळङ्कसाञ्जनसविकल्पाविद्यापदतत्कार्यानुकारित्वेन सकळङ्कत्वादि स्यादित्यत आह—**निष्कळङ्क इति** । **निष्कलङ्कः** कळङ्कवत्स्वाविद्यापदस्थूलां-शायोगात्, **निरञ्जनः** अञ्जनार्हतत्सूक्ष्मांशायोगात्, **निर्विकल्पः** सर्वविकल्प-हेतुतद्बीजांशायोगात्, निराख्यातः आख्यासामान्ययोन्यर्धमात्रांशायोगात् । प्रातिस्विकेन अंशचतुष्टययोगाभावेऽपि युगपत् तद्योगात् अशुद्धता स्यादित्यत

आह—**शुद्ध** इति । अशुद्धाविद्यापदतत्कार्यापह्नवसिद्धत्वात् । तद्रूपेण किं न द्योतते इत्यत आह—**देव** इति । स्वाज्ञानदृशामविद्योतमानोऽपि स्वज्ञदृष्ट्या स्वमात्रतया द्योतमानत्वात् । स्वज्ञादिदृष्ट्यपेक्षया द्योतनाद्योतनत्वेन अनेकता स्यादित्यत आह—**एक** इति । परमार्थदृष्ट्या स्वज्ञस्वाज्ञतदृष्टिविभातद्योतनाद्योतनकलनापह्नवसिद्धात्मनो निष्प्रतियोगिकैकरूपत्वात् उक्तलक्षणलक्षितो **नारायणः** स्वमात्रमवशिष्यते । न हि तदतिरेकेण कश्चिदपि **द्वितीयोऽस्तीति** । **यः एवं** यजुर्वेदशिरःप्रतिपाद्यनारायणयाथात्म्यं **वेद स** विद्वान् वेदनसमकालं **विष्णुर्नारायणो** निष्प्रतियोगिकपरमात्मैव **भवति** इति यजुर्वेदमस्तकाभिप्रायः । आवृत्तिरादरार्था ॥

इति द्वितीयः खण्डः

# तृतीयः खण्डः

नारायणाष्टाक्षरमन्त्रः

**ॐमित्यग्रे व्याहरेत् । नम इति पश्चात् । नारायणायेत्युपरिष्टात् । ॐमित्येकाक्षरम् । नम इति द्वे अक्षरे । नारायणायेति पञ्चाक्षराणि । एतद्वै नारायणास्याष्टाक्षरं पदम् । यो ह वै नारायणस्याष्टाक्षरं पदमध्येति अनपब्रुवः सर्वमायुरेति विन्दते प्राजापत्यं रायस्पोषं गौपत्यं ततोऽमृतत्वमश्नुते ततोऽमृतत्वमश्नुत इति । एतत्सामवेदशिरोऽधीते ॥**

इत्थंभूतनारायणयाथात्म्यज्ञानोपायत्वेन तदष्टाक्षरमुद्धृत्य तत्परायणानां चित्तशुद्धिप्राप्यज्ञानद्वारा अमृतत्वं स्यादिति वक्तुं एतत्सामवेदशिरः प्रवृत्तमित्याह—**ओमिति** । **ओमित्येतद[देका]क्षरं** इत्याद्यष्टाक्षरोद्धारः स्पष्टार्थः । **यो ह वै नारायणस्याष्टाक्षरं पदमध्येति**—यस्तु गुरुमुखात् नारायणाष्टाक्षरं गृहीत्वा

कामाकामधिया मन्त्रशास्त्रविधिना यथावत् पुरश्चरणां करोति । **हवा** इति निपातौ श्रुतिस्मृतिप्रसिद्धिद्योतकौ । सोऽयं मन्त्री यदि सकामस्तदा **अनपब्रुवः** अपकीर्तिरहितः कीर्तिमान् सन् **सर्वमायुरेति** दीर्घायुष्मान् भवति **रायस्पोषं** धनपालत्वं **गौपत्यं** सार्वभौमत्वं देहावसाने **प्राजापत्यं** पदं ब्रह्मलोकं च **विन्दते** लभते । यदि मन्त्री निष्कामः स्यात् तदा **ततः** तदनुष्ठानतः चित्तशुद्धिप्राप्यज्ञानद्वारा मुख्यामृतत्वं विकळेबरकैवल्यं **अश्नुते** । आवृत्तिः निस्संशयार्था । यः एवं **एतत्सामवेदशिरोऽधीते** सोऽपि ज्ञानी भूत्वा अमृतत्वमेतीत्यर्थः ॥

इति तृतीयः खण्डः

# चतुर्थः खण्डः

नारायणप्रणवः

प्रत्यगानन्दं ब्रह्म पुरुषं प्रणवस्वरूपम् । अकार उकारो मकार इति । तानेकधा समभवत्तदेतदोमिति यमुक्त्वा मुच्यते योगी जन्मसंसारबन्धनात् । ॐ नमो नारायणायेति मन्त्रोपासको वैकुण्ठभवनं गमिष्यति । तदिदं पुण्डरीकं विज्ञानघनं तस्मात्तटिदाभमात्रम् । ब्रह्मण्यो देवकीपुत्रो ब्रह्मण्यो मधुसूदन [1]इति । सर्वभूतस्थमेकं वै नारायणं कारणपुरुषमकारणं परं ब्रह्मोम् । एतदथर्वशिरोऽधीते ॥

अष्टाक्षरीप्रतिपाद्यं ब्रह्म किमित्याकांक्षायां सगुणनिर्गुणप्रणवार्थरूपम्, तत्र सगुणप्रणवायमानाष्टाक्षर्युपासनया तत्सालोक्यादिमुक्तिः, निर्गुणप्रणवयाथात्म्यज्ञानतः तुर्यतुर्याप्तिश्च स्यात् इत्येतदर्थप्रकटनाय अथर्वशिरः प्रवृत्तमित्याह—

[1] "ब्रह्मण्यः पुण्डरीकाक्षो ब्रह्मण्यो विष्णुरच्युतः" इत्यधिको मुद्रितकोशे.

**प्रत्यगिति** । किं तत्प्रणवयाथात्म्यं? इत्यत्र स्वातिरिक्ताविद्यापदतत्कार्यप्रातिलोम्येन सच्चिदानन्दरूपेण अञ्चतीति **प्रत्यक्**, प्रत्यक् यत्र पराग्भावसापेक्षप्रत्यक्परविभागैक्यकलनां विहाय निष्प्रतियोगिकब्रह्ममात्रतया नन्दति तत् **प्रत्यगानन्दं**, तन्मात्रतया उपबृंहणात् **ब्रह्म**, **पुरुषं** पूर्णत्वात् "पूर्णमेवावशिष्यते" इति श्रुतेः । प्रत्यगानन्दं ब्रह्म पुरुषं इतिविशेषणविशिष्टं **प्रणवस्वरूपं** प्रणवयाथात्म्यं तुर्यतुर्यमित्यर्थः । तुर्यतुर्यवाचकप्रणवः कत्यवयव इत्यत आह—**अकार उकारो मकार** इति । स्थूलसूक्ष्मबीजार्धमात्रादिना अक[illegible]श्चतुर्धा भिद्यते । अर्धमात्राऽपि त्रेधा भिद्यते । आहत्य अकाराद्याः पञ्चदशमात्राविशिष्टाः । **तानेकधा समभवत्** इति यत् **तदेतदोमिति** ब्रह्मणोऽभिधानम् । यं प्रणवं प्लुतमात्रतयोच्चार्य योगी जन्मादिसंसारबन्धनान्मुच्यते सोऽयं "ॐ नमो नारायणाय" इति सगुणप्रणवः । तज्जपशीलस्य फलमाह—**ओमिति** । उक्तलक्षणलक्षितसगुणप्रणवोपासको **वैकुण्ठभवनं गमिष्यति** । यद्वैकुण्ठभवनमित्युक्तं वैष्णवं स्थानं **तदिदं** स्वाविद्यापदशरीरस्य हृत्**पुण्डरीकस्थानं** अजडक्रियाज्ञानेच्छाशक्तिसम्पत्त्या **विज्ञानघनं** यस्मादेवं **तस्मात्** तटिदिव प्रकाशमात्रम् । तदधिष्ठाता परमेश्वरः कीदृशः? इत्यत आह—**ब्रह्मण्य** इति । स्वातिरिक्ताब्रह्मापह्नवसिद्धं ब्रह्म स्वमात्रमिति ये जानन्ति ते ब्राह्मणाः ब्रह्मविद्वरिष्ठाः त एव देवं आत्मस्वरूपं यस्य सोऽयं **ब्रह्मण्यः** । कोऽयं इत्यत्र "देवकी ब्रह्मविद्येयं या वेदैरुपगीयते" इति श्रुतेः तस्यामाविर्भूतः प्रकाशितो **देवकीपुत्रः** विद्यावेद्यः परमात्मा । **ब्रह्मण्यो मधुसूदनः** इति मधुकैटभसूदनो वा विष्णुः ब्रह्मण्यः । **इतिशब्दः** परमात्मविष्ण्वोरैक्यार्थः । तद्रूपं किं परिच्छिन्नं नेत्याह—**सर्वभूतस्थमिति** । सर्वेषु ब्रह्मादिस्तम्बान्तभूतेषु प्रत्यक्त्वेन स्थितत्वात् । प्रतिभूतसापेक्षतः प्रत्यग्रूपस्य अनेकत्वं स्यादित्यत आह—**एकमिति** । घटशरावाद्यनुगतव्योमवत् प्रतिशरीरानुस्यूतप्रत्यक्तत्त्वस्यैकत्वात् । वैशब्दोऽवधारणार्थः । उक्तलक्षणलक्षितं नारायणचैतन्यमेकमेवेत्यर्थः । स्वाज्ञदृष्टिप्रसक्तकार्यप्रपञ्चसत्त्वे स्वज्ञदृष्टिः तं **कारणपुरुषं मन्यते** । परमार्थदृष्टिस्तु स्वाज्ञादिदृष्टिप्रसक्तकार्यकारणकलनापह्नवसिद्धं **अकारणं परं ब्रह्मों** इति पश्यति । एवं दर्शनसमकालं विद्वान् निर्विशेषब्रह्मैव भवतीत्य-

**थर्वशिरोऽधीते** । सगुणब्रह्मोपासकस्य सालोक्यादिः फलं, निर्गुणप्रणब-याथात्म्यार्थं तुर्यतुरीयं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति जानतो विदेहकैवल्य-मित्यथर्वशिरसोऽभिप्रायः ॥

विद्याऽध्ययनफलम्

प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । तत्सायंप्रातरधीयानः पापोऽपापो भवति । माध्यंदिनमादित्याभिमुखोऽधीयानः पञ्चमहापातकोपपातकात् प्रमुच्यते । सर्ववेदपारायणपुण्यं लभते नारायणसायुज्यमवाप्नोति श्रीमन्नारायणसायुज्यमवाप्नोति य एवं वेद ॥

विशिष्टग्रन्थपाठकस्य फलमाह—**प्रातरिति** । प्रातःपठनतो **रात्रिकृतपाप**-हानिः भवति । तथा सायाह्नपठनात् **दिवसकृतपाप**हानिः । स्वयं पापकृत्तमोऽपि कालद्वयपठनात् **अपापो** भवति । मध्याह्नसूर्याभिमुख्यपठनात् **पञ्चमहापातकादि**-विमुक्तिः । कृत्स्नवेदपारायणफलं सकृन्नारायणोपनिषत्पारायणतो भवेत् । देहावसाने श्रीमन्नारायणसायुज्यमवाप्नोति । य एवं वेद सोऽपि यथोक्तफलभाक् भवति । आवृत्तिः निःसंशयार्था । इत्युपनिषच्छब्दौ प्रकृतोपनिषत्समाप्त्यर्थौ ॥

**इति चतुर्थः खण्डः**

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
नारायणोपनिषदो व्याख्येयं लिखिता मया ।
एतद्विवरणग्रन्थो दशोत्तरशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे अष्टादशसङ्ख्यापूरकं नारायणोपनिषद्विवरणं संपूर्णम् ॥

# नृसिंहतापिन्युपनिषत्

## पूर्वतापिनी

### प्रथमोपनिषत्

शान्तिपाठः

भद्रं कर्णेभिः श्रृणुयाम देवाः । भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिः । व्यशेम देवहितं यदायुः । स्वस्ति न इन्द्रो वृद्धश्रवाः । स्वस्ति नः पूषा विश्ववेदाः । स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः । स्वस्ति नो बृहस्पतिर्दधातु ॥ ॐ शान्तिः शान्तिः शान्तिः ॥

यत्तुर्योङ्काराग्रपगभूमिस्थिरवरासनम् ।
प्रतियोगिविनिर्मुक्ततुर्यतुर्यमहं महः ॥

इह खलु अथर्वणवेदप्रविभक्तेयं नृसिंहतापनीयोपनिषत् सविशेषनिर्विशेषब्रह्ममात्रगोचरतया विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । अस्याः उपोद्घातादिकं मुण्डकादिवत् ऊह्यम् । देवतागणप्रजापतिप्रश्नप्रतिवचनरूपेयमाख्यायिका सविशेषनिर्विशेषब्रह्मविद्यास्तुत्यर्था । विद्याद्वयोपसर्गप्रशमनाय इयं शान्तिः पठ्यते—**भद्रं कर्णेभिरिति** । श्रीनृसिंहोपासकाः **देवाः** वयं उपासकबाहुल्यात् **कर्णेभिः** इति बहुवचनं कर्णैः **भद्रं** नृसिंहप्रतिपादकवेदान्तजातं **श्रृणुयाम** श्रृणुयास्म तदर्थप्रीतिहेतुश्रवणं कुर्मः इत्यर्थः । केवलश्रवणतः किं ?

इत्यत आह—**भद्रं पश्येमेति** । नारसिंहीयविद्याश्रवणतो यथाशास्त्रं **यजत्रा** ध्यानयज्ञयजनशीला वयं **अक्षभिः** अक्षिभिः करणैः नारसिंहीयं सकळं निष्कळं वा **भद्रं** रूपं **पश्येम** पश्यास्म । अल्पायुषः तत्सिद्धिः का ? इत्यत आह— **स्थिरैरङ्गैरिति** । भावनावैशिष्ट्यात् **स्थिरैरङ्गैः** प्रणवसावित्र्यादिभिः अङ्गमन्त्रैः वयं नरसिंहं **तुष्टुवांसः तनूभिः** "यों ह वै नृसिंह" इत्यादितनुमन्त्रैः स्तुतिं कुर्वाणाः सन्तो **देवध्यानहितं** नीरोगादिगुणविशिष्टं **आयुः** दीर्घायुष्ट्वं चिरजीवित्वं यच्चिरकालध्यानार्हमायुः **व्यशेम** विशेम । मन्दबुद्ध्यनुग्रहाय पुनः प्रकारान्तरेण प्रार्थ्यते—**स्वस्ति न** इति । **इन्द्रः** त्रिलोकीपतिः **वृद्धश्रवाः** बृहत्कीर्तिः **नो** अस्माकं अखण्डाकारवृत्तिमन्मनः **स्वस्त्यस्तु** इत्यनुगृह्णातु । **विश्ववेदाः** सर्वज्ञः **पूषा नो** अस्माकं नृसिंहस्मरणं **स्वस्ति** अविच्छिन्नं भवतु इत्यनुगृह्णातु । अरिष्टा अकुण्ठिता नेमिः गतिः यस्य सोऽयं **अरिष्टनेमिः तार्क्ष्यः नो** अस्माकं मनो नृसिंहतत्त्वैकतानं **स्वस्ति** स्यादित्यनुगृह्णातु । **बृहस्पतिः नो** अस्माकं करणजालं **स्वस्ति** नृसिंहपर्यवसन्नं **दधातु** ददातु अनुगृह्णातु इति सर्वत्र योज्यम् । विद्याद्वयोपसर्गाध्यात्मिकादितापत्रयनिरसनाय इयं शान्तिः त्रिः पठ्यते—**ॐ शान्तिः शान्तिः शान्तिरिति** ॥

जगत्स्रष्टेः प्रजापतिकाममूलत्वम्

आपो वा इदमासन् सलिलमेव । स प्रजापतिरेकः पुष्करपर्णे समभवत् । तस्यान्तर्मनसि कामः समवर्तत इदं सृजेयमिति । तस्माद्यत् पुरुषो मनसाऽभिगच्छति तद्वाचा वदति तत् कर्मणा करोति । तदेषाऽभ्यनूक्ता—

कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् ।
सतो बन्धुमसति निरविन्दन् हृदि प्रतीष्या कवयो मनीषा ॥ इति ॥

उपैनं तदुपनमति यत्कामो भवति य एवं वेद ॥ १ ॥

मन्त्रराजस्य दुर्लभत्वप्रदर्शनाय इतिहासमवतारयति—**आपो वा** इति। एतन्मन्त्रार्थो बृहज्जाबालोपनिषदि वर्णितः।

[स एव झटिति प्रत्यायनार्थं अत्र संयोज्यते—

प्रळयकालीना **आपो वै** प्रसिद्धा अनभिव्यक्तनामरूपं **इदं** अविद्याऽण्डं **आसन् सलिलमेव**। न हि सलिलादतिरिक्तं किंचिदस्ति। तत्र बृहज्जाबाल-मन्त्रद्रष्टा यः **सोऽयं प्रजापतिः एकः पुष्करपर्णे** नारायणनाभिपद्मे **समभवत्**। **तस्य** प्रजापतेः **अन्तः मनसि कामः समव**र्तत। किमिति? इदं अनन्तकोटि-ब्रह्माण्डात्मकं अविद्याऽण्डं **सृजेयमिति**। यस्मात् अयं जगत्स्रष्टुकामो भवति **तस्माद्यत्पुरुषः मनसा** अन्तःकरणेन **अभिगच्छति** निश्चिनोति यन्मनसि स्मृतं **तद्वाचा वदति** यद्वाचोक्तं **तत्** शरीरनिर्वर्त्यकर्मणा **करोति**। ब्राह्मणोक्तेऽर्थे **तदेषा अभ्यनु** पश्चात् **उक्ता**। वक्ष्यमाणाविद्याऽण्डोद्भूतेः **अग्रे** प्राक् **अधिकत्वेन कामोऽभिलाषः समवर्तत**। कामः क्व जातः इत्यत्र **मनसोऽ**न्तःकरणस्य **यत् रेतो** वीर्यं **प्रथमं आसीत्** स कामो भवतीति पूर्वेणान्वयः। न हि संकल्पातिरिक्तं मनोऽस्तीति विचिन्त्यताम्, 'काम जानामि ते रूपं संकल्पात् किल जायसे' इति स्मृतेः। **सतः** चक्षुर्ग्राह्यप्रपञ्चस्य **बन्धु**रिवोपकारकत्वात् कामो **बन्धुः असति** अचाक्षुषे ब्रह्मणि **निरविन्दन्** निःशेषं अगमन् **कवयो** मनसः ईष्ट इति मनीट् धीः तया **मनीषा हृदि प्रतीष्या** अवलोक्य॥]

**उप** समीपे **एनं** कामिनं **उपनमति** प्राप्नोति यस्मिन् गृहक्षेत्रादिविषये कामो यस्य स **यत्कामो भवति य एवं वेद**॥ १॥

सर्वजगतः आनुष्टुभत्वम्

**स तपोऽतप्यत। स तपस्तप्त्वा स एवं मन्त्रराजं नारसिंह-मानुष्टुभमपश्यत्। तेन वै सर्वमिदमसृजत यदिदं किंच। तस्मात् सर्वमानुष्टुभमित्याचक्षते यदिदं किंच। अनुष्टुभो वा इमानि भूतानि जायन्ते। अनुष्टुभा जातानि जीवन्ति। अनुष्टुभं प्रयन्त्यभिसं-**

**विशन्ति । तस्यैषा भवति । अनुष्टुप्प्रथमा भवति । अनुष्टुबुत्तमा भवति । वाग्वा अनुष्टुप् । वाचैव प्रयन्ति । वाचोद्यन्ति । परमा वा एषा छन्दसां यदनुष्टुबिति ॥ २ ॥**

**सोऽन्तर्मनसि** सञ्जातकामः प्रजापतिः **तपोऽतप्यत** । केन प्रकारेण ? इदं सृजेयं इत्यालोचनमकुरुत । **स तपस्तप्त्वा** पर्यालोचनं कृत्वा **स** प्रजापतिः **एतं** वक्ष्यमाणं सप्तकोटि**मन्त्रराजं नारसिंहं** नृसिंहदेवत्वात् **आनुष्टुभमपश्यत्** । **तेन वै** तेनैव **सर्वमिदं** स्वा[illegible]धापदतत्कार्यजातं **असृजत** । किं तत् सर्वं ? **यदिदं किंच** यत्किंचेदं अनन्तकोटिब्रह्माण्डात्मकं विश्वं असृजत् । यस्मात् एतत् सर्वं अनुष्टुभा सृष्टवान् **तस्मादिदं सर्वं आनुष्टुभमित्याचक्षते** कथयन्ति तदियत्ताविदः । **यदिदं किंचेति** व्याख्यातम् । सर्वस्यानुष्टुभत्वे को हेतुः ? इत्यत आह—**अनुष्टुभ** इति । **अनुष्टुभो वै** द्वात्रिंशदक्षरात् अभिन्ननिमित्तोपादानात् सर्वज्ञत्वादिलक्षणात् **इमानि** स्थावरजङ्गमानि **भूतानि जायन्ते** यथोक्तानुष्टुभा **जातानि जीवन्ति** प्राणान् धारयन्ति **अनुष्टुभं प्रयन्ति अनु** सम्यक् प्रवेशं कुर्वन्ति । एवमस्तु, अनुष्टुभः मन्त्रराजस्य किं आयातं ? इत्यत आह—**तस्यैषा भवतीति** । **तस्य** मन्त्रराजस्य **एषा** अभिधा अनुष्टुबिति **भवति** । यद्वा—**तस्य** अनुष्टुभः प्रकाशिका **एषा** वक्ष्यमाणा ऋक् **भवति** । इदानीं अनुष्टुप्साम्नः स्वरानाह—**अनुष्टुबिति** । **अनुष्टुप्प्रथमा** आद्यस्वरयुक्ता **भवति** । तथा **अनुष्टुबुत्तमा** अन्त्यस्वरयुक्ता **भवति** । स्वरवती **वाग्वा अनुष्टुप्** । लौकिकादिशब्दरूपिण्या **वाचैव प्रयन्ति** सर्वाणि भूतानि स्थितिनाशावाप्नुवन्ति । तथा **वाचा** इच्छया **उद्यन्ति** उदयं गच्छन्ति । यस्मादेवं वाग्रूपिण्यनुष्टुप् तस्मात् नानागायत्र्यादिछन्दसां **परमैषा अनुष्टुप्** । **इतिशब्दो** मन्त्रसमाप्त्यर्थः ॥ २ ॥

मन्त्रराजस्य पादचतुष्टयम्

**ससागरां सपर्वतां सप्तद्वीपां वसुन्धरां तत् साम्नः प्रथमं पादं जानीयात् । यक्षगन्धर्वाप्सरोगणसेवितमन्तरिक्षं तत् साम्नो द्वितीयं**

पादं जानीयात् । वसुरुद्रादित्यैः सर्वैर्देवैः सेवितं दिवं तत्साम्नस्तृतीयं पादं जानीयात् । ब्रह्मस्वरूपं निरञ्जनं परमं व्योमकं तत्साम्नश्चतुर्थं पादं जानीयात् । यो जानीते सोऽमृतत्वं च गच्छति ॥ ३ ॥

ऋग्यजुःसामाथर्वाणश्चत्वारो वेदाः साङ्गाः सशाखाश्चत्वारः पादा भवन्ति ॥ ४ ॥

चतुष्पादात्मकमन्त्रराजस्याद्यं पादमाह—ससागरामिति । लवणादिसप्तसागरसहितां **ससागरां** मेर्वादिपर्वतकोटिसहितां **सपर्वतां** जम्ब्वादिसप्तद्वीपपरिच्छिन्नां **वसुन्धरां** भूलोकाभिधां **तत्साम्नो** मन्त्रराजस्य अष्टाक्षरात्मकं **प्रथमं पादं जानीयात्** । कुबेरानुचराः यक्षाः, देवगायकाः गन्धर्वाः, स्वर्वेश्याः अप्सरसः, तद्विशिष्टं **यक्षगन्धर्वाप्सरोगणसेवितं अन्तरिक्षम्** । अष्टौ **वसवः** एकादश **रुद्राः** द्वादश **आदित्याः** तैः **सर्वैः सेवितं दिवम्** । सत्यादिलक्षणब्रह्मस्वरूपं स्वाज्ञदृष्टिविकल्पितप्रपञ्चे स्वज्ञदृष्ट्या **निरञ्जनं परमं** निरतिशयं **व्योमकं** हृदयाकाशे कं सुखस्वभावम् । एवं चतुष्पादोपासनाफलमेतत्—**यः** उपासकः एवं **जानीते सोऽयं** सालोक्यादिक्रममुक्तिद्वारा मुख्यं **अमृतत्वं च गच्छति** सम्यग्ज्ञानद्वारेत्यर्थः ॥ ३ ॥ अस्य ऋगादयोऽपि पादाः भवन्तीत्याह—**ऋगिति** । शिक्षाऽऽदिषडङ्गसहिताः **साङ्गाः** आश्वलायनकाण्वतैत्तिरीयकौथुमाङ्गिरसाद्यशीत्यधिकशतोत्तरसहस्रशाखासहिताः **सशाखाः** यथाक्रमेण **चत्वारः पादाः भवन्ति** ॥ ४ ॥

ऋषिच्छन्दोदेवतादिप्रश्नः

किं ध्यानं किं दैवतं कान्यङ्गानि कानि दैवतानि किं छन्दः क ऋषिरिति ॥ ५ ॥

ऋषिच्छन्दोदैवतानां मन्त्राङ्गतया श्रुतिः स्वयमेव प्रश्नमवतारयति—**किं ध्यानमिति** । किं **ध्यानं** चिन्तनं किं **दैवतं** को वा देवोऽस्य मन्त्राधिष्ठाता

**कान्यङ्गानि** अङ्गमन्त्राः कियन्तः **कानि दैवतानि** मन्त्राङ्गाधिष्ठातृदैवतानि **किं छन्दः** केन छन्दसा युक्तोऽयं मन्त्रः **क ऋषिः** मन्त्रद्रष्टा कीदृशः इत्येवं देवाः प्रश्नं चक्रुरित्यूह्यम्, उत्तरत्र प्रश्नप्रतिवचनदर्शनात् ॥ ५ ॥

सपादसाङ्गमन्त्रविद्याफलम्

**स होवाच प्रजापतिः—स यो ह वै सावित्रस्याष्टाक्षरं पदं श्रियाऽभिषिक्तं तत्साम्नोऽङ्गं वेद श्रिया हैवाभिषिच्यते । सर्वे वेदाः प्रणवादिकास्तं प्रणवं तत्साम्नोऽङ्गं वेद स त्रीन् लोकान् जयति । चतुर्विंशत्यक्षरा महालक्ष्मीर्यजुस्तत्साम्नोऽङ्गं वेद स आयुर्यशः-कीर्तिज्ञानैश्वर्यवान् भवति । तस्मादिदं साङ्गं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ ६ ॥**

प्रश्नोत्तरं क्रमेण प्रजापतिराह—**स होवाचेति** । मन्त्राङ्गादीन् पश्चाद्वि-वक्षन् मन्त्रराजपादचतुष्टयाङ्गमन्त्रविदः फलमाह—**स य इति** । **स यो ह वै** मन्त्रराजानुष्ठानपरो यः कश्चित् मन्त्रराजाङ्गत्वेन चतुर्थोपनिषद्विद्यमानः **सावित्रोऽष्टाक्षरस्तस्य** घृणिरित्याद्यं **पदं** मन्त्रराजसामगायकेन **श्रिया अभिषिक्तं** श्रीबीजपूर्वकं **तत्साम्नोऽङ्गं वेद**, वेदनफलं तु हस्त्यश्वहिरण्यधनधान्यरूपया **श्रिया हैवाभिषिच्यते** सर्वतः श्रियमाप्नोति । प्रणवस्य मन्त्रराजाङ्गत्वं विवक्षन् स्तौति—**सर्व इति** । ऋग्वेदाद्याः **सर्वे वेदाः प्रणवादिकाः** सर्ववेदानां प्रणवपूर्वकत्वात् "यो वेदादौ स्वरः प्रोक्तः" इति श्रुतेः । **तं प्रणवं तत्साम्नोऽङ्गं वेद सोऽयं** प्रणवाङ्गवित् **त्रीन्** भूरादि**लोकान् जयति** आधिष्ठातृत्वेनाप्नोति । **चतुर्विंशत्यक्षरा महालक्ष्मीः यजुः** यजूरूपत्वेन चतुर्थोपनिषदि वक्ष्यमाणत्वात् **तत्साम्नोऽङ्गं वेद स आयुर्यशःकीर्त्तिज्ञानैश्वर्यवान्** मानुषैश्वर्यसंपन्नः सार्वभौमो भवति । **तस्मादिदं** द्वात्रिंशदक्षरं **साङ्गं साम जानीयात्** । **यो जानीते** इत्यादि समानम् ॥ ६ ॥

साङ्गसामविद्यायां स्त्रीशूद्रयोरनधिकारः

सावित्रीं प्रणवं यजुर्लक्ष्मीं स्त्रीशूद्राय नेच्छन्ति । द्वात्रिंशदक्षरं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । सावित्रीं लक्ष्मीं यजुः प्रणवं यदि जानीयात् स्त्रीशूद्रः स मृतोऽधो गच्छति तस्मात् सर्वदा नाचष्टे यद्याचष्टे स आचार्यस्तेनैव स मृतोऽधो गच्छति ॥ ७ ॥

अमृताप्तेः सर्वेष्टत्वात् साङ्गसाम्नः सर्वाधिकारे प्राप्ते स्त्रीशूद्रयोरधिकारं व्यावर्तयति—**सावित्रीमिति** । सन्तः सावित्रादिकं स्त्रियश्च शूद्राश्च **स्त्रीशूद्रं** तस्मै दातुं **नेच्छन्ति** स्त्रीशूद्रयोः अनधिकारं मन्यन्ते । इत्थं स्त्रीशूद्रास्पृष्टं **द्वात्रिंशदक्षरं साम जानीयात्** इत्यादि समानम् । स्त्रीशूद्रयोः आचार्याणां दातुमिच्छाऽभावेऽपि येन केनचिदुपायेन स्त्रीशूद्राभ्यां एतत्साम यदि लब्धं तदा तावपि मन्त्रराजमहिम्ना कृतकृत्यौ स्यातां इत्यत्र शिष्याचार्ययोः अधःपतनमेव स्यादित्याह—**सावित्रीमिति** । सावित्र्यादिकं **स्त्रीशूद्र**जातिः उपायान्तरेण यदि **जानीयात्** वेदनमात्रेण **स मृतोऽधो गच्छति** तयोः अत्रैवर्णिकत्वात् । यस्मादेवं **तस्मात्** सावित्रादिकं **सर्वदा** सर्वापद्यपि **नाचष्टे,** न हि सदाचार्यः कथयति । **यद्याचष्टे** तदा स्त्रीशूद्रगुरुः सोऽयं अपकीर्तिभाक् व्याध्यादिना मृतः ततः कुम्भीपाकादिनरकजातमनुभूय ततः सूकरादियोनिं स्थावरभावं वा गच्छति ॥७॥

लोकवेदब्रह्मादिरूपेण सामध्यानम्

स होवाच प्रजापतिः—अग्निर्वै देवा इदं सर्वं विश्वा भूतानि प्राणा वा इन्द्रियाणि पशवोऽन्नममृतं सम्राट् स्वराड्विराट् तत्साम्नः प्रथमं पादं जानीयात् । ऋग्यजुःसामाथर्वरूपः सूर्योऽन्तरादित्ये हिरण्मयः पुरुषस्तत्साम्नो द्वितीयं पादं जानीयात् । य ओषधीनां

प्रभुर्भवति ताराधिपतिः सोमस्तत्साम्नस्तृतीयं पादं जानीयात्। स ब्रह्मा स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराट् तत्साम्नश्चतुर्थं पादं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ ८ ॥

तिष्ठत्वेतत्, किं ध्यानं इत्यादिप्रश्नोत्तरं किं? इत्यत आह—**स हेति**। भूलोकाधारत्वेन **अग्निर्वै** प्रसिद्धः **देवाः** इन्द्रादयः विविधप्रत्ययगम्यं **इदं सर्वं** सर्वशब्दार्थं **विश्वा** विश्वानि **सर्वाणि भूतानि प्राणाः** पञ्चवृत्त्यारूढाः **वै प्रसिद्धाः** कर्मज्ञानभेदेन दशेन्द्रियाणि ग्राम्यारण्यभेदेन **पशवः** अदनीयं **अन्नं** देवोपभोग्यं **अमृतं** च विशेषज्ञानोपरमणलक्षणस्वापे प्राज्ञात्मना सम्यक् राजत इति **सम्राट्** बाह्यसाधनमनपेक्ष्य तैजसात्मना स्वयमेव राजत इति **स्वराट्** कार्यकारणसंघातमवष्टभ्य विश्वात्मना राजत इति **विराट् तत्साम्नः प्रथमं पादं जानीयात्**। वेदचतुष्टयात्मनः **ऋग्यजुस्सामाथर्वणरूपः** शोभनगतित्वात् **सूर्यः अन्तरादित्ये हिरण्मयः पुरुषः**, "य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते" इत्यादिश्रुतेः। तत्साम्नो द्वितीयं पादं जानीयात्। **य ओषधीनां प्रभुर्भवति ताराणां** नक्षत्राणां **अधिपतिः सोमश्चन्द्रः** तत्साम्नः तृतीयं पादं जानीयात्। यो निर्गुणात्मा नृसिंहः सोऽयं विधिशिवहरीन्द्रभेदात् **स ब्रह्मा स शिवः स हरिः सेन्द्रः सोऽक्षरः** अविनाशित्वात् सर्वोत्कृष्टत्वात् **परमः** विराडादीननपेक्ष्य स्वेन रूपेण राजत इति **स्वराट् तत्साम्नः चतुर्थं पादं** इत्यादि समानम् ॥ ८ ॥

### सप्तस्वरसामोद्धारः

उग्रं प्रथमस्याद्यं ज्वलं द्वितीयस्याद्यं नृसिं तृतीयस्याद्यं मृत्यु चतुर्थस्याद्यं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति। तस्मादिदं साम यत्र कुत्रचिन्नाचष्टे यदि दातुमपेक्षते पुत्राय शुश्रूषवे [1]दास्यत्यन्यस्मै [2]शिष्याय वेति स होवाच प्रजापतिः ॥ ९ ॥

[1] दास्यत्व—अ, अ१. [2] वा शिष्याय वा चेति—उ, उ१. शिष्याय वाच्येति—अ, अ१.

लोकवेदब्रह्मादिरूपेण सामध्यानमुक्त्वा अथेदानीं सप्तस्वरं सामोद्धरति—**उग्रमिति** । उग्रमित्यक्षरनिर्देशः **प्रथमपादस्याद्यं** आद्यन्तस्वरयुक्तत्वात्, **ज्वल**मित्यक्षरनिर्देशः **द्वितीयपादस्याद्यं, नृसि**मित्यक्षरनिर्देशः **तृतीयपादस्य आद्यं**, तथा **मृत्यु**मिति **चतुर्थपादस्य आद्यं साम जानीयात्** इत्यादि समानम् । यस्मादेतदतिगोप्यं **तस्मादेतत्** यत्र कुत्रापि न प्रकाशयेत् । यदि प्रकाशितुमिच्छा तदा **पुत्राय** शिष्याय वा प्रकाशयेत् इत्याह—**तस्मादिति** । **इतिशब्दः** आद्यक्षरसामसमाप्त्यर्थः ॥ ९ ॥



क्षीरोदार्णवसामोद्धारः

**क्षीरोदार्णवशायिनं नृकेसरिं योगिध्येयं परमं पदं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ १० ॥**

इदानीं मन्त्रादिदेवतायाथात्म्यप्रकटनाय क्षीरोदार्णवसामोद्धारामृचं पठति—**क्षीरोदेति** । **क्षीरोदार्णवशायिनं** क्षीरसमुद्रशेषतल्पयोगासनारूढं ना चासौ केसरी चेति त्वंतत्पदार्थलक्ष्यम् । यद्वा—नरवपुषं सिंहास्यं व्याविद्धसंसारतत्कार्यैः **योगिभिः ध्येयं** सर्वोत्कृष्टत्वेन यत् पदनीयं तत् **परमं पदं** यथासंप्रदायं **साम जानीयात्** । **यो जानीते सोऽमृतत्वं च गच्छति** ॥ १० ॥

पराधान्त्यादिज्ञानफलम्

**वीरं प्रथमस्याद्यार्धान्त्यं तंस द्वितीयस्याद्यार्धान्त्यं हंभी तृतीयस्याद्यार्धान्त्यं मृत्युं चतुर्थस्याद्यार्धान्त्यं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति । तस्मादिदं साम येन केनचिदाचार्यमुखेन यो जानीते स तेनैव शरीरेण संसारान्मुच्यते मोचयति मुमुक्षुर्भवति ।** [1]**जपात्तेनैव शरीरेण देवतादर्शनं करोति**

[1] जपान्तेऽनेनैव—क्षौ जपान्ते तेनैव—उ, उ १.

**तस्मादिदमेव मुख्यद्वारं कलौ नान्येषां भवति तस्मादिदं साङ्गं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ ११ ॥**

पदार्धान्त्यादिज्ञानफलमाह—**वीरमिति** । वीरमित्यक्षरनिर्देशः **प्रथमस्याद्यार्धान्त्यं** उक्ताक्षरद्वयप्रथमार्धं अन्त्यं अन्त्यस्वरेण अनुदात्तस्वरेण युक्तं अर्धान्त्यं, परिशेषात् शिष्टं स्वरितस्वरयुक्तं **तंस द्वितीयस्याद्यार्धान्त्यं, हंभी तृतीयस्याद्यार्धान्त्यं मृत्युं चतुर्थस्याद्यार्धान्त्यं साम जानीयात्** इत्यादि समानम् । एतत्साम विशिष्टफलं यस्मा[illegible]ह—**तस्मादिति** । यस्मादेतत् साम पुरुषार्थसाधकं **तस्मादिदं साम येन** केनचिदाचार्यमुखेन न त्वन्येन साधनान्तरेण **यो जानीते सोऽयं** आचार्यमुखोदितसामज्ञानेनैव जन्मादि**संसारान्मुच्यते** । यदि पुरा स्वयं **मुमुक्षुः** तदा स्वयं मुक्तः सन् परानपि **मोचयति** सामराजोपदेशच्छलेन मोचको भवतीत्यर्थः । ज्ञानफलमुक्त्वा जपफलमाह—**जपात्तेनेति** । **येन** शरीरेण मन्त्रराजपुरश्चरणं कृतं **तेनैव शरीरेण देवतादर्शनं करोति** जाग्रदवस्थायामेव भगवन्तं साक्षात्करोति । यतः एवं अतः इदमेव तत्पदप्रापकं **मुख्यद्वारं** अपिच अस्मिन्नेव जन्मनि देवतादर्शनं **कलौ नान्येषां** मन्त्रराजसामपराङ्मुखानां **भवति** । यतोऽस्मिन्नेव जन्मनि जागरणे देवतादर्शनं भवति **अतः इदं साङ्गं साम जानीयात्** मुमुक्षुर्भवति ॥ ११ ॥

यजुर्वेदवाच्यनृसिंहज्ञानफलम्

**ऋतं सत्यं परं ब्रह्म पुरुषं नरकेसरिविग्रहं कृष्णपिङ्गलम् ।**
**ऊर्ध्वरेतं विरूपाक्षं शंकरं नीललोहितम् ॥**
**उमापतिः पशुपतिः पिनाकी ह्यमितद्युतिः ।**
**ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिः ॥**

**यो वै यजुर्वेदवाच्यस्तं हि साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ १२ ॥**

इदानीं पुनः देवताध्यानं विवक्षुः तत्साधनभूते ऋचौ पठति—**ऋतमिति**। यदवश्यं भाविकर्मफलं तत् **ऋतं** कालत्रयाबाध्यं **सत्यं** सर्वोत्कृष्टं **परं** परिच्छेदत्रयातीतं **ब्रह्म** शिरःपाण्यादिमन्तं **पुरुषं नृकेसरिविग्रहं** अधऊर्ध्वतो नरसिंहदेहं कण्ठनेत्रयोः **कृष्णपिङ्गळं ऊर्ध्वरेतं** रेतसं **विरूपाक्षं** विषमाक्षं त्र्यक्षत्वात् स्वांशजप्राणिसुखकरत्वात् **शंकरं** करपादतलजिह्वासु **नीललोहितम्**। यद्वा—कण्ठे नीलं करादिषु लोहितं, अस्मिन् पक्षे कृष्णपिङ्गळम्(?)। एवं कृष्णपिङ्गळनीललोहितदर्शनात् चित्रवर्णो नृसिंहोऽवगम्यते। **उमापतिः** गिरिजापतित्वात् पशूनां जीवानां पतित्वात् **पशुपतिः** पिनाको धनुः अस्यास्तीति **पिनाकी**। शाङ्गिणः पिनाकित्वं कथं? इत्यत्र नृसिंहस्य सर्वदेवात्मकत्वात् उपपद्यते। अत एवायं **अमितद्युतिः** कोटिसूर्यसमद्युतित्वात्। लौकिकवैदिकभेदेन **सर्वविद्यानामीशानः** सर्वविद्यावेद्यतया स्थातुं शक्तत्वात्। तथा **सर्वभूतानां ईश्वरः** सर्वनियन्तृत्वात्। सर्वविद्याभूतेशितृत्वे हेतुः—**ब्रह्माऽधिपतिः** सर्वात्मकत्वे सति सर्वोत्पादकत्वात्। न केवलं उत्पादकः किंतु **अधिपतिः** स्वातिरिक्तसर्वमधिष्ठाय पालयितृत्वात्। **ब्रह्मणः** चतुराननादेरपि **अधिपतिः** चतुराननादिमधिष्ठाय पालयितृत्वात्। एवं सृष्टिस्थितिसंहारेषु स्वतन्त्रोऽयमित्यर्थः। **यो ह वै यजुर्वेदवाच्यो नृसिंहः तं ईशानाख्यं साम जानीयात्** इत्यादि समानम्॥ १२॥

सामतृतीयावयववेदनफलम्

**महा प्रथमान्तार्धस्याद्यं र्वतो द्वितीयान्तार्धस्याद्यं षणं तृतीयान्तार्धस्याद्यं नमा चतुर्थान्तार्धस्याद्यं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति। तस्मादिदं साम सच्चिदानन्दमयं परं ब्रह्म तमेवं विद्वानमृत इह भवति तस्मादिदं साङ्गं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति॥ १३॥**

सामतृतीयावयववेदनफलमाह—**महेति** । **महेत्यक्षरनिर्देशः** प्रथमान्तोऽर्धा स्यात् । यदेतदुक्तमक्षरद्वयं तस्याद्योदात्तं स्वरं जानीयात् इति शेषः । एवं द्वितीयादिषु व्याख्येयम् । एवं **साम जानीयात्** इत्यादि समानम् ॥ १३ ॥

मन्त्रराजसाममाहात्म्यम्

**विश्वसृज एतेन वै विश्वमिदमसृजन्त यद्विश्वमसृजन्त तस्माद्विश्वसृजो विश्वमेनाननु प्रजायते ब्रह्मणः सलोकतां सार्ष्टितां सायुज्यं यन्ति तस्मादिदं साङ्गं साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ १४ ॥**

मन्त्रराजसाम्नो माहात्म्यं किं? इत्यत आह—**विश्वेति** । विश्वं सृजन्तीति **विश्वसृजो** ब्रह्मादयः **एतेन वै** मन्त्रराजसाम्ना विविधप्रत्ययगम्यं **विश्वमिदं असृजन्त** उत्पादितवन्तः **यद्य**स्मात् **विश्वं असृजन्त तस्मात् विश्वसृजः** विश्वज्ञानपौष्कल्यात् इदं **विश्वं एनान्** विश्वसृजोऽ**नु प्रजायते** प्रकर्षेणोत्पद्यते **ब्रह्मणो** हिरण्यगर्भस्य नृसिंहावतारस्य **सलोकतां** समानलोकतां **सार्ष्टितां** तादात्म्यं **सायुज्यं** सयुग्भावं **च यन्ति** । **इदं साङ्गं साम जानीयात्** इत्यादि समानम् ॥ १४ ॥

पादचतुष्टयान्त्यस्वरद्वयं तज्ज्ञानफलं च

**विष्णुं प्रथमान्त्यं मुखं द्वितीयान्त्यं भद्रं तृतीयान्त्यं म्यहं चतुर्थान्त्यं (साम जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति) योऽसौ वेद यदिदं किंचात्मनि ब्रह्मण्येवानुष्टुभं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति स्त्री[1]पुंसयोर्वा । य इहैव स्थातुमपेक्षते तस्मै**

[1] पुंसोर्वा—अ, अ १, उ.

**सर्वैश्वर्यं ददाति । यत्र कुत्रापि म्रियते देहान्ते देवः परमं ब्रह्म तारकं व्याचष्टे येनासावमृतीभूत्वा सोऽमृतत्वं च गच्छति ॥ १९ ॥**

मन्त्रराजपादचतुष्टयान्त्यस्वरद्वयतज्ज्ञानफलं चाह—**विष्णुमिति** । **विष्णु-**मित्याद्यक्षरनिर्देशः **प्रथमान्त्यं** प्रथमपादोक्तमक्षरं अन्त्यानुदात्तस्वरयुक्तं प्रथमान्त्यम् । एवं द्वितीयादिपादेषु व्याख्येयम् । **यः** प्रसिद्धो**ऽसौ** साम्नः पादश उक्तः सर्वजगत्साक्षी नृसिंहः वेद जानाति । किं तर्ह्ययं तटस्थः ? इत्यत्र **यदिदं किंच** यत्किंचेदं चेतनाचेतनात्मकं तदसावित्यर्थः । [illegible]राजोपासकात्मनि **ब्रह्मण्ये-वानुष्टुभं जानीयात् यो जानीत** इति समानम् । **स्त्रीपुंसयोर्वा** तज्ज्ञानादमृतत्वं भवतीत्युक्त्या ब्राह्मणादीनां तज्ज्ञानतोऽमृतत्वं भवतीति किं वक्तव्यम् । **यः** कश्चन **इह** लोके यशःकीर्तिज्ञानैश्वर्यादिना **स्थातुमपेक्षते तस्मै** अयं मन्त्रराजः **सर्वैश्वर्यं ददाति** । किं तत्फलं जीवतः ? इत्यत्र **यत्र कुत्रापि** यदि **म्रियेत** तदा तत्रैव **देव**स्तारकात्मा भगवान् नृसिंहः **परमं ब्रह्मतारकं व्याचष्टे** तुर्योङ्काराग्र-विद्योतं ब्रह्मप्रणवाख्यं कथयति । तारकत्वमेवोपपादयति—**येनेति** । **येन** तारकोपदेशेन **असावमृतीभूत्वा** जीवन्मुक्तो भूत्वा **सो**ऽयं तारकब्रह्मवित् **अमृतत्वं च गच्छति** ॥ १९ ॥

एतद्विद्यामहिमा

**तस्मादिदं साममध्यगं जपति तस्मादिदं सामाङ्गं प्रजापति-स्तस्मादिदं सामाङ्गं प्रजापतिर्य एवं वेदेति महोपनिषत् । य एतां महोपनिषदं वेद स कृतपुरश्चरणो महाविष्णुर्भवति महाविष्णुर्भवति ॥ १६ ॥**

यतो ज्ञानशून्यानामपि अन्ते ज्ञानं प्रयच्छति तत **इदं** क्षीरोदार्णवादि-सामजातं बुद्धौ निहितं तारकं प्रणवं वा यथासंप्रदायं **साममध्यगं** साम्नो मध्यमो मध्यस्वरः तस्मिन् गतं मध्यगं **जपति** जपेत् । यत इदं साममध्यगं जाप्यं तस्मात् **इदं** उक्तं वक्ष्यमाणं चाङ्गजातं **साम चाङ्गं** चेति वा **प्रजापतिः** ।

वाक्याभ्यासः सामोद्धारसमाप्त्यर्थः। य एवं नृसिंहाराधको वेद जानाति सोऽपि प्रजापतिर्भवतीति महोपनिषत्। य एतामुक्तलक्षणां महोपनिषदं वेद सोऽयं अकृतपुरश्चरणोऽपि कृतपुरश्चरणः सन् महाविष्णुर्भवति। अभ्यासः प्रथमोपनिषत्समाप्त्यर्थः ॥ १६ ॥

इति प्रथमोपनिषत्

## द्वितीयोपनिषत्

### नारसिंहमन्त्रराजस्य संसारतारकत्वम्

देवा ह वै मृत्योः पाप्मभ्यः संसाराच्च [1]बिभीयुः ते प्रजापतिमुपाधावन् तेभ्य एतं मन्त्रराजं नारसिंहमानुष्टुभं प्रायच्छत् तेन वै ते मृत्युमजयन् पाप्मानं चातरन् संसारं चातरन् तस्माद्यो मृत्योः पाप्मभ्यः संसाराच्च बिभीयात् स एतं मन्त्रराजमानुष्टुभं प्रतिगृह्णीयात् स मृत्युं [2]जयति स पाप्मानं तरति स संसारं तरति ॥१॥

यो जानीते सोऽमृतत्वं च गच्छतीत्यसकृत् यदुक्तं तत् दृढीकर्तुं आख्यायिकामवतारयति—देवा इति। देवाः अग्न्यादयः हवा इति स्मर्यमाणा **मृत्योः** मारकात् स्वाज्ञानात् **पाप्मभ्यः** दुःखहेतुभ्यः घटीयन्त्रवत् उच्चावच-जननीजठरकूपगमनागमनलक्षण**संसाराच्च बिभीयुः** भृशं सन्त्रस्ताः। ते देवाः प्रकृतानर्थव्रातनिवृत्त्यर्थं स्वभयत्रातारं **प्रजापतिं** शास्त्रोक्तविधिना **उपाधावन्** तत्समीपं गतवन्तः। **तेभ्यः** स्वसमीपमागतेभ्यः मृत्युपापसंसारभीतेभ्यः **एतं**

[1] बिभियुः—अ २, क. [2] तरति—अ, अ १, अ २, क.

**मन्त्रराजं नारसिंहं आनुष्टुभं प्रायच्छत्** दत्तवान् । **तेन वै मन्त्रराजेन ते** प्राजापत्याः देवाः **मृत्युमजयन् पाप्मानं चातरन् संसारं चातरन्** सांसारिक-सुखाद्यसंस्पृष्टाः जीवन्मुक्ताः भवेयुरित्यर्थः । यस्मादेवं **तस्मात् यो मुमुक्षुः** देवतासंघवत् **मृत्योः पाप्मभ्यः संसाराच्च** जन्ममरणादिलक्षणतो **बिभीयात् सोऽयं मुनिः एतं** उक्तलक्षणं **आनुष्टुभं प्रतिगृह्णीयात्** गुरुमुखात् । ग्रहणमात्रतः **स मृत्युं** उक्तलक्षणं **जयति स पाप्मानं संसारं च तरति** अतिक्रामति । प्रथमोपनिषदि प्रजापतेः मन्त्रद्रष्टृत्वेन ऋषित्वं सिद्धं अत्र पुनः देवाचार्यत्वेन दृढीकृतम् ॥ १ ॥

प्रणवपादानां सामपादतादात्म्यम्

तस्य ह वै प्रणवस्य या पूर्वा मात्रा पृथिव्यकारः स ऋग्भिः ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः सा प्रथमः पादो भवति । द्वितीयाऽन्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो विष्णुः रुद्रास्त्रिष्टुब्द-क्षिणाग्निः सा द्वितीयः पादो भवति । तृतीया द्यौः स मकारः स सामभिः सामवेदो रुद्रा आदित्या जगत्याहवनीयः सा तृतीयः पादो भवति । याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओंकारः साऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेकर्षिर्भास्वती स्मृता सा साम्नश्चतुर्थः पादो भवति ॥ २ ॥

कान्यङ्गानि कानि दैवतानि किं छन्दः कः ऋषिः इति प्रश्नोत्तरं विवक्षुः प्रणवस्य मुख्याङ्गत्वात् प्रणवव्याप्तिं सामपादतादात्म्येनाह —**तस्येति** । **तस्य हवै** सर्वशास्त्रप्रसिद्धत्वेन विद्वत्स्मर्यमाणस्य **प्रणवस्य या पूर्वा मात्रा** प्रसिद्धा **पृथिव्यकारः** अवर्णस्य पृथिवीरूपत्वात् **स ऋग्भिः** पादबद्धैः मन्त्रैः **ऋग्वेदः** ऋचां समूहरूपः **ब्रह्मा** प्रजापतिः अष्टौ **वसवः** चतुर्विंशत्यक्षरविशिष्ट**गायत्री**

छन्दः गार्हपत्योऽग्निः सा आद्या मात्रा प्रथमः पादो भवति। द्वितीया मात्रा तु अन्तरिक्षं तस्य द्वितीयमात्रारूपत्वात् स उकारः स यजुर्भिः अविवक्षित-छन्दस्कैः मन्त्रैः विशिष्टो यजुर्वेदः तद्वाच्यो विष्णुः एकादशसंख्याकाः रुद्राः एकादशवर्णसंख्याविशिष्टत्रिष्टुप्छन्दः दक्षिणाग्निः एवंविशिष्टा सा उकारमात्रा द्वितीयः पादो भवति। तृतीया त्विह मात्रा द्यौः द्युलोकः तदात्मको मकारः गीतिप्रधानैः सामभिः मन्त्रैः सामवेदः तद्वाच्यो रुद्रः द्वादशादित्याश्च द्वादशाक्षरा जगतीछन्दः आहवनीयश्च सा मकारमात्रा तृतीयः पादो भवति। या ब्रह्मविदां प्रसिद्धा अस्य[illegible]वस्य अवसाने चतुर्थ्यर्धमात्रा सा सोमलोकः प्रजापतिः अर्धमात्रायाः पृथगुच्चारयितुमशक्यत्वात् सा मात्रा अथर्वणैर्मन्त्रैः अथर्ववेदः तद्वाच्यः संवर्तकः कालाग्निरुद्रः कर्तुमकर्तुमन्यथाकर्तुं स्वतन्त्रेश्वरः विविधाग्न्यधिष्ठाता एकोनपञ्चाशद्भेदविशिष्टाः मरुतः दशाक्षरात्मकं विराट्छन्दः अथर्वणा नाम प्रसिद्धोऽग्निः इयं च मात्रा भास्वती सर्वापेक्षया भास्वरत्वात् सा उक्तार्धमात्रा साम्नः प्रथमोपनिषदुक्तस्यासीदिति विशेषस्य(?)इदं पदं सर्वत्र संबध्यते। अर्धमात्राऽऽत्मकः चतुर्थः पादो भवति। पादचतुष्टयस्य चतुर्मात्रात्मकत्वमुक्तं, मात्रापादयोरेकत्वं श्रूयते "पादा मात्रा मात्राश्च पादाः" इति ॥ २ ॥

साम्नः अनुष्टुप्त्वम्

अष्टाक्षरः प्रथमः पादो भवत्यष्टाक्षरास्त्रयः पादा भवन्त्येवं द्वात्रिंशदक्षराणि संपद्यन्ते द्वात्रिंशदक्षरा वा अनुष्टुब्भवत्यनुष्टुभा सर्वमिदं सृष्टम् ॥ ३ ॥

अष्टाक्षरः प्रथमः पादो भवति तथा अष्टाक्षरा हि त्रयः पादाः एवं चतुरष्टाक्षराणि मिळित्वा द्वात्रिंशदक्षराणि संपद्यन्ते। द्वात्रिंशदक्षरा वै प्रसिद्धा अनुष्टुप् भवति यथोक्तानुष्टुभा मन्त्रराजेन नारसिंहेन सर्वमिदं अविद्यापद-तत्कार्यजातं सृष्टम् ॥ ३ ॥

साम्नः पञ्चाङ्गानि

तस्य हैतस्य पञ्चाङ्गानि भवन्ति चत्वारः पादाश्चत्वार्यङ्गानि भवन्ति सप्रणवं सर्वं पञ्चमं भवति हृदयाय नमः शिरसे स्वाहा शिखायै वषट् कवचाय हुं अस्त्राय फडिति प्रथमं प्रथमेन [1]युज्यते द्वितीयं द्वितीयेन तृतीयं तृतीयेन चतुर्थं चतुर्थेन पञ्चमं पञ्चमेन व्यतिषजति व्यतिषि[ष]क्ता वा इमे लो[illegible] तस्माद्व्यतिषि[ष]क्तान्यङ्गानि भवन्ति ॥ ४ ॥

**तस्य हैतस्य** प्रसिद्धस्य साम्नः **पञ्चाङ्गानि भवन्ति**। मन्त्रराजस्य **चत्वारः पादाः चत्वार्यङ्गानि भवन्ति**। प्रणवेन सहितं **सर्वं सप्रणवं** मन्त्रराजस्वरूपं **पञ्चमं भवति**। पञ्चाङ्गानां सर्वमन्त्रसाधारणत्वं दर्शयति—**हृदयाय नमः** इति, सर्वप्राणिहृदयावभासकप्रत्यगर्थाय नमः। शिरोमन्त्रमाह—**शिरसे स्वाहेति**। सर्वप्राण्युत्तमा(ङ्गा)लङ्कारतुर्यचरणाय स्वाज्ञानभस्मीकरणपट्वग्नये स्वाज्ञानाख्यं हविः जुहोमि स्वाहेत्यर्थः। शिखामन्त्रमाह—**शिखायै वषडिति**। स्वात्मदीप्तिः शिखा नृसिंहतनुः तस्यै शिखायै वषट् मत्करणजातस्य तत्तादात्म्यं भूयादित्यर्थः। कवचमन्त्रमाह—**कवचाय हुमिति**। कवचवत् स्वभक्तत्राणनकराय मदरातिवर्गं प्रति हुं हुंकारं कुर्वित्यर्थः। इदानीमस्त्रमन्त्रमाह—**अस्त्राय फडिति**। अप्रतिहतशासनास्त्राय अप्रतिहतकोपप्रसादाय तुभ्यं ये नमस्कुर्वन्ति तेषां स्वाज्ञानतत्कार्यारातिवर्गं फट् फट् उच्चाटयोच्चाटय। **इति** शब्दः पञ्चाङ्गपरिसमाप्त्यर्थः। हृदयादिमन्त्रपादानां कः संबन्धः इत्यत्र हृदयाय नम इति **प्रथमं** मन्त्ररूपं **प्रथमेन** उग्रमित्यादिपादेन **युज्यते** संबध्यते। एवं सर्वेषु मन्त्रपादेषु योजनीयम्। **द्वितीया**ख्यशिरोमन्त्रं ज्वलमित्यादिपादेन **तृतीयं** शिखामन्त्रेण नृसिंहमिति पादेन **चतुर्थं** कवचमन्त्रः मृत्युमृत्युमित्यादिपादेन **पञ्चमो-**

[1] संयु—अ २, क.

ऽस्त्रमन्त्रः पञ्चमेन प्रणवेन उग्रमित्यादिनमाम्यहमित्यन्तेन मन्त्रराजेन **व्यतिषजति** विशेषातिशयाभ्यां संबध्नाति । एवं संबन्धे हेतुमाह—**व्यतिषि[ष]क्ता** इति । विशेषातिशयाभ्यां **वै** स्मर्यमाणाः भूरादयः **इमे लोकाः** भोगभूमयः । यस्मादेवं **तस्मात्** पादैः **व्यतिषि[ष]क्तान्यङ्गानि भवन्ति** ॥ ४ ॥

ओङ्कारस्य उभयतो न्यासविधिः

**ओमित्येतदक्षरमिदं सर्वं तस्मात् प्रत्यक्षरमुभयत ओंकारो भवति । अक्षराणां न्यासमुपदिशन्ति ब्रह्मवादिनः ॥ ५ ॥**

इदानीं मन्त्रराजाधारप्रणवं स्तौति—ओमित्येतदक्षरमिति । **ओमिति** ब्रह्माभिधानं **एतदक्षरं** वर्णात्मकं विविधप्रत्ययगम्यं **इदं** चेतनाचेतनात्मकं **सर्वम्** । “तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णानि एवमोङ्कारेण सर्वा वाक् संतृण्णा” इति श्रुतिप्रकटितोङ्कारस्य सर्वव्यापकत्वेन उकारादिहकारान्तं एकैकं **अक्षरं प्रति उभयतः** आदाववसाने च **ओङ्कारो भवति** । द्वात्रिंशदक्षरे मन्त्रराजे चतुष्षष्ट्योङ्कारा भवन्ति । पदशो मन्त्रमुद्धर्तुं प्रतिजानीते—**अक्षराणां न्यासमुपदिशन्ति ब्रह्मवादिनः** इति । न्यासं विन्यासमित्यर्थः ॥ ५ ॥

मन्त्रराजस्य पदशोऽक्षरन्यासः

**तस्य ह वा उग्रं प्रथमं स्थानं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति वीरं द्वितीयं स्थानं महाविष्णुं तृतीयं स्थानं ज्वलन्तं चतुर्थं स्थानं सर्वतोमुखं पञ्चमं स्थानं नृसिंहं षष्ठं स्थानं भीषणं सप्तमं स्थानं भद्रमष्टमं स्थानं मृत्युमृत्युं नवमं स्थानं नमामि दशमं स्थानमहमेकादशं स्थानं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ ६ ॥**

इदानीं अक्षरन्यासः पदशः उच्यते—**तस्येति** । **तस्य ह वै** प्रसिद्ध-स्मर्यमाणस्य **उग्रमिति** पदनिर्देशः **प्रथमं स्थानं** प्रथमं पदं जानीयात् इत्यादि समानम् । **वीर**मित्यादिशिष्टपदेषु एवमेव योजनीयम् । **अहं** एकादशं स्थानं जानीयात् यो जानीते इत्याद्युक्तार्थम् ॥ ६ ॥

मन्त्रराजस्यानुष्टुप्त्वोपपत्तिः

एकादशपदा वा अनुष्टुब्भवत्यनुष्टुभा सर्वमिदं सृष्टमनुष्टुभा सर्वमिदमुपसंहृतं तस्मात् सर्वमानुष्टुभं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ ७ ॥

इदानीमस्य मन्त्रस्यानुष्टुप्छन्दस्त्वं उपपन्नमित्याह—**एकादशेति** । एकादश-पदान्यस्येति **एकादशपदा वै** प्रसिद्धा **अनुष्टुप् भवति अनुष्टुभा सर्वमिदं सृष्टं उपसंहृतं च** । यस्मादेवं **तस्मात् सर्वं आनुष्टुभं जानीयात्** इत्यादि समानम् ॥ ७ ॥

उग्रपदार्थनिर्वचनम्

देवा ह वै प्रजापतिमब्रुवन्—अथ कस्मादुच्यत उग्रमिति । स होवाच प्रजापतिः—यस्मात् स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतान्युद्गृह्णात्यजस्रं सृजति विसृजति वासयत्यु[1]द्ग्राह्यत उद्गृह्यते ।

स्तुहि श्रुतं गर्तसदं युवानं मृगं न भीममुपहत्नुमुग्रम् ।
मृडा जरित्रे [2]सिंह स्तवानो अन्यं ते अस्मन्निवपन्तु सेनाः ॥

तस्मादुच्यत उग्रमिति ॥ ८ ॥

[1] दंग्राह्यत उदगृ—अं, अ १, अ २, क, उ १.  [2] रुद्र—मु.

उक्तपदवैशद्यार्थं देवप्रश्नमवतारयति—**देवा** इति । **देवा ह वै प्रजापतिमब्रुवन्** इति व्याख्यातम् । कथं? **अथ** पृच्छामस्त्वां **कस्मादयं** भगवान् **उग्रपदेनोच्यत** इति । एवं देवैः पृष्टः **स होवाच प्रजापतिः** । किमुक्तवानित्यत्र **यस्मात् स्वमहिम्ना सर्वान् लोकान् देवान्** अग्न्यादीन् **सर्वान् सर्वानात्मनो** जीवान् **सर्वाणि** चेतनाचेतनात्मकानि **भूतानि उद्गृह्णाति** स्वयं सर्वोर्ध्वः सर्वाधारो भूत्वा सर्वान् स्वीकरोति । उक्तार्थं स्वयमेव व्याकरोति—**अजस्रं सृजति विसृजति वासयतीति** कल्पादौ कल्पमध्ये कल्पान्ते च उत्पादयति पालयति उपसंहरति सर्वेषु [illegible]ष्ठु निवासं कारयति । उद्ग्राह्यते स्वभक्तकृतभक्त्यनुरोधेन तादात्म्येन स्वीक्रियते । ब्राह्मणोक्तार्थं ऋगप्याह—**स्तुहीति** । हे स्वाज्ञलोक त्वं स्वाज्ञाननिरसनाय वक्ष्यमाणविशेषणविशिष्टं देवं **स्तुहि** स्वात्मतया स्तुतिं कुरु । **श्रुतं** देशिकमुखात् कर्णपथमागतम् । किं तत् परोक्षं? **गर्तसदं** हृदयगर्ते कूपाकारे सीदति तिष्ठतीति गर्तसत् तं गर्तसदं **युवानं** सदा संप्राप्तषोडशवर्षं **मृगं न** मृगवत्पुरुषं **भीमं** भयानकं दंष्ट्राकराळवदनत्वात् हिरण्यकशिपुप्रमुखासुरान्त्रभूषणतो नृत्यन्तं संहारकाले स्वारातिवर्गं विश्वं वा **उपहत्नुं** उपसंहर्तुं अवतीर्णं **उग्रं** स्वावशेषतया सर्वमुद्ग्रसन्तं **मृडा** मृडं स्मृतितः सुखकरं सर्वस्य **जरित्रे** जरणशीलाय कालात्मने नमोऽस्तु हे **सिंह स्तवानः** स्तुवानोऽहं **ते अन्यं** अतिरिक्तं **न मे** भातु ते तव नरसिंहस्य अन्यं **अस्मत्** सकाशात् सर्वासु दिक्षु पलायतु अस्मत् अस्मत्तः नरशिरःकरपादाद्यवयवानि सर्वासु दिक्षु **निवपन्तु** शाल्यादिबीजमिव भूमौ प्रक्षिपन्तु । के ते? रथगजतुरगपदातयः **सेनाः** त्वद्भृत्याः । त्वत्सपर्याप्रतिकूलान्यङ्गानि निवपन्तु त्वत्सपर्याऽनुकूलानि परिपालयन्त्वित्यर्थः । यस्मादेवं **तस्मादुच्यत उग्रमिति** ॥ ८ ॥

### वीरपदार्थनिर्वचनम्

अथ कस्मादुच्यते वीरमिति । यस्मात् स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि विरमति

**विरामयत्यजस्रं सृजति विसृजति वासयति । यतो वीरः कर्मण्यः सुदक्षो युक्तग्रावा जायते देवकामः । तस्मादुच्यते वीरमिति ॥ ९ ॥**

उग्रशब्दवत् वीरपदं व्याचष्टे—**अथेति** । **अथ कस्मादुच्यते** इति सर्वत्र समानम् । **यस्मादिति** च समानम् । **विरमति** अन्तर्याम्यादिरूपेण रमणं करोति । **विरामयति** विविधभूतजातं विविधभूतजातैः रतिं कारयति । विरमतिशब्दार्थमाह—**अजस्रमित्यादि** । व्याख्यातम् । स्वोक्तार्थं मन्त्रोऽप्यनुवदति —**यत इति** । **यतः** यस्मात् अयं विविधरतिहेतुः सर्वकर्मप्रवीणत्वात् **कर्मण्यः** अत एव **सुदक्षः** शोभनकौशलत्वात् युक्ता नियुता ग्रावाणोऽस्थिप्रदेशा यस्य सोऽयं **युक्तग्रावा** स्वाधीनशरीरेन्द्रियादियुत इत्यर्थः । **जायते** उत्पद्यते देवानां विषये कामोऽनुग्रहो यस्य सः **देवकामः** । **तस्मादुच्यते वीरमिति** ॥ ९ ॥

विष्णुपदार्थनिर्वचनम्

**अथ कस्मादुच्यते महाविष्णुमिति । यस्मात् स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि व्याप्नोति व्यापयति स्नेहो यथा पललपिण्डं शान्तमूलमोतं प्रोतमनुव्याप्तं व्यतिषिक्तो व्याप्यते व्यापयते ।**

**यस्मान्न जातः परो अन्यो अस्ति य आविवेश भुवनानि विश्वा ।**
**प्रजापतिः प्रजया संविदानः त्रीणि ज्योतींषि सचते स षोडशीम् ॥**

**तस्मादुच्यते महाविष्णुमिति ॥ १० ॥**

विष्णुपदं व्याकरोति—**अथेति** । **व्याप्नोति** अन्तर्याम्यात्मना सर्वत्र व्याप्तिं कुरुते स्वोपासकैः **व्यापयति** स्वज्ञानत उपासकानां व्याप्तिं कारयति । व्याप्तावयं दृष्टान्तः—**यथा स्नेहः शान्तमूलं पललपिण्डं** मांसपिण्डं **ओतप्रोतं**

प्राक्प्रत्यगुदग्दक्षिणत अनुप्राप्तं तेन मांसपिण्डेन **व्यतिषिक्तः** संबद्धः **व्याप्यते** व्याप्नोति तेन **व्यापयते** व्यापयति स्वावयवैः व्याप्तिं कारयति । उक्तार्थं मन्त्रोऽप्याचष्टे—**यस्मादिति । यस्मात् जातः परोऽन्यः** स्वातिरेकेण **नास्ति यः** परमेश्वरो **विश्वा** विश्वानि तदन्तर्गतचतुर्दश**भुवनानि** च विश्वविराडोत्रादि-रूपेण **आविवेश** प्रविष्टवान् स **प्रजापतिः** सनत्कुमारनारदादि**प्रजया** एतं स्वातिरिक्तप्रपञ्चं नास्तीति **संविदानः** जानीयात् अग्न्यादित्यचन्द्ररूपेण **त्रीणि ज्योतीꣳषि सचते** उत्पादयति । न केवलं ज्योतींषि, किंतु **स** प्रजापतिः **षोडशीं** प्राणादिनामान्तकलां तमप्युत्पादितवान् । यस्मादेवं **तस्मादुच्यते महाविष्णुमिति** ॥ १० ॥

ज्वलत्पदार्थनिर्वचनम्

अथ कस्मादुच्यते ज्वलन्तमिति । यस्मात् स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि स्वतेजसा ज्वलति ज्वालयति ज्वाल्यते ज्वालयते । सविता प्रसविता दीप्तो दीपयन् दीप्यमानः ज्वलन् ज्वलिता तपन् वितपन् संतपन् रोचनो रोचमानः शोभनः शोभमानः कल्याणः । तस्मादुच्यते ज्वलन्तमिति ॥ ११ ॥

ज्वलन्तमिति पदं व्याचष्टे—**अथेति । स्वतेजसा** प्रत्यक्प्रकाशाभिन्नपर-प्रकाशेन **ज्वलति** दीप्यते अन्तर्याम्यात्मना **ज्वालयति** विहिताविहितप्रवृत्तिनिवृत्ती प्रकाशयति स्वतेजसा हिरण्यकशिपुप्रभृतीन् **ज्वाल्यते** स्वाज्ञानतत्कार्येन्धनं स्वज्ञानिभिः **ज्वालयते** । स्वोक्तार्थप्रकाशकोऽयं मन्त्रः—**सविता** जगत्प्रसवितृ-त्वात् **प्रसविता** तज्जनको बीजात्मा **दीप्तः** स्वेन रूपेणेत्यर्थः **दीपयन्** स्वातिरिक्तं तत्संबन्धं विना स्वयं **दीप्यमानः** मूलाधाराग्निरूपेण **ज्वलन्** योगिरूपेण **ज्वलिता** ज्वलनकर्ता स्वभक्तपापं **तपन्** सामान्यतः **वितपन्** विशेषेण तापं

कुर्वन् **संतपन्** सम्यक् निःशेषं तपन् भस्म कुर्वन् **रोचनः** प्रकाशनः **रोचमानः** प्रकाशं कुर्वाणः **शोभनः** समीचीनः **शोभमानः** शोभां कुर्वाणः **कल्याणः** मङ्गळरूपः । **तस्मादुच्यते ज्वलन्तमिति** ॥ ११ ॥

सर्वतोमुखपदार्थनिर्वचनम्

**अथ कस्मादुच्यते सर्वतोमुखमिति । यस्मात् स्वमहिम्ना सर्वान् लोकान् सर्वान् देवान् सर्वानात्मनः सर्वाणि भूतानि स्वयमनिन्द्रियोऽपि सर्वतः पश्यति सर्वतः श्रृणोति सर्वतो गच्छति सर्वत आदत्ते सर्वगः सर्वगतस्तिष्ठति ।**

**एकः पुरस्ताद्य इदं बभूव यतो बभूव भुवनस्य गोपाः ।**
**यमप्येति भुवनं सांपराये नमामि तमहं सर्वतोमुखमिति ॥**

**तस्मादुच्यते सर्वतोमुखमिति ॥ १२ ॥**

सर्वतोमुखपदं व्याचष्टे—**अथेति** । विराड्रूपेण सर्वतोमुखं **निरिन्द्रियोऽपि** ज्ञानकर्मेन्द्रियविरळोऽपि **सर्वतो** रूपाणि **पश्यति** तथा **सर्वतः** शब्दजातं **श्रृणोति** । शिष्टज्ञानेन्द्रियेन्द्रियार्थानामुपलक्षणमेतत् । तथा **सर्वतो गच्छति सर्वत आदत्ते** पादपाणिव्यापारवान् भवति । पादादिग्रहणं शिष्टकर्मेन्द्रियोपलक्षणार्थम् , "पश्यत्य-चक्षुः स श्रृणोत्यकर्णः", "अपाणिपादो जवनो ग्रहीता", इत्यादिमन्त्रवर्णात् । तथाऽन्तःकरणाभावेऽपि तद्व्यापारमाह—**सर्वग** इति । सर्वं गच्छति जानातीति **सर्वगः** । किं बहुना, **सर्वगतः** विभुत्वात् सर्वासु दिक्षु सर्वरूपेण **तिष्ठति** । इत्यर्थे मन्त्रमाह—**एक इति** । सजातीयादिभेदत्रयवैरळ्यात् आत्मैक एवेत्यर्थः । सोऽयं जगदुत्पत्तेः **पुरस्तात्** पूर्वस्मिन् काले विविधप्रत्ययरूपं विश्वं अनभिव्यक्त-तया **बभूव** जगदात्मको बभूव संजातः **भुवनस्य** सचराचरस्य **जगतः गोपाः** गोप्ता विष्णोः स्थितिकारणत्वात् **यमेकं** जगदात्मानं **अप्येति** लयं गच्छति **भुवनं** चेतनाचेतनात्मकं विश्वं **साम्पराये** परलोके विनाशकाले लयं गच्छतीति

पूर्वेण संबन्धः **तमहं नमामि** नमस्करोमि । **इति**शब्दो मन्त्रसमाप्त्यर्थः । **तस्मादुच्यते सर्वतोमुखमिति** ॥ १२ ॥

नृसिंहपदार्थनिर्वचनम्

अथ कस्मादुच्यते नृसिंहमिति । यस्मात् सर्वेषां भूतानां ना वीर्यतमः श्रेष्ठतमश्च सिंहो वीर्यतमः श्रेष्ठतमश्च तस्मान्नृसिंह आसीत् परमेश्वरो जगद्धितं वा एतद्रूपं यदक्षरं भवति ।

प्रतद्विष्णुः स्तवते वीर्याय मृगो न भीमः कुचरो गरिष्ठाः ।
यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥

तस्मादुच्यते नृसिंहमिति ॥ १३ ॥

नृसिंहपदार्थमाह—**अथेति** । **सर्वेषां भूतानां ना** पुरुषः अतिशयेन **वीर्यतमः श्रेष्ठतमश्च** यथा भवति तथा **सिंहः** केसरी **वीर्यतमः श्रेष्ठतमश्च** अयं चोभयात्मकः । यस्मादेवं **तस्मात्** नाचासौ सिंहश्चेति **नृसिंहः आसीत्** परमेश्वरो नियन्ता **जगद्धितं वा एतद्रूपं** नरसिंहाख्यं क्षरसंबन्धाभावात् **यदक्षरं भवति** । उक्तेऽर्थे मन्त्रमवतारयति—**प्रतद्विष्णुः स्तवत** इति । नृसिंहोपासको वक्ष्यमाणप्रकारेण नृसिंहं **प्र**कर्षेण **स्तवते** स्तुतिं करोति । स्तुत्यः कीदृशः ? इत्यत्र यो जगज्जन्मस्थितिभङ्गहेतुः सः **विष्णुः** व्यापनशीलः । किमर्थं अयं भक्तैः स्तूयते ? **वीर्याय** स्वाज्ञाननिरसनार्थं **मृगो न** पुरुषसिंहः **भीमः** स्वाभक्तभीषणाकृतित्वात् कौ पृथिव्युपलक्षितस्वाविद्यापदतत्कार्ये विश्वविराडोत्रादि-रूपेण चरतीति **कुचरः गरिष्ठाः** गरिष्ठः सर्वोत्कृष्टत्वात् **यस्य** विष्णोः त्रिविक्रमस्य **उरुषु त्रि**संख्याकेषु **विक्रमणेषु अधिक्षियन्ति**—कानि ?— अतलादिसत्यलोकान्तानि **भुवनानि विश्वा** विश्वानि अनन्तकोटिब्रह्माण्डानि अधिकतया **क्षयं** निवासं विनाशं वा गच्छन्ति । **तस्मादुच्यते नृसिंहमिति** ॥ १३ ॥

भीषणपदार्थनिर्वचनम्

अथ कस्मादुच्यते भीषणमिति । यस्माद्भीषणं यस्य रूपं दृष्ट्वा सर्वे लोकाः सर्वे [1]देवाः सर्वाणि भूतानि भीत्या पलायन्ते स्वयं यतः कुतश्च न बिभेति ।

भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः ।
भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चम इति ॥

तस्मादुच्यते भीषणमिति ॥ १४ ॥

भीषणपदार्थमाह—अथेति । यस्य नृसिंहस्य सर्वेन्द्रियकेशश्मश्रुरोमकूपादिद्वारेषु वह्निं वमन्तं असुरराडान्त्रमालालाभहर्षसञ्जातवीराट्टहासबधिरीकृतविश्वं यद्रूपं दृष्ट्वा सर्वे लोकाः सर्वे ब्रह्मादयो देवाः सर्वाणि भूतानि मां अयं निःशेषं भक्षतीति भीत्या सर्वासु दिक्षु पलायन्ते स्वयं भीषणो नृसिंहो यतः-कुतश्चिन्न बिभेति । उक्तेऽर्थे मन्त्रमाचष्टे—भीषेति । अस्मात् नरसिंहात् भीषा भीत्या वातः पवते तथा प्रत्यहं प्रातःकाले भीषोदेति सूर्यः सर्वप्राणिबहिःप्राणः भीषाऽस्मादग्निश्चेन्द्रश्च तदाज्ञाऽनुवर्ती भवति । सर्वहरोऽपि मृत्युः तच्छासनमप्रमादं अनुवर्तते स्वाज्ञप्तकार्ये धावति पञ्चमः पञ्चसंख्यापूरकः । इति मन्त्रसमाप्तौ । तस्मादुच्यते भीषणमिति ॥ १४ ॥

भद्रपदार्थनिर्वचनम्

अथ कस्मादुच्यते भद्रमिति । यस्मात् स्वयं भद्रो भूत्वा [2]सर्वदा भद्रं ददाति । रोचनो रोचमानः शोभनः शोभमानः कल्याणः ।

भद्रं कर्णेभिः श्रृणुयाम देवाः भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवाꣳसस्तनूभिर्व्यशेम देवहितं यदायुः ॥

तस्मादुच्यते भद्रमिति ॥ १५ ॥

[1] वेदाः—उ.

[2] सर्वतो—अ, अ १.

भद्रपदार्थमाह—**अथेति** । नृसिंहः **स्वयं** प्रह्लादादिभक्तानां **भद्रो** दिव्यमङ्गळरूपो **भूत्वा सर्वदा** नित्यं स्वानन्यभक्तेभ्यः **भद्रं** स्वमात्रावशेष-लक्षणपरममङ्गळं **कैवल्यं ददाति** । उक्तार्थप्रकाशकोऽयं मन्त्रः—**रोचन** इत्यादि, व्याख्यातम् ॥ १९ ॥

### मृत्युमृत्युपदार्थनिर्वचनम्

अथ कस्मादुच्यते मृत्युमृत्युमिति । यस्मात् स्वमहिम्ना स्व-भक्तानां स्मृत एव मृत्युमपमृत्युं च मारयति ।

य आत्मदा बलदा यस्य विश्व उपासते प्रशिषं यस्य देवाः ।
यस्य छायामृतं यस्य मृत्युः कस्मै देवाय हविषा विधेम ॥

तस्मादुच्यते मृत्युमृत्युमिति ॥ १६ ॥

मृत्युमृत्युपदार्थमाह—**अथेति** । **यस्मात् स्वमहिम्ना स्वभक्तानां** मार्कण्डेयप्रभृतीनां **स्मृत एव** स्मरणमात्रेण नतु पूजाऽऽदिसापेक्षः **मृत्युः** अवसानकालप्रतीक्षः तं **अपमृत्युः** अकस्मादागतो निवर्तनीयश्च तमपि **चकारात्** नानाव्याधिमपि **मारयति** । उक्तार्थावभासकोऽयं मन्त्रः—**यः** प्रसिद्धो मृत्युमृत्युः नरसिंहः भक्तेभ्यः स्वात्मानं ददातीति **आत्मदाः** स्वानन्यभक्तकरणग्रामस्य स्वाराधनानुरूपबलं प्रयच्छतीति **बलदाः यस्य** आत्मबलदस्य मृत्युमृत्योः स्वरूपं **विश्वे** सर्वे देवाः **उपासते** अनवरतमुपासनं कुर्वते **प्रशिषं** आशिष-माशीर्वादं करणग्रामप्रसादं **यस्य देवाः** इन्द्रादयः स्वशासनानुवर्तिनः यस्य प्रशि-षमुपासत इत्यर्थः । **यस्य** मृत्युमृत्योः छायेवाविनाभावेन वर्तमानं **अमृतं** देवोपजीवनं मोक्षस्वरूपं वा भक्तानां यः प्रयच्छति **कस्मा** एकस्मै प्रत्यगभिन्न-परमात्मने **देवाय** स्वयं प्रकाशमात्राय स्वाराधनयोग्यह**विषा विधेम** विधास्म सपर्यां करवाम । **तस्मादुच्यते मृत्युमृत्युमिति** ॥ १६ ॥

नमामिपदार्थनिर्वचनम्

**अथ कस्मादुच्यते नमामीति । यस्माद्यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्च ।**

*प्रनूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।*

**यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥**

**तस्मादुच्यते नमामीति ॥ १७ ॥**

*नमामिपदार्थमाह*—**अथेति** । **यं** प्रसिद्धं नरहरिं **सर्वे देवाः नमन्ति** *प्रत्यक्परचितोरैक्यं वा भावयन्ति* । के ? **मुमुक्षवो ब्रह्मवादिनश्च,** "*नमस्त्वैक्यं प्रवदेत्*" इति श्रुतेः । उक्तेऽर्थे मन्त्रमवतारयति—**प्रनूनमिति** । प्रकर्षेण नूनं निश्चितं **ब्रह्मणस्पतिः** ब्रह्मणो वेदराशेः पतिः पालयिता प्रजापतिः मननात्मकं **मन्त्रं** सर्वस्य उत्पत्त्यादिकारणत्वात् **उक्थ्यं** प्रजापतिर्**वदति** प्रणमति च **यस्मिन्** प्रसिद्धे मन्त्रे उक्थ्ये बलाधिष्ठाता **इन्द्रः** त्रिलोकीपतिः सर्वानुग्राहको **मित्रो** रविः अपामधिष्ठाता **वरुणः अर्यमा** कर्मफलाधिष्ठाता **देवा** उक्ता अनुक्ताश्चाग्न्यादयः महावृक्ष इव विहगा **ओकांसि** नीडानि **चक्रिरे** कृतवन्तः । **तस्मादुच्यते नमामीति** ॥ १७ ॥

अहंपदार्थनिर्वचनम्

अथ कस्मादुच्यतेऽहमिति ।

अहमस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाभिः ।

यो मा ददाति स इ देवमावाः अहमन्नमन्नमदन्तमद्मि ।

अहं विश्वं भुवनमभ्यभवां सुवर्णज्योतीः ॥

य एवं वेदेति महोपनिषत् ॥ १८ ॥

अहंपदार्थमाह—**अथेति** । अहंशब्दार्थप्रतिपादकमन्त्रमाह—**अहमिति** । अस्मत्प्रत्ययावभासकः प्रेरकः प्रत्यगन्तर्यामी **वा अस्मि** भवामि **प्रथमजा** प्रथमजो हिरण्यगर्भः **ऋतस्य** कर्मफलभूतस्य संसारस्य पूर्वं प्रथमं—केभ्यः ?—स्वाधिष्ठातृभ्यः इन्द्रियेभ्यो **देवेभ्यः** ब्रह्मज्ञानमन्तरेण **अमृतस्य नाभिः** नाभिरिव कारणभूतः **यः** कश्चनोपासकः **मा** मां संप्रदायादागतं मन्त्रराजं पुत्राय शिष्याय वा **ददाति** प्रयच्छति **सोऽयं** मम दाता **इत्** इत्थं मद्दानेन **एवं** ब्रह्माध्यात्मं अधिभूतसंप्रदानमेतादृशं **आवाः** अवतीत्यर्थः । अथवा **इदेव** इत्थमेव सच्छिष्यप्रदानेनैव नत्वन्य[illegible]ां मन्त्रराजमवति । **अहं** मन्त्रराजमूर्तिः सर्वतोमुखो नृसिंहः सर्वप्राणिसाधारणतया अदनीयं **अन्नं** स्थावरजङ्गमशरीरभूतम् । यत एवं ततः **अन्नं** सर्वसाधारणं मन्त्रराजं अन्नवदिहामुत्र च सुखकरं **अदन्तं** भक्षयन्तं मन्त्रराजं गुणवत्पुत्रशिष्येभ्योऽप्रयच्छन्तं **अद्मि** स्वयागोपसेचनं जगद्भक्षकोदनं मन्त्रराजजपं भ्रमादिना भक्षयामि । यद्वा—मन्त्रराजतज्ज्ञानवैकल्येन केवलान्न**मदन्तमद्मि** । मम मृत्योरपि मृत्युत्वात् **विश्वं** निखिलं भुवनं चेतनाचेतनात्मकमुपसंहारकाले सर्वदा वा प्रतिपक्षभावमागतं **अभ्यभवां** अभिभवामि तिरस्करोमि विनाशयामीत्यर्थः । उग्रमित्याद्यहमित्यन्ताः **सुवर्णाः ज्योतिरिव** प्रकाशमानत्वात् । **सुवर्णज्योतीः** इतिपक्षे सुवर्णज्योतिरेव सुवर्णज्योतीः । तस्मादुच्यते अहमिति शेषः । **योऽयमुपासकः** उग्राद्यहमित्यन्तपदानि **वेद** स उग्रादिरूपो भवतीति शेषः । **इति**शब्दो द्वितीयोपनिषत्समाप्त्यर्थः । व्याख्याता **महोपनिषत्** ॥ १८ ॥

**इति द्वितीयोपनिषत्**

## तृतीयोपनिषत्

### मन्त्रराजस्य शक्तिबीजजिज्ञासा

**देवा ह वै प्रजापतिमब्रुवन्—आनुष्टुभस्य मन्त्रराजस्य नारसिंहस्य शक्तिं बीजं नो ब्रूहि भगव इति ॥ १ ॥**

नृसिंहपदव्याख्यानावसरे "जगद्धितं वा एतद्रूपं यदक्षरं" इत्यत्र *शक्तिबीजयोः सूचितत्वात्* मध्ये प्रश्नावसराभावात् इदानीं लब्धावसरा देवास्तं पृच्छन्तीत्याह—देवा इति । **देवा ह वै प्रजापतिमब्रुवन्** इत्युक्तार्थम् । **आनुष्टुभस्य मन्त्रराजस्य नारसिंहस्य शक्तिं बीजं नोऽस्मभ्यं ब्रूहि भगव इति ॥ १ ॥**

शक्तिस्वरूपनिरूपणम्

स होवाच प्रजापतिः—माया वा एषा नारसिंही सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं संहरति तस्मान्मायामेतां शक्तिं विद्याद्य एतां मायां शक्तिं वेद स पाप्मानं तरति स मृत्युं तरति स संसारं तरति सोऽमृतत्वं च गच्छति महतीं श्रियमश्नुते ॥ २ ॥

मीमांसन्ते ब्रह्मवादिनो ह्रस्वा दीर्घा प्लुता चेति । यदि ह्रस्वा भवति सर्वं पाप्मानं दहत्यमृतत्वं च गच्छति यदि दीर्घा भवति महतीं श्रियमाप्नोत्यमृतत्वं च गच्छति यदि प्लुता भवति ज्ञानवान् भवत्यमृतत्वं च गच्छति ॥ ३ ॥

तदेतदृषिणोक्तं निदर्शनं–स ईं पाहि य ऋजीषी तरुत्रः श्रियं लक्ष्मीमौपलामम्बिकां गां षष्ठीं च यामिन्द्रसेनेत्युदाहुः तां विद्यां ब्रह्मयोनिं सरूपामिहायुषे शरणमहं प्रपद्ये ॥ ४ ॥

संबोधितः **स होवाच प्रजापतिः**—व्याख्यातम् । परमार्थदृष्ट्या या मा सा **माया** स्वाज्ञदृष्ट्या वस्तुभूता **वै एषा** नरसिंहस्येयं **नारसिंही** । यद्यपि नृसिंह इत्यत्र ह्रस्व इकारो लोकप्रसिद्धः, तथाऽपि दीर्घस्य मायाकार्यत्वात् मन्त्रराजस्थपदे स दीर्घोऽवगन्तव्यः सामत्वात् । मायैषा नारसिंही **सर्वमिदं सृजति सर्वमिदं रक्षति सर्वमिदं संहरति,** स्पष्टोऽर्थः । यस्मादियं जगज्जन्मादिहेतुः **तस्मात्**

**मायां** कार्यतः साक्षिवेद्यतया प्रत्यक्षां चतुर्विधपुरुषार्थकारिणीं **शक्तिं विद्यात्** । तज्ज्ञानफलमेतद्धि—यः पुमान् **एतां मायां शक्तिं** स्वातिरिक्ततया नास्तीति **वेद** जानाति **स पाप्मानं तरति** इत्यादि व्याख्यातम् । *यथा* यथा सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन निष्प्रतियोगिकाभावरूपतया वा जानाति तथा तथा विराड्भावापत्त्यादिकैवल्यान्त**श्रियमश्नुते** प्राप्नोति ॥ २ ॥ वक्ष्यमाण-प्रकारेण एवं विचारणं कुर्वन्ति नृसिंहपदे । स्वभावतो ह्रस्वा उपलभ्यते, मायायोगतः दीर्घा च, सामत्वात् प्लुताऽप्यवगम्यते । ब्रह्मवादिनां मीमांसाप्रकारः ह्रस्वा वा दीर्घा वा प्लुता [illegible], एकद्वित्रिमात्रा वेति । पक्षत्रयमङ्गीकरोति—**यदीति** । **यदि ह्रस्वा भवति सर्वं पाप्मानं दहति अमृतत्वं च गच्छति** । शिष्टं स्पष्टम् । एवं दृष्टित्रयस्य फलैकदेशवैचित्र्येऽपि मुख्यफलस्यैकरूपत्वात् पर्यायत्रये क्रमेणापापश्रीज्ञानानि भिद्यन्ते, अमृतत्वं समानमेव ॥ ३ ॥ यदेवमुक्तं **तदृषिणाऽप्युक्तम्** । किं तत् ? मन्त्ररूपं **निदर्शनं**—यो जगज्जन्मादिहेतुः **सोऽयं** मन्त्रराजात्मको नृसिंहः **ई** ईकारात्मकमायाशक्तिं भक्ताभक्तकथने **पाहि** पालयस्व । **यः** प्रसिद्धः सर्वात्मा **ऋजीषी** ईकाररहितो वस्तुतो निर्मायत्वात् स्वाज्ञदृष्टिप्रसक्तें-कारयोगात् स्वांशजप्राणिपटलं त्रायत इति **तरुत्रः** मन्त्रराजो नृसिंहरूपः **श्रियं** श्रीमन्त्रानुगतां धनधान्यादिरूपिणीं **लक्ष्मीं** लक्ष्मीमन्त्रानुगतां हस्त्यश्वरथादिरूपां —सामान्यविशेषाकारेण श्रीलक्ष्म्योः भेदोऽवगन्तव्यः—उपलस्य हिमवतः इयं **औपला** तां **मेना**ऽऽदिरूपां **अम्बिकां** भवानीं **गां** गोशब्दवाच्यां यागादिरूपां वा **षष्ठीं च** षट्संख्यापूरणीं चकारात् सावित्र्यादिरूपामपि **यां** प्रसिद्धां **इन्द्रस्य सेना** चतुरङ्गिणीत्याहुः ब्रह्मवादिनः **तामुक्तां** श्रीलक्ष्म्यादिरूपां मन्त्रराजब्रह्म-**विद्याऽऽत्मिकां ब्रह्म** सत्यादिलक्षणं तदेव **योनिः** तत्स्वरूपां **इह** अस्मिन्नेव शरीरे वर्तमानः **आयुषे** आयुःप्राप्त्यर्थं **शरणमहं प्रपद्ये** प्राप्तवानस्मि ॥ ४ ॥

### बीजस्वरूपनिरूपणम्

सर्वेषां वा एष भूतानामा[1]काशः परायणं सर्वाणि ह वा इमानि भूतान्याकाशादेव जायन्त आकाशादेव जाता-

[1] काशं—अ १, उ.

नि जीवन्त्याकाशं प्रयन्त्यभिसंविशन्ति तस्मादाकाशं बीजं विद्यात् ॥ ९ ॥

तदेतदृषिणोक्तं निदर्शनं—

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥

य एवं वेदेति महोपनिषत् ॥ ६ ॥

शक्तेरियत्तामुक्त्वा बीजेयत्तामाह—**सर्वेषां वेति** । वै प्रसिद्धमेतत् **एषः** स्थावरजङ्गमभूतानां **आकाश**शब्देन तदधिष्ठाता ईश्वरः **परायणं** पर्यवसानभूमिः । **सर्वाणि ह वा इमानि** वियदादिभूतभौतिकानि **आकाश**शब्दशब्दितेश्वरादेव **जायन्ते** । व्याख्यातमन्यत् । यस्मादेवं **तस्मात् आकाशं बीजं विद्यात्** ॥ ९ ॥ उक्तेऽर्थे **तदेतदृषिणोक्तं निदर्शनं** व्याख्यातम् । हंशब्देन तत्पदार्थः सशब्देन त्वंपदार्थः तयोः व्यतिहारोच्चारणं असिपदार्थः इत्यत्र—

हकारः परमेशः स्यात्तत्पदं चेति निश्चितम् ।
सकारः खेचरी प्रोक्तस्त्वंपदं चेति निश्चितम् ।
सकारो ध्यायते जन्तुर्हकारो हि भवेत् ध्रुवम् ॥

इति श्रुतेः । **हंस**शब्देन प्रत्यगभिन्नपरमात्मोच्यते । स एव शुचौ हृदयादिप्रदेशे सीदतीति **शुचिषत्** वस्वात्मना अन्तरिक्षे सीदतीति **अन्तरिक्षसत्** "अग्निर्वै होता" इति श्रुत्या होत्रात्मना त्रेताऽग्निमध्यवर्तिन्यां वेद्यां सीदतीति **वेदिषत्** आतिथ्यकर्मणि पूजनीयोऽज्ञातकुलगोत्रोऽयमतिथिः तद्रूपेण दुरोणेषु यज्ञगर्भेषु सीदतीति **दुरोणसत्** नृषु सीदतीति **नृषत्** वरेषु देवेषु सीदतीति **वरसत्** **ऋते** अवश्यंभाविकर्मफले सीदतीति **ऋतसत्** व्योम्नि हृदयाकाशादौ सीदतीति **व्योमसत्** शंखमकरादिरूपेण अद्भयो जायत इति **अब्जाः** पयोदध्यादिरूपेण गोभ्यो जायत इति **गोजाः** ऋतात् कर्मफलजनकात् कर्मणः सुखदुःखादिरूपेण

जायत इति **ऋतजाः** अद्भ्यः स्थावरादिरूपेण जायत इति **अद्रिजाः ऋतं** मन्त्रादौ प्रथममुक्तं अक्षरं एतमात्मनो भेदरहितं जगद्बीजमन्त्रराजबीजभूतमपि **बृहत्** ब्रह्मस्वरूपम् । **यः एवं** उक्तेन प्रकारेण आकाशं बीजं-**वेद** । **इतिशब्दः** तृतीयोपनिषत्समाप्त्यर्थः ॥ ६ ॥

इति तृतीयोपनिषत्

## चतुर्थोपनिषत्

### अङ्गमन्त्रोपदेशः

देवा ह वै प्रजापतिमब्रुवन्—आनुष्टुभस्य मन्त्रराजस्य नारसिंहस्याङ्गमन्त्रान्नो ब्रूहि भगव इति ॥ १ ॥

स होवाच प्रजापतिः प्रणवं सावित्रीं यजुर्लक्ष्मीं नृसिंहगायत्रीमित्यङ्गानि जानीयाद्यो जानीते सोऽमृतत्वं च गच्छति ॥ २ ॥

कान्यङ्गानि कानि दैवतानीत्यत्र देवप्रश्नानुरूपं उत्तरं दत्तम् । पुनर्विशेषतोऽवगन्तुं इदानीं लब्धावसराः देवाः पृच्छन्ति—**देवा ह वा** इति । **देवा ह वा** इत्याद्युक्तार्थम् । **अङ्ग**रूप**मन्त्रान्** ॥ १ ॥ इदानीं क्रमेण चतुरोऽङ्गमन्त्रानाह—**प्रणवमिति** । प्रणवादीनि चतुरङ्गमन्त्रनामधेयानि । **इत्यनेन** प्रकारेण **चतुरङ्गानि जानीयात्** । **यो** जानीते इत्याद्युक्तार्थम् ॥ २ ॥

### प्रणवस्य ब्रह्मात्मत्वम्

ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव यच्चान्यत्त्रिकालातीतं तदप्योंकार एव । सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म सोऽयमात्मा चतुष्पात् ॥ ३ ॥

सप्रणवं सर्वं पञ्चमं भवतीत्युक्तत्वात् यथासंप्रदायं प्रणवमन्त्र उक्तः। तस्यार्थः पुरा माण्डूक्योपनिषद्विवरणे सम्यक् प्रपञ्चितः। इहापि संक्षेपतया प्रपञ्च्यते—**ओमिति**। **ओमित्येतदक्षरमिदं सर्वं** इति व्याख्यातम्। **तस्य** प्रथमाङ्गस्य सर्वात्मकतया उप सामीप्येनाख्यानं आसमन्तात् कथनं **उपव्याख्यानम्**। **भूतं** अतीतं **भवत्** वर्तमानं **भविष्यत्** अनागतार्थः **ओङ्कार एव** सदसदात्मकतया **यत्** प्रसिद्धं **त्रिकालातीतं तदप्योङ्कारः एव**। **सर्वं ह्येतत् ब्रह्म** अभिधेयात्मना अभिधानप्रपञ्चव्यापकत्वात्। अचेतनप्रपञ्चस्य ब्रह्मत्वमुक्तं न चेतनस्येति शङ्कां शातयति—**अयमात्मा** [illegible]ति। अस्मत्प्रत्ययालम्बनतया **अयं** अनुभूयमानस्त्वंपदार्थः प्रत्यगात्मोच्यते। सत्यज्ञानादिलक्षणं ब्रह्म तत्पदार्थः। तयोः स्वाज्ञदृष्ट्या भेदः व्यष्टिसमष्ट्युपाधियोगभ्रमात्। स्वज्ञदृष्ट्या उपाधेः मायिकत्वेन मिथ्यात्वात् उपहितचैतन्ययोः अभेद एव। परमार्थदृष्ट्या स्वातिरिक्तसामान्यस्य व्यष्ट्यादेः शशविषाणवत् अवस्तुतया तत्प्रसक्तभेदाभेद-वैरळ्यात् निष्प्रतियोगिकं ब्रह्ममात्रमवशिष्यत इत्यर्थः। स्वाज्ञदृष्ट्या **सोऽयमात्मा** कार्षापणवत् चत्वारः पादाः अस्येति **चतुष्पात्** न गौरिवेत्यर्थः ॥ ३ ॥

प्रणवप्रथमपादनिरूपणम्

जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूल-
भुग्वैश्वानरः प्रथमः पादः ॥ ४ ॥

तत् कथं ? जागरितं स्थानमस्येति **जागरितस्थानः** चाक्षुषादिगोचरप्रज्ञा यस्येति स **बहिःप्रज्ञः** सप्तसंख्याकानि द्युसूर्यवाय्वाकाशोदकपृथिव्याहवनीया-ख्यानि मुख्याङ्गानि यस्य सोऽयं **सप्ताङ्गः** पञ्चज्ञानकर्मेन्द्रियप्राणान्तःकरण-चतुष्टयभेदैरेकोनविंशतिमुखानि विषयोपलब्धिद्वाराणि अस्येति **एकोनविंशतिमुखः** स्थूलविषयकभोगो यस्य सः **स्थूलभुक्** विश्वश्चासौ नरश्चेति विश्वनरः स एव **वैश्वानरः**। चतुरात्मत्वं उत्तरतापिन्यां स्फुटं अवगम्यते इत्यत्र न प्रपञ्चितम्। **अयमेव प्रथमः पादः** ॥ ४ ॥

प्रणवद्वितीयपादनिरूपणम्

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ ५ ॥

इदानीं द्वितीयं पादमाह—**स्वप्नस्थान** इति । जागरितवासनाजन्यस्वप्नस्थानमस्येति **स्वप्नस्थानः** वासनामये अन्तरेव प्रज्ञा यस्य सोऽ**न्तःप्रज्ञः सप्ताङ्गः** । **एकोनविंशतिमुखः** इति व्याख्यातम् । प्रविविक्तं सूक्ष्मं वासनाऽनुरूपं भुङ्क्त इति **प्रविविक्तभुक्** तेजसान्तःकरणोपाधिकत्वात् **तैजसः** जागरितानन्तर्यात् अयं **द्वितीयः पादः** ॥ ५ ॥

प्रणवतृतीयपादनिरूपणम्

यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत् सुषुप्तम् । सुषुप्तस्थान [1]एकीभूतप्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः । एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ ६ ॥

इदानीं तृतीयपादमाह—**यत्रेति** । **यत्र** यस्मिन् काले **सुप्तः** उपरतेन्द्रियग्रामः **किंचन** पुण्यपापहेतुभूतदारपुत्रधनक्षेत्रादिकं **न कामयते न कंचन** शुभाशुभवासनाविशेषस्व**प्नं पश्यति** सुषुप्तेः सर्वकरणोपरमस्थानत्वात् यदेवमुक्तं **तत् सुषुप्तम्** । सुषुप्तं स्थानं अस्येति **सुषुप्तस्थानः** एकीभूतप्रज्ञानघनः बाह्यान्तःकरणप्रज्ञानानां अस्मिन्नेकीभूतत्वात्, अयं एकीभूतप्रज्ञानघन एव **आनन्दमयः** विश्वाद्यपेक्षया अस्यानन्दप्रचुरत्वात् स्वाज्ञानवृत्तिकलितानन्द**भुक्** आवृत्यावृतचेतोमुखं द्वारं यस्य सः **चेतोमुखः** प्रकृष्टानन्दे स्वाज्ञानवृत्तिकलितबोधो यस्य सोऽयं **प्राज्ञः** । स हि **तृतीयः पादः** । ईश्वरत्वेन इदानीं प्राज्ञं स्तौति—**एष** इति । व्यष्टि-

[1] अयं व्याख्यानुसारी पाठः । आकरकोशदृष्टपाठस्तु—'एकीभूतः प्र' इति.

समष्टिबीजेशयोरेकत्वात् एष **सर्वेश्वरः** सर्वश्चासौ ईश्वश्चेत्येष **सर्वज्ञः एषोऽन्तर्यामी** सर्वनियन्तृत्वात् **सर्वस्य एष योनिः** सर्वकारणत्वात्। योनित्वे अयं हेतुः— **भूतानां** चेतनाचेतनात्मकानां **प्रभवाप्ययौ** उत्पत्तिप्रळयावपि एष एव, प्रत्यगभिन्नब्रह्मात्मना आरोपापवादाधिकरणत्वात् ॥ ६ ॥

प्रणवचतुर्थपादनिरूपणम्

नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्य[1]मेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ ७ ॥

इदानीं तुर्यपादमाह—**नान्तःप्रज्ञमिति**। **नान्तःप्रज्ञं** वासनावैरळ्यात् **न बहिःप्रज्ञं** बाह्यप्रपञ्चाभावात् **नोभयतःप्रज्ञं** जाग्रत्स्वप्नान्तराळीयबोधाभावात् **न प्रज्ञं** निर्विकल्पबोधाभावात् **नाप्रज्ञं** नबोधाभानरूपत्वात् **न प्रज्ञानघनं** करणग्रामविषयकप्रज्ञानवैरळ्यात् **अदृष्टं** अदृश्यं दृङ्मात्रत्वात् **अव्यवहार्यं** अवाङ्मानसगोचरत्वात् **अग्राह्यं** अचाक्षुषत्वात् **अलक्षणं** लक्षणागम्यत्वात् **अचिन्त्यं** अनिदंवस्तुत्वात् **अव्यपदेश्यं** अनभिधेयत्वात् **एकात्मप्रत्ययसारं** स्वमात्रप्रत्ययगोचरत्वात् **प्रपञ्चोपशमं** तत्प्रळयाधिकरणत्वात् **शान्तं** शान्तस्वातिरिक्तत्वात् **शिवं** चिन्मात्रत्वात् **अद्वैतं** द्वैताभावात् **चतुर्थं** तुर्यत्वात्। ब्रह्मवादिनः नान्तःप्रज्ञं इत्यादिविशेषणविशिष्टं यत्तत् **चतुर्थं मन्यन्ते**। **स** हि **परमात्मा स** एव मुमुक्षुभिः आत्मतया **विज्ञेयः** साक्षात्कर्तव्यः ॥ ७ ॥

सावित्रीगायत्रीमन्त्रस्वरूपम्

अथ सावित्री गायत्र्या [त्री या] यजुषा प्रोक्ता तया सर्वमिदं व्याप्तम्। घृणिरिति द्वे अक्षरे सूर्य इति त्रीणि आदित्य इति त्रीणि।

[1] मैकात्म्यप्र—उ, मु.

**एतद्वै सावित्रस्याष्टाक्षरं पदं श्रियाऽभिषिक्तम् । य एवं वेद श्रिया हैवाभिषिच्यते ॥ ८ ॥**

**तदेतदृचाभ्युक्तं—**

**ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।**
**यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासत इति ॥ ९ ॥**

**न ह वा एतस्यर्चा न यजुषा न साम्नाऽर्थोऽस्ति यः सावित्रं वेदेति ॥ १० ॥**

चतुष्पादोङ्कारः प्रथमाङ्गत्वेन निर्दिष्टः । इदानीं सवितृदेवताकं गायत्रीछन्दस्कं द्वितीयमङ्गमाह—**अथेति** । अथ प्रथमाङ्गकथनानन्तरं **सावित्री** सवितृदेवताका **गायत्री** गायत्रीछन्दस्का या **यजुषा प्रोक्ता तया** यजुर्वेदोक्तया गायत्र्या **सर्वमिदं व्याप्तम्** । तां निर्दिशति—**घृणिरिति** अक्षरानुकरणार्थः **द्वे अक्षरे, सूर्य** इत्यत्र सूरीय इत्यक्षरत्रयं, **आदित्य इति त्रीण्यक्षराणि** । **एतद्वै** प्रसिद्धस्य **सावित्रस्याष्टाक्षरं पदं श्रियाऽभिषिक्तम्** । इति **यो वेद** यथोक्तमेवं जानाति तस्यैतत्फलं—**श्रिया हैवाभिषिच्यते** ॥ ८ ॥ यदेवमुक्तं **तदृचा** मन्त्रेणाभ्युक्तम् । पादबद्धाक्षरात्मिका **ऋचः** तदुपलक्षितशब्दराशिः **अक्षरे** सश्रीबीजे **परमे** उत्कृष्टे **व्योमन्** सवित्राकाशे **यस्मिन्** सवितरि सश्रीके अष्टाक्षरे परमे व्योम्नि **विश्वे** सर्वे **देवाः अधिनिषेदुः यः** प्रसिद्धोऽयमुपासकः **तं** अष्टाक्षररूपं सश्रीकं **न वेद** न जानाति यदि तदा **ऋचा** सवितृमन्त्रव्यतिरिक्तेन **किं करिष्यति ये** सश्रीकसावित्रीमन्त्रोपासकाः **इत्** इत्थं सर्वशब्दराशिदेवताधिष्ठानभूतं अष्टाक्षरं **विदुः ते** सश्रीकमन्त्रोपासकाः **समासते** परिपूर्णमनोरथा वर्तन्ते । **इति**शब्दो मन्त्रसमाप्त्यर्थः ॥ ९ ॥ सवितृमन्त्रज्ञाने वेदत्रयमुपयुज्यत इत्यत आह—**न ह वा इति** । वेदत्रयनिर्वर्त्यप्रयोजनस्य पुरस्तादेव सिद्धत्वात् यः

सावित्रं वेद जानाति तस्य वेदत्रयसाध्यप्रयोजनं नह्यस्तीत्यर्थः । इतिशब्दः सावित्रमन्त्रसमाप्त्यर्थः ॥ १० ॥

### यजुर्लक्ष्मीमन्त्रस्वरूपम्

ओंभूर्लक्ष्मीर्भुवर्लक्ष्मीः स्वर्लक्ष्मीः कालकण्ठी तन्नो महालक्ष्मीः प्रचोदयात् इत्येषा वै महालक्ष्मीर्यजुर्गायत्री चतुर्विंशत्यक्षरा भवति ॥ ११ ॥

गायत्री वा इदं सर्वं यदिदं किंच तस्माद्य एतां महालक्ष्मीं याजुषीं वेद महतीं श्रियमश्नुते ॥ १२ ॥

तृतीयं यजुर्लक्ष्म्याख्यं अङ्गमन्त्रमाह—**ओमिति । ओं भूर्भुवःसुवरिति** व्याहृतित्रयं त्रैलोक्यलक्ष्मीद्योतनार्थम् । कालो भगवान् कण्ठोपलक्षितहृदये यस्याः **सेयं कालकण्ठी तत्** तस्मिन्नर्थे व्याहृतित्रयनिष्पन्ने त्रैलोक्यैश्वर्ये **नो**ऽस्मान् **महालक्ष्मीः प्रचोदयात्** । इतिशब्दो यजुर्लक्ष्मीमन्त्रसमाप्त्यर्थः । एषा प्रत्यक्षतयोक्ता । **वै** प्रसिद्धा । **यजुर्गायत्री**रूपिणी **लक्ष्मीः चतुर्विंशत्यक्षरा भवति** ॥ ११ ॥ गायकप्राणान् त्रायत इति **गायत्री वै** प्रसिद्धा **इदं सर्वं, यदिदं किंच** यत्किंचेदं सर्वं गायत्र्यात्मकम् । **एतां** सर्वरूपिणीं **महालक्ष्मीं याजुषीं यो वेद** स **महतीं श्रियं अश्नुते** ॥ १२ ॥

### नृसिंहगायत्रीमन्त्रस्वरूपम्

ॐ नृसिंहाय विद्महे वज्रनखाय धीमहि । तन्नः सिंहः प्रचोदयात् इत्येषा वै नृसिंहगायत्री देवानां वेदानां निदानं भवति य एवं वेद निदानवान् भवति ॥ १३ ॥

इदानीं नृसिंहगायत्रीरूपं चतुर्थमङ्गमाह—**ओमिति** । ये तस्मै **नृसिंहाय** पुरुषसिंहाय इदं सर्वं नृसिंहार्थमिति । **विद्महे** विद्म जानीम **वज्र**समानकठोर**नखाय**

वज्रसमनखस्य महौर्भाग्यमत्तेभभेदनपटुत्वात् तस्मै उक्तविशेषणविशिष्टाय **धीमहि** मम तत्पदध्यानविशिष्टं मनस्तत्प्रवणमस्त्वित्यर्थः । **तत्** तत्र नृसिंहे पूजास्तुतिध्यानादिना **नः** अस्मान् तद्भक्तान् **सिंहः प्रचोदयात्** । इति मन्त्रसमाप्तौ । **यैषा** ओमित्यारभ्य प्रचोदयात् इत्यन्ता **वै** प्रसिद्धा सेयं **नृसिंहगायत्री** ऋगादिचतुर्वेदानां अग्नीन्द्रादिदेवानामपि **निदानं** कारणं **भवति** । एवं उक्तप्रकारेण **यो वेद स** विद्वान् **निदानवान् भवति** सर्वकारणभूतो भवति ॥ १३ ॥

ऋङ्मन्त्रस्वरूपम्

देवा ह वै प्रजापतिमब्रुवन्—अथ कैर्मन्त्रैः स्तुतो देवः प्रीतो भवति स्वात्मानं दर्शयति [1]तान्नो ब्रूहि भगवन्निति ॥ १४ ॥

स होवाच प्रजापतिः—ॐ यो ह वै नृसिंहो देवो भगवान् यश्च ब्रह्मा भूर्भुवः स्वस्तस्मै वै नमो नमः—१ । (यथा प्रथममन्त्रोक्तावाद्यन्तौ तथा सर्वमन्त्रेषु द्रष्टव्यौ) ... यश्च विष्णुः ... २ । ... यश्च महेश्वरः ... ३ । ... यश्च पुरुषः ... ४ । ... यश्चेश्वरः ... ५ । ... या सरस्वती ... ६ । ... या श्रीः ... ७ । ... या गौरी ... ८ । ... या प्रकृतिः ... ९ । ... या विद्या ... १० । ... यश्चोंकारः ... ११ । ... याश्चतस्रोऽर्धमात्राः ... १२ । ... ये वेदाः साङ्गाः सशाखाः सेतिहासाः ... १३ । ... ये पञ्चाग्नयः ... १४ । ... याः सप्त महाव्याहृतयः ... १५ । ... ये चाष्टौ लोकपालाः ... १६ । ... ये चाष्टौ वसवः ... १७ । ... ये चैकादश रुद्राः ... १८ । ... ये च द्वादशादित्याः ... १९ । ...

[1] तन्नो—अ २, मु.

ये चाष्टौ ग्रहाः ... २० । ... यानि च पञ्च महाभूतानि ... २१ । ... यश्च कालः ... २२ । ... यश्च मनुः ... २३ । ... यश्च मृत्युः ... २४ । ... यश्च यमः ... २५ । ... यश्चान्तकः ... २६ । ... यश्च प्राणः ... २७ । ... यश्च सूर्यः ... २८ । ... यश्च सोमः ... २९ । ... यश्च विराट् पुरुषः ... ३० । ... यश्च जीवः ... ३१ । ... यच्च सर्वम् ... ३२ । इति द्वात्रिंशत् । इति तान् प्रजापतिरब्रवीदेतैर्मन्त्रैर्नित्यं देवं स्तुध्वम् ॥ १५ ॥

[1]ततो देवः प्रीतो भवति स्वात्मानं दर्शयति तस्माद्य एतैर्मन्त्रैर्नित्यं देवं स्तौति स देवं पश्यति सोऽमृतत्वं च गच्छति य एवं वेदेति महोपनिषत् ॥ १६ ॥

अङ्गमन्त्रान् सदेवान् श्रुत्वा अनुमन्त्रान् प्रत्यङ्गभूतान् द्वात्रिंशदक्षरजान् यथावद्विज्ञातुं देवाः पृच्छन्तीत्याह —देवा इति । देवा ह वै प्रजापतिमब्रुवन् इत्यादि स्पष्टोऽर्थः ॥ १४ ॥ यो ह वै नृसिंहो देवो भगवान यश्च ब्रह्मेत्यादि यश्च सर्वमित्यन्तमन्त्रान् पृच्छतः स्वशिष्यान् प्रति प्रजापतिः अब्रवीत् एतैर्मन्त्रैः नित्यं देवं स्तुध्वं यथाशक्ति स्तुतिं कुरुध्वम् ॥ १५ ॥ ततो भवद्भिः कृतस्तोत्रात् देवः प्रीतो भवति स्वात्मानं दर्शयति । यस्मादेवं तस्मात् य एतैर्मन्त्रैः नित्यं देवं स्तौति स देवं स्वात्मत्वेन पश्यति साक्षात्करोति । न केवलमेवं, किं तु देवावलोकनकृत् अमृतत्वं च गच्छति । इतिशब्दः चतुर्थोपनिषत्समाप्त्यर्थः ॥ १६ ॥

इति चतुर्थोपनिषत्

---

[1] तस्य—अ, अ १.

## पञ्चमोपनिषत्

### देवानां महाचक्रजिज्ञासा

देवा ह वै प्रजापतिमब्रुवन्—आनुष्टुभस्य मन्त्रराजस्य नारसिंहस्य महाचक्रं नाम चक्रं नो ब्रूहि भगव इति सार्वकामिकं मोक्षद्वारं यद्योगिन [1]उपदिशन्ति ॥ १ ॥

किं छन्दः ? क ऋषिः ? इति प्रश्नोत्तरं कण्ठरवेण नोक्तम् । कान्यङ्गानि ? कानि दैवतानि च ? इति प्रश्नोत्तरं प्रथमद्वितीयचतुर्थोपनिषत्सु सम्यगुक्तम् । किं ध्यानं ? किं दैवतं ? इति मन्त्रराजपदतदर्थबीजशक्तिकथनेन प्रथमाद्युपनिषत्सूत्तरं दत्तम् । यद्यपि समाप्तश्चैव शास्त्रार्थः, तथाऽपि प्रधानाङ्गप्रत्यङ्गादिषु महाचक्रस्य मुख्यत्वात् तस्य सामान्यतः प्रसिद्धत्वेऽपि विशेषतोऽप्रसिद्धत्वात् तदधिगमार्थं फलज्ञानार्थं च पञ्चम्युपनिषदारभ्यते—देवा इति । **देवा ह वा** इत्यादि व्याख्यातम् । महच्च तच्चक्रं चेति चतुर्विधपुरुषार्थसाधनं यत् तत् **महाचक्रं** सर्वलोकप्रसिद्धितो **नाम चक्रं**, भवादृशां विशेषतः अस्माकं च सामान्यतः चक्रं नृसिंहस्य योगचूडामणेः विशेषतो नाम नामधेयं महाचक्रं **नो ब्रूहि भगव इति** व्याख्यातम् । **सार्वकामिकं** सर्वकामप्रदं **मोक्षद्वारं** विकळेबरकैवल्यप्रापकोपायभूतं **यद्योगिन उपदिशन्ती**ति ॥ १ ॥

### षडरचक्रदर्शनम्

स होवाच प्रजापतिः—षडरं वा एतत् सुदर्शनं महाचक्रं तस्मात् षडरं भवति षट्पत्रं चक्रं भवति षड्वा ऋतवः ऋतुभिः संमितं भवति मध्ये नाभिर्भवति नाभ्यां वा एते अराः प्रतिष्ठिता मायया

[1] उपवि—अ, अ १.

**एतत् सर्वं वेष्टितं भवति नात्मानं माया स्पृशति तस्मान्मायया बहिर्वेष्टितं भवति ॥ २ ॥**

एवं देवैः पृष्टः प्रजापतिराह—**स हेति**। देवैः महाचक्रयाथात्म्यं पृष्टः **स होवाच प्रजापतिः**। षट्संख्याकान्यराणि यस्मिन् तत् **षडरं वै** प्रसिद्धं एतत् प्रत्यराक्षरं सहस्रारहुंफडिति **सुदर्शनं महाचक्रं तस्मात्** सुदर्शनं **षडरं भवति**। न केवलं षडरं किं तु **षट्पत्रं चक्रं भवति**। षडरत्वे षट्पत्रत्वे चोपपत्तिः—**षड्वा ऋतवः ऋतुभिः संमितं भवति** षण्णां पत्राणां **मध्ये नाभिः** छिद्रं, सनेमि पत्रप्रतिष्ठामूलस्य नाभित्वात्। **नाभ्यां वा एते अराः प्रतिष्ठिताः** प्रतिष्ठानं प्राप्ताः तुर्यया **मायया एतत्** सारनाभिपत्राक्षरं सुदर्शनं **वेष्टितं भवति**। मायाग्रस्तं सुदर्शनं इत्यत आह—**नात्मानमिति**। यत एवं अतो **मायया बहिर्वेष्टितं भवति** ॥ २ ॥

अष्टारचक्रदर्शनम्

**अथाष्टारमष्टपत्रं चक्रं भवत्यष्टाक्षरा वै गायत्री गायत्र्या संमितं भवति बहिर्मायया वेष्टितं भवति क्षेत्रं क्षेत्रं वै मायैषा संपद्यते ॥ ३ ॥**

प्रथमचक्रं व्याख्यातम्। **अथ** प्रथमचक्रप्रदर्शनानन्तरं **अष्टारं अष्टपत्रं चक्रं भवति**। तत्रोपपत्तिः—**अष्टाक्षरा वै** प्रसिद्धा **गायत्री** छन्दोविशेषः **गायत्र्या** एकैकपादस्य अष्टाक्षरसंमितत्वात् **बहिर्मायया वेष्टितं भवति**। मायाविन्यासस्थलमाह—**क्षेत्रमिति**। **क्षेत्रं क्षेत्रं वै मायैषा संपद्यते** प्रतिक्षेत्रं मायाबीजवेष्टितं भवतीत्यर्थः ॥ ३ ॥

द्वादशारचक्रदर्शनम्

**अथ द्वादशारं द्वादशपत्रं चक्रं भवति द्वादशाक्षरा वै जगती जगत्या संमितं भवति बहिर्मायया वेष्टितं भवति ॥ ४ ॥**

**अथ द्वादशारं द्वादशपत्रं चक्रं** भवति। तत्रोपपत्तिः—**द्वादशाक्षरा वै** प्रसिद्धा **जगती** जगदभिन्ना छन्दोविशेषरूपिणी तया **जगत्या संमितं** संयुक्तं **भवति** पूर्ववत् **बहिर्मायया वेष्टितं भवति** ॥ ४ ॥

षोडशारचक्रदर्शनम्

अथ षोडशारं षोडशपत्रं चक्रं भवति षोडशकलो वै पुरुषः पुरुष एवेदं सर्वं पुरुषेण संमितं भवति मायया बहिर्वेष्टितं भवति ॥ ५ ॥

**अथ षोडशारं षोडशपत्रं चक्रं भवति**। तत्रोपपत्तिः—प्राणादिनामान्तषोडशकला यस्य स **षोडशकलो वै** प्रसिद्धः **पुरुषः** स्वेन रूपेण सर्वत्र पूरणात् **पुरुष एवेदं सर्वं** इति **पुरुषेण संमितं भवति**। तथा **मायया बहिर्वेष्टितं भवति** ॥ ५ ॥

द्वात्रिंशदरचक्रदर्शनम्

अथ द्वात्रिंशदरं द्वात्रिंशत्पत्रं चक्रं भवति द्वात्रिंशदक्षरा वा अनुष्टुब्भवत्यनुष्टुभा सर्वमिदं भवति बहिर्मायया वेष्टितं भवति ॥ ६ ॥

**अथ द्वात्रिंशदरं द्वात्रिंशत्पत्रं चक्रं भवति**। तत्रेयमुपपत्तिः—**द्वात्रिंशदक्षरा वै** प्रसिद्धा **अनुष्टुप्**छन्दोरूपिणी भवति। **अनुष्टुभा** छन्दोरूपिण्या **सर्वमिदं** संमितं **भवति** बहिर्मायया वेष्टितं भवति ॥ ६ ॥

अवयवदर्शनम्

अरैर्वा एतत् सुबद्धं भवति वेदा वा एते अराः पत्रैर्वा एतत् सर्वतः परिक्रामति छन्दांसि वै पत्राणि ॥ ७ ॥

अवयविदृष्टिमुक्त्वा अवयवदृष्टिमाह—**अरैरिति**। **अरैः वै** प्रसिद्धैः **एतत्** अवयविचक्ररूपं **सुबद्धं भवति** वेदैः जगदिव यतस्ततो **वेदाः** ऋगाद्या **वै**

प्रसिद्धाः एते चक्रस्य बन्धहेतवः अराः । पत्रैरुक्तैर्वै प्रसिद्धैः अवयविचक्ररूपं सर्वतः परिक्रामति छन्दोभिरिव वेदात्माऽऽदित्यः । गायत्र्यादीनि छन्दांसि वै प्रसिद्धानि पत्राणि भ्रमणकारणानि ॥ ७ ॥

महाचक्रदर्शनम्

एतत् सुदर्शनं महाचक्रं तस्य मध्ये नाभ्यां तारकं यदक्षरं नारसिंहमेकाक्षरं तद्भवति षट्सु पत्रेषु षडक्षरं सुदर्शनं भवत्यष्टसु पत्रेष्वष्टाक्षरं नारायणं भवति द्वादशसु पत्रेषु द्वादशाक्षरं वासुदेवं भवति षोडशसु पत्रेषु मातृकाद्याः सबिन्दुकाः षोडश स्वरा भवन्ति द्वात्रिंशत्सु पत्रेषु द्वात्रिंशदक्षरं मन्त्रराजं नारसिंहमानुष्टुभं भवति तद्वा एतत् सुदर्शनं नाम चक्रं महाचक्रं सार्वकामिकं मोक्षद्वारमृङ्मयं यजुर्मयं साममयं ब्रह्ममयममृतमयं भवति तस्य पुरस्ताद्वसव आसते रुद्रा दक्षिणत आदित्याः पश्चाद्विश्वेदेवा उत्तरतो ब्रह्मविष्णुमहेश्वरा नाभ्यां सूर्याचन्द्रमसौ पार्श्वयोः ॥ ८ ॥

तदेतदृचाऽभ्युक्तं—

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥

इति ॥ ९ ॥

यन्मयोक्तं तदेतत् सुदर्शनं महाचक्रं तस्योक्तस्य महाचक्रस्य मध्ये नाभ्यां मध्यकर्णिकायां यदक्षरं नारसिंहं स्वातिरिक्तभ्रमसंतारणात् तत्तारकं प्रणवस्वरूपं भवति नरसिंहदेवताकमेकाक्षरम् । षट्सु पत्रेषु सहस्रारहुं फट् स्वाहेति षडक्षरं सुदर्शनं भवति । तथा अष्टसु पत्रेषु ॐ नमो नारायणाय

इत्यष्टाक्षरं नारायणं भवति । तथा द्वादशसु पत्रेषु ॐ नमो भगवते वासुदेवाय इति द्वादशाक्षरं वासुदेवं भवति । तथा षोडशसु पत्रेषु अकाराद्या मातृका बिन्दुसहिताः सबिन्दुकाः षोडश स्वरा भवन्ति । तथा द्वात्रिंशत्सु पत्रेषु उग्रं वीरमित्यादि द्वात्रिंशदक्षरं मन्त्रराजं नारसिंहमानुष्टुभं भवति । स्पष्टार्थमन्यदुक्तार्थं च । ब्रह्ममयं इत्यत्र ब्रह्मशब्देन अथर्ववेद उच्यते ऋग्यजुस्सामानन्तर्यात् । अमृतमयं सर्वोपनिषन्मयं सत्यादिलक्षणब्रह्ममयं वा, सर्वत्र मयटो विकारार्थत्वात् तादात्म्यं लक्ष्यते । तस्य चक्रराजस्य पुरस्ताद्वसव आसत इत्यादि—स्पष्टोऽर्थः ॥ तत् तस्मिन् महाचक्रे सर्ववेददेवात्मके योऽर्थोऽभिहितः तदेतदर्थजातं ऋचा मन्त्रेण अभ्युक्तं—ऋच इति । अविनाशिनि अक्षरे महाचक्रे अनेकाक्षराधारे । यः तत् परमाक्षरं नारसिंहं न वेदेत्याद्युक्तार्थम् ॥ ९ ॥

### महाचक्रवेदनमहिमा

तदेतत् सुदर्शनं महाचक्रं बालो वा युवा वा वेद स महान् भवति स गुरुः सर्वेषां मन्त्राणामुपदेष्टा भवत्यनुष्टुभा होमं कुर्यादनुष्टुभाऽर्चनं कुर्यात्तदेतद्राक्षोघ्नं मृत्युतारकं गुरुणा लब्धं कण्ठे बाहौ शिखायां वा बध्नीत सप्तद्वीपवती भूमिर्दक्षिणार्थं नावकल्पते तस्माच्छ्रद्धया यां कांचिद्गां दद्यात् सा दक्षिणा भवति ॥ १० ॥

तदेतत् सुदर्शनं महाचक्रं बालो वा युवा वा वेद स महाचक्रशरीरो नृसिंहो भवति । स महाचक्रवित् सर्वमन्त्राणामुपदेष्टा गुरुः भवति । मन्त्रराजज्ञाने संशयादिपञ्चदोषनिरसनार्थं जपहोमौ कर्तव्याविल्याह—अनुष्टुभा होमं कुर्यादनुष्टुभाऽर्चनं कुर्यादिति स्पष्टम् । तत् परोक्षप्रभावं एतत् षडक्षरादिविशेषयुक्तं राक्षोघ्नं तत्कृतोपद्रवनिवारकं मृत्युतारकं मृत्युनिवारकं सुवर्णादिफलकायां विलिख्य यथावत् प्राणप्रतिष्ठाऽऽदिकं कृत्वा गुरुणा लब्धं दत्तं कण्ठे

बाहौ शिखायां वा बध्नीत बन्धनं कुर्वीत । इदानीमस्य चक्रस्य दातुर्दक्षिणेयत्तां वारयति—सप्तद्वीपवती भूमिः दक्षिणार्थं नावकल्पत इति । यस्मान्नास्ति निष्क्रियः तस्मात् यां कांचित् गां अन्यद्वा श्रद्धया दद्यात् सा दक्षिणा भवति ॥ १० ॥

### मन्त्रराजाध्ययनफलम्

देवा ह वै प्रजापतिमब्रुवन्—आनुष्टुभस्य मन्त्रराजस्य नारसिंहस्य फलं नो ब्रूहि भगव इति ॥ ११ ॥

स होवाच प्रजापतिः य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स सत्यपूतो भवति स ब्रह्मपूतो भवति स विष्णुपूतो भवति स रुद्रपूतो भवति स देवपूतो भवति स सर्वपूतो भवति स सर्वपूतो भवति ॥ १२ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स मृत्युं जयति स पाप्मानं तरति स ब्रह्महत्यां तरति स भ्रूणहत्यां तरति स वीरहत्यां तरति स सर्वहत्यां तरति स संसारं तरति स सर्वं तरति स सर्वं तरति ॥ १३ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निं स्तम्भयति स वायुं स्तम्भयति स आदित्यं स्तम्भयति स सोमं स्तम्भयति स उदकं स्तम्भयति स सर्वान् देवान् स्तम्भयति स सर्वान् ग्रहान् स्तम्भयति स विषं स्तम्भयति स विषं स्तम्भयति ॥ १४ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स देवानाकर्षयति स यक्षानाकर्षयति स नागानाकर्षयति स ग्रहानाकर्षयति स मनुष्यानाकर्षयति स सर्वानाकर्षयति स सर्वानाकर्षयति ॥ १५ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स भूर्लोकं जयति स भुवर्लोकं जयति स स्वर्लोकं जयति स महर्लोकं जयति स जनोलोकं जयति स तपोलोकं जयति स सत्यलोकं जयति स सर्वलोकं जयति स सर्वलोकं जयति ॥ १६ ॥

य एतं मन्त्रराजमानुष्टुभं नित्यमधीते सोऽग्निष्टोमेन यजते स उक्थ्येन यजते स षोडशिना यजते स वाजपेयेन यजते सोऽतिरात्रेण यजते सोऽप्तोर्यामेण यजते सोऽश्वमेधेन यजते स सर्वैः क्रतुभिर्यजते स सर्वैः क्रतुभिर्यजते ॥ १७ ॥

य एतं मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते स ऋचोऽधीते स यजूंष्यधीते स सामान्यधीते सोऽथर्वणमधीते सोऽङ्गिरसमधीते स शाखा अधीते स पुराणान्यधीते स कल्पानधीते स गाथामधीते स नाराशंसीरधीते स प्रणवमधीते यः प्रणवमधीते स सर्वमधीते स सर्वमधीते ॥ १८ ॥

इदानीं विज्ञातमन्त्रसर्वस्वा देवाः मन्त्रराजज्ञानसामान्यविशेषफलबुभुत्सया प्रजापतिं पृच्छन्तीत्याह—देवा इति ॥ ११ ॥ देवैः पृष्टः स होवाच । किमिति ? नारसिंहमन्त्रराजाध्यापकस्य तदर्थनृसिंहभावापत्त्या अयं निरावृताग्निवाय्वादित्यसत्यब्रह्मविष्णुरुद्रादिवत् नित्यपूतो भवति । तद्भावापत्त्या अपूतदेहादावात्मात्मीयाभिमानवैकल्यान्नित्यपूतत्वं सिद्धमेवेत्यर्थः । अभ्यास आदरार्थोऽवधारणार्थो

वा ॥ १२ ॥ किंच—य इति । स्पष्टोऽर्थः ॥ १३ ॥ नृसिंहभावमापन्नो मन्त्री स्वातिरेकेण नह्यग्न्यादीन् पश्यति । यद्येवं पश्यद्विनोदं कर्तुमिच्छति तदा अग्न्यादीन् लीलया स्तम्भयेदेवेत्यर्थः ॥ १४ ॥ किंच—य इति । यदिच्छेन्मन्त्रराजोपासकस्तदा दूरस्थान् देवादीन् स्वसमीपं आकर्षयत्येवेत्यर्थः ॥ १५ ॥ सर्वलोकात्मके नृसिंहे साक्षात्कृते उपासकेन सर्वे लोका जिता एवेत्यर्थः ॥ १६ ॥ साक्षात्कृतसर्वक्रतुफलनारसिंहेन सर्वे क्रतवः कृता एवेत्यर्थः ॥ १७ ॥ साक्षात्कृतवेदार्थपरमाद्वैतनारसिंहेन ऋगादिसर्वा विद्या ब्रह्मप्रणवान्ता अधीता एव । अथर्वाङ्गिरोभिः दृष्टा अथर्वाङ्गिरसः अ..वेदपर्यायाः । "तदैक्षत," "तत्तेजोऽसृजत" इत्यादीनि पुराणानि । अतीतार्थाभिधायिनः कल्पाः "शौनको ह वै महाशालः" इत्यादयः । प्रवृत्तिविषयकशाकल्यादिसंवादरूपाः गाथाः । नारं अविद्यापदतत्कार्यं तदियत्ताप्रकाशका नाराशंस्यः "पुरुषान्न परं किंचित्," "नेह नानाऽस्ति किंचन" इत्यादयः । शिष्टं स्पष्टम् ॥ १८ ॥

मन्त्रराजजापकस्य सर्वोत्कृष्टत्वम्

अनुपनीतशतमेकमेकेनोपनीतेन तत्सममुपनीतशतमेकमेकेन गृहस्थेन तत्समं गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समं वानप्रस्थशतमेकमेकेन यतिना तत्समं यतीनां तु शतं पूर्णमेकमेकेन रुद्रजापकेन तत्समं रुद्रजापकशतमेकमेकेनाथर्वशिरःशिखाऽध्यापकेन तत्सममथर्वशिरःशिखाध्यापकशतमेकमेकेन तापनीयोपनिषदध्यापकेन तत्समं तापनीयोपनिषदध्यापकशतमेकमेकेन मन्त्रराजाध्यापकेन तत्समम् ॥ १९ ॥

विश्वगततारतम्यं मन्त्रराजजापके विश्राम्यतीत्याह—अनुपनीतशतमित्यादि । यो गायत्र्युपदेशसंस्कारशून्यः सोऽनुपनीतः तथाविधानां शतं अनुपनीतशतं एकेन एकसंख्याऽऽक्रान्तोऽयमुपनीतः अनुपनीतशतं एकेनोपनीतेन समं

तुल्यमित्यर्थः । शिष्टं एवं ज्ञातव्यम् । गृहस्थो द्विजन्मा यथावद्दारादिपरिग्रही नित्यादिकर्मकृत् भवति । सदारोऽदारो वा वनी । यथोक्ततुर्याश्रमानुष्ठाता यतिः ज्ञानगन्धविकल इत्यर्थः । अन्यथा एकेनापि यतिना को वा समः स्यात् । शतरुद्रीयपारायणो **रुद्रजापकः** । उग्रमित्याद्येकादशपदात्मकोऽयं **मन्त्रराजः** तज्जापकः तदर्थपर्यवसन्नः ॥ १९ ॥

मन्त्रराजजापकस्य ब्रह्ममात्रपर्यवसानम्

तद्वा एतत् परमं धाम मन्त्रराजाध्यापकस्य यत्र न सूर्यस्तपति यत्र न वायुर्वाति यत्र न चन्द्रमा भाति यत्र न नक्षत्राणि भान्ति यत्र नाग्निर्दहति यत्र न मृत्युः प्रविशति यत्र न दुःखं सदानन्दं परमानन्दं शान्तं शाश्वतं सदाशिवं ब्रह्मादिवन्दितं योगिध्येयं परमं पदं यत्र गत्वा न निवर्तन्ते योगिनः ॥ २० ॥

तदेतदृचाऽभ्युक्तं—

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम् ॥

तदेतन्निष्कामस्य भवति तदेतन्निष्कामस्य भवति य एवं वेदेति महोपनिषत् ॥ २१ ॥

तस्यैवं सर्वोत्कर्षतामभिधाय ब्रह्ममात्रपर्यवसन्नतामाह—**तद्वेति** । **यत्र** यत्प्रकाशजडीभूताः सूर्यादयो दिवा खद्योतवत् **न भान्ति**, यत्पदं विमृत्यु विदुःखं, यत्पदं **गत्वा** कोऽपि **न निवर्तते** "न च पुनरावर्तते" "यद्गत्वा न

निवर्तन्ते तद्धाम परमं मम'', इति श्रुतेः स्मृतेश्च, यत् परं पदं **ब्रह्मादिभिरपि** आत्मत्वेन **वन्दितं**, यत् स्वावशेषतया परमयोगिध्येयं, यत् स्वातिरिक्तशान्तपदं, यत् **सदाशिवपरमानन्दस्वरूपं** सदा अवशिष्यते, मन्त्रराजाध्यापकस्य **तद्वा एतत् परमं धाम** विकळेबरकैवल्यमित्यर्थः ॥ २० ॥ यन्मयोक्तं तदेवर्चा मन्त्रेणाभ्युक्तमित्याह—**तदेतदृचाऽभ्युक्तमिति** । निष्प्रतियोगिकसच्चिदानन्दमात्रतया यदवशिष्यते **तदेतत् विष्णोः** व्याप्यसापेक्षव्यापनशीलस्येति षष्ठी ''राहोः शिरः'' इतिवत् ज्ञेया, परमार्थदृष्ट्या व्याप्यव्यापककलनाविरळं **तद्विष्णोः परमं पदं** निष्प्रतियोगिकस्वमात्रतया अवगन्तव्यं स्वातिरिक्तास्तिताभ्रान्तिसूदनाः **सूरयः** विष्णुपदं **सदा पश्यन्ति** स्वमात्रतया साक्षात्कुर्वन्ति । परिच्छेदप्रसक्तौ **दिवीव चक्षुराततं** दिवि स्वप्रकाशचिदात्मनि चक्षुरिव आततम् । **इवशब्दः** आधाराधेयकलनानिरसनार्थः । सूरयः कीदृशाः ? इत्यत्र **विप्रासः** विप्राः **विपन्यवो** विमन्यवः अक्रोधा इत्यर्थः । **जागृवांसः** स्वाज्ञानविरळाः **समिन्धते** सम्यक् दीपयन्ति अस्मदादीन् प्रकथयन्तीत्यर्थः । तच्छब्दार्थमाह—**विष्णोरिति** । ''तद्विष्णोः परमं पदं'' इत्यादिना यदुक्तं तदर्थस्तु **निष्कामस्य भवति** । आवृत्तिरादरार्था ॥ २१ ॥

**इति पञ्चमोपनिषत्**

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
तापनीयोपनिषदो व्याख्येह लिखिता मया ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे सप्तविंशतिसंख्यापूरकं
नृसिंहपूर्वतापिन्युपनिषद्विवरणं संपूर्णम्

---

# उत्तरतापिनी

## प्रथमः खण्डः

### देवानां निर्विशेषब्रह्मजिज्ञासा

देवा ह वै प्रजापतिमब्रुवन्—अणोरणीयांसमिममात्मानमोंकारं नो व्याचक्ष्वेति ॥ १ ॥

नृसिंहोत्तरतापिन्यां तुर्यतुर्यात्मकं महः ।
परमाद्वैतसाम्राज्यं [1]यत् स्यात्तन्मे परा गतिः ॥

मन्त्रराजमहाचक्रोपासनया देवाः विशुद्धान्तरा भूत्वा जाग्रज्जाग्रदादिचतुष्पञ्चदशकलनाऽपह्नवसिद्धं निष्प्रतियोगिकतुर्यतुर्यं साक्षात्कर्तुमिच्छन्तः सन्तः स्वकीयमादिगुरुं प्रजापतिं तुर्यतुर्यविषयकं प्रश्नं कृतवन्त इत्याह श्रुतिः । अनया आख्यायिकया विशुद्धान्तरमुनीनामेव निर्विशेषब्रह्मावगतिः नान्यथेति द्योत्यते । देवा ह वा इति । देवा ह वै प्रजापतिमब्रुवन् इत्युक्तार्थम् । किं तत् ? अणोः बौद्धप्रत्ययादपि अणीयांसं इमं प्रत्यञ्चं आत्मानं ओङ्कारार्थं तुर्यतुरीयं नोऽस्मभ्यं व्याचक्ष्व कथयस्व इति ॥ १ ॥

### ब्रह्मात्मैक्योपदेशः

तथेत्योमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव यच्चान्यत्त्रिकालातीतं तदप्योंकार एव सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म ॥ २ ॥

देवैः पृष्टः प्रजापतिः तथेति तत्कृतप्रश्नमुररीकृत्य भगवान् प्रजापतिराह । किमिति ? पूर्वतापिन्यां यदुक्तं ओमित्येतदक्षरमित्यादि तत्राभिधानाभिधेययोरैक्य-

[1] प्रत्यक्षमुपलभ्यते—अ २.

स्याद्दृष्टचरत्वादिति यथा भवद्भिः पृष्टं तत्तथैवेत्युक्तिः तेषां प्रश्नाङ्गीकारार्था। अभिधानाभिधेययोः एकत्वं यथा भवति तथा प्रतिपादयामीति प्रतिज्ञां करोति—**तथेति**। स्वात्मप्रदानेन स्वोपासकमवति **ओमिति** अक्षरानुकरणार्थः। **एतदुक्तमक्षरं** अभिधानात्मकं विविधप्रत्ययगम्यं **इदं सर्वं** विकारात्मकं जगत् वाचाऽऽरंभणमात्रं, न हि तद्वस्तुपदं भजतीत्यर्थः। **तस्य** ओङ्कारस्य **उपव्याख्यानमि**त्यादि **अयमात्मा ब्रह्मे**त्यन्तमुक्तार्थम्॥ २॥

ब्रह्मात्मैक्यावगमोपायो

तमेतमात्मानमोमिति ब्रह्मणैकीकृत्य ब्रह्म [1]चात्मनोमित्येकीकृत्य तदेकमजरममृतमभयमोमित्यनुभूय तस्मिन्निदं सर्वं त्रिशरीरमारोप्य तन्मयं हि तदेवेति संहरेदोमिति॥ ३॥

तं वा एतं त्रिशरीरमात्मानं त्रिशरीरं परं ब्रह्मानुसंदध्यात् स्थूलत्वात् स्थूलभुक्त्वाच्च सूक्ष्मत्वात् सूक्ष्मभुक्त्वाच्चैक्यादानन्दभोगाच्च॥ ४॥

जगत्कारणं ब्रह्म, नात्मा, तस्य ब्रह्मणोऽन्यत्वेन कारणत्वाप्रतीतेः, तथा अपरोक्षात्माऽपि ब्रह्मणोऽन्यः, ब्रह्मणः परोक्षत्वात्, इत्याशंकायां ब्रह्मात्मनोरेकत्वं सोपायमाह—**तमिति**। **तं** अन्तःकरणावभासकं प्रत्यञ्चं **एतं** चक्षुरादेरपि प्रवृत्तिनिमित्ततया चक्षुरादिरूपं **आत्मानं ओमिति** अनेनाक्षरेण **ब्रह्मणा एकीकृत्य** सत्यज्ञानादिलक्षणं **ब्रह्म चात्मना** प्रतीचा **ओमित्येकीकृत्य** प्रत्यक्परयोरेकतां विधाय यत्प्रत्यग्ब्रह्मणोरैक्यं **तदेकमजरं** जरादिषड्ूर्मिवैरळ्यात् **अमृतं** षड्भावविकाराभावात् **अभयं** भीहेतुद्वैताभावात् **ओमिति** ओङ्काराद्यवयवसंजाततत्त्वमस्यहंब्रह्मास्मीतिमहावाक्यार्थानुसन्धानतः प्रत्यक्परचितोरैक्यं **अनुभूय तस्मिन्** ओङ्कारार्थे प्रत्यगभिन्नपरमात्मनि **इदं** उपलभ्यमानं त्रित्वाक्रान्तं सत्वादि-

[1] चात्मानमोमि—अ १, अ २, क.

त्रिगुणं जाग्रदाद्यवस्थात्रयं स्थूलादिशरीरत्रयं आध्यात्मिकादितापत्रयं विश्वादिजीवत्रयं विराडादीश्वरत्रयं ओत्रादिव्यष्टिसमष्ट्यैक्योपाधिकचैतन्यत्रयं वा शरीरं यस्य तत् **त्रिशरीरमारोप्य** यद्यत् यस्मिन्नध्यस्तं तत्तत् **तन्मयं** तद्विकारत्वात्, यथा रज्जुसर्पादिः रज्ज्वादिविकारः न हि रज्जुव्यतिरेकेणास्ति तथा ओङ्कारार्थप्रत्यगभिन्नब्रह्माध्यस्तं तद्विकारत्वेन न हि तद्व्यतिरेकेण निरूपयितुं शक्यमित्याह—**तदेवेति** । यत एवं अतः स्वारोपितत्रिशरीरं **संहरेत्** त्रिशरीरं नेत्यनुसंधानं कुर्यात् । संहारप्रकारमाह—**ओमिति** । व्यष्टिसमष्ट्योङ्कारार्थप्रत्यक्परैक्यरूपं वास्तवं रज्जुस्थानीयत्वात्, तदध्यस्तं त्रिशरीरं अवास्तवं सर्पस्थानीयत्वात् ॥ ३ ॥ एवं सूत्रार्थभूतस्य वृत्तिरारभ्यते—**तमिति** । **तं वै** ब्रह्मस्वरूपमेव **एतं** स्वातिरिक्तान्तःकरणधर्मानात्मनि मन्यमानं स्थूलसूक्ष्मकारणशरीराण्यस्येति स त्रिशरीरः तं **आत्मानं** त्रित्वादिसंख्याविशिष्टं **त्रिशरीरं** तदपवादाधिकरणत्वेन **परं** निरतिशयं स्वारोपितातिशयस्य प्रळयं गतत्वात् तदेव त्रिविधपरिच्छेदशून्यं **ब्रह्मेत्यनुसंदध्यात्** इदमहमस्मीति प्रत्ययावृत्तिं कुर्यात् आ साक्षात्कारमित्यर्थः । तत्रोपपत्तिः—**स्थूलत्वात्** । यथा व्यष्टिस्थूलशरीराभिमानी स्थूलः तथा समष्ट्यभिमानी विराट् तस्मात् स्थूलत्वात् । एवं व्यष्टिसमष्टिस्थूलशरीराभिमानिविश्वविराजोरैक्यं ओतृत्वम् । न केवलं ओतृत्वं, किंत्विदमपीत्याह—**स्थूलभुक्त्वाच्चेति** । व्यष्टिसमष्टिचक्षुरादिग्राह्यरूपादिभोग्यजातं स्थूलं, तद्भोक्तारौ स्थूलभुजौ, तद्भावस्तत्त्वं, तस्मात् **स्थूलभुक्त्वात्** । तथा व्यष्टिसमष्टिस्वप्नस्वापाभिमानिनोरैकत्वं समानमित्याह—**सूक्ष्मत्वात् सूक्ष्मभुक्त्वाच्चैक्यादानन्दभोगाच्च** । यथा विश्वविराजोरैक्यं ओतृत्वं तथा तैजससूत्रयोरैक्यं अनुज्ञातृत्वं, प्राज्ञेश्वरयोरैक्यं अनुज्ञैकरसत्वमित्यर्थः ॥ ४ ॥

### ब्रह्मात्मनः चतुष्पात्त्वम्

**सोऽयमात्मा चतुष्पात् ॥ ५ ॥**

विश्वविराडोत्रादीनां पृथक्पृथक्चतुरात्मत्वप्रपञ्चनोपायतस्तुर्यतुर्यं निरूपयति—**सोऽयमिति** । अयमात्मा ब्रह्मेति यस्तुर्यतुर्यः परमात्मा प्रपञ्चितः

**सोऽयमात्मा चतुष्पात्** व्यष्टिसमष्ट्यात्मकस्वातिरिक्ताविद्यापदस्थूलसूक्ष्माद्यंश-चतुष्टयारोपापवादाधिकरणविश्वविराडोत्राद्यात्मना चत्वारः पादाः अस्येति चतुष्पात् ॥ ५ ॥

विश्वस्य चतुरात्मत्वम्

**जागरितस्थानः स्थूलप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूल-भुक् चतुरात्मा विश्वो वैश्वानरः प्रथमः पादः ॥ ६ ॥**

तत्राद्यं पादमवतारयति—**जागरितेति**। चक्षुरादीन्द्रियैः स्थूलरूपादिग्रहणं जागरणं स्थानं अस्येति **जागरितस्थानः** स्थूलरूपादौ प्रज्ञा यस्येति **स्थूलप्रज्ञः**। **सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुक्** इति व्याख्यातम्। एकैकस्यामवस्थायां स्वाविद्यापदस्थूलांशप्रविभक्तव्यष्ट्यादिस्थूलसूक्ष्मबीजार्धमात्रांशानुयोगतो विश्वविश्व-विश्वतैजसविश्वप्राज्ञविश्वतुर्यभेदेन आत्मानो यस्य स **चतुरात्मा विश्वः** ॥

तस्य चातुर्विध्यं प्रकटयितुं जाग्रदाद्यवस्थायाश्चातुर्विध्यमुच्यते। तद्यथा—जाग्रदवस्थायां यदा प्रमाता स्मरणादिव्यापृतिविरलो भूत्वा केवलचक्षुरादीन्द्रिय-द्वारा रूपादिविषयाननुभवति तदा जागरणे जागरणम्, तदभिमानी विश्वप्रवि-भक्तविश्वो भवति, तत्समष्ट्यभिमानी विराट्प्रविभक्तविराट् भवति, व्यष्टिसमष्ट्यै-क्याभिमानी ओत्रोता भवतीति सर्वत्र एवमेवोह्यम्। यदा चक्षुरादिनैरपेक्ष्येण मनसैव विषयान् गृह्णाति तदा जागरणस्वप्नः, तदभिमानी विश्वप्रविभक्ततैजसो भवति, तदा नेत्रादिव्यापृतिसत्त्वासत्त्वाभ्यां निर्व्यापृतिर्न निद्रातः। चक्षुरादिना मनसा वा रूपादिना [वा] आत्मानं वा न प्रतिपद्यते केवलमचेतन इव तिष्ठति तदा जागरणप्रविभक्तोऽयं स्वापः, तदभिमान्यात्मा विश्वप्रविभक्तप्राज्ञ उच्यते। यदा स्वाचार्योपदेशात् पुण्यपरिपाकद्वारा विशेषसामान्यमलभमानः समाध्यारूढ इव जागरणजागरणादिकलनाभावाभावप्रकाशकः साक्ष्यहमस्मीति भासते तदा जाग्रत्प्रविभक्ततुर्यावस्थोच्यते। तदभिमानी विश्वप्रविभक्ततुरीयो भवति ॥

यथा स्थूलभुक् चतुरात्मा विश्वस्तथा वैश्वानरः ओता चेति। वक्ष्यमाणतैजसाद्यपेक्षया प्राथम्यात् प्रथमः पादः ॥ ६ ॥

## तैजसस्य चतुरात्मत्वम्

**स्वप्नस्थानः सूक्ष्मप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः सूक्ष्मभुक् चतुरात्मा तैजसो हिरण्यगर्भो द्वितीयः पादः ॥ ७ ॥**

द्वितीयं पादमवतार्य व्याकरोति—**स्वप्नस्थान** इति । **स्वप्नस्थान** इत्यादि **सूक्ष्मभुगित्यन्तं** व्याख्यातम् । तैजससूत्रानुज्ञातॄणां चातुर्विध्यप्रकटनाय स्वप्नावस्थाया अपि चातुर्विध्यमुच्यते ॥

जागरणस्य शरीरेन्द्रियविषयसत्त्वात् चातुर्विध्यमुक्तं, स्वप्नावस्थायास्तदभावात् कथं चातुर्विध्यसिद्धिः ? इति चेत्—न, स्वप्नावस्थायां वासनारूपेण देहेन्द्रियेन्द्रियार्थसत्त्वात् चातुर्विध्यसिद्धिर्युज्यते ॥

**चतुरात्मा तैजसो हिरण्यगर्भ** इत्यत्र तैजसादेः चातुर्विध्यस्फुरणाय स्वप्नावस्थायाश्चातुर्विध्यमुच्यते । तत् कथम् ?—यदा स्वप्ने मानसव्यापारं विना स्वाप्निकचक्षुरादिना रूपादिविशेषजातमनुभवति तदा स्वप्नजागरणं, तदभिमानी तैजसप्रविभक्तविश्वो भवति, तत्समष्टिस्वप्नजागरणाभिमानी सूत्रविराट्, तद्व्यष्टिसमष्ट्यैक्याभिमानी तु अनुज्ञातृप्रविभक्तोतेति प्रतिपादमेवं ऊह्यम् । यदा स्वप्नावस्थायां स्वप्नजाग्रत्कलनां विहाय स्वाप्निकचक्षुरादिव्यापारं विना केवलमनसैव विषयाननुभवति तदा स्वप्नस्वप्नः, तदभिमानी तैजसप्रविभक्ततैजसो भवति । यदा स्वप्नावस्थाप्रविभक्तजाग्रत्स्वप्नकलनां विहाय स्वाप्निकचक्षुरादिना मनसा वा सामान्यविशेषजातमगृहीत्वा बाह्यरूपादीनात्मानं च विस्मृत्य केवलस्तब्धतयैवावस्थितिः तदा स्वप्नप्रविभक्तसुषुप्तिः, तदभिमानी तैजसप्रविभक्तप्राज्ञो भवति । यदा स्वकृतपुण्यपरिपाकतः स्वप्नप्रविभक्तजाग्रत्स्वप्नस्वापकलनां विहाय स्वान्तर्बाह्यचित्तकल्पिताशेषविशेषकलनाभावाभावप्रकाशकस्वप्नतुर्यतया अत्रस्थितिः तदा स्वप्नतुर्यावस्था, तदभिमानी तैजसतुरीयो भवति ॥

यथैव तैजसश्चतुरात्मा तथा हिरण्यगर्भोऽनुज्ञाता च चतुरात्मा भवति । इति द्वितीयः पादो व्याख्यातः ॥ ७ ॥

प्राज्ञस्य चतुरात्मत्वम्

यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत्सुषुप्तं सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखश्चतुरात्मा प्राज्ञ ईश्वरस्तृतीयः पादः ॥ ८ ॥

एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ ९ ॥

तृतीयं पादमवतार्य व्याकरोति---यत्रेति । यत्र सुप्त इत्यादि चेतोमुख इत्यन्तं व्याख्यातम् । **चतुरात्मा प्राज्ञ ईश्वरः** इत्यत्र प्राज्ञबीजानुज्ञैकरसानां चातुर्विध्यप्रकटनाय स्वापावस्थाया अपि चातुर्विध्यमुच्यते ॥

जाग्रत्स्वप्नयोः व्यावहारिकप्रातिभासिककलनानिर्वाहकत्वेन तत्र चातुर्विध्यमुपपद्यते । कथं करणग्रामोपरतिलक्षणस्वापस्य जाग्रदादिविभागानर्हत्वात् चातुर्विध्यसिद्धिः ? इति चेत्---न, स्वापे करणग्रामस्योपरमेऽपि साक्ष्यनुभवस्य नित्यत्वात् सुप्तेरुत्थितस्यैतावन्तं कालं सुखमहमस्वाप्सं न किंचनावेदिषं इति परामर्शो दृश्यते---सुषुप्तावपि जाग्रत्स्वप्ननिर्वाहकस्थूलसूक्ष्मशरीरेन्द्रियविषयाणां बीजरूपेण विद्यमानत्वात्, तदानीमभानेऽपि ततो निर्गमनप्रथमक्षणे जाग्रत्स्वप्नान्यतरस्थानस्य उपलभ्यमानत्वात्, सुषुप्तावपि चातुर्विध्यसिद्धिरविरुद्धा ॥

सुषुप्त्यवस्थायां यदा जाग्रत्स्वप्नयोः अन्यतरस्थानस्थः पुमान् जागरणात् स्वप्नाद्वा सुषुप्तस्थानं जिगमिषुः स्वनेत्रादिना रूपाद्यज्ञानमनुभवति तदेयं सुप्तिप्रविभक्तजाग्रदुच्यते, तद्व्यष्ट्यभिमानी प्राज्ञप्रविभक्तविश्वः, तत्समष्ट्यभिमानी बीजात्मप्रविभक्तविराट्, तदुभयैक्याभिमानी अनुज्ञैकरसोतेत्यादि सर्वत्रैवमूह्यम् । तत्रैव यदोपरतबाह्यरूपाद्यज्ञानः पुमान् जाग्रत्स्वप्नयोः अन्यतरस्थानमवलम्ब्य मनसैव रूपाद्यज्ञानमनुभवति तदा स्वापस्वप्नः, तदभिमान्यात्मा प्राज्ञप्रविभक्ततैजसो भवति । तत्रैव यदा स्वचैतन्यव्याप्ताभिः अज्ञानवृत्तिभिरेव अज्ञानमनुभवन्नपि स्तब्ध इव नानुभवति तदा स्वापप्रविभक्तस्वापः, तदभिमान्यात्मा प्राज्ञप्रविभक्तप्राज्ञ उच्यते ।

तत्रैव यदा स्वापप्रविभक्तजाग्रत्स्वप्नस्वापभावाभावविज्ञातृप्रत्यगानन्दोऽस्मीत्यात्मान-मनुभवति तदा स्वापतुरीयावस्था, तदभिमान्यात्मा प्राज्ञप्रविभक्ततुर्य उच्यते ॥

एवं विश्वविराडोत्रादिचातुर्विध्यहेतुजाग्रत्स्वप्नस्वापप्रविभक्तजाग्रदाद्यवस्था-चतुष्टयं अविद्वद्भिरपि पदे पदे अनुभूयते । अत्राविद्वदपेक्षया विदुषो विशेषः उच्यते । ब्रह्मवित् तद्वरो वरीयान् वा—सच्चिदानन्दावरणजडक्रियाज्ञानेच्छा-शक्तिपरिणामिनां जाग्रदादिप्रविभक्तजाग्रदादीनां मिथो व्यभिचारित्वादिबहुदोष-दुष्टत्वं तदारोपापवादाधिकरणतया तद्भावाभावप्रकाशकतया च विद्यमानतुर्यस्य स्वविकल्पितजाग्रदादिविकारास्पृष्टत्वं श्रुत्याचार्यमुखतो विदितं अवधृतं पुरैव, यतः स्वविकल्पितजाग्रदादिप्रविभक्तजाग्रदादौ आत्मात्मीयाभिमानतो निरावरणप्रत्यक्-प्रकाशाभिन्नपरप्रकाशोऽपि तुरीयो न प्रकाशते अतो जाग्रत्प्रविभक्तजागरणादिकं विमलतरनभसि मुमूर्षावस्थाचित्तविकल्पितनानारत्नखचितकनकमयपक्षिपन्नगरथ-गजतुरगनानाजातिमनुष्यतत्तदुचितनिवासस्थलप्राकारहर्म्यगृहारामालयगोपुरादि-जुष्टगन्धर्वनगरवत् मायामात्रं, तत्कल्पनाऽधिकरणं यत्तदेव सत्यं, तदेवाह-मस्मीत्यनवरतानुसन्धानतो ब्रह्मविदादिर्भवति । **प्राज्ञ ईश्वरस्तृतीयः पादः** ॥ ८ ॥

तृतीयपादारोपाधारं प्राज्ञादिं स्तौति—**एष इति** । । उक्तार्थमेतत् ॥ ९ ॥

अवस्थात्रयस्य मायामात्रत्वम्

**त्रयमप्येतत् सुषुप्तं स्वप्नं मायामात्रं चिदेकरसो ह्यय-मात्मा ॥ १० ॥**

तुर्यविकल्पितावस्थात्रयतत्कार्यस्य मायामात्रत्वं तदधिकरणतुर्यस्य चिदेकर-सत्वं चाह—**त्रयमिति** । व्यष्टिसमष्ट्यात्मकजाग्रदाद्यवस्थात्रय**मपि** एवं त्रिसंख्याऽऽक्रान्तमेकैकमनेकभेदभिन्नं **एतत्** सुषुप्तमुक्तं, तस्यानात्मापह्नवसिद्धात्म-मात्रावरणरूपत्वात् । यत एवं अतः एतत्त्रयमपि सुषुप्तम् । एतत्त्रयस्याप्यात्मा-वरणांशे सुषुप्तिसाम्यमस्तु, तत्रात्मात्मीयप्रतीतिः कथमित्यत्राह—**स्वप्नं माया-मात्रमिति** । स्वावृतिरूपावस्थात्रयतत्कार्येऽपि स्वात्मात्मीयाभिमतिविकारजातं

**स्वप्नं** स्वप्नतुल्यं प्रातिभासिकमित्यर्थः, तत्प्रतीतिकालमात्रस्थायित्वात् । **विचार्यमाणे** अवस्थात्रयतत्कार्यजातं तत्रात्मात्मीयाभिमतिमोहो वा एतत्सर्वं **मायामात्रं** परमार्थतः शशविषाणवदवस्तुत्वात् । यः स्वावरणात्मकावस्थात्रयतत्कार्यापह्नव-सिद्धोऽयमात्मा सः **चिदेकरसः** चिन्मात्रत्वात् ॥ १० ॥

तुरीयस्य चतुरात्मत्वम्

अथ तुरीयश्चतुरात्मा तुरीयावसितत्वादेकैकस्योतानुज्ञात्रनुज्ञा-विकल्पैस्त्रयमप्यत्रापि सुषुप्तं स्वप्नं मायामात्रं चिदेकरसो हि ॥ ११ ॥

तस्यैव स्वाज्ञदृष्टिप्रसक्तपादत्रयापेक्षया स्वज्ञदृष्ट्या तुरीयत्वं चतुरात्मत्वं, वस्तुतः सर्वग्रासतुर्यतुर्यत्वं चाह—**अथेति** । **अथ** अवस्थात्रयप्रपञ्चनानन्तरं यद्विदुषोऽविदुषश्च साधारणं इत्युक्तम् । अत्र तु तुर्यप्रपञ्चे विदुष एवाधिकारो नाविदुषः । यत्स्वरूपमविद्वज्जातं न स्पृशति सोऽयं **तुरीयः चतुरात्मा** । व्यष्टिसमष्टिविभागानर्हतुर्यतुरीयेण साकं चतुरात्मत्वं, न स्वतः, तुर्यस्य त्र्यात्मकत्वात् ॥

त्र्यात्मकत्वमपि तुर्यस्य न संभवति । कुतः? जाग्रत्स्वप्नसुषुप्तिषु शरीरेन्द्रियेन्द्रियार्थजातं व्यक्ताव्यक्तबीजरूपेण वर्तत इति जाग्रदादेः चातुर्विध्य-मुक्तम् । अविकल्पतुर्यावस्थाया निर्बीजात्मकत्वात् कथं त्रैविध्यमुच्यते? यद्युच्येत तदा तुर्यश्चतुरात्मेति यथाश्रुतमेव चातुर्विध्यं वक्तव्यमिति चेत्—न तुर्यश्चतुरात्मेति श्रुतौ तावत् सविशेषनिर्विशेषावेकीकृत्य विवक्षितम् ॥

तुरीयमपि निर्विशेषमिति चेत्—न सप्रतियोगिकत्वात्, सप्रतियोगिक-निर्विशेषस्यापि जाग्रदादिविशेषसापेक्षतः सविशेषत्वात्, सप्रतियोगिकनिष्प्रति-योगिकनिर्विशेषयोः सविकल्पाविकल्पकत्वेन तयोर्योगासंभवात्, स्वविकल्पित-साक्ष्यभासकसाक्षिणः साक्ष्यताभावे तत्सापेक्षसाक्षितासंभवात्, सविकल्प-साक्ष्यसद्भावे सविकल्पत्वेन सविशेषत्वं[त्वात्], सत्यस्य सत्यमितिवत् तद्गताविकल्पाविकल्पत्वस्य मुख्यत्वात्, सविशेषनिर्विशेषयोः पृथग्वक्तव्य-

तया त्रैविध्यमेव विवक्षितम् । यदि चातुर्विध्यमेव विवक्षितं स्यात् तयोः मिश्रदोषापत्तेः[त्तिः] तुर्यावस्थाया निर्बीजत्वं यदुक्तं तद्विचिकित्स्यं, तस्याः सबीजत्वात् । व्यष्टिसमष्ट्यात्मकतुर्यावस्थाभागत्रयस्य गुणसाम्यित्वेन साक्ष्युपाधित्वात् गुणसाम्यस्य बीजाज्ञानकारणत्वात् तत्र बीजादिकं पुनर्व्युत्थानार्हतया मूर्च्छितं सद्वर्तत एव, तुर्यबीजपदारूढब्रह्मविद्वरिष्ठस्यापि पुनर्व्युत्थानदर्शनात्, पुनस्तस्यैव निष्प्रतियोगिकनिर्बीजतुर्यतुर्यमात्रपर्यवसन्नस्य व्युत्थानादर्शनाच्च, एवं व्युत्थानस्य संसारदुःखहेतुत्वात् जाग्रज्जाग्रदाद्यनुज्ञैकरसाविकल्पस्थैः समं तुर्यजागरणाद्यविकल्पानुज्ञैकरसान्तस्याप्यात्मावरणत्वे भेदप्रतीतित्वे वास्तवत्वे चाविशेषत्वात् । यस्मादेवं तस्मात्तुर्यावस्थाभागत्रयस्यापि सविशेषत्वेन त्रैविध्यसिद्धिः अविरुद्धा ॥

यथा जाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तचतुष्पञ्चदशभेदकलना व्यष्टिसमष्टिविभागविशिष्टा तथा तुर्यतुर्योऽपि व्यष्ट्यादिकलनायुक् भवितुमर्हतीति चेत्—न, तुर्यतुर्यस्य निष्प्रतियोगिकाविकल्पाविकल्परूपत्वेन व्यष्टिसमष्ट्यादिविभागकलनाऽपह्नवसिद्धत्वात् ॥

तर्हि जाग्रज्जाग्रदादिचतुष्पञ्चदशकलनाऽऽदिभिः तुर्यतुर्यस्य सामानाधिकरण्यात् अविकल्पाविकल्पता कुतः ? इति चेत्—न, तुर्यतुर्याज्ञानविकल्पितजाग्रज्जाग्रदादिचतुष्पञ्चदशकलनानां विकल्पस्य स्फुटत्वेन तद्विकल्पकलनाऽपह्नवसिद्धतुर्यतुर्यस्य अविकल्पाविकल्पत्वस्य सिद्धत्वात् ॥

जाग्रद्विश्वविराडोत्रादेरिव तुर्यस्यापि विकल्पत्वं स्यादिति चेत्—न, व्यावहारिकसत्यतावत् गौणाविकल्पत्वसंभवात् । जाग्रत्स्वप्नसुषुप्तितुरीयं विश्वतैजसप्राज्ञतुरीयं विराट्सूत्रबीजतुरीयं ओत्रनुज्ञात्रनुज्ञैकरसाविकल्प इत्यत्र जाग्रदाद्यवस्थात्रयविशिष्टव्यष्टिसमष्ट्यभिमानिविश्वविराडोत्रादयो मिथो विकल्परूपा एव, तेषामभिधानव्यापारविकल्पदर्शनात् । तदपेक्षया जाग्रद्विश्वविराट्तुर्याणां अभिधानव्यापारयोरेकत्वात् अविकल्पत्वं, जाग्रत्तुर्यं स्वप्नतुर्यं सुषुप्तितुर्यं विश्वतुर्यं तैजसतुरीयं प्राज्ञतुर्यं विराट्तुरीयं सूत्रतुरीयं बीजतुरीयं ओत्रविकल्पः अनुज्ञात्रविकल्पः अनुज्ञैकरसाविकल्प इति च तुर्यजाग्रत्स्वप्नसुषुप्तयः तुर्यविश्वतैजसप्राज्ञाः

तुर्यविराट्सूत्रबीजानि अविकल्पोऽत्रनुज्ञात्रनुज्ञैकरसा इत्यत्र विकल्परूपजाग्रद्विश्व-विराडोत्रादिविशेषणविशिष्टत्वादविकल्पत्वं गौणं सत्यस्य सत्यमितिवत् । आपेक्षिकाविकल्पानां चतुर्विंशतितुर्याणां अयं पारमार्थिकाविकल्पः तुर्यतुर्यः, जाग्रद्विश्वविराडोत्रादिविकल्पानां तुर्यतुर्यपरिसमाप्तत्वात्, सर्ववेदान्तसिद्धान्त-तुर्यतुर्यावगतेः जाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तविकल्पापह्नवपूर्वकत्वात् ॥

एवं विद्वद्दृष्ट्या जाग्रज्जाग्रदादिचतुष्पञ्चदशकलनाऽपि अविकल्पाविकल्प-तुर्यतुर्यमात्रैव अवशिष्यते । यतस्तुर्यतुर्यो निष्प्रतियोगिकाद्वैतरूपेण अवशिष्यते अतस्तुर्यतुर्ये व्यष्टिसमष्टिविभागकलना अस्ति नास्तीति विभ्रमापह्नवोक्तिरपि न संभवतीति सिद्धा । एतावता प्रसङ्गेन तुर्यतुर्यस्य निष्प्रतियोगिकनिर्विशेषत्वं, तुर्यस्य तु सप्रतियोगिकनिर्विशेषत्वेन सविशेषत्वं, अतोऽयं तुर्यस्त्रैविध्यमर्हति ॥

कथं तुर्यावस्थायास्त्रैविध्यमिति ? उच्यते—बाह्यविषयादिभेदसत्त्वेऽपि 'सर्वं खल्विदं ब्रह्म' 'सत्तामात्रं हीदं सर्वं' इत्यादिश्रुतिशतसिद्धात्मप्रत्ययो विद्वान् नयनादिना अपगतनिखिलरूपादिभेदं गृह्णाति, तदिदं तुर्यजागरणं, तदभिमानी तुर्यविश्वः, तत्समष्ट्यभिमानी तुर्यविराट्, तदुभयैक्याभिमानी त्वविकल्पोते-त्याद्यूह्यम् । 'सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येव न विचिकित्स्यं' इत्यादिवक्ष्य-माणश्रुत्यनुरोधेन उपरतनेत्रादिव्यापारो विद्वान् ब्रह्मसाक्षात्कारपरिणतमनसैव प्रत्यक्परचितोरैक्यमनुभवति, तदा तुर्यस्वप्नः, तदभिमान्यात्मा तुर्यतैजसो भवति । यदाऽयं विद्वान् "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिश्रुतिसिद्धं त्रिपुटीग्रासं ब्रह्माहमस्मीत्यन्तःकरणसरूपविलयनिर्विकल्पकसमाधिपरवशो भूत्वा स्तब्ध इव तिष्ठति तदेयं तुर्यसुषुप्तिः, तदभिमानी तुर्यप्राज्ञो भवतीति ॥

एतावता ग्रन्थेन व्यष्टिसमष्टिविभागानर्हतुर्यतुर्येण सह तुर्यश्चतुरात्मा तुर्यतुर्यं विना त्र्यात्मेति व्याख्यातम् । कथं एवमवगम्यते ? इत्यत्र **एकैकस्य तुरीयाव-सितत्वात्** जाग्रद्विश्वविराडोत्रादिकल्पनायास्तुर्यपर्यवसितत्वात् । तुर्यो जाग्रदाद्य-पवादाधिकरणं, ततः तद्व्यष्टिसमष्टिविभागार्हस्वाधिष्ठेयसापेक्षं स त्रैविध्यमर्हति । तुर्यतुर्यस्य निरधिकरणतया निर्विभागत्वात् तदेव निष्प्रतियोगिकसन्मात्रं, तदतिरिक्तं नास्त्येव यद्यस्तीति स्वाज्ञदृष्ट्या प्रसक्तं तदा परमार्थदृष्ट्या

तदसत्पदमर्हतीत्यत्र वक्ष्यति हि "पश्यतेहापि सन्मात्रमसदन्यत्" इति। भेदप्रतीतिः जागरणादौ, अभेदप्रतीतिः तुर्ये, भेदाभेदाभावप्रतीतिः तुर्यतुर्ये। कथं एवमवगम्यते? इत्यत्र **ओतानुज्ञात्रनुज्ञाऽविकल्पैः**। तुर्यविश्वविराडैक्यात्मना द्वैतप्रपञ्चानुगतोऽयमोता भवतीत्येको भेदः। तुर्यतैजससूत्रैक्यात्मना प्रत्यक्परचितोरैक्यमनुजानातीत्यनुज्ञाताऽनुमन्तेति द्वितीयो भेदः। तुर्यप्राज्ञबीजैक्यात्मना ज्ञात्रादित्रिपुटीविरळचिदेकरसदृष्टिरनुज्ञैकरस इति तृतीयो भेदः। व्यष्टिसमष्टितुर्यैक्याविकल्पात्मना सर्वविकल्पापह्नवसिद्धतुर्यतुर्यो अविकल्पाविकल्पतया योऽवशिष्यते पूर्वापेक्षया स चतुर्थो भेदः। तैरोतानुज्ञात्रनुज्ञाऽविकल्पैः चतुर्थश्चतुरात्मेत्यर्थः साधितः। अत्र तुर्यजागरणादि**त्रयमपि सुषुप्तं** जाग्रदाद्यवस्थात्रयप्रविभक्तजाग्रदादितदध्यक्षवत् तुर्यावस्थाप्रविभक्तसाध्यक्षतुर्यजागरणादित्रयमपि त्रिसंख्याऽऽक्रान्तं सुषुप्तं, तुर्यतुर्यमात्रावरणरूपत्वात्। यद्यावरणतया त्रयमपि सुषुप्तं तदा तुर्यजाग्रद्विश्वविराडोत्रादिप्रतीतिः कुतः? इति चेत्—परमार्थदृष्ट्याऽभावेऽपि प्रातिभासिकदृष्ट्या संभवतीत्याह—**स्वप्नं मायामात्रं चिदेकरसो हीत्युक्तार्थम्**॥ ११॥

तुरीयतुर्यादेशः

**[1]अथायमादेशो न स्थूलप्रज्ञं न सूक्ष्मप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवं शान्तमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय ईश्वरग्रासस्तुर्यतुरीयः॥ १२॥**

उक्तार्थे श्रुतिनिर्दिष्टादेशो भवतीत्याह—**अथेति**। अथशब्दोऽधिकारार्थः। तुर्यपादारूढानां विदुषामेव ईशाद्यष्टोत्तरशतोपनिषद्भिः स्वातिरिक्तजाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तविशेषजातं नेति नेतीत्यादिश्यत इति **आदेशः**। कोऽयमादेश

[1] अयमात्माऽयमादेशः—अ. अयमादेशः—क. अयमात्मादेशः—अ २.

इत्यत आह—**न स्थूलप्रज्ञमिति**। नेदं तुर्यतुरीयं **स्थूलप्रज्ञं** व्यष्टिसमष्टिजाग्रज्जागरणाभिमानिविश्वविश्वविराड्विराट्तदैक्योत्रोतृकलनाऽभावात्। तथेदं **न सूक्ष्मप्रज्ञं** व्यष्ट्यादिविशिष्टजाग्रत्प्रविभक्तस्वप्नाभिमानितैजससूत्रानुज्ञातृविलक्षणत्वात्। तथेदं **नोभयतःप्रज्ञं** अविद्यायामात्मनि च प्रज्ञानबाह्यजाग्रत्स्वापाभिमानिविश्वप्राज्ञविराड्बीजतदैक्योत्रनुज्ञैकरसकलनावैरळ्यात्। तथेदं **न प्रज्ञं** जाग्रज्जाग्रदादिभावाभावप्रकाशकप्रज्ञाभिमानिविश्वविराट् तुर्यतदैक्योत्रविकल्पबाह्यत्वात्। तथेदं **नाप्रज्ञं** स्वप्नजागरणाभिमानिबहिःप्रज्ञाविरळतैजसविश्वसूत्रविराट्तदैक्यानुज्ञात्रोतृकलनादूरत्वात्। तथेदं **अदृश्यं** स्वप्नस्वप्नाभिमानिचित्तकल्पितदृश्यमोहिततैजसतैजससूत्रसूत्रतदैक्यानुज्ञात्रनुज्ञात्रभाववैरळ्यात्। तथेदं **न प्रज्ञानघनं** स्वप्नस्वापाभिमानिसर्वविषयाभावप्रज्ञानघनतैजसप्राज्ञसूत्रबीजतदैक्यानुज्ञात्रनुज्ञैकरसकलनामृग्यत्वात्। तथेदं **अव्यवहार्यं** स्वप्नतुर्यावस्थाऽभिमानिस्वप्नजागरणादिभावाभावभासकत्वव्यवहार्यतैजससूत्रतुरीयतदैक्यानुज्ञात्रविकल्पविलक्षणत्वात्। तथेदं **अग्राह्यं** स्वापजागरणाभिमानिस्वाज्ञानवृत्तिग्राह्यप्राज्ञविश्वबीजविराट्तदैक्यानुज्ञैकरसोतृविलक्षणत्वात्। तथेदं **अलक्षणं** स्वापस्वप्नाभिमानिस्वाज्ञानवृत्तिलक्षणवेद्यप्राज्ञतैजसबीजसूत्रतदैक्यानुज्ञैकरसानुज्ञातृभिन्नत्वात्। तथेदं **अचिन्त्यं** न किंचनावेदिषमिति परामर्शचिन्त्यस्वापस्वापाभिमानिप्राज्ञप्राज्ञबीजबीजतदैक्यानुज्ञैकरसानुज्ञैकरसबाह्यत्वात्। तथेदं **अव्यपदेश्यं** स्वापतुर्यावस्थाऽभिमानिस्वापजागरणादिभावाभावसाक्षित्वव्यपदेश्यप्राज्ञबीजतुर्यतदैक्यानुज्ञैकरसाविकल्पत्वकलनाऽस्पृष्टत्वात्। तथेदं **एकात्मप्रत्ययसारं** तुर्यजागरणाभिमानिध्यात्राद्यनेकप्रत्ययसारं तुर्यविश्वविराट्तदैक्याविकल्पोतृत्वकलनाशून्यत्वात्। तथेदं **प्रपञ्चोपशमं** तुर्यस्वप्नाभिमानिक्वचित्कदाचिदशान्तप्रपञ्चतुर्यतैजससूत्रतदैक्याविकल्पानुज्ञातृगन्धासहत्वात्। तथेदं **शान्तं** तुर्यस्वापाभिमानिगुणसाम्यावस्थाशान्ततुर्यप्राज्ञबीजतदैक्याविकल्पानुज्ञैकरसकलनाभिन्नत्वात्। तथेदं **शिवं** जाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्ताशिवापह्नवसिद्धनिष्प्रतियोगिकतुर्यतुर्यमात्रावशेषलक्षणविकळेबरकैवल्यरूपत्वात्। अत एवेदं **अद्वैतं** निष्प्रतियोगिकपरमाद्वैतरूपत्वात्। स्वातिरिक्तसामान्याशिवापह्नवे निरात्मत्वं स्यादित्यत आह—**चतुर्थं मन्यन्त**

इति । स्वातिरिक्तजाग्रज्जाग्रदादिसत्त्वे यत्तदारोपापवादाधिकरणं तत् **चतुर्थं** तुर्यमवशिष्यत इति **मन्यन्ते** विद्वांसः । मन्यन्ते इत्युक्तितोऽधिष्ठेयसापेक्षाधिष्ठानताऽपाये यत्तुर्यमित्यवधृतं तदेव निरधिष्ठानं सत् तुर्यतुर्यतया अवशिष्यत इति द्योत्यते । यतः एवं अतः स्वाज्ञस्वज्ञपरमार्थदशायामपि आत्मैव वर्तते, न हि कदाचित् निरात्मकता सेद्धुं पारयतीत्यर्थः । विश्वविश्वाद्यनेकात्मसु विज्ञेयः कोऽयमात्मेत्यत्र स्वातिरेकेण यदि विश्वादयः सन्ति तदा तेऽप्यनात्मरूपा एव, तत्सर्वापह्नवबोधतो यः स्वमात्रमवशिष्यते **स आत्मा स** एव विद्वद्भिः स्वावशेषतया **विज्ञेयः** । कैरित्यत्राह—**ईश्वरग्रासस्तुर्यतुरीय** इति । स्वाज्ञैः जीवेशतत्कार्यप्रपञ्चतया स्वज्ञैः तद्ग्रासद्वितुर्यैक्यतया परमार्थज्ञैः निष्प्रतियोगिकतुर्यतुर्यतया विज्ञेय इत्यर्थः, "आत्ममात्रमिदं सर्वमात्मनोऽन्यन्न किञ्चन" इति श्रुतेः ॥१२॥

**इति प्रथमः खण्डः**

## द्वितीयः खण्डः

उत्तमाधिकार्यवगतं तुर्यतुर्यम्

तं वा एतमात्मानं जाग्रत्यस्वप्नमसुषुप्तं स्वप्नेऽजाग्रतमसुषुप्तं सुषुप्तेऽजाग्रतमस्वप्नं तुरीयेऽजाग्रतमस्वप्नमसुषुप्तमव्यभिचारिणं नित्यानन्दं सदेकरसं ह्येव ॥ १ ॥

यदुक्तं 'स आत्मा स विज्ञेयः' इति नैतावताऽयमवगन्तुं शक्यः, अधिकारितारतम्यानुरोधेन वक्तुमुचितं भवतीति खण्डिका आरभ्यते—**तमिति** । उत्तमाधिकारिभिः तुर्यतुर्य एव प्रतिपत्तव्यः, मध्यमाधिकारिभिः तुर्यः, कनीयोभिः विश्वविराडोत्रादिः । तस्मात् कनीयोभिः विश्वविराडोत्रादियाथात्म्यमादाव-

वगन्तव्यम् । ततस्ते मध्यमाधिकारिणो भूत्वा तुर्यं ज्ञातुमिच्छन्ति । श्रुत्याचार्यप्रसादेन तुर्ययाथात्म्यं विदित्वा मुख्याधिकारितामवलम्ब्य स्वातिरिक्तजाग्रज्जाग्रदादिचतुष्पञ्चदशकलनाऽपह्नवसिद्धतुर्यतुर्ययाथात्म्यमवगम्य कृतकृत्या भवन्ति। तत्रोत्तमाधिकारिणो यं तुर्यतुर्यं जानन्ति **तं वै** तुर्यतुर्यं **एतं** स्वज्ञदृष्ट्या तुर्यभावमापन्नं स्वयंप्रकाशात्मानं चतुर्धा भिन्न**जाग्रति अस्वप्नमसुषुप्तं** स्वप्नस्वापकलनाशून्यं चतुर्धा भिन्न**स्वप्ने अजाग्रतमसुषुप्तं** जाग्रत्स्वापकलनाविरळं चतुर्धा भिन्न**सुषुप्ते अजाग्रतमस्वप्नं** जाग्रत्स्वप्नव्यापृतिशून्यं त्रिधा विकल्पित**तुरीये अजाग्रतमस्वप्नमसुषुप्तं** जाग्रज्जाग्रदादितुर्यस्वापान्तावस्थाः मिथो व्यभिचारिण्यः तदपेक्षया तुर्यं **अव्यभिचारिणं** जानीयात् तुर्यस्य जाग्रदादिभावाभावप्रकाशकत्वेन सर्वावस्थाऽनुस्यूतत्वात् **नित्यानन्दं** तुर्यतुर्यानन्दपर्यवसन्नत्वात् **सदेकरसं** अखण्डचिदेकरसत्वात् । यद्वा—**नित्यानन्तसदेकरसमिति** । तत्र नित्यश्चासावनन्तश्चेति नित्यानन्तः स चासौ सदेकरसश्चेति नित्यानन्तसदेकरसः तं **एव**कारो नित्यानन्दसदादेः भिदानिवारणार्थः । एवमुक्तलक्षणं तुर्यं तद्गतसापेक्षप्रभवसविशेषताऽपायसिद्धं तुर्यतुर्यं उत्तमाधिकार्यवगच्छेदिति शेषः ॥ १ ॥

तुर्यतुर्यस्य करणग्राह्यवैलक्षण्यम्

**चक्षुषो द्रष्टा श्रोत्रस्य द्रष्टा वाचो द्रष्टा मनसो द्रष्टा बुद्धेर्द्रष्टा प्राणस्य द्रष्टा तमसो द्रष्टा सर्वस्य द्रष्टा ततः सर्वस्मादन्यो विलक्षणः ॥ २ ॥**

चक्षुरादियोगात् अवस्थायोगाद्वा द्रष्टृत्वमवस्थावत्त्वं च स्यादित्याशङ्क्य तद्वैलक्षण्यमाह— **चक्षुष** इति । **चक्षुषो द्रष्टा,** न हि यो हि द्रष्टा स तेन दृश्येन तद्वान् भवति । तथा **श्रोत्रस्य द्रष्टा**—व्याख्यातम् । चक्षुःश्रोत्रग्रहणं शिष्टज्ञानेन्द्रियोपलक्षणार्थम् । तथा **वाचो द्रष्टे**ति कर्मेन्द्रियोपलक्षणार्थम् । तथा संकल्पनिश्चयात्मकवृत्तिमन्**मनसो बुद्धे**रपि **द्रष्टा** । मनोबुद्धिग्रहणं चित्ताहंकारयोरप्युपलक्षणार्थम् । तथा **प्राणस्य द्रष्टा** । प्राणग्रहणं अपानादिवृत्तिचतुष्टयोप-

लक्षणार्थम्। **तमसः** स्वाज्ञानस्य **द्रष्टा**। किं बहुना—दृश्यादृश्यत्वेन ज्ञाताज्ञाततया च यद्यत् वर्तते तस्य **सर्वस्यापि द्रष्टा**। यतः स्वातिरिक्तसर्वदृश्यप्रपञ्चस्य द्रष्टा **ततः सर्वस्मादन्यः** व्यतिरिक्तः। बुद्ध्यादिवत् ज्ञातृत्वेन तादात्म्यं स्यादित्यत आह—**विलक्षण** इति। व्यभिचारिण्यपि करणग्रामे तद्द्रष्टा अव्यभिचारी सर्वानुस्यूतत्वात्॥ २॥

तुर्यतुर्यस्य सर्वसाक्षित्वादविक्रियत्वम्

**चक्षुषः साक्षी श्रोत्रस्य साक्षी वाचः साक्षी मनसः साक्षी बुद्धेः साक्षी प्राणस्य साक्षी तमसः साक्षी सर्वस्य साक्षी ततोऽविक्रियो महाचैतन्योऽस्मात् सर्वस्मात् प्रियतम आनन्दघनं ह्येवमस्मात् सर्वस्मात् पुरतः सुविभातमेकरसमेवाजरममृतमभयं ब्रह्मैव॥ ३॥**

चक्षुषो द्रष्टेत्यादि सर्वस्य द्रष्टेत्यन्तं द्रष्टृपदस्थले साक्षिपदप्रक्षेपेणोत्तरमाह—**चक्षुषःसाक्षीत्यादि सर्वस्य साक्षीत्यन्तम्**। **साक्षी** नाम द्वयोः विवदमानयोः निष्पक्षपाती स्वसंबन्धशून्यतया सर्वद्रष्टेत्यर्थः। यतः सर्वविलक्षणतया सर्वसाक्षी **ततः** तस्मात् दर्शनक्रियया युक्तोऽपि **अविक्रियः**। महच्छब्देन त्रिविधपरिच्छेदशून्यमुच्यते, महान् चैतन्यप्रकाशो यस्य सः **महाचैतन्यः** अनुदितानस्तमितप्रकाशत्वात्। स्वस्यैव सर्वस्मात् प्रेमास्पदत्वं दर्शयति—**अस्मादिति**। **अस्मात्** उपलभ्यमानात् पुत्रकळत्रादेरपि **सर्वस्मात् प्रियतमः**, "तदेतत् प्रेयः पुत्रात् प्रेयो वित्तात्" इत्यादिश्रुतेः। स्वात्मस्वरूपं यतः प्रियतमं, ततः **आनन्दघनं**, सातिशयानन्दापह्नवसिद्धनिरतिशयानन्दत्वं आनन्दघनत्वम्। उक्तात्मज्ञानफलमाह—**ह्येवमिति**। एवं उक्तप्रकारेण आत्मानं तुर्यतुर्यं जानतः **अस्मात्** स्वातिरिक्तात् अपह्नवतां गतात् **पुरतः** पूर्वमेव स्वमात्रतया भातं **सुविभातं** निस्संशयं भातमित्यर्थः। नित्यानन्दचिदेकरसमेव हि यदुत्तमाधिकारिदृष्ट्या सुविभातं तद्दर्शयति—**एकरसमेवेति**। नित्यानन्दसदादिरूपमप्येकस्वभावमेव। तत्र न हि कश्चन भेदोऽस्ति।

यदुक्तमेकरसमिति शृङ्गग्राहिकया तदाह—**अजरमिति** । जराऽऽदिषडूर्म्यास्पद-स्थूलादिशरीरवैरळ्यात् । जराऽऽस्पदशरीराभिमानतो मृतिः स्यादित्यत आह—**अमृतमिति** । **अमरमिति** वा पाठः तयोरेकार्थत्वात् । भावविकारवैरळ्यात् अमृतत्वं सिद्धमित्यर्थः । तथा **अभयं** भयहेतुद्वैताभावात् । **ब्रह्मैव** महाचैतन्याखण्डानन्दैकरसस्वभावतयोपबृंहणात् त्रिविधपरिच्छेदशून्यं ब्रह्मेत्यर्थः ॥ ३ ॥

मध्यमाधिकारिणां ओङ्कारात्मनोः एकीकरणविधिः

**अप्यजयैनं चतुष्पादं मात्राभिरोंकारेण चैकीकुर्यात् ॥ ४ ॥**

उत्तमाधिकारिणां आत्मयाथात्म्यं एवं प्रकटयित्वा यथावत् प्रतिपत्तुमशक्तान् प्रतीदमाह—**अप्यजयेति** । **एनं** मुक्तमात्मानं **चतुष्पादं** अध्यात्मं अधिदैवं च **अजया** स्वाविद्ययाऽपि संभावितभेदं **मात्रा**चतुष्टयसहितं वक्ष्यमाणो**ङ्कारेण** शास्त्रोक्तया बुद्ध्या **एकीकुर्यात्** ॥ ४ ॥

अकारप्रथमपादयोरभेदः

**जागरितस्थानश्चतुरात्मा विश्वो वैश्वानरश्चतूरूपोऽकार एव चतूरूपो ह्ययमकारः स्थूलसूक्ष्मबीजसाक्षिभिरकाररूपैराप्तेरादिमत्त्वाद्वा स्थूलत्वात् सूक्ष्मत्वाद्बीजत्वात् साक्षित्वाच्च । आप्नोति ह वा इदं सर्वमादिश्च भवति य एवं वेद ॥ ५ ॥**

एवं एकीकरणप्रकारमाह—**जागरितस्थान** इति । व्याख्यातम् । चत्वारि रूपाण्यस्येति **चतूरूपः**, रूप्यते ह्ययमात्मा स्थूलसूक्ष्मबीजसाक्षिभावैः सर्वावस्थासु । अत एवायं **चतुरात्मा** । चत्वारि नामधेयान्यप्यत्रैवोक्तानि । चतुरात्माऽपि प्रत्यवस्थं चतुरात्मनि निर्विभागतुर्यतुर्येण साकं षोडशात्मकत्वम् । तत् कथं ? **अकार** एव चतुर्नामधेयः चतूरूपः प्रथमः पादः । चतूरूपस्याकारस्य किं अनुगतं रूपमित्यत्र **चतूरूपं** उदात्तस्वरितानुदात्तज्ञानरूपाणि प्लुतदीर्घह्रस्व-

ज्ञानरूपाणि च नामरूपाणि चत्वारि यस्य स **चतूरूपः हि** यस्मादयम्। कथं? प्रथमपादेन तादात्म्यं प्राप्तः प्रणवमात्रारूपः। तत्राकाररूपो वर्णः केनैवं तादात्म्यं प्रतिपन्नः? इत्यत्र **स्थूलसूक्ष्मबीजसाक्षिभिः**। तत्र **स्थूलं** जागरण-जागरणं, तत्र सर्वविषयवैशद्यात्। जागरणस्वप्नो हि **सूक्ष्मं**, जागरणस्वप्नस्य बाह्येन्द्रियप्रकाशाभावात्। **बीजं** जागरणसुषुप्तं, बाह्यान्तर्व्यापारोपरमात्। **साक्षी** जागरणतुरीयं, अज्ञातात्मनो ज्ञातात्मनो वा बाह्यान्तरार्थज्ञानप्रतीतौ हेतुः तद्भावाभावप्रकाशकत्वम्। एवं स्थूलसूक्ष्मबीजसाक्षिणस्ते। स्थूलाभ्यां प्लुतोदात्ताभ्यां स्थूलस्सन्नकारो विशदप्रकाशवान् सकारकक्रियो जागरणजागरणं, सूक्ष्माभ्यां दीर्घस्वरिताभ्यां अबाह्यार्थप्रकाशवानयं सकारकक्रियो जागरण-स्वप्नस्थानः, बीजाभ्यां ह्रस्वानुदात्ताभ्यां बीजभूतो बाह्यान्तरविषयशून्यो जागरण सुषुप्तस्थानः, स्वाज्ञानसाक्षिभ्यां मानसाकाराभ्यां साक्षी जागरणतुरीयश्च तादात्म्यं नेतव्यः। एवमकारस्य चातुर्विध्यमुक्तं, ततः साम्यान्तरमाह—**आप्तेरिति**। अकारो हि सर्वा वाचमाप्नोति "अकारो वै सर्वा वाक्" इति श्रुतेः अनुभवाच्च। सर्वं वस्तुजातमाप्नोतीत्यात्मा। एवमकारात्मनोराप्तिसामान्यात् अकारात्मनोरैक्यम्। आप्तितः साम्यमुक्त्वा आदितः साम्यमाह—**आदिमत्त्वाद्वेति**। यत्पदाकारयोरादिः प्राथम्यमस्ति स आदिमान्, तद्भावस्तत्त्वं, तस्मात् आदिमत्त्वात्। वाशब्देन प्रथममात्रापादयोः चतुरात्मत्वं द्योत्यते। प्रथमपादस्य अवस्थाचतुष्टयेन कथं साम्यमित्यत्र हेतवः सन्तीत्याह—**स्थूलत्वात् सूक्ष्मत्वात् बीजत्वात् साक्षित्वाच्चेति**। यथा जागरणजागरणे स्थूलः प्रथमः पादः तथा प्लुतोदात्तरूपाभ्यां अकारः स्थूलः, तयोः विशदप्रकाशरूपत्वात्, तद्भावः तत्त्वं तस्मात् स्थूलत्वात्। यथा जागरणस्वप्ने मनोविलासार्थप्रकाशे प्रथमः पादः सूक्ष्मः तथा अकारोऽपि दीर्घस्वरिताभ्यां सूक्ष्मः, यथा जागरणस्वापो बाह्यान्तःकरणविरामे स्वाज्ञाने प्रथमः पादो बीजरूपः तथा अकारोऽपि ह्रस्वानु-दात्ताभ्यां बीजरूपः, यथा जागरणतुरीये स्वबाह्यान्तर्वृत्त्यप्रतीतिसिद्धे प्रत्यक्प्रकाशे प्रथमः पादः साक्षी तथा अकारोप्युक्तकालत्रययुगाद्व्यावृत्तो ज्ञानरूपः साक्षी। तथा चोपपन्नं उभयोरपि स्थूलत्वं सूक्ष्मत्वं बीजत्वं साक्षित्वं च साम्यमुक्तम्।

चकारो हेतुचतुष्टयस्यापि उत्तक्रमसंबन्धचतुष्टयार्थः। य एवं प्रथमपादमात्रासामान्यं वेद सोऽयं ह वा इदं सर्वमाप्नोति जगदादिः प्रथमश्च भवति ॥ ५ ॥

उकारद्वितीयपादयोरभेदः

स्वप्नस्थानश्चतुरात्मा तैजसो हिरण्यगर्भश्चतूरूप उकार एव चतूरूपो ह्ययमुकारः स्थूलसूक्ष्मबीजसाक्षिभिरुकाररूपैरुत्कर्षादुभयत्वाद्वा स्थूलत्वात् सूक्ष्मत्वाद्बीजत्वात् साक्षित्वाच्च। उत्कर्षति ह वै ज्ञानसंततिं समानश्च भवति य एवं वेद ॥ ६ ॥

यथा प्रथमपादोऽकारश्च प्रपञ्चितः तथा द्वितीयपादश्चोकारः प्रपञ्च्यते--**स्वप्नेति**। यथा जागरणस्थानस्य जागरणभेदैः चतुरात्मत्वं, तथा स्वप्नस्थानस्य स्वाप्नदेहेन्द्रियार्थसंबन्धस्वप्नजागरणं स्थूलरूपः, स्वाप्निकमानसार्थप्रकाशः सूक्ष्मस्वप्नस्वप्नः, स्थूलसूक्ष्मार्थप्रकाशविरळं स्वप्नसुषुप्तं बीजं, बाह्यान्तर्विशेषानुपलम्भात् साक्षी स्वप्नतुरीयः, एतैश्चतूरूपैः चतुरात्मत्वम्। **उकारो** द्वितीयामात्रा, उकारस्य **उत्कर्षात्** आधिक्यात्। सर्वस्मादधिको ह्ययमात्मा। तथा सर्वस्मादुकारो ह्यधिकः। **उभयत्वात्** द्वित्वसंख्याऽऽक्रान्तत्वात् स्वप्नस्थानो द्वितीयः पादः। द्वितीयपादोकारसामान्यज्ञानफलमाह--**य** इति। **य एवं वेद स ह वै ज्ञानसन्ततिं** लब्ध्वा सार्वभौमेन ईश्वरेण वा **समानश्च भवति**। व्याख्यातमितरत्॥६॥

मकारतृतीयपादयोरभेदः

सुषुप्तस्थानश्चतुरात्मा प्राज्ञ ईश्वरश्चतूरूपो मकार एव चतूरूपो ह्ययं मकारः स्थूलसूक्ष्मबीजसाक्षिभिर्मकाररूपैर्मितेरपीतेर्वा स्थूलत्वात् सूक्ष्मत्वाद्बीजत्वात् साक्षित्वाच्च। मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद ॥ ७ ॥

यथा प्रथमद्वितीयपादावकारोकाराभ्यां अभिन्नौ, एवं तृतीयपादमकारोंव-पीत्याह—**सुषुप्तेति** । घटादेरज्ञानं सुषुप्तजागरणं स्थूलं, स्थूलवासनासंवलित-घटादेरज्ञानं सूक्ष्मस्वापस्वप्नः, करणग्रामोपरमे सवृत्तिकावरणाज्ञानवृत्तिः शान्तेव यत्र भाति तत् सुषुप्तसुषुप्तं बीजं, पूर्वावस्थाप्रपञ्चभावाभावप्रकाशक-साक्षि सुषुप्ततुरीयं, एवं चतूरूपस्य सत्त्वात् चतुरात्मत्वम् । प्रणवस्य तृतीया मात्रा **मकारः** । यद्यप्यकारादिधर्माः प्लुतादयो मकारे न सन्ति, तथाऽप्यकारस्य सर्ववर्णात्मकत्वात् साकारे मकारे तद्धर्माणां सत्त्वात् तस्याप्यकारादिवच्चतूरूपत्वं अविरुद्धम् । **मितेः** मानरूपत्वात्, साक्षिरूपेण ह्यात्मा मिनोति इदं सर्वम् । **अपीतेः** अप्ययात्, इदं जागरणस्वप्नतत्कार्यजातं सर्वं मकारावच्छिन्नप्राज्ञात्मनि प्रलीयते । **य एवं** सुषुप्तस्थानमकारसामान्यं वेद तस्येदं फलं—प्रस्थपरिमित-यववत् सचराचरं जगदवगच्छति । **ह वा इदं सर्वं** व्याख्यातम् । **अपीतिश्च भवति** कालाग्निरुद्रवत् स्वातिरिक्तं ग्रसति । कामादीनामप्ययो भवति ॥ ७ ॥

चतुर्थपादप्रपञ्चनम्

**मात्राऽमात्राः प्रतिमात्राः कुर्यात् । अथ तुरीय ईश्वरग्रासः स स्वराट् स्वयमीश्वरः स्वप्रकाशश्चतुरात्मोतानुज्ञात्रनुज्ञाविकल्पैः । ओतो ह्ययमात्मा ह्यथैवेदं सर्वमन्तकाले [1]कालाग्निः [2]सूर्योस्रैः । अनुज्ञाता ह्ययमात्मा ह्यस्य सर्वस्य स्वात्मानं ददातीदं सर्वं स्वात्मानमेव करोति यथा तमः सविता । अनुज्ञैकरसो ह्ययमात्मा चिद्रूप एव यथा दाह्यं दग्ध्वाऽग्निः ॥ ८ ॥**

पादत्रयं व्याख्याय चतुर्थं पादमाचष्टे—**मात्रेति** । अकारोकारमकाराख्याः **मात्राः**, **अमात्राः** अर्धमात्राः मात्राविशेषैरळयात्, मात्राश्चामात्राश्च **प्रतिमात्राः** प्रत्येकं अकारोकारमकारमात्राः प्लुतादिविशिष्टाः **कुर्यात्** । अयमाशयः—

[1] कालाग्निसू—अ २. [2] सूर्योस्रैः—अ २, क.

अध्यात्ममधिदैवमधिभूतं च दृग्दृश्यपदार्थौ अवस्थात्रयेऽप्यनुगतौ । तत्र जागरणावस्थायामात्मनो दृश्यबाधार्थौ चतुरवस्थौ साधिभूतौ विश्वशब्दाभिधेयौ वैश्वानरेण तादात्म्यं गतौ ध्यात्वा, वैश्वानरं च स्थूलसूक्ष्मबीजसाक्षिरूप-मकारप्लुतोदात्तदीर्घस्वरितह्रस्वानुदात्तमनोमात्रगम्यत्वेन स्थूलसूक्ष्मबीजसाक्षितां प्रापयित्वा, चतूरूप ओङ्कारार्थे बुद्ध्या तादात्म्यं नीत्वा, स्थूलं सूक्ष्मे सूक्ष्मं बीजे बीजं च साक्षिण्यकारे संहरेत् । एवं स्वप्नस्थानस्थाधिभूतो हिरण्यगर्भः[र्भे], चतुरवस्थः स चतूरूप उकारे, उकारोऽपि स्थूलसूक्ष्मे, सूक्ष्मोऽपि बीजे, बीजं च साक्षिण्युकारे संहरणीयः । एवं सुषुप्तिस्थानस्थाधि-भूतः ईश्वरे, ईश्वरः चतुरवस्थो मकारे, मकारः स्थूलसूक्ष्मे, सूक्ष्मो बीजे, बीजं च मकारे साक्षिणि संहरणीयः । अकारसाक्षिणमुकारसाक्षिणि, उकारसाक्षिणं मकारसाक्षिणि, मकारसाक्षिणं तुर्यसाक्षिण्यमात्रे प्रणवरूपे संहरेत् । एवं प्रतिमात्राः कुर्वतो मात्राः अमात्राः भवन्तीति । **अथ** पूर्वेभ्यो विलक्षणः **तुरीयः** यो मकारमात्राऽभिन्नमीश्वरं ग्रसति स **ईश्वरग्रासः** । य ईश्वरग्रासः **सोऽयं** साधनान्तरमनपेक्ष्य स्वयमेव राजत इति **स्वराट्** सर्वत्र **स्वयमेवेश्वरो** नियन्ता सन् । स्वातिरिक्तमनपेक्ष्य स्वेनैव प्रकाशत इति **स्वप्रकाशः** । अयमपि **चतुरात्मा ओतानुज्ञात्रनुज्ञाऽविकल्पैः** । उक्तार्थमेतत् । ओतत्वं व्याकरोति—**ओतो ह्ययमात्मेति** । व्यष्टिसमष्ट्यात्मकप्रपञ्चारोपाधिकरणविश्वविराडैक्यात्मना स्थूल-प्रपञ्चानुस्यूतत्वात् **अयमात्मा** ओता **ओतो** हि व्यापक एवेत्यर्थः । एवं कृत्स्नस्थूलप्रपञ्चोतत्वे दृष्टान्तमाह—**अथेति** । इदं मूर्तप्रपञ्चजातं **सर्वमन्तकाले** यद्यपीदानीमपि सविता स्वकिरणैः सर्वमिदं व्याप्नोति तथाऽपि प्रपञ्चान्तकाले कालः सर्वविनाशकारी स एवाग्निः पाताळतलमारभ्य यावदविद्याऽण्डभित्तिः तावदिदं सर्वं निर्दहन् स एव **कालाग्निः सूर्यः उस्रैः** किरणैः इदं सर्वं व्याप्नोति, व्याप्य निःशेषं भस्म करोतीत्यर्थः । तुर्यजागराधारमोतात्मानमुक्त्वा तुर्यस्वप्ना-धारमनुज्ञात्रात्मानमाह—**अनुज्ञातेति** । **अयमात्मा** तुर्यतैजससूत्रैक्यात्मना "तत् त्वमसि, अहं ब्रह्मास्मि" इति प्रत्यगभिन्नब्रह्माहमस्मीति आत्मानं अनुंजानातीति **अनुज्ञाता**; पूर्णबोधस्वरूपत्वात् । **अस्य सर्वस्य** स्वातिरिक्त-

प्रपञ्चजातस्य "मद्व्यतिरिक्तमणुमात्रं न विद्यते" इति श्रुतिसिद्धस्वप्रबोधेन **स्वात्मानं ददाति**। किं बहुना—**इदं सर्वं स्वात्मानमेव करोति** स्वावशेषं करोतीत्यर्थः। उक्तार्थे दृष्टान्तमाह—**यथेति**। **यथा सविता** स्वोदयसमकालं निशि स्वावारकं **तमः** स्वावशेषं ग्रसति तथा अयमात्मेत्यर्थः। तुर्यसुषुप्तानुज्ञैक-स्वरूपं व्याकरोति—**अनुज्ञैकरस** इति। व्यष्टिसमष्टितुर्यसुषुप्त्यासनतुर्यप्राज्ञ-बीजैक्यानुज्ञारूपेण व्यष्टिसमष्ट्यात्मकजाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तकलनायाः अपह्नवानुज्ञां दत्वा स्वयमखण्डैकरसतुर्यतुर्याभिमुखो भवतीति **अयमात्मा अनुज्ञैकरसो हि** भवतीत्यर्थः। **स्वभावतः चिद्रूप एव**। चिद्रूपत्वे दृष्टान्तमाह—**यथेति**। **यथा अग्निः** स्वदाह्यं काष्ठकरीषादिकं **दग्ध्वा** भस्मीकृत्य निर्विकल्पोऽव-तिष्ठते तथैव स्वात्मबोधेन सर्वमिदं जडं स्वावशेषं कृत्वा स्वस्वरूपेण अवतिष्ठते। तुर्यजाग्रत्स्वप्नसुषुप्तांशेषु तुर्यजागरणस्वप्नांशौ सधूमज्वालावदग्नितुल्यौ, तुर्य-सुषुप्तस्तु शराङ्गारवत् निर्विकल्पकतया अवतिष्ठत इत्यर्थः॥ ८॥

तुर्यतुर्यप्रपञ्चनम्

अविकल्पो ह्ययमात्माऽऽवाङ्मनोगोचरत्वाच्चिद्रू[1]पश्चतूरूप ॐकार एव चतूरूपो ह्ययमोंकार ओतानुज्ञात्रनुज्ञाऽविकल्पैरोंकार-रूपैः। आत्मैव नामरूपात्मकं हीदं सर्वं तुरीयत्वात् चिद्रूपत्वाच्च ओतत्वात् अनुज्ञातृत्वात् अनुज्ञात्वात् [2]अविकल्परूपत्वाच्च। अविकल्परूपं हीदं [3]सर्वं नात्र काचन भिदाऽस्ति नैव तत्र काचन भिदाऽस्ति॥ ९॥

तस्मादप्युपरि विद्यमानं अङ्गारादप्युपगताग्निसमानं **अवाङ्मनोगोचर-त्वात्** तुर्यतुर्यं **अविकल्पा**विकल्पं, सर्वप्रकारस्वातिरिक्तकलनाऽपह्नवसिद्धत्वात्

[1] पश्चात्मरू—अ, अ १. पत्वाच्चतू–

[2] अविकल्पत्वाच्च—अ २, क. [3] सर्वं नैव—अ १, अ २, क.

अविकल्पाविकल्पत्वं निरङ्कुशमित्यर्थः । तत्र हेतुः **चिद्रूपः** चिन्मात्र इत्यर्थः । तत् कथं? चत्वारि रूपाणि यस्य सः **चतूरूपः** ओतानुज्ञात्रनुज्ञाऽविकल्पै-रकारोकारमकारमात्राऽतीतैश्चतूरूपैः प्रणव एव नत्वन्यः **हि** यस्मात् **अयं** चतुष्पादात्मस्वरूपः । यत एवं अतो **नामरूपात्मकं हीदं सर्वं** तुर्यतुर्यातिरेकेण मृग्यत्वात् तुर्यतुर्यस्य स्वतः **चिद्रूपत्वात्**, स्वाध्यस्ताकारादिमात्राभेदानुवृत्त्या स्वाविद्यापदस्थूलांशोतत्वात्, तत्सूक्ष्मांशानुज्ञातृत्वात्, बीजांशानुज्ञात्वात्, तुर्यांशाविकल्परूपत्वात् । **चकारेण** स्वतोऽयमविकल्पाविकल्प इति द्योत्यते । स्वाज्ञदृष्ट्या यत्तदतिरेकेण विकल्पितं **भिदाजातं** स्वज्ञदृष्टा **न हि तत्रास्ति** । स्वज्ञादिदृष्ट्या सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन वा **नैव तत्र** नामरूपकर्मात्मक**भिदा** ओत्रादिभिदा विकल्पो वा**ऽस्ति** ॥ ९ ॥

तुर्यतुर्यादेशः

**अथ तस्यायमादेशोऽमात्रश्चतुर्थोऽव्यवहार्यः प्रपञ्चोपशमः शिवोऽद्वैतः । एवमोंकार आत्मैव । संविशत्यात्मनाऽऽत्मानं य एवं वेद ॥**

तथा चेत् तदवगतिः कथमित्यत आह—**अथेति** । **अथेति** तुर्यपाद-प्रवेशानन्तर्यार्थः । वस्तुतो यदविकल्पाविकल्पकं तुर्यतुर्यं तत् कदाऽपि उपदेश्यं न भवति । यतः तदोत्रादिकलनाऽस्पृष्टं अतस्तदवगन्तुं न हि शक्यं स्वातिरिक्त-ज्ञात्राद्यसंभवात् । तथाऽपि **तस्यायमादेशो** वेदेन क्रियते स्वाज्ञारोपितमात्रातद-ध्यक्षव्यवहारप्रपञ्चापह्नवमुखेन, तदपह्नवसिद्धं तुर्यतुर्यात्मकं निष्प्रतियोगिक-स्वमात्रमित्यवगन्तुं शक्यमिति । श्रुतिनिर्दिष्टादेशः कः? इत्यत्र **अमात्रः** स्थूलसूक्ष्मबीजभावमापन्नाकारादिमात्राप्रपञ्चापह्नवसिद्धत्वात् । **चतुर्थः** तुर्यविश्व-विराडोत्रादेरप्यस्य चतुर्थत्वेन तुर्यतुर्यत्वात् । **अव्यवहार्यः** व्यवहार्येदमंशापह्नव-सिद्धत्वात् । **प्रपञ्चोपशमः** जाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तप्रपञ्चापह्नव-वृत्तेरप्युपशमसिद्धत्वात् । अत एव **शिवः** परममङ्गळात्मकविकळेबरकैवल्य-रूपत्वात् । **अद्वैतः** निखिलवेदार्थपरमाद्वैततया निष्प्रतियोगिकसन्मात्रत्वात् ।

तं शृङ्गग्राहिकया आह—**ओङ्कार** इति। **एवमोङ्कारो** ब्रह्म प्रणवः **आत्मैव** नत्वन्यः अभिधानस्य अभिधेयपर्यवसन्नत्वात्। एतज्ज्ञानफलं महीकरोति—**संविशतीति**। **स्वात्मना स्वात्मानमेव** स्वमात्रमिति **संविशति** अवगच्छति **य एवं वेद** वेदनसमकालं स तदेव भवतीत्यत्र "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः॥ १०॥

मन्दाधिकारिणां मन्त्रराजद्वारा तुरीयावगतिः

एष वीरो नारसिंहेन वानुष्टुभा मन्त्रराजेन तुरीयं विद्यादेष ह्यात्मानं प्रकाशयति सर्वसंहारसमर्थः परिभवासहः प्रभुर्व्याप्तः [1]सदोज्ज्वलोऽविद्यातत्कार्यहीनः स्वात्मबन्धहरः सर्वदा द्वैतरहित आनन्दरूपः सर्वाधिष्ठानसन्मात्रो निरस्ताविद्यातमोमोहोऽहमेवेति। तस्मादेवमेवेममात्मानं परं ब्रह्मानुसंदध्यादेष वीरो नृसिंह एवेति॥ ११॥

मध्यमाधिकारिणां उपायोपदेशतो ह्युत्तमपदं प्रविष्टानां परमफलं प्रकटयित्वा मन्दाधिकारिणामपि तत्पदारोहाय परमोपायमाह—**एष** इति। अन्यदेवतोपासकेषु अनेकेषु सत्सु तत्र कश्चिदेष नृसिंहस्य त्रिलोकीकण्टकासुरवक्षःकवाटपाटनपटोरुपासनामहिम्ना तत्तादात्म्यं प्राप्त इव **वीरः**। स्वाज्ञानासुरभेदनोद्युक्तत्वात् वीरत्वमुपपद्यते। सोऽयं **नारसिंहेन वाऽनुष्टुभा मन्त्रराजेन**—वाशब्दः पक्षान्तरे यथावदात्मानमवगन्तुमशक्तः तदा—नारसिंहेन [नरसिंह]दैवतेन अनुष्टुप्छन्दस्केन स्वतन्त्रेण मन्त्रराजेन **तुरीयं विद्यात्** अवगच्छेत्। सत्सु मन्त्रान्तरेषु अयमेव मन्त्रराजः। **एष ह्येव स्वात्मानं** चिन्मात्रतया **प्रकाशयति**। सर्वार्थसाधकेषु मन्त्रान्तरेषु सत्स्वपि किमत्र पक्षपात इत्यत्र **सर्वसंहारसमर्थः** स्वाज्ञानोपसंहारपटुत्वात्, स्वभक्तकृते परप्रयुक्त**परिभवासहः** मद्भक्तो वा परैः परिभूयते स्वाज्ञानेन वेति। परिभवासहत्वे हेतुमाह—**प्रभुरिति**। को हि

[1] सर्वदो—उ.

स्वामी समर्थः सन् स्वभृत्यविषये परैः कृतपरिभवं सहते । ततोऽस्य परिभवासहनमुचितमेव । तुरीयेणास्य किमित्यत आह—**व्याप्त** इति । यथा तुरीयो जगदिदं व्याप्य वर्तते तथाऽयं स्वकीयैः पादैः पृथिव्यादिकं व्याप्नुवन् व्याप्त इत्यर्थः । उभयतः साम्यप्रतीत्यर्थमित्याह—**सदोज्ज्वल** इति । यथा तुरीयः स्वयंप्रकाशः अयमपि सदोज्ज्वलत्प्रकाशः । न केवलमिदं साम्यं किन्त्विदमपीत्याह—**अविद्याकार्यहीन** इति । रागद्वेषादीनि अविद्याकार्याणि । आत्मवत्—यथाऽयं तुरीयः स्वात्मनो बन्धमाविद्यकं हरति तथाऽयं मन्त्रराजोऽपि **स्वात्मबन्धहरः** । **सर्वदा** तुर्यवत्—**द्वैतरहितः**, तुर्यवत् **सर्वाधिष्ठानसन्मात्रः** । तत्र हेतुः—**निरस्ताविद्यातमोमोहः** तुर्यवत्तादृशाक्षरत्वात् । एवं साम्यमुक्त्वा इदानीमक्षरार्थसाम्यमाह—**अहमेवेति** । यथाऽयं तुरीयोऽस्मत्प्रत्ययग्राह्यः एवं मन्त्रराजोऽपीत्यर्थः । यस्मादेवं **तस्मात्** नारसिंहेनानुष्टुभा मन्त्रराजेन **इममेवानन्दात्मानं** सर्वस्मात् **परं** उत्कृष्टं परिच्छेदत्रयातीतं **ब्रह्म अनुसंदध्यात्** । एवं कुर्वन्निरुपचरितोऽयमेव **वीरो नृसिंह एव** भवति ॥ ११ ॥

इति द्वितीयः खण्डः

## तृतीयः खण्डः

प्रणवमन्त्रराजपादानां तुरीयात्मना ध्यानम्

तस्य ह वै प्रणवस्य या पूर्वा मात्रा सा प्रथमः पादो भवति द्वितीया द्वितीयस्य तृतीया तृतीयस्य चतुर्थ्योतानुज्ञात्रनुज्ञाऽविकल्परूपा तया तुरीयं चतुरात्मानमन्विष्य चतुर्थपादेन च तया तुरीयेणानुचिन्तयन् ग्रसेत् ॥ १ ॥

उत्तमाधिकारिणां निर्विशेषं मध्यमाधिकारिणां सविशेषं च ब्रह्म प्रतिपाद्य पुनः संक्षेपविस्तराभ्यां मध्यमाधिकारिणं संबोधयितुं खण्डिकेयमारभ्यते—**तस्येति** । ओमित्येतदक्षरमित्यादिना यः प्रणवो वर्णितः **तस्य ह वै प्रणवस्य** । **हवा** इतिशब्दौ प्रसिद्धिस्मरणार्थौ । येयमकाराख्या **मात्रा** सेयं प्रणवमन्त्रराजयोः **प्रथमः पादो भवति द्वितीया द्वितीयस्य तृतीया तृतीयस्येति** । षष्ठी प्रथमार्था । **द्वितीया** उकारः **तृतीया** मकारः । द्वितीयो द्विसंख्यापूरणः तृतीयः त्रिसंख्यापूरणः । **चतुर्थी** चतुःसंख्यापूरणी । सेयं कीदृशीत्यत्र **ओतानुज्ञात्रनुज्ञाऽविकल्परूपा** । सोभयतश्चतुर्थः पादो भवतीत्यध्याहार्यम् । **तया चतुर्थ्या तुरीयं चतुरात्मानं** ओतानुज्ञात्रनुज्ञाऽविकल्पैः चतुर्भेदं आनन्दात्मानं **अन्विष्य** स्वाचार्योपदेशपुरस्सरमित्यर्थः । प्रणवमन्त्रराजयोः **चतुर्थ**मात्रया **पादेन च**—एकैकमात्रापादयोरपि तुरीयेणाभेदार्थौ—**तया** प्रणवतुर्यमात्रया मन्त्रराजतुर्यपादेन च मात्रापादैक्यतो विकल्पेनाचार्योपदेशं **अनुचिन्तयन् ग्रसेत्** तुर्यात्मबुद्ध्या सर्वमिदमुपसंहरेत् ॥ १ ॥

### प्रथमपादध्यानम्

**तस्य ह वा एतस्य प्रणवस्य या पूर्वा मात्रा पृथिव्यकारः स ऋग्भिर्ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः सा प्रथमः पादो भवति भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिः ॥ २ ॥**

इतिं सूत्रप्रायमुक्तं, तदेव पुनः विवृणोति—**तस्येति** । **तस्य ह वा एतस्य प्रणवस्य या पूर्वा मात्रा**—व्याख्यातमन्यत् । **पृथिवी** सप्तद्वीपवती सागरमेखला । अक्षरस्तु **अकारः** । **सो**ऽक्षरः पृथिव्यात्मकः अकारः । मन्त्रब्राह्मणात्मकः **ऋग्वेदो**ऽप्येतदात्मकः । जगदुत्पादको **ब्रह्मा**ऽस्य देवता भवति । अष्टावग्न्यादिनक्षत्रान्ता **वसवो**ऽस्याधिदेवताः एतदात्मानः । **गायत्री** चतुर्विंशत्यक्षरात्मिका । **गार्हपत्यो**ऽग्निः । एवमुक्ता मात्रा **सा** प्रणवमन्त्रराजयोः **प्रथमः पादो भवति** । योऽयमात्मनः प्रथमः पादः प्रणवमात्रारूपः स सर्वोऽपि

चतुरात्मेत्याह—**भवति चेति**। **सर्वेषु पादेषु चतुरात्मा** स्थूलत्वात् सूक्ष्मत्वात् बीजत्वात् साक्षित्वात् **स्थूलसूक्ष्मबीजसाक्षिभिः** चतुरात्मत्वमित्यर्थः ॥ २ ॥

### द्वितीयपादध्यानम्

द्वितीयाऽन्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो विष्णु[ष्णू]-रुद्रास्त्रिष्टुब्दक्षिणाग्निः सा द्वितीयः पादो भवति भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिः॥ ३ ॥

उकाररूपिणी **द्वितीया** मात्रा **अन्तरिक्षं** अन्तरिक्षलोकः **उकाराक्षरः**। **स** एव **यजुर्भिः** अविवक्षितछन्दोभिः मन्त्रब्राह्मणात्मकोऽयं **यजुर्वेदः** अध्वर-प्रकाशकः। जगद्धितकारी **विष्णुः** अस्य देवता **रुद्राः** एकादश इन्द्रियाण्य-स्याधिदैवतानि। **त्रिष्टुप्**छन्दस्तु च[तुश्च]त्वारिंशदक्षरात्मकम्। **दक्षिणाग्निः** प्रसिद्धः। **सा द्वितीयः पादो भवति भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिः** इत्युक्तार्थम् ॥ ३ ॥

### तृतीयपादध्यानम्

तृतीया द्यौः स मकारः स सामभिः सामवेदो रुद्र आदित्या जगत्याहवनीयः सा तृतीयः पादो भवति भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिः ॥ ४ ॥

**तृतीय**संख्यापूरणी **द्यौः** द्युलोकः तृतीयमात्राऽभिन्नः **सः मकारः**। **स सामभि**रिति [साम]प्रधानैः मन्त्रैः सह **सामवेदः** गीतिप्रधानो मन्त्रब्राह्मणात्मकः **सामवेदः**। अस्य देवता **रुद्रः** संहारकर्ता। तत्तादात्म्यं प्राप्ताः द्वादशमासात्मकाः **आदित्याः** अस्याधिदैवतम्। तादात्म्यं प्राप्ता **जगती** अष्टाचत्वारिंशदक्षरात्मकं छन्दः। स **आहवनीयः** आहुत्यधिकरणमग्निः। **सा तृतीयः पादो भवति भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिः** इत्युक्तार्थम् ॥४॥

### चतुर्थपादध्यानम्

याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओंकारः साऽऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेकर्षिर्भास्वती स्मृता सा चतुर्थः पादो भवति भवति च सर्वेषु पादेषु चतुरात्मा स्थूल-सूक्ष्मबीजसाक्षिभिः ॥ ९ ॥

**मात्रात्रयावसाने या** प्रसिद्धा **अस्य** प्रणवस्य चतुस्संख्यापूरणी **अर्धमात्रा** या मात्राऽतीतरूपा **सा** ह्यर्धमात्रा **सोमलोकः**, सह उमया विद्यया वर्तते य ईश्वरः स सोमः। ओंकारमात्राऽतीतप्रणवो हि ऋगादिसारभूतः। **सा** उक्तार्धमात्रा **आथर्वणैः मन्त्रैः अथर्ववेदः**। आथर्वणमन्त्राः षट्कर्मप्रधानाः अथर्वणा दृष्टाः, तैः सह वर्तमानो मन्त्रब्राह्मणात्मकोऽथर्ववेदः। पाताळमारभ्य त्रिलोकीं शुष्ककरीषवद्यो निर्दहेत् सोयं **संवर्तकोऽग्निः** ईश्वरः। एकोनपञ्चाशत्संख्याकाः **मरुतः** वायवः अस्याधिदैवत्यं प्राप्ताः। **विराट्** दशाक्षरं छन्दः। आथर्वणानां प्रसिद्धोऽयं **एकर्षिः** नामाग्निः। यद्यपि मात्रा भास्वती, तथाऽपीयमन्तर्बहिः-प्रकाशरूपा, ततो विद्वद्भिः **भास्वती स्मृता** शास्त्रोक्त्या साऽवगता। **सा चतुर्थः पादो भवति, भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीज-साक्षिभिः** इत्युक्तार्थम् ॥ ९ ॥

### तुर्यतुर्ये सर्वोपसंहारः

मात्राऽमात्राः प्रतिमात्राः कृत्वोतानुज्ञात्रनुज्ञाऽविकल्परूपं चिन्तयन् ग्रसेत् ॥ ६ ॥

**मात्राऽमात्राः प्रतिमात्राः कृत्वा** चतुर्थमात्रायां मात्रात्रयवत् मात्राचतुष्ट-येऽपि मात्रा अमात्राः प्रतिमात्राः विधाय अनन्तरं **ओतानुज्ञात्रनुज्ञाऽविकल्परूपं चिन्तयन्** एकानुविद्धं ध्यायन् **ग्रसेत्** यन्निर्विशेषं ब्रह्म तुर्यतुरीयं तस्मिन्निदं सर्वमुपसंहरेत् ॥ ६ ॥

तुर्यतुर्यावगतिः

ज्ञोऽमृतो हुतसंवित्कः शुद्धः संविष्टो निर्विघ्न इममसुनियमेऽनुभूयेहेदं सर्वं दृष्ट्वा स प्रपञ्चहीनः ॥ ७ ॥

एवमुपसंहारं कुर्वत इदं रूपं भवतीत्याह—**ज्ञ** इति । स्वभावतोऽयं **ज्ञः** सर्वज्ञः **अमृतः** मरणानुकूलोपाध्यभावात् **हुतसंवित्कः** येन स्वात्माग्नौ ध्यात्रादिसंविद्धुता तथाविधः **शुद्धः** अशुद्धिहेत्वविद्याऽभावात् **संविष्टः** सम्यक् स्थिरासने उपविष्टः **निर्विघ्नः** स्थिरासनतः पुनरुत्थानशून्यः **इमं** सच्चिदानन्दात्मानं रेचकपूरककुंभकादिभिः **असुनियमे** प्राणनियमनेन प्राणबन्धनं यन्मनस्तदपि नियमितं भवति तेन मनसा **अनुभूय** तुर्यतुर्यस्वमात्रमिति प्रबोधसिद्धानुभवबलेन **इदं सर्वं** नृसिंहमन्त्रराजप्रणवपादमात्राः तदवान्तरभेदं च **दृष्ट्वा** तुर्यतुर्यातिरिक्तं नेत्यवगम्य **स प्रपञ्चहीनः** तुर्यतुर्यावगतेः प्रपञ्चापह्नवपूर्वकत्वात् ॥ ७ ॥

सकलब्रह्मस्वरूपम्

अथ सकलः साधारोऽमृतमयश्चतुरात्मा ॥ ८ ॥

मन्दो[ध्यमो]त्तमाधिकारिणावेवं संबोध्य इदानीं मन्दप्रज्ञं बुबोधयिषुराह—**अथेति** । अथोत्तममध्यमाधिकारिभ्यां अन्यो मन्दाधिकारी वक्ष्यमाणप्रकारेण संबोधनीयः । तत् कथं ? चतुर्भेदाढ्यजागरितस्थानतत्रत्याध्यात्मादिविशिष्टविश्वविराडकार-(तद्भेदपर्वतादि)चतुर्भेदेद्धस्वप्नस्थानतत्रत्याध्यात्मादिभेदवत्तैजसहिरण्यगर्भोकार-तथा चतुर्भेदाढ्यसुषुप्तस्थानतत्रत्याध्यात्मिकादिभेदवत्प्राज्ञेश्वरमकार-तथा तुरीयस्थानोतानुज्ञात्रनुज्ञाऽविकल्पोङ्कारगर्भितमन्त्रराजपदजातकलाभिः सह वर्तत इति **सकलः** स्वाज्ञादिदृष्टिप्रसक्ताधेयनिरूपिताधारात्मना सह वर्तत इति **साधारः** **अमृतं** ब्रह्म तुर्यतुरीयं **तन्मयः** तत्प्रायोऽयमाधारात्मा स **चतुरात्मा** ब्रह्मविष्णुरुद्रसंवर्ताग्निभेदात् सर्वमयः प्रणवमन्त्रराजाक्षरमयत्वात् । तत्र हेतुश्चतुरात्मा ॥ ८ ॥

सकलब्रह्मध्यानम्

अथ महापीठे सपरिवारं तमेतं चतुःसप्तात्मानं चतुरात्मानं मूलाग्नावग्निरूपं प्रणवं संदध्यात्। सप्तात्मानं चतुरात्मानमकारं ब्रह्माणं नाभौ सप्तात्मानं चतुरात्मानमुकारं विष्णुं हृदये सप्तात्मानं चतुरात्मानं मकारं रुद्रं भ्रूमध्ये सप्तात्मानं चतुरात्मानं चतुःसप्तात्मानं चतुरात्मानमोंकारं सर्वेश्वरं द्वादशान्ते सप्तात्मानं चतुरात्मानं चतुःसप्तात्मानं चतुरात्मानमानन्दामृतरूपं षोडशान्ते ॥ ९ ॥

सर्वमिदं चापि चतूरूपं जाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तकलना परमार्थदृष्ट्या यं तुर्यतुर्यं न स्पृशति तादृशं तुर्यतुर्यं ब्रह्म स्वमात्रमित्यज्ञानतः केचित् संसरन्तो हीयन्ते, तेषां चित्तशुद्धिहेतुयोगप्रदर्शनपूर्वकं तुर्यतुर्यमेव निरूपयति—**अथेति**। **अथ** श्रुत्याचार्यप्रसादानन्तरं श्रीनृसिंहनिवासहेतुसुषुम्नाऽन्तर्गत**महापीठे** स्वानन्यभक्तपटलपरिवारेण सह वर्तत इति **सपरिवारम्**। यद्वा—पूर्वोक्तपूजापीठे अङ्गादिद्वात्रिंशद्व्यूहान्तर्गतपरिवारेण सह वर्तत इति सपरिवारं **तं** सकलं साधारं सर्वमयममृतमयमिति चतुरात्मानं **एतं** स्वयंप्रकाशसदानन्दात्मानं पृथिव्यकार-ऋग्वेदब्रह्मवसुगायत्रीगार्हपत्य — अन्तरिक्षोकारयजुर्वेदविष्णुरुद्रत्रिष्टुब्दक्षिणाग्नि—द्युमकारसामवेदरुद्रादित्यजगत्याहवनीय—सोमलोक-ओंकाराथर्ववेदसंवर्तकाग्निमरुद्विराडेकर्षिरूपाणि चतुस्सप्तसंख्याऽन्वितानि स्वरूपाणि यस्य तं **चतुस्सप्तात्मानं** स्थूलसूक्ष्मबीजसाक्षिरूपाण्योत्रादीनि वा स्वरूपं यस्य तं **चतुरात्मानं** मूलाधारत्रिकोणगतोऽग्निः **मूलाग्निः** तस्मिन् नृसिंहा**ग्निरूपं** **प्रणवात्मकं संदध्यात्**। मात्राभेदानां विभागमाह—**सप्तेति**। पृथिव्यादिगार्हपत्यान्ताः सप्तात्मा स्वरूपं यस्य तं **सप्तात्मानं** स्थूलादयः ओत्रादयो वा आत्मा स्वरूपं यस्य तं **चतुरात्मानं** प्रणवाद्यवयवा**कार**मात्रारूपं जगत्स्रष्टारं **ब्रह्माणं नाभौ** अनुसंधानं कुर्यात्। अथान्तरिक्षादिदक्षिणाग्न्यन्तं **सप्तात्मानं** **चतुरात्मानं** समानं प्रणवद्वितीयमात्रात्मकं **उकारं** सर्वपालकं **विष्णुं हृदये**

अनुसन्दध्यात् । द्व्याद्याहवनीयान्तं **सप्तात्मानं चतुरात्मानं मकारं** सर्वोपसंहारकर्तारं **रुद्रं भ्रूमध्ये** अनुसंदध्यात् । सोमलोकाद्येकर्ष्यन्तं **सप्तात्मानं चतुरात्मानं चतुःसप्तात्मानं चतुरात्मानं** उक्तार्थम् । वस्तुतः चतुस्सप्तात्मानं चतुरात्मानं स्वात्मरूपनृसिंहतादात्म्यमापन्नं मूलाधारे ध्यातव्यमुक्तवती श्रुतिः । इदानीं तु मात्राभेदान् सप्त चतुरश्च प्रतिमात्रास्थानभेदान् ध्यातव्यतयोक्त्वा चतुस्सप्तात्मानं चतुरात्मानं चोपपादितं **ओङ्कारार्धमात्रारूपिणं** सप्तात्मानं चतुरात्मानं स्वेन **रूपेण** चतुस्सप्तात्मानं चतुरात्मानं **सर्वेश्वरं द्वादशान्ते** अनुसंदध्यात् । द्वादशान्तं नाम चुबुकमारभ्य यावत्केशाग्रमिदं मस्तकं तस्यान्त इवान्ते द्वादशान्ते, सहस्रदळपद्मे इत्यर्थः । अकारोकारमकारबिन्दुनादकलाकलातीतात्मकजाग्रत्स्वप्नसुषुप्तितुरीयतुर्यजाग्रत्स्वप्नसुषुप्तितुर्यातीतैश्च **सप्तात्मानं चतुरात्मानं** चत्वार ओतानुज्ञात्रनुज्ञाऽविकल्पात्मानो यस्य तं चतुरात्मानं चत्वारि—जागरितस्थानस्थूलप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः तथा स्वप्नसुषुप्तस्थानभेदौ, नान्तःप्रज्ञं इत्यादि एकात्मप्रत्ययसारपर्यन्तानि—यस्य तं **चतुस्सप्तात्मानं चतुरात्मानं आनन्दामृतरूपं** भ्रूमण्डलादूर्ध्वं **षोडशाङ्गुल**परिमिते देशे सुषुम्नाविलसितषट्चक्राणि भित्त्वा अर्चिरादिमार्गे षोडशाङ्गुलमतीत्य **अन्ते** प्रदेशे सहस्रारमारभ्य षोडशाङ्गुलोपरिप्रदेशे ॥ ९ ॥

सकळध्यानेन तुर्यतुर्यप्राप्तिः

अथानन्दामृतेनैतांश्चतुर्धा संपूज्य तथा ब्रह्माणमेव विष्णुमेव रुद्रमेव विभक्तांस्त्रीनेवाविभक्तान् लिङ्गरूपानेव च संपूज्योपहारैश्चतुर्धा लिङ्गान् संहृत्य तेजसा शरीरत्रयं संव्याप्य तदधिष्ठानमात्मानं संज्वाल्य तत्तेज आत्मचैतन्यरूपं बलमवष्टभ्य गुणैरैक्यं संपाद्य महास्थूलं महासूक्ष्मे महासूक्ष्मं महाकारणे च संहृत्य मात्राभिरोतानुज्ञात्रनुज्ञाऽविकल्परूपं चिन्तयन् ग्रसेत् ॥ १० ॥

**अथ** एवं सद्बोधानन्दामृतरूपेण **एतान्** अकारोकारमकारार्धमात्रारूढान् ब्रह्मविष्णुरुद्रतुर्यान् मन्त्रराजब्रह्मप्रणवार्थरूपान् स्थूलसूक्ष्मादिमात्रारूढोत्रादिभिः **चतुर्धा संपूज्य** तुर्यतुर्यनृसिंहातिरिक्तं न किंचिदस्तीति भावनामयीं पूजां कृत्वा, "सोऽहंभावेन पूजयेत्" इति श्रुतेः। जगतः सृष्टिस्थितिसंहारकर्तृ**ब्रह्मविष्णुरुद्रानेव विभक्तान्** पृथक्पृथगिव स्थितान् नाभिहृदयभ्रूमध्यस्थानान् वस्तुतः **अविभक्तान् त्रीनेव** ब्रह्माद्यभिमानतः परिच्छिन्नान् तुर्यतुर्यनृसिंहानन्दतया ध्यात्वा पुनस्तानेव अपरिच्छिन्ननृसिंहरूपेण ध्यायेदित्यर्थः। अध्यात्ममधिदैवं च विभक्तमविभक्तं च यद्रूपं तदेव ध्येयं न त्वाधिभौतिकमित्यत आह—**लिङ्गेति**। लिङ्ग्यते गम्यते इति **लिङ्गरूपानेव** नत्वन्यान् चकारो विभक्ताविभक्तरूपाणां तदवस्थानां च प्रत्येकं संपूज्येतिपदसंबन्धार्थः। **संपूज्योपहारैः** उपसामीप्येन स्थूलसूक्ष्मबीजसाक्षिभिः उपहारैः **चतुर्धा** संपूज्य स्वात्मानं संदध्यादित्यनुवर्तते। अथैवं स्थैर्यप्राप्त्यनन्तरं **लिङ्गान्** स्वसत्ताहेतुभूतस्थावरजङ्गमान् जागरणस्वप्नसुषुप्तिस्थानान् अधिभूतात्मना अवस्थितान् स्वप्नवदाध्यात्मिकेन परिदृश्यमानान् स्थूलादिसाक्ष्यन्ततश्चतुर्भेदान् **संहृत्य** अध्यात्मसंहरणं ज्ञात्वा। विमतं दृश्यजातं मत्तो न भिद्यते दृश्यत्वात् स्वप्नदृश्यवत् इति भौतिकप्रपञ्चोऽपि आध्यात्मिकत्वेन अधिगन्तव्यः। आध्यात्मिकोऽपि प्रपञ्चः चतुस्सप्तात्मनृसिंहानुष्टुप्प्रणवार्थरूपो मूलाधारस्थ उपसंहरणीयः इत्येतदर्थमाह—**तेजसेति**। मूलाधारनिर्गततैजसाकारादिरूपेण स्थूलादि**शरीरत्रयं संव्याप्य** मात्रात्रयारूढविश्वविराडोत्रादिपादत्रयेण सम्यग्व्याप्तिं कृत्वा यत् स्वविकल्पितं तस्य त्रिभेदभिन्नस्य स्वाधिष्ठेयस्य तन्निरूपिताधिष्ठानधर्मस्यापि दाहायानन्दात्मानं **संज्वाल्य** इदं सर्वं मद्व्यतिरिक्तं नास्तीति संदीप्य **तत्** आत्मबोधसन्दीपितं **तेजः** ध्यात्रादिप्रकाशरूपम्। तस्य स्वभेदं निवारयति—**आत्मेति**। आत्मनः स्वस्य **चैतन्यस्वरूपं बलं** स्वाविद्यातत्कार्यभस्मीकरणसामर्थ्यं **अवष्टभ्य** सर्वोत्कृष्टब्रह्मविष्ण्वादि**गुणैः** चतुर्भेदभिन्नैः **ऐक्यं सम्पाद्य** आध्यात्मिकाधिदैविकरूपेण तादात्म्यमवगम्य **महास्थूलं** आधिदैविकं चतुर्भेदभिन्नवैराजरूपं चतुर्भेदभिन्नाधिदैविके **महासूक्ष्मे** हिरण्यगर्भे, **महासूक्ष्मं** हिरण्यगर्भं चतुर्भेदभिन्नं **महाकारणे** सर्वोत्पत्तिस्थितिभङ्गाधिकरणे

**ईश्वरे महति**---**चकारः** संहृत्येतिपदस्य पूर्वत्रापि संबन्धार्थः---**संहृत्य** उपसंहारं कृत्वा अकारादिमात्राभिः सह अनन्तरं मात्राकलनातीते तुरीये ओतानुज्ञात्रनुज्ञाऽविकल्परूपे महाकारणं संहृत्य तदपि अविकल्पाविकल्पतुर्यतुर्यपर्यवसितं ध्यायन् **ग्रसेत्** । ततः तुर्यतुर्यात्मना स्वयमेव तिष्ठेदित्यर्थः ॥ १० ॥

**इति तृतीयः खण्डः**

## चतुर्थः खण्डः

तुर्यतुर्यस्य स्वमात्रताऽनुसन्धानम्

**तं वा एतमात्मानं परमं ब्रह्मोंकारं तुरीयोंकाराग्रविद्योत-[1]मनुष्टुभा नत्वा प्रसाद्योमिति संहृत्याहमित्यनुसंदध्यात् ॥ १ ॥**

षोडशधा विकल्पितब्रह्मप्रणवमात्रापादेयत्तां प्रकटयित्वा अथ नारसिंहानुष्टुभा तादात्म्यं यत् सूत्रितं तत्प्रपञ्चनाय इयं खण्डिका आरभ्यते—**तमिति** । यः परमात्मा प्रणवार्थतयोक्तः **तं** ईश्वरग्रासं **वै** प्रसिद्धं **एतं** प्रत्यञ्चं **आत्मानं** प्रत्यक्परविभागैक्यकलनापायतः **परमं** निरतिशयं **ब्रह्म** परिच्छेदत्रयातीतं **ओङ्कारम्** । किं तदक्षरतया अवस्थितं ? तत्राह— **तुरीयोङ्काराग्रविद्योत**मिति । कोऽयं तुरीयोङ्कारः ? इत्यत्र अकारोकारमकारापेक्षया अर्धमात्रायाः तुर्योङ्कारत्वम्, तस्यापि तुर्यभागः तदग्रं मात्राकलनाविरळं, तत्रैव तुर्यतुर्यतया विशेषेण द्योत्यत इति तुर्यतुर्यं **अनुष्टुभा** मन्त्रराजेन **नत्वा** तत्र मन्त्रराजस्थनवपदार्थं नरसिंहं नमाम्यहमिति पदद्वयेन नत्वा, भगवन् प्रसन्नो भूत्वा प्रह्लादवत् मामुद्धर इति **प्रसाद्य** । एवं नृसिंहप्रसादं संपाद्य अथ अनन्तरं यद्यत् स्वातिरिक्तवत् भातं

[1] मानुष्टुभं—अ १, अ २, क.

तत्तत् ओं ओङ्काराग्रविद्योततुर्यतुरीयं तदतिरिक्तं न किंचिदस्ति इति **संहृत्य** अपह्नवं कृत्वा तदपह्नवसिद्धं अहं निष्प्रतियोगिकस्वमात्रं **इत्यनुसंदध्यात्** ॥ १ ॥

ओमितिशब्दवृत्तिप्रत्ययापह्नवविधिः

अथैत[1]मेवात्मानं परमं ब्रह्मोंकारं तुरीयोंकाराग्रविद्योतमेकादशात्मानं नारसिंहं नत्वोमिति संहरन्ननुसंदध्यात् ॥ २ ॥

**अथ** अनुसन्धानानन्तरं **एतमेवात्मानं परमं ब्रह्मोङ्कारं तुरीयोङ्काराग्रविद्योतं** इत्युक्तार्थम्, उग्राद्यहमन्तैकादशात्मानं **नारसिंहं नत्वा** पूर्ववत् पदद्वयेनेत्यर्थः, **ओमितिशब्दवृत्तिप्रत्ययजातमपि संहरन् अनुसंदध्यात्** ॥ २ ॥

निर्विशेषब्रह्मानुसन्धानम्

[2]अथैतमेवात्मानं परमं ब्रह्मोंकारं तुरीयोंकाराग्रविद्योतं प्रणवेन संचिन्त्यानुष्टुभा नत्वा सच्चिदानन्दपूर्णात्मसु नवात्मकं सच्चिदानन्दपूर्णात्मानं परमात्मानं परं ब्रह्म संभाव्याहमित्यात्मानमादाय मनसा ब्रह्मणैकीकुर्याद्यदनुष्टुभैव वा ॥ ३ ॥

किमयं एवं कुर्वन् शून्यमात्रपर्यवसायी स्यादित्यत आह—**अथेति** । **अथैतमेवात्मानं परमं ब्रह्मोङ्कारं तुरीयोङ्काराग्रविद्योतं** इत्युक्तार्थम् । **प्रणवेन संचिन्त्य** पूर्ववत् **अनुष्टुभा नत्वा** । उक्तार्थं विशदयति—**सच्चिदिति** । **सच्चिदानन्दपूर्णात्मसु** उग्रमित्याद्येकादशपदेषु उग्रमित्यादिमृत्युमृत्युपदान्तं **नवात्मकं** तत्पदलक्ष्यं, नमामीति पदं एकं त्वंपदलक्ष्यं "जीववाचि नमो नाम" इति श्रुतेः, अहंशब्दस्य तयोरैक्यघटकत्वेन असिपदार्थत्वं युज्यते, एवं प्रत्यक्परैक्यसिद्धं **सच्चिदानन्दपूर्णात्मानं परमात्मानं परं** निर्विशेषं **ब्रह्म संभाव्य**

[1] मेवमात्मा—अ २.     [2] अथैवमेतमात्मानं—अ २, क.

**अहमित्यात्मानं** त्वंपदार्थं **आदाय** नवपदलक्ष्य**ब्रह्मणा नृसिंहेन** ब्रह्माहं, अहं ब्रह्म, इत्यखण्डाकारवृत्तिमन्मनसा **एकीकुर्यात्** स्वाविद्यया अनेकवदाभातं एकतां नयेत्। एवमैक्यसिद्धं ब्रह्म अनुष्टुभैव गम्यमित्याह—**यदिति। यत्** एवमुक्तं ब्रह्म तदेकादशपदात्मना **अनुष्टुभैव** अनुसंदध्यादित्यर्थः ॥ ३ ॥

मन्त्रराजस्य ब्रह्मात्मैक्यहेतुत्वम्

एष उ एव नृ, एष हि सर्वत्र सर्वदा सर्वात्मा नृ, सिंहोऽसौ परमेश्वरः असौ हि सर्वत्र सर्वदा सर्वात्मा सन् सर्वमत्ति, नृसिंह एवैकल एष तुरीय एष एवोग्र एष एव वीर एष एव महानेष एव विष्णुरेष एव ज्वलन्नेष एव सर्वतोमुख एष एव नृसिंह एष एव भीषण एष एव भद्र एष एव मृत्युमृत्युरेष एव नमाम्येष एवाहं एवं योगारूढो ब्रह्मण्येवानुष्टुभं संदध्यादोंकार इति ॥ ४ ॥

एवं मन्त्रराजस्य ब्रह्मात्मैक्यहेतुतामाह—**एष** इति। **एष उ एव नृ**— अयमर्थः, योऽस्यामुपनिषदि ईश्वरग्रास इति प्रसिद्ध एष एव हि उग्रमित्यादिनवपदलक्ष्यतत्पदार्थः। एवं नमामीति नृशब्दलक्ष्यं त्वंपदार्थः। एवमनेन वाक्येन महावाक्यार्थो वर्णितः। तत्र हेतुः—एष एव हि **सर्वत्र सर्वदा सर्वात्मेति**। नृपदार्थमुपपाद्य सिंहपदार्थमाह—**सिंह** इति। तस्य तत्त्वंपदगतवाच्यार्थमत्तेभकुंभस्थलविदारणपाटववीर्यवत्तमत्वात् सिंहशब्देन तत्पदार्थः परमात्मोच्यते। एवं नृसिंहशब्दलक्ष्यार्थप्रत्यगभिन्नपरमात्मस्वरूपमाह—**असाविति। असौ परमेश्वरः** परमात्मा **सर्वत्र सर्वदा** देशकालवस्तुषु सर्वदा **सर्वात्मा सन्** स्वातिरिक्तं **सर्वमत्ति**। एवं स्वातिरिक्तं ग्रसित्वा स्वात्ममात्रतया अवशिष्यत इत्यर्थः। ना चासौ सिंहश्चेति **नृसिंहः। एवकारः** तदतिरेकमोहनिरसनार्थः। एक एव **एकलः** स्वद्वितीयाभावात्। यत्रैकस्मिन्नात्मनि स्वातिरिक्तं विलीयते स वा एकलः,

एकब्रह्मावशेषेण यत्र सर्वं विलीयते ।
तद्ब्रह्मैकलमाख्यातं भेदे सत्यपि वस्तुतः ॥

इति स्मृतेः । यः ओङ्कारार्थतयोक्तः **एष एव तुरीयः** तुर्योङ्काराग्रविद्योततुर्यतुर्यत्वात् । अस्तु नामास्य प्रणवार्थता, कुतः अनुष्टुप्पदार्थतेत्यत आह— **एष** इति । **एष** तुर्यतुर्य **एवोग्रः** स्वातिरिक्तजाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तचतुष्पञ्चदशकलनोद्ग्रसनात् । **एष एव वीरः** स्वाज्ञदृष्टिप्रसक्तसर्वविरमणहेतुत्वात् । **एष एव महान्** सर्वमहत्त्वात् । **एष एव विष्णुः** निरङ्कुशभूमरूपत्वात् । **एष ज्वलन्** प्रकाशमात्रत्वात् । **एष एव सर्वतोमुखः** महाविराट्स्वरूपत्वात् । **एष एव नृसिंहः** प्रत्यगभिन्नब्रह्मरूपत्वात् । **एष एव भीषणः** स्वाभक्तपटलभीषणाकृतित्वात् । **एष एव भद्रः** दिव्यमङ्गळविग्रहत्वात् विकळेबरकैवल्यरूपत्वाद्वा । **एष एव मृत्युमृत्युः** मृत्योः स्वाज्ञानस्य मारकत्वात् । **एष एव नमामि** स्वांशजप्राणिपटलनमस्कृतत्वात् प्रत्यगभिन्नरूपत्वाद्वा । **एष एवाहं** अस्मत्प्रत्ययालम्बनप्रत्यग्रूपत्वात् । **एवं** उक्तप्रकारेण प्रत्यक्परैक्ययोगारूढो **विद्वान् ब्रह्मण्येवानुष्टुभं** मन्त्रराजं ब्रह्माभ्युपायं **संदध्यात्** । ध्यानसर्वस्वमाह— **ओङ्कार** इति । तुरीयोङ्काराग्रविद्योततुर्यतुर्यं ब्रह्म निष्प्रतियोगिकस्वमात्रमित्यनुसंधानं कुर्यादित्यर्थः । **इतिशब्दः** उपदेशप्रकारसमाप्त्यर्थः ॥ ४ ॥

अनुवादकमन्त्रोदाहरणम्

तदेतौ श्लोकौ भवतः—

संस्तभ्य सिंहं स्वसुतान् गुणार्थान् संयोज्य शृङ्गैर्ऋषभस्य हत्वा ।
वश्यां स्फुरन्तीमसतीं निपीड्य संभक्ष्य सिंहेन स एष वीरः ॥५॥
शृङ्गप्रोतान् पदा स्पृष्ट्वा हत्वा तामग्रसत् स्वयम् ।
नत्वा च बहुधा दृष्ट्वा नृसिंहः स्वयमुद्बभौ ॥ इति ॥ ६ ॥

ब्राह्मणोक्तार्थसर्वस्वं वक्ष्यमाणमन्त्राभ्यां स्पष्टयति—**तदेताविति** । **तस्मिन्** उक्तार्थे **एतौ** वक्ष्यमाणौ **श्लोकौ** मन्त्रौ **भवतः** । अहं नृसिंहानुष्टुप्प्रतिपाद्यं

यत्तुर्यतुरीयं ब्रह्म तन्निष्प्रतियोगिकस्वमात्रमिति **संस्तभ्य** सम्यक् सिंहं ब्रह्ममात्रमवगम्य ज्ञात्वा तज्ज्ञानसमकालं तदेव भवामीत्यर्थः । मन्दानां तत्प्रतिपत्त्युपायमाह —**स्वसुतानिति** । स्वस्य तूलान्तःकरणारूढस्य सुता इवान्तःकरणवृत्तिरूपाः बोधाः जागरणजागरणादिचतुष्पञ्चदशकलनाहेतवः तान् **स्वसुतान् गुणार्थान्** सत्वादिगुणानां शब्दादिगुणानां चार्थभूतान् पञ्चीकृतापञ्चीकृततत्कार्यरूपान् गुणार्थान् **ऋषभस्य** श्रेष्ठस्य प्रणवस्य मन्त्रराजस्य च **शृङ्गैः** अकारादिप्रणवमात्राभिः मन्त्रराजपादैश्च स्वसुतान् गुणार्थान् **संरज्य** तत्र प्रणवमन्त्रराजमात्रापादातिरिक्तबुद्धिं **हत्वा** ब्रह्मातिरिक्तं नेति नेति इति निपात्य अनन्तरं कुटिलामिव दण्डेन वशीकृतां स्वाविद्यादूतिकां **वश्यां** प्रतिक्षणं व्यभिचारिणीं स्वात्मनः सर्वानर्थकारिणीं बुद्धिवृत्तियुवतीं प्रत्यग्ब्रह्मैक्ययोगाभ्यासबलेन सत्पथि वशीकृतां ध्यात्रादिनानात्रिपुटीरूपेण **स्फुरन्तीं** स्वात्मानं श्लाघयन्तीं वस्तुतस्तु **असतीं** कारणतः स्वरूपतो विषयतो वृत्तितश्च शशविषाणवदवस्तुभूतां **निपीड्य** अपह्नवं कृत्वा तदपह्नवसिद्ध**सिंहेन** निष्प्रतियोगिकब्रह्ममात्ररूपेण असद्रूपमायातत्कार्यापह्नवभ्रममपि **संभक्ष्य** स्वात्मावशेषं खादित्वा अपह्नवं कृत्वा **स एष वीरः** एवमपह्नवकृत् सम्यज्ज्ञानी निष्प्रतियोगिकतया स्वयमेव शिष्यत इत्यर्थः ॥ ९ ॥ उक्तार्थं ससाधनमाह—**शृङ्गेति** । अकारादिप्रणवशृङ्ग**प्रोतान्** पूर्वोक्तगुणान् तदर्थांश्च **पदा** तुर्यपादेन **स्पृष्ट्वा** तुर्यपादातिरिक्तं न किंचिदस्तीति निश्चित्य तामपि सकारणां तुर्यपादबुद्धिमपि **हत्वा** अपह्नवं कृत्वा **तां** अपह्नववृत्तिमपि **अग्रसत् स्वयम्** । ग्रसेदिति वक्तव्ये यदग्रसदित्यवादीत् तदविद्यायाः कालत्रयेऽप्यसत्त्वप्रदर्शनार्थं—स्वाविद्यां स्वावशेषतया ग्रसेत् । इत्थं स्वाविद्याऽपह्नवतो **नृसिंहः** परमात्मा **स्वयमुद्बभौ** निरावृतस्वमात्रं विजृंभत इत्यर्थः । तत्र साधनान्युपदिशति—**नत्वेति** । तत्तद्भावानुरोधेन विविधनमस्कारान् विधाय । **च**शब्दात् साधनचतुष्टयसंपत्त्यासादितपारमहंस्यधर्मपूगवदनुष्ठितवेदान्तश्रवणमननिदिध्यासनानि निरन्तरं कुर्यादिति द्योत्यते । तत उग्रं वीरं इत्याद्यनेकविशेषणविशिष्टं निष्प्रतियोगिकैकस्वैरूपं स्वमात्रमित्यसकृत् **दृष्ट्वा** दर्शनसमकालं नृसिंहज्ञानी

तन्मात्रतयोद्भवौ । एवं नृसिंहज्ञानी नृसिंह एव भवति, ब्रह्म वेद ब्रह्मैव भवतीत्यर्थः । इतिशब्दो मन्त्रसमाप्त्यर्थः ॥ ६ ॥

इति चतुर्थः खण्डः

## पञ्चमः खण्डः

अकारानुष्टुभोस्तादात्म्यम्

अथैष उ एवाकार आप्ततमार्थ आत्मन्येव नृसिंहे देवे ब्रह्मणि वर्तत एष ह्येवाप्ततम एष हि साक्ष्येष ईश्वरोऽतः सर्वगतो न हीदं सर्वमेष हि व्याप्ततम इदं सर्वं यदयमात्मा मायामात्रमेष एवोग्र एष हि व्याप्ततम एष एव वीर एष हि व्याप्ततम एष एव महानेष हि व्याप्ततम एष एव विष्णुरेष हि व्याप्ततम एष एव ज्वलन्नेष हि व्याप्ततम एष एव सर्वतोमुख एष हि व्याप्ततम एष एव नृसिंह एष हि व्याप्ततम एष एव भीषण एष हि व्याप्ततम एष एव भद्र एष हि व्याप्ततम एष एव मृत्युमृत्युरेष हि व्याप्ततम एष एव नमाम्येष हि व्याप्ततम एष एवाहमेष हि व्याप्ततम आत्मैव नृसिंहो देवो ब्रह्म भवति य एवं वेद सोऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येति ॥ १ ॥

एवं समग्रप्रणवेनानुष्टुप्तादात्म्यमुक्त्वा अथेदानीं मात्राभिरपि तादात्म्यं प्रकटयितुं खण्डिका आरभ्यते—अथेति । अथ ओङ्कारानुष्टुप्तादात्म्यकथना-

नन्तरं एकैकप्रणवावयवेनाकारादिना मन्त्रराजसमन्वय उच्यते। यः प्रणवार्थतया प्रकृतो मन्त्रराजः **एष एवाकारः** न त्वन्यः। मन्त्रराजार्थनृसिंहस्याकारमात्रापरिच्छित्तितोऽल्पता स्यादित्यत आह—**आप्तेति**। **आप्ततमार्थः** अतिशयेन व्याप्तः आप्ततमः सोऽर्थोऽभिधेयज्ञाने प्रयोजनं यस्य सोऽयमाप्ततमार्थः। **अतोऽयं** नाल्पः, अकारस्य सर्ववाग्व्याप्तेः, "अकारो वै सर्वा वाक्" इति श्रुतेः, किंतु असौ मन्त्रराजतुल्यः। यद्वा— आप्ततमस्वरूपः यथा मन्त्रराजो नृसिंहस्वरूपे वर्तते तथाऽयमकारोऽपीत्याह—**आत्मनीति**। अकारोऽयं **आत्मन्येव नृसिंहे देवे ब्रह्मणि वर्तते**। कथमाप्ततमाभिधेयो नृसिंह इत्यत आह—**एष हीति**। **हि** यस्मात् **एष एव नृसिंहो** नत्वन्यः **आप्ततमः** अतिशयेन व्याप्ततमत्वात्। **एष** आप्ततमो नृसिंहो **हि** यस्मात् **सर्वसाक्षी** सर्वत्र आत्मात्मीयाभिमानशून्योऽपि स्वविकल्पितसाक्ष्यपटलसाक्षी द्रष्टा। अकारात्मकोऽयं **ईश्वरो** नियन्ता स्वविकल्पितप्रपञ्चस्येत्यर्थः। अस्मात् नियम्यनियमनहेतोः **सर्वगतः** सर्वव्यापकः। सर्वव्यापकत्वेन सर्वमयत्वे विकारित्वं स्यादित्यत आह—**न हीति**। अकारार्थनृसिंहातिरेकेण न ह्यस्तीत्यत्र अयं हेतुः—यस्मात् अकारात्मकोऽयं नृसिंहो **व्याप्ततमः**। तस्य स्वव्याप्यग्रासत्वात् व्यापकातिरेकेण व्याप्यं नास्तीत्याह—**इदं सर्वं यदयमात्मेति**। **यत्** किंचित् यदि **इदं** प्रतीयते तदा तत् **सर्वं सोऽयमात्मा** नृसिंहः। अतः तत्सर्वं आत्मैवेत्यर्थः। स्वातिरिक्तप्रतीतेः तत्सत्यमेवेत्यत आह—**मायामात्रमिति**। स्वातिरेकेण विविधं प्रतीयमानस्य स्वाज्ञाननिमित्तत्वात् मायामात्रत्वम्। स्वाज्ञानापाये स्वज्ञानतः स्वयमेवेश्वरग्रासस्तुर्यतुर्योऽवशिष्यते। तदवगतये प्रणवाद्यमात्रात्मकाकारमन्त्रराजैकादशपदानामैक्यसिद्ध्यर्थमाह—**एष** इति। एष एव नृसिंहात्मको व्याप्ततमोऽकार एव **उग्रः**, एष हि व्याप्ततमः। **एष एव वीरः** इत्यादि समानम्। एवं ज्ञानफलमाह—**य एवं वेदेति**। यः कश्चन देवो वा मनुष्यो वा अधिकारी **एवं** उक्तप्रकारेण आप्ततमत्वेन हेतुना सर्वात्मकनृसिंहाक्षराकार एवोग्राद्येकादशपदात्मक इति **वेद सोऽयं आत्मैव नृसिंहो देवो ब्रह्म भवति** सर्वोऽप्यात्मज्ञानादात्मैव भवति। एवं ज्ञानिनः को विशेषः? इत्यत आह—**स** इति। **सोऽयं** प्रणवाद्यमात्रानुष्टुबेकादशपदार्थज्ञानी **इदं मे स्यात्**

इदं मा भूदिति स्वातिरिक्तास्तिताभ्रमहेतुः कामः तद्रहितोऽयं **अकामः** । किं सद्योजातशिशुवत् कामहेत्वप्रविष्ट इत्यत आह—**निष्काम** इति । अविकलेन्द्रियो विविधविषयज्ञोऽपि निर्गतकामः कामप्रवृत्तिनिमित्तवैरल्यात् । किमयं रोगादिना अभिभूतः कामात् बिभेति तत्राह—**आप्तकाम** इति । स्वात्मातिरेकेण न हि कामः कामनीयार्थो वाऽस्तीति स्वात्ममात्रधिया अयमाप्तकामः । येन केन वा आप्तकामश्चेत् कालान्तरे स्वाभिमतकामक्षयतः पुनः तदाप्तुमिच्छा स्यादित्यत आह—**आत्मकाम** इति । स्वावशेषकामातिरिक्तकामाभावात् । एतादृशस्यापि पारलौकिककामः स्यादित्यत आह—**नेति** । **तस्य** एवं ज्ञानिनः **प्राणाः** मुख्यप्राणसहितेन्द्रियाणि **नोत्क्रामन्ति अत्र** ब्रह्मणि **एव समवलीयन्ते** । एवं विलीनप्राणो विद्वान् स्वाज्ञस्वज्ञपरमार्थदशायामपि **ब्रह्मैव सन् ब्रह्माप्येति** ब्रह्मैव भवतीत्यर्थः ॥ १ ॥

उकारानुष्टुभोस्तादात्म्यम्

अथैष एवोकार उत्कृष्टतमार्थ आत्मन्येव नृसिंहे देवे ब्रह्मणि वर्तते तस्मादेष सत्यस्वरूपो न ह्यन्यदस्त्यमेयमनात्मप्रकाशमेष हि स्वप्रकाशोऽसङ्गोऽन्यन्न वीक्षत आत्माऽतो नान्यथा प्राप्तिरात्ममात्रं ह्येतदुत्कृष्टमेष एवोग्र एष ह्येवोत्कृष्ट एष एव वीर एष ह्येवोत्कृष्ट एष एव महानेष ह्येवोत्कृष्ट एष एव विष्णुरेष ह्येवोत्कृष्ट एष एव ज्वलन्नेष ह्येवोत्कृष्ट एष एव सर्वतोमुख एष ह्येवोत्कृष्ट एष एव नृसिंह एष ह्येवोत्कृष्ट एष एव भीषण एष ह्येवोत्कृष्ट एष एव भद्र एष ह्येवोत्कृष्ट एष एव मृत्युमृत्युरेष ह्येवोत्कृष्ट एष एव नमाम्येष ह्येवोत्कृष्ट एष एवाहमेष ह्येवोत्कृष्टस्तस्मादात्मानमेवैवं जानीयादात्मैव नृसिंहो देवो ब्रह्म भवति य एवं वेद सोऽकामो निष्काम आप्तकाम

**आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येति ॥ २ ॥**

एवं प्रणवाद्यमात्राऽकारमन्त्रराजपदैक्यं तज्ज्ञानफलं च प्रकटयित्वा अथोकारमन्त्रराजपदैक्यं तज्ज्ञानफलं च प्रकटयति—**अथेति** । **उकारोऽप्येष नृसिंह एव** । उकारस्य नृसिंहत्वे हेतुः—**उत्कृष्टतमार्थः** नृसिंहस्य सर्वोत्कृष्टत्वात् । अकारापेक्षयोकारस्योपरि विद्यमानत्वादुत्कृष्टत्वम् । उकारोऽभिधानं, अभिधेयो नृसिंहः, तयोरभेदात् उत्कृष्टतमार्थत्वं युज्यते । यदुक्तं उत्कृष्टतमार्थत्वं न हि तत्परोक्षं यतोऽयमुकारः **आत्मन्येव नृसिंहे देवे ब्रह्मणि वर्तते** । अत **एष** नृसिंहात्मकोकारः **सत्यस्वरूपः** कालत्रयाबाध्यनृसिंहार्थत्वात् । कथमेतस्य सत्यत्वमित्यत्र **हि** यस्मात् अस्मादुकारस्वरार्थनृसिंहात् **अन्यदमेयं नास्ति** । यद्यन्मेयं तत्तदसत्यं रज्जुसर्पवत् । कथं इदं मेयमित्यत आह—**अनात्मप्रकाशं** जडमित्यर्थः । तथा अयमपि स्यादित्यत आह—**एष हीति** । **हि** यस्मात् **एष** उकारात्मको नृसिंहः **स्वयंप्रकाशः** प्रकाशमात्रत्वात् । अप्रकाशान्तःकरणयोगात् कथं प्रकाशमात्रतेत्यत आह—**असङ्ग** इति । यदि स्वाज्ञदृष्ट्या अन्तःकरणप्रसक्तिः तदा स्वज्ञदृष्ट्या तत्रासङ्गत्वं, परमार्थदृष्ट्या स्वात्मनः **अन्यन्न वीक्षते** अन्यस्यैव मृग्यत्वात् । कोऽन्यन्न वीक्षते इत्यत्र **आत्मा** उकाररूपो नृसिंहः । यतोऽयमन्यन्न वीक्षते **अतः** कारणात् **नान्यथा प्राप्तिः** प्रकाशमात्रातिरिक्तप्रकाशवैरळ्यात् । उक्तार्थं सहेतुकं निगमयति—**आत्ममात्रं ह्येतदिति** । स्वस्य निष्प्रतियोगिकस्वमात्रत्वात् । हि यस्मात् नृसिंहात्मकमुकाररूपं सर्वोत्कृष्टं तस्मात् एषः उकारस्वरूपो नृसिंह **एवोग्रः** । तत्रोपपत्तिः—**एष ह्येवोत्कृष्टः** विश्वाधिकत्वात् । **एष एव वीरः** इत्यादि समानम् । यस्मादेवं **तस्मात्** उत्कृष्टतमत्वेन हेतुना सर्वात्मकोकारानुष्टुबेकादशपदात्मकं **आत्मानमेवैवं जानीयात्** । **आत्मैव नृसिंहो देवः** इत्यादि व्याख्यातम् ॥ २ ॥

मकारानुष्टुभोस्तादात्म्यम्

**अथैष एव मकारो महाविभूत्यर्थ आत्मन्येव नृसिंहे देवे ब्रह्मणि वर्तते तस्माँदयमनल्पोऽभिन्नरूपः स्वप्रकाशो ब्रह्मैवासतम**

उत्कृष्टतम एतदेव ब्रह्मापि सर्वज्ञं महामायं महाविभूत्येतदेवोग्रमेतद्धि महाविभूत्येतदेव वीरमेतद्धि महाविभूत्येतदेव महदेतद्धि महाविभूत्येतदेव विष्णवेतद्धि महाविभूत्येतदेव ज्वलदेतद्धि महाविभूत्येतदेव सर्वतोमुखमेतद्धि महाविभूत्येतदेव नृसिंहमेतद्धि महाविभूत्येतदेव भीषणमेतद्धि महाविभूत्येतदेव भद्रमेतद्धि महाविभूत्येतदेव मृत्युमृत्य्वेतद्धि महाविभूत्येतदेव नमाम्येतद्धि महाविभूत्येतदेवाहमेतद्धि महाविभूति तस्मादकारोकाराभ्यामिममात्मानमाप्ततममुत्कृष्टतमं चिन्मात्रं सर्वद्रष्टारं सर्वसाक्षिणं सर्वग्रासं सर्वप्रेमास्पदं सच्चिदानन्दमात्रमेकरसं परमेव ब्रह्म मकारेण जानीयादात्मैव नृसिंहो देवः परमेव ब्रह्म भवति य एवं वेद सोऽकामो निष्काम आप्तकाम आत्मकामो न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येतीहैव प्रजापतिरुवाच प्रजापतिरुवाच ॥ ३ ॥

अकारोकारानुष्टुप्पदैक्यतत्फलवन्मकारानुष्टुबैक्यतज्ज्ञानफलं चाह— **अथेति** । अथ उकारव्याप्तिकथनानन्तरं मकारव्याप्तिः । **एष मकारोऽप्युक्तो** नृसिंह एव **महाविभूत्यर्थः** । **आत्मन्येव नृसिंहे देवे ब्रह्मणि वर्तते** यतः तस्मादयं महाविभूत्यर्थः । ततोऽयं मकाराख्यो नृसिंहः प्रत्यगभिन्नः । पराक्सापेक्षप्रत्यगभेदेन अल्पता स्यादित्यत आह—**अनल्प** इति । पराक्प्रपञ्चस्य मृग्यत्वात् अनल्पोऽयमित्यर्थः । तत्र हेतुः—**अभिन्नरूपः** । भेदहेत्वल्पाविद्यावैरळ्यात् अभिन्नत्वमखण्डत्वमुपपद्यते । अत एवायं **स्वप्रकाशः** अजडस्वरूपत्वात् । **ब्रह्मैव** भूमैवायं **आप्ततमः उत्कृष्टतमः** अकारोकारार्थत्वात् । किमेतस्मादप्युत्कृष्टमस्ति ? तत्राह—**एतदिति** । **एतदेव ब्रह्मापि** सर्वस्मादुत्कृष्टं अपरिच्छिन्नत्वात् **सर्वज्ञं** सर्वं स्वातिरिक्तं नेतीति ज्ञातृत्वात् **महामायं**

स्वातिरिक्तप्रपञ्चसर्गस्थितिभङ्गकारिणी महामाया यस्य तत् **महाविभूति निरुप-मैश्वर्यशालित्वात् एतत्** मकाररूपं **ब्रह्मैवोग्रं एतद्धि महाविभूत्यादि** समानमन्यत्। [एतदिति] नपुंसकत्वं प्रकृतं, तदनुरोधेन उग्रादिपदानां नपुंसकत्वम्। **तस्मात्** यतो मकाररूपं ब्रह्म **अकारोकाराभ्यां इममात्मानं नृसिंहं आप्ततमं उत्कृष्टतमं** चैतन्यमात्रतः **चिन्मात्रं सर्वस्य** चक्षुरादेः **द्रष्टारं** अवलोकयितारं स्वसाक्ष्यान्तः-करणवृत्तिजातसाक्षिणं तुर्यतुर्यात्मना स्वातिरिक्तसर्वग्रासं **सर्वप्रेमास्पदं** सर्व-स्यात्मत्वात्, आत्मा हि प्रियतमः, "तदेतत्प्रेयः पुत्रात् प्रेयः" इत्यादिश्रुतेः, **सच्चिदानन्दमात्रमेकरसं परमेव ब्रह्म** प्रणवतृतीयमात्रात्मकेन **मकारेण जानीयात्।** **आत्मैव नृसिंहः** इत्याद्युक्तार्थम्। शास्त्रार्थमुपसंहरति—**इहेति**। 'ओमित्येत-दक्षरं' इत्यारभ्य 'ब्रह्मैव सन् ब्रह्माप्येति' इत्यन्तं **इहैव** देवान् प्रति **प्रजापति-**रुक्तवान्। आवृत्तिरादरार्था प्रकरणसमाप्त्यर्था च ॥ ३ ॥

इति पञ्चमः खण्डः

---

## षष्ठः खण्डः

देवानामनुष्टुभा आसुरजयः

ते देवा इममात्मानं ज्ञातुमैच्छन् तान् हासुरः पाप्मा परिजग्राह । त ऐक्षन्त हन्तैनमासुरं पाप्मानं ग्रसाम इति । एतमेवोंकाराग्रविद्योतं तुरीयतुरीयमात्मानमुग्रमनुग्रं वीरमवीरं महान्तममहान्तं विष्णुमविष्णुं ज्वलन्तमज्वलन्तं सर्वतोमुखमसर्वतोमुखं नृसिंहमनृसिंहं भीषणमभीषणं भद्रमभद्रं मृत्युमृत्युममृत्युमृत्युं

**नमाम्यनमाम्यहमनहं नृसिंहानुष्टुभैव बुबुधिरे । तेभ्यो हासावासुरः पाप्मा सच्चिदानन्दघनज्योतिरभवत् ॥ १ ॥**

स्वात्मप्रतिपत्त्यन्तरायेयत्ताप्रकटनपूर्वकं तन्निरसनं कुर्वन् आशास्त्रसमाप्ति निर्विशेषब्रह्म प्रपञ्चयति । आदौ आख्यायिकामवतारयति—**ते देवा** इति । ये प्रजापतिनोपदिष्टा उपदेक्ष्यमाणाः ते अग्नीन्द्रादयो **देवा इममात्मानं** स्वयंप्रकाशचिद्रूपं देशिकमुखात् **ज्ञातुमैच्छन्** । **तान्** आत्मज्ञानकृतोद्यमान् देवान् **आसुरः पाप्मा** स्वाज्ञानतत्कार्यवृत्तिरूपः **परिजग्राह** किल स्वात्मविस्मृतिपूर्वकं स्वातिरिक्तविषयेच्छामुदपादयदित्यर्थः । ते देवाः आसुरपाप्मना स्पृष्टा अपि **हन्तेति** सानुकम्पं **आसुरं पाप्मानं** अनात्मप्रत्ययरूपं तदपह्नवसिद्धनिष्प्रतियोगिकात्मज्ञानबलेन **ग्रसामः** भक्षयामः नाशयामः **इति ऐक्षन्त** अवलोकितवन्त इत्यर्थः । इतिशब्दो देवेक्षणानुकरणार्थः । ते देवाः **एतमेव** प्रकृतं **ओङ्काराग्रविद्योतं तुर्यतुरीयमात्मानमेव** व्याख्यातं अनुष्टुप्पदार्थरूपेण उग्रमित्याद्येकादशविशेषणविशिष्टं सर्वविशेषापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्ररूपेण **अनुग्रं अवीरं** इत्यादि निर्विशेषतया बोध्यं यत्स्वरूपं तदेव **बुबुधिरे** साक्षात्कृतवन्तः । **तेभ्यः** तेषां देवानां यथाव्याख्यातोऽयं **असावासुरः पाप्मा सच्चिदानन्दघनज्योतिरभवत्** ब्रह्ममात्रस्य निष्प्रतियोगिकतया तदतिरेकेण आसुरपाप्मासंभवात् आसुर पाप्माऽपि ब्रह्मैव बभूवेत्यर्थः ॥ १ ॥

अपक्वकषायस्य अनुष्टुभा आत्मज्ञानप्राप्तिः

**तस्मादपक्वकषाय इममेवोंकाराग्रविद्योतं तुरीयतुरीयमात्मानं नृसिंहानुष्टुभैव जानीयात् । तस्यासुरः पाप्मा सच्चिदानन्दघनज्योतिर्भवति ॥ २ ॥**

यस्मादेवं देवैः स्वभावविपरीतभावप्रापकोऽयं आसुरः पाप्मा ब्रह्मातिरिक्तं नेति प्रबोधेन ब्रह्ममात्रपदवीं प्रापितः **तस्मादपक्वकषायः** स्वातिरिक्तास्तिताऽ-

नर्थदृष्टिः **इममेव** अपरोक्षतया विजृंभितं **ओङ्काराग्रविद्योतं तुर्यतुरीयमात्मानं नृसिंहानुष्टुभैव जानीयात्** । **तस्यासुरः पाप्मा सच्चिदानन्दघनज्योतिरेव भवति** स्वज्ञानेन स्वाज्ञानापाये पुराऽनुभूतस्वाज्ञानतत्कार्यं **स्वयमेव** भवतीत्यर्थः ॥ २ ॥

प्रणवेन अद्वितीयावगतिः

**ते देवा ज्योतिरुत्तितीर्षवो द्वितीयाद्भयमेव पश्यन्त इममेवोंकाराग्रविद्योतं तुरीयतुरीयमात्मानमनुष्टुभाऽन्विष्य प्रणवेनैव तस्मिन्नवस्थिताः तेभ्यस्तज्ज्योतिरस्य सर्वस्य पुरतः सुविभातमविभातमद्वैतमचिन्त्यमलिङ्गं स्वप्रकाशमानन्दघनं शून्यमभवत्** । **एवंवित्स्वप्रकाशं परमेव ब्रह्म भवति** ॥ ३ ॥

कथं तुर्यतुरीयं अविकल्पाविकल्पं ध्यात्रादिविकल्पसत्त्वादित्यत आह---**त** इति। **ते देवाः** ध्यातृध्यानादि**ज्योतिषः** स्वातिरिक्तप्रकाशात् **उत्तितीर्षवः** उत्तरितुमिच्छन्तः । तत्र हेतुः—स्वातिरिक्तध्यात्रादिरूप**द्वितीयादपि भयमेव पश्यन्तः** ध्यानादिव्यापृतावपि संसृतिसमानबुद्धिं कृतवन्तः । तच्छमनाय किं कृतवन्त इत्यत्र—**इममेवोङ्काराग्रविद्योतं तुर्यतुर्यमात्मानं अनुष्टुभा अन्विष्य** षोडशमात्रात्मकतुर्य**प्रणवेनैव** च सम्यगन्विष्य निर्धार्य य एवं निर्धार्य सिद्धोऽर्थः **तस्मिन्** तुर्यतुर्यात्मनि परमाकाशे उपाधिविनिर्मुक्तघटाकाशवत् **अवस्थिताः** तन्मात्रतां गतवन्तः **तेभ्यः** तेषां देवानां पुराऽनुभूततद्ध्यात्रादि**ज्योतिः अस्य सर्वस्य** जगतः स्वाज्ञदृष्टिविकल्पितस्य **पुरतः** पुरस्तात् **सुविभातं** ध्यात्रादित्रिपुटिशून्यतया प्रतीतं तथा अस्य जगतः स्थितिकाले प्रळयानन्तरमपि यत् स्वमात्रतया सुविभातं स्वातिरेकेण **अविभातं** स्वमात्रतया भातमित्यपि वक्तुमशक्यतया विभातं अत एव **अद्वैतं** निष्प्रतियोगिकं, निष्प्रतियोगिकमिति चिन्त्यमित्यत्र **अचिन्त्यं, अचिन्त्यत्वे** किं लिङ्गं ? इत्यत्र **अलिङ्गं**, केनाप्यचिह्नितत्वात्, यत् लिङ्गवन्न

तत् ब्रह्म भवितुमर्हति, तथा चेदसदप्रकाशं ब्रह्म इत्यत्र यत् स्वातिरिक्तासत्प्रपञ्चं ग्रसित्वा सन्मात्रतया अवशिष्टं तत् **स्वप्रकाशं** प्रकाशमात्रत्वात्, यत् प्रकाशमात्रं तत् **आनन्दघनं** निरतिशयपरमानन्दस्वरूपम् । तत्र स्वयंप्रकाशत्वादिविशेषता स्यादित्यत आह **शून्यमिति**, स्वयंप्रकाशत्वाद्यशेषविशेषशून्यमित्यर्थः । एवंविदो ध्यात्रादित्रिपुटीज्योतिस्सुविभातमित्यादिसप्तविशेषणप्रतिपाद्यब्रह्मैवाभवदिति भावः । यथा देवपूगो ब्रह्मवेदनसमकालं ब्रह्माभवत् तथाऽन्योपि भवतीत्याह—**एवमिति**। देववत् **एवंवित्** विद्वान् **स्वप्रकाशं परमेव ब्रह्म भवति** ॥ ३ ॥

संन्यासस्य ब्रह्मावगतिसाधनत्वम्

ते देवाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च ससाधनेभ्यो व्युत्थाय निरागारा निष्परिग्रहा अशिखा अयज्ञोपवीता अन्धा बधिरा मुग्धाः क्लीबा मूका उन्मत्ता इव परिवर्तमानाः शान्ता दान्ता उपरतास्तितिक्षवः समाहिता आत्मरतय आत्मक्रीडा आत्ममिथुना आत्मानन्दाः प्रणवमेव परं ब्रह्मात्मप्रकाशं शून्यं जानन्तस्तत्रैव परिसमाप्ताः । तस्मात्तद्देवानां व्रतमाचरन्नोंकारे परे ब्रह्मणि पर्यवसितो भवेत् स आत्मन्येवात्मानं परं ब्रह्म पश्यति ॥ ४ ॥

एवं प्रणवमन्त्रराजप्रबोधतो निर्विशेषब्रह्मास्तिरुक्ता । न हि सेयं संसारिभिः स्मर्तुं शक्या । देवानां संसारित्वात् कथं ते तत्पदमर्हन्ति इत्याशङ्क्य प्रजापत्युपदेशोत्तरक्षणमेव देवाः पारिव्राज्यधर्मालंकृताः सन्तः स्वातिरिक्तास्तिताश्रममुत्सृज्य स्वातिरिक्तभ्रमापह्नवसिद्धब्रह्ममात्रपर्यवसन्ना भवन्तीत्याह—ते देवा इति । ते प्रजापतिशिष्याः देवाः प्रजापतिमुखतः स्वात्मतत्त्वज्ञानमवगम्य परारोपितप्रातिभासिकशरीरादावात्मात्मीयभावविकलाः सन्तः तत्रैव परिसमाप्ता। इत्यन्वयः । तत्र केचन अनुत्पन्नसाक्षात्काराः देवाः तत्साक्षात्कारोपायतया अनुत्पन्नपुत्राणामुत्पत्तिप्रार्थना उत्पन्नानां तद्योगक्षेमप्रार्थना च पुत्रैषणा तस्याः

**पुत्रैषणायाश्च**—चकारात् तत्साधनेषणाऽपि गृह्यते—तथा लोकद्वयसाधक-**वित्तैषणायाश्च** श्रौतस्मार्तकर्मजन्यसुखैषणा लोकैषणा तस्या **लोकैषणायाश्च** एषणात्रयस्यापि साधनानि विविधविषयस्मरणानि तैः सह वर्तमानाः ससाधनाः ताभ्यः **ससाधनाभ्यो व्युत्थाय**। तत्र ये स्युः उत्पन्नसाक्षात्काराः न हि ते स्वातिरिक्तं पुत्रवित्तादिकं पश्यन्ति नापि स्मरन्ति। ततः तेषां ससाधनाभ्यः एषणाभ्यः व्युत्थानं सहजसिद्धम्। ये च तेभ्योऽन्ये मुमुक्षवः श्रुत्याचार्यमुखतः स्वात्मयाथात्म्यावगतिसाधनतया ससाधनाभ्यः पुत्राद्येषणाभ्यः व्युत्थाय पारमहंस्याश्रमे प्रविशन्ति तेषां लक्षणं किं? इत्यत्र—**निरागाराः** सर्पवत् स्वावासार्थं गृहारंभवर्जिताः **निष्परिग्रहाः** देहमात्रधारणेतरपरिग्रहशून्याः सामगमाणवकवत् **अशिखाः** बालवत् **अयज्ञोपवीताः अन्धाः** ब्रह्मातिरिक्तरूपसामान्यमपश्यन्तः, यद्वा—श्रीरामवत् परस्त्रीदर्शनविषयालोचनाविरळाः, **बधिराः** दैत्यगुणगणश्रवणे श्रीकृष्णवद्विषयवार्ताश्रवणशून्याः **मुग्धाः** देवाङ्गनादर्शनेऽपि शुकवद्विषयाभिलाषशून्याः **क्लीबाः** उर्वशीसंभोगाशारहितार्जुनवत् स्त्रीसामान्योपभोगशून्याः **मूकाः** परनिन्दास्तुतिरहिताः **उन्मत्ताः इव परिवर्तमानाः** नारदवत् भूमण्डलमटन्तः व्यासवत् **शान्ताः** प्रशान्तान्तःकरणत्वात् नारायणवत् **दान्ताः** नियतेन्द्रियत्वात् सनकादिवत् बाह्यान्तर्व्यापृत्युपरताः वसिष्ठादिवत् **तितिक्षवः** क्षमासारत्वात् लक्ष्मणवत् **समाहितमनसः आत्मरतयः** आत्मन्येव न बाह्यदारादौ रतिः येषां ते आत्मन्येव क्रीडा विनोदो न सखीजनेषु येषां ते **आत्मक्रीडाः** आत्मपरमात्मनोः मिथुनं ऐक्यं येषां ते **आत्ममिथुनाः** आत्ममात्रतया नन्दन्तीति **आत्मानन्दाः** प्रजापत्युपदिष्टपञ्चदशमात्रातत्कार्यविरळतुर्यतुर्य**प्रणवमेव परं ब्रह्मात्मप्रकाशं** स्वातिरिक्तकलनाशून्यं **जानन्तः तत्रैव** तुर्यतुरीये निष्प्रतियोगिकब्रह्ममात्रे **परिसमाप्ताः** तुर्यतुर्यस्वरूपेण अवशिष्यन्त इत्यर्थः। यथा देवानां ब्रह्मभावापत्तिहेतुः संन्यासः तथा अन्येषामपि तुर्यतुरीयाप्तिमिच्छतां सर्वकर्मसंन्यासपुरस्सरं तदवगतिस्तत्फलं च स्यात् नान्यथेत्याह—**तस्मादिति**। यस्मान्न हि संन्याससहितज्ञानं विना मुक्तिरस्ति न ह्यनात्तसंन्यासानां प्रणवार्थतुर्यतुरीये निष्ठा तद्ध्याने जपाधिकारो वाऽस्ति **तस्मात् तद्देवानां** प्रजापति-

शिष्याणां एषणात्रयसंन्यासलक्षणं **व्रतं** पारमहंस्यं अनुतिष्ठ**ओङ्कारे** तुरीयोङ्काराग्रविद्योततुर्यतुरीये **परे ब्रह्मणि** निष्प्रतियोगिकब्रह्ममात्रे **पर्यवसितो भवेत्** एतावन्तं कालं पारमहंस्यधर्मावलम्बनपूर्वकं प्रणवजपध्यानादिकं कृतमिति न हि तत्र विरतिः कार्या किंतु आदेहपातमनुष्ठेयम् । कुतश्चित् प्रतिबन्धकवशात् यद्यस्मिन् देहे तुर्यतुर्यसाक्षात्कारो न जातः शास्त्रप्रामाण्यात् देहान्तरे वा भविष्यत्येवेत्यवगन्तव्यम् । एवं ओङ्कारपर्यवसाने पारमहंस्याश्रमावलम्बनतः क्रियमाणे **सोऽयं** प्रणवचिन्तको मुनिः **स्वात्मन्येव** स्वात्मना **स्वात्मानं परं** निरतिशयं **ब्रह्म** स्वमात्रमिति **पश्यति** साक्षात्करोतीत्यत्र—

यस्तु द्वादशसाहस्रं प्रणवं जपतेऽन्वहम् ।
तस्य द्वादशभिर्मासैः परं ब्रह्म प्रसीदति ॥

इति श्रुतेः ॥ ४ ॥

अनुवादकमन्त्रोदाहरणम्

तदेष श्लोकः—

**श्रृङ्गेष्वश्रृङ्गं संयोज्य सिंहं श्रृङ्गेषु योजयेत् ।**
**श्रृङ्गाभ्यां श्रृङ्गमाबध्य त्रयो देवा उपासते ॥ इति ५ ॥**

**तत्** तस्मिन्नुक्तार्थे **एष श्लोको** मन्त्रो भवतीत्याह—**श्रृङ्गेष्विति** । विश्वविश्वाद्यविकल्पानुज्ञैकरसान्त**श्रृङ्गेषु अश्रृङ्गं** श्रृङ्गरहितं अविकल्पाविकल्पं तुर्यतुर्यं **संयोज्य** संबध्य ततः **सिंहं** चतुष्पदं नृसिंहानुष्टुभं **श्रृङ्गेषु** अकारोकारमकारार्धमात्रारूपेषु **योजयेत्** पूर्ववद्योजयेत धियैव संबन्धं कुर्यात् । **श्रृङ्गाभ्यां** आसतमोत्कृष्टतमरूपाभ्यामकारोकाराभ्यां **श्रृङ्गं** महाविभूतिरूपं मकारं—यथा तुर्यबुद्ध्या त्रयमवलोकनीयं तथा मकारधिया अकारोकारावप्यवलोकनीयौ—**आबध्य** बुद्ध्या सर्वतोबन्धनं कृत्वा—असङ्गोदासीनस्वभावानां देवानां कर्तृत्वं—**त्रयः** त्रिसंख्याकाः **देवाः** अकारोकारमकाराणां अधिष्ठातारोऽध्यात्मं विश्वतैजसप्राज्ञाः अधिभूतं ब्रह्मविष्णुमहेश्वराः अधिदैवं विराड्हिरण्य-

गर्भेश्वराः व्याविद्धाध्यात्माधिभूताधिदैवपरिच्छेदद्योतनात्मका उपासते, कृतकृत्याः सन्तः श्रृङ्गाश्रृङ्गसिंहतादात्म्यकरणेनौदासीन्यं भजन्ते, जाग्रदाद्यवस्थामवगच्छन्तीत्यर्थः ॥ ९ ॥

इति षष्ठः खण्डः

---

## सप्तमः खण्डः

तुर्यतुर्यज्ञानाय देवानां प्रश्नः

देवा ह वै प्रजापतिमब्रुवन् भूय एव नो भगवान् विज्ञापयत्विति ॥ १ ॥

एवं प्रजापतिना उपदिष्टात्मतत्त्वाः देवाः कथमयं प्रजापतिः वाङ्मनसातीतमात्मानमुपदिशति, कथं वयं अधिगच्छामः, इति च मन्वानाः पुनः पृष्टवन्तः इति स्वकीयामौत्सुक्योक्तिं परिसमाप्य पुनः देवप्रश्नमवतारयति— देवा इति। देवा ह वै प्रजापतिमब्रुवन्। किमिति ? पूर्वमुक्तमपि भूय एव नोऽस्माकं भगवान् तुर्यतुर्ययाथात्म्यं विज्ञापयत्विति ॥ १ ॥

आत्मनः तुर्यतुर्येण एकीकरणोपदेशः

तथेत्यजत्वादमरत्वादजरत्वादमृतत्वादभयत्वादशोकत्वादमोहत्वादनशनायत्वादपिपासत्वाद्द्वैतत्वाच्चाकारेणेममात्मानमन्विष्योदुत्कृष्टत्वादुदुत्पादकत्वादुदुत्प्रवेष्टृत्वादुदुत्थापयितृत्वादुदुद्द्रष्टृत्वादुदुत्कर्तृत्वादुदुत्पथवारकत्वादुदुद्ग्रासत्वादुदुद्भ्रान्तत्वादुदुत्तीर्णविकृतित्वा-

**चोकारेणेममात्मानं परमं ब्रह्म नृसिंहमन्विष्याकारेणेममात्मानमुकारपूर्वार्धमाकृष्य सिंहीकृत्योत्तरार्धेन तं सिंहमाकृष्य महत्त्वान्महत्त्वान्मानत्वान्मुक्तत्वान्महादेवत्वान्महेश्वरत्वान्महासत्त्वान्महाचित्त्वान्महानन्दत्वान्महाप्रभुत्वाच्च मकारार्धेनानेनात्मनैकीकुर्यात् ॥ २ ॥**

एवं देवैरुक्तः प्रजापतिः **तथेति** तदुक्तमङ्गीकृत्य पुनरपि भवतो विज्ञापयिष्यामि इति वक्ष्यमाणप्रकारेणाह—**अजत्वादित्यादि** हेतुभिः। **अजत्वात्** प्रणवस्य मन्त्रराजस्य च जन्मरहितत्वात्, "ओङ्कारस्य तु नित्यत्वात् नाञ्जसोत्पत्तिरिष्यते" इति वार्तिककारोक्तेः। ओङ्काराग्रतया विद्योतमानतुर्यतुरीयं ब्रह्मैव सत्यं निष्प्रतियोगिकाजत्वात्, यन्नैवं तन्नैवं यथा घटः। एवं वक्ष्यमाणहेतवो यथायोगं व्याख्येयाः। **अमरत्वात्** मरणशून्यत्वात् **अजरत्वात्** जरारहितत्वात्। जनिमृतिजरानिराकरणतः स्थूलशरीरं अकारात्मा न भवतीत्युक्तम्। इदानीं सूक्ष्मशरीरस्य अनात्मत्वमाह—**अमृतत्वादिति** स्वापमहाप्रळयादावपि मरणशून्यत्वात्। **अभयत्वात्** भीहेतुद्वैताभावात्। **अशोकत्वात्** शोचनीयेष्टजनाभावात्। यस्मात् मृतिशोकमोहविशिष्टः सूक्ष्मदेहात्मा अकारात्मनः तद्विलक्षणत्वात् प्राण एवात्माऽस्तु इत्यत्र **अनशनायत्वात्** प्राणो ह्यशनायाधर्मकः अकारात्मा तु तद्विलक्षणः। तथा **अपिपासत्वात्**। लिङ्गशरीरस्य अनात्मत्वेऽपि सर्वकारणमव्याकृतमकारात्मा स्यादित्यत्र **अद्वैतत्वाच्च** द्वैतधर्मवदज्ञानमव्यक्तं अद्वैताकारात्मनः तद्विलक्षणत्वात्। **च**शब्दः असङ्गत्वादिसमुच्चायकः। अजाद्यात्मना **अकारेण** प्रणवप्रथममात्रारूपेण **इमं** **आनन्दात्मानमन्विष्य** आचार्योपदेशानुरोधेन अन्वालोचनं कुर्यात्। यथा अजादिहेतुना आत्मनः अकाररूपता तथा उत्कृष्टत्वादिहेतुना उकाररूपता स्यादित्याह—**उत्कृष्टत्वादिति**। यतः आत्मनः सर्वस्मादौत्कृष्ट्यम्। सर्वत्र उच्छब्दो निरतिशयोत्कृष्टत्वद्योतकः, समुच्चयार्थो वा, स्वातिरिक्तप्रपञ्चोत्पादकत्वात्। हेतुचतुष्टय(?)माह—**उत्प्रवेष्टृत्वात्** स्वसृष्टशरीरादावुत्कर्षेण प्रवेशकर्तृत्वात्, शरीरादेः सर्वव्यापृतिकर्तृत्वेन **उत्थापयितृत्वात्**, **उद्द्रष्टृत्वात्** शरीराद्यभिमानोत्कर्षतो विविधावलोक-

यितृत्वात्, समस्तभूतभौतिकादेरुत्कर्षेण **कर्तृत्वात्** **उदुत्पथवारकत्वात्** उन्मार्गनिवारकत्वात्, **उदुद्ग्रासत्वात्** सर्वग्रासेश्वरत्वात्, **उदुद्भ्रान्तत्वात्** जीवरूपेण अतस्मिंस्तद्भावारूढत्वात् **उदुत्तीर्णविकृतित्वाच्च** विकृतिः स्वाज्ञान-तत्कार्यं यत् स्वा[स्व]ज्ञानेन तीर्णं सोऽयं उदुत्तीर्णविकृतिः उकारात्मा तद्भावः तत्त्वं तस्मात् । उक्तहेत्वतिरिक्तहेतुसमुच्चयार्थः चकारः । **एवमुकारेणापि** **इममात्मानं** स्वप्रकाशं **परमं ब्रह्म** **नृसिंहमन्विष्याकारेण** **इममात्मानं** **उकारपूर्वार्धे** उकारस्योच्यमानस्य पूर्वार्धे पूर्वस्थानं पूर्वभागत्वेनोक्तं अकारं अनुष्टुभश्च पादद्वयार्धे **आकृष्य** असिंहमपि **सिंहीकृत्य** अनुष्टुप्पूर्वार्धेन तादात्म्यं गमयित्वा **उत्तरार्धेन** नृसिंहानुष्टुभ उत्तरपादद्वयरूपेण **तं** अकारात्मकं **सिंहं** सिंहानुष्टुभः प्रथमार्धे **आकृष्य** एकीकृत्य एकत्वमापादयेत् इति वक्ष्यमाणेनान्वयः। यथा अकारोकारावप्यात्मरूपौ तथा मकारोऽपीत्यत्र हेतुमाह---**महत्त्वादिति** । गुणतो वस्तुतश्च **महत्त्वात्** **महस्त्वात्** अमिततेजोरूपत्वात् चक्षुरादिवत् **मानत्वात्** स्वाविद्यातत्कार्यमुक्तत्वात् देवपरिवृढशंकररूपेण **महादेवत्वात्** सकलनियन्तृत्वेन **महेश्वरत्वात्** स्वातिरिक्तानृतजडदुःखग्राससच्चिदानन्दरूपेण **महासत्त्वात्** **महाचित्त्वात्** **महानन्दत्वात्** स्वातिरिक्तोपसंहारसमर्थत्वेन **महाप्रभुत्वाच्च** । चकारो निरतिशयत्वख्यापनार्थः । **मकारार्धेनानेन** सर्वप्रत्य-गभिन्नेन वस्तुतः तुर्यतुरीयेण **आत्मना एकीकुर्यात्** ॥ २ ॥

एकीकरणफलम्

**अशरीरो निरिन्द्रियोऽप्राणोऽतमाः सच्चिदानन्दमात्रः स स्वराड् भवति य एवं वेद ॥ ३ ॥**

एवं कर्तुः फलमाह---**अशरीर** इति । स्थूलशरीराभावात् । **निरिन्द्रियः** **अप्राणः** लिङ्गशरीरवैरळ्यात् । **अतमाः** कारणाज्ञानाभावात् । अनृतजड-दुःखात्मकस्थूलादिशरीरत्रयापह्नवतः **सच्चिदानन्दमात्रः** निष्प्रतियोगिकत्वात्, "सच्चिदानन्दमात्रोऽहमनुत्पन्नमिदं जगत्" इति श्रुतेः । **य एवं वेद सोऽयं** मुनिः स्वातिरिक्तं ग्रसित्वा स्वमात्रे राजत इति **स्वराट् भवति** ॥ ३ ॥

स्वात्मनः स्वराड्भावः

कस्त्वमिति । अहमिति होवाच । एवमेवेदं सर्वं तस्माद्‌हमिति सर्वाभिधानं तस्यादिरयमकारः स एव भवति सर्वं ह्ययमात्माऽयं हि सर्वान्तरो न हीदं सर्वमहमिति होवाचैव निरात्मकमात्मैवेदं सर्वं तस्मात् सर्वात्मकेनाकारेण सर्वात्मकमात्मानमन्विच्छेत् ॥ ४ ॥

स्वात्मनः स्वराड्भवनरूपाख्यायिकां दर्शयति—**कस्त्वमिति** । पूर्वं असुरशिशुपरित्राणनहेतोः स्तम्भादवतीर्णं स्वावतारकार्यसिद्ध्यनन्तरं भद्रासनारूढं दृष्ट्वा ब्रह्मादयो देवाः अत्यद्भुतदर्शनः **त्वं कः**? इति तैः एवं पृष्टो भगवान् केवलकृपयैव तेषां मन्त्रराजमुपदिशन् तच्चरमपदेन **अहमिति होवाच**। किमिति? **एवमिति** । स्वस्य सर्वात्मकत्वेन सर्वनामान्यवगच्छन् वस्तुतः स्वराडपि युष्मच्छब्दप्रतियोगिनं अस्मच्छब्दं प्रकटितवान्, यत् ब्रह्मादिस्तम्बान्तप्राणिजातेन अहंप्रत्ययाभ्यां व्यवह्रियते तदेवेत्यर्थः । **एवमेव** अनेन प्रकारेण **इदं सर्वं** उद्भूताहङ्कारं अनुद्भूताहंकारं च चेतनाचेतनात्मकं **सर्वाभिधानं** अहमित्यनेन शब्देन सर्वमभिधीयते। प्रकृते किं आयातं इत्यत आह—**तस्येति**। **तस्य** प्रजापत्युच्चारितानुष्टुबन्ताहंपदस्य **आदिः** प्रथमो वर्णः **अकारः** स एव स्वराड् भवति । अकारस्य सर्ववाग्व्याप्त्या सर्वरूपत्वमस्तु नत्वात्मत्वं इत्यत आह—**सर्वं ह्ययमात्मेति** । आत्मत्वेऽपि प्रत्यक्त्वं कुतः? इत्यत आह—**अयमिति** । **हि** यस्मात् **अयं सर्वान्तरः** प्रत्यक्तमः इत्यर्थः । एकस्य सर्वरूपत्वं सर्वप्रत्यक्तमत्वं च विरुद्धं इत्यत आह—**न हीति**। हि यस्मात् **इदं** भूतभौतिकप्रपञ्चजातं **न निरात्मकं** किंतु **अहमिति होवाच** न मत्तोऽन्योऽनात्मप्रपञ्चोऽस्ति । यत एवं अतः सर्वात्मत्वं सर्वप्रत्यक्त्वं अविरुद्धमित्यर्थः । इदं सर्वं आत्मा चेति द्वैतापत्तिः स्यादित्यत आह—**आत्मैवेदं सर्वमिति** । रज्ज्वतिरिक्तसर्पाभाववत् मदतिरिक्तसर्वं नास्तीत्यर्थः । उक्तार्थं स्मारयति—**तस्मादिति** । यस्मादकारः सर्वात्मा **तस्मात् सर्वात्मकेनाकारेण** सर्ववागात्मना स्वाङ्गदृष्टिप्रसक्त**सर्वात्मकमन्विच्छेत्** ॥ ४ ॥

आत्मातिरेकेण ब्रह्मासत्त्वम्

ब्रह्मैवेदं सर्वं सच्चिदानन्दरूपं सच्चिदानन्दरूपमिदं सर्वं सद्धीदं सर्वं सत् सदिति चिद्धीदं सर्वं काशते प्रकाशते चेति ॥ ५ ॥

आत्मातिरेकेण ब्रह्मणः सत्त्वात् कथं सर्वात्मकः आत्मा इत्यत आह— **ब्रह्मैवेदं सर्वमिति** । न हि ब्रह्मातिरेकेण आत्माकारादिरस्तीत्यर्थः । प्रधानवत् ब्रह्म जगत्कारणं इत्यत आह—**सच्चिदानन्दरूपमितीति** । न हि तत् प्रधानवत् जगत्कारणं, किं तु एकमेवाद्वितीयं स्वातिरिक्तजगद्वैरळ्यात् । अनृतजडदुःखात्मकजगत्प्रतीतौ सत्यां तद्विपरीतब्रह्म नास्तीत्यत आह—**सच्चिदानन्दरूपमिदं सर्वमिति** । यो जगदनृतजडदुःखात्मकं पश्यति तस्य तद्धेतुस्वाज्ञानापाये पूर्वमिदन्त्वेन यदनुभूतं तत् सर्वं सच्चिदानन्दरूपमेव भवतीत्यर्थः । **हि** यस्मात् **सद्धीदं सर्वम्** । तदेव प्रपञ्चयति—**सत्सदिति** । व्यभिचरदपि घटादिवस्तुजातं तद्गतसत्ता न हि व्यभिचरति, इदं सत् इदं सत् इति प्रतीतेः । जगतः सद्रूपता अस्तु, तस्य जडत्वेन चिद्रूपता कुतः ? इत्यत आह—**चिद्धीदं सर्वमिति** । **हि** यस्मात् इदं सर्वं चैतन्यरूपम् । तत्र हेतुः—**काशते प्रकाशते चेति** । यदि सत्ता न प्रतीयेत ततः असदेव स्यात् , सन् घटः प्रतीयते इति प्रतीतेः सार्वजनीनत्वात् । चशब्दः समुच्चयार्थः ॥ ५ ॥

सच्चिदानन्दानुभवप्रकाशः

किं सदिति । इदमिदं नेत्यनुभूतिरिति ॥ ६ ॥

कैषेति । इयमियं नेत्यवचनेनैवानुभवन्नुवाच । एवमेव चिदानन्दावप्यवचनेनैवानुभवन्नुवाच । सर्वमन्यदिति स परमानन्दस्य ब्रह्मणो नाम ब्रह्मेति तस्यान्त्योऽयं मकारः स एव भवति तस्मान्मकारेण परमं ब्रह्मान्विच्छेत् ॥ ७ ॥

सत् सत् इति सत्ता व्यवस्थाप्यते, न हि तत्रानुभवो निसर्गो भवितुमर्हति इति मन्वानाः पृच्छन्ति—**किं सत्** इति। यदुक्तं सत् सत् इति तत् किं? न हि सत् इति वक्तुं शक्यं सत्ताऽनुभवस्य असार्वत्रिकत्वात् सत्तामन्तरेण घटप्रतीतेः। **इति**शब्दः प्रश्नसमाप्त्यर्थः। उत्तरमाह—**इदमिदं नेत्यनुभूतिरिति**। घटोऽयं पटोऽयं इति द्विधा प्रतीतिः। यद्वा—यदिदं परिदृश्यमानं प्रपञ्चजातं तदिदं न किंतु अनिदंरूपं इत्याचार्योपदेशजैव अनुभूतिः, स्वरूपचैतन्यरूपा सा सत्येति शेषः। इतीत्युत्तरपरिसमाप्तौ ॥ ६ ॥ इदानीमनुभूतिं पृच्छन्ति—**कैषेति**। एषा अनुभूतिः भवतोच्यमाना न तावत् जायमाना, तथात्वे घटवद-नित्यत्वापत्तेः, प्रतीत्यर्हत्वात् जायमाना वा सा **का**। **इति** प्रश्नसमाप्तौ। प्रश्नोत्तरं प्रजापतिराह—**इयमियं नेति**। यत्र या काचन अनुभूतिः विविधभेदगर्भिणी भवद्भिरनुभूता सा कदाऽपि नेतीति **अवचनेनैव** आकारेङ्गितादिभिः **अनुभवन्** आत्मसाक्षात्कारं कुर्वन् ब्रह्मानन्दाश्रूणि मुञ्चन् निरुत्तरेणोत्तरं **उवाच**, सर्वापह्नवसिद्धब्रह्ममात्रानुभूतेः वाचा वक्तुमशक्यत्वात्। यथा सत्तोक्ता तथा चिदानन्दावपि उक्तवानित्याह—**एवमिति**। यथा सत्ताऽनुभूतिरवचनेनोक्ता **एवमेव चिदानन्दावपि अवचनेनैव अनुभवन्नुवाच** यथा सच्चिदानन्दान-वचनेनानुभवन्नुवाच तद्वत् स्वयंप्रकाशत्वादिधर्मान् देवैरपृष्टानप्युक्तवान् इत्याह—**सर्वमिति**। **सर्वमन्यदपि** देवैः पृष्टं अपृष्टं अवचनेनैव आत्मत्वेन अनुभवन्नुवाच। किमिति? **स** प्रजापतिः **परमानन्दस्य ब्रह्मणो नाम** नामधेयं **ब्रह्मे**त्यत्र **अन्त्यवर्णो मकारः स एव** परमानन्दब्रह्मरूपो **भवति**। यस्मात् एवं **तस्मात् मकारेण परमं** गुरूपदेशमार्गेण **अन्विच्छेत्** ॥ ७ ॥

ब्रह्मयाथात्म्यनिरूपणम्

**किमिदम्। एवमित्यकार इत्येवाहाविचिकित्सन्नकारेणेम-मात्मानमन्विष्य मकारेणानुसंदध्यादुकारेणाविचिकित्सन्नशरीरो-ऽनिन्द्रियोऽप्राणोऽतमाः सच्चिदानन्दमात्रः स स्वराड् भवति य एवं वेद ॥ ८ ॥**

ब्रह्म वा इदं [1]सर्वमत्तृत्वादुग्रत्वाद्वीरत्वान्महत्त्वाद्विष्णुत्वाज्ज्वलत्त्वात् सर्वतोमुखत्वान्नृसिंहत्वाद्भीषणत्वाद्भद्रत्वान्मृत्युमृत्युत्वान्नमामित्वादहंत्वादिति सततं ह्येतद्ब्रह्मोग्रत्वाद्वीरत्वान्महत्त्वाद्विष्णुत्वाज्ज्वलत्त्वात् सर्वतोमुखत्वान्नृसिंहत्वाद्भीषणत्वाद्भद्रत्वान्मृत्युमृत्युत्वान्नमामित्वादहंत्वादिति ॥ ९ ॥

तस्मादकारेण परमं ब्रह्मान्विष्य मकारेण मनआद्यवितारं मनआदिसाक्षिणमन्विच्छेत् ॥ १० ॥

पुनरिदानीं देवाः ब्रह्मयाथात्म्यजिज्ञासवः पृच्छन्ति—**किमिदमिति** । वाङ्मनसातीतं **इदं** ब्रह्मैव अनेकप्रकारेण अवगम्य **किमित्यनेन** प्रकारेण पप्रच्छुरिति शेषः । तैः एवं पृष्टः प्रजापतिः अरे बुद्धिशून्यदेवसमूह इति हीनसंबोधनेन देवान् संबोध्य तत्प्रश्नमङ्गीकुर्वन् **इत्येवमाह** । किमिति ? न हि सच्चिदानन्दमात्रे ब्रह्मणि स्वाज्ञानमन्तरेण कश्चन व्यवहारोऽस्ति । ततो मया पूर्वमविद्याऽतीतवस्त्वपेक्षया मौनेन स्थितं, अविद्याऽपेक्षया तु मकारेण अवगम्यते इत्युक्तम् । यत एवं अतः न पूर्वोत्तरविरोध इत्यनेन प्रकारेण **अविचिकित्सन** अवोचं, अतो मया एवं वाङ्मनसातीतं ब्रह्म अवचनेनोक्तं, तत् कथं इदानीं मकारेण अवगम्यमिति विरुद्धमुक्तमिति संशयं कुर्वन् विद्याऽविद्याविषयतयाऽविरुद्धं उभयमपीत्यर्थः । तस्मात् यतोऽविद्यादशायां अनेकसाधनव्यपेक्षया ब्रह्मावगतिः भवितव्या खलु तत्र त्वंपदार्थशुद्धिकारिणा [**अकारेण**] **इमं आनन्दात्मानं** आचार्यमुखतो**ऽन्विष्य** तत्पदार्थशुद्धिकारिणा **मकारेण** प्रत्यगभिन्नं ब्रह्म **अनुसंदध्यात्** अनुसंधानं कुर्यात् अकारमकारयोः संधानहेतुना **उकारेणाविचिकित्सन्** सन्देहमकुर्वन् । एवं अकारमकारयोः उकारः सन्धिः इति ऐक्यं जानतः फलमाह—**अशरीर** इत्यादि **य एवं वेद** इत्यन्तं व्याख्यातम् ॥ ८ ॥ मकारतो ब्रह्मावलोकनोपपत्तिमाह—**ब्रह्म वा इदं सर्वमिति** । कुतः ?

[1] सर्वं मन्तत्वा—अ, अ १, क.

स्वविकल्पितजगं(त् अत्र ?) [तः अत्तृत्वात्] तत्र हेतुः—**उग्रत्वात्** उद्ग्राहकत्वात् जगतः सृष्टिस्थितिसंहारकर्तृत्वात् इत्यर्थः। तत्र हेतुः—**वीरत्वात्** जगद्विरमणहेतुत्वात्। प्रौढत्वेन **महत्त्वम्**। तत्र हेतुः—**विष्णुत्वात्**। व्यापकाकाशवत् जडता स्यादित्यत आह—**ज्वलत्त्वादिति**। स्वतेजसा दीप्तस्य जडत्वानुपपत्तेः। ज्वलदग्निवत् परिच्छिन्नं स्यात् इत्यत आह—**सर्वतोमुखत्वादिति**। विराट्त्वेऽपि सर्वोपसंहारकता कुतः? इत्यत आह—**नृसिंहत्वात्**। पुरुषत्वे सति सिंहत्वात्। तत्र हेतुः—**भीषणत्वादिति**। सिंहस्य पश्यद्भीतिजनकत्वात्। भीजनकत्वेन अभद्रता स्यादित्यत आह—**भद्रत्वादिति**। मङ्गळैकस्वरूपत्वात्। तथात्वेऽपि संहारकर्तृता कुतः? इत्यत आह—**मृत्युमृत्युत्वादिति**। स्वाज्ञानमेव मृत्युः, तस्यापि मारकत्वात्। स कथं स्थितिकर्ता भवति? अत आह—**नमामित्वादिति**। सर्वनमस्कार्यत्वात्। तथा च जातानुकम्पो भगवान् प्राण्यनुग्रहार्थं स्थितिं करोतीत्यर्थः। किं स्वभेदेन तान् पश्यन् हितं करोतीत्यत आह—**अहन्त्वादिति**। सर्वेषां आत्मरूपत्वादित्यर्थः। **इत्येतैः** कारणैः **सततं एतद्ब्रह्म** परमानन्दरूपं मकारावगम्यम्। तत्र पूर्वोक्तहेतूनुपन्यस्यति—**उग्रत्वादि**त्याद्यहंत्वादित्यन्तं व्याख्यातम्। ब्रह्मणोऽनुष्टुबात्मत्वं वक्तुं एकादशपदानि द्वादशधा विभज्य पूर्वं इदानीं च हेतुत्वेनोक्तानि इत्यवगन्तव्यम् ॥ ९ ॥ यस्मादेवं **तस्मात्** त्वंपदार्थाभिधायिना [**अकारेण**] **परमं ब्रह्म अन्विष्य** तत्पदार्थाभिधायिना **मकारेण च मनआद्यवितारं** मनआदिकरणग्रामरक्षितारं **मनआद्यसङ्गोदा**सीनतया तद्वृत्तिसहस्रभावाभावसाक्षिणं **अन्विच्छेत्** ॥ १० ॥

ब्रह्मात्मैक्यज्ञानविधानम्

**स यदैतत् सर्वमपेक्षते तदैतत् सर्वमस्मिन् प्रविशति स यदा प्रतिबुध्यते तदेतत् सर्वमस्मादेवोत्तिष्ठति ॥ ११ ॥**

**तदेतत् सर्वं निरूह्य प्रत्यूह्य संपीड्य संज्वाल्य संभक्ष्य स्वात्मानमेवैषां ददाति ॥ १२ ॥**

अत्युग्रोऽतिवीरोऽतिमहानतिविष्णुरतिज्वलन्नतिसर्वतोमुखोऽतिनृसिंहोऽतिभीषणोऽतिभद्रोऽतिमृत्युमृत्युरतिनमाम्यत्यहं भूत्वा स्वे महिम्नि सदा समासत ॥ १३ ॥

तस्मादेनमकारार्धेन परेण ब्रह्मणैकीकुर्यादुकारेणाविचिकित्सन्नशरीरो निरिन्द्रियोऽप्राणोऽतमाः सच्चिदानन्दमात्रः स स्वराड् भवति य एवं वेद ॥ १४ ॥

तदेष श्लोकः—

श्रृङ्गं श्रृङ्गार्धमाकृष्य श्रृङ्गेणानेन योजयेत् ।
श्रृङ्गमेनं परं श्रृङ्गे तमनेनापि योजयेत् ॥ १५ ॥

**सः** त्वंपदार्थः तत्पदार्थो वा अध्यात्मं अधिदैवं वा **यदा** यस्मिन् काले **एतत्** परिदृश्यमानं **सर्वं** स्वापप्रळयाद्यवसरे **उपेक्षते तदा** तस्मिन् काले **एतत् सर्वं अस्मिन्नेवात्मनि** रज्जौ सर्पवत् **प्रविशति । स यदा प्रतिबुध्यते** नित्यादिप्रळयादिभ्यः उत्थितो भवति **तदैतत्सर्वं अस्मादेवोत्तिष्ठति** ॥ ११ ॥ **तदेतत्सर्वं** निरुह्य निःशेषेण आत्मसाच्चिकीर्षुः वहनं कृत्वा **प्रत्यूह्य** संभूतिवैपरीत्येन वहनं कृत्वा **संपीड्य** सम्यक्परिच्छेदनिर्गमनेन पीडयित्वा **संज्वाल्य** आत्मज्ञानेन सम्यक् पाचयित्वा **संभक्ष्य** स्वावशेषं कबळयित्वा **स्वात्मानं** स्वस्वरूपं **एषां** आत्मवेदिनां स्वज्ञानां **ददाति** ॥ १२ ॥ ब्रह्माभिन्नानुष्टुप्प्रवेशार्थमावृत्तिः स्यादित्यत्र सर्वातीतत्वं विशेष इत्याह—**अत्युग्रः** उग्रोपाधिमतीत्य वर्तमानत्वात् । **अतिवीरः** इत्यादि समानम् । **अत्यहं भूत्वा** अस्मत्प्रत्ययकलनामपि ग्रसित्वा **स्वे महिम्नि** स्वावशेषतया **समासते** पुनरावृत्तिशून्यतया आसनं कुर्वते । प्राप्यस्यैकत्वं प्रापकस्य बहुत्वं, उग्रादिष्वेकवचनत्वेऽपि क्रियापदे बहुवचनमविरुद्धम् ॥ १३ ॥ उक्तार्थं अर्थप्राधान्येन निगमयति—**तस्मादिति** । यस्मात् उग्रादिरूपोऽयमात्मा मुक्तप्राप्यः **तस्मात् एनं** आनन्दात्मानं **अकारार्धेन ब्रह्मणा** एकीकुर्यात् एकतां

नयेत् । उकारेण अविचिकित्सन् अशरीरो निरिन्द्रियोऽप्राणोऽतमाः सच्चिदानन्दमात्रः सः स्वराट भवति य एवं वेद इत्युक्तार्थम् ॥ १४ ॥ तत् तस्मिन् उक्तार्थे एष श्लोको मन्त्रो भवति । शृङ्गं अकारं शृङ्गार्धं मकारं च आकृष्य अकारमकारघटकेनोकारेण शृङ्गेणानेन योजयेत् तादात्म्यं नयेत् । पुनः शृङ्गं उकाराख्यं एनं अकारमकारयोः संबन्धघटकं मकाराख्ये परे शृङ्गे परे ब्रह्मणि तं मकाराभिधानं शृङ्गं अनेन संबन्धघटकेन अकारेण अपि संयोजयेत् तादात्म्यं नयेत् इत्यर्थः ॥ १५ ॥

इति सप्तमः खण्डः

---

## अष्टमः खण्डः

तुर्यमात्रायाः ओतत्वम्

अथ तुरीयेणोतश्च प्रोतश्च ह्ययमात्मा नृसिंहोऽस्मिन् सर्वमयं सर्वात्माऽयं हि सर्वं नैवातोऽद्वयो ह्ययमात्मैकल एव विकल्पो न हि वस्तु सदयं ह्योत इव सद्घनोऽयं चिद्घन आनन्दघन एवैकरमोऽव्यवहार्यः केन च न द्वितीय ओतश्च प्रोतश्चैष ओंकारः ॥ १ ॥

एवं नैवमिति पृष्ट ओमित्येवाह वाग्वा ओंकारो वागेवेदं सर्वं न ह्यशब्दमिवेहास्ति चिन्मयो ह्ययमोंकारश्चिन्मयमिदं सर्वं तस्मात् परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयमेतद्ब्रह्माभयं ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यम् ॥ २ ॥

ब्रह्म विद्यादशायां अकारादिमात्रात्रयेण अवगन्तुं शक्यं इत्युक्त्वा तथा इदानीं तुर्यमात्रयाऽपि तुर्यतुर्यब्रह्म अवगन्तुं शक्यं इति वक्तुं खण्डिकेयमारभ्यते— **अथेति** । अथ अकारादिमात्रात्रयकथनानन्तरं तुर्यमात्रयाऽपि तुर्यः प्राप्यते इति शेषः । **तुर्येण** तुर्यमात्रारूपप्रणवेन **ओतश्च प्रोतश्च**—यथा पटः तन्तुभिः ओतः प्रोतः आतानवितानात्मकैः—एवं आङ्पूर्वाद्वेञः क्तप्रत्यये संप्रसारणे ओतः इति रूपं—ओतश्च प्रोतश्चेति चकारद्वयतः तुर्यस्याकारादिचतुर्मात्राव्यापकत्वं द्योत्यते । **हि** यस्मात् **अयमात्मा** त्वंपदार्थो **नृसिंहः**, तस्मिन् तुर्ये **नृसिंहाश्रये सर्वं** भेदजातं विकल्पितं, **अयं** तुरीयः **सर्वात्मा**, तत्र हेतुः—**हि** यस्मात् **अयं** तुरीयः **सर्वं**, सर्वस्य स्वविकल्पितत्वात् । **नैव** तुरीयः सर्वस्मिन् प्रतिष्ठितः, स्वातिरिक्तसर्वस्य अवस्तुत्वात् । यतः स्वातिरिक्तं सर्वं नास्ति **अतोऽद्वयो ह्ययमात्मा** । हिशब्दतः सर्वात्मनो न ह्याधेयाधारभावोऽस्तीति द्योत्यते । तत्र हेतुः **एकलः** इति, सर्वविलयाधिकरणत्वात् । एकल एवेत्यवधारणतः स्वातिरिक्तभेदो नास्तीति द्योत्यते । भेदोऽपि दृश्यत इति चेत्—न, भेदस्यासत्त्वात् अधिष्ठानज्ञान**विकल्पो** हि भेदः न हि वस्तुसत्, भेदस्य अवस्तुत्वेनासत्त्वात् । कुतो विकल्पस्यासत्त्वं ? इत्यत आह—**अयमिति** । **अयमुक्तो** भेदविकल्पः यस्मात् **ओतः इव** भातः वस्तुतो न ह्योतः, स्वज्ञानावधिकत्वात् । स्वज्ञानतो विकल्पक्षयतः तुर्यस्य सच्चिदानन्दमात्रावशेषतामाह— **सद्घन** इति, सत्तामात्रत्वात् । **अयं** तुरीयः **चिद्घनः** जडसामान्यप्रासाजडत्वात्, **आनन्दघनः** अखण्डानन्दस्वरूपत्वात् । सच्चिदानन्दतो भेदः स्यादित्यत्राह— **एकरस** इति । सच्चिदानन्दानां अखण्डैकरसत्वात् । अत एव केन च वाङ्मनसादिनाऽपि **अव्यवहार्यः** अनिदंस्वरूपत्वेन व्यवहर्तुं अशक्यत्वात् । तत्र हेतुः—**न द्वितीयः** अद्वितीयः द्वितीयवस्तुनो मृग्यत्वात् । पटे तन्तुवत् **ओतश्च प्रोतश्च** । चकारौ कार्यस्य कारणानन्यत्वं अवास्तवत्वं चाहतुः । **एष तुरीयोङ्कारः** ॥ १ ॥ अर्धमात्राप्रणवः कथं निर्विशेषत्वं तुर्योङ्कारत्वं भजतीति पृच्छन्ति—**एवं नैवमिति** । सच्चिदानन्दरूपं तद्विपरीतं कथं प्रणवरूपं इति देवैः पृष्टः स प्रजापतिः नित्यानित्यरूपेण उत्तरमुक्तवान् इत्याह—**ओमित्येवा-**

**हेति** । ओं वाचा मनसा च व्याह्रियमाणं तुरीयं ओङ्कारस्वरूपं निर्विशेषतया सच्चिदानन्दमेकरसं, ततः एवं नैवं "तुर्यं वाचो मनुष्या वदन्ति" इति तुर्योङ्काररूपं उभयमप्यविरुद्धं इत्युक्तवान् । वर्णात्मकोऽयमोङ्कारः न तुर्यरूपः इत्यत आह—**वागिति** । **वाग्वा** वर्णध्वनिरूपिणी वागेव **ओङ्कारः** तुर्यप्रणवः । वाचो नामधेयमात्रत्वं न सर्वानुस्यूतत्वं, तत्राह—**वागेवेदं सर्वमिति** । तत्र हेतुः **नह्यशब्दमिवेहास्ति** हि यस्मात् इह अस्मिन् संसारमण्डले किमपि रूपधेयं कर्मधेयं वा अशब्दमिव नास्ति । किं तु नामधेयमिव । इवशब्दतः तुर्येतरप्रपञ्चस्य अवास्तवत्वं द्योत्यते । वाङ्मात्रस्य तुर्यता कथं? इत्यत आह—**चिन्मयो ह्ययमोङ्कारश्चिन्मयमिदं सर्वमिति** । ओङ्कारः चिन्मयः चिद्रूपः । चिद्रूपस्य जगद्रूपता कुतः? इत्यत्र वस्तुतो मृदतिरिक्तघटाभाववत् चिद्विकल्पितं सर्वं जगच्चिन्मयमेव, न हि चिद्रूपादतिरिक्तमस्ति इत्यत्र—"यथैव मृन्मयः कुंभस्तद्वद्देहोऽपि चिन्मयः" इति श्रुतेः । यस्मात् चिदेव सर्वं **तस्मात् परमेश्वर एव** तुर्यः नत्वन्यः कश्चिदस्ति । यतः एवं अतः सच्चिदानन्दरूपं तुर्यचैतन्यं **एकमेव तत् भवति** । अत एव **एतदमृतं** अमरणधर्मित्वात् **अभयं** भयकारणद्वैताभावात् **एतद्ब्रह्म** भूमरूपेण बृंहितत्वात् । तत्प्रसिद्धमित्याह—**अभयं वा** इति । एवं ज्ञानफलमाह—**अभयं हीति** । **इति** उक्तप्रकारेण **रहस्यं** अतिगोप्यमुक्तम् ॥ २ ॥

तुर्यमात्रायाः अनुज्ञातृत्वम्

**अनुज्ञाता ह्ययमात्मैष ह्यस्य सर्वस्य स्वात्मानमनुजानाति न हीदं सर्वं स्वत आत्मवि[व]न्न ह्ययमोतो नानुज्ञाताऽसङ्गत्वादविकारित्वादसत्त्वादन्यस्यानुज्ञाता ह्ययमोंकार ओमिति ह्यनुजानाति वाग्वा ओंकारो वागेवेदं सर्वमनुजानाति चिन्मयो ह्ययमोंकारश्चिद्धीदं सर्वं निरात्मकमात्मसात्करोति तस्मात् परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यम् ॥ ३ ॥**

ओतत्वमुक्त्वा तुर्यानुज्ञातृत्वमाह—**अनुज्ञातेति** । व्याख्यातम् । अनुज्ञातृत्वे हेतुः—**एष तुरीयः हि** यस्मात् **अस्य** उपलभ्यमानस्य **सर्वस्य स्वात्मानमनुजानाति** अनुज्ञां प्रयच्छति । **न हीदं सर्वं स्वतः आत्मवि[व]त्**, सर्वस्य स्वात्मसत्ताऽतिरेकेण पृथक् सत्ताऽभावात् । वस्तुतः किं तुर्योऽनुज्ञाता चेत्यतः आह—**नह्ययमिति** । वस्तुतः ओतृत्वानुज्ञातृत्वाभावे हेतुमाचष्टे—**असङ्गत्वादिति** । असङ्गत्वे हेतुः **अविकारित्वात्** विकारवद्धि वागादि [1]तमनुजानाति । एवं असङ्गाविकारित्वाभ्यां स्वतः ओतृत्वानुज्ञातृत्वाभावेऽपि स्वातिरिक्तं वास्तवमस्त्वित्याह—**असत्त्वादिति** । स्वातिरिक्ततया **अन्यस्य** द्वैतस्य शशविषाणवदविद्यमानत्वात् । यथोङ्कारस्योतत्वं तथाऽनुज्ञातृत्वमपीत्याह—**अनुज्ञातेति** । कथं ओंकारस्य अनुज्ञातृत्वं तत्राह—**ओमिति ह्यनुजानातीति** । यस्मादिदं करोमि इत्यादि पृष्टः ओमित्यनुज्ञां ददाति । ओङ्कारस्य स्वार्थचैतन्यरूपेण अनुज्ञातृत्वमित्याह—**चिद्धीदं सर्वं निरात्मकं आत्मसात्करोति** निरात्मकं सत्ताशून्यं आत्मसत्ताप्रदानेन आत्मसात् आत्माधीनं करोति । तदधीनवचन इत्यनुवृत्तौ "विभाषा साति कात्स्न्र्ये" इति सातिप्रत्ययः । यस्मादेवं **तस्मात् परमेश्वर एवैकमेव तत् भवति एतदमृतमभयं एतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यमिति** व्याख्यातम् ॥ ३ ॥

तुर्यमात्रायाः अनुज्ञैकरसत्वम्

अनुज्ञैकरसो ह्ययमात्मा प्रज्ञानघन एवायं यस्मात् सर्वस्मात् पुरतः सुविभातोऽतश्चिद्घन एव न ह्ययमोतो नानुज्ञातैतदात्म्यं हीदं सर्वं सदैवानुज्ञैकरसो ह्ययमोंकार ओमिति ह्येवानुजानाति वाग्वा ओंकारो वागेव ह्यनुजानाति चिन्मयो ह्ययमोंकारश्चिदेव ह्यनुज्ञाता तस्मात् परमेश्वर एवैकमेव तद्भवत्येतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यम् ॥ ४ ॥

[1] कमनु—उ १.

कथं ओङ्कारस्य अनुज्ञारूपत्वं इत्यत आह—**अनुज्ञैकरस** इति। तत्र हेत्वर्थं प्रकटयति—**प्रज्ञानघन** इति। तदेवोपपादयति—**यस्मादिति**। **यस्मात्** अस्मात् स्वातिरिक्तात् **सर्वस्मात्** स्वाज्ञादिदृष्ट्या विद्यमानादविद्यमानाद्वा। **पुरत** इति कालत्रयोपलक्षणार्थम्। कालत्रयेऽपि स्वयंप्रकाशात्मना **सुविभातः**। **अतोऽस्मात्** कारणात् **चिद्घन एव** चैतन्यमात्रत्वात्। **नह्ययमोतो नानुज्ञाता** ओतृत्वानुज्ञातृत्वनिराकरणतोऽनुज्ञाऽपि निराकृता स्यादित्यर्थः। स्वातिरेकेण न किंचिदस्ति स्वयमेव सर्वमित्यत्र हेतुमाह—**ऐतदात्म्यं हीदं सर्वमिति**। **ऐतदात्म्यं** इत्यत्र बहुव्रीह्युत्तरं भावप्रत्ययः ष्यङ्, न तु कर्मधारयोत्तरं, एष आत्मा यस्य जगतः तदेतदात्मा तद्भावः ऐतदात्म्यं **इदं सर्वम्**। हेत्वर्थमाह—**सदेवेति**। सद्व्यतिरेकेण असदभावात्, सर्वं सदेव नत्वन्यत्। **अनुज्ञैकरसो ह्ययं ओङ्कारः ओमिति ह्येवानुजानाति** इत्यादि **रहस्यमित्यन्तमुक्तार्थम्** ॥ ४ ॥

तुर्यमात्रायाः अविकल्पत्वम्

अविकल्पो ह्ययमात्माऽद्वितीयत्वादविकल्पो ह्ययमोंकारोऽद्वितीयत्वादेव चिन्मयो ह्ययमोंकारस्तस्मात् परमेश्वर एवैकमेव तद्भवत्यविकल्पोऽपि नात्र काचन भिदाऽस्ति नैव तत्र काचन भिदाऽस्त्यत्र हि भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोति तदेतदद्वयं स्वप्रकाशं महानन्दमात्मैवैतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यम् ॥

इदानीमविकल्पत्वमाह—**अविकल्प** इति। अविकल्पत्वे हेतुः—**अद्वितीयत्वादिति**। ओङ्कारस्याप्यविकल्पत्वमाह—**अविकल्प** इति। स्वाधिष्ठानचैतन्ययोगतः ओङ्कारस्य अद्वितीयत्वमाह—**चिन्मय** इति। वस्तुतः अविकल्पानविकल्पजातमविकल्परूपमित्याह—**अविकल्प** इति। सर्वमविकल्पाविकल्पतुर्यतुरीयमित्यर्थः। कथमेवमित्यत आह—**नात्र काचन भिदाऽस्तीति**।

**नैव तत्र** अविकल्पाविकल्पे तुर्यतुर्ये अविकल्पत्वादिधर्मः कोऽप्यस्ति तुर्यतुर्यस्य निष्प्रतियोगिकाविकल्पाविकल्परूपत्वात् । येन येन हेतुना त्वया भेद उच्यते तेन तेन हेतुना मया भेद एव अवगम्यते इत्यत आह—**अत्रेति** । अत्र अस्मिन् अविकल्पाविकल्पे तुर्यतुर्ये तदतिरेकेण जाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तकलना सत्यत्वेन व्यावहारिकत्वेन प्रातिभासिकत्वेन वा न हि काचन भिदाऽस्ति । चकारतस्तुर्यतुर्यस्य निष्प्रतियोगिकता द्योत्यते । तथाविधे **अत्र** यः कोऽपि **भिदामिव मन्यमानः** आभासतोऽपि मन्वानः **शतधा सहस्रधा भिन्नो** विशकलितमतिर्भूत्वा **सोऽयं** जन्तुः **मृत्योः** संसारात् पुनः **मृत्युं** संसारं **आप्नोति** प्रतिजन्मायं नीचर्नीचतरनीचतमयोनिमधिगच्छतीत्यर्थः । **तदेतदद्वयं** अपह्नोतव्यद्वैतकलनाविरळं **स्वप्रकाशं** चिन्मात्रं **महानन्दं** अपरिच्छिन्नानन्दकूटं **आत्मैव** स्वमात्रमेव न त्वन्यत् **एतदमृतमित्यादिरहस्यमित्यन्तं** व्याख्यातम् ॥ ९ ॥

इत्यष्टमः खण्डः

---

## नवमः खण्डः

अद्वयात्मजिज्ञासा

देवा ह वै प्रजापतिमब्रुवन्निममेव नो भगवन्नोंकारमात्मान-
मुपदिशेति ॥ १ ॥

एवंरूपनिष्प्रतियोगिकतुर्यतुर्यात्मनि भेदबुद्धिनिमित्तं किमिति तदियत्ताप्रतिपिपित्सया देवाः पुनः पृष्टवन्तः इत्याह—**देवा** इति । **देवा ह वै प्रजापतिमब्रुवन्** इति व्याख्यातम् । यज्जाग्रज्जाग्रदादिचतुष्पञ्चदशकलनापह्नवसिद्ध

इममेवोङ्काराप्रविद्योतं तुर्यतुर्यं आत्मानमुपदिशेति हे भगवन् नोऽस्मभ्यं कृपया अनुग्रहं कुर्वित्यर्थः ॥ १ ॥

अद्वयात्मस्वरूपम्

तथेत्युपद्रष्टाऽनुमन्तैष आत्मा नृसिंहश्चिद्रूप एव । अविकारो ह्युपलब्धः सर्वस्य सर्वत्र न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयः ॥ २ ॥

निर्विशेषविशेषनिमित्तबुभुत्सुभिः देवैः एवं पृष्टः प्रजापतिः तेषां प्रश्नमङ्गीकृत्य **तथेत्याह** । **उपद्रष्टेति**--स्वसामीप्येन स्वातिरिक्तेयत्तां स्वमात्रतया यः पश्यति सोऽयं **उपद्रष्टा** । कथमयमुपद्रष्टा इत्यत आह—**अनुमन्तेति** । **अनुमन्ता** स्वातिरिक्तं किमपि नेतीत्यनुमोदयितेत्यर्थः । कोऽयमेवंविधः इत्यत्र--योऽयं निष्प्रतियोगिकाविकल्पतया प्रसिद्धः स **एष** तुर्यतुर्यात्मा **नृसिंहः** स्वातिरिक्तभ्रमासुरहिंसकत्वात् । तस्य सविशेषत्वाशंकायां अयं **चिद्रूप** एव चिन्मात्रत्वात् । उपद्रष्ट्रादित्वे विकारित्वं स्यात् इत्यत आह—**अविकार** इति । स्वातिरिक्तं नेतीत्युपद्रष्टुः अनुमन्तुः सर्वविकारास्पृष्टब्रह्मरूपत्वात् । यद्वा—स्वविकल्पित**सर्वस्योपलब्धिः** तदियत्तादृष्टिः अविकारः इत्यर्थः, तत्र आत्मात्मीयाभिमानाभावात् । आत्मात्मीयभावास्पदस्वातिरिक्तमेव नास्तीत्याह—**न हीति** । देशकालाद्यवच्छेदेन **सर्वत्र न ह्यस्ति द्वैतसिद्धिः** सर्वस्याद्वैतात्मकत्वात् । द्वैतासिद्धौ न कोऽपि सिद्धिपदं भजतीत्यत आह—**आत्मैवेति** । आत्मसिद्धेः अनात्मापह्नवपूर्वकत्वात् । यतः एवं अतः अयमात्मा निष्प्रतियोगि**काद्वितीयः** परमाद्वैतत्वात् ॥ २ ॥

ब्रह्माभिन्ना माया

मायया ह्यन्यदिव । स वा एष आत्मा पर एषैव सर्वम् । तथा हि प्राज्ञे सैषाऽविद्या जगत् सर्वम् । आत्मा परमात्मैव । स्वप्रकाशोऽप्यविषयज्ञानत्वाज्जानन्नेव ह्यन्यत्रान्यन्न विजानात्यनुभूतेः ॥ ३ ॥

एवं चेत् स्वातिरिक्तभेदप्रतीतेः किं मूलं इत्यत आह—**माययेति**। **मायया** स्वरूपशून्यया **स्वान्यद्वैतमिव**, न वस्तुतः, द्वैतस्य निष्प्रतियोगिकाभावरूपत्वात्। स्वाज्ञदशायां यद्यत् द्वैतजातं विभातं तत्तत्सर्व **एष परमात्मैव**। **एषैवेत्यत्र** एष एव **सर्वं** आधाराधेययोरैकत्वात्, "हरिरेव जगत् जगदेव हरिः" इति स्मृतेः। द्वैतस्य संसारावस्थायामनुभूतत्वात् सत्यता स्यादिति चेत्—न; [1]संसारिस्वापादावदर्शनात्। नहि द्वैतं सत्पदमर्हति। यदुक्तं तदुपपादयति—**तथा हीति**। संसारदशायामपि तथैवोपलभ्यते। सुषुप्त्यवस्थामापन्ने प्राज्ञे न हि द्वैतमुपलभ्यते। द्वैतस्याविद्यमानत्वात् अनुपलब्धिः युक्तेत्यर्थः। तथा सति कथं द्वैतमुत्तिष्ठति इत्यत आह—**सैषेति**। या स्वरूपशून्या **सैषा अविद्या** अहमज्ञः इत्यादिप्रत्यक्षसिद्धा स्वाज्ञानरूपिणी स्वज्ञानावसाना वटबीजसमा कार्यरूपेण चेतनाचेतनात्मकजगद्रूपतया दृश्यते। वस्तुतः इयं अविद्यमानेत्यर्थः। स्वापादावप्यविद्याकार्यानुपलब्धा परमात्मनो भिन्न इत्यत आह—**आत्मा परमात्मैवेति**। "एष सर्वेश्वरः" इति श्रुतितः यदुक्तं प्राज्ञेश्वरयोरैक्यं तदेवोपपादयति—**स्वप्रकाश** इति। यथा स्वप्रकाशोऽपि सर्वेश्वरः प्रळयादौ **अविषयज्ञानत्वात्** स्वाज्ञदृष्ट्या **अन्यत्र अन्यदस्तीति जानन्नपि** स्वदृष्ट्या स्वातिरिक्तं किमपि **न जानाति** तथा स्वयंप्रकाशोऽपि प्राज्ञः स्वापादौ स्वाज्ञानवृत्ति जानन्नपि स्वप्नादिव्यापृतिहेतुविक्षेपवृत्तिं न जानाति विषयाभावान्न जानातीत्यर्थः। अज्ञस्य ज्ञत्वं कुतः? इत्यत्र विषयाभावेऽपि **अनुभूतेः** सत्त्वात्। अन्यथोत्थितस्य एतावन्तं कालं सुखमहमस्वाप्सं न किंचनावेदिषं इति परामर्शो न स्यात् इत्यभिप्रायः ॥ ३ ॥

मायास्वरूपम्

**माया च तमोरूपाऽनुभूतिः। तदेतज्जडं मोहात्मकमनन्तमिदं रूपमस्यास्य व्यञ्जिका नित्यनिवृत्ताऽपि मूढैरात्मैव दृष्टाऽस्य सत्त्वमसत्त्वं च दर्शयति सिद्धत्वासिद्धत्वाभ्यां स्वतन्त्रास्वतन्त्रत्वेन ॥४॥**

[1] असंसारि—उ १.

दर्शनादर्शनात्मकमिदं सर्वं यथा जागरणादौ प्रतीयते तथा स्वापादावपि प्रतीयतां आविद्यकाविशेषात् इत्यत आह— **माया चेति** । शक्तिद्वयात्मिकेयं माया स्वापादौ विक्षेपविरळाऽपि आवरणात्मिका (न) दृश्यते जागरणादौ विक्षेपवृत्तितया दृश्यत इत्यर्थः । विक्षेपावरणात्मिकेयं कथं आवरणरूपैव इत्यत आह— **अनुभूतिरिति** । स्वापादौ विक्षेपानुभवमन्तरेण आवरणानुभवस्य सिद्धत्वात् । तत्र विप्रतिपन्नस्य किंचिदालम्बनं भवति । **तदेतद्दृश्यं जडं महामोहात्मकं** स्वाज्ञानावरणं **अनन्तं** आविज्ञानस्थायित्वादानन्त्यं आपेक्षिकम् । अत एव एतद्वास्तवमिति चेत्—न; नरविषाणवत् दुर्लभत्वात् । प्रतीयमानत्वे सति कालत्रयेऽप्यविद्यमानत्वं मायातत्कार्यलक्षणमिति संप्रदायविदो वदन्ति । श्रुतिस्तु तन्न सहते कालत्रयासत्त्वमेव महीकरोति "सन्मात्रमसदन्यत्", "ब्रह्ममात्रमसन्नहि", इत्यादि । **इदं रूपं अस्य** मायाकार्यस्य अभिव्यञ्जिका कारणं माया इत्यनुवर्तते । यदिदं मायातत्कार्यमात्मनि वर्तते ततः मुमुक्षुभिः एतन्निवर्तने महान् प्रयत्नः करणीयः । न चासौ क्रियमाणोऽपि सिध्यति । न हि शतक्रतुरप्याकाशं मूर्तीकर्तुं पारयति । न हि पारमहंस्यधर्मपूगवदनुष्ठितवेदान्तश्रवणादिकमपि फलवत् भवितुमर्हति इत्यत आह—**नित्येति** । **नित्यनिवृत्ताऽपि मूढैरात्मैव द्रष्टा** । नहि निष्प्रतियोगिकचिन्मात्रे स्वाविद्यातत्कार्यमस्ति । नहि प्रचण्डमार्तण्डं तमःस्तोमः स्पृशति । ततः सेयं चिन्मात्रान्नित्यनिवृत्तेव निवृत्ता । न हि वस्तुतो विद्यमाना सती निवर्तते, अविद्याया अविद्यमानत्वात् "अविद्यमानैवाविद्या वस्तुतत्त्वविचारिणाम" इति स्मृतेः । व्यावहारिकादिदृष्ट्या स्वाविद्यानिवृत्तिसत्त्वात् मोक्षोद्योगः सफलो भवितुमर्हति । मूढैरात्मैव द्रष्टेत्यवधृतं, अहं अज्ञो मनुष्यः इत्याद्यनुभवात् । **अस्य** आविद्यकप्रपञ्चस्य **सत्त्वमसत्त्वं च दर्शयति**, व्यावहारिकादिदृष्ट्या सत्त्वं पारमार्थिकदृष्ट्या असत्त्वं, तत् कथं? इत्यत आह— **सिद्धत्वासिद्धत्वाभ्यामिति** । यत्र इदं कार्यं निष्पन्नं इति बुद्धिः जायते तत्र सिद्धत्वेन सत्त्वं दर्शयति । सिद्धत्वासिद्धत्वमपि किं निमित्तं इत्यत आह—**स्वतन्त्रास्वतन्त्रत्वेनेति** । कर्तुमकर्तुमन्यथाकर्तुं सामर्थ्यं स्वतन्त्रत्वं, तद्विपरीतं अस्वातन्त्र्यम् ॥ ४ ॥

मायाकार्यम्

सैषा वटबीजसामान्यवदनेकवटशक्तिरेकैव । तद्यथा वटबीजसामान्यमेकमनेकान् स्वाव्यतिरिक्तान् वटान् सबीजानुत्पाद्य तत्र तत्र पूर्णं [1]सत्तिष्ठत्येवमेवैषा माया स्वाव्यतिरिक्तानि पूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति ॥ ९ ॥

यस्याः स्वाज्ञस्वज्ञदृष्टिभ्यां मायायाः स्वतन्त्रास्वतन्त्रत्वे भवतः सैषा म वटबीजसामान्यवत् राजसर्षपतुल्यासु वटधानासु मिथो भिन्नासु कार्याक रूपासु वटधानासामान्यमकार्यमेकं तद्वत् । अविद्याबीजसामान्यस्वरूपमाह- अनेकेति । अनेकवटशक्तिः सर्वत्र अनेकवटोत्पादनसामर्थ्य एकैव सर्वत्रैकरू नत्वनेका । तत् तत्र वटबीजशक्तेः ऐक्ये व्यवस्थिते स्वाविद्यायामपि तद्व दृष्टान्तः । यथा दृष्टान्ते वटबीजसामान्यं उक्तं एकं निर्भेदं अनेका अनन्तान् स्वाव्यतिरिक्तान् सबीजान् वटान् उत्पाद्य तत्र तत्र बीजेषु सत् पूर्वभावमेत्य तिष्ठति एवमेवैषा माया स्वाव्यतिरिक्तानि पूर्णानि क्षेत्रा चतुर्विधप्राणिस्थूलसूक्ष्मादिशरीराणि दर्शयित्वा अभिव्यक्तीकृत्य प्राणाधारता यामकतया जीवेशावाभासेन करोति । न केवलं तावेव करोति, किं तु मा चाविद्या च स्वयमेव भवति । चकारद्वयं मायाऽविद्याऽतिरेकेण अनेकभिदां सहते ॥ ९ ॥

आत्मत्रैविध्यम्

सैषा चित्रा सुदृढा बह्वङ्कुरा स्वयं गुणभिन्नाऽङ्कुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी चैतन्यदीप्ता तस्मादात्मन एव त्रैविध्यं सर्वत्र योनित्वमपि ॥ ६ ॥

[1] स ति—अ, अ १, क. संति—अ २.

जीवेशाविव मायात्रैविध्यमस्तु, तथा सति कथं कार्यवैषम्यं इत्यत आह—सैषेति। सर्वभेदशून्यतया योक्ता सैषा एकाऽपि स्वभावानेकशक्तितया चित्रा अनन्तकोटिजन्मनानावासनाभिः सुदृढा बह्वङ्कुरा विविधकार्यरूपेण नानाऽङ्कुराकारा। यदि स्वयं कारणतया ब्रह्मवदेकरूपा तदा कथं चित्रता इत्यत आह—स्वयमिति। गुणसाम्यप्रकृत्यात्मना स्वयमेकाऽपि विविधकल्पाश्रयसत्त्वादिगुणत्रयतो भिन्ना भेदमुपगता स्वयं गुणभिन्ना अङ्कुरेष्वपि कार्येषु गुणभिन्ना गुणैः भेदं नीता। तस्याः प्रधानकार्याण्याह—सर्वत्रेति। सर्वत्र जगतः स्रष्टा ब्रह्मा, तत्पालको विष्णुः, तत्संहारकृच्छिवः; इति प्रधानरूपाणि यस्याः सा ब्रह्मविष्णुशिवरूपिणी। जडप्रकृतेः कार्यहेतुत्वं कुतः? इत्यत आह—चैतन्यदीप्तेति। अग्नितप्तायःपिण्डवत् स्वाधिष्ठानचैतन्यदीप्ता ब्रह्मादिप्रधानकार्यवती। यस्मादियं अग्निप्रतप्तायःपिण्डवत् स्वाधिष्ठानचैतन्यदीप्तेत्युक्ता—न ह्ययःपिण्डो दहति किं तु अयःपिण्डतया गृहीतोऽग्निरेव दहति, एवं अयमात्माऽपि अविद्यावशात् अविद्यात्वेन गृहीतः सर्वकार्यक्षमो भवति—तस्मादात्मन एव त्रैविध्यं ब्रह्मविष्णुशिवरूपेण त्रिविधत्वम्। सर्वत्रेति देशकालवस्तुसर्वस्वोपलक्षणार्थम्। योनित्वं कारणत्वम्। अपिशब्दादुक्तमनुक्तं च व्यवहारजातं आत्मचैतन्यप्रकाशतया क्रियमाणम्॥ ६॥

जीवेशभेदः

अभिमन्ता जीवो नियन्तेश्वरः। सर्वाहंमानी हिरण्यगर्भस्त्रिरूप ईश्वरवद्व्यक्तचैतन्यः सर्वगो ह्येष ईश्वरः क्रियाज्ञानात्मा। सर्वं सर्वमयं सर्वे जीवाः सर्वमयाः सर्वावस्थासु तथाऽप्यल्पाः॥७॥

आत्मन एव जीवेशावाभासेन करोतीत्युक्तं, तयोः किं स्वरूपं इत्यत आह—अभिमन्तेति। कार्यकरणसंघाताभिमानी जीवः प्राणानां धारयिता नियम्यः। चराचरात्मकजगतो नियन्ता ईश्वरः। अहंमानी पूर्णाहंभावो निरावृतस्वतत्त्वः हिरण्यगर्भ एवेश्वर इत्याशंक्य नेश्वरोऽयमित्याह—सर्वेति।

जीववत् सर्वस्मिन् कार्येऽहमित्यभिमानवान् ब्रह्मादिरूपेण त्रिरूपः । किं निमित्तेयमस्मिन्नीश्वरबुद्धिः इत्यत आह—**ईश्वरवद्व्यक्तचैतन्य** इति । यथा साक्षादीश्वरः सच्चिदानन्दात्मा तद्वदयमपीत्यर्थः । किं तु व्यष्ट्यभिमानिजीववदस्य समष्ट्यभिमानित्वात् ईश्वरावरत्वं, ईश्वरस्तु सर्वत्र आत्मात्मीयाभिमतिविरळः, न कदाऽप्ययं जीवकोटौ प्रविशति । यतः एवं अतः अयं हिरण्यगर्भः जीवः ईश्वरश्च इत्युभयथाऽपि वक्तुं शक्यते । इदानीं अस्मिन्नीश्वरगुणमाह—**सर्वग इति** । **हि** यस्मात् **एष** हिरण्यगर्भः सर्वव्यापी अतोऽयं **ईश्वरः** । इदानीमस्य स्वरूपमाह—**क्रियाज्ञानात्मेति** । बाह्यान्तःकरणाभिमानीत्यर्थः । यथा मधुब्राह्मणे आम्नातम्—"इयं पृथिवी सर्वेषां भूतानां मधु अस्यै पृथिव्यै सर्वाणि भूतानि मधु" इत्यादि । तथा **सर्वं सर्वमयं** कार्यं कारणं च अचेतनं, किंतु चेतनमपीत्याह—**सर्वं इति** । सर्वे जीवाः प्राणानां धारणात् **सर्वमयाः** सर्वात्मकत्वात् । न च जाग्रज्जाग्रदाद्यन्यतमावस्थायामिति मन्तव्यम्, किं तु जाग्रज्जाग्रदादिसर्वावस्थासु । तत्र को वा हिरण्यगर्भः ? के वा जीवाः ? इत्यत आह—**तथाऽपीति** । यद्यपि सर्वे सर्वस्वरूपाः तथाऽपि हिरण्यगर्भेश्वरवत् सर्वकारणकार्यात्मबुद्धिविकलान्तःकरणाभिमानिनः अल्पाः, ईश्वरादेः निरभिमानत्वादनल्पत्वमित्येतदुपपन्नम् ॥ ७ ॥

आत्मनः सृष्टौ प्रवेशः

**स वा एष भूतानीन्द्रियाणि विराजं [1]देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्नास्ते माययैव तस्माद्द्वय एवायमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वयानन्दः परः प्रत्यगेकरसः प्रमाणैरेतैरवगतः ॥ ८ ॥**

प्रसक्तानुप्रसक्तं च प्रतिपादितं, प्रकृते तैः यत् पृष्टं तन्निगमयति—**स वा इति** । यो हि जीवेशहिरण्यगर्भादिशब्दाभिधेयः उक्तः **स वा एष** परमात्मैव

[1] देवतां च सृ—अ॑, अ १, अ २, उ १.

स्वाविद्याव्यष्टिसमष्टिस्थूलाद्यंशावष्टंभतः कार्यकारणात्मकपञ्चीकृतापञ्चीकृतभूतानि क्रियाज्ञानशक्तिरूपाणि बाह्यान्तःकरणसहितानि सूक्ष्मशरीराणि **विराजं** स्थूलभूतेन्द्रियशरीरजातं सावरणाविद्याऽण्डगोळकरूपं तत्रात्मात्मीयाभिमानयोगायोगाभ्यां विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तप्रयोजनकं वागादिकरणकलापाधिष्ठात्र्यग्न्यादिका **देवताः** अन्नादिपञ्चकोशान् प्रत्यगादिप्रकाशावरणप्रयोजकान् **चकारा**दन्यदपि व्यक्ताव्यक्तरूपं **सृष्ट्वा** उत्पाद्य स्वेन रूपेण सर्वत्र प्रविष्टोऽपि स्वोत्पादितेषु **प्रविश्य** स्वयं **अमूढो** निरावृतोऽपि **मूढ इव व्यवहरन्नास्ते** स्वातिरिक्तविश्वोत्पत्त्यादिलीलां कुर्वन् वर्तत इव वर्तते। ईश्वरेणैवं वर्तितत्वात् तद्वास्तवमित्यत आह—**माययैवेति**। न तु वस्तुतः। एवं कल्पनाहेतुमायायाः शशविषाणवदवस्तुत्वात् तत्कार्यकल्पनाया अपि स्वकारणतुल्यत्वाच्च यदेतदुक्तमनुक्तं चैतत्सर्वं यदि प्रसक्तं तदत्यन्ताभावरूपं इत्यत्र—

सिद्धान्तोऽध्यात्मशास्त्राणां सर्वापह्नव एव हि।
नाविद्याऽस्तीह नो माया शान्तं ब्रह्मेदमक्रमम्॥

इति,

मायाऽविद्याऽज्ञानविश्वाभावान्तःकरणादयः।
ब्रह्मातिरिक्तपर्याया ह्यत्यन्ताभावरूपिणः॥

इति श्रुतेः, परमाक्षरोक्तेश्च। यस्मादेवं **तस्मात् अद्वय एवायमात्मा** स्वातिरिक्तानात्मापह्नवसिद्धात्मनो निष्प्रतियोगिकाद्वैतरूपत्वात्। निष्प्रतियोगिकाद्वितीयात्मसिद्धौ किं मानं इत्यत्र श्रुतिरेव मानमित्याह—**सन्मात्र इत्यादि**। **सन्मात्रः** असदपह्नवसिद्धत्वात्। तथा च वक्ष्यति—"सन्मात्रमसदन्यत्" इति। सन्मात्रत्वं आगन्तुकमित्यत आह—**नित्य इति**। प्रच्युत्युपलक्षित[ता]सत्तावैरळ्यात्, पारमार्थिकनित्य इत्यर्थः। तथा अशुद्धतूलाविद्यावैरळ्यात् **शुद्धः**। जडाविद्यायोगतो जडत्वं स्यादित्यत आह—**बुद्ध इति**। जडमायायोगस्य दुर्लभत्वात् स्वयंप्रकाशः इत्यर्थः। बोधवृत्तियोगादसत्यत्वं स्यादित्यत आह—**सत्य इति**। असत्यवृत्त्यसंभवात् पारमार्थिकसत्य इत्यर्थः। स्वाविद्यातत्कार्यतो बद्ध इत्यत आह—**मुक्त इति**। यदि स्वाज्ञदृष्टिप्रसक्ताऽविद्या स्वज्ञदृष्ट्या मुक्त

इत्यर्थः । तथा **निरञ्जनः** स्वातिरिक्ताञ्जनायोगात् । तथा **विभुः** त्रिपरिच्छेद-शून्यत्वात् । तथा **अद्वयानन्दः** अखण्डानन्दरूपत्वात् । तथा **परः** सर्वस्मात् परत्वेन निरतिशयत्वात् । **प्रत्यगेकरसः** प्रत्यग्रसाभिन्नपररसरूपत्वात् । एवं प्रत्यगेकरसः परमात्मा कथमवगम्यते इत्यत आह—**प्रमाणैरेतैरवगत इति** । प्रमाणभूतेशाद्यष्टोत्तरशतवेदान्तैरेव स्वाज्ञदृष्टिविकल्पितातदपह्नवमुखेनैव अवगतः न विपर्यय इत्यर्थः ॥ ८ ॥

सत्तामात्रं ब्रह्म

**सत्तामात्रं हीदं सर्वम् । सदेव पुरस्तात् सिद्धं हि ब्रह्म । न ह्यत्र किंचनानुभूयते । नाविद्याऽनुभवात्मनि स्वप्रकाशे सर्वसाक्षिण्यविक्रियेऽद्वये । पश्यतेहापि सन्मात्रमसदन्यत् । सत्यं हीत्थं पुरस्तादयोनि स्वात्मस्थमानन्दचिद्घनं सिद्धं ह्यसिद्धम् ॥ ९ ॥**

चराचरात्मकप्रपञ्चे सति कथं एवं अवगतः इत्यत आह—**सत्तामात्रं हीदं सर्वमिति** । **इदं** परिदृश्यमानं जगत् **सत्तामात्रं हि** जगतः स्वसत्ताऽतिरिक्त-सत्तावैरळ्यात् । इदं सत्तामात्रमस्तु, ब्रह्मणः किमायातमित्यत आह—**सदेव पुरस्तात् सिद्धं हि ब्रह्मेति** । यस्मात् इदं जगत् उत्पत्तेः पूर्वं सदेकस्वभावं तस्मात् इदं ब्रह्मरूपं इति सिद्धम् । न हि पूर्वं ब्रह्मान्तरेण किंचिदासीत् । न चेदं पूर्वस्वभावं परित्यजति, स्वप्रकृतिवैपरीत्यस्य भावानामदृष्टचरत्वात् ,

अजातं जायते यस्मादजातिः प्रकृतिस्ततः ।
प्रकृतेरन्यथाभावो न कथं चिद् भविष्यति ॥

इति श्रीगौडपादाचार्योक्तेः । तर्कसहस्रमपि प्रत्यक्षपराहतमित्यत आह—**न हीति** । **न ह्यत्र** अस्मिन् ब्रह्मणि **किंचन** किंचिदपि द्वैतं तदुज्जीवकप्रत्यक्षादिर्वा **अनुभूयते** । स्वात्मावगत्युपायतया विद्या अङ्गीकार्या इत्यत आह—**नेति** । **स्वानुभूति**-प्रमाणसिद्धे **स्वात्मनि** न हि **स्वाविद्या** तत्कार्यं तत्प्रतियोगिसाधनसंपत्तिर्वा

सहसा प्रभवति। अविद्याया असत्त्वे हेतूनुपन्यस्यति—**स्वप्रकाश** इत्यादि। यत् परप्रकाशापेक्षं यत् साक्ष्यं यत् सक्रियं यत् द्वैतजातं तत्र अविद्या तत्कार्यं वा विलसतु। न हि तत्प्रतियोगिनि साधनान्तरमनपेक्ष्य स्वयंप्रकाशे स्वाज्ञदृष्टिप्रसक्तसाक्ष्यसत्त्वे तन्निरूपितसर्वसाक्षिणि विक्रियाजातविरळे **परमाद्वये** स्वाविद्या तत्कार्यं असत्प्रपञ्चजातं वा प्रभवति, सन्मात्रातिरिक्ताविद्यातत्कार्यस्य असत्त्वात्। अहो स्वाज्ञलोकाः प्रत्यक्चक्षुषा वस्तुयाथात्म्यं पश्यतेत्याह—**पश्यतेति**। हे देवाः यूयं **पश्यत** प्रत्यक्चक्षुषा अवलोकयत। कदेत्यत्र **इहापि**। पुरा भवदनुभूतसंसारदशायामपि घटोऽस्ति पटोऽस्ति इति यद्यत् अस्तित्वेन अभिमतं तत्तत् **सन्मात्रं** सत्तासामान्यरूपं यत् तद्विपरीतं नेति नेति इत्यवधृतं तत् **असदेव** शशविषाणकल्पम्। यतः एवं अतः निष्प्रतियोगिकसन्मात्रमेव ब्रह्म तदतिरिक्तं न ह्यस्ति। यद्यस्तीति भ्रान्तिः तदा तदसदेव इत्यत्र—

चिन्मात्रमेव चिन्मात्रमखण्डैकरसं रसम्।
सर्ववर्जितचिन्मात्रं ब्रह्ममात्रमसन्न हि॥

इति श्रुतेः। उक्तार्थे हेतुमाह—**सत्यमिति**। हि यस्मात् **इत्थं** अविशेषितघटपटादिभेदजातं सत्तासामान्यमेव सत्यं अनृतघटादिप्रपञ्चापह्नवसिद्धत्वात्। तत् किं सर्वकारणं इत्यत आह—**पुरस्तादयोनीति**। **पुरस्तात्** प्रपञ्चसृष्टेः प्रागिति कालत्रयोपलक्षणार्थम्। सर्वकालेऽप्येतत् **अयोनि** अकारणं, कार्यसामान्यस्य वस्तुतः शशविषाणवदसत्वात् अयोनित्वं निरङ्कुशं इत्यर्थः। अस्त्वेतदयोनि, तदधिकरणं किं इत्यत आह—**स्वात्मस्थमिति**। स्वे महिम्नि स्वात्मन्येव निष्प्रतियोगिकस्वमात्रतया तिष्ठति, न तस्याधिकरणं किंचिदस्तीत्यर्थः। स्वान्यत्र निवासस्थलाभावात् स्वस्मिन् स्वस्थित्या गुरुभारपीडितत्वाच्च बहुळतरदुःखं स्यादित्यत आह—**आनन्दचिद्घनमिति**। भूमब्रह्मणः परिच्छिन्नत्वे मूर्तत्वे च स्यादेव भवदुक्तदोषद्वयं, न हि तदस्ति परिच्छिन्नमूर्तामूर्तकलनाबाह्यत्वात्, सच्चिदानन्दघनं तदित्यर्थः, "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतेः। यदैवं निष्पन्नं तदा अनित्यत्वं स्यादित्यत आह—**सिद्धं ह्यसिद्धमिति**। स्वत एव

सिद्धं साधनान्तरेण असिद्धम्। यतः स्वेनैव निष्पन्नं अतः निष्प्रतियोगिक-नित्यमित्यर्थः। सन्मात्र इति पुँल्लिङ्गत्वेनोपक्रम्य सदित्यादिना नपुंसकत्वेन निर्दिष्टम्। पुँल्लिङ्गतो मन्त्रराजार्थः परमात्मा नृसिंहो विशेष्यते, नपुंसकलिङ्गतः प्रणवार्थतुर्यतुरीयं ब्रह्म। तयोरपि स्वरूपतः एकत्वात् न विरोधः ॥ ९ ॥

सर्वस्य आत्ममात्रत्वम्

तद्विष्णुरीशानो ब्रह्मान्यदपि सर्वं सर्वगतं सर्वमत एव। शुद्धोऽबाध्यस्वरूपो बुद्धः सुखस्वरूप आत्मा। न ह्येतन्निरात्मकमपि नात्मा पुरतो हि सिद्धः। न हीदं सर्वं कदाचित्। आत्मा हि स्वमहिमस्थो निरपेक्ष एक एव साक्षी स्वप्रकाश ॥ १० ॥

तत् तदेव ब्रह्म मूलाविद्यासूक्ष्मांशयोगतो विष्णुः स्थितिहेतुत्वात्। तद्बीजांशयोगतः ईशानो नियन्ता संहारहेतुत्वात्। तत्स्थूलांशयोगतो ब्रह्मा चतुराननः सृष्टिहेतुत्वात्। अन्यदपि उक्तेभ्यो व्यतिरिक्तं चेतनाचेतनात्मकं सर्वं स्वाज्ञदृष्टिप्रसक्तसर्वगतं सर्वं अत एव यतः सर्वगतं ब्रह्म। निर्विशेषं सर्वगतं सर्वमिति मेरुसर्षपयोरिव वैषम्यं स्यादिति चेत् स्वाज्ञानसत्त्वासत्त्वाभ्यां सर्वमप्युपपन्नं इति मन्तव्यम्। वस्तुतः सर्वदोषवैरळ्यात् शुद्धः। बाधकाज्ञानसत्त्वात् शुद्धत्वं कथं इत्यत आह—अबाध्यस्वरूप इति। बाधकाज्ञानाभावात् शुद्धत्वं सिद्धमित्यर्थः। शुद्धत्वादेव बुद्धः पूर्णबोधरूपत्वात्। बोधादप्यानन्दरूपो भिद्यत इत्यत्र यो हि बुद्धः स एव सुखस्वरूपः। न हि परमात्मा जीवः इति मन्तव्यः किं तु अहंप्रत्ययगोचरः प्रत्यगेव शुद्धः। इत्यादिना त्वंपदार्थो वर्णितः, किं तेनेष्टसिद्धिः इत्यत आह—न ह्येतन्निरात्मकमपि नात्मेति। इदं शशविषाणादिकं निरात्मत्वेन प्रसिद्धमपि हि यस्मात् एतदात्मा न भवतीति चेन्न; निरात्मकस्याप्यात्मनि अध्यस्तत्वेन वटवत् दृश्यत्वात्। न ह्यध्यस्तमधिष्ठानातिरिक्तमस्ति।

अध्यस्तवस्तु अधिष्ठानरूपमित्यर्थः । निरात्मकस्याप्यात्मत्वे हेतुमाह—**पुरतो हि सिद्ध इति** । हि यस्मात् सर्वस्मात् पुरतो निष्पन्नो वर्तते । सिद्धत्वं सदसतामपि समानमित्यत आह—**न हीदं सर्वं कदाचिदिति** । यथा परमात्मा सिद्धः तथा इदं सदसदात्मकं जगत् न हि कालत्रयसिद्धम् । यदादावन्ते च न विद्यते तन्मध्ये भातमपि नास्त्येव । उत्पत्तेः प्राक् प्रळयानन्तरं च जगन्नोपलभ्यते । तत् स्थितिकाले भातमपि न हि तद्विद्यते, "यन्नादौ यच्च नास्त्यन्ते तन्मध्ये भातमप्यसत्" इति स्मृतेः । तथा जगदिव आत्माऽपि नास्तीत्यत आह—**आत्मेति** । **हि** यस्मात् **आत्मा स्वमहिमस्थः** न जडवत् परतन्त्रः । अत एव **निरपेक्षः** परापेक्षाशून्यः पूर्णानन्दरूपत्वात् , न ह्यनन्दाभिव्यक्तिहेतुतया सापेक्षो भवति । यः एवंविधः सः आत्मा **एक एव** स्वद्वितीयहेत्वभावात् । प्रसक्तसाक्ष्यजातापेक्षया अयं **साक्षी,** वस्तुतः साक्षित्वमप्यस्य न तात्त्विकमित्यर्थः । **स्वप्रकाशः** स्वेनैव प्रकाशितत्वात् ॥ १० ॥

आत्मतः सर्वसिद्धिः

**किं तन्नित्यम् । आत्माऽत्र ह्येव न विचिकित्स्यम् । एतद्धीदं सर्वं साधयति । द्रष्टा द्रष्टुः साक्ष्यविक्रियः सिद्धो निरवद्यो बाह्याभ्यन्तरवीक्षणात् सुविस्फुटस्तमसः परस्तात् ॥ ११ ॥**

इदानीं लब्धावसराः देवाः पृच्छन्ति—**किं तन्नित्यमिति** । **तत्** पूर्वोक्तं ब्रह्म **किं** नित्यत्वधर्मवत् , किं धर्मधर्मिभेदविशिष्टं, इदमेव सच्चिदानन्दत्वादीनामप्युपलक्षणार्थम् । एवमुक्तः प्रजापतिराह—**आत्मेति** । अनात्मापह्नवसिद्धोऽयं **आत्मा अत्र** अस्मिन् आत्मनि **एव हि** यस्मात् नित्यत्वादिधर्मजातमस्ति नास्तीति वा **न विचिकित्स्यं,** आत्मनो निष्प्रतियोगिकत्वेन निर्धर्मकत्वात् । यद्येवं निर्विशेषः परमात्मा कथं अस्माभिः अवगन्तुं शक्यः इत्यत आह—**एतद्धीति** । **हि** यस्मात् **एतत्** आत्ममात्रगोचरज्ञानं तत्तच्चित्तशुद्धिसापेक्षं **सर्वं साधयति** । तत् कथं इत्यत्र घटपटादेः **द्रष्टुः** अन्तःकरणविशिष्टस्य **द्रष्टा** अवलोकयिता । एवं द्रष्टृत्वे सुखदुः-

खसंबन्धः स्यादित्यत आह—**साक्षीति** । यथा लौकिकः साक्षी तथाऽयं तद्गतसुखदुःखरहित इत्यर्थः । साक्षित्वे साक्ष्यगतविक्रिया स्यादित्यत आह—**अविक्रिय** इति । साक्षिणो निरवयवत्वेन विक्रियाशून्यत्वात् । विक्रियाशून्यत्वे स्वस्यासत्त्व स्यादित्यत आह—**सिद्ध इति** । सर्वदा आत्ममात्रतया निष्पन्नत्वात् । जीवोऽपि तथेत्यत आह—**निरविद्य** इति । अविद्यातत्कार्यशून्यत्वात् जीवात्मनोश्चैतन्यस्य तुल्यत्वे को विशेषः इत्यत आह—**बाह्येति** । सर्वत्र सर्वदा सर्वमहमस्मि इति युगपत् बाह्यान्तरवीक्षणात् अवलोकनात्, नैवं जीवोऽवलोकयति । एवं जीवदृष्टया स्वाविद्याद्वयतत्कार्यकबलिते प्रपञ्चे कथं अयमहमस्मि इत्यात्मा अवगन्तुं शक्यः इत्यत आह—**सुविस्फुट इति** । गोमहिष्यादिभेदवत् अयमात्मा अयं जीवः इति स्फुटं अवगन्तुं शक्यत्वात् । सुविस्पष्ट इति वा पाठान्तरम् । तत्र प्रतीचो विस्पष्टत्वेन प्रतीयमानत्वात् इति नार्थभेदः । तत्र हेतुः—**तमसः परस्तात्** ॥ ११ ॥

*देवानां आत्मदर्शनम्*

**ब्रूतैष दृष्टोऽदृष्टो वेति । दृष्टोऽव्यवहार्योऽप्यल्पः ॥ १२ ॥**

*स्वाविद्यापदतत्कार्यतमसः परतः विद्यमानं परमात्मानमुद्दिश्य देवान्* प्रत्याह भगवान् प्रजापतिः । किमिति ? हे देवाः यूयं ब्रूत वदत । किमिति ? मयोपदिष्ट **एषः** आत्मा भवद्भिः यथावत् **दृष्टोऽदृष्टो** वेति । प्रजापतिना एवं पृष्टाः देवाः ऊचुः—**अव्यवहार्योऽपि** सर्वव्यवहारा[न]र्हतया भवदुपदिष्टः आत्मा अस्माभिः **दृष्टः** आत्मतया अवलोकितः । एवंविदितोऽप्यस्मद्बुद्धिविषयतया **अल्पः**, न हि नाल्पोऽपरिच्छिन्नोऽस्माभिः द्रष्टुं शक्यः ॥ १२ ॥

आत्मनः अनल्पत्वनिरूपणम्

**नाल्पः साक्ष्यविशेषोऽनन्योऽसुखदुःखोऽद्वयः परमात्मा सर्वज्ञोऽनन्तोऽभिन्नोऽद्वयः । सर्वदा संवित्तिर्मायया नासंवित्तिः स्वप्रकाशे । यूयमेव दृष्टाः ॥ १३ ॥**

एवं तेषां विपरीतज्ञानमवलोक्य प्रजापतिः देवान् प्रत्याह—**नाल्प इति**। भवत्कृते मदुपदिष्टात्मा नाल्पः परिच्छेदत्रयातीतत्वात्। तत्र हेतूनुक्तानुक्तानप्युपन्यस्यति—**साक्षीत्यादिना**। साक्षी भवद्द्रोद्ध्रा अवलोकनः। तदवलोकने कश्चनातिशयः स्यादित्याह—**अविशेष इति**। साक्ष्यनिरूपितसाक्षिताऽपाये साक्षिणो ब्रह्ममात्रतया निर्विशेषत्वात्। न हि साक्ष्यप्यन्यो भवितुमर्हति। **अनन्यः** भवदव्यतिरिक्तत्वात्। न चैवं संसारधर्मेत्याह—**असुखदुःख इति**। अन्तःकरणकार्यसुखदुःखबाह्यत्वात्। तत्र हेतुः—**अद्वय इति**। सापेक्षद्वैताभावात्। निष्प्रतियोगिकाद्वितीयत्वे हेतुः—**परमात्मेति**। पराक्सापेक्षप्रत्यक्कलनाऽभावात्। मूलबीजांशयोगतः **सर्वज्ञः** सर्ववित्त्वात् "यः सर्वज्ञः सर्ववित्" इति श्रुतेः। यद्वा—मदतिरेकेण सर्वं नेतीति यो ज्ञाता सोऽयं **सर्वज्ञः** परमात्मेत्यर्थः। अत एव **अनन्तः** त्रिविधपरिच्छेदशून्यत्वात्। ततोऽयं **अभिन्नः** भिदागन्धासहत्वात्। यदुक्तं तदेव निगमयति—**अद्वय इति**। निष्प्रतियोगिकत्वात्। अद्वयत्वादेव **सर्वदा संवित्तिः** कालत्रयेऽपि संविन्मात्ररूपत्वात्। एवमनुभवतः किं न दृश्यते इत्यत आह—**माययेति**। **मायया** मायानिमित्तः अहमज्ञ इत्यनुभवः। तत्र हेतुमाह—**नासंवित्तिरिति**। न हि संविन्मात्रे स्वाज्ञानं तिष्ठतीत्यर्थः। द्रष्टुर्दृश्ययोगादल्पता स्यादित्यत आह—**यूयमेव दृष्टा इति**। युष्माभिरेव अयमात्मा दृष्ट इति न तु युष्मद्व्यतिरिक्तः॥ १३॥

द्वितीयाभावोपदेशः

किम्। अद्वयेन द्वितीयमेव न यूयमेव ॥ १४ ॥

इदानीमाक्षिपन्ति किं केन प्रकारेण द्रष्टार एव दृश्यस्वरूपाः। उत्तरमाह—**अद्वयेन** अद्वयत्वेन हेतुना दृश्यस्वरूपं किं दृष्टवन्त इति। ननु अनेनैव हेतुना वस्तुनोऽप्यसत्त्वं किमिति स्वीक्रियत इत्यत आह—**द्वितीयमेवेति**। **न** तु द्वितीयमेव वस्तु नास्ति, न तु वस्त्वपि विद्यते। यद्वा—द्वयत्वोपपादनं द्वितीयमेव, न द्वितीयं, नह्यसति द्वितीये द्वयं भवति, किं तु अद्वयं, यतोऽद्वयं ततो यदुक्तं **यूयमेवेति** सुस्थितं तदिति निगमयति **यूयमेव** व्याख्यातम्॥ १४॥

देवानां संविद्रूपत्वज्ञानम्

**ब्रूह्येव भगवन्निति देवा ऊचुः। यूयमेव। दृश्यते चेन्नात्मज्ञाः। असङ्गो ह्ययमात्माऽतो यूयमेव स्वप्रकाशाः। इदं हि तत् संविन्मयत्वाद्यूयमेव ॥ १९ ॥**

इदानीमेवं बोध्यमाना अपि अनाद्यविद्यावासनावशादन्यथाभावं प्रतिपन्नाः पृच्छन्ति—**ब्रूह्येव**। कथं? अनेकसंसारधर्मवन्तो वयं तद्विलक्षणब्रह्मस्वरूपा इत्येतद्यथोपपन्नं भवति तथैव हे **भगवन्** अस्माकं **ब्रूहि इति देवा ऊचुः**। पुरोक्तमेव प्रजापतिराह—**यूयमेवेति**। उक्तस्य किं उत्तरं इत्यत आह—**दृश्यते चेन्नात्मज्ञा इति**। भवद्भिः आत्मनो भिन्नैरात्मा **दृश्यते चेत्** ततो भवन्तो **नात्मज्ञाश्च**, करणग्रामागोचरात्मनो करणग्रामविषयतया गृहीतत्वात् युष्माकमज्ञत्वं सिद्धमित्यर्थः। स्वात्माऽपि करणग्रामसङ्ग इत्यत आह—**असङ्गो ह्ययमात्मेति**। हि यस्मात् **अयं** भवतामात्मा स्वभावतोऽसङ्गः भवतां कर्तृत्वादिधर्मविशिष्टतया प्रतीयते। एवमात्मा अन्यथा दृष्टः। कीदृशाः वयं इत्यत आह—**यूयमेव स्वप्रकाशा इति**। भवतां साधनान्तरनैरपेक्ष्येण करणग्रामवृत्तिसहस्रप्रवृत्तिनिमित्तत्वेन तद्भावाभावप्रकाशकत्वात्। इदं सर्वं संविदेकस्वभावमिति पूर्वं प्रतिज्ञाय इदानीमस्माकं स्वयंप्रकाशत्वं ब्रूषे, तदिदं पूर्वोत्तरविरुद्धं इत्यत आह—**इदं हीति**। यदिदं भवतां स्वप्रकाशत्वं तदेव हि संविद्रूपत्वं, अतो न प्रतिज्ञाहानिः। स्वप्रकाशसंविदोरेकार्थत्वे हेतुमाह—**संविन्मयत्वादिति**। ततः संविद्यसङ्गोदासीनाः **यूयमेव** ॥ १९ ॥

देवानां आत्मतत्त्वज्ञानख्यापनम्

**नेति होचुः। हन्तासङ्गा वयमिति होचुः। कथं पश्यन्तीति होवाच। न वयं विद्म इति होचुः। ततो यूयमेव स्वप्रकाशा इति**

**होवाच । न च संविन्मया एतौ हि । पुरस्तात् सुविभातमव्यवहार्यमेवाद्वयम् । ज्ञातो वैष विज्ञातः । विदिताविदितात् पर इति होचुः ॥ १६ ॥**

प्रजापतिनोक्ता एवममन्यन्त । किमिति ? पूर्वं अस्माभिः कर्तृत्वादिकं आत्मनि गृहीतं, इदानीं तत्त्यागपूर्वकं स्वयंप्रकाशतां गताः । तत्रात्मानं वयं जानीम इति आत्मनि कर्तृत्वाभावेऽपि केवलस्वयंप्रकाशताऽङ्गीकारे तत्रासंभवं मन्यमाना आहुः—**नेति** । नास्माकं स्वयंप्रकाशतेति **होचुः** स्वयंप्रकाशताऽभावेऽपि असङ्गत्वं विद्यत इत्याहुः, **हन्त असङ्गा वयमिति होचुः** । एवमुक्तवतो देवान् स्वयंप्रकाशत्वं बुबोधयिषुः प्रजापतिराह—**कथमिति** । भवन्तः स्वात्मानं केन प्रकारेण **पश्यन्तीति होवाच** । प्रजापतिनैवमुक्ता देवा ऊचुः । किमिति ? करणग्रामागोचरं आत्मानं **न वयं विद्मो** जानीमः इति । **ततो यूयमेव स्वप्रकाशा इति होवाच** इत्युक्तार्थम् । संविद्विकाराणां अस्माकं कथं संविद्रूपता ? इत्यत आह—**न च संविन्मया** इति । नैव वयं संविद्विकारा इत्यर्थः । कथं एतदवगम्यत इत्यत आह—**एतौ हीति** । धात्वर्थनिर्देशोऽयं न धातुनिर्देशः ईक्षतेरितिवत्, आत्मावगतौ । परमार्थमुपदिशति—**पुरस्तादिति** । स्वातिरिक्तभ्रमतः **पुरस्तादिति** कालत्रयोपलक्षणार्थम् । कालत्रयेऽपि ब्रह्म स्वातिरिक्तापह्नवसिद्धं स्वमात्रतया सम्यग्विभातीति **सुविभातम्** । तत् किं व्यवहारार्हं ? नेत्याह—**अव्यवहार्यमेवेति** । निर्विशेषचिन्मात्रावगतेः सर्वव्यवहारापह्नवपूर्वकत्वात् । उक्तार्थे हेतुः—**अद्वयमिति** । निष्प्रतियोगिकाद्वैतरूपत्वात् । एवं देवानां परमार्थतत्त्वमुपदिश्य पुनरिदानीं पृच्छति—**ज्ञातो वा** भवद्भिरात्मेति । **वा**शब्दद्योतितपक्षान्तरमाह—**विज्ञात इति** । विशब्दो निषेधार्थः । न हि भवद्भिः विज्ञात इत्यर्थः । एवं प्रजापतिना पृष्टाः देवाः स्वात्मनः स्वरूपमवगतानवगतकलनाविरळमाहुरित्याह—**विदिताविदितात् पर इति** । ज्ञातादज्ञातादपि व्यतिरिक्तोऽयमात्मा । वयं तदुभयमपि वक्तुमशक्ता **इति होचुः**, "अन्यदेव तद्विदितादथो अविदितादधि" इति श्रुतेः ॥ १६ ॥

ब्रह्मात्मैक्योपदेशः

स होवाच तद्वा एतद्ब्रह्माद्वयं बृहत्त्वान्नित्यं शुद्धं बुद्धं मुक्तं सत्यं सूक्ष्मं परिपूर्णमद्वयं सदानन्दचिन्मात्रमात्मैवाव्यवहार्यं केन च । तदेतदात्मानमोमित्यपश्यन्तः पश्यत । तदेतत् सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येव न विचिकित्स्यमित्यों सत्यम् । तदेतत् पण्डिता एव पश्यन्ति ॥ १७ ॥

प्रजापतिः अवगतप्रायान् देवान् मन्वानः पुनराह—**स होवाचेति** । किमिति ? यदेतन्मया उच्यमानं तत् (?) द्वैतमेव भवद्भिरवगतं न हि तत्र संशयोऽस्ति । किं तत् ? **ब्रह्म अद्वयं**, तत्र हेतुः—**बृहत्त्वात्** स्वमात्रतयोपबृंहणात्, ब्रह्मेति बृहिधातोरर्थावगमात्, उक्तार्थमेतत् **नित्यं** इत्यादिपदपञ्चकं, **सूक्ष्मं** करणग्रामागोचरत्वात् **परिपूर्णं** परिच्छेदत्रयशून्यत्वात्, **अद्वयं** उक्तार्थं, **सदानन्दचिन्मात्रं** मिथ्यादुःखजाड्यापह्नवसिद्धत्वात् **आत्मैव** अनात्मापह्नवसिद्धं आत्ममात्रं **अव्यवहार्यं येन** केनापि व्यवहर्तुमशक्यत्वात् । अव्यवहार्यतया यदुक्तं तत् **तच्छब्दार्थः** । **एतच्छब्दस्तु** सर्वप्रत्ययसाक्षिणं परामृशति तदेतच्छब्दार्थं प्रत्यगभिन्नपर**मात्मानं ओमिति** तुर्योङ्काराग्रविद्योततुर्यतुरीयं ब्रह्मास्मीति **अपश्यन्तः** अनवलोकयन्तः सन्तः **पश्यत** अवलोकनं कुरुत । **तत्** शास्त्रैकगम्यं **एतत्** मयोक्तं यच्छ्रुत्याचार्योक्तं तदेव **सत्यं** अवितथार्थत्वात् । तदेव व्याकरोति—**सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवेति** । स्वारोपिताब्रह्मताऽनात्मताशान्त्यर्थं व्यतिहारेणोपदेशः । एवमात्मनो ब्रह्मत्वे ब्रह्मण आत्मत्वे च न कदाऽपि **विचिकित्स्यं** असंशयितव्यं **इति** अनेन प्रकारेण निश्चित्य तत ॐ ओङ्काराग्रविद्योततुर्यतुरीयं प्रत्यक्परविभागैक्यकलनाविरळं स्वमात्रमवशिष्यते इति यत्तदेव **सत्यम्** । यदेतत्प्रत्यक्परैक्यनिष्पन्नार्थतुर्यतुरीयं निष्प्रतियोगिकस्वमात्रमिति **पण्डिताः** सम्यज्ज्ञानिन **एव पश्यन्ति** । यत् सर्वापह्नवसिद्धब्रह्ममात्रदर्शनं एतद्धि पाण्डित्यं यत् पण्डितावगतिसिद्धम् ॥ १७ ॥

आविद्यकविशेषनिषेधः

एतद्धयशब्दमस्पर्शमरूपमरसमगन्धमवक्तव्यमनादातव्यमगन्तव्यमविसर्जयितव्यमनानन्दयितव्यममन्तव्यमबोद्धव्यमनहंकर्तयितव्यमचेतयितव्यमप्राणयितव्यमनपानयितव्यमव्यानयितव्यमनुदानयितव्यमसमानयितव्यमनिन्द्रियमविषयमकरणमलक्षणमसङ्गमगुणमविक्रियमव्यपदेश्यमसत्त्वमरजस्कमतमस्कममायमभयमप्यौपनिषदमेव सुविभातं सकृद्विभातं पुरतोऽस्मात् सर्वस्मात् सुविभातमद्वयं पश्यत हंसः सोऽहमिति ॥ १८ ॥

तत्र स्वाङ्गसमर्पितविशेषापह्नवमाह— **अशब्दमित्याद्यसमानयितव्यमित्यन्तेन** । सविषयज्ञानेन्द्रियपञ्चककर्मेन्द्रियपञ्चकान्तःकरणचतुष्टयप्राणादिपञ्चककलना अस्ति नास्तीति विभ्रमोऽपि न हि तुर्यतुर्ये विद्यते, तुर्यतुर्यस्य निष्प्रतियोगिकाद्वैतरूपत्वात् । प्रातिस्विकेन निषेधमुक्त्वा युगपन्निषेधमाह—**अनिन्द्रियमित्यादिना** । **अनिन्द्रियं** ज्ञानकर्मेन्द्रियतद्वृत्तिजातवैरळ्यात् । **अविषयं** भूतपञ्चकतत्कार्यभौतिकास्पृष्टत्वात् । **अकरणं** बाह्यान्तःकरणग्रामविवर्जितत्वात् । **अलक्षणं** जहदादिलक्षणागम्यत्वात् । **असङ्गं** देहेन्द्रियादिसंबन्धाभावात् । **अगुणं** सौष्ठवादिगुणवैरळ्यात् । **अविक्रियं** स्वाङ्गचलनादिरूपक्रियावैरळ्यात् । **अव्यपदेश्यं** नामरूपाभावात् । **असत्त्वं अरजस्कं अतमस्कं** इति सत्त्वादित्रिगुणशून्यं निर्गुणत्वात् । **अमायं** अकपटं यथाभूतार्थरूपत्वात् । **अभयं** भयमूलद्वैतासंभवात् । स्वातिरिक्तद्वैतसामान्याभावे **अपि औपनिषदमेव** ईशाद्यष्टोत्तरशतोपनिषदर्थश्रवणादिनिष्पन्नज्ञानैकगम्यत्वात् । स्वेन रूपेण **सुविभातं** स्वमात्रतया भातत्वात् । **सकृद्विभातं** स्वावृतित्रयरहितं सत् सकृच्चरमसाक्षात्कारतया भातत्वात्, पुनः प्रतीत्यन्तरनिरपेक्षमित्यर्थः । अस्य स्वाविद्यापदतत्कार्यस्य **पुरतोऽस्मात् सर्वस्मात् सुविभातम्** । **अद्वयं** उक्तार्थं **पश्यत** । दर्शनप्रकारमाह—**हंसः सोऽहमिति** । हं त्वंपदार्थः, सः तत्पदार्थः, व्यतिहारस्तयोः एकत्वप्रदर्शनार्थः ॥

देवानां अद्वयात्मानुभवनिर्धारणम्

स होवाच किमेष दृष्टो वेति । दृष्टो विदिताविदितात् पर इति होचुः । क्वैषा । कथमिति होचुः । किं तेन । न किंचनेति होचुः । यूयमेवाश्चर्यरूपा इति होवाच । न चेत्याहुः । ओमित्यनुजानीध्वं ब्रूतैनमिति । ज्ञातोऽज्ञातश्चेति होचुर्न चैवमिति होचुरिति । ब्रूतैवैनमात्मसिद्धमिति होवाच । पश्याम एव भगवो न च वयं पश्यामो नैव वयं वक्तुं शक्नुमो नमस्तेऽस्तु भगवन् प्रसीदेति होचुः । न भेतव्यं पृच्छतेति होवाच । क्वैषाऽनुज्ञेति । एष एवात्मेति होवाच । ते होचुर्नमस्तुभ्यं वयं त इति । इति ह प्रजापतिर्देवाननुशशासानुशशासेति ॥ १९ ॥

देवान् प्रत्येवमुक्त्वा स प्रजापतिः उवाच ह किल । किमिति ? **किमेष दृष्टो**ऽदृष्टो **वेति । दृष्टो विदिताविदितात् परः इति होचुः** इत्ययमर्थः केनोपनिषद्विवरणे सम्यक् प्रपञ्चितः । तैरेवमुक्तः प्रजापतिराह---**क्वैषेति** । **एषा** स्वात्मसंवित् **क्व** कुत्र वर्तते । प्रजापतिना एवं बुद्धिपरीक्षाऽर्थं पृष्टाः प्रजापत्यनुग्रह सिद्धस्वानुभूतिं प्रकटयन्तः उत्तरं ददुरित्याह—**कथमिति होचुरिति** । **कथं** केन प्रकारेण स्वमहिमस्थां संविदमुद्दिश्य तदाधारं पृच्छतीति शेषः । पुनरपि तेषां बुद्धिपरीक्षाऽर्थं प्रजापतिः पृच्छति---**किं तेनेति** । तेन स्वमहिम्नि प्रतिष्ठितेनात्मना साक्षात्कृतेन किं प्रयोजनमिति प्रजापतिना पृष्टा देवाः ब्रह्मभावापत्त्यनन्तरं न किमपि प्रयोजनान्तरं अस्तीत्याहुरित्याह---**न किंचनेति होचुरिति** । तैरेवमुक्तः पुनः प्रजापतिराह---**यूयमेवेति** । हे देवाः **यूयमेव आश्चर्यरूपाः** स्वात्मैवाश्चर्यरूपः, 'आश्चर्यो वक्ता' इत्यादि, "आश्चर्यवत् पश्यति" इत्यादि च श्रुतिस्मृतिप्रकटितपरमात्मैव आश्चर्यरूपः, स एव भवन्त इत्यर्थः । **इति होवाच** प्रजापतिः । तेनैवमुक्ताः तत्त्वंपदार्थभेदमपश्यन्त इवोत्तरमाहुरित्याह----**नचेत्याहु-**

रिति। नैवात्र द्वयमस्ति येन वयं तत्स्वरूपं, किं तु तत्स्वरूपमेवेति। तैरेवमुक्तः पुनराह—**ओमित्यनुजानीध्वमिति**। यदि भवतां एवं परमार्थनिश्चयस्तदा नचेत्येवमादिनकारं परित्यज्य ओमित्येवानुज्ञां भवन्तः कुर्वन्तु। इतः परं भवन्तः स्वानुभवं वदन्त्वित्याह—**ब्रूतेति**। यथा भवद्भिरवगतं तथा निःशङ्कं **ब्रूत** कथयत। एवं प्रजापतिनोक्ताः स्वाचार्यप्रजापतिहृदयभूमानन्दं जनयितुमेवमाहुः—**ज्ञातोऽज्ञातश्चेति**। यथा भवद्भिरुपदिष्टः तथा अस्माभिरप्यवगतः। न चात्र कर्मकर्तृभावोऽपि अवगत इत्यर्थः। **न चैवं**, वस्तुतस्तु ज्ञातोऽज्ञातोऽपि नैव, विधिनिषेधप्रत्ययगम्यत्वात् **इति होचुः**। तैरेवमुक्तः प्रजापतिराह—**ब्रूतैवैनमात्मसिद्धमिति होवाचेति**। एवं मयोपदिष्टमात्मानमनात्मापह्नवतः आत्ममात्रतया सिद्धमेव ब्रूतेति होवाच। एवं प्रजापतिना आक्षिप्ताः स्वानुभवसर्वस्वं प्रकटयन्तीत्याह—**पश्याम एवेति**। हे **भगवो** भगवन् योऽनात्मापह्नवसिद्धस्वात्मा निष्प्रतियोगिकस्वमात्रमिति **पश्यामः एव**। पुनरेवकारव्यावर्त्यमाहुः—**न च वयं** स्वातिरेकेण **पश्यामः** स्वात्ममात्रदर्शनस्य स्वातिरिक्तदर्शनापह्नवपूर्वकत्वात्। तथाऽपि तत्स्वरूपं वक्तुं शक्यमित्यत्राहुः—**नैवेति**। त्वदुपदिष्टनिष्प्रतियोगिकनिर्विशेषमात्मानं **नैव वयं वक्तुं शक्नुमः**। इतः परं वक्तव्यमवक्तव्यं वा न किंचिदस्तीति मन्वानाः स्वोपदेष्टुः प्रजापतेः नमस्कारं कृतवन्त इत्याह—**नम** इति। **नमस्ते** तुभ्यं स्वाचार्याय पित्रे च **अस्तु** हे **भगवन् प्रसीद प्रसन्नो** भव **इति होचुः**। प्रजापतिरपि सर्वदा तेषु प्रसन्नः सन् पुनस्तेषां बुद्धिदार्ढ्यमवलोकयितुं प्रसीदेति तदुक्तं स्वीकृत्याह—**न भेतव्यं पृच्छतेति होवाचेति**। भवद्भिर्न भेतव्यं भयं न करणीयं, पुनरात्मविषये प्रश्नं पृच्छत। एवमुक्ताः देवाः प्रजापतिमाहुः **कैषाऽनुज्ञेति** पृच्छतेत्येषाऽनुज्ञा स्वात्मव्यतिरिक्ता किं तयेति। प्रजापतिरपि तेषां दृढानुभवमवलोक्य संतुष्ट एवमाह—**एष एवात्मेति होवाचेति**। यो मयोक्तः ओङ्काराग्रविद्योततुर्यतुरीय एष एवाविकल्पाविकल्पात्मा भवद्भिः स्वावशेषतया विदितः। एवं प्रजापतिनोक्ताः देवाः प्रजापतेरानन्दं अभिवर्धयन्त इति **होचुः—वयं** भवच्छिष्याः पुत्राश्च, महागुरवे पित्रे च **तुभ्यं नमोऽस्तु**। एवं श्रुतिराह—**प्रजापतिर्देवाननुशशासेति**। व्यष्टिसमष्ट्यात्मक-

प्रणवरूपाविद्यापदतत्कार्यजाग्रज्जाग्रदादिपञ्चदशावस्थातद्व्यष्ट्यारोपापवादाधि-करणविश्वविश्वादितुर्यप्राज्ञान्ततत्समष्ट्यारोपापवादाधिकरणविराड्विराडादितुर्य-बीजान्ततदुभयैक्यारोपापवादाधिकरणोत्रोत्राद्यविकल्पानुज्ञैकरसान्तकलनाप्रपञ्च-नपूर्वकं तदपह्नवसिद्धं तुर्यतुरीयं ब्रह्म अविकल्पाविकल्पं उग्रमित्याद्यहमित्यन्तानुष्टुभैव लभ्यं ब्रह्म स्वमात्रमित्यनेनैव प्रकारेण प्रजापतिः देवाननुशशास । पारमार्थिक-ज्ञानोपदेशेन अनुशासनं कृतवान् । इतिशब्दो विद्यासमाप्त्यर्थः ॥ १९ ॥

उक्तार्थानुवादकमन्त्रः

तदेष श्लोकः—

ओतमोतेन जानीयादनुज्ञातारमान्तरम् ।
अनुज्ञामद्वयं लब्ध्वा उपद्रष्टारमाव्रजेदिति ॥ २० ॥

**तत्** तत्रोपनिषदर्थे **एष श्लोको** मन्त्रो **भवति** स्वाज्ञदृष्ट्या परिच्छेदप्रसक्तौ **ओतं** सर्वत्र तुर्यतुर्यं ततं **ओतेन** तुरीयोङ्कारेण **जानीयात्** । किं तदोतमात्रं ? तत्राह **अनुज्ञातारं** सर्वसाक्षिणमपि जानीयात् । ततोऽप्यान्तरं प्रत्यगभिन्न-परमात्मानं पराग्भावसापेक्षप्रत्यग्भावापाये निष्प्रतियोगिकाद्वयं स्वमात्रमिति **अनुज्ञां लब्ध्वा** साक्षात्कृत्य तत **उपद्रष्टारं** तुर्यतुरीयं स्वमात्रमित्याव्रजेत् ॥ २० ॥

**इति नवमः खण्डः**

तुरीयोङ्कारविद्योतं मन्त्रराजार्थभासुरम् ।
नृसिंहाख्यं त्रिपाद्ब्रह्म हृदये मे विजृंभताम् ॥
श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
तापनीयोपनिषदो व्याख्येह लिखिता मया ।
प्रकृतोपनिषद्व्याख्याग्रन्थस्तु द्विसहस्रयुक् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे सप्तविंशतिसङ्ख्यापूरकं
नृसिंहोत्तरतापिन्युपनिषद्विवरणं संपूर्णम्

# रामतापिन्युपनिषत्

## पूर्वतापिनी

### भद्रं कर्णेभिः—इति शान्तिः

### प्रथमोपनिषत्

रामनामार्थप्रकाशनम्

चिन्मयेऽस्मिन् महाविष्णौ जाते दशरथे हरौ ।
रघोः कुलेऽखिलं राति राजते यो महीस्थितः ॥ १ ॥
स राम इति लोकेषु विद्वद्भिः प्रकटीकृतः ।
राक्षसा येन मरणं यान्ति स्वोद्रेकतोऽथवा ॥ २ ॥
रामनाम भुवि ख्यातमभिरामेण वा पुनः ।
राक्षसान् मर्त्यरूपेण राहुर्मनसिजं यथा ॥ ३ ॥
प्रभाहीनांस्तथा कृत्वा राज्यार्हाणां महीभृताम् ।
धर्ममार्गं चरित्रेण ज्ञानमार्गं च नामतः ॥ ४ ॥
तथा ध्यानेन वैराग्यमैश्वर्यं स्वस्य पूजनात् ।
तथा रात्यस्य रामाख्या भुवि स्यादथ तत्त्वतः ॥ ५ ॥

**रमन्ते योगिनोऽनन्ते नित्यानन्दे चिदात्मनि ।**
**इति रामपदेनासौ परं ब्रह्माभिधीयते ॥ ६ ॥**

श्रीरामतापनीयार्थं भक्तध्येयकलेबरम् ।
विकलेबरकैवल्यं श्रीरामब्रह्म मे गतिः ॥

इह खलु अथर्वणवेदप्रविभक्तेयं श्रीरामतापिनीयोपनिषत् पूर्वोत्तरतापिनीभ्यां सोपायसविशेषनिर्विशेषब्रह्मस्वरूपप्रकटनपूर्वकं ब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । मुमुक्षूनुपलभ्य अवान्तररूपेण प्रवृत्तेयं पूर्वतापिनीश्रुतिरिति यत्तत् सविशेषब्रह्मविद्यास्तुत्यर्थं आदौ स्वाज्ञस्वज्ञदृष्टिमाश्रित्य रामनामार्थं प्रकाशयति—**चिन्मय** इत्यादिना । **चिन्मये** चिन्मात्रे **हरौ** स्वाज्ञानतत्कार्यहारिणि **विष्णौ** सर्वव्यापके

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥

इति स्वप्रतिज्ञापरिपालनार्थं **अस्मिन् दशरथे** कश्यपप्रजापत्यवतारे निष्ठाद्वयपरिपालनाय **जाते** आविर्भूते सत्यथ बाललीलया **रघोः कुले अखिलं** स्वजनवर्गं **यो राति** आनन्दयति **यो महीस्थितः** सन् स्वतेजसा स्वविभूत्या च **राजते ॥ १ ॥** एवं भूरादिसर्वलोकेषु **स एव रामः** इति **विद्वद्भिः** तद्याथात्म्यज्ञैः **प्रकटीकृतो** भवति । भङ्गयन्तरेण रामनामार्थं निर्दिशति—**राक्षसा** इति । विराधादि**राक्षसा येन मरणं यान्ति स्वोद्रेकतः** स्वपापकृत्यतो **वा ॥ २ ॥** **पुनः अभिरामेण** सर्वलोकमनोरमणरूपेण वा **रामनाम भुवि ख्यातं** स्यादित्यर्थः । राक्षसा इत्यत्र रेफार्णो गृह्यते, मरणं यान्ति इत्यत्र मकारः, वर्णद्वययोगे रामो भवति । पुनः प्रकारान्तरेण रामनामोद्धरति—**राक्षसानिति** । यथा **राहुः** चन्द्रं निष्प्रभं **करोति ॥ ३ ॥ तथा** अयं **मर्त्यरूपेण राक्षसान् प्रभाहीनान् कृत्वा** अथ **राज्यार्हाणां महीभृतां** सतां स्व**चरित्रेण** सर्वप्राणिस्वाश्रमोचित**धर्ममार्गं** उपदिशन् स्वातिरिक्ताश्रयासंभवप्रबोधसिद्धनिष्प्रतियोगिकब्रह्ममात्ररूपे

यो राजते यः स्वे महिम्नि महीयते स राम इति स्वनाम्ना **ज्ञानमार्गं प्रकाशयन्** ॥ ४ ॥ **स्वमूर्तिध्यानेन** स्वातिरिक्तपदार्थ**वैराग्यं** जनयन्, **स्वपूजनतो ब्रह्माद्यैश्वर्यं** दिशन् योऽवतिष्ठते तस्य **रामाख्या सर्वत्र रातीति भुवि स्यात्** । अस्य रामाख्या कथमित्यत्र राक्षसान् मर्त्यरूपेण राहुः मनसिजं राज्यार्हाणां महीभृतामिति रेफमकारयोजनतो रामाख्या स्यादित्यर्थः । लोकदृष्ट्या एवं नाम प्रकाशयित्वा वस्तुदृष्ट्या अस्य नामार्थं निर्दिशति—**अथेति** ॥ ५ ॥ सर्वापह्नव-सिद्धनिष्प्रतियोगिकब्रह्ममात्रपर्यवसानतया मनो युञ्जन्त इति **योगिनः** सम्यग्ज्ञानि-नो**ऽनन्ते** परिच्छेदत्रयापह्नवसिद्धे **नित्यभूमानन्दे चिदात्मनि** चिन्मात्रे तन्मात्रावशेषतया **रमन्त** इति **रामपदेन असौ** भगवान् **परं ब्रह्माभिधीयते**, "राम एव परं ब्रह्म" इति श्रुतेः ॥ ६ ॥

उपासकार्थे निर्विशेषस्य रूपकल्पना

चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः ।
उपासकानां कार्यार्थं ब्रह्मणो रूपकल्पना ॥ ७ ॥
रूपस्थानां देवतानां [1]पुंस्त्र्यङ्गास्त्रादिकल्पना ।
द्विचत्वारिषडष्टानां दश द्वादश षोडश ॥ ८ ॥
अष्टादशामी कथिता हस्ताः शङ्खादिभिर्युताः ।
सहस्रान्तास्तथा तासां वर्णवाहनकल्पना ॥ ९ ॥
शक्तिसेनाकल्पना च ब्रह्मण्येवं हि पञ्चधा ।
कल्पितस्य शरीरस्य तस्य सेनाऽऽदिकल्पना ॥ १० ॥

अनेन मन्त्रेण रामस्य निर्विशेषत्वमवगम्यते, तथाविधस्य सविशेषत्वं कुतः ? इत्यत आह—**चिन्मयस्येति** । **चिन्मयस्ये**त्यादिविशेषणविशिष्ट**ब्रह्मणो**

[1] पुंस्त्वं गात्रादि—अ, १.

**निर्विशेषत्वेन** विकल्पासहत्वेऽपि भक्तपटलस्वपदाप्त्युपायार्थं **रूपादिविशेष-कल्पना**, न स्वत इत्यर्थः ॥ ७ ॥ उपासकस्वपदाप्तिनिमित्तकल्पनां प्रपञ्चयति— **रूपेति** । निर्विशेषब्रह्ममात्रस्वरूपे रामे स्वाज्ञादिदृष्ट्या भेदाभेदरूपेण **तिष्ठन्तीति रूपस्थाः** तासां देवतानां सीतारामतदंशभेदेन **द्विचत्वारिषडष्टानां सशक्तिकानां पुंस्त्र्यङ्गास्त्रादिकल्पना** तदधिकरणरामोपासनार्थैव । सीतया सह द्वित्वं, लक्ष्मणादिभिः चतुस्सङ्ख्याविशिष्टत्वं, सुग्रीवविभीषणादिभिः षट्संख्यापूरकत्वं, धृष्ट्यादिसचिवैः अष्टसंख्यापूरकत्वम् । तासां सीतारामांशविकल्पितानां नरवानरराक्षसभेदेन सेनासङ्ख्या निगद्यते । एकैकस्यामिह सेनाऽधिपा **दश द्वादश षोडश अष्टादश** हस्ता वर्तन्ते इति **कथिताः**, "महापद्मशतं हस्तं" इति गणितशास्त्रप्रसिद्धेः ॥ ८ ॥ कस्याश्चित् देवतायाः **शङ्खादिसङ्ख्याभिः युताः सहस्रान्ताः** परिवाराः सन्ति ॥ ९ ॥ आदौ रामे बहुदेवताकल्पना ततस्तासां **वर्णकल्पना वाहनकल्पना** एकैककार्यनिर्वाहक**शक्तिकल्पना** अगण्य**सेनाकल्पने**-त्येवं **ब्रह्मण्येवं** हि रामे **पञ्चधा** कल्पना विकल्पिता । एवं पञ्चधाकल्पना निर्विशेषब्रह्मणो रामस्येत्यत आह—**कल्पितस्येति** । भक्तपटलस्वपदाप्त्युपाय-तया **कल्पितस्य शरीरस्यैव सेनाऽऽदिकल्पना**, स्वस्य निरुपाधिकत्वेन निर्विकल्पत्वात् ॥ १० ॥

मन्त्रजपयन्त्रपूजयोः रामप्रसादकरत्वम्

**ब्रह्मादीनां वाचकोऽयं मन्त्रोऽन्वर्थादिसंज्ञितः ।**
**जप्तव्यो मन्त्रिणा नैवं विना देवः प्रसीदति ॥ ११ ॥**
**क्रियाकर्मेज्याकर्तॄणामर्थं मन्त्रो वदत्यथ ।**
**मननात् त्राणना[तारणा]न्मन्त्रः सर्ववाच्यस्य वाचकः ॥ १२ ॥**
**सोऽभयस्यास्य देवस्य विग्रहो यन्त्रकल्पना ।**
**विना यन्त्रेण चेत् पूजा देवता न प्रसीदति ॥ १३ ॥**

इत्थंभूतरामप्रसादहेतुः कः? इत्याशङ्क्य तद्वाचको मन्त्रः षडक्षरादिः तत्पूजार्पीठं चेत्याह—**ब्रह्मादीनामिति**। रामस्य सर्वदेवात्मकत्वेन रामान्वर्थसंज्ञितो मन्त्रो ब्रह्मादीनामपि वाचक एव। यतो मन्त्रानुष्ठानं विना देवो न प्रसीदति अतो मन्त्रिणा मन्त्रैकशरणेन अयं मनुः जप्तव्यो भवति॥ ११॥ मन्त्रार्थं व्युत्पादयति—**क्रियेति**। क्रिया व्यापारः, द्वितीयान्तोपात्तं कर्म, इज्या यज्ञः, कर्ता यजमानः, तेषां महातात्पर्यं यत्र पर्यवस्यति तमेतमर्थं अयं मन्त्रो वदति मन्त्रार्थस्य प्रत्यगभिन्नब्रह्मणि पर्यवसितत्वात्। अथ सर्ववाच्यवस्तुनो रामचन्द्रस्य यो वाचको भवति स्वमननमात्रतो मन्तारं स्वातिरिक्तास्तित्वभ्रमवारिधेः तारणात् मन्त्र इति व्युत्पत्तिः युज्यत इत्यर्थः॥ १२॥ इतश्च देवताप्रसादहेतुः देवपूजा इत्याह—**स इति**। शुद्धाद्वैततया अभयस्यास्य देवस्य यो विग्रहः सोऽयं यन्त्रकल्पनारूपो भवति। यथा यन्त्रपूजया देवता प्रसीदति तथा विग्रहपूजया न प्रसीदतीत्यर्थः॥ १३॥

इति प्रथमोपनिषत्

---

## द्वितीयोपनिषत्

### रामबीजस्य सर्वात्मकत्वम्

स्वभूर्ज्योतिर्मयोऽनन्तरूपी स्वेनैव भासते।
जीवत्वेन समो यस्य सृष्टिस्थितिलयस्य च॥ १॥
कारणत्वेन चिच्छक्त्या रजःसत्त्वतमोगुणैः।
यथैव वटबीजस्थः प्राकृतश्च महान् द्रुमः॥ २॥

तथैव रामबीजस्थं जगदेतच्चराचरम् ।

रेफारूपा मूर्तयः स्युः शक्तयस्तिस्र एव चेति ॥ ३ ॥

स्वस्य स्वबीजात्मना सर्वकारणत्वमाह—**स्वभूरिति** । हेत्वन्तरं विना स्वयमेव भवतीति **स्वभूः ज्योतिर्मयः** प्रकाशमात्रत्वात् "प्रकाशः पर्यवस्यति" इति श्रुतेः । **अनन्तरूपी** स्वाज्ञदृष्ट्या अनेकरूपी सर्वात्मकत्वात् । एवं **स्वेनैव भासते** स्वयंप्रकाशत्वात् । **यस्य सृष्टिस्थितिप्रळयवतः** स्वातिरिक्तप्रपञ्चस्य **जीवत्वेन** कार्योपाधिना ईश्वरोपाधि**कारणत्वेन** **चिच्छक्त्या** प्रतीचा तद्वास्य**रजस्सत्वतमोगुणैर्वा सम** इत्यत्र मानं ओमिति । ओङ्कारस्य अभिधानाभिधेयरूपेण सर्वसमत्वात् "सम एभिः सर्वैः" इति श्रुतेः । रामरहस्ये वटबीजदृष्टान्तश्रुतिः व्याख्याता । रां इति रामबीजे रेति व्यञ्जनतो ब्रह्मेत्युच्यते, तदुपरि श्रूयमाणाकारतो विष्णुः, मकारतः शिवः इति **रेफारूपाः त्रिमूर्तयः स्युः ।** तत्रत्यदीर्घः छान्दसः । सरस्वतीलक्ष्मीगौरीभेदेन क्रियाज्ञानेच्छाभेदेन वा **शक्तयः तिस्र एव चेति** । द्वितीयोपनिषत्समाप्त्यर्थश्च **च**शब्दः ॥ १–३ ॥

इति द्वितीयोपनिषत्

---

## तृतीयोपनिषत्

सीतारामयोः मन्त्रयन्त्रादिपूज्यत्वम्

सीतारामौ तन्मयावत्र पूज्यौ जातान्याभ्यां भुवनानि द्विसप्त ।

स्थितानि च प्रहितान्येव तेषु ततो रामो मानवो माययाऽधात् ॥ १ ॥

जगत्प्राणायात्मनेऽस्मै नमः स्यान्नमस्त्वैक्यं प्रवदेत् प्रागुणेनेति ।

भगवत्प्रसादहेतुतया मन्त्रादिरुक्तः, तत्र पूज्यौ कौ? इत्यत आह— **सीतारामाविति** । **आभ्यां** सीतारामाभ्यां चतुर्दशभुवनोपलक्षितानन्तकोटि-ब्रह्माण्डानि जलाशयबुद्बुदानीव मुहुर्मुहुः जन्मस्थितिभङ्गकलनामनुभवन्ति । **अत्र** यन्त्रे तावेव **तन्मयौ** यन्त्ररूपिणौ **सीतारामौ** पूज्याविल्यर्थः । **ततो** यो रामो **मायया मानवो** भूत्वा समस्तं जगत् **अधात्** अपोषयत् **अस्मै जगत्प्राणाय जगदात्मने नमः** स्यात् नमोऽस्तु, आवयोः ऐक्यमस्त्विल्यर्थः । कुतो नमः-शब्दस्त्वैक्यवाचीत्यत आह—"नमस्तु जीवपरयोर्वाच्यार्थत्यागपूर्वकम्" लक्ष्ययोः शुद्धत्वेन ऐक्यमेव वदेत् । केन हेतुनेत्यत्र जीवपरयोः **प्राग्गुणेन** सच्चिदानन्द-रूपेणेत्यर्थः । **इति**शब्दस्तृतीयोपनिषत्समाप्त्यर्थः ॥

**इति तृतीयोपनिषत्**

## चतुर्थोपनिषत्

### रामषडक्षरार्थः

जीववाची नमो नाम चात्मा रामेति गीयते ।
तदात्मिका या चतुर्थी तथा चायेति गीयते ॥ १ ॥
मन्त्रोऽयं वाचको रामो वाच्यः स्याद्योग एतयोः ।
फलदश्चैव सर्वेषां साधकानां न संशयः ॥ २ ॥
यथा नामी वाचकेन नाम्नो योऽभिमुखो भवेत् ।
तथा बीजात्मको मन्त्रो मन्त्रिणोऽभिमुखो भवेत् ॥ ३ ॥

[1]बीजशक्तिं न्यसेद्दक्षवामयोः स्तनयोरपि ।
कीलो मध्ये विना भाव्यः स्ववाञ्छाविनियोगवान् ॥ ४ ॥
सर्वेषामेव मन्त्राणामेष साधारणः क्रमः ।
अत्र रामोऽनन्तरूपस्तेजसा वह्निना समः ॥ ५ ॥
[2]स त्वनुष्णगुविश्वश्चेदग्नीषोमात्मकं जगत् ।
उत्पन्नः सीतया भाति चन्द्रश्चन्द्रिकया यथा ॥ ६ ॥
प्रकृत्या सहितः श्यामः पीतवासा जटाधरः ।
द्विभुजः कुण्डली रत्नमाली धीरो धनुर्धरः ॥ ७ ॥
प्रसन्नवदनो जेता धृष्ट्यष्टकविभूषितः ।
प्रकृत्या परमेश्वर्या जगद्योन्याऽङ्किताङ्कभृत् ॥ ८ ॥
हेमाभया द्विभुजया सर्वालंकृतया चिता ।
श्लिष्टः कमलधारिण्या पुष्टः कोसलजाऽऽत्मजः ॥ ९ ॥
दक्षिणे लक्ष्मणेनाथ सधनुष्पाणिना पुनः ।
हेमाभेनानुजेनैव तथा कोणत्रयं भवेत् ॥ १० ॥
तथैव तस्य मन्त्रस्य यश्चाणुश्च स्वङेन्तया ।
एवं त्रिकोणरूपं स्यात्तं देवा ये समाययुः ॥ ११ ॥

"नमस्त्वैक्यं प्रवदेत्" इत्यत्र तत्त्वंपदलक्ष्ययोः ऐक्यं सूत्रितं, सोपायं तत्प्रपञ्चनाय चतुर्थोपनिषदारभ्यते । तत्रादौ श्रीरामषडक्षरार्थकथनेन प्रत्यक्परैक्यं प्रकटयति—जीवेति । अस्यार्थः रामरहस्ये प्रपञ्चितः ॥ १ ॥ एवं प्रत्यक्परैक्यमुक्त्वा मन्त्रार्थयोः एकत्वानुसन्धानं प्रत्यग्ब्रह्मावगत्युपाय इत्याह—मन्त्र

[1] बीजशक्ती—क. [2] सत्वनुष्णु—क. सत्वनुष्ठु—अ, २.

इति ॥ २ ॥ मन्त्रो मन्त्र्यभिमुखो भवेत् इति सदृष्टान्तमाह—**यथेति** ॥ ३ ॥ मन्त्रानुष्ठानस्य देवताऽऽभिमुख्यहेतुतया बीजादितन्न्यासस्थलं च सर्वमन्त्र-साधारणतयाऽऽह—**बीजेति** ॥ ४ ॥ रामस्य मन्त्रासनत्वं तत्राविर्भवं चाह—**अत्रेति** । **अत्र मन्त्रे तेजसा वह्निना समः** ॥ ५ ॥ स तु स एव **अनुष्णगुः** चन्द्रसमः स्वाभक्तभक्तापेक्षया उष्णानुष्णद्युतित्वे अनुष्ण-गुरिति वक्तव्ये विसर्गलोपश्छान्दसः । "हरिरेव जगत् जगदेव हरिः हरितो जगतो न हि भिन्नतनुः" इति स्मृत्यनुरोधेन विराड्भावमेत्य **विश्वरूपश्चेत्** इदं **जगत्** **अग्नीषोमात्मकं** भवति । तत्र प्राण्यदृष्टवशात् जगति सीतया सह उत्पन्नवत् भातीत्याह—**उत्पन्न** इति ॥ ६–७ ॥ **धृष्टयष्टकविभूषितः** धृष्ट्याद्यष्टमन्त्रिभिः परिवृत इत्यर्थः । पार्श्वद्वयस्थितसीतालक्ष्मणाभ्यां स्थितं त्रिकोणवत् भान्तं देवाः स्तुवन्तीत्याह—**प्रकृत्येति** ॥ ८–१० ॥ यथा रामलक्ष्मणसीतास्त्रिकोणवत् स्थिताः तथैव तस्य राममन्त्रस्य पार्श्वद्वये स्वापेक्षया लक्ष्मणस्य कनीयस्त्वेन अणुत्वं "एषोऽणुरात्मा" इति श्रुतेः । **यश्च** राममनुः **अणुश्च** लक्ष्मणमनुः **स्वं** स्वकीयसीतामनुः सर्वे **ङेन्तया** चतुर्थ्यन्तेन युताः एवं मन्त्ररूपेणापि ॥ ११–१४ ॥

देवकृतरामस्तुतिः

स्तुतिं चक्रुश्च जगतः पतिं कल्पतरौ स्थितम् ।
कामरूपाय रामाय नमो मायामयाय च ॥ १२ ॥
नमो वेदादिरूपाय ओङ्काराय नमो नमः ।
रमाधराय रामाय श्रीरामा[1]यात्ममूर्तये ॥ १३ ॥
जानकीदेहभूषाय रक्षोघ्नाय शुभाङ्गिने ।
भद्राय रघुवीराय दशास्यान्तकरूपिणे ॥ १४ ॥

[1] यार्त—उ.

रामभद्र महेष्वास रघुवीर नृपोत्तम ।
भो दशास्यान्तकास्माकं रक्षां देहि श्रियं च ते ॥ १५ ॥
त्वमीश्वर्या दापयाथ संप्रत्याश्वरिमारणम् ।
कुर्विति स्तुत्य देवाद्याः तेन सार्धं सुखं स्थिताः ॥ १६ ॥

रक्षां देहि श्रियं च ते उभे अपि देहीत्यर्थः ॥ १५ ॥ त्वं ईश्वर्या सीतया श्रियं दापय । आशु झटिति नः शत्रुमारणं कुरु ॥ १६ ॥

ऋषिकृतरामस्तुतिः

स्तुवन्त्येवं हि ऋषयस्तदा रावण आसुरः ।
रामपत्नीं वनस्थां यः स्वनिर्वृत्यर्थमाददे ॥ १७ ॥
स रावण इति ख्यातो यद्वा रावाच्च रावणः ।
तद्व्याजेनेक्षितुं सीतां रामो लक्ष्मण एव च ॥ १८ ॥
विचेरतुस्तदा भूमौ देवीं संदृश्य चासुरम् ।
हत्वा कबन्धं शबरीं गत्वा तस्याज्ञया तया ॥ १९ ॥
पूजितो वायुपुत्रेण भक्तेन च कपीश्वरम् ।
आहूय शंसतां सर्वमाद्यन्तं रामलक्ष्मणौ ॥ २० ॥
स तु रामे शङ्कितः सन् प्रत्ययार्थं च दुन्दुभेः ।
विग्रहं दर्शयामास यो रामस्तमचिक्षिपत् ॥ २१ ॥
सप्तसालान् विभिद्याशु मोदते राघवस्तदा ।
तेन हृष्टः कपीन्द्रोऽसौ सरामस्तस्य पत्तनम् ॥ २२ ॥
जगामागर्जदनुजो वालिनो वेगतो गृहात् ।
तदा वाली निर्जगाम तं वालिनमथाहवे ॥ २३ ॥

निहत्य राघवो राज्ये सुग्रीवं स्थापयेत्ततः ।
हरीनाहूय सुग्रीवस्त्वाह चाशाविदोऽधुना ॥ २४ ॥
आदाय मैथिलीमद्य ददताश्वाशु गच्छत ।
ततस्ततार हनुमानब्धिं लङ्कां समाययौ ॥ २५ ॥
सीतां दृष्ट्वाऽसुरान् हत्वा पुरं दग्ध्वा तथा स्वयम् ।
आगत्य रामेण सह न्यवेदयत तत्त्वतः ॥ २६ ॥
तदा रामः क्रोधरूपी तानाहूयाथ वानरान् ।
तैः सार्धमादायास्त्राणि पुरीं लङ्कां समाययौ ॥ २७ ॥
तां दृष्ट्वा तदधीशेन सार्धं युद्धमकारयत् ।
घटश्रोत्रसहस्राक्षजिद्भ्यां युक्तं तमाहवे ॥ २८ ॥
हत्वा विभीषणं तत्र स्थाप्याथ जनकात्मजाम् ।
आदायाङ्कस्थितां कृत्वा स्वपुरं तैर्जगाम सः ॥ २९ ॥

यथा देवाः स्तुत्वा तत्प्रसादतः स्वाराज्यं ययुः तथा ऋषयोऽपि तत्प्रसादलब्धदिव्यज्ञानेन भाविचर्यां भूतरूपां वा प्रपञ्चयन्तः स्तुवन्तीत्याह—स्तुवन्तीति । निर्वृतिः सुखं वैकुण्ठपार्षदत्वप्रभवं तदर्थमाददे इत्यर्थः ॥ १७ ॥ लोकान् रावयति पीडयति कैलासपर्वताक्रान्तो महारवं करोतीति वा रावणः । मत्पार्षदप्रवरस्य ब्राह्मणशापप्रभवराक्षसत्वमोचनं कृत्वा अयं स्वपदे स्थापयितव्य इति तद्व्याजेन ॥ १८ ॥ देवीं संदृश्य अन्विष्य ॥ १९–२९ ॥

#### पट्टाभिषिक्तरामचन्द्रविभूतिः

ततः सिंहासनस्थः सन् द्विभुजो रघुनन्दनः ।
धनुर्धरः प्रसन्नात्मा सर्वाभरणभूषितः ॥ ३० ॥

मुद्रां ज्ञानमयीं याम्ये वामे तेजःप्रकाशिनीम् ।
धृत्वा व्याख्याननिरतश्चिन्मयः परमेश्वरः ॥ ३१ ॥
उदग्दक्षिणयोः स्वस्य शत्रुघ्नभरतौ ततः ।
हनूमन्तं च श्रोतारमग्रतः स्यात्त्रिकोणगम् ॥ ३२ ॥
भरताधस्तु सुग्रीवं शत्रुघ्नाधो विभीषणम् ।
पश्चिमे लक्ष्मणं तस्य धृतच्छत्रं सचामरम् ॥ ३३ ॥
तदधस्तौ तालवृन्तकरौ त्र्यश्रं पुनर्भवेत् ।
एवं षट्कोणमादौ स्वदीर्घाङ्गैरेष संयुतः ॥ ३४ ॥
द्वितीयं वासुदेवाद्यैराग्नेयादिषु संयुतः ।
तृतीयं वायुसूनुं च सुग्रीवं भरतं तथा ॥ ३५ ॥
विभीषणं लक्ष्मणं च अङ्गदं चारिमर्दनम् ।
जाम्बवन्तं च तैर्युक्तस्ततो धृष्टिर्जयन्तकः ॥ ३६ ॥
विजयश्च सुराष्ट्रश्च राष्ट्रवर्धन एव च ।
अशोको धर्मपालश्च सुमन्त्रश्चैभिरावृतः ॥ ३७ ॥
ततः सहस्रदृग्वह्निर्धर्मज्ञो वरुणोऽनिलः ।
इन्द्रीशधात्रनन्ताश्च दशभिश्चैभिरावृतः ॥ ३८ ॥
बहिस्तदायुधैः पूज्यो नीलादिभिरलंकृतः ।
वसिष्ठवामदेवादिमुनिभिः समुपासितः ॥ ३९ ॥

पट्टाभिषिक्तरामचन्द्रविभूतिं वक्ष्यमाणयन्त्रदशावरणरूपिणीं प्रपञ्चयति—तत इति ॥ ३०–३३ ॥ शत्रुघ्नभरतपवनजा आद्यत्रिकोणरूपाः सुग्रीवविभीषण-

लक्ष्मणास्तु द्वितीयत्रिकोणरूपाः। शत्रुघ्नभरतपवनजसुग्रीवविभीषणलक्ष्मणालंकृतराज्याभिषिक्तश्रीरामयन्त्रषट्कोणमध्ये साङ्गं सावरणं सपरिवारं ससीतं रामचन्द्रं भावयेत् । कथमसौ भावनीय इत्यत्र स्वयं षट्कोणमध्यासनो भूत्वा सीताभरतशत्रुघ्नहनूमत्सुग्रीवविभीषणलक्ष्मणैः परिवृतो विजयत इति ध्येयो भवति । षट्कोणेषु दीर्घाङ्गैरेष संयुतः इत्यत्र हृदयाद्यङ्गदेवताभिरावृतो ध्येयः ॥ ३४ ॥ द्वितीयं वासुदेवाद्यैः इत्यत्र वासुदेवसंकर्षणप्रद्युम्नानिरुद्धैः आवृतो भवति । तृतीयं वायुसूनुं च इत्यत्र वायुसून्वादिजाम्बवदन्तैः परिवृतो भवति ॥ ३५ ॥ चतुर्थावरणे धृष्ट्यादिसुमन्त्रान्तैः आवृतो भवति ॥ ३६–३७॥ पञ्चमषष्ठयोः इन्द्रादिभिः तदायुधैश्च आवृतो भवति ॥ ३८–३९ ॥

यन्त्रलेखनप्रकारः

एवमुद्देशतः प्रोक्तं निर्देशस्तस्य चाधुना ।
त्रिरेखापुटमालिख्य मध्ये तारद्वयं लिखेत् ॥ ४० ॥
तन्मध्ये बीजमालिख्य तदधः साध्यमालिखेत् ।
द्वितीयान्तं च तस्योर्ध्वं षष्ठ्यन्तं साधकं तथा ॥ ४१ ॥
कुरु द्वयं च तत्पार्श्वे लिखेद्बीजान्तरे रमाम् ।
तत् सर्वं प्रणवाभ्यां च वेष्टयेच्छुद्धबुद्धिमान् ॥ ४२ ॥
दीर्घभाजी षडश्रेषु लिखेद्बीजं हृदादिभिः ।
कोणपार्श्वे रमामाये तदग्रेऽनङ्गमालिखेत् ॥ ४३ ॥
क्रोधं कोणाग्रान्तरेषु लिख्य मन्त्र्यभितो गिरम् ।
वृत्तत्रयं साष्टपत्रं सरोजे विलिखेत् स्वरान् ॥ ४४ ॥
केसरे चाष्टपत्रे च वर्गाष्टक[1]मथालिखेत् ।
तेषु मालामनोर्वर्णान् विलिखेदूर्मिसंख्यया ॥ ४५ ॥

[1] मधोलि—क.

अन्ते पञ्चाक्षराण्येवं पुनरष्टदलं लिखेत् ।
तेषु नारायणाष्टार्णान् लिख्य तत्केसरे रमाम् ॥ ४६ ॥
तद्बहिर्द्वादशदलं विलिखेद्द्वादशाक्षरम् ।
अथोंनमो भगवते वासुदेवाय इत्ययम् ॥ ४७ ॥
आदिक्षान्तान् केसरेषु वृत्ताकारेण संलिखेत् ।
तद्बहिः षोडशदलं लिख्य तत्केसरे ह्रियम् ॥ ४८ ॥
वर्मास्त्रनतिसंयुक्तं दलेषु द्वादशाक्षरम् ।
तत्सन्धिष्विरजादीनां मन्त्रान् मन्त्री समालिखेत् ॥ ४९ ॥
ह्रं स्रं भ्रं व्रं लूं अं श्रं ज्रं (च) लिखेत् सम्यक्ततो बहिः ।
द्वात्रिंशारं महापद्मं नादबिन्दुसमायुतम् ॥ ५० ॥
विलिखेन्मन्त्रराजार्णान् तेषु पत्रेषु यत्नतः ।
ध्यायेदष्टवसूनेकादशरुद्रांश्च तत्र वै ॥ ५१ ॥
द्वादशेनांश्च धातारं वषट्कारं च तद्बहिः ।
भूगृहं वज्रशूलाढ्यं रेखात्रयसमन्वितम् ॥ ५२ ॥
द्वारोपेतं च राश्यादिभूषितं फणिसंयुतम् ।
अनन्तो वासुकिश्चैव तक्षः कार्कोटपद्मकः [कौ] ॥ ५३ ॥
महापद्मश्च शङ्खश्च गुलिकोऽष्टौ प्रकीर्तिताः ।
एवं मण्डलमालिख्य तस्य दिक्षु विदिक्षु च ॥ ५४ ॥
नारसिंहं च वाराहं लिखेन्मन्त्रद्वयं तथा ।
कूटो रेफानुग्रहेन्दुनादशक्त्यादिभिर्युतः ॥ ५५ ॥

**योो नृसिंहः समाख्यातो ग्रहमारणकर्मणि ।**
**अन्त्यार्घीशवियद्बिन्दुनादैर्बीजं च सौकरम् ॥ ९६ ॥**
**हुंकारं चात्र रामस्य**

अनुक्तात्माद्यावरणचतुष्टयमत्रैवान्तर्भूयते । एवमहरहः स्वावरणदेवतातत्परिवारैः उपास्यमानो विजयत इत्यादावुद्देशतः प्रोक्तम् । अधुना तु यन्त्रस्वरूपं निर्दिशति—**निर्देशस्तस्य चाधुनेति** । यन्त्रलेखनप्रकारमाह—**त्रिरेखेति** ॥ ४०–४१ ॥ **तत्सर्वं प्रणवाभ्यां च वेष्टयेच्छुद्धबुद्धिमान्** इत्यत्र न हि प्रणवचतुष्टयं लेखनीयं, मध्ये सम्मुखोन्मुखाभ्यां तारद्वयं लिखेदिति यदुक्तं तदेव अत्र परामृश्यते ॥ ४२ ॥ **लिखेद्बीजं हृदादिभिः** रां नमः इत्यादि ॥ ४३ ॥ **गिरं** ऐं इति ॥ ४४ ॥ न हि "वृत्तत्रयं साष्टपत्रं" "पुनरष्टदळं लिखेत्" इत्यत्र अष्टदळत्रयं भवति, अष्टदळद्वयस्यैव विनियुक्तत्वात् । द्वितीयाष्टदळेषु **तेषु** ॥ ४५–४८ ॥ **इरजादीनां** हनूमदादीनाम् ॥ ४९ ॥ **नादबिन्दुसमायुतं** इत्यत्र मन्त्रराजः प्रतिवर्णं ॐ ग्रां इति दीर्घबिन्दुसमायुतो यथा भवति तथा द्वात्रिंशद्दळेषु मन्त्रराजार्णान् विलिखेदित्यर्थः ॥ ५० ॥ **तत्केसरेषु लिखित्वा ध्यायेत्** ॥ ५१ ॥ **द्वादशेनांश्च** द्वादशादित्यान् । वसुरुद्रादित्यनामान्यावरणपूजाप्रकरणे प्रकाश्यन्ते । **वज्रशूलाढ्यं** वज्रादिशूलान्ताष्टदिक्पालकायुधाढ्यम् । यद्वा—प्रतिद्वारं वज्रशूलाभ्यां आढ्यमिति ॥ ५२–५४ ॥ **कूटः** क्षकारः **रेफश्च अनुग्रहः** औङ्कारश्च **इन्दुः** मकारश्च **नादशक्तिः** यकारश्च, **आदि**शब्देन बिन्दुर्गृह्यते, एतद्विशिष्टं क्ष्म्र्यौं इति निष्पन्नम् ॥ ५५ ॥ **अन्त्यार्घीशो** वराहः तस्य वाचको **वियत्** हकारः **बिन्दुनादाभ्यां** बिन्दूकाराभ्यां युक्तश्चेत् हुमिति **सौकरबीजं** भवति । वराहस्य अन्त्यार्घीशत्वं कथमित्यत्र गुरुभारतोऽन्त्यविक्रियामापन्नाऽर्घिणी वसुमती वराहरूपेण तामुद्धृत्योद्वाहं कृतवान् इत्यन्त्यार्घीशो भूवराह इत्यर्थः । तस्य बीजं हुं इति । शिष्टं रामरहस्योपनिषत्प्रोक्तदशावरणयन्त्रव्याख्यानेन व्याख्यातं स्यात् । अनयोरेकरूपत्वात् न विशेषोऽस्तीत्यर्थः ॥५६॥

मालामन्त्रोद्धारः

मालामन्त्रोऽधुनेरितः ।

तारो नतिश्च निद्रायाः स्मृतिर्मेदश्च कामिका ॥ ५७ ॥

रुद्रेण संयुता वह्निर्मेधामरविभूषिता ।

[1]दीर्घा क्रूरयुता ह्लादिन्यतो दीर्घसमायुता ॥ ५८ ॥

क्षुधा क्रोधिन्यमोघा च विश्वमप्यथ मेधया ।

युक्ता दीर्घाज्वालिनी च सुसूक्ष्मा मृत्युरूपिणी ॥ ५९ ॥

सप्रतिष्ठा ह्लादिनी त्वक्क्ष्वेलप्रीतिश्च सामरा ।

ज्योतिस्तीक्ष्णाग्निसंयुक्ता श्वेतानुस्वारसंयुता ॥ ६० ॥

कामिकापञ्चमोलान्तस्तान्तान्तो थान्त इत्यथ ।

स सानन्तो दीर्घयुतो वायुः सूक्ष्मयुतो विषः ॥ ६१ ॥

कामिका कामका रुद्रयुक्ताथोऽथ स्थिरातपा ।

तपिनी दीर्घयुक्ता भूरनलोऽनन्तगोऽनिलः ॥ ६२ ॥

नारायणात्मकः कालः प्राणोम्भो विद्यया युतः ।

पीतारातिस्तथा लान्तो योन्या युक्तस्ततो नतिः ॥ ६३ ॥

सप्तचत्वारिंशद्वर्णगुणान्तः स्रङ्मनुः स्वयम् ।

राज्याभिषिक्तस्य तस्य रामस्योक्तक्रमाल्लिखेत् ॥ ६४ ॥

अथ मालामन्त्रमुद्धरति—**मालामन्त्र** इति । चतुष्षष्टिकलासु सप्तचत्वारिंशत्कलात्मकोऽयं मालामन्त्रः कलाशास्त्रे प्रसिद्धः । एकैकस्याः कलायाः ओमित्याद्येकैको वर्णः संजातः क्रमादेवमूह्यमिति मत्वा उपरतम् । एवं तारादि-

[1] दीर्घ—अ, अ १, क.

नत्यन्तकलाकार्यपूगो मालामनुर्भवति। स च रामरहस्योक्तः। एवं ॐ नमो भगवते रघुनन्दनाय इत्यादि प्रथमाष्टदलेषु क्रमाल्लिखित्वा पूजयेदित्यर्थः ॥९७–६४॥

यन्त्रस्तुतिः

इदं सर्वात्मकं यन्त्रं प्रागुक्तमृषिसेवितम् ।
सेवकानां मोक्षकरमायुरारोग्यवर्धनम् ॥ ६५ ॥
अपुत्राणां पुत्रदं च बहुना किमनेन वै ।
प्राप्नुवन्ति क्षणात् सम्यगत्र धर्मादिकानपि ॥ ६६ ॥
इदं रहस्यं परममीश्वरेणापि दुर्गमम् ।
इदं यन्त्रं समाख्यातं न देयं प्राकृते जने ॥ इति ॥ ६७ ॥

उक्तविशेषणविशिष्टं यन्त्रं स्तौति—इदमिति । भजनानुरूपफलदमेतदित्याह—**सेवकानामिति**। चतुर्विधपुरुषार्थसाधकमेतदेवेत्यर्थः ॥६५–६६॥ एतस्य कैवल्यप्रापकज्ञानसाधनत्वेन यथोक्तसाधनविकलेषु गोपनीयत्वमाह—**इदमिति**। ईश्वरेण सर्वतन्त्रस्वतन्त्रेण पण्डितेनापि कामनाधिया मुख्यफलमाप्तुं दुःशकमित्यर्थः। इतिशब्दस्तुरीयोपनिषत्समाप्त्यर्थः ॥ ६७ ॥

इति चतुर्थोपनिषत्

## पञ्चमोपनिषत्

भूतशुद्ध्यादिपीठार्चनान्तपूजा

भूतादिकं शोधयेद्द्वारपूजां कृत्वा पद्माद्यासनस्थः प्रसन्नः ।
अर्चाविधावस्य पीठाधरोर्ध्वपार्श्वार्चनं मध्यपद्मार्चनं च ॥१॥

कृत्वा मृदुश्लक्ष्णसुतूलिकायां रत्नासने देशिकमर्चयित्वा ।
शक्तिं चाधाराख्यकां कूर्मनागौ पृथिव्यब्जे स्वासनाधः प्रकल्प्य ॥
विघ्नेशं दुर्गां क्षेत्रपालं च वाणीं बीजादिकांश्चाग्निदेशादिकांश्च ।
पीठस्याङ्घ्रिष्वेष धर्मादिकांश्च नञ्पूर्वांस्तांस्तत्तद्दिक्ष्वर्चयेच्च ॥ ३ ॥
मध्ये क्रमादर्कविध्वग्नितेजांस्युपर्युपर्यादिमैरर्चितानि ।
रजः सत्त्वं तम एतानि वृत्तत्रयं बीजाढ्यं क्रमाद्भावयेच्च ॥ ४ ॥
आशाव्याशास्वप्यथात्मानमन्तरात्मानं वा परमात्मानमन्तः ।
ज्ञानात्मानं चार्चयेत्तस्य दिक्षु मायाविद्ये ये कला[एकल ?]
पारतत्त्वे ॥ ५ ॥
संपूजयेद्विमलादीश्च शक्तीः

राज्याभिषिक्तश्रीरामचन्द्रपूजायन्त्रं प्रकटयित्वा तत्पीठावरणपूजां तत्फलं च प्रपञ्चयितुं पञ्चमोपनिषदारभ्यते—भूतादिकमिति । **भूतादिकं शोधयेत्** इत्यत्र ब्राह्मे मुहूर्ते मुमुक्षुरुत्थाय दन्तधावनस्नानादिस्वाश्रमोचितकर्म निर्वर्त्याथ यथासंभवं पूजाद्रव्याणि संपाद्य देवगृहं गत्वा प्रदक्षिणनमस्कारान् विधाय देवोद्बोधनार्थं आदौ घण्टानादं कृत्वा पृथ्वी त्वयेति भूशुद्धिं अपसर्पन्त्विति भूतशुद्धिं पृथिव्यादिपञ्चभूतभौतिकानां कारणमात्रावशेषचिन्तनमेव वा भूतशुद्धिं कृत्वा । **आदि**शब्देन कलशशङ्खपूजाऽऽदिकं गृह्यते । आसनमन्त्रस्येत्यादिना कुशाद्यासनमभिमन्त्र्य सोऽहमर्क इति मन्त्रेण देवोभयपार्श्वयोः दीपं संस्थाप्य स्वयं उत्तराभिमुखः पद्माद्यासनमास्थाय प्राणायामादिकं कृत्वा स्ववामभागे कलशं दक्षिणभागे शंखं यथोक्तविधिना अभ्यर्च्य शङ्खोदकेन देवात्मानौ पूजोपकरणानि संप्रोक्ष्य कलशे किंचित् निक्षिप्य तच्छेषं परित्यजेत् । स्वपुरोभागे पाद्यादिपञ्च-पात्राणि चासाद्य गन्धोदकेन पूरयित्वा तत्र सावरणं देवं आवाहनादिभिः अभ्यर्च्य । **द्वारपूजां कृत्वे**त्यादिना—**अधर**भागाय नमः । **ऊर्ध्व**भागाय नमः । **पार्श्वा**य नमः । दक्षिणपार्श्वाय नमः । पश्चिमपार्श्वाय नमः । उत्तरपार्श्वाय नमः ।

पीठमध्यगतकमलाय नमः ॥ १ ॥ पीठदक्षिणभागे देशिकाय नमः । आदिकूर्माय नमः । शेषाय नमः । पृथिव्यै नमः । कमलाय नमः ॥ २ ॥ **विघ्नेशं दुर्गां** इत्यादिना—गं गणपतये नमः । दुं दुर्गायै नमः । क्षं क्षेत्रपालकाय नमः । सं सरस्वत्यै नमः । मूलप्रकृत्यै नमः । क्षीरसमुद्राय नमः । रत्नद्वीपाय नमः । रत्नसिंहासनाय नमः । श्वेतच्छत्राय नमः । रत्नमण्टपाय नमः । कल्पकवृक्षाय नमः । **धर्मादिकांश्चे**त्यादिना—धर्माय नमः । ज्ञानाय नमः । वैराग्याय नमः । ऐश्वर्याय नमः । अधर्माय नमः । अज्ञानाय नमः । अवैराग्याय नमः । अनैश्वर्याय नमः ॥ ३ ॥ अर्काय नमः । सोमाय नमः । अग्नये नमः । **रजस्सत्त्वमि**त्यादिना—रजसे नमः । सत्वाय नमः । तमसे नमः ॥ ४ ॥ आत्मने नमः । अन्तरात्मने नमः । परमात्मने नमः । ज्ञानात्मने नमः । मायाविद्या इत्यादिना—मायातत्त्वाय नमः । विद्यातत्त्वाय नमः । एकल[कला ?]तत्वाय नमः । परशिवतत्त्वाय नमः । मायायै नमः । विद्यायै नमः । अनन्तायै नमः । पद्मायै नमः । ज्ञानात्मने नमः ॥ ५ ॥ **विमलादींश्च शक्तीः** इत्यादिना—विमलायै नमः । उत्कर्षण्यै नमः । ज्ञानायै नमः । क्रियायै नमः । योगायै नमः । प्रह्व्यै नमः । सत्यायै नमः । ईशानायै नमः । मध्ये अनुग्रहायै नमः । ॐ नमो भगवते विष्णवे वासुदेवाय सर्वात्मसंयोगयोगपीठाय नमः इति पीठार्चनं कुर्यात् ॥

भगवद्ध्यानपुरस्सरमावरणपूजा

अभ्यर्चयेद्देवमावाहयेच्च ।
अङ्गव्यूहानिलजाद्यैश्च पूज्य धृष्टयादिकैर्लोकपालैस्तदस्त्रैः ॥ ६ ॥
वसिष्ठाद्यैर्मुनिभिर्नीलमुख्यैराराधयेद्राघवं चन्दनाद्यैः ।
मुख्योपहारैर्विविधैश्च पूज्यैस्तस्मै जपादींश्च सम्यक् प्रकल्प्य ॥७॥

अथ भगवद्ध्यानपुरस्सरं आवरणपूजां कुर्यादित्याह—**देवमिति** । **देवमावाहयेच्च** इत्यत्र षट्कोणमध्ये सिंहासनस्थाय द्विभुजाय पार्श्वद्वयस्थित-

धनुर्बाणाय दक्षिणकरधृतज्ञानमुद्राय हनूमदादिव्याख्याननिरताय स्ववामाङ्कालङ्कार-सीताय राज्याभिषिक्तश्रीरामचन्द्राय नमः, षट्कोणमध्ये सीताभरतशत्रुघ्न-हनूमत्सुग्रीवविभीषणलक्ष्मणावृताय श्रीरामाय नमः इति पूजयेत्। षट्कोणेषु रां हृदयाय नमः इत्यादि रः अस्त्राय फट् इत्यन्ताङ्गाद्यञ्चिताय श्रीरामाय नमः इति पूजयेत्। प्रथमाष्टदळमूलेषु आग्नेयादिक्रमेण आत्मान्तरात्मपरमात्मज्ञानात्मभिः पूर्वादिक्रमेण निवृत्तिप्रतिष्ठाविद्याश्रीभिश्चावृताय श्रीरामाय नमः। प्रथमाष्टदळाग्रेष्वाग्नेयादिक्रमेण वासुदेवसंकर्षणप्रद्युम्नानिरुद्धैः पूर्वादिक्रमेण श्रीकीर्तिपुष्टिरति-भिश्चावृताय श्रीरामाय नमः। द्वितीयाष्टदळमूलेषु पूर्वादिक्रमेण वायुसूनुसुग्रीव-भरतविभीषणलक्ष्मणाङ्गदशत्रुघ्नजाम्बवद्भिः आवृताय श्रीरामाय नमः। द्वितीयाष्टदळाग्रेषु पूर्वादिक्रमेण धृष्टिजयन्तविजयसुराष्ट्रराष्ट्रवर्धनाशोकधर्मपालसु-मन्त्रैरावृताय श्रीरामाय नमः। धृष्ट्यादिकैरित्यादिशब्देन वसिष्ठनीलाद्यावरणानि गृह्यन्ते। तद्यथा—मूले तावदिन्द्रवज्राद्यावरणानन्तरं वसिष्ठनीलाद्यावरणयोः उक्तत्वेऽपि तदपेक्षया अर्थक्रमस्य बलीयस्त्वात् रामरहस्येऽपि अर्थक्रमानुसारेणैव प्रपञ्चितत्वात् अत्रापि तथैव युज्यत इति ॥ ६ ॥ द्वादशदळेषु पूर्वादिक्रमेण वसिष्ठाय नमः। वामदेवाय नमः। इत्यादिवसिष्ठवामदेवजाबालिगौतमभरद्वाज-विश्वामित्रवाल्मीकिनारदसनकसनन्दनसनत्कुमारैः आवृताय श्रीरामाय नमः। षोडशदलेषु नीलनळसुषेणमैन्दद्विविदशरभगन्धमादनगवाक्षकिरीटकुण्डलश्री-वत्सकौस्तुभशङ्खचक्रगदापद्मैरावृताय श्रीरामाय नमः। द्वात्रिंशद्दलेषु ध्रुवाय नमः इत्यादि ध्रुवसोमापाह्वयानिलानलप्रत्यूषप्रभासैरष्टवसुभिः वीरभद्रशंभुगिरीशाजैक-पदाहिर्बुध्न्यपिनाकिभुवनेशकपालिदिक्पतिस्थाणुभर्गैः एकादशरुद्रैः—प्रातिस्वि-कार्चनायां अजायैकपदे नमः, अहये बुध्न्याय नम इति। वरुणसूर्यवेदाङ्ग-भान्विन्द्रकविगभस्तिमयहिरण्यरेतोदिवाकरमित्रविष्णुभिः धात्रा चावृताय श्रीरामाय नमः। भूपुरान्तः इन्द्राग्नियमनिर्ऋतिवरुणवायुकुबेरेशानैः अष्टदिक्पालकैः ऊर्ध्वाधोभागे धात्रनन्ताभ्यां चावृताय श्रीरामाय नमः। भूपुराद्बहिः वज्रशक्ति-दण्डखड्गपाशाङ्कुशगदाशूलपद्मचक्रैरावृताय श्रीरामाय नमः। एवं साङ्गावरणं देवं व्यष्टिसमष्टिभेदेन षोडशोपचारैरभ्यर्च्य तत्सन्निधौ षट्सहस्रसङ्ख्यया

रामतारकमन्त्रं जपित्वा गायत्रीमालालक्ष्मणादिमन्त्रांश्च जपित्वा जपादिकं भगवति समर्प्य ततो देवं हृदय उद्वास्य तन्निवेदितान्नं ब्राह्मणभुक्तावशिष्टं स्वयमपि भुक्त्वा शिष्टकालं भगवन्नामस्मृतितः कालं नयेत् ॥ ७ ॥

भगवत्प्रसादद्वारा मोक्षप्राप्तिः

एवंभूतं जगदाधारभूतं रामं वन्दे सच्चिदानन्दरूपम् ।
गदाऽरिशङ्खाब्जधरं भवारिं स यो ध्यायेन्मोक्षमाप्नोति सर्वः ॥ ८ ॥
विश्वव्यापी राघवो यस्तदानीमन्तर्दधे शङ्खचक्रे गदाब्जे ।
धृत्वा रमासहितः सानुजश्च सपत्तनः सानुगः सर्वलोकी ॥ ९ ॥
तद्भक्ता ये लब्धकामांश्च भुक्त्वा तथा पदं परमं यान्ति ते च ।
इमा ऋचः सर्वकामार्थदाश्च ये ते पठन्त्यमला यान्ति मोक्षम् ॥ १० ॥

एवं कृते झटिति भगवत्प्रसादो भवति, ततः चित्तशुद्धिः, ततो निर्विशेषब्रह्मज्ञानं, तत्समकालं कृतकृत्यो भवतीत्याह—**एवमिति** । स्वोपासकदृष्ट्यपेक्षया **एवंभूतं** यन्त्ररूपेण मूर्तिरूपेण सर्वारोपाधाररूपेण च सिद्धत्वात् **जगदाधारभूतं** वस्तुतः स्वेन रूपेण राजते महीयते इति **रामं वन्दे सच्चिदानन्दरूपं गदाऽरिशङ्खाब्जधरं भवारिं** वा रामं **यो ध्यायेत्** सोऽयं तत्प्रसादलब्धज्ञानद्वारा **मोक्षमाप्नोति** ॥ ८ ॥ स्वोपासकमोक्षदशायां तदुपास्यो रामः केन रूपेण अवशिष्यत इत्यत आह—**विश्वेति** । स्वप्रसादतः स्वोपासकस्वाज्ञाननिवृत्तिसमकालमेव रामचन्द्रो भगवान् स्वकरकलित**शङ्खचक्रे गदाऽब्जे** च उपसंहृत्य **सानुजः सपत्तनो**ऽयं निर्विशेषभावं धृत्वा **अन्तर्दधे** ततो व्याप्यविश्वसत्त्वे **विश्वव्यापी** भवति तदभावे तन्मोक्षरूपेण अवशिष्यत इत्यर्थः ॥ ९ ॥ एकस्य मोक्षतां भगवदभावे तद्भक्तानां का गतिरित्याशङ्क्य स्वदृष्ट्या भगवानस्तीत्युपास्य तत्प्रसादतः कृतकृत्याः भवन्तीत्याह—**तद्भक्ता** इति । सर्वार्थसाधकमन्त्रपारायणफलमाह—**इमा** इति ॥ १० ॥

**इति पञ्चमोपनिषत्**

---

# उत्तरतापिनी

## प्रथमः खण्डः

### अविमुक्तोपासनम्

बृहस्पतिरुवाच याज्ञवल्क्यम्—यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् ॥ १ ॥

अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । तस्माद्यत्र क्वचन गच्छति तदेव मन्येतेतीदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति । तस्मादविमुक्तमेव निषेवेत । अविमुक्तं न विमुञ्चेत् ॥ २ ॥

एवमेवैतद्याज्ञवल्क्य ॥ ३ ॥

पूर्वतापिनीरीत्योपासकानां निर्विशेषब्रह्मावगतये उत्तरतापिन्युपनिषदारभ्यते । बृहस्पतिभरद्वाजात्रियाज्ञवल्क्यप्रश्नप्रतिवचनरूपेयमाख्यायिका निर्विशेषब्रह्मविद्यास्तुत्यर्था । तत्राविमुक्तयाथात्म्यबुभुत्सया याज्ञवल्क्यं प्रति बृहस्पतिरुवाचेत्याह—**बृहस्पतिरिति** ॥ १ ॥ ब्रह्ममात्रज्ञानोत्पत्तेः प्राक् **अविमुक्तं** भ्रूमध्यविलसिततारकलक्ष्यमेव **निषेवेत** सदा अनुसन्धानं कुर्यादिति । शिष्टं जाबालोपनिषद्गतप्रथमखण्डव्याख्यानेनैव व्याख्यातं स्यात् [1] ॥ २–३ ॥

इति प्रथमः खण्डः

---

[1] तच्च व्याख्यानं तारसारोपनिषदः प्रथमखण्डव्याख्याने अस्मिन्नेव संपुटे ७९ पुटे दृश्यताम् .

## द्वितीयः खण्डः

### रामषडक्षरस्य तारकत्वम्

अथ हैनं भरद्वाजः पप्रच्छ याज्ञवल्क्यं—किं तारकं किं तारयतीति ॥ १ ॥

स होवाच याज्ञवल्क्यः—तारकं दीर्घानलं बिन्दुपूर्वकं दीर्घानलं पुनर्माय नमश्चन्द्राय नमो भद्राय नम इत्येतद्ब्रह्मात्मकाः सच्चिदानन्दाख्या इत्युपासितव्यम् ॥ २ ॥

अकारः प्रथमाक्षरो भवति । उकारो द्वितीयाक्षरो भवति । मकारस्तृतीयाक्षरो भवति । अर्धमात्रश्चतुर्थाक्षरो भवति । बिन्दुः पञ्चमाक्षरो भवति । नादः षष्ठाक्षरो भवति । तारकत्वात्तारको भवति । तदेव तारकं ब्रह्म त्वं विद्धि । तदेवोपासितव्यमिति ज्ञेयम् । गर्भजन्मजरामरणसंसारमहद्भयात् संतारयतीति । तस्मादुच्यते षडक्षरं तारकमिति ॥ ३ ॥

प्रथमखण्डे रुद्रस्तारकं ब्रह्म व्याचष्टे, अविमुक्तमेव प्रत्यञ्चमात्मानमेव निषेवेत, तत् ब्रह्ममात्रज्ञानं न मुञ्चेदिति याज्ञवल्क्योक्तिं बृहस्पतिना साकं भरद्वाजोऽपि निशम्य अविमुक्तशब्दवाच्यतारकैयत्तापरिज्ञानाय भरद्वाजो याज्ञवल्क्यं पृच्छतीत्याह—**अथेति** । किमिति? **किं तारकं किं तारयतीति** ॥ १ ॥ भरद्वाजप्रश्नोत्तरं याज्ञवल्क्यः एवमाह—**तारकमिति** । आदौ **बिन्दुपूर्वकं दीर्घानलं** रामिति ततो **दीर्घानलं** रेति **पुनर्माय नम** इति सर्वं मिळित्वा रां रामाय नमः इति रामषडक्षर उद्धृतो भवति । रां रामेति त्र्यक्षरेण सह **चन्द्राय नमः** इत्यादिपञ्चाक्षरयोजनात् रां रामचन्द्राय नमः रां रामभद्राय नमः इत्यष्टाक्षरो

भवति। इत्येतत् एते **ब्रह्मात्मकाः सच्चिदानन्दाख्याः इत्युपासितव्यम्** ॥ २ ॥ प्रणवस्य तारकत्वप्रसिद्धेः षडक्षरस्य तारकत्वं कथं ? इत्यत आह—**अकार इति** यस्मादेवं **तस्मात्** ॥ ३ ॥

तारकजपफलम्

य एतत्तारकं ब्रह्म ब्राह्मणो नित्यमधीते स पाप्मानं तरति स मृत्युं तरति स ब्रह्महत्यां तरति स भ्रूणहत्यां तरति स वीरहत्यां तरति स सर्वहत्यां तरति स संसारं तरति स सर्वं तरति सोऽविमुक्तमाश्रितो भवति स महान् भवति सोऽमृतत्वं च गच्छति ॥ ४ ॥

तारकजपफलमाह—**य इति**। तारकार्थज्ञानात् मुख्यामृतत्वमेतीत्यर्थः ॥४॥

रामस्य प्रणवार्थत्वम्

अत्रैते श्लोका भवन्ति—

अकाराक्षरसंभूतः सौमित्रिर्विश्वभावनः।
उकाराक्षरसंभूतः शत्रुघ्नस्तैजसात्मकः ॥ ५ ॥
प्राज्ञात्मकस्तु भरतो मकाराक्षरसंभवः।
अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः ॥ ६ ॥
श्रीरामसांनिध्यवशाज्जगदाधारकारिणी।
उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् ॥ ७ ॥
सा सीता भवति ज्ञेया मूलप्रकृतिसंज्ञिका।
प्रणवत्वात् प्रकृतिरिति वदन्ति ब्रह्मवादिनः ॥ इति ॥ ८ ॥

रामतारकस्य प्रणवत्वे श्रीरामस्य प्रणवार्थत्वं कुतः ? इत्यत्र अस्मिन्नर्थे एते श्लोकाः मन्त्राः भवन्तीत्याह—**अत्रैते श्लोका भवन्तीति**। सौमित्र्यादेः अकाराद्यर्धमात्राऽन्तकलनाऽऽरोपापवादाधिकरणतया विश्वविराडोत्रादिद्वि(?)तुर्याविकल्परूपत्वात् श्रीरामस्य प्रणवार्थत्वमुपपद्यते ॥ ५–६ ॥ तस्य प्रणवार्थत्वमस्तु, प्रणवस्वरूपं किं ? इत्यत आह—**श्रीरामेति** । स्वाधिष्ठेयचित्सामान्यरूपायाः सीतायाः स्वाधिष्ठानसत्तासामान्यश्रीरामाविनाभाविमूलप्रकृतित्वेन प्रकृतत्वात् सीतायाः प्रणवत्वं सिद्धमित्यर्थः ॥ ७–८ ॥

### प्रणवतदर्थयाथात्म्यम्

ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भव्यं भविष्यदिति सर्वमोंकार एव । यच्चान्यत्त्रिकालातीतं तदप्योंकार एव । सर्वं ह्येतद्ब्रह्म । अयमात्मा ब्रह्म । सोऽयमात्मा चतुष्पात् ॥ ९ ॥

जागरितस्थानो बहिःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः पादः ॥ १० ॥

स्वप्नस्थानोऽन्तःप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः प्रविविक्तभुक् तैजसो द्वितीयः पादः ॥ ११ ॥

यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तत् सुषुप्तम् । सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखः प्राज्ञस्तृतीयः पादः ॥ १२ ॥

एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानाम् ॥ १३ ॥

नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्म-

**प्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः ॥ १४ ॥**

को वा प्रणवः, को वा प्रणवार्थः, इत्याकाङ्क्षायां अभिधानप्रणवाभिधेय-तदर्थैकत्वावगतये प्रणवतदर्थयाथात्म्यं प्रकटयति—**ओमिति** । **स आत्मा स विज्ञेयः** इत्येतत् सर्वं माण्डूक्योपनिषद्व्याख्यानेनैव पदशो व्याख्यातं स्यात् इति मन्तव्यम् ॥ ९–१४ ॥

### प्रत्यग्ब्रह्मणोरेकीकरणम्

**सदोज्ज्वलोऽविद्यातत्कार्यहीनः स्वात्मबन्धहरः सर्वदा द्वैतरहित आनन्दरूपः सर्वाधिष्ठानसन्मात्रो निरस्ताविद्यातमोमोहोऽहमेवेति संभाव्योऽहम् ॥ १५ ॥**

**ओं तत् सद्यत् परं ब्रह्म रामचन्द्रश्चिदात्मकः ।**
**सोऽहमोन्तद्रामभद्रपरंज्योती रसोऽहमोम् ॥ १६ ॥**
**इत्यात्मानमादाय मनसा ब्रह्मणैकीकुर्यात् ॥ १७ ॥**

किमित्ययं विज्ञेयः इत्याकाङ्क्षायां अपरोक्षतया ज्ञातव्यः इत्याह—**सदेति** । प्रत्यग्रूपेण सदोज्ज्वलतीति **सदोज्ज्वलः** । स्वाविद्यातत्कार्यस्वात्मबन्धवतः सदोज्ज्वलत्वं कुत इत्यत आह—**अविद्येति** । वस्तुदृष्ट्या या अविद्यमाना सा अविद्या, तत्कार्यं अनन्तकोटिब्रह्माण्डजातं, तत्कलनाविरळः तद्धीनः, आविद्यकं स्वात्मबन्धं हरतीति तथोक्तः, तस्य सदोज्ज्वलत्प्रत्यक्त्वं उपपद्यते । द्वैतदुःखे सति कथं बन्धग्रासप्रत्यक्त्वमित्यत्र **सर्वदा द्वैतरहित आनन्दरूपः** इति । असत्प्रपञ्चे सति कथमानन्दरूपता इत्यत्र तदपवादाधिष्ठानस्य नित्यानन्दत्वेन सन्मात्रता स्यादित्याह—**सर्वाधिष्ठानसन्मात्र** इति । सन्मात्रस्य इतरव्यवच्छेदक-तया स्वाविद्यातमोग्रस्तत्वात् इत्यत्र सन्मात्रस्य निष्प्रतियोगिकत्वेन इतरव्य-

वच्छेदासंभवात् निरस्ताविद्यातमोमोहोऽहमेवेति संभाव्योऽहम् ॥ १५ ॥ ओं तत्सद्यत्परंब्रह्मतया राजमानो महीयमानः स्वभक्तपटलाह्लादनकरो भवामि चिदात्मकः चिन्मात्रः सोऽहमित्यर्थः। यदोङ्कारार्थविश्वविराडोत्रादिभावमापन्नं यत् स्वगतहेयांशापायसिद्धं तद्रामभद्रपरंज्योतीरसोऽहम् ॥ १६ ॥ एवं प्रत्यञ्चमात्मानमादाय मनसा परब्रह्मणा एकीकुर्यात् प्रत्यगभिन्नं ब्रह्मास्मीति भावयेदित्यर्थः ॥ १७ ॥

रामज्ञानान्मुक्तिः

सदा रामोऽहमस्मीति तत्त्वतः प्रवदन्ति ये।
न ते संसारिणो नूनं राम एव न संशयः ॥ १८ ॥
इत्युपनिषत्। य एवं वेद स मुक्तो भवतीति याज्ञवल्क्यः ॥१९॥

सदा रामोऽहमस्मीति मन्त्रो रामरहस्योपनिषदि व्याख्यातः। रामज्ञानसमकालं रामो भवति ॥ १८ ॥ इत्युपनिषत्—ब्रह्ममात्रपर्यवसानं यो वेद स मुक्तो भवतीत्यर्थः ॥ १९ ॥

इति द्वितीयः खण्डः

---

## तृतीयः खण्डः

बाह्यान्तराविमुक्तयाथात्म्यम्

अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यं—य एषोऽनन्तोऽव्यक्तपरिपूर्णानन्दैकचिदात्मा तं कथमहं विजानीयामिति ॥ १ ॥

स होवाच याज्ञवल्क्यः—सोऽविमुक्त उपास्यो य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति ॥ २ ॥

सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति ॥ ३ ॥

वरणायां नास्यां च मध्ये प्रतिष्ठित इति ॥ ४ ॥

का वै वरणा का च नासीति ॥ ५ ॥

जन्मान्तरकृतान् सर्वान् दोषान् वारयतीति तेन वरणा भवतीति । सर्वानिन्द्रियकृतान् पापान् नाशयतीति तेन नासी भवतीति ॥ ६ ॥

कतमं चास्य स्थानं भवतीति ॥ ७ ॥

भ्रुवोर्घ्राणस्य च यः सन्धिः स एष द्यौर्लोकस्य परस्य च सन्धिर्भवतीति । एतद्वै सन्धिं सन्ध्यां ब्रह्मविद उपासत इति । सोऽविमुक्त उपास्य इति । सोऽविमुक्तं ज्ञानमाचष्टे यो वा एतदेवं वेद ॥ ८ ॥

बाह्यान्तराविमुक्तयाथात्म्यमवगन्तुं याज्ञवल्क्यमत्रिः पृच्छतीत्याह—**अथेति** । एतदपि जाबालोपनिषदि व्याख्यातम् ॥ १–८ ॥

[तच्च व्याख्यानं झटिति प्रत्यायनार्थं अत्र उदाहियते—**अथ ह** बृहस्पति[भारद्वाज]प्रश्ननिर्णयानन्तरं किल **एनं याज्ञवल्क्यं** ब्रह्मपुत्रः **अत्रिः पप्रच्छ** । किमिति ? यः तारकब्रह्मेत्युक्तः **एषोऽनन्तः** परिच्छेदत्रयविरळो**ऽव्यक्त आत्मा तं** उक्तलक्षणमात्मानं **कथमहं विजानीयां** अवगच्छेयं **इति** ॥ १ ॥ अत्रिप्रश्नोत्तरं **स होवाच याज्ञवल्क्यः** बृहस्पतिं प्रति । तारकत्वेन य उक्तः **सोऽविमुक्तः** प्रत्यगभेदेन **उपास्यः** । तत्र हेतुः—भवता पृष्टो **य एषोऽनन्तोऽव्यक्त आत्मा**—व्याख्यातं—**सोऽविमुक्ते** सोपाधिकेश्वरे **प्रतिष्ठित इति** । तस्य निरावृतत्वात् तस्मिन् अव्यक्तोऽनन्तात्मा उपलभ्यते ॥ २ ॥ तदुपलब्धिस्थानं

**पृच्छति—सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति** ॥ ३ ॥ सोऽयमीश्वरः कुत्र सन्निहितः इति पृष्टः उत्तरमाह—**वरणायां नास्यां च मध्ये प्रतिष्ठित इति** । वरणानास्योर्मध्ये प्रतिष्ठित इत्यर्थः । वरणानासीप्रदेशौ श्रुतिर्व्याकरिष्यतीति न व्याख्यातम् ॥ ४ ॥ वरणानासीस्वरूपं पृच्छति—**का वै वरणा का च नासीति** ॥ ५ ॥ तत्र वरणाशब्दार्थमाह—**सर्वानिति** । **सर्वान्** ज्ञानकर्मेन्द्रिय-कृतान् **दोषान् वारयति** निवारयतीति **तेन वरणा भवतीति** । **सर्वानिन्द्रिय-कृतान् पापान्** पापानि **नाशयतीति तेन नासी** नाशी **भवति** । सकारः शकारार्थः ॥ ६ ॥ वरणाया नास्याश्च मध्ये प्रतिष्ठित इत्युक्त्या नासा भ्रूसन्धिः प्रतीयते, तथाऽपि तत्प्रदेशं पृच्छति—**कतमं चास्य स्थानं भवतीति** । **अस्य** अविमुक्तस्येत्यर्थः । सर्वत्रेतिशब्दः प्रश्नपरिसमाप्त्यर्थः ॥ ७ ॥ **भ्रुवोः घ्राणस्य च यः** प्रसिद्धः **सन्धिः स एष** प्रसिद्धः ब्रह्मकपालस्थानीय**द्युलोकस्य** चुबुकावसानस्थानीयस्य च **परस्य च** भूलोकस्यापि **सन्धिः भवति** लोकद्वय-समुच्चयार्थः चकारः । **एतद्वै** एतमेव सन्धीयतेऽस्मिन्नविमुक्तमिति सन्धिः स्वात्मा तं **सन्धिं** स्वात्मानं **सन्ध्यां** भ्रूघ्राणसन्धौ **ब्रह्मविद उपासते** तत्रत्यज्योतिर्लिङ्ग-ध्यानपरा भवन्ति । **सोऽविमुक्त उपास्यः इति** व्याख्यातम् । तज्ज्ञानफलमाह—**यो वा इति** । **यो वै** विद्वानविमुक्तयाथात्म्यं वेद तद्गतहेयांशमपोह्य निर्विशेषात्मानं जानाति स विद्वान् **सोऽविमुक्तं** तत्साक्षात्कारहेतु**ज्ञानमाचष्टे** स्वयमीश्वरभावमेत्य स्वभक्तपटलचरमदशायां तारकज्ञानोपदेशं करोति स्वयं निर्विशेषब्रह्मैव भवतीत्यर्थः ॥ ८ ॥]

मुमूर्षूणां शिवकृतरामतारकोपदेशः

अथ तं प्रत्युवाच—

श्रीरामस्य मनुं काश्यां जजाप वृषभध्वजः ।
मन्वन्तरसहस्रैस्तु जपहोमार्चनादिभिः ॥ ९ ॥
ततः प्रसन्नो भगवान् श्रीरामः प्राह शंकरम् ।
वृणीष्व यदभीष्टं तद्दास्यामि परमेश्वर ॥ इति ॥ १० ॥

अथ सच्चिदानन्दात्मानं श्रीराममीश्वरः पप्रच्छ—

मणिकर्ण्यां मम क्षेत्रे गङ्गायां वा तटे पुनः ।
म्रियते देहि तज्जन्तोर्मुक्तिं नातो वरान्तरम् ॥ इति ॥ ११ ॥

अथ स होवाच श्रीरामः—

क्षेत्रेऽस्मिंस्तव देवेश यत्र कुत्रापि वा मृताः ।
कृमिकीटादयोऽप्याशु मुक्ताः सन्तु न चान्यथा ॥ १२ ॥
अविमुक्ते तव क्षेत्रे सर्वेषां मुक्तिसिद्धये ।
अहं संनिहितस्तत्र पाषाणप्रतिमाऽऽदिषु ॥ १३ ॥
क्षेत्रेऽस्मिन् योऽर्चयेद्भक्त्या मन्त्रेणानेन मां शिव ।
ब्रह्महत्याऽऽदिपापेभ्यो मोक्षयिष्यामि मा शुचः ॥ १४ ॥
त्वत्तो वा ब्रह्मणो वाऽपि ये लभन्ते षडक्षरम् ।
जीवन्तो मन्त्रसिद्धाः स्युर्मुक्ता मां प्राप्नुवन्ति ते ॥ १५ ॥
मुमूर्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम् ।
उपदेक्ष्यसि मन्मन्त्रं स मुक्तो भविता शिव ॥ १६ ॥

इति श्रीरामचन्द्रेणोक्तम् ॥

उत्तमाधिकारिणां—"ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत् सदा यतिः" इति श्रुतिसिद्धज्योतिर्लिङ्गं प्रत्यग्धातुं अविमुक्तशब्दवाच्यतया प्रतिपाद्य मध्यमाधिकारिणां काशीक्षेत्रमेव अविमुक्तमिति प्रकटयित्वा तत्र ये कळेबरं त्यजन्ति ते परमेश्वरोपदिष्टरामतारकज्ञानतः कृतकृत्या भवन्तीत्येतदर्थं अत्रिं प्रति याज्ञवल्क्य आह—**अथेति** ॥ ९–१० ॥ **पप्रच्छ**—किमिति ? **मणिकर्ण्यामिति** । "**श्रीरामस्य मनुं काश्या**" मित्यादि यदुक्तं तत् सर्वं काशीषडक्षरस्तुत्यर्थं, अन्यथा

परमेश्वरस्य निरावृतक्रियाज्ञानेच्छाशक्तिमत्त्वेन अवाप्तसमस्तकामत्वात् स्वाज्ञदृष्ट्या शिवरामयोः भेदेऽपि तद्दृष्ट्यैकत्वात् स्वांशजभक्तपटलस्वाज्ञानमोचनस्य स्वज्ञानायत्तत्वात् स्वज्ञानप्रदानस्य स्वायत्तत्वादित्यर्थः ॥ ११–१६ ॥

इति तृतीयः खण्डः

## चतुर्थः खण्डः

रामसाक्षात्कारप्रदाः मन्त्राः

अथ हैनं भरद्वाजो याज्ञवल्क्यमुवाच—अथ कैर्मन्त्रैः स्तुतः श्रीरामचन्द्रः प्रीतो भवति स्वात्मानं दर्शयति तान्नो ब्रूहि भगवन्निति ॥

स होवाच याज्ञवल्क्यः—पूर्वं सत्यलोके श्रीरामचन्द्रेणैवं शिक्षितो ब्रह्मा पुनरेतया गाथया नमस्करोति—

विश्वरूपधरं विष्णुं नारायणमनामयम् ।
पूर्णानन्दैकविज्ञानं परंब्रह्मस्वरूपिणम् ॥
मनसा संस्मरन् ब्रह्मा तुष्टाव परमेश्वरम् ॥

ॐ यो ह वै श्रीरामचन्द्रः स भगवानद्वैतपरमानन्द आत्मा यत् परं ब्रह्म भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ १ ॥ [ज्ञातव्यौ यथा प्रथममन्त्रोक्तावाद्यन्तौ तथा सर्वमन्त्रेषु] . . . यश्चाखण्डैकरसात्मा . . . ॥ २ ॥ . . . यच्च ब्रह्मानन्दामृतम् . . . ॥ ३ ॥

. . . यत्तारकं ब्रह्म . . . ॥ ४ ॥ . . . यो ब्रह्मा विष्णुर्महेश्वरो यः सर्वदेवात्मा . . . ॥ ५ ॥ . . . ये सर्वे वेदाः साङ्गाः सशाखाः सेतिहासपुराणाः . . . ॥ ६ ॥ . . . यो जीवान्तरात्मा . . . ॥ ७ ॥ . . . यः सर्वभूतान्तरात्मा . . . ॥ ८ ॥ . . . ये देवासुरमनुष्यादि-भावाः . . . ॥ ९ ॥ . . . ये मत्स्यकूर्माद्यवताराः . . . ॥ १० ॥ . . . योऽन्तःकरणचतुष्टयात्मा . . . ॥ ११ ॥ . . . यश्च प्राणः . . . ॥ १२ ॥ . . . यश्च यमः . . . ॥ १३ ॥ . . . यश्चान्तकः . . . ॥ १४ ॥ . . . यश्च मृत्युः . . . ॥ १५ ॥ . . . यच्चामृतम् . . . ॥ १६ ॥ . . . यानि च पञ्च महा-भूतानि . . . ॥ १७ ॥ . . . यः स्थावरजङ्गमात्मा . . . ॥ १८ ॥ . . . ये पञ्चाग्नयः . . . ॥ १९ ॥ . . . याः सप्त महाव्या-हृतयः . . . ॥ २० ॥ . . . या विद्या . . . ॥ २१ ॥ . . . या सरस्वती . . . ॥ २२ ॥ . . . या लक्ष्मीः . . . ॥ २३ ॥ . . . या गौरी . . . ॥ २४ ॥ . . . या जानकी ॥ २५ ॥ . . . यच्च त्रैलोक्यम् . . . ॥ २६ ॥ . . . यः सूर्यः . . . ॥ २७ ॥ . . . यः सोमः . . . ॥ २८ ॥ . . . यानि च नक्षत्राणि . . . ॥ २९ ॥ . . . ये च नव ग्रहाः . . . ॥ ३० ॥ . . . ये चाष्टौ लोकपालाः . . . ॥ ३१ ॥ . . . ये चाष्टौ वसवः . . . ॥ ३२ ॥ . . . ये चैकादश रुद्राः . . . ॥ ३३ ॥ . . . ये च द्वादशादित्याः . . . ॥ ३४ ॥ . . . यच्च भूतं भव्यं भविष्यत् . . . ॥३५॥ . . . यद्ब्रह्माण्डस्य बहिर्व्याप्तम् . . . ॥३६॥

. . . . . यो हिरण्यगर्भः . . . ॥ ३७ ॥ . . . या प्रकृतिः . . . ॥ ३८ ॥ . . . यश्चोंकारः . . . ॥ ३९ ॥ . . . याश्चतस्त्रोऽर्धमात्राः . . . ॥ ४० ॥ . . . यः परमपुरुषः . . . ॥ ४१ ॥ . . . यश्च महेश्वरः . . . ॥ ४२ ॥ . . . यश्च महादेवः . . . ॥ ४३ ॥ . . . य ॐ नमो भगवते वासुदेवाय . . . ॥ ४४ ॥ . . . यो महाविष्णुः . . . ॥ ४५ ॥ . . . यः परमात्मा . . . ॥ ४६ ॥ . . . यो विज्ञानात्मा . . . ॥ ४७ ॥

ॐ यो ह वै श्रीरामचन्द्रः स भगवानद्वैतपरमानन्द आत्मा यः सच्चिदानन्दाद्वैतैकचिदात्मा भूर्भुवः सुवस्तस्मै वै नमो नमः ॥ इति ॥

तान् ब्रह्माऽब्रवीत्—सप्तचत्वारिंशन्मन्त्रैर्नित्यं देवं स्तुध्वम् । ततो देवः प्रीतो भवति । स्वात्मानं दर्शयति । तस्माद्य एतैर्मन्त्रैर्नित्यं देवं स्तौति स देवं पश्यति सोऽमृतत्वं च गच्छतीति महोपनिषत् ॥

श्रीरामसाक्षात्कारोपायबुभुत्सया भरद्वाजो याज्ञवल्क्यं पृच्छतीत्याह—**अथेति** । **उवाच**—किमिति ? **अथेति** । अत्र इतिहासमवतारयति—**पूर्वमिति** । कथं ब्रह्मा श्रीरामचन्द्रं तुष्टावेत्यत्र श्रीरामसार्वात्म्यप्रकटनमन्त्रान् प्रकाशयति—**ओमिति** । **हवा** इति वृत्तानुस्मरणार्थौ निपातौ । **यः** परमार्थदृष्ट्या कैवल्यश्रीस्वरूपेण राजमानो महीयमानो भक्तपटलाह्लादकरश्च भवति सोऽयं षड्गुणैश्वर्यस्वरूपो **भगवान्** द्वैतदुःखग्रासाद्वैतपरमानन्दात्मतया अवशिष्यते यद्याथात्म्यं **परं ब्रह्मे**ति विख्यातं यस्तु पुनः स्वाज्ञदृष्ट्या **भूर्भुवःसुव**रिति त्रैलोक्यवपुर्विराट् भवति तस्मै सविशेषनिर्विशेषात्मने नमो नमः । **वै**शब्दः

सेव्यसेवकयोः उपाधिकृतभेदासंभवैकत्वद्योतकः। इति तान् ब्रह्माऽब्रवीत्— हे देवाः यूयं सप्तचत्वारिंशदिति। यस्मादेवं तस्मात्॥

इति चतुर्थः खण्डः

## पञ्चमः खण्डः

### रामषडक्षरमाहात्म्यम्

अथ हैनं भरद्वाजो याज्ञवल्क्यमुपसमेत्योवाच—श्रीराम-मन्त्रराजस्य माहात्म्यमनुब्रूहीति॥ १॥

स होवाच याज्ञवल्क्यः—

स्वप्रकाशः परंज्योतिः स्वानुभूत्येकचिन्मयः।
तदेव रामचन्द्रस्य मनोराद्यक्षरः स्मृतः॥ २॥
अखण्डैकरसानन्दस्तारकब्रह्मवाचकः।
रामायेति सुविज्ञेयः सत्यानन्दचिदात्मकः॥ ३॥
नमःपदं सुविज्ञेयं पूर्णानन्दैकविग्रहम्।
सदा नमन्ति हृदये सर्वे देवा मुमुक्षवः॥ ४॥ इति॥

य एतं मन्त्रराजं श्रीरामचन्द्रषडक्षरं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स ब्रह्मपूतो भवति स विष्णुपूतो भवति स रुद्रपूतो भवति स सर्वैर्दे-

वैर्ज्ञातो भवति स सर्वक्रतुभिरिष्टवान् भवति तेनेतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि फलानि भवन्ति । श्रीरामचन्द्रमनुस्मरणेन गायत्र्याः शतसहस्राणि जप्तानि फलानि भवन्ति । प्रणवानामयुतकोटिजप्ता भवति । दश पूर्वान् दशोत्तरान् पुनाति । स पङ्क्तिपावनो भवति । स महान् भवति । सोऽमृतत्वं च गच्छति ॥ ५ ॥

मन्त्रराजार्थं तन्माहात्म्यं तज्ज्ञानफलं च ज्ञातुमिच्छन् भरद्वाजो याज्ञवल्क्यं पृच्छतीत्याह—**अथेति** । मुख्यार्थं सफलं **माहात्म्यमनुब्रूहि** ॥ १ ॥ षडक्षराद्यबीजार्थमाह—**स्वप्रकाश** इति ॥ २ ॥ रामायेति त्र्यक्षरार्थं निगमयति—**अखण्डेति** ॥ ३ ॥ नमःशब्दार्थमाचष्टे—**नमःपदमिति** । विशिष्टार्थस्तु, रां रामायेत्यक्षरचतुष्टयं तत्पदलक्ष्यबोधकं, नमः इत्यक्षरद्वयं त्वंपदलक्ष्यबोधकं, लक्षणासापेक्षलक्ष्यद्वयगतविशेषांशापह्नवसिद्धं निष्प्रतियोगिकब्रह्ममात्रमित्यर्थः । **सर्वे देवा मुमुक्षवश्च** एवमेव **सदा हृदये नमन्ति** ब्रह्ममात्रं स्वावशेषधिया चिन्तयन्ति ॥ ४ ॥ षडक्षरजपान्तरालिकफलमाह—**य इति** । **स सर्वैर्वेदैः** ब्रह्मविदिति **ज्ञातो भवति** । चशब्दात् तारकार्थज्ञानतो मुख्यामृतत्वं विदेहकैवल्यं गच्छतीति द्योत्यते ॥ ५ ॥

मन्त्रराजमाहात्म्यप्रतिपादकश्लोकाः

अत्रैते श्लोका भवन्ति—

गाणपत्येषु शैवेषु शाक्तसौरेष्वभीष्टदः ।
वैष्णवेष्वपि सर्वेषु राममन्त्रः फलाधिकः ॥ ६ ॥
गाणपत्यादिमन्त्रेषु कोटिकोटिगुणाधिकः ।
मन्त्रस्तेष्वप्यनायासफलदोऽयं षडक्षरः ॥ ७ ॥

षडक्षरोऽयं मन्त्रः स्यात् सर्वाघौघनिवारणः ।
मन्त्रराज इति प्रोक्तः सर्वेषामुत्तमोत्तमः ॥ ८ ॥
कृतं दिने यद्दुरितं पक्षमासर्तुवर्षजम् ।
सर्वं दहति निःशेषं तूलाचलमिवानलः ॥ ९ ॥
ब्रह्महत्यासहस्राणि ज्ञानाज्ञानकृतानि च ।
स्वर्णस्तेयसुरापानगुरुतल्पायुतानि च ॥ १० ॥
कोटिकोटिसहस्राणि उपपातकजान्यपि ।
सर्वाण्यपि प्रणश्यन्ति राममन्त्रानुकीर्तनात् ॥ ११ ॥
भूतप्रेतपिशाचाद्याः कूश्माण्डब्रह्मराक्षसाः ।
दूरादेव प्रधावन्ति राममन्त्रप्रभावतः ॥ १२ ॥
ऐहलौकिकमैश्वर्यं स्वर्गाद्यं पारलौकिकम् ।
कैवल्यं भगवत्त्वं च मन्त्रोऽयं साधयिष्यति ॥ १३ ॥
ग्राम्यारण्यपशुघ्नत्वं संचितं दुरितं च यत् ।
मद्यपानेन यत् पापं तदप्याशु विनाशयेत् ॥ १४ ॥
अभक्ष्यभक्षणोत्पन्नं मिथ्याज्ञानसमुद्भवम् ।
सर्वं विलीयते राममन्त्रस्यास्यैव कीर्तनात् ॥ १५ ॥
श्रोत्रियस्वर्णहरणाद्यच्च पापमुपस्थितम् ।
रत्नादेश्चापहारेण तदप्याशु विनाशयेत् ॥ १६ ॥
ब्राह्मणं क्षत्रियं वैश्यं शूद्रं हत्वा च किल्बिषम् ।
संचिनोति नरो मोहाद्यद्यत्तदपि नाशयेत् ॥ १७ ॥

गत्वाऽपि मातरं मोहादगम्याश्चैव योषितः ।
उपास्यानेन मन्त्रेण रामस्तदपि नाशयेत् ॥ १८ ॥
महापातकपापिष्ठसङ्गत्या संचितं च यत् ।
नाशयेत्तत्कथालापशयनासनभोजनैः ॥ १९ ॥
पितृमातृवधोत्थं बुद्धिपूर्वमघं च यत् ।
तदनुष्ठानमात्रेण सर्वमेतद्विलीयते ॥ २० ॥
यत् प्रयागादितीर्थोक्तप्रायश्चित्तशतैरपि ।
नैवापनोद्यते पापं तदप्याशु विनाशयेत् ॥ २१ ॥
पुण्यक्षेत्रेषु सर्वेषु कुरुक्षेत्रादिषु स्वयम् ।
बुद्धिपूर्वमघं कृत्वा तदप्याशु विनाशयेत् ॥ २२ ॥
कृच्छ्रैस्तप्तपराकाद्यैर्नानाचान्द्रायणैरपि ।
पापं च नापनोद्यं यत् तदप्याशु विनाशयेत् ॥ २३ ॥
आत्मतुल्यसुवर्णादिदानैर्बहुविधैरपि ।
किंचिदप्यपरिक्षीणं तदप्याशु विनाशयेत् ॥ २४ ॥
अवस्थात्रितयेष्वेवं बुद्धिपूर्वमघं च यत् ।
तन्मन्त्रस्मरणेनैव निःशेषं प्रविलीयते ॥ २५ ॥
अवस्थात्रितयेष्वेवं मूलबन्धमघं च यत् ।
तत्तन्मन्त्रोपदेशेन सर्वमेतत् प्रणश्यति ॥ २६ ॥
आब्रह्मबीजदोषाश्च नियमातिक्रमोद्भवाः ।
स्त्रीणां च पुरुषाणां च मन्त्रेणानेन नाशिताः ॥ २७ ॥

येषु येष्वपि देशेषु रामभद्र उपास्यते ।
दुर्भिक्षादिभयं तेषु न भवेत्तु कदाचन ॥ २८ ॥
शान्तः प्रसन्नवदनो नक्रोधो भक्तवत्सलः ।
अनेन सदृशो मन्त्रो जगत्स्वपि न विद्यते ॥ २९ ॥
सम्यगाराधितो रामः प्रसीदत्येव सत्वरम् ।
ददात्यायुष्यमैश्वर्यमन्ते विष्णुपदं च यत् ॥ ३० ॥

तदेतदृचाऽभ्युक्तम्—

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ ३१ ॥
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ ३२ ॥
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदम् ॥ ३३ ॥
ॐ सत्यमित्युपनिषत् ॥ ३४ ॥

एवमुक्तार्थे एते श्लोकाः मन्त्राः मन्त्रराजमाहात्म्यप्रतिपादका भवन्तीत्याह—**अत्रैते श्लोका भवन्तीति** । मन्त्रराजस्य सकलदेवतामन्त्रतोऽपि वैशिष्ट्यमाह—**गाणपत्येष्विति** । तत्तद्भावानुरोधेन पुरुषार्थचतुष्टयप्रापको मन्त्रराज इत्यर्थः ॥ ६–२९ ॥ शान्त इत्यादिविशेषणविशिष्टो भगवान् तारकानुस्मरणेन आराधितः सन् प्रसीदति, तेन किं स्यादित्यत्र—**ददातीति** । मन्त्रार्थज्ञानपूर्वकं यो जपति तस्यैव विष्णुपदाप्तिः ॥ ३० ॥ विष्णुपदार्थतृष्णया अस्य मन्त्रानादरो भवतीति यत् **तदेतदृचाऽभ्युक्तम्** । **ऋच . . .** इत्ययं मन्त्रः श्वेताश्वतरोपनिषदि

व्याख्यातः ॥ ३१ ॥ तद्विष्णोः इति मन्त्रस्तु आरुणिकोपनिषदि व्याख्यातः ॥ ३२–३३ ॥ किं तद्विष्णुपदं ? इत्यत्र—**ओमिति** । ओङ्कारार्थ-तुर्यतुरीयमेवं ब्रह्म सत्यं, स्वेतरग्राससत्तासामान्यरूपत्वात्; तदेव विष्णुपदं स्वमात्रधियैव पद्यमानत्वात् । इत्युपनिषच्छब्दो रामोत्तरतापिन्युपनिषत्समाप्त्यर्थः ॥ ३४ ॥

**ते पञ्चमः खण्डः**

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
रामतापिन्युपनिषद्व्याख्यानं लिखितं लघु ।
श्रीरामतापिनीव्याख्याग्रन्थजातं चतुश्शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चपञ्चाशत्सङ्ख्यापूरकं
श्रीरामतापिन्युपनिषद्विवरणं सम्पूर्णम् ॥

# रामरहस्योपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

## प्रथमोऽध्यायः

रामस्य ब्रह्मतारकत्वम्

सनकाद्या योगिवर्या अन्ये च ऋषयस्तथा ।
प्रह्लादाद्या विष्णुभक्ता हनूमन्तमथाब्रुवन् ॥ १ ॥
वायुपुत्र महाबाहो किं तत्त्वं ब्रह्मवादिनाम् ।
पुराणे[1]ष्वष्टादशसु स्मृतिष्वष्टादशस्वपि ॥ २ ॥
चतुर्वेदेषु शास्त्रेषु विद्यास्वाध्यात्मिकेषु च ।
सर्वेषु विद्यादानेषु विघ्नसूर्येशशक्तिषु ॥ ३ ॥
एतेषु मध्ये किं तत्त्वं कथय त्वं महाबल ॥ ४ ।

हनूमान् होवाच—

भो योगीन्द्राश्च ऋषयो विष्णुभक्तास्तथैव च ।
शृणुध्वं मामकीं वाचं भवबन्धविनाशिनीम् ॥ ५

[1] षु च काव्येषु—अ २.

एतेषु चैव सर्वेषु तत्त्वं च ब्रह्म तारकम् ।
राम एव परं ब्रह्म राम एव परं तपः ।
राम एव परं तत्त्वं श्रीरामो ब्रह्म तारकम् ॥ ६ ॥

कैवल्यश्रीस्वरूपेण राजमानं महोऽव्ययम् ।
प्रतियोगिविनिर्मुक्तं श्रीरामपदमाश्रये ॥

इह खलु अथर्वणप्रविभक्तेयं श्रीरामरहस्योपनिषत् श्रीराममन्त्रयन्त्रसाधनप्रपञ्चनपूर्वकं श्रीरामतत्त्वपर्यवसन्ना विजयते। अस्याः संक्षेपतो विवरणमारभ्यते। सनकादिमुनिबृन्दप्रह्लादादिभागवतकदम्बपवनात्मजप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था, जातमात्रेण विदिततत्त्वैः सनकप्रह्लादादिभिरपि इयं पृष्टा परमशिवावतारपवनात्मजेन प्रोक्तेति। आख्यायिकामवतारयति—**सनकाद्या इति** ॥ १ ॥ किमिति? **वायुपुत्रेति**। **वायुपुत्रे**त्यादिप्रश्नतो हनूमतः सर्वविित्त्वमवगम्यते ॥ २–४ ॥ तत्कृतप्रश्नोत्तरं **हनूमान् होवाच**। किमिति? **भो इति**। **भवबन्धविनाशिनीम्**—स्वाज्ञलोकस्य, भवतां कृतार्थत्वात् ॥५॥ **सर्वेषु विद्यादानेषु विघ्नसूर्येशशक्तिभेदेषु एतेषु** वेदशास्त्रपुराणादिषु अर्थतो विचारितेषु सत्सु अथ स्वातिरिक्तकलनाऽपह्नवसिद्धं यद्ब्रह्ममात्रं निष्प्रतियोगिकमवशिष्यते तदेवायमित्याह—**राम एवेति**। स्वातिरिक्तकलनाऽसंभवप्रबोधसिद्धनिष्प्रतियोगिकब्रह्ममात्रतया राजते महीयते इति **राम एव परं** उत्कृष्टं **ब्रह्म** स्वमात्रतया सदोपबृंहणात्, **राम एव परं** उत्कृष्टं **तपः** तन्मात्रज्ञानमित्यर्थः। **राम एव परं तत्त्वं** स्वयाथात्म्यं स्वयमेवेत्यर्थः। प्रत्यगभिन्नब्रह्मरूपेण **श्रीरामो ब्रह्म तारकं** भ्रूमध्यतारकयोगलक्षितत्वात्। यद्वा—श्रीरामस्य ब्रह्मतारकलक्ष्यतुर्यतुरीयरूपत्वात् ब्रह्मतपस्तत्त्वतारकबोध्यं रामाख्यं ब्रह्मैव स्वाज्ञादिदृष्टिमोहे सत्यसति निष्प्रतियोगिकं स्वमात्रमवशिष्यत इत्यर्थः ॥ ६ ॥

रामस्य अङ्गानि वायुपुत्रादीनि

वायुपुत्रेणोक्तास्ते योगीन्द्रा ऋषयो विष्णुभक्ता हनूमन्तं पप्रच्छुः—रामस्याङ्गानि नो ब्रूहीति ॥ ७ ॥

हनूमान् होवाच—वायुपुत्रं विघ्नेशं वाणीं दुर्गां क्षेत्रपालकं सूर्यं चन्द्रं नारायणं नारसिंहं वायुदेवं वाराहं तत्सर्वान् मन्त्रान् सीतां लक्ष्मणं शत्रुघ्नं भरतं विभीषणं सुग्रीवमङ्गदं जाम्बवन्तं प्रणवमेतान् रामस्याङ्गानि जानीथाः । ह्यङ्गानि विना रामो विघ्नकरो भवति ॥ ८ ॥

एवं वायुपुत्रात् निर्विशेषब्रह्मतत्त्वमवगम्य मुनयो हृष्टाः सन्तः स्वाज्ञलोकानुकम्पया निर्विशेषब्रह्माप्त्युपायसविशेषं ब्रह्म तदङ्गानि च पृच्छन्तीत्याह—**वायुपुत्रेणेति** । **पप्रच्छुः**—किमिति ? **रामस्येति** ।

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय संभवामि युगे युगे ॥

इति स्वप्रतिज्ञापालनाय कर्मज्ञानयोगलक्षणनिष्ठाद्वयपरिपालकनारायणरूपेण राजते महीयते इति रामो दाशरथिः स्वेतरदुर्लभसूनृतभाषणतया यः पुरा आसामास तस्य कानि **अङ्गानि** तद्गोचरमन्त्राश्च के तत् सर्वं **नो ब्रूहि इति** ॥ ७ ॥ तैः पृष्टो **हनूमान् होवाच** । तानि कानि इत्यत्र तदाह—**वायुपुत्रमिति** । वायुपुत्रादिजाम्बवदन्ताङ्गदेवतामन्त्रान् त्रेधा अष्टधा षोडशधा वा आदौ जप्त्वा ततो राममन्त्रजपः कार्यः । एवं कृते भगवान् रामः प्रसन्नो भवतीत्यर्थः ॥ ८ ॥

गृहस्थानां रामाङ्गप्रणवाधिकारः

पुनर्वायुपुत्रेणोक्तास्ते हनूमन्तं पप्रच्छुः—आञ्जनेय महाबल विप्राणां गृहस्थानां प्रणवाधिकारः कथं स्यादिति ॥ ९ ॥

स होवाच—श्रीराम एवोवाचेति । येषामेष षडक्षराधिकारो वर्तते तेषां प्रणवाधिकारः स्यान्नान्येषाम् । केवलमकारोकारम-

कारार्धमात्रासहितं प्रणव[1]मूह्य यो राममन्त्रं जपति तस्य शुभकरोऽहं स्याम् । तस्य प्रणवस्याकारस्योकारस्य मकारस्यार्धमात्रायाश्च ऋषिश्छन्दो देवता तत्तद्वर्णावर्णावस्थानं स्वरवेदाग्निगुणानुच्चार्यान्वहं [2]प्रणवं मन्त्राद्द्विगुणं जप्त्वा पश्चाद्राममन्त्रं यो जपेत् स रामो भवतीति रामेणोक्तास्तस्माद्रामा[illegible] प्रणवः कथित इति ॥ १० ॥

प्रणवस्यापि रामा[illegible]त्वे परिव्राजकेतराणां प्रणवाधिकारः कथमिति पृच्छन्तीत्याह—**पुनरिति** ॥ ९ ॥ तैः पृष्टो हनूमान् स्वात्मानं प्रति श्रीरामचन्द्रेण यदुक्तं तदेवाह—**स होवाचेति** । **श्रीराम एवोवाचेति**—किमिति ? **येषामिति** । ब्रह्मचारी गृही वानप्रस्थः इत्येतेषां केवलप्राधान्येन प्रणवजपाधिकारो नास्त्येव, षडक्षरादिमन्त्राङ्गत्वेन तज्जपाधिकारोऽस्तीत्याह—**केवलमिति** । **प्रणवमूह्य** चतुर्मात्राकालमुच्चार्य । आद्यन्तप्रणवयोजनपूर्वकं **राममन्त्र**जापकानां श्रीरामपदप्राप्त्युपायशुभप्रापको हनूमान् **अहं स्यां** इत्यर्थः । यो यदि श्रीरामभावापत्तिं वाञ्छति तदाऽयं षडक्षरजपात् पूर्वमेव **तस्य प्रणवस्ये**त्यादि । यस्मादेवं तस्मात् ॥ १० ॥

### रामनामजपेन सर्वपापनिवृत्तिः

**विभीषण उवाच**—

सिंहासने समासीनं रामं पौलस्त्यसूदनम् ।
प्रणम्य दण्डवद्भूमौ पौलस्त्यो वाक्यमब्रवीत् ॥ ११ ॥
रघुनाथ महाबाहो केवलं कथितं त्वया ।
अङ्गानां सुलभं चैव कथनीयं च सौलभम् ॥ १२ ॥

श्रीराम उवाच—अथ पञ्च दण्डकानि पितृघ्नो मातृघ्नो ब्रह्मघ्नो गुरुहननः कोटियतिघ्नोऽनेककृतपापो यो मम षण्णवतिकोटि-

[1] मूह्यं—अ, अ १.   [2] प्रणवमन्त्रं द्वि—अ, अ १.

**नामानि जपति तेभ्यः पापेभ्यः प्रमुच्यते । स्वयमेव सच्चिदानन्द-स्वरूपो भवेन्न किम् ॥ १३ ॥**

कदाचित् रामं सर्वभूतहितकृत् **विभीषण उवाच** । किमिति ? **सिंहासन** इति ॥ ११–१२ ॥ अपापिनां स्वमन्त्रतदङ्गप्रणवानुष्ठानतः केवलं त्वदाप्तिरभिहिता । ब्रह्महत्यादिपातकिनां स्वाप्त्युपायः कथं ? इत्याशङ्कमानमालक्ष्य विभीषणं प्रति **श्रीराम उवाच** । किमिति ? आ इति । कानि तानीत्यत्र—**पितृघ्न** इत्यादि । पित्रादियत्यन्तहननपातकैः नरो दण्ड्यते, तानि **पञ्च दण्डकानि** । यदि तच्छमनार्थी पुरुषः तदा राम रामेति **षण्णवतिकोटिनामजपतो** निष्पापो भूत्वा मद्भावमेतीत्यत्र न हि संशयोऽस्तीत्यर्थः ॥ १३ ॥

रामोपनिषदादिभिरपि सर्वपापशान्तिः

**पुनरुवाच विभीषणः—तत्राप्यशक्तोऽयं किं करोति ॥ १४ ॥**

**स होवाचेमम्—[1]कैकसेय पुरश्चरणविधावशक्तो यो ममोपनिषदं मम गीतां मन्नामसहस्रं मद्विश्वरूपं मदष्टोत्तरशतं रामशताभिधानं नारदोक्तस्तवराजं हनूमत्प्रोक्तं मन्त्रराजात्मकस्तवं सीतास्तवं च [2]रामषडक्षरीत्यादिभिर्मन्त्रैर्यो मां नित्यं स्तौति मत्सदृशो भवेन्न किं भवेन्न किम् ॥ १५ ॥**

सुलभोपायबुभुत्सया **पुनरुवाच** ॥ १४ ॥ अनेनापि पारायणेन पञ्चदण्डकशान्तिद्वारा मद्भावमेतीत्यत्र न हि संशयोऽस्ति । आवृत्तिः अवधारणार्था प्रथमाध्यायसमाप्त्यर्था वा इति ॥ १५ ॥

**इति प्रथमोऽध्यायः**

[1] कैक—अ, मु.   [2] रामषडक्षरी षडक्षरेत्या—अ, क, मु.

## द्वितीयोऽध्यायः

### एकाक्षररामन्त्रः

सनकाद्या मुनयो हनूमन्तं पप्रच्छुः—आञ्जनेय महाबल तारकब्रह्मणो रामचन्द्र[illegible] मन्त्रग्रामं नो

हनूमान् होवाच-

वह्निस्थं शयनं विष्णोरर्धचन्द्रविभूषितम् ।
एकाक्षरो मनुः प्रोक्तो मन्त्रराजः सुरद्रुमः ॥ १ ॥
ब्रह्मा मुनिः स्याद्गायत्रं छन्दो रामोऽस्य देवता ।
दीर्घार्धेन्दुयुजाऽङ्गानि कुर्याद्वह्न्यात्मनो मनोः ॥ २ ॥
बीजशक्त्यादिबीजेन इष्टार्थे विनियोजयेत् ।
सरयूतीरमन्दारवेदिकापङ्कजासने ॥ ३ ॥
श्यामं वीरासनासीनं ज्ञानमुद्रोपशोभितम् ।
वामोरुन्यस्ततद्धस्तं सीतालक्ष्मणसंयुतम् ॥ ४ ॥
अवेक्षमाणमात्मानमात्मन्यमिततेजसम् ।
शुद्धस्फटिकसंकाशं केवलं मोक्षकाङ्क्षया ॥ ५ ॥
चिन्तयन् परमात्मानं भानुलक्षं जपेन्मनुम् ।

एकाक्षरादिश्रीराममन्त्रग्रामबुभुत्सया मुनयो हनूमन्तं पृच्छन्तीत्याह—**सनकाद्या** इति । किमिति ? **आञ्जनेये**ति । तैरेवं पृष्टो **हनूमान्** एकाक्षरादिद्वात्रिंशदक्षरान्तमन्त्रतदवान्तरभेदान् तदङ्गगायत्रीमालामन्त्रान् क्रमेण **होवाच** । आदावेकाक्षरमनुमुद्धरति—**वह्निस्थ**मिति । स्वाभिधेये वह्नौ तदभिधानतया

तिष्ठतीति वह्निस्थं ह्रस्वरेफाक्षरं रेति, विष्णोः शयनमिति दीर्घमात्रोच्यते शेषस्य दीर्घाङ्गत्वात्, अर्धेन्दुशब्देन बिन्दुः, आहत्य रामिति ॥ १ ॥ तस्य ऋष्यादिकमाह—**ब्रह्मेति** । रेफदीर्घार्धेन्दुयुजा रामित्यादिना कराङ्गन्यासौ कुर्यादित्यर्थः ॥ २ ॥ ध्यानं तु—**सरयूतीरेति** ॥ ३–५ ॥

द्वित्रिचतुरक्षरमन्त्राः

वह्निर्नारायणेनाढ्यो जाठरः केवलोऽपि च ॥ ६ ॥
द्व्यक्षरो मन्त्रराजोऽयं सर्वाभीष्टप्रदस्ततः ।
एकाक्षरोक्तमृष्यादि स्यादाद्येन षडङ्गकम् ॥ ७ ॥
तारमायारमाऽनङ्गवाक्स्वबीजैश्च षड्विधः ।
त्र्यक्षरो मन्त्रराजः स्यात् सर्वाभीष्टफलप्रदः ॥ ८ ॥
द्व्यक्षरश्चन्द्रभद्रान्तो द्विविधश्चतुरक्षरः ।
ऋष्यादि पूर्ववज्ज्ञेयमेतयोश्च विचक्षणैः ॥ ९ ॥

रामद्व्यक्षरमुद्धरति—**वह्निरिति** । रेफो **वह्निः**, **नारायणे**नाकारेण योजितश्चेत् रा इति, **जाठरो** मकारः **केवलोऽपि च** ह्रस्वमकारयोजनात् रामेति द्व्यक्षरो भवति ॥ ६–७ ॥ षट्प्रकारतः त्र्यक्षरमुद्धरति—**तारेति** । ॐ राम, ह्रीं राम, श्रीं राम, क्लीं राम, ऐं राम, रां राम, इति षड्विधः । ऋष्यादिकं एकाक्षरवत् ज्ञेयमित्यर्थः ॥ ८ ॥ द्विधा चतुरक्षरमुद्धरति—**द्व्यक्षर इति** । रामचन्द्र रामभद्रेति द्विप्रकारः चतुरक्षरः ॥ ९ ॥

पञ्चाक्षरमन्त्रः

सप्रतिष्ठौ रमौ [1]वायू हृत्पञ्चार्णो मनुर्मतः ।
विश्वामित्रऋषिः प्रोक्तः पङ्क्तिश्छन्दोऽस्य देवता ॥ १० ॥

[1] वायौ—अ, मु. वायु—अ १.

रामभद्रो बीज[1]शक्तिप्रथमार्ण[2]नति क्रमात् ।
भ्रूमध्ये हृदि नाभ्यूर्वोः पादयोर्विन्यसेन्मनुम् ॥ ११ ॥
षडङ्गं पूर्ववद्विद्वान् मन्त्रार्णैर्मनुनास्त्रकम् ।
मध्ये वनं कल्पतरोर्मूले पुष्पलतासने ॥ १२ ॥
लक्ष्मणेन प्रगुणितमक्ष्णः कोणेन सायकम् ।
अवेक्षमाणं जानक्या कृतव्यजनमीश्वरम् ॥ १३ ॥
जटाभारलसच्छीर्षं श्यामं मुनिगणावृतम् ।
लक्ष्मणेन धृतच्छत्रमथवा पुष्पकोपरि ॥ १४ ॥
दशास्यमथनं शान्तं ससुग्रीवविभीषणम् ।
एवं लब्ध्वा जयार्थी तु वर्णलक्षं जपेन्मनुम् ॥ १५ ॥

एकधा पञ्चाक्षरमुद्धरति—**सप्रतिष्ठाविति** । इकारदीर्घबिन्दुभ्यां सह प्रतिष्ठिताविति **सप्रतिष्ठौ** श्रीं श्रीं यं नमः इति पञ्चाक्षरो मनुः ॥१०॥ **बीजशक्तिप्रथमार्णनतिक्रमात्** रां नम इत्यादि । न्यासस्तु— **भ्रूमध्येति** ॥११–१२॥ **अक्ष्णः कोणेन** अपाङ्गेन लक्ष्मणेन सायकं धनुषि प्रगुणितं **अवेक्षमाणमिति** ॥१३–१५॥

### षडक्षरमन्त्रः

स्वकामशक्तिवाग्लक्ष्मीताराद्याः पञ्चवर्णकाः ।
षडक्षरः षड्विधः स्याच्चतुर्वर्गफलप्रदः ॥ १६ ॥
पञ्चाशन्मातृकामन्त्रवर्णप्रत्येकपूर्वकम् ।
लक्ष्मीवाङ्मन्मथादिश्च तारादिः स्यादनेकधा ॥ १७ ॥

[1] शक्तिः—अ, मु.   [2] मिति—मु.

श्रीमायामन्मथैकैकं बीजाद्यन्तगतो मनुः ।
चतुर्वर्णः स एव स्यात् षड्वर्णो वाञ्छितप्रदः ॥ १८ ॥
स्वाहाऽन्तो हुंफडन्तो वा नत्यन्तो वा भवेदयम् ।
अष्टाविंशत्युत्तरशतभेदः षड्वर्ण ईरितः ॥ १९ ॥
[1]ब्रह्मा संमोहनः शक्तिर्दक्षिणामूर्तिरेव च ।
अगस्त्यश्च शिवः प्रोक्ता मुनयोऽनुक्रमादिमे ॥ २० ॥
छन्दो गायत्रसंज्ञं च श्रीरामश्चैव देवता ।
अथवा कामबीजादेर्विश्वामित्रो मुनिर्मनोः ॥ २१ ॥
छन्दो देव्यादिगायत्री रामभद्रोऽस्य देवता ।
बीजशक्ती यथापूर्वं षड्वर्णान् विन्यसेत् क्रमात् ॥ २२ ॥
ब्रह्मरन्ध्रे भ्रुवोर्मध्ये हृन्नाभ्यूरुषु पादयोः ।
बीजैः षड्दीर्घयुक्तैर्वा मन्त्रार्णैर्वा षडङ्गकम् ॥ २३ ॥
कालाम्भोधरकान्तिकान्तमनिशं वीरासनाध्यासितं
मुद्रां ज्ञानमयीं दधानमपरं हस्ताम्बुजं जानुनि ।
सीतां पार्श्वगतां सरोरुहकरां विद्युन्निभां राघवं
पश्यन्तं मुकुटाङ्गदादिविविधाकल्पोज्ज्वलाङ्गं भजे ॥ २४ ॥

अष्टाविंशत्युत्तरशतधा भिन्नषडक्षरमुद्धरति—स्वेति । श्रीं श्रीं यं नमः इति यः पञ्चाक्षरो मनुरुक्तः सोऽयं पञ्चाक्षरः रां क्लीं ह्रीं ऐं श्रीं ॐ इति षड्बीजयोगतः षडक्षरः षड्विधो भवति । प्रातिस्विकेन पञ्चाशद्वर्णयोगतः पञ्चाशद्विधो भवति । लक्ष्मीवागित्यादिबीजयोगतः सप्तविधो भवति । रां रामायेति चतुरक्षराणि स्वाहा हुं फट् नमः इत्यादियोगतः षडक्षरो भवति । पुनश्च क्षकाराद्यकारान्त-

[1] ब्रह्म—क.

विलोमेन एकपञ्चाशत् अष्टवर्गश्च षट्स्वराश्च आहत्य अष्टाविंशत्युत्तरशतभेदः षड्वर्ण ईरितः इति । यद्वा—

पञ्चाशद्वर्णकं वर्ग षोडशस्वरसंयुतम् ।
वर्ग वर्ण विलोमेन अष्टाविंशच्छतोत्तरम् ॥

इति ॥ १६–१९ ॥ तद्भेदेन (छ) ब्रह्मेति ॥ २०–२४ ॥

### र-अष्ट-नवाक्षरमन्त्राः

रामश्च चन्द्रभद्रान्तो ङेन्तो नतियुतो द्विधा ।
सप्ताक्षरो मन्त्रराजः सर्वकामफलप्रदः ॥ २५ ॥
तारादिसहितः सोऽपि द्विविधोऽष्टाक्षरो मतः ।
तारं रामश्चतु[1]र्थ्यन्तं क्रोडास्त्रं वह्नितल्प[2]गा ॥ २६ ॥
अष्टार्णोऽयं परो मन्त्रो ऋष्यादिः स्यात् षडर्णवत् ।
पुनरष्टाक्षरस्याथ राम एव ऋषिः स्मृतः ॥ २७ ॥
गायत्रं छन्द इत्यस्य देवता राम एव च ।
तारं श्रीबीजयुग्मौ च बीजशक्त्या[3]दयो मताः ॥ २८
षडङ्गं च ततः कुर्यान्मन्त्रार्णैरेव बुद्धिमान् ।
तारं श्रीबीजयुग्मं च रामाय नम उच्चरेत् ॥ २९ ॥
ग्लौमों बीजं वदेन्मायां हृद्रामाय पुनश्च ताम् ।
शिवोमाराममन्त्रोऽयं वस्वर्णस्तु वसुप्रदः ॥ ३० ॥
ऋषिः सदाशिवः प्रोक्तो गायत्रं छन्द उच्यते ।
शिवोमारामचन्द्रोऽत्र देवता परिकीर्तितः ॥ ३१ ॥

[1] र्थ्यन्तः—मु. उ. [2] गं--अ १. [3] युतो—अ

दीर्घया माययाऽङ्गानि तारपञ्चार्णयुक्तया ।
रामं त्रिणेत्रं सोमार्धधारिणं शूलिनं परम् ।
भस्मोद्धूळितसर्वाङ्गं कपर्दिनमुपास्महे ॥ ३२ ॥
रामाभिरामां सौन्दर्यसीमां सोमावतंसिकाम् ।
पाशाङ्कुशधनुर्बाणधरां ध्यायेत्त्रिलोचनाम् ॥ ३३ ॥
ध्यायन्नेवं वर्णलक्षं जपतर्पणतत्परः ।
बिल्वपत्रैः फलैः पुष्पैस्तिलाज्यैः पङ्कजैर्हुनेत् ॥ ३४ ॥
स्वयमायान्ति निधयः सिद्धयश्च सुरेप्सिताः ।
पुनरष्टाक्षरस्याथ ब्रह्मगायत्रराघवाः ॥ ३५ ॥
ऋष्यादयस्तु विज्ञेयाः श्रीबीजं मम शक्तिकम् ।
तत्प्रीत्यै विनियोगश्च मन्त्वार्णैरङ्गकल्पना ॥ ३६ ॥
केयूराङ्गदकङ्कणैर्मणिगणैर्विद्योतमानं सदा
रामं पार्वणचन्द्रकोटि[1]सदृशच्छत्रेण वै राजितम् ।
हेमस्तम्भसहस्रषोडशयुते मध्ये महामण्डपे
देवेशं भरतादिभिः परिवृतं रामं भजे श्यामलम् ॥ ३७ ॥
किं मन्त्रैर्बहुभिर्विनश्वरफलैरायाससाध्यैर्वृथा
किंचिल्लोभवितानमात्रविफलैः संसारदुःखावहैः ।
एकः सन्नपि सर्वमन्त्रफलदो लोभादिदोषोज्झितः
श्रीरामः शरणं ममेति सततं मन्त्रोऽयमष्टाक्षरः ॥ ३८ ॥

[1] सदृशं—अ १.

एवमष्टाक्षरः सम्यक् सप्तधा परिकीर्तितः ।
रामसप्ताक्षरो मन्त्र आद्यन्ते तारसंयुतः ॥ ३९ ॥
नवार्णो मन्त्रराजः स्याच्छेषं षड्वर्णवन्न्यसेत् ॥

अथ द्वेधा सप्ताक्षरमाह इति—**राम** इति। रामचन्द्राय नमः रामभद्राय नमः इति द्विधा सप्ताक्षरो भवति। ऋष्यादिकं पूर्ववत् ॥ २९ ॥ अष्टाक्षरमनुं षोडशधा उद्धरति—**तारादि** इति । "तारादि" इत्यादिशब्दतः मायारमाऽनङ्गवाक्स्वबीजानि गृह्यन्ते । तैः योगतः चन्द्रभद्रभेदेन द्विप्रकारो मनुः द्वादशधा भिद्यते। ॐ रामचन्द्राय नमः इत्यादि षट्। ॐ रामभद्राय नमः इत्यादि षट् । आहत्य द्वादश । ऋष्यादिकं पूर्ववत् । पुनः मन्त्रान्तरमाह—**तारमिति** ॥ २६ ॥ ॐ रामाय हुं फट् स्वाहा श्रीरामाष्टाक्षरान्तरेण उमामहेश्वरबीजयोगतः शिवोमाराममनुर्भवतीत्याह—**पुनरिति** । ॐ श्रीं श्रीं रामाय नमः, ग्लौं ॐ ह्रीं नमो रामाय ॥ २७–३० ॥ ह्रां ॐ रामाय नम इत्यादि ॥ ३१–३८ ॥ प्रधानतः **सप्तधा परिकीर्तितः** । एकधा नवार्णमुद्धरति—**रामेति** । ॐ रामचन्द्राय नमः ॐ इति ॥ ३९ ॥

### दश-एकादशाक्षरमन्त्राः

जानकीवल्लभं ङेन्तं वह्नेर्जायाहुमादिकम् ॥ ४० ॥
दशाक्षरोऽयं मन्त्रः स्यात् सर्वाभीष्टफलप्रदः ।
दशाक्षरस्य मन्त्रस्य वसिष्ठोऽस्य ऋषिर्विराट् ॥ ४१ ॥
छन्दोऽस्य देवता रामः सीतापाणिपरिग्रहः ।
आद्यो बीजं द्विठः शक्तिः कामेनाङ्गक्रिया मता ॥ ४२ ॥
शिरोललाटभ्रूमध्ये तालुकर्णेषु हृद्यपि ।
नाभ्यूरुजानुपादेषु दशार्णान् विन्यसेन्मनोः ॥ ४३ ॥

अयोध्यानगरे रत्नचित्रे सौवर्णमण्डपे ।
मन्दारपुष्पैराबद्धविताने तोरणाञ्चिते ॥ ४४ ॥
सिंहासने समासीनं पुष्पकोपरि राघवम् ।
रक्षोभिर्हरिभिर्देवैर्दिव्ययानगतैः शुभैः ॥ ४५ ॥
संस्तूयमानं मुनिभिः प्रह्वैश्च परिसेवितम् ।
सीताऽलंकृतवामाङ्गं लक्ष्मणेनोपसेवितम् ॥ ४६ ॥
श्यामं प्रसन्नवदनं सर्वाभरणभूषितम् ।
ध्यायन्नेवं जपेन्मन्त्रं वर्णलक्षमनन्यधीः ॥ ४७ ॥
रामं ङेन्तं धनुष्पाणयेऽन्तः स्याद्वह्निसुन्दरी ।
दशाक्षरोऽयं मन्त्रः स्यान्मुनिर्ब्रह्मा विराट् स्मृतः ॥ ४८ ॥
छन्दस्तु देवता प्रोक्तो रामो राक्षसमर्दनः ।
शेषं तु पूर्ववत् कुर्याच्चापबाणधरं स्मरेत् ॥ ४९ ॥
तारमायारमाऽनङ्गवाक्स्वबीजैश्च षड्विधः ।
दशार्णो मन्त्रराजः स्याद्रुद्रवर्णात्मको मनुः ॥ ५० ॥
शेषं षडर्णवज्ज्ञेयं न्यासध्यानादिकं बुधैः ।

द्विप्रकारं दशाक्षरमुद्धरति---**जानकीति** । हुं जानकीवल्लभाय स्वाहेति ॥ ४०-४१ ॥ **आद्यो बीजं** हुमिति । **द्विठः शक्तिः** ठः ठः इति । **कामेनाङ्गक्रिया मता** क्लीमित्यादि ॥ ४२-४७ ॥ रामाय धनुष्पाणये स्वाहेति ॥ ४८-४९ ॥ एकादशाक्षरं षोढा उद्धरति—**तारेति** । ॐ रामाय धनुष्पाणये स्वाहा इत्यादि ॥ ५० ॥

द्वादशाक्षरमन्त्रः

द्वादशाक्षरमन्त्रस्य श्रीरामो ऋषिरुच्यते ॥ ९१ ॥
जगती छन्द इत्युक्तं श्रीरामो देवता मतः ।
प्रणवो बीजमग्निरुक्तः क्लीं शक्तिर्ह्रीं च कीलकम् ॥ ९२ ॥
मन्त्रेणाङ्गानि विन्यस्य शिष्टं पूर्ववदाचरेत् ।
तारं मायां समुच्चार्य भरताग्रज इत्यपि ॥ ९३ ॥
रामक्लींवह्निजायाऽन्तं मन्त्रोऽयं द्वादशाक्षरः ।
ॐ हृद्भगवते रामचन्द्रभद्रौ च ङेयुतौ ॥ ९४ ॥
अर्कार्णो द्विविधोऽप्यस्य ऋषिध्यानादि पूर्ववत् ।
छन्दस्तु जगती चैव मन्त्रार्णैरङ्गकल्पना ॥ ९५ ॥

ॐ ह्रीं भरताग्रज राम क्लीं स्वाहेति ॥९१–९३॥ ॐ नमो भगवते रामचन्द्राय, ॐ नमो भगवते रामभद्राय इति । त्रिप्रकारोऽयं द्वादशाक्षरः ॥९४–९५॥

त्रयोदश-चतुर्दश-पञ्चदशाक्षरमन्त्राः

श्रीरामेति पदं चोक्त्वा जयराम पदं ततः ।
जयद्वयं वदेत् प्राज्ञो रामेति मनुराजकः ॥ ९६ ॥
त्रयोदशार्ण ऋष्यादि पूर्ववत् सर्वकामदः ।
पदद्वयैर्द्विरावृत्तैरङ्गन्यासं दशार्णवत् ॥ ९७ ॥
तारादिसहितः सोऽपि स चतुर्दशवर्णकः ।
त्रयोदशार्णमुच्चार्य पश्चाद्रामेति योजयेत् ॥ ९८ ॥
स वै पञ्चदशार्णस्तु जपतां कल्पभूरुहः ॥

त्रयोदशार्णमुद्धरति—**श्रीरामेति** । श्रीराम जयराम जय जय रामेति ॥ ५६–५७ ॥ **स चतुर्दशवर्णकः** षड्विध इत्यर्थः। षोडशार्णमुद्धरति—**नमश्चेति**। नमः सीतापतये रामाय हन हन हुं फट् स्वाहा इति ॥ ५८–६१ ॥

षोडश-सप्तदशाक्षरमन्त्राः

**नमश्च सीतापतये रामायेति हनद्वयं ॥ ५९ ॥**
**ततस्तु कवचास्त्रान्तः षोडशाक्षर ईरितः**
**तस्यागस्त्यऋषिश्छन्दो बृहती देवता च सः ॥ ६० ॥**
**रां बीजं शक्तिरस्त्रं च कीलकं हुमितीरितम् ।**
**द्विपञ्चत्रिचतुर्वर्णैः सर्वैरङ्गं न्यसेत् क्रमात् ॥ ६१ ॥**
**तारादिसहितः सोऽपि मन्त्रः सप्तदशाक्षरः ।**

**सप्तदशाक्षरः** षड्विधः ॥ ६२ ॥

अष्टादश-एकोनविंशार्णमन्त्राः

**तारं नमो भगवते रामं ङेन्तं महा ततः ॥ ६२ ॥**
**पुरुषाय पदं पश्चाद्धृदन्तोऽष्टादशाक्षरः ।**
**विश्वामित्रो मुनिश्छन्दो गायत्रं देवता च सः ॥ ६३ ॥**
**कामादिसहितः सोऽपि मन्त्र एकोनविंशकः ।**

**अष्टादशाक्षरः** ॐ नमो भगवते रामाय महापुरुषाय नमः ॥ ६३ ॥ **मन्त्र एकोनविंशकः** षड्विधः ॥ ६४ ॥

विंशार्णमन्त्रः

**तारं नमो भगवते रामायेति पदं वदेत् ॥ ६४ ॥**
**सर्वशब्दं समुच्चार्य सौभाग्यं देहि मे वदेत् ।**
**वह्निजायां ततोच्चार्य मन्त्रो विंशार्णको मतः ॥ ६५ ॥**

ॐ नमो भगवते रामाय सर्वसौभाग्यं देहि मे स्वाहा ॥ ६५ ॥

एकविंशार्णमन्त्रः

तारं नमो भगवते रामाय सकलं वदेत् ।
आपन्निवारणाय वह्निजायां ततो वदेत् ॥ ६६ ॥
एकविंशार्णको मन्त्रः सर्वाभीष्टफलप्रदः ।

ॐ नमो भगवते रामाय सकलापन्निवारणाय स्वाहा ॥ ६६ ॥

द्वाविंशार्णमन्त्रः

तारं रमां स्वबीजं च ततो दाशरथाय च ॥ ६७ ॥
ततः सीतावल्लभाय सर्वाभीष्टपदं वदेत ।
ततो दाय हृदन्तोऽयं मन्त्रो द्वाविंशदक्षरः ॥ ६८ ॥

ॐ श्रीं रां दाशरथाय सीतावल्लभाय सर्वाभीष्टदाय नमः ॥ ६७–६८ ॥

त्रयोविंशार्णमन्त्रः

तारं नमो भगवते वीररामाय संवदेत् ।
कलशत्रून् हनद्वन्द्वं वह्निजायां ततो वदेत् ॥ ६९ ॥
त्रयोविंशाक्षरो मन्त्रः सर्वशत्रुनिबर्हणः ।
विश्वामित्रो मुनिः प्रोक्तो गायत्रं छन्द उच्यते ॥ ७० ॥
देवता वीररामोऽसौ बीजाद्याः पूर्ववन्मताः ।
मूलमन्त्रविभागेन न्यासान् कृत्वा विचक्षणः ॥ ७१ ॥

शरं धनुषि संधाय तिष्ठन्तं रावणोन्मुखम् ।
वज्रपाणिरथारूढं रामं ध्यात्वा जपेन्मनुम् ॥ ७२ ॥

ॐ नमो भगवते वीररामाय सकलशत्रून् हन हन स्वाहा ॥ ६९–७२ ॥

चतुर्विंशार्णमन्त्रः

तारं नमो भगवते श्रीरामाय पदं वदेत् ।
तारकब्रह्मणे चोक्त्वा मां तारय पदं वदेत् ॥ ७३ ॥
नमस्तारात्मको मन्त्रश्चतुर्विंशतिवर्णकः ।
बीजादिकं यथापूर्वं सर्वं कुर्यात् षडर्णवत् ॥ ७४ ॥

ॐ नमो भगवते श्रीरामाय तारकब्रह्मणे मां तारय नम ओमिति ॥ ७३–७४ ॥

पञ्चविंश-षड्विंश-सप्तविंशार्णमन्त्राः

कामस्तारो नतिश्चैव ततो भगवतेपदम् ।
रामचन्द्राय चोच्चार्य सकलेति पदं वदेत् ॥ ७५ ॥
जनवश्यकरायेति स्वाहा कामात्मको मनुः ।
सर्ववश्यकरो मन्त्रः पञ्चविंशतिवर्णकः ॥ ७६ ॥
आदौ तारेण संयुक्तो मन्त्रः षड्विंशदक्षरः ।
अन्तेऽपि तारसंयुक्तः सप्तविंशतिवर्णकः ॥ ७७ ॥

क्लीं ॐ नमो भगवते रामचन्द्राय सकलजनवश्यकराय स्वाहा ॥ ७५–७७ ॥

अष्टाविंश-एकोनत्रिंश-त्रिंश-एकत्रिंशार्णमन्त्राः

तारं नमो भगवते रक्षोघ्नविशदाय च ।
सर्वविघ्नान् समुच्चार्य निवारयपदद्वयम् ॥ ७८ ॥

स्वाहाऽन्तो मन्त्रराजोऽयमष्टाविंशतिवर्णकः ।
अन्ते तारेण संयुक्त एकोनत्रिंशदक्षरः ॥ ७९ ॥
आदौ स्वबीजसंयुक्तस्त्रिंशद्वर्णात्मको मनुः ।
अन्तेऽपि तेन संयुक्त एकत्रिंशात्मकः स्मृतः ॥ ८० ॥

ॐ नमो भगवते रक्षोघ्नविशदाय सर्वविघ्नान् निवारय निवारय स्वाहा ॥ ७८–८९ ॥

रामानुष्टुप्

रामभद्र महेष्वास रघुवीर नृपोत्तम ।
भो दशास्यान्तकास्माकं श्रियं दापय देहि मे ॥ ८१ ॥
आनुष्टुभ ऋषी रामश्छन्दोऽनुष्टुप्स देवता ।
रां बीजमस्य यं शक्तिरिष्टार्थे विनियोजयेत् ॥ ८२ ॥
पादं हृदि च विन्यस्य पादं शिरसि विन्यसेत् ।
शिखायां पञ्चभिर्न्यस्य त्रिवर्णैः कवचं न्यसेत् ॥ ८३ ॥
नेत्रयोः पञ्चवर्णैश्च दापयेत्यस्त्रमुच्यते ।
चापबाणधरं श्यामं ससुग्रीवविभीषणम् ॥ ८४ ॥
हत्वा रावणमायान्तं कृतत्रैलोक्यरक्षणम् ।
रामभद्रं हृदि ध्यात्वा दशलक्षं जपेन्मनुम् ॥ ८५ ॥

रामगायत्री

वदेद्दाशरथायेति विद्महेति पदं ततः ।
सीतापदं समुद्धृत्य वल्लभाय ततो वदेत् ॥ ८६ ॥

धीमहीति वदेत्तन्नो रामश्चापि प्रचोदयात् ।
तारादिरेषा गायत्री मुक्तिमेव प्रयच्छति ॥ ८७ ॥
मायाऽऽदिरपि वैदुष्यं रामादिश्च श्रियः पदम् ।
[1]मदनेनापि संयुक्ता संमोहयति मेदिनीम् ॥ ८८ ॥
पञ्च त्रीणि षडर्णैश्च त्रीणि चत्वारि वर्णकैः ।
चत्वारि च चतुर्वर्णैरङ्गन्यासं प्रकल्पयेत् ॥ ८९ ॥
बीजध्यानादिकं सर्वं कुर्यात् षड्वर्णवत् क्रमात् ।

दाशरथाय विद्महे सीतावल्लभाय धीमहि । तन्नो रामः प्रचोदयात इति रामगायत्री । प्रणवादिबीजयोजनफलमाह—तारादिरिति ॥ ८६–८९ ॥

रामसालामन्त्रः

तारं नमो भगवते चतुर्थ्या रघुनन्दनम् ॥ ९० ॥
रक्षोघ्नविशदं तद्वन्मधुरेति वदेत्ततः ।
प्रसन्नवदनं ङेन्तं वदेदमिततेजसे ॥ ९१ ॥
बलरामौ चतुर्थ्यन्तौ विष्णुं ङेन्तं नतिस्ततः ।
प्रोक्तो मालामनुः सप्तचत्वारिंशद्भिरक्षरैः ॥ ९२ ॥
ऋषिश्छन्दोदेवताऽऽदि ब्रह्मानुष्टुभराघवाः ।
सप्तर्तुसप्तदशषड्रुद्रसंख्यैः षडङ्गकम् ॥ ९३ ॥
ध्यानं दशाक्षरं प्रोक्तं लक्षमेकं जपेन्मनुम् ।

[1] मदनेन समायुक्ता—उ, मु.

मालामन्त्रमुद्धरति—तारमिति । ॐ नमो भगवते रघुनन्दनाय रक्षोघ्नविशदाय मधुरप्रसन्नवदनाय अमिततेजसे बलाय श्रीरामाय विष्णवे नम इति ॥ ९०–९३ ॥

सीतामन्त्रः

श्रियं सीता चतुर्थ्यन्ता स्वाहान्तोऽयं षडक्षरः ॥ ९४ ॥
जनकोऽस्य ऋषिश्छन्दो गायत्री देवता मनोः ।
सीता भगवती प्रोक्ता श्रीं बीजं नतिशक्तिकम् ॥ ९५ ॥
कीलं सीता चतुर्थ्यन्तमिष्टार्थे विनियोजयेत् ।
दीर्घस्वरयुजाऽऽद्येन षडङ्गानि प्रकल्पयेत् ॥ ९६ ॥
स्वर्णाभामम्बुजकरां रामालोकनतत्पराम् ।
ध्यायेत् षट्कोणमध्यस्थरामाङ्कोपरि संस्थिताम् ॥ ९७ ॥

सीताद्यङ्गमन्त्रानुद्धरति—श्रियमिति । श्रीं सीतायै स्वाहेति ॥ ९४–९५ ॥ श्रामित्यादि दीर्घस्वरयुजा ॥ ९६–९७ ॥

लक्ष्मणमन्त्रः

लकारं तु समुद्धृत्य लक्ष्मणाय नमोऽन्तकः ।
अगस्त्यऋषिरस्याथ गायत्रं छन्द उच्यते ॥ ९८ ॥
लक्ष्मणो देवता प्रोक्तो लं बीजं शक्तिरस्य हि ।
नमस्तु विनियोगो हि पुरुषार्थचतुष्टये ॥ ९९ ॥
दीर्घभाजा स्वबीजेन षडङ्गानि प्रकल्पयेत् ।
द्विभुजं स्वर्णरुचिरतनुं पद्मनिभेक्षणम् ॥ १०० ॥
धनुर्बाणधरं वन्दे रामाराधनतत्परम् ।

लं लक्ष्मणाय नम इति ॥ ९८–१०० ॥

भरतमन्त्रः

भकारं तु समुद्धृत्य भरताय नमोऽन्तकः ॥ १०१ ॥
अगस्त्य ऋषिरस्याथ शेषं पूर्ववदाचरेत् ।
भरतं श्यामलं शान्तं रामसेवापरायणम् ॥ १०२ ॥
धनुर्बाणधरं वीरं कैकेयीतनयं भजे

भं भरताय नमः ॥ १०१-१०२ ॥

शत्रुघ्नमन्त्रः

शं बीजं तु समुद्धृत्य शत्रुघ्नाय नमोऽन्तकः ।
ऋष्यादयो यथापूर्वं विनियोगोऽरिनिग्रहे ॥ १०३ ॥
द्विभुजं स्वर्णवर्णाभं रामसेवापरायणम् ।
लवणासुरहन्तारं सुमित्रातनयं भजे ॥ १०४ ॥

शं शत्रुघ्नाय नमः ॥ १०३-१०४ ॥

हनूमन्मन्त्रः

हं हनूमांश्चतुर्थ्यन्तं हृदन्तो मन्त्रराजकः ।
रामचन्द्र ऋषिः प्रोक्तो योजयेत् पूर्ववत् क्रमात् ॥ १०५ ॥
द्विभुजं स्वर्णवर्णाभं रामसेवापरायणम् ।
मौञ्जीकौपीनसहितं मां ध्यायेद्रामसेवकम् ॥ इति ॥ १०६ ॥

हं हनूमते नमः ॥ १०५-१०६ ॥

**इति द्वितीयोऽध्यायः**

---

# तृतीयोऽध्यायः

पूजापीठजिज्ञासा

सनकाद्या मुनयो हनूमन्तं पप्रच्छुः—आञ्जनेय महाबल पूर्वोक्तमन्त्राणां पूजापीठमनुब्रूहीति ॥ १ ॥

एकाक्षरादिद्वात्रिंशदक्षरमन्त्राणां पूजापीठप्रकारं पृच्छन्तीत्याह—सनकाद्या इति । पप्रच्छुः—किमिति । आञ्जनेयेति ॥ १ ॥

एकाक्षरादिनवाक्षरान्तमन्त्रपूजायन्त्रम्

हनूमान् होवाच—आदौ षट्कोणम् । तन्मध्ये रामबीजं सश्रीकम् । तदधोभागे द्वितीयान्तं साध्यम् । बीजोर्ध्वभागे षष्ठ्यन्तं साधकम् । पार्श्वे दृष्टिबीजे । तत्परितो जीवप्राणशक्तिवश्यबीजानि । तत्सर्वं सम्मुखोन्मुखाभ्यां प्रणवाभ्यां वेष्टनम् । अग्नीशासुरवायव्यपुरः-पृष्ठेषु षट्कोणेषु दीर्घभाजि हृदयादिमन्त्राः क्रमेण । रां रीं रूं रैं रौं र इति दीर्घभाजि तद्युक्तहृदयाद्यस्त्रान्तम् । षट्कोणपार्श्वे रमामाया-बीजे । कोणाग्रे वराहं हुमिति । तद्बीजान्तराले कामबीजम् । परितो वाग्भवम् । ततो वृत्तत्रयं साष्टपत्रम् । तेषु दलेषु [1]स्वरान् षड्वर्गान् । प्रतिदलं मालामनुवर्णषट्कम् । अन्ते पञ्चाक्षरम् । तद्दलकपोलेष्वष्टवर्गान् । पुनरष्टदलपद्मम् । तेषु दलेषु नारायणाष्टाक्षरी-मन्त्रः । तद्दलकपोलेषु श्रीबीजम् । ततो वृत्तम् । ततो द्वादशदलम् । तेषु दलेषु वासुदेवद्वादशाक्षरीमन्त्रः । तद्दलकपोलेष्वादिक्षान्तान् । ततो

[1] सर्वान् ष—क. स्वरानष्टव—अ १.

वृत्तम् । ततः षोडशदलम् । तेषु दलेषु हुं फट् नतिसहितराम-द्वादशाक्षरम् । तद्दलकपोलेषु मायाबीजम् । सर्वत्र प्रतिकपोलं द्विरावृत्त्या ह्रं स्रं भ्रं व्रं ज्रं अं श्रं ज्रं । ततो वृत्तम् । ततो द्वात्रिंशद्दल-पद्मम् । तेषु दलेषु नृसिंहमन्त्रराजानुष्टुभमन्त्रः । तद्दलकपोलेष्वष्टव-स्वेकादशरुद्रद्वादशादित्यमन्त्राः प्रणवादिनमोन्ताश्चतुर्थ्यन्ताः क्रमेण । तद्बहिर्वषट्कारं परितः । ततो रेखात्रययुक्तं भूपुरम् । द्वादशदिक्षु राश्यादिभूषितम् । अष्टनागैरधिष्ठितम् । चतुर्दिक्षु नारसिंहबीजम् । विदिक्षु वाराहबीजम् । एतत् सर्वात्मकं यन्त्रं सर्वकामप्रदं मोक्षप्रदं च । एकाक्षरादिनवाक्षरान्तानामेतद्यन्त्रं भवति ॥ २ ॥

एकाक्षरादिनवाक्षरान्तानां मन्त्राणां पूजार्पीठप्रकारमादौ कथयति— **आदाविति । आदौ षट्कोणं** विलिख्येति सर्वत्रोह्यम् । **सश्रीकं** श्रींगर्भितमित्यर्थः । **द्वितीयान्तं साध्यं** सर्वाभीष्टसिद्धिदमिति । **षष्ठ्यन्तं साधकं** ममेति । **पार्श्वे** कुरुद्वयलेखनपूर्वकं **दृष्टिबीजे** इं ईं इति । **जीवप्राणशक्तिवश्यबीजानि**—हंस इति **जीवबीजं**, सोऽहमिति **प्राणबीजं**, ह्रीमिति **शक्तिबीजं**, क्लीमिति **वश्यबीजम्** । **हृदयाद्यस्त्रान्तं** गां नम इत्यादि रः अस्त्राय फट् इत्यन्तम् । **षट्कोणपार्श्वे रमामायाबीजे** श्रीं ह्रीमिति । **कामबीजं** क्लीमिति । **वाग्भवं** ऐमिति । **अन्ते पञ्चाक्षरं**—सप्तदलेषु द्विचत्वारिंशद्वर्णान् विलिख्य शिष्टाष्टमदळे शिष्टपञ्चाक्षरं विलिखेदित्यर्थः । मेषादिराश्यादिना **राश्यादिविभूषितम्** । **नारसिंहबीजं** क्ष्म्यौमिति ॥ २ ॥

आवरणपूजापूर्वकमनुजपः

**तद्दशावरणात्मकं भवति । षट्कोणमध्ये साङ्गं राघवं यजेत् । षट्कोणेष्वङ्गैः प्रथमावृतिः । अष्टदलमूले आत्माद्यावरणम् । तदग्रे**

वासुदेवाद्यावरणम् । द्वितीयाष्टदलमूले धृष्टयाद्यावरणम् । तदग्रे हनूमदाद्यावरणम् । द्वादशदलेषु वसिष्ठाद्यावरणम् । षोडशदलेषु नीलाद्यावरणम् । द्वात्रिंशद्दलेषु ध्रुवाद्यावरणम् । भूपुरान्तरिन्द्राद्यावरणम् । तद्बहिर्वज्राद्यावरणम् । एवमभ्यर्च्य मनुं जपेत् ॥ ३ ॥

षट्कोणेषु हृदयाद्यङ्गैः प्रथमावृतिः ॥ ३ ॥

दशाक्षरादिद्वात्रिंशाक्षरान्तमन्त्रपूजायन्त्रम्

अथ दशाक्षरादिद्वात्रिंशदक्षरान्तानां मन्त्राणां पूजापीठमुच्यते —आदौ षट्कोणम् । तन्मध्ये स्वबीजम् । तन्मध्ये साध्यनामानि । एवं कामबीजवेष्टनम् । तं शिष्टेन नवार्णेन वेष्टनम् । षट्कोणेषु षडङ्गान्यग्नीशासुरवायव्यपूर्वपृष्ठेषु । तत्कपोलेषु श्रीमाये । कोणाग्रे क्रोधम् । ततो वृत्तम् । ततोऽष्टदलम् । तेषु दलेषु षट्संख्यया मालामनुवर्णान् । तद्दलकपोलेषु षोडश स्वराः । ततो वृत्तम् । तत्परित आदिक्षान्तम् । तद्बहिर्भूपुरं साष्टशूलाग्रम् । दिक्षु विदिक्षु नारसिंहवाराहे । एतन्महायन्त्रम् । आधारशक्त्यादिवैष्णवपीठम् ॥ ४ ॥

आदौ षट्कोणं लिखित्वेति सर्वत्र समानम् । मध्ये स्वबीजं हु[रा]मिति(?) । मध्ये साध्यनामानि मम सर्वाभीष्टसिद्धिं कुरुकुरु नम इति एतत् सर्वम । क्रोधं हुमिति । नारसिंहवाराहे क्ष्म्र्यौं हुमिति ॥ ४ ॥

यन्त्राराधनपूर्वकमनुजपः

अङ्गैः प्रथमावृतिः । मध्ये रामम् । वामभागे सीताम् । तत्पुरतः शार्ङ्गं शरं च । अष्टदलमूले हनूमदादि द्वितीयावरणम् ।

धृष्ट्यादि तृतीयावरणम् । इन्द्रादिभिश्चतुर्थी । वज्रादिभिः पञ्चमी । एतद्यन्त्राराधनपूर्वकं दशाक्षरादिमनून् जपेत् ॥ ९ ॥

हृदयादि—अंगैः । द्वितीयावरणं—तदग्रे धृष्ट्यादितृतीयावरणम् ॥९॥

इति तृतीयोऽध्यायः ।

---

## चतुर्थोऽध्यायः

श्रीराममन्त्रपुरश्चरणविधिः

सनकाद्या मुनयो हनूमन्तं पप्रच्छुः—श्रीराममन्त्राणां पुरश्चरणविधिमनुब्रूहीति । हनूमान् होवाच—

नित्यं त्रिषवणस्नायी पयोमूलफलादिभुक् ।
अथवा पायसाहारो हविष्यान्नाद एव च ॥ १ ॥
षड्रसैश्च परित्यक्तः स्वाश्रमोक्तविधिं चरन् ।
वनिताऽऽदिषु वाक्कर्ममनोभिर्निःस्पृहः शुचिः ॥ २ ॥
भूमिशायी ब्रह्मचारी निष्कामो गुरुभक्तिमान् ।
स्नानपूजाजपध्यानहोमतर्पणतत्परः ॥ ३ ॥
गुरूपदिष्टमार्गेण ध्यायन् राममनन्यधीः ।
सूर्येन्दुगुरुदीपादिगोब्राह्मणसमीपतः ॥ ४ ॥

श्रीरामसन्निधौ मौनी मन्त्रार्थमनुचिन्तयन् ।
व्याघ्रचर्मासने स्थित्वा स्वस्तिकाद्यासनक्रमात् ॥ ५ ॥
तुलसीपारिजातश्रीवृक्षमूलादिकस्थले ।
पद्माक्षतुलसीकाष्ठरुद्राक्षकृतमाल्यया ॥ ६ ॥
मातृकामाल्यया मन्त्री मनसैव मनुं जपन् ।
अभ्यर्च्य वैष्णवे पीठे जपेदक्षरलक्षकम् ॥ ७ ॥
तर्पयेत्तद्दशांशेन पयसा तद्दशांशतः ।
जुहुयाद्गोघृतेनैव भोजयेत्तद्दशांशतः ॥ ८ ॥
ततः पुष्पाञ्जलिं मूलमन्त्रेण विधिवच्चरेत् ।
ततः सिद्धमनुर्भूत्वा जीवन्मुक्तो भवेन्मुनिः ॥ ९ ॥

एकाक्षरादिमन्त्राणां पुरश्चरणानियमबुभुत्सया पृच्छन्तीत्याह—**सनकाद्या इति**। **पप्रच्छुः**—किं तत्? **श्रीराममन्त्राणामिति**। पुरश्चरणनियमः कीदृशः इत्यत्र—**नित्यमिति** ॥ १–१३ ॥

ऐहिके राममन्त्रविनियोगनिषेधः

अणिमादिर्भजत्येनं यूनं वरवधूरिव ।
ऐहिकेषु च कार्येषु महापत्सु च सर्वदा ॥ १० ॥
नैव योज्यो राममन्त्रः केवलं मोक्षसाधकः ।

ऐहिके हनूमत्स्मरणविधिः

ऐहिके समनुप्राप्ते मां स्मरेद्रामसेवकम् ॥ ११ ॥

यो रामं संस्मरेन्नित्यं भक्त्या मनुपरायणः ।
तस्याहमिष्टसंसिद्ध्यै दीक्षितोऽस्मि मुनीश्वराः ॥ १२ ॥
वाञ्छितार्थं प्रदास्यामि भक्तानां राघवस्य तु ।
सर्वथा जागरूकोऽस्मि रामकार्यधुरंधरः ॥ १३ ॥

इति चतुर्थोऽध्यायः*

## पञ्चमोऽध्यायः

रामषडक्षरस्य मन्त्रराजत्वम्

सनकाद्या मुनयो हनूमन्तं पप्रच्छुः—श्रीराममन्त्रार्थमनुब्रूहीति हनूमान् होवाच—

सर्वेषु राममन्त्रेषु मन्त्रराजः षडक्षरः ।
एकधा द्विविधा त्रेधा चतुर्धा पञ्चधा तथा ॥ १ ॥
षट्सप्तधाऽष्टधा चैव बहुधाऽयं व्यवस्थितः ।
षडक्षरस्य माहात्म्यं शिवो जानाति तत्त्वतः ॥ २ ॥
श्रीराममन्त्रराजस्य सम्यगर्थोऽयमुच्यते ।
[1]नारायणाष्टाक्षरे च शिवपञ्चाक्षरे तथा ॥ ३ ॥
सार्थकार्णद्वयं रामो रमन्ते यत्र योगिनः ॥

नारायणेत्यादि श्लोकः (अ १, अ २, क) कोशेषु नोपलभ्यते.

मन्त्रार्थबुभुत्सया मुनयः पृच्छन्तीत्याह---**सनकाद्या** इति । **पप्रच्छुः**— **किं तत्? श्रीरामेति** । तत्प्रश्नोत्तरं **हनूमान् होवाच** । किमित्यत्र—बहूनां राममन्त्राणां मध्ये षडक्षरस्य मन्त्रराजत्वं तारकत्वात्, तारादिबहुबीजयोगतो बहुत्वं चिन्मात्रगोचरत्वं चाह—**सर्वेष्विति** ॥ १ ॥ पञ्चाशद्वर्णतद्विकृतियोगतो बहुत्वं तदर्थरूपेण ब्रह्ममात्रता चोपपद्यते इति ॥ २–३ ॥

रामबीजार्थः

रकारो वह्निवचनः प्रकाशः पर्यवस्यति ॥ ४ ॥
सच्चिदानन्दरूपोऽस्य परमात्मार्थ उच्यते ।
व्यञ्जनं निष्कलं ब्रह्म प्राणो मायेति च स्वरः ॥ ५ ॥
व्यञ्जनैः स्वरसंयोगं विद्धि तत्प्राणयोजनम् ।
रेफे ज्योतिर्मये तस्मात् कृतमाकारयोजनम ॥ ६ ॥
मकारोऽभ्युदयार्थत्वात् स मायेति च कीर्त्यते ।
[1]सोऽयं बीजं स्वकं यस्मात् समायं ब्रह्म चोच्यते ॥ ७ ॥
सबिन्दुः सोऽपि पुरुषः शिवसूर्येन्दुरूपवान् ।
ज्योतिस्तस्य शिखारूपं नादः सप्रकृतिर्मतः ॥ ८ ॥
प्रकृतिः पुरुषश्चोभौ समायाद्ब्रह्मणः स्मृतौ ।
बिन्दुनादात्मकं बीजं वह्निसोमकलाऽऽत्मकम् ॥ ९ ॥
अग्नीषोमात्मकं रूपं रामबीजे प्रतिष्ठितम् ।
यथैव वटबीजस्थः प्राकृतश्च महान् द्रुमः ॥ १० ॥
तथैव रामबीजस्थं जगदेतच्चराचरम् ।

[1] सोऽहं—उ.

**बीजोक्तमुभयार्थत्वं रामनामनि दृश्यते ॥ ११ ॥**

**बीजं मायाविनिर्मुक्तं परं ब्रह्मेति कीर्त्यते ।**

तत्रादौ स्वबीजार्थमाह—**रकार इति** । रेति व्यञ्जनं वह्निवचनं, वह्निगत-हेयांशापाये वह्नेः चिद्वह्नित्वेन प्रकाशमात्रं पर्यवस्यति ॥ ४ ॥ **अस्यार्थस्तु सच्चिदानन्दमात्रः परमात्मेत्यर्थः** । व्यञ्जनस्य निर्विशेषत्वं तत्र स्वरविशेषयोगतः सविशेषत्वं चाह—**व्यञ्जनमिति** ॥ ५ ॥ एतेन किं कृतं स्यादित्यत आह—**रेफ** इति ॥ ६ ॥ तत्र बिन्दुयोजनं अभ्युदयार्थमित्याह—**मकार** इति । समायशब्दार्थमाह—**सोऽयमिति** ॥ ७ ॥ बिन्दुनादयोगतो जगत्कारणतामेतीत्याह—**सबिन्दुरिति** । यो बिन्दुना मनसा सह वर्तत इति **सबिन्दुः सोऽपि पुरुषो** जीवः समष्टिबिन्द्वधिकरण**शिवसूर्येन्दुरूपवान्** भवति । **प्रकृतिस्वरूपं** तु **तस्य** पुरुषस्य **ज्योतिः** प्रकाश एव **शिखास्वरूपं** "तुरीयं मूर्ध्नि संस्थितं" इति श्रुतेः । मूलादिप्रकृत्या सह वर्तत इति **सप्रकृतिः नादोपाधिकः पुरुषो मतः** ॥ ८ ॥ एवं **प्रकृतिपुरुषौ समायात्** सविशेषात् **ब्रह्मणः** सकाशाद्विकल्पितौ इति **स्मृतौ** ॥ ९ ॥ एवं प्रकृतिपुरुषकलनाकलितं विश्वं रामबीजे प्रतिष्ठितं इत्यत्र दृष्टान्तः वटबीजान्तर्गतवटवृक्षवत् रामबीजस्थं जगदित्यर्थः ॥ १० ॥ उपाधियोगतः सविशेषत्वं वस्तुतो निर्विशेषत्वं च स्यादित्यत आह—**बीजोक्तमिति** ॥ ११ ॥

द्व्यक्षरार्थः

**मुक्तिदं साधकानां च मकारो मुक्तिदो मतः ॥ १२ ॥**

**मारूपत्वादतो रामो भुक्तिमुक्तिफलप्रदः ।**

**आद्यो रा तत्पदार्थः स्यान्मकारस्त्वंपदार्थवान् ॥ १३ ॥**

**तयोः संयोजनमसीत्यर्थे तत्त्वविदो विदुः ।**

एकाक्षरमन्त्रार्थमुक्त्वा द्व्यक्षरार्थमाह—**मुक्तिदमिति** ॥ १२ ॥ रेफमकारयोः कामाकामधियां भुक्तिमुक्तिप्रदत्वं युज्यते इत्यर्थः । रामनाम्नो मुक्तिहेतुत्वं कथमित्यत्र प्रत्यगभिन्नब्रह्मवाचकत्वात् तत् युज्यत इत्याह—**अत्र** इति ॥ १३ ॥ रामाक्षराख्यतत्त्वंपदगतवाच्यार्थकलनाऽपवादाधिकरणप्रत्यगभिन्नब्रह्मणः स्वाज्ञादिदृष्टिप्रसक्तप्रत्यक्परविभागैक्यकलनाऽसंभवसम्यज्ज्ञानतो निष्प्रतियोगिकब्रह्ममात्रतया लक्षितत्वात् रामपदार्थो ब्रह्मैवेत्यर्थः, "रामः सत्यं परं ब्रह्म रामात् किंचिन्न विद्यते" इति स्मृतेः ॥



षडक्षरार्थः

**नमस्त्वमर्थो विज्ञेयो रामस्तत्पदमुच्यते ॥ १४ ॥**
**असीत्यर्थे चतुर्थी स्यादेवं मन्त्रेषु योजयेत् ।**

षडक्षरार्थप्रकटनव्याजेन त्र्यक्षरादिसर्वमन्त्रार्थमाह—**नम इति** ॥ १४ ॥ त्र्यक्षरादिमन्त्रजातं त्रेधा विभज्य "तत्त्वमसि" इति महावाक्यार्थयोजनं कर्तव्यमित्यर्थः ॥

राममन्त्रमाहात्म्यम्

**तत्त्वमस्यादिवाक्यं तु केवलं मुक्तिदं यतः ॥ १५ ॥**
**भुक्तिमुक्तिप्रदं चैतत्तस्मादप्यतिरिच्यते ।**
**मनुष्वेतेषु सर्वेषामधिकारोऽस्ति देहिनाम् ॥ १६ ॥**
**मुमुक्षूणां विरक्तानां तथा चाश्रमवासिनाम् ।**
**प्रणवत्वात् सदा ध्येयो यतीनां च विशेषतः ॥**
**राममन्त्रार्थविज्ञानी जीवन्मुक्तो न संशयः ॥ १७ ॥**

"तत्त्वमसि" इत्यादिमहावाक्यापेक्षया अस्य सर्वोत्कृष्टत्वमाह—**तदिति** ॥ १५ ॥ प्राणिमात्रस्य सप्तकोटिमहामन्त्र(त्व)ाधिकृतत्वेऽपि यतिभिरसेवितत्वात् राममन्त्रस्य तु प्रणवस्वरूपत्वेन तैरपि ग्राह्यमित्याह—**मनुष्विति** ॥ १६ ॥ मन्त्रार्थज्ञानफलमाह—**राममन्त्रार्थेति** ॥ १७ ॥

विद्याऽध्ययनफलम्

य इमामुपनिषदमधीते सोऽग्निपूतो भवति। स वायुपूतो भवति। सुरापानात् पूतो भवति। स्वर्णस्तेयात् पूतो भवति। ब्रह्महत्यात् पूतो भवति। स राममन्त्राणां कृतपुरश्चरणो रामचन्द्रो भवति ॥ १८ ॥

तदेतदृचाऽभ्युक्तम्—

सदा रामोऽहमस्मीति तत्त्वतः प्रवदन्ति ये।
न ते संसारिणो नूनं राम एव न संशयः ॥
ॐ सत्यमित्युपनिषत् ॥ १९ ॥

उपनिषत्पारायणफलमाह—**य** इति ॥ १८ ॥ यदुक्तं तदेतदृचा मन्त्रेणाभ्युक्तं भवतीत्याह—**तदेतदृचाऽभ्युक्तमिति**। प्रथमाध्यायादौ "राम एव परं ब्रह्म" इति मन्त्रेण यः परमात्मा निष्प्रतियोगिकस्वमात्रतया अवशिष्यते **तत्त्वतः** सोऽयं **रामोऽहमस्मीति ये सदा** अनुभूय यथोक्ताधिकारिभ्यः **प्रवदन्ति ते राम एव** भवन्तीत्यत्र **न** हि **संशयो**ऽस्ति। **ॐ सत्यमि**त्यत्र "श्रीरामो ब्रह्म तारकं" इत्युक्तत्वात्। इत्युपनिषच्छब्दो रामरहस्योपनिषत्समाप्त्यर्थः ॥ १९ ॥

**इति पञ्चमोऽध्यायः**

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
रामरहस्योपनिषद्व्याख्यानं लिखितं स्फुटम् ॥
रामरहस्योपनिषद्व्याख्यानग्रन्थविस्तरः।
अष्टाशीत्यधिकेनाढ्यद्विशतं परिकीर्तितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे चतुष्पञ्चाशत्सङ्ख्यापूरकं
श्रीरामरहस्योपनिषद्विवरणं संपूर्णम्

# वासुदेवोपनिषत्

## आप्यायन्तु—इति शान्तिः

ऊर्ध्वपुण्ड्रविधिजिज्ञासा

ॐ नमस्कृत्य भगवान् नारदः सर्वेश्वरं वासुदेवं पप्रच्छ—

अधीहि भगवन्नूर्ध्वपुण्ड्रविधिं द्रव्यमन्त्रस्थानादिसहितं मे ब्रूहीति ॥ १ ॥

यत् सर्वहृदयागारं यत्र सर्वं प्रतिष्ठितम् ।
वस्तुतो यन्निराधारं वासुदेवपदं भजे ॥

इह खलु सामवेदप्रविभक्तेयं वासुदेवोपनिषत् ऊर्ध्वपुण्ड्रमाहात्म्यप्रकटनव्यग्रा वैष्णवपदपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । नारदभगवत्प्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—ओमिति ॥ १ ॥

गोपीचन्दनस्वरूपम्

तं होवाच भगवान् वासुदेवः—वैकुण्ठस्थानादुत्पन्नं मम प्रीतिकरं मद्भक्तैर्ब्रह्मादिभिर्धारितं विष्णुचन्दनं ममाङ्गे प्रतिदिनमालिप्तं गोपीभिः प्रक्षालनाद्गोपीचन्दनमाख्यातं मदङ्गलेपनं पुण्यं चक्रतीर्था-[1]न्तःस्थितं चक्रसमायुक्तं पीतवर्णं मुक्तिसाधनं भवति ॥ २ ॥

[1] न्तरस्थ—क.

ओङ्कारार्थं वासुदेवं प्रणिपत्य ऊर्ध्वपुण्ड्रविधानसर्वस्वमनुब्रूहीति नारदेन **पृष्टः तं होवाच भगवान् वासुदेवः** । ऊर्ध्वपुण्ड्रद्रव्येयत्तामाह—**वैकुण्ठेति** । **मेरुमध्यशृङ्गालङ्कारवैकुण्ठस्थानादुत्पन्नं** विष्ण्वाह्लादनदिव्यचन्दनवनस्य वैकुण्ठप्रभवत्वात् **मम विष्णोः प्रीतिकरं** मदिच्छातो वैकुण्ठादागतं ततो **ममाङ्गे प्रतिदिनमालिप्तं** अहरहः **गोपीभिः प्रक्षाळनादेव गोपीचन्दनमिति** सर्वत्र विख्यातं भवतीत्यर्थः । तस्य मुक्तिसाधनत्वमाह—**मदङ्गेति** । स्वमज्जनहेतोः चक्रेण निर्मितत्वात् **चक्रतीर्थं** भगवदङ्गात् तदन्तः प्रविश्य **स्थितं** चक्रयोगतः **चक्रसमायुक्तं**, भगवदाप्तेः इदमेव मुख्यसाधनमित्यर्थः ॥ २ ॥

गोपीचन्दनोद्धारधारणयोर्विधानम्

अथ गोपीचन्दनं नमस्कृत्योद्धृत्य—

गोपीचन्दन पापघ्न विष्णुदेहसमुद्भव ।
चक्राङ्कित नमस्तुभ्यं धारणान्मुक्तिदो भव ॥ ३ ॥

इमं मे गङ्गे इति जलमादाय विष्णोर्नुकमिति मर्दयेत् । अतो देवा अवन्तु न इत्येतैर्मन्त्रैर्विष्णुगायत्र्या केशवादिनामभिर्वा धारयेत् ॥ ४ ॥

चक्रतीर्थतो गोपीचन्दनोद्धारप्रकारमाह—**अथेति** ॥ ३ ॥ एवं गोपीचन्दनं यथेष्टं गृहीत्वा देवतागृहे संस्थाप्य किञ्चित् गृहीत्वा **इमं मे गङ्गे इति** । "नारायणाय विद्महे वासुदेवाय धीमहि । तन्नो विष्णुः प्रचोदयात्" इति **विष्णुगायत्र्या केशवादिनामभिर्वा धारयेत्** ॥ ४ ॥

ब्रह्मचार्यादीनां धारणप्रकारः

ब्रह्मचारी वानप्रस्थो वा ललाटहृदयकण्ठबाहुमूलेषु वैष्णवगायत्र्या कृष्णादिनामभिर्वा धारयेत् ॥

इति त्रिवारमभिमन्त्र्य—

शङ्खचक्रगदापाणे द्वारकानिलयाच्युत ।

गोविन्द पुण्डरीकाक्ष रक्ष मां शरणागतम् ॥

इति ध्यात्वा गृहस्थो ललाटादिद्वादशस्थलेष्वनामिकाङ्गुल्या वैष्णवगायत्र्या केशवादिनामभिर्वा धारयेत् ॥ ५ ॥

ब्रह्मचारी गृहस्थो वा ललाटहृदयकण्ठबाहुमूलेषु वैष्णवगायत्र्या कृष्णादिनामभिर्वा धारयेत् ॥ ६ ॥

यतिस्तर्जन्या शिरोललाटहृदयेषु प्रणवेनैव धारयेत् ॥ ७ ॥ *

ब्रह्मचार्यादीनां धारणाप्रकारमाह—ब्रह्मचारीति । "शङ्खचक्र" इति मन्त्रं, इति त्रिवारमभिमन्त्र्य ॥ ५–७ ॥

त्रिपुण्ड्रस्य त्रिमूर्त्यादिरूपत्वम्

ब्रह्मादयस्त्रयो मूर्तयस्तिस्रो व्याहृतयस्त्रीणि छन्दांसि त्रयोऽग्नय इति ज्योतिष्मन्तस्त्रयः कालास्तिस्रोऽवस्थास्त्रय आत्मानः पुण्ड्रास्त्रय ऊर्ध्वा अकार उकार मकार एते प्रणवमयोर्ध्वपुण्ड्र[1]स्तदात्मा सदेतदोमिति ॥ ८ ॥

* जेकब्-महाशयसम्पादित-मुम्बैमुद्रितकोशस्थः एतत्प्रकरणपाठः समीचीनतरो भाति. स च पाठक्रम एवं वर्तते—

"गोपीचन्दनपापघ्न" . . . इति प्रार्थयन् "इमं मे" . . . विष्णुगायत्र्या च त्रिवारमभिमन्त्र्य, "शङ्खचक्रगदापाणे" . . . इति मां ध्यात्वा, गृहस्थो ललाटादि . . धारयेत् । ब्रह्मचारी वानप्रस्थो वा ललाट . . . धारयेत । यतिः तर्जन्या . . . धारयेत् ॥

[1] "तानेकधा समभवत्" इत्यधिकः—मु. उ.

ऊर्ध्वपुण्ड्रस्य त्रिमूर्तिव्याहृतिच्छन्दोऽग्निप्रणवादिरूपत्वं चाह---**ब्रह्मादय इति** । **त्रयः आत्मानः** आत्मा अन्तरात्मा परमात्मा चेति । विराट्सूत्र-बीजात्मानो **ज्योतिष्मन्तः** ॥ ८ ॥

ऊर्ध्वपुण्ड्रस्य प्रणवाधिकारिणैव धार्यत्वम्

ऊर्ध्वं[1]मुन्नयत इत्योंकाराधिकारी तस्मादूर्ध्वपुण्ड्रं धारयेत् ॥ ९ ॥

ऊर्ध्वपुण्ड्रस्य प्रणवत्वेन प्रणवाधिकारिणैव एतद्धार्यमित्याह---**ऊर्ध्वमिति** । यस्मात् **ऊर्ध्वं उन्नयते** ॥ ९ ॥

तस्य परमहंसेनापि धार्यत्वम्

परमहंसो ललाटे प्रणवेनैकमूर्ध्वपुण्ड्रं वा धारयेत् ॥ १० ॥

अवधूतेनापि एतद्धार्यमित्याह---**परमहंस** इति ॥ १० ॥

वासुदेवध्यानप्रकारः

तत्त्वप्रदीपप्रकाशं स्वात्मानं पश्यन् योगी मत्सायुज्यमवाप्नोति ॥
अथ वा न्यस्तहृदयः पुण्ड्रमध्ये वा हृदयकमलमध्ये वा ॥ १२ ॥
तस्य मध्ये वह्निशिखा अणीयोर्ध्वा व्यवस्थिता ।
नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा ।
नीवारशूकवत्तन्वी परमात्मा व्यवस्थितः ॥ इति ॥ १३ ॥
अतः पुण्ड्रस्थं हृदयपुण्डरीकेषु तमभ्यसेत् ।
क्रमादेवं स्वमात्मानं भावयेन्मां परं हरिम् ॥ १४ ॥
एकाग्रमनसा यो मां ध्यायते हरिमव्ययम् ।
हृत्पङ्कजे च स्वात्मानं स मुक्तो नात्र संशयः ॥ १५ ॥

[1] ऊर्ध्वमुन्नाय---अ २. ऊर्ध्वमुन्नमय--- अ १, क.

**मद्रूपमद्वयं ब्रह्म आदिमध्यान्तवर्जितम् ।**
**स्वप्रभं सच्चिदानन्दं भक्त्या जानाति चाव्ययम् ॥ १६ ॥**

प्रत्यगभेदेन मां पश्यतो मद्भावापत्तिः स्यादित्याह—**तत्त्वेति** । **तत्त्वप्रदीपप्रकाशं** परमात्मानं **स्वात्मानं** प्रत्यञ्चं **पश्यन् योगी मत्सायुज्यमवाप्नोति** ॥ ११ ॥ एवं द्रष्टुं अशक्तस्य प्रकारान्तरमाह—**अथवेति** । **न्यस्तहृदयः** भगवति विन्यस्तहृदयो योगी **न्यस्तहृदयपुण्ड्रमध्ये वा हृदयकमलमध्ये वा मां ध्यात्वा मत्सायुज्यमेतीति** पूर्वेणान्वयः ॥ १२ ॥ हृदयकमलमध्ये **केन** रूपेण ध्यातव्यः इत्यत आह—**तस्येति** । **तस्य हृदयस्य मध्ये मूलाधारस्थवह्निशिखा** अणीया सुसूक्ष्मा ऊर्ध्वा ब्रह्मरन्ध्रान्तं **व्यवस्थिता** नीलमेघमध्यविलसितविद्युल्लेखेव **नीवारशूकवत्तन्वी** योगकाले स्फुरति तस्याः **शिखायाः मध्ये** ततोऽपि सूक्ष्मतया **परमात्मा** वासुदेवो **व्यवस्थितः** । **इतिशब्दः** मन्त्रसमाप्त्यर्थः ॥ १३ ॥ यतोऽयं सर्वप्रत्यक् **अतः** कारणात् **तं सर्वप्राणिहृदयपुण्डरीकेषु** प्रत्यगभेदेन सन्तं **अभ्यसेत्** अनुसन्धानं कुर्यात् ॥ १४ ॥ ज्ञानफलमाह—**एकाग्रेति** । स्वातिरिक्तास्तिताभ्रमं हरतीति **हरिम्** ॥ १५ ॥ स्वप्रापकज्ञानोपायमाह—**मद्रूपमिति** । स्वानन्यभक्त्या **जानातीति** ज्ञानमुदेति, ज्ञानसमकालं मुक्तो भवति, तस्मात् ब्रह्मज्ञानं प्रति भक्तिः अन्तरङ्गसाधनमित्यर्थः ॥ १६ ॥

### वासुदेवस्य सर्वात्मत्वम्

**एको विष्णुरनेकेषु जङ्गमस्थावरेषु च ।**
**अनुस्यूतो वसत्यात्मा भूतेष्वहमवस्थितः ॥ १७ ॥**
**तैलं तिलेषु काष्ठेषु वह्निः क्षीरे घृतं यथा ।**
**गन्धः पुष्पेषु भूतेषु तथाऽऽत्माऽवस्थितो ह्यहम् ॥ १८ ॥**

स्वस्य सार्वात्म्यं प्रपञ्चयति—**एक** इति ॥ १७ ॥ किं कुण्डबदरजातमिव सर्वभूतेषु तिष्ठतीत्यत आह—**तैलमिति** । घटशरावाद्यसङ्गतया व्योमवत् सर्वं व्याप्य स्थितोऽस्मीत्यर्थः ॥ १८ ॥

वासुदेवध्यानस्थानेषु गोपीचन्दनधारणम्

ब्रह्मरन्ध्रे भ्रुवोर्मध्ये हृदये चिद्रविं हरिम् ।
गोपीचन्दनमालिप्य तत्र ध्यात्वाऽऽप्नुयात् परम् ॥ १९ ॥
ऊर्ध्वदण्डोर्ध्वरेताश्च ऊर्ध्वपुण्ड्रोर्ध्वयोगवान् ।
ऊर्ध्वं पदमवाप्नोति यतिरूर्ध्वचतुष्कवान् ॥ २० ॥
इत्येतन्निश्चितं ज्ञानं मद्भक्त्या सिध्यति स्वयम् ।
नित्यमेकाग्रभक्तिः स्याद्गोपीचन्दनधारणात् ॥ २१ ॥

हरेरुपलब्धिस्थानं ध्यानप्रकारं तत्फलं चाह—**ब्रह्मरन्ध्र इति** ॥ १९ ॥ ऊर्ध्वालम्बनो यतिः ऊर्ध्वपदमवाप्नोतीत्याह—**ऊर्ध्वेति** । स्वाविद्यापदतत्कार्यारोपापवादाधिकरणं विश्वाद्यविकल्पान्तमूर्ध्वं चैतन्यजातमालम्बनदण्डो यस्य सोऽयं ऊर्ध्वदण्डः स चासावूर्ध्वरेताश्च **ऊर्ध्वदण्डोर्ध्वरेता** जितेन्द्रियो ब्रह्मविन्मुनिरित्यर्थः । ऊर्ध्वपुण्ड्रस्य प्रकृतत्वात् ऊर्ध्वं पुण्ड्रं गोपीचन्दनं यस्य सोऽयं ऊर्ध्वपुण्ड्रः स चासावूर्ध्वं ब्रह्म ऊर्ध्वाधःपरिच्छेदविरळमिति येन युज्यते सम्यग्बोधेन सोऽयमूर्ध्वयोगो यस्य सोऽयं **ऊर्ध्वपुण्ड्रोर्ध्वयोगवान्** । एवं पूर्वोक्तोर्ध्वचतुष्कवान् यतिः निष्प्रतियोगिकोर्ध्वं ब्रह्म स्वमात्रधिया पद्यत इति **पदमवाप्नोति** तन्मात्रमवशिष्यते इत्यर्थः ॥ २० ॥ इत्थंभूतं ज्ञानं तद्धेतुभक्तिर्वा केनोपायेन सिध्यतीत्यत आह—**इतीति** ॥ २१ ॥

गोपीचन्दनभस्मनोर्धारणविधिः

ब्राह्मणानां तु सर्वेषां वैदिकानामनुत्तमम् ।
गोपीचन्दनवारिभ्यामूर्ध्वपुण्ड्रं विधीयते ॥ २२ ॥

यो गोपीचन्दनाभावे तुलसीमूलमृत्तिकाम् ।
मुमुक्षुर्धारयेन्नित्यमपरोक्षात्मसिद्धये ॥ २३ ॥

अतिरात्राग्निहोत्रभस्माऽग्नेर्भसितमिदंविष्णुस्त्रीणिपदेति मन्त्रैर्वैष्णवगायत्र्या प्रणवेनोद्धूलनं कुर्यात् ॥ २४ ॥

एवं विधिना गोपीचन्दनं च धारयेत् ॥ २५ ॥

एतस्य वेदोक्तत्वेन अयं पन्थाः वैदिकैः सेवनीयः इति निगमयति—**ब्राह्मणानामिति** ॥ २२ ॥ अलाभे किं कर्तव्यं? इत्यत आह—**य इति** ॥ २३ ॥ "धिक् भस्मरहितं फालं" इति श्रुतिविरोधः स्यात् इत्याशङ्क्य गोपीचन्दनश्रुतिप्रामाण्यतो गोपीचन्दनं भस्मश्रुतिप्रामाण्यतो गोपीचन्दनोपरि भस्मोद्धूळनं कार्यमित्याह—**अतिरात्रेति**। "अग्नेर्भस्माऽसि। अग्निरिति भस्म" इत्यादिमन्त्रेण। अनेन श्रुतिद्वयविरोधः परिहृतः स्यादित्यर्थः ॥ २४–२५ ॥

विद्याफलम्

यस्त्वधीते वा स सर्वपातकेभ्यः पूतो भवति पापबुद्धिस्तस्य न जायते स सर्वेषु तीर्थेषु स्नातो भवति स सर्वैर्यज्ञैर्याजितो भवति स सर्वैर्देवैः पूज्यो भवति श्रीमन्नारायणे मय्यचञ्चला भक्तिश्च भवति स सम्यग् ज्ञानं च लब्ध्वा विष्णुसायुज्यमवाप्नोति न च पुनरावर्तते न च पुनरावर्तते ॥ २६ ॥

इत्याह भगवान् वासुदेवः ॥ २७ ॥

एतद्विद्याफलमाह—**यस्त्विति**। अर्थतो विद्याऽभ्यासिनः पापासंभवमाह—**पापबुद्धिरिति**। मुख्यफलं तु—**स सम्यज्ज्ञानमिति**। विष्णुसायुज्यं कैवल्यं **अवाप्नोति** ॥ २६–२७ ॥

केवलाध्ययनफलम्

यस्त्वेतद्वाऽधीते सोऽप्येवमेव भवतीत्यों सत्यमित्युपनिषत् ॥२८॥

केवलं यस्त्वधीते सोऽपि क्रमेण एवमेव भवतीति। स्वाज्ञदशायां यद्यत्साधनानुष्ठानं अनुष्ठितं तत्तदसत्यं तस्य स्वाविद्याकार्यतया कारणतुल्यत्वात्, यत्तदसंभवप्रबोधसिद्धं ओङ्कारार्थं वासुदेवतत्त्वं ब्रह्ममात्रं तदेव सत्यं "ब्रह्ममात्रमसन्न हि" इति श्रुतेः। इत्युपनिषच्छब्दो वासुदेवोपनिषत्परिसमाप्त्यर्थः॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिनः।
श्रीवासुदेवोपनिषद्व्याख्यानं लिखितं लघु।
श्रीवासुदेवोपनिषद्व्याख्याग्रन्थस्तु सप्ततिः॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे षट्पञ्चाशत्सङ्ख्यापूरकं वासुदेवोपनिषद्विवरणं संपूर्णम्

---

# हयग्रीवोपनिषत्

## भद्रं कर्णेभिः—इति शान्तिः

### हयग्रीवमन्त्रमहिमा

नारदो ब्रह्माणमुपसमेत्योवाच—अधीहि भगवन् ब्रह्मविद्यां वरिष्ठां ययाऽचिरात् सर्वपापं व्यपोह्य ब्रह्मविद्यां लब्ध्वैश्वर्यवान् भवति ॥ १ ॥

ब्रह्मोवाच—हयग्रीवदैवत्यान् मन्त्रान् यो वेद स श्रुतिस्मृतीतिहासपुराणानि वेद स सर्वैश्वर्यवान् भवति ॥ २ ॥

स्वाज्ञोऽपि यत्प्रसादेन ज्ञानं तत्फलमाप्नुयात् ।
सोऽयं हयास्यो भगवान् हृदि मे भातु सर्वदा॥

इह खलु अथर्वणवेदप्रविभक्तेयं हयग्रीवोपनिषत् स्वविद्याप्रकटनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजृंभते । अस्याः संक्षेपतो विवरणमारभ्यते । नारदब्रह्मप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—**नारद इति** । किं स उवाचेत्यत्र—अधीहीति । **ब्रह्मविद्यां वरिष्ठां** निर्विशेषब्रह्मणि पर्यवसन्नां, **यया** सविशेषब्रह्मविद्यया मुमुक्षुः **सर्वपाप**पुण्यविमुक्तो भूत्वाऽथ स्वातिरिक्तासंभवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति निर्विशेष**ब्रह्मविद्यां लब्ध्वा** स्वातिरिक्तं स्वावशेषतया ग्रसितुं य ईष्टे सोऽयं ईश्वरः तत्सम्बन्धिन्यजडक्रिया-

ज्ञानेच्छाशक्त्यात्मकं ज्ञानविज्ञानसम्यग्ज्ञानरूपं ऐश्वर्यं तद्वान् भवति तां मे अधीहीति ॥ १ ॥ नारदेनैवं पृष्टो भगवान् ब्रह्मोवाच । किमिति ? वक्ष्यमाण-विद्याफलं प्रकटयति—हयग्रीवेति ॥ २ ॥

हयग्रीवमन्त्रत्रयम्

त एते मन्त्राः—

विश्वोत्तीर्णस्वरूपाय चिन्मयानन्दरूपिणे ।
तुभ्यं नमो हयग्रीव विद्याराजाय विष्णवे स्वाहा स्वाहा नमः ॥ ३ ॥
ऋग्यजुःसामरूपाय वेदाहरणकर्मणे ।
प्रणवोद्गीथवपुषे महाश्वशिरसे नमः स्वाहा स्वाहा नमः ॥ ४ ॥
उद्गीथ प्रणवोद्गीथ सर्ववागीश्वरेश्वर ।
सर्ववेदमयाचिन्त्य सर्वं बोधय बोधय स्वाहा स्वाहा नमः ॥ ५ ॥

ते कीदृशाः इत्यत्र—त एते मन्त्रा इति ॥ ३–५ ॥

मन्त्रत्रयस्य ऋष्यादिध्यानान्तम्

ब्रह्मात्रिरविसवितृभार्गवा ऋषयः । गायत्रीत्रिष्टुबनुष्टुप्छन्दांसि । श्रीमान् हयग्रीवः परमात्मा देवतेति । [1]ह्लौमिति बीजम् । सोऽहमिति शक्तिः । ह्लूमिति कीलकम् । भोगमोक्षयोर्विनियोगः । अकारोकारमकारैरङ्गन्यासः । ध्यानम्—

शङ्खचक्रमहामुद्रापुस्तकाढ्यं चतुर्भुजम् ।
संपूर्णचन्द्रसंकाशं हयग्रीवमुपास्महे ॥ ६ ॥

[1] अस्यामुपनिषदि सर्वत्र एतद्बीजाक्षरस्थ'ल'कारस्थाने 'स'कार उपलभ्यते केषुचित् कोशेषु । (अ, अ १, अ २, क.) कोशेषु तु लकार एवोपलभ्यते.

मन्त्रत्रयस्य ऋष्यादयः उच्यन्ते—ब्रह्मेत । अकाराकारमकारः द्विरावृत्तैः अङ्गन्यासः ॥ ६ ॥

हयग्रीवतुरीयमनुः

ॐ श्रीमिति द्वे अक्षरे । ह्लौमित्येकाक्षरम् । ॐ नमो भगवत इति सप्ताक्षराणि । हयग्रीवायेति पञ्चाक्षराणि । विष्णव इति त्रीण्यक्षराणि । मह्यं मेधां प्रज्ञामिति षडक्षराणि । प्रयच्छ स्वाहेति पञ्चाक्षराणि । हयग्रीवस्य तुरीयो भवति ॥ ७ ॥

हयग्रीवतुरीयमन्त्रमुद्धरति—ॐ श्रीमिति । ॐ श्रीं ह्लौं ॐ नमो भगवते हयग्रीवाय विष्णवे मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहेति एकोनत्रिंशदक्षरोऽयं मनुः ॥ ७ ॥

हयग्रीवपञ्चममनुः

ॐ श्रीमिति द्वे अक्षरे । ह्लौमित्येकाक्षरम् । ऐमैमैमिति त्रीण्यक्षराणि । क्लीं क्लीमिति द्वे अक्षरे । सौः सौरिति द्वे अक्षरे । ह्रीमित्येकाक्षरम् । ॐ नमो भगवत इति सप्ताक्षराणि । हयग्रीवायेति पञ्चाक्षराणि । मह्यं मेधां प्रज्ञामिति षडक्षराणि । प्रयच्छ स्वाहेति पञ्चाक्षराणि । पञ्चमो मनुर्भवति ॥ ८ ॥

हयग्रीवपञ्चममनुमुद्धरति—ॐ श्रीमिति । ॐ श्रीं ह्लौं ऐं ऐं ऐं क्लीं क्लीं सौः सौः ह्रीं ॐ नमो भगवते हयग्रीवाय मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहेति चतुस्त्रिंशदक्षरोऽयं मनुः ॥ ८ ॥

हयग्रीवैकाक्षरमनुः

हयग्रीवैकाक्षरेण ब्रह्मविद्यां प्रवक्ष्यामि । ब्रह्मा महेश्वराय महेश्वरः संकर्षणाय संकर्षणो नारदाय नारदो व्यासाय व्यासो

**लोकेभ्यः प्रायच्छदिति हकारो लकारोमुकारो त्रयमेकस्वरूपं भवति । ह्लौं बीजाक्षरं भवति । बीजाक्षरेण ह्लौंरूपेण तज्जापकानां संपत्सारस्वतौ भवतः। तत्स्वरूपज्ञानां वैदेही मुक्तिश्च भवति । दिक्पालानां राज्ञां नागानां किन्नराणामधिपतिर्भवति । हयग्रीवैकाक्षरजपशीलाज्ञया सूर्यादयः स्वतः स्वस्वकर्मणि प्रवर्तन्ते । सर्वेषां बीजानां हयग्रीवैकाक्षरबीजमनुत्तमं मन्त्रराजात्मकं भवति । ह्लौं हयग्रीवस्वरूपो भवति ॥ ९॥**

षष्ठमेकाक्षरं मनुं ब्रह्मादिपरंपराप्रवृत्तं मन्त्रराजत्वेन सर्वार्थसाधकं तदर्थानुसंधायिनां विकळेबरकैवल्यप्रदमिति स्तौति—**हयग्रीवेति** । वक्ष्यमाण-विद्यायाः आचार्यपारंपर्यक्रममाह—**ब्रह्मेति** । हयग्रीवैकाक्षरीविद्यायाः प्रणवमहा-वाक्यानुकरणतामाह—**हकारोमिति** । त्रयं भवति ॥

हकारः परमेशः स्यात्तत्पदं चेति निश्चितम् ।
स[ल]कारः खेचरी प्रोक्तः त्वंपदं चेति निश्चितम् ॥

इति श्रुत्यनुरोधेन हकारस्तत्पदार्थः, स[ल]कारः त्वंपदार्थः, उकारस्तु तत्त्वंपदार्थगतवाच्यार्थत्यागपूर्वकं तत्त्वंपदलक्ष्ययोः परचित्प्रत्यक्चितोः ऐक्यानु-वाद्यसिपदार्थो भवति । हकारादिवर्णत्रयोपरि श्रूयमाणः ओङ्कारः तुरीयोङ्काराग्र-विद्योततुर्यतुरीयार्थो भवति । एतत्त्रयं मिळित्वा एकस्वरूपं भवति । तदेव विवृणोति—**ह्लौमिति** । **ह्लौंरूपेण** प्रत्यगभिन्नपरमात्मभावेन **तज्जापकानां** पारमैश्वर्यभावापन्नतया **संपत्सारस्वतौ भवतः** संपदीश्वरत्वं सारस्वतं निर्विशेष-ब्रह्मविद्यारूपम् । सम्यज्ज्ञानसंपत्सारस्वते भवत इति वक्तव्ये संपत्सारस्वताविति लिङ्गव्यत्ययः । यत्स्वातिरिक्तकलनाऽपह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रमवशिष्यते **तत्स्वरूपज्ञानां वैदेही मुक्तिश्च भवति** । यदि सविशेषतया मन्त्रार्थं जानाति तदा इन्द्रादि**दिक्पालानां अधिपतिर्भवति** सर्वेश्वरो भवतीत्यर्थः । अस्य

मन्त्रिण ईश्वरत्वेन सूर्यादिभयहेतुत्वमाह—**हयग्रीवात**, "भीषाऽस्माद्वातः पवते" इत्यादि श्रुतेः। यतः एवं प्रभाववान् हयग्रीवैकाक्षरमनुः अत एव **सर्वेषामिति**। बीजार्थस्तु **हयग्रीवस्वरूपो भवति** ॥ ९ ॥

वागादिसिद्धिकरः प्रयोगः

अमृतं कुरु कुरु स्वाहा। तज्जापकानां वाक्सिद्धिः श्रीसिद्धि-रष्टाङ्गयोगसिद्धिश्च भवति ॥ १० ॥

हयग्रीवैकाक्षरोपासकं **अमृतं कुरु कुरु स्वाहा**। इतश्च **तज्जापकाना-मिति** ॥ १० ॥

सप्तदशाक्षरमनुः

ह्लौं सकलसाम्राज्येन सिद्धिं कुरु कुरु स्वाहा ॥ ११ ॥

अपरः सप्तदशाक्षरोऽयं मन्त्रः ह्लौमिति ॥ ११ ॥

मन्त्रज्ञानफलम्

तानेतान् मन्त्रान् यो वेद अपवित्रः पवित्रो भवति। अब्रह्मचारी सुब्रह्मचारी भवति। अगम्यागमनात् पूतो भवति। पतितसंभाषणात् पूतो भवति। ब्रह्महत्यादिपातकैर्मुक्तो भवति। गृहं गृहपतिरिव देही देहान्ते परमात्मानं प्रविशति ॥ १२ ॥

विश्वोत्तीर्णेतिमन्त्रज्ञानां फलमाह—**तानेतानिति**। मन्त्रार्थज्ञानमुख्यफल-माह—**गृहमिति** ॥ १२ ॥

हयग्रीवमन्त्राणां महावाक्यार्थप्रतिपादकत्वम्

प्रज्ञानं ब्रह्म। अहं ब्रह्मास्मि। तत्त्वमसि। अयमात्मा ब्रह्मेति महावाक्यैः प्रतिपादितमर्थं त एते मन्त्राः प्रतिपादयन्ति ॥ १३ ॥

विश्वोत्तीर्णेत्यादिमन्त्राणां महावाक्यसमन्वयार्थं महावाक्यान्याह—**प्रज्ञानमिति । महावाक्यैः** प्रत्यक्परचितोरेकत्वं **प्रतिपादितम्** । सप्तकोटिमहामन्त्राणां महावाक्यार्थत्वे मानमियं श्रुतिः—

नमस्त्वमर्थो विज्ञेयो रामस्तत्पदमुच्यते ।
असीत्यर्थे चतुर्थी स्यादेवं मन्त्रेषु योजयेत् ॥

इति ॥ १३ ॥

स्वरव्यञ्जनभेदेन मन्त्रस्य द्विविधत्वम्

स्वरव्यञ्जनभेदेन द्विधायते ॥ १४ ॥

मन्त्रसमुदायस्तु **स्वरव्यञ्जनभेदेन द्विधायते** । स्वरः प्रकृत्यंशः, व्यञ्जनं तु ब्रह्मांशः, "व्यञ्जनैः स्वरसंयोगो विद्धि तत्प्राणयोजनं" इति, "बीजं मायाविनिर्मुक्तं परं ब्रह्मेति कीर्त्यते" इति च श्रुतेः ॥ १४ ॥

अनुमन्त्राः

अथानुमन्त्रान् जपति—

यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा ।
चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ॥ १५ ॥
गौरीमिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।
अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥ १६ ॥
ओष्ठापिधाना नकुली दन्तैः परिवृता पविः ।
सर्वस्यै वाच ईशाना चारु मामिह वादयेत् ॥ १७ ॥
स शर्वरीरमृतिं बाधमाना [1]बृहन्मिमाय जमदग्निदत्ता ।
आ सूर्यस्य दुहिता ततान श्रवो देवेष्वमृतमजुर्याम् ॥ १८ ॥

[1] ब्रह्म—अ १, अ २.

मन्त्रानेवमुक्त्वा अथानुमन्त्रानाह--अथेति ॥ १५-१८ ॥

विद्याफलम्

य इमां ब्रह्मविद्यामेकादश्यां पठेद्धयग्रीवप्रभावेण महापुरुषो भवति। स जीवन्मुक्तो भवति ॥ १९ ॥

एतद्विद्याफलमाह—य इति। प्रभावेण प्रसादेन सः **महापुरुषो भवति** ॥ १९ ॥

विद्यां प्रति प्रार्थना

ॐ नमो ब्रह्मणे धारणं मे अस्त्वनिराकरणं धारयिता भूयासं कर्णयोः श्रुतं मा च्योढ्वं ममामुष्यमोमित्युपनिषत् ॥ २० ॥

उक्तामिमां विद्यां प्रणवत्वेन प्रार्थयति—**ओमिति**। "ओमित्येतदक्षरमिदं सर्वम्" इति श्रुतिसिद्धं तुरीयं तुर्यतुरीयं वा ब्रह्मोच्यते। हे तुर्यतुरीय **ब्रह्मणे** तुभ्यं **नमोऽस्तु**। त्वत्प्रसादतो मया देशिकमुखतो यद्यदधीतं तत्तन्मे हृदि **धारणमस्तु**। **तदनिराकरणं** अविस्मरणं यथा भवति तथा **धारयिता भूयासम्**। यच्छ्रेयःसाधनार्थं **कर्णयोः** कर्णाभ्यां **श्रुतं मा च्योढ्वं** मा विस्मरणमस्तु। किं च **ममामुष्यं** आमुष्मिकं विद्याफलं ओंकारार्थतुर्यतुर्यतया अवस्थानलक्षणं विकळेबरकैवल्यमस्तु। इतिशब्दः प्रार्थनासमाप्त्यर्थः। **उपनिषच्छब्दः** हयग्रीवोपनिषत्समाप्त्यर्थः ॥ २० ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
हयग्रीवोपनिषदो व्याख्यानं लिखितं स्फुटम्।
प्रकृतोपनिषद्व्याख्या पञ्चपञ्चाशदीरिता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे शतसङ्ख्यापूरकं हयग्रीवोपनिषद्विवरणं संपूर्णम्

# नामधेयपदसूची

यत्र पुटसंख्याऽनन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या

# विशेषपदसूची

यत्र पुटसंख्याऽनन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या।

# THE S'AIVA-UPANISHADS

WITH THE COMMENTARY OF

# SRI UPANISHAD-BRAHMA-YOGIN


EDITED BY

PANDIT A. MAHADEVA SASTRI, B.A.

DIRECTOR, ADYAR LIBRARY, ADYAR, MADRAS



PUBLISHED FOR THE ADYAR LIBRARY

(THEOSOPHICAL SOCIETY)

1925

अष्टोत्तरशतोपनिषत्सु

# शैव-उपनिषदः

श्री उपनिषद्ब्रह्मयोगिविरचितव्याख्यायुताः

अडयार्-पुस्तकालयाध्यक्षेण

अ. महादेवशास्त्रिणा

सम्पादिताः

अडयार्-पुस्तकालयार्थे

प्रकटीकृताश्च

ॐ नमो

ब्रह्मादिभ्यो

ब्रह्मविद्यासंप्रदायकर्तृभ्यो

वंशऋषिभ्यो

नमो गुरुभ्यः

DEDICATED TO

Brahma and the Rishis,

The Great Teachers

Who handed down Brahmavidya

through Generations

## THE EDITOR'S NOTE

THE materials on which is based this edition of the S'AIVA-UPANISHADS comprised in this volume are the same as those described in the volume of *The Yoga Upanishads.*

A. M. S.

# अस्मिन् सम्पुटे अन्तर्गतानामुपनिषदां सूची

# विषयसूचिका

## १. अक्षमालिकोपनिषत्



## २. अथर्वशिखोपनिषत्

प्रथमः खण्डः

## ३. अथर्वशिर-उपनिषत्

## ४. कालाग्निरुद्रोपनिषत्

## ५. कैवल्योपनिषत्



## ६. गणपत्युपनिषत्

## ७. जाबाल्युपनिषत्



## ८. दक्षिणामूर्त्युपनिषत्

## ९. पञ्चब्रह्मोपनिषत्



## १०. बृहज्जाबालोपनिषत्

### प्रथमं ब्राह्मणम्



### द्वितीयं ब्राह्मणम्

## ११. भस्मजाबालोपनिषत्

प्रथमोऽध्याय:



द्वितीयोऽध्याय:

## १२. रुद्रहृदयोपनिषत्



## १३. रुद्राक्षजाबालोपनिषत्

## १४. शरभोपनिषत्



## १५ श्वेताश्वतरोपनिषत्

प्रथमोऽध्यायः

द्वितीयोऽध्यायः



तृतीयोऽध्यायः



चतुर्थोऽध्यायः

पञ्चमोऽध्यायः



षष्ठोऽध्यायः



---



---

# अक्षमालिकोपनिषत्



वाङ् मे मनसि——इति शान्तिः

अक्षमालालक्षणादिजिज्ञासा

अथ प्रजापतिर्गुहं पप्रच्छ——भो भगवन् अक्षमालाभेदविधिं ब्रूहीति । सा किंलक्षणा कतिभेदा अस्याः कति सूत्राणि कथं घटनाप्रकारः के वर्णाः का प्रतिष्ठा कैषाऽधिदेवता किं फलं चेति ॥ १ ॥

अकारादिक्षकारान्तवर्णजातकळेबरम् ।
विकळेबरकैवल्यरामचन्द्रपदं भजे ॥

इह खलु ऋग्वेदप्रविभक्तेयं अक्षमालिकोपनिषत् पञ्चाशद्वर्णार्थप्रकटनव्यप्रा परम्परया ब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः श्रुतेः स्वल्पग्रन्थतो विवरणमारभ्यते । प्रजापतिगुहप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति——अथेति । अथ स्वाज्ञलोकस्याभ्युदयनिःश्रेयसाप्तिप्रतिबन्धतानवानन्तरं प्रजानां स्वसृष्टानां स्वाप्त्युपायप्रापकः प्रजापतिः चतुर्मुखः गुहं कुमारस्वामिनं पप्रच्छ । अयं स्वातिरिक्तप्रपञ्चः स्वाज्ञानविकल्पितः, सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति स्वज्ञानं विना स्वातिरिक्तास्तित्वभ्रमः न ह्यपह्नवपदं भजति, न हि स्वाज्ञलोकस्य सहसा स्वज्ञानमुदेति तस्याशुद्धान्तरत्वात्, तत्सत्त्वशुद्ध्यर्थं अर्थानुसन्धानपूर्वकं मन्त्रानुष्ठानं कर्तव्यं, नह्यशुद्धचित्तं

मन्त्रार्थप्रत्यगभिन्नब्रह्मविषयं भवति, तदुपायतया अक्षमालिकासु पञ्चाशद्वर्णान् सार्थान् विन्यस्य तया अक्षमालिकया जप्तो मन्त्रो मन्त्रजापकदुरितक्षयद्वारा मन्त्रार्थप्रत्यगभिन्नब्रह्माभिमुखमेनं करोति इत्येतमर्थं मनसि निधाय पृच्छति। किमिति ? भो भगवन् इति ॥ १ ॥

### अक्षमालालक्षणादि

तं गुहः प्रत्युवाच—प्रवालमौक्तिकस्फटिकशङ्खरजताष्टापदचन्दनपुत्रजीविकाब्जरुद्राक्षा इति आदिक्षान्तरमूर्तिसंविधानुभावाः । सौवर्णं राजतं ताम्रं चेति सूत्रत्रयम् । तद्विवरे सौवर्णं तद्दक्षपार्श्वे राजतं तद्वामे ताम्रं तन्मुखे मुखं तत्पुच्छे पुच्छं तदन्तरावर्तनक्रमेण योजयेत् ॥ २ ॥

प्रजापतिप्रश्नमङ्गीकृत्य तं गुहः प्रत्युवाच । किमिति ? प्रवालादिरुद्राक्षान्ताः दश भवन्ति । आदिक्षान्तरमूर्तिसंविधानुभावाः अकारादिक्षकारान्तरविलसिततत्तद्वर्णार्थमूर्तिभिः संविधेन संयोगेनानुभावा भावनीया इत्यर्थः । ततः किं इत्यत्र—सौवर्णमिति । यदक्षजातं तद्विवरे ॥ २ ॥

### अक्षमालायां ब्रह्मादिभावना

यदस्यान्तरं सूत्रं तद्ब्रह्म । यद्दक्षपार्श्वे तच्छैवम् । यद्वामं तद्वैष्णवम् । यन्मुखं सा सरस्वती । यत् पुच्छं सा गायत्री । यत् सुषिरं सा विद्या । या ग्रन्थिः सा प्रकृतिः । ये स्वरास्ते धवलाः । ये स्पर्शास्ते पीताः । ये परास्ते रक्ताः ॥ ३ ॥

तदन्तरादौ ब्रह्मादयो भावनीया इत्याह—यदिति । तथा यद्दक्षपार्श्वे राजतसूत्रवलयं तच्छैवम् । यद्वामे ताम्रसूत्रवलयं तद्वैष्णवम् । प्रत्यक्षं या ग्रन्थिः

सा प्रकृतिः। ये स्वराः ते धवलाः सात्त्विकत्वात्। ये स्पर्शाः ते पीताः सत्त्वतमोमिश्रत्वात्। येऽपरास्ते रक्ताः राजसत्वात्॥ ३॥

अक्षमालाशोधनादि

अथ तां पञ्चभिर्गव्यैरमृतैः पञ्चभिर्गव्यैस्तनुभिः शोधयित्वा पञ्चभिर्गव्यैर्गन्धोदकेन संस्नाप्य तस्मात् सोङ्कारेण पत्रकूर्चेन स्नपयित्वाऽष्टभिर्गन्धैरालिप्य सुमनःस्थले निवेश्याक्षतपुष्पैराराध्य प्रत्यक्षमादिक्षान्तैर्वर्णैर्भावयेत्॥ ४॥

एवं संभाव्य अथ तां अक्षमालिकां पञ्चभिर्गव्यैरमृतैः नन्दाऽऽदिगोपञ्चकक्षीरैः पुनः पञ्चभिर्गव्यैस्तनुभिः तत्तनुभवगोमूत्रादिपञ्चकैः शोधयित्वा अथ पुनः पञ्चभिर्गव्यैः केवलदधिभिः गन्धोदकेन च संस्नाप्य। अष्टभिर्गन्धैः तक्कोलोशीरादिभिः मन्त्रशास्त्रप्रसिद्धैः आलिप्य। अकारादिक्षकारान्तकपञ्चाशद्वर्णात्मकमन्त्रैरक्षमालिकाविशिष्टं वा प्रातिस्विकेनैकैकाक्षमेकैकमन्त्रेण संयोजयेदित्यर्थः॥ ४॥

एकैकाक्षस्य एकैकेन मन्त्रेण संयोजनम्

[1]ओमंकार मृत्युंजय सर्वव्यापक प्रथमेऽक्षे प्रतितिष्ठ। ओमांकाराकर्षणात्मक सर्वगत द्वितीयेऽक्षे प्रतितिष्ठ। ओमिंकार पुष्टिदाक्षोभकर तृतीयेऽक्षे प्रतितिष्ठ। ओमींकार वाक्प्रसादकर निर्मल चतुर्थेऽक्षे प्रतितिष्ठ। ओमुंकार सर्वबलप्रद सारतर पञ्चमेऽक्षे प्रतितिष्ठ। ओमूंकारोच्चाटनकर दुःसह षष्ठेऽक्षे प्रतितिष्ठ। ओमृंकार संक्षोभकर चञ्चल सप्तमेऽक्षे प्रतितिष्ठ। ओमॄंकार संमोहनकरो-

[1] अकार, आकार, इत्येव अनुस्वारं विनैव सर्ववर्णानां ग्रहणम्—अ १, अ २.

उज्ज्वलाष्टमेऽक्षे प्रतितिष्ठ। ओम्लृंकार विद्वेषणकर [1]गुहक नवमेऽक्षे प्रतितिष्ठ। ओम्लॄंकार मोहकर दशमेऽक्षे प्रतितिष्ठ। ओमेंकार सर्ववश्यकर शुद्धसत्त्वैकादशेऽक्षे प्रतितिष्ठ। ओमैंकार शुद्धसात्त्विक पुरुषवश्यकर द्वादशेऽक्षे प्रतितिष्ठ। ओमोंकाराखिलवाङ्मय नित्य-शुद्ध त्रयोदशेऽक्षे प्रतितिष्ठ। ओमौंकार सर्ववाङ्मय वश्यकर शान्त चतुर्दशेऽक्षे प्रनितिष्ठ। ओमंकार गजादिवश्यकर मोहन पञ्चदशेऽक्षे प्रतितिष्ठ। ओमःकार मृत्युनाशनकर रौद्र षोडशेऽक्षे प्रतितिष्ठ। ॐ कंकार सर्वविषहर कल्याणद सप्तदशेऽक्षे प्रतितिष्ठ। ॐ खंकार सर्वक्षोभकर व्यापकाष्टादशेऽक्षे प्रतितिष्ठ। ॐ गंकार सर्वविघ्नशमन महत्तरैकोनविंशेऽक्षे प्रतितिष्ठ। ॐ घंकार सौभाग्यद स्तम्भनकर विंशेऽक्षे प्रतितिष्ठ। ॐ ङंकार सर्वविषनाशकरोग्रैकविंशेऽक्षे प्रतितिष्ठ। ॐ चंकाराभिचारघ्न क्रूर द्वाविंशेऽक्षे प्रतितिष्ठ। ॐ छंकार भूतनाशकर भीषण त्रयोविंशेऽक्षे प्रतितिष्ठ। ॐ जंकार कृत्याऽऽदिनाशकर दुर्धर्ष चतुर्विंशेऽक्षे प्रतितिष्ठ। ॐ झंकार भूतनाशकर पञ्चविंशेऽक्षे प्रतितिष्ठ। ॐ ञंकार मृत्युप्रमथन षड्विंशेऽक्षे प्रतितिष्ठ। ॐ टंकार सर्वव्याधिहर सुभग सप्तविंशेऽक्षे प्रतितिष्ठ। ॐ ठंकार चन्द्ररूपाष्टाविंशेऽक्षे प्रतितिष्ठ। ॐ डंकार गरुडात्मक [2]विषघ्न शोभनैकोनत्रिंशेऽक्षे प्रतितिष्ठ। ढंकार सर्वसंपत्प्रद [3]सुभग त्रिंशेऽक्षे प्रतितिष्ठ। ॐ णंकार सर्वसिद्धिप्रद [4]मोहकरैकत्रिंशेऽक्षे प्रतितिष्ठ।

[1] गूहक—अ २. ग्रहक—अ, अ१.
[2] विपद्घ्न—अ, अ १, उ १.
[3] सुखद—उ १.
[4] मोहनक—क.

ॐ तंकार धनधान्यादिसंपत्प्रद प्रसन्न द्वात्रिंशेऽक्षे प्रतितिष्ठ । ॐ थंकार धर्मप्राप्तिकर निर्मल त्रयस्त्रिंशेऽक्षे प्रतितिष्ठ । ॐ दंकार पुष्टिवृद्धिकर प्रियदर्शन चतुस्त्रिंशेऽक्षे प्रतितिष्ठ । ॐ धंकार विषज्वरनिघ्न विपुल पञ्चत्रिंशेऽक्षे प्रतितिष्ठ । ॐ नंकार भुक्ति-मुक्तिप्रद शान्त षट्त्रिंशेऽक्षे प्रतितिष्ठ । ॐ पंकार विषविघ्ननाशन भव्य सप्तत्रिंशेऽक्षे प्रतितिष्ठ । ॐ फंकाराणिमादिसिद्धिप्रद ज्योती-रूपाष्टत्रिंशेऽक्षे प्रतितिष्ठ । ॐ बंकार सर्वदोषहर शोभनैकोन-चत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ भंकार भूतप्रशान्तिकर भयानक चत्वा-रिंशेऽक्षे प्रतितिष्ठ । ओं मंकार विद्वेषिमोहनकरैकचत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ यंकार सर्वव्यापक पावन द्विचत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ रंकार दाहकर विकृत त्रिचत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ लंकार विश्वंभर भासुर चतुश्चत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ वंकार सर्वाप्यायनकर निर्मल पञ्चचत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ शंकार सर्वफलप्रद पवित्र षट्चत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ षंकार धर्मार्थकामद धवल सप्तचत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ संकार सर्वकारण सार्ववर्णिकाष्ट-चत्वारिंशेऽक्षे प्रतितिष्ठ । ॐ हंकार सर्ववाङ्मय निर्मलैकोनपञ्चाशदक्षे प्रतितिष्ठ । ॐ ळंकार सर्वशक्तिप्रद प्रधान पञ्चाशदक्षे प्रतितिष्ठ । ॐ क्षंकार परापरतत्त्वज्ञापक परंज्योतीरूप शिखामणौ प्रतितिष्ठ ॥ ९ ॥

तत्र "अकारो वै सर्वा वाक् सैषा स्पर्शोष्मभिः व्यज्यमाना बह्वी नानारूपा भवति" इति श्रुतितः सर्वे वर्णाः अकारविकारा इत्युक्ता भवन्ति । "अक्षराणामकारोऽस्मि" इति स्मृतितश्च विष्णोः सर्वव्यापकत्वेन अकारादि-

क्षकारान्तबीजत्रिशिष्टमन्त्रार्थत्वमुक्तं भवतीति ज्ञेयम् । विश्वगोप्तव्यापकत्वेऽपि मृत्युञ्जयत्वं कुतः? इत्यत्र सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति वेदनं सम्यज्ज्ञानं तत्स्वोदयसमकालकैवल्यफलकं इत्यत्र—"ब्रह्म वेद ब्रह्मैव भवति", "य एवं निर्बीजं वेद निर्बीज एव स भवति" इत्यादि ज्ञानसमकालमेव कैवल्यफलानुवादिन्यः श्रुतयः मानम् । तथाविधज्ञानतत्साधनानुष्ठानविस्मारकं ब्रह्मातिरिक्तजाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तभेदजातास्तित्वं, तस्य प्रमादकारित्वात् "प्रमादं वै मृत्युमहं ब्रवीमि" इति, "प्रमादो ब्रह्मनिष्ठायां न कर्तव्यः कदाचन" इति च स्मृतेः । एवं स्वाज्ञानप्रभवस्वातिरिक्तास्तित्वभ्रमात्मकमृत्युं स्वज्ञानसमकालं जयत्यपह्नवं करोतीति मृत्युञ्जयत्वमुपपद्यते इति यत् तदेव वक्ष्यमाणैकपञ्चाशदकारादिक्षकारान्तमन्त्राणां परमाशय इत्याह—ओमिति । त्वं अक्षमालाशिखामणिदक्षिणभागस्थप्रथमे अक्षे प्रतितिष्ठ इत्यादिना अक्षं प्रत्येवमावाहयेत् । तथा शिष्टाक्षजातं शिष्टवर्णैरावाहयेदित्याह—ॐ आंकारेत्यादिना । शूहक, स्वातिरिक्तं शून्यतयोहयतीति शूहकः, स्वातिरिक्तशून्यकरेत्यर्थः, स त्वं नवमे अक्षे प्रतितिष्ठ । प्रत्यक्षमेवमावाहयेत् ॥ ५ ॥

देवमन्त्रविद्यातत्त्वानां सान्निध्यार्थो मन्त्रजपः

अथोवाच ये देवाः पृथिवीषदस्तेभ्यो नमो भगवन्तोऽनुमदन्तु शोभायै पितरोऽनुमदन्तु शोभायै ज्ञानमयीमक्षमालिकाम् ॥ ६ ॥

अथोवाच ये देवा अन्तरिक्षसदस्तेभ्य ॐ नमो भगवन्तोऽनुमदन्तु शोभायै पितरोऽनुमदन्तु शोभायै ज्ञानमयीमक्षमालिकाम् ॥ ७ ॥

अथोवाच ये देवा दिविषदस्तेभ्यो नमो भगवन्तोऽनुमदन्तु शोभायै पितरोऽनुमदन्तु शोभायै ज्ञानमयीमक्षमालिकाम् ॥ ८ ॥

अथोवाच ये मन्त्रा या[1] विद्यास्तेभ्यो नमस्ताभ्यश्चोंनमस्तच्छक्तिरस्याः प्रतिष्ठापयति ॥ ९ ॥

[1] कलास्ते—उ.

अथोवाच ये ब्रह्मविष्णुरुद्रास्तेभ्यः सगुणेभ्य ॐ नमस्त-[1]द्वीर्यमस्याः प्रतिष्ठापयति ॥ १० ॥

अथोवाच ये [2]सांख्यादितत्त्वभेदास्तेभ्यो नमो वर्तध्वं [3]वरोधे[4]नुवर्तध्वम् ॥ ११ ॥

अथोवाच ये शैवा वैष्णवाः शाक्ताः शतसहस्रशस्तेभ्यो नमो नमो भगवन्तोऽनुमदन्त्वनुगृह्णन्तु ॥ १२ ॥

अथोवाच याश्च मृत्योः प्राणवत्यस्ताभ्यो नमो नमस्तेनैनां मृडयत मृडयत ॥ १३ ॥

एवं पञ्चाशद्वर्णविशिष्टाक्षमालिकां सृष्ट्वा स्वाविद्यापदतत्कार्यब्रह्माण्ड-पटलवासिनो ये ये देवाः मन्त्रविद्यातत्त्वादयो विद्यन्ते तेषां अत्र सान्निध्याय अस्याः माहात्म्यसिद्ध्ये च वक्ष्यमाणमन्त्रान् जपेदित्याह—अथोवाचेति । अथोवाच ये देवाः द्योतनात्मकाः सर्वत्र पृथिव्यां सीदन्ति गच्छन्ति व्याप्य वर्तन्त इति पृथिवीषदः । अस्यामक्षमालिकायां स्थिरासना भूत्वा अनुमोदन्तु अनुमोदनं सदा कुर्वन्तु पुनरस्या विशेषतः शोभायै शोभार्थं पितरोऽनुमदन्तु शोभायै ज्ञानमयीं अक्षमालिकां प्राप्य अग्निष्वात्तादिपितरोऽपि सदाऽनुमोदनं भजन्त्वित्यर्थः ॥ ६ ॥ तथा सर्वत्रानुभाव्यमित्याह---अथेति । पितृभिः सह अन्तरिक्षसदो देवा अप्यक्षमालिकां प्राप्य वरदाः सन्त. स्थिरासना भवन्त्विति प्रार्थनीया इत्यर्थः ॥ ७–८ ॥ अस्मिन् लोके ये सप्तकोटिमहामन्त्राः विद्यन्ते याश्च चतुष्षष्टिकला विद्या विद्यन्ते ताभ्यो नमः ॥ ९–१० ॥ ये सांख्यादि-तत्त्वभेदाः षण्णवतितत्त्वानि तेभ्यो नमः । ये षण्णवतितत्त्वभेदाः यूयमत्र वरो वराः सर्वोत्कृष्टाः सन्तः कामधेनव इव अक्षमालिकोपासकस्य वाञ्छितार्थदा भूत्वा अत्र सदा वर्तध्वमित्यर्थः ॥ ११–१२ ॥ स्वभावतोऽमरं जीवं स्वभावतः

[1] द्वितीयम—क. [2] संख्या—क, अ१. [3] विरो—मु. [4] निब—क.

प्रच्याव्य मृतिं देहात्मभावनारूपां नयतीति मृत्युः स्वातिरिक्तास्तित्वभ्रमः तस्य मृत्योः प्राणवत्य उपजीव्या याः शक्तयो विद्यन्ते स्वातिरिक्तभ्रमापनुत्तये ताभ्यो नमो नमः। ताः सर्वाः यूयं मिळित्वा मत्कृतनमस्कारेण तेनैतां अक्षमालिकां मृडयत मृडयत। स्वोपासकसुखप्रदां कुरुतेत्यर्थः ॥ १३ ॥

अक्षमालायां सर्वात्मकत्वभावना

पुनरेतस्यां सर्वात्मकत्वं भावयित्वा भावेन पूर्वमालिकामुत्पाद्या-रभ्य तन्मयीं महोपहारैरुपहृत्यादिक्षान्तैरक्षैरक्षमालामष्टोत्तरशतं स्पृशेत् ॥

अकारादिळकारान्तद्विरावृत्त्याऽथ अकचटतपयश इत्यष्टवर्गं योजितं चेत् तदा अष्टोत्तरशतं भवति। क्षकारः सकृन्मेरुस्थाने योजनीय इत्यर्थः ॥ १४ ॥

अक्षमालिकास्तुतिः

अथ पुनरुत्थाप्य प्रदक्षिणीकृत्योंनमस्ते भगवति मन्त्रमातृकेऽक्षमाले सर्ववशंकर्योंनमस्ते भगवति मन्त्रमातृकेऽक्षमालिकेऽशेषस्तम्भिन्योंनमस्ते भगवति मन्त्रमातृकेऽक्षमाले उच्चाटन्योंनमस्ते भगवति मन्त्रमातृकेऽक्षमाले विश्वामृत्यो [1]मृत्युंजयस्वरूपिणि सकलोद्दीपिनि सकललोकर[र]क्षा[2]दिके सकललोकोज्जीविके सकलोत्पादिके दिवाप्रवर्तिके रात्रिप्रवर्तिके नद्य[3]न्तरयासि देशान्तरयासि द्वीपान्तरयासि लोकान्तरयासि सर्वदा स्फुरसि सर्वहृदि वासयसि। नमस्ते परारूपे नमस्ते पश्यन्तीरूपे नमस्ते मध्यमारूपे नमस्ते वैखरीरूपे सर्वतत्त्वात्मिके सर्वविद्याऽऽत्मिके सर्वशक्त्यात्मिके सर्वदेवात्मिके वसिष्ठेन मुनिनाऽऽराधिते विश्वामित्रेण मुनिनोपसेव्यमाने नमस्ते नमस्ते ॥ १५ ॥

[1] मृत्यु—अ १, उ १. [2] त्मिके—उ, उ १. [3] न्तरंवा—उ, मु, अ.

अथ पुनरुत्थाप्य प्रदक्षिणीकृत्य वश्यादिषट्कर्मसाधकतया परमार्थपद-प्रापकतया च वक्ष्यमाणमन्त्रैरक्षमालिकां स्तौति—ओमिति । मृत्युञ्जयस्व-रूपिणि स्वातिरिक्तविश्वाभिधानमृत्युग्रासस्वज्ञानरूपिणि, तथा सकलोद्दीपिनि । ईश्वरात्मना सकललोकद[र]क्षादिमके । रवीन्द्वात्मना दिवाप्रवर्तिके रात्रिप्रवर्तिके । अन्तर्याम्यात्मना नद्यन्तरयासि नद्यन्तरं नदीपटलं यास्यसि । प्रत्यग्रूपेण सर्वदा स्फुरसि । सरस्वत्यात्मना नमस्ते परारूपे । वसिष्ठेन मुनिना "ब्रह्मातिरिक्तं न किंचिदस्ति" इति आराधिते । तथा विश्वामित्रेण ॥ १५ ॥

विद्याफलम्

प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । तत् सायं प्रातः प्रयुञ्जानः पापोऽपापो भवति । एवमक्षमालिकया जप्तो मन्त्रः सद्यः सिद्धिकरो भवतीत्याह भगवान् गुहः प्रजापतिमित्युपनिषत् ॥ १६ ॥

विद्याफलमाह—प्रातरिति । कामिनां सद्यः कामितार्थसिद्धिकरो भवति । अकामिजप्तमन्त्रस्तु सद्यश्चित्तशुद्धिकरो भूत्वा अस्य वेदान्तश्रवणादिमतिमुत्पाद्य सद्यः श्रवणादिजनितसम्यज्ज्ञानसमकालं सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्राव-स्थानलक्षणविकळेबरकैवल्यसिद्धिकरो भवति । इतिशब्दस्त्वक्षमालिकोपनि-षत्परिसमाप्त्यर्थः ॥ १६ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
अक्षमालोपनिषदो व्याख्यानं लिखितं लघु ।
अक्षमालोपनिषदो व्याख्याग्रन्थः शतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे सप्तषष्टिसङ्ख्यापूरकं अक्षमालिकोपनिषद्विवरणं सम्पूर्णम्

# अथर्वशिखोपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

## प्रथमः खण्डः

आदिप्रयुक्तध्यानजिज्ञासा

अथ हैनं पैप्पलादोऽङ्गिराः सनत्कुमारश्चा[1]थर्वाणमुवाच—भगवन् किमादौ प्रयुक्तं ध्यानं ध्यायितव्यं किं तद्ध्यानं को वा ध्याता कश्च ध्येयः ॥ १ ॥

ओङ्कारार्थतया भातं तुर्योङ्कारप्रभासुरम् ।
तुर्यतुर्यत्रिपाद्रामं स्वमात्रं कलयेऽन्वहम् ॥

इह खलु अथर्वशिखोपनिषदः अथर्ववेदप्रविभक्तत्वेन उपोद्घातादिकं प्रश्नोपनिषदादितुल्यम् । शिष्याचार्यपैप्पलादाद्यथर्वप्रश्नप्रतिवचनरूपेयमाख्यायिका वक्ष्यमाणविद्यास्तुत्यर्था । प्रकृतोपनिषदो विवरणमारभ्यते—अथेत्यादिना । अथ ह यथोक्तसाधनानुष्ठानसंजातचित्तशुद्ध्यनन्तरं खलु पिप्पलादस्यापत्यं पैप्पलादो नामतोऽङ्गिराः सनत्कुमारश्च एनं विख्यातं अथर्वाणमुवाच ।

[1] थर्व—अ, अ २, मु.

किमिति? हे भगवन् किं सर्वस्मात् आदौ प्रयुक्तं मुमुक्षुभिः कस्य ध्यानं ध्यायितव्यं किं वा तस्य ध्यानं को वा ध्याता ध्यानकर्ता सर्वैः कश्च को वा ध्येय इति ॥ १ ॥

चतुष्पात्प्रणवध्यानम्

स एभ्योऽ[1]थर्वा प्रत्युवाच—ओमित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यमित्येतदक्षरं परं ब्रह्मास्य पादाश्चत्वारो वेदा-श्चतुष्पादिदमक्षरं परं ब्रह्म ॥ २ ॥

एवं पिप्पलादाङ्गिरस्सनत्कुमारैः पृष्टो मुनिराह—स इति । य एवमेतैः पृष्टः सोऽयमथर्वा मुनिः एभ्यः प्रत्युवाच । किमिति? ओमिति ब्रह्मप्रतीकालम्बनतया सर्वस्मादादौ प्रयुक्तं ईश्वरेच्छयाऽऽविर्भूतं मुमुक्षुभिः प्रणवार्थेश्वरध्यानं ध्यायितव्यमिति यत् तदेतदक्षरं प्रणवार्थरूपं परं अपरं वा ब्रह्म, "परं चापरं च ब्रह्म यदोङ्कारः," "प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः।" इति श्रुतेः। अस्य प्रणवस्य व्यष्टिसमष्टितदैक्यावस्थाविशिष्टस्य चत्वारो वेदाः पादा इव पादाः चतुष्पात् इदमक्षरं परं अपरं वा ब्रह्म ॥ २ ॥

मात्राचतुष्टयस्वरूपम्

पूर्वाऽस्य मात्रा पृथिव्यकारः स ऋग्भिर्ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः ॥ ३ ॥

द्वितीयाऽन्तरिक्षं स उकारः स यजुर्भिर्यजुर्वेदो [2]विष्णू रुद्रास्त्रिष्टुब्दक्षिणाग्निः ॥ ४ ॥

तृतीया द्यौः स मकारः स सामभिः सामवेदो [3]रुद्र आदित्या जगत्याहवनीयः ॥ ५ ॥

[1] थर्वाः—उ, मु, अ १, अ २, थर्वः—उ १. [2] विष्णुरु—अ १.
[3] रुद्रादि—अ २, क, उ.

**याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा सोमलोक ओंकारः साऽथर्वणैर्मन्त्रैरथर्ववेदः संवर्तकोऽग्निर्मरुतो विराडेकर्षिर्भास्वती स्मृता ॥ ६ ॥**

तस्याद्यमात्रास्वरूपमाह—**पूर्वेति** । **अस्य प्रणवस्य पूर्वा आद्यमात्रा पृथिव्यकारः** इत्यादेः प्राथम्यात् प्रथममात्रारूपत्वं युज्यत इत्यर्थः ॥ ३ ॥ द्वितीयमात्रेयत्तामाह—**द्वितीयेति** । येयं **द्वितीया** मात्रा **अन्तरिक्षं स उकार** इत्यादेः प्रथममात्राप्रसक्तपृथिव्यकाराद्यपेक्षया आनन्तर्यात् द्वितीयमात्रात्वं युज्यत इत्यर्थः ॥ ४ ॥ तृतीयमात्रेयत्तामाह—**तृतीयेति** । द्वितीयमात्रात्वेन प्रकटितान्तरिक्षोकाराद्यपेक्षया **द्यौः मकार** इत्यादेः समनन्तरत्वात् तृतीयमात्रात्वं युज्यत इत्यर्थः ॥ ५ ॥ चतुर्थमात्रेयत्तामाह—**याऽवसान इति** । **अस्य प्रणवस्य या अवसाना सेयं चतुर्थ्यर्धमात्रा** प्रणवतुरीयांशः **ओङ्कारः सोमलोकश्च अथर्वणमन्त्र**ग्रामविशिष्टः **अथर्वणवेदश्च संवर्तकोऽग्निः** प्रळयकालीनाग्निः **मरुतः** सप्त महाविराट् एक एव ऋषयन्यवगम्यत इति **एकर्षिः** एवं विशेषणविशिष्टयमर्धमात्रा तुर्यप्रकाशभास्यतया **भास्वती स्मृता** सर्ववेदान्तेष्वभिहितेत्यर्थः ॥६॥

वर्णदेवताविशिष्टमात्रास्वरूपम्

**प्रथमा रक्तपीता महद्ब्रह्मदैवत्या । द्वितीया विद्युमती कृष्णा विष्णुदैवत्या । तृतीया शुभाशुभा शुक्ला रुद्रदैवत्या । याऽवसानेऽस्य चतुर्थ्यर्धमात्रा सा विद्युमती सर्ववर्णा पुरुषदैवत्या ॥ ७ ॥**

पुनर्विशिष्टमात्रानष्टाक्षपादस्वरूपमाचष्टे—**प्रथमेत्यादिना** । येयं **प्रथमा** मात्रा अकाररूपिणी सेयं **रक्त**मिश्र**पीत**वर्णा । यस्या महान् ब्रह्मा देवता सेयं **महद्ब्रह्मदैवत्या** । योकारात्मिका **द्वितीया** मात्रा विद्युद्वत् द्योतनात् **विद्युमती** तन्मिश्र**कृष्ण**वर्णोज्ज्वला **विष्णुदैवत्या** च भवति । मकारात्मिकेयं **तृतीया** मात्रा अर्धमात्रोकारसन्निहितत्वात् **शुभाशुभा** वर्णतः **शुक्ला** शुक्लतेजोमयेश्वरोपाधित्वात् **रुद्रदैवत्या** च भवति । **याऽवसाने** इत्युक्तार्थम् । **सा विद्युमती** विद्युन्निभा

सर्ववर्णहेतुत्वात् सर्ववर्णा स्वेन तुर्यरूपेण कृत्स्नमात्रातदध्यक्षप्रपञ्चपूरणात् पुरुषस्तुर्यात्मा स एव देवता यस्याः सेयं पुरुषदैवत्या च भवति ॥ ७ ॥

विशिष्टप्रणवस्वरूपम्

स एष ह्योंकारश्चतुरक्षरश्चतुश्चतुष्पादश्चतुःशिरश्चतुश्चतुर्धा मात्रा स्थूलमेतद्ध्रस्वदीर्घप्लुतम् ॥ ८ ॥

विशिष्टप्रणवेयत्तामाह—स एष इति । य एवमुक्तः स एष ह्योङ्कारः अकारादिभेदेन चतुरक्षरः विश्वविराडोत्रादिभेदेन चतुश्चतुष्पादः चतुश्शिरः चतुस्तुर्यविशिष्टत्वात् चतुश्चतुर्धा मात्रा । यद्वा—मात्राशब्दः कालवाची, स्थूलं प्रथममात्रा कालस्य स्थूलत्वात्, तथैतत् ह्रस्वं सूक्ष्मत्वात्, दीर्घं तदपेक्षया सूक्ष्मं, तदपेक्षया प्लुतं सुसूक्ष्मम् ॥ ८ ॥

विशिष्टप्रणवध्यानफलम्

ॐ ॐ ॐ इति त्रिरुक्त्वा चतुर्थः शान्त आत्मा प्लुतप्रणवप्रयोगेण समस्तमोमिति प्रयुक्तमात्मज्योतिः सकृदावर्तते ॥ ९ ॥

एवंप्रकारत्रयभेदेन प्रणवमुच्चार्य चतुर्थमात्राऽऽत्मकः शान्त आत्मा तुर्यस्य स्वातिरिक्तशान्तिसिद्धत्वात् एवं प्लुतप्रणवप्रयोगेण प्रणवाप्रनादज्योतिरनुसन्धानात् आत्मज्योतिः निरावृतं सत् सकृदावर्तते सदा विभातीत्यर्थः ॥ ९ ॥

स्थूलादिभेदैः प्रणवस्य चतुर्धा विभागः

सकृदुच्चारितमात्रेणोर्ध्वमुन्नामयतीत्योंकारः । प्राणान् सर्वान् प्रलीयत इति [1]प्रलयः । प्राणान् सर्वान् परमात्मनि प्रणामयतीत्ये-

[1] प्रणवः—अ १, अ २, क.

तस्मात् प्रणवः । चतुर्धाऽवस्थित इति सर्वदेववेदयोनिः सर्ववाच्यवस्तु प्रणवात्मकम् ॥ १० ॥

प्रणवं चतुर्धा व्युत्पादयति—सकृदिति । सकृत् प्लुतोच्चारणतः मूलाधारादिब्रह्मरन्ध्रान्तमूर्ध्वं उन्नामयति उद्गच्छतीति ओङ्कारः । सर्वप्राणान् प्रलीयते प्रकर्षेण लयं नयतीति प्रलयः प्रणवस्य प्राणादिप्रलयहेतुत्वात् प्रलयत्वम् । सर्वप्राणान् परमात्मनि प्रणामयति प्रकर्षेण नमनमैक्यं गमयतीत्येतस्माद्धेतोः प्रणव उच्यते । एतत्कलनात्रयविरळः चतुर्थः "चतुर्थः शान्त आत्मा" इत्युक्तत्वात् । प्रणवस्थूलांश ओङ्कारः, तत्सूक्ष्मांशः प्रलयः, तद्बीजांशः प्रणवः, चतुर्थस्तु संशान्तत्वातिरिक्तः, इत्येवं चतुर्धाऽवस्थितः । इतिशब्दः वस्तुत एक इति द्योतकः । अभिधेयाभिधानरूपेण सर्वदेववेदयोनिः । यत एवमतः सर्ववाच्यवस्तु प्रणवात्मकं, न हि ब्रह्मप्रणवातिरिक्तं अभिधेयजातं अभिधानजातं वाऽस्ति ॥ १० ॥

इति प्रथमः खण्डः

## द्वितीयः खण्डः

तुर्योङ्कारस्य तारकत्वम्

देवाश्चेति संधत्तां सर्वेभ्यो दुःख[1]भयेभ्यः संतारयतीति तारणात्तारः ॥ १ ॥

अभिधेयाभिधानदेववेदजातं पूर्वोक्ततुर्योङ्कारस्य तारकत्वं विष्णुत्वं ब्रह्मत्वं स्वयंप्रकाशत्वं महादेवत्वं च प्रकटयतीत्याह—देवाश्चेति । विश्वविश्वाद्यविकल्पा-

[1] भवेभ्यः—क.

नुज्ञैकरसान्ताः प्रणवाभिधेयरूपा देवाः चशब्दात् अभिधानरूपा वेदाश्च इति एवं संधत्तां संदधतां व्यत्ययेन अभिसन्धिं कृतवन्तः । किमिति? यस्तुरीयोङ्कारत्वेनाभिमतः तस्य सर्वदुःखभयान्वितसंसृतिसंतारणात् स एव तारः ॥ १ ॥

तस्य विष्णुत्वम्

सर्वे देवाः संविशन्तीति विष्णुः ॥ २ ॥

किं च—यत्र तुरीयोङ्कारे तुर्यतुर्ये विश्वविश्वाद्यविकल्पानुज्ञैकरसान्ताः सर्वे देवाः तन्मात्रावशेषतया संविशन्तीति स विष्णुः तुर्योङ्कारः ॥ २ ॥

तस्य ब्रह्मत्वम्

सर्वाणि बृंहयतीति ब्रह्म ॥ ३ ॥

किं च—यत् स्वातिरिक्ताविद्यापदतत्कार्यजातं प्रसित्वा स्वमात्रतया बृंहयतीति तद्धि ब्रह्म ॥ ३ ॥

तस्य स्वयंप्रकाशत्वम्

सर्वेभ्योऽन्तः[1]स्थानेभ्यो[2]ध्येयेभ्यः प्रदीपवत् प्रकाशयतीति प्रकाशः ॥ ४ ॥

किंच स्वाज्ञदृष्टिप्रसक्तसर्वप्राण्यन्तर्बाह्यविलसितकामादिघटादिस्वप्रकाश्यध्येयेभ्यः विविक्ततया तत् सर्वं यः प्रदीपवत् प्रकाशयति स्वभास्यकामादिघटाद्यभावे प्रकाशमात्रतया स्वयमवशिष्यत इति च तुरीयोङ्कारः प्रकाशः ॥ ४ ॥

[1] स्थानि—क. [2] ध्यायिभ्यः—क.

तस्य महादेवत्वम्

प्रकाशेभ्यः सदोमित्यन्तः शरीरे विद्युद्वद्द्योतयति मुहुर्मुहुरिति विद्युद्वत् [1]प्रतीयां दिशं [2]भित्त्वा सर्वाल्लोकान् व्याप्नोति व्यापयतीति व्यापनाद्व्यापी महादेवः ॥ ९ ॥

किंच स्वान्तःशरीरे स्वप्रकाश्येभ्यः कामादिभ्यः विविक्ततया सदोमिति मुहुर्मुहुर्यो विषयजातं विद्युद्वत् द्योतयति· प्रकाशयति तत् कथं यथा विद्युत् प्रतीयां स्वप्रकाश्यमेघावृतिरूपां दिशं भित्त्वा स्वविषयलोकैकदेशं व्याप्नोति तथा तुरीयोङ्कारस्वप्रतीतिविषयभूतां प्रतीयां स्वावृतिरूपिणीं मायाऽऽख्यां दिशं भित्त्वा स्वाज्ञदृष्टिविकल्पितसर्वान् लोकान् तदुपलक्षितान्यनन्तकोटिब्रह्माण्डानि सच्चिदानन्दात्मना व्याप्नोति विश्वविराडोत्रादिरूपेण वा व्यापयतीति च येन केन वैवं व्यापनात् व्यापी महादेवः तुर्योङ्कार एवेति सर्वदेवानां वेदानामभिप्रेतोऽर्थः ॥ ९ ॥

इति द्वितीयः खण्डः

## तृतीयः खण्डः

तुर्योङ्कारनिरूपणम्

पूर्वाऽस्य मात्रा जागर्ति जागरितं द्वितीया स्वप्नं तृतीया सुषुप्तिश्चतुर्थी तुरीयम् ॥ १ ॥

मात्राऽवस्थापादभेदविशिष्टतुर्योङ्कारं पुनरनूद्य विशदयति---पूर्वेति। अस्य तुरीयोङ्कारस्य पूर्वा मात्रा अकाराख्या पञ्चीकृतपञ्चमहाभूततत्कार्यभौतिकरूपेण

[1] प्रतीयादि—क. प्रतीचीं दि—अ. [2] दिशं भि—क.

जागर्तीति सैव जागरणमभिधीयते । अस्य द्वितीया उकाराख्या मात्रा अपञ्चीकृतपञ्चीकृतपञ्चमहाभूततत्कार्यजाग्रद्वासनाऽऽत्मिका स्वप्नं स्वप्नावस्था भवति । अस्य तृतीया मकाररूपिणी मात्रा तु पञ्चीकृतापञ्चीकृतपञ्चमहाभूततत्कार्यव्यष्टिसमष्टिकारणरूपेयं सुषुप्त्यवस्था भवति । अस्य चतुर्थी अर्धमात्रारूपिणी मात्रा तु जाग्रदाद्यवस्थात्रयप्रपञ्चतत्कार्यभावाभावप्रकाशकं तुर्यं तुर्यावस्था भवति ॥ १ ॥

तुर्यज्ञानपथ एव सिद्धिकरः

मात्रा मात्राः प्रतिमात्रागताः सम्यक् समस्तानपि पादान् जयतीति स्वयंप्रकाशः स्वयं ब्रह्म भवतीत्येष सिद्धिकर एतस्माद्ध्यानादौ प्रयुज्यते । सर्वकरणोपसंहारत्वाद्धार्यधारणाद्ब्रह्म तुरीयम् ॥ २ ॥

एवं अकारादिमात्राप्रविभक्तस्थूलसूक्ष्मादिमात्राः पूर्वपूर्वा उत्तरोत्तरप्रतिमात्रासु विलयं गता यदि तदा सम्यक् अकाराद्यर्धमात्राप्रविभक्तस्थूलादिमात्रापञ्चदशारोपापवादाधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तान् समस्तानपि पादान् तुर्यतुर्यपरायणतया जयतीति प्रबोधसमकालं विद्वान् स्वयंप्रकाशो भूत्वा स्वयं ब्रह्मैव भवतीत्येष तुर्यतुर्यो निष्प्रतियोगिकस्वमात्रमिति तत्त्वज्ञानपथः सिद्धिकरः । एतस्मादतिरिक्तः पन्थाः कुपथ इत्यर्थः । एतस्मात् कुपथात् अतिरिक्ततुर्यतुर्यप्रापकपथस्तु तुर्यतुर्यध्यानादौ आदिशब्दार्थनिर्विकल्पकसमाधौ च तदभिव्यक्तिः प्रयुज्यते । तत् कथं? तुर्यतुर्याधिगमस्य स्वातिरिक्तसर्वकरणोपसंहारसिद्धत्वात् । तदपह्नवसिद्धत्वेन यत् धार्यं तत्स्वमात्रमित्यवधारणात् तुर्यतुर्यं ब्रह्म स्वमात्रमवशिष्यत इत्यर्थः ॥ २ ॥

तज्ज्ञानोपायः

सर्वकरणानि संप्रतिष्ठाप्य ध्यानं विष्णुः प्राणं मनसि सह करणैः मनसि संप्रतिष्ठाप्य ध्याता रुद्रः प्राणं मनसि सह करणैर्नादान्ते परमात्मनि संप्रतिष्ठाप्य ध्यायीतेशानं प्रध्यायितव्यम् ॥ ३ ॥

तत्रोपाय उच्यते—यत्तुर्यं ब्रह्मेति प्रथितं तत्र सर्वकरणानि संप्रतिष्ठाप्य सम्यग्विलापनं कृत्वा यदेतद्विलापनाधिष्ठानं तद्ब्रह्मास्मीति ध्यानं कृत्वा तत्प्रभावतः विष्णुः प्रधानपुरुषो भवति । यद्वा—करणैः सह प्राणं मनसि संप्रतिष्ठाप्य मनोमात्रावशिष्टं कृत्वा यस्य मनो ब्रह्माकारपरिणतं सोऽयमेवं ध्याता रुद्रो भवति । अथवा—मुमुक्षुभिः करणैः सह प्राणं मनसि मनस्तु ब्रह्मप्रणवनादान्ते परमात्मनि संप्रतिष्ठाप्य स्वमात्रतया अवस्थातुमीश्वरं ब्रह्म प्रकर्षेण ध्यायितव्यं तस्मात् ईशानं आत्मेति ध्यायीत ॥ ३ ॥

शिवस्यैव ध्येयत्वम्

सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते संप्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैर्न कारणं कारणानां [1]ध्याता कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरः शंभुराकाशमध्ये ध्रुवं स्तब्ध्वाऽधिकं क्षणमेकं क्रतुशतस्यापि चतुःसप्तत्या यत् फलं तदवाप्नोति कृत्स्नमोंकारगतिश्च सर्वध्यानयोगज्ञानानां यत् फलमोंकारो वेद पर ईशो वा शिव एको ध्येयः शिवंकरः सर्वमन्यत् परित्यज्य ॥ ४ ॥

यस्मात् इदं सर्वं जगत् तत्सर्गस्थितिभङ्गकर्तारो ब्रह्मविष्णुरुद्राश्च ते संप्रसूयन्ते पञ्चभूतैः सह सर्वाणीन्द्रियाणि च संप्रसूयन्ते तत्कारणमीश्वराख्यं ब्रह्म, तदतिरेकेण भूतैः सह इन्द्रियाणि सत्त्वरजस्तमांसि वा नहि कारणपदं भजति । मद्व्यतिरिक्तमणुमात्रं न विद्यते इति ध्याता परमेश्वरस्तु स्वयमेव सर्वध्येयो भूत्वा स्वकार्यत्वेऽपि मिथः कार्यकारणभावमापन्नानां वियदादीनां कारणं भवति । सर्वकारणत्वेन यो ध्येयः सोऽयं सर्वज्ञत्वसर्वेश्वरत्वसर्वकारणत्वसर्वान्तर्यामित्वादिसर्वैश्वर्यसंपन्नः सर्वेश्वरः स्वांशजसर्वप्राणिस्वामित्वात् शंभुः सर्वसुखकृत्त्वात् एवंविशेषणविशिष्टः परमात्मा सदा यो विजयते तमेतं ध्रुवं आत्मानं यः कोऽपि वा पुरुषः स्वहृदयाकाशमध्ये अधिकं क्षणं एकं क्षणं क्षणार्धं वा ध्यानपूर्वकं स्तब्ध्वा

[1] धाताध्या—क. ध्याता ध्या—अ १.

स्तम्भयित्वा ध्यायीत तस्य तद्भावापत्तिरेव परमफलं, आन्तरालिकफलं तु चतुस्सप्तत्यधिकशतक्रत्वनुष्ठानतो यत्फलं तदवाप्नोति कृत्स्नमोङ्कारगतिध्यानेन विदिता भवेत्। एवमोङ्कार ओङ्कारं यः वेद सोऽयं मुनिः सर्वध्यानयोगज्ञानानां यत्फलं विद्यते तदवाप्नोति। एवमोङ्कारवित् पर ईशो वा शिव एको ध्येयः स्वभक्तपटलस्य शिवङ्करश्च भवति। यस्मादेवं तस्मात् सर्वमन्यत् परित्यज्य तदधिकरणे निरधिकरणे वा ॥ ४ ॥

अध्ययनफलम्

समाप्ताऽथर्वशिखा तामधीत्य द्विजो गर्भवासाद्विमुक्तो मुच्यत एतामधीत्य द्विजो गर्भवासाद्विमुक्तो विमुच्यत इत्यो३म् सत्य-मित्युपनिषत् ॥ ५ ॥

परिसमाप्तेयं अथर्वशिखा तामर्थतो द्विजः अधीत्य तज्ज्ञानमहिम्ना पूर्वं गर्भवासाद्विमुक्तः स्वाज्ञानव्यवधानतो बद्धवद्भातः स्वाज्ञानापाये जीवन्मुक्तो भूत्वा विमुच्यते विदेहमुक्तो भवति। अभ्यास आदरार्थः। एतदथर्वशिखो-पनिषदर्थविचारजन्यज्ञानेन विदेहमुक्तो भवतीत्युक्तमित्येतत्तत् ओं सत्यं अवि-तथम्। इत्युपनिषच्छब्दः प्रकृतोपनिषत्परिसमाप्त्यर्थः ॥ ५ ॥

इति तृतीयः खण्डः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
लिखितं स्याद्विवरणं शिखोपनिषदः स्फुटम्।
शिखोपनिषदो व्याख्या विंशत्यधिशतं स्मृता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे त्रयोविंशतिसङ्ख्यापूरकं अथर्वणशिखोपनिषद्विवरणं सम्पूर्णम्

# अथर्वशिर-उपनिषत्

**भद्रं कर्णेभिः—इति शान्तिः**

देवानां रुद्रस्वरूपजिज्ञासा

देवा ह वै स्वर्गं लोकमगमंस्ते देवा रुद्रमपृच्छन् को भवानिति ॥ १ ॥

अथर्वशिरसामर्थमनर्थव्रातमोचकम् ।
सर्वाधारमनाधारं स्वमात्रं त्रैपदाक्षरम् ॥

इह खलु अथर्वणवेदप्रविभक्तेयं अथर्वशिर आख्योपनिषत् परंब्रह्मार्थतया दृश्यते । प्रश्नमुण्डकमाण्डूक्यवत् अस्या उपोद्घातादिकमूह्यम् । यथोक्तलक्षणलक्षिताया उपनिषदः स्वल्पग्रन्थतो विवरणमारभ्यते । देवताकदम्बरुद्रप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । कैयमाख्यायिकेत्यत आह—देवा इति । स्वदेहप्रभया द्योतनवन्तः इन्द्रादयः देवाः, ह वा इति निपातौ वृत्तानुस्मरणार्थौ, स्वर्लोकनिवासिभिरपि गेयं स्वर्गं लोकं महाकैलासं अगमन् गतवन्तः । ये महाकैलासं प्रविष्टाः ते देवाः स्वातिरिक्तास्तितारुजं द्रावयति नाशयतीति रुद्रमपृच्छन् पृष्टवन्तः । किमिति ? को भवानिति ॥ १ ॥

स्वैकत्वप्रतिपादनम्

सोऽब्रवीदहमेकः प्रथममासं वर्तामि भविष्यामि च नान्यः कश्चित् मत्तो व्यतिरिक्त इति ॥ २ ॥

तैरेवं पृष्टो रुद्र आह—सोऽब्रवीदिति । य एवं देवैः पृष्टः सोऽयं रुद्रोऽब्रवीत् । किमिति ? अस्मदादिप्रत्ययभासकप्रत्यग्रूपेण अहमेकः। तत्रोपपत्तिमाह—प्रथममिति । प्रथमं सृष्टेः प्राक् अहमासं स्थितवान् इदानीं वर्तामि इतो भविष्यामि च कालत्रयापरिच्छिन्नोऽस्मि । नान्यः कश्चिदपि मत्तः सर्वेश्वरात् व्यतिरिक्तोऽस्तीति ॥ २ ॥

रुद्रस्य सर्वात्मत्वम्

सोऽन्तरादन्तरं प्राविशत् दिशश्चान्तरं संप्राविशत् ॥ ३ ॥

सोऽहं नित्यानित्योऽहं [1]ब्रह्माहमब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहं दक्षिणाञ्चोदञ्चोऽहं अधश्चोर्ध्वं च दिशश्च विदिशश्चाहं पुमानपुमान् स्त्रियश्चाहं सावित्र्यहं गायत्र्यहं सरस्वत्यहं त्रिष्टुब्जगत्यनुष्टुप्चाहं छन्दोऽहं गार्हपत्योऽहं दक्षिणाग्निराहवनीयोऽहं सत्योऽहं गौरहं गौर्यहं ज्येष्ठोऽहं श्रेष्ठोऽहं वरिष्ठोऽहमापोऽहं तेजोऽहं ऋग्यजुस्सामाथर्वाङ्गिरसोऽहमक्षरमहं क्षरमहं गोप्योऽहं गुह्योऽहमरण्योऽहं पुष्करमहं पवित्रमहं अग्रं च मध्यं च बहिश्च पुरस्ताद्दशसु दिक्ष्ववस्थितमनवस्थितं च ज्योतिरित्यहमेकः सर्वे च मामेव ॥ ४ ॥

देवान् प्रत्येवमुक्त्वा सोऽयं रुद्रः निरावृतः स्वेन रूपेण सर्वान्तरात् ईश्वरात् अन्तरं स्वातिरिक्तसाक्ष्यभासकसाक्षिभावं प्राविशत्, "सर्वस्य साक्षी ततः सर्वस्मात् अन्यो विलक्षणः" इति श्रुतेः । अन्तर्याम्यात्मना प्राच्यादिदिशश्चान्तरं संप्राविशत् ॥ ३ ॥ य एवंविधः सोऽहं स्वज्ञादिदृष्टिमाश्रित्य आधाराधेयात्मना नित्यानित्यरूपः, कारणं ब्रह्म कार्यं अब्रह्म आत्मानात्मरूपोऽपि अहमेव, "नान्यः कश्चित् मत्तो व्यतिरिक्तः" इति प्रतिज्ञातत्वात् ।

[1] ब्रह्माहं ब्र—अ, अ १, अ २, क.

प्रागादिदिक्षु अवतीति प्राञ्चः इत्यादि समानम् । प्रागाग्नेयादिदिशश्च विदिशश्च अधश्चोर्ध्वं च पुंनपुंसकस्त्रीजातिश्च गायत्र्यादिशक्तित्रयं च त्रिष्टुबादिछन्दस्त्रयं च गार्हपत्याद्यग्नित्रयं च प्रातिभासिकादिसत्यमपि यत्सत्तामाश्रित्य प्रवृत्तं सोऽहं सत्यः कामधेनुजातिः गोः गिरिजा गौरी वयसा ज्येष्ठः गुणतः श्रेष्ठः ज्ञानेन वरिष्ठः । अप्तेजोग्रहणं पञ्चभूतोपलक्षणार्थं—अप्तेजआदिपञ्चभूतं च ऋगादि-वेदचतुष्टयं च कल्पितं क्षरं अकल्पितं अक्षरं च शत्रुणाऽवेदनीयं गोप्यं मित्रेणाप्यवेदनीयं गुह्यं च अरण्योऽरण्यं च पुष्करं पुण्यक्षेत्रं च पवित्रं शुद्धिहेतुस्नानादि च अग्रं मध्यं मूलं च सर्वान्तर्बहिश्च पुरस्तात् पूर्वादिदशसु दिक्षु यद्यदवस्थितं यद्यदनवस्थितं तत्तत्सर्वं च मत्स्वरूपज्योतिरिति प्रतिपर्याय-महमित्यनुसंधेयम् । नित्यानित्यादि अवस्थितमनवस्थितमित्यन्तं सर्वज्योतिरहमेवैकः न मत्तोऽन्यदस्ति, "सर्वज्योतिरसावहम्" इति श्रुतेः । हे देवाः सर्वे च यूयं मामेव सर्वमिति जानन्तु इति शेषः ॥ ४ ॥

रुद्रज्ञानफलम्

मां यो वेद सर्वान् देवान् वेद गां गोभिर्ब्राह्मणान् ब्राह्मण्येन हवींषि हविषाऽऽयुरायुषा सत्यं सत्येन धर्मं धर्मेण तर्पयामि तर्पयामि ॥ ५ ॥

यो मुमुक्षुः मां एवंविधं वेद सोऽयं मुनिः सर्वान् देवान् मत्स्वरूपतया वेद । तत्तद्रूपमास्थाय वैराजभावं वैकुण्ठभावं त्रैत्य स्वांशजजीवजातं तर्पयामीत्याह— गामिति । गोभिः स्वाश्रितसूर्यरश्मिभिः गां भूमिं तर्पयामि ब्राह्मण्यापादक-कर्मणा ब्राह्मणान् तर्पयामीति सर्वत्रानुषज्यते । घृतादिहविषा हवींषि चरुपुरोडाशादीनि, आयुषा मुख्यप्राणरूपेण आयुः व्यष्टिप्राणं तर्पयामि, पारमार्थिकसत्येन व्यावहारिकादिसत्यं तर्पयामि, स्वात्मज्ञानधारणार्हधर्मेण अभ्युदयहेतुधर्मजातं तर्पयामि । आवृत्तिस्तर्पयामीति सर्वत्रानुवृत्त्यर्था ॥ ५ ॥

देवकृतरुद्रस्तुतिः

स्वेन तेजसा ततो देवा रुद्रं नापश्यन् ते देवा रुद्रं ध्यायन्ति ततो देवा ऊर्ध्वबाहवः स्तुवन्ति—ॐ यो ह वै रुद्रः स भगवान् यश्च ब्रह्मा भूर्भुवः सुवः तस्मै वै नमो नमः शीर्षजानद्रों विश्वरूपोऽसि ॥ ६ ॥ . . . यश्च विष्णुः . . . ॥ ७ ॥ . . . यश्च महेश्वरः . . . ॥ ८ ॥ . . . या चोमा . . . ॥ ९ ॥ . . . यश्च विनायकः . . . ॥ १० ॥ . . . यश्च स्कन्दः . . . ॥ ११ ॥ . . . यश्चेन्द्रः . . . ॥ १२ ॥ . . . यश्चाग्निः . . . ॥ १३ ॥ . . . या च भूः . . . ॥ १४ ॥ . . . यश्च भुवः . . . ॥ १५ ॥ . . . यश्च सुवः . . . ॥ १६ ॥ . . . यश्च महः . . . ॥ १७ ॥ . . . यश्च जनः . . . ॥ १८ ॥ . . . यश्च तपः . . . ॥ १९ ॥ . . . यच्च सत्यम् . . . ॥ २० ॥ . . . या च पृथिवी . . . २१ ॥ . . . याश्चापः . . . ॥ २२ ॥ . . . यच्च तेजः . . . ॥ २३ ॥ . . . यश्च वायुः . . . ॥ २४ ॥ . . . यच्चाकाशम् . . . ॥ २५ ॥ . . . यश्च सूर्यः . . . ॥ २६ ॥ . . . यश्च सोमः . . . ॥ २७ ॥ . . . यानि च नक्षत्राणि . . . ॥ २८ ॥ . . . ये चाष्टौ ग्रहाः . . . ॥ २९ ॥ . . . यश्च प्राणः . . . ॥ ३० ॥ . . . यश्च कालः . . . ॥ ३१ ॥ . . . यश्च यमः . . . ॥ ३२ ॥ . . . यश्च मृत्युः . . . ॥ ३३ ॥ . . . यच्चामृतम् . . . ॥ ३४ ॥ यच्च भूतं भव्यं भविष्यत् . . . ॥ ३५ ॥ . . . यच्च विश्वम् . . . ॥ ३६ ॥

. . . यच्च कृत्स्नम् . . . ॥ ३७ ॥ . . . यच्च सर्वम् . . .
॥ ३८ ॥ . . . यच्च सत्यम् . . . ॥ ३९ ॥

ब्रह्मैकस्त्वं द्वित्रिधोर्ध्वमधश्च त्वं शान्तिश्च त्वं पुष्टिश्च त्वं तुष्टिश्च त्वं हुतमहुतं विश्वमविश्वं दत्तमदत्तं कृतमकृतं परमपरं परायणं चेति ॥ ४० ॥

इत्थं प्रौढप्रकाशात्मना विश्वरूपं दर्शयन्तं देवा ब्रह्मुमशक्ताः सन्तः तं ध्यायन्ति चतुस्त्रिंशन्मन्त्रैः स्तुवन्ति चेत्याह—स्वेनेति। देवा यैर्मन्त्रैः रुद्रं स्तुवन्ति तान् मन्त्रानुदाहरति—ओमित्यादिना। ओमादौ मध्ये भूर्भुवःसुवरन्ते शीर्षन्नन्तो विश्वरूपोऽसि इति यथा प्रथममन्त्रोक्तादिमध्यान्तविन्यासः सर्वमन्त्रेषु समान इति वेदितव्यः। एतैर्मन्त्रैः स्तुतो रुद्रः प्रीतो भूत्वा देवानां स्वात्मानं दर्शयतीत्यर्थः ॥ ६—३९ ॥ श्रीरुद्रदर्शनेन सन्तुष्टा देवाः पुनस्तमेव स्तुवन्तीत्याह—ब्रह्मैकस्त्वमिति। त्वमेव ब्रह्म एकद्वित्रिसङ्ख्यावाच्यमपि त्वमेव ऊर्ध्वमधश्च त्वमेव स्वाविद्यातत्कार्यशान्तिरपि त्वमेव पुष्टिः बलं तुष्टिः आनन्दः त्वमेव हुतं होमः अहुतं तद्विपरीतं विश्वं आरोपः अविश्वं अपवादः दानं दत्तं तद्विपरीतं अदत्तं कृतमकृतं सकामनिष्कामकर्म परं कारणं अपरं कार्यं स्वांडजप्राणिपटलपरायणं परिसमाप्तिस्थानमपि त्वमेवेति सर्वत्रानुषज्यते ॥ ४० ॥

रुद्रं प्रति देवानां प्रार्थना

अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान्।
किं नूनमस्मान् कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥ ४१ ॥

सर्वजगद्धितं वा एतदक्षरं प्राजापत्यं सूक्ष्मं सौम्यं पुरुषमग्राह्यमग्राह्येण वायुं वायव्येन सोमं सौम्येन ग्रसति स्वेन तेजसा [1]तस्मा उपसंहर्त्रे महाग्रासाय वै नमो नमः ॥ ४२ ॥

[1] तस्मादुप—अ, अ १, अ २, क.

हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः ।
हृदि त्वमसि यो नित्यं तिस्रो मात्राः परस्तु सः ॥ ४३ ॥

तस्योत्तरतः शिरो दक्षिणतः पादो य उत्तरतः स ओंकारो य ओंकारः स प्रणवो यः प्रणवः स सर्वव्यापी यः सर्वव्यापी सोऽनन्तः योऽनन्तः तत्तारं यत्तारं तत् सूक्ष्मं यत् सूक्ष्मं तच्छुक्लं यच्छुक्लं तद्वैद्युतं यद्वैद्युतं तत् परं ब्रह्मेति स एकः स एको रुद्रः स ईशानः स भगवान् स महेश्वरः स महादेवः ॥ ४४ ॥

विधाऽन्तरेण देवास्तमेव प्रार्थयन्तीत्याह—अपामेति । हे अमृत रुद्र त्वत्प्रसादात् वयं सोमं अपाम पिबेम । एवं सोमादियागं कृत्वा अमृता अमरणधर्माणो देवा अभूम भवेम । यद्वा—स्वकृतयागादिफलं त्वय्येव समर्प्य ततः त्वत्प्रसादसञ्जातचित्तशुद्धिप्राप्यज्ञानद्वारा तावकं ज्योतिः अहमेवास्मीति अगन्म गच्छामः । किंच त्वद्भावसंसिद्धज्ञानेन स्वाभेदेन द्योतमानान् देवान् विराडादीन् ब्रह्मविष्णुमहेश्वरान् वा अहमेवेदं सर्वं इति अविदाम स्वात्मतया पश्यामः । एवं त्वद्दत्ताभयान् अस्मान् अरातिः कामाद्यरिषड्वर्गः स्वाज्ञानं वा किं कृणवत् किं वा कुर्यात् न किमपीत्यर्थः । नूनं निश्चयम् । एवं स्वाज्ञानारातेः अस्मच्चालनसामर्थ्याभावे मर्त्यस्य मरणधर्मविशिष्टस्य मम धूर्तिः दुष्कृतिः चालनं किमु कृणवत् दुष्कृतेरपि त्वत्प्रसादलब्धज्ञानसमकालं ब्रह्मरूपत्वात्, "पुण्यं पापं च चिन्मात्रं" इति श्रुतेः ॥ ४१ ॥ ध्यानस्तवनलब्धरुद्रप्रसादा देवाः सर्वग्रासरुद्राय नमस्कुर्वन्तीत्याह—सर्वेति । यत् सर्वेषां जगतां अन्तर्याम्याधाररूपेण हितं करोतीति सर्वजगद्धितम् । वाशब्दोऽवधारणार्थः । यत् एतत् रुद्राख्यं अक्षरं यत्प्राजापत्यं प्रजापतिभिः स्तुत्यत्वात् यन्निरतिशयसूक्ष्मं यत्स्वानन्यभक्तपटलसौम्यं यत् पूर्णभावेन पुरुषाख्यं यत् अग्राह्येण निर्विशेषरूपेण सर्वप्रमाणाग्राह्यमव्यक्तं ग्रसति वायव्येन सूत्ररूपेण वायुं आध्यात्मिकं ग्रसति, यत् सौम्येन रूपेण सोमं अमृतं ग्रसति, यत् स्वेन तेजसा स्वातिरिक्त-

स्वाज्ञानध्वान्तं ग्रसति तस्मै सर्वोपसंहर्त्रे स्वावशेषतया सर्वग्रासाय श्रीरुद्राय परमात्मने वै नमो नमः सर्वग्रासरुद्रोऽस्मीत्यैक्यानुसंधानं कुर्म इत्यर्थः, "नमस्त्वैक्यं प्रवदेत्" इति श्रुतेः ॥ ४२ ॥ पुनः प्रकारान्तरेण देवाः स्वहृदि स्वात्मानं रुद्रं ध्यायन्तः तत्स्वरूपेयत्तां वर्णयन्तीत्याह—हृदिस्था इति । हृञ् हरणे इति धातोः स्वाज्ञानहारिणि हृदि प्रतीचि सर्वाधारे रज्जुसर्पवत्तिष्ठन्तीति हृदिस्थाः देवताः सर्वाः इन्द्रादयः । तथा हृदि पञ्चवृत्तिसहितवागादिप्राणाश्च प्रतिष्ठिताः । यस्त्वं अकारादितिस्रो मात्रा या वर्तन्ते तासां परः, तुशब्दोऽवधारणार्थः । अकारादिमात्रातदध्यक्षविश्वविराडोत्रादेरपि पर एव भूत्वा हृदि विलसितवृत्तिसहस्रभावाभावप्रकाशकप्रत्यगभिन्नपरमात्मा त्वमसि स त्वं सर्वविलक्षणश्चासि ॥ ४३ ॥ तस्य हृदयस्योत्तरतः शिरः मकारः तदध्यक्षप्राज्ञादिश्च वर्तते,

शिरोवाची मकारः स्यादकारः पादवाचकः ।
उकारो मध्यदेहः स्यात् तदात्मा तुर्य उच्यते ॥

इति स्मृतेः । तथा दक्षिणतः पादः अकारः तदध्यक्षः प्रतिष्ठितः । य उत्तरतो मकारः विराजते स एवोङ्कारः मकारादेः ओङ्कारावयवत्वात् ॥ ४४ ॥

### ओङ्कारशब्दार्थः

अथ कस्मादुच्यते ओङ्कारो यस्मादुच्चार्यमाण एव सर्वं शरीरं ऊर्ध्वमुन्नामयति तस्मादुच्यत ओङ्कारः ॥ ४५ ॥

य ओङ्कारः स प्रणवः इत्यादिमन्त्रार्थः तिरोहित इति मत्वा तदर्थजातं तद्ब्राह्मणमुखेन श्रुतिः व्याकरोति—अथेति । आदौ प्रश्नोत्तररूपेण ओङ्कारस्वरूपं व्युत्पादयति—कस्मादिति । सर्वत्र अथशब्दः प्रश्नार्थः कस्मात् ओङ्कार इत्युच्यते । यस्मादुच्चार्यमाण एव यतः ओङ्कारोच्चारणादेव सर्वं शरीरं ऊर्ध्वमुन्नामयतीव भाति ओङ्कार इति तस्मादुच्यते ॥ ४५ ॥

प्रणवशब्दार्थः

अथ कस्मादुच्यते प्रणवो यस्मादुच्चार्यमाण एव ऋग्यजुस्सामाथर्वाङ्गिरसश्च यज्ञे ब्रह्म च ब्राह्मणेभ्यः प्रणामयति तस्मादुच्यते प्रणवः ॥ ४६ ॥

य ओङ्कारः स प्रणव इति प्रणवशब्दार्थमाह—अथेति । अथेत्यादि यस्मादुच्चार्यमाण एवेत्यन्तं सर्वत्र समानम् । यज्ञे ऋगादिवेदचतुष्टयं ब्रह्म, चशब्दः सर्वर्त्विगुपलक्षणार्थः, ब्राह्मणेभ्यः प्रणामयति, वेदर्त्विङ्निर्वर्त्ययज्ञस्य निष्कामधिया अनुष्ठितस्य चित्तशुद्धिप्राप्यज्ञानद्वारा ब्राह्मण्यपदप्रणामहेतुत्वात् । ब्राह्मणेभ्यः प्रणामयति इत्युक्त्या ब्राह्मणेतराणां वेदतदर्थग्रहणधारणाधिकाराभावो द्योत्यते । तस्मादुच्यते प्रणवः ॥ ४६ ॥

सर्वव्यापिशब्दार्थः

अथ कस्मादुच्यते सर्वव्यापी यस्मादुच्चार्यमाण एव सर्वान् लोकान् व्याप्नोति स्नेहो यथा पललपिण्डं शान्तमूलमोतं प्रोतमनुप्राप्य व्यतिषिक्तस्तस्मादुच्यते सर्वव्यापी ॥ ४७ ॥

सर्वव्यापिशब्दार्थमाह—अथेति । यथा स्नेहो वसादिविकारः शान्तमूलं मूलतः पृथक्कृतं पललपिण्डं ओतं प्रोतमनुप्राप्य व्यतिषिक्तः तत्समग्रं व्याप्य वर्तते तथा अयमात्मा स्वेन रूपेण सर्वान् लोकान् व्याप्नोतीत्यर्थः ॥ ४७ ॥

अनन्तशब्दार्थः

अथ कस्मादुच्यते अनन्तो यस्मादुच्चार्यमाण एवान्तं नोपलभ्यते तिर्यगूर्ध्वमधस्तात्तस्मादुच्यते अनन्तः ॥ ४८ ॥

अनन्तशब्दार्थमाह—अथेति । स्वाविद्यापदतत्कार्यजातस्याद्यन्तवत्त्वेऽपि तदारोपापवादाधिकरणस्यात्मनस्तत्तिर्यगूर्ध्वमधस्ताद्वाद्यन्तं नोपलभ्यते, तस्य त्रिविधपरिच्छेदशून्यत्वादनन्तत्वं निरङ्कुशमित्यर्थः ॥ ४८ ॥

तारशब्दार्थः

अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाण एव गर्भजन्मजरा-
मरणसंसारमहाभयात् संतारयति तस्मादुच्यते तारम् ॥ ४९ ॥

तारशब्दार्थमाह—अथेति । यद्ब्रह्माहमस्मीति स्मृतिमात्रतः स्वाज्ञविकल्पितजन्मादिसंसृतिसंतारणात् तारकत्वम् ॥ ४९ ॥

सूक्ष्मशब्दार्थः

अथ कस्मादुच्यते सूक्ष्मं यस्मादुच्चार्यमाण एव सूक्ष्मो
भूत्वा परशरीराण्येवाधितिष्ठति तस्मादुच्यते सूक्ष्मम् ॥ ५० ॥

सूक्ष्मशब्दार्थमाह—अथेति । यत्प्रत्यग्रूपेण वालाग्रशतैकभागादपि सूक्ष्मो भूत्वा विश्वविश्वादिरूपतः परशरीराण्येव अधितिष्ठति तद्वस्तुतः स्थूलसूक्ष्मादिकलनाविरळमित्यर्थः ॥ ५० ॥

शुक्लशब्दार्थः

अथ कस्मादुच्यते शुक्लं यस्मादुच्चार्यमाण एव क्लन्दते [1]क्लामयते
तस्मादुच्यते शुक्लम् ॥ ५१ ॥

शुक्लशब्दार्थमाह—अथेति । यत् स्वेनैव रूपेण क्लन्दते प्रकाशते स्वातिरिक्तं क्लामयते प्रकाशयति तदेव शुक्लमुच्यते, "शुक्लतेजोमयं ब्रह्म" इति श्रुतेः ॥ ५१ ॥

[1] क्लमयते—अ १, अ २, क.

वैद्युतशब्दार्थः

अथ कस्मादुच्यते वैद्युतं यस्मादुच्चार्यमाण एवातिमहति तमसि सर्वं शरीरं विद्योतयति तस्मादुच्यते वैद्युतम् ॥ ९२ ॥

वैद्युतशब्दार्थमाह—अथेति। यदात्मतत्त्वं स्वाज्ञदृष्ट्या अतिमहति तमसि गाढस्वाज्ञानध्वान्ते सर्वं शरीरोपलक्षितस्वाविद्यापदं स्वज्ञदृष्ट्या नेति नेति इति विद्योतयति तत् वैद्युतम् ॥ ९२ ॥

परंब्रह्मशब्दार्थः

अथ कस्मादुच्यते परं ब्रह्म यस्मादुच्चार्यमाण एव बृहति बृंहयति तस्मादुच्यते परंब्रह्म ॥ ९३ ॥

परंब्रह्मशब्दार्थमाह—अथेति। स्वातिरिक्तं ग्रसित्वा स्वयमेव सर्वोत्कर्षेण वर्तत इति परं तद्रूपेणोपबृंहणात् परंब्रह्म ॥ ९३ ॥

एकशब्दार्थः

अथ कस्मादुच्यते एको यः सर्वान् लोकानुद्गृह्णाति अजस्रं सृजति विसृजति वासयति तस्मादुच्यते एकः ॥ ९४ ॥

एकशब्दार्थमाह—अथेति। यः परमेश्वरः स्वविकल्पितसर्वान् लोकान् अहमेवेदं सर्वं इति स्वावशेषतया उद्गृह्णाति उपसंहरति, अजस्रमिति सर्वत्र संबध्यते, अजस्रं सृजति सूक्ष्मरूपेण पुनः स्थूलरूपेण विसृजति एवमपञ्चीकृतपञ्चीकृतभूतसृष्टिं कृत्वा स्वस्मिन् आधारभूते अजस्रं वासयति स्थितिं करोतीत्यर्थः ॥ ९४ ॥

एकोरुद्रशब्दार्थः

अथ कस्मादुच्यते एको रुद्रः—

एक एव रुद्रो न द्वितीयाय तस्थुः
इमान् लोकानीशत ईशनीयुर्जननीयुः।

प्रत्यङ्जनास्तिष्ठति सञ्चुकोचान्तकाले

संसृज्य विश्वा भुवनानि गोप्ता ॥

तस्मादुच्यते एको रुद्रः ॥ ५५ ॥

एकोरुद्रशब्दार्थमाह—अथेति । स्वातिरिक्तरुद्रावको रुद्र एक एव तस्य निष्प्रतियोगिकत्वेनाद्वैतरूपत्वात् । तदतिरिक्तस्वाविद्यापदतत्कार्याणि न कदाचिदपि द्वितीयाय तस्थुः स्थितवन्तः, तेषामाविद्यकत्वेन कारणतुल्यत्वात् । यः पुनः मूलाबीजांशयोगतः ईश्वरत्वमवलम्ब्य स्वविकल्पितेमान लोकान स्वस्वोचितव्यापृतो ईशते ईष्टे, वचनव्यत्ययः छान्दसः, नियमयति, य एते लोका ईशेन जननीयुः सृज्यमाना सृष्टा वा भवेयुः, य एवं सृष्टास्त एव ते ईशनीयुः स्वोचितकर्मणि नियुज्यमाना भवेयुः, सोऽयमीश्वरः प्रत्यञ्चनाः प्रतिजनाः तेषां हृदये सूत्रान्तर्यामिप्रत्यग्रूपेण तिष्ठति सृष्टिकाले चतुराननात्मना विश्वा विश्वानि संसृज्य सृष्ट्वा पुनः स्थितिकाले स्वस्मिन् भवन्तीति भुवनानि विष्णवात्मना गोप्ता रक्षिता पुनः अन्तकाले कालाग्निरुद्रात्मना संचुकोच उपसंहृत्य स्वयं एक एवावशिष्यते इत्यर्थः ॥ ५५ ॥

ईशानशब्दार्थः

अथ कस्मादुच्यते ईशानो यः सर्वान् लोकानीशत ईशनीभिः जननीभिः परमशक्तिभिः ॥ ५६ ॥

अभि त्वा शूर नो नुमोऽदुग्धा इव धेनवः ।

ईशानमस्य जगतः सुवर्दृशमीशानमिन्द्र तस्थुषः ॥

तस्मादुच्यते ईशानः ॥ ५७ ॥

ईशानशब्दार्थमाह—अथेति । यः सर्वान लोकान ईशते ईष्टे नियमयति । काभिः नियमयति इत्यत्र ईशनीभिः अजडक्रियाशक्तिवृत्तिभिः तथा

जननीभिः अजडज्ञानशक्तिवृत्तिभिः तथा परमशक्तिभिः अजडेच्छाशक्तिवृत्तिभिश्च य इमान् लोकानीशते ॥ ९६ ॥ स्वाज्ञानासहनात् हे शूर तं त्वां वयं अभितो नुमः यथा धेनुस्वामी स्वकीयतया अभिमता अदुग्धा अपि धेनवो धेनूः नोपेक्ष्य पालयति, द्वितीयार्थे प्रथमा, तथा नोऽस्मान् भवदाराधनं कर्तुमशक्तान् मत्वा केवलकरुणया परिपाल्य त्वत्पदपात्रीभूतान् कुर्वित्यर्थः। हे इन्द्र परमेश्वर अस्य जगतः जङ्गमस्य स्वस्वकर्मनियन्तृत्वात् ईशानं तस्थुषः स्थावरस्यापि वृद्ध्यादिविक्रियानियमनात् ईशानं सुवर्लोकोपलक्षितसर्वलोकदृशं द्रष्टारं निरङ्कुशसर्वज्ञं त्वां अभितो नुमः इति पूर्वेणान्वयः ॥ ९७ ॥

भगवच्छब्दार्थः

अथ कस्मादुच्यते भगवान् यः सर्वान् भावान् निरीक्षित्यात्मज्ञानं निरीक्षयति योगं गमयति तस्मादुच्यते भगवान् ॥ ९८ ॥

भगवच्छब्दार्थमाह—अथेति । यः सर्वान् स्वांशजसर्वान् भावान् जीवान् मत्स्वरूपमेव सर्वं मदतिरिक्तं नेतीति निरीक्षित्य पुनस्तेषामपि परमेश्वरोऽस्मीति आत्मज्ञानं निरीक्षयति प्रत्यक्परचितोः योगं ऐक्यज्ञानं गमयति प्रापयति स भगवानित्यर्थः ॥ ९८ ॥

महेश्वरशब्दार्थः

अथ कस्मादुच्यते महेश्वरो यः सर्वान् लोकान् संभक्षः संभक्षयत्यजस्रं सृजति विसृजति वासयति तस्मादुच्यते महेश्वरः ॥ ९९ ॥

महेश्वरशब्दार्थमाह—अथेति । यः स्वाज्ञदृष्टिविकल्पितसर्वलोकान् अजस्रं स्वदृष्ट्या संभक्षः उपसंहर्ता सन् संभक्षयति स्वात्ममात्रावशिष्टान् करोति अजस्रं सृजति विसृजति वासयतीत्युक्तार्थम्। एवं यः स्वमात्रमवशिष्यते स एव महेश्वर इत्यर्थः ॥ ९९ ॥

महादेवशब्दार्थः

अथ कस्मादुच्यते महादेवो यः सर्वान् भावान् परित्यज्यात्मज्ञानयोगैश्वर्ये महति महीयते तस्मादुच्यते महादेवः ॥ ६० ॥

महादेवशब्दार्थमाह—अथेति । यः सर्वान् स्वातिरिक्तभावान् परित्यज्य मिथ्यात्वेन निरस्य स्वात्मज्ञानयोगैश्वर्ये स्वे महिम्नि महति महीयते सोऽयं महादेवः परमात्मेत्यर्थः ॥ ६० ॥

रुद्रस्य व्यापकत्वम्

तदेतद्रुद्रचरितं—

एषो हि देवः प्रदिशो नु सर्वाः

पूर्वो हि जातः स उ गर्भे अन्तः ।

स विजायमानः स जनिष्यमाणः

प्रत्यङ्जनास्तिष्ठति विश्वतोमुखः ॥ ६१ ॥

विश्वतश्चक्षुरुत विश्वतोमुखो

विश्वतोबाहुरुत विश्वतस्पात् ।

सं बाहुभ्यां धमति संपतत्रैर्द्यावा-

भूमी जनयन् देव एकः ॥ ६२ ॥

एवं रुद्रप्रशंसां कृत्वा तस्य व्यापकतामाह—तदेतदिति । देवा ह वा इत्यारभ्य यदेतदुक्तं तदेतत् श्रीरुद्रचरितम् । यः प्रणवादिमहादेवान्तशब्दैरभिहितः एष देवो हि स्वयंप्रकाशचिद्धातुः निष्प्रतियोगिकचिन्मात्ररूपोऽपि स्वाज्ञादिदृष्टिमाश्रित्य आग्नेयपूर्वादिसर्वाः प्रदिशो दिशोऽनुगतो विराट्-हिरण्यगर्भरूपेण सर्वस्मात् पूर्वो हि जातः, "हिरण्यगर्भः समवर्तताग्रे" इति श्रुतेः ।

स उ स एव प्राणिनां अन्तः गर्भे वर्तते । स एव मनुष्यादिरूपेण जायमानो जनिष्यमाणश्च प्रत्यङ्जनाः प्रतिप्राणिनः तेषां हृदये अन्तर्याम्यात्मना तिष्ठति युगपत् विश्वतोमुखः स्वाविद्यापदप्रविभक्तानन्तकोटिब्रह्माण्डालङ्कारप्राणिपटलरूपेण ॥ ६१ ॥ विश्वतः सर्वतः चक्षुरुतापि विश्वतोमुखः तथा विश्वतोबाहुः उत विश्वतस्पात् । चक्षुरादिग्रहणं अनुक्तावयवकरणग्रामोपलक्षणार्थम् । सं बाहुभ्यां धमति स्वसृष्टप्राणिजातं बाहुभ्यां संयोजयति यस्त्वेक एव सन् द्यौश्च भूमिश्च द्यावाभूमी तदुपलक्षितानन्तकोटिब्रह्माण्डानि संसारपतनत्राणनशक्तैः संपतत्रैः जीवैश्च सह जनयन् उत्पादयन्नास्ते सोऽयं परमार्थदृष्ट्या एक एवावशिष्यते । स्वस्य निरप्रतियोगिकाद्वैतरूपत्वात् एकत्वं निरङ्कुशमित्यर्थः ॥ ६२ ॥

एवमुपासनायाः फलम्

तदेतदुपासितव्यं यद्वाचो
वदन्ति तदेव ग्राह्यम् ।
अयं पन्था वितत उत्तरेण येन देवा येन ऋषयो येन
पितरः प्राप्नुवन्ति परमपरं परायणं च ॥ ६३ ॥

वालाग्रमात्रं हृदयस्य मध्ये
विश्वं देवं जातवेदं वरेण्यम् ।
तमात्मस्थं येऽनुपश्यन्ति धीरा-
स्तेषां शान्तिः शाश्वती नेतरेषाम् ॥ ६४ ॥

यो योनिं योनिमधितिष्ठत्येको
येनेदं पूर्णं पञ्चविधं च सर्वम् ।
तमीशानं पुरुषं देवमीड्यं
[1]निदिध्यात्तारं शान्तिमत्यन्तमेति ॥ ६५ ॥

[1] निदिध्यायात्तारं—अ २, क.

एवमुपासनां तत्फलं चाह—तदिति । यत् सर्वापह्नवसिद्धं ब्रह्म स्वमात्रमिति "सन्मात्रमसदन्यत्", "ब्रह्ममात्रमसन्न हि" इत्यादिसर्ववेदान्तवाचोऽभिवदन्ति तदेतत् ब्रह्म निष्प्रतियोगिकस्वमात्रमिति उपासितव्यम् । कैवल्येच्छुभिः आत्मत्वेन तदेव हि ग्राह्यम् । अयं पन्थाः मार्गो विततः, इतोऽतिरिक्तमार्गस्य कुपथत्वात्, "नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेः । येन देवर्षिपितरः प्राप्नुवन्ति—किं तत्?—परं परं ब्रह्म अपरं अपरं ब्रह्म उत्तरेण पथा परायणं चेति । के तत् प्राप्नुवन्ति? ज्ञानकर्मसमुच्चयानुष्ठातारः ऊर्ध्वरेतसश्च, दक्षिणमार्गापेक्षया सोऽपि वितत इत्यर्थः ॥ ६३ ॥ प्राप्यस्वरूपं तज्ज्ञानाज्ञानफलं चाह—वालाग्रमात्रमिति । स्वांशजप्राणिपटलहृदयस्य मध्ये वालाग्रमात्रं ततोऽपि सूक्ष्मम् । सर्वप्राण्यात्मतया विश्वसर्नीयत्वात् विश्वं देवं स्वप्रकाशं, यतो ऋगादिचतुर्वेदा जाताः तं जातवेदं सर्वज्ञकल्पं, वरेण्यं सर्वैरपि वरणीयम् । एवं यो वर्तते तमात्मस्थं प्रत्यक्च पराग्भावसापेक्षप्रत्यग्भावापायसिद्धं परमात्मानं निष्प्रतियोगिकस्वमात्रमिति येऽनुपश्यन्ति धीराः ब्रह्मविद्वरीयांसः तेषां शाश्वती शान्तिः विकळेबरमुक्तिः नेतरेषां स्वाज्ञानामित्यर्थः ॥ ६४ ॥ उक्तार्थस्यातिसूक्ष्मतया पुनर्भङ्ग्यन्तरेण तदेव विशदयति—यो योनिमिति । यः परमात्मा कालत्रयेऽप्येकरूपोऽपि स्वाविद्याद्वयतत्कार्यप्रविभक्तयोनिं योनिं प्रतियोनिं विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तवपुषा अधितिष्ठति वा अधितिष्ठति येनेदं परिदृश्यमानं पञ्चविधं वियदादिपञ्चभूतभौतिकजातं सर्वं च पञ्चब्रह्मात्मनाऽपि पूर्णम् । तमीशानं स्वातिरिक्ताविद्याद्वयतत्कार्यपञ्चभूतभौतिकं ग्रसित्वा निष्प्रतियोगिकब्रह्ममात्रतया अवस्थातुमीश्वरं पुरुषं स्वाज्ञदृष्टिप्रसक्ताविद्यापदपूरणात् देवं स्वयंप्रकाशचिद्धातुं ब्रह्मादिभिरपि स्वात्मतया ईड्यं स्वाज्ञपटलसन्तारं यो मुनिः अहं ब्रह्मास्मि इति निदिध्यात् निदिध्यासनं ध्यानं कुर्यात् स मुनिः अत्यन्तं निरुपचरितं स्वा[न]तिरिक्तशान्तिं विदेहकैवल्यं एति ॥

तृष्णावतां शान्त्युपायः

प्राणेष्वन्तर्मनसो लिङ्गमाहु-

र्यस्मिन् क्रोधो या च तृष्णाऽक्षमा च ।

तृष्णां छित्त्वा हेतुजालस्य मूलं
बुद्ध्या सञ्चिन्त्य स्थापयित्वा तु रुद्रे रुद्र एकत्वमाहुः ॥

तृष्णाबद्धानां ब्रह्मैक्यरूपिणी शान्तिः कथं भवतीत्यत आह—प्राणेष्विति। प्राणेषु ब्रह्मपिपीलिकान्तप्राणिषु अन्तः हृदये यस्मिन् स्वेप्सितकामापूरणसंजातः क्रोधश्च याऽप्राप्तविषयकतृष्णा च परश्रेयोदर्शनाक्षमा च वर्तते तत्र तन्मनसो लिङ्गं तत्त्वविद आहुः। तत्र मनसो लिङ्गे संसृतिहेतुजालं स्वाविद्याद्वय-तत्कार्यजातं तस्यापि मूलं हेतुभूतां तृष्णां मायां ब्रह्ममात्रज्ञानखड्गेन छित्त्वा अपह्नवं कृत्वा रुद्रे प्रतीचि स्वे महिम्नि तदपह्नवसिद्धमात्मानं बुद्ध्या संचिन्त्य स्थापयित्वा यत्तन्मात्रतयाऽवस्थितत्वं तत् रुद्र एकत्वमाहुः, "परेऽव्यये सर्व एकीभवन्ति" इति श्रुत्यनुरोधेन सर्वं प्रत्यक्परविभागैक्यप्रभवसविशेषत्वरुजद्रावके रुद्रे स्वाज्ञविकल्पितं सर्वं स्वज्ञादिदृष्ट्या तन्मात्रपर्यवसन्नं ब्रह्मविदः आहुः कथयन्तीत्यर्थः ॥ ६६ ॥

महापाशुपतव्रतम्

रुद्रं शाश्वतं वै पुराणमिषमूर्जं तपसा नियच्छत। व्रतमेतत् पाशुपतम्। अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं ह वा इदं भस्म मन इत्येतानि चक्षूंषि भस्मान्यग्निरित्यादिना भस्म गृहीत्वा विमृज्याङ्गानि संस्पृशेत्तस्माद्व्रतमेतत् पाशुपतम् ॥ ६७ ॥

केवलस्वातिरिक्तास्तित्वपाशबद्धानां पशूनां कथं तद्विपरीतपशुपतियाथात्म्यरूपावस्थानलक्षणकैवल्यसिद्धिः स्यादित्याशङ्क्य तत्प्रापकोपायतया महापाशुपतव्रतमुपदिशति—रुद्रमिति। हे स्वाज्ञलोकाः यूयं रुद्रं शाश्वतं वै पुराणं, तदतिरिक्तस्याशाश्वताज्ञानविकल्पितत्वेन इदानींतनत्वात् तदेव शाश्वतं पुराणं,

इषं इच्छाविषयं ऊर्जं अन्नं च रुद्राख्यं ब्रह्मैव, तदतिरेकेण न किंचिदस्ति, तद्रुद्राख्यं ब्रह्माहमस्मीति तपसा विचारेण मनो नियच्छत नियमनं कुरुत। मुमुक्षुणैवं कर्तव्यमिति यत् तदेतद्व्रतं पाशुपतं, पशुपतियाथात्म्यप्रापकत्वात्। तदतिरेकेण अग्न्यादिपञ्चभूत-मनआदिभौतिकजातसत्त्वात् कथं पशुपतियाथात्म्यसिद्धिः इत्याशङ्क्य अग्न्यादिपञ्चमहाभूतानि मनआदिभौतिकानि तद्धेत्वव्यक्तं च ब्रह्ममात्रज्ञानाग्निना भस्म कृत्वा तद्भस्म अग्निरित्यादिमनुना गृहीत्वा स्वमात्रज्ञानतोयेन निमृज्य स्वाज्ञदृष्टिविकल्पिताङ्गानि विमृजेत् तेन पशुपतियाथात्म्यलक्षणकैवल्यं स्यादित्याह—अग्निरितिभस्मेत्यादिना ॥ ६७ ॥

ग्रन्थपठनतदर्थज्ञानफलम्

पशुपाशविमोक्षाय योऽथर्वशिरसं ब्राह्मणोऽधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स सत्यपूतो भवति स सर्वपूतो भवति स सर्वेषु तीर्थेषु स्नातो भवति स सर्वेषु वेदेष्वधीतो भवति स सर्ववेदव्रतचर्यासु चरितो भवति स सर्वैर्देवैर्ज्ञातो भवति स सर्वयज्ञक्रतुभिरिष्टवान् भवति। तेनेतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि भवन्ति। गायत्र्याः शतसहस्रं जप्तं भवति। प्रणवानामयुतं जप्तं भवति। रूपे रूपे दश पूर्वान् पुनाति दशोत्तरानाचक्षुषः पङ्क्तिं पुनातीत्याह भगवानथर्वशिरोऽथर्वशिरः। सकृज्जप्त्वा शुचिः पूतः कर्मण्यो भवति द्वितीयं जप्त्वा गाणापत्यमवाप्नोति तृतीयं जप्त्वा [1]देवमेवानुप्रविशत्यों सत्यम् ॥ ६८ ॥

एवं भावयितुमशक्तस्यापि पशुपाशविमोचनोपायग्रन्थपठनतदर्थज्ञानफलं चाह—पश्विति। यः पशुपाशविमोचनार्थी ब्राह्मणोऽथर्वशिरसं उपनिषदं

[1] देवमेव प्र—क.

अधीते तदर्थज्ञानं विनाऽपि ग्रन्थतः पठति सोऽयं मुमुक्षुः अग्निवाय्वादित्य-सोमसत्यवत् पूतः पवित्रो भवति। स सार्धत्रिकोटिमहातीर्थस्नातो भवति इत्यादि शिष्टं स्पष्टम्। प्रथमवारजपतः सर्वकर्मकृत्। द्वितीयवारजपस्तु गाणापत्य-प्रापकः। केवलपाठतोऽर्थतो वा तृतीयवारजपस्तु तत्सायुज्यस्य कैवल्यस्य वा प्रापको भवति। यदाहाथर्वशिरो भगवान् तदेतत् ओं सत्यं, न हि तत्र संशयोऽस्तीत्यर्थः ॥ ६८ ॥

रुद्रैक्यप्रार्थना

यो रुद्रो अग्नौ यो अप्स्वन्तर्य ओषधीर्वीरुध आविवेश।
य इमा विश्वा भुवनानि चक्लृपे तस्मै रुद्राय नमो अस्तु ॥ ६९ ॥

उक्तविशेषणविशिष्टरुद्रैक्यं प्रार्थयतीत्याह—य इति। यो रुद्रः परमात्मेति प्रकटितः सोऽयं स्वाज्ञदृष्टिविकल्पिताग्न्यादिपञ्चभूतेष्वन्तर्याम्यात्मना—ओषधी-र्वीरुद्ग्रहणं भौतिकजातोपलक्षणार्थम्—भूतभौतिकजातं आविवेशेत्यर्थः "यः सर्वेषु भूतेषु तिष्ठन्नेष त आत्माऽन्तर्यामी" इति श्रुतेः। योऽयं रुद्रः हिरण्य-गर्भात्मना इमा इमानि विश्वा विश्वानि अनन्तकोटिब्रह्माण्डानि प्रत्यण्डं भवन्तीति चतुर्दश भुवनानि चक्लृपे निर्मितवान् तस्मै एतत्सूत्रान्तर्याम्यादिकलनारुद्राव-करुद्राय प्रत्यगभिन्नपरमात्मने नमोऽस्तु रुद्रात्मात्मनोरैक्यमस्त्वित्यर्थः ॥ ६९ ॥

श्रीविद्यामोक्षप्रार्थना

[1]अस्य मूर्धानमस्य संशीर्यो[2]ऽथर्वा हृदयं च मन्मस्तिष्कादूर्ध्वं प्रेरयन् पवमानोऽथ शीर्ष्णस्तद्वाऽथर्वशिरो देवकोशः समुज्झितः तत्प्राणोऽभिरक्षतु श्रियमन्नमथो मनःश्रियमन्नमथो मनो विद्यामन्नमथो मनो विद्यामन्नमथो मनो मोक्षमन्नमथो मनो मोक्षमन्नमथो मन इत्यों सत्यमित्युपनिषत् ॥ ७० ॥

[1] अथ—अ १, क.   [2] अर्व—अ २, क.

स्वस्वभावानुरोधेन श्रियं विद्यां मोक्षं च देहीति प्रार्थयति—अस्येति। योऽथर्वा अथर्ववेदशिरः अस्य ब्रह्माण्डस्य अस्य पिण्डाण्डस्य च मूर्धानं समष्टिव्यष्टितुरीययोरैक्यं संशीः शंसितवान् "रुद्र एकत्वमाहुः" "तस्मै रुद्राय नमो अस्तु" इत्यादिना प्रतिपादितवानित्यर्थः। शंसीरित्यर्थे संशीरिति वर्णव्यत्ययः छान्दसः। मूर्धत्वस्तुर्याधिष्ठितत्वात्, "तुरीयं मूर्ध्नि संस्थितं" इति श्रुतेः। सर्वपावनहेतुत्वात् सोऽयं पवमानः परमेश्वरः हृदयं हृदयोपलक्षितान्तःकरणसहितप्राणं अथ प्रारब्धकर्मक्षयानन्तरं शीर्ष्णो मस्तकात् तत्रत्यमन्मस्तिष्कात् सहस्रारमध्यगब्रह्मनाड्यन्तर्गतमेदोविकारात् ऊर्ध्वं प्रेरयन् तदा तत्रैव सहस्रारविलसितस्य देवस्य स्वप्रकाशचिद्धातोः तुर्यस्य स्वावृतिरूपः कोशः समुज्झितः विगलितः विशीर्णः इत्यर्थः। ततः तत्प्राणः तत्रत्यप्राणः परमेश्वरः निर्विकल्पकसमाधिपरवशं मत्कलेवरं अभिरक्षतु मशकाद्युपद्रवतः परिपालयतु। यावन्मद्विकल्पितकलेवरं भुवि तिष्ठति तावत् श्रियं इहलोकोपयोगिनानाविधसंपदं मद्देहधारणोपयोगि अन्नं अथो ब्रह्मविषयकं मनश्च प्राणः परमेश्वरो विदधातु इत्यध्याहार्यम्। यावद्देहधारणं तावत् स्वाविद्याद्वयतत्कार्यापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रगोचरविद्यां अन्नं अथो मन इत्युक्तार्थम्। स्वकलेवरं सत्यसति स्वातिरिक्तमस्ति नास्तीति विभ्रममोक्षं विकलेवरकैवल्यं मामनिच्छन्तमपि वृणोतु। पर्यायत्रयेऽप्यावृत्तिरादरार्था। अस्यामुपनिषदि यद्यदुक्तं तत्सर्वं ॐ सत्यं सन्मात्रं "पश्यतेहापि सन्मात्रमसदन्यत्" इति स्वातिरिक्तासत्प्रपञ्चापह्नवसिद्धनिष्प्रतियोगिकसन्मात्रावशेषतावादिश्रुतेः। इत्युपनिषच्छब्दः प्रकृतोपनिषत्समाप्त्यर्थः॥ ७०॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
लिखितं स्याद्विवरणमथर्वशिरसः स्फुटम्।
अथर्वशिरसो व्याख्या षष्ठ्यधिद्विशतं स्मृता॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे द्वाविंशतिसङ्ख्यापूरकं
अथर्वशिरआख्योपनिषद्विवरणं सम्पूर्णम्

# कालाग्निरुद्रोपनिषत्

## सह नाववतु—इति शान्तिः

कालाग्निरुद्रोपनिषन्मन्त्रस्य ऋष्यादि

अथ कालाग्निरुद्रोप[1]निषत् संवर्तकोऽग्निर्ऋषिरनुष्टुप् छन्दः श्रीकालाग्निरुद्रो देवता श्रीकालाग्निरुद्रप्रीत्यर्थे जपे विनियोगः ॥ १ ॥

ब्रह्मज्ञानोपायतया यद्विभूतिः प्रकीर्तिता ।
तमहं कालाग्निरुद्रं भजतां स्वात्मदं भजे ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं कालाग्निरुद्रोपनिषत् ब्रह्मज्ञानसाधनभस्मधारणविधिपरा । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । उपोद्घातादि पूर्ववत् । सनत्कुमारकालाग्निरुद्रप्रश्नप्रतिवचनरूपेयमाख्यायिका वक्ष्यमाणविद्यास्तुत्यर्था । जपार्थेयमुपनिषत्, अस्याः ऋषिच्छन्दोदेवताऽऽदिकीर्तनात् । एवमियमुपनिषत् प्रवृत्तेत्याह—अथेति । विद्योपक्रमार्थं अथशब्दः । स्वाज्ञानतत्कार्यं कालयति नाशयति निःशेषं भस्मीकरोतीति कालाग्निः परमेश्वरः तस्य स्वाज्ञानप्रभवसंसृतिरुद्रावकत्वात् स एव रुद्रः तत्पदमुपगमयतीति उपनिषत् । कालाग्निरुद्रविद्याप्रकाशकोऽयं महामन्त्रः । तस्य संवर्तकोऽग्निः स्वाविद्याऽण्डभस्मीकरणपटुः

[1] निषदः सं—मु, उ.

प्रलयकालसूर्य एव ऋषिः। अनुष्टुप्छन्दः कालाग्निरुद्रो देवता, स्पष्टम्। जपविनियोगस्तु कालाग्निरुद्रप्रीतिकरः। अनेन जपेन प्रीतो भगवान् स्वमन्त्रजापिनां स्वाज्ञानं मोचयित्वा स्वज्ञानप्रदानेन स्वमात्रपदं प्रयच्छतीत्यर्थः ॥ १ ॥

त्रिपुण्ड्रविधिजिज्ञासा

अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छ अधीहि भगवंस्त्रिपुण्ड्रविधिं सतत्त्वं किं द्रव्यं कियत् स्थानं कति प्रमाणं का रेखाः के मन्त्राः का शक्तिः किं दैवतं कः कर्ता किं फलमिति च ॥ २ ॥

आख्यायिकामवतारयति—अथेति। सनत्कुमारो नाम ब्रह्ममानसपुत्रः जातमात्रेण परमार्थतत्त्ववित् स्वयं कृतकृत्योऽपि स्वाज्ञलोकमवलोक्य तमुद्धर्तुमिच्छया अथ स्वाज्ञलोककर्मपरिपाकानन्तरं चिरकालध्यानतः प्रादुर्भूतं कालाग्निरुद्रं भगवन्तं स्वारोपितषड्गुणैश्वर्यसंपत्त्या विराजमानं पप्रच्छ पृष्टवान्। किं तत्? न हि स्वाज्ञलोकः स्वज्ञानोपदेशतः कृतार्थो भवति, तस्य स्वज्ञानाधिकाराभावात्। न ह्यनधिकारिषु सन्तः स्वज्ञानमुपदिशन्ति, तेषां चित्तशुद्धिविकलत्वात्। तथात्वेऽपि ज्ञानोपदेशमहिम्ना कृतार्था भवेयुरिति चेन्न; स्वाज्ञान् प्रति परमार्थोपदेशस्य तदधःप्रापकत्वात् इत्यत्र—

अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत्।
महानरकसाम्राज्ये स तेन विनियोजितः ॥

इति श्रुतेः। यत एवमतस्तेषामादौ स्वज्ञानसाधनोपदेशेन विशुद्धसत्त्वं भवति, ततः स्वज्ञानं जायते, ततः कृतकृत्या भवेयुरिति निश्चित्य तत्र स्वज्ञानान्तरङ्गसाधनं त्रिपुण्ड्रमेवेति मनसि निधाय, हे भगवन् कालाग्निरुद्र स्वाज्ञलोकविलसत्स्वाज्ञानप्रासस्वज्ञानान्तरङ्गसाधनं सतत्त्वं स्वतत्त्वज्ञानसहितं त्रिपुण्ड्रविधिमधीहि उपदिश, सप्रकारं प्रतिपादयेति पप्रच्छेत्यर्थः। किं तत्सप्रकारं? इत्यत आह— किं द्रव्यमित्यादि। स्पष्टम् ॥ २ ॥

शाम्भवव्रतं नाम त्रिपुण्ड्रविधिः

तं होवाच भगवान् कालाग्निरुद्रः। यद्द्रव्यं तदाग्नेयं [1]भस्म सद्योजातादिपञ्चब्रह्ममन्त्रैः परिगृह्याग्निरिति भस्म वायुरिति भस्म खमिति भस्म जलमिति भस्म स्थलमिति भस्मेत्यनेनाभिमन्त्र्य मानस्तोके तनय इति समुद्धृत्य मा नो महान्तमिति जलेन संसृज्य त्रियायुषं जमदग्नेरिति शिरोललाटवक्षःस्कन्धेषु त्रियायुषैस्त्र्यम्बकैस्त्रिशक्तिभिस्तिर्यक् तिस्रो रेखाः प्रकुर्वीत व्रतमेतच्छाम्भवं सर्वेषु वेदेषु वेदवादिभिरुक्तं भवति तस्मात् समाचरेन्मुमुक्षुर्न पुनर्भवाय ॥ ३ ॥

सनत्कुमारेणैवं पृष्टस्तं होवाच भगवान कालाग्निरुद्रः। तत्र किं द्रव्यमिति प्रश्नोत्तरमाह—यद्द्रव्यमिति। यद्द्रव्यं त्रिपुण्ड्रस्य तत बृहज्जाबालोपनिषदुक्तविधिना निष्पन्नमाग्नेयं भस्मेति। के मन्त्राः इति प्रश्नोत्तरमाह—सद्योजातादीति। सद्योजातादिपञ्चब्रह्ममन्त्रैः दक्षिणहस्तेन श्रौतभस्म परिगृह्य वामहस्ते निधाय। अनेन पञ्चभूतमन्त्रसमुदायेन वामहस्तस्थं भस्म दक्षिणपाणिना स्पृशन् अभिमन्त्र्य पुनः मा नस्तोके तनये इति मन्त्रेण सम्यगुद्धृत्य उद्धृतं भस्म मा नो महान्तं इति मन्त्रेण जलेन संसृज्य। ततः "कियत्स्थानं" इति प्रश्नोत्तरमाह—त्रियायुषमिति। त्रियायुषं जमदग्नेः इति मन्त्रेण शिरोललाटवक्षस्स्कन्धेषु स्थलेषु धारयेदिति शेषः। "का रेखा" इति प्रश्नोत्तरमाह—त्रियायुषैरिति। त्रियायुषैः "त्रियायुषं" इति पञ्चभिर्मन्त्रैः त्र्यम्बकानुवाकैः मृत्युञ्जयसूक्तमन्त्रैः त्रिशक्तिभिः दुर्गालक्ष्मीसरस्वतीभिः तत्प्रतिपादकमन्त्रैः "जातवेदसे सुनवाम सोमं" इति, "हिरण्यवर्णां हरिणीं" इति, "पावका नः सरस्वती" इति च

[1] गोमयं भ—क.

दुर्गालक्ष्मीसरस्वतीमन्त्राः तैः क्रियाज्ञानेच्छाशक्तिभिर्वा शिरोललाटादिस्थलेषु तिस्रो रेखाः प्रकुर्वीत। नियमेनैवं त्रिपुण्ड्रधारणं क्रियते इति यत् तत् एतत् शाम्भवव्रतम्। "कति प्रमाणं" इति प्रश्नोत्तरमाह—सर्वेष्विति। यदेतत् शाम्भवव्रतं तत् सर्वेषु वेदेषु बृहज्जाबालभस्मजाबालादिषु वेदवादिभिः संवर्तकादिभिः ये संसारान्मोक्तुमिच्छन्ति तैः एतत् शाम्भवव्रतं अवश्यं कर्तव्यमिति उक्तं भवति। यस्मादेवं तस्मान्मुमुक्षुरपुनर्भवाय एतत् त्रिपुण्ड्रधारणलक्षणं शाम्भवव्रतं समाचरेत् ॥ ३ ॥

त्रिपुण्ड्ररेखाप्रमाणम्

अथ सनत्कुमारः प्रमाणमस्य पप्रच्छ त्रिपुण्ड्रधारणस्य ॥ ४ ॥

त्रिधा रेखा आललाटादाचक्षुषोरामूर्ध्नोराभ्रुवोर्मध्यतश्च ॥ ५ ॥

कति प्रमाणं इति प्रश्नोत्तरं वेदादिभिरुक्तं भवतीति सामान्येनोक्तमपि तद्विशेषबुभुत्सया सनत्कुमारोऽथ कालाग्निरुद्रं भगवन्तं अस्य त्रिपुण्ड्रधारणस्य प्रमाणं पप्रच्छ ॥ ४ ॥ सनत्कुमारेणैवं पृष्टो भगवानेवमाह—त्रिपुण्ड्रेति। वैदिकत्रिपुण्ड्रधारणस्य त्रिधैव रेखाः आ ललाटात् आचक्षुषोः आमूर्ध्नोः आभ्रुवोर्मध्यतश्च चक्षुर्भ्रूयुगमारभ्य ललाटमस्तकपर्यन्तं त्रिपुण्ड्रं धारयेदित्यर्थः ॥ ५ ॥

रेखात्रयस्य शक्तिदेवताऽऽदिप्रतिपादनम्

याऽस्य प्रथमा रेखा सा गार्हपत्यश्चाकारो [1]रजः स्वात्मा क्रियाशक्तिर्ऋग्वेदः प्रातःसवनं महेश्वरो देवतेति ॥ ६ ॥

याऽस्य द्वितीया रेखा सा दक्षिणाग्निरुकारः [2]सत्त्वमन्तरात्मा चेच्छाशक्तिर्यजुर्वेदो माध्यंदिनं सवनं सदाशिवो देवतेति ॥ ७ ॥

[1] रजो भूर्लोकः स्वा—मु, क.   [2] सत्त्वमन्तरिक्षमन्त—मु.

याऽस्य तृतीया रेखा साऽऽहवनीयो मकार[1]स्तमः परमात्मा ज्ञानशक्तिः सामवेदस्तृतीयसवनं महादेवो देवतेति ॥ ८ ॥

"का शक्तिः? किं दैवतं?" इति प्रश्नोत्तरमाह—याऽस्येति। याऽस्य त्रिपुण्ड्रस्य प्रथमा रेखा सा इयं गार्हपत्यः, चशब्दः पृथिव्यग्न्याद्युपलक्षणार्थः, व्यष्टिसमष्टिरूपोऽयं अकारः विश्वविराडोत्रधिष्ठितः रजो रजोगुणविशिष्टः भूर्लोकः स्वस्याः प्रथमरेखायाः आत्मा स्वात्मा क्रियाशक्तिः चतुराननाधिष्ठिता ऋग्वेदः प्रातःसवनं महान् अपरिच्छिन्नश्चासावीश्वरश्चेति महेश्वरः आत्मा देवता। इतिशब्दः प्रथमरेखाप्रमाणसमाप्त्यर्थः ॥ ६ ॥ द्वितीयरेखेयत्तां विशदयति—याऽस्येति। अस्य त्रिपुण्ड्रस्य या द्वितीया रेखा सा एव दक्षिणाग्निः व्यष्टिसमष्टिरूपोऽयं उकारः तैजससूत्रानुज्ञात्रधिष्ठितः सत्त्वगुणः अन्तरात्मा विष्णुः चशब्दः त्रिष्टुबाद्युपलक्षणार्थः। इच्छाशक्तिः सत्यसङ्कल्परूपिणी यजुर्वेदो माध्यन्दिनं सवनं सदाशिवः द्वितीयरेखाया देवता। इतिशब्दः द्वितीयरेखाप्रमाणसमाप्त्यर्थः ॥ ७ ॥ तृतीयरेखेयत्तामाह—याऽस्येति। अस्य त्रिपुण्ड्रस्य या तृतीया रेखा सा एव आहवनीयो मकारः व्यष्ट्यादिविभागयुक्तः प्राज्ञेश्वरानुज्ञैकरसाधिष्ठितः तमोगुणविशिष्टः परमात्मा रुद्रः, "परमात्मा महेश्वरः" इति श्रुतेः, ज्ञानशक्तिः निरङ्कुशसर्वज्ञरूपिणी सामवेदो गीतिविशिष्टः तृतीयसवनं महांश्चासौ देवश्चेति महादेवः अस्य तृतीयरेखाया देवता। इतिशब्दः तृतीयरेखासमाप्त्यर्थः। एवं रेखात्रये गार्हपत्यादिसदाशिवान्तदृष्टिः कार्येत्यर्थः ॥ ८ ॥

### विद्याफलम्

त्रिपुण्ड्रविधिं भस्मना करोति यो विद्वान् ब्रह्मचारी गृही वानप्रस्थो यतिर्वा स महापातकोपपातकेभ्यः पूतो भवति स सर्वेषु

[1] स्तमो द्यौर्लोकः प—मु.

तीर्थेषु स्नातो भवति स सर्वान् वेदानधीतो भवति स सर्वान् देवान् ज्ञातो भवति स सततं सकलरुद्रमन्त्रजापी भवति स सकलभोगान् भुङ्क्ते देहं त्यक्त्वा शिवसायुज्यमेति न स पुनरावर्तते न स पुनरावर्तत इत्याह भगवान् कालाग्निरुद्रः ॥ ९ ॥

"कः कर्ता ?" इति प्रश्नोत्तरमाह—त्रिपुण्ड्रेति । य एवं विद्वान् मुनिः त्रिपुण्ड्रविधिं भस्मना करोति सोऽयं ब्रह्मचारी गृही वानप्रस्थो यतिर्वा स्वाश्रमाचारसंपन्नः त्रिपुण्ड्राधिकारी कर्ता भवति । "किं फलं च" इति प्रश्नोत्तरं सामान्यविशेषफलमप्याह—स इति । य एवं विद्वान् स महापातकोपपातकेभ्यः पूतो भवति—यद्येवमाचरणात् पुरा ब्रह्महत्याऽऽदिपातकी परदारप्रवेशाद्युपपातकी वा भवतु सः अपि तदा गुरुमुखादेवं त्रिपुण्ड्रविधिं ज्ञात्वा यथावत् करोति चेत् तेभ्यः पातकेभ्यः पूतः पावितो भवति सार्धत्रिकोटिसङ्ख्याविशिष्टसर्वेषु तीर्थेषु अस्नातोऽपि स्नातः स्नानफलभाक् भवति । तथा सर्वान् वेदानधीतो भवति सर्ववेदपारायणफलं चित्तशुद्ध्यात्मकं लभत इत्यर्थः । सर्वान् देवान् ज्ञातो भवति स सततं सकलरुद्रमन्त्रजापी भवति । स सकलभोगान् इहामुत्रप्रभवान् भुङ्क्ते इति यत्तदान्तरालिकफलं, मुख्यफलं तु वर्तमानदेहं देहाद्यभिमतिं वा त्यक्त्वा शिवेन सायुज्यं सयुग्भावं, यदि कदाचित् त्रिपुण्ड्रधारणमहिम्ना स्वातिरिक्ताविद्यापदतत्कार्यापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति सम्यग्ज्ञानी भवति तदा परममुख्यफलं विकलेबरकैवल्यं वा एति । ततः किं पुनरावर्तते इत्यत आह—नेति । "ब्रह्मभावं प्रपद्यैष यतिर्नावर्तते पुनः" इत्यादिश्रुत्यनुरोधेन न स पुनरावर्तते न स पुनरावर्तते इत्याह भगवान् कालाग्निरुद्रः । आवृत्तिरादरार्था ॥ ९ ॥

ग्रन्थाध्ययनफलम्

यस्त्वेतद्वाऽधीते सोऽप्येवमेव भवतीत्यों सत्यमित्युपनिषत् ॥ १० ॥

यस्त्वेवं कर्तुमशक्तः एतत्कालाग्निरुद्रोपनिषदं वाऽधीते सोऽप्येवमेव भविष्यति। किं तत्? यत् ओंकाराप्रविद्योततुर्यतुरीयं ब्रह्म तदेव सत्यं स्वातिरिक्तासदपह्नवसिद्धसन्मात्रं ब्रह्मैव भवति "सन्मात्रमसदन्यत्" इति श्रुतेः। इत्युपनिषच्छब्दः उपनिषत्समाप्त्यर्थः॥ १०॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
कालाग्निरुद्रव्याख्येयं लिखिता स्वात्मशुद्धये।
कालाग्निरुद्रोपनिषद्व्याख्याग्रन्थस्तु सप्ततिः॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे अष्टाविंशतिसङ्ख्यापूरकं कालाग्निरुद्रोपनिषद्विवरणं सम्पूर्णम्

---

# कैवल्योपनिषत्

## सह नाववतु—इति शान्तिः

ब्रह्मविद्याजिज्ञासा

अथाश्वलायनो भगवन्तं परमेष्ठिनं परिसमेत्योवाच—

अधीहि भगवन् ब्रह्मविद्यां वरिष्ठां सदा सद्भिः सेव्यमानां निगूढाम् ।
ययाऽचिरात् सर्वपापं व्यपोह्य परात् परं पुरुषमुपैति विद्वान् ॥ १ ॥

कैवल्योपनिषद्वेद्यं कैवल्यानन्दतुन्दिलम् ।
कैवल्यगिरिजाऽऽरामं स्वमात्रं कलयेऽन्वहम् ॥

इह खलु कृष्णयजुर्वेदान्तर्गतकैवल्यशाखायां विद्यात्रयं प्रकाशितम् । तत्र कर्मविद्याशीलिनां पुनरावृत्तिमच्चन्द्रलोकाप्तिरुक्ता । उपासनाविद्याशीलिनां कर्मोपासनासमुच्चयानुष्ठानादपुनरावृत्त्यर्हब्रह्मलोकाप्तिरभिहिता । मार्गद्वयविरक्तानां उक्तसाधनसम्पन्नानां कैवल्यावाप्तिसाधनतया ब्रह्मविद्यारूपेयं कैवल्योपनिषदारब्धा । वक्ष्यति चैवं "अधीहि भगवन् ब्रह्मविद्यां वरिष्ठां" इति, "तत्त्वमेव त्वमेव तत्", "परात् परं पुरुषमुपैति विद्वान्" इति च । एवमुक्तलक्षणलक्षितकैवल्योपनिषदोऽल्पग्रन्थतो विवरणमारभ्यते। आख्यायिका विद्यास्तुत्यर्था । अथ यथोक्तसाधनसम्पत्त्यनन्तरं अश्वलायनापत्यं आश्वलायनः मुनिः भगवन्तं

षड्गुणैश्वर्यसम्पन्नं परमस्थानस्थितितः परमेष्ठिनं शास्त्रोक्तविधिना परिसमेत्य श्रद्धाभक्तिपुरस्सरं उवाच। किमित्यत आह—अधीहीति। हे भगवन् यया विद्यया विद्वान् अचिरात् कृत्याकृत्यप्रभवपुण्यपापे व्यपोह्य सहेतू तयाऽपह्नवीकृत्य, आरोपापवादापेक्षया तदधिकरणं परं तस्मादपि परं निरधिकरणं निष्प्रतियोगिकपूर्णं पुरुषं स्वमात्रधिया उपैति तामेतां स्वातिरिक्तास्तितावुद्धेः निगूढां आवृतवद्भातां सदा सद्भिः ब्रह्मरतैः ब्रह्ममात्रपदप्रापकोपायतया संव्यमानां चतुष्षष्टिकलाविद्यातोऽपि वरिष्ठां स्वातिरिक्तकल्नाऽपह्नवसिद्धब्रह्ममात्रविद्यां अधीहि केवलकृपयोपदिशेत्यर्थः ॥ १ ॥

ब्रह्मविद्यासाधनं तत्फलं च

तस्मै स होवाच पितामहश्च श्रद्धाभक्तिध्यानयोगादवेहि ॥ २ ॥

न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः।

परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ॥ ३ ॥

वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः।

ते ब्रह्मलोकेषु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे ॥ ४ ॥

मुनिनैवं पृष्टो भगवानुवाच—तस्मा इति। य एवं पृष्टः सोऽयं जगत्पितरो दक्षादयः तेषां पिता पितामहः, चोऽप्यर्थः, सर्वलोकगुरुरपि यथोक्ताधिकारिणे तस्मै होवाच नोपेक्षां कृतवान्। यन्मया निरूप्यमाणं निर्विशेषं ब्रह्म यतो न सहसा साक्षात्कर्तुं शक्यं अतः तदुपायभूतश्रद्धाभक्तिध्यानयोगादवेहि जानीहीत्यर्थः। मदुक्तार्थास्तिक्यबुद्धिः श्रद्धा, मदुक्तार्थभजनं भक्तिः, विजातीयप्रत्ययतिरस्कारपूर्वकं सजातीयप्रत्ययप्रवाहीकरणं ध्यानं, मदुक्तार्थपर्यवसानधीः योगः, एवं साधनवता ब्रह्म ज्ञातुं शक्यमित्यर्थः ॥ २ ॥ यथा श्रद्धाभक्तिध्यानयोगादि ब्रह्मविद्यासाधनं तथा संन्यासोऽपीत्याह—न कर्मणेति। न श्रौतस्मार्तकर्मणा, न मनुष्यलोकसाधनप्रजया, न दैवमानुषवित्तेन चामृतत्वमस्ति, तेषां

धर्मप्रजाधनानां गतागतलोकभ्रमणहेतुत्वात् । केनामृतत्वसिद्धिः इत्यत आह—त्यागेनेति । एके परमार्थदर्शिनः श्रौतस्मार्तसर्वकर्मपरित्यागेन व्यक्ताव्यक्तविष्णुलिङ्गायमानपारमार्थिकसंन्यासेन ब्रह्ममात्रसम्यज्ज्ञानात्मना अमृतत्वं ब्रह्ममात्रावस्थितिलक्षणकैवल्यं आनशुः आनशिरे, प्राप्ता इत्यर्थः । कथं न आनशुरित्यत्र, कं सुखं तत्प्रतियोगि दुःखं अकं तद्यत्र न विद्यते स नाकः स्वर्गः तं परेण स्वर्गादिरुपरि । यद्वा—परेण स्वातिरिक्ताविद्यापदतत्कार्यादपि परं नाकं परमानन्दरूपम् । गुहायां बुद्धौ निहितं सत् प्रत्यगभेदेन यद्विभ्राजते यत्प्रत्यक्परविभागासहं ब्रह्ममात्रं तन्मात्रावस्थानयतनशीलाः यतयः स्वावशेषतया विशन्ति तन्मात्रतया अवशिष्यन्त इत्यर्थः ॥ ३ ॥ ये ब्रह्ममात्रपर्यवसन्नास्ते किंविशेषणविशिष्टा इत्यत्र—ईशाद्यष्टोत्तरशतोपनिषदो हि वेदान्तः, तन्निष्पन्नं "ब्रह्ममात्रमसन्न हि" इत्याद्यसत्प्रपञ्चापह्नवसिद्धब्रह्ममात्रानुवादिश्रुतिसिद्धविज्ञानं, तेन ब्रह्म स्वमात्रमिति यैरेवमर्थो निश्चितः ते वेदान्तविज्ञानसुनिश्चितार्थाः । स्वाज्ञदृष्टिप्रसक्तस्वाविद्यापदतत्कार्यापह्नवो हि संन्यासयोगः स्वातिरिक्तासंभवज्ञानं तस्मात् संन्यासयोगात् । यतयः—व्याख्यातम् । एवं विज्ञानवन्तो यतयः ते ब्रह्मैव भवन्तीत्यत्र न विवादः । यद्येवं ज्ञानरहिताः केचन यतयस्ते रागादिकालुष्याभावात् शुद्धं सत्त्वमन्तःकरणं येषां ते विशुद्धसत्त्वाः सन्तः ते ब्रह्मलोकेषु—उपासनातारतम्यतः तेषां भिन्नभिन्नतया भानात् बहुवचनं युज्यते—तेषु ब्रह्मलोकेषु परान्तकाले विराडपेक्षया परस्य ब्रह्मणोऽन्तकाले द्विपरार्धावसानकाले परामृतात् अव्याकृतोपाधितः परिमुच्यन्ति परिमुच्यन्ते सर्वतः सर्वे मुक्ता भवन्ति । यद्वा—ब्रह्मविद्वरीयांसो भूत्वा ब्रह्मविद्वरिष्ठताऽऽस्तये यतन्त इति यतयः । यैः ब्रह्म स्वावशेषतया लोक्यते ते ब्रह्मलोकाः ब्रह्मविद्वरिष्ठा इत्यर्थः । यद्वा—ब्रह्मैव लोका ब्रह्मलोकाः तेषु—पूजायां बहुवचनयोगात्—ब्रह्मलोकेषु ब्रह्ममात्रे परं स्वातिरिक्तं तत् कालयन्यपह्नवं करोतीति परान्तकालं तस्मिन् परान्तकाले ब्रह्मणि कार्यापेक्षया कारणस्य परत्वेनामृतत्वात् परामृतं कारणं तस्मात् कार्यकारणकलनारूपपरामृतात् परिमुच्यन्ति मुच्यन्ते । परामृता इति पाठान्तरं, स्वातिरिक्तपरत्वेन पराश्च ते अमृताश्चेति परामृताः

ब्रह्मविद्वरिष्ठाः । सर्वे पुरैव विमुक्ताः पुनः परिमुच्यन्ते इत्युपचर्यन्ते, "परामृता ब्रह्मविदां वरिष्ठाः" इति प्रश्नोक्तेः, ब्रह्मैव भवन्तीत्यर्थः ॥ ४ ॥

सविशेषब्रह्मध्यानपरिकरः

विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरःशरीरः ।
अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य ।
हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् ॥ ५ ॥
अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ।
[1]तदादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ॥ ६ ॥
उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥७॥

एवं निर्विशेषं ब्रह्म मन्दाधिकारिभिः प्रतिपत्तुं अशक्यमिति मत्वा तदनुकम्पया सविशेषं निरूपयन् देशासनादिविशेषमाह—विविक्त इति । विविक्तदेशे जनसंबाधरहितप्रदेशे । चशब्दादुचितकाले । शुचिः सन् सुखासने स्वस्तिकादौ स्थित्वा समग्रीवशिरःशरीरः ऋजुकायो भूत्वा करणग्रामनिरोधनं कुर्यात् । कथमेवमाश्रमिणां संभवतीत्यत आह—अत्याश्रमस्थ इति । व्रतिकामिवनिनो ह्याश्रमिणः तानतीत्य तुर्याश्रमे तिष्ठतीति अत्याश्रमस्थः, तस्य निर्विक्षेपतया करणग्रामनिग्रहक्षमत्वात् । सोऽयं परिव्राट् सकलेन्द्रियाणि निरुध्य स्वस्वव्यापृत्युपरमं कृत्वा येन परमार्थोपदेशः कृतः तं स्वगुरुं भक्त्या प्रणम्य अथ स्वहृत्पुण्डरीकं रागाद्यभावात् विरजं अशुद्ध्याज्ञानाभावात् विशुद्धं तन्मध्ये हृदयकमलान्तःप्रदेशे स्वाविद्याऽपायात् विशदं शोचनीयत्वातिरिक्तवैरल्यात् विशोकं आत्मानं ध्यात्वा विचिन्त्य मनननिदिध्यासने कृत्वा ॥ ५ ॥ अतो

[1] तमादि—मु.

वाङ्मनसवृत्तिभिरगोचरं अचिन्त्यं शब्दादिविषयाभावात् अव्यक्तं परिच्छेदत्रया-भावात् अनन्तरूपं नित्यमङ्गळरूपत्वात् शिवं बाह्यान्तःकलानाऽभावात् प्रशान्तं सन्मात्रत्वात् अमृतं स्वकल्पितबृहतोऽपि बृहत्त्वात् ब्रह्म स्वाज्ञदृष्टि-प्रसक्तस्वाविद्यापदहेतुत्वात् योनिम्। तथात्वे आद्यन्तवत्ता स्यादित्यत आह—तदिति। यत्कारणत्वेनाभिमतं तत् आदिमध्यान्तविहीनं, कार्यस्याद्यन्तवत्त्वेऽपि कार्यापाये कारणस्याकार्यकारणत्वेन ब्रह्ममात्रत्वात्। तन्मात्रत्वे हेतुमाह—एकमिति। बह्वपेक्षया एकस्याल्पत्वेन परिच्छेद्यता स्यादित्यत आह—विभुमिति। व्याप्यप्रसक्तौ व्यापिनमित्यर्थः। अत एव चिदानन्दं, सच्चिदानन्दमात्रत्वात्। तदेव रूपं, तदितररूपराहित्यात् अरूपं अत एव अद्भुतं, सर्वात्मत्वेऽपि तैः आत्मत्वेनाग्रहणं अद्भुतत्वम् ॥ ६ ॥ तेषां स्वामित्वेन भानात् तत् कथमित्यत्र—उमासहायं अर्धनारीश्वरत्वात्, विद्यासहायं वा। सर्वेषां स्वामित्वेन नियन्तृत्वात् परमेश्वरं प्रभुं त्रीणि सोमसूर्याग्निलोचनानि यस्य तं त्रिलोचनं, कण्ठे नीलं यस्य तं नीलकण्ठं, प्रसन्नवदनत्वात् प्रशान्तम्। यद्वा—प्रशमित-भक्तपटलस्वाज्ञानत्वात् प्रशान्तम्। एवमुक्तलक्षणलक्षितमीश्वरं मुनिः अयमह-मस्मीति सर्वभूतयोनिं तद्गतकारणताऽपाये समस्तसाक्षिं सर्वसाक्षिणं ध्यात्वा तद्ध्यानसंस्कृतचित्तवैशद्यात् साक्ष्यनिरूपितसाक्षिताऽपाये यच्चिन्मात्रमवशिष्यते तदेव स्वावशेषतया मुनिः गच्छति तमसः परस्तात् यद्विद्योतते तदेव भवतीत्यर्थः ॥ ७ ॥

### सर्वात्मब्रह्मदर्शनमेव परमसाधनम्

स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्।
स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः ॥ ८ ॥
स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्।
ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तये ॥ ९ ॥
सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि।
संपश्यन् ब्रह्म परमं याति नान्येन हेतुना ॥ १० ॥

ब्रह्मभावं प्राप्य मुनिः कृतकृत्यो भवतीत्युक्तं, तदतिरेकेण ब्रह्मादेः सत्त्वात् कृतकृत्यता कुतः? इत्याशङ्क्य स एव सर्वमित्याह—स इति। यो ब्रह्मीभूतः सोऽयं मुनिः ब्रह्मा चतुराननः स शिवः शूलपाणिः इन्द्रो वज्रधरः अक्षरः कूटस्थः, "कूटस्थोऽक्षर उच्यते" इति स्मृतेः, परमः उत्तमः, स्वे महिम्नि राजत इति स्वराट् स एव विष्णुः व्यापी हरिर्वा प्राणः पञ्चवृत्तिविशिष्टः स कालः कलयिता, यमो वा, अग्निश्चन्द्रमाश्च ॥ ८ ॥ किं बहुना—यद्भूतादि-कालत्रयपरिच्छिन्नं तत्तत्सर्वं स एवेत्यर्थः। यतस्तदतिरेकेणोक्तानुक्तकलना न किंचिदस्ति अतः सनातनं, ब्रह्मापि स मुनिरेवेत्यर्थः। यत एवंवित्सर्वात्मा ब्रह्ममात्रं वा भवति अतो ब्रह्मज्ञानादृते मृत्युतरणोपायो न कोऽप्यस्तीत्याह—ज्ञात्वेति। तं ज्ञात्वा स्वातिरिक्तमृत्युमर्त्येति कृतकृत्यो भवतीति वर्तमानप्रयोगतो ज्ञानसमकालमेव स्वातिरिक्तं प्रसित्वा विद्वान् ब्रह्मैव भवतीति द्योत्यते। स्वाज्ञान-प्रभवमृत्युतरणोपायस्वज्ञानं विना न किंचिदस्तीत्यर्थः, "नान्यः पन्था अयनाय विद्यते" इति श्रुतेः ॥ ९ ॥ कथमेवं मार्गान्तरसत्त्वात् इत्याशङ्क्य मार्गान्तर-स्याभ्युदयहेतुत्वेन निःश्रेयसमार्गास्पर्शित्वात् निःश्रेयसहेतुः ज्ञानादृते नास्तीति सोपायं तदेव दृढयति—सर्वेति। ब्रह्मादिस्तम्बान्तेषु सर्वभूतेषु प्रत्यग्रूपेण तिष्ठतीति सर्वभूतस्थमात्मानं प्रत्यगभेदेन पश्यन् पुनः स्वात्मनि सर्वाधिष्ठाने सर्वभूतानि कल्पितानीति विचिन्त्य यत्सर्वभूतारोपाधिकरणं एवमध्यारोपाप-वादमोहे अपह्नवतां गते तन्निरूपिताधिकरणताऽपाये निरधिकरणब्रह्ममात्र-तयोपबृंहणात् ब्रह्म परमं संपश्यन् तन्निष्प्रतियोगिकस्वमात्रमेवेत्यवलोकयन् तद्वेदनदर्शनसमकालं तदेव याति तन्मात्रतया अवशिष्यते। विनैवं सम्यग्ज्ञानं उपायान्तरेण नैति, उक्तं ह्येतत् "नान्यः पन्था विमुक्तये" इति ॥ १० ॥

प्रणवध्यानविधिः

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
[1]ज्ञाननिर्मथनाभ्यासात् पापं दहति पण्डितः ॥ ११ ॥

[1] ध्यान—अ, अ १, क.

यदा एवं बोधो न जायते तदा तदर्थमुपायमाह—आत्मानमिति। आत्मानं अन्तःकरणं अधरारणिं कृत्वा प्रणवं उत्तरारणिं च कृत्वा, सर्वापवादाधिष्ठानब्रह्मास्मीति वेदान्तविचारजं ज्ञानं, युक्तिभिरनुचिन्तनं तन्निर्मथनं अभ्यासः तस्मात् ज्ञाननिर्मथनाभ्यासात् पण्डितो विद्वान् स्वाज्ञानपाशं दहति भस्मीकरोतीत्यर्थः ॥ ११ ॥

परमात्मन एव जीवरूपेण संसारः

स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम् ।
[1]स्त्र्यन्नपानादिविचित्रभोगैः स एव जाग्रत् परितृप्तिमेति ॥ १२ ॥
स्वप्ने तु जीवः सुखदुःखभोक्ता स्वमायया कल्पित[2]विश्वलोके ।
सुषुप्तिकाले सकले विलीने तमोऽभिभूतः सुखरूपमेति ॥ १३ ॥
पुनश्च जन्मान्तरकर्मयोगात् स एव जीवः स्वपिति प्रबुद्धः ।
पुरत्रये क्रीडति यश्च जीवस्ततस्तु जातं सकलं विचित्रम् ॥
आधारमानन्दमखण्डबोधं यस्मिन् लयं याति पुरत्रयं च ॥ १४ ॥
एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ।
खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ॥ १५ ॥

ज्ञप्तिमात्रस्य कथं स्वाज्ञानपाश इत्यत आह—स एवेति। यः स्वातिरिक्तकलनाऽसहपरमात्मेति ख्यातः स एव निर्मायोऽपि स्वाज्ञानरूपया मायया परिमोहितात्मेव स्थूलादिशरीरमास्थाय सर्वत्रात्मात्मीयाभिमानतः सर्वव्यापारजातं करोति। किं च—स्त्र्यन्नपानादिविचित्रभोगैः स एव इन्द्रियैरिन्द्रियार्थग्रहणलक्षणजाग्रत्कलनापरितृप्तिमेति जाग्रदवस्थायां नानाविधसुखदुःखे आप्नोतीत्यर्थः ॥ १२ ॥ स्वप्नेऽपि सुखदुःखभोक्तृत्वं सुषुप्तौ तदभावं च स्पष्टयति—

[1] स्त्रियन्न—मु. [2] जीवलो—क.

स्वप्ने त्विति। जाग्रदवस्थायामिव स्वप्नेऽपि। तुशब्दोऽप्यर्थः। जीवः प्राणानां धारयिता विविधवासनावासितसुखदुःखभोक्ता सुख्यहं दुःख्यहं इति प्रत्ययवान्। सुखादिभोक्तृत्वस्य वास्तवत्वं वारयति—स्वाज्ञानरूपया मायया विकल्पित-विश्वलोके, वासनाप्रपञ्चेऽपि जागरणवत् सुखदुःखभोक्ता भवतीत्यर्थः। स्वानन्द-भोगावसरसुषुप्तिकाले तत्रत्यतमसि सकले स्वातिरिक्तमोहे विलीने सति स्वाज्ञान-तमोऽभिभूतः सन् सुखरूपं ब्रह्म एति ॥ १३ ॥ यः सुषुप्तः स एव स्वप्नं जागरणं वेतीत्याह—पुनश्चेति। पुराऽऽनन्दात्मस्वरूपं प्राप्य पुनश्च जन्मान्तर-कर्मयोगात् स एव जीवः स्वपिति सुषुप्तात् स्वप्नस्थानं गच्छति प्रबुद्धो जागरणं वा गच्छति। यश्च य एव जीवः जाग्रदाद्यवस्थात्रयावच्छिन्नपुरत्रये शरीरत्रये क्रीडति विहरति ततस्तस्मात् प्रत्यगभिन्नपरमात्मनः। तुशब्दोऽव-धारणार्थः। तत एव सकलं विचित्रं विविधनामरूपकर्मात्मकं विश्वं जातं रज्ज्वज्ञदृष्ट्या रज्जौ सर्पवद्विकल्पितम्। तदारोपापवादाधिकरणं किं ? ततः किं किं जायते ? कथमस्मिन् लीयते ? इत्यत आह—आधारमिति। यत्स्वातिरिक्ता-विद्यापदतत्कार्यारोपापवादाधारभूतं यद्ब्रह्म तन्निरतिशयानन्दरूपं अखण्डबोधं सच्चिदानन्दरसस्वभावं यस्मिन् पुरत्रयोपलक्षितस्वाविद्यापदतत्कार्यजातं लयं याति ॥ १४ ॥ चशब्दात् पुनरुत्पत्त्यधिकरणमप्येतदेवेत्याह—एतस्मादिति। एतस्मात् सर्वाधिकरणात् आत्मनः क्रियाशक्त्यात्मकः प्राणो रज्जुसर्पवत् जायते, तथा ज्ञानशक्त्यात्मकं मनः ज्ञानकर्माख्यानि सर्वेन्द्रियाणि। चशब्दात् देहादिकमपि। खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी इति पञ्च-भूतान्यप्येतस्मादेव जायन्ते ॥ १५ ॥

जीवेश्वरयोरभेदः

यत् परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत्।
सूक्ष्मात् सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् ॥ १६ ॥
जाग्रत्स्वप्नसुषुप्त्यादि प्रपञ्चं यत् प्रकाशते।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥ १७ ॥

त्रिषु धामसु यद्भोज्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥ १८ ॥
मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् ॥ १९ ॥

व्यष्टिसमष्ट्यारोपापवादाधिकरणयोः स्वाज्ञदृष्ट्या भेदप्रसक्तौ स्वज्ञदृष्ट्या तयोरैक्यमाचष्टे—यदिति । व्यष्ट्याधारस्त्वंपदार्थः । समष्ट्याधारस्तत्पदार्थः । यत् स्वातिरेकेण किंचिदस्तीति विश्वसनीयविश्वस्यायतनं अधिकरणं स्वाधिष्ठेयविश्वापेक्षया परं व्यतिरिक्तं बृहत् ब्रह्म सर्वात्मा सर्वप्रत्यक्त्वात् महत् त्रिविधपरिच्छेदरहितं सूक्ष्मात् धीवृत्तेरपि सूक्ष्मतरं वस्तुतः स्थूलसूक्ष्मपरिमाणविरळं नित्यं पारमार्थिकसद्रूपत्वात् । उक्तविशेषणविशिष्टं यत् समष्टिप्रपञ्चापवादाधिकरणं तत् ब्रह्म एव व्यष्टिप्रपञ्चापवादाधिकरणं त्वंपदार्थलक्ष्यं, यत् त्वंपदार्थलक्ष्यं तत् तत्पदार्थलक्ष्यमेव नान्यत्, "तत्त्वमसि", "अहं ब्रह्मास्मि", इत्यादिश्रुतेः । व्यष्ट्याद्यधिष्ठेयाभावे तत्सापेक्षाधिष्ठानत्वकलनाविरळं निरधिष्ठानं ब्रह्मैकमेवेत्यर्थः ॥ १६ ॥ ब्रह्मातिरेकेण जाग्रदादिप्रपञ्चसत्त्वात् कथं ब्रह्ममात्रसिद्धिः ? तज्ज्ञानेन किं फलं ? इत्यत आह—जाग्रदिति । जाग्रत्स्वप्नसुषुप्त्यादि—आदिशब्देन विश्वविराडोत्राद्यो गृह्यन्ते—तद्विशिष्टं प्रपञ्चं प्रपञ्चः स्वातिरेकेण नास्तीति यत् ब्रह्म प्रकाशते—स्वाज्ञदृष्टिप्रसक्तप्रपञ्चे सति तत्प्रकाशकं, तदभावे स्वयंप्रकाशमात्रमवशिष्यते । यदेवं सिद्धं तद्ब्रह्माहमिति ज्ञात्वा तत्स्वमात्रमिति ज्ञानसमकालं स्वातिरिक्तास्तितामोहप्रभवसर्वबन्धैः प्रमुच्यते ॥ १७ ॥ भोज्यादिकलनायां सत्यां कथं बन्धाद्विमुक्तः स्वमात्रमवशिष्यत इत्यत आह—त्रिष्विति । स्वाज्ञदृष्टिप्रसक्तत्रिषु धामसु जाग्रदादिस्थानेषु स्थूलप्रविभक्तानन्दरूपेण यत् प्रसिद्धं भोज्यं विश्वतैजसादिः भोक्ता स्थूलप्रविभक्तादिर्भोगः—चशब्दादर्धिदवादिविभागोऽपि गृह्यते—तेभ्यः साक्ष्येभ्यः विलक्षणः साक्षी सर्वस्य साक्षी, "ततः सर्वस्मादन्यो विलक्षणः" इति श्रुतेः ।

साक्ष्यसापेक्षसाक्षिताऽपाये पुरा योऽहंप्रत्ययगोचरः साक्षी सोऽहं चिन्मात्रः चिदेकरसत्वात् सदाशिवः नित्यकल्याणकैवल्यरूपत्वात् ॥ १८ ॥ स्वाज्ञदृष्टिप्रसक्तप्रपञ्चवैलक्षण्यमुक्त्वा मूलबीजांशयोगतः प्रपञ्चकारणमप्यहमेवेत्याह—मय्येवेति। विश्वारोपापवादाधिकरणे मय्येव सकलं स्वाविद्यापदतत्कार्यजातं जातं प्रतिष्ठितम् लयं च याति। यदेवं सकलकारणत्वेन सिद्धं स्वकार्यनिरूपितकारणताऽपाये तद्ब्रह्म निष्प्रतियोगिकाद्वितीयमस्मि ॥ १९ ॥

अभेदानुभवप्रकाशः

अणोरणीयानहमेव तद्वन्महानहं विश्वमिदं विचित्रम्।
पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि ॥ २० ॥
अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः।
अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित् सदाहम् ॥
वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ २२ ॥
न पुण्यपापे मम नास्ति नाशो न जन्म देहेन्द्रियबुद्धिरस्ति।
न भूमिरापो मम वह्निरस्ति न चानिलो मेऽस्ति न चाम्बरं च ॥

स्वविज्ञानानुरूपं स्वानुभूतिं प्रकटयति—अणोरिति। यद्वदहं सर्वकारणं तद्वत् अणोः बुद्ध्यादेः तूलातत्कार्यादपि अणीयान् तथा महतो मूलाविद्याविजृम्भितस्वाविद्यापदतत्कार्यजातादपि महान् अणीयस्त्वमहत्त्वमविद्याद्वयसापेक्षं, "अणुत्वं बुद्धिनिष्ठं स्यान्महत्त्वं खादिनिष्ठितम्" इति स्मृतेः। अणुमहत्परिणतकार्यकारणकलनाऽन्वितं इदं विश्वं नानाविचित्रशोभितं अहमेवेत्यर्थः, "मद्व्यतिरिक्तमणुमात्रं न विद्यते" इति श्रुतेः। पुरातनः चिरन्तनोऽहं पुरुषोऽहं निष्प्रतियोगिकपूर्णरूपत्वात्। स्वाज्ञदृष्ट्या अहमीशः सर्वनियन्तृत्वात्। आदित्यात्मना हिरण्मयोऽहं ज्योतिर्मयत्वात्। शिवरूपमस्मि नित्यमङ्गळस्वरूपत्वात् ॥ २० ॥ करणग्रामाभावेऽपि स्वस्य सर्वज्ञतामाह—अपाणीति।

पाणिपादचक्षुःश्रोत्रादिकरणग्रामैरस्पर्शात् अपाणिपादोऽहमचिन्त्यशक्तिः स्वाह-दुर्बोधशक्तित्वात् । एवंभूतोऽपि जवनो गृहीतेत्यर्थः । पश्याम्यचक्षुः स शृणोम्यकर्णः । स्वातिरिक्तं नेति अहं विजानामि । विविक्तरूपोऽहं, बुद्ध्याद्यतिरिक्तत्वात् । मम आनन्दात्मनो वेत्ता न चास्ति, सदा चिदहमस्मीत्यर्थः ॥ २१ ॥ इदानीं स्वस्य वेदशास्त्रप्रतिपाद्यत्वं सर्वविकारास्पृष्टत्वं च दर्शयति—वेदैरिति । ऋगादिभिः अनेकशाखामण्डितैः वेदैरहमेव वेद्यः वेदान्तैकवेद्यत्वात् । व्यासभगवत्पादादिरूपेण वेदान्तकृत् सूत्रभाष्यादिकृत्त्वात् । कृत्स्नवेदविदेव चाहम् । परमार्थदर्शित्वख्यापकः चशब्दः ॥ २२ ॥ किं च पुण्यपापे मम न स्तः । मम नास्ति नाशः, सन्मात्रत्वात् । न जन्मदेहेन्द्रिय-बुद्धिरस्ति जनिमृतिमद्देहेन्द्रियादिविरळप्रत्यग्रूपत्वात् । न भूमिरापः इति पञ्चभूत-तत्कार्यजातमस्ति नास्तीति विभ्रमोऽपि न ममास्तीत्यर्थः ॥ २३ ॥

अभेदानुभूतिफलम्

एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ।
समस्तसाक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् ॥ २४ ॥

एवंविदः परमफलमाह—एवमिति । यत्रानात्मप्रपञ्चोऽपह्नवतां गतः तत् परमात्मरूपं स्वात्ममात्रावशेषतया निरूपणात्, स्वाज्ञविकल्पितसर्वप्राणिगुहाशयं सर्वप्रत्यगभिन्नत्वात्, निष्कळं प्राणादिनामान्तकलाऽपह्नवसिद्धत्वात्, अद्वितीयं निष्प्रतियोगिकत्वात्, समस्तसाक्षिं समस्तसाक्षिणं आत्मानमेव सदसद्विहीनं व्यक्ताव्यक्तप्रपञ्चकलनाविरळं शुद्धं शुद्धचैतन्यं एवं अहमस्मीति विदित्वा तद्वेदनसमकालं परमात्मरूपं प्रयाति तन्मात्रतयाऽवशिष्यते ॥ २४ ॥

शतरुद्रीयजपविधिः

यः शतरुद्रियमधीते सोऽग्निपूतो भवति [1]स्वर्णस्तेयात् पूतो भवति सुरापानात् पूतो भवति ब्रह्महत्यात् पूतो भवति कृत्याकृत्यात्

[1] "स वायुपूतो भवति स आत्मपूतो भवति" इत्यधिकः—मु.

पूतो भवति तस्मादविमुक्तमाश्रितो भवत्यत्याश्रमी सर्वदा सकृद्वा जपेत् ॥ २५ ॥

अनेन ज्ञानमाप्नोति संसारार्णवनाशनम् ।
तस्मादेवं विदित्वैनं कैवल्यं फलमश्नुते कैवल्यं फलमश्नुत इति ॥ २६ ॥

एवं परमात्मावगतिविरळस्य तदवगत्यर्थमुपायमाह—य इति । यः अनुत्पन्नसाक्षात्कारो मुमुक्षुः "नमस्ते रुद्र" इति शतरुद्रीयं रुद्राध्यायं अधीते यथाशक्ति नित्यं पठति । यद्वा—पञ्चरुद्रमधीते । सोऽयं श्रौतस्मार्तकर्महेत्वग्निवत् पूतो भवति स्वर्णस्तेयात् पूतो भवति सुरापानात् पूतो भवति ब्रह्महत्यात् पूतो भवति । शास्त्रीयं कृत्यं अशास्त्रीयं अकृत्यं तस्मादपि पूतो भवति । तस्मात् एवं शतरुद्रीयाध्ययनात् अविमुक्तं काशीक्षेत्रं भ्रूमध्यगतज्योतिर्लिङ्गमविमुक्तं वा आश्रितो भवति । अत्याश्रमी संन्यासी सर्वदा सकृद्वा । वाशब्दोऽधिकारिविकल्पार्थः ॥ २५ ॥ एवं शतरुद्रपठनादुत्पन्नचित्तशुद्धितः कैवल्यप्रापकज्ञानद्वारा कैवल्यमाप्नोतीत्याह—अनेनेति । अनेन शतरुद्रीयजपेन अहं ब्रह्मास्मीति संसारार्णवनाशनं शोषणं ब्रह्ममात्रज्ञानमाप्नोति । यस्मादेवं तस्मादेवमेनं परमात्मानं स्वमात्रमिति विदित्वा तद्वेदनसमकालं विकळेबरकैवल्यं फलमश्नुते प्राप्नोति । अभ्यासेतिशब्दौ शास्त्रपरिसमाप्त्यर्थौ ॥ २६ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं कैवल्योपनिषत्स्फुटम् ॥
कैवल्योपनिषद्व्याख्याग्रन्थस्तु द्विशतं स्मृतः ॥

इतीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे द्वादशसङ्ख्यापूरकं
कैवल्योपनिषद्विवरणं सम्पूर्णम्

# गणपत्युपनिषत्

**भद्रं कर्णेभिः—इति शान्तिः**

गणपतिस्तुतिः

ॐ लं नमस्ते गणपतये ॥ १ ॥

त्वमेव प्रत्यक्षं तत्त्वमसि । त्वमेव केवलं कर्ताऽसि । त्वमेव केवलं धर्ताऽसि । त्वमेव केवलं हर्ताऽसि । त्वमेव सर्वं खल्विदं ब्रह्मासि । त्वं साक्षादात्माऽसि ॥ २ ॥

नित्यमृतं वच्मि । सत्यं वच्मि ॥ ३ ॥

यन्नत्वा मुनयः सर्वे निर्विघ्नं यान्ति तत्पदम् ।
गणेशोपनिषद्वेद्यं तद्ब्रह्मैवास्मि सर्वगम् ॥

इह खलु अथर्वणवेदप्रविभक्तेयं गणपत्युपनिषत् सर्वात्मभावप्रकटनव्यग्रा सर्ववर्जितचिन्मात्रपर्यवसन्ना विजृम्भते । अस्याः सङ्क्षेपतो विवरणमारभ्यते । परमदयावतीयं श्रुतिः स्वाङ्गलोकस्वाज्ञानविघ्नशान्तये स्वज्ञानसिद्धये च गणपतिं नत्वा स्तौति—ओमिति । यद्रूपं ॐ लं ओङ्कारलक्ष्यतुर्यरूपं ते तुभ्यं गणपतये नमोऽस्तु, आवयोरैक्यमस्त्वित्यर्थः । यद्वा—लं इति मूलाधारबीजं, मूलाधारस्य गणपतिसदनत्वात् । यदोङ्कारार्थगणपतितत्त्वं लकारवाच्यपार्थिवांशमूलाधारे

विभाति तस्मै लकारवाच्यमूलाधारसदनाय गणपतये नमोऽस्त्विति ॥ १ ॥ नमस्कृत्य महावाक्यार्थप्रत्यगभिन्नब्रह्मत्वेन स्तौति—त्वमिति । त्वमेव श्रोत्रादिप्रत्यक्षं प्रतिकरणं तत्तद्विषयप्रवृत्तिनिवृत्तिनिमित्ततया यच्चैतन्यं वर्तते तत्त्वमसि सर्वनियन्ताऽसीत्यर्थः । प्रकृतिमधिष्ठाय जीवरूपेण त्वमेव केवलं विष्ण्वात्मना कर्ताऽसि, अधिष्ठानात्मना त्वमेव केवलं धर्ताऽसि, रुद्रात्मना त्वमेव केवलं हर्ताऽसि, त्वमेव सर्वं खल्विदं ब्रह्मासि यदिदं जगत्सर्वं परिदृश्यमानं ब्रह्मैव खलु तत्त्वमेव ब्रह्मासि, सर्वप्रत्यग्रूपेण त्वं साक्षादात्माऽसि ॥ २ ॥ व्यावहारिकसत्यरूपेण त्वामेव नित्यं ऋतं वच्मि, पारमार्थिकधिया सत्यं वच्मि ॥ ३ ॥

गणपतिं प्रति प्रार्थना

अव त्वं माम् । अव वक्तारम् । अव श्रोतारम् । अव दातारम् । अव धातारम् । अवानूचानमव शिष्यम् ॥ अव पुरस्तात्तात् । अव दक्षिणात्तात् । अव पश्चात्तात् । अवोत्तरात्तात् । अव चोर्ध्वात्तात् । अवाधरात्तात् । सर्वतो मां पाहि पाहि समन्तात् ॥ ४ ॥

परापरब्रह्मभावमापन्नगणपते त्वं मां अव । शिष्येभ्यो वक्तारं त्वद्विद्यादातारं मां अव मत्तः श्रोतारं धातारं धारयितारं अनूचानसन्ततिभवं शिष्यं अव, आचार्यशिष्यौ सदा रक्षेत्यर्थः । हे वैराजभावमापन्नगणपते पूर्वाग्नेयादिदिक्षु विदिक्षूर्ध्वाधःप्रदेशेऽपि मयाऽऽत्तान् स्वाज्ञानतत्कार्यान्मां मोचयित्वा तत्समन्तान् त्वयाऽऽत्तवैभवात् सर्वतो मां पाहि पाहि रक्ष रक्षेत्यर्थः ॥ ४ ॥

गणपतेः सर्वात्मतया स्तुतिः

त्वं वाङ्मयस्त्वं चिन्मयः । त्वमानन्दमयस्त्वं ब्रह्ममयः । त्वं सच्चिदानन्दाद्वितीयोऽसि । त्वं प्रत्यक्षं ब्रह्मासि । त्वं ज्ञानमयो विज्ञानमयोऽसि ॥ ५ ॥

सर्वं जगदिदं त्वत्तो जायते। सर्वं जगदिदं त्वत्तस्तिष्ठति। सर्वं जगदिदं त्वयि [1]लयमेष्यति। सर्वं जगदिदं त्वयि प्रत्येति। त्वं भूमिरापोऽनलोऽनिलो नभः। त्वं चत्वारि वाक्परिमिता पदानि। त्वं गुणत्रयातीतः। त्वं देहत्रयातीतः। त्वं कालत्रयातीतः। त्वं मूलाधारे स्थितोऽसि नित्यम्। त्वं शक्तित्रयात्मकः। त्वां योगिनो ध्यायन्ति नित्यम्। त्वं ब्रह्मा त्वं विष्णुस्त्वं रुद्रस्त्वमिन्द्रस्त्वमग्निस्त्वं वायुस्त्वं सूर्यस्त्वं चन्द्रमास्त्वं ब्रह्म भूर्भुवः सुवरोम्॥ ६॥

एवं त्वत्पालनशक्तिर्मे कुत इत्यत आह—त्वं इत्यादिना। ओङ्कारतदर्थपरापरब्रह्मात्मना त्वं वाङ्मयः। "श्रोत्रस्य श्रोत्रं" इत्यादिश्रुतिसिद्धप्रत्यक्षप्रवृत्तिनिमित्तेश्वरात्मना त्वं प्रत्यक्षं ब्रह्मासि। त्वं ज्ञानमयो विज्ञानमयोऽसि ज्ञानविज्ञानसम्यज्ज्ञानतत्त्वज्ञानभासकज्ञप्तिमात्रोऽसीत्यर्थः॥ ५॥ ब्रह्मविष्णुरुद्रात्मना जगदुत्पत्तिस्थितिभङ्गकारणं त्वमेवेत्याह—सर्वमिति। पुनर्व्युत्थानतया सरूपविलयं भजति। सर्वं जगदिदं त्वयि प्रत्येति तत्त्वज्ञदृष्ट्या विरूपविलयं भजति। स्वाज्ञदृष्टिविकल्पितभूरादिपञ्चभूतानि परापश्यन्तीमध्यमावैखरीभेदेन तन्निष्पन्नशब्दजालमपि त्वमेवेत्याह—त्वमिति। स्वज्ञस्वाज्ञदृष्टिभ्यां त्वं तमआदिगुणत्रयातीतः। त्वं स्थूलादिदेहत्रयातीतः। त्वं भूतादिकालत्रयातीतः। त्वं व्यष्टिसमष्ट्यात्मकप्रपञ्चस्य चतुर्दलात्मके मूलाधारे स्थितोऽसि नित्यम्। अजडक्रियाज्ञानेच्छाभेदेन त्वं शक्तित्रयात्मकः। ब्रह्मैवाहमस्मीति त्वां योगिनो ध्यायन्ति नित्यम्। ब्रह्मादिव्याहृत्यन्तरूपस्त्वमेवेत्याह—त्वमिति। सृष्टिकर्ता ब्रह्मा स्थितिकर्ता विष्णुः संहारकर्ता रुद्रः। इन्द्राग्निवायुग्रहणं अष्टदिक्पालकोपलक्षणार्थम्। जगच्चक्षुः सूर्यः जगदाप्यायनकरः चन्द्रः। एवंरूपेण सर्वत्रोपबृंहणात् ब्रह्म। तव व्याहृतित्रयात्मकोङ्कारस्वरूपेण सर्वात्मकत्वं सिद्धमित्यर्थः॥ ६॥

[1] लयिष्यति—अ १, अ २, उ १.

गणपतिमनुः

[1]गणादीन् पूर्वमुच्चार्य [2]वर्णादिं तदनन्तरम् ।
[3]अनुस्वारः परतरः अर्धेन्दुलसितं तथा ॥
तारेण युक्तमेतद्देव मनुस्वरूपम् ॥ ७ ॥

गकारः पूर्वरूपम् । अकारो मध्यमरूपम् । अनुस्वारश्चान्त्यरूपम् । बिन्दुरुत्तररूपम् । नादः संधानम् । संहिता संधिः । सैषा गाणेशी विद्या ॥ ८ ॥

गणक ऋषिः । नृचद्गायत्री छन्दः । श्रीमहागणपतिर्देवता । [4]ॐ गणपतये नमः ॥ ९ ॥

गणपत्यष्टाक्षरमनुं साङ्गं तद्गायत्रीं तद्ध्यानं तत्फलं चाह—गणादीनिति । आदावोङ्कारमुच्चार्य ततो गणादीन् गणादिगणपतिमनुवर्णादिं तदनन्तरमनुस्वारः ॥ ७ ॥ गकारः पूर्वरूपं, तदुपरिविद्योतमान अकारो मध्यमरूपं, अनुस्वारश्चान्त्यरूपं, अर्धमात्रात्मको बिन्दुरुत्तररूपं, दीर्घोच्चारणप्रभवनादः संधानं कृत्स्नोच्चारणरूपा संहिता संधिः । यवंविधा भवति सैषा गाणेशी विद्या ॥ ८ ॥ तस्या ऋष्यादय उच्यन्ते—श्रीगणेशमहामन्त्रस्य गणक ऋषिः । गं बीजम् । नमः शक्तिः । गणपतय इति कीलकम् । गां इत्यादिषडङ्गम् । एकदन्तं इति ध्यानम् । लं इत्यादिपञ्चपूजा । ॐ गणपतये नमः इति मूलमन्त्रः ततो हृदयादिध्यानपञ्चपूजा ॥ ९ ॥

गणपतिगायत्री

एकदन्ताय विद्महे वक्रतुण्डाय धीमहि । तन्नो दन्तिः प्रचोदयात् ॥ १० ॥

[1] गणादं—मु.  [2] वर्णादीन् त—अ २. वर्णानुस्तद—उ १.
[3] एतच्छ्लोकार्थो नातिस्पष्टः । व्याख्या तु यथाऽऽकरं धृता.  [4] ॐ गंग—अ १, क.

ततस्तद्गायत्री—एकदन्तायेति ॥ १० ॥

गणपतिध्यानम्

एकदन्तं चतुर्हस्तं पाशमङ्कुशधारिणम् ।
अभयं वरदं हस्तैर्बिभ्राणं मूषकध्वजम् ॥ ११ ॥
रक्तलम्बोदरं शूर्पसुकर्णं रक्तवाससम् ।
रक्तगन्धानुलिप्ताङ्गं रक्तपुष्पैः सुपूजितम् ॥ १२ ॥
भक्तानुकम्पिनं देवं जगत्कारण[1]मच्युतम् ।
आविर्भूतं च सृष्ट्यादौ प्रकृतेः पुरुषात् परम् ॥ १३ ॥
एवं ध्यायति यो नित्यं स योगी योगिनां वरः ॥ १४ ॥

ध्यानं तु—एकदन्तमिति ॥ ११—१२ ॥ प्राण्यदृष्टवशात् एवं आविर्भूतं च । मायेश्वरकलनातः परं विलक्षणमित्यर्थः ॥ १३ ॥ एवं ध्यानतः एवमिति । सविशेषगणपतिध्यानयोगिनां निर्विशेषगणपतिध्यायी वरो भवति ॥ १४ ॥

गणपतिमालामन्त्रः

नमो व्रातपतये नमो गणपतये नमः प्रमथपतये नमस्तेऽस्तु लम्बोदरायैकदन्ताय विघ्नविनाशिने शिवसुताय वरदमूर्तये नमोनमः ॥ १५ ॥

गणपतिमालामन्त्रमाह—नम इति । नमः ब्रह्मादिदेवतानां व्रातपतये मनुष्याणां गणपतये नमः । एवं गणपतिमन्त्रगायत्रीमालामन्त्रपुरश्चरणां यथावयः करोति तस्य चित्तशुद्धिर्जायते, ततोऽयं गणेशविद्याविचारप्रादुर्भूतज्ञान-विज्ञानसम्यग्ज्ञानसमकालप्राप्यकैवल्यभाग्भवतीति प्रकरणार्थः ॥ १५ ॥

[1] मुत्तमम्—अ १, अ २.

विद्यापठनफलम्

एतदथर्वशिरो योऽधीते स ब्रह्मभूयाय कल्पते । स सर्वतः सुखमेधते । स सर्वविघ्नैर्न बाध्यते । स पञ्चमहापातकोपपातकात् प्रमुच्यते । सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायंप्रातः प्रयुंजानोऽपापो भवति । धर्मार्थकाममोक्षं च विन्दति ॥ १६ ॥

विद्यापठनवेदनफलमाह—एतदिति । अर्थानुसन्धानपुरस्सरं एतदथर्वशिरो योऽधीते स ब्रह्मभूयाय कल्पते ब्रह्मीभूतो भवति । स सर्वतः सुखमेधते अखण्डानन्दमेति । स सर्वविघ्नैर्न बाध्यते निर्विघ्नतया स्वपदं याति । पञ्चमहापातकघ्नमिदमेवेत्याह—स इति । कालत्रयाध्ययनफलं सर्वपापनिरसनपूर्वकं पुरुषार्थचतुष्टयप्रदमित्याह—सायमित्यादिना ॥ १६–१७ ॥

विद्यासंप्रदाननियमः

इदमथर्वशीर्षमशिष्याय न देयम् । यो यदि मोहाद्दास्यति स पापीयान् भवति ॥ १७ ॥

काम्यप्रयोगाः

सहस्रावर्तनाद्यं यं काममधीते तं तमनेन साधयेत् । अनेन गणपतिमभिषिञ्चति स वाग्मी भवति । चतुर्थ्यामनश्नन् जपति स विद्यावान् भवति । इत्यथर्वणवाक्यं ब्रह्माद्याचरणं विद्यात् न बिभेति कदाचनेति । यो दूर्वाङ्कुरैर्यजति स वैश्रवणोपमो भवति । यो लाजैर्यजति स यशोवान् भवति स मेधावान् भवति । यो मोदकसहस्रेण

यजति स वाञ्छितफलमवाप्नोति । यः साज्यसमिद्भिर्यजति स सर्वं लभते स सर्वं लभते । अष्टौ ब्राह्मणान् सम्यग्ग्राहयित्वा सूर्यवर्चस्वी भवति । सूर्यग्रहणे महानद्यां प्रतिमासंनिधौ वा जप्त्वा स सिद्धमन्त्रो भवति । महाविघ्नात् प्रमुच्यते । महादोषात् प्रमुच्यते ॥ १८ ॥

यदनधिकारिणे न देयं तत् सर्वकामार्थदमित्याह—सहस्रेति । अनेन अनयोपनिषदा वाग्मी भवति वाचालको भवति । देहपातपर्यन्ताभ्यासान्निर्भय-ब्रह्मभावमेति । धनार्थी यो दूर्वाङ्कुरैः यजति स वैश्रवणोपमो भवति । यशोमेधाऽर्थी यो लाजैर्यजति स यशोवान भवति ॥ १८ ॥

विद्यावेदनफलम्

स सर्वविद्भवति स सर्वविद्भवति य एवं वेदेत्युपनिषत् ॥ १९ ॥

ब्राह्मे मुहूर्ते उत्थाय स्वाश्रमाचारसंपन्नो भूत्वा अर्थानुसन्धानतया गणेशो-पनिषदं सदा अनुसंदधाति मुनिः यद्गणपतिविद्यानिष्पन्नं गणपतित्वं सर्वापह्नव-सिद्धनिष्प्रतियोगिकब्रह्ममात्रमिति य एवं वेद स स्वातिरेकेण सर्वासंभवं जानातीति स सर्वविद्भवति ब्रह्मैव भवतीत्यर्थः । इत्युपनिषच्छब्दः गणपत्युपनिषत्परि-समाप्त्यर्थः ॥ १९ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
गणेशोपनिषद्व्याख्या लिखिता स्वात्मगोचरा ।
गणेशविवृतिग्रन्थः सप्ताशीतिरितीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छाखविवरणे एकोननवतिसङ्ख्यापूरकं
गणपत्युपनिषद्विवरणं सम्पूर्णम्

# जाबाल्युपनिषत्

## आप्यायन्तु—इति शान्तिः

### ईश्वरोपासनं परमतत्त्वज्ञानसाधनम्

अथ हैनं भगवन्तं जाबालिं पैप्पलादिः पप्रच्छ भगवन् मे ब्रूहि परमतत्त्वरहस्यम् ॥ १ ॥

किं तत्त्वं को जीवः कः पशुः क ईशः को मोक्षोपाय इति ॥ २ ॥

स तं होवाच साधु पृष्टं सर्वं निवेदयामि यदाज्ञातमिति ॥ ३ ॥

पुनः स तमुवाच कुतस्त्वया ज्ञातमिति ॥ ४ ॥

पुनः स तमुवाच षडाननादिति ॥ ५ ॥

पुनः स तमुवाच तेनाथ कुतो ज्ञातमिति ॥ ६ ॥

पुनः स तमुवाच तेनेशानादिति ॥ ७ ॥

पुनः स तमुवाच कथं तस्मात्तेन ज्ञातमिति ॥ ८ ॥

पुनः स तमुवाच तदुपासनादिति ॥ ९ ॥

जाबाल्युपनिषद्वेद्यपरतत्त्वस्वरूपकम् ।
पारमैश्वर्यविभवरामचन्द्रपदं भजे ॥

इह खलु सामवेदप्रविभक्तेयं जाबाल्युपनिषत् ज्ञानसाधनभस्मधारण-विधिप्रकटनव्यग्रा परापरतत्त्वपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो

विवरणमारभ्यते। पैप्पलादिजाबालिप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था। आख्यायिकामवतारयति—**अथेति**। **पप्रच्छ किमियत्र—भगवन्निति** ॥ १ ॥ पैप्पलादिना पृष्टो जाबालिः निरुत्तरेण तूष्णीमास। "यतो वाचो निवर्तन्ते" इति श्रुतिसिद्धपरमतत्त्वरहस्यब्रह्मणो निष्प्रतियोगिकाद्वैतत्वेन निरुत्तरमहामौनरूपत्वात् ब्रह्म तथाविधमित्यवगम्य तदवगत्युपायतया प्रश्नान्तरं पृच्छति—**किं इति** ॥ २ ॥ प्रश्नोत्तरमाह—**स तं होवाचेति**। किमिति—**साध्विति**। त्वया **साधु पृष्टं तत् सर्वं** निवेदयामीति। एवं त्वया **यदाज्ञातमिति** ॥ ३ ॥ निर्विशेषब्रह्मणः स्वभेदेन ज्ञातुमशक्यमिति प्रकटनायावचनेन **पुनः स तमुवाच** ॥ ४–१० ॥

पशुपशुपतितत्त्वनिवेदनम्

पुनः स तमुवाच भगवन् कृपया मे सरहस्यं सर्वं निवेदयेति ॥१०॥

स तेन पृष्टः सर्वं निवेदयामास तत्त्वम्। पशुपतिरहंकाराविष्टः संसारी जीवः। स एव पशुः। सर्वज्ञः पञ्चकृत्यसंपन्नः सर्वेश्वर ईशः पशुपतिः ॥ ११ ॥

के पशव इति पुनः स तमुवाच ॥ १२ ॥

जीवाः पशव उक्ताः। तत्पतित्वात् पशुपतिः ॥ १३ ॥

स पुनस्तं होवाच कथं जीवाः पशव इति। कथं तत्पतिरिति ॥१४॥

स तमुवाच यथा तृणाशिनो विवेकहीनाः परप्रेष्याः कृष्यादिकर्मसु नियुक्ताः सकलदुःखसहाः स्वस्वामिबध्यमाना गवादयः पशवः। यथा तत्स्वामिन इव सर्वज्ञ ईशः पशुपतिः ॥ १५ ॥

**सोऽयं** जाबालिः **तेन** पैप्पलादिना **पृष्टः** सन् यद्वक्तव्यं **तत्त्वं तत् सर्वं निवेदयामास**। किमिति निवेदयामासेत्यत आह—**पशुपतिरिति**। स्वाज्ञानपाशेन

बध्यन्त इति पशवः, तेषां पतिः स्वामी पशुपतिः परमेश्वरः निरावृताजडक्रिया-ज्ञानेच्छासंपन्नोऽपि स्वाज्ञविकल्पिताहंकाराविष्ट इवाविष्टो यः संसारी जीव इति विख्यातः। स एव हि पशुरुच्यते। ईशस्यैव जीववद्भानात् शिवजीवयोरभेदः सिद्धः इत्यत्र—"जीवः शिवः शिवो जीवः स जीवः केवलः शिवः" इति, "तत्त्वमसि", "अहं ब्रह्मास्मि", इत्यादिश्रुतेः, "कारणं कार्यमुत्पाद्य कार्यतामिव गच्छति" इति वार्तिककारोक्तेश्च। वस्तुतोऽयमीशः स्वातिरेकेण न हि सर्वमस्तीति जानातीति सर्वज्ञः "यः सर्वज्ञः सर्ववित्" इति श्रुतेः। स्वाज्ञदृष्टिविकल्पितपञ्चब्रह्मात्मना सृष्ट्यादिपञ्चकृत्यसम्पन्नः सर्वश्चासावीश्वर इति सर्वेश्वरः परमार्थदृष्ट्या स्वावशेषेण अवस्थातुं य ईष्टे स ईश एव पशुपतिः परमात्मेत्यर्थः ॥ ११ ॥ पुनः पृच्छति—के पशव इति ॥ १२–१४ ॥ पशूनां लक्षणमाह—यथेति ॥ १५–१७ ॥

### विभूतिधारणस्य ज्ञानोपायत्वम्

तज्ज्ञानं केनोपायेन जायते ॥ १६ ॥

पुनः स तमुवाच विभूतिधारणादेव ॥ १७ ॥

### शांभवव्रतम्

तत्प्रकारः कथमिति। कुत्रकुत्र धार्यम् ॥ १८ ॥

पुनः स तमुवाच सद्योजातादिपञ्चब्रह्ममन्त्रैर्भस्म संगृह्याग्निरिति भस्मेत्यनेनाभिमन्त्र्य मानस्तोक इति समुद्धृत्य जलेन [1]संसृज्य त्र्यायुषमिति शिरोललाटवक्षःस्कन्धेष्विति तिसृभिस्त्र्यायुषैस्त्र्यम्बकैस्तिस्रो रेखाः प्रकुर्वीत। व्रतमेतच्छाम्भवं सर्वेषु वेदेषु वेदवादिभिरुक्तं भवति। तत् समाचरेन्मुमुक्षु[2]र्न पुनर्भवाय ॥ १९ ॥

[1] संमृज्य—अ २. [2] रपुन—क.

सद्योजातादिपञ्चब्रह्ममन्त्रैः इत्यादि कालाग्निरुद्रोपनिषदि व्याख्यातम् ॥ १९–२२ ॥

त्रिपुण्ड्रधारणप्रमाणम्

अथ सनत्कुमारः प्रमाणं पृच्छति त्रिपुण्ड्रधारणस्य । त्रिधा रेखा आललाटादाचक्षुषोराभ्रुवोर्मध्यतश्च ॥ २० ॥

रेखात्रये भावनाविशेषः

याऽस्य प्रथमा रेखा सा गार्हपत्यश्चाकारो रजो भूर्लोकः स्वात्मा क्रियाशक्तिः ऋग्वेदः प्रातःसवनं प्रजापतिर्देवो देवतेति । याऽस्य द्वितीया रेखा सा दक्षिणाग्निरुकारः सत्त्वमन्तरिक्षमन्तरात्मा चेच्छाशक्तिर्यजुर्वेदो माध्यन्दिनं सवनं विष्णुर्देवो देवतेति । याऽस्य तृतीया रेखा साऽऽहवनीयो मकारस्तमो द्यौर्लोकः परमात्मा ज्ञानशक्तिः सामवेदस्तृतीयसवनं महादेवो देवतेति ॥ २१ ॥

भस्मधारणफलम्

त्रिपुण्ड्रं भस्मना करोति यो विद्वान् ब्रह्मचारी गृही वानप्रस्थो यतिर्वा [1]स महापातकोपपातकेभ्यः पूतो भवति । स सर्वान् वेदानधीतो भवति । स सर्वान् देवान् ध्यातो भवति । स सर्वेषु तीर्थेषु स्नातो भवति । स सकलरुद्रमन्त्रजापी भवति । न स पुनरावर्तते न स पुनरावर्तते ॥ इति ॥ २२ ॥

ॐ सत्यमित्युपनिषत् ॥ २३ ॥

[1] समस्तम—अ, अ १, उ १.

आदौ यदवचनेनोक्तवान् तदोङ्काराग्रविद्योतमानं, "तुर्योङ्काराग्रविद्योतमानं तुर्यतुर्यं" इति श्रुतेः। यज्जाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तचतुष्पञ्चदशविकल्पासंभवप्रबोधसिद्धतुर्यतुर्यस्वरूपं तदेव सत्यं स्वाज्ञादिदृष्टिमोहे सत्यसति निष्प्रतियोगिकसन्मात्रमित्यर्थः, "पश्यतेहापि सन्मात्रमसदन्यत्" इति श्रुतेः, "मत्तः परतरं नान्यत् किंचिदस्ति धनञ्जय" इति स्मृतेश्च। इत्युपनिषच्छब्दः जाबाल्युपनिषत्समाप्त्यर्थः ॥ २३ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
जाबाल्युपनिषद्व्याख्या लिखिता शिवगोचरा ।
जाबाल्युपनिषद्व्याख्या चत्वारिंशदितीरिता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे चतुरुत्तरशतसङ्ख्यापूरकं जाबाल्युपनिषद्विवरणं सम्पूर्णम् ॥



# दक्षिणामूर्त्युपनिषत्

## सह नाववतु—इति शान्तिः

शिवतत्त्वज्ञानेन चिरजीवित्वप्राप्तिः

ब्रह्मावर्ते महाभाण्डीरवटमूले महासत्राय समेता महर्षयः शौनकादयस्ते ह समित्पाणयस्तत्त्वजिज्ञासवो मार्कण्डेयं चिरंजीविनमुपसमेत्य पप्रच्छुः केन त्वं चिरं जीवसि केन वाऽऽनन्दमनुभवसीति ॥ १ ॥

परमरहस्यशिवतत्त्वज्ञानेनेति स होवाच ॥ २ ॥

यन्मौनव्याख्यया मौनिपटलं क्षणमात्रतः ।
महामौनपदं याति स हि मे परमा गतिः ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं दक्षिणामूर्त्युपनिषत् समाधनपरमरहस्यशिवतत्त्वं प्रकाशयन्ती विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । शौनकादिमहर्षिपटलमार्कण्डेयप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आदावाख्यायिकामवतारयति—ब्रह्मावर्त इत्यादिना । पप्रच्छुः किमिति ? केनेति ॥ १ ॥ एवं पृष्टो मुनिराह—परमरहस्यशिवतत्त्वज्ञानेनेति । अनधिकारिषु गोपनीयत्वात् परमरहस्यं यत्तत्त्वं यथात्म्यं स्वातिरिक्ताशिवा-

विद्यापादतत्कार्यजातापह्नवसिद्धमिति ज्ञायते तत् परमरहस्यशिवतत्त्वज्ञानं तेनैवाहं चिरं जीवन् स्वानन्दमनुभवामीत्यर्थः ॥ २ ॥

### शिवतत्त्वज्ञाने प्रश्नाः

किं तत् परमरहस्यशिवतत्त्वज्ञानम् । तत्र को देवः । के मन्त्राः । का निष्ठा । किं तज्ज्ञानसाधनम् । कः परिकरः । को बलिः । कः कालः । किं तत्स्थानमिति ॥ ३ ॥

पुनस्ते तं पृच्छन्तीत्याह—किं तदिति ॥ ३ ॥

### परमशिवतत्त्वज्ञानस्वरूपम्

स होवाच । येन दक्षिणामुखः शिवोऽपरोक्षीकृतो भवति तत् परमरहस्यशिवतत्त्वज्ञानम् ॥ ४ ॥

नवविधप्रश्नोत्तरं क्रमेण य आचार्यपदं गतो मार्कण्डेयः स होवाच । आद्यं प्रश्नमपाकरोति—येनेति ।

शिवो गुरुः शिवो वेदः शिवो देवः शिवः प्रभुः ।
शिवोऽस्म्यहं शिवः सर्वं शिवादन्यन्न किञ्चन ॥

इति श्रुतिसिद्धप्रबोधेन येन । स्वदृष्टिपथं प्रविष्टानां मोक्षार्थिनां केवलमौनव्याख्यानतो निष्पन्ननिष्प्रतियोगिकब्रह्ममात्रज्ञानसमकालप्रादुर्भूतस्वमात्रावस्थानलक्षणविकळेबरकैवल्यदक्षिणा देयेति यस्तद्वितरणाभिमुखो भवति सोऽयं दक्षिणामुखः परमात्मा येन स्वोपदिष्टनिर्विशेषज्ञानेन स्वावशेषधिया अपरोक्षीकृतो भवति तद्धि तज्ज्ञानमित्यर्थः ॥ ४ ॥

### ज्ञेयदेवस्वरूपम्

यः सर्वोपरमे काले सर्वानात्मन्युपसंहृत्य स्वात्मानन्दसुखे मोदते प्रकाशते वा स देवः ॥ ५ ॥

द्वितीयप्रश्नोत्तरमाह—य इति। स्वाज्ञदृष्टिविकल्पितं सर्वं स्वज्ञानसमकालमुपरममपह्नवं गच्छतीति सर्वोपरमः तस्मिन् सर्वोपरमे काले स्वाज्ञविकल्पितस्वाविद्यापदतत्कार्यरूपान् सर्वान् स्वात्मनि स्वमात्रं उपसंहृत्य स्वात्मानन्दसुखे सच्चिदानन्दाकाशे स्वमात्रतया मोदते प्रकाशत इति वा स देव इति ॥ ५ ॥

चतुर्विंशाक्षरमनुः

अत्रैते मन्त्ररहस्यश्लोका भवन्ति—[1]अस्य श्रीमेधादक्षिणामूर्तिमन्त्रस्य ब्रह्मा ऋषिः। गायत्री छन्दः। देवता दक्षिणाऽऽस्यः। मन्त्रेणाङ्गन्यासः ॥ ६ ॥

ॐ आदौ नम उच्चार्य ततो भगवते पदम्।
दक्षिणेति पदं पश्चान्मूर्तये पदमुद्धरेत् ॥ ७ ॥
अस्मच्छब्दं चतुर्थ्यन्तं मेधां प्रज्ञां पदं वदेत्।
प्रमुच्चार्य ततो वायुबीजं च्छं च ततः पठेत् ॥
अग्निजायां ततस्त्वेष चतुर्विंशाक्षरो मनुः ॥ ७ ॥
स्फटिकरजतवर्णं मौक्तिकीमक्षमाला-
ममृतकलशविद्यां ज्ञानमुद्रां कराग्रे।
दधतमुरगकक्ष्यं चन्द्रचूडं त्रिणेत्रं
विधृतविविधभूषं दक्षिणामूर्तिमीडे ॥ ८ ॥

तृतीयप्रश्नापकरणाय प्रज्ञामेधाविज्ञानप्रदमन्त्रानुदाहरति—अत्रेति। मायागर्भितप्रणवाभ्यां बीजादिकं मन्त्रपञ्चकसाधारणम्। मन्त्रेणाङ्गन्यासः ॥ ६ ॥

[1] "अस्यश्री" इति नास्ति—अ, अ १, अ २, क.

मन्त्रोद्धारः ओमिति । मनुः—ॐ नमो भगवते दक्षिणामूर्तये मह्यं मेधां प्रज्ञां प्रयच्छ स्वाहेति ॥ ७–८ ॥

नवाक्षरमनुः

मन्त्रेण न्यासः—

आदौ वेदादिमुच्चार्य स्वराद्यं सविसर्गकम् ।
पञ्चार्णं तत उद्धृत्य अतरं सविसर्गकम् ।
अन्ते समुद्धरेत्तारं मनुरेष नवाक्षरः ॥ ९ ॥
मुद्रां भद्रार्थदात्रीं सपरशुहरिणं बाहुभिर्बाहुमेकं
जान्वासक्तं दधानो भुजग[1]बिलसमाबद्धकक्ष्यो वटाधः ।
आसीनश्चन्द्रखण्डप्रतिघटितजटाक्षीरगौरस्त्रिणेत्रो
दद्यादाद्यः शुकाद्यैर्मुनिभिरभिवृतो भावशुद्धिं भवो नः ॥ १० ॥

नवाक्षरमन्त्रमुद्धरति—आदाविति । ॐ दक्षिणामूर्तिरतरों इति नवाक्षरमनुः ॥ ९–१० ॥

अष्टादशाक्षरमनुः

मन्त्रेण न्यासः—

तारं ब्लूंनम उच्चार्य मायां वाग्भवमेव च ।
दक्षिणापदमुच्चार्य ततः स्यान्मूर्तयेपदम् ॥ ११ ॥
ज्ञानं देहि पदं पश्चाद्वह्निजायां ततो न्यसेत् ।
मनुरष्टादशार्णोऽयं सर्वमन्त्रेषु गोपितः ॥ १२ ॥

[1] वरस—अ, अ १.

भस्मव्यापाण्डराङ्गः शशिशकलधरो ज्ञानमुद्राक्षमाला-
वीणापुस्तैर्विराजत्करकमलधरो योगपट्टाभिरामः ।
व्याख्यापीठे निषण्णो मुनिवरनिकरैः सेव्यमानः प्रसन्नः
सव्यालः कृत्तिवासाः सततमवतु नो दक्षिणामूर्तिरीशः ॥१३॥

ॐ ब्लूं नमो ह्रीं ऐं दक्षिणामूर्तये ज्ञानं देहि स्वाहा इत्यष्टादशाक्षरमनुः ॥ ११–१३ ॥

द्वादशाक्षरमनुः

मन्त्रेण न्यासः—

तारं परां रमाबीजं वदेत् साम्बशिवाय च ।
तुभ्यं चानलजायां तु मनुर्द्वादशवर्णकः ॥ १४ ॥
वीणां करैः पुस्तकमक्षमालां बिभ्राणमभ्राभगलं वराढ्यम् ।
फणीन्द्रकक्ष्यं मुनिभिः शुकाद्यैः सेव्यं वटाधः कृतनीडमीडे ॥ १५ ॥

ॐ ह्रीं श्रीं साम्बशिवाय तुभ्यं स्वाहा इति द्वादशाक्षरमनुः ॥१४–१५॥

आनुष्टुभो मन्त्रराजः

विष्णू ऋषिरनुष्टुप् छन्दः। देवता दक्षिणाऽऽस्यः। मन्त्रेण न्यासः।
तारं नमो भगवते तुभ्यं वटपदं ततः ।
मूलेति पदमुच्चार्य वासिने पद[1]मुद्धरेत् ॥ १६ ॥

[1] मुच्चरेत्—अ, अ १.

[1]वागीशाय पदं पश्चान्महाज्ञानपदं ततः ।
दायिने पदमुच्चार्य मायिने[2] नम उद्धरेत् ॥ १७ ॥
[3]आनुष्टुभो मन्त्रराजः सर्वमन्त्रोत्तमोत्तमः ॥ १८ ॥
मुद्रापुस्तकवह्निनागविलसद्बाहुं प्रसन्नाननं
मुक्ताहारविभूषणं शशिकलाभास्वत्किरीटोज्ज्वलम् ।
अज्ञानापहमादिमादिमगिरामर्थं भवानीपतिं
न्यग्रोधान्तनिवासिनं परगुरुं ध्यायाम्यभीष्टाप्तये ॥ १९ ॥

ॐ नमो भगवते तुभ्यं वटमूलनिवासिने । वागीशाय महाज्ञानदायिने मायिने नमः ॥ इति ॥ १६–१९ ॥

निष्ठाऽऽदीनां निरूपणम्

सोऽहमिति यावदास्थितिः सा निष्ठा भवति ॥ २० ॥
तदभेदेन मन्वाम्रेडनं ज्ञानसाधनम् ॥ २१ ॥
चित्ते तदेकतानता परिकरः ॥ २२ ॥
अङ्गचेष्टार्पणं बलिः ॥ २३ ॥
त्रीणि धामानि कालः ॥ २४ ॥
द्वादशान्तपदं स्थानमिति ॥ २५ ॥

चतुर्थप्रश्नोत्तरं प्रकटयति—सोऽहमिति । यः स्वातिरिक्तकलनाऽपह्नवसिद्ध-ब्रह्ममात्रतया अवशिष्यते सोऽहं स्वमात्रमिति यावदास्थितिः शरीरपातावधिवर्तनं

[1] अ, अ १ कोशयोः एतच्छ्लोकार्धस्थाने "प्रज्ञामेधापदं पश्चात् आदिसिद्धिं ततो वदेत्" इति पाठो दृश्यते. [2] पदमुद्ध—अ, अ १.
[3] अतः पूर्वं अ, अ १ कोशयोः "वह्निजायां ततस्त्वेष द्वात्रिंशद्वर्णको मनुः ।" इत्यधिकः.

सैव हि ब्रह्मनिष्ठा भवति ॥ २० ॥ पञ्चमप्रश्नमापूरयति—तदभेदेनेति । मन्तारं त्रायत इति मन्त्रः प्रत्यक्परचिदैक्यार्थमन्त्रप्रतिपाद्या देवता सैवाहमस्मीति तदभेदेन मन्त्रदेवताऽऽत्माभेदेन मन्त्राम्रेडनं आवर्तनं तज्ज्ञानसाधनम् ॥२१॥ षष्ठप्रश्नोत्तरमाचष्टे—चित्ते तदेकतानता परिकर इति । चित्ते तदेकतानता मन्त्रैकशरणत्वं परिकर उपकरणमित्यर्थः ॥ २२ ॥ सप्तमप्रश्नोत्तरमाह—अङ्गचेष्टार्पणं बलिरिति । हस्तपादचलनादिकं सपर्या भवति ॥ २३ ॥ अष्टमप्रश्नोत्तरमाह—त्रीणि धामानि काल इति । स्वाविद्यापदस्थूलसूक्ष्मबीजरूपाणि त्रीणि धामानि कालः स्वातिरिक्तप्रपञ्चकलनानिर्वाहकत्वात् कालो गुणसाम्यमित्यर्थः ॥ २४ ॥ नवमप्रश्नं विशदयति—द्वादशान्तपदं स्थानमिति । द्वादशान्तशब्देन हृदयं सहस्रारं वोच्यते, प्रत्यगभिन्नपरमात्मन उपलब्धिस्थानत्वात् ॥ २५ ॥

शिवतत्त्वज्ञानोदयादिनिरूपणम्

ते ह पुनः श्रद्दधानास्तं प्रत्यूचुः—कथं वाऽस्योदयः । किं स्वरूपम् । को वाऽस्योपासक इति ॥ २६ ॥

स होवाच—

वैराग्यतैलसंपूर्णे भक्तिवर्तिसमन्विते ।
प्रबोधपूर्णपात्रे तु ज्ञप्तिदीपं विलोकयेत् ॥ २७ ॥
मोहान्धकारे निःसारे उदेति स्वयमेव हि ।
वैराग्यमरणिं कृत्वा ज्ञानं कृत्वा तु [1]चित्रगुम् ॥ २८ ॥
गाढतामिस्रसंशान्त्यै गूढमर्थं निवेदयेत् ।
मोहभानुजसंक्रान्तं विवेकाख्यं मृकण्डुजम् ॥ २९ ॥

[1] चित्तगुं—ब १,

तत्त्वाविचारपाशेन बद्धद्वैतभयातुरम् ।
उज्जीवयन्निजानन्दे स्वस्वरूपेण संस्थितः ॥ ३० ॥
शेमुषी दक्षिणा प्रोक्ता सा यस्याभीक्षणे मुखम् ।
दक्षिणाभिमुखः प्रोक्तः शिवोऽसौ ब्रह्मवादिभिः ॥ ३१ ॥
सर्गादिकाले भगवान् विरिञ्चिरुपास्यैनं सर्गसामर्थ्यमाप्य ।
तुतोष चित्ते वाञ्छितार्थांश्च लब्ध्वा सोऽस्योपासको भवति ॥३२॥

स्वप्रश्नोत्तरहर्षिता मुनयः पुनः पृच्छन्तीत्याह—त इति । प्रत्यूचुः किमिति? कथमिति ॥ २६ ॥ क्रमेण प्रश्नत्रयमपाकरोति—स होवाचेति । तत्र कथं वाऽस्योदयः इत्याद्यप्रश्नोत्तरमाह—वैराग्येति । तैलवर्तिपात्रस्थानीयवैराग्य-भक्तिप्रबोधतः ज्ञप्तितया दीप्यत इति ज्ञप्तिदीपं प्रत्यञ्चमात्मानं स्वात्मधिया विलोकयेत् ॥ २७ ॥ एवं विलोकनतः किं स्यादित्यत्र स्वाज्ञदृष्टिविकल्पित-मोहान्धकारं स्वज्ञदृष्ट्या निस्सारं सत्यसति परमार्थदृष्ट्या स्वयमेव सदोदेति । हिशब्दो निस्संशयार्थः । स्वाज्ञानगाढान्धकारे सति तदवलोकनं कुत इत्यत्राह—वैराग्यमिति । वैराग्यभक्ती पूर्वोत्तरारणी कृत्वा, यत्र मन्थानकाष्ठे चित्रो-ऽग्निर्गूढतया वर्तते तं चित्रगु मन्थानशङ्कुं तत्स्थानीयं ज्ञानं कृत्वा ॥ २८ ॥ स्वाज्ञदृष्टिप्रसक्तगाढतामिस्रसंशान्त्यै सम्यङ्मथनं कृत्वा मथनाविर्भूतदारु-गूढाग्निवत् गूढमर्थं वैराग्यज्ञानमथनप्रादुर्भूतं स्वाज्ञानतत्कार्यासंभवप्रबोधसिद्धं निवेदयेत् अवलोकयेत् जानीयादित्यर्थः ॥ किं स्वरूपमिति प्रश्नोत्तरमाह—मोहेति । स्वाज्ञानमृत्युवक्त्रं प्रविष्टं मृकण्डुतनयं स्वज्ञानेनोज्जीवयन् तदात्मतया-ऽवस्थितो भवति इति श्रुतेर्वचः ॥ २९–३० ॥ किंविशेषणविशिष्टः परमात्मेत्यत्राह—शेमुषीति । शेमुषी तत्त्वज्ञानरूपिणी ब्रह्ममात्रप्रकाशनदक्षेति दक्षिणा प्रोक्ता सैव यस्य परमात्मन अभितः ईक्षणे साक्षात्करणे मुखं द्वारं भवति सोऽसौ शिवो ब्रह्मवादिभिः दक्षिणाभिमुखः इति प्रोक्तः प्रतिपादित इत्यर्थः,

ज्ञानैकगम्यत्वात्, "नान्यः पन्था अयनाय विद्यते" इति श्रुतेः ॥ ३१ ॥ को वा अस्योपासकः इति प्रश्नोत्तरमाह—सर्गादिकाल इति ॥ ३२ ॥

### अध्ययनवेदनफलम्

य इमां परमरहस्यशिवतत्त्वविद्यामधीते स सर्वपापेभ्यो मुक्तो भवति।
य एवं वेद स कैवल्यमनुभवतीत्युपनिषत् ॥ ३३ ॥

विद्याऽऽन्तरालिकमुख्यफलप्रकटनपूर्वकं उपसंहरति—य इति । यथावत् य एवं वेद । इत्युपनिषच्छब्दः दक्षिणामूर्त्युपनिषत्समाप्त्यर्थः ॥ ३३ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
दक्षिणामूर्त्युपनिषद्व्याख्येयं लिखिता लघु ।
प्रकृतोपनिषद्व्याख्यासङ्ख्या नवतिसंयुता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकोनपञ्चाशत्सङ्ख्यापूरकं दक्षिणामूर्त्युपनिषद्विवरणं सम्पूर्णम् ॥

---

# पञ्चब्रह्मोपनिषत्

सह नाववतु—इति शान्तिः

पञ्चब्रह्मणां आदौ जनिः

अथ पैप्पलादो भगवन् भो किमादौ किं जातमिति सद्योजातमिति । किं भगव इति । अघोर इति । किं भगव इति । वामदेव इति । किं वा पुनरिमे भगव इति । तत्पुरुष इति । किं वा पुनरिमे भगव इति । सर्वेषां दिव्यानां प्रेरयिता ईशान इति । ईशानो भूतभव्यस्य सर्वेषां देवयोनिनाम् ॥ १ ॥

ब्रह्मादिपञ्चब्रह्माणो यत्र विश्रान्तिमाप्नुयुः ।
तदखण्डसुखाकारं रामचन्द्रपदं भजे ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं पञ्चब्रह्मोपनिषत् पञ्चब्रह्मतत्कार्यप्रपञ्चप्रकटनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः संक्षेपतो विवरणमारभ्यते । शाकलपैप्पलादप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—अथेति । किं जातमिति शाकलेन पृष्टः सन् सद्योजातमिति उवाच । सर्वेषां दिवि भवानां दिव्यानां देवानामपि अन्तर्यामितया प्रेरयिता ईशानः सर्वेश्वरत्वात् । भूतादिकालत्रयस्याप्ययमेवेशान इत्याह—ईशान इति ॥ १ ॥

### तेषां वर्णादिविषयकः प्रश्नः

कति वर्णाः । कति भेदाः । कति शक्तयः । यत् सर्वं तद्गुह्यम् ॥ २ ॥

रक्तादिवर्णभेदं क्रियाऽऽदिशक्तिभेदं च पृच्छति—कति वर्णा इति । पञ्चब्रह्मतद्विद्याया अनधिकारिणां गोपनीयत्वं गुह्यत्वम् ॥ २–३ ॥

### महेशोपदिष्टं तद्रहस्यम्

तस्मै नमो महादेवाय महारुद्राय ॥ ३ ॥

प्रोवाच तस्मै भगवान् महेशः ॥ ४ ॥

पञ्चब्रह्मविद्या कस्मै केनोक्तेत्यत्र प्रोवाच तस्मै पैप्पलादाय भगवान महेश इति श्रुतेर्वचः ॥ ४ ॥

### सद्योजातस्वरूपम्

गोप्याद्गोप्यतरं लोके यद्यस्ति शृणु शाकल ।
सद्योजातं मही पूषा रमा ब्रह्मा त्रिवृत् स्वरः ॥ ५ ॥
ऋग्वेदो गार्हपत्यं च मन्त्राः सप्त स्वरास्तथा ।
वर्णं पीतं क्रिया शक्तिः सर्वाभीष्टफलप्रदम् ॥ ६ ॥

पैप्पलादः श्रोतारं शाकलमभिमुखीकृत्य सद्योजातादिपञ्चब्रह्मेयत्तां प्रपञ्चयति —गोप्यादिति । किं तत् गोप्याद्गोप्यं इत्यत्र सद्योजातं सदाशिवपूर्वमुखं मही पूषा रमा ब्रह्मा त्रिवृत विश्वविराडोतृचैतन्यम् ॥ ५ ॥ अकारादिस्वरः । पञ्चाक्षरादयो मन्त्राः सरिगमेति सप्तस्वराः ॥ ६ ॥

अघोरस्वरूपम्

अघोरं सलिलं चन्द्रं गौरी वेदद्वितीयकम् ।
नीरदाभं स्वरं सान्द्रं दक्षिणाग्निरुदाहृतम् ॥ ७ ॥
पञ्चाशद्वर्णसंयुक्तं स्थितिरिच्छाक्रियाऽन्वितम् ।
शक्तिरक्षणसंयुक्तं सर्वाघौघविनाशनम् ॥ ८ ॥
सर्वदुष्टप्रशमनं सर्वैश्वर्यफलप्रदम् ॥ ९ ॥

पश्चिममघोरमुखमाह—अघोरमिति । सलिलं आपः । वर्णतो नीरदाभं स्वरं उकाराख्यं सान्द्रं स्निग्धं दक्षिणाग्निरुदाहृतम् ॥ ७ ॥ अकारादिपञ्चाशद्वर्णसंयुक्तम् । स्थितिः परिपालनं इच्छाक्रियाशक्तिद्वययुतं स्वविकल्पितशक्तिरक्षणसंयुक्तम् ॥ ८–९ ॥

वामदेवस्वरूपम्

वामदेवं महाबोधदायकं [1]पावकात्मकम् ।
विद्यालोकसमायुक्तं भानुकोटिसमप्रभम् ॥ १० ॥
प्रसन्नं सामवेदाख्यं गानाष्टकसमन्वितम् ।
धीरस्वरमधीनं चाहवनीयमनुत्तमम् ॥ ११ ॥
ज्ञानसंहारसंयुक्तं शक्तिद्वयसमन्वितम् ।
वर्णं शुक्लं तमोमिश्रं पूर्णबोधकरं स्वयम् १२ ॥
धामत्रयनियन्तारं धामत्रयसमन्वितम् ।
सर्वसौभाग्यदं नृणां सर्वकर्मफलप्रदम् ॥ १३ ॥
अष्टाक्षरसमायुक्तमष्टपत्रान्तरस्थितम् ॥ १४ ॥

[1] पावकात्मजम्—अ, अ १.

वामदेवाख्यदक्षिणमुखस्वरूपमाह—वामदेवमिति ॥ १० ॥ सामवेदप्रविभक्तसप्तगानं भरतशास्त्रनिष्पन्नगीतिश्च गानाष्टकमित्युक्तम् । आमिति धीरस्वरम् ॥ ११ ॥ ज्ञानशक्तिसंहारशक्तिभेदेन शक्तिद्वयसमन्वितम् ॥ १२ ॥ जाग्रदादिस्थूलप्रपञ्चादिधामत्रयनियन्तारं विश्वतैजसात्मना धामत्रयसमन्वितम् ॥ १३ ॥ अकचटतपयश इत्यष्टवर्गात्मना ॐ नमो महादेवाय इति वा अष्टाक्षरसमायुक्तं हृत्पुण्डरीकप्रविभक्ताष्टपत्रान्तरस्थितम् ॥ १४ ॥

तत्पुरुषस्वरूपम्

यत्तत् तत्पुरुषं प्रोक्तं वायुमण्डलसंवृतम् ।
पञ्चाग्निना समायुक्तं मन्त्रशक्तिनियामकम् ॥ १५ ॥
पञ्चाशत्स्वरवर्णाख्य[1]मथर्ववेदस्वरूपकम् ।
कोटिकोटि[2]गणाध्यक्षं ब्रह्माण्डाखण्डविग्रहम् ॥ १६ ॥
वर्णं रक्तं कामदं च सर्वाधिव्याधिभेषजम् ।
सृष्टिस्थितिलयादीनां कारणं सर्वशक्तिभृत् ॥ १७ ॥
अवस्थात्रितयातीतं तुरीयं ब्रह्मसंज्ञितम् ।
ब्रह्मविष्ण्वादिभिः सेव्यं सर्वेषां जनकं परम् ॥ १८ ॥

तत्पुरुषाख्योत्तरमुखमाह—यदिति । सप्तकोटिमहामन्त्रशक्तिनियामकम् ॥ १५ ॥ पञ्चाशत्सङ्ख्याविशिष्टं पञ्चाशत्स्वरवर्णाख्यम् ॥ १६–१८ ॥

ईशानस्वरूपम्

ईशानं परमं विद्यात् प्रेरकं बुद्धिसाक्षिणम् ।
आकाशात्मकमव्यक्तमोंकारस्वरभूषितम् ॥ १९ ॥

[1] मथर्वेद—अ १.  [2] गुणा—ठ १.

सर्वदेवमयं शान्तं शान्त्यतीतं स्वराद्बहिः ।
अकारादिस्वराध्यक्षमाकाशमयविग्रहम् ॥ २० ॥
पञ्चकृत्यनियन्तारं पञ्चब्रह्मात्मकं बृहत् ॥ २१ ॥

मध्यविलसितेशानमुखस्वरूपमाह—ईशानमिति ॥ १९ ॥ समस्वराद्बहिः शान्त्याख्या काचन कलाऽस्ति, तदतीतं तत्परं, "तत्परः परमात्मा" इति श्रुतेः ॥ २० ॥ सृष्ट्यादिपञ्चकृत्यनियन्तारम् ॥ २१ ॥

पञ्चब्रह्मलयाधारः परमं ब्रह्म

पञ्चब्रह्मोपसंहारं कृत्वा स्वात्मनि संस्थितम् ।
स्वमायावैभवान् सर्वान् संहृत्य स्वात्मनि स्थितः ॥ २२ ॥
पञ्चब्रह्मात्मकातीतो भासते स्वस्वतेजसा ।
आदावन्ते च मध्ये च भासते नान्यहेतुना ॥ २३ ॥

पञ्चब्रह्मप्रपञ्चप्रविलापनात् तदाधारो भवतीत्याह—पञ्चेति ॥ २२–२३ ॥

परमब्रह्मज्ञानविधिः

मायया मोहिताः शंभोर्महादेवं जगद्गुरुम् ।
न जानन्ति सुराः सर्वे सर्वकारणकारणम् ।
न संदृशे तिष्ठति रूपमस्य परात् परं पुरुषं विश्वधाम ॥ २४ ॥
येन प्रकाशते विश्वं यत्रैव प्रविलीयते ।
तद्ब्रह्म परमं शान्तं तद्ब्रह्मास्मि परं पदम् ॥ २५ ॥
पञ्चब्रह्ममिदं विद्यात् सद्योजातादिपूर्वकम् ।
दृश्यते श्रूयते यच्च पञ्चब्रह्मात्मकं स्वयम् ॥ २६ ॥

पञ्चधा वर्तमानं तं ब्रह्मकार्यमिति स्मृतम् ।
ब्रह्मकार्यमिति ज्ञात्वा ईशानं प्रतिपद्यते ॥ २७ ॥
पञ्चब्रह्मात्मकं सर्वं स्वात्मनि प्रविलाप्य च ।
सोऽहमस्मीति जानीयाद्विद्वान् ब्रह्मामृतो भवेत् ॥ २८ ॥
इत्येतद्ब्रह्म जानीयाद्यः स मुक्तो न संशयः ॥ २९ ॥
पञ्चाक्षरमयं शंभुं परब्रह्मस्वरूपिणम् ।
नकारादियकारान्तं ज्ञात्वा पञ्चाक्षरं जपेत् ॥ ३० ॥
सर्वं पञ्चात्मकं विद्यात् पञ्चब्रह्मात्मतत्त्वतः ॥ ३१ ॥
पञ्चब्रह्मात्मिकीं विद्यां योऽधीते भक्तिभावितः ।
स पञ्चात्मकतामेत्य भासते पञ्चधा स्वयम् ॥ ३२ ॥

एवं स्वयंप्रकाशमप्यात्मानं सोऽहमिति देवा अपि न जानन्तीत्याह—माययेति । सर्वकारणकारणं कारणभावमापन्नब्रह्मादेरपि कारणत्वात्, "यो ब्रह्माणं विदधाति पूर्वं" इति श्रुतेः । यज्जगत्कारणं तद्रूपस्य सूक्ष्मतया न दृश्यत इत्याह—नेति ॥ २४ ॥ स्वातिरिक्तकलनाशान्तम् ॥ २५–२७ ॥ यद्यत्करणग्रामगोचरं तत्तत् पञ्चब्रह्मात्मकम्, तदतीतः परमात्मा अहमस्मीति ज्ञानी परमात्मैव भवतीत्याह—पञ्चेति । पञ्चब्रह्म पञ्चब्रह्मात्मकं इदं विश्वं विद्यात् । यस्तत्प्रविलापनाधारः सोऽहमस्मि ॥ २८–२९ ॥ एवं पञ्चब्रह्मभावनया पञ्चाक्षरं जपन् यः आस्ते स पञ्चब्रह्मैव भवतीत्युपसंहरति—पञ्चाक्षरमिति ॥ ३०–३२ ॥ पुरा एवमुक्त्वा ॥ ३३ ॥

## शिवस्याद्वैतचैतन्यत्वम्

एवमुक्त्वा महादेवो गालवस्य महात्मनः ।
कृपां चकार तत्रैव स्वान्तर्धिमगमत् स्वयम् ॥ ३३ ॥

यस्य श्रवणमात्रेणाश्रुतमेव श्रुतं भवेत् ।
अमतं च मतं ज्ञातमविज्ञातं च शाकल ॥ ३४ ॥
एकेनैव तु पिण्डेन मृत्तिकायाश्च गौतम ।
विज्ञातं मृण्मयं सर्वं मृदभिन्नं हि कार्यकम् ॥ ३५ ॥
एकेन लोहमणिना सर्वं लोहमयं यथा ।
विज्ञातं स्यादथैकेन नखानां कृन्तनेन च ॥ ३६ ॥
सर्वं कार्ष्णायसं ज्ञातं तदभिन्नं स्वभावतः ।
कारणाभिन्नरूपेण कार्यं कारणमेव हि ॥ ३७ ॥
तद्रूपेण सदा सत्यं भेदेनोक्तिर्मृषा खलु ।
तच्च कारणमेकं हि न भिन्नं नोभयात्मकम् ॥ ३८ ॥
भेदः सर्वत्र मिथ्यैव धर्मादिरनिरूपणात् ।
अतश्च कारणं नित्यमेकमेवाद्वयं खलु ।
अत्र कारणमद्वैतं शुद्धचैतन्यमेव हि ॥ ३९ ॥

योऽन्तर्धिमगमत् स सर्वकारणं कारणविज्ञानेन कारणातिरिक्तं कार्यं नास्तीति कार्याभावे तत्सापेक्षकारणताऽभावात् अकार्यकारणं ब्रह्म निष्प्रतियोगिकस्वमात्रमवशिष्यत इत्याह—यस्येति ॥ ३४ ॥ येन कारणविज्ञानेन तदनतिरिक्तं कार्यं विज्ञातं स्यादित्यत्र—"येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं" इत्युपक्रम्य "एकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" इत्यादिछान्दोग्यषष्ठाध्यायनिष्ठार्थं संक्षिप्य प्रकटयतीत्याह—एकेनेति ॥ ३५–३६ ॥ **तदभिन्नं स्वभावतः** इत्यत्र उपपत्तिमाह—कारणेति ॥ ३७ ॥ यदि कारणा[न]तिरिक्तं कार्यं तदा कार्यवत् कारणमपि अनेकतामर्हतीत्यत आह—तच्चेति । मृदाद्यतिरेकेण घटादिशकलस्याप्यदर्शनात् । न हि कारणभिन्नं कार्यमस्ति ।

नाप्येकमेव कार्यकारणभावमर्हति, अर्धजरतीयन्यायवत् अतिविरुद्धत्वात् ॥ ३८ ॥ कार्यकारणभेदो नास्तीत्याह—भेद इति । यत एवं अतः ॥ ३९ ॥

दहराकाशे शिवोपलब्धिः

अस्मिन् ब्रह्मपुरे वेश्म दहरं यदिदं मुने ।
पुण्डरीकं तु तन्मध्ये आकाशो दहरोऽस्ति तत् ।
स शिवः सच्चिदानन्दः सोऽन्वेष्टव्यो मुमुक्षुभिः ॥ ४० ॥
अयं हृदि स्थितः साक्षी सर्वेषामविशेषतः ।
तेनायं हृदयं प्रोक्तः शिवः संसारमोचकः ॥
इत्युपनिषत् ॥ ४१ ॥

इत्थंभूतनिष्प्रतियोगिकाद्वैतात्मोपलब्ध्यधिकरणं किं इत्यत आह—अस्मिन्निति । अस्मिन् दहराकाशे यः करणग्रामप्रवृत्तिनिवृत्तिनिमित्ततया तदसङ्गत्वेन तद्भावाभावप्रकाशकतया तदसंभवप्रबोधसिद्धनिष्प्रतियोगिकब्रह्ममात्रतया च तत्तद्दृष्ट्यनुरूपमवभासते स शिवः ॥ ४० ॥ शिवस्य हृदयोपलब्धत्वात् हृदयस्यापि शिवत्वमुपचर्यत इत्यर्थः । इत्युपनिषच्छब्दः पञ्चब्रह्मोपनिषत्परिसमाप्त्यर्थः ॥ ४१ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
पञ्चब्रह्मोपनिषदो व्याख्यानं लिखितं स्फुटम् ।
पञ्चब्रह्मोपनिषदो व्याख्या पञ्चाशदीरिता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे त्रिणवतिसङ्ख्यापूरकं पञ्चब्रह्मोपनिषद्विवरणं सम्पूर्णम्

---

# बृहज्जाबालोपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

## प्रथमं ब्राह्मणम्

प्रजापतिकृताविद्याऽण्डसृष्टिः

आपो वा इदमासन् सलिलमेव । स प्रजापतिरेकः पुष्करपर्णे समभवत् । तस्यान्तर्मनसि कामः समवर्तत इदं सृजेयमिति । तस्माद्यत् पुरुषो मनसाऽभिगच्छति । तद्वाचा वदति । तत् कर्मणा करोति ॥ १ ॥

तदेषाऽभ्यनूक्ता—कामस्तदग्रे समवर्तताधि । मनसो रेतः प्रथमं यदासीत् । सतो बन्धुमसति निरविन्दन् । हृदि प्रतीष्या कवयो मनीषेति । उपैनं तदुपनमति । यत्कामो भवति । य एवं वेद ॥ २ ॥

यज्ज्ञानाग्निः स्वातिरिक्तभ्रमं भस्म करोति तत् ।
बृहज्जाबालनिगमशिरोवेद्यमहं महः ॥

इह खल्वथर्वणवेदप्रविभक्तेयं बृहज्जाबालोपनिषत् स्वातिरिक्तप्रपञ्चभस्मीकरणपटीयसी सती विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । प्रश्न-

मुण्डकादिवदुपोद्घातादिकमस्यामभ्यूह्यम् । भुसुण्डादिशिष्यवर्गकालाग्निरुद्रप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । अस्यामुपनिषदि स्वातिरिक्तं भस्म, ततः शिष्टं स्वयमेवेति प्रतिपाद्यते । तत्र स्वातिरिक्तेयत्तापरिज्ञानं विना न हि तद्भस्म भवितुमर्हतीति तदियत्ताप्रकटनाय पुराणमवतारयति—आपो वा इति । प्रळयकालीना आपो वै प्रसिद्धाः अनभिव्यक्तनामरूपं इदं अविद्याऽण्डं आसन् सलिलमेव । न हि सलिलादतिरिक्तं किंचिदस्ति । तत्र बृहज्जाबालमन्त्रद्रष्टा यः सोऽयं प्रजापतिरेकः पुष्करपर्णे नारायणनाभिपद्मे समभवत् । तस्य प्रजापतेरन्तर्मनसि कामः समवर्तत । किमिति? इदं अनन्तकोटिब्रह्माण्डात्मकमविद्याऽण्डं सृजेयमिति । यस्मादयं जगत्स्रष्टुकामो भवति तस्माद्यत्पुरुषः मनसा अन्तःकरणेन अभिगच्छति निश्चिनोति यन्मनसि स्मृतं तद्वाचा वदति । यद्वाचोक्तं तत् शरीरनिर्वर्त्यकर्मणा करोति ॥ १ ॥ ब्राह्मणोक्तेऽर्थे तदेषाऽभ्यनु पश्चात् उक्ता । वक्ष्यमाणाविद्याऽण्डोद्भूतेः अग्रे प्राक् अधिकत्वेन कामोऽभिलाषः समवर्तत । कामः क जातः इत्यत्र मनसोऽन्तःकरणस्य यद्रेतो वीर्यं प्रथममासीत्, स कामो भवतीति पूर्वेणान्वयः,

न हि संकल्पातिरिक्तं मनोऽस्तीति विचिन्त्यताम् ।
काम जानामि ते रूपं संकल्पात् किल जायसे ॥

इति स्मृतेः । सतः चक्षुर्ग्राह्यप्रपञ्चस्य बन्धुरिवोपकारकत्वात् कामो बन्धुः असति अचाक्षुषे ब्रह्मणि निरविन्दन् निःशेषमगमन् । कवयो मनस ईष्ट इति मनीट् धीः तया मनीषा हृदि प्रतीष्य अवलोक्य । उप समीपे एनं कामिनं उपनमति आप्नोति यस्य दारादिविषये कामो भवति स यत्कामो भवति इति मन्त्रसमाप्त्यर्थः । य एवं यो वेद जानाति स प्राजापत्यपदमश्नुत इत्यर्थः ॥ २ ॥

विभूतिरुद्राक्षबृहज्जाबालजिज्ञासा

स तपोऽतप्यत । स तपस्तप्त्वा । स एतं भुसुण्डः कालाग्निरुद्रमगमदागत्य भो विभूतेर्माहात्म्यं ब्रूहीति ॥ ३ ॥

तथेति प्रत्यवोचद्भु[1]सुण्ड [2]वाच्यमानं किमिति ॥ ४ ॥

विभूतिरुद्राक्षयोर्माहात्म्यं बभाणेति ॥ ५ ॥

आदावेव पैप्पलादेन सहोक्तमिति ॥ ६ ॥

तत्फलश्रुतिरिति ॥ ७ ॥

तस्योर्ध्वं किं वदामेति ॥ ८ ॥

बृहज्जाबालाभिधां मुक्तिश्रुतिं ममोपदेशं कुरुष्वेति ॥ ९ ॥

इदानीं प्रासङ्गिकं परित्यज्य प्रकृतमनुसरति—स इति। स प्रजापतिः तपोऽतप्यत आलोचनं कृतवान्। एवं स तपस्तप्त्वा यो वायमाकाशे भुसुण्ड इति विख्यातः परमयोगी तमनुप्रविष्टवान्। सोऽयं प्रजापतिनाऽऽविष्टः भुसुण्डः स्वातिरिक्तभस्मावगत्यर्थं एतं कालाग्निरुद्रमगमत। तं गत्वा किं कृतवानित्यत आह—आगत्य भो विभूतेर्माहात्म्यं ब्रूहीति ॥ ३ ॥ भुसुण्डप्रश्नोत्तरं भगवानाह—तथेति प्रत्यवोचत्। किमिति? भुसुण्ड वाच्यमानं किमिति, उच्यमानं किमित्यर्थः ॥ ४ ॥ आहेतरः विभूतिरुद्राक्षयोर्माहात्म्यं बभाणेति उपदिशेत्यर्थः ॥ ५ ॥ पुरैवोक्तमित्याह—आदावेव पैप्पलादेन सहोक्तमिति, पैप्पलादेन साकं तुभ्यं विभूतिरुद्राक्षमाहात्म्यं उक्तमित्यर्थः ॥ ६ ॥ इतर आह—तत्फलश्रुतिरिति। वक्तव्येत्यध्याहार्यम् ॥ ७ ॥ ततः किमिति भगवानाह—तस्योर्ध्वं किं वदामेति ॥ ८ ॥ इतर आह—बृहज्जाबालाभिधामिति ॥ ९ ॥

### भस्मपञ्चकस्य नामिस्वरूपनिरूपणम्

ॐ तथेति। सद्योजातात् पृथिवी। तस्याः स्यान्निवृत्तिः। तस्याः कपिलवर्णा नन्दा। तद्गोमयेन विभूतिर्जाता ॥ १० ॥

वामदेवादुदकम्। तस्मात् प्रतिष्ठा। तस्याः कृष्णवर्णा भद्रा। तद्गोमयेन भसितं जातम् ॥ ११ ॥

[1] सुण्डं—मु. [2] बच्य—अ १, क. बक्ष्य—अ.

अघोराद्वह्निः । तस्माद्विद्या । तस्या रक्तवर्णा सुरभिः । तद्गोमयेन भस्म जातम् ॥ १२ ॥

तत्पुरुषाद्वायुः । तस्माच्छान्तिः । तस्याः श्वेतवर्णा सुशीला । तस्या गोमयेन क्षारं जातम् ॥ १३ ॥

ईशानादाकाशम् । तस्माच्छान्त्यतीता । तस्याश्चित्रवर्णा सुमना । तद्गोमयेन रक्षा जाता ॥ १४ ॥

विभूतिर्भसितं भस्म क्षारं रक्षेति भस्मनो भवन्ति पञ्च नामानि । पञ्चभिर्नामभिर्भृशमैश्वर्यकारणाद्भूतिः । भस्म सर्वाघ-भक्षणात् । भासनाद्भसितम् । क्षारणादापदां क्षारम् । भूतप्रेतपि-शाचब्रह्मराक्षसापस्मारभवभीतिभ्योऽभिरक्षणाद्रक्षेति ॥ १५ ॥

भगवान् तत्प्रश्नमङ्गीकृत्य प्रतिवचनमभिधास्यति—ॐ तथेति । ओङ्कार-स्यानुकृत्यर्थत्वात्, "ओमित्येतदनुकृतिः" इति श्रुतेः । आदौ वक्ष्यमाण-नामपञ्चके तत्राद्यनामात्मकविभूतिस्वरूपमाह—सद्योजातादिति । ईश्वरपूर्वाभि-मुखसञ्जातसद्योजातंप्रपद्यामीतिमन्त्रतो जाता पृथिवी । तस्याः सकाशात् निवृत्तिकला संजाता । तस्याः सकाशात् नन्दा नाम कपिलवर्णा धेनुरभूत् । वक्ष्यमाणप्रकारेण संस्कृततद्गोमयेन विभूतिः संजाता ॥ १० ॥ तद्द्वितीय-भसितस्वरूपमाह—वामदेवादिति ॥ ११ ॥ भस्मस्वरूपमाह—अघोरादिति ॥ १२ ॥ क्षारस्वरूपमाह—तदिति ॥ १३ ॥ रक्षास्वरूपमाह—ईशानादिति ॥ १४ ॥ एवं भस्मनः पञ्चनामान्यभिधाय तेषां यौगिकार्थमाह—विभूतिरिति ॥ १५ ॥

इति प्रथमं ब्राह्मणम्

# द्वितीयं ब्राह्मणम्

अग्नीषोमात्मकभस्मस्नानजिज्ञासा

अथ भुसुण्डः कालाग्निरुद्रमग्नीषोमात्मकं भस्मस्नानविधिं पप्रच्छ ॥ १ ॥

भुसुण्डो भगवन्तं भस्मस्नानविधिं पृच्छतीत्याह—अथ भुसुण्ड इति ॥१॥

जगतः अग्नीषोमात्मकत्वम्

अग्निर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ।
एकं भस्म सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ २ ॥
अग्नीषोमात्मकं विश्वमित्यग्निरित्याचक्षते ।
रौद्री घोरा या तैजसी तनूः ।
सोमः शक्त्यमृतमयः शक्तिकरी तनूः ॥ ३ ॥
अमृतं यत्प्रतिष्ठा सा तेजोविद्याकला स्वयम् ।
स्थूलसूक्ष्मेषु भूतेषु त एव रसतेजसी ॥ ४ ॥
द्विविधा तेजसो वृत्तिः सूर्यात्मा चानलात्मिका ।
तथैव रसशक्तिश्च सोमात्मा चानलात्मिका ॥ ५ ॥
वैद्युदादिमयं तेजो मधुरादिमयो रसः ।
तेजोरसविभेदैस्तु वृतमेतच्चराचरम् ॥ ६ ॥
अग्नेरमृतनिष्पत्तिरमृतेनाग्निरेधते ।
अत एव हविः क्लृप्तमग्नीषोमात्मकं जगत् ॥ ७ ॥

प्रश्नोत्तरं भगवानाह—अग्निरिति । यथैकोऽप्ययमग्निर्भुवनं प्रविश्य स्वाश्रयदार्वनुरूपं रूपं प्रतिरूपो बहुरूपो बभूव तथा एकं स्वातिरिक्तभस्म स्वातिरिक्तप्रपञ्चापवादाधिकरणं व्यष्टिसमष्टिप्रपञ्चारोपाधिकरणविश्वविराडोत्राद्यात्मना सर्वभूतान्तरात्मा भूत्वा तूलान्तःकरणोपाधियोगात् रूपं रूपं प्रतिरूपः स्वातिरिक्तप्रपञ्चापवादाधिकरणद्वितुर्यतदैक्याविकल्पात्मना तद्बहिश्च विलक्षणो भवति, "सर्वस्मादन्यो विलक्षणः" इति श्रुतेः । चशब्दात् वस्तुतो निरधिकरणं निष्प्रतियोगिकब्रह्ममात्रमवशिष्यते इति द्योत्यते ॥ २ ॥ भस्मनस्तत्कार्यविश्वस्य वाऽग्नीषोमात्मकत्वं कथमित्यत आह—अग्नीषोमात्मकमिति । अग्निश्च सोमश्च अग्नीषोमौ तावेव आत्मा यस्य तत् अग्नीषोमात्मकं तद्रूपेण विश्वासार्हं विश्वमग्निरित्युच्यते विश्वस्याग्नीषोमकार्यत्वात् । या तनूर्घोरा तैजसी च भवति अस्या अग्यंशत्वात् । अपरा तु शक्तिकरी तनूः अमृतमयः सोम एव शक्तिः वामभागस्थेडाशंकरमृतमयत्वात् ॥ ३ ॥ अमृतं यत्प्रतिष्ठा यस्यां चन्द्रनाड्यां अमृतस्य प्रतिष्ठितत्वात् सेयं स्वयं चन्द्रनाडी तेजोविद्याकलाऽऽत्मिका भवति । त एव रसतैजसी स्थूलसूक्ष्मभूतेषु द्विधा भवतः ॥ ४ ॥ सूर्याग्निभेदेन यथा तेजसो वृत्तिः द्विविधा तथैव सोमात्मानलात्मिकेति च रसशक्तिश्च द्विधा भवति ॥ ५ ॥ तत्र किं तेजः को रसः इत्यत्र विद्युदेव वैद्युत, आदिशब्देन प्रदीपनक्षत्रादयो गृह्यन्ते, तन्मयं हि तेजः मधुराम्लादिमयो रसः । इत्थं चराचरभेदभिन्नं जगत् तेजोरसभूतैराचृतम् । तुशब्दोऽवधारणार्थः ॥ ६ ॥ मथनाविर्भूताग्नेः अमृतनिष्पत्तिः, नवनीतघृतादेः मथनाग्निनिष्पन्नत्वात् । अमृतस्थानीयाज्यतैलकाष्ठगतस्नेहादिना अग्निरेधते वृद्धिमुपैति । यतो मथनाविर्भूतोष्णांशोऽग्निः तज्जोऽमृतविशेषः सोमो भवति, यत एवाग्नीषोमीयं हविः कल्पं निष्पन्नं अत एवेदं जगत् अग्नीषोमात्मकमिति ज्ञेयम् ॥ ७ ॥

### जगतः शिवशक्त्यात्मकत्वम्

ऊर्ध्वशक्तिमयः सोम अधःशक्तिमयोऽनलः ।
ताभ्यां संपुटितं तस्माच्छश्वद्विश्वमिदं जगत् ॥ ८ ॥

अग्नेरूर्ध्वं भवत्येषा यावत् सौम्यं परामृतम् ।
यावदग्न्यात्मकं सौम्यममृतं विसृजत्यधः ॥ ९ ॥
अत एव हि कालाग्निरध[1]स्ताच्छक्तिरूर्ध्वगा ।
यावदादहनश्चोर्ध्वमधस्तात् [2]पावनं भवेत् ॥ १० ॥
आधारशक्त्याऽवधृतः कालाग्निरयमूर्ध्वगः ।
तथैव निम्नगः सोमः शिवशक्ति[3]पदास्पदः ॥ ११ ॥
शिवश्चोर्ध्वमयः शक्तिरूर्ध्वशक्तिमयः शिवः ।
तदित्थं शिवशक्तिभ्यां नाव्याप्तमिह किंचन ॥ १२ ॥
असकृच्चाग्निना दग्धं जगत्तद्भस्मसात्कृतम् ।
अग्नेर्वीर्यमिदं प्राहुस्तद्वीर्यं भस्म यत्ततः ॥ १३ ॥

अग्नीषोमात्मकतया जगत् प्रतिपाद्य पुनः शिवशक्त्यात्मकतया जगत् प्रदर्शयति—ऊर्ध्वेति । ऊर्ध्वाधोभेदेन परमेश्वरशक्तिर्द्विविधा । सोमस्तूर्ध्वशक्तिमयः शिवकालाक्षस्थान्यपेक्षया सर्वोर्ध्वतन्मौळिप्रतिष्ठानात् । तदपेक्षया अधःशक्तिमयोऽनलः । यद्वा—ऊर्ध्वशक्तिमयः सोमः शिवः, स्वभक्तोर्ध्वपदप्रापकविद्याशक्तिसंपन्नत्वात् । यस्य शब्दादिविषये अलंबुद्धिर्न विद्यते सोऽयं अनलो जीवः अधःशक्तिमयः परमार्थतत्त्वाधःप्रापकतूलान्तःकरणाविद्याशक्तिसहितत्वात् । अयमविद्याशक्तिरित्यर्थः,

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥

इति स्मृतेः । यस्मादेवं तस्मात् ताभ्यां शिवशक्तिभ्यां स्वाश्रयतया स्वातिरेकेणास्तीति शङ्काद्विध्वसनीयं इदं विश्वं जगत् संपुटितं कबळितमित्यर्थः ॥ ८ ॥ येषा

[1] स्तच्छ—अ २, क. [2] पावनो—क.
[3] पदात्मकः—अ १, अ २, क. पदास्पदम्—अ.

शिवशक्तिः अग्नेरप्यूर्ध्वं भवति यावत् सोमसंबन्धि सौम्यं परामृतं मूलाधार-स्थाग्नेरूर्ध्वं यावदाज्ञाचक्रसहस्रारचक्रान्तराळविलसत्सोममण्डलं सौम्यं परामृतं विद्यते तदेतद्यावत् केवलकुम्भकोत्थितं अध्यात्मकं अग्निसंयुक्तं सत् अधः आपादं सौम्यममृतं विसृजति तावच्छिवशक्तियोगो भवतीत्यर्थः ॥ ९ ॥ यतोऽग्नीषोमयोग एव शिवशक्तियोगो जीवेशैक्यं भवति अत एव ह्यधस्ताच्छक्तिः कालाग्निजीवाभिधाना ऊर्ध्वं ऐश्वरं तत्त्वं तावत् गच्छतीति ऊर्ध्वगा भवति । यावच्छिवशक्तिस्थानीयजीवेशयोरैक्यं भवति तावत्पुराऽनुभूतभिदादहनो निश्शेषदहनं भवति । चशब्दात् पुनर्जीवेशभिदायोगो द्योत्यते । ततः पुराऽनु-भूतोर्ध्वाधःकलनामलं पावनं ब्रह्मभावापन्नमेव भवेत् ॥ १० ॥ पुनरुक्तार्थमेव द्रढयति—आधारेति । मूलाधारशक्त्याऽवभृतो युक्तोऽयं कालाग्निर्जीवः स्वोपाधिशक्त्यंशं विहाय ऊर्ध्वगो यथा भवति तथैव शिवशक्तिपदास्पदः शिवशक्त्यैक्यनिम्नगो भवतीव भवति वस्तुतस्तस्य निम्नोन्नतवैरळ्यात् ॥ ११ ॥ शक्तिशक्तिमतोरभेदमाह—शिव इति । शिवश्च शिवोऽपि ऊर्ध्वमयः शक्तिः यथा तथा ऊर्ध्वशक्तिमयः शिवः, शिवातिरेकेण शक्त्यभावात् । इति यत् तदित्थं इह किंचन किंचिदपि शिवशक्तिभ्यां नान्यात्ममस्ति सर्वं शिवात्मक-मित्यर्थः ॥ १२ ॥ शिवातिरिक्तशक्त्यंशं भस्मापह्नवं कृत्वा तदपह्नवसिद्धं शिवं स्वमात्रमिति यः पश्यति तस्य तद्भावापत्तिः फलं इति ब्राह्मणार्थमुपसंहरति—असकृदिति । यत् असकृत् शास्त्रीयज्ञानाग्निना दग्धं तज्जगत् ब्रह्मातिरिक्तं न किंचिदस्तीति सम्यज्ज्ञानाग्निना भस्मसात्कृतं भस्मावमानं कृतमित्यर्थः, "भस्मान्तं शरीरं" इति श्रुतेः । यत् यस्मात् कारणात् इदं जगत् अग्नेर्वीर्यं प्राहुः जगतस्तावदग्निस्थानीयजीवविकल्पितत्वात् ततः तस्मात् कारणात् तस्य जगतो वीर्यं भस्म नास्ति जगति तद्भस्म तदपह्नोतुमशक्यत्वात् ॥ १३ ॥

ज्ञानानधिकारिणां भस्मस्नानविधिः

यश्चेत्थं भस्मसद्भावं ज्ञात्वाऽभिस्नाति भस्मना ।
अग्निरित्यादिभिर्मन्त्रैर्दग्धपाशः स उच्यते ॥ १४ ॥

अग्नेर्वीर्यं च तद्भस्म सोमेनाप्लावितं पुनः ।
अयोगयुक्त्या प्रकृतेरधिकाराय कल्पते ॥ १५ ॥
योगयुक्त्या तु तद्भस्म प्लाव्यमानं समन्ततः ।
शाक्तेनामृतवर्षेण अधिकारान्निवर्तते ॥ १६ ॥

एवं ज्ञातुमशक्तानां स्वाज्ञानपाशदहनोपायमाह—यश्चेति । यश्च यः कोऽपि इत्थं वक्ष्यमाणब्राह्मणोक्तविधानेन यथाविधि भस्मसद्भावं ज्ञात्वा "अग्निरिति भस्म" इत्यादिमन्त्रैः भस्मना स्नाति सोऽयं विधिभस्मस्नानमहिम्ना दग्धस्वाज्ञानपाश इत्युच्यते ॥ १४ ॥ विधिभस्मस्नातस्य मुख्यभस्माधिगमाधिकारः कुतः इत्यत आह—अग्नेरिति । यत् अग्नेर्वीर्यं तत् पुनः सोमेन शिवशक्त्यमृतवारिणा प्लावितं मिश्रीकृतमिव भाति । तत्प्रकृतेरयोगयुक्त्या सोमातिरेकेण प्रकृतिर्विकृतिर्वा न ह्यस्ति इति श्रुत्यनुग्राहकयुक्त्या तर्केण यदि विशिष्टस्तदा पुमान् मुख्यभस्मावगत्यधिकाराय कल्पते अधिकारी भवतीत्यर्थः ॥ १५ ॥ व्यतिरेकमाह—योगयुक्त्येति । यस्तु शाक्तेनामृतवर्षेण प्रकृतविकृतयोगयुक्त्या तु समन्ततः प्लाव्यमानं भस्म स्वाविद्योपहितमात्मानं जानाति संसार्यहमित्यात्मानं पश्यति स पुमान् मुख्यस्वातिरिक्तभस्मावगत्यधिकारान्निवर्तते । अनधिकार्ययं मन्दप्रज्ञो भवतीत्यर्थः ॥ १६ ॥

जीवेशैक्यज्ञानतः संसारनिवृत्तिः

अतो मृत्युंजयायेत्थममृतप्लावनं मताम् ।
शिवशक्त्यमृतस्पर्शे लब्ध एव कुतो मृतिः ॥ १७ ॥
यो वेद गहनं गुह्यं पावनं च ततोदितम् ।
अग्नीषोमपुटं कृत्वा न स भूयोऽभिजायते ॥ १८ ॥

अनधिकारिताहेतुसंसारित्वासंभवोपायमाह—अत इति । यतः शक्तियोगयुक्त्या संसारित्वं अतः कारणात् स्वातिरिक्तास्तिताहेतुस्वाज्ञानमृत्युं जयति

अपह्नवं करोतीति मृत्युंजयः परमात्मा तस्मै मृत्युञ्जयाय इत्थं अमृतप्लावनं शिवातिरेकेण शक्त्यंशो न विद्यत इति स्वमात्रज्ञानसमर्पणं ये कुर्वन्ति ते सन्तः तेषां सतां स्वाज्ञदृष्ट्या शिवशक्त्यमृतस्पर्शे एव लब्धेऽपि स्वज्ञदृष्ट्या शिवशक्त्य-मृतस्पर्शवैरळ्यात् कुतो मृतिः परमार्थदृष्ट्या न कुतश्चिदित्यर्थः ॥ १७ ॥ जीवेशैक्यज्ञानतो नेह पुनर्जात्यादिरस्तीत्याह---य इति । यः पुमान् स्वाज्ञजनगहनं दुरवगमत्वात् गुह्यं अनधिकारिणे गोपनीयत्वात् पावनं च पवित्राणां पवित्रत्वात् । स्वातिरिक्ताप्लावनासंभवद्योतकः चशब्दः । सर्वत्र ततत्वेन सदोदितं, कदाऽप्यनस्तमितत्वात् । किं तत् ? अग्नीषोमपुटं. पराक्प्रपञ्च-दाहकत्वादग्निः प्रत्यक् सर्वात्मकत्वात्, स्वातिरिक्तसर्वाप्यायकत्वाच्च सोमः परमात्मा, तयोरग्नीषोमयोः प्रत्यक्परयोः पुटमैक्यं ब्रह्माहं अहमेव ब्रह्म इति वेद जानाति स मुनिरेवमैक्यं कृत्वा तद्भेदसापेक्षप्रभवैक्यगतमविशेषांशमप्यपह्नवं कृत्वा तदपह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमित्यवगम्य नेह पुनः स्वातिरिक्ता-स्तित्वमोहाय जायते तदासक्त्या म्रियते वेत्यर्थः ॥ १८ ॥

सविशेषब्रह्मोपासनेनापि अमृतत्वप्राप्तिः

शिवाग्निना तनुं दग्ध्वा शक्तिसोमामृतेन यः ।
प्लावयेद्योगमार्गेण सोऽमृतत्वाय कल्पते ।
सोऽमृतत्वाय कल्पत इति ॥ १९ ॥

सविशेषब्रह्मोपासकोऽपि तत्प्रसादान्निर्विशेषब्रह्मोपासनाफलमेवैतीत्याह---शिवेति । स्वातिरिक्ताशिवग्रासः शिवः परमात्मा स एवाग्निः तेन शिवाग्निना तनुं तदुपलक्षितस्वाविद्यापदतत्कार्यजातं दग्ध्वा भस्मीकृत्य तत्पुनर्भस्मशक्तिरेव सोमः स एवामृतं तेन शक्तिसोमामृतेन योऽयं योगी सुषुम्नावायुप्रवेशलक्षणयोगमार्गेण प्लावयेत् पिण्डीकुर्यात् ईश्वरभावमापादयेत् सोऽपि तत्प्रसादलब्धनिर्विशेष-ज्ञानसमकालं अमृतत्वाय कैवल्याय कल्पते । आवृत्तिरेतद्ब्राह्मणसमाप्त्यर्था ॥१९॥

इति द्वितीयं ब्राह्मणम्

# तृतीयं ब्राह्मणम्

विभूतियोगजिज्ञासा

अथ भुसुण्डः कालाग्निरुद्रं विभूतियोगमनुब्रूहीति होवाच ॥ १ ॥

भुसुण्डः पुनः भगवन्तं विभूतियोगबुभुत्सया पृच्छतीत्याह—अथेति ॥१॥

विभूतेः उत्पत्तिक्रमः

विकटाङ्गामुन्मत्तां महाबला[1]मशिवादिचिह्नान्वितां पुनर्धेनुं कृशाङ्गां वत्समहीनामशान्तामदुग्धदोहिनीं निरिन्द्रियां जग्धतृणां केशचेलास्थिभक्षिणीं सन्धिनीं नवप्रसूतां रोगार्तां गां विहाय प्रशस्तगोमयमाहरेद्गोमयं स्वसंस्थं ग्राह्यं शुभे स्थाने वा पतितमपरित्यज्यात ऊर्ध्वं मर्दयेद्गव्येन । गोमयग्रहणं कपिला वा धवला वा अलाभे तदन्या गोः स्याद्दोषवर्जिता । कपिलागोभस्मोक्तम् । [2]लब्धगो[3]भस्मना चेदन्यगोक्षारं यत्र क्वापि स्थितं यत्तन्न हि धार्यं [4]संस्काररहितं धार्यम् ॥ २ ॥

भुसुण्डेन विभूत्युत्पत्तिक्रमं पृष्टो भगवान् धेनुलक्षणादि सप्रकारमाह—विकटामिति । विकटांगां विरूपाङ्गां उन्मत्तां इत्यादि रोगार्तां इत्यन्तविशेषणविशिष्टां गां विहाय कपिलादि वर्णतो गुणतः प्रशस्तगोः सकाशात् गोमयमाहरेत् । तदाहरणविधिस्तु गोमयं स्वसंस्थं अन्तरालस्थं शुभे स्थाने वा पतितं प्राह्यं यन्निर्दुष्टं तत् अपरित्यज्य अत ऊर्ध्वं गव्येन गोमयेन सम्यक् मर्दयेत् । यत्

[1] मलिनामशि— अ १, अ २, क. [2] लब्धं—मु.
[3] भस्मनो—उ, मु. [4] संस्कार्यर—उ. संस्कारसहि—मु.

गोमयग्रहणं कार्यं इत्यत्र लाभे कपिला वा धवला वा अलाभे विकटाऽऽदिदोषवर्जिता वा स्यात् तस्याः सकाशात् गोमयं ग्राह्यम्। कपिलादिप्रशस्तगोशकृद्भस्म प्रशस्तत्वेन उक्तम्। एवं लब्धगोशकृद्भस्मनोद्धूळनादिः कार्यः। एवं लाभे दोषविशिष्टान्यगोक्षारं यत्र कापि स्थितं वक्ष्यमाणसंस्काररहितं वा न हि धार्यम् ॥ २ ॥

गोमयादौ विद्याऽऽदिदृष्टिः

तत्रैते श्लोका भवन्ति—

विद्याशक्तिः समस्तानां शक्तिरित्यभिधीयते ।
गुणत्रयाश्रया विद्या सा विद्या च तदाश्रया ॥ ३ ॥
गुणत्रयमिदं धेनुर्विद्याऽभूद्गोमयं शुभम् ।
मूत्रं चोपनिषत् प्रोक्तं कुर्याद्भस्म ततः परम् ॥ ४ ॥
वत्सस्तु स्मृतयश्चास्यास्तत्संभूतं तु गोमयम् ।

इत्यर्थप्रकाशनं एते श्लोका मन्त्रा भवन्तीत्याह—तत्रेति। समस्तानां शक्तीनां मध्ये विद्याशक्तिरेव शक्तिः। सा सत्त्वादिगुणत्रयाश्रया गुणत्रयमपि तदाश्रयम् ॥ ३ ॥ इदं गुणत्रयमेव धेनुः। शुभं गोमयं विद्याऽभूत्। गोमूत्रमुपनिषत् इति प्रोक्तम्। इत्थं धेनुगोमयगोमूत्रादौ गुणत्रयविद्योपनिषद्दृष्टिं कुर्यात् ॥ ४ ॥ अस्याः गुणत्रयविशिष्टधेन्वाः वत्सस्तु स्मृतिगणो ज्ञेयः। गोतद्वत्सेषु श्रुतिस्मृतिदृष्टिः कार्येत्यर्थः। तत्संभूतं यत् गोमयं तद्भस्म कुर्यादिति पूर्वेणान्वयः ॥

गवादिभस्मान्तस्य मन्त्रसंस्कारः

आगाव इति मन्त्रेण धेनुं तत्राभिमन्त्रयेत् ॥ ५ ॥
गावो भगो गाव इति प्राशयेत्तत्तृणं जलम् ।
उपोष्य च चतुर्दश्यां शुक्ले कृष्णेऽथवा व्रती ॥ ६ ॥

परेद्युः प्रातरुत्थाय शुचिर्भूत्वा समाहितः ।
कृतस्नानो धौतवस्त्रः पयोर्ध्वं च सृजेच्च गाम् ॥ ७ ॥
उत्थाप्य गां प्रयत्नेन गायत्र्या मूत्रमाहरेत् ।
सौवर्णे राजते ताम्रे धारयेन्मृण्मये घटे ॥ ८ ॥
पौष्करेऽथ पलाशे वा पात्रे गोशृङ्ग एव वा ।
आदधीत हि गोमूत्रं गन्धद्वारेति गोमयम् ॥ ९ ॥
आभूमिपातं गृह्णीयात् पात्रे पूर्वोदिते गृही ।
गोमयं शोधयेद्विद्वान् श्रीर्मे भजतुमन्त्रतः ॥ १० ॥
अलक्ष्मीर्म इति मन्त्रेण गोमयं धान्यवर्जितम् ।
मं त्वा सिचामि मन्त्रेण गोमूत्रं गोमये क्षिपेत् ॥ ११ ॥
पञ्चानां त्वेतिमन्त्रेण पिण्डानां च चतुर्दश ।
कुर्यात् संशोध्य किरणैः सौरकैराहरेत्ततः ॥ १२ ॥
निदध्यादथ पूर्वोक्तपात्रे गोमयपिण्डकान् ।
स्वगृह्योक्तविधानेन प्रतिष्ठाप्याग्निमीजयेत् ॥ १३ ॥
पिण्डांश्च निक्षिपेत्तत्र आद्यन्तं प्रणवेन तु ।
षडक्षरस्य [1]सूक्तस्य व्याकृतस्य तथाऽक्षरैः ॥ १४ ॥
स्वाहाऽन्ते जुहुयात्तत्र वर्णदेवाय पिण्डकान् ।
आघारावाज्यभागौ च प्रक्षिपेद्व्याहृतीः सुधीः ॥ १५ ॥
ततो निधनपतये त्रयोविंशज्जुहोति च ।
होतव्याः पञ्च ब्रह्माणि नमो हिरण्यबाहवे ॥ १६ ॥

[1] सूत्रस्य—उ.

इति सर्वाहुतीर्हुत्वा चतुर्थ्यन्तैश्च मन्त्रकैः ।
ऋतं सत्यं कद्रुद्राय यस्य वैकंकतीति च ॥ १७ ॥
एतैश्च जुहुयाद्विद्वाननाज्ञातत्रयं तथा ।
व्याहृतीरथ हुत्वा च ततः स्विष्टकृतं हुनेत् ॥ १८ ॥
इध्मशेषं तु निर्वर्त्य पूर्णपात्रोदकं तथा ।
पूर्णमसीति यजुषा जलेनान्येन बृंहयेत् ॥ १९ ॥
ब्राह्मणेष्वमृतमिति तज्जलं शिरसि क्षिपेत ।
प्राच्यामिति [1]दिशं लिङ्गैर्दिक्षु तोयं विनिक्षिपेत ॥ २० ॥
ब्रह्मणे दक्षिणां दत्वा शान्त्यै पुलकमाहरेत् ।
आहरिष्यामि देवानां सर्वेषां कर्मगुप्तये ॥ २१ ॥
जातवेदसमेनं त्वां पुलकैश्छादयाम्यहम् ।
मन्त्रेणानेन तं वह्निं पुलकैश्छादयेत्ततः ॥ २२ ॥
त्रिदिनं [2]ज्वलनस्थित्यै छादनं पुलकैः स्मृतम् ।
ब्राह्मणान् भोजयेद्भक्त्या स्वयं भुञ्जीत वाग्यतः ॥ २३ ॥
भस्माधिक्यमभीप्सुस्तु अधिकं गोमयं हरेत् ।
दिनत्रयेण यदि वा एकस्मिन् दिवसेऽथवा ॥ २४ ॥
तृतीये वा चतुर्थे वा प्रातः स्नात्वा सिताम्बरः ।
शुक्लयज्ञोपवीती च शुक्लमाल्यानुलेपनः ॥ २५ ॥

[1] दिशा—अ २, क.

[2] ज्वलसंस्थि—अ १, अ २, उ १. ज्वलनं स्थि—क.

शुक्लदन्तो भस्मदिग्धो मन्त्रेणानेन मन्त्रवित् ।
ॐ तद्ब्रह्मेति चोच्चार्य पौल्कं भस्म संत्यजेत् ॥ २६ ॥
तत्र चावाहनमुख्यानुपचारांस्तु षोडश ।
[1]कर्तव्या व्याहृतास्त्वेवं ततोऽग्निमुपसंहरेत् ॥ २७ ॥
अग्नेर्भस्मेति मन्त्रेण गृह्णीयाद्भस्म चोत्तरम् ।
अग्निरित्या[2]दिमन्त्रेण प्रमृज्य च ततः परम् ॥ २८ ॥
संयोज्य गन्धसलिलैः कपिलामूत्रकेण वा ।
चन्द्रकुङ्कुमकाश्मीरमुशीरं चन्दनं तथा ॥ २९ ॥
अगरुत्रितयं चैव चूर्णयित्वा तु सूक्ष्मतः ।
क्षिपेद्भस्मनि तच्चूर्णमोमिति ब्रह्ममन्त्रतः ॥ ३० ॥
प्रणवेनाहरेद्विद्वान् ब्रह्मतो वटकानथ ।
अणोरणीयानिति हि मन्त्रेण च विचक्षणः ॥ ३१ ॥

तत्तन्मनुना गवादिसंस्कारं कुर्यादित्याह—आ गाव इति । "आ गावो अग्मन्नुत भद्रमक्रन्" इति मन्त्रेण धेनुमभिमन्त्र्य ॥ ५ ॥ "गावो भगो गाव इन्द्रो मे अच्छात्" इति मन्त्रेण तृणोदकं प्राशयित्वा श्रौतभस्मव्रती शुक्लकृष्णपक्षयोरन्यतरचतुर्दश्यामुपोष्य ॥ ६ ॥ परेद्युः स्नानादिनित्यकर्म कृत्वा पयोर्ध्वं पयोदोहनानन्तरम् ॥ ७ ॥ प्रयत्नेन गामुत्थाप्य सौवर्णाद्यन्यतमपात्रे गायत्र्यभिमन्त्रणपूर्वकं गोमूत्रमादधीत ॥ ९ ॥ ततो "गन्धद्वारां" इति गोमयं आभूमिपातं पूर्वोदितपात्रे गृह्णीयात् ॥ १० ॥ "श्रीर्मे भजतु अलक्ष्मीर्मे नश्यतु" इति मन्त्रेण गोमयं संशोध्य, "सं त्वा सिञ्चामि" इति मन्त्रेण गोमये गोमूत्रं निक्षिप्य ॥ ११ ॥ "पञ्चानां त्वा वातानां

[1] कुर्याद्व्याहृतिभिस्त्वेवं—उ, मु. [2] दिभिर्मन्त्रैः—अ, उ १.

यन्त्राय धर्त्राय गृह्णामि" इति चतुर्दश पिण्डान् कृत्वा, सौरकिरणैः शुष्कीकृत्य ॥ १२ ॥ पूर्वोक्तपात्रे निक्षिप्य, स्वगृह्योक्तविधानेन अग्निं प्रतिष्ठाप्य ॥ १३ ॥ आद्यन्तप्रणवोच्चारणपूर्वकं तत्रत्यवर्णैः स्वाहाऽन्तैः पञ्चब्रह्मपरब्रह्माधिष्ठितैः स्वाहाऽन्तैः हुत्वा, तूष्णीं "अग्नये स्वाहा सोमाय स्वाहा" इति मन्त्रैर्व्याहृतिभिश्च हुत्वा ॥ १४–१५ ॥ ततः "निधनपतये नमः" इत्यादित्रयोविंशतिमन्त्रैः पञ्चब्रह्ममन्त्रैः ॥ १६ ॥ "ऋतं सत्यं परं ब्रह्म" इति, "कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे" इति मन्त्राभ्यां च ॥ १७ ॥ "अनाज्ञातं" इति त्रयेण व्याहृतित्रयेण च यथावद्धुत्वा, ततः स्विष्टकृत्पूर्णाहुती च हुत्वा ॥ १८ ॥ इध्मशेषं निर्वर्त्य, पूर्णपात्रोदकं "पूर्णमसि" इति यजुषा जलान्तरेण संपूर्य, "प्राच्यां दिशि देवाः" इत्यादिना दिक्षु तोयं निक्षिप्य ॥ १९ ॥ "ब्राह्मणेष्वमृतं" इति तज्जलं शिरसि संप्रोक्ष्य ॥ २० ॥ ब्रह्मदक्षिणां दत्वा, "आहरिष्यामि देवानां" इति जातवेदसं पुलकैः संछाद्य ॥ २१–२२ ॥ ब्राह्मणान् भोजयित्वा, स्वयमपि भुक्त्वा ॥ २३–२४ ॥ चतुर्थेऽहनि शान्तेऽग्नौ नित्यानुष्ठानानन्तरं "ॐ तद्ब्रह्म" इति मन्त्रेण पौलकभस्मत्यागपूर्वकं भस्ममात्रं पूर्वोदितपात्रे निक्षिप्य ॥ २५–२६ ॥ तत्र शिवमावाह्य, षोडशोपचारैरभ्यर्च्य, अग्निमुपसंहरेत् । इति श्रौतभस्माविर्भावविधिः ॥ २७ ॥

पुनर्भस्मनः संस्कारान्तरमुच्यते—अग्निरिति । "अग्नेर्भस्मास्यग्नेः पुरीषमसि" इति मन्त्रेण चतुर्दश भस्मपिण्डान् गृहीत्वा, ततः परं "अग्निरिति भस्म" इत्यादिमन्त्रेण सम्यग्विमृज्य एकीकृत्य ॥ २८ ॥ कपिलामूत्रदिव्यगन्धसलिलैः संमिश्र्य, चन्द्रकुङ्कुमकुसुमादिचूर्णसंयोजनं कृत्वा, "ओमिति ब्रह्म" इति, "अणोरणीयान्" इति च मन्त्राभ्यां अथ वटकान् कृत्वा, यथासंभवपात्रे निक्षिप्य, नित्यं संपूजयेत ॥ २९–३१ ॥

भस्मोद्धूलनप्रकारः

इत्थं भस्म सुसंपाद्य शुष्कमादाय मन्त्रवित् ।
प्रणवेन विमृज्याथ सप्तप्रणवमन्त्रितम् ॥ ३२ ॥

ईशानेति शिरोदेशं मुखं तत्पुरुषेण तु ।
ऊरुदेशमघोरेण गुह्यं वामेन मन्त्रयेत् ॥ ३३ ॥
सद्योजातेन वै [1]पादान् सर्वाङ्गं प्रणवेन तु ।
तत उद्धूल्य सर्वाङ्गमापादतलमस्तकम् ॥ ३४ ॥
आचम्य वसनं धौतं ततश्चैतत् प्रधारयेत् ।
पुनराचम्य कर्म [2]त्वं कर्तुमर्हसि सत्तम ॥ ३५ ॥

अथ भस्मोद्धूळनप्रकारमाह—प्रणवेनेति । वामहस्ते भस्म निक्षिप्य, प्रणवेन विसृज्य पुनः प्रणवेन सप्तवारमभिमन्त्र्य ॥ ३२ ॥ "ईशानः सर्वविद्याना" इत्यादिपञ्चब्रह्ममन्त्रैः शिरोमुखोरुगुह्यपादान्तं प्रणवेन शिष्टाङ्गं च उद्धूळ्य, आचम्य, अहरहर्नित्यादिकर्म कर्तव्यमित्यर्थः ॥ ३३–३५ ॥

## चतुर्विधं भस्मकल्पनम्

अथ चतुर्विधं भस्मकल्पम् । प्रथममनुकल्पम् । द्वितीयमुपकल्पम् । उपोपकल्पं तृतीयम् । अकल्पं चतुर्थम् ॥ ३६ ॥

अग्निहोत्रसमुद्भूतं विरजानलजमनुकल्पम् । वने शुष्कं शकृत्संगृह्य कल्पोक्तविधिना कल्पितमुपकल्पं स्यात् । अरण्ये शुष्कगोमयं चूर्णीकृत्यानुसंगृह्य गोमूत्रैः पिण्डीकृत्य कल्पोक्तविधिना कल्पितमुपोपकल्पम् । शिवालयस्थमकल्पं शतकल्पं च ॥ ३७ ॥

इत्थं चतुर्विधं भस्म सर्वपापं निकृन्तयेन्मोक्षं ददातीति भगवान् कालाग्निरुद्रः ॥ ३८ ॥

[1] पादौ—अ २. पादाः—अ १, उ १, क. [2] त्वं—अ, अ १.

अनुकल्पादिभेदेन भस्मकल्पनं चतुर्विधमित्याह—अथेति ॥ ३६ ॥ सूत्रभूतवाक्यचतुष्टयस्य वृत्त्यर्थमुत्तरो ग्रन्थ इत्याह—अमीति । स्पष्टोऽर्थः ॥३७–३८॥

इति तृतीयं ब्राह्मणम्

## चतुर्थं ब्राह्मणम्

भस्मस्नानप्रकारः

अथ भुसुण्डः कालाग्निरुद्रं भस्मस्नानविधिं ब्रूहीति होवाच ॥ १ ॥

अथ प्रणवेन विमृज्याथ सप्तप्रणवेनाभिमन्त्रितमागमेन तु तेनैव दिग्बन्धनं कारयेत् पुनरपि तेनास्त्रमन्त्रेणाङ्गानि मूर्धादीन्युद्धूलयेन्मलस्नानमिदम् ॥ २ ॥

ईशाद्यैः पञ्चभिर्मन्त्रैस्तनुं क्रमादुद्धूलयेत् । ईशानेति शिरोदेशं मुखं तत्पुरुषेण तु । [1]ऊरुदेशमघोरेण गुह्यं वामेन । सद्योजातेन वै पादौ सर्वाङ्गं प्रणवेन । आपादतलमस्तकं सर्वाङ्गं तत उद्धूल्याचम्य वसनं धौतं श्वेतं प्रधारयेद्विधिस्नानमिदम् ॥ ३ ॥

तत्र श्लोका भवन्ति—

भस्ममुष्टिं समादाय संहितामन्त्रमन्त्रिताम् ।
मस्तकात् पादपर्यन्तं मलस्नानं पुरोदितम् ॥ ४ ॥

[1] उर—उ, उ १.

तन्मन्त्रेणैव कर्तव्यं विधिस्नानं समाचरेत् ।
ईशाने पञ्चधा भस्म विकिरेन्मूर्ध्नि यत्नतः ॥ ५ ॥
मुखे चतुर्थवक्त्रेण अघोरेणाष्टधा हृदि ।
वामेन गुह्यदेशे तु त्रिदशस्थानभेदतः ॥ ६ ॥
अष्टाङ्गेन साध्येन पादावुद्धूल्य यत्नतः ।
सर्वाङ्गोद्धूलनं कार्यं राजन्यस्य यथाविधि ।
मुखं विना च तत्सर्वमुद्धूल्य[1] क्रमयोगतः ॥ ७ ॥

पुनर्भुसुण्डो भगवन्तं भस्मस्नानविधिं पृच्छतीत्याह—अथेति ॥ १ ॥ भुसुण्डेनैवं पृष्टो भगवान् द्विविधभस्मस्नानप्रकारमाह—अथेति । अथ प्रातः-स्नानानन्तरम् । प्रणवेनेत्याद्युक्तार्थम् । यत् सप्तप्रणवेनाभिमन्त्रितं तत् आगमेन तु आगममध्यविलसितपञ्चाक्षरेणापि । तेनैव दिग्बन्धनं कारयेत् । पुनरपि तेन पञ्चाक्षरात्ममन्त्रेण मूर्धादिसर्वाङ्गं उद्धूळयेत् इति यत्तदिदं मलस्नानं, एवं मलस्नानतो निर्मलो भवतीत्यर्थः ॥ २ ॥

विधिस्नानं कीदृशं इत्यत आह—ईशाद्यैरिति । उक्तार्थमेतत् ॥ ३ ॥ तत्र एवमुक्तार्थप्रकाशकाः श्लोकाः मन्त्रा भवन्तीत्याह—भस्मेति । मन्त्रोक्त-स्नानद्वयं पुरोक्तब्राह्मणेनैव व्याख्यातम् ॥ ४ ॥ ईशाने ईशानमन्त्रेण ॥ ५ ॥ चतुर्थवक्त्रेण तत्पुरुषमन्त्रेण सप्तधा विकिरेत् । हृदि अघोरमन्त्रेण अष्टधा विकिरेत् । गुह्यदेशे गुह्योपरि नाभिदेशे तु वामदेवमन्त्रेण नवधा विकिरेत् । तत्तदङ्गविद्यमानत्रिदशानां हस्तादिस्थानभेदतः ॥ ६ ॥ उर आद्यष्टावङ्गानि विद्यन्ते । तत्र अङ्गेन हृदयादिमनुना साध्येन स्वाभिलषितसाध्यनामाक्षरयुक्ते-नाभिमन्त्र्य, पादावुद्धूळ्य, ततो ब्राह्मणेन विधिवत् सर्वाङ्गोद्धूळनं कार्यमित्यर्थः ॥

[1] क्रतु—क.

ब्राह्मणेतरस्य कथमित्यत आह—राजन्यस्येति । राजन्यस्यायं विधिः—मुखं तत्पुरुषस्थानं विना क्रमयोगतः सर्वमुद्धूल्य नित्यादिकर्म कर्तव्यमित्यर्थः ॥ ७ ॥

भस्मस्नानकालविशेषाः

संध्याद्वये निशीथे च तथा पूर्वावसानयोः ।
सुप्त्वा भुक्त्वा पयः पीत्वा कृत्वा चावश्यकादिकम् ॥ ८ ॥
स्त्रियं नपुंसकं गृध्रं बिडालं बकमूषिकम् ।
स्पृष्ट्वा तथाविधानन्यान् भस्मस्नानं समाचरेत् ॥ ९ ॥
देवाग्निगुरुवृद्धानां समीपेऽन्त्यजदर्शने ।
अशुद्धभूतले मार्गे कुर्यान्नोद्धूलनं व्रती ॥ १० ॥

कदा कदा भस्मस्नानं कर्तव्यं इत्यत आह—सन्ध्याद्वय इति ॥ ८–९ ॥ अन्वयमुक्त्वा व्यतिरेकमाह—देवाग्नीति ॥ १० ॥

ज्ञानार्थिना शङ्खतोयादिमिश्रभस्म धार्यम्

शङ्खतोयेन मूलेन भस्मना मिश्रणं भवेत् ।
योजितं चन्दनेनैव वारिणा भस्मसंयुतम् ॥ ११ ॥
चन्दनेन समालिम्पेज्ज्ञानदं चूर्णमेव तत् ।
मध्याह्नात् प्राग्जलैर्युक्तं तोयं तदनु वर्जयेत् ॥ १२ ॥

किं केवलभस्म धार्यं इत्यत्र यदि ज्ञानार्थी तदा तेन शङ्खतोयादिमिश्रभस्म धार्यं इत्यत आह—शङ्खतोयेनेति । मूलेन मूलमन्त्राभिमन्त्रितशङ्खतोयेनेत्यर्थः ॥ ११ ॥ किं सदैवं धार्यं तत्राह—मध्याह्नात इति ॥ १२ ॥

त्रिपुण्ड्रविधिः

अथ भुसुण्डो भगवन्तं कालाग्निरुद्रं त्रिपुण्ड्रविधिं पप्रच्छ ॥ १३ ॥

तत्रैते श्लोका भवन्ति—

त्रिपुण्ड्रं कारयेत् पश्चाद्ब्रह्मविष्णुशिवात्मकम् ।
मध्याङ्गुलीभिरादाय तिसृभिर्मूलमन्त्रतः ॥ १४ ॥
अनामामध्यमाङ्गुष्ठैरथवा स्यात्त्रिपुण्ड्रकम् ।
उद्धूलयेन्मुखं विप्रः क्षत्रियस्तच्छिरोदितम् ॥ १५ ॥
द्वात्रिंशत्स्थानके[1] चार्धं षोडशस्थानकेऽपि वा ।
अष्टस्थाने तथा चैव पञ्चस्थानेऽपि योजयेत् ॥ १६ ॥
उत्तमाङ्गे ललाटे च कर्णयोर्नेत्रयोस्तथा ।
नासावक्त्रे गले चैवमंसद्वयमतः परम् ॥ १७ ॥
कूर्परे मणिबन्धे च हृदये पार्श्वयोर्द्वयोः ।
नाभौ गुह्यद्वये चैवमूर्वोः स्फिग्बिम्बजानुनी ॥ १८ ॥
जङ्घाद्वये च पादौ च द्वात्रिंशत्स्थानमुत्तमम् ।
अष्टमूर्त्यष्टविद्येशान् दिक्पालान् वसुभिः सह ॥ १९ ॥
धरो ध्रुवश्च सोमश्च कृपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टावितीरिताः ॥ २० ॥
एतेषां नाममन्त्रेण त्रिपुण्ड्रं धारयेद्बुधः ।
विदध्यात् षोडशस्थाने त्रिपुण्ड्रं तु समाहितः ॥ २१ ॥
शीर्षके च ललाटे च कण्ठे चांसद्वये तथा ।
कूर्परे मणिबन्धे च हृदये नाभिपार्श्वयोः ॥ २२ ॥

[1] चाथ—क.

पृष्ठे चैकं प्रतिस्थानं जपेत्तत्राधिदेवताः ।
शिवशक्तिं च सादाख्यामीशं विद्याऽऽख्यमेव च ॥ २३ ॥
वामादिनवशक्तीश्च एते षोडश देवताः ।
[1]नासत्यो दस्रकश्चैव अश्विनौ द्वौ समीरितौ ॥ २४ ॥
अथवा मूर्ध्न्यलीके च कर्णयोः श्वसने तथा ।
बाहुद्वये च हृदये नाभ्यामूर्वोर्युगे तथा ॥ २५ ॥
जानुद्वये च पदयोः पृष्ठभागे च षोडश ।
शिवश्चन्द्रश्च रुद्रार्कौ विघ्नेशो विष्णुरेव च ॥ २६ ॥
श्रीश्चैव हृदयेशश्च तथा नाभौ प्रजापतिः ।
नागश्च नागकन्याश्च उभे च ऋषिकन्यके ॥ २७ ॥
पादयोश्च समुद्राश्च तीर्थाः पृष्ठेऽपि च स्थिताः ।
एवं वा षोडशस्थानमष्टस्थानमथोच्यते २८ ॥
गुरुस्थानं ललाटं च कर्णद्वयमनन्तरम् ।
अंसयुग्मं च हृदयं नाभिरित्यष्टमं भवेत् ॥ २९ ॥
ब्रह्मा च ऋषयः सप्त देवताश्च प्रकीर्तिताः ।
अथवा मस्तकं बाहू हृदयं नाभिरेव च ॥ ३० ॥
पञ्च स्थानान्यमून्याहुर्भस्मतत्त्वविदो जनाः ।
यथासंभवतः कुर्याद्देशकालाद्यपेक्षया ॥ ३१ ॥

भुसुण्डः तदुक्तोद्धूळनविधिं ज्ञात्वा त्रिपुण्ड्रविधिं ज्ञातुं पृच्छतीत्याह—अथेति ॥ १३ ॥ तत्प्रश्नानुरोधेन भगवता यद्वक्तव्यं तत्र प्राचीना मन्त्रास्तदर्थ-

[1] नासत्यौ—क. नासत्या—अ २.

प्रकाशका भवन्तीत्याह—तत्रैते श्लोका भवन्तीति। ब्रह्मविष्णुशिवात्मकमेतदिति ज्ञात्वा त्रिपुण्ड्रं धारयेत्। तत्रादौ मध्याङ्गुलीभिः तिसृभिः मूलमन्त्रतः त्रिपुण्ड्रं कुर्यात् ॥ १४ ॥ अथवा अनामिकामध्यमाङ्गुष्ठैः त्रिपुण्ड्रं धारयेत्। ब्रह्मक्षत्रयोर्विशेषविधिमाह—उद्धूळयेदिति ॥ १५ ॥ त्रिपुण्ड्रधारणीयस्थानानि कतीत्याशङ्क्याह—द्वात्रिंशदिति ॥ १६ ॥ तत्र तदधिष्ठानदेवतासहितं द्वात्रिंशत्स्थानं निर्दिशति—उत्तमाङ्ग इति ॥ १७-१८ ॥ अष्टमूर्तयस्तु शिखण्डिश्रीकण्ठप्रभृतयः, सत्येशाद्या अष्टविद्याः, नदीशास्तु शिवोत्तमादयः शैवागमप्रसिद्धाः, अष्टवसवस्तु धरादयः। दिक्पाला इन्द्रादयः ॥ १९-२० ॥ षोडशस्थानं विशदयति—विदध्यादिति। पुनः पक्षान्तरमाह—अथवेति ॥ २१-२७ ॥ एवं वा षोडशस्थानं जानीयादित्यर्थः ॥ २८-२९ ॥ पक्षान्तरमाह—अथवेति ॥ ३० ॥ पर्यायचतुष्टयेषु कः पर्यायोऽनुष्ठेयः इत्यत आह—यथेति ॥ ३१ ॥

उद्धूळनाशक्तौ त्रिपुण्ड्रधारणम्

उद्धूलनेऽप्यशक्तश्चेत्त्रिपुण्ड्रादीनि कारयेत्।
ललाटे हृदये नाभौ गले च मणिबन्धयोः।
बाहुमध्ये बाहुमूले पृष्ठे चैव च शीर्षके ॥ ३२ ॥

ललाटे ब्रह्मणे नमः। हृदये हव्यवाहनाय नमः। नाभौ स्कन्दाय नमः। गले विष्णवे नमः। मध्ये प्रभञ्जनाय नमः। मणिबन्धे वसुभ्यो नमः। पृष्ठे हरये नमः। ककुदि शंभवे नमः। शिरसि परमात्मने नमः। इत्यादिस्थानेषु त्रिपुण्ड्रं धारयेत् ॥ ३३ ॥

त्रिणेत्रं त्रिगुणाधारं त्रयाणां जनकं प्रभुम्।
स्मरन्नमः शिवायेति ललाटे [1]तत्त्रिपुण्ड्रकम् ॥ ३४ ॥

[1] तु त्रि—अ २, क.

कूर्पराधः पितृभ्यां तु ईशानाभ्यां तदोपरि ।
ईशाभ्यां नम इत्युक्त्वा पार्श्वयोश्च त्रिपुण्ड्रकम् ॥ ३५ ॥
स्वच्छाभ्यां नम इत्युक्त्वा धारयेत्तत्प्रकोष्ठयोः ।
भीमायेति तथा पृष्ठे शिवायेति च पार्श्वयोः ॥ ३६ ॥
नीलकण्ठाय शिरसि क्षिपेत् सर्वात्मने नमः ।
पापं नाशयते कृत्स्नमपि जन्मान्तरार्जितम् ॥ ३७ ॥
कण्ठोपरि कृतं पापं नष्टं स्यात्तत्र धारणात् ।
कर्णे तु धारणात् कर्णरोगादिकृतपातकम् ॥ ३८ ॥
बाह्वोर्बाहुकृतं पापं वक्षःसु मनसा कृतम् ।
नाभ्यां शिश्नकृतं पापं पृष्ठे गुदकृतं तथा ॥ ३९ ॥
पार्श्वयोर्धारणात् पापं परस्त्र्यालिङ्गनादिकम् ।
तद्भस्मधारणं कुर्यात् सर्वत्रैव त्रिपुण्ड्रकम् ॥ ४० ॥
ब्रह्मविष्णुमहेशानां त्र्यग्नीनां च धारणम् ।
गुणलोकत्रयाणां च धारणं तेन वै श्रुतम् ॥ ४१ ॥

उद्धूळनत्रिपुण्ड्रयोः किमनुष्ठेयं इत्यत आह—उद्धूळनेऽपीति । कुत्र धार्यं त्रिपुण्ड्रं इत्यत आह—ललाट इति ॥ ३२–३३ ॥ पर्यायान्तरेण त्रिपुण्ड्रविधिं तत्फलं चाह—त्रिणेत्रमिति ॥ ३४–४० ॥ येन यदा विधिवद्विभूतिधारणं कृतं तेन ब्रह्मादिधारणं कृतमित्यर्थः ॥ ४१ ॥

इति चतुर्थं ब्राह्मणम्

# पञ्चमं ब्राह्मणम्

वेदत्रयदृष्टिपूर्वकं त्रिपुण्ड्रधारणम

मानस्तोकेति मन्त्रेण मन्त्रितं भस्म धारयेत् ।
ऊर्ध्वपुण्ड्रं भवेत् साम मध्यपुण्ड्रं त्रियायुषम् ॥ १ ॥
त्रियायुषाणि कुरुते ललाटे च भुजद्वये ।
नाभौ शिरसि हृत्पार्श्वे ब्राह्मणाः क्षत्रियास्तथा ॥ २ ॥

पुनर्विधाऽन्तरेण भस्मधारणत्रिपुण्ड्रवेदत्रयदृष्टिब्राह्मणादिवर्णचतुष्टयभस्मभेदभस्मधारणविशिष्टफलं तद्दूषकमहापातकित्वं सर्ववर्णाश्रमावश्यधारकत्वं चाह भगवान् कालाग्निरुद्र इति श्रुतिराह—मा नस्तोकेनेति । "मा नस्तोके तनये" इति मन्त्रेण अभिमन्त्रितं त्रिपुण्ड्रं भस्म धारयेत् । तत्र ऊर्ध्वपुण्ड्रं साम भवेत्, ऋगाद्यपेक्षया साम्न ऊर्ध्वत्वात् । ऊर्ध्वभागविलसिततिर्यक्पुण्ड्रे सामदृष्टिः कर्तव्येत्यर्थः । मध्यपुण्ड्रं तु त्रियायुषं—याजुषमित्यर्थे यायुषमिति वर्णव्यत्ययः । मध्यस्थतिर्यक्पुण्ड्रं संहितापदक्रमत्रिशिष्टं त्रियायुषं विद्धीत्यर्थः । अधःस्थतिर्यक्पुण्ड्रे तु ऋग्वेददृष्टिः कर्तव्येत्यध्याहार्यम् ॥ १ ॥ य एवं रेखात्रये ऋक्सामत्रियायुषाणि तद्विशिष्टदृष्टिं कुरुते स विशिष्टफलभाक् भवतीत्यर्थः । यथा ब्राह्मणास्तथा क्षत्रियादयोऽपि ललाटे भुजद्वये नाभौ शिरसि हृत्पार्श्वे च त्रिपुण्ड्रं कुर्वन्त्वित्यर्थः ॥ २ ॥

वर्णाश्रमभेदानुसारेण भस्मविशेषविधिः

त्रैवर्णिकानां सर्वेषामग्निहोत्रसमुद्भवम् ।
इदं मुख्यं गृहस्थानां विरजानलजं भवेत् ॥ ३ ॥
विरजानलजं चैव धार्यं प्रोक्तं महर्षिभिः ।
औपासनसमुत्पन्नं गृहस्थानां विशेषतः ॥ ४ ॥

समिदग्निसमुत्पन्नं धार्यं वै ब्रह्म[1]चारिणा ।
शूद्राणां श्रोत्रियागारपचनाग्निसमुद्भवम् ॥ ५ ॥
अन्येषामपि सर्वेषां धार्यं [2]चैवानलोद्भवम् ।
यतीनां ज्ञानदं प्रोक्तं वनस्थानां विरक्तिदम् ।
अतिवर्णाश्रमाणां तु श्मशानाग्निसमुद्भवम् ॥ ६ ॥
सर्वेषां देवालयस्थं भस्म शिवाग्निजं शिवयोगिनाम् ।
शिवालयस्थं तल्लिङ्गलिप्तं वा मन्त्रसंस्कारदग्धं वा ॥ ७ ॥

त्रैवर्णिकानां त्रैवर्णिकैः श्रौताग्निहोत्रसमुद्भवं भस्म धार्यमित्यर्थः ॥ ३ ॥ गृहस्थैः विरजानलजं भस्म धार्यमिति महर्षिभिः प्रोक्तम् । औपासनसमुत्पन्नं यदि स्वीयं तदा गृहस्थैः विशेषतो धार्यं इति च ॥ ४ ॥ समिदाधानाग्निजं भस्म ब्रह्मचारिणा धार्यम् । शूद्रैः श्रोत्रियपचनाग्निजं भस्म धार्यम् ॥ ५ ॥ विधिवत्सिद्धभस्मालाभे सर्वेषां गोमयशुष्कजं भस्म धार्यमेव । तद्भस्म यतीनां ज्ञानदं, वनस्थानां विरक्तिदम् । अतिवर्णाश्रमस्थानामवधूतानां श्मशानाग्निजं भस्म विहितमित्यर्थः ॥ ६ ॥ सर्वेषां शिवयोगिनां शिवालयस्थं शिवाग्निजं शिवलिङ्गलिप्तं वा मन्त्रसंस्कारदग्धं वा विहितमित्यर्थः ॥ ७ ॥

### भस्मधारणे फलविशेषः

अत्रैते श्लोका भवन्ति—

तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।
येन विप्रेण शिरसि त्रिपुण्ड्रं भस्मना धृतम् ॥ ८ ॥
त्यक्तवर्णाश्रमाचारो लुप्तसर्वक्रियोऽपि यः ।
सकृत्तिर्यक्त्रिपुण्ड्राङ्कधारणात् सोऽपि पूज्यते ॥ ९ ॥

[1] चारिणः—अ १, उ १.

[2] दावा—अ १.

एवं विधिभस्मधारी कृतार्थो भवति तद्विपरीतस्तद्दूषको वा हीयत इत्यस्मिन्नर्थे प्रकाशकाः एते मन्त्रा भवन्तीत्याह—अत्रैते श्लोका भवन्तीति । "तेनाधीतं" इत्यादि "धिग्विद्यामशिवात्मिकां" इत्यन्तं स्पष्टम् ॥ ८–१७ ॥

भस्मधारणविमुखस्य दूषणम्

ये भस्मधारणं त्यक्त्वा कर्म कुर्वन्ति मानवाः ।
तेषां नास्ति विनिर्मोक्षः संसाराज्जन्मकोटिभिः ॥ १० ॥
महापातकयुक्तानां पूर्वजन्मार्जितागसाम् ।
त्रिपुण्ड्रोद्धूलने द्वेषो जायते सुदृढं बुधाः ॥ ११ ॥
येषां कोपो भवेद्ब्रह्मन् ललाटे भस्मदर्शनात् ।
तेषामुत्पत्तिसांकर्यमनुमेयं विपश्चिता ॥ १२ ॥
येषां नास्ति मुने श्रद्धा श्रौते भस्मनि सर्वदा ।
गर्भाधानादिसंस्कारस्तेषां नास्तीति निश्चयः ॥ १३ ॥
ये भस्मधारिणं दृष्ट्वा नराः कुर्वन्ति ताडनम् ।
तेषां चण्डालतो जन्म ब्रह्मन्नूह्यं विपश्चिता ॥ १४ ॥
येषां क्रोधो भवेद्भस्मधारणे तत्प्रमाणके ।
ते महापातकैर्युक्ता इति शास्त्रस्य निश्चयः ॥ १५ ॥
त्रिपुण्ड्रं ये विनिन्दन्ति निन्दन्ति शिवमेव ते ।
धारयन्ति च ये भक्त्या धारयन्ति शिवं च ते ॥ १६ ॥
धिग्भस्मरहितं फालं धिग्ग्राममशिवालयम् ।
धिगनी[1]शार्चनं जन्म धिग्विद्यामशिवात्मिकाम् ॥ १७ ॥

[1] शात्मकं—अ १, अ २, उ १.

[illegible]

रुद्राग्नेर्यत् परं वीर्यं तद्भस्म परिकीर्तितम् ।
तस्मात् सर्वेषु कालेषु वीर्यवान् भस्मसंयुतः ॥ १८ ॥
भस्मनिष्ठस्य दह्यन्ते दोषा भस्माग्निसंगमात् ।
भस्मज्ञानविशुद्धात्मा भस्मनिष्ठ इति स्मृतः ॥ १९ ॥
भस्मसंदिग्धसर्वाङ्गो भस्मदीप्तत्रिपुण्ड्रकः ।
भस्मशायी च पुरुषो भस्मनिष्ठ इति स्मृतः ॥ २० ॥

स्वातिरिक्तभ्रमद्रावको हि रुद्रः स एव अग्निः तस्य यत् परं वीर्यं स्वातिरिक्तासंभवप्रबोधजनकसामर्थ्यं तदेव स्वातिरिक्तभस्म स्वातिरिक्तापह्नवसिद्धं ब्रह्मेति स्मृतम् । यस्मादेवं तस्मात् कालत्रयेऽपि स्वातिरिक्तभस्मसंयुतः पुमान् वीर्यवान् भवेत् ॥ १८ ॥ एवं भस्मनिष्ठस्य भस्माग्निसङ्गमात् स्वातिरिक्तास्तिताभ्रान्तिसंभवा दोषाः दह्यन्ते भस्मभावं भजन्ति । इत्थंभूतो भस्मज्ञानविशुद्धात्मा भस्मनिष्ठो भवति इति स्मृतः ॥ १९ ॥ यद्वा—भस्मसन्दिग्धसर्वाङ्गः ज्ञानाग्निभस्मीकृतसर्वाङ्गः भस्मावकुण्ठितसर्वाङ्गो वा भस्मसंदीप्तत्रिपुण्ड्रकः भस्मशायी च पुमान् भस्मनिष्ठो भवति इति स्मृतः ॥ २० ॥

इति पञ्चमं ब्राह्मणम्

## षष्ठं ब्राह्मणम्

नामपञ्चकमाहात्म्यजिज्ञासा

अथ भुसुण्डः कालाग्निरुद्रं नामपञ्चकस्य माहात्म्यं ब्रूहीति होवाच ॥ १ ॥

विभूत्यादिनामपञ्चकमाहात्म्यबुभुत्सया भुसुण्डो भगवन्तं पृच्छतीत्याह—अथेति ॥ १ ॥

भस्ममाहात्म्यख्यापनार्था करुणाख्यायिका

अथ वसिष्ठवंशजस्य शतभार्यासमेतस्य धनंजयस्य ब्राह्मणस्य ज्येष्ठभार्यायाः पुत्रः करुण इति नाम । तस्य शुचिस्मिता भार्या । असौ करुणो भ्रातृवैरमसहमानो भवानीतटस्थं नृसिंहमगमत् । तत्र देवसमीपेऽन्येनोपायनार्थं समर्पितं जम्बीरफलं गृहीत्वाऽजिघ्रत् । तदा तत्रस्था अशपन् पाप मक्षिको भव वर्षाणां शतमिति । सोऽपि शापमादाय मक्षिकः सन् स्वचेष्टितं तस्यै निवेद्य मां रक्षेति स्वभार्यामवदत् । तदा मक्षिकोऽभवत् । तमेवं ज्ञात्वा ज्ञातयस्तैलमध्ये ह्यमारयन् । सा मृतं पतिमादायारुन्धतीमगमत् । भो शुचिस्मिते शोकेनालमरुन्धत्याहामुं जीवयाम्यद्य विभूतिमादायेति । एषाऽग्निहोत्रजं भस्म—

मृत्युंजयेन मन्त्रेण मृतजन्तौ तदाऽक्षिपत् ।
मन्दवायुस्तदा जज्ञे व्यजनेन शुचिस्मिते ॥ २ ॥
उदतिष्ठत्तदा जन्तुर्भस्मनोऽस्य प्रभावतः ।
ततो वर्षशते पूर्णे ज्ञातिरेको ह्यमारयत् ॥ ३ ॥
भस्मैव जीवयामास काश्यां पञ्च तथाऽभवन् ।
देवानपि तथाभूतान् मामप्येतादृशं पुरा ॥ ४ ॥
तस्मात्तु भस्मना जन्तुं जीवयामि [1]तदाऽनघे ।

[1] तथान—क.

इत्येवमुक्त्वा भगवान् दधीचिः समजायत ।
स्वरूपं च ततो गत्वा स्वमाश्रमपदं ययाविति ॥ ॥ ५ ॥

एवं पृष्टो भगवान् आख्यायिकां वक्तव्यार्थं प्रमाणयति— अथेति ॥२–३॥ यस्मात् देवानपि तथाभूतान् स्वकृतदोषतो विपरीतभावमापन्नान् मामप्येतादृशं भस्मैव जीवयामासेति यस्मादेवं विश्रुतं तस्मान् मक्षिकत्वमापन्नमेतं जन्तुं हे अनघे शुचिस्मिते भस्मना जीवयामीत्युक्त्वा मक्षिकत्वमापन्नकरुणोपरि भस्म प्राक्षिपत् । ततोऽसौ करुणो भगवान् द्विजशापात् आगतमक्षिकत्वं विहाय दधीचिरिति नाम्ना समजायत । ततो यथापूर्वस्थितिं गत्वा स्वमाश्रमपदं ययौ । धनञ्जयसूनुः यथावत् स्वाश्रमं गतवानित्यर्थः । इतिशब्दः करुणाख्यायिकासमाप्त्यर्थः ॥ ४–५ ॥

भस्मनः पापघ्नत्वख्यापनार्था अहल्याख्यायिका

इदानीमस्य भस्मनः सर्वाघभक्षणसामर्थ्यं विधत्त इत्याह । श्रीगौतमविवाहकाले तामहल्यां दृष्ट्वा सर्वे देवाः कामातुरा अभवन् । तदा नष्टज्ञाना [1]दुर्वाससं गत्वा पप्रच्छुः । तद्दोषं शमयिष्यामीत्युवाच । ततः शतरुद्रेण मन्त्रेण मन्त्रितं भस्म वै पुरा मयाऽपि दत्तं तेनैव ब्रह्महत्याऽऽदि शान्तम् ॥ ६ ॥

इत्येवमुक्त्वा दूर्वासा दत्तवान् भस्म चोत्तमम् ।
जाता मद्वचनात् सर्वे यूयं तेऽभिकन्तजसः ॥ ७ ॥
शतरुद्रेण मन्त्रेण भस्मोद्धूलितविग्रहाः ।
निर्धूतरजसः सर्वे तत्क्षणाच्च वयं मुने ।
आश्चर्यमेतज्जानीमो भस्मसामर्थ्यमीदृशम् ॥ ८ ॥

[1] दूर्वा—ड १.

सर्वपापघ्नं भस्मेत्यत्र आख्यायिकाऽन्तरमाह—इदानीमिति ॥ ६–८ ॥

भस्मनः हरिशंकरज्ञानप्रदत्वम्

अस्य भस्मनः शक्तिमन्यां शृणु । एतदेव हरिशंकरयोर्ज्ञानप्रदं ब्रह्महत्याऽऽदिपापनाशकं महाविभूतिदमिति ॥ ९ ॥ शिववक्षसि स्थितं नखेनादाय प्रणवेनाभिमन्त्र्य गायत्र्या पञ्चाक्षरेणाभिमन्त्र्य हरिमस्तकगात्रेषु समर्पयेत् । [1]तदा हृदि ध्यायस्वेति हरिमुक्त्वाऽथ हरिः स्वहृदि ध्यात्वा दृष्टो दृष्ट इति शिवमाह ॥ १० ॥

ततो भस्म भक्षयेति हरिमाह हरस्ततः ।
भक्षयिष्ये शिवं भस्म स्नात्वाऽहं भस्मना पुरा ॥ ११ ॥
पृष्ट्वेश्वरं भक्तिगम्यं भस्माभक्षयदच्युतः ।
तत्राश्चर्यमतीवासीत् प्रतिबिम्बसमद्युतिः ॥ १२ ॥
वासुदेवः शुद्धमुक्ताफलवर्णोऽभवत् क्षणात् ।
तदाप्रभृति शुक्लाभो वासुदेवः प्रसन्नवान् ॥ १३ ॥
न शक्यं भस्मनो [2]ज्ञानप्रभावं ते कुतो विभो ।
नमस्तेऽस्तु नमस्तेऽस्तु त्वामहं शरणं गतः ॥ १४ ॥
त्वत्पादयुगले शंभो भक्तिरस्तु सदा मम ।
भस्मधारणसंपन्नो मम भक्तो भविष्यति ॥ १५ ॥

पुनरपि भस्म स्तौति—अस्येति । किं तन्माहात्म्यं इत्यत्राह—एतदेवेति ॥ ९ ॥ कथमस्य हरिशङ्करज्ञानप्रदत्वमित्यत्र आख्यायिकामवतारयति—

[1] ततो—क.

[2] ज्ञानेप्र—अ १, क.

शिववक्षसीति। शिवस्य शिवत्वहेतु स्वातिरिक्तभस्मैव शिवत्वसिद्धेः स्वातिरिक्ता-*शिवत्वापह्नवपूर्वकत्वात् तथा* हरेरपि ज्ञानप्रदं भस्मैव। तत् कथमित्यत्राऽऽह—तदेति ॥ १०–१३ ॥ यद्भस्मस्पर्शनभक्षणाभ्यां नीलवर्णो वासुदेवः शुक्लवर्णोऽभवत् तद्भस्ममाहात्म्यं वक्तुं न शक्यमित्याह—न शक्यमिति। हे विभो व्यापकेश्वर ते तव भस्मनो ज्ञानप्रभावं त्वयाऽपि ज्ञातुं न हि शक्यम्। कुतो (न) मया तत् ज्ञातुं शक्यम्। यतस्त्वं स्वातिरिक्तभस्मसिद्धोऽसि अतस्ते नमोऽस्त्वित्याह—नम इति ॥ १४ ॥ हरिणा प्रार्थितो हर आह—भस्मेति। यो भस्मधारी स मद्भक्त एवेत्यर्थः ॥ १५ ॥

भस्मनः भूतिकरत्वम्

अत एवैषा भूतिर्भूतिकरीत्युक्ता। अस्य पुरस्ताद्वसव आसन् रुद्रा दक्षिणत आदित्याः पश्चाद्विश्वेदेवा उत्तरतो ब्रह्मविष्णुमहेश्वरा नाभ्यां सूर्याचन्द्रमसौ पार्श्वयोः ॥ १६ ॥

यत एवं अत एवेति। ननु कथं इत्यत्र वस्वादिविभूतीनामेतदायत्तत्वात् इत्याह—अस्येति। अस्य भस्मनो वस्वाद्यास्पदत्वात् वस्वादिभूतीनां तदायत्तत्वात् भूतेः भूतिकरत्वं युज्यत इत्यर्थः ॥ १६ ॥

ब्रह्मभावरहितज्ञानतत्साधनानां वैयर्थ्यम्

तदेतदृचाऽभ्युक्तम्—

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥ १७ ॥

स्वातिरिक्तभस्मसिद्धब्रह्ममात्रज्ञानतत्साधनानां ब्रह्मभावादृते वैयर्थ्यं स्यादित्येतदृगादिनाऽभ्युक्तमित्याह—तदेतदृचाऽभ्युक्तमिति। ऋगादयः सर्ववेदाः

अक्षरे स्वातिरिक्तक्षरभस्मतः सिद्धे परमे व्योमनि निषेदुः यस्मिन्नक्षरे विराडादयो देवाः अधिनिषेदुः । यदृगादिवेदमस्तकप्रतिपाद्यं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति ऋगादिवेदविहितकर्मचित्तशुद्धिसंन्यासश्रवणादिसाधनेन यदि यो न वेद तदा स ऋचा किं करिष्यति न किमपीत्यर्थः । ये ऋगादितज्जकर्मसंन्यासश्रवणादिसञ्जातज्ञानेन विदुस्त इमे ब्रह्मविद्वरीयांसस्ते स्वे महिम्नि समासते ब्रह्मैव भवन्तीत्यर्थः ॥ १७ ॥

बृहज्जाबालविद्यामहिमा

यदेतद्बृहज्जाबालं सार्व[1]कामिकं मोक्षद्वारमृङ्मयं यजुर्मयं साममयं ब्रह्ममयममृतमयं भवति । यदेतद्बृहज्जाबालं बालो वा युवा वा वेद स महान् भवति । स गुरुः सर्वेषां मन्त्राणामुपदेष्टा भवति । मृत्युतारकं गुरुणा लब्धं कण्ठे बाहौ शिखायां वा बध्नीत । सप्तद्वीपवती भूमिर्दक्षिणार्थं नावकल्पते तस्माच्छ्रद्धया यां कांचिद्गां दद्यात् सा दक्षिणा भवति ॥ १८ ॥

यदेतत्स्वातिरिक्तभस्मज्ञानप्रकाशकं ग्रन्थजातं तदपि तन्मयमिति स्तौति—यदेतदिति । ऋगादिसाहचर्यात् ब्रह्मशब्देन अथर्ववेद उच्यते । यदेतद्ग्रन्थजातार्थवित् सर्वज्ञेश्वरो भवति एतदुपदेष्टुः सर्वस्वमपि दातुं नालमित्याह—यदिति ॥ १८ ॥

इति षष्ठं ब्राह्मणम्

---

[1] कालिकं—क.

# सप्तमं ब्राह्मणम्

त्रिपुण्ड्रविधिः

अथ जनको वैदेहो याज्ञवल्क्यमुपसमेत्योवाच भगवन् त्रिपुण्ड्रविधिं नो ब्रूहीति ॥ १ ॥

स होवाच सद्योजातादिपञ्चब्रह्ममन्त्रैः परिगृह्याग्निरिति भस्मेत्यभिमन्त्र्य मानस्तोक इति समुद्धृत्य त्रियायुषमिति जलेन संसृज्य त्र्यम्बकं यजामह इति मन्त्रेण शिरोललाटवक्षःस्कन्धेषु त्रिपुण्ड्रं धृत्वा पूतो भवति मोक्षी भवति । शतरुद्रेण यत् फलमवाप्नोति तत् फलमश्नुते स एष भस्मज्योतिरिति वै याज्ञवल्क्यः ॥ २ ॥

त्रिपुण्ड्रविषये जनकयाज्ञवल्क्याख्यायिकामवतारयति—अथेति ॥ १ ॥ जनकप्रश्नोत्तरं मुनिराह—स होवाचेति । एतदर्थस्य पुरा प्रपञ्चितत्वात् नेह पुनरर्थो वर्णितः ॥ २ ॥

भस्मधारणफलम्

जनको ह वैदेहः स होवाच याज्ञवल्क्यं [1]भस्मधारणात् किं फलमश्नुत इति ॥ ३ ॥

स होवाच तद्भस्मधारणादेव मुक्तिर्भवति तद्भस्मधारणादेव शिवसायुज्यमवाप्नोति न स पुनरावर्तते न स पुनरावर्तते स एष भस्मज्योतिरिति वै याज्ञवल्क्यः ॥ ४ ॥

[1] भस्मधारिणा—उ.

जनको ह वैदेहः स होवाच याज्ञवल्क्यं भस्मधारणात् किं फलमश्नुते न वेति ॥ ५ ॥

तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदूर्वासऋभुनिदाघजड-भरतदत्तात्रेयरैवतकभुसुण्डप्रभृतयो विभूतिधारणादेव मुक्ताः स्युः स एष भस्मज्योतिरिति वै याज्ञवल्क्यः ॥ ६ ॥

पुनर्भस्मधारणफलं पृच्छति—जनक इति ॥ ३ ॥ स्वातिरिक्तं भस्मेति धारणात् निश्चयज्ञानात् स्वमात्रावशेषणरूपेयं मुक्तिः भवतीत्यर्थः ॥ ४ ॥ श्रुतार्थदार्ढ्याय पुनः पृच्छतीत्याह—जनक इति ॥ ५ ॥ राज्ञा पृष्टेऽर्थे शिष्टाचारं प्रमाणयति—तत्रेति ॥ ६ ॥

भस्मस्नानफलम्

जनको ह वैदेहः स होवाच याज्ञवल्क्यं भस्मस्नानेन किं जायत इति ॥ ७ ॥

यस्य कस्यचिच्छरीरे यावन्तो रोमकूपास्तावन्ति लिङ्गानि भूत्वा तिष्ठन्ति ब्राह्मणो वा क्षत्रियो वा वैश्यो वा शूद्रो वा तद्भस्मधारणादेतच्छन्दस्य रूपं यस्यां तस्यां ह्येवावतिष्ठते ॥ ८ ॥

भस्मस्नानं किंफलकं इति पुनः पृच्छति—जनक इति ॥ ७ ॥ पृष्टो मुनिराह—यस्येति ॥ ८ ॥

त्रिपुण्ड्रमाहात्म्यम्

जनको ह वैदेहः पैप्पलादेन सह प्रजापतिलोकं जगाम तं गत्वोवाच भो प्रजापते त्रिपुण्ड्रस्य माहात्म्यं ब्रूहीति ॥ ९ ॥

तं प्रजापतिरब्रवीद्यथैवेश्वरस्य माहात्म्यं तथैव त्रिपुण्ड्रस्येति ॥ १० ॥

अथ पैप्पलादो वैकुण्ठं जगाम तं गत्वोवाच भो विष्णो त्रिपुण्ड्रस्य माहात्म्यं ब्रूहीति ॥ ११ ॥

यथैवेश्वरस्य माहात्म्यं तथैव त्रिपुण्ड्रस्येति विष्णुराह ॥ १२ ॥

गुरुदेवतापरायणोऽपि सम्राट् पामरलोकसंशयोच्छित्तये ब्रह्मविष्णुरुद्रलोकान् गत्वा ब्रह्मादिमुखतोऽपि त्रिपुण्ड्रमाहात्म्यमवगम्य सर्वत्र प्रकाशयामासेत्याह—जनक इति ॥ ९-१४ ॥

विभूतिधारणमहिमा

अथ पैप्पलादः कालाग्निरुद्रं परिसमेत्योवाचाधीहि भगवन् त्रिपुण्ड्रस्य विधिम् ॥ १३ ॥

त्रिपुण्ड्रस्य विधिर्मया वक्तुं न शक्यमिति सत्यमिति होवाच । अथ भस्मच्छन्नः संसारान्मुच्यते । भस्मशय्याशयानस्तच्छब्दगोचरः शिवसायुज्यमवाप्नोति न स पुनरावर्तते न स पुनरावर्तते । रुद्राध्यायी सन्नमृतत्वं च गच्छति । स एष भस्मज्योतिः । विभूतिधारणाद्ब्रह्मैकत्वं च गच्छति विभूतिधारणादेव सर्वेषु तीर्थेषु स्नातो भवति विभूतिधारणाद्वाराणस्यां स्नानेन यत् फलमवाप्नोति तत् फलमश्नुते । स एष भस्मज्योतिः । यस्य कस्यचिच्छरीरे त्रिपुण्ड्रस्य लक्ष्म वर्तते प्रथमा प्रजापतिर्द्वितीया विष्णुस्तृतीया सदाशिव इति स एष भस्मज्योतिः स एष भस्मज्योतिरिति ॥ १४ ॥

रुद्राक्षधारणजिज्ञासा

अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छाधीहि भगवन् रुद्राक्षधारणविधिम् ॥ १५ ॥

सनत्कुमारो मुनिः रुद्राक्षोत्पत्तिपरिज्ञानपूर्वकं तद्धारणविधिं ज्ञातुमिच्छन् पृच्छतीत्याख्यायिकामवतारयति—अथेति ॥ १५ ॥

रुद्राक्षजन्म

स होवाच रुद्रस्य नयनादुत्पन्ना रुद्राक्षा इति लोके ख्यायन्ते । सदाशिवः संहारं कृत्वा संहाराक्षं मुकुलीकरोति तन्नयनाज्जाता रुद्राक्षा इति होवाच । तस्माद्रुद्राक्षत्वमिति ॥ १६ ॥

मुनिना पृष्टः स होवाच ॥ १६ ॥

रुद्राक्षधारणमहिमा

तद्रुद्राक्षे वाग्विषये कृते दशगोप्रदानेन [1]यत् फलमवाप्नोति तत् फलमश्नुते । स एष भस्मज्योती रुद्राक्ष इति । तद्रुद्राक्षं करेण स्पृष्ट्वा धारणमात्रेण द्विसहस्रगोप्रदानफलं भवति । तद्रुद्राक्षे कर्णयोर्धार्यमाणे एकादशसहस्रगोप्रदानफलं भवति एकादशरुद्रत्वं च गच्छति । तद्रुद्राक्षे शिरसि धार्यमाणे कोटिगोप्रदानफलं भवति । एतेषां स्थानानां कर्णयोः फलं वक्तुं न शक्यमिति होवाच । मूर्ध्नि चत्वारिंशच्छिखायामेकं त्रयं वा श्रोत्रयोर्द्वादश द्वादश कण्ठे

[1] यत् फलं भवति तत्—उ, उ १.

द्वात्रिंशद्बाह्वोः षोडश षोडश द्वादश द्वादश मणिबन्धयोः षट् षडङ्गुष्ठयोस्ततः संध्यां सकुशोऽहरहरुपासीत। अग्निर्ज्योतिरित्यादिभिरग्नौ जुहुयात् ॥ १७ ॥

"अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिस्सूर्यः स्वाहा" इति मन्त्रेणाज्याहुतीरग्नौ जुहुयात् न हि रुद्राक्षाहुतीरित्यर्थः ॥ १७ ॥

इति सप्तमं ब्राह्मणम्

## अष्टमं ब्राह्मणम्

उपनिषत्पारायणफलजिज्ञासा

अथ बृहज्जाबालस्य फलं नो ब्रूहि भगवन्निति ॥ १ ॥

अहरहरर्थानुसन्धानपूर्वकमुपनिषत्पारायणफलेयत्तां पृच्छति—अथेति ॥१॥

सर्वपूतत्वम्

स होवाच य एतद्बृहज्जाबालं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो भवति स सोमपूतो भवति स ब्रह्मपूतो भवति "स विष्णुपूतो भवति स रुद्रपूतो भवति स सर्वपूतो भवति "स सर्वपूतो भवति ॥ २ ॥

अग्न्यादिना पूतो भवति अग्न्यादिवत् पूतो भवतीति वेत्यर्थः ॥ २ ॥

अग्न्यादिस्तम्भनम्

य एतद्बृहज्जाबालं नित्यमधीते सोऽग्निं स्तम्भयति स वायुं स्तम्भयति स आदित्यं स्तम्भयति स सोमं स्तम्भयति स उदकं स्तम्भयति स सर्वान् देवान् स्तम्भयति स सर्वान् ग्रहान् स्तम्भयति स विषं स्तम्भयति स विषं स्तम्भयति ॥ ३ ॥

किंच—य एतदिति ॥ ३–५ ॥

मृत्य्वादितरणम्

य एतद्बृहज्जाबालं नित्यमधीते स मृत्युं [1]तरति स पाप्मानं तरति स ब्रह्महत्यां तरति स भ्रूणहत्यां तरति स वीरहत्यां तरति स सर्वहत्यां तरति स संसारं तरति स सर्वं तरति स सर्वं तरति ॥ ४ ॥

सर्वलोकजयः

य एतद्बृहज्जाबालं नित्यमधीते स भूर्लोकं जयति स भुवर्लोकं जयति स सुवर्लोकं जयति स महर्लोकं जयति स जनोलोकं जयति स तपोलोकं जयति स सत्यलोकं जयति स सर्वान् लोकान् जयति स सर्वान् लोकान् जयति ॥ ५ ॥

सर्वशास्त्रज्ञानम्

य एतद्बृहज्जाबालं नित्यमधीते स ऋचोऽधीते स यजूंष्यधीते स सामान्यधीते सोऽथर्वणमधीते सोऽङ्गिरसमधीते स शाखां अधीते

[1] जयति—अ १, अ २, क.

स कल्पानधीते स नाराशंसीरधीते स पुराणान्यधीते स ब्रह्मप्रणव-
मधीते स ब्रह्मप्रणवमधीते ॥ ६ ॥

यत्र व्यष्टिसमष्ट्यात्मकजाग्रज्जाग्रदादितद्व्यष्टिसमष्ट्यारोपापवादाधिकरण-विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तचतुष्पञ्चदशकलनापह्नवतां भजति तदपह्नव-सिद्धोऽयं परमात्मा तुर्यतुर्यो ब्रह्मप्रणवशब्देनोच्यते। तत्रापह्नोतव्यजाग्रज्जाग्रदादि-चतुष्पञ्चदशकलनाया अपि तादर्थ्येन तस्या अपि गौण्या वृत्त्या ब्रह्मप्रणवत्वं युज्यत इत्यर्थः ॥ ६ ॥

बृहज्जाबालाध्यापकस्य सर्वोत्तमत्वम्

अनुपनीतशतमेकमेकेनोपनीतेन तत्सममुपनीतशतमेकमेकेन गृहस्थेन तत्समं गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समं वानप्रस्थ-शतमेकमेकेन यतिना तत्समं यतीनां तु शतं पूर्णमेकमेकेन रुद्रजापकेन तत्समं रुद्रजापकशतमेकमेकेन अथर्वशिरःशिखाऽध्या-पकेन तत्सममथर्वशिरःशिखाऽध्यापकशतमेकमेकेन बृहज्जाबालोपनि-षदध्यापकेन तत्समम् ॥ ७ ॥

अत एव ग्रन्थपारायणस्य फलाधिक्यं दर्शयति—अनुपनीतेति ॥ ७ ॥

बृहज्जाबालजपशीलस्य परंधामप्राप्तिः

तद्वा एतत् परं धाम बृहज्जाबालोपनिषज्जपशीलस्य यत्र न सूर्यस्तपति यत्र न वायुर्वाति यत्र न चन्द्रमा भाति यत्र न नक्षत्राणि भान्ति यत्र नाग्निर्दहति यत्र न मृत्युः प्रविशति यत्र न दुःखानि प्रविशन्ति सदानन्दं परमानन्दं शान्तं शाश्वतं सदाशिवं

ब्रह्मादिवन्दितं योगिध्येयं परं पदं यत्र गत्वा न निवर्तन्ते योगिनः ॥ ८ ॥

यत्र स्वातिरिक्तभस्माधिकरणे सूर्यादयो न भान्ति मृत्युरपि यत्पदं स्प्रष्टुं न हि पारयति बृहज्जाबालोपनिषदर्थमननं कुर्वतः तद्वा एतत्परं धाम तद्धि सदानन्दं इत्यादिनवविशेषणविशिष्टम ॥ ८ ॥

परंधामस्वरूपम्

तदेतदृचाऽभ्युक्तम्—

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम ॥ ९ ॥
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत्परमं पदम् ॥ ॐ सत्यमित्युपनिषत् ॥ १० ॥

"यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इत्यादिस्मृतिसिद्धं यद्धाम तदेतदृचा मन्त्रेणापि प्रतिपादितम । किं तत् ?—स्वाज्ञदृष्टिप्रसक्तप्रपञ्चाधिकरणतया विष्णोः व्यापकस्य व्याप्यसापेक्षव्यापकत्वाधिष्ठानत्वासंभवप्रबोधसिद्धं निरधिष्ठानतया परमं निरतिशयं स्वमात्रतया पद्यत इति पदं यत् तद्विष्णोः परमं पदं "राहोः शिरः" इतिवत् विष्णुयाथात्म्यं स्वातिरिक्तभस्मसिद्धं ब्रह्ममात्रं स्वावशेषतया सूरयः सदा पश्यन्ति । पश्यन्तीति व्यपदेशतः परिच्छेदता स्यादित्यत आह—दिवीति । दिवि द्योतनात्मके ब्रह्मणि इव चक्षुः दृष्टिर्दर्शनं तद्गोचरज्ञानं आततं अपरिच्छिन्नं तद्वद्विष्णुपदं निष्प्रतियोगिकपूर्णम् ॥ ९ ॥ सूरयः कीदृशाः ? विप्रासो विप्राः विपन्यवो विगतमन्यवः मन्युहेतुस्वातिरिक्तस्य स्वभावं गतत्वात् अतो जागृवांसः स्वाज्ञाननिद्राऽसंभवात् नित्यं जागरूकाः। यद्विष्णोः परमं पदं पश्यन्ति तद्दर्शनसमकालं तत् पदं समिन्धते तन्मात्रतया

अवशिष्यन्ते । इति एवं यत् प्रतिपादितं तत् ओं तुरीयोङ्काराग्रविद्योतत्वात् । तदेव तुर्यतुर्यं ब्रह्म सत्यं निष्प्रतियोगिकसन्मात्रत्वात् । इत्युपनिषच्छब्दः प्रकृतोपनिषत्समाप्त्यर्थः ॥ १० ॥

इत्यष्टमं ब्राह्मणम्

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं बृहज्जाबालभासकम् ।
बृहज्जाबालटीकेयमशीत्यधिचतुःशतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे षड्विंशतिसङ्ख्यापूरकं बृहज्जाबालोपनिषद्विवरणं सम्पूर्णम्

---

# भस्मजाबालोपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

## प्रथमोऽध्यायः

त्रिपुण्ड्रविधिजिज्ञासा

अथ जाबालो भुसुण्डः कैलासशिखरावासमोंकारस्वरूपिणं महादेवमुमाऽर्धकृतशेखरं सोमसूर्याग्निनयनमनन्तेन्दुरविप्रभं व्याघ्रचर्माम्बरधरं मृगहस्तं भस्मोद्धूलितविग्रहं तिर्यक्त्रिपुण्ड्ररेखाविराजमानफालप्रदेशं स्मितसंपूर्णपञ्चविधपञ्चाननं वीरासनारूढमप्रमेयमना[1]द्यनन्तं निष्कलं निर्गुणं शान्तं निरञ्जनमनामयं हुम्फट्कुर्वाणं शिवनामान्यनिशमुच्चरन्तं हिरण्यबाहुं हिरण्यरूपं हिरण्यवर्णं हिरण्यनिधिमद्वैतं चतुर्थं ब्रह्मविष्णुरुद्रातीतमेकमाशास्यं भगवन्तं शिवं प्रणम्य मुहुर्मुहुरभ्यर्च्य श्रीफलदलैस्तेन भस्मना च नतोत्तमाङ्गः कृताञ्जलिपुटः पप्रच्छ—अधीहि भगवन् वेदसारमुद्धृत्य त्रिपुण्ड्रविधिं यस्मादन्यानपेक्षमेव मोक्षोपलब्धिः । किं भस्मनो द्रव्यम् । कानि

[1] द्यन्तं—क. द्यनन्तनि—अ १, अ २.

स्थानानि । मन्त्रोऽप्यत्र के वा । कति वा तस्य धारणम् । के वाऽधिकारिणः । नियमस्तेषां -को वा । मामन्तेवासिनमनुशासयामोक्षमिति[1] ॥ १ ॥

यत्सम्यग्ज्ञानकालाग्निः स्वातिरिक्तास्तिताभ्रमम् ।
करोति भस्म निःशेषं तद्ब्रह्मैवास्मि केवलम् ॥

इह खल्वथर्वणवेदप्रविभक्तेयं भस्मजाबालोपनिषत् भस्मोद्धूळनत्रिपुण्ड्र-शिवार्चनकाशीमाहात्म्यप्रकटनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः संक्षेपतो विवरणमारभ्यते । जाबालिशिवप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति — अथेति । ओंकारस्वरूपिणं ओंकारार्थतुर्यरूपिणम् । स्वातिरिक्ताशिवपटलं हुंफट्कुर्वाणं दूरादुन्मारयन्तम् । पप्रच्छ किमिति— अधीहीति । यस्मादन्यानपेक्षमेव मोक्षोपलब्धिः तन्मे ब्रूहीत्यर्थः ॥ १ ॥

प्रातःकृत्यं होमादिकम्

अथ स होवाच भगवान् परमेश्वरः परमकारुणिकः प्रमथान् सुरानपि सोऽन्वीक्ष्य ॥ २ ॥

पूतं प्रातरुदय होमयं ब्रह्मपर्णे निधाय त्र्यम्बकमिति मन्त्रेण शोषयेत् । येन केनापि तेजसा तन्त्रगृह्योक्तमार्गेण प्रतिष्ठाप्य वह्निं तत्र तद्धोमयद्रव्यं निधाय सोमाय स्वाहेति मन्त्रेण ततस्तिलव्रीहिभिः साज्यैर्जुहुयात् । अयं तेनाष्टोत्तरसहस्रं सार्वसंनद्धा । तत्राज्यस्य पर्णमयी जुहूर्भवति । तेन न पापं शृणोति । तद्धोममन्त्रस्त्र्यम्बक-मित्येव । अन्ते स्विष्टकृत पूर्णाहुतिस्ततेनवाष्टदिक्षु बलिप्रदानम् ॥२॥

[1] य मो—अ १.

क्रमेण प्रश्नोत्तरं अथ स इति । यैरेवं पञ्चप्रश्नाः कृताः तान् **प्रमथान्** ॥ २ ॥ किं भस्मनो द्रव्यं इत्याद्यप्रश्नमपाकरोति--**पूतमिति । अयं तेनाष्टोत्तरसहस्रं** सार्धमेतद्वा "सोमाय स्वाहा" इति मन्त्रेण सार्धं **अयं** तेनेत्यष्टोत्तरसहस्रं जुहुयादित्यर्थः । अन्ते तद्धोमान्ते । **अष्टदिक्षु बलिदानं** "त्र्यम्बकं" इति मन्त्रेण कुर्यादित्यर्थः ॥ ३ ॥

भस्मधारणविधिः

तद्भस्म गायत्र्या संप्रोक्ष्य तद्धेमे राजते ताम्रे मृण्मये वा पात्रे निधाय [1]रुद्रमन्त्रैः पुनरभ्युक्ष्य शुद्धदेशे संस्थापयेत् । ततो भोजयेद्ब्राह्मणान् । ततः स्वयं पूतो भवति ॥ ४ ॥

मानस्तोक इति मन्त्रेणा जातमित्यादिपञ्चब्रह्ममन्त्रैर्भस्म संगृह्याग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म देवा भस्म ऋषयो भस्म सर्वं ह वा एतदिदं भस्म पूतं पावनं नमामि सद्यः समस्तावशामकमिति शिरसाऽभिनम्य पूते वामहस्ते वामदेवायेति निधाय त्र्यम्बकमिति संप्रोक्ष्य शुद्धं शुद्धेनेति संमृज्य संशोध्य तेनैवापादशीर्षमुद्धूलनमाचरेत् । तत्र ब्रह्ममन्त्राः पञ्च ॥ ५ ॥

ततः शेषस्य भस्मनो विनियोगः । तर्जनीमध्यमानामिकाभिरग्नेर्भस्मासीति भस्म संगृह्य मूर्धानमिति मूर्धन्यग्रे न्यसेत् त्र्यम्बकमिति ललाटे नीलग्रीवायेति कण्ठे कण्ठस्य दक्षिणे पार्श्वे त्र्यायुषमिति वामेति कपोलयोः कालायेति नेत्रयोस्त्रिलोचनायेति श्रोत्रयोः शृणवामेति वक्त्रे प्रब्रवामेति हृदये आत्मन इति नाभौ

[1] रुद्रसूक्तैः--उ, उ १.

[1]नाभिरिति मन्त्रेण दक्षिणभुजमूले भवायेति तन्मध्ये रुद्रायेति तन्मणिबन्धे शर्वायेति तत्करपृष्ठे पशुपतय इति वामबाहुमूले उग्रायेति तन्मध्ये अग्रेवधायेति तन्मणिबन्धे दूरेवधायेति तत्करपृष्ठे नमो हन्त्रे इति अंसे शंकरायेति यथाक्रमं भस्म धृत्वा सोमायेति शिवं नत्वा ततः प्रक्षाल्य तद्भस्मापः पुनन्त्विति पिबेत् । नाधो त्याज्यं नाधो त्याज्यम् ॥ ६ ॥

एतन्मध्याह्नसायाह्नेषु त्रिकालेषु विधिभस्मधारणमप्रमादेन कार्यम् । प्रमादान् पतितो भवति ॥ ७ ॥

ततः तद्भस्म गायत्र्या संप्रोक्ष्य ॥ ४ ॥ मनवोऽप्यत्र के वेति तृतीयप्रश्नोत्तरमाह—मा नस्तोक इति । स्वातिरिक्तं भस्म करोतीति भस्म ब्रह्म सर्वात्मकत्वात् । अग्निरित्यादिपञ्चभूतग्रहणं जडप्रपञ्चोपलक्षणार्थम् । देवर्षिग्रहणं अजडप्रपञ्चोपलक्षणार्थम् । भस्मनो ब्रह्मतया जडाजडप्रपञ्चव्यापकत्वे "एकं भस्म सर्वभूतान्तरात्मा" इति बृहज्जाबालश्रुतेः । यत एवं अतो भस्म ब्रह्म पूतं पावनं नमामि । किमर्थमस्य नमनं इत्यत्र स्मृतिमात्रेण सद्यः समस्ताघशासकं इति शिरसाऽभिनम्य । शुद्धं शुद्धेन इति मन्त्रेण संमृज्य । तत्र "सद्योजातं" इत्यादिब्रह्ममन्त्राः पञ्च ॥ ५ ॥ कानि स्थानानि इति द्वितीयप्रश्नमपाकरोति—त्र्यम्बकमिति । कति वा तस्य धारणं इति प्रश्नोऽप्यपाकृतः । तद्भस्म तद्भस्मोदकम् ॥ ६ ॥ के वाऽत्राधिकारिणः, नियमस्तेषां को वा इति प्रश्नद्वयमप्यपाक्रियते—एतदित्यादिना ॥ ७–९ ॥

भस्मधारणस्यावश्यकर्तव्यता

ब्राह्मणानामयमेव धर्मोऽयमेव धर्मः । एवं भस्मधारणमकृत्वा नाश्नीयादापोऽन्नमन्यद्वा । प्रमादात्त्यक्त्वा भस्मधारणं न गायत्रीं

[1] नाभू—उ १.

जपेत् । न जुहुयादग्नौ तर्पयेद्देवानृषीन् पित्रादीन् । अयमेव धर्मः सनातनः सर्वपापनाशको मोक्षहेतुः । नित्योऽयं धर्मो ब्राह्मणानां ब्रह्मचारिगृहिवानप्रस्थयतीनाम् । एतदकरणे प्रत्यवैति ब्राह्मणः ॥८॥

अकरणे प्रायश्चित्तम्

अकृत्वा प्रमादेनैतदष्टोत्तरशतं जलमध्ये स्थित्वा गायत्रीं जप्त्वोपोषणेनैकेन शुद्धो भवति । यतिर्भस्मधारणं त्यक्त्वैकदोपोष्य द्वादशसहस्रप्रणवं जप्त्वा शुद्धो भवति । अन्यथेन्द्रो यतीन्सालावृकेभ्यः पातयति ॥ ९ ॥

संस्कृतभस्माभावे कर्तव्यनिरूपणम्

भस्मनो यद्यभावस्तदा नर्यभस्मदाहनजन्यमन्यद्वाऽवश्यं मन्त्रपूतं धार्यम् ॥ १० ॥

इत्यादिसंस्कारसंस्कृतभस्मनः ॥ १० ॥

भस्मधारणफलम्

एतत् प्रातः प्रयुञ्जानो रात्रिकृतात् पापात् पूतो भवति स्वर्णस्तेयात् प्रमुच्यते । मध्यन्दिने माध्यन्दिनं कृत्वोपस्थानान्तं ध्यायमान आदित्याभिमुखोऽधी[1]यानः सुरापानात् पूतो भवति स्वर्णस्तेयात् पूतो भवति ब्राह्मणवधात् पूतो भवति गोवधात् पूतो भवति अश्ववधात् पूतो भवति गुरुवधात् पूतो भवति मातृवधात्

[1] यमानः—क, ग १.

पूतो भवति पितृवधात् पूतो भवति । त्रिकालमेतत् प्रयुञ्जानः सर्ववेदपारायणफलमवाप्नोति सर्वतीर्थफलमश्नुते अनपभ्रुवः सर्वमायुरेति विन्दते प्राजापत्यं रायस्पोषं गौपत्यम् । एवमावर्तयेदुपनिषदमित्याह भगवान् सदाशिवः साम्बः सदाशिवः साम्बः ॥ ११ ॥

सर्वतीर्थफलं सर्वतीर्थस्नानफलम् । प्राजापत्यं प्रजापतित्वं रायस्पोषं कुबेरत्वं गौपत्यं पशुपतित्वं विन्दते लभत इत्यर्थः । सदाशिवः साम्बः—आवृत्तिः प्रथमाध्यायसमाप्त्यर्था ॥ ११ ॥

इति प्रथमोऽध्यायः

---

# द्वितीयोऽध्यायः

ब्राह्मणानां किं नित्यं कर्तव्यम्

अथ भुसुण्डो जाबालो महादेवं साम्बं प्रणम्य पुनः पप्रच्छ किं नित्यं ब्राह्मणानां कर्तव्यं यदकरणे प्रत्यवैति ब्राह्मणः । कः पूजनीयः । को वा ध्येयः । कः स्मर्तव्यः । कथं ध्येयः । क स्थातव्यमेतद्ब्रूहीति ॥ १ ॥

किं नित्यं ब्राह्मणैः कर्तव्यं इत्यादिबुभुत्सया जाबालो महादेवं पृच्छतीत्याह—अथेति ॥ १ ॥

प्रातःकर्तव्यत्रिपुण्ड्रधारणादि

समानेन तं होवाच । प्रागुदयान्निर्वर्त्य शौचादिकं ततः स्नायात् । मार्जनं रुद्रसूक्तैः । ततश्चाहतं वासः परिधत्ते पाप्मनोऽपहत्यै । उद्यन्तमादित्यमभिध्यायन्नुद्धूलिताङ्गं कृत्वा यथास्थानं भस्मना त्रिपुण्ड्रं श्वेतेनैव रुद्राक्षाञ्छ्वेतान् विभृयात् । नैतत्र संमर्शः । तथाऽन्ये । मूर्ध्नि चत्वारिंशत । शिखायामेकं त्रयं वा । श्रोत्रयोर्द्वादश । कण्ठे द्वात्रिंशत् । बाह्वोः षोडशषोडश । द्वादशद्वादश मणिबन्धयोः । षट्षडङ्गुष्ठयोः । ततः संध्यां सकुशोऽहरहरुपासीत । अग्निर्ज्योतिरित्यादिभिरग्नौ जुहुयात् ॥ २ ॥

जाबालेन पृष्टो भगवान् सप्रमाणं प्रश्नोत्तरमाह—समानेन तं होवाचेति । किं तदिति—प्रागुदयादिति । उद्यन्तमादित्यं असावादित्यो ब्रह्मेति अभिध्यायन । भस्मना त्रिपुण्ड्रं ललाटादौ धारयेत् । "ब्रह्मणो विभृयाच्छ्वेतान्" इति श्रुत्यनुरोधेन श्वेतेनैव रुद्राक्षान श्वेतान् विभृयात् । ब्राह्मे मुहूर्ते उत्थाय शौचादिकं निर्वर्त्य अथ रुद्रसूक्तमार्जनपूर्वकं स्नात्वा अहतवस्त्रधारणपूर्वकं यथोक्तस्थानेषु भस्मोद्धूलनत्रिपुण्डरुद्राक्षधारणं कृत्वा अथ संध्याऽऽद्यनुष्ठानपूर्वकं औपासनाग्निहोत्रादिकं कृत्वा ॥ २ ॥

शिवपूजाविधिः

शिवलिङ्गं त्रिसंध्यमभ्यर्च्य कुशेष्वासीनो ध्यात्वा साम्बं मामेव वृषभारूढं हिरण्यबाहुं हिरण्यवर्णं हिरण्यरूपं पशुपाशविमोचकं पुरुषं कृष्णपिङ्गलमूर्ध्वरेतं विरूपाक्षं विश्वरूपं सहस्राक्षं सहस्रशीर्षं सहस्रचरणं विश्वतोबाहुं विश्वात्मानमेकमद्वैतं निष्कलं निष्क्रियं शान्तं

शिवमक्षरमव्ययं [1]हरिहरहिरण्यगर्भस्रष्टारमप्रमेयमनाद्यन्तं रुद्रसूक्तै-रभिषिच्य सितेन भस्मना श्रीफलदलैश्च त्रिशाखैरार्द्रैरनार्द्रैर्वा । नैतत्र संस्पर्शः । तत्पूजासाधनं कल्पयेच्च नैवेद्यम् । ततश्चैकादशगुणरुद्रो जपनीयः । [2]एकगुणोऽनन्तः ॥ ३ ॥

अथ शिवपूजां कुर्यादित्याह—शिवलिङ्गमिति । विराडात्मना सहस्रचरणं विश्वतोबाहुं विश्वात्मानं प्रत्यगभिन्नब्रह्मात्मना एकम् । ईश्वरात्मना हरिहर-हिरण्यगर्भस्रष्टारं अप्रमेयं अनाद्यन्तं एवमुक्तविशेषणविशिष्टं शिवलिङ्गं रुद्रसूक्तैरभिषिच्य सितेन भस्मना चाभिषिच्य । उक्ताभिषेकद्रव्याणां नैतत्र संस्पर्शः ॥ ३ ॥

शिवषडक्षर-अष्टाक्षरयोरुद्धारः

षडक्षरोऽष्टाक्षरो वा शैवो मन्त्रो जपनीयः । ओमित्यग्रे व्याहरेत् । नम इति पश्चात् । ततः शिवायेत्यक्षरत्रयम् । ओमित्यग्रे व्याहरेत् । नम इति पश्चात् । ततो महादेवायेति पञ्चाक्षराणि । नातस्तारकः परमो मन्त्रः । तारकोऽयं पञ्चाक्षरः । कोऽयं शैवो मनुः । शैवस्तारकोऽयमुपदिश्यते मनुरविमुक्ते शैवेभ्यो जीवेभ्यः । शैवोऽयमेव मन्त्रस्तारयति । स [3]एव ब्रह्मोपदेशः ॥ ४ ॥

शिवषडक्षरमष्टाक्षरं चोद्धरति—ॐ इति । केभ्य इत्यत्र—शैवेभ्य इति । यस्तारकः काश्यामुपदिश्यते स एव ब्रह्मोपदेशः ॥ ४ ॥

[1] हरिहिरण्य—अ १, अ २, क.

[2] एको गु—क.

[3] एवं—अ १.

ब्रह्मस्वरूपम्

ब्रह्म सोमोऽहं पवनः सोमोऽहं पवते सोमोऽहं जनिता मतीनां सोमोऽहं जनिता पृथिव्याः सोमोऽहं जनिताऽग्नेः सोमोऽहं जनिता सूर्यस्य सोमोऽहं जनितेन्द्रस्य सोमोऽहं जनितोत विष्णोः सोमोऽहमेव जनिता स यश्चन्द्रमसो देवानां भूर्भुवःस्वरादीनां सर्वेषां लोकानां च ॥ ५ ॥

विश्वं भूतं भुवनं चित्रं बहुधा जातं जायमानं च यत् ।
सर्वस्य सोमोऽहमेव जनिता विश्वाधिको रुद्रो महर्षिः ॥ ६ ॥

हिरण्यगर्भादीनहं जायमानान् पश्यामि । यो रुद्रो अग्नौ यो अप्सु य ओषधीषु यो रुद्रो विश्वा भुवना विवेशैवमेव । अहमेवात्माऽन्तरात्मा ब्रह्मज्योतिर्यस्मान्न मत्तोऽन्यः परः । अहमेव परो विश्वाधिकः ॥ ७ ॥

ब्रह्म कीदृशं इत्यत्र—योऽयं उमया सहितः सोऽयं **ब्रह्म सोमोऽहम्** । यः सूत्ररूपेण **पवनो** भूत्वा सर्वं **पवते** पवित्रीकरोति स **सोमोऽहं** परमेश्वर इत्यर्थः । यः सोमः सोऽहमीश्वरात्मना स्वातिरिक्तमन्यादिसर्वं जनिता स्यामित्याह—**जनितेति** ॥ ५ ॥ सर्वकारणत्वेऽपि सर्वातीतः स्यामित्याह—**विश्वाधिक** इति ॥ ६ ॥ योऽन्तर्याम्यात्मना भुवनमाविवेश सोऽहं प्रत्यगभेदेन **ब्रह्मज्योतिः** । **विश्वाधिकः** विश्वारोपापवादाधिष्ठानत्वात् ॥ ७ ॥

ब्रह्मज्ञानमेव मुक्तिसाधनम्

मामेव विदित्वाऽमृतत्वमेति तरति शोकम् । मामेव विदित्वा सांसृतिकीं रुजं द्रावयति तस्मादहं रुद्रो यः सर्वेषां परमा गतिः सोऽहं सर्वाकारः ॥ ८ ॥

स्वाङ्गलोको मामेव विदित्वा अमृतत्वमेति तरति शोकं यो मामेव "अहं ब्रह्मास्मि" इति विदित्वा आस्ते तस्य स्वाङ्गविकल्पितसांसृतिकीं रुजं द्रावयामि तस्मादहं रुद्रः निर्विशेषब्रह्मात्मना यः सर्वेषां परमा गतिः ॥ ८ ॥

शिवस्य विश्वाधारत्वम्

यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत् प्रयन्त्यभिसंविशन्ति । तं मामेव विदित्वोपासीत । भूतैर्देवैरभिष्टुतोऽहमेव ॥ ९ ॥

भीषाऽस्माद्वातः पवते । भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च ॥ १० ॥

सोऽसावेव योऽहं सर्वेषामधिष्ठाता सर्वेषां च भूतानां पालकः । सोऽहं पृथिवी । सोऽहमापः । सोऽहं तेजः । सोऽहं वायुः । सोऽहं कालः । सोऽहं दिशः । सोऽहमात्मा । मयि सर्वं प्रतिष्ठितम् ॥ ११ ॥

तं विश्वोत्पत्तिस्थितिप्रलयाधारं अहमस्मीति विदित्वोपासीत । भूतैर्देवैरभिष्टुतोऽहमेव मनुष्यादिभूतैर्देवैरपि च ब्रह्मास्मीति स्तुतोऽहमेव ॥ ९ ॥ वातादिभयकारणमप्यहमेवेत्याह — भीषाऽस्मादिति । अत एवाहं वातादिभयहेतुरित्यर्थः ॥ १० ॥ योऽहं सर्वेषामधिष्ठाता कूटस्थात्मना विष्ण्वात्मना सर्वेषां च भूतानां पालकः सोऽहं पृथिवीत्यादि ॥ ११ ॥

शिवस्य पशुपाशमोचकत्वम्

ब्रह्मविदाप्नोति परम् । ब्रह्म शिवो मे अस्तु सदाशिवोम् ॥ १२ ॥

अचक्षुर्विश्वतश्चक्षुरकर्णो विश्वतःकर्णोऽपादो विश्वतःपादोऽपाणिर्विश्वतःपाणिरहमशिरा विश्वतःशिरा विद्यामन्त्रैकसंश्रयो विद्यारूपो विद्यामयो विश्वेश्वरोऽहमजरोऽहम् ॥ १३ ॥

मामेवं विदित्वा संसृतिपाशात् प्रमुच्यते । तस्मादहं पशुपाशविमोचकः । पशवश्चामानवान्तं मध्यवर्तिनश्च युक्तात्मानो यतन्ते मामेवप्राप्तुम् । प्राप्यन्ते मां न पुनरावर्तन्ते न पुनरावर्तन्ते ॥ १४ ॥

सर्वात्मकं ब्रह्माहमस्मीति यो वेद स तदेवाप्नोतीत्याह—ब्रह्मविदाप्नोति परमिति "ब्रह्मविदो मे समात्मा ब्रह्मैव सत्यमात्मा ब्रह्मैव ब्रह्मात्मैव अत्र ह्येव न विचिकित्स्यं" इति श्रुतेः । किं च—योऽहं ब्रह्मा चतुर्मुखः स एव सदाशिवश्चास्तु । सर्वात्मैकत्वे ओमिति मानं अकाराद्योङ्काराद्यवयवानां पञ्चब्रह्मपरब्रह्मार्थत्वात् ॥ १२ ॥ एवं निरुपाधिकसोपाधिकरूपाभ्यां अचक्षुः ॥ १३ ॥ मुमुक्षुः संसृतिपाशात् प्रमुच्यते । यस्मादेवं तस्मात् । के पशवः इत्यत्र—पशवश्च ब्रह्मादि आमानवान्तं मध्यवर्तिनश्च । पशवो यदि समाहितात्मानो भवन्ति तदा मामाप्तुं यतन्ते क्रमेण ते मां प्राप्यन्ते मां प्राप्य केऽपि न पुनरावर्तन्ते ॥ १४ ॥

शिवतत्त्ववेदन शक्तानां काशीवासः तरणोपायः

[1]त्रिशूलायां काशीमभिश्रित्य त्यक्तामवोऽपि मय्येव संविशन्ति। प्रज्वलद्वह्निगं हविर्यथा न यजमानमासादयति तथाऽसौ त्यक्त्वा कुणपं न तत्तादृशं पुरा प्राप्नुवन्ति । एष एवादेशः । एष उपदेशः । एष एव परमो धर्मः ॥ १५ ॥

एवं सविशेषनिर्विशेषरूपेण त्वद्वेदनाशक्तानां का गतिरित्याशङ्क्याह—त्रिशूलायामिति । चरमश्वासवेळायां मदुपदिष्टतारकोपदेशेन ते मां विदित्वा वेदनसमकालं मय्येव संविशन्ति । यत एवमतः मदाप्तिः मज्ज्ञानायत्तेत्यर्थः । चिरकालसेवितश्रवणादिसंजातज्ञानेन त्वां प्राप्य अपुनरावृत्तिरस्तु । तत् कथं

[1] त्रिशूलगां का—मु.

चरमश्वासकालीनतारकोपदेशतो न पुनरावृत्तिः इत्यत आह—प्रज्वलदिति। अन्त्यकालीनमत्स्मृतेर्मद्भावापत्तिहेतुत्वात्। तथा चेश्वरस्मृतिः—

अन्तकाले च मामेव स्मरन् मुक्त्वा कळेबरम्।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः॥

इति तारकोपदेशमहिम्ना यदि निर्विशेषब्रह्मज्ञानं जातं तदा निर्विशेषब्रह्मैव भवति। यदि सविशेषज्ञानं तदा मत्सालोक्यादिमुक्तिमेत्य मल्लोके पुनर्मदुपदेशतः निर्विशेषज्ञानमासाद्य चतुर्मुखैक्यसमये निर्विशेषं ब्रह्मैव प्रतिपद्यत इति। अत एव मुमुक्षवः काश्यामुषित्वा मरणमिच्छन्ति॥ १५॥

काशिवासिनां नियमविशेषाः

सत्यात्तत्र कदाचिन्न प्रमदितव्यं तत्रोद्धूलनत्रिपुण्ड्राभ्याम्। तथा रुद्राक्षधारणात्तथा मदर्चनाच्च। प्रमादेनापि नान्तर्देवसदने पुरीषं कुर्यात्। ब्रनान्न प्रमदितव्यम्। तद्धि तपस्तद्धि तपः काश्यामेव मुक्तिकामानाम्॥ १६॥

न त्स्याज्यं न तत्त्याज्यं मोचकोऽहमविमुक्ते निवसताम्। नाविमुक्तात् परं स्थानं नाविमुक्तात् परं स्थानम्॥ १७॥

तत्र मृतिमात्रेण मुक्तिः भवतीति यथेच्छाचरणं न कर्तव्यमित्याह—सत्यादिति॥ १६॥ काशीक्षेत्रं मुमुक्षुभिः न कदाऽपि त्याज्यमित्यर्थः। कथमेवं? मोचकोऽहमविमुक्ते निवसतां अतो नाविमुक्तात् परं स्थानम्॥ १७॥

काश्यां ज्योतिर्लिङ्गार्चनं तत्फलं च

काश्यां स्थानानि चत्वारि। तेषामभ्यर्हितमन्तर्गृहम्। तत्राप्यविमुक्तमभ्यर्हितम्। तत्र स्थानानि पञ्च। तन्मध्ये

शिवागारमभ्यर्हितम् । तत्र प्राच्यामैश्वर्यस्थानम् । दक्षिणायां विचालनस्थानम् । पश्चिमायां वैराग्यस्थानम् । उत्तरायां ज्ञानस्थानम् । तस्मिन् यदन्तर्निर्लिप्तमव्ययमनाद्यन्तमशेषवेदवेदान्तवेद्यमनिर्देश्यमनिरुक्तमप्रच्यवमाशास्यमद्वैतं सर्वाधारमनाधारमनिरीक्ष्यमहरहर्ब्रह्मविष्णुपुरन्दराद्यमरवरसेवितं मामेव ज्योतिःस्वरूपं लिङ्गं मामेवोपासितव्यं तदेवोपासितव्यम् ॥ १८ ॥

नैव भासयन्ति तल्लिङ्गं भानुश्चन्द्रो[1]ऽग्निर्वा स्वप्रकाशं विश्वेश्वराभिधं पातालमभिनिष्ठति । तदेवाहम् ॥ १९ ॥

तत्रार्चितोऽहं साक्षादर्चितः । त्रिशाखैर्बिल्वदलैर्दीप्तैर्वा योऽभिसंपूजयेन्मन्मना मय्याहितामुर्मय्येवार्पिताखिलकर्मा भस्मदिग्धाङ्गो रुद्राक्षभूषणो मामेव सर्वभावेन प्रपन्नो मदेकपूजानिरतः संपूजयेत् तदहमश्नामि तं मोचयामि संसृतिपाशान् । अहरहरभ्यर्च्य विश्वेश्वरं लिङ्गं तत्र रुद्रसूक्तैरभिषिच्य तदेव स्नपनं पयस्त्रिः पीत्वा महापातकेभ्यो मुच्यते न शोकमाप्नोति मुच्यते संसारबन्धनात् ॥ २० ॥

अभ्यर्हितं श्रेष्ठम् । तस्मिन् यदन्तर्निर्लिप्तं ज्ञानवृत्त्यलिप्तत्वात् यन्निर्विशेषतया ज्ञेयं तत् अव्ययम् । अनिर्देश्यमनिरुक्तं इदमित्थमिति निर्देष्टुमशक्यतया निरुत्तरत्वात् अप्रच्यवमाशास्यं स्वधामतोऽप्रच्यवमच्युतं "ब्रह्माहमस्मि" इति मुमुक्षुभिः आशास्यं काङ्क्षणीयम् । किं तत्? अद्वैतं सर्वाधारमनाधारं आधेयसत्त्वे आधारं तदभावे निराधारं स्वातिरेकेण अनिरीक्ष्यं

[1] सिर्वायुः स्व—अ १, अ २, क.

अहरहर्ब्रह्मविष्णुपुरन्दराद्यमरवरसेवितं "ब्रह्माहमस्मि" इति भावितमित्यर्थः । किं ते भावयन्ति इत्यत्र—"ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत् सदा यतिः" इति श्रुत्यनुरोधेन यतयो यतो मामेव ज्योतिःस्वरूपं लिङ्गं भावयन्ति अतो मामेवोपासितव्यं सर्वैरप्यहमेव स्वात्मतयोपासितव्यः यत्सर्वाधिकरणं तदेवोपासितव्यम् ॥ १८ ॥ तत् किं भान्वादिभास्यं तत् कासनमर्हति इत्यत आह—नैवेति । एते प्रकाशवन्तोऽपि नैव भासयन्तीत्यर्थः । किं तत् केत्यत्र—विश्वेश्वराभिधमिति । किं तत् त्वद्भिन्नं इत्यत्र—तदेवाहमिति ॥ १९ ॥ त्वाज्ञः केनोपायेन संसृतिराशान्मुच्यते इत्यत्र यो हि मुमुक्षुः अहरहरभ्यर्च्येति । तदेव स्नपनं स्वाभिषेचितम् ॥ २० ॥

अनभ्यर्च्याशनादौ कृतं प्रायश्चित्तम्

तदनभ्यर्च्य नाश्नीयात् फलमन्नमन्यद्वा । यदश्नीयाद्रेतोभक्षी भवेत् । नापः पिबेत । यदि पिबेत पूयपो भवेत् । प्रमादेनैकदा त्वनभ्यर्च्य मां भुक्त्वा भोजयित्वा केशान् वापयित्वा गव्यानां पञ्च संगृह्योपोष्य जले रुद्रस्नानम । जपेन्त्रिवारं रुद्रानुवाकम् । आदित्यं पश्यन्नभिध्यायन् त्यक्तकर्मकृद्रौद्रैरेव मन्त्रैः कुर्यान्मार्जनम् । ततो भोजयित्वा ब्राह्मणान् पूतो भवति । अन्यथा परेतो यातनामश्नुते । पत्रैः फलैर्वा जलैर्वाऽन्यैर्वाऽभिपूज्य विश्वेश्वरं मां ततोऽश्नीयात् ॥ २१ ॥

मामेवं अनभ्यर्च्य यो भोजनादिव्यापारं करोति स प्रत्यवैतीत्याह—तदिति । यत एवमतः पत्रैरिति । सोऽयमर्चको मत्प्रसादभाक् भवतीत्यर्थः ॥ २१ ॥

सर्वपातकपावनं शिवाभ्यर्चनम्

कापिलेन पयसाऽभिषिच्य रुद्रसूक्तेन मामेव शिवलिङ्गरूपिणं ब्रह्महत्यायाः पूतो भवति । कापिलेन दध्नाऽभिषिच्य सुरापानात्

पूतो भवति । कापिलेनाज्येनाभिषिच्य स्वर्णस्तेयात् पूतो भवति । मधुनाऽभिषिच्य गुरुदारगमनात् पूतो भवति । सितया शर्करयाऽभिषिच्य सर्वजीववधात् पूतो भवति ॥ २२ ॥

मदर्चनेनैव ब्रह्महत्यादिसर्वमहापातकभञ्जनीयाह—कापिलेनेति ॥ २२ ॥

मुक्त्यादिसाधनं शिवाभिषेचनम्

क्षीरादिभिरेतैरभिषिच्य सर्वानवाप्नोति कामान् । इत्येकैकं महाप्रस्थशतं महाप्रस्थशतमानैः शतैरभिपूज्य मुक्तो भवति संसारबन्धनात् ॥ २३ ॥

भवबन्धमोचनार्थं कापिलक्षीरदध्याज्यशर्करादीनां इत्येकैकमित्यादि । द्वात्रिंशत्पलपरिमितप्रस्थशतं महाप्रस्थ उच्यते ॥ २३ ॥

शिवसायुज्यसाधनं शिवाभिषेचनम्

मामेव शिवलिङ्गरूपिणमार्द्रायां पौर्णमास्यां वाऽमावास्यायां वा महाव्यतीपाते ग्रहणे संक्रान्तावभिषिच्य तिलैः सतण्डुलैः सयवैः संपूज्य बिल्वदलैरभ्यर्च्य कापिलेना[ऽऽ]ज्यान्वितगन्धसारधूपैः परिकल्प्य दीपं नैवेद्यं साज्यमुपहारं कल्पयित्वा दद्यात् पुष्पाञ्जलिम् । एवं प्रयतोऽभ्यर्च्य मम सायुज्यमेति ॥ २४ ॥

मत्पूजैव मत्सायुज्यकारणमित्याह—मामेवेति ॥ २४ ॥

चन्द्रादिलोकसाधनं शिवाभिषेचनम्

शतैर्महाप्रस्थैरखण्डैस्तण्डुलैरभिषिच्य चन्द्रलोककामश्चन्द्रलोकमवाप्नोति । तिलैरेतावद्भिरभिषिच्य वायुलोककामो वायुलोक-

मवाप्नोति । माषैरेतावद्भिरभिषिच्य वरुणलोककामो वरुणलोकमवाप्नोति। यवैरेतावद्भिरभिषिच्य सूर्यलोककामः सूर्यलोकमवाप्नोति। एतैरेतावद्भिर्द्विगुणैरभिषिच्य स्वर्गलोककामः स्वर्गलोकमवाप्नोति । एतैरेतावद्भिश्चतुर्गुणैरभिषिच्य ब्रह्मलोककामो ब्रह्मलोकमवाप्नोति । एतैरेतावद्भिः शतगुणैरभिषिच्य चतुर्जालं ब्रह्मकोशं यन्मृत्युर्नावपश्यति । तमतीत्य मल्लोककामो मल्लोकमवाप्नोति [1]नान्यं मल्लोकात् परं यमवाप्य न शोचति न स पुनरावर्तते न स पुनरावर्तते ॥ २५ ॥

चन्द्रलोकादिसर्वलोकाप्तिसाधनमपि मत्पूजेत्याह—शतैरिति । "ब्रह्मणः कोशोऽसि" इति श्रुत्यनुसंधानेन प्रणवो हि ब्रह्मकोशः तं—किंविशेषणविशिष्टं ? व्यष्टिसमष्ट्यात्मकस्थूलसूक्ष्मबीजावयमात्रांशतदाराधिष्ठानविश्वविराडोत्रादिद्वितुर्याविकल्पान्तभेदेन चतुर्जालं यत्स्वरूपं विमृत्यु तत्प्रणवं ब्रह्मलोकं वा अतीत्य मल्लोककामो मल्लोकमवाप्नोति नान्यं मल्लोकात् परं अस्ति मुमुक्षुः यमवाप्य न शोचति । न स पुनरावर्तते—आवृत्तिरवधारणार्था । "यावदायुषं ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते" इति श्रुतेः, "यद्गत्वा न निवर्तन्ते तद्धाम परमं मम" इति स्मृतेश्च ॥ २५ ॥

काशीवासिनां शैवतारकोपदेशान्मुक्तिलाभः

लिङ्गरूपिणं मां संपूज्य चिन्तयन्ति योगिनः सिद्धाः सिद्धिं गताः यजन्ति यज्वानः । मामेव स्तुवन्ति वेदाः साङ्गाः सोपनिषदः सेतिहासाः । न मत्तोऽन्यदहमेव सर्वम् । मयि सर्वं प्रतिष्ठितम् । ततः काश्यां प्रयत्नैरेवाहमन्वहं पूज्यः ॥ २६ ॥

[1] नान्यं लोकात्—अ १, अ २, क.

तत्र गणा रौद्रानना नानामुखा नानाशस्त्रधारिणो नानारूपधरा नानाचिह्निताः। ते सर्वे भस्मदिग्धाङ्गा रुद्राक्षाभरणाः कृताञ्जलयो नित्यमभिध्यायन्ति। तत्र पूर्वस्यां दिशि ब्रह्मा कृताञ्जलिरहर्निशं मामुपास्ते। दक्षिणस्यां दिशि विष्णुः कृत्वैव मूर्धाञ्जलिं मामुपास्ते। प्रतीच्यामिन्द्रः सन्नताङ्ग उपास्ते। उदीच्यामग्निकायमुमाऽनुरक्ता हेमाङ्गविभूषणा हेमवस्त्रा मामुपास्ते मामेव देवाश्चतुर्मूर्तिधराः॥ २७॥

दक्षिणायां दिशि मुक्तिस्थानं तन्मुक्तिमण्डपसंज्ञितम्। तत्रानेकगणाः पालकाः मायुधाः पापघातकाः। तत्र ऋषयः शांभवाः पाशुपता महाशैवा वेदावतमं शैवं पञ्चाक्षरं जपन्तस्तारकं सप्रणवं मोदमानास्तिष्ठन्ति। तत्रैका रत्नवेदिका। तत्राहमासीनः काश्यां त्यक्तकुणपान्जीवानानीय स्वस्याङ्के संनिवेश्य भसितरुद्राक्षभूषितानुपस्पृश्य मा भूदेतेषां जन्म मृतिश्चेति तारकं शैवं मनुमुपदिशामि। ततस्ते मुक्ता मामनुविशन्ति विज्ञानमये[1]नाङ्गेन। न पुनरावर्तन्ते हुताशनप्रतिष्ठं हविरिव। तत्रैव मुक्त्यर्थमुपदिश्यते शैवोऽयं मन्त्रः पञ्चाक्षरः। तन्मुक्तिस्थानम्। तत ओंकाररूपम्। ततो मदर्पितकर्मणां मदाविष्टचेतसां मद्रूपता भवति। नान्येषामियं ब्रह्मविद्येयं ब्रह्मविद्या॥ २८॥

मुमुक्षवः काश्यामेवासीना वीर्यवन्तो विद्यावन्तो विज्ञानमयं ब्रह्मकोशं चतुर्जालं ब्रह्मकोशं यं मृत्युर्नावपश्यति यं ब्रह्मा नावपश्यति

[1] ना ङ्गेन—अ १, अ २, क.

यं विष्णुर्नावपश्यति यमिन्द्राग्नी नावपश्येतां यं वरुणादयो नावपश्यन्ति तमेव तत्तेजःप्लुष्टविड्भावं हैममुमां संश्लिष्य [1]वसन्तं चन्द्रकोटिसमप्रभं चन्द्रकिरीटं सोमसूर्याग्निनयनं भूतिभूषितविग्रहं शिवं मामेवमभिध्यायन्तो मुक्तकिल्बिषास्त्यक्तबन्धा मय्येव लीना भवन्ति ॥ २९ ॥

अहमेव सर्वाध्यो मदतिरिक्तं न किंचिदस्तीत्याह—लिङ्गेति ॥ २६ ॥ ब्रह्मविष्णुरुद्रेन्द्रभेदेन देवाश्चतुर्मूर्तिधरा मामुपासत इति । स्पष्टोऽर्थः ॥ २७ ॥ ततस्ते स्वातिरिक्तभ्रमतो विमुक्ता मामनुविशन्ति ॥ २८ ॥ विज्ञानमयं ब्रह्मकोशं किं तत्? यथाव्याख्यातं चतुर्जालं ब्रह्मकोशं यं मृत्युः स्वात्मविस्मृतिः प्रमादः, "प्रमादं वै मृत्युमहं ब्रवीमि" इति स्मृतेः । स मृत्युः नावपश्यति । तत्तेजःप्लुष्टविड्भावं विराड्भावम् ॥ २९ ॥

काश्यामप्रमादेन वस्तव्यम्

ये चान्ये काश्यां पुरीषकारिणः प्रतिग्रहरतास्त्यक्तभस्मधारणास्त्यक्तरुद्राक्षधारणास्त्यक्तसोमवारव्रतास्त्यक्तगृहयागास्त्यक्तविश्वेश्वरार्चनास्त्यक्तपञ्चाक्षरजपास्त्यक्तभैरवार्चना भैरवीं घोरादियातनां नानाविधां काश्यां परेता मुक्त्वा ततः शुद्धा मां प्रपद्यन्ते च । अन्तर्गृहे रेतो मूत्रं पुरीषं वा विसृजन्ति तदा तेन सिञ्चन्ते पितॄन् । तमेव पापकारिणं मृतं पश्यन्नीललोहितो भैरवस्तं पातयत्यन्त्रमण्डले ज्वलज्ज्वलन[2]कुण्डेष्वन्येष्वपि । ततश्चाप्रमादेन निवसेदप्रमादेन निवसेत् काश्यां लिङ्गरूपिण्यामित्युपनिषत् ॥ ३० ॥

[1] वसन्तम—अ १, क.   [2] कूटे—अ १, क.

त्यक्तगृह्ययागाः औपासनादिहोमाः । काशीमरणप्रभावतः न हि मद्धामतः च्यवन्त इत्यर्थः । मामेव प्रपद्यन्ते । यतः काश्यां विश्वेशस्तारकमुपदिशति अतः सर्वे मुमुक्षवः काशीमभिश्रित्य अप्रमादेन वसन्तु । एवं वसतां विश्वेशोपदिष्ट-तारकः विश्वेशभावप्रदो भवति । काशीक्षेत्रं विश्वेश्वरतनुत्वेन संभाव्याप्रमादेन वस्तव्यमित्यर्थः ॥ ३० ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना
भस्मजाबालविवृतिः लिखिता शिवगोचरा ।
जाबालविवृतिग्रन्थः पञ्चाशदधिकं शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे सप्ताशीतिसंख्यापूरकं
भस्मजाबालोपनिषद्विवरणं सम्पूर्णम् ॥

# रुद्रहृदयोपनिषत्

**सह नाववतु—इति शान्तिः**

सर्वदेवात्मकदेवविषयः शुकप्रश्नः

प्रणम्य शिरसा पादौ शुको व्यासमुवाच ह ।
को देवः सर्वदेवेषु कस्मिन् देवाश्च सर्वशः ॥ १ ॥
कस्य शुश्रूषणान्नित्यं प्रीता देवा भवन्ति मे ।

यद्ब्रह्म रुद्रहृदयमहाविद्याप्रकाशितम् ।
तद्ब्रह्ममात्रावस्थानपदवीमधुना भजे ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं रुद्रहृदयोपनिषत् शिवविष्ण्वभेदप्रकटनपूर्वकमुमामहेश्वरसार्वात्म्यप्रकटनव्यग्रा निरस्तनियोगिकब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । श्रीशुकव्यासप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—प्रणम्येति । उवाच ह—किमिति?—को देव इति ॥ १ ॥

रुद्रस्य सर्वदेवात्मकत्वम्

तस्य तद्वचनं श्रुत्वा प्रत्युवाच पिता शुकम् ॥ २ ॥

सर्वदेवात्मको रुद्रः सर्वे देवाः शिवात्मकाः ।
रुद्रस्य दक्षिणे पार्श्वे रविर्ब्रह्मा त्रयोऽग्नयः ॥ ३ ॥
वामपार्श्वे उमा देवी विष्णुः सोमोऽपि ते त्रयः ।
या उमा सा स्वयं विष्णुर्यो विष्णुः स हि चन्द्रमाः ॥ ४ ॥

इति शुकप्रश्नोत्तरं श्रीवेदव्यास आह—तस्येति ॥ २ ॥ श्रीवेदव्यास उवाच सर्वदेवात्मक इति ॥ ३–४ ॥

शिवविष्ण्वोरैक्यम्

ये नमस्यन्ति गोविन्दं ते नमस्यन्ति शंकरम् ।
येऽर्चयन्ति हरिं भक्त्या तेऽर्चयन्ति वृषध्वजम् ॥ ५ ॥
ये द्विषन्ति विरूपाक्षं ते द्विषन्ति जनार्दनम् ।
ये रुद्रं नाभिजानन्ति ते न जानन्ति केशवम् ॥ ६ ॥
रुद्रात् प्रवर्तते बीजं बीजयोनिर्जनार्दनः ।
यो रुद्रः स स्वयं ब्रह्मा यो ब्रह्मा स हुताशनः ॥ ७ ॥
ब्रह्मविष्णुमयो रुद्र अग्नीषोमात्मकं जगत् ।
पुंलिङ्गं सर्वमीशानं स्त्रीलिङ्गं भगवत्युमा ॥ ८ ॥
उमारुद्रात्मिकाः सर्वाः प्रजाः स्थावरजङ्गमाः ।
व्यक्तं सर्वमुमारूपमव्यक्तं तु महेश्वरम् ॥ ९ ॥
उमाशंकरयोर्योगः स योगो विष्णुरुच्यते ।
यस्तु तस्मै नमस्कारं कुर्याद्भक्तिसमन्वितः ॥ १० ॥

शिवविष्ण्वोरेकत्वावगमायेदमाह—ये नमस्यन्तीति ॥ ५–७ ॥ पुंलिङ्गं सर्वमीशानं ईशानरूपं, स्त्रीलिङ्गं भगवत्युमा उमारूपम् ॥ ८–१६ ॥

### आत्मनस्त्रैविध्यम्

आत्मानं परमात्मानमन्तरात्मानमेव च ।
ज्ञात्वा त्रिविधमात्मानं परमात्मानमाश्रयेत् ॥ ११ ॥
अन्तरात्मा भवेद्ब्रह्मा परमात्मा महेश्वरः ।
सर्वेषामेव भूतानां विष्णुरात्मा सनातनः ॥ १२ ॥

### रुद्रस्य त्रिमूर्तित्वम्

अस्य त्रैलोक्यवृक्षस्य भूमौ विटपशाखिनः ।
अग्रं मध्यं तथा मूलं विष्णुब्रह्ममहेश्वराः ॥ १३ ॥
कार्यं विष्णुः क्रिया ब्रह्मा कारणं तु महेश्वरः ।
प्रयोजनार्थं रुद्रेण मूर्तिरेका त्रिधा कृता ॥ १४ ॥
धर्मो रुद्रो जगद्विष्णुः सर्वज्ञानं पितामहः ॥ १५ ॥

### रुद्रकीर्तनात् सर्वपापविमुक्तिः

श्रीरुद्र रुद्र रुद्रेति यस्तं ब्रूयाद्विचक्षणः ।
कीर्तनात् सर्वदेवस्य सर्वपापैः प्रमुच्यते ॥ १६ ॥
रुद्रो नर उमा नारी तस्मै तस्यै नमो नमः ॥ १७ ॥
रुद्रो ब्रह्मा उमा वाणी तस्मै तस्यै नमो नमः ।
रुद्रो विष्णुरुमा लक्ष्मीस्तस्मै तस्यै नमो नमः ॥ १८ ॥
रुद्रः सूर्य उमा छाया तस्मै तस्यै नमो नमः ।
रुद्रः सोम उमा तारा तस्मै तस्यै नमो नमः ॥ १९ ॥

रुद्रो दिवा उमा रात्रिस्तस्मै तस्यै नमो नमः ।
रुद्रो यज्ञ उमा वेदिस्तस्मै तस्यै नमो नमः ॥ २० ॥
रुद्रो वह्निरुमा स्वाहा तस्मै तस्यै नमो नमः ।
रुद्रो वेद उमा शास्त्रं तस्मै तस्यै नमो नमः ॥ २१ ॥
रुद्रो वृक्ष उमा वल्ली तस्मै तस्यै नमो नमः ।
रुद्रो गन्ध उमा पुष्पं तस्मै तस्यै नमो नमः ॥ २२ ॥
रुद्रोऽर्थ अक्षरः सोमा तस्मै तस्यै नमो नमः ।
रुद्रो लिङ्गमुमा पीठं तस्मै तस्यै नमो नमः ॥ २३ ॥
सर्वदेवात्मकं रुद्रं नमस्कुर्यात् पृथक्पृथक् ।
एभिर्मन्त्रपदैरेव नमस्यामीशपार्वती ॥ २४ ॥
यत्रयत्र भवेत् सार्धमिमं मन्त्रमुदीरयेत् ।
ब्रह्महा जलमध्ये तु सर्वपापैः प्रमुच्यते ॥ २५ ॥

शिवशक्त्यात्मकं सर्वं तदतिरिक्तं न किंचिदस्ति इति ज्ञानात् पञ्चमहापातकी विलीयत इत्याह—रुद्र इति ॥ १७–२५ ॥

### सर्वस्य कारणानतिरिक्तत्वम्

सर्वाधिष्ठानमद्वन्द्वं परं ब्रह्म सनातनम् ।
सच्चिदानन्दरूपं तदवाङ्मनसगोचरम् ॥ २६ ॥
तस्मिन् सुविदिते सर्वं विज्ञातं स्यादिदं शुक ।
तदात्मकत्वात् सर्वस्य तस्माद्भिन्नं न हि क्वचित् ॥ २७ ॥

कारणब्रह्मातिरिक्तं न किंचिदस्तीत्याह—सर्वाधिष्ठानमिति ॥ २६–२७ ॥

परापरविद्ययोः स्वरूपम्

द्वे विद्ये वेदितव्ये हि परा चैवापरा च ते ।
तत्रापरा तु विद्यैषा ऋग्वेदो यजुरेव च ॥ २८ ॥
सामवेदस्तथाऽथर्ववेदः शिक्षा मुनीश्वर ।
कल्पो व्याकरणं चैव निरुक्तं छन्द एव च ॥ २९ ॥
ज्योतिषं च तथाऽनात्मविषया अपि बुद्धयः ।
अथैषा परमा विद्या यथाऽऽत्मा परमाक्षरम् ॥ ३० ॥
यत्तदद्रेश्यमग्राह्यमगोत्रं रूपवर्जितम् ।
अचक्षुःश्रोत्रमत्यर्थं तदपाणिपदं तथा ॥ ३१ ॥
नित्यं विभुं सर्वगतं सुसूक्ष्मं च तदव्ययम् ।
तद्भूतयोनिं पश्यन्ति धीरा आत्मानमात्मनि ॥ ३२ ॥
यः सर्वज्ञः सर्वविद्यो यस्य ज्ञानमयं तपः ।
तस्मादन्नान्नरूपेण जायते जगदावलिः ॥ ३३ ॥

मुण्डकोपनिषत्परमतात्पर्यार्थमाचष्टे—द्वे विद्ये इत्यादिना ॥ २८–४२ ॥

अक्षरज्ञानादेव संसारविनाशः

सत्यवद्भाति तत् सर्वं रज्जुसर्पवदास्थितम् ।
तदेतदक्षरं सत्यं तद्विज्ञाय विमुच्यते ॥ ३४ ॥
ज्ञानादेव हि संसारविनाशो नैव कर्मणा ।
श्रोत्रियं ब्रह्मनिष्ठं स्वगुरुं गच्छेद्यथाविधि ॥ ३५ ॥
गुरुस्तस्मै परां विद्यां दद्याद्ब्रह्मात्मबोधिनीम् ।

गुहायां निहितं साक्षादक्षरं वेद चेन्नरः ॥ ३६ ॥
छित्त्वाऽविद्यामहाग्रन्थिं शिवं गच्छेत् सनातनम् ।

मुमुक्षोः प्रणवोपास्तिप्रकारः

तदेतदमृतं सत्यं तद्वेद्धव्यं मुमुक्षुभिः ॥ ३७ ॥
धनुस्तारं शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥ ३८ ॥
लक्ष्यं सर्वगतं चैव शरः सर्वगतो मुखः ।
वेद्धा सर्वगतश्चैव शिवलक्ष्यं न संशयः ॥ ३९ ॥
न तत्र चन्द्रार्कवपुः प्रकाशते न वान्ति वाताः सकला देवताश्च ।
स एष देवः कृतभावभूतः स्वयं विशुद्धो विरजाः प्रकाशते ॥४०॥

जीवेशभेदस्य कल्पितत्वम्

द्वौ सुपर्णौ शरीरेऽस्मिन् जीवेशाख्यौ सह स्थितौ ।
तयोर्जीवः फलं भुङ्क्ते कर्मणो न महेश्वरः ॥ ४१ ॥
केवलं साक्षिरूपेण विना भोगं महेश्वरः ।
प्रकाशते स्वयं भेदः कल्पितो मायया तयोः ॥ ४२ ॥
घटाकाशमठाकाशौ यथाऽऽकाशप्रभेदतः ।
कल्पितौ परमौ जीवशिवरूपेण कल्पितौ ॥ ४३ ॥
तत्त्वतश्च शिवः साक्षाच्चिज्जीवश्च स्वतः सदा ।
चिच्चिदाकारतो भिन्ना न भिन्ना चित्त्वहानितः ॥ ४४ ॥

चितश्चिन्न चिदाकाराद्भिद्यते जडरूपतः ।

भिद्यते चेज्जडो भेदश्चिदेका सर्वदा खलु ॥ ४५ ॥

तर्कतश्च प्रमाणाच्च चिदेकत्वव्यवस्थितेः ।

यथा परमाकाशप्रविभक्तभेदतः घटाकाशमठाकाश(शौ तत्) स्थानीयौ जीवेशौ विकल्पिताविल्यर्थः ॥ ४३ ॥ औपाधिकोऽयं जीवेशभेदः न तात्त्विकः इत्याह—तत्त्वतश्चेति । जीवेशाद्यनुस्यूतचिच्चिदाकारतो भिन्ना जीवेशानुगता चित् चिदाकारतः चिद्विकल्पिताकारतः उपाधितो भिन्ना, स्वरूपतो न भिन्ना, कुतः ? चित्त्वहानितः, स्वरूपभेदे स्वरूपहानिः स्यादित्यर्थः ॥ ४४ ॥ चितो या चित् सा चिदाकारादुपाधितो भिद्यते, उपाधीनां जडरूपत्वात् भेदो युज्यत इत्यर्थः । जडापाये अजडं ब्रह्मावशिष्यते इत्याह—भिद्यत इति । जीवेशविकल्पितोपाधिकृतभेदापाये निरुपाधिकेयं चिदेकैव भवति ॥ ४५ ॥ निरुपाधिकचित एकत्वे हेतुमाह—तर्कतश्चेति ॥

अद्वैतज्ञानाच्छोकमोहनिवृत्तिः

चिदेकत्वपरिज्ञाने न शोचति न मुह्यति ।

अद्वैतं परमानन्दं शिवं याति तु केवलम् ॥ ४६ ॥

अधिष्ठानं समस्तस्य जगतः सत्यचिद्घनम् ।

अहमस्मीति निश्चित्य वीतशोको भवेन्मुनिः ॥ ४७ ॥

स्वशरीरे स्वयं ज्योतिस्स्वरूपं सर्वसाक्षिणम् ।

क्षीणदोषाः प्रपश्यन्ति नेतरे माययाऽऽवृताः ॥ ४८ ॥

एवंरूपपरिज्ञानं यस्यास्ति परयोगिनः ।

कुत्र चिद्गमनं नास्ति तस्य पूर्णस्वरूपिणः ॥ ४९ ॥

आकाशमेकं संपूर्णं कुत्रचिन्नैव गच्छति ।

तद्वत् स्वात्मपरिज्ञानी कुत्रचिन्नैव गच्छति ॥ ५० ॥

स यो ह वै तत् परमं ब्रह्म यो वेद वै मुनिः ।

ब्रह्मैव भवति स्वस्थः सच्चिदानन्दमात्रकः ॥ इत्युपनिषत् ॥५१॥

प्रत्यक्परचिदैक्यज्ञानफलमाह—चिदिति ॥ ४६–५० ॥ यो यदा निर्विशेषं ब्रह्म स्वमात्रमिति जानाति स तदैव ब्रह्मैव भवति । वेदनसमकालं ब्रह्मैव भवतीत्यर्थः । इत्युपनिषच्छब्दः रुद्रहृदयोपनिषत्परिसमाप्त्यर्थः ॥ ५१ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
रुद्रहृदयोपनिषद्व्याख्यानं लिखितं लघु ।
श्रीरुद्रहृदयव्याख्याग्रन्थः पञ्चाशदीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चाशीतिसङ्ख्यापूरकं रुद्रहृदयोपनिषद्विवरणं सम्पूर्णम् ॥

# रुद्राक्षजाबालोपनिषत्

आप्यायन्तु—इति शान्तिः

रुद्राक्षविषयो भुसुण्डप्रश्नः

अथ हैनं कालाग्निरुद्रं भुसुण्डः पप्रच्छ—कथं रुद्राक्षोत्पत्तिः, तद्धारणात् किं फलमिति ॥ १ ॥

रुद्राक्षोपनिषद्वेद्यमहारुद्रतयोज्ज्वलम् ।
प्रतियोगिविनिर्मुक्तशिवमात्रपदं भजे ॥

इह खलु सामवेदप्रविभक्तेयं रुद्राक्षजाबालोपनिषत् रुद्राक्षसत्ताप्रकटनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । भुसुण्ड-कालाग्निरुद्रप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतार-यति—अथेति । भुसुण्डः महायोगित्वेन कृतकृत्योऽपि स्वाज्ञानां स्वातिरिक्ता-विद्यापदतत्कार्यजातारोपापवादाधारनिराधारसविशेषनिर्विशेषज्ञानं चित्तशुद्धिं विना नोदेति, चित्तशुद्धिः विभूतिरुद्राक्षधारणादृते न संभवतीत्यालोच्य, भस्मजाबालो-पनिषदि भस्मोद्धूलनत्रिपुण्ड्रशिवपूजाविधिश्च शिवेन प्रकटितः, तत्रैव रुद्राक्ष-धारणविधिरपि संक्षेपत उक्तः भगवन्मुखेनैव, इदानीं रुद्राक्षतद्धारणलक्षणं तत्फलं च प्रकटितं चेत् श्रद्धया स्वाज्ञलोको रुद्राक्षधारणं करोति, तेनेश्वरप्रसाद-चित्तशुद्धिसंजातज्ञानद्वारा कृतार्थो भवेत्, इत्यनुकम्पया कालाग्निरुद्रं भुसुण्डः पप्रच्छ । ह इत्यैतिह्यार्थः ॥ १ ॥

रुद्राक्षोत्पत्तिः

तं होवाच भगवान् कालाग्निरुद्रः। त्रिपुरवधार्थमहं निमीलिताक्षोऽभवम्। तेभ्यो जलबिन्दवो भूमौ पतितास्ते रुद्राक्षा जाताः। सर्वानुग्रहार्थाय तेषां नामोच्चारणमात्रेण दशगोप्रदानफलं दर्शनस्पर्शनाभ्यां द्विगुणफलमत ऊर्ध्वं वक्तुं न शक्नोमि॥ २॥

तत्रैते श्लोका भवन्ति—

कस्मिन् स्थितं तु किं नाम कथं वा धार्यते नरैः।
कतिभेदमुखान्यत्र कैर्मन्त्रैर्धार्यते कथम्॥ ३॥
दिव्यवर्षसहस्राणि चक्षुरुन्मीलितं मया।
भूमावक्षिपुटाभ्यां तु पतिता जलबिन्दवः॥ ४॥
तत्राश्रुबिन्दवो जाता महारुद्राक्षवृक्षकाः।
स्थावरत्वमनुप्राप्य भक्तानुग्रहकारणात्॥ ५॥

भुसुण्डेनैवं पृष्टः तं होवाच भगवान कालाग्निरुद्रः। किमिति? त्रिपुरवधार्थमिति॥ २॥ स्वोक्तार्थे मन्त्रानपि प्रमाणयति—तत्रैते श्लोका भवन्तीति॥ ३॥ इत्याशङ्क्याह—दिव्येति॥ ४–५॥

रुद्राक्षधारणजपफलम्

भक्तानां धारणात् पापं दिवारात्रिकृतं हरेत्।
लक्षं तु दर्शनात् पुण्यं कोटिस्तद्धारणाद्भवेत्॥ ६॥
तस्य कोटिशतं पुण्यं लभते धारणान्नरः।
लक्षकोटिसहस्राणि लक्षकोटिशतानि च॥ ७॥

तज्जपाल्लभते पुण्यं नरो रुद्राक्षधारणात् ।

तद्धारणाजपफलमाह—भक्तानामिति ॥ ६–७ ॥

रुद्राक्षाणां उत्तमादिभेदाः

धात्रीफलप्रमाणं यच्छ्रेष्ठमेतदुदाहृतम् ॥ ८ ॥

बदरीफलमात्रं तु मध्यमं प्रोच्यते बुधैः ।

अधमं चणमात्रं स्यात् प्रक्रियैषा मयोच्यते ॥ ९ ॥

उत्तमादिभेदेनास्य त्रैविध्यमाह—धात्रीफलप्रमाणमिति ॥ ८–९ ॥

रुद्राक्षाणां ब्रह्मक्षत्रादिजातिभेदाः

ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्चेति शिवाज्ञया ।

वृक्षा जाताः पृथिव्यां तु तज्जातीयाः शुभाक्षकाः ॥ १० ॥

श्वेतास्तु ब्राह्मणा ज्ञेयाः क्षत्रिया रक्तवर्णकाः ।

पीता वैश्यास्तु विज्ञेयाः कृष्णाः शूद्रा उदाहृताः ॥ ११ ॥

ब्राह्मणो बिभृयाच्छ्वेतान् रक्तान् राजा तु धारयेत् ।

पीतान् वैश्यस्तु बिभृयात् कृष्णाञ्छूद्रस्तु धारयेत् ॥ १२ ॥

तत्प्रविभक्तब्रह्मक्षत्रादिजातिरुद्राक्षा ब्रह्मक्षत्रादिभिः धार्या इत्याह—ब्राह्मणा इति ॥ १०–१२ ॥

रुद्राक्षाणां ग्राह्याग्राह्यविभागः

समाः स्निग्धा दृढाः स्थूलाः कण्टकैः संयुताः शुभाः ।

कृमिदुष्टं छिन्नभिन्नं कण्टकैर्हीनमेव च ॥ १३ ॥

व्रणयुक्तमयुक्तं च षड् रुद्राक्षाणि वर्जयेत् ।
स्वयमेव कृतद्वारं रुद्राक्षं स्यादिहोत्तमम् ॥ १४ ॥
यत्तु पौरुषयत्नेन कृतं तन्मध्यमं भवेत् ।
समान् स्निग्धान् दृढान् स्थूलान् क्षौमसूत्रेण धारयेत् ॥ १५ ॥
सर्वगात्रेण [1]सौम्येन सामान्यानि विचक्षणः ।
निकषे हेमरेखाभा यस्य रेखा प्रदृश्यते ॥ १६ ॥
तदक्षमुत्तमं विद्यात् तद्धार्यं शिवपूजकैः ।

तद्गुणदोषप्रकटनपूर्वकं अयं ग्राह्यः अयमग्राह्य इत्याह—समा इति ॥ १३–१६ ॥

शिखाऽऽदिस्थानेषु धारणाभेदः

शिखायामेकरुद्राक्षं त्रिशतं शिरसा वहेत् ॥ १७ ॥
षट्त्रिंशतं गले दध्याद्बाह्वोः षोडशषोडश ।
मणिबन्धे द्वादशैव स्कन्धे [2]पञ्चशतं वहेत् ॥ १८ ॥
अष्टोत्तरशतैर्मालामुपवीतं प्रकल्पयेत् ।
द्विसरं त्रिसरं वाऽपि सराणां पञ्चकं तथा ॥ १९ ॥
सराणां सप्तकं वाऽपि बिभृयात् कण्ठदेशतः ।
मुकुटे कुण्डले चैव कर्णिकाहारकेऽपि वा ॥ २० ॥
केयूरकटके सूत्रं कुक्षिबन्धे विशेषतः ।
सुप्ते पीते सदाकालं रुद्राक्षं धारयेन्नरः ॥ २१ ॥

[1] साम्येन—क.  [2] पञ्चदशं—अ १.

त्रिशतं त्वधमं पञ्चशतं मध्यममुच्यते ।
सहस्रमुत्तमं प्रोक्तमेवं भेदेन धारयेत् ॥ २२ ॥

शिखाऽऽदिस्थानेषु धारणाभेदमाह—शिखायामिति ॥ १७–२२ ॥

तत्तत्स्थानधारणामन्त्राः

शिरसीशानमन्त्रेण [1]कण्ठे तत्पुरुषेण तु ।
अघोरेण गले धार्यं तेनैव हृदयेऽपि च ॥ २३ ॥
अघोरबीजमन्त्रेण करयोर्धारयेत् सुधीः ।
पञ्चाशदक्षग्रथितान् व्योमव्याप्यभिचोदरे ॥ २४ ॥
पञ्च ब्रह्मभिरङ्गैश्च त्रिमाला पञ्च सप्त च ।
ग्रथित्वा मूलमन्त्रेण सर्वाण्यक्षाणि धारयेत् ॥ २५ ॥

तत्तन्मन्त्रोच्चारणपूर्वकं तत्तत्स्थाने धार्यमित्याह--शिरसीति ॥ २३ ॥ रुद्राक्षाणां मध्यविलसितव्योमव्याप्यभिचोदरे रुद्राक्षमध्यस्थसुषिराकाशे अकारादिक्षकारान्तपञ्चाशदक्षरविन्यासपूर्वकसूत्रग्रन्थिग्रथितान् पञ्चब्रह्ममन्त्रैः पञ्चाक्षरीमन्त्रेण चाभिमन्त्र्य, अक्षमालिकोपनिषदुक्तरीत्या प्राणप्रतिष्ठाऽऽदिकं कृत्वा, सर्वाण्यक्षाणि धारयेदित्यर्थः ॥ २४–२५ ॥

रुद्राक्षाणां वक्त्रभेदेन फलभेदः

अथ हैनं भगवन्तं कालाग्निरुद्रं भुसुण्डः पप्रच्छ रुद्राक्षाणां भेदेन यदक्षं यत्स्वरूपं यत्फलमिति तत्स्वरूपं मुखयुक्तमरिष्टनिरसनं कामाभीष्टफलं ब्रूहीति होवाच ॥ २६ ॥

[1] मूर्ध्नि—उ, ड १.

तत्रैते श्लोका भवन्ति—

एकवक्त्रं तु रुद्राक्षं परतत्त्वस्वरूपकम् ।
तद्धारणात् परे तत्त्वे लीयते विजितेन्द्रियः ॥ २७ ॥
द्विवक्त्रं तु मुनिश्रेष्ठ चार्धनारीश्वरात्मकम् ।
धारणादर्धनारीशः प्रीयते तस्य नित्यशः ॥ २८ ॥
त्रिमुखं चैव रुद्राक्षमग्नित्रयस्वरूपकम् ।
तद्धारणाच्च हुतभुक् तस्य तुष्यति नित्यदा ॥ २९ ॥
चतुर्मुखं तु रुद्राक्षं चतुर्वक्त्रस्वरूपकम् ।
तद्धारणाच्चतुर्वक्त्रः प्रीयते तस्य नित्यदा ॥ ३० ॥
पञ्चवक्त्रं तु रुद्राक्षं पञ्चब्रह्मस्वरूपकम् ।
पञ्चवक्त्रः स्वयं ब्रह्म पुंहत्यां च व्यपोहति ॥ ३१ ॥
षड्वक्त्र[1]मपि रुद्राक्षं कार्तिकेयाधिदैवतम् ।
तद्धारणान्महाश्रीः स्यान्महदारोग्यमुत्तमम् ॥ ३२ ॥
मतिविज्ञानसंपत्तिशुद्धये धारयेत् सुधीः ।
विनायकाधिदैवं च प्रवदन्ति मनीषिणः ॥ ३३ ॥
सप्तवक्त्रं तु रुद्राक्षं सप्तमात्राधिदैवतम् ।
तद्धारणान्महाश्रीः स्यान्महदारोग्यमुत्तमम् ॥ ३४ ॥
महती ज्ञानसंपत्तिः शुचिर्धारयतः सदा ।
अष्टवक्त्रं तु रुद्राक्षमष्टमात्राधिदैवतम् ॥ ३५ ॥

[1] मति—क, अ १, उ १.

वस्वष्टकप्रियं चैव गङ्गाप्रीतिकरं तथा ।
तद्धारणादिमे प्रीता भवेयुः सत्यवादिनः ॥ ३६ ॥
नववक्त्रं तु रुद्राक्षं नवशक्त्यधिदैवतम् ।
तस्य धारणमात्रेण प्रीयन्ते नव शक्तयः ॥ ३७ ॥
दशवक्त्रं तु रुद्राक्षं यमदैवमुदाहृतम् ।
[1]दर्शात् प्रशान्तिजनकं धारणान्नात्र संशयः ॥ ३८ ॥
एकादशमुखं त्वक्षं रुद्रैकादशदैवतम् ।
तदिदं दैवतं प्राहुः सदा सौभाग्यवर्धनम् ॥ ३९ ॥
रुद्राक्षं द्वादशमुखं महाविष्णुस्वरूपकम् ।
द्वादशादित्यरूपं च बिभर्त्येव हि तत्परः ॥ ४० ॥
त्रयोदशमुखं चाक्षं कामदं सिद्धिदं शुभम् ।
तस्य धारणमात्रेण कामदेवः प्रसीदति ॥ ४१ ॥
चतुर्दशमुखं चाक्षं रुद्रनेत्रसमुद्भवम् ।
सर्वव्याधिहरं चैव सर्वदाऽऽरोग्यमाप्नुयात् ॥ ४२ ॥

रुद्राक्षाणां वक्त्रभेदं जिज्ञासुः भुसुण्डो भगवन्तं पृच्छतीत्याह—अथेति ॥२६–३७॥ दशवक्त्ररुद्राक्षदर्शनं स्वातिरिक्ताखिलशान्तिकरमित्यर्थः॥३८–४२॥

### रुद्राक्षधारिवर्ज्यानि

मद्यं मांसं च लशुनं पलाण्डुं शिग्रुमेव च ।
श्लेष्मातकं विड्वराहमभक्ष्यं वर्जयेन्नरः ॥ ४३ ॥

[1] दर्शनाच्छान्ति—अ २.

रुद्राक्षधारी मद्यमांसादिकं कदाऽपि नास्वादयेदित्याह—मद्यमिति ॥४३॥

रुद्राक्षधारणामहिमा

ग्रहणे विषुवे चैवमयने संक्रमेऽपि च ।
दर्शेषु पूर्णमासे च पूर्णेषु दिवसेषु च ।
रुद्राक्षधारणात् सद्यः सर्वपापैः प्रमुच्यते ॥ ४४ ॥
रुद्राक्षमूलं तद्ब्रह्मा तन्नाळं विष्णुरेव च ।
तन्मुखं रुद्र इत्याहुस्तद्बिन्दुः सर्वदेवताः ॥ इति ॥ ४५ ॥

ग्रहणादिपुण्यकालधारणात् सर्वपापनिवृत्ति तत्त्रिमूर्तित्वं सर्वदेवतात्मकत्वं चाह—ग्रहण इति ॥ ४४-४५ ॥

रुद्राक्षोत्पत्तिः तन्महिमा च

अथ कालाग्निरुद्रं भगवन्तं सनत्कुमारः पप्रच्छाधीहि भगवन् रुद्राक्षधारणविधिम् । तस्मिन् समये निदाघजडभरतदत्तात्रेयकात्यायनभरद्वाजकपिलवसिष्ठपिप्पलादयश्च कालाग्निरुद्रं परिसमेत्योचुः । अथ कालाग्निरुद्रः किमर्थं भवतामागमनमिति होवाच । रुद्राक्षधारणविधिं वै सर्वे श्रोतुमिच्छामह इति ॥ ४६ ॥

अथ कालाग्निरुद्रः प्रोवाच । रुद्रस्य नयनादुत्पन्ना रुद्राक्षा इति लोके ख्यायन्ते । अथ सदाशिवः संहारकाले संहारं कृत्वा संहाराक्षं मुकुलीकरोति । तन्नयनाज्जाता रुद्राक्षा इति होवाच । तस्माद्रुद्राक्षत्वमिति कालाग्निरुद्रः प्रोवाच ॥ ४७ ॥

तद्रुद्राक्षे वाग्विषये कृते दशगोप्रदानेन यत् फलमवाप्नोति तत् फलमश्नुते । स एव भस्मज्योती रुद्राक्ष इति । तद्रुद्राक्षं करेण

स्पृष्ट्वा धारणमात्रेण द्विसहस्रगोप्रदानफलं भवति । तद्रुद्राक्षे कर्णयोर्धार्यमाणे एकादशसहस्रगोप्रदानफलं भवति । एकादशरुद्रत्वं च गच्छति । तद्रुद्राक्षे शिरसि धार्यमाणे कोटिगोप्रदानफलं भवति । एतेषां स्थानानां कर्णयोः फलं वक्तुं न शक्यमिति होवाच ॥ ४८ ॥

सनत्कुमारादयोऽपि रुद्राक्षेयत्तामवगन्तुं कालाग्निरुद्रं पृच्छन्तीत्याह-अथेति ॥ ४६–४८ ॥

रुद्राक्षविद्यावेदनफलम्

य इमां रुद्राक्षजाबालोपनिषदं नित्यमधीते बालो वा युवा वा वेद स महान् भवति । स गुरुः सर्वेषां मन्त्राणामुपदेष्टा भवति । एतैरेव होमं कुर्यात् । एतैरेवार्चनम् । तथा रक्षोघ्नं मृत्युतारकं गुरुणा लब्धं कण्ठे बाहौ शिखायां वा बध्नीत । सप्तद्वीपवती भूमिर्दक्षिणार्थं नावकल्पते । तस्माच्छ्रद्धया यां कांचिद्गां दद्यात् सा दक्षिणा भवति । य इमामुपनिषदं ब्राह्मणः प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतपापं नाशयति । मध्याह्नेऽधीयानः षड्जन्मकृतपापं नाशयति । सायं प्रातः प्रयुञ्जानोऽनेकजन्मकृतपापं नाशयति षट्सहस्रलक्षगायत्रीजपफलमवाप्नोति ब्रह्महत्यासुरापानस्वर्णस्तेयगुरुदारगमनतत्संयोगपातकेभ्यः पूतो भवति सर्वतीर्थफलमश्नुते पतितसंभाषणात् पूतो भवति पङ्क्तिशतसहस्रपावनो भवति शिवसायुज्यमवाप्नोति न च पुनरावर्तते न च पुनरावर्तत इत्यों सत्यमित्युपनिषत् ॥ ४९ ॥

रुद्राक्षविद्यावेदनफलमाह—य इति । एतैरेव मन्त्रैः होमं कुर्यात् । एवमुक्तप्रकारेण रुद्राक्षधारी शिवप्रसादतश्चित्तशुद्धिं ज्ञानं चाप्य स्वातिरिक्ताशिवप्रासशिवसायुज्यं,

शिवो गुरुः शिवो वेदः शिवो देवः शिवः प्रभुः ।
शिवोऽस्म्यहं शिवःसर्वं शिवादन्यन्न किञ्चन ॥

इति श्रुतिसिद्धशिवतत्त्वज्ञानशिवस्वरूपावस्थानलक्षणं विदेहकैवल्यमेतीत्यर्थः । इत्युपनिषच्छब्दः रुद्राक्षजाबालोपनिषत्परिसमाप्त्यर्थः ॥ ४९ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
रुद्राक्षोपनिषद्व्याख्या लिखिता शिवगोचरा ।
रुद्राक्षजाबालव्याख्याग्रन्थः पञ्चाशदीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे अष्टाशीतिसङ्ख्यापूरकं
रुद्राक्षजाबालोपनिषद्विवरणं सम्पूर्णम्

# शरभोपनिषत्

**भद्रं कर्णेभिः—इति शान्तिः**

ब्रह्मविष्णुरुद्राणां मध्ये कोऽधिकतमः

अथ हैनं पैप्पलादो ब्रह्माणमुवाच भो भगवन् ब्रह्मविष्णुरुद्राणां मध्ये को वा अधिकतरो ध्येयः स्यात्तत्त्वमेव नो ब्रूहीति ॥ १ ॥

सर्वं सन्त्यज्य मुनयो यद्व्रजन्त्यात्मरूपतः ।
तच्छारभं त्रिपाद्ब्रह्म स्वमात्रमवशिष्यते ॥

इह खलु अथर्वणवेदप्रविभक्तेयं शारभोपनिषत् सर्वेरपि सर्वात्मतयोपास्यपारमैश्वर्यतत्त्वं प्रकटयन्ती विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । पैप्पलादब्रह्मप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—अथेति । उवाच किमिति ? भो भगवन्निति ॥ १ ॥

रुद्रस्य श्रेष्ठत्वम्

तस्मै स होवाच पितामहश्च हे पैप्पलाद शृणु वाक्यमेतत् ॥ २ ॥

बहूनि पुण्यानि कृतानि येन तेनैव लभ्यः परमेश्वरोऽसौ ।
यस्याङ्गजोऽहं हरिरिन्द्रमुख्या मोहान्न जानन्ति सुरेन्द्रमुख्याः ॥३॥
प्रभुं वरेण्यं पितरं महेशं यो ब्रह्माणं विदधाति तस्मै ।
वेदांश्च सर्वान् प्रहिणोति चाग्र्यं तं वै प्रभुं पितरं देवतानाम् ॥४॥
ममापि विष्णोर्जनकं देवमीड्यं योऽन्तकाले सर्वलोकान् संजहार ।
स एकः श्रेष्ठश्च वरिष्ठश्च ॥ ५ ॥

पैप्पलादप्रश्नोत्तरं ब्रह्मोवाचेत्याह—नम्मा इति ॥ २ ॥ श्रोतारमभिमुखीकृत्य परमेश्वरं सर्वकारणत्वेन सर्वदेवश्रेष्ठत्वेन च स्तौति—बहूनीति । मोहान्न जानन्ति स्वात्मेति । अनन्तकोटिजन्मसुकृतपरिपाकसिद्धो यदधिगमः, ब्रह्मादयो यदंशसंभूताः, इन्द्रादयोऽपि यत्तत्त्वं न जानन्ति, यो हि चतुराननसर्वार्थसाधकवेदप्रगप्रदाता, यः सर्वोपरमकाले सर्वानात्मन्युपसंहरति, सोऽयं परमेश्वर एव सर्वदेवेषु श्रेष्ठः वरिष्ठश्च भवतीत्यर्थः ॥ ३–५ ॥

### शरभरूपेण रुद्रेण नृसिंहवधः

यो घोरं वेषमास्थाय शरभाख्यं महेश्वरः ।
नृसिंहं लोकहन्तारं संजघान महाबलः ॥ ६ ॥
हरिं हरन्तं पादाभ्यामनुयान्ति सुरेश्वराः ।
मा वधीः पुरुषं विष्णुं विक्रमस्व महानसि ॥ ७ ॥
कृपया भगवान् विष्णुं विददार नखैः खरैः ।
चर्माम्बरो महावीरो वीरभद्रो बभूव ह ॥ ८ ॥
स एको रुद्रो ध्येयः सर्वेषां सर्वसिद्धये ।

कथं पुनरस्य देववरिष्ठत्वमित्याकाङ्क्षायां लोकक्षोभकरनृसिंहनिग्रह-ब्रह्मशिरःपाटन-विश्वसर्गस्थितिभङ्गकरण—सर्वग्रासकालदर्पहरण-हालाहलगतिकुण्ठन -

स्वपदार्चकविष्णुचक्रप्रदानादिनिरङ्कुशनिग्रहानुग्रहाकुण्ठितशक्तिसंपन्नत्वात् सर्वदेववरिष्ठत्वमीशस्य स्वभावसिद्धं इति देवैरप्युपास्यमानत्वं चाप्याह—यो घोरमिति ॥ ६ ॥ तदा हरिम् ॥ ७ ॥ देवैः प्रार्थितः तेषु कृपया ॥ ८ ॥

देवकृतशरभस्तुतिः

यो ब्रह्मणः पञ्चमवक्त्रहन्ता तस्मै रुद्राय नमो अस्तु ॥ ९ ॥
यो विस्फुलिङ्गेन ललाटजेन सर्वं जगद्भस्मसात्संकरोति ।
पुनश्च सृष्ट्वा पुनरप्यरक्षदेवं स्वतन्त्रं प्रकटीकरोति ॥
तस्मै रुद्राय नमो अस्तु ॥ १० ॥
यो वामपादेन जघान कालं घोरं पपेऽथ हालाहलं दहन्तम् ।
दक्षाङ्घ्रिनापस्मृतिमुग्रवीर्यं तस्मै रुद्राय नमो अस्तु ॥ ११ ॥
यो वामपादार्चितविष्णुनेत्रस्तस्मै ददौ चक्रमतीव हृष्टः ।
तस्मै रुद्राय नमो अस्तु ॥ १२ ॥
यो दक्षयज्ञे सुरसङ्घान् विजित्य विष्णुं बबन्धोरगपाशेन वीरः ।
तस्मै रुद्राय नमो अस्तु ॥ १३ ॥
यो लीलयैव त्रिपुरं ददाह विष्णुं कविं सोमसूर्याग्निनेत्रः ।
सर्वे देवाः पशुतामवापुः स्वयं तस्मात् पशुपतिर्बभूव ।
तस्मै रुद्राय नमो अस्तु ॥ १४ ॥
यो मत्स्यकूर्मादिवराहसिंहान् विष्णुं क्रमन्तं वामनमादिविष्णुम् ।
विविक्लवं पीड्यमानं सुरेशं भस्मीकृत्य मन्मथं यमं च ।
तस्मै रुद्राय नमो अस्तु ॥ १५ ॥
एवंप्रकारेण बहुधा प्रतुष्ट्वा क्षमापयामासुर्नीलकण्ठं महेश्वरम् ॥ १६ ॥

कथं देवाः स्तुवन्तीत्यत्र—यो ब्रह्मण इति ॥ ९–१४ ॥ विविक्त्यं श्रमान्वितम् ॥ १५ ॥ एवं देवैः प्रार्थितो भगवान् तत्प्रार्थनामङ्गीकृत्य तेषु प्रसादं चकारेत्याह—एवमिति ॥ १६ ॥

रुद्रानुग्रहः

तापत्रयसमुद्भूतजन्ममृत्युजरादिभिः ।
नानाविधानि दुःखानि जहार परमेश्वरः ॥ १७ ॥
एवमङ्गीकरोच्छिवः प्रार्थनं सर्वदेवानाम् ।
शङ्करो भगवानाद्यो ररक्ष सकलाः प्रजाः ॥ १८ ॥
यत्पादाम्भोरुहद्वन्द्वं मृग्यते विष्णुनाऽधुना ।
स्तुत्वा स्तुत्यं महेशानमवाङ्मनसगोचरम् ।
भक्त्या नम्रतनोर्विष्णोः प्रसादमकरोद्विभुः ॥ १९ ॥

ततस्तेषां तापत्रयसमुद्भूतजन्ममृत्युजरादिभिः संजातानि नानाविधानि दुःखानि जहार परमेश्वरः जहार निश्शेषमपहृतवान् ॥ १७ ॥ एवमङ्गीकरोत् अङ्गीचकार ॥ १८ ॥ तस्य देवैरपि दुरवगमत्वमाह—यदिति । अधुनाऽपि । तं स्तुत्वा तत्प्रभावतः इन्द्रादयो देवाः तत्प्रसादं लेभिरे । ततो विष्णुरपि देवं प्रणिपत्य बहुधा स्तुत्वा कृताञ्जलिरासामास । ततः भक्त्या ॥ १९ ॥

रुद्रयाथात्म्यज्ञानफलम्

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।
आनन्दं ब्रह्मणो विद्वान्न बिभेति कदाचनेति ॥ २० ॥
अणोरणीयान् महतो महीयानात्माऽस्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ २१ ॥

तद्याथात्म्यं तज्ज्ञानफलं चाह—यत इति ॥ २० ॥ ब्रह्मणोऽवाङ्मनसगोचरत्वेन न कोऽपि तत्स्वरूपं पश्यतीत्याशङ्क्य तद्भजनलब्धप्रसादो मुनिस्तं यथावत् पश्यतीत्याह—अणोरिति । तमक्रतुं निर्विकल्पं स्वमात्रमिति पश्यति ॥ २१ ॥

रुद्रमहिमा

वसिष्ठवैयासिकिवामदेव[1]विरिञ्चिमुख्यैर्हृदि भाव्यमानः ।
सनत्सुजातादिसनातनाद्यैरीड्यो महेशो भगवानादिदेवः ॥२२॥
सत्यो नित्यः सर्वसाक्षी महेशो नित्यानन्दो निर्विकल्पो निराख्यः ।
अचिन्त्यशक्तिर्भगवान् गिरीशः स्वाविद्यया कल्पितमानभूयः ॥
अतिमोहकरी माया मम विष्णोश्च सुव्रत ।
तस्य पादाम्बुजध्यानात् दुस्तरा [2]सुतरा भवेत् ॥ २४ ॥

तस्य वसिष्ठादिब्रह्मनिष्ठपटलेड्यनिर्विशेषस्वरूपमाह—वसिष्ठेति । हृदि प्रत्यगभिन्नब्रह्मरूपेण भाव्यमानः तथा सनत्सुजातादिसनातनाद्यैः "ब्रह्माहं", "अहमेव ब्रह्म" इत्यनवरतं ईड्यः । ब्रह्मादीनामपि य आदिः सोऽयम् ॥ २२ ॥ सत्यः कालत्रयाबाध्यत्वात् । नित्यः निरवधिकैश्वर्यसम्पन्नत्वात् । सर्वसाक्षी सर्वसाक्ष्यभावाभावेक्षितृत्वात् । महेशः महदादिप्रपञ्चेशितृत्वात् । यद्वा—निष्प्रतियोगिकतया महान् परमात्माऽहमेवेत्यवस्थानुमीश्वरत्वात् । नित्यानन्दः भूमानन्दमात्रत्वात् । स्वाज्ञदृष्टिप्रसक्तविकल्पग्रामत्वात् निर्विकल्पः । निराख्यः नामरूपबाह्यत्वात् । यस्य शक्तिः अघटितघटनासामर्थ्येन अचिन्त्या स्यात् सोऽयं अचिन्त्यशक्तिः । सर्वेश्वरत्वात् अचिन्त्यशक्तिमत्सर्वेश्वरत्वं वास्तवमित्याशङ्क्य स्वाविद्याकल्पितत्वे मानबाहुल्यात् न हि वास्तवमित्याह—स्वाविद्ययेति । स्वदृष्ट्याऽविद्यमाना स्वाविद्या तया सर्वसाक्षित्वमचिन्त्यशक्तिम-

[1] विरिञ्च—अ १, अ २. [2] सुस्तरा—क, अ १, अ २, उ १.

त्सर्वेश्वरत्वादिकं सर्वं कल्पितमेवेत्यत्र—"पश्यतेहापि सन्मात्रमसदन्यत्", "मद्व्यतिरिक्तमणुमात्रं न विद्यते", "मायाक्लृप्तौ बन्धमोक्षौ नेश्वरत्वं न जीवता", इत्यादिमानभूयस्त्वात् निष्प्रतियोगिकब्रह्ममात्रत्वमेव वास्तवमित्यर्थः । भूय इत्यव्ययम् ॥ २३ ॥ यद्येवमविद्यमानाऽविद्या सर्वैरपि जेतुं शक्येत्यत आह—अतिमोहकरीति । मम ब्रह्मणो विष्णोश्चाप्यतिमोहं परिच्छिन्नब्रह्मत्वविष्णुत्वाभिमानं करोतीति अतिमोहकरी माया अनापन्नशैवभावानां दुस्तराऽपि तत्पदध्यानतः सुतरा भवेदित्यर्थः ॥ २४ ॥

विष्णुशिवयोरभेदः

विष्णुर्विश्वजगद्योनिः स्वांशभूतैः स्वकैः सह ।
ममांशसंभवो भूत्वा पालयत्यखिलं जगत् ॥ २५ ॥
विनाशं कालतो याति ततोऽन्यत् सकलं मृषा ।
तस्मै महाग्रासाय महादेवाय शूलिने ।
महेश्वराय मृडाय तस्मै रुद्राय नमो अस्तु ॥ २६ ॥
एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।
त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥ २७ ॥
चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥ २८ ॥
ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २९ ॥
शरा जीवास्तदङ्गेषु भाति नित्यं हरिः स्वयम् ।
ब्रह्मैव शरभः साक्षान्मोक्षदोऽयं महामुने ॥ ३० ॥

विष्ण्वादिः शिवात् भिद्यत इत्यत आह—विष्णुरिति । स्वांशभूतैः स्वकैः सह जीवकोटिभिः साकम् ॥ २५ ॥ सर्वप्रपञ्चस्य स्वांशजत्वे सत्यत्वं स्यादित्याशङ्क्य प्रतिबिम्बं बिम्बमात्रवत् स्वज्ञानकाले स्वांशनाशः स्वमात्रमेवेत्याह—विनाशमिति । यः स्वाज्ञादिदृष्ट्या अंशांशितया भातः तस्मै ॥ २६ ॥ पैप्पलादभेददृष्ट्यनुरोधेन विष्णुशिवयोः नियम्यनियामकतोक्ता । शिवप्रसादतो विष्णुशिवभेदहेत्वज्ञानापायमालक्ष्य तयोरभेददार्ढ्याय विष्णुत्वेन तमेव प्रार्थयति—एक इति ॥ २७ ॥ कथं पुनरस्य विश्वयज्ञभोक्तृत्वं इत्यत आह—चतुर्भिरिति । "आश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामह इति पञ्चाक्षरं द्व्यक्षरो वषट्कारः" इति श्रुतिसिद्धमन्त्रतो यत्र यज्ञे "यज्ञो वै विष्णुः" इति श्रुतिसिद्धे विष्णौ हूयते स मे विष्णुः परमेश्वरः स्वज्ञानं दत्वा प्रसीदत्वित्यर्थः ॥ २८ ॥ विष्णोर्यज्ञत्वे अर्पणहविरादीनामनेकत्वात् विष्णोरनेकत्वं स्यादित्यत आह—ब्रह्मार्पणमिति । अर्पणहविरादिकं सर्वं विष्ण्वाख्यं ब्रह्मैवेत्यर्थः ॥ २९ ॥ शरभशब्दार्थनिर्वचनेनापि विष्णुशिवयोरत्यन्ताभेदमेव व्यक्तीकरोति—शरा इति । शरा जीवास्तदङ्गेषु पादादिशिरोरुहान्तेषु तस्य विष्णोरङ्गेषु तस्य शिवस्याङ्गेषु वा शरा अनन्तकोटिब्रह्माण्डानि तन्निवासिनो जीवाश्च मायया विकल्पिताः स्वाज्ञादिदृष्टिमोहे सत्यमति परमार्थतो भाति । विष्ण्वाख्यं ब्रह्मैव शरभः ॥ ३० ॥

शिवस्यैव ध्येयत्वम्

मायावशादेव देवा मोहिता ममतादिभिः ।
तस्य माहात्म्यलेशांशं वक्तुं [1]केनाप्यशक्यते ॥ ३१ ॥
परात्परतरं ब्रह्म यत् परात्परतो हरिः ।
तत् परात्परतरो हीशस्तस्मात्तुल्योऽधिको न हि ॥ ३२ ॥
एक एव शिवो नित्यस्ततोऽन्यत् सकलं मृषा ।

[1] केनापि श—अ १, अ २.

तस्मात् सर्वान् परित्यज्य ध्येयान् विष्ण्वादिकान् सुरान् ॥३३॥
शिव एव सदा ध्येयः सर्वसंसारमोचकः ।
तस्मै महाग्रासाय महेश्वराय नमः ॥ ३४ ॥

एवं विष्णुशिवयोरभेदेऽपि मायावशादेव । निर्मायस्य तस्य ॥ ३१ ॥ क्षरप्रपञ्चात् परमक्षरमीश्वराख्यं तस्मात् परान् ईश्वरादपि परतरं परमाक्षरं ब्रह्म । यत्परादपि परमाक्षरं तदेव हरिः, परात् परतरत्वेन हरेर्विभातत्वात् । यत्परात् परतो हरिः इति ख्यातं तत्परात् परतरो विभात ईश एव हि । तस्मात् तुल्योऽधिकः समो वा कोऽपि न विद्यते, स्वातिरिक्तसामान्यस्य मृग्यत्वात् ॥ ३२ ॥ यत एवमतः एक एव । यस्मादेवं तस्मात् । स्वाज्ञानतः परिच्छिन्नतया ध्येयान् ॥ ३३ ॥ निष्प्रतियोगिकस्वमात्रधिया ध्येयः । यः स्वानां स्वातिरिक्तसंसारभ्रमापह्नवकृत् तस्मै ॥ ३४ ॥

एतच्छास्त्रसंप्रदाननियमः

पैप्पलादं महाशास्त्रं न देयं यस्य कस्य चित् ।
नास्तिकाय कृतघ्नाय दुर्वृत्ताय दुरात्मने ॥ ३५ ॥
दाम्भिकाय नृशंसाय शठायानृतभाषिणे ।
सुव्रताय सुभक्ताय सुवृत्ताय सुशीलिने ॥ ३६ ॥
गुरुभक्ताय दान्ताय शान्ताय ऋजुमानसे ।
शिवभक्ताय दातव्यं ब्रह्मकर्मोक्तधीमते ॥ ३७ ॥
स्वभक्तायैव दातव्यमकृतघ्नाय सुव्रत ।
न दातव्यं सदा गोप्यं यतो नैव द्विजोत्तम ॥ ३८ ॥

एतत् पैप्पलादं महाशास्त्रं योऽधीते श्रावयेद्द्विजः स जन्ममरणेभ्यो मुक्तो भवति गर्भवासाद्विमुक्तो भवति सुरापानात्

पूतो भवति स्वर्णस्तेयात् पूतो भवति ब्रह्महत्यात् पूतो भवति गुरुतल्पगमनात् पूतो भवति। स सर्वान् वेदानधीतो भवति। स सर्वान् देवान् ध्यातो भवति। स समस्तमहापातकोपपातकात् पूतो भवति। तस्मादविमुक्तमाश्रितो भवति। स सततं शिवप्रियो भवति। स शिवसायुज्यमेति। न स पुनरावर्तते न स पुनरावर्तते। इत्याह भगवान् ब्रह्मेत्युपनिषत्॥ ३९॥

उक्तलक्षणलक्षितमेतच्छास्त्रं अनधिकारिणे न देयं अधिकारिणे देयमित्याह—पैप्पलादमिति॥ ३६-३७॥ उक्ताधिकारिलक्षणविरळाय न दातव्यम्॥ ३८॥ एतच्छास्त्रपठनतदर्थविचारणसामान्यमुख्यफलमाह—एतदिति। उपनिषच्छब्दः शरभोपनिषत्समाप्त्यर्थः॥ ३९॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
शरभोपनिषद्व्याख्या लिखितेश्वरगोचरा।
शरभोपनिषद्व्याख्याग्रन्थजातं शतं स्मृतम्॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चाशत्संख्यापूरकं शरभोपनिषद्विवरणं सम्पूर्णम्॥

# श्वेताश्वतरोपनिषत्

सह नाववतु—इति शान्तिः

## प्रथमोऽध्यायः

जगत्कारणजिज्ञासा

ब्रह्मवादिनो वदन्ति—

किं कारणं ब्रह्म कुतः स्म जाता जीवाम केन क्व च संप्रतिष्ठाः ।
अधिष्ठिताः केन सुखेतरेषु वर्तामहे ब्रह्मविदो व्यवस्थाम् ॥ १ ॥

श्वेताश्वतरोपनिषन्मन्त्रग्रामप्रकाशितम् ।
प्रतियोगिविनिर्मुक्तब्रह्ममात्रमहं महः ॥

इह खलु श्वेताश्वतरमन्त्रोपनिषदः कृष्णयजुर्वेदप्रविभक्तत्वात् कठवल्लीतैत्तिरीयादौ य उपोद्घातो वर्णितः स एव अत्रापि द्रष्टव्य इति न पृथगत्र निरूप्यते । अध्यायषट्कजुष्टेयं श्वेताश्वतरोपनिषत् । तत्राद्यं वाक्यं ब्राह्मणम् । ततः कृत्स्नोपनिषत् मन्त्रात्मिका । तत्राद्यं ब्राह्मणवाक्यमाह—ब्रह्मवादिनो वदन्तीति । ब्रह्मवदनशीला मुनयः सर्वे मिलित्वा वेदार्थेतरस्वातिरिक्तास्तितावादिपक्षनिरसनपूर्वकं, "सर्वे वेदा यत्पदमामनन्ति" इति, "वेदार्थः परमाद्वैतं नेतरत्" इति च श्रुतिस्मृत्यनुरोधेन स्वातिरिक्तापह्नवसिद्धं ब्रह्ममात्रं निष्प्रतियोगिकतया अवशिष्यत इति वदन्ति कथयन्तीत्यर्थः ॥

ब्राह्मणवाक्येन योऽर्थः प्रकाशितः तमेतमर्थं उत्तरे मन्त्राः प्रतिपादयन्तीत्याह—किं कारणमित्यादिना। स्वाज्ञदृष्टिप्रसक्तस्वातिरिक्तस्वाविद्यापदतत्कार्यजातस्य किं कारणं ब्रह्म अन्यद्वा, किं तद्ब्रह्म निर्विशेषं सविशेषं वा, किं तन्निमित्तमुपादानं वा, यद्वा निमित्तकारणमेवैतत्। वयमाकाशादिवत् कुतः स्म जाताः स्थितिकाले ब्रह्मकार्यतया स्थिताः सुषुप्तिप्रळयादावुपादानब्रह्मणि लयं गताः सन्तः प्रबोधसर्गादौ पुनर्ब्रह्मकार्यतया वयं जाताः, अथवा जलचन्द्रघटाकाशस्थानीयाश्च वयं सुषुप्तिप्रळयादावुपाधिविलये बिम्बचन्द्रमहाकाशस्थानीयब्रह्मणैक्यमनुभूय पुनः प्रबोधादौ ब्रह्मविवर्ततया जाताः। जीवाम केन, केन वयं जीवामः, लडर्थे लोट्, अदृष्टेनेश्वरेण स्वभावेन वा। क्व च संप्रतिष्ठाः स्वापादावस्माकं विकारिण्यविकारिणि ब्रह्मणि वाऽवस्थानम्। क्व च संप्रतिष्ठिता इत्यस्मिन् पाठे मुक्तौ कीदृशे ब्रह्मणि वयमेकत्वेनावस्थिता इत्यर्थः। केन वयं अधिष्ठिताः अधिदेवतादित्यादिना ईश्वरेणाभाभ्यां वा अधिष्ठिताः सन्तः सुखेतरेषु सुखदुःखदप्रपञ्चेषु वर्तामहे हे ब्रह्मविदः वयं सम्यग्विचिन्त्य व्यवस्थां कुर्मः ॥ १ ॥

### परमात्मनः उपादानकारणत्वम्

कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम्।
संयोग एषां न त्वात्मभावादात्माऽप्यनीशः सुखदुःखहेतोः ॥२॥
ते ध्यान[1]योगा अनुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्।
यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ॥
तमेकनेमिं त्रिवृतं षोडशान्तं शतार्धारं विंशतिप्रत्यराभिः।
अष्टकैः षड्भिर्विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैकमोहम् ॥४॥
पञ्चस्रोतोऽम्बुं पञ्चयोन्युग्र[2]वक्त्रां पञ्चप्राणोर्मिं पञ्चबुद्ध्यादिमूलाम्।
पञ्चावर्तां पञ्चदुःखौघवेगां पञ्चाशद्भेदां पञ्चपर्वामधीमः ॥ ५ ॥

[1] योगानु—क, उ, मु. [2] वक्रां—क, उ, मु.

अत्रापरे ब्रह्मातिरिक्तकारणवादिनः समुत्तिष्ठन्ति, तान्निराकृत्य वेदार्थपक्षं स्थापयति—**काल** इति। संसृतिकारणं काल एवेति कालविदो वदन्ति, **स्वभाव** इति लोकायतिकाः, पुण्यपापनियतिरेव कारणमिति मीमांसकाः, कल्पादौ प्राणिकर्मसापेक्षमीश्वरेण न किंचिदपि सृष्टं किंतु **यदृच्छयेदं** जायते इति निरीश्वरवादिनः, जगन्नियतावादिनो **भूतानि** कारणमिति वदन्ति, **योनिः प्रकृतिः** कारणमिति प्राकृताः शाक्ताः, **पुरुषो** हिरण्यगर्भ एव कारणमिति योगिनः, **इत्थं** कालादिपुरुषान्तं स्वाज्ञानानुरोधेन **चिन्त्यं** चिन्तामात्रमवशिष्यते, नैतावताऽर्थसिद्धिः। प्रातिस्विकेन कालादीनां कारणताऽभावेऽपि मिलित्वा कारणता स्यादित्यत आह—**संयोगः** इति। कालादिप्रातिस्विकपक्षवदेषां संयोगोऽपि कारणतां नार्हति। तर्ह्येषां संयोगस्याप्यकारणत्वे तदपेक्षया किं कारणतामर्हतीत्यत आह—**आत्मभावादि**ति। कालादीनां भोग्यत्वेन परतन्त्रत्वात् तदपेक्षया भोक्तुरात्मनः सत्त्वात् स एव मुख्यकारणं भवत्वित्यत आह—**आत्माऽप्यनीश** इति। जगन्निर्माणासमर्थ इत्यर्थः। कुतः? **सुखदुःखकर्तृत्वहेतोः** ॥ २ ॥ तस्याप्येवमकारणत्वे किं कारणत्वेन पश्यन्तीत्यत आह--**त** इति। ते ब्रह्मविदः ध्यानमेव योगो येषां ते **ध्यानयोगाः** सन्तः जगन्मूलकारणं **अनुगता अपश्यन्**। किमित्यपेक्षायामाह—**देवात्मशक्तिमि**ति। देवस्य निर्विशेषत्वेन कारणत्वानुपपत्त्या तदभेदाध्यासेन तत्परतन्त्रा काचन देवात्मन ईश्वरत्वकलनाहेतुभूता **देवात्मशक्तिः** तां मायां सत्त्वादिस्व**गुणैः** स्रष्टृत्वादिगुणैश्च **निगूढाम्**। जगत्परिणामिकारणत्वेन अपश्यन्नित्युक्तमायायाः स्फुरणशक्तिप्रदो **यः** परमात्मा कालप्रभृतीन्यात्मपर्यन्तानि **कालात्मयुक्तानि निखिलानि कारणानि तान्येक एव अधितिष्ठति**, तेषां सत्ताप्रदत्वात् ॥ ३ ॥ तमेव वैराग्यहेतोः उत्तरो मन्त्रः प्रतिपादयति रथचक्रतया—**तमि**ति। यः सर्वाधिकरणतया वर्णितस्तमेतमात्मानं पूर्वमन्त्रे या स्वमायाशक्तितया निर्दिष्टा तस्याः संसारभ्रमणनिर्वाहकत्वेन स्वाधिष्ठातुर्देवस्य सैवैकनेमिः **तमेकनेमिं**, सत्त्वादिगुणत्रययोगतः जगत्सृष्टिस्थितिसंहारशक्तियुग्ब्रह्मविष्णुरुद्रैस्त्रिभिर्विशिष्टं **त्रिवृतं**, यः प्रश्नोपनिषत्पठितप्राणादिनामान्तषोडशकलाऽवसाने विभाति तं **षोडशान्तं**, यस्याकारादिळकारान्तपञ्चाशद्वर्णा

अरा इव विभान्ति तं शतार्धारं, ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं तत्तद्विषयपञ्चकं शब्दादिवचनादि मनआद्यन्तःकरणचतुष्टयं मन्तव्यादिविषयचतुष्टयं दिग्वातादि-श्रोत्रादिचतुर्दशकरणाधिपाश्च प्राणादिपञ्चकं तत्र दशेन्द्रियाणि तद्विषयाश्च विंशत्यपराः अन्तःकरणादिना सह अष्टौ वसवः द्वादशादित्याश्च कीलस्थानीयाः प्रत्यराः विंशतिप्रत्यरैः युक्तम् । अराभिरिति स्त्रीलिङ्गं छान्दसम् । तैत्तिरीयपठित-त्वक्चर्ममांसरुधिरमेदोऽस्थिमज्जानः शुक्रं चेति धात्वष्टकं, धर्मज्ञानवैराग्यैश्वर्याधर्मा-ज्ञानावैराग्यानैश्वर्याणि भावाष्टकं, गौतमोक्तदयाक्षान्त्यनसूयाशौचमङ्गलानाया-साकार्पण्यास्पृहेत्यात्मगुणाष्टकं, अणिमाद्यैश्वर्याष्टकं, भूमिराप इत्यादिप्रकृत्यष्टकं,

ब्रह्मा प्रजापतिर्देवा गन्धर्वाः यक्षराक्षसाः ।
पितरश्च पिशाचाश्च देवाष्टकमुदाहृतम् ॥

इति देवाष्टकं, मनुष्यैर्गोमृगपशुपक्षिसरीसृपवृक्षगुल्मादय इति मर्त्याष्टकं, एवं षड्भिरष्टकैः युक्तम् । विश्वरूपतया वितनोति इति विश्वरूपः कामः तेनेदं सर्वं पाश्यते बध्यत इति स एव पाशः यस्य तं विश्वरूपैकपाशम् । अर्चिरादिरेको मार्गः, धूमादिरेकः, जायस्व म्रियस्वेत्याद्येकः, एते त्रयो मार्गभेदा यस्य तं त्रिमार्गभेदम् । द्वयोः पुण्यपापयोः तन्मूलरागद्वेषयोश्च यन्निमित्तं कारणं तदेवैकं स एवानात्मन्यात्माभिमानलक्षणो मोहो यस्य तं द्विनिमित्तैकमोहम् । अपश्यन्निति क्रियापदमनुवर्तते ॥ ४ ॥ स्वविवर्तसर्वाधिष्ठानत्वेन सर्वात्मकमात्मानं पूर्वमन्त्रेनश्चक्ररूपेण निरूपितं निरस्य वैराग्यहेतोः उत्तरो मन्त्रो नदीरूपेणापि निरूपयति । चक्षुरादिपञ्चज्ञानेन्द्रियाणि स्रोतांस्यम्बुस्थानीयानि यस्यास्तां पञ्चस्रोतोऽम्बुं पञ्चधा स्वस्वविषयेषु प्रवहितत्वात्, पञ्चतन्मात्राः पञ्चयोनयः त एवोग्राणि वक्राणि यस्यास्तां पञ्चयोन्युग्रवक्रां, यस्या ऊर्मिस्थानीयाः प्राणादयः पञ्च भवन्ति तां पञ्चप्राणोर्मिं, बुद्ध्यादिमूलचक्षुरादिज्ञानेन्द्रियाणां विज्ञानशक्तिमदहङ्कारः स एव संसृतिमूलं यस्यास्तां पञ्चबुद्ध्यादिमूलां, आका-शादिपञ्चभूतान्येकैकावर्तस्थानीयगुणान्तराणि यस्यास्तां पञ्चावर्तां, गर्भजन्म-व्याधिजरामरणदुःखानि अविद्याद्वयतत्कार्यरागद्वेषाभिनिवेशा वा पञ्च दुःखानि

ओघः पूरो वेगः पञ्चदुःखान्येव ओघवेगो यस्यास्तां पञ्चदुःखौघवेगां, पञ्चाशदक्षरदेवताभेदा यस्यास्तां पञ्चाशद्भेदाम्,

तमोमोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः।

इति पुराणप्रसिद्धानि ईश्वरान्तर्यामिसूत्रहिरण्यगर्भविराड्रूपाणि वा पर्वाणि यस्यास्तां पञ्चपर्वां, एवं पूर्वोक्तविशेषणेषु अधीम इति प्रत्येकं संबध्यते। अनेन 'किं कारणं ब्रह्म' इति प्रश्नोऽपाकृतो भवति ॥ ५ ॥

तस्य निमित्तकारणत्वम्

सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे।
पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ॥ ६ ॥
[1]उद्गीतमेतत् परमं तु ब्रह्म तस्मिंस्त्रयं स्वप्रतिष्ठाक्षरं च।
अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः ॥७॥

कुतः स्म जाताः इत्यादिप्रश्नस्य अपाकरणार्थमुत्तरे मन्त्राः इत्याह—सर्वाजीव इति। रजतसर्पव्याघ्रादीनां शुक्तिमायाव्यादिवत् चेतनाचेतनानां सत्तास्फूर्त्यानन्दप्रदतया जीवनहेतुभूते, सर्वलयाधिकरणत्वात् सर्वसंस्थे, वियदादिबृहतोऽपि बृहत्त्वात् बृहन्ते, यत् सविशेषत्वेन प्रकृतं तस्मिन् ब्रह्मचक्रे जाग्रज्जाग्रदादिपञ्चदशावस्थातत्कार्यतदारोपापवादाधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तचैतन्यभेदगतसविशेषतां हित्वा स्वातिरिक्तं नेतीत्यपह्नवं कृत्वा सन्मात्रतया निष्प्रतियोगिकं स्वयमवशिष्यत इति हंसः परमात्मा स्वयं निष्प्रतियोगिकाद्वयोऽपि स्वाविद्यया जीवभावमेत्य पुण्यपापनियन्त्रितो नानायोनिषु भ्राम्यते परिभ्रमति। इत्थं विभ्रमहेतुः कः इत्यत आह—पृथगिति। महाकाश-

[1] उद्गीथ—अ, अ १, क.

बिम्बस्थानीयपरमात्मनः सकाशात् घटाकाशप्रतिबिम्बस्थानीयजीवात्मानं पृथक् भिन्नं मत्वा संसारचक्रे परिभ्रमतीत्यत्र—"अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मि", "मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति", "उदरमन्तरं कुरुते । अथ तस्य भयं भवति ।", इत्यादिश्रुतेः । यद्वा—स्वातिरिक्तदेहाद्युपलक्षितस्वाविद्यापदतत्कार्यजातादपि पृथग्विलक्षणं मत्वा शोधिततत्त्वंपदलक्ष्ययोरेकत्वे "तत्त्वमसि", "अहं ब्रह्मास्मि", इति श्रुतिप्रमाणतः तत्पदलक्ष्यब्रह्मणा यदा त्वंपदलक्ष्यो जीव एकत्वेन जुष्टः सेवितो भवति तदा ततः तस्मात् एकत्वानुसन्धानात् स्वाज्ञाननिवृत्तिर्जायते तेन स्वाज्ञाननिवृत्त्याविर्भूतस्वज्ञानेन प्रत्यक्परविभागैक्यामहनिष्प्रतियोगिकब्रह्ममात्रावस्थानलक्षणं अमृतत्वं कैवल्यं एति स्वप्रबोधसमकालं स्वयमेव ब्रह्म भवतीत्यत्र—"ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतेः ॥ ६ ॥ हंसशब्दार्थात्मनि सर्वं विकल्पितमित्याह—उद्गीतमिति । स्वातिरिक्तस्वाविद्यापदतत्कार्यजातमस्ति नास्तीति विभ्रमादुपरि स्वातिरिक्तसामान्यापह्नवमिदं ब्रह्ममात्रं निष्प्रतियोगिकमवशिष्यत इति ईशाद्यष्टोत्तरशतवेदान्तैर्गीतं प्रतिपादितं, किं तत्? एतत् प्रकृतं वस्तु निष्प्रतियोगिकत्वेन परमं उत्कृष्टम् । तुशब्दोऽवधारणार्थः । यदेवंरूपेण बृंहणात् ब्रह्म इति ख्यातं तस्मिन् निर्विशेषे ब्रह्मणि प्रणवार्थे स्थूलसूक्ष्मादिभागचतुष्टयविशिष्टाकारादिमात्रात्रयं तथा भागचतुष्टयविशिष्टमन्त्रादियुगत्रयं तत्त्वत्रिमयमहितद्भयैक्यारोपापवादाधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तत्रयं चतुष्पदगकलनाजुष्टं त्रित्रिसंख्यारूपं यत्तत्सर्वं स्वाज्ञदृष्ट्या यस्मिन् विवृत्तं यत्कल्पनाधिकरणं तस्य स्वविकल्पितकलनायाः सत्तास्फूर्तिमुख्यप्रदत्वात् तदेतत् स्वप्रतिष्ठाक्षरं च स्वविकल्पितक्षरजातं प्रसित्वा स्वयं न क्षरतीत्यक्षरम् । चशब्दोऽक्षरस्य निष्प्रतियोगिकत्वख्यापनार्थः । अत्र स्वविकल्पितसर्वप्रपञ्चे स्वप्रबोधतोऽपह्नवतां गते पुरा यत् अन्तरं अधिकरणं तन्निरधिकरणं ब्रह्ममात्रमिति वेदविदो विदित्वा वेदनसमकालं तत्पराः तन्निष्ठावसन्नाः सन्तः ब्रह्मण्येव लीनाः एकीभूता भवन्ति । लयशब्दार्थं श्रुतिराह—योनिमुक्ता इति । योनिः कार्यनिरूपितकारणं तदस्ति नास्तीति विभ्रमतो विमुक्ताः, तद्भ्रान्तिमुक्तिरेव लयः तदातिश्चेत्युपचर्यते ॥ ७ ॥

सर्वस्य जगतः अध्यस्तत्वम्

संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः ।
अनीशश्चात्मा बुध्यते भोक्तृभावात् ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥
ज्ञाज्ञौ द्वावजा[1]वीशनीशावजा ह्येका भोक्तृभोगार्थयुक्ता ।
अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत् ॥९॥
क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ।
तस्याभिध्यानाद्योजनात् तत्त्वभावाद्भूयश्चान्ते विश्वमायानिवृत्तिः॥
ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।
तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल[2] आप्तकामः ॥११॥

स्वातिरिक्तकल्पनारोपापवादाधिकरणेयत्तां प्रतिपाद्य इदानीं कार्यकारणरूपेण सर्वस्याध्यस्तत्वं तदपवादतो मोक्षप्रकारं च दर्शयति—संयुक्तमिति । कार्यकारणत्वेन संयुक्तं क्षरं स्वाविद्यापदतत्कार्यजातं, तस्य स्वज्ञानसमकाल क्षरणात् क्षरत्वं, चतुर्विधक्षरप्रपञ्चप्रळयेऽपि यत स्वरूपतो न क्षरति तत् अक्षरं, चशब्दात् क्षरसापेक्षाक्षरनाऽरायै परमाक्षरं एतत् इति योज्यते । प्राकृतं व्यक्तं प्रकृतिः अव्यक्तं तद्वत्त्वेन विश्वसनीयविश्वं अविद्यापदतत्कार्यजातं ईश्वरो विश्वविश्वाद्यविकल्पानुज्ञैकरसानन्तवपुषा भरते बिभर्ति । य एवं बिभर्ति सोऽयं अनीशश्चात्मा तूलाविद्याऽऽवृतत्वेन यत्किंचिदपि कर्तुं त्यक्तुमशक्तत्वात् । चशब्दः स्वस्वरूपाज्ञत्वप्रदर्शनार्थः । कुत एवमित्यत्र भोक्तृभावात् एवं बुध्यते, स्वधर्मतया कर्तृत्वभोक्तृत्वादिकं स्वीकृत्य अनीशोऽस्मीति मोहितत्वात् । स कदा स्वस्वरूपं भजतीत्यत आह—ज्ञात्वेति । अनेककोटिजन्मानुष्ठितसत्कर्मफलार्पणसन्तुष्टेश्वरप्रसादजनितचित्तशुद्धिपारिव्राज्यधर्मश्रवणादिसंजातसम्यज्ज्ञानेन स्वावशेषतया देदीप्यमानं देवं ज्ञात्वा तज्ज्ञानसमकालं स्वातिरिक्तास्तितावृत्तिभिः

[1] वीशानी—उ, मु. [2] आत्मका—अ १, अ २, क.

पाश्यते बध्यते स्वाज्ञ इति पाशाः स्वातिरिक्तास्तितावुद्धिवृत्तिरूपाः तैः **सर्वपाशैः मुच्यते** स्वावृतिबीजापाये स्वयमेवावशिष्यत इत्यर्थः ॥ ८ ॥ निष्प्रतियोगिकब्रह्ममात्रे मायाजीवेशतत्कार्यविकल्पः कथं सेत्स्यतीत्याशङ्क्य स्वाज्ञानतः सर्वं सिध्यतीत्याह—**ज्ञाज्ञाविति** । **ज्ञाज्ञौ द्वौ** ब्रह्ममात्राज्ञदृष्टिविकल्पितौ । तत्र बिम्बस्थानीय ईश्वरो हि ज्ञः सर्वज्ञत्वात् । प्रतिबिम्बस्थानीयोऽयं जीवोऽज्ञः, किंचिज्ज्ञत्वात् । द्वावेतौ मायाविकल्पितावित्याह—**अजावीशनीशाविति** । मायोपाधित्वेन बिम्बस्थानीयो हि ईशः, सर्वनियन्तृत्वेऽपि निरावृतत्वात् । स्वाविद्योपाधित्वेन प्रतिबिम्बस्थानीयो जीवः अनीशः, नियम्यत्वेन स्वाज्ञानावृतत्वात् । उभावपि **अजौ** । ईशनीशावित्यत्र ह्रस्वं छान्दसम् । इत्थं जीवेशविभागहेतुः केयम आह—**अजेति** । परमार्थदृष्ट्या कालत्रयेऽपि न जायत इति **अजा** अज्ञानात्मकत्वात् । स्वाज्ञसर्वानर्थकर्येजा एका हि । सेयं किंविशिष्टेत्यत्र प्रतिबिम्बस्थानीयभोक्तृजीवस्य दर्पणस्थानीया प्रकृतिः **भोगार्थतया युक्ता** स्थिता स्वात्मन्यध्यस्तेत्यर्थः । एवं कल्पनाधिकरणत्वेन **अनन्तश्चात्माऽपि** विद्यते अन्तवत्कल्पनायाः परिच्छिन्नत्वेऽपि तदधिकरणस्य त्रिविधपरिच्छेदशून्यत्वेनानन्तत्वात् । चशब्दो निष्प्रतियोगिकानन्त्यद्योतकः । सोऽयमात्मा **विश्वरूपः** विश्वकल्पनाधारतया विश्वसत्तास्फूर्तिप्रदत्वात् । तद्विकारास्पृष्टत्वात् **अकर्ता हि** । यस्मादयमकर्ता तस्मात् बिम्बस्थानीयमीश्वरं प्रतिबिम्बस्थानीयं जीवं दर्पणस्थानीयां प्रकृतिं चेति **एतत् त्रयं** यदा सम्यग्ज्ञानं जायते तदा निष्प्रतियोगिकब्रह्ममात्रं **विन्दते** । तद्वेदनसमकालं विद्वान् ब्रह्मैव भवति । **ब्रह्मम**िति छान्दसम् ॥ ९ ॥ जीवप्रकृत्योः नित्यानित्यत्वेन ईश्वरनियम्यत्वं स्वातिरिक्तासंभवब्रह्मज्ञानतः तन्मात्रावस्थितिं चाह—**क्षरमिति** । स्वज्ञानतः क्षरतीति **क्षरं** यस्मिन् सति स्वातिरिक्तं प्रतीयते तत् **प्रधानं** सम्यग्ज्ञानसमकाले अदर्शनात् असत्त्वं तादृशज्ञानाभावे व्यावहारिकादित्वं क्षरतया मार्त्यप्रधानं यत्र विकल्पितं तदधिकरणं अमृतं च तदक्षरं चेति **अमृताक्षरं** आपातवैलक्षण्येन नित्यत्वात् क्षरप्रधानसापेक्षप्रभवसविशेषतां वस्तुतो हरतीति **हरः** निष्प्रतियोगिकाद्वितीयत्वात् स्वाज्ञदृष्टिप्रसक्तदर्पणप्रतिबिम्बस्थानीयक्षरात्मानौ प्रकृतिजीवौ **ईशते** स्वयं चिन्मात्रतया तावधिष्ठे ।

कोऽसौ ? स्वावशेषतया दीप्यत इति देवः परमात्मा एकः तस्य चिन्मात्रतयाऽद्वितीयत्वात् । तद्याथात्म्यज्ञानफलमाह—तस्येति । स्वाज्ञानादिदृष्टिप्रसक्तक्षरप्रधानतत्कार्यमोहे संन्यसति तदाधारतया यो दीप्यते तस्य देवस्य तद्गतविकारास्पृष्टचिन्मात्रतयाऽभितो ध्यानात् यश्चिन्मात्ररूपेणावशिष्यते सोऽहमस्मीति योजनात् वस्तुतः स्वातिरिक्तक्षरप्रधानापह्नवसिद्धपरमात्मा निष्प्रतियोगिकस्वमात्रमवशिष्यत इति तत्त्वभावात् । इत्थंभूततत्त्वज्ञानात् पुराऽपि स्वातिरेकेण किंचिदस्तीति विश्वसनीयविश्वमाया निवृत्तेव तस्याः शशविषाणवदवस्तुत्वात् स्वाज्ञानतो विद्यमानेव भाता पुनः स्वज्ञानतो भूयश्चान्ते स्वाज्ञानावमानसमये या तद्रूपेण विश्वसनीया (?) विश्वमायानिवृत्तिः स्यादित्युपचर्यते । विद्यमानस्य निवृत्तिरुपपद्यते नाविद्यमानस्य निवृत्तिरस्ति, वस्तुतः प्रवर्तनीयनिवर्तनीयमायातत्कार्यवैरळ्यात् । कालत्रयेऽपि निष्प्रतियोगिकनिर्विशेषं ब्रह्मैव स्वमात्रमवशिष्यते,

स्वयं मृत्वा स्वयं भूत्वा स्वयमेवावशिष्यते ॥

इति श्रुतेः ॥ १० ॥ एवं विदुषस्तद्भावापत्तिःस्यादित्याह—ज्ञात्वेति । यः स्वात्मेति प्रकृतस्तं देवं स्वयमेवेति ज्ञात्वा एवं ज्ञानात् पुरा स्वातिरेकेण किंचिदस्तीत्यविद्वान् पाशयतीव भातः । ज्ञानसमकालं स्वातिरिक्तास्तितारूपसर्वपाशापहानिः ज्ञानाग्निना दाहो भवति । तद्दाहे तन्मूलरागद्वेषदाहः । ततो विहितप्रतिषिद्धक्रिया-(ततः)तद्धेत्वपूर्वस्यादिस्वातिरिक्तास्तितारूपक्लेशाः सम्यज्ज्ञानदग्धा भवन्ति । एवं विदुषः क्षीणैः क्लेशैः जन्ममृत्युप्रहाणिः तद्धेतुस्वाज्ञानाभावात् । यः स्वज्ञानेन स्वमात्रमवशिष्यते तद्याथात्म्यं स्वयमेवेत्याभिमुख्येन ध्यानात् स्वमात्रावरणदेहोपलक्षिताविद्यापदतत्कार्यं स्वातिरेकेण नास्तीति भेदे अपह्नवं गतेऽथ धूमादिमार्गद्वयप्राप्यपुनरावृत्त्यपुनरावृत्तिलक्षणचन्द्रब्रह्मलोकगतैश्वर्यापेक्षया तृतीयं सम्यज्ज्ञानैकलभ्यं विश्वैश्वर्यं कैवल्यत्वेन विश्वसनीयपारमैश्वर्यं ब्रह्ममात्रावस्थानलक्षणमिति प्रतिपाद्य पुनःस्वातिरिक्तास्तिताप्रभवदुःखनिवृत्तिलक्षणं स्वस्य कृतकृत्यतां चाह—केवल आप्तकाम इति । विद्वान् स्वयं केवलः अशेषविशेषशून्यब्रह्ममात्रपदारूढत्वात् । स्वाज्ञदशायां स्वातिरेकेण विषयजातं काम्यन्त इति कामाः त एवेदानीं येन ब्रह्ममात्रतया आप्ताः सोऽयं आप्तकामः कृतकृत्य इत्यर्थः ॥ ११ ॥

**ब्रह्मातिरेकेण न किंचिद्वेदितव्यम्**

एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किंचित् ।
भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥ १२ ॥
वह्नेर्यथा योनिगतस्य मूर्तिर्न दृश्यते नैव च लिङ्गनाशः ।
स भूय एवेन्धनयोनिगृह्यस्तद्वोभयं वै प्रणवेन देहे ॥ १३ ॥

यद्भावतो विद्वान् कृतकृत्यो भवति तदेव स्वावशेषतया ज्ञेयं तद्व्यतिरेकेण किंचिदपि वेदितव्यं नास्तीत्याह—एतदिति । एतत् प्रकृतं ब्रह्मैव स्वमात्रमिति ज्ञेयं तदतिरिक्तपुरुषार्थाभावात् । यदेवं ज्ञेयं तत् नित्यमेव सन्मात्रत्वात् । तत् किमियत आह—आत्मसंस्थमिति । स्वात्ममात्रतया स्थितत्वात् । वेदितव्यान्तरमाशङ्क्याह—नेति । निष्प्रतियोगिकत्वेन ब्रह्ममात्रं वेदितव्यं अतो ब्रह्ममात्रात् परं अपरं वेदितव्यं न किंचित् अस्ति तस्य निष्प्रतियोगिकत्वस्योक्तत्वात् । स्वाज्ञदशायां यत् भोक्त्रादिभिदाजातं अनुभूतं तत् स्वज्ञदशायां ब्रह्मैव जातमित्याह—भोक्तेति । द्वितीयार्थे प्रथमा । कार्योपाधिं जीवं भोक्तारं, दृश्यजातं भोग्यं, ईश्वरं प्रेरयितारं च भेददृष्ट्या ज्ञात्वा जीवतामापन्न इदानीं भोक्त्रादिभेदरूपं त्रिविधं एतद्ब्रह्मेति मत्वा प्रोक्तं श्रुतितात्पर्यज्ञैः प्रतिपादितम् । यद्वा—भोक्ता भोग्यं प्रेरितारं च प्रथमार्थे द्वितीया एतद्भोक्त्रादिभेदजातं ब्रह्मेति मत्वा कृतकृत्यो भवतीत्यर्थः ॥ १२ ॥ यदेतत्त्रिविधभेदोपलक्षितस्वाविद्यापदतत्कार्यतिरोहितमिव दृश्यते प्रणवासिना तदावरणं संछिद्य निरावृतं ब्रह्म साक्षात्कुर्यादित्यत्र दृष्टान्तमाह—वह्नेरिति । यथा वह्नेः स्वयोनि-अरणिगतस्य मूर्तिः न दृश्यते स्वदाह्यदार्वावृतत्वात् । तत्र वह्निर्नास्तीति चेन्न, तल्लिङ्गस्य सत्त्वात् । यतो नैव च लिङ्गनाशोऽस्ति । दृश्यते हि मथनेन तल्लिङ्गम् । स मथनात् प्राक् काष्ठतिरोहितो वह्निर्भवति भूयोभूयोमथनात् इन्धनयोनिः स्वयोनि दाहकत्वेन गृह्यः गृह्यते यथा तद्वोभयं वै प्रणवेन देहे, उभयमिव, वैशब्दस्योपमार्थत्वात्, दार्ष्टान्तिकेऽपि स्वदाह्यमायातत्कार्यतिरस्कृतत्वेन विद्यमानमविद्वदृष्ट्या

तत्सत्त्वे साक्षित्वादिकं लिङ्गं, तदुभयं सम्यग्ज्ञानात् प्राक् विद्यते, प्रणवेन प्रणवाख्यसाधनजनितब्रह्मात्मैक्यविद्यया पूर्वं स्वतिरस्कारानाद्यविद्यातत्कार्यदाहात् देहे कार्यकरणसंघाते अरणिस्थानीये आत्मतत्त्वाभिव्यक्तिः तदभिव्यक्तिलिङ्गं चोभयं विद्वत्सु गृह्यते । सम्यग्ज्ञानात् प्राक् आत्मतत्त्वतिरस्कारकाविद्यातज्ज-कार्यकरणसंघातलक्षणं स्वातिरिक्तत्वेनानुभूतं सम्यग्ज्ञानात् एतत्सर्वं ब्रह्ममात्रं भवतीति ॥ १३ ॥

सम्यग्ज्ञानसाधनं ध्यानम्

स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम् ।
ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् ॥ १४ ॥
तिलेषु तैलं दधनीव सर्पिरापः स्रोतस्स्वरणीषु चाग्निः ।
एवमात्माऽऽत्मनि [1]गृह्यतेऽसौ सत्येनैनं तपसा योऽनुपश्यति ॥
सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवार्पितम् ।
आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्परं तद्ब्रह्मोपनिषत्परमिति॥ १६ ॥

अत्र सम्यग्ज्ञानसाधनोपायमाह—स्वदेहमिति । स्वदेहं अधरारणिं कृत्वा स्वात्माभिव्यक्तिस्थानं कृत्वा षोडशमात्रात्मकप्रणवं चोत्तरारणिं कृत्वा अकारस्थूलांशविराजीभूम्यादिपश्यन्तीभूम्यन्तपञ्चदशमात्रानद्व्यष्टिसमष्टितदुभयै-क्यारोपापवादाधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तचैतन्यगतविशेषांशापह्न-वसिद्धनिर्विशेषतुर्यतुरीयं ब्रह्म स्वमात्रमित्यनुसन्धानध्याननिर्मथनाभ्यासात् देवं स्वयंद्योतनस्वभावं चिन्मात्रं स्वावशेषतया पश्येत् ज्ञानी तदपरोक्षीकुर्यात् । पित्रादिसंचितनिधिः यथा तदज्ञानादप्राप्तः तज्ज्ञानादवाप्यते तथा मुमुक्षुः स्वाज्ञानात् निगूढवत् आत्मतत्त्वं स्वज्ञानात् स्वयमेवेति पश्यति ॥ १४ ॥ सङ्घातप्रत्यक्त्वेनात्मा द्रष्टव्यः इत्यत्र दृष्टान्तमाह—तिलेष्विति । यथा तिलेषु

[1] जायते—अ, अ १, अ २, क.

श्याप्यतिरोहिततैलं यन्त्रनिष्पीडनेनाभिव्यक्तं दृश्यते यथा दधनि मथनाविर्भूत-नवनीतं सगुणब्रह्मस्थानीयं, तदेतन्नवनीतमग्निसंपर्कतो नवनीतभावं विहाय सुगन्धिघृतं भवतीति यत्तन्निर्गुणब्रह्माभिव्यक्त्युदाहरणं, यथा शुष्कस्रोतस्सु आप: खननेनाभिव्यक्ता: सत्य: कार्यकारिण्यो भवन्ति, यथा वा अरणीषु चाग्नि: स्वयोनिदारुमथनेनाविर्भूतो भवति, यथाऽयं दृष्टान्त: तथा एवमात्मा निर्विशेष-चिद्धातु: आत्मनि गुहास्थबुद्धितत्त्वे गृह्यते श्रुत्याचार्यप्रसादात्तश्रवणादिभिर-भिव्यज्यते । सत्येन सत्यवचनोपलक्षितयमादिसाधनेन बाह्यान्त:करणनिरोध-लक्षणतपसा चैनं सत्यतपस्संजातचित्तशुद्धिप्राप्यसम्यज्ज्ञानेन स्वाविशेषतया पश्यति अपरोक्षीकरोतीत्यर्थ: ॥ १५ ॥ कैवल्यसाधनं ज्ञानं तपआदि तत्साधनं ताभ्यां स्वात्माभिव्यक्तिमुक्त्वा प्रकरणार्थमुपसंहरति—सर्वव्यापिनमिति । स्वाविद्यापदतत्कार्यसर्वव्यापिनमात्मानं, क्षीरे सर्पिर्वत् सर्वत्र सारत्वेन अर्पितं, आत्मविद्यातपसी यस्य मूले स्वात्माभिव्यञ्जके तत् आत्मविद्यातपोमूलं यत्तत् ब्रह्म अद्वितीयं उपनिषत्परं प्रमाणान्तरनैरपेक्ष्येणोपनिषदेकमानतया पर्यवस्य-तीत्युपनिषत्परं उपनिषदर्थत्वेन निरतिशयानन्दतयाऽऽविर्भूतम् । द्विर्वचनमाद-रार्थम् । इतिशब्दोऽध्यायसमाप्त्यर्थ: ॥ १६ ॥

इति प्रथमोऽध्याय:

---

## द्वितीयोऽध्याय:

समाध्युपक्रमे परमेश्वरप्रार्थना

युञ्जान: प्रथमं मनस्तत्त्वाय सविता धिय: ।
अग्नेर्ज्योतिर्निचाय्य पृथिव्या अध्याभरत् ॥ १ ॥

युक्तेन मनसा वयं देवस्य सवितुः सवे ।
सुवर्गेयाय शक्त्या ॥ २ ॥
[1]युक्त्वाय मनसा देवान् सुवर्यतो धिया दिवम् ।
[2]बृहज्ज्योतिः करिष्यतः सविता प्रसुवाति तान् ॥ ३ ॥
युञ्जते मन उत युञ्जते धियो विप्रा विप्रस्य बृहतो विपश्चितः ।
वि होत्रा दधे वयुनाविदेक इन्मही देवस्य सवितुः परिष्टुतिः ॥४॥
युजे वां ब्रह्म पूर्व्यं नमोभिर्वि[3]श्लोक एतु पथ्येव [4]सूरेः ।
[5]शृण्वन्तु विश्वे अमृतस्य पुत्रा आ ये धामानि दिव्यानि
तस्थुः ॥ ५ ॥

स्वात्मनः स्वविद्यातपोमूलत्वं यदुक्तं उत्तरे मन्त्रास्तदेव प्रतिपादयन्तीत्याह—युञ्जान इति । समाध्युपक्रमसमये प्रथमं प्रपञ्चप्रसवगुणयुक् सविता परमेश्वरः स्वात्मनि मनो युञ्जानो योजयन्, किमर्थं मनोयोजनमित्यत्र तत्त्वाय स्वयाथात्म्यावगतये, तत्साधनत्वेन किं करोतीत्यत्र धियः स्वध्यानप्रतिबन्धिज्ञानेन्द्रियाणि आसुरवृत्तिवियोगपूर्वकं सत्त्ववृत्तिभिः संयोजयन्नित्यर्थः । अग्नेः अग्न्यादित्यादिज्योतिषां ज्योतिः अहमेवेति निचाय्य निश्चित्य पृथिव्याः तदुपलक्षितपञ्चभूतभौतिकजातात् अधि बुद्धौ तद्ब्रह्मज्योतिः आभरत् कार्यकरणसंघातप्रत्यक्त्वेनाहरत् अभिव्यनक्तिवति यावत् ॥ १ ॥ सवितृमण्डलस्थेशप्रार्थनाफलमाह—युक्तेनेति । देवस्य सवितुः सवे सत्यामनुज्ञायां तत्प्रसादात् प्रत्यगात्मनैकाग्र्यभावापन्नमनसा शमादिसाधनसंपन्नाः सन्तः सुवर्गेयाय निर्विशेषानन्दहेतुज्ञानसाधनश्रवणादिशक्त्या देवप्रसादलब्धबलेन प्रयतामह इत्यर्थः ॥ २ ॥

[1] युक्त्वेन—क. [2] ब्रह्मज्यो—अ १, क. [3] श्लोकायन्ति—उ, मु.
[4] सूराः—उ, मु. [5] शृण्वन्ति—उ, मु.

विद्वन्मुमुक्ष्वनुग्राहकत्वं ईश्वरस्य स्वभाव इत्याह—युक्त्वायेति। युक्त्वाय प्रत्यगात्मानं योजयित्वा तत्संयुक्तमनसा देवान् ब्रह्मेन्द्रादीन् स्वर्यतः स्वःशब्दवाच्यनिरतिशयानन्दस्वभावं यतो गच्छतो दे[दि?]वं बृहत् अद्वितीयं ज्योतिः चित्प्रकाशं धिया आविःकरिष्यतो मनसः प्रत्यक्प्रावण्यमापाद्य अहं ब्रह्मास्मीति प्रत्यगभेदेन ब्रह्माविष्करिष्यत इत्यर्थः ॥ ३ ॥ यः पुनः विद्यातपसोः निमित्तभूतः तस्यैवं परमेश्वरस्य मुमुक्षुभिः महती परिष्कृतिः कर्तव्येत्याह—युञ्जत इति। विप्राः विद्वांसो ब्राह्मणाः "प्रा पूरणे" इति धातोः विप्रस्य देशतः पूर्णस्य बृहतः कालतो वस्तुतोऽपि पूर्णस्य विपश्चितो ज्ञप्तिमात्रस्य साक्षात्करणाय स्वमनो युञ्जते प्रत्यक्प्रवणं योजयन्ति धियो बुद्धीन्द्रियाण्यपि शब्दादिविषयेभ्यः प्रत्याहृत्य युञ्जते स्ववशं कुर्वन्ति। विहोत्रा दधे,—होत्राः ऋत्विगभिधानमेतत् इह तु तत्कर्मसु वर्तते—ऋत्विग्भिर्निर्वर्त्यान्तःकरणनैर्मल्यहेतुभूताः क्रियाः सर्वा इति यावत्। वयुनाविदित्यत्र वयुनेति बुद्ध्यभिधानमेतत्, सर्वबुद्धिसाक्षी एकः इत् एवकारार्थः, एक एव सजातीयविजातीयभेदरहितः सर्वप्रत्ययसाक्ष्यद्वितीयो यः पूर्वोक्ताः क्रियाः दधे विदधे, पूर्वस्य वः अत्रान्वयः, स एव सर्वज्ञेशो जीवात्मना जीवतामोक्षसाधनानुष्ठानं करोतीति भूतप्रवेशया देवस्य स्वातिरिक्तप्रसवितुः सवितुः मही महती परिष्टुतिः परिष्कृतिः मुमुक्षुभिः कर्तव्येति वाक्यशेषः ॥ ४ ॥ यथा पूर्वे करणग्रामप्रणिधानपूर्वेन ब्रह्म साक्षात्कुर्वन्ति तथाऽहं करवाणीति मुमुक्षुराहेत्याह—युजे वामिति। पूर्व्यं ब्रह्म प्रतीचा युजे एकीकरोमि। केन साधनेन? वां युवयोः वाङ्मनसौ हे मनोबुद्धी वा अहं प्रतीचि युजे समादधे नमोभिः नमस्कारैः सह मे श्लोकश्च पूर्वं ब्रह्मादिश्येति वाक्यार्थः। मुमुक्षोर्मम श्लोकः कीर्तिः स्तुतिरीश्वरमुद्दिश्य व्येतु विविधमेतु, पूर्वस्युपसर्गस्य अत्रान्वयः। पथ्येव सूरेः प्राज्ञस्य पथ्येव सन्मार्गप्रवर्तकनिमित्ता कीर्तिः इतो विसर्पतु-पञ्चमश्लोकं स्तुतिं विसृतं शृण्वन्तु आकर्णयन्तु विश्वे सर्वे अमृतस्य ब्रह्मणो हिरण्यगर्भादयः पुत्राः। क स्थिता इत्यत्र—आ ये इत्युत्तरत्र सम्बन्धः—ये धामानि स्थानानि दिव्यानि आतस्थुः तिष्ठन्ति। तत्स्था ब्रह्मपुत्रा हिरण्यगर्भादयो मम स्तुतिं शृण्वन्त्वित्यर्थः ॥ ५ ॥

साङ्ख्ययोगोपदेशः

अग्निर्यत्राभिमथ्यते वायुर्यत्रा[1]भिरुध्यते ।
सोमो यत्रातिरिच्यते तत्र संजायते मनः ॥ ६ ॥
सवित्रा प्रसवेन [2]जुषेत ब्रह्म पूर्व्यम् ।
तत्र योनिं कृणवसे न हि ते [3]पूर्तमक्षिपत् ॥ ७ ॥
त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिरुध्य ।
ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि सर्वाणि भयावहानि ॥ ८ ॥
प्राणान् प्रपीड्येह स युक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत ।
दुष्टाश्वयुक्तमिव वाहमेनं विद्वान् मनो धारयेताप्रमत्तः ॥ ९ ॥
समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः ।
मनोऽनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत् ॥ १० ॥

उत्तमाधिकारिणः शमादिसाधनसहितब्रह्मज्ञानमुपदिश्य मध्यमाधिकारिणां सत्त्वशुद्धिहेतुयोगमुपदिशन्ति उत्तरे केचिन्मन्त्राः । तत्रादौ योगं संक्षिप्याह— अग्निरिति । यत्र मूलाधारे अग्निमण्डले त्रिकोणे अग्निर्मथ्यते क्षोभ्यते वायुर्यत्र मूलाधारगसुषुम्नायां अधि उपरि रुध्यते बिसतन्तुनिभाग्निशिखया सह, सोमः कल्पार्कचन्द्रमण्डलं ध्यातं सत् यत्र द्वादशान्ते अतिशयेन रिच्यते यत्र सुषुम्नायां मूलाधारादमृतं प्रस्रवद्भाव्यते तत्र मूलाधारगसुषुम्नायां ध्येयवस्तु-प्रणवार्थगोचरं मनः संजायते ॥ ६ ॥ ध्यानप्रकारमाह—सवित्रेति । द्वादशान्तस्थितेन सवित्रा कल्पार्केण प्रसवेन सोममण्डलात् सुषुम्नायां प्रसूता-मृतेन जुषेत अधिकारी सेवेत किं तत्? ब्रह्म ध्येयं वस्तु पूर्व्यं मूलाधारे स्थितम् । तत्र योनिं अग्निकुण्डलं ब्रह्मोपासनास्थानत्वेन कृणवसे कुरुष्व ।

[1] भियुज्यते—उ, मु.
[2] जुषेतद्ब्र—अ, अ १, अ २, क.
[3] पूर्व—उ, मु.

न हि ते एवं कुर्वतस्तव कल्पार्केण विलापितचन्द्रमण्डलात् सुषुम्नायां स्रवदमृतेन पूर्वं पूरितं फलितं मूलाधारस्थं ब्रह्म अक्षिपत् नह्यक्षिपत् कालक्षेपं न करोति। एवं ध्यातं ब्रह्म शीघ्रं फलं प्रयच्छतीत्यर्थः ॥ ७ ॥ योगाङ्गनियममाह—त्रिरिति। उरो ग्रीवा शिरः इति त्रीण्यङ्गान्युन्नतानि यस्य तत् शरीरं [illegible] तं यथा तथा तत् संस्थाप्य हृदीन्द्रियाणि सर्वाणि मनसा सह संनिवेश्य ब्रह्मप्रणवेयत्ता-वित् विद्वान् व्यष्टिसमष्ट्यात्मकजाग्रज्जाग्रदादितत्कार्यरूपाणि पश्यत् भयावहानि सर्वाणि स्रोतांसि ब्रह्मोडुपेन ब्रह्मप्रणवप्लवेन प्रतरेत प्रकर्षेण जाग्रज्जाग्रदादि-पञ्चदशस्रोतांसि संतरेत् इत्यधिकारिणं श्रुतिरनुशास्ति ॥ ८ ॥ प्राणायामप्रकार-माह—प्राणानिति। यः प्राणायामाधिकारी प्राणान् मूलाधारादिस्थले प्रकर्षेण मनसा सह प्रपीड्य निरुध्य "युक्ताहारविहारस्य" इत्यादिना युक्ता चेष्टा यस्य सः युक्तचेष्टः सन् मूलाधारादिगतत्रिपञ्चदशलक्ष्ये प्राणे क्षीणे तनुत्वं गते अथ केवलकुम्भकानन्तरं इडापिङ्गलासंज्ञिकनासिकयोः अन्यतरेण शनैः उच्छ्वसीत रेचयेत्। यया रेचयेत्तया पुनरापूर्य कुम्भयित्वा विरेचयेत्। एवं केवलकुंभकावधि शनैः शनैरभ्यसेत्। दुष्टाश्वयुक्तमिव वाहमेनं रथं विद्वान् कुशलसारथिरिव बाह्या-न्तःकरणनिरोधपूर्वकं अप्रमत्तः सन् मनो धारयेत ॥ ९ ॥ योगाभ्यासोचितदेश-माह—सम इति। समे अनिम्नोन्नते शुचौ मेध्यप्रदेशे शर्करावह्निवालुकाभिः शब्दजलाश्रयादिभिश्च विवर्जिते किंच मनोऽनुकूले मनोरम्यप्रदेशे न तु चक्षुपीडने—विसर्गलोपश्छान्दसः—अग्न्यादिरयादिचक्षुःपीडारहिते प्रदेशे गुहायां निवातस्थलमाश्रित्य प्रयोजयेत योगं समाधिं कुर्यात् ॥ १० ॥

योगसिद्धिः

नीहारधूमार्कानलानिलानां खद्योतविद्युत्स्फटिकशशीनाम् ॥
एतानि रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगे ॥ ११ ॥
पृथ्व्याप्यतेजोऽनिलखे समुत्थिते पञ्चात्मके [1]योगगुणे प्रवृत्ते।

[1] योगगुणेः—अ, अ १, अ २, क.

न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम् ॥
लघुत्वमारोग्यमलोलुपत्वं [1]वर्णप्रसादं स्वरसौष्ठवं च ।
गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति ॥ १३ ॥

एवमभ्यस्तयोगस्य योगसिद्धिचिह्नान्याह—नीहारेति । प्रथमं नीहाराकारेण चित्तवृत्तिः प्रवर्तते ततो धूमवत् ततोऽर्कानलानिलानां खद्योतविद्युत्स्फटिकशशिनां च रूपसदृशानि एतानि योगानुभवसिद्धानि बुद्धेः रूपाणि ब्रह्मण्यभिव्यक्तिकराणि ब्रह्माविर्भावहेतुलिङ्गानि क्रमेणाविर्भवन्तीत्यर्थः ॥ ११ ॥ योगसिद्धिसूचकचिह्नान्युक्तानि, ततः पञ्चभूतजयं तत्फलं चाह—पृथ्वीति । पादादिमस्तकान्तं पञ्चभूतमण्डलं तत्तद्देवतामहंग्रहोपासनयोपास्य तेन पृथिव्यादिपञ्चभूतमण्डलवशीकरणं कृत्वा पृथिव्यामप्सु तेजसि वायौ खे च क्रमेण ध्यानेन समुत्थिते तत्तदुपासनया पञ्चात्मके वशीकृते योगगुणे प्रवृत्ते सति अथ पृथिव्यादिमण्डलतत्तच्छक्तीनामुत्तरोत्तरक्रमेण पूर्वपूर्वं सर्वं स्वाभेदेन चिन्तयित्वा तस्य योगिनो योगो ध्यानं तदेवाग्निः तेन वशीकृतपञ्चभूतात्मकं शरीरं प्राप्तस्य तस्य भूतभौतिकसंबन्धिनानारोगजातं जरा मृत्युः मरणं च कदाऽपि न भवति ॥ १२ ॥ किंच—लघुत्वमित्यादि । स्पष्टोऽर्थः ॥ १३ ॥

मुख्ययोगः तत्फलं च

यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत् सुधान्तम् ।
तद्वाऽऽत्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः ॥
यदाऽऽत्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् ।
अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १५ ॥
[2]एष हि देवः प्रदिशोऽनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः ।

[1] वर्णप्रसादः—उ १. [2] एषो हि—क, उ १.

स एव जातः स जनिष्यमाणः प्रत्यङ्जनास्तिष्ठति सर्वतोमुखः ॥

यो देवोऽग्नौ योऽप्सु यो विश्वं भुवनमाविवेश ।

य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमो नमः ॥ १७ ॥

एवं योगेन शुद्धान्तरस्य मुख्ययोगं तत्फलं चाह—यथेति । **यथैव बिम्बं** आदर्शादि **मृदया** मृजया भस्मचूर्णादिना **उपलिप्तं तेजोमयं** प्रचुरतेजस्कं चूर्णादिमलेन तिरस्कृतपूर्वमलं तद्दर्पणादि **भ्राजते** दीप्यते **तद्वा** तद्वत् **आत्मतत्त्वं** स्वातिरिक्तानात्मापह्नवसिद्धमात्ममात्रं **प्रसमीक्ष्य** तत्स्वमात्रमित्यपरोक्षीकृत्य **देही ब्रह्मविद्वरीयान्** एकत्वदर्शनेनैव वीतस्वातिरिक्तास्तिताप्रभवशोकमोहस्सन् **एक एव कृतार्थो भवते** भवति । मृद्यौ नमित्यस्मिन्नर्थे मृधान्नमिति छान्दसम् ॥ १४ ॥ निर्विशेषब्रह्मज्ञानसमकालं तद्भावापत्तिं दर्शयति---यदेति । **यदा** श्रुत्याचार्यप्रसादलभ्यवेदान्तश्रवणादिना प्रत्यगात्मतत्त्वेन **तु**, तुशब्दोऽवधारणार्थः, त्वंपदलक्ष्येण **दीपोपमेन** यथा दीपः स्वप्रकाश्यघटादेः विलक्षणः तथा प्रत्यगात्मा स्वप्रकाश्यदेहेन्द्रियादेः विलक्षणो भवितुमर्हतीति दीपोपमेन सर्वसाक्षिणैव **ब्रह्मतत्त्वं** तत्पदलक्ष्यं इह हृदये शमादिसाधनयुक्तः **प्रपश्येत्**, शोधिततत्त्वंपदार्थयोः अहं ब्रह्मास्मीत्यैक्यं कुर्यादिति स्वाज्ञदृष्टिप्रसक्तभेदनिवृत्त्यर्थमधिकारिणमनुशास्ति । एवं तत्त्वंपदलक्ष्यैक्यज्ञानेन स्वाज्ञाने अपह्नवतां गते ततस्तत्त्वमर्थविभागैक्यकलनाविगलं ब्रह्ममात्रमवशिष्यते । तत् किं ब्रह्ममात्रं जातमित्यत आह---**अजमिति** । स्वतः परतो वा जात्यसंभवात् । स्वयमजातं कथं सत्पदमर्हतीत्यत आह --**ध्रुवमिति** अजातेः स्वरूपत्वेन निष्प्रतियोगिकसन्मात्रत्वात् । यत्सन्मात्रं तद्ध्रुवमेवेत्यर्थः । अध्रुवतत्त्वग्रामयोगात् ध्रुवता कुतः इत्यत आह—**सर्वतत्त्वैर्विशुद्धं** स्वाज्ञदृष्टिमाश्रित्य तत्त्वेषु सत्स्वपि स्वज्ञदृष्ट्या तैरसंस्पृष्टत्वात् । परमार्थदृष्ट्या निष्प्रतियोगिकशुद्धमेवेत्यर्थः । यच्छुद्धं तत् ध्रुवम् । तद्रूपेण द्योतनात् **देवं** स्वावशेषतया **ज्ञात्वा** तज्ज्ञानसमकालं **मुच्यते सर्वपाशैः** विद्वान् निर्मुक्तपाशो ब्रह्मैव भवतीत्यर्थः ॥ १५ ॥ यत् परमार्थदृष्ट्या निष्प्रतियोगिकमवशिष्टं इत्युक्तं तस्य स्वाज्ञदृष्ट्या ब्रह्मादिस्तम्बान्तभेदेन महदणु-

भेदेन चावस्थानं स्वदृष्ट्या प्रत्यक्तया सर्वान्तरत्वं चाह—एष इति । एष प्रकृतः परमात्मा निर्विशेषचिद्धातुः, हिः प्रसिद्धार्थोऽवधारणार्थो वा, निष्प्रतियोगिकतया द्योतनात् देवः प्रदिशः प्राच्याद्याः दिशः सर्वाः प्रति अनु अनुगतः व्याप्य स्थितत्वात्, कल्पादौ हिरण्यगर्भात्मना पूर्वो हि जातः किल । य एवं जातो हिरण्यगर्भः स उ स एव गर्भे ब्रह्माण्डोदरे विराडात्मना अन्तः वर्तते । स एव स्थूलसूक्ष्मसमष्टिकार्यकारणोपाधिकत्वेन यो जातः स एव व्यष्टिभूताधिष्ठातृजीवात्मना जातः, इतो जनिष्यमाणोऽपि स एव, प्रत्यङ्जनास्तिष्ठति सर्वोपाधिषु प्रत्यगान्तरत्वेन जना इति शब्दाभिलप्यो भूत्वा तिष्ठति । किं बहुना, सर्वतोमुखः चेतनाचेतनात्मकत्वेन स एव स्थितः । हे जनाः इत्यन्योन्यसंबोधनं वा । जनान् प्रति प्रत्यगिति वा । अस्मिन् पक्षे द्वितीयार्थे प्रथमा ॥ १६ ॥

स एवैवं जात इत्युक्तम् । घटाकाशजलचन्द्रन्यायेन तज्जन्म न स्वेन रूपेणेत्याह—यो देव इति । यो देवः स्वयंप्रकाशः अग्नौ शब्दादितन्मात्रापञ्चीकृतभूतकार्यत्वेन तत्पञ्चकव्यापी बुद्धौ जलचन्द्रवत् घटाकाशवच्च हिरण्यगर्भात्मना विवेश, यो अप्सु पञ्चीकृतपञ्चभूतकार्यतया तद्व्यापी विराट्शब्दवाच्यतया विवेश, योऽनन्तसद्बोधानन्दवपुरात्मा व्यष्टिकार्योपाधिषु भुवनशब्दवाच्येषु इन्द्रादिरूपेण आविवेश यावद्भुवनसत्तास्फूर्तिसुखप्रदत्वात्, यः फलपाकावसायिषु ओषधीषु स्थावरेषु आविवेश, यो वनस्पतिषु पुष्पफलवत्सु । स्वयमाविवेशेत्यत्र सर्वत्रानुषज्यते "तत् सृष्ट्वा तदेवानुप्राविशत्" इत्यादिश्रुतेः । तस्मै सर्वान्तरायात्मने देवाय नमो नमः इति द्विर्वचनमध्यायपरिसमाप्त्यर्थमादरार्थं च ॥ १७ ॥

इति द्वितीयोऽध्यायः

---

# तृतीयोऽध्यायः

मायया परमात्मनः सर्वकारणत्वम्

य एको जालवानीशत ईशनीभिः सर्वाँल्लोकानीशत ईशनीभिः ।
य एवैक इह उद्भवे संभवे च य एतद्विदुरमृतास्ते भवन्ति ॥ १ ॥

एको हि रुद्रो न द्वितीयाय तस्थुर्य इमान् लोकानीशत ईशनीभिः ।
प्रत्यङ्जनास्तिष्ठति संचुकोचान्तकाले संसृज्य विश्वा भुवनानि गोप्ता ॥ २ ॥

विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः ॥ ३ ॥

प्रकृतपरमात्मनो मायाविन इव मायया सर्वकारणत्वं प्रत्यक्त्वं चाह—य एक इति । य एकोऽद्वितीयः परमात्मा जालवान जालशब्देन जीवजातमत्स्यग्राहा मायाशक्तिरुच्यते तदधिष्ठातृत्वेन तद्वानीश्वरः सर्वं ईशते ईशनीभिः मायाशक्तिभिः ईष्टे न तु स्वेन रूपेण स्वस्य निष्प्रतियोगिकाद्वितीयत्वात् स्वाज्ञदृष्ट्या लोक्यन्त इति सर्वान् लोकान पृथिव्यादीन् भूरादीन् प्राणिभेदांश्च ईशनीभिः मायाशक्तिभिः मायावी ईशः ईशते ईष्टे तत्तद्रूपो भूत्वा तत्तत्सर्वमीष्ट इत्यर्थः । एवं सर्वनियन्तृत्व-मुक्त्वा तस्यैव सर्वकारणत्वं तद्याथात्म्यज्ञानफलं चाह—य इति । य एवैकोऽद्वितीयः परमात्मा स्वातिरिक्तसर्वोद्भवे हेतुत्वेन स्थितः कारणतया, सम्यग्भवतीति संभवः तस्मिन् संभवे कारणैक्यलयोत्पत्तौ निमित्ततया स्थितः, तद्गतकार्यकारणसापेक्षमविशेषनाऽपाये निर्विशेषं ब्रह्ममात्रमवशिष्यते इति य एतद्विदुः ब्रह्मविद्वरीयांसः ते एवं वेदनसमकालं अमृता भवन्ति विदेहमुक्ता भवन्तीत्यर्थः ॥ १ ॥ पूर्वमन्त्रोक्तार्थमेव पुनरप्याह—एको हीति । यः स्वातिरिक्तरुजं द्रावयतीति रुद्रः परमात्मा स एक एव । तस्मात् न द्वितीयाय तस्थुः स्वाविद्यापदतत्कार्याणि, रुद्रस्य निष्प्रतियोगिकाद्वितीयत्वात् । स्वाज्ञदृष्ट्या य इमान् लोकान् ईशत ईशनीभिः । प्रत्यङ्जनास्तिष्ठतीति व्याख्यातार्थमेतत् । सर्गकाले भुवनानि संसृज्य स्वसत्ताप्रदतया सम्यक् सृष्ट्वा स्थितिकाले आनन्दप्रदतया भुवनानां गोप्ता अन्तकाले स्वातिरिक्तं संचुकोच उपसंहरति च पश्यत् स्वाज्ञानापाये तत्कार्यस्वातिरिक्तकलनाविरळं ब्रह्मैवावशिष्यते ॥ २ ॥ स्वाज्ञदृष्टिप्रसक्तस्वाविद्यापदस्थूलांशयोगतो विराडिव भातीत्याह—विश्वत इति ।

आब्रह्मस्तम्बपर्यन्तप्राणिनां चक्षूंषि मुखानि बाहवः पादादयोऽस्येति **विश्वतश्चक्षुः** उत अपि उत्तरत्र करणग्रामोपलक्षणार्थम् । सर्वप्राणिकरणग्रामसंयोजयितृत्वेन तत्प्रवृत्तिनिमित्तं एष एवेत्याह—**संबाहुभ्यामिति** । मनुष्यादीन् **बाहुभ्यां संधमति** संयोजयति धातूनामनेकार्थत्वात् **पतत्रैः** पादैः **संधमति** । सर्वपदार्थस्रष्टाऽप्येष एवेत्याह—**द्यावाभूमीति** । तदुपलक्षितस्वाविद्यापदतत्कार्यं **जनयन् देव एकोऽद्वितीयः** सर्वप्राणिकरणप्रवृत्तिनिमित्तं सन् वस्तुतः स्वातिरिक्तं ग्रसित्वा स्वयमेव विजृम्भत इत्यर्थः,

ब्रह्मैवैकमनाद्यन्तमब्धिवत् प्रविजृम्भते ॥ इति श्रुतेः ॥ ३ ॥

ईश्वरप्रसादप्रार्थना

यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः ।
हिरण्यगर्भं जनयामास पूर्वं स नो बुद्धया शुभया संयुनक्तु ॥४॥
या ते रुद्र शिवा तनूरघोराऽपापकाशिनी ।
तया नस्तनुवा शंतमया गिरिशन्ताभिचाकशीहि ॥ ५ ॥
यामिषुं गिरिशंत हस्ते बिभर्ष्यस्तवे ।
शिवां गिरित्र तां कुरु मा हिंसीः पुरुषं जगत् ॥ ६ ॥

व्यष्टिसमष्टिप्रपञ्चहेतुत्वं मुमुक्षुस्वज्ञानप्रदत्वं चाह—**यो देवानामिति** । य ईशोऽग्न्यादिदेवानां **प्रभवश्च** उत्पत्तिक्रमात् प्रातिलोम्येन भवो यस्मिन् सः प्रभवः लयस्थानं, उद्भवत्यस्मादिति **उद्भवः** उत्पत्तिस्थानमिति यावत् उपसर्गाणामनेकार्थत्वात् । विश्वश्चासावधिकश्चेति **विश्वाधिकः** निरतिशयानन्दत्वात् । **रुद्रपदं** व्याख्यातम् । महांश्चासावृषिश्चेति **महर्षिः** निरतिशयमहत्त्वेन सर्वज्ञत्वात् । **स** एव सृष्टेः **पूर्वं** सर्वप्राण्यन्तःकरणाभिमानिनं **हिरण्यगर्भं जनयामास** । **सोऽयमीश्वरो नो** अस्मान् योग्याधिकारिणः शुभं ब्रह्ममात्रं तद्विषयया **शुभया बुद्धया संयुनक्तु** येनाहं तत्पदं भजामि तथा मां नियोजयत्वित्यर्थः ॥ ४ ॥

ईश्वरस्य सर्वमुमुक्ष्वनुग्राहकत्वमाह—या ते रुद्रेति। हे रुद्र या इयं श्रुतिस्मृति-पटलप्रसिद्धा तस्याः ते तव सकळनिष्कळतनोरस्तित्वे रुद्रशब्द एव प्रमाणं रुद्रेति, शिवा शुद्धा अजडक्रियाज्ञानेच्छाशक्तिमती निरतिशयानन्दनिष्कळा च तनूः तनुः अघोरा नित्यप्रसन्ना पापप्रकाशिनी न भवतीति अपापकाशिनी स्वाभिव्यक्तेः पुण्यफलरूपत्वात्, तया नोऽस्मान् स्वाप्तिसाधनविशिष्टान् निष्कळरूपया तन्वा शंतमया परमसुखतमया गिरौ कैलासे स्थितः शं तनोतीति हे गिरिशन्त अभि आभिमुख्येन प्रत्यक्तया चाकशीहि त्वं निष्कळभावेन मुमुक्षून् प्रति प्रकाशस्व ॥ ५ ॥ सम्यज्ज्ञानहेतुसगुणतनुप्रार्थनमाह—यामिषुमिति। हे गिरिशन्त स्वातिरिक्तोपसंहारसमर्थत्वेन यां प्रसिद्धां इषुं हस्ते बिभर्षि धारयसि किमर्थम्? अस्तवे स्वोपसंहर्तव्यं प्रति क्षेप्तुं, गिरौ स्थितः सन् सर्वान् त्रायत इति हे गिरित्र स्वातिरिक्तोपसंहारसमर्थां शिवां कुरु इति पूर्वेणान्वयः। सम्यज्ज्ञानसाधनसंपन्नं पुरुषं तदुपायभूतशमादिविशिष्टं जगत् मा हिंसीः हिंसां मा कार्षीः, यावत्सम्यज्ज्ञानेन त्वत्पदं भजामि तावत् सम्यज्ज्ञानतत्साधनं मा हिंसीरित्यर्थः ॥ ६ ॥

निष्कळब्रह्मज्ञानादेव मोक्षः

ततः परं ब्रह्म परं बृहन्तं यथा निकायं सर्वभूतेषु गूढम्।
विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वाऽमृता भवन्ति ॥ ७ ॥
वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥ ८ ॥
यस्मात् परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति [1]किंचित्।
वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ॥९॥

[1] कश्चित्—अ, अ २, ड, मु.

ततो यदुत्तरतरं तदरूपमनामयम् ।
य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि यन्ति ॥ १० ॥

निष्कळतनुं तज्ज्ञानफलं चाह--तत इति । ततो देवप्रसादानन्तरं स्वातिरिक्तपरत्वेन बृंहणात् परं ब्रह्म परं निरतिशयं बृहन्तं सर्वत्र परिपूर्णं, ईशमिति विशेषणात् पुंल्लिङ्गनिर्देशः, यथा निकायं स्वातिरिक्तयोगात् स्वतो निर्विशेषं यथाऽयोगोळकानुगतवह्निवत् ब्रह्मादिस्तम्बान्तसर्वभूतेषु गूढं, विश्वस्यैकं परिवेष्टितारं यथा मायावी मायाहस्त्यादीन् परिवेष्टय तिष्ठति यथा मृगतृष्णोदकरजतादीनि ऊषरशुक्त्यादीन् परिवेष्टय स्थितानि तथा विश्वस्यान्तर्बहिश्च व्याप्य परिवेष्टितारं ईशं तं विध्वस्तनिखिलोपाधिं निष्प्रतियोगिकस्वमात्रमिति ज्ञात्वा ज्ञानसमकालं अमृता भवन्ति ब्रह्मैव भवन्तीत्यर्थः ॥ ७ ॥ ब्रह्ममात्रप्रबोधादेव तन्मात्रावस्थितिलक्षणकैवल्यं सिध्यति न तु प्रकारान्तरेणेत्याह—वेदेति । एतं प्रकृतं पुरीतत्युपलक्षितस्वाविद्यापदतत्कार्यजातं स्वावशेषतया ग्रसित्वा स्वेन रूपेण पूरणात् पुरुषं महान्तं अद्वितीयं आदित्यवर्णं स्वप्रकाशचिन्मात्रं स्वाज्ञानतमसः परस्तात् स्वेन रूपेणावस्थितं यः स्वाज्ञानतत्कार्यापह्नवसिद्धः तं आत्मानं स्वमात्रतया विदित्वा तद्वेदनसमकालं मृत्युं स्वातिरिक्तमतीत्यापह्नवं कृत्वा यत् स्वमात्रमवशिष्यते तत् अतिमृत्यु ब्रह्ममात्रं एति । सम्यज्ज्ञानादृते नान्यः पन्था विद्यतेऽयनाय । स्वाज्ञानप्रभवबन्धनिवृत्तेः स्वज्ञाननिमित्तत्वात् ज्ञानादेव मुक्तो भवतीत्यर्थः ॥ ८ ॥ ज्ञानादृते मोक्षसाधनं नास्तीत्याह—यस्मादिति । यस्मात् पुरुषात् निर्विशेषचिन्मात्रात् परं उत्कृष्टमपकृष्टं वा किंचिन्नास्ति व्याविद्धस्वातिरिक्तत्वात्, यस्मादणीयोऽणुतमं नास्ति, यस्मात् किंचित् अपि न ज्यायोऽस्ति यदतिरिक्तस्य मायामात्रत्वात्, निवातप्रदेशस्थवृक्ष इव स्तब्धः स्थाणुरविकारी दिवि स्वे महिम्नि स्वाराज्य एक एवावतिष्ठते निष्प्रतियोगिकाद्वैतरूपत्वात् य एवं तिष्ठति तेनेदं पूर्णं पुरुषेण सर्वं त्रिपरिच्छेदवैरळ्यात् । यतः पुरुषादतिरिक्तं न किंचिदस्ति अतस्तन्मात्रज्ञानात् तद्भावापत्तिः ॥ ९ ॥ ज्ञानेतरमार्गावलम्बिनां न हि

पुरुषार्थसिद्धिः प्रत्युत बहुळतमदुःखमेवेत्याह—तत इति । यतो ब्रह्ममात्रज्ञानादेव कैवल्यसिद्धिर्भवति ततः तस्मात् यदुत्तरतरं साधनान्तरं नास्ति तद्रूपं निष्कळत्वात् अत एव तत् अनामयं स्वाज्ञानरोगस्याविद्यकत्वेन कारणतुल्यत्वात् । य एतत् प्रकृतं स्वातिरिक्तापह्नवसिद्धं ब्रह्म स्वमात्रमिति विदुः त एव वेदनसमकालं अमृता भवन्ति ब्रह्मैव भवन्ति । अथेति पक्षान्तरद्योतकः । अथेतरे पक्षान्तरावलम्बिनो दुःखमेवापियन्ति न कदाऽपि कैवल्यसुखिनो भवन्ति । ततो ज्ञानादेव कैवल्यसिद्धिरित्यर्थः ॥ १० ॥

निर्विशेषब्रह्मज्ञानोपायः

सर्वाननशिरोग्रीवः सर्वभूतगुहाशयः ।
सर्वव्यापी स भगवान् तस्मात् सर्वगतः शिवः ॥ ११ ॥
महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तकः ।
सुनिर्मलामिमां शान्तिमीशानो ज्योतिरव्ययः ॥ १२ ॥
अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एतद्विदुरमृतास्ते भवन्ति ॥ १३ ॥

निर्विशेषप्रबोधोपायमाह सर्वेति । स्वात्यतिरिक्ताविद्यापदतत्कार्यं सृष्ट्वा तद्व्यष्टिसमष्टिस्थूलांशयोगतो विश्वविराडोत्रात्मना सर्वाण्याननानि शिरांसि ग्रीवाश्च अस्येति सर्वाननशिरोग्रीवः, इतरावयवानामुपलक्षणमेतत्, तथा स्वाविद्यापदव्यष्ट्यादिसूक्ष्मांशोपाधिकतैजससूत्रानुज्ञात्रात्मना सर्वेषामाब्रह्मस्तम्बपर्यन्तभूतानां हृदयविलसितलिङ्गशरीराश्रयः तत्प्रवृत्तिनिमित्तसूत्ररूपत्वात्, तथा स्वाविद्यापदव्यष्ट्यादिबीजांशयोगतः प्राज्ञबीजानुज्ञकरसात्मना सर्वतो व्याप्तुं शीलमस्येति सर्वव्यापी स हि भगवान् निरङ्कुशपड्गुणैश्वर्यसंपन्नत्वात् । यस्मात् एवं तस्मात् सर्वगतः । तथा स्वाविद्यापदव्यष्ट्यादितुर्यांशासङ्गतो द्वितुर्यैक्यविकल्पात्मना स्वाविद्यापदस्थूलादिभागत्रयाशिवं ग्रसित्वा तुर्यांशेऽप्यसङ्गचिद्धातुः

शिवो भवति । स्वातिरिक्ताविद्यापदाशिवापह्नवसिद्धो वा शिवो भवति ॥ ११ ॥ ज्ञानतत्फलदातेश्वर इत्याह—महानिति । महान् देशकालाद्यपरिच्छिन्नत्वात् प्रभुः जगच्चक्रचालकत्वेन नियन्तृत्वात् वैशब्दः प्रसिद्ध्यर्थः पुरुषः स्वेन रूपेण अखिलपूरणात् यः एवंविधः परमेश्वरः एष हि सत्वस्य प्रवर्तकः ये स्वानुग्रहभाजनाः तैः स्वाराधनधिया सत्कर्मोपासनयोगादीनि कारयित्वा तेषां यत् सत्वं अन्तःकरणं तस्य वैमल्यापादनद्वारेणादौ प्रत्यक्प्रावण्यमापाद्य ततः प्रत्यगभिन्नब्रह्मगोचरं विधाय ततः प्रत्यक्परविभागैक्यकलना यत्र सुदुर्लभतामर्हति तद्धि निष्प्रतियोगिकब्रह्ममात्रं तत्सम्यग्ज्ञानं प्रत्यन्येनस्य प्रवर्तकत्वात्,

धातुः प्रसादान्महिमानमात्मनः ज्ञानप्रसादेन विशुद्धसत्त्वः ॥ इत्यादि
परमाद्वैतविज्ञानमिदं भवभयापहम् ।
भवप्रसादतो लभ्यं भावनारहितं परम् ॥ इति

श्रुतेः स्मृतेश्च । परमेश्वरप्रसादादेव स्वातिरिक्तशान्तिः भवतीत्याह—सुनिर्मलामिति । स्वातिरिक्तमलापह्नवसिद्धां विद्वदनुभवैकगोचरां शान्ति निरतिशयानन्दाविर्भावलक्षणां विकलेवरमुक्ति प्रत्ययमेव ईशानः, मुमुक्षोः स्वाविर्भावहेतुः स्वयमेवेत्यर्थः । अत एवेश्वरो ज्योतिरव्ययः चिन्मात्रत्वेन नित्यत्वात् ॥ १२ ॥ ईश्वरस्यैव सर्वान्तःकरणयोगतो जीवत्वं स्वयाथात्म्यज्ञानतः स्वभावापत्ति चाह—अङ्गुष्ठमात्र इति । हृदयस्य स्वाङ्गुष्ठपरिमितिसुषिरवत्त्वेन तदुपलब्धृचैतन्यस्यापि तन्मात्रत्वमुपचर्यते इति अङ्गुष्ठमात्रः, वस्तुतः पूर्णत्वात् पुरुषः सर्पादिषु रज्ज्वादिवत्, सर्वान्तःकरणावभासकत्वेन सर्वभूतान्तरात्मा, प्रत्यगात्मरूपेण सदा जनानां हृदये सन्निविष्टः हृदयाख्यसूक्ष्मशरीरसत्तास्फूर्त्यानन्दप्रदत्वात्, हृदा हृदयस्थबुद्ध्या मनः ईष्ट इति मनीषा संकल्पादिमन्मनसाऽभिक्लृप्तः प्रकाशितः । यद्वा—हृदा "हृञ् हरणे" इति धातोः नेति नेतीति स्वातिरिक्तप्रतिषेधोपदेशेन मनीषा ज्ञानविज्ञानात्मना मनसा सम्यग्ज्ञानेन च अभिक्लृप्तोऽभिप्रकाशितः । य एतत् निर्विशेषं ब्रह्म स्वमात्रमिति विदुः त एव अमृताः भवन्तीत्युपचर्यते, पुरैव तेषां नित्यामृतस्वरूपत्वात् ॥ १३ ॥

### ईश्वरस्य सर्वमयत्वम्

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ॥ १४ ॥
पुरुष एवेदꣳ सर्वं यद्भूतं यच्च भव्यम् ।
उतामृतत्वस्येशानो यदन्नेनातिरोहति ॥ १५ ॥

स्वाविद्यामवष्टभ्य सर्वस्रष्टृत्वं स्वसृष्टोपाध्यनुप्रवेशतो जीवत्वं स्वज्ञानतः स्वभावापत्तिं चाह—सहस्रेति । समष्टिजीवात्मना सहस्राणि शीर्षाण्यस्येति **सहस्रशीर्षा**, **पुरुषः** पूर्णत्वात् । **सहस्राक्ष** इत्यादावपि एवमेव योजना । **स** प्रकृतेशः **भूमिं** भूम्युपलक्षितभौतिकजातं सर्वतो **विश्वतो**ऽन्तर्बहिश्च **वृत्वा** व्याप्य **अत्यतिष्ठद्दशाङ्गुलं** हिरण्यगर्भं विराजं चातीत्य स्वे महिम्नि अत्यतिष्ठत् । यानि यानि दशसङ्ख्याकानि तानि तान्यङ्गुलपरिमाणोपलक्षितानि तानि सर्वाण्यतीत्य स्थितवानिति वा । अथवा भौतिकजातमन्तर्बहिर्व्याप्य तदपेक्ष्य दशाङ्गुलमत्यतिष्ठत्, दशाङ्गुलवचनं निरवधिकमहत्त्वोपलक्षणार्थम् ॥ १४ ॥ यत् सर्वकल्पनाधिष्ठानं तदेव सर्वमित्याह—**पुरुष एवेदमिति** । पुरुषातिरिक्तस्य मायामात्रत्वेन कारणतुल्यत्वात्, "पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः" इति श्रुतेः, पुरुषातिरेकेण **यद्भूतं यच्च भव्यं** यद्वर्तमानकालिकं च तदपि मायामात्रम् । तत्कल्पनाधिष्ठानं पुरुषमात्रमेवेत्याह—**उतामृतत्वस्येशान** इति । उतापि स्वातिरिक्तमार्यापह्नवसिद्धामृतत्वस्येशानः परमेश्वरः स्वाज्ञानबन्धनिरासकत्वात् यद्दृश्यजातमन्नं, सम्यग्ज्ञानेनाद्यत इत्यन्नशब्देन मायातत्कार्यमुच्यते, इत्थंभूतान्नेन वस्तुस्वभावमतिलङ्घ्य तदतिरेकेण **अतिरोहति** जायते, कार्यजातस्यापि सत्ताप्रदत्वेनाधिष्ठानत्वादीशानो नियन्ता परमेश्वर एवेत्यर्थः । यत्पुरुषतत्त्वमन्नेन कार्यरूपेण रोहति स्वगतहेयांशापाये स एवामृतत्वस्येशानः ॥ १५ ॥

ईश्वरस्य सर्वप्रत्यक्त्वम्

सर्वतःपाणिपादं तत् सर्वतोऽक्षिशिरोमुखम् ।
सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १६ ॥
सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ।
सर्वस्य प्रभुमीशानं सर्वस्य शरणं [1]सुहृत् ॥ १७॥
नवद्वारे पुरे देही हꣳसो लेलायते बहिः ।
वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च ॥ १८ ॥

ईश्वरस्य सर्वप्रत्यक्त्वेन सर्वात्मकतामाह—सर्वत इति। ब्रह्मादिस्तम्बान्त-प्राणिपटलपाणिपादा अस्यैव पाणिपादा इति सर्वतःपाणिपादं तत् प्रकृतं ब्रह्म। सर्वतोऽक्षिशिरोमुखं इत्यादेरप्येवमेव विग्रहः। तथा सर्वतःश्रुतिमल्लोके प्राणिनिकाये। किं बहुना, स्वातिरिक्तसर्वप्रपञ्चं सच्चिदानन्दरूपेण आवृत्य तिष्ठति ॥ १६ ॥ ईश्वरस्य स्वविकल्पितप्रपञ्चासङ्गतया सर्वसाक्षित्वं सर्व-नियन्तृत्वादिरपीत्याह—सर्वेति । सर्वाणि श्रोत्रादीनीन्द्रियाणि तेषां गुणाः शब्दादयो यदधिगमादाभासमात्रतया दृश्यन्ते तत् सर्वेन्द्रियगुणाभासं, वस्तुतः सर्वेन्द्रियविवर्जितं सर्वस्य प्रभुं स्वामिनं ईशानं नियन्तारं सर्वस्य शरणं सर्वापद्रक्षकत्वात् सुहृत् मित्रं सर्वावस्थायां हितकरम् । सर्वाणि पदानि प्रथमान्तानि नपुंसकानि। प्रभुं इत्यत्र लिङ्गविभक्तिव्यत्ययो द्रष्टव्यः ॥ १७ ॥ ग्रन्थलाघवात् बुद्धिलाघवमाश्रयणीयं इति न्यायात् एतस्यार्थस्य दुरवगाह्य-त्वेनोक्तार्थमेव पुनः पुनरुच्यते। शोधितजीवेशयोरेकत्वमसकृदुक्तम्। स्वमाया-विकल्पितकार्यानुप्रवेशतो जीवत्वं तन्नियन्तृत्वं स्वज्ञानतः स्वमात्रतां च पुनरप्याह—नवद्वार इति। शिरसि सप्तद्वाराणि द्वाववाञ्चौ एतानि नवद्वाराणि यस्मिन् तस्मिन् नवद्वारे पुरे शरीरे प्रविश्य देही पुराभिमानी सन् संसरति। कथं इत्यत्र जाग्रदाद्यभिमानं क्रमेण गत्वा हित्वा ज्ञानविज्ञानाभ्यां सर्वं हत्वा

[1] बृहत्—मु.

तुरीयं गच्छति सम्यज्ज्ञानेन तदपि हत्वा तुरीयातीतं स्वमात्रतया गच्छतीति वा हंसः परमात्मा लेलायते तद्बहिरेव भूत्वा लीलया चरति संसरतीव। अस्य वशे सर्वं वर्तत इति वशी सर्वस्य लोकस्य, स्थावरस्य चरस्य च वशी सर्वनियन्तेत्यर्थः ॥ १८ ॥

परमात्मवेदनाच्छोकनिवृत्तिः

अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥
अणोरणीयान् महतो महीयानात्मा गुहायां निहितोऽस्य जन्तोः।
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥२०॥
वेदाहमेतमजरं पुराणं सर्वात्मानं सर्वगतं विभुत्वात्।
जन्मनिरोधं प्रवदन्ति यस्य ब्रह्मवादिनो हि प्रवदन्ति नित्यम् ॥२१॥

निष्कलेश्वरस्यापि स्वविद्यया करणग्रामराहित्यं तत्तद्व्यापारवत्त्वं सर्वज्ञतामनन्यवेद्यतामद्वितीयत्वं चाह—अपाणीति। पाणिपादा यस्य न विद्यन्ते सोऽयं अपाणिपादः निर्विशेषत्वात् तथाऽपि ज्ञाताज्ञातसाक्षितया तत्र तत्र गच्छतीवेति जवनः स्वाभेदेन सर्वग्राहकत्वात् ग्रहीता च। शिष्टकर्मेन्द्रियाणामुपलक्षणमेतत्। स्वयं अचक्षुरपि स्वभावेन चक्षुस्तद्विषयं च पश्यति कर्णहीनोऽपि श्रोत्रतद्वृत्तिविषयं शृणोति। शिष्टज्ञानेन्द्रियाणामुपलक्षणमेतत्। किं बहुना, सोऽयं परमात्मा यद्व्यष्टिसमष्टिबाह्यान्तःकरणैर्वेदनीयं वेद्यं तत्सर्वं युगपत् वेत्ति सर्वज्ञत्वात। विषयग्राहिकरणग्रामग्राहकवत् वेत्तृवेदयिता कश्चित् स्यादित्यत आह—न च तस्यास्ति वेत्तेति, "विज्ञातारमरे केन विजानीयात्" इति श्रुतेः। तं प्रकृतं अग्रे भवं अग्र्यं पुरुषं महान्तं त्रिविधपरिच्छेदशून्यं आहुः ब्रह्मविदः,

न व्यापित्वाद्देशतोऽन्तः कारणत्वान्न कालतः।
न वस्तुतोऽपि सार्वात्म्यादानन्त्यं ब्रह्मणि त्रिधा ॥

इति चन्द्रिकोक्तेः ॥ १९ ॥ परमात्मन एकत्वं तज्ज्ञानात्कैवल्यं तज्ज्ञानाधिकारतां चाह—अणोरिति। अणोरणीयान् परमाणुवत् सूक्ष्मबुद्ध्यादेरपि सूक्ष्मतमत्वात्; महतो महीयान् आकाशादेर्महतोऽपि महत्तमत्वात्। बुद्ध्याकाशसापेक्षमणुत्वं महत्त्वं च न स्वतः, स्वस्य निष्प्रतियोगिकात्ममात्रत्वात्,

आत्ममात्रमिदं सर्वमात्मनोऽन्यन्न किंचन ॥

इति श्रुतेः। यदि स्वाज्ञविकल्पिता हृद्गुहा तदा तत्र प्रत्यक्त्वेन निहितः। कस्य गुहेत्यत्र जनिमज्जन्तोः स्थूलशरीरस्य हृदयावच्छिन्नबुद्धिः गूहनात् गुहेत्युच्यते। यः प्रत्यगात्मतया प्रकृतः तमक्रतुं नानाविधसङ्कल्पविरळं महिमानं निरवधिकमहद्रूपं स्वातिरिक्तप्रसनेशं, "सर्वसंहारसमर्थः" इति श्रुतेः। इत्थंभूतं प्रत्यक्तत्त्वं परतत्त्वाभेदेन प्रत्यक्परभिदाऽसहपरब्रह्मतया वा धातुः ईश्वरस्य प्रसादात् यः पश्यति यदा सोऽयं तदा वीतस्वातिरिक्तास्तिताप्रभवशोको भवति ॥ २० ॥ उक्तार्थदार्ढ्याय मन्त्रदृगनुभवमाह—वेदेति। वेदाहं इत्याचार्यपदारूढो मन्त्रद्रष्टा मुनिः। किं वेदेत्यत्र एतं अध्यायत्रयप्रतिपादितं अजरं अपक्षयशून्यत्वात् पुराणमिति च जन्मादिषड्भावविकारप्रतिषेधः, कूटस्थनित्यं, सर्वश्चासावात्मा चेति सर्वात्मानं सर्वेषामात्मानमिति वा सर्वगतं सर्वव्यापिनम्। कुत एवमित्यत्राह—विभुत्वादिति। आकाशादिविविधकार्यरूपेण भवतीति विभुः, तस्मात् सर्वगतम्। यस्य जगज्जन्मनिरोधं प्रवदन्ति एतदेव परमेश्वरकर्मेति ब्रह्मवादिनः हि: प्रसिद्धौ प्रवदन्ति नित्यं महाप्रळयमहासर्ग-अवान्तरप्रळयावान्तरसर्ग-सुषुप्तिप्रबोधेषु मध्ये च। यद्वा—जन्मनिरोधं जन्माभावं यस्य वदन्ति तमहं वेदेत्यन्वयः। स्वविकल्पितमायातत्कार्यापाये स एवेश्वरः परमात्मा स्वमात्रमवशिष्यत इति तदपि वेदाहमित्यभिप्रायः ॥

इति तृतीयोऽध्यायः

# चतुर्थोऽध्यायः

ईश्वरात् सम्यग्ज्ञानप्रार्थना

य एकोऽवर्णो बहुधा शक्तियोगाद्वर्णाननेकान् निहितार्थो दधाति ।
वि चैति चान्ते विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्तु ॥

अभ्यासस्य तात्पर्यलिङ्गत्वात् वक्ष्यमाणार्थस्य दुरवगाह्यत्वाच्च जामितां विहायोक्तार्थमेव पुनः पुनरावर्तयति । चतुर्थाध्याये ईश्वरात् सम्यग्ज्ञानप्रार्थनं तत्त्वंपदार्थशोधनं द्वैतस्य मिथ्यात्वं अद्वैतस्य सत्यत्वं निष्प्रतियोगिकत्वं च सम्यग्ज्ञानस्य कैवल्यान्तरङ्गसाधनत्वं च वक्ष्यते । तत्रादौ मुमुक्षोरीश्वरात् सम्यग्ज्ञानप्रार्थनमाह—य एक इति । यः चिद्धातुः एकोऽद्वितीयत्वात् नामरूपवैकल्यात् अवर्णः निर्विशेषत्वात् बहुधा बहुप्रकारमायाशक्तियोगात् अनेकान् वर्णान् नामरूपाणि, यस्य स्रष्टव्यविषयेक्षणे निहितो निक्षिप्तोऽर्थः, दधाति व्याकरोति, पूर्वं स्वेक्षणतो नामरूपव्याकरणं कृत्वा पश्चात् बहिर्व्याकरोति । अन्ते संहारकाले विश्वं वि चैति व्येति च, अन्तर्भावितणिजर्थोऽयं शब्दः, विगमयति स्वात्मनि सर्वमुपसंहरति । चकारात् आदौ दधातीति जगदुत्पत्तिस्थितिलयकारणत्वं द्योत्यते । य एवंविधः परमेश्वरो विजयते स नो बुद्ध्या शुभया संयुनक्तु समाधनतत्त्वज्ञानरूपया शुभया धिया योजयतु ॥ १ ॥

ईश्वरस्यैव स्वमायया निखिलकार्यप्रवेशः

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः ।
तदेव [1]शुक्रं तद्ब्रह्म तदाप[2]स्सप्रजापतिः ॥ २ ॥
त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वंचसि त्वं जातो भवसि [3]सर्वतोमुखः ॥ ३ ॥

[1] शुक्रममृतंत—अ, अ १, अ २, क. [2] स्तत्प्र—उ, मु. [3] विश्वतो—अ, क.

नीलः पतङ्गो हरितो लोहिताक्षस्तडिद्गर्भ ऋतवः समुद्राः ।
अनादिमत्त्वं विभुत्वेन वर्तसे यतो जातानि भुवनानि विश्वा ॥४॥

स्वमायायांगतः आधिदैविकोपाधीनुत्पाद्य तेष्वनुप्रविश्य अग्न्याद्याख्यामवलभ्य तन्नियन्तृत्वेनापि स्वयमेव अवतीत्याह—तदेवेति । तदेव ईश्वरतत्त्वं अग्निसूर्यवाय्वाख्यं तच्चन्द्रादिरूपेणापि स्थितं, तदु अपि, अस्य सर्वत्रान्वयो द्रष्टव्यः, तदेव शुक्रं नक्षत्रजालवत् स्थितं, शुक्लमिति वा पाठ विराड्रूपेणापि स्थितं, तद्ब्रह्म तदापः अत्रभिमानिदेवतारूपत्वात् , स हि प्रजापतिः चतुराननरूपत्वात् "एष ब्रह्मैष इन्द्रः" इत्यादिश्रुतेः । अग्न्यादित्यादीनां वाक्चक्षुरादिसमष्टित्वात् वागादिसमष्टिग्रहणं इतरसमष्टीनामुपलक्षणार्थम् ॥ २ ॥ स्वमायाशक्त्या निखिलकार्योपाधीन् सृष्ट्वा तत्र घटाकाशवत् जलचन्द्रवच्च प्रविश्य तत्तदाख्यां प्राप्तवद्भातोऽपि स्वयमीश्वर एवेत्याह—त्वमिति । त्वमेव स्त्रीपुंनपुंसकभेदेन स्थितोऽसि, तत्र कुमारकुमारीरूपेणापि स्थितोऽसि, त्वं जीर्णो जरठः करकलितदण्डेन वंचसि संचरसि । किं बहुना, त्वमेव मायया सर्वतोमुखः नानाऽऽकारेण मायया जात इव लक्ष्यसे ॥ ३ ॥ तिर्यगादिरूपेणापि त्वमेव वर्तस इत्याह—नील इति । नीलः पतङ्गः कृष्णभ्रमरादिः हरितः शुकादिः लोहिताक्षः कोकिलादिः तडिद्गर्भो मेघः ऋतवो वसन्तादयः षट् समुद्राः लवणाद्याः सप्त । नीलपतङ्गादिस्त्वमेवेत्यर्थः । आदिमन्न भवतीति अनादिमन् उत्पत्त्यादिरहितः त्वमेव । तव देशकालवस्त्वपरिच्छिन्नत्वात् विभुत्वेन वर्तसे विभुत्वेन वर्तमानमपि त्वमेवेति सर्वत्रानुषज्यते । यतो भुवनानि भूरादीनि विश्वा विश्वानि जातानि, भुवनाद्याविर्भावतिरोभावाधिकरणमपि त्वमेव ॥ ४ ॥

जीवेश्वरभेदो मायिकः

अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः [1]सृज्यमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥

[1] सृजमा—अ १, अ २, क, उ, मु.

द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति ॥ ६ ॥
समाने वृक्षे पुरुषो निमग्नोऽनीशया शोचति मुह्यमानः ।
जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥७॥

इदानीं तेजोऽबन्नलक्षणां प्रकृतिं तद्विकारप्रपञ्चस्येश्वरविवर्ततां ईश्वरस्य तदसङ्गत्वेन तत्कारणतां तद्गतविशेषांशापह्नवबोधतः कैवल्यसिद्धिं चाह— अजामिति परमार्थदृष्ट्या कालत्रयेऽपि या न जायते तां अजां ब्रह्ममात्रप्रबोध-समकालं मूलप्रकृतेरलब्धात्मकत्वात् । स्वाज्ञदृष्ट्या तस्या एकत्वमनेकत्वं चाह — एकामिति । मूलप्रकृतेरेकत्वात् । लोहितशुक्लकृष्णां तेजोऽबन्नानि सृष्ट्वा तत्तद-वस्थाऽऽपन्नत्वात् । यद्वा—रजस्सत्त्वतमोगुणात्मिकाम । गुणत्रयानुयोगतो बह्वीः अनेकाः प्रविभक्तरूपेण जायन्त इति प्रजाः कारणप्रविभक्तरूपेण व्यज्यमानाः लोहिताद्यात्मना रजआद्यात्मना वा सरूपाः स्वसमानरूपाः सृज्यमानां उत्पाद-यन्तीमजां वस्तुतो जन्मराहित्यात् अजो ह्येकः पूर्वोक्तामजां जुषमाणोऽनुशेते क्षेत्रज्ञस्य स्वाविद्यापाशपाशितत्वेन तत्परवशत्वात् । तथाऽप्ययं तदसङ्गचिन्मात्र-स्वरूपः प्राकृतपञ्चकोशेषु जलचन्द्रवदनुप्रविश्य तद्धर्मान् स्वधर्मत्वेनोररीकृत्य प्रकृतिप्राकृतपरवशोऽनुवर्तते । सर्वानर्थमूलकारणभूतां भुक्तभोगां वान्ताशनमिव एनामन्योऽजः परमेश्वरो जहाति स्वमात्रज्ञानाग्निना भस्मीकरोतीत्यर्थः ॥ ५ ॥ एकः प्रकृतिगुणान् भजमानः तत्परतन्त्रतया संसरति, अपरस्तां परित्यज्य नित्यमुक्ततया अवतिष्ठत इति योऽर्थोऽभिहितः तमेतमर्थं भङ्ग्यन्तरेणाचष्टे— द्वासुपर्णेति । द्वा द्वौ घटाकाशमहाकाशस्थानीयौ जीवपरमात्मानौ सुपर्णा सुपर्णौ शोभनपतनगमनौ सयुजा सयुजौ बिम्बप्रतिबिम्बभावमापन्नौ सखाया सखायौ समानाख्यानौ समानाभिव्यक्तिकारणौ चेतनत्वाजत्वसामान्यात् किंचिज्ज्ञत्वसर्व-ज्ञत्वोपाधिकत्वेन नियम्यनियामकत्वेन शुद्ध्यशुद्ध्युपाधिकत्वेन च प्रकृतिप्राकृत त्वेन समानं उच्छेदधर्मवत्त्वात् वृक्षं परिषस्वजाते परिष्वक्तवन्तौ । तयोः कार्यकारणोपाधिजीवेशयोर्मध्ये लिङ्गशरीराभिमानी अन्यो जीवः पिप्पलं पुण्य-

पापकर्मफलनिष्पन्नं स्वादु विविधविषयजफलं अत्ति भुङ्क्ते । जीवात् अन्यः परमेश्वरः पिप्पलं जीववत् अनश्नन् स्वयमविकृतः सन् अभिचाकशीति स्वातिरिक्तं नेतीत्यभितः पश्यन्नुदास्ते । यथा व्योमासनादित्यः स्वप्रकाश्यं प्रकाशयन् प्रकाशरूपेणास्ते तथा अयमीश्वर इत्यर्थः ॥ ६ ॥ जीवेशावनूद्य जीवस्य स्वयाथात्म्यज्ञानात् कैवल्यसिद्धिमाह—समान इति । पुण्यपापफल-भोगायतनत्वेन समाने वृक्षे स्वाविद्याद्वयतत्कार्यपञ्चकोशात्मके स्वेन रूपेण सर्वत्र पूरणात् पुरुषः परमेश्वरे निमग्नः स्वाविद्याजलधौ प्रतिबिम्बितत्वात् स्वस्वरूपतिरोधानं कर्तुं अनीशया स्वाविद्यया कर्ता भोक्ता सुखी दुःखी इत्यादिना मुह्यमानः सन् शोचति संसारशोकमनुभवति । "ब्रह्ममात्रमसन्न हि" इत्यादिश्रुत्यनुरोधेन स्वातिरिक्तासदपह्नवसिद्धं निष्प्रतियोगिकब्रह्ममात्रमिति ब्रह्म-विद्वरिष्ठैः तत्त्वज्ञानिभिः जुष्टं ब्रह्ममात्रं यदा स्वावशेषतया पश्यति तदा वीतस्वातिरिक्तास्तिताप्रभवशोको भवतीत्यन्वयः । कीदृशमात्मानं पश्यति इत्यत्र स्वाविद्याद्वयतत्कार्यात् अन्यं स्वावशेषतयाऽवस्थातुं ईशं तस्य प्रत्यगभिन्न-परमात्मनो महिमानं प्रत्यक्परविभागैक्यासहसत्तासामान्यरूपं यदा पश्यति तदा ब्रह्ममात्रप्रबोधतो वीतशोको ब्रह्मैव भवति ॥ ७ ॥

### मायाऽधिष्ठातुरीश्वरस्यैव सर्वस्रष्टृत्वम्

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥८॥
छन्दांसि यज्ञाः क्रतवो व्रतानि भूतं भव्यं यच्च वेदा वदन्ति ।
अस्मान् मायी सृजते विश्वमेतत्तस्मिंश्चान्यो मायया संनिरुद्धः ॥
मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् ।
[1]अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ १० ॥

[1] तस्या—अ, मु.

यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं सं च वि चैति सर्वम् ।
तमीशानं [1]वरदं देवमीड्यं निचाय्येमां शान्तिमत्यन्तमेति ॥ ११ ॥

ब्रह्मणो ज्ञानतत्साधनानामीश्वराधीनत्वं ईश्वरभावादृते तेषां वैयर्थ्यमीश्वरभावादेव कैवल्यसिद्धिं चाह—ऋच इति । ऋगादिसर्वे वेदाः अक्षरे परमे परमाक्षरे व्योमन् परमाकाशे परमात्मनि निषेदुः यस्मिन् पूर्वोक्तपरमाक्षरे देवा विराडादयः अग्न्यादयश्च अधि उपरि निषेदुः आश्रिताः तिष्ठन्ति । ऋगादिवेदप्रतिपादितसत्कर्मानुष्ठानसञ्जातचित्तशुद्धिसाधनचतुष्टयसहकृतपारमहंस्यधर्मपुंगवदनुष्ठितश्रवणादिसञ्जातसम्यज्ज्ञानतो यो यदि यद्ब्रह्म सर्वापह्नवसिद्धमिति सर्ववेदान्तार्थं तत् स्वमात्रमिति न वेद स तदा ऋचा तदुपलक्षितनिखिलवेदवेदान्तैः किं करिष्यति, न किमपि प्रयोजनं भवतीत्यर्थः. "एवं तं परमज्ञात्वा वेदैर्नास्ति प्रयोजनम्" इति स्मृतेः । ये वेदोक्तकर्मानुष्ठानतः चित्तशुद्धिमेत्य यथोक्तसाधनविशिष्टकृतवेदान्तश्रवणादिसम्यज्ज्ञानेन इत् तत् लभ्यं ब्रह्म स्वावशेषतया विदुस्त इमे ब्रह्मविद्वरीयांसः स्वे महिम्नि समासते कृतकृत्या ब्रह्मैव भवन्तीत्यर्थः ॥ ८ ॥ यदयं सविशेषब्रह्मवित् तदाऽपरमोक्षभावमेत्य स्वशक्त्या पुरुषार्थोपयोगिवेदादीन् तन्निर्वर्त्ययागादीन् तत्साध्यकालत्रयपरिच्छिन्नव्यष्टिसमष्ट्यात्मकप्रपञ्चजातं सृष्ट्वा तत्र जलचन्द्रवदनुप्रविश्य स्वाविद्याकामकर्मपाशैः सुतरां बद्धो जीवाख्यां लभत इत्याह—छन्दांसीति । छन्दांसि ऋगादिचतुर्वेदाः पञ्च यज्ञाः ज्योतिष्टोमादयः क्रतवः सयूपाः व्रतानि कृच्छ्रचान्द्रायणादीनि भूतं भव्यं भविष्यत् यच्च वेदा वदन्ति, यज्ञादिसाध्यत्वेन भूतादिकालपरिच्छिन्नः प्रपञ्च इत्यर्थं वेदा एव प्रमाणमित्येतत् । यच्छब्दः सर्वत्र संबध्यते । अस्मात् अक्षराख्यात् ब्रह्मणः, एतत्सर्वमुत्पन्नमित्यध्याहार्यम् । कथं ब्रह्मणो जगत्कारणतेत्यत आह—मायी सृजते विश्वमिति । निर्विशेषब्रह्मणोऽपि मायायोगतः सविशेषतया सर्वस्रष्टृत्वमुपपद्यते । तस्मिन् ईश्वरसृष्टव्यष्ट्यादिप्रपञ्चे य ईशभावमापन्नः स एव मायया सन्निरुद्धः ततो मायया

[1] परमं दे—अ १.

अन्य: सन् परिवर्तते ॥ ९ ॥ स्वाधिष्ठेयमायायाः प्रकृतित्वं तदारोपाधिकरणस्य मायित्वं स्यादित्याह—मायामिति । या परमार्थदृष्ट्या मा न भवति तां मायां तु मायामेव स्वाज्ञदृष्टिप्रकृतप्रकृतिं विद्यात् जानीयात् । अत्रेशत्वेन य उक्तः तं मायिनं तु मायाऽवच्छिन्नमेव मायाऽधिष्ठातारं महेश्वरं विद्यात् । अस्य मायिनः अवयवभूतैः घटाकाशजलचन्द्रस्थानीयैः आकाशादिः सन् आकाशादिः स्फुरतीति व्याप्तं सर्वमिदं जगत् महाकाशव्याप्तेरध्यस्तत्वात् न तु स्वपरिणामित्वेन । तुशब्दत्रयस्यापि अवधारणमर्थः । यद्वा—मायाऽधिष्ठातुरीश्वरस्य अवयवभूतैः स्वस्मिन्नध्यस्तत्वात् तदेकदेशभूतैः मायातत्सामर्थ्यैः तद्विवर्तत्वेनैव व्याप्तं सर्वमिदं जगत् । स्वाध्यस्तसर्वकलनानिवृत्तये मुमुक्षुभिः यत्नः कर्तव्यः इत्यभिप्रायः ॥ १० ॥ मायायोनेः अवान्तराकाशादियोनीनां च अद्वितीयेशस्याधिष्ठातृत्वं, मायाऽधिष्ठानतो वियदाद्युत्पत्तिहेतुत्वं, वियदाद्यवान्तरयोनिमवष्टभ्येतरेषां सृष्ट्यादिहेतुत्वं, तत्सर्वाधिष्ठानभूतपरमेश्वरयाथात्म्यज्ञानात् मोक्षसिद्धिं चाह—यो योनिमिति । यः प्रकृतः परमेश्वरः योनिं मूलप्रकृतिं कारणोपाधिरूपां पुनः प्राकृतयोनिं कार्योपाधिरूपां च अधितिष्ठति तत्सत्तास्फूर्तिप्रदत्वात् । यद्वा—योनिं योनिं प्रत्यन्तर्यामिरूपेणाधितिष्ठति । यः सर्वयोन्यधिष्ठाता स एकोऽद्वितीयः । यस्मिन् मायाऽऽधारेश्वरे सर्वमिदं जगत् समेति संहारकाले विलयं याति पुनः सृष्टिकाले वि चैति वियदादिरूपेण तादात्म्यं प्रतिपद्यते तं प्रकृतं ईशानं स्वांशजजीवाभिलषितवरप्रदातारं देवं वेदैर्वेदविद्भिः ईड्यं अहमस्मीति निचाय्य साक्षात्कृत्य स्वातिरिक्तप्रकृतिप्राकृतापह्नवसिद्धां परमशान्तिं विदेहमुक्तिं एति ॥ ११ ॥

ज्ञानार्थमीश्वरप्रार्थना

यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः ।
हिरण्यगर्भं [1]पश्यत जायमानं स नो बुद्ध्या शुभया संयुनक्तु ॥

[1] पश्यति—अ, अ १, क.

यो देवानामधिपो यस्मिन् लोका अधिश्रिताः ।
य ईशे अस्य द्विपदश्चतुष्पदः कस्मै देवाय हविषा विधेम ॥ १३ ॥

हिरण्यगर्भोपास्त्येश्वरं प्रति सम्यग्ज्ञानं प्रार्थयति—य इति । उक्तार्थोऽयं मन्त्रः । पश्यत अपश्यत्, व्यत्ययेनात्मनेपदं, बहुळं छन्दसि, अमाङ्योगेऽपीत्यडभावः । अवान्तरस्थितिकर्तृत्वेन वेदप्रवर्तकत्वेन च निरीक्षणं कृतवानित्यर्थः ॥ १२ ॥ देवान् प्रति स्वामित्वं सर्वलोकाश्रयत्वं जीवजातनियन्तृत्वं ...ास्यत्वं चाह—य इति । यः प्रकृतः परमेश्वरः व्यष्टिसमष्टिदेवानामधिपः कारणोपाधिकत्वात् यस्मिन् भूरादयो लोकाः अधिश्रिताः ओतप्रोततयोपरिश्रिताः अस्य द्विपदो मनुष्यादेः चतुष्पदः पश्वादेश्च यः कारणोपाधिः ईशे ईष्टे, तकारलोपश्छान्दसः, कस्मै काय सुखरूपाय, स्मैभावः छान्दसः, तस्मै देवाय हविषा विधेम चरुपुरोडाशादिभिः परिचरेम, विधेः परिचरणकर्मणः एतद्रूपम ॥ १३ ॥

ईश्वरज्ञानादेव पाशविमोकः

सूक्ष्मातिसूक्ष्मं कलिलस्य मध्ये विश्वस्य स्रष्टारं तमनेकरूपम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवं शान्तिमत्यन्तमेति ॥१४॥
स एव काले भुवनस्य गोप्ता [1]विश्वाधिपः सर्वभूतेषु गूढः ।
यस्मिन् युक्ता ब्रह्मर्षयो देवताश्च तमेवं ज्ञात्वा मृत्युपाशांश्छिनत्ति ॥
घृतात् परं मण्डमिवातिसूक्ष्मं ज्ञात्वा शिवं सर्वभूतेषु गूढम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ १६ ॥
एष देवो विश्वकर्मा महात्मा सदा जनानां हृदये संनिविष्टः ।
हृदा मनीषा मनसाऽभिक्लृप्तो य एनं विदुरमृतास्ते भवन्ति ॥

[1] विश्वाधिकः—क.

यदाऽतमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः ।
तदक्षरं तत् सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी ॥१८॥
नैनमूर्ध्वं न तिर्यञ्चं न मध्ये परिजग्रभत् ।
न तस्य प्रतिमाऽस्ति यस्य नाम महद्यशः ॥ १९ ॥
न संदृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् ।
हृदा हृदिस्थं मनसा य एनमेवं विदुरमृतास्ते भवन्ति ॥ २० ॥

ईश्वरस्य परमसूक्ष्मत्वं सर्वकारणत्वं सर्वसाक्षित्वं स्वज्ञानान्मोक्षप्रदत्वं च पुनरप्याह—सूक्ष्मेति । पृथिव्याद्यव्यक्तान्तानि पूर्वपूर्वापेक्षया उत्तरोत्तराणि सूक्ष्मतराणि, पृथिव्याद्यव्यक्तान्तगतसूक्ष्मादपि परमेश्वरतत्त्वं अतिसूक्ष्मं "केशकोट्यंशैकभागसूक्ष्मं ब्रह्म सुखात्मकम्" इति ब्रह्मप्रणवोक्तेः, स्वातिरिक्तत्वेन कलिलस्य स्वाविद्यापदतत्कार्यजातस्य मध्ये विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तात्मनाऽवस्थितं स्वाज्ञदृष्टिविकल्पितविश्वस्य स्रष्टारं तं तच्छब्दार्थं नानाजलपात्रानुगतचन्द्रवत् स्वाविद्यापदतत्कार्येषु अनेकरूपवदवस्थितं स्वविवर्तविश्वस्यैकं अधिष्ठानं स्वाधिष्ठेयसत्तास्फूर्तिसुखप्रदतया तदन्तर्बहिः परिवेष्टितारं वस्तुतः स्वातिरिक्ताशिवापह्नवसिद्धं शिवं स्वमात्रमिति ज्ञात्वा शान्तिमत्यन्तमेति व्याख्यातम् ॥ १४ ॥ ईश्वरस्य सर्वस्रष्टृत्वपालकत्वोपसंहारकत्वं प्रत्यक्त्वं सर्वाप्यत्वं ज्ञानैकगम्यत्वं चाह—स एवेति । यः प्रकृतः स एव परमेश्वरः स्वातिरिक्तं कलयति स्वात्मसात्करोतीति कालः । काले इति पाठान्तरम् । तत्र जीवसञ्चितकर्मपरिपाककाले भुवनस्य तत्तत्कर्मफलानुरोधेन गोप्ता रक्षिता विश्वाधिपः विश्वस्वामी सर्वभूतेषु अनुप्रविष्टत्वेन गूढः । यस्मिन् संविन्मात्रेश्वरे ब्रह्मर्षयः सनत्कुमारादयः देवताश्च हिरण्यगर्भादयः युक्ताः एकतां गताः तं ईश्वरं ज्ञात्वा सोऽहमस्मीत्यपरोक्षीकृत्य स्वाज्ञानस्य मृत्युहेतुत्वेन मृत्युः स्वाज्ञानं तद्वृत्तिभिः पाश्यते बध्यत इति स्वाज्ञानवृत्तयः पाशाः तान् मृत्युपाशान् छिनत्ति, "मृत्युर्वै तमः" इति श्रुतेः ॥ १५ ॥ ईश्वरस्य परमानन्दस्वभावत्वं सर्वदोषा-

स्पृष्टत्वं जीवरूपेण सर्वभूतगूढत्वं सर्वव्यापित्वं स्वज्ञानात् स्वाज्ञानपाशापहानिं चाह—घृतादिति । घृतात् परं उपरि वर्तमानं मण्डं यथा सूक्ष्मं प्रीतिविषयं च तथा मुमुक्षुप्रीतिविषयं अतिसूक्ष्मं च ब्रह्मादिस्तम्बान्तभूतेषु अनुप्रविश्य विश्वविराडोत्रादिरूपेण वर्तमानमप्यतिगूढं स्वाज्ञदृष्टेरावृतवत् भानात् । विश्वस्यैकं परिवेष्टितारं इत्याद्युक्तार्थम् ॥ १६ ॥ ईश्वरस्य सप्रपञ्चनिष्प्रपञ्चरूपेणावस्थानं तन्मात्रज्ञानान्मोक्षसिद्धिं चाह—एष इति । एष प्रकृतः परमात्मा मायाशक्तियोगान्महदादिविश्वं करोति इति विश्वकर्मा महानात्मा अस्येति महात्मा महाकाशस्थानीयपरमात्मरूपत्वात् सदा जनानां हृदये जलपात्रावलिगतचन्द्रवत् संनिविष्टः । हृदा मनीषेत्याद्युक्तार्थम् ॥ १७ ॥ स्वातिरिक्तकलनापाये स्वयमेवावशिष्यते इत्याह—यदेति । यदा परमार्थावस्थायां अतमः स्वाज्ञानासंभवात् तत् तदा न दिवा न रात्रिः दिवारात्र्यादिकलना न ह्यस्ति न सत्र चासत् भावाभावकलना न ह्यस्ति । ततः किमवशिष्यते इत्यत्र शिव एव स्वातिरिक्ताशिवं प्रमित्वा केवलः स्वमात्रतयाऽवशिष्यते, "सत् किंचिदवशिष्यते" इति श्रुतेः । यदाक्षरतत्त्वं तत् एव अक्षरं तत्पदार्थभूतं सवितुः ईश्वरस्य मुमुक्षुभिः प्रार्थनीयं वरेण्यं रूपं निर्गुणम् । स्वाविद्यातत्कार्यग्रासब्रह्मविद्यारूपेयं प्रज्ञा च पुराणी ब्रह्मादिपरंपरागता तस्मात् शिवादेव प्रसृता ॥ १८ ॥ ईश्वरस्याद्वितीयत्वमनुपमत्वं महद्विख्यातनामत्वं चाह—नैनमिति । एनं प्रकृतं शिवं ऊर्ध्वं न हि कश्चिदपि परिजग्रभत् न परिगृहीतुं शक्नुयात्, न तिर्यञ्चमपि परिजग्रभत् सन्मात्रत्वेन दिग्देशाद्यनवच्छिन्नत्वात्, न मध्ये परिजग्रभत् निरंशत्वेन मध्यस्थानाभावात् । न हि तस्य ईश्वरस्य प्रतिमा उपमा काचित् अस्ति निष्प्रतियोगिकत्वेन ब्रह्ममात्रत्वात्, यस्य परमेश्वरस्य नाम अभिधानं महद्यशः निष्प्रतियोगिकपूर्णब्रह्मगमकत्वात् ॥ १९ ॥ परमेश्वरस्यातीन्द्रियत्वं प्रत्यगभिन्नतां स्वज्ञानात् मोक्षसिद्धिं चाह—न सन्दृशे इति । अस्य ईश्वरस्य यन्निर्विशेषरूपं चक्षुरादीन्द्रियैः संदृशे संदर्शनयोग्यदेशे न तिष्ठति । एतादृशं एनं ईश्वरं चक्षुषा तदुपलक्षितसर्वेन्द्रियैः कश्चन कोऽपि न पश्यति गृहीतुं न शक्नुयात् "यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति" इति

श्रुतेः । स्वात्मातिरिक्तात्मा नेति नेतीत्यपह्नवबोधरूपया हृदा निरहंभावमापन्नमनसा अखण्डाकारवृत्त्या हृदयगुहायां प्रत्यग्रूपेण तदभिन्नब्रह्मरूपेण तद्वैदैक्यासहब्रह्ममात्ररूपेण वा तिष्ठतीति हृदिस्थं एनं एवं ये यथोक्तसाधनसंपन्ना योग्याधिकारिणः स्वमात्रमिति विदुः ते तद्वेदनसमकालं अमृता भवन्ति ॥ २० ॥

ज्ञानार्थं पुनरीश्वरप्रार्थना

अजात इत्येवं कश्चिद्भीरुः प्रपद्ये ।
रुद्र यत्ते दक्षिणं मुखं तेन मां पाहि नित्यम् ॥ २१ ॥
मा नस्तोके तनये मा न आयुषि मा नो गोषु मा नो अश्वेषु रीरिषः ।
वीरान् मा नो रुद्र भामितोऽवधीर्हविष्मन्तः सदमि त्वा हवामहे ॥ २२ ॥

ईश्वरस्य स्वाज्ञानप्राप्तस्वज्ञानप्रदत्वात् तत्प्रार्थनामाह—अजात इति । इतिशब्दो हेत्वर्थः । यस्मात् त्वं एवं उक्तप्रकारेण अजातः जनिमृत्यशनायाऽऽदिषड्भावषडूर्मिविरळ्यादजातः परमात्मा नाहं तत्सदृशः षड्भावषडूर्मिविशिष्टदेहित्वादित्यात्मानं मत्वा कश्चित् जात्याद्यशनायाऽऽदिभावषट्कषडूर्मितो भीरुः सन् विशुद्धान्तःकरणो योग्याधिकार्यहं हे रुद्र ते तव यत्ते सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रावस्थानलक्षणकैवल्यदापनदक्षिणं समर्थं मुखं निष्प्रतियोगिकनिर्गुणं स्वावशेषधिया प्रपद्ये तेन मुखेन योग्याधिकारिणं मां पाहि यत्ते नित्यं रूपं तन्मात्रं मां विधाय रक्षस्व । प्रपद्यते इत्यस्मिन् पाठे—कश्चिन्मुमुक्षुः मोक्षसिद्ध्यर्थं त्वां प्रपद्यते अतोऽहमपि मोक्षसिद्ध्यर्थं त्वामेव प्रपद्य इत्यर्थः ॥२१॥ अस्मच्छिष्यपरम्परां सम्यज्ज्ञानयोग्यां विधाय त्वं निष्कळभावं दत्त्वा पाहि कदाऽपि मा हिंसीः इति प्रार्थनमाह—मा न इति । नोऽस्माकं तोके शिष्यवर्गे तनये पुत्रवर्गेऽपि मा रीरिषः मा हिंसीः रिषतिधातोः हिंसाऽर्थकत्वात् । मा न

आयुषि मा नो गोषु सम्यग्ज्ञानसाधनवाग्विभूतिषु मा नो अश्ववत् अश्वेषु इन्द्रियेषु, "इन्द्रियाणि हयानाहुः" इति श्रुतेः । मा रीरिष इति सर्वत्र संबध्यते । वीरान् विक्रमवतः परिचारकान् ज्ञातकान् नोऽस्माकं हे रुद्र भामितः, भामक्रोधे ण्यन्तः, तैः कृतापराधेन क्रोधितः सन् वधीः, मा वधीरिति पूर्वप्रतिषेधेन संबन्धः । मदीयानां त्वत्प्रापकसम्यग्ज्ञानयोग्यतासिद्ध्यर्थं वयं त्वदाराधनसाधनहविष्मन्तो भूत्वा सदं सदा इम एव सदैव त्वा त्वां हवामहे यजामहे । अथवा, न केवलमसौ निःश्रेयसार्थिभिरेव प्रार्थ्यः प्रेयोमार्गनिरतैरपि प्रार्थनीय इत्याह—मा न इति । अभ्युदयार्थिभिः अनेन मन्त्रेण अग्निरेव प्रार्थित इत्यर्थः ॥ २२ ॥

इति चतुर्थोऽध्यायः

# पञ्चमोऽध्यायः

विद्याऽविद्ययोः स्वरूपम्

द्वे अक्षरे ब्रह्मपरे त्वनन्ते विद्याऽविद्ये निहिते यत्र गूढे ।
क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याऽविद्ये ईशते यस्तु सोऽन्यः ॥ १ ॥

विद्याऽविद्ययोः परमेश्वरतन्त्रत्वं विद्याऽविद्येयत्तां विद्याऽविद्येशितृत्वं तदस्पृष्टत्वमित्याद्यर्थं प्रकटयितुं पञ्चमोऽध्याय आरभ्यते । प्रथमं विद्याऽविद्ये अङ्गीकृत्याह—द्वे इति । विद्याऽविद्ये द्वे न क्षरतीति अक्षरं अक्षरात्मिके ब्रह्मपरे ब्रह्मणो हिरण्यगर्भात् परे, अथवा ब्रह्म च तत्परं चेति ब्रह्मपरं तस्मिन् ब्रह्मपरे परब्रह्मणीति यावत् । परनिपातः छान्दसः । तुशब्दोऽवधारणार्थः ।

तस्मिन् परब्रह्मण्येव अनन्ते परिच्छेदत्रयकथाविरळे । विद्याऽविद्ये अक्षर इति विशेष्यत्वेनान्वयो दर्शितः । निहिते निक्षिप्ते परमेश्वराधीनतया नितरां स्थितत्वात् । यत्र यस्मिन् स्वयंप्रकाशतया गूढे अनभिव्यक्ते । तत्र विद्याऽविद्ययोर्लक्षणमाह— क्षरं त्विति । यद्यत् क्षरणहेतुः तत्तत् अविद्यैव । तुशब्दोऽत्रधारणार्थः । यद्यत् अमृतत्वसाधनं तत्तत् विद्यैव । तु शब्दोऽवधारणार्थः । या नित्यमोक्षपुरुषार्थ-प्रापकतया विद्यते सा विद्यैव । स्वर्गाद्यनित्यफलहेतुः कर्माविद्या । शमाद्युपबृंहित-श्रवणादिनिष्पन्नेयं विद्या । यस्मादेवं तस्मात् पुरुषार्थेच्छुभिः सर्वकर्माणि संन्यस्य शमाद्युपबृंहितश्रवणादिरेवाश्रयितव्यः इति भावः । विद्याऽविद्ये ईशते यस्तु यः परमात्मेष्टे नियमयति । तुशब्दश्चार्थः । यत्र विद्याऽविद्ये निहिते यश्च विद्याऽविद्ये ईष्टे स ताभ्यां अन्यः विद्याऽविद्याऽऽरोपापवादाधिकरणत्वात् ॥ १ ॥

### ईश्वरस्यैव विद्याप्रदातृत्वम्

योऽयोनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः ।
ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् ॥ २ ॥

ईश्वरस्य सर्वाधिष्ठातृत्वेन स्वविद्याप्रदातृत्वमाह—योऽयोनिमिति । यः प्रकृतः परमेश्वरः एक एव सन् अयोनिं समष्टिमूलाविद्यां योनिं व्यष्टितूलाविद्यां च स्वसत्तास्फुरणप्रदतया अधितिष्ठति विश्वानि रूपाणि सर्वशरीराणि वियदादि-समष्टियोनीश्च सर्वाः तद्व्यष्टिरूपावान्तरयोनींश्च स्वसत्तास्फुरणप्रदतयाऽधितिष्ठति, ऋषिं अप्रतिहतज्ञानतया प्रसूतं कपिलं कनकवर्णं हिरण्यगर्भं य ईशः अग्रे सृष्टिकाले ज्ञानैः धर्मवैराग्यैश्वर्यैः निखिलवेदतदर्थपरिज्ञानैर्वा युतं बिभर्ति बभारेत्यर्थः । तं च जायमानं च पश्येत् विद्यासंप्रदायकर्तृत्वेन ददर्श ॥ २ ॥

### ईशस्य सर्वाधिपत्यम्

एकैकं जालं बहुधा विकुर्वन् यस्मिन् क्षेत्रे संहरत्येष देवः ।
भूयः सृष्ट्वा पतयस्त्वथेशः सर्वाधिपत्यं कुरुते महात्मा ॥ ३ ॥

सर्वा दिश ऊर्ध्वमधश्च तिर्यक् प्रकाशयन् भ्राजते [1]यद्वनड्वान् ।
एवं स देवो भगवान् वरेण्यो योनिस्वभावानधितिष्ठत्येकः ॥ ४ ॥
यच्च स्वभावं पचति विश्वयोनिः पाच्यांश्च सर्वान् परिणामयेद्यः ।
सर्वमेतद्विश्वमधितिष्ठत्येको गुणांश्च सर्वान् विनियोजयेद्यः ॥ ५ ॥

व्यष्टिसमष्टिकरणग्रामं स्वमायया सृष्ट्वा तदात्मप्रवेशितुः सर्वाधिपत्यमाह—एकैकमिति । एकैकं जालं पुरुषमत्स्यानां बन्धनहेतुत्वात् व्यष्टिसमष्ट्यन्तःकरणरूपं व्यष्टिसमष्टिप्राणज्ञानकर्मेन्द्रियाणामेकैकं जालं तज्जालावस्थामेत्य तत्तत्कर्मोपासनानुगुणं बहुधा विकुर्वन् यस्मिन् प्राकृते क्षेत्रे नित्यप्रळयादाविदं सर्वं एष देवः संहरति उपसंहृतवान् । भूयः पुनरपि व्यष्ट्याद्युपाधीन् सृष्ट्वाऽथ पतयस्तु पतींश्च नृथार्थे, तत्तदुपाध्यभिमानृन् ब्रह्मादिस्तम्बान्तान् सृष्ट्वाऽथ सर्वोपाधितदुपहितानामसौ महात्मा ईश्वरोऽयं आधिपत्यं नियन्तृत्वं कुरुते ॥ ३ ॥ ईशस्य सर्वज्ञत्वं नियन्तृत्वं चाह—सर्वा इति । सर्वाः प्राच्यादिचतस्रो दिशः तद्वर्तिनः सर्वपदार्थांश्च ऊर्ध्वमधश्च तिर्यक् उपदिशश्चतस्रश्च ऊर्ध्वाधस्तिर्यग्विदिग्गतपदार्थांश्च प्रकाशयन् भ्राजते यत् उद्गमनर्थको निपातः, यद्यथेति यावत् । जगच्चक्रवाहने युक्तत्वात् यथा अनड्वान् आदित्यः प्राच्यादिदिशः स्वप्रभया भासयन् भ्राजते तथेश्वरोऽपीत्याह—एवमिति । यथा आदित्यः स्वप्रकाश्यमवभासयन् स्वयं भासते एवं स प्रकृतो देवः स्वातिरिक्तं नेति नेतीति भासयन् स्वयमेव भ्राजते य एवंविधः स हि भगवान् षड्गुणैश्वर्यसंपन्नः अभ्युदयनिःश्रेयसकाङ्क्षिभिः वरेण्यः स्वामित्वेन स्वात्मतया वा वरणीयः सोऽयमन्तर्याम्यादिरूपेण योनिः स्वाविद्याद्वयं वियदाद्यणवन्ताः तत्स्वभावाः तान् योनिस्वभावान् हिरण्यगर्भादिस्तम्बपर्यन्तभावांश्च स्वयं एक एव अधितिष्ठति नियमयति ॥ ४ ॥ ईश्वरस्य सर्वपाचकत्वं स्वाविद्यामायाऽनुकारित्वं सर्वनियन्तृत्वं जीवजातकर्मानुरोधेन विनियोजयितृत्वं चाह—यच्चेति । यच्च इति लिङ्गव्यत्ययः यश्चेश्वरः सर्वं

[1] अनभस्वान्—अ १.

प्रकाशयन् सर्वत्र व्याप्य स्थितः, किं च भूतानां स्वभावं तत्तत्कार्यानुरोधेन संनिधिमात्रकर्तृतया पचति कोऽयं ? विश्वयोनिः ईश्वरः विश्वसंभवस्थितिप्रलय-हेतुत्वात् । यद्वा—विश्वा योनयो यस्य नियम्याः स विश्वयोनिः । पाकयोग्यान् पाच्यांश्च सर्वान् स्वात्मसत्तासंनिधिमात्रेण योऽयमीश्वरः परिणामयेत् सोऽयं एक एवेश्वरः सर्वमेतत् विश्वमधितिष्ठति अधिष्ठाय नियमयति, किं च पापपुण्यानुगुणतया सत्त्वादिगुणान् अध्यात्मादिभेदभिन्नेषु विनियोजयेद्यः स संसृतिकारणनिवृत्त्यर्थं सोऽयमीश्वरः स्वात्मतया वेदितव्य इत्यर्थः । अथवा यच्छब्दस्य उत्तरमन्त्रगततच्छब्देन सम्बन्धः ॥ ५ ॥

ईशस्य वेदवेद्यत्वम्

[1]तद्वेदगुह्योपनिषत्सु गूढं तद्ब्रह्मा वेदते ब्रह्मयोनिम् ।
ये पूर्वं देवा ऋषयश्च तद्विदुस्ते तन्मया अमृता वै बभूवुः ॥६॥

ईश्वरस्य वेदवेदान्तगूढत्वं सर्वदेवर्षिभिरात्मतया वेद्यत्वं स्वज्ञानान्मोक्षं चाह—तद्वेदेति । यद्विश्वमधितिष्ठति यद्गुणान् विनियोजयेत् तत् प्रकृतमीश्वरतत्त्वं वेदगुह्योपनिषत्सु वेदगतकर्मभागे यज्ञरूपत्वेन तदपेक्षया गुह्ये सगुणविद्याया-मुपास्यत्वेन निर्गुणप्रकाशकोपनिषद्भागे ज्ञेयत्वेन च एवं वेदगुह्योपनिषत्सु गूढम् । यद्वा—वेदश्चासौ गुह्यश्चेति वेदगुह्यः तदपेक्षया गुह्योपनिषत्सु शक्तितात्पर्याभ्यां प्रमेयत्वेन यत् संवृतम् । ब्रह्म वेदस्तद्योनिं ब्रह्मयोनिं तद्ब्रह्मा हिरण्यगर्भो वेदते स्वात्मतया जानाति । पूर्वं पूर्वकाले ये यथोक्तसाधनसंपन्ना देवा अग्न्यादयः ऋषयश्च वामदेवादयः तत् तच्छब्दार्थं स्वमात्रतया विदुः तद्वेदनसमकालं ते तन्मयाः तद्भावारूढाः सन्तोऽमृता वै विदेहमुक्ता एव बभूवुः "ब्रह्मैव सन् ब्रह्माप्येति" इति श्रुतेः । वैशब्दः एवं शास्त्रन्यायानुभव-प्रसिद्धिद्योतकः ॥ ६ ॥

जीवयाथात्म्यम्

गुणान्वयो यः फलकर्मकर्ता कृतस्य तस्यैव स चोपभोक्ता ।
स विश्वरूपस्त्रिगुणस्त्रिवर्त्मा [2]प्राणाधिपः संचरति स्वकर्मभिः ॥

[1] तद्वेद—क.  [2] विश्वाधि—अ, अ १, अ २,

अङ्गुष्ठमात्रो रवितुल्यरूपः संकल्पाहंकारसमन्वितो यः ।
बुद्धेर्गुणेनात्मगुणेन चैव आराग्रमात्रो ह्यवरोऽपि दृष्टः ॥ ८ ॥
वालाग्रशतभागस्य शतधा कल्पितस्य च ।
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते ॥ ९ ॥
नैव स्त्री न पुमानेषो नैव चायं नपुंसकः ।
यद्यच्छरीरमादत्ते तेन तेन स युज्यते ॥ १० ॥

तत्पदार्थयाथात्म्यं प्रतिपाद्य त्वंपदार्थयत्तां प्रकटयितुमुत्तरे केचिन्मन्त्राः प्रस्तूयन्ते । तत्रादौ जीवस्य कर्तृत्वादिसंसृतिरुपाधिकृतेत्याह—गुणान्वय इति । सत्वादिगुणा एवान्वयो यस्य स गुणान्वयः, किंचिद्रज उपसर्जनसत्वगुणावष्टम्भतो मुक्तिसाधनश्रवणादिकर्म करोति, ईषत्सत्वोपसर्जनरजोगुणप्रधानः सन् स्वर्गादिफलसाधनं कर्म करोति, ईषद्रजउपसर्जनतमोगुणप्रधानः सन् नरकादिसाधनं कर्म करोति, एवं सत्वादिगुणपरवशः सन् फलवत्कर्मकर्ता स्वकृतस्य तस्यैव कर्मणः फलस्य स एव उपभोक्ता च । यो गुणपरवशो भूत्वा फलवत्कर्माण्युपचिनोति स स्वकृतकर्मभिः विश्वरूपो नानारूपो भवति, यस्य गुणाः कामक्रोधलोभाख्याः त्रयः सः त्रिगुणः देवपितृयाणतिर्यग्वर्त्मानि यस्य सः त्रिवर्त्मा पञ्चवृत्तिमत्प्राणाधिपः करणजाताधिपतिश्च कार्यकरणस्वामी सन् सप्तदशात्मकलिङ्गशरीरमात्मसमानकृत्य सत्वादिकामादिगुणपरवशो भूत्वा शुभाशुभकर्माणि कृत्वा तत्फलपाशवेष्टितः सन् सागरमध्यपतितशुष्कालाबुवत् संसारदुःखमहोदधौ संचरति संचरते । परस्मैपदं छान्दसम् ॥ ७ ॥ जीव एवात्मा, अस्य कर्तृत्वादिः औपाधिकः, अतोऽस्य ज्ञाताज्ञातसाक्षित्वमखण्डैकरसत्वं चाह—अङ्गुष्ठमात्र इति । स्वाङ्गुष्ठपरिमितहृदयान्तर्वर्त्यव्याकृताकाशासनत्वात् अङ्गुष्ठमात्रः न स्वेन रूपेणास्याङ्गुष्ठमात्रत्वं तस्य विभुत्वात् । रवितुल्यरूपः स्वयंप्रकाशत्वात्, "अत्रायं पुरुषः स्वयंज्योतिः" इति श्रुतेः । मानसोपाधित्वात् अहंकारोपाधिकत्वाच्च संकल्पाहंकारसमन्वितो यः रवितुल्य-

रूपश्च स हि बुद्धेः लिङ्गशरीरस्य गुणेन परिच्छेदभेदादिना सच्चिदानन्दात्म-गुणेन चैवाराग्रमात्रो न स्वतः, आरा प्रतोदः तदुपरि प्रोतलोहाग्रस्य मात्रेव मात्रा परिमितिः यस्य सोऽयमित्यर्थः । वस्तुतोऽयं स्वेन रूपेण दृष्टः नान्येन दृष्टः प्रकाशितः कारणोपाध्यपेक्षया अयं अवरः कार्योपाधित्वात् ॥ ८ ॥ जीवस्य परिच्छित्तिः औपाधिकी, स्वतोऽयमपरिच्छिन्न इत्याह—वालाग्रेति । वालाग्रस्य यः शततमो भागः तस्यापि पुनः शतधा कल्पितस्य च यो भागः स यथा सूक्ष्मः तद्वत् जीवोऽतिसूक्ष्मः उपाध्यवच्छिन्नरूपेण सूक्ष्मो विज्ञेयः । स च आनन्त्याय कल्पते । चकारोऽवधारणे । स्वातिरिक्तोपाध्यसंभवप्रबोधतोऽयं ब्रह्ममात्रमवशिष्यत इत्यर्थः ॥ ९ ॥ जीवस्य लिङ्गशरीरोपाधिकत्वं तदतीतत्वं चोक्त्वा इदानीं स्वतः स्थूलदेहवैलक्षण्यं स्वाविद्यया स्थूलदेहतद्धर्मभाक्त्वं चाह—नैवेति । जीवस्य चिन्मात्ररूपत्वात् अयमेव जीवो नैव स्त्री पुमान् नपुंसको वा भवितुमर्हति । किं तु स्वाज्ञानपुरस्सरं मिथ्याऽभिमानात् यद्यत् स्थूलशरीरमादत्ते स्वीकुरुते तेन तेन स्त्र्यादिरूपेण तद्धर्मकृशत्वादिरूपेण च स विज्ञानात्मा युज्यते संरज्यते स्त्री पुमान्नपुंसको वा अहं जातो मृतः कृशः स्थूलः इत्यादिमिथ्याऽभिमानतः संसरतीत्यर्थः । चशब्देन निरुपाधिकचिन्मात्रता द्योत्यते ॥ १० ॥

जीवसंसारमूलम्

संकल्पनस्पर्शनदृष्टिहोमैर्ग्रासांबुवृष्ट्या चात्म[1]विवृद्धिजन्म ।
कर्मानुगान्यनुक्रमेण देही स्थानेषु रूपाण्यभिसंप्रपद्यते ॥ ११ ॥
स्थूलानि सूक्ष्माणि बहूनि चैव रूपाणि देही स्वगुणैर्वृणोति ।
क्रियागुणैरात्मगुणैश्च तेषां संयोगहेतुरवरोऽपि दृष्टः ॥ १२ ॥

स्वस्योपाधिपरिग्रहे कर्तृत्वादिसंसृतिधर्मभाक्त्वे च किं मूलमित्यत आह—संकल्पनेति । एवमेव भवितव्यं इति मनसः संकल्पनेन स्पर्शनं त्वगिन्द्रिय-

[1] विवृद्धजन्म—उ, मु.

व्यापार: गङ्गोदकचण्डालादिस्पर्शनं पुण्यपापहेतु: तेन स्पर्शनेन दृष्टि: चक्षुर्व्यापार: सत्पुरुषपतितदर्शनं पुण्यपापहेतु: तेन दर्शनेन होमो हस्तव्यापार: अग्निहोत्राभिचारादिहोम: पुण्यपापहेतु: तेन होमेन, इतरेन्द्रियव्यापाराणामुपलक्षणमेतत् । एतै: सङ्कल्पनस्पर्शनदृष्टिहोमै: ग्रासाम्बुवृष्ट्या ग्रासवृष्ट्या अम्बुवृष्ट्या च, ग्रासोऽन्नं वृष्टिरतिदानं, देशकालपात्रेष्वन्यादरेणान्नाम्बुनोर्दानमतिदानं पुण्यहेतु:, तद्विपरीतेष्वतिदानं पापहेतु: । अथवा योग्यायोग्यपात्रेषु ग्रासाम्बुवृष्टिदानं पुण्यपापहेतु: । एवं ग्रासाम्बुवृष्ट्या चात्मविवृद्धिजन्म एवमेतेषां कर्तुर्विवृद्धिजन्म विवृद्धिश्च जन्म च विवृद्धिजन्म ब्रह्मादिस्तम्बपर्यन्तयोनिषु विवृद्धिजन्म च विवृद्ध्यादीतरभावविकाराश्च भवन्तीति विवृद्धिरित्युपलक्षणम् । इममेवार्थं स्पष्टयति—कर्मानुगानीति । पुण्यकर्मानुसारीणि हिरण्यगर्भदेवताशरीराणि पापानुसारीणि तिर्यग्रूपाणि समप्रधानपुण्यपापानुसारीणि मनुष्यशरीराणि अनुक्रमेण देही लिङ्गशरीराभिमानिक: आत्मा आध्यात्मिकादिस्थानेषु ब्रह्मादिस्तम्बान्तरूपाणि अभिसंप्रपद्यते ॥ ११ ॥ संसारभजनप्रकारमाह—स्थूलानीति । पार्थिवत्वेन स्थूलशरीराणि भूर्लोकवर्तीनि, तत: सूक्ष्माणि अम्मयानि शरीराणि भुवर्लोकपरिवर्तीनि, ततोऽपि सूक्ष्माणि शरीराणि स्वर्लोकवर्तीनि, ततोऽपि सूक्ष्माणि शरीराणि वायव्यानि महर्लोकवर्तीनि, ततोऽपि सूक्ष्माणि नभोमयानि शरीराणि तपस्सत्यलोकवर्तीनि । सर्वशरीरारम्भे सर्वभूतान्यारम्भकतया वर्तन्ते, यत एवमत: तत्तल्लोकवर्तितत्तच्छरीरारम्भे तत्तद्भूतप्राधान्यं द्रष्टव्यम् । यद्वा—हस्त्यादिशरीराणि स्थूलानि, मशकादिशरीराणि सूक्ष्माणि, एवं बहूनि अनेकानि शरीराणि देही विज्ञानात्मा स्वात्मसत्त्वादिगुणै: तदवच्छिन्नसत्तास्फुरणादिभिर्वा वृणोति संभजते श्रौतस्मार्तविहितक्रियाऽपूर्वगुणैरात्मनो लिङ्गशरीरस्य गुणैर्विहितप्रतिषिद्धोपासनादिभिश्च, वृणोतीति पूर्वेणान्वय:, "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" इति श्रुते: । तेषां कार्यकरणतद्धर्माणां संयोगहेतु: भोगायतनभोक्तृभोगोपकरणादिभावनान्वयस्य हेतु: निमित्तं पूर्वप्रज्ञा चेति ॥ १२ ॥

जीवशैवयज्ञानात् संसारमोक्ष:

अनाद्यनन्तं कलिलस्य मध्ये विश्वस्य स्रष्टारं तमनेकरूपम् ।
विश्वस्यैकं परिवेष्टितारं ज्ञात्वा देवं मुच्यते सर्वपाशै: ॥ १३ ॥

भावग्राह्यमनीडाख्यं भावाभावकरं शिवम् ।
कलासर्गकरं देवं ये विदुस्ते जहुस्तनुम् ॥ १४ ॥

त्वंपदार्थभूतस्य संसारगतिमुक्त्वा अथेदानीं स्वारोपितहेयांशत्यागपूर्वकं तत्पदार्थैक्यज्ञानात् मोक्षसिद्धिमाह—अनादीति । **अनाद्यनन्तं** आदिमध्यान्तविकलं **कलिलस्य** मलवत्संसारस्य **मध्ये** तदसङ्गसाक्षित्वेन स्थितं **विश्वस्य स्रष्टारं तमनेकरूपं** त्रिकोणत्वाद्यनेकायःपिण्डानुगतवह्निवत् ब्रह्मादिपिपीलिकान्तेषु जलचन्द्रवत् अनुप्रविश्य तत्तद्रूपेणावभासमानम् । **विश्वस्यैकं परिवेष्टितारं** इत्युक्तार्थम् ॥ १३ ॥ परमेश्वरस्य सर्वहेतुत्वं तद्याथात्म्यज्ञानान्मोक्षसिद्धिं चाह—भावेति । **भावग्राह्यं** शुद्धान्तःकरणग्राह्यं नीडं शरीरं तद्रहितं **अनीडाख्यं** अशरीरं इत्याद्युपनिषत्व्यायमानम । यद्वा—नीडं स्थानं आख्याऽभिधानं अस्य ते नीडाख्ये न विद्येते इत्यनीडाख्यम् । स्वातिरिक्तविश्वभावाभावयोः सृष्टिप्रळययोः आरोपापवादयोः कलनां करोतीति **भावाभावकरं शिवं** तुर्यानन्दरूपत्वात् । कलया स्वमायाशक्त्या समस्तभूतसर्गकरं, यद्वा प्राणादिनामान्त**कलासर्गकरं**, चतुष्षष्टिकलानां सृष्टिकरमिति वा, **देवं** नित्यानुभवैकरसं **ये** यथोक्तसाधनसंपन्नाः ब्रह्माहमस्मीति **विदुस्ते तनुं** प्रकृतिप्राकृतरूपां **जहुः** त्यजन्ति प्रकृतिप्राकृतकलनापह्नवसिद्धब्रह्मैव भवन्तीत्यर्थः ॥ १४ ॥

इति पञ्चमोऽध्यायः

# षष्ठोऽध्यायः

ईश्वरादन्यस्य कालादेरकारणत्वम्

स्वभावमेके कवयो वदन्ति कालं तथाऽन्ये परिमुह्यमानाः ।
देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम् ॥ १ ॥

येनावृतं नित्यमिदं हि सर्वं ज्ञः कालकालो गुणी सर्वविद्यः।
तेनेशितं कर्म विवर्तते ह पृथ्व्याप्यतेजोऽनिलखानि चिन्त्यम् ॥२॥

परमेश्वरस्य सर्वहेतुत्वं सर्वसमत्वं सम्यज्ज्ञानैकलभ्यत्वं इत्यादिबह्वर्थप्रकटनार्थं षष्ठाध्याय आरभ्यते। प्रथमाध्याये कालादिगतजगत्कारणत्वं निरस्य परमेश्वरस्यैव जगत्कारणत्वं समर्थितम्। इदानीं तु कालादीनां स्वाज्ञविकल्पितत्वमाह—स्वभावमिति। एके कवयः संसारचक्रकारणं पदार्थानां स्वभावमेव वदन्ति। कालं कारणं इति अन्ये कालविदः। तत्र स्वभावग्रहणं वेदबाह्यासलौकिकविशिष्टोपलक्षणार्थम्। कालमिति वैदिकपक्षमवलम्ब्यैव, तस्येश्वरस्वरूपत्वात्। तद्विपरीतकालग्रहणं परमार्थतभ्रमोपलक्षणार्थम्। एवं केचन परिमुह्यमानाः तेषां परमार्थपक्षाज्ञत्वात्। तुशब्दः एतान् पक्षान् व्यावर्तयति। येनेदं भ्राम्यते ब्रह्मचक्रं तस्यायमेव देवस्य महिमा। परमार्थातिरिक्तनानामतानि स्वाज्ञानविकल्पितान्येवेत्यर्थः ॥ १ ॥ सर्वज्ञत्वादिकं ईश्वरस्येत्याह—येनेति। येन स्वाविद्याऽऽरोपाधिकरणेनेश्वरेण इदं परिदृश्यमानं जगत् सर्वमावृतं नित्यं नियमेन महाप्रलयादावैक्येन स्थित्यवस्थायां तादात्म्येनावृतम्। स कीदृशः? ज्ञः सर्वज्ञत्वात्।

कालः सृजति भूतानि कालः संहरति प्रजाः।
सर्वे कालस्य वशगा न कालः कस्य चिद्वशः॥

इति स्मृतिसिद्धकालस्य महिमा यः स परमेश्वराधीन एवेत्याह—कालकाल इति। कालारोपापवादाधिकरणत्वात्। अपहतपाप्मत्वादयो गुणा अस्येति गुणी। अहमेवेदं सर्वं इति स्वाभेदेन सर्वं जानातीति सर्ववित् "यः सर्वज्ञः सर्ववित्" इति श्रुतेः, योऽनन्तसुखानुभूतिः स हि सर्वविदित्यर्थः। अस्य सर्वा विद्याऽस्तीति वा सर्वविद्यः। तेन ईश्वरेण हि सर्वं ईशितं नियमितं क्रियत इति कर्म विवर्तते विकल्प्यते। ह प्रसिद्धौ। विवर्तक्रममाह—पृथ्वीति। पाठक्रमादर्थक्रमस्य बलीयस्त्वात् स एवेहाश्रयणीयः। "आत्मन आकाशः संभूतः" इत्यादिश्रुत्यनुरोधेन आकाशादिक्रमं विवर्तते ततो भौतिकं सर्वम्। चिन्त्यं लोके कारणत्वेन

प्रसिद्धानां वादिमतिविकल्पितानां परमेश्वरविवर्तत्वमेव न तु स्वातन्त्र्यं इति परीक्षकैः चिन्त्यम् ॥ २ ॥

सम्यज्ज्ञानसाधनम्

तत् कर्म कृत्वा [1]विनिवृत्य भूयस्तत्त्वस्य तत्त्वेन समेत्य योगम् ।
एकेन द्वाभ्यां त्रिभिरष्टभिर्वा कालेन चैवात्मगुणैश्च सूक्ष्मैः ॥३॥
आरभ्य कर्माणि गुणान्वितानि भावांश्च सर्वान् विनियोजयेद्यः ।
तेषामभावे कृतकर्मनाशः कर्मक्षये याति स तत्त्वतोऽन्यः ॥ ४ ॥
आदिः स संयोगनिमित्तहेतुः परस्त्रिकालादकलोऽपि दृष्टः ।
तं विश्वरूपं भवभूतमीड्यं देवं स्वचित्तस्थमुपास्य पूर्वम् ॥ ५ ॥

सम्यज्ज्ञानसाधनसर्वस्वमाह—तदिति । मनोवाक्कायैः यद्यत् क्रियते तत् सर्वं कर्म भगवदाराधनधिया कृत्वा पुनः कर्मतत्फलेभ्यो विनिवृत्य सर्वकर्मसंन्यासं कृत्वा तत्त्वस्य त्वंपदलक्ष्यस्य तत्त्वेन तत्पदलक्ष्येण योगं सम्यगैक्यमेत्य । तत्र कानि साधनानि इत्यत्राह—एकेनेति । एकेन गुरूपसदनेन द्वाभ्यां देशिकेशभक्तिभ्यां त्रिभिः श्रवणमनननिदिध्यासनैः अष्टभिः यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिभिः । वाशब्दश्चार्थे । अनेकजन्मपरिपक्वकालेन । चकारः चरमजन्मार्थः । दयाक्षान्तिशौचमङ्गलास्पृहाऽकार्पण्यानायासानसूयाऽऽख्यैः आत्मगुणैः सूक्ष्मैः अनेकजन्मसु ज्ञानार्थमनुष्ठितपुण्यसंस्कारैः चत्वारिंशद्भिः । एतैः साधनैः स्वात्मपरमात्मैक्यलक्षणं ज्ञात्वा मुक्तो भवतीति भावः ॥३॥ पूर्वमन्त्रोक्तमेवार्थं स्पष्टयति—आरभ्येति । नित्यनैमित्तिककर्माणि ईश्वराराधनगुणान्वितानि आरभ्य कृत्वा तेन परिपक्वान्तरः सन् सर्वभावान्वितपदार्थान् विनियोजयेदिति यतः समाधिप्रकारकथनमिदं,—"वाचाऽऽरम्भणं विकारो नामधेयं" इति श्रुत्यनुरोधेन कार्यसामान्यं कारणमात्रतया प्रविलाप्य कारणी-

[1] विनिवर्त्य—अ, अ १, अ २, क, मु.

भूतमायोपाधिमपि निष्प्रतियोगिकचिन्मात्रतया बुद्ध्वा य इत्थं योजयेत् स यतिः तन्मात्रपदवीमियादित्यर्थः । एवं साक्षात्कृतब्रह्मतत्त्वदृष्ट्या ये स्वाज्ञदशायामनुभूताः प्रकृतिप्राकृतविकाराः तेषामभावे दाहे सति आगाम्यादिकर्मत्रयनाशो भवति, कर्मत्रयस्य ब्रह्ममात्रप्रबोधसमकालं अकर्मब्रह्मपदवीं गतत्वात् । एवं कर्मक्षये स्वातिरिक्तकर्मत्रयापह्नवे सति तदानीं स विद्वान् मुनिः कर्मत्रयतत्कार्यापह्नवमिदं यद्ब्रह्ममात्रं तत् स्वावशेषतया याति विदेहमुक्तो भवतीत्यर्थः । य इत्थंभूतस्तत्त्ववित् तत्त्वतः स्वाज्ञदृष्टिप्रसक्तस्वातिरिक्तप्रपञ्चमोहे सत्यसति तदन्यः, कालत्रयेऽपि ब्रह्मवित् ब्रह्मैवेत्यर्थः ॥ ४ ॥ परमेश्वरप्रसादादेव कैवल्यहेतुसम्यज्ज्ञानं जायत इत्याह—आदिरिति । सर्वेषां आदिः अधिष्ठानत्वात् यः सर्वाधिष्ठाता स प्रकृतः परमेश्वरः जीवस्य परमात्मना सम्यग्योगः संयोगः तस्य निमित्तानां एकेन द्वाभ्यामित्यादिनोक्तानां हेतुः कारणभूतः । यद्वा—शरीरसंयोगनिमित्तानां पुण्यपापानां संकल्पनस्पर्शनदृष्टिहोमैरित्यादिनोक्तानाम । परः व्यतिरिक्तः । कस्मात ? अतीतानागतवर्तमानरूपात् त्रिकालात् परः कालाद्यनवच्छिन्न इत्यर्थः । यस्य कला अवयवाः प्रश्नोपनिषत्पठितप्राणादिनामान्ता वा न सन्ति सोऽयं अकलः । अपिशब्दः पूर्वसमुच्चयार्थः । ईशाद्यष्टोत्तरशतोपनिषत्सु सम्यज्ज्ञानिषु दृष्टः । श्रुत्याचार्यवचनतया यः प्रसिद्धः तं एवंभूतं विश्वरूपं उपासकचित्तानुरोधेन विचित्रविश्वरूपधरत्वात्, भवन्त्यस्मिन् सर्वमिति भवः स चासौ भूतः अवितथस्वरूपश्चेति तं भवभूतं सर्वेषां ईड्यं देवं स्वप्रकाशं स्वचित्तोपलक्षितलिङ्गशरीरे तिष्ठतीति स्वचित्तस्थं पूर्वमेव प्रत्यक्त्वेनावस्थितं अहं ब्रह्मास्मीत्युपास्य तत्प्रसादलब्धसम्यज्ज्ञानसमकालं मुक्तो भवति । अयं मन्त्रः सगुणवस्तुपरः इति केचन वदन्ति । तद्रीत्या सगुणब्रह्मोपासनात सम्यज्ज्ञानाधिकारी भवतीत्यर्थः ॥ ५ ॥

परमेश्वरादेव स्वज्ञानमोक्षयोः प्राप्तिः

स वृक्षकालाकृतिभिः परोऽन्यो यस्मात् प्रपञ्चः परिवर्ततेऽयम् ।
धर्मावहं पापनुदं भगेशं ज्ञात्वाऽऽत्मस्थममृतं विश्वधाम ॥ ६ ॥

तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् ।
पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥ ७ ॥
न तस्य कार्यं करणं च विद्यते न तत्समश्चाभ्यधिकश्च दृश्यते ।
पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ॥
न तस्य कश्चित् पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् ।
स कारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः ॥
यस्तन्तुनाभ इव तन्तुभिः प्रधानजैः स्वभावतः ।
देव एकः [1]स्वमावृणोति स नो दधातु ब्रह्माव्ययम् ॥ १० ॥
एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ ११ ॥
एको वशी निष्क्रियाणां बहूनामेकं [2]रूपं बहुधा यः करोति ।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥
नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् ।
तत् कारणं सांख्ययोगाधिगम्यं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥

परमेश्वरस्य सर्वाधिष्ठातृत्वं स्वाम्युपायप्रापकत्वं स्वयाथात्म्यज्ञानान्मोक्षसिद्धिं चाह—स इति । स वृक्षकालाकृतिभिः इति पञ्चम्यर्थे तृतीया, सोऽयमीश्वरः, वृक्षशब्देन संसार उच्यते, तत्रानुस्यूतं कालतत्त्वं काल उच्यते, तस्मादा समन्तात् कृतिराकृतिः महदादिकार्यरूपेण कृतिः प्रकृतिः स्वाधिष्ठातृसहिता चेदाकृतिः मूलप्रकृतिरुच्यते, तस्याश्च परोऽन्यः तेभ्यः परः विलक्षणः स्वयमुत्कृष्टश्चेति वाऽर्थः । यस्मात् ईश्वरात् अयं प्रपञ्चः परिवर्तते तं धर्मावहं तत्तदाश्रमरूपेण तत्तद्धर्मवहनात् स्वेषां स्वप्रापकधर्मप्रदातारमित्यर्थः । तेनैव

[1] समा—अ, अ १, अ २, क
[2] बीजं ब—उ, मु.

पापनुदं पापक्षपयितृ यन्नाम, भगस्य षड्विधैश्वर्यस्य ईशं आत्मन्यन्तःकरणे प्रत्यगभिन्नब्रह्मरूपेण तद्वृत्तिसहस्रभावाभावप्रकाशकतया तिष्ठतीति आत्मस्थं अमृतं अमरणधर्माणं विश्वधाम विश्वाधिष्ठानं, वस्तुतोऽधिष्ठेयसापेक्षाधिष्ठानगत-विशेषापायान्निरधिष्ठानं निष्प्रतियोगिकत्वमात्रतया ज्ञात्वा, तत्समकालं तन्मात्रतया अवशिष्यत इति वाक्यशेषः ॥ ६ ॥ सर्वेशितृत्वं तज्ज्ञानात् कृतकृत्यतामाह—तमिति । तं प्रकृतं परमात्मानं जगद्धेतूनां ब्रह्मादीश्वराणामपि परमं उत्कृष्टं महेश्वरं देवतानां इन्द्रादीनामपि देवत्वप्रापकत्वेन परमं उत्कृष्टं दैवतं च व्यष्टिसमष्टिकरणाधिपतीनामपि परमं पतिं स्वामिनं प्राकृतेभ्यः परस्तात् परमं देवं भुवनेशं वेदेतिहासादिभिः ईड्यं विदाम विद्मः । लडर्थे लोट् । एव-मीश्वरमात्मतया ज्ञात्वा तत्पदवीं प्राप्य वर्तामहे । ईश्वरापत्तिर्हि मुक्ति-रित्यर्थः ॥ ७ ॥ परमार्थत ईश्वरस्य कार्यकारणशून्यत्वमाह—न तस्येति । तस्य परमात्मनो व्यष्टिसमष्ट्यात्मककार्यं शरीरं बाह्यान्तःकरणजातं च न विद्यते अद्वितीयसन्मात्रत्वात् । तेन समः तत्समश्च तस्मात् अभ्यधिकश्च न दृश्यते वेदेष्वित्यर्थः । कार्यकरणानि पुराणादिषु बहुशः श्रूयन्त इत्यत आह—परेति । परा सर्वोत्कृष्टा अस्य शक्तिः प्रकृतिः, देवात्मशक्तिमित्युक्तत्वात्, सेयं विविधा अनन्तकार्यकरणतया श्रूयते सर्वत्र । सेयं परा शक्तिः न तत्स्वाभाविकी इत्यत आह—स्वाभाविकीति । निर्विशेषस्य तदभावेऽपि सविशेषेश्वरस्य स्वाभेदेन कीर्त्यत इति स्वाभाविकी सर्वज्ञेयविषयत्वेन सर्वज्ञत्वादिलक्षणा अस्य स्वरूप-त्वात् स्वाभाविकी नान्यायत्ता स्वसंनिधिमात्रेण प्रकृतिप्राकृतं सर्वं वशीकृत्य नियन्त्राऽधिष्ठितनियमनात् बलक्रिया च स्वभावसिद्धा ना (?) नन्यत्वात् ॥ ८ ॥ ईश्वरस्य अनन्यपतित्वं सर्वकारणताऽऽदि स्यादित्याह—न तस्येति । तस्य परमेश्वरस्य स्वातिरेकेण कश्चित् स्वामी पतिः न ह्यस्ति लोके स्वस्यैव सर्व-स्वामित्वात् । न च स्वातिरेकेण ईशिता नियन्ताऽप्यस्ति । येनासावनुमीयते तत् नैव च तस्य लिङ्गं अस्ति । कार्यदर्शनादेव हि कारणमनुमीयते । न हि कारणं द्रष्टुं शक्यते तस्यामूर्तत्वात् । अतः सर्वज्ञं ब्रह्म जगत्कारणं इत्यस्यार्थस्य वेदैकगम्यत्वात् नानुमानगम्यताऽस्तीत्यर्थः । यद्वा—कार्यसामान्यस्य अस्मिन्

विलयनात् तन्निरूपितकारणताऽपि नास्ति। स एवंभूतः परमेश्वर एव स्वमायया सर्वकारणं, करणाधिपो जीवः करणग्रामाधिकरणत्वात् तस्यापि कारणोपाधिरीश्वरः पतिः स्वामी ! यद्वा—करणाधिपश्चासावधिपतिश्चेति करणाधिपाधिपः स्वस्यैव जीवरूपेणापि स्थितत्वात् "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुतेः। यथा विराट्कारणहिरण्यगर्भस्यापि कारणान्तरमधिपत्यन्तरमपि विद्यते तथा तस्यापि स्यादित्यत आह—न चेति। अस्येशितुः स्वातिरिक्तसर्वकारणत्वेन न चास्य कश्चिज्जनिता न चाधिपोऽस्ति स्वस्यैव सर्वकारणतया स्वामित्वात्। यस्मादेवं तस्मात् अयमेव मुमुक्षुभिः आत्मत्वेन ज्ञातव्यः ॥ ९ ॥ इदानीं मन्त्रद्वर्गाभिप्रेतार्थप्रार्थनामाह—य इति। यः परमेश्वरः तन्तुनाभ इव। कथं? यथोर्णनाभिः स्वशरीरप्रभवतन्तुभिः आत्मानमावृणोति तद्वत् प्रधानजैः मायातत्कार्यनामरूपकर्मभिः स्वतन्त्रोऽपि स्वेच्छया सर्वकल्पनाधिकरणत्वेन स्वात्मानं स्वयमेव आवृणोति। स परमेश्वरो नोऽस्माकं यथोक्ताधिकारिणां दधातु ददातु धारयतु वा। किं तत्? ब्रह्म तदव्ययं चेति ब्रह्माव्ययम्। स्वाज्ञानमुन्मूलयन् स्वाप्तिहेतुः स्वज्ञानं विदधात्विति भावः ॥१०॥ परमेश्वरस्य स्वाज्ञादिदृष्ट्यनुरोधेन सर्वभूतगूढत्वं व्यापकत्वं सार्वात्म्यं नियन्तृत्वं निर्गुणैकत्वं चाह—एक इति। एकः अद्वितीयः। व्योमवदात्मन एकत्वे जडत्वं स्यादित्यत आह—देव इति। देदीप्यमानरूपत्वात्। एवं किं न भातीत्यत आह—सर्वभूतेषु गूढ इति। सर्वभूतेषु आत्मैकत्वेन विदुषां भासमानोऽप्यविदुषां गूढवन्न भासत इत्यर्थः। व्यष्टिभूतान्तर्गूढत्वेन परिच्छिन्नता स्यादित्यत आह—सर्वव्यापीति। व्योमवद्व्यापकत्वमस्योपपद्यते। सर्वव्यापकत्वे व्योमवदचेतनत्वं स्यादित्यत आह—सर्वभूतान्तरात्मेति। सर्वभूतान्तर्विलसितप्रत्यगात्मनश्चेतनत्वे सति व्यापकत्वात्।* सर्वकर्मफलदातेश्वरः तद्भिन्न इत्यत्राह—कर्माध्यक्ष इति। कूटस्थस्यैव मूलाबीजांशयोगतः ईश्वरत्वेन सर्वप्राणिभावानुरोधेन तत्कृतकर्मणः फलदातृत्वात्। सूत्रात्मा तद्भिन्न इत्यत आह—सर्वभूताधिवास इति। ईश्वरस्यैव मूलासूक्ष्मांशयोगतः सर्वभूतेषु सूत्रात्मना अधिवसन् सर्वभूतनियन्ता भवतीत्यर्थः। सर्वभूतनियन्तृत्वे विकारित्वं स्यादित्यत आह—साक्षीति।

साक्षिणः साक्ष्यगतविकारास्पृष्टत्वेन निर्विकारत्वात् । साक्ष्यभासकत्वव्यपदेशः स्यादित्यत्राह—चेतेति । स्वभास्यसाक्ष्यताऽपाये तन्निरूपितसाक्षित्वभासकता-वैरल्यात् चैतन्यमात्रो भवतीत्यर्थः । विशेषे सति चैतन्यमात्रता कुत इत्यत आह—केवल इति । विशेषसामान्यशून्य इत्यर्थः । सत्त्वादित्रिगुणे सति केवलता कुत इत्यत आह—निर्गुणश्चेति । त्रिगुणतद्धेतुगुणसाम्याभावात् केवलत्वमुपपद्यत इत्यर्थः । चशब्दो निष्प्रतियोगिकनिर्गुणत्वख्यापक इत्यर्थः ॥ ११ ॥

ईश्वरभावमापन्नानां ईश्वरसाक्षात्कारजन्यसुखं नेतरेषां भवतीत्याह—एक इति । एकोऽद्वितीयः सर्वमस्य वशे वर्तत इति वशी बहूनां निष्क्रियाणां अचेतनानां नामरूपकर्मणां आरोपापवादाधिकरणं एकं सत्यज्ञानसुखात्मकं अखण्डैकरसात्मकं आत्मानं बहुधा मायामहदादिबहुप्रकारं यःकरोति, "तदात्मानं स्वयमकुरुत" इति श्रुतेः । तं एवंभूतं परमेश्वरं स्वविकल्पितानात्मापह्नवसिद्धमात्म-मात्रतया तिष्ठतीति आत्मस्थं स्वावशेषतया येऽनुपश्यन्ति धीराः ब्रह्मविद्व-रीयांसः तेषां सुखं शाश्वतं नेतरेषां सिध्यति स्वाज्ञानावृतदृष्टित्वात् ॥ १२ ॥

परमेश्वरस्य नित्यचेतनत्वं कर्माध्यक्षत्वं स्वयाथात्म्यज्ञानात् मोक्षसिद्धिं चाह—नित्य इति । लोके नित्यत्वेन प्रसिद्धानां आकाशादीनां नित्यत्वहेतुः पारमार्थिक-नित्यः लोके चेतनत्वेन प्रतिपन्नानां प्रमात्रादीनां अयं पारमार्थिकचेतनः । स्वेतरनित्यत्वचेतनत्वयोः मायामात्रत्वं "अतोऽन्यदार्तं" इति श्रुतेः । ब्रह्मादि-स्तम्बान्तजीवानां बहूनां यः स्वयं एक एव सन् ईश्वरः तत्तत्प्राणिसुकृताद्यनु-रोधेन कामान् विदधाति । तत् ब्रह्म जगतः कारणं साङ्ख्यं वेदान्तमहा-तात्पर्यजन्यसम्यज्ज्ञानं ब्रह्ममात्रगोचरं तत्साधनश्रवणादिः योगः ताभ्यां साङ्ख्य-योगाभ्यां अधिगम्यं ज्ञातव्यं ज्ञात्वा देवं इत्याद्युक्तार्थम् ॥ १३ ॥

ईश्वरवेदनमेव संसारतारकम्

न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥ १४ ॥

एको हंसो भुवनस्यास्य मध्ये स एवाग्निः सलिले संनिविष्टः ।
[1]तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥१५॥
स विश्वकृद्विश्वविदात्मयोनिर्ज्ञः कालकालो गुणी सर्वविद्यः ।
प्रधानक्षेत्रज्ञपतिर्गुणेशः संसारमोक्षस्थितिबन्धहेतुः ॥ १६ ॥
स तन्मयो ह्यमृत ईशसंस्थो ज्ञः सर्वगो भुवनस्यास्य गोप्ता ।
य ईशेऽस्य जगतो नित्यमेव नान्यो हेतुर्विद्यत ईशनाय ॥१७॥

ईश्वरस्य आदित्याद्यनवभासकत्वमाह—न तत्रेति । तत्र स्वयंप्रकाशचिद्धातौ सर्वावभासकोऽपि सूर्यो न भाति सूर्यादिः तत्प्रकाशजडीकृतत्वात् । तथा चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयं अस्मद्गोचरः अग्निः । स्वभास्यसत्त्वासत्त्वाभ्यां यो भामात्रतया विजृम्भते प्रत्यक्षादिप्रमाणनैरपेक्ष्येण तमेव भान्तं सूर्यादयः अनुसृत्य भान्तीव भान्ति तस्य भासा सूर्यादिघटान्तं जगत् इदं सर्वं विभाति । यत एवमतो भामात्रः परमात्मेत्यर्थः ॥ १४ ॥ परमेश्वरस्य स्वातिरिक्तकलनाबाधकत्वं तत्पदाप्तिहेतुः ज्ञानमेव तदतिरिक्तोपायो नास्तीत्याह—एक इति । स्वातिरिक्तकलनासर्वस्वं हत्वा स्वमात्रमवशिष्यत इति हंसः परमात्मा एक एव भुवनस्यास्य मध्ये अयमेक एव हंसो नान्योऽतोऽस्ति स एव अहं ब्रह्मास्मीति सम्यज्ज्ञानफलकारूढः स ह्यग्निरिव अग्निः, स यथा काष्ठावृतोऽपि मथनादाविर्भवति एवं स्वयमाविर्भूय स्वावारककाष्ठं भस्मीकरोति तथा स्वाविद्यातत्कार्यावृतः आत्मा अग्निः, उत्तराधरारणिस्थानीयगुरुशिष्यसंवादमथनस्थानीयश्रवणादिजन्यसम्यज्ज्ञानफलकाऽऽरूढः सन् स्वावारकाविद्याद्वयतत्कार्यतूलराशिं भस्मीकृत्य स्वमात्रमवतिष्ठते इत्यग्निः आत्मेत्युच्यते, सोऽयमग्निरन्तःकरणसमुदायसलिले संनिविष्टो यः प्रकृतिप्राकृतापह्नवसिद्धः तं परमात्मानं स्वात्ममात्रतया विदित्वा तद्वेदनसमकालं अतिमृत्युं ब्रह्म एति । स्वातिरिक्तास्तिताभ्रमो हि मृत्युः स यत्रापह्नवं भजति सोऽतिमृत्युः

[1] तमेवं—अ १.

परमात्मेत्यर्थः। इत्थंभूतसम्यज्ज्ञानात् अन्यः पन्था मार्गो न विद्यते अयनाय मोक्षाय॥ १९॥ उक्तार्थमेव पुनर्विशदयति—स विश्वकृदिति। स प्रकृतः परमात्मा मूलाबीजांशयोगतः ईश्वरत्वमवलम्ब्य स्वशक्त्या विश्वं करोतीति विश्वकृत् स्वातिरेकेण विश्वं नेति नेतीति जानातीति विश्वयाथात्म्यवित् आत्मयोनिः स्वे महिम्नि स्वयमेव जातत्वात्। यद्वा—ब्रह्मादिस्तम्बान्तात्मनां योनिः आत्मयोनिः, तत्त्वंपदार्थरूपेण स एव स्थित इति यावत्। ज्ञः चित्स्वरूपः, सर्वोपसंहर्तुः कालस्यापि कालः उपसंहर्तृत्वात्, गुणी मायातत्कार्यगुणी अपहतपाप्मादिगुणवान् वा। सर्वा विद्या अस्येति सर्वविद्यः स्वस्मिन् विज्ञाते सर्वमिदं विज्ञातं भवतीति वा सर्वविद्यः। प्रधानश्चासौ क्षेत्रज्ञश्चेति प्रधानक्षेत्रज्ञः स एव पतिश्चेति प्रधानक्षेत्रज्ञपतिः। यद्वा—प्रधानं क्षेत्रत्वेन जानातीति प्रधानक्षेत्रज्ञः ईश्वरः तस्यापि साक्षी पतिः। गुणेशः सत्त्वादिगुणनियन्तृत्वात्। सम्यज्ज्ञानज्ञाततया संसारमोक्षहेतुः नाशहेतुः अज्ञानेनाज्ञाततया संसारस्थितिलक्षणबन्धहेतुः कारणम्॥ १६॥ स्वे महिम्नि प्रतिष्ठां कर्मादिनिरपेक्ष्येण ईशितृत्वं चाचष्टे—स इति। स प्रकृत ईश्वरः तन्मयो ज्ञाततया अज्ञाततया च बन्धमोक्षहेतुरूपः; स्वार्थे मयट्। हि प्रसिद्धौ। अमृतोऽमरणधर्मा ईशसंस्थः ईश्वरत्वेन सम्यगवस्थितत्वात्। ज्ञः चित् प्रकाशः साक्षितया सर्वं गच्छतीति सर्वगः भुवनस्यास्य दृश्यप्रपञ्चस्य गोप्ता स्वानन्दप्रदतया पालयिता। अस्य जगतो नित्यमेव य ईशे ईष्टे, यथोक्तलक्षणेशादन्यत्र जगत ईशनाय अन्यो हेतुर्न विद्यते। सर्वत्रेशनक्रियायां स एव कर्ता नान्यः कर्ता विद्यत इति यावत्॥ १७॥

मुमुक्षोरीश्वर एव शरणम्

यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै।
तᳪ ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये॥ १८॥

ईश्वरस्य सम्यज्ज्ञानप्रदत्वेन मुमुक्षुरीश्वरशरणो भूयादित्याह—य इति। यः प्रकृतः परमेश्वरः सर्वजीवसमष्टिरूपं ब्रह्माणं, विश्वसर्गस्थित्यन्तकर्तृत्वेन

स्वमायया विदधाति सृष्टवान् यः प्रकृतेशः पूर्वं सर्गादौ स्वेन सृष्टो हिरण्यगर्भः तस्मै वेदांश्च प्रहिणोति प्रददौ । किमर्थं? महाप्रळयविच्छिन्ने संप्रदाये यथोक्ताधिकारिषु वेदार्थसंप्रदायस्थापनाय तस्मै वेदांस्तु ददौ । तं एतमीश्वरं देवं, ह एवार्थे, स्वात्मबुद्धिप्रकाशं अहं ब्रह्मास्मीति स्वपदाप्तिसाधनबुद्धिप्रकाशयितारं मुमुक्षुर्वै शरणमहं प्रपद्ये प्रपन्नो भवेयमित्यर्थः ॥ १८ ॥

सर्वशास्त्रार्थसंग्रहः

निष्कलं निष्क्रियꣳ शान्तं निरवद्यं निरञ्जनम् ।
अमृतस्य परꣳ सेतुं दग्धेन्धनमिवानलम् ॥ १९ ॥
यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः ।
तदा [1]शिवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ २० ॥

कृत्स्नशास्त्रे यावन्तोऽर्थाः प्रकाशिताः तान् सर्वान् मन्त्रद्वयेन संक्षिपति —निष्कळमिति । प्राणादिनामान्तकला यत्प्रबोधसमकालमपह्नवं भजति तदपह्नवसिद्धं हि निष्कळम् । सक्रियस्य निष्कळता कुत इत्यत आह—निष्क्रियमिति । निरवयवस्य क्रियाऽसंभवान्निष्कळत्वं निष्क्रियत्वं च सिद्धमित्यर्थः । अशान्तस्वातिरिक्तदेहादिप्रपञ्चस्य निष्क्रियत्वं दुर्लभमित्यत आह—शान्तमिति । स्वमात्रावगतेः स्वातिरिक्तशान्तिपूर्वकत्वात् निष्क्रियत्वं सिद्धमित्यर्थः । स्वातिरिक्ताभावादेव निरवद्यं स्वावद्यहेतोः शान्तत्वान्निरवद्यं निष्प्रतियोगिकसन्मात्रमित्यर्थः । स्वाज्ञदृष्ट्या स्वातिरिक्तसत्त्वे तत्राञ्जनं स्यादित्यत आह—निरञ्जनमिति । स्वज्ञदृष्ट्या स्वातिरिक्तस्य बाधितत्वात् तत्सत्त्वासत्त्वाभ्यां निरञ्जनमित्यर्थः । मार्त्यस्वाविद्याद्वयतत्कार्यं यत्र विलीयते तदधिकरणं अमृतं तस्यापि परं निरधिकरणं स्वाधेयनिरूपिताधिकरणगतसविशेषसिन्धुसेतुमिव सेतुं स्वातिरिक्ताविद्यापदतत्कार्यजातं स्वतावन्मात्रतया दग्ध्वा अपह्-

[1] देव—उ, मु.

वीकृत्य स्वावशेषधिया मोक्षीभवतीति दग्धेन्धनमिवानलमित्युच्यते ॥ १९ ॥
यदा चर्म वेष्टयिष्यन्ति मानवाः तद्वदाकाशं वेष्टयिष्यन्ति चेत् तदा एवं विशिष्टशास्त्रोपसंहारभूतं पूर्वमन्त्रप्रकाशितं निष्कळमित्यादिविशेषणविशिष्टं षोडशकलाऽपह्नवसिद्धत्वेन शिवं स्वप्रकाशमात्रं निष्प्रतियोगिकस्वमात्रमिति अविज्ञाय स्वातिरिक्तास्तिताप्रभवदुःखस्यान्तो नाशो भविष्यति । यस्मादेवं तस्मात् स्वाज्ञानप्रभवसंसारोऽस्तीति प्रसक्तौ न हि स्वज्ञानमन्तरा तन्निवृत्तिरुपपद्यते । परमार्थदृष्ट्या तु स्वातिरिक्तमस्ति नास्तीति न हि विभ्रमस्यावकाशोऽस्ति, किं तु स्वाज्ञादिदृष्टिप्रसक्त्या स्वातिरिक्तास्तिताभ्रमे सत्यसति स्वयमेव निष्प्रतियोगिकमवशिष्यते । न हि तत्र संशयोऽस्तीत्यर्थः ॥ २० ॥

### ब्रह्मविद्याऽधिकारिनिरूपणम्

तपःप्रभावाद्देवप्रसादाच्च [1]ब्रह्म ह श्वेताश्वतरोऽथ विद्वान् ।
अत्याश्रमिभ्यः परमं पवित्रं प्रोवाच सम्यगृषिसङ्घजुष्टम् ॥ २१ ॥
वेदान्ते परमं गुह्यं पुरा [2]कल्पे प्रचोदितम् ।
नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वै पुनः ॥ २२ ॥
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥
प्रकाशन्ते महात्मन इति ॥ २३ ॥

इत्थं संप्रदायपरंपराऽऽगतब्रह्मविद्याया मोक्षफलपर्यन्तत्वं दर्शयितुं विद्याऽधिकारिणं दर्शयति—तप इति । रूढत्वेन कृच्छ्रचान्द्रायणादिलक्षणस्य तपसः "तप इति तपो नानशनात् परं" इत्यादिश्रुतिसिद्धस्य, स्वेन्द्रियमनसोः

[1] ब्रह्माह—अ १, अ २, क. [2] कल्पप्र—अ, अ १, अ २, क.

एकाग्रलक्षणस्य वा तपसः "मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः" इति स्मरणात्, तत्फलभूतविचारात्मकस्य वा तपसः "तपसा ब्रह्म विजिज्ञासस्व" इति श्रुतिप्रकटितस्य वा प्रभावात् सामर्थ्यादनन्तकोटिजन्मसूपासितस्य देवस्य प्रसादाच्च स्वातिरिक्तकलनापह्नवप्रबोधसमकालं स्वमात्रतया बृंहणात् ब्रह्म इशब्द ऐतिह्यार्थः। श्वेताश्वतरो नाम विद्वान् महर्षिः स्वेन यद्ब्रह्म स्वावशेषतया साक्षात्कृतं तदेव ब्रह्मयाथात्म्यं व्रतिकामिवनिकुटीचकबहूदकहंसाख्याश्रमिणः तानतीत्य परमहंसाश्रमे ये वर्तन्ते ते खल्वत्याश्रमिणः परमहंसपरिव्राजकाः तेभ्यो हि अत्याश्रमिभ्यः यत् पूर्वोक्तं ब्रह्मयाथात्म्यं तदेव परमं निष्प्रतियोगिकनिर्विशेषब्रह्ममात्रगोचरं पवित्रं स्वविद्याद्वयापवित्रशोधकं वसिष्ठागस्त्यवामदेवश्रीशुकोद्दालकवीतहव्यसनकादिमहर्षिसङ्घेन जुष्टं सेवितं ब्रह्ममात्रज्ञानं प्रोवाच, यथा ब्रह्ममात्रं स्वावशेषतया साक्षात्कृतं भवेत् तथा प्रोवाच ॥ २१ ॥ प्रशब्देन गुरोरुपदेशकालं दर्शयति—वेदान्त इति। वेदान्त इति जातावेकवचनम्। ईशावास्यादिमुक्तिकोपनिषदन्ताष्टोत्तरशतोपनिषत्सु परमं परमात्मतत्त्वं परमपुरुषार्थहेतुत्वात् गुह्यं पारमहंस्यं अनधिकारिषु गोपनीयत्वात् पुरा पूर्वस्मिन् कल्पे प्रचोदितं सम्यगनुशासितं, गुरुशिष्यसंप्रदायपरंपरया सम्यगागतमिति वा। कल्पादावीश्वरेण हिरण्यगर्भं प्रति यत् प्रचोदितं उपदिष्टं तदिदं ब्रह्ममात्रविज्ञानं नाप्रशान्ताय स्वातिरिक्तनिरासकब्रह्ममात्रज्ञानसाधनसाधनचतुष्टयसम्पत्तिविकलाय न कदाऽपि दातव्यम्। तत्रापि नापुत्राय अशिष्याय वा न दातव्यम्। प्रशान्तान्तरपुत्राय शिष्याय वा सम्यक् तच्छीलं परीक्ष्य दातव्यम् ॥ २२ ॥ देवतादेशिकभक्त्योर्विद्याप्राप्तावन्तरङ्गसाधनत्वमाह—यस्येति। यस्य मुमुक्षोः देवे परमेश्वरे परा निर्हेतुकी भक्तिः विद्यते यथा देवे तथा गुरावपि निर्हेतुकी भक्तिः यदि विद्यते तदा तस्य मुमुक्षोः गुरुदेवतयोरेकत्वं भावयतः अस्यां उपनिषदि श्वेताश्वतरेण मुनिना येऽर्थाः कथिताः त एव अर्थाः अस्य महात्मनो महानुभावस्य प्रकाशन्ते फलपर्यवसायिनो भवन्ति। यस्मादेवं तस्मात् विद्यार्थिभिः देवतादेशिकविषये निर्हेतुकी भक्तिः कर्तव्या,

परमाद्वैतविज्ञानं कृपया वै ददाति यः ।
सोऽयं गुरुवरः साक्षाच्छिव एव न संशयः ॥

इति स्मृतेः । द्विर्वचनमादरार्थम् । इत्युपनिषच्छब्दो विशिष्टोपनिषत्समाप्त्यर्थौ ॥ २३ ॥

इति षष्ठाध्यायः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
श्वेताश्वतरोपनिषद्व्याख्येयं लिखिता स्फुटम् ।
श्वेताश्वतरोपनिषदो व्याख्याग्रन्थः सहस्रकम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे चतुर्दशसङ्ख्यापूरकं
श्वेताश्वतरोपनिषद्विवरणं सम्पूर्णम् ॥

# नामधेयपदसूची

यत्र पुटसंख्यानन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या

# विशेषपदसूची

यत्र पुटसंख्याऽनन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या

# THE S'AKTA-UPANISHADS

## WITH THE COMMENTARY OF

## SRI UPANISHAD-BRAHMA-YOGIN

EDITED BY

PANDIT A. MAHADEVA SASTRI, B.A.

DIRECTOR, ADYAR LIBRARY, ADYAR, MADRAS

PUBLISHED FOR THE ADYAR LIBRARY

(THEOSOPHICAL SOCIETY)

अष्टोत्तरशतोपनिषत्सु

# शाक्त-उपनिषदः

श्री [redacted]

अड्यार्-पुस्तकालयाध्यक्षेण

अ. महादेवशास्त्रिणा

सम्पादिताः

अड्यार्—पुस्तकालयार्थे

प्रकटीकृताश्च

ॐ नमो
ब्रह्मादिभ्यो
ब्रह्मविद्यासंप्रदायकर्तृभ्यो
वंशऋषिभ्यो
नमो गुरुभ्यः

DEDICATED TO
Brahma and the Rishis,
The Great Teachers
Who handed down Brahmavidya
through Generations

## THE EDITOR'S NOTE

THE materials on which is based this edition of THE ŚĀKTA UPANIṢADS comprised in this volume are the same as those described in the volume of *The Yoga Upaniṣads*.

A. M. S.

# अस्मिन् सम्पुटे अन्तर्गतानामुपनिषदां सूची

## विषयसूचिका

### १. त्रिपुरोपनिषत्



### २. त्रिपुरातापिन्युपनिषत्

प्रथमोपनिषत्

## ३. देव्युपनिषत्

## ४. बह्वृचोपनिषत्



## ५. भावनोपनिषत्



## ६. सरस्वतीरहस्योपनिषत्

## ७. सीतोपनिषत्

## ८. सौभाग्यलक्ष्म्युपनिषत्

**प्रथमः खण्डः**



**द्वितीयः खण्डः**

---

# त्रिपुरोपनिषत्

## वाङ्मे मनसि—इति शान्तिः

### चिच्छक्तिस्वरूपम्

तिस्रः पुरस्त्रिपथा विश्वचर्षणा अत्राकथा अक्षराः संनिविष्टाः ।
अधिष्ठायैना अजरा पुराणी महत्तरा महिमा देवतानाम् ॥१॥
नवयोर्नि नव चक्राणि दीधिरे नवैव योगा नव योगिन्यश्च ।
नवानां चक्रा अधिनाथाः स्योना नव भद्रा नव मुद्रा महीनाम् ॥

त्रिपुरोपनिषद्वेद्यपारमैश्वर्यवैभवम् ।
अखण्डानन्दसाम्राज्यरामचन्द्रपदं भजे ॥

इह खलु ऋग्वेदप्रविभक्तेयं त्रिपुरोपनिषत् श्रीविद्येयत्ताप्रकटनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः संक्षेपतो विवरणमारभ्यते । उत्तमाधिकारिण उपलभ्य तेषां चित्तशुद्धिप्राप्यज्ञानद्वारा परमपुरुषार्थसिद्धये श्रुतिरवान्तररूपेण प्रवृत्तेत्याह—तिस्र इति । या स्वाज्ञदृष्टिविकल्पिता व्यष्टिसमष्टिभिदाजुष्टस्थूलसूक्ष्मकारणतनव एव तिस्रः पुरः सन्ति, ये देवयानपितृयाणादिभेदेन कर्मोपासनाज्ञानकाण्डभेदेन ज्ञानविज्ञानसम्यज्ज्ञानभेदेन वा त्रिपथेन व्यावहारिकजीवेन चर्षणा

विकसिता ये त्रिपथाः त्रयः पन्थानः सन्ति, किंच "अकथादि श्रीपीठ" इत्यादिश्रुत्यनुरोधेन अत्र श्रीचक्रे अकथाद्यक्षराः सन्निविष्टा यान्यकारादिक्षकारान्तान्यक्षराणि सन्निविष्टानि सन्निवेशितानि सन्ति, ता एनाः पुरश्च पन्थाः पथश्च एतान्यक्षराणि च जीवेशप्रत्यक्परात्मना अधिष्ठाय ब्रह्मादिदेवतानामपि महिमा सूक्ष्मादिसामर्थ्यरूपिणी स्थूलादिशरीरत्रयवैलक्षण्यात् अजरा सत्तासामान्यातिह्वागीभूतचित्सामान्यरूपत्वात् महत्तरा कापन पुराणी चिरन्तना चिच्छक्तिर्विजयते ॥ १ ॥ सेयं चिच्छक्तिः कीदृशीत्यत आह—नवयोनिमिति। यामाश्रित्य नवयोनिं नवयोनयः महात्रिपुरसुन्दर्यादिशक्तयः सर्वानन्दमयादिनवचक्राणि च यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिसहजयोगभेदेन नवैव योगाश्च तथा नवचक्रवासिन्यः नवयोगिन्यश्च दीधिरे प्रकाशन्ते नवानां महीनां देवताऽऽधारभूमीनां चक्राधिनाथाः स्योनाः द्वारपालिन्यश्च कामेश्वर्यादिमद्राश्च योन्यादिनवमुद्राश्च ॥ २ ॥

चिच्छक्तिं प्रति प्रार्थना

एका स आसीत् प्रथमा सा नवासीद्वा सोनविंशाद्वा सोनत्रिंशात् ।
चत्वारिंशादथ तिस्रः [1]समिधा उशतीरिव मातरो माऽऽविशन्तु ॥
[2]ऊर्ध्वज्वलनं ज्योतिरग्रे तमो वै तिरश्चीनमजरं तद्रजोऽभूत् ।
आनन्दनं मोदनं ज्योतिरिन्दोरेता उ वै मण्डला मण्डयन्ति ॥४॥

यामाश्रित्य सदा दीधिरे सेयं प्रथमा प्रधाना एकैवासीत् । नवभद्रादयः तद्भिन्ना इत्यत आह—सेति । सैव नवभद्रादयः आसीत् ज्ञानकर्माक्षप्राणपञ्चकान्तःकरणचतुष्टयभेदेन एकोनविंशात् तत्त्वग्रामात् याः शक्तयो निष्पन्नाः तत्स्वरूपेणापि इयमेवास । किंच कर्मज्ञानाक्षप्राणपञ्चकान्तःकरणचतुष्टयविषय-

[1] समिद्या—अ २.

[2] ऊर्ध्वज्वलज्ज्वलनं—मु. उ. ऊर्ध्वज्वलन् ज्वलनं—उ १.

आत्मपञ्चभूतोपप्राणभेदेन एकोनत्रिंशत्तत्त्वप्रामात् याः शक्तयो निष्फलाः तद्रूपेणापि इत्येवास । किंच चतुर्दशाक्षाधीशतूलामूलाविद्याकर्मत्रयविक्षेपावरणमुदिताविगुण-चतुष्टयविश्वविश्वादितुर्यप्राज्ञान्तभेदेन चत्वारिंशच्छक्तयः या विद्यन्ते तद्रूपेणापि इत्येवासेत्यर्थः । सम्यगिद्धाः समिधाः क्रियाज्ञानेच्छाऽऽत्मकज्ञानविज्ञानसम्य-ग्ज्ञानशक्तयः तिस्रः स्वस्वसुतान् प्रति उशतीः उशत्यः स्वात्मजक्षेमकामिन्यः मातर इव मा मां ब्रह्मपदवीमात्तुमुद्युक्तं माविशन्तु अजडक्रियाज्ञानेच्छाशक्तयः मां प्रविशन्त्वित्यर्थः ॥ ३ ॥ किंच—ऊर्ध्वेति । "अथ तत ऊर्ध्व उदेत्य", "अथ यदतः परो दिवो ज्योतिर्दीप्यते," "ज्योतिर्ज्वलति ब्रह्माहमस्मि" इति श्रुत्यनुरोधेन पराक्प्रपञ्चेन्धनमाश्रित्य तत ऊर्ध्वे ज्वलतीति ऊर्ध्वज्वलनं प्रत्यग्ज्योतिः अग्रे पराग्वृत्त्युदयात् पूर्वमेव सदा मेऽभूत् तद्वैपरीत्येन तिरश्चीनं पराग्रूपं तमः रजः सत्त्वं च ग्रस्तपराग्भावमुत्सृज्य अजरं ब्रह्म अभूत् । एवं ग्रसित्वा अहं ब्रह्मास्मीति प्रत्यगभिन्नब्रह्मभावेन आ समन्तान्नन्दति स्वातिरिक्तं न किंचिदस्तीति मोदत इति आनन्दनं मोदनं ज्योतिः स्वातिरिक्तध्वान्तग्रास-प्रत्यगभिन्नपरमात्म-इन्दोः यद्विजयते न हि तदतिरिक्तमस्ति तदेवाहमस्मीति या वै खण्डमण्डलाकाराखण्डसविकल्पनिर्विकल्पवृत्तय एता मण्डयन्ति मां ब्रह्म-भावापन्नमलंकुर्वन्ति ता अपि ब्रह्मणि विलीयन्ते । ततः परमात्मा निष्प्रति-योगिकाद्वैतरूपेण अवशिष्यत इत्यर्थः ॥ ४ ॥

कामेश्वरस्वरूपम्

यास्तिस्रो रेखाः सदनानि भूस्त्रीस्त्रिविष्टपास्त्रिगुणास्त्रि[1]प्रकाराः ।
एतत्त्रयं पूरकं पूरकाणां [2]मन्त्रप्रतते मदनो मदन्या ॥ ५ ॥

याः पुनः तिस्रो रेखाः जडक्रियाज्ञानेच्छाशक्तयः यानि सदनानि जाग्रत्स्वप्नसुषुप्तितुरीयस्थानानि लोचनकण्ठहृदयसहस्रारचक्राणि भूस्त्रीरिति

[1] प्रकाशाः—क.

[2] मन्त्रप्रथते—अ १, अ २, क. मन्त्रः प्रथते—उ. मन्त्री प्रथते—मु, अ.

भूर्भुवःसुवरिति त्रिलोकाः त्रिविद्याः सत्त्वादिगुणाः तैजसादिगुणाश्च समस्त-ब्रह्मादिभेदेन त्रिविधप्रकाराश्च यामाश्रित्य वर्तन्ते, त्रिरेखात्रिविष्टपत्रिगुणत्वा यदुक्तं पञ्चत्वं पूरकाणां ब्राह्म्यादिस्वचक्रावरणानामपि रेखाविष्टपगुणाभिधानकामेश्वर्या-दिशक्तित्रयं पूरकं प्रधानमित्यर्थः । साङ्गावरणदेवतां विज्ञाय ये स्वचक्रमर्चयन्ति ते स्वधाम त्रैपुरं विशन्तीत्याह—मन्त्रेति । मन्त्रमतते कादिविद्यातदङ्गदेवता-मन्त्रमतते श्रीचक्रे मदन्त्या कामिन्या मध्यत्रिकोणरूपिण्या चिच्छक्त्या सह बिन्दुरूपी मदनः कामेश्वरो विजयते ॥ ५ ॥

आवरणदेवताः

मदन्तिका मानिनी मङ्गला च सुभगा च सा सुन्दरी सिद्धिमत्ता ।
लज्जा मतिस्तुष्टिरिष्टा च पुष्टा लक्ष्मीरुमा ललिता लालपन्ती ॥ ६ ॥

तत्परिवारावरणदेवतास्तु मदन्तिकेत्यादिपञ्चदशनित्या भवन्ति ॥ ६ ॥

शिवकामसुन्दरीविद्याफलम्

इमां विज्ञाय [1]सुधया मदन्ती परिस्रुता तर्पयन्तः स्वपीठम् ।
नाकस्य पृष्ठे महतो वसन्ति परं धाम त्रैपुरं चाविशन्ति ॥ ७ ॥

एवं परिवारदैवतैः या परिस्रुता परितः सेविता सेयं सुधया मदन्ती स्वातिरिक्तं न किंचिदस्ति अहमेवेदं सर्वं इति स्वरूपानुसन्धानविस्मृतस्वातिरिक्ता चिच्छक्तिः शिवेन साकं विजृम्भते । ये मुमुक्षवः इमां शिवकामसुन्दरीं निष्प्रतियोगिकचिन्मात्रपर्यवसन्नां विज्ञाय तज्ज्ञानसमकालं ते तत्पदं यान्ति । य एवं यदि ज्ञातुमशक्तास्ते तदा निष्कामधिया यावज्जीवं स्वपीठं श्रीचक्रं स्ववर्णाश्रमानुरोधेन क्षीरादिभिः तर्पयन्तः सन्तः कालं नयन्ति अथ देहावसाना-नन्तरं महतो नाकस्य पृष्ठे श्रीपुरे ज्ञानाभ्यासं कुर्वन्त आभूतसंप्लवं वसन्ति ततः त्रैपुरं परं धाम विशन्ति कृतकृत्यपदं भजन्तीत्यर्थः ॥ ७ ॥

[1] द्रवया—च 1.

आदिमूलविद्योद्धारः

कामो योनिः कामकला वज्रपाणिर्गुहा हसा मातरिश्वाऽभ्रमिन्द्रः ।
पुनर्गुहा सकला मायया च पुरूच्यैषा विश्वमाताऽऽदिविद्या ॥८॥

आदिमूलविद्यामुद्धरति—काम इति । मूलविद्या देव्युपनिषदि व्याख्याता ॥

विरक्तानां आदिविद्याज्ञानफलम्

षष्ठं सप्तममथ वह्निसारथिमस्या मूलत्रिकमादेशयन्तः ।
कथ्यं कविं कल्पकं काममीशं तुष्टुवांसो अमृतत्वं भजन्ते ॥९॥

केवलविरक्तानामादिविद्यासारं तद्ध्येयवस्तु तज्ज्ञानफलं चाह—षष्ठमिति । मूलविद्यायाः षष्ठं अक्षरं हेति शिवबीजं तत्सप्तमं सेति शक्तिबीजं पुनः वह्निसारथिः केति कामेशबीजं एवं शिवसंपुटितशक्तिबीजं एवं अस्या आदिविद्यायाः हसकेति मूलत्रिकं आदेशयन्तो वाचोपांशुतया जपन्तः मनसा वाचा श्रुतिशिरोभिरतन्निरसनोपायतः कथ्यं अशब्दमस्पर्शमिति कविं क्रान्तदर्शिनं सर्वज्ञं स्वातिरेकेण सर्वं नास्तीति ज्ञत्वात् जीवेशात्मना व्यष्टिसमष्टिप्रपञ्चकल्पकं, यद्वा स्वातिरिक्तजीवशिवतत्कल्पनीयव्यष्टिसमष्टिप्रपञ्चजातं नेतीति स्वातिरिक्तापवादकृद्वेदान्तशास्त्रकल्पकं निश्वसितश्रुत्यनुरोधेन वेदशास्त्राविर्भावहेतुत्वात्, यथाकामं सर्वात्मकत्वसिद्धब्रह्ममात्रतयाऽवस्थातुमीशत्वात् काममीशं तुष्टुवांसः ब्रह्माहमस्मीति स्तुतिं कुर्वन्तः मुमुक्षवः अमृतत्वं कैवल्यं भजन्ते विदेहमुक्ता भवन्तीत्यर्थः ॥ ९ ॥

देवीज्ञानफलम्

पुरं हन्त्रीमुखं [1]विश्वमातु रवे रेखा स्वरमध्यं तदेषा ।
बृहत्तिथिर्दश[2]पञ्चादिनित्या सषोडशिकं पुरमध्यं बिभर्ति ॥ १० ॥

[1] विश्वमाभू—क. विश्वमात्म—अ १. [2] पञ्चापरि—अ, अ २, क.

या षोडशावयवपुरमध्यं बिभर्ति तत्स्वरूपं तज्ज्ञानफलमाह—पुरमिति। भक्तानुग्रहायैवं रूपं या बिभर्ति तामेव विश्वमातुर्व्यक्तिं निष्कामधिया ज्ञात्वा स्वस्वभावानुरोधेन तत्तत्फलमेतीत्युक्तं, तत्र सा किं किं रूपं बिभर्तीत्यत्र— "पुरमेकादशद्वारं" इति श्रुत्या पुरं स्वाविद्यापदतत्कार्यजातं विश्वविश्वाद्य-विकल्पानुकेकरसान्तत्रिपञ्चदशतनुभिः तत् बिभर्तीत्यर्थः। किं च हसकेति हल्लीमुखं आदिविद्यासाररूपं बिभर्तीति सर्वत्रानुषज्यते रवेः रेखा आदित्य-मण्डलरूपं ईं ओं इति वा स्वरमध्यं यत् तदेषा देवी बिभर्ति। बृहत्तिथिरिति निमेषादिकल्पान्तकालविशेषः दर्शपञ्चाद्दिनित्या पञ्चदशतिथिवारनक्षत्रादिरूपं नित्यदेवताभावमापन्नपञ्चदशतिथिभिः सह बृहत्तिथिरूपं सषोडशिकं पूर्वोक्त-पुरमध्यं स्वाविद्यापदारोपाधारेश्वररूपं बिभर्ति। एवं देवतापरिग्रहोपाधिषु यत्र यत्र यन्मनः स्पृहयति तत्तत्परदेवताधिया निष्कामचित्ताश्रितमुनिनोपास्यं भवति, तेनायं चित्तशुद्धिप्राप्यज्ञानद्वारा कृतकृत्यो भवेदित्यर्थः॥ १०॥

मन्दाधिकारिणां ध्यानविशेषः

यद्वा मण्डलाद्वा स्तनबिम्बमेकं मुखं चाधस्त्रीणि गुहासदनानि।

कामीकलां कामरूपां चिकित्वा नरो जायते कामरूपश्च [1]काम्यः॥

एवं ध्यातुमशक्तानां सकामानां वा ध्यानभेदमाह—यद्वेति। रवीन्द्वादि-मण्डलात् आविर्भूतां स्तनबिम्बमेकं मुखं चाधः इत्युपलक्षितसर्वाङ्गसुन्दरीं त्रीणि गुहासदनानि इत्यनेन स्थूलसूक्ष्मकारणभेदेन देहत्रयगुहासनां कामिनः परमेश्वरस्य कलां स्वभक्तपटलचित्तग्राहककामरूपां चिच्छक्तिं चिकित्वा ध्यात्वा कामनापूरितचित्तः काम्यो नरः स्वकामनानुरूपेण कामरूपश्च भवति कामितार्थभाक् भवतीति यत्तत्सामान्यफलमित्यर्थः। काम्यफलस्य जन्मादिहेतुत्वेन त्रैवर्णिकैः मुमुक्षुभिः काम्योपासना न कार्येत्यत्र—

[1] कामः—अ, अ २, क.

मोक्तुमिच्छसि चेत् ब्रह्मन् काम्योपासनं त्यज ।
निष्कामाश्रितधीवृत्त्या मामुपास्य विमोक्ष्यसे ॥

इति स्मृतेः । त्रैवर्णिकैः निष्कामबुद्ध्या वाममार्गाचारोऽपि चित्तशुद्धिप्राप्त्यज्ञान-हेतुरिति चेन्न, परधर्मत्वात् । न हि परधर्माचरणं कृत्वा यः कोऽपि स्वातिरिक्त-भ्रमतो मोक्तुं पारयति परधर्मानुष्ठानस्य अनर्थहेतुत्वात् इत्यत्र—

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥

इति स्मृतेः । त्रैवर्णिकैरपि चित्तशुद्ध्यर्थं चिच्छक्त्युपासना कर्तव्येति चेत् , सत्यं दक्षिणाचारेण कर्तव्यम् । त्रैवर्णिकानां निष्कामधिया दक्षिणमार्गाचरणं कर्तव्यमित्यत्र—“निष्कामानामेव श्रीविद्यासिद्धिः न कदाऽपि सकामानाम्” इत्यादिश्रुतेः ॥ ११ ॥

अधमाधिकारिणां अनुष्ठानं तत्फलं च

परिस्रुतं झषमाजं फलं च भक्तानि [1]योनिः सुपरिष्कृताश्च ।
निवेदयन् देवतायै महत्यै स्वात्मीकृते सुकृते सिद्धिमेति ॥१२॥
सृण्येव सितया विश्व[2]चर्षणिः पाशेनैव प्रतिबध्नात्यभीकान् ।
इषुभिः पञ्चभिर्धनुषा च विद्ध्यत्यादिशक्तिररुणा विश्वजन्या ॥१३॥

शूद्रादीनां निर्विद्यत्वेन स्वच्छन्दाचारत्वात्, “तूष्णीं शूद्रं अजनयत् । तस्माच्छूद्रो निर्विद्योऽभवत्” इति श्रुत्यनुरोधेन शूद्रो निर्विद्यः सन् स्वच्छन्दचारी भूत्वा वामाचारानुकूलद्रव्यसेवी भवति स्वशरीरभोगायेदं मद्यादिसेवनमित्यपेक्षया देवताऽऽराधनधियाचरणस्य वरत्वात् एवमनुष्ठाता शूद्रः स्वभावनानुरोधेन सिद्धिमेतीत्याह—परिस्रुतमिति । परिस्रुतं यथावत् संस्कृतं झषमाजं फलं, च-शब्दात् मद्यादिर्गृह्यते, भक्तानि अन्नानि योनिरिति स्पष्टमवगम्यते । एवं

[1] योनीः—उ, मु          [2] चर्षणीः—उ १.

स्वर्गोऽपवर्गश्च स्वात्मोपयोगमधिकं कृत्वा पूर्वे [illegible] सिद्धिं गताः स्वात्म-साक्षात्करणात् अयमपि मुमुक्षुर्लोके सिद्धिमेष्यतीति । कदाऽपि सुहृत्साम्येन एवं कर्तव्यमिति न हि नियमोऽस्तीत्यर्थः । स्वस्ववर्णानुरोधेन सर्वैरपि त्रिपुरसुन्दर्या देवतोपासना कार्येत्यत्र—"विप्राः क्षोणिभुजो विशस्तदितरे श्रीराज्यमध्यासते" इति, "चतुर्थपर्याये निवृत्तिरिह" इति च स्मृतेः ॥ १२ ॥ एवं अननुष्ठातुः देवताप्रातिकूल्येन बन्धनमाह—सृण्येवेति । सितया सरस्वत्या विश्वजन्या विश्वजनन्या लक्ष्म्या च सह आदिशक्तिरूपा गौरी विश्वं तदुपलक्षिताविद्या-पदतत्कार्यजातं स्वातिरिक्तप्रपञ्चं निर्विशेषब्रह्मज्ञानविज्ञानसम्यग्ज्ञानतत्त्वज्ञानरूपेण निष्प्रतियोगिकब्रह्ममात्रावशेषतया चर्वयत्युपसंहरत्यपह्नवं करोतीति विश्वचर्वणिः ब्रह्ममात्रविद्या भूत्वा अनयैव सृण्या सृत्या काम्यवर्त्मना मुमुक्षुभिरनादरणीयेन य उपासते तान् इदं मे स्यात् इदं मे स्यात् इदं मा भूत् इत्यभितः परितः स्वातिरिक्तविषये कामयन्तीति अभीकान् कामिनः जननमरणपरंपराहेतुस्वाति-रिक्तास्तितापाशैः स्वाज्ञानवृत्तिभिः गाढं निरुच्छ्वासं प्रतिबध्नाति सम्यग्बद्ध्वा संसार-सागरमहावर्ते पातयति । यथा ते पुनः संसारभ्रमणात् बहिः न गच्छन्ति तथा पञ्चबाणेषुभिः धनुषा च विद्धति वेधनं करोति न कदाऽपि तान् प्रत्यङ्मुखान् करोतीत्यर्थः । तथा चेश्वरस्मृतिः—

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभान् आसुरीष्वेव योनिषु ॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥

इत्यादिः ॥ १३ ॥

### निष्कामोपासकस्य ब्रह्मत्वप्राप्तिः

भगः शक्तिर्भगवान् काम ईश उभा दाताराविह सौभगानाम् ।
समप्रधानौ समसत्त्वौ समोजौ तयोः शक्तिरजरा विश्वयोनिः ॥

परिसृता हविषा भावितेन प्रसंकोचे गलिते वैमनस्कः ।
शर्वः सर्वस्य जगतो विधाता धर्ता हर्ता विश्वरूपत्वमेति ॥१५॥
इयं महोपनिषत्त्रैपुर्या [1]यामक्षयं [2]परमा गीर्भिरीट्टे ।
एषर्ग्यजुः परमेतच्च सामायमथर्वेयमन्या च विद्या ॥ १६ ॥
ॐ ह्रीमों ह्रीमित्युपनिषत् ॥ १७ ॥

यः कोऽपि काम्यसृतिं विहाय निष्कामधिया श्रुतिस्मृत्यनुगृहीतशिष्टाचारानुरोधेन चिच्छक्तिं समप्रधानतयोपास्ते सोऽमनस्कत्वमेत्य कृतकृत्यो भवतीत्याह--भग इति । सकामनिष्कामभक्तपटलप्रवृत्तिनिवृत्तिमार्गप्रवर्तनशक्तिः चिच्छक्तिः त्रिपुरा च भगः षड्गुणैश्वर्यसंपन्नः भगवान् कामः ईशः कामेश्वरश्च तावुभावपि चित्सामान्यात्मना समप्रधानौ समसत्त्वौ समोजौ दयाकळेबरौ भूत्वा इह अस्मिन्नेव जन्मनि येषां निष्कामानां आशयाः सुभगाः ब्रह्मगोचरा भवन्ति सौभगाः तेषां तद्भावानुरोधेन सविशेषनिर्विशेषब्रह्मपददातारौ भवतः । तयोः दयाळ्वोः शक्तिशिवयोः मध्ये शरीरत्रयविलक्षणेयं अजरा विश्वयोनिः विश्वमाता शक्तिः परमदयातनुर्भूत्वा निष्कामधिया स्वोपासकभावितेन ज्ञानविज्ञानसम्यज्ज्ञानहविषा परिसृता संतृप्ता सती स्वभक्तप्रसादकारिणी विक्षेपावरणे प्रसंकोचे गळिते कृत्वा शिवेन साकं स्वयं स्वोपासकात्मतयाऽवशिष्टा भवति । ततः अयमुपासकः स्वाज्ञविकल्पितस्वातिरिक्तप्रपञ्चवैमनस्को भूत्वा सर्वस्य जगतो विधाता स्रष्टा धर्ता पालयिता हर्ता उपसंहर्ता शर्वश्च ब्रह्मविष्णुमहेश्वरो भूत्वा विश्वरूपत्वं विश्वारोपापवादाधिकरणब्रह्मतामपि एति इत्यर्थः ॥ १४-१५ ॥ केयं दयातनुश्चिच्छक्तिः इत्यत आह—इयमिति । ऋगादिचतुर्वेदः एवं अन्या च चतुष्षष्टिकलाविद्या च यामक्षयसंविद्रूपां परमा गीर्भिः सृष्ट्यादिदशप्रणवैः अष्टोत्तरसहस्रमहावाक्यैरपि ईट्टे

[1] यामक्षरं—अ २. [2] परमो—अ, अ २, क, मु.

महाचिदेकैवेहास्ति महासत्तेति योच्यते ।
निष्कलङ्का समा शुद्धा निरहंकाररूपिणी ॥
सकृद्विभाता विमला नित्योदयवती समा ।
सा ब्रह्मपरमात्मेति नामभिः परिगीयते ॥

इति स्तौति या त्रैपुरीति विख्याता सेयं महोपनिषत् ब्रह्मविद्या निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजयते इत्यर्थः ॥ १६ ॥ तत्तनुः कीदृशी इत्यत्र ॐ ह्रीं इति ओंकारार्थतश्चित्त्वं ह्रींकारार्थतश्चिच्छक्तित्वं चेति चिच्छक्तिरित्युच्यते । आवृत्तिरादरार्था । इत्युपनिषच्छब्दः त्रिपुरोपनिषत्समाप्त्यर्थः ॥ १७ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
त्रिपुरोपनिषद्व्याख्या लिखिता स्वात्मगोचरा ।
त्रिपुरोपनिषद्व्याख्याग्रन्थजातं शतं स्मृतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे द्व्यशीतिसङ्ख्यापूरकं
त्रिपुरोपनिषद्विवरणं सम्पूर्णम् ॥

---

# त्रिपुरातापिन्युपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

## प्रथमोपनिषत्

त्रिपुरास्वरूपम्

अथैतस्मिन्नन्तरे भगवान् प्राजापत्यं वैष्णवं विलयकारणं रूपमाश्रित्य त्रिपुराऽभिधा भगवतीत्येवमादिशक्त्या भूर्भुवः स्वस्त्रीणि स्वर्गभूपातालानि त्रिपुराणि हरमायाऽऽत्मकेन ह्रींकारेण हृल्लेखाख्या भगवती त्रिकूटावसाने निलये विलये धाम्नि महसा घोरेण व्याप्नोति । सैवेयं भगवती त्रिपुरेति व्यापठ्यते ॥ १ ॥

त्रिपुरातापिनीविद्यावेद्यचिच्छक्तिविग्रहम् ।
वस्तुतश्चिन्मात्ररूपं परं तत्त्वं भजाम्यहम् ॥

इह खलु अथर्वणवेदप्रविभक्तेयं त्रिपुरातापिन्युपनिषत् उपासनाकाण्ड-प्रकटनव्यग्रा निर्विशेषब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । यथोक्ताधिकारिण उपलभ्य आदौ त्रिपुरास्वरूपं श्रुतिः प्रकटयति—अथेति । अथ प्राण्यदृष्टपरिपाकानन्तरं एतस्मिन् अविद्यापदान्तरे

परमदयालुः भगवान् सदाशिवः परमेश्वरः ब्रह्मविष्णुरुद्ररूपमाश्रित्य सत्यवैकुण्ठकैलासाख्यपुरत्रयाधिपत्यतः त्रिपुराभिधा भगवतीत्येवं स्वीयया आदिशक्त्या भूर्भुवःस्वस्त्रीणि स्वर्गभूपाताळानि वा त्रिपुराणि शिवशक्तिरूपेण ह्रींकारेण या सर्वप्राणिहृदि प्रत्यग्रूपेण विद्योतमाना हृल्लेखाख्या भगवती स्वाविद्याऽण्डत्रिकूटावसाने भ्रूयुगोपरि, यद्वा वाग्भवादित्रिकूटावसाने, निलये गुणसाम्यपीठे चित्सामान्यरूपे स्वातिरिक्तप्रपञ्चविलये धाम्नि घोरेण महसा तेजसा व्याप्नोति । सैवेयं भगवती सर्वैः त्रिपुरेति गीयते इत्यर्थः ॥ १ ॥

त्रिपुरामहामनुः

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् परो रजसे सावदोम् ॥ २ ॥
जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥३॥
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ ४ ॥
शताक्षरी परमा विद्या त्रयीमयी साष्टार्णा त्रिपुरा परमेश्वरी ।
आद्यानि चत्वारि पदानि परब्रह्म[1]विकासीनि । द्वितीयानि शाक्तानि । तृतीयानि शैवानि ॥ ५ ॥

सदाशिवशक्तेः त्रिपुरायाः चिच्छक्तिरूपतया तद्वाचकराष्टोत्तरशताक्षरीमन्त्रं प्रकाशयति—तदिति । इयं अष्टोत्तरशताक्षरीमन्त्रानुष्ठानात् त्रिपुरा प्रसीदतीत्यर्थः ॥ २–४ ॥ त्रयीमयी वेदत्रयस्वरूपिणी । तत्सवितुरिति आद्यानि

[1] विकासिनी—अ १, अ २, क, उ.

चत्वारि पदानि परब्रह्मविकासीनि । जातवेदस इति द्वितीयानि शाक्तानि । त्र्यम्बकमिति तृतीयानि शैवानि ॥ ५ ॥

### शिवशक्तियोगात् प्रपञ्चसृष्टिः

तत्र लोका वेदाः शास्त्राणि पुराणानि धर्माणि वै चिकित्सितानि ज्योतींषि शिवशक्तियोगादित्येवं घटना व्यापठ्यते ॥ ६ ॥

एवं चिच्छिवशक्तियोगादेव लोकादिः जायत इत्याह—तत्रेति । भूरादिचतुर्दशलोकाः । ऋगादिचत्वारो वेदाः । भरतमन्त्रशब्दादिषट् शास्त्राणि । भागवतादीनि पुराणानि । मन्वादिप्रणीतानि धर्माणि सर्वाणि धर्मशास्त्राणि वै चिकित्सितानि भिषक्शास्त्राणि । ज्योतींषि ज्योतिश्शास्त्राणि । एतानि सर्वाणि, यदुक्तं अनुक्तं वै तत् सर्वं शिवशक्तियोगादेव जायते इत्यर्थः ॥ ६ ॥

### वाग्भवकूटस्य गायत्र्या समन्वयः

अथैतस्य परं गह्वरं व्याख्यास्यामः । महामनुसमुद्भवं तदिति ब्रह्म शाश्वतं परो भगवान् निर्लक्षणो निरञ्जनो निरुपाधिराधिरहितो देवः उन्मीलते पश्यति विकासते चैतन्यभावं कामयत इति स एको देवः शिवरूपी दृश्यत्वेन विकासते यतिषु यज्ञेषु योगिषु कामयते कामं जायते । स एष निरञ्जनोऽकामत्वेनोज्जृम्भते अकचटतपयशान् सृजते । तस्मादीश्वरः कामोऽभिधीयते । तत्परिभाषया कामः ककारं व्याप्नोति । काम एवेदं तत्तदिति ककारो गृह्यते । तस्मात्तत्पदार्थ इति य एवं वेद ॥ ७ ॥

सवितुर्वरेण्यमिति षूङ् प्राणिप्रसवे सविता प्राणिनः सूते प्रसूते शक्तिः सूते ॥ ८ ॥

सवितुर्वरेण्यमितीति । तत्र सवितृशब्दार्थस्तु षूङ् प्राणिप्रसवे सविता प्राणिनः सूते तदभिन्ना सावित्री प्रसूते ॥ ८ ॥ सेयं सावित्री केत्यत्र—त्रिपुरा शक्तिरिति । सैव व्यष्टिरूपेण महाकुण्डलिनी देवी जातवेदसमण्डलं मूलाधारत्रिकोणं व्याप्यावतिष्ठते ॥ ९ ॥ एवंरूपां विद्यां योऽधीते सः सर्वं व्याप्यते व्याप्नोति । त्रिकोणशक्तिः कुण्डलिनी एकारेण महाभागेन सर्वं प्रसूते सविता । यस्मादेवं तस्मादेकार एव गृह्यते ॥ १० ॥ सवितुरेकारस्य समन्वयमुक्त्वा वरेण्यैकारयोः समन्वयमाह—वरेण्यमिति । यदेकाराक्षरं सर्वकारणतया ख्यातं तदेव वरेण्यं इत्यादि । य एवं वेद स विद्वान् स्वावरेभ्यो वरिष्ठो भवतीत्यर्थः ॥ ११ ॥ भर्गो देवस्य धीतिशब्दस्य ईकारस्य च समन्वयमाह—भर्ग इति । तत्र धीत्यत्र धकारो धारणा । तत् कथं ? धियैवेति । भर्गो देवः स्वयं ज्योतिःस्वरूपेण दीप्यमानत्वात् । तन्मध्यवर्ति तुरीयमक्षरं अर्धमात्राऽऽत्मकम् । ईकारस्यापि अक्षरसामानाधिकरण्यमाह—ईकारमिति । यस्मादेवं धीकारयोः साम्यमुक्तं तस्मात् ॥ १२ ॥ महीतिपदस्य लकारस्य च समन्वयमाह—महीति । महीत्यस्य व्याख्यानं, किं तदित्यत्र—महत्त्वमित्यादि । बीजं तु—लकार इति । धरणीमण्डलमेवोक्तम् ॥ १३ ॥ महीबीजलकारेण महीमण्डलमुक्तं, तद्गतनामरूपविलक्षणतया यो नः अस्माकं धियः ध्यानेच्छारहिते निर्विकल्पके परमात्मनि प्रचोदयात् तं ज्योतिर्लिङ्गं आत्मानं अनिर्वचनीयं ब्रह्माकारपरिणत-चेतसा सोऽहमस्मीति भावयेदित्यर्थः ॥ १४ ॥ गायत्रीतुरीयपादस्य हृल्लेखायाश्च समन्वयमाह—पर इति । रजसे रजसः रजउपलक्षितगुणत्रयात् यः परः सोऽसौ अहमोङ्कारार्थतुर्यतुर्योऽस्मि यन्मत्तोऽन्यो विप्रकृष्टं तदवसाने परंज्योतिरमलं हृदि दैवतं चैतन्यं चिल्लिङ्गं सर्वप्राणिहृदि प्रत्यगभेदेन विद्योतमानं तदभेदेन हृदयागारवासिनी चिच्छक्तिः हृल्लेखा ह्रींकाररूपिणीति प्रसिद्धां तत्सवितुरित्यादिना पादचतुष्टयेन आदिविद्याया यदाद्यं वाग्भवकूटं पञ्चाक्षरं पञ्चभूतजनकं निवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीतकलाभेदेन पञ्च-कलामयं स्पष्टं व्यापठ्यते वाग्भवकूटं गायत्रीसमन्वयतो विस्पष्टं व्याख्यात-मित्यर्थः ॥ १५ ॥

कामकूटस्य गायत्र्या समन्वयः

अथ तु परं कामकलाभूतं कामकूटमाहुः । तत् सवितुर्वरेण्य-मित्यादिद्वात्रिंशदक्षरीं पठित्वा तदिति परमात्मा सदाशिवोऽक्षरं विमलं निरुपाधितादात्म्यप्रतिपादनेन हकाराक्षरं शिवरूपं [1]अनक्षरमक्षरं व्यालिख्यत इति तत्परागव्यावृत्तिमादाय शक्तिं दर्शयति ॥ १६ ॥

तत् सवितुरिति पूर्वेणाध्वना सूर्याधश्चन्द्रिकां व्यालिख्य मूलादिब्रह्मरन्ध्रगं साक्षरमद्वितीयमाचक्षत इत्याह भगवन्तं देवं शिवशक्त्यात्मकमेवोदितम् ॥ १७ ॥

शिवोऽयं परमं देवं शक्तिरेषा तु जीवजा ।
सूर्याचन्द्रमसोर्योगाद्धंसस्तत्पदमुच्यते ॥ १८ ॥
तस्मादुज्जृम्भते कामः कामान् कामः परः शिवः ।
कार्णोऽयं कामदेवोऽयं वरेण्यं भर्ग उच्यते ॥ १९ ॥

तत् सवितुर्वरेण्यं भर्गो देवः क्षीरं [2]सेवनीयमक्षरं समधुघ्नमक्षरं परमात्मजीवात्मनोर्योगात् तदिति स्पष्टमक्षरं तृतीयं ह इति तदेव सदाशिव एव [3]निष्कल्मषो द्यो देवोऽन्त्यमक्षरं व्याक्रियते परमं पदम् ॥ २० ॥

धीति धारणं विद्यते जडत्वधारणं महीति लकारः शिवाध-स्तात्तु लकारार्थः स्पष्टमन्त्यमक्षरं परमं चैतन्यं धियो यो नः प्रचोदयात् ॥ २१ ॥

परो रजसेऽसावदोमित्येवं कूटं कामकलाऽऽख्यं षडध्वपरिवर्तको वैष्णवं परमं धामैति भगवांश्चैतस्माद्य एवं वेद ॥ २२ ॥

[1] निरक्षरं—अ १, अ २, क, मु.
[2] सेचनीय—उ.
[3] निष्कलोयो—क. निष्कल्मषोद्यायो—ड.

वाग्भवकूटं गायत्रीसमन्वयतो व्याख्याय ततः कामकूटमपि पूर्ववत् गायत्रीसमन्वयपूर्वकं योजनीयमित्याह—अथेति । अथ तु परं कामकलाभूतं कामकलापरिणतं संप्रदायविदः कामकूटमाहुः । द्वितीयखण्डात्मककामकूटप्रविभक्तवर्णषट्कस्य गायत्र्या समन्वयप्रकारमाह—तदिति । पठित्वा तत्र यदाद्यं तदिति तत्पदार्थः परमात्मा सदाशिवः यत्स्वरूपं कालत्रयेऽपि न क्षरति तत् अक्षरं विमलं निरुपाधि कामकूटाद्यवर्णहकारस्य निरुपाधिकाक्षरतादात्म्यप्रतिपादनेन हकाराक्षरं शिवरूपं, न हि तच्छिवरूपमक्षरं भवति ताल्वोष्ठादिव्यापारानर्हत्वात्, किंतु अनक्षरं तत्समन्वयाभिप्रायेण अक्षरं अक्षरतया व्याख्यिते व्याख्यायत इति तत्परागव्यावृत्तिमादाय शक्तिं दर्शयति पराग्व्यावृत्तिसिद्धं शिवरूपं यदेतद्विपरीतं हकाराद्यक्षरं तद्गतपराग्भावादव्यावृत्ति पराग्भावमेवादाय हकारादिशक्तिं दर्शयति ॥ १६ ॥ तत् कथं इत्यत्र—तदिति । अध्वना वर्त्मना । सूर्यबीजं हकारः पुरस्तात् तत्पदेन समन्वितः तदधः तत्पश्चात् चन्द्रिका चन्द्रबीजं सकारः सवितृशब्देन समन्वयितव्यः। सवितृचैतन्यं कीदृशं कासनमर्हतीत्यत्र मूलादिब्रह्मरन्ध्रगं मूलाधारमारभ्य ब्रह्मरन्ध्रपर्यन्तं व्याप्य स्थितं साक्षरमद्वितीयं सकाराक्षरमपि तेनाद्वितीयमाचक्षते तद्विदः इत्याह श्रुतिः । श्रुतिः किमित्याहेत्यत्र यस्तत्त्वेन सवितृत्वेन च ध्यातस्तं भगवन्तं देवं शिवशक्त्यात्मकमेवोदितं इत्याहेत्यर्थः ॥ १७ ॥ कथं शिवशक्त्यात्मकतेत्यत्र—शिवोऽयमिति। यं देवं सवितारं ब्रह्मविदः परमं परमात्मानमाहुः सोऽयं शिवो भवति।

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥

इति स्मृत्यनुरोधेन या तु जीवतया जाता सैषा मूलशक्तिरित्यर्थः । हकारार्थः सूर्यः तत्पदार्थः शिवः सकारार्थचन्द्रमास्त्वंपदार्थजीवभूता प्रकृतिः तद्गतहेयांशत्यागपूर्वकं तयोर्लक्ष्यभूतसूर्याचन्द्रमसोर्योगात् हंसः प्रत्यगभिन्नपरमात्मा तत्त्वेन पश्यत इति तत्पदं निर्विशेषं ब्रह्म उच्यते ॥ १८ ॥ ककारः कस्मादाविर्भूत इत्यत्र—तस्मादिति । यः परः शिवः विविधान् कामान् सृजति तस्मात् परमशिवात् कामः ककारः उज्जृंभते । यत्स्वरूपं वरेण्यं भर्गः निरतिशय-

ज्योतिःस्वरूपं सोऽयं कार्णः ककारः कामदेवः परमेश्वरो भवति ॥ १९ ॥ तत् सवितुर्वरेण्यं भर्गो देवः चिद्धातुः तत्स्वरूपस्य क्षीणाविद्याऽऽधारत्वात् क्षीरं मुमुक्षुकोटिभिः स्वात्मधिया सेवनीयमक्षरं ईश्वरचैतन्यं समधुग्रमक्षरं मधु स्वार्जितकर्मफलेन सह स्वात्मानमपि हन्ति भक्षयतीति समधुग्रमक्षरं जीवचैतन्यं चैतन्यद्वयगतहेयांशापायसिद्धलक्ष्ययोः परमात्मजीवात्मनोर्योगात् यदेवमैक्यसिद्धं तदिति स्पष्टमक्षरं परमाक्षरं तृतीयं,

क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥

इति स्मृतेः । यदक्षरं तुरीयं ह इति विख्यातं तदेव सदाशिव एव तद्गतविकारापाये निष्कलमषो द्योतनात्मको देवः तत्स्वरूपमेव अन्त्यमक्षरं परमाक्षरमिति व्याक्रियते । किमिति ? परमं पदमिति ॥ २० ॥ धीमहीति यत् धारणं विद्यते महीगतजडत्वधारणं शिवाधस्तात् हकाराधस्तात् विद्यमानलकारार्थः स्पष्टः लकारवाच्यमहीगतजडत्वविकारापाये लकारो ब्रह्मेति स्पष्टोऽर्थः । यन्निर्विशेषं ब्रह्म तदेव अन्त्यमक्षरम् ॥ २१ ॥ कामकलाऽऽलयं कामकूटस्य वाग्भवकूटाख्यकामकलाऽऽधारत्वात् । वर्णाध्वेत्यादितत्त्वाध्वान्तभेदेन षडध्वपरिवर्तको मन्त्री वैष्णवं परमं धामैतीति । य एवं वेद स वैष्णवं धामैति, तस्मादतिरिक्तं न किंचिदस्तीति भगवानाहेत्यर्थः ॥ २२ ॥

### शक्तिकूटस्य गायत्र्या समन्वयः

अथैतस्मादपरं तृतीयं शक्तिकूटं प्रति[1]पद्यते द्वात्रिंशदक्षर्या गायत्र्या ॥ २३ ॥

तत् सवितुर्वरेण्यं तस्मादात्मन आकाश आकाशाद्वायुः स्फुरते तदधीनं वरेण्यं समुदीयमानं सवितुर्वा योग्यो जीवात्मपरमात्मसमुद्भवस्तं प्रकाशशक्तिरूपं जीवाक्षरं स्पष्टमापद्यते ॥ २४ ॥

[1] पाद्यते—ङ.

भर्गो देवस्य धीत्यनेनाधाररूपशिवात्माक्षरं गण्यते महीत्यादिना शेषं काम्यं रमणीयं दृश्यं काम्यं रमणीयं शक्तिकूटं स्पष्टीकृतमिति ॥ २५ ॥

वाग्भवकूटं कामकूटं चैवं प्रकाशयित्वा महामनुशक्तिकूटयोरपि समन्वयमाह—अथेति । प्रतिपद्यते कयेत्यत्र—द्वात्रिंशदक्षर्या गायत्र्या शक्तिकूटमपि समन्वयमर्हतीत्यर्थः ॥ २३ ॥ तत् सवितुर्वरेण्यमिति सकाराक्षरः समन्वितः ॥ २४॥ भर्गो देवस्य धीत्यनेन ककारोऽपि समन्वितो भवति । महीत्यादिना लकारः समन्वितः इति ज्ञेयः । शेषं धियो यो नः प्रचोदयात् परो रजसे सावदोमिति काम्यं रमणीयं दृश्यं काम्यं रमणीयं ह्रल्लेखाऽपि समन्विता स्यात् । एवं शक्तिकूटमपि स्पष्टीकृतमित्यर्थः ॥ २५ ॥

कामाकामधियां विशिष्टविद्याफलम्

एवं पञ्चदशाक्षरं त्रैपुरं योऽधीते स सर्वान् कामानवाप्नोति स सर्वान् भोगानवाप्नोति स सर्वान् लोकान् जयति स सर्वा वाचो विजृम्भयति स रुद्रत्वं प्राप्नोति स वैष्णवं धाम भित्त्वा परं ब्रह्म प्राप्नोति य एवं वेद ॥ २६ ॥

कामाकामधियां विशिष्टविद्याफलमाह—एवमिति । वैष्णवं धाम मायाशबलं भित्त्वा अतिक्रम्य ॥ २६ ॥

शक्तिशिवादिद्वादशविद्योद्धारः

[1]एवमाद्यां विद्यामभिधायैतस्याः शक्तिकूटं शक्ति[2]शिवाद्या । लोपामुद्रेयं द्वितीये धामनि ॥ २७ ॥

पूर्वेणैव मनुना बिन्दुहीना शक्तिभूतहृल्लेखा क्रोधमुनिनाऽधिष्ठिता तृतीये धामनि ॥ २८ ॥

[1] इमाद्यां—अ १, अ २, क. [2] शिवाद्या—अ १, अ २, क, गु.

पूर्वस्या एव विद्याया यद्वाग्भवकूटं तेनैव मानवीं चान्द्रीं कौबेरीं विद्यामाचक्षते ॥ २९ ॥

मदनाधः शिवं वाग्भवम्, तदूर्ध्वं कामकलामयम्, शक्त्यूर्ध्वं [1]शाक्तमिति मानवी विद्या चतुर्थे धामनि ॥ ३० ॥

शिव[2]शक्त्याख्यं वाग्भवं तदेवाधः शिवशक्त्याख्यमन्यत्तृतीयं चेयं चान्द्री विद्या पञ्चमे धामनि ध्येयेयम् ॥ ३१ ॥

चान्द्री कामाधः [3]शिवाद्यकामा सैव कौबेरी षष्ठे धामनि व्याचक्षत इति य एवं वेद ॥ ३२ ॥

हित्वैकारं तुरीयस्वरं सर्वादौ सूर्याचन्द्रमस्केन कामेश्वर्यैवागस्त्यसंज्ञा सप्तमे धामनि ॥ ३३ ॥

तृतीयमेतस्या एव पूर्वोक्तायाः कामाद्यं द्विधाऽधः कं मदनकलांऽऽद्यं शक्तिबीजं वाग्भवाद्यं तयोरर्धावशिरस्कं कृत्वा नन्दिविद्येयमष्टमे धामनि ॥ ३४ ॥

वाग्भवमागस्त्यं वागर्थकलामयं कामकलाऽभिधं सकलमायाशक्तिः प्रभाकरी विद्येयं नवमे धामनि ॥ ३५ ॥

पुनरागस्त्यं वाग्भवं शक्तिमन्मथशिवशक्तिमन्मथोर्वीमायाकामकलाख्यं चन्द्रसूर्यानलधूर्जटिमहिमाद्यं तृतीयं षण्मुखीयं विद्या दशमे धामनि ॥ ३६ ॥

विद्याप्रकाशितया भूय एवागस्त्यविद्यां पठित्वा भूय एवेमामन्त्यमायां परमशिवविद्येयमेकादशे धामनि ॥ ३७ ॥

[1] शान्तमिति—उ. [2] शक्त्यात्मकं—अ १, अ २. [3] शिवाद्या—उ.

पूर्व एवाभ्यस्य पठित्वा एतस्या एव वाग्भवं चतुर्थं कामकलाऽऽख्यं च तत्सहजं कृत्वा लोपामुद्रायाः शक्तिकूटराजं पठित्वा वैष्णवी विद्या द्वादशे धामनि व्याचक्षत इति य एवं वेद ॥ १८ ॥

एवं आद्यां विद्यां श्रीमत्पञ्चदशाक्षरीं खण्डशो ब्रह्मगायत्र्या समन्वितां अभिधायैतस्याः मध्ये तृतीयं सकलह्रीमिति शक्तिकूटं स क इति शक्तिशिवाऽऽद्या प्रथमे धामनि व्यष्टिसमष्टिजागरणे संभाव्या। हसकहलह्रीमिति लोपामुद्रेयं विद्या द्वितीये धामनि व्यष्टिसमष्टिस्वप्ने संभाव्या ॥ २७ ॥ या लोपामुद्रामनुः द्वितीये धामनि विन्यस्तः हसकहलह्री इति क्रोधमुनिना अधिष्ठिता दुर्वाससा आराधिता सेयं तृतीये धामनि समष्टिस्वापे संभाव्येत्यर्थः ॥ २८ ॥ एवं पूर्वस्या एव विद्यायाः लोपामुद्राविद्यायाः यद्वाग्भवकूटं योजितं तदा तेनैव योजनेन मनुचन्द्रकुबेरैरेवमाराधितेति तामेव विद्यां संप्रदायविदः मानवीं चान्द्रीं कौबेरीं विद्यामाचक्षते ॥ २९ ॥ तत्र मानवी विद्या केत्यत्र—मदनेति। मदनशब्देन कामकूटं क्लीं इति वोच्यते तदधस्तात् पश्चात् हादिविद्यायाः परं शिवं वाग्भवं कामकलामयं कादिविद्यारूपं, तदूर्ध्वं शाक्तं शक्तिकूटं सादिविद्यारूपं, पूर्वं हादिविद्या ततः कादिविद्या ततः सादिविद्येति प्रतिपादनात् शक्त्यूर्ध्वमित्युक्तम्। या मनुनैवमुपासिता सेयं मानवी चतुर्थे धामनि, व्यष्टिजागरणारोपाधारविश्वे तदभेदेन संभाव्येत्यर्थः ॥ ३० ॥ केयं चान्द्री विद्येत्यत्र—शिवेति। आदौ शिवशक्त्याख्यं हादि ततः वाग्भवं कादि तदेवाधः शिवशक्त्याख्यं पुनर्हादि अन्यत् तृतीयं सादि च येयं खण्डचतुष्टयविशिष्टविद्या चन्द्रेणाराधिता सेयं चान्द्री पञ्चमे धामनि व्यष्टिस्वप्नप्रपञ्चारोपाधारतैजसे संभाव्येत्यर्थः ॥ ३१ ॥ केयं कौबेरी विद्येत्यत्र—चान्द्रीति। या चान्द्री विद्या खण्डचतुष्टयात्मिका अभिहिता तदधः पश्चात् शिवाद्यकामा हादिविद्या योजिता यदि तदा पञ्चखण्डात्मिकेयं विद्या कुबेरेणाराधिता सेयं कौबेरीत्युच्यते। सेयं षष्ठे धामनि व्यष्टिस्वापप्रपञ्चारोपाधारप्राज्ञे सदा ध्येयेति व्याचक्षत इति। य एवं वेद सोऽयं संपदा कुबेरतुल्यो भवतीत्यर्थः ॥ ३२ ॥ अगस्त्यविद्या कीदृशी इत्यत्र—

हित्वेकारमिति। कादिविद्याऽकारतुरीयस्वरमीकारं हित्वा सर्वादौ सर्वमन्त्रादौ हसेति सूर्याचन्द्रमस्केन संयोजितं यदि खण्डत्रयं तदा कामेश्वरी मुद्रितं भवति। यद्वा—एवमुपासकस्य स्वेप्सितकामश्च निरवधिकैश्वर्यं च कामेश्वरौ भवत इत्यगस्त्येन योपासिता सेयं अगस्त्यसंज्ञा विद्योच्यते, सा सप्तमे धामनि समष्टिजाग्रत्प्रपञ्चारोपाधारे विराजि तदभेदेन ध्येयेत्यर्थः॥ ३३॥ केयं नन्दिविद्येत्यत्र—तृतीयमिति। या पूर्वोक्ता अगस्त्यविद्या एतस्या अधः पूर्वं द्विधा कामाद्यं मदनकलाऽऽद्यं हहेति सेति शक्तिबीजं केति वाग्भवाद्यं तयोः सकारककारयोः अर्धावांशरस्कं प्लुतोद्वाग्णभवार्धमात्रामस्तकं कृत्वा येयं नन्दिनोपासिता सेयं नन्दिविद्या अष्टमे धामनि समष्टिस्वप्नप्रपञ्चारोपाधारसूत्रात्मनि तदभेदेन चिन्त्येयमित्यर्थः॥ ३४॥ प्रभाकरी विद्या कीदृशीत्यत्र—वाग्भवमिति। आदौ वाग्भवकूटं कादि ततः आगस्त्यं अगस्त्यविद्याकात्स्न्यं वागर्थकलामयं शिवशक्त्यात्मकं कामकलाऽभिधं हादि सकलमायाशक्तिः शक्तिकूटं च एकीकृत्य या प्रभाकरेण सूर्येणैवमुपासिता सेयं प्रभाकरी विद्या नवमे धामनि समष्टिस्वापप्रपञ्चारोपाधारबीजेश्वरात्मनि तदभेदेन ध्येयेत्यर्थः॥ ३५॥ षण्मुखी विद्या कीदृशीत्यत्र—पुनरागस्त्यमिति। वाग्भवं कादि, ह्रीमिति शक्तिबीजं, क्लीमिति मन्मथबीजं, हंस इति शिवशक्तिबीजे, पुनर्मन्मथबीजं क्लीमिति, लमित्युर्वीबीजं, ह्रीमिति मायाबीजं, कामकलाऽऽलयं हादिषडक्षरं, सोऽहमिति चन्द्रसूर्यबीजे, क्लीमित्यनङ्गबीजं, हमिति धूर्जटिबीजं, स इति महिमाबीजं, पुनः तृतीयं हंसः सोऽहं हंसः इति, एवं षण्मुखेनोपासिता षण्मुखीयं विद्या दशमे धामनि व्यष्टिसमष्ट्यात्मकजाग्रत्प्रपञ्चापवादाधिकरण ओतृचैतन्ये तदभेदेन भावयेदित्यर्थः॥ ३६॥ परमशिवविद्या कीदृशीत्यत्र—विद्येति। पूर्वोक्तषण्मुखीविद्याप्रकाशितया षण्मुखीविद्यात्वेन या प्रकाशिता तया साकं भूय एव आगस्त्यविद्यां पठित्वा भूय एवेमामन्त्यमायां अन्त्यमां तुर्यरूपिणीमधिष्ठाय यः शिवः सर्वसाक्षी भवति सेयं परमशिवविद्या, षण्मुख्यगस्त्यविद्याद्वयं मिळितं चेत् परमशिवविद्या भवति, सेयमेकादशे धामनि समष्टिस्वप्नप्रपञ्चापवादाधिकरणेऽनुज्ञातृचैतन्ये तदभेदेन भावनीया

इयमित्यर्थः ॥ ३७ ॥ केयं वैष्णवी विद्येत्यत्र—भूय इति । अगस्त्यविद्यया साकं वाग्भवं कादि यद्भनजं धनदं कौबेरं कामकलाऽऽलयं च हादिषट्कं तत्सहजं कृत्वा एकीकृत्य पूर्वोक्तलोपामुद्रायाः हादिविद्यायाः परिणतं सादिशक्तिकूटराजं पठित्वा एतत्सर्वं चित्सामान्यमहाविद्याऽऽत्मकं सम्यज्ज्ञानरूपं विष्णुना अधिष्ठितमिति वैष्णवी विद्येत्युच्यते । सेयं द्वादशे धामनि व्यष्टिसमष्ट्यात्मकजाग्रत्स्वप्नसुषुप्तिप्रपञ्चापवादाधिकरणे अनुज्ञैकरसचैतन्ये तदभेदेन भावनीयेति । य एवं वेद स विष्णुरेव भवतीत्यर्थः ॥ ३८ ॥

अथ द्वादशविद्यामुद्धरति-- एवमित्यादिना । आदिविद्या तु क ए ई ल ह्रीं, हसकहलह्रीं, सकलह्रीम् । अत्राद्यखण्डं वाग्भवकूटं, द्वितीयं कामकूटं, तृतीयं शक्तिकूटम् । व्यष्टिसमष्टिजाग्रदादिद्वादशधामसु भावनीयशक्तिशिवादिद्वादशविद्योच्यते । सक इति शक्तिशिवविद्या (१), हमकहलह्रीमिति लोपामुद्राविद्या (२), हसकहल्ह्रीं इति क्रोधमुनिविद्या (३), हसकहलह्रीं क ए ई ल ह्रीं सकलह्रीं इति मानवी विद्या (४), हसकहल्ह्रीं क ए ई ल ह्रीं हसकहलह्रीं सकलह्रीं इति चान्द्री विद्या (५), हसकहलह्रीं क ए ई ल ह्रीं हसकहल्ह्रीं सकलह्रीं हसकहलह्रीं इति कौबेरी विद्या (६), हसकएल्ह्रीं हसहसकहल्ह्रीं हससकल्ह्रीं इति अगस्त्यविद्या (७), हहसकहसकएलह्रीं हसहसकहलह्रीं हससकलह्रीं इति नन्दिविद्या (८), क ए ई ल ह्रीं हसकएल्ह्रीं हसहस कहलह्रीं हससकलह्रीं हसकहलह्रीं सकलह्रीं इति प्रभाकरी विद्या (९), [1]ह्रीं क्लीं हं सः क्लीं लं ह्रीं हसकहलह्रीं सोहं क्लीं हंसः ह्रीं हंसः सोहं हंसः इति षण्मुखी विद्या (१०), [1]ह्रीं क्लीं हंसः क्लीं लं ह्रीं हसकहलह्रीं सोहं क्लीं हंसः ह्रीं हंसः सोहं हंसः हसकएलह्रीं हमहसकहलह्रीं हससकलह्रीं इति परमशिवविद्या (११), हसकएलह्रीं हसहसकहलह्रीं हससकल्ह्रीं क ए ई ल ह्रीं हसकहल्ह्रीं क ए ई ल ह्रीं हसकहल्ह्रीं सकलह्रीं हसकहलह्रीं हसकहलह्रीं [2]सकलह्रीं इति वैष्णवी विद्या (१२) ॥

[1] अत्र व्याख्यापर्यालोचनेन आदौ आगस्त्यवाग्भवयोः संयोजनं युक्तं स्यादिति भाति.

[2] अत्र व्याख्यापर्यालोचनेन "सकलह्रीं" इत्यत्र "सकहलह्रीं" इति मन्त्रोद्धारः साधुरिव भाति.

महात्रिपुरादेवीध्यानप्रकारः

तान् होवाच भगवान् सर्वे यूयं श्रुत्वा पूर्वां कामाख्यां तुरीयरूपां तुरीयातीतां सर्वोत्कटां सर्वमन्त्रासनगतां पीठोपपीठ-देवतापरिवृतां सकलकलाव्यापिनीं देवतां सामोदां सपरागां सहृद्यां सामृतां सकलां सेन्द्रियां सदोदितां [1]परां विद्यां स्पष्टीकृत्वा हृदये निधाय विज्ञायानिलयं गमयित्वा त्रिकूटां त्रिपुरां परमां मायां श्रेष्ठां परां वैष्णवीं संनिधाय हृदयकमलकर्णिकायां परां भगवतीं लक्ष्मीं मायां सदोदितां महावश्यकरीं मदनोन्मादनकारिणीं धनुर्बाणधारिणीं वाग्विजृम्भिणीं चन्द्रमण्डलमध्यवर्तिनीं चन्द्रकलां सप्तदशीं महा-नित्योपस्थितां पाशाङ्कुशमनोज्ञपाणिपल्लवां समुद्यदर्कनिभां त्रिणेत्रां विचिन्त्य देवीं महालक्ष्मीं सर्वलक्ष्मीमयीं सर्वलक्षणसंपन्नां हृदये चैतन्यरूपिणीं निरञ्जनां त्रिकूटाख्यां स्मितमुखीं सुन्दरीं महामायां सर्वसुभगां महाकुण्डलिनीं त्रिपीठमध्यवर्तिनीमकथादिश्रीपीठे परां भैरवीं चित्कलां महात्रिपुरां देवीं ध्यायेन्महाध्यानयोगेनेयमेवं वेदेति महोपनिषत् ॥ ३९ ॥

ये महाविद्यां श्रुतवन्तः तान् प्रति भगवानुवाचेत्याह—तानिति । तान् होवाच भगवान् सदाशिवः । किमिति—हे देवाः सर्वे यूयं मयोक्तां वक्ष्यमाणां च विद्यां श्रुत्वा पूर्वां कामाख्यां कामेश्वरविद्यामर्धमात्राकलातीतात्मना तुरीयरूपां तुरीयातीतां सर्वोत्कटां असमाहितचित्तैर्दुराराध्यां सर्वमन्त्रासनगतां समस्त-यन्त्रालयां पीठोपपीठदेवतापरिवृतां उड्याणादिचतुष्पीठमध्यवर्तिपरिवारदेवता-वृन्दसेवितां प्राणादिनामान्त सकलकलाव्यापिनीं देवतां सामोदां स्वानन्दभरितां

[1] परमां—अ २, क, उ १.

सपरागां परशिवैक्यं गच्छतीति सपरागां ब्रह्माभिन्नां स्वभक्तपालने सहृदयां सावृतां सकलां सेन्द्रियां निरावृतसम्यज्ज्ञानात्मना सदोदितां परां विद्यां अहं ब्रह्मास्मीति स्पष्टीकृत्वा हृदये निधाय ब्रह्मातिरिक्तं न किंचिदस्तीति विज्ञाय यद्यदतिरिक्तमस्तीति भ्रान्तिस्तदा तामपि अनिलयं निरालम्बं ब्रह्म गमयित्वा त्रिकूटां वाङ्मया[ग्भवा]दित्रिकूटार्थरूपिणीम् । स्वपदं भजतां महतां करणग्रामं स्वपदध्यानानुकूलतया वश्यं स्वाधीनं करोतीति महावश्यकरीम् । स्वभक्त-पटलोन्मादनकरमदनोन्मादनकारिणीम् । सरस्वत्यात्मना वाग्विजृंभिणीम् । सप्तदशीं सप्तदशप्रजापतिरूपां महानित्योपस्थितां महानित्यात्वेन स्वयमुपस्थि-ताम् । मूलोड्याणजालन्धरभेदेन त्रिपीठमध्यवर्तिनीं अकथादश्रीपीठे निषण्णां परां स्वाज्ञानतत्कार्यभैरवीं ब्रह्मरूपेण ध्यात्वा कृतकृत्या भवतेत्यर्थः । यः कोऽप्येवं एनां ध्यायेत् स महाध्यानयोगेन इयं इमां एवं वेद यथावद्विदित्वा कृतकृत्यो भवेदित्यर्थः । इति महोपनिषच्छब्दः प्रथमोपनिषत्समाप्त्यर्थः ॥ ३९ ॥

इति प्रथमोपनिषत्

---

# द्वितीयोपनिषत्

त्रिपुराविद्यामधिकृत्य प्रश्नः

अथातो जातवेदसे सुनवाम सोममित्यादि पठित्वा त्रैपुरी व्यक्तिर्लक्ष्यते ॥ १ ॥

जातवेदस इत्येकर्चस्सूक्तस्याद्यमध्यमावसानेषु तत्र स्थानेषु विलीनं बीजसागररूपं व्यापकस्येत्यृषय ऊचुः ॥ २ ॥

प्रथमोपनिषदि येयं त्रिपुरसुन्दरी प्रतिपादिता तदपरोक्षसाक्षात्कारायेयं द्वितीयोपनिषदारभ्यते—अथेति । अथ तत्साक्षात्काराहाधिकारिसंपत्त्यनन्तरं यतः

पूर्वोपनिषदर्थश्रवणे कृतेऽपि देवतासाक्षात्कारो न जायते अतः तदर्थमयमुपनिषदारम्भो युज्यते। यः कोऽपि वा परदेवतासाक्षात्कारार्थी "जातवेदसे सुनवाम सोमं" इत्यादि त्रिपुराविद्यामर्थानुसन्धानपुरस्सरं तद्भावभावितः सन् पठित्वा पठन् वर्तते तस्यैव त्रैपुरी व्यक्तिर्लक्ष्यते त्रिपुरासान्निध्यं भवति ॥ १ ॥ इति भगवन्मुखतः श्रुत्वा ऋषयस्तदियत्ताबुभुत्सया भगवन्तं पृच्छन्तीत्याह—जातवेदस इति ॥ २ ॥

त्रिपुराविद्या

तान् होवाच भगवान्। जातवेदसे सुनवाम सोमं तदन्त्यमवार्णीं विलोमेन पठित्वा प्रथमस्याद्यं तदेव दीर्घं द्वितीयस्याद्यं सुनवाम सोममित्यनेन कौलं वामं श्रेष्ठं सोमं महासौभाग्यमाचक्षते ॥ ३ ॥

तत्कृतप्रश्नमङ्गीकृत्य तान् होवाच भगवान्। आदौ जातवेदसे सुनवाम सोमं इत्युच्चार्य तदन्त्यमवार्णीं तस्या आदिविद्यायाः सकलह्रीं इति अन्त्यमवार्णीं ह्रींलकसेति विलोमेन पठित्वा आदिविद्यायाः प्रथमस्य वाग्भवकूटस्य आद्यं तदेव दीर्घं का इति द्वितीयस्य कामकूटस्य आद्यं हेति बीजद्वययोगतः काहेत्युक्तं भवति। सेयं कुण्डलिनी शक्तिः किमाह? कदा सुषुम्नावदनं भित्त्वा तदन्तः प्रविश्य ग्रन्थित्रयान्वितमूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाचक्राणि क्रमाद्भित्त्वा तदुपरि विद्योतमानसूर्येन्दुमण्डलद्वयैक्यजसोमं अमृतं दृक्प्राणमनोभिः सह सुनवाम वयं सर्वे मिळित्वा पिबाम ततः सहस्रारचक्रं प्रविश्य तत्रत्यतुर्यैक्यं तुर्यतुर्यैक्यं वा भजाम इत्यनेन। कुः पृथिवी तदुपलक्षिताविद्यापदतत्कार्यजातं यत्र विलयमेत्य तन्मात्रमवशिष्यते तत् कुळं तदेव कौळं, स्वातिरिक्तप्रपञ्चापवादाधिष्ठानं यत्सर्वाधिष्ठानं तदेव स्वाज्ञदृष्टिविकल्पितस्वातिरिक्तग्रसने वामं समर्थं, यत् स्वावशेषतयाऽवस्थातुं वामं तदेव निष्प्रतियोगिकश्रेष्ठं स्वातिरिक्तसामान्यग्रसनात्, किं तत् ब्रूमित्यत्र सर्वप्राण्यात्मतया सर्वाह्लादनकरत्वात् सोमं

संस्थानत्स्वातिरिक्तभ्रमं निष्प्रतियोगिकब्रह्ममात्रं लोके ब्रह्मविद्वरिष्ठा अपि तन्मात्रावशेषलक्षणविकळेबरकैवल्यमेव महासौभाग्यमाचक्षते प्रवदन्तीत्यर्थः ॥ ३ ॥

### महाविद्येश्वरीविद्या

सर्वसंपत्तिभूतं प्रथमं निवृत्तिकारणं द्वितीयं स्थितिकारणं तृतीयं सर्गकारणमित्यनेन करशुद्धिं कृत्वा त्रिपुराविद्यां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा महाविद्येश्वरीविद्यामाचक्षते ॥ ४ ॥

त्रिपुरेश्वरीं जातवेदस इति जाते आद्यक्षरे मातृकायाः शिरसि बैन्दवममृतरूपिणीं कुण्डलिनीं त्रिकोणरूपिणीं चेति वाक्यार्थः ॥ ५ ॥

तथाविधसौभाग्यपदवीप्रापकोपायः कः इत्यत आह—सर्वेति । यत्सर्वसंपत्तिप्रापकहेतुतया भवतीति सर्वसंपत्तिभूतं वाग्भवादिकूटत्रयं, तत्र प्रथमं वाग्भवकूटं स्वातिरिक्तप्रपञ्चनिवृत्तिकारणं तस्य स्वातिरिक्तोपसंहारकप्रळयकालरुद्रार्थत्वात्, द्वितीयं कामकूटं स्थितिकारणं स्वाज्ञविकल्पितप्रपञ्चजातस्य स्वज्ञानतः स्वाज्ञानभ्रमं मोचयित्वा स्वावशेषीकृत्य परिपालकविष्ण्वर्थत्वात्, तृतीयं शक्तिकूटं स्वातिरिक्तप्रपञ्चसृष्टिकारणं तस्य ब्रह्मार्थत्वात्, इत्यनेन त्रिमूर्तिधिया खण्डत्रयोपासनेन स्वातिरिक्तभ्रमं करोतीति करं अन्तःकरणं शुद्धिं कृत्वा त्रिपुराविद्यां स्पष्टीकृत्वा पुनः जातवेदसे इतीमामृचं पठित्वा नित्यानुसंधानतो या संविदुदेति तामेव सन्तो महाविद्येश्वरीविद्यामाचक्षते कथयन्तीत्यर्थः ॥ ४ ॥ मन्त्रार्थमाह—त्रिपुरेति । त्रिपुरेश्वरीविद्यामधिष्ठाय जातवेदस इति जाते वेदाद्यक्षरे अकारादिमातृकायाः शिरसि प्रणवे "बिन्दुरीश्वरसंज्ञस्तु शम्भुः" इति श्रुत्यनुरोधेन बिन्दुरेव बैन्दवं ईश्वरतत्त्वं अमृतं तद्भावापन्नां अमृतरूपिणीं

सर्वप्राणिनाडीकन्दाश्रयणतः कुण्डलिनी मूलाधारत्रिकोणरूपिणी चेति समष्टिरूपेणेयममृतरूपिणी व्यष्टिरूपेण कुण्डलिनीति वाक्यार्थः ॥ ५ ॥

### सर्वरक्षाकरीविद्या

एवं प्रथमस्याद्यं वाग्भवं द्वितीयं कामकला[1]मयं जात इत्यनेन परमात्मनोऽनुज्जृम्भणम् ॥ ६ ॥

जात इत्यादिना परमात्मा शिव उच्यते ॥ ७ ॥

जातमात्रेण कामी कामयते काममित्यादिना पूर्णं व्याचक्षते ॥ ८ ॥

तदेव सुनवाम गोत्रारूढं मध्यवर्तिनाऽमृतमध्येनार्णेन मन्त्रार्णान् स्पष्टीकृत्वा गोत्रेति नामगोत्रायामित्यादिना स्पष्टं कामकलाख्यं शेषं वाममित्यादिना पूर्वेणाध्वना विधेयं सर्वरक्षाकरी व्याचक्षते ॥ ९ ॥

एवं प्रथमस्य प्रधानभूतस्य आदिविद्यातत्त्वस्य आद्यं वाग्भवकूटं कादि, द्वितीयं कामकलामयं हादि, तृतीयं शक्तिकूटं सादीति च, एवंरूपी जात इत्यनेन परमात्मोज्जृंभणं एवंरूपेण परमात्मैव वर्तते इत्युक्तं भवति ॥ ६ ॥ स्वाज्ञदृष्ट्या एवमुज्जृंभितोऽपि स्वज्ञदृष्ट्या निर्विशेषं जात इत्यादिना परमात्मा शिव उच्यते स्वातिरिक्तविशेषाशिवग्रासत्वात् ॥ ७ ॥ पुनः स्वाज्ञदृष्ट्या कामी भूत्वा स्वस्येश्वरत्वं कामयते । एवंकामे कुतो मे संकल्पवृत्तिरिति तस्यागतः तत्स्वरूपं ब्रह्मविदः पूर्णं व्याचक्षते कथयन्तीत्यर्थः ॥ ८ ॥ ततः किमित्यत आह—तदेवेति । ब्रह्मविदो यत्पूर्णमामनन्ति तत् पूर्णशिवचैतन्यं एव सुनवाम सुष्ठु वदामः । किमिति ? गोत्रारूढमिति । गोत्राशब्देन वाग्भवादिकूटत्रयालङ्कारलकारत्रयमभिधीयते । लकारस्य पृथ्वीबीजत्वात् लकारत्रयस्य गोत्रात्वमुक्तम् ।

[1] लं—अ १, अ २, क, मु.

तद्गतनामरूपादिविकारमलक्ष्यीकृत्य इदमस्ति भाति प्रियं इति सच्चिदानन्दरूपेण तदारूढमिति सुनवामेत्यर्थः । कूटत्रयमध्यवर्तिना लकारत्रयेण अर्णेन अमृतमध्येन लार्णार्थस्य स्ववाच्यपृथिवीगतमार्त्यनामरूपग्राससच्चिदानन्दरूपेण अमृतत्वात् लकारस्यामृतमध्यत्वम् । एवं लकारत्रयोपलक्षितमन्त्रार्णान् स्पष्टीकृत्वा ब्रह्मार्थत्वेन संभाव्य गोत्रेति नाम पृथिव्याः गोत्रायां पृथिव्यां नामरूपविकारास्पृष्टसच्चिदानन्दात्मना शिवतत्त्वमारूढमिति यत् पुरस्तादेवोक्तं तदित्यादिना स्पष्टं कामकलाऽऽलयं व्याख्यातं शेषं तु वाग्भवकूटं शक्तिकूटं च वाममित्यादिना पूर्वेणाध्वना स्पष्टीकृतमित्यर्थः । ईश्वरचैतन्यं स्वातिरिक्तकलनाग्रसने वामं समर्थमित्यनेन शिवादतिरिक्तं न किंचिदस्तीति येवं व्याख्याता सेयं विद्या सर्वरक्षाकरीति व्याचक्षते ॥ ९ ॥

त्रिपुरेशी-आत्मासनरूपिणी-शक्तिशिवरूपिणीविद्याः

एवमेतेन विद्यां त्रिपुरेशीं स्पष्टीकृत्वा जातवेदस इत्यादिना जातो देव [1]एक ईश्वरः परमो ज्योतिर्मन्त्रतो वेति तुरीयं वरं दत्त्वा बिन्दुपूर्णज्योतिःस्थानं कृत्वा प्रथमस्याद्यं द्वितीयं च तृतीयं च सर्वरक्षाकरी[2]संबन्धं कृत्वा विद्यामात्मासनरूपिणीं स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा रक्षाकरीं विद्यां स्मृत्वाऽऽद्यन्तयोर्धाम्नोः शक्तिशिवरूपिणीं विनियोज्य स इति शक्त्यात्मकं वर्णं सोममिति शैवात्मकं धाम जानीयात् । यो जानीते स सुभगो भवति ॥ १० ॥

एवमेतेन शिवादतिरिक्तं न किंचिदस्तीति विद्यां त्रिपुरेशीं स्पष्टीकृत्वा जातवेदस इत्यादिना निर्विशेषस्वरूपेण जातो देवः एक एवेश्वरः परमो

[1] एकोहीश्वरः—ङ. [2] संवरं—क.

ज्योतिरवशिष्यते तथा कूटत्रयविशिष्टमन्नावो वेति कूटत्रयापेक्षया तदवसान-विभातं तुरीयचैतन्यं वरं तस्य निर्विकल्पत्वात् कूटत्रये तुरीयस्वरूपं दृष्ट्वा तुरीयशिवादतिरिक्तं कूटत्रयं नास्तीति ध्यात्वा बिन्दुपूर्णज्योतिःस्थानं कृत्वा पूर्णाहंभावेश्वरभावमापाद्य प्रधानविद्याऽऽद्यं द्वितीयं च तृतीयं च कूटत्रयं पूर्वोक्त-सर्वरक्षाकरीविद्यया संबन्धं कृत्वा आत्मासनरूपिणीं विद्यामपि पूर्ववत् स्पष्टीकृत्वा जातवेदसे सुनवाम सोमं इत्यादि पठित्वा पुनश्च रक्षाकरीविद्यां स्मृत्वा सर्वरक्षाकर्या आद्यन्तयोः धाम्नोः आद्यवसानसीम्नोः शक्तिशिवरूपिणीं विनियोज्य किं तच्छक्तिशिवरूपमित्यत्र जातवेदसे सुनवाम सोमं इत्यस्मिन् वाक्ये स इति शक्त्यात्मकं वर्णं सोममिति शैवात्मकं धाम जानीयात्। यो जानीते स सुभगो महान् भवति ॥ १० ॥

त्रिपुरवासिनीविद्या

इत्येवमेतां चक्रासनगतां त्रिपुरवासिनीं विद्यां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममिति पठित्वा त्रिपुरेश्वरीविद्यां सदोदितां शिवशक्त्यात्मिकामावेदितां जातवेदाः शिव इति सेति शक्त्यात्मा-क्षरमिति शिवादिशक्त्यन्तरालभूतां त्रिकूटादिचारिणीं सूर्याचन्द्र-मस्कां मन्त्रासनगतां त्रिपुरां महालक्ष्मीं सदोदितां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा पूर्वो सदात्मासनरूपां विद्यां स्मृत्वा देव इत्यादिना विश्वाहसंततोदयाबैन्दवमुपरि विन्यस्य सिद्धासनस्थां त्रिपुरां मालिनीं विद्यां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा त्रिपुरां सुन्दरीं श्रित्वा कले अक्षरे विचिन्त्य मूर्तिभूतां मूर्तिरूपिणीं सर्वविद्येश्वरीं त्रिपुरां विद्यां

स्पष्टीकृत्वा जातवेदस इत्यादि पठित्वा त्रिपुरां लक्ष्मीं श्रित्वाऽग्नि निदहाति ॥ ११ ॥

ततस्त्रिपुरवासिनीं विद्यां स्पष्टीकुर्यादित्याह—इत्येवमिति । त्रिपुरवासिनीं विद्यां चिच्छक्तिरूपेण स्पष्टीकृत्वा । शिवशक्त्यात्मकत्वं कथं इत्यत्र —जातवेदा इति । जातवेदा इति शिवश्च सेत्यादिशक्तिश्च तयोः अन्तरालभूतां मध्यस्थां त्रिकूटादिचारिणीं त्रिकूटादिमन्त्रग्रामसंचारिणीं हसेति सूर्याचन्द्रमस्कां मन्त्रासनगतां सर्वमन्त्रविन्यासस्वेंचक्रासनाम् । अग्नातियतो निदहाति वेद इत्यादिना वेगाजात्मना विश्वा विश्वरूपिणी हकारार्थसूर्यात्मना सन्ततोदया चिच्छक्तिः तदुपरि बैन्दवं शैवतत्त्वं चिन्मात्रं विन्यस्य चिन्मात्रादतिरिक्तं न किंचिदस्तीति । कूटत्रयव्यापके शिवशक्त्यात्मके कले ककारलकारे विचिन्त्य ककारलकारमूर्तिभूताम् ॥ ११ ॥

त्रिपुराम्बाविद्या

सैवेयमग्र्या[1]ननं ज्वलतीति विचिन्त्य त्रिज्योतिषमीश्वरीं त्रिपुरामम्बां विद्यां स्पष्टीकुर्यात् ॥ १२ ॥

एवमेतेन स नः पर्षदति दुर्गाणि विश्वेत्यादिपरप्रकाशिनी प्रत्यग्भूता कार्या विद्येयमाह्वानकर्मणि सर्वतोधीरिति व्याचक्षते ॥१३॥

एवमेतद्विद्याऽष्टकं महामायादेव्यङ्गभूतं व्याचक्षते ॥ १४ ॥

स्वारातिवर्गानग्नि शीतलज्ञानाग्निरूपेण या दहाति दहति सैवेयमग्र्यानने अग्र्यानना ज्वलतीति विचिन्त्य सूर्येन्द्वग्न्यात्मना त्रिज्योतिषम् ॥ १२ ॥ परप्रकाशिनी सम्यज्ज्ञानरूपेण परप्रकाशकत्वात् स्वयं प्रत्यग्भूता कार्या विद्येयमाह्वानकर्मणि कारणीभूतविद्यात्मना ज्ञानरूपिणी कार्यभावमापन्ना विद्यात्मना

[1] सवे—क.

इयमाह्वानकर्मणि आकर्षणादिषट्कर्मोपकर्मसु विनियुज्यते । एवं सर्वाकारेणेयं सर्वकार्यकरणे सर्वतो धीरेति समर्थेति तत्स्वरूपज्ञाः व्याचक्षते ॥ १३ ॥ एवमेतत् त्रिपुराविद्याऽऽदित्रिपुराम्बाविद्याऽन्तं विद्याऽष्टकं महामायादेव्यङ्गभूतं जातवेदस इति मन्त्रनिमग्नं सम्यगुद्धृत्य चिच्छक्त्यात्मना स्पष्टीकृत्य परतत्त्वतया व्याचक्षते तद्विदो व्याख्यां कुर्वन्तीत्यर्थः ॥ १४ ॥

श्रीचक्रस्य अनुलोमक्रमः

देवा ह वै भगवन्तमब्रुवन् महाचक्रनायकं नो ब्रूहीति सार्वकामिकं सर्वाराध्यं सर्वरूपं विश्वतोमुखं मोक्षद्वारं यद्योगिन उपविश्य परं ब्रह्म भित्त्वा निर्वाणमुपविशन्ति ॥ १५ ॥

तान् होवाच भगवान् श्रीचक्रं व्याख्यास्याम इति ॥ १६ ॥

त्रिकोणं त्र्यश्रं कृत्वा तदन्तर्मध्यवर्तिमानयष्टिरेखामाकृष्य विशालं नीत्वाऽग्रतो योनिं कृत्वा [1]पूर्वयोन्यग्ररूपिणीं मानयष्टिं कृत्वा तां सर्वोर्ध्वां नीत्वा योनिं कृत्वाऽऽद्यं त्रिकोणं चक्रं भवति द्वितीयमन्तरालं भवति तृतीयमष्टयोन्यङ्कितं भवति ॥ १७ ॥

अथाष्टारचक्राद्यन्तविदिक्कोणाग्रतो रेखां नीत्वा साध्याद्या-कर्षणचतूरेखां नीत्वेत्येवमधोर्ध्वसंपुटयोन्यङ्कितं कृत्वा कक्षाभ्य ऊर्ध्वगरेखाचतुष्टयं कृत्वा यथाक्रमेण मानयष्टिद्वयेन दशयोन्यङ्कितं चक्रं भवति ॥ १८ ॥

अनेनैव प्रकारेण पुनर्दशारचक्रं भवति ॥ १९ ॥

[1] पूर्वे—अ १, अ २, क.

मध्यत्रिकोणाग्रचतुष्टयाद्रेखा[1]चतुष्टयाग्रकोणेषु संयोज्य तद्-शारांशतो [2]नीतां मान्यष्टिरेखां योजयित्वा चतुर्दशारं चक्रं भवति ॥ २० ॥

ततोऽष्टपत्रसंवृतं चक्रं भवति षोडशपत्रसंवृतं चक्रं भवति पार्थिवं चक्रं चतुर्द्वारं भवति ॥ २१ ॥

एवं सृष्टियोगेन चक्रं व्याख्यातम् ॥ २२ ॥

इन्द्रादयो देवाः सदाशिवमुखतः साङ्गोपाङ्गविशिष्टामादिविद्यां यथावच्छ्रुत्वा तत्पूजापीठसृष्ट्यादिचक्राजेयत्ताबुभुत्सया भगवन्तमब्रुवन्नित्याह—देवा इति । सर्वकामप्रदत्वात् सार्वकामिकं सर्वाराध्यं सर्वरूपं सर्वरूपेण सर्वैरप्याराधितत्वात् विराड्रूपत्वाच्च सर्वतोमुखं चित्तशुद्धिप्राप्यज्ञानद्वारा मोक्षहेतुत्वात् मोक्षद्वारं यच्चक्राराधने योगिनः उपविश्य तत्प्रसादलब्धज्ञानद्वारा प्रत्यक्परब्रह्मणोः भेदग्रन्थिं भित्त्वा प्रत्यग्ब्रह्मैक्यलक्षणं निर्वाणमुपविशन्ति तच्चक्रनायकं नो ब्रूहि ॥ १५ ॥ इति देवैः पृष्टः तान् होवाच भगवान् सदाशिवः श्रीचक्रं व्याख्यास्याम इति ॥ १६ ॥ कस्तत्प्रकार इत्यत्र—आदौ त्रिकोणं त्र्यश्रं कृत्वेत्यादि ॥ १७—२२ ॥

श्रीचक्रस्य प्रतिलोमक्रमः

नवात्मकं चक्रं प्रातिलोम्येन वा वच्मि—प्रथमं चक्रं त्रैलोक्यमोहनं भवति साणिमाद्यष्टकं भवति समात्रष्टकं भवति ससर्वसंक्षोभिण्यादिदशकं भवति सप्रकटं भवति त्रिपुरयाऽधिष्ठितं भवति ससर्वसंक्षोभिणीमुद्रया जुष्टं भवति ॥ २३ ॥

[1] कराग्र—अ १, अ २, क, मु.

[2] 'नीतां' इति नास्ति—उ.

द्वितीयं सर्वाशापरिपूरकं चक्रं भवति सकामाद्याकर्षिणीषोडशकं भवति सगुप्तं भवति त्रिपुरेश्वर्याऽधिष्ठितं भवति सर्वविद्राविणीमुद्रया जुष्टं भवति ॥ २४ ॥

तृतीयं सर्वसंक्षोभणं चक्रं भवति सानङ्गकुसुमाद्यष्टकं भवति सगुप्ततरं भवति त्रिपुरसुन्दर्याऽधिष्ठितं भवति सर्वाकर्षिणीमुद्रया जुष्टं भवति ॥ २५ ॥

तुरीयं सर्वसौभाग्यदायकं चक्रं भवति ससर्वसंक्षोभिण्यादिद्विसप्तकं भवति ससंप्रदायं भवति त्रिपुरवासिन्याऽधिष्ठितं भवति ससर्ववशंकरीमुद्रया जुष्टं भवति ॥ २६ ॥

[1]पञ्चमं तुरीयान्तं सर्वार्थसाधकं चक्रं भवति ससर्वसिद्धिप्रदादिदशकं भवति [2]सकलकौलं भवति त्रिपुरामहालक्ष्म्याऽधिष्ठितं भवति महोन्मादिनीमुद्रया जुष्टं भवति ॥ २७ ॥

षष्ठं सर्वरक्षाकरं चक्रं भवति ससर्वज्ञत्वादिदशकं भवति [3]सनिगर्भं भवति त्रिपुरमालिन्याऽधिष्ठितं भवति महाङ्कुशमुद्रया जुष्टं भवति ॥ २८ ॥

सप्तमं सर्वरोगहरं चक्रं भवति [4]सवशिन्याद्यष्टकं भवति सरहस्यं भवति त्रिपुरसिद्धयाऽधिष्ठितं भवति खेचरीमुद्रया जुष्टं भवति ॥२९॥

अष्टमं सर्वसिद्धिप्रदं चक्रं भवति सायुधचतुष्टयं भवति सपरापररहस्यं भवति त्रिपुराम्बयाऽधिष्ठितं भवति बीजमुद्रया जुष्टं भवति ॥ ३० ॥

[1] 'पञ्चमं' इति नास्ति—अ १, अ २, क, मु.
[2] सकुल—अ १, अ २.
[3] सनिर्गर्भ— अ १, अ २.
[4] सर्ववशि—अ १, मु.

नवमं चक्रनायकं सर्वानन्दमयं चक्रं भवति सकामैश्वर्यादि- त्रिकं भवति सातिरहस्यं भवति महात्रिपुरसुन्दर्याऽधिष्ठितं भवति योनिमुद्रया जुष्टं भवति ॥ ३१ ॥

संक्रामन्ति वै सर्वाणि छन्दांसि चक्राराणि तदेव चक्रं श्रीचक्रम् ॥ ३२ ॥

बिन्दुस्थानमारभ्य भूपुरान्तं सृष्टिचक्रं प्रकटयित्वा अथ नवात्मकमिति । तत्रादौ प्रथममिति । ब्राह्यादिसमात्रष्टकं भवति ॥ २३ ॥ द्वितीयावरणात्मक- द्वितीयचक्रेत्यत्तामाह—द्वितीयमिति ॥ २४—२६ ॥ सकलकौलं सर्वाधिष्ठानं भवति ॥ २७ ॥ सनिगर्भं भवति अन्तराळरहितमित्यर्थः ॥ २८—२९ ॥ पाशाङ्कुशादिसायुधचतुष्टयं भवति ॥ ३०—३१ ॥ एवं नवचक्रलक्षणमुक्तं, छन्दांस्येवाताराणि भूत्वा वर्तन्ते इत्याह—संक्रामन्तीति । यदेवं निष्पन्नं तदेव चक्रं श्रीचक्रम् ॥ ३२ ॥

श्रीचक्रे महात्रिपुरसुन्दरीपूजा

तस्य नाभ्यामग्निमण्डले सूर्याचन्द्रमसौ तत्रोंकारपीठं पूजयित्वा तत्राक्षरं बिन्दुरूपं तदन्तर्गतव्योमरूपिणीं विद्यां परमां स्मृत्वा महात्रिपुरसुन्दरीमावाह्य

क्षीरेण स्नापितं देवि चन्दनेन विलेपितं ।
बिल्वपत्रार्चितं देवि दुर्गेऽहं शरणं गतः ॥

इत्येकयर्चा प्रार्थ्य मायालक्ष्मीमन्त्रेण पूजयेदिति भगवानब्रवीत् ॥३३॥

बिन्दुरूपं ईश्वरस्वरूपं तदन्तर्गतव्योमरूपिणीं चित्सामान्यात्मिकां विद्याम् । अनेन मन्त्रेण देवीं ध्यात्वा पूजयेदित्याह—क्षीरेणेति । सदाशिवो भगवान् ॥ ३३ ॥

पूजाफलम्

एतैर्मन्त्रैर्भगवतीं यजेत् । ततो देवी प्रीता भवति स्वात्मानं दर्शयति । तस्माद्य एतैर्मन्त्रैर्यजति स ब्रह्म पश्यति स सर्वं पश्यति सोऽमृतत्वं च गच्छति । य एवं वेदेति महोपनिषत् ॥ ३४ ॥

तत्तद्भावानुरोधेन सविशेषं निर्विशेषं वा स्वात्मानं दर्शयति । यस्मादेवं तस्मात् । स सर्वं पश्यति, देवताऽतिरिक्तं न किंचिदपि पश्यति । य एवं द्रष्टा सोऽमृतत्वं च गच्छति । देवतासान्निध्यार्थमियमुपनिषदारभ्यते इति यत् प्रतिज्ञातं तत् सम्यगुपसंहृतमित्यर्थः । इति महोपनिषच्छब्दः द्वितीयोपनिषत्समाप्त्यर्थः ॥ ३४ ॥

इति द्वितीयोपनिषत्

## तृतीयोपनिषत्

मुद्रासामान्यलक्षणम्

देवा ह वै मुद्राः सृजेयमिति भगवन्तमब्रुवन् । तान् होवाच भगवा[1]नवनिकृतजानुमण्डलं विस्तीर्य पद्मासनं कृत्वा मुद्राः सृजेतेति ॥ १ ॥

[1] नवनी—अ १, अ २, क.

बिन्दुत्रिकोणवसुकोणदशारयुग्मं
मन्वश्रनागदलसंयुतषोडशारम् ।
वृत्तत्रयं च धरणीसदनत्रयं च
श्रीचक्रमेतदुदितं परदेवतायाः ॥

इत्युक्तरीत्या अनुलोमप्रतिलोमाभ्यां सृष्टिचक्रमुपसंहारचक्रं च यथाव्याख्यातमवगम्य देवाः विशेषतो योन्यादिनवमुद्रालक्षणबुभुत्सया भगवन्तमनुवन्नित्याह—देवा इति । कृत्वा बद्ध्वा ॥ १ ॥

योन्यादिनवमुद्रालक्षणम्

स सर्वानाकर्षयति यो योनिमुद्रामधीते स सर्वं वेत्ति स सर्वफलमश्नुते स सर्वान् भञ्जयति स विद्वेषिणं स्तम्भयति । मध्यमे अनामिकोपरि विन्यस्य कनिष्ठिकाङ्गुष्ठतोऽधीतं मुक्तयोस्तर्जन्योर्दण्डवद्धस्तादेवं[1]विधा प्रथमा संपद्यते ॥ २ ॥

सैव मिलितमध्यमा द्वितीया ॥ ३ ॥

तृतीयाऽङ्कुशाकृतिरिति ॥ ४ ॥

प्रातिलोम्येन पाणी सङ्घर्षयित्वाऽङ्गुष्ठौ साग्रिमौ समाधाय तुरीया ॥ ५ ॥

परस्परं कनीयसेदं मध्यमाबद्धे अनामिके दण्डिन्यौ तर्जन्या[2]वालिङ्ग्यावष्टभ्य मध्यमा[3]नखमिलिताङ्गुष्ठौ पञ्चमी ॥ ६ ॥

सैवाग्रेऽङ्कुशाकृतिः षष्ठी ॥ ७ ॥

[1] विधाय—अ २. विधया—उ १.

[2] वा आलि—अ १, अ २, क.

[3] नमि—उ.

दक्षिणशये वामबाहुं कृत्वाऽन्योन्यानामिके कनीयसीमध्यगते मध्यमे तर्जन्याक्रान्ते सरलासङ्गुष्ठौ खेचरी सप्तमी ॥ ८ ॥

सर्वोर्ध्वे सर्वसंहृति स्वमध्यमानामिकाऽन्तरे कनीयसे पार्श्वयोस्तर्जन्यावङ्कुशाख्ये मुक्ता साङ्गुष्ठयोगतोऽन्योन्यं सममञ्जलिं कृत्वाऽष्टमी ॥ ९ ॥

परस्परमध्यमापृष्ठवर्तिन्यावनामिके तर्जन्याक्रान्ते समे मध्यमे आदायाङ्गुष्ठौ मध्यवर्तिनौ नवमी प्रतिपद्यत इति ॥ १० ॥

तत्र वक्ष्यमाणयोनिमुद्रां स्तुवन् तल्लक्षणमाह—स इति । देवताप्रसादेन स सर्वं वेत्ति । स सर्वान् स्वामित्रान् भञ्जयति भग्नान् करोति । योनिमुद्रालक्षणमाह—मध्यम इति ॥ २ ॥ द्वितीयं बीजमुद्रालक्षणमाह—सेति ॥ ३ ॥ तृतीयं खेचरीमुद्रालक्षणमाह—तृतीयाङ्कुशाकृतिरिति॥ ४ ॥ तुरीयं महाङ्कुशमुद्रालक्षणमाह—प्रातिलोम्येनेति ॥ ५ ॥ पञ्चमं महोन्मादिनीमुद्रालक्षणमाह—परस्परमिति॥ ६ ॥ षष्ठं सर्वशंकरीमुद्रालक्षणमाह—सेवेति ॥ ७ ॥ सप्तमं सर्वाकर्षिणीमुद्रालक्षणमाह—दक्षिणेति ॥ ८ ॥ अष्टमं सर्वविद्राविणीमुद्रालक्षणमाह—सर्वोर्ध्वे इति ॥ ९ ॥ नवमं सर्वसंक्षोभिणीमुद्रालक्षणमाह—परस्परेति । योन्यादिसर्वसंक्षोभिण्यन्तमुद्रानवकलक्षणं सम्यक् प्रपञ्चितमित्यर्थः ॥ १० ॥

पञ्चबाणमुद्रालक्षणम्

सैवेयं कनीयसे समे अन्तरितेऽङ्गुष्ठौ समावन्तरितौ कृत्वा त्रिखण्डाप्यत इति । पञ्च बाणाः पञ्चाद्या मुद्राः स्पष्टाः ॥ ११ ॥

पञ्चबाणमुद्रालक्षणमाह—सेति ॥ ११ ॥

नवबीजोद्धारः

क्रोमङ्कुशा [1]हसखफ्रें खेचरी [2]ह्सौं बीजाष्टमी वाग्भवाद्या नवमी दशमी च संपद्यत इति य एवं वेद ॥ १२ ॥

ततः नवबीजान्युद्धरति—क्रोमिति । क्रों इत्यङ्कुशबीजं ह्सेति शिवशक्तिबीजे खेति मारणबीजं फ्रें इति मोहनबीजं हसखफ्रें इति खेचरीबीजं ह्रेति सूर्यबीजं क्लौमिति कामबीजं केति वाग्भवाद्यबीजं आहत्य बीजानि नव । आदिशब्दार्थकामकूटाद्यबीजं ह्रेति दशमी च संपद्यते । य एवं वेद स मन्त्रसिद्धो भवतीत्यर्थः ॥ १२ ॥

कामकलाचक्रम्

अथातः कामकलाभूतं चक्रं व्याख्यास्यामो ह्रीं क्लीमैं ब्लूं [3]स्त्रौमेते पञ्च कामाः सर्वचक्रं व्याप्य वर्तन्ते । मध्यमं कामं सर्वावसाने संपुटीकृत्य ब्लूङ्कारेण संपुटं व्याप्तं कृत्वा [4]द्विरैंद्वयेन मध्यवर्तिना साध्यं बद्ध्वा भूर्जपत्रे यजति । तच्चक्रं यो वेत्ति स सर्वं वेत्ति स [5]सकलान् लोकानाकर्षयति स सर्वं स्तम्भयति । नीलीयुक्तं चक्रं शत्रून् मारयति गतिं स्तम्भयति । लाक्षायुक्तं कृत्वा सकललोकं वशीकरोति । नवलक्षजपं कृत्वा रुद्रत्वं प्राप्नोति । मातृकया वेष्टितं कृत्वा विजयी भवति । भगाङ्ककुण्डं कृत्वाऽग्निमाधाय हविषा योषितो वशीकरोति । पुरुषे हुत्वा वर्तुले वा हुत्वा

[1] हसखफ्रें—अ २, मु.
[2] ह्सौं—अ १, अ २. हस्त्रीं—क.
[3] स्त्रौमे—अ १, अ २. स्त्रामे—क.
[4] द्रुमद्रै—अ १, अ २, क.
[5] सकललो—अ १, अ २, क.

श्रियमतुलां प्राप्नोति । चतुरश्रे हुत्वा वृष्टिर्भवति । त्रिकोणे हुत्वा शत्रून् मारयति गतिं स्तम्भयति । पुष्पाणि हुत्वा विजयी भवति । महारसैर्हुत्वा परमानन्दनिर्भरो भवति । महारसाः षड्रसाः ॥ १३ ॥

निष्कामिनां स्वात्म्युपायचक्रस्वरूपं सप्रपञ्चं प्रतिपाद्य तद्विपरीतानां कामिनां सर्वकामावाप्तिहेतुतया पञ्चकामभूषितं कामकलाभूतं चक्रं प्रकटयाम इत्याह— अथेति ।तत्र ऐमिति मध्यमं कामं सर्वावसाने क्लीमित्यन्तिमकामे ऐं क्लीं ऐं इति संपुटीकृत्य पुनस्तत् ब्लूंकारेण संपुटं व्याप्तं कृत्वा संपुटं यथा ब्लूंकारान्तरितं भवेत् तथा तेनैव संवेष्ट्य द्विः ऐंद्वयेन मध्यवर्तिना द्विपार्श्वभूषर्णकारद्वयेन मध्यवर्तिना क्लींकारेण सह वाञ्छितार्थसिद्धिं मे कुर्विति साध्यं बध्वा । पुरुषे पुरुषाकारकुण्डे हुत्वा वर्तुले वा कुण्डे हुत्वा । महारसाः षड्रसाः मधुराम्लादय इत्यर्थः ॥ १३ ॥

क्षेत्रेशपूजा

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद
सादनम् ॥

इत्येव[1]माद्यमक्षरं तदन्त्यबिन्दुपूर्णमित्यनेनाङ्कं स्पृशति । गं गणेशाय नम इति गणेशं नमस्कुर्वीत । ॐ नमो भगवते भस्माङ्ग-रागायोग्रतेजसे हनहन दहदह पचपच मथमथ विध्वंसयविध्वंसय हलभञ्जन शूलमूले व्यञ्जनसिद्धिं कुरुकुरु समुद्रं पूर्वप्रतिष्ठितं शोषय-शोषय स्तम्भयस्तम्भय परमन्त्रपरयन्त्रपरतन्त्रपरदूतपरकटकपरच्छेदनकर विदारयविदारय च्छिन्धिच्छिन्धि ह्रीं फट् स्वाहा । अनेन क्षेत्राध्यक्षं पूजयेदिति ॥ १४ ॥

[1] माद्यक्ष—अ १, उ.

अविघ्नेन स्वाभिलषितप्रयोगसिद्धये गणानां त्वेति मन्त्रेण गणेशं नमस्कृत्य क्षेत्रेशं पूजयेदित्याह—गणानामिति । आद्यक्षरं गेति तदन्त्यबिन्दुपूर्णं गमिति । ततः किमित्यत्र—ओमिति । इतिशब्दः मन्त्रसमाप्त्यर्थः ॥ १४ ॥

कुलकुमारीपूजा

कुलकुमारि विद्महे मन्त्रकोटिसुधीमहि ।

ततः कौलिः प्रचोदयात् ॥

इति कुमार्यर्चनं कृत्वा यो वै साधकोऽभिलिखति सोऽमृतत्वं गच्छति स यश आप्नोति स परमायुष्यमथ वा परं ब्रह्म भित्त्वा तिष्ठति य एवं वेदेति महोपनिषत् ॥ १५ ॥

ततः कुमारीगायत्र्या तामर्चयेदित्याह—कुलेति । अभिलिखति अभिध्यायति । यद्ययं निष्कामस्तदा सोऽमृतत्वं गच्छति ब्रह्मविदिति स यश आप्नोति । परं ब्रह्म भित्त्वा ज्ञात्वा तद्भावमेत्य तिष्ठति । इति महोपनिषच्छब्दः तृतीयोपनिषत्परिसमाप्त्यर्थः ॥

इति तृतीयोपनिषत्

## चतुर्थोपनिषत्

मृत्युञ्जयापवादः

देवा ह वै भगवन्तमब्रुवन् देव गायत्रं हृदयं नो व्याख्यातं त्रैपुरं सर्वोत्तमम् ॥ १ ॥

जातवेदससूक्तेनाख्यातं तत्त्रैपुराष्टकम् ।

यद्विद्वा मुच्यते योगी जन्मसंसारबन्धनात् ॥ २ ॥

अथ मृत्युंजयं नो ब्रूहीत्येवं ब्रुवतां सर्वेषां देवानां श्रुत्वेदं वाक्यमथातस्त्र्यम्बकेनानुष्टुभेन मृत्युंजयं दर्शयति ॥ ३ ॥

यन्नो वक्तव्यं तत् सर्वं भवतोक्तमवशिष्टमृत्युञ्जयं ब्रूहि इति देवाः पृच्छन्तीत्याह—देवा इति । आदिविद्यासमन्वयतया प्रथमोपनिषदि ह्येवं गूढार्थं नो व्याख्यातम् । किं तत् त्रैपुरम ॥ १ ॥ किं च —जातवेदससूक्तेनेति । ततः यद्विद्वेति ॥ २–३ ॥

त्र्यम्बकादिशब्दार्थविवरणम्

कस्मात् त्र्यम्बकमिति । त्रयाणां पुराणामम्बकं स्वामिनं तस्मादुच्यते त्र्यम्बकमिति ॥ ४ ॥

अथ कस्मादुच्यते यजामह इति । यजामहे सेवा[1]महे वस्तु महेत्यक्षरद्वयेन कूटत्वेनाक्षरैकेन मृत्युंजयमित्युच्यते तस्मादुच्यते यजामह इति ॥ ५ ॥

अथ कस्मादुच्यते सुगन्धिमिति । सर्वतो यश आप्नोति तस्मादुच्यते सुगन्धिमिति ॥ ६ ॥

अथ कस्मादुच्यते पुष्टिवर्धनमिति । यः सर्वान् लोकान् सृजति यः सर्वान् लोकांस्तारयति यः सर्वान् लोकान् व्याप्नोति तस्मादुच्यते पुष्टिवर्धनमिति ॥ ७ ॥

अथ कस्मादुच्यते उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयेति । [2]संलग्नत्वादुर्वारुकमिव मृत्योः संसारबन्धनात् संलग्नत्वाद्बद्धत्वान्मोक्षी-भवति मुक्तो भवति ॥ ८ ॥

[1] महेस्तुम—अ २. महेवस्तुवहे—अ १, उ १. [2] मुल —अ १, अ २.

अथ कस्मादुच्यते मामृतादिति । अमृतत्वं प्राप्नोत्यक्षरं प्राप्नोति स्वयं रुद्रो भवति ॥ ९ ॥

तत्र त्र्यम्बकशब्दार्थं पृच्छति—कस्मात् त्र्यम्बकमिति । तच्छब्दार्थमाह—त्रयाणामिति । व्यष्टिसमष्ट्यात्मकस्थूलसूक्ष्मकारणशरीराणां जीवेश्वरात्मना अम्बकम् ॥ ४ ॥ यजामहे स्वात्मविद्या सेवामहे स्तुमहेत्यक्षरद्वयेन त्र्यम्बेति तदुपरि कूटस्थेन विद्यमानाक्षरैकेन सबिन्दुककारेण मृत्युञ्जयमित्युच्यते ॥५–७॥ उर्वारुकमिति कश्चन शलाटुविशेषः तदग्रमारभ्य मध्यान्तं चतुर्धा विदार्य तत्र सलवणबृहन्मरीचिचूर्णमापूर्य पुनः सर्वमेकीकृत्य सूत्रेणाबध्य कालान्तरे तद्बन्धमोक्षणतः चतुर्धा भिन्नसन्धिबन्धविमोक्षो भवति तथेन्यारोपितबन्धमोक्षणात् मुक्तो भवतीत्यर्थः ॥ ८–९ ॥

भगवतीदर्शनसाधनमन्त्रः

देवा ह वै भगवन्तमूचुः—सर्वं नो व्याख्यातम् । अथ कैर्मन्त्रैः स्तुता भगवती स्वात्मानं दर्शयति तान् सर्वान् शैवान् वैष्णवान् सौरान् गाणेशान् नो ब्रूहीति ॥ १० ॥

स होवाच भगवान्—

त्र्यम्बकेनानुष्टुभेन मृत्युंजयमुपासयेत् ।
पूर्वेणाध्वना व्याप्तमेकाक्षरमिति स्मृतम् ॥ ११ ॥

ॐ नमः शिवायेति याजुषमन्त्रोपासको रुद्रत्वं प्राप्नोति कल्याणं प्राप्नोति य एवं वेद ॥ १२ ॥

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ १३ ॥

विष्णोः सर्वतोमुखस्य स्नेहो यथा पललपिण्डमोतप्रोत-मनुव्याप्तं व्यतिरिक्तं व्याप्नुत इति व्याप्नुवतो विष्णोस्तत्परमं पदं परं

व्योमेति परमं पदं पश्यन्ति वीक्षन्ते सूरयो ब्रह्मादयो देवास इति सदा हृदय आदधते । तस्माद्विष्णोः स्वरूपं वसति तिष्ठति भूतेष्विति वासुदेव इति ॥ १४ ॥

ॐ नम इति त्रीण्यक्षराणि । भगवत इति चत्वारि । वासुदेवायेति पञ्चाक्षराणि । एतद्वै वासुदेवस्य द्वादशार्णमभ्येति । सोपप्लवं तरति स सर्वमायुरेवैति विन्दते प्राजापत्यं रायस्पोषं गौपत्यं च समश्नुते ॥ १५ ॥

प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपमकार उकारो मकार इति । तानेकधा संभवति तदोमिति ॥ १६ ॥

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ इति ॥ १७ ॥

हंस इत्येतन्मनोरक्षरद्वितीयेन प्रभापुञ्जेन सौरेण घृतमब्जा गोजा ऋतजा अद्रिजा ऋतं सत्याप्रभापुञ्जिन्युषासंध्याप्रज्ञाभिः शक्तिभिः पूर्वं सौरमधीयानः सर्वफलमश्नुते । स व्योम्नि परमे धामनि सौरे निवसते ॥ १८ ॥

गणानां त्वेति त्रैष्टुभेन पूर्वेणाध्वना मनुनैकार्णेन गणाधिपमभ्यर्च्य गणेशत्वं प्राप्नोति ॥ १९ ॥

अथ गायत्री सावित्री सरस्वत्यजपा मातृका प्रोक्ता तया सर्वमिदं व्याप्तमिति ॥ २० ॥

ऐं वागीश्वरि विद्महे क्लीं कामेश्वरि धीमहि । सौस्तन्नः शक्तिः प्रचोदयादिति गायत्री प्रातः सावित्री मध्यन्दिने सरस्वती सायमिति निरन्तरमजपा हंस इत्येव मातृका पञ्चाशद्वर्णविग्रहेणाकारादिक्षकारान्तेन व्याप्तानि भुवनानि शास्त्राणि च्छन्दांसीत्येवं भगवती सर्वं व्याप्नोतीत्येव तस्यै वै नमो नम इति ॥ २१ ॥

तान् भगवानब्रवीदेतैर्मन्त्रैर्नित्यं देवीं स्तौति स सर्वं पश्यति सोऽमृतत्वं च गच्छति य एवं वेदेत्युपनिषत् ॥ २२ ॥

पुनः देवाः कैः मन्त्रैः स्तुता सती स्वात्मानं दर्शयति तान्नो ब्रूहीति पृच्छन्तीत्याह--देवा इति । ऊचुः किमिति सर्वमिति । स्वात्मानं दर्शयति तस्याश्चिच्छक्तित्वेन सर्वात्मकत्वात् ॥ १० ॥ देवैः एवं पृष्टः स होवाच भगवान् किमिति त्र्यम्बकेनेति । एकाक्षरमिति स्मृतं "ओमित्येकाक्षरं विद्धि" इति श्रुतेः ॥ ११–१३ ॥ श्रुतिरेव स्ववाक्यं व्याचष्टे विष्णोरिति ॥ १४–२१ ॥ चिच्छक्त्यतिरिक्तं न किंचिदस्तीति दर्शनाच्छक्त्यंशमपि ग्रसित्वा चिन्मात्रादतिरिक्तं न किंचिदस्तीति ज्ञानसमकालं सोऽमृतत्वं च गच्छति ॥ २२ ॥

इति चतुर्थोपनिषत्

## पञ्चमोपनिषत्

### निर्विशेषब्रह्मजिज्ञासा

देवा ह वै भगवन्तमब्रुवन् स्वामिन्नः कथितं [1]स्फुटं क्रियाकाण्डं सविषयं त्रैपुरमिति । अथ परमं निर्विशेषं कथयस्वेति ॥ १ ॥

[1] सर्वं—अ १. स्पष्टं—अ.

देवाः भगवन्मुखतः सविशेषब्रह्मस्वरूपं सम्यगवगम्य मुख्यामुख्य-साधननिर्विशेषब्रह्मावगतिबुभुत्सया भगवन्तं पृच्छन्तीत्याह—देवा इति । उपासनाकाण्डमपि सम्यक् प्रपञ्चितमिति यथावदवगतम् ॥ १ ॥

परमात्मनिरूपणम्

तान् होवाच भगवान् तुरीयया माययाऽन्त्यया निर्दिष्टं परमं ब्रह्मेति परमपुरुषं चिद्रूपं परमात्मेति । श्रोता मन्ता द्रष्टाऽऽदेष्टा स्प्रष्टाऽऽघोष्टा विज्ञाता प्रज्ञाता सर्वेषां पुरुषाणामन्तः-पुरुषः स आत्मा स विज्ञेय इति ॥ २ ॥

न तत्र [1]लोकाल्लोका न तत्र [2]देवादेवाः पशवोऽपशवस्तापसो न तापसः पौल्कसो न पौल्कसो विप्रा न विप्राः । स इत्येकमेव परं ब्रह्म विभ्राजति निर्वाणम् । न तत्र देवा ऋषयः पितर ईशते । प्रतिबुद्धः सर्वविद्ये[दे]ति ॥ ३ ॥

देवैरेवं पृष्टः तान् होवाच भगवान् । किमिति ? तुरीयया माययाऽन्त्यया ज्ञानविज्ञानसंम्यग्ज्ञानरूपया निर्दिष्टं परमं ब्रह्मेति यदवशिष्यते तदेव परमपुरुषं चिद्रूपं परमात्मेति यूयं जानथ । अयमेव हि स्वाज्ञविकल्पितोपाधियोगात् श्रोतेत्यादि । य एवं दृष्टः स एव श्रुत्याचार्यप्रसादसिद्धस्वाज्ञविकल्पितनानोपाध्य-संभवप्रबोधसमकालं सर्वेषां विश्वविराडोत्रादीनां पुरुषाणामप्यन्तःपुरुषः ॥ २ ॥ न हि तत्र तदतिरेकेण लोकादिविभ्रमोऽस्ति, स्वाज्ञादिदृष्टिमोहे सत्यसति तन्निष्प्रतियोगिकैकं ब्रह्म स्वमात्रमवशिष्यते इत्याह—न तत्रेति । ब्रह्मातिरिक्तं न हि सर्वमस्ति इति यो वेद स सर्ववित् तद्ब्रह्म स्वावशेषधियैतीति ॥ ३ ॥

मनोनिरोधः

तत्रैते श्लोका भवन्ति—

अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ।
यतो निर्विषयो नाम मनसो मुक्तिरिष्यते ॥ ४ ॥

[1] लोका अलोका—उ, मु. [2] देवा अदेवा—उ, मु.

मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥ ५ ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धनं विषया[1]सक्तिर्मुक्त्यै निर्विषयं [2]मनः ॥ ६ ॥
निरस्तविषयासङ्गं [3]संनिरुद्धं मनो हृदि ।
यदा यात्यमनीभावस्तदा तत्परमं पदम् ॥ ७ ॥
तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम् ।
एतज्ज्ञानं च ध्यानं च शेषोऽन्यो ग्रन्थविस्तरः ॥ ८ ॥

अस्मिन्नर्थे एते वक्ष्यमाणाः श्लोकाः मन्त्रा भवन्तीत्याह—तत्रेति । ब्रह्मातिरेकेण मनस्तत्कार्यमस्तीति यदि भ्रान्तिस्तदा अत इति ॥ ४ ॥ शुद्धाशुद्धभेदेन तत् द्विधा भिद्यत इत्याह—मनो हीति ॥ ५–८ ॥

ब्रह्मज्ञानात् ब्रह्मभावप्राप्तिः

नैव चिन्त्यं न चाचिन्त्यं न चिन्त्यं चिन्त्यमेव च ।
पक्षपातविनिर्मुक्तं ब्रह्म संपद्यते ध्रुवम् ॥ ९ ॥

नैव चिन्त्यं स्वातिरिक्तमस्तीति, नचाचिन्त्यं स्वयमपि नास्तीति, एतदुभयमपि न चिन्त्यं, स्वातिरिक्तापह्नवसिद्धः स्वयं निष्प्रतियोगिकब्रह्ममात्रमवशिष्यत इति चिन्त्यमेव च ॥ ९ ॥

सविशेषब्रह्मानुसन्धानात् निर्विशेषब्रह्माधिगमः

स्वरेण [4]संलयेद्योगी स्वरं संभावयेत् परम् ।
अस्वरेण तु भावेन न भावो भाव इष्यते ॥ १० ॥

[1] सक्तंमु—अ १. [2] स्मृतं—अ १. [3] सनिरुध्य—अ १. [4] सक्रमो—अ १.

[1]तद्वेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते क्रमात् ॥ ११ ॥
निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् ।
अप्रमेयमनाद्यं च यज्ज्ञात्वा मुच्यते बुधः ॥ १२ ॥
न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ १३ ॥

स्वरेण हंसयोगेन ॥ १०–१७ ॥

### निरुपाधिकात्मदर्शनम्

एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥ १४ ॥
एक एव हि भूतात्मा भूतेभूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १५ ॥
घटसंवृतमाकाशं [2]नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तथा जीवो नभोपमः ॥ १६ ॥
घटवद्विविधाकारं भिद्यमानं पुनः पुनः ।
तद्भेदे च न जानाति स जानाति च नित्यशः ॥ १७ ॥
[3]शब्दमायावृतो यावत्तावत्तिष्ठति पुष्कले ।
भिन्ने तमसि चैकत्वमेक एवानुपश्यति ॥ १८ ॥

स्वाज्ञानविकल्पितप्रपञ्चे भिन्ने ॥ १८ ॥

[1] तद्वेवं—अ १. [2] भिद्यमा—अ १, उ. [3] स च मा—अ १.

शब्दब्रह्माभ्यासात् परब्रह्माधिगमः

शब्दार्णमपरं ब्रह्म तस्मिन् क्षीणे यदक्षरम् ।
तद्विद्वानक्षरं ध्याये[1]द्यदीच्छेच्छान्तिमात्मनः ॥ १९ ॥
द्वे ब्रह्मणी हि मन्तव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ २० ॥
ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ।' २१ ॥

प्रणवो हि शब्दार्णमिति ॥ १९–२२ ॥

परमात्मदर्शनम्

गवामनेकवर्णानां क्षीरस्याप्येकवर्णता ।
क्षीरवत् पश्यति [2]ज्ञानं लिङ्गिनस्तु गवां यथा ॥ २२ ॥
ज्ञाननेत्रं समाधाय स महत् परमं पदम् ।
निष्कलं निश्चलं शान्तं [3]ब्रह्माहमिति संस्मरेत् ॥ २३ ॥

इत्येकं परंब्रह्मरूपं सर्वभूताधिवासं तुरीयं जानीते सोऽक्षरे परमे व्योमन्यधिवसति ॥ २४ ॥ य एतां विद्यां तुरीयां ब्रह्मयोनिस्वरूपां तामिहायुषे शरणमहं प्रपद्ये ॥ २५ ॥

"अतो निर्विषयं" इत्यारभ्य "ब्रह्माहमिति संस्मरेत्" इत्यन्तं अमृतबिन्दूपनिषदि पदशो व्याख्यातं द्रष्टव्यम् ॥ २३ ॥ एवं वेदनफलमाह—

[1] यदि—क, ख १, ख २. [2] ज्ञानी—मु. [3] ब्रह्मैवाहमिति स्मरेत्—ङ, ढ १.

इतीति ॥ २४ ॥ ब्रह्मयोनिस्वरूपां तुरीयमायायाः ब्रह्माविर्भाव-हेतुत्वात् ॥ २५ ॥

श्रीकामराजविद्यामहिमा

आकाशाद्यनुक्रमेण सर्वेषां वा एतद्भूतानामाकाशः परायणं सर्वाणि ह वा इमानि भूतान्याकाशादेव जायन्ते आकाश एव लीयन्ते तस्मादेव जातानि जीवन्ति तस्मादा[1]काशं बीजं विद्यात् ॥२६॥ तदेवाकाशपीठं स्पार्शनं पीठं तेजःपीठममृतपीठं रत्नपीठं जानीयात् । यो जानीते सोऽमृतत्वं च गच्छति ॥ २७ ॥ तस्मादेतां तुरीयां श्रीकामराजीयामेकादशधा भिन्नामेकाक्षरं ब्रह्मेति यो जानीते स तुरीयं पदं प्राप्नोति य एवं वेदेति महोपनिषत् ॥ २८ ॥

प्रपञ्चकल्पनाबीजं किमित्यत्र ब्रह्मेत्याह—आकाशादीति । यस्मादेवं सर्वाधिकरणं परमाकाशं तस्मात् ॥ २६ ॥ रत्नशब्देन शिष्टाबादिभूतद्वयमुच्यते रत्नस्य स्थलजलजत्वात् । रत्नपीठं पञ्चभूततत्कार्यप्रपञ्चारोपापवादपीठमधिष्ठानं ब्रह्म जानीयात् ॥ २७ ॥ यस्मात् तुर्यमायाप्रदर्शितब्रह्मज्ञानात् तन्मात्रावस्थानलक्षण-कैवल्यसिद्धिर्भवति तस्मात् तुरीयां श्रीकामराजीयां कामराजस्य परमेश्वरस्यानपायिनीम् । यद्वा—कैवल्यश्रीस्वरूपेण यथाकामं यथेच्छं राजत इति श्रीकामराट् परमात्मा तत्संबन्धिनी विद्या श्रीकामराजीया तां केवलप्रणवरूपिणीं अकारोकार-मकारार्धमात्राबिन्दुनादकलाकलाऽतीतशान्तिशान्त्यतीतोन्मनीभेदेन एकादशधा भिन्नां वस्तुतस्तुरीयोङ्काराप्रविद्योतं एकाक्षरं तुर्यतुरीयं ब्रह्म निष्प्रतियोगिकस्वमात्रं इति यो जानीते जानाति स तुरीयं पदं तुर्यप्रविभक्ततुर्यतुर्यं पदं प्राप्नोति । इति-

[1] काशं—अ, अ १, मु.

शब्दः पञ्चमोपनिषत्समाप्त्यर्थः । महोपनिषच्छब्दस्तु त्रिपुरातापिन्युपनिषत्-समाप्त्यर्थः ॥ २८ ॥

इति पञ्चमोपनिषत्

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
श्रीमत्त्रिपुरतपनव्याख्यानं लिखितं स्फुटम् ।
त्रिपुरातपनव्याख्याग्रन्थजातं चतुश्शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे अशीतिसंख्यापूरकं
त्रिपुरातापिन्युपनिषद्विवरणं संपूर्णम्

# देव्युपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

चिच्छक्तेः सर्वात्मरूपेण ब्रह्मत्वम्

सर्वे वै देवा देवीमुपतस्थुः काऽसि त्वं महादेवि ॥ १ ॥

साऽब्रवीदहं ब्रह्मस्वरूपिणी । मत्तः प्रकृतिपुरुषात्मकं जगच्छून्यं चाशून्यं च । अहमानन्दानानन्दाः । विज्ञानाविज्ञानेऽहम् । ब्रह्माब्रह्मणी वेदितव्ये । इत्याहाथर्वणी श्रुतिः ॥ २ ॥

अहं पञ्च भूता[1]न्यपञ्चभूतानि । अहमखिलं जगत् । वेदोऽहमवेदोऽहम् । विद्याऽहमविद्याऽहम् । अजाऽहमनजाऽहम् । अधश्चोर्ध्वं च तिर्यक्चाहम् ॥ ३ ॥

श्रीदेव्युपनिषद्विद्यावेद्यापारसुखाकृति ।
त्रैपदं ब्रह्मचैतन्यरामचन्द्रपदं भजे ॥

इह खलु अथर्वणवेदप्रविभक्तेयं देव्युपनिषत् स्वसार्वात्म्यप्रकटनव्यग्रा निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते ।

[1] न्यहं प—अ १, अ २, क.

देवर्षिपटलश्रीमहादेवीप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—सर्वे इति ॥ १ ॥ या चिच्छक्तिः तैरेवं पृष्टा साऽब्रवीत् । कुतस्ते ब्रह्मतेत्यत्र सर्वात्मरूपेण सर्वकारणब्रह्मतोपपद्यते इत्याह—मत्त इति । स्थावरजङ्गमात्मकं जगत् मत्तः समुद्भूतमित्यर्थः । तज्जगत् स्वज्ञस्वाज्ञदृष्टिभ्यां शून्यं च अशून्यं चेति । अहमपि स्वज्ञादिदृष्ट्या अहमानन्देत्यादि ।

यथैवेदं नभः शून्यं जगच्छून्यं तथैव हि ।
अज्ञस्य दुःखौघमयं ज्ञस्यानन्दमयं जगत् ॥

इत्यादिश्रुत्यनुरोधेन स्वज्ञः स्वातिरिक्तशून्यसिद्धस्वानन्दात्मतया सर्वं पश्यति, स्वाज्ञः तद्विपरीतं पश्यतीत्यर्थः ॥ २ ॥ स्वस्य सार्वात्म्यं सर्वकारणतां च प्रकटयति—अहमिति । पञ्चीकृतापञ्चीकृतभेदेन अहं पञ्चभूतान्यपञ्चभूतानि । अवेदोऽहं प्राकृतभाषाप्रबन्धादेः अवेदत्वात् ॥ ३ ॥

चिच्छक्तेः सर्वधारकत्वम्

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणावुभा बिभर्म्यहमिन्द्राग्नी अहमश्वि-
नावुभौ ॥ ४ ॥
अहं सोमं त्वष्टारं पूषणं भगं दधाम्यहम् ।
[1]विष्णुमुरुक्रमं ब्रह्माणमुत प्रजापतिं दधामि ॥ ५ ॥
अहं दधामि द्रविणं हविष्मते सुप्राव्ये ये यजमानाय सुन्वते ।
अहं राष्ट्री सङ्गमनी वसूनामहं सुवे पितरमस्य मूर्धन् ॥ ६ ॥
मम योनिरप्स्वन्तःसमुद्रे य एवं वेद स देवीपदमाप्नोति ॥ ७ ॥

[1] विष्णमुरु—अ, अ १, अ २, क.

स्वांशभूतैः रुद्रैः रुद्रैः । सर्वाधारात्मना बिभर्मि ॥ ४ ॥ भगं षड्विधैश्वर्यम् । विष्णुमुरुक्रमं चण्डपराक्रमं विष्णुम ॥ ५ ॥ हविष्मते हविःसंपन्नाय सुप्राव्ये सुप्राव्याय शोभनप्रकृष्टाशयाय प्रत्यक्प्रवणचित्ताय । प्रकर्षेण व्येति नश्यतीति प्रव्यं दुष्टचित्तं तद्यस्मात् शोभनचित्तात् प्रगतं स सुप्राव्यः । मां यथावत् सुन्वते स्तुन्वते यजमानाय तद्भावानुरोधेन द्रविणं धनं ज्ञानं वा दधामि ददामीत्यर्थः । वस्वादीनां सम्यग्गमनीयसंचरणीयराष्ट्ररूपिण्यहमित्यर्थः गुणसाम्यात्मना अस्य प्रपञ्चस्य मूर्धन् मूर्धा अहं अस्य प्रपञ्चस्य पितरं ईश्वरमपि सुवे सृजे, "जीवेशावाभासेन करोति" इति श्रुतेः ॥ ६ ॥ अन्तः सम्यगुद्द्रवतीति पुण्डरीकाकारमांसपिण्डः अन्तःसमुद्रः सर्वप्राण्यन्तर्हृत्कमले अप्सु अबादिपञ्चभूतेषु च जीवशिवात्मना मम योनिः स्वरूपं विद्यते इति य एवं वेद स देवीपदं चित्सामान्यरूपं एतीत्यर्थः ॥ ७ ॥

### देवकृतदेवीस्तुतिः

ते देवा अब्रुवन्—

नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै [1]नियताः प्रणताः स्म ताम् ॥ ८ ॥
तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्रपद्ये सुतरां नाशय ते तमः ॥ ९ ॥
देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥ १० ॥
कालरात्रिं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम् ।
सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम् ॥ ११ ॥

[1] नियतं—अ, अ १.

महा[1]लक्ष्मीश्च विद्महे सर्व[2]सिद्धिश्च धीमहि ।
तन्नो देवी प्रचोदयात् ॥ १२ ॥

[3]अदितिरिह जनिष्ट दक्षया दुहिता तव ।
तां देवा अन्वजायन्त भद्रा अमृतबन्धवः ॥ १३ ॥

देवीसुक्तः देवीतत्त्वं देवाः विदित्वा तां नत्वा देवाः स्तुन्वन्तीत्याह—त इति । किमिति ? वक्ष्यमाणमन्त्रैरेवं स्तुन्वन्ति । नमो देव्यै शर्वाण्यै महादेव्यै त्रिमूर्तिजनन्यै शिवायै सततं नमः । यैवमुक्तविशेषणविशिष्टा तां त्वां वयं सदा प्रणताः स्मः ॥ ८ ॥ वैरोचनीं स्वतेजसा विरोचमानाम् । मत्कृते सुतरां ते तव अदर्शनात्मकं तमः नाशय । देवाः यां देवीं वाचं अशरीरवाणीं अजनयन्त तां एवं विश्वरूपाः पशवो नानाजन्तवो वदन्ति । किमिति ? या देवी वाग्रूपिणी सा नोऽस्मान् प्रति इषं अभिलषितं ऊर्जं अन्नं कर्मफलात्मकं पयः वाग्धेनुः सरस्वती भूत्वा दुहाना सती अस्मानेतु वाग्विभूतयः नः उपसुष्टुत भजत ॥१०॥ स्वातिरिक्तभानस्य कालरात्रिम् ॥ ११–१२ ॥ दक्षया दाक्षायण्या त्वया इहादितिः जनिष्ट संजाता । अत इयमदितिः तव दुहिता । तां तस्याः सकाशात् देवा अन्वजायन्त । अतस्ते दौहित्रा वयमिति मत्वा अस्मान् स्वातिरिक्तास्तित्वभ्रमतो मोचयेत्यर्थः ॥ १३ ॥

आदिविद्योद्धारः

कामो योनिः कामकला वज्रपाणि-
गुहा हसा मातरिश्वाऽभ्रमिन्द्रः ।
पुनर्गुहा सकला मायया च
[4]पुरूच्येषा विश्वमाताऽऽदिविद्योम् ॥ १४ ॥

[1] लक्ष्मी च—अ १, अ २, क. लक्ष्म्यै च—अ.
[2] सिद्धी च—अ १, क. सिद्धि च—अ २. सिद्ध्यै च—अ.
[3] अदितिर्ह्यज—मु. [4] पुनःकोशा—अ १, अ २, क, मु.

अथादिविद्यामुद्धरति—कामइति । कामः ककारः योनिः एकारः कामकला ईकारः वज्रपाणिः लकारः गुहा ह्रींकारः हसेत्यत्र हकारः सकारः मातरिश्वा ककारः अभ्रं हकारः इन्द्रो लकारः पुनर्गुहा ह्रींकारः सकलाः सकारककारलकाराः मायया च ह्रींकारः पुरूच्येषा विश्वमाता विशिष्टरूपेयं आदिमूलविद्या प्रणवात्मिका विजृंभत इत्यर्थः ॥ १४ ॥

### आदिविद्यामहिमा

[1]एषाऽऽत्मशक्तिः । एषा विश्वमोहिनी पाशाङ्कुशधनुर्बाणधरा । एषा श्रीमहाविद्या ॥ १५ ॥ य एवं वेद स शोकं तरति ॥ १६ ॥ नमस्ते अस्तु भगवति भवति मातरस्मान् पातु सर्वतः ॥ १७ ॥ सैषाऽष्टौ वसवः । सैषैकादशरुद्राः । सैषा द्वादशादित्याः । सैषा विश्वेदेवाः सोमपा असोमपाश्च । सैषा यातुधाना असुरा रक्षांसि पिशाचा यक्षाः सिद्धाः । सैषा सत्त्वरजस्तमांसि । सैषा प्रजापतीन्द्रमनवः । सैषा ग्रहनक्षत्रज्योर्तींषि कलाकाष्ठाऽऽदिकालरूपिणी । तामहं प्रणौमि नित्यम् ॥ १८ ॥

तापापहारिणीं देवीं भुक्तिमुक्तिप्रदायिनीम् ।
अनन्तां विजयां शुद्धां शरण्यां शिवदां शिवाम् ॥ १९ ॥

येयमादिविद्या एषा ॥ १५–१६ ॥ सर्वतः सर्वात्मना ॥ १७–१९ ॥

### भुवनेश्येकाक्षरीमन्त्रः

वियदीकारसंयुक्तं वीतिहोत्रसमन्वितम् ।
अर्धेन्दुलसितं देव्या बीजं सर्वार्थसाधकम् ॥ २० ॥
एवमेकाक्षरं मन्त्रं यतयः शुद्धचेतसः ।
ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः ॥ २१ ॥

[1] एषाऽस्य—उ, उ १.

भुवनेश्येकाक्षरमनुमुद्धरति—वियदिति । ह्रीमिति ॥ २०–२१ ॥

महाचण्डीनवाक्षरविद्या

वाङ्मया ब्रह्मभूस्तस्मात् षष्ठं वक्त्रसमन्वितम् ।
सूर्यो वामश्रोत्रबिन्दुः [1]संयुताष्टतृतीयकम् ॥ २२ ॥
[2]नारायणेन संयुक्तो वायुश्चाधरसंयुतः ।
विच्चे नवार्णकोऽर्णः स्यान्महदानन्ददायकः ॥ २३ ॥
हृत्पुण्डरीकमध्यस्थां प्रातःसूर्यसमप्रभाम् ।
पाशाङ्कुशधरां सौम्यां वरदाभयहस्तकाम् ।
त्रिनेत्रां रक्तवसनां भक्तकाम[3]दुघां भजे ॥ २४ ॥
नमामि [4]त्वामहं देवीं महाभयविनाशिनीम् ।
महादुर्गप्रशमनीं महाकारुण्यरूपिणीम् ॥ २५ ॥

यस्याः स्वरूपं [5]ब्रह्मादयो न जानन्ति तस्मादुच्यतेऽज्ञेया । यस्या अन्तो न विद्यते तस्मादुच्यतेऽनन्ता । यस्या ग्रहणं नोपलभ्यते तस्मादुच्यतेऽलक्ष्या । यस्या जननं नोपलभ्यते तस्मादुच्यतेऽजा । एकैव सर्वत्र वर्तते तस्मादुच्यत एका । एकैव विश्वरूपिणी तस्मादुच्यते नैका । अत एवोच्यतेऽज्ञेयाऽनन्ताऽलक्ष्याऽजैका नैका ॥ २६ ॥

मन्त्राणां मातृका देवी शब्दानां ज्ञानरूपिणी ।
ज्ञानानां चिन्मयातीता शून्यानां शून्यसाक्षिणी ॥ २७ ॥

[1] संयत्य . . . कः—अ, अ २, क. संयुक्ताष्ट—अ.
[2] एतत् श्लोकार्धं (उ, उ १) कोशयोर्नोपलभ्यते
[3] दुघं—अ २, क. दुहं—अ.
[4] त्वां महादेवीं—अ २. त्वामहं देवि—अ, अ १, क.
[5] ब्रह्मादयोऽपि न—अ २.

यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता ।

तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम् ।

नमामि भवभीतोऽहं संसारार्णवतारिणीम् ॥ २८ ॥

महाचण्डीनवाक्षरमुद्धरति—वाङ्मयेति । योनिमायामन्मथबीजैः सार्कं चामुण्डायै विच्चे इति मनुः ॥ २२–२३ ॥ तामेवं ध्यायेदित्याह—हृदिति ॥ २४–२५ ॥ अज्ञेयानन्तेत्यादिविशेषणैस्तां निर्वक्ति—यस्या इति ॥ २६ ॥ प्राधान्यात् मन्त्राणां मातृकादेवी ॥ २७–२८ ॥

विद्याजपस्तुतिः

इदमथर्वणशीर्षं योऽधीते स पञ्चाथर्वशीर्षजपफलमवाप्नोति ।

इदमथर्वणशीर्षं ज्ञात्वा योऽर्चां स्थापयति ॥ २९ ॥

शतलक्षं प्रजप्त्वाऽपि नार्चासिद्धिं च विन्दति ।

शतमष्टोत्तरं चास्याः पुरश्चर्याविधिः स्मृतः ॥ ३० ॥

दशवारं पठेद्यस्तु सद्यः पापैः प्रमुच्यते ।

महादुर्गाणि तरति महादेव्याः प्रसादतः ॥ ३१ ॥

प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । तत् सायं प्रातः प्रयुञ्जानः पापोऽपापो भवति । निशीथे तुरीयसंध्यायां जप्त्वा वाक्सिद्धिर्भवति । नूतनप्रतिमायां जप्त्वा देवतासांनिध्यं भवति । प्राणप्रतिष्ठायां जप्त्वा प्राणानां प्रतिष्ठा भवति । भौमाश्विन्यां महादेवीसंनिधौ जप्त्वा महामृत्युं तरति य एवं वेदेत्युपनिषत् ॥ ३२ ॥

नारायणादिपञ्चाथर्वशीर्षेति ॥ २९–३१ ॥

य एवं वेद स पुरुषः महादेवताप्रसादात् सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमित्यनुसंधानमृत्युं तरति सदैवमनुसंधानपरो भवतीत्यर्थः। इत्युपनिषच्छब्दः देव्युपनिषत्समाप्त्यर्थः।

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
श्रीदेव्युपनिषद्व्याख्या लिखिता ब्रह्मगोचरा।
श्रीदेव्युपनिषद्व्याख्याग्रन्थः पञ्चाशदीरितः॥

रामतापिन्यादिदेव्युपनिषदन्तं त्रिशताधिकपञ्चसहस्राणि। ईशादिदेव्युपनिषदन्तग्रन्थस्तु चतुर्विंशत्यधिकनवशतोत्तरद्वात्रिंशत्सहस्राणि॥ ३२९२४॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकाशीतिसङ्ख्यापूरकं
देव्युपनिषद्विवरणं संपूर्णम्॥

# बह्वृचोपनिषत्

## वाङ्मे मनसि—इति शान्तिः

### चिच्छक्तिस्वरूपम्

ॐ देवी ह्येकाऽग्र आसीत् । सैव जगदण्डमसृजत ।
कामकलेति विज्ञायते । शृङ्गारकलेति विज्ञायते ॥ १ ॥

बह्वृचाख्यब्रह्मविद्यामहाखण्डार्थवैभवम् ।
अखण्डानन्दसाम्राज्यरामचन्द्रपदं भजे ॥

अथ खलु ऋग्वेदप्रविभक्तेयं बह्वृचोपनिषत् जगत्कारणत्वप्रकटनपूर्वकं सार्वात्म्यप्रतिपादनव्यग्रा निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । आदौ श्रुतिरवान्तरसङ्गत्याऽभिन्ननिमित्तोपादान-जगत्कारणचिच्छक्तिस्वरूपं प्रकटयति—ॐ देवीति । स्वज्ञस्वाज्ञदृष्टिमाश्रित्य परापरब्रह्मरूपेण यद्वस्तु तत् ओं इत्योंकारार्थरूपं तस्योंकारस्य स्वार्थपरापर-ब्रह्ममहिम्ना जगदुपादानतया प्रकृतत्वात् देवीप्रकृतित्वमुच्यते, "प्रणवत्वेन प्रकृतित्वं वदन्ति ब्रह्मवादिनः" इति श्रुतेः। स्वानुप्रविष्टचैतन्यमहिम्ना या दीप्यते सेयं देवी चिच्छक्तिः एकैवाग्रे सृष्टेः पुरा आसीत् सृष्टेः पुराऽव्यक्तशक्तेरनभि-व्यक्तनामरूपकर्मरूपत्वात् । यैवमग्रे निष्पन्ना सैव स्वाविद्यापदात्मकं जगत् अविद्याऽण्डं स्वाभेदेन असृजत सृष्टवती बभूव । या जगन्निदानतया भाता

तस्यास्तनुरीङ्कारात्मना प्रणवात्मना च कामकलेति विज्ञायते, "कामो योनिः कामकला" इति श्रुत्या ईकारस्य कामकलात्वेन वर्णितत्वात् । "शृङ्गेष्वशृङ्गं संयोज्य" इति श्रुत्यनुरोधेन अकारोकारमकाराणां शृङ्गत्वेन व्यपदेशतः शृङ्गाण्यकारादीनि तेषामरमग्रमर्धमात्रा शृङ्गारकलेति विज्ञायते ॥ १ ॥

चिच्छक्तेः ब्रह्मादिस्थावरान्तकारणत्वम्

तस्या एव ब्रह्माऽजीजनत् । विष्णुरजीजनत् । रुद्रोऽजीजनत् । सर्वे मरुद्गणा अजीजनन् । गन्धर्वाप्सरसः किंनरा वादित्रवादिनः समन्तादजीजनन् । भोग्यमजीजनत् । सर्वमजीजनत् । सर्वं शाक्तमजीजनत् । अण्डजं स्वेदजमुद्भिज्जं जरायुजं यत् किंचैतत् प्राणिस्थावरजङ्गमं मनुष्यमजीजनत् ॥ २ ॥

तस्या एव चिच्छक्तेः ब्रह्मादिस्थावरान्तकारणत्वमाह—तस्या इति । इयं चिदनुप्रवेशतः चिच्छक्तिर्भूत्वा ब्रह्मविष्णुरुद्रोपाधित्वेन देवगन्धर्वाप्सरःकिंनराद्युपाधित्वेन जङ्गमस्थावरात्मना चेश्वरेच्छया परिणता यदा भवति तदा वस्तुतो व्याप्यव्यापककलनाविरळमपि निर्विशेषं ब्रह्म स्वाज्ञदृष्ट्या प्रकृत्युत्थावयोपाधिपरिणामानुगतमिव भातं सत् तत्तदुपाधिगुणानुरोधेन ब्रह्मविष्णुरुद्रतां देवगन्धर्वादिरूपतामात्तवत् भातीति यत् तदेव प्रकृतितो जातमित्युपचर्यते, न परमार्थतः, ब्रह्मणो निष्प्रतियोगिकाजत्वरूपत्वात् "अज आत्मा महान् ध्रुवः" इति श्रुतेः । ब्रह्मणो निष्प्रतियोगिकभावरूपेणाजत्वं निरङ्कुशमित्यर्थः ॥ २ ॥

चिच्छक्तेः शब्दतदर्थरूपभावनम्

सैषा परा शक्तिः । सैषा शांभवी विद्या कादिविद्येति वा हादिविद्येति वा सादिविद्येति वा रहस्यमोमों वाचि प्रतिष्ठा ॥ ३ ॥

सैव पुरत्रयं शरीरत्रयं व्याप्य बहिरन्तरवभासयन्ती
देशकालवस्त्वन्तरासङ्गान्महात्रिपुरसुन्दरी वै प्रत्यक् चितिः ॥ ४ ॥

ब्रह्मणोऽजत्वेऽपि सर्वानर्थमूलमायाशक्तिरेव वस्तुतः नानारूपेण जायते इति चेन्न, तस्या अपि निष्प्रतियोगिकभावरूपतयाऽजत्वात् "अजामेकां" इति श्रुतेः,

स्वतो वा परतो वाऽपि न किंचिद्वस्तु जायते ।
सदसत् सदसद्वाऽपि न किंचिद्वस्तु जायते ।
एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते ॥

इति श्रीगौडपादाचार्योक्तेः । तथाऽपि या स्वाज्ञदृष्ट्या चिच्छक्तितां गता सैव शब्दरूपेण तदर्थरूपेण च भातीत्याह—सैषेति । सैषा परा शक्तिः चित्सामान्यरूपत्वात् । सैषा शांभवी विद्या शं अस्मात् भवतीति शंभुः ईश्वरः सत्वसत्वविद्यायाः शंभ्वधिष्ठितत्वात् शांभवीत्वम् । श्रीमत्पञ्चदशाक्षरीप्रविभक्त-क ए ई ल ह्रीं-इति प्रथमखण्डात्मना कादिविद्येति वा-ह स क ह ल ह्रीं-इति द्वितीयखण्डात्मना हादिविद्येति वा-स क ल ह्रीं-इति तृतीयखण्डात्मना सादिविद्येति वा रहस्यं ॐ ॐ वाचि प्रतिष्ठेति यदनधिकारिणे गोपनीयतया रहस्यं निर्विशेषं ब्रह्म तदभेदेन तुरीयोङ्काररूपिणी भूत्वा ॐ वाचि ओंकारप्रभवशब्दजाले तदर्थब्रह्मात्मना तिष्ठतीति ॐ वाचि प्रतिष्ठेत्युच्यते ॥ ३ ॥ या एवं सैव ब्रह्मात्मना सर्वावभासकप्रत्यक्चितिः भवेदित्याह—सैवेति । या चिच्छ. सैव व्यष्टिसमष्टिभेदभिन्नपुरत्रयं स्थूलसूक्ष्मबीजात्मकं शरीरत्रयं विश्वविराडोत्राद्यात्मना व्याप्य बहिः नामरूपविकारजातं अन्तः कामादिवृत्तिसहस्रं च स्वातिरिक्तं नास्तीति प्रकाशयन्ती, यद्वा तद्भावाभावौ प्रकाशयन्ती । देशकालवस्त्वन्तरसङ्गतः प्रकाशकत्वं कुतः इत्यत्र देशकालवस्त्वन्तरासङ्गात् सम्यज्ज्ञानात्मना त्रिपुरं शरीरत्रयं तदुपलक्षिताविद्यापदतत्कार्यजातं सुतरां दारयत्यपह्नवं करोतीति महती च सा त्रिपुरसुन्दरी च महात्रिपुरसुन्दरी वै त्रिपुरसुन्दर्येव प्रत्यक्चितिः । स्वातिरिक्तप्रपञ्चप्रातिलोम्येनाञ्चनात् प्रत्यक्त्वं युज्यत इत्यर्थः ॥४॥

चिच्छक्तेः अद्वितीयत्वम्

सैवात्मा ततोऽन्यदसत्यमनात्मा । अत एषा ब्रह्मसंवित्ति-र्भावाभावकलाविनिर्मुक्ता चिद्विद्याऽद्वितीयाब्रह्मसंवित्तिः सच्चिदानन्द-लहरी महात्रिपुरसुन्दरी बहिरन्तरनुप्रविश्य स्वयमेकैव विभाति । यदस्ति सन्मात्रम् । यद्भाति चिन्मात्रम् । यत् प्रियमानन्दम् । तदेतत् सर्वाकारा महात्रिपुरसुन्दरी । त्वं चाहं च सर्वं विश्वं सर्वदेवता । इतरत् सर्वं महात्रिपुरसुन्दरी । सत्यमेकं ललिताऽऽख्यं वस्तु तद-द्वितीयमखण्डार्थं परं ब्रह्म ॥ ५ ॥

पञ्चरूपपरित्यागादस्वरूपप्रहाणतः ।
अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत् ॥ इति ॥ ६ ॥

भास्यभासकभेदतो द्वैतापत्तिः स्यादित्यत आह—सैवेति । चिच्छक्तौ शक्त्यंशापायसिद्धा या चित् सैवात्मा ततोऽन्यत् शक्त्यंशः असत्यमनात्मा । यत एवं अत एषा चिच्छक्त्यंशापायात् ब्रह्मसंवित्तिः संविन्मात्रब्रह्मरूपिणी भवति । भावाभावकलयोः सत्त्वात् संविन्मात्रता कुत इत्यत आह—भावेति । चापाधि[illegible]टादिकं भावकलोच्यते, अचाक्षुषतया केवलमानसग्राह्यं अभावकलेत्युच्यते, [illegible]देवम् निष्प्रतियोगिकब्रह्मस्तिमात्रतया भावाभावकलाऽयोगात् भावाभावकलाविनि-र्मुक्ता चित् इत्यर्थः । चित्त्वं कुत इत्यत्र विद्या वेदनमात्रस्वरूपत्वात् । स्वातिरिक्तवेद्यादिसत्त्वात् द्वैतापत्तिरित्यत्र अद्वितीया चितः स्वसंवेद्यत्वेन स्वाति-रिक्तवेद्याभावात् । निष्प्रतियोगिकाद्वितीयस्वरूपैव ब्रह्मसंवित्तिरित्यर्थः । कथं पुनरद्वितीया ब्रह्मसंवित्तिः अनृतजडदुःखप्रपञ्चसत्त्वादित्यत आह—सच्चिदानन्द-लहरीति । अनृतजडदुःखजातग्राससच्चिदानन्दलहरी निस्तरङ्गसच्चिदानन्दसमुद्र-रूपेयं महात्रिपुरसुन्दरी स्वाज्ञदृष्टिप्रसक्तबहिरन्तरनुप्रविश्य सर्वाधिष्ठान-सर्वान्तर्यामिरूपेण स्वयमेकैव विभाति । यद्येवं बहिरन्तरनुप्रविष्टा तदा

स्वाविद्यापदतत्कार्यरूपतां भजति, तस्याः सच्चिदानन्दत्वं दुर्लभमित्यत आह—यदिति । स्वाविद्यापदतत्कार्यानन्तकोटिब्रह्माण्डपटलं स्वातिरेकेण यदस्ति तत् सन्मात्रं स्वातिरेकेण यद्भाति तत् चिन्मात्रं स्वातिरेकेण यत्प्रियं तत् आनन्दं आनन्दमात्रं सच्चिदानन्दातिरेकेण स्वाविद्यापदतत्कार्यायोगात् । तदेतत्सर्वाकारा महात्रिपुरसुन्दरी भवतीत्यर्थः । त्वमहमित्यादिकलनाकलित-विश्वस्य सत्त्वात् कथं सच्चिदानन्दमात्रता इत्यत आह—त्वं चेति । सच्चिदानन्दातिरेकेण त्वमहमिदंशब्दवाच्यप्रपञ्चाभावात् सर्वं महात्रिपुरसुन्दर्येवेत्यर्थः । सच्चिदानन्दमिति पदत्रययोगतो द्वैतापत्तिः स्यादित्यत आह—सत्यमिति । असत्यापह्नवसिद्धं सत्यं सन्मात्रं एकमेव । अनेकभेदसत्त्वादेकत्वं कुत इत्यत्र अनेकलक्ष्यभेदजातमपि यत्र विलीयते तल्लयाधिकरणं ललिताऽऽख्यं यत् वस्तु तदद्वितीयं अखण्डार्थं हि परं ब्रह्म निष्प्रतियोगिकाद्वितीयमित्यर्थः ॥ ५ ॥ प्रतियोगित्वेन पञ्चब्रह्मतत्कार्यपञ्चभूतभौतिकसत्त्वादित्यत आह—पञ्चेति । ब्रह्मातिरिक्तं न किंचिदस्ति इति बोधेन सदाशिवादिपञ्चब्रह्मरूपपरित्यागात् विलयात् तदर्वाग्जातानि तत्कार्याणि वियदादिभूतभौतिकानि सर्वाणि तेषां कारणप्रलय-समकालप्रहाणतः कार्यकारणप्रपञ्चलयाधिष्ठानं अधिष्ठेयसामान्याभावात् तद-धिष्ठानं निरधिष्ठानं सन् सन्मात्रं परं तत्त्वं महत् भूमरूपं एकमेवावशिष्यते इत्यर्थः ॥ ६ ॥

प्रत्यक्परचिदैक्यभावना

प्रज्ञानं ब्रह्मेति वा अहं ब्रह्मास्मीति वा भाष्यते ।
तत्त्वमसीत्येव संभाष्यते । अयमात्मा ब्रह्मेति वा अहं ब्रह्मास्मीति वा
ब्रह्मैवाहमस्मीति वा ॥ ७ ॥

इत्थंभूता चित् केन भाव्यते इत्यत आह—प्रज्ञानमिति । उत्तमाधिकारिभिः प्रत्यगभिन्नब्रह्माभिप्रायेण प्रज्ञानं ब्रह्मेति वा अवान्तरवाक्येन अहं ब्रह्मास्मीति वा शिष्यानुभूतिवाक्येन भाष्यते, आचार्यानुभवरूपतत्त्वमसीत्येव

संभाव्यते, पुनरवान्तररूपेण अयमात्मा ब्रह्मेति वा ब्रह्मण्यनात्मताशान्तये स्वात्मन्यब्रह्मताशान्तये च व्यतिहारेण अहं ब्रह्मास्मीति वा ब्रह्मैवाहमस्मीति वा। अयमात्मेत्यादिमहावाक्यानां प्रत्यक्परचितोरैक्यमर्थः। एवं प्रत्यगभिन्नब्रह्मात्मना सदा भाव्यत इत्यर्थः ॥ ७ ॥

### अम्बिकाऽऽदिरूपेण चिच्छक्तिभावना

योऽहमस्मीति वा सोऽहमस्मीति वा योऽसौ सोऽहमस्मीति वा या भाव्यते सैषा षोडशी श्रीविद्या पञ्चदशाक्षरी श्रीमहात्रिपुरसुन्दरी बालाऽम्बिकेति बगलेति वा मातङ्गीति स्वयंवरकल्याणीति भुवनेश्वरीति चामुण्डेति चण्डेति वाराहीति तिरस्करिणीति राजमातङ्गीति वा शुकश्यामलेति वा लघुश्यामलेति वा अश्वारूढेति वा प्रत्यङ्गिरा धूमावती सावित्री सरस्वती गायत्री ब्रह्मानन्दकलेति ॥ ८ ॥

उत्तमाधिकारिभिः यैवं भाविता चिता शक्तियोगेन मध्यमाधिकारिदृष्ट्या सैषा चिच्छक्तिः। कार्यशक्त्यात्मना मातङ्गी गायत्री इति भाव्यते। निर्विशेषब्रह्मज्ञानार्थिभिः ब्रह्मानन्दकलेति नित्यतृप्तात्मना भाव्यत इत्यर्थः ॥ ८ ॥

### ब्रह्मण एव मुख्यदेवत्वम्

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥

इत्युपनिषत् ॥ ९ ॥

यत् ज्ञातव्यं तदेव ज्ञेयं केवलर्ग्भिः किं प्रयोजनं, तद्यथावत् ये जानन्ति ते तन्मात्रमवशिष्यन्ते इत्याह—ऋच इति। अयं मन्त्रः श्वेताश्वतरोपनिषदि व्याख्यातः। इत्युपनिषच्छब्दः बह्वृचोपनिषत्समाप्त्यर्थः ॥ ९ ॥

श्रीवासुदेवेन्द्रशिष्योपशिष्यब्रह्मयोगिना।
बह्वृचोपनिषद्व्याख्या लिखिता ब्रह्मगोचरा।
बह्वृचोपनिषद्व्याख्याग्रन्थः सप्ततिरीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे सप्तोत्तरशतसङ्ख्यापूरकं
बह्वृचोपनिषद्विवरणं सम्पूर्णम्

# भावनोपनिषत्

## भद्रं कर्णेभिः—इति शान्तिः

### शिवस्य शक्तियोगात ईश्वरत्वम्

श्रीगुरुः [1]परमकारणभूता शक्तिः ॥ १ ॥

स्वाविद्यापदतत्कार्यश्रीचक्रोपरि भासुरम् ।
बिन्दुरूपशिवाकारं रामचन्द्रपदं भजे ॥

इह खलु अथर्वणवेदप्रविभक्तेयं भावनोपनिषत् स्वातिरिक्तप्रपञ्चश्रीचक्रासनत्रिपुरातत्त्वप्रकटनव्यग्रा तत्सर्वारोपापवादाधिकरणपरशिवतत्त्वपर्यवसन्ना विजयते । अस्याः संक्षेपतो विवरणमारभ्यते । परमदयावती श्रुतिः देहादावात्मात्मीयाभिमानकवळितस्वाज्ञलोकमुपलभ्य देहादावात्मात्मीयाभिमतिवारणाय स्थूलादिदेहत्रये श्रीचक्रभावनां प्रकटयति—श्रीगुरुरिति । परागभावाश्रीप्रासप्रत्यग्भावश्रीरूपेण गुशब्दवाच्यस्वाज्ञानं रुशब्दवाच्यस्वज्ञानेन द्रावयतीति श्रीगुरुः परमशिवः, तस्य स्वातिरिक्तप्रपञ्चसर्गस्थितिभङ्गकरणपरमकारणभूता शक्तिः, तया योगतः खलु शिव ईश्वरत्वं भजतीत्यत्र—"प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया" इति स्मृतेः ॥ १ ॥

[1] सर्वका—मु.

अध्यात्मदेहत्रयश्रीचक्रभावना

केन ? नवरन्ध्ररूपो देहो नवशक्तिमयं श्रीचक्रम् । वाराही पितृरूपा कुरुकुल्ला[1]बली देवता माता । पुरुषार्थाः सागराः । देहो नवरत्नद्वीपः । आधारनवकमुद्राः शक्तयः । त्वगादिसप्तधातुभिरनेकैः संयुक्ताः संकल्पाः कल्पतरवः । तेजःकल्पकोद्यानम् । रसनया भाव्यमाना मधुराम्लतिक्तकटुकषायलवणरसाः षडृतवः । क्रिया-[2]शक्तिः पीठम् । कुण्डलिनी ज्ञानशक्तिर्गृहम् । इच्छाशक्तिर्महात्रिपुर-सुन्दरी । ज्ञाता होता । ज्ञानमर्घ्यम् । ज्ञेयं हविः । ज्ञातृज्ञान-[3]ज्ञेयानामभेदभावनं श्रीचक्रपूजनम् । नियतिसहितशृङ्गारादयो नव रसा अणिमादयः । कामक्रोधलोभमोहमदमात्सर्यपुण्यपापमया ब्राह्म्याद्यष्ट शक्तयः । पृथिव्यापस्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वा-घ्राणवाक्पाणिपादपायू[4]पस्थविकाराः षोडश शक्तयः । वचनादान-गमनविसर्गानन्दहानोपादानोपेक्षाबुद्धयोऽनङ्गकुसुमादिशक्तयोऽष्टौ । अलम्बुसा कुहूर्विश्वोदरी वरुणा हस्तिजिह्वा यशस्वत्यश्विनी गान्धारी पूषा शङ्खिनी सरस्वतीडा पिङ्गला सुषुम्ना चेति चतुर्दश नाड्यः सर्वसंक्षोभिण्यादिचतुर्दशारदेवताः । प्राणापानव्यानोदानसमाननाग-कूर्मकृकरदेवदत्तधनंजया दश वायवः सर्वसिद्धि[5]प्रदाऽऽदिबहिर्दशार-देवताः । एतद्वायुदशसंसर्गोपाधिभेदेन रेचकपूरकशोषकदाहकप्लावका

[1] भेरुण्डादे—अ.
[2] शक्ति पी—उ, क.
[3] ज्ञेयमेया—अ १, अ २, क.
[4] पस्थमनोवि—अ, मु. पस्थावि—अ १.
[5] प्रदा देवी ब—अ १, अ २, क.

अमृतमिति प्राणमुख्यत्वेन पञ्चविधोऽस्ति । [1]मनुष्याणां मोहको [2]देहको भक्ष्यभोज्यलेह्यचोष्यपेयात्मकं चतुर्विधमन्नं पाचयति । एता दश [3]धनकलाः सर्वज्ञत्वाद्यन्तर्दशारदेवताः। शीतोष्णसुखदुःखे-च्छासत्वरजस्तमोगुणा वशिन्यादिशक्तयोऽष्टौ । शब्दस्पर्शरूपरस-गन्धाः पञ्चतन्मात्राः पञ्च पुष्पबाणा मन इक्षुधनुः । वश्यो बाणो रागः पाशो द्वेषोऽङ्कुशः। अव्यक्तमहत्तत्त्वाहंकारकामेश्वरीवज्रेश्वरी-भगमालिन्योऽन्तस्त्रिकोणाग्रगा देवताः। पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनं पञ्चदश[4]नित्या श्रद्धाऽनुरूपा[5]धिदेवता । तयोः कामेश्वरी सदानन्दघना पूर्णा स्वात्मैक्यरूपा देवता ॥ २ ॥

केन हेतुना देहस्य श्रीचक्रत्वं इत्यत आह—केनेति । नवत्वसाम्यात्, नवरन्ध्ररूपो देहः, विमलादीशानान्तनवशक्तिमयं श्रीचक्रमिति। श्रीचक्रात्मक-देहस्य मातापितरौ कौ इत्यत आह—वाराहीति । वाराही पितृरूपा पुरुष-शक्तित्वात् कुरुकुल्लाबलीति काचन देवता माता । देहाश्रयधर्मादिपुरुषार्थाः सागराः तेषामपारागाधविस्तारत्वात् । तत्र देहो नवरत्नद्वीपः द्वीपस्य सागर-मध्यपातित्वात् । तद्द्वीपाधारशक्तयः काः इत्यत आह—आधारेति । योनि-मुद्राऽऽदिसर्वसंक्षोभिण्यन्तमुद्राऽऽरूढा महात्रिपुरसुन्दर्यादित्रिपुराऽन्ता नव-शक्तयो भवन्ति । एतद्द्वीपसञ्जातकल्पकतरवस्तु त्वगादिसप्तधातुभिरनेकैः अन्तर्बाह्यविकारैः संयुक्ताः नानाविधसङ्कल्पा एव कल्पतरवः । तत्रोद्यानं किमित्यत्र स्वातिरिक्तनानाविधतेजःकल्पको जीव एव उद्यानं उद्यानवज्जीवस्य

[1] " आठराभिर्भवति क्षारको (मारको) द्रावकः क्षोभको जृम्भक इति अपानमुख्य-त्वेन पञ्चविधोऽस्ति " इत्यधिकः पाठो दृश्यते (अ १, अ २) कोशयोः

[2] दाहको—मु.

[3] वह्निकलाः—मु.

[4] नित्याः। श्र—मु.

[5] धीदेवता—अ १, अ २, क.

रमणीयत्वात् । जीवरसनाभाव्यरसाः के इत्यत्र तद्-रसनया भाव्यमाना इति । तत्क्रियाज्ञानेच्छाशक्तिः केत्यत्र—क्रियाशक्तिपीठमिति । तद्-इच्छाशक्तिः ज्ञात्रादित्रिपुटी केत्यत्र—ज्ञानेति । ज्ञात्रादित्रिपुटीनिरसनमेव श्रीचक्रपूजनमित्याह—ज्ञातृज्ञानेति । अणिमादिशक्तयस्तु यस्य यस्य या नियतिस्तया नियतिसहितेति । अष्टशक्तयस्तु कामक्रोधेत्यादि । षोडशशक्तयस्तु पृथिवीत्यादिविकाराः कामाकर्षिण्यादि-शरीराकर्षिण्यन्ताः षोडश शक्तयः अनङ्गकुसुमशक्तयस्तु वचनादानेत्यादि । अनङ्गकुसुमादि-अनङ्गमालिन्यन्तशक्तयः । चतुर्दशारदेवतास्तु अलम्बुसेत्यादि । सर्वसंक्षोभिण्यादि-सर्वद्वन्द्वक्षयंकर्यन्तचतुर्दशारदेवताः । सर्वसिद्धिप्रदादि-सर्वसौभाग्यदायिन्यन्तबहिर्दशारदेवताः । सर्वज्ञत्वादि-स्वेप्सितफलप्रदान्ता अन्तर्दशारदेवताः । वशिन्यादि-कौळिन्यन्तशक्तयोऽष्टौ । तयोः वज्रेश्वरीभगमालिन्योः आद्या कामेश्वरी ॥ २ ॥

देवताया आवाहनाद्युपचारभावना

[1]सलिलं सौहित्यकारणं सत्त्वं कर्तव्यमकर्तव्यमिति भावनायुक्त उपचारः । अस्ति नास्तीति कर्तव्यता उपचारः । बाह्याभ्यन्तःकरणानां रूपग्रहणयोग्यताऽस्त्वित्यावाहनम् । तस्य बाह्याभ्यन्तःकरणानामेकरूपविषयग्रहणमासनम् । रक्तशुक्लपदैकीकरणं पाद्यम् । उज्ज्वलदामोदानन्दासनं दानमर्घ्यम् । [2]स्वच्छं स्वतःसिद्धमित्याचमनीयम् । चिच्चन्द्र[3]मयीसर्वाङ्गस्रवणं स्नानम् । चिदग्निस्वरूपपरमानन्दशक्तिस्फुरणं वस्त्रम् । प्रत्येकं सप्तविंशतिधा भिन्नत्वेनेच्छाज्ञानक्रियाऽऽत्मकब्रह्मग्रन्थिमद्रसतन्तुब्रह्मनाडी ब्रह्मसूत्रम् । स्वव्यतिरिक्तवस्तुसङ्गरहितस्मरणं विभूषणम् । स्वच्छस्वपरिपूरणानुस्मरणं

[1] सलिलमिति—अ १, अ २, क, मु.
[2] स्वच्छत्व—अ १, अ २, क.
[3] मयमितिसर्वाङ्गस्मरणं—उ, उ १.

गन्धः । समस्तविषयाणां मनसः स्थैर्येणानुसंधानं कुसुमम् । तेषामेव सर्वदा स्वीकरणं धूपः । पवनावच्छिन्नोर्ध्वज्वलनसच्चि[1]दुल्काऽऽकाशदेहो दीपः । समस्तयातायातवर्ज्यं नैवेद्यम् । अवस्थात्रयैकीकरणं ताम्बूलम् । मूलाधारादाब्रह्मरन्ध्रपर्यन्तं ब्रह्मरन्ध्रादामूलाधारपर्यन्तं गतागतरूपेण प्रादक्षिण्यम् । तुर्यावस्था नमस्कारः । देहशून्यप्रमातृतानिमज्जनं बलिहरणम् । सत्यमस्ति कर्तव्यमकर्तव्यमौदासीन्यनित्यात्मविलापनं होमः । स्वयं तत्पादुकानिमज्जनं परिपूर्णध्यानम् ॥ ३ ॥

कोऽयमुपचारः इत्यत्र सलिलं सलिलं गुरुमन्त्रात्मदेवतानां सौहित्यकरणं एकीकरणं इति यत् तदेव सतः तत्त्वं सत्त्वं कर्तव्यं कदाऽपि गुरुमन्त्रात्मदेवतानामसौहित्यकरणं अकर्तव्यमिति भावनायुक्तः भावनायोग एव उपचारः । ब्रह्मैवास्मि ब्रह्मातिरिक्तं नास्तीति सदाऽनुसन्धानकर्तव्यता उपचारः द्वैतग्रासाद्वैतात्मज्ञानमेवावाहनादिपरिपूर्णध्यानान्तमुपचारो भवतीत्याह —बाह्येति । बाह्याभ्यन्तःकरणानां स्वस्वविषयरूपग्रहणयोग्यताऽस्त्विल्यावाहनम् । आसनं तु तस्य बाह्याभ्यन्तःकरणानां एकरूपविषयग्रहणं यदेकं ब्रह्म तदेवास्मीति ज्ञानं आसनम् । केवलकुंभकतः सुषुम्नाप्रवेशानन्तरं मूलाधारभ्रूमध्योपरिस्थप्रत्यक्पराभिधानरक्तशुक्लपदैकीकरणं पाद्यम् । अर्घ्यं तु उज्ज्वलदामोदानन्दासनं दानमर्घ्यम । प्रत्यगभिन्नब्रह्मरूपेण सदोज्ज्वलदामोदानन्दरूपेणासनमवस्थानं सदा कर्तव्यमिति स्वयं निश्चित्य स्वशिष्येभ्यः स्वसिद्धान्तप्रदानमर्घ्यं भवतीत्यर्थः । स्वस्य स्वच्छं स्वच्छत्वम् । ब्रह्मसूत्रं तु प्रत्येकं सप्तविंशतिधेत्यादि । इच्छाऽऽदिशक्तित्रयस्य त्रिगुणात्मकतया प्रत्येकं सप्तविंशतिधा भेदः उपपद्यते । नाडीनामपि गुणविकारत्वात् तथात्वम् । तत्प्रवेश निमित्तात् तद्भेदप्रविलापनपूर्वकं ब्रह्मविष्णुरुद्रग्रन्थिमद्रसनाडी सुषुम्नैव ब्रह्मसूत्रं तस्यापरब्रह्मधामसूचकत्वात् । ब्रह्मातिरिक्तं न किंचिदस्तीति स्वच्छम् ।

[1] दुल्कादाका—अ २, क.

समस्तविषयाणां मनसः स्थैर्येण तद्विलापनाधिष्ठानानुसंधानं कुसुमम् । योगकाले प्राणापानाग्न्यैक्यतः सुषुम्नायां सच्चिदानन्दोल्कारूप आकाशदेहः परमो वै दीपः । स्वातिरिक्तविषयात् विषयान्तरेषु समस्तेषु समस्तयातायातवर्ज्यं नैवेद्यम् । तुर्यावस्थायां अवस्थात्रयैकीकरणं ताम्बूलम् । तुर्यावस्था नमस्कारः तुरीयोऽस्मीति ज्ञानस्य नमस्कारार्थत्वात् "नमस्त्वैक्यं" इति श्रुतेः । स्वात्मनः सत्त्वमस्तीति निश्चित्य तदतिरेकेण कर्तव्यमकर्तव्यं वा विद्यत इति सत्त्वप्रसक्तौ तत्र औदासीन्यमात्मविलापनं होमः ॥ ३ ॥

भावनाफलम्

एवं मुहूर्तत्रयं भावनापरो जीवन्मुक्तो भवति । तस्य देवताऽऽत्मैक्यसिद्धिः । चिन्तितकार्याण्ययत्नेन सिध्यन्ति । स एव शिवयोगीति कथ्यते ॥ ४ ॥

एवं भावनाफलमाह—एवमिति । न हि तादृशस्य ब्रह्मास्मीति सदा चिन्तनं विना काचन्न चिन्ता विद्यते । यदि प्राण्यदृष्टानुरोधेन स्यात् तदा स्वपरविषयकचिन्तितकार्याण्ययत्नेन सिध्यन्ति ।

शिवो गुरुः शिवो वेदः शिवो देवः शिवः प्रभुः ।
शिवोऽस्म्यहं शिवः सर्वं शिवादन्यन्न किंचन ॥

इति श्रुतिसिद्धशिवतत्त्वज्ञानी शिवयोगी शिव एवायमित्यर्थः । इत्युपनिषच्छब्दः भावनोपनिषत्समाप्त्यर्थः ॥ ४ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
भावनोपनिषद्व्याख्या लिखिता शिवगोचरा ।
भावनोपनिषद्व्याख्याग्रन्थः पञ्चाशदीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे चतुरशीतिसङ्ख्यापूरकं भावनोपनिषद्विवरणं सम्पूर्णम् ॥

# सरस्वतीरहस्योपनिषत्

वाङ्मे मनसि—इति शान्तिः

सरस्वतीदशश्लोक्याः तत्त्वज्ञानसाधनत्वम्

ऋषयो ह वै भगवन्तमाश्वलायनं संपूज्य पप्रच्छुः—

केनोपायेन तज्ज्ञानं तत्पदार्थावभासकम् ।
यदुपासनया तत्त्वं जानासि भगवन् वद ॥ १ ॥
सरस्वतीदशश्लोक्या सऋचा बीजमिश्रया ।
स्तुत्वा जप्त्वा परां सिद्धिमलभं मुनिपुङ्गवाः ॥ २ ॥

प्रतियोगिविनिर्मुक्तब्रह्मविद्यैकगोचरम् ।
अखण्डनिर्विकल्पात्तरामचन्द्रपदं भजे ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं सरस्वतीरहस्योपनिषत् महासरस्वतीविद्याप्रकटनपूर्वकं षट्समाधिप्रपञ्चनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । ऋषिगणाश्वलायनप्रश्नप्रतिवचनरूपेयं आख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—ऋषय इति । किमिति? केनोपायेनेति ॥ १ ॥ प्रश्नोत्तरं मुनिराह—सरस्वतीति । वक्ष्यमाणया सरस्वतीदशश्लोक्या ॥ २ ॥

दशश्लोक्या ऋष्यादि

ऋषय ऊचुः—

कथं सारस्वतप्राप्तिः केन ध्यानेन सुव्रत ।
महासरस्वती येन तुष्टा भगवती वद ॥ ३ ॥

स होवाचाश्वलायनः—

अस्य श्रीसरस्वतीदशश्लोकमहामन्त्रस्य—अहमाश्वलायन ऋषिः । अनुष्टुप् छन्दः । श्रीवागीश्वरी देवता । यद्वागिति बीजम् । देवीं वाचमिति शक्तिः । प्रणो देवीति कीलकम् । विनियोगस्तत्प्रीत्यर्थे । श्रद्धा मेधा प्रज्ञा धारणा वाग्देवता महासरस्वतीत्येतैरङ्गन्यासः ॥ ४ ॥

नीहारहारघनसारसुधाकराभां
कल्याणदां कनकचम्पकदामभूषाम् ।
उत्तुङ्गपीनकुचकुम्भमनोहराङ्गीं
वाणीं नमामि मनसा वचसां विभूत्यै ॥ ५ ॥

ऋषयस्तं पुनः पप्रच्छुरित्याह—ऋषय ऊचुरिति ॥ ३ ॥ तैरेवं पृष्टः स होवाचाश्वलायनः । वक्ष्यमाणविद्याया ऋषिच्छन्दोदेवताबीजशक्तिकीलककराङ्गन्यासादिकमुच्यते—अस्येत्यादिना ॥ ४ ॥ ध्यानं तु—नीहारेति ॥५–३५॥

प्रणोदेवीतिमन्त्रस्य ऋष्यादि

प्रणोदेवीत्यस्य मन्त्रस्य—भरद्वाज ऋषिः । गायत्री छन्दः । श्रीसरस्वती देवता । प्रणवेन बीज[1]शक्तिकीलकम् । इष्टार्थे विनियोगः । मन्त्रेण न्यासः ॥ ६ ॥

[1] शक्तिः की—मु, ड. (एवमुत्तरपर्वस्वपि).

या वेदान्तार्थतत्त्वैकस्वरूपा [1]परमेश्वरी ।
नामरूपात्मना व्यक्ता सा मां पातु सरस्वती ॥ ७ ॥
ॐ प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती ।
धीनामवित्र्यवतु ॥ ८ ॥

आ नो दिव इति मन्त्रस्य ऋष्यादि

आ नो दिव इति मन्त्रस्य—अत्रिर्ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । ह्रीमिति बीजशक्तिकीलकम् । इष्टार्थे विनियोगः । मन्त्रेण न्यासः ॥ ९ ॥

या साङ्गोपाङ्गवेदेषु चतुर्ष्वेकैव गीयते ।
[2]अद्वैता ब्रह्मणः शक्तिः सा मां पातु सरस्वती ॥ १० ॥
ह्रीं आ नो दिवो बृहतः पर्वतादा
सरस्वती यजता गन्तु यज्ञम् ।
हवं देवी जुजुषाणा घृताची
शग्मां नो वाचमुशती शृणोतु ॥ ११ ॥

पावका न इति मन्त्रस्य ऋष्यादि

पावका न इति मन्त्रस्य—[3]मधुच्छन्दा ऋषिः । गायत्री छन्दः । सरस्वती देवता । श्रीमिति बीजशक्तिकीलकम् । इष्टार्थे विनियोगः । मन्त्रेण न्यासः ॥ १२ ॥

[1] परमार्थतः—अ १, अ २, क, मु.
[2] अद्वैत—अ २, क.
[3] मधुच्छन्दस—उ, मु.

या वर्णपदवाक्यार्थस्वरूपेणैव वर्तते ।
अनादिनिधनाऽनन्ता सा मां पातु सरस्वती ॥ १३ ॥
श्रीं पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धिया वसुः ॥ १४ ॥

चोदयित्री इति मन्त्रस्य ऋष्यादि

चोदयित्रीति मन्त्रस्य—मधुच्छन्दा ऋषिः । गायत्री छन्दः । सरस्वती देवता । ब्लूमिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ॥ १५ ॥

अध्यात्ममधिदैवं च देवानां सम्यगीश्वरी ।
प्रत्यगास्ते वदन्ती या सा मां पातु सरस्वती ॥ १६ ॥
ब्लूं चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् ।
यज्ञं दधे सरस्वती ॥ १७ ॥

महो अर्ण इति मन्त्रस्य ऋष्यादि

महो अर्णेति मन्त्रस्य—मधुच्छन्दा ऋषिः । गायत्री छन्दः । सरस्वती देवता । सौरिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ॥ १८ ॥

अन्तर्याम्यात्मना विश्वं त्रैलोक्यं या नियच्छति ।
रुद्रादित्यादिरूपस्था सा मां पातु सरस्वती ॥ १९ ॥
सौः महो अर्णः सरस्वती प्रचेतयति केतुना ।
धियो विश्वा विराजति ॥ २० ॥

चत्वारि वागिति मन्त्रस्य ऋष्यादि

चत्वारि वागिति मन्त्रस्य—उचथ्यपुत्र ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । ऐमिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ॥ २१ ॥

या प्रत्यग्दृष्टिभिर्जीवैर्व्यज्यमानाऽनुभूयते ।
व्यापिनी ज्ञप्तिरूपैका सा मां पातु सरस्वती ॥ २२ ॥

ऐं चत्वारि वाक् परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति ॥ २३ ॥

यद्वागिति मन्त्रस्य ऋष्यादि

यद्वाग्वदन्तीति मन्त्रस्य—भार्गव ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । क्लीमिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ॥२४॥

नामजात्यादिभिर्भेदैरष्टधा या विकल्पिता ।
निर्विकल्पात्मना व्यक्ता सा मां पातु सरस्वती ॥ २५ ॥

क्लीं यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा ।
चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ॥ २६ ॥

देवीं वाचमिति मन्त्रस्य ऋष्यादि

देवीं वाचमिति मन्त्रस्य—भार्गव ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । सौरिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ॥२७॥

व्यक्ताव्यक्तगिरः सर्वे वेदाद्या व्याहरन्ति याम् ।
सर्वकामदुग्रा धेनुः सा मां पातु सरस्वती ॥ २८ ॥
सौः देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥ २९ ॥

उत त्व इति मन्त्रस्य ऋष्यादि

उत त्व इति मन्त्रस्य—बृहस्पतिर्ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । समिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ॥३०॥
यां विदित्वाऽखिलं बन्धं निर्मथ्या[1]खिलवर्त्मना ।
योगी याति परं स्थानं सा मां पातु सरस्वती ॥ ३१ ॥
सं उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वां विसस्रे जायेव पत्य उशती सुवासाः ॥३२॥

अम्बितम इति मन्त्रस्य ऋष्यादि

अम्बितम इति मन्त्रस्य—गृत्समद ऋषिः । अनुष्टुप् छन्दः । सरस्वती देवता । ऐमिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ॥३३॥
नामरूपात्मकं सर्वं यस्यामावेश्यतां पुनः ।
ध्यायन्ति ब्रह्मरूपैका सा मां पातु सरस्वती ॥ ३४ ॥
ऐं अम्बितमे नदीतमे [2]देवितमे सरस्वति ।
अप्रशस्ता इव स्मसि प्रशस्तिमम्ब नस्कृधि ॥ ३५ ॥

[1] मलवर्त्मनाम्—अ १, अ २, क.   [2] देवीत—ऊ १.

देवताप्रार्थना

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥ ३६ ॥
नमस्ते शारदे देवि काश्मीरपुरवासिनि ।
त्वामहं प्रार्थये नित्यं विद्यादानं च देहि मे ॥ ३७ ॥
अक्षसूत्राङ्कुशधरा पाश[1]पुस्तकधारिणी ।
मुक्ताहारसमायुक्ता वाचि तिष्ठतु मे सदा ॥ ३८ ॥
कम्बुकण्ठी सुताम्रोष्ठी सर्वाभरणभूषिता ।
महासरस्वती देवी जिह्वाग्रे संनिवेश्यताम् ॥ ३९ ॥
या श्रद्धा धारणा मेधा वाग्देवी विधिवल्लभा ।
भक्तजिह्वाग्रसदना शमादिगुणदायिनी ॥ ४० ॥
नमामि यामिनीनाथलेखाऽलंकृतकुन्तलाम् ।
भवानीं भवसंतापनिर्वापणसुधानदीम् ॥ ४१ ॥
यः कवित्वं निरातङ्कं भुक्तिमुक्ती च वाञ्छति ।
सोऽभ्यर्च्यैनां दशश्लोक्या नित्यं स्तौति सरस्वतीम् ॥ ४२ ॥
तस्यैवं स्तुवतो नित्यं समभ्यर्च्य सरस्वतीम् ।
भक्तिश्रद्धाऽभियुक्तस्य षाण्मासात् प्रत्ययो भवेत् ॥ ४३ ॥
ततः प्रवर्तते वाणी स्वेच्छया ललिताक्षरा ।
गद्यपद्यात्मकैः शब्दैरप्रमेयैर्विवक्षितैः ॥ ४४ ॥
अश्रुतो बुध्यते ग्रन्थः प्रायः सारस्वतः कविः ॥ ४५ ॥

देवतां प्रार्थयति—चतुर्मुखेति ॥ ३६–४५ ॥

[1] मस्तक—ड.

भगवत्याः ब्रह्मत्वं प्रकृतित्वं पुरुषत्वं च

[1]सा होवाच सरस्वती—

आत्मविद्या मया लब्धा ब्रह्मणैव [2]सनातनी ।
ब्रह्मत्वं मे सदा नित्यं सच्चिदानन्दरूपतः ॥ ४६ ॥
प्रकृतित्वं ततः सृष्टं सत्त्वादिगुणसाम्यतः ।
सत्यामाभाति चिच्छाया दर्पणे प्रतिबिम्बवत् ॥ ४७ ॥
तेन चित्प्रतिबिम्बेन त्रिविधा भाति सा पुनः ।
प्रकृत्यवच्छिन्नतया पुरुषत्वं पुनश्च [3]मे ॥ ४८ ॥

मयैवं स्तुता भगवती दृष्टिविषये प्रसन्ना भूत्वा स्वानुभूतिप्रकटनेन स्वात्मतत्त्वमुपदिदेशेत्याह—सा होवाच सरस्वतीति । किमुवाचेत्यत्र—आत्मविद्येति । स्वातिरिक्तमनात्मा तदसंभवप्रबोधसिद्ध—स्वयमेवात्मा स्वात्मातिरिक्तं न किंचिदस्ति स्वात्मैव निष्प्रतियोगिकाद्वितीय इति—वेदनमेव स्वात्मविद्या सनातनी पुरा विश्वसृजा ब्रह्मणा प्रसन्नेन मया लब्धा विदितेत्यर्थः । स्वात्मवेदनमात्रतः ब्रह्मत्वं ते कुत इत्यत आह—ब्रह्मत्वमिति । ममानृतजडदुःखात्मकनामरूपप्रपञ्चग्राससच्चिदानन्दरूपत्वात् सदा मे ब्रह्मत्वं सिद्धमेवेत्यर्थः ॥४६॥ प्रकृतिस्त्वद्भिन्नेत्यत आह—प्रकृतित्वमिति । स्वाज्ञदृष्ट्या स्वातिरेकेण या प्रकृता सेयं प्रकृतिः तद्भावः प्रकृतित्वमपि मया सृष्टं कुत इत्यत्र ततो गुणसाम्यतः, सत्त्वादिगुणत्रयं यत्र साम्यं भजति तद्गुणसाम्यं, तद्योगतः प्रकृतित्वमपि स्यादित्यर्थः । किं प्रकृतिर्ब्रह्मवद्वास्तवी इत्याशङ्क्य स्वाज्ञदृष्ट्या मयि विकल्पितेत्याह—सत्यामिति । मयि सत्यां दर्पणे प्रतिबिम्बवत् भाविसर्वानर्थगर्भिणी चिच्छाया

[1] "इत्येवं निश्चयं विप्राः" इत्यधिकः (मु) कोशे.

[2] सनातना—अ १, क, उ १.

[3] ते—अ २, क, मु

चित्सामान्यरूपिणी गुणसाम्यात्मिका मयि विकल्पिता आभातीत्यर्थः ॥ ४७ ॥ एवं त्वयि प्रकृतिकल्पनातः किं स्यादित्यत आह—तेनेति । येयं चितिर्मयि प्रतिबिम्बिता तेन चित्प्रतिबिम्बेन वपुषा सा पुनः प्रकृत्यावरणविक्षेपभेदतो निर्विभागव्यष्टिसमष्टिभेदतो वा त्रेधा विभातीत्यर्थः । तत्र निर्विभागसमष्टिव्यष्टि-प्रकृतियोगतः अविकल्पेश्वरजीवत्वमपि भवेदित्याह—प्रकृतीति । या त्रेधा प्रविभक्ता तत्कलनाविरळं निर्मायं ब्रह्म निष्प्रतियोगिकमेव । निर्विभागगुणसाम्य-साक्षितया पूरणात् पुरुषत्वं, समष्टिप्रकृतिप्राकृतावच्छिन्नान्तर्यामितया पूरणात् पुरुषत्वमीश्वरत्वं, व्यष्टिप्रकृतिप्राकृतावच्छिन्नतया पुरुषत्वं जीवत्वं च पुनश्च मे न स्वतः इत्यर्थः ॥ ४८ ॥

मायावशात् भगवत्या ईश्वरत्वम्

शुद्धसत्त्वप्रधानायां मायायां बिम्बितो ह्यजः ।
सत्त्वप्रधाना प्रकृतिर्मायेति प्रतिपाद्यते ॥ ४९ ॥
सा माया स्ववशोपाधिः सर्वज्ञस्येश्वरस्य हि ।
वश्यमायत्वमेकत्वं सर्वज्ञत्वं च तस्य तु ॥ ५० ॥
सात्त्विकत्वात् समष्टित्वात् साक्षित्वाज्जगतामपि ।
जगत् कर्तुमकर्तुं वा चान्यथा कर्तुमीशते ।
यः स ईश्वर इत्युक्तः सर्वज्ञत्वादिभिर्गुणैः ॥ ५१ ॥

ईश्वरत्वं कथमित्यत्र—शुद्धसत्त्वेति । शुद्धसत्त्वप्रधानमायाप्रतिफलनचैतन्य-मीश्वर इत्यर्थः । माया कीदृशी इत्यत्र—सत्त्वप्रधानेति ॥ ४९ ॥ ईश्वरस्य मायोपाधि-कत्वेन तद्वशवर्तित्वं स्यात् इत्यत आह—सेति । येयं ईश्वरत्वहेतुः सा माया सर्वज्ञेश्वरस्य स्ववशोपाधिः । तस्य मायातत्कार्यासङ्गत्वेन वशीकृतमायत्वात् वश्यमायत्वं स्वातिरिक्तद्वयाभावात् एकत्वं स्वाज्ञविकल्पितं सर्वं स्वदृष्ट्या नेतीति

ज्ञातृत्वात् सर्वज्ञत्वं च तस्यैव ॥ ९० ॥ किंच—स्वदृष्ट्या निर्गुणत्वेऽपि स्वाश्रदृष्टिसमर्पितसत्त्वगुणोपाधित्वात् समष्ट्यारोपाधारत्वात् स्वारोपितजगतामपि तद्भावाभावप्रकाशकतया साक्षित्वात् किं बहुना यो जगत् कर्तुं अकर्तुं अन्यथा वा कर्तुं ईष्टे सर्वज्ञत्वादिगुणैः सोऽयं ईश्वरः इत्युक्तो भवतीत्यर्थः ॥ ९१ ॥

मायाया विक्षेपावरणशक्तिद्वयम्

शक्तिद्वयं हि मायाया विक्षेपा[1]वृतिरूपकम् ।
विक्षेप[2]शक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत् सृजेत् ॥ ९२ ॥
अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः ।
आवृणोत्यपरा शक्तिः सा संसारस्य कारणम् ॥ ९३ ॥

ईश्वरोपाधिमायास्वरूपमुक्त्वा मायाकार्यशक्तिद्वयं तत्कार्यं चाह— शक्तिद्वयमिति । यत् मायायाः कार्यं विक्षेपावृतिरूपकं तत् शक्तिद्वयम् । हिशब्दोऽवधारणे । तत्र विक्षेपकार्यं तु स्थावरजङ्गमतत्प्रविभक्तविविधाकारेण क्षिपति परिणमत इति विक्षेपशक्तिः लिङ्गादि ब्रह्माण्डान्तं जगत् सृजेत् ॥ ९२ ॥ विक्षेपकार्यमुक्त्वा आवरणकार्यमाह—अन्तरिति । स्वान्तर्हृदि दृक् प्रत्यक् दृश्यं अन्तःकरणं तयोः भेदं बहिः सच्चिदानन्दं ब्रह्म नामरूपात्मकः सर्गः तयोः भेदं च या आवरणशक्तिः आवृणोति सेयं अपरा शक्तिः संसारस्य कारणं भवतीत्यर्थः ॥ ९३ ॥

जीवस्वरूपम्

साक्षिणः पुरतो भातं लिङ्गदेहेन संयुतम् ।
चितिच्छायासमावेशाज्जीवः स्याद्व्यावहारिकः ॥ ९४ ॥

[1] वरणात्मकम्—अ १, अ २, क.

[2] शक्तिर्लिङ्गा—अ १, क, उ.

तदावृतजीवस्वरूपमाह—साक्षिण इति । साक्षादीक्षत इति साक्षी तस्य पुरतो भातं स्वाज्ञानं स्वकार्यलिङ्गदेहेन संयुतं चितिः चैतन्यं छाया बुद्धिः स्वाज्ञानं पुरस्कृत्य तयोः समावेशात् ऐक्याध्यासात् व्यावहारिकजीवः स्यात् विश्वो भवतीत्यर्थः ॥ ९४ ॥

आवृतिनाशे भेदनाशः

अस्य जीवत्वमारोपात् साक्षिण्यप्यवभासते ।
आवृतौ तु विनष्टायां भेदे भातेऽपयाति तत् ॥ ९५ ॥
तथा सर्गब्रह्मणोश्च भेदमावृत्य तिष्ठति ।
या शक्तिस्तद्वशाद्ब्रह्म विकृतत्वेन भासते ॥ ९६ ॥
अत्राप्यावृतिनाशे न विभाति ब्रह्मसर्गयोः ।
भेदस्तयोर्विकारः स्यात् सर्गे न ब्रह्मणि क्वचित् ॥ ९७ ॥

जीवस्य जीवत्वं सत्यं इत्याशङ्क्य स्वावृत्यपाये जीवो ब्रह्मेत्याह—अस्येति । अस्य प्रतीचः स्वाज्ञारोपात् जीवत्वं सर्वसाक्षिण्यपि स्वस्मिन् अवभासते । स्वज्ञानसवित्रा ध्वान्तावृतौ विनष्टायां स्वान्तर्विलसितदृग्दृश्ययोः भेदे भाते तत् दृग्दृश्यभेदावरणं अपयाति ॥ ९५ ॥ यथा स्वान्तः या शक्तिः तथा ब्रह्मसर्गयोश्च भेदमावृत्य तिष्ठति तदावरणशक्तिवशात् अविकृतमपि ब्रह्म विकृतत्वेन अवभासते ॥ ९६ ॥ ब्रह्मसर्गभेददर्शनज्ञानतो भेदावृतिर्नश्यतीत्याह—अत्रेति । अत्र बाह्येऽपि ब्रह्मसर्गयोः भेदावृतिनाशे न तयोः भेदो विभाति । तद्भेदविकारः सर्ग एव न कश्चिद्ब्रह्मणि भवेदित्यर्थः ॥ ९७ ॥

सत्प्रपञ्चे ब्रह्मजगद्रूपयोः विवेकः

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥ ९८ ॥

दृश्यमानप्रपञ्चे कोऽयं ब्रह्मांशः कोऽयं प्रकृत्यंशः इत्यत आह—अस्तीति। इदमिदं वस्त्वस्ति इत्यत्र घटपटादिभेदेन इदमंशो भिन्नोऽपि तद्गतास्तित्वस्यैकरूपत्वात् तत्सत् सन्मात्रमुच्यते, "सन्मात्रमसदन्यत्" इति श्रुतेः। इदं भाति इदं भाति इत्यत्र इदमंशो भिन्नोऽपि तदनुस्यूतभानं चित्, "चिन्मात्रमेव चिन्मात्रं" इति श्रुतेः। इदं प्रियं इदं प्रियं इत्यत्र नामरूपविकृतितः इदमंशो भिन्नोऽपि तदनुस्यूतप्रियस्य निरतिशयानन्दरूपत्वात् प्रियमानन्दघनमित्यर्थः। यदस्तित्वभावमापन्नं तदेव भातीति प्रतीत्यर्हं, यत् भातं तदेव प्रियं भवति "सद्घनोऽयं चिद्घन आनन्दघनः" इति श्रुतेः। इदमस्य रूपं इदमस्य नाम इति नामरूपे मिथो भिद्येते। अस्तिभातिप्रियाणां सच्चिदानन्दानां सर्वानुस्यूतत्वेनैकरूपत्वात् आद्यं त्रयं ब्रह्मरूपं, यदपरं नामरूपात्मकं द्वयं तन्मायाजगद्रूपं भवतीत्यर्थः॥ ५८॥

ब्रह्मांशे समाधिविधानम्

उपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्परः।
समाधिं सर्वदा कुर्याद्धृदये वाऽथ वा बहिः॥ ५९॥

स्वान्तर्बाह्यविलसितमायांऽशत्यागपूर्वकं ब्रह्मांशे मनस्समाधानं कुर्यादित्याह—उपेक्ष्येति॥ ५९॥

षड्विधसमाधयः

सविकल्पो निर्विकल्पः समाधिर्द्विविधो हृदि।
दृश्यशब्दा[1]नुभेदेन सविकल्पः पुनर्द्विधा॥ ६०॥
कामाद्याश्चित्तगा दृश्यास्तत्साक्षित्वेन चेतनम्।
ध्यायेद्दृश्यानुविद्धोऽयं समाधिः सविकल्पकः॥ ६१॥

असङ्गः सच्चिदानन्दः स्वप्रभो द्वैतवर्जितः ।
अस्मीतिशब्दविद्धोऽयं समाधिः सविकल्पकः ॥ ६२ ॥
स्वानुभूतिरसावेशाद्दृश्यशब्दावुपेक्षितुः ।
निर्विकल्पसमाधिः स्यान्निवातस्थितदीपवत् ॥ ६३ ॥
[1]हृदि वा बाह्यदेशेऽपि यस्मिन् कस्मिंश्च वस्तुनि ।
समाधिराद्यः सन्मात्रान्नामरूपपृथक्कृतिः ॥ ६४ ॥
स्तब्धीभावो रसास्वादात् तृतीयः पूर्ववन्मतः ।
एतैः समाधिभिः षड्भिर्नयेत् कालं निरन्तरम् ॥ ६५ ॥

हृदये बाह्ये वा सविकल्पनिर्विकल्पभेदेन समाधिर्भिद्यत इत्याह—**सविकल्प इति** । दृश्यशब्दभेदेन सविकल्पोऽपि द्विधा भिद्यत इत्याह—**दृश्येति** ॥ ६० ॥ तत्रान्तर्दृश्यानुविद्धसविकल्पकसमाधिमाह—**कामाद्या इति** । अस्याः कामवृत्तेः संकल्पवृत्तेः संशयादिवृत्तेर्वा भावाभावसाक्षित्वेन यच्चैतन्यं वर्तते तदेवाहमस्मीति ध्यानमनुसन्धानं दृश्यानुविद्धसमाधिः ॥ ६१ ॥ शब्दानुविद्धसमाधिमाह—**असङ्ग इति** । असङ्ग इत्यादिविशेषणविशिष्टं ब्रह्मास्मीति कामादिदृश्योपेक्षापूर्वकं केवलशब्दावलम्बनतया स्थितिः शब्दानुविद्धसविकल्पकसमाधिः ॥ ६२ ॥ स्वान्तर्निर्विकल्पकसमाधिमाह—**स्वानुभूतीति** । ब्रह्मानुभूत्यनुभवबलात् पूर्वानुष्ठितदृश्यशब्दोपेक्षा जायते । तादृशाधिकारिणो निवातस्थितदीपवत् निर्विकल्पकसमाधिर्भवतीत्यर्थः ॥ ६३ ॥ स्वान्तस्समाधित्रयमुक्त्वा बाह्यसमाधित्रयमाह—**हृदीति** । स्वहृदि विभातकामादिदृश्यवत् स्वबाह्यविलसितघटपटादिनामरूपे मिथ्यातदारोपापवादाधारतया यच्चैतन्यं वर्तते तन्नामरूपपृथक्कृतिसिद्धं ब्रह्मास्मीति बाह्यदृश्यानुविद्धसमाधिः । तथा सर्वाधिकरणं ब्रह्मास्मीति नामरूपोपेक्षापूर्वकं शब्दमात्रवृत्तिः बाह्यशब्दानुविद्धसमाधिर्भवती-

[1] हृदीव—ड, मु.

त्यर्थः ॥ ६४ ॥ बाह्यनिर्विकल्पकसमाधिमाह—स्तब्धीभाव इति । बाह्यदृश्यशब्दानुविद्धसमाध्युपेक्षापूर्वकं निवातस्थितदीपवत् स्तब्धीभावोऽयं तृतीयो निर्विकल्पकसमाधिरित्यर्थः । विद्वानेतैरेव कालं नयेदित्याह—एतैरिति ॥ ६५ ॥

निर्विकल्पसाक्षात्कारः

देहाभिमाने गलिते विज्ञाते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र परामृतम् ॥ ६६ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ ६७ ॥
मयि जीवत्वमीशत्वं कल्पितं वस्तुतो न हि ।
इति यस्तु विजानाति स मुक्तो नात्र संशयः ॥
इत्युपनिषत् ॥ ६८ ॥

निर्विकल्पात्मसाक्षात्कारः कदा भवतीत्याशङ्क्य देहादावात्मात्मीयाभिमानासंभवनिर्विशेषब्रह्मज्ञानसमकालं पुरा यत्र यत्र मनो याति तत्र तत्र परामृतपरमात्मैव प्रकाशत इत्याह—देहेति । बहिर्मुखदशायां विद्वन्मनो यत्र यत्र धावति तत्र तत्र ब्रह्मैव विभाति । एवं निर्विकल्पकज्ञानवान् मुनिः निष्प्रतियोगिकब्रह्ममात्रमवशिष्यत इत्यर्थः ॥ ६६ ॥ निष्प्रतियोगिकब्रह्ममात्रज्ञानिनोऽपि स्वाज्ञवत् ग्रन्थिसंशयकर्मसंभवात् कथं विदुषो ब्रह्ममात्रतेत्याशंक्य स्वदृष्ट्या ब्रह्मातिरेकेण ग्रन्थिसंशयकर्मासंभवात् । यद्यस्तीति भ्रान्तिः तदा निर्विशेषब्रह्मज्ञानेन तद[साऽ]पि विलीयत इत्याह—भिद्यत इति । स्वाज्ञविकल्पितसमष्टिप्रपञ्चाधारः परः, व्यष्टिप्रपञ्चापवादाधारः प्रत्यगवरः, तयोर्भेदाभेदौ यत्रासंभवतां गतौ प्रत्यक्परभेदसापेक्षभेदासहनिष्प्रतियोगिकाद्वैतात्मनि स्वावशेषतया दृष्टे सत्येवमस्य साधनचतुष्टयसंपत्त्यासादितपारमहंस्यधर्मपुगवदनुष्ठितसर्ववेदान्तश्रवणमनननिदि – ध्यासनप्रादुर्भूततत्त्वज्ञानिनो हृदयग्रन्थिर्भिद्यते—स्वाविद्यापदतत्कार्यजातं हृच्छ-

ब्देनोच्यते, अयंशब्देन तदारोपापवादाधिकरणमुच्यते, तयोस्तादात्म्यं हृदयग्रन्थिः। तस्मिन् भिन्ने अस्य सर्वसंशयाश्छिद्यन्ते निष्प्रतियोगिकब्रह्ममात्रज्ञानं मयाऽऽत्तमनात्तं वा, यद्यात्तं तदा तद्ब्रह्म साक्षात्कृतं न वा, तस्मिन् साक्षात्कृतेऽपि तन्मात्राऽवशेषलक्षणविदेहकैवल्यमस्ति वा न वा, तत्सिद्धावपि कालान्तरे स्वातिरिक्तास्तित्वभ्रमतः पुनर्जन्म भवेन्नवेत्यादिसर्वसंशयाः तत्त्वज्ञानासिना छिद्यन्ते। छिन्ने संशयपटलेऽस्य सर्वकर्माणि च क्षीयन्ते। तानि कर्माणि त्रिविधानि आगामिसंचितारब्धभेदात्। देहिनो देहारम्भात् परं यत् कृतं पुण्यादिकं तदागामिकर्म स्थूलप्रपञ्चासंभवज्ञानेन विलीयते। अनन्तकोटि-जन्मोपादानकारणं संचितकर्म, तत् स्थूलसूक्ष्मप्रपञ्चापह्नवसिद्धब्रह्मज्ञानेन नश्यति। देहारंभात् परं देहावसानावधि सुखादिफलप्रदं प्रारब्धकर्म, तत् स्थूलसूक्ष्मबीज-प्रपञ्चापह्नवसिद्धब्रह्ममात्रसम्यज्ज्ञानेन नश्यति। एवं कर्मक्षयसमकालं सदाद्या-वृतित्रयं भ्रान्तिजादितादात्म्यत्रयं चाप्यपह्नवं भजति। ततस्तुर्यप्रपञ्चापह्नवसिद्ध-ब्रह्ममात्रतत्त्वदृष्ट्या ग्रन्थिसंशयकर्मावरणतादात्म्यासंभवात् विद्वान् निष्प्रति-योगिकब्रह्ममात्रतया अवशिष्यत इत्यत्र नहि विवादोऽस्तीत्यर्थः॥ ६७॥ यत एवं अतः मयि जीवत्वमिति। स्वस्य निष्प्रतियोगिकत्वेन स्वतिरिक्ततत्कल्पनाया मृग्यत्वात्। विद्याफलमाह—इतीति। "आत्मविद्या मया लब्धा" इत्यादि "कल्पितं वस्तुतो नहि" इत्यन्तं यथावत् यो जानाति स मुक्तो भवति इत्यत्र न हि संशयोऽस्ति॥६८॥ इत्युपनिषच्छब्दः सरस्वतीरहस्योपनिषत्समाप्त्यर्थः।

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
सरस्वतीरहस्यस्य व्याख्यानं लिखितं स्फुटम्।
प्रकृतोपनिषद्व्याख्याग्रन्थः षष्ट्युत्तरं शतम्॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे षड्त्तरशतसङ्ख्यापूरकं सरस्वतीरहस्योपनिषद्विवरणं सम्पूर्णम्॥

# सीतोपनिषत्

## भद्रं कर्णेभिः—इति शान्तिः

सीताया मूलप्रकृतित्वम्

देवा ह वै प्रजापतिमब्रुवन् का सीता किं रूपमिति ॥ १ ॥

स होवाच प्रजापतिः सा सीतेति—

मूलप्रकृतिरूपत्वात् सा सीता प्रकृतिः स्मृता ।

प्रणवप्रकृतिरूपत्वात् सा सीता प्रकृति [1]रुच्यते ॥ २ ॥

इच्छाज्ञानक्रियाशक्तित्रयं यद्भावसाधनम् ।
तद्ब्रह्मसत्तासामान्यं सीतातत्त्वमुपास्महे ॥

अथर्वणवेदप्रविभक्तेयं सीतोपनिषत् ब्रह्मातिरिक्तयाथात्म्यं प्रपञ्चयन्ती प्रवृत्ता । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । देवकदम्बप्रजापतिप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामनुक्रामति—देवा इति ॥१॥ देवैः पृष्टः स होवाच प्रजापतिः । किमिति ? सा सीतेति । या हि मूलप्रकृतित्वेन प्रणवत्वेन प्रकृता सेयं प्रणवमूलप्रकृतिः सीतेत्युच्यते ॥ २ ॥

[1] रित्युच्यते—अ १, क.

सीताप्रकृतेरक्षरार्थः

सीता इति त्रिवर्णात्मा साक्षान्मायामया भवेत् ।
विष्णुः प्रपञ्चबीजं च माया ईकार उच्यते ॥ ३ ॥
सकारः सत्यममृतं प्राप्तिः सोमश्च कीर्त्यते ।
तकारस्तारलक्ष्म्या च वैराजः प्रस्तरः स्मृतः ॥ ४ ॥

सीताप्रकृतेरक्षरार्थमाह—सीता इति। या त्वातिरिक्तमेति प्रतिपादयति सेयं माया ब्रह्मविद्या सीतेति वर्णत्रयसमुदायार्थः । आदौ सीतेत्यत्र—सकारोपरि श्रूयमाण-ईकारार्थमाह—विष्णुरिति । प्रत्यगभेदेन यः सर्वं व्याप्नोति सोऽयं विष्णुः सर्वसाक्षी प्रपञ्चारोपाधिकरणतया प्रपञ्चबीजं ईश्वरचैतन्यं च यामवष्टभ्य आत्मा साक्षीशजीवभावमेति सेयं माया च ईकारस्यार्थ उच्यते ॥ ३ ॥ सकारार्थमाचष्टे—सकार इति । सत्यं अवितथं स्वरूपं अमृतं मरणधर्मरहितं प्राप्तिः कर्मयोगभक्तिज्ञानफलाप्तिः उमया सहितः सोमश्च ईश्वरः सकारशब्दार्थः । तकारार्थं स्पष्टयति—तकार इति । तारः प्रणवः "ओङ्कारेण सर्वा वाक् संतृण्णा" इति श्रुत्यनुरोधेन तारलक्ष्मीः शब्दराशिः सरस्वती तया तारलक्ष्म्या च सह विराजत इति विराट् स एव वैराजः ब्रह्मा यं प्रणम्य सन्तो भवसागरं तरन्ति सोऽयं विराट् प्रस्तरश्च तकार इति स्मृत इत्यर्थः ॥ ४ ॥

सीताया व्यक्ताव्यक्तस्वरूपम्

[1]ईकाररूपिणी सोमाऽमृतावयव[2]दिव्यलंकारस्रङ् मौक्तिकाद्या-भरणालंकृता महामायाऽव्यक्तरूपिणी व्यक्ता भवति ॥ ५ ॥ प्रथमा शब्दब्रह्ममयी स्वाध्यायकाले प्रसन्ना । उद्भवा नरकात्मिका द्वितीया

[1] इकर—अ १, अ २, क.
[2] दिव्या—मु. देव्यलंकाराम्र—उ.

भूतले हलाग्रे समुत्पन्ना । तृतीया [1]ईकाररूपिणी अव्यक्तस्वरूपा भवतीति सीता इत्युदाहरन्ति शौनकीये ॥ ६ ॥

श्रीरामसान्निध्यवशाज्जगदा[2]धारकारिणी ।
उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् ॥ ७ ॥
[3]सीता भवति ज्ञेया मूलप्रकृतिसंज्ञिता ।
प्रणवत्वात् प्रकृतिरिति वदन्ति ब्रह्मवादिनः ॥ इति ॥ ८ ॥

सीताया व्यक्ताव्यक्तस्वरूपं त्र्यक्षरानुरूपस्वरूपं च विशदयति—ईकारेति। गुणसाम्यात्मना ईकाररूपिणी अव्यक्तरूपाऽपि श्रीरामसंकल्पवशात् सोमा सोमवत् प्रियदर्शना अमृतानवद्यावयवैः देवी देदीप्यमाना भगवदलङ्कारदिव्यरूपिणी मौक्तिकाद्याभरणैः स्वेच्छाशक्तिविकल्पितैः नित्यालङ्कृता स्वभावतो महामाया अव्यक्तरूपिणी व्यक्ता भवति ॥ ९ ॥ तस्याः प्रथमरूपं किं इत्यत्र या द्विजानां स्वस्वशाखापूर्वकसर्ववेदशास्त्राध्ययनकाले सरस्वत्यात्मना शब्दब्रह्ममयी प्रसन्ना भवति सेयं प्रथमा शक्तिरिति विज्ञेया । भगवदिच्छया स्वातिरिक्ते ये न रमन्ते ते नराः सम्यज्ज्ञानिनः तेषां यत् कं ब्रह्मभावापत्तिसुखं तदेवात्मा स्वरूपं यस्याः सेयं नरकात्मिका । कदेयमुद्भवतीत्यत्र भगवद्भावमापन्नसम्यज्ज्ञहृदये निरावृतसुखरूपेण सकृत् उद्भवा सदा नित्योद्भवेत्यर्थः । येयं कैवल्यश्रीरिति विश्रुता सेयं द्वितीया सीता लक्ष्मीरूपेण भूतले हलाग्राकर्षणतः समुत्पन्ना भवति नान्यथेत्यर्थः । या अव्यक्तस्वरूपा भवति सेयं गौर्यात्मना ईकाररूपिणी तृतीया भवति । एवं सरस्वत्यादिशक्तित्रयरूपेण कैवल्यश्रीस्वरूपेण च सेयं सीता इति वर्णत्रयार्थतया ज्ञेयेत्यर्थः । एवं ब्राह्मणेन योऽर्थोऽभिहितः तमेतमर्थमथर्वणवेदप्रविभक्तशौनकशाखामस्तकरामतापनीये मन्त्रा उदाहरन्ति ॥ ६ ॥ के ते मन्त्राः इत्यत्र श्रीरामेति । कैवल्यश्र्यात्मना यद्राजते महः तत् श्रीरामशब्दार्थः । तथा च स्मृतिः—

[1] इकार—अ, अ १, अ २, उ १. [2] नन्दका—मु. [3] सीता भगवती ज्ञेया—मु.

स्वान्याध्यपह्नवात् सिद्धा या मुक्तिश्रीर्विजृम्भते ।
तद्रूपतो राजमानं महः श्रीराम ईरितम् ॥ इति ॥

इत्थंभूतश्रीरामसांनिध्यवशात् श्रीराममेव जगदारोपापवादाधारं करोतीति जगदाधारकारिणी भवति । किं च या सर्वदेहिनां अन्तःकरणात्मना जाग्रदादिविमोक्षान्तप्रपञ्चोत्पत्तिस्थितिसंहारान् ईश्वरेण कारयतीति तथोक्ता भवति ॥ ७ ॥ सेयं मूलप्रकृतिसंज्ञिता सीतेति ज्ञेया भवति । कथमस्याः प्रकृतित्वमित्यत्र तुर्यतुर्यार्थप्रणवत्वेन प्रकृतत्वादियं ब्रह्ममात्रप्रकृतिरिति ब्रह्मवादिनो वदन्तीत्यर्थः ॥ ८ ॥

सीताया ब्रह्मत्वम्

अथातो ब्रह्मजिज्ञासेति च ॥ ९ ॥ [1]सेयं सर्ववेदमयी सर्वदेवमयी सर्वलोकमयी सर्वकीर्तिमयी सर्वधर्ममयी सर्वाधारकार्यकारणमयी महालक्ष्मीर्देवेशस्य भिन्नाभिन्नरूपा चेतनाचेतनात्मिका ब्रह्मस्थावरात्मा तद्गुणकर्मविभागभेदाच्छरीररूपा देवर्षिमनुष्यगन्धर्वरूपा असुरराक्षसभूतप्रेतपिशाचभूतादिभूतशरीररूपा भूतेन्द्रियमनःप्राणरूपेति विज्ञायते ॥ १० ॥

यतो ब्रह्मवादिनां एवमाशयः अत इयं ब्रह्मेति ज्ञातव्येत्याह--अथातो ब्रह्मजिज्ञासेति चेति । अथ ब्रह्मातिरिक्तं न किंचिदस्तीति श्रुत्याचार्योपदेशानन्तरमपि यतः स्वाज्ञदृष्ट्या इयं ब्रह्मातिरिक्ततया प्रकृतेव भाति अतः स्वज्ञदृष्ट्यवष्टम्भतः स्वातिरिक्तकलनापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति सम्यज्ज्ञानावधि स्वाज्ञानुभूतप्रकृतिप्राकृतप्रपञ्चे ब्रह्मजिज्ञासा ब्रह्मदृष्टिः कर्तव्येत्यर्थः । चशब्दतः जात्वपि तत्र ब्रह्मातिरिक्तदृष्टिः न कार्येति द्योत्यते ॥ ९ ॥ स्वातिरेकेण वेदलोकादीनां अभिधानादिभेदभिन्नत्वात् कथमियं ब्रह्मतामर्हतीत्याशङ्क्य

[1] सा सर्व—अ १, अ २, क.

वेदलोकादेः स्वविकल्पितत्वेन स्वातिरेकेणाभावात् स्वयमेव सर्वमित्याह— सेति । या ब्रह्ममात्रप्रकृतिः सेयम् ॥ १० ॥

सीताया इच्छाऽऽदिशक्तित्रयत्वम्

सा देवी त्रिविधा भवति शक्त्यात्मना इच्छाशक्तिः क्रियाशक्तिः साक्षाच्छक्तिरिति ॥ ११ ॥

एवं सार्वात्म्यमापन्नाऽपि परिच्छिन्नदृष्टीनां इच्छाऽऽदिशक्तित्रयवत् भातीत्याह—सेति । या सार्वात्म्यदृष्टीनां सर्वरूपतया स्वयमेकैव भाता सा । त्रिविधा कथमित्यत्र इच्छाशक्तिरित्यादि । साक्षाच्छक्तिर्नाम ज्ञानशक्तिः इत्यर्थः ॥ ११ ॥

इच्छाशक्तेः श्रीभूमिनीळाऽऽत्मकत्वम्

इच्छाशक्तिस्त्रिविधा भवति श्रीभूमिनीळाऽऽत्मिका भद्ररूपिणी प्रभावरूपिणी सोमसूर्याग्निरूपा भवति ॥ १२ ॥

इच्छाशक्तेरपि त्रैविध्यमाह—इच्छाशक्तिस्त्रिविधा भवतीति । तत् कथं? इत्यत्र—श्रीभूमिनीळात्मिकेति । श्र्यादिविष्णुपत्न्यभेदरूपत्वात् । श्र्यात्मना भद्ररूपिणी भूम्यात्मना नानाविधपुण्यस्थलरूपेण च प्रभावरूपिणी नीळात्मना सोमसूर्याग्निरूपा भवति इति विज्ञेयेत्यर्थः ॥ १२ ॥

सोमरूपा नीळा

सोमात्मिका ओषधीनां प्रभवति कल्पवृक्षपुष्पफललतागुल्मात्मिका औषधभेषजात्मिका अमृतरूपा देवानां महस्तोमफलप्रदा अमृतेन तृप्तिं जनयन्ती देवानामन्नेन पशूनां तृणेन तत्तज्जीवानाम् ॥ १३ ॥

सोमात्मना किं भवतीत्यत आह—सोमेति। "पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः" इति स्मृत्यनुरोधेन सोमात्मिकेति। औषधभेषजयोः न पौनरुक्त्यं, औषधशब्देन तत्तद्रोगहरमूलिकाविशेषा उच्यन्ते, भेषजशब्देन भिषक्चिकित्सकाः इत्यर्थभेददर्शनात्। अमृतरूपा देवानां तृप्तिहेतुत्वात् महस्तोमफलप्रदा महान् स्तोमः परापरविद्यारूपः तत्फलप्रदा। तत्तज्जीवानां तत्तद्भोज्यप्रदानेन तृप्तिं जनयतीत्यर्थः॥ १३॥

सूर्यादिरूपा नीला

सूर्यादिसकलभुवनप्रकाशिनी दिवा रात्रिः कालकलानिमेषमारभ्य घटिकाऽष्टयाम[1]दिवसवाररात्रिभेदेन पक्षमासर्त्वयनसंवत्सरभेदेन मनुष्याणां शतायुःकल्पनया प्रकाशमाना चिरक्षिप्रव्यपदेशा निमेषमारभ्य परार्धपर्यन्तं कालचक्रं जगच्चक्रमित्यादिप्रकारेण चक्रवत् परिवर्तमाना। सर्वस्यैतस्यैव कालस्य विभागविशेषाः प्रकाशरूपाः [2]कालरूपा भवन्ति॥ १४॥

सूर्यादिरूपेण जगच्चक्रचालिकेयं भवतीत्याह—सूर्यादीति। स्वयमेव सूर्यचन्द्राद्यात्मना दिवारात्रिर्भूत्वा सकललोकान् प्रकाशयतीत्यर्थः। किंच—कालकलेति। प्रकाशमाना सती स्वविकल्पितानृतजडदुःखप्रपञ्चं सच्चिदानन्दात्मना व्याप्य चिरं रक्षतीति यस्यास्तत्त्वं प्रकर्षेण व्यपदिश्यते सेयं चिरक्षिप्रव्यपदेशा। किंच निमेषमिति। कालचक्रं, कालानां भ्रमणात्मकत्वात् चक्रत्वं, तथा स्वाविद्याद्वयतत्कार्यात्मना जगच्चक्रं इत्यादिप्रकारेण चक्रवत् परिवर्तमाना स्वाधिष्ठानाभेदादित्यर्थः। एवं नानाविभागाः प्रकृतेरेव नाधिष्ठानस्येत्यत आह—सर्वस्येति। स्वातिरिक्तधियं कालयतीति काल ईश्वरः "स एष कालो भुवनस्य गोप्ता" इति श्रुतेः। सर्वस्य सर्वारोपापवादाधिकरणस्य एतस्यैव

[1] दिवसरात्रि—उ, उ १.  [2] कालारूपा—उ, उ १.

कालस्य ईश्वरस्य इच्छाऽऽदिशक्तित्रयप्रविभक्ता नानाविभागविशेषाः स्वाज्ञदृष्ट्या जडत्वेन नानात्वेन च भाता अपि स्वज्ञदृष्ट्या यतः स्वप्रकाशरूपा अतः कालरूपा भवन्ति । स्वातिरेकेण मायाप्रकृतिसत्त्वे एवं विभाग उपपद्यते । वस्तुतः कालरूपेश्वरस्य स्वमात्रप्रकृतित्वेऽपि स्वाज्ञादिदृष्टिमाश्रित्य नानात्वमपि युज्यते न स्वत इत्यर्थः ॥ १४ ॥

### अग्निरूपा नीळा

अग्निरूपा अन्नपानादि प्राणिनां क्षुत्तृष्णाऽऽत्मिका देवानां मखरूपा वनौषधीनां शीतोष्णरूपा काष्ठेष्वन्तर्बहिश्च नित्यानित्यरूपा भवति ॥ १५ ॥

तत् कथं स्वाज्ञदृष्ट्या नानात्वं? इत्यत्र---अग्निरूपेति । अन्नपानादिरूपा । देवानां मखरूपा तेषां तदुपजीवित्वात् । वनौषधीनां शीतोष्णरूपा शीतोष्णादेः वनौषधिवर्धकत्वात् । स्वाविद्यापदतत्कार्यकाष्ठेष्वन्तर्बहिश्च विश्वविराडोत्रादिद्रवरूपेण व्याप्य चैतन्यजडात्मना नित्यानित्यरूपा भवति ॥ १५ ॥

### श्रीदेवीरूपा इच्छाशक्तिः

श्रीदेवी त्रिविधं रूपं कृत्वा भगवत्संकल्पानुगुण्येन लोकरक्षणार्थं रूपं धारयति श्रीरिति लक्ष्मीरिति लक्ष्यमाणा भवतीति विज्ञायते ॥ १६ ॥

या वस्तुतः परमार्थनित्या चिच्छक्तिः सैव श्रीदेवी त्रिविधं श्रीभूमिनीळाऽऽत्मकं रूपं कृत्वा । कथं एवं ज्ञायते इत्यत्र तज्ज्ञैः श्रीरित्यादि ॥ १६ ॥

### भूदेवीरूपा इच्छाशक्तिः

भूदेवी ससागराम्भस्सप्तद्वीपा वसुन्धरा भूरादिचतुर्दशभुवनानामाधाराधेया प्रणवात्मिका भवति ॥ १७ ॥

भूदेव्यात्मना किं भवतीत्यत आह—भूदेवीति । पिच्छकत्यात्मना आधाराधेया स्वेन रूपेण प्रणवात्मिका भवति ॥ १७ ॥

इच्छाशक्तेः सर्वरूपत्वम्

नीला [1]च विद्युन्मालिनी सर्वौषधीनां सर्वप्राणिनां पोषणार्थं सर्वरूपा भवति ॥ १८ ॥

नीळात्मना सर्वरूपा भवतीत्याह—नीळेति । नीळा च सर्वतोमुखतया विद्युन्मालिनी भूत्वा ॥ १८ ॥

इच्छाशक्तेः भुवनाधारत्वम्

समस्तभुवनस्याधोभागे जलाकारात्मिका मण्डूकमयेति भुवनाधारेति विज्ञायते ॥ १९ ॥

केन रूपेण भुवनाधारेत्यत आह—समस्तेति ॥ १९ ॥

क्रियाशक्तेः नादोद्भवः

क्रियाशक्तिस्वरूपम् । हरेर्मुखान्नादः । तन्नादाद्बिन्दुः । बिन्दोरोंकारः । ओंकारात् परतो रामवैखानसपर्वतः । तत्पर्वते कर्मज्ञानमयीभिर्बहुशाखा भवन्ति ॥ २० ॥

इच्छाशक्तिस्वरूपमुक्त्वा क्रियाशक्तिस्वरूपमाह–क्रियाशक्तिस्वरूपमिति । यया सर्वं क्रियते सेयं क्रियाशक्तिः, तस्याः स्वरूपमुच्यत इति शेषः । क्रियाशक्तिस्वरूपमात्मैव स्वातिरिक्तं स्वावशेषं हरतीति हरिः नारायणः परमात्मा

[1] च भुवनि—मु.

तन्मुखात् वैखरीप्रपञ्चहेतुः नादः प्रादुर्बभूव । तदव्यक्तरूपात् नादात् महदात्मको बिन्दुः । तथाविधबिन्दोः अहंकारात्मक ओङ्कारः । अहंकारादिमोतिकान्तभावमापन्नात् ओङ्कारात् परतः वैलक्षण्यतो यो राजते महीयते सोऽयं रामो वैखानसवालखिल्यादिमौनिपटलाश्रयसच्चिदानन्दपर्वतो भवति । तथाविधपर्वते परमात्मनि कर्मज्ञानमयीभिः कर्मोपासनाज्ञानकाण्डप्रकाशकैः ऋगादिचतुर्वेदतरुभिः संजाता बहवः अशीत्यधिकशतोत्तरसहस्रसंख्याकाः शाखाः भवन्ति ॥ २० ॥

साङ्गोपाङ्गवेदतच्छाखाकथनम्

तत्र त्रयीमयं शास्त्रमाद्यं सर्वार्थदर्शनम् ।
ऋग्यजुःसामरूपत्वात् त्रयीति परिकीर्तिता ॥ २१ ॥
[हेतुना] कार्यसिद्धेन चतुर्धा परिकीर्तिता ।
ऋचो यजूंषि सामान्यथर्वाङ्गिरसस्तथा ॥ २२ ॥
चातुर्होत्रप्रधानत्वाल्लिङ्गादित्रितयं त्रयी ।
अथर्वाङ्गिरसं रूपं सामऋग्यजुरात्मकम् ॥ २३ ॥
तथाऽऽदिशन्त्याभिचारसामान्येन पृथक् पृथक् ।
एकविंशतिशाखायामृग्वेदः परिकीर्तितः ॥ २४ ॥
शतं च नव[1]शाखासु यजुषामेव जन्मनाम् ।
साम्नः सहस्रशाखाः स्युः पञ्चशाखा अथर्वणः ॥ २५ ॥
वैखानसमतं तस्मिन्नादौ प्रत्यक्षदर्शनम् ।
स्मर्यते मुनिभिर्नित्यं [2]वैखानसमतः परम् ॥ २६ ॥

[1] शाखाःस्युः—अ, उ, उ १. [2] लब्ध्वा वै—अ, अ २, उ १, क.

कल्पो व्याकरणं शिक्षा निरुक्तं ज्योतिषं छन्दः एतानि षडङ्गानि ॥ २७ ॥

उपाङ्गमयनं चैव मीमांसा न्यायविस्तरः ।
धर्मज्ञसेवितार्थं च वेदवेदोऽधिकं तथा ॥ २८ ॥
[1]निबन्धाः सर्वशाखा च समयाचारसङ्गतिः ।
धर्मशास्त्रं महर्षीणामन्तःकरणसंभृतम् ॥
इतिहासपुराणाख्यमुपाङ्गश्च प्रकीर्तितः ॥ २९ ॥
वास्तुवेदो धनुर्वेदो [2]गान्धर्वो दैविकस्तथा ।
आयुर्वेदश्च पञ्चैते उपवेदाः प्रकीर्तिताः ॥ ३० ॥
दण्डो नीतिश्च वार्ता च विद्या वायुजयः परः ।
एकविंशतिभेदोऽयं स्वप्रकाशः प्रकीर्तितः ॥ ३१ ॥

चतुर्वेदस्वरूपं तच्छाखाभेदं च प्रकटयति—तत्रेति । काण्डत्रयार्थप्रकाशकत्वं सर्वार्थदर्शनत्वम् । कथं एतस्य त्रयीत्वं इत्यत्र—ऋग्यजुस्सामरूपत्वादिति ॥ २१ ॥ अथर्वणपृथक्करणं किमर्थं इत्यत्र अथर्वणस्य उपासनाज्ञानकाण्डप्रकाशकत्वेऽपि कर्मकाण्डाप्रकाशनात् पृथक्करणं केवलोपासनाज्ञानकाण्डकार्यनिष्पत्तेः ऋगादिसाम्यं चाह—कार्येति । उपासनाज्ञानकाण्डनिष्ठितकार्यसिद्धेन हेतुना ॥ २२ ॥ ऋगादेः त्रयीत्वे हेतुः—चातुर्होत्रेति । ब्रह्मा होता अध्वर्युः इत्यादिभेदेन "चातुर्होत्रियमग्निं चिन्वानः" इति श्रुतिसिद्धचयनभेदेन वा चातुर्होत्रप्रधानत्वात् लिङ्गादित्रितयं लिङ्गवाक्यप्रकरणात्मकं यत्रोपलभ्यते सेयं त्रयीत्युच्यते । किंच—अथर्वाङ्गिरसमिति । त्रयीरूपमथर्वणरूपं वा कीदृशं

[1] निबन्धा स— अ १, अ २, क.
[2] गान्धर्वश्च तथा मुने—अ, अ १, अ २, क, मु.

इत्यत्र सामऋग्यजुरात्मकं त्रयीरूपं तस्य कर्मादिकाण्डत्रयप्रकाशकत्वं ब्रह्मवादिनः आदिशन्ति। अथर्वाङ्गिरोभिः दृष्टं अथर्ववेदरूपं तु शान्तिवश्यस्तंभनविद्वेषोच्चाटन-मारणभेदेन आभिचारसामान्यप्रकाशकतया त्रयीतः पृथक् पृथक् आदि-शन्तीत्यर्थः । ऋगादिवेदचतुष्टयस्य शाखासंख्याविभागमाचष्टे—एकविंशतीति । एकविंशतिशाखाभेदविशिष्टो ऋग्वेदः ॥ २३–२४ ॥ नवाधिकशतशाखाविशिष्टो यजुर्वेदः । सहस्रसंख्याविशिष्टः सामवेदः । पञ्चशाखाः अथर्वणः इत्यत्र पञ्चग्रहणं पञ्चाशदुपलक्षणार्थम्, "पञ्चाशच्छाखाः अथर्वणः" इति श्रुत्यन्तरात् ॥ २५ ॥ सूत्राण्यपि चतुर्वेदार्थरूपाणीत्याह—वैखानसमिति । यद्वैखानसमुनिना ऋगादि-चतुर्वेदार्थः सूत्रितः तत् सूत्रजातं वैखानसमतं सूत्रजाते तस्मिन्नादौ यद्वैखानसमु-निना सूत्रितं तत् प्रत्यक्षदर्शनं चतुर्वेदार्थसारस्य सूत्रितत्वात । सर्वे मुनयः कृत्स्नं वैखानससूत्रजातं लब्ध्वा ततः परं तैः मुनिभिः नित्यं सूत्रजातं स्मृतिजातं च स्मर्यते क्रियते कृतमित्यर्थः ॥ २६ ॥ वेदाङ्गानि कानि? इत्यत आह—कल्प इति ॥ २७ ॥ कानि उपाङ्गानि? इत्यत आह—उपाङ्गमिति । एकस्मिन् वस्तुनि यत् सर्वमयनं पर्यवसानं भवति तत् अयनं वेदान्तशास्त्रमित्यर्थः। मीमांसा जैमिन्यादिप्रणीतशास्त्रम् । न्यायविस्तरः गौतमकणादादिप्रणीतं तर्क-शास्त्रम् । धर्मज्ञैः मन्वादिभिः सेवितोऽर्थो यत्र पुराणे दर्शितः तत्पुराणजातं धर्मज्ञ-सेवितार्थम् । कर्मकाण्डगोचरो वेदः । तस्मादपि कर्मकाण्डगोचरवेदादपि अधिकं उपासनाकाण्डमित्यर्थः ॥ २८ ॥ निबन्धाः नीतिशास्त्रं, एतदर्थमेवं इति निबन्धनात् । स्वशाखेतरसर्वशाखा च । समयाचारसङ्गतिः वृद्धाचरण-प्रवादः । महर्षीणां स्वयंभातवेदानां अन्तःकरणसंभृतं अन्तःकरणनिश्चितोऽर्थः धर्मशास्त्रम् । इतिहासपुराणाख्यं भारतादिः । एतानि दशसङ्ख्याकानि उपाङ्गानीति कीर्तितानीत्यर्थः ॥ २९ ॥ वेदतदङ्गोपाङ्गान्युक्त्वा उपवेदानाह—वास्त्विति । वास्तुवेदः वास्तुनिर्माणादिशिल्पिशास्त्रम् । धनुर्वेदः ब्रह्मास्त्रादिविषयः । गान्धर्वः गीतिशास्त्रम् । दैविकः देवाचारनिबन्धनशास्त्रम् । आयुर्वेदः योगशास्त्रं भिषक्छास्त्रं ज्योतिःशास्त्रं वा । पञ्चैते उपवेदा इति कीर्तिताः ॥ ३० ॥ ऋगाद्यायुर्वेदान्तानां स्वप्रकाशब्रह्मगोचरतया स्वप्रकाशत्वं

स्यादित्याह—दण्ड इति। ऋगादिचतुर्वेदवाक्यपटलस्य दण्डोद्यतकरराजशासनवदलङ्घ्यत्वात् दण्डशब्देन ऋगादिचतुर्वेद उच्यते। नीतिशब्देन ऋगादिचतुर्वेदस्वभावनयनकल्पादिषडङ्गमुच्यते। वार्ताशब्देन ऋगादिचतुर्वेदार्थप्रकाशकवृत्तिस्थानीयोपाङ्गमुच्यते। विद्याशब्देन वास्तुवेदादिवायुजयान्तोपवेद उच्यते। तत्र वेदाश्चत्वारः। अङ्गानि षट्। उपाङ्गान्यपि षडेव। शिष्टचतुरङ्गमपि षट्सु अन्तर्भूयते। उपवेदाः पञ्च। आहत्य अयं एकविंशतिधा भिन्नः। ऋगादिवायुजयान्तविद्यायाः स्वप्रकाशब्रह्ममात्रपर्यवसन्नतया अयं भेदः स्वप्रकाश एवेति परिकीर्तितः कथितः इत्यर्थः ॥ २१ ॥

नादस्यैव वेदशास्त्रद्वारा ब्रह्मभवनम्

वैखानसऋषेः पूर्वं विष्णोर्वाणी समुद्भवेत्।
त्रयीरूपेण संकल्प्य इत्थं देही विजृम्भते ॥ २२ ॥
संख्यारूपेण संकल्प्य वैखानसऋषेः पुरा।
उदितो यादृशः पूर्वं तादृशं शृणु मेऽखिलम् ॥
शश्वद्ब्रह्ममयं रूपं क्रियाशक्तिरुदाहृता ॥ २३ ॥

पुरा हरिमुखोदितनाद एव कृत्स्नवेदशास्त्राकृतिर्भूत्वा ततो ब्रह्मभावमेत्य ब्रह्मैव भवतीत्याह—वैखानस इति। स्वानन्यभावमापन्नवैखानसहृदये प्रत्यगभिन्नब्रह्मभावमृषति गच्छतीति वैखानस ऋषिः विष्णुः तस्य विष्णोः मुखात् पूर्वं नादरूपिणी या वाणी समुद्भवेत् "हरेर्मुखान्नादः" इत्युक्तत्वात्, सेयमादौ हरिजा नादरूपिणी वाणी त्रयीरूपेण चतुर्वेदगतानेकसङ्ख्याऽन्वितशाखाभेदेन च विजृंभते विजृंभिता भवति ॥ २२ ॥ यादृशो नादः वैखानसऋषेः मुखात् उदितः मे मत्तः सकाशात् तादृशमखिलं लयक्रमं शृणु। तत् कथं इत्यत्र या पुरा वेदशास्त्ररूपेण विजृंभिता सा प्रणवात्मना लीयते, सोऽयं प्रणवः स्वावयवाकारादिमात्रात्रयमुपसंहृत्य बिन्द्वात्मना विलीयते, बिन्दुः नादात्मना,

नादो विष्णवात्मना, विष्णुः व्याप्यव्यापककलनापह्नवसिद्धं ब्रह्ममयं रूपं निष्प्रतियोगिकब्रह्ममात्रमवशिष्यते इत्यादिकलना यया क्रियते सेयं क्रियाशक्तिरित्यभिधीयत इत्यर्थः ॥ ३३ ॥

### साक्षाच्छक्तिस्वरूपम्

साक्षाच्छक्तिर्भगवतः स्मरणमात्ररूपाऽऽविर्भावप्रादुर्भावात्मिका निग्रहानुग्रहरूपा शान्तितेजोरूपा [1]व्यक्ताव्यक्तकारणचरणसमग्रावयवमुख[2]वर्णभेदाभेदरूपा भगवत्सहचारिणी अनपायिनी अनवरतसहाश्रयिणी उदितानुदिताकारा निमेषोन्मेषसृष्टिस्थितिसंहारतिरोधानानुग्रहादिसर्वशक्तिसामर्थ्यात् साक्षाच्छक्तिरिति गीयते ॥ ३४ ॥

साक्षाच्छक्तिस्वरूपमाह—साक्षादिति । ब्रह्मसाक्षात्कारवृत्तिः ज्ञानं तद्गोचरा चिच्च साक्षाच्छक्तिः सेयं भगवद्रूपाऽपि भगवतः स्मरणमात्रेण स्वाज्ञदृष्ट्या आविर्भावतिरोभावनिग्रहानुग्रहतत्कलनाशान्तितेजोरूपा व्यक्ताव्यक्तप्रपञ्चकारणीभूतचरणादिसमग्रावयवसंपन्ना स्वाज्ञदृष्ट्या भगवतो भेदाभेदरूपा भगवत्सहचारिणी सृष्ट्यादिपञ्चकृत्यकरणसमर्था सैव साक्षाच्छक्तिरित्यर्थः ॥ ३४ ॥

### योगशक्तिरूपा इच्छाशक्तिः

इच्छाशक्तिस्त्रिविधा । प्रलयावस्थायां विश्रमणार्थं भगवतो दक्षिणवक्षःस्थले श्रीवत्साकृतिर्भूत्वा विश्राम्यतीति [3]सा योगशक्तिः ॥३५॥

[1] व्यक्तोव्य—अ १, अ २, क.

[2] वर्णभे—उ १.

[3] स्वयो—उ, उ १. स्वायो क—अ, अ १, अ २.

पुनर्योगभोगवीरशक्तिभेदेन इच्छाशक्तिः त्रिविधा । तत्र योगशक्तिस्वरूपमाह—प्रळयेति । स्वविश्रमणार्थम् । स्वयं श्रीवत्साकृतिः ॥ ३५ ॥

भोगशक्तिरूपा इच्छाशक्तिः

भोगशक्तिर्भोगरूपा कल्पवृक्षकामधेनुचिन्तामणिशङ्खपद्मनिध्यादिनवनिधिसमाश्रिता भगवदुपासकानां कामनया अकामनया वा भक्तियुक्ता नरं नित्यनैमित्तिककर्मभिरग्निहोत्रादिभिर्वा यम[1]नियमासनप्रणायामप्रत्या[2]हारधारणाध्यानसमाधिभिर्वा [3]गोपुरप्राकारादिभिर्विमाना[4]दिभिः सह भगवद्विग्रहार्चापूजोपकरणैरर्चनैः स्नानादिभिर्वा पितृपूजा[5]दिभिरन्नपानादिभिर्वा भगवत्प्रीत्यर्थमुक्त्वा सर्वं क्रियते ॥ ३६ ॥

तत्र भोगशक्तिस्वरूपमाह—भोगेति । भोगरूपा किमाश्रिता सतीत्यत्र—कल्पेति । पद्मनिध्यादिनवनिधिसमाश्रिता सती भगवतो भोगयोग्या भवति । न केवलं भगवतः, किंतु तद्भक्तानामपीत्याह—भगवदिति । ध्यानसमाधिभिर्वा संयोज्य तत्तत्फलभोगिनं करोतीत्यर्थः । यः तादृशाधिकारी न भवति तं गोपुरेति । क्षुत्तृष्णावत्प्राणिजातस्य तत्तदुचितान्नपानादिदापनशक्तिभिर्वा संयोज्य तत्तत्फलभोगभोगिनं करोति । किमर्थमनया एवं क्रियते इत्यत्र एवं भगवद्भक्ततोषणं भगवत्प्रीत्यर्थं इत्युक्त्वा पूर्वोक्तं सर्वं अनया भोगशक्त्या क्रियते, न हि कार्यान्तरमुद्दिश्येत्यर्थः ॥ ३६ ॥

[1] नियमप्रा—अ १, उ, उ १, [2] हारध्यान—उ, उ १.

[3] लमनण्वपि गो—अ १, अ २, क, मु.

[4] दिभिर्वा भ—अ १. दिभिर्वा सह भ—अ.

[5] दिभिर्वान—अ १.

वीरशक्तिरूपा इच्छाशक्तिः

अथातो वीरशक्तिश्चतुर्भुजाऽभयवरदपद्मधरा किरीटाभरणयुता सर्वदेवैः परिवृता कल्पतरुमूले चतुर्भिर्गजै रत्नघटैरमृतजलैरभिषिच्यमाना सर्वदेवतैर्ब्रह्मादिभिर्वन्द्यमाना अणिमाद्यष्टैश्वर्ययुता [1]संमुखे कामधेनुना स्तूयमाना वेदशास्त्रादिभिः स्तूयमाना जयाद्यप्सरस्त्रीभिः परिचर्यमाणा आदित्यसोमाभ्यां दीपाभिः [2]प्रकाशिप्यमाणा तुम्बुरुनारदादिभिर्गीयमाना राकासिनीवालीभ्यां छत्रेण ह्लादिनीमयाभ्यां चामरेण स्वाहास्वधाभ्यां व्यजनेन भृगुपुण्यादिभिरभ्यर्च्यमाना देवी दिव्यसिंहासने पद्मासनारूढा सकलकारणकार्यकरी लक्ष्मीर्देवस्य पृथग्भवनकल्पनालंचकार स्थिरा प्रसन्नलोचना सर्वदेवतैः पूज्यमाना वीरलक्ष्मीरिति विज्ञायत इत्युपनिषत् ॥ ३७ ॥

वीरलक्ष्मीस्वरूपमाह—अथेति । अनर्घकिरीटाभरणयुता जयजयेति अप्सरस्स्त्रीभिः अप्सरोभिः परिचर्यमाणा । दीपाभिः स्वतेजसा दीपभावमापन्नाभ्यां दीपाभ्याम् । राकासिनीवालिभ्यां पूर्णिमाऽमावास्याभ्याम् । छत्रेण ह्लादिनीमयाभ्यां चामरेण छत्रचामरहस्ताभ्यामित्यर्थः । व्यजनेन व्यजनहस्ताभ्यां वीज्यमानेत्यर्थः । भृगुपुण्यादिभिः अभ्यर्च्यमाना भृगोः तपःफलरूपत्वात् । पृथग्भवनकल्पनाभिः अलंचकारेव स्थिता । यदकार्यमकारणं चिन्मात्रं तस्य मिथ्यास्वाविद्याद्वयसंबन्धतः कार्यकारणोपाधिकजीवत्वमीश्वरत्वं च करोतीति कार्यकारणत्वकरीत्यत्र "जीवेशावाभासेन करोति" इति श्रुतेः । स्वाज्ञदृष्टया लक्ष्मीः । येवं सर्वदेवतैः पूज्यमाना सेयम् । सा सीतेत्यारभ्य

[1] सन्मुखे—अ १, अ २, क.

[2] प्रकाश्यमाना—मु.

वीरलक्ष्मीरिति विज्ञायते इत्यन्तग्रन्थप्रतिपाद्या चिच्छक्तिः सीता चित्सामान्यरूपत्वात् । सीतातत्त्वं तु शक्तित्रयापह्नवसिद्धं चिन्मात्रमित्यर्थः । इत्युपनिषच्छब्दः सीतोपनिषत्समाप्त्यर्थः ॥ ३७ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं सीतोपनिषदः स्फुटम् ।
सीतोपनिषदो व्याख्याग्रन्थस्तु द्विशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चचत्वारिंशत्सङ्ख्यापूरकं
सीतोपनिषद्विवरणं संपूर्णम्

---

# सौभाग्यलक्ष्म्युपनिषत्

वाङ् मे मनसि—इति शान्तिः

## प्रथमः खण्डः

सौभाग्यलक्ष्मीविद्याजिज्ञासा

अथ भगवन्तं देवा ऊचुर्हे भगवन्नः कथय सौभाग्यलक्ष्मीविद्याम् ॥ १ ॥

सौभाग्यकैवल्यलक्ष्मीविद्यावेद्यसुखाकृति ।
त्रिपान्नारायणानन्दरामचन्द्रपदं भजे ॥

इह खलु ऋग्वेदप्रविभक्तेयं सौभाग्यलक्ष्म्युपनिषत् श्रीसूक्तैर्भवैकाक्षरादिश्रीदेवीमन्त्रग्रामयन्त्रनवचक्रविवेकादियोगसाम्राज्यप्रकटनव्यग्रा निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः संक्षेपतो विवरणमारभ्यते । देवतापटलनारायणप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—अथेति । किमिति—हे भगवन्निति ॥ १ ॥

सौभाग्यलक्ष्मीध्यानम्

तथेत्यवोचद्भगवानादिनारायणः सर्वे देवा यूयं सावधान[1]मना भूत्वा शृणुत । तुरीयरूपां तुरीयातीतां सर्वोत्कटां सर्वमन्त्रासनगतां

[1] मनसो—मु.

पीठोपपीठदेवतापरिवृतां चतुर्भुजां श्रियं हिरण्यवर्णामिति पञ्चद-
शर्ग्भिर्ध्यायथ ॥ २ ॥

देवबृन्दप्रश्नमङ्गीकृत्य तथेत्यवोचत् । देवानभिमुखीकरणायेदमाह—सर्वे देवा इति । किं तदस्माभिः कर्तव्यमित्यत्र—तुरीयरूपामिति । या प्रणवत्वेन प्रकृता सौभाग्यमहालक्ष्मीः तामर्धमात्रात्मना तुरीयरूपां नादात्मना तुरीयातीतां एवंरूपेण सर्वैरपि ज्ञातुमशक्यत्वात् सर्वोत्कटां सर्वदुरासदां नादरूपप्रकृतेरसमाहितचित्तैरासादितुमशक्यत्वात्, स्वाश्रजनानुकम्पया एकाक्षरादिसर्वमन्त्रासनगतां, पीठोपपीठदेवतापरिवृतां पीठं सौभाग्यलक्ष्मीविद्याप्रकटितश्रीचक्रं तत्रत्यैकैककोणविलसितान्युपपीठानि चक्राणि तत्तत्पीठेश्वरीभिः देवताभिः परिवृतां, चतुर्भुजां श्रियं "हिरण्यवर्णां हरिणीं" इत्यादि पञ्चदशर्ग्भिः ध्यायथ ध्यानं कुरुत । एवं ध्यायतां देवताप्रसादेन निर्विकल्पात्मकतुरीयतुरीयातीतदेवताध्यानाधिकारो भवेदित्यर्थः ॥ २ ॥

श्रीसूक्तस्य ऋष्यादि

अथ पञ्चदशऋगात्मकस्य श्रीसूक्तस्यानन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः । श्रीरित्याद्या[या] ऋचः । [1]चतुर्दशानामृचामानन्दाद्यृषयः । हिरण्यवर्णामित्याद्यृक्त्रयस्यानुष्टुप् छन्दः । कांसोस्मीत्यस्य बृहती छन्दः । तदन्ययोर्द्वयोस्त्रिष्टुप् । पुनरष्टकस्यानुष्टुप् । शेषस्य प्रस्तारपङ्क्तिः । [2]श्र्यग्निर्देवता । हिरण्यवर्णामिति बीजम् । कांसोऽस्मीति शक्तिः । हिरण्मया चन्द्रा रजतस्रजा हिरण्यस्रजा हिरण्या हिरण्यवर्णेति प्रणवादिनमोऽन्तैश्चतुर्थ्यन्तैरङ्गन्यासः । अथ

[1] एतदादि "प्रस्तारपङ्क्तिः" इत्यन्तो ग्रन्थः (उ, उ १) कोशयोः नास्ति.
[2] श्रीरग्नि—अ २, क.

वक्त्रत्रयैरङ्गन्यासः । मस्तकलोचनश्रुतिघ्राणवदन[1]कण्ठबाहुद्वय[2]हृन्नाभि-
गुह्यपायूरुजानुजङ्घेषु श्रीसूक्तैरेव क्रमशो न्यसेत् ॥ ३ ॥

[3]अमलकमलसंस्था तद्रजः[4]पुञ्जवर्णा
करकमलधृ[5]तेष्टाभीतियुग्माम्बुजा च ।
मणिमकुटविचित्रालंकृताकल्पजालैः
सकलभुवनमाता संततं श्रीः श्रियै [6]नः ॥ ४ ॥

हिरण्यवर्णामित्यादिपञ्चदशर्चामृषिच्छन्दोदेवताऽऽदिकमुच्यते—अथेति । श्रीशब्देनाग्निरुच्यते, वक्ष्यति चैवं "श्र्यग्निर्देवता" इति ॥ ३–४ ॥

सौभाग्यलक्ष्मीचक्रम्

तत्पीठम् । कर्णिकायां समाध्यं श्रीबीजम् । वस्वादित्यकला-
पद्मेषु श्रीसूक्तगतार्धार्धर्चा तद्बहिर्यः शुचिरिति मातृकया च श्रियं
यन्त्राङ्गदशकं च विलिख्य श्रियमावाहयेत् ॥ ५ ॥ अङ्गैः
प्रथमाऽऽवृतिः । पद्मादिभिर्द्वितीया । लोकेशैस्तृतीया । तदा-
युधैस्तुरीयाऽऽवृतिर्भवति । श्रीसूक्तैरावाहनादि । षोडशसहस्रजपः ॥ ६ ॥

तस्याः सौभाग्यलक्ष्मीदेवतायाः पीठं चक्रमुच्यते । सौवर्णे राजते ताम्रे वा—

उत्तमं दशनिष्कं स्यान्मध्यमं पञ्चनिष्ककम् ।
अधमं कर्षमात्रं स्यात् पादहीनं न कारयेत् ॥

[1] कर्ण—अ १, अ २, क.
[2] नाभि—क. हृदयनाभि—अ १, अ २.
[3] अरुण—मु
[4] पूर्ण—अ, अ १, उ १.
[5] तेष्टाभी—मु.
[6] नमः—उ १.

इति मन्त्रशास्त्रानुरोधेन चतुरश्रं यन्त्रं कृत्वा तन्मध्यकर्णिकायां मम सर्वाभीष्टसिद्धिं कुरुकुरु नम इति साध्येन सहितं ससाध्यं श्रीबीजं विलिख्य वस्वादित्यकलापद्मेषु अष्टद्वादशषोडशदलेषु श्रीसूक्तगतार्धार्धर्चाक्रमेण विलिख्य शिष्टपद्मपत्रेषु कामधेनुं शंखनिधिमकरनिधिसौभाग्यनिधिमोक्षनिधिबोधकल्पकतरूणां मन्त्रान् प्रणवादिनमोऽन्तान् विलिख्य षोडशदळवृत्तात् बहिः यः शुचिरित्यृचा अकारादिळकारान्तपञ्चाशद्वर्णमातृकया च विलिख्य श्रियं श्रीबीजं परितो विलिख्य—

बीजं प्राणं च शक्तिं च दृष्टिं वश्यादिकं तथा ।
मन्त्रयन्त्राख्यगायत्रीप्राणस्थापनमेव च ।
भूतदिक्पालबीजानि यन्त्रस्याङ्गानि वै दश ॥

इति यन्त्राङ्गदशकं च विलिख्य श्रियमावाहयेत् ॥ ५ ॥ अथावरणान्युच्यन्ते—अङ्गैरिति । श्रां हृदयाय नमः इत्यादिषडङ्गैः प्रथमाऽऽवृतिः । पद्मा, पद्मवासिनी, पद्मालया, पद्महस्ता, पद्मप्रिया, वरदा, विष्णुपत्नी, आदिलक्ष्मीरिति प्रणवादिनमोऽन्तैश्चतुर्थ्यन्तैर्यजेत् । इन्द्राय नम इत्यादिलोकेशमन्त्रैः । वज्राय नमः इति तदायुधैश्च पूजयेदित्यर्थः । अथ श्रीसूक्तैः आवाहनादिषोडशोपचारपूजां कुर्यात् । श्रीसूक्तपुरश्चरणा तु षोडशसहस्रजपः ॥ ६ ॥

एकाक्षरीमन्त्रस्य ऋष्यादि

सौभाग्यरमैकाक्षर्या भृगुनृचद्गायत्रीश्रिय ऋष्यादयः । [1]शमिति बीजशक्तिः । श्रामित्यादि षडङ्गम् ॥ ७ ॥

भूयाद्भूयो द्विपद्माभयवरदकरा तप्तकार्तस्वराभा
शुभ्राभ्राभेभयुग्मद्वयकरधृतकुम्भाद्भिरासिच्यमाना ।
[2]रत्नौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपनाढ्या
पद्माक्षी पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रियै [3]नः ॥८॥

[1] शमींबी—अ, अ १.
[2] रत्नौघ—मु.
[3] नः—उ १.

साङ्गमेकाक्षरीमनुं तत्पीठं चाह—सौभाग्येति ॥ ७ ॥ ध्यानं भूयादिति ॥ ८ ॥

एकाक्षरीचक्रम्

तत्पीठम् । अष्टपत्रं वृत्तत्रयं द्वादशराशिखण्डं चतुरश्रं रमापीठं भवति । कर्णिकायां मध्ये श्रीबीजम् । विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्तिः सन्नति[1]र्व्युष्टिरुत्कृष्टिर्ऋद्धिरिति प्रणवादिनमोऽन्तैश्चतुर्थ्यन्तैर्नवशक्तिं यजेत् ॥ ९ ॥ अङ्गैः प्रथमाऽऽवृतिः । वासुदेवा[2]दिर्द्वितीया । बालक्या[3]दिस्तृतीया । इन्द्रादिभिश्चतुर्थी भवति । द्वादशलक्षजपः ॥ १० ॥

तत्रैव विभूतिरित्यादि ॥ ९ ॥ पूर्ववत् अङ्गैः । वासुदेवादि चतुर्व्यूहैः द्वितीयाऽऽवृतिः । बालक्यादिः—आदिशब्देन भुक्तिर्मुक्तिर्विभूतिः ऋद्धिः समृद्धिस्तुष्टिः पुष्टिर्धात्रीति प्रणवादिनमोन्तैश्चतुर्थ्यन्तैर्यजेत् ॥ १० ॥

लक्ष्मीमन्त्रविशेषाः

श्रीलक्ष्मीर्वरदा विष्णुपत्नी वसुप्रदा हिरण्यरूपा स्वर्णमालिनी रजतस्रजा स्वर्णप्रभा स्वर्णप्राकारा पद्मवासिनी पद्महस्ता पद्मप्रिया मुक्तालंकारा चन्द्रा सूर्या बिल्वप्रिया ईश्वरी भुक्तिर्मुक्तिर्विभूतिर्ऋद्धिः समृद्धिः कृष्टिः पुष्टि[4]र्धनदा धनेश्वरी श्रद्धा भोगिनी भोगदा धात्री विधात्रीत्यादिप्रणवादिनमोऽन्ताश्चतुर्थ्यन्ता मन्त्राः । एकाक्षरवदङ्गादि-

[1] र्व्युष्टि—अ १, अ २. पुष्टि—क. व्युष्टिः सत्कृष्ट—मु.
[2] दिभिर्द्वि—उ, मु.
[3] दिभिस्तृ—उ, मु.
[4] र्धर्मा—उ, उ १.

पीठम् । लक्षजपः । दशांशं तर्पणम् । शतांशं हवनम् । सहस्रांशं द्विजतृप्तिः ॥ ११ ॥ निष्कामानामेव श्रीविद्यासिद्धिः । न कदाऽपि सकामानामिति ॥ १२ ॥

पुनर्लक्ष्मीमन्त्रविशेषानाह—श्रीरित्यादि ॥ ११-१२ ॥

इति प्रथमः खण्डः

## द्वितीयः खण्डः

उत्तमाधिकारिणां ज्ञानयोगः

अथ हैनं देवा ऊचुस्तुरीयया मायया निर्दिष्टं तत्त्वं ब्रूहीति । तथेति स होवाच—

योगेन योगो ज्ञातव्यो योगो योगात् प्रवर्धते ।
योऽप्रमत्तस्तु योगेन स योगी रमते चिरम् ॥ १ ॥

देवाः नारायणमुखतः मन्त्रोपासनाकाण्डं यथावदवगम्य योगकाण्डबुभुत्सया भगवन्तं पृच्छन्तीत्याह—अथेति । तुरीयया अन्त्यया । तैरेवं पृष्टः तथेति स होवाच । किं तत् इत्यत्र—योगेनेति । ब्रह्मातिरिक्तं न किंचिदस्तीति ज्ञानमेव योगः तेन ज्ञानयोगेन तत्त्वंपदगतवाच्यार्थनिरसनपूर्वकं तत्त्वंपदलक्ष्यभूतप्रत्यक्परचितोः योगो ज्ञातव्यः प्रत्यक्परचितोरैक्यस्य स्वाज्ञविकल्पितजीवपरभेदप्रहाणपूर्वकत्वात् । पुनः प्रत्यक्परयोः योगः ऐक्यं

ज्ञानयोगात् प्रवर्धते भेदप्रत्ययवैरल्येन दृढतां भजते । इत्थंभूतज्ञानयोगेन योऽप्रमत्तस्तु सदाऽनुसन्धानपर एव भवति सोऽयं योगी प्रत्यक्परचितोः योगः ऐक्यं तत्रैव चिरं रमते ॥ १ ॥

षण्मुखीमुद्राऽन्वितप्राणायामयोगः

समापय्य निद्रां सुजीर्णेऽल्पभोजी
श्रमत्याज्यबाधे विविक्ते प्रदेशे ।
सदाऽऽसीत निस्तृष्ण एष प्रयत्नो-
ऽथ वा प्राणरोधो निजाभ्यासमार्गात्* ॥ २ ॥
वक्त्रेणापूर्य वायुं हुतवहनिलयेऽपानमाकृष्य धृत्वा
स्वाङ्गुष्ठाद्यङ्गुलीभिर्वरकरतलयोः षड्भिरेवं निरुध्य ।
श्रोत्रे नेत्रे च नासापुटयुगलमथोऽनेन मार्गेण सम्यक्
पश्यन्ति [1]प्रत्ययांसं प्रणवबहुविधध्यानसंलीनचित्ताः ॥ ३ ॥

इत्युत्तमाधिकारिणामेवं ज्ञानयोगमुक्त्वा अथ षण्मुखीमुद्राऽन्वितप्राणायामयोगमाह--समापय्येति ।

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥

इति स्मृत्यनुरोधेन निद्रां समापय्य यथोक्तकाले निद्रां कृत्वा अथ पूर्वभुक्तान्ने जीर्णे ततोऽल्पभोजी अल्पाहारी योगानुकूलेन मिताहारं कुर्वन् श्रमत्याजी जितश्रमो भूत्वा अबाधे मशकपिपीलिकामत्कुणादिबाधारहिते विविक्ते जनसंबाधरहिते प्रदेशे मृद्वास्तरणे समारोपितपद्माद्यासने सदाऽऽसीत सर्वदा तिष्ठेत्

[1] प्रत्ययांशं—मु.

नानाविधफल्गुसिद्धिजाले निस्पृष्णो विगततृष्णो भूत्वा देशिकमुखतः लब्धनिजाभ्यासमार्गात् अप्रच्युतो भूत्वा एष योगी ग्रन्थित्रयभेदने कृतप्रयत्नो भूयात् । अथवा तादृशशक्त्यभावे तदुपायतया अनेन प्राणरोधः प्राणायामः कर्तव्यः ॥ २ ॥ षण्मुखीमुद्रां तत्फलं चाह—वक्त्रेणेति । केचन योगिनः सीत्कारपूर्वकं वक्त्रेण वायुमापूर्य ऊर्ध्वगतिं प्राणमधोगतिं विधाय तथा हुतवहनिलये मूलाधारत्रिकोणस्थाग्निमण्डले अपानमाकृष्य आकुञ्च्य धृत्वा मूलाधारे धारणां कृत्वा स्वाङ्गुष्ठाद्यङ्गुलीभिः षड्भिः श्रोत्रादिकरणानि पिधाय योगिनः प्रणवप्रविभक्तविश्वविराडोत्रादिद्वितुर्याविकल्पान्तबहुविधध्यानसंलीन-चित्ताः सन्तः सहस्रारचक्रे प्रत्ययांसं प्रत्यक्चैतन्यं पराभेदेन सम्यक्पश्यन्ति अपरोक्षीकुर्वन्तीत्यर्थः ॥ ३ ॥

नादाविर्भावपूर्वको ग्रन्थित्रयभेदः

श्रवणमुखनयननासानिरोधनेनैव कर्तव्यम् ।
शुद्धसुषुम्नासरणौ स्फुटममलं श्रूयते नादः ॥ ४ ॥
विचित्रघोषसंयुक्ताऽनाहते श्रूयते ध्वनिः ।
दिव्यदेहश्च तेजस्वी दिव्यगन्धोऽप्यरोगवान् ॥ ५ ॥
संपूर्णहृदयः शून्ये त्वारम्भे योगवान् भवेत् ।
द्वितीयां विघटीकृत्य वायुर्भवति मध्यगः ॥ ६ ॥
दृढासनो भवेद्योगी पद्माद्यासनसंस्थितः ।
विष्णुग्रन्थेस्ततो भेदात् परमानन्दसंभवः ॥ ७ ॥
अतिशून्यो विमर्दश्च भेरीशब्दस्ततो भवेत् ।
तृतीयां यत्नतो भित्त्वा निनादो मर्दलध्वनिः ॥ ८ ॥

एवं षण्मुखीमुद्राऽभ्यासतः ब्रह्मग्रन्थ्यादिग्रन्थित्रयमपि भिद्यते, प्रतिग्रन्थिभेदनं विचित्रनानाविधनादाविर्भावो भवति, तन्नादलयतः निर्विकल्पकसमाधिर्जायते

इत्याह—श्रवणेति । श्रवणादिकरणनिरोधलक्षणषण्मुखीमुद्राऽभ्यसनं योगिना कर्तव्यम् । एवं चिरकालाभ्यासतः प्राणवायुः सुषुम्नां प्रविशति, तत्प्रवेशमात्रेण सुषुम्नामार्गे नादाविर्भावो भवतीत्यर्थः ॥ ४ ॥ एवं नादश्रवणतोऽयं भवति योगीत्याह—विचित्रेति । यदा सुषुम्नायां प्राणः प्रविशति तदा योगिनः अनाहते हृदयकमले विचित्रघोषवति ध्वनिः श्रूयते । तावन्मात्रेण नीरोगो भूत्वा तेजोवद्दिव्यगन्धो भवति ॥५॥ संपूर्णविकसितहृदयश्च भवति । शून्ये तत्रत्याकाशे तु नादारंभमात्रेणायं दिव्ययोगवान् भवेदित्यर्थः । ब्रह्मग्रन्थिभेदतः दिव्यदेहादिसिद्धिरुक्ता, अथ विष्णुग्रन्थिभेदतः भेरीध्वनिरुदेतीत्याह—द्वितीयामिति । प्रथमभूमिकां जित्वाऽथ द्वितीयां भूमिकामपि विष्णुग्रन्थिभेदनरूपां विशेषेण घटीकृत्य विष्णुग्रन्थिं भित्त्वा तद्भेदतः वायुर्मध्यगतो भवति ॥ ६ ॥ ततः पद्माद्यासनस्थस्य योगिनः परमानन्द उदेति ॥ ७ ॥ अतिशून्योऽनाहतमप्यतिक्रम्य ततोऽतिविमर्दो भेरीशब्दो भवेदित्यर्थः । रुद्रग्रन्थिभेदतः वैष्णवनाद उदेति ततस्तच्चित्तं ब्रह्माकारं भवतीत्याह—तृतीयामिति । रुद्रग्रन्थिरूपां तृतीयभूमिकां दुर्भेद्यामपि यत्नतो भित्त्वा वर्तमानस्य योगिनो मर्दलध्वनिः श्रूयते ॥ ८ ॥

अखण्डब्रह्माकारवृत्तिः

महाशून्यं ततो याति सर्वसिद्धिसमाश्रयम् ।
चित्तानन्दं ततो भित्त्वा सर्वपीठगतानिलः ॥ ९ ॥
निष्पत्तौ वैष्णवः शब्दः क्वणतीति क्वणो भवेत् ।
एकीभूतं तदा चित्तं सनकादिमुनीडितम् ॥ १० ॥
अन्तेऽनन्तं समारोप्य खण्डेऽखण्डं समर्पयन् ।
भूमानं प्रकृतिं ध्यात्वा कृतकृत्योऽमृतो भवेत् ॥ ११ ॥

ततः तत्प्राणो सर्वसिद्ध्यास्पदं महाशून्यं सहस्राराकाशं याति । तदा चित्तमानन्दाभिमुखं भवति । तत्रानास्वादतः चित्तानन्दमपि भित्त्वा वर्तमानस्य

प्राणानिलः कामरूपपीठादिसर्वपीठगतो भवति ॥ ९ ॥ एवं योगनिष्पत्तौ कम्पतीति कम्पो वैष्णवः शब्दो भवेत् । यत्प्रत्यग्ब्रह्मैक्यं "पश्यतेहापि सन्मात्रमसदन्यत्," "ब्रह्ममात्रमसदन्यत्" इत्यादिश्रुतिशतेन सनकादिमुनीडितं तत्रैव चित्तमेकीभूतं ब्रह्माकाराखण्डवृत्तिमद्भवतीत्यर्थः ॥ १० ॥ स्वाज्ञदृष्टिविकल्पितस्वातिरिक्तपरिच्छिन्नखण्डप्रपञ्चे सति कथमखण्डब्रह्ममात्रज्ञानं तत्फलसिद्धिर्वेत्याशङ्क्याह—अन्त इति । स्वाज्ञदृष्ट्या यदि व्यष्ट्यात्मकोऽन्तःपरिच्छिन्नपिण्डाण्डः कल्पितो भवति तदा स्वज्ञदृष्टिमवलम्ब्य तदन्ते देहादौ अनन्तं पराक्सापेक्षप्रत्यञ्चं समारोप्य अथ समष्टिप्रपञ्चखण्डे तदपवादाधारतया अखण्डं ब्रह्म समर्पयन् प्रत्यक्परयोरैक्यं कुर्वन् ततः प्रत्यक्परविभागैक्यासहब्रह्ममात्रप्रकृतिं भूमानं स्वमात्रमिति ध्यात्वा कृतकृत्यो विद्वान् अमृतो विदेहमुक्तो भवेत् भवतीत्यर्थः ॥ ११ ॥

निर्विकल्पभावः

योगेन योगं संरोध्य भावं भावेन चाञ्जसा ।
निर्विकल्पं परं तत्त्वं सदा भूत्वा परं भवेत् ॥ १२ ॥
अहम्भावं परित्यज्य जगद्भावमनीदृशम् ।
निर्विकल्पे स्थितो विद्वान् भूयो नाप्यनुशोचति ॥ १३ ॥

सविकल्पप्रपञ्चे सति ब्रह्ममात्रावगतिः कुत इत्यत आह—योगेनेति । निष्प्रतियोगिकब्रह्ममात्रज्ञानयोगेन स्वातिरिक्तयोगं संरोध्य अपह्नवं कृत्वा अञ्जसा भावं विकल्पप्रपञ्चं निष्प्रतियोगिकब्रह्ममात्रभावेन ज्ञात्वा तत्समकालं विद्वान् निर्विकल्पपरब्रह्मतत्त्वं स्वयं भूत्वा सदा परमेव भवेत् भवति, "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः ॥१२॥ अहमिदमिति विकल्पे सति निर्विकल्पता कुत इत्यत आह—अहमिति । देहादौ तद्बाह्ये च अहंभावं जगद्भावं च "ब्रह्मातिरिक्तं न किंचिदस्ति" इति परित्यज्य अनीदृशं निर्विशेषं ब्रह्मास्मीति विद्वान् निर्विकल्पे स्थितः सन् भूयोऽपि न शोचति विषयाभावादित्यर्थः ॥१३॥

समाधिलक्षणम्

सलिले सैन्धवं यद्वत् साम्यं भवति योगतः ।
तथाऽऽत्ममनसोरैक्यं समाधिरभिधीयते ॥ १४ ॥
यदा संक्षीयते प्राणो मानसं च प्रलीयते ।
तदा समरसत्वं यत् समाधिरभिधीयते ॥ १५ ॥
यत् समत्वं तयोरत्र जीवात्मपरमात्मनोः ।
समस्तनष्टसंकल्पः समाधिरभिधीयते ॥ १६ ॥
प्रभाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् ।
सर्वशून्यं निराभासं समाधिरभिधीयते ॥ १७ ॥
स्वयमुच्चलिते देहे देही नित्यसमाधिना ।
निश्चलं तं विजानीयात् समाधिरभिधीयते ॥ १८ ॥
यत्रयत्र मनो याति तत्रतत्र परं पदम् ।
तत्रतत्र परं ब्रह्म सर्वत्र समवस्थितम् ॥ १९ ॥

अशोच्यनिर्विकल्पे स्थितिः केत्यत आह—सलिल इति । सलिलप्रक्षिप्तपेषितसैन्धवपिण्डविलयवत् प्रत्यगभिन्नपरमात्मनि मनःप्राणविलय एव समाधिरित्यर्थः ॥ १४ ॥ इतश्च समाधिलक्षणमाह—यदेति । यदा मनःप्राणादिकं विलीयते, यदा च प्रत्यगभिन्नब्रह्मणो यत् समरसत्वं अखण्डैकरसत्वमुदेति तदैव समाधिर्भवतीत्यर्थः ॥ १५ ॥ इतश्च संकल्पाद्यनुदय एव समाधिरित्याह—यदिति ॥ १६ ॥ जाग्रदाद्यवस्थात्रयकलना यत्र न विद्यते स समाधिरित्याह—प्रभेति । प्रभाशब्देन अहंकृतिपूर्णविकासरूपं जाग्रदुच्यते । मनःशब्देन अहंकृत्यर्धविकासात्मकः स्वप्न उच्यते । स्वातिरिक्तं नास्तीति बुध्यत इति बुद्धिशब्देन अहंकृतिमुकुळीभावरूपेयं सुषुप्तिरुच्यते । एवं जाग्रदाद्यवस्थात्रयं यत्र शून्यं

अपह्नवं वा भजति यस्तदपह्नवसिद्धः सोऽयमसंप्रज्ञातसमाधिरुच्यते ॥ १७ ॥ इतश्च निश्चलतास्थितिरेव समाधिरित्याह—स्वयमिति । "ब्रह्मातिरिक्तं न किंचिदस्ति" इति नित्यसमाधिना देहे तदुपलक्षिताविद्यापदतत्कार्यजाते स्वात्मात्मीयाभिमतिवैरळ्येन स्वयमेवोच्चलिते नामरूपकलनां त्यक्त्वा ब्रह्मभावं गते सति अथ देही योगी यो निर्विशेषतया अवशिष्टः तमात्मानं यदा स्वावशेषतया विजानीयात् तद्वेदनावस्थैव अखण्डनिर्विकल्पकसमाधिरित्यर्थः ॥ १८ ॥ मनः-प्रचारविलयाधिकरणं ब्रह्मेत्याह—यत्रेति । स्वातिरिक्तं मनोऽस्तीति ये मन्यन्ते तद्दृष्टिमाश्रित्य स्वातिरिक्तकल्पकं मनो यत्र प्रचरति यत्र वा विलीयते तत्कल्पनाल-याधिष्ठानं ब्रह्म सर्वगतं सर्वव्यापकं, वस्तुतो मनस्तत्कार्यव्याप्याभावाद्व्यापकत्व-मपि न युज्यते इत्यर्थः, "व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात् ।" इति श्रुतेः ॥ १९ ॥

इति द्वितीयः खण्डः

# तृतीयः खण्डः

आधारचक्रम्

अथ हैनं देवा ऊचुर्नवचक्रविवेकमनुब्रूहीति ।

तथेति स होवाच—

आधारे [1]ब्रह्मचक्रं त्रिरावृत्त[2]भगमण्डलाकारं तत्र मूलकन्दे शक्तिः पावकाकारं ध्यायेत् तत्रैव कामरूपपीठं सर्व[3]कामप्रदं भवति इत्याधारचक्रम् ॥ १ ॥

[1] प्रथमं—उ, उ १. [2] भग—उ, क. [3] कामफलप्रदं—अ १, अ २.

पुनर्देवाः नवचक्रबुभुत्सया पृच्छन्तीत्याह—अथेति। नवचक्रविवेकमनुब्रूहि इति तैरेवं पृष्टः तथेति स होवाच भगवान् नारायणः। अत्राद्यं चक्रमाह—आधार इति। मूलाधारे त्रिरावृत्तभङ्ग्या वह्निमण्डलाकारं ब्रह्मचक्रं विराजते। तत्र मूलकन्दे काचन शक्तिरस्ति, तद्रूपं पावकाकारं ध्यायेत्। तत्रैव मूलाधारे सर्वकामप्रदतया कामरूपपीठं विराजते इति यत् तत् आधारचक्रं भवति ॥ १ ॥

स्वाधिष्ठानचक्रम्

द्वितीयं स्वाधिष्ठानचक्रं षड्दलं तन्मध्ये पश्चिमाभि[1]मुख्यं लिङ्गं प्रवालाङ्कुरसदृशं ध्यायेत् तत्रैवोड्याणपीठं जगदाकर्षणसिद्धिदं भवति ॥ २ ॥

द्वितीयचक्रमाह-- द्वितीयमिति। षड्दलाख्यं स्वाधिष्ठानचक्रम्। तत्र मांसाकारं पश्चिमाभिमुख्येन ज्योतिर्लिङ्गमस्ति, तत्प्रवालसदृशं ध्यायेत्। तत्रैव जगदाकर्षणशक्तिमत् उड्याणपीठं विराजत इति ॥ २ ॥

नाभिचक्रम्

तृतीयं नाभिचक्रं [2]पञ्चावर्तं सर्पकुटिलाकारं तन्मध्ये कुण्डलिनीं बालार्ककोटिप्रभां तटित्संनिभां ध्यायेत् सामर्थ्यशक्तिः सर्वसिद्धिप्रदा भवति मणिपूरकचक्रम् ॥ ३ ॥

तृतीयचक्रमाह—तृतीयमिति। मणिपूरकचक्रमाश्रित्य कुण्डलीनी वर्तते तटित्प्रभा, तां ध्यायतः सर्वसिद्धिर्भवति ॥ ३ ॥

[1] मुखलि—उ १. [2] पञ्चावृत्तं—उ १.

हृदयचक्रम्

हृदयचक्रमष्टदलमधोमुखं तन्मध्ये ज्योतिर्मयलिङ्गाकारं ध्यायेत् सैव हंसकला सर्वप्रिया सर्वलोकवश्य[1]करी भवति ॥ ४ ॥

तुरीयचक्रमाह—हृदयेति। अष्टपत्राढ्यं अधोमुखं अनाहतचक्रं भवति। तत्रत्याकाशमध्ये कामादिवृत्तिसहस्रभावाभावप्रकाशकं ज्योतिर्लिङ्गाकारं प्रत्यग्-मात्मानं ध्यायेत्। येह सर्वप्राणिनां हृदयाष्टदले संचरति सैव हंसकला सर्वात्मकतया सर्वजनप्रियकरी। तत्स्वरूपध्यानं सर्वलोकवश्यकरं भवति ॥ ४ ॥

कण्ठचक्रम्

कण्ठचक्रं चतुरङ्गुलं तत्र वामे इडा चन्द्रनाडी दक्षिणे पिङ्गला सूर्यनाडी तन्मध्ये सुषुम्नां श्वेतवर्णां ध्यायेत् य एवं वेदानाहतसिद्धिदा भवति ॥ ५ ॥

पञ्चमचक्रमाह—कण्ठेति ॥ ५ ॥

तालुचक्रम्

तालुचक्रं तत्रामृतधाराप्रवाहो घण्टिकालिङ्गं मूलचक्ररन्ध्रे राजदन्तावलम्बिनीविवरं [2]दशमद्वारं तत्र शून्यं ध्यायेत् चित्तलयो भवति ॥ ६ ॥

चित्तलयफलदं षष्ठं चक्रमाह—तालिवति। तालुमूलचक्रे लक्ष्यं ध्यायतः सूर्याचन्द्रमसोरैक्यं भवति। तत अमृतधाराप्रवाहो भवति। तत्रोर्ध्वमूलचक्ररन्ध्रे यदन्तर्जिह्वेति प्रसिद्धं घण्टिकालिङ्गं वर्तते राजदन्तावलम्बिनीविवरं दशमद्वारं तत्र वृत्तिशून्यं ध्यायतः चित्तलयो भवति ॥ ६ ॥

[1] करं—अ १, अ २. करा—क. [2] दशमद्वाख्यद्वारं—अ १, क.

### भ्रूचक्रम्

सप्तमं भ्रूचक्रमङ्गुष्ठमात्रं तत्र ज्ञाननेत्रं दीपशिखाऽऽकारं ध्यायेत् तदेव कपालकन्दं वाक्सिद्धिदं भवत्याज्ञाचक्रम् ॥ ७ ॥

सप्तमचक्रलक्षणमाह—सप्तममिति । आज्ञाचक्रे ज्ञाननेत्रं ध्यायतः परापरब्रह्मज्ञानं वाक्सिद्धिश्च भवतीत्यर्थः । आज्ञाचक्रं तदेव भवति ॥ ७ ॥

### ब्रह्मरन्ध्रचक्रम्

ब्रह्मरन्ध्रं निर्वाणचक्रं तत्र सूचिकागृहेतरं धूम्रशिखाऽऽकारं ध्यायेत् तत्र जालन्धरपीठं मोक्षप्रदं भवतीति [1]परब्रह्मचक्रम् ॥ ८ ॥

अष्टमचक्रलक्षणमाह—ब्रह्मेति । सूचिकागृहेतरं ततोऽपि सूक्ष्माकारं बिलं धूमशिखाऽऽकारं ध्यायेत् ॥ ८ ॥

### आकाशचक्रम्

नवममाकाशचक्रं तत्र षोडशदलपद्ममूर्ध्वमुखं तन्मध्यकर्णिकात्रिकूटाकारं तन्मध्ये ऊर्ध्वशक्तितां [3]परशून्यं ध्यायेत् तत्रैव पूर्णगिरिपीठं सर्वेच्छासिद्धिसाधनं भवति ॥ ९ ॥

नवमचक्रलक्षणमाह—नवममिति ! षोडशदलान्वितं ऊर्ध्वमुखमाकाशचक्रं भवति । तन्मध्ये त्रिकूटाकारं ज्योतिर्वर्तते । त्रिकूटशब्देन भ्रूमध्यमुच्यते । तन्मध्ये "ऊर्ध्वमुन्नयते इत्योंकारः" इति श्रुत्यनुरोधेन ऊर्ध्वशक्तितां तुरीयोङ्कारस्वरूपतां तत्परमर्धमात्राप्रविभक्तभागत्रयमपि ब्रह्मातिरिक्तं नेतीति शून्यं

[1] अष्टमं ब्र—उ, उ १, मु.  [2] ब्रह्मरन्ध्रचक्रं—उ, उ १,

[3] पश्यन् ध्या—अ २, क.

ध्यायेत्। तत्रैव पूर्णमेवावशिष्यते इति पूर्णगिरिपीठं निष्प्रतियोगिकपूर्णब्रह्ममात्रमवशिष्यते । तदेवं "सर्वं खल्विदं ब्रह्म" इति सर्ववर्जितचिन्मात्रमिति येच्छासिद्धिस्थानं ब्रह्मैव भवतीत्यर्थः ॥ ९ ॥

एतदुपनिषदध्ययनफलम्

सौभाग्यलक्ष्म्युपनिषदं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स सकलधनधान्यसत्पुत्रकलत्रहयभूगजपशुमहिषीदासीदासयोगज्ञानवान् भवति न स पुनरावर्तत इत्युपनिषत् ॥ १० ॥

विद्याफलमाह--सौभाग्येति । उपनिषच्छब्दः सौभाग्यलक्ष्म्युपनिषत्समाप्त्यर्थः ॥ १० ॥

इति तृतीयः खण्डः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
सौभाग्यलक्ष्म्युपनिषद्व्याख्यानं लिखितं स्फुटम् ।
सौभाग्यवृत्तिग्रन्थस्तु चत्वारिंशाधिकं शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चोत्तरशततमसङ्ख्यापूरकं सौभाग्यलक्ष्म्युपनिषद्विवरणं सम्पूर्णम् ॥

---

# नामधेयपदसूची

यत्र पुटसंख्याऽनन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या

# विशेषपदसूची

यत्र पुटसंख्यानन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिः बोध्या

# THE SAṂNYĀSA UPANIṢAD-S

WITH THE COMMENTARY OF

## S'RĪ UPANIṢAD-BRAHMAYOGIN

EDITED BY

T. R. CHINTAMANI DIKSHIT



THE ADYAR LIBRARY AND RESEARCH CENTRE

# PREFACE

With this volume the Adyar Library finishes the publication of the Minor Upaniṣad-s, ninety-eight in number, with the commentary of Upaniṣad-brahma-yogin, which was undertaken by my predecessor the late Pandit A. Mahadeva Sastri. He had published four volumes, and I now issue the fifth volume containing the *Saṃnyāsa Upaniṣad-s*. I have closely followed the plan of the previous volumes. The book was seen through the press by the Pandits of the Adyar Library, who have worked with my predecessor in the publication of the previous volumes, and also by the assistant Librarian, Mr. T. R. Chintamani, M.A. The Library does not intend at present to issue the ten Major Upaniṣad-s with the commentary of Upaniṣad-brahmayogin. The Library contains about seventy-five Upaniṣad-s more, nearly all of them yet unpublished. The Library will very soon issue all these Minor Upaniṣad-s, along with any more that may be available from outside.

C. Kunhan Raja,
*Hon. Director*

1929

[All these other Upaniṣad-s have since been published.]

# CONTENTS

PAGE

## १. अवधूतोपनिषत्



## २. आरुण्युपनिषत्



## ३. कठरुद्रोपनिषत्

PAGE

PAGE

PAGE

PAGE

## ८. निर्वाणोपनिषत्



## ९. परब्रह्मोपनिषत्



## १०. परमहंसपरिव्राजकोपनिषत्



## ११. परमहंसोपनिषत्

PAGE

## १२. ब्रह्मोपनिषत्



## १३. भिक्षुकोपनिषत्



## १४. मैत्रेयोपनिषत्

## १५. याज्ञवल्क्योपनिषत्

## १६. शाट्यायनीयोपनिषत्



## १७. संन्यासोपनिषत्

# अवधूतोपनिषत्

## सह नाववतु—इति शान्तिः

अवधूतजिज्ञासा

अथ ह साङ्कृतिर्भगवन्तमवधूतं दत्तात्रेयं परिसमेत्य पप्रच्छ भगवन् कोऽवधूतस्तस्य का स्थितिः किं लक्ष्म किं संसरणमिति । तं होवाच भगवो दत्तात्रेयः परमकारुणिकः ॥ १ ॥

गौणमुख्यावधूतालिहृदयाम्बुजवर्ति यत् ।
तत् त्रैपदब्रह्मतत्त्वं स्वमात्रमवशिष्यते ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयमवधूतोपनिषत् अवधूतचर्याप्रकटनव्यग्रा निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः संक्षेपतो विवरणमारभ्यते । साङ्कृतिदत्तात्रेयप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—अथेति । किमिति—भगवन्निति । साङ्कृतिप्रश्नोत्तरं भगवानाह—तमिति । भगव इत्यत्र भव इति पाठस्वीकारे, भवतीति भवो भगवान् इति व्युत्पत्तिः ॥ १ ॥

अवधूतशब्दस्याक्षरार्थः

अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबन्धनात् ।
तत्त्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते ॥ २ ॥

अवधूत इत्यक्षरार्थमाह—अक्षर इति ॥ २ ॥

गौणावधूतचर्या

योै विलङ्घ्याश्रमान् वर्णानात्मन्येव स्थितः सदा ।
अतिवर्णाश्रमी योगी अवधूतः स कथ्यते ॥ ३ ॥

मुख्यावधूतः परमात्मेत्युक्त्वा स्वातिरिक्तनिवृत्तिप्रधानगौणावधूतचर्यामाह—य इति ॥ ३ ॥

प्रियादिवृत्तेः पक्षित्वेन वर्णनम्

तस्य प्रियं शिरः कृत्वा मोदो दक्षिणपक्षकः ।
प्रमोद उत्तरः पक्ष आनन्दो गोष्पदायते[1] ॥ ४ ॥
गोवालसदृशं शीर्षे नापि मध्ये न चाप्यधः ।
ब्रह्म पुच्छं प्रतिष्ठेति पुच्छाकारेण कारयेत् ।
एवं चतुष्पदं कृत्वा ते यान्ति परमां गतिम् ॥ ५ ॥

तत्प्रियादिवृत्तिं पक्षित्वेन वर्णयति—तस्येति । योऽवधूत इति ख्यातस्तस्य साधनसम्पत्तिजं प्रियं हर्षं शिरः कृत्वा समाहितावस्थायां यो हर्षः स मोदो दक्षिणपक्षत्वेन चिन्त्यः । अखण्डाकारवृत्तिजः प्रमोद उत्तरपक्षत्वेन ध्येयः । निर्विकल्पसमाधिजो य आनन्दः स आत्मा ; स एव गोष्पदायते प्रियमोदप्रमोदानन्दरूपेण चतुर्धा भिद्यते ॥ तत्र शीर्षे साधनसंपत्तिजहर्षे स्वात्मबुद्धिं न कुर्यात् । न चाप्यधः दक्षिणोत्तरपक्षोपमे समाहितचित्ताखण्डाकारवृत्तिरूपे मोदे प्रमोदे च स्वात्मबुद्धिं न कुर्यात् । तथा मध्येऽपि निर्विकल्पकसमाधिजानन्दे स्वात्मधियं त्यजेत् । तथा चेदात्मधीः कुत्र कार्येत्यत्र यद्गोवालसदृशं किंचिदवशिष्टं

[1] उ, उ १. गोष्पदाकृतिः

तद्ब्रह्म पुच्छं प्रतिष्ठेति पुच्छाकारेण कारयेत् । यत्प्रियाद्यवयवकल्पनाधिकरणं तद्गतहेयांशापाये यदवशिष्यते तन्निरधिकरणं निष्प्रतियोगिकब्रह्ममात्रं स्वावशेषधिया ध्यायेदित्यर्थः । एवमेकं चतुर्धा विभज्य पुनस्तदारोपापवादाधिकरणं निरधिकरणं ब्रह्म स्वमात्रमिति ये जानन्ति, ते तज्ज्ञानसमकालं तन्मात्रावशेषलक्षणां परमां गतिं विदेहमुक्तिं यान्ति विदेहमुक्ता भवन्तीत्यर्थः ॥ ४, ५ ॥

ज्ञानस्य उत्कर्षः

न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः ॥ ६ ॥

कर्मादिभिरपि कैवल्यमाप्तुं शक्यते; किं ज्ञानेनेत्यत आह—नेति । "कर्मणा बध्यते जन्तुः" "किं प्रजया करिष्यामः" "मा गृधः कस्य चिद्धनम्" इति च श्रुत्यनुरोधेन ब्रह्मातिरेकेणापह्नोतव्यैः कर्मप्रजाधनैः केऽप्यमृतत्वं नानशुः । किंत्वेतत्सर्वत्यागेन ब्रह्मातिरिक्तं नेति स्वातिरिक्तसामान्यसंन्यासेन सम्यग्ज्ञानात्मना अमृतत्वं विदेहकैवल्यमानशुः प्राप्नुयुरित्यर्थः ॥६॥

अवधूतचर्यानुक्रमणम्

स्वैरं स्वैरविहरणं तत्संसरणम् । साम्बरा वा दिगम्बरा वा । न तेषां धर्माधर्मौ न मेध्यामेध्यौ । सदा सांग्रहण्येष्ट्याश्वमेधमन्तर्यागं यजते । स महामखो महायोगः ॥ ७ ॥

अवधूतचर्यामनुक्रामति—स्वैरमिति । श्रुतिस्मृतिशिष्टाचाराविरोधेन स्वच्छन्दं स्वैरं स्वैरविहरणं तत्संसरणं यदृच्छयागतभिक्षादिदेहधारणमात्रोपयोगिपरिग्रहपूर्वकं स्वाज्ञलोकोन्मादनप्रवृत्तिनिरासकं तत्संसरणमटनमित्यर्थः । केचन अवधूतचित्तमलाः सन्तः साम्बरा वा दिगम्बरा वा भवन्ति । न तेषां धर्माधर्मौ विद्येते, प्रवृत्तिनिवृत्तिहेतुस्वाज्ञानवैरल्यात् । तथा तद्दृष्ट्या न मेध्यामेध्यौ भवतः, केवलब्रह्ममात्रदृष्टित्वात् । तादृशः किं करोतीत्यत्राह—

सदेति। ब्रह्मैव सर्वं ब्रह्मातिरिक्तं न किंचिदस्ति इति यया सम्यग्ज्ञानवृत्त्या गृह्यते सा संग्रहणी; सैव सांग्रहणी। तया सांग्रहण्येष्ट्या जुष्टं श्वः परश्वो वा स्वातिरिक्तपशुमेधनं विशसनमपह्नवं कर्तव्यमित्यत्र यद्विलम्बनासहं तदेवाश्वमेध-मन्तयागं विद्वान् यजते सदा सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति तन्मात्रतया अवतिष्ठते ॥ ७ ॥

महाव्रतम्

कृत्स्नमेतच्चित्रं कर्म स्वैरं न विगायेत्। तन्महाव्रतम्।

न स मूढवल्लिप्यते ॥ ८ ॥

यथा रविः सर्वरसान् प्रभुङ्क्ते हुताशनश्चापि हि सर्वभक्षः।
तथैव योगी विषयान् प्रभुङ्क्ते न लिप्यते पुण्यपापैश्च शुद्धः ॥९॥
आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्।
तद्वत् कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥

स एव कृत्स्नमेतच्चित्रं कर्म अहमेतादृश इति येन केनापि स्वैरं स्वच्छन्द-शीलं जात्वपि न विगायेत् इति यत् तत् महाव्रतम्। यदि कदाचित् बहिष्ठ-प्राण्यदृष्टानुरोधेन स्वशीलं विगायेत् तदायं न स मूढवल्लिप्यते। तदेव सदृष्टान्तं प्रपञ्चयति—यथेति ॥ युगपत् सर्वकामाशनेऽपि न वर्धते न हीयते स्वयमविकृतः सन् स्वातिरिक्तशान्तिं भजतीत्याह—आपूर्यमाणमिति। अपरिच्छिन्नविषयसेवया योगी मुच्यते। न तथा कामी परिच्छिन्नविषयसेवयापि हीयत इत्यर्थः॥८–१०॥

परमार्थसदुपदेशः

न निरोधो न चोत्पत्तिर्बद्धो न हि न साधकः
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ ११ ॥
ऐहिकामुष्मिकव्रातसिद्ध्यै मुक्तेश्च सिद्धये।
बहु कृत्यं पुरा स्यान्मे तत् सर्वमधुना कृतम् ॥ १२ ॥

तदेव कृतकृत्यत्वं प्रतियोगिपुरःसरम् ।
दुःखिनोऽज्ञाः संसरन्तु कामं पुत्राद्यपेक्षया ॥ १३ ॥
परमानन्दपूर्णोऽहं संसरामि किमिच्छया ।
अनुतिष्ठन्तु कर्माणि परलोकयियासवः ॥ १४ ॥
सर्वलोकात्मकः कस्मादनुतिष्ठामि किं कथम् ।
व्याचक्षतां ते शास्त्राणि वेदानध्यापयन्तु वा ॥ १५ ॥
येऽत्राधिकारिणो मे तु नाधिकारोऽक्रियत्वतः ।
निद्राभिक्षे स्नानशौचे नेच्छामि न करोमि च ॥ १६ ॥
द्रष्टारश्चेत् कल्पयन्तु किं मे स्यादन्यकल्पनात् ।
गुञ्जापुञ्जादि दह्येत नान्यारोपितवह्निना ।
नान्यारोपितसंसारधर्मानेवमहं भजे ॥ १७ ॥

यत् परमार्थसत् तदुपदिशति—नेति । निष्प्रतियोगिकब्रह्ममात्रे स्वातिरिक्तप्रपञ्चोत्पत्तिप्रलयादिकं कुतः संभवति ? ब्रह्म निष्प्रतियोगिकमवशिष्यत इत्यर्थः ॥ एवं दत्तात्रेयमुखतः परमार्थतत्त्वं स्वावशेषधियावगम्य तदनुज्ञया तन्निष्ठो भूत्वा स्वाज्ञलोकानुकम्पया सर्ववेदान्तसिद्धान्तः प्रकटयितव्य इति स्वानुभवं स्वधन्यतां च प्रकाशयामासेत्याह—ऐहिकेति ॥ तव कृतार्थत्वेन संसारानुवर्तने का हानिरित्यत्राह—दुःखिन इति ॥ तथापि यत्किंचित् कर्म त्वया अनुष्ठेयमित्यत्राह—अनुतिष्ठन्त्विति ॥ किंच—व्याचक्षतामिति ॥ ११–१७ ॥

श्रवणादिविधानम्

शृण्वन्त्वज्ञाततत्त्वास्ते जानन् कस्माच्छृणोम्यहम् ।
मन्यन्तां संशयापन्ना न मन्येऽहमसंशयः ॥ १८ ॥

विपर्यस्तो निदिध्यासे किं ध्यानमविपर्यये ।
देहात्मत्वविपर्यासं न कदाचिद्भजाम्यहम् ॥ १९ ॥
अहं मनुष्य इत्यादिव्यवहारो विनाप्यमुम् ।
विपर्यासं चिराभ्यस्तवासनातोऽवकल्पते ॥ २० ॥
आरब्धकर्मणि क्षीणे व्यवहारो निवर्तते ।
कर्मक्षये त्वसौ नैव शाम्येद्ध्यानसहस्रतः ॥ २१ ॥
विरलत्वं व्यवहृतेरिष्टं चेद्ध्यानमस्तु ते ।
अबाधिकां व्यवहृतिं पश्यन् ध्यायाम्यहं कुतः ॥ २२ ॥
विक्षेपो नास्ति यस्मान्मे न समाधिस्ततो मम ।
विक्षेपो वा समाधिर्वा मनसः स्याद्विकारिणः ॥ २३ ॥
नित्यानुभवरूपस्य को मेऽत्रानुभवः पृथक् ।
कृतं कृत्यं प्रापणीयं प्राप्तमित्येव नित्यशः ॥ २४ ॥
व्यवहारो लौकिको वा शास्त्रीयो वान्यथापि वा ।
ममाकर्तुरलेपस्य यथारब्धं प्रवर्तताम् ॥ २५ ॥
अथवा कृतकृत्योऽपि लोकानुग्रहकाम्यया ।
शास्त्रीयेणैव मार्गेण वर्तेऽहं मम का क्षतिः ॥ २६ ॥
देवार्चनस्नानशौचभिक्षादौ वर्ततां वपुः ।
तारं जपतु वाक् तद्वत् पठत्वाम्नायमस्तकम् ॥ २७ ॥
विष्णुं ध्यायतु धीर्यद्वा ब्रह्मानन्दे विलीयताम् ।
साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये ॥ २८ ॥

कृतकृत्यतया तृप्तः प्राप्यप्राप्ततया पुनः ।
तृप्यन्नेवं स्वमनसा मन्यतेऽसौ निरन्तरम् ॥ २९ ॥
धन्योऽहं धन्योऽहं नित्यं स्वात्मानमञ्जसा वेद्मि ।
धन्योऽहं धन्योऽहं ब्रह्मानन्दो विभाति मे स्पष्टम् ॥ ३० ॥
धन्योऽहं धन्योऽहं दुःखं सांसारिकं न वीक्षेऽद्य ।
धन्योऽहं धन्योऽहं स्वस्याज्ञानं पलायितं क्वापि ॥ ३१ ॥
धन्योऽहं धन्योऽहं कर्तव्यं मे न विद्यते किंचित् ।
धन्योऽहं धन्योऽहं प्राप्तव्यं सर्वमद्य संपन्नम् ॥ ३२ ॥
धन्योऽहं धन्योऽहं तृप्तेर्मे कोपमा भवेल्लोके ।
धन्योऽहं धन्योऽहं धन्यो धन्यः पुनः पुनर्धन्यः ॥ ३३ ॥
अहो पुण्यमहो पुण्यं फलितं फलितं दृढम् ।
अस्य पुण्यस्य संपत्तेरहो वयमहो वयम् ॥ ३४ ॥
अहो ज्ञानमहो ज्ञानमहो सुखमहो सुखम् ।
अहो शास्त्रमहो शास्त्रमहो गुरुरहो गुरुः ॥ ३५ ॥

श्रवणाद्यकर्तव्यताऽप्याह—शृण्वन्त्विवति । कथं वर्तसे इत्यत्राह—देवार्चनेति ॥ किमिति—धन्योहऽमिति ॥ पालयितं पलायितमिति पक्षद्वयम् ॥ स्वानुभवं प्रकटय्य साङ्कृतिर्भगवतानुज्ञातो भगवन्तं हृदये कृत्वा यथासुखं विचचारेत्यर्थः ॥ १८-३९ ॥

विद्यापठनानुसन्धानफलम्

य इदमधीते सोऽपि कृतकृत्यो भवति । सुरापानात् पूतो भवति । स्वर्णस्तेयात् पूतो भवति । ब्रह्महत्यात् पूतो भवति ।

कृत्याकृत्यात् पूतो भवति । एवं विदित्वा स्वेच्छाचारपरो भूयात् । ओं सत्यम् । इत्युपनिषत् ॥ ३६ ॥

ग्रन्थतोऽर्थतश्चैतद्विद्यापठनानुसन्धानफलमाह—य इति । यथावत् एवं विदित्वेति । लोकोन्मादननिरासकोऽयमस्य स्वेच्छाचारः; तस्यापि प्राण्यदृष्टायत्तत्वात् । वस्तुतो न ह्यस्य प्रवृत्तिः निवृत्तिर्वास्ति । ब्रह्मनिष्ठस्य निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्नत्वात् ब्रह्मैवायमित्यर्थः । इत्युनिषच्छब्दः अवधूतोपनिषत्परिसमाप्त्यर्थः ॥ ३६ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
अवधूतोपनिषदो व्याख्यानं लिखितं लघु ।
अवधूतोपनिषदः पञ्चाशद्ग्रन्थसंयुता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकोनाशीतिसंख्यापूरकमवधूतोपनिषद्विवरणं संपूर्णम्

---

# आरुण्युपनिषत्

## आप्यायन्तु—इति शान्तिः

पारिव्राज्यलक्षणम्

आरुणिः प्राजापत्यः प्रजापतेर्लोकं जगाम । तं गत्वोवाच । केन भगवन् कर्माण्यशेषतो विसृजानीति । तं होवाच प्रजापतिः । तव पुत्रान् भ्रातॄन् बन्ध्वादीञ्छिखां यज्ञोपवीतं यागं सूत्रं स्वाध्यायं च भूर्लोकभुवर्लोकस्वर्लोकमहर्लोकजनोलोकतपोलोकसत्यलोकं च अतलवितल-सुतलपातालरसातलतलातलमहातलब्रह्माण्डं च विसृजेत् । दण्डमाच्छादनं कौपीनं च परिग्रहेत । शेषं विसृजेत् । इति ॥ १ ॥

आरुणिकाख्योपनिषत्ख्यातसंन्यासिनोऽमलाः ।
यत्प्रबोधाद्यान्ति मुक्तिं तद्रामब्रह्म मे गतिः ॥

इह खल्वारुणिकोपनिषदः सामवेदप्रविभक्तत्वेन केनच्छान्दोग्ययोः विख्यातोपोद्घातप्रकरणमत्रापि स्मर्तव्यम् । आरुणिप्रजापतिप्रश्नप्रतिवचनरूपेय-माख्यायिका विद्यास्तुत्यर्था । आरुणिः प्रजापतिं पारिव्राज्यलक्षणं पृच्छतीत्याह—आरुणिरिति । अरुणस्यापत्यमारुणिः प्रजापतिशिष्यः प्राजापत्यः प्रजानां पालयितुः प्रजापतेर्लोकं जगाम गतवान् । तत्रापि तं प्रजापतिं गत्वा

विनयेनोपसंगम्योवाच। किमिति—हे भगवन् प्रजापते केनोपायेन अहं सर्वकर्माण्यशेषतो विसृजानि निःशेषं त्यजेयम्। इत्यारुणिना पृष्टः प्रजापतिः एवमुवाचेत्याह—तमिति। येन एवं पृष्टः कर्माण्यशेषतो विसृजानीति, तं प्रजापतिर्होवाच किल। किमिति—तव पुत्रभ्रातृश्वशुरस्यालादिबन्धुजनान् शिखां यज्ञोपवीतं यागं तदुपलक्षितसर्वकर्म स्वसूत्रगोत्रादिकं स्वाध्यायं स्वशाखादिवेदांश्च भूलोकादिपहातलान्तलोकविशिष्टं ब्रह्माण्डं च स्वातिरिक्तधिया विसृजेत्। चकारात् स्वेन त्याजनीयपुत्रादिब्रह्माण्डान्तं स्वोपभोगतया अस्ति नास्तीति विभ्रममपि संत्यजेदिति द्योत्यते। लोकोन्मादप्रवृत्तिनिरसनाय स्वोपभोगार्थं वा दण्डम् आच्छादनं कौपीनं परिग्रहेत्। तदितरत् यद्यत् ग्राह्यत्वेन मन्यते लोकः, तच्छेषमशेषं विसृजेत्। आवृत्त्या यद्यत् त्यक्तं स्वातिरिक्तधिया तत्तत् स्वप्नेऽपि न परिग्रहेत् इति द्योत्यते ॥ १ ॥

संन्यस्यतः कर्तव्यानि

गृहस्थो ब्रह्मचारी वानप्रस्थो वा अलौकिकाग्नीनुदराग्नौ समारोपयेत्। गायत्रीं च स्ववाच्यग्नौ समारोपयेत्। उपवीतं भूमावप्सु वा विसृजेत्। कुटीचको ब्रह्मचारी कुटुम्बं विसृजेत्। पात्रं विसृजेत्। पवित्रं विसृजेत्। दण्डाँल्लोकाग्नीन् विसृजेत् इति होवाच। अत ऊर्ध्वममन्त्रवदाचरेत्। ऊर्ध्वगमनं विसृजेत्। औषधवदशनमाचरेत्[1]। त्रिसंध्यां स्नानमाचरेत्। संधिं समाधावात्मन्याचरेत्। सर्वेषु [2]वेदेष्वारणमावर्तयेदुपनिषदमावर्तयेदुपनिषदमावर्तयेत्। खल्वहं ब्रह्मसूत्रं, सूचनात् सूत्रं, ब्रह्मसूत्रमहमेवं विद्यात्। त्रिवृत्सूत्रं त्यजेद्विद्वान् य एवं वेद ॥ २ ॥

[1] उ १. 'औषधवदशनमाचरेत्' इति नास्ति.
[2] उ १. 'वेदेष्वावरण.'

"कौपीनयुगलं कन्था दण्ड एकः परिग्रहः ।
यतेः परमहंसस्य नाधिकं तु विधीयते ॥"

इत्यादिश्रुतेः यदि परिव्रजनाधिकारी गृहस्थो ब्रह्मचारी वानप्रस्थो वा भवतु, तदा ते स्वस्वाश्रमोचितालौकिकाग्नीन् उदराग्नौ समारोपयेत् स्वस्वाग्निमात्मसमारोपणं कुर्यात् । ब्राह्मण्याधारां वेदमातरं गायत्रीं च स्ववाच्यग्नौ समारोपयेत्। चशब्दः ब्रह्मचर्याद्याश्रमे यावन्तो मन्त्रा गृहीताः, तानपि त्यजेदिति विध्यर्थः। यज्ञोपवीतं "यज्ञोपवीतं बहिर्न निवसेत्" इति मन्त्रेण भूमौ वा अप्सु वा विसृजेत् । यदि कश्चित् कुटीचको ब्रह्मचारी पारमहंस्याश्रममारोढुमिच्छति तदा कुटुम्बप्रदेशं विसृजेत्। पुरा परिगृहीतजलपात्रपवित्रत्रिदण्डलोकाग्निरूढमूलाध्यवसायानपि विसृजेदिति होवाच प्रजापतिः । यदैवं सर्वं परित्यजति, तदा तत ऊर्ध्वं मन्त्रः संकल्पः एवमेवं भवितव्यमिति ; तद्विपरीतोऽमन्त्रवान् निःसंकल्पवता मनसा स्वाश्रमोचितकर्म आचरेत् । ऊर्ध्वगमनं मनोराज्यं विसृजेत् । त्रिसंध्यां प्रातर्मध्याह्नसायाह्नेषु यथाशक्ति स्नानमाचरेत् । "जीवात्मपरमात्मनोरेकत्वज्ञानेन तयोर्भेद एव विभग्नः सा संध्या" इति,

"नोदकैर्जायते संध्या न मन्त्रोच्चारणेन तु ।
संधौ जीवात्मनोरैक्यं सा संध्या सद्भिरीर्यते ॥"

इति च श्रुतिस्मृत्यनुरोधेन समाधावात्मन्यन्तःकरणे प्रत्यक्परचितोः संधिमैक्यमाचरेत् । न कदापि तयोर्भेदबुद्धिं कुर्यात् । सर्वेषु वेदेषु विद्यमानमारण्यं सावित्रमावर्तयेत् । यद्वा तेनास्माकं किमिति? उपनिषदमावर्तयेदुपनिषदमावर्तयेदिति वीप्सया तदावर्तनं तदर्थविचारं विना क्षणमात्रमपि न स्थेयमिति द्योत्यते । सर्वोपनिषदर्थब्रह्मसूत्रमहमेव खलु ब्रह्म । सूत्रार्थं श्रुतिः स्वयमेवाह । सर्वेषु वेदेषु निष्प्रतियोगिकतया ब्रह्ममात्रस्यैव सूचनात् यत् सूत्रं तदेव ब्रह्मसूत्रमहमेवेति विद्याद्य एवं वेद । स विद्वान् त्रिवृत्सूत्रं यज्ञोपवीतं तदुपलक्षितप्रपञ्चजातं स्वातिरिक्तधिया संत्यजेत्, न पुनः स्मरेदित्यर्थः ॥ २ ॥

संन्यासमन्त्रलिङ्गविध्यादि

संन्यस्त मया संन्यस्तं मया संन्यस्तं मयेति त्रिरुक्त्वा अभयं सर्वभूतेभ्यो मत्तः सर्वं प्रवर्तते । सखा मा गोपायोजः सखा योऽसीन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म मे भव यत्पापं तन्निवारयेत्यनेन मन्त्रेण कृतं वैणवं दण्डं कौपीनं परिग्रहेत् । औषधवदशनमाचरेदौषधवदशनं प्राश्नीयाद्यथालाभमश्नीयात् । ब्रह्मचर्यमहिंसां चापरिग्रहं च सत्यं च यत्नेन हे रक्षतो हे रक्षतो हे रक्षत इति ॥ ३ ॥

केन मन्त्रेण संन्यासः कर्तव्यः? किं वा संन्यासलिङ्गम्? तदनुष्ठेयविधिर्वा कीदृशः? इत्याशङ्क्याह— संन्यस्तमिति । यदि विद्वान् मुनिस्तदा नारदपरिव्राजकोपनिषच्चतुर्थोपदेशोक्तरीत्या कृच्छ्रप्रायश्चित्ताष्टश्राद्धसप्तकेशविसर्जनपूर्वकक्षौरस्नानगायत्र्यादिमन्त्रग्रामस्वशाखोपसंहरणपुरुषसूक्तविरजाहोमाग्न्युपसंहार - पूर्वकं नाभिदघ्नोदकमुपविश्य यद्यत् गायत्र्यादि स्वाधीतं तत्तत् सर्वं व्याहृतिषु प्रवेश्य "अहं वृक्षस्य" "यश्छन्दसां" इति मन्त्रोच्चारणपूर्वकं देवब्राह्मण-संनिधौ स्वयमुत्तरां दिशमवलोकयन्, देवब्राह्मणाः, यूयं शृण्वन्तु ; दारेषणायाश्च धनेषणायाश्च लोकेषणायाश्च व्युत्थितोऽहमस्मीति विज्ञाप्य "ॐभूः संन्यस्तं मया" इत्यादि प्रातिस्विकेन व्याहृतित्रयमुच्चार्याथ कृत्स्नमपि संन्यस्तं मयेति चोच्चार्य मन्द्रमध्यमतारध्वनिभिः एवं निर्भयः सन् त्रिवारोद्घोषणपूर्वकं "अभयं सर्वभूतेभ्यो मत्तः सर्वं प्रवर्तते स्वाहा" इति मनुना जलं प्राश्य, ततः प्राच्यां दिशि पूर्णाञ्जलिं प्रक्षिप्य "ॐ स्वाहा" इत्यवशिष्टकेशानुत्पाट्य "यज्ञोपवीतं बहिर्न निवसेत्" इति मन्त्रेण यज्ञोपवीतं छित्त्वा "ॐ भूः समुद्रं गच्छ स्वाहा" इत्यप्सु जुहुयात् । ततः पुनः प्रैषं त्रिवारमुच्चरेत् । यद्यत् स्वातिरिक्तत्वेनाभिमतं तत्तत् सर्वं निष्प्रतियोगिकब्रह्ममात्रधिया मया संन्यस्तं सम्यक् त्यक्तम् । आवृत्तिरादरार्था । एवं ब्रह्मादिस्तम्बान्तसर्वभूतेभ्योऽभयं मया दत्तं, तथा सर्वभूतैरपि मह्यमिति प्रतिज्ञाय जातरूपधरः सन् शतपदमुदीचीं दिशं गच्छेत् । ततो गृहस्थप्रार्थनया गुरुनिकटमागत्य तैर्दत्तकटिसूत्रकौपीन-

शाटीकमण्डलुदण्डादिकं तत्तन्मन्त्रोच्चारणपूर्वकं गृहीत्वा, अथ गुरोः सकाशात् प्रणवमहावाक्यादिकं स्वीकृत्य स्वाश्रमाचारपरो भवेदित्यर्थः। "सखा मा गोपाय" इति दण्डग्रहणमन्त्रः। उक्तलक्षणलक्षितोऽयं दण्डो वैराजरूपः। तदभेदेन यः स्वांशजव्यष्टिजीवसखः इन्द्रस्य वार्त्रघ्नो वज्रोऽसि यतो मे स्वांशजत्वेन सखा असि। अतस्त्वं मा मां गोपाय पालयतु। अतस्त्वं मे शर्मकृत् भव त्वद्दर्शनात् पुरा यन्मया कृतं पापं तन्निवारय इत्यनेन मन्त्रेण कृतं वैणवं दण्डं परिग्रहेत्। कौपीनपरिग्रहणं कटिसूत्रकमण्डलुशाट्याद्युपलक्षणार्थम्। यथा यथा मेदोवृद्धिर्न जायते प्राणोऽपि देहं न त्यजति तथा तथा औषधवदशनमाचरेत्, औषधवदेवाशनं प्राश्नीयात्। स्वाशनस्य गृहस्थाधीनत्वेन यथालाभमश्नीयात्। बाह्यमान्तरं चेति द्विविधं ब्रह्मचर्यादि। तत्राष्टाङ्गमैथुनवर्जितं बाह्यम्। ब्रह्मभावमनश्चारो ह्यान्तरब्रह्मचर्यम्। तथा हिंसां परस्वपीडाकरलक्षणां च, तथैवापरिग्रहं च प्राणसंधारणेतरापरिग्रहं बाह्यं ब्रह्मैव स्वमात्रमिति धिया स्वातिरिक्तसामान्यापरिग्रहमान्तरं च, तथा सत्यं च प्राणिमात्रप्रियकरसत्यवचन बाह्यं स्वयमेव सत्यं सन्मात्रमित्यान्तरं हे शिष्याः यूयं एतद्बाह्यान्तरप्रविभक्तब्रह्मचर्याहिंसापरिग्रहादिकं महता प्रयत्नेन रक्षत। आवृत्तिः अप्रमादेनैवाचरणीयमित्यवधारणार्था। रक्षतेत्यर्थे रक्षतः इति प्रयोगस्तु छान्दसः॥ ३॥

संन्यासिनां आसनादिनियमाः

अथातः परमहंसपरिव्राजकानामासनशयनाभ्यां भूमौ ब्रह्मचारिणाम्। मृत्पात्रं वा अलाबुपात्रं दारुपात्रं वा। कामक्रोधलोभमोहदम्भदर्पेच्छासूयाममत्वाहंकारादीनपि त्यजेत्। वर्षासु ध्रुवशीलोऽष्टौ मासानेकाकी यतिश्चरेद्, द्वावेवाचरेत् द्वावेवाचरेत्। स खलु एवं यो विद्वान् सोपनयनादूर्ध्वमेतानि प्राग्वा त्यजेत्। पितरं पुत्रमग्न्युपवीतं कर्म कलत्रं चान्यदपीह॥ ४॥

तेषामासनशयनपात्रनियममाह—अथेति। अथ गुरूपदेशानन्तरं यतः संन्यासकाले मृद्वासनखट्वादिकं परित्यक्तं अतः परमहंसः परमात्माहमस्मि इति

दृढनिश्चयेन स्वातिरिक्तधिया यद्यत् भातं तत्तत् सर्वं परित्यज्य ब्रह्ममात्रपदं व्रजन्तीति परिव्राजकाः। तेषां परमहंसपरिव्राजकानां ब्रह्मण्येव चरतां ब्रह्मभावमापन्नानां भूमावेव आसन शयन च आसनशयने ताभ्यामेव देहयात्रा संभवति, न मृदास्तरणशय्याकाङ्क्षास्ति। "महत्पदं ज्ञात्वा वृक्षमूले वसेत्" इति "शय्या भूतलमजिनं वासः" इति च श्रुतेर्भाष्यकारोक्तेश्च। तेषामुदकाहरणार्थं कमण्डलुस्थानीयं मृत्पात्रमलाबुपात्रं दारुपात्रं वा भवति। तत्र मृत्पात्रासंभवे अलाब्वादिपात्रं वा ग्राह्यं, न तु लोहविकारमित्यर्थः। कदाचिदपि स्वोपस्करविषये यदि प्रसक्तेयं कामक्रोधादिवृत्तिः तन्निःशेषं संत्यजेदित्यर्थः। प्राणिहिंसानिवृत्त्यर्थं वर्षासु चातुर्मास्यनियमपुरःसरं यतिः एकत्र स्वयोग्यप्रदेशे ध्रुवशीलः स्थिरासनो भवेत्। शिष्टाष्टौ मासानेकाकी यतिश्चरेत्। यद्वा— "पक्षा वै चतुरो मासा इति द्वौ मासौ वा वसेत्" इति श्रुत्यनुरोधेन मासचतुष्टयनियमं विहाय यावाषाढश्रावणमासौ तौ द्वावेवाचरेदिति। आवृत्तिः अवधारणार्था। एकत्र मासचतुष्टयवसनात् तत्रत्यानां श्रमो भवेदिति दययेत्यर्थः। यो यद्येवं पारिव्राज्येयत्तां विद्वान् भवति, तदा सोऽयमुपनयनादूर्ध्वं उपनयनात् प्राग्वा हस्तामलकाचार्यवज्जातमात्रेण विदिततत्त्वश्चेत् संन्यस्येत्। यदि गार्हस्थ्यदशायां संजातविरागः संन्यस्तुमिच्छति तदानीमेव पितरं पुत्रमग्न्युपवीतं कर्मार्थस्वीकृतकलत्रं च, पुनरन्यदपि यद्यत् स्वबन्धहेतुत्वेन द्योत्यते तदपि संत्यजेत् संन्यस्येदित्यर्थः ॥ ४ ॥

भिक्षानियमाः

यतयो भिक्षार्थं ग्रामं प्रविशन्ति पाणिपात्रम्, उदरपात्रं वा ॥ ५ ॥

तेषां भिक्षानियममाह—यतय इति। "यतयो भिक्षार्थमेव व्यङ्गारे भुक्तवर्जने" इति श्रुतिसिद्धयथोक्तकाले ग्रामं प्रविशन्ति, न तदतिरिक्तकाले। तैः पाणिपात्रं उदरपात्रं वा शारीरस्थित्यर्थमङ्गीकृतम्। यावज्जीवं तेनैव कालं नयन्ति ॥ ५ ॥

भिक्षानिमित्तोपस्थानमन्त्रः

ओं हि ओं हि ओं हीत्येतदुपनिषदं विन्यसेत्। विद्वान् य एवं वेद ॥ ६ ॥

भिक्षानिमित्तोपस्थानमन्त्रमाह—ॐ हीति । ॐ हि ॐ हि ॐ हि इति मन्त्रेण सूर्यमण्डलस्थात्मानुसंधानं कुर्वन् अथ ग्रामं प्रविशेदित्यर्थः ।

"पाणिपात्रश्चरन् योगी नासकृद्भैक्षमाचरेत् ।
आस्येन तु यदाहारं गोवन्मृगयते मुनिः ।
तदा समः स्यात् सर्वेषु सोऽमृतत्वाय कल्पते ॥"

इति श्रुतेः । य एवमेतदुपनिषदं वेद यथावद्विद्वान् विन्यसेत् विद्वत्संन्यासं कुर्यात् ॥ ६ ॥

विद्वत्संन्यासाधिकारः

पालाशं बैल्वमौदुम्बरं दण्डं मौञ्जीं मेखलां यज्ञोपवीतं च त्यक्त्वा शूरो य एवं वेद ॥ ७ ॥

किं कृत्वा संन्यसेदित्यत आह—त्यक्त्वेति । ब्रह्मचारी गृही वानप्रस्थो वा क्रमेण पालाशं बैल्वमौदुम्बरं दण्डं मौञ्जीं मेखलां यज्ञोपवीतम् । चशब्दात् एतत् सर्वं त्यक्त्वा विन्यसेदिति पूर्वेणान्वयः ॥ ७ ॥

उपसंहारः

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ ८ ॥
तद्विप्रासो विपन्यवो जागृवांसः समिन्धते ।
विष्णोर्यत् परमं पदम् ॥ इति ॥ ९ ॥
एवं निर्वाणानुशासनं वेदानुशासनं वेदानुशासनम् । इत्युपनिषत् ॥

य एवं वक्ष्यमाणं विष्णुपदं निष्प्रतियोगिकस्वमात्रमिति वेद सोऽयं स्वातिरिक्ताविद्यापदतत्कार्यापह्नवीकरणदक्षत्वेन शूरो भूत्वा तन्मात्रतया अवशिष्यते

इत्युपसंहरति—तदिति। तदेतन्निर्विशेषं ब्रह्म स्वाज्ञदृष्टिविकल्पितस्वाविद्यापद-तत्कार्यप्रसक्तौ तदारोपापवादाधिकरणतया विभातस्य विष्णोः व्यापनशीलस्य त्रिविधपरिच्छेदशून्यस्य स्वाधिष्ठेयाविद्यापदतत्कार्यापवादसापेक्षताधिकरणता-संभवप्रबोधसिद्धत्वेन परमं निरधिकरणतया सर्वोत्कृष्टं नित्यसूरिभिः ब्रह्मविद्वरिष्ठैः स्वमात्रतया पद्यत इति पदं तद्विष्णोः परमं पदम्। 'राहोः शिरः' इतिवत् विष्णुयाथात्म्यं सूरयो ब्रह्मविद्वरीयांसः सदा निष्प्रतियोगिकस्वमात्रमिति पश्यन्ति। पश्यन्तीतिव्यपदेशात् विष्णुपदस्य दृश्यत्वेन परिच्छिन्नता स्यादि-त्यत आह—दिवीति। दिवि द्योतनात्मके ब्रह्मणीव चक्षुर्दृष्टिः दर्शनं तद्गो-चरज्ञानमाननमपरिच्छिन्नं तद्विष्णुपदं निष्प्रतियोगिकपूर्णम्। स्वभेदेन सूरयः पश्यन्ति चेत् तत् परिच्छेद्यं भवितुमर्हति। न हि तथा ते पश्यन्ति। किंतु स्वयमेव विष्णुपदं पश्यन्तीत्यर्थः। किंविशेषणविशिष्टाः सूरयः तद्दर्शनतस्त-न्मात्रतया विशिष्यन्त इत्यत आह—तदिति। विप्रासः विप्राः ब्रह्मविद्वरिष्ठाः ब्राह्मणाः विपन्यवो विगतस्वातिरिक्तालाभप्रयुक्तमन्यवः, स्वातिरिक्तस्य स्व-मात्रतया लब्धत्वात्। अत एव ते जागृवांसः स्वाज्ञाननिद्रावैरल्यात् नित्यं जागरूकाः। विष्णोर्यत् परमं पदं स्वमात्रतया पश्यन्ति तद्दर्शनसमकालम् एते तन्मात्रावशेषतया तद्विष्णुपदं समिन्धते तन्मात्रतया अवशिष्यन्ते। इत्येवं निर्वाणस्य कैवल्यस्य अनुशासनं वेदानुशासनम्। वेदानुशासनमिति द्विरुक्तिरादरार्था। इत्युपनिषच्छब्दावारुणिकोपनिषत्परिसमाप्त्यर्थौ ॥८–१०॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
लिखितं स्याद्विवरणं स्फुटमारुणिकस्य हि।
आरुणिकविवरणग्रन्थस्त्रिंशोत्तरं शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे षोडशसंख्यापूरकम्
आरुणिकोपनिषद्विवरणं संपूर्णम्

---

# कठरुद्रोपनिषत्

## सह नाववतु—इति शान्तिः

ब्रह्मविद्याध्ययनम्

[1]देवा ह वै भगवन्तमब्रुवन् । अधीहि भगवन् ब्रह्मविद्याम् । स प्रजापतिरब्रवीत् ॥ १ ॥

पारिव्राज्यधर्मपूगालंकारा यत्पदं ययुः ।
तदहं कठविद्यार्थरामचन्द्रपदं भजे ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं कठरुद्रोपनिषत् पारिव्राज्यधर्मप्रकटनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः संक्षेपतो विवरणमारभ्यते । देवतापटलप्रजापतिप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—देवा इति । देवकृतप्रश्नोत्तरं स प्रजापतिरब्रवीत् ॥ १ ॥

1 The following additional passages are found in the beginning of this work as published in *The Minor Upaniṣads*, vol. I: *Saṃnyāsa-Upaniṣads* Adyar Library Series No. 3, 1912, p. 31. —ॐ । योऽनुक्रमेण संन्यसति स संन्यस्तो भवति । कोऽयं संन्यास उच्यते । कथं संन्यस्तो भवति । य आत्मानं क्रियाभिः सुगुप्तं करोति मातरं पितरं भार्यां पुत्रान् सुहृदो बन्धूननुमोदयित्वा ये चास्यर्त्विजस्तान्सर्वांश्च पूर्ववद्वृत्वा वैश्वानरीमिष्टिं कुर्यात् । सर्वस्वं दद्यात् । यजमानस्याङ्गान्नृत्विजः सर्वैः पात्रैः समारोप्य यदाहवनीये गार्हपत्येऽन्वाहार्यपचने सभ्यावसथ्ययोश्च प्राणापानव्यानोदानसमानान्सर्वान् सर्वेषु समारोपयेत् । सशिखान्केशान्निष्कृष्य, विसृज्य यज्ञोपवीतं, निष्क्रम्य, पुत्रं दृष्ट्वा, त्वं ब्रह्म त्वं यज्ञस्त्वं सर्वमित्यनुमन्त्रयेत् ।

ब्रह्मविद्याङ्गसंन्यासनिरूपणम्

सशिखान् केशान्निष्कृष्य विसृज्य, यज्ञोपवीतं निष्कृष्य, ततः पुत्रं दृष्ट्वा, त्वं ब्रह्म त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारस्त्वं स्वाहा त्वं स्वधा त्वं धाता त्वं विधाता । अथ पुत्रो वदति । अहं ब्रह्माहं यज्ञोऽहं वषट्कारोऽहमोंकारोऽहं स्वाहाहं स्वधाहं धाताहं विधाताहं त्वष्टाहं प्रतिष्ठास्मीति । तान्येतानि अनुव्रजन्नाश्रुमापातयेत् । यदश्रुमापातयेत्प्रजां विछिन्द्यात् । प्रदक्षिणमावृत्यैतच्चैतच्चानवेक्षमाणः प्रत्यायति[1] । स स्वर्ग्यो भवति ॥ २ ॥

किमिति । अत्र ब्रह्मविद्याङ्गतया संन्यासं निरूपयति—सशिखानिति । ब्रह्म वेदः यज्ञवषट्कारादिकं मयानुष्ठितमननुष्ठितं वा तच्छेषपूरणं त्वदधीनमिति पित्रोक्तस्तथेत्याह—अथेति । भवता अधीतमनधीतं वा वेदादिकं तच्छेषपूरण-

यद्यपुत्रो भवत्यात्मानमेवं ध्यात्वानवेक्षमाणः प्राचीमुदीचीं वा दिशं प्रव्रजेत् । चतुर्षु वर्णेषु भैक्षचर्यं चरेत । पाणिपात्रेणाशनं कुर्यादौषधवत्प्राश्नीयाद्यथालाभमश्नीयात्प्राण-संधारणार्थं यथा मेदोवृद्धिर्न जायते । कृशीभूत्वा ग्राम एकरात्रं, नगरे पञ्चरात्रं, चतुरो मासान्वार्षिकान्ग्रामे वा नगरे वापि वसेत् । विशीर्णं वस्त्रं वल्कलं वा प्रतिगृह्य नान्य-त्प्रतिगृह्णीयात् । यद्यशक्तो भवति येन क्लेशसहः स तप्यते तप इति । यो वा एवं क्रमेण संन्यसति यो वा व्युत्तिष्ठति किमस्य यज्ञोपवीतं कास्य शिखा कथं चास्योपस्पर्शन-मिति । तान्होवाच । इदमेवास्य तद्यज्ञोपवीतं यदात्मध्यानं, या विद्या सा शिखा, नीरैः सर्वत्रावस्थितैः कार्यं निर्वर्तयन्नुदपात्रे । जलतीरे निकेतनं हि ब्रह्मवादिनो वदन्ति । अस्तमित आदित्ये कथं चास्योपस्पर्शनमिति । तान्होवाच ॥

यथाहनि तथा रात्रौ नास्य नक्तं न वा दिवा । तदप्येतदृषिणोक्तम् । सकृद्दिवा हे वास्मै भवति । य एवं विद्वानेतेनात्मानं संधत्ते संधत्ते ॥

देवा ह वै समेत्य प्रजापतिमब्रुवन् । न विदामो न विदाम इति । सोऽब्रवीद्ब्रह्मिष्ठेभ्यः । मे तद्वदतो ज्ञास्यथेति । ततो वै ते ब्रह्मिष्ठा न वदन्तो न वदन्त इत्येतत्सर्वम् । देवानां सार्ष्टितां सालोक्यतां सायुज्यतां गच्छति य एवं वेद ॥

[1] उ १. प्रत्यायन्ति.

महं करोमीति पुत्रोक्तिमाकर्ण्य तं विसृज्य प्रव्रजनकाले तद्वियोगजाश्रुपातं सन्ततिविच्छेदकरं न कुर्यात् । ततः किमित्यत्र—प्रदक्षिणमिति । यः संन्यासादूर्ध्वं स्वाधिष्ठितग्रामं स्वजनं वा प्रदक्षिणीकृत्य पुनस्तमनवेक्षमाणः प्रव्रजति स स्वर्ग्यो ब्रह्मलोकं गतो भवतीत्यर्थः ॥ २ ॥

संन्यासक्रमः

ब्रह्मचारी वेदमधीत्य वेदोक्ताचरितब्रह्मचर्यो दारानाहृत्य पुत्रानुत्पाद्यताननुरूपोपाधिभिर्वितत्य, इष्ट्वा च शक्तितो यज्ञैस्तस्य संन्यासो गुरुभिरनुज्ञातस्य बान्धवैश्च । सोऽरण्यं परेत्य द्वादशरात्रं पयसाग्निहोत्रं जुहुयात् । द्वादशरात्रं पयोभक्षः स्यात् । द्वादशरात्रस्यान्तेऽग्नये वैश्वानराय प्रजापतये च प्राजापत्यं चरुं, वैष्णवं त्रिकपालमग्निम् । संस्थितानि दारुपात्राण्यग्नौ जुहुयात् । मृन्मयान्यप्सु जुहुयात् । तैजसानि गुरवे दद्यात् । मा त्वं मामपहाय परागा नाहं त्वामपहाय परागामिति गार्हपत्यदक्षिणाग्न्याहवनीयेषु, अरणिदेशाद्भस्ममुष्टिं पिबेदित्येके । सशिखान् केशान्निष्कृष्य विसृज्य यज्ञोपवीतं भूः स्वाहेत्यप्सु जुहुयात् । अत ऊर्ध्वमनशनमपां प्रवेशनमग्निप्रवेशनं वीराध्वानं महाप्रस्थानं वृद्धाश्रमं वा गच्छेत् । पयसायं प्राश्नीयात्सोऽस्य सायं होमो यत्प्रातः सोऽयं प्रातः, यद्दर्शे तद्दर्शं यत्पौर्णमास्ये तत्पौर्णमास्यं, यद्वसन्ते केशश्मश्रुलोमनखानि वापयेत्सोऽस्याग्निष्टोमः ॥ ३ ॥

ब्रह्मचर्याद्याश्रमाचारप्रकटनपूर्वकं क्रमसंन्यासमाह—ब्रह्मचारीति । ब्रह्मचर्यं समाप्याथ गुर्वनुज्ञयोद्वाह्याथ दारानाहृत्येति । तदनुरूपोपाधिभिः संयोज्याथ

इष्ट्वा चेति । अग्नये वैश्वानराय इति मन्त्रेण संस्थितानि दारुपात्राण्यग्नौ जुहुयात् । तत अनेन मन्त्रेण मा त्वमिति । एतज्जाबालोपनिषदि व्याख्यातम् ॥ संन्यासानन्तरमुक्तलक्षणलक्षितमग्निष्टोमादिकं तन्मन्त्रं वा न पुनरावर्तयेदित्याह—पयसेति । इत्यग्निष्टोमलक्षणमुक्तम् ॥ ३ ॥

संन्यस्तस्य कर्तव्यानि

संन्यस्याग्निं न पुनरावर्तयेत् । यन्मृत्युर्जायमावहमित्यध्यात्ममन्त्राञ्जपेत् । स्वस्ति सर्वजीवेभ्य इत्युक्त्वा आत्मानमनन्यं ध्यायन् तदूर्ध्वबाहुर्विमुक्तमार्गो भवेदनिकेतश्चरेत् । भिक्षाशी यत्किंचिन्न दद्यात् । लवैकं नाधावयेत् जन्तुसंरक्षणार्थं वर्षवर्जम् इति । तदपि श्लोका भवन्ति ॥ ४ ॥

कुण्डिकां चमसं शिक्यं त्रिविष्टपमुपानहौ ।
शीतोपघातिनीं कन्थां कौपीनाच्छादनं तथा ॥ ५ ॥
पवित्रं स्नानशाटीं च उत्तरासङ्गमेव च ।
यज्ञोपवीतं वेदांश्च सर्वं तद्वर्जयेद्यतिः ॥ ६ ॥
स्नानं पानं तथा शौचमद्भिः पूताभिराचरेत् ।
नदीपुलिनशायी स्याद्देवागारेषु वा स्वपेत् ॥ ७ ॥
नात्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत् ।
स्तूयमानो न तुष्येत निन्दितो न शपेत्परान् ॥ ८ ॥

संन्यस्याग्निं न पुनरावर्तयेत् इत्यादि निन्दितो न शपेत् परान् इत्यन्तं कुण्डिकोपनिषदि प्रायशो व्याख्यातम् ॥ ४–८ ॥

ब्रह्मचर्यलक्षणम्

ब्रह्मचर्येण संतिष्ठेदप्रमादेन मस्करी ।
दर्शनं स्पर्शनं केलिः कीर्तनं गुह्यभाषणम् ॥ ९ ॥
संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥ १० ॥
विपरीतं ब्रह्मचर्यमनुष्ठेयं मुमुक्षुभिः ।

ब्रह्मचर्येण सदा स्थेयमित्याह—ब्रह्मचर्येणेति । किमिदं ब्रह्मचर्यम् इत्यत आह—दर्शनमिति । रागेण स्त्रीदर्शनमित्यादि ॥ ९–१० ॥

ब्रह्मचर्यस्य फलम्

[1]यज्जगद्भासकं भानं नित्यं भाति स्वतः स्फुरत् ॥ ११ ॥
स एष जगतः साक्षी सर्वात्मा विमलाकृतिः ।
प्रतिष्ठा सर्वभूतानां प्रज्ञानघनलक्षणः ॥ १२ ॥

ब्रह्मचर्यपरिष्कृतज्ञानफलात्मा कीदृश इत्यत आह—यदिति ॥ प्रत्यग्रूपेण स एव जगतः साक्षी ॥ ११, १२ ॥

ब्रह्मभावापत्तेः ज्ञानायत्तता

न कर्मणा न प्रजया न चान्येनापि केनचित् ।
ब्रह्मवेदनमात्रेण ब्रह्माप्नोत्येव मानवः ॥ १३ ॥

प्रत्यगभिन्नब्रह्मभावापत्तिः ज्ञानायत्ता नान्यायत्तेत्याह—न कर्मणेति ॥ १३ ॥

[1] इत आरभ्य आग्रन्थसमाप्ति अड्यार् पुस्तकशालायां १९१२ तमे वर्षे मुद्रिते कोशे न दृश्यते.

ब्रह्मज्ञानफलम्

तद्विद्याविषयं ब्रह्म सत्यज्ञानसुखाद्वयम् ।
संसारे च गुहावाच्ये मायाज्ञानादिसंज्ञके ॥ १४ ॥
निहितं ब्रह्म यो वेद परमे व्योम्नि संज्ञिते ।
सोऽश्नुते सकलान् कामानक्रमेण द्विजोत्तमः ॥ १५ ॥
प्रत्यगात्मानमज्ञानमायाशक्तेश्च साक्षिणम् ।
एकं ब्रह्माहमस्मीति ब्रह्मैव भवति स्वयम् ॥ १६ ॥
ब्रह्मभूतात्मनस्तस्मादेतस्माच्छक्तिमिश्रितात् ।
अपञ्चीकृत आकाशः संभूतो रज्जुसर्पवत् ॥ १७ ॥
आकाशाद्वायुसंज्ञस्तु स्पर्शोऽपञ्चीकृतः पुनः ।
वायोरग्निस्तथा चाग्नेराप अद्भ्यो वसुन्धरा ॥ १८ ॥
तानि सर्वाणि सूक्ष्माणि पञ्चीकृत्येश्वरस्तदा ।
तेभ्य एव विसृष्टं तद् ब्रह्माण्डादि शिवेन ह ॥ १९ ॥
ब्रह्माण्डस्योदरे देवा दानवा यक्षकिन्नराः ।
मनुष्याः पशुपक्ष्याद्यास्तत्तत्कर्मानुसारतः ॥ २० ॥
अस्थिस्नाय्वादिरूपोऽयं शरीरं भाति देहिनाम् ।
योऽयमन्नमयो ह्यात्मा भाति सर्वशरीरिणः ॥ २१ ॥
ततः प्राणमयो ह्यात्मा विभिन्नश्चान्तरस्थितः ।
ततो मनोमयो ह्यात्मा विभिन्नश्चान्तरस्थितः ॥ २२ ॥
ततो विज्ञान आत्मा तु ततोऽन्यश्चान्तरस्थितः ।
आनन्दमय आत्मा तु ततोऽन्यश्चान्तरस्थितः ॥ २३ ॥

योऽयमन्नमयः सोऽयं पूर्णः प्राणमयेन तु ।
मनोमयेन प्राणोऽपि तथा पूर्णः स्वभावत ॥ २४ ॥
ततो मनोमयो ह्यात्मा पूर्णो ज्ञानमयेन तु ।
आनन्देन सदा पूर्णः सदा ज्ञानमयः सुखी ॥ २५ ॥
तथानन्दमयश्चापि ब्रह्मणान्येन साक्षिणा ।
सर्वान्तरेण पूर्णश्च ब्रह्म नान्येन केनचित् ॥ २६ ॥
यदिदं ब्रह्म पुच्छाख्यं सत्यज्ञानाद्वयात्मकम् ।
सारमेव रसं लब्ध्वा साक्षाद्देही सनातनम् ॥ २७ ॥
सुखी भवति सर्वत्र अन्यथा सुखिता कुतः ।
असत्यस्मिन् परानन्दे स्वात्मभूतेऽखिलात्मनाम् ॥ २८ ॥
को जीवति नरो जातु को वा नित्यं विचेष्टते ।
तस्मात् सर्वात्मना चित्ते भासमानो ह्यसौ नरः ॥ २९ ॥
आनन्दयति दुःखाढ्यं जीवात्मानं सदा जनः ।
यदा ह्येवैष एतस्मिन्नदृश्यत्वादिलक्षणे ॥ ३० ॥
निर्भेदं परमाद्वैतं विन्दते च महायतिः ।
तदेवाभयमित्यन्तं कल्याणं परमामृतम् ॥ ३१ ॥
सद्रूपं परमं ब्रह्म त्रिपरिच्छेदवर्जितम् ।
यदा ह्येवैष एतस्मिन्नल्पमप्यन्तरं नरः ॥ ३२ ॥
विजानाति तदा तस्य भयं स्यान्नात्र संशयः ।
अस्यैवानन्दकोशेन स्तम्बान्ता विष्णुपूर्वकाः ॥ ३३ ॥

भवन्ति सुखिनो नित्यं तारतम्यक्रमेण तु।
तत्तत्पदविरक्तस्य श्रोत्रियस्य प्रसादिनः ॥ ३४ ॥
स्वरूपभूत आनन्दः स्वयं भाति पदे यथा।
निमित्तं किञ्चिदाश्रित्य खलु शब्दः प्रवर्तते ॥ ३५ ॥
यतो वाचो निवर्तन्ते निमित्तानामभावतः।
निर्विशेषपरानन्दे कथं शब्दः प्रवर्तते ॥ ३६ ॥
तस्मादेतन्मनः सूक्ष्मं व्यावृत्तं सर्वगोचरम्।
यस्माच्छ्रोत्रत्वगक्ष्यादिखादिकर्मेन्द्रियाणि च ॥ ३७ ॥
व्यावृत्तानि परं प्राप्तुं न समर्थानि तानि तु।
तद्ब्रह्मानन्दमद्वन्द्वं निर्गुणं सत्यचिद्घनम् ॥ ३८ ॥
विदित्वा स्वात्मरूपेण न बिभेति कुतश्चन।
एवं यस्तु विजानाति स्वगुरोरुपदेशतः ॥ ३९ ॥
स साध्वसाधुकर्मभ्यां सदा न तपति प्रभुः।
तप्यतापकरूपेण विभातमखिलं जगत् ॥ ४० ॥
प्रत्यगात्मतया भाति ज्ञानाद्वेदान्तवाक्यजात्।

कीदृशं ब्रह्मेत्यत्र तद्विद्याविषयं ब्रह्म इत्यादिना आनन्दवल्ल्यर्थं स्पष्टीकरोति। "ब्रह्मविदाप्नोति परम्" इति वाक्यं "न कर्मणा" इति वाक्येन स्पष्टीकृतम्। तद्वृत्तिस्थानीयं "सत्यं ज्ञानमनन्तं ब्रह्म" इति वाक्यमपि "तद्विद्याविषयं ब्रह्म" इति वाक्येन स्पष्टीकृत्य "यो वेद निहितं गुहायाम्" इत्यादि संसारे च इति वाक्यैः स्पष्टीकरोति—संसार इत्यादिना॥ "यज्जगद्भासकं भानम्" इत्यादि "ज्ञानाद्वेदान्तवाक्यजात्" इत्यन्तं आनन्दवल्लीव्याख्यानेनैव व्याख्यातं स्यादिति मन्तव्यम्॥ १४—४० ॥

एकस्यैव निर्विशेषब्रह्मणः सप्तधा भेदः

शुद्धमीश्वरचैतन्यं जीवचैतन्यमेव च ॥ ४१ ॥
प्रमाता च प्रमाणं च प्रमेयं च फलं तथा ।
इति सप्तविधं प्रोक्तं भिद्यते व्यवहारतः ॥ ४२ ॥
मायोपाधिविनिर्मुक्तं शुद्धमित्यभिधीयते ।
मायासंबन्धतश्चेशो जीवोऽविद्यावशस्तथा ॥ ४३ ॥
अन्तःकरणसंबन्धात् प्रमातेत्यभिधीयते ।
तथा तद्वृत्तिसंबन्धात् प्रमाणमिति कथ्यते ॥ ४४ ॥
अज्ञातमपि चैतन्यं प्रमेयमिति कथ्यते ।
तथा ज्ञातं च चैतन्यं फलमित्यभिधीयते ॥ ४५ ॥
सर्वोपाधिविनिर्मुक्तं स्वात्मानं भावयेत्सुधीः ।

एकस्यैव निर्विशेषब्रह्मणः सप्तधा भेदः स्वाज्ञदृष्टिविकल्पित इत्याह—शुद्धमिति ॥ श्रुतिः स्वकृतसूक्तवाक्यं स्वयमेव विवृणोति—मायेति । स्वातिरेकेण माया नास्तीति विभ्रमासंभवप्रबोधसिद्धं शुद्धमित्यभिधीयते ॥ स्वाज्ञानतानवतारतम्यानुरोधेन सर्वोपाधिविनिर्मुक्तम् ॥ ४१–४५ ॥

विद्याफलम्

एवं यो वेद तत्त्वेन ब्रह्मभूयाय कल्पते ॥ ४६ ॥
सर्ववेदान्तसिद्धान्तसारं वच्मि यथार्थतः ।
स्वयं मृत्वा स्वयं भूत्वा स्वयमेवावशिष्यते ॥ ४७ ॥

इत्युपनिषत् ॥

विद्याफलमाह—एवमिति । स मुनिर्ब्रह्मभूयाय कल्पते ॥ सर्ववेदान्तसिद्धान्तसारं प्रकटयन्नुपसंहरति—सर्वेति । किं तत् इत्यत आह—स्वयमिति । स्वदेहादौ रूढमूलं स्वंभावमहंभावं मृत्वा मृती: नीत्वा स्वात्मनि विलाप्य तद्विलापनाधिकरणं स्वयं भूत्वा अधिष्ठेयसापेक्षाधिकरणतापाये निष्प्रतियोगिकं निरधिकरणतया स्वयमेवावशिष्यते इत्यत्र—

स्वात्मन्यारोपिताशेषाभासवस्तुनिरासतः ।
स्वयमेव परं ब्रह्म पूर्णमद्वयमक्रियम् ॥

इति ॥ इत्युपनिषच्छब्दः कठोपनिषत्समाप्त्यर्थः ॥ ४६; ४७ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं कठोपनिषदो लघु ।
कठोपनिषदो व्याख्या द्विषष्टिग्रन्थसंयुता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे त्र्यशीतिसंख्यापूरकं कठोपनिषद्विवरणं सम्पूर्णम् ॥

———

# कुण्डिकोपनिषत्

## आप्यायन्तु—इति शान्तिः

संन्यासपरिग्रहात्पूर्वं कर्तव्यानां अनुक्रमणम

[1]ब्रह्मचर्याश्रमेऽक्षीणे गुरुशुश्रूषणे रतः ।
वेदानधीत्यानुज्ञात उच्यते गुरुणाश्रमी ॥ १ ॥
दारमाहृत्य सदृशमग्निमाधाय शक्तितः ।
ब्राह्मीमिष्टिं यजेत्तासामहोरात्रेण निर्वपेत् ॥ २ ॥

[1] अड्यार् पुस्तकशालायां १९१२ तमे वर्षे मुद्रित संन्यासोपनिषत्कोशे अधोनिर्दिष्टमधिकं दृश्यते:—ॐ अथाहिताग्निर्म्रियेत प्रेतस्य मन्त्रैः संस्कारोपतिष्ठते । स्वस्थो वाश्रमपारं गच्छेयमित्येतान्पितृमेधिकानोपधिसंभारान्संभृत्यारण्ये गत्वामावास्यायां प्रातरेवाग्नीनुपसमाधाय पितृभ्यः श्राद्धतर्पणं कृत्वा ब्राह्मेष्टिं निर्वपेत् ॥

स सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः ।
तस्यैषाहुतिर्दिव्या अमृतत्वाय कल्पते ॥

इत्येवम् । अत ऊर्ध्वम्

यद्ब्रह्माभ्युदयद्दिवं च लोकमिदममुं च सर्वम् ।
सर्वमभिजन्युः सर्वश्रियं दधतु सुमनस्यमाना ॥
ब्रह्म जज्ञानं [प्रथमं पुरस्ताद् वि सीमतः सुरुचो वेन आवः ।
स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः ॥] इति ।

ब्रह्मणेऽथर्वणे प्रजापतयेऽनुमतयेऽग्नये स्विष्टकृत इति हुत्वा,

संविभज्य सुतानर्थं ग्राम्यकामान्विसृज्य च ।
संचरन्वनमार्गेण शुचौ देशे परिभ्रमन् ॥ ३ ॥
वायुभक्षोऽम्बुभक्षो वा विहितैः कन्दमूलकैः ।
स्वशरीरे समाप्याथ पृथिव्यां नाश्रु पातयेत् ॥ ४ ॥

कुण्डिकोपनिषत्ख्यातपरिव्राजकसन्ततिः ।
यत्र विश्रान्तिमगमत्तद्रामपदमाश्रये ॥

इह खलु सामवेदप्रविभक्तेयं कुण्डिकोपनिषत् पारिव्राज्यधर्मप्रकटनव्यग्रा ब्रह्ममात्रविश्रान्ता विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । आख्यायिकां विना श्रुतेरवान्तरतया प्रवृत्तिर्विद्यास्तुत्यर्था । **ब्रह्मचर्येति** । सत्कुलप्रसूतो द्विजातिर्ब्रह्मचर्याश्रमस्वीकरणार्थं स्वगुर्वभिमतशुश्रूषणे रतः सन् गुरुकुलवासं कृत्वाथ गुरुणोपनीतस्तन्मुखतोऽशेषवेदानधीत्य सर्ववेदार्थरहस्यमप्यवगम्य गुरोः प्रसादतः अक्षीणे अक्षये द्विविधब्रह्मचर्यास्पदब्रह्मचर्याश्रमे लब्धेऽपि सति ब्रह्मचर्यं समाप्य गृही भवेत् । गृहाद्वनी भूत्वा प्रव्रजेत् यतिः श्रुत्यर्थमाननाय ।

यज्ञ यज्ञं गच्छ [यज्ञपतिं गच्छ ।
स्वां योनिं गच्छ स्वाहा ॥
एष ते यज्ञो यज्ञपते सहसूक्तवाकः ।
सुवीर्यः स्वाहा ॥]

इत्यग्नावरणी हुत्वा,

ओ चित्सखायं [सख्या ववृत्यां............
.........................................
.................वित्तं मे अस्य रोदसी ॥]

इति चतुर्भिरनुवाकैराज्याहुतीर्जुहुयात् । तैरेवोपतिष्ठते । अथ

मय्यग्रे अग्निं [गृह्णामि सह क्षत्रेण वर्चसा बलेन ।
मयि प्रजां मय्यायुर्दधामि स्वाहा मय्यग्निम् ॥]

इति च द्वावग्नी समारोपयेत् । व्रतवान्स्यादतन्द्रित इति । तत्र श्लोकाः ।

अधीत्यानुज्ञात इत्यत्र छान्दसत्वादकारलुप्तः पाठोऽपि वर्तते अधीत्यनुज्ञात इति। उत्तराश्रमस्वीकरणार्थं गुरुणा अनुज्ञातः सन् अयमाश्रमी ब्रह्मचारी स्वसदृशं स्वकुलानुरूपं दारमाहृत्योद्वाह्य तया साकं गार्हस्थ्योचितधर्मानुष्ठानं कुर्वन्नुषित्वा वानप्रस्थाश्रमं जिगमिषुः शक्तितो धैर्यतोऽग्निमाधाय वानप्रस्थाश्रमाङ्गत्वेन तासां ब्रह्मादिदेवतानां संतुष्ट्यर्थं ब्राह्मीं ब्रह्मदेवताकामिष्टिं यजेत्। कत्यहानि कर्तव्येयमिष्टिः, इत्यत्र तासामहोरात्रेण निर्वपेत्। ततः स्वार्जितार्थे पित्रार्जितार्थे वा गोधनात्मके यथायोगं संविभज्य तवेदमस्तु तवेदमस्तु इति सुतान् प्रति दत्त्वा, निःशेषीकृतपरिकरो, ग्राम्यकामान् विसृज्य, शुचौ देशे संचरन् वनमार्गेण, वन्याश्रमोक्तविधिना वायुभक्षोऽम्बुभक्षो वा परिभ्रमन् तदाश्रमं समापयेत्। यदि वाय्वादिभक्षणातृप्तस्तदा विहितैः निर्दुष्टैः कन्दमूलैरपक्वैः पक्वैर्वा शरीरयात्रां कुर्यात्। एवं स्वशरीरमात्रे सर्वसंसारं समाप्याथ पूर्वानुभूतस्वपरिकरं स्मृत्वा पृथिव्यामश्रुपातं न कुर्यादित्यर्थः॥ १–४ ॥

विदारस्यैव संन्यासाधिकारः

सह तेनैव पुरुषः कथं संन्यस्त उच्यते।
सनामधेयो यस्मिंस्तु कथं संन्यस्त उच्यते ॥ ५ ॥
तस्मात्फलविशुद्धाङ्गी संन्यासं संहितात्मनाम्।
अग्निवर्णं विनिष्क्रम्य वानप्रस्थं प्रपद्यते ॥ ६ ॥
लोकवद्भार्यया सक्तो वनं गच्छति संयतः।

संन्यासस्य क्रमप्राप्ततया विदारः सदारो वा संन्यसेदित्यत आह— सहेति। विदारेण संन्यासः कर्तव्यः खलु, संन्यासस्य दाराद्येषणात्यागपूर्वकत्वात्। तथा सति तेनैव दारेण साकं पुरुषो वनी कथं संन्यस्तो भवेदित्युच्यते। यस्मिंस्तु सदारे सति सदारो वनीति नामधेयेन सहितः सनामधेयो भवति। स कथं संन्यस्तो भवतीत्युच्यते॥ यस्मात् सदारस्य न संन्यासा-

विकारः तस्मात् सम्यक् स्वहितात्मनां संहितात्मनां वानप्रस्थधर्माणामीश्वराराधनधियानुष्ठितानां फलविशुद्धाङ्गी स्वकृतधर्मफलार्पणसंतुष्टेश्वरप्रसादासादितविशुद्धचित्तो विदारो मुनिः सर्वकर्मसंन्यासं कुर्यात् । तादृशचित्तशुद्ध्यभावे ब्रह्मचर्यतः चित्तशुद्धिहेतुश्रौतस्मार्तधर्मानुष्ठानार्थमग्निवर्णे गार्हस्थ्यं प्रपद्य वानप्रस्थाश्रमारोहणचित्तशुद्धिर्वानप्रस्थाश्रमं पारिव्राज्यानुकूलचित्तशुद्धिप्रापकं प्रपद्यते ॥ ग्राम्यसुखेच्छाभावेऽपि औपासनादिधर्मानुष्ठानार्थं संयतकरणग्रामो मुनिः लोकवत् भार्यया सक्त इव वनं गच्छतीत्यर्थः ॥ ५ ; ६ ॥

जन्मनिवृत्त्यर्थं संन्यासपरिग्रहः

संत्यक्त्वा संसृतिसुखमनुतिष्ठति किं मुधा ॥ ७ ॥
किं वा दुःखमनुस्मृत्य भोगांस्त्यजति चोच्छ्रितान्[1] ।
गर्भवासभयाद्भीतः शीतोष्णाभ्यां तथैव च ।
गुहां प्रवेष्टुमिच्छामि परं पदमनामयम् ॥ ८ ॥ इति ॥

किमर्थं संसारदुःखं विहाय वनी भवतीत्याशङ्क्य जन्मादिभिया सर्वं त्यक्त्वा वनी भिक्षुर्वा भवतीत्यह—संत्यक्त्वेति । विपुलं संसारभवसुखं संत्यज्य मुधा वनाद्वनमटति दारपुत्रादियोगजसुखदे संसारे ॥ किं दुःखमनुस्मृत्य सर्वोच्छ्रितान् स्रक्चन्दनादिभोगांस्त्यजतीति प्राप्ते सांसारिकदुःखप्रायसुखाभासस्य क्षणभङ्गुरत्वेऽप्यनन्तकोटिकल्पपर्यन्तं जननमरणादिदुःखपरम्पराहेतुत्वेन व्रतिगृहिवन्याश्रमोचितबाह्यान्तःसंसारत्याग एव श्रेयानिति मनसि विधाय 'हे जाये, त्वया मे यत् कर्तव्यं तत्सर्वं कृतं, पुत्रनिकटमेत्य तपश्चरन्ती ब्रह्मलोकं व्रज, इदानीमहं शीतोष्णादिबहुदुःखास्पदगर्भवासभयात् भीतः सन् यत्परमपदसाधनं गुह्यं निर्विशेषब्रह्मनिष्ठानुकूलसंन्यासं प्रवेष्टुमिच्छामि ' इति जायामाश्वास्य प्रेषयित्वा विदारो यथावत् संन्यासं कृतवानित्यर्थः ॥ ७ ; ८ ॥

[1] उ १ उज्झृतान्.

संन्यस्तस्य न श्रौतस्मार्ताग्निसेवनम्

संन्यस्याग्निमपुनरावर्तनम् ॥ ९ ॥

कृतेऽपि संन्यासे मुक्तिहेतवे इतोऽधिकचित्तशुद्ध्यर्थं वा श्रौतस्मार्ताग्निसेवनं कर्तव्यनिर्विशेषब्रह्मज्ञानजनकचित्तशुद्धेः निष्कामबुद्ध्यानुष्ठेयसत्कर्मनिमित्तादग्निसेवनं कार्यमिति तत्राह—संन्यस्येति । न ह्युत्तीर्णसरित्पारो नौकां शिरसा वहति; तथा संप्राप्तसत्त्वशुद्धेः संन्यासिनः कृतकृत्यस्य न हि कर्मानुष्ठानापेक्षास्ति, तस्य निरग्नित्वात् । यत एवमतः संन्यस्य पुनः श्रौतं स्मार्तं वाग्निं कदापि न सेवेत । एवमग्निसेवाभावेऽपि यथोक्तकाले वचसा मनसा वापि प्रधानमन्त्रस्य कृत्स्नस्य वा न कदाप्यावर्तनमाम्रेडनं स्मरणं वा कुर्यात् ॥ ९ ॥

अग्निसेवने प्रत्यवायः

यन्मृत्युर्जायमावहम् इति ॥ १० ॥

एवं कृते का हानिरित्यत्राह—यदिति । योऽहं वर्णाश्रमव्यवस्थापकश्रुतिगणः सोऽहं मृत्युर्भूत्वा परिव्राड्धर्मविरलस्य ते पूर्वसिद्धमपि जायं जायमानं वा परापरविषयकब्रह्मज्ञानमावहं प्रविशेयं, मृत्युः प्रमादः तदस्मरणं इत्थंभूतमृत्युग्रस्तं ज्ञानमाभासज्ञानमज्ञानं वा भवेदित्यर्थः । यद्यत्स्वातिरिक्ततया त्यक्तं तत् कदाप्यस्ति नास्तीति वा न हि स्मरेदित्यर्थः ॥ १० ॥

चित्तशुद्ध्यर्थं प्रणवादिमहावाक्यानामावर्तनम्

अथाध्यात्ममन्त्राञ्जपेत् ॥ ११ ॥

उत्पन्नचित्तशुद्धेः प्रयोजनाभावात् कर्म मास्तु । यद्यचित्तशुद्धः संन्यस्यति तदा तच्चित्तशुद्ध्ये कर्म विना किं ते अस्तीत्याशङ्क्य तस्यापि न कर्मास्ति, ज्ञानतोऽज्ञानतो वापि प्रैषादिमन्त्रपूर्वकं सर्वकर्मणां त्यक्तत्वात् । यद्यशुद्धचित्तस्तदा स्वाश्रमानुष्ठानमविहाय स्वचित्तशुद्ध्ये प्रणवमहावाक्यजातमावर्तयेदित्याह—

अथेति । अथ विविदिषासंन्यासानन्तरमध्यात्ममन्त्रान् प्रणवमहावाक्यानि ईशाद्यष्टोत्तरशतोपनिषदो वा स्वचित्तशुद्धये जपेत् ॥ ११ ॥

दीक्षानियमाः

दीक्षामुपेयात् । काषायवासाः । कक्षोपस्थलोमानि वर्जयेत् । [1]ऊर्ध्वबाहुर्विमुक्तमार्गो भवति । अनिकेतश्चरेत् । भिक्षाशी निदिध्यासनं दध्यात् । पवित्रं धारयेज्जन्तुसंरक्षणार्थम् ॥ १२ ॥

तदपि श्लोका भवन्ति—

कुण्डिकां चमसं शिक्यं त्रिविष्टपमुपानहौ ।
शीतोपघातिनीं कन्थां कौपीनाच्छादनं तथा ॥ १३ ॥
पवित्रं स्नानशाटीं च उत्तरासङ्गमेव च ।
अतोऽतिरिक्तं यत्किञ्चित्सर्वं तद्वर्जयेद्यतिः ॥ १४ ॥
नदीपुलिनशायी स्याद्देवागारेषु बाह्यतः ।
नात्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत् ॥ १५ ॥
स्नानं पानं तथा शौचमद्भिः पूताभिराचरेत् ।
स्तूयमानो न तुष्येत निन्दितो न शपेत्परान् ॥ १६ ॥
भिक्षादि वैदलं पात्रं स्नानद्रव्यमवारितम् ।
एवं वृत्तिमुपासीनो यतेन्द्रियो जपेत्सदा ॥ १७ ॥
[2]विश्वायमनुसंयोगं मनसा भावयेत् सुधीः ॥ १८ ॥

[1] उ, १. ऊर्ध्वगो बाहुः.
[2] उ १. विश्वायं.

आदेहपातं द्विविधब्रह्मचर्यदीक्षामुपेयात्। तन्नियमस्तु काषायवस्त्रधारणं कक्षोपस्थलोमवर्जनपूर्वकं क्षौरम्। संन्यासानन्तरम् ऊर्ध्वबाहुः प्राचीमुदीचीं वा दिशं प्रव्रजेत्। व्याविद्धपूर्वाचरितसंसारमार्गो भवति। यदि श्रवणध्यानानधिकारी तदा "अष्टौ मांस्येकाकी यतिश्चरेत्" इति श्रुत्यनुरोधेनानिकेतश्चरेत्। एकान्तत्यागपूर्वकं माधूकरादिवृत्त्या भिक्षाशी। यदि श्रवणाद्यधिकारी तदा अबाधकसत्सेवितपुण्यस्थले वसन् संशयादिपञ्चदोषशान्त्यन्तं सर्ववेदान्तश्रवणमननं निदिध्यासनं च कुर्वन्, तत्फलीभूतार्थं सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति दध्यात् ध्यायेत्। जन्तुसंरक्षणार्थम् "सर्वं खल्विदं ब्रह्म व्यतिरिक्तं न किंचिदस्ति" इति श्रुत्यनुरोधेन सर्वात्मभावनासिद्धये पवित्रं परिशुद्धं निर्विशेषज्ञानं धारयेत्; "पवित्रं ज्ञानमुच्यते" इति श्रुतेः॥ ब्राह्मणेन योऽर्थोऽभिहितः तमेतमर्थं मन्त्रा अप्यनुवदन्तीत्याह—तदपीति॥ परैः स्तूयमानः। कुण्डिकां कमण्डलुं चमसं नारिकेलकपालार्धं त्रिविष्टपं त्रैलोक्यं मन्त्रौषधमहिम्ना तत्संचारक्षमावुपानहौ पादत्राणकरौ॥ उत्तरासङ्गं वेदान्तविचारासक्तिः॥ भिक्षाद्याधारतया वैदलं पत्रग्रथितपर्णपात्रम् अवारितमावश्यकं स्नानद्रव्यं मृत्तिका। अयं धर्मः कुटीचकादीनां समः। कुटीचकस्य तु चमसोपानहपवित्रभिक्षापात्राणि विशेषः॥ कुण्डिकाम् इत्यादिमन्त्रैः यतीनां या वृत्तिरभिहिता तां वृत्तिं यतेन्द्रियो भूत्वोपासीनः सदा अध्यात्ममन्त्रान् जपेत्। ततः यद्विश्वारोपापवादाधिकरणं विश्वायं विश्वायतनं तद्येन मीयते स मनुः प्रणवः; तयोः परापरब्रह्मणोः संयोगमैक्यं मनसा प्रणवार्थं ब्रह्माहमस्मि इति सदा भावयेत्॥ १२–१८॥

विश्वाधिष्ठानात् पञ्चभूतानां भेदः

आकाशाद्वायुर्वायोर्ज्योतिर्ज्योतिष आपोऽद्भ्यः पृथिवी। एतेषां
भूतानां ब्रह्म प्रपद्येऽजरममरमक्षरं प्रपद्ये॥ १९॥

यद्विश्वाधिष्ठानं ततः पञ्चभूतानि भिद्यन्त इत्यत आह—आकाश इति। तत्सकाशादाकाशः। आकाशादिपञ्चभूतानां ब्रह्मकार्यत्वेन कार्यकारणयोरेक-

त्वात् एतेषां भूतानां यदारोपापवादाधिष्ठानं तत् ब्रह्मेति प्रपद्ये। अधिष्ठेय-सापेक्षतोऽधिष्ठानमपि जीर्यन्म्रियत इत्यत आह—**अजरममरमक्षरं प्रपद्य इति**। अधिष्ठेयस्याकाशादेः स्वाज्ञानविकल्पितत्वेन कारणतुल्यत्वादधिष्ठेयापाये निर-धिष्ठानत्वात् तत् कदापि न हि जीर्यते, नापि म्रियत इत्यर्थः ॥ १९ ॥

यतेः स्वानुभवप्रकटनम्

मय्यखण्डसुखाम्भोधौ बहुधा विश्ववीचयः।
उत्पद्यन्ते विलीयन्ते मायामारुतविभ्रमात् ॥ २० ॥
न मे देहेन संबन्धो मेघेनेव विहायसः।
अतः कुतो मे तद्धर्मा जाग्रत्स्वप्नसुषुप्तिषु ॥ २१ ॥
आकाशवत् कल्पविदूरगोऽहमादित्यवद्भास्यविलक्षणोऽहम्।
अहार्यवन्नित्यविनिश्चलोऽहमम्भोधिवत् पारविवर्जितोऽहम् ॥ २२ ॥
नारायणोऽहं नरकान्तकोऽहं पुरान्तकोऽहं पुरुषोऽहमीश्वरः।
अखण्डबोधोऽहमशेषसाक्षी निरीश्वरोऽहं निरहं च निर्ममः ॥

विश्वायमनुसंयोगध्याता यतिः स्वानुभवं प्रकटयति—मयीति। ममा-काशवत् कल्पनास्पृष्टत्वात् ॥ मेरोः केनापि हर्तुमशक्यत्वात् मेरुवदचलो-ऽस्मीत्यर्थः ॥ एवं नित्यानुसंधानतो निर्विकल्पं मनो भवति तेन कृतकृत्यो भवतीत्यर्थः ॥ २०–२३ ॥

योगाभ्यासेन ब्रह्मसाक्षात्कारः

तदभ्यासेन प्राणापानौ संयम्य।
वृषणापानयोर्मध्ये पाणी आस्थाय संश्रयेत्।
संदश्य शनकैर्जिह्वां यवमात्रविनिर्गताम् ॥ २४ ॥

माषमात्रीं तथा दृष्टिं श्रोत्रे स्थाप्य तथा भुवि ।
श्रवणे नासिके गन्धायतत्वं न च संश्रयेत् ॥ २५ ॥
अथ शैवं पदं यत्र तद् ब्रह्म ब्रह्म तत् परम् ।
तदभ्यासेन लभ्येत पूर्वजन्मार्जितात्मना ॥ २६ ॥

यद्येवं ज्ञानं नोदेति तदा योगाभ्यासेन प्राणापानैक्यं कृत्वा षण्मुखीकरणेन कुण्डल्युद्बोधनं कृत्वा तया ग्रन्थित्रयात्मकषडाधारं भित्त्वा सहस्रारे ब्रह्मसाक्षात्कारं कुर्यादित्याह—तदभ्यासेनेति । योगाभ्यासेन प्राणापानसंयमनपूर्वकं कुण्डलिन्या सुषुम्नां भेदयेत् इत्यत्र वक्ष्यमाणमन्त्रा भवन्तीत्याह—वृषणेति । वृषणापानमध्यं करद्वयेन संपीड्य ॥ जिह्वाबन्धनपूर्वकं माषमात्रलक्ष्यानुसन्धानपूर्वकं दृष्टिं श्रोत्राकाशे भुवि पदद्वये च संस्थाप्य । श्रवणनासिकागन्धग्रहणं पञ्चज्ञानेन्द्रियतद्विषयपञ्चकोपलक्षणार्थम् । श्रवणादिपञ्चेन्द्रियाणां शब्दादिपञ्चविषयायतनत्वं न च संश्रयेत्; इन्द्रियेन्द्रियार्थसंबन्धं मनःसंकल्पसंबन्धं च न कुर्यादित्यर्थः । एवं कृते प्राणापानैक्यं भवति ॥ ततः कुण्डलिनी सुषुम्नां भित्त्वा अथ सहस्रारचक्रं प्रविश्य लीयते । तया साकं दृङ्मनःप्राणाग्नयोऽपि शैवपदं यत्र विराजते तत्रैव लीयन्ते । तल्लयाधिकरणं ब्रह्मैव तल्लयसापेक्षाधिकरणतापाये तदेव निष्प्रतियोगिकनिर्विशेषं परं ब्रह्मेत्यर्थः । एवमभ्यासः सफलो भवतीत्याह—तदभ्यासेनेति । योऽयं ज्ञानयोगोऽभिहितः पूर्वजन्मन्यार्जितः अभ्यस्त आत्मा स्वरूपं यस्य तेन पूर्वजन्मार्जितात्मना तदभ्यासेन योगिपटलभावनानुरूपं परापरे ब्रह्मणि लभ्येत ॥ तत्र निर्विशेषज्ञानी स्वात्तज्ञानसमकालमेव ब्रह्मैव भवतीत्युक्तम् ॥ २४–२६ ॥

सविशेषज्ञानिनः क्रममुक्तिः

संभूतैर्वायुसंश्राव्य हृदयं तप उच्यते ।
ऊर्ध्वं प्रपद्यते देहाद्भित्त्वा मूर्धानमव्ययम् ॥ २७ ॥

स्वदेहस्य तु मूर्धानं ये प्राप्य परमां गतिम् ।
भूयस्ते न निवर्तन्ते परापरविदो जनाः ॥ २८ ॥

अथ सविशेषज्ञानिनः क्रममुक्तिमाचष्टे—संभूतैरिति । सम्यक् भवन्तीति संभूतानि बाह्यान्तःकरणानि । तैः साकं यत् सविशेषज्ञानाग्निना तप्यते दीप्यते प्रकाशते इति तप इत्युच्यते । हृदयं प्रविश्य तत्रत्यवायुं प्राणवायुं संश्राव्य ब्रह्मरन्ध्रभेदनसमर्थमिति श्रुत्वा तं प्राणमवष्टभ्य सुषुम्नाद्वारेण देहादूर्ध्वं मूर्धानं भित्त्वा यदपरं ब्रह्माख्यं तदेव प्रपद्यते ॥ तत् प्राप्य पुनः निवर्तन्त इत्यत्र—**स्वदेहस्य तु मूर्धानं ये प्राप्य परमां गतिं** भजन्ति, **भूयस्ते न निवर्तन्ते परापरविदो जना** इति शबलब्रह्मोपासकाः सुषुम्नामार्गेण ब्रह्मरन्ध्रं भित्त्वा सूर्यद्वारेण ब्रह्मलोकं प्रविश्य तत्र निर्विशेषब्रह्मान्वेषणं कुर्वन्तो यावदाभूतसंप्लवं तत्रोषित्वाथ वासनाक्षयतो ब्रह्मणा सह कैवल्यमेत्य कदापि न हि पुनरावर्तन्त इत्यर्थः ॥ २७ ; २८ ॥

निर्विशेषब्रह्मज्ञानिनां मोक्षः

न साक्षिणं साक्ष्यधर्माः संस्पृशन्ति विलक्षणम् ।
अविकारमुदासीनं गृहिधर्माः प्रदीपवत् ॥ २९ ॥
जले वापि स्थले वापि लुठत्वेष जडात्मकः ।
नाहं विलिप्ये तद्धर्मैर्घटधर्मैर्नभो यथा ॥ ३० ॥
निष्क्रियोऽस्म्यविकारोऽस्मि निष्कलोऽस्मि निराकृतिः ।
निर्विकल्पोऽस्मि नित्योऽस्मि निरालम्बोऽस्मि निर्द्वयः ॥ ३१ ॥
सर्वात्मकोऽहं सर्वोऽहं सर्वातीतोऽहमद्वयः ।
केवलाखण्डबोधोऽहं स्वानन्दोऽहं निरन्तरः ॥ ३२ ॥

स्वमेव सर्वतः पश्यन् मन्यमानः स्वमद्वयम् ।
स्वानन्दमनुभुञ्जानो निर्विकल्पो भवाम्यहम् ॥ ३३ ॥
गच्छंस्तिष्ठन्नुपविशञ्छयानो वान्यथापि वा ।
यथेच्छया वसेद्विद्वानात्मारामः सदा मुनिः ॥ ३४ ॥
इत्युपनिषत् ॥

केचनात्रैव निर्विशेषं ब्रह्म विदित्वा कृतकृत्या भवन्ति इत्यत्र आभासतोऽपि यद्यस्ति स्वातिरिक्तकलना तदा तत्साक्षिणो भूत्वा मुक्ता भवन्तीत्याह—न साक्षिणमिति । स्वदेहतदन्यत्रात्मात्मीयाभिमतिमुत्सृज्यात्मतया ब्रह्मानुसंधानपरिक्षीणस्वातिरिक्तभ्रमो मुनिः प्रवृत्तिनिवृत्तिपराङ्मुखो भूत्वा कृतकृत्यो विदेहमुक्तो भवेदित्यर्थः ॥ इत्युपनिषच्छब्दः कुण्डिकोपनिषत्परिसमाप्त्यर्थः ॥ ॥ २९–३४ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
कुण्डिकोपनिषद्व्याख्या लिखिता स्वात्मबोधिनी ।
कुण्डिकोपनिषद्व्याख्याग्रन्थजातं शतं स्मृतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे चतुःसप्ततिसंख्यापूरकं
कुण्डिकोपनिषद्विवरणं संपूर्णम्

———

# जाबालोपनिषत्

## पूर्णमदः—इति शान्तिः

### प्रथमः खण्डः

अविमुक्तोपासनम्

बृहस्पतिरुवाच याज्ञवल्क्यम् । यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । अविमुक्तं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । तस्माद्यत्र क्वचन गच्छति तदेव [1]मन्येतेति[2] । इदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् । अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षीभवति । तस्मादविमुक्तमेव निषेवेताविमुक्तं न विमुञ्चेत् । एवमेवैतद्याज्ञवल्क्य एवमेवैतद्भगवन् इति वै याज्ञवल्क्येति ॥ १ ॥

जाबालोपनिषत्ख्यातसंन्यासज्ञानगोचरम् ।
वस्तुतस्त्रैपदं ब्रह्म स्वमात्रमवशिष्यते ॥

शुक्लयजुर्वेदान्तर्गतजाबालशाखायां कर्मादिकाण्डत्रयं विद्यते । तत्र सकामिनां कर्मकाण्डानुष्ठानतः चन्द्रलोकाप्तिः । निष्कामिनां कर्मोपासना-

1. उ १. मन्यते.
2. उ, 'इति' इत्यस्य स्थाने 'तदविमुक्तमेव' इति दृश्यते.

काण्डसमुच्चयानुष्ठानतो ब्रह्मलोकाप्तिः। काण्डद्वयार्थविरक्तानां ब्रह्ममात्राप्तिहेतुशतरुद्रीयजपसर्वकर्मसंन्याससाधनसंपन्नानां ब्रह्ममात्राप्तिसाधनभूतेयं ज्ञानकाण्डात्मिका जाबालोपनिषदारभ्यते। तस्यास्तावदल्पग्रन्थतो विवरणमारभ्यते। आख्यायिका विद्यास्तुत्यर्था। मिथिलोपवनप्रान्ते वादेन ब्राह्मणान् जित्वा स्वाप्तपरब्रह्मविद्यया जनकं बोधयित्वा स्वशिष्यगणेन सह याज्ञवल्क्यः पुनः मिथिलोपवने कंचित्कालमासांचक्रे। यः सर्वज्ञकल्पस्तं याज्ञवल्क्यम् अविमुक्तेयत्तां जिज्ञासुर्बृहस्पतिरुवाच सर्वक्षेत्रादपि यदनु प्रसिद्धम्। कुत्सितं पापकर्म रौतीति कुरुः। तस्य क्षेपणपूर्वकं स्वगतजनत्राणनात् कुरुक्षेत्रम्। यद्वा—कुः पृथिवी, तस्यां रौति शब्दं करोतीति कुरुः प्राणः; तदावासहेतुशरीरं कुरुक्षेत्रं तत्रत्यदेवतानामिन्द्रियाणां प्रवृत्तिनिमित्तदेवस्य प्रत्यक्चिद्धातोर्यजनं [1]पूजाकरणम्। अत्र हीन्द्रियाणि स्वोचितविषयोपहारैरात्मानं यजन्ति सर्वेषां भूतानामिन्द्रियाधिष्ठातॄणां वा ब्रह्मसदनं ब्रह्माप्तिस्थानम्। यथा देवयजनसाधनं कुरुक्षेत्रं, तथा विशेषणद्वयविशिष्टमान्तरं कुरुक्षेत्रमिति बृहस्पतिप्रश्नानुरोधं मुनिराह—अविमुक्तमिति। यत्स्वरूपं स्वाविद्याकामकर्मविमुक्तं तदविमुक्तं ब्रह्म यत्रोपलभ्यते तदेव[2] भ्रूमध्यगताज्ञाचक्रं कुरुक्षेत्रम्। देवानामित्याद्युक्तार्थम्। यस्मादेवं तस्माद्यत्र क्वचन गङ्गाप्रयागादिस्थले तद्विपरीते वा गच्छति तदेवाविमुक्तमिति मन्येत जानीयात्। इति अनेन प्रकारेण। इदं वै मया प्राप्तमेव ब्रह्म। कुरुक्षेत्रमित्याद्युक्तार्थम्। क्षेत्रसामान्यस्य क्षेत्रज्ञविकल्पितत्वात् तदतिरेकेण न किंचिदस्तीत्यर्थः। अत्राविमुक्तरूपे कुरुक्षेत्रे ब्रह्मेति विज्ञाते तद्विज्ञानानुरोधेन जन्तोः प्राणिमात्रस्य प्राणेषूत्क्रममाणेषु। स्वाज्ञानरुजं द्रावयति नाशयतीति रुद्रः परमेश्वरः संसारतारकं ब्रह्म सच्चिदानन्दलक्षणं व्याचष्टे कथयति। येन "तत्त्वमसि", "अहं ब्रह्मास्मि" इत्युपदेशेन असौ जीवोऽमृतीभूत्वा स्वातिरिक्तभ्रमतो मोक्षीभवति स्वातिरिक्तापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रतयावशिष्यते। यस्मादेवं तस्मात् ब्रह्ममात्रज्ञानोत्पत्तेः प्रागविमुक्तं भ्रूमध्यगतज्योतिर्लिङ्गमेव निषेवेत ज्योतिर्लिङ्गमस्मि इत्यनुसंधानं कुर्यात्;

[1] उ. पूजाकारणम्.

[2] उ. 'तदेव' नास्ति.

"ज्योतिर्लिङ्गं भ्रुवोर्मध्ये नित्यं ध्यायेत् सदा यतिः" इति श्रुतेः। यावद्ब्रह्ममात्रज्ञानं नोदेति तावदविमुक्तं [1]प्रत्यञ्चमात्मानमीश्वरं वा न विमुञ्चेत्। याज्ञवल्क्येनैवमुक्तो बृहस्पतिस्तदुक्तमङ्गीचकारेत्याह—एवमेवेति ॥ १ ॥

इति प्रथमः खण्डः

---

## द्वितीयः खण्डः

### अविमुक्तस्वरूपजिज्ञासा

अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यम्। य एषोऽनन्तोऽव्यक्त आत्मा तं कथमहं विजानीयामिति। स होवाच याज्ञवल्क्यः। सोऽविमुक्त उपास्यो य एषोऽनन्तोऽव्यक्त आत्मा सोऽविमुक्ते प्रतिष्ठित इति ॥ १ ॥

कथं पुनः अविमुक्तात्मोपासितुं शक्यस्तस्याव्यक्तत्वादित्यविमुक्तयाथात्म्यबुभुत्सया याज्ञवल्क्यमत्रिः पप्रच्छेत्याह—अथेति। अथ ह बृहस्पतिप्रश्ननिर्णयानन्तरं किलैनं याज्ञवल्क्यं ब्रह्मपुत्रोऽत्रिः पप्रच्छ। किमिति। यस्तारकब्रह्मेत्युक्त एषोऽनन्तः परिच्छेदत्रयविरलोऽव्यक्त आत्मा तमुक्तलक्षणमात्मानं कथमहं विजानीयामवगच्छेयमिति। अत्रिप्रश्नोत्तरं स होवाच याज्ञवल्क्यः बृहस्पतिं प्रति। तारकत्वेन य उक्तः सोऽविमुक्तः प्रत्यगभेदेनोपास्यः। तत्र हेतुः भवता पृष्टो य एषोऽनन्तोऽव्यक्त आत्मा व्याख्यातम्। सोऽविमुक्ते सोपाधिकेश्वरे प्रतिष्ठित इति तस्य निरावृतत्वात् तस्मिन्नव्यक्तोऽनन्तात्मोपलभ्यते ॥ १ ॥

### अविमुक्तोपलब्धिसाधनम्

सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति। वरणायां नास्यां च मध्ये प्रतिष्ठित इति। का वै वरणा का च नासीति। सर्वानिन्द्रियकृतान्

[1] उ. प्रपञ्चम्.

दोषान् वारयतीति तेन[1] वरणा भवति। सर्वानिन्द्रियकृतान् पापान् नाशयतीति तेन नासी भवतीति। कतमच्चास्य स्थानं भवतीति। भ्रुवोर्घ्राणस्य च यः संधिः, स एष द्यौर्लोकस्य परस्य च संधिर्भवतीति। एतद्वै संधिं संध्यां ब्रह्मविद उपासत इति। सोऽविमुक्त उपास्य इति। सोऽविमुक्तं ज्ञानमाचष्टे यो वै तदेवं वेदेति ॥ २ ॥

तदुपलब्धिस्थानं पृच्छति—**सोऽविमुक्तः कस्मिन् प्रतिष्ठित इति।** **सोऽयमीश्वरः** कुत्र संनिहित इति पृष्ट उत्तरमाह—**वरणायां नास्यां च मध्ये प्रतिष्ठित इति।** वरणानास्योर्मध्ये प्रतिष्ठित इत्यर्थः। वरणानासीप्रदेशौ श्रुतिर्व्याकरिष्यतीति न व्याख्यातम्। वरणानासीस्वरूपं पृच्छति—**का वै वरणा का च नासीति।** तत्र वरणाशब्दार्थं व्युत्पादयति—**सर्वानिति। सर्वान्** ज्ञानकर्मेन्द्रियकृतान् **दोषान् वारयति** निवारयतीति। **तेन वरणा भवतीति। सर्वानिन्द्रियकृतान् पापान्** पापानि नाशयतीति। **तेन नासी** नाशी **भवति।** सकारः शकारार्थः। वरणाया नास्याश्च मध्ये प्रतिष्ठित इत्युक्त्या नासाभ्रूसन्धिः प्रतीयते। तथापि तत्प्रदेशं पृच्छति—**कतमच्चास्य स्थानं भवतीति। अस्या-** विमुक्तस्येत्यर्थः। सर्वत्रेतिशब्दः प्रश्नपरिसमाप्त्यर्थः। **भ्रुवोर्घ्राणस्य च यः** प्रसिद्धः **सन्धिः, स एष** प्रसिद्धः ब्रह्मकपालस्थानीयद्युलोकस्य चुबुकावसान-स्थानीयस्य च **परस्य च** भूलोकस्यापि **सन्धिर्भवति।** लोकद्वयसमुच्चयार्थश्चकारः। **एतद्वै** एतमेव। स संधीयते अस्मिन्नविमुक्तमिति सन्धिः स्वात्मा। तं **सन्धिं** स्वात्मानं **संध्यां** भ्रूघ्राणसंधौ **ब्रह्मविद उपासते** तत्रत्यज्योतिर्लिङ्गध्यानपरा भवन्ति। **सोऽविमुक्त उपास्य इति** व्याख्यातम्। तज्ज्ञानफलमाह—**यो वा इति।** यो वै विद्वान् अविमुक्तयाथात्म्यं वेद तद्गतहेयांशमपोह्य निर्विशेषात्मानं जानाति स विद्वान् सोऽविमुक्तं तत्साक्षात्कारहेतुं ज्ञानमाचष्टे स्वय-

[1] उ. 'तेन' नास्ति.

मीश्वरभावमेत्य स्वभक्तपटलचरमदशायां तारकज्ञानोपदेशं करोति । स्वयं निर्विशेषब्रह्मैव भवतीत्यर्थः ॥ १ ॥

इति द्वितीयः खण्डः

---

## तृतीयः खण्डः

### अविमुक्तज्ञानोपायः

अथ हैनं ब्रह्मचारिण ऊचुः । किंजप्येनामृतत्वं ब्रूहीति । स होवाच याज्ञवल्क्यः । शतरुद्रीयेणेति । एतान्येव ह वा अमृतस्य नामधेयानि । एतैर्ह वा अमृतो भवतीति ॥ १ ॥

अविमुक्तयाथात्म्यज्ञानोपायं ब्रह्मचारिणः पृच्छन्तीत्याह—अथेति । अथ अत्रिप्रश्ननिर्णयानन्तरं ह किल एनं याज्ञवल्क्यं तच्छिष्या ब्रह्मचारिण ऊचुः । किंजप्येनामृतत्वं केन जप्येनामृतत्वसाधनज्ञानं जायते तद् ब्रूहि भगवन्निति । तैः पृष्टः स होवाच याज्ञवल्क्यः । किमिति । कैवल्यादिपञ्चरुद्रेण रुद्राध्यायेन वेति अमृतत्वसाधनज्ञानं जायते ततोऽमृतत्वमित्येतानि शतरुद्राभिधानानि अमृतस्वरूपरुद्रनामधेयानि भवन्ति । एतैः शतरुद्रीयजपैः चित्तशुद्धिप्राप्यज्ञानद्वारा शतरुद्रजापी मुनिरमृतो भवति । इतिशब्दः खण्डसमाप्त्यर्थः ॥ १ ॥

इति तृतीयः खण्डः

---

## चतुर्थः खण्डः

### सर्वकर्मसंन्यासज्ञानजिज्ञासा

अथ जनको ह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच । भगवन् संन्यासमनुब्रूहीति । स होवाच याज्ञवल्क्यः । ब्रह्मचर्यं समाप्य[1]

[1] उ. परिसमाप्य.

गृही भवेत्। गृही भूत्वा वनी भवेत्। वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा। अथ पुनरव्रती वा व्रती वा स्नातको वास्नातको वा उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेत् ॥ १ ॥

सर्वकर्मसंन्यासज्ञानबुभुत्सया जनको मुनिं पृच्छतीत्याख्यायिकामवतारयति—अथेति। अथ ब्रह्मचारिप्रश्नानन्तरं नामतो जनको ह वैदेहो विदेहराजो याज्ञवल्क्यमुप समीपमेत्योवाच। किमिति। हे भगवन् सर्वकर्मसंन्यासमनुब्रूहीत्युक्तः स होवाच याज्ञवल्क्यः। किमिति। अविरक्तदृष्टिमाश्रित्याश्रमव्यवस्थामाह—ब्रह्मचर्यमिति। विद्याग्रहणनिमित्तब्रह्मचर्यं तेनैव कालं नयेत् यद्यविरक्तस्तदा तत् समाप्य गृही भवेत्। तत्र यावच्छक्ति निष्कामबुद्ध्या सत्कर्मानुष्ठानं कुर्वन् कालं नयेत्, तत्र विरक्तिश्चेत्तदा गृहाद्वनी साग्निर्निरग्निर्वा भूत्वा तत्रैव कालं नयेत्। यद्यलंबुद्धिस्तदा प्रव्रजेत् चतुर्थाश्रमं गच्छेत्। एवं क्रमेण संन्यासः कर्तव्यो न विपर्यये इत्यत आह—यदि वेति। यदि वेति पक्षान्तरे विकल्पः। यदा तीव्रतरवैराग्यं जायते तदाधीतवेदान्तो विद्वान् प्राथमिकब्रह्मचर्याश्रमादेव प्रव्रजेत् पारमहंस्याश्रमं गच्छेत्। ब्रह्मचर्यसमाप्त्यनन्तरं कुटीचकादिक्रमेण पारिव्राज्यं ग्राह्यमिति चेन्न; तत्क्रमस्य मन्दविरागिविषयत्वात्। वैराग्यसाकल्ये पारमहंस्यमेव स्वीकर्तुं शक्यमित्यर्थः। यदि गृहस्थाश्रमे विरतिर्जायते तदा गृहाद्वा प्रव्रजेत् वनाद्वा। प्रव्रजनस्य वैराग्यनिमित्तत्वात् न क्रमाकाङ्क्षास्तीत्यर्थः। यदा विरक्तिर्जायते तदाश्रमत्रयान्तरालेऽपि न्यासो युज्यत इत्याह। अथेति वैराग्यानन्तर्यार्थः। वनस्थदीक्षासमाप्तावपि कुतश्चिन्निमितात् संन्यासो न लभ्यते तदानीं तदवस्थितिः द्विधा भवति जपो ध्यानं चेति। तदेव हि तद्व्रतम्। तदस्यास्तीति व्रती। न व्रती अव्रती वा, यद्वा व्रती वा, अधीतसाङ्गस्वाध्यायी स्नातकः, यत्किंचिद्दाध्याय्यस्नातको वा। गृहस्थोऽपि द्वेधानाश्रमी भवति। एकः स्वीकृताग्निः कलत्रमरणादुत्सन्नाग्निः, कलत्रे सत्यपि कश्चित् निरग्निः असंस्कृतत्वात्, येनाग्निर्न गृहीतः सोऽयमनग्निको वा विरक्तिर्जाता चेत् परिव्रजेदिति सर्वत्रानुषज्यते। किं

बहुना। नात्र कालकृतनियमोऽस्तीत्याह—यदिति। यस्मिन्नेवाहनि विरजेत् वैराग्यं प्राप्नुयात् तस्मिन्नेव अहनि प्रव्रजेत् संन्यसेत् ॥ १ ॥

आहिताग्निसंन्यासविधिः

तद्धैके प्राजापत्यामेवेष्टिं कुर्वन्ति। तदु तथा न कुर्यात्। आग्नेयीमेव कुर्यात्। अग्निर्हि वै प्राणः। प्राणमेवैतया करोति। त्रैधातवीयामेव कुर्यात्। एतयैव त्रयो धातवो यदुत सत्त्वं रजस्तम इति।

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः।
तं जानन्नग्न आरोहाथा नो वर्धया रयिम्॥

इत्यनेन मन्त्रेणाग्निमाजिघ्रेत्। [1]एष ह वा अग्नेर्योनिर्यः प्राणः। प्राणं गच्छ स्वाहेत्येवमेवैतदाह ॥ २ ॥

यदा आहिताग्निः संन्यस्यति तदा तस्येष्टिविशेषमाह—तदिति। तद्धैके केचनाचार्याः प्रजापतिदेवताकां प्राजाप्रत्यामेवेष्टिं कुर्वन्ति तदु। तेषामुक्तमपि न कुर्यात्। किं कर्तव्यमित्यत्र अग्निदेवताकामाग्नेयीमिष्टिमेव कुर्यात् तत्रेयमुपपत्तिः; अग्निर्हि प्राणः; अग्नेर्देवप्रधानत्वेन सूत्ररूपत्वात्। यस्मादेवं तस्मादेतया आग्नेय्येष्ट्या प्राणमेव करोति ततः त्रैधातवीयामेवेन्द्रदेवताकामेवेष्टिं याज्ञिकप्रसिद्धां कुर्यात्। तत्रोपपत्तिः। एतयैवेष्ट्या त्रयो धातवो यदुताग्नेयं रूपत्रयं सत्त्वं शुक्लं रजो रोहितं तमः कृष्णम्। इतिशब्दो वाक्यसमाप्त्यर्थः। पुरोक्तरीत्या यथाशास्त्रमिष्टिं कृत्वा अनेन मन्त्रेण अग्न्याघ्राणं कुर्यादित्याह—अयमिति। हे अग्ने अयं प्राणस्ते तव योनिः मुख्यप्राणस्य विराड्योनित्वात्। ऋत्वियः संवत्सरात्मनो ऋत्ववयवित्वाद्यतः सूत्राज्जातः सन्नरोचथाः दीप्तिं कृतवानसि। यस्तव कारणं तमात्मानं जानन्नारोह स्वकारणीभूतप्राणमात्रो

[1] उ. 'एष वा'.

भवेत्यर्थः । अथ स्वकारणप्रवेशानन्तरं नोऽस्माकं रयिं स्वात्मज्ञानधनमभिवर्धय । मन्त्रसमाप्ताविति शब्दः । अनेन मन्त्रेणाग्निमाजिघ्रेत् । मन्त्रार्थं श्रुतिरनुवदति । एष वा अग्नेर्योनिर्यः प्राण इति । स्पष्टम् । प्राणं स्वकारणं गच्छ । स्वाहाशब्दः कार्यकारणैकत्वद्योतकः । एवमेव मन्त्रोऽप्याह हि ॥ २ ॥

निरग्निकसंन्यासविधिः

ग्रामादग्निमाहृत्य पूर्ववदग्निमाघ्रापयेत् । यदग्निं न विन्देदप्सु जुहुयात् । आपो वै सर्वा देवताः । सर्वाभ्यो देवताभ्यो जुहोमि स्वाहेति हुत्वोद्धृत्य प्राश्नीयात् साज्यं हविरनामयम् । मोक्षमन्त्रस्त्रय्येवं विन्देत्[1] । [2]तद्ब्रह्म तदुपासितव्यम् । एवमेवैतद्भगवन्निति वै याज्ञवल्क्य ॥ ३ ॥

इदानीं निरग्निकानां संन्यासविधिमाह—ग्रामादिति । ग्रामे श्रोत्रियागारादग्निमाहृत्य पूर्ववदिष्टिव्यतिरिक्तविरजाहोममन्त्रपुरुषसूक्ताभ्यां पूर्णाहुत्यन्तं हुत्वा "अयं ते" इति मन्त्रेण संन्यासाध्वर्युरग्निमाघ्रापयेत् । पक्षान्तरं यदग्निं न विन्देदप्सु जुहुयात् । तत्रोपपत्तिः—आपो वै सर्वा देवताः । ओंकारप्रभवेभ्यः सर्वाभ्यो देवताभ्यो जुहोमि स्वाहा इत्यनेन मन्त्रेण हुत्वोद्धृत्य प्राश्नीयात् साज्यं हविरनामयम् । हुतशेषमन्नं निरामयहेतुत्वात् तदानीं यज्जप्यं तदुच्यते स्वाज्ञानमोक्षहेतुमन्त्रः प्रणवस्तस्य त्रयीरूपत्वात् । एवं विन्देत् यत् प्रणवार्थरूपं तदस्मीति विद्यात् । यत् सत्यज्ञानादिलक्षणं तत् ब्रह्म प्रणवार्थत्वेनोपासितव्यम् । एवं याज्ञवल्क्योक्तं जनकोऽङ्गीचकार । किमिति । एवमेवैतद्भगवन्निति वै याज्ञवल्क्येति । एष इति पाठे संन्यासः ॥ ३ ॥

इति चतुर्थः खण्डः

---

1 उ. वदेत्.

2 उ. एतद्ब्रह्म एतदुपासितव्यम्.

## पञ्चमः खण्डः

ब्राह्मणस्य संन्यासेऽधिकारः

अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यम्। पृच्छामि त्वा याज्ञवल्क्यायज्ञोपवीती कथं ब्राह्मण इति। स होवाच याज्ञवल्क्यः। इदमेवास्य यज्ञोपवीतं य आत्मा। अपः प्राश्याचम्य। अयं विधिः प्रव्राजिनाम्[1] ॥ १ ॥

जनकेन यत् प्रष्टव्यं तदनुज्ञया अत्रिः पप्रच्छेत्याह श्रुतिः—अथेति। **अथ ह** जनकप्रश्नानन्तरं **एनं** याज्ञवल्क्यं जनकचोदितोऽत्रिः **पप्रच्छ**। किमिति। हे याज्ञवल्क्य त्वा त्वां पृच्छामि। क्रियाङ्गयज्ञोपवीती ब्राह्मणः इति लोकप्रसिद्धिः। अयं तु अयज्ञोपवीती कथं ब्राह्मणो भवतीति पृष्टः **स होवाच याज्ञवल्क्यः**। **इदं** ब्रह्मज्ञानमेवास्य संन्यासिनो **यज्ञोपवीतं** यज्ञरूपविष्णुप्रापकत्वात् **यः** स्वयंप्रकाशात्मा सोऽहमस्मीति निश्चित्य। **अपः प्राश्य** इत्यनेन संन्यासविधिरुक्तः। तत् कथं प्रैषानन्तरं "समुद्रं गच्छ स्वाहा" इत्यनेन मन्त्रेण जले शिखायज्ञोपवीतप्रक्षेपणपूर्वकं त्रिराचम्य। **अयं विधिः परिव्राजिनाम्** ॥ १ ॥

संन्यासेऽनधिकृतानां कर्तव्यनिरूपणम्

वीराध्वाने वानाशके वापां प्रवेशे वाग्निप्रवेशे वा महाप्रस्थाने वा। अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही [2]भैक्षमाणो ब्रह्मभूयाय भवति। यद्यातुरः स्यान्मनसा वाचा संन्यसेत्। एष पन्था ब्रह्मणा हानुवित्तस्तेनैति संन्यासी ब्रह्मविदिति। एवमेवैष भगवन्निति वै याज्ञवल्क्य ॥ २ ॥

[1] उ. परिव्राजकानाम्.

[2] उ. भैक्षाणो.

क्षत्रियादेः पारिव्राज्यानधिकारादाश्रमभ्रष्टानामसाध्यचिकित्सामयानां श्रवणाद्यसमर्थानां वा वक्ष्यमाणोऽयं विधिर्युज्यत इत्याह—वीरेति । संग्रामानिवर्तिवीराणां योऽध्वा तस्मिन् वीराध्वाने वा, न विद्यते अशनं यस्य तदनाशकं तस्मिन्ननाशके वा, गङ्गाद्यपां प्रवेशे वा, जाज्वल्यमानाग्निप्रवेशे वा, यावच्छरीरपातगमने महाप्रस्थाने वा तनुं त्यजेदिति पञ्चप्रकारेऽपि योज्यम् । यद्ययं श्रवणाधिकारी तदा शुक्लेतरकाषायवासाः सशिखकेशश्मश्रुराहित्यान्मुण्डः । न विद्यते देहमात्रधारणातिरिक्तपरिग्रहो यस्य सोऽयमपरिग्रहः । बाह्याभ्यन्तरशौचतः शुचिः, मनोवाक्कायकर्मभिः प्राणिमात्राद्रोही, प्राणसंधारणार्थं भैक्षमाणो ब्रह्मभूयाय ब्रह्मसाक्षात्काराय भवति । पक्षान्तरं चोरव्याघ्ररोगाद्यभिभूतस्य संन्यासाङ्गकर्म कर्तुमशक्यत्वात् । सोऽयं वक्तुं शक्तश्चेत् मनोयुक्तवाचा प्रैषोच्चारणपूर्वकं संन्यसेत् । यदि तत्राप्यशक्तस्तदा मनसैव वा संन्यसेत् संकल्पयेत् । एष ज्ञानहेतुः पन्था ब्रह्मणाधिकारिणा ह्यनुवित्तो लब्धः तेनोक्तेन पथा ब्रह्मवित्पथा संन्यासी स्वात्तबोधानुरूपं ब्रह्मैति; यदि निर्विशेषज्ञानी तदा विदेहकैवल्यमेतीति मुनिनोक्तमत्रिरङ्गीचकार एवमेवैष भगवन्निति वै याज्ञवल्क्येति ॥ २ ॥

इति पञ्चमः खण्डः

---

## षष्ठः खण्डः

### पारमहंस्यपूगस्य सर्वोत्कृष्टता

तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघजडभरतदत्तात्रेयरैवतकप्रभृतयोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः ॥ १ ॥

इदानीं याज्ञवल्क्यो मुनिः श्रोतृश्रद्धाभिवृद्धये तैरपृष्टोऽपि पारमहंस्यधर्मपूगस्य महद्भिराश्रितत्वेन सर्वोत्कृष्टतां प्रकटयति—तत्रेति । तत्र कुटीचकादिषु श्रुत्युक्तेषु तुर्याश्रमतुर्यभेदानुष्ठायिनः परमहंसा नाम वक्ष्यमाणाः प्रसिद्धा हि ।

के ते इत्यत्र संवर्तकादिरैवतकप्रभृतयः नवसंख्याकाः श्रुतिपठिताः अव्यक्तलिङ्गाद्याचरन्त इत्यन्तं संवर्तकादीनां विशेषणम्। व्रतिकामिवनिलिङ्गानि येषां न सन्ति ते अव्यक्तलिङ्गाः। यदाचारो लोकैर्न दृश्यते ते अव्यक्ताचाराः। अनुन्मत्ताः उन्मादहेतुमोहवैरल्यादुन्मत्तवदाचरन्तः ब्रह्माकारपरिणतचित्तत्वात् परबोधिताः यत्किंचित् कुर्वन्त इव दृश्यन्ते तत्करणमपि लोकोन्मादननिवृत्तिकरमेव भवति ।

"पार्श्वस्थबोधिताः सन्तः पूर्वाचारक्रमागतम् ।
आचारमाचरन्त्येव सुप्तबुद्धवदुत्थिताः ॥"

इति श्रुतेः ॥ १ ॥

साम्बरपरमहंसलक्षणम्

त्रिदण्डं कमण्डलुं शिक्यं पात्रं जलपवित्रं शिखां यज्ञोपवीतं चेत्येतत् सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत् ॥ २ ॥

पूर्वं केवलपारमहंस्यमुक्तम् । इदानीं कुटीचकादिलिङ्गपरित्यागपूर्वकं पारमहंस्यं प्रकटयति—**त्रिदण्ड**मिति । वैणवदण्डत्रयं मृद्दार्वलाब्वादिकमण्डलुं मौञ्ज्यादिरचितं शिक्यं भिक्षाधारपात्रं दार्वादिविकारं वितस्तिमात्रं जलपवित्रं शिखां यज्ञोपवीतम्। चकारः सर्वधर्मपरित्यागसमुच्चयार्थः। पञ्चमुद्रागायत्र्यादिकमेतत् सर्वं "भूः स्वाहा" इत्यनेन मन्त्रेण अप्सु परित्यज्य देशिकमुपसृत्य वेदान्तश्रवणादिभिरात्मानमन्विच्छेत् ॥ २ ॥

दिगम्बरपरमहंसलक्षणम्

यथाजातरूपधरो निर्द्वन्द्वो [1]निष्परिग्रहः [2]तत्त्वब्रह्ममार्गे सम्यक् संपन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन्नुदरपात्रेण [3]लाभालाभौ समौ भूत्वा शून्यागारदेवगृह-

1 उ. निर्ग्रन्थः　　　　2 उ. तत्त्वब्रह्म.
3 उ. लाभालाभयोः समः.

तृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रशालानदीपुलिनगिरिकुहरकन्द-रकोटरनिर्झरस्थण्डिलेष्वनिकेतवास्यप्रयत्नो निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठः शुभाशुभकर्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति स परमहंसो नाम । इत्युपनिषत् ॥ ३ ॥

साम्बरपरमहंसलक्षणमुक्त्वा दिगम्बरपरमहंसलक्षणमाह—यथेति । यथाजातरूपधरः दिगम्बरः निर्द्वन्द्वः शीतोष्णादिसमधीः । देहधारणोपयोगिकौपीनाच्छादनभिक्षाश्रयणसाधनपरिग्रहेतरपरिग्रहशून्यो निष्परिग्रहः । तत्त्वं वास्तवं निष्प्रतियोगिकब्रह्ममात्रं तत्प्रापकमार्गस्तज्ज्ञानं तस्मिन् तत्त्वब्रह्ममार्गे सम्यक् संपन्नः तन्निष्ठ इत्यर्थः । तत्रोपायमाह—शुद्धमानस इति । निःसंकल्पत्वात् प्राणसंधारणमात्र विधूमाद्युपलक्षितयथोक्तकाले स्वाज्ञानतत्कार्यविमुक्तो यथानुरूपमुदरपात्रेण भैक्षमाचरन् मुखग्यादानं कुर्वन् भिक्षादिलाभालाभौ समौ भूत्वा हर्षविषादावकुर्वन् कालं नयेदित्यर्थः । इदानीं तन्निवासस्थलान्याह—शून्यागारेत्यादिना । जनशून्यागारं विष्ण्वादिदेवतागृहं, कुतश्चिन्निमित्तसंजाततृणकूटं, पिपीलिकादिकृतवल्मीकं, वटाश्वत्थादिवृक्षमूलम्, आमपात्रनिक्षेपकुलालशाला, त्रिपञ्चाग्निहोत्रशाला, महानदीतीरपुलिनं, गिरिरुहवेण्वादिनिबिडदेशो गिरिकुहरं, गिरिगुहास्थलं कन्दरं, वृक्षान्तःसुषिरं कोटरं, उदकस्रावप्रदेशो निर्झरः, विशुद्धभूप्रदेशः स्थण्डिलं, निरावरणं शून्यागारादि स्थण्डिलान्तम् । तेषु यथासंभवं अनिकेतवासी, नानाविधोपकरणे अप्रयत्नः, स्वातिरिक्तवस्तुषु निर्ममः, शुक्लतेजो ब्रह्म निष्प्रतियोगिकस्वमात्रमिति पर्यवसन्नः शुक्लध्यानपरायणः "शुक्लतेजोमयं ब्रह्म" इति श्रुतेः । आत्ममात्रमधिकृत्य भवतीत्यध्यात्मं तन्मात्रज्ञानं तन्निष्ठः, शुभाशुभस्थानीयनिष्कामसकामकर्मसामान्यनिर्मूलनपरः । किं बहुना । स्वातिरिक्तसामान्यसंन्यासेन सह संन्यस्यामीति यस्तद्देहाभिमतित्यागं करोति, सोऽयं विद्वान् परमहंसः प्रत्यक्परविभागमहः परमात्मा नाम निश्चितम् । इत्युपनिषच्छब्दौ शास्त्रपरिसमाप्त्यर्थौ ॥ ३ ॥

इति षष्ठः खण्डः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं जाबालोपनिषत्स्फुटम् ।
जाबालोपनिषद्व्याख्या दशोनद्विशतं स्मृता ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे त्रयोदशसंख्यापूरकं जाबालोपनिषद्विवरणं संपूर्णम्

# तुरीयातीतावधूतोपनिषत्

## पूर्णमदः—इति शान्तिः

### तुरीयातीतावधूतचर्या, निष्ठा च

अथ तुरीयातीतावधूतानां कोऽयं मार्गस्तेषां का स्थितिरिति सर्वलोकपितामहो भगवन्तं पितरमादिनारायणं परिसमेत्योवाच । तमाह भगवान् नारायणः । योऽयमवधूतमार्गस्थो लोके दुर्लभतरो न तु बाहुल्यो यद्येको भवति स एव नित्यपूतः, स एव वैराग्यमूर्तिः, स एव ज्ञानाकारः, स एव वेदपुरुष इति ज्ञानिनो मन्यन्ते । महापुरुषो यस्तच्चित्तं मय्येवावतिष्ठते । अहं च तस्मिन्नेवावस्थितः । सोऽयमादौ तावत् क्रमेण कुटीचको बहूदकत्वं प्राप्य, बहूदको हंसत्वमवलम्ब्य, हंसः परमहंसो भूत्वा, स्वरूपानुसंधानेन सर्वप्रपञ्चं विदित्वा, दण्डकमण्डलुकटिसूत्रकौपीनाच्छादनस्वविध्युक्तक्रियादिकं सर्वमप्सु संन्यस्य, दिगम्बरो भूत्वा, विवर्णजीर्णवल्कलाजिनपरिग्रहमपि संत्यज्य, तदूर्ध्वममन्त्रवदाचरन्, क्षौराभ्यङ्गस्नानोर्ध्वपुण्ड्रादिकं विहाय, [1]वैदिकलौकिकमप्युपसंहृत्य, सर्वत्र

[1] उ १. लौकिकवैदिक.

पुण्यापुण्यविवर्जितः, ज्ञानाज्ञानमपि विहाय, शीतोष्णसुखदुःखमानावमानं निर्जित्य, देहादिवासनात्रयपूर्वकं निन्दानिन्दागर्वमत्सरदम्भदर्पेच्छाद्वेषकामक्रोधलोभमोहहर्षामर्षासूयात्मसंरक्षणादिकं दग्ध्वा, स्ववपुः कुणपाकारमिव पश्यन्, अप्रयत्नेनानियमेन लाभालाभौ समौ कृत्वा, गोवृत्त्या प्राणसंधारणं कुर्वन् यत् प्राप्तं तेनैव निर्लोलुपः, सर्वविद्यापाण्डित्यप्रपञ्चं भस्मीकृत्य, स्वरूपं गोपयित्वा, ज्येष्ठाज्येष्ठत्वापलापकः, सर्वोत्कृष्टत्वसर्वात्मकत्वाद्वैतं कल्पयित्वा, मत्तो व्यतिरिक्तः कश्चिन्नान्योऽस्तीति भावयन्, देवगुह्यादिधनमात्मन्युपसंहृत्य, दुःखेन नोद्विग्नः, सुखेन नानुमोदकः, रागे निःस्पृहः, सर्वत्र शुभाशुभयोरनभिस्नेहः, सर्वेन्द्रियोपरमः, स्वपूर्वापन्नाश्रमाचारविद्याधर्मप्राभवमननुस्मरन्, त्यक्तवर्णाश्रमाचारः, सर्वदा दिवानक्तसमत्वेनास्वप्नः, सर्वत्र सर्वदा संचारशीलः, देहमात्रावशिष्टः, जलस्थलकमण्डलुः, सर्वदानुन्मत्तो बालोन्मत्तपिशाचवदेकाकी संचरन्, असंभाषणपरः स्वरूपध्यानेन निरालम्बमवलम्ब्य, स्वात्मनिष्ठानुकूल्येन सर्वं विस्मृत्य, तुरीयातीतोऽवधूतवेषेणाद्वैतनिष्ठापरः, प्रणवात्मकत्वेन देहत्यागं करोति यः सोऽवधूतः स कृतकृत्यो भवतीत्युपनिषत् ॥ १ ॥

तुर्यातीताख्योपनिषद्वेद्यं यत् परमाक्षरम् ।
तत्तुर्यातीतचिन्मात्रं स्वमात्रं चिन्तयेऽन्वहम् ॥

इह खलु शुक्लयजुर्वेदप्रविभक्तेयं तुरीयातीतावधूतोपनिषत् गौणमुख्यावधूतचर्याप्रकटनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । शिष्याचार्यपुत्रपितृभावगतचतुराननारायणप्रश्नप्रतिवचन-

रूपेयमाख्यायिका विद्यास्तुत्यर्था। आख्यायिकामवतारयति—अथेति। ये तुर्याश्रमप्रविभक्तकुटीचकबहूदकहंसपरमहंसचर्यां यथावदवगम्य, अथ तुर्यसंख्यापूरकं पारमहंस्यं, तदतीतास्तुर्यातीताश्च ते,

"यो विलङ्घ्याश्रमान् वर्णानात्मन्येव स्थितः सदा।
अतिवर्णाश्रमी योगी अवधूतः स कथ्यते॥
अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबन्धनात्।
तत्त्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते॥"

इति "गौणमुख्यावधूताश्च" इति तुरीयातीतावधूताः। तेषां महानुभावानां कोऽयं मार्ग इत्यनेन तैराचरणीयचर्या अवगम्यते। का स्थितिः इत्यनेन निष्ठा चापि ज्ञातव्येति। तत्प्रश्नमङ्गीकृत्य तमाह भगवान् नारायणः। किं तत् इत्यत्र तन्मार्गस्यातिदुर्लभतया तानादौ स्तौति—योऽयमिति। नित्यपूतः[1] मयि मद्भावमेत्य स्थितत्वात् मद्भावापन्नज्ञानिनो मन्यन्ते। अत एवायं महापुरुषः। कथमस्य महापुरुषत्वम्? इत्यत्र यतो यस्तच्चित्तं मय्येवावतिष्ठते मद्व्यतिरिक्तचिन्तावैरल्यात्। त्वं कुत्रावस्थित इत्यत्र—अहं च तस्मिन्नेवावस्थित इति। कुटीचकादिधर्मा नारदपरिव्राजकोपनिषदि सम्यक् व्याख्याताः। तत्रायं परमहंसः सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति। स्वरूपानुसंधानेन सर्वप्रपञ्चं स्वातिरिक्तं[2] नेतीति विदित्वा तद्वेदनसमकालमेव पारमहंस्यलिङ्गं त्याज्यमिति मनीषया तत्रापि संसारधिया तत्त्याग उपपद्यत इत्यर्थः। तदूर्ध्वं पारमहंस्याश्रमत्यागानन्तरं कर्तव्यकर्माभावाद्देहादिचेष्टायां[3] मन्त्रानाकाङ्क्षत्वात् अमन्त्रवदाचरन्। इदं कर्तव्यमितीच्छया क्षौरादिकं विहाय तथा वैदिकलौकिकमप्युपसंहृत्य मनोवृत्तित्वसामान्यात् ज्ञानाज्ञानमपि विहाय देहाभिमानत्यागादिना शीतोष्णसुखदुःखमानावमानं निर्जित्य, देहादिवासनात्रयपूर्वकम् अहं एतादृश इत्यप्रकटनपूर्वकं स्वरूपं स्वशीलं गोपयित्वा, अयं मे ज्येष्ठः अयं मे कनिष्ठः इति ज्येष्ठाज्येष्ठत्वापलापकः, अद्वैतातिरिक्तं द्वैतं नास्तीति भावयित्वा देवगुह्यात् देवरहस्यात् यत्तदेव भावनं तत् इन्धनं ब्रह्ममात्राग्निना दाह्यत्वात्

[1] उ. नित्यपूते. [2] उ. 'स्वातिरिक्तम्' इति नास्ति. [3] उ. चेष्टायै.

ब्रह्माकारवृत्तेरपि इन्धनत्वं तदप्यात्ममात्रधिया आत्मन्युपसंहृत्य, यदि पुनः स्वातिरिक्ताभासावलम्बनतो दुःखादिप्रसक्तौ दुःखेन नोद्विग्नः इत्यादि। **प्राभवं** प्रभावम्। अनुस्मरन् मद्विदितविद्याफलमेवं पर्यवसन्नमिति वस्तुतस्तदपि नानुसंधेयम्। स्वेन पादप्रक्षालनाद्यकर्तव्यत्वेऽपि यदि तृषावृत्तिरुदेति तदास्येन पेयमिति जलस्थलकमण्डल्वपेक्षा युज्यत एवेत्यर्थः। येन केनापि असंभाषणपरः। स्वातिरिक्तप्रपञ्चजातं सर्वं विस्मृत्य अद्वैतनिष्ठापरः अद्वैतात्मपरायणो भूत्वा "सर्ववाच्यवस्तु प्रणवात्मकम्" इति श्रुतिसिद्धप्रणवात्मकत्वेन प्रणवार्थतुर्यतुर्यात्मना देहत्यागं करोति देहतन्निर्वर्त्यजाग्रज्जाग्रदादितुर्यस्वापान्ततद्व्यष्टिसमष्टितदुभयारोपापवादाधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तकलनात्यागमपह्नवं करोति। यस्य पारमहंस्यधर्मालंकृतस्य[1] यतेराभासतोऽपि निर्वर्त्यस्वातिरिक्तमस्ति इति भ्रान्तिः, सोऽयं गौणावधूतो भवति। यस्य पुनः ब्रह्ममात्रं निःप्रतियोगिकं तदतिरेकेणापह्नोतव्यविषयाभावज्ञानमुदेति, सोऽयं यतिः मुख्यावधूतो भवतीत्यत्र

"यस्य स्वात्मातिरेकेण निर्वर्त्यं प्रतिभाति सः।
गौणावधूतो भवति स्वातिरिक्तास्तिताभ्रमात्॥
ब्रह्ममात्रधिया यस्य निर्वर्त्यासंभवो भवेत्।
मुख्यावधूतः स मुनिः स्वमात्रमवशिष्यते॥"

इति स्मृतेः। इत्युपनिषच्छब्दः प्रकृतोपनिषत्समाप्त्यर्थः॥ १॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
लिखितं स्याद्विवरणं तुर्यातीतस्य सुस्फुटम्।
तुर्यातीतग्रन्थजातं चत्वारिंशत् समीरितम्॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे चतुष्षष्टिसंख्यापूरकं
तुरीयातीतावधूतोपनिषद्विवरणं संपूर्णम्

[1] उ १. अलङ्कारस्य.

# नारदपरिव्राजकोपनिषत्

## भद्रं कर्णेभिः—इति शान्तिः

### प्रथमोपदेशः

#### नारदं प्रति शौनकादीनां प्रश्नः

अथ कदाचित् परिव्राजकाभरणो नारदः सर्वलोकसंचारं कुर्वन्नपूर्वपुण्यस्थलानि पुण्यतीर्थानि तीर्थीकुर्वन्नवलोक्य, चित्तशुद्धिं प्राप्य, निर्वैरः, शान्तः, दान्तः, सर्वतो निर्वेदमासाद्य, स्वरूपानुसंधानमनुसंधाय, नियमानन्दविशेषगण्यं मुनिजनैरुपसंकीर्णं नैमिशारण्यं पुण्यस्थलमवलोक्य, सरिगमपधनिसंज्ञैर्वैराग्यबोधकरैः स्वरविशेषैः प्रापञ्चिकपराङ्मुखैर्हरिकथालापैः स्थावरजङ्गमनामकैर्भगवद्भक्तिविशेषैर्नरमृगकिंपुरुषामरकिंनराप्सरोगणान् संमोहयन्नागतं ब्रह्मात्मजं भगवद्भक्तं नारदमवलोक्य द्वादशवर्षसत्रयागोपस्थिताः श्रुताध्ययनसंपन्नाः सर्वज्ञास्तपोनिष्ठापराश्च ज्ञानवैराग्यसंपन्नाः शौनकादिमहर्षयः प्रत्युत्थानं कृत्वा, नत्वा, यथोचितातिथ्यपूर्वकमुपवेशयित्वा, स्वयं सर्वेऽप्युपदिष्टा भो भगवन् ब्रह्मपुत्र, कथं मुक्त्युपायः ? अस्माकं वक्तव्यम् ॥ १ ॥

पारिव्राज्यधर्मपूगालंकारा यत्प्रबोधतः ।
दशप्रणवलक्ष्यार्थं यान्ति तं राममाश्रये ॥

इह खलु अथर्ववेदप्रविभक्तेयं नारदपरिव्राजकोपनिषत् ब्रह्मादिस्वाश्रमाचारप्रकटनपूर्वकं कुटीचकबहूदकहंसपरमहंसतुरीयातीतावधूतधर्मप्रकटनव्यग्रा सृष्ट्यादिदशप्रणववाच्यलक्ष्यार्थप्रकाशिनी सर्वापह्नवसिद्धब्रह्ममात्रपर्यवसन्ना बह्वर्थगर्भिणी विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । शौनकादिमुनिबृन्दनारदनारदपितामहप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आदौ श्रुतिराख्यायिकामवतारयति—अथेत्यादिना । अथशब्दः आरम्भार्थः । कदाचित् परिव्राजकशिरोमणिः नारदः कृत्स्नलोकसंचारं कुर्वन् स्वपादन्यासतः पुण्यस्थलानि पुण्यतीर्थानि च तीर्थीकुर्वन् स्वातिरिक्तप्रपञ्चजातं मिथ्यात्वेनावलोक्य ततश्चित्तशुद्धिं प्राप्य सर्वात्मैकत्वभावनया निर्वैरः संकल्पादिवृत्तितः शान्तो बाह्यवृत्तितो दान्तः सर्वतः सर्वत्र निर्वेदं वैराग्यमासाद्य स्वस्वरूपानुसंधानमनुसंधाय, उक्तविशेषणविशिष्टं नैमिशारण्यमवलोक्य, स्वागमनकाले स्वकरभूषणवीणावायुसंघर्षणजन्यसरिगमपधनिसंज्ञैः शृण्वद्वाह्यवैराग्यबोधकैः भगवद्भक्तिप्रेमान्वितहरिकथालापैः नरमृगादिप्रपञ्चजातं संमोहयन्नागतं नारदं शौनकादिमहर्षयोऽवलोक्य प्रत्युत्थानादिसपर्यां कृत्वा दिव्यासने तं निवेश्य तद्दर्शनमात्रतो यत् परमार्थतत्त्वं तत् स्वयं सर्वेऽप्युपदिष्टा अपि लोकानुग्रहहेतोः तं पृच्छन्तीत्याह—भो भगवन्निति । हे ब्रह्मपुत्र, भगवद्भतिकानामस्माकं कथं स्वातिरिक्तास्तिताभ्रमतो मुक्तिः स्यात्? को वा तदाप्त्युपायः? वक्तव्य इति ॥ १ ॥

विदेहमुक्तिलाभोपायोपदेशः

इत्युक्तस्तान् स होवाच नारदः । सत्कुलभवोपनीतः सम्यगुपनयनपूर्वकं चत्वारिंशत्संस्कारसंपन्नः स्वाभिमतैकगुरुसमीपे स्वशाखाध्ययनपूर्वकं सर्वविद्याभ्यासं कृत्वा, द्वादशवर्षशुश्रूषापूर्वकब्रह्मचर्यं, पञ्चविंशतिवत्सरं गार्हस्थ्यं, पञ्चविंशतिवत्सरं वानप्रस्थाश्रमं

तद्विधिवत् क्रमान्निर्वर्त्य, चतुर्विधब्रह्मचर्यं षड्विधगार्हस्थ्यं चातुर्विध्यवानप्रस्थधर्मं सम्यगभ्यस्य, तदुचितं कर्म सर्वं निर्वर्त्य, साधनचतुष्टयसंपन्नः, सर्वसंसारोपरि मनोवाक्कायकर्मभिर्यथाशानिवृत्तस्तथा वासनैषणोपर्यपि निर्वैरः शान्तो दान्तः, संन्यासी परमहंसाश्रमेणास्खलितस्वरूपध्यानेन देहत्यागं करोति स मुक्तो भवति स मुक्तो भवति। इत्युपनिषत् ॥ २ ॥

तैरेवं पृष्टो देवर्षिराह—इत्युक्त इति। इत्येवं शौनकादिभिः उक्तः **स होवाच नारदः**। किं तत्? सत्कुले भवतीति यः कश्चन द्विजातिः **सत्कुलभवः विधिवदुपनीतः चत्वारिंशत्संस्कारसंपन्नः**। चत्वारिंशत्संस्काराः कीदृशा इत्यत्र गौतमधर्मे आम्नायते। तद्यथा—गर्भाधानपुंसवनसीमन्तोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनानि, चत्वारि वेदव्रतानि, स्नानं, सहधर्मचारिणीसंयोगः, पञ्चानां यज्ञानामनुष्ठानं देवपितृमनुष्यभूतब्रह्मणामेतेषां पञ्चकम्, अष्टका, पार्वणः, श्राद्धं, श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्त पाकयज्ञसंस्थाः, अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रामणीति सप्त हविर्यज्ञसंस्थाः, अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इति सप्त सोमसंस्था इत्येते चत्वारिंशत्संस्काराः। अष्टावात्मगुणा दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहेति। यस्यैते चत्वारिंशत्संस्कारा न चाष्टावात्मगुणाः, न स ब्रह्मणः सायुज्यं सालोक्यं च गच्छति। यस्य तु खलु संस्काराणामेकदेशोऽपि अष्टावात्मगुणाः, अथ स ब्रह्मणः सायुज्यं सालोक्यं च गच्छतीत्युक्तसंस्कारसंपन्नो भूत्वा "आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः" इत्यादिश्रुत्यनुरोधेनोक्तलक्षणलक्षितस्वाभिमतैकगुरुनिकटे आदौ स्वशाखाध्ययनपूर्वकं सर्वविद्यामभ्यस्य **द्वादशवर्षशुश्रूषापूर्वकब्रह्मचर्यव्रती** भूत्वा विद्यामभ्यस्येदित्यर्थः। ततः **पञ्चविंशतिवत्सरपर्यन्तं गार्हस्थ्योचितधर्मानुष्ठानं कृत्वा, अथ तथा पञ्च-**

विंशतिवत्सरपर्यन्तं वानप्रस्थाश्रमोचितधर्मजातं विधिवत् क्रमान्निर्वर्त्य, अथ सप्तत्यूर्ध्वं संन्यस्येदित्यर्थः ।

ब्रह्मचर्यादिधर्माः कतिविधा इत्यत आह—**चतुर्विधब्रह्मचर्यमिति** । अस्मिन्नर्थे काण्वायनस्मृतिरर्थतोऽनुक्रम्यते । तद्यथा—गायत्रो ब्राह्मः प्राजापत्यो बृहन्निति ब्रह्मचारी चतुर्विधः । अस्यार्थः—तत्रोपनयनादूर्ध्वं यस्त्रिरात्रमक्षारलवणाशी गायत्रीमधीते स गायत्रः । यस्तु वेदस्य आ ग्रहणात् ब्रह्मचर्यं चरति स ब्राह्मः । संवत्सरं वेदव्रतकृत् प्राजापत्यः । आमरणं गुरुकुलवासी नैष्ठिको बृहन्नित्युच्यते ।

गार्हस्थ्यं कतिविधमित्यत आह—**षड्विधगार्हस्थ्यमिति** । तथा च गृहस्था अपि षड्विधाः । तद्यथा—वार्ताकः शालीनो यायावरो घोरसंन्यासिकः उञ्छवृत्तिः अयाचितश्चेति । तत्र कृषिगोरक्षादिकृतया वैश्यवृत्त्या जीवन्नित्यादिक्रियापरो वार्ताकवृत्तिः । शालीनस्तु षट्कर्मनिरतो याजनादिवृत्तिः । यायावरस्तु शिष्टगृहेषु किंचित् किंचित् स्वकुटुम्बभरणोपयोगितण्डुलसंग्रही । घोरसंन्यासिकस्तु उद्धृतपूताभिरद्भिः कार्यं कुर्वन् अहन्यहनि शिष्टजनतः तण्डुलपरिग्रही । उञ्छस्तु सिलोञ्छवृत्तिः । अयाचितस्तु यदृच्छालब्धोपजीवी ।

वानप्रस्थः कतिविध इत्यत आह—**चातुर्विध्यमिति** । वनस्था अपि चतुर्विधाः । तद्यथा—वैखानस औदुम्बरो वालखिल्यः फेनपाश्चेति । तत्र अकृष्टपच्यौषधीभिः ग्रामबहिष्कृताभिः अग्निहोत्रादि कुर्वन् वैखानस इत्युच्यते । यस्तु प्रातरुत्थाय यां यां दिशं पश्यति तत्रत्यौदुम्बरीबदरनीवारश्यामाकैः नित्ययात्रापर औदुम्बरः । यस्तु जटावल्कलधारी अष्टौ मासान् वृत्त्युपार्जनकृच्चातुर्मास्ये गृहीताशी कार्तिक्यां संगृहीतपुष्पफलत्यागी स वालखिल्यः । फेनपास्तु शीर्णपर्णफलवृत्तयः यत्र क्वचिद्वसन्तः कर्मपरा इति ॥

एवं ब्रह्मचर्यादिवानप्रस्थान्तधर्मजातं निर्वर्त्य नित्यादिसाधनचतुष्टयसंपन्नो भूत्वा संसृतिवासनैषणात्रयत्यागपूर्वकं सर्वभूतेषु स्वात्मतया **निर्वैरः** स्वान्तर्बाह्यकलनाभावाच्छान्तो **दान्तः संन्यासी अस्खलितस्वरूपध्यानेन** यो देहोपलक्षितस्वाविद्यापदमस्ति नास्तीति विभ्रमाभिमतिं त्यजति सोऽयं

स्वातिरिक्तास्तित्वभ्रममुक्तो विदेहमुक्तो भवति । आवृत्तिरादरार्था । इत्युपनिषच्छब्दः प्रथमोपदेशसमाप्त्यर्थः ॥ २ ॥

इति प्रथमोपदेशः

---

## द्वितीयोपदेशः

### पारिव्राज्यक्रमः

अथ हैनं भगवन्तं नारदं सर्वे शौनकादयः पप्रच्छुर्भो भगवन् संन्यासविधिं नो ब्रूहीति । तानवलोक्य नारदस्तत्स्वरूपं सर्वं पितामहमुखेनैव ज्ञातुमुचितमित्युक्त्वा सत्रयागपूर्त्यनन्तरं तैः सह सत्यलोकं गत्वा विधिवद् ब्रह्मनिष्ठापरं परमेष्ठिनं नत्वा स्तुत्वा, यथोचितं तदाज्ञया तैः सहोपविश्य नारदः पितामहमुवाच । गुरुस्त्वं जनकस्त्वं सर्वविद्यारहस्यज्ञः सर्वज्ञस्त्वम् । अतो मदिष्टं रहस्यमेकं वक्तव्यम् । त्वद्विना मदभिमतरहस्यं वक्तुं कः समर्थः । किमिति चेत् पारिव्राज्यस्वरूपक्रमं नो ब्रूहीति नारदेन प्रार्थितः परमेष्ठी सर्वतः सर्वानवलोक्य मुहूर्तमात्रं समाधिनिष्ठो भूत्वा संसारार्तिनिवृत्त्यन्वेषण इति निश्चित्य नारदमवलोक्य तमाह पितामहः । पुरा मत्पुत्र पुरुषसूक्तोपनिषद्रहस्यप्रकारनिरतिशयाकारावलम्बिना विराट्पुरुषेणोपदिष्टं रहस्यं ते विविच्योच्यते । तत्क्रममतिरहस्यं बाढमवहितो भूत्वा श्रूयताम् ।

भो नारद, विधिवदादावनुपनीतोपनयनानन्तरं तत्सत्कुलप्रसूतः पितृमातृविधेयः पितृसमीपादन्यत्र सत्संप्रदायस्थं श्रद्धावन्तं सत्कुलभवं

श्रोत्रियं शास्त्रवात्सल्यं गुणवन्तमकुटिलं सद्गुरुमासाद्य नत्वा, यथोपयोगशुश्रूषापूर्वकं स्वाभिमतं विज्ञाप्य, द्वादशवर्षसेवापुरःसरं सर्वविद्याभ्यासं कृत्वा, तदनुज्ञया स्वकुलानुरूपामभिमतकन्यां विवाह्य, पञ्चविंशतिवत्सरं गुरुकुलवासं कृत्वाथ गुर्वनुज्ञया गृहस्थोचितकर्म कुर्वन्, दौर्ब्राह्मण्यनिवृत्तिमेत्य स्ववंशवृद्धिकामः पुत्रमेकमासाद्य गार्हस्थ्योचितपञ्चविंशतिवत्सरं तीर्त्वा, ततः पञ्चविंशतिवत्सरपर्यन्तं त्रिषवणमुदकस्पर्शनपूर्वकं चतुर्थकालमेकवारमाहारमाहरन्नयमेक एव वनस्थो भूत्वा, पुरग्रामप्राक्तनसंचारं विहाय, निकिरविरहिततदाश्रितकर्मोचितकृत्यं निर्वर्त्य, दृष्टश्रवणविषयवैतृष्ण्यमेत्य, चत्वारिंशत्संस्कारसंपन्नः, सर्वतो विरक्तश्चित्तशुद्धिमेत्याशासूयेर्ष्याहंकारं दग्ध्वा, साधनचतुष्टयसंपन्नः संन्यस्तुमर्हतीत्युपनिषत् ॥ १ ॥

एवं नारदेनोपदिष्टाः शौनकादिमुनयः पुनर्विशेषबुभुत्सया नारदं पृच्छन्ति । सोऽपि भवद्भिर्यत् पृष्टं तत्त पितामहमुखेन ज्ञातव्यमित्युक्त्वा प्रकृतयागसमाप्त्यनन्तरं तैः साकं सत्यलोकं गत्वा पितामहं विधिवदुपसंगम्य नारदः पारिव्राज्यधर्मं पृष्टवानित्याह—**अथेति** । **ब्रह्मनिष्ठापरं** स्वातिरिक्तसर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति या अनवरतभावना सैव ब्रह्मनिष्ठा, तत्परं तन्निष्ठं तेन परमे पदे तिष्ठतीति **परमेष्ठिनम्** । **नारदः पितामहमुवाच** । किमिति । **सर्वेषां मम च गुरुस्त्वमिति** । नारदेनैवं पृष्टः परमेष्ठी दिव्यज्ञानेन तदागमनप्रयोजनं ज्ञात्वा त्वया यत् पृष्टं तन्मे विराट्पुरुषेणोपदिष्टम् । तदुच्यते । शृण्वेतदित्याह—**नारदेनेति** । किं तदित्यत्र **भो नारदेति** तं स्वाभिमुखीकृत्य क्रमेण संन्यासविधिमुपदिशतीत्याह—**भो इति** । **सत्संप्रदायस्थम्** इत्याद्याचार्यविशेषणम् । **श्रोत्रियम्** अधीतसाङ्गोपाङ्गस्वाध्यायतदर्थम् । **पञ्चविंशतिवत्सरं** सदारो **गुरुकुलवासं कृत्वा** । " त्रिषवण-

मुदकोपस्पर्शी चतुर्थकालपानभक्तः स्यात्" इति श्रुतेः। निकिरविरहितेत्यत्र नितरां किरं बीजावापनं यत्र तन्निकिरं, गोधूमशालीश्यामाकादि, तद्विरहितं नीवारतृणतण्डुलादितदाश्रितकर्मोचितकृत्यं देवपित्राद्युद्देशेन हव्यकव्यादिकं दृष्टमैहिकं श्रावणमामुष्मिकं तत्र वैतृष्ण्यमिहामुत्रभोगवितृष्णत्वम्। चत्वारिंशत्संस्कारसंपन्न इत्याद्युक्तार्थम्। शिष्टं स्पष्टम्। इत्युपनिषच्छब्दो द्वितीयोपदेशसमाप्त्यर्थः॥ १॥

इति द्वितीयोपदेशः

---

## तृतीयोपदेशः

### संन्यासाधिकारी

अथ हैनं नारदः पितामहं पप्रच्छ। भगवन् केन संन्यासः संन्यासाधिकारी वेति। एवमादौ संन्यासाधिकारिणं निरूप्य पश्चात् संन्यासविधिरुच्यते। अवहितः शृणु। अथ षण्डः पतितोऽङ्गविकलः स्त्रैणो बधिरोऽर्भको मूकः पाषण्डश्चक्री लिङ्गी वैखानसहरद्विजौ भृतकाध्यापकः शिपिविष्टोऽनग्निको वैराग्यवन्तोऽप्येते न संन्यासार्हाः। संन्यस्ता यद्यपि महावाक्योपदेशे नाधिकारिणः। पूर्वसंन्यासी परमहंसाधिकारी॥ १॥

परेणैवात्मनश्चापि परस्यैवात्मना तथा।
अभयं समवाप्नोति स परिव्राडिति स्मृतिः॥ २॥
षण्डोऽथ विकलोऽप्यन्धो बालकश्चापि पातकी।
पतितश्च परद्वारी वैखानसहरद्विजौ॥ ३॥
चक्री लिङ्गी च पाषण्डी शिपिविष्टोऽप्यनग्निकः।
द्वित्रिवारेण संन्यस्तो भृतकाध्यापकोऽपि च।
एते नार्हन्ति संन्यासमातुरेण विना क्रमम्॥ ४॥

साधनचतुष्टयसंपन्नः संन्यस्तुमर्हतीति पितामहेनैवमुपदिष्टो नारदः संन्यासस्वरूपं तदधिकारिस्वरूपं च विविच्य ज्ञातव्यमिति स्वपितरं पप्रच्छेत्याह—अथेति। कोऽयं संन्यासः, को वा संन्यासाधिकारीति प्रश्नोत्तरम् एवमिति। आदौ तावत् संन्यासानधिकारिणं निरूपयति—अथेति। शिपिविष्टो विकसितशेफ इत्यर्थः। उक्तार्थवैपरीत्येन यः सर्वभूताभयदः यस्य सर्वाणि भूतान्यभयं दास्यन्ति सोऽयं संन्यासाधिकारीत्याह—पूर्वेति। केयं स्मृतिः इत्यत्र

"अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः॥"

इति स्मृत्यनुरोधेन साध्यसाधनेषणापरित्यागपूर्वकं निष्कामकर्मानुष्ठाता द्विजः पूर्वसंन्यासी। सोऽयं परमहंसाश्रमाधिकारी। तद्विपरीतानधिकार्यपि श्रूयते मन्त्रद्वयेन षण्ड इति॥ १–४॥

आतुरसंन्यासः

आतुरकालः कथमार्यसंमतः।
प्राणस्योत्क्रमणासन्नकालस्त्वातुरसंज्ञकः।
नेतरस्त्वातुरः कालो मुक्तिमार्गप्रवर्तनः॥ ५॥

आतुरसंन्यासः कथं विद्वत्संमतो भवति इत्याक्षिप्य तत्राष्टश्राद्धादिकर्मलोपेऽपि संन्याससिद्धिकरप्रैषमन्त्रालोपादातुरसंन्यासोऽपि विद्वत्संमतो भवतीत्याह—आतुरकाल इति। प्राणस्योत्क्रमणासन्नकालः प्राणोत्क्रमणपूर्वभाविकाल एवेत्यर्थः॥ ५॥

आतुरसंन्यासविधिः

आतुरेऽपि च संन्यासे तत्तन्मन्त्रपुरःसरम्।
मन्त्रावृत्तिं च कृत्वैव संन्यसेद्विधिवद् बुधः॥ ६॥
आतुरेऽपि क्रमे चापि प्रैषभेदो न कुत्रचित्।
न मन्त्रं कर्मरहितं कर्म मन्त्रमपेक्षते॥ ७॥

अकर्म मन्त्ररहितं नातो मन्त्रं परित्यजेत् ।
मन्त्रं विना कर्म कुर्याद्भस्मन्याहुतिवद्भवेत् ॥ ८ ॥
विध्युक्तकर्मसंक्षेपात् संन्यासस्त्वातुरः स्मृतः ।
तस्मादातुरसंन्यासे मन्त्रावृत्तिविधिर्मुने ॥ ९ ॥

आतुरसंन्यासविधिमाचष्टे—आतुरेऽपि चेति । क्रमातुरयोः प्रैषभेदः स्यादित्यत आह—आतुरेऽपीति । कर्मणो मन्त्राधीनत्वं केवलकर्मणो निष्फलत्वं चाह—न मन्त्रमिति । न मन्त्रं कर्मरहितम् इत्यत्र विभक्तिव्यत्ययः । केवलमन्त्रप्राधान्येन यत्र कर्मलोपः, सोऽयमातुरसंन्यास इत्याह—विध्युक्तेति । यस्मादेवं तस्मात् ॥ ६–९ ॥

देशान्तरस्थाहिताग्नेः संन्यासविधिः

आहिताग्निर्विरक्तश्चेद् देशान्तरगतो यदि ।
प्राजापत्येष्टिमप्स्वेव निर्वृत्त्यैवाथ संन्यसेत् ॥ १० ॥
मनसा वाथ विध्युक्तमन्त्रावृत्त्याथवा जले ।
श्रुत्यनुष्ठानमार्गेण कर्मानुष्ठानमेव वा ।
समाप्य संन्यसेद्विद्वान्नो चेत् पातित्यमाप्नुयात् ॥ ११ ॥

यद्याहिताग्निर्विरक्तो दूरदेशं गतो भवति, तस्य संन्यासः कथमित्याकाङ्क्षायां मनसा वचसा कर्मणा वाप्सु प्राजापत्येष्टिं कृत्वैव संन्यसेत्; नो चेत् पतितो भवतीत्याह—आहिताग्निरिति । देशान्तरगतो यदि तदा ॥ १०, ११ ॥

सतृष्णस्य संन्यासपरिग्रहे नरकप्राप्तिः

यदा मनसि संजातं वैतृष्ण्यं सर्ववस्तुषु ।
तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्यये ॥ १२ ॥

विरक्तः प्रव्रजेद्धीमान् सरक्तस्तु गृहे वसेत् ।
सरागो नरकं याति प्रव्रजन् हि द्विजाधमः ॥ १३ ॥

स्वातिरिक्तवस्तुवैतृष्ण्यं संन्यासहेतुः । यत्र कुत्रापि सतृष्णो यदि संन्यस्यति, तस्य नरकपातः स्यादित्याह—यदेति ॥ १२, १३ ॥

वैतृष्ण्यमेव संन्यासपरिग्रहे हेतुः

यस्यैनानि सुगुप्तानि जिह्वोपस्थोदरं करः ।
संन्यसेदकृतोद्वाहो ब्राह्मणो ब्रह्मचर्यवान् ॥ १४ ॥
संसारमेव निःसारं दृष्ट्वा सारदिदृक्षया ।
प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ॥ १५ ॥
प्रवृत्तिलक्षणं कर्म ज्ञानं संन्यासलक्षणम् ।
तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥ १६ ॥

यस्य जिह्वादिकं स्ववशे वर्तते, इतः परमलमिति यस्य संसारविरक्तिरुदेति, यस्य च ज्ञानं कैवल्यसाधनं भवति, सोऽयं व्रती गृही वनी वा संन्यसेदित्याह—यस्येति । यस्मादेवं तस्मात् ॥ १४–१६ ॥

विद्वत्संन्यासः

यदा तु विदितं तत्त्वं परं ब्रह्म सनातनम् ।
तदैकदण्डं संगृह्य सोपवीतं शिखां त्यजेत् ॥ १७ ॥
परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि ।
सर्वैषणाविनिर्मुक्तः स भैक्षं भोक्तुमर्हति ॥ १८ ॥
पूजितो वन्दितश्चैव सुप्रसन्नो यथा भवेत् ।
तथा चेत् ताड्यमानस्तु तदा भवति भैक्षभुक् ॥ १९ ॥

अहमेवाक्षरं ब्रह्म वासुदेवाख्यमद्वयम् ।
इति भावो ध्रुवो यस्य तदा भवति भैक्षभुक् ॥ २० ॥
यस्मिञ्छान्तिः शमः शौचं सत्यं संतोष आर्जवम् ।
अकिंचनमदम्भश्च स कैवल्याश्रमे भवेत् ॥ २१ ॥
यदा न कुरुते भावं सर्वभूतेषु पापकम् ।
कर्मणा मनसा वाचा तदा भवति भैक्षभुक् ॥ २२ ॥
दशलक्षणकं धर्ममनुतिष्ठन् समाहितः ।
वेदान्तान् विधिवच्छ्रुत्वा संन्यसेदनृणो द्विजः ॥ २३ ॥
धृतिः क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।
ह्रीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ॥ २४ ॥
अतीतान्न स्मरेद्भोगान्न तथानागतानपि ।
प्राप्तांश्च नाभिनन्देद्यः स कैवल्याश्रमे वसेत् ॥ २५ ॥
अन्तःस्थानीन्द्रियाण्यन्तर्बहिष्ठान् विषयान् बहिः ।
शक्नोति यः सदा कर्तुं स कैवल्याश्रमे वसेत् ॥ २६ ॥
प्राणे गते यथा देहः [1]सुखदुःखं न विन्दति ।
तथा चेत् प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत् ॥ २७ ॥

विद्वत्संन्यासमाह—यदेति । यस्य स्वानुरक्तिस्वातिरिक्तविरक्तिसमत्वादिकं नैजं भवति, स यतितामर्हतीत्याह—परमात्मनीत्यादिना । अकिंचनं स्वातिरेकेण किंचिदस्तीति यन्मनो न मनुते तदकिंचनम् । किंच यदेति । पुनर्भङ्ग्यन्तरेण विद्वत्संन्यास उच्यते—दशेति । अनृणः “ब्रह्मचर्येणर्षिभ्यो

[1] उ १. ‘सुखदुःखं’ इत्यारभ्य ‘विसृज्य ध्यानयोगेन’ (२७–५१) इत्यन्तं मूलं व्याख्यानं च न दृश्येते ।

यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणः" इति श्रुतेः। दशलक्षणकं धर्ममित्यंशं श्रुतिरेव व्याकरोति—धृतिरिति। भूतादिकालत्रयावच्छिन्नभोगानिच्छुर्मोक्षाश्रमे वसेदित्याह—अतीतानिति। निगृहीतान्तर्बाह्यवृत्तिर्मोक्षाश्रमे वसेदित्याह—अन्तरिति। किं बहुना; प्राण इति ॥ १७–२७ ॥

अवैधपरिग्रहे प्रत्यवायः

कौपीनयुगलं कन्था दण्ड एकः परिग्रहः।
यतेः परमहंसस्य नाधिकं तु विधीयते ॥ २८ ॥
यदि वा कुरुते रागादधिकस्य परिग्रहम्।
रौरवं नरकं गत्वा तिर्यग्योनिषु जायते ॥ २९ ॥
विशीर्णान्यमलान्येव चेलानि ग्रथितानि तु।
कृत्वा कन्थां बहिर्वासो धारयेद्धातुरञ्जितम् ॥ ३० ॥
एकवासा अवासा वा एकदृष्टिरलोलुपः।
एक एव चरेन्नित्यं वर्षास्वेकत्र संवसेत् ॥ ३१ ॥
कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः।
यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढं चरेद्यतिः ॥ ३२

यतेर्देहधारणस्वाचारोपयोगिपरिग्रहं विनान्यत्र न हि परिग्रहविधिरस्ति। यदि करोति, तदा प्रत्यवैतीत्याह—कौपीनेति। यदि शीतभीतिस्तदा विशीर्णानीति। साम्बरा दिगम्बरा वा—श्रवणमनननिदिध्यासनव्यापृतिविरला यदि, तदा तेषां ग्रामैकरात्रसंचारो विधीयत इत्याह—एकेति ॥ २८–३२ ॥

परिव्राजकानां धर्माः

कामः क्रोधस्तथा दर्पो लोभमोहादयश्च ये।
तांस्तु दोषान् परित्यज्य परिव्राण्निर्ममो भवेत् ॥ ३३ ॥

रागद्वेषवियुक्तात्मा समलोष्टाश्मकाञ्चनः ।
प्राणिहिंसानिवृत्तश्च मुनिः स्यात् सर्वनिःस्पृहः ॥ ३४ ॥
दम्भाहंकारनिर्मुक्तो हिंसापैशुन्यवर्जितः ।
आत्मज्ञानगुणोपेतो यतिर्मोक्षमवाप्नुयात् ॥ ३५ ॥
इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयः ।
संनियम्य तु तान्येव ततः सिद्धिं निगच्छति ॥ ३६ ॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ३७ ॥
श्रुत्वा स्पृष्ट्वा च भुक्त्वा च दृष्ट्वा घ्रात्वा च यो नरः ।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥ ३८ ॥
यस्य वाङ्मनसी शुद्धे सम्यग्गुप्ते च सर्वदा ।
स वै सर्वमवाप्नोति वेदान्तोपगतं फलम् ॥ ३९ ॥
संमानाद् ब्राह्मणो नित्यमुद्विजेत विषादिव ।
अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा ॥ ४० ॥
सुखं ह्यवमतः शेते सुखं च प्रतिबुध्यते ।
सुखं चरति लोकेऽस्मिन्नवमन्ता विनश्यति ॥ ४१ ॥
अतिवादांस्तितिक्षेत नावमन्येत कंचन ।
न चेमं देहमाश्रित्य वैरं कुर्वीत केनचित् ॥ ४२ ॥
क्रुध्यन्तं न प्रतिक्रुध्येदाक्रुष्टः कुशलं वदेत् ।
सप्तद्वारावकीर्णां च न वाचमनृतां वदेत् ॥ ४३ ॥
अध्यात्मरतिरासीनो निरपेक्षो निराशिषः ।
आत्मनैव सहायेन सुखार्थी विचरेदिह ॥ ४४ ॥

इन्द्रियाणां निरोधेन रागद्वेषक्षयेण च ।
अहिंसया च भूतानाममृतत्वाय कल्पते ॥ ४५ ॥
अस्थिस्थूणं स्नायुबद्धं मांसशोणितलेपितम् ।
चर्मावबद्धं दुर्गन्धि पूर्णं मूत्रपुरीषयोः ॥ ४६ ॥
जराशोकसमाविष्टं रोगायतनमातुरम् ।
रजस्वलमनित्यं च भूतावासमिमं त्यजेत् ॥ ४७ ॥
मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहे चेत् प्रीतिमान्मूढो भविता नरकेऽपि सः ॥ ४८ ॥
सा कालसूत्रपदवी सा महावीचिवागुरा ।
सासिपत्रवनश्रेणी या देहेऽहमिति स्थितिः ॥ ४९ ॥
सा त्याज्या सर्वयत्नेन सर्वनाशेऽप्युपस्थिते ।
स्प्रष्टव्या सा न भव्येन सश्वमांसेव पुल्कसी ॥ ५० ॥
प्रियेषु स्वेषु सुकृतमप्रियेषु च दुष्कृतम् ।
विसृज्य ध्यानयोगेन ब्रह्माप्येति सनातनम् ॥ ५१ ॥
अनेन विधिना सर्वांस्त्यक्त्वा सङ्गाञ्छनैःशनैः ।
सर्वद्वन्द्वैर्विनिर्मुक्तो ब्रह्मण्येवावतिष्ठते ॥ ५२ ॥
एक एव चरेन्नित्यं सिद्ध्यर्थमसहायकः ।
सिद्धिमेकस्य पश्यन् हि न जहाति न हीयते ॥ ५३ ॥

परिव्राजकधर्मानुपन्यस्यति—काम इत्यादिना । निर्ममो भवेत् स्वदेहतदन्यत्र नाहंममाभिमानी भवेदित्यर्थः । मुनिः मननशीलः । इन्द्रियैरिन्द्रियार्थस्पर्शास्पर्शाभ्यां बन्धमोक्षौ भवत इत्याह—इन्द्रियाणामिति । कामोपभोगतः

कामशान्तिः स्यादित्यत आह—नेति। एवं चेत् जितेन्द्रियत्वं कथमित्यत आह—श्रुत्वेति। यद्वशे करणजातं भवति, स ज्ञानफलमेतीत्याह—यस्येति। सम्यग्गुप्ते तनुभावं गते। यतिः संमानमनादृत्यावमानमेव काङ्क्षेदित्याह—संमानादिति। किंच अतिवादान् परकृताधिक्षेपान् तितिक्षेत। नावमन्येत कंचन स्वात्मधिया। "सप्त वै शीर्षण्याः प्राणाः" इति सप्तद्वारावकीर्णां च न वाचमनृतां वदेत्। सप्तमद्वारभूतां सदा अध्यात्मरतिः। किंच इन्द्रियाणामिति। स्वाधिष्ठितदेहरूढामहंधियं स्वानर्थकरीमुत्सृज्य ब्रह्मात्मनि बुद्धिं कुर्यादित्याह—अस्थीति। शुक्लशोणितयोगजं रजस्वलम्। भूतावासाभिमतौ दोषं विशिनष्टि—मांसेति। देहगताहंमतिमहंब्रह्मास्मीति ब्रह्मण्येव कुर्यादित्यर्थः। एवं ब्रह्मानुसंधानपरस्यापि शरीरयोगप्रभवसुकृतदुष्कृतयोरवश्यंभावित्वात्ततो ब्रह्मभावापत्तिः कुत इत्यत आह—प्रियेष्विति। ब्रह्मातिप्रतिबन्धकसुकृतदुष्कृतयोः प्रियाप्रियजनापहृतत्वादयं निष्प्रतियोगिकं ब्रह्म स्वमात्रधियैतीत्यर्थः। प्रियाप्रियेष्वपि अनेनेति ॥ ३३–५३ ॥

यतिचर्या, तत्फलं च

कपालं वृक्षमूलानि कुचेलान्यसहायता।
समता चैव सर्वस्मिन्नेतन्मुक्तस्य लक्षणम् ॥ ५४ ॥
सर्वभूतहितः शान्तस्त्रिदण्डी सकमण्डलुः।
एकारामः परिव्रज्य भिक्षार्थं ग्राममाविशेत् ॥ ५५ ॥
एको भिक्षुर्यथोक्तः स्याद् द्वावेव मिथुनं स्मृतम्।
त्रयो ग्रामः समाख्यात ऊर्ध्वं तु नगरायते ॥ ५६ ॥
नगरं न हि कर्तव्यं ग्रामं वा मिथुनं तथा।
एतत्त्रयं प्रकुर्वाणः स्वधर्माच्च्यवते यतिः ॥ ५७ ॥
राजवार्तादि तेषां स्याद्भिक्षावार्ता परस्परम्।
स्नेहपैशुन्यमात्सर्यं संनिकर्षान्न संशयः ॥ ५८ ॥

एकाकी निःस्पृहस्तिष्ठेन्न हि केन सहालपेत् ।
दद्यान्नारायणेत्येव प्रतिवाक्यं सदा यतिः ॥ ५९ ॥
एकाकी चिन्तयेद् ब्रह्म मनोवाक्कायकर्मभिः ।
मृत्युं च नाभिनन्देत जीवितं वा कथंचन ॥ ६० ॥
कालमेव प्रतीक्षेत यावदायुः समाप्यते ।
नाभिनन्देत मरणं नाभिनन्देत जीवितम् ॥
कालमेकं प्रतीक्षेत निदेशं भृतको यथा ॥ ६१ ॥
अजिह्वः पण्डकः पङ्गुरन्धो बधिर एव च ।
मुग्धश्च मुच्यते भिक्षुः षड्भिरेतैर्न संशयः ॥ ६२ ॥

पुनर्यतिचर्यां तत्फलं चाचष्टे—कपालमित्यादिना । येन वाक्कायमनांसि दण्डयन्ते मौनस्वल्पाशनप्राणायामोपायत इति स त्रिदण्डी महायतिः ।

"वाग्दण्डः कायदण्डश्च मनोदण्डश्च ते त्रयः ।
यस्यैते नियता दण्डाः स त्रिदण्डी महायतिः ॥"

इति श्रुतेः । एकब्रह्मावशेषेण सर्वत्र रमत इति एकारामः । कथं तत् राजवार्तादीति । यस्मादेवं तस्मात् एकाकीति । एकाकिना किं कर्तव्यमित्यत आह—एकाकी चिन्तयेदिति । अजिह्वादिवृत्तिमान् यतिः स्वातिरिक्तभ्रमतो विमुच्यत इत्याह—अजिह्व इति ॥ ५४-६२ ॥

अजिह्वादीनां लक्षणम्

इदं मृष्टमिदं नेति योऽश्नन्नपि न सज्जति ।
हितं सत्यं मितं वक्ति तमजिह्वं प्रचक्षते ॥ ६३ ॥
अद्य जातां यथा नारीं तथा षोडशवार्षिकीम् ।
शतवर्षां च यो दृष्ट्वा निर्विकारः स पण्डकः ॥ ६४ ॥

भिक्षार्थमटनं यस्य विण्मूत्रकरणाय च ।
योजनान्न परं याति सर्वथा पङ्गुरेव सः ॥ ६५ ॥
तिष्ठतो व्रजतो वापि यस्य चक्षुर्न दूरगम् ।
चतुर्युगां भुवं मुक्त्वा परिव्राट् सोऽन्ध उच्यते ॥ ६६ ॥
हिताहितं मनोरामं वचः शोकावहं च यत् ।
श्रुत्वापि न शृणोतीव बधिरः स प्रकीर्तितः ॥ ६७ ॥
सांनिध्ये विषयाणां यः समर्थोऽविकलेन्द्रियः ।
सुप्तवद्वर्तते नित्यं स भिक्षुर्मुग्ध उच्यते ॥ ६८ ॥

सूत्रभूतं वाक्यं श्रुतिरेव क्रमेण व्याचष्टे । तत्राजिह्वशब्दार्थमाह—इदमिति । पण्डकशब्दार्थमाह—अद्येति । पङ्गुशब्दार्थमाह—भिक्षार्थमिति । अन्धशब्दार्थमाह—तिष्ठत इति । बधिरशब्दं व्याचष्टे—हितेति । मुग्धशब्दार्थं विशदयति—सान्निध्य इति ॥ ६३–६८ ॥

यतीनां वर्जनीयानि

नटादिप्रेक्षणं द्यूतं प्रमदासुहृदं तथा ।
भक्ष्यं भोज्यमुदक्यां च षण्न पश्येत् कदाचन ॥ ६९ ॥
रागं द्वेषं मदं मायां द्रोहं मोहं परात्मसु ।
षडेतानि यतिर्नित्यं मनसापि न चिन्तयेत् ॥ ७० ॥
मञ्चकं शुक्लवस्त्रं च स्त्रीकथा लौल्यमेव च ।
दिवा स्वापं च यानं च यतीनां पातकानि षट् ॥ ७१ ॥
दूरयात्रां प्रयत्नेन वर्जयेदात्मचिन्तकः ।

यतिभिः यद्यत् त्याज्यं तदेकदेशं प्रदर्शयति—नटादीत्यादिना ॥ ६९–७१ ॥

यतिभिः अनुष्ठेयानि

सदोपनिषदं विद्यामभ्यसेन्मुक्तिहैतुकीम् ॥ ७२ ॥
न तीर्थसेवी नित्यं स्यान्नोपवासपरो यतिः ।
न चाध्ययनशीलः स्यान्न व्याख्यानपरो भवेत् ॥ ७३ ॥
अपापमशठं वृत्तमजिह्मं नित्यमाचरेत् ।
इन्द्रियाणि समाहृत्य कूर्मोऽङ्गानीव सर्वशः ॥ ७४ ॥
क्षीणेन्द्रियमनोवृत्तिर्निराशीर्निष्परिग्रहः ।
निर्द्वन्द्वो निर्नमस्कारो निःस्वधाकार एव च ॥ ७५ ॥
निर्ममो निरहंकारो निरपेक्षो निराशिषः ।
विविक्तदेशसंसक्तो मुच्यते नात्र संशयः ॥ ७६ ॥
इति ॥

यदनुष्ठेयं तदाह—सदेति । अपापं पापपुण्यतत्फलविमुखम् अशठं साधुजनसेव्यब्रह्मगोचरम् । अजिह्मं मौनमित्यर्थः । इतिशब्दो मन्त्रपरिसमाप्त्यर्थः ॥ ७२–७६ ॥

आश्रमानुसारेण पारिव्राज्यम्

अप्रमत्तः कर्मभक्तिज्ञानसंपन्नः स्वतन्त्रो वैराग्यमेत्य ब्रह्मचारी गृही वानप्रस्थो वा मुख्यवृत्तिका चेद् ब्रह्मचर्यं समाप्य गृही भवेद् गृहाद्वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा । अथ पुनरव्रती वा व्रती वा स्नातको वास्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेत् । तद्धैके प्राजापत्यामेवेष्टिं

कुर्वन्ति । अथवा न कुर्यात् । आग्नेय्यामेव कुर्यात् । अग्निर्हि प्राणः । प्राणमेवैतया करोति । तस्मात् त्रैधातवीयामेव कुर्यात् । एत एव त्रयो धातवो यदुत सत्त्वं रजस्तम इति ॥ ७७ ॥

"अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥"

इत्यनेन मन्त्रेणाग्निमाजिघ्रेत् । एष वा अग्नेर्योनिर्यः प्राणः, प्राणं गच्छ स्वां योनिं गच्छ स्वाहेत्येवमेवैतदाह । आहवनीयादग्निमाहृत्य पूर्ववदग्निमाजिघ्रेत् । यदग्निं न विन्देदप्सु जुहुयात् । आपो वै सर्वा देवताः, सर्वाभ्यो देवताभ्यो जुहोमि स्वाहेति हुत्वोद्धृत्य तदुदकं प्राश्नीयात् साज्यं हविरनामयं मोक्षदमिति । शिखां यज्ञोपवीतं पितरं पुत्रं कलत्रं कर्म चाध्ययनं मन्त्रान्तरं विसृज्यैव परिव्रजत्यात्मवित् । मोक्षमन्त्रैस्त्रैधातवीयैर्विन्देत् । तद् ब्रह्म तदुपासितव्यम् । एवमेवैतदिति ॥ ७८ ॥

यथोक्तलक्षितवृत्त्यादेर्यदहरेव वान्ताशनमूत्रपुरीषादिवत् स्वातिरिक्तप्रपञ्चविरतिरुदेति तदा तदहरेव प्रव्रजेत्; यदि विरतिर्मन्दा तदाश्रमक्रमानुसारेण परिव्रजेदित्याह—अप्रमत्त इति । यदि स्वात्ताश्रमपरिग्रहे मन्दविरक्त्या तत्र मुख्यवृत्तिका चेत् ब्रह्मचर्यं समाप्य गृही भवेत् । यदि वा इतरथा तीव्रतरविरतिरुदेति, तदा ब्रह्मचर्यादेव प्रव्रजेत् । विरजेत् तीव्रतरविरागी स्यात् । यस्मादेवं तस्मात् । "ब्रह्मचर्यं समाप्य" इत्यारभ्य "तद् ब्रह्म तदुपासितव्यम" इत्यन्तं जाबालोपनिषदि चतुर्थखण्डे जनकयाज्ञवल्क्यसंवादे प्रायशः प्रतिपदं व्याख्यातम् ॥ ७७, ७८ ॥

यतेरेव मुख्यं ब्राह्मण्यम्

पितामहं पुनः पप्रच्छ नारदः। कथमयज्ञोपवीती ब्राह्मण इति। तमाह पितामहः ॥ ७९ ॥

सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद् बुधः।
यदक्षरं परं ब्रह्म तत् सूत्रमिति धारयेत् ॥ ८० ॥
सूचनात् सूत्रमित्याहुः सूत्रं नाम परं पदम्।
तत् सूत्रं विदितं येन स विप्रो वेदपारगः ॥ ८१ ॥
येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव।
तत् सूत्रं धारयेद्योगी योगवित्तत्त्वदर्शनः ॥ ८२ ॥
बहिःसूत्रं त्यजेद्विद्वान् योगमुत्तममास्थितः।
ब्रह्मभावमिदं सूत्रं धारयेद्यः स चेतनः।
धारणात् तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत् ॥ ८३ ॥
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम्।
ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ॥ ८४ ॥
ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥ ८५ ॥
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा।
स शिखीत्युच्यते विद्वान् नेतरे केशधारिणः ॥ ८६ ॥
कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः।
तेभिर्धार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ॥ ८७ ॥

शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ॥ ८८ ॥
इति ॥

संन्यासस्य शिखायज्ञोपवीतत्यागपूर्वकत्वात् कथमयं ब्राह्मणपदमर्हतीति नारदः पितामहं पृच्छतीत्याह श्रुतिः—पितामहमिति । तमाह पितामहः । किमिति—सशिखमिति "सशिखम्" इत्यादि "ब्रह्मविदो विदुः" इत्यन्तं ब्रह्मोपनिषदि पदशो व्याख्यातम् ॥ ७९–८८ ॥

परमहंसस्य अवधूताश्रमस्य वा परिग्रहः

तदेतद्विज्ञाय ब्राह्मणः परिव्रज्य परिव्राडेकशाटी मुण्डोऽपरिग्रहः शरीरक्लेशासहिष्णुश्चेत् । अथवा यथाविधिश्चेज्जातरूपधरो भूत्वा स्वपुत्रमित्रकलत्राप्तबन्ध्वादीनि स्वाध्यायं सत्कर्माणि संन्यस्यायं ब्रह्माण्डं च सर्वं कौपीनं दण्डमाच्छादनं च त्यक्त्वा द्वन्द्वसहिष्णुर्न शीतं न चोष्णं न सुखं न दुःखं न निद्रा न मानावमाने च षडूर्मिवर्जितः, निन्दाहंकारमत्सरगर्वदम्भेर्ष्यासूयेच्छाद्वेषसुखदुःखकामक्रोधलोभमोहादीन् विसृज्य, स्ववपुः शवाकारमिव स्मृत्वा, स्वव्यतिरिक्तमन्तर्बहिरमन्यमानः, कस्यापि वन्दनमकृत्वा न स्वाहाकारो न स्वधाकारो न निन्दास्तुतिर्यादृच्छिको भवेत् । यदृच्छालाभसंतुष्टः सुवर्णादीन्न परिग्रहेत् । नावाहनं न विसर्जनं न मन्त्रं नामन्त्रं न ध्यानं नोपासनं न लक्ष्यं नालक्ष्यं न पृथङ् नापृथङ् न त्वन्यत्र अनिकेतः स्थिरमतिः शून्यागारवृक्षमूलदेवगृहतृणकूटकुलालशालाग्निहोत्रशालाग्निदिगन्तरनदीतटपुलिनभूगृहकन्दरनिर्झरस्थण्डिलेषु,

वने वा, श्वेतकेतुऋभुनिदाघऋषभदुर्वासःसंवर्तकदत्तात्रेयरैवतकवदव्यक्तलिङ्गोऽव्यक्ताचारो बालोन्मत्तपिशाचवदनुन्मत्तोन्मत्तवदाचरंस्त्रिदण्डं शिक्यं पात्रं कमण्डलुं कटिसूत्रं कौपीनं च तत्सर्वं भूः स्वाहेत्यप्सु परित्यज्य ॥८९॥

कटिसूत्रं च कौपीनं दण्डं वस्त्रं कमण्डलुम् ।
सर्वमप्सु विसृज्याथ जातरूपधरश्चरेत् ॥ ९० ॥

आत्मानमन्विच्छेत् । यथाजातरूपधरो निर्द्वन्द्वो निष्परिग्रहस्तत्त्वब्रह्ममार्गे सम्यक्संपन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले करपात्रेणान्येन वायाचिताहारमाहरन्, लाभालाभौ समौ भूत्वा निर्ममः शुक्लध्यानपरायणोऽध्यात्मनिष्ठः शुभाशुभकर्मनिर्मूलनपरः संन्यस्य पूर्णानन्दैकबोधस्तद्ब्रह्माहमस्मीति ब्रह्मप्रणवमनुस्मरन् भ्रमरकीटन्यायेन शरीरत्रयमुत्सृज्य संन्यासेनैव देहत्यागं करोति । स कृतकृत्यो भवति । इत्युपनिषत् ॥ ९१ ॥

यतेरेव मुख्यं ब्राह्मण्यं विदित्वा परिव्रज्य पारमहंस्यमवधूताश्रमं वा गच्छेदित्याह—तदेनदिति । यदि शीताद्यसहिष्णुस्तदा परिव्राट् । श्रवणादिसत्कर्माणि । शीतोष्णादिद्वन्द्वसहिष्णुः । अशनायादिः षडूर्मिः । स्वयमेवान्तरमबाह्यं ब्रह्मेति भावनया स्वव्यतिरिक्तमन्तर्बहिरमन्यमानः कस्यापि वन्दनमकृत्वा सेव्यसेवकहेतुदेहाभिमतिवैरल्यात् यादृच्छिको भवेत् स्वातन्त्र्येणैकाकी संचरेदित्यर्थः । यदृच्छालाभसंतुष्टः स्वप्रयोजनाभावात् । न मन्त्रं नामन्त्रम्; प्रथमार्थे द्वितीया । स्वातिरेकेणावाहनविसर्जनमन्त्रामन्त्रध्यानोपासनलक्षणीयालक्षणीयलक्ष्यालक्ष्यभेदाभेदकलनावैरल्यात्, अत एव अनिकेतः स्थिरमतिः । अवधूतस्य कृतकृत्यत्वेन श्रवणादिकर्तव्याभावादनिकेतस्थिरमतित्वं युज्यत

इत्यर्थः। तेषां निवासस्थलमाह—शून्येति। प्रशस्तावधूतपूगनाम निर्दिशति—श्वेतकेत्विति। यः कोऽप्यव्यक्तलिङ्गः अस्खलितस्वस्वरूपानुसंधानेन कालं नयेदित्यर्थः। यदि कुटीचकादिः अवधूतचर्यामिच्छति तदा त्रिदण्डमिति। यदि परमहंसस्तदा कटिसूत्रं चेति। ततः किम्? इत्यत्र—"आत्ममात्रमिदं सर्वमात्मनोऽन्यन्न किंचन" इति श्रुत्यनुरोधेन आत्मानमन्विच्छेत्। तत्त्वब्रह्ममार्गे तत्प्रापकज्ञानवर्त्मनि। करपात्रेणान्येन वा आस्याहारेणेत्यर्थः। अयाचिताहारमाहरन् तत्रापि लाभालाभौ समौ भूत्वा निर्ममः। "शुक्लतेजोमयं ब्रह्म" इति श्रुत्यनुरोधेन शुक्लध्यानपरायणोऽध्यात्मनिष्ठः स्वातिरिक्तप्रपञ्चनिवृत्तिप्रवृत्तिरूपशुभाशुभकर्मनिर्मूलनपरः यत् स्वातिरिक्तं तत् संन्यस्य पूर्णानन्दैकबोधः यज्जाग्रज्जाग्रदादिचतुष्पञ्चदशकलनापह्नवसिद्धं तद्ब्रह्माहमस्मीति ब्रह्मप्रणवमनुस्मरन् भ्रमरकीटन्यायेन शरीरत्रयतन्निरूपितात्मात्मीयाभिमतिमुत्सृज्य यः स्वातिरिक्तास्तित्वभ्रमसंन्यासेनैव देहत्यागं करोति स कृतकृत्यो विदेहमुक्तो भवति इत्यर्थः। इत्युपनिषच्छब्दः तृतीयोपदेशसमाप्त्यर्थः॥ ॥ ८९–९१ ॥

इति तृतीयोपदेशः

---

## चतुर्थोपदेशः

### यतिधर्माणां तत्फलस्य चोपन्यासः

त्यक्त्वा लोकांश्च वेदांश्च विषयाणीन्द्रियाणि च।
आत्मन्येव स्थितो यस्तु स याति परमां गतिम्॥ १॥
नामगोत्रादिवरणं देशं कालं श्रुतं कुलम्।
वयो वृत्तं व्रतं शीलं ख्यापयेन्नैव सद्यतिः॥ २॥

न संभाषेत् स्त्रियं कांचित् पूर्वदृष्टां च न स्मरेत् ।
कथां च वर्जयेत्तासां न पश्येल्लिखितामपि ॥ ३ ॥
एतच्चतुष्टयं मोहात् स्त्रीणामाचरतो यतेः ।
चित्तं विक्रियतेऽवश्यं तद्विकारात् प्रणश्यति ॥ ४ ॥
तृष्णा क्रोधोऽनृतं माया लोभमोहौ प्रियाप्रिये ।
शिल्पं व्याख्यानयोगश्च कामो रागः परिग्रहः ॥ ५ ॥
अहंकारो ममत्वं च चिकित्सा धर्मसाहसम् ।
प्रायश्चित्तं प्रवासश्च मन्त्रौषधगराशिषः ।
प्रतिषिद्धानि चैतानि सेवमानो व्रजेदधः ॥ ६ ॥
आगच्छ गच्छ तिष्ठेति स्वागतं सुहृदोऽपि वा ।
संमाननं च न ब्रूयान्मुनिर्मोक्षपरायणः ॥ ७ ॥
प्रतिग्रहं न गृह्णीयान्नैव चान्यं प्रदापयेत् ।
प्रेरयेद्वा तथा भिक्षुः स्वप्नेऽपि न कदाचन ॥ ८ ॥
जायाभ्रातृसुतादीनां बन्धूनां च शुभाशुभम् ।
श्रुत्वा दृष्ट्वा न कम्पेत शोकमोहौ त्यजेद्यतिः ॥ ९ ॥
अहिंसा सत्यमस्तेयब्रह्मचर्यापरिग्रहाः ।
अनौद्धत्यमदीनत्वं प्रसादः स्थैर्यमार्जवम् ॥ १० ॥
अस्नेहो गुरुशुश्रूषा श्रद्धा क्षान्तिर्दमः शमः ।
उपेक्षा धैर्यमाधुर्ये तितिक्षा करुणा तथा ॥ ११ ॥
ह्रीस्तथा ज्ञानविज्ञाने योगो लघ्वशनं धृतिः ।
एष स्वधर्मो विख्यातो यतीनां नियतात्मनाम् ॥ १२ ॥

निर्द्वन्द्वो नित्यसत्त्वस्थः सर्वत्र समदर्शनः ।
तुरीयः परमो हंसः साक्षान्नारायणो यतिः ॥ १३ ॥
एकरात्रं वसेद् ग्रामे नगरे पञ्चरात्रकम् ।
वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत् ॥ १४ ॥
द्विरात्रं न वसेद् ग्रामे भिक्षुर्यदि वसेत्तदा ।
रागादयः प्रसज्येरंस्तेनासौ नारकी भवेत् ॥ १५ ॥
ग्रामान्ते निर्जने देशे नियतात्मानिकेतनः ।
पर्यटेत् कीटवद् भूमौ वर्षास्वेकत्र संवसेत् ॥ १६ ॥
एकवासा अवासा वा एकदृष्टिरलोलुपः ।
अदूषयन् सतां मार्गं ध्यानयुक्तो महीं चरेत् ॥ १७ ॥
शुचौ देशे सदा भिक्षुः स्वधर्ममनुपालयन् ।
पर्यटेत सदा योगी वीक्षयन् वसुधातलम् ॥ १८ ॥
न रात्रौ न च मध्याह्ने संध्ययोर्नैव पर्यटन् ।
न शून्ये न च दुर्गे वा प्राणिबाधाकरे न च ॥ १९ ॥
एकरात्रं वसेद् ग्रामे पत्तने तु दिनत्रयम् ।
पुरे दिनद्वयं भिक्षुर्नगरे पञ्चरात्रकम् ।
वर्षास्वेकत्र तिष्ठेत स्थाने पुण्यजलावृते ॥ २० ॥
आत्मवत् सर्वभूतानि पश्यन् भिक्षुश्चरेन्महीम् ।
अन्धवज्जडवच्चैव बधिरोन्मत्तमूकवत् ॥ २१ ॥
स्नानं त्रिषवणं प्रोक्तं बहूदकवनस्थयोः ।
हंसे तु सकृदेव स्यात् परहंसे न विद्यते ॥ २२ ॥

मौनं योगासनं योगस्तितिक्षैकान्तशीलता ।
निःस्पृहत्वं समत्वं च सप्तैतान्येकदण्डिनाम् ॥ २३ ॥
परहंसाश्रमस्थो हि स्नानादेरविधानतः ।
अशेषचित्तवृत्तीनां त्यागं केवलमाचरेत् ॥ २४ ॥
त्वङ्मांसरुधिरस्नायुमज्जामेदोऽस्थिसंहतौ ।
विण्मूत्रपूये रमतां क्रिमीणां कियदन्तरम् ॥ २५ ॥
क्व शरीरमशेषाणां श्लेष्मादीनां महाचयः ।
क्व चाङ्गशोभासौभाग्यकमनीयादयो गुणाः ॥ २६ ॥
मांसासृक्पूयविण्मूत्रस्नायुमज्जास्थिसंहतौ ।
देहे चेत् प्रीतिमान् मूढो भविता नरकेऽपि सः ॥ २७ ॥
स्त्रीणामवाच्यदेशस्य क्लिन्ननाडीव्रणस्य च ।
अभेदेऽपि मनोभेदाज्जनः प्रायेण वञ्च्यते ॥ २८ ॥
चर्मखण्डं द्विधा भिन्नमपानोद्गारधूपितम् ।
ये रमन्ति नमस्तेभ्यः साहसं किमतः परम् ॥ २९ ॥
न तस्य विद्यते कार्यं न लिङ्गं वा विपश्चितः ।
निर्ममो निर्भयः शान्तो निर्द्वन्द्वोऽवर्णभोजनः ॥ ३० ॥
मुनिः कौपीनवासाः स्यान्नग्नो वा ध्यानतत्परः ।
एवं ज्ञानपरो योगी ब्रह्मभूयाय कल्पते ॥ ३१ ॥
लिङ्गे सत्यपि खल्वस्मिन् ज्ञानमेव हि कारणम् ।
निर्मोक्षायेह भूतानां लिङ्गग्रामो निरर्थकः ॥ ३२ ॥

यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम्।
न सुवृत्तं न दुर्वृत्तं वेद कश्चित् स ब्राह्मणः ॥ ३३ ॥
तस्मादलिङ्गो धर्मज्ञो ब्रह्मव्रतमनुव्रतम्।
गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत् ॥ ३४ ॥
संदिग्धः सर्वभूतानां वर्णाश्रमविवर्जितः।
अन्धवज्जडवच्चापि मूकवच्च महीं चरेत् ॥ ३५ ॥
तं दृष्ट्वा शान्तमनसं स्पृहयन्ति दिवौकसः।
लिङ्गाभावात्तु कैवल्यमिति ब्रह्मानुशासनम् ॥ ३६ ॥
इति।

ब्रह्मातिरिक्तास्तिताहेतुधर्मपूगत्यागपूर्वकं ब्रह्ममात्रसिद्धिताहेतुयतिधर्मान् तत्फलं चोपन्यस्यति—त्यक्त्वा इत्यादिना, इति ब्रह्मानुशासनम् इत्यन्तेन। कदाचित् केनचिदपि स्वस्य नामगोत्रादिवरणम्। स्वपतनहेतुभूतं रागतः स्त्रीसंभाषणस्मरणतत्कथालापचित्रस्थवनितादर्शनादिकं यतिना त्याज्यमित्याह—नेति। किंच 'इदं मे स्यात्, इदं मा भूत्' इति तृष्णा। माया परवञ्चना। अनात्मशास्त्रव्याख्यानयोगश्च। आरामालयादिकर्तव्यधिया याचनवृत्तिः। गरशब्देन विषमुच्यते। यं कंचन स्वनिकटमागतम् आगच्छेति। कदापि प्रतिग्रहं न गृह्णीयात्। यदि कदाचित् जायादीनां शुभाशुभं, श्रुत्वा दृष्ट्वा न कम्पेत। तद्विषयकशोकमोहौ त्यजेद्यतिः। यतेः स्वधर्ममाह—अहिंसेति। क्षान्तिः सहनम्। यदृच्छया लब्धशनम्। एवं धर्मपूगसंस्कृतो योगी नारायणो भवतीत्याह—निर्द्वन्द्व इति। यदि श्रवणध्यानादिव्यापृत्युपरतस्तदा एकरात्रमिति। ग्रामैकरात्रस्थितावपि ग्रामान्त इति। परमहंसोऽवधूतो वा यथेच्छाचरणतः सन्मार्गदूषणं न कुर्यात् इत्याह—एकवासा इति। अलोलुपः सर्वत्र लौल्यवर्जितः। प्राण्यहिंसार्थं वीक्षयन्निति। संचारप्रतिषेधकालदेशावाह—नेति। शून्ये निर्मानुष्ये। ग्रामादौ वासकालमाह—एकरात्रमिति। चातुर्मास्यानन्तरम् आत्मवदिति। यथा अन्धादिः रूपादिभेदं न पश्यति, तथेत्यर्थः। वन्यादीनां

स्नाननियममाह—स्नानमिति । परमहंससेवनीयधर्मः क इत्यत्र—मौनमित्यादि । वागादिकरणव्यापृतिराहित्यमेव मौनम् । योगानुकूलपद्मासनं सिद्धासनं वा योगासनमुच्यते । प्रत्यगभिन्नब्रह्मानुसंधानं योगः । परमहंसस्य मनोमलक्षालनमेव स्नानमित्याह—परहंसेति । "स्नानं मनोमलत्यागः" इति श्रुतेः । देहरतेः कृमिसाम्यमाह—त्वगिति । देहहेयधियं प्रकटयति—केति । ग्राम्यविषयं कुत्सयति—स्त्रीणामिति । लिङ्गाद्यपेक्षया ज्ञानस्य प्राधान्यं विदुषः कृतकृत्यतां चाह—न तस्येति । ब्रह्ममात्रदृष्टेः ब्राह्मणादिवर्णाश्रमभेदानुपलम्भात् अभिशस्तपतितवर्जनपूर्वकं "सर्ववर्णेषु भैक्षाचरणं कुर्यात्" इति च श्रुतेः । अलिङ्गस्य ब्राह्मणत्वमाचष्टे—यमिति । कश्चिल्लोकः यं मुनिं सत्त्वेनासत्त्वेन विद्वत्त्वेनाविद्वत्त्वेन सुवृत्तत्वेन दुर्वृत्तत्वेन वा न वेद । एवं वेदनलिङ्गदर्शनात् स ब्राह्मणः । यद्वा यः कश्चित् योगी यमात्मानं देहत्रयात्मना सन्तं प्रत्यग्रूपेण न चासन्तं स्वाज्ञादिदृष्ट्या कदापि नाश्रुतं न बहु श्रुतं वृत्तप्रकटनहेत्वन्तःकरणाभावान्न सुवृत्तं न दुर्वृत्तं तत्सर्वापह्नवसिद्धनिष्प्रतियोगिकस्वमात्रधिया वेद, स मुनिः वेदनसमकालं ब्राह्मणो ब्रह्मविद्वरिष्ठो ब्रह्मैव भवतीत्यर्थः । तथाच श्रुतिः—"य एवं निर्बीजं वेद निर्बीज एव स भवति ।"

"दर्शनादर्शने हित्वा स्वयं केवलरूपतः ।
य आस्ते कपिशार्दूल ब्रह्म न ब्रह्मवित् स्वयम् ॥"

इति ॥

यस्मात् अलिङ्गस्यावधूतस्वातिरिक्तप्रपञ्चदृष्टेः ब्राह्मणत्वमभिहितं तस्मात् ॥ तं दृष्ट्वा स्वातिरिक्तकलनाशान्तमनसं तथा कदा भविष्याम इति स्पृहयन्ति दिवौकसः । स्वातिरिक्तास्तित्वलिङ्गं यदा न प्रतिभाति, तदैव कैवल्यमिति ब्रह्मा नारदमनुशास्तीत्यर्थः ॥ १–३६ ॥

क्रमसंन्यासविधिनिरूपणम्

अथ नारदः पितामहं संन्यासविधिं नो ब्रूहीति पप्रच्छ ।

पितामहस्तथेत्यङ्गीकृत्यातुरे वा क्रमे वापि तुरीयाश्रमस्वीकारार्थं

कृच्छ्रप्रायश्चित्तपूर्वकमष्टश्राद्धं कुर्यात् देवर्षिदिव्यमनुष्यभूतपितृमात्रात्मेत्यष्ट श्राद्धानि कुर्यात् । प्रथमं सत्यवसुसंज्ञकान् विश्वान् देवान्, देवश्राद्धे ब्रह्मविष्णुमहेश्वरान्, ऋषिश्राद्धे देवर्षिक्षत्रियर्षिमनुष्यर्षीन्, दिव्यश्राद्धे वसुरुद्रादित्यरूपान्, मनुष्यश्राद्धे सनकसनन्दनसनत्कुमारसनत्सुजातान्, भूतश्राद्धे पृथिव्यादिपञ्चमहाभूतानि चक्षुरादिकरणानि चतुर्विधभूतग्रामान्, पितृश्राद्धे पितृपितामहप्रपितामहान्, मातुः श्राद्धे मातृपितामहीप्रपितामहीः, आत्मश्राद्धे आत्मपितृपितामहान्, जीवत्पितृकश्चेत् पितरं त्यक्त्वा आत्मपितामहप्रपितामहानिति । सर्वत्र युग्मक्लृप्त्या ब्राह्मणानर्चयेत् । एकाध्वरपक्षेऽष्टाध्वरपक्षे वा स्वशाखानुगतमन्त्रैरष्ट श्राद्धान्यष्टदिनेषु वा एकदिने वा पितृयागोक्तविधानेन ब्राह्मणानभ्यर्च्य भुक्त्यन्तं यथाविधि निर्वर्त्य, पिण्डप्रदानानि निर्वर्त्य, दक्षिणाताम्बूलैस्तोषयित्वा, ब्राह्मणान् प्रेषयित्वा, शेषकर्मसिद्ध्यर्थं सप्त केशान् विसृज्य शेषकर्मसिद्ध्यर्थं केशान् सप्ताष्ट वा द्विजः संक्षिप्य वापयेत् केशश्मश्रुनखानि चेति सप्त केशान् संरक्ष्य कक्षोपस्थवर्जं क्षौरपूर्वकं स्नात्वा, सायं संध्यावन्दनं निर्वर्त्य, सहस्रगायत्रीं जप्त्वा, ब्रह्मयज्ञं निर्वर्त्य, स्वाधीनाग्निमुपस्थाप्य, स्वशाखोपसंहरणं कृत्वा, तदुक्तप्रकारेणाज्याहुतिमाज्यभागान्तं हुत्वा, आहुतिविधिं समाप्य, आत्मादिभिस्त्रिवारं सक्तुप्राशनं कृत्वा, आचमनपूर्वकमग्निं संरक्ष्य, स्वयमग्नेरुत्तरतः कृष्णाजिनोपरि स्थित्वा, पुराणश्रवणपूर्वकं जागरणं कृत्वा, चतुर्थयामान्ते स्नात्वा, तदग्नौ चरुं श्रपयित्वा, पुरुषसूक्तेनान्नं षोडशाहुतीर्हुत्वा, विरजाहोमं

कृत्वा, अथाचम्य, सदक्षिणं वस्त्रं सुवर्णं पात्रं धेनुं दत्त्वा, समाप्य, ब्रह्मोद्वासनं कृत्वा,

"सं मा सिञ्चन्तु मरुतः समिन्द्रः सं बृहस्पतिः ।
सं मायमग्निः सिञ्चत्वायुषा च धनेन च बलेन चायुष्मन्तं करोतु मा ॥"

इति,

"या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मात्मानम् ।
अच्छा वसूनि कृण्वन्नस्मे नर्या पुरूणि ॥
यज्ञो भूत्वा यज्ञमासीद स्वां योनिम् ।
जातवेदो भुव आजायमानः सक्षय एहि ॥"

इत्यनेनाग्निमात्मन्यारोप्य, ध्यात्वाग्निं, प्रदक्षिणनमस्कारपूर्वकमुद्वास्य, प्रातः संध्यामुपास्य, सहस्रगायत्रीपूर्वकं सूर्योपस्थानं कृत्वा, नाभिदघ्नोदकमुपविश्य, अष्टदिक्पालकार्घ्यपूर्वकं गायत्र्युद्वासनं कृत्वा, सावित्रीं व्याहृतिषु प्रवेशयित्वा "अहं वृक्षस्य रेरिवा । कीर्तिः पृष्ठं गिरेरिव । ऊर्ध्वपवित्रो वाजिनीव स्वमृतमस्मि । द्रविणँ सवर्चसम् । सुमेधा अमृतोऽक्षितः । इति त्रिशङ्कोर्वेदानुवचनम्," "यश्छन्दसामृषभो विश्वरूपः । छन्दोभ्योऽध्यमृतात् संबभूव । स मेन्द्रो मेधया स्पृणोतु । अमृतस्य देव धारणो भूयासम् । शरीरं मे विचर्षणम् । जिह्वा मे मधुमत्तमा । कर्णाभ्यां भूरि विश्रुवम् । ब्रह्मणः कोशोऽसि मेधयापिहितः । श्रुतं मे गोपाय ॥"

"दारेषणायाश्च धनेषणायाश्च लोकेषणायाश्च व्युत्थितोऽहम्" "ओं भूः; संन्यस्तं मया" "ओं भुवः; संन्यस्तं मया" "ओं सुवः; संन्यस्तं मया" "ओं भूर्भुवःसुवः; संन्यस्तं मया" इति मन्द्रमध्यतारध्वनिभिर्मनसा वाचोच्चार्य, "अभयं सर्वभूतेभ्यो मत्तः सर्वं प्रवर्तते स्वाहा" इत्यनेन जलं प्राश्य, प्राच्यां दिशि पूर्णाञ्जलिं प्रक्षिप्य "ओं स्वाहा" इति शिखामुत्पाट्य,

"यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात्।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः॥"
"यज्ञोपवीतं बहिर्न निवसेत् त्वमन्तः प्रविश्य मध्ये ह्यजस्रम्।
परमं पवित्रं यशो बलं ज्ञानवैराग्यं मेधां प्रयच्छ॥"

इति यज्ञोपवीतं छित्वा, उदकाञ्जलिना सह "ओं भूः; समुद्रं गच्छ स्वाहा" इत्यप्सु जुहुयात्। "ओं भूः; संन्यस्तं मया" "ओं भुवः; संन्यस्तं मया" "ओं सुवः; संन्यस्तं मया" इति त्रिरुक्त्वा, त्रिवारमभिमन्त्र्य तज्जलं प्राश्याचम्य "ओं भूः स्वाहा" इत्यप्सु वस्त्रं कटिसूत्रमपि विसृज्य, सर्वकर्मनिवर्तकोऽहमिति स्मृत्वा, जातरूपधरो भूत्वा, स्वरूपानुसंधानपूर्वकमूर्ध्वबाहुरुदीचीं गच्छेत्॥ ३७॥

पूर्ववद्विद्वत्संन्यासी चेत् गुरोः प्रणवमहावाक्योपदेशं प्राप्य, यथासुखं विहरन् मत्तः कश्चिन्नान्यो व्यतिरिक्त इति फलपत्रोदकाहारः, पर्वतवनदेवतालयेषु संचरेत्। संन्यस्याथ दिगम्बरः सकलसंचारकं

सर्वदानन्दस्वानुभवैकपूर्णहृदयः कर्मातिदूरलाभः प्राणधारणपरायणः फलरसत्वक्पत्रमूलोदकैर्मोक्षार्थी गिरिकन्दरेषु विसृजेद् देहं स्मरंस्तारकम्॥ ॥ ३८ ॥

विविदिषासंन्यासी चेच्छतपथं गत्वाचार्यादिभिर्विप्रैः 'तिष्ठ तिष्ठ महाभाग, दण्डं वस्त्रं कमण्डलुं गृहाण, प्रणवमहावाक्यग्रहणार्थं गुरुनिकटमागच्छेत्' इत्याचार्यैर्दण्डकटिसूत्रकौपीनं शाटीमेकां कमण्डलुं, पादादिमस्तकप्रमाणमव्रणं समं सौम्यमकाकपृष्ठं सलक्षणं वैणवदण्डमेकमाचमनपूर्वकम् "सखा मा गोपायौजः सखा योऽसीन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म मे भव यत् पापं तन्निवारय" इति दण्डं परिग्रहेत्। 'जगज्जीवनं जीवनाधारभूतं माते मा मन्त्रयस्व सर्वदा सर्वसौम्य' इति प्रणवपूर्वकं कमण्डलुं परिगृह्य, 'कौपीनाधारं कटिसूत्रमोम्' इति 'गुह्याच्छादकं कौपीनमोम्' इति 'शीतवातोष्णत्राणकरं देहैकरक्षणं वस्त्रमोम्, इति कटिसूत्रकौपीनवस्त्रम्, आचमनपूर्वकं योगपट्टाभिषिक्तो भूत्वा, कृतार्थोऽहमिति मत्वा स्वाश्रमाचारपरो भवेत्। इत्युपनिषत् ॥ ३९ ॥

ब्रह्मणैवमनुशासितो नारदः क्रमसंन्यासविधिबुभुत्सया पितामहं पृच्छतीत्याह—अथेति। पितामहस्तु नारदप्रश्नमङ्गीकृत्य प्रतिवचनमाह—तथेति। प्राजापत्यादिकृच्छ्रप्रायश्चित्तपूर्वकमष्टश्राद्धं कुर्यात्॥ अष्ट श्राद्धानि कानि? इत्यत्र—देवर्षीति। देवादिश्राद्धे विश्वेदेवादिवरणक्रममाह—प्रथममिति। सायंसन्ध्यादिशेषकर्मसिद्धयर्थम्। वक्ष्यमाणमन्त्रद्वयेन प्रकृताग्न्यात्मसमारोपणं कुर्यादित्याह—सं मा सिञ्चन्त्वित्यादिना। अहं वृक्षस्येत्यादिमन्त्रद्वयं

पठित्वा प्रेषोच्चारणं कुर्यादित्याह—अहमिति। अहं वृक्षस्येति मन्त्रद्वयं पठित्वा अथ दारेषणायाश्चेति। यदि पूर्ववत् विद्वत्संन्यासी चेत्, तदा गुरोरिति। अहमेव परमात्मा। मत्तः कश्चिन्नान्यो व्यतिरिक्तः। ततः किम् —इत्यत्र यद्येवं विद्वत्संन्यासी स्वातिरिक्तप्रपञ्चवासनां संन्यस्याथ दिगम्बरः सकललोकसंचारकं तद्भ्रममुत्सृज्य सर्वदानन्दस्वानुभवैकपूर्णहृदयः विश्रान्तपूर्णानन्दात्मस्वान्तः कर्मातिदूरलाभः सर्वकर्मत्यागलब्धहर्षः केवलप्राणधारणपरायणः। ततो विमुक्तो भवतीत्यत्र—

"ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥"

इति स्मृतेः। यद्ययं विविदिषासंन्यासीति। सखा मा गोपाय—इति मन्त्रेण दण्डं परिग्रहेत्। कटिसूत्रकौपीनवस्त्रमाचमनपूर्वकं स्वीकृत्य गुरुनिकटं गत्वा तन्मुखात् प्रणवमहावाक्योपदेशं प्राप्य स्वाश्रमोचिताचारं कुर्वन् संशयादिपञ्चदोषनिवृत्त्यन्तं सर्ववेदान्तश्रवणादि कृत्वा यदि कृतार्थस्तदा योगपट्टाभिषिक्तो भूत्वा। चतुर्थोपदेशसमाप्त्यर्थोऽयमित्युपनिषच्छब्दः॥ ३७–३९॥

इति चतुर्थोपदेशः

---

## पञ्चमोपदेशः

### कर्मसंन्यासस्वाश्रमाचरणयोरविरोधः

अथ हैनं पितामहं नारदः पप्रच्छ। भगवन् सर्वकर्मनिवर्तकः संन्यास इति त्वयैवोक्तः। पुनः स्वाश्रमाचारपरो भवेदित्युच्यते। ततः पितामह उवाच। सशरीरस्य देहिनो जाग्रत्स्वप्नसुषुप्तितुर्यावस्थाः सन्ति। तदधीनाः कर्मज्ञानवैराग्यप्रवर्तकाः पुरुषा जन्तवस्तदनुकूलाचाराः सन्ति। तथैव चेद्भगवन् संन्यासाः कतिभेदाः,

तदनुष्ठानभेदाः कीदृशास्तत्त्वतोऽस्माकं वक्तुमर्हसीति । तथेत्यङ्गीकृत्य तं पितामहेन ॥ १ ॥

कर्मत्यागकर्माचरणयोः विरोधं मन्यमानो नारदः पृच्छतीत्याह—अथेति । पितामहं नारदः पप्रच्छ । किमिति—भगवन्निति । नारदेनैवं पृष्टः सन् प्रश्नोत्तरं भगवानाह—तत इति । ततः पितामह उवाच । किमित्यत्र—सशरीरस्येति । देहत्रयावच्छिन्नजीवस्य जाग्रदाद्यवस्थाचतुष्टयवत्त्वेन कर्मभक्तिवैराग्यज्ञानसंभवात् । एवमवस्थाचतुष्टयावच्छिन्नप्राणिनः तदनुकूलाचारा भवन्तीति स्वाश्रमाचारपरो भवेदित्युक्तम् । स्वाश्रमाचारसंपत्तिस्तु व्रतिगृहिवनिसेव्यश्रौतस्मार्तकर्मसामान्यसंन्यासपूर्वकं प्राणधारणोपयोगिपरिग्रहश्रवणादिसाधनसंपत्तिरित्यर्थः । एकस्यैव सर्वकर्मसंन्यासपूर्वकं स्वाश्रमाचारपरत्वमुपपद्यते । नारदेन यत् पृष्टं तत् तथेत्यङ्गीकृत्य तं प्रति पितामहेनैवमुक्तम् ॥ १ ॥

संन्यासचातुर्विध्यम्

संन्यासभेदैराचारभेदः कथमिति चेत्, तत्त्वतस्त्वेक एव संन्यासः, अज्ञानेनाशक्तिवशात् कर्मलोपतश्च त्रैविध्यमेत्य, वैराग्यसंन्यासो ज्ञानसंन्यासो ज्ञानवैराग्यसंन्यासः कर्मसंन्यासश्चेति चातुर्विध्यमुपागतः ॥ २ ॥

किमिति--संन्यासभेदैः आचारभेदः कथमिति चेत् इत्येवं मन्यसे यदि, तदा शृण्वेतत् । स केन भिद्यत इत्यत्र—अज्ञानेनेति । त्रैविध्यमेत्य वर्तते विद्वद्विविदिषातुरभेदात् । स पुनश्चातुर्विध्यमुपगत इत्याह—वैराग्येति ॥२॥

वैराग्यसंन्यासः

तद्यथेति । दुष्टमदनाभावाच्चेति विषयवैतृष्ण्यमेत्य प्राक्पुण्यकर्मवशात् संन्यस्तः स वैराग्यसंन्यासी ॥ ३ ॥

तथैव प्रतिपाद्यते सर्वानर्थहेतुदुष्टमदनाभावाश्चेति। चशब्दतस्तत्प्रतीत्यभावो द्योत्यते। विषयसामान्यवैतृष्ण्यमेत्य प्राक्पुण्यकर्मवशात् संन्यस्तः, स वैराग्यसंन्यासी। स्वातिरिक्तनश्वरहेयबुद्ध्या यः सर्वत्यागः, स वैराग्यसंन्यास इत्यर्थः ॥ ३ ॥

ज्ञानसंन्यासः

शास्त्रज्ञानात् पापपुण्यलोकानुभवश्रवणात् प्रपञ्चोपरतः क्रोधेर्ष्यासूयाहंकाराभिमानात्मकसर्वसंसारं निर्वर्त्य दारेषणाधनैषणालोकैषणात्मकदेहवासनां शास्त्रवासनां लोकवासनां च त्यक्त्वा वमनान्नमिव प्राकृतिकं सर्वमिदं हेयं मत्वा साधनचतुष्टयसंपन्नो यः संन्यस्यति स एव ज्ञानसंन्यासी ॥ ४ ॥

ज्ञानसंन्यासस्वरूपमाह—शास्त्रेति ॥ ४ ॥

ज्ञानवैराग्यसंन्यासः

क्रमेण सर्वमभ्यस्य सर्वमनुभूय ज्ञानवैराग्याभ्यां स्वरूपानुसंधानेन जातरूपधरो भवति सोऽयं ज्ञानवैराग्यसंन्यासी ॥ ५ ॥

विशिष्टज्ञानवैराग्यसंन्यासमाह—क्रमेणेति। क्रमेण वेदान्तजातं सर्वमभ्यस्य सर्वमनुभूय सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति ज्ञानं ब्रह्मातिरिक्तसर्वस्यासंभवालोचनं वैराग्यं ताभ्यां ज्ञानवैराग्याभ्यां स्वरूपानुसंधानेन सर्वं विस्मृत्य यो जातरूपधरो भवति सोऽयं ज्ञानवैराग्यसंन्यासी इत्यर्थः ॥ ५ ॥

कर्मसंन्यासः

ब्रह्मचर्यं समाप्य गृही भूत्वा वानप्रस्थाश्रममेत्य वैराग्याभावेऽप्याश्रमक्रमानुसारेण यः संन्यस्यति, स कर्मसंन्यासी ॥ ६ ॥

ब्रह्मचर्येण संन्यस्य संन्यासाज्जातरूपधरो वैराग्यसंन्यासी ।
विद्वत्संन्यासी ज्ञानसंन्यासी । विविदिषासंन्यासी कर्मसंन्यासी ॥ ७ ॥

कर्मसंन्यासस्वरूपं विशदयति—ब्रह्मचर्यमिति । विधिवत् ब्रह्मचर्यं समाप्येति । विषयानभिज्ञतया ब्रह्मचर्यसंन्यस्तं स्तौति—ब्रह्मचर्येणेति । तस्य सर्वात्मभावारूढतया पश्यद्दृष्टिवैचित्र्यात् सर्वरूपत्वमुपपद्यत इत्यर्थः ॥ ६,७ ॥

निमित्तानिमित्तभेदेन कर्मसंन्यासस्य द्वैविध्यम्

कर्मसंन्यासोऽपि द्विविधः—निमित्तसंन्यासोऽनिमित्तसंन्यासश्चेति । निमित्तस्त्वातुरः ; अनिमित्तः क्रमसंन्यासः । आतुरः सर्वकर्मलोपः प्राणस्योत्क्रमणकालसंन्यासः स निमित्तसंन्यासः । दृढाङ्गो भूत्वा सर्वं कृतकं नश्वरमिति देहादिकं सर्वं हेयं प्राप्य ॥ ८ ॥

हँसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् ।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ॥ ९ ॥

ब्रह्मव्यतिरिक्तं सर्वं नश्वरमिति निश्चित्य क्रमेण यः संन्यस्यति, स संन्यासोऽनिमित्तसंन्यासः ॥ १० ॥

निमित्तानिमित्तभेदेन कर्मसंन्यासस्य द्वैविध्यमाह—कर्मेति । निमित्तानिमित्तशब्दार्थमाह—निमित्तस्त्वातुरः, अनिमित्तः क्रमसंन्यास इति । निमित्तसंन्यासार्थं विशदयति—आतुर इति । अनिमित्तस्वरूपमाह—दृढाङ्ग इति । ऋतं बृहत् इति मन्त्रानुरोधेन ब्रह्मैवर्तं ब्रह्मव्यतिरिक्तं सर्वं नश्वरम् ॥ ८–१० ॥

कुटीचकादिभेदेन संन्यासः षड्विधः

संन्यासः षड्विधो भवति—कुटीचको बहूदको हंसः परमहंसस्तुरीयातीतोऽवधूतश्चेति ॥ ११ ॥

कतिविधः संन्यास इत्यत्र कुटीचकादिभेदेन षड्विध इत्याह— **संन्यास** इति । तत् कथमित्यत्राह—**कुटीचक** इति ॥ ११ ॥

कुटीचकलक्षणम्

कुटीचकः शिखायज्ञोपवीती दण्डकमण्डलुधरः कौपीनकन्थाधरः पितृमातृगुर्वाराधनपरः पिठरखनित्रशिक्यादिमन्त्रसाधनपर एकत्रान्नादनपरः श्वेतोर्ध्वपुण्ड्रधारी त्रिदण्डः ॥ १२ ॥

बहूदकलक्षणम्

बहूदकः शिखादिकन्थाधरस्त्रिपुण्ड्रधारी कुटीचकवत् सर्वसमो मधुकरवृत्त्यष्टाकबलाशी ॥ १३ ॥

हंसलक्षणम्

हंसो जटाधारी त्रिपुण्ड्रोर्ध्वपुण्ड्रधारी असंकॢप्तमाधूकरान्नाशी कौपीनखण्डतुण्डधारी ॥ १४ ॥

परमहंसलक्षणम्

परमहंसः शिखायज्ञोपवीतरहितः पञ्चगृहेष्वेकरात्रान्नादनपरः करपात्री एककौपीनधारी शाटीमेकामेकं वैणवं दण्डमेकशाटीधरो वा भस्मोद्धूलनपरः सर्वत्यागी ॥ १५ ॥

तेषां लक्षणं क्रमेण स्पष्टयति—**कुटीचक** इति । **त्रिपुण्ड्रोर्ध्वपुण्ड्रधारी** त्रिपुण्ड्रं ऊर्ध्वपुण्ड्रं वा यथासंभवं धरति ; नोभयमित्यर्थः । **असंकॢप्तमाधूकरान्नाशी** अस्य गृहेऽद्य माधूकरं मे स्यादिति संकल्परहितः ॥ १२–१५ ॥

तुरीयातीतलक्षणम्

तुरीयातीतो गोमुखः फलाहारी अन्नाहारी चेद् गृहत्रये देहमात्रावशिष्टः दिगम्बरः कुणपवच्छरीरवृत्तिकः ॥ १६ ॥

अवधूतलक्षणम्

अवधूतस्त्वनियमोऽभिशस्तपतितवर्जनपूर्वकं सर्ववर्णेष्वजगरवृत्त्याहारपरः स्वरूपानुसंधानपरः ॥ १७ ॥

**गोमुखः** गोवत् यदृच्छालब्धान्नमुखप्रसनात्। तथाच वक्ष्यति— "आस्येन तु यदाहारं गोवन्मृगयते मुनिः" इति। **कुणपवच्छरीरवृत्तिकः** यथा कुणपो निश्चेष्टः, तथा निर्विकल्पकसमाधिकवलितव्यापृतित्वात् ॥ १६, १७ ॥

जीवतः आतुरस्य क्रमसंन्यासः

आतुरो जीवति चेत्, क्रमसंन्यासः कर्तव्यः ॥ १८ ॥

यद्यातुरो जीवति, तेन किं कर्तव्यमित्यत आह—**आतुर** इति। गुरुमुखतः प्रणवमहावाक्यादिस्वीकार एव क्रमसंन्यासः। न त्वष्टश्राद्धादिः; तस्य प्रैषोच्चारणसमकालक्रियत्वात् ॥ १८ ॥

कुटीचकादीनां संन्यासविधिः

कुटीचकबहूदकहंसानां ब्रह्मचर्याश्रमादितुरीयाश्रमवत् कुटीचकानां संन्यासविधिः ॥ १९ ॥

कुटीचकादीनां संन्यासविधिः कथमित्यत आह—**कुटीचकेति**। **कुटीचकानां संन्यासविधिः** समानः ॥ १९ ॥

परमहंसादित्रयाणां संन्यासविधिः

परमहंसादित्रयाणां न कटिसूत्रं न कौपीनं न वस्त्रं न कमण्डलुर्न दण्डः सर्ववर्णैकभैक्षाटनपरत्वं जातरूपधरत्वं विधिः । संन्यासकालेऽप्यलंबुद्धिपर्यन्तमधीत्य तदनन्तरं कटिसूत्रं कौपीनं दण्डं वस्त्रं कमण्डलुं सर्वमप्सु विसृज्याथ जातरूपधरश्चेन्न कन्थालेशः नाध्येतव्यो न वक्तव्यो न श्रोतव्यमन्यत् किंचित् । प्रणवादन्यं न तर्कं पठेन्न शब्दमपि । बहूञ्छब्दान्नाध्यापयेन्न महद्वाचो विग्लापनं गिरा, पाण्यादिना संभाषणं, नान्यभाषाविशेषेण, न शूद्रस्त्रीपतितोदक्यासंभाषणम्, न यतेर्देवपूजानुत्सवदर्शनं तीर्थयात्रावृत्तिः ॥ २० ॥

**परमहंसादित्रयाणां** परमहंसतुर्यातीतावधूतानाम् । यदि परमहंसः श्रवणार्थी, तदा दण्डादिकं स्वीकृत्य संशयादिपञ्चदोषशान्तिपूर्वकं यावद्ब्रह्मापरोक्षो जायते तावत् सर्वकर्मसंन्यासकालेऽपि संन्यासदशायामपि । "श्रृण्वन्त्वज्ञाततत्त्वास्ते जानन् कस्माच्छृणोम्यहम्" इति श्रुत्यनुरोधेन अलंबुद्धिपर्यन्तमधीत्य श्रवणादिजन्यज्ञाने सिद्धे । **तदनन्तरमिति** । अवधूताश्रमेऽपि कन्थादिकं ग्राह्यमेवेत्यत आह—नेति । यत्किंचिदपि नाध्येतव्यः । गिरा वृथा कत्थनम् । **पाण्यादिना संभाषणं** हस्तादिसंज्ञया ; व्यापृतिपरो न भवेदित्यर्थः । स्वभिन्नधिया न **यतेर्देवपूजानुत्सवदर्शनम्** । यतिना तत्रापि स्वात्मदर्शनमेव कार्यमित्यर्थः । तथा तीर्थयात्रावृत्तिः ॥ २० ॥

कुटीचकादीनां भिक्षाविशेषः

पुनर्यतिविशेषः । कुटीचकस्यैकत्र भिक्षा, बहूदकस्यासंक्लृप्तमाधूकरम्, हंसस्याष्टगृहेष्वष्टकबलम्, परमहंसस्य पञ्चगृहेषु

करपात्रम्, फलाहारो गोमुखं तुरीयातीतस्य, अवधूतस्याजगरवृत्तिः सार्ववर्णिकेषु। यतिर्नैकरात्रं वसेत्। नैकस्यापि नमेत। तुरीयातीतावधूतयोर्न ज्येष्ठः। यो न स्वरूपज्ञः स ज्येष्ठोऽपि कनिष्ठः। हस्ताभ्यां नद्युत्तरणं न कुर्यान्न वृक्षमारोहेन्न यानाधिरूढो न क्रयविक्रयपरो न किंचिद्विनिमयपरो न दाम्भिको नानृतवादी। न यतेः किंचित् कर्तव्यमस्ति। अस्ति चेत् सांकर्यम्। तस्मान्मननादौ संन्यासिनामधिकारः ॥ २१ ॥

पुनर्यतिविशेषः। कुटीचकादीनां भिक्षाविशेष उच्यते—**कुटीचकस्येति**। यत्र कुत्रापि यतिः **नैकरात्रं वसेन्न कस्यापि नमेत्**। गुरुज्येष्ठादिवन्दनं कार्यमिति चेत् तत्र—**तुरीयातीतेति**। तुरीयातीतादेः ज्ञानज्येष्ठत्वात्। तस्य प्रवृत्तिनिवृत्तपराङ्मुखत्वेन किंचिदपि कर्तव्याभावमाह—**हस्ताभ्यामिति**। कदापि न **यतेः किंचित् कर्तव्यमस्ति। अस्ति चेत्** तदा भवति **सांकर्यम्**। यस्मात् एवमुक्ताचरणतो व्रत्यादिसांकर्यं भवति तस्मात्। आदिशब्देन ब्रह्मभावापत्त्या प्रवृत्तिनिवृत्तिग्रासतूष्णीमवस्थानं द्योत्यते ॥ २१ ॥

तेषां प्राप्यस्थानानि

आतुरकुटीचकयोर्भूर्लोकभुवर्लोकौ, बहूदकस्य स्वर्गलोकः, हंसस्य तपोलोकः, परमहंसस्य सत्यलोकः, तुरीयातीतावधूतयोः स्वात्मन्येव कैवल्यं स्वरूपानुसन्धानेन भ्रमरकीटन्यायवत् ॥ २२ ॥

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेबरम्।
तं तमेव समाप्नोति नान्यथा श्रुतिशासनम् ॥ २३ ॥

ज्ञानाविकलकुटीचकादीनां प्राप्यमुच्यते—**आतुरेति**। यदि सविशेषज्ञानी तदा तस्य **परमहंसस्य सत्यलोकः**। यदि निर्विशेषब्रह्मज्ञानिनौ तुर्यातीतावधूतौ

भवतः, तदा तयोः तुर्यातीतावधूतयोः स्वात्मन्येव कैवल्यम्। यत एवं स्वरूपानुसंधानेन भ्रमरकीटन्यायात् ब्रह्मभावापत्तिर्भवति, अत एव स्वस्वरूपानुसंधानं सदा कार्यमित्यर्थः। किमर्थं सदा स्वरूपानुसंधानं कर्तव्यमित्याकाङ्क्षायां निर्विशेषज्ञानिनो ज्ञानसमकालमेव मुक्तत्वेऽपि सविशेषज्ञानिनस्तदभावात् सदा स्वरूपानुसंधानं कर्तव्यमित्याह—यमिति। चरमदशायां यं यं वापीति। तथाच स्मृतिरपि—

"अन्तकाले च मामेव स्मरन् मुक्त्वा कलेबरम्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥"

इति॥ २२, २३॥

ब्रह्मानुसंधानमेव कर्तव्यम्; नान्यत्

तदेवं ज्ञात्वा स्वरूपानुसंधानं विनान्यथाचारपरो न भवेत्। तदाचारवशात् तत्तल्लोकप्राप्तिः। ज्ञानवैराग्यसंपन्नस्य स्वस्मिन्नेव मुक्तिरिति न सर्वत्राचारप्रसक्तिस्तदाचारः। जाग्रत्स्वप्नसुषुप्तिष्वेकशरीरस्य जाग्रत्काले विश्वः स्वप्नकाले तैजसः सुषुप्तिकाले प्राज्ञः। अवस्थाभेदादवस्थेश्वरभेदः। कार्यभेदात् कारणभेदः। तासु चतुर्दशकरणानां बाह्यवृत्तयोऽन्तर्वृत्तयस्तेषामुपादानकारणम्। वृत्तयश्चत्वारः मनो बुद्धिरहंकारश्चित्तं चेति। तत्तद्वृत्तिव्यापारभेदेन पृथगाचारभेदः॥ २४॥

नेत्रस्थं जागरितं विद्यात् कण्ठे स्वप्नं समाविशेत्।
सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितम्॥ २५॥

तुरीयमक्षरमिति ज्ञात्वा जागरिते सुषुप्त्यवस्थापन्न इव यद्यच्छ्रुतं यद्यद् दृष्टं तत्तत् सर्वमविज्ञातमिव यो वसेत्, तस्य स्वप्नावस्थायामपि

तादृगवस्था भवति। स जीवन्मुक्त इति वदन्ति। सर्वश्रुत्यर्थप्रतिपादनमपि तस्यैव मुक्तिरिति। भिक्षुर्नैहिकामुष्मिकापेक्षः। यद्यपेक्षास्ति चेत् तदनुरूपो भवति। स्वरूपानुसंधानव्यतिरिक्तान्यशास्त्राभ्यासैः उष्ट्रकुङ्कुमभारवद्व्यर्थः। न योगशास्त्रप्रवृत्तिर्न सांख्यशास्त्राभ्यासो न मन्त्रतन्त्रव्यापारः। इतरशास्त्रप्रवृत्तिर्यतेरस्ति चेच्छवालंकारवत्। चर्मकारवदतिविदूरकर्माचारविद्यादूरः। न प्रणवकीर्तनपरः। यद्यत् कर्म करोति तत्तत्फलमनुभवति। एरण्डतैलफेनवदतः सर्वं परित्यज्य तत्प्रसक्तं मनोदण्डं करपात्रं दिगम्बरं दृष्ट्वा परिव्रजेद् भिक्षुः। बालोन्मत्तपिशाचवन्मरणं जीवितं वा न काङ्क्षेत, कालमेव प्रतीक्षेत निर्देशभृतकन्यायेन परिव्राडिति॥ २६॥

यदेवं श्रुतिस्मृतिष्वाम्नातं तदेवं ज्ञात्वा सविशेषज्ञानी स्वरूपानुसंधानं विनान्यथाचारपरो न भवेत्; ब्रह्माहमस्मीति सदानुसंधानं कुर्यादित्यर्थः। अन्यथाचारपरत्वे बाधकमाह—तदाचारवशात् तत्तल्लोकप्राप्तिरिति। निर्विशेषज्ञानिनोऽपि तथा स्यादिति चेन्न; तस्य निष्प्रतियोगिकब्रह्ममात्रभावापन्नत्वेन स्वातिरिक्तप्रवृत्तिनिवृत्तिकल्पनासंभवात्। सविशेषज्ञानिनोऽपि तथा स्यादिति चेन्न; सविशेषज्ञानिनः स्वातिरिक्तजाग्रदादिप्रपञ्चप्रतीतिसंभवात्। ब्रह्मानुसंधानं विनान्यथाचारपरो न भवेदित्याह—ज्ञानेति। अपरब्रह्मगोचरज्ञानवैराग्यसंपन्नस्य स्वस्मिन्नेव मुक्तिरिति न सर्वत्राचारप्रसक्तिः। यदि सर्वत्राचारप्रसक्तिः, तदाचारोऽनर्थाय भवेदित्यर्थः। तत् कथमित्यत्र स्वातिरिक्तजाग्रदादिविभ्रमावृतदृष्ट्या जाग्रत्स्वप्नसुषुप्तिष्वेकशरीरस्य तदवच्छिन्नजीवस्यावस्थाभेदेन नामव्यापारादिकं भिद्यते; तद्यथा जाग्रत्काल इति। तासु जाग्रदाद्यवस्थासु वागादिचतुर्दशकरणानां बाह्यवृत्तयोऽन्तर्वृत्तयः सन्ति। चत्वारः चतस्रः। कास्ता इत्यत्र मन इति। तासां पृथगाचारभेदः। तत् कथं नेत्रस्थमिति।

विश्वादिरूपेण नेत्रादिप्रविभक्तजाग्रदाद्यवस्थात्रयं भासयन् योऽहं मूर्ध्नि तुर्यरूपेणावस्थितोऽस्मि सोऽहमात्मानं तुरीयमक्षरमिति ज्ञात्वा तज्ज्ञानमहिम्ना कृतकृत्यो भवामि। किंच जागरित इति। यथा सुषुप्त्यवस्थापन्नो विषयजातं न विजानाति, तथा जागरितेऽपि श्रोत्रादिकरणेन यद्यत् श्रुतं, यद्यत् दृष्टं, तत् सर्वमविज्ञातमिव यो वर्तते तस्य स्वप्नावस्थायामपि सुषुप्तवद्विषयभेदं न गृह्णाति, स जीवन्मुक्त इति वदन्ति। तथाच वक्ष्यति—

"स्वप्नेऽपि यो हि युक्तस्य जाग्रतीव विशेषतः।
ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम्॥"

इति। तथाविधस्यापि यदि स्वातिरिक्तविषयाकाङ्क्षा स्यात्, तदा तस्मिन् काले विदेहो देहस्मरणवर्जितः "ईषन्मात्रं स्मृतं चेद्यस्तदा सर्वसमन्वितः" इति श्रुत्यनुरोधेन स्वरूपतः च्युतिः स्यादित्याह—भिक्षुरिति। यद्यपेक्षास्ति चेत् तदनुरूपो भवति। अन्यशास्त्राभ्यासैः अन्यशास्त्राभ्यासः। यत एवं स्वातिरिक्तास्तित्वप्रवृत्तितो महाननर्थो जायते। निर्विकल्पकब्रह्मानुसंधानं स्वात्मानं करपात्रं दिगम्बरम् अवधूतप्रवृत्तिनिवृत्तिं दृष्ट्वा परिव्रजेत् भिक्षुः कदापि। बालोन्मत्तेति निर्देशभूतकन्यायेन परिव्राडिति॥ २४–२६॥

अननुसंधाने पातित्यम्

तितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः।
भिक्षामात्रेण जीवी स्यात् स यतिर्यतिवृत्तिहा॥ २७॥
न दण्डधारणेन न मुण्डनेन
न वेषेण न दम्भाचारेण मुक्तिः॥ २८॥
ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते।
काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः।
स याति नरकान् घोरान् महारौरवसंज्ञकान्॥ २९॥

प्रतिष्ठा सूकरीविष्ठासमा गीता महर्षिभिः ।
तस्मादेनां परित्यज्य कीटवत् पर्यटेद्यतिः ॥ ३० ॥

सविशेषज्ञानी निर्विशेषज्ञानसाधनमननुष्ठाय केवलवेषमात्रतः साधुवृत्तिकर्शको भूत्वा स्वयमपि नश्यतीत्याह—तितिक्षेति; निर्विशेषज्ञानमुख्यसाधनतितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः; "न च संन्यसनादेव सिद्धिं समधिगच्छति" इति स्मृतेः ॥ परमदयावती श्रुतिरियं परिव्राजकधर्मपूगं बहुप्रकारेण प्रतिपाद्यापि पुनः पुनः जामितां त्यक्त्वा प्रकटयतीत्याह—ज्ञानेत्यादिना । तद्विपर्यये काष्ठदण्ड इति । अयं सर्वोत्तम इति ॥ २७–३० ॥

तुर्यातीतानां भोजनादिकमन्यदीयेच्छयैव

अयाचितं यथालाभं भोजनाच्छादनं भवेत् ।
परेच्छया च दिग्वासाः स्नानं कुर्यात् परेच्छया ॥ ३१ ॥

तुर्यातीतादेः स्नानादिकं परेच्छया स्यादित्याह—अयाचितमिति ॥ ३१ ॥

ब्रह्मविद्वरिष्ठः

स्वप्नेऽपि यो हि युक्तः स्याज्जाग्रतीव विशेषतः ।
ईदृक्चेष्टः स्मृतः श्रेष्ठो वरिष्ठो ब्रह्मवादिनाम् ॥ ३२ ॥
अलाभे न विषादी स्याल्लाभे चैव न हर्षयेत् ।
प्राणयात्रिकमात्रः स्यान्मात्रासङ्गविवर्जितः ॥ ३३ ॥
अभिपूजितलाभांश्च जुगुप्सेतैव सर्वशः ।
अभिपूजितलाभैस्तु यतिर्मुक्तोऽपि बध्यते ॥ ३४ ॥

कोऽयं ब्रह्मनिष्ठ इत्यत्र—स्वप्नेऽपीति ॥ लाभादौ हर्षादिदृष्टेः ब्रह्मनिष्ठता कुत इत्यत्र अलाभे इति। मात्रासङ्गविवर्जितः शब्दादितन्मात्रासङ्गो भूत्वा प्राणधारणातिरिक्तव्यापृतिर्न भवेदित्यर्थः। भक्तजनप्रेमविषयाणामसङ्गता कुत इत्यत्र—अभिपूजितेति। लाभैस्को लाभस्कः, लाभवानित्यर्थः ॥३२-३४॥

यतीनां भोजनादिनियमाः

प्राणयात्रानिमित्तं च व्यङ्गारे भुक्तवज्जने।
काले प्रशस्तवर्णानां भिक्षार्थं पर्यटेद् गृहान् ॥ ३५ ॥
पाणिपात्रं चरन् योगी नासकृद्भैक्षमाचरेत्।
तिष्ठन् भुञ्ज्याच्चरन् भुञ्ज्यान्मध्ये नाचमनं तथा ॥ ३६ ॥
अब्धीव धृतमर्यादा भवन्ति विशदाशयाः।
नियतिं न विमुञ्चन्ति महान्तो भास्करा इव ॥ ३७ ॥
आस्येन तु यदाहारं गोवन्मृगयते मुनिः।
तदा समः स्यात् सर्वेषु सोऽमृतत्वाय कल्पते ॥ ३८ ॥
अनिन्द्यं वै व्रजन् गेहं निन्द्यं गेहं तु वर्जयेत्।
अनावृते विशेद् द्वारि गेहे नैवावृते व्रजेत् ॥ ३९ ॥
पांसुना च प्रतिच्छन्नशून्यागारप्रतिश्रयः।
वृक्षमूलनिकेतो वा त्यक्तसर्वप्रियाप्रियः ॥ ४० ॥

परमहंसादीनां माधूकरकरपात्रास्याहारप्रकारमाह—प्राणेति। ग्रामाद्बहिर्वृक्षमूले स्थित्वा यथोक्तकाले प्राणयात्रानिमित्तभिक्षार्थं ग्रामं प्रविश्य यथाविधि भिक्षामटेदित्यर्थः ॥ ततः करपात्रनियममाह—पाणिपात्रमिति ॥ कृतार्थानामेवं नियतिः केत्यत्र अब्धीवेति ॥ माधूकरादिवृत्तित्रयेऽपि अनिन्द्यमिति ॥ तद्वसतिमाह—पांसुनेति ॥ ३९-४० ॥

यतेः जितेन्द्रियत्वम्

यत्रास्तमितशायी स्यान्निरग्निरनिकेतनः ।
यथालब्धोपजीवी स्यान्मुनिर्दान्तो जितेन्द्रियः ॥ ४१ ॥
निष्क्रम्य वनमास्थाय ज्ञानयज्ञो जितेन्द्रियः ।
कालकाङ्क्षी चरन्नेव ब्रह्मभूयाय कल्पते ॥ ४२ ॥
अभयं सर्वभूतेभ्यो दत्त्वा चरति यो मुनिः ।
न तस्य सर्वभूतेभ्यो भयमुत्पद्यते क्वचित् ॥ ४३ ॥
निर्मानश्चानहंकारो निर्द्वन्द्वश्छिन्नसंशयः ।
नैव क्रुध्यति न द्वेष्टि नानृतं भाषते गिरा ॥ ४४ ॥
पुण्यायतनचारी च भूतानामविहिंसकः ।
काले प्राप्ते भवेद् भैक्षं कल्पते ब्रह्मभूयसे ॥ ४५ ॥
वानप्रस्थगृहस्थाभ्यां न संसृज्येत कर्हिचित् ।
अज्ञातचर्यां लिप्सेत न चैनं हर्ष आविशेत् ।
अध्वा सूर्येण निर्दिष्टः कीटवद्विचरेन्महीम् ॥ ४६ ॥

मनुष्यावासपुरग्रामात् निष्क्रम्य । प्रारब्धक्षयकालकाङ्क्षी । प्राणिमात्रमात्मधियाहिंसन् । किंच स्वान्यत्र निर्मानश्चेति । ब्रह्मभूयसे ब्रह्मभावाय समर्थ्यत इत्यर्थः ॥ ४१–४६ ॥

यतेः सर्वकर्मपरित्यागः

आशीर्युक्तानि कर्माणि हिंसायुक्तानि यानि च ।
लोकसंग्रहयुक्तानि नैव कुर्यान्न कारयेत् ॥ ४७ ॥

नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ।
अतिवादांस्त्यजेत्तर्कान् पक्षं कंचन नाश्रयेत् ॥ ४८ ॥
न शिष्याननुबध्नीत ग्रन्थान्नैवाभ्यसेद् बहून् ।
न व्याख्यामुपयुञ्जीत नारम्भानारभेत् क्वचित् ॥ ४९ ॥
अव्यक्तलिङ्गोऽव्यक्तार्थो मुनिरुन्मत्तबालवत् ।
कविर्मूकवदात्मानं तद्दृष्ट्या दर्शयेन्नृणाम् ॥ ५० ॥
न कुर्यान्न वदेत् किंचिन्न ध्यायेत् साध्वसाधु वा ।
आत्मारामोऽनया वृत्त्या विचरेज्जडवन्मुनिः ॥ ५१ ॥
एकश्चरेन्महीमेतां निःसङ्गः संयतेन्द्रियः ।
आत्मक्रीड आत्मरतिरात्मवान् समदर्शनः ॥ ५२ ॥
बुधो बालकवत्क्रीडः कुशलो जडवच्चरेत् ।
वदेदुन्मत्तवद्विद्वान् गोचर्यां नैगमश्चरेत् ॥ ५३ ॥
क्षिप्तोऽवमानितोऽसद्भिः प्रलब्धोऽसूयितोऽपि वा ।
ताडितः संनिरुद्धो वा वृत्त्या वा परितापितः ॥ ५४ ॥
विष्ठितो मूत्रितो वाज्ञैर्बहुधैवं प्रकम्पितः ।
श्रेयस्कामः कृच्छ्रगत आत्मनात्मानमुद्धरेत् ॥ ५५ ॥
संमाननं परां हानिं योगर्द्धेः कुरुते यतः ।
जनेनावमतो योगी योगसिद्धिं च विन्दति ॥ ५६ ॥
तथा चरेत वै योगी सतां धर्ममदूषयन् ।
जना यथावमन्येरन् गच्छेयुर्नैव संगतिम् ॥ ५७ ॥

जरायुजाण्डजादीनां वाङ्मनःकायकर्मभिः ।
युक्तः कुर्वीत न द्रोहं सर्वसङ्गांश्च वर्जयेत् ॥ ५८ ॥
कामक्रोधौ तथा दर्पलोभमोहादयश्च ये ।
तांस्तु दोषान् परित्यज्य परिव्राड् भयवर्जितः ॥ ५९ ॥

तेनापि लोकसंग्रहार्थं कर्म कर्तव्यमित्यत आह—**आशीरिति** । **परैर्वापि न कारयेत्** ॥ यदि श्रेयोऽर्थी मुनिस्तदा **नासच्छास्त्रेष्विति** । **स्वयमतिवादां-स्त्यजेत्तर्कान्** वादिप्रतिवादिनोर्मध्ये **पक्षं कंचन नाश्रयेत्** ॥ **स्वयशोनिमित्तं न शिष्याननुबध्नीत** । अनात्मशास्त्रोद्देशेन न व्याख्यामुपयुञ्जीत । **नारम्भानारभेत्** **कचित्** निःसंकल्पो भवेदित्यर्थः ॥ **सर्वज्ञोऽपि कविः** ॥ **मुनिः ससहायः** संचरेदित्यत आह—**एक** इति ॥ ब्रह्मातिरिक्तयोर्याथात्म्यं **बुधो बालकवत्क्रीड**: **सर्वार्थकुशलो जडवच्चरेत्** **वदेदुन्मत्तवद्विद्वान्** निगमार्थतत्त्वज्ञोऽपि **गोचर्याम्** इदमस्तु इदं मास्त्विति न प्रकटयन्ती **नैगमश्चरेत्** ॥ कालकर्मयोगतः परैः **क्षिप्त** इति । ब्रह्मयाथात्म्यानुसंधानयोगेन ऋद्धिस्तन्मात्रस्थितिः । तस्य सोऽयं योगर्द्धि-स्तस्य संमानं परां हानिं वा यः कुरुते स स्वकृत्यानुरूपं फलमनुभवति । यत एवमतः परकृतपूजनताडनादिसहनात् योगी योगफलमर्हतीत्याह—**जनेनेति** । यथा सहनात् योगसिद्धिः तथा चरेत् । स्वयं स्वधर्माननुष्ठानं सद्धर्मदूषणमित्यर्थः । **सन्तः जनाः इति** ॥ स्वयमसाध्ववमतोऽपि प्राणिसामान्यद्रोही न भवेदित्याह —**जरायुजेति** ॥ किंच प्राणिसामान्यविषये **कामक्रोधाविति** ॥ ४७–५९ ॥

यतेः असाधारणधर्माः

भैक्षाशनं च मौनित्वं तपो ध्यानं विशेषतः ।
सम्यग्ज्ञानं च वैराग्यं धर्मोऽयं भिक्षुके मतः ॥ ६० ॥
काषायवासाः सततं ध्यानयोगपरायणः ।
ग्रामान्ते वृक्षमूले वा वसेद्देवालयेऽपि वा ।
भैक्षेण वर्तते नित्यं नैकान्नाशी भवेत् कचित् ॥ ६१ ॥

चित्तशुद्धिर्भवेद्यावत् तावन्नित्यं चरेत् सुधीः ।
तत्र प्रव्रज्य शुद्धात्मा संचरेद्यत्र कुत्रचित् ॥ ६२ ॥
बहिरन्तश्च सर्वत्र संपश्यन् हि जनार्दनम् ।
सर्वत्र विचरन् मौनी वायुवद्वीतकल्मषः ॥ ६३ ॥
समदुःखसुखः क्षान्तो हस्तप्राप्तं च भक्षयन् ।
निर्वैरेण समं पश्यन् द्विजगोऽश्वमृगादिषु ॥ ६४ ॥
भावयन् मनसा विष्णुं परमात्मानमीश्वरम् ।
चिन्तयन् परमानन्दं ब्रह्मैवाहमिति स्मरन् ॥ ६५ ॥

ज्ञात्वैवं मनोदण्डं धृत्वा आशानिवृत्तो भूत्वा आशाम्बरधरो भूत्वा सर्वदा मनोवाक्कायकर्मभिः सर्वसंसारमुत्सृज्य प्रपञ्चावाङ्मुखः स्वरूपानुसंधानेन भ्रमरकीटन्यायेन मुक्तो भवतीत्युपनिषत् ॥ ६६ ॥

यतेरसाधारणधर्मस्तु—**भैक्षाशनमित्यादि** ॥ यावच्चित्तशुद्धिस्तावद् ब्रह्यादिः स्वाश्रमोचितधर्मानुष्ठानपूर्वकं वेदान्तश्रवणादि कृत्वा ततः संन्यस्य सर्वत्र चरन् एकत्र तिष्ठन् वा ब्रह्मानुसंधानं कुर्यादित्याह--**चित्तेति** ॥ एकत्र स्थिरासनो भूत्वा **भावयन्निति** । **स्मरन्** कालं नयेदित्यर्थः ॥ एतावता ग्रन्थेन योऽर्थोऽभिहितः तज्ज्ञानतः अवधूतो भूत्वा स्वातिरिक्तास्तित्वभ्रममुक्तो भवतीत्याह—**ज्ञात्वेति** । **ज्ञात्वैवं मनोदण्डं** धृत्वा पराङ् मनो येन दण्ड्यते तत्प्रत्यगभिन्नब्रह्मज्ञानं मनोदण्डमित्युक्तम् । तज्ज्ञानस्य मनःप्रविलापना-धिकरणगोचरत्वात् स्वातिरेकेणाभासतोऽपि किंचिदस्तीति मिथ्या**शानिवृत्तो भूत्वा आशाम्बरधरो**ऽवधूतो भूत्वा । स्वातिरिक्त**प्रपञ्चावाङ्मुखः** प्रपञ्चोऽस्ति नास्तीति विभ्रमविरलो भूत्वा **स्वरूपानुसंधानेन भ्रमरकीटन्यायेन मुक्तो भवतीति** । "कीटको भ्रमरं ध्यायन् भ्रमरत्वाय कल्पते" इति भगवत्पादो-

रसास्वादनम् , घ्राणस्य गन्धग्रहणम् , वचसो वाग्व्यापारः, पाणे-रादानम् , पादयोः संचारः, पायोरुत्सर्गः, उपस्थस्यानन्दग्रहणम् , त्वचः स्पर्शग्रहणम् । तदधीना च विषयग्रहणा बुद्धिः । बुद्ध्या बुध्यति । चित्तेन चेतयति । अहंकारेणाहंकरोति । विसृज्य जीव एतान् देहाभिमानेन जीवो भवति । गृहाभिमानेन गृहस्थ इव शरीरे जीवः संचरति । प्राग्दले पुण्यावृत्तिराग्नेय्यां निद्रालस्यौ, दक्षिणायां क्रौर्यबुद्धिर्नैर्ऋत्यां पापबुद्धिः, पश्चिमे क्रीडारतिः, वायव्यां गमने बुद्धिरुत्तरे शान्तिः, ईशान्ये ज्ञानं, कर्णिकायां वैराग्यं, केसरेष्वात्मचिन्ता इत्येवं वक्त्रं ज्ञात्वा ॥ ३ ॥

तुरीयातीतं किम्? तदाप्त्युपायः कः? इत्यत आह—दिवमित्यादि । तुर्यातीते ब्रह्मणि स्वाज्ञैर्गुणसाम्यात्मिका तुर्यावस्था विकल्पिता । तत्र तुर्यातीतमेव तदसङ्गतुर्यवत् भासते । तत्र तुरीये दिवा नक्तं विकल्पितम् । तत्र दिवं दिवा जाग्रत् , स्वप्नं स्वप्नः नक्तम् , अर्धरात्रमेव सुषुप्तभावं गतमित्येवमवस्थात्रयं निष्पन्नम । तत्रैकैकावस्थायां चतस्रोऽवस्थाः पश्चात् प्रतिपाद्यन्ते । तदनुरोधेन मनआद्येकैककरणाधीनानां वागादिचतुर्दशकरणानां चक्षुरादीनां व्यापारा उच्यन्ते । चक्षुषो रूपग्रहणम् इत्याद्यहंकारेणाहंकारोतीत्यन्तम् । एतान् जीवो विसृज्य विशेषेण सृष्ट्वा तत्संघातदेहाभिमानेन तुर्यचैतन्यमेव जीवभावमापन्नवत् भवति । शरीरे तदवच्छिन्नाष्टदलाञ्चितहृदयकमले तत्रत्यदलेषु प्रागादिक्रमेण गृहाभिमानेन गृहस्थ इव जीवः संचरति । तत्र प्रागाद्यष्टदलेषु पुण्यादिवृत्ति-विशिष्टो भूत्वा ईशान्यदलं प्रविशतो वस्तुज्ञानं कर्णिकासंचारतः स्वातिरिक्त-प्रपञ्चवैराग्यमेत्य तत्केसरसंचारतः अनात्मापह्नवसिद्ध आत्मा स्वमात्रमिति चिन्तोदेति । इत्येवं वक्त्रं चैतन्यवक्त्रं स्वरूपं ज्ञात्वा विद्वान् ज्ञानसमकालं तुर्यातीतब्रह्ममात्रमवशिष्यते ॥ ३ ॥

तुर्यातीतस्वरूपम्

जीवदवस्था प्रथमं, जाग्रद् द्वितीयं, स्वप्नं तृतीयं, सुषुप्तं चतुर्थं तुरीयं, चतुर्भिर्विरहितं तुरीयातीतम्। विश्वतैजसप्राज्ञतटस्थभेदैरेक एव। एको देवः साक्षी निर्गुणश्च तद् ब्रह्माहमिति व्याहरेत्। नो चेज्जाग्रदवस्थायां जाग्रदादिचतस्रोऽवस्थाः स्वप्ने स्वप्नादिचतस्रोऽवस्थाः सुषुप्ते सुषुप्त्यादिचतस्रोऽवस्थाः तुरीये तुरीयादिचतस्रोऽवस्थाः। न त्वेवं तुर्यातीतस्य निर्गुणस्य। स्थूलसूक्ष्मकारणरूपैर्विश्वतैजसप्राज्ञेश्वरैः सर्वावस्थासु साक्षी त्वेक एवावतिष्ठते। उत तटस्थो द्रष्टा। तटस्थो न द्रष्टा। द्रष्टृत्वान्न द्रष्टैव। कर्तृत्वभोक्तृत्वाहंकारादिभिः स्पृष्टो जीवः। जीवेतरो न स्पृष्टः। जीवोऽपि न स्पृष्ट इति चेन्न। जीवाभिमानेन क्षेत्राभिमानः, शरीराभिमानेन जीवत्वम्। जीवत्वं घटाकाशमहाकाशवद्व्यवधानोऽस्ति। व्यवधानवशादेव हंसः सोऽहमिति मन्त्रेणोच्छ्वासनिश्वासव्यपदेशेनानुसंधानं करोति। एवं विज्ञाय शरीराभिमानं त्यजेन्न शरीराभिमानी भवति। स एव ब्रह्मेत्युच्यते ॥ ४ ॥

कथं पुनस्तुर्यातीतस्वरूपमित्यत आह—**जीववदवस्थेति**। जीववदवस्थासु जीवाधिष्ठितावस्थाचतुष्टये **प्रथमा**वस्था **जाग्रत्**, **द्वितीयं स्वप्ना**वस्था, **तृतीयं सुषुप्त्य**वस्था, **चतुर्थं तुर्या**वस्था भवति। यज्जाग्रदादिचतुरवस्था**विरहितं तुर्यातीतं** तत् तुर्यातीतसिद्धेः जाग्रदाद्यवस्थाचतुष्टयापह्नवपूर्वकत्वात् स्वाज्ञादिदृष्टिमोहे सत्यसति तुर्यातीतं निष्प्रतियोगिकस्वमात्रमवशिष्यत इत्यर्थः। एकस्यैवात्मनो जाग्रदाद्यवस्थायोगात् स विश्वादिभेदविशिष्टो भवति; न स्वतः। स्वतस्त्वेक एव। तज्ज्ञानात्तद्भावापत्तिः स्यादित्याह—**विश्वेति**। जाग्रदाद्यवस्थायोगप्रभव**विश्वतैजसप्राज्ञतटस्थभेदैः** व्यवहृत आत्मा **एक एव**। **एको देवः**

साक्षी निर्गुणश्च एक एव स्वप्रकाशचिद्धातुः देवः स्वसाक्ष्यगुणत्रयसद्भावे साक्षी; तदभावे निर्गुणः। चशब्दो निष्प्रतियोगिकनिर्गुणत्वख्यापनार्थः। यदेवं निष्प्रतियोगिकनिर्गुणं तद् ब्रह्माहमिति व्याहरेत्। तत् स्वमात्रमित्यनुसंधानं कुर्यात्। ततस्तद्भावापत्तिः स्यादित्यर्थः। पक्षान्तरमाह—नो चेदिति। जाग्रदाद्यवस्थाचतुष्टयकलनाविरलं तुर्यातीतमिति मन्तव्यम्। नो चेत् यत्रावस्थाचतुष्टयप्रविभक्तजाग्रज्जाग्रदादितुर्यस्वापान्तपञ्चदशविभागकलना न विद्यते, तदेव तुर्यतुर्याशविभातं तुर्यतुर्यं तुर्यातीतं ब्रह्म; नेतरत्। तुर्यातीतस्य निर्गुणस्य निष्प्रतियोगिकतुर्यतुर्यस्य विभागकलनावैरल्यात् तस्यैव स्थूलादियोगतो विश्वादित्वं सर्वसाक्षित्वं सर्वकल्नास्पृष्टत्वं चाह—स्थूलेति। साक्षी द्रष्टा। उत यद्वा तटस्थ ईश्वर इति चेत् तटस्थो न द्रष्टा साक्षी भवितुमर्हति; तटस्थस्य बीजोपाधिकेश्वरतया दृष्टत्वात्। अतोऽयं न द्रष्टैव। तथाप्ययं कर्तृत्वाद्यभिमतिविरल इत्यर्थः। नो चेत् जीव एव द्रष्टा भवितुमर्हतीत्यत आह—कर्तृत्वेति। कर्तृत्वादिकलनया स्पृष्टो जीवः। साक्षी तु तदस्पृष्टः; तस्य सर्वत्र आत्मात्मीयाभिमतिवैरल्यात् तयोर्महदस्त्यन्तरमित्याह—जीवत्वमिति। घटाकाशमहाकाशवत् व्यवधानोऽस्तीति; जीवसाक्षिणोरित्यर्थः। जीवो जीवाभिमतिमुत्सृज्य सर्वसाक्ष्यस्मीति ज्ञानात् ब्रह्मैव भवतीत्याह—व्यवधानेति। जीवसाक्षिणोर्व्यवधानवशात् जीवः उच्छ्वासनिश्वासच्छलेन योऽहं स्वाज्ञदशायां जीवभावं गतः, स्वज्ञानेन स्वाज्ञानापाये सोऽहं सर्वसाक्षी स्यां वस्तुतस्तु परमार्थदृष्ट्या जीवत्वसाक्षित्वादिकलनाविरलं ब्रह्म निष्प्रतियोगिकस्वमात्रमित्यनुसंधानं करोति तदायं तन्मात्रेणावशिष्यत इत्येवं जीवो ज्ञात्वा ब्रह्मैव भवतीत्याह—एवमिति। यावद्देहादावात्मात्मीयाभिमतिस्तावज्जीवत्वम्; यदायं देहादावात्मात्मीयाभिमतिं निःशेषं त्यजति तदा स एव ब्रह्मेत्यत्र न विवाद इत्यर्थः॥ ४॥

असच्चर्यात्यागः सच्चर्यानुष्ठानं च

त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः।
पिधाय बुद्ध्या द्वाराणि मनो ध्याने निवेशयेत्॥ ५॥

शून्येष्वेवावकाशेषु गुहासु च वनेषु च ।
नित्ययुक्तः सदा योगी ध्यानं सम्यगुपक्रमेत् ॥ ६ ॥
आतिथ्यश्राद्धयज्ञेषु देवयात्रोत्सवेषु च ।
महाजनेषु सिद्ध्यर्थी न गच्छेद्योगवित् क्वचित् ॥ ७ ॥
यथैनमवमन्यन्ते जनाः परिभवन्ति च ।
तथा युक्तश्चरेद्योगी सतां वर्त्म न दूषयेत् ॥ ८ ॥
वाग्दण्डः कर्मदण्डश्च मनोदण्डश्च ते त्रयः ।
यस्यैते नियता दण्डाः स त्रिदण्डी महायतिः ॥ ९ ॥
विधूमे च प्रशान्ताग्नौ यस्तु माधूकरं चरेत् ।
गृहे च विप्रमुख्यानां यतिः सर्वोत्तमः स्मृतः ॥ १० ॥
दण्डभिक्षां च यः कुर्यात् स्वधर्मे व्यसनं विना ।
यस्तिष्ठति न वैराग्यं याति नीचयतिर्हि सः ॥ ११ ॥
यस्मिन् गृहे विशेषेण लभेद्भिक्षां च वासनात् ।
तत्र नो याति यो भूयः स यतिर्नेतरः स्मृतः ॥ १२ ॥
यः शरीरेन्द्रियादिभ्यो विहीनं सर्वसाक्षिणम् ।
पारमार्थिकविज्ञानं सुखात्मानं स्वयंप्रभम् ॥ १३ ॥
परतत्त्वं विजानाति सोऽतिवर्णाश्रमी भवेत् ।
वर्णाश्रमादयो देहे मायया परिकल्पिताः ॥ १४ ॥
नात्मनो बोधरूपस्य मम ते सन्ति सर्वदा ।
इति यो वेद वेदान्तैः सोऽतिवर्णाश्रमी भवेत् ॥ १५ ॥

यस्य वर्णाश्रमाचारो गलितः स्वात्मदर्शनात् ।
स वर्णानाश्रमान् सर्वानतीत्य स्वात्मनि स्थितः ॥ १६ ॥
योऽतीत्य स्वाश्रमान् वर्णानात्मन्येव स्थितः पुमान् ।
सोऽतिवर्णाश्रमी प्रोक्तः सर्ववेदार्थवेदिभिः ॥ १७ ॥
तस्मादन्यगता वर्णा आश्रमा अपि नारद ।
आत्मन्यारोपिताः सर्वे भ्रान्त्या ते नात्मवेदिना ॥ १८ ॥
न विधिर्न निषेधश्च न वर्ज्यावर्ज्यकल्पना ।
ब्रह्मविज्ञानिनामस्ति तथा वान्यच्च नारद ॥ १९ ॥

जीवन्मुक्तयतीनामसच्चर्यात्यागपूर्वकं सच्चर्यासर्वस्वमनुक्रामति—त्यक्तेत्यादिना। पिधाय बुद्ध्या द्वाराणि विषयोपलब्धिद्वाराणि धिया पिधाय ब्रह्मध्याने मनो निवेशयेत् इत्यर्थः ॥ ध्यानस्थलं निगमयति—शून्येष्विति ॥ तस्यागम्यप्रदेशमाह—आतिथ्येति ॥ तस्य त्रिदण्डमाह—वागिति । मौनानशनप्राणायामैः । वाग्दण्ड इत्यादि । यतेर्भिक्षाविधिः तद्विपर्यये बाधकं चोच्यते—विधूम इति ॥ मुख्यगौणावधूतलक्षणमाह—य इति । स्वयंप्रभं स्वयंप्रकाशचिद्धातुम् ॥ ९–१९ ॥

विविदिषोः श्रवणादिविधिः

विरज्य सर्वभूतेभ्य आ विरिञ्चिपदादपि ।
घृणां विपाट्य सर्वस्मिन् पुत्रवित्तादिकेष्वपि ॥ २० ॥
श्रद्धालुर्मुक्तिमार्गेषु वेदान्तज्ञानलिप्सया ।
उपायनकरो भूत्वा गुरुं ब्रह्मविदं व्रजेत् ॥ २१ ॥
सेवाभिः परितोष्यैनं चिरकालं समाहितः ।
सदा वेदान्तवाक्यार्थं शृणुयात् सुसमाहितः ॥ २२ ॥

निर्ममो निरहंकारः सर्वसङ्गविवर्जितः ।
सदा शान्त्यादियुक्तः सन्नात्मन्यात्मानमीक्षते ॥ २३ ॥
संसारदोषदृष्ट्यैव विरक्तिर्जायते सदा ।
विरक्तस्य तु संसारात् संन्यासः स्यान्न संशयः ॥ २४ ॥
मुमुक्षुः परहंसाख्यः साक्षान्मोक्षैकसाधनम् ।
अभ्यसेद् ब्रह्मविज्ञानं वेदान्तश्रवणादिना ॥ २५ ॥
ब्रह्मविज्ञानलाभाय परहंससमाह्वयः ।
शान्तिदान्त्यादिभिः सर्वैः साधनैः सहितो भवेत् ॥ २६ ॥
वेदान्ताभ्यासनिरतः शान्तो दान्तो जितेन्द्रियः ।
निर्भयो निर्ममो नित्यं निर्द्वन्द्वो निष्परिग्रहः ॥ २७ ॥
जीर्णकौपीनवासाः स्यान्मुण्डी नग्नोऽथवा भवेत् ।
प्राज्ञो वेदान्तविद्योगी निर्ममो निरहंकृतिः ॥ २८ ॥
मित्रादिषु समो मैत्रः समस्तेष्वेव जन्तुषु ।
एको ज्ञानी प्रशान्तात्मा स संतरति नेतरः ॥ २९ ॥
गुरूणां च हिते युक्तस्तत्र संवत्सरं वसेत् ।
नियमेष्वप्रमत्तस्तु यमेषु च सदा भवेत् ॥ ३० ॥
प्राप्य चान्ते ततश्चैव ज्ञानयोगमनुत्तमम् ।
अविरोधेन धर्मस्य संचरेत् पृथिवीमिमाम् ॥ ३१ ॥
ततः संवत्सरस्यान्ते ज्ञानयोगमनुत्तमम् ।
आश्रमत्रयमुत्सृज्य प्राप्तश्च परमाश्रमम् ॥ ३२ ॥

अनुज्ञाप्य गुरूंश्चैव चरेद्धि पृथिवीमिमाम् ।
त्यक्तसङ्गो जितक्रोधो लघ्वाहारो जितेन्द्रियः ॥ ३३ ॥
द्वाविमौ न विराजेते विपरीतेन कर्मणा ।
निरारम्भो गृहस्थश्च कार्यवांश्चैव भिक्षुकः ॥ ३४ ॥
माद्यति प्रमदां दृष्ट्वा सुरां पीत्वा च माद्यति ।
तस्माद् दृष्टिविषां नारीं दूरतः परिवर्जयेत् ॥ ३५ ॥
संभाषणं सह स्त्रीभिरालापप्रेषणं तथा ।
नृत्तं गानं सहासं च परिवादांश्च वर्जयेत् ॥ ३६ ॥
न स्नानं न जपः पूजा न होमो नैव साधनम् ।
नाग्निकार्यादि कार्यं च नैतस्यास्तीह नारद ॥ ३७ ॥
नार्चनं पितृकार्यं च तीर्थयात्रा व्रतानि च ।
धर्माधर्मादिकं नास्ति न विधिर्लौकिकी क्रिया ॥ ३८ ॥
संत्यजेत् सर्वकर्माणि लोकाचारं च सर्वशः ।
कृमिकीटपतङ्गांश्च तथा योगी वनस्पतीन् ॥ ३९ ॥
न नाशयेद् बुधो जीवान् परमार्थमतिर्यतिः ।
नित्यमन्तर्मुखः स्वच्छः प्रशान्तात्मा स्वपूर्णधीः ॥ ४० ॥
अन्तःसङ्गपरित्यागी लोके विहर नारद ।
नाराजके जनपदे चरत्येकचरो मुनिः ॥ ४१ ॥
निःस्तुतिर्निर्नमस्कारो निःस्वधाकार एव च ।
चलाचलनिकेतश्च यतिर्यादृच्छिको भवेत् ॥ ४२ ॥
इत्युपनिषत् ॥

विविदिषो: श्रवणविधिमाह—विरज्येति। सार्वभौमाद्याविरिञ्चित्वप्रद-कर्मफलात् सर्वभूतेभ्यो निवर्त्य प्रयोजनादपि विरज्य विरतिमेत्य संन्यसेदित्यर्थ:; "संन्यस्य श्रवणं कुर्यात्" इति स्मृते:। स्वाभिमतगुरुनिकटे संशयादिपञ्चदोषनिवृत्त्यन्तं समाहितकरणग्रामो भूत्वा सर्ववेदान्तश्रवणमेव कुर्यादित्यर्थ:; "आवृत्तिरसकृदुपदेशात्" इति वैयासिकसूत्रानुरोधेन

"अहं ब्रह्मेति वाक्यार्थबोधो यावद् दृढीभवेत्।
शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम्॥"

इति भगवत्पादाचार्योक्ते:। तत: किमित्यत्राह—दारादिस्वदेहान्तकलनासु निर्मम इति॥ यत: श्रवणादिजन्यज्ञानं कैवल्यप्रापकम्, अत एव श्रवणादिप्रतिबन्धककार्यं संन्यस्य शान्त्यादिसहितो भूत्वा ज्ञानफलसिद्धिपर्यन्तं श्रवणमेव कुर्यादित्याह—संसारेति। कुटीचकाद्याश्रमत्रयमुत्सृज्य परमाश्रमं परमहंसाश्रममित्यर्थ:॥ तत: अनुज्ञाप्येति॥ कीदृशो भूत्वेत्यत्राह—त्यक्तसङ्ग इति॥ नि:संकल्पसंकल्पाभ्यां गृही भिक्षु: हीयेते इत्याह—द्वाविति। यदि श्रेयोऽर्थी भिक्षु:, तदा सुरातोऽपि विभ्रमकरस्त्रीसंलापादिविमुखो भवेदित्याह—माद्यतीति। यस्मादेवं तस्मात्॥ परमार्थदृष्टे: स्नानजपादिकर्तव्यता नास्तीत्याह—नेति॥ लोकसंग्रहार्थं कर्म कर्तव्यमित्यत्राह—संत्यजेदिति॥ चरस्थिरहिंसां न कुर्यादित्याह—कृमीति॥ चलं शून्यागारादि; क्षयिष्णुत्वात्; अचलं पर्वतादि:; तस्य स्थिरत्वात्। यादृच्छिको भवेत्; यदृच्छालाभसंतुष्टो भवेत्। न हि यथेच्छाचरणं भवितुमर्हति; प्रवृत्तिनिवृत्तिसंकल्पासंभवात्। इत्युपनिषच्छब्द: षष्ठोपदेशसमाप्त्यर्थ:॥ २०-४२॥

इति षष्ठोपदेश:

---

सप्तमोपदेश:

यतिनियमा:

अथ यतेर्नियम: कथमिति पृष्टो नारदं पितामह: पुरस्कृत्योवाच।
विरक्त: सन् यो वर्षासु ध्रुवशीलोऽष्टौ मांस्येकाकी चरेन्नैकत्र निवसेत्।

भिक्षुर्भयात् सारङ्गवदेकत्र न तिष्ठेत् । स्वगमनविरोधग्रहणं न कुर्यात् । हस्ताभ्यां नद्युत्तरणं न कुर्यात् । न वृक्षारोहणमपि । न देवोत्सवदर्शनं कुर्यात् । नैकत्राशी । न बाह्यदेवार्चनं कुर्यात् । स्वव्यतिरिक्तं सर्वं त्यक्त्वा मधुकरवृत्त्याहारमाहरन्, कृशो भूत्वा, मेदोवृद्धिमकुर्वन्, आज्यं रुधिरमिव त्यजेत् । एकत्रान्नं पललमिव, गन्धलेपनमशुद्धलेपनमिव, क्षारमन्त्यजमिव, वस्त्रमुच्छिष्टपात्रमिव, अभ्यङ्गं स्त्रीसङ्गमिव, मित्राह्लादनं मूत्रमिव, स्पृहां गोमांसमिव, ज्ञातचरदेशं चण्डालवाटिकामिव, स्त्रियमहिमिव, सुवर्णं कालकूटमिव, सभास्थलं श्मशानस्थलमिव, राजधानीं कुम्भीपाकमिव, शवपिण्डवदेकत्रान्नम् । देहान्तरदर्शनं प्रपञ्चवृत्तिं परित्यज्य, स्वदेशमुत्सृज्य, ज्ञातचरदेशं विहाय, विस्मृतपदार्थपुनःप्राप्तिहर्ष इव स्वमानन्दमनुस्मरन् स्वशरीराभिमानदेशविस्मरणं कृत्वा, स्वशरीरं शवमिव हेयमुपगम्य, कारागृहविनिर्मुक्तचोरवत् पुत्राप्तबन्धुभवस्थलं विहाय दूरतो वसेत् । अयत्नेन प्राप्तमाहरन्, ब्रह्मप्रणवध्यानानुसंधानपरो भूत्वा सर्वकर्मविनिर्मुक्तः, कामक्रोधलोभमोहमदमात्सर्यादिकं दग्ध्वा त्रिगुणातीतः, षडूर्मिरहितः, षड्भावविकारशून्यः, सत्यवाक्, शुचिः, अद्रोही, ग्रामैकरात्रम्, पत्तने पञ्चरात्रम्, क्षेत्रे पञ्चरात्रम्, तीर्थे पञ्चरात्रम्, अनिकेतः, स्थिरमतिः, नानृतवादी, गिरिकन्दरेषु वसेदेक एव वा द्वौ वा चरेत् ग्रामं त्रिभिः नगरं [1]चतुर्भिर्नगरमित्येकश्चरेद्भिक्षुः । चतुर्दशकरणानां न तत्रावकाशं दद्यात् । अविच्छिन्नज्ञानाद्वैराग्यसंपत्तिमनुभूय, मत्तो न

[1] उ. ३ १. 'चतुः ग्रामम्' ।

कश्चिन्नान्यो व्यतिरिक्त इत्यात्मन्यालोच्य, सर्वतः स्वरूपमेव पश्यन् जीवन्मुक्तिमवाप्य, प्रारब्धप्रतिभासनाशपर्यन्तं चतुर्विधं स्वरूपं ज्ञात्वा, देहपतनपर्यन्तं स्वरूपानुसंधानेन वसेत् ॥ १ ॥

कुटीचकादिचर्या बहुधा श्रुत्वापि पुनर्विशेषबुभुत्सया नारदेन पृष्टः पितामहः प्रसक्तानुप्रसक्त्या पुरोक्तमनुक्तं च सर्वमुपदिष्टवानित्याह—अथेति। नारदं पितामहः पुरस्कृत्य सर्वं कथयामास। किं तत् इत्यत्र विरक्त इति। यदि कृतश्रवणादिसाधनस्तदनधिकारी वा अष्टौ मांस्येकाकी ग्रामैकरात्रमित्युक्तरीत्या संचरेत्। चातुर्मास्ये तु एकत्र निवसेत् भिक्षुः भयात् प्राणिबाधा स्यादिति भिया वर्षास्वेकत्र निवसेदित्यर्थः। चातुर्मास्यानन्तरं सारङ्गवदेकत्र न तिष्ठेत् कदापि स्वगमनविरोधग्रहणमत्रैव कतिचिदहानि वसत्विति प्रार्थनाङ्गीकारं न कुर्यात्। यदि दृढाङ्गः गन्धलेपनमिति। ब्रह्मातिरिक्तधिया न देहान्तरदर्शनमिति। यत्र स्वशरीराभिमानिनो वर्तन्ते तत्र स्वशरीराभिमानदेशविस्मरणम्। षोडशमात्राप्रणवतदर्थतुर्यतुर्यस्वमात्रमित्यनुसंधानं कृत्वा स्वातिरिक्तसर्वकर्मनिर्मुक्तः यत्र कुत्राप्यनिकेतः संचारकाले एक एव चरेत्। चातुर्मास्यादिप्रसक्तौ ग्रामं द्वौ वा चरेत्; त्रिभिः चतुर्भिर्वा नगरं चरेत्; विश्वरूपयात्राच्छलेन यतिरेक एव चरेदित्यर्थः। भिक्षुः वागादिचतुर्दशकरणानां स्वातिरिक्तास्तित्वभ्रममुत्सृज्य। सर्वत इति। विश्वविराडोत्रादिद्वितुर्याविकल्पान्तं तद्गतहेयांशापायसिद्धमोत्रादिभेदेन चतुर्विधमिति ॥ १ ॥

कुटीचकादीनां स्नानादिनियमेषु विशेषः

त्रिषवणस्नानं कुटीचकस्य, बहूदकस्य द्विवारम्, हंसस्यैकवारम्, परमहंसस्य मानसस्नानम्, तुर्यातीतस्य भस्मस्नानम्, अवधूतस्य वायव्यस्नानम् ॥ २ ॥

ऊर्ध्वपुण्ड्रं कुटीचकस्य, त्रिपुण्ड्रं बहूदकस्य, ऊर्ध्वपुण्ड्रत्रिपुण्ड्रं हंसस्य, भस्मोद्धूलनं परमहंसस्य, तुरीयातीतस्य तिलकपुण्ड्रम्, अवधूतस्य न किंचित् तुरीयातीतावधूतयोः ॥ ३ ॥

ऋतुक्षौरं कुटीचकस्य, ऋतुद्वयक्षौरं बहूदकस्य, न क्षौरं हंसस्य, परमहंसस्य न च[1] क्षौरम्, अस्ति चेदयनक्षौरं, तुरीयातीतावधूतयोर्न क्षौरम् ॥ ४ ॥

कुटीचकस्यैकान्नम्, माधूकरं बहूदकस्य, हंसपरमहंसयोः करपात्रम्, तुरीयातीतस्य गोमुखम्, अवधूतस्याजगरवृत्तिः ॥ ५ ॥

शाटीद्वयं कुटीचकस्य, बहूदकस्यैकशाटी, हंसस्य खण्डम्, दिगम्बरं परमहंसस्यैककौपीनं वा, तुरीयातीतावधूतयोर्जातरूपधरत्वम्। हंसपरमहंसयोरजिनं न त्वन्येषाम् ॥ ६ ॥

कुटीचकबहूदकयोर्देवार्चनम्, हंसपरमहंसयोर्मानसार्चनम्, तुरीयातीतावधूतयोः सोऽहंभावना ॥ ७ ॥

कुटीचकबहूदकयोर्मन्त्रजपाधिकारः, हंसपरमहंसयोर्ध्यानाधिकारः, तुरीयातीतावधूतयोर्न त्वन्याधिकारः, तुरीयातीतावधूतयोर्महावाक्योपदेशाधिकारः परमहंसस्यापि। कुटीचकबहूदकहंसानां नान्यस्योपदेशाधिकारः ॥ ८ ॥

कुटीचकबहूदकयोर्मानुषप्रणवः, हंसपरमहंसयोरान्तरप्रणवः, तुर्यातीतावधूतयोर्ब्रह्मप्रणवः ॥ ९ ॥

[1] उ १. च न.

कुटीचकबहूदकयोः श्रवणम्, हंसपरमहंसयोर्मननम्, तुरीयातीतावधूतयोर्निदिध्यासः। सर्वेषामात्मानुसंधानं विधिरिति ॥ १० ॥

एवं मुमुक्षुः सर्वदा संसारतारकं तारकमनुस्मरन् जीवन्मुक्तो वसेदधिकारविशेषेण कैवल्यप्राप्त्युपायमन्विष्येद्यतिः। इत्युपनिषत् ॥ ११ ॥

कुटीचकादेः स्नानपुण्ड्रक्षौराशनवस्त्रदेवार्चनमन्त्रप्रणवादिवैचित्र्यमाह—त्रिषवणमित्यादि। यद्वा तुरीयातीतावधूतयोः न किंचित् पुण्ड्रमस्ति, तयोः परेच्छाचरणत्वात्। परमहंसस्य न च क्षौरम्। वक्ष्यमाणसमष्टिबाह्यप्रणवस्य चतुर्मात्रतया मानुषप्रणवत्वात् हंसपरमहंसयोरान्तरप्रणवः वक्ष्यमाणाष्टमात्रात्मकोऽन्तःप्रणव इत्यर्थः। तुरीयातीतावधूतयोः ब्रह्मप्रणवः षोडशमात्रात्मकतया तुर्यतुर्यगोचरत्वात्। संसारतारकं ब्रह्मप्रणवाभिधानं तारकमनुस्मरन्। कुटीचकादिस्वधर्मानुष्ठानपूर्वकं मोक्षोपायमन्विष्येत्। न हि तैः परमहंसादिधर्मोऽनुष्ठेय इत्यत्र स्मृतिः—"श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात्" इति। इत्युपनिषच्छब्दः सप्तमोपदेशसमाप्त्यर्थः ॥ २–११ ॥

इति सप्तमोपदेशः

---

## अष्टमोपदेशः

### तारकस्वरूपजिज्ञासा

अथ हैनं भगवन्तं परमेष्ठिनं नारदः पप्रच्छ। संसारतारकं प्रसन्नो ब्रूहीति। तथेति परमेष्ठी वक्तुमुपचक्रमे। ओमिति ब्रह्मेति व्यष्टिसमष्टिप्रकारेण। का व्यष्टिः? का समष्टिः? संहारप्रणवः सृष्टिप्रणवश्चान्तर्बहिश्चोभयात्मकत्वात् त्रिविधः। ब्रह्मप्रणवोऽन्तःप्रणवो व्याव-

हारिकप्रणवः । बाह्यप्रणव आर्षप्रणवः । उभयात्मको विराट्प्रणवः । संहारप्रणवो ब्रह्मप्रणवोऽर्धमात्राप्रणवः ॥ १ ॥

एवं पितामहात् परममुपदेशं लब्ध्वा अथ तारकयाथात्म्यबुभुत्सया नारदेन यत् पृष्टं तदङ्गीकृत्य परमेष्ठी प्रश्नोत्तरमाहेत्याह—अथेति । **परमेष्ठी वक्तुमुपचक्रमे** । किं तत् ? **ओमिति ब्रह्मेति** व्यष्टिसमष्टिभावगतप्रणवावयवाकारस्थूलांशादिप्रकारेण सह तद्व्यष्ट्याद्यध्यक्षविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तकलनालम्बनं ओं इत्येकाक्षरं ब्रह्मप्रणवार्थं ब्रह्मेति विद्धीति शेषः । तत्र **का व्यष्टिः ? का समष्टिः ?** इत्यत्र व्यष्टिसमष्ट्यात्मको हि ब्रह्मप्रणवः स्वाज्ञदृष्ट्या त्रिधा भिद्यते । तत् कथमित्यत्र संसारसृष्ट्यन्तबाह्यादिभेदात् । कोऽयं सृष्टिप्रणवादिरित्यत्र अर्धमात्राकारोकारोपसर्जनमकारमात्राप्रधानोऽयं **संहारप्रणवः** रुद्राधिष्ठितो ब्रह्मविष्णुरुद्राधिष्ठितो वा भवति ;

"त्रिमात्राकलनोपेतसंहारप्रणवासनाः ।
ब्रह्मविष्ण्वीश्वरा विश्वसर्गस्थित्यन्तहेतवः ।
भवेयुर्यत एवायं संहारप्रणवो भवेत् ॥"

इति संहारप्रणवोक्तेः । उकाराद्युपसर्जनाकारप्रधानोऽयं **सृष्टिप्रणवः** । तदधिष्ठाता चतुराननः ;

"एकमात्रात्मकं तारमुपादाय चतुर्मुखः ।
यतः ससर्ज सकलं सृष्टितार अतो भवेत् ॥"

इति सृष्टिप्रणवोक्तेः । अन्तर्बाह्यप्रणवस्वरूपं पश्चात् वक्ष्यते । संहारसृष्टिप्रणवाभ्यां सहान्तर्बाह्योभयात्मकत्वात् ब्रह्मप्रणवस्य त्रैविध्यमुपपद्यते। तत् कथम् ? मात्रात्रयप्रधानोऽयं संहारप्रणवः, एकमात्राप्रधानोऽयं सृष्टिप्रणवः, अष्टमात्रात्मकोऽन्तःप्रणवः, चतुर्मात्रात्मको बाह्यप्रणवश्च मिलित्वा षोडशमात्रात्मको ब्रह्मप्रणवो भवतीत्यर्थः । किमेतावानेव ब्रह्मप्रणवविभागः, नातः परमस्तीत्याकाङ्क्षायां स्वाज्ञदृष्टौ सत्यामनेकधा भिद्यत इत्यत्र को विवाद इत्याह—**अन्तरिति** । एक

एव ब्रह्मप्रणवो बहुधा भिद्यत इत्यत्र—पञ्चाशद्वर्णगर्भिताकारमात्राप्रधानोऽयं व्यावहारिकप्रणवः; "अकारो वै सर्वा वाक् । सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति श्रुतेः । दुर्गादिपञ्चब्रह्मान्ताधिष्ठितो वैखरी-प्रपञ्चकलनाहेतुर्व्यावहारिकप्रणव उच्यत इत्यत्र—

"एकमात्रात्मकस्तारः पञ्चाशद्वर्णभूषितः ।
वैखरीकलनाहेतुर्व्यावहारिक ईरितः ॥
दुर्गादिशक्तित्रितयं कर्मेच्छादित्रिशक्तिकम् ।
वस्वादित्यरुद्रजातं नवब्रह्माधिदैवतम् ।
तथा पञ्चब्रह्मदैवं तद्वाच्यार्थ इतीरितः ॥"

इति व्यावहारिकप्रणवोक्तेः । समष्टिबाह्यो व्यष्टिप्रणवश्चतुर्मात्रात्मको बाह्यप्रणव उच्यते । स विश्वाधिष्ठितो भवतीत्यत्र—

"व्यष्टेः समष्टिबाह्यत्वात् तूलातुर्यांशयोगतः ।
बाह्यप्रणव आम्नातो विश्वाद्या वाच्यतां गताः ॥"

इति बाह्यप्रणवोक्तेः । अकारोकारमकारबिन्दुनादकलाकलातीतत्वेन ऋषिमण्डलो-पास्योऽयम् आर्षप्रणवः । स पञ्चब्रह्मविराडन्तर्यामिभिरधिष्ठितो भवतीत्यत्र—

"सप्तमात्रात्मकः पञ्चब्रह्मान्तर्याम्यधिष्ठितः ।
ऋषिमण्डलसेव्यत्वादार्षप्रणव उच्यते ॥"

इत्यार्षप्रणवोक्तेः । अकारोकारोभयात्मकस्थितिप्रणवो ब्रह्मविष्ण्वधिष्ठितो भवतीत्यत्र—

"यतो विष्णुर्द्विमात्राढ्यतारोपादानतोऽन्वहम् ।
ररक्ष विश्वमखिलं स्थिततार अतो भवेत् ॥"

इति स्थितिप्रणवोक्तेः । समष्ट्यकारादिमात्राचतुष्टयात्मको विराट्प्रणवः विरा-डादिभिरधिष्ठितो भवतीत्यत्र—

"चतुःसमष्टिमात्रायुग्विराट्प्रणव उच्यते ।
विराडादिर्भवेद्वाच्यं तल्लक्ष्यं परमाक्षरम् ॥"

इति विराट्प्रणवोक्तेः। पूर्वस्मिन् पर्याये संहारप्रणवो व्याख्यातः। ब्रह्मप्रणवस्तु पश्चात् वक्ष्यते। स्थूलादिमात्राचतुष्टयात्मकोऽर्धमात्राप्रणव ओत्रनुज्ञात्रनुज्ञैकरसाविकल्पाधिष्ठितो भवतीत्यत्र—"ओंकार एव चतूरूपो ह्ययमोंकारः स्थूलसूक्ष्मबीजसाक्षिभिरोत्रनुज्ञत्रनुज्ञाविकल्पैरविकल्पो ह्ययमात्मा" इति श्रुतेः ॥ १ ॥

अन्तःप्रणवादीनां स्वरूपकथनम्

ओमिति ब्रह्म। ओमित्येकाक्षरमन्तःप्रणवं विद्धि। स चाष्टधा भिद्यते—अकारोकारमकारार्धमात्रानादबिन्दुकलाः शक्तिश्चेति। तत्र चत्वारः। अकारश्चायुतावयवान्वितः, उकारः सहस्रावयवान्वितः, मकारः शतावयवोपेतः, अर्धमात्राप्रणवोऽनन्तावयवाकारः। सगुणो विराट्प्रणवः, संहारो निर्गुणप्रणवः, उभयात्मकोत्पत्तिप्रणवः[1]। यथा प्लुतो विराट्। प्लुतप्लुतः संहारः ॥ २ ॥

ततः अन्तःप्रणवार्थमाह—ओमिति। ओमिति ब्रह्मेति व्याख्यातम्। अष्टमात्रात्मकोऽन्तःप्रणवः पञ्चब्रह्मविराट्सूत्रेश्वराधिष्ठितो भवतीत्यत्र—

"अकाराद्यष्टमात्रायुगन्तःप्रणव उच्यते।
पञ्चब्रह्मविराट्सूत्रबीजेड्वाच्यार्थ उच्यते ॥"

इत्यन्तःप्रणवोक्तेः। केवलं प्रधानतः चतुर्मात्रात्मकोऽयं प्रणव इति यदुक्तम्, तत्र चत्वारः केवलचतुर्मात्रात्मक एव न भवति; किंतु तदवयवाकारादेः व्यष्टिसमष्टितदुभयैक्यजाग्रज्जाग्रदादितुर्यस्वापान्तारोपापवादाधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तप्रपञ्चानुवृत्त्यानन्तभेदवैशिष्ट्यमाह—अकार इति। अर्ध-

[1] उ. उ १. उभयात्मको विराट्प्रणवः।

मात्राप्रणवस्य सृष्ट्यादिप्रणववदन्तावयवाभावतो निरवयवत्वादनन्तावयवस्वरूपमुपपद्यत इत्यर्थः। आरोपापवादाधिकरणयोः सगुणनिर्गुणत्वं वस्तुतः निष्प्रतियोगिकनिर्गुणत्वं चाह—सगुण इति। सगुणो विराट्प्रणवः; सर्वारोपाधिकरणब्रह्मप्रतीकत्वात्। संहारो निर्गुणप्रणवः; स्वातिरिक्तसर्वापवादाधिकरणब्रह्मालम्बनत्वात्। किंच उभयात्मकोत्पत्तिप्रणवः। सगुणनिर्गुणविराट्साक्षियोगतः उभयात्मकोऽयमुत्पत्तिप्रणवः; सगुणनिर्गुणप्रणवद्वयाधिष्ठितेश्वरस्य स्वाज्ञस्वज्ञदृष्टिभ्यां सविशेषनिर्विशेषस्वरूपत्वेन स्वातिरिक्तप्रपञ्चोत्पत्त्यादिहेतुत्वात् तद्वाचकस्योत्पत्तिप्रणवत्वं युज्यत इत्यर्थः। सप्रतियोगिकनिर्गुणप्रणवं दृष्टान्तीकृत्य दार्ष्टान्तिकतया निष्प्रतियोगिकनिर्गुणतदुपायषोडशमात्राप्रपञ्चनपूर्वकं ब्रह्मप्रणवस्वरूपमाह—यथेति। प्लुतप्लुतशब्देन चतुर्थमात्रार्धमात्रोच्यते। तदसङ्गचिद्धातुरकारादिमात्रात्रयतदध्यक्षविश्वविराडोत्राद्यपेक्षया यथा निर्गुणः सप्रतियोगिकनिर्गुणरूपेण। विराजत इति विराट्। व्यष्टिसमष्टितुर्यैक्यौतेत्यर्थः। तथा प्लुतप्लुतः अर्धमात्रार्धमात्रात्मकः स्वयं षोडशसंख्यापूरकमात्राख्यपरामात्राभेदेन स्थित्वा स्वातिरिक्तस्थूलाकारादिपञ्चदशमात्रातद्व्यष्टिसमष्टितदुभयैक्यतदारोपापवादाधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तप्रविभक्ततमआदि-गुणसाम्यान्तविशेषजातं संहरत्युपसंहरत्यपह्नवं करोतीति संहारः॥ २॥

विराट्प्रणवस्य षोडशमात्रात्मकत्वम्

विराट्प्रणवः षोडशमात्रात्मकः षट्त्रिंशत्तत्त्वातीतः। षोडशमात्रात्मकत्वं कथमिति। उच्यते—अकारः प्रथमः, उकारो द्वितीयः, मकारस्तृतीयः, अर्धमात्रश्चतुर्थः, बिन्दुः पञ्चमी, नादः षष्ठी, कला सप्तमी, कलातीताष्टमी, शान्तिर्नवमी, शान्त्यतीता दशमी, उन्मन्येकादशी, मनोन्मनी द्वादशी, पुरी त्रयोदशी, मध्यमा चतुर्दशी, पश्यन्ती पञ्चदशी,

परा षोडशी। पुनश्चतुःषष्टिमात्रः प्रकृतिपुरुषद्वैविध्यमासाद्याष्टाविंशत्युत्तर-शतभेदमात्रास्वरूपमासाद्य सगुणनिर्गुणत्वमुपैत्येकोऽपि ब्रह्मप्रणवः॥ ३॥

स्वातिरिक्ताकारस्थूलाद्यंशप्रभवजाग्रज्जाग्रदादिचतुष्पञ्चदशकलनापह्नव-सिद्धनिष्प्रतियोगिकनिर्गुणतुर्यतुर्यरूपेण विराजत इति विराट्। स यत्रोपलभ्यते सोऽयं विराट्प्रणवो ब्रह्मप्रणव इत्यर्थः। कथं पुनस्तस्य विराट्प्रणवस्य ब्रह्मप्रणवत्वम्? षोडशमात्रात्मकत्वात्। कास्ता मात्रा इत्यत आह—षोडश-मात्रात्मक इति। वराहोपनिषदुक्तज्ञानकर्मप्राणशब्दादिपञ्चकान्तःकरणचतुष्टय-पञ्चीकृतपञ्चमहाभूतपञ्चकपञ्चतन्मात्रमहत्तत्त्वाव्यक्ताख्यानि षट्त्रिंशत्तत्त्वान्यती-त्यापह्नवीकृत्य निष्प्रतियोगिकतया वर्तते अवशिष्यत इति षट्त्रिंशत्तत्त्वातीत इत्यर्थः। शिष्टमुक्तार्थम्। षोडशमात्रास्वरूपं विशदीकरोति —अकार इति। षोडशमात्रात्मको ब्रह्मप्रणवः। तत्र पञ्चदशमात्रातदध्यक्षविश्वविश्वाद्यविकल्पानुज्ञै-करसान्तचैतन्याधिष्ठितो भवतीत्यत्र ब्रह्मप्रणवतद्दीपिकादि कृत्स्नं प्रमाणम्। न केवलमिदं मानं, किंतु नृसिंहतापिनीपरमहंसपरिव्राजकाद्युपनिषदोऽपीत्यर्थः। एकस्यैव ब्रह्मप्रणवस्य प्रकृतिपुरुषावयवयोगतो बहुत्वं, स्वेन रूपेणैकत्वं चाह—पुनरिति। पुरा ब्रह्मप्रणवावयवाकारादेः अयुताद्यवयववैशिष्ट्यमुक्तम्। पुनरपि स्वातिरिक्तत्वेन। प्रकृतत्वात् प्रकृतिः। तस्याश्चतुःषष्टिमात्रावैशिष्ट्यं कथमित्यत्र व्यष्टयकारस्थूलाकारादि पञ्चदश, तथा समष्टिस्थूलाकारादि पञ्चदश। विशिष्टं त्रिंशत्। तथा व्यष्टिसमष्टिजाग्रज्जाग्रदादित्रिंशत्, क्रियाज्ञानेच्छाशक्तित्रयं, माया चेत्याहत्य प्राकृतविभागश्चतुःषष्टिः। तथा स्वातिरिक्ताविद्यापदतत्कार्यजातं नवप्रजापत्याद्यविकल्पानुज्ञैकरसान्तचैतन्यात्मना पूरयतीति पुरुषः। तस्य चतुःषष्टिपादमात्रत्वं कथमित्यत्र प्रजापतयो नव, पञ्चीकृत्य निर्वाहकाः पञ्च ब्रह्माणः, वसुरुद्रादित्या अन्तर्यामिकूटस्थाः पञ्च, विश्वविश्वादयः पञ्चदश, विराड्विराडादिः पञ्चदश, ओत्रोत्रादिः पञ्चदश, आहत्य चतुःषष्टिः। एवं निर्विशेषचिद्धातुरेव चतुःषष्टिमात्रापादवत् प्रकृतिपुरुषद्वैविध्यमासाद्य स्वयं वस्तुमात्रदृष्ट्या प्राकृतपौरुषयोगप्रभवाष्टाविंशत्युत्तरशतमात्रास्वरूपमासाद्ये-वासाद्य सगुणत्वमुपैति। स्वज्ञदृष्ट्या प्राकृतपौरुषभेदकलनापवादाधिकरणतया

निर्गुणत्वं चोपैति। अत एकोऽपि ब्रह्मप्रणवः स्वाज्ञादिदृष्ट्या सगुणत्वं निर्गुणत्वं चावाप ॥ ३ ॥

परब्रह्मानुसंधानम्

सर्वाधारः परं ज्योतिरेष सर्वेश्वरो विदुः ।
सर्वदेवमयः सर्वप्रपञ्चाधारगर्भितः ॥ ४ ॥
सर्वाक्षरमयः कालः सर्वागममयः शिवः ।
सर्वश्रुत्युत्तमो मृग्यः सकलोपनिषन्मयः ॥ ५ ॥
भूतभव्यभविष्यद्यत् त्रिकालोदितमव्ययम् ।
तदप्योंकारमेवायं विद्धि मोक्षप्रदायकम् ॥ ६ ॥
तदेवात्मानमित्येतद् ब्रह्मशब्देन वर्णितम् ।
तदेकमजरममृतमनुभूय तथोमिति ॥ ७ ॥
सशरीरं समारोप्य तन्मयत्वं तथोमिति ।
त्रिशरीरं स्वमात्मानं परं ब्रह्म विनिश्चिनु ॥ ८ ॥
परं ब्रह्मानुसंदध्याद्विश्वादीनां क्रमक्रमात् ।

अत एवायं सर्वारोपापवादाधिकरणतया सर्वाधारः। जडाधारतया जडत्वं स्यादित्यत आह—परं ज्योतिरिति। स्वस्य जडप्रपञ्चातिरिक्तत्वेनाजडस्वरूपत्वात्। वस्तुतोऽयमेष सर्वेश्वरः स्वातिरिक्तसर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रतयावस्थित ईश्वरत्वादिति तमात्मानं परमार्थदृष्टयः स्वावशेषधिया विदुः जानन्तीत्यर्थः। ब्राह्मणेन योऽर्थोऽभिहितः तं मन्त्रग्रामोऽप्यनुवदति—सर्वेत्यादि। सर्वदेवमयः; सर्वदेवतास्वरूपत्वात्। सर्वप्रपञ्चारोपाधार ईश्वरो यतो निष्पन्नः सोऽयं प्रपञ्चाधारगर्भितः॥ सर्वाक्षरमयः; पञ्चाशद्वर्णार्थरूपत्वात्। कालः; कलयितृत्वात्, सर्वस्य कालयितृत्वाद्वा।

सर्वागममयः; आगमशास्त्रार्थरूपत्वात्। शिवः; स्वातिरिक्ताशिवग्रासत्वात्। किंच—सर्वेति।

"सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीमि ॥ ओमित्येतत्"

इति श्रुत्यनुरोधेन सर्वश्रुतिभिरोमिति यदुक्तं तत् ब्रह्मप्रणवार्थतुर्यतुर्यस्वमात्रमित्येवायमात्मा मृग्यः अन्वेष्टव्यः; इतरथा मृगयितुमशक्यत्वात्। ईशादिसकलोपनिषन्मयः; सर्वोपनिषन्मुख्यार्थत्वात्। यः कालत्रयावच्छिन्नः तदतीतोऽपि, तमेव मोक्षसाधनं विद्धीत्याह—भूतेति॥ श्रीनृसिंहोत्तरतापिन्यां "ओमित्येतदक्षरमिदं सर्वम्" इत्यादि "स आत्मा स विज्ञेयः" इत्यन्तं यथाव्याख्यातमत्रापि द्रष्टव्यम्॥ अयमात्मा ब्रह्मेत्यंशं विवृणोति—तदेवेति। "तदेकमजरममृतमोमित्यनुभूय तस्मिन्निदं सर्वं त्रिशरीरमारोप्य तन्मयं हि तदेवेति तं वा एतमात्मानं त्रिशरीरं परं ब्रह्मानुसंदध्यात्" इति श्रुत्यंशमनुकरोतीत्याह—तदेकमिति॥ ४–८॥

विश्वादीनां चातुर्विध्यम्

स्थूलत्वात् स्थूलभुक् चात्र सूक्ष्मत्वात् सूक्ष्मभुक् परम्॥ ९॥
एकत्वानन्दभोगाच्च सोऽयमात्मा चतुर्विधः।
चतुष्पाज्जागरितस्थानः स्थूलप्रज्ञो हि विश्वभुक्॥ १०॥
एकोनविंशतिमुखः साष्टाङ्गः सर्वगः प्रभुः।
स्थूलभुक् चतुरात्माथ विश्वो वैश्वानरः पुमान्॥ ११॥
विश्वजित् प्रथमः पादः स्वप्नस्थानगतः प्रभुः।
सूक्ष्मप्रज्ञः स्वतोऽष्टाङ्ग एको नान्यः परंतप॥ १२॥
सूक्ष्मभुक् चतुरात्माथ तैजसो भूतराडयम्।
हिरण्यगर्भः स्थूलोऽन्तर्द्वितीयः पाद उच्यते॥ १३॥

कामं कामयते यावद्यत्र सुप्तो न कंचन ।
स्वप्नं पश्यति नैवात्र तत् सुषुप्तमपि स्फुटम् ॥ १४ ॥
एकीभूतः सुषुप्तस्थः प्रज्ञानघनवान् सुखी ।
नित्यानन्दमयोऽप्यात्मा सर्वजीवान्तरस्थितः ॥ १५ ॥
तथाप्यानन्दभुक् चेतोमुखः सर्वगतोऽव्ययः ।
चतुरात्मेश्वरः प्राज्ञस्तृतीयः पादसंज्ञितः ॥ १६ ॥
एष सर्वेश्वरश्चैष सर्वज्ञः सूक्ष्मभावनः ।
एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ ॥ १७ ॥
भूतानां त्रयमप्येतत् सर्वोपरमबाधकम् ।
तत् सुषुप्तं हि तत् स्वप्नं मायामात्रं प्रकीर्तितम् ॥ १८ ॥

तत् कथं विश्वादीनां चातुर्विध्यमित्यत्र—स्थूलत्वादिति ॥ ''त्रयमप्येतत् सुषुप्तम्'' इति समानश्रुतितः जाग्रदाद्यवस्थात्रयस्यापि सुषुप्तत्वं सर्वोपरमणाधिकरणज्ञानबाधकं जाग्रदाद्यवस्थात्रयेऽपि तत्त्वाग्रहणलक्षणस्वापस्य तुल्यत्वादित्यर्थः ॥ स्वप्नं मायामात्रम् इत्यत्र जाग्रत्स्वप्नावन्यथाग्रहणलक्षणावित्यर्थः ॥ ९–१८ ॥

तुर्यावस्थायाः चातुर्विध्यम्

चतुर्थश्चतुरात्मापि सच्चिदेकरसो ह्ययम् ।
तुरीयावसितत्वाच्च एकैकत्वानुसारतः ॥ १९ ॥
ओत्रनुज्ञात्रनुज्ञानविकल्पज्ञानसाधनम् ।
विकल्पत्रयमत्रापि सुषुप्तं स्वप्नमान्तरम् ।
मायामात्रं विदित्वैवं सच्चिदेकरसो ह्यथ ॥ २० ॥

जाग्रदाद्यवस्थात्रयस्य चातुर्विध्यमुक्त्वा तुर्यावस्थाया अपि चातुर्विध्यमुच्यते—चतुर्थ इति। कथं तुर्यपर्यवसितत्वमित्यत्र—एकैकत्वानुसारत इति॥ सर्वत्र तुर्यानुस्यूतिसाधनं किमित्यत्र—ओत्रित्यादि। अत्रापि ओत्रादित्रयमपि सुषुप्तमेव; विश्वविश्वाद्यनुज्ञैकरसाविकल्पवदात्मावरणभेदप्रतीत्यवास्तवत्वसाम्यात्। तुर्यतुर्यातिरिक्तं सर्वं मायामात्रमिति विदित्वाथ वेदनोत्तरक्षणं स्वयमेव सच्चिदेकरसो ह्यवशिष्यत इत्यर्थः॥ १९, २०॥

तुर्यतुरीयो ब्रह्मप्रणवः

विभक्तो ह्ययमादेशो न स्थूलप्रज्ञमन्वहम्।
न सूक्ष्मप्रज्ञमत्यन्तं न प्रज्ञं न क्वचिन्मुने॥ २१॥
नैवाप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञमान्तरम्।
नाप्रज्ञमपि न प्रज्ञाघनं चादृष्टमेव च॥ २२॥

तदलक्षणमग्राह्यं यदव्यवहार्यमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स ब्रह्मप्रणवः। स विज्ञेयो नापरस्तुरीयः। सर्वत्र भानुवन्मुमुक्षूणामाधारः स्वयंज्योतिर्ब्रह्माकाशः[1] सर्वदा विराजते परब्रह्मत्वात्। इत्युपनिषत्॥ २३॥

युगपत् तुर्यतुर्ययाथात्म्याज्ञविकल्पिततुर्यतुर्यप्रविभक्तस्थूलाकारादिमात्रापञ्चदशपरिणतव्यष्टिसमष्टिकलनान्वितजाग्रज्जाग्रदादितुर्यस्वापावस्थान्तारोपापवादाधिकरणविश्वविश्वाद्यविकल्पानुज्ञैकरसान्तचैतन्यविभाताविशेषजातापह्नवसिद्धनिष्प्रतियोगिकतुर्यतुर्यमात्रं प्रपञ्चयति—विभक्त इत्यादिना। "स आत्मा स विज्ञेयः" इत्यन्तं नृसिंहोत्तरतापिनीविवरणेन व्याख्यातं भवतीति मन्तव्यम्। प्रकृतब्रह्मप्रणवमुपसंहरति—स इति। अस्मिन्नुपदेशे यस्तुर्यतुरीयोऽभिहितः स ब्रह्मप्रणवः। स एव स्वमात्रमिति विज्ञेयः तुर्यतुर्यापेक्षया। नापरस्तुरीयः; तुर्यतुर्याधिक्यादर्शनात्। तुर्यतुर्य एव स्वज्ञदृष्ट्या मुमुक्षूणामाधारः; तत्प्राप्यत्वात् सर्वप्रकाशकभानुवत्।

[1] उ. उ १. ब्रह्माकारः.

**स्वयंज्योतिः** ; सूर्यादिज्योतिषामपि ज्योतिष्ट्वात् । वस्तुतो भास्यभासककलनापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रतया काशत इति **ब्रह्माकाशः** । **सर्वदा** स्वाज्ञादिदृष्टिमोहे सत्यसति स्वमात्रतया **विराजते** । कुतः? परब्रह्मत्वात् । स्वावशेषतया स्थितिर्युज्यत इत्यर्थः । अष्टमोपदेशसमाप्त्यर्थोऽयम् इत्युपनिषच्छब्दः ॥ २१–२३ ॥

इत्यष्टमोपदेशः

---

## नवमोपदेशः

### ब्रह्मस्वरूपवर्णनम्

अथ ब्रह्मस्वरूपं कथमिति नारदः पप्रच्छ । तं होवाच पितामहः किं ब्रह्मस्वरूपमिति । अन्योऽसावन्योऽहमस्मीति ये विदुस्ते पशवो न स्वभावपशवः । तमेवं ज्ञात्वा विद्वान् मृत्युमुखात् प्रमुच्यते । नान्यः पन्था विद्यतेऽयनाय ॥ १ ॥

कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्यम् ।
संयोग एषां न त्वात्मभावादात्मा ह्यनीशः सुखदुःखहेतोः ॥ २ ॥
ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ।
यः कारणानि निखिलानि तानि कालात्मयुक्तान्यधितिष्ठत्येकः ॥३॥
तमेकस्मिन् त्रिवृतं षोडशान्तं शतार्धारं विंशतिप्रत्यराभिः ।
अष्टकैः षड्भिर्विश्वरूपैकपाशं त्रिमार्गभेदं द्विनिमित्तैकमोहम् ॥ ४ ॥
पञ्चस्रोतोऽम्बुं पञ्चयोन्युग्रवक्त्रां पञ्चप्राणोर्मिं पञ्चबुद्ध्यादिमूलाम् ।
पञ्चावर्तां पञ्चदुःखौघवेगां पञ्चाशद्भेदां पञ्चपर्वामधीमः ॥ ५ ॥
सर्वाजीवे सर्वसंस्थे बृहन्ते तस्मिन् हंसो भ्राम्यते ब्रह्मचक्रे ।

पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति ॥ ६ ॥
उद्गीतमेतत्परमं तु ब्रह्म तस्मिंस्त्रयं स्वप्रतिष्ठाक्षरं च ।
अत्रान्तरं वेदविदो विदित्वा लीनाः परे ब्रह्मणि तत्परायणाः ॥७॥
संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः ।
अनीशश्चात्मा बुध्यते भोक्तृभावाज्ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥
ज्ञाज्ञौ द्वावजावीशनीशावजा ह्येका भोक्तृभोगार्थयुक्ता ।
अनन्तश्चात्मा विश्वरूपो ह्यकर्ता त्रयं यदा विन्दते ब्रह्ममेतत् ॥९॥
क्षरं प्रधानममृताक्षरं हरः क्षरात्मानावीशते देव एकः ।
तदभिध्यानाद्योजनात्तत्त्वभावाद् भूयश्चान्ते विश्वमायानिवृत्तिः ॥१०॥
ज्ञात्वा देवं मुच्यते सर्वपाशैः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।
तस्याभिध्यानात्तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः ॥ ११ ॥
एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किंचित् ।
भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत् ॥१२॥
आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत् परम् ॥ १३ ॥

पितामहेन ब्रह्मयाथात्म्यमुक्तमपि पुनर्नैमिशारण्यवासिमुनिमण्डलबुद्धिवैशद्यार्थं ब्रह्मस्वरूपं सप्रकारं पृच्छतीत्याह—अथेति । यदि त्वं परोक्षं मन्यसे, तदा अन्योऽसावन्योऽहमस्मीति स्वभेदेन ये विदुस्ते पशवः स्वस्वामिबध्यमानपशव इव स्वाज्ञानदृढपाशबद्धत्वात् । ते स्वभावत एव पशव इत्यत आह—न स्वभावपशव इति । तेषां स्वभावस्य निष्प्रतियोगिकब्रह्ममात्रत्वात् । यः सदा निष्प्रतियोगिकमवशिष्यते तमेवं स्वमात्रमिति ज्ञात्वा विद्वान् मृत्युमुखात् प्रमुच्यते । स विद्वान् वेदनसमकालं स्वातिरिक्तास्तित्वमेव मृत्युः, तन्मुखतः स्वाज्ञानात् मुच्यते ; स्वयं स्वमात्रमवशिष्यते इत्यर्थः । स्वाज्ञानप्रभवस्वातिरिक्तबन्धस्य स्वज्ञानादृते विनाशो न विद्यत इत्याह—नान्यः पन्था

विद्यतेऽयनायेति । एवं नारदेन सार्कं विधिमुखतः श्रुतवेदान्ता नैमिशारण्यवासिनो मुनयो मिलित्वा कालादिसांख्यान्तमतान्युपन्यस्याथ पूर्वपक्षत्वेन निरस्य यत् परमार्थतत्त्वं तदेव स्वमात्रं नातोऽतिरिक्तमस्तीति ध्यात्वा तन्मात्रमवाशिष्यन्तेत्याह—काल इति । श्वेताश्वतरमन्त्रोपनिषदि " कालः स्वभावः " इत्यारभ्य " तद्ब्रह्मोपनिषत् परम् " इत्यन्तं पदशो व्याख्यातमित्यत्रोपरतमिति मन्तव्यम् । एवं नैमिशारण्यवासिनः परमेष्ठिमुखतः " नातः परं वेदितव्यं हि किंचित् " इति स्वातिरिक्तसर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति विदित्वा वेदनसमकालं कृतकृत्याः सन्तः तन्मात्रमवाशिष्यन्त इत्यर्थः ॥ १–१३ ॥

शास्त्रवेदनफलम्

य एवं विदित्वा स्वरूपमेवानुचिन्तयन् 'तत्र को मोहः, कः शोक एकत्वमनुपश्यतः' । तस्माद्विराड् भूतं भव्यं भविष्यद्भवत्यनश्वरस्वरूपम् ॥ १४ ॥

अणोरणीयान् महतो महीयानात्मास्य जन्तोर्निहितो गुहायाम् ।
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ १५ ॥
अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।
स वेत्ति वेद्यं न च तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम् ॥
अशरीरं शरीरेष्वनवस्थेष्ववस्थितम् ।
महान्तं विभुमात्मानं मत्वा धीरो न शोचति ॥ १७ ॥
सर्वस्य धातारमचिन्त्यशक्तिं सर्वागमान्तार्थविशेषवेद्यम् ।
परात् परं परमं वेदितव्यं सर्वावसानेऽन्तकृद्वेदितव्यम् ॥ १८ ॥
कविं पुराणं पुरुषोत्तमोत्तमं सर्वेश्वरं सर्वदेवैरुपास्यम् ।
अनादिमध्यान्तमनन्तमव्ययं शिवाच्युताम्भोरुहगर्भभूधरम् ॥ १९ ॥

स्वेनावृतं सर्वमिदं प्रपञ्चं पञ्चात्मकं पञ्चसु वर्तमानम् ।
पञ्चीकृतानन्तभवप्रपञ्चं पञ्चीकृतस्वावयवैरसंवृतम् ।
परात् परं यन्महतो महान्तं स्वरूपतेजोमयशाश्वतं शिवम् ॥ २० ॥

यः कोऽप्येतच्छास्त्रं यथावद्वेद, सोऽपि कृतकृत्यो भवतीत्याह—**य एवमिति** । य एवं मौनिपटलवत् गुरुमुखात् ससंन्यासज्ञानैकगम्यं ब्रह्म स्वमात्रमिति विदित्वा ततस्तत्स्वरूपमेव स्वात्मेत्यभेदं पश्यति, तस्य तत्र स्वरूपे स्वातिरिक्तमस्ति नास्तीति **को मोहः**? तदपाये कः शोकः? ब्रह्ममात्रावगतेः शोकमोहापह्नवपूर्वकत्वात् । यस्मादेवं स्वातिरिक्तापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रतया विराजते, तस्मात् **विराट्** । परमात्मैव स्वाज्ञदृष्ट्या यद्भूतादिकालपरिच्छेद्यं तत् स्वज्ञदृष्ट्या स्वरूपमेव भवतीत्याह—**भूतं भव्यमिति** । वस्तुतः सन्मात्रातिरिक्तासदभावात्; "पश्यतेहापि सन्मात्रमसदन्यत्" इति श्रुतेः । एवमात्मानं पश्यतो वीतशोकत्वमात्मनः करणग्रामाभावेऽपि करणग्रामप्रवृत्तिनिमित्तत्वं चाह—**अणोरिति** ॥ मन्त्रद्वयमपि श्वेताश्वतरे व्याख्यातम् । कथं पुनः आत्मज्ञानात् शोकात्ययः? देहावच्छिन्नात्मनः शोकदर्शनादित्यत आह—**अशरीरमिति** ॥ शोकनिमित्तशरीरत्रयवैरल्यात् । शरीरत्रयापह्नवसिद्धब्रह्मवेदनोपायमाह—**सर्वस्येति** । स्वाज्ञदृष्टिविकल्पितस्य सर्वस्य जगतः विष्ण्वात्मना धातारं पोषकम् । ईश्वरात्मना अचिन्त्या अघटितघटनापटीयसी शक्तिर्यस्य तमचिन्त्यशक्तिं प्रत्यगभिन्नब्रह्मात्मना सर्वागमान्तार्थः । "ब्रह्मव्यतिरिक्तं न किंचिदस्ति," "ब्रह्ममात्रमसन्न हि" इति परमसिद्धान्त एव विशेषार्थः । तन्मात्रतया वेद्यं स्वात्मानं ये जानन्ति तैर्ब्रह्मविद्भिः यत् **परादक्षरादपि परं** तदेव **परमं ब्रह्म सर्वावसाने** स्वातिरिक्तसर्वापह्नवे सति स्वमात्रमिति सकृदेव वेदितव्यम् । वेदनवृत्तेरप्युपरमात् यद्येवं वेदितुमशक्तस्तदा कविमित्यादिविशेषणविशिष्टमीश्वरं वा चिरमुपास्य तत्प्रसादलब्धब्रह्मज्ञानेन निर्विशेषं ब्रह्मैवैतीत्याह—**कविमिति** । **कविं** सर्वज्ञत्वात् । **पुराणं** चिरन्तनत्वात् । **अनादिमध्यान्तं** स्वस्य जन्म-

स्थितिलयाभावात्। **शिवाच्युताम्भोरुहगर्भा** हरहरिविरिञ्चितरवः, तेषां प्ररोहगिरित्वात्॥ किंच—स्वेनेति। स्वेनान्तर्याम्यादिभावमापन्नेनायं प्रपञ्चो व्याप्त इति वक्तव्ये इदं प्रपञ्चम् इति विभक्तिलिङ्गव्यत्ययः। **पञ्चात्मकमि**त्यादिप्रपञ्चविशेषणम्। तद्व्याप्त्या तत्संवृतत्वं स्यादिति शङ्कायाम् **असंवृत**मिति विशेषणम्। असंवृतत्वे हेतुः। **परात् परम्** इति महदव्यक्तादेरपि व्यापकत्वेन महत्त्वात्। वस्तुतः **शिवं** स्वातिरिक्ताशिवापह्नवात्। **सिद्धं** ब्रह्मास्मीत्यात्मानं जानीयात् इत्यर्थः॥ १४–२०॥

ब्रह्मप्राप्तिः तद्धेतुश्च

नाविरतो दुश्चरितान्नाशान्तो नासमाहितः।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्॥ २१॥

नान्तःप्रज्ञं न बहिःप्रज्ञं न स्थूलं नास्थूलं न ज्ञानं नाज्ञानं नोभयतःप्रज्ञमग्राह्यमव्यवहार्यं स्वान्तःस्थितः स्वयमेवेति य एवं वेद स मुक्तो भवति स मुक्तो भवतीत्याह भगवान् पितामहः॥ २२॥

एवं ज्ञानी दुश्चरितादिवृत्तिमानपि ब्रह्माप्नुयादित्यत आह—**नेति**। दुश्चरितादिवृत्तिमतो ज्ञानानुदयात्। यदि स्यात् प्रमादतस्तदाभासज्ञानं भवेत्। न ह्याभासज्ञानं ब्रह्मसाक्षात्कारहेतुर्भवति। यस्मादेवं तस्मात् दुश्चरितादिवृत्त्यसंभवनिष्प्रतियोगिकब्रह्ममात्रप्रज्ञानेन तद्भावापन्नो भवतीत्यर्थः॥ स्वान्तर्बाह्यविजृम्भितस्थूलसूक्ष्मप्रपञ्चासंभवब्रह्ममात्रज्ञानतो मुक्तो भवतीत्याह—**नान्तःप्रज्ञमिति**॥ आवृत्तिरवधारणार्था॥ २१, २२॥

परिव्राजकस्थितिः

स्वस्वरूपज्ञः परिव्राट्। परिव्राडेकाकी चरति। भयत्रस्तसारङ्गवत् तिष्ठति। गमनविरोधं न करोति। स्वशरीरव्यतिरिक्तं सर्वं त्यक्त्वा

षट्पदवृत्त्या स्थित्वा स्वरूपानुसंधानं कुर्वन् सर्वमनन्यबुद्ध्या स्वस्मिन्नेव मुक्तो भवति । स परिव्राट् सर्वक्रियाकारकनिवर्तको गुरुशिष्यशास्त्रादिविनिर्मुक्तः सर्वसंसारं विसृज्यामोहितः । परिव्राट् कथं निर्धनिकः सुखी । धनवान् ज्ञानाज्ञानोभयातीतः सुखदुःखातीतः स्वयंज्योतिःप्रकाशः सर्ववेद्यः सर्वज्ञः सर्वसिद्धिदः सर्वेश्वरः सोऽहमिति । तद्विष्णोः परमं पदं यत्र गत्वा न निवर्तन्ते योगिनः । सूर्यो न तत्र भाति न शशाङ्कोऽपि । न स पुनरावर्तते न स पुनरावर्तते । तत्कैवल्यम् । इत्युपनिषत् ॥ २३ ॥

एवं मुक्तिभाजनपरिव्राजकस्थितिमाह—स्वस्वरूपज्ञ इति । स्वस्वरूपं स्वमात्रमिति जानातीति स्वस्वरूपज्ञः । स्वाज्ञानतत्कार्यं परित्यज्यापह्नवं कृत्वा स्वभावं व्रजति भजतीति परिव्राट् । स्वातिरिक्तद्वयाभावात् स्वाज्ञदृष्ट्या जनसंबाधेऽपि स्वदृष्ट्या परिव्राडेकाकी चरति । स्वाज्ञदृष्ट्या भयत्रस्तसारङ्गवत् तिष्ठति सारङ्ग इव तिष्ठति । तथा स्वगमनविरोधं न करोतीव । स्वज्ञदृष्ट्या शरीराभावेऽपि परारोपितप्रातिभासिकस्वशरीरव्यतिरिक्तं सर्वं त्यक्त्वा षट्पदवृत्त्या माधूकरास्यपात्रवृत्त्या स्थित्वाहोरात्रं स्वरूपानुसंधानमेव कुर्वन् सर्वमनन्यबुद्ध्या स्वस्मिन्नेव मुक्तो भवति । क्रियाकारकद्वैतशून्यः गुरुशिष्यशास्त्रादिभिदागन्धविकलः नित्यानन्दस्वान्ततया न कदापि संसारदुःखमोहितः । परिव्राट् कथं पुनः निर्धनिकः सुखी भवति ? ब्रह्ममात्रधनवतो नित्यसुखितोपपद्यते । ज्ञानाज्ञानोभयातीतः चिदाभासतया मृग्यत्वेन ज्ञानाज्ञानातीतत्वम्; “ ज्ञानिताज्ञानिते चात्माभासस्यैव न चात्मनः ” इति स्मृतेः । स्वयंज्योतिः प्रकाशमात्रत्वात् । यः सर्वापह्नवसिद्धब्रह्ममात्रतया अवस्थातुमीश्वरो भवति सोऽहं सर्वेश्वरः । योगिनो यत्पदं प्राप्याद्यापि न निवर्तन्ते तद्विष्णोः परिव्राजकस्य परमं पदम् । न हि तत्र सूर्यशशाङ्कौ भासेते ॥ यत्पदमपुन-

रावर्तकं तदेव हि कैवल्यम् । इतिशब्दो नवमोपदेशसमाप्त्यर्थः । उपनिषच्छब्दः नारदपरिव्राजकोपनिषत्समाप्त्यर्थः ॥ २३ ॥

इति नवमोपदेशः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
नारदीयविवरणं लिखितं स्यात् स्फुटं लघु ।
परिव्राजकोपनिषद्व्याख्या ग्रन्थसहस्रयुक् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे त्रिचत्वारिंशत्संख्यापूरकं नारदपरिव्राजकोपनिषद्विवरणं संपूर्णम्

———

# निर्वाणोपनिषत्

## वाङ् मे मनसि—इति शान्तिः

### मुख्यावधूतलक्षणम्

अथ निर्वाणोपनिषदं व्याख्यास्यामः ॥ १ ॥ परमहंसः सोऽहम् ॥ २ ॥ परिव्राजकाः पश्चिमलिङ्गाः ॥ ३ ॥ मन्मथ-क्षेत्रपालाः ॥ ४ ॥ गगनसिद्धान्तः ॥ ५ ॥ अमृतकल्लोलनदी ॥ ६ ॥ अक्षयं निरञ्जनम् ॥ ७ ॥ निःसंशय ऋषिः ॥ ८ ॥ निर्वाणो देवता ॥ ९ ॥ निष्कुलप्रवृत्तिः ॥ १० ॥ निष्केवलज्ञानम् ॥ ११ ॥ ऊर्ध्वाम्नायः ॥ १२ ॥ निरालम्बपीठः ॥ १३ ॥ संयोगदीक्षा ॥ १४ ॥ वियोगोपदेशः ॥ १५ ॥ दीक्षासंतोषपावनं च ॥ १६ ॥ द्वादशा-दित्यावलोकनम् ॥ १७ ॥ विवेकरक्षा ॥ १८ ॥ करुणैव केलिः ॥ १९ ॥ आनन्दमाला ॥ २० ॥ एकासनगुहायां मुक्तासनसुखगोष्ठी ॥ २१ ॥ अकल्पितभिक्षाशी ॥ २२ ॥ हंसाचारः ॥ २३ ॥ सर्वभूतान्तर्वर्ती हंस इति प्रतिपादनम् ॥ २४ ॥ धैर्यकन्था । उदासीनकौपीनम् । विचारदण्डः । ब्रह्मावलोकयोगपट्टः । श्रियां पादुका । परेच्छाचरणम् ।

कुण्डलिनीबन्धः। परापवादमुक्तो जीवन्मुक्तः। शिवयोगनिद्रा च खेचरीमुद्रा च परमानन्दी ॥ २५ ॥ निर्गुणगुणत्रयम् ॥ २६ ॥ विवेकलभ्यं मनोवागगोचरम् ॥ २७ ॥ अनित्यं जगद्यज्जनितं स्वप्नजगदभ्रगजादितुल्यम्, तथा देहादिसंघातं मोहगणजालकलितं तद्रज्जुसर्पवत् कल्पितम् ॥ २८ ॥ विष्णुविध्यादिशताभिधानलक्ष्यम् ॥ २९ ॥ अङ्कुशो मार्गः ॥ ३० ॥ शून्यं न संकेतः ॥ ३१ ॥ परमेश्वरसत्ता ॥ ३२ ॥ सत्यसिद्धयोगो मठः ॥ ३३ ॥ अमरपदं न तत्स्वरूपम् ॥ ३४ ॥ आदिब्रह्म स्वसंवित् ॥ ३५ ॥ अजपागायत्रीविकारदण्डो ध्येयः ॥ ३६ ॥ मनोनिरोधिनी कन्था ॥ ३७ ॥ योगेन सदानन्दस्वरूपदर्शनम् ॥ ३८ ॥ आनन्दभिक्षाशी ॥ ३९ ॥ महाश्मशानेऽप्यानन्दवने वासः ॥ ४० ॥ एकान्तस्थानमठम् ॥ ४१ ॥ उन्मन्यवस्था शारदा चेष्टा ॥ ४२ ॥ उन्मनी गतिः ॥ ४३ ॥ निर्मलगात्रं निरालम्बपीठम् ॥ ४४ ॥ अमृतकल्लोलानन्दक्रिया ॥ ४५ ॥ पाण्डरगगनमहासिद्धान्तः ॥ ४६ ॥ शमदमादिदिव्यशक्त्याचरणे क्षेत्रपात्रपटुता परावरसंयोगः तारकोपदेशः ॥ ४७ ॥ अद्वैतसदानन्दो देवता ॥ ४८ ॥ नियमः स्वान्तरिन्द्रियनिग्रहः ॥ ४९ ॥ भयमोहशोकक्रोधत्यागस्त्यागः ॥ ५० ॥ परावरैक्यरसास्वादनम् ॥ ५१ ॥ अनियामकत्वनिर्मलशक्तिः ॥ ५२ ॥ स्वप्रकाशब्रह्मतत्त्वे शिवशक्तिसंपुटितप्रपञ्चच्छेदनम्, तथा पत्राक्षाक्षिकमण्डलभावाभावदहनम् ॥ ५३ ॥ बिभ्रत्याकाशाधारम् ॥ ५४ ॥ शिवं तुरीयं यज्ञोपवीतम्, तन्मया शिखा ॥५५॥

चिन्मयं चोत्सृष्टिरण्डं संततोक्षिकमण्डलम् ॥ ५६ ॥ कर्मनिर्मूलनं कथा । मायाममताहंकारदहनं श्मशाने ॥ ५७ ॥ अनाहताङ्गी ॥ ५८ ॥

निर्वाणोपनिषद्वेद्यं निर्वाणानन्दतुन्दिलम् ।
त्रैपदानन्दसाम्राज्यं स्वमात्रमिति चिन्तये ॥

इह खलु ऋग्वेदप्रविभक्तेयं निर्वाणोपनिषत् पारिव्राज्यधर्मपूगप्रकटनपूर्वकं परमार्थतत्त्वप्रकाशिका विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । इयं श्रुतिः उत्तमाधिकारिणः परिव्राजकानुपलभ्य स्वनाम्नोपनिषदमुपदिशति—अथेत्यादिना । अथशब्दः आश्रमत्रयानन्तर्यार्थः । विदेहकैवल्यमेव निर्वाणं तद्बोधिनीमुपनिषदं विद्यां श्रुतयो वयं व्याख्यास्यामः विवरणं कुर्म इत्यर्थः ॥ वक्ष्यमाणविद्याप्रतिपाद्यं किमित्यत आह—परमहंसः सोऽहमिति । स्वातिरिक्तापह्नवसिद्धः परमः परमात्मा चासौ, पुनः स्वाज्ञविकल्पितस्वातिरिक्तभ्रमं हन्तीति हंसश्चेति प्रसक्तप्रत्यगभिन्नपरमात्मा योऽयं प्रकटितः सोऽहमिति सम्यग्ज्ञानसिद्धं प्रत्यगाद्याख्यासहं निष्प्रतियोगिकब्रह्ममात्रं प्रतिपाद्यमित्यर्थः ॥ के अत्राधिकारिण इत्यत्राह—परिव्राजकाः पश्चिमलिङ्गा इति । बाह्यसंसारं परित्यज्य दण्डादिधारणलक्षणं व्यक्तविष्णुलिङ्गमवलम्ब्य परितो व्रजन्तीति परिव्राजकाश्च ते पश्चिममन्तःसंन्यासलक्षणमव्यक्तविष्णुलिङ्गिनश्चेति स्वबाह्यान्तर्विलसितविक्षेपग्रासव्यक्ताव्यक्तविष्णुलिङ्गधारिण इत्यर्थः ; "सर्व एते विष्णुलिङ्गं दधाना व्यक्ताव्यक्तं बहिरन्तश्च नित्यम्" इति श्रुतेः ॥ तेषामेवं विष्णुलिङ्गसत्वेऽपि विष्णुत्वं कुत इति तत्राह—मन्मथक्षेत्रपाला इति । मदित्यस्मत्प्रत्ययालम्बनप्रत्यगादिविभागासहब्रह्ममात्राज्ञानविजृम्भितसर्वशास्त्रमथनाविर्भूतमाविद्यकं पदं मन्मथक्षेत्रम् अनन्तकोटिब्रह्माण्डबीजप्ररोहभूमित्वात् क्षेत्रत्वं युज्यते । तत् स्वातिरिक्तं नास्तीत्यपोह्य अहमेवेदं सर्वमिति स्वात्ममात्रधिया पालनाद्विष्णुत्वं निरङ्कुशमित्यर्थः ॥ विष्णोः साकल्यप्रसिद्धेः तद्भावापत्त्या तेषां सिद्धान्तोऽपि तथेत्यत आह—गगनसिद्धान्त इति । विष्णोः साकल्यं स्वाज्ञानसापेक्षम् । तदपाये "स एषोऽकलोऽमृतः" इति श्रुतिसिद्ध-

निष्कलविष्णुभावारूढानां गगनवन्निरवयवं निष्कलब्रह्मगोचरोऽयं सिद्धान्त इत्यर्थः ॥ तदापि पारिव्राज्योपाधियोगतः कथं तदन्तःकरणं निष्कलगोचरं भवतीत्यत आह—अमृतकल्लोलनदीति । निष्कलब्रह्मभावापन्नान्तःकरणं स्वमात्रभावामृततरङ्गवद्विरजानदीवच्चिदेकरसगोचरं तदन्तःकरणमित्यर्थः ॥ तेषां क्षयिष्णुत्वादिगुणकान्तःकरणयोगतः तत्स्वरूपमपि तथेत्यत आह—अक्षयं निरञ्जनमिति । कामादिवृत्तिमदन्तःकरणं क्षयिष्ण्वञ्जनार्हं च भवेत् परिव्राजकान्तःकरणस्य तद्वैपरीत्येन निर्विकल्पब्रह्ममात्रपर्यवसन्नत्वात् तद्रूपमक्षयं सर्वत्र निरञ्जनं चेत्यर्थः ॥ तेषामेवं बोधप्रदाता कीदृश इत्यत आह—निःसंशय ऋषिरिति । श्रुत्याचार्यप्रसादमहिम्ना निःसंशयं यथा भवति तथा निष्प्रतियोगिकब्रह्ममात्रभावम् ऋषत्यवगच्छति शिष्यान् ग्राहयति वेति निःसंशय ऋषिराचार्य इत्यर्थः ; "सर्वशरीरस्थचैतन्यब्रह्मप्रापको गुरुः" इति श्रुतेः । तथाविधदेशिकानुशिष्टपरिव्राट्पटलसेव्यदेवता केत्यत आह—निर्वाणो देवतेति । निर्वाणमिति वक्तव्ये निर्वाण इति लिङ्गव्यत्ययः । ब्रह्ममात्रावस्थानलक्षणनिर्वाणं कैवल्यं तद्रूपतया देदीप्यमाना वासुदेवरूपिणी देवतेत्यर्थः ।

"सर्वभूताधिवासं यद्भूतेषु च वसत्यपि ।
सर्वानुग्राहकत्वेन तदस्म्यहं वासुदेवः ॥"

इति श्रुतेः ॥ एवं निर्वाणदेवताभावमापन्नानामपि स्वकुलानुरूपा प्रवृत्तिः स्यादित्यत आह—निष्कुलप्रवृत्तिरिति । स्वातिरिक्तकुलगोत्रादेः मायिकत्वेन कारणतुल्यत्वात् । न हि ब्रह्ममात्रज्ञानसमकालं स्वान्यकुलानुरूपा प्रवृत्तिर्निवृत्तिर्वा अस्तीत्यत्र—"उत्पन्नतत्त्वबोधस्य यथापूर्वं न संसृतिः" इति भगवत्पादोक्तेः । प्रवृत्तिसामान्याभावे देहधारणा कथमिति चेन्न ; स्वदृष्ट्या देहतद्धारणाविभ्रमवैरल्यात् । यदि प्रातिभासिकदृष्ट्या स्फुरत्, तदा देहधारणामात्रप्रवृत्तिनिवृत्त्योरपि तथात्वात् । न हि प्रातिभासिकप्रवृत्त्यादिः कार्यकारी भवति; "प्रतिभासत एवेदं न जगत् परमार्थतः" इति श्रुतेः ॥ किं तादृशज्ञानं केवलशास्त्रजन्यम्? नेत्याह—निष्केवलज्ञानमिति । शास्त्रीयज्ञानस्य स्वातिरिक्तसत्ताबाधकत्वेऽपि कार्यकारिप्रवृत्तेरबाधकत्वात् नेदं शास्त्रजं भवितुमर्हति; किंतु तदुपेयतत्त्वज्ञान-

मेवेत्यर्थः। एवं ज्ञानिभिः पठनपाठनादिकं न कार्यम्; ततो ब्रह्मविद्यासंप्रदायविच्छेदः स्यादित्यत आह--**ऊर्ध्वाम्नाय** इति। तैः कर्तव्याकर्तव्यतया न किंचिदपि कार्यान्तरं विद्यते। यदि प्राण्यदृष्टतः स्यात्, तदा अधोभावं गतकर्मोपासनाकाण्डद्वयगोचराम्नायजातपठनपाठनाभावेऽपि। ऊर्ध्वं ब्रह्म यत्र उपनिषत्कदम्बे आम्नायते सोऽयं ऊर्ध्वाम्नायः ईशाद्यष्टोत्तरशतोपनिषत्पूगः। गुरुतः स्वयं वा पठेच्छिष्यान् वा पाठयेत्। एवं कृते ब्रह्मविद्यासंप्रदायाविच्छेदोऽपि स्यादिति यत्, तत् सहजमित्यत्र

"सर्वेषु वेदेषूपनिषद्रमावर्तयेत्।"
"सदोपनिषदं विद्यामभ्यसेन्मुक्तिहेतुकीम्।
काय: करोतु कर्माणि वृथा वागुच्यतामिह।
तारं जपतु वाक् तद्वत् पठत्वाम्नायमस्तकम्॥"
"विष्णुं ध्यायति धीर्यद्वा ब्रह्मानन्दे विलीयताम्।
साक्ष्यहं किंचिदप्यत्र न कुर्वे नापि कारये॥"

इत्यादिश्रुतेः॥ एवं ब्रह्मविद्यासंप्रदायप्रवर्तकानामवस्थानं सालम्बं स्यादित्यत आह—**निरालम्बपीठ** इति। स्वातिरिक्तालम्बनशून्यब्रह्ममात्रतया पीठ आसनं स्थितिरिति यावत्; "निर्विशेषज्ञानिनः स्यात् स्वे महिम्नि सदा स्थितिः" इति स्मृतेः॥ तेषां काभिनिवेश इत्यत्र—**संयोगदीक्षेति**। सच्छिष्यपटलब्रह्ममात्रज्ञानयोगवितरणे दीक्षा अभिनिवेश इत्यर्थः। एवमभिनिवेशाभासोऽपि शिष्यादृष्टनिमित्तो न स्वत इति भावः॥ तदुपदेशः कीदृश इत्यत्र—**वियोगोपदेश** इति। प्रसक्तस्वातिरिक्तास्तित्वभ्रमवियोगः। न हि निष्प्रतियोगिकस्वमात्रे स्वातिरिक्तमस्ति नास्तीति विभ्रमावकाशोऽस्तीत्युपदेशः; "अनन्यप्रोक्ते गतिरत्र नास्ति" इति श्रुतेः॥ एवं शिष्योपदेशव्यग्रतया दुःखादिकं स्यादित्यत आह—**दीक्षासंतोषपावनं** चेति। कुत्राप्यनभिनिवेशतः स्वाभिनिवेशाभासोऽपि शिष्यपटलसंतोषकरः पावनकरश्चेत्यर्थः॥ तद्दर्शनमपि तथेत्याह—**द्वादशादित्यावलोकनमिति**। पावनहेतुद्वादशादित्यावलोकनवत् ब्रह्मवित्परिव्राजकावलोकनमपि तथेत्यर्थः। तथाच श्रुतिः—

"खेचरा भूचराः सर्वे ब्रह्मविद्दृष्टिगोचराः ।
सद्य एव विमुच्यन्ते कोटिजन्मार्जितैरघैः ॥"

इति । निरभिमानिनां रक्षा का? इत्यत्राह—**विवेकरक्षेति** । **ब्रह्ममात्रविवेको ज्ञानमेव रक्षा** ;

"श्रुत्याचार्यप्रसादात्ततत्त्वज्ञानास्तसंशयम् ।
ब्रह्मविष्ण्वादिविबुधाः पालयन्ति त्यजां कुलम् ॥"

इति स्मृतेः ॥ तत्केलिः कुत्रेति, तत्राह—**करुणैव केलिरिति** । स्वाज्ञपटलं स्वपदं प्रापणीयमिति या करुणोदेति सैव केलिः ॥ तन्माला का ? इत्यत आह —**आनन्दमालेति** । स्वानन्दालंकृतत्वात् ॥ तद्गोष्ठी केति, तत्राह—**एकासन-गुहायामिति** । सर्वत्रैकमेव आसनमवस्थानमटनं चलनं वा येषां ते एकासनाः । तेषां विहरणभूमिः गुहा ; तस्यां मुक्तः परित्यक्तः सिद्धासनादिपरिग्रहनियमो यैस्ते मुक्तासनाः । तैः स्वरूपमुखं यल्लभ्यते तदेव गोष्ठी ; न हि जनसंबन्धिनी ॥ तदर्थं किं परैर्भिक्षा कल्पनीयेति, तत्राह—**अकल्पितभिक्षाशीति** । स्वार्थं गृहिणः पक्त्वा भुक्त्वा स्वस्थास्तिष्ठन्ति ग्रामैकरात्रादिनियमतो गोदोहनमात्र-कालाकाङ्क्षिषु भिक्षुषु भिक्षार्थमागतेषु पुनस्तदर्थं पाकानवसरात् भुक्तशेषमेव दास्यन्तीति स्वार्थमविकल्पितां भिक्षामश्नातीत्यविकल्पितभिक्षाशी । तथाच स्मृतिः—

"ग्रामैकरात्रमटनं प्रवेशं चापराह्णके ।
गोदोहमात्रमाकाङ्क्षन्निष्क्रान्तो न पुनर्व्रजेत् ॥"

इत्यादि ॥ तदाचारः कीदृश इत्यत्र—**हंसाचार इति** । हंसशब्देन तत्त्वंपदार्था-वुच्येते । तल्लक्ष्यैक्यानुसंधानमाचारः शीलमित्यर्थः ॥ ते शिष्येषु किं प्रति-पादयन्ति ? इत्यत्र—**सर्वभूतान्तर्वर्तीति** । स्वाज्ञदृष्टिप्रसक्तसर्वभूतेषु स्वज्ञदृष्ट्या-न्तर्वर्ती हंसः प्रत्यगभिन्नपरमात्मा परमार्थदृष्ट्या सर्वापह्नवसिद्धं ब्रह्म निष्प्रति-योगिकस्वमात्रमिति प्रतिपादनं कुर्वन्ति ॥ तेषां कन्थाकौपीनदण्डयोगपट्ट-पादुकाचरणबन्धमोक्षनिद्रामुद्राः कीदृशाः ? इत्यत आह—**धैर्येत्यादिना** ।

ब्रह्मातिरिक्तं न किंचिदस्तीति मनोधैर्यमेव कन्था। स्वातिरिक्तोदासीनधीरेव कौपीनम्। सर्ववेदान्तार्थविचारो दण्डः। प्रत्यगभेदेन ब्रह्मावलोकनमेव योगपट्टः। स्वातिरिक्तबाह्यसंपत् श्रीरुच्यते। तदस्पर्शनाय तस्यां पादुका। परेच्छयैव देहधारणमात्रचेष्टाचरणम्। तथाच श्रुतिः—"परेच्छया च दिग्वासाः स्नानं कुर्यात् परेच्छया" इति। सुषुम्नायां कुण्डलिनीप्रवेशो भवितव्य इति संकल्प एव बन्धः। स्वातिरेकेण नाडीकुण्डलिनीचिन्तायाः ब्रह्मावरणहेतुतया बन्धत्वं युज्यत इत्यर्थः। तथाच श्रुतिः—

"नाडीपुञ्जं सदासारं नरभावं महामुने।
विमुच्यैवात्मनात्मानमहमित्यवधारय॥"

इति। स्वातिरिक्तात् परः परमात्मा स्वातिरिक्तास्तित्वविभ्रम एव परापवादः परमात्मावरणम्। तस्माज्जीवन्नपि यो मुच्यते स जीवन्मुक्तो भवेत्। तथाच स्मृतिः—

"स्वातिरिक्तास्तिताभ्रान्तिः स्वमात्रा वृतिरीरिता।
स्वमात्रज्ञानखड्गेन तां छित्वा विचरेद्यतिः॥ "

इति। शिवाभेदेनावस्थानं शिवयोगः। स एव निद्रा निर्विकल्पकसमाधिरित्यर्थः। चशब्दतः पुनर्व्युत्थानाभावो द्योत्यते। खे चिदाकाशे स्वाज्ञदृष्ट्या स्वाविद्यापदकल्पनायाश्चरितत्वात् खेचरी स्वाविद्यापादः। तत्स्वातिरेकेणास्तीति धीः मुच्छब्देनोच्यते। सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रधिया खेचरीमुद्द्रावयतीति खेचरीमुद्द्रा तत्त्वज्ञानम्। चशब्दात् बाह्यखेचरीमुद्द्रापि गृह्यते॥ मुद्द्रावकतया दुःखरूपता स्यादित्यत आह—परमानन्दीति। परमानन्दीति लिङ्गव्यत्ययः। परमानन्दिनी खेचरीमुद्रेत्यर्थः; भजतामानन्दाप्तिहेतुत्वात्॥ तथाविधानन्दब्रह्म किं सगुणं तत्राह—निर्गुणगुणत्रयमिति॥ ब्रह्ममात्रसिद्धेः गुणत्रयतत्कार्यापह्नवपूर्वकत्वात्। निष्प्रतियोगिकनिर्गुणं ब्रह्म केन लभ्यमित्यत आह—विवेकलभ्यमिति। ब्रह्मातिरिक्तं नेति तत्त्वज्ञानं विवेकः, तेनैव लभ्यमित्यर्थः; "नान्यः पन्था अयनाय विद्यते" इति श्रुतेः॥ लभ्यमित्युक्तितः

तत् किं सातिशयम् ? तत्राह—**मनोवागगोचरमिति**। यत् स्वावशेषतया लभ्यं तत्करणग्रामापह्नवसिद्धं निरतिशयमित्यर्थः। ब्रह्मणः करणग्रामागोचरत्वेन ब्रह्माभावप्रसक्तौ स्वाज्ञानुभूतिसिद्धकार्यप्रपञ्चस्य कारणसापेक्षत्वात्। न हि ब्रह्म विना तथाविधकारणं किंचिदस्ति॥ अतो जगत्कारणत्वहेतुना ब्रह्मणो निष्प्रतियोगिकभावरूपत्वं सदृष्टान्तमाह—**अनित्यमित्यादिना**। यतो जगज्जनितं, तद्ब्रह्म नित्यमित्यवगन्तव्यम्॥ जगतो नित्यब्रह्मजत्वेन नित्यत्वं स्यादित्यत आह—**अनित्यमिति**॥ किमिवानित्यमित्यत्र—**स्वप्नेति**। स्वप्नोपलक्षितावस्थात्रयतत्कार्यात्मकं जगत् **अभ्रपरिदृश्यमानमोहगजादिमिथ्यावस्तुतुल्यम्**। तथा समष्टिदेहादिसंघातं तन्मोहगणजालकलितं जगत् **रज्जुसर्पवत् कल्पितम्**॥ तत्कल्पनाधिष्ठानं किं विष्णवादि? तत्राह—**विष्णुविध्यादिशताभिधानलक्ष्यमिति**। विष्णवादिशब्दवाच्यविष्णवादयस्तल्लक्ष्यं ब्रह्मेत्यर्थः॥ विष्णवादिमार्गप्रापकहेतुः कः? इत्यत्र—**अङ्कुशो मार्ग इति**। यथा गजस्वामिनोऽङ्कुशः स्वेप्सितदेशगमनहेतुः, तथार्चिरादिमार्गो विष्णवादिप्रापकहेतुरित्यर्थः॥ किमर्चिरादि विष्णवादिव्यतिरिक्ततया शून्यमित्यत्राह—**शून्यं न संकेत इति**। अर्चिरादेः विष्णवाद्यव्यतिरेकात् न शून्यत्वं तद्रूपत्वेन सत्यमित्यर्थः। तथाच स्मृतिः—

"स्वारोपिताखिलाण्डादेः स्वाभेदश्रुतिमानतः।
प्राप्यप्रापकभेदेऽपि सर्वं विष्णवात्मकं जगत्॥"

इति। तथा चेद्विष्णुरित्याख्या किं न स्यादित्यत्र तस्य विष्णुत्वेऽपि मार्ग इति व्यवहारतो व्यावहारिकोऽयं संकेतः व्यावहारिकदृष्ट्या वा भूवैकुण्ठयोरधऊर्ध्वपातित्वं मार्गस्य निरालम्बान्तरिक्षपातित्वं च प्रसिद्धम्॥ तत्र गन्तृपटलगमनयोग्यतासंपादकशक्तिः का? इत्यत आह—**परमेश्वरसत्तेति**। परेषां जीवानामीश्वरो विष्णुः; तत्सत्ता सामर्थ्यम्। गन्तृनिरालम्बमार्गगमनशक्तिप्रदतया पट्वीत्यर्थः॥ साङ्कुशार्चिराद्युक्त्वा ब्रह्ममात्रप्रापकोपायमाह—**सत्यसिद्धयोगो मठ इति**। "सन्मात्रमसदन्यत्" इति श्रुतिसिद्धसन्मात्रोऽहमिति भावनैव योगः। तद्योगविश्रान्तिस्थानं विदेहकैवल्यमेव मठः। तदेव निर्विशेषब्रह्मप्रापक-

मार्ग इत्यर्थः ॥ किं तन्मार्गद्वयप्राप्यममरपदम्? तत्राह—**अमरपदं न तत्स्वरूपमिति**। न हि मार्गद्वयगम्यममरपदं स्वर्गो भवितुमर्हतीत्यर्थः ॥ तथा चेत् तत् किम्? इत्यत आह—**आदिब्रह्म स्वसंविदिति**। सर्वादित्वादादिकारणं ब्रह्म। कार्यसापेक्षकारणतापि नास्तीति या संविदुदेति सैवादिब्रह्म। **स्वसंवित्** स्वमात्रज्ञानस्वरूपमित्यर्थः; "विज्ञानमानन्दं ब्रह्म" इति श्रुतेः ॥ मुमुक्षुभिः केन रूपेणात्मा ध्येयः? इत्यत्राह—**अजपागायत्रीविकारदण्डो ध्येय इति**। मूलाधारप्रभवोच्छ्वासनिश्वासात्मिका हंसः सोऽहमिति भावनामयी अजपेत्युच्यते। गायन्तं त्रायत इति **गायत्री** स्वाविद्याद्वयतुर्यांशरूपा। स्वाविद्याद्वयस्थूलादिचतुरंशोऽपि तद्विकारः तत्सर्वापह्नवसिद्धपरमात्मैवाजपागायत्रीविकारदण्डः परिव्राजकैः निष्प्रतियोगिकस्वमात्रतया ध्येय इत्यर्थः ॥ एवं ध्यातुः परमहंसपटलस्य शीतादिद्वन्द्वत्राणनकरकन्था का? इत्यत आह—**मनोनिरोधिनी कन्थेति**। मनः स्वाविद्यातत्कार्यम्। तन्निरोधिनी ब्रह्मविद्या; सैव **कन्था**; विद्यायाः स्वाविद्याविकल्पितशीतादिग्रासत्वात् ॥ विद्यया किं दर्शनीयम्? इत्यत आह—**योगेन सदानन्दस्वरूपदर्शनमिति**। प्रत्यक्परचितोरैक्यं **योगः**। तेन संजातसदानन्दस्वरूपदर्शनं विद्यानिष्पन्नमित्यर्थः ॥ एवंदर्शनसंपन्नः किमश्नातीत्यत आह—**आनन्दभिक्षाशीति** ॥ निर्विकल्पकावस्थायां स्वानन्दातिरिक्तग्राम्यभिक्षाया असंभवात्। तन्निवासभूमिः केत्यत आह—**महाश्मशानेऽप्यानन्दवने वास इति**। **महाश्मशाने** काश्यां तत्राप्यानन्दवने ब्रह्मनालादिप्रदेशे **वासो** वसतिः कर्तव्येत्यर्थः। यद्वा महदादिपञ्चभूतभौतिकजातभस्मीकरणहेतुत्वान्महाश्मशानं प्रत्यक्चैतन्यम्। गाढभूमानन्दः **आनन्दवनम्**। तस्मिन् **महाश्मशानेऽप्यानन्दवने** प्रत्यगभिन्ने परमात्मनि स्वे महिम्नि स्वावशेषतया **वासो** वसतिर्भवेदित्यर्थः ॥ तत्सदनं कुत्रेत्यत्राह—**एकान्तस्थानमठमिति**। स्वेतरजनसंबाधशून्यमेकान्तस्थानं, तदेव मठं सदनमित्यर्थः ॥ तस्य चेष्टा का? इत्यत आह—**उन्मन्यवस्था शारदा चेष्टेति**। समाहितदशायामुन्मनी निर्विकल्पकावस्था। ततो व्युत्थानदशायां सर्ववेदान्तार्थप्रकाशिनी **शारदा** ब्रह्मविद्या चेष्टेत्यर्थः ॥ तद्गतिः कुत्र? इत्यत्राह—

उन्मनीगतिरिति। पदे पदे निर्विकल्पकरूपायामुन्मन्यां गतिर्धावनम् ॥ तत्पीठं किम्? इत्यत्राह—निर्मलगात्रं निरालम्बपीठमिति। उन्मन्यवस्थारूढस्य यतेः निर्मलगात्रं निर्विशेषज्ञानं ब्रह्ममात्रगोचरत्वं निरालम्बत्वं तत्र पीठमासनमित्यर्थः ॥ तत्क्रिया कीदृशीत्यत्र—अमृतकल्लोलानन्दक्रियेति। अमृतकल्लोलवदानन्दसागर इव महागम्भीरतैव क्रिया; परमार्थतो निष्क्रियत्वात् ॥ तन्सिद्धान्तः कः? इत्यत्र—पाण्डरगगनमहासिद्धान्त इति। पाण्डरशब्देन चिदुच्यते। सैव गगनं चिदाकाशम्। तत् स्वमात्रमिति निश्चयो महासिद्धान्तः ॥ एवं सिद्धान्तोपदेशः स्वाराज्यप्रापक इत्याह—शमदमादीति। यथोक्ताधिकारिशिष्योद्देशेन देशिकोपदिष्टो मनुः प्रणवादिः ; तस्य स्वातिरिक्तास्तित्वभ्रमतः संतारणात् तारकत्वम्। एवं तारकोपदेशः शिष्याणां शमादिसाधनसंपत्तिपुरःसरं प्रत्यक्परचिदैक्यहेतुः। तद्यथा स्वान्तरिन्द्रियनिग्रहः शमः। बाह्येन्द्रियनिग्रहो दमः। आदिशब्देन उपरत्यादिसाधनजातं गृह्यते। एवं साधनजातस्यासुरसंपद्ग्रासदैवीसंपत्प्रापकत्वात् दिव्यशक्तित्वं तदाचरणं तदनुष्ठानम्। तन्निर्वर्त्यशरीरं क्षेत्रं सर्वसाधनप्ररोहभूमित्वात्। तत्र शब्दादिविषयमदिरापातारं जीवं तन्मदिरावासनातो विमुखीकृत्य पालनात् त्राणात् पात्रम् अन्तःकरणम् ; तयोः क्षेत्रपात्रयोः श्रवणादिसाधनानुष्ठानकरणसामर्थ्यं पटुता ; तद्धेतुः आचार्योपदिष्टतारक इत्यर्थः ॥ तारकप्रतिपाद्यदेवता का? इत्यत्राह—अद्वैतसदानन्दो देवतेति। शिष्याचार्यजप्तृजपादिकलनाग्रासमद्वैतं ब्रह्म तत्स्वरूपभूतो योऽयमानन्दः तस्य देदीप्यमानरूपत्वात् देवतेति संज्ञा। न हि सातिशया देवतास्तीत्यर्थः ॥ तदाप्त्युपायनियमः कः? इत्यत्र—नियमः स्वान्तरिन्द्रियनिग्रह इति। स्वस्यान्तरिन्द्रियमन्तःकरणम्। तद्यथा कामादिवृत्त्याकारेण न परिणम्यते तथा 'ब्रह्माहम्' 'अहमेव ब्रह्म' इति निग्रहो ब्रह्माकारपरिणतिः, सैव नियमः। तथाच स्मृतिः—

"विषयेभ्यः परावृत्य करणग्राममञ्जसा।
ब्रह्माकारेण युज्यस्व तद्धिते नियमो भवेत्" ॥

इति। एवं नियमवता त्यक्तव्यं किमित्यत्राह—**भयमोहशोकक्रोधत्यागस्त्याग** इति। जीवेशभिदासमुद्भूतं भयम्, देहादावात्मबुद्धिर्मोहः, स्वाभिलषितवस्त्वपायजः शोकः, कामापूरणसंजातः क्रोधः; तेषां त्यागः संन्यास एव त्यागः; तेनैव ज्ञानपरिपन्थि सर्वं त्यक्तमित्यर्थः॥ एवं त्यागतः किं स्यात्? इत्यत आह—**परावरैक्यरसास्वादनमिति**। तत्त्यागतो जीवेश्वरैक्यरसास्वादनं भवेदित्यर्थः॥ एवं रसास्वादनतः किं भवेत्? इत्यत आह—**अनियामकत्वनिर्मलशक्तिरिति**। ईश्वरेण स्वस्वकार्ये नियम्यत इति नियम्यं जीवजातम्। तदन्तर्यामी नियामक ईश्वरः। तयोः मायिकत्वेन तदतीतत्वम् अनियामकत्वं सर्वसाक्षित्वम्; तस्य नियम्यनियामकभिदाग्रासत्वात्। तदेव निर्मलशक्तिः सर्वावभासकत्वसामर्थ्यमित्यर्थः॥ एवं शक्तितः किं भवेत्? इत्यत आह—**स्वप्रकाशब्रह्मतत्त्व** इति। स्वाविद्याद्वयतत्कार्यापह्नवसिद्धे स्वप्रकाशमात्रे ब्रह्मतत्त्वे तदज्ञैः शिवशक्तिसंपुटितप्रपञ्चः समारोपितः। तत्रत्यसच्चित्सुखं शिवांशः। नामरूपे सच्चित्सुखावृती शक्त्यंशः। तयोश्चिदचितोस्तेजस्तिमिरवत् परस्परविरुद्धयोः योगो मायया संपुटितः यो घटपटादिप्रपञ्चः, तस्योच्छेदनम् 'अहं ब्रह्मास्मि' इति ज्ञानासिना यथा भवेत्, तथा ब्रह्मसम्यग्ज्ञानाग्निना **पत्राक्षाक्षिकमण्डलभावाभावदहनं** भवेदित्यर्थः। स्वकार्यजातं परितः आवृत्य त्रायते गोपायतीति जीवेशभ्रान्तिजतादात्म्यास्पदं व्यष्टिसमष्टिकारणशरीरं पत्रमित्युच्यते। तत्कार्यं विंशत्यवयवशोभिजीवेशसहजतादात्म्यास्पदं व्यष्टिसमष्टिलिङ्गशरीरमक्षमित्युच्यते। तत्कार्यतया जीवेशकर्मजतादात्म्यास्पदं व्यष्टिसमष्टिपिण्डब्रह्माण्डाख्यस्थूलशरीरमक्षीत्युच्यते। एवं पत्राक्षाक्ष्यभिधशरीरत्रयं येषां ते पत्राक्षाक्षिकाः प्राज्ञतैजसविश्वाभिन्नेश्वरसूत्रविराजः। तेषां मण्डलं पटलं स्वदृष्ट्या एतत् सर्वं साक्ष्यजातं साक्षिभास्यं साक्ष्यसापेक्षसाक्षिताया अपि दहनं विलापनं भवेदित्यर्थः॥ ततो ब्रह्म किंरूपं बिभर्तीत्यत आह—**बिभ्रत्याकाशाधारमिति**। स्वाधेयाकाशादिपञ्चमहाभूततत्कार्याधारत्वेन आधेयसापेक्षाधारतापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रतया यदवशिष्यते स्वाज्ञादिदृष्टिमोहे सत्यसति तदेवंरूपं परमार्थदृष्ट्या बिभ्रति। य एवंवित् सोऽयं ब्राह्मणो ब्रह्मविद्वरीयान् मुख्यावधूतो भवतीति भावः॥ शिखायज्ञो-

पवीतविरलानां कथं ब्राह्मणता? इत्यत आह—**शिवं तुरीयं यज्ञोपवीतं तन्मया शिखेति**। स्वातिरिक्ताशिवग्रासं शिवं **तुरीयं** तुरीयातीतं वा ब्रह्मैव **यज्ञोपवीतं शिखा** च शिवमया, शिवमयीत्यर्थः। तथा च श्रुतिः—

"शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम्।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः॥"

इति। इत्थंभूतब्राह्मणदृग्गोचरं जगदपि चिन्मयमित्याह—**चिन्मयमिति**। **उत्सृष्टिः** पर्वतवृक्षलतागुल्मादिसमष्टिः। तज्जातिरण्डं स्थावरम्। सम्यक् ततः संततः विविधरूपत्वात् अक्षी स्थूलशरीरादिर्येषां ते **सन्ततोक्षिकाः** जीवाः जङ्गमात्मकाः। तेषां **मण्डलं** पटलं **चिन्मयमेव** भवेदित्यर्थः; "जीवश्चिन्मात्रविग्रहः" इति श्रुतेः;

"यथा मृत्पिण्डसंभूतो घटादिः किं न मृन्मयः।
तथा स्थिरचरं विश्वं चिन्मयं चित्समुद्भवात्॥"

इति स्मृतेश्च॥ तद्दृष्ट्या विश्वं चिन्मयमस्तु; तस्यापि शरीरत्रययोगतः सांसारिकी प्रवृत्तिः स्यादित्यत आह—**कर्मनिर्मूलनमिति**। स्वाविद्याद्वयतत्कार्यशवपूगदहनयोग्ये **श्मशाने** प्रत्यगभिन्नब्रह्मणि मुख्यावधूतत्वप्राप्तिहेतुतत्त्वज्ञानसूर्योदयसमकालं स्वाविद्याद्वयतत्कार्यकर्मत्रयतत्कार्यशरीरत्रयतज्जाहंकारममकारतन्निर्वर्त्यसंसारध्वान्तस्य दहनमपह्नवगतत्वात् न पुनः तस्य संसारप्रवृत्तिनिवृत्तिध्वान्तोऽस्ति नास्तीति का कथा? किमाश्चर्यमित्यर्थः। तथाप्यादेहपातं संसारानुवृत्तिः स्यादिति चेन्न; तस्य परदृष्टिनिमित्ततयाकिंचित्करत्वात्। देहधारणमात्रसंसारो वा स्यादिति चेन्न; देहधारणमात्रसंसारस्य देहादावात्मात्मीयाभिमानाभावात् असंसारत्वात्;

"देहश्चिरं तिष्ठतु वा तत्काले लयमेतु वा।
स्वज्ञानकालमुक्तस्य पुनः संसारिता कथम्॥"

इति स्मृतेः॥ परमार्थदृष्ट्या देहत्रयाभावे स कथं तिष्ठेत्? इत्यत आह—**अनाहताङ्गीति**। निष्प्रतियोगिकब्रह्ममात्रज्ञानेन आ समन्ताद्धतमाहतम् अविद्या-

पदतत्कार्यजातमपह्नवरूपं तस्याप्यपह्नवसिद्धमनाहताङ्गं तद्रूपेण स्थितत्वात् अयमनाहताङ्गी। ब्रह्ममात्रज्ञानसमकालमेव स्वशरीरत्रयमस्ति नास्तीति विभ्रमस्यापह्नवगतत्वात् मुख्यावधूतो विदेहमुक्तो विचरेदित्यर्थः ॥ १–९८ ॥

गौणावधूतः, तच्चर्या, तत्फलं च

निस्त्रैगुण्यस्वरूपानुसंधानं समयं भ्रान्तिहननम्[1]। कामादिवृत्तिदहनम्। काठिन्यदृढकौपीनम्। चिराजिनवासः। अनाहतमन्त्रमक्रिययैव जुष्टम्। स्वेच्छाचारस्वस्वभावो मोक्षः ॥ ५०. ॥

मुख्यावधूतलक्षणमेवमुक्त्वा गौणावधूतं तच्चर्यां तत्फलं च व्यक्तीकरोति —**निस्त्रैगुण्ये**त्यादिना। सत्त्वादिगुणानां समाहारस्त्रैगुण्यम्। स्वाविद्यापदतत्कार्यजातं तदपवादाधिकरणं **निस्त्रैगु** यं 'ब्रह्माहम्' 'अहं ब्रह्म' इति भावनमनुसंधानम्। तदपि **समयं** समायमित्यर्थः। एवमनुसंधानस्य विद्यावृत्तित्वेन ब्रह्ममात्रावृतिरूपत्वात् **भ्रान्ति**त्वम्; तद्धननं नाशनं कुर्यादित्यर्थः। तथा कामसंकल्पादिवृत्तिदहनं विलापनं च। द्विविधब्रह्मचर्यहेतुमृदुकार्पासकौपीनविलक्षणतया **काठिन्यदृढकौपीना**न्तरितशेपगतोर्ध्वरेतस्त्वं च। शीतवातोष्णत्राणपटुवासोविलक्षण**चिराजिनवासो**दिगम्बरत्वं च। **अनाहतमन्त्रं** तुरीयोंकारं च; तुरीयोंकारस्य तुर्यतुर्यत्वेन केनाप्यनाहतत्वात् "तुरीयोंकाराग्रविद्योतं तुर्यतुर्यम्" इति श्रुतेः। अनाहतमन्त्रं तुर्यतुर्यं ब्रह्म। **अक्रियया** सर्वविक्रियापह्नवसिद्धया चिन्मात्रधिया **जुष्टं** सेवितम्। यद्वा गौणावधूतं ब्रह्मात्मेति मन्तारं त्रायत इति मन्त्रं सम्यग्ज्ञानं च स्वरूपानुसंधानतो भवेदित्यर्थः। गौणावधूतोऽप्येवं साधनसंपन्नश्चेत् मुख्यावधूतो भवति। तदा तस्य विधिनिषेधप्रवृत्तिनिवृत्त्यतीतत्वेन शिष्टशिक्षणरूपोऽयं **स्वेच्छाचारो** भवेत्। न तदुन्मार्गप्रापको भवितुमर्हति। सोऽपि स्वस्वभावः;

[1] उ. उ १. भ्रान्तिहरणम्.

क्रियाकारकबन्धग्रासत्वात् । स एव मोक्षः; स्वेतरकलनापह्नवसिद्धपरमात्म-रूपत्वात्;

"ब्रह्मैवास्मीति या वृत्तिः सैव योग इतीरिता ।
योगेन गतकामानां भावना ब्रह्म चक्षते ॥"

इति स्मृतेः ॥ ५९ ॥

मुख्यावधूतोपायसंपत्तिः

परंब्रह्मप्लववदाचरणम् । ब्रह्मचर्यशान्तिसंग्रहणम् । ब्रह्मचर्याश्रमेऽधीत्य वानप्रस्थाश्रमेऽधीत्य स सर्वविन्न्यासं संन्यासम् । अन्ते ब्रह्माखण्डाकारं नित्यं सर्वसंदेहनाशनम् ॥ ६० ॥

मुख्यावधूतत्वं यदुपायकं तदुपायसंपत्तिं तत्फलमपि प्रकटयति—परं ब्रह्मेत्यादिना । आदौ तावत् गृहस्थेतरो ब्रह्मचारी वानप्रस्थो वा स्वाश्रमाचार-संपन्नः सन् अपारगम्भीरविस्तारसंसारसागरोत्तारणार्थं सर्वस्मात् यत् परं तद्ब्रह्म तद्गोचरज्ञानं परं ब्रह्म प्लवं तद्वान् मुख्यावधूतः तदाचरणं तत्सेवनं कृत्वाथ तन्निकटे स्वचित्तशुद्धिपर्यन्तं द्विविधब्रह्मचर्यपुरःसरं गुरुकुलवासं कृत्वाथ शान्ति-दान्त्यादिग्रहणं साधनचतुष्टयोपलक्षणार्थं तदभ्यस्याथ बाह्यान्तर्विक्षेपकबलित-श्रवणाद्यनुष्ठानानर्हकाम्याश्रममप्राप्यैव स्वाविद्याद्वयतत्कार्यग्राससर्ववेदान्तशास्त्रं स्वाचार्यमुखतो ब्रह्मचर्याश्रमे वानप्रस्थाश्रमे तुर्याश्रमे वा अधीत्याध्ययनं श्रवणं कृत्वाथ मननं निदिध्यासनं च मुख्यावधूतताहेतुपूर्वाभ्यस्तसाधनविन्न्याससहितं स सर्वविन्न्यासाधिकरणं कबलीकृतसर्वसंदेहादिवृत्तिपटलं देहत्रयाभिमानान्तकाले संन्यासमखण्डाकारं ब्रह्म भूत्वा मुख्यावधूतो विदेहमुक्तो भवतीत्यर्थः । "न्यास इति ब्रह्म । न्यास एवात्यरेचयत् ॥"

"अक्षरत्वाद्वरेण्यत्वाद्धूतसंसारबन्धनात् ।
तत्त्वमस्यादिलक्ष्यत्वादवधूत इतीर्यते ॥"

"ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतेः ॥ ६० ॥

अधिकारिनिरूपणम्

एतन्निर्वाणदर्शनं शिष्यं विना पुत्रं विना न देयम् । इत्युपनिषत् ॥ ६१ ॥

एतच्छास्त्रमनधिकारिणे न देयं, यथोक्तसाधनसंपन्नाय देयमित्युपसंहरति—एतदिति । एतन्निर्वाणदर्शनं निर्वाणोपनिषन्नामकं शास्त्रम् "नास्याब्रह्मवित् कुले भवति" इति श्रुत्या ब्रह्मवित्कुलप्रसूतस्य यथोक्तसाधनवैकल्येऽपि क्रमेण भवेदिति द्योत्यते । तस्मात् पुत्रो मुख्याधिकारी । यदि शिष्यो यथोक्ताधिकारी तदा सोऽप्यधिक्रियते । यत एवमतः पुत्रं शिष्यं विना यस्मै कस्मैचिन्न देयमित्यर्थः; "नाप्रशान्ताय दातव्यं नापुत्रायाशिष्याय वै पुनः" इत्यादिश्रुतेः । इत्युपनिषच्छब्दौ निर्वाणदर्शनसमाप्तिद्योतकौ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
निर्वाणोपनिषद्व्याख्या लिखिता हरितुष्टये ।
निर्वाणोपनिषद्व्याख्या पञ्चाशद्युक् शतद्वयम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे सप्तचत्वारिंशत्संख्यापूरकं निर्वाणोपनिषद्विवरणं संपूर्णम्

———

# परब्रह्मोपनिषत्

## भद्रं कर्णेभिः—इति शान्तिः

वरिष्ठा ब्रह्मविद्या

अथ हैनं महाशालः शौनकोऽङ्गिरसं भगवन्तं पिप्पलादं विधिवदुपसन्नः पप्रच्छ । दिव्ये ब्रह्मपुरे संप्रतिष्ठिता भवन्ति खलु । कथं सृजन्नित्यात्मन एष महिमा विभज्य एष महिमा विभुः कः । एष तस्मै स होवाच । एतत् सत्यं यत् प्रब्रवीमि ब्रह्मविद्यां वरिष्ठां देवेभ्यः प्राणेभ्यः परब्रह्मपुरे विरजं निष्कलं शुभ्रमक्षरं विरजं विभाति स नियच्छति [1]मधुकरराश्या निर्मकः अकर्मस्वपुरस्थितः कर्मकः कर्षकवत् फलमनुभवति । कर्ममर्मज्ञाता कर्म करोति । कर्ममर्म ज्ञात्वा कर्म कुर्यात् । को जालं विक्षिपेदेके नैनमपकर्षत्यपकर्षति ॥ १ ॥

परब्रह्माख्योपनिषद्वेद्याखण्डसुखाकृति ।
परिव्राजकहृद्देहं परितस्त्रैपदं भजे ॥

इह खलु अथर्वणवेदप्रविभक्तेयं परब्रह्मोपनिषत् ज्ञानशिखोपवीतप्रकटनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः संक्षेपतो विवरणमारभ्यते ।

[1] उ. मधुकरः श्वेव विकर्मकः.

शौनकपिप्पलादप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था। आख्यायिका-मवतारयति—अथेति। पप्रच्छ किमिति। लोके ये ये सृज्यमानाः पदार्थाः, ते सर्वे पूर्वमेव दिव्ये ब्रह्मपुरे हिरण्यगर्भहृदयाकाशे संप्रतिष्ठिता भवन्ति खलु। तत्राक्षिपति—कथमिति। स्वान्तःस्थपदार्थान् विभागशः प्रविभज्य एष महिमा अघटितघटनाशक्तिसंपन्नो भगवान् स्वात्मनः सकाशात् कथं तान् सृजन्नवतिष्ठते। क एष महिमा विभुरिति शौनकप्रश्नोत्तरमेष पिप्पलाद आह—एष इति। य एष पिप्पलाद इति ख्यातः तस्मै शौनकाय स होवाच। किमिति। यदहं ते वरिष्ठां ब्रह्मविद्यां प्राब्रुवि, तदेतद्ब्रह्म सत्यम्; असत्यासंभवप्रबोधसिद्धत्वात्; "पश्यतेहापि सन्मात्रमसदन्यत्" "ब्रह्म मात्रमसन्न हि" इति श्रुतेः। तत् कुत्रोपलभ्यत इत्यत्र ब्रह्मपुरे रजआदिगुण-त्रयाभावाद्विरजं प्राणादिनामान्तषोडशकलावैरल्यान्निष्कलम्, अत एव शुभ्र-मक्षरं विभाति। किं कुर्वन् विभातीत्यत्र श्रोत्रादिदेवेभ्यः इन्द्रियेभ्यः प्राणा-पानादिदशप्राणेभ्यश्च स्वस्वविषयग्रहणशक्ति दिशत् सत् तद्गतगुणदोषा-स्पर्शनतो विरजं विभाति प्रत्यग्दृष्टेरेवं सदोपलभ्यत इत्यर्थः। पराग्भावे सति प्रत्यग्दृष्टिः कथमुदेति इत्यत्र इहामुत्रार्थफलहेतुमध्वाख्यानि कर्माणि कुर्वन्तीति मधुकराः जीवाः। तेषां राशिः समूहः। आभूतसंप्लवं बन्धमोक्षव्यवहारार्हतया निर्मितवानिति निर्मकः। य एवं निर्माता परमेश्वरः, स एव मुमुक्षुपटला-नुकम्पया तद्गतपराग्भावं नियच्छति निगृह्णाति निःशेषं ग्रसति। ततो मुमुक्षूणां प्रत्यग्दृष्टिः प्रसीदति; प्रत्यग्दृष्टेः ब्रह्मोपलभ्यत इत्यर्थः। स्वात्मानं पुरस्कृत्य तद्भावभावनया तिष्ठतीति स्वपुरस्थितः प्रत्यग्दृष्टिः किंकर्मा इत्यत्र स्वकर्तव्यकर्म-सामान्यं यस्य

"कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते।
तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः॥"

इति श्रुत्यर्थपर्यालोचनया न स्फुरति सोऽयमकर्मकः; परिव्राडित्यर्थः। तस्य कृतकृत्यत्वात्; "कर्तव्यं नैव तस्यास्ति" इति श्रुतेः। तद्विपरीतपराग्दृष्टिस्तु स्वेहामुत्रफलोद्देशेन विविधं कर्मजातं करोतीति कर्मकः कर्मकृत् कर्षकवत्

स्वकृतोच्चावचकर्मफलं नानायोनिजन्मप्रापकमनुभवति। यत एवमतः कर्ममर्म जन्मादिहेतुः कर्मेति ज्ञाता पुरुषः चित्तस्य शुद्धये कर्मेति विदित्वा परमेश्वराराधनधिया कर्म करोति। यः स्वातिरिक्तभ्रमतो मोक्तुमिच्छति, स मुनिः कर्ममर्म ज्ञात्वा निष्कामधिया स्वाश्रमोचितकर्म कुर्यात्। एके एकस्मिन् ब्रह्मणि निष्णातः को वा विवेकी विविधकर्मजालं विक्षिपेत् निर्विशेषब्रह्म-ज्ञानप्रापकचित्तशुद्धिहेतुनिष्कामकर्मानुष्ठानं विना मुधा काम्यकर्म कुर्यात्? कोऽपि न कुर्यादित्यर्थः। निष्कामधिया अनुष्ठितकर्माप्येनमधः कर्षतीत्यत आह—नेति। एनं निष्कामधिया कर्मानुष्ठातारं तदनुष्ठितकर्म सांसारिकविषये जात्वपि नैवापकर्षति। द्विरुक्तिः स्वानुष्ठानतः चित्तशुद्धिप्राप्यज्ञानद्वारा महत्पदं प्रापयेत् इति द्योत्यते॥ १॥

त्रिपाद्ब्रह्मप्रापकोपायः

प्राणदेवताश्चत्वारः। ताः सर्वा नाड्यः सुषुप्तश्येनाकाशवत्। यथा श्येनः खमाश्रित्य याति स्वमालयं कुलायम्। एवं सुषुप्तं ब्रूतायं च परं च। स सर्वत्र हिरण्मये परे कोशे अमृता ह्येषा नाडीत्रयं संचरति। तस्य त्रिपादं ब्रह्म एषात्रेष्य ततोऽनुतिष्ठति। अन्यत्र ब्रूतायं च परं च। सर्वत्र हिरण्मये परे कोशे यथैष देवदत्तो यष्ट्या च ताड्यमानो नैवेत्येवमिष्टापूर्तशुभाशुभैर्न लिप्यते। यथा कुमारको निष्काम आनन्दमभियाति। यथैष देवः स्वप्न आनन्दमभिधावति। वेद एव परं ज्योतिः। ज्योतिषा मा ज्योतिरानन्दयत्येवमेव। तत्परं यच्चित्तं परमात्मानमानन्दयति। शुभ्रवर्णमाजायतेश्वरात्। भूयस्तेनैव मार्गेण स्वप्नस्थानं नियच्छति। जलूकाभाववद्यथाकाममाजायतेश्वरात्। ताव-तात्मानमानन्दयति। परसन्धि यदपरसन्धीति। तत्परं नापरं त्यजति।

तदैवं कपालाष्टकं संधाय य एष स्तन इवावलम्बते। सेन्द्रयोनिः स वेदयोनिरित्यत्र जाग्रति। शुभाशुभातिरिक्तः शुभाशुभैरपि कर्मभिर्न लिप्यते। य एष देवोऽन्यदेवस्य संप्रसादोऽन्तर्याम्यसङ्गचिद्रूपः पुरुषः प्रणवहंसः परं ब्रह्म न प्राणहंसः प्रणवो जीवः। आद्या देवता निवेदयति। य एवं वेद। तत्कथं निवेदयते। जीवस्य ब्रह्मत्वमापादयति॥ २॥

निर्विशेषब्रह्मज्ञानप्राप्यत्रिपाद्ब्रह्मप्रापकोपायः कः? इत्यत आह—प्राणेति। यन्निष्कामकर्म नापकर्षति; किंतु चित्तशुद्धिजज्ञानद्वारा ब्रह्मपदं प्रापयतीत्युक्तं तद्ब्रह्म कीदृशम्, तदाप्त्युपायश्च कीदृश इत्यत्र जीवस्य प्राणाधारतया विश्वादितुरीयान्तभेदेन प्राणदेवताश्चत्वारः चतस्रः। तास्तासामुपलब्धिनाड्योऽपि रमारमेच्छापुनर्भवादिभेदेन चतस्र एव। तत्र रमारमाख्यनाडीद्वयमवष्टभ्य खे संचारश्रान्तश्येनवत् जाग्रत्स्वप्नव्यवहारश्रान्तः सुषुप्तो भवति। तत्र दृष्टान्तस्तु यथा श्येनः खमाश्रित्य चिरसंचारतः श्रान्तः सन् स्वनीडं प्रति याति, तथैवं ब्रूता वक्ता जीवोऽपि अयं जाग्रत्प्रपञ्चस्तदपेक्षया परं च स्वप्नप्रपञ्चस्तयोर्व्यवहृत्य श्रान्तः सन् स्वविश्रान्तिस्थानं नाडीद्वयमेत्य सुषुप्तो भवति। सोऽयं क्व सुषुप्तश्चरतीत्यत्र "यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाशः" इत्यादिश्रुत्यनुरोधेन सर्वत्र सर्वव्यापके हिरण्मये परे कोशे हृदयाकाशे वस्तुतोऽमृता ह्येषा जीवरूपिणी देवता रमादिनाडीत्रयमवष्टभ्य जाग्रदाद्यवस्थात्रये बन्धमोक्षादिव्यवस्थायां च यः संचरति तस्यैकपदमाविद्यकं तत्संबन्धवैरल्येन त्र्यन्तैः पद्यते स्वावशेषेण त्रायत इति त्रिपादं त्रैपदं ब्रह्मावशिष्यते इत्यत्र

"त्र्यन्तैः स्वावशेषेण पद्यते जायते च यत्।
तत् त्रैपदं परं ब्रह्म स्वमात्रमवशिष्यते॥"

इति स्मृतेः। यदेवमवशिष्टमत्रैवैषा जीवाख्या देवता स्वरूपमेष्य प्राप्य ततस्तन्मात्रमनुतिष्ठति अवतिष्ठते मुक्तो भवति। ततस्तस्मादन्यत्राविद्यकपदे

अयं च परं चेत्युपलक्षितावस्थात्रयतत्कार्यप्रपञ्चे स्वातिरिक्तमस्तीति ब्रूता स्वाज्ञो जीवः परिभ्रमति। सर्वत्र सर्वदायं हिरण्मये परे कोशे चिरं चरन्नपि स्वाज्ञानावरणच्छन्नः सन् जाग्रदाद्यवस्थात्रयगर्ते पतति। तस्यापि श्रुत्याचार्य-प्रसादतो निष्कृतिर्भवेत् इत्यत्र दृष्टान्तः—यथैष देवदत्तो निद्रालुर्यष्टया च ताड्यमानः सन् बोधितः पुनः नैव सहसा स्वापमेति, तथा अयमपि जीवः श्रुत्याचार्यप्रसादलब्धवेदान्तज्ञानेन 'न त्वमवस्थात्रयभाक् जीवः, किंतु तदवस्थात्रयारोपापवादाधिकरणं ब्रह्मासि' इति बोधितः सन् न पुनरवस्थात्रये मुह्यति। तत्र विकल्पितेष्टापूर्तादिशुभाशुभकर्मभिः न लिप्यते। यथा वा कुमारो बालकः इदं मे स्यादिति कामवृत्त्यनुदयान्निष्कामः यदृच्छाप्राप्तवस्तुनि आनन्दमभियाति। यथा चैष संप्रसादो देवः स्वप्ने जागरे च व्यवहरन् श्रान्तः स्वापावस्थानिष्पन्नानन्दं प्रत्यभिधावति, तथैवं श्रुत्याचार्यमुखतः स्वानन्दमात्रं ब्रह्माहमस्मीति यो वेद सोऽयमेवं पराक्प्रपञ्चतः परंज्योतिः प्रत्यक्प्रकाशो भूत्वा सूर्यादिज्योतिषामप्या समन्तात् भासकज्योतिरस्मी-त्यात्मानमानन्दयति स्वानन्दरूपेणावतिष्ठते। एवमेव यच्चित्तं तत् परंब्रह्माकार-परिणतं भवति तत्परमात्मानमेत्यानन्दयति स्वात्मानं प्रीणयति, तत्परवशं सत् तत्रैव विलीयत इत्यर्थः। एवं चित्तप्रसादः कुतो जात इत्यत्र ईश्वरादस्य शुभ्रवर्णो वर्णो निर्विकल्पभाव आजायते ईश्वरस्याजडक्रियाज्ञानेच्छाशक्तिमत्त्वेन स्वभक्तारिष्टग्रासेष्टप्रापकत्वात्। एवं त्रिपुटीविरलनिर्विकल्पकसमाधिमनुभूय भूयस्तेनैव मार्गेण स्वप्नस्थानं 'तत्त्वमसि', 'अहं ब्रह्मास्मि' इति किंचित्त्रिपुटीविशिष्टाखण्डाकारवृत्त्यात्मकतुर्यस्वप्नं प्राप्य तत्रात्मानं निगच्छति विश्रामयति। यथा जलूका स्वाधिष्ठितभावात् तृणात् भावं तृणान्तरं गच्छति, तथा अयमपि विद्वान् तुर्यजागरणस्थः तुर्यस्वप्नमवलम्ब्य तुर्यजागरणं त्यजति। एवं तुर्यावस्थाप्रविभक्तावस्थात्रयसंचरणे कामं कामोऽभिलाषः आजायतेश्वरात्। तावतायं सविकल्पकनिर्विकल्पकसमाधिभ्यां स्वात्मान-मानन्दयति। ततः प्रत्यक्परचितोर्यः सन्धिः तयोरैक्यं तद्भेदसापेक्षैक्यमपर-मीषत् विशेषवदिति सन्धीति संत्यजति। यदेवं निर्विशेषं जातं तदेव

परब्रह्म तदतिरेकेण नापरमस्ति। यद्वा स्वातिरिक्तमपरमस्तीति न त्यजति ; ब्रह्ममात्रस्य निष्प्रतियोगिकत्वात्। यद्देवं केवलश्रवणादिमात्रेण निर्विशेषब्रह्मज्ञानं नोदेति तद्देवम्। कं परमसुखमसुखकामादिवृत्तिभ्यः पृथक्कृत्य पालयन्तीति कपालानि योगाङ्गानि। तेषामष्टकं यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाध्यात्मकं कपालाष्टकमष्टाङ्गयोगमनुसंधाय यथावदभ्यस्य तद्बलेन चित्तगतमालिन्यं संक्षाल्य निर्विशेषज्ञानमवाप्य कृतकृत्यो भवतीत्यर्थः। योगध्यानाधिकरणं किमित्यत्र य एष स्तन इव कदलीपुष्पमिव च उरःप्रदेशे सदा अवलम्बते सोऽयं योगकाले ऊर्ध्वमुत्तिष्ठन् विकासमेति। अत्र हि खलु इन्द्रयोनिना ब्रह्मणा सह वर्तत इति सेन्द्रयोनिः। य इन्द्रयोनिरित्युक्तः सोऽयमीश्वरो वेदयोनिरिति सर्वैर्गीयमानः परमेश्वरो जाग्रति जागर्ति। य एवं स्वहृत्कमलासनस्थमीश्वरमनुध्यायति, स विद्वान् शुभाशुभातिरिक्तः सन् कादाचित्कप्रसक्तशुभाशुभैरपि कर्मभिः न लिप्यते। यद्ध्यायी शुभाशुभातिरिक्तः स देवः कीदृश इत्यत्र अन्यदेवस्य ब्रह्मादेरपि य एष एव हि देवः, "तं देवतानां परमं च दैवतम्" इति श्रुतेः। ध्यायिध्येययोरभेदार्थं य एष देवः सोऽयं संप्रसादः अन्तर्याम्यसङ्गचिद्रूपः पुरुषः स एव प्रणवार्थतुर्यतुर्यहंसः परं ब्रह्मेत्युच्यते। अत्र न प्राणहंसो मुख्यः प्राणो विवक्षितः ; परब्रह्मप्रकरणत्वात्। प्रणवो जीवः प्रणवाद्यवयवाकारवाच्यत्वात् तत्स्थितिराद्या देवतेति निवेदयति। य एवं प्रणवयाथात्म्यं वेद तत् कथं स कथं जीवब्रह्मणोः भेदं निवेदयते निवेदयति। किंतु जीवस्य ब्रह्मत्वमापादयति ; जीवब्रह्मणोः भेदं कदापि न ददाति स्मरति वेत्यर्थः ॥ २ ॥

अन्तर्बाह्यशिखादिलक्षणम्

सत्त्वमथास्य पुरुषस्यान्तःशिखोपवीतित्वम्। ब्राह्मणस्य मुमुक्षोरन्तःशिखोपवीतधारणम्। बहिर्लक्ष्यमाणशिखायज्ञोपवीतधारणं कर्मिणो गृहस्थस्य। अन्तरुपवीतलक्षणं तु बहिस्तन्तुवदव्यक्तमन्तस्तत्त्वमेलनम् ॥ ३ ॥

अन्तर्बाह्यशिखायज्ञोपवीतलक्षणमुच्यते—सत्त्वमिति। अथ प्रत्यगभिन्नब्रह्मभावानन्तरमस्य पुरुषस्य ब्रह्मीभूतस्य यत् सत्त्वं तदेवान्तःशिखोपवीतत्वं निर्विशेषज्ञानमित्यर्थः। तद्धारणं कस्य? इत्यत्र स्वान्तर्विद्योतमानज्ञानशिखोपवीतधारणमकर्मिणो ब्राह्मणस्य मुमुक्षोरेव। बाह्यशिखोपवीतधारणं कस्य? इत्यत्र बहिर्लक्ष्यमाणशिखायज्ञोपवीतधारणं कर्मिणो गृहस्थस्य। बाह्यवदान्तरं व्यक्तं न भवतीत्याह—अन्तरिति। अन्तरुपवीतलक्षणं तु बहिस्तन्तुवद्व्यक्तं व्यक्तं न भवति; निर्विशेषब्रह्मज्ञानस्य मनोवागतीतत्वात्। यदि अन्तस्तत्त्वमेलनं स्वाविद्याशबलब्रह्मगोचरं स्यात्तदा ॥ ३ ॥

निर्विशेषब्रह्मस्वरूपम्

न सन्नासन्न सदसद्भिन्नाभिन्नं न चोभयम्।
न सभागं न निर्भागं न चाप्युभयरूपकम्।
ब्रह्मात्मैकत्वविज्ञानहेयं मिथ्यात्वकारणात् ॥ ४ ॥

इति।

तत्राविद्यांशमनेकोपपत्तिभिः मिथ्येति निरस्य निर्विशेषत्वमापादयेदित्याह—न सदिति। यदविद्यास्वरूपं तन्न सत्; कारणरूपेणाचाक्षुषत्वात्। तथा नासत्; कार्याकारेण चाक्षुषत्वात्। न सदसत्; तयोरेकत्रानवस्थानात्। तत् किं स्वभिन्नम्; स्वपृथक्सत्ताभावात्। तत् किं नाभिन्नम्; अवस्तुत्वात्। न च भिन्नाभिन्नम्; दुर्लभत्वात्। न सभागम्; कारणात्मना निरवयवत्वात्। न निर्भागम्; कार्यात्मना सावयवत्वात्। न चाप्युभयरूपकम्; पूर्वोक्तविरोधापत्तेः। एतावता अनिर्वचनीयत्वमस्योक्तं भवति। तथा चेदिदमपि ब्रह्मवत् सत्पदमर्हतीत्यत्र यावद्ब्रह्मात्मैकत्वज्ञानं नोदेति, तावदस्य सत्त्वम्; जाते तु ब्रह्मात्मैकत्वविज्ञानेऽस्य मिथ्यात्वकारणात् ब्रह्मातिरिक्तं नेत्यपह्नवपदमेव भजेदित्यर्थः ॥४॥

कर्मणः चित्तशुद्धिप्रापकत्वम्

पञ्चपादब्रह्मणो न किंचन। चतुष्पादन्तर्वर्तिनोऽन्तर्जीवब्रह्मणः स्थानानि चत्वारि। नाभिहृदयकण्ठमूर्धसु जाग्रत्स्वप्नसुषुप्तितुर्यावस्थाः,

आहवनीयगार्हपत्यदक्षिणसभ्याग्निषु । जागरिते ब्रह्मा, स्वप्ने विष्णुः, सुषुप्तौ रुद्रः, तुरीयमक्षरं चिन्मयम् । तस्माच्चतुरवस्था चतुरङ्गुलवेष्टनमिव षण्णवतितत्त्वानि तन्तुवद्विभज्य, तदाहितं त्रिगुणीकृत्य द्वात्रिंशत्तत्त्वनिष्कर्षमापाद्य, ज्ञानपूतं त्रिगुणस्वरूपं त्रिमूर्तित्वं पृथग्विज्ञाय, नवब्रह्माख्यनवगुणोपेतं ज्ञात्वा, नवमानमितं त्रिः पुनस्त्रिगुणीकृत्य सूर्येन्द्वग्निकलास्वरूपत्वेनैकीकृत्य, आद्यन्तकत्वमपि मध्ये त्रिरावर्त्य ब्रह्मविष्णुमहेश्वरत्वमनुसंधाय, आद्यन्तमेकीकृत्य चिद्ग्रन्थावद्वैतग्रन्थिं कृत्वा, नाभ्यादिब्रह्मबिलप्रमाणं पृथक्पृथक्सप्तविंशतितत्त्वसंबन्धं त्रिगुणोपेतं त्रिमूर्तिलक्षणलक्षितमप्येकत्वमापाद्य, वामांसादिदक्षिणकट्यन्तं विभाव्य, आद्यन्तग्रहसंमेलनमेवं ज्ञात्वा मूलमेकम्, सत्यं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्, हंसेति वर्णद्वयेनान्तःशिखोपवीतित्वं निश्चित्य, ब्राह्मणत्वं ब्रह्मध्यानार्हत्वम्, यतित्वमलक्षितान्तःशिखोपवीतित्वम्, एवं बहिर्लक्षितकर्मशिखाज्ञानोपवीतं गृहस्थस्य, आभासब्राह्मणत्वस्य केशसमूहशिखाप्रत्यक्षकार्पासतन्तुकृतोपवीतित्वम् । चतुः चतुर्गुणीकृत्य चतुर्विंशतितत्त्वापादनतन्तुकृत्त्वम्, नवतत्त्वमेकमेव परं ब्रह्म, तत्प्रतिसरयोग्यत्वाद्बहुमार्गवृत्तिं कल्पयन्ति । सर्वेषां ब्रह्मादीनां देवर्षीणां मनुष्याणां मुक्तिरेका ब्रह्मैकमेव ब्राह्मणत्वमेकमेव । वर्णाश्रमाचारविशेषाः पृथक्पृथक्, शिखा वर्णाश्रमिणामेकमेव, अपवर्गस्य यतेः शिखायज्ञोपवीतमूलं प्रणवमेकमेव वदन्ति । हंसः शिखा, प्रणवमुपवीतम्, नादः संधानम् । एष धर्मो नेतरो धर्मः ।

तत् कथमिति। प्रणवो हंसो नादस्त्रिवृत्सूत्रं स्वहृदि चैतन्ये तिष्ठति।
त्रिविधं ब्रह्म तद्विद्धि। प्रापञ्चिकशिखोपवीतं त्यजेत्॥ ५॥

स्वातिरिक्ताविद्यारूपमस्ति नास्तीति भ्रान्तिः पञ्चपादब्रह्मणः तुर्यातीतस्य न किंचनास्ति। व्यष्टिसमष्ट्यात्मकचतुष्पादन्तर्वर्तिनोऽन्तर्जीवब्रह्मण उपलब्धिस्थानानि चत्वारि भवन्ति—व्यष्टिचतुष्पादन्तर्वर्तिनो विश्वतैजसप्राज्ञतुरीयाः। समष्टिचतुष्पादन्तर्वर्तिनस्तु विराट्सूत्रबीजतुरीयाः। तेषामुपलब्धिस्थानानि कानीत्यत्र नाभिहृदयकण्ठमूर्धसु नेत्रकण्ठहृदयमूर्धस्वित्यर्थः। तत्र जाग्रत्स्वप्नसुषुप्तितुर्यावस्था भवन्ति। तथाच श्रुतिः—

"नेत्रस्थं जागरितं विद्यात् कण्ठे स्वप्नं समाविशेत्।
सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितम"॥

इति।

किंच आहवनीयगार्हपत्यदक्षिणसभ्याग्निषु च यथायोगमात्मा भावयितव्य इत्यर्थः। जागरणादौ विभातचैतन्यभेदमाह—जागरित इति। बाह्ययज्ञसूत्रब्रह्मसूत्रयोरेकत्वावगमाय। नो चेत् बाह्ययज्ञसूत्रं दृष्टान्तीकृत्य ब्रह्मसूत्रं प्रपञ्चयति—तस्मादिति। यस्माद्यज्ञब्रह्मसूत्रयोः सामानाधिकरण्यं भवति, सूत्रत्वाविशेषात्, तस्मात् जाग्रदादिचतुरवस्थाचतुरङ्गुलवेष्टनमिव विभाव्य यथा यज्ञसूत्रं चतुरङ्गुलमानेन षण्णवतिसंख्यातं तथा षण्णवतितत्त्वानि श्रोत्रादीश्वरान्तानि। एवं यज्ञसूत्रं ब्रह्मसूत्रभावनाभावितं कर्मभिर्यदि धृतं तदा तत् कर्म चित्तशुद्धिप्रापकं भवेदित्यर्थः। ब्रह्मसूत्रप्रशंसनायास्य वाचारम्भणतामाह—मूलमिति। यन्मृदादिवत् कारणं तत् सत्यम्। यत्तत्तदज्ञानविजृम्भितं कार्यं तद्वाचारम्भणम्; मृदतिरेकेण घटाद्यभावात् कारणं ब्रह्मैव सत्यमिति। हंसेति वर्णद्वयेनान्तःशिखोपवीतित्वं निश्चित्य हंसः सोऽहम् इति भावनापूर्वकं सदा तन्निष्ठत्वमन्तःशिखोपवीतित्वम्। तेन किं स्यात् इत्यत्र ब्राह्मणत्वं ब्रह्मध्यानार्हत्वं यतित्वमलक्षितान्तःशिखोपवीतित्वं भवति। परिव्राडितरस्य तु एवमित्यादि। ब्रह्मसूत्रमेकमेव विश्वविराडोत्रादिभेदेन चतुश्चतुर्गुणीकृत्येति।

आद्यन्तयोर्निर्विशेषत्वेन मध्यमावस्थायामपि ब्रह्म निर्विशेषमेकमेवेत्यर्थः; "यन्नादौ यच्च नास्त्यन्ते तन्मध्ये भातमप्यसत्" इति स्मृतेः। ब्रह्म निष्प्रतियोगिकमपि स्वाज्ञास्तदाप्त्युपायं बहुधा कल्पयन्तीत्याह—तदिति। तस्य ब्रह्मणः स्वस्वबुद्ध्यनुरोधेन प्रतिसरणयोग्यत्वात्। प्रतिसरणं कल्पनाधिकरणम्; तदवष्टभ्य तत्प्रापकोपायतया साङ्ख्यादिबहुमार्गप्रवृत्तिं कल्पयन्ति। तत्कल्पनामात्रमेव सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति ज्ञानसमकालम्। तन्मात्रावस्थानलक्षणमुक्तिस्तु सर्वेषां ब्रह्मादीनां देवर्षीणां मनुष्याणां निर्विशेषब्रह्ममात्रज्ञानं यदि जायते तदा तत्समकालीनविदेहमुक्तिरेका ब्रह्मैकमेव ब्रह्मनिष्ठाप्रभवब्राह्मणत्वमेकमेव। अपवर्गस्य अपवर्गभाजनस्य। हंसः शिखा प्रणवमुपवीतं विद्धि हंसप्रणवयोः नादः संधानम्। प्रणवः तुरीयोङ्कारः तदर्थः। "तुर्यातीतं ब्रह्म हंसः" इति मन्त्रार्थस्तु प्रत्यक्परैक्यसिद्धः परमात्मा नादलयाधारोऽपि स एव प्रणवो हंसो नादश्च एतत् त्रयं त्रिवृत्सूत्रमित्युच्यते। तत् कुत्र आसनमर्हति? इत्यत्र स्वहृदि चैतन्ये तिष्ठति; स्वे महिम्नि स्वयं तिष्ठतीत्यर्थः। परापरभेदेन द्विविधं ब्रह्म तद्विद्धि। यदि स्वातिरिक्तिभ्रमतो मोक्तुमिच्छति, तदा मुमुक्षुः प्रापञ्चिकशिखोपवीतं त्यजेत्॥ ५॥

### मुमुक्षुणा कर्तव्यानि

सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद् बुधः।
यदक्षरं परं ब्रह्म तत् सूत्रमिति धारयेत्॥ ६॥
पुनर्जन्मनिवृत्त्यर्थं मोक्षस्याहर्निशं स्मरेत्।
सूचनात् सूत्रमित्युक्तं सूत्रं नाम परं पदम्॥ ७॥
तत् सूत्रं विदितं येन स मुमुक्षुः स भिक्षुकः।
स वेदवित् सदाचारी स विप्रः पङ्क्तिपावनः॥ ८॥

येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
तत् सूत्रं धारयेद्योगी योगविद् ब्राह्मणो यतिः ॥ ९ ॥
बहिःसूत्रं त्यजेद्विप्रो योगविज्ज्ञानतत्परः ।
ब्रह्मभावमयं सूत्रं धारयेद्यः स मुक्तिभाक् ।
नाशुचित्वं न चोच्छिष्टं तस्य सूत्रस्य धारणम् ॥ १० ॥
सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ।
ते तु सूत्रविदो लोके ते च यज्ञोपवीतिनः ॥ ११ ॥
**ज्ञानशिखा** ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमीरितम् ॥ १२ ॥
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।
स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः ॥ १३ ॥
कर्मण्यधिकृता ये तु वैदिके लौकिकेऽपि वा ।
ब्राह्मणाभासमात्रेण जीवन्ते कुक्षिपूरकाः ।
व्रजन्ते निरयं ते तु जन्म जन्मनि जन्मनि ॥ १४ ॥
वामांसदक्षकट्यन्तं ब्रह्मसूत्रं तु सव्यतः ।
अन्तर्गतप्रमारूढं तत्त्वतन्तुसमन्वितम् ।
नाभ्यादिब्रह्मरन्ध्रान्तं प्रमाणं धारयेत् सुधीः ॥ १५ ॥
तेभिर्धार्यमिदं सूत्रं क्रियाङ्गं तन्तुनिर्मितम् ॥
शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य नेतरेषां तु किंचन ॥ १६ ॥

इदं यज्ञोपवीतं तु परमं यत् परायणम् ।
विद्वान् यज्ञोपवीती संधारयेद्यः स मुक्तिभाक् ॥ १७ ॥
बहिरन्तश्चोपवीती विप्रः संन्यस्तुमर्हति ।
एकयज्ञोपवीती तु नैव संन्यस्तुमर्हति ॥ १८ ॥
तस्मात् सर्वप्रयत्नेन मोक्षापेक्षी भवेद्यतिः ।
बहिःसूत्रं परित्यज्य स्वान्तःसूत्रं तु धारयेत् ॥ १९ ॥

बहिष्प्रपञ्चशिखोपवीतित्वमनादृत्य प्रणवहंसशिखोपवीतित्वमवलम्ब्य मोक्षसाधनं कुर्यादित्याह भगवाञ्छौनक इत्युपनिषत् ॥ २० ॥

सर्वापवादाधिकरणतया सूचनात् सूत्रमित्युक्तम् । शौनकः पिप्पलादमुखतो ब्रह्मतत्त्वमवगम्य स्वशिष्येभ्य एवमाहेत्यर्थः । इत्युपनिषच्छब्दः परब्रह्मोपनिषत्परिसमाप्त्यर्थः ॥ ६–२० ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
परब्रह्मोपनिषदो व्याख्यानं लिखितं लघु ।
प्रकृतोपनिषद्व्याख्याग्रन्थस्त्रिंशोत्तरं शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे अष्टसप्ततिसंख्यापूरकं परब्रह्मोपनिषद्विवरणं संपूर्णम्

———

# परमहंसपरिव्राजकोपनिषत्

## भद्रं कर्णेभिः—इति शान्तिः

### परिव्राजकलक्षणजिज्ञासा

अथ पितामहः स्वपितरमादिनारायणमुपसमेत्य प्रणम्य पप्रच्छ। भगवन् त्वन्मुखाद्वर्णाश्रमधर्मक्रमं सर्वं श्रुतं विदितमवगतम्। इदानीं परमहंसपरिव्राजकलक्षणं वेदितुमिच्छामि। कः परिव्रजनाधिकारी? कीदृशं परिव्राजकलक्षणम्? कः परमहंसः? परिव्राजकत्वं कथम्? तत् सर्वं मे ब्रूहीति। स होवाच भगवानादिनारायणः॥ १॥

पारिव्राज्यधर्मवन्तो यज्ज्ञानाद्ब्रह्मतां ययुः।
तद्ब्रह्मप्रणवैकार्थं तुर्यतुर्यं हरिं भजे॥

इह खल्वथर्वणवेदप्रविभक्तेयं परमहंसपरिव्राजकोपनिषत् पारमहंस्यधर्मप्रतिपादनव्यग्रा ब्रह्मप्रणवार्थतुर्यतुर्यपदविश्रान्ता विजृम्भते। अस्याः संक्षेपतो विवरणमारभ्यते। ब्रह्मनारायणप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था। पितामहो विश्वभूः; नारायणो विश्वपालकः; ताभ्यामाविर्भूतोऽर्थः कीदृशो भवतीति आख्यायिकामवतारयति—अथेति। अथ ब्रह्मक्षत्रादिब्रह्मचारिगृहस्थादिधर्मश्रवणानन्तरं काश्यपादिनवप्रजापतयः सर्वलोकपितरः यस्तेषामपि

पिता स सर्वलोकपितामहः स्वपितरमादिनारायणं कार्यसत्त्वे स्वयमादिसर्वाभिन्ननिमित्तोपादानकारणत्वात् वस्तुतो यत्र कार्यकारणकलना नास्त्यरमिति नारं कार्यकारणकलनासंभवप्रबोधसिद्धनिष्प्रतियोगिकब्रह्ममात्रावस्थानलक्षणविदेहकैवल्यं तदेवायनं स्वरूपं यस्य सोऽयमादिनारायणः तं स्वाज्ञदृष्ट्या मूर्तिमदवस्थितम् ;

"अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥"

इति स्मृतेः । तमुपसमेत्य दण्डवत् प्रणम्य पप्रच्छ । किमिति भगवन्निति । सर्वं यथावत् श्रुतम् । परमहंसपरिव्राजकलक्षणं यथावत् वेदितुमिच्छामि । तत्कृतप्रश्नमङ्गीकृत्य स होवाच भगवानादिनारायणः ॥ १ ॥

अधिकारिनिरूपणम्

सद्गुरुसमीपे सकलविद्यापरिश्रमज्ञो भूत्वा विद्वान् सर्वमैहिकामुष्मिकसुखश्रमं ज्ञात्वैषणात्रयवासनात्रयममत्वाहंकारादिकं वमनान्नमिव हेयमुपगम्य मोक्षमार्गैकसाधनो ब्रह्मचर्यं समाप्य गृही भवेत् । गृहाद्वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा । अथ पुनरव्रती वा व्रती वा स्नातको वास्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेदिति सर्वसंसारेषु विरक्तो ब्रह्मचारी गृही वानप्रस्थो वा पितरं मातरं कलत्रमाप्तबन्धुवर्गं तदभावे शिष्यं सहवासिनं वानुमोदयित्वा तद्धैके प्राजापत्यामेवेष्टिं कुर्वन्ति । तदु तथा न कुर्यात् । आग्नेय्यामेव कुर्यात् । अग्निर्हि प्राणः । प्राणमेवैतया करोति । त्रैधातवीयामेव कुर्यात् । एतयैव त्रयो धातवो यदुत सत्त्वं रजस्तम इति ।

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥

इत्यनेन मन्त्रेणाग्निमाजिघ्रेत् । एष वा अग्नेर्योनिर्यः प्राणं गच्छ स्वां योनिं गच्छ स्वाहेत्येवमेवैतदाह । ग्रामाच्छ्रोत्रियागाराद्ग्निमाहृत्य स्वविध्युक्तक्रमेण पूर्ववदग्निमाजिघ्रेत् । यद्यातुरो वाग्निं न विन्देदप्सु जुहुयात् । आपो वै सर्वा देवताः, सर्वाभ्यो देवताभ्यो जुहोमि स्वाहेति हुत्वोद्धृत्य प्राश्नीयात् साज्यं हविरनामयम् । एष विधिर्वीराध्वाने वानाशके वापां प्रवेशे वाग्निप्रवेशे वा महाप्रस्थाने वा । यद्यातुरः स्यान्मनसा वाचा वा संन्यसेत् । एष पन्थाः ॥ २ ॥

तत्कृतप्रश्नेष्वादौ परिव्रजनाधिकारिणं निरूपयति—सदिति । न कदापि संसारमण्डले सुखलेशोऽस्तीत्यवगम्य दाराद्येषणात्रयं देहादिवासनात्रयं दारादौ शरीरे च रूढमूलं ममत्वाहंकारादिकं वमनान्नमिव हेयमुपगम्य स्वातिरिक्तास्तित्वभ्रममोक्षमार्गैकसाधनो ब्रह्मचर्यं समाप्य गृही भवेत् । जाबालोपनिषद्युक्तार्थमेतत् । यदि सर्वसंसारेषु विरक्तो भवति तदा ब्रह्मचारी गृही वानप्रस्थो वा आदौ पित्राद्यनुमोदनं कृत्वा संन्यसेदित्याह—पितरमिति । अनुमोदयित्वा प्रव्रजेदित्यर्थः । यदि स्वयमाहिताग्निस्तदा चरमेष्ट्यादिकर्मसमाप्तिः कार्येत्यत्र—तद्धैक इति । तद्धैक इत्यादि जाबालोपनिषदि पदशो व्याख्यातम् ॥ २ ॥

निरामयस्य संन्यासः

स्वस्थः क्रमेणैव चेदात्मश्राद्धं विरजाहोमं कृत्वा, अग्निमात्मन्यारोप्य, लौकिकवैदिकसामर्थ्यं स्वचतुर्दशकरणप्रवृत्तिं च पुत्रे समारोप्य

तदभावे शिष्ये वा तदभावे स्वात्मन्येव वा, ब्रह्मा त्वं यज्ञस्त्वमित्यभिमन्त्र्य ब्रह्मभावनया ध्यात्वा, सावित्रीप्रवेशपूर्वकमप्सु सर्वविद्यार्थस्वरूपां ब्राह्मण्याधारां वेदमातरं क्रमाद् व्याहृतिषु त्रिषु प्रविलाप्य, व्याहृतित्रयमकारोकारमकारेषु प्रविलाप्य, तत्सावधानेनापः प्राश्य, प्रणवेन शिखामुत्कृष्य, यज्ञोपवीतं छित्त्वा, वस्त्रमपि भूमौ वाप्सु वा विसृज्य, ओं भूः स्वाहा, ओं भुवः स्वाहा, ओं सुवः स्वाहेत्यनेन जातरूपधरो भूत्वा, स्वरूपं ध्यायन्, पुनः पृथक् प्रणवव्याहृतिपूर्वकं मनसा वचसापि संन्यस्तं मया संन्यस्तं मया संन्यस्तं मयेति मन्द्रमध्यमतारध्वनिभिस्त्रिवारत्रिगुणीकृतप्रैषोच्चारणं कृत्वा, प्रणवैकध्यानपरायणः सन्नभयं सर्वभूतेभ्यो मत्तः स्वाहेत्यूर्ध्वबाहुर्भूत्वा, ब्रह्माहमस्मीति तत्त्वमस्यादिमहावाक्यार्थस्वरूपानुसंधानं कुर्वन्नुदीचीं दिशं गच्छेज्जातरूपधरश्चरेत्। एष संन्यासः।

तदधिकारी न भवेद्यदि, गृहस्थप्रार्थनापूर्वकमभयं सर्वभूतेभ्यो मत्तः सर्वं प्रवर्तते सखा मा गोपायौजः सखा योऽसीन्द्रस्य वज्रोऽसि वार्त्रघ्नः शर्म मे भव यत्पापं तन्निवारयेत्यनेन मन्त्रेण प्रणवपूर्वकं सलक्षणं वैणवं दण्डं कटिसूत्रं कौपीनं कमण्डलुं विवर्णवस्त्रमेकं परिगृह्य, सद्गुरुमुपगम्य, नत्वा, गुरुमुखात् तत्त्वमसीति महावाक्यं प्रणवपूर्वकमुपलभ्य, अथ जीर्णवस्त्रवल्कलाजिनं धृत्वा, अथ जलावतरणमूर्ध्वगमनमेकभिक्षां परित्यज्य, त्रिकालस्नानमाचरन्, वेदान्तश्रवणपूर्वकं प्रणवानुष्ठानं कुर्वन्, ब्रह्ममार्गे सम्यक् संपन्नः, स्वाभिमतमात्मनि गोपयित्वा, निर्ममोऽध्यात्मनिष्ठः, कामक्रोधलोभमोहमदमात्सर्यदम्भदर्पाहंकारासूयागर्वेच्छाद्वेषहर्षा-

मर्षममत्वादींश्च हित्वा, ज्ञानवैराग्ययुक्तो वित्तस्त्रीपराङ्मुखः शुद्धमानसः सर्वोपनिषदर्थमालोच्य, ब्रह्मचर्यापरिग्रहाहिंसासत्यं यत्नेन रक्षञ्जितेन्द्रियो बहिरन्तःस्नेहवर्जितः, शरीरसंधारणार्थं चतुर्षु वर्णेष्वभिशस्तपतितवर्जितेषु पशुरद्रोही भैक्षमाणो ब्रह्मभूयाय भवति । सर्वेषु कालेषु लाभालाभौ समौ भूत्वा, करपात्रमाधूकरेणान्नमश्नन्, मेदोवृद्धिमकुर्वन्, कृशीभूत्वा, ब्रह्माहमस्मीति भावयन्, गुर्वर्थं ग्राममुपेत्य, ध्रुवशीलोऽष्टौ मांस्येकाकी चरेत्, द्वावेवाचरेत् ।

यदालंबुद्धिर्भवेत् तदा कुटीचको वा बहूदको वा हंसो वा परमहंसो वा तत्तन्मन्त्रपूर्वकं कटिसूत्रं कौपीनं दण्डं कमण्डलुं सर्वमप्सु विसृज्याथ जातरूपधरश्चरेत् । ग्रामैकरात्रं तीर्थे त्रिरात्रं पट्टने पञ्चरात्रं क्षेत्रे सप्तरात्रमनिकेतः स्थिरमतिरनग्निसेवी निर्विकारो नियमानियममुत्सृज्य प्राणसंधारणार्थमयमेव लाभालाभौ समौ भूत्वा गोवृत्त्या भैक्षमाचरन्नुदक-स्थलकमण्डलुरबाधकरहस्यस्थलवासो न पुनर्लाभालाभरतः शुभाशुभ-कर्मनिर्मूलनपरः सर्वत्र भूतलशयनः क्षौरकर्मपरित्यक्तो मुक्तचातुर्मास्य-व्रतनियमः शुक्लध्यानपरायणोऽर्थस्त्रीपुरपराङ्मुखोऽनुन्मत्तोऽप्युन्मत्तवदा-चरन्नव्यक्तलिङ्गोऽव्यक्ताचारो दिवानक्तसमत्वेनास्वप्नः स्वरूपानुसंधान-ब्रह्मप्रणवध्यानमार्गेणावहितः संन्यासेन देहत्यागं करोति परमहंस-परिव्राजको भवति ॥ ३ ॥

यदि निरामयः संन्यस्तुमिच्छति तदा नारदपरिव्राजकोपनिषच्चतुर्थो-पदेशोक्तरीत्या सर्वमाचरेदित्याह—स्वस्थ इति । पुत्रे समारोप्य तदभावे

शिष्ये वा पुत्रादेः पित्रादिस्वत्वाधिकारत्वात् तदभावे स्वात्मन्येव वा समारोपयेत् उपसंहरेदित्यर्थः । वेदमातरं क्रमात् भूरादिव्याहृतिषु त्रिषु प्रविलाप्य । प्रणवपूर्वकं सलक्षणं सत्वचं समपर्वकं पुण्यस्थलसमुद्भूतं नानाकल्मषशोधितमित्यादिसंन्यासोपनिषदुक्तप्रकारेण वैणवं दण्डमित्यादि । अथ हस्ताभ्यां जलावतरणं संकल्पेन ऊर्ध्वगमनं मनोराज्यम् एकभिक्षां परित्यज्येति । ब्रह्म निष्प्रतियोगिकं ब्रह्मातिरिक्तं न किंचिदस्तीति प्रबोध एव ब्रह्ममार्गः । तत्र संपन्नो भूत्वा परमसिद्धान्तमात्मन्येव गोपयित्वा स्वात्मनिष्ठो भूत्वा कादाचित्कप्रसक्तकामक्रोधेत्यादि । ब्राह्मणप्रविभक्तचतुर्षु वर्णेषु अभिशस्तपतितवर्जितेषु पशुः इव अद्रोही भैक्षमाणो ब्रह्मभूयाय ब्रह्मभावाय भवति । "यो ब्रह्माणं विदधाति पूर्वम्" इति श्रुत्यनुरोधेन गुरुर्विष्णुः "नैवेद्यार्थं महाविष्णोः स्वादु माधूकरं शुचि" इति स्मृत्यनुरोधेन गुर्वर्थं ग्राममुपेत्य ध्रुवशीलः अचलस्वभावोऽपि अष्टौ मास्येकाकी चरेद् द्वावेवाचरेत् । यदि श्रवणध्यानाधिकारी न भवति, तदा चातुर्मास्य एकत्रासनं शिष्टमासे ग्रामैकरात्रम इत्याद्युक्तरीत्याटनम् । एतद्द्वयमेव यतिभिराचरणीयमित्यर्थः । यदा कुटीचकाद्याश्रमे अलंबुद्धिर्भवेत् । "पात्रे पतितमश्नीयात् तत्र किंचिन्न हि स्मरेत्" इति स्मृतेः । कृत्स्नेयमुपनिषत् नारदपरिव्राजकोपनिषद्व्याख्यानेन प्रायशो व्याख्यातेति मन्तव्या ॥ २ ॥

ब्रह्मप्रणवस्वरूपजिज्ञासा

भगवन् ब्रह्मप्रणवः कीदृश इति ब्रह्मा पृच्छति । स होवाच नारायणः ब्रह्मप्रणवः षोडशमात्रात्मकः सोऽवस्थाचतुष्टयचतुष्टयगोचरः । जाग्रदवस्थायां जाग्रदादिचतस्रोऽवस्थाः, स्वप्ने स्वप्नादिचतस्रोऽवस्थाः ; सुषुप्तौ सुषुप्त्यादिचतस्रोऽवस्थाः, तुरीये तुरीयादिचतस्रोऽवस्था भवन्तीति । व्यष्टिजाग्रदवस्थायां विश्वस्य चातुर्विध्यं विश्वविश्वो विश्वतैजसो विश्वप्राज्ञो विश्वतुरीय इति । व्यष्टिस्वप्नावस्थायां तैजसस्य चातुर्विध्यं तैजसविश्वस्तै-

जसतैजसस्तैजसप्राज्ञस्तैजसतुरीय इति । सुषुप्त्यवस्थायां प्राज्ञस्य चातुर्विध्यं प्राज्ञविश्वः प्राज्ञतैजसः प्राज्ञप्राज्ञः प्राज्ञतुरीय इति । तुरीयावस्थायां तुरीयस्य चातुर्विध्यं तुरीयविश्वस्तुरीयतैजसस्तुरीयप्राज्ञः । एते क्रमेण षोडशमात्रारूढाः । अकारे जाग्रद्विश्व उकारे जाग्रत्तैजसो मकारे जाग्रत्प्राज्ञ अर्धमात्रायां जाग्रत्तुरीयः, बिन्दौ स्वप्नविश्वः, नादे स्वप्नतैजसः, कलायां स्वप्नप्राज्ञः, कलातीते स्वप्नतुरीयः, शान्तौ सुषुप्तविश्वः; शान्त्यतीते सुषुप्ततैजसः, उन्मन्यां सुषुप्तप्राज्ञः, मनोन्मन्यां सुषुप्ततुरीयः, पुर्यां तुरीयविश्वः, मध्यमायां तुरीयतैजसः, पश्यन्त्यां तुरीयप्राज्ञः, परायां तुर्यतुरीयः। जाग्रन्मात्राचतुष्टयमकारांशं स्वप्नमात्राचतुष्टयमुकारांशं सुषुप्तिमात्राचतुष्टयं मकारांशं तुरीयमात्राचतुष्टयमर्धमात्रांशम् । अयमेव ब्रह्मप्रणवः । स परमहंसतुरीयातीतावधूतैरुपास्यः । तेनैव ब्रह्म प्रकाशते । विदेहमुक्तिः॥४॥

ब्रह्मप्रणवध्यानमार्गेणेति प्रश्नबीजमवष्टभ्य ब्रह्मप्रणवेयत्तामवगन्तुं ब्रह्मणा पृष्टः प्रश्नोत्तरं भगवानाहेत्याह—भगवन्निति । स होवाच नारायणः । किं तत्? इत्यत्र—ब्रह्मप्रणव इति । तत् कथमित्यत्र—जाग्रदवस्थायां जाग्रदादिचतस्रोऽवस्थाः जाग्रज्जाग्रदित्यादि । स्वप्ने स्वप्नादिचतस्रोऽवस्थाः स्वप्नजाग्रदित्यादि । सुषुप्तौ सुषुप्त्यादिचतस्रोऽवस्थाः सुषुप्तिजाग्रदित्यादि । तुरीये तुरीयादिचतस्रोऽवस्था भवन्तीति तुर्यजाग्रदित्यादि । व्यष्टिसमष्ट्यात्मकजाग्रज्जाग्रदादिषोडशावस्थासु व्यष्टिजाग्रज्जाग्रदादिपञ्चदशावस्थारूढा विश्वविश्वादितुर्यप्राज्ञान्ता इत्याह—व्यष्टिजाग्रदवस्थायामिति । तथा व्यष्टिस्वप्नावस्थायामिति । तथा व्यष्टिसुषुप्त्यवस्थायामिति । तथा तुरीयावस्थायां तुरीयस्य चातुर्विध्यमित्यत्र तुरीयविश्वः तुरीयतैजसः तुरीयप्राज्ञः इति त्रैविध्यं ज्ञेयम् । सविशेषनिर्विशेषावेकीकृत्य चातुर्विध्योक्तिः ; सविशेषप्रपञ्चापह्नवसिद्धं निर्विशेषं

तुर्यतुरीयमिति पृथक् ज्ञातुं युक्तत्वात् । तथा समष्टिजाग्रज्जाग्रदादितुर्यस्वापान्तपञ्चदशावस्थारूढा विराड्विराडादितुर्यबीजान्ताः । तथा व्यष्टिसमष्ट्यैक्यसिद्धजाग्रज्जाग्रदादिपञ्चदशावस्थारूढा ओत्रोत्राद्यविकल्पानुज्ञैकरसान्ताः जाग्रज्जाग्रदाद्यविकल्पान्तविकल्पा यत्रापह्नवं भजन्ति तदविकल्पाविकल्पं तुर्यतुरीयमिति ज्ञेयम्; एतदर्थस्य ब्रह्मप्रणवदीपिकायां सम्यक् प्रपञ्चितत्वात् । उक्तविकल्पा एते क्रमेण षोडशमात्रारूढाः । तत् कथमित्यत्र—**अकारे जाग्रद्विश्व** इत्यादि । **जाग्रन्मात्राचतुष्टयमकारांशं** विद्धीति शेषः । **तथा स्वप्नमात्राचतुष्टयमुकारांशं सुषुप्तिमात्राचतुष्टयं मकारांशं तुरीयमात्राचतुष्टयमर्धमात्रांशं** जानीहीत्यर्थः । यत एवमतो व्यष्टिसमष्टितदुभयैक्यसिद्धजाग्रज्जाग्रदादितुर्यस्वापान्तकलनारोपापवादाधारविश्वविश्वाद्यविकल्पानुज्ञैकरसान्ताः प्रणवविकारा इत्यत्र "सर्ववाच्यवस्तु प्रणवात्मकम्" इति श्रुतेः । जाग्रज्जाग्रदादिचतुष्पंञ्चदशकलना यत्रापह्नवतां भजति यत्तदपह्नवसिद्धं तुरीयतुरीयं तन्निष्प्रतियोगिकतया स्वमात्रमवशिष्यते । एवमर्थो यत्र अवगम्यते **अयमेव ब्रह्मप्रणवः** । स **परमहंसतुरीयातीतावधूतैरुपास्यः** ब्रह्मप्रणवज्ञानेन मामित्यत्र तेनैव **ब्रह्म** स्वावशेषतया **प्रकाशते** । यः प्रबोधो निष्प्रतियोगिकतुर्यतुर्यमात्रगोचरः, तेनैव ब्रह्ममात्रप्रबोधेन ब्रह्ममात्रावस्थानलक्षणविदेहमुक्तिर्भवतीति प्रकरणार्थः ॥ ४ ॥

अयज्ञोपवीतिनो ब्राह्मणत्वम्

भगवन् कथमयज्ञोपवीत्यशिखी सर्वकर्मपरित्यक्तः? कथं ब्रह्मनिष्ठापरः? कथं ब्राह्मणः? इति ब्रह्मा पृच्छति । स होवाच विष्णुः । भो भोऽर्भक यस्यास्त्यद्वैतमात्मज्ञानं तदेव यज्ञोपवीतम् । तस्य ध्याननिष्ठैव शिखा । तत्कर्म सपवित्रम् । स सर्वकर्मकृत् स ब्राह्मणः स ब्रह्मनिष्ठापरः स देवः स ऋषिः स तपस्वी स श्रेष्ठः स एव सर्वज्येष्ठः स एवाहं विद्धि । लोके परमहंसपरिव्राजको दुर्लभतरः । यद्येकोऽस्ति स

एव नित्यपूतः स एव वेदपुरुषः। महापुरुषो यस्तच्चित्तं मय्येवावतिष्ठते। अहं च तस्मिन्नेवावस्थितः। स एव नित्यतृप्तः। स शीतोष्णसुखदुःखमानावमानवर्जितः। स निन्दामर्षसहिष्णुः। स षडूर्मिवर्जितः षड्भावविकारशून्यः। स ज्येष्ठाज्येष्ठव्यवधानरहितः। स स्वव्यतिरेकेण नान्यद्रष्टा। आशाम्बरो न नमस्कारो न स्वाहाकारो न स्वधाकारश्च न विसर्जनपरो निन्दास्तुतिव्यतिरिक्तो न मन्त्रतन्त्रोपासको देवान्तरध्यानशून्यो लक्ष्यालक्ष्यनिवर्तकः सर्वोपरतः सच्चिदानन्दाद्वयचिद्घनः संपूर्णानन्दैकबोधो ब्रह्मैवाहमस्मीत्यनवरतं ब्रह्मप्रणवानुसंधानेन यः कृतकृत्यो भवति स परमहंसपरिव्राडित्युपनिषत्॥ ५॥

ब्रह्मप्रणवस्य परमहंसाद्यधिकारत्वात् परमहंसादेः सर्वत्र ब्राह्मणत्वं श्रूयते—यः संन्यासी स परमहंसः सोऽवधूतः स ब्राह्मण इति। प्रसिद्धिस्तु शिखायज्ञोपवीतविशिष्टकर्मठानामेव ब्राह्मणत्वमिति। तद्विरलस्य यतेः कथं ब्राह्मण्यमिति ब्रह्मा भगवन्तं पृच्छतीत्याह—भगवन्निति। प्रश्नोत्तरं स होवाच विष्णुः। ईदृशो मद्भावापन्नो **लोके परमहंसपरिव्राजको दुर्लभतरः। स एव नित्यतृप्तः**; मद्भावापत्तेर्नित्यतृप्तिप्रापकत्वात्। **स शीतोष्णसुखदुःखमानावमानवर्जितः**; देहादावात्मात्मीयाभिमानवैकल्यात्; **स षडूर्मिवर्जितः**; अशनायाद्यतीतत्वात्। **षड्भावविकारशून्यः**; भावषट्कास्पदस्थूलदेहवैकल्यात्। **स ज्येष्ठाज्येष्ठव्यवधानरहितः**; "यो न स्वरूपज्ञः स ज्येष्ठोऽपि कनिष्ठः" इति श्रुतेः। **स स्वव्यतिरेकेण नान्यद्रष्टा**; द्रष्टव्यान्यस्य मृग्यत्वात्। विसर्जनीयाभावात् **न विसर्जनपरः। न मन्त्रतन्त्रोपासको देवान्तरध्यानशून्यः**; मन्त्रतन्त्रदेवोपासनाभिः भवितव्यार्थाभावात्। **लक्ष्यालक्ष्यनिवर्तकः**; लक्षणया बोधितं लक्ष्यं तद्विपरीतमलक्ष्यं वाच्यम्। स्वातिरेकेण तदुभयं नास्ति; अहमेवेदं

सर्वमिति निवर्तकः। ब्रह्मप्रणवार्थतुर्यतुर्यस्वमात्रमित्यनुसंधानतो विद्वान् तुर्यतुर्यरूपेणावशिष्यते; विदेहमुक्तो भवतीत्यर्थः। इत्युपनिषच्छब्दः प्रकृतोपनिषत्परिसमाप्त्यर्थः ॥ ९ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
प्रकृतोपनिषद्व्याख्या लिखिता तुर्यतुर्यगा।
प्रकृतोपनिषद्व्याख्याग्रन्थजातं शतं स्मृतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे षट्षष्टिसंख्यापूरकं परमहंसपरिव्राजकोपनिषद्विवरणं संपूर्णम्

# परमहंसोपनिषत्

## पूर्णमदः—इति शान्तिः

परमहंसपरिव्राजकानां मार्गः

अथ योगिनां परमहंसानां कोऽयं मार्गस्तेषां का स्थितिरिति नारदो भगवन्तमुपसमेत्योवाच। तं भगवानाह। योऽयं परमहंसमार्गो लोके दुर्लभतरो न तु बाहुल्यो यद्येको भवति स एव नित्यपूतः स एव वेदपुरुष इति विदुषो मन्यन्ते महापुरुषो यच्चित्तं तत् सदा मय्येवावतिष्ठते। तस्मादहं च तस्मिन्नेवावस्थीयते। असौ स्वपुत्रमित्रकलत्रबन्ध्वादीञ्छिखा-यज्ञोपवीतं स्वाध्यायं च सर्वकर्माणि संन्यस्यायं ब्रह्माण्डं च हित्वा कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थाय लोकस्यैवोपकारार्थाय च परिग्रहेत्। तच्च न मुख्योऽस्ति। को मुख्य इति चेदयं मुख्यः॥१॥

परमहंसोपनिषद्वेद्यापारसुखाकृति।
त्रैपदश्रीरामतत्त्वं स्वमात्रमिति चिन्तये॥

इह खलु परमहंसोपनिषदः शुक्लयजुर्वेदप्रविभक्तत्वादीशावास्यादिवदुपोद्घातादिकं चिन्त्यम्। नारदभगवत्प्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तु-

त्यर्थः। योग्याधिकारिण उपलभ्य तेषां निश्रेयसायाख्यायिकाकारेण प्रवृत्ता—अथेत्यादिना। अथ स्वकृतभक्तिश्रद्धातपोभिः भगवत्सांनिध्यानन्तरं देवर्षिरिति विख्यातो नारदो मुनिर्यत्र षड्गुणैश्वर्यसंपत्तिः पर्यवसन्ना तं भगवन्तं विनयेनोपसमेत्योवाच। किमिति? योगिनां परमहंसपरिव्राजकानां मार्गः पन्थाः कोऽयं कीदृशः? तेषां स्थितिः कीदृशी? इति नारदेन पृष्टो भगवान् हरिः तं प्रत्येवमाह—तमिति। तमेवं पृष्टवन्तं नारदं प्रति भगवान् हरिरेवमाह। किं तदिति। यथोक्ताचारविशिष्टकुटीचकबहूदकहंसानां मार्ग एव दुर्लभो लोके तावत्। ततोऽपि परमहंसमार्गो दुर्लभतरः। दुर्लभतरार्थं श्रुतिः स्वयमेवाह—न तु बाहुल्य इति। यदि कदाचित् एतादृश एको भवति, तदा स एव परमहंसः। नित्यपूते विशुद्धात्मनि स्वे महिम्नि तिष्ठतीति नित्यपूतस्थः। स एव वेदपुरुषो वेदार्थः परमात्मेति विदुषो ब्रह्मविद्वरीयांसो मन्यन्ते। अत एव परमहंसो महापुरुषो भवति, यस्य महापुरुषस्य चित्तं मय्येव नारायणे तदाकाराकारितयावतिष्ठते। यस्मादेवं तस्मादहं च तस्मिन्नेवावस्थीयते। परमात्मनि प्रत्यक्प्रतीचि परमात्मेति प्रत्यगभेदेनासाववस्थितः सन् स्वीयतया भ्रातृपुत्रमित्रकलत्रबन्ध्वादीन् बहिर्लक्ष्यमाणशिखां यज्ञोपवीतं च स्वाधीतस्वाध्यायवेदजातं च तद्विहितसर्वकर्माण्ययं संन्यस्य स्वाज्ञदशायां स्वावासधिया यद्भातं तच्चतुर्दशभुवनालंकृतब्रह्माण्डं च स्वातिरिक्तधिया हित्वा कौपीनं दण्डमाच्छादनं नित्यकर्मोपयोगिभिक्षाचारादिवस्त्राणि च परिग्रहेत्। किमर्थं तत्परिग्रह इत्यत्र स्वशरीरोपभोगार्थाय। भोगार्थं शीतमशकादिनिवृत्त्यर्थं लोकस्यैवोपकारार्थाय च लोकोन्मार्गनिरासनाय कौपीनादिकं परिग्रहेदित्यर्थः। कौपीनादिपरिग्रह एवास्य मुख्य इत्यत आह—तच्च न मुख्योऽस्तीति। कौपीनादिपरिग्रहो न हि परमहंसानां मुख्योऽस्ति। तर्हि तेषां कोऽयं मुख्य इति चेत् कौपीनादित्याग एव मुख्य इत्याह—अयं मुख्य इति॥ १॥

परमहंसपरिव्राजकानां स्थितिः

न दण्डं न शिखां न यज्ञोपवीतं न चाच्छादनं चरति परमहंसो न शीतं न चोष्णं न सुखं न दुःखं न मानावमानमिति। षडूर्मिवर्जितो

निन्दागर्वमत्सरदम्भदर्पेच्छाद्वेषसुखदुःखकामक्रोधलोभमोहहर्षासूयाहंकारादींश्च हित्वा स्ववपुः कुणपमिव दृश्यते। यतस्तद्वपुरपध्वस्तसंशयमिथ्याज्ञानानां यो हेतुस्तेन नित्यनिवृत्तस्तन्नित्यबोधस्तत्स्वयमेवावस्थितिस्तं शान्तमचलमद्वयानन्दचिद्घन एवास्मि, तदेव मम परमं धाम, तदेव शिखा, तदेवोपवीतं च, परमात्मात्मनोरेकत्वज्ञानेन तयोर्भेद एव विभग्नः, सा संध्या ॥ २ ॥

सर्वान् कामान् परित्यज्य अद्वैते परमे स्थितिः ।
ज्ञानदण्डो धृतो येन एकदण्डी स उच्यते ॥
काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ।
तितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः ।
भिक्षामात्रेण यो जीवेत् स पापी यतिवृत्तिहा ॥
स याति नरकान् घोरान् महारौरवसंज्ञकान् ॥

इदमन्तरं ज्ञात्वा स परमहंसः ॥ ३ ॥

आशाम्बरो न नमस्कारो न स्वाहाकारो न स्वधाकारो न निन्दास्तुतिर्यादृच्छिको भवेद्भिक्षोः नावाहनं न विसर्जनं न मन्त्रं न ध्यानं नोपासनं च । न लक्ष्यं नालक्ष्यं न पृथङ् नापृथगहनं सर्वं च अनिकेतस्थिरमतिरेव स भिक्षुः सौवर्णादीनां नैव परिग्रहेन्न लोकनं नावलोकनं च। न च बाधकः क इति चेद्बाधकोऽस्त्येव । यस्माद्भिक्षुर्हिरण्यं रसेन दृष्टं चेत् स ब्रह्महा भवेत्। यस्माद्भिक्षुर्हिरण्यं रसेन स्पृष्टं चेत् स पौल्कसो भवेत्। यस्माद्भिक्षुर्हिरण्यं रसेन ग्राह्यं चेत् स आत्महा भवेत्। तस्माद्भिक्षुर्हिरण्यं रसेन न दृष्टं च न स्पृष्टं च न ग्राह्यं च सर्वे

कामा मनोगता व्यावर्तन्ते। दुःखे नोद्विग्नः सुखे निःस्पृहः त्यागो रागे सर्वत्र शुभाशुभयोरनभिस्नेहो न द्वेष्टि न मोदं च। सर्वेषामिन्द्रियाणां गतिरुपरमते य आत्मन्येवावस्थीयते। तत्पूर्णानन्दैकबोधस्तद्ब्रह्मैवाह-मस्मीति कृतकृत्यो भवति कृतकृत्यो भवतीत्युपनिषत् ॥ ४ ॥

न हि गार्हस्थ्योचितदण्डशिखायज्ञोपवीताच्छादनं परिगृह्य परमहंस-श्चरति। न हि तस्य शीतोष्णमानावमानकलनास्ति। सेयं कलना देहनिष्ठा। परमहंसस्य प्रत्यगभिन्नब्रह्मभावारूढत्वेन देहत्रयोपलक्षितस्वाविद्यापदतत्कार्य-विलक्षणत्वात्। अत एव षडूर्मिवर्जितः अशनायापिपासाशोकमोहजरामरणा-नीति षडूर्मयः; तद्रहितः। परनिन्दा, गर्वः स्मयः धनविद्यादिविषयः, हृद्यर्पितदृढ-क्रोधो मत्सरः, दम्भो धर्मध्वजित्वं, दर्पः स्वान्यत्रालक्ष्यबुद्धिः, लब्धव्यविषय-स्पृहा इच्छा, स्वाहितकारिणि द्वेषः, इष्टविषयजं सुखम्, अनिष्टविषयजं दुःखम्, इष्टवस्त्वभिलापः कामः, तत्कुण्ठनकारिणि क्रोधः, स्वद्रव्यत्यागानिच्छा लोभः, अतस्मिंस्तद्बुद्धिः मोहः, स्वेष्टविषयागमजो हर्षः, परश्रेयोऽसहिष्णुता असूया, उद्धतवृत्तिरहंकारः, आदिशब्देन स्त्रीयेषु ममकारादिर्गृह्यते। एतत् सर्वं स्वातिरिक्तधिया हित्वा यः स्वमात्रावस्थितिमीहते, तद्दृष्ट्या स्ववपुः कुणप-मिव दृश्यते। यतो यस्मात् ब्रह्मज्ञानात् अपध्वस्तसंशयमिथ्याज्ञानानां स्ववपुरेवं दृश्यते तादृशब्रह्मविषयकज्ञानस्याविर्भावाय यो हेतुः प्रत्यक्त्वेन प्रतीचा प्रत्यगभिन्नब्रह्मभावेन नित्यनिवृत्तस्वाज्ञानो यत् स्वाज्ञाननिवृत्त्यधिकरणं तन्नित्यबोधः परमात्मायं नित्यबोधस्वरूपं तत् स्वयमेवावस्थितिः स्वमात्राव-शेषतया स्थितिर्मुक्तिर्यो मुक्त इत्यभिहितः तं स्वातिरिक्ताविद्यापदतत्कार्य-शान्तनिष्प्रतियोगिकपूर्णत्वात् अचलम् आत्मानम् अद्वयानन्दचिद्घन एवा-स्मीति ज्ञात्वा यत् ज्ञानसमकालं स्वमात्रमवशिष्यते तदेव मम परमं धाम स्वरूपं तदेव शिखा तदेवोपवीतं च केशकार्पासशिखातन्तुवच्छरीरविल-क्षणत्वात्। तस्य का संध्या? इत्यत आह—परमात्मेति। परमात्मात्मनोः

प्रत्यक्परचितोः ब्रह्मैवाहम्, अहमेव ब्रह्म, इत्येकत्वज्ञानेन तयोर्भेद एव विभग्नः तत्त्वभेदः तस्य स्वरूपत्वात् या जीवब्रह्मैक्यस्थितिः सैव संध्या;

"नोदकैर्जायते संध्या न मन्त्रोच्चारणेन तु।
संधौ जीवात्मनोरैक्यं सा संध्या सद्भिरुच्यते ॥"

इति स्मृतेः। इत्थं स्वातिरिक्तसर्वान् कामान् परित्यज्य अपह्नवं कृत्वा परमाद्वैते स्थितिस्तद्रूपेणावस्थानं ज्ञानदण्डः स्वात्ममात्रावशेषतया येन धृतो भवति, स ह्येकदण्डी इत्युच्यते। एवं पारमार्थिकसंन्यासिनं स्तुत्वा आभास-संन्यासिनं दूषयति—काष्ठदण्ड इति। ज्ञानगन्धवैकल्येन येन काष्ठदण्डो धृतः, स हि सर्वाशी केवलोदरंभरी निर्विशेषज्ञानवर्जितो भवति। किंच शीतोष्णादि-तितिक्षापुरःसरं सविशेषज्ञानतदितरविषयवैराग्यशमादिगुणवर्जितः स्वान्त-र्बाह्यव्यापृतिः सन् केवलभिक्षामात्रेण यो जीवेत्, सोऽयं पापी पापकृत्तमो भूत्वा सद्वृत्तयतीनामपि वृत्तिहा भवेत् सत्संन्यासिनोऽपि लोकाः संन्यास्या-भासान् मत्वा दृष्ट्वा उपेक्षां कुर्युः तद्दोषेणायमाभासयतिः महारौरवसंज्ञकान् नरकान् याति। इदं पारमार्थिकाभाससंन्यासिनोरन्तरं ज्ञात्वा आशाम्बरो दिगम्बरः न नमस्कारः ज्येष्ठकनिष्ठकलनाविरल्यात्। न स्वाहाकारो न स्वधाकारो देवपित्र्यकर्मसामान्यस्य त्यक्तत्वात्। न निन्दास्तुतिः निन्दनीय-स्तुत्यगुणविरल्यात्। यादृच्छिको भवेत् देहधारणमात्रेतरप्रवृत्तिशून्यो भवेत्। न हि यादृच्छिक इत्यत्र यथेच्छाचरणं विधीयते; यथेच्छाचरणस्य इच्छापूर्व-कत्वेन पतनमेव स्यात्। अत्र ज्ञानवैराग्यसंपन्नस्य स्वस्मिन्नेव मुक्तिरिति न सर्वत्राचारप्रसक्तिः; "तदाचारवशात् तत्तल्लोकप्राप्तिः" इति श्रुतेः। एवं देहमात्रधारणेतरप्रवृत्तिनिवृत्तिशून्यस्य भिक्षोः न हि स्वान्यत्रावाहनं विसर्जनं मन्त्रध्यानम् उपासनं लक्ष्यमलक्ष्यादिकं वास्तीत्याह—भिक्षोरिति। उक्त-विशेषणविशिष्टस्य भिक्षोः न हि पृथक्त्वेन अपृथक्त्वेन वा त्वमहंतच्छब्द-गोचरं सर्वं स्वातिरिक्तं वस्त्वस्ति। यदि व्यावहारिकत्वेन प्रातिभासिकत्वे-नास्तीति भ्रान्तिस्तदा अनिकेतस्थिरमतिः व्याविद्धात्मीयनिकेतनाभिमतिः स्वदेहे तदन्यत्र वा अहंकारममकारविरल एव भूत्वा यो वर्तते स भिक्षुः

सौवर्णादीनां नैव परिग्रहेत् न लोकनं नावलोकनं च। न च बाधकः क इति चेत्, सुवर्णादिपरिग्रहनिमित्ताभावात् तन्निमित्तमस्तीति स्वीकृत्य। न हि सुवर्णाद्यालोकनं वा न हि कदाऽपि कुर्यात्। एवं कृते बाधकः क इति चेत् बाधकोऽस्त्येव। तत् कथम्? यस्मादुपभोगनिमित्तात् भिक्षुः भिक्षुणा हिरण्यं कनकरत्नादि रसेन प्रेम्णा दृष्टं चेत् स ब्रह्महा भवेत्। यस्मादित्यादि समानम्। यदि तद्रसेन स्पृष्टं तदायं पौल्कसश्चर्मकारो भवेत्। यदि ग्राह्यं गृहीतं तदा सोऽयमात्महा भवेत्। तस्मात् भिक्षुः हिरण्यं रसेन न दृष्टं च न स्पृष्टं च न ग्राह्यं च। रसेन सुवर्णरत्नादिदर्शनं स्पर्शनं ग्रहणं वा न कदापि कुर्यात्। पथिगततृणवद्रागं विना दर्शनं न दोषाय भवति। स्पर्शनग्रहणयोः सद्यतेरप्रसक्तत्वात्। "मा गृधः कस्य स्विद्धनम्" इति श्रुत्यनुरोधेन सुवर्णाद्यनिच्छोः परमहंसस्य स्वाज्ञदृष्टिप्रसक्तमनोगताः मनसि विकल्पिताः सर्वे कामाः स्वज्ञदृष्ट्या व्यावर्तन्ते मिथ्यात्मतया निवर्तन्ते। यत एवमतः परमहंसः दुःखप्रारब्धोदयेऽपि नोद्विग्नो भवति। तथा सुखप्रारब्धोदयेऽपि तत्र निःस्पृहो भवति। रागद्वेषप्रसङ्गेऽपि तत्त्यागो भवति। सर्वत्र स्वातिरिक्तनिवृत्तिमार्गः शुभं प्रवृत्तिमार्गोऽशुभं तयोरनभिस्नेहः प्रवृत्तिनिवृत्तिमार्गपराङ्मुखः प्रवृत्तिमार्गे न द्वेष्टि, निवृत्तिमार्गे न मोदं चानुभवति। सर्वेषां ज्ञानकर्मेन्द्रियाणां चशब्दादन्तःकरणस्य च गतिस्तत्तद्विषयग्रहणशक्तिर्यत्रात्मन्येवोपरमते स्वात्ममात्रावशेषतया अवस्थीयते तदधिकरणत्वेन योऽवशिष्यते सोऽयं तत्पूर्णानन्दैकबोधः; "कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते" इति श्रुतेः। यत्पूर्णबोधत्वेनावशिष्टं तद् ब्रह्मैवाहमस्मीति तद्ब्रह्म स्वमात्रमिति ज्ञानसमकालं कृतकृत्यो विदेहमुक्तो भवति। आवृत्तिः आदरार्था। इत्युपनिषदिति प्रकृतोपनिषत्परिसमाप्त्यर्थः॥ ४॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
परमहंसोपनिषद्व्याख्येयं लिखिता स्फुटम्।
परमहंसोपनिषद्व्याख्याग्रन्थः शतं स्मृतः॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकोनविंशतिसंख्यापूरकं
परमहंसोपनिषद्विवरणं संपूर्णम्

---

# ब्रह्मोपनिषत्

## सह नाववतु—इति शान्तिः

### चतुष्पाद्ब्रह्म

[1] अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति नाभिर्हृदयं कण्ठं मूर्धा च । तत्र चतुष्पादं ब्रह्म विभाति—जागरिते ब्रह्मा, स्वप्ने विष्णुः, सुषुप्तौ रुद्रः, तुरीयमक्षरम् । स आदित्यो विष्णुश्चेश्वरश्च स्वयममनस्कमश्रोत्रमपाणिपादं ज्योतिर्विदितम् ॥ १ ॥

[1] F. Otto Schrader's edition of this work reads the following additional passages in the beginning: "शौनको ह वै महाशालोऽङ्गिरसं भगवन्तं पिप्पलादं पप्रच्छ । दिव्ये ब्रह्मपुरे संप्रतिष्ठिता भवन्ति । कथं सृजन्ति ! कस्यैष महिमा बभूव ? यो ह्येष महिमा बभूव क एषः ? तस्मै स होवाच ब्रह्मविद्यां वरिष्ठाम् । प्राणो ह्येष आत्मा । आत्मनो महिमा बभूव । देवानामायुः सः । देवानां निधनमनिधन, दिव्ये ब्रह्मपुरे विरजं निष्कलं शुभ्रमक्षरं यद्ब्रह्म विभाति । स नियच्छति मधुकरराज[मक्षिकावत् । यथा मक्षिका मधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ते तथैवैनमुत्क्रामन्तं त सर्वे देवा अनूत्क्रामन्ते । स सृजत्याकर्षति] माक्षीकवत् । यथा माक्षीकैकेन तन्तुना जालं विक्षिपति तेनापकर्षति तथैवैष प्राणो यदायाति संसृष्टमाकृष्य । प्राणदेवतास्ताः सर्वा नाड्यः सुष्वपे श्येनाकाशवत् । यथा खं श्येन आश्रित्य याति स्वमालयमेवं सुषुप्तभूते । यथैवैष देवदत्तो यष्ट्यापि ताड्यमानो न वेत्त्येवमिष्टापूर्तैः शुभाशुभैर्न लिप्यते । यथा कुमारो निष्काम आनन्दमुपयाति तथैवैष देवदत्तः स्वप्न आनन्दमभियाति । वेद एष परं ज्योतिः । ज्योतिष्कामो ज्योतिरानन्दयते । भूयस्तेनैव स्वप्नाय गच्छति जलौकावत् । यथा जलौ-

यद्ब्रह्मोपनिषद्व्यक्तविस्फुलिङ्गि हृदुज्ज्वलम् ।
त्रैपदानन्दसाम्राज्यं कलये तत् स्वमात्रतः ॥

इह खलु कृष्णयजुर्वेदान्तर्गतब्रह्मशाखायां यत् काण्डत्रयं प्रकाशितं तत्र सकामस्य केवलकर्मकाण्डानुष्ठानतो धूमादिमार्गेण पुनरावृत्तिमच्चन्द्रलोकाप्तिरभिहिता। निष्कामस्य तु कर्मोपासनाकाण्डार्थसमुच्चयानुष्ठानादर्चिरादिमार्गेणापुनरावृत्तिमद्ब्रह्मलोकाप्तिः। तत्र तन्मुखासादितब्रह्मज्ञानतस्तत्रत्योपाधिप्रलयसमकालं तेन सह तद्भावापत्तिः। येषां चित्तशुद्ध्याधिक्यान्मार्गद्वयेऽपि विरक्तिर्जायते, तेषां झटिति निष्प्रतियोगिकब्रह्ममात्रावगतये ज्ञानकाण्डात्मिकेयं ब्रह्मोपनिषत् प्रवृत्ता। उपनिपूर्वकस्य षद्लृधातोरर्थानुगमात् मुमुक्षोः स्वाज्ञानविशरणपूर्वकं निष्प्रतियोगिकब्रह्ममात्रगमकत्वादिति ब्रह्मविद्योपनिषत्। तादर्थ्येन ग्रन्थोऽप्युपनिषत्। एवमुक्तलक्षणब्रह्मोपनिषदोऽल्पग्रन्थतो विवरणमारभ्यते—**अथेति**। अथ यथोक्तब्रह्मविद्यासाधनसंपत्त्यनन्तरं मुमुक्षोः स्वातिरिक्तारूढबुद्धित्वेन निष्प्रतियोगिकब्रह्ममात्रोपदेशानर्हत्वात् तन्मात्रबुद्ध्यारोहाय सोपायब्रह्मविद्या वक्तव्येति परमदयावती श्रुतिः यतः प्रवृत्ता, अतो ब्रह्मोपलब्धिस्थानकल्पना युज्यते। यः "पूर्णमेवावशिष्यते" इति, "पुरुषान्न परं किंचित् सा काष्ठा सा परा गतिः" इति च श्रुतिसिद्धः पुरुषोऽवशिष्यते, तस्यास्य पुरुषस्य परमात्मन उपलब्धिस्थानानि चत्वारि भवन्ति। तानि कानि? किं देशान्तरे वर्तन्ते? इत्याकाङ्क्षायां स्वशरीरे तानि वर्तन्त इत्याह—**नाभिरिति**। चकारात् दक्षिणाक्ष्यादिस्थानान्तरमस्तीति द्योत्यते। तत्र कीदृशं ब्रह्म? इत्यत आह—**तत्र**

काग्रमग्रं नयत्यात्मानम्, नयति परम्, संधयत्यपरम्, नापरं त्यजति...... स जाग्रदभिधीयते। यथैवैष कपालाष्टकं संनयति......। य एष स्तन इवावलम्बत एष देवयोनिर्यत्र जाग्रति शुभाशुभमनिरुक्तमस्य देवस्य स संप्रसादोऽन्तर्यामी खगः कर्कटकः पुष्करः पुरुषः प्राणो हंसः परापरं ब्रह्मात्मा देवता वेदयति। य एवं वेद स परं ब्रह्मधाम क्षेत्रज्ञमुपैति"। प्रथमः खण्डः। Vide *The Minor Upaniṣads*, vol. I: *Saṃnyāsa-Upaniṣads*, 1912, pp. 75ff.

चतुष्पादं ब्रह्म विभातीति। चतुःस्थानाश्रयत्वाच्चतुष्पात्; वस्तुतः तत्परिच्छेद-शून्यं ब्रह्म विभातीत्यर्थः। स्वाज्ञदृष्टिप्रसक्तचतुष्पाद्ब्रह्म कीदृशमित्यत आह—जागरित इति। यदा बाह्येन्द्रियैः तदर्थोपलब्धिः तत् जाग्रत्। तत्र जागरिते ब्रह्मा नाभिमण्डलमधिष्ठाय जाग्रत्कलनां कलयति। स हि जगत्स्रष्टा चतुराननः। यदा जाग्रत्प्रलयजस्वप्नो दृश्यते तदा विष्णुर्हृदयमधिष्ठाय स्वप्ने तत्कलनाकलितो भवति। यदा जाग्रदादिव्यापृतिः विलीयते, तदा स सुषुप्तिर्भवति। तदानीं रुद्रः कण्ठमधिष्ठाय स्वाज्ञविकल्पितजाग्रत्स्वप्नप्रपञ्चमुपसंहरति। जाग्रदाद्यवस्थात्रयं यत्र विलीयते सेयं तुरीयावस्था। तदानीं मूर्धानमधिष्ठाय यज्जाग्रदादिकलनाभावा-भावप्रकाशकं भवति तन्मूर्ध्नि संस्थितं तुरीयमुच्यते। यद्यपि नेत्रकण्ठहृदयमूर्धसु जागरितादीनि वक्ष्यति, तथाप्यत्र नाभ्यादीनामुक्तत्वादुपलब्ध्यर्थमेवं चिन्त-नीयम्। यद्वा नाभ्यादि यथाक्रममुत्सृज्य नाभिनेत्रे समुच्चित्य जागरितजागरितं चिन्त्यम्। स्वप्नस्थानं कण्ठं सुषुप्तिस्थानं हृदयं पूर्ववत् मूर्ध्नि संस्थितं तुरीयं यो मूर्धानमधिष्ठाय तुर्यात्मा भवति तस्मात् आदित्यादिः भिन्न इत्यत आह—स आदित्य इति। तदतिरेकेणादित्यादेरभावात्। चकारात् तदतिरेकेण न किंचिदप्यस्तीति द्योत्यते। तद्याथात्म्यं किमित्यत आह—स्वयमिति ॥ १ ॥

परस्य ब्रह्मणः अक्षरत्वम्

यत्र लोका न लोका देवा न देवा वेदा न वेदा यज्ञा न यज्ञा माता न माता पिता न पिता स्नुषा न स्नुषा चाण्डालो न चाण्डालः पौल्कसो न पौल्कसः श्रमणो न श्रमणः तापसो न तापस एकमेव तत् परं ब्रह्म विभाति[1] निर्वाणम् ॥ २ ॥

स्वस्य स्वातिरिक्तमनआद्यन्तःकरणश्रोत्रादिबाह्यकरणजातासंभवस्वमात्र-प्रबोधविदितत्वात् यदेतदमनस्कादिलक्षणमक्षरं तत्र स्वातिरेकेण लोकादि-

[1] F. O. Schrader's edition contains the following additional passages: "हृद्याकाशे तद्विज्ञानमाकाशम्। तत्सुषिरमाकाशम्। तद्विद्याद्धृद्याकाशे यस्मिन्निदं सं च विचरति यस्मिन्निदं सर्वमोतप्रोतम्। स विभुः प्रजासु ध्यानेन यो वेद तत्परं ब्रह्म भवतीति।

तापसान्तकलना न संभवति; तन्निर्वाणरूपेण स्वमात्रमवशिष्यत इत्याह—यत्रेति। लोकादितापसान्तकलना अस्ति नास्तीति विभ्रमासंभवे हेतुमाह—एकमिति। निष्प्रतियोगिकब्रह्ममात्रमेकमेव परं ब्रह्म विकलेबरनिर्वाणरूपेण विभाति स्वाज्ञादिदृष्टिमोहे सति; असति कैवल्यमेकरूपेण चकास्तीत्यर्थः ॥२॥

निर्वाणस्य एकत्वम्

न तत्र देवा ऋषयः पितर ईशते प्रतिबुद्धः सर्वविद्येति ॥ ३ ॥

कथं निर्वाणमेकं निष्प्रतियोगिकम्? तन्नियन्तृत्वेन देवादेः सत्त्वात् इत्यत आह—न तत्रेति। यत् स्वमात्रमवशिष्टं न हि तत्र देवर्षिपितरः सन्ति। तन्मात्रावस्थायां स्वयमलब्धात्मानो नियन्तृनियम्यतया स्थातुं कथमीशते समर्था भवन्ति? किंत्वेक एवात्मा देवर्षिपित्रादिकलनाविरलं ब्रह्म स्वमात्रमिति प्रतिबुद्धः देवर्षिपित्रादिभिरपि ब्रह्मास्मीत्येव प्रतिबुद्धो भवति; न हि भेददृष्ट्ये-त्यर्थः। यद्यत् स्वाज्ञविकल्पितं तत्तत् अहमेवेदं सर्वमिति श्रुतिसिद्धा या सा सर्वविद्या तया स्वविकल्पितसर्वासंभवप्रबोधरूपया स्वमात्रमिति लब्धुं शक्यमित्यर्थः ॥ ३ ॥

त्रिवृत्सूत्रम्

हृदिस्था देवताः सर्वा हृदि प्राणाः प्रतिष्ठिताः।
हृदि प्राणाश्च ज्योतिश्च त्रिवृत्सूत्रं च तद्विदुः ॥
हृदि चैतन्ये तिष्ठति ॥ ४ ॥

ब्रह्ममात्रप्रबोधसहकारित्वेन संन्यासविधित्सया भूमिकां करोति—हृदिस्था देवता इति। स्वातिरिक्तं स्वमात्रतया हरतीति हृच्छब्देन प्रत्यक्चैतन्यमुच्यते। तस्मिन् हृदि तदधिष्ठेयहृदयकमले वा अग्न्याद्याः सर्वा देवताः प्रतिष्ठिताः। तथा हृदि प्राणापानादिभेदेन प्राणाः पञ्च वागादयश्च विधात्रा प्रतिष्ठिताः। तथोक्तलक्षणहृदये नासापुटसंचारी प्राणश्च स्वयंज्योतिरात्मा च।

चकारद्वयतो यदस्ति नास्तीति विकल्पितं तत् सर्वं हृदये प्रतिष्ठितमिति द्योत्यते। बहिःसूत्रत्यागिनस्तदेतत् त्रिवृत्सूत्रमिति विदुः जानन्ति। बहिःसूत्रं क प्रतिष्ठितमित्यत आह—हृदीति; सर्वस्यापि हृदयप्रतिष्ठितत्वात् ॥ ४ ॥

बहिःसूत्रम्

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात्।
आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः ॥ ५ ॥

कीदृशं बहिःसूत्रमित्यत आह—**यज्ञोपवीतमिति**। यज्ञस्य विष्णोरुप सामीप्येन वीतं विशेषेणागतं जीवस्वरूपं **यज्ञोपवीतम्**। स्वगतजीवतापाये तदेव **परममुत्कृष्टम्**। अत एव **पवित्रम्**। **प्रजापतेः** यद्व्यवहारकारणं **सहजम्**। यद्वा देहेन्द्रियादिवत् सहजम्। पुरस्तात् पूर्वम्। आयुष्यम् अग्र्यं श्रेष्ठं स्वात्मानं विदित्वा स्वान्यत्र मतिं **प्रतिमुञ्च**। यच्छुभ्रं ज्योतिष्मद्यज्ञोपवीतं तदवलम्ब्य बाह्ययज्ञोपवीतं प्रतिमुञ्चेति वार्थः। यस्मादेतद्धृदि चैतन्ये तिष्ठति, तस्मात् इदं यज्ञोपवीतं त्रिवृत्कार्पासजं त्रैवर्णिकैः धार्यम्। तत् कार्पाससूत्रं बलं वीर्यवत् कर्मकारणमस्तु तेजो ब्रह्मवर्चसादिवृद्धिकरं भूयादित्यर्थः ॥ ५ ॥

ब्रह्मसूत्रम्

सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद् बुधः।
यदक्षरं परं ब्रह्म तत् सूत्रमिति धारयेत् ॥ ६ ॥
सूचनात् सूत्रमित्याहुः सूत्रं नाम परं पदम्।
तत् सूत्रं विदितं येन स विप्रो वेदपारगः ॥ ७ ॥
येन सर्वमिदं प्रोतं सूत्रे मणिगणा इव।
तत् सूत्रं धारयेद्योगी योगवित् तत्त्वदर्शिवान् ॥ ८ ॥

बहिःसूत्रं त्यजेद्विद्वान् योगमुत्तममास्थितः ।
ब्रह्मभावमिदं सूत्रं धारयेद्यः स चेतनः ।
धारणात् तस्य सूत्रस्य नोच्छिष्टो नाशुचिर्भवेत्[1] ॥ ९ ॥

त्रैवर्णिकानां श्रौतस्मार्तकर्मसाधनतया प्रतिपाद्याथ परिव्राजकानां बहिर्यज्ञोपवीतादित्यागपूर्वकं मुख्यशिखायज्ञोपवीतं धार्यमित्याह—**सशिखमिति** । शिखासहितकेशश्मश्र्वादिवपनं कृत्वा यत् बहिः त्रिवृत् सूत्रं कर्माङ्गभूतं नित्यादिसाधनसंपन्नो बुधः बहिःशिखासूत्रोपलक्षणस्वातिरिक्तास्तितावुद्धिं त्यजेत् । ततः किमित्यत आह—**यदिति** । **यत्** स्वातिरिक्तक्षरप्रपञ्चापह्नवसिद्धमक्षरं **परं** निरुपमोत्कृष्टं स्वावशेषतया बृंहणात् **ब्रह्म** तत् स्वमात्रमिति **धारयेत्** । किं तत्? कथं धार्यम्? तद्धारणफलं कीदृशम्? इत्यत आह—**सूचनादिति** । "सन्मात्रमसदन्यत्" "ब्रह्ममात्रमसन्न हि" इत्यादिश्रुतिभिः **सूचनात्** स्वातिरिक्तग्रासं ब्रह्मैव **सूत्रमिति** ब्रह्मविद आहुः । सूत्रं नाम किमित्यत आह—**परं पदमिति** । **परं** निरतिशयं तद्रूपेण पद्यत इति **पदं** ब्रह्ममात्रमित्यर्थः । तदेतत् **सूत्रं येन** स्वमात्रतया **विदितं स विप्रो** ब्रह्मविद्वरीयान् स्वारोपितातदपह्नवमुखेन **वेदा** यत्र पर्यवस्यन्ति तद्वेदपरं ब्रह्ममात्रं गतो भवति; ब्रह्मैव भवतीत्यर्थः । कथमेतादृशं पदं मन्दबुद्धिगम्यं भवतीत्याशङ्क्य तत्पदारोहोपायत्वेन सूत्रस्वरूपमाचष्टे—**येनेति** । स्वातिरिक्तजगदारोपाधिकरणतया यत् सूत्रितं **सूत्रे मणिगणवत् येनेदं सर्वम्** अविद्यापदतत्कार्यजातं **प्रोतमनुविद्धं** तदेतत् सूत्रमीश्वरचैतन्यं तत्तत्त्वं सर्वापवादाधिकरणं निरधिकरणं वा दर्शितवान् **योगवित्** तदेवास्मीति **धारयेत्** । कथं पुनरेवं धार्यमित्यत्र तद्गतहेयांशत्यागपूर्वकं शिष्टांशं धार्यमित्याह—**बहिरिति** । यश्चेतनो **विद्वान्** बहिःसूत्रशिखोपलक्षितस्वातिरिक्ताविद्यापदतत्कार्यजातं **त्यजेत्** ततोऽयं योगी एवं त्यागशिष्टं **ब्रह्मभावमिदं सूत्रं धारयेत्**; सोऽयमेवं धारयिता ब्रह्ममात्र**योगमास्थितो** भवतीत्यर्थः । एवंविदोऽप्युच्छिष्टादिविशिष्टोपाधियोगात् तथात्वं स्यादित्याशङ्क्य

[1] F. O. Schrader's edition adds द्वितीयः खण्डः.

सूत्रभावापन्नस्योपाधियोगतत्कार्योच्छिष्टादिवैरल्यमाह—धारणादिति। नवद्वारप्रवेशनिर्गमाभ्यामुच्छिष्टः अस्पर्शसंयोगादशुचिः तद्धेतूपाध्ययोगात् उच्छिष्टादिर्न ह्यस्तीत्यर्थः ॥ ६–९ ॥

ज्ञानशिखादीनां मुख्यब्राह्मण्यलिङ्गता

सूत्रमन्तर्गतं येषां ज्ञानयज्ञोपवीतिनाम् ।
ते वै सूत्रविदो लोके ते च यज्ञोपवीतिनः ॥ १० ॥
ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः ।
ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥ ११ ॥
अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा ।
स शिखीत्युच्यते विद्वान् नेतरे केशधारिणः ॥ १२ ॥

शिखायज्ञोपवीताभावे ब्राह्मण्याभावमाशङ्क्य ज्ञानशिखोपवीतसत्त्वात् मुख्यब्राह्मणत्वं स्यादित्याह—सूत्रमिति। स्वातिरिक्तकलनारहितं सूत्रं ब्रह्मास्मीति येषां ज्ञानयज्ञोपवीतिनां नैष्कर्म्यपदमारूढानां सूत्रमन्तर्गतमिव विभाति, लोके ते वै सूत्रयाथात्म्यविदः; ते च यज्ञोपवीतिनः। अत एवैते परिव्राजकाः ज्ञानशिखिनो ज्ञानोपवीतिनः सूत्रज्ञाननिष्ठाश्च। सूत्रज्ञानं हि तेषां पवित्रमुच्यते। अत एव तेषामुच्छिष्टाशुची न स्त इत्युक्तम्। यस्याग्निशिखेव ज्ञानमयी शिखा विद्यते, सोऽयं विद्वान् शिखीत्युच्यते। नेतरे केशधारिणः शिखिनो भवन्ति ॥ १०-१२ ॥

क्रियाङ्गसूत्रम्

कर्मण्यधिकृता ये तु वैदिके ब्राह्मणादयः ।
तेभिर्धार्यमिदं सूत्रं क्रियाङ्गं तद्धि वै स्मृतम् ॥ १३ ॥

एवं चेत् सर्वैरपि शिखायज्ञोपवीतादिकं परित्याज्यमित्यत आह—कर्मणीति। स्वाज्ञानपुरःसरमिदं मया कर्तव्यमिति ये तु त्रैवर्णिका ब्राह्मणादयो

वैदिके कर्मण्यधिकृताः, तैभिस्तैरेव कार्पासतन्तुनिर्मितमिदं यज्ञोपवीतं क्रियाङ्गम् इति धार्यम्। तथाच श्रुतिः—"यज्ञोपवीत्येवाधीयीत याजयेद्यजेत वा यज्ञस्य" इति त्रैवर्णिकानां क्रियाङ्गत्वेन यज्ञोपवीतं स्मृतम्। हिशब्दः प्रसिद्धिद्योतकः ॥ १३ ॥

निरुपचरितब्राह्मण्यम्

शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम् ।
ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः ॥ १४ ॥

त्रैवर्णिकेषु निरुपचरितब्राह्मण्यं कस्येत्यत आह—शिखा ज्ञानमयीति। त्रैवर्णिकेषु ब्राह्मणजातेरेव पारिव्राज्यविधानात् तत्र यस्य ब्राह्मणजातिजस्य शिखा ज्ञानमयी उपवीतं च तन्मयं ज्ञानमयं भवति, तस्य सकलं निरुपचरितं ब्राह्मण्यमिति ब्रह्मविदो विदुः जानन्तीत्यर्थः ॥ १४ ॥

यज्ञोपवीतयाथात्म्यम्

इदं यज्ञोपवीतं तु परमं यत् परायणम् ।
स विद्वान् यज्ञोपवीती स्यात् स यज्ञस्तं यज्विनं विदुः ॥ १५ ॥

एतादृशब्राह्मण्यापादकयज्ञोपवीतयाथात्म्यं किमित्यत आह—इदमिति। इदं यज्ञोपवीतं विष्णुपदप्रापकं ज्ञानं क्रियाकारकादिकलनोपमर्दकत्वेन परमं यदेतत् ज्ञानं ब्रह्ममात्रपरायणं स्वगतहेयांशापायतः तन्मात्रतयावशेषितं भवति, यो वा इदमहमस्मीति विद्वान्, स हि यज्ञोपवीती ब्रह्ममात्रवित् स्यात्। ज्योतिष्टोमादियज्ञोऽपि स एव स्यात्। य एवंवित् तं ब्रह्मीभूतं वेदविदो यज्विनमग्निहोत्रिणं विदुः; स एवाग्निहोत्री नान्य इत्यत्र

"प्रपञ्चमखिलं यस्तु ज्ञानाग्नौ जुहुयाद्यतिः ।
आत्मन्यग्नीन् समारोप्य सोऽग्निहोत्री महायतिः ॥"

इति श्रुतेः। स्वातिरिक्तं स्वात्माग्नौ हुत्वा विद्वान् स्वयमेवावशिष्यत इत्यर्थः ॥ १९ ॥

ब्रह्मीभूतो विद्वान् एक एव

एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा।
कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च ॥ १६ ॥
एको वशी सर्वभूतान्तरात्मा एकं रूपं बहुधा यः करोति।
तमात्मस्थं येऽनुपश्यन्ति धीरास्तेषां सुखं शाश्वतं नेतरेषाम् ॥ १७ ॥

किमयं ब्रह्मीभूतो विद्वान् अनेक इत्यत आह—एक इति। अयं ब्रह्मीभूतो मुनिः एक एव; निष्प्रतियोगिकब्रह्ममात्रभावापन्नत्वात्। स कीदृश इत्यत आह—देव इति; स्वयंप्रकाशचिद्धातुत्वात्। प्रकाशमात्रः किं न दृश्यत इत्यत आह—सर्वभूतेषु गूढ इति। स्वज्ञप्रत्यगभेदेन भासमानोऽपि स्वाज्ञदृष्टिविकल्पितसर्वभूतेषु चतुर्विधेषु स्वावृतित्रयावृतदृष्टीनामभानात् गूढः। एवं चेत् परिच्छेद्यता स्यादित्यत आह—सर्वव्यापीति; व्योमवत् सर्वानुस्यूतत्वात्। सर्वस्यानात्मत्वेन तद्योगात् तथात्वं स्यादित्यत आह—सर्वभूतान्तरात्मेति। चतुर्विधभूतान्तर्विभाताहंप्रत्ययालम्बनप्रत्यगात्मतया विभानात् न ह्यनात्मना संबध्यत इत्यर्थः। सर्वभूतप्रत्यक्त्वे तद्गतकर्तृत्वादिसंसारिता स्यादित्यत आह—कर्माध्यक्ष इति; प्रतीचः सर्वभूतकृतकर्तृत्वाद्यस्पर्शित्वेन तत्कृतसर्वकर्मफलप्रदातृत्वात्। तथा चेत् तटस्थता स्यादित्यत आह—सर्वभूताधिवास इति। सर्वभूतान्यात्मत्वेनाधिकृत्य वसनात् सर्वात्मरूप इत्यर्थः। सर्वभूताधिवासत्वेन तत्तद्भूतान्तःकरणवृत्त्यनुविद्धता स्यादित्यत आह—साक्षीति। साक्षिणः स्वसाक्ष्यस्पर्शित्वेन सर्वविलक्षणत्वात् न ह्यन्तःकरणवृत्त्यनुविद्धता स्यादित्यर्थः; "सर्वस्य साक्षी ततः सर्वस्मादन्यो विलक्षणः" इति श्रुतेः। साक्ष्यसापेक्षसाक्षित्वे तद्धानयमित्यत आह—

चेतेति। अचेतनासाक्ष्यचेतयितृत्वात्। न हि साक्ष्यविकारः तं स्पृशति। तत्र हेतुमाह—केवल इति। अशेषविशेषशून्य इत्यर्थः। गुणयोगेन गुणिनः केवलता कुत इत्यत आह—निर्गुण इति। आविद्यकगुणानां कारणतुल्यत्वेन तद्योगस्य दुर्लभत्वात् निर्गुणः। चशब्दः निष्प्रतियोगिककेवलत्वख्यापक इत्यर्थः; चिन्मात्रस्वरूपत्वात्। यस्तु इत्थंभूतनिर्गुणः परमात्मा निष्प्रतियोगिकैकरूपोऽपि, सोऽयं स्वाज्ञदृष्ट्यानेक इव, न वस्तुत इति जानतां स्वातिरिक्तशान्तिपूर्वकं स्वमात्रस्थितिः स्यादित्याह—एक इति। यः परमात्मा वस्तुत एकोऽपि स्वाज्ञदृष्टिप्रसक्तसर्ववशी सर्वनियन्तृत्वात् सर्वभूतान्तरात्मेति व्याख्यातं स्वस्य वास्तवं यद्रूपं सजातीयविजातीयस्वगतभेदापह्नवसिद्धमेकं चिन्मात्ररूपं स्वाज्ञदृष्ट्या बहुधा नानेव यः करोति वस्तुतः चिन्मात्रमेवायमित्यर्थः। तद्बहुत्वेन गानं स्वाज्ञाननिमित्तम्। स्वाज्ञाननिरसनोपायमाह—तमिति। य आत्ममात्रावशेषतया स्थितः तमात्मस्थं निष्प्रतियोगिकस्वमात्रतया येऽनुपश्यन्ति धीराः ब्रह्मविद्वरीयांसः तेषां स्वमात्रावशेषलक्षणकैवल्यसुखं सिद्धं भवति। नेतरेषाम्; स्वावृतदृष्टित्वात्॥ १६, १७॥

ब्रह्माभ्युपायः

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
ध्याननिर्मथनाभ्यासाद् देवं पश्येन्निगूढवत्॥ १८॥
तिलेषु तैलं दधनीव सर्पिरापः स्रोतःस्वरणीषु चाग्निः।
एवमात्मात्मनि जायतेऽसौ सत्येनैनं तपसा योऽनुपश्यति॥ १९॥
ऊर्णनाभिर्यथा तन्तून् सृजते संहरत्यपि।
जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः॥ २०॥
नेत्रस्थं जागरितं विद्यात् कण्ठे स्वप्नं समाविशेत्।

सुषुप्तं हृदयस्थं तु तुरीयं मूर्ध्नि संस्थितम्[1] ॥ २१ ॥

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ।

आनन्दमेतज्जीवस्य यज्ज्ञात्वा मुच्यते बुधः ॥ २२ ॥

सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवान्वितम् ।

आत्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्पदं तद्ब्रह्मोपनिषत्पदमिति[2] ॥

तदाप्त्युपायः क इत्यत आह—**आत्मानमिति**। **आत्मानं** अन्तःकरणम् **अधरारणिं कृत्वा प्रणवमोंकारं चोत्तरारणिं** कृत्वा दीर्घघण्टानिनादवत् प्रणवमुच्चार्य तदा पूर्वोत्तरारणिस्थानीयान्तःकरणप्रणवध्याननिर्मथनाभ्यासात्। कोऽयं प्रणवार्थ इत्यत्र स्वाज्ञदृष्टिप्रसक्तस्वाविद्यापदतत्कार्यप्रविभक्तजाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तर्गतहेयांशापह्नवसिद्धं तुर्यतुरीयं ब्रह्म स्वमात्रमवशिष्यत इति प्रणवार्थानुसंधानं ध्याननिर्मथनाभ्यासः। तस्मादभ्यासात् मथनाविर्भूतकाष्ठनिगूढाग्निवत् एवं जाग्रज्जाग्रदादिचतुष्पञ्चदशकलनापह्नवसिद्धं तुर्यतुर्यं स्वावशेषधिया **पश्येत्**। मथनात् तत्सार आविर्भवतीत्यत्र बहु दृष्टान्तमाह—**तिलेष्विति**। यथा तिलयन्त्रघर्षणभ्रमणोपायतः तिलेषु तैलं स्पष्टमुपलभ्यते, यथा दध्नि मथिते तज्जनवनीते अग्निना संस्कृते सर्पिर्घृतमुपलभ्यते, यथा **स्रोतःसु** भूनाडिषु खननोपायतः आप उपलभ्यन्ते, यथा **अरणिषु चाग्निः** मथनादुपलभ्यते। चशब्दात् सूर्यकान्तादिष्वपि सूर्यकिरणयोगतोऽग्निरुपलभ्यत इति द्योत्यते। यथा दृष्टान्तपरंपरा तथैवमात्मा तुर्यतुर्य आत्मन्यन्तःकरणे श्रुत्याचार्यसंस्कृते स्वातिरिक्तजाग्रज्जाग्रदादिचतुष्पञ्चदशकलनां ग्रसित्वा स्वमात्रं

[1] F. O. Schrader's edition adds the following:—

"यदात्मा प्रज्ञयात्मानं संधत्ते परमात्मनि ।
तेन संध्या ध्यानमेव तस्मात् संध्याभिवन्दनम् ॥
निरुदका ध्यानसंध्या वाक्कायक्लेशवर्जिता ।
संधिनी सर्वभूतानां सा संध्या ह्येकदण्डिनाम् ॥"

[2] F. O. Schrader's edition adds तृतीयः खण्डः.

जायते उपलभ्यते । असौ तुर्य इत्यर्थः । तदाप्तावुपायान्तरमाह— सत्येनेति । सत्यवचनेन कृच्छ्रचान्द्रायणादितपसा, सत्यं 'ब्रह्माहमस्मि' इति बोधेन तदुपायश्रवणादितपसा वा योऽधिकारी अनुपश्यति तेनापि लभ्य इत्यर्थः । अवस्थात्रयेऽपि जीवानेकत्वं स्यादित्यत्र दृष्टान्तेन तन्निराकरोति— ऊर्णनाभिरिति । यथोर्णनाभिः लूताकीटः स्वशरीरतः तन्तून् सृजते न केवलम्; एवमुपसंहरति च; आर्द्रतन्तूनां लालासमतया सृष्ट्युपसंहारौ युज्येते इत्यर्थः । तथा जीवोऽयं जाग्रत्स्वप्ने जाग्रत्स्वप्नौ लूताकीटवत् सृजन्नुपसंहरन्नेक एव भवति । बहुजनिवासनावैचित्र्यादहमेक इत्यस्मृतिरविरुद्धा; स्वप्नादावनुभूतस्याननुभूतस्य च स्मृतेः उपलम्भात् । गृहात् गृहान्तरं शिशुरिवायं पुनः पुनः जाग्रदादिस्थानात् स्थानान्तरं गच्छत्यागच्छते । तस्मादवस्थापूगसंचार्यात्मा एक एवेत्यर्थः । पुरा जागरितादिस्थानतया नाभ्यादिरुक्तः । इदानीं विस्पष्टमाह—नेत्रेति । नाभिनेत्रयोरेकत्वेन विवक्षितत्वात् नेत्रे तिष्ठतीति नेत्रस्थः विश्वविश्वः । तमात्मानं जागरितं जागरणावस्थागतं विद्यात् । कण्ठप्रदेशे जाग्रत्प्रविभक्तस्वप्नावस्थापन्नं विश्वप्रविभक्ततैजसं समाविशेत् । जाग्रत्प्रविभक्तसुषुप्त्यवस्थागतं विश्वप्रविभक्तप्राज्ञं हृदयस्थं त्वेव विद्यात् । विश्वप्रविभक्ततुरीयं दशमद्वारि मूर्ध्नि संस्थितं विद्यात् इत्यनुषज्यते । तुरीययाथात्म्यं विशदयति—यत इति । यतो यस्मात् तुर्यात् श्रुतीनां वाचः संकल्पादिवृत्तिमन्मनसा सह निवर्तन्ते, तमप्राप्याप्रकाश्येत्यर्थः । तदेतज्जीवस्य तुर्यानन्दरूपं यत् ज्ञात्वा बुधो मुच्यते तदेव तुर्यानन्दरूपं तुर्ययाथात्म्यमित्यर्थः । तुरीयं मूर्ध्नि संस्थितम् इत्युक्तितः परिच्छिन्नता स्यादित्याशङ्क्य, तत् परिहरन् शास्त्रार्थमुपसंहरति—सर्वव्यापिनमिति । "व्याप्यव्यापकता मिथ्या सर्वमात्मा" इति श्रुत्यनुरोधेन निष्प्रतियोगिकचिन्मात्रमप्यात्मानं स्वाज्ञदृष्टिप्रसक्तस्वातिरिक्तसर्वप्रपञ्चव्यापिनमपि नोपायं विना लभ्यत इति दृष्टान्तमाह—क्षीर इति । यथा क्षीरे सर्पिः स्वभावेन समर्पितमपि मथनाद्युपायं विना न लभ्यते, तथायमात्मा नोपायमन्तरेण लभ्य इत्यर्थः । कोऽयं तदवगत्युपाय इत्यत आह—आत्मेति । अनात्मापह्नवमुखेनात्ममात्रावगतिहेतुर्विद्योपनिषत्तपःश्रवणादिः, तयोरपि मूलमास्पदं यद्ब्रह्म स्वमात्रतया अवशिष्यते,

तद्ध्युपनिषत्पदमुपनिषदेकगम्यत्वात् । उपनिषन्नाम ब्रह्ममात्रज्ञानम् । तत्पदं तु ब्रह्ममात्रम् । अभ्यासेतिशब्दौ उपनिषत्तदर्थपरिसमाप्त्यर्थौ ॥ १८-२३ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
लिखितं स्याद्विवरणं ब्रह्मोपनिषदो लघु ।
ब्रह्मोपनिषदो व्याख्याग्रन्थस्तु द्विशतं स्मृतः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकादशसंख्यापूरकं ब्रह्मोपनिषद्विवरणं संपूर्णम्

# भिक्षुकोपनिषत्

## पूर्णमदः—इति शान्तिः

चतुर्विधा भिक्षवः

अथ भिक्षूणां मोक्षार्थिनां कुटीचकबहूदकहंसपरमहंसाश्चेति चत्वारः ॥ १ ॥

कुटीचकाः

कुटीचका नाम गौतमभरद्वाजयाज्ञवल्क्यवसिष्ठप्रभृतयोऽष्टौ ग्रासांश्चरन्तो योगमार्गे मोक्षमेव प्रार्थयन्ते ॥ २ ॥

भिक्षूणां पटलं यत्र विश्रान्तिमगमत् सदा ।
तत् त्रैपदं ब्रह्मतत्त्वं ब्रह्ममात्रं करोतु माम् ॥

अथ खलु शुक्लयजुर्वेदप्रविभक्तेयं भिक्षुकोपनिषत् कुटीचकादिधर्मप्रशंसापूर्वकं ब्रह्मणि पर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । यथोक्ताधिकारिण उपलभ्य श्रुतिः कुटीचकादिधर्मपूगान् प्रकटयति । आदौ कुटीचकधर्मानाह—अथेति ॥ १, २ ॥

बहूदकाः

अथ बहूदका नाम त्रिदण्डकमण्डलुशिखायज्ञोपवीतकाषायवस्त्रधारिणो ब्रह्मर्षिगृहे मधु मांसं वर्जयित्वाष्टौ ग्रासान् भैक्षाचरणं कृत्वा योगमार्गे मोक्षमेव प्रार्थयन्ते ॥ ३ ॥

बहूदकधर्मानाह—अथ बहूदका नामेति ॥ ३ ॥

हंसाः

अथ हंसा नाम ग्राम एकरात्रं नगरे पञ्चरात्रं क्षेत्रे सप्तरात्रं तदुपरि न वसेयुः । गोमूत्रगोमयाहारिणो नित्यं चान्द्रायणपरायणा योगमार्गे मोक्षमेव प्रार्थयन्ते ॥ ४ ॥

हंसधर्मानाह—अथ हंसा नामेति ॥ ४ ॥

परमहंसाः

अथ परमहंसा नाम संवर्तकारुणिश्वेतकेतुजडभरतदत्तात्रेयशुकवामदेवहारीतकप्रभृतयोऽष्टौ ग्रासांश्चरन्तो योगमार्गे मोक्षमेव प्रार्थयन्ते । वृक्षमूले शून्यगृहे श्मशानवासिनो वा । साम्बरा वा दिगम्बरा वा । न तेषां धर्माधर्मौ । न हि तेषां लाभालाभकलनास्ति । शुद्धाशुद्धद्वैतवर्जिताः समलोष्टाश्मकाञ्चनाः सर्ववर्णेषु भैक्षाचरणं कृत्वा सर्वत्रात्मैव पश्यन्ति । अथ जातरूपधरा निर्द्वन्द्वा निष्परिग्रहाः शुक्लध्यानपरायणा आत्ममात्रनिष्ठाः प्राणसंधारणार्थं यथोक्तकाले भैक्षमाचरन्तः शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रशालानदीपुलिनगिरिकन्दरकुहरकोटरनिर्झरस्थण्डिले तत्र ब्रह्ममार्गे सम्यक्

संपन्नाः शुद्धमानसाः परमहंसाचरणेन संन्यासेन देहत्यागं कुर्वन्ति । ते परमहंसा नामेत्युपनिषत् ॥ ५ ॥

परमहंसधर्मान् प्रकाशयति—**अथ परमहंसा नामेति**। तेषां वसतिं चर्यां चाह—**वृक्षमूल इति**। न तेषां **धर्माधर्मौ** भवतः; प्रवृत्तिनिवृत्तिपराङ्मुखत्वात् सर्वत्र हर्षविषादाभावात्। न हि तेषां **लाभालाभकलनास्ति**। विशिष्टाद्वैतं शुद्धाद्वैतं केवलाद्वैतम् अशुद्धाद्वैतं च येषां नाभिमतं ते **शुद्धाशुद्धद्वैतवर्जिताः**; निष्प्रतियोगिकाद्वैतिन इत्यर्थः। अत एव **समलोष्टाश्मकाञ्चनाः**; सर्वत्र साम्यभावमापन्नब्रह्मदृष्टित्वात्। ब्राह्मणादिजातिप्रविभक्तसर्ववर्णेषु चातुर्वर्ण्यधर्माश्रयणतो **ब्राह्मणाब्राह्मणादिषु यथोक्तकाले भैक्षाचरणं कृत्वा सर्वत्रात्मैव पश्यन्ति**। स्वात्मनो व्यष्टिसमष्टिप्रपञ्चाधिकरणत्वेन प्रत्यगभिन्नब्रह्मरूपत्वात्। **अथ जातरूपधराः निर्द्वन्द्वा निष्परिग्रहाः शुक्लध्यानपरायणाः** शुक्लतेजोनिष्ठं (शुक्लतेजोरूपं) ब्रह्मेति श्रुत्यनुरोधेन ब्रह्ममात्रभावापन्ना इत्यर्थः। अत एवैते अनात्मापह्नवसिद्धात्ममात्रनिष्ठा इत्यर्थः। यदि बहिश्चित्तास्तदा **प्राणसंधारणार्थं यथोक्तकाले भैक्षमाचरन्तः**। हंसशब्देन प्रत्यगभिन्नपरमात्मोच्यते। पराक्सापेक्षप्रत्यगभेदगतसविशेषापायसिद्धः परमः, स चासौ हंसश्चेति परमहंसः निष्प्रतियोगिकपरमात्मा। तदाचरणं तन्मात्रेणावस्थानम्। तेन परमहंसाचरणेन स्वातिरिक्तकलनासंन्यासेन कर्मसंन्यासेन वा देहत्यागं देहोपलक्षितस्वाविद्यापदतत्कार्यजातमस्ति नास्तीति विभ्रमाभिमतित्यागं वा ये कुर्वन्ति ते **परमहंसा नाम** ब्रह्मैव भवन्तीत्यर्थः। **इत्युपनिषच्छब्दो** भिक्षुकोपनिषत्परिसमाप्त्यर्थः ॥ ५ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
भिक्षुकोपनिषद्व्याख्या लिखिता ब्रह्मगामिनी ।
भिक्षुकोपनिषद्व्याख्याग्रन्थस्तु त्रिंशदीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे षष्टिसंख्यापूरकं
भिक्षुकोपनिषद्विवरणं संपूर्णम्

———

# मैत्रेयोपनिषत्

## आप्यायन्तु—इति शान्तिः

संसारविरक्तस्य आत्मजिज्ञासा

बृहद्रथो वै नाम राजा राज्ये ज्येष्ठं पुत्रं निधापयित्वेद-मशाश्वतं मन्यमानः शरीरं वैराग्यमुपेतोऽरण्यं निर्जगाम। स तत्र परमं तप आस्थायादित्यमीक्षमाण ऊर्ध्वबाहुस्तिष्ठति। अन्ते सहस्रस्य मुनेरन्तिकमाजगाम। अग्निरिवाधूमकस्तेजसा निर्दहन्निवात्मविद्भगवाञ्छा-कायन्य उत्तिष्ठोत्तिष्ठ वरं वृणीष्वेति राजानमब्रवीत्। स तस्मै नमस्कृत्यो-वाच। भगवन्नाहमात्मवित्; त्वं तत्त्ववित् शृणुमो वयम्। स त्वं नो ब्रूहीति। एतद् वृत्तं पुरस्तादशक्यं मा पृच्छ प्रश्नम्। ऐक्ष्वाकान्यान् कामान् वृणीष्वेति। शाकायन्यस्य चरणावभिमृशमानो राजेमां गाथां जगाद॥ १॥

संसारनिर्वेदगाथा

अथ किमेतैर्वान्यानां शोषणं महार्णवानां शिखरिणां प्रपतनं ध्रुवस्य प्रचलनं स्थानं वा तरूणां निमज्जनं पृथिव्याः स्थानादपसरणं

सुराणाम् । सोऽहमित्येतद्विधेऽस्मिन् संसारे किं कामोपभोगैर्यैरेवाश्रितस्यासकृदुपावर्तनं दृश्यत इत्युद्धर्तुमर्हसीति अन्धूदपानस्थो भेक इवाहमस्मिन् संसारे भगवंस्त्वं नो गतिरिति ॥ २ ॥

भगवन्निदं शरीरं मैथुनादेवोद्भूतं संविदपेतं निरय एव मूत्रद्वारेण निष्क्रान्तमस्थिभिश्चितं मांसेनानुलिप्तं चर्मणावबद्धं विण्मूत्रवातपित्तकफमज्जामेदोवसाभिरन्यैश्च मलैर्बहुभिः परिपूर्णम् । एतादृशे शरीरे वर्तमानस्य भगवंस्त्वं नो गतिरिति ॥ ३ ॥

श्रुत्याचार्योपदेशेन मुनयो यत् पदं विदुः ।
तत् स्वानुभूतिसंसिद्धं स्वमात्रं ब्रह्म भावये ॥

इह खलु मैत्रेयसंज्ञिकेयमुपनिषत् सामवेदप्रविभक्ता । अतोऽस्या उपोद्घातादि छान्दोग्यादिवत् ज्ञेयम् । तीव्रतरवैराग्यस्वानुभूतिपारमार्थिकज्ञानप्रापिकेयं मैत्रेयोपनिषत् । तस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । बृहद्रथशाकायन्याद्याख्यायिका तु वक्ष्यमाणविद्यास्तुत्यर्था । केयमाख्यायिकेत्यत आह—**बृहद्रथ** इति । अस्मिन् शरीरे । "बृहद्रथो वै नाम राजा" इत्यादि "को न मुच्येत बन्धनात्" इत्यन्तं मैत्रायणीयोपनिषदि अन्यूनानधिकाक्षरतया तत्र तत्र वर्तते । तद्व्याख्यानेनेदमपि व्याख्यातप्रायमेव स्यादिति व्याख्या न क्रियते । **बृहद्रथो वै नाम राजा** यथोक्तसाधनसंपन्नः सन् स्वीयराज्यादिकं परित्यज्य महारण्यप्रदेशमास्थाय आदित्यं पश्यन्नूर्ध्वबाहुः चिरकालं तपश्चचार । तत्तपसा तुष्टो भगवान् शाकायन्यमुनिमनुप्रविश्य तदिष्टसिद्ध्यै चोदितवान् । अथ स मुनिस्तन्निकटं जगाम । स राजा तद्दर्शनमात्रेण सहसा उत्थाय दण्डवत् प्रणनाम । तं प्रणतमुत्तिष्ठोत्तिष्ठ स्वेप्सितवरं वृणीष्वेति मुनिरब्रवीत् । ततो राजा ब्रह्मविद्यां याचितवान् । तद्योग्यतापरीक्षणार्थं 'यत् त्वया पृष्टं मास्तु तत्; तस्यानिर्वचनब्रह्मगोचरतया वक्तुमशक्यत्वात्; अन्यान् कामान् वृणीष्व' इति मुनिना प्रलोभ्यमानोऽपि परमार्थतो न विचचाल ॥ १-३ ॥

ब्रह्मणः याथात्म्यप्रकटनम्

अथ भगवाञ्छाकायन्यः सुप्रीतोऽब्रवीद्राजानम् । महाराज बृहद्रथेक्ष्वाकुवंशध्वजशीर्षात्मज्ञः कृतकृत्यस्त्वं मरुन्नाम्ना विश्रुतोऽसीत्ययं खल्वात्मा ते । कतमो भगवन् वर्ण्य इति । तं होवाच ॥ ४ ॥

शब्दस्पर्शादयो येऽर्था अनर्था इव ते स्थिताः ।
येषां सक्तस्तु भूतात्मा न स्मरेच्च परं पदम् ॥ ५ ॥
तपसा प्राप्यते सत्त्वं सत्त्वात् संप्राप्यते मनः ।
मनसा प्राप्यते ह्यात्मा ह्यात्मापत्त्या निवर्तते ॥ ६ ॥
यथा निरिन्धनो वह्निः स्वयोनावुपशाम्यति ।
तथा वृत्तिक्षयाच्चित्तं स्वयोनावुपशाम्यति ॥ ७ ॥
स्वयोनावुपशान्तस्य मनसः सत्यगामिनः ।
इन्द्रियार्थविमूढस्यानृताः कर्मवशानुगाः ॥ ८ ॥
चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत् ।
यच्चित्तस्तन्मयो भाति गुह्यमेतत् सनातनम् ॥ ९ ॥
चित्तस्य हि प्रसादेन हन्ति कर्म शुभाशुभम् ।
प्रसन्नात्मात्मनि स्थित्वा सुखमव्ययमश्नुते ॥ १० ॥
समासक्तं यदा चित्तं जन्तोर्विषयगोचरे ।
यद्येवं ब्रह्मणि स्यात् तत् को न मुच्येत बन्धनात् ॥ ११ ॥
हृत्पुण्डरीकमध्ये तु भावयेत् परमेश्वरम् ।
साक्षिणं बुद्धिवृत्तस्य परमप्रेमगोचरम् ॥ १२ ॥

अगोचरं मनोवाचामवधूताधिसंप्लवम् ।
सत्तामात्रप्रकाशैकस्वभावं भावनातिगम् ॥ १३ ॥
अहेयमनुपादेयमसामान्यविशेषणम् ।
ध्रुवं स्तिमितगम्भीरं न तेजो न तमस्ततम् ।
निर्विकल्पं निराभासं निर्वाणमयसंविदम् ॥ १४ ॥
नित्यः शुद्धो बुद्धमुक्तस्वभावः सत्यः सूक्ष्मः संविभुश्चाद्वितीयः ।
आनन्दाब्धिर्यः परः सोऽहमस्मि प्रत्यग्धातुर्नात्र संशीतिरस्ति ॥ १५ ॥
आनन्दमन्तर्निजमाश्रयन्तमाशापिशाचीमवमानयन्तम् ।
आलोकयन्तं जगदिन्द्रजालमापत् कथं मां प्रविशेदसङ्गम् ॥ १६ ॥
वर्णाश्रमाचारयुता विमूढाः कर्मानुसारेण फलं लभन्ते ।
वर्णादिधर्मं हि परित्यजन्तः स्वानन्दतृप्ताः पुरुषा भवन्ति ॥ १७ ॥
वर्णाश्रमं सावयवस्वरूपमाद्यन्तयुक्तं ह्यतिकृच्छ्रमात्रम् ।
पुत्रादिदेहेष्वभिमानशून्यं भूत्वा वसेत् सौख्यतमे ह्यनन्ते ॥ १८ ॥

एवं स्वातिरिक्तविषयपराङ्मुखं ब्रह्मविद्यापात्रं मत्वा आदौ ब्रह्मविद्यासाधनत्वेन बाह्यान्तःकरणनिग्रहपूर्वकं श्रवणादिरूपं तप एव मुख्यसाधनमित्युपदिश्यते । अतो ब्रह्मयाथात्म्यं प्रकटयितुं भूमिकां रचयति—हृदिति । मुमुक्षुः संशयादिपञ्चदोषशान्त्यन्तं सर्ववेदान्तश्रवणं मननं च कृत्वाथ स्वहृदयपुण्डरीकमध्ये तु ; तुशब्दो ब्रह्माभिव्यक्तिस्थानत्वद्योतकः ; तत्रैव परमो निरतिशयश्चासौ स्वमात्रतया अवस्थातुमीश्वरः समर्थश्चेति **परमेश्वरः** । तं परमात्मानम् । "साक्षिणम्" इत्यादि "निर्वाणमयसंविदम्" इत्यन्तविशेषणजातनिर्धारितस्वरूपं निष्प्रतियोगिकस्वमात्रमिति **भावयेत्** ध्यायेदित्यर्थः । तद्विशेषणान्याह—**साक्षिण**मित्यादि । स्वाज्ञविकल्पितसाक्ष्यरूपबुद्धिवृत्तस्य सत्तेव

स्वज्ञदृष्ट्या तद्भावाभावप्रकाशकतया साक्षिणं **परमप्रेमगोचरं** स्वस्यैव सर्वस्मात् पुत्रवित्तादेरपि परमप्रेमास्पदत्वात्; "सर्वस्मात् प्रियतमः" इत्यादिश्रुतेः। परमप्रेमगोचरतया वागादिगोचरता स्यादित्यत आह—**अगोचरं मनोवाचा-मिति**। वागादिकरणग्रामप्रसक्तानवगोचरत्वं च स्वतः; निष्प्रतियोगिकस्वमात्रत्वात्। यदि ब्रह्म निष्प्रतियोगिकं, तदा स्वाज्ञानां भवसागरतरणं तद्भावापत्तिर्वा कुत इत्यत आह—**अवधूताधिसंप्लवमिति**। अवधूतश्रुतिस्मृतिमर्यादानां स्वाज्ञानामाधिव्याध्यादिजलचरजन्तुजुष्टभवसागरप्लवम्। यद्वा अवधूतस्वाज्ञानानां ब्रह्मविदां भवसागरतरणोपायभूतसंप्लवस्थानीयापरब्रह्मरूपमतीत्य वर्तत इत्यवधूताधिसंप्लवः। तं निर्विशेषपरमात्मानमित्यर्थः। तत्र हेतुः **सत्तामात्रप्रकाशकैक-स्वभावमिति** स्वातिरिक्तासत्ताग्राससत्तामात्रतया प्रकाशत इति सत्तामात्रप्रकाश एव एकं मुख्यं स्वभावो यस्य तथोक्तम्। एवं भावनास्पदत्वात् साकल्यापत्तिः; तत्राह—**भावनातिगमिति**। एवं भावनाहेतुतूलाविद्यासंभवात् स्वाविद्यात्मकतूलाविद्यापाये यदवशिष्यते तद्रूपं किं हेयम्? यद्वा उपादेयम्? अथवा सामान्यम्? आहोस्वित् विशेषमिति। तत्र नाद्यः; स्वाविद्यापदतत्कार्यस्थूलांशस्य हेयत्वेन तत्कलनापह्नवसिद्धस्य अहेयत्वादहेयः, तम्। न द्वितीयः; तत्सूक्ष्मांशस्य दृश्यत्वेनोपादातुं शक्यत्वात् तदपह्नवसिद्धोऽनुपादेयः; तम्। न तृतीयः; तद्बीजांशस्याव्यक्तप्रकृतिरूपत्वेन सामान्यरूपत्वात् तदपह्नवसिद्धोऽसामान्यः; तम्। नापि चतुर्थः, तत्तुरीयांशस्य साम्यविद्यारूपत्वेन विशेषरूपत्वात् तदपह्नवसिद्धोऽविशेषः; तम्। एवं स्वाज्ञध्रुवानुभूतिसिद्धस्वाविद्यापदापह्नवतः अध्रुवोऽयमात्मा भवितुमर्हतीत्यत आह—**ध्रुवमिति**। स्वाविद्यापदस्य स्वज्ञानुभूत्या अध्रुवत्वम्। तदपह्नवसिद्धस्य ध्रुवत्वं निरङ्कुशमित्यर्थः। अत एव **स्तिमितगम्भीरम्**; निस्तरङ्गचिदर्णवरूपत्वात्। चिदर्णवत्वे तत्किं तेजः? उत तमः? यद्वा ततम्? नाद्यः; भौतिकतेजसोऽपह्नवान्न तेजः। न द्वितीयः; स्वाज्ञानतमसो ग्रासत्वान्न तमः। न तृतीयः; व्याप्यसामान्याभावान्नापि ततम्। उक्तविकल्पतदाभासयोरपह्नवात् **निर्विकल्पं निराभासम्**। यद्येवं तद्याथात्म्यं किमित्यत आह—**निर्वाण-मयसंविदमिति**। निर्वाणमयं विकलेबरकैवल्यस्वरूपम्। न ह्यत्र मयट्शब्दो

विकारप्राचुर्यार्थाभिधायी, स्वरूपपरत्वात्। संवित् स्वरूपज्ञानं पूर्णबोधस्वरूपम्; "सत्यं ज्ञानमनन्तम्" "विज्ञानमानन्दं ब्रह्म" "कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते" इत्यादिश्रुतेः। एवं राजा शाकायन्यमुखतः ब्रह्ममात्रावगतिमवगम्य चिरं समाधिनिष्ठो भूत्वा ब्रह्मविद्यासंप्रदायाविच्छेदाय स्वानुभवं प्रकटयामासेत्याह—नित्य इति। नित्यः; कालत्रयाबाध्यत्वात्। शुद्धः; अशुद्धस्वाज्ञानापायात्। बुद्धः; पूर्णबोधस्वरूपत्वात्। मुक्तस्वभावः; स्वातिरिक्तास्तिताभ्रमत इत्यर्थः। सत्यः; पारमार्थिकसद्रूपत्वात्। सूक्ष्मः; निर्विशेषतया केशकोट्येकांशवत् सुसूक्ष्मरूपत्वात्। संविभुश्च; परिच्छेदत्रयाभावात्। अद्वितीयः; स्वप्रतियोगिद्वैतस्य मृग्यत्वात्। चशब्दो निष्प्रतियोगिकत्वख्यापनार्थः। निस्तरङ्गानन्दाब्धिः; पूर्णानन्दसमुद्रत्वात्। यः सर्वस्मात् परः परमात्मा सोऽहमस्मि; स एव भवामि। पराक्प्रपञ्चे सति कथं परमात्मा भवसीत्यत आह—प्रत्यग्धातुरिति। पराक्प्रपञ्चप्रातिलोम्येनाञ्चनात् प्रत्यक्चासौ धातुश्चेति प्रत्यगभिन्नपरमात्मास्मीत्यत्रास्मिन्नर्थे न हि संशीतिः संशयोऽस्ति। वस्तुतः प्रत्यक् पर इति विभागैक्यासहनिष्प्रतियोगिकब्रह्ममात्रत्वात्। स्वातिरिक्तप्रपञ्चापदः सत्त्वात् कथमेवं भवसीत्यत आह—आनन्दमिति। स्वान्तर्हृदये निजं पारमार्थिकसद्रूपमानन्दं सच्चिदानन्दं ब्रह्म स्वमात्रमित्याश्रयन्तमनवरतं भावयन्तम्। स्वातिरिक्ताशासत्त्वात् कथं तदाश्रयणमित्यत आह—आशेति। स्वातिरिक्तमस्तीत्याशैव पिशाची, तां ब्रह्मातिरिक्तं नेत्यवमानयन्तम् अपह्नवं कुर्वन्तम्। स्वातिरिक्तजगत्प्रतीतौ कथमेवमित्यत आह—आलोकयन्तमिति। किं तत्? पदे पदे जन्मस्थितिभङ्गं गच्छतीति जगत्। इन्द्रजालं मायामात्रम् इत्यालोकयन्तम्। तत्राप्यसङ्गं मामेतादृशं कथं स्वातिरिक्तास्तितारूपेयमापत् स्वाज्ञदृष्टिप्रमाणसिद्धापि वस्तुमात्रदृष्टिं प्रविशेदित्यर्थः। वर्णाश्रमाचारव्यवस्थायां सत्यां कथमेवं सिध्यतीत्याशङ्क्य स्वातिरेकेण वर्णाश्रमाद्यस्तीति ये मन्यन्ते, त एव बध्यन्ते। तद्विपरीताः तद्भ्रमतो मुच्यन्त इत्याह—वर्णेति। ब्रह्मक्षत्रादिः वर्णः। ब्रह्मचर्यादिराश्रमः। तत्रात्मात्मीयाभिमानयुता ये, ते मूढाः; स्वातिरिक्तास्तितामूलस्वाज्ञानारूढदृष्टित्वात् स्वस्वभावाञ्चितकर्मानु-

सारेण फल्गुत्वेन भोगतो यद्विलीयते तत् स्वर्गनरकादिकं फलं क्षणभङ्गुरं लभन्ते घटीयन्त्रवदविश्रान्तं जन्ममरणे अनुभवन्ति हि। ये तद्विपरीताः वर्णाश्रमादावात्मात्मीयमतिं त्यजन्तः सन्तः तत्त्यागाधिकरणस्वानन्दात्मभावेन तृप्ता भूत्वा स्वेन रूपेण सर्वत्र पूरणात् पुरुषाः ब्रह्मैव भवन्तीत्यर्थः। उक्तार्थमेव पुनर्विशदयन्नुपसंहरति—वर्णाश्रममिति। वर्णाश्रमविशिष्टं शरीरं करचरणादिसावयवस्वरूपम्। आदिः उत्पत्तिः, अन्तो नाशः, ताभ्यां युक्तम्। हि यस्मात् अतिकृच्छ्रमात्रं कष्टमात्रपर्यवसन्नं तत्र स्वदेहे पुत्रादिदेहेष्वपि आत्मात्मीयाभिमानशून्यं मनः कृत्वा स्वयं विद्वान् सर्वापह्नवसिद्धनिष्प्रतियोगिकब्रह्ममात्रं भूत्वा अखण्डानन्दतः सौख्यतमे परिच्छेदत्रयाभावादनन्ते स्वे महिम्नि वसेत्। इतिशब्दस्तु प्रथमाध्यायपरिसमाप्त्यर्थः॥ ४–१८॥

इति प्रथमोऽध्यायः

---

मैत्रेयं प्रति महादेवस्य उपदेशः

अथ भगवान् मैत्रेयः कैलासं जगाम। तं गत्वोवाच। भो भगवन् परमतत्त्वरहस्यमनुब्रूहीति। स होवाच महादेवः॥ १॥

देहो देवालयः प्रोक्तः स जीवः केवलः शिवः।
त्यजेदज्ञाननिर्माल्यं सोऽहंभावेन पूजयेत्॥ २॥

अभेददर्शनं ज्ञानं ध्यानं निर्विषयं मनः।
स्नानं मनोमलत्यागः शौचमिन्द्रियनिग्रहः॥ ३॥

ब्रह्मामृतं पिबेद्भैक्षमाचरेद् देहरक्षणे।
वसेदेकान्तिको भूत्वा चैकान्ते द्वैतवर्जिते।
इत्येवमाचरेद्धीमान् स एव मुक्तिमाप्नुयात्॥ ४॥

मैत्रेयः पराशरमुखात् विदिततत्त्वोऽपि सर्वलोकप्रत्ययजननार्थं कैलासं गत्वा यथाविधि तन्मुखात् परमतत्त्वरहस्यबुभुत्सया विधिवत् पप्रच्छेत्याह— अथेति । मुनिना पृष्टः स होवाच महादेवः । किमुवाचेत्यत्र देहजीवयोः शिवालयशिवदृष्ट्या स्वाज्ञाननिर्माल्यविसर्जनपूर्वकं यः सोऽहंभावेन पूजयेत् स मुक्तो भवतीत्याह—देह इति । स्पष्टोऽर्थः ॥ १–४ ॥

शौचविधानम्

जातं मृतमिदं देहं मातापितृमलात्मकम् ।
सुखदुःखालयामेध्यं स्पृष्ट्वा स्नानं विधीयते ॥ ५ ॥
धातुबद्धं महारोगं पापमन्दिरमध्रुवम् ।
विकाराकारविस्तीर्णं स्पृष्ट्वा स्नानं विधीयते ॥ ६ ॥
नवद्वारमलस्रावं सदा काले स्वभावजम् ।
दुर्गन्धं दुर्मलोपेतं स्पृष्ट्वा स्नानं विधीयते ॥ ७ ॥
मात्रा सूतकसंबद्धं सूतके सह जायते ।
मृतसूतकजं देहं स्पृष्ट्वा स्नानं विधीयते ॥ ८ ॥
अहं ममेति विण्मूत्रलेपगन्धादिलोचनम् ।
शुद्धशौचमिति प्रोक्तं मृज्जलाभ्यां तु लौकिकम् ॥ ९ ॥

देहे देवोपभोगदेवालयादिदृष्टिं विना आत्मात्मीयाभिमानतो देहस्यास्पृश्यत्वेनाशुचित्वम् । तद्ब्रह्मज्ञानादिशुद्धोदक्षालनाच्छुचित्वं स्यादित्याह— जातमिति । अत्र यदि कदाचित् आत्मात्मीयाभिमानेन देहं स्पृशति, तत्र आत्मात्मीयाभिमतित्याग एव स्नानं विधिचोदितमित्यर्थः ; "स्नानं मनोमलत्यागः" इत्युक्तत्वात् । किंच धातुबद्धमिति । वातपित्तादिधातुबद्धम् ;

नानारोगायतनत्वात्। किंच नवद्वारेति। सूतकेन सह जायत इत्यर्थः; "जातस्य हि ध्रुवो मृत्युः" इति स्मृतितः। तच्छौचप्रकारमाह—अहमिति ॥ ९–९ ॥

चित्तशुद्धिः

चित्तशुद्धिकरं शौचं वासनात्रयनाशकम् ।
ज्ञानवैराग्यमृत्तोयैः क्षालनाच्छौचमुच्यते ॥ १० ॥
अद्वैतभावना भैक्षमभक्ष्यं द्वैतभावनम् ।
गुरुशास्त्रोक्तभावेन भिक्षोर्भैक्षं विधीयते ॥ ११ ॥
विद्वान् स्वदेशमुत्सृज्य संन्यासानन्तरं स्वतः ।
कारागारविनिर्मुक्तचोरवद् दूरतो वसेत् ॥ १२ ॥

एवं शौचतः किं स्यादित्याशङ्क्य वासनात्रयक्षयपुरःसरं चित्तशुद्धिः स्यादित्याह—चित्तेति। "ब्रह्मामृतं पिबेद्भैक्षम्" इति यदुक्तं तदनेन मन्त्रेण विशदयति—अद्वैतेति ॥ इत्थंभूतो भिक्षुः क्वासनमर्हतीत्याशङ्क्य ज्ञातचर-देशात् बहिरेव चरेदित्याह—विद्वानिति ॥ १०–१२ ॥

अहंकारादित्यागः

अहंकारसुतं वित्तभ्रातरं मोहमन्दिरम् ।
आशापत्नीं त्यजेद्यावत् तावन्मुक्तो न संशयः ॥ १३ ॥

बाह्यदारपुत्रादित्यागमात्रेण मुक्तिर्नाहंकारादित्यागेनेत्याशङ्क्य बाह्यदारा-दित्यागपूर्वकमहंकारादित्यागेनैव मुक्तिः स्यादित्याह—अहंकारेति। बाह्या-न्तःसंन्यासाभ्यामेव मुक्तिः स्यात्, नान्यतरत्यागत इत्यर्थः।

"विष्णुलिङ्गं द्विधा प्रोक्तं व्यक्तमव्यक्तमेव च ।
तयोरेकमपि त्यक्त्वा पतत्येव न संशयः ॥"

इति श्रुतेः ॥ १३ ॥

कर्मत्यागः

मृता मोहमयी माता जातो बोधमयः सुतः ।
सूतकद्वयसंप्राप्तौ कथं संध्यामुपास्महे ॥ १४ ॥
हृदाकाशे चिदादित्यः सदा भासति भासति ।
नास्तमेति न चोदेति कथं संध्यामुपास्महे ॥ १५ ॥
एकमेवाद्वितीयं यद्गुरोर्वाक्येन निश्चितम् ।
एतदेकान्तमित्युक्तं न मठं न वनान्तरम् ॥ १६ ॥

संध्यादिकर्मत्यागतः प्रत्यवायी स्यादित्याशङ्क्य स्वाज्ञानहानात् स्वज्ञानोदयतः चिदादित्यस्य उदयास्तमयाभावाच्च संध्यादिकर्मकरणानुपपत्तिमाह—मृतेति द्वाभ्याम् । रवेरुदयास्तमययोः किल कर्म कर्तव्यम् । "एवंविदश्चिदादित्यस्य उदयास्तमयाभावात् सर्वकर्माभावः" इति श्रुतेः । "वसेदेकान्तिको भूत्वा" इति यदुक्तं तदेकान्तस्वरूपं विशदयति—एकमेवेति ॥ १४-१६ ॥

मुख्यसंन्यासः

असंशयवतां मुक्तिः संशयाविष्टचेतसाम् ।
न मुक्तिर्जन्मजन्मान्ते तस्माद्विश्वासमाप्नुयात् ॥ १७ ॥
कर्मत्यागान्न संन्यासो न प्रैषोच्चारणेन तु ।
संधौ जीवात्मनोरैक्यं संन्यासः परिकीर्तितः ॥ १८ ॥

"देहो देवालयः" इत्यादि मया यदुक्तं तत्रासंशयवतां मुक्तिः; न हि संशयवतामित्याह—असंशयेति; "नायं लोकोऽस्ति न परो न सुखं संशयात्मनः" इति स्मृतेः । प्रैषतः कर्मत्याग एव मुख्यसंन्यास इत्याशङ्क्य जीवपरभेदत्याग एव मुख्यसंन्यास इत्याह—कर्मेति ॥ १७, १८ ॥

संन्यासाधिकारी

वमनाहारवद्यस्य भाति सर्वैषणादिषु ।
तस्याधिकारः संन्यासे त्यक्तदेहाभिमानिनः ॥ १९ ॥
यदा मनसि वैराग्यं जातं सर्वेषु वस्तुषु ।
तदैव संन्यसेद्विद्वानन्यथा पतितो भवेत् ॥ २० ॥
द्रव्यार्थमन्नवस्त्रार्थं यः प्रतिष्ठार्थमेव वा ।
संन्यसेदुभयभ्रष्टः स मुक्तिं नाप्तुमर्हति ॥ २१ ॥

संन्यासाधिकारी कीदृश इत्याशङ्क्य यस्य वान्ताशनमूत्रपुरीषादिवत् बाह्यार्थेषु हेयतोदेति स एव संन्यासाधिकारीत्याह—वमनेति । संन्यासमूलं किमित्याशङ्क्य स्वातिरिक्तविषयतीव्रतरवैराग्यमेवेत्याह—यदेति । निमित्तान्तरेणापि संन्यासकरणं श्रेय इत्यत आह—द्रव्यार्थमिति ॥ १९–२१ ॥

मुक्तिं प्रति साधनान्तराणि

उत्तमा तत्त्वचिन्तैव मध्यमं शास्त्रचिन्तनम् ।
अधमा मन्त्रचिन्ता च तीर्थभ्रान्त्यधमाधमा ॥ २२ ॥

तीर्थमन्त्रशास्त्रतत्त्वचिन्तनं मुक्तिं प्रति समानसाधनमित्यत आह—उत्तमेति । परस्परोपायोपेयतया मुक्तिसाधनमेतच्चतुष्टयं न समानमित्यर्थः । **तीर्थभ्रान्त्यधमाधमा** इत्यत्र विसर्गलोपश्छान्दसः ॥ २२ ॥

अनुभवः

अनुभूतिं विना मूढो वृथा ब्रह्मणि मोदते ।
प्रतिबिम्बितशाखाग्रफलास्वादनमोदवत् ॥ २३ ॥

14

न त्यजेच्चेद्यतिर्मुक्तो यो माधूकरमान्तरम् ।
वैराग्यजनकं श्रद्धाकलत्रं ज्ञाननन्दनम् ॥ २४ ॥

केवलशास्त्रज्ञानादेव ब्रह्मावाप्तिः, किमनुभवेनेत्यत आह—अनुभूतिमिति। अस्ति ब्रह्मेति शास्त्रीयज्ञानं परोक्षम्। अहं ब्रह्मेत्यपरोक्षज्ञानमनुभवात्मकम्; ब्रह्ममात्रज्ञानस्य स्वानुभूतिप्रमाणसिद्धत्वात्। इत्थंभूतानुभूतिं विना ब्रह्मानुमोदनं जलप्रतिबिम्बितफलास्वादनवत् न हि कार्यकारि भवतीत्यर्थः। श्रद्धाभक्तिज्ञानवैराग्यपुरःसरम् अद्वैतभावनाख्यान्तरमाधूकरभजनं यः करोति, स यतिर्मुक्तो भवतीत्याह—न त्यजेदिति ॥ २३, २४ ॥

परमधर्मोपदेशः

धनवृद्धा वयोवृद्धा विद्यावृद्धास्तथैव च ।
ते सर्वे ज्ञानवृद्धस्य किंकराः शिष्यकिंकराः ॥ २५ ॥
मन्मायया मोहितचेतसो मामात्मानमापूर्णमलब्धवन्तः ।
परं विदग्धोदरपूरणाय भ्रमन्ति काका इव सूरयोऽपि ॥ २६ ॥
पाषाणलोहमणिमृन्मयविग्रहेषु पूजा पुनर्जननभोगकरी मुमुक्षोः ।
तस्माद्यतिः स्वहृदयार्चनमेव कुर्याद्बाह्यार्चनं परिहरेदपुनर्भवाय ॥
अन्तः पूर्णो बहिः पूर्णः पूर्णकुम्भ इवार्णवे ।
अन्तः शून्यो बहिः शून्यः शून्यकुम्भ इवाम्बरे ॥ २८ ॥
मा भव ग्राह्यभावात्मा ग्राहकात्मा च मा भव ।
भावनामखिलां त्यक्त्वा यच्छिष्टं तन्मयो भव ॥ २९ ॥
द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह ।
दर्शनप्रथमाभासमात्मानं केवलं भज ॥ ३० ॥

धनादिवृद्धेभ्यो ज्ञानवृद्धं महीकरोति—धनेति। स्वज्ञानिनं "ज्ञानी त्वात्मैव मे मतम्" इति स्वोक्त्यनुरोधेन महीकृत्य तद्विपरीतस्वाज्ञजन्म धिग् धिगिति निन्दति—मन्मायेयेति। सूरयोऽपि ये मां न जानन्ति तेषां जन्म अजागलस्तनवद्व्यर्थमित्यर्थः। "सोऽहंभावेन पूजयेत्" इति यदुक्तं तत्र स्वभेदधिया कृतबाह्यपूजा पुनर्भवकरीति निन्दनपूर्वकमभेद-पूजनं स्वपदप्रापकमिति स्तौति—पाषाणेति। परमतत्त्वरहस्यमनुब्रूहीति यत् पृष्टं, तत्र स्वस्य स्वातिरिक्तस्य च निष्प्रतियोगिकपूर्णत्वं शून्यत्वं च सदृष्टान्तं प्रतिपादयति—अन्तरिति। अर्णवाम्बरमध्यपतितपूर्णशून्यकुम्भ इव स्वय-मन्तर्बहिरन्तरालेऽपि पूर्णः; अन्तर्बाह्यान्तरालकलनाभावात्। तथा स्वाति-रिक्तमन्तर्बाह्यान्तरालकलनाशून्यम्; स्वातिरिक्तयोः निष्प्रतियोगिकभावाभाव-रूपत्वात्। ग्राह्यग्राहकतया सविषयकरणग्रामद्रष्ट्रादित्रिपुटीसत्त्वात् कथं स्वाति-रिक्तयोर्भावाभावरूपतेत्याशङ्क्य, परमार्थतो ब्रह्मातिरिक्तं नास्त्येव; यदि स्वाज्ञदृष्ट्या तत्प्रसक्तिस्तदा ग्राह्यग्राहकादिकलनाविशिष्टद्रष्ट्रादिनानात्रिपुट्यपह्नव-सिद्धं ब्रह्म स्वमात्रमिति भजेत्याह—मा भवेति। ग्राह्यं विषयजातम्। ग्राहकं करणजातम्। त्रिपुट्यादिसर्वव्यापृतप्रथमाभासं प्रत्यञ्चं पराग्भावापह्नवसिद्धपर-मात्मानं केवलं निष्प्रतियोगिकस्वमात्रमिति, हे मैत्रेय, तन्मात्रं भव तदेव भवेत्यर्थः॥ २९–३०॥

विदेहमुक्तस्य स्थितिः

संशान्तसर्वसंकल्पा या शिलावदवस्थितिः।
जाग्रन्निद्राविनिर्मुक्ता सा स्वरूपस्थितिः परा॥ ३१॥

इति।

तन्मात्रावस्थितविदेहमुक्तस्य स्थितिः कीदृशीत्यत आह—संशान्तेति। यस्यां स्वातिरिक्तनानाविषयगोचरसर्वसंकल्पः शान्तः अपह्नवं गतः, सेयं संशान्तसर्वसंकल्पा या पीवरी शिलावत् स्थिरा अवस्थितिः या जाग्र-न्निद्रोपलक्षितव्यष्टिसमष्टिजाग्रज्जाग्रदाद्यविकल्पानुज्ञैकरसान्तचतुष्पञ्चदशकलना-

विनिर्मुक्ता यत्प्रबोधसमकालमपह्नवतां गता, सैव परा काष्ठा स्वरूपस्थितिः विकलेबरमुक्तिः। स्वाज्ञादिदृष्टिमोहे सत्यसति सेयमेकरूपैवावशिष्यते। परमशिवोपदेशमहिम्ना मैत्रेयः कृतकृत्योऽभवदित्यर्थः। इतिशब्दः शिवोपदेशपरिसमाप्त्यर्थो द्वितीयाध्यायपरिसमाप्त्यर्थश्च ॥ ३१ ॥

इति द्वितीयोऽध्यायः

---

मैत्रेयस्य स्वानुभवप्रकटनम्

अहमस्मि परश्चास्मि ब्रह्मास्मि प्रभवोऽस्म्यहम् ।
सर्वलोकगुरुश्चास्मि सर्वलोकोऽस्मि सोऽस्म्यहम् ॥ १ ॥
अहमेवास्मि सिद्धोऽस्मि शुद्धोऽस्मि परमोऽस्म्यहम् ।
अहमस्मि सदा सोऽस्मि नित्योऽस्मि विमलोऽस्म्यहम् ॥ २ ॥
विज्ञानोऽस्मि विशेषोऽस्मि सोमोऽस्मि सकलोऽस्म्यहम् ।
शुभोऽस्मि शोकहीनोऽस्मि चैतन्योऽस्मि समोऽस्म्यहम् ॥ ३ ॥
मानावमानहीनोऽस्मि निर्गुणोऽस्मि शिवोऽस्म्यहम् ।
द्वैताद्वैतविहीनोऽस्मि द्वन्द्वहीनोऽस्मि सोऽस्म्यहम् ॥ ४ ॥
भावाभावविहीनोऽस्मि भाषाहीनोऽस्मि भास्म्यहम् ।
शून्याशून्यप्रभावोऽस्मि शोभनाशोभनोऽस्म्यहम् ॥ ५ ॥
तुल्यातुल्यविहीनोऽस्मि नित्यः शुद्धः सदाशिवः ।
सर्वासर्वविहीनोऽस्मि सात्त्विकोऽस्मि सदास्म्यहम् ॥ ६ ॥
एकसंख्याविहीनोऽस्मि द्विसंख्यावानहं न च ।
सदसद्भेदहीनोऽस्मि संकल्परहितोऽस्म्यहम् ॥ ७ ॥

नानात्मभेदहीनोऽस्मि ह्यखण्डानन्दविग्रहः ।
नाहमस्मि न चान्योऽस्मि देहादिरहितोऽस्म्यहम् ॥ ८ ॥
आश्रयाश्रयिहीनोऽस्मि आधाररहितोऽस्म्यहम् ।
बन्धमोक्षविहीनोऽस्मि शुद्धं ब्रह्मास्मि सोऽस्म्यहम् ॥ ९ ॥
चित्तादिसर्वहीनोऽस्मि परमोऽस्मि परात् परः ।
सदा विचाररूपोऽस्मि निर्विचारोऽस्मि सोऽस्म्यहम् ॥ १० ॥
अकारोकाररूपोऽस्मि मकारोऽस्मि सनातनः ।
ध्यातृध्यानविहीनोऽस्मि ध्येयहीनोऽस्मि सोऽस्म्यहम् ॥ ११ ॥
सर्वत्र पूर्णरूपोऽस्मि सच्चिदानन्दलक्षणः ।
सर्वतीर्थस्वरूपोऽस्मि परमात्मास्म्यहं शिवः ॥ १२ ॥
लक्ष्यालक्ष्यविहीनोऽस्मि लयहीनरसोऽस्म्यहम् ।
मातृमानविहीनोऽस्मि मेयहीनः शिवोऽस्म्यहम् ॥ १३ ॥
न जगत् सर्वद्रष्टास्मि नेत्रादिरहितोऽस्म्यहम् ।
प्रवृद्धोऽस्मि प्रबुद्धोऽस्मि प्रसन्नोऽस्मि हरोऽस्म्यहम् ॥ १४ ॥
सर्वेन्द्रियविहीनोऽस्मि सर्वकर्मकृदप्यहम् ।
सर्ववेदान्ततृप्तोऽस्मि सर्वदा सुलभोऽस्म्यहम् ॥ १५ ॥
मुदितामुदिताख्योऽस्मि सर्वमौनफलोऽस्म्यहम् ।
नित्यं चिन्मात्ररूपोऽस्मि सदा सच्चिन्मयोऽस्म्यहम् ॥ १६ ॥
यत्किंचिदपि हीनोऽस्मि स्वल्पमप्यपि नास्म्यहम् ।
हृदयग्रन्थिहीनोऽस्मि हृदयाम्बुजमध्यगः ॥ १७ ॥

षड्विकारविहीनोऽस्मि षट्कोशरहितोऽस्म्यहम् ।
अरिषड्वर्गमुक्तोऽस्मि अन्तरादन्तरोऽस्म्यहम् ॥ १८ ॥
देशकालविमुक्तोऽस्मि दिगम्बरसुखोऽस्म्यहम् ।
अस्तिनास्तिविमुक्तोऽस्मि नकाररहितोऽस्म्यहम् ॥ १९ ॥
अखण्डाकाशरूपोऽस्मि ह्यखण्डाकारमस्म्यहम्
प्रपञ्चमुक्तचित्तोऽस्मि प्रपञ्चरहितोऽस्म्यहम् ॥ २० ॥
सर्वप्रकाशरूपोऽस्मि चिन्मात्रज्योतिरस्म्यहम् ।
कालत्रयविमुक्तोऽस्मि कामादिरहितोऽस्म्यहम् ॥ २१ ॥
कायकायिविमुक्तोऽस्मि निर्गुणः केवलोऽस्म्यहम् ।
मुक्तिहीनोऽस्मि मुक्तोऽस्मि मोक्षहीनोऽस्म्यहं सदा ॥ २२ ॥
सत्यासत्यविहीनोऽस्मि सन्मात्रान्नास्म्यहं सदा ।
गन्तव्यदेशहीनोऽस्मि गमनादिविवर्जितः ॥ २३ ॥
सर्वदा समरूपोऽस्मि शान्तोऽस्मि पुरुषोत्तमः ।
एवं स्वानुभवो यस्य सोऽहमस्मि न संशयः ।
यः शृणोति सकृद्वापि ब्रह्मैव भवति स्वयम् ॥ २४ ॥
इत्युपनिषत् ॥

अथ भगवान् मैत्रेयः परमशिवमुखतः परमतत्त्वरहस्यं निष्प्रतियोगिकब्रह्ममात्रज्ञानं यथावदवगम्य स्वातिरिक्तास्तिताभ्रमविरलब्रह्ममात्रभावारूढोऽपि ब्रह्मविद्याचार्यपरमशिवसंकल्पवशात् बहिष्ठः प्राणिपटलपुण्योद्रेकाच्च यच्छ्रवणादिमात्रेण स्वाज्ञलोकः स्वज्ञो भूत्वा परमार्थज्ञानसमकालं विदेहमुक्तो भवेत्, तथा तत्परमशिवोपदिष्टस्वानुभूतार्थं ब्रह्मविद्यासंप्रदायस्थापनार्थं वा यथोक्ताधिकारिण उद्दिश्य स्वानुभवं प्रकटयामासेत्याह—अहमस्मीति । देहान्तरवभासकः

प्रत्यगस्मच्छब्देनोच्यते । स्वान्तरवस्थितपराक्प्रपञ्चापेक्षया अहं प्रत्यगस्मि । देहाद्बहिर्विलसितप्रपञ्चापेक्षया परश्चास्मि । चशब्दः प्रत्यक्परयोरौपाधिकभेदनिरसनार्थः । प्रत्यक्पराभेदापेक्षया प्रत्यगभिन्नब्रह्मास्मि । स्वाज्ञदृष्ट्या जीवेशादिरूपेण प्रभवामीति प्रभवोऽस्म्यहम् । किंच—सर्वेति । ईश्वररूपेण सर्वलोकगुरुश्चास्मि । चशब्दः साक्ष्यप्यस्मीति द्योतकः । वैराजरूपेण सर्वलोकोऽस्मि; विराजो ब्रह्माण्डकायत्वात् । वस्तुतो यः सर्वकलनापह्नवसिद्धः सोऽस्म्यहम्; निष्प्रतियोगिकत्वात् । किंच—अहमिति । स्वेन रूपेण सिद्धः । अशुद्धस्वाज्ञानहानाच्छुद्धः । शिष्टमुक्तार्थम् । किंच—अहमस्मीति । यः सदैकरसः सोऽस्मि । अनित्यमलप्रपञ्चहानान्नित्योऽस्मि विमलोऽस्मि । नित्यविज्ञप्तिरूपतो विज्ञानोऽस्मि । यस्माच्छेषशेषिभावो विगतः, सोऽहं विशेषोऽस्मि । रुद्ररूपेण उमया सहितः सोमोऽस्मि । चतुःषष्टिकलावदीश्वराभेदेन सकलोऽस्म्यहम् । प्राणादिनामान्तषोडशकलाविशिष्टसूत्राभेदेन वा सकलोऽस्मि । किंच—शुभ इति । निवृत्तिमार्गगम्यत्वाच्छुभः । शोचनीयविषयाभावाच्छोकहीनः । जडदेहादिविलक्षणत्वाच्चैतन्योऽस्मि । नानोपाधिषु विषमेष्वपि सर्वान्तर्याम्यादिरूपेण समः । मानावमानवृत्तिमत्तूलाविद्याप्रलयात् मानावमानहीनोऽस्मि । सत्त्वादिगुणाभावान्निर्गुणोऽस्मि । स्वातिरिक्ताशिवाभावाच्छिवोऽस्मि । किंच—द्वैताद्वैतेति । प्रवृत्तिमार्गसिद्धं द्वैतम । निवृत्तिमार्गसिद्धमद्वैतम् । स्वातिरेकेण प्रवर्तनीयनिवर्तनीयस्वाविद्यापदतत्कार्याभावात् द्वैताद्वैतविहीनोऽस्मि । शीतोष्णादिद्वन्द्वाभावात् द्वन्द्वहीनोऽस्मि । बाह्यान्तःकरणगोचरसदसत्प्रपञ्चवैरल्यात् भावाभावविहीनोस्मि । महामौनब्रह्मरूपत्वात् भाषाहीनोऽस्मि । स्वयंप्रकाशरूपत्वात् भास्म्यहम् । किंच—शून्येति । शून्यं स्वातिरिक्तम् । अशून्यं स्वयम् । द्वयमपि यत्प्रभावसिद्धं, सोऽहं शून्याशून्यप्रभावोऽस्मि । विद्यातत्कार्यं शोभनम् । अविद्यातत्कार्यमशोभनम् । स्वाज्ञादिदृष्ट्या तदुभयमस्मि । तुल्यं समम् । अतुल्यं विषमम् । तदुभयवैरल्यात् तुल्यातुल्यविहीनोऽस्मि । नित्यः शुद्धो व्याख्यातम् । स्वाज्ञादिदृष्टिमोहे सत्यसति सदैव शिवः; परम-

मङ्गलकैवल्यरूपत्वात्। किंच—सर्वासर्वविहीनोऽस्मि; समष्टिव्यष्टिकलनावैरल्यात्। स्थितिकर्तृविष्णुरूपेण सात्त्विकोऽस्मि। वस्तुतः सदा निर्गुणोऽस्म्यहम्। एकसंख्याविहीनोस्मि द्विसंख्यावानहं न च; सापेक्षैकद्वयाभावात्; "एकाभावे द्वितीयं न न द्वितीयेन चैकता" इति श्रुतेः। सदसद्भेदहीनोऽस्मि; चाक्षुषाचाक्षुषपदार्थाभावात्। संकल्परहितोऽस्म्यहम्; तद्धेतुमनसो मृग्यत्वात्। नानात्मभेदहीनोऽस्मि; घटशरावादिस्थानीयनानोपाधीनां भेदभिन्नत्वेऽपि तदवच्छिन्नाकाशस्थानीयप्रत्यगात्मनो निर्भेदरूपत्वात्। अहं हि अहमेव अखण्डानन्दविग्रहः; निस्तरङ्गानन्दसागरत्वात्। स्वातिरिक्तं नाहमस्मि। न च तस्मादन्योऽस्मि; स्वातिरिक्तस्य शशविषाणवदवस्तुत्वात्। देहादिप्रसक्तौ देहादिरहितोऽस्म्यहम्। आश्रयमविद्याण्डम्; तद्गतभुवनजातमनाश्रयि; तदुभयाभावात् आश्रयाश्रयिहीनोऽस्मि। आधाररहितोऽस्म्यहम्; स्वस्यैव सर्वाधारत्वात्; स्वाधेयाभावतो वा आधारत्वरहितः। बन्धमोक्षविहीनोऽस्मि; देहादावहंभावो बन्धः; तदहंभावाभावो मोक्षः; विदेहमुक्तत्वात् तद्रहितः। शुद्धं ब्रह्मास्मि सोऽस्म्यहम्। उक्तार्थम्। चित्तादिसर्वहीनोऽस्मि; चित्ताद्यन्तःकरणतद्वृत्तिसहस्राभावात्। परमोऽस्मि परात् परः; परम् अक्षरम्; तस्मादपि परः; परमाक्षररूपत्वात्। सदा विचाररूपोऽस्मि निर्विचारोऽस्मि सोऽस्म्यहम्; ज्ञानाज्ञानवृत्तिमदविद्यातुर्यादिभागचतुष्टयवैरल्यात्। अकारोकाररूपोऽस्मि मकारोऽस्मि सनातनः; प्रणवार्थत्वेन चिरंतनत्वात्। ध्यातृध्यानविहीनोऽस्मि ध्येयहीनोऽस्मि सोऽस्म्यहम्; ध्यात्रादित्रिपुट्यभावात्। प्रत्यगभिन्नब्रह्मात्मना सर्वत्र पूर्णरूपोऽस्मि। अनृतादिप्रपञ्चपूरणात् तथात्वशङ्कायां सच्चिदानन्दलक्षणः; सत्यज्ञानानन्दस्वरूपत्वात्। सार्धत्रिकोटिसर्वतीर्थस्वरूपोऽस्मि; तीर्थानामपि तीर्थरूपत्वात्। परमात्मास्म्यहं शिवः; देहादेः परतरत्वात् "ब्रह्मैव परमात्मा" इति श्रुतेः। लक्ष्यालक्ष्यविहीनोऽस्मि; लक्ष्यं मूर्तं लक्षणैकसिद्धं वा। तद्विपरीतमलक्ष्यम् अमूर्तं लक्षणासिद्धं वाच्यं वा। तत्सर्वकलनाविहीन इत्यर्थः। लयहीनरसोऽस्म्यहम्; लयो नाशः;

तद्विहीननित्यानन्दरसोऽस्मीत्यर्थः। मातृमानविहीनोऽस्मि मेयहीनः शिवोऽस्म्यहम्; मात्रादित्रिपुटीशून्योऽस्मि। न जगत् सर्वद्रष्टास्मि; जगन्नाहम्; किंतु तद्द्रष्टास्मि; सर्वसाक्षित्वात्। नेत्रादिरहितोऽस्म्यहम्; नेतृत्वं प्रेरयितृत्वम्। आदिशब्देन भासकत्वादिरुच्यते। नेतृत्वभासकत्वादिकलनारहितोऽस्मि; प्रेर्यभास्यजंगमस्थावराभावात् स्वेनैव रूपेण प्रवृद्धो विजृम्भितोऽस्मि; "ब्रह्मैवैकमनाद्यन्तमब्धिवत् प्रविजृम्भते" इति श्रुतेः। स्वाविद्यास्वापात् प्रबुद्धः; जागरूकोऽस्मि। भगवद्रूपेण भागवतपटलस्य प्रसन्नोऽस्मि। स्वाविद्याद्वयतत्कार्यं स्वावशेषेण हरोऽस्म्यहम्। सर्वेन्द्रियविहीनोऽस्मि; शरीरत्रयाभावात्। सर्वकर्मकृदप्यहम्; तत्तदिन्द्रियेषु तत्तदिन्द्रियं भूत्वा तत्तदिन्द्रियप्रवृत्तिनिमित्तत्वात्। यद्वा सर्वेन्द्रियाभावेऽपि सर्वेन्द्रियव्यापृतिकृत्त्वात्; "अपाणिपादोऽहमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः" इत्यादिश्रुतेः। सर्ववेदान्ततृप्तोऽस्मि सर्वदा सुलभोऽस्म्यहम्; ईशाद्यष्टोत्तरशतगतसर्ववेदान्तवाक्यार्थज्ञानफलकैवल्यानन्देन तृप्तोऽस्मि। अनन्यभावेन भजतां सर्वदा परमसुलभोऽस्मि; सकृद्भजतां परमाभयप्रदश्रीरामरूपत्वात्;

"सकृदेव प्रपन्नाय तवास्मीति च याचते।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम॥"

इति श्रीरामोक्तेः। मुदितामुदिताख्योऽस्मि; सत्सु मुदिता; असत्सु अमुदिता; अपेक्षादिवृत्तिविशिष्टजीवन्मुक्तरूपत्वात्। सर्वमौनफलोऽस्म्यहम्; तत्तत्करणव्यापृत्युपरमलक्षणं सर्वमौनं, ब्रह्ममात्रज्ञानं तत्फलं, विकलेबरकैवल्यमस्मीत्यर्थः। नित्यं चिन्मात्ररूपोऽस्मि; अनित्याचिन्मात्रस्य मृग्यत्वात्। सदा सच्चिन्मयोऽस्म्यहम्, सच्चिदानन्दस्वरूपत्वात्। यत्किंचिदपि हीनोऽस्मि स्वल्पमप्यपि नास्म्यहम्; स्वातिरेकेण यत्किंचित् स्वल्पमपि नास्मि; स्वातिरिक्तस्य मृग्यत्वात्। हृदयग्रन्थिहीनोऽस्मि; हृदित्यन्तःकरणम्; अयमिति साक्षी; तयोस्तादात्म्यं हृदयग्रन्थिरिति चिदाभास उच्यते; जीवत्वस्य मृग्यत्वात्। हृदयाम्बुजमध्यगः; अन्तर्याम्यादिरूपत्वात्। षड्विकारविहीनोऽस्मि षट्कोशरहितोऽस्म्यहम्। अरिषड्वर्गमुक्तोऽस्मि; शैशवबाल्यकौमारादिषड्विकार-

त्वगादिषट्कोशकामाद्यरिषड्वर्गादिविकारास्पदस्थूलादिशरीराभावात् । अन्तरात् सर्वान्तरात् ईश्वरात् अन्तरः साक्ष्यहम् । देशकालविमुक्तोऽस्मि ; देशादिपरिच्छेदत्रयशून्यत्वात् । दिगम्बरसुखोऽस्म्यहम् ; मुख्यावधूतानुभूतपरमानन्दरूपत्वात् । अस्तिनास्तिविमुक्तोऽस्मि नकाररहितोऽस्म्यहम् ; निष्प्रतियोगिकसन्मात्रत्वात् । अखण्डाकाशरूपोऽस्मि ह्यखण्डाकारमस्म्यहम् ; चिदाकाशत्वेनाखण्डैकरसरूपत्वात् । प्रपञ्चमुक्तचित्तोऽस्मि प्रपञ्चरहितोऽस्म्यहम् ; निष्प्रतियोगिकनिष्प्रपञ्चरूपत्वात् । सर्वप्रकाशरूपोऽस्मि चिन्मात्रज्योतिरस्म्यहम् ; प्रकाशमात्रतया चिन्मात्रज्योतीरूपत्वात् । कालत्रयविमुक्तोऽस्मि कामादिरहितोऽस्म्यहम् ; अमनस्करूपत्वात् । कायकायिविमुक्तोऽस्मि ; कायतदवच्छिन्नजीवाभावात् । निर्गुणः ; व्याख्यातम् । केवलोऽस्म्यहम् ; अशेषविशेषशून्यत्वात् । मुक्तिहीनोऽस्मि मुक्तोऽस्मि मोक्षहीनोऽस्म्यहं सदा ; पारमार्थिकबन्धाभावात् मुक्तिहीनः । स्वाज्ञदृष्ट्या बन्धप्रसक्तौ स्वज्ञदृष्ट्या मुक्तोऽस्मि । परमार्थदृष्ट्या बन्धमोक्षकलनाविरलब्रह्ममात्रत्वात् मोक्षहीनोऽस्मि । सत्यासत्यविहीनोऽस्मि ; सापेक्षसत्यासत्यापह्नवसिद्धपारमार्थिकसत्यत्वात् । सन्मात्रात् अन्यत् नास्म्यहं सदा ; सन्मात्रमेव स्यामित्यर्थः । गन्तव्यदेशहीनोऽस्मि गमनादिविवर्जितः ; पूर्णरूपत्वात् । सर्वदा सच्चिदानन्दात्मना नामरूपवैषम्येऽपि समरूपोऽस्मि । शान्तोऽस्मि पुरुषोत्तमः ; वस्तुतः स्वातिरिक्तक्षराक्षरकलनाविरलपरमाक्षरत्वात् । एवं ममैवेशभावापत्त्या यस्य स्वानुभवो भवति सोऽहमस्मीत्यत्र न हि संशयोऽस्ति । एवं परमशिवभावमापन्नमैत्रेयमुनेः स्वानुभूतिवैभवं सकृद्वापि यः शृणोति, सोऽयं स्वयमेव ब्रह्म भवति । इत्युपनिषच्छब्दः मैत्रेयोपनिषत्समाप्त्यर्थः ॥ १–२४ ॥

इति तृतीयोऽध्यायः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
मैत्रेयोपनिषट्टीका लिखितेशप्रसादतः ।
मैत्रेयोपनिषट्टीका षष्ट्यधिद्विशतात्मिका ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकोनत्रिंशत्संख्यापूरकं मैत्रेयोपनिषद्विवरणं संपूर्णम्

# याज्ञवल्क्योपनिषत्

## पूर्णमदः—इति शान्तिः

सर्वकर्मसंन्यासजिज्ञासा

अथ जनको ह वैदेहो याज्ञवल्क्यमुपसमेत्योवाच । भगवन् संन्यासमनुब्रूहीति । स होवाच याज्ञवल्क्यः । ब्रह्मचर्यं समाप्य गृही भवेत् । गृहात् वनी भूत्वा प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा । अथ पुनरव्रती वा व्रती वा स्नातको वास्नातको वा उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेत् ॥ १ ॥

आहिताग्निसंन्यासविधिः

तदेके प्राजापत्यामेवेष्टिं कुर्वन्ति । अथवा न कुर्यात् । आग्नेयीमेव कुर्यात् । अग्निर्हि प्राणः । प्राणमेवैतया करोति । त्रैधातवीयामेव कुर्यात् । एत एव त्रयो धातवो यदुत सत्त्वं रजस्तम इति ।

अयं ते योनिर्ऋत्वियो यतो जातो अरोचथाः ।<br>
तं जानन्नग्न आरोहाथा नो वर्धया रयिम् ॥

इत्यनेन मन्त्रेणाग्निमाजिघ्रेत्। एष ह वा अग्नेर्योनिर्यः प्राणः प्राणं गच्छ स्वां योनिं गच्छ स्वाहेत्येवमेवैतदाह ॥ २ ॥

निरग्निकसंन्यासविधिः

ग्रामादग्निमाहृत्य पूर्ववदग्निमाघ्रापयेत्। यदग्निं न विन्देदप्सु जुहुयात्। आपो वै सर्वा देवताः। सर्वाभ्यो देवताभ्यो जुहोमि स्वाहेति हुत्वोद्धृत्य प्राश्नीयात् साज्यं हविरनामयम्। मोक्षमन्त्रस्त्रय्येवं विन्देत्। तद्ब्रह्म तदुपासितव्यम्। शिखां यज्ञोपवीतं छित्त्वा संन्यस्तं मयेति त्रिवारमुच्चरेत्। एवमेवैतद्भगवन्निति वै याज्ञवल्क्य ॥ ३ ॥

ब्राह्मणस्यैव संन्यासेऽधिकारः

अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यम्। अयज्ञोपवीती कथं ब्राह्मण इति। स होवाच याज्ञवल्क्यः। इदमेवास्य तद्यज्ञोपवीतं य आत्मा अपः प्राश्याचम्य अयं विधिः ॥ ४ ॥

संन्यासेऽनधिकृतानां कर्तव्यनिरूपणम्

अथ परिव्राड् विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षमाणो ब्रह्मभूयाय भवति। एष पन्थाः परिव्राजकानाम्। वीराध्वाने वानाशके वापां प्रवेशे वाग्निप्रवेशे वा महाप्रस्थाने वा। एष पन्था ब्रह्मणा हानुवित्तस्तेनेति संन्यासी ब्रह्मविदिति। एवमेवैष भगवन्निति वै याज्ञवल्क्य ॥ ५ ॥

पारमहंस्यपूगस्य सर्वोत्कृष्टता

तत्र परमहंसा नाम संवर्तकारुणिश्वेतकेतुदुर्वासऋभुनिदाघदत्तात्रेयशुकवामदेवहारीतकप्रभृतयोऽव्यक्तलिङ्गा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरन्तः ॥ ६ ॥

साम्बरपरमहंसलक्षणम्

परस्त्रीपुरपराङ्मुखाः त्रिदण्डं कमण्डलुं भुक्तमात्रं जलपवित्रं शिखां यज्ञोपवीतं बहिरन्तश्चेत्येतत् सर्वं भूः स्वाहेत्यप्सु परित्यज्यात्मानमन्विच्छेत् ॥ ७ ॥

दिगम्बरपरमहंसलक्षणम्

यथाजातरूपधरा निर्द्वन्द्वा निष्परिग्रहाः तत्त्वब्रह्ममार्गे सम्यक् संपन्नाः शुद्धमानसाः प्राणसंधारणार्थं यथोक्तकाले विमुक्तो भैक्षमाचरन्नुदरपात्रेण लाभालाभौ समौ भूत्वा करपात्रेण वा कमण्डलूदकपो भैक्षमाचरन्नुदरपात्रसंग्रहः पात्रान्तरशून्यो जलस्थलकमण्डलुः अबाधकरहस्यस्थलनिकेतनो लाभालाभौ समौ भूत्वा शून्यागारदेवगृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रशालानदीपुलिनगिरिकुहरकोटरकन्दरनिर्झरस्थण्डिलेष्वनिकेतनिवास्यप्रयत्नः शुभाशुभकर्मनिर्मूलनपरः संन्यासेन देहत्यागं करोति स परमहंसो नामेति ॥ ८ ॥

संन्यासज्ञानसंपन्ना यान्ति यद्वैष्णवं पदम् ।
तत् त्रैपदब्रह्मतत्त्वरामचन्द्रपदं भजे ॥

इह खलु शुक्लयजुर्वेदप्रविभक्तेयं याज्ञवल्क्योपनिषत् पारमहंस्यधर्मपूगप्रकटनव्यग्रा निर्विशेषब्रह्मतत्त्वपर्यवसन्ना विजृम्भते। अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते। जनकात्रियाज्ञवल्क्यप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था। आख्यायिकामवतारयति—अथेति। अथ वर्णाश्रमधर्मश्रवणानन्तरं जनको ह वैदेहो याज्ञवल्क्यं पप्रच्छ। किमिति? भगवन् संन्यासलक्षणमनुब्रूहीति। स होवाच याज्ञवल्क्यः। ब्रह्मचर्यं समाप्य गृही भवेत् इत्यादि परमहंसो नामेत्यन्तं प्रायशो जाबालोपनिषदि पदशो व्याख्यातम्॥ १–८॥

संन्यासिनः परमेश्वरत्वम्

आशाम्बरो न नमस्कारो न दारपुत्राभिलाषी लक्ष्यालक्ष्यनिवर्तकः परिव्राट् परमेश्वरो भवति। अत्रैते श्लोका भवन्ति॥ ९॥

यो भवेत् पूर्वसंन्यासी तुल्यो वै धर्मतो यदि।
तस्मै प्रणामः कर्तव्यो नेतराय कदाचन॥ १०॥
प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः।
संन्यासिनोऽपि दृश्यन्ते वेदसंदूषिताशयाः॥ ११॥
नामादिभ्यः परे भूम्नि स्वाराज्ये चेत् स्थितोऽद्वये।
प्रणमेत् कं तदात्मज्ञो न कार्यं कर्मणा तदा॥ १२॥
ईश्वरो जीवकलया प्रविष्टो भगवानिति।
प्रणमेद् दण्डवद् भूमावाश्वचण्डालगोखरम्॥ १३॥

उक्तलक्षणलक्षितः परिव्राट् परमेश्वर एवेत्याह—आशेति। लक्षणया बोधितं लक्ष्यम्; तद्विपरीतमलक्ष्यम्; समाहितासमाहितावस्थाभ्यां तदुभयनिवर्तकः परिव्राट् निरावृतित्रयसंपत्तितः परमेश्वरो भवति। न नमस्कारो न दारपुत्राभिलाषीत्युक्त्या विविदिषासंन्यासिनामपि त्यक्तदारपुत्रत्वात् तैरपि

ज्येष्ठकनिष्ठादीनां नमस्कारो न कर्तव्य इत्याशङ्क्य धर्मतः स्वतुल्याधिकारिणो नमस्कार्या नेतर इति। अत्रैते श्लोका मन्त्रा भवन्तीत्याह—अत्रैते श्लोका भवन्तीति। के नमस्कारानर्हा इत्यत्राह—प्रमादिन इति ॥

"तितिक्षाज्ञानवैराग्यशमादिगुणवर्जितः।
भिक्षामात्रेण यो जीवेत् स पापी यतिवृत्तिहा ॥"

इति;

"दण्डं भिक्षां च यः कुर्यात् स्वधर्मे व्यसनं विना।
यस्तिष्ठति न वैराग्यं याति नीचयतिर्हि सः ॥"

इति च। वेदैर्येषामाशयो दूषितः ते वेदसंदूषिताशया यतयो यदि विगीतशीलास्तदा ते ज्येष्ठा अपि न नमस्कार्या इत्यर्थः। यदि छान्दोग्यसप्तमाध्यायपठितनामादिप्राणान्तकलनाविरलभूमब्रह्मनिष्ठो यतिः, तदा स्वदृष्ट्या स्वातिरिक्तज्येष्ठकनिष्ठभिदावैरल्यान्न तस्य ज्येष्ठकनिष्ठनमस्कारनियमोऽस्ति; इच्छा चेन्नमस्कुर्यात्; नो चेत् तूष्णीं तिष्ठेदित्याह—नामेति। यद्यनेवंवित्तदा ईश्वरः ॥ ९–१३ ॥

स्त्र्यादीनां कुत्सनम्

मांसपाञ्चालिकायास्तु यन्त्रलोलेऽङ्गपञ्जरे।
स्नाय्वस्थिग्रन्थिशालिन्याः स्त्रियाः किमिव शोभनम् ॥ १४ ॥
त्वङ्मांसरक्तबाष्पाम्बु पृथक् कृत्वा विलोचने।
समालोकय रम्यं चेत् किं मुधा परिमुह्यसि ॥ १५ ॥
मेरुश्रृङ्गतटोल्लासिगङ्गाजलरयोपमा।
दृष्टा यस्मिन् मुने मुक्ताहारस्योल्लासशालिनः ॥ १६ ॥

श्मशानेषु दिगन्तेषु स एव ललनास्तनः ।
श्वभिरास्वाद्यते काले लघुपिण्ड इवान्धसः ॥ १७ ॥
केशकज्जलधारिण्यो दुःस्पर्शा लोचनप्रियाः ।
दुष्कृताग्निशिखा नार्यो दहन्ति तृणवन्नरम् ॥ १८ ॥
ज्वलिता अतिदूरेऽपि सरसा अपि नीरसाः ।
स्त्रियो हि नरकाग्नीनामिन्धनं चारुदारुणम् ॥ १९ ॥
कामनाम्ना किरातेन विकीर्णा मुग्धचेतसः ।
नार्यो नरविहंगानामङ्गबन्धनवागुराः ॥ २० ॥
जन्मपल्वलमत्स्यानां चित्तकर्दमचारिणाम् ।
पुंसां दुर्वासनारज्जुर्नारी बडिशपिण्डिका ॥ २१ ॥
सर्वेषां दोषरत्नानां सुसमुद्गिकयानया ।
दुःखशृङ्खलया नित्यमलमस्तु मम स्त्रिया ॥ २२ ॥
यस्य स्त्री तस्य भोगेच्छा निःस्त्रीकस्य क भोगभूः ।
स्त्रियं त्यक्त्वा जगत् त्यक्तं जगत् त्यक्त्वा सुखी भवेत् ॥ २३ ॥
अलभ्यमानस्तनयः पितरौ क्लेशयेच्चिरम् ।
लब्धो हि गर्भपातेन प्रसवेन च बाधते ॥ २४ ॥
जातस्य ग्रहरोगादि कुमारस्य च धूर्तता ।
उपनीतेऽप्यविद्यत्वमनुद्वाहश्च पण्डिते ॥ २५ ॥
यूनश्च परदारादि दारिद्र्यं च कुटुम्बिनः ।
पुत्रदुःखस्य नास्त्यन्तो धनी चेन्म्रियते तदा ॥ २६ ॥

संन्यासिसामान्यस्य द्विविधब्रह्मचर्यभूषितत्वेन तद्ब्रह्मचर्यास्खलनाय स्त्रीसामान्यं कुत्सयति—मांसेत्यादिना । सुसमुद्गिकया पेटिकारूपया । मांस-पाञ्चालिकाया इत्यारभ्य जगत् त्यक्त्वा सुखी भवेत् इत्यन्तं प्रायशो महोपनिषदि नारदपरिव्राजकोपनिषदि च व्याख्यातम् । परिव्राजकानां दार-पुत्रादेरप्रसक्तत्वात् विरक्तगृहिणामपि पुत्रेषणाया दुस्त्यजत्वेन तत्र वैराग्यहेतवे पुत्रभावाभावगतिं कुत्सयति—**अलभ्यमान** इति । आवयोर्दम्पत्योः पुत्रो नास्तीति अलभ्यमानस्तनयः पुत्राभावः । पुत्रोत्पत्त्यादेर्बहुदोषस्पृष्टत्वेन पुत्राद्येषणात्याग एव कर्तव्य इत्यर्थः ॥ १४-२६ ॥

सद्यतिलक्षणम्

न पाणिपादचपलो न नेत्रचपलो यतिः ।
न च वाक्चपलश्चैव ब्रह्मभूतो जितेन्द्रियः ॥ २७ ॥
रिपौ बद्धे स्वदेहे च समैकात्म्यं प्रपश्यतः ।
विवेकिनः कुतः कोपः स्वदेहावयवेष्विव ॥ २८ ॥
अपकारिणि कोपश्चेत् कोपे कोपः कथं न ते ।
धर्मार्थकाममोक्षाणां प्रसह्य परिपन्थिनि ॥ २९ ॥
नमोऽस्तु मम कोपाय स्वाश्रयज्वालिने भृशम् ।
कोपस्य मम वैराग्यदायिने दोषबोधिने ॥ ३० ॥
यत्र सुप्ता जना नित्यं प्रबुद्धस्तत्र संयमी ।
प्रबुद्धा यत्र ते विद्वन् सुषुप्तिं याति योगिराट् ॥ ३१ ॥
चिदिहास्तीति चिन्मात्रमिदं चिन्मयमेव च ।
चित्त्वं चिदहमेते च लोकाश्चिदिति भावय ॥ ३२ ॥

यतीनां तदुपादेयं पारहंस्यं परं पदम् ।
नातः परतरं किंचिद्विद्यते मुनिपुंगव ॥ ३३ ॥

इत्युपनिषत् ॥

नमस्कार्यः सद्यतिः कीदृश इत्याशङ्क्य पाणिपादनेत्रचापल्यविरल एव सद्यतिरित्याह—न पाणीति । परद्रव्यकीकटदेशहरणगमनस्पृही पाणिपादचपलः; तद्रहितो न पाणिपादचपलः । यस्य नेत्रमिदं रम्यम्, इदमरम्यमिति रूपदर्शनोत्सुकं स नेत्रचपलः । तद्विपरीतो ब्रह्मभावारूढो यतिः न नेत्रचपलः । इदं स्वादु इदम् अस्वाद्विति परगुणागुणशंसनं वा यस्य वाक् करोति स वाक्चपलः । तद्विपरीतो न वाक्चपलश्च भवति । एवंविशेषणविशिष्टस्य यतेः ब्रह्मभूतत्वात् अयं ब्रह्मभूतो जितेन्द्रियः सद्यतिर्भवतीत्यर्थः । सद्यतेरपि शरीरत्रयविशिष्टत्वेन कोपादिवृत्तिकबलितत्वात् सद्यतित्वं कुत इत्याशङ्क्य सद्यतेः कोपादिवृत्त्यसंभवमाह—रिपाविति । रिपावरिषड्वर्गे स्वदेहे च ब्रह्मातिरिक्तं न किंचिदस्तीति निर्विशेषब्रह्मज्ञानेन बद्धे सत्यथ समैकात्म्यं नानाविषमग्रासससत्तासामान्यं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति पश्यतो विवेकिनः स्वदेहावयवेष्विव कुतः कोपवृत्त्यवकाशः? स्वातिरिक्तक्रोधादिवृत्त्यसंभवात् इत्यर्थः । स्वापकारिणमाश्रित्य खलु क्रोधवृत्तिरुदेतीति । एवं चेत् स्वापकारिणि कोपे कुतस्ते कोपो नोदेतीत्यह—अपकारिणीति । क्रोधतुल्यापकारिविरल्यात् कोपे कोपं करोषि चेत् स्वातिरिक्तकलनाशात् ब्रह्मैव अवशिष्यत इत्यर्थः । इत्थंभूतकोपाय नमोऽस्त्वित्याह—नमोऽस्त्विति । मम कोपस्य तुच्छतया वैराग्यदायिने कोपोऽनर्थकर इति बोधयित्रे गुरुभूताय स्वस्य कोपोपरि विलसितकोपस्य स्वाश्रयः कोपः तं भृशं ज्वालयतीति स्वाश्रयज्वाली तस्मै स्वाश्रयज्वालिने कोपकोपाय नमोऽस्तु; कोपकोपं ब्रह्माहमस्मि इत्यनुसंधानं करोमीत्यर्थः । कोपकोपिनोः स्वाज्ञस्वज्ञयोः मिथो वैलक्षण्यमाह—यत्रेति । यत्र निर्विशेषब्रह्मविद्याया कोपिनः स्वाज्ञजनाः सुप्ता भवन्ति तत्रैव निर्विशेषब्रह्मविद्यायां संयमी कोपकोपी स्वज्ञः

प्रबुद्धो जागरूको भवति। हे विद्वन् एते कोपिनः स्वाज्ञाः यत्र स्वातिरिक्तप्रपञ्चे प्रबुद्धा भवन्ति तत्रैव योगिराट् कोपकोपी स्वज्ञः सुषुप्तिं याति इत्यत्र

"या निशा सर्वभूतानां तस्यां जागर्ति संयमी।
यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः॥"

इति स्मृतेः। यत एवमतस्त्वं चिदतिरिक्तं न किंचिदस्ति सर्वं चिन्मात्रमेवेति चिन्तयेत्याह—चिदिति। पूर्वमन्त्रोक्तचिन्मात्रमेवोपादेयम्। तदतिरेकेण त्वमहमिदमिति शब्दवाच्यं न किंचिदस्तीत्याह—यतीनामिति। परमहंसपदलप्राप्यत्वात् पारमहंस्यमेव परमपदं चिन्मात्रं स्वावशेषतया निष्प्रतियोगिकमित्युपादेयम्। तस्य निष्प्रतियोगिकत्वेन तदतिरिक्तं न किंचिदस्तीत्यर्थः। इत्युपनिषच्छब्दः याज्ञवल्क्योपनिषत्समाप्त्यर्थः॥ २७–३३॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
याज्ञवल्क्योपनिषदो व्याख्यानं लिखितं लघु।
याज्ञवल्क्योपनिषदो व्याख्याग्रन्थस्तु सप्ततिः॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे सप्तनवतिसंख्यापूरकं याज्ञवल्क्योपनिषद्विवरणं संपूर्णम्

# शाट्यायनीयोपनिषत्

## पूर्णमदः—इति शान्तिः

### मनसः बन्धमोक्षहेतुत्वम्

मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम् ॥ १ ॥
समासक्तं यथा चित्तं जन्तोर्विषयगोचरे ।
यद्येवं ब्रह्मणि स्यात् तत् को न मुच्येत बन्धनात् ॥ २ ॥
चित्तमेव हि संसारस्तत्प्रयत्नेन शोधयेत् ।
यच्चित्तस्तन्मयो भवति गुह्यमेतत् सनातनम् ॥ ३ ॥
नावेदविन्मनुते तं बृहन्तं नाब्रह्मवित् परमं प्रैति धाम ।
विष्णुं क्रान्तं वासुदेवं विजानन् विप्रो विप्रत्वं गच्छते तत्त्वदर्शी ॥

शाट्यायनीब्रह्मविद्याखण्डापारसुखाकृति ।
यतिबृन्दहृदाकारं रामचन्द्रपदं भजे ॥

इह खलु शुक्लयजुर्वेदप्रविभक्तेयं शाट्यायनीयोपनिषत् कुटीचकबहूदकहंस-परमहंसधर्मप्रकटनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः स्वल्पग्रन्थतो

विवरणमारभ्यते। अत्रादौ बन्धमोक्षहेतुः मन एवेत्याह—**मन एवेति**। यथा यन्मनो विषयासक्तं तथा ब्रह्मासक्तं चेत् तद्वान् स्वातिरिक्तभ्रमतो मुच्यत इत्याह—**समासक्तमिति**। किंच—**चित्तमेवेति**। यस्य **चित्तं** यस्मिन् लीनं स यच्चितः तन्मयः तत्स्वरूपो भवतीत्यर्थः। तं विवृणोति—**नावेदविदिति**। वेदविन्न भवतीत्यवेदविदज्ञः बृहन्तं विराजमहमिति न मनुते। **अब्रह्मवित् परमं धाम न प्रैति**। स्वाज्ञः सविशेषं निर्विशेषं वा ब्रह्म परोक्षत्वेनापि न जानातीत्यर्थः। **तत्त्वदर्शी विप्रस्तु विष्णुं** व्यापनशीलं **क्रान्तं** सर्वज्ञं वासुदेवं सर्वान्तर्यामिणं सर्वाधारं वा अहमस्मीति **विजानन्** विप्रत्वं जीवन्मुक्तत्वं गच्छते गच्छतीत्यर्थः॥ १-४॥

साधनचतुष्टयसंपत्तिः

> अथ ह यत् परं ब्रह्म सनातनं ये श्रोत्रिया अकामहता अधीयुः।
> शान्तो दान्त उपरतस्तितिक्षुर्योऽनूचानो ह्यभिजज्ञौ समानः।
> त्यक्तैषणो ह्यनृणस्तं विदित्वा मौनी वसेदाश्रमे यत्र कुत्र॥ ५॥

यद्ब्रह्म अकामहतप्रत्यक्षं तद्ब्रह्म यथावद्विदित्वा मौनी भवेदित्याह—अथेति। **अथ** यथोक्तसाधनसंपत्त्यनन्तरम्। **ह** इत्यैतिह्यार्थः। **ये** विदितपरमार्थतत्त्वत्वात् **श्रोत्रियाः** स्वातिरेकेण कामासंभवनिश्चयत्वात् **अकामहताः** सनकादयो ब्रह्मादयो वा **यत् सनातनं परं ब्रह्म** निष्प्रतियोगिकस्वमात्रमित्यधीयुः; अधीत्य ज्ञात्वा तज्ज्ञानसमकालं तत् प्रापुः परमात्मैव भवन्ति। यथोक्तसाधनसंपन्नो यः कश्चन मुमुक्षुः। **शान्तो दान्तः** इत्यादि साधनचतुष्टयामानित्वादीनामप्युपलक्षणार्थम्। ब्रह्मवित्कुलप्रसूतत्वादनूचानः मुमुक्षुभिः **समानः अभिजज्ञौ** ज्ञातवान्। ऋणत्रयापाकरणादनृणस्त्यक्तैषणात्रयः संन्यासी तं परमात्मानं **विदित्वाथ मौनी** भूत्वा **यत्र कुत्र** कुटीचकाद्याश्रमे आप्रारब्धक्षयं **वसेत्**। हिशब्दद्वयद्योतितार्थस्तु निर्विशेषब्रह्मज्ञानसमकालं कर्मत्रयासंभवप्रबोधसिद्धब्रह्ममात्रतयावशिष्येदिति॥ ५॥

कुटीचकधर्माः

अथाश्रमं चरमं संप्रविश्य यथोपपत्तिं पञ्चमात्रां दधानः ॥ ६ ॥

त्रिदण्डमुपवीतं च वासः कौपीनवेष्टनम् ।

शिक्यं पवित्रमित्येतद्बिभृयाद्यावदायुषम् ॥ ७ ॥

पञ्चैतास्तु यतेर्मात्राः सा मात्रा ब्रह्मणे श्रुताः ।

न त्यजेद्यावदुत्क्रान्तिरन्तेऽपि निखनेत् सह ॥ ८ ॥

विष्णुलिङ्गं द्विधा प्रोक्तं व्यक्तमव्यक्तमेव च ।

तयोरेकमपि त्यक्त्वा पतत्येव न संशयः ॥ ९ ॥

त्रिदण्डं वैष्णवं लिङ्गं विप्राणां मुक्तिसाधनम् ।

निर्वाणं सर्वधर्माणामिति वेदानुशासनम् ॥ १० ॥

अथादौ कुटीचकधर्मानाह—अथेति । अथ ब्रह्मचर्याद्याश्रमत्रयानन्तरम् । ब्रह्मचर्याद्यपेक्षया कौटीचकं चरमाश्रमं प्रविश्य यथोपपत्ति यथाबलं त्रिदण्डादि-पञ्चमात्रां दधानः सन् भुवं विचरेदित्यर्थः । वासः कौपीनवेष्टनमित्येका मात्रा । त्रिदण्डादिपवित्रान्तमित्येतत्पञ्चमात्रकं बहूदकादिपदमारोढुमशक्तश्चेत् यावदायुषं बिभृयात् इत्यर्थः । किंच—पञ्चैतास्तु कुटीचकस्य यतेर्मात्राः त्रिदण्डादिरूपाः अकारोकारमकारबिन्दुनादभेदेन सा मात्रा ब्रह्मणे श्रुताः ; ताः पञ्च मात्राः ब्रह्मणे ब्रह्मणि प्रणवे श्रुताः । एवं व्यक्ताव्यक्तात्मकपञ्चमात्रायुग्मं यावदायुषं बिभृयादिति पूर्वेण संबन्धः । जात्वपि व्यक्ताव्यक्तपञ्चमात्रायुग्मं न त्यजेद्यावदुत्क्रान्तिः । अन्तेऽपि देहत्यागकालेऽपि स्वशरीरेण सह निखनेत् व्यक्तपञ्चमात्राः । मात्रापञ्चकयुग्मस्य व्यक्ताव्यक्तविष्णुलिङ्गत्वेन तदन्यतरत्यागप्यधः पततीत्याह—विष्णुलिङ्गमिति । उक्तविष्णुलिङ्गद्वयधारणफलमाह—त्रिदण्डमिति ॥ ६–१० ॥

संन्यासिनां चातुर्विध्यं धर्मश्च

अथ खलु सोम्य कुटीचको बहूदको हंसः परमहंस इत्येते परिव्राजकाश्चतुर्विधा भवन्ति । सर्व एते विष्णुलिङ्गिनः शिखिनोपवीतिनः शुद्धचित्ता आत्मानमात्मना ब्रह्म भावयन्तः शुद्धचिद्रूपोपासनरता जपयमवन्तो नियमवन्तः सुशीलिनः पुण्यश्लोका भवन्ति । तदेतदृचाभ्युक्तम्—

कुटीचको बहूदकश्चापि हंसः परमहस इति वृत्त्या च भिन्नाः ।
सर्व एते विष्णुलिङ्गं दधाना व्यक्ताव्यक्तं बहिरन्तश्च नित्यम् ॥
पञ्चयज्ञा वेदशिरःप्रविष्टाः
क्रियावन्तोऽमी ब्रह्मविद्यां [श्रयन्तः] ।
त्यक्त्वा वृक्षं वृक्षमूलं श्रितासः
संन्यस्तपुष्पा रसमेवाश्नुवानाः ।
विष्णुक्रीडा विष्णुरतयो विमुक्ता
विष्ण्वात्मका विष्णुमेवापियन्ति ॥ १२ ॥

कुटीचकादिचतुराश्रमभेदं तद्धर्मानप्याह—अथेति । तेषां धर्मानाह—सर्व इति । सर्व एते विष्णुलिङ्गिन इत्यत्र कुटीचकस्य व्यक्ताव्यक्तमात्रापञ्चकद्वयमेव विष्णुलिङ्गत्वेनाभिहितं यत्तत् बहूदकस्यापि समम्; "बहूदकः कुटीचकवत् सर्वधर्मसमः" इति श्रुतेः । हंसपरमहंसयोस्तु स्वाचार्यकलेबरं व्यक्तविष्णुलिङ्गं तदन्तःकरणमव्यक्तविष्णुलिङ्गम् ;

"सुव्यक्तविष्णुलिङ्गं स्याद् देशिकेन्द्रकलेबरम् ।
अव्यक्तविष्णुलिङ्गं तु तदन्तःकरणं स्मृतम् ॥"

इति स्मृतेः । अतः सर्वे विष्णुलिङ्गधारिण इत्यर्थः । शिखिनोपवीतिन इत्यत्र कुटीचकबहूदकयोः व्रतिवत् केशकार्पासमयशिखायज्ञोपवीतित्वं व्यक्तमुपलभ्यते; "केशसमूहशिखाप्रत्यक्षकार्पासतन्तुकृतोपवीतम" इति श्रुतेः ।

हंसस्य जटाधारणमेव शिखा व्यक्तरूपिणी। यज्ञोपवीतं त्वव्यक्तं तत्त्वज्ञानमित्यर्थः। परमहंसस्य तु शिखा यज्ञोपवीतं चाव्यक्तम्। निर्विशेषब्रह्मज्ञानमेवास्य शिखा यज्ञोपवीतं च भवति। तथा च श्रुतिः—"ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः" इति। अत एव कुटीचकादिचतुर्णां यतीनां व्यक्ताव्यक्तभेदेन शिखायज्ञोपवीतित्वं सिद्धमेवेत्यर्थः। **शुद्धचित्ता** इत्यादि **पुण्यश्लोका भवन्ति** इत्यन्तं कुटीचकादिचतुर्णामपि समानमेवेति मन्तव्यम्। ब्राह्मणेन योऽर्थोऽभिहितः तमेतमर्थं मन्त्रोऽप्यनुवदति—**तदेतदृचाभ्युक्तमिति**। किंच—**पञ्चयज्ञा** इति। **पञ्चयज्ञा** इत्यत्र कुटीचकपक्षे गायत्रीजपयज्ञो विशेषः। प्रणवजपयज्ञस्तु चतुर्णामपि समः। प्रणवजपयोगतपःस्वाध्यायज्ञानभेदेन सर्वेऽपि पञ्चयज्ञाः। **वेदशिरसामुपनिषदामर्थश्रवणादौ प्रविष्टाः**, "कुटीचकबहूदकयोः श्रवणं हंसपरमहंसयोः मननम्" इत्यादिश्रुतेः। स्वाश्रमोचितकर्मानुष्ठानपरा इति **क्रियावन्तः अमी**। परमहंसास्तु **ब्रह्मविद्यां विशेषेण सेवन्ते**। सर्वेऽपि व्रश्चनार्हसंसारवृक्षं त्यक्त्वा संसारवृक्षमूलं ब्रह्म यथा ज्ञातं तथा **श्रितासः** संश्रिताः, संन्यस्तकर्मकाण्डगोचरवेदत्वात् **संन्यस्तपुष्पाः**; "यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः" इति स्मृतेः। **रसं** सारांशमेवाश्नुवानाः; "रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति" इति श्रुतेः। स्वात्तसविशेषनिर्विशेषज्ञानानुरूपेण सविशेषनिर्विशेषविष्णौ **क्रीडा** येषां **विष्णुरतयः** बाह्यक्रीडारतिविमुक्ता विष्णुरेवात्मा येषां विष्ण्वात्मकाः सन्तो दासोऽहं सोऽहमिति वा **विष्णुमेवापियन्ति** विष्णोः सविशेषभावं निर्विशेषभावं वा प्रतिपद्यन्ते कृतकृत्या भवन्तीत्यर्थः॥ ११, १२॥

कुटीचकानां जपयज्ञादि

त्रिसंध्यं शक्तितः स्नानं तर्पणं मार्जनं तथा।
उपस्थानं पञ्चयज्ञान् कुर्यादामरणान्तिकम्॥ १३॥
दशभिः प्रणवैः सप्तव्याहृतीभिश्चतुष्पदा।
गायत्री जपयज्ञश्च त्रिसंध्यं शिरसा सह॥ १४॥

केवलकुटीचकजपयज्ञलक्षणमाह—त्रिसंध्यमिति । त्रिषवणस्नानं कुटीचकस्य, बहूदकस्य द्विवारं, हंसस्यैकवारं, परमहंसस्य भस्मस्नानमिति ।

"परहंसाश्रमस्थानां स्नानादेरविधानतः ।
अशेषचित्तवृत्तीनां त्यागं केवलमाचरेत्" ॥

इति "स्नानं मनोमलत्यागः" इति च श्रुतेः । व्याहृतिशिरःसंपुटिततुर्यपादाञ्चितगायत्रीपादचतुष्टयावर्तनं कुटीचकैः संध्यात्रयेऽपि कर्तव्यमित्यर्थः । परमहंसजपयज्ञस्तु संध्यात्रयेऽपि प्रणवजप एव कार्यः यदि श्रवणाधिकारी न भवति तदा;

"यस्तु द्वादशसाहस्रं प्रणवं जपतेऽन्वहम् ।
तस्य द्वादशभिर्मासैः परं ब्रह्म प्रसीदति ॥"

इति श्रुतेः ।

"स्वशाखोपनिषद्गीता विष्णोर्नामसहस्रकम् ।
श्रीरुद्रं प्रणवं चैव नित्यमावर्तयेद्यतिः ॥"

इति, "प्रणवादपरं जप्त्वा कदा मुक्तो भविष्यति" इति स्मृतेश्च ॥ १३,१४ ॥

योगयज्ञादियज्ञचतुष्टयम्

योगयज्ञः सदैकाग्र्यभक्त्या सेवा हरेर्गुरोः ।
अहिंसा तु तपोयज्ञो वाङ्मनःकायकर्मभिः ॥ १५ ॥
नानोपनिषदभ्यासः स्वाध्यायो यज्ञ ईरितः ।
ओमित्यात्मानमव्यग्रो ब्रह्मण्यग्नौ जुहोति तत् ॥ १६ ॥
ज्ञानयज्ञः स विज्ञेयः सर्वयज्ञोत्तमोत्तमः ।
ज्ञानदण्डा ज्ञानशिखा ज्ञानयज्ञोपवीतिनः ॥ १७ ॥

शिखा ज्ञानमयी यस्य उपवीतं च तन्मयम्।
ब्राह्मण्यं सकलं तस्य इति वेदानुशासनम् ॥ १८ ॥

अयमेव हि परमहंसजपयज्ञः। योगयज्ञादियज्ञचतुष्टयं तु सर्वेषां सममित्याह—योगयज्ञ इति ॥ १९–१८ ॥

परिव्राजककर्तव्यनिरूपणम्

अथ खलु सोम्यैते परिव्राजका यथा प्रादुर्भवन्ति तथा भवन्ति। कामक्रोधलोभमोहदम्भदर्पासूयाममत्वाहंकारादीन् निस्तीर्य मानावमानौ निन्दास्तुती च वर्जयित्वा वृक्ष इव तिष्ठामेच्छिद्यमानो न ब्रूयात्। तदेवं विद्वांस इहैवामृता भवन्ति। तदेतदृचाभ्युक्तम्—बन्धुं पुत्रमनुमोदयित्वानवेक्षमाणो द्वन्द्वसहः प्रशान्तः। प्राचीमुदीचीं वा निर्वर्तयंश्चरेत् ॥ १९ ॥

पात्री दण्डी युगमात्रावलोकी
शिखी मुण्डी चोपवीती कुटुम्बी।
यात्रामात्रं प्रतिगृह्णन् मनुष्या-
दयाचितं याचितं वाथ भैक्षम् ॥ २० ॥

मृद्दार्वलाबूफलं तन्तुपर्ण-
पात्रं तत्तथा यथा तु लब्धम्।
शाणं क्षौमं तृणं कन्थाजिनौ च पर्ण-
माच्छादनं स्यादहतं वा विमुक्तम् ॥ २१ ॥

ऋतुसंधौ मुण्डयेन्मुण्डमात्रं
नाधो न कक्षं जातु शिखां न वापयेत्।

चतुरो मासान् ध्रुवशीलतः स्यात्

स यावत् सुप्तोऽन्तरात्मा पुरुषो विश्वरूपः ॥ २२ ॥

पञ्चयज्ञप्रकारमुक्त्वा अनन्तरं तेषां धर्मपूगं तत्फलं चोपन्यस्यति—अथेति। तथा भवन्ति; जातरूपधरा भवन्तीत्यर्थः। तैः कर्तव्यमाह—कामेति। ब्रह्मातिरिक्तं न किंचिदस्तीति ज्ञानबलेन वृक्षवत् देहादावात्मात्मीयाभिमानवैकल्यपूर्वकं सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति यदा जानन्ति तदैवं विद्वांसः इहैवामृता भवन्ति; विदेहमुक्ता भवन्तीत्यर्थः। ब्राह्मणेन योऽर्थोऽभिहितः, सोऽर्थः मन्त्रेणाप्युच्यत इत्याह—तदेतदृचाभ्युक्तमिति। बन्धुं पुत्रमनुमोदयित्वा पुनस्तान् जात्वपि अनवेक्षमाणः द्वन्द्वसहः प्रशान्तः प्राचीमुदीचीं वा स्वाश्रमोचितधर्मानुष्ठानपूर्वकं स्वस्वरूपानुसंधानं निर्वर्तयंश्चरेत्। कुटीचकादिसमुदायधर्मानाह—पात्रीति। व्यक्ताव्यक्तशिखी मुण्डी चोपवीती स्वदेहमात्रकुटुम्बी देहधारणोपयोगं किंचित् यात्रामात्रं प्रतिगृह्णन्। फलं नालिकेरकफलं तन्तुग्रथितपर्णकृतं वा पात्रं यथालब्धं गृह्णीयात्। शाणं, चैनपटं क्षौमं, वल्कलं तृणरचितपटम्। कन्थाजिने इति वक्तव्ये कन्थाजिनाविति लिङ्गव्यत्ययः। इत्थंभूतवाससालंकृतस्य अहतं ग्रथितं तद्विमुक्तं वा पर्णमाच्छादनमुत्तरीयं भवेदित्यर्थः। कक्षमिति कक्षद्वयमुच्यते। हंसेतरेषां क्षौरं तुल्यम्; हंसस्य जटाधारित्वात्। कुटीचकस्यायमेव विशेष इत्याह—जातु शिखां न वापयेदिति। चातुर्मास्यनियमः सर्वेषामपि तुल्य इत्याह—चतुर इति। यावद्विराट् स्वपिति तावच्चतुरो मासान् वार्षिकानेकत्र निवसेत्। नो चेत् "पक्षा वै मासाः" इति मासद्वयमेकत्र निवसेत्। पुनरस्मिन् विराज्युत्थिते सत्यथान्यानष्टौ दश वा मासान् स्वाश्रमोचितकर्मलिप्सुः सर्वत्र विहरेत्॥ १९–२२ ॥

वासस्थाने नियमः

अन्यानथाष्टौ पुनरुत्थितेऽस्मिन्

स्वकर्मलिप्सुर्विहरेद्वा वसेत।

देवाग्न्यगारे तरुमूले गुहायां
वसेदसङ्गोऽलक्षितशीलवृत्तः ।
निरिन्धनज्योतिरिवोपशान्तो
न चोद्विजेदुद्वेजयेद्यत्र कुत्र ॥ २३ ॥

यदि श्रवणध्यानसमाधिकरणेच्छुः, तदा एकत्र वा वसेत् । किमयं संसारिणामावसथे वसेदित्यत आह—देवेति । देवालयादिप्रशस्तस्थले वसेत् । तत्रापि ममतां विहायासङ्गो भूत्वा परैरलक्षितशीलवृत्तः सन् स्वातिरिक्तभ्रमतो निरिन्धनज्योतिरिवोपशान्तो भवेत् । स्वसमानं स्वावरं वा जनं दृष्ट्वा न कदाप्युद्वेजनं कुर्यात् । यत्र कुत्रापि प्रसक्तस्वातिरिक्तधियमुद्वेजयेत्; सर्वत्र स्वात्मधियं कुर्यादित्यर्थः ॥ २३ ॥

आत्मज्ञानवतः स्थितिः

आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ।
किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत् ॥ २४ ॥
तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ।
नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तत् ॥ २५ ॥
बाल्येनैव हि तिष्ठासेन्निर्विद्य ब्रह्मवेदनम् ।
ब्रह्मविद्यां च बाल्यं च निर्विद्य मुनिरात्मवान् ॥ २६ ॥
यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ।
अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते ॥ २७ ॥

यावदात्मा न लभ्यते, तावदेव शरीरशोषणाद्युपायानुष्ठानं कार्यम् । ज्ञाते स्वावशेषधियात्मन्यथ शरीरशोषणं पोषणं वा प्रयोजनाभावान्न

कार्यमित्याह—आत्मानमिति। यथावत् ब्रह्मवेदनं निर्विद्य ब्रह्मयाथात्म्यमवगम्य स्वातिरिक्तविषये बाल्येन वैराग्येण तिष्ठासेत् स्थातुमिच्छेत् । ततो ब्रह्मविद्यां बाल्यं च निर्विद्याथ ब्रह्मातिरिक्तं न किंचिदस्तीति निश्चित्यात्मवान् आत्ममात्रतयावशिष्येदित्यर्थः । शिष्टमन्त्रत्रयं बृहदारण्यकषष्ठे व्याख्यातम् ॥ २४–२७ ॥

आरूढपातित्ये प्रत्यवायः

अथ खलु सोम्येदं पारिव्राज्यं नैष्ठिकमात्मधर्मं यो विजहाति स वीरहा भवति, स ब्रह्महा भवति, स भ्रूणहा भवति, स महापातकी भवति । य इमां वैष्णवीं निष्ठां परित्यजति स स्तेनो भवति, स गुरुतल्पगो भवति, स मित्रध्रुग्भवति, स कृतघ्नो भवति, स सर्वान् लोकान् प्रच्युतो भवति । तदेतदृचाभ्युक्तम्—

स्तेनः सुरापो गुरुतल्पगामी
मित्रध्रुगेते निष्कृतेर्यान्ति शुद्धिम् ।
व्यक्तमव्यक्तं वा विधृतं विष्णुलिङ्गं
त्यजन्न शुध्येदखिलैरात्मभासा ॥ २८ ॥

त्यक्त्वा विष्णोर्लिङ्गमन्तर्बहिर्वा
यः स्वाश्रमं सेवतेऽनाश्रमं वा ।
प्रत्यापत्तिं भजते वातिमूढो
नैषां गतिः कल्पकोट्यापि दृष्टा ॥ २९ ॥

त्यक्त्वा सर्वाश्रमान् धीरो वसेन्मोक्षाश्रमे चिरम् ।
मोक्षाश्रमात् परिभ्रष्टो न गतिस्तस्य विद्यते ॥ ३० ॥

पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति ।
तमारूढच्युतं विद्यादिति वेदानुशासनम् ॥ ३१ ॥

एवं ब्रह्मस्वरूपं प्रतिपाद्याथ यावदुपाधि पारिव्राज्यधर्मे स्थातव्यम्; तद्विहाय स्वच्छन्दं यो वर्तते स प्रत्यवैतीति तं कुत्सयति—**अथेति**। **आत्मधर्मं** यावत् स्वपरविवेकः तावत् विष्णुलिङ्गद्वयानुकरणलक्षणं यो **विजहाति स वीरहा भवति**।

"यावदुपाधिपर्यन्तं तावच्छुश्रूषयेद् गुरुम्।
शुभं वाशुभमन्यद्वा यदुक्तं गुरुणा भुवि।
तत् कुर्यादविचारेण शिष्यः संतोषसंयुतः॥"

इति,

"सप्राणमथवाप्राणं देशिकेन्द्रकलेबरम्।
यस्मिन् देशे वसेद्योगी तां दिशं प्रणमेत् सदा॥
यावद् देहे वसेत् प्राणस्तावच्छिष्योऽप्रमादतः।
गुरुच्छन्दानुवर्ती चेद्वैष्णवं पदमेति सः॥"

इति श्रुतिस्मृतिसिद्धविष्णुबाह्यान्तर्लिङ्गानुकरणलक्षणां य **इमां वैष्णवीं निष्ठां** परित्यजति। ब्राह्मणेन यदुक्तं तन्मन्त्रा अप्यनुकुर्वन्तीत्याह—**तदेतदृचाभ्युक्तम्** इति। **निष्कृतेः** प्रायश्चित्ततः स्वर्णस्तेयादिपञ्चमहापातकिनोऽपि **शुद्धिं यान्ति**। ब्रह्मभावारूढदेशिकेन्द्रस्य यथोक्तलक्षणं व्यक्तमव्यक्तं वा विधृतम्। देशिकेन्द्रस्थूलदेहपरिचरणलक्षणं व्यक्तविष्णुलिङ्गं तदा ज्ञानवशवृत्तित्वलक्षणमव्यक्तविष्णुलिङ्गं पूर्वाचार्यैरपि विधृतमनुष्ठितं यो नानुतिष्ठति, सोऽयं महापातकी अखिलैरपि प्रायश्चित्तैर्न शुध्येत्। स्वात्मज्ञानमन्यत्र सर्वपातकग्रासमेव। अत्र स्वयमात्माभासज्ञानेनापि न शुध्येत्। देशिकेन्द्रप्रसादं विना केनापि न शुध्येदित्यर्थः। विष्णुलिङ्गयुग्मत्यागिनः प्रायश्चित्तं नास्तीति कथमुच्यते? विष्णुलिङ्गद्वयेतरस्वाश्रमोचितधर्मानुष्ठानात्, दण्डकमण्डलुधारणलक्षणपारमहंस्याश्रमत्यागपूर्वकमवधूताश्रमपरिग्रहाद्वा, देशिकोपदिष्टमन्त्रत्यागपूर्वकं प्रत्या-

पत्तिलक्षणादाचार्यान्तरपरिग्रहधर्मानुष्ठानाद्वा शुद्धिमेत्य कृतकृत्यो भवेदित्यत आह—त्यक्त्वेति। सर्वाश्रमत्यागपूर्वकमप्रमादेन यतिर्मोक्षाश्रमे वसेदित्याह—त्यक्त्वेति। स्वधर्मत्यागिन आरूढपतितत्वं निगमयति—पारिव्राज्यमिति। यः स्वधर्मे विष्णुलिङ्गद्वयानुकरणलक्षणे न तिष्ठति ॥ २८–३१ ॥

विष्णुलिङ्गद्वयानुवर्तनम्

अथ खलु सोम्येमं सनातनमात्मधर्मं वैष्णवीं निष्ठां लब्ध्वा यस्तामदूषयन् वर्तते स वशी भवति, स पुण्यश्लोको भवति, स लोकज्ञो भवति, स वेदान्तज्ञो भवति, स ब्रह्मज्ञो भवति, स सर्वज्ञो भवति, स स्वराड् भवति, स परं ब्रह्म भगवन्तमाप्नोति, स पितॄन् संबन्धिनो बान्धवान् सुहृदो मित्राणि च भवादुत्तारयति ॥ ३२ ॥

शतं कुलानां प्रथमं बभूव तथा पराणां त्रिशतं समग्रम्।
एते भवन्ति सुकृतस्य लोके येषां कुले संन्यसतीह विद्वान् ॥
त्रिंशत्परांस्त्रिंशदपरांस्त्रिंशच्च परतः परान्।
उत्तारयति धर्मिष्ठः परिव्राडिति वै श्रुतिः ॥ ३४ ॥

संन्यस्तमिति यो ब्रूयात् कण्ठस्थप्राणवानपि।
तारिताः पितरस्तेन इति वेदानुशासनम् ॥ ३५ ॥

अथ खलु सोम्येमं सनातनमात्मधर्मं वैष्णवीं निष्ठां नासमाप्य प्रब्रूयान्नाननूचानाय नानात्मविदे नावीतरागाय नाविशुद्धाय नानुपसन्नाय नाप्रयतमानसायेति ह स्माहुः। तदेतदृचाभ्युक्तम्—

विद्या ह वै ब्राह्मणमाजगाम
गोपाय मां शेवधिष्टेऽहमस्मि।

असूयकायानृजवे शठाय
मा मा ब्रूया वीर्यवती तथा स्याम् ॥ ३६ ॥
यमेवैष विद्याच्छुचिमप्रमत्तं
मेधाविनं ब्रह्मचर्योपपन्नम् ।
अस्मा इमामुपसन्नाय सम्यक्
परीक्ष्य दद्याद्वैष्णवीमात्मनिष्ठाम् ॥ ३७ ॥
अध्यापिता ये गुरुं नाद्रियन्ते
विप्रा वाचा मनसा कर्मणा वा ।
यथैव तेन न गुरुर्भोजनीय-
स्तथैव तदन्नं न भुनक्ति श्रुतं तत् ॥ ३८ ॥
गुरुरेव परो धर्मो गुरुरेव परा गतिः ।
एकाक्षरप्रदातारं यो गुरुं नाभिनन्दति ।
तस्य श्रुतं तपो ज्ञानं स्रवत्यामघटाम्बुवत् ॥ ३९ ॥
यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ।
स ब्रह्मवित् परं प्रेयादिति वेदानुशासनम् ॥ ४० ॥
इत्युपनिषत् ॥

एवं विष्णुलिङ्गद्वयपराङ्मुखं कुत्सयित्वाथ पूर्वोक्तविष्णुलिङ्गद्वयानुवर्तिनं कृतकृत्यतया स्तौति—अथेति । **स वशी** जितेन्द्रियो **भवति** । किं बहुना ? **स परं ब्रह्म** भगवन्तमाप्नोति । ब्राह्मणोक्तार्थं मन्त्रा अप्यनुवदन्तीत्याह—**शतमिति** । यद्ययं विद्वत्संन्यासी भवति, तदा स्वस्य शतपूर्वाः स्वोत्तरतस्त्रिशत-संतत्यन्ताः कृतार्था भवेयुरित्यर्थः । किंच—**त्रिशतपरानिति** । आतुरा-विद्वत्संन्यासतोऽपि तत्पित्रादयः सुकृतिनो भवेयुरिति निगमयति—**संन्यस्त-**

मिति। कृतार्थाधिष्ठितेयं निष्ठा वैष्णवी नानधिकारिणे वक्तव्या; सम्यक् चिरं परीक्ष्य संविदितसुशीलाय वक्तव्येत्याह—अथेति। स्वयमेतां निष्ठामनासाद्या-कृतार्थः सन्नन्यस्मै न ब्रूयात्। यदि स्वयं कृतार्थस्तदा नाननूचानायेत्यादि। इमां निष्ठां न ब्रूयादिति ब्राह्मणेनोक्तार्थं मन्त्राभ्यामप्युक्तमाहुरित्याह—इ स्मेति। ब्रह्मवादिन इति शेषः। किमिति—विद्याह वै इति। कस्मै वक्तव्येत्यत्र—यमिति। देशिकं ये न बहुमन्यन्ते, तद्भक्तगृहे यतयो भिक्षां न गृह्णीयुरित्याह—अध्यापिता इति। ये विप्राः यतयो येन गुरुणा प्रणवमहा-वाक्यादिकमध्यापिताः सन्तो मनोवाक्कायकर्मभिः स्वोपदेष्टारं गुरुं नाद्रियन्ते न बहुमन्यन्ते, हेलनं परिभवं वा कुर्वन्ति, यथैव तेन तैर्गुरुदूषकैः साकं श्रेयोऽर्थिभिः गृहिभिः न कदापि गुरुः भोजनीयः गुरुरपि तद्गृहे कदापि न भुङ्क्ते, तथैव तदन्नं तेषां गुरुदूषकभिक्षादायिनां निर्दुष्टानामपि तद्गृहेऽन्नमन्ये संप्रदायप्रवर्तकाः सद्यतयो न भुनक्ति शिष्येषु गुरुप्रसादावधि न भुनक्ति न भुञ्जते। "एकाक्षरप्रदातारं" इति मन्त्रेण श्रुतेत्थंप्रभाववान् गुरुः कीदृश इत्यत्र —गुरुरेवेति। "ओमित्येकाक्षरं परं ब्रह्म" इति श्रुतिसिद्धैकाक्षरप्रदातारम्। तत्पक्षीयाणामपि फलं समानमित्यर्थः। तद्विपरीतसच्छिष्यगुरुसेवापरमफलं दर्शयन्नुपसंहरति—यस्येति। यो विष्णोर्व्यक्ताव्यक्तलिङ्गदेशिकच्छन्दानुवर्ती स ब्रह्मविद् भूत्वा सर्वापह्नवसिद्धं परं ब्रह्म स्वमात्रमिति प्रकर्षेणेयात् प्राप्नुयात् इति यत्तद्वेदानुशासनं सर्ववेदान्तनिश्चितमित्यर्थः। इत्युपनिषच्छब्दः शाट्याय-नीयोपनिषत्समाप्त्यर्थः॥ ३२–४०॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
शाट्यायनीयोपनिषद्व्याख्यानं लिखितं लघु।
शाट्यायनीवृत्तिजातं चत्वारिंशाधिकं शतम्॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकोनशतसंख्यापूरकं शाट्यायनीयोपनिषद्विवरणं संपूर्णम्

---

# संन्यासोपनिषत्

## आप्यायन्तु—इति शान्तिः

### प्रथमोऽध्यायः

#### संन्यासविधिः

अथातः संन्यासोपनिषदं व्याख्यास्यामः। योऽनुक्रमेण संन्यस्यति स संन्यस्तो भवति। कोऽयं संन्यास उच्यते? कथं संन्यस्तो भवति? य आत्मानं क्रियाभिर्गुप्तं करोति मातरं पितरं भार्यां पुत्रान् बन्धूननुमोदयित्वा ये चास्यर्त्विजस्तान् सर्वांश्च पूर्ववद्वृणीत्वा वैश्वानरेष्टिं निर्वपेत्। सर्वस्वं दद्यात् यजमानस्य। गा ऋत्विजः। सर्वैः पात्रैः समारोप्य यदाहवनीये गार्हपत्ये वान्वाहार्यपचने सभ्यावसथ्ययोश्च प्राणापानव्यानोदानसमानान् सर्वान् सर्वेषु समापयेत्। सशिखान् केशान् विसृज्य यज्ञोपवीतं छित्त्वा पुत्रं दृष्ट्वा, त्वं ब्रह्मा त्वं यज्ञस्त्वं सर्वमित्यनुमन्त्रयेत्। यद्यपुत्रो भवत्यात्मानमेवेमं ध्यात्वानवेक्षमाणः प्राचीमुदीचीं वा दिशं प्रव्रजेत्। चतुर्षु वर्णेषु भैक्षचर्यं चरेत्। पाणिपात्रेणाशनं कुर्यादौषधवदशनमाचरेदौषधवदशनं प्राश्नीयाद्यथालाभमश्नीयात् प्राणसंधारणार्थं यथा मेदोवृद्धिर्न जायते। कृशीभूत्वा ग्रामैकरात्रम्, नगरे पञ्चरात्रम्, चतुरो

मासान् वार्षिकान् ग्रामे वापि नगरे वापि वसेत्। पक्षा वै मासा इति द्वौ मासौ वा वसेत्। विशीर्णवस्त्रं वल्कलं वा प्रतिगृह्णीयात्, नान्यत् प्रतिगृह्णीयात्, यद्यशक्तो भवति क्लेशतस्तप्यते तप इति। यो वा एवं क्रमेण संन्यस्यति, यो वा एवं पश्यति, किमस्य यज्ञोपवीतं कास्य शिखा कथं वास्योपस्पर्शनमिति। तं होवाच। इदमेवास्य यज्ञोपवीतं यदात्मध्यानम्, या विद्या सा शिखा, नीरैः सर्वत्रावस्थितैः कार्यं निर्वर्तयन्नुदरपात्रेण। जलतीरे निकेतनम्। अस्तमित आदित्ये कथं चास्योपस्पर्शनमिति। यथाहनि तथा रात्रौ नास्य नक्तं न दिवा। तदप्येतदृषिणोक्तम्। सकृद्दिवा हैवास्मै भवतीति। य एवं विद्वानेतेनात्मानं संधत्ते ॥ १ ॥

संन्यासोपनिषद्वेद्यं संन्यासिपटलाश्रयम्।
सत्तासामान्यविभवं स्वमात्रमिति भावये ॥

इह खलु सामवेदप्रविभक्तेयं संन्यासोपनिषत् कुटीचकादिषड्भेदधर्मप्रकटनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजृम्भते। अस्याः संक्षेपतो विवरणमारभ्यते। यथोक्ताधिकारसाधनसंपन्नानुपलभ्य श्रुतयः स्वयमेव संन्यासोपनिषदमुपन्यस्यन्तीत्याह—अथेति। अथशब्दः अधिकारिलाभानन्तर्यार्थः। यतः स्वातिरिक्तसामान्यसंन्यासं विना निष्प्रतियोगिकस्वमात्रज्ञानं नोदेति, अतः तदुपायतया श्रुतयो वयं संन्यासोपनिषदं व्याख्यास्यामः; विस्पष्टमाख्यास्यामः; वदाम इत्यर्थः। तत्प्रकारः कथमित्यत्र—य इति। ब्रह्मचर्यं समाप्य गृही भवेत् इत्यादि कुटीचको बहूदकत्वं प्राप्येत्यादि चानुक्रमेण य एषणात्रयं संन्यस्यति, स एव संन्यासी भवतीत्यर्थः। संन्यासं संन्यासिनं चाक्षिपति—क इति। स्वाशङ्कोत्तरं स्वयमेवाहुः—य इति। य आत्मानं वक्ष्यमाणक्रियाभिर्गुप्तं करोति। मात्राद्यनुमोदनादिवक्ष्यमाणविधिना संस्करोतीत्यर्थः।

तत् कथमित्यत्र—मातरं पितरं भार्यां पुत्रान् बन्धूननुमोदयित्वा संन्यासं कर्तुमिच्छामि भवद्भिराज्ञा देयेति। चरमेष्टिनिर्वपनार्थमृत्विग्वरणं कर्तव्यमित्याह—ये चेति। ये चास्यर्त्विजः सन्ति, तान् सर्वांश्च पूर्ववत् वृणीत्वा अथ तैः सह वैश्वानरेष्टिं निर्वपेत् इति। ततो यजमानस्य यावन्तः पुत्राः स्युः, तेषामात्मना सह स्वार्जितं धनं यथाविभागं विधाय, स्वभागप्राप्तसर्वस्वमृत्विग्भ्यो देयमित्याह—सर्वस्वमिति। यजमानस्य स्वस्य सर्वस्वं ऋत्विग्भ्यो यजमानः स्वयं दद्यादित्यर्थः। ततः किमित्यत्र यज्ञियपात्रतोऽग्निसमारोपणं कुर्यादित्याह—सर्वैरिति। ब्राह्मणादिजातिप्रविभक्तब्राह्मणाब्राह्मणादिचतुर्षु वर्णेषु भैक्षचर्यं चरेत्। यद्यशक्तो भवति, तदा शीतादिबाधाबाधकं वस्त्रं प्रतिगृह्णीयात्; नो चेत् शीतादिजन्यक्लेशतस्तप्यते तप इति। स्वोचितवस्त्रादिप्रतिग्रहे तु स्वाश्रमोचितं तपः सुखं तप्यत इत्यर्थः। तृषादिकार्यं निवर्तयन् नीरस्य सर्वत्र विद्यमानत्वात् तदाच्छा न कार्या; 'कामो मद उदपानम्' इति श्रुतेः। उदरपात्रेण यथालाभमश्नन् जलतीरे निकेतनमस्ति चेत् तत्र वस्तव्यमित्यर्थः। अस्तमित आदित्ये कथं वास्योपस्पर्शनमिति; रात्रौ जलाशयस्पर्शननिषेधात्। एवं चिदादित्यभावमापन्नस्य यथाहनि तथा रात्रौ। तदप्येतदृषिणा मन्त्रेण उक्तम्। किमिति। सकृद् दिवा हैवास्मै भवतीति। सदास्य दिवा भवतीत्यर्थः। इतिशब्दो मन्त्रपरिसमाप्त्यर्थः। य एवं विद्वानेतेनात्मानं संधत्ते यः संन्यासज्ञानयोगेनानुसंधानं करोति, स कृतकृत्यो भवतीत्यर्थः। शिष्टमारुणिकनारदादौ सम्यक् प्रपञ्चितमित्यर्थः॥ १॥

इति प्रथमोऽध्यायः

---

## द्वितीयोऽध्यायः

### संन्यासाधिकारी

चत्वारिंशत्संस्कारसंपन्नः सर्वतो विरक्तश्चित्तशुद्धिमेत्याशासूयेर्ष्याहंकारं दग्ध्वा साधनचतुष्टयसंपन्न एव संन्यस्तुमर्हति ॥ १ ॥

कः संन्यस्तुमर्हतीत्याकाङ्क्षायामादौ संन्यासाधिकारिणं निरूपयति—चत्वारिंशदिति । **साधनचतुष्टयसंपन्न एव संन्यस्तुमर्हतीत्येतत्** नारदपरिव्राजके व्याख्यातम् ॥ १ ॥

### पतितलक्षणम्

संन्यासे निश्चयं कृत्वा पुनर्न च करोति यः ।
स कुर्यात् कृच्छ्रमात्रं तु पुनः संन्यस्तुमर्हति ॥ २ ॥
संन्यासं पातयेद्यस्तु पतितं न्यासयेत्तु यः ।
संन्यासविघ्नकर्ता च त्रीनेतान् पतितान् विदुः ॥ ३ ॥

किंच संन्यासं करोमीति **संन्यासे निश्चयं कृत्वा यः** संन्यासमधिक्षिपति, पतितं न्यासयति, संन्यासविघ्नमाचरति, ते प्रत्यवायिनो भवन्तीत्याह—संन्यासमिति ॥ २, ३ ॥

### संन्यासानधिकारिणः

अथ षण्डः पतितोऽङ्गविकलः स्त्रैणो बधिरोऽर्भको मूकः पाषण्डश्चक्री लिङ्गी वैखानसहरद्विजौ भृतकाध्यापकः शिपिविष्टोऽनग्निको वैराग्यवन्तोऽप्येते न संन्यासार्हाः । संन्यस्ता यद्यपि महावाक्योपदेशे नाधिकारिणः ॥ ४ ॥

आरूढपतितापत्यं कुनखी श्यावदन्तकः ।
क्षयी तथाङ्गविकलो नैव संन्यस्तुमर्हति ॥ ५ ॥
संप्रत्यवसितानां च महापातकिनां तथा ।
व्रात्यानामभिशस्तानां संन्यासं नैव कारयेत् ॥ ६ ॥
व्रतयज्ञतपोदानहोमस्वाध्यायवर्जितम् ।
सत्यशौचपरिभ्रष्टं संन्यासं नैव कारयेत् ।
एते नार्हन्ति संन्यासमातुरेण विना क्रमम् ॥ ७ ॥

संन्यासानधिकारिणो निर्दिशति—अथेति । शिपिविष्टः विकसितशेफः ॥ ४–७ ॥

संन्यासस्वीकारप्रकारः

ओं भूः स्वाहेति शिखामुत्पाट्य यज्ञोपवितं बहिर्न निवसेत् । यशो बलं ज्ञानवैराग्यं मेधां प्रयच्छेति यज्ञोपवीतं छित्त्वा ओं स्वाहेत्यप्सु वस्त्रं कटिसूत्रं विसृज्य संन्यस्तं मयेति त्रिवारमभिमन्त्रयेत् ॥ ८ ॥

उक्तदोषरहिताः संन्यासाधिकारिणो भवन्तीत्यधिकारिनिर्णयानन्तरं तत्करणप्रकारमाह—ओमिति ॥ ८ ॥

संन्यस्तपुरुषस्तवः

संन्यासिनं द्विजं दृष्ट्वा स्थानाच्चलति भास्करः ।
एष मे मण्डलं भित्त्वा परं ब्रह्माधिगच्छति ॥ ९ ॥
षष्टिं कुलान्यतीतानि षष्टिमागामिकानि च ।
कुलान्युद्धरते प्राज्ञः संन्यस्तमिति यो वदेत् ॥ १० ॥

ये च संतानजा दोषा ये दोषा देहसंभवाः ।
प्रैषाग्निर्निर्दहेत् सर्वांस्तुषाग्निरिव काञ्चनम् ॥ ११ ॥

एवं विविवत् संन्यस्तपुरुषं ज्ञानाधिकारिणं स्तौति—संन्यासिनमिति । किंच—षष्ट्रिमिति । संतानजा दोषाः दुष्पुत्रसंजाताः ॥ ९–११ ॥

दण्डपरिग्रहः

सखा मा गोपायेति दण्डं परिग्रहेत् ॥ १२ ॥

यद्यातुरो जीवति तदा तेन यथोक्तलक्षणं दण्डादिकं स्वीकार्यमित्याह—सखा मा गोपायेति दण्डं परिग्रहेदिति ॥ १२ ॥

दण्डलक्षणम्

दण्डं तु वैणवं सौम्यं सत्वचं समपर्वकम् ।
पुण्यस्थलसमुत्पन्नं नानाकल्मषशोधितम् ॥ १३ ॥
अदग्धमहतं कीटैः पर्वग्रन्थिविराजितम् ।
नासादघ्नं शिरस्तुल्यं भ्रुवोर्वा बिभृयाद्यतिः ॥ १४ ॥
दण्डात्मनोस्तु संयोगः सर्वथा तु विधीयते ।
न दण्डेन विना गच्छेदिषुक्षेपत्रयं बुधः ॥ १५ ॥

दण्डलक्षणमाह—दण्डमिति ॥ १३–१५ ॥

कमण्डलुपरिग्रहः

जगज्जीवनं जीवनाधारभूतं माते मा मन्त्रयस्व सर्वदा सर्वसौम्येति कमण्डलुं परिगृह्य योगपट्टाभिषिक्तो भूत्वा यथासुखं विहरेत् ॥ १६ ॥

त्यज धर्ममधर्मं च उभे सत्यानृते त्यज।

उभे सत्यानृते त्यक्त्वा येन त्यजसि तत् त्यज ॥ १७ ॥

कमण्डलुं च परिगृह्य देशिकमुखात् प्रणवमहावाक्योपदेशं लब्ध्वा स्वाश्रमाचारपरो भूत्वा संशयादिपञ्चदोषशान्त्यन्तं वेदान्तश्रवणं कृत्वाथ योगपट्टाभिषिक्तो मुनिः गुर्वनुज्ञया यथासुखमाप्रारब्धं विहरेदित्याह—जगदिति। ततस्तेन धर्मादिकर्तव्याकर्तव्यबुद्धिस्त्याज्येत्याह—त्यजेति ॥ १६, १७ ॥

संन्यासिनां चातुर्विध्यम्

वैराग्यसंन्यासी ज्ञानसंन्यासी ज्ञानवैराग्यसंन्यासी कर्मसंन्यासी चेति चातुर्विध्यमुपागतः ॥ १८ ॥

संन्यासः कतिविधं इत्यत आह—वैराग्येति ॥ १८ ॥

वैराग्यसंन्यासी

तद्यथेति। दृष्टानुश्रविकविषयवैतृष्ण्यमेत्य प्राक्पुण्यकर्मवशात् संन्यस्तः, स वैराग्यसंन्यासी ॥ १९ ॥

दृष्टानुश्रविकविषयवैतृष्ण्यमेत्य इहामुत्रार्थभोगतृष्णाविरतिमेत्य ॥१९॥

ज्ञानसंन्यासी

शास्त्रज्ञानात् पापपुण्यलोकानुभवश्रवणात् प्रपञ्चोपरतो देहवासनां शास्त्रवासनां लोकवासनां च त्यक्त्वा वमनान्नमिव प्रवृत्तिं सर्वां हेयां मत्वा साधनचतुष्टयसंपन्नो यः संन्यस्यति, स एव ज्ञानसंन्यासी ॥ २० ॥

ज्ञानवैराग्यसंन्यासी

क्रमेण सर्वमभ्यस्य सर्वमनुभूय ज्ञानवैराग्याभ्यां स्वरूपानुसंधानेन देहमात्रावशिष्टः संन्यस्य जातरूपधरो भवति, स ज्ञानवैराग्यसंन्यासी ॥ २१ ॥

कर्मसंन्यासी

ब्रह्मचर्यं समाप्य गृही भूत्वा वानप्रस्थाश्रममेत्य वैराग्याभावेऽप्याश्रमक्रमानुसारेण यः संन्यस्यति, स कर्मसंन्यासी ॥ २२ ॥

षड्विधसंन्यासः

संन्यासः षड्विधो भवति कुटीचकबहूदकहंसपरमहंसतुरीयातीतावधूताश्चेति ॥ २३ ॥

कुटीचकः

कुटीचकः शिखायज्ञोपवीती दण्डकमण्डलुधरः कौपीनशाटीकन्थाधरः पितृमातृगुर्वाराधनपरः पिठरखनित्रशिक्यादिमात्रसाधनपर एकत्रान्नादनपरः श्वेतोर्ध्वपुण्ड्रधारी त्रिदण्डः ॥ २४ ॥

बहूदकः

बहूदकः शिखादिकन्थाधरस्त्रिपुण्ड्रधारी कुटीचकवत् सर्वसमो मधुकरवृत्त्याष्टकबलाशी ॥ २५ ॥

हंसः

हंसो जटाधारी त्रिपुण्ड्रोर्ध्वपुण्ड्रधार्यसंक्लृप्तमाधूकरान्नाशी कौपीनखण्डतुण्डधारी ॥ २६ ॥

परमहंसः

परमहंसः शिखायज्ञोपवीतरहितः पञ्चगृहेषु करपात्र्येककौपीनधारी शाटीमेकामेकं वैणवं दण्डमेकशाटीधरो वा भस्मोद्धूलनपरः सर्वत्यागी ॥ २७ ॥

तुरीयातीतः

तुरीयातीतो गोमुखवृत्त्या फलाहारी, अन्नाहारी चेद् गृहत्रये, देहमात्रावशिष्टो दिगम्बरः कुणपवच्छरीरवृत्तिकः ॥ २८ ॥

अवधूतः

अवधूतस्त्वनियमः पतिताभिशस्तवर्जनपूर्वकं सर्ववर्णेष्वजगरवृत्त्याहारपरः स्वरूपानुसंधानपरः ॥ २९ ॥

"वैराग्यसंन्यासी" इत्यारभ्य "स्वरूपानुसन्धानपरः" इत्यन्तं प्रायशो नारदपरिव्राजकोपनिषदि व्याख्यातम् ॥ १९–२९ ॥

प्रत्यग्ब्रह्मैक्यभावना

जगत् तावदिदं नाहं सवृक्षतृणपर्वतम् ।
यद् बाह्यं जडमत्यन्तं तत् स्यां कथमहं विभुः ।
कालेनाल्पेन विलयी देहो नाहमचेतनः ॥ ३० ॥

जडया कर्णशष्कुल्या कल्प्यमानक्षणस्थया ।
शून्याकृतिः शून्यभवः शब्दो नाहमचेतनः ॥ ३१ ॥

त्वचा क्षणविनाशिन्या प्राप्योऽप्राप्योऽयमन्यथा ।
चित्प्रसादोपलब्धात्मा स्पर्शो नाहमचेतनः ॥ ३२ ॥

लब्धात्मा जिह्वया तुच्छो लोलया लोलसत्तया ।
स्वल्पस्पन्दो द्रव्यनिष्ठो रसो नाहमचेतनः ॥ ३३ ॥
दृश्यदर्शनयोर्लीनं क्षयि क्षणविनाशिनोः ।
केवले द्रष्टरि क्षीणं रूपं नाहमचेतनः ॥ ३४ ॥
नासया गन्धजडया क्षयिण्या परिकल्पितः ।
पेलवोऽनियताकारो गन्धो नाहमचेतनः ॥ ३५ ॥
निर्ममोऽमननः शान्तो गतपञ्चेन्द्रियभ्रमः ।
शुद्धचेतन एवाहं कलाकलनवर्जितः ॥ ३६ ॥
चैत्यवर्जितचिन्मात्रमहमेषोऽवभासकः ।
सबाह्याभ्यन्तरे व्यापी निष्कलोऽहं निरञ्जनः ।
निर्विकल्पचिदाभास एक एवास्मि सर्वगः ॥ ३७ ॥
मयैव चेतनेनेमे सर्वे घटपटादयः ।
सूर्यान्ता अवभास्यन्ते दीपेनेवात्मतेजसा ॥ ३८ ॥
मयैवैताः स्फुरन्तीह विचित्रेन्द्रियपङ्क्तयः ।
तेजसान्तःप्रकाशेन यथाग्निकणपङ्क्तयः ॥ ३९ ॥
अनन्तानन्दसंभोगा परोपशमशालिनी ।
शुद्धेयं चिन्मयी दृष्टिर्जयत्यखिलदृष्टिषु ॥ ४० ॥
सर्वभावान्तरस्थाय चेत्यमुक्तचिदात्मने ।
प्रत्यक्चैतन्यरूपाय मह्यमेव नमो नमः ॥ ४१ ॥

कुटीचकादेः स्वरूपानुसंधानवृत्तिः केनोपायेन जायते? इत्यत्र संशयादिपञ्चदोषशान्त्यन्तमीशाद्यष्टोत्तरशतवेदान्तश्रवणं कृत्वा श्रुतार्थ-

मननतोऽनुसंधानाख्यनिदिध्यासनवृत्तिरुदेतीत्याह—जगदिति । जगत्प्रविभक्तदेहः शब्दादयो वा त्वमसीत्यत आह—कालेनेति । लोलसत्तया लोलमनोविशिष्टया । क्षयिण्या क्षयशीलया । अचेतनः; स्वातिरिक्तेन्द्रियेन्द्रियार्थवैरल्यात् । चिन्मयदृष्टावुदितायां प्रत्यग्ब्रह्मैक्यं भवतीत्याह—सर्वेति । पूर्वार्धस्तत्पदार्थः । उत्तरार्धप्रविभक्तद्वादशाक्षरस्त्वंपदार्थः । तदुपरि विद्यमानाक्षरचतुष्टयं तु असिपदार्थः; "नमस्त्वैक्यं प्रवदेत्" इति श्रुतेः ॥ ३०–४१ ॥

चितिशक्तिः तत्स्तुतिश्च

विचित्राः शक्तयः स्वच्छाः समा या निर्विकारया ।
चिता क्रियन्ते समया कलाकलनमुक्तया ॥ ४२ ॥
कालत्रयमुपेक्षित्र्या हीनायाश्चेत्यचन्धनैः ।
चितश्चेत्यमुपेक्षित्र्याः समतैवावशिष्यते ॥ ४३ ॥
सा हि वाचामगम्यत्वादसत्तामिव शाश्वतीम् ।
नैरात्म्यसिद्धान्तदशामुपयातेव शिष्यते ॥ ४४ ॥
ईहानीहामयैरन्तर्या चिदावलिता मलैः ।
सा चिन्नोत्पतितुं शक्ता पाशबद्धेव पक्षिणी ॥ ४५ ॥
इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन जन्तवः ।
धराविवरमग्नानां कीटानां समतां गताः ॥ ४६ ॥

चिद्विकल्पितं सर्वं चिदेवेत्याह—विचित्रा इति । उक्तविशेषणविशिष्टया चिता यतः पृथिव्यादिपञ्चभूतभौतिकगताः काठिन्यादिनानाविचित्रशक्तयो वर्तन्ते समा याः स्वात्मशक्तिमयाः क्रियन्ते "तत् सृष्ट्वा । सच्च त्यच्चाभवत्" इति श्रुतेः । चिद्विकल्पितकाठिन्यादिशक्तयश्चिदेवेत्यर्थः । कालत्रयकलनाकलितविचित्रशक्तीनां विषमरूपाणां चेत्यत्वेन विद्यमानत्वात् विचित्रशा हेतु-

श्चिदपि विषमा भवितुमर्हतीत्यत आह—कालेति। कालत्रयावच्छिन्ननानावैषम्यविशिष्टचेत्यपटलमस्तिनास्तीति विभ्रमापह्नवकलनामप्युपेक्षित्र्याश्रितः कुतो विषमप्रसक्तिः? किन्त्वचिदपह्नवसिद्धचितः समतैव निष्प्रतियोगिकमवशिष्यत इत्यर्थः। विषमवागगम्यचितः समता कुत इत्यत आह—सा हीति। "यतो वाचो निवर्तन्ते" इति श्रुत्यनुरोधेन यस्याश्चितेर्वाचामगम्यत्वात् या हि पुनश्चित् स्वाज्ञदशायां देहाद्यतिरेकेण शाश्वतीमसत्तामापन्नेव दृष्टा, या हि च पुनः स्वज्ञस्वाज्ञदृष्टिविकल्पितसप्रतियोगिकात्मानात्मकलना यस्मान्निर्गतापह्नवतां गता, स निरात्मा; तद्भावो नैरात्म्यम्।

"इदं चैतन्यमेवेति अहं चैतन्यमित्यपि।
यस्य प्रपञ्चभानं न ब्रह्माकारमपीह न॥"

इत्यादिश्रुत्यनुरोधेन निष्प्रतियोगिकब्रह्ममात्रतया स्थितिरेव नैरात्म्यसिद्धान्तदशेत्युच्यते। स्वाज्ञदृष्ट्या तु सा हि चित् नैरात्म्यसिद्धान्तदशां स्वरूपशून्यतामुपयातेव। न हि परमार्थदृष्टेस्तथा भवितुमर्हति; इवशब्दद्वयस्य परमार्थदृष्ट्यनुकूलत्वात्। एवं द्योत्यते हीवशब्दद्वयतः। स्वाज्ञादिदृष्टिमोहे सत्यसति निष्प्रतियोगिकं चिन्मात्रमवशिष्यत इत्यत्र—

"स्वाज्ञस्वज्ञदशायां यदेकरूपतया स्थितम्।
तद्धि नैरात्म्यसिद्धान्तसत्तासामान्यमुच्यते॥"

इति स्मृतेः। एवं निष्प्रतियोगिकचिन्मात्रमबुद्ध्वा ये स्वातिरिक्तेहानीहादिकलनाकलितं जगन्मात्रं मन्यन्ते, ते धराविवरनिमग्नकीटतुल्या भवन्तीत्याह—इहेति। निर्विशेषतया सा चित् नोत्पतितुं शक्त येषामेवं ते॥ ४२–४६॥

अभेदानुभवः

आत्मनेऽस्तु नमस्तुभ्यमविच्छिन्नचिदात्मने।
परामृष्टोऽस्मि बुद्धोऽस्मि प्रोदितोऽस्म्यचिरादहम्॥ ४७॥
उद्धृतोऽस्मि विकल्पेभ्यो योऽस्मि सोऽस्मि नमोऽस्तु ते।

तुभ्यं मह्यमनन्ताय तुभ्यं मह्यं चिदात्मने ॥ ४८ ॥
नमस्तुभ्यं परेशाय नमो मह्यं शिवाय च ।
तिष्ठन्नपि हि नासीनो गच्छन्नपि न गच्छति ।
शान्तोऽपि व्यवहारस्थः कुर्वन्नपि न लिप्यते ॥ ४९ ॥
सुलभश्चायमत्यन्तं सुज्ञेयश्चाप्तबन्धुवत् ।
शरीरपद्मकुहरे सर्वेषामेव षट्पदः ॥ ५० ॥
न मे भोगस्थितौ वाञ्छा न मे भोगविसर्जने ।
यदायाति तदायातु यत् प्रयाति प्रयातु तत् ॥ ५१ ॥
मनसा मनसि च्छिन्ने निरहंकारतां गते ।
भावेन गलिते भावे स्वस्थस्तिष्ठामि केवलः ॥ ५२ ॥
निर्भावं निरहंकारं निर्मनस्कं निरीहितम् ।
केवलस्पन्दशुद्धात्मन्येव तिष्ठति मे रिपुः ॥ ५३ ॥
तृष्णारज्जुगणं छित्त्वा मच्छरीरकपञ्जरात् ।
न जाने क्व गतोड्डीय निरहंकारपक्षिणी ॥ ५४ ॥
यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ।
यः समः सर्वभूतेषु जीवितं तस्य शोभते ॥ ५५ ॥
योऽन्तःशीतलया बुद्ध्या रागद्वेषविमुक्तया ।
साक्षिवत् पश्यतीदं हि जीवितं तस्य शोभते ॥ ५६ ॥
येन सम्यक् परिज्ञाय हेयोपादेयमुज्झता ।
चित्तस्यान्तेऽर्पितं चित्तं जीवितं तस्य शोभते ॥ ५७ ॥
ग्राह्यग्राहकसंबन्धे क्षीणे शान्तिरुदेत्यलम् ।

स्थितिमभ्यागता शान्तिर्मोक्षनाम्नाभिधीयते ॥ ५८ ॥
भृष्टबीजोपमा भूयो जन्माङ्कुरविवर्जिता ।
हृदि जीवद्विमुक्तानां शुद्धा भवति वासना ॥ ५९ ॥
पावनी परमोदारा शुद्धसत्त्वानुपातिनी ।
आत्मध्यानमयी नित्या सुषुप्तिस्थेव तिष्ठति ॥ ६० ॥
चेतनं चित्तरिक्तं हि प्रत्यक् चेतनमुच्यते ।
निर्मनस्कस्वभावत्वान्न तत्र कलनामलम् ॥ ६१ ॥
सा सत्यता सा शिवता सावस्था पारमार्थिकी ।
सर्वज्ञता सा संतृप्तिर्नतु यत्र मनः क्षतम् ॥ ६२ ॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि
निरस्तमननानन्दः संविन्मात्रपरोऽस्म्यहम् ॥ ६३ ॥
मलं संवेद्यमुत्सृज्य मनो निर्मूलयन् परम् ।
आशापाशानलं छित्त्वा संविन्मात्रपरोऽस्म्यहम् ॥ ६४ ॥
अशुभाशुभसंकल्पः संशान्तोऽस्मि निरामयः ।
नष्टेष्टानिष्टकलनः संविन्मात्रपरोऽस्म्यहम् ॥ ६५ ॥
आत्मतापरते त्यक्त्वा निर्विभागो जगत्स्थितौ ।
वज्रस्तम्भवदात्मानमवलम्ब्य स्थिरोऽस्म्यहम् ॥ ६६ ॥
निर्मलायां निराशायां स्वसंवित्तौ स्थितोऽस्म्यहम् ।
ईहितानीहितैर्मुक्तो हेयोपादेयवर्जितः ॥ ६७ ॥
कदान्तस्तोषमेष्यामि स्वप्रकाशपदे स्थितः ।
कदोपशान्तमननो धरणीधरकोटरे ॥ ६८ ॥
समेष्यामि शिलासाम्यं निर्विकल्पसमाधिना ।

निरंशध्यानविश्रान्तमूकस्य मम मस्तके ।
कदा तार्णं करिष्यन्ति कुलायं वनपत्त्रिणः ॥ ६९ ॥
संकल्पपादपं तृष्णालतं छित्त्वा मनोवनम् ।
विततां भुवमासाद्य विहरामि यथासुखम् ॥ ७० ॥
पदं तदनुयातोऽस्मि केवलोऽस्मि जयाम्यहम् ।
निर्वाणोऽस्मि निरीहोऽस्मि निरंशोऽस्मि निरीप्सितः ॥ ७१ ॥
स्वच्छतोर्जितता सत्ता हृद्यता सत्यता ज्ञता ।
आनन्दितोपशमता सदा प्रमुदितोदिता ।
पूर्णतोदारता सत्या कान्तिसत्ता सदेकता ॥ ७२ ॥
इत्येवं चिन्तयन् भिक्षुः स्वरूपस्थितिमञ्जसा ।
निर्विकल्पस्वरूपज्ञो निर्विकल्पो बभूव ह ॥ ७३ ॥

यत एवमविद्वांसो हीयन्ते, अतः प्रत्यगभिन्नं ब्रह्मास्मीति बोधेन निर्विकल्पकब्रह्माहमस्मीत्याह—आत्मन इति। एवं प्रत्यक्परचिदैक्यं ब्रह्म भवामीति परामृष्टोऽस्मि। एवं प्रत्यगभेदेन य आस्ते सोऽयं स्वाज्ञलोकवत् तिष्ठन्नपीति। यज्ज्ञानेन मुनिर्लिप्तो भवति सोऽयमात्मा ब्रह्माहमस्मीति ज्ञातुं सुलभः। स कुत्रासनमर्हतीत्यत्र—शरीरेति। एवमात्मानं जानतो न मे भोगस्थितौ वाञ्छा। कालकर्मसंयोगवशात् यदायाति तदायातु। एवं मनसा। पुरा स्वाज्ञदशायां स्वातिरिक्तं स्वरूपं शून्यमपि सत्यवदात्मनि प्रतिभातम्; इदानीं स्वज्ञदशायां तत् क्व गतम्? अहमेक एवावशिष्यामीत्याह—निर्भावमिति। विचार्यमाणपुरानुभूतस्वातिरिक्तं निर्भावम्; अवस्तुत्वात्। निरहंकारं देहाभावात्। निर्मनस्कं अमनस्कत्वात्। निरीहितम्; ईहनीयस्य मृग्यत्वात्। तथापि स्वातिरिक्तभ्रमः सत्यवत् केवलस्पन्दशुद्धात्मन्येव तिष्ठति मे रिपुः। स्थित इति भूतार्थे वर्तमानप्रयोगः छान्दसः। इदानीं श्रुत्याचार्य-

प्रसादतो निष्प्रतियोगिकब्रह्ममात्रज्ञाने जातेऽथ स्वातिरिक्तास्तित्वभ्रान्तितृष्णा-रज्जुगणं छित्त्वा। देहादौ नितरामहंकारममकारपक्षौ यस्याः स्वातिरिक्तभ्रान्तेः सेयं निरहंकारपक्षिणी क्व गता? अहमेक एवावशिष्य इत्यर्थः। यस्यैवं देहादावहंभावो नोदेति तज्जीवितं सफलमित्याह—यस्येति। शीतलया बुद्ध्या स्वातिरिक्ततापशून्यया। रागादौ सति धियस्तथात्वं कुत इत्यत्र—रागेति। चित्तस्यान्ते चित्तावसाने ब्रह्मणि। स्वातिरिक्तवृत्त्यनुद्भूतिरेव तन्मोक्ष इत्याह—ग्राह्येति। सर्वप्राणिनां वासनाविशिष्टत्वेन ग्राह्यादिशान्तिः कुत इत्यत्र शुद्धवासनावज्जीवन्मुक्तदृष्ट्या तच्छान्तिरुदेतीत्याह—भृष्टेति। ग्राह्यादिकलना-संभवं मन्यमाना शुद्धा भवति। यत्र चित्तं न संभवति तदेव चेतनमित्याह—चेतनमिति। यस्यां चिति असत्यं मनोन्मनीभावं भजति सा सन्मात्र-रूपिणीत्याह—सेति। मानसतानवे देहादिव्यापृतौ सत्यसति संविन्मात्रोऽस्मी-त्याह—प्रलपन्निति। निरस्तस्वातिरिक्तमननानन्दः विषयजातं उत्सृज्य। किंच—निर्मलायामिति। तार्णं तृणरचितम्। अचिन्मात्रापह्नवसिद्धचिन्मात्रस्य निष्प्रतियोगितैव स्वच्छतादिस्वमात्रमवशिष्यत इति ज्ञानान्निर्विकल्पब्रह्मैव भवती-त्याह—स्वच्छतेति। भिक्षुः स्वरूपस्थितिमञ्जसा प्राप्य। एवं सर्ववेदान्त-श्रवणमननिदिध्यासनप्रभवसम्यग्ज्ञानाप्तिसमकालमेव स्वातिरिक्तविकल्पापह्नव-सिद्धनिष्प्रतियोगिकनिर्विकल्पात्मना विद्वानवशिष्यत इति सर्ववेदान्तसिद्धान्त-संग्रहोऽर्थः ॥ ४७–७३ ॥

आतुरसंन्यासः, संन्यासिनां प्राप्यस्थानानि च

आतुरो जीवति चेत् क्रमसंन्यासः कर्तव्यः। न शूद्रस्त्री-पतितोदक्यासंभाषणम्। न यतेर्देवपूजा नोत्सवदर्शनम्। तस्मान्न संन्यासमेकलोकः। आतुरकुटीचकयोर्भूर्लोकभुवर्लोकौ। बहूदकस्य स्वर्ग-लोकः। हंसस्य तपोलोकः। परमहंसस्य सत्यलोकः। तुरीयातीतावधूतयोः स्वात्मन्येव कैवल्यं स्वरूपानुसंधानेन भ्रमरकीटन्यायवत्॥ ७४ ॥

आतुरो यदि जीवति तदा तेन किं कार्यमित्यत्राह—आतुर इति। क्रमसंन्यासमुपेयुषः परमहंसस्य चर्या कीदृशीत्यत आह—नेत्यादि। कुटीचकादिषण्णां समानमेव। तुरीयातीतादेः अयं विशेष इत्याह—न यतेरिति। यस्मादेवं तस्मात्। कुटीचकत्वादिसंन्यासभेदानुरोधेन तत्तज्ज्ञानानुरोधेन च तत्तत्प्राप्यलोकभेदोऽपि युज्यत इत्याह—आतुरेति। मुनिः ब्रह्म संपद्यत इत्यर्थः॥ ७४॥

संन्यासिभिः स्वरूपानुसंधानं विना नान्यत् किमपि कार्यम्

स्वरूपानुसंधानव्यतिरिक्तान्यशास्त्राभ्यास उष्ट्रकुङ्कुमभारवद्व्यर्थः। न योगशास्त्रप्रवृत्तिर्न सांख्यशास्त्राभ्यासो न मन्त्रतन्त्रव्यापारो नेतरशास्त्रप्रवृत्तिर्यतेरस्ति; अस्ति चेच्छवालंकारवत्। चर्मकारवत् विद्यादूरः। न परिव्राट् नामसंकीर्तनपरः। यद्यत् कर्म करोति तत्तत्फलमनुभवति। एरण्डतैलफेनवत् सर्वं परित्यजेत्। न देवताप्रसादग्रहणम्। न बाह्यदेवाभ्यर्चनं कुर्यात्॥ ७५॥

यत एवमतः स्वरूपानुसंधानव्यतिरिक्तान्यशास्त्राभ्यासैः तत्तत्सिद्धान्तानुरूपं फलमेति; न परमार्थफलं स्पृशति; "अधीत्य गौतमीं विद्यां सार्गालीं योनिमाप्नुयात्" इत्यादिकुत्सितजन्मश्रवणात्। अतः शास्त्रान्तराभ्यासस्तु उष्ट्रकुङ्कुमभारवत् व्यर्थः। यथा चर्मकारो विद्यादूरस्तथाऽयं परमार्थविद्यातत्फलविरलो भवतीत्यर्थः। एतन्नामाहमाश्रमान्तर इति परिव्राट् नामसंकीर्तनपर इत्यत्र

"नामगोत्रादिवरणं देशं कालं श्रुतं कुलम्।
वयो वृत्तं व्रतं शीलं ख्यापयेन्नैव सद्यतिः॥"

इति श्रुतेः। न ह्यस्य वाक्यस्य भगवन्नामनिषेधोऽर्थो भवितुमर्हति। तथाच श्रुतिस्मृती भवतः—

"एकाकी निःस्पृहस्तिष्ठेन्न हि केन सहालपेत्।
दद्यान्नारायणेत्येवं प्रतिवाक्यं सदा यतिः॥"

इति,

"सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥"

इति च । किंच भगवन्नामस्मृतिविरतौ प्रत्यवायश्रवणाच्च,

"निवृत्ततर्षैरुपगीयमानाद् भवौषधाच्छ्रोत्रमनोभिरामात् ।
क उत्तमश्लोकगुणानुवादात् पुमान् विरज्येत विना पशुघ्नात् ॥"

इति । भगवन्नाम्नः प्रत्यगभिन्नब्रह्मार्थत्वात् यतिभिर्विशेषतः सदानुसंधेयमित्यत्र—

"राशब्दस्त्वीशवाची स्यान्मशब्दो जीववाचकः ।
तयोरैक्यं परं ब्रह्म राम इत्यभिधीयते ॥"

इत्यादिश्रुतेः ;

"स्वान्यश्रयपह्नवात् सिद्धा या मुक्तिश्रीर्विजृम्भते ।
तद्रूपतो राजमानं महः श्रीराम ईरितम् ॥"

इति नामार्थविवेकोक्तेश्च । इत्थंभूतब्रह्मनिष्ठां विना यद्यत् कर्म करोति, तत्तत्फलमनुभवति एरण्डतैलफेनवत् । अतः सर्वं परित्यजेत् । इहामुत्रभोगसाधनेच्छयात्युग्रं तपः कृत्वा तदनुकूलेन न देवताप्रसादग्रहणं कार्यमित्यर्थः । निष्कामबुद्ध्यानुष्ठिततपसोऽनन्तफलत्वात् न बाह्यदेवार्चनं कुर्यात् । यत् प्रत्यगभिन्नब्रह्मबाह्यम ; प्रत्यगभिन्नं ब्रह्म यत्र नावाह्यते तद्बाह्यदेवार्चनम् । तत् कदापि न कुर्यात् ; "सोऽहंभावेन पूजयेत्" इति श्रुतेः ॥ ७५ ॥

तेषां चर्यादिकम्

स्वव्यतिरिक्तं सर्वं त्यक्त्वा मधुकरवृत्त्याहारमाहरन् कृशो भूत्वा मेदोवृद्धिमकुर्वन् विहरेत् । माधूकरेण करपात्रेणास्यपात्रेण वा कालं नयेत् ॥ ७६ ॥

आत्मसंमितमाहारमाहरेदात्मवान् यतिः ।
आहारस्य च भागौ द्वौ तृतीयमुदकस्य च ।

वायोः संचरणार्थाय चतुर्थमवशेषयेत् ॥ ७७ ॥
भैक्षेण वर्तयेन्नित्यं नैकान्नाशी भवेत् क्वचित् ।
निरीक्षन्ते त्वनुद्विग्नास्तद्गृहं यत्नतो व्रजेत् ॥ ७८ ॥
पञ्चसप्तगृहाणां तु भिक्षामिच्छेत् क्रियावताम् ।
गोदोहमात्रमाकाङ्क्षेन्निष्क्रान्तो न पुनर्व्रजेत् ॥ ७९ ॥
भक्ताद्वरश्चोपवास उपवासादयाचितः ।
अयाचिताद्वरं भैक्षं तस्माद्भैक्षेण वर्तयेत् ॥ ८० ॥
नैव सव्यापसव्येन भिक्षाकाले विशेद् गृहान् ।
नातिक्रामेद् गृहं मोहाद्यत्र दोषो न विद्यते ॥ ८१ ॥
श्रोत्रियान्नं न भिक्षेत श्रद्धाभक्तिबहिष्कृतम् ।
व्रात्यस्यापि गृहे भिक्षेच्छ्रद्धाभक्तिपुरस्कृते ॥ ८२ ॥
माधूकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् ।
तात्कालिकं चोपपन्नं भैक्षं पञ्चविधं स्मृतम् ॥ ८३ ॥
मनःसंकल्परहितांस्त्रीन् गृहान् पञ्च सप्त वा ।
मधुमक्षिकवत् कृत्वा माधूकरमिति स्मृतम् ॥ ८४ ॥
प्रातःकाले च पूर्वेद्युर्यद्भक्तैः प्रार्थितं मुहुः ।
तद्भैक्षं प्राक्प्रणीतं स्यात् स्थितिं कुर्यात् तथापि च ॥ ८५ ॥
भिक्षाटनसमुद्योगाद्येन केन निमन्त्रितम् ।
अयाचितं तु तद्भैक्षं भोक्तव्यं च मुमुक्षुभिः ॥ ८६ ॥
उपस्थानेन यत् प्रोक्तं भिक्षार्थं ब्राह्मणेन तत् ।
तात्कालिकमिति ख्यातं भोक्तव्यं यतिभिस्तदा ॥ ८७ ॥

सिद्धमन्नं यदा नीतं ब्राह्मणेन मठं प्रति ।
उपपन्नमिति प्राहुर्मुनयो मोक्षकाङ्क्षिणः ॥ ८८ ॥
चरेन्माधूकरं भैक्षं यतिर्म्लेच्छकुलादपि ।
एकान्नं न तु भुञ्जीत बृहस्पतिसमादपि ।
याचितायाचिताभ्यां च भिक्षाभ्यां कल्पयेत् स्थितिम् ॥ ८९ ॥
न वायुः स्पर्शदोषेण नाग्निर्दहनकर्मणा ।
नापो मूत्रपुरीषाभ्यां नान्नदोषेण मस्करी ॥ ९० ॥
विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने ।
कालेऽपराह्णे भूयिष्ठे भिक्षाचरणमाचरेत् ॥ ९१ ॥
अभिशस्तं च पतितं पाषण्डं देवपूजकम् ।
वर्जयित्वा चरेद् भैक्षं, सर्ववर्णेषु चापदि ॥ ९२ ॥
घृतं श्वमूत्रसदृशं मधु स्यात् सुरया समम् ।
तैलं सूकरमूत्रं स्यात् सूपं लशुनसंमितम् ॥ ९३ ॥
माषापूपादि गोमांसं क्षीरं मूत्रसमं भवेत् ।
तस्मात् सर्वप्रयत्नेन घृतादीन् वर्जयेद्यतिः ॥ ९४ ॥
घृतसूपादिसंयुक्तमन्नं नाद्यात् कदाचन ।
पाणिपात्रश्चरन् योगी नासकृद् भैक्षमाचरेत् ॥ ९५ ॥
आस्येन तु यदाहारं गोवन्मृगयते मुनिः ।
तदा समः स्यात् सर्वेषु सोऽमृतत्वाय कल्पते ॥ ९६ ॥

माधूकरेणेत्युक्तार्थं श्रुतिरेव व्याकरोति—आत्मेति । भिक्षानियममाह—निरीक्षन्त इति । भिक्षां दत्त्वैव भोक्तव्यमिति ये निरीक्षन्ते । यथावच्छ्रुति-

स्मृत्युक्तसंस्काररहितो व्रात्यः। भिक्षां पञ्चधा विभज्य तत्रैकेन स्थितिं नयेदित्याह—**माधूकरमिति**। तत्र माधूकरलक्षणमाह—**मन इति**। प्राक्प्रणीतलक्षणमाह—**प्रातरिति**। अयाचितलक्षणमाह—**भिक्षेति**। तात्कालिकलक्षणमाह—**उपस्थानेनेति**। उपपन्नलक्षणमाह—**सिद्धमिति**। एकान्नापेक्षया भिन्नजातिमाधूकरं श्रेष्ठमेवेत्याह—**चरेदिति**। यतीनामन्नदोषो नास्तीत्यत्रोपपत्तिमाह—**नेति**। भिक्षाविधिः ग्रामैकरात्राटनयतिविषयः। यतिरिदं मे स्यादिति इच्छापूर्वकं घृतादीन्नाश्नीयादित्याह—**घृतमिति**। करोदरपात्रलक्षणमाह—**पाणीति** ॥ ७६–९६ ॥

यतीनां वर्ज्यानि

आज्यं रुधिरमिव त्यजेदेकत्रान्नं पललमिव गन्धलेपनमशुद्धलेपनमिव क्षारमन्त्यजमिव वस्त्रमुच्छिष्टपात्रमिवाभ्यङ्गं स्त्रीसङ्गमिव मित्राह्लादकं मूत्रमिव स्पृहां गोमांसमिव ज्ञातचरदेशं चण्डालवाटिकामिव स्त्रियमहिमिव सुवर्णं कालकूटमिव सभास्थलं श्मशानस्थलमिव राजधानीं कुम्भीपाकमिव शवपिण्डवदेकत्रान्नम्। न देवतार्चनम्। प्रपञ्चवृत्तिं परित्यज्य जीवन्मुक्तो भवेत् ॥ ९७ ॥

मन्त्रोक्तार्थं ब्राह्मणोऽप्यनुवदति—**आज्यमिति**। ब्रह्मातिरेकेणाज्यादिकं नास्ति; ब्रह्मैव सर्वमिति सर्वात्मभावारूढो मुनिः जीवन्मुक्तो भवतीत्यर्थः ॥९७॥

षट् यतिपातकानि ; पातित्ये दोषनिरूपणं च

आसनं पात्रलोपश्च संचयः शिष्यसंचयः।
दिवा स्वापो वृथालापो यतीनां पातकानि षट् ॥ ९८ ॥
वर्षाभ्योऽन्यत्र यत् स्थानमासनं तदुदाहृतम्।
उक्तालाब्वादिपात्राणामेकस्यापीह संग्रहः ॥ ९९ ॥

यतेः संव्यवहाराय पात्रलोपः स उच्यते ।
गृहीतस्य तु दण्डादेर्द्वितीयस्य परिग्रहः ॥ १०० ॥
कालान्तरोपभोगार्थं संचयः परिकीर्तितः ।
शुश्रूषालाभपूजार्थं यशोऽर्थं वा परिग्रहः ॥ १०१ ॥
शिष्याणां न तु कारुण्याच्छिष्यसंग्रह ईरितः ।
विद्या दिवा प्रकाशत्वादविद्या रात्रिरुच्यते ॥ १०२ ॥
विद्याभ्यासे प्रमादो यः स दिवा स्वाप उच्यते ।
आध्यात्मिकीं कथां मुक्त्वा भिक्षावार्त्तां विना तथा ।
अनुग्रहं परिप्रश्नं वृथाजल्पोऽन्य उच्यते ॥ १०३ ॥
एकान्नं मदमात्सर्यं गन्धपुष्पविभूषणम् ।
ताम्बूलाभ्यञ्जने क्रीडा भोगाकाङ्क्षा रसायनम् ॥ १०४ ॥
कत्थनं कुत्सनं स्वस्ति ज्योतिश्च क्रयविक्रयम् ।
क्रिया कर्मविवादश्च गुरुशास्त्रविलङ्घनम् ॥ १०५ ॥
संधिश्च विग्रहो यानं मञ्चकं शुक्लवस्त्रकम् ।
शुक्लोत्सर्गो दिवा स्वापो भिक्षाधारस्तु तैजसम् ॥ १०६ ॥
विषं चैवायुधं बीजं हिंसां तैक्ष्ण्यं च मैथुनम् ।
त्यक्तं संन्यासयोगेन गृहधर्मादिकं व्रतम् ॥ १०७ ॥
गोत्रादि चरणं सर्वं पितृमातृकुलं धनम् ।
प्रतिषिद्धानि चैतानि सेवमानो व्रजेदधः ॥ १०८ ॥
सुजीर्णोऽपि सुजीर्णासु विद्वान् स्त्रीषु न विश्वसेत् ।
सुजीर्णास्वपि कन्थासु सज्जते जीर्णमम्बरम् ॥ १०९ ॥

स्थावरं जङ्गमं बीजं तैजसं विषमायुधम् ।
षडेतानि न गृह्णीयाद्यतिर्मूत्रपुरीषवत् ॥ ११० ॥
नैवाददीत पाथेयं यतिः किंचिदनापदि ।
पक्कमापत्सु गृह्णीयाद्यावदन्नं न लभ्यते ॥ १११ ॥
नीरुजश्च युवा चैव भिक्षुर्नावसथे वसेत् ।
परार्थं न प्रतिग्राह्यं न दद्याच्च कथंचन ॥ ११२ ॥
दैन्यभावात्तु भूतानां सौभगाय यतिश्चरेत् ।
पक्कं वा यदि वापक्कं याचमानो व्रजेदधः ॥ ११३ ॥
अन्नदानपरो भिक्षुर्वस्त्रादीनां प्रतिग्रही ।
आविकं वानाविकं वा तथा पट्टपटानपि ॥ ११४ ॥
प्रतिगृह्य यतिश्चैतान् पतत्येव न संशयः ।
अद्वैतं नावमाश्रित्य जीवन्मुक्तत्वमाप्नुयात् ॥ ११५ ॥
वाग्दण्डे मौनमातिष्ठेत् कायदण्डे त्वभोजनम् ।
मानसे तु कृते दण्डे प्राणायामो विधीयते ॥ ११६ ॥
कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ।
तस्मात् कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ ११७ ॥
रथ्यायां बहुवस्त्राणि भिक्षा सर्वत्र लभ्यते ।
भूमिः शय्यास्ति विस्तीर्णा यतयः केन दुःखिताः ॥ ११८ ॥
प्रपञ्चमखिलं यस्तु ज्ञानाग्नौ जुहुयाद्यतिः ।
आत्मन्यग्नीन् समारोप्य सोऽग्निहोत्री महायतिः ॥ ११९ ॥

प्रवृत्तिर्द्विविधा प्रोक्ता मार्जारी चैव वानरी ।
ज्ञानाभ्यासवतामोतुर्वानरी भाक्तमेव च ॥ १२० ॥
नापृष्टः कस्यचिद् ब्रूयान्न चान्यायेन पृच्छतः ।
जानन्नपि हि मेधावी जडवल्लोक आचरेत् ॥ १२१ ॥
सर्वेषामेव पापानां संघाते समुपस्थिते ।
तारं द्वादशसाहस्रमभ्यसेच्छेदनं हि तत् ॥ १२२ ॥
यस्तु द्वादशसाहस्रं प्रणवं जपतेऽन्वहम् ।
तस्य द्वादशभिर्मासैः परं ब्रह्म प्रकाशते ॥ १२३ ॥
इत्युपनिषत् ॥

मुनेरपीदमासनादिषट्कं बन्धकं भवतीत्याह—आसनमिति । स्वकृतसूत्रार्थं श्रुतिः स्वयमेव व्याचष्टे—वर्षाभ्य इति । एकान्नादिप्रतिषिद्धधर्माचरणफलमाह—एकान्नमिति । स्वस्ति प्रियवाक्यम् । ज्योतिश्च दैवज्ञत्वम् । एतत् सर्वम् । त्यक्तम् एकान्नादि निषिद्धाचरणम् । कदापि स्त्रियं वीक्ष्य तया सह रहसि न संवदेदित्यत्रोपपत्तिमाह—सुजीर्णोऽपीति । केदारभृत्यबीजसुवर्णविषायुधपरिग्रहं कदापि न कार्यमित्याह—स्थावरमिति । अनापदि पाथेयं न ग्राह्यमित्याह—नैवेति । पुनर्यतेर्हेयोपादेयावाह—नीरुजश्चेत्यादि । आवसथे संसारिगृहे । धार्ष्ट्यभावं विहाय यस्तिष्ठति स्वस्मिन्, दीनोऽयं साधुरित्यनुकम्पा भक्तिः श्रद्धा वा भूतानां यथा भवेत् तथा दैन्यभावात् साधुभावात् यतिर्भूतानां सौभगाय श्रेयसे चरेत् । कदाप्युद्वेजनं न कुर्यादित्यर्थः । यद्वा भूतानां दैन्यभावात् तेष्वार्तत्वमवगम्य तच्छ्रेयसे यतिश्चरेदित्यर्थः । कदापि स्वदेहधारणमात्रेतरप्रतिग्रहं दानं वा न कुर्यादित्याह—पक्वमिति । द्वैतनदीमद्वैतनौकया तीर्त्वा तत्पारब्रह्मभावमेत्य जीवन्मुक्तो भवेदित्याह—अद्वैतमिति । वाङ्मनःकायवृत्तौ सत्यां जीवन्मुक्तता कुत इत्यत्र तन्निग्रहोपायामाह—वागिति । बन्धहेतुः कर्मेति विदित्वा कर्मसंन्यासं कुर्वन्तीत्याह—कर्मणेति ।

यस्मादेवं तस्मात्। यतीनां दुःखाभावमाह—**रथ्यायामिति**। निरग्नेरप्यग्निहोत्रित्वमाह—**प्रपञ्चमिति**। परापरब्रह्मविषयकप्रवृत्तिः द्विधा भिद्यत इत्याह—**प्रवृत्तिरिति**। ज्ञानाभ्यासवतां निर्विशेषब्रह्ममात्रज्ञानिनाम्। ज्ञानसमकालस्वभावापत्तिदृष्टान्तोऽयम्—**ओतुः** बिडालः; तस्य क्षणध्यानमात्रतो लक्ष्यग्रासत्वात्। अपरब्रह्मविषया प्रवृत्तिस्तु **वानरी भाक्तमेव च**; मर्कटमुष्टिन्यायेन क्रमेण कार्यसाधिका भवतीत्यर्थः। विद्वान् जडवल्लोक आचरेदित्याह—**नेति**। पापराशौ सति विद्वत्ता कुत इत्यत्र प्रणवनिष्ठाग्निना पापकुलपर्वते भस्मावशेषितेऽथ विद्वान् भूत्वा ब्रह्ममात्रपर्यवसन्नो भवतीति शास्त्रमुपसंहरति—**सर्वेषामिति**। अर्थानुसंधानपूर्वकं **तारं द्वादशसाहस्रमभ्यसेत्**। तस्य **द्वादशभिर्मासैः** चित्तशुद्धिप्राप्यज्ञानद्वारा **परं ब्रह्म** स्वावशेषधिया **प्रकाशत इति**। द्वादशसहस्रप्रणवजपतश्चित्तशुद्धिरुदेति। ततः श्रुत्याचार्यप्रसादलब्धज्ञानं भवति। निर्विशेषसम्यग्ज्ञानसमकालं विद्वान् कृतकृत्यो भवतीत्यर्थः। **इत्युपनिषच्छब्दः** संन्यासोपनिषत्समाप्त्यर्थः॥ ९८–१२३॥

इति द्वितीयोऽध्यायः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
संन्यासोपनिषद्व्याख्या लिखिता ब्रह्मगोचरा।
संन्यासोपनिषद्व्याख्याग्रन्थस्तु द्विशतं स्मृतः॥

**इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चषष्टिसंख्यापूरकं संन्यासोपनिषद्विवरणं संपूर्णम्**

———

# INDEX OF NAMES OF ṚṢI-S, ETC.

## उपनिषदुदाहृतऋष्यादिनामानि

*The Adyar Library Series—No. 10*

GENERAL EDITOR :
G. SRINIVASA MURTI, B.A., B.L., M.B. & C.M., VAIDYARATNA
*Director, Adyar Library*

# THE S'ĀKTA UPANIṢADS

WITH THE COMMENTARY OF

## S'RĪ UPANIṢADBRAHMAYOGIN

# THE S'ĀKTA UPANIṢADS

WITH THE COMMENTARY OF

S'RĪ UPANIṢAD-BRAHMA-YOGIN

EDITED BY

PANDIT A. MAHADEVA SASTRI, B.A.

*Director, Adyar Library*

THE ADYAR LIBRARY

1950

अष्टोत्तरशतोपनिषत्सु

# शाक्त-उपनिषदः

## श्री उपनिषद्ब्रह्मयोगिविरचितव्याख्यायुताः

अडयार्-पुस्तकालयाध्यक्षेण

अ. महादेवशास्त्रिणा

सम्पादिताः

अडयार्-पुस्तकालयार्थे

प्रकटीकृताश्च

१९५०

ॐ नमो
ब्रह्मादिभ्यो
ब्रह्मविद्यासंप्रदायकर्तृभ्यो
वंशऋषिभ्यो
नमो गुरुभ्यः

DEDICATED TO
Brahma and the Rishis,
The Great Teachers
Who handed down Brahmavidya
through Generations

# PREFACE

THE first edition of the S'ĀKTA UPANIṢADS was issued by the then Director of the Adyar Library, Pandit A. Mahadeva Sastri in 1925. It went out of print in 1948. The demand for copies of the work showed steady increase, and the present edition is now issued to meet the demand. This is only a reprint of the first edition.

*Adyar Library*
17-4-1950

G. SRINIVASA MURTI,
*Hony. Director*

---

# EDITOR'S NOTE TO THE FIRST EDITION

THE materials on which is based this edition of the S'ĀKTA-UPANIṢADS comprised in this volume are the same as those described in the volume of *The Yoga Upaniṣads.*

*5th November, 1925*

A. MAHADEVA SASTRI

---

# अस्मिन् सम्पुटे अन्तर्गतानामुपनिषदां सूची

# विषयसूचिका

पृष्ठसंख्या

## १. त्रिपुरोपनिषत्



## २. त्रिपुरातापिन्युपनिषत्

प्रथमोपनिषत्

## ३. देव्युपनिषत्

पुटसंख्या

## ४. बह्वृचोपनिषत्



## ५. भावनोपनिषत्



## ६. सरस्वतीरहस्योपनिषत्

## ७. सीतोपनिषत्

## ८. सौभाग्यलक्ष्म्युपनिषत्

प्रथमः खण्डः



द्वितीयः खण्डः

# त्रिपुरोपनिषत्

**वाङ्मे मनसि—इति शान्तिः**

चिच्छक्तिस्वरूपम्

तिस्रः पुरस्त्रिपथा विश्वचर्षणा अत्राकथा अक्षराः संनिविष्टाः ।
अधिष्ठायैना अजरा पुराणी महत्तरा महिमा देवतानाम् ॥ १ ॥
नवयोनिं नव चक्राणि दीधिरे नवैव योगा नव योगिन्यश्च ।
नवानां चक्रा अधिनाथाः स्योना नव भद्रा नव मुद्रा महीनाम् ॥ २ ॥

त्रिपुरोपनिषद्वेद्यपारमैश्वर्यवैभवम् ।
अखण्डानन्दसाम्राज्यरामचन्द्रपदं भजे ॥

इह खलु ऋग्वेदप्रविभक्तेयं त्रिपुरोपनिषत् श्रीविद्येयत्ताप्रकटनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः संक्षेपतो विवरणमारभ्यते । उत्तमाधिकारिण उपलभ्य तेषां चित्तशुद्धिप्राप्यज्ञानद्वारा परमपुरुषार्थसिद्धये श्रुतिरवान्तररूपेण प्रवृत्तेत्याह—तिस्र इति । या स्वाज्ञदृष्टिविकल्पिता व्यष्टिसमष्टिभिदाजुष्टस्थूलसूक्ष्मकारणतनव एव तिस्रः पुरः सन्ति, ये देवयानपितृयानादिभेदेन कर्मोपासनाज्ञानकाण्डभेदेन ज्ञानविज्ञानसम्यग्ज्ञानभेदेन वा विश्वेन व्यावहारिकजीवेन चर्षणा

विकल्पिता ये त्रिपथाः त्रयः पन्थानः सन्ति, किंच "अकथादि श्रीपीठ" इत्यादिश्रुत्यनुरोधेन अत्र श्रीचक्रे अकथाद्यक्षराः सन्निविष्टा यान्यकारादिक्षकारान्तान्यक्षराणि सन्निविष्टानि सन्निवेशितानि सन्ति, ता एनाः पुरश्च एनान् पथश्च एतान्यक्षराणि च जीवेशप्रत्यक्परात्मना अधिष्ठाय ब्रह्मादिदेवतानामपि महिमा सृष्ट्यादिसामर्थ्यरूपिणी स्थूलादिशरीरत्रयवैलक्षण्यात् अजरा सत्तासामान्यातिद्वारीभूतचित्सामान्यरूपत्वात् महत्तरा काचन पुराणी चिरन्तना चिच्छक्तिर्विजयते ॥ १ ॥ सेयं चिच्छक्तिः कीदृशीत्यत आह—नवयोनिमिति। यामाश्रित्य नवयोनिं नवयोनयः महात्रिपुरसुन्दर्यादिशक्तयः सर्वानन्दमयादिनवचक्राणि च यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिसहजयोगभेदेन नवैव योगाश्च तथा नवचक्रवासिन्यः नवयोगिन्यश्च दीधिरे प्रकाशन्ते नवानां महीनां देवताऽऽधारभूमीनां चक्राधिनाथाः स्योनाः द्वारपालिन्यश्च कामेश्वर्यादिभद्राश्च योन्यादिनवमुद्राश्च ॥ २ ॥

चिच्छक्तिं प्रति प्रार्थना

एका स आसीत् प्रथमा सा नवासीदा सोनविंशादा सोनत्रिंशात्।
चत्वारिंशादथ तिस्रः [1]समिधा उशतीरिव मातरो माऽऽविशन्तु ॥
[2]ऊर्ध्वज्वलनं ज्योतिरग्रे तमो वै तिरश्चीनमजरं तद्रजोऽभूत्।
आनन्दनं मोदनं ज्योतिरिन्दोरेता उ वै मण्डला मण्डयन्ति ॥ ४ ॥

यामाश्रित्य सदा दीधिरे सेयं प्रथमा प्रधाना एकैवासीत्। नवभद्रादयस्तद्भिन्ना इत्यत आह—सेति। सैव नवभद्रादयः आसीत् ज्ञानकर्माक्षप्राणपञ्चकान्तःकरणचतुष्टयभेदेन एकोनविंशात् तत्त्वग्रामात् याः शक्तयो निष्पन्नास्तत्स्वरूपेणापीयमेवास। किंच कर्मज्ञानाक्षप्राणपञ्चकान्तःकरणचतुष्टयविषय-

समिद्ध—अ २.
ऊर्ध्वज्वलज्ज्वलन—सु, उ. ऊर्ध्वज्वलन् ज्वलनं—उ १.

जातपञ्चभूतोपप्राणभेदेन **एकोनत्रिंश**त्तत्वग्रामात् याः शक्तयो निष्पन्नास्तद्रूपेणापी-यमेवास। किंच चतुर्दशाक्षाधीशतूलामूलाविद्याकर्मत्रयविक्षेपावरणमुदितादिगुण-चतुष्टयविश्वविश्वादितुर्यप्राज्ञान्तभेदेन **चत्वारिंश**च्छक्तयो या विद्यन्ते तद्रूपेणापी-यमेवासेत्यर्थः। **सम्यगिद्धाः समिधाः** क्रियाज्ञानेच्छाऽऽत्मकज्ञानविज्ञानसम्य-ग्ज्ञानशक्तयः **तिस्रः** स्वस्वसुतान् प्रति **उशतीः** उशत्यः स्वात्मजक्षेमकामिन्यः **मातर इव मा** मां ब्रह्मपदवीमात्तुमुद्युक्तं **आविशन्तु** अजडक्रियाज्ञानेच्छाशक्तयो मां प्रविशन्त्वित्यर्थः॥ ३॥ किंच—ऊर्ध्वेति। "अथ तत ऊर्ध्व उदेता", "अथ यदतः परो दिवो ज्योतिर्दीप्यते," "ज्योतिर्ज्वलति ब्रह्माहमस्मि" इति श्रुत्यनुरोधेन पराक्प्रपञ्चेन्धनमाश्रित्य तत ऊर्ध्वं ज्वलतीति **ऊर्ध्वज्वलनं** प्रत्यग्**ज्योतिः अग्रे** पराग्वृत्त्युदयात् पूर्वमेव सदा मेऽभूत् तद्वैपरीत्येन **तिरश्चीनं** पराग्रूपं **तमः रजः** सत्त्वं च स्वात्तपराग्भावमुत्सृज्य अजरं ब्रह्म **अभूत्**। एवं ग्रसित्वा अहं ब्रह्मास्मीति प्रत्यगभिन्नब्रह्मभावेन आ समन्तान्नन्दति स्वातिरिक्तं न किंचिदस्तीति मोदत इति **आनन्दनं मोदनं ज्योतिः** स्वातिरिक्तध्वान्तग्रास-प्रत्यगभिन्नपरमात्म—**इन्दोः** यद्विजयते न हि तदतिरिक्तमस्ति तदेवाहमस्मीति या **वै** खण्डमण्डलाकाराखण्डसविकल्पनिर्विकल्पवृत्तय **एता मण्डयन्ति** मां ब्रह्म-भावापन्नमलंकुर्वन्ति ता अपि ब्रह्मणि विलीयन्ते। ततः परमात्मा निष्प्रति-योगिकाद्वैतरूपेणावशिष्यत इत्यर्थः॥ ४॥

### कामेश्वरस्वरूपम्

**यास्तिस्रो रेखाः सदनानि भूस्त्रीस्त्रिविष्टपास्त्रिगुणास्त्रि[1]प्रकाराः।**
**एतत्त्रयं पूरकं पूरकाणां [2]मन्त्रप्रतते मदनो मदन्या॥ ५॥**

याः पुनः **तिस्रो रेखाः** जडक्रियाज्ञानेच्छाशक्तयो यानि **सदनानि** जाग्रत्स्वप्नसुषुप्तितुरीयस्थानानि लोचनकण्ठहृदयसहस्रारचक्राणि **भूस्त्रीरिति**

[1] प्रकाशाः—क.

[2] मन्त्रप्रथते—अ १, अ २, क. मन्त्रः प्रथते—उ. मन्त्री प्रथते—मु, अ.

भूर्भुवःसुवरिति त्रिलोकाः त्रिविष्टपाः तमआदिगुणाः तत्रैकैकगुणस्य तमस्तम-इत्यादिभेदेन त्रित्रिप्रकाराश्च यामाश्रित्य वर्तन्ते, त्रिरेखात्रिविष्टपत्रिगुणतया यदुक्तं एतत्त्रयं पूरकाणां ब्राह्म्यादिस्वचक्रावरणानामपि रेखाविष्टपगुणाभिधानकामेश्वर्या-दिशक्तित्रयं पूरकं प्रधानमित्यर्थः । साङ्गावरणदेवतां विज्ञाय ये स्वचक्रमर्चयन्ति ते स्वधाम त्रैपुरं विशन्तीत्याह—मन्त्रेति । मन्त्रप्रतते आदिविद्यातदङ्गदेवता-मन्त्रप्रतते श्रीचक्रे मदन्या कामिन्या मध्यत्रिकोणरूपिण्या चिच्छक्त्या सह बिन्दुरूपी मदनः कामेश्वरो विजयते ॥ ५ ॥

आवरणदेवताः

मदन्तिका मानिनी मङ्गला च सुभगा च सा सुन्दरी सिद्धिमत्ता ।
लज्जा मतिस्तुष्टिरिष्टा च पुष्टा लक्ष्मीरुमा ललिता लालपन्ती ॥ ६ ॥

तत्परिवारावरणदेवतास्तु मदन्तिकेत्यादिपञ्चदशनित्या भवन्ति ॥ ६ ॥

शिवकामसुन्दरीविद्याफलम्

इमां विज्ञाय [1]सुधया मदन्ती परिस्रुता तर्पयन्तः स्वपीठम् ।
नाकस्य पृष्ठे महतो वसन्ति परं धाम त्रैपुरं चाविशन्ति ॥ ७ ॥

एवं परिवारदेवतैर्या परिस्रुता परितः सेविता सेयं सुधया मदन्ती स्वातिरिक्तं न किंचिदस्त्यहमेवेदं सर्वमिति स्वरूपानुसन्धानविस्मृतस्वातिरिक्ता चिच्छक्तिः शिवेन साकं विजयते । ये मुमुक्षवः इमां शिवकामसुन्दरीं निष्प्रतियोगिकचिन्मात्रपर्यवसन्नां विज्ञाय तज्ज्ञानसमकालं ते तत्पदं यान्ति । य एवं यदि ज्ञातुमशक्तास्ते तदा निष्कामधिया यावज्जीवं स्वपीठं श्रीचक्रं स्ववर्णाश्रमानुरोधेन क्षीरादिभिः तर्पयन्तः सन्तः कालं नयन्ति, अथ देहावसाना-नन्तरं महतो नाकस्य पृष्ठे श्रीपुरे ज्ञानाभ्यासं कुर्वन्त आभूतसंप्लवं वसन्ति ततः त्रैपुरं परं धाम विशन्ति कृतकृत्यपदं भजन्तीत्यर्थः ॥ ७ ॥

[1] सुदया—उ १.

आदिमूलविद्योद्धारः

कामो योनिः कामकला वज्रपाणिर्गुहा हसा मातरिश्वाऽभ्रमिन्द्रः ।
पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमाताऽऽदिविद्या ॥ ८ ॥

आदिमूलविद्यामुद्धरति—काम इति । मूलविद्या देव्युपनिषदि व्याख्याता ॥

विरक्तानामादिविद्याज्ञानफलम्

षष्ठं सप्तममथ वह्निसारथिमस्या मूलत्रिकमादेशयन्तः ।
कथ्यं कविं कल्पकं काममीशं तुष्टुवांसो अमृतत्वं भजन्ते ॥ ९ ॥

केवलविरक्तानामादिविद्यासारं तद्ध्येयवस्तु तज्ज्ञानफलं चाह— **षष्ठमिति** । मूलविद्यायाः **षष्ठं** अक्षरं हेति शिवबीजं तत्सप्तमं सेति शक्तिबीजं पुनः **वह्निसारथिः** केति कामेशबीजं एवं शिवसंपुटितशक्तिबीजं एवं **अस्या** आदिविद्यायाः हसकेति **मूलत्रिकं आदेशयन्तो** वाचोपांशुतया जपन्तो मनसा वाचा श्रुतिशिरोभिरतन्निरसनोपायतः **कथ्यं** अशब्दमस्पर्शमिति **कविं** क्रान्तदर्शिनं सर्वज्ञं स्वातिरेकेण सर्वं नास्तीति ज्ञत्वाज्जीवेशात्मना व्यष्टिसमष्टिप्रपञ्चकल्पकं, यद्वा स्वातिरिक्तजीवशिवतत्कल्पनीयव्यष्टिसमष्टिप्रपञ्चजातं नेतीति स्वातिरिक्तापवादकृद्वेदान्तशास्त्रकल्पकं निश्वसितश्रुत्यनुरोधेन वेदशास्त्राविर्भावहेतुत्वात्, यथाकामं सर्वापह्नवसिद्धब्रह्ममात्रतयाऽवस्थातुमीशत्वात् **काममीशं तुष्टुवांसः** ब्रह्माहमस्मीति स्तुतिं कुर्वन्तो मुमुक्षवः **अमृतत्वं** कैवल्यं **भजन्ते** विदेहमुक्ता भवन्तीत्यर्थः ॥ ९ ॥

देवीज्ञानफलम्

पुरं हन्त्रीमुखं [1]विश्वमातू रवे रेखा स्वरमध्यं तदेषा ।
बृहत्तिथिर्दश[2]पञ्चादिनित्या सषोडशिकं पुरमध्यं बिभर्ति ॥ १० ॥

[1] विश्वमाभू—क.  विश्वमात्म—अ १.  [2] पञ्चाचनि—अ, अ २, क.

या षोडशावयवपुरमध्यं बिभर्ति तत्स्वरूपं तज्ज्ञानफलं चाह—**पुरमिति**। भक्तानुग्रहायैवं रूपं या बिभर्ति तामेव विश्वमातुर्व्यक्तिं निष्कामधिया ज्ञात्वा स्वस्वभावानुरोधेन तत्तत्फलमेतीत्युक्तं, तत्र सा किं किं रूपं बिभर्तीत्यत्र—"पुरमेकादशद्वारं" इति श्रुत्या **पुरं** स्वाविद्यापदतत्कार्यजातं विश्वविश्वाद्यविकल्पानुज्ञैकरसान्तत्रिपञ्चदशतनुभिस्तद्बिभर्तीत्यर्थः। किं च हसकेति **हन्त्रीमुखं** आदिविद्यासाररूपं बिभर्तीति सर्वत्रानुषज्यते। **रवेः रेखा** आदित्यमण्डलरूपं ई ओं इति वा **स्वरमध्यं** यत् **तदेषा** देवी बिभर्ति। **बृहत्तिथिरिति** निमेषादिकल्पान्तकालविशेषः **दशपञ्चादिनित्या** पञ्चदशतिथिवारनक्षत्रादिरूपं नित्यदेवताभावमापन्नपञ्चदशतिथिभिः सह बृहत्तिथिरूपं **सषोडशिकं** पूर्वोक्त**पुरमध्यं** स्वाविद्यापदारोपाधारेश्वररूपं **बिभर्ति**। एवं देवतापरिग्रहोपाधिषु यत्र यत्र यन्मनः स्पृहयति तत्तत्परदेवताधिया निष्कामचित्ताश्रितमुनिनोपास्यं भवति, तेनायं चित्तशुद्धिप्राप्यज्ञानद्वारा कृतकृत्यो भवेदित्यर्थः ॥ १० ॥

मन्दाधिकारिणां ध्यानविशेषः

**यद्वा मण्डलाद्वा स्तनबिम्बमेकं मुखं चाधस्त्रीणि गुहासदनानि ।**
**कामीकलां कामरूपां चिकित्वा नरो जायते कामरूपश्च[1]काम्यः ॥**

एवं ध्यातुमशक्तानां सकामानां वा ध्यानभेदमाह—**यद्वेति**। रवीन्द्वादि**मण्डलात्** आविर्भूतां **स्तनबिम्बमेकं मुखं चाधः** इत्युपलक्षितसर्वाङ्गसुन्दरीं **त्रीणि गुहासदनानि** इत्यनेन स्थूलसूक्ष्मकारणभेदेन देहत्रयगुहासनां **कामिनः** परमेश्वरस्य **कलां** स्वभक्तपटलचित्तग्राहककाम**रूपां** चिच्छक्तिं **चिकित्वा** ध्यात्वा कामनापूरितचित्तः **काम्यो नरः** स्वकामनानुरूपेण **कामरूपश्च** भवति कामितार्थभाक् भवतीति यत्तत्सामान्यफलमित्यर्थः। काम्यफलस्य जन्मादिहेतुत्वेन त्रैवर्णिकैर्मुमुक्षुभिः काम्योपासना न कार्येत्यत्र—

[1] **कामः—अ, अ २, क.**

मोक्तुमिच्छसि चेद्ब्रह्मन् कामनोपासनं त्यज ।
निष्कामाञ्चितधीवृत्त्या मामुपास्य विमोक्ष्यसे ॥

इति स्मृतेः । त्रैवर्णिकैर्निष्कामबुद्ध्या वाममार्गाचारोऽपि चित्तशुद्धिप्राप्यज्ञान-हेतुरिति चेन्न, परधर्मत्वात् । न हि परधर्माचरणं कृत्वा यः कोऽपि स्वातिरिक्त-भ्रमतो मोक्तुं पारयति परधर्मानुष्ठानस्यानर्थहेतुत्वादित्यत्र—

श्रेयान् स्वधर्मो विगुणः परधर्मात् स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥

इति स्मृतेः । त्रैवर्णिकैरपि चित्तशुद्ध्यर्थं चिच्छक्त्युपासना कर्तव्येति चेत्, सत्यं दक्षिणाचारेण कर्तव्यम् । त्रैवर्णिकानां निष्कामधिया दक्षिणमार्गाचरणं कर्तव्यमित्यत्र—"निष्कामानामेव श्रीविद्यासिद्धिः न कदाऽपि सकामानाम्" इत्यादिश्रुतेः ॥ ११ ॥

अधमाधिकारिणामनुष्ठानं तत्फलं च

परिसृतं झषमाजं पलं च भक्तानि [1]योनिः सुपरिष्कृताश्च ।
निवेदयन् देवतायै महत्यै स्वात्मीकृते सुकृते सिद्धिमेति ॥ १२ ॥
सृण्येव सितया विश्व[2]चर्षणिः पाशेनैव प्रतिबध्नात्यभीकान् ।
इषुभिः पञ्चभिर्धनुषा च विद्धत्यादिशक्तिररुणा विश्वजन्या ॥ १३ ॥

शूद्रादीनां निर्विद्यत्वेन स्वच्छन्दाचारत्वात्, "तूष्णीं शूद्रमजनयत् । तस्माच्छूद्रो निर्विद्योऽभवत्" इति श्रुत्यनुरोधेन शूद्रो निर्विद्यः सन् स्वच्छन्दचारी भूत्वा वामाचारानुकूलद्रव्यसेवी भवति । स्वशरीरभोगायेदं मध्वादिसेवनमित्यपेक्षया देवताऽऽराधनधियाचरणस्य वरत्वात् । एवमनुष्ठाता शूद्रः स्वभावनानुरोधेन सिद्धिमेतीत्याह—**परिसृतमिति** । **परिसृतं** यथावत् संस्कृतं **झषमाजं पलं**, **च**-शब्दान्मद्यादिर्गृह्यते, **भक्तानि** अन्नानि **योनिरिति** स्पष्टमवगम्यते । एवं

[1] योनीः—उ, मु.  [2] चर्षणीः—उ १.

स्वभोज्यद्रव्ये स्वात्मोपभोगधियं त्यक्त्वा पूर्वं **देवतायै** निवेद्य ततः स्वात्मसात्करणादयमपि **सुकृते** लोके **सिद्धिमेतीति**। तथाऽपि शूद्रसामान्येनैवं **कर्तव्यमिति** न हि नियमोऽस्तीत्यर्थः। स्वस्ववर्णानुरोधेन सर्वैरपि चित्तशुद्ध्यर्थं देवतोपासना कार्येत्यत्र—" विप्राः क्षोणिभुजो विशस्तदितरे क्षीराज्यमध्वासवैः " इति, " चतुर्थपर्याये निवृत्तिरिष्टा " इति च स्मृतेः॥ १२॥ एवमननुष्ठातुर्देवताप्रातिकूल्येन बन्धनमाह—**सृण्येवेति**। **सितया सरस्वत्या विश्वजन्या** विश्वजनन्या लक्ष्म्या च सह **आदिशक्तिररुणा** गौरी विश्वं तदुपलक्षिताविद्यापदतत्कार्यजातं स्वातिरिक्तप्रपञ्चं निर्विशेषब्रह्मज्ञानविज्ञानसम्यग्ज्ञानतत्त्वज्ञानरूपेण निष्प्रतियोगिकब्रह्ममात्रावशेषतया चर्षयत्युपसंहरत्यपह्नवं करोतीति **विश्वचर्षणिः** ब्रह्ममात्रविद्या भूत्वा, अनयैव **सृण्या** सृत्या काम्यवर्त्मना मुमुक्षुभिरनादरणीयेन य उपासते तान् इदं मे स्यात् इदं मे स्यात् इदं मा भूत् इत्यभितः परितः स्वातिरिक्तविषये कामयन्तीति **अभीकान** कामिनो जननमरणपरंपराहेतुस्वातिरिक्तास्तितापाशैः स्वाज्ञानवृत्तिभिर्गाढं निरुच्छ्वासं **प्रतिबध्नाति** सम्यग्बद्ध्वा संसारसागरमहावर्ते पातयति। यथा ते पुनः संसारभ्रमणाद्बहिर्न गच्छन्ति तथा **पञ्चबाणेषुभिः धनुषा च विद्धति** वेधनं करोति न कदाऽपि तान् प्रत्यङ्मुखान् करोतीत्यर्थः। तथा चेश्वरस्मृतिः—

तानहं द्विषतः क्रूरान् संसारेषु नराधमान्।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु॥
आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्॥

इत्यादिः॥ १३॥

निष्कामोपासकस्य ब्रह्मत्वप्राप्तिः

**भगः शक्तिर्भगवान् काम ईश उभा दातारविह सौभगानाम्।**
**समप्रधानौ समसत्त्वौ समोजौ तयोः शक्तिरजरा विश्वयोनिः॥**

परिस्रुता हविषा भावितेन प्रसंकोचे गलिते वैमनस्कः ।
शर्वः सर्वस्य जगतो विधाता धर्ता हर्ता विश्वरूपत्वमेति ॥ १९ ॥
इयं महोपनिषत्त्रैपुर्या [1]यामक्षयं [2]परमा गीर्भिरीट्टे ।
एषर्ग्यजुः परमेतच्च सामायमथर्वेयमन्या च विद्या ॥ १६ ॥
ॐ ह्रीमों ह्रीमित्युपनिषत् ॥ १७ ॥

यः कोऽपि काम्यसृतिं विहाय निष्कामधिया श्रुतिस्मृत्यनुगृहीतशिष्टाचारानुरोधेन चिच्छक्तिं समप्रधानतयोपास्ते सोऽमनस्कत्वमेत्य कृतकृत्यो भवतीत्याह—भग इति । सकामनिष्कामभक्तपटलप्रवृत्तिनिवृत्तिमार्गप्रवर्तनशक्तिः चिच्छक्तिस्त्रिपुरा च भगः षड्गुणैश्वर्यसंपन्नः भगवान् कामः ईशः कामेश्वरश्च तावुभावपि चित्सामान्यात्मना समप्रधानौ समसत्त्वौ समोजौ दयाकळेबरौ भूत्वा इह अस्मिन्नेव जन्मनि येषां निष्कामानामाशयाः सुभगा ब्रह्मगोचरा भवन्ति सौभगाः तेषां तद्भावानुरोधेन सविशेषनिर्विशेषब्रह्मपददातारौ भवतः । तयोः दयाळ्वोः शक्तिशिवयोर्मध्ये शरीरत्रयविलक्षणेयं अजरा विश्वयोनिः विश्वमाता शक्तिः परमदयातनुर्भूत्वा निष्कामधिया स्वोपासकभावितेन ज्ञानविज्ञानसम्यग्ज्ञानहविषा परिस्रुता संतृप्ता सती स्वभक्तप्रसादकारिणी विक्षेपावरणे प्रसंकोचे गलिते कृत्वा शिवेन साकं स्वयं स्वोपासकात्मतयाऽवशिष्टा भवति । ततोऽयमुपासकः स्वाज्ञविकल्पितस्वातिरिक्तप्रपञ्चवैमनस्को भूत्वा सर्वस्य जगतो विधाता स्रष्टा धर्ता पालयिता हर्ता उपसंहर्ता शर्वश्च ब्रह्मविष्णुमहेश्वरो भूत्वा विश्वरूपत्वं विश्वारोपापवादाधिकरणब्रह्मतामपि एति इत्यर्थः ॥ १४–१९ ॥ केयं दयातनुश्चिच्छक्तिरित्यत आह—इयमिति । ऋगादिचतुर्वेदः, एवं अन्या च चतुष्षष्टिकलाविद्या च यामक्षयसंविद्रूपां परमा गीर्भिः सृष्ट्यादिदशप्रणवैरष्टोत्तरसहस्रमहावाक्यैरपि ईट्टे

[1] यामक्षरं—अ २. [2] परमो—अ, अ २, क, मु.

महाचिदेकैवेहास्ति महासत्तेति योच्यते ।
निष्कलङ्का समा शुद्धा निरहंकाररूपिणी ॥
सकृद्विभाता विमला नित्योदयवती समा ।
सा ब्रह्मपरमात्मेति नामभिः परिगीयते ॥

इति स्तौति या त्रैपुरीति विख्याता सेयं महोपनिषत् ब्रह्मविद्या निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजयत इत्यर्थः ॥ १६ ॥ तत्तनुः कीदृशीत्यत्र ॐ ह्रीं इति ओंकारार्थतश्चित्त्वं ह्रींकारार्थतश्चिच्छक्तित्वं चेति चिच्छक्तिरित्युच्यते । आवृत्तिरादरार्था । इत्युपनिषच्छब्दस्त्रिपुरोपनिषत्समाप्त्यर्थः ॥ १७ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
त्रिपुरोपनिषद्व्याख्या लिखिता स्वात्मगोचरा ।
त्रिपुरोपनिषद्व्याख्याग्रन्थजातं शतं स्मृतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे द्व्यशीतिसङ्ख्यापूरकं
त्रिपुरोपनिषद्विवरणं सम्पूर्णम् ॥

---

# त्रिपुरातापिन्युपनिषत्

भद्रं कर्णेभिः—इति शान्तिः

## प्रथमोपनिषत्

त्रिपुरास्वरूपम्

अथैतस्मिन्नन्तरे भगवान् प्राजापत्यं वैष्णवं विलयकारणं रूपमाश्रित्य त्रिपुराऽभिधा भगवतीत्येवमादिशक्त्या भूर्भुवः स्वस्त्रीणि स्वर्गभूपातालानि त्रिपुराणि हरमायाऽऽत्मकेन ह्रींकारेण हृल्लेखाख्या भवती त्रिकूटावसाने निलये विलये धाम्नि महसा घोरेण व्याप्नोति। सैवेयं भगवती त्रिपुरेति व्यापठ्यते ॥ १ ॥

त्रिपुरातापिनीविद्यावेद्यचिच्छक्तिविग्रहम्।
वस्तुतश्चिन्मात्ररूपं परं तत्त्वं भजाम्यहम् ॥

इह खल्वथर्वणवेदप्रविभक्तेयं त्रिपुरातापिन्युपनिषद् उपासनाकाण्ड-प्रकटनव्यग्रा निर्विशेषब्रह्ममात्रपर्यवसन्ना विजयते। अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते। यथोक्ताधिकारिण उपलभ्यादौ त्रिपुरास्वरूपं श्रुतिः प्रकटयति—अथेति। अथ प्राण्यदृष्टपरिपाकानन्तरं एतस्मिन् अविद्यापदान्तरे

परमदयालुः भगवान् सदाशिवः परमेश्वरः ब्रह्मविष्णुरुद्ररूपमाश्रित्य सत्य-वैकुण्ठकैलासाख्यपुरत्रयाधिपत्यतः त्रिपुराभिधा भगवतीत्येवं स्वीयया आदि-शक्त्या भूर्भुवःस्वस्त्रीणि स्वर्गभूपातालानि वा त्रिपुराणि शिवशक्तिरूपेण ह्रींकारेण या सर्वप्राणिहृदि प्रत्यग्रूपेण विद्योतमाना हृल्लेखाख्या भगवती स्वाविद्याऽण्डत्रिकूटावसाने भ्रूयुगोपरि, यद्वा वाग्भवादित्रिकूटावसाने, निलये गुणसाम्यपीठे चित्सामान्यरूपे स्वातिरिक्तप्रपञ्चविलये धाम्नि घोरेण महसा तेजसा व्याप्नोति । सैवेयं भगवती सर्वैः त्रिपुरेति गीयत इत्यर्थः ॥ १ ॥

त्रिपुरामहामनुः

तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि ।
धियो यो नः प्रचोदयात् परो रजसेऽसावदोम् ॥ २ ॥
जातवेदसे सुनवाम सोममरातीयतो निदहाति वेदः ।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुं दुरितात्यग्निः ॥ ३ ॥
त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् ।
उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ ४ ॥

शताक्षरी परमा विद्या त्रयीमयी साष्टार्णा त्रिपुरा परमेश्वरी । आद्यानि चत्वारि पदानि परब्रह्म[1]विकासीनि । द्वितीयानि शाक्तानि । तृतीयानि शैवानि ॥ ५ ॥

सदाशिवशक्तेस्त्रिपुरायाश्चिच्छक्तिरूपतया तद्गोचराष्टोत्तरशताक्षरीमन्त्रं प्रकाशयति—तदिति । इयमष्टोत्तरशताक्षरीमन्त्रानुष्ठानात् त्रिपुरा प्रसीद-तीत्यर्थः ॥ २–४ ॥ त्रयीमयी वेदत्रयस्वरूपिणी । तत्सवितुरिति **आद्यानि**

[1] विकासिनी—अ १, अ २, क, उ.

चत्वारि पदानि परब्रह्मविकासीनि । जातवेदस इति द्वितीयानि शाक्तानि । त्र्यम्बकमिति तृतीयानि शैवानि ॥ ५ ॥

शिवशक्तियोगात् प्रपञ्चसृष्टिः

तत्र लोका वेदाः शास्त्राणि पुराणानि धर्माणि वै चिकित्सितानि ज्योतींषि शिवशक्तियोगादित्येवं घटना व्यापठ्यते ॥६॥

एवं चिच्छिवशक्तियोगादेव लोकादिर्जायत इत्याह—**तत्रे**ति । भूरादिचतुर्दश**लोकाः** । ऋगादिचत्वारो **वेदाः** । भरतमन्वशब्दादिषट् **शास्त्राणि** । भागवतादीनि **पुराणानि** । मन्वादिप्रणीतानि **धर्माणि** सर्वाणि धर्मशास्त्राणि **वै चिकित्सितानि** भिषक्शास्त्राणि । **ज्योतींषि** ज्योतिश्शास्त्राणि । एतानि सर्वाणि, यदुक्तमनुक्तं वै तत् सर्वं **शिवशक्तियोगादेव** जायत इत्यर्थः ॥ ६ ॥

वाग्भवकूटस्य गायत्र्या समन्वयः

अथैतस्य परं गह्वरं व्याख्यास्यामः । महामनुसमुद्भवं तदिति ब्रह्म शाश्वतं परो भगवान् निर्लक्षणो निरञ्जनो निरुपाधिराधिरहितो देव उन्मीलते पश्यति विकासते चैतन्यभावं कामयत इति स एको देवः शिवरूपी दृश्यत्वेन विकासते यतिषु यज्ञेषु योगिषु कामयते कामं जायते । स एष निरञ्जनोऽकामत्वेनोज्जृम्भते अकचटतपयशान् सृजते । तस्मादीश्वरः कामोऽभिधीयते । तत्परिभाषया कामः ककारं व्याप्नोति । काम एवेदं तत्तदिति ककारो गृह्यते । तस्मात्तत्पदार्थ इति य एवं वेद ॥ ७ ॥

सवितुर्वरेण्यमिति षूङ् प्राणिप्रसवे सविता प्राणिनः सूते प्रसूते शक्तिः सूते ॥ ८ ॥

त्रिपुरा शक्तिराद्येयं त्रिपुरा परमेश्वरी ।

महाकुण्डलिनी देवी जातवेदसमण्डलम् ॥ ९ ॥

योऽधीते सर्वं व्याप्यते । त्रिकोणशक्तिरेकारेण महाभागेन प्रसूते । तस्मादेकार एवा गृह्यते ॥ १० ॥

वरेण्यं श्रेष्ठं भजनीयमक्षरं नमस्कार्यम् । तस्माद्वरेण्य-[1]मेकाराक्षरं गृह्यत इति य एवं वेद ॥ ११ ॥

भर्गो देवस्य धीमहीत्येवं व्याख्यास्यामः । धकारो धारणा । धियैव धार्यते भगवान् परमेश्वरः । भर्गो देवो मध्यवर्ति तुरीय-मक्षरं साक्षात्तुरीयं सर्वं सर्वान्तरभूतं तुरीयाक्षरमीकारं पदानां मध्यवर्तीत्येवं व्याख्यातं भर्गोरूपं व्याचक्षते । तस्माद्भर्गो देवस्य धीत्येव[2]मीकाराक्षरं गृह्यते ॥ १२ ॥

महीत्यस्य व्याख्यानं महत्त्वं जडत्वं काठिन्यं विद्यते यस्मिन्नक्षरे तन्महि । लकारः परं धाम । काठिन्याढ्यं ससागरं सपर्वतं ससप्तद्वीपं सकाननमुज्ज्वलद्रूपं मण्डलमेवोक्तं लकारेण । पृथ्वी देवी महीत्यनेन व्याचक्षते ॥ १३ ॥

धियो यो नः प्रचोदयात । परमात्मा सदाशिव आदिभूतः [3]परः स्थाणुभूतेन लकारेण ज्योतिर्लिङ्गमात्मानं धियो बुद्धयः परे वस्तुनि ध्यानेच्छारहिते निर्विकल्पके प्रचोदयात् प्रेरयेदित्युच्चाररहितं [4]चेतसैव चिन्तयित्वा भावयेदिति ॥ १४ ॥

[1] मेकाक्षरं—अ १, अ २, क.

[2] मेकाक्षरं—अ २

[3] परस्था—अ १, अ २, क.

[4] चेतसैवं—उ, उ १.

परो रजसेऽसावदोमिति तदवसाने परञ्ज्योतिरमलं हृदि दैवतं चैतन्यं चिल्लिङ्गं हृदयागारवासिनी हृल्लेखेत्यादिना स्पष्टं वाग्भवकूटं पञ्चाक्षरं पञ्चभूतजनकं पञ्चकलामयं व्यापठ्यत इति । य एवं वेद ॥ १९ ॥

आदौ **त्रिपुरास्वरूपं** तद्गोचरमहामनुं तद्वाच्यशिवशक्तियोगतः स्वातिरिक्त-प्रपञ्चसृष्टिं चाभिधायाथ परब्रह्मार्थगायत्र्याः प्रातिस्विकेनाऽऽदिविद्याऽभिधान-पञ्चदशीखण्डत्रयेण समन्वयार्थमयमारम्भ इत्याह—**अथे**ति । अथ महामन्त्र-प्रदर्शनानन्तरं तस्यैव महामनोः **परं गह्वरं** परमगूढार्थं श्रुतयो वयं विशेषेण **आख्यास्यामः** कथयाम इत्यर्थः । किं तद्गूढार्थप्रकटनमित्यत्र, महामनो-स्तदित्याद्यक्षरस्याऽऽदिविद्याप्रथमखण्डाद्यक्षरस्य ककारस्य चार्थतः समन्वय उच्यते । तत् कथमित्यत्र—**महामन्विति** । तत्पदलक्ष्यार्थस्य निष्प्रतियोगिक-सन्मात्रत्वेन शाश्वतत्वम् । यः स्वरूपतः शाश्वतपदं गतः स हि **परो भगवान्** लक्षणसापेक्षलक्ष्यताऽभावात् **निर्लक्षणः**, स्वाज्ञदृष्टिविकल्पितस्वातिरिक्तप्रसक्ता-वपि तत्रात्मात्मीयाभिमानाभावात् **निरञ्जनो निरुपाधिराधिरहितो**ऽपि देवः मूलाविद्याबीजांशयोगत ईश्वरत्वमवलम्ब्य "स ईक्षत बहु स्यां प्रजायेयेति" इति श्रुत्यनुरोधेन **उन्मीलते** इत्यादि । दृश्यत्वेन **विकासते** जगद्रूपेण भासते । ततः स्वान्तःस्थेषु **यतिषु यज्ञेषु** चानुप्रविश्येदानीं ज्ञानफलं कर्मफलं वा **मे** स्यादिति **कामयते** । एवंकामनया **कामं** कामफलं जायते । य एवमवस्थाऽऽपन्नो-ऽपि परमेश्वरः **स्वेन रूपेण स एष निरञ्जनो**ऽकामत्वेनोज्जृम्भते । ततोऽयं **अकचटतपयशान्** अष्टवर्गान् **सृजते** । यस्मादेवं सृजति **तस्मादीश्वरः कामो-ऽभिधीयते** कार्यकारणयोरेकत्वात् । यस्मादेवं **तस्मात्** ककारः तत्पदार्थः । **य एवं वेद स मुनिः** ईश्वरो भवतीत्यर्थः ॥ ७ ॥ सवितुर्वरेण्यमिति महामन्वंशस्यादि-विद्याऽऽद्यखण्डद्वितीयवर्णात्मकैकारस्य च समन्वय उच्यते । तत् कथमित्यत्र—

**सवितुर्वरेण्यमितीति** । तत्र सवितृशब्दार्थस्तु पूङ् **प्राणिप्रसवे सविता प्राणिनः सूते** तदभिन्ना सावित्री **प्रसूते** ॥ ८ ॥ सेयं सावित्री केत्यत्र– **त्रिपुरा शक्तिरिति** । सैव व्यष्टिरूपेण **महाकुण्डलिनी देवी जातवेदसमण्डलं** मूलाधारत्रिकोणं व्याप्यावतिष्ठते ॥ ९ ॥ एवंरूपां विद्यां **योऽधीते सः सर्वं व्याप्यते** व्याप्नोति । **त्रिकोणशक्तिः** कुण्डलिनी **एकारेण महाभागेन** सर्वं **प्रसूते** सविता । यस्मादेवं **तस्मादेकार एव गृह्यते** ॥ १० ॥ सवितुरेकारस्य समन्वयमुक्त्वा वरेण्यैकारयोः समन्वयमाह—**वरेण्यमिति** । यदेकाराक्षरं सर्वकारणतया ख्यातं तदेव **वरेण्यं** इत्यादि । **य एवं वेद स** विद्वान् स्वावरेभ्यो वरिष्ठो भवतीत्यर्थः ॥ ११ ॥ भर्गो देवस्य धीतिशब्दस्य ईकारस्य च समन्वयमाह—**भर्ग इति** । तत्र धीत्यत्र **धकारो धारणा** । तत् **कथं**? **धियैवेति** । **भर्गो देव** स्वयं ज्योतिःस्वरूपेण दीप्यमानत्वात् । तन्मध्य**वर्ति तुरीयमक्षरं** अर्धमात्राऽऽत्मकम् । ईकारस्याप्यक्षरसामानाधिकरण्यमाह—**ईकारमिति** । यस्मादेवं धीकारयोः साम्यमुक्तं **तस्मात्** ॥ १२ ॥ महीति पदस्य लकारस्य च समन्वयमाह—**महीति** । **महीत्यस्य व्याख्यानं**, किं तदियत्र—**महत्त्वमित्यादि** । बीजं तु—**लकार इति** । धरणी**मण्डलमेवोक्तम्** ॥ १३ ॥ महीबीजलकारेण महीमण्डलमुक्तं, तद्गतनामरूपविलक्षणतया **यो नः** अस्माकं **धियः** ध्यानेच्छारहिते **निर्विकल्पके** परमात्मनि **प्रचोदयात्** तं ज्योतिर्लिङ्गं **आत्मानं** अनिर्वचनीयं ब्रह्माकारपरिणतचेतसा **सोऽहमस्मीति भावयेदित्यर्थः** ॥ १४ ॥ गायत्रीतुरीयपादस्य हृल्लेखायाश्च समन्वयमाह—**पर** इति । **रजसे** रजसः रजउपलक्षितगुणत्रयात् **यः परः** सोऽसौ अहमोङ्कारार्थतुर्यतुर्योऽस्मि यन्मत्तोऽदो विप्रकृष्टं **तदवसाने परंज्योतिरमलं हृदि दैवतं चैतन्यं चिल्लिङ्गं** सर्वप्राणिहृदि प्रत्यगभेदेन विद्योतमानं तदभेदेन **हृदयागारवासिनी** चिच्छक्तिः **हृल्लेखा** ह्रींकाररूपिणीति प्रसिद्धां तत्सवितुरित्यादिना पादचतुष्टयेनाऽऽदिविद्याया यदाद्यं **वाग्भवकूटं पञ्चा पञ्चभूतजनकं** निवृत्तिप्रतिष्ठाविद्याशान्तिशान्त्यतीतकलाभेदेन **पञ्चकलामयं स्पष्टं व्यापठ्यते** वाग्भवकूटं गायत्रीसमन्वयतो विस्पष्टं व्याख्यातमित्यर्थः ॥ १५ ॥

कामकूटस्य गायत्र्या समन्वयः

अथ तु परं कामकालभूतं कामकूटमाहुः । तत् सवितुर्वरेण्यमित्यादिर्द्वात्रिंशदक्षरीं पठित्वा तदिति परमात्मा सदाशिवोऽक्षरं विमलं निरुपाधितादात्म्यप्रतिपादनेन हकाराक्षरं शिवरूपं [1]अनक्षरमक्षरं व्यालिख्यत इति तत्परागव्यावृत्तिमादाय शक्तिं दर्शयति ॥ १६ ॥

तत् सवितुरिति पूर्वेणाध्वना सूर्यश्चन्द्रिकां व्यालिख्य मूलादिब्रह्मरन्ध्रगं साक्षरमद्वितीयमाचक्षत इत्याह भगवन्तं देवं शिवशक्त्यात्मकमेवोदितम् ॥ १७ ॥

शिवोऽयं परमं देवं शक्तिरेषा तु जीवजा ।
सूर्याचन्द्रमसोर्योगाद्धंसस्तत्पदमुच्यते ॥ १८ ॥
तस्मादुज्जृम्भते कामः कामात् कामः परः शिवः ।
कार्णोऽयं कामदेवोऽयं वरेण्यं भर्ग उच्यते ॥ १९ ॥

तत् सवितुर्वरेण्यं भर्गो देवः क्षीरं [2]सेवनीयमक्षरं समधुघ्नमक्षरं परमात्मजीवात्मनोर्योगात् तदिति स्पष्टमक्षरं तृतीयं ह इति तदेव सदाशिव एव [3]निष्कलमषो द्यो देवोऽन्त्यमक्षरं व्याक्रियते परमं पदम् ॥ २० ॥

धीति धारणं विद्यते जडत्वधारणं महीति लकारः शिवाधस्तात्तु लकारार्थः स्पष्टमन्त्यमक्षरं परमं चैतन्यं धियो यो नः प्रचोदयात् ॥ २१ ॥

परो रजसेऽसावदोमित्येवं कूटं कामकलाऽऽलयं षडध्वपरिवर्तको वैष्णवं परमं धामैति भगवांश्चैतस्माद्य एवं वेद ॥ २२ ॥

[1] निरक्षरं—अ १, अ २, क, मु.
[2] सेचनीय—उ.
[3] निष्कळोद्यो—क. निष्कलमषो द्याद्यो—उ.

वाग्भवकूटं गायत्रीसमन्वयतो व्याख्याय ततः कामकूटमपि पूर्ववद्गायत्रीसमन्वयपूर्वकं योजनीयमित्याह—**अथेति । अथ तु परं कामकलाभूतं** कामकलापरिणतं संप्रदायविदः **कामकूटमाहुः ।** द्वितीयखण्डात्मककामकूटप्रविभक्तवर्णषट्कस्य गायत्र्या समन्वयप्रकारमाह—**तदिति । पठित्वा** तत्र यदाद्यं **तदिति** तत्पदार्थः **परमात्मा सदाशिवः** यत्स्वरूपं कालत्रयेऽपि **न क्षरति** तत् **अक्षरं विमलं निरुपाधि** कामकूटाद्यवर्णहकारस्य निरुपाधिकाक्षरतादात्म्यप्रतिपादनेन **हकाराक्षरं शिवरूपं,** न हि तच्छिवरूपमक्षरं भवति ताल्वोष्ठादिव्यापारानर्हत्वात्, किंतु **अनक्षरं** तत्समन्वयाभिप्रायेण **अक्षरं** अक्षरतया **व्यालिख्यते** व्याख्यायत इति **तत्परागव्यावृत्तिमादाय शक्तिं दर्शयति** पराग्व्यावृत्तिसिद्धं शिवरूपं यदेतद्विपरीतं हकाराद्यक्षरं तद्गतपराग्भावादव्यावृत्ति पराग्भावमेवादाय हकारादि**शक्तिं दर्शयति ॥ १६ ॥** तत् कथमित्यत्र—**तदिति । अध्वना** वर्त्मना । **सूर्यबीजं** हकारः **पुरस्तात्** तत्पदेन समन्वितस्तदधस्तत्पश्चाच्चन्द्रिका **चन्द्रबीजं** सकारः सवितृशब्देन समन्वयितव्यः । सवितृचैतन्यं कीदृशं क्वासनमर्हतीत्यत्र **मूलादिब्रह्मरन्ध्रगं** मूलाधारमारभ्य ब्रह्मरन्ध्रपर्यन्तं व्याप्य स्थितं **साक्षरमद्वितीयं** सकाराक्षरमपि **तेनाद्वितीयमाचक्षते तद्विदः इत्याह** श्रुतिः । श्रुतिः किमित्याहेत्यत्र यस्तत्त्वेन सवितृत्वेन च ध्यातस्तं **भगवन्तं देवं शिवशक्त्यात्मकमेवोदितं** इत्याहेत्यर्थः ॥ १७ ॥ कथं शिवशक्त्यात्मकतेत्यत्र—**शिवोऽयमिति** । यं देवं सवितारं ब्रह्मविदः **परमं** परमात्मानमाहुः **सोऽयं शिवो भवति ।**

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥

इति स्मृत्यनुरोधेन या तु जीवतया जाता सैषा मूलशक्तिरित्यर्थः । **हकारार्थः सूर्यः** तत्पदार्थः शिवः सकारार्थचन्द्रमास्त्वंपदार्थजीवभूता प्रकृतिस्तद्गतहेयांशत्यागपूर्वकं तयोर्लक्ष्यभूतसूर्या**चन्द्रमसोर्योगात्** हंसः प्रत्यगभिन्नपरमात्मा **तत्त्वेन** पश्यत इति तत्पदं निर्विशेषं ब्रह्म **उच्यते ॥ १८ ॥** ककारः कस्मादाविर्भूत इत्यत्र—**तस्मादिति** । यः परः शिवो विविधान् **कामान्** सृजति **तस्मात्** परमशिवात् **कामः** ककारः **उज्जृम्भते** । यत्स्वरूपं **वरेण्यं भर्गः निरतिशय-**

ज्योति:स्वरूपं सोऽयं **कार्णः** ककार: **कामदेव:** परमेश्वरो भवति ॥ १९ ॥ **तत् सवितुर्वरेण्यं भर्गो देव:** चिद्धातु: तत्स्वरूपस्य क्षीणाविद्याऽऽधारत्वात् **क्षीरं मुमुक्षुकोटिभि:** स्वात्मधिया **सेवनीयमक्षरं** ईश्वरचैतन्यं **समधुघ्नमक्षरं** मधु स्वार्जितकर्मफलेन सह स्वात्मानमपि हन्ति भक्षयतीति समधुघ्नमक्षरं जीव-चैतन्यं चैतन्यद्वयगतहेयांशापायसिद्धलक्ष्ययो: **परमात्मजीवात्मनोर्योगात्** यदेव-मैक्यसिद्धं तदिति **स्पष्टमक्षरं** परमाक्षरं तृतीयं,

क्षर: सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ।
उत्तम: पुरुषस्त्वन्य: परमात्मेत्युदाहृत: ॥

इति स्मृते: । यदक्षरं तुरीयं ह इति विख्यातं तदेव सदाशिव एव तद्गतविकारापाये **निष्कल्मषो** द्योतनात्मको देव: तत्स्वरूपमेव **अन्त्यमक्षरं** परमाक्षरमिति व्या-क्रियते । किमिति? **परमं पदमिति** ॥ २० ॥ धीमहीति यत् **धारणं** त्रियते महीगतजडत्वधारणं **शिवाधस्तात्** हकाराधस्तात् विद्यमानलकारार्थ: **स्पष्ट:** लकारवाच्यमहीगतजडत्वविकारापाये लकारो ब्रह्मेति स्पष्टोऽर्थ: । यन्निर्विशेषं ब्रह्म तदेव **अन्त्यमक्षरम्** ॥ २१ ॥ **कामकलाऽऽलयं** कामकूटस्य वाग्भवकूटाख्य-कामकलाऽऽधारत्वात् । वर्णाध्वेत्यादितत्त्वाध्वान्तभेदेन षडध्वपरिवर्तको मन्त्री **वैष्णवं परमं धामैतीति** । य एवं वेद स वैष्णवं धामैति, तस्मादतिरिक्तं न किंचिदस्तीति भगवानाहेत्यर्थ: ॥ २२ ॥

शक्तिकूटस्य गायत्र्या समन्वय:

**अथैतस्मादपरं तृतीयं शक्तिकूटं प्रति[1]पद्यते द्वात्रिंशदक्षर्या गायत्र्या ॥ २३ ॥**

**तत् सवितुर्वरेण्यं तस्मादात्मन आकाश आकाशाद्वायु: स्फुरते तदधीनं वरेण्यं समुदीयमानं सवितुर्वा योग्यो जीवात्मपर-मात्मसमुद्भवस्तं प्रकाशशक्तिरूपं जीवाक्षरं स्पष्टमापद्यते ॥ २४ ॥**

[1] पाद्यते-

भर्गो देवस्य धीत्यनेनाधाररूपशिवात्माक्षरं गण्यते महीत्यादिना शेषं काम्यं रमणीयं दृश्यं काम्यं रमणीयं शक्तिकूटं स्पष्टीकृतमिति ॥ २५ ॥

वाग्भवकूटं कामकूटं चैवं प्रकाशयित्वा महामनुशक्तिकूटयोरपि समन्वयमाह —अथेति । प्रतिपद्यते कयेत्यत्र—द्वात्रिंशदक्षर्या गायत्र्या शक्तिकूटमपि समन्वयमर्हतीत्यर्थः ॥२३॥ तत् सवितुर्वरेण्यमिति सकाराक्षरः समन्वितः ॥२४॥ भर्गो देवस्य धीत्यनेन ककारोऽपि समन्वितो भवति । महीत्यादिना लकारः समन्वित इति ज्ञेयः । शेषं धियो यो नः प्रचोदयात् परो रजसेऽसावदोमिति काम्यं रमणीयं दृश्यं काम्यं रमणीयं हृल्लेखाऽपि समन्विता स्यात् । एवं शक्तिकूटमपि स्पष्टीकृतमित्यर्थः ॥ २५ ॥

कामाकामधियां विशिष्टविद्याफलम्

एवं पञ्चदशाक्षरं त्रैपुरं योऽधीते स सर्वान् कामानवाप्नोति स सर्वान् भोगानवाप्नोति स सर्वान् लोकान् जयति स सर्वा वाचो विजृम्भयति स रुद्रत्वं प्राप्नोति स वैष्णवं धाम भित्त्वा परं ब्रह्म प्राप्नोति य एवं वेद ॥ २६ ॥

कामाकामधियां विशिष्टविद्याफलमाह—एवमिति । वैष्णवं धाम मायाशबलं भित्त्वा अतिक्रम्य ॥ २६ ॥

शक्तिशिवादिद्वादशविद्योद्धारः

[1]एवमाद्यां विद्यामभिधायैतस्याः शक्तिकूटं शक्ति[2]शिवाद्या । लोपामुद्रेयं द्वितीये धामनि ॥ २७ ॥

पूर्वेणैव मनुना बिन्दुहीना शक्तिभूतहृल्लेखा क्रोधमुनिनाऽधिष्ठिता तृतीये धामनि ॥ २८ ॥

[1] इत्याद्यां—अ १, अ २, क. [2] शिवाद्यां—अ १, अ २, क, मु.

पूर्वस्या एव विद्याया यद्वाग्भवकूटं तेनैव मानवीं चान्द्रीं कौबेरीं विद्यामाचक्षते ॥ २९ ॥

मदनाधः शिवं वाग्भवम्, तदूर्ध्वं कामकलामयम्, शक्त्यूर्ध्वं [1]शाक्तमिति मानवी विद्या चतुर्थे धामनि ॥ ३० ॥

शिव[2]शक्त्याख्यं वाग्भवं तदेवाधः शिवशक्त्याख्यमन्यत्तृतीयं चेयं चान्द्री विद्या पञ्चमे धामनि ध्येयेयम् ॥ ३१ ॥

चान्द्री कामाधः [3]शिवाद्यकामा सैव कौबेरी षष्ठे धामनि व्याचक्षत इति य एवं वेद ॥ ३२ ॥

हित्वेकारं तुरीयस्वरं सर्वादौ सूर्याचन्द्रमस्केन कामेश्वर्यैवागस्त्यसंज्ञा सप्तमे धामनि ॥ ३३ ॥

तृतीयमेतस्या एव पूर्वोक्तायाः कामाद्यं द्विधाऽधः कं मदनकलाऽऽद्यं शक्तिबीजं वाग्भवाद्यं तयोरर्धावशिरस्कं कृत्वा नन्दिविद्येयमष्टमे धामनि ॥ ३४ ॥

वाग्भवमागस्त्यं वागर्थकलामयं कामकलाऽभिधं सकलमायाशक्तिः प्रभाकरी विद्येयं नवमे धामनि ॥ ३५ ॥

पुनरागस्त्यं वाग्भवं शक्तिमन्मथशिवशक्तिमन्मथोर्वीमायाकामकलालयं चन्द्रसूर्यानङ्गधूर्जटिमहिमायं तृतीयं षण्मुखीयं विद्या दशमे धामनि ॥ ३६ ॥

विद्याप्रकाशितया भूय एवागस्त्यविद्यां पठित्वा भूय एवेमामन्त्यमायां परमशिवविद्येयमेकादशे धामनि ॥ ३७ ॥

[1] शान्तमिति—उ. [2] शक्त्यामकं—अ १, अ २. [3] शिवाद्या—उ.

**भूय एवागस्त्यं पठित्वा एतस्या एव वाग्भवं यद्धनजं काम-कलाऽऽलयं च तत्सहजं कृत्वा लोपामुद्रायाः शक्तिकूटराजं पठित्वा वैष्णवी विद्या द्वादशे धामनि व्याचक्षत इति य एवं वेद ॥ ३८ ॥**

एवं **आद्यां विद्यां** श्रीमत्पञ्चदशाक्षरीं खण्डशो ब्रह्मगायत्र्या **समन्वितां अभिधायैनस्याः** मध्ये तृतीयं सकलह्रींमिति **शक्तिकूटं** स क इति **शक्तिशिवाऽऽद्या प्रथमे** धामनि व्यष्टिसमष्टिजागरणे संभाव्या । हसकहलह्रींमिति **लोपामुद्रेयं** विद्या **द्वितीये** धामनि व्यष्टिसमष्टिस्वप्ने संभाव्या ॥ २७ ॥ यो लोपामुद्रामनु-द्वितीये धामनि विन्यस्तः हसकहलह्रीं इति **क्रोधमुनिना अधिष्ठिता दुर्वाससा** आराधिता सेयं **तृतीये धामनि** समष्टिस्वापे संभाव्येत्यर्थः ॥ २८ ॥ एवं **पूर्वस्या एव विद्यायाः** लोपामुद्राविद्यायाः यद्वाग्भवकूटं योजितं तदा **तेनैव** योजनेन मनुचन्द्रकुबेरैरेवमाराधितेति तामेव विद्यां संप्रदायविदः **मानवीं चान्द्रीं कौबेरीं विद्यामाचक्षते** ॥ २९ ॥ तत्र मानवी विद्या केत्यत्र—**मदनेति** । मदनशब्देन कामकूटं क्लीं इति वोच्यते तदधस्तात् पश्चात् हादिविद्यायाः पर **शिवं वाग्भवं** कामकलामयं कादिविद्यारूपं, तदूर्ध्वं **शाक्तं** शक्तिकूटं सादि-विद्यारूपं, पूर्वं हादिविद्या ततः कादिविद्या ततः सादिविद्येति प्रतिपादनात् शक्त्यूर्ध्वमित्युक्तम् । या मनुनैवमुपासिता सेयं **मानवी चतुर्थे धामनि**, व्यष्टि-जागरणारोपाधारविश्वे तदभेदेन संभाव्येत्यर्थः ॥ ३० ॥ केयं चान्द्री विद्येत्यत्र—**शिवेति** । आदौ **शिवशक्त्याख्यं** हादि ततः **वाग्भवं** कादि **तदेवाधः शिव-शक्त्याख्यं** पुनर्हादि अन्यत् तृतीयं सादि च येयं खण्डचतुष्टयविशिष्टविद्या चन्द्रेणाराधिता सेयं चान्द्री **पञ्चमे धामनि** व्यष्टिस्वप्नप्रपञ्चारोपाधारतैजसे संभाव्येत्यर्थः ॥ ३१ ॥ केयं कौबेरी विद्येत्यत्र—**चान्द्रीति** । या चान्द्री विद्या खण्डचतुष्टयात्मिकाभिहिता तदधः पश्चात् **शिवाद्यकामा** हादिविद्या योजिता यदि तदा पञ्चखण्डात्मिकेयं विद्या कुबेरेणाराधिता सेयं **कौबेरीत्युच्यते**। **सेयं षष्ठे धामनि** व्यष्टिस्वापप्रपञ्चारोपाधारप्राज्ञे सदा ध्येयेति **व्याचक्षत इति** । **य एवं वेद** सोऽयं संपदा कुबेरतुल्यो भवतीत्यर्थः ॥ ३२ ॥ अगस्त्यविद्या कीदृशी-

त्यत्र—**हित्वेकारमिति**। कादिविद्याऽलंकारतुरीयस्वरमीकारं हित्वा **सर्वादौ सर्वखण्डादौ** हसेति **सूर्याचन्द्रमस्केन** संयोजितं यदि खण्डत्रयं तदा **कामैश्वर्यैं** तुष्टिकरं भवति। यद्वा—एवमुपासकस्य स्वेप्सितकामश्च निरवधिकैश्वर्यं च **कामैश्वर्यैं** भवत इत्यगस्त्येन योपासिता सेयं **अगस्त्यसंज्ञा** विद्योच्यते, सा सप्तमे धामनि समष्टिजाग्रत्प्रपञ्चारोपाधारे विराजि तदभेदेन ध्येयेत्यर्थः॥ ३३॥ केयं नन्दिविद्येत्यत्र—**तृतीयमिति**। या पूर्वोक्तागस्त्यविद्या **एतस्या अधः पूर्वं द्विधा कामाद्यं मदनकलाऽऽद्यं** हहेति मेति **शक्तिबीजं** केति **वाग्भवाद्यं** तयोः सकारककारयोः **अर्धविशिरस्कं** प्लुतोच्चारणभवार्धमात्रामस्तकं **कृत्वा** येयं नन्दिनोपासिता **सेयं नन्दिविद्या अष्टमे धामनि** समष्टिस्वप्नप्रपञ्चारोपाधारसूत्रात्मनि तदभेदेन चिन्त्येयमित्यर्थः॥ ३४॥ प्रभाकरी विद्या कीदृशीत्यत्र—**वाग्भवमिति**। आदौ **वाग्भवकूटं** कादि तत **आगस्त्यं** अगस्त्यविद्याकात्स्न्र्यं **वागर्थकलामयं** शिवशक्त्यात्मकं **कामकलाऽभिधं** हादि **सकलमायाशक्तिः** शक्तिकूटं चैकीकृत्य या प्रभाकरेण सूर्येणैवमुपासिता **सेयं प्रभाकरी विद्या नवमे धामनि** समष्टिस्वापप्रपञ्चारोपाधारबीजेश्वरात्मनि तदभेदेन ध्येयेत्यर्थः॥ ३५॥ षण्मुखी विद्या **कीदृशीत्यत्र—पुनरागस्त्यमिति**। **वाग्भवं** कादि, ह्रीमिति शक्तिबीजं, क्लीमिति मन्मथबीजं, हंस इति शिवशक्तिबीजे, पुनर्मन्मथबीजं क्लीमिति, लमित्युर्वीबीजं, ह्रीमिति मायाबीजं, कामकलाऽऽलयं हादिषडक्षरं, सोऽहमिति चन्द्रसूर्यबीजे, क्लीमित्यनङ्गबीजं, हमिति धूर्जटिबीजं, स इति महिमाबीजं, पुनः तृतीयं हंसः सोऽहं हंसः इति, एवं षण्मुखेनोपासिता **षण्मुखीयं विद्या दशमे धामनि** व्यष्टिसमष्ट्यात्मकजाग्रत्प्रपञ्चापवादाधिकरण ओतृचैतन्ये तदभेदेन भावयेदित्यर्थः॥ ३६॥ परमशिवविद्या **कीदृशीत्यत्र—विद्येति**। पूर्वोक्तषण्मुखीविद्याप्रकाशितया षण्मुखीविद्यात्वेन या प्रकाशिता **तया साकं भूय एव आगस्त्यविद्यां पठित्वा भूय एवेमामन्त्यमायां** अन्त्यमां तुर्यरूपिणीमधिष्ठाय यः शिवः सर्वसाक्षी भवति **सेयं परमशिवविद्या**, षण्मुख्यगस्त्यविद्याद्वयं मिलितं चेत् परमशिवविद्या भवति, **सेयमेकादशे धामनि** समष्टिस्वप्नप्रपञ्चापवादाधिकरणेऽनुज्ञातृचैतन्ये तदभेदेन भावनीये-

यमित्यर्थः ॥ ३७ ॥ केयं वैष्णवी विद्येत्यत्र—भूय इति। अगस्त्यविद्यया साकं वाग्भवं कादि यद्भनजं धनदं कौबेरं कामकलाऽऽलयं च हादिषट्कं तत्सहजं कृत्वा एकीकृत्य पूर्वोक्तलोपामुद्रायाः हादिविद्यायाः परिणतं सादिशक्तिकूटराजं पठित्वा एतत्सर्वं चित्सामान्यमहाविद्याऽऽत्मकं सम्यग्ज्ञानरूप विष्णुनाऽधिष्ठितमिति वैष्णवी विद्येत्युच्यते। सेयं द्वादशे धामनि व्यष्टिसमष्ट्यात्मकजाग्रत्स्वप्नसुषुप्तिप्रपञ्चापवादाधिकरणेऽनुज्ञैकरसचैतन्ये तदभेदेन भावनीयेति। य एवं वेद स विष्णुरेव भवतीत्यर्थः ॥ ३८ ॥

अथ द्वादशविद्यामुद्धरति—एवमित्यादिना। आदिविद्या तु क ए ई ल ह्रीं, हसकहलह्रीं, सकलह्रीम्। अत्राद्यखण्ड वाग्भवकूटं, द्वितीयं कामकूटं, तृतीयं शक्तिकूटम्। व्यष्टिसमष्टिजाग्रदादिद्वादशधामसु भावनीयशक्तिशिवादिद्वादशविद्योच्यते। सक इति शक्तिशिवविद्या (१), हसकहलह्रीमिति लोपामुद्राविद्या (२), हसकहलह्री इति क्रोधमुनिविद्या (३), हसकहलह्रीं क ए ई ल ह्रीं सकलह्रीं इति मानवी विद्या (४). हसकहलह्रीं क ए ई ल ह्रीं हसकहलह्रीं सकलह्रीं इति चान्द्री विद्या (५), हसकहलह्रीं क ए ई ल ह्रीं हसकहलह्रीं सकलह्रीं हसकहलह्रीं इति कौबेरी विद्या (६), हसकएलह्रीं हसहसकहलह्रीं हससकलह्रीं इत्यगस्त्यविद्या (७), हहसकहसकएलह्रीं हसहसकहलह्रीं हससकलह्रीं इति नन्दिविद्या (८), क ए ई ल ह्रीं हसकएलह्रीं हसहस कहलह्रीं हससकलह्रीं हसकहलह्रीं सकलह्रीं इति प्रभाकरी विद्या (९), [1]ह्रीं क्लीं हं सः क्लीं लं ह्रीं हसकहलह्रीं सोहं क्लीं हंसः ह्रीं हंसः सोहं हंसः इति षण्मुखी विद्या (१०) ह्रीं क्लीं हंसः क्लीं लं ह्रीं हसकहलह्रीं सोहं क्लीं हंसः ह्रीं हंसः सोहं हंसः हसकएलह्रीं हसहसकहलह्रीं हससकलह्रीं इति परमशिवविद्या (११), हसकएलह्रीं हसहसकहलह्रीं हससकलह्रीं क ए ई ल ह्रीं हसकहलह्रीं क ए ई ल ह्रीं हसकहलह्रीं सकलह्रीं हसकहलह्रीं हसकहलह्रीं [2]सकलह्रीं इति वैष्णवी विद्या (१२) ॥

[1] अत्र व्याख्यापर्यालोचनेन आदावागस्त्यवाग्भवयोः संयोजनं युक्तं स्यादिति भाति.

[2] अत्र व्याख्यापर्यालोचनेन "सकलह्रीं" इत्यत्र "सकहलह्रीं" इति मन्त्रोद्धारः साधुरिव भाति.

महात्रिपुरादेवीध्यानप्रकारः

तान् होवाच भगवान् सर्वे यूयं श्रुत्वा पूर्वां कामाख्यां तुरीयरूपां तुरीयातीतां सर्वोत्कटां सर्वमन्त्रासनगतां पीठोपपीठ-देवतापरिवृतां सकलकलाव्यापिनीं देवतां सामोदां सपरागां सहृदयां सामृतां सकलां सेन्द्रियां सदोदितां [1]परां विद्यां स्पष्टीकृत्वा हृदये निधाय विज्ञायानिलयं गमयित्वा त्रिकूटां त्रिपुरां परमां मायां श्रेष्ठां परां वैष्णवीं संनिधाय हृदयकमलकर्णिकायां परां भगवतीं लक्ष्मीं मायां सदोदितां महावश्यकरीं मदनोन्मादनकारिणीं धनुर्बाणधारिणीं वाग्विजृम्भिणीं चन्द्रमण्डलमध्यवर्तिनीं चन्द्रकलां सप्तदशीं महा-नित्योपस्थितां पाशाङ्कुशमनोज्ञपाणिपल्लवां समुद्यदर्कनिभां त्रिणेत्रां विचिन्त्य देवीं महालक्ष्मीं सर्वलक्ष्मीमयीं सर्वलक्षणसंपन्नां हृदये चैतन्यरूपिणीं निरञ्जनां त्रिकूटाख्यां स्मितमुखीं सुन्दरीं महामायां सर्वसुभगां महाकुण्डलिनीं त्रिपीठमध्यवर्तिनीमकथादिश्रीपीठे परां भैरवीं चित्कलां महात्रिपुरां देवीं ध्यायेन्महाध्यानयोगेनेयमेवं वेदेति महोपनिषत् ॥ ३९ ॥

ये महाविद्यां श्रुतवन्तस्तान् प्रति भगवानुवाचेत्याह—तानिति । **तान् होवाच भगवान्** सदाशिवः । किमिति—हे देवाः सर्वे यूयं मयोक्तां वक्ष्यमाणां च विद्यां श्रुत्वा **पूर्वां कामाख्यां** कामेश्वरविद्यामर्धमात्राकलातीतात्मना **तुरीयरूपां तुरीयातीतां सर्वोत्कटां** असमाहितचित्तैर्दुराराध्यां **सर्वमन्त्रासनगतां** समस्त-यन्त्रालयां **पीठोपपीठदेवतापरिवृतां** उड्याणादिचतुष्पीठमध्यवर्तिपरिवारदेवता-बृन्दसेवितां प्राणादिनामान्त**सकलकलाव्यापिनीं देवतां सामोदां** स्वानन्दभरितां

[1] परमां—अ २, क, उ १.

सपरागां परचितैक्यं गच्छतीति सपरागां ब्रह्माभिन्नां स्वभक्तपालने सहृदयां सामृतां सकलां सेन्द्रियां निरावृतसम्यग्ज्ञानात्मना सदोदितां परां विद्यां अहं ब्रह्मास्मीति स्पष्टीकृत्वा हृदये निधाय ब्रह्मातिरिक्तं न किंचिदस्तीति विज्ञाय यद्यदतिरिक्तमस्तीति भ्रान्तिस्तदा तामपि अनिलयं निरालम्बं ब्रह्म गमयित्वा त्रिकूटां वाङ्मया[ग्भवा]दित्रिकूटार्थरूपिणीम् । स्वपदं भजतां महतां करणग्रामं स्वपदध्यानानुकूलतया वश्यं स्वाधीनं करोतीति महावश्यकरीम् । स्वभक्तपटलोन्मादनकरमदनोन्मादनकारिणीम् । सरस्वत्यात्मना वाग्विजृम्भिणीम् । सप्तदशीं सप्तदशप्रजापतिरूपां महानित्योपस्थितां महानित्यात्वेन स्वयमुपस्थिताम् । मूलोड्याणजालन्धरभेदेन त्रिपीठमध्यवर्तिनीं अकथादिश्रीपीठे निषण्णां परां स्वाज्ञानतत्कार्यभैरवीं ब्रह्मरूपेण ध्यात्वा कृतकृत्या भवतेत्यर्थः । यः कोऽप्येवमेनां ध्यायेत् स महाध्यानयोगेन इयं इमां एवं वेद यथावद्विदित्वा कृतकृत्यो भवेदित्यर्थः । इति महोपनिषच्छब्दः प्रथमोपनिषत्समाप्त्यर्थः ॥३९॥

इति प्रथमोपनिषत्

---

# द्वितीयोपनिषत्

त्रिपुराविद्यामधिकृत्य प्रश्नः

अथातो जातवेदसे सुनवाम सोममित्यादि पठित्वा त्रैपुरी व्यक्तिर्लक्ष्यते ॥ १ ॥

जातवेदस इत्येकर्चसूक्तस्याद्यमध्यमावसानेषु तत्र स्थानेषु विलीनं बीजसागररूपं व्याचक्ष्वेत्यृषय ऊचुः ॥ २ ॥

प्रथमोपनिषदि येयं त्रिपुरसुन्दरी प्रतिपादिता तदपरोक्षसाक्षात्कारायेयं द्वितीयोपनिषदारभ्यते—अथेति। अथ तत्साक्षात्काराहाधिकारिसंपत्त्यनन्तरं यतः

पूर्वोपनिषदर्थश्रवणे कृतेऽपि देवतासाक्षात्कारो न जायते अतः तदर्थमयमुपनिषदारम्भो युज्यते। यः कोऽपि वा परदेवतासाक्षात्कारार्थी "जातवेदसे सुनवाम सोमं" इत्यादि त्रिपुराविद्यामर्थानुसन्धानपुरस्सरं तद्भावभावितः सन् पठित्वा पठन् वर्तते तस्यैव त्रैपुरी व्यक्तिर्लक्ष्यते त्रिपुरासान्निध्यं भवति ॥ १ ॥ इति भगवन्मुखतः श्रुत्वा ऋषयस्तदियत्ताबुभुत्सया भगवन्तं पृच्छन्तीत्याह—जातवेदस इति ॥ २ ॥

त्रिपुराविद्या

तान् होवाच भगवान्। जातवेदसे सुनवाम सोमं तदन्त्यमवार्णीं विलोमेन पठित्वा प्रथमस्याद्यं तदेव दीर्घं द्वितीयस्याद्यं सुनवाम सोममित्यनेन कौलं वामं श्रेष्ठं सोमं महासौभाग्यमाचक्षते ॥ ३ ॥

तत्कृतप्रश्नमङ्गीकृत्य तान् होवाच भगवान्। आदौ जातवेदसे सुनवाम सोमं इत्युच्चार्य तदन्त्यमवार्णीं तस्या आदिविद्यायाः सकलह्रीं इति अन्त्यमवार्णीं ह्रींलकसेति विलोमेन पठित्वा आदिविद्यायाः प्रथमस्य वाग्भवकूटस्य आद्यं तदेव दीर्घं का इति द्वितीयस्य कामकूटस्य आद्यं हेति बीजद्वययोगतः काहेत्युक्तं भवति। सेयं कुण्डलिनी शक्तिः किमाह? कदा सुषुम्नावदनं भित्त्वा तदन्तः प्रविश्य ग्रन्थित्रयान्वितमूलाधारस्वाधिष्ठानमणिपूरकानाहतविशुद्धाज्ञाचक्राणि क्रमाद्विभिद्य तदुपरि विद्योतमानसूर्येन्दुमण्डलद्वयैक्यजसोमं अमृतं दृग्प्राणमनोग्निभिः सह सुनवाम वयं सर्वे मिलित्वा पिबाम ततः सहस्रारचक्रं प्रविश्य तत्रत्यतुर्यैक्यं तुर्यतुर्यैक्यं वा भजाम इत्यनेन। कुः पृथिवी तदुपलक्षिताविद्यापदतत्कार्यजातं यत्र विलयमेत्य तन्मात्रमवशिष्यते तत् कुलं तदेव कौलं, स्वातिरिक्तप्रपञ्चापवादाधिष्ठानं यत्सर्वाधिष्ठानं तदेव स्वाज्ञदृष्टिविकल्पितस्वातिरिक्तग्रसने वामं समर्थं, यत् स्वावशेषतयाऽवस्थातुं वामं तदेव निष्प्रतियोगिकश्रेष्ठं स्वातिरिक्तसामान्यग्रसनात्, किं तत् क्रूरमित्यत्र सर्वप्राण्यात्मतया सर्वाह्लादनकरत्वात् सोमं

संशान्तस्वातिरिक्तभ्रमं निष्प्रतियोगिकब्रह्ममात्रं लोके ब्रह्मविद्वरिष्ठा अपि तन्मात्रावशेषलक्षणविकलेबरकैवल्यमेव **महासौभाग्यमाचक्षते** प्रवदन्तीत्यर्थः ॥ ३ ॥

महाविद्येश्वरीविद्या

सर्वसंपत्तिभूतं प्रथमं निवृत्तिकारणं द्वितीयं स्थितिकारणं तृतीयं सर्गकारणमित्यनेन करशुद्धिं कृत्वा त्रिपुराविद्यां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा महाविद्येश्वरीविद्यामाचक्षते ॥ ४ ॥

त्रिपुरेश्वरीं जातवेदस इति जाते आद्यक्षरे मातृकायाः शिरसि बैन्दवममृतरूपिणीं कुण्डलिनीं त्रिकोणरूपिणीं चेति वाक्यार्थः ॥ ५ ॥

तथाविधसौभाग्यपदवीप्रापकोपायः क इत्यत आह—सर्वेति । यत्सर्वसंपत्तिप्रापकहेतुतया भवतीति **सर्वसंपत्तिभूतं** वाग्भवादिकूटत्रयं, तत्र **प्रथमं** वाग्भवकूटं स्वातिरिक्तप्रपञ्च**निवृत्तिकारणं** तस्य स्वातिरिक्तोपसंहारकप्रलयकालरुद्रार्थत्वात्, **द्वितीयं** कामकूटं **स्थितिकारणं** स्वाज्ञविकल्पितप्रपञ्चजातस्य स्वज्ञानतः स्वाज्ञानभ्रमं मोचयित्वा स्वावशेषीकृत्य परिपालकविष्ण्वर्थत्वात्, **तृतीयं** शक्तिकूटं स्वातिरिक्तप्रपञ्च**सृष्टिकारणं** तस्य ब्रह्मार्थत्वात्, **इत्यनेन** त्रिमूर्तिधिया खण्डत्रयोपासनेन स्वातिरिक्तभ्रमं करोतीति **करं** अन्तःकरणं **शुद्धिं कृत्वा त्रिपुराविद्यां स्पष्टीकृत्वा** पुनः जातवेदसे इतीमामृचं **पठित्वा** नित्यानुसंधानतो या संविदुदेति तामेव सन्तो **महाविद्येश्वरीविद्यामाचक्षते** कथयन्तीत्यर्थः ॥ ४ ॥ मन्त्रार्थमाह—त्रिपुरेति । **त्रिपुरे**श्वरीविद्यामधिष्ठाय **जातवेदस इति जाते** वेदाद्यक्षरे अकारादि**मातृकायाः शिरसि** प्रणवे "बिन्दुरीश्वरसंज्ञस्तु शत्रुघ्नः" इति श्रुत्यनुरोधेन बिन्दुरेव **बैन्दवं** ईश्वरतत्त्वं, अमृतं तद्भावापन्नां **अमृतरूपिणीं**

सर्वप्राणिनाडीकन्दाश्रयणतः कुण्डलिनीं मूलाधारत्रिकोणरूपिणीं चेति समष्टिरूपेणेयममृतरूपिणी व्यष्टिरूपेण कुण्डलिनीति वाक्यार्थः ॥ ५ ॥

सर्वरक्षाकरीविद्या

एवं प्रथमस्याद्यं वाग्भवं द्वितीयं कामकला[1]मयं जात इत्यनेन परमात्मनोज्जृम्भणम् ॥ ६ ॥

जात इत्यादिना परमात्मा शिव उच्यते ॥ ७ ॥

जातमात्रेण कामी कामयते काममित्यादिना पूर्णं व्याचक्षते॥८॥

तदेव सुनवाम गोत्रारूढं मध्यवर्तिनाऽमृतमध्येनार्णेन मन्त्रार्णान् स्पष्टीकृत्वा गोत्रेति नामगोत्रायामित्यादिना स्पष्टं कामकलालयं शेषं वाममित्यादिना पूर्वेणाध्वना विद्येयं सर्वरक्षाकरी व्याचक्षते ॥ ९ ॥

**एवं प्रथमस्य** प्रधानभूतस्याऽऽदिविद्यातत्त्वस्य **आद्यं वाग्भवकूटं** कादि, **द्वितीयं कामकलामयं** हादि, तृतीयं **शक्तिकूटं** सादीति च, एवंरूपी **जात इत्यनेन परमात्मोज्जृम्भणं** एवंरूपेण परमात्मैव वर्तत इत्युक्तं भवति ॥ ६ ॥ स्वाज्ञदृष्ट्या एवमुज्जृम्भितोऽपि स्वज्ञदृष्ट्या निर्विशेषं **जात इत्यादिना परमात्मा शिव उच्यते** स्वातिरिक्तविशेषाशिवग्रासत्वात् ॥ ७ ॥ पुनः स्वाज्ञदृष्ट्या **कामी** भूत्वा स्वस्येश्वरत्वं **कामयते** । एवंकामे कुतो मे संकल्पवृत्तिरिति तत्त्यागतस्तत्स्वरूपं ब्रह्मविदः **पूर्णं व्याचक्षते** कथयन्तीत्यर्थः ॥ ८ ॥ ततः किमित्यत आह—**तदेवेति** । ब्रह्मविदो यत्पूर्णमामनन्ति तत् पूर्णशिवचैतन्यं **एव सुनवाम** सुष्ठु वदामः । किमिति ? **गोत्रारूढमिति** । गोत्राशब्देन वाग्भवादिकूटत्रयालङ्कारलकारत्रयमभिधीयते । लकारस्य पृथ्वीबीजत्वाल्लकारत्रयस्य गोत्रात्वमुक्तम् ।

[1] लयं—अ १, अ २, क, मु.

तद्गतनामरूपादिविकारमलक्ष्यीकृत्येदमस्ति भाति प्रियमिति सच्चिदानन्दरूपेण तदारूढमिति सुनवामेत्यर्थः। कूटत्रयमध्यवर्तिना लकारत्रयेण **अर्णेन अमृत-मध्येन** लार्णार्थस्य स्ववाच्यपृथिवीगतमार्त्यनामरूपग्राससच्चिदानन्दरूपेणामृ-तत्वाल्लकारस्यामृतमध्यत्वम्। एवं लकारत्रयोपलक्षितमन्त्वार्णान् **स्पष्टीकृत्वा** ब्रह्मार्थत्वेन संभाव्य **गोत्रेति नाम** पृथिव्याः **गोत्रायां** पृथिव्यां नामरूपविकारा-स्पृष्टसच्चिदानन्दात्मना शिवतत्त्वमारूढमिति यत् पुरस्तादेवोक्तं **तदित्यादिना स्पष्टं** **कामकलाऽऽलयं** व्याख्यातं **शेषं** तु वाग्भवकूटं शक्तिकूटं च **वाममित्यादिना पूर्वेणाध्वना** स्पष्टीकृतमित्यर्थः। ईश्वरचैतन्यं स्वातिरिक्तकलनाग्रसने वामं समर्थमित्यनेन शिवादतिरिक्तं न किंचिदस्तीति यैवं व्याख्याता **सेयं विद्या सर्वरक्षाकरीति** व्याचक्षते ॥ ९ ॥

त्रिपुरेशी-आत्मासनरूपिणी-शक्तिशिवरूपिणीविद्याः

एवमेतेन विद्यां त्रिपुरेशीं स्पष्टीकृत्वा जातवेदस इत्यादिना जातो देव [1]एक ईश्वरः परमो ज्योतिर्मन्त्रतो वेति तुरीयं वरं दत्त्वा बिन्दुपूर्णज्योतिःस्थानं कृत्वा प्रथमस्याद्यं द्वितीयं च तृतीयं च सर्वरक्षाकरी[2]संबन्धं कृत्वा विद्यामात्मासनरूपिणीं स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा रक्षाकरीं विद्यां स्मृत्वाऽऽ-द्यन्तयोर्धाम्नोः शक्तिशिवरूपिणीं विनियोज्य स इति शक्त्यात्मकं वर्णं सोममिति शैवात्मकं धाम जानीयात्। यो जानीते स सुभगो भवति ॥ १० ॥

**एवमेतेन** शिवादतिरिक्तं न किंचिदस्तीति **विद्यां त्रिपुरेशीं स्पष्टीकृत्वा जातवेदस इत्यादिना** निर्विशेषस्वरूपेण **जातो देवः एक एवेश्वरः परमो**

[1] एको हीश्वरः—उ.  [2] संबद्धं—क.

ज्योतिरवशिष्यते तथा कूटत्रयविशिष्टमन्त्रतो वेत्ति कूटत्रयापेक्षया तदवसान-विभातं तुरीयचैतन्यं वरं तस्य निर्विकल्पत्वात् कूटत्रये तुरीयस्वरूपं दत्त्वा तुरीयशिवादतिरिक्तं कूटत्रयं नास्तीति ध्यात्वा बिन्दुपूर्णज्योतिःस्थानं कृत्वा पूर्णाहंभावेश्वरभावमापाद्य प्रधानविद्याऽऽद्यं द्वितीयं च तृतीयं च कूटत्रयं पूर्वोक्त-सर्वरक्षाकरीविद्यया संबन्धं कृत्वा आत्मासनरूपिणीं विद्यामपि पूर्ववत् स्पष्टीकृत्वा जातवेदसे सुनवाम सोमं इत्यादि पठित्वा पुनश्च रक्षाकरीविद्यां स्मृत्वा सर्वरक्षाकर्या आद्यन्तयोः धाम्नोः आद्यवसानसीम्नोः शक्तिशिवरूपिणीं विनियोज्य किं तच्छक्तिशिवरूपमित्यत्र जातवेदसे सुनवाम सोममित्यस्मिन् वाक्ये स इति शक्त्यात्मकं वर्णं सोममिति शैवात्मकं धाम जानीयात्। यो जानीते स सुभगो महान् भवति ॥ १० ॥

### त्रिपुरवासिनीविद्या

इत्येवमेतां चक्रासनगतां त्रिपुरवासिनीं विद्यां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममिति पठित्वा त्रिपुरेश्वरीविद्यां सदोदितां शिवशक्त्यात्मिकामावेदितां जातवेदाः शिव इति सेति शक्त्यात्मा-क्षरमिति शिवादिशक्त्यन्तरालभूतां त्रिकूटादिचारिणीं सूर्याचन्द्र-मस्कां मन्त्रासनगतां त्रिपुरां महालक्ष्मीं सदोदितां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा पूर्वां सदात्मासनरूपां विद्यां स्मृत्वा देव इत्यादिना विश्वाहसंततोदयाबैन्दवमुपरि विन्यस्य सिद्धासनस्थां त्रिपुरां मालिनीं विद्यां स्पष्टीकृत्वा जातवेदसे सुनवाम सोममित्यादि पठित्वा त्रिपुरां सुन्दरीं श्रित्वा कले अक्षरे विचिन्त्य मूर्तिभूतां मूर्तिरूपिणीं सर्वविद्येश्वरीं त्रिपुरां विद्यां

स्पष्टीकृत्वा जातवेदस इत्यादि पठित्वा त्रिपुरां लक्ष्मीं श्रित्वाऽग्निं निदहाति ॥ ११ ॥

ततस्त्रिपुरवासिनीं विद्यां स्पष्टीकुर्यादित्याह—इत्येवमिति । त्रिपुरवासिनीं विद्यां चिच्छक्तिरूपेण स्पष्टीकृत्वा शिवशक्त्यात्मकत्वं कथमित्यत्र—जातवेदा इति । जातवेदा इति शिवश्च सेत्यादिशक्तिश्च तयोः अन्तरालभूतां मध्यस्थां त्रिकूटादिचारिणीं त्रिकूटादिमन्त्रग्रामसंचारिणीं हसेति सूर्याचन्द्रमस्कां मन्त्रासनगतां सर्वमन्त्रविन्याससर्वचक्रासनाम् । अरातीयतो निदहाति वेद इत्यादिना वैराजात्मना विश्वा विश्वरूपिणी हकारार्थसूर्यात्मना सन्ततोदया चिच्छक्तिः, तदुपरि बैन्दवं शैवतत्त्वं चिन्मात्रं विन्यस्य चिन्मात्रादतिरिक्तं न किंचिदस्तीति । कूटत्रयव्यापके शिवशक्त्यात्मके कले ककारलकारे विचिन्त्य ककारलकारमूर्तिभूताम् ॥ ११ ॥

त्रिपुराम्बाविद्या

सैवेयमग्न्या[1]नने ज्वलतीति विचिन्त्य त्रिज्योतिषमीश्वरीं त्रिपुरामम्बां विद्यां स्पष्टीकुर्यात् ॥ १२ ॥

एवमेतेन स नः पर्षदति दुर्गाणि विश्वेत्यादिपरप्रकाशिनी प्रत्यग्भूता कार्या विद्येयमाह्वानकर्मणि सर्वतोधीरेति व्याचक्षते॥१३॥

एवमेतद्विद्याऽष्टकं महामायादेव्यङ्गभूतं व्याचक्षते ॥ १४ ॥

स्वारातिवर्गानग्निं शीतलज्ञानाग्निरूपेण या दहाति दहति सैवेयमग्न्यानने अग्न्यानना ज्वलतीति विचिन्त्य सूर्येन्द्वग्न्यात्मना त्रिज्योतिषम् ॥ १२ ॥ परप्रकाशिनी सम्यग्ज्ञानरूपेण परप्रकाशकत्वात् स्वयं प्रत्यग्भूता कार्या विद्येयमाह्वानकर्मणि कारणीभूतविद्यात्मना ज्ञानरूपिणी कार्यभावमापन्ना विद्यात्मना

[1] सने—क.

इयमाह्वानकर्मणि आकर्षणादिषट्कर्मोपकर्मसु विनियुज्यते । एवं सर्वाकारेणेयं सर्वकार्यकरणे सर्वतो धीरेति समर्थेति तत्स्वरूपज्ञाः व्याचक्षते ॥ १३ ॥ एवमेतत् त्रिपुराविद्याऽऽदित्रिपुराम्बाविद्याऽन्तं विद्याऽष्टकं महामायादेव्यङ्गभूतं जातवेदस इति मन्त्रनिमग्नं सम्यगुद्धृत्य चिच्छक्त्यात्मना स्पष्टीकृत्य परतत्त्वतया व्याचक्षते तद्विदो व्याख्यां कुर्वन्तीत्यर्थः ॥ १४ ॥

श्रीचक्रस्यानुलोमक्रमः

देवा ह वै भगवन्तमब्रुवन् महाचक्रनायकं नो ब्रूहीति सार्वकामिकं सर्वाराध्यं सर्वरूपं विश्वतोमुखं मोक्षद्वारं यद्योगिन उपविश्य परं ब्रह्म भित्त्वा निर्वाणमुपविशन्ति ॥ १५ ॥

तान् होवाच भगवान् श्रीचक्रं व्याख्यास्याम इति ॥ १६ ॥

त्रिकोणं त्र्यश्रं कृत्वा तदन्तर्मध्यवर्तिमानयष्टिरेखामाकृष्य विशालं नीत्वाऽग्रतो योनिं कृत्वा [1]पूर्वयोन्यग्ररूपिणीं मानयष्टिं कृत्वा तां सर्वोर्ध्वां नीत्वा योनिं कृत्वाऽऽद्यं त्रिकोणं चक्रं भवति द्वितीयमन्तरालं भवति तृतीयमष्टयोन्यङ्कितं भवति ॥ १७ ॥

अथाष्टारचक्राद्यन्तविदिक्कोणाग्रतो रेखां नीत्वा साध्याद्या-कर्षणबद्धरेखां नीत्वेत्येवमथोर्ध्वसंपुटयोन्यङ्कितं कृत्वा कक्षाभ्य ऊर्ध्वगरेखाचतुष्टयं कृत्वा यथाक्रमेण मानयष्टिद्वयेन दशयोन्यङ्कितं चक्रं भवति ॥ १८ ॥

अनेनैव प्रकारेण पुनर्दशारचक्रं भवति ॥ १९ ॥

[1] पूर्वे—अ १, अ २, क.

मध्यत्रिकोणाग्रचतुष्टयाद्रेखा[1]चतुष्टयाग्रकोणेषु संयोज्य तद्द्-शारांशतो [2]नीतां मानयष्टिरेखां योजयित्वा चतुर्दशारं चक्रं भवति ॥ २० ॥

ततोऽष्टपत्रसंवृतं चक्रं भवति षोडशपत्रसंवृतं चक्रं भवति पार्थिवं चक्रं चतुर्द्वारं भवति ॥ २१ ॥

एवं सृष्टियोगेन चक्रं व्याख्यातम् ॥ २२ ॥

इन्द्रादयो देवाः सदाशिवमुखतः साङ्गोपाङ्गविशिष्टामादिविद्यां यथा-वच्छ्रुत्वा तत्पूजापीठसृष्ट्यादिचक्रराजेयत्ताबुभुत्सया भगवन्तमब्रुवन्नित्याह—देवा इति । सर्वकामप्रदत्वात् सार्वकामिकं सर्वाराध्यं सर्वरूपं सर्वरूपेण सर्वैरप्या-राधितत्वाद्विराड्रूपत्वाच्च सर्वतोमुखं चित्तशुद्धिप्राप्यज्ञानद्वारा मोक्षहेतुत्वात् मोक्षद्वारं यच्चक्राराधने योगिनः उपविश्य तत्प्रसादलब्धज्ञानद्वारा प्रत्यक्पर-ब्रह्मणोर्भेदग्रन्थिं भित्त्वा प्रत्यग्ब्रह्मैक्यलक्षणं निर्वाणमुपविशन्ति तच्चक्रनायकं नो ब्रूहि ॥ १५ ॥ इति देवैः पृष्टः तान् होवाच भगवान् सदाशिवः श्रीचक्रं व्याख्यास्याम इति ॥ १६ ॥ कस्तत्प्रकार इत्यत्र—आदौ त्रिकोणं त्र्यश्रं कृत्वेत्यादि ॥ १७–२२ ॥

श्रीचक्रस्य प्रतिलोमक्रमः

नवात्मकं चक्रं प्रातिलोम्येन वा वच्मि—प्रथमं चक्रं त्रैलोक्यमोहनं भवति साणिमाद्यष्टकं भवति समात्रष्टकं भवति ससर्वसंक्षोभिण्यादिदशकं भवति सप्रकटं भवति त्रिपुरयाऽधिष्ठितं भवति ससर्वसंक्षोभिणीमुद्रया जुष्टं भवति ॥ २३ ॥

[1] चराग्र—अ १, अ २, क, मु.

[2] ' नीतां ' इति नास्ति—उ.

द्वितीयं सर्वाशापरिपूरकं चक्रं भवति सकामाद्याकर्षिणीषोडशाकं भवति सगुप्तं भवति त्रिपुरेश्वर्याऽधिष्ठितं भवति सर्वविद्राविणीमुद्रया जुष्टं भवति ॥ २४ ॥

तृतीयं सर्वसंक्षोभणं चक्रं भवति सानङ्गकुसुमाद्यष्टकं भवति सगुप्ततरं भवति त्रिपुरसुन्दर्याऽधिष्ठितं भवति सर्वाकर्षिणीमुद्रया जुष्टं भवति ॥ २५ ॥

तुरीयं सर्वसौभाग्यदायकं चक्रं भवति ससर्वसंक्षोभिण्यादिद्वि-सप्तकं भवति ससंप्रदायं भवति त्रिपुरवासिन्याऽधिष्ठितं भवति ससर्ववशंकरीमुद्रया जुष्टं भवति ॥ २६ ॥

[1]पञ्चमं तुरीयान्तं सर्वार्थसाधकं चक्रं भवति ससर्वसिद्धि-प्रदादिदशकं भवति [2]सकलकौलं भवति त्रिपुरामहालक्ष्म्याऽधिष्ठितं भवति महोन्मादिनीमुद्रया जुष्टं भवति ॥ २७ ॥

षष्ठं सर्वरक्षाकरं चक्रं भवति ससर्वज्ञत्वादिदशकं भवति [3]सनिगर्भं भवति त्रिपुरमालिन्याऽधिष्ठितं भवति महाङ्कुशमुद्रया जुष्टं भवति ॥ २८ ॥

सप्तमं सर्वरोगहरं चक्रं भवति [4]सवशिन्याद्यष्टकं भवति सरहस्यं भवति त्रिपुरसिद्धयाऽधिष्ठितं भवति खेचरीमुद्रया जुष्टं भवति ॥२९॥

अष्टमं सर्वसिद्धिप्रदं चक्रं भवति सायुधचतुष्टयं भवति सपरापररहस्यं भवति त्रिपुराम्बयाऽधिष्ठितं भवति बीजमुद्रया जुष्टं भवति ॥ ३० ॥

[1] 'पञ्चमं' इति नास्ति—अ १, अ २, क, मु.
[2] सकुल—अ १, अ २.
[3] सनिर्गर्भ—अ १, अ २.
[4] सर्ववशि—अ १, मु.

नवमं चक्रनायकं सर्वानन्दमयं चक्रं भवति सकामेश्वर्यादित्रिकं भवति सातिरहस्यं भवति महात्रिपुरसुन्दर्याऽधिष्ठितं भवति योनिमुद्रया जुष्टं भवति ॥ ३१ ॥

संक्रामन्ति वै सर्वाणि छन्दांसि चक्राराणि तदेव चक्रं श्रीचक्रम् ॥ ३२ ॥

बिन्दुस्थानमारभ्य भूपुरान्तं सृष्टिचक्रं प्रकटयित्वाऽथ नवात्मकमिति। तत्रादौ प्रथममिति। ब्राह्म्यादिसमात्रष्टकं भवति ॥ २३ ॥ द्वितीयावरणात्मकद्वितीयचक्रेयत्तामाह---द्वितीयमिति ॥ २४–२६ ॥ सकलकौलं सर्वाधिष्ठानं भवति ॥ २७ ॥ सनिगर्भं भवति अन्तरालरहितमित्यर्थः ॥ २८–२९ ॥ पाशाङ्कुशादिसायुधचतुष्टयं भवति ॥ ३०–३१ ॥ एवं नवचक्रलक्षणमुक्तं, छन्दांस्येवात्राराणि भूत्वा वर्तन्त इत्याह—संक्रामन्तीति। यदेवं निष्पन्नं तदेव चक्रं श्रीचक्रम ॥ ३२ ॥

### श्रीचक्रे महात्रिपुरसुन्दरीपूजा

तस्य नाभ्यामग्निमण्डले सूर्याचन्द्रमसौ तत्रोंकारपीठं पूजयित्वा तत्राक्षरं बिन्दुरूपं तदन्तर्गतव्योमरूपिणीं विद्यां परमां स्मृत्वा महात्रिपुरसुन्दरीमावाह्य

क्षीरेण स्नापिते देवि चन्दनेन विलेपिते।
बिल्वपत्रार्चिते देवि दुर्गेऽहं शरणं गतः ॥

इत्येकयर्चा प्राार्थ्य मायालक्ष्मीमन्त्रेण पूजयेदिति भगवानब्रवीत् ॥ ३३ ॥

बिन्दुरूपं ईश्वरस्वरूपं तदन्तर्गतव्योमरूपिणीं चित्सामान्यात्मिकां विद्याम्। अनेन मन्त्रेण देवीं ध्यात्वा पूजयेदित्याह—क्षीरेणेति। सदाशिवो भगवान् ॥ ३३ ॥

पूजाफलम्

एतैर्मन्त्रैर्भगवतीं यजेत् । ततो देवी प्रीता भवति स्वात्मानं दर्शयति । तस्माद्य एतैर्मन्त्रैर्यजति स ब्रह्म पश्यति स सर्वं पश्यति सोऽमृतत्वं च गच्छति । य एवं वेदेति महोपनिषत् ॥ ३४ ॥

तत्तद्भावानुरोधेन सविशेषं निर्विशेषं वा स्वात्मानं दर्शयति । यस्मादेवं तस्मात् । स सर्वं पश्यति, देवताऽतिरिक्तं न किंचिदपि पश्यति । य एवं द्रष्टा सोऽमृतत्वं च गच्छति । देवतासान्निध्यार्थमियमुपनिषदारभ्यत इति यत् प्रतिज्ञातं तत् सम्यगुपसंहृतमित्यर्थः । इति महोपनिषच्छब्दो द्वितीयोपनिषत्समाप्त्यर्थः ॥ ३४ ॥

इति द्वितीयोपनिषत्

---

# तृतीयोपनिषत्

मुद्रासामान्यलक्षणम्

देवा ह वै मुद्राः सृजेयमिति भगवन्तमब्रुवन् । तान् होवाच भगवा[1]नवनिकृतजानुमण्डलं विस्तीर्य पद्मासनं कृत्वा मुद्राः सृजेतेति ॥ १ ॥

[1] नवनी—अ १, अ २, क.

बिन्दुत्रिकोणवसुकोणदशारयुग्मं
मन्वश्रनागदलसंयुतषोडशारम् ।
वृत्तत्रयं च धरणीसदनत्रयं च
श्रीचक्रमेतदुदितं परदेवतायाः ॥

इत्युक्तरीत्याऽनुलोमप्रतिलोमाभ्यां सृष्टिचक्रमुपसंहारचक्रं च यथाव्याख्यातमवगम्य देवा विशेषतो योन्यादिनवमुद्रालक्षणबुभुत्सया भगवन्तमब्रुवन्नित्याह—देवा इति । कृत्वा बद्ध्वा ॥ १ ॥

योन्यादिनवमुद्रालक्षणम्

स सर्वानाकर्षयति यो योनिमुद्रामधीते स सर्वं वेत्ति स सर्वफलमश्नुते स सर्वान् भञ्जयति स विद्वेषिणं स्तम्भयति । मध्यमे अनामिकोपरि विन्यस्य कनिष्ठिकाङ्गुष्ठतोऽधीते मुक्तयोस्तर्जन्योर्दण्डवदधस्तादेवं[1]विधा प्रथमा संपद्यते ॥ २ ॥

सैव मिलितमध्यमा द्वितीया ॥ ३ ॥

तृतीयाऽङ्कुशाकृतिरिति ॥ ४ ॥

प्रातिलोम्येन पाणी सङ्घर्षयित्वाऽङ्गुष्ठौ साग्रिमौ समाधाय तुरीया ॥ ५ ॥

परस्परं कनीयसेदं मध्यमाबद्धे अनामिके दण्डिन्यौ तर्जन्या[2]वालिङ्ग्यावष्टभ्य मध्यमा[3]नखमिलिताङ्गुष्ठौ पञ्चमी ॥६॥

सैवाग्रेऽङ्कुशाकृतिः षष्ठी ॥ ७ ॥

[1] विधाय—अ २. विधया—उ १.

[2] वा आलि—अ १, अ २, क.

[3] नमि—उ.

दक्षिणशये वामबाहुं कृत्वाऽन्योन्यानामिके कनीयसीमध्यगते मध्यमे तर्जन्याक्रान्ते सरलास्वङ्गुष्ठौ खेचरी सप्तमी ॥ ८ ॥

सर्वोर्ध्वे सर्वसंहृति स्वमध्यमानामिकाऽन्तरे कनीयसे पार्श्वयोस्तर्जन्यावङ्कुशाढ्ये युक्ता साङ्गुष्ठयोगतोऽन्योन्यं सममञ्जलिं कृत्वाऽष्टमी ॥ ९ ॥

परस्परमध्यमापृष्ठवर्तिन्यावनामिके तर्जन्याक्रान्ते समे मध्यमे आदायाङ्गुष्ठौ मध्यवर्तिनौ नवमी प्रतिपद्यत इति ॥ १० ॥

तत्र वक्ष्यमाणयोनिमुद्रां स्तुवन् तल्लक्षणमाह—स इति । देवताप्रसादेन स सर्वं वेत्ति । स सर्वान् स्वामित्रान् भञ्जयति भग्नान् करोति । योनिमुद्रालक्षणमाह—मध्यम इति ॥ २ ॥ द्वितीयं बीजमुद्रालक्षणमाह—सेति ॥ ३ ॥ तृतीयं खेचरीमुद्रालक्षणमाह—तृतीयाङ्कुशाकृतिरिति ॥ ४ ॥ तुरीयं महाङ्कुशमुद्रालक्षणमाह—प्रातिलोम्येनेति ॥ ५ ॥ पञ्चमं महोन्मादिनीमुद्रालक्षणमाह—परस्परमिति ॥ ६ ॥ षष्ठं सर्ववशंकरीमुद्रालक्षणमाह—सैवेति ॥ ७ ॥ सप्तमं सर्वाकर्षिणीमुद्रालक्षणमाह—दक्षिणेति ॥ ८ ॥ अष्टमं सर्वविद्राविणीमुद्रालक्षणमाह—सर्वोर्ध्व इति ॥ ९ ॥ नवमं सर्वसंक्षोभिणीमुद्रालक्षणमाह—परस्परेति । योन्यादिसर्वसंक्षोभिण्यन्तमुद्रानवकलक्षणं सम्यक् प्रपञ्चितमित्यर्थः ॥ १० ॥

### पञ्चबाणमुद्रालक्षणम्

सैवेयं कनीयसे समे अन्तरितेऽङ्गुष्ठौ समावन्तरितौ कृत्वा त्रिखण्डापद्यत इति । पञ्च बाणाः पञ्चाद्या मुद्राः स्पष्टाः ॥ ११ ॥

पञ्चबाणमुद्रालक्षणमाह—सेति ॥ ११ ॥

नवबीजोद्धारः

क्रोमङ्कुशा [1]हसखफ्रें खेचरी [2]हस्त्रौं बीजाष्टमी वाग्भवाद्या नवमी दशमी च संपद्यत इति य एवं वेद ॥ १२ ॥

ततो नवबीजान्युद्धरति—क्रोमिति । क्रों इत्यङ्कुशबीजं हसेति शिवशक्तिबीजे खेति मारणबीजं फ्रें इति मोहनबीजं हसखफ्रें इति खेचरीबीजं हेति सूर्यबीजं स्त्रौमिति कामबीजं केति वाग्भवाद्यबीजं आहत्य बीजानि नव । आदिशब्दार्थकामकूटाद्यबीजं हेति दशमी च संपद्यते । य एवं वेद स मन्त्रसिद्धो भवतीत्यर्थः ॥ १२ ॥

कामकलाचक्रम्

अथातः कामकलाभूतं चक्रं व्याख्यास्यामो ह्रीं क्लीमैं ब्लूँ [3]स्त्रौमेते पञ्च कामाः सर्वचक्रं व्याप्य वर्तन्ते । मध्यमं कामं सर्वावसाने संपुटीकृत्य ब्लूङ्कारेण संपुटं व्याप्तं कृत्वा [4]द्रिरैंद्वयेन मध्यवर्तिना साध्यं बद्ध्वा भूर्जपत्रे यजति । तच्चक्रं यो वेत्ति स सर्वं वेत्ति स [5]सकलान् लोकानाकर्षयति स सर्वं स्तम्भयति । नीलीयुक्तं चक्रं शत्रून् मारयति गतिं स्तम्भयति । लाक्षायुक्तं कृत्वा सकललोकं वशीकरोति । नवलक्षजपं कृत्वा रुद्रत्वं प्राप्नोति । मातृकया वेष्टितं कृत्वा विजयी भवति । भगाङ्ककुण्डं कृत्वाऽग्निमाधाय हविषा योषितो वशीकरोति । पुरुषे हुत्वा वर्तुले वा हुत्वा

[1] हसखफ्रें—अ २, मु.
[2] हस्त्रौं—अ १, अ २. हस्त्रीं—क.
[3] स्त्रौमे—अ १, अ २. स्त्रामे—क.
[4] द्रुमद्वै—अ १, अ २, क.
[5] सकललो—अ १, अ २, क.

श्रियमतुलां प्राप्नोति । चतुरश्रे हुत्वा वृष्टिर्भवति । त्रिकोणे हुत्वा शत्रून् मारयति गतिं स्तम्भयति । पुष्पाणि हुत्वा विजयी भवति । महारसैर्हुत्वा परमानन्दनिर्भरो भवति । महारसाः षड्रसाः ॥ १३ ॥

निष्कामिनां स्वाप्त्युपायचक्रस्वरूपं सप्रपञ्चं प्रतिपाद्य तद्विपरीतानां कामिनां सर्वकामावाप्तिहेतुतया पञ्चकामभूषितं कामकलाभूतं चक्रं प्रकटयाम इत्याह— **अथेति** । तत्र ऐमिति मध्यमं कामं सर्वावसाने स्त्रौमित्यन्तिमकामे ऐं स्त्रौं ऐं इति **संपुटीकृत्य** पुनस्तत् ब्लूंकारेण संपुटं व्याप्तं कृत्वा संपुटं यथा ब्लूंकारान्तरितं भवेत् तथा तेनैव संवेष्ट्य द्विः ऐंद्वयेन मध्यवर्तिना द्विपार्श्वभूषणैंकारद्वयेन मध्यवर्तिना स्त्रौंकारेण सह वाञ्छितार्थसिद्धिं मे कुर्विति साध्यं बध्वा । **पुरुषे** पुरुषाकारकुण्डे हुत्वा वर्तुले वा कुण्डे हुत्वा । महारसाः षड्रसाः मधुराम्लादय इत्यर्थः ॥ १३ ॥

क्षेत्रेशपूजा

गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमम् ।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिः सीद सादनम् ॥

इत्येव[1]माद्यमक्षरं तदन्त्यबिन्दुपूर्णमित्यनेनाङ्कं स्पृशति । गं गणेशाय नम इति गणेशं नमस्कुर्वीत । ॐ नमो भगवते भस्माङ्गरागायोग्रतेजसे हनहन दहदह पचपच मथमथ विध्वंसयविध्वंसय हलभञ्जन शूलमूले व्यञ्जनसिद्धिं कुरुकुरु समुद्रं पूर्वप्रतिष्ठितं शोषयशोषय स्तम्भयस्तम्भय परमन्त्रपरयन्त्रपरतन्त्रपरदूतपरकटकपरच्छेदनकर विदारयविदारय च्छिन्धिच्छिन्धि ह्रीं फट् स्वाहा । अनेन क्षेत्राध्यक्षं पूजयेदिति ॥ १४ ॥

[1] माद्यक्ष—अ १, उ.

अविघ्नेन स्वाभिलषितप्रयोगसिद्धये गणानां त्वेति मन्त्रेण गणेशं नमस्कृत्य क्षेत्रेशं पूजयेदित्याह—गणानामिति। आद्यक्षरं गेति तदन्त्यबिन्दुपूर्णं गमिति। ततः किमित्यत्र—ओमिति। इतिशब्दो मन्त्रसमाप्त्यर्थः ॥ १४ ॥

कुलकुमारीपूजा

कुलकुमारि विद्महे मन्त्रकोटि सुधीमहि।
तन्नः कौलिः प्रचोदयात् ॥

इति कुमार्यर्चनं कृत्वा यो वै साधकोऽभिलिखति सोऽमृतत्वं गच्छति स यश आप्नोति स परमायुष्यमथ वा परं ब्रह्म भित्त्वा तिष्ठति य एवं वेदेति महोपनिषत् ॥ १९ ॥

ततः कुमारीगायत्र्या तामर्चयेदित्याह—कुलेति। अभिलिखति अभिध्यायति। यद्ययं निष्कामस्तदा सोऽमृतत्वं गच्छति ब्रह्मविदिति स यश आप्नोति। परं ब्रह्म भित्त्वा ज्ञात्वा तद्भावमेत्य तिष्ठति। इति महोपनिषच्छब्दस्तृतीयोपनिषत्परिसमाप्त्यर्थः ॥

इति तृतीयोपनिषत्

# चतुर्थोपनिषत्

मृत्युंजयोपदेशः

देवा ह वै भगवन्तमब्रुवन् देव गायत्रं हृदयं नो व्याख्यातं त्रैपुरं सर्वोत्तमम् ॥ १ ॥

जातवेदससूक्तेनाख्यातं नत्त्रैपुराष्टकम् ।

यदिष्ट्वा मुच्यते योगी जन्मसंसारबन्धनात् ॥ २ ॥

अथ मृत्युंजयं नो ब्रूहीत्येवं ब्रुवतां सर्वेषां देवानां श्रुत्वेदं वाक्यमथातस्त्र्यम्बकेनानुष्टुभेन मृत्युंजयं दर्शयति ॥ ३ ॥

यन्नो वक्तव्यं तत् सर्वं भवतोक्तमवशिष्टमृत्युंजयं ब्रूहीति देवाः पृच्छन्तीत्याह—देवा इति । आदिविद्यासमन्वयतया प्रथमोपनिषदि हृदयं गूढार्थं नो व्याख्यातम् । किं तत् त्रैपुरम् ॥१॥ किं च— जातवेदससूक्तेनेति । ततः यदिष्ट्वेति ॥ २–३ ॥

त्र्यम्बकादिशब्दार्थविवरणम्

कस्मात् त्र्यम्बकमिति । त्रयाणां पुराणामम्बकं स्वामिनं तस्मादुच्यते त्र्यम्बकमिति ॥ ४ ॥

अथ कस्मादुच्यते यजामह इति । यजामहे सेवा[1]महे वस्तु महेत्यक्षरद्वयेन कूटत्वेनाक्षरैकेन मृत्युंजयमित्युच्यते तस्मादुच्यते यजामह इति ॥ ५ ॥

अथ कस्मादुच्यते सुगन्धिमिति । सर्वतो यश आप्नोति तस्मादुच्यते सुगन्धिमिति ॥ ६ ॥

अथ कस्मादुच्यते पुष्टिवर्धनमिति । यः सर्वान् लोकान् सृजति यः सर्वान् लोकांस्तारयति यः सर्वान् लोकान् व्याप्नोति तस्मादुच्यते पुष्टिवर्धनमिति ॥ ७ ॥

अथ कस्मादुच्यते उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीयेति । [2]संलग्नत्वादुर्वारुकमिव मृत्योः संसारबन्धनात् संलग्नत्वाद्बद्धत्वान्मोक्षीभवति मुक्तो भवति ॥ ८ ॥

[1] महे स्तुम—अ २. महे वस्तुवहे—अ १, उ १. [2] मुल—अ १, अ २.

अथ कस्मादुच्यते मामृतादिति । अमृतत्वं प्राप्नोत्यक्षरं प्राप्नोति स्वयं रुद्रो भवति ॥ ९ ॥

तत्र त्र्यम्बकशब्दार्थं पृच्छति—**कस्मात् त्र्यम्बकमिति** । तच्छब्दार्थमाह—**त्रयाणामिति** । व्यष्टिसमष्ट्यात्मकस्थूलसूक्ष्मकारणशरीराणां जीवेश्वरात्मना **अम्बकम्** ॥ ४ ॥ यजामहे स्वात्मधिया सेवामहे स्तुमहेत्यक्षरद्वयेन त्र्यम्बेति तदुपरि कूटत्वेन विद्यमानाक्षरैकेन सबिन्दुककारेण मृत्युञ्जयमित्युच्यते ॥५–७॥ उर्वारुकमिति कश्चन शलाटुविशेषस्तदग्रमारभ्य मध्यान्तं चतुर्धा विदार्य तत्र सलवणबृहन्मरीचिचूर्णमापूर्य पुनः सर्वमेकीकृत्य सूत्रेणाबध्य कालान्तरे तद्बन्धमोक्षणतश्चतुर्धा भिन्नसन्धिबन्धविमोक्षो भवति तथेत्यारोपितबन्धमोक्षणान्मुक्तो भवतीत्यर्थः ॥ ८–९ ॥

भगवतीदर्शनसाधनमन्त्रः

देवा ह वै भगवन्तमूचुः—सर्वं नो व्याख्यातम् । अथ कैर्मन्त्रैः स्तुता भगवती स्वात्मानं दर्शयति तान् सर्वान् शैवान् वैष्णवान् सौरान् गाणेशान् नो ब्रूहीति ॥ १० ॥

स होवाच भगवान्—

त्र्यम्बकेनानुष्टुभेन मृत्युंजयमुपासयेत् ।
पूर्वेणाध्वना व्याप्तमेकाक्षरमिति स्मृतम् ॥ ११ ॥

ॐ नमः शिवायेति याजुषमन्त्रोपासको रुद्रत्वं प्राप्नोति कल्याणं प्राप्नोति य एवं वेद ॥ १२ ॥

तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥ १३ ॥

विष्णोः सर्वतोमुखस्य स्नेहो यथा पललपिण्डमोतप्रोतमनुव्याप्तं व्यतिरिक्तं व्याप्नुत इति व्याप्नुवतो विष्णोस्तत्परमं पदं परं

व्योमेति परमं पदं पश्यन्ति वीक्षन्ते सूरयो ब्रह्मादयो देवास इति सदा हृदय आदधते। तस्माद्विष्णोः स्वरूपं वसति तिष्ठति भूतेष्विति वासुदेव इति ॥ १४ ॥

ॐ नम इति त्रीण्यक्षराणि। भगवत इति चत्वारि। वासुदेवायेति पञ्चाक्षराणि। एतद्वै वासुदेवस्य द्वादशार्णमभ्येति। सोपप्लवं तरति स सर्वमायुरेवैति विन्दते प्राजापत्यं रायस्पोषं गौपत्यं च समश्नुते ॥ १५ ॥

प्रत्यगानन्दं ब्रह्मपुरुषं प्रणवस्वरूपमकार उकारो मकार इति। तानेकधा संभवति तदोमिति ॥ १६ ॥

हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत्।
नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं
बृहत् ॥ इति ॥ १७ ॥

हंसः इत्येतन्मनोरक्षरद्वितीयेन प्रभापुञ्जेन सौरेण धृतमब्जा गोजा ऋतजा अद्रिजा ऋतं सत्याप्रभापुञ्जिन्युषासंध्याप्रज्ञाभिः शक्तिभिः पूर्वं सौरमधीयानः सर्वफलमश्नुते। स व्योम्नि परमे धामनि सौरे निवसते ॥ १८ ॥

गणानां त्वेति त्रैष्टुभेन पूर्वेणाध्वना मनुनैकार्णेन गणाधिपमभ्यर्च्य गणेशत्वं प्राप्नोति ॥ १९ ॥

अथ गायत्री सावित्री सरस्वत्यजपा मातृका प्रोक्ता तया सर्वमिदं व्याप्तमिति ॥ २० ॥

*ऐं वागीश्वरि विद्महे क्लीं कामेश्वरि धीमहि । सौस्तन्नः* शक्तिः प्रचोदयादिति गायत्री प्रातः सावित्री मध्यन्दिने सरस्वती सायमिति निरन्तरमजपा हंस इत्येव मातृका पञ्चाशद्वर्णविग्रहेणा-कारादिक्षकारान्तेन व्याप्तानि भुवनानि शास्त्राणि च्छन्दांसीत्येवं भगवती सर्वं व्याप्नोतीत्येव तस्यै वै नमो नम इति ॥ २१ ॥

तान् भगवानब्रवीदेतैर्मन्त्रैर्नित्यं देवीं स्तौति स सर्वं पश्यति सोऽमृतत्वं च गच्छति य एवं वेदेत्युपनिषत् ॥ २२ ॥

पुनर्देवाः कैर्मन्त्रैः स्तुता सती स्वात्मानं दर्शयति तान्नो ब्रूहीति पृच्छन्तीत्याह—देवा इति । ऊचुः किमिति सर्वमिति । स्वात्मानं दर्शयति तस्याश्चिच्छक्तित्वेन सर्वात्मकत्वात् ॥ १० ॥ देवैरेवं पृष्टः स होवाच भगवान् किमिति त्र्यम्बकेनेति । एकाक्षरमिति स्मृतं "ओमित्येकाक्षरं विद्धि" इति श्रुतेः ॥ ११–१३ ॥ श्रुतिरेव स्ववाक्यं व्याचष्टे विष्णोरिति ॥१४–२१ ॥ चिच्छक्त्यतिरिक्तं न किंचिदस्तीति दर्शनाच्छक्त्यंशमपि ग्रसित्वा चिन्मात्रादति-रिक्तं न किंचिदस्तीति ज्ञानसमकालं सोऽमृतत्वं च गच्छति ॥ २२ ॥

इति चतुर्थोपनिषत्

## पञ्चमोपनिषत्

निर्विशेषब्रह्मजिज्ञासा

देवा ह वै भगवन्तमब्रुवन् स्वामिन्नः कथितं [1]स्फुटं क्रियाकाण्डं सविषयं त्रैपुरमिति । अथ परमं निर्विशेषं कथयस्वेति ॥ १ ॥

[1] सर्वं—अ १. स्पष्टं—अ

देवा भगवन्मुखतः सविशेषब्रह्मस्वरूपं सप्रपञ्चमवगम्य मुख्यामृतत्वसाधननिर्विशेषब्रह्मावगतिबुभुत्सया भगवन्तं पृच्छन्तीत्याह—देवा इति । उपासनाकाण्डमपि सम्यक् प्रपञ्चितमिति यथावदवगतम् ॥ १ ॥

परमात्मनिरूपणम्

तान् होवाच भगवान् तुरीयया माययाऽन्त्यया निर्दिष्टं परमं ब्रह्मेति परमपुरुषं चिद्रूपं परमात्मेति । श्रोता मन्ता द्रष्टाऽऽदेष्टा स्प्रष्टाऽऽघोष्टा विज्ञाता प्रज्ञाता सर्वेषां पुरुषाणामन्तःपुरुषः स आत्मा स विज्ञेय इति ॥ २ ॥

न तत्र [1]लोकालोका न तत्र [2]देवादेवाः पशवोऽपशवस्तापसो न तापसः पौल्कसो न पौल्कसो विप्रा न विप्राः । स इत्येकमेव परं ब्रह्म विभ्राजति निर्वाणम् । न तत्र देवा ऋषयः पितर ईशते । प्रतिबुद्धः सर्वविद्ये[दि]ति ॥ ३ ॥

देवैरेवं पृष्टः तान् होवाच भगवान् । किमिति ? तुरीयया माययाऽन्त्यया ज्ञानविज्ञानसम्यग्ज्ञानरूपया निर्दिष्टं परमं ब्रह्मेति यदवशिष्यते तदेव परमपुरुषं चिद्रूपं परमात्मेति यूयं जानथ । अयमेव हि स्वाज्ञविकल्पितोपाधियोगात् श्रोतेत्यादि । य एवं दृष्टः स एव श्रुत्याचार्यप्रसादसिद्धस्वाज्ञविकल्पितनानोपाध्यसंभवप्रबोधसमकालं सर्वेषां विश्वविराडोत्रादीनां पुरुषाणामप्यन्तःपुरुषः ॥ २ ॥ न हि तत्र तदतिरेकेण लोकादिविभ्रमोऽस्ति, स्वाज्ञादिदृष्टिमोहे सत्यसति तन्निष्प्रतियोगिकैकं ब्रह्म स्वमात्रमवशिष्यत इत्याह—न तत्रेति । ब्रह्मातिरिक्तं न हि सर्वमस्तीति यो वेद स सर्ववित् तद्ब्रह्म स्वावशेषधियैतीति ॥ ३ ॥

मनोनिरोधः

तत्रैते श्लोका भवन्ति—

अतो निर्विषयं नित्यं मनः कार्यं मुमुक्षुणा ।
यतो निर्विषयो नाम मनसो मुक्तिरिष्यते ॥ ४ ॥

[1] लोका अलोका—उ, मु.   [2] देवा अदेवा—उ, मु.

मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च ।
अशुद्धं कामसंकल्पं शुद्धं कामविवर्जितम् ॥ ५ ॥
मन एव मनुष्याणां कारणं बन्धमोक्षयोः ।
बन्धनं विषया[1]सक्तिर्मुक्त्यै निर्विषयं [2]मनः ॥ ६ ॥
निरस्तविषयासङ्गं [3]संनिरुद्धं मनो हृदि ।
यदा यात्यमनीभावस्तदा तत्परमं पदम् ॥ ७ ॥
तावदेव निरोद्धव्यं यावद्धृदि गतं क्षयम् ।
एतज्ज्ञानं च ध्यानं च शेषोऽन्यो ग्रन्थविस्तरः ॥ ८ ॥

अस्मिन्नर्थे एते वक्ष्यमाणा श्लोकाः मन्त्रा भवन्तीत्याह—तत्रेति । ब्रह्मातिरेकेण मनस्तत्कार्यमस्तीति यदि भ्रान्तिस्तदा अत इति ॥ ४ ॥ शुद्धाशुद्धभेदेन तद्द्विधा भिद्यत इत्याह—मनो हीति ॥ ५–८ ॥

ब्रह्मज्ञानाद्ब्रह्मभावप्राप्तिः

नैव चिन्त्यं न चाचिन्त्यं न चिन्त्यं चिन्त्यमेव च ।
पक्षपातविनिर्मुक्तं ब्रह्म संपद्यते ध्रुवम् ॥ ९ ॥

नैव चिन्त्यं स्वातिरिक्तमस्तीति, नचाचिन्त्यं स्वयमपि नास्तीति, एतदुभयमिति न चिन्त्यं, स्वातिरिक्तापह्नवसिद्धः स्वयं निष्प्रतियोगिकब्रह्ममात्रमवशिष्यत इति चिन्त्यमेव च ॥ ९ ॥

सविशेषब्रह्मानुसन्धानान्निर्विशेषब्रह्माधिगमः

स्वरेण [4]संलयेद्योगी स्वरं संभावयेत परम् ।
अस्वरेण तु भावेन न भावो भाव इष्यते ॥ १० ॥

[1] सक्तं मु—अ १. [2] स्मृतं—अ १. [3] संनिरुध्य—अ १. [4] सल्लयो—अ १.

[1]तदेव निष्कलं ब्रह्म निर्विकल्पं निरञ्जनम् ।
तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते क्रमात् ॥ ११॥
निर्विकल्पमनन्तं च हेतुदृष्टान्तवर्जितम् ।
अप्रमेयमनाद्यं च यज्ज्ञात्वा मुच्यते बुधः ॥ १२ ॥
न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ १३ ॥

स्वरेण हंसयोगेन ॥ १०–१७ ॥

निरुपाधिकात्मदर्शनम्

एक एवात्मा मन्तव्यो जाग्रत्स्वप्नसुषुप्तिषु ।
स्थानत्रयव्यतीतस्य पुनर्जन्म न विद्यते ॥ १४ ॥
एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ १५ ॥
घटसंवृतमाकाशं [2]नीयमाने घटे यथा ।
घटो नीयेत नाकाशं तथा जीवो नभोपमः ॥ १६ ॥
घटवद्विविधाकारं भिद्यमानं पुनः पुनः ।
तद्भेदे च न जानाति स जानाति च नित्यशः ॥ १७ ॥
[3]शब्दमायावृतो यावत्तावत्तिष्ठति पुष्कले ।
भिन्ने तमसि चैकत्वमेक एवानुपश्यति ॥ १८ ॥

स्वाज्ञानविकल्पितप्रपञ्चे भिन्ने ॥ १८ ॥

[1] तदेवं—अ १. [2] भिद्यमा—अ १, उ. [3] स च मा—अ १.

शब्दब्रह्मध्यानात् परब्रह्माधिगमः

शब्दार्णमपरं ब्रह्म तस्मिन् क्षीणे यदक्षरम् ।
तद्विद्वानक्षरं ध्याये[1]द्यदीच्छेच्छान्तिमात्मनः ॥ १९ ॥
द्वे ब्रह्मणी हि मन्तव्ये शब्दब्रह्म परं च यत् ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥ २० ॥
ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः ।
पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः ॥ २१ ॥

प्रणवो हि शब्दार्णमिति ॥ १९–२२ ॥

परमात्मदर्शनम्

गवामनेकवर्णानां क्षीरस्याप्येकवर्णता ।
क्षीरवत् पश्यति [2]ज्ञानं लिङ्गिनस्तु गवां यथा ॥ २२ ॥
ज्ञाननेत्रं समाधाय स महत् परमं पदम् ।
निष्कलं निश्चलं शान्तं [3]ब्रह्माहमिति संस्मरेत ॥ २३ ॥

इत्येकं परंब्रह्मरूपं सर्वभूताधिवासं तुरीयं जानीते सोऽक्षरे परमे व्योमन्यधिवसति ॥ २४ ॥ य एतां विद्यां तुरीयां ब्रह्मयोनिस्वरूपां तामिहायुषे शरणमहं प्रपद्ये ॥ २५ ॥

"अतो निर्विषयं" इत्यारभ्य "ब्रह्माहमिति संस्मरेत्" इत्यन्तममृतबिन्दूपनिषदि पदशो व्याख्यातं द्रष्टव्यम् ॥ २३ ॥ एवं वेदनफलमाह—

[1] यदि—क, अ १, अ २. [2] ज्ञानी—मु. [3] ब्रह्मैवाहमिति स्मरेत्—उ, उ १.

इतीति ॥ २४ ॥ ब्रह्मयोनिस्वरूपां तुरीयमायाया ब्रह्माविर्भावहेतुत्वात् ॥ २५ ॥

श्रीकामराजविद्यामहिमा

आकाशाद्यनुक्रमेण सर्वेषां वा एतद्भूतानामाकाशः परायणं सर्वाणि ह वा इमानि भूतान्याकाशादेव जायन्त आकाश एव लीयन्ते तस्मादेव जातानि जीवन्ति तस्मादा[1]काशं बीजं विद्यात् ॥ २६ ॥ तदेवाकाशपीठं स्पार्शनं पीठं तेजःपीठममृतपीठं रत्नपीठं जानीयात् । यो जानीते सोऽमृतत्वं च गच्छति ॥ २७ ॥ तस्मादेतां तुरीयां श्रीकामराजीयामेकादशधा भिन्नामेकाक्षरं ब्रह्मेति यो जानीते स तुरीयं पदं प्राप्नोति य एवं वेदेति महोपनिषत् ॥ २८ ॥

प्रपञ्चकल्पनाबीजं किमित्यत्र ब्रह्मेत्याह—**आकाशादीति** । यस्मादेवं सर्वाधिकरणं परमाकाशं **तस्मात्** ॥ २६ ॥ रत्नशब्देन शिष्टाबादिभूतद्वयमुच्यते रत्नस्य स्थलजलजत्वात् **रत्नपीठं** पञ्चभूततत्कार्यप्रपञ्चारोपापवादपीठमधिष्ठानं ब्रह्म **जानीयात्** ॥ २७ ॥ यस्मात् तुर्यमायाप्रदर्शितब्रह्मज्ञानात् तन्मात्रावस्थानलक्षणकैवल्यसिद्धिर्भवति **तस्मात् तुरीयां श्रीकामराजीयां** कामराजस्य परमेश्वरस्यानपायिनीम् । यद्वा—कैवल्यश्रीस्वरूपेण यथाकामं यथेच्छं राजत इति श्रीकामराट् परमात्मा तत्संबन्धिनी विद्या श्रीकामराजीया तां केवलप्रणवरूपिणीमकारोकारमकारार्धमात्राबिन्दुनादकलाकलाऽतीतशान्तिशान्त्यतीतोन्मनीभेदेन **एकादशधा भिन्नां** वस्तुतस्तुरीयोङ्काराग्रविद्योतं एकाक्षरं तुर्यतुरीयं ब्रह्म निष्प्रतियोगिकस्वमात्रं इति **यो जानीते** जानाति **स तुरीयं पदं** तुर्यप्रविभक्ततुर्यतुर्यं पदं

[1] काशजं—अ, अ १, मु.

प्राप्नोति । इतिशब्द: पञ्चमोपनिषत्समासयर्थ: । महोपनिषच्छब्दस्तु त्रिपुराता- पिन्युपनिषत्समाप्त्यर्थ: ॥ २८ ॥

इति पञ्चमोपनिषत्

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
श्रीमत्त्रिपुरतपनव्याख्यानं लिखितं स्फुटम् ।
त्रिपुरातपनव्याख्याग्रन्थजातं चतुश्शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणेऽशोतिसंख्यापूरकं
त्रिपुरातापिन्युपनिषद्विवरणं संपूर्णम्

# देव्युपनिषत्

**भद्रं कर्णेभिः—इति शान्तिः**

चिच्छक्तेः सर्वात्मरूपेण ब्रह्मत्वम्

सर्वे वै देवा देवीमुपतस्थुः काऽसि त्वं महादेवि ॥ १ ॥

साऽब्रवीदहं ब्रह्मस्वरूपिणी । मत्तः प्रकृतिपुरुषात्मकं जगच्छून्यं चाशून्यं च । अहमानन्दानानन्दाः । विज्ञानाविज्ञानेऽहम् । ब्रह्माब्रह्मणी वेदितव्ये । इत्याहाथर्वणी श्रुतिः ॥ २ ॥

अहं पञ्चभूता[1]न्यपञ्चभूतानि । अहमखिलं जगत् । वेदोऽहमवेदोऽहम् । विद्याऽहमविद्याऽहम् । अजाऽहमनजाऽहम् । अधश्चोर्ध्वं च तिर्यक् चाहम् ॥ ३ ॥

श्रीदेव्युपनिषद्विद्यावेद्यापारसुखाकृति ।
त्रैपदं ब्रह्मचैतन्यरामचन्द्रपदं भजे ॥

इह खल्वथर्वणवेदप्रविभक्तेयं देव्युपनिषत् स्वसार्वात्म्यप्रकटनव्यग्रा नि-ष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते

[1] न्यहं प—अ १, अ २, क.

देवर्षिपटलश्रीमहादेवीप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—सर्वे इति ॥ १ ॥ या चिच्छक्तिस्तैरेवं पृष्टा साऽब्रवीत् । कुतस्ते ब्रह्मतेत्यत्र सर्वात्मरूपेण सर्वकारणब्रह्मतोपपद्यत इत्याह—मत्त इति । स्थावरजङ्गमात्मकं जगत् मत्तः समुद्भूतमित्यर्थः । तज्जगत् स्वज्ञस्वाज्ञदृष्टिभ्यां शून्यं च अशून्यं चेति । अहमपि स्वज्ञादिदृष्ट्या अहमानन्देत्यादि ।

यथैवेदं नभः शून्यं जगच्छून्यं तथैव हि ।
अज्ञस्य दुःखौघमयं ज्ञस्यानन्दमयं जगत् ॥

इत्यादिश्रुत्यनुरोधेन स्वज्ञः स्वातिरिक्तशून्यसिद्धस्वानन्दात्मतया सर्वं पश्यति, स्वाज्ञस्तद्विपरीतं पश्यतीत्यर्थः ॥ २ ॥ स्वस्य सार्वात्म्यं सर्वकारणतां च प्रकटयति--अहमिति । पञ्चीकृतापञ्चीकृतभेदेन अहं पञ्चभूतान्यपञ्चभूतानि । अवेदोऽहं प्राकृतभाषाप्रबन्धादेरवेदत्वात् ॥ ३ ॥

चिच्छक्तेः सर्वधारकत्वम्

अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणावुभा बिभर्म्यहमिन्द्राग्नी अहमश्विनावुभौ ॥ ४ ॥
अहं सोमं त्वष्टारं पूषणं भगं दधाम्यहम् ।
[1]विष्णुमुरुक्रमं ब्रह्माणमुत प्रजापतिं दधामि ॥ ५ ॥
अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते ।
अहं राष्ट्री सङ्गमनी वसूनामहं सुवे पितरमस्य मूर्धन् ॥ ६ ॥
मम योनिरप्स्वन्तःसमुद्रे य एवं वेद स देवीपदमाप्नोति ॥ ७ ॥

[1] विष्णवुरु—अ, अ १, अ २, क.

स्वांशभूतैः **रुद्रेभिः** रुद्रैः । सर्वाधारात्मना **बिभर्मि** ॥ ४ ॥ **भगं** षड्विधैश्वर्यम् । **विष्णुमुरुक्रमं** चण्डपराक्रमं विष्णुम् ॥ ५ ॥ **हविष्मते** हविःसंपन्नाय **सुप्राव्ये** सुप्राव्याय शोभनप्रकृष्टाशयाय प्रत्यक्प्रवणचित्ताय । प्रकर्षेण व्येति नश्यतीति प्रव्यं दुष्टचित्तं तद्यस्मात् शोभनचित्तात् प्रगतं स सुप्राव्यः । मां यथावत् **सुन्वते** स्तुन्वते **यजमानाय** तद्भावानुरोधेन **द्रविणं** धनं ज्ञानं वा **दधामि** ददामीत्यर्थः । वस्वादीनां सम्यग्गमनीयसंचरणीयराष्ट्ररूपिण्यहमित्यर्थः । गुणसाम्यात्मना अस्य प्रपञ्चस्य **मूर्धन्** मूर्धा **अहं अस्य** प्रपञ्चस्य **पितरं** ईश्वरमपि **सुवे** सृजे, "जीवेशावाभासेन करोति" इति श्रुतेः ॥ ६ ॥ अन्तः सम्यगुद्रवतीति पुण्डरीकाकारमांसपिण्डः **अन्तःसमुद्रः** सर्वप्राण्यन्तर्हृत्कमले **अप्सु** अबादिपञ्चभूतेषु च जीवशिवात्मना **मम योनिः** स्वरूपं विद्यत इति **य एवं वेद स देवीपदं** चित्सामान्यरूपमेतीत्यर्थः ॥ ७ ॥

देवकृतदेवीस्तुतिः

ते देवा अब्रुवन्—

**नमो देव्यै महादेव्यै शिवायै सततं नमः ।**
**नमः प्रकृत्यै भद्रायै** [1]नियताः प्रणताः स्म ताम् ॥ ८ ॥
तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणमहं प्रपद्ये सुतरां नाशय ते तमः ॥ ९ ॥
देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥ १० ॥
कालरात्रिं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम् ।
सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम् ॥ ११ ॥

[1] नियतं—अ, अ १.

महा[1]लक्ष्मीश्च विद्महे सर्व[2]सिद्धिश्च धीमहि ।

तन्नो देवी प्रचोदयात् ॥ १२ ॥

[3]अदितिरिह जनिष्ट दक्षया दुहिता तव ।

तां देवा अन्वजायन्त भद्रा अमृतबन्धवः ॥ १३ ॥

देवीमुक्तवतो देवीतत्त्वं देवा विदित्वा तां नत्वा देवाः स्तुन्वन्तीत्याह—त इति । किमिति ? वक्ष्यमाणमन्त्रैरेवं स्तुन्वन्ति । **नमो देव्यै** शर्वाण्यै **महादेव्यै** त्रिमूर्तिजनन्यै **शिवायै सततं नमः** । यैवमुक्तविशेषणविशिष्टा तां त्वां वयं सदा **प्रणताः स्मः** ॥ ८ ॥ **वैरोचनीं** स्वतेजसा विरोचमानाम् । मत्कृते सुतरां ते तव अदर्शनात्मकं तमः **नाशय** । **देवाः** यां देवीं **वाचं** अशरीरवाणीं **अजनयन्त** तां एवं विश्वरूपाः **पशवो** नानाजन्तवो **वदन्ति** । किमिति ? या देवी वाग्रूपिणी **सा नोऽस्मान्** प्रति **इषं** अभिलषितं **ऊर्जं** अन्नं कर्मफलात्मकं पयो वाग्धेनुः सरस्वती भूत्वा **दुहाना** सती अस्मानेतु वाग्विभूतयः नः उपसुष्टुत भजत ॥१०॥ स्वातिरिक्तभानस्य **कालरात्रिम्** ॥ ११–१२ ॥ **दक्षया** दाक्षायण्या त्वया इहादितिः **जनिष्ट** संजाता । अत इयमदितिः **तव दुहिता** । तां तस्याः सकाशात् **देवा अन्वजायन्त** । अतस्ते दौहित्रा वयमिति मत्वाऽस्मान् स्वातिरिक्तास्तित्वभ्रमतो मोचयेत्यर्थः ॥ १३ ॥

आदिविद्योद्धारः

कामो योनिः कामकला वज्रपाणि-

गुहा हसा मातरिश्वाऽभ्रमिन्द्रः ।

पुनर्गुहा सकला मायया च

[4]पुरूच्येषा विश्वमाताऽऽदिविद्योम् ॥ १४ ॥

[1] लक्ष्मी च—अ १, अ २, क. लक्ष्म्यै च—अ.

[2] सिद्धी च—अ १, क. सिद्धि च—अ २. सिद्ध्यै च—अ.

[3] अदितिर्ह्यज—मु. [4] पुनःकोशा—अ १, अ २, क, मु.

अथादिविद्यामुद्धरति—**काम इति**। **काम**: ककार: **योनि**: एकार: **काम-कला** ईकार: **वज्रपाणि**: लकार: **गुहा** ह्रींकार: **हसे**त्यत्र हकार: सकार: **मातरिश्वा** ककार: **अभ्रं** हकार: **इन्द्रो** लकार: **पुनर्गुहा** ह्रींकार: **सकला**: सकारककारलकारा: **मायया च** ह्रींकार: **पुरूच्येषा विश्वमाता** विशिष्टरूपेयं आदिमूलविद्या प्रणवात्मिका विजृम्भत इत्यर्थ: ॥ १४ ॥

आदिविद्यामहिमा

[1]एषाऽऽत्मशक्तिः। एषा विश्वमोहिनी पाशाङ्कुशधनुर्बाणधरा। एषा श्रीमहाविद्या ॥ १५ ॥ य एवं वेद स शोकं तरति ॥ १६ ॥ नमस्ते अस्तु भगवति भवति मातरस्मान् पातु सर्वतः ॥ १७ ॥ सैषाऽष्टौ वसवः। सैषैकादशरुद्राः। सैषा द्वादशादित्याः। सैषा विश्वेदेवाः सोमपा असोमपाश्च। सैषा यातुधाना असुरा रक्षांसि पिशाचा यक्षाः सिद्धाः। सैषा सत्त्वरजस्तमांसि। सैषा प्रजापतीन्द्रमनवः। सैषा ग्रहनक्षत्रज्योतींषि कलाकाष्ठाऽऽदिकालरूपिणी। तामहं प्रणौमि नित्यम् ॥ १८ ॥

तापापहारिणीं देवीं भुक्तिमुक्तिप्रदायिनीम्।
अनन्तां विजयां शुद्धां शरण्यां शिवदां शिवाम् ॥ १९ ॥

येयमादिविद्या **एषा** ॥ १५–१६ ॥ **सर्वत**: सर्वात्मना ॥ १७–१९ ॥

भुवनेश्येकाक्षरीमन्त्रः

वियदीकारसंयुक्तं वीतिहोत्रसमन्वितम्।
अर्धेन्दुलसितं देव्या बीजं सर्वार्थसाधकम् ॥ २० ॥
एवमेकाक्षरं मन्त्रं यतयः शुद्धचेतसः।
ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः ॥ २१ ॥

[1] एषाऽस्य—उ, उ १.

भुवनेश्येकाक्षरमनुमुद्धरति वियदिति । ह्रीमिति ॥ २०–२१ ॥

महाचण्डीनवाक्षरविद्या

वाङ्मया ब्रह्मभूस्तस्मात् षष्ठं वक्त्रसमन्वितम् ।
सूर्यो वामश्रोत्रबिन्दुः [1]संयुताष्टतृतीयकम् ॥ २२ ॥
[2]नारायणेन संयुक्तो वायुश्चाधरसंयुतः ।
विच्चे नवार्णकोऽर्णः स्यान्महदानन्ददायकः ॥ २३ ॥
हृत्पुण्डरीकमध्यस्थां प्रातःसूर्यसमप्रभाम् ।
पाशाङ्कुशधरां सौम्यां वरदाभयहस्तकाम् ।
त्रिनेत्रां रक्तवसनां भक्तकाम[3]दुघां भजे ॥ २४ ॥
नमामि [4]त्वामहं देवीं महाभयविनाशिनीम् ।
महादुर्गप्रशमनीं महाकारुण्यरूपिणीम् ॥ २५ ॥

यस्याः स्वरूपं [5]ब्रह्मादयो न जानन्ति तस्मादुच्यतेऽज्ञेया । यस्या अन्तो न विद्यते तस्मादुच्यतेऽनन्ता । यस्या ग्रहणं नोपलभ्यते तस्मादुच्यतेऽलक्ष्या । यस्या जननं नोपलभ्यते तस्मादुच्यतेऽजा । एकैव सर्वत्र वर्तते तस्मादुच्यत एका । एकैव विश्वरूपिणी तस्मादुच्यते नैका । अत एवोच्यतेऽज्ञेयाऽनन्ताऽलक्ष्याऽजैका नैका ॥ २६ ॥

मन्त्राणां मातृका देवी शब्दानां ज्ञानरूपिणी ।
ज्ञानानां चिन्मयातीता शून्यानां शून्यसाक्षिणी ॥ २७ ॥

[1] संयत्य . . . कः—अ, अ २, क. संयुक्ताष्ट—अ.
[2] एतच्छ्लोकार्धं, (उ, उ १) कोशयोर्नोपलभ्यते.
[3] दुघं—अ २, क. दुहं—अ.
[4] त्वां महादेवीं—अ २. त्वामहं देवि—अ, अ १, क.
[5] ब्रह्मादयोऽपि न—अ २.

यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता ।
तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम् ।
नमामि भवभीतोऽहं संसारार्णवतारिणीम् ॥ २८ ॥

महाचण्डीनवाक्षरमुद्धरति—वाङ्मयेति । योनिमायामन्मथबीजैः साकं चामुण्डायै विच्चे इति मनुः ॥ २२–२३ ॥ तामेवं ध्यायेदित्याह—हृदिति ॥ २४–२५ ॥ अज्ञेयानन्तेत्यादिविशेषणैस्तां निर्वक्ति—यस्या इति ॥ २६ ॥ प्राधान्यात् मन्त्राणां मातृकादेवी ॥ २७–२८ ॥

विद्याजपस्तुतिः

इदमथर्वणशीर्षं योऽधीते स पञ्चाथर्वशीर्षजपफलमवाप्नोति । इदमथर्वणशीर्षं ज्ञात्वा योऽर्चां स्थापयति ॥ २९ ॥

शतलक्षं प्रजप्त्वाऽपि नार्चासिद्धिं च विन्दति ।
शतमष्टोत्तरं चास्याः पुरश्चर्याविधिः स्मृतः ॥ ३० ॥
दशवारं पठेद्यस्तु सद्यः पापैः प्रमुच्यते ।
महादुर्गाणि तरति महादेव्याः प्रसादतः ॥ ३१ ॥

प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायमधीयानो दिवसकृतं पापं नाशयति । तत् सायं प्रातः प्रयुञ्जानः पापोऽपापो भवति । निशीथे तुरीयसंध्यायां जप्त्वा वाक्सिद्धिर्भवति । नूतनप्रतिमायां जप्त्वा देवतासांनिध्यं भवति । प्राणप्रतिष्ठायां जप्त्वा प्राणानां प्रतिष्ठा भवति । भौमाश्विन्यां महादेवीसंनिधौ जप्त्वा महामृत्युं तरति य एवं वेदेत्युपनिषत् ॥ ३२ ॥

नारायणादिपञ्चाथर्वशीर्षेति ॥ २९–३१ ॥

य एवं वेद स पुरुषो महादेवताप्रसादात् सर्वापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमित्यनुसंधानमृत्युं तरति सदैवमनुसंधानपरो भवतीत्यर्थः । इत्युपनिषच्छब्दो देव्युपनिषत्समाप्त्यर्थः ।

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
श्रीदेव्युपनिषद्व्याख्या लिखिता ब्रह्मगोचरा ।
श्रीदेव्युपनिषद्व्याख्याग्रन्थः पञ्चाशदीरितः ॥

रामतापिन्यादिदेव्युपनिषदन्तं त्रिशताधिकपञ्चसहस्राणि । ईशादिदेव्युपनिषदन्तग्रन्थस्तु चतुर्विंशत्यधिकनवशतोत्तरद्वात्रिंशत्सहस्राणि ॥ ३२९२४ ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे एकाशीतिसंख्यापूरकं
देव्युपनिषद्विवरणं संपूर्णम्

---

# बह्वृचोपनिषत्

## वाङ्मे मनसि—इति शान्तिः

### चिच्छक्तिस्वरूपम्

ॐ देवी ह्येकाऽग्र आसीत्। सैव जगदण्डमसृजत । कामकलेति विज्ञायते । शृङ्गारकलेति विज्ञायते ॥ १ ॥

बह्वृचाख्यब्रह्मविद्यामहाखण्डार्थवैभवम् ।
अखण्डानन्दसाम्राज्यरामचन्द्रपदं भजे ॥

अथ खलु ऋग्वेदप्रविभक्तेयं बह्वृचोपनिषद् जगत्कारणत्वप्रकटनपूर्वकं सार्वात्म्यप्रतिपादनव्यग्रा निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजयते। अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते। आदौ श्रुतिरवान्तरसङ्गत्याऽभिन्ननिमित्तोपादान-जगत्कारणचिच्छक्तिस्वरूपं प्रकटयति—ॐ देवीति। स्वज्ञस्वाज्ञदृष्टिमाश्रित्य परापरब्रह्मरूपेण यद्वस्तु तत् ओं इत्योंकारार्थरूपं तस्योंकारस्य स्वार्थपरापर-ब्रह्ममहिम्ना जगदुपादानतया प्रकृतत्वात् देवीप्रकृतित्वमुच्यते, "प्रणवत्वेन प्रकृतित्वं वदन्ति ब्रह्मवादिनः" इति श्रुतेः। स्वानुप्रविष्टचैतन्यमहिम्ना या दीप्यते सेयं देवी चिच्छक्तिः एकैवाग्रे सृष्टेः पुरा आसीत् सृष्टेः पुराऽव्यक्तशक्तेरनभि-व्यक्तनामरूपकर्मरूपत्वात्। यैवमग्रे निष्पन्ना सैव स्वाविद्यापदात्मकं जगत् अविद्याऽण्डं स्वाभेदेन असृजत सृष्टवती बभूव। या जगन्निदानतया भाता

तस्यास्तनुरींकारात्मना प्रणवात्मना च कामकलेति विज्ञायते, "कामो योनिः कामकला" इति श्रुत्या ईकारस्य कामकलात्वेन वर्णितत्वात्। "शृङ्गेष्वशृङ्गं संयोज्य" इति श्रुत्यनुरोधेनाऽकारोकारमकाराणां शृङ्गत्वेन व्यपदेशतः शृङ्गाण्यकारादीनि तेषामरमप्रमर्धमात्रा शृङ्गारकलेति विज्ञायते ॥ १ ॥

चिच्छक्तेर्ब्रह्मादिस्थावरान्तकारणत्वम्

तस्या एव ब्रह्माऽजीजनत्। विष्णुरजीजनत्। रुद्रोऽजीजनत्। सर्वे मरुद्गणा अजीजनन्। गन्धर्वाप्सरसः किंनरा वादित्रवादिनः समन्तादजीजनन्। भोग्यमजीजनत्। सर्वमजीजनत्। सर्वं शाक्तमजीजनत्। अण्डजं स्वेदजमुद्भिज्जं जरायुजं यत् किंचैतत् प्राणिस्थावरजङ्गमं मनुष्यमजीजनत् ॥ २ ॥

तस्या एव चिच्छक्तेर्ब्रह्मादिस्थावरान्तकारणत्वमाह—तस्या इति। इयं चिदनुप्रवेशतश्चिच्छक्तिर्भूत्वा ब्रह्मविष्णुरुद्रोपाधित्वेन देवगन्धर्वाप्सरःकिन्नराद्युपाधित्वेन जङ्गमस्थावरात्मना चेश्वरेच्छया परिणता यदा भवति तदा वस्तुतो व्याप्यव्यापककलनाविरलमपि निर्विशेषं ब्रह्म स्वाज्ञदृष्ट्या प्रकृत्युच्चावचोपाधिपरिणामानुगतमिव भातं सत् तत्तदुपाधिगुणानुरोधेन ब्रह्मविष्णुरुद्रतां देवगन्धर्वादिरूपतामात्तवद्भातीति यत् तदेव प्रकृतितो जातमित्युपचर्यते, न परमार्थतः, ब्रह्मणो निष्प्रतियोगिकाजस्वरूपत्वात् "अज आत्मा महान् ध्रुवः" इति श्रुतेः। ब्रह्मणो निष्प्रतियोगिकभावरूपेणाजत्वं निरङ्कुशमित्यर्थः ॥ २ ॥

चिच्छक्तेः शब्दतदर्थरूपभावनम्

सैषा परा शक्तिः। सैषा शांभवी विद्या कादिविद्येति वा हादिविद्येति वा सादिविद्येति वा रहस्यमोमों वाचि प्रतिष्ठा ॥ ३ ॥

सैव पुरत्रयं शरीरत्रयं व्याप्य बहिरन्तरवभासयन्ती देशकालवस्त्वन्तरासङ्गान्महात्रिपुरसुन्दरी वै प्रत्यक् चितिः ॥ ४ ॥

ब्रह्मणोऽजत्वेऽपि सर्वानर्थमूलमायाशक्तिरेव वस्तुतो नानारूपेण जायते इति चेन्न, तस्या अपि निष्प्रतियोगिकभावरूपतयाऽजत्वात् "अजामेकां" इति श्रुतेः,

स्वतो वा परतो वाऽपि न किंचिद्वस्तु जायते ।
सदसत् सदसद्वाऽपि न किंचिद्वस्तु जायते ।
एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते ॥

इति श्रीगौडपादाचार्योक्तेः । तथाऽपि या स्वाज्ञदृष्ट्या चिच्छक्तितां गता सैव शब्दरूपेण तदर्थरूपेण च भातीत्याह—**सैषेति** । **सैषा परा शक्तिः** चित्सामान्यरूपत्वात । **सैषा शांभवी विद्या** शं अस्मात् भवतीति शंभुः ईश्वरः सत्त्वसत्त्वविद्यायाः शंभ्वधिष्ठितत्वात् शांभवीत्वम । श्रीमत्पञ्चदशाक्षरीप्रविभक्त-क ए ई ल ह्रीं-इति प्रथमखण्डात्मना **कादिविद्येति वा**-ह स क ह ल ह्रीं-इति द्वितीयखण्डात्मना **हादिविद्येति वा**-स क ल ह्रीं-इति तृतीयखण्डात्मना **सादिविद्येति वा रहस्यं ॐ ॐ वाचि प्रतिष्ठेति** यदनधिकारिणे गोपनीयतया रहस्यं निर्विशेषं ब्रह्म तदभेदेन तुरीयोंकाररूपिणी भूत्वा ॐ वाचि ओंकारप्रभवशब्दजाले तदर्थब्रह्मात्मना तिष्ठतीति ॐ वाचि प्रतिष्ठेत्युच्यते ॥३॥ यैवं स्थिता **सैव** ब्रह्मात्मना सर्वावभासकप्रत्यक्चितिर्भवेदित्याह—**सैवेति** । या चिच्छक्तिः **सैव** व्यष्टिसमष्टिभेदभिन्न**पुरत्रयं** स्थूलसूक्ष्मबीजात्मकं **शरीरत्रयं** विश्वविराडोत्राद्यात्मना **व्याप्य बहिः** नामरूपविकारजातं **अन्तः** कामादिवृत्तिसहस्रं च स्वातिरिक्तं नास्तीति **प्रकाशयन्ती**, यद्वा तद्भावाभावौ प्रकाशयन्ती । देशकालवस्त्वन्तरसङ्गतः प्रकाशकत्वं कुत इत्यत्र **देशकालवस्त्वन्तरासङ्गात्** सम्यग्ज्ञानात्मना त्रिपुरं शरीरत्रयं तदुपलक्षिताविद्यापदतत्कार्यजातं सुतरां दारयत्यपह्नवं करोतीति महती च सा त्रिपुरसुन्दरी च **महात्रिपुरसुन्दरी वै** त्रिपुरसुन्दर्येव **प्रत्यक्चितिः** । स्वातिरिक्तप्रपञ्चप्रातिलोम्येनाञ्चनात् प्रत्यक्त्वं युज्यत इत्यर्थः ॥४॥

चिच्छक्तेरद्वितीयत्वम्

सैवात्मा ततोऽन्यदसत्यमनात्मा । अत एषा ब्रह्मसंवित्ति-र्भावाभावकलाविनिर्मुक्ता चिद्विद्याऽद्वितीयाब्रह्मसंवित्तिः सच्चिदानन्द-लहरी महात्रिपुरसुन्दरी बहिरन्तरनुप्रविश्य स्वयमेकैव विभाति । यदस्ति सन्मात्रम् । यद्भाति चिन्मात्रम् । यत प्रियमानन्दम् । तदेतत् सर्वाकारा महात्रिपुरसुन्दरी । त्वं चाहं च सर्वं विश्वं सर्वदेवता । इतरत् सर्वं महात्रिपुरसुन्दरी । सत्यमेकं ललिताऽऽख्यं वस्तु तद-द्वितीयमखण्डार्थं परं ब्रह्म ॥ ९ ॥

पञ्चरूपपरित्यागादस्वरूपप्रहाणतः ।
अधिष्ठानं परं तत्त्वमेकं सच्छिष्यते महत् ॥ इति ॥ ६ ॥

भास्यभासकभेदतो द्वैतापत्तिः स्यादित्यत आह—सैवेति । चिच्छक्तौ शक्त्यंशापायसिद्धा या चित् सैवात्मा ततोऽन्यत् शक्त्यंशः असत्यमनात्मा । यत एवं अत एषा चिच्छक्त्यंशापायात् ब्रह्मसंवित्तिः संविन्मात्रब्रह्मरूपिणी भवति । भावाभावकलयोः सत्त्वात् संविन्मात्रता कुत इत्यत आह— भावेति । चाक्षुषघटादिकं भावकलोच्यते, अचाक्षुषतया केवलमानसग्राह्यमभावकलेत्युच्यते, चितो निष्प्रतियोगिकज्ञप्तिमात्रतया भावाभावकलाऽयोगात् भावाभावकलाविनि-र्मुक्ता चित् इत्यर्थः । चित्त्वं कुत इत्यत्र विद्या वेदनमात्रस्वरूपत्वात् । स्वातिरिक्तवेद्यादिसत्वात् द्वैतापत्तिरित्यत्र अद्वितीया चितः स्वसंवेद्यत्वेन स्वाति-रिक्तवेद्याभावात् । निष्प्रतियोगिकाद्वितीयस्वरूपैव ब्रह्मसंवित्तिरित्यर्थः । कथं पुनरद्वितीया ब्रह्मसंवित्तिरनृतजडदुःखप्रपञ्चसत्त्वादित्यत आह—सच्चिदानन्द-लहरीति । अनृतजडदुःखजातग्राससच्चिदानन्दलहरी निस्तरङ्गसच्चिदानन्दसमुद्र-रूपेयं महात्रिपुरसुन्दरी स्वाज्ञदृष्टिप्रसक्तबहिरन्तरनुप्रविश्य सर्वाधिष्ठान-सर्वान्तर्यामिरूपेण स्वयमेकैव विभाति । यद्येवं बहिरन्तरनुप्रविष्टा तदा

स्वाविद्यापदतत्कार्यरूपतां भजति, तस्याः सच्चिदानन्दत्वं दुर्लभमित्यत आह—यदिति । स्वाविद्यापदतत्कार्यानन्तकोटिब्रह्माण्डपटलं स्वातिरेकेण **यदस्ति** तत् **सन्मात्रं** स्वातिरेकेण **यद्भाति** तत् **चिन्मात्रं** स्वातिरेकेण **यत्प्रियं** तत् **आनन्दं** आनन्दमात्रं सच्चिदानन्दातिरेकेण स्वाविद्यापदतत्कार्यायोगात् । **तदेतत्सर्वाकारा महात्रिपुरसुन्दरी** भवतीत्यर्थः । त्वमहमित्यादिकलनाकलितविश्वस्य सत्त्वात् कथं सच्चिदानन्दमात्रतेत्यत आह—**त्वं चेति** । सच्चिदानन्दातिरेकेण त्वमहमिदंशब्दवाच्यप्रपञ्चाभावात् सर्वं महात्रिपुरसुन्दर्येवेत्यर्थः । सच्चिदानन्दमिति पदत्रययोगतो द्वैतापत्तिः स्यादित्यत आह सत्यमिति । असत्यापह्नवसिद्धं **सत्यं** सन्मात्रं **एकमेव** । **अनेकभेदसत्त्वादेकत्वं** कुत इत्यत्र अनेकलक्षभेदजातमपि यत्र विलीयते तल्लयाधिकरणं **ललिताऽऽख्यं** यत् **वस्तु तदद्वितीयं अखण्डार्थं** हि **परं** ब्रह्म निष्प्रतियोगिकाद्वितीयमित्यर्थः ॥ ५ ॥ प्रतियोगित्वेन पञ्चब्रह्मतत्कार्यपञ्चभूतभौतिकसत्त्वादित्यत आह—**पञ्चेति** । ब्रह्मातिरिक्तं न किंचिदस्तीति बोधेन सदाशिवादि **पञ्चब्रह्मरूपपरित्यागात्** विलयात् तदर्वाग्जातानि तत्कार्याणि वियदादिभूतभौतिकानि **सर्वाणि** तेषां कारणप्रलयसमकालप्रहाणतः कार्यकारणप्रपञ्चलयाधिष्ठानं अधिष्ठेयसामान्याभावात् तदधिष्ठानं निरधिष्ठानं **सत्** सन्मात्रं **परं तत्त्वं महत्** भूमरूपं **एकमेवावशिष्यत** इत्यर्थः ॥ ६ ॥

प्रत्यक्परचिदैक्यभावना

**प्रज्ञानं ब्रह्मेति वा अहं ब्रह्मास्मीति वा भाष्यते ।**
**तत्त्वमसीत्येव संभाष्यते । अयमात्मा ब्रह्मेति वा अहं ब्रह्मास्मीति वा**
**ब्रह्मैवाहमस्मीति वा ॥ ७ ॥**

इत्थंभूता चित् केन भाव्यत इत्यत आह—**प्रज्ञानमिति** । उत्तमाधिकारिभिः प्रत्यगभिन्नब्रह्माभिप्रायेण **प्रज्ञानं ब्रह्मेति** वा अवान्तरवाक्येन **अहं ब्रह्मास्मीति वा** शिष्यानुभूतिवाक्येन **भाष्यते**, आचार्यानुभवरूपत**त्त्वमसीत्येव**

संभाष्यते, पुनरवान्तररूपेण अयमात्मा ब्रह्मेति वा ब्रह्मण्यनात्मताशान्तये स्वात्मन्यब्रह्मताशान्तये च व्यतिहारेण अहं ब्रह्मास्मीति वा ब्रह्मैवाहमस्मीति वा । अयमात्मेत्यादिमहावाक्यानां प्रत्यक्परचितोरैक्यमर्थः । एवं प्रत्यगभिन्नब्रह्मात्मना सदा भाव्यत इत्यर्थः ॥ ७ ॥

अम्बिकाऽऽदिरूपेण चिच्छक्तिभावना

योऽहमस्मीति वा सोऽहमस्मीति वा योऽसौ सोऽहमस्मीति वा या भाव्यते सैषा षोडशी श्रीविद्या पञ्चदशाक्षरी श्रीमहात्रिपुरसुन्दरी बालाऽम्बिकेति बगलेति वा मातङ्गीति स्वयंवरकल्याणीति भुवनेश्वरीति चामुण्डेति चण्डेति वाराहीति तिरस्करिणीति राजमातङ्गीति वा शुकश्यामलेति वा लघुश्यामलेति वा अश्वारूढेति वा प्रत्यङ्गिरा धूमावती सावित्री सरस्वती गायत्री ब्रह्मानन्दकलेति ॥ ८ ॥

उत्तमाधिकारिभिर्यैवं भाविता चिता शक्तियोगेन मध्यमाधिकारिदृष्ट्या सैषा चिच्छक्तिः । कार्यशक्त्यात्मना मातङ्गी गायत्री इति भाव्यते । निर्विशेषब्रह्मज्ञानार्थिभिः ब्रह्मानन्दकलेति नित्यतृप्तात्मना भाव्यत इत्यर्थः ॥ ८ ॥

ब्रह्मण एव मुख्यज्ञेयत्वम्

ऋचो अक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः ।
यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ॥

इत्युपनिषत् ॥ ९ ॥

यज्ज्ञातव्यं तदेव ज्ञेयं केवलर्ग्भिः किं प्रयोजनं, तद्यथावद्ये जानन्ति ते तन्मात्रमवशिष्यन्त इत्याह--**ऋच** इति । अयं मन्त्रः श्वेताश्वतरोपनिषदि व्याख्यातः । **इत्युपनिषच्छब्दो** बह्वृचोपनिषत्समाप्त्यर्थः ॥ ९ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
बह्वृचोपनिषद्व्याख्या लिखिता ब्रह्मगोचरा ।
बह्वृचोपनिषद्व्याख्याग्रन्थः सप्ततिगीरितः ॥

**इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे सप्तोत्तरशतसङ्ख्यापूरकं बह्वृचोपनिषद्विवरणं सम्पूर्णम्**

---

# भा नोपानेषत्

## भद्रं कर्णेभिः—इति शान्तिः

शिवस्य शक्तियोगादीश्वरत्वम्

**श्रीगुरुः** [1]परमकारणभूता शक्तिः ॥ १ ॥

स्वाविद्यापदतत्कार्यश्रीचक्रोपरि भासुरम् ।
बिन्दुरूपशिवाकारं रामचन्द्रपदं भजे ॥

इह खल्वथर्वणवेदप्रविभक्तेयं भावनोपनिषत् स्वातिरिक्तप्रपञ्चश्रीचक्रासनत्रिपुरातत्त्वप्रकटनव्यग्रा तत्सर्वारोपापवादाधिकरणपरशिवतत्त्वपर्यवसन्ना विजयते । अस्याः संक्षेपतो विवरणमारभ्यते । परमदयावती श्रुतिर्देहादावात्मात्मीयाभिमानकबलितस्वाज्ञलोकमुपलभ्य देहादावात्मात्मीयाभिमतिवारणाय स्थूलादिदेहत्रये श्रीचक्रभावनां प्रकटयति—**श्रीगुरुरिति** । पराग्भावाश्रीग्रासप्रत्यग्भावश्रीरूपेण गुशब्दवाच्यस्वाज्ञानं रुशब्दवाच्यस्वज्ञानेन द्रावयतीति **श्रीगुरुः** परमशिवः, तस्य स्वातिरिक्तप्रपञ्चसर्गस्थितिभङ्गकरण**परमकारणभूता शक्तिः**, तया योगतः खलु शिव ईश्वरत्वं भजतीत्यत्र—"प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया" इति स्मृतेः ॥ १ ॥

[1] सर्वका—मु.

अध्यात्मदेहत्रयश्रीचक्रभावना

केन ? नवरन्ध्ररूपो देहो नवशक्तिमयं श्रीचक्रम् । वाराही पितृरूपा कुरुकुल्ला[1]बली देवता माता । पुरुषार्थाः सागराः । देहो नवरत्नद्वीपः । आधारनवकमुद्राः शक्तयः । त्वगादिसप्तधातुभिरनेकैः संयुक्ताः संकल्पाः कल्पतरवः । तेजःकल्पकोद्यानम् । रसनया भाव्यमाना मधुराम्लतिक्तकटुकषायलवणरसाः षड्तवः । क्रिया-[2]शक्तिः पीठम् । कुण्डलिनी ज्ञानशक्तिर्गृहम् । इच्छाशक्तिर्महात्रिपुरसुन्दरी । ज्ञाता होता । ज्ञानमर्घ्यम् । ज्ञेयं हविः । ज्ञातृज्ञान-[3]ज्ञेयानामभेदभावनं श्रीचक्रपूजनम् । नियतिसहितशृङ्गारादयो नव रसा अणिमादयः । कामक्रोधलोभमोहमदमात्सर्यपुण्यपापमया ब्राह्म्याद्यष्टशक्तयः । पृथिव्यापस्तेजोवाय्वाकाशश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायू[4]पस्थविकाराः षोडश शक्तयः । वचनादानगमनविसर्गानन्दहानोपादानोपेक्षाबुद्धयोऽनङ्गकुसुमादिशक्तयोऽष्टौ । अलम्बुसा कुहूर्विश्वोदरी वरुणा हस्तिजिह्वा यशस्वत्यश्विनी गान्धारी पूषा शङ्खिनी सरस्वतीडा पिङ्गला सुषुम्ना चेति चतुर्दश नाड्यः सर्वसंक्षोभिण्यादिचतुर्दशारदेवताः । प्राणापानव्यानोदानसमाननागकूर्मकृकरदेवदत्तधनंजया दश वायवः सर्वसिद्धि[5]प्रदाऽऽदिबहिर्दशारदेवताः । एतद्वायुदशसंसर्गोपाधिभेदेन रेचकपूरकशोषकदाहकप्लावका

[1] भेरुण्डादे—अ.
[2] शक्ति पी—उ, क.
[3] ज्ञेयमेया—अ १, अ २, क.
[4] पस्थमनोवि—अ, मु. पस्थावि—अ १.
[5] प्रदा देवी ब—अ १, अ २, क.

अमृतमिति प्राणमुख्यत्वेन पञ्चविधोऽस्ति । [1]मनुष्याणां मोहको [2]देहको भक्ष्यभोज्यलेह्यचोष्यपेयात्मकं चतुर्विधमन्नं पाचयति । एता दश [3]धनकलाः सर्वज्ञत्वाद्यन्तर्दशारदेवताः । शीतोष्णसुखदुःखेच्छासत्वरजस्तमोगुणा वशिन्यादिशक्तयोऽष्टौ । शब्दस्पर्शरूपरसगन्धाः पञ्चतन्मात्राः पञ्च पुष्पबाणा मन इक्षुधनुः । वश्यो बाणो रागः पाशो द्वेषोऽङ्कुशः । अव्यक्तमहत्तत्त्वाहंकारकामेश्वरीवज्रेश्वरीभगमालिन्योऽन्तस्त्रिकोणाग्रगा देवताः । पञ्चदशतिथिरूपेण कालस्य परिणामावलोकनं पञ्चदश[4]नित्या श्रद्धाऽनुरूपा[5]धिदेवता । तयोः कामेश्वरी सदानन्दघना पूर्णा स्वात्मैक्यरूपा देवता ॥ २ ॥

केन हेतुना देहस्य श्रीचक्रत्वमित्यत आह—केनेति । नवत्वसाम्यात्, नवरन्ध्ररूपो देहः, विमलादीशानान्तनवशक्तिमयं श्रीचक्रमिति । श्रीचक्रात्मकदेहस्य मातापितरौ कावित्यत आह—वाराहीति । वाराही पितृरूपा पुरुषशक्तित्वात् कुरुकुल्लाबलीति काचन देवता माता । देहाश्रयधर्मादिपुरुषार्थाः सागराः तेषामपारागाधविस्तारत्वात् । तत्र देहो नवरत्नद्वीपः द्वीपस्य सागरमध्यपातित्वात् । तद्द्वीपाधारशक्तयः का इत्यत आह—आधारेति । योनिमुद्राऽऽदिसर्वसंक्षोभिण्यन्तमुद्राऽऽरूढा महात्रिपुरसुन्दर्यादित्रिपुराऽन्ता नवशक्तयो भवन्ति । एतद्द्वीपसञ्जातकल्पकतरवस्तु त्वगादिसप्तधातुभिरनेकैः अन्तर्बाह्यविकारैः संयुक्ताः नानाविधसङ्कल्पा एव कल्पतरवः । तत्रोद्यानं किमित्यत्र स्वातिरिक्तनानाविधतेजःकल्पको जीव एव उद्यानं उद्यानवज्जीवस्य

[1] "जाठराग्निर्भवति क्षारको (मारको) द्रारकः क्षोभको जृम्भक इति अपानमुख्यत्वेन पञ्चविधोऽस्ति" इत्यधिकः पाठो दृश्यते (अ १, अ २) कोशयोः ।

[2] दाहको—मु.

[3] वह्निकलाः—मु.

[4] नित्याः । श्र—मु.

[5] धीर्देवता—अ १, अ २, क.

रमणीयत्वात् । जीवरसनाभाव्यरसाः के इत्यत्र तद्-**रसनया भाव्यमाना** इति । तत्क्रियाज्ञानेच्छाशक्तिः केत्यत्र—**क्रियाशक्तिपीठमिति** । तद्-**इच्छाशक्तिः** ज्ञात्रादित्रिपुटी केत्यत्र—**ज्ञानेति** । ज्ञात्रादित्रिपुटीनिरसनमेव श्रीचक्रपूजनमित्याह—**ज्ञातृज्ञानेति** । अणिमादिशक्तयस्तु यस्य यस्य या **नियतिस्तया नियतिर्महितेति** । अष्टशक्तयस्तु **कामक्रोधेत्यादि** । षोडशशक्तयस्तु **पृथिवीत्यादिविकाराः** कामाकर्षिण्यादि-शरीराकर्षिण्यन्ताः **षोडश शक्तयः** अनङ्गकुसुमशक्तयस्तु **वचनादानेत्यादि** । **अनङ्गकुसुमादि**-अनङ्गमालिन्यन्तशक्तयः । चतुर्दशारदेवतास्तु **अलम्बुसेत्यादि** । सर्वसंक्षोभिण्यादि-सर्वद्वन्द्वक्षयंकर्यन्त-चतुर्दशारदेवताः । सर्वसिद्धिप्रदादि-सर्वसौभाग्यदायिन्यन्तबहिर्दशारदेवताः । सर्वज्ञत्वादि-स्वेप्सितफलप्रदान्ता अन्तर्दशारदेवताः । वशिन्यादि-कौलिन्यन्त-शक्तयोऽष्टौ । तयोः वज्रेश्वरीभगमालिन्योराद्या **कामेश्वरी** ॥ २ ॥

देवताया आवाहनाद्युपचारभावना

[1]सलिलं सौहित्यकारणं सत्त्वं कर्तव्यमकर्तव्यमिति भावनायुक्त उपचारः । अस्ति नास्तीति कर्तव्यता उपचारः । बाह्याभ्यन्तःकरणानां रूपग्रहणयोग्यताऽस्त्वित्यावाहनम् । तस्य बाह्याभ्यन्तःकरणानामेकरूपविषयग्रहणमासनम् । रक्तशुक्लपदैकीकरणं पाद्यम् । उज्ज्वलदामोदानन्दासनं दानमर्घ्यम् । [2]स्वच्छं स्वतःसिद्धमित्याचमनीयम् । चिच्चन्द्र[3]मयीसर्वाङ्गस्रवणं स्नानम् । चिदग्निस्वरूपपरमानन्दशक्तिस्फुरणं वस्त्रम् । प्रत्येकं सप्तविंशतिधा भिन्नत्वेनेच्छाज्ञानक्रियाऽऽत्मकब्रह्मग्रन्थिमद्रसतन्तुब्रह्मनाडी ब्रह्मसूत्रम् । स्वव्यतिरिक्तवस्तुसङ्गरहितस्मरणं विभूषणम् । स्वच्छस्वपरिपूरणानुस्मरणं

[1] सलिलमिति—अ १, अ २, क, मु.

[2] स्वच्छस्व—अ १, अ २, क

[3] मयमिति सर्वाङ्गस्मरणं—उ, उ १.

गन्धः । समस्तविषयाणां मनसः स्थैर्येणानुसंधानं कुसुमम् । तेषामेव सर्वदा स्वीकरणं धूपः । पवनावच्छिन्नोर्ध्वज्वलनसच्चि[1]दुल्काऽऽकाशदेहो दीपः । समस्तयातायातवर्ज्यं नैवेद्यम् । अवस्थात्रयैकीकरणं ताम्बूलम् । मूलाधारादाब्रह्मरन्ध्रपर्यन्तं ब्रह्मरन्ध्रादामूलाधारपर्यन्तं गतागतरूपेण प्रादक्षिण्यम् । तुर्यावस्था नमस्कारः । देहशून्यप्रमातृतानिमज्जनं बलिहरणम् । सत्वमस्ति कर्तव्यमकर्तव्यमौदासीन्यनित्यात्मविलापनं होमः । स्वयं तत्पादुकानिमज्जनं परिपूर्णध्यानम् ॥ ३ ॥

कोऽयमुपचार इत्यत्र **सलिलं** सलीलं गुरुमन्त्रात्मदेवतानां **सौहित्यकरणं** एकीकरणमिति यत् तदेव सततस्तत्त्वं **सत्त्वं कर्तव्यं** कदाऽपि गुरुमन्त्रात्मदेवतानामसौहित्यकरणं **अकर्तव्यमिति भावनायुक्तः** भावनायोग एव **उपचारः** । **ब्रह्मैवास्ति ब्रह्मातिरिक्तं नास्तीति** सदाऽनुसन्धानकर्तव्यता **उपचारः** द्वैतप्रासाद्द्वैतात्मज्ञानमेवावाहनादिपरिपूर्णध्यानान्तमुपचारो भवतीत्याह—**बाह्येति** । **बाह्याभ्यन्तःकरणानां** स्वस्वविषयरूपग्रहणयोग्यताऽस्त्वित्यावाहनम् । आसनं तु **तस्य बाह्याभ्यन्तःकरणानां एकरूपविषयग्रहणं** यदेकं ब्रह्म तदेवास्मीति ज्ञानं **आसनम्** । केवलकुम्भकतः सुषुम्नाप्रवेशानन्तरं मूलाधारभ्रूमध्योपरिस्थप्रत्यक्पराभिधान**रक्तशुक्लपदैकीकरणं पाद्यम्** । अर्घ्यं तु **उज्ज्वलदामोदानन्दासनं दानमर्घ्यम्** । प्रत्यगभिन्नब्रह्मरूपेण सदोज्ज्वलदामोदानन्दरूपेणासनमवस्थानं सदा कर्तव्यमिति स्वयं निश्चित्य स्वशिष्येभ्यः स्वसिद्धान्तप्रदानमर्घ्यं भवतीत्यर्थः । स्वस्य **स्वच्छं** स्वच्छत्वम् । **ब्रह्मसूत्रं** तु **प्रत्येकं सप्तविंशतिधेत्यादि** । इच्छाऽऽदिशक्तित्रयस्य त्रिगुणात्मकतया प्रत्येकं सप्तविंशतिधा भेद उपपद्यते । नाडीनामपि गुणविकारत्वात् तथात्वम् । तत्प्रवेशनिमित्तात् तद्भेदप्रविलापनपूर्वकं ब्रह्मविष्णुरुद्रग्रन्थिमद्रसनाडी सुषुम्नैव **ब्रह्मसूत्रं** तस्यापरब्रह्मधामसूचकत्वात् । ब्रह्मातिरिक्तं न किंचिदस्तीति **स्वच्छम्** ।

[1] दुल्कादाका—अ २, क.

**समस्तविषयाणां मनसः स्थैर्येण** तद्विलापनाधिष्ठानानुसंधानं **कुसुमम्** । **योगकाले** प्राणापानाग्न्यैक्यतः सुषुम्नायां सच्चिदानन्दोल्कारूप **आकाशदेहः** परमो वै **दीपः** । स्वातिरिक्तविषयाद्विषयान्तरेषु समस्तेषु **समस्तयातायातवर्ज्यं नैवेद्यम्** । तुर्यावस्थायां **अवस्थात्रयैकीकरणं ताम्बूलम्** । तुर्यावस्था **नमस्कारः** तुरीयोऽस्मीति ज्ञानस्य नमस्कारार्थत्वात् "नमस्त्वैक्यं" इति श्रुतेः । स्वात्मनः **सत्त्वमस्तीति** निश्चित्य तदतिरेकेण कर्तव्यमकर्तव्यं वा विद्यत इति सत्त्वप्रसक्तौ तत्र **औदासीन्यमात्मविलापनं होमः** ॥ ३ ॥

भावनाफलम्

**एवं मुहूर्तत्रयं भावनापरो जीवन्मुक्तो भवति । तस्य देवताऽऽत्मैक्यसिद्धिः । चिन्तितकार्याण्ययत्नेन सिध्यन्ति । स एव शिवयोगीति कथ्यते ॥ ४ ॥**

एवं भावनाफलमाह—**एवमिति** । न हि तादृशस्य ब्रह्मास्मीति सदा चिन्तनं विना काचन चिन्ता विद्यते । यदि प्राण्यदृष्टानुरोधेन स्यात् तदा **स्वपरविषयकचिन्तितकार्याण्ययत्नेन सिध्यन्ति** ।

शिवो गुरुः शिवो वेदः शिवो देवः शिवः प्रभुः ।
शिवोऽस्म्यहं शिवः सर्वं शिवादन्यन्न किंचन ॥

इति श्रुतिसिद्धशिवतत्त्वज्ञानी **शिवयोगी** शिव एवायमित्यर्थः । **इत्युपनिषच्छब्दो** भावनोपनिषत्समाप्त्यर्थः ॥ ४ ॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
भावनोपनिषद्व्याख्या लिखिता शिवगोचरा ।
भावनोपनिषद्व्याख्याग्रन्थः पञ्चाशदीरितः ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे चतुरशीतिसङ्ख्यापूरकं भावनोपनिषद्विवरणं सम्पूर्णम् ॥

# सरस्वतीरहस्योपनिषत्

**वाङ्मे मनसि—इति शान्तिः**

सरस्वतीदशश्लोक्यास्तत्त्वज्ञानसाधनत्वम्

ऋषयो ह वै भगवन्तमाश्वलायनं संपूज्य पप्रच्छुः —

केनोपायेन तज्ज्ञानं तत्पदार्थावभासकम् ।
यदुपासनया तत्त्वं जानासि भगवन् वद ॥ १ ॥

सरस्वतीदशश्लोक्या सऋचा बीजमिश्रया ।
स्तुत्वा जप्त्वा परां सिद्धिमलभं मुनिपुङ्गवाः ॥ २ ॥

प्रतियोगिविनिर्मुक्तब्रह्मविद्यैकगोचरम् ।
अखण्डनिर्विकल्पात्तरामचन्द्रपदं भजे ॥

इह खलु कृष्णयजुर्वेदप्रविभक्तेयं सरस्वतीरहस्योपनिषद् महासरस्वतीविद्याप्रकटनपूर्वकं षट्समाधिप्रपञ्चनव्यग्रा ब्रह्ममात्रपर्यवसन्ना विजृम्भते । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । ऋषिगणाश्वलायनप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—ऋषय इति । किमिति? **केनोपायेनेति ॥ १ ॥** प्रश्नोत्तरं मुनिराह—**सरस्वतीति** । वक्ष्यमाणया **सरस्वतीदशश्लोक्या ॥ २ ॥**

दशश्लोक्या ऋष्यादि

ऋषय ऊचुः—

कथं सारस्वतप्राप्तिः केन ध्यानेन सुव्रत ।
महासरस्वती येन तुष्टा भगवती वद ॥ ३ ॥

स होवाचाश्वलायनः—

अस्य श्रीसरस्वतीदशश्लोकमहामन्त्रस्य—अहमाश्वलायन ऋषिः । अनुष्टुप् छन्दः । श्रीवागीश्वरी देवता । यद्वागिति बीजम् । देवीं वाचमिति शक्तिः । प्रणो देवीति कीलकम् । विनियोगस्तत्प्रीत्यर्थे । श्रद्धा मेधा प्रज्ञा धारणा वाग्देवता महासरस्वतीत्येतैरङ्गन्यासः ॥ ४ ॥

नीहारहारघनसारसुधाकराभां
कल्याणदां कनकचम्पकदामभूषाम् ।
उत्तुङ्गपीनकुचकुम्भमनोहराङ्गीं
वाणीं नमामि मनसा वचसां विभूत्यै ॥ ५ ॥

ऋषयस्तं पुनः पप्रच्छुरित्याह—ऋषय ऊचुरिति ॥ ३ ॥ तैरेवं पृष्टः स होवाचाश्वलायनः । वक्ष्यमाणविद्याया ऋषिच्छन्दोदेवताबीजशक्तिकीलककराङ्गन्यासादिकमुच्यते—अस्येत्यादिना ॥ ४ ॥ ध्यानं तु—नीहारेति॥५–३५॥

प्रणो देवीति मन्त्रस्य ऋष्यादि

प्रणो देवीत्यस्य मन्त्रस्य—भरद्वाज ऋषिः । गायत्री छन्दः । श्रीसरस्वती देवता । प्रणवेन बीज[1]शक्तिकीलकम् । इष्टार्थे विनियोगः । मन्त्रेण न्यासः ॥ ६ ॥

[1] शक्तिः की—मु, उ. (एवमुत्तरपर्यायेष्वपि).

या वेदान्तार्थतत्त्वैकस्वरूपा [1]परमेश्वरी ।
नामरूपात्मना व्यक्ता सा मां पातु सरस्वती ॥ ७ ॥
ॐ प्रणो देवी सरस्वती वाजेभिर्वाजिनीवती ।
धीनामवित्र्यवतु ॥ ८ ॥

आ नो दिव इति मन्त्रस्य ऋष्यादि

आ नो दिव इति मन्त्रस्य—अत्रिर्ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । ह्रीमिति बीजशक्तिकीलकम् । इष्टार्थे विनियोगः । मन्त्रेण न्यासः ॥ ९ ॥

या साङ्गोपाङ्गवेदेषु चतुर्ष्वेकैव गीयते ।
[2]अद्वैता ब्रह्मणः शक्तिः सा मां पातु सरस्वती ॥ १० ॥
ह्रीं आ नो दिवो बृहतः पर्वतादा
सरस्वती यजता गन्तु यज्ञम् ।
हवं देवी जुजुषाणा घृताची
शग्मां नो वाचमुशती शृणोतु ॥ ११ ॥

पावका न इति मन्त्रस्य ऋष्यादि

पावका न इति मन्त्रस्य—[3]मधुच्छन्दा ऋषिः । गायत्री छन्दः । सरस्वती देवता । श्रीमिति बीजशक्तिकीलकम् । इष्टार्थे विनियोगः । मन्त्रेण न्यासः ॥ १२ ॥

[1] परमार्थतः— अ १, अ २, क, मु.
[2] अद्वैत—अ २, क.
[3] मधुच्छन्दऋ—उ, मु.

या वर्णपदवाक्यार्थस्वरूपेणैव वर्तते ।
अनादिनिधनाऽनन्ता सा मां पातु सरस्वती ॥ १३ ॥
श्रीं पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धिया वसुः ॥ १४ ॥

चोदयित्री इति मन्त्रस्य ऋष्यादि

चोदयित्रीति मन्त्रस्य—मधुच्छन्दा ऋषिः । गायत्री छन्दः । सरस्वती देवता । ब्लूमिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ॥ १५ ॥

अध्यात्ममधिदैवं च देवानां सम्यगीश्वरी ।
प्रत्यगास्ते वदन्ती या सा मां पातु सरस्वती ॥ १६ ॥
ब्लूं चोदयित्री सूनृतानां चेतन्ती सुमतीनाम् ।
यज्ञं दधे सरस्वती ॥ १७ ॥

महो अर्ण इति मन्त्रस्य ऋष्यादि

महो अर्णेति मन्त्रस्य—मधुच्छन्दा ऋषिः । गायत्री छन्दः । सरस्वती देवता । सौरिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ॥ १८ ॥

अन्तर्याम्यात्मना विश्वं त्रैलोक्यं या नियच्छति ।
रुद्रादित्यादिरूपस्था सा मां पातु सरस्वती ॥ १९ ॥
सौः महो अर्णः सरस्वती प्रचेतयति केतुना ।
धियो विश्वा विराजति ॥ २० ॥

चत्वारि वागिति मन्त्रस्य ऋष्यादि

चत्वारि वागिति मन्त्रस्य—उचथ्यपुत्र ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । ऐमिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ॥ २१ ॥

या प्रत्यग्दृष्टिभिर्जीवैर्व्यज्यमानाऽनुभूयते ।
व्यापिनी ज्ञप्तिरूपैका सा मां पातु सरस्वती ॥ २२ ॥

ऐं चत्वारि वाक् परिमिता पदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः ।
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति ॥ २३ ॥

यद्वागिति मन्त्रस्य ऋष्यादि

यद्वाग्वदन्तीति मन्त्रस्य—भार्गव ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । क्लीमिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ॥२४॥

नामजात्यादिभिर्भेदैरष्टधा या विकल्पिता ।
निर्विकल्पात्मना व्यक्ता सा मां पातु सरस्वती ॥ २५ ॥

क्लीं यद्वाग्वदन्त्यविचेतनानि राष्ट्री देवानां निषसाद मन्द्रा ।
चतस्र ऊर्जं दुदुहे पयांसि क्व स्विदस्याः परमं जगाम ॥ २६ ॥

देवीं वाचमिति मन्त्रस्य ऋष्यादि

देवीं वाचमिति मन्त्रस्य—भार्गव ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । सौरिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ॥२७॥

व्यक्ताव्यक्तगिरः सर्वे वेदाद्या व्याहरन्ति याम् ।
सर्वकामदुघा धेनुः सा मां पातु सरस्वती ॥ २८ ॥
सौः देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।
मा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैतु ॥ २९ ॥

उत त्व इति मन्त्रस्य ऋष्यादि

उत त्व इति मन्त्रस्य—बृहस्पतिर्ऋषिः । त्रिष्टुप् छन्दः । सरस्वती देवता । समिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ॥३०॥

यां विदित्वाऽखिलं बन्धं निर्मथ्या[1]खिलवर्त्मना ।
योगी याति परं स्थानं सा मां पातु सरस्वती ॥ ३१ ॥
सं उत त्वः पश्यन्न ददर्श वाचमुत त्वः शृण्वन्न शृणोत्येनाम् ।
उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासाः ॥ ३२ ॥

अम्बितम इति मन्त्रस्य ऋष्यादि

अम्बितम इति मन्त्रस्य—गृत्समद ऋषिः । अनुष्टुप् छन्दः । सरस्वती देवता । ऐमिति बीजशक्तिकीलकम् । मन्त्रेण न्यासः ॥३३॥

नामरूपात्मकं सर्वं यस्यामावेश्यतां पुनः ।
ध्यायन्ति ब्रह्मरूपैका सा मां पातु सरस्वती ॥ ३४ ॥
ऐं अम्बितमे नदीतमे [2]देवितमे सरस्वति ।
अप्रशस्ता इव स्मसि प्रशस्तिमम्ब नस्कृधि ॥ ३५ ॥

[1] मलवर्त्मनाम्—अ १, अ २, क.   [2] देवीत—उ १.

## देवताप्रार्थना

चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।
मानसे रमतां नित्यं सर्वशुक्ला सरस्वती ॥ ३६ ॥
नमस्ते शारदे देवि काश्मीरपुरवासिनि ।
त्वामहं प्रार्थये नित्यं विद्यादानं च देहि मे ॥ ३७ ॥
अक्षसूत्राङ्कुशधरा पाश[1]पुस्तकधारिणी ।
मुक्ताहारसमायुक्ता वाचि तिष्ठतु मे सदा ॥ ३८ ॥
कम्बुकण्ठी सुताम्रोष्ठी सर्वाभरणभूषिता ।
महासरस्वती देवी जिह्वाग्रे संनिवेश्यताम् ॥ ३९ ॥
या श्रद्धा धारणा मेधा वाग्देवी विधिवल्लभा ।
भक्तजिह्वाग्रसदना शमादिगुणदायिनी ॥ ४० ॥
नमामि यामिनीनाथलेखाऽलंकृतकुन्तलाम् ।
भवानीं भवसंतापनिर्वापणसुधानदीम् ॥ ४१ ॥
यः कवित्वं निरातङ्कं भुक्तिमुक्ती च वाञ्छति ।
सोऽभ्यर्च्यैनां दशश्लोक्या नित्यं स्तौति सरस्वतीम् ॥ ४२ ॥
तस्यैवं स्तुवतो नित्यं समभ्यर्च्य सरस्वतीम् ।
भक्तिश्रद्धाऽभियुक्तस्य षाण्मासात् प्रत्ययो भवेत् ॥ ४३ ॥
ततः प्रवर्तते वाणी स्वेच्छया ललिताक्षरा ।
गद्यपद्यात्मकैः शब्दैरप्रमेयैर्विवक्षितैः ॥ ४४ ॥
अश्रुतो बुध्यते ग्रन्थः प्रायः सारस्वतः कविः ॥ ४५ ॥

देवतां प्रार्थयति—चतुर्मुखेति ॥ ३६–४५ ॥

[1] मस्तक—उ.

भगवत्याः ब्रह्मत्वं प्रकृतित्वं पुरुषत्वं च

[1]सा होवाच सरस्वती —

आत्मविद्या मया लब्धा ब्रह्मणैव [2]सनातनी ।
ब्रह्मत्वं मे सदा नित्यं सच्चिदानन्दरूपतः ॥ ४६ ॥
प्रकृतित्वं ततः सृष्टं सत्त्वादिगुणसाम्यतः ।
सत्यामाभाति चिच्छाया दर्पणे प्रतिबिम्बवत् ॥ ४७ ॥
तेन चित्प्रतिबिम्बेन त्रिविधा भाति सा पुनः ।
प्रकृत्यवच्छिन्नतया पुरुषत्वं पुनश्च [3]मे ॥ ४८ ॥

मयैवं स्तुता भगवती दृष्टिविषये प्रसन्ना भूत्वा स्वानुभूतिप्रकटनेन स्वात्मतत्त्वमुपदिदेशेत्याह—**सा होवाच सरस्वतीति**। किमुवाचेत्यत्र—**आत्मविद्येति**। स्वातिरिक्तमनात्मा तदसंभवप्रबोधसिद्ध—स्वयमेवात्मा स्वात्मातिरिक्तं न किंचिदस्ति स्वात्मैव निष्प्रतियोगिकाद्वितीय इति—वेदनमेव स्वात्मविद्या **सनातनी** पुरा विश्वसृजा **ब्रह्मणा** प्रसन्नेन **मया लब्धा** विदितेत्यर्थः । स्वात्मवेदनमात्रतो ब्रह्मत्वं ते कुत इत्यत आह—**ब्रह्मत्वमिति** । ममानृतजडदुःखात्मकनामरूपप्रपञ्चग्राससच्चिदानन्दरूपत्वात् **सदा मे ब्रह्मत्वं** सिद्धमेवेत्यर्थः ॥ ४६ ॥ प्रकृतिस्त्वच्छिन्नेत्यत आह—**प्रकृतित्वमिति** । स्वाज्ञदृष्ट्या स्वातिरेकेण या प्रकृता सेयं प्रकृतिस्तद्भावः **प्रकृतित्वमपि** मया **सृष्टं** कुत इत्यत्र **ततो गुणसाम्यतः**, सत्त्वादिगुणत्रयं यत्र साम्यं भजति तद्गुणसाम्यं, तद्योगतः प्रकृतित्वमपि स्यादित्यर्थः । किं प्रकृतिर्ब्रह्मवद्वास्तवीत्याशङ्क्य स्वाज्ञदृष्ट्या मयि विकल्पितेत्याह—**सत्यामिति** । मयि सत्यां **दर्पणे प्रतिबिम्बवत्** भाविसर्वानर्थगर्भिणी **चिच्छाया**

[1] "इत्येवं निश्चयं विप्राः" इत्यधिकः (मु) कोशे.

[2] सनातना—अ १, क, उ १.

[3] ते—अ २. क, मु.

चित्सामान्यरूपिणी गुणसाम्यात्मिका मयि विकल्पिता **आभातीत्यर्थः** ॥ ४७ ॥ एवं त्वयि प्रकृतिकल्पनातः किं स्यादित्यत आह—**तेनेति**। येयं चितिर्मयि प्रतिबिम्बिता **तेन चित्प्रतिबिम्बेन** वपुषा **सा पुनः** प्रकृत्यावरणविक्षेपभेदतो निर्विभागव्यष्टिसमष्टिभेदतो वा **त्रेधा विभातीत्यर्थः**। तत्र निर्विभागसमष्टिव्यष्टिप्रकृतियोगतोऽविकल्पेश्वरजीवत्वमपि भवेदित्याह—**प्रकृतीति**। या त्रेधा प्रविभक्ता तत्कलनाविरलं निर्मायं ब्रह्म निष्प्रतियोगिकमेव। निर्विभागगुणसाम्यसाक्षितया पूरणात् **पुरुषत्वं**, समष्टिप्रकृतिप्राकृतावच्छिन्नान्तर्यामितया पूरणात् पुरुषत्वमीश्वरत्वं, व्यष्टिप्रकृतिप्राकृतावच्छिन्नतया पुरुषत्वं जीवत्वं च **पुनश्च मे** न स्वत इत्यर्थः ॥ ४८ ॥

मायावशाद्भगवत्या ईश्वरत्वम्

**शुद्धसत्त्वप्रधानायां मायायां बिम्बितो ह्यजः।**
**सत्त्वप्रधाना प्रकृतिर्मायेति प्रतिपाद्यते ॥ ४९ ॥**
**सा माया स्ववशोपाधिः सर्वज्ञस्येश्वरस्य हि।**
**वश्यमायत्वमेकत्वं सर्वज्ञत्वं च तस्य तु ॥ ५० ॥**
**सात्त्विकत्वात् समष्टित्वात् साक्षित्वाज्जगतामपि।**
**जगत् कर्तुमकर्तुं वा चान्यथा कर्तुमीशते।**
**यः स ईश्वर इत्युक्तः सर्वज्ञत्वादिभिर्गुणैः ॥ ५१ ॥**

ईश्वरत्वं कथमित्यत्र—**शुद्धसत्त्वेति**। शुद्धसत्त्वप्रधानमायाप्रतिफलनचैतन्यमीश्वर इत्यर्थः। माया कीदृशीत्यत्र **सत्त्वप्रधानेति** ॥४९॥ ईश्वरस्य मायोपाधिकत्वेन तद्वशवर्तित्वं स्यादित्यत आह—**सेति**। येयमीश्वरत्वहेतुः सा माया **सर्वज्ञेश्वरस्य स्ववशोपाधिः**। तस्य मायातत्कार्यासङ्गत्वेन वशीकृतमायत्वात् **वश्यमायत्वं** स्वातिरिक्तद्वयाभावात् **एकत्वं** स्वाज्ञविकल्पितं सर्वं स्वदृष्ट्या नेतीति

ज्ञातृत्वात् सर्वज्ञत्वं च तस्यैव ॥ ९० ॥ किंच—स्वदृष्ट्या निर्गुणत्वेऽपि स्वाज्ञदृष्टिसमर्पितसत्त्वगुणोपाधित्वात् समष्ट्यारोपाधारत्वात् स्वारोपितजगतामपि तद्भावाभावप्रकाशकतया साक्षित्वात् किं बहुना यो जगत् कर्तुं अकर्तुं अन्यथा वा कर्तुं ईष्टे सर्वज्ञत्वादिगुणैः सोऽयं ईश्वरः इत्युक्तो भवतीत्यर्थः ॥ ९१ ॥

मायाया विक्षेपावरणशक्तिद्वयम्

शक्तिद्वयं हि मायाया विक्षेपा[1]वृतिरूपकम् ।
विक्षेप[2]शक्तिर्लिङ्गादि ब्रह्माण्डान्तं जगत् सृजेत् ॥ ९२ ॥
अन्तर्दृग्दृश्ययोर्भेदं बहिश्च ब्रह्मसर्गयोः ।
आवृणोत्यपरा शक्तिः सा संसारस्य कारणम् ॥ ९३ ॥

ईश्वरोपाधिमायास्वरूपमुक्त्वा मायाकार्यशक्तिद्वयं तत्कार्यं चाह—शक्तिद्वयमिति । यत् मायायाः कार्यं विक्षेपावृतिरूपकं तत् शक्तिद्वयम् । हिशब्दोऽवधारणे । तत्र विक्षेपकार्यं तु स्थावरजङ्गमतत्प्रविभक्तविविधाकारेण क्षिपति परिणमत इति विक्षेपशक्तिः लिङ्गादि ब्रह्माण्डान्तं जगत् सृजेत् ॥९२॥ विक्षेपकार्यमुक्त्वा आवरणकार्यमाह—अन्तरिति । स्वान्तर्हृदि दृक् प्रत्यक् दृश्यं अन्तःकरणं तयोः भेदं बहिः सच्चिदानन्दं ब्रह्म नामरूपात्मकः सर्गः तयोः भेदं च या आवरणशक्तिः आवृणोति सेयं अपरा शक्तिः संसारस्य कारणं भवतीत्यर्थः ॥ ९३ ॥

जीवस्वरूपम्

साक्षिणः पुरतो भातं लिङ्गदेहेन संयुतम् ।
चितिच्छायासमावेशाज्जीवः स्याद्व्यावहारिकः ॥ ९४ ॥

[1] वरणात्मकम्—अ १, अ २, क.
[2] शक्तिलिङ्गा—अ १, क, उ.

तदावृतजीवस्वरूपमाह––**साक्षिण** इति । साक्षादीक्षत इति साक्षी तस्य **पुरतो भातं** स्वाज्ञानं स्वकार्यलिङ्गदेहेन संयुतं **चितिः** चैतन्यं **छाया बुद्धिः** स्वाज्ञानं पुरस्कृत्य तयोः **समावेशात्** ऐक्याध्यासात् **व्यावहारिकजीवः स्यात्** विश्वो भवतीत्यर्थः ॥ ९४ ॥

आवृतिनाशे भेदनाशः

अस्य जीवत्वमारोपात् साक्षिण्यप्यवभासते ।
आवृतौ तु विनष्टायां भेदे भातेऽपयाति तत् ॥ ९५ ॥
तथा सर्गब्रह्मणोश्च भेदमावृत्य तिष्ठति ।
या शक्तिस्तद्वशाद्ब्रह्म विकृतत्वेन भासते ॥ ९६ ॥
अत्राप्यावृतिनाशे न विभाति ब्रह्मसर्गयोः ।
भेदस्तयोर्विकारः स्यात् सर्गे न ब्रह्मणि क्वचित् ॥ ९७ ॥

जीवस्य जीवत्वं सत्यमित्याशङ्क्य स्वावृत्यपाये जीवो ब्रह्मेत्याह—**अस्येति** । **अस्य** प्रतीचः स्वाज्ञा**रोपात्** जीवत्वं सर्वसाक्षिण्यपि स्वस्मिन् **अवभासते** । स्वज्ञानसवित्रा ध्वान्ता**वृतौ विनष्टायां** स्वान्तर्विलसितदृग्दृश्ययोः **भेदे भाते तत्** दृग्दृश्यभेदावरणं **अपयाति** ॥ ९५ ॥ यथा स्वान्तः **या शक्तिः तथा** ब्रह्मसर्गयोश्च **भेदमावृत्य तिष्ठति** तदावरणशक्तिवशात् अविकृतमपि **ब्रह्म विकृतत्वेन** अव**भासते** ॥ ९६ ॥ ब्रह्मसर्गभेददर्शनज्ञानतो भेदावृतिर्नश्यतीत्याह—**अत्रेति** । **अत्र** बाह्येऽपि **ब्रह्मसर्गयोः** भेदा**वृतिनाशे न** तयोः **भेदो विभाति** । तद्भेद**विकारः सर्गे** एव **न क्वचिद्ब्रह्मणि** भवेदित्यर्थः ॥ ९७ ॥

दृश्यप्रपञ्चे ब्रह्मप्रकृत्यंशयोर्विवेकः

अस्ति भाति प्रियं रूपं नाम चेत्यंशपञ्चकम् ।
आद्यं त्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥ ९८ ॥

दृश्यमानप्रपञ्चे कोऽयं ब्रह्मांशः कोऽयं प्रकृत्यंश इत्यत आह—**अस्तीति**। इदमिदं वस्त्वस्तीत्यत्र घटपटादिभेदेन इदमंशे भिन्नेऽपि तद्गतास्तित्वस्यैकरूपत्वात् तत्सत् सन्मात्रमुच्यते, "सन्मात्रमसदन्यत्" इति श्रुतेः। इदं **भाति** इदं **भाति** इत्यत्र इदमंशे भिन्नेऽपि तदनुस्यूतभानं चित्, "चिन्मात्रमेव चिन्मात्रं" इति श्रुतेः। इदं **प्रिय** इदं **प्रियं** इत्यत्र नामरूपविकृतितः इदमंशे भिन्नेऽपि तदनुस्यृतप्रियस्य निरतिशयानन्दरूपत्वात् प्रियमानन्दघनमित्यर्थः। यदस्तित्वभावमापन्नं तदेव भातीति प्रतीत्यर्हं, यत् भातं तदेव प्रियं भवति "सद्घनोऽयं चिद्घन आनन्दघनः" इति श्रुतेः। इदमस्य **रूपं** इदमस्य **नाम** इति नामरूपे मिथो भिद्येते। अस्तिभातिप्रियाणां सच्चिदानन्दानां सर्वानुस्यूतत्वेनैकरूपत्वात् **आद्यं** त्रयं **ब्रह्मरूपं**, यदपरं नामरूपात्मकं द्वयं तन्मायाजगद्रूपं भवतीत्यर्थः॥ ५८॥

ब्रह्मांशे समाधिविधानम्

उपेक्ष्य नामरूपे द्वे सच्चिदानन्दतत्परः।
समाधिं सर्वदा कुर्याद्धृदये वाऽथ वा बहिः॥ ५९॥

स्वान्तर्बाह्यविलसितमायांऽशत्यागपूर्वकं ब्रह्मांशे मनःसमाधानं कुर्यादित्याह—**उपेक्ष्येति**॥ ५९॥

षड्विधसमाधयः

सविकल्पो निर्विकल्पः समाधिर्द्विविधो हृदि।
दृश्यशब्दा[1]नुभेदेन सविकल्पः पुनर्द्विधा॥ ६०॥
कामाद्याश्चित्तगा दृश्यास्तत्साक्षित्वेन चेतनम्।
ध्यायेद्दृश्यानुविद्धोऽयं समाधिः सविकल्पकः॥ ६१॥

[1] दिभे—क.

असङ्गः सच्चिदानन्दः स्वप्रभो द्वैतवर्जितः ।
अस्मीतिशब्दविद्धोऽयं समाधिः सविकल्पकः ॥ ६२ ॥
स्वानुभूतिरसावेशाद्दृश्यशब्दावुपेक्षितुः ।
निर्विकल्पसमाधिः स्यान्निवातस्थितदीपवत् ॥ ६३ ॥
[1]हृदि वा बाह्यदेशेऽपि यस्मिन् कस्मिंश्च वस्तुनि ।
समाधिराद्यः सन्मात्रान्नामरूपपृथक्कृतिः ॥ ६४ ॥
स्तब्धीभावो रसास्वादात् तृतीयः पूर्ववन्मतः ।
एतैः समाधिभिः षड्भिर्नयेत् कालं निरन्तरम् ॥ ६५ ॥

हृदये बाह्ये वा सविकल्पनिर्विकल्पभेदेन समाधिर्भिद्यत इत्याह—**सविकल्प** इति । दृश्यशब्दभेदेन सविकल्पोऽपि द्विधा भिद्यत इत्याह—**दृश्येति** ॥ ६० ॥ तत्रान्तर्दृश्यानुविद्धसविकल्पकसमाधिमाह—**कामाद्या इति** । अस्याः कामवृत्तेः संकल्पवृत्तेः संशयादिवृत्तेर्वा भावाभावसाक्षित्वेन यच्चैतन्यं वर्तते तदेवाहमस्मीति ध्यानमनुसन्धानं **दृश्यानुविद्धसमाधिः** ॥ ६१ ॥ शब्दानुविद्धसमाधिमाह—**असङ्ग** इति । असङ्ग इत्यादिविशेषणविशिष्टं ब्रह्मास्मीति कामादिदृश्योपेक्षापूर्वकं केवलशब्दावलम्बनतया स्थितिः **शब्दानुविद्धसविकल्पकसमाधिः** ॥ ६२ ॥ स्वान्तर्निर्विकल्पकसमाधिमाह—**स्वानुभूतीति** । ब्रह्मानुभूत्यनुभवबलात् पूर्वानुष्ठितदृश्यशब्दोपेक्षा जायते । तादृशाधिकारिणो **निवातस्थितदीपवत् निर्विकल्पकसमाधिर्भवतीत्यर्थः** ॥ ६३ ॥ स्वान्तःसमाधित्रयमुक्त्वा बाह्यसमाधित्रयमाह—**हृदीति** । स्वहृदि विभातकामादिदृश्यवत् स्वबाह्यविलसितघटपटादिनामरूपे मिथ्यातदारोपापवादाधारतया यच्चैतन्यं वर्तते तन्नामरूपपृथक्कृतिसिद्धं ब्रह्मास्मीति बाह्यदृश्यानुविद्धसमाधिः । तथा सर्वाधिकरणं ब्रह्मास्मीति नामरूपोपेक्षापूर्वकं शब्दमात्रवृत्तिर्बाह्यशब्दानुविद्धसमाधिर्भवती-

[1] हृदीव—उ, मु.

त्यर्थः ॥ ६४ ॥ बाह्यनिर्विकल्पकसमाधिमाह—स्तब्धीभाव इति । बाह्यदृश्यशब्दानुविद्धसमाध्युपेक्षापूर्वकं निवातस्थितदीपवत् स्तब्धीभावोऽयं तृतीयो निर्विकल्पकसमाधिरित्यर्थः । विद्वानेतैरेव कालं नयेदित्याह—एतैरिति ॥ ६५ ॥

निर्विकल्पसाक्षात्कारः

देहाभिमाने गलिते विज्ञाते परमात्मनि ।
यत्र यत्र मनो याति तत्र तत्र परामृतम् ॥ ६६ ॥
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ।
क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ॥ ६७ ॥
मयि जीवत्वमीशत्वं कल्पितं वस्तुतो न हि ।
इति यस्तु विजानाति स मुक्तो नात्र संशयः ॥
इत्युपनिषत् ॥ ६८ ॥

निर्विकल्पात्मसाक्षात्कारः कदा भवतीत्याशङ्क्य देहादावात्मात्मीयाभिमानासंभवनिर्विशेषब्रह्मज्ञानसमकालं पुरा यत्र यत्र मनो याति तत्र तत्र परामृतपरमात्मैव प्रकाशत इत्याह—देहेति । बहिर्मुखदशायां विद्वन्मनो यत्र यत्र धावति तत्र तत्र ब्रह्मैव विभाति । एवं निर्विकल्पकज्ञानवान् मुनिः निष्प्रतियोगिकब्रह्ममात्रमवशिष्यत इत्यर्थः ॥ ६६ ॥ निष्प्रतियोगिकब्रह्ममात्रज्ञानिनोऽपि स्वाज्ञवत् ग्रन्थिसंशयकर्मसंभवात् कथं विदुषो ब्रह्ममात्रतेत्याशंक्य स्वदृष्ट्या ब्रह्मातिरेकेण ग्रन्थिसंशयकर्मासंभवात् । यद्यस्तीति भ्रान्तिस्तदा निर्विशेषब्रह्मज्ञानेन तद[साऽ]पि विलीयत हत्यह—भिद्यत इति । स्वाज्ञविकल्पितसमष्टिप्रपञ्चाधारः परः, व्यष्टिप्रपञ्चापवादाधारः प्रत्यगवरः, तयोर्भेदाभेदौ यत्रासंभवतां गतौ प्रत्यक्परभेदसापेक्षभेदासहनिष्प्रतियोगिकाद्वैतात्मनि स्वावशेषतया दृष्टे सत्येवमस्य साधनचतुष्टयसंपत्त्यासादितपारमहंस्यधर्मपूगवदनुष्ठितसर्ववेदान्तश्रवणमनननिदिध्यासनप्रादुर्भूततत्त्वज्ञानिनो हृदयग्रन्थिर्भिद्यते—स्वाविद्यापदतत्कार्यजातं हृच्छ-

ब्देनोच्यते, अयंशब्देन तदारोपापवादाधिकरणमुच्यते, तयोस्तादात्म्यं हृदयग्रन्थिः। तस्मिन् भिन्ने अस्य सर्वसंशयाश्छिद्यन्ते निष्प्रतियोगिकब्रह्ममात्रज्ञानं मयाऽऽत्तमनात्तं वा, यद्यात्तं तदा तद्ब्रह्म साक्षात्कृतं न वा, तस्मिन् साक्षात्कृतेऽपि तन्मात्राऽवशेषलक्षणविदेहकैवल्यमस्ति वा न वा, तत्सिद्धावपि कालान्तरे स्वातिरिक्तास्तित्वभ्रमतः पुनर्जन्म भवेन्नवेत्यादिसर्वसंशयास्तत्त्वज्ञानासिना छिद्यन्ते। छिन्ने संशयपटलेऽस्य सर्वकर्माणि च क्षीयन्ते। तानि कर्माणि त्रिविधान्यागामिसंचितारब्धभेदात्। देहिनो देहारम्भात् परं यत् कृतं पुण्यादिकं तदागामिकर्म स्थूलप्रपञ्चासंभवज्ञानेन विलीयते। अनन्तकोटि-जन्मोपादानकारणं संचितकर्म, तत् स्थूलसूक्ष्मप्रपञ्चापह्नवसिद्धब्रह्मज्ञानेन नश्यति। देहारम्भात् परं देहावसानावधि सुखादिफलप्रदं प्रारब्धकर्म, तत् स्थूलसूक्ष्मबीज-प्रपञ्चापह्नवसिद्धब्रह्ममात्रसम्यग्ज्ञानेन नश्यति। एवं कर्मक्षयसमकालं सदाद्या-वृतित्रयं भ्रान्तिजादितादात्म्यत्रयं चाप्यपह्नवं भजति। ततस्तुर्यप्रपञ्चापह्नवसिद्ध-ब्रह्ममात्रतत्त्वज्ञदृष्ट्या ग्रन्थिसंशयकर्मावरणतादात्म्यासंभवाद्विद्वान् निष्प्रतियोगिक-ब्रह्ममात्रतयाऽवशिष्यत इत्यत्र नहि विवादोऽस्तीत्यर्थः ॥ ६७ ॥ यत एवं अतः मयि जीवत्वमिति। स्वस्य निष्प्रतियोगिकत्वेन स्वातिरिक्ततत्कल्पनाया मृग्यत्वात्। विद्याफलमाह—इतीति। "आत्मविद्या मया लब्धा" इत्यादि "कल्पितं वस्तुतो नहि" इत्यन्तं यथावत् यो जानाति स मुक्तो भवति इत्यत्र न हि संशयोऽस्ति ॥६८॥ इत्युपनिषच्छब्दः सरस्वतीरहस्योपनिषत्समाप्त्यर्थः।

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
सरस्वतीरहस्यस्य व्याख्यानं लिखितं स्फुटम्।
प्रकृतोपनिषद्व्याख्याग्रन्थः षष्ट्युत्तरं शतम्॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे षड्युत्तरशतसङ्ख्यापूरकं सरस्वतीरहस्योपनिषद्विवरणं सम्पूर्णम्॥

# सीतोपनिषत्

## भद्रं कर्णेभिः—इति शान्तिः

सीताया मूलप्रकृतित्वम्

देवा ह वै प्रजापतिमब्रुवन् का सीता किं रूपमिति ॥ १ ॥

स होवाच प्रजापतिः सा सीतेति—

मूलप्रकृतिरूपत्वात् सा सीता प्रकृतिः स्मृता ।
प्रणवप्रकृतिरूपत्वात् सा सीता प्रकृति[1]रुच्यते ॥ २ ॥

इच्छाज्ञानक्रियाशक्तित्रयं यद्भावसाधनम् ।
तद्ब्रह्मसत्तासामान्यं सीतातत्त्वमुपास्महे ॥

अथर्वणवेदप्रविभक्तेयं सीतोपनिषद् ब्रह्मातिरिक्तयाथात्म्यं प्रपञ्चयन्ती प्रवृत्ता । अस्याः स्वल्पग्रन्थतो विवरणमारभ्यते । देवकदम्बप्रजापतिप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामनुक्रामति—देवा इति ॥ १ ॥ देवैः पृष्टः स होवाच प्रजापतिः । किमिति? सा सीतेति । या हि मूलप्रकृतित्वेन प्रणवत्वेन प्रकृता सेयं प्रणवमूलप्रकृतिः सीतेत्युच्यते ॥ २ ॥

[1] रित्युच्यते—अ १, क.

सीताप्रकृतेरक्षरार्थः

सीता इति त्रिवर्णात्मा साक्षान्मायामया भवेत् ।
विष्णुः प्रपञ्चबीजं च माया ईकार उच्यते ॥ ३ ॥
सकारः सत्यममृतं प्राप्तिः सोमश्च कीर्त्यते ।
तकारस्तारलक्ष्म्या च वैराजः प्रस्तरः स्मृतः ॥ ४ ॥

सीताप्रकृतेरक्षरार्थमाह—**सीता इति** । या स्वातिरिक्तमेति प्रतिपादयति सेयं माया ब्रह्मविद्या सीतेति वर्णत्रयसमुदायार्थः । आदौ सीतेत्यत्र—सकारोपरि श्रूयमाण-ईकारार्थमाह—**विष्णुरिति** । प्रत्यगभेदेन यः सर्वं व्याप्नोति सोऽयं **विष्णुः** सर्वसाक्षी प्रपञ्चारोपाधिकरणतया **प्रपञ्चबीजं** ईश्वरचैतन्यं **च** यामवष्टभ्य आत्मा साक्षीशजीवभावमेति सेयं **माया** च **ईकारस्यार्थ उच्यते** ॥ ३ ॥ सकारार्थमाचष्टे—**सकार इति** । **सत्यं** अवितथं स्वरूपं **अमृतं** मरणधर्मरहितं **प्राप्तिः** कर्मयोगभक्तिज्ञानफलाप्तिः, उमया सहितः **सोमश्च** ईश्वरः सकारशब्दार्थः । तकारार्थं स्पष्टयति—**तकार इति** । तारः प्रणवः "ओङ्कारेण सर्वा वाक् संतृण्या" इति श्रुत्यनुरोधेन तारलक्ष्मीः शब्दराशिः सरस्वती तया **तारलक्ष्म्या च** सह विराजत इति विराट् स एव **वैराजः** ब्रह्मा यं प्रणम्य सन्तो भवसागरं तरन्ति सोऽयं विराट् **प्रस्तरश्च** तकार इति **स्मृत** इत्यर्थः ॥ ४ ॥

सीताया व्यक्ताव्यक्तस्वरूपम्

[1]ईकाररूपिणी सोमाऽमृतावयव[2]देव्यलंकारस्रङ्मौक्तिकाद्याभरणालंकृता महामायाऽव्यक्तरूपिणी व्यक्ता भवति ॥ ५ ॥ प्रथमा शब्दब्रह्ममयी स्वाध्यायकाले प्रसन्ना । उद्भवा नरकात्मिका द्वितीया

[1] इकार—अ १, अ २, क.

[2] दिव्या—मु. देव्यलंकारास्र—उ.

भूतले हलाग्रे समुत्पन्ना । तृतीया [1]ईकाररूपिणी अव्यक्तस्वरूपा भवतीति सीता इत्युदाहरन्ति शौनकीये ॥ ६ ॥

श्रीरामसान्निध्यवशाज्जगदा[2]धारकारिणी ।
उत्पत्तिस्थितिसंहारकारिणी सर्वदेहिनाम् ॥ ७ ॥
[3]सीता भवति ज्ञेया मूलप्रकृतिसंज्ञिता ।
प्रणवत्वात् प्रकृतिरिति वदन्ति ब्रह्मवादिनः ॥ इति ॥ ८ ॥

सीताया व्यक्ताव्यक्तस्वरूपं त्र्यक्षरानुरूपस्वरूपं च विशदयति—ईकारेति। गुणसाम्यात्मना **ईकाररूपिणी** अव्यक्तरूपाऽपि श्रीरामसंकल्पवशात् **सोमा** सोमवत् प्रियदर्शना **अमृतानवद्यावयवैः** देवी देदीप्यमाना भगवदलङ्कारदिव्यस्रग्रूपिणी **मौक्तिकाद्याभरणैः** स्वेच्छाशक्तिविकल्पितैः **नित्यालङ्कृता** स्वभावतो **महामाया अव्यक्तरूपिणी** व्यक्ता भवति ॥ ५ ॥ तस्याः प्रथमरूपं **किमित्यत्र** या द्विजानां **स्वस्वशाखापूर्वकसर्ववेदशास्त्राध्ययनकाले** सरस्वत्यात्मना **शब्दब्रह्ममयी प्रसन्ना** भवति सेयं **प्रथमा** शक्तिरिति विज्ञेया । भगवदिच्छया स्वातिरिक्ते ये न रमन्ते ते नराः सम्यग्ज्ञानिनः तेषां यत् कं ब्रह्मभावापत्तिसुखं तदेवात्मा स्वरूपं यस्याः सेयं **नरकात्मिका** । कदेयमुद्भवतीत्यत्र भगवद्भावमापन्नसम्यग्ज्ञहृदये निरावृतसुखरूपेण सकृत् **उद्भवा** सदा नित्योद्भवेत्यर्थः । येयं **कैवल्यश्रीरिति** विश्रुता सेयं **द्वितीया** सीता लक्ष्मीरूपेण भूतले हलाग्राकर्षणतः **समुत्पन्ना** भवति नान्यथेत्यर्थः । या **अव्यक्तस्वरूपा** भवति सेयं गौर्यात्मना **ईकाररूपिणी** तृतीया भवति । एवं सरस्वत्यादिशक्तित्रयरूपेण **कैवल्यश्रीस्वरूपेण** च सेयं **सीता** इति वर्णत्रयार्थतया ज्ञेयेत्यर्थः । एवं ब्राह्मणेन योऽर्थोऽभिहितस्तमेतमर्थमथर्वणवेदप्रविभक्तशौनकशाखामस्तकरामतापनीये मन्त्रा **उदाहरन्ति** ॥ ६ ॥ के ते मन्त्रा इत्यत्र **श्रीरामेति** । कैवल्यश्र्यात्मना यद्राजते महस्तत् श्रीरामशब्दार्थः । तथा च स्मृतिः—

[1] इकार—अ, अ १, अ २, उ १. [2] नन्दका—मु. [3] सीता भगवती ज्ञेया—मु.

स्वान्याश्रयपह्नवात् सिद्धा या मुक्तिश्रीर्विजृम्भते ।
तद्रूपतो राजमानं महः श्रीराम ईरितम् ॥ इति ॥

इत्थंभूत**श्रीरामसान्निध्यवशात्** श्रीराममेव जगदारोपापवादाधारं करोतीति **जगदाधारकारिणी** भवति । किं च या सर्वदेहिनां अन्तःकरणात्मना जाग्रदादिविमोक्षान्तप्रप**ञ्चोत्पत्तिस्थितिसंहारान्** ईश्वरेण कारयतीति तथोक्ता भवति ॥ ७ ॥ सेयं **मूलप्रकृतिसंज्ञिता सीतेति ज्ञेया भवति** । कथमस्याः प्रकृतित्वमित्यत्र तुर्यतुर्यार्थ**प्रणवत्वेन** प्रकृतत्वादियं ब्रह्ममात्रप्रकृतिरिति **ब्रह्मवादिनो वदन्ती**त्यर्थः ॥ ८ ॥

सीताया ब्रह्मत्वम्

**अथातो ब्रह्मजिज्ञासेति च** ॥ ९ ॥ [1]**सेयं सर्ववेदमयी सर्वदेवमयी सर्वलोकमयी सर्वकीर्तिमयी सर्वधर्ममयी सर्वाधारकार्यकारणमयी महालक्ष्मीर्देवेशस्य भिन्नाभिन्नरूपा चेतनाचेतनात्मिका ब्रह्मस्थावरात्मा तद्गुणकर्मविभागभेदाच्छरीररूपा देवर्षिमनुष्यगन्धर्वरूपा असुरराक्षसभूतप्रेतपिशाचभूतादिभूतशरीररूपा भूतेन्द्रियमनःप्राणरूपेति विज्ञायते** ॥ १० ॥

यतो ब्रह्मवादिनामेवमाशयोऽत इयं ब्रह्मेति ज्ञातव्येत्याह—**अथातो ब्रह्मजिज्ञासेति** चेति । **अथ** ब्रह्मातिरिक्तं न किंचिदस्तीति श्रुत्याचार्योपदेशानन्तरमपि यतः स्वाज्ञदृष्ट्या इयं ब्रह्मातिरिक्ततया प्रकृतेव भाति **अतः** स्वज्ञदृष्ट्यवष्टम्भतः स्वातिरिक्तकलनापह्नवसिद्धं ब्रह्म निष्प्रतियोगिकस्वमात्रमिति सम्यग्ज्ञानावधि स्वाज्ञानुभूतप्रकृतिप्राकृतप्रपञ्चे **ब्रह्मजिज्ञासा** ब्रह्मदृष्टिः कर्तव्येत्यर्थः । चशब्दतो जात्वपि तत्र ब्रह्मातिरिक्तदृष्टिर्न कार्येति द्योत्यते ॥ ९ ॥ स्वातिरेकेण वेदलोकादीनामभिधानादिभेदभिन्नत्वात् कथमियं ब्रह्मतामर्हतीत्याशङ्क्य

[1] **सा सर्व—अ १, अ २, क.**

वेदलोकादेः स्वविकल्पितत्वेन स्वातिरेकेणाभावात् स्वयमेव सर्वमित्याह— **सेति** । या ब्रह्ममात्रप्रकृतिः सेयम् ॥ १० ॥

सीताया इच्छाऽऽदिशक्तित्रयत्वम्

**सा देवी त्रिविधा भवति शक्त्यात्मना इच्छाशक्तिः क्रियाशक्तिः साक्षाच्छक्तिरिति ॥ ११ ॥**

एवं सार्वात्म्यमापन्नाऽपि परिच्छिन्नदृष्टीनामिच्छाऽऽदिशक्तित्रयवद्भातीत्याह—**सेति** । या सार्वात्म्यदृष्टीनां सर्वरूपतया स्वयमेकैव भाता सा । **त्रिविधा** कथमित्यत्र **इच्छाशक्तिरित्यादि** । साक्षाच्छक्तिर्नाम ज्ञानशक्तिरित्यर्थः ॥ ११ ॥

इच्छाशक्तेः श्रीभूमिनीलाऽऽत्मकत्वम्

**इच्छाशक्तिस्त्रिविधा भवति श्रीभूमिनीलाऽऽत्मिका भद्ररूपिणी प्रभावरूपिणी सोमसूर्याग्निरूपा भवति ॥ १२ ॥**

इच्छाशक्तेरपि त्रैविध्यमाह—**इच्छाशक्तिस्त्रिविधा भवतीति** । तत् कथं ? इत्यत्र—**श्रीभूमिनीलात्मिकेति** । श्र्यादिविष्णुपत्न्यभेदरूपत्वात् । श्र्यात्मना **भद्ररूपिणी** भूम्यात्मना नानाविधपुण्यस्थलरूपेण च **प्रभावरूपिणी** नीलात्मना **सोमसूर्याग्निरूपा भवति** इति विज्ञेयेत्यर्थः ॥ १२ ॥

सोमरूपा नीला

**सोमात्मिका ओषधीनां प्रभवति कल्पवृक्षपुष्पफललतागुल्मात्मिका औषधभेषजात्मिका अमृतरूपा देवानां महस्तोमफलप्रदा अमृतेन तृप्तिं जनयन्ती देवानामन्नेन पशूनां तृणेन तत्तज्जीवानाम ॥ १३ ॥**

सोमात्मना किं भवतीत्यत आह—**सोमेति**। "पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः" इति स्मृत्यनुरोधेन **सोमात्मिकेति**। **औषधभेषजयोः** न पौनरुक्त्यं, औषधशब्देन तत्तद्रोगहरमूलिकाविशेषा उच्यन्ते, भेषजशब्देन भिषक्चिकित्सका इत्यर्थभेददर्शनात्। **अमृतरूपा** देवानां तृप्तिहेतुत्वात्। **महस्तोमफलप्रदा** महान् स्तोमः परापरविद्यारूपस्तत्फलप्रदा। तत्तज्जीवानां तत्तद्भोज्यप्रदानेन तृप्तिं जयनतीत्यर्थः॥ १३॥

सूर्यादिरूपा नीला

सूर्यादिसकलभुवनप्रकाशिनी दिवा रात्रिः कालकलानिमेषमारभ्य घटिकाऽष्टयाम[1]दिवसवाररात्रिभेदेन पक्षमासर्त्वयनसंवत्सरभेदेन मनुष्याणां शतायुःकल्पनया प्रकाशमाना चिरक्षिप्रव्यपदेशा निमेषमारभ्य परार्धपर्यन्तं कालचक्रं जगच्चक्रमित्यादिप्रकारेण चक्रवत् परिवर्तमाना। सर्वस्यैतस्यैव कालस्य विभागविशेषाः प्रकाशरूपाः [2]कालरूपा भवन्ति॥ १४॥

सूर्यादिरूपेण जगच्चक्रचालिकेयं भवतीत्याह—**सूर्यादीति**। स्वयमेव सूर्यचन्द्राद्यात्मना दिवारात्रिर्भूत्वा सकललोकान् प्रकाशयतीत्यर्थः। किंच—**कालकलेति**। **प्रकाशमाना** सती स्वविकल्पितानृतजडदुःखप्रपञ्चं सच्चिदानन्दात्मना व्याप्य चिरं रक्षतीति यस्यास्तत्त्वं प्रकर्षेण व्यपदिश्यते सेयं **चिरक्षिप्रव्यपदेशा**। किंच **निमेषमिति**। **कालचक्रं**, कालानां भ्रमणात्मकत्वात् चक्रत्वं, तथा स्वाविद्याद्वयतत्कार्यात्मना **जगच्चक्रं**, **इत्यादिप्रकारेण चक्रवत् परिवर्तमाना** स्वाधिष्ठानाभेदादित्यर्थः। एवं नानाविभागाः प्रकृतेरेव नाधिष्ठानस्येत्यत आह—**सर्वस्येति**। स्वातिरिक्तधियं कालयतीति काल ईश्वरः "स एष कालो भुवनस्य गोप्ता" इति श्रुतेः। **सर्वस्य** सर्वारोपापवादाधिकरणस्य **एतस्यैव**

[1] दिवसरात्रि—उ, उ १.  [2] कालारूपा—उ, उ १.

**कालस्य ईश्वरस्य** इच्छाऽऽदिशक्तित्रयप्रविभक्ता नानाविभागविशेषाः स्वाज्ञदृष्ट्या **जडत्वेन नानात्वेन** च भाता अपि स्वज्ञदृष्ट्या यतः स्व**प्रकाशरूपा** अतः **कालरूपा भवन्ति**। स्वातिरेकेण मायाप्रकृतिसत्त्वे एवं विभाग उपपद्यते। वस्तुतः **कालरूपे**श्वरस्य स्वमात्रप्रकृतित्वेऽपि स्वाज्ञादिदृष्टिमाश्रित्य नानात्वमपि **युज्यते न स्वत इत्यर्थः ॥ १४ ॥**

अग्निरूपा नीला

**अग्निरूपा अन्नपानादि प्राणिनां क्षुत्तृष्णाऽऽत्मिका देवानां मखरूपा वनौषधीनां शीतोष्णरूपा काष्ठेष्वन्तर्बहिश्च नित्या-नित्यरूपा भवति ॥ १५ ॥**

तत् कथं स्वाज्ञदृष्ट्या नानात्वम्? इत्यत्र— **अग्निरूपेति। अन्नपानादि-रूपा। देवानां मखरूपा** तेषां तदुपजीवित्वात्। **वनौषधीनां शीतोष्णरूपा** शीतोष्णादेर्वनौषधिवर्धकत्वात्। स्वाविद्यापदतत्कार्य**काष्ठेष्वन्तर्बहिश्च** विश्व-विराडोत्रादिद्रवरूपेण व्याप्य चैतन्यजडात्मना **नित्यानित्यरूपा भवति ॥१५॥**

श्रीदेवीरूपेच्छाशक्तिः

**श्रीदेवी त्रिविधं रूपं कृत्वा भगवत्संकल्पानुगुण्येन लोकरक्ष-णार्थं रूपं धारयति श्रीरिति लक्ष्मीरिति लक्ष्यमाणा भवतीति विज्ञायते ॥ १६ ॥**

या वस्तुतः परमार्थनित्या चिच्छक्तिः सैव **श्रीदेवी त्रिविधं** श्रीभूमि-नीलाऽऽत्मकं **रूपं कृत्वा**। कथमेवं ज्ञायत इत्यत्र तज्ज्ञैः **श्रीरित्यादि ॥ १६ ॥**

भूदेवीरूपेच्छाशक्तिः

**भूदेवी ससागराम्भस्सप्तद्वीपा वसुन्धरा भूरादिचतुर्दशभुवना-नामाधाराधेया प्रणवात्मिका भवति ॥ १७ ॥**

भूदेव्यात्मना किं भवतीत्यत आह—**भूदेवीति** । चिच्छक्त्यात्मना **आधाराधेया स्वेन रूपेण प्रणवात्मिका भवति** ॥ १७ ॥

इच्छाशक्तेः सर्वरूपत्वम्

**नीला [1]च विद्युन्मालिनी सर्वौषधीनां सर्वप्राणिनां पोषणार्थं सर्वरूपा भवति ॥ १८ ॥**

नीलात्मना सर्वरूपा भवतीत्याह—**नीलेति** । नीला च सर्वतोमुखतया **विद्युन्मालिनी** भूत्वा ॥ १८ ॥

इच्छाशक्तेर्भुवनाधारत्वम्

**समस्तभुवनस्याधोभागे जलाकारात्मिका मण्डूकमयेति भुवनाधारेति विज्ञायते ॥ १९ ॥**

केन रूपेण भुवनाधारेत्यत आह—**समस्तेति** ॥ १९ ॥

क्रियाशक्तेर्नादोद्भवः

**क्रियाशक्तिस्वरूपम् । हरेर्मुखान्नादः । तन्नादाद्बिन्दुः । बिन्दोरोंकारः । ओंकारात् परतो रामवैखानसपर्वतः । तत्पर्वते कर्मज्ञानमयीभिर्बहुशाखा भवन्ति ॥ २० ॥**

इच्छाशक्तिस्वरूपमुक्त्वा क्रियाशक्तिस्वरूपमाह—**क्रियाशक्तिस्वरूपमिति** । यया सर्वं क्रियते सेयं क्रियाशक्तिः, तस्याः स्वरूपमुच्यत इति शेषः । क्रियाशक्तिस्वरूपमात्मैव स्वातिरिक्तं स्वावशेषं हरतीति हरिः नारायणः परमात्मा

[1] च मुखवि—मु.

**तन्मुखात्** वैखरीप्रपञ्चहेतुः **नादः** प्रादुर्बभूव । तदव्यक्तरूपात् **नादात्** महदात्मको **बिन्दुः** । तथाविध**बिन्दोः** अहंकारात्मक **ओङ्कारः** । अहंकारादिभौतिकान्तभावमापन्नादोङ्कारात् **परतः** वैलक्षण्यतो यो राजते महीयते सोऽयं **रामो वैखानस**वालखिल्यादिमौनिपटलाश्रयसच्चिदानन्द**पर्वतो** भवति । तथाविधपर्वते परमात्मनि **कर्मज्ञानमयीभिः** कर्मोपासनाज्ञानकाण्डप्रकाशकैः ऋगादिचतुर्वेदतरुभिः संजाताः बहवः अशीत्यधिकशतोत्तरसहस्रसंख्याकाः **शाखाः** भवन्ति ॥ २० ॥

साङ्गोपाङ्गवेदतच्छाखाकथनम्

तत्र त्रयीमयं शास्त्रमाद्यं सर्वार्थदर्शनम् ।
ऋग्यजुःसामरूपत्वात् त्रयीति परिकीर्तिता ॥ २१ ॥
[हेतुना] कार्यसिद्धेन चतुर्धा परिकीर्तिता ।
ऋचो यजूंषि सामान्यथर्वाङ्गिरसस्तथा ॥ २२ ॥
चातुर्होत्रप्रधानत्वाल्लिङ्गादित्रितयं त्रयी ।
अथर्वाङ्गिरसं रूपं सामऋग्यजुरात्मकम् ॥ २३ ॥
तथाऽऽदिशन्त्याभिचारसामान्येन पृथक् पृथक् ।
एकविंशतिशाखायामृग्वेदः परिकीर्तितः ॥ २४ ॥
शतं च नव[1]शाखासु यजुषामेव जन्मनाम् ।
साम्नः सहस्रशाखाः स्युः पञ्चशाखा अथर्वणः ॥ २५ ॥
वैखानसमतं तस्मिन्नादौ प्रत्यक्षदर्शनम् ।
स्मर्यते मुनिभिर्नित्यं [2]वैखानसमतः परम् ॥ २६ ॥

1 शाखाः स्युः—अ, उ, उ १.    2 लब्ध्वा वै—अ, अ २, उ १, क.

*कल्पो व्याकरणं शिक्षा निरुक्तं ज्योतिषं छन्दः एतानि षडङ्गानि ॥ २७ ॥*

उपाङ्गमयनं चैव मीमांसा न्यायविस्तरः ।
धर्मज्ञसेवितार्थं च वेदवेदोऽधिकं तथा ॥ २८ ॥
[1]निबन्धाः सर्वशाखा च समयाचारसङ्गतिः ।
धर्मशास्त्रं महर्षीणामन्तःकरणसंभृतम् ॥
इतिहासपुराणाख्यमुपाङ्गश्च प्रकीर्तितः ॥ २९ ॥
वास्तुवेदो धनुर्वेदो [2]गान्धर्वो दैविकस्तथा ।
आयुर्वेदश्च पञ्चैते उपवेदाः प्रकीर्तिताः ॥ ३० ॥
दण्डो नीतिश्च वार्ता च विद्या वायुजयः परः ।
एकविंशतिभेदोऽयं स्वप्रकाशः प्रकीर्तितः ॥ ३१ ॥

चतुर्वेदस्वरूपं तच्छाखाभेदं च प्रकटयति—**तत्रेति**। काण्डत्रयार्थप्रकाशकत्वं सर्वार्थदर्शनत्वम् । कथमेतस्य त्रयीत्वमित्यत्र—**ऋग्यजुस्सामरूपत्वादिति** ॥ २१ ॥ अथर्वणपृथक्करणं किमर्थमित्यत्राऽथर्वणस्योपासनाज्ञानकाण्डप्रकाशकत्वेऽपि कर्मकाण्डाप्रकाशनात् पृथक्करणं केवलोपासनाज्ञानकाण्डकार्यनिष्पत्तेः ऋगादिसाम्यं चाह—**कार्येति** । उपासनाज्ञानकाण्डनिष्ठितकार्यसिद्धेन हेतुना ॥ २२ ॥ ऋगादेस्त्रयीत्वे हेतुः—**चातुर्होत्रेति**। ब्रह्मा होता अध्वर्युरित्यादिभेदेन "चातुर्होत्रियमग्निं चिन्वानः" इति श्रुतिसिद्धचयनभेदेन वा चातुर्होत्रप्रधानत्वात् लिङ्गादित्रितयं लिङ्गवाक्यप्रकरणात्मकं यत्रोपलभ्यते सेयं त्रयीत्युच्यते। किंच—**अथर्वाङ्गिरसमिति**। त्रयीरूपमथर्वणरूपं वा कीदृशं

[1] निबन्धा स—अ १, अ २, क.

[2] गान्धर्वश्च तथा मुने—अ, अ १, अ २, क, मु.

मित्यत्र सामऋग्यजुरात्मकं त्रयीरूपं तस्य कर्मादिकाण्डत्रयप्रकाशकत्वं ब्रह्मवादिनः आदिशन्ति । अथर्वाङ्गिरोभिर्दृष्टमथर्ववेदरूपं तु शान्तिवश्यस्तम्भनविद्वेषोच्चाटनमारणभेदेन आभिचारसामान्यप्रकाशकतया त्रयीतः पृथक् पृथक् आदिशन्तीत्यर्थः । ऋगादिवेदचतुष्टयस्य शाखासंख्याविभागमाचष्टे—एकविंशतीति । एकविंशतिशाखाभेदविशिष्टो ह्यृग्वेदः ॥ २३–२४ ॥ नवाधिकशतशाखाविशिष्टो यजुर्वेदः । सहस्रसंख्याविशिष्टः सामवेदः । पञ्चशाखा अथर्वणः इत्यत्र पञ्चग्रहणं पञ्चाशदुपलक्षणार्थम्, "पञ्चाशच्छाखाः अथर्वणः" इति श्रुत्यन्तरात् ॥२५॥ सूत्राण्यपि चतुर्वेदार्थरूपाणीत्याह—वैखानसमिति । यद्वैखानसमुनिना ऋगादिचतुर्वेदार्थः सूत्रितस्तत् सूत्रजातं वैखानसमतं सूत्रजाते तस्मिन्नादौ यद्वैखानसमुनिना सूत्रितं तत् प्रत्यक्षदर्शनं चतुर्वेदार्थसारस्य सूत्रितत्वात् । सर्वे मुनयः कृत्स्नं वैखानससूत्रजातं लब्ध्वा ततः परं तैः मुनिभिः नित्यं सूत्रजातं स्मृतिजातं च स्मर्यते क्रियते कृतमित्यर्थः ॥ २६ ॥ वेदाङ्गानि कानि? इत्यत आह—कल्प इति ॥ २७ ॥ कान्युपाङ्गानि? इत्यत आह—उपाङ्गमिति । एकस्मिन् वस्तुनि यत् सर्वमयनं पर्यवसानं भवति तत् अयनं वेदान्तशास्त्रमित्यर्थः । मीमांसा जैमिन्यादिप्रणीतशास्त्रम् । न्यायविस्तरः गौतमकणादादिप्रणीतं तर्कशास्त्रम् । धर्मज्ञैर्मन्वादिभिः सेवितोऽर्थो यत्र पुराणे दर्शितस्तत्पुराणजातं धर्मज्ञसेवितार्थम् । कर्मकाण्डगोचरो वेदः, तस्मादपि कर्मकाण्डगोचरवेदादप्यधिकमुपासनाकाण्डमित्यर्थः ॥ २८ ॥ निबन्धाः नीतिशास्त्रं, एतदर्थमेवमिति निबन्धनात् । स्वशाखेतरसर्वशाखा च । समयाचारसङ्गतिः वृद्धाचरणप्रवादः । महर्षीणां स्वयंभातवेदानां अन्तःकरणसंभूतं अन्तःकरणनिश्चितोऽर्थः धर्मशास्त्रम् । इतिहासपुराणाख्यं भारतादिः । एतानि दशसङ्ख्याकान्युपाङ्गानीति कीर्तितानीत्यर्थः ॥ २९ ॥ वेदतदङ्गोपाङ्गान्युक्त्वोपवेदानाह —वास्त्विति । वास्तुवेदः वास्तुनिर्माणादिशिल्पिशास्त्रम् । धनुर्वेदः ब्रह्मास्त्रादिविषयः । गान्धर्वः गीतिशास्त्रम् । दैविकः देवाचारनिबन्धनशास्त्रम् । आयुर्वेदाः योगशास्त्रं भिषक्छास्त्रं ज्योतिःशास्त्रं वा । पञ्चैते उपवेदा इति कीर्तिताः ॥ ३० ॥ ऋगाद्यायुर्वेदान्तानां स्वप्रकाशब्रह्मगोचरतया स्वप्रकाशत्वं

स्यादित्याह—**दण्ड इति**। ऋगादिचतुर्वेदवाक्यपटलस्य दण्डोद्यतकरराजशासनवदलङ्घ्यत्वात् दण्डशब्देन ऋगादिचतुर्वेद उच्यते। **नीतिशब्देन** ऋगादिचतुर्वेदस्वभावनयनकल्पादिषडङ्गमुच्यते। **वार्ताशब्देन** ऋगादिचतुर्वेदार्थप्रकाशकवृत्तिस्थानीयोपाङ्गमुच्यते। **विद्याशब्देन** वास्तुवेदादिवायुजयान्तोपवेद उच्यते। तत्र वेदाश्चत्वारः। अङ्गानि षट्। उपाङ्गान्यपि षडेव। शिष्टचतुरङ्गमपि षट्स्वन्तर्भूयते। उपवेदाः पञ्च। 'आहत्यायमेकविंशतिधा भिन्नः। ऋगादिवायुजयान्तविद्यायाः स्वप्रकाशब्रह्ममात्रपर्यवसन्नतयाऽयं भेदः **स्वप्रकाश एवेति परिकीर्तितः** कथित इत्यर्थः ॥ ३१ ॥

नादस्यैव वेदशास्त्रद्वारा ब्रह्मभवनम्

वैखानसऋषेः पूर्वं विष्णोर्वाणी समुद्भवेत्।
त्रयीरूपेण संकल्प्य इत्थं देही विजृम्भते ॥ ३२ ॥
संख्यारूपेण संकल्प्य वैखानसऋषेः पुरा।
उदितो यादृशः पूर्वं तादृशं शृणु मेऽखिलम् ॥
शश्वद्ब्रह्ममयं रूपं क्रियाशक्तिरुदाहृता ॥ ३३ ॥

पुरा हरिमुखोदितनाद एव कृत्स्नवेदशास्त्राकृतिर्भूत्वा ततो ब्रह्मभावमेत्य ब्रह्मैव भवतीत्याह—**वैखानस इति**। स्वानन्यभावमापन्नवैखानसहृदये प्रत्यगभिन्नब्रह्मभावमृषति गच्छतीति **वैखानस ऋषिः** विष्णुः, तस्य **विष्णोः** मुखात् **पूर्वं** नादरूपिणी या **वाणी समुद्भवेत्** "हरेर्मुखान्नादः" इत्युक्तत्वात्, सेयमादौ हरिजा नादरूपिणी वाणी **त्रयीरूपेण** चतुर्वेदगतानेकसङ्ख्याऽन्वितशाखाभेदेन च **विजृम्भते** विजृम्भिता भवति ॥ ३२ ॥ **यादृशो** नादः **वैखानसऋषेः** मुखात् **उदितः मे** मत्तः सकाशात् **तादृशमखिलं** लयक्रमं **शृणु**। तत् कथमित्यत्र या पुरा वेदशास्त्ररूपेण विजृम्भिता सा प्रणवात्मना लीयते, सोऽयं प्रणवः स्वावयवाकारादिमात्रात्रयमुपसंहृत्य बिन्द्वात्मना विलीयते, बिन्दुः नादात्मना,

नादो विष्ण्वात्मना, विष्णुः व्याप्यव्यापककलनापह्नवसिद्धं ब्रह्ममयं रूपं निष्प्रतियोगिकब्रह्ममात्रमवशिष्यत इत्यादिकलना यया क्रियते सेयं क्रियाशक्तिरित्यभिधीयत इत्यर्थः ॥ ३३ ॥

साक्षाच्छक्तिस्वरूपम्

साक्षाच्छक्तिर्भगवतः स्मरणमात्ररूपाऽऽविर्भावप्रादुर्भावात्मिका निग्रहानुग्रहरूपा शान्तितेजोरूपा [1]व्यक्ताव्यक्तकारणचरणसमग्रावयवमुख[2]वर्णभेदाभेदरूपा भगवत्सहचारिणी अनपायिनी अनवरतसहाश्रयिणी उदितानुदिताकारा निमेषोन्मेषसृष्टिस्थितिसंहारतिरोधानानुग्रहादिसर्वशक्तिसामर्थ्यात् साक्षाच्छक्तिरिति गीयते ॥ ३४ ॥

साक्षाच्छक्तिस्वरूपमाह—साक्षादिति । ब्रह्मसाक्षात्कारवृत्तिर्ज्ञानं तद्गोचरा चिच्च साक्षाच्छक्तिः सेयं भगवद्रूपाऽपि भगवतः स्मरणमात्रेण स्वाज्ञदृष्ट्या आविर्भावतिरोभावनिग्रहानुग्रहतत्कल्नाशान्तितेजोरूपा व्यक्ताव्यक्तप्रपञ्चकारणीभूतचरणादिसमग्रावयवसंपन्ना स्वाज्ञदृष्ट्या भगवतो भेदाभेदरूपा भगवत्सहचारिणी सृष्ट्यादिपञ्चकृत्यकरणसमर्था सैव साक्षाच्छक्तिरित्यर्थः ॥ ३४ ॥

योगशक्तिरूपेच्छाशक्तिः

इच्छाशक्तिस्त्रिविधा । प्रलयावस्थायां विश्रमणार्थं भगवतो दक्षिणवक्षःस्थले श्रीवत्साकृतिर्भूत्वा विश्रम्यतीति [3]सा योगशक्तिः॥३५॥

[1] व्यक्तोव्य—अ १, अ २, क.

[2] वर्णभे—उ १.

[3] स्वयो—उ, उ १. स्वायोक—अ, अ १, अ २.

पुनर्योगभोगवीरशक्तिभेदेनेच्छाशक्तिस्त्रिविधा । तत्र योगशक्तिस्वरूपमाह—**प्रलयेति** । **स्वविश्रमणार्थम्** । **स्वयं श्रीवत्साकृतिः** ॥ ३५ ॥

भोगशक्तिरूपेच्छाशक्तिः

भोगशक्तिर्भोगरूपा कल्पवृक्षकामधेनुचिन्तामणिशङ्खपद्मनिध्यादिनवनिधिसमाश्रिता भगवदुपासकानां कामनया अकामनया वा भक्तियुक्ता नरं नित्यनैमित्तिककर्मभिरग्निहोत्रादिभिर्वा यम[1]नियमासनप्राणायामप्रत्या[2]हारधारणाध्यानसमाधिभिर्वा [3]गोपुरप्राकारादिभिर्विमाना[4]दिभिः सह भगवद्विग्रहार्चापूजोपकरणैरर्चनैः स्नानादिभिर्वा पितृपूजा[5]दिभिरन्नपानादिभिर्वा भगवत्प्रीत्यर्थमुक्त्वा सर्वं क्रियते ॥ ३६ ॥

तत्र भोगशक्तिस्वरूपमाह—**भोगेति** । **भोगरूपा** किमाश्रिता सतीत्यत्र—**कल्पेति** । **पद्मनिध्यादिनवनिधिसमाश्रिता** सती भगवतो भोगयोग्या भवति । न केवलं भगवतः, किंतु तद्भक्तानामपीत्याह—**भगवदिति** । **ध्यानसमाधिभिर्वा** संयोज्य तत्तत्फलभोगिनं करोतीत्यर्थः । यस्तादृशाधिकारी न भवति तं **गोपुरेति** । क्षुत्तृष्णावत्प्राणिजातस्य तत्तदुचितान्नपानादिदापनशक्तिभिर्वा संयोज्य तत्तत्फलभोगभोगिनं करोति । किमर्थमनयैवं क्रियत इत्यत्र, एवं भगवद्भक्ततोषणं **भगवत्प्रीत्यर्थं** इत्युक्त्वा पूर्वोक्तं **सर्वं** अनया भोगशक्त्या **क्रियते**, न हि कार्यान्तरमुद्दिश्येत्यर्थः ॥ ३६ ॥

[1] नियमप्रा—अ १, उ, उ १, [2] हारध्यान—उ, उ १.

[3] ल्मनणवपि गो—अ १, अ २, क, मु.

[4] दिभिर्वा भ—अ १. दिभिर्वा सह भ—अ.

[5] दिभिर्वान्न—अ १.

वीरशक्तिरूपेच्छाशक्तिः

अथातो वीरशक्तिश्चतुर्भुजाऽभयवरदपद्मधरा किरीटाभरणयुता सर्वदेवैः परिवृता कल्पतरुमूले चतुर्भिर्गजै रत्नघटैरमृतजलैरभिषिच्यमाना सर्वदेवतैर्ब्रह्मादिभिर्वन्द्यमाना अणिमाद्यष्टैश्वर्ययुता [1]संमुखे कामधेनुना स्तूयमाना वेदशास्त्रादिभिः स्तूयमाना जयाद्यप्सरस्त्रीभिः परिचर्यमाणा आदित्यसोमाभ्यां दीपाभिः [2]प्रकाशिष्यमाणा तुम्बुरुनारदादिभिर्गीयमाना राकासिनीवालीभ्यां छत्रेण ह्लादिनीमयाभ्यां चामरेण स्वाहास्वधाभ्यां व्यजनेन भृगुपुण्यादिभिरभ्यर्च्यमाना देवी दिव्यसिंहासने पद्मासनारूढा सकलकारणकार्यकरी लक्ष्मीर्देवस्य पृथग्भवनकल्पनालंचकार स्थिरा प्रसन्नलोचना सर्वदेवतैः पूज्यमाना वीरलक्ष्मीरिति विज्ञायत इत्युपनिषत् ॥ ३७ ॥

वीरलक्ष्मीस्वरूपमाह—**अथेति** । अनर्घकिरीटाभरणयुता जयजयेति **अप्सरस्त्रीभिः** अप्सरोभिः **परिचर्यमाणा** । **दीपाभिः** स्वतेजसा दीपभावमापन्नाभ्यां दीपाभ्याम् । **राकासिनीवालिभ्यां** पूर्णिमाऽमावास्याभ्याम् । **छत्रेण ह्लादिनीमयाभ्यां चामरे** छत्रचामरहस्ताभ्यामित्यर्थः । **व्यजनेन** व्यजनहस्ताभ्यां वीज्यमानेत्यर्थः । **भृगुपुण्यादिभिः अभ्यर्च्यमाना** भृगोस्तपःफलरूपत्वात् । **पृथग्भवनकल्पनाभिः अलंचकारेव** स्थिता । यदकार्यमकारणं चिन्मात्रं तस्य मिथ्यास्वाविद्याद्वयसंबन्धतः कार्यकारणोपाधिकजीवत्वमीश्वरत्वं च करोतीति कार्यकारणत्वकरीत्यत्र ‘‘जीवेशावाभासेन करोति’’ इति श्रुतेः । स्वाज्ञदृष्ट्या **लक्ष्मीः** । यैवं **सर्वदेवतैः पूज्यमाना** सेयम् । सा सीतेत्यारभ्य

[1] सन्मुखे—अ १, अ २, क.

[2] प्रकाश्यमाना—मु.

**वीरलक्ष्मीरिति विज्ञायते** इत्यन्तग्रन्थप्रतिपाद्या चिच्छक्तिः सीता चित्सामान्यरूपत्वात्। सीतातत्त्वं तु शक्तित्रयापह्नवसिद्धं चिन्मात्रमित्यर्थः। **इत्युपनिषच्छब्दः** सीतोपनिषत्समाप्त्यर्थः॥ ३७॥

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना।
लिखितं स्याद्विवरणं सीतोपनिषदः स्फुटम्।
सीतोपनिषदो व्याख्याग्रन्थस्तु द्विशतं स्मृतः॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चचत्वारिंशत्सङ्ख्यापूरकं सीतोपनिषद्विवरणं संपूर्णम्

---

# सौभाग्यलक्ष्म्युपनिषत्

वाङ् मे मनसि—इति शान्तिः

## प्रथमः खण्डः

सौभाग्यलक्ष्मीविद्याजिज्ञासा

अथ भगवन्तं देवा ऊचुर्हे भगवन्नः कथय सौभाग्यलक्ष्मीविद्याम् ॥ १ ॥

सौभाग्यकैवल्यलक्ष्मीविद्यावेद्यसुखाकृति ।
त्रिपान्नारायणानन्दरामचन्द्रपदं भजे ॥

इह खलु ऋग्वेदप्रविभक्तेयं सौभाग्यलक्ष्म्युपनिषत् श्रीसूक्तवैभवैकाक्षरादिश्रीदेवीमन्त्रग्रामयन्त्रनवचक्रविवेकादियोगसाम्राज्यप्रकटनव्यग्रा निष्प्रतियोगिकब्रह्ममात्रपर्यवसन्ना विजयते । अस्याः संक्षेपतो विवरणमारभ्यते । देवतापटलनारायणप्रश्नप्रतिवचनरूपेयमाख्यायिका विद्यास्तुत्यर्था । आख्यायिकामवतारयति—अथेति । किमिति—हे भगवन्निति ॥ १ ॥

सौभाग्यलक्ष्मीध्यानम्

तथेत्यवोचद्भगवानादिनारायणः सर्वे देवा यूयं सावधान[1]मना भूत्वा श्रृणुत । तुरीयरूपां तुरीयातीतां सर्वोत्कटां सर्वमन्त्रासनगतां

[1] मनसो—मु.

**पीठोपपीठदेवतापरिवृतां चतुर्भुजां श्रियं हिरण्यवर्णामिति पञ्चदशर्ग्भिर्ध्यायथ ॥ २ ॥**

देववृन्दप्रश्नमङ्गीकृत्य **तथेत्यवोचत्**। देवानभिमुखीकरणायेदमाह—**सर्वे देवा इति**। किं तदस्माभिः कर्तव्यमित्यत्र—**तुरीयरूपामिति**। या प्रणवत्वेन प्रकृता सौभाग्यमहालक्ष्मीस्तामर्धमात्रात्मना **तुरीयरूपां** नादात्मना **तुरीयातीतां** एवंरूपेण सर्वैरपि ज्ञातुमशक्यत्वात् **सर्वोत्कटां सर्वदुरासदां** नादरूपप्रकृतेरसमाहितचित्तैरासादितुमशक्यत्वात्, स्वाज्ञजनानुकम्पयैकाक्षरादिसर्वमन्त्रासनगतां, **पीठोपपीठदेवतापरिवृतां** पीठं सौभाग्यलक्ष्मीविद्याप्रकटितश्रीचक्रं तत्रत्यैकैककोणविलसितान्युपपीठानि चक्राणि तत्तत्पीठेश्वरीभिर्देवताभिः परिवृतां, चतुर्भुजां श्रियं "**हिरण्यवर्णां** हरिणीं" इत्यादि **पञ्चदशर्ग्भिः ध्यायथ** ध्यानं कुरुत। एवं ध्यायतां देवताप्रसादेन निर्विकल्पात्मकतुरीयतुरीयातीतदेवताध्यानाधिकारो भवेदित्यर्थः ॥ २ ॥

### श्रीसूक्तस्य ऋष्यादि

**अथ पञ्चदशर्गात्मकस्य श्रीसूक्तस्यानन्दकर्दमचिक्लीतेन्दिरासुता ऋषयः। श्रीरित्याद्या[या] ऋचः। [1]चतुर्दशानामृचामानन्दाद्यृषयः। हिरण्यवर्णामित्याद्यृक्त्रयस्यानुष्टुप् छन्दः। कांसोऽस्मीत्यस्य बृहती छन्दः। तदन्ययोर्द्वयोस्त्रिष्टुप्। पुनरष्टकस्यानुष्टुप्। शेषस्य प्रस्तारपङ्क्तिः। [2]श्र्यग्निर्देवता। हिरण्यवर्णामिति बीजम्। कांसोऽस्मीति शक्तिः। हिरण्मया चन्द्रा रजतस्रजा हिरण्यस्रजा हिरण्या हिरण्यवर्णेति प्रणवादिनमोऽन्तैश्चतुर्थ्यन्तैरङ्गन्यासः। अथ**

[1] एतदादि "प्रस्तारपङ्क्तिः" इत्यन्तो ग्रन्थः उ, उ १, कोशयोः नास्ति.
[2] श्रीरग्नि—अ २, क.

वक्त्रत्रयैरङ्गन्यासः । मस्तकलोचनश्रुतिघ्राणवदन[1]कण्ठबाहुद्वय-[2]
हृन्नाभिगुह्यपायूरुजानुजङ्घेषु श्रीसूक्तैरेव क्रमशो न्यसेत् ॥ ३ ॥

[3]अमलकमलसंस्था तद्रजः[4]पुञ्जवर्णा
करकमलधृ[5]तेष्वाभीतियुग्माम्बुजा च ।
मणिमकुटविचित्रालंकृताकल्पजालैः
सकलभुवनमाता संततं श्रीः श्रियै [6]नः ॥ ४ ॥

हिरण्यवर्णामित्यादिपञ्चदशर्चामृषिच्छन्दोदेवताऽऽदिकमुच्यते—अथेति। श्रीशब्देनाग्निरुच्यते, वक्ष्यति चैवं "श्र्यग्निर्देवता" इति ॥ ३–४ ॥

सौभाग्यलक्ष्मीचक्रम्

तत्पीठम् । कर्णिकायां ससाध्यं श्रीबीजम्। वस्वादित्यकला-पद्मेषु श्रीसूक्तगतार्धार्धर्चा तद्बहिर्यः शुचिरिति मातृकया च श्रियं यन्त्राङ्गदशकं च विलिख्य श्रियमावाहयेत् ॥ ५ ॥ अङ्गैः प्रथमाऽऽवृतिः । पद्मादिभिर्द्वितीया । लोकेशैस्तृतीया । तदायुधै-स्तुरीयाऽऽवृतिर्भवति । श्रीसूक्तैरावाहनादि । षोडशसहस्रजपः ॥ ६ ॥

तस्याः सौभाग्यलक्ष्मीदेवतायाः पीठं चक्रमुच्यते । सौवर्णे राजते ताम्रे वा—

उत्तमं दशनिष्कं स्यान्मध्यमं पञ्चनिष्ककम् ।
अधमं कर्षमात्रं स्यात् पादहीनं न कारयेत् ॥

[1] कर्ण—अ १, अ २, क.
[2] नाभि—क. हृदयनाभि—अ १, अ २.
[3] अरुण—मु.
[4] पूर्ण—अ, अ १, उ १.
[5] तेष्टाभी—मु.
[6] नमः—उ १.

इति मन्त्रशास्त्रानुरोधेन चतुरश्रं यन्त्रं कृत्वा तन्मध्यकर्णिकायां मम सर्वाभीष्टसिद्धिं कुरुकुरु नम इति साध्येन सहितं ससाध्यं श्रीबीजं विलिख्य वस्वादित्यकलापत्रेषु अष्टद्वादशषोडशदलेषु श्रीसूक्तगतार्धार्धर्चाक्रमेण विलिख्य शिष्टषट्पत्रेषु कामधेनुं शङ्खनिधिमकरनिधिसौभाग्यनिधिमोक्षनिधिबोधकल्पकतरूणां मन्त्रान् प्रणवादिनमोऽन्तान् विलिख्य षोडशदळवृत्तात् बहिः यः शुचिरित्यृचा अकारादिळकारान्तपञ्चाशद्वर्णमातृकया च विलिख्य श्रियं श्रीबीजं परितो विलिख्य—

बीजं प्राणं च शक्तिं च दृष्टिं वश्यादिकं तथा ।
मन्त्रयन्त्राख्यगायत्रीप्राणस्थापनमेव च ।
भूतदिक्पालबीजानि यन्त्रस्याङ्गानि वै दश ॥

इति यन्त्राङ्गदशकं च विलिख्य श्रियमावाहयेत् ॥ ५ ॥ अथावरणान्युच्यन्ते—अङ्गैरिति । श्रां हृदयाय नमः इत्यादिषडङ्गैः प्रथमाऽऽवृतिः । पद्मा, पद्मवासिनी, पद्मालया, पद्महस्ता, पद्मप्रिया, वरदा, विष्णुपत्नी, आदिलक्ष्मीरिति प्रणवादिनमोऽन्तैश्चतुर्थ्यन्तैर्यजेत् । इन्द्राय नम इत्यादिलोकेशमन्त्रैः । वज्राय नम इति तदायुधैश्च पूजयेदित्यर्थः । अथ श्रीसूक्तैः आवाहनादिषोडशोपचारपूजां कुर्यात् । श्रीसूक्तपुरश्चरणा तु षोडशसहस्रजपः ॥ ६ ॥

एकाक्षरीमन्त्रस्य ऋष्यादि

सौभाग्यरमैकाक्षर्या भृगुनृचद्गायत्रीश्रिय ऋष्यादयः ।
शमिति बीजशक्तिः । श्रामित्यादि षडङ्गम् ॥ ७ ॥

भूयाद्भूयो द्विपद्माभयवरदकरा तप्तकार्तस्वराभा
शुभ्राभ्राभेभयुग्मद्वयकरधृतकुम्भाद्भिरासिच्यमाना ।
[2]रत्नौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपनाढ्या
पद्माक्षी पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रियै [3]नः ॥८॥

[1] शर्मी बी—अ, अ १.
[2] रक्तौघ—मु.
[3] नमः—उ, १.

साङ्गमेकाक्षरीमनुं तत्पीठं चाह—सौभाग्येति ॥ ७ ॥ ध्यानं भूयादिति ॥ ८ ॥

एकाक्षरीचक्रम्

तत्पीठम् । अष्टपत्रं वृत्तत्रयं द्वादशराशिखण्डं चतुरश्रं रमापीठं भवति । कर्णिकायां ससाध्यं श्रीबीजम् । विभूतिरुन्नतिः कान्तिः सृष्टिः कीर्तिः सन्नति[1]र्व्युष्टिरुत्कृष्टिर्ऋद्धिरिति प्रणवादिनमोऽन्तैश्चतुर्थ्यन्तैर्नवशक्तिं यजेत् ॥ ९ ॥ अङ्गैः प्रथमाऽऽवृतिः । वासुदेवा[2]दिर्द्वितीया । बालक्या[3]दिस्तृतीया । इन्द्रादिभिश्चतुर्थी भवति । द्वादशलक्षजपः ॥ १० ॥

तत्रैव विभूतिरित्यादि ॥ ९ ॥ पूर्ववत् अङ्गैः । वासुदेवादिचतुर्व्यूहैः द्वितीयाऽऽवृतिः । बालक्यादिः—आदिशब्देन भुक्तिर्मुक्तिर्विभूतिर्ऋद्धिः समृद्धिस्तुष्टिः पुष्टिर्धात्रीति प्रणवादिनमोन्तैश्चतुर्थ्यन्तैर्यजेत् ॥ १० ॥

लक्ष्मीमन्त्रविशेषाः

श्रीलक्ष्मीर्वरदा विष्णुपत्नी वसुप्रदा हिरण्यरूपा स्वर्णमालिनी रजतस्रजा स्वर्णप्रभा स्वर्णप्राकारा पद्मवासिनी पद्महस्ता पद्मप्रिया मुक्तालंकारा चन्द्रा सूर्या बिल्वप्रिया ईश्वरी भुक्तिर्मुक्तिर्विभूतिर्ऋद्धिः समृद्धिः कृष्टिः पुष्टि[4]र्धनदा धनेश्वरी श्रद्धा भोगिनी भोगदा धात्री विधात्रीत्यादिप्रणवादिनमोऽन्ताश्चतुर्थ्यन्ता मन्त्राः । एकाक्षरवदङ्गादि-

[1] र्व्युष्टि—अ १, अ २. पुष्टि—क. व्युष्टिः सत्कृष्ट—मु.
[2] दिभिर्द्वि—उ, मु.
[3] दिभिस्तृ—उ, मु.
[4] र्वर्धना—उ, उ १.

पीठम् । लक्षजपः । दशांशं तर्पणम् । शतांशं हवनम् । सहस्रांशं द्विजतृप्तिः ॥ ११ ॥ निष्कामानामेव श्रीविद्यासिद्धिः । न कदाऽपि सकामानामिति ॥ १२ ॥

पुनर्लक्ष्मीमन्त्रविशेषानाह—श्रीरित्यादि ॥ ११–१२ ॥

इति प्रथमः खण्डः

---

## द्वितीयः खण्डः

उत्तमाधिकारिणां ज्ञानयोगः

अथ हैनं देवा ऊचुस्तुरीयया मायया निर्दिष्टं तत्त्वं ब्रूहीति । तथेति स होवाच—

योगेन योगो ज्ञातव्यो योगो योगात् प्रवर्धते ।
योऽप्रमत्तस्तु योगेन स योगी रमते चिरम् ॥ १ ॥

देवा नारायणमुखतो मन्त्रोपासनाकाण्डं यथावदवगम्य योगकाण्डबुभुत्सया भगवन्तं पृच्छन्तीत्याह—अथेति । तुरीयया अन्त्यया । तैरेवं पृष्टः तथेति स होवाच । किं तदित्यत्र—योगेनेति । ब्रह्मातिरिक्तं न किंचिदस्तीति ज्ञानमेव योगः, तेन ज्ञानयोगेन तत्त्वंपदगतवाच्यार्थनिरसनपूर्वकं तत्त्वंपदलक्ष्यभूतप्रत्यक्परचितोः योगो ज्ञातव्यः प्रत्यक्परचितोरैक्यस्य स्वाज्ञविकल्पितजीवपरभेदप्रहाणपूर्वकत्वात् । पुनः प्रत्यक्परयोः योगः ऐक्यं

ज्ञानयोगात् प्रवर्धते भेदप्रत्ययवैरल्येन दृढतां भजते । इत्थंभूतज्ञानयोगेन योऽप्रमत्तस्तु सदाऽनुसन्धानपर एव भवति सोऽयं योगी प्रत्यक्परचितोः योगः ऐक्यं तत्रैव **चिरं रमते** ॥ १ ॥

षण्मुखीमुद्राऽन्वितप्राणायामयोगः

समापद्य निद्रां सुजीर्णेऽल्पभोजी
श्रमत्याज्यबाधे विविक्ते प्रदेशे ।
सदाऽऽसीत निस्तृष्ण एष प्रयत्नो-
ऽथ वा प्राणरोधो निजाभ्यासमार्गात् ॥ २ ॥
वक्त्रेणापूर्य वायुं हुतवहनिलयेऽपानमाकृष्य धृत्वा
स्वाङ्गुष्ठाद्यङ्गुलीभिर्वरकरतलयोः षड्भिरेवं निरुध्य ।
श्रोत्रे नेत्रे च नासापुटयुगलमथोऽनेन मार्गेण सम्यक्
पश्यन्ति [1]प्रत्ययांसं प्रणवबहुविधध्यानसंलीनचित्ताः ॥ ३ ॥

इत्युक्तमाधिकारिणामेवं ज्ञानयोगमुक्त्वाऽथ षण्मुखीमुद्राऽन्वितप्राणायामयोगमाह—**समापद्येति** ।

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥

इति स्मृत्यनुरोधेन **निद्रां समापद्य** यथोक्तकाले निद्रां कृत्वाऽथ पूर्वभुक्तान्ने **जीर्णे** ततो**ऽल्पभोजी** अल्पाहारी योगानुकूलेन मिताहारं कुर्वन् **श्रमत्याजी** जितश्रमो भूत्वा **अबाधे** मशकपिपीलिकामत्कुणादिबाधारहिते **विविक्ते** जनसंबाधरहिते **प्रदेशे** मृद्वास्तरणे समारोपितपद्माद्यासने **सदाऽऽसीत** सर्वदा तिष्ठेत्

[1] प्रत्ययांशं—मु.

नानाविधफल्गुसिद्धिजाले **निस्तृष्णो** विगततृष्णो भूत्वा देशिकमुखतो **लब्धनिजाभ्यासमार्गात्** अप्रच्युतो भूत्वा **एष** योगी **ग्रन्थित्रयभेदने कृतप्रयत्नो** भूयात् । **अथवा** तादृशशक्त्यभावे तदुपायतयाऽनेन **प्राणरोधः** प्राणायामः कर्तव्यः ॥ २ ॥ षण्मुखीमुद्रां तत्फलं चाह—**वक्त्रेणेति** । केचन योगिनः सीत्कारपूर्वकं **वक्त्रेण वायुमापूर्य** ऊर्ध्वगतिं प्राणमधोगतिं विधाय तथा हुतवहनिलये मूलाधारत्रिकोणस्थाग्निमण्डले **अपानमाकृष्य** आकुञ्च्य धृत्वा मूलाधारे धारणां कृत्वा **स्वाङ्गुष्ठाद्यङ्गुलीभिः षड्भिः** श्रोत्रादिकरणानि पिधाय योगिनः प्रणवप्रविभक्तविश्वविराडोत्रादिद्वितुर्याविकल्पान्तबहुविधध्यानसंलीनचित्ताः सन्तः सहस्रारचक्रे **प्रत्ययांसं** प्रत्यक्चैतन्यं पराभेदेन **सम्यक्पश्यन्ति** अपरोक्षीकुर्वन्तीत्यर्थः ॥ ३ ॥

नादाविर्भावपूर्वको ग्रन्थित्रयभेदः

**श्रवणमुखनयननासानिरोधनेनैव कर्तव्यम् ।**
**शुद्धसुषुम्नासरणौ स्फुटममलं श्रूयते नादः ॥ ४ ॥**
**विचित्रघोषसंयुक्ताऽनाहते श्रूयते ध्वनिः ।**
**दिव्यदेहश्च तेजस्वी दिव्यगन्धोऽप्यरोगवान् ॥ ५ ॥**
**संपूर्णहृदयः शून्ये त्वारम्भे योगवान् भवेत् ।**
**द्वितीयां विघटीकृत्य वायुर्भवति मध्यगः ॥ ६ ॥**
**दृढासनो भवेद्योगी पद्माद्यासनसंस्थितः ।**
**विष्णुग्रन्थेस्ततो भेदात् परमानन्दसंभवः ॥ ७ ॥**
**अतिशून्यो विमर्दश्च भेरीशब्दस्ततो भवेत् ।**
**तृतीयां यत्नतो भित्त्वा निनादो मद्दलध्वनिः ॥ ८ ॥**

एवं षण्मुखीमुद्राऽभ्यासतो ब्रह्मग्रन्थ्यादिग्रन्थित्रयमपि भिद्यते, प्रतिग्रन्थिभेदनं विचित्रनानाविधनादाविर्भावो भवति, तन्नादलयतो निर्विकल्पकसमाधिर्जायत

इत्याह—**श्रवणेति**। श्रवणादिकरणनिरोधलक्षणषण्मुखीमुद्राऽभ्यसनं योगिना **कर्तव्यम्**। एवं चिरकालाभ्यासतः प्राणवायुः सुषुम्नां प्रविशति, तत्प्रवेशमात्रेण सुषुम्नामार्गे नादाविर्भावो भवतीत्यर्थः ॥ ४ ॥ एवं नादश्रवणतोऽयं भवति योगीत्याह—**विचित्रेति**। यदा सुषुम्नायां प्राणः प्रविशति तदा योगिनः **अनाहते** हृदयकमले **विचित्रघोषवति** ध्वनिः श्रूयते। तावन्मात्रेण नीरोगो भूत्वा तेजोवद्दिव्यगन्धो भवति ॥ ५ ॥ **संपूर्णविकसितहृदयश्च भवति**। **शून्ये** तत्रत्याकाशे तु नादारम्भमात्रेणायं दिव्ययोगवान् भवेदित्यर्थः। ब्रह्मग्रन्थिभेदतो दिव्यदेहादिसिद्धिरुक्ता, अथ विष्णुग्रन्थिभेदतो भेरीध्वनिरुदेतीत्याह—**द्वितीयामिति**। प्रथमभूमिकां जित्वाऽथ द्वितीयां भूमिकामपि विष्णुग्रन्थिभेदनरूपां **विशेषेण घटीकृत्य** विष्णुग्रन्थिं भित्त्वा तद्भेदतो **वायुर्मध्यगतो** भवति ॥ ६ ॥ ततः पद्माद्यासनस्थस्य योगिनः **परमानन्द** उदेति ॥ ७ ॥ **अतिशून्योऽ**नाहतमप्यतिक्रम्य ततोऽतिविमर्दो **भेरीशब्दो भवे**दित्यर्थः। रुद्रग्रन्थिभेदतो वैष्णवनाद उदेति ततस्तच्चित्तं ब्रह्माकारं भवतीत्याह—तृतीयामिति। रुद्रग्रन्थिरूपां तृतीयभूमिकां दुर्भेद्यामपि **यत्नतो भित्त्वा** वर्तमानस्य योगिनो **मर्दलध्वनिः** श्रूयते ॥ ८ ॥

अखण्डब्रह्माकारवृत्तिः

**महाशून्यं** ततो याति सर्वसिद्धिसमाश्रयम।
चित्तानन्दं ततो भित्त्वा सर्वपीठगतानिलः ॥ ९ ॥
निष्पत्तौ **वैष्णवः शब्दः क्वणतीति क्वणो भवेत्**।
एकीभूतं तदा चित्तं सनकादिमुनीडितम् ॥ १० ॥
**अन्तेऽनन्तं समारोप्य खण्डेऽखण्डं समर्पयन्**।
**भूमानं प्रकृतिं ध्यात्वा कृतकृत्योऽमृतो भवेत्** ॥ ११ ॥

ततः तत्प्राणो सर्वसिद्ध्यास्पदं **महाशून्यं** सहस्राराकाशं याति। तदा चित्तमानन्दाभिमुखं भवति। तत्रानास्वादतश्चित्तानन्दमपि **भित्त्वा** वर्तमानस्य

प्राणानिलः कामरूपपीठादिसर्वपीठगतो भवति ॥ ९ ॥ एवं योगनिष्पत्तौ क्वणतीति क्वणो वैष्णवः शब्दो भवेत् । यत्प्रत्यग्ब्रह्मैक्यं "पश्यतेहापि सन्मात्रमसदन्यत्," "ब्रह्ममात्रमसदन्यत्" इत्यादिश्रुतिशतेन सनकादिमुनीडितं तत्रैव चित्तमेकीभूतं ब्रह्माकाराखण्डवृत्तिमद्भवतीत्यर्थः ॥ १० ॥ स्वाज्ञदृष्टिविकल्पितस्वातिरिक्तपरिच्छिन्नखण्डप्रपञ्चे सति कथमखण्डब्रह्ममात्रज्ञानं तत्फलसिद्धिर्वेत्याशङ्क्याह—अन्त इति । स्वाज्ञदृष्ट्या यदि व्यष्ट्यात्मकोऽन्तःपरिच्छिन्नपिण्डाण्डः कल्पितो भवति तदा स्वज्ञदृष्टिमवलम्ब्य तदन्ते देहादौ अनन्तं पराक्सापेक्षप्रत्यञ्चं समारोप्य अथ समष्टिप्रपञ्चखण्डे तदपवादाधारतया अखण्डं ब्रह्म समर्पयन् प्रत्यक्परयोरैक्यं कुर्वन् ततः प्रत्यक्परविभागैक्यासहब्रह्ममात्रप्रकृतिं भूमानं स्वमात्रमिति ध्यात्वा कृतकृत्यो विद्वान् अमृतो विदेहमुक्तो भवेत् भवतीत्यर्थः ॥ ११ ॥

निर्विकल्पभावः

योगेन योगं संरोध्य भावं भावेन चाञ्जसा ।
निर्विकल्पं परं तत्त्वं सदा भूत्वा परं भवेत् ॥ १२ ॥
अहंभावं परित्यज्य जगद्भावमनीदृशम् ।
निर्विकल्पे स्थितो विद्वान् भूयो नाप्यनुशोचति ॥ १३ ॥

सविकल्पप्रपञ्चे सति ब्रह्ममात्रावगतिः कुत इत्यत आह—योगेनेति । निष्प्रतियोगिकब्रह्ममात्रज्ञानयोगेन स्वातिरिक्तयोगं संरोध्य अपह्नवं कृत्वा अञ्जसा भावं विकल्पप्रपञ्चं निष्प्रतियोगिकब्रह्ममात्रभावेन ज्ञात्वा तत्समकालं विद्वान् निर्विकल्पपरब्रह्मतत्त्वं स्वयं भूत्वा सदा परमेव भवेत् भवति, "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः ॥ १२ ॥ अहमिदमिति विकल्पे सति निर्विकल्पता कुत इत्यत आह—अहमिति । देहादौ तद्बाह्ये च अहंभावं जगद्भावं च "ब्रह्मातिरिक्तं न किंचिदस्ति" इति परित्यज्य अनीदृशं निर्विशेषं ब्रह्मास्मीति विद्वान् निर्विकल्पे स्थितः सन् भूयोऽपि न शोचति विषयाभावादित्यर्थः ॥ १३ ॥

समाधिलक्षणम्

सलिले सैन्धवं यद्वत् साम्यं भवति योगतः ।
तथाऽऽत्ममनसोरैक्यं समाधिरभिधीयते ॥ १४ ॥
यदा संक्षीयते प्राणो मानसं च प्रलीयते ।
तदा समरसत्वं यत् समाधिरभिधीयते ॥ १५ ॥
यत् समत्वं तयोरत्र जीवात्मपरमात्मनोः ।
समस्तनष्टसंकल्पः समाधिरभिधीयते ॥ १६ ॥
प्रभाशून्यं मनःशून्यं बुद्धिशून्यं निरामयम् ।
सर्वशून्यं निराभासं समाधिरभिधीयते ॥ १७ ॥
स्वयमुच्चलिते देहे देही नित्यसमाधिना ।
निश्चलं तं विजानीयात् समाधिरभिधीयते ॥ १८ ॥
यत्रयत्र मनो याति तत्रतत्र परं पदम् ।
तत्रतत्र परं ब्रह्म सर्वत्र समवस्थितम् ॥ १९ ॥

अशोच्यनिर्विकल्पे स्थितिः केत्यत आह—सलिल इति । सलिलप्रक्षिप्तपेषितसैन्धवपिण्डविलयवत् प्रत्यगभिन्नपरमात्मनि मनःप्राणविलय एव समाधिरित्यर्थः ॥ १४ ॥ इतश्च समाधिलक्षणमाह—यदेति । यदा मनःप्राणादिकं विलीयते, यदा च प्रत्यगभिन्नब्रह्मणो यत् समरसत्वं अखण्डैकरसत्वमुदेति तदैव समाधिर्भवतीत्यर्थः ॥ १५ ॥ इतश्च संकल्पाद्यनुदय एव समाधिरित्याह—यदिति ॥ १६ ॥ जाग्रदाद्यवस्थात्रयकलना यत्र न विद्यते स समाधिरित्याह—प्रभेति । प्रभाशब्देन अहंकृतिपूर्णविकासरूपं जाग्रदुच्यते । मनःशब्देन अहंकृत्यर्धविकासात्मकः स्वप्न उच्यते । स्वातिरिक्तं नास्तीति बुध्यत इति बुद्धिशब्देन अहंकृतिमुकुलीभावरूपेयं सुषुप्तिरुच्यते । एवं जाग्रदाद्यवस्थात्रयं

यत्र शून्यं अपह्नवं वा भजति यस्तदपह्नवसिद्धः सोऽयमसंप्रज्ञातसमाधिरुच्यते ॥ १७ ॥ इतश्च निश्चलतास्थितिरेव समाधिरित्याह—स्वयमिति । "ब्रह्मातिरिक्तं न किंचिदस्ति" इति नित्यसमाधिना देहे तदुपलक्षिताविद्यापदतत्कार्यजाते स्वात्मात्मीयाभिमतिवैरल्येन स्वयमेवोच्चलिते नामरूपकलनां त्यक्त्वा ब्रह्मभावं गते सति, अथ देही योगी यो निर्विशेषतयाऽवशिष्टस्तमात्मानं यदा स्वावशेषतया विजानीयात् तद्वेदनावस्थैवाऽखण्डनिर्विकल्पकसमाधिरित्यर्थः ॥ १८ ॥ मनःप्रचारविलयाधिकरणं ब्रह्मेत्याह—यत्रेति । स्वातिरिक्तं मनोऽस्तीति ये मन्यन्ते तद्दृष्टिमाश्रित्य स्वातिरिक्तकल्पकं मनो यत्र प्रचरति यत्र वा विलीयते तत्कल्पनालयाधिष्ठानं ब्रह्म सर्वगतं सर्वव्यापकं, वस्तुतो मनस्तत्कार्यव्याप्याभावाद्व्यापकत्वमपि न युज्यत इत्यर्थः, "व्याप्यव्यापकता मिथ्या सर्वमात्मेति शासनात्" इति श्रुतेः ॥ १९ ॥

इति द्वितीयः खण्डः

# तृतीयः खण्डः

आधारचक्रम्

अथ हैनं देवा ऊचुर्नवचक्रविवेकमनुब्रूहीति ।

तथेति स होवाच—

आधारे [1]ब्रह्मचक्रं त्रिरावृत्त[2]भङ्गिमण्डलाकारं तत्र मूलकन्दे शक्तिः पावकाकारं ध्यायेत् तत्रैव कामरूपपीठं सर्व[3]कामप्रदं भवति इत्याधारचक्रम् ॥ १ ॥

[1] प्रथमं—उ, उ ०. [2] भग—उ, क. [3] कामफलप्रदं—अ १, अ २

पुनर्देवा नवचक्रबुभुत्सया पृच्छन्तीत्याह—अथेति। नवचक्रविवेकमनुब्रूहि इति तैरेवं पृष्टः तथेति स होवाच भगवान् नारायणः। अत्राद्यं चक्रमाह—आधार इति। मूलाधारे त्रिरावृत्तभङ्ग्या वह्निमण्डलाकारं ब्रह्मचक्रं विराजते। तत्र मूलकन्दे काचन शक्तिरस्ति, तद्रूपं पावकाकारं ध्यायेत्। तत्रैव मूलाधारे सर्वकामप्रदतया कामरूपपीठं विराजते इति यत् तत् आधारचक्रं भवति ॥ १ ॥

स्वाधिष्ठानचक्रम्

द्वितीयं स्वाधिष्ठानचक्रं षड्दलं तन्मध्ये पश्चिमाभि[1]मुख्यं लिङ्गं प्रवालाङ्कुरसदृशं ध्यायेत् तत्रैवोड्याणपीठं जगदाकर्षणसिद्धिदं भवति ॥ २ ॥

द्वितीयचक्रमाह—द्वितीयमिति। षड्दलाख्यं स्वाधिष्ठानचक्रम्। तत्र मांसाकारं पश्चिमाभिमुख्येन ज्योतिर्लिङ्गमस्ति, तत्प्रवालसदृशं ध्यायेत्। तत्रैव जगदाकर्षणशक्तिमत् उड्याणपीठं विराजत इति ॥ २ ॥

नाभिचक्रम्

तृतीयं नाभिचक्रं [2]पञ्चावर्तं सर्पकुटिलाकारं तन्मध्ये कुण्डलिनीं बालार्ककोटिप्रभां तटित्संनिभां ध्यायेत् सामर्थ्यशक्तिः सर्वसिद्धिप्रदा भवति मणिपूरकचक्रम् ॥ ३ ॥

तृतीयचक्रमाह—तृतीयमिति। मणिपूरकचक्रमाश्रित्य कुण्डलिनी वर्तते तटित्प्रभा, तां ध्यायतः सर्वसिद्धिर्भवति ॥ ३ ॥

[1] मुखलि—उ १.    [2] पञ्चावृत्तं—उ १.

## हृदयचक्रम्

हृदयचक्रमष्टदलमधोमुखं तन्मध्ये ज्योतिर्मयलिङ्गाकारं ध्यायेत् सैव हंसकला सर्वप्रिया सर्वलोकवश्य[1]करी भवति ॥ ४ ॥

तुरीयचक्रमाह—हृदयेति । अष्टपत्राढ्यं अधोमुखं अनाहतचक्रं भवति । तत्रत्याकाशमध्ये कामादिवृत्तिसहस्रभावाभावप्रकाशकं ज्योतिर्लिङ्गाकारं प्रत्यञ्च-मात्मानं ध्यायेत् । येह सर्वप्राणिनां हृदयाष्टदले संचरति सैव हंसकला सर्वात्मकतया सर्वजनप्रियकरी । तत्स्वरूपध्यानं सर्वलोकवश्यकरं भवति ॥ ४ ॥

## कण्ठचक्रम्

कण्ठचक्रं चतुरङ्गुलं तत्र वामे इडा चन्द्रनाडी दक्षिणे पिङ्गला सूर्यनाडी तन्मध्ये सुषुम्नां श्वेतवर्णां ध्यायेत् य एवं वेदानाहतसिद्धिदा भवति ॥ ५ ॥

पञ्चमचक्रमाह—कण्ठेति ॥ ५ ॥

## तालुचक्रम्

तालुचक्रं तत्रामृतधाराप्रवाहो घण्टिकालिङ्गं मूलचक्ररन्ध्रे राजदन्तावलम्बिनीविवरं [2]दशमद्वारं तत्र शून्यं ध्यायेत् चित्तलयो भवति ॥ ६ ॥

चित्तलयफलदं षष्ठं चक्रमाह—तालिवति । तालुमूलचक्रे लक्ष्यं ध्यायतः सूर्याचन्द्रमसोरैक्यं भवति । तत अमृतधाराप्रवाहो भवति । तत्रोर्ध्वमूलचक्ररन्ध्रे यदन्तर्जिह्वेति प्रसिद्धं घण्टिकालिङ्गं वर्तते राजदन्तावलम्बिनीविवरं दशमद्वारं तत्र वृत्तिशून्यं ध्यायतः चित्तलयो भवति ॥ ६ ॥

[1] करं—अ १, अ २. करा—क. [2] दशमद्वादशारं—अ २, क.

भ्रूचक्रम्

सप्तमं भ्रूचक्रमङ्गुष्ठमात्रं तत्र ज्ञाननेत्रं दीपशिखाऽऽकारं ध्यायेत् तदेव कपालकन्दं वाक्सिद्धिदं भवत्याज्ञाचक्रम् ॥ ७ ॥

सप्तमचक्रलक्षणमाह—**सप्तममिति** । आज्ञाचक्रे **ज्ञाननेत्रं** ध्यायतः परापरब्रह्मज्ञानं वाक्सिद्धिश्च भवतीत्यर्थः । **आज्ञाचक्रं** तदेव भवति ॥ ७ ॥

ब्रह्मरन्ध्रचक्रम्

ब्रह्मरन्ध्रं निर्वाणचक्रं तत्र सूचिकागृहेतरं धूम्रशिखाऽऽकारं ध्यायेत् तत्र जालन्धरपीठं मोक्षप्रदं भवतीति [2]परब्रह्मचक्रम ॥ ८ ॥

अष्टमचक्रलक्षणमाह—**ब्रह्मेति** । **सूचिकागृहेतरं** ततोऽपि सूक्ष्माकारं बिलं **धूमशिखाऽऽकारं** ध्यायेत् ॥ ८ ॥

आकाशचक्रम्

नवममाकाशचक्रं तत्र षोडशदलपद्ममूर्ध्वमुखं तन्मध्यकर्णिकात्रिकूटाकारं तन्मध्ये ऊर्ध्वशक्तितां [3]परशून्यं ध्यायेत् तत्रैव पूर्णगिरिपीठं सर्वेच्छासिद्धिसाधनं भवति ॥ ९ ॥

नवमचक्रलक्षणमाह—**नवममिति** । **षोडशदलान्वितं ऊर्ध्वमुखमाकाशचक्रं** भवति । तन्मध्ये त्रिकूटाकारं ज्योतिर्वर्तते । त्रिकूटशब्देन भ्रूमध्यमुच्यते । तन्मध्ये "ऊर्ध्वमुन्नयते इत्योंकारः" इति श्रुत्यनुरोधेन **ऊर्ध्वशक्तितां** तुरीयोङ्काररूपतां तत्परमर्धमात्राप्रविभक्तभागत्रयमपि ब्रह्मातिरिक्तं नेतीति **शून्यं**

[1] अष्टमं ब्र—उ, उ १, मु.
[2] ब्रह्मरन्ध्रचक्रं—उ, उ १.
[3] पश्यन् ध्या—अ २, क.

ध्यायेत् । तत्रैव पूर्णमेवावशिष्यत इति पूर्णगिरिपीठं निष्प्रतियोगिकपूर्णब्रह्ममात्रमवशिष्यते । तदेवं "सर्वं खल्विदं ब्रह्म" इति सर्ववर्जितचिन्मात्रमिति चेच्छासिद्धिस्थानं ब्रह्मैव भवतीत्यर्थः ॥ ९ ॥

एतदुपनिषदध्ययनफलम्

सौभाग्यलक्ष्म्युपनिषदं नित्यमधीते सोऽग्निपूतो भवति स वायुपूतो भवति स सकलधनधान्यसत्पुत्रकलत्रहयभूगजपशुमहिषीदासीदासयोगज्ञानवान् भवति न स पुनरावर्तत इत्युपनिषत् ॥ १० ॥

विद्याफलमाह—सौभाग्येति । उपनिषच्छब्दः सौभाग्यलक्ष्म्युपनिषत्समाप्त्यर्थः ॥ १० ॥

इति तृतीयः खण्डः

श्रीवासुदेवेन्द्रशिष्योपनिषद्ब्रह्मयोगिना ।
सौभाग्यलक्ष्म्युपनिषद्व्याख्यानं लिखितं स्फुटम् ।
सौभाग्यवृत्तिग्रन्थस्तु चत्वारिंशाधिकं शतम् ॥

इति श्रीमदीशाद्यष्टोत्तरशतोपनिषच्छास्त्रविवरणे पञ्चोत्तरशतसङ्ख्यापूरकं सौभाग्यलक्ष्म्युपनिषद्विवरणं संपूर्णम्

---

# नामधेयपदसूची

यत्र पुटसंख्याऽनन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिर्बोध्या

# विशेषपदसूची

यत्र पुटसंख्यानन्तरं तिर्यग्रेखायाः परं संख्या वर्तते तत्र तावती पदावृत्तिर्बोध्या

